व्रती ॥ ४७ ॥ वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा ॥ स्त्रीराजमहतां निन्दां वर्जयेद्यः कथाव्रती ॥ ४८ ॥ रजस्वलान्त्यजम्लेच्छपतितव्रातकैस्तथा ॥ द्विजद्विड्वेदबाह्यैश्च न वदेद्यः कथाव्रती ॥ ४९ ॥ सत्यं शौचं दयां मौनमार्जवं विनयं तथा ॥ उदारमानसं तद्वदेवं कुर्यात्कथाव्रती ॥ ५० ॥ दरिद्रश्च क्षयी रोगी निर्भाग्यः पापकर्मवान् ॥ अनपत्यो मोक्षकामः शृणुयाच्च कथामिमाम् ॥५१॥ अपुष्पा काकवन्ध्या च वन्ध्या या च मृतार्भका ॥ स्रवद्गर्भा च या नारी तया श्राव्यः प्रयत्नतः ॥ ५२ ॥ एतेषु विधिना श्रावे तदक्षय्यतरं भवेत् ॥ अत्युत्तमा कथा दिव्या कोटियज्ञफलप्रदा ॥ ५३ ॥ एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् ॥ जन्माष्टमीव्रतमिव कर्तव्यं फलकाङ्क्षिभिः ॥५४॥ अकिंचनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ॥ श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥ ५५ ॥ एवं नगाहयज्ञेऽस्मिन्समाप्ते श्रोतृभिस्तदा ॥ पुस्तकस्य च वक्तुश्च पूजा कार्योऽतिभक्तितः ॥५६॥ प्रसादतुलसीमालाः श्रोतृभ्यश्चाथ दीयताम् ॥ मृदङ्गताललिलतं कर्तव्यं कीर्तनं ततः ॥५७॥ जयशब्दं नमःशब्दं शङ्खशब्दं च कारयेत् ॥ विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् ॥ ५८ ॥ विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ॥ गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशान्तये ॥ ५९ ॥ प्रतिश्लोकं च जुहुयाद्विधिना दशमस्य च ॥ पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ॥६०॥ अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ॥ तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः ॥६१॥ होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ॥ नानाच्छिद्रनिरोधार्थं न्यूनताधिकताख्ययोः ॥६२॥ दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् ॥ तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ६३ ॥ द्वादशब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः ॥ दद्यात्सुवर्णधेनुं च व्रतपूर्णत्वहेतवे ॥ ६४ ॥ शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ॥ तत्रास्य पुस्तकं स्थाप्यं लिखितं ललिताक्षरम् ॥ ६५ ॥ संपूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ॥ वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥ ६६ ॥ आचार्याय सुधीर्दत्त्वा मुक्तः स्याद्भवबन्धनैः ॥ एवं कृते विधाने च सर्वपापनिवारणे ॥ ६७ ॥ फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ॥ धर्मकामार्थमोक्षाणां साधनं स्यान्न संशयः ॥ ६८ ॥ ॥ कुमारा ऊचुः ॥ इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥ श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते ॥६९॥ ॥ सूत उवाच ॥ इत्युक्त्वा ते महात्मानः प्रोचुर्भागवतीं कथाम् ॥ सर्वपापहरां पुण्यां भुक्तिमुक्तिप्रदायिनीम् ॥ ७० ॥ शृण्वतां सर्वभूतानां सप्ताहं नियतात्मनाम् ॥ यथाविधि ततो

देवं तुष्टुवुः पुरुषोत्तमम् ॥७१॥ तदन्ते ज्ञानवैराग्यभक्तीनां पुष्टता परा ॥ तारुण्यं परमं चाभूत्सर्वभूतमनोहरम् ॥७२॥
नारदश्च कृतार्थोऽभूत्सिद्धे स्वीये मनोरथे ॥ पुलकीकृतसर्वाङ्गः परमानन्दसंभृतः ॥ ७३ ॥ एवं कथां समाकर्ण्य नारदो
भगवत्प्रियः ॥ प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः ॥ ७४ ॥ ॥ नारद उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः
करुणापरैः ॥ अद्य मे भगवान् लब्धः सर्वपापहरो हरिः ॥ ७५ ॥ श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः ॥ वैकुण्ठस्थो
यतः कृष्णः श्रवणाद्यस्य लभ्यते ॥ ७६ ॥ ॥ सूत उवाच ॥ एवं ब्रुवति वै तत्र नारदे वैष्णवोत्तमे ॥ परिभ्रमन् समा-
यातः शुको योगीश्वरस्तदा ॥ ७७ ॥ तत्रायायौ षोडशवार्षिकस्तदा व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः ॥ कथावसाने निज-
लाभपूर्णः प्रेम्णा पठन् भागवतं शनैः शनैः ॥ ७८ ॥ दृष्ट्वा सदस्याः परमोरुतेजसं सद्यः समुत्थाय ददुर्महासनम् ॥ प्रीत्या
सुरर्षिस्तमपूजयत्सुखं स्थितोऽवदत्संश्रृणुतामलां गिरम् ॥ ७९ ॥ ॥ श्रीशुक उवाच ॥ निगमकल्पतरोर्गलितं फलं शुक-
मुखादमृतद्रवसंयुतम् ॥ पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ८० ॥ धर्मः प्रोज्झितकैतवोऽत्र परमो
निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥ श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो
हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ८१ ॥ श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं यस्मिन्पारमहंस्य-
मेवममलं ज्ञानं परं गीयते ॥ यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्प्रपठन्विचारणपरो भक्त्या विमुच्येन्नरः
॥ ८२ ॥ स्वर्गे सत्ये च कैलासे वैकुण्ठे नास्त्ययं रसः ॥ अतः पिबन्तु सद्भक्त्या मा मा मुञ्चत कर्हिचित् ॥ ८३ ॥ ॥ सूत
उवाच ॥ एवं ब्रुवाणे सति बादरायणे मध्येसभायां हरिराविरासीत् ॥ प्रह्लादबल्युद्धवफाल्गुनादिभिर्वृतः सुरर्षिस्तमपूज-
यच्च तान् ॥ ८४ ॥ दृष्ट्वा प्रसन्नं महदासने हरिं ते चक्रिरे कीर्तनमग्रतस्तदा ॥ भवो भवान्या कमलासनस्तु तत्रागमन्
कीर्तनदर्शनाय ॥ ८५ ॥ प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽ-
र्जुनोऽभूत् ॥ इन्द्रोऽवादीन्मृदङ्गं जयजयसुकराः कीर्तनं ते कुमारा यत्राग्रे भावभक्ता रसरचनतया व्यासपुत्रो बभूव ॥ ८६ ॥
ननर्त मध्ये त्रिकमेव तत्र भक्त्यादिकानां नटवत्सुतेजसाम् ॥ अलौकिकं कीर्तनमेतदीक्ष्य हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत्
॥ ८७ ॥ मत्तो वरं भागवता वृणुध्वं प्रीतः कथाकीर्तनतोऽस्मि सांप्रतम् ॥ श्रुत्वेति तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरि-

१ 'पारमहंस्यमेकममलं' इति पाठः । २ 'सद्भाग्याः' इति पाठः ।

मूचिरे ते ॥ ८८ ॥ नगाहगाथासु च सर्वभक्तैरेभिस्त्वया भाव्यमतिप्रयत्नात् ॥ मनोरथोऽयं परिपूरणीयस्तथेति चोक्त्वाऽन्तरधीयताच्युतः ॥ ८९ ॥ ततोऽनमत्तच्चरणेषु नारदस्तथा शुकादीनपि तापसांश्च ॥ अथ प्रहृष्टाः परिनष्टमोहाः सर्वे ययुः पीतकथामृतास्ते ॥ ९० ॥ भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे स्वकीयेऽपि तदा शुकेन ॥ अतो हरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानाम् ॥ ९१ ॥ दारिद्र्यदुःखज्वरदाहितानां मायापिशाचीपरिमर्दितानाम् ॥ संसारसिन्धौ परिपातितानां क्षेमाय वै भागवतं प्रगर्जति ॥ ९२ ॥ ॥ शौनक उवाच ॥ शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः ॥ सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयं त्विमम् ॥ ९३ ॥ ॥ सूत उवाच ॥ आकृष्णनिर्गमात्त्रिंशद्वर्षाधिकगते कलौ ॥ नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९४ ॥ परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ॥ शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९५ ॥ तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगते सति ॥ ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९६ ॥ इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयानघ ॥ कलौ भागवती वार्ता भवरोगविनाशिनी ॥ ९७ ॥ कृष्णप्रियं सकलकश्मलनाशनं च मुक्त्यैकहेतुमिह भक्तिविलासकारि ॥ सन्तः कथानकमिदं पिबतादरेण लोके हितार्थपरिशीलनसेवया किम् ॥ ९८ ॥ स्वपुरुषमपि वीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ॥ परिहर भगवत्कथासु मत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ९९ ॥ असारे संसारे विषयविषसङ्गाकुलधियः क्षणार्धं क्षेमार्थं पिबत शुकगाथातुलसुधाम् ॥ किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितकथे परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०० ॥ रहःप्रवाहसंस्थेन श्रीशुकेनेरिता कथा ॥ कण्ठे संबध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०१ ॥ इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुञ्जं विलोक्य ॥ जगति शुककथातो निर्मलं नास्ति किंचित्पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०२ ॥ एतां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ॥ तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०३ ॥ ॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये श्रवणविधिकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥

समाप्तमिदं श्रीमद्भागवतमाहात्म्यम् ॥

॥ इति श्रीमद्भागवतमाहात्म्यं समाप्तम् ॥



# अथ भागवतप्रथमस्कंधप्रारंभः ॥

श्रीगणेशाय नमः ॥ ॥ श्रीगोपालकृष्णाय नमः ॥ ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥ ॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्याऽऽस्ते हृदये संवित्तं नृसिंहमहं भजे ॥ १ ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥ २ ॥ माधवोमाधवावीशौ सर्वसिद्धिविधायिनौ ॥ वन्दे परस्परात्मानौ परस्परनुतिप्रियौ ॥ ३ ॥ संप्रदायानुरोधेन पौर्वापर्यानुसारतः ॥ श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥ ४ ॥ क्वाहं मन्दमतिः क्वेदं मन्थनं क्षीरवारिधेः ॥ किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः ॥ ५ ॥ मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ॥ यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ६ ॥ श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ॥ द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ७ ॥ अथ नानापुराणशास्त्रप्रबन्धैश्चित्तप्रसत्तिमलभमानस्तत्र तत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणानुवर्णनप्रधानं भागवतशास्त्रं प्रारिप्सुर्वेदव्यासस्तत्प्रत्यूहनिवृत्त्यादिसिद्धये तत्प्रतिपाद्यपरदेवतानुस्मरणलक्षणं मङ्गलमाचरति—जन्माद्यस्येति । परं परमेश्वरं धीमहि । ध्यायतेर्लिङि छान्दसम् । ध्यायेमेत्यर्थः । बहुवचनं शिष्याभिप्रायम् । तमेव स्वरूपतटस्थलक्षणाभ्यामुपलक्षयति । तत्र स्वरूपलक्षणं सत्यमिति । सत्यत्वे हेतुः—यत्र यस्मिन्ब्रह्मणि त्रयाणां मायागुणानां तमोरजःसत्त्वानां सर्गो भूते-

## ॐ नमो भगवते वासुदेवाय ॥

**॥ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥१॥**

न्द्रियदेवतारूपोऽमृषा सत्यः । यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत्प्रतीयते तं परं सत्यमित्यर्थः । अत्र दृष्टान्तः—तेजोवारिमृदां यथा विनिमय इति । विनिमयो व्यत्ययोऽन्यस्मिन्नन्यावभासः । स यथाऽधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः । तत्र तेजसि वारिबुद्धिर्मरीचितोये प्रसिद्धा । मृदि काचादौ वारिबुद्धिर्वारिणि च काचादिबुद्धिरित्यादि यथायथमूह्यम् । यद्वा तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम् । यत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति । यत्रेत्यनेन प्रतीतमुपाधिसंबन्धं वारयति । स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं मायालक्षणं यस्मिंस्तम् । तटस्थलक्षणमाह—जन्मादीति । अस्य विश्वस्य जन्मस्थितिभङ्गा यतो भवन्ति तं धीमहीति । तत्र हेतुः—अन्वयादितरतश्च । अर्थेष्वाकाशादिकार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्यस्तद्व्यतिरेकात् । यद्वा अन्वयशब्देनानुवृत्तिः, इतरशब्देन व्यावृत्तिः । अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत् । व्यावृत्तत्वाद्विश्वं कार्यं घटकुण्डलादिवदित्यर्थः । यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तद्यतो भवतीति संबन्धः । तथा च श्रुतिः—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' इत्याद्या । स्मृतिश्च—'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये' इत्याद्या । तर्हि किं प्रधानं

---

१ अस्मिन्नुपक्रमश्लोकारम्भे 'जन्माद्यस्य यतः' (१।१।२।) इति वेदान्तसूत्रोपन्यासो वेदान्तानां, तथान्ते 'धीमहि' इति गायत्रीपदोपन्यासश्च गायत्र्याः फलितार्थप्रकाशकं श्रीमद्भागवतमिति द्योतयति । २ यत्स्वरूपान्तर्गतं सदितरव्यावृत्ततया लक्ष्यं बोधयति तत्स्वरूपलक्षणं यथा गोः सास्नाशृङ्गादि । यावल्लक्ष्यकालमनवस्थितत्वेन स्वरूपानन्तर्गतं सत् यल्लक्ष्य इतरव्यावृत्तिं बोधयति तत्तटस्थलक्षणं यथा गोविशेषस्यालंकारविशेषादि, देवदत्तगृहस्थकाकादि वा । प्रकृते सत्यं ज्ञानमानन्दश्च परमेश्वरस्वरूपमेव सत् असज्जडदुःखप्रपञ्चव्यावृत्ततया बोधयतीति स्वरूपलक्षणं संपद्यते । जगज्जन्मादिकारणत्वं तु तटस्थलक्षणं न हि तत्सर्वदास्ति प्रलयादिकाले तदभावात् । अतः स्वरूपानन्तर्गतं सदाकाशादिव्यावृत्तमीश्वरं लक्षयतीति तटस्थलक्षणम् । ३ वारिबुद्धिर्मरुमरीचिकायां प्रसिद्धेति प्राचीनपुस्तकपाठः । ४ यद्वा स्वेन धाम्ना सामर्थ्येन निरस्ताः कुहयन्ते मायया विस्मापयन्तीति कुहका मायाविनो दैत्या येन । 'कुह विस्मापने' इति धातोः 'कुन्शिल्पिसंज्ञयोः—' इत्यौणादिकः कुन्प्रत्ययः । ५ केषुचित्पुस्तकेषु जन्मस्थितिभङ्गं यतो भवतीति पाठस्तत्र समाहारद्वन्द्वो बोध्यः ।

जगत्कारणत्वाद्धेयमभिप्रेतं नेत्याह । अभिज्ञो यस्तम् । 'स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत' इति श्रुतेः । 'ईक्षतेर्नाशब्दम्' इति न्यायाच्च । तर्हि किं जीवो ध्येयः स्यान्नेत्याह । स्वराट् स्वेनैव राजते यस्तम् । स्वतःसिद्धज्ञानमित्यर्थः । तर्हि किं ब्रह्मा ध्येयः 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इति श्रुतेः । नेत्याह—तेन इति । आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यस्तेने प्रकाशितवान् । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुतेः । ननु ब्रह्मणोऽन्यतो वेदाध्ययनमप्रसिद्धम् । सत्यम्, तत्तु हृदा मनसैव तेने विस्तृतवान् । अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गायत्र्यर्थो दर्शितः । वक्ष्यति हि—'प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ॥ स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम्' इति । ननु ब्रह्मा स्वयमेव सुप्तप्रतिबुद्धन्यायेन वेदमुपलभतां नेत्याह । यद्यस्मिन्ब्रह्मणि सूरयोऽपि मुह्यन्तीति । तस्माद्ब्रह्मणोऽपि पराधीनज्ञानत्वात्स्वतःसिद्धज्ञानः परमेश्वर एव जगत्कारणम् । अत एव सत्योऽसतः सत्ताप्रदत्वाच्च परमार्थसत्यः सर्वज्ञत्वेन च निरस्तकुहकस्तम् । धीमहीति गायत्र्या आरम्भेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितम् । यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे—'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ॥

**धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥ श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥ ॥ ॥**

वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ॥ प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥ अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्' ॥ पुराणान्तरे च—'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः ॥ हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारम्भस्तद्वै भागवतं विदुः' ॥ पद्मपुराणेऽम्बरीषं प्रति गौतमोक्तिः—'अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु ॥ पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम्' इति । अत एव भागवतं नामान्यदित्यपि न शङ्कनीयम् ॥ १ ॥ इदानीं श्रोतृप्रवर्तनाय श्रीभागवतस्य काण्डत्रयविषयेभ्यः सर्वशास्त्रेभ्यः श्रैष्ठ्यं दर्शयति—धर्म इति । अत्र श्रीमति सुन्दरे भागवते परमो धर्मो निरूप्यते । परमत्वे हेतुः—प्रकर्षेणोज्झितं कैतवं फलाभिसन्धिलक्षणं कपटं यस्मिन्सः । प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः । केवलमीश्वराराधनलक्षणो धर्मो निरूप्यत इति अधिकारितोऽपि धर्मस्य परमत्वमाह । निर्मत्सराणां परोत्कर्षासहनं मत्सरः, तद्रहितानाम् । सतां भूतानुकम्पिनाम् । एवं कर्मकाण्डविषयेभ्यः शास्त्रेभ्यः श्रैष्ठ्यमुक्तम् । ज्ञानकाण्डविषयेभ्योऽपि श्रैष्ठ्यमाह—वेद्यमिति । वास्तवं परमार्थभूतं वस्तु वेद्यं नतु वैशेषिकाणामिव द्रव्य-

---

१ ईक्षतेरीक्षणकर्तृत्वश्रवणात्सर्वज्ञं ब्रह्म जगत्कारणम् । प्रधानस्य जडत्वेनेक्षितृत्वायोगात् । अशब्दं शब्देन जगत्कारणत्वेनाप्रतिपादितं प्रधानं जगत्कारणं न भवतीति शारीरकसूत्रार्थः । २ मनसैवेति सप्तम्यर्थे तृतीया । मनस्येव यथा वेदस्फूर्तिः स्यात्तथा मनोवृत्तिं प्रवर्तयामासेत्यर्थः । ३ गायत्र्यर्थो दर्शित इत्युक्तम्—तथाहि जन्माद्यस्येत्यनेन सवितुरित्यस्यार्थः प्रतिपादितः । परमित्यनेन वरेण्यमित्यस्यार्थः । धाम्ना स्वेनेत्यनेन भर्ग इत्यस्यार्थः । स्वराडित्यनेन देवस्येत्यस्यार्थः । 'तेने ब्रह्म हृदा' इत्यनेन 'धियो यो नः प्रचोदयात्' इत्यस्यार्थः प्रकटितः । गायत्र्यां देवस्येति अभेदे षष्ठी बोध्या । विद्वद्भिरूहितं प्रतिपदव्याख्यानं तु—सत्यमिति तदित्यस्य व्याख्यानं 'तत्सत्यमित्याचक्षते' इति श्रुतेः । यत इति सवितुरित्यस्य । परमित्यभिज्ञ इति च वरेण्यमित्यस्य । स्वराडिति धाम्नेत्यादि च भर्ग इत्यस्य । अस्येति देवस्येत्यस्य धीमहीत्यस्य च । हृदेति विभक्तिव्यत्ययेन धिय इत्यस्य य इत्यस्य च । आदिकवय इति न इत्यस्य । तेने इति प्रचोदयादित्यस्येति यथावदूह्यम् । ४ 'परं धीमहि' इत्यत्रत्यधीमहिपदेन 'य आदिकवय' इत्यत्रत्ययइतिपदेन तदितरपदार्थोपबृंहकपदैश्चारम्भेणेत्यर्थः । ५ गायत्र्याख्येति—गायत्रीमन्त्रेण गायत्रीपदेन वा आख्यायते या ब्रह्मविद्या सा रूप्यते प्रतिपाद्यते येनेति तद्रूपं । प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया विद्यास्वरूपमेव वा श्रीमद्भागवतमित्यर्थः । ६ अत्र पाठान्तरं—'अष्टादशसहस्रं तत्पुराणं परिकीर्तितम्' इति क्वचित् । ७ भगवत्या इदं भागवतमिति व्युत्पत्त्या देवीपुराणमेव भागवतशब्देन व्यवह्रियत इति वदतां गंगेशोपाध्यायादीनामुन्मूलनायैव स्वामिनामियमुक्तिरित्यवधेयम् । ८ परमः श्रेष्ठः, परो मीयतेऽनेनेति वा । अत्र कैश्चित्तु अत्रपरमः इत्येकं पदं प्रकल्प्य अत्रपाः सिद्धत्वाद्गतलज्जाः शुकसनकादयस्तान् रमयति यो धर्मः सोऽत्रपरमः इति व्याख्यातम् ।

गुणादिरूपम् । यद्वा वास्तवशब्देन वस्तुनोंऽशो जीवः, वस्तुनः शक्तिर्माया, वस्तुनः कार्यं जगच्च, तत्सर्वं वस्त्वेव न ततः पृथगिति वेद्यम् । अयत्नेनैव ज्ञातुं शक्यमित्यर्थः । ततः किमत आह । शिवदं परमसुखदम् । किंच आध्यात्मिकादितापत्रयोन्मूलनं च । अनेन ज्ञानकाण्डविषयेभ्यः श्रैष्ठ्यं दर्शितम् । कर्तृतोऽपि श्रैष्ठ्यमाह । महामुनिः श्रीनारायणस्तेन प्रथमं संक्षेपतः कृते । देवताकाण्डविषयगतं श्रैष्ठ्यमाह—किं वेति । परैः शास्त्रैस्तदुक्तसाधनैर्वेश्वरो हृदि किं वा सद्य एवावरुध्यते स्थिरीक्रियते । वाशब्दः कटाक्षे । किंतु विलम्बेन कथंचिदेव । अत्र तु शुश्रूषुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुध्यते । इदमेव तर्हि किमिति सर्वे न शृण्वन्ति तत्राह—कृतिभिरिति । श्रवणेच्छा तु पुण्यैर्विना नोत्पद्यत इत्यर्थः । तस्मादत्र काण्डत्रयार्थस्यापि यथावत्प्रतिपादनादिदमेव सर्वशास्त्रेभ्यः श्रेष्ठम्, अतो नित्यमेतदेव श्रोतव्यमिति भावः ॥ २ ॥ इदानीं तु न केवलं सर्वशास्त्रेभ्यः श्रेष्ठत्वादस्य श्रवणं विधीयते, अपितु सर्वशास्त्रफलरूपमिदम्, अतः परमादरेण सेव्यमित्याह—निगमेति । निगमो वेदः स एव कल्पतरुः सर्वपुरुषार्थोपायत्वात्तस्य फलं भागवतं नाम । तत्तु वैकुण्ठगतं नारदेनानीय मह्यं दत्तम् । मया च शुकस्य मुखे निहितम् । तच्च तन्मुखाद्भुवि गलितं शिष्यप्रशिष्यादिरूपपल्लवपरम्परया शनैरखण्डमेवावतीर्णं नतूच्चनिपातेन स्फुटितमित्यर्थः ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥

एतच्च भविष्यदपि भूतवन्निर्दिष्टम् । अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः । अत एवामृतरूपेण द्रवेण संयुतम् । लोके हि शुकमुखस्पृष्टं फलममृतमिव स्वादु भवतीति प्रसिद्धम् । अत्र शुको मुनिः । अमृतं परमानन्दः स एव द्रवो रसः । 'रसो वै सः' । 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतेः । अतो हे रसिका रसज्ञास्तत्रापि भावुका हे रसविशेषभावनाचतुराः । अहो भुवि गलितमित्यलभ्यलाभोक्तिः । इदं भागवतं नाम फलं मुहुः पिबत । ननु त्वगस्थ्यादिकं विहाय फलाद्रसः पीयते कथं फलमेव पातव्यं तत्राह । रसं रसरूपम् । अतस्त्वगस्थ्यादेर्हेयांशस्याभावात्फलमेव कृत्स्नं पिबत । अत्र च रसतादात्म्यविवक्षया रसवत्त्वस्याविवक्षितत्वाद्गुणवचनेऽपि रसशब्दे मतुपः प्राप्त्यभावात्तेनं विनैव रसं फलमिति सामानाधिकरण्यम् । तत्र फलमित्युक्ते पानासंभवो हेयांशप्रसक्तिश्च भवेदिति तन्निवृत्त्यर्थं रसमित्युक्तं रसमित्युक्तेऽपि गलितस्य रसस्य पातुमशक्यत्वात्फलमिति द्रष्टव्यम् । न च भागवतामृतपानं मोक्षेऽपि त्याज्यमित्याह । आलयं लयो मोक्षः । अभिविधावाकारः । लयमभिव्याप्य । नहीदं स्वर्गादिसुखवन्मुक्तैरुपेक्ष्यते किंतु सेव्यत एव । वक्ष्यति हि—'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥ कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' इति ॥ ३ ॥ ॥ ॥ ॥ ॥

१ वास्तवो जीवः, वास्तवी माया, वास्तवं जगच्च एषामेकभावो वास्तवं । 'नपुंसकमनपुंसकेन' इत्येकशेषः । २ तापत्रयं आध्यात्मिक आधिदैविक आधिभौतिकं च । तत्राध्यात्मिक शारीर मानसं चेति द्विविधं । वातपित्तश्लेष्मणां वैषम्यनिमित्तं शारीरं । कामक्रोधलोभमोहभयेर्ष्याविषयविशेषादर्शननिवन्धनं मानसं च । तदुन्मूलनमिति दीपनी । ३ अत्र देवताकाण्डतः श्रैष्ठ्यमाहेति कचित्पाठः सच पूर्वप्रक्रमानुरोधात्समीचीन एव । ४ कटाक्षे काकर्थे । ५ अस्मिन्पद्ये अत्रेति पदस्य त्रिरुक्तिर्निर्धारणार्था । नथाचात्रैवेश्वरोऽवरुध्यते नान्यत्र, अत्रैव वास्तवं वस्तु वेद्यं नान्यत्र, अत्रैव प्रोज्झितकैतवो धर्मो नान्यत्रेत्यन्ययोगव्यवच्छेदः अत्रावरुध्यत एवेत्यादिरयोगव्यवच्छेदश्च ज्ञेय इति विश्वनाथचक्रवर्ती । ६ अत्र धर्म इति कर्मकाण्डार्थः, निर्मत्सराणामित्युपासनाकाण्डार्थः, वेद्यमिति ज्ञानकाण्डार्थश्च ज्ञेयः । ७ अत्रानेकजन्मानुष्ठितसुकृतत्वेन मत्सरादिदोषरहितः शुद्धान्तःकरणोऽधिकारी । साधनतया श्रवणादिधर्मस्तत्प्राप्यतया सच्चिदानन्दात्मको भगवांश्च विषयः । निखिलदुःखनिवृत्तिपूर्वकपरमानन्दावाप्तिश्च फलापरपर्यायं प्रयोजनम् । ग्रन्थस्य विषयेण प्रतिपाद्यप्रतिपादकभावः, प्रयोजनेन साध्यसाधनभावश्च संवन्ध इत्यनुबन्धचतुष्टयं दर्शितम् । ८ नितरां गमयति धर्मादिचतुर्विधपुरुषार्थसाधनानि वोधयतीति निगमः । ९ यद्यप्येतद्ग्रन्थप्रणयनोपक्रमदशायामस्य शुकमुखाद्भुवि गलितत्वं न विद्यते तथापि व्यासस्य सर्वज्ञत्वाद्भविष्यदपि भूतवत्कृत्वा तेनैवमुक्तमिति भाव इति दीपनी । १० तेन विनैव मतुप्प्रत्ययं विनैव । ११ भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् ।

तदेवमनेन श्लोकत्रयेण विशिष्टेष्टदेवतानुस्मरणपूर्वकं प्रारिप्सितस्य शास्त्रस्य विषयप्रयोजनादिवैशिष्ट्येन सुखसेव्यत्वेन च श्रोतॄनभिमुखीकृत्य शास्त्रमारभते— नैमिश इति । ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिः शीर्यते कुण्ठीभवति यत्र तन्नेमिशं, नेमिशमेव नैमिशम् । तथा च वायवीये—'एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते ॥ यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः ॥ इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम् ॥ प्रणिपत्य महादेवं विससर्ज पितामहः ॥ तेऽपि हृष्टतमा विप्राः प्रणम्य जगतां प्रभुम् ॥ प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत ॥ तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम् ॥' इति । 'नैमिष' इति पाठे वराहपुराणोक्तं द्रष्टव्यम् । तथाहि गौरमुखमृषिं प्रति भगवद्वाक्यम्—'एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ॥ उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितम् ॥ भविष्यति यथार्थं वै ब्राह्मणानां विशेषकम् ॥' इति । अनिमिषः श्रीविष्णुः । अलुप्तदृष्टित्वात् । तस्य क्षेत्रे । तथा चात्रैव शौनकादिवचनं 'क्षेत्रेऽस्मिन्वैष्णवे वयम्' इति । स्वः स्वर्गे गीयत इति स्वर्गायो हरिः, स एव लोको भक्तानां निवासस्थानं तस्मै । तत्प्राप्त्य इत्यर्थः ।

**नैमिशेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ॥ सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥४॥ त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ॥ सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥५॥ ॥ ऋषय ऊचुः ॥ त्वया खलु पुराणानि सेतिहासानि चानघ ॥ आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥ ६ ॥ यानि वेद विदां श्रेष्ठो भगवान्बादरायणः ॥ अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥८॥ तत्र तत्राञ्जसाऽऽयुष्मन्भवता यद्विनिश्चितम् ॥ पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि ॥९॥**

सहस्रं समाः संवत्सरा अनुष्ठानकालो यस्य तत्सत्रं सत्रसंज्ञकं कर्मोद्दिश्य आसत उपविविशुः । यद्वा आसताऽकुर्वतेत्यर्थः । आलभेत निर्वपति उपयन्तीत्यादिवत्प्रत्ययोच्चारणमात्रार्थत्वेनाऽऽस्तेर्धात्वर्थस्याविवक्षितत्वात् ॥ ४ ॥ सायंकाले हुता एव हुता अग्नयो यैस्ते । यद्वा हूयत इति हुतं दध्यादि तेन हुता अग्नयो यैस्ते । यद्वा प्रातःकाले हुता एव हुता अग्नयो यैस्ते । अनेन नित्यनैमित्तिकहोमसाकल्यं दर्शितम् । इदं वक्ष्यमाणमादरात्पप्रच्छुः ॥ ५ ॥ विविदिषितानर्थान्प्रष्टुं सूतस्य सर्वशास्त्रज्ञानातिशयमाहुः—त्वयेति त्रिभिः श्लोकैः । इतिहासो महाभारतादिस्तत्सहितानि । न केवलमधीतानि अपित्वाख्यातान्यपि व्याख्यातानि च । उत अपि यानि धर्मशास्त्राणि तान्यपि ॥ ६ ॥ किंच यानीत्यादि । विदां विदुषां मध्ये श्रेष्ठो व्यासो यानि वेद । परावरे सगुणनिर्गुणे ब्रह्मणी विदन्तीति तथा ॥ ७ ॥ वेत्थ जानासि । सौम्य हे साधो । तेषामनुग्रहात् । तत्त्वतो ज्ञाने हेतुमाह—ब्रूयुरिति । स्निग्धस्य प्रेमवतः । उत एव । गुह्यं रहस्यमपि ब्रूयुरेव ॥८॥ अञ्जसा ग्रन्थार्जवेन । एकान्ततः श्रेयोऽव्यभिचारि श्रेयःसाधनम् ॥ ९ ॥ ॥ ॥ ॥

१ शौनः सर्वविवेकदृक्, अथवा शौन एव शौनको भगवद्वार्तारसिको मुनिवरः स आदिर्येषां ते । २ 'पश्वालम्भनमालभते', 'मासवापं निर्वपति', 'आग्नेयं चरुं निर्वपति', 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' रात्रीः सत्राणि ।—'आलभनमालभेत' । 'अमावास्यायां पितृभ्यः श्राद्धं निर्वपति' । 'अष्टवर्षायाः कन्यायाः पाणिग्रहणमुपयन्ति' इत्यादिवदिति तु विश्वनाथचक्रवर्ती ॥ उपयन्तीत्यादौ तिङन्तस्य कृत्यर्थमात्रस्य ग्रहणवदित्यर्थः इति दीपनी । ३ अयं च मुख्यधात्वर्थाविवक्षितत्वे दृष्टान्तः । प्रकृत्यर्थान्वितस्वार्थावबोधकत्वं प्रत्ययानामिति व्युत्पत्तिभङ्गोऽत्र स्वीक्रियत इति भावः । ४ एतदर्धद्वयं प्राचीनेषु केषुचित्पुस्तकेषु दृश्यते । ५ हुतेत्यर्हार्थे क्तः । ६ नित्यत्वेनाग्निहोत्रविधिना, स्मार्तगृह्याग्निप्रातर्होमादिना वा हुता अपि नैमित्तिकत्वेन वैतानिकविधानेन हुता अग्नयो यैरित्यर्थः । ७ पृच्छतेर्द्विकर्मकत्वादत्र 'सूतं इदं' इति कर्मद्वयं युज्यते । ८ अस्मिन्नध्याये षट् प्रश्नाः सन्ति । ते च—(१) पुंसामेकान्ततः श्रेय (२) अवतारप्रयोजनम् । (३) तस्य कर्माण्यपि तथा (४) चावतारकथा अपि । (५) कृष्णावतारचरितं (६) धर्मः कं शरणं गतः ॥ इति । तत्र पुंसामेकान्ततः श्रेय इत्यारभ्य येनात्मा सम्प्रसीदतीत्यन्तः प्रथमः प्रश्नः ।

अन्येऽपि बहुना कालेन बहुशास्त्रश्रवणादिभिर्विनिश्चिन्वन्तु नेत्याहुः—प्रायेणेति । हे सभ्य साधो, अस्मिन्युगे कलावल्पायुषो जनास्तत्रापि मन्दा अलसास्तत्रापि सुमन्दमतयस्तत्रापि मन्दभाग्या विघ्नाकुलास्तत्राप्युपद्रुता रोगादिभिः ॥ १० ॥ न च बहुशास्त्रश्रवणेऽपि तावतैव फलसिद्धिरित्याहुः—भूरीणीति । भूरीणि कर्माण्यनुष्ठेयानि येषु तानि । समुद्धृत्य यथावदुद्धृत्य । येनोद्धृतवचनेनात्मा बुद्धिः संप्रसीदति सम्यगुपशाम्यति ॥ ११ ॥ प्रश्नान्तरं—सूत जानासीति पञ्चभिः । भद्रं त इत्यौत्सुक्येनाशीर्वादः । ( विस्तरेणाशीर्वादवचनेन विष्णुकथाविघातो भवतीति संग्रहेणोक्तम् । तथाहि 'सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः ॥ यन्मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥' इति ) भगवान्निरतिशयैश्वर्यादिगुणः । सात्वतां सच्छब्देन सत्वमूर्तिर्भगवान्स उपास्यतया विद्यते येषामिति सत्वन्तो भक्ताः । स्वार्थेऽण् राक्षसवायसादिवत् । तस्य चाश्रवणमार्षम् । तदेवं सात्वन्त इति भवति । तेषां पतिः पालकः । यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य

प्रायेणाल्पायुषः सभ्य कलावस्मिन्युगे जनाः ॥ मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ १० ॥ भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः[2] ॥ अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया ॥ ब्रूहि नः श्रद्दधानानां येनात्मा संप्रसीदति[3] ॥ ११ ॥ सूतं[4] जानासि भद्रं ते भगवान्सात्वतांपतिः ॥ देवक्यां वसुदेवस्य[5] जातो यस्य चिकीर्षया ॥ १२ ॥ तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् ॥ यस्यावतारो भूतानां[6] क्षेमाय च भवाय च ॥ १३ ॥ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ॥ ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ १४ ॥ यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ॥ सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥ १५ ॥ को[7] वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ॥ शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥ ॥ ॥ ७ ॥ ॥ ॥

भार्यायां देवक्यां जातः ॥ १२ ॥ अङ्ग हे सूत, तन्नोऽनुवर्णयितुमर्हसि । सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय । भवाय समृद्धये ॥ १३ ॥ तत्प्रभावमनुवर्णयंतस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वन्ति—आपन्न इति त्रिभिः । संसृतिमापन्नः प्राप्तः । विवशोऽपि गृणन् । ततः संसृतेः । अत्र हेतुः—यद्यतो नाम्नो भयमपि स्वयमेव बिभेति ॥१४॥ किंच यस्य पादः संश्रयो येषामत एव प्रशमोऽयनं वर्त्म आश्रयो वा येषां ते मुनय उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति । स्वर्धुनी गङ्गा तस्या आपस्तु तत्पादान्निःसृता नतु तत्रैव तिष्ठन्त्यतस्तत्संबन्धेनैव पुनन्त्योऽप्यनुसेवया पुनन्ति नतु सद्य इति मुनीनामुत्कर्षोक्तिः ॥१५॥ पुण्यश्लोकैरीड्यानि स्तव्यानि कर्माणि यस्य तस्य यशः । कलिमलापहं संसारदुःखोपशमनम् ॥ १६ ॥ ॥ ॥ ॥

१ विस्तरेणेत्यारभ्य इतीत्यन्तो ग्रन्थः प्राचीनपुस्तकेऽस्ति । २ विभागश इत्यनन्तरं 'न ह्येवावगमिष्यन्ति दैवोपहतचेतनाः' इत्यधिकमर्धं क्वचिदुपलभ्यते । ३ प्राचीनपुस्तकेषु मूले टीकाया च सुप्रसीदतीत्येव पाठः । ४ सूत जानासीत्यारभ्य कलिमलापहमित्यन्तो द्वितीयः प्रश्नः । ५ अत्र वसुदेवादितीष्टं । वसुदेवस्येति त्वपादानस्य संबन्धविवक्षायां षष्ठी । ६ अत्र भक्तानामित्यनुक्त्या भूतानामिति वदतामयमभिप्रायः—शत्रूणामपि दमनपूर्वकमपवर्गदायित्वेन महोपकर्ता किमु वक्तव्यं तदवतारो भूतानां योगक्षेमार्थ इति । ७ एतस्य दशमस्कन्धस्यैव संवादितां व्यनक्ति—को वेति । ८ पुण्यश्लोकश्चायमीड्यकर्मा चेति विजयध्वजः । पुण्या श्लोका कीर्तिर्येषा तैर्भक्तैरीड्यकर्मण इति सुबोधिनी ।

प्रश्नान्तरं—तस्येति । उदाराणि महान्ति विश्वसृष्ट्यादीनि । सूरिभिर्नारदादिभिः । कला ब्रह्मरुद्रादिमूर्तीः ॥ १७ ॥ अथेति प्रश्नान्तरे । अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवतारास्तदीयाः कथाः स्वैरं लीलाः कुर्वतः । श्रीकृष्णावतारप्रयोजनप्रश्नेनैव तच्चरितप्रश्नोऽपि-जात एवेति ज्ञातव्यम् ॥ १८ ॥ अत्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृप्त्यभावमावेदयन्ति—वयं त्विति । योगयागादिषु तृप्ताः स्म । उद्गच्छति तमो यस्मात्स उत्तमास्तथाभूतः श्लोको यस्य तस्य विक्रमे तु विशेषेण न तृप्यामोऽलमिति न मन्यामहे । तत्र हेतुः—यद्विक्रमं शृण्वताम् । यद्वा अन्ये तृप्यन्तु नाम वयं तु नेति तुशब्दस्यान्वयः । अयमर्थः—त्रेधा ह्यलंबुद्धिर्भवति उदरादिभरणेन वा, रसाज्ञानेन वा, स्वादुविशेषाभावाद्वा । तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वादभरणमित्युक्तम् । रसज्ञानामित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता । इक्षुभक्षणवद्रसान्तराभावेन तृप्तिं निराकरोति । पदेपदे प्रतिक्षणं स्वादुतोऽपि स्वादु ॥ १९ ॥

तस्य[2] कर्माण्युदाराणि परिगीतानि सूरिभिः ॥ ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७ ॥ अथाख्याहि[3] हरेर्धीमन्नवतारकथाः शुभाः ॥ लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥ वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ॥ यच्छृण्वतां रसज्ञानां स्वादुस्वादु पदेपदे ॥ १९ ॥ कृतवान्किल वीर्याणि सह रामेण केशवः ॥ अतिमर्त्यानि भगवान्गूढः कपटमानुषः[4] ॥ २० ॥ कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ॥ आसीना दीर्घसत्रेण कथायां सक्षणा[5] हरेः ॥ २१ ॥ त्वं नः संदर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ॥ कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२ ॥ ब्रूहि[6] योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि ॥ स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे नैमिषेयोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ छ ॥ ॥

अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः—कृतवानिति । अतिमर्त्यानि मर्त्याननतिक्रान्तानि गोवर्धनोद्धरणादीनि । मनुष्येष्वसंभावितानीत्यर्थः ॥ २० ॥ ननु याजनाध्यापनादिव्यग्राणां कुत एतच्छ्रवणावकाशः स्यादत आहुः—कलिमिति । कलिमागतं ज्ञात्वा तद्भिया विष्णुपदं गन्तुकामा दीर्घसत्रेण निमित्तेनात्र वैष्णवे क्षेत्रे आसीनाः । हरेः कथायां सक्षणा लब्धावसराः ॥ २१ ॥ अस्मिंश्च समये त्वद्दर्शनमीश्वरेणैव संपादितमित्यभिनन्दन्ति—त्वमिति । कलिं संसारं निस्तर्तुमिच्छताम् । अर्णवं तितीर्षतां कर्णधारो नाविक इव ॥ २२ ॥ पुनः प्रश्नान्तरं—ब्रूहीति । धर्मस्य वर्मणि कवचवद्रक्षके । स्वां काष्ठां मर्यादाम् । स्वस्वरूपमित्यर्थः । अस्य चोत्तरं 'कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह' इत्ययं श्लोकः[7] ॥ २३ ॥ ॥ इति श्रीमद्भागवते प्रथमस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥ ॥

१ अथवा उत्तमाः सर्वोत्कृष्टाः श्लोका यशासि यस्य तस्य । २ 'तस्य कर्माण्युदाराणि' इति श्लोकेन तृतीयः प्रश्नः । ३ 'अथाख्याहीं'त्यारभ्य 'स्वादु पदेपदे' इत्यन्तेन श्लोकद्वयेन चतुर्थः प्रश्नः । ४ मानुषेष्वपि कं सुखं पटति प्राप्नोतीति कपटमानुष इत्यर्थो वा । ५ 'क्षण उद्धव उत्सवः' इति कोशात् सोत्साहा वा । ६ ब्रूहीति श्लोकेन षष्ठः प्रश्नः । ७ अयं च श्लोकस्तृतीयाध्यायान्ते आलोचनीयः ।

तदेवं प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ॥ द्वितीये तूत्तरं सूतश्चतुर्णामाह तेष्वथ ॥ १ ॥ विप्राणां इत्येवंभूतैः सम्यक् प्रश्नैः सम्यग् हृष्टो रोमहर्षणस्य पुत्र उग्रश्रवास्तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुमुपचक्रमे उपक्रान्तवान् ॥ १ ॥ प्रवचनस्योपक्रमो नाम गुरुदेवतानमस्कार इति । तमाह—यमिति त्रिभिः । तत्र स्वगुरोः शुकस्यैश्वर्यं तच्चरितेनैव द्योतयन्नाह—यमिति । यं प्रव्रजन्तं संन्यस्य गच्छन्तम् । अनुपेतं मामुपनयस्वेत्युपनयनार्थमाचार्यमनुपसन्नम् । यद्वा केनाप्यनुपेतमननुगतम् । एकाकिनमित्यर्थः । तत्र हेतुः—अपेतकृत्यं कृत्यशून्यं कर्ममार्गेऽप्रवर्तमानं नैष्ठिकत्वात् । द्वैपायनो व्यासो विरहात्कातरो भीतः सन् पुत्रा ३ इति प्लुतेनाजुहावाहूतवान् । दूराद्धाने प्लुते सत्यपि सैन्धिरार्षः । तदा तन्मयतया शुकरूपतया तैरवोऽभिनेदुः प्रत्युत्तरमुक्तवन्तः । पितुः स्नेहानुबन्धपरिहाराय यो वृक्षरूपेणोत्तरं दत्तवानित्यर्थः । तं मुनिमानतोऽस्मि । तन्मयत्वोपपादनाय विशेषणम् । सर्वभूतानां हृन्मनः अयते योगबलेन प्रविशतीति सर्वभूतहृदयस्तम्

व्यास उवाच ॥ इति संप्रश्नसंहृष्टो विप्राणां रौमहर्षणिः ॥ प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥ ॥ सूत उवाच ॥ यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥ यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ॥ संसारिणां करुणयाह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥ मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम् ॥ यत्कृतः कृष्णसंप्रश्नो येनात्मा सुप्रसीदति ॥५॥ स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ॥ अहैतुक्यप्रतिहता ययात्मा संप्रसीदति ॥६॥

॥ २ ॥ तत्कृपालुतां दर्शयन्नाह—य इति । अन्धं गाढं तमः संसाराख्यमतितर्तुमिच्छताम् । पुराणानां मध्ये गुह्यं गोप्यम् । तत्र हेतुत्वेन चत्वारि विशेषणानि । स्वो निजोऽसाधारणोऽनुभावः प्रभावो यस्य तत्स्वानुभावम् । अखिलश्रुतीनां सारम् । एकमद्वितीयम् । अनुपममित्यर्थः । आत्मानं कार्यकारणसंघातमधिकृत्य वर्तमानमात्मतत्त्वमध्यात्मं तस्य दीपं साक्षात्प्रकाशकम् । उपयामि शरणं व्रजामि ॥ ३ ॥ जयत्यनेन संसारमिति जयो ग्रन्थस्तमुदीरयेदिति स्वयं तथोदीरयन्नन्यान्पौराणिकाननुशिक्षयति ॥ ४ ॥ तेषां वचः प्रतिपूज्येति यदुक्तं तत्प्रतिपूजनं करोति । हे मुनयः, साधु यथा भवति तथाऽहं पृष्टः । यतो लोकानां मङ्गलमेतत् । यद्यतः कृष्णविषयः संप्रश्नः कृतः । सर्वशास्त्रार्थसारोद्धारप्रश्नस्यापि कृष्णे पर्यवसानादेवमुक्तम् ॥ ५ ॥ तत्र यत्प्रथमं पृष्टं सर्वशास्त्रसारमैकान्तिकं श्रेयो ब्रूहीति तत्रोत्तरम् । स वै पुंसामिति । अयमर्थः—धर्मो द्विविधः । प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः सोऽपरः । यतस्तु धर्मो-

१ चतुर्णां शास्त्रसार—वीर्य—कर्म—पालन—रूपाणाम् । २ एतदग्रे उपनयनकर्मणोऽप्यनर्हवयस्कत्वाद्विशेषतो बालमित्यभिप्राय इत्यधिकः पाठः क्वचित् । ३ 'गुरोरनृतः' इत्यत्र प्राचामिति योगं विभज्य वैकल्पिकत्वाभ्युपगमात् 'अप्लुतवत्' इति सूत्रे 'प्लुतो विभाषाकर्तव्यः' इति महाभाष्योक्तेश्च प्लुताभावपक्षे संधिः सुलभ एवेति बोध्यमिति वीरराघवः । ४ यथाऽस्मासु जन्यजनकभावे विद्यमानेऽपि पितृपुत्रव्यवहारो नास्ति तथा त्वय्यपि नास्त्यतः पुत्रेत्याह्वानं व्यर्थमित्यर्थः । ५ 'संप्रश्नसंपृष्टः' इति क्वचित्पाठः । ६ अत्र 'अतितितीरषताम्' इति पाठो बहुत्र दृश्यते तत्राभ्यासलोपो रेफषकारयोर्विश्लेषो वृत्तभङ्गश्चार्षः । ७ पुराणगुह्यमित्यत्र 'विशेषणं विशेष्येण' इत्यत्र बहुलग्रहणाद्विशेष्यस्यापि पुराणशब्दस्य पूर्वनिपातः । ८ नरो भगवदवतारस्तस्य विशेषणं नरोत्तममिति । ९ 'सरस्वतीं चैव' इति प्राचीनपुस्तकेषु बहुशः पाठो दृश्यते । तत्र चकाराद्व्यासस्यैव ग्रहणम् । १० अखिलस्य जगतः श्रुतेः श्रवणेन्द्रियस्य सारं सुखदं वा । अखिलश्रुतीः सरति गच्छति विषयतयेत्यखिलश्रुतिसारं वेदार्थमिति वा कर्मण्यण् ।

च्छ्रवणादरादिलक्षणा भक्तिर्भवति स परो धर्मः स एवैकान्तिकं श्रेय इति। कथंभूता। अहैतुकी हेतुः फलानुसन्धानं तद्रहिता। अप्रतिहता विघ्नैरनभिभूता ॥६॥ ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतिभ्यो धर्मस्य ज्ञानाङ्गत्वं प्रसिद्धं तत्कुतो भक्तिहेतुत्वमुच्यते। सत्यम्। तत्तु भक्तिद्वारेणेत्याह—वासुदेव इति। अहैतुकं शुष्कतर्काद्यगोचरमौपनिषदमित्यर्थः ॥७॥ व्यतिरेकमाह—धर्म इति। यो धर्म इति प्रसिद्धः स यदि विष्वक्सेनस्य कथासु रतिं नोत्पादयेत्तर्हि स्वनुष्ठितोऽपि सन्नयं श्रमो ज्ञेयः। ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येवात आह। केवलम्। विफलः श्रम इत्यर्थः। नन्वस्ति तत्रापि स्वर्गादिफलमित्याशङ्क्यैवकारेण निराकरोति। क्षयिष्णुत्वान्न तत्फलमित्यर्थः। ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिश्रुतेर्न तत्फलस्य क्षयिष्णुत्वमित्याशङ्क्य हिशब्देन साधयति। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्वप्रतिपादनात् ॥ ८ ॥ तदेवं हरिभक्तिद्वारा तदितरवैराग्यात्मज्ञानपर्यन्तः परो धर्म इत्युक्तम्। अन्ये तु मन्यन्ते। धर्मस्यार्थः फलं, तस्य च कामः फलं, तस्य चेन्द्रियप्रीतिः, तत्प्रीतेश्च पुनरपि धर्मार्थादिपरम्परेति। यथाहुः—'धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते' इत्यादि। तन्निराकरोति—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ७ ॥ धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ॥ नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ८ ॥ धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ॥ नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥ कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ॥ जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ १० ॥ वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥ तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ॥ पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥ १२ ॥

धर्मस्येति द्वाभ्याम्। आपवर्ग्यस्योक्तन्यायेनापवर्गपर्यन्तस्य धर्मस्यार्थाय फलत्वायार्थो नोपकल्पते योग्यो न भवति। तथार्थस्याप्येवंभूतधर्माव्यभिचारिणः कामो लाभाय फलत्वाय नहि स्मृतो मुनिभिः ॥ ९ ॥ कामस्य च विषयभोगस्येन्द्रियप्रीतिर्लाभः फलं न भवति किंतु यावता जीवेत तावानेव कामस्य लाभः। जीवनपर्याप्त एव कामः सेव्य इत्यर्थः। जीवस्य जीवनस्य च पुनः कर्मानुष्ठानद्वारा कर्मभिर्य इह प्रसिद्धः सोऽर्थो न भवति किंतु तत्त्वजिज्ञासैवेति ॥ १० ॥ ननु च तत्त्वजिज्ञासा नाम धर्मजिज्ञासैव धर्म एव हि तत्त्वमिति केचित्तत्राह। तत्त्वविदस्तु तदेव तत्त्वं वदन्ति। किं तत्। यज्ज्ञानं नाम। अद्वयमिति क्षणिकविज्ञानपक्षं व्यावर्तयति। ननु तत्त्वविदोऽपि विगीतवचना एव। मैवम्। तस्यैव तत्त्वस्य नामान्तरैरभिधानादित्याह। औपनिषदैर्ब्रह्मेति, हैरण्यगर्भैः परमात्मेति, सात्वतैर्भगवानित्यभिधीयते ॥ ११ ॥ तच्च तत्त्वं सपरिकरया भक्त्यैव प्राप्यत इत्याह। तच्चेत्यन्वयः। ज्ञानवैराग्ययुक्तयेत्यत्र ज्ञानं परोक्षम्। तच्च तत्त्वमात्मनि क्षेत्रज्ञे पश्यन्ति। किं तत्। आत्मानं परमात्मानम्। श्रुतेन वेदान्तादिश्रवणेन गृहीतया प्रापयेति भक्तेर्दार्ढ्यमुक्तम् ॥ १२ ॥ ॥

१ यज्ञादीना विशेषणमनाशकेनेति। कामानशनमनाशकं तेन। निष्कामेनेति यावत्। २ विसूची व्यापिका सेना यस्य स विष्वक्सेनो भगवांस्तस्य। ३ वैराग्यं अहेतुकं ज्ञानं च जनयतीत्यन्वयः। ४ 'धर्मः स्वनुष्ठित' इत्यष्टमश्लोकानन्तरम् 'श्रुतमप्यौपनिषदं दूरे हरिकथामृतात्॥ यत्र सन्ति द्रवच्चित्तप्रेमाश्रुपुलकोद्गमाः' इति श्लोकः, तट्टीका च—ननु वेदान्तश्रवणादिभिरेव तत्त्वसाक्षात्कारः स्यात्किं भक्त्यात आह—श्रुतमिति। यद्यस्य पुंसो हरिकथामृतादास्वाद्यमानाद्द्रवच्चित्तं प्रेमाश्रुपुलकोद्गमाश्च न सन्ति तस्यौपनिषदमात्मतत्त्वं श्रुतमपि दूरे परोक्षे इत्यर्थः—इत्यधिकमन्यपुस्तके। ५ अपवर्गो मोक्षः। निवृत्तिलक्षणो धर्म एव सेव्यो न तस्य फलमर्थ इति भावः। ६ स्वर्गादिः। ७ ध्रुवं यज्ञादिकर्म तस्य कर्तव्यतया वेदे श्रुतत्वाच्चेन गृहीतयानुगृहीतया।

...भक्तिनोऽर्थकामादिकमितीममर्थमुपपाद्योपसंहरति—अत इति । हे द्विजश्रेष्ठाः । हरितोषणं हरेराराधनम् । संसिद्धिः फलम् ॥ १३ ॥ यस्माच्च भक्तिहीनो धर्मः केवलं श्रम एव तस्माद्भक्तिप्रधान एव धर्मोऽनुष्ठेय इत्याह—तस्मादिति । एकेनैकाग्रेण[1] मनसा ॥१४॥ भक्तिरहितो धर्मः केवलं श्रम एवेति प्रपञ्चितम् । इदानीं तु भक्तेर्मुक्तिफलत्वं प्रपञ्चयति—यदिति । यस्यानुध्या अनुध्यानं सैवासिः खड्गस्तेन युक्ता विवेकिनो ग्रन्थिमहङ्कारं निबध्नाति यत्कर्म तच्छिन्दन्ति तस्य कथायां रतिं को न कुर्यात् ॥ १५ ॥ ननु सत्यमेव कर्मनिर्मूलनी हरिकथारतिस्तथापि तस्यां रुचिर्नोत्पद्यते किं कुर्मस्तत्राह—शुश्रूषोरिति । पुण्यतीर्थनिषेवणान्निष्पापस्य[2] महत्सेवा स्यात्, तया च तद्धर्मश्रद्धा, ततः श्रवणेच्छा, ततो रुचिः स्यादित्यर्थः ॥१६॥ ततश्च शृण्वतामिति । पुण्ये श्रवणकीर्तने यस्य सः । सतां सुहृद्धितकारी । हृदि यान्यभद्राणि कामादिवासनास्तानि । अन्तस्थो हृदयस्थः सन् ॥ १७ ॥ ततश्च नष्टप्रायेष्विति । सर्वाभद्रनाशस्य ज्ञानो-

अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ॥ स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥१३॥ तस्मादेकेन मनसा भगवा-
[3]न्सात्वतांपतिः ॥ श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १४ ॥ यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम् ॥
छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥१५॥ शुश्रूषोः[4] श्रद्दधानस्य वासुदेवकथारुचिः ॥ स्यान्महत्सेवया विप्राः
पुण्यतीर्थनिषेवणात् ॥१६॥ शृण्वतां स्वकथां[5] कृष्णः पुण्यश्रवणकीर्तनः ॥ हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्
॥१७॥ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ॥ भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १८ ॥ तदा रजस्तमोभावाः
कामलोभादयश्च ये ॥ चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥१९॥ एवंप्रसन्नमनसो [6]भगवद्भक्तियोगतः ॥ भगवत्तत्त्व-
विज्ञानं मुक्तसङ्गस्य जायते ॥२०॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि दृष्ट[7] एवात्मनीश्वरे
॥२१॥ अतो वै कवयो नित्यं भक्तिं परमया मुदा ॥ वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम्[8] ॥२२॥ सत्त्वं रजस्तम इति प्र-
कृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ॥ स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥२३

त्तरकालत्वात्प्रायग्रहणम् । भागवतानां भागवतशास्त्रस्य वा सेवया । नैष्ठिकी निश्चला विक्षेपकाभावात् ॥ १८ ॥ रजश्च तमश्च ये च तत्प्रभवा भावाः कामादयः एतैरनाविद्धमनभिभूतम् । प्रसीदत्युपशाम्यति ॥ १९ ॥ भगवद्भक्तियोगतः प्रसन्नमनसोऽत एव मुक्तसङ्गस्य ॥ २० ॥ विज्ञानफलमाह—भिद्यत इति । हृदयमेव ग्रन्थिश्चिज्जडग्रथनरूपोऽहङ्कारः । अत एव सर्वे संशया असंभावनादिरूपाः । कर्माण्यनारब्धफलानि । आत्मनि स्वरूपभूते ईश्वरे दृष्टे साक्षात्कृते सति । एवकारेण विज्ञानानन्तरमेवेति दर्शयति ॥ २१ ॥ तत्र च सदाचारं दर्शयन्नुपसंहरति—अत इति । आत्मनः प्रसादनीं मनःशोधनीम् । वासुदेवे भक्तिं कुर्वन्तीति भजनीय-विशेषो दर्शितः ॥ २२ ॥ तदेवोपपादयितुं ब्रह्मादीनां त्रयाणामेकात्मकत्वेऽपि वासुदेवस्याधिक्यमाह—सत्त्वमिति । इह यद्यप्येक एव परः पुमानस्य विश्वस्य

१ एकेन हरितोषणफलकधर्मप्रधानेनेति सि. प्र. । २ पुण्यतीर्थपदेन सद्गुरोरपि ग्रहणम् वि. च. । ३ सात्वता भक्तानाम् । ४ स्वधर्मनिरस्तशुश्रूषाप्रतिबन्धकस्येत्यर्थः । ५ 'स्वकथाः' इत्यपि क्वचित्पाठः । ६ भगवानेव तत्त्वं भगवत्तत्त्वं तस्य विज्ञानमनुभवः महे० । ७ यद्वा आत्मन्येव मनस्येव दृष्टे किं पुनः साक्षाद्दृष्टे सतीति स्फूर्तिसाक्षात्कारावुक्तौ वि. च. । ८ 'प्रसादिनीम्' इत्यपि पाठः ।

स्थित्यादये स्थितिसृष्टिप्रलयार्थं हरिविरिञ्चिहरेतिसंज्ञाः केवलं भिन्ना धत्ते । हरिविरिञ्चिहरा इति वक्तव्ये सन्धिरार्षः । तत्र तेषां मध्ये श्रेयांसि शुभफलानि सत्त्वतनोर्वासुदेवादेव स्युः ॥ २३ ॥ उपाधिवैशिष्ट्येन फलवैशिष्ट्यं सदृष्टान्तमाह । पार्थिवात्स्वतःप्रवृत्तिप्रकाशरहिताद्दारुणः काष्ठात्सकाशाद्धूमः प्रवृत्तिस्वभावस्त्रयीमयो वेदोक्तकर्मप्रचुरः । ईषत्कर्मप्रत्यासत्तेः । तस्मादप्यग्निस्त्रयीमयः । साक्षात्कर्मसाधनत्वात् । एवं तमसः सकाशाद्रजो ब्रह्मदर्शनं ब्रह्मप्रकाशकम् । तुशब्देन लयात्मकात्तमसः सकाशाद्रजसः सोपाधिकज्ञानहेतुत्वेन किंचिद्ब्रह्मदर्शनप्रत्यासत्तिमात्रमुक्तं, नतु सर्वथा तत्प्रकाशकत्वं विक्षेपकत्वात् । यत्सत्त्वं तत्साक्षाद्ब्रह्मदर्शनम् । अतस्तद्गुणोपाधीनां ब्रह्मादीनामपि यथोत्तरं वैशिष्ट्यमिति भावः ॥ २४ ॥ वासुदेवभक्तौ पूर्वाचारं प्रमाणयति—भेजिर इति । अथातो हेतोरग्रे पुरा विशुद्धं सत्त्वं सत्त्वमूर्तिं भगवन्तमधोक्षजम् । अतो ये तानुवर्तन्ते त इह संसारे क्षेमाय कल्पन्ते ॥ २५ ॥ नन्वन्यानपि केचिद्भजन्तो दृश्यन्ते । सत्यम् । मुमुक्षवस्त्वन्यान्न भजन्ति किंतु सकामा एवेत्याह—मुमुक्षव इति द्वाभ्याम् । भूतपतीनिति पितृप्रजेशादीनामुपलक्षणम् । अनसूयवो देवतान्तरानिन्दकाः सन्तः ॥२६॥

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ॥ तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शनम् ॥२४॥ भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् ॥ सत्त्वं विशुद्धं क्षेमाय कल्पन्ते ये नु तानिह ॥ २५ ॥ मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ ॥ नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥२६॥ रजस्तमःप्रकृतयः समशीला भजन्ति वै ॥ पितृभूतप्रजेशादीञ्छ्रियैश्वर्यप्रजेप्सवः ॥२७॥ वासुदेवपरा वेदा वासुदेवपरा मखाः ॥ वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥ वासुदेवपरं ज्ञानं वासुदेवपरं तपः ॥ वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥२९॥ स एवेदं ससर्जाग्रे भगवानात्ममायया ॥ सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३० ॥

रजस्तमसी प्रकृतिः स्वभावो येषां ते । अत एव पितृभूतादिभिः समं शीलं येषाम् । श्रिया सहैश्वर्यं प्रजाश्चेप्सन्तीति तथा ते ॥२७॥ मोक्षप्रदत्वाद्वासुदेवो भजनीय इत्युक्तं सर्वशास्त्रतात्पर्यगोचरत्वादपीत्याह द्वाभ्याम् । वासुदेव एव परस्तात्पर्यगोचरो येषां ते । ननु वेदा मखपरा दृश्यन्त इत्याशङ्क्य तेऽपि तदाराधनार्थत्वात्तत्परा एवेत्युक्तम् । योगा योगशास्त्राणि । तेषामप्यासनप्राणायामादिक्रियापरत्वमाशङ्क्य तासामपि तत्प्राप्त्युपायत्वात्तत्परत्वमुक्तम् ॥२८॥ ज्ञानं ज्ञानशास्त्रम् । ननु च तज्ज्ञानपरमेवेत्याशङ्क्य ज्ञानस्यापि तत्परत्वमुक्तम् । तपोऽत्र ज्ञानम् । धर्मो धर्मशास्त्रं दानव्रतादिविषयम् । ननु तत्स्वर्गपरमित्याशङ्क्य गम्यत इति गतिः स्वर्गादिफलं सापि तदानन्दांशरूपत्वात्तत्परैवेत्युक्तम् । यद्वा वेदा इत्यनेनैव तन्मूलत्वात्सर्वाण्यपि वासुदेवपराणीत्युक्तम् । तत्र ननु तेषां मखयोगक्रियादिनानार्थपरत्वान्न तदेकपरत्वमित्याशङ्क्य मखादीनामपि तत्परत्वमित्युक्तमिति द्रष्टव्यम् ॥ २९ ॥ ननु जगत्सर्गतत्प्रवेशनियमनादिविलासयुक्ते वस्तुनि सर्वशास्त्रसमन्वयो दृश्यते कथं वासुदेवपरत्वं सर्वस्य तत्राह—स एवेति चतुर्भिः । एतैरेव श्लोकैस्तस्य कर्माण्युदाराणि ब्रूहीति प्रश्नस्योत्तरमुक्तम् । सदसद्रूपया कार्यकारणात्मिकया ।

१ प्रवृत्तिप्रकाशरहितादिति । प्रवृत्तिः कर्मारम्भः तस्य हेतुः प्रकाशो दीप्तिस्तद्रहितात् । नहि केवलदारुसांनिध्ये होमप्रत्यासत्तिः । एवं लयात्मके तमसि ब्रह्मज्ञानलेशोपि नास्ति । मध्यमान्नाद्दारुणः सकाशाद्धूमसुत्पन्नं दृष्ट्वाग्न्युत्पत्त्याशंसया होमारम्भप्रत्यासत्तेः । २ ईषदिति । एवं कर्मस्वभावे रजसि कर्मणा शुद्धस्य ब्रह्मज्ञानाशंसा रजसो विक्षेपकत्वान्न तथा सर्वत्र ब्रह्मप्रकाशकत्व मित्वीषदिति । प्रकाशस्वभावे तु सत्त्वे साक्षाद्ब्रह्मप्रकाशः, यथाग्नौ होम इत्यर्थः । दीपि० । ३ इदं रजसोऽपि विशेषणम् । ४ अधः अधःकृतमक्षजं ज्ञानं येनेत्यधोक्षजपदव्युत्पत्तिः । ५ राजसतामसान् । ६ रजस्तमःप्रकृतिरेनैव ।

अगुणश्चेत्यन्वयः । स्वतो निर्गुणोऽपि सन्नित्यर्थः ॥ ३० ॥ भगवतो जगत्कारणत्वमुक्तम् । प्रवेशनियमनलक्षणां लीलामाह—तयेति । विलसितेपूद्भूतेपु गुणेष्वाकाशादिष्वन्तः प्रविष्टः सन् गुणवानिव मदधीना एते गुणा इत्यभिमानवानिव नतु वस्तुतस्तथा । यतो विज्ञानेन चिच्छक्त्या विजृम्भितोऽत्यूर्जितः ॥ ३१ ॥ बहुरूपत्वलीलामाह—यथेति । स्वयोनिपु स्वाभिव्यञ्जकेपु अवहितो निहितः । विश्वात्मा पुमान्परमेश्वरः । भूतेपु प्राणिपु अन्तर्यामिणोऽपि प्रतियोनि-नानात्वेन नानात्वमिवोच्यते । [3]क्षेत्रज्ञरूपेण वा ॥३२॥ भोगरूपां लीलामाह—असाविति । असौ हरिर्भूतसूक्ष्माणि चेन्द्रियाणि श्रोत्रादीनि चात्मा मनश्च तैः स्वयं निर्मितेपु भूतेपु चतुर्विधेष्विति भोगे स्वातन्त्र्यं द्योत्यते । तद्गुणांस्तत्तदनुरूपान्विपयानिच्छया भुङ्क्ते भोजयतीति णिजर्थो वा ज्ञेयः । भुङ्क्ते पालयतीति वा । तदा त्वात्मनेपदमार्षम् । 'भुजोऽनवने' इति स्मरणात् ॥ ३३ ॥ इदानीं 'सूत जानासि' इति प्रश्नस्योत्तरमाह । भावयति पालयति । एतत्तु सर्वावतारसाधारणं प्रयो-जनम् । विशेपतः कृष्णावतारस्य कुन्तीस्तुतौ वक्ष्यते । लोकभावनो लोककर्ता । देवादिपु ये लीलावतारास्तेष्वनुरतोऽनुरक्तः ॥ ३४ ॥ ॥ इति श्रीमद्भागवते

तया विलसितेष्वेषु गुणेषु गुणवानिव ॥ अन्तः प्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१ ॥ यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ॥ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥ असौ गुणमयैर्भावैर्भूतसूक्ष्मे-न्द्रियात्मभिः ॥ स्वनिर्मितेपु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३३ ॥ भावयत्येष सत्त्वेन लोकान्वै लोकभावनः । लीला-वतारानुरतो देवतिर्यङ्नरादिषु ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ ॥

सूत उवाच ॥ जगृहे पौरुषं रूपं भगवान्महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥ यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ॥ नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥ यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ॥ तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३ ॥

महापुराणे प्रथमस्कन्धे भावार्थदीपिकाख्यटीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ अवतारकथाप्रश्ने तृतीये तूत्तराभिधा ॥ पुरुषाद्यवतारोक्त्या तत्तच्चारि-त्रवर्णनैः ॥ १ ॥ यदुक्तं 'अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः' इति तदुत्तरत्वेनावतारानन्नुक्रमिष्यन्प्रथमं पुरुषावतारमाह—जगृह इति पञ्चभिः । महदादिभिर्महदहङ्कारपञ्चतन्मात्रैः संभूतं सुनिष्पन्नम् । एकादशेन्द्रियाणि पञ्च महाभूतानीति पोडश कला अंशा यस्मिन् । यद्यपि भगवद्विग्रहो नैवंभूतस्तथापि विराड्जीवान्तर्यामिणो भगवतो विराड्रूपेणोपासनार्थमेवमुक्तमिति द्रष्टव्यम् ॥ १ ॥ कोऽसौ भगवानित्यपेक्षायां तं विशिनष्टि । यस्याम्भसि एकार्णवे शयानस्य विश्रान्तस्य । तत्र च योगः समाधिस्तद्रूपां निद्रां विस्तारयतो नाभिरेव ह्रदस्तस्मिन्यदम्बुजं तस्मात्सकाशाद्ब्रह्मासीदभूत्पाद्मे कल्पे । स पौरुषं रूपं जगृहे ॥२॥ कीदृशं रूपं तदाह—यस्येति । ननु कीदृशो विग्रहस्तस्य योऽम्भसि शेते स्म तदाह । तत्तस्य भगवतो रूपं तु विशुद्धं रजआदिगुणान्तरेणासंभिन्नमत एवोर्जितं

१ तयेत्यण्डसस्थितः पुरुप इति चक्र० । २ उपाधिनानात्वेनेति पूर्वाचार्याः । ३ क्षेत्ररूपेण वेति कचित्पाठः । ४ भावयतीति श्लोकेन 'सूत जानासि' इति द्वादशादिश्लोकोक्तप्रश्नद्वयस्यो-त्तरमुक्तमिति ज्ञेयम् । श्रीकृष्णावतारप्रयोजनकथनेन तन्मूलकतच्चरितप्रश्नस्याप्युत्तरकथनसिद्धेरिति दीपि० । ५ यस्य ब्रह्मोत्पादकजगत्पद्मस्य स्थूलशरीरावयवविन्यासैः वि० । ६ अयं च प्रथमाध्यायस्याष्टाविंशतितमः श्लोकः । ७ देहान्तर्यामिण इति पाठोऽपि कचिद्दृश्यते ।

निरतिशयं सत्त्वम् ॥ ३ ॥ एतच्च योगिनां प्रत्यक्षमित्याह—पश्यन्तीति । अदभ्रमनल्पं ज्ञानात्मकं यच्चक्षुस्तेन । सहस्रमपरिमितानि यानि पादादीनि तैरद्भुतम् । सहस्रं मूर्धादयो यस्मिंस्तत् । सहस्रं यानि मौल्यादीनि तैरुल्लसच्छोभमानम् ॥ ४ ॥ एतत्तु कूटस्थं न त्वन्यावतारवदाविर्भावतिरोभाववदित्याह—एतदिति । एतदादि नारायणरूपम् । निधीयतेऽस्मिन्निति निधानम् । कार्यावसाने प्रवेशस्थानमित्यर्थः । बीजमुद्गमस्थानम् । बीजत्वेऽपि नान्यबीजतुल्यं किंत्वव्ययम् । न केवलमवताराणामेव बीजं किंतु सर्वप्राणिनामपीत्याह । यस्यांशो ब्रह्मा तस्यांशो मरीच्यादिस्तेन ॥ ५ ॥ सनत्कुमाराद्यवतारं तच्चरित्रं चाह—स एवेति । कौमार आर्षः प्राजापत्यो मानव इत्यादीनि सर्गविशेषनामानि । यः पौरुषं रूपं जगृहे स एव देवः कौमाराख्यं सर्गमास्थितः सन् ब्रह्मा ब्राह्मणो भूत्वा ब्रह्मचर्यं चचार । प्रथमद्वितीयादिशब्दा निर्देशमात्रापेक्षया ॥ ६ ॥ वराहावतारमाह—द्वितीयमिति । अस्य विश्वस्य भवायोद्भवाय महीमुद्धरिष्यन्निति कर्मोक्तिः । एवं सर्वत्रावतारस्तत्कर्म चोक्तमित्यनुसंधेयम् ॥ ७ ॥ नारदावतारमाह—तृतीयमिति । ऋषिसर्गमुपेत्य । तत्र च देवर्षित्वमुपेत्येत्यर्थः । सात्वतं वैष्णवं तन्त्रं पञ्चरात्राग-

पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् ॥ सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्
॥४॥ एतन्नानावताराणां निधानं बीजमव्ययम् ॥ यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥५॥ स एव प्रथमं देवः कौमारं
सर्गमास्थितः ॥ चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥६॥ द्वितीयं तु भवायास्य रसातलगतां महीम् ॥ उद्धरिष्यन्नुपा-
दत्त यज्ञेशः सौकरं वपुः ॥७॥ तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः ॥ तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥८॥
तुर्ये धर्मकलासर्गे नरनारायणावृषी ॥ भूत्वात्मोपशमोपेतमकरोद्दुश्चरं तपः ॥९॥ पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुत-
म् ॥ प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥१०॥ षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ॥ आन्वीक्षिकीमलर्काय प्रह्ला-
दादिभ्य ऊचिवान् ॥११॥ ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ॥ स यामाद्यैः सुरगणैरपात्स्वायंभुवान्तरम् ॥ १२ ॥

ममाचष्टोक्तवान् । यतस्तन्त्रात् । निर्गतं कर्मत्वं बन्धहेतुत्वं येभ्यस्तानि निष्कर्माणि तेषां भावो नैष्कर्म्यम् । कर्मणामेव मोचकत्वं यतो भवति तदाचष्टेत्यर्थः ॥ ८ ॥ नरनारायणावतारमाह—तुर्ये इति । तुर्ये चतुर्थेऽवतारे । धर्मस्य कला अंशः । भार्येत्यर्थः । 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः । तस्याः सर्गे । ऋषी भूत्वेत्येकावतारत्वं दर्शयति ॥ ९ ॥ कपिलावतारमाह—पञ्चम इति । आसुरये तन्नाम्ने ब्राह्मणाय । तत्त्वानां ग्रामस्य सङ्घस्य विनिर्णयो यस्मिन् शास्त्रे तत्सांख्यम् ॥ १० ॥ दत्तात्रेयावतारमाह—षष्ठमिति । अत्रेरपत्यत्वं तेनैव वृतः सन् प्राप्तः 'अत्रेरपत्यमभिकाङ्क्षत आह तुष्टः' इति वक्ष्यमाणत्वात् । कथं प्राप्तः । अनसूयया मत्सदृशापत्यमिषेण मामेवापत्यं वृतवानिति दोषदृष्टिमकुर्वन्नित्यर्थः । आन्वीक्षिकीमात्मविद्याम् । प्रह्लादादिभ्यश्च । आदिपदाद्यदुहैहयाद्या गृह्यन्ते ॥ ११ ॥ यज्ञावतारमाह—तत इति । स यज्ञो यामाद्यैः स्वस्यैव पुत्रा यामा नाम देवास्तदाद्यैः सह स्वायंभुवं मन्वन्तरं पालितवान् । तदा स्वयमिन्द्रो-

१ 'भूत्वा दमशमोपेतम्' इत्यपि क्वचित्पाठ उपलभ्यते । २ 'तथा' इत्यपि पाठो मूले टीकायामपि क्वचिद्दृश्यते । ३ निष्कर्मशब्दे कर्मशब्दो भावप्रधानः । अयं ग्रन्थो बहुषु प्राचीनपुस्तकेषु नोपलभ्यते । ४ भार्येति । धर्मस्य भार्यायां मूर्तिनाम्न्यामिति शेषः । ५ आसुरिस्तावत्तत्रभवतः कपिलदेवस्याद्यशिष्य इतीश्वरकृष्णीयसांख्यकारिकायां स्पष्टम् । ६ द्वितीयस्कन्धसप्तमाध्यायस्य चतुर्थं पद्यमिदम् । ७ अन्वीक्षते आत्माऽनयेत्यन्वीक्षा तामधिकृत्य कृतां । तामेवाहुः स्वामिपादा आत्मविद्यामिति ।

ऽभूदित्यर्थः ॥ १२ ॥ ऋषभावतारमाह—अष्टम इति । सर्वाश्रमनमस्कृतमन्त्याश्रमं पारमहंस्यं वर्त्म धीराणां दर्शयन्नाभेराग्नीध्रपुत्रादृषभो जातः ॥ १३ ॥ पृथ्ववतारमाह—ऋषिभिरिति । पार्थिवं वपुः राजदेहं पृथुरूपम् । पाठान्तरे पृथोरिदं पार्थवम् । औषधीरित्युपलक्षणम् । इमां पृथ्वीं सर्वाणि वस्तूनि दुग्ध अदुग्ध । अडागमाभावस्त्वार्षः । हे विप्राः, तेन पृथ्वीदोहनेन सोऽयमवतार उशत्तमः कमनीयतमः । 'वश कान्तौ' इत्यस्मात् ॥ १४ ॥ मत्स्यावतारमाह—रूपमिति । चाक्षुषमन्वन्तरे य उदधीनां संप्लवः संश्लेषस्तस्मिन् । यद्यपि मन्वन्तरावसाने प्रलयो नास्ति तथापि केनचित्कौतुकेन सत्यव्रताय माया प्रदर्शिता यथाऽकाण्डे मार्कण्डेयायेति द्रष्टव्यम् । महीमय्यां नावि, नौकारूपायां मह्यामित्यर्थः । अपाद्रक्षितवान् । वैवस्वतमिति भाविनी संज्ञा ॥ १५ ॥ कूर्मावतारमाह । कमठः कूर्मस्तद्रूपेणैकादशेऽवतारे विभुर्दध्रे दधार ॥ १६ ॥ धन्वन्तर्यवतारमाह । धान्वन्तरं धन्वन्तरिरूपम् । द्वादशमादिप्रयोगस्त्वार्षः । त्रयोदशममेव

अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ॥ दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥ ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ॥ दुग्धेमामौषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥ रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ॥ नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥ सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ॥ दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥१६॥ धान्वन्तरं द्वादशमं त्रयोदशममेव च ॥ अपाययत्सुरानन्यान्मोहिन्या मोहयन् स्त्रिया ॥१७॥ चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ॥ ददार करजैर्वक्षस्येरकां कटकृद्यथा ॥१८॥ पञ्चदशं वामनकं कृत्वागादध्वरं बलेः ॥ पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥ अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ॥ त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २० ॥ ततः सप्तदशे जातः सत्यवत्यां पराशरात् ॥ चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥२१॥ नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ॥ समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम् ॥२२॥ एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ॥ रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥

रूपं तच्चरितेन सह दर्शयति । अपाययदित्यत्र सुधामित्यध्याहारः । मोहिन्या स्त्रिया तद्रूपेणान्यानसुरान्मोहयन् । धन्वन्तरिरूपेणामृतमानीय मोहिन्याऽपाययदित्यर्थः ॥ १७ ॥ नृसिंहावतारमाह । नारसिंहं रूपं बिभ्रत् । एरकां निर्ग्रन्थि तृणम् ॥ १८ ॥ वामनावतारमाह—पञ्चदशमिति । दुष्टानां मदं वामयतीति वामनकं रूपम् । ह्रस्वं वा । प्रत्यादित्सुस्तस्मादाच्छिद्य ग्रहीतुमिच्छुः ॥ १९ ॥ परशुरामावतारमाह—अवतार इति । त्रिस्त्रिगुणं यथा भवति तथा सप्तकृत्वः सप्तवारानेकविंशतिवारानित्यर्थः ॥ २० ॥ व्यासावतारमाह—तत इति । अल्पमेधसोऽल्पप्रज्ञान्पुंसो दृष्ट्वा तदनुग्रहार्थं शाखाश्चक्रे ॥ २१ ॥ रामावतारमाह—नरेति । नरदेवत्वं राघवरूपेण प्राप्तः सन् । अतः परमष्टादशे ॥ २२ ॥ रामकृष्णावतारमाह—एकोनेति विंशतितम इति वक्तव्ये तकारलोपश्छन्दोनुरोधेन । रामकृष्णावित्येवं नामनी जन्मनी प्राप्य ॥ २३ ॥

१ अत्र विशेषो द्वितीयस्कन्धीयसप्तमाध्यायस्य दशमश्लोके द्रष्टव्यः । २ अकाण्डे असमय इत्यर्थः । एतद्विशेषश्च द्वादशस्कन्धे नवमाध्याये द्रष्टव्यः । ३ 'ददार करजैरूरौ' इत्यपि पाठः ।

बुद्धावतारमाह—तत इति । अजनस्य सुतः । 'जिनसुत' इति पाठे जिनोऽपि स एव । कीकटेषु मध्ये गयाप्रदेशे ॥ २४ ॥ कल्क्यवतारमाह—अथेति । युगसन्ध्यायाम् । कलेरन्ते विष्णुयशसो ब्राह्मणात्सकाशाज्जनिता जनिष्यते ॥ २५ ॥ अनुक्तसर्वसंग्रहार्थमाह—अवतारा इति । असङ्ख्येयत्वे दृष्टान्तः—यथेति । अविदासिन उपक्षयशून्यात् । 'दसु उपक्षये' इत्यस्मात् । सरसः सकाशात्कुल्याः क्षुद्रप्रवाहाः ॥ २६ ॥ विभूतीराह—ऋषय इति ॥ २७ ॥ तत्र विशेषमाह—एते चेति । पुंसः परमेश्वरस्य केचिदंशाः केचित्कलाविभूतयश्च । तत्र मत्स्यादीनामवतारत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्करणम् । कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेशः । तत्र कुमारादिषु ज्ञानावेशः । पृथ्वादिषु शक्त्यावेशः । कृष्णस्तु भगवान्साक्षान्नारायण एव । आविष्कृतसर्वशक्तित्वात् । सर्वेषां प्रयोजनमाह । इन्द्रारयो दैत्यास्तैर्व्याकुलमुपद्रुतं लोकं मृडयन्ति सुखिनं कुर्वन्ति ॥ २८ ॥ एतत्कीर्तनफलमाह—जन्मेति । गुह्यमतिरहस्यं जन्म । प्रयतः शुचिः सन् । दुःखग्रामात्संसारात् ॥ २९ ॥ विमुच्यत इति यदुक्तं तत्र कथं देहद्वयसंबन्धे सति तद्विमुक्तिरित्याशङ्क्य देहद्वय-

ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् ॥ बुद्धो नाम्नाऽजनसुतः कीकटेषु भविष्यति ॥ २४ ॥ अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ॥ जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥२५॥ अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ॥ यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥२६॥ ऋषयो मनवो देवा मनुपुत्रा महौजसः ॥ कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥२७॥ एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ॥ इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥ जन्म गुह्यं भगवतो य एतत्प्रयतो नरः ॥ सायंप्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥ एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ॥ मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥ यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ॥ एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥३१॥ अतः परं यदव्यक्तमव्यूढगुणव्यूहितम् ॥ अदृष्टाश्रुतवस्तुत्वात्स जीवो यत्पुनर्भवः ॥ ३२ ॥

संबन्धस्य भगवन्मायोत्थाविद्याविलसितत्वादेतच्छ्रवणादिजनितविद्यया तन्निवृत्तिरुपपद्यत इत्याशयेनाह—एतदिति पञ्चभिः । अरूपस्य चिदात्मनो जीवस्यैतत्स्थूलं रूपं शरीरं भगवतो या माया तस्या गुणैर्महदादिरूपैर्विरचितम् । क्व आत्मनि । आत्मस्थाने शरीरं कल्पितमित्यर्थः ॥ ३० ॥ कथमित्यपेक्षायां स्वरूपावरणेन तदध्यासत इति सदृष्टान्तमाह—यथेति । यथा वाय्वाश्रितो मेघौघो नभस्याकाशेऽबुद्धिभिरारोपितः । यथा वा पार्थिवो रेणुरजस्तत्र धूम्रत्वाद्यनिले । एवं द्रष्टर्यात्मनि दृश्यत्वं दृश्यत्वादिधर्मकं शरीरमारोपितमित्यर्थः ॥ ३१ ॥ किंच अतः स्थूलाद्रूपात्परमन्यदपि रूपमारोपितमित्याह । कथंभूतं तत् । अव्यक्तं सूक्ष्मम् । तत्र हेतुः—अव्यूढगुणव्यूहितम् । व्यूहः करचरणादिपरिणामः । तथा अव्यूढा अपरिणता ये गुणास्तैर्व्यूहितं रचितम् । आकारविशेषरहितत्वादव्यक्तमित्यर्थः । एतच्च कुतस्त्याह । अदृष्टाश्रुतवस्तुत्वात् । यथाकारविशेषवद्वस्तु तद्गतादिदृश्यते । श्रूयते वा इन्द्रादिवत् । इदं तु न तथा । तर्हि तस्य

१ अंशकला इति । यथा च ब्रह्मसंहितायाम्—'रामादिमूर्तिषु कलानियमेन तिष्ठन्नानावतारमकरोद्भुवनेषु किंतु । कृष्णः स्वयं समभवत्परमः पुमान्यो गोविन्दमादिपुरुषं तमहं भजामि ॥' इति व्याख्यालेशः । २ अत्र गृणन्नवेत्यस्य [illegible] ज्ञेयः । ३ [illegible] 'गुणव्यूहितम्' इति पाठो मूले टीकायां चास्ति । [illegible] । ४ [illegible] ।

सत्त्वे किं प्रमाणं तत्राह । स जीवो जीवोपाधिः 'जीवो जीवेन निर्मुक्तो' 'जीवो जीवं विहाय' इत्यादौ जीवोपाधौ लिङ्गदेहे जीवशब्दप्रयोगात् । जीवोपाधितया कल्प्यत इत्यर्थः । ननु स्थूलमेव भोगायतनत्वाज्जीवस्योपाधिरस्तु किमन्यकल्पनयेत्यत आह । यद्यस्मात्सूक्ष्मात्पुनर्भवः पुनर्जन्म । उत्क्रान्तिगत्यागतीनां तेन विनाऽसंभवादिति भावः ॥ ३२ ॥ तदेवमुपाधिद्वयमुक्त्वा तदपवादेन जीवस्य ब्रह्मतामाह—यत्रेति । यत्र यदा इमे स्थूलसूक्ष्मे रूपे स्वसंविदा श्रवणमननादिभक्त्या स्वरूपसम्यग्ज्ञानेन प्रतिषिद्धे भवतः । ज्ञानेन प्रतिषेधार्हत्वे तमेव हेतुमाह । अविद्ययात्मनि कृते कल्पिते इति हेतोः । तद्ब्रह्म । तदा जीवो ब्रह्मैव भवतीत्यर्थः । कथंभूतम् । दर्शनं ज्ञानैकस्वरूपम् ॥ ३३ ॥ तथापि भगवन्मायायाः संसृतिकारणभूताया विद्यमानत्वात्कथं ब्रह्मता तत्राह—यदीति । यदीत्यसंदेहे संदेहवचनम् 'यदि वेदाः प्रमाणं स्युः' इतिवत् । वैशारदी विशारदः सर्वज्ञ ईश्वरस्तदीया देवी संसारचक्रेण क्रीडन्ती एषा माया यद्युपरता भवति । किमित्युपरता भवेत्तत्राह । मतिर्विद्या । अयं भावः—यावदेषाऽविद्यात्मनाऽऽवरणविक्षेपौ करोति तावन्नोपरमति । यदा तु सैव विद्यारूपेण

यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ॥ अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥ यद्येषोपरता देवी माया वैशारदी मतिः ॥ संपन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥ एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ॥ वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥३५॥ स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ॥ भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥ न चास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः ॥ नामानि रूपाणि मनोवचोभिः सन्तन्वतो नटचर्यामिवाज्ञः ॥३७॥ स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ॥ यो मायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥

परिणता तदा सदसद्रूपं जीवोपाधिं दग्ध्वा निरिन्धनाग्निवत्स्वयमेवोपरमेदिति । तदा संपन्नो ब्रह्मस्वरूपं प्राप्त एवेति विदुस्तत्त्वज्ञाः । किमतः । यद्येवं स्वे महिम्नि परमानन्दस्वरूपे महीयते पूज्यते विराजत इत्यर्थः ॥ ३४ ॥ यथा जीवस्य जन्मादि माया एवमीश्वरस्यापि जन्मादि मायेत्याह—एवमिति । अकर्तुः कर्माणि । अजनस्य जन्मानि । हृत्पतेरन्तर्यामिणः ॥ ३५ ॥ तर्हि जीवादीश्वरस्य को विशेषः । स्वातन्त्र्यमेव विशेष इत्याह—स वा इति । षाड्वर्गिकमिन्द्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवद्गृह्णाति न तु सज्जत इत्यर्थः । कुतः । षड्गुणेशः षडिन्द्रियनियन्ता ॥ ३६ ॥ ननु किमीश्वरस्य सृष्ट्यादिकर्मभिर्विषयभोगैर्वा तत्राह—न चेति । धातुर्जगद्विधातुरीश्वरस्य ऊतीर्लीलाः कुमनीषः कुबुद्धिर्निपुणेन तर्कादिकौशलेन नावैति न जानाति । मनसा रूपाणि वचसा नामानि संतन्वतः सम्यग्विस्तारयतः । वचोभिरिति बहुत्वं श्रुत्यभिप्रायेण । मनोवचोभिः सहेति वा ॥ ३७ ॥ भक्तस्तु कथंचिज्जानातीत्याह—स वेदेति । अमाययाऽकुटिलभावेन । सन्ततया निरन्तरया । अनुवृत्त्या आनुकूल्येन भजेत ॥ ३८ ॥

१ अयमेकादशस्कन्धीयपञ्चविंशाध्यायस्य षट्त्रिंशः श्लोकः । २ उत्क्रान्तिगत्येति । उत्क्रान्तिगतिर्देहत्यागस्तया गतीनां देहान्तराणामसभवात्स्थूलस्य ध्वस्तत्वात् । गम्यन्ते प्राप्यन्त इति गतयः । ३ नेदं सर्वत्रोपलभ्यते । ४ त्रिंशच्छ्लोकोक्तं मायागुणैर्विरचितस्वरूपमेव । ५ उत्पत्तिस्थितिप्रलयरूपेण । ६ किमिति किंरूपेणेत्यर्थः । ७ विद्यारूपा सतीत्यर्थः । ८ इन्द्रियषड्वर्गो ज्ञानेन्द्रियपञ्चकं मनश्चेति ज्ञेयम् । ९ श्रुत्यभिप्रायः 'यतो वाचो निवर्तन्ते' इति । 'वृत्त्यभिप्रायेण' इति क्वचित्पाठः । १० प्राचीनतरपुस्तके—"ननु यदि कोऽपि न जानाति तर्हि निर्मोक्षप्रसङ्गः स्यादित्याशङ्क्याह—स वेदेति । अमायया अकुटिलभावेन । सन्ततया निरन्तरया । अनुवृत्त्या सेवया तत्पादसरोजगन्धं यो भजेत । पदवीं स्वरूपम् । वेद जानाति" इति पाठः ।

भक्तिमार्गे प्रवृत्तानृपीनभिनन्दति—अथेति । यतो भक्त एव भगवत्तत्त्वं जानाति । अथ अतो भगवन्तः सर्वज्ञा भवन्तो धन्याः कृतार्थाः । कुतः । यद्यस्मादित्थं प्रश्नैर्वासुदेवे आत्मभावं मनोवृत्तिं कुर्वन्ति । सर्वात्मकमैकान्तिकम् । यत्र यस्मिन्भावे सति भूयः उग्रो गर्भवासादिदुःखरूपः परिवर्तो जन्ममरणाद्यावर्तो न भवति ॥ ३९ ॥ सूत किमेतच्छास्त्रमपूर्वं कथयसि तत्राह । ब्रह्मसंमितं सर्ववेदतुल्यम् । उत्तमश्लोकस्य चरितं यस्मिंस्तत् । ऋषिर्व्यासः ॥ ४० ॥ तत्संप्रदायप्रवृत्तिमाह—तदिदमिति । सुतं शुकम् ॥ ४१ ॥ ४२ ॥ प्रायेण मृत्युपर्यन्तानाशकेनोपविष्टमिति परमवैराग्योक्तिः । हे विप्राः । विप्रर्षेः सकाशात् ॥ ४३ ॥ अध्यगमं ज्ञातवानस्मि । तत्र कीर्तयतस्तत्र निविष्ट इति चान्वयभेदात्तत्रपदावृत्तिरदोषः । यथाऽधीतं नतु स्वमतिविलसितम् । तत्रापि यथामति स्वमत्यनुसारेण । संक्षेपतः कथितं विस्तरतः श्रावयिष्यामि ॥ ४४ ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे भावार्थदीपिकायां टीकायां

अथेह[1] धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ॥ कुर्वन्ति सर्वात्मकमात्मभावं न यत्र भूयः परिवर्त उग्रः॥३९॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥ निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ॥ तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१ ॥ सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥ स तु संश्रावयामास महाराजं परीक्षितम् ॥४२॥ प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ॥ तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ॥४३॥ अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ॥ सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति॥ ४४ ॥ कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ॥ कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ॥४५॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ ॥ व्यास उवाच ॥ इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ॥ वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥ ॥ शौनक उवाच ॥ सूतसूत महाभाग वद नो वदतां वर ॥ कथां भागवतीं पुण्यां यदाह भगवान् शुकः ॥ २ ॥ कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना ॥ कुतः संचोदितः कृष्णः कृतवान्संहितां मुनिः ॥ ३ ॥ तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः ॥ एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥

तृतीयोऽध्यायः ॥ ३ ॥ ॥ ४ ॥ तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते । व्यासस्यापरितोषस्तु तपःप्रवचनादिभिः ॥ १ ॥ इत्येवं प्रसन्नतया श्रावयिष्यामीति ब्रुवाणम् । मुनीनां बहूनां मध्ये एकेन वक्तव्ये यो वृद्धो वृद्धेष्वपि बहुषु यः कुलपतिर्गणमुख्यस्तेष्वपि बहुषु यो बह्वृचः ऋग्वेदी तेन वक्तव्यम् । अत एवंभूतत्वाच्छौनकोऽब्रवीत् ॥ १ ॥ यत् यां कथामाह ॥ २ ॥ कस्मिन्स्थाने । केन हेतुनेति महाभारतादिधर्मशास्त्राणि कृतवतः पुनरेतत्संहिताकरणे किं कारणमित्यर्थः । कुत इति सार्वविभक्तिकस्तसिः । केन प्रवर्तित इत्यर्थः । कृष्णो व्यासः ॥ ३ ॥ यदुक्तं 'स तु संश्रावयामास' इति तच्छुकस्य व्याख्यानादिकं

१ 'उग्र' इत्याद्यधिकमेकस्मिन्पुस्तके। २ संक्षेपव्याख्यया मया कथितं मूलं बाहुल्यव्याख्यानेन सह श्रावयिष्यामीत्यर्थः। ३ इदं सूतोक्तिः। ४ व्यासप्रभृति प्राचीनपुस्तके 'नूनं भगवता विप्रा जिज्ञासाया च निद्रिताः' इत्यर्धमधिकम्। ५ इदं खण्डिता। तत्र 'खण्डिता धुनिजीविका' इति शब्दरत्नावलिः। ६ कुलपतिलक्षणं तु—'मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥' इति। ७ म दिवति प्रथमाध्यायस्य द्विसप्तर्तिशः श्लोकः।

कथं घटितमिति प्रष्टुं तस्यासङ्गोदासीनतामाह द्वाभ्याम्—तस्येति । समदृक् समं ब्रह्म पश्यति । अतो निर्विकल्पकः । स्वार्थे कः । निरस्तभेदः । किंच एकस्मिन्नेवान्तः समाप्तिर्यस्यास्तथाभूता मतिर्यस्य सः । यत उन्निद्रो मायाशयनादुद्बुद्धः 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इति स्मृतेः । अत एव गूढोऽप्रकटः । मूढ इव प्रतीयते ॥ ४ ॥ निर्विकल्पकत्वं प्रपञ्चयति—दृष्ट्वेति । आत्मजं शुकं प्रव्रजन्तमनुगच्छन्तमृषिं व्यासमनग्नमपि दृष्ट्वा जले क्रीडन्त्यो देव्योऽप्सरसो ह्रिया लज्जया परिदधुर्वस्त्रपरिधानं कृतवत्यः । अनग्नमपीत्यनेनार्थात्तत्सुतो नग्न इत्युक्तम् । नग्नस्य पुरतो गच्छतः सुतस्य तु ह्रिया न परिदधुः । तच्चित्रं वीक्ष्य । इयं स्त्री अयं पुमानिति भिदा भेदस्तवास्ति । विविक्ता पूता दृष्टिर्यस्य ॥ ५ ॥ एवंभूतोऽसौ कथमालक्षितो ज्ञातः । कुरवो जाङ्गलाश्च देशविशेषास्तान्संप्राप्तः प्रथमं ततो गजसाह्वये विचरन् । गजेन सहित आह्वयो नाम यस्य तस्मिन्हस्तिनापुरे । हस्ती नाम राजा तेन निर्मितत्वात् ॥ ६ ॥ एवंभूतेन मुनिना सह । यत्र संवादे

दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥ तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः ॥ ५ ॥ कथमालक्षितः पौरैः संप्राप्तः कुरुजाङ्गलान् ॥ उन्मत्तमूकजडवद्विचरन्गजसाह्वये ॥ ६ ॥ कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ॥ संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ७ ॥ स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ॥ अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८ ॥ अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ॥ तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९ ॥ स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ॥ प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम् ॥ १० ॥ नमन्ति यत्पादनिकेतमात्मनः शिवाय हानीय धनानि शत्रवः ॥ कथं स वीरः श्रियमङ्ग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११ ॥ शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ॥ जीवन्ति नात्मार्थमसौ पराश्रयं मुमोच निर्विद्य कुतः कलेवरम् ॥ १२ ॥ ॥ ॥ ६॥

एषा सात्वती भागवती श्रुतिः संहिता ॥ ७ ॥ एतद्व्याख्यानं बहुकालावस्थानापेक्षम्, तस्य त्वेकत्रावस्थानं दुर्लभमित्याह—स इति । गोदोहनमात्रं कालं प्रतीक्षते, तदपि न भिक्षार्थं, किंतु तेषामाश्रमं गृहं तीर्थीकुर्वन्पवित्रीकुर्वंस्तस्मादेवंभूतोऽत्र वक्तेत्याश्चर्यम् ॥ ८ ॥ श्रोतुस्तु चरितमतीवाश्चर्यमतः कथयेत्याह—अभिमन्युसुतमिति पञ्चभिः । गृणीहि कथय ॥ ९ ॥ सम्राट् चक्रवर्ती । वेति वितर्के । कस्य वा हेतोः कस्मात्कारणात् । अधिराट्श्रियं अधिराजां श्रियं संपदमनादृत्य ॥ १० ॥ यस्य पादनिकेतं चरणपीठम् । ह स्फुटम् । धनान्यानीय शत्रवो नमन्ति । अङ्ग हे सूत । युवा तरुण एव ऐषत ऐच्छत् । अत्रार्षमात्मनेपदम् । असुभिः प्राणैः सह ॥ ११ ॥ विरक्तस्य किं धनादिभिरिति चेत्तत्राह—शिवायेति । लोकस्य शिवाय सुखाय भवाय समृद्ध्यै भूतये ऐश्वर्याय च ते जीवन्ति

१ देवीनामप्सरस्त्वे प्रमाणं तु—'तस्यां क्रीडन्त्यभिरतास्ते चैवाप्सरसां गणाः' इति महाभारते शान्तिपर्वणि ३५३ अध्यायेऽस्ति । २ जडवत्कार्याकार्यविवेकशून्यवत् । उन्मत्तवदिति लोकविपरीतचेष्टावैशिष्ट्ये दृष्टान्तः । मूकवदिति लोकरञ्जकव्यापारराहित्ये । जडवदिति सर्वथोद्यमराहित्ये च । ३ क्वचित्पुस्तके मूले टीकायां च 'आश्रमान्' इति पाठः । ४ प्रायेण मरणपर्यन्तानशनेन । यद्वा अयनं आयः प्रकृष्ट आयः मरणम् । भावे घञ्प्रत्ययः । मरणार्थमुपविष्ट इत्यर्थः इति बुध० । ५ गोदोहनकालो मुहूर्ताष्टमभागात्मकः । ६ ये उत्तमश्लोकपरायणा भगवद्भक्तास्ते इत्यर्थः ।

न त्वात्मार्थम् । एवं सत्यसौ राजा निर्विद्य विरज्यापि परेपामाश्रयं कलेवरं कुतो हेतोर्मुमोच । न हि परोपजीवनं स्वयं त्यक्तुमुचितमित्यर्थः ॥ १२ ॥ यत्किंचन पृष्टोऽसि तत्सर्वं नोऽस्मभ्यं समाचक्ष्व । यद्यस्माद्वाचां विषये गिरां गोचरेऽर्थे स्नातं पारंगतं त्वां मन्ये । छान्दसादन्यत्र वैदिकव्यतिरेकेण । अत्रैवर्णिकत्वात् ॥ १३ ॥ कस्मिन्युग इत्यादिप्रश्नानां व्यासजन्मकथनपूर्वकमुत्तरमाह—द्वापर इति । द्वापरे समनुप्राप्ते । कदेत्यपेक्षायामाह । तृतीये युगस्य पर्यये परिवर्ते । वासव्यामुपरिचरस्य वसोर्वीर्याज्जातायां सत्यवत्यां योगी ज्ञानी व्यासो जातः ॥ १४ ॥ जलमुपस्पृश्य जले स्नानादिकं कृत्वेत्यर्थः । आसीनो बभूवेति शेषः । विविक्ते देश इत्यादि चित्तैकाग्र्यार्थमुक्तम् । अनेनैव वदरिकाश्रमस्थानं सूचितम् ॥ १५ ॥ तत्र च स ऋषिर्युगधर्मव्यतिकरादिकं वीक्ष्य सर्ववर्णाश्रमाणां

तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किंचन ॥ मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥१३॥ ॥ सूत उवाच ॥ द्वापरे समनुप्राप्ते तृतीये युगपर्यये ॥ जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १४ ॥ स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः ॥ विविक्त एक आसीन उदिते रविमण्डले ॥ १५ ॥ परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ॥ युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६ ॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ॥ अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः ॥ १७ ॥ दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ॥ सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥१८॥ चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ॥ व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १९ ॥ ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः ॥ इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ २० ॥ तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ॥ वैशंपायन एवैको निष्णातो यजुषामुत ॥ २१ ॥ अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः ॥ इतिहासपुराणानां पिता मे रोमहर्षणः ॥२२॥ त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ॥ शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

यद्धितं तद्दध्याविति तृतीयेनान्वयः । परावरज्ञोऽतीतानागतवित् । अव्यक्तं रंहो वेगो यस्य तेन कालेन युगधर्माणां व्यतिकरं संकरं प्राप्तं वीक्ष्य । तथा भुवि युगे युगे ॥ १६ ॥ भौतिकानां भावानां शरीरादीनाम् । तत्कृतं कालकृतम् । निःसत्त्वान्धैर्यशून्यान् । दुर्मेधान्मन्दमतीन् ॥ १७ ॥ १८ ॥ ततश्च होत्रोपलक्षिताश्चत्वार ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं कर्म चातुर्होत्रम् । शुद्धं शुद्धिकरम् । यज्ञसन्तत्यै यज्ञानामविच्छेदाय ॥ १९ ॥ चातुर्विध्यमेवाह—ऋगिति । उद्धृताः पृथक्कृताः ॥ २० ॥ २१ ॥ दारुणः क्रूरः अथर्वोक्ताभिचारादिप्रवृत्तेः ॥ २२ ॥ व्यसन्विभक्तवन्तः ॥ २३ ॥ ॥ ॥ ॥

१ तृतीय इति । तृतीयत्वं कलिमादाय वैपरीत्येन गणनया । त्रेतायुगावसान इत्यर्थः । कृतादिचतुर्युगस्य पर्यये गणनायां तु तृतीये युगे द्वापरे समनुप्राप्ते सतीति । कृतयुगापेक्षया तृतीये द्वापरे युगपर्यये युगपर्यवमाने समनुप्राप्ते सतीति वि० । २ परिवर्ते समाप्तिकाले संधावित्यर्थः इति बुध० । ३ कान्तदर्शी असंकुचितदर्शी वा । ४ एक एवेति पैलादिष्वप्यन्वितम् । ५ यजुषामिति बहुवचनं स्वगतप्रकरणभेदाभिप्रायम् । ६ अथर्ववेदोक्तमन्त्रेषु निष्णात आसीदिति पूर्वेणान्वयः । कर्मणः शेषत्वाविवक्षायां षष्ठी । अथर्वसंज्ञकान्यङ्गिरसा दृष्टानि आङ्गिरसानि प्रकरणानि तेषाम् । ७ युगे युगे शक्तिह्रासादिकं वीक्ष्येत्यन्वयः । ८ महाद्योऽप्यर्थाः श्रीभागवत्वारः ।

वेदविभागप्रयोजनमाह—त एवेति । ये पूर्वमतिमेधाविभिर्धार्यन्ते स त एव ॥ २४ ॥ किंच स्त्रीशूद्रेति । द्विजबन्धवस्त्रैवर्णिकेष्वधमास्तेषाम् । कर्मरूपे श्रेयःसाधने एवं भवेदनेनैव प्रकारेण भवतु । इति अत एव तेषां कृपया भारताख्यानं मुनिना कृतम् ॥ २५ ॥ एवमनेन प्रकारेण । भूतानां श्रेयसि हिते । सर्वात्मकेनापि कर्मणा ॥ २६ ॥ न अतिप्रसीदत् हृदयं यस्य सः । चित्ताप्रसत्तौ हेतुं वितर्कयन्निदमुवाच स्वगतम् ॥ २७ ॥ निर्व्यलीकेन निष्कपटबुद्ध्या मानिताः पूजिताः ॥ २८ ॥ २९ ॥ दैह्यः देहे भव आत्मा जीवो वस्तुतो विभुः परिपूर्ण एव । आत्मना स्वेन रूपेणासंपन्नस्तादात्म्यमप्राप्त इवाभाति । ब्रह्मवर्चसं वेदश्रवणाध्यापनोत्कर्षजं तेजस्तत्र साधवो ब्रह्मवर्चस्यास्तेषु सत्तमोऽतिश्रेष्ठोऽपि । यद्वा न केवलमसंपन्न इवाभाति प्रत्युत ब्रह्मवर्चसी ब्रह्मवर्चसवानप्यसत्तम

त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ॥ एवं चकार भगवान्व्यासः कृपणवत्सलः ॥ २४ ॥ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ॥ कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥ इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥ एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ॥ सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ २६ ॥ नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ॥ वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥२७॥ धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ॥ मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥ भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ॥ दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥२९॥ अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ॥ असंपन्न इवाभाति ब्रह्मवर्चस्यसत्तमः ॥ ३० ॥ किंवा भागवता धर्मा न प्रायेण निरूपिताः ॥ प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥ तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः ॥ कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३२ ॥ तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ॥ पूजयामास विधिवन्नारदं सुरपूजितम् ॥३३॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे चतुर्थोऽध्यायः ॥४॥ ॥ सूत उवाच ॥ अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ॥ देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥

इवाभाति । पाठान्तरे कमनीयतमोऽपीति ॥ ३० ॥ असंपत्तौ हेतुं स्वयमेवाशङ्कते—किंवेति । प्रायेण भूयस्त्वेन । हि यस्मात्त एव धर्मा अच्युतस्य प्रियाः ॥ ३१ ॥ खिलं न्यूनम् । खिद्यतः खेदं प्राप्नुवतः । कृष्णस्य व्यासस्य । प्रागुदाहृतं सरस्वतीतीरस्थम् ॥ ३२ ॥ तं नारदमागतमभिज्ञाय सहसा प्रत्युत्थाय विधिवत्पूजयामास । सुरपूजितमिति ब्रह्मलोकादागतमित्यर्थः ॥ ३३ ॥ इति श्रीम० प्र० भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ॥ व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ १ ॥ उप समीपे आसीनं विप्रर्षिं व्यासम् । बृहच्छ्रवा महायशाः । स्मयन्नीषद्धसन्निवेत्यनेन सुखप्रसत्तिर्द्योत्यते । यद्वा इवेत्यनधिकारार्थम् । अहो महानपि मुह्यतीति स्मयमानः ॥ १ ॥ ॥ ॥ ॥

१ ब्रह्मवर्चस्येन सत्तम इति टीकान्तरे । ब्रह्मवर्चस्व्यसत्तमः इति सुबो० । २ 'इदं चोवाच' इत्यपि पाठः । ३ 'तथापि' इति पाठः । ४ पाठान्तरे 'उशत्तमः' इत्येवंरूपे । ५ उपासीनमातिथ्यार्थमासनार्घ्यपाद्यादिभिरुपासनां कुर्वन्तमिति वि. च. । ६ श्रेष्ठोऽयं न मोहाधिकारीति सूचनार्थमिति भावः ।

शारीरः शरीराभिमान्यात्मात्मना तेन शरीरेण कच्चित्किं परितुष्यति । मानस आत्मा मनोभिमानी तेन मनसा परितुष्यति कच्चिन्नो वा ॥ २ ॥ ते जिज्ञासितं ज्ञातुमिष्टं धर्मादि यत्तत्सर्वं सुसंपन्नं सम्यक् ज्ञातम् । अपिशब्दादनुष्ठितं चेत्यर्थः । 'अयि' इति पाठे संबोधनम् । सुसंपन्नत्वे हेतुः—महदद्भुतमित्यादि । सर्वैरर्थैर्धर्मादिभिः परिबृंहितं परिपूर्णम् ॥ ३ ॥ किंच यत्सनातनं नित्यं परं ब्रह्म तच्च त्वया जिज्ञासितं विचारितमधीतमधिगतं प्राप्तं चेत्यर्थः । अथापि शोचसि तत्किमर्थमिति शेषः ॥ ४ ॥ आत्मा शारीरो मानसश्च । तन्मूलं तस्यापरितोषस्य कारणम् । अव्यक्तमस्फुटम् । हे नारद, त्वा त्वां पृच्छाम । आत्मभवो ब्रह्मा तस्यात्मनो देहादुद्भूतस्तम् । अत एवागाधोऽतिगम्भीरो बोधो यस्य तं त्वाम् ॥ ५ ॥ अगाधबोधतां प्रपञ्चयन्नाह—स वा इति द्वाभ्याम् । सर्वगुह्यज्ञाने हेतुः—यद्यस्मात्पुराणः पुरुष उपासितस्त्वया । कथंभूतः । परावरेशः कार्यकारणनियन्ता । मनसैव संकल्पमात्रेण गुणैः कृत्वा विश्वं सृजतीत्यादि ॥ ६ ॥ किंच त्वं

नारद उवाच ॥ पाराशर्य महाभाग भवतः कच्चिदात्मना ॥ परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥ जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ॥ कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३ ॥ जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम् ॥ अथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥ ॥ व्यास उवाच ॥ अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे ॥ तन्मूलमव्यक्तमगाधबोधं पृच्छाम हे त्वात्मभवात्मभूतम् ॥५॥ स वै भवान्वेद समस्तगुह्यमुपासितो यत्पुरुषः पुराणः ॥ परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥ त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी ॥ परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥७॥ नारद उवाच ॥ भवताऽनुदितप्रायं यशो भगवतोऽमलम् ॥ येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥ यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ॥ न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥९॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ १० ॥ ॥ ॥ ६९ ॥

त्रिलोकीं पर्यटन्नर्क इव सर्वदर्शी । योगबलेन प्राणवायुरिव सर्वप्राणिनामन्तश्चरः सन्नात्मसाक्षी बुद्धिवृत्तिज्ञः । अतः परे ब्रह्मणि धर्मतो योगेन निष्णातस्य । तदुक्तं याज्ञवल्क्येन 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति । अवरे च ब्रह्मणि वेदाख्ये व्रतैः स्वाध्यायनियमैर्निष्णातस्य मेऽलमत्यर्थं यन्न्यूनं तद्विचक्ष्व वितर्कय ॥ ७ ॥ अनुदितप्रायमनुक्तप्रायम् । अमलं भगवद्यशो विना येनैव धर्मादिज्ञानेनासौ भगवान्न तुष्येत तदेव दर्शनं ज्ञानं खिलं न्यूनं मन्येऽहम् ॥ ८ ॥ ननु भगवद्यश एव तत्र तत्रानुवर्णितं तत्राह—यथेति । चशब्दाद्धर्मादिसाधनानि च । तथा धर्मादिवत्प्राधान्येन वासुदेवस्य महिमा न ह्युक्त इत्यर्थः ॥ ९ ॥ वासुदेवव्यतिरिक्तान्यविषयज्ञानवदेवान्यविषयं वाक्चातुर्यं च खिलमेवेत्याह—नेति । चित्रपदमपि यद्वचो हरेर्यशो न प्रगृणीत तद्वायसं तीर्थं काकतुल्यानां कामिनां रतिस्थानमुशन्ति मन्यन्ते । कुतः । मानसाः सत्त्वप्रधाने मनसि वर्तमाना हंसा यतयो यत्र न निरमन्ति कर्हिचिदपि नितरां न रमन्ते । उशिक्क्षया उशिक् कमनीयं ब्रह्म क्षयो निवासो येषां ते । यथा प्रसिद्धा हंसा मानसे सरसि चरन्तः कमनीयपद्मखण्डनिवा- ॥१०॥

१ महदद्भुतमित्यत्र महत् ग्रन्थतः अद्भुत अर्थत इति दीप० । २ 'तथापि' इति पाठान्तर क्वचित् ।

सास्यक्तविचित्रान्नादियुक्तेऽप्युच्छिष्टगर्ते काकक्रीडास्थाने न निरमन्त इति श्लेषः ॥ १० ॥ विनापि पदचातुर्यं भगवद्यशःप्रधानं वचः पवित्रमित्याह—तदिति । तद्वाग्विसर्गः स चासौ वाग्विसर्गो वाचः प्रयोगः जनानां समूहो जनता तस्या अघं विप्लावयति नाशयतीति तथा सः । यस्मिन्वाग्विसर्गे अवद्धवत्यप्यपशव्दादियुक्तेऽपि प्रतिश्लोकमनन्तस्य यशसाङ्कितानि नामानि भवन्ति । तत्र हेतुः—यद्यानि नामानि साधवो महान्तो वक्तरि सति शृण्वन्ति । श्रोतरि सति गृणन्ति । अन्यदा तु स्वयमेव गायन्ति कीर्तयन्ति ॥११॥ भक्तिहीनं कर्म शून्यमेवेति कैमुत्यन्यायेन दर्शयति—नैष्कर्म्यमिति । निष्कर्म ब्रह्म तदेकाकारत्वान्निष्कर्मतारूपं नैष्कर्म्यम् । अज्यतेऽनेनेत्यञ्जनमुपाधिस्तन्निवर्तकं निरञ्जनम् । एवंभूतमपि ज्ञानमच्युते भावो भक्तिस्तद्वर्जितं चेदलमत्यर्थं न शोभते । सम्यगापरोक्ष्याय न कल्पत इत्यर्थः । तदा शश्वत्साधनकाले फलकाले चाभद्रं दुःखरूपं यत्काम्यं कर्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः । तदपि कर्म ईश्वरे नार्पितं चेत्कुतः पुनः शोभते बहिर्मुखत्वेन सत्त्वशोधकत्वाभावात् ॥ १२ ॥ तदेवं भक्तिशून्यानि ज्ञानवाक्चातुर्यकर्मकौशलानि व्यर्थान्येव यतः, अतो हरेश्चरितमेवानुवर्णयेत्याह । अथो अतः कारणात् । अमोघा यथार्था दृक् धीर्यस्य, शुचि शुद्धं श्रवो यशो यस्य, सत्ये रतः, धृतानि व्रतानि येन स भवानेवं महागुणस्तावत् । अत उरुक्रमस्य विविधं चेष्टितं लीलां समाधिना चित्तैकाग्र्येणाखिलस्य वन्धमुक्तये हे महाभाग्यनिधे, त्वमनुस्मर, स्मृत्वा च वर्णयेत्यर्थः । एतच्च वाक्यान्तरमिति मध्यमपुरुषप्रयोगो नानुपपन्नः ॥ १३ ॥ विपक्षे दोषान्तरमाह—तत इति । तत उरुक्रमचेष्टितात्पृथग्दृशोऽत एवान्यथा प्रकारान्तरेण यत्किंचिदर्थान्तरं विवक्षतस्तया विवक्षया कृतैः स्फुरितैः रूपैर्नामभिश्च वक्तव्यत्वेनोपस्थितैर्दुःस्थिताऽनवस्थिता सती मतिः कदाचित्कापि विषये आस्पदं स्थानं न लभेत, वातेनाऽऽहता आघूर्णिता नौरिव । तदुक्तं गीतासु—'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥ बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥' इत्यादि ॥ १४ ॥ तदेवं हरियशो विना भारतादिषु कृतं धर्मादिवर्णनमकिंचित्करमित्युक्तम् । प्रत्युत विरुद्धमेव जातमित्याह—जुगुप्सितमिति जुगुप्सितं निन्द्यं काम्यकर्मादि तत्र स्वभावत एव रक्तस्य अनुरागिणः पुरुषस्य धर्मकृते धर्मार्थमनुशासतः प्रेरयतस्तव महानयं व्यतिक्रमोऽन्यायः । कुत इत्यत आह । यस्य वाक्यतोऽयमेव मुख्यो धर्म इति स्थिर इतरः प्राकृतो जनः । तस्य काम्यकर्मादेरन्येन तत्त्वज्ञेन क्रियमाणं निवारणं स्वयमेव वा त्वया क्रियमाणम् । यद्वा 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'

तद्वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनन्तस्य यशोङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥ अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ॥ उरुक्रमस्याखिलवन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम् ॥ १३ ॥ ततोऽन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ॥ न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम् ॥ १४ ॥ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान्व्यतिक्रमः ॥ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥ ॥

१ 'इति शेषः' इति पाठो यद्यपि बहुत्र दृश्यते तथापि मूले तत्पदसत्त्वात् सोऽयुक्त एव । २ अत्र 'वन्धनमेव' इति 'न्यूनमेव' इति च पाठौ कचिद्दृश्येते । ३ कर्मनिवृत्तिप्राप्यत्वान्निष्कर्म । ४ निष्कर्मणो मोक्षस्य साधनं वा नैष्कर्म्यम् । ५ अज्यते म्रक्ष्यत इत्यर्थः । ६ अत्र संवन्धश्च तत् तस्य उरुक्रमस्येति ज्ञेयः । ७ 'कर्हिचित्' इति पाठः क्वचित् । स एव च युक्तः । कदाचिदिति व्याख्यानात् । ८ कैवल्योपनिषदि चतुर्थब्राह्मणम् । तत्र धनेनेत्यत्र पूर्वनकारस्यानुषङ्गः । एके महात्मानः आनशुः आनशिरे प्राप्ताः इति शंकरानन्द० ।

इत्यादिश्रुत्या क्रियमाणं निवारणं यथार्थमेतदिति न मन्यते, किंतु प्रवृत्तिमार्गानधिकृतविषयं तदिति कल्पयति । तदुक्तं मतान्तरोपन्यासे भट्टैः 'तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥ नैष्ठिकं ब्रह्मचर्यं वा परिव्राजकतापि वा । तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते ॥' इत्यादि ॥ १५ ॥ ननु यद्येवं प्रवृत्तिमार्गो निन्द्यते तर्हि निवृत्तिमार्गे सर्वक्रियात्यागेनैव पारमेश्वरसुखस्वरूपानुभूतेः किं तद्यशःकथनेनापि तत्राह—विचक्षण इति । विचक्षणो निपुणः । कश्चिदेव निवृत्तितः सर्वक्रियानिवृत्त्यास्य विभोः सुखं निर्विकल्पकसुखात्मकं स्वरूपं वेदितुं ज्ञातुमर्हति न पुनरविचक्षणः प्रवृत्तिस्वभावः । विभुत्वे हेतुः—न अन्तः कालतः, पारं च देशतो यस्य तस्य विभोश्चेष्टितम् । ततः कारणात् हे विभो, अनात्मनो देहाद्यभिमानिनोऽत एव गुणैः सत्त्वादिभिः प्रवर्तमानस्य जनस्य दर्शय भवानिति । त्वमित्यर्थः । पाठान्तरे हे भवन्निति संबोधनम् ॥ १६ ॥ एवं तावत्काम्यधर्मादेरनर्थहेतुत्वात्तं विहाय हरेर्लीलैव वर्णनीयेत्युक्तम् । इदानीं तु नित्यनैमित्तिकस्वधर्मनिष्ठामप्यनादृत्य केवलं हरिभक्तिरेवोपदेष्टव्येत्याशयेनाह—त्यक्त्वेति । ननु स्वधर्मत्यागेन भजन् भक्तिपरिपाकेन यदि कृतार्थो भवेत्तदा न काचिच्चिन्ता, यदि पुनरपक्व एव म्रियेत ततो भ्रश्येद्वा तदा स्वधर्मत्यागनिमित्तोऽनर्थः स्यादित्याशङ्क्याह । ततो भजनात्कथं-

विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् ॥ प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभो ॥१६॥ त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ॥ यत्र क्व वाऽभद्रमभूदमुष्य किं को वार्थ आप्तोऽभजतां स्वधर्मतः ॥ १७ ॥ तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ॥ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥ न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् ॥ स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः ॥ १९ ॥ ॥ ॥ ६॥ ॥

च्चिपतेद्भ्रश्येन्म्रियेत वा यदि तदापि भक्तिरसिकस्य कर्मानधिकारान्नानर्थशङ्का । अङ्गीकृत्याप्याह । वाशब्दः कटाक्षे । यत्र क्व वा नीचयोनावप्यमुष्य भक्तिरसिकस्याभद्रमभूत्किम् । नाभूदेवेत्यर्थः । भक्तिवासनासद्भावादिति भावः । अभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थ आप्तः । अभजतामिति षष्ठी तु संबन्धमात्रविवक्षया ॥ १७ ॥ ननु स्वधर्ममात्रादपि 'कर्मणा पितृलोकः' इति श्रुतेः पितृलोकप्राप्तिफलमस्त्येव तत्राह—तस्यैवेति । तस्यैव हेतोस्तदर्थं यत्नं कुर्यात् । यत् उपरि ब्रह्मपर्यन्तमधः स्थावरपर्यन्तं च भ्रमद्भिर्जीवैर्न लभ्यते । षष्ठी तु पूर्ववत् । तत्तु विषयसुखमन्यत एव प्राचीनकर्मणा सर्वत्र नरकादावपि लभ्यते दुःखवत् । यथा दुःखं प्रयत्नं विनापि लभ्यते तद्वत् । तदुक्तम् 'अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥' इति ॥ १८ ॥ यदुक्तं यत्र क्व वाऽभद्रमभूदिति तदुपपादयति—न वा इति । मुकुन्दसेवी जनो जातु कदाचित्कथंचन कुयोनिगतोऽपि संसृतिं नाव्रजेन्नाविशेत् । अङ्ग अहो । अन्यवत्केवलकर्मनिष्ठवदिति वैधर्म्ये दृष्टान्तः । कुत इत्यत आह । मुकुन्दाङ्घ्र्युपगूहनमालिङ्गनं पुनः स्मरन्विहातुं नेच्छेत् । यतोऽयं जनो रसग्रहः रसेन रसनीयेन गृह्यते वशीक्रियते । यद्वा रसे रसनीये ग्रह आग्रहो यस्य । तदुक्तं भगवता—'यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥' इति ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

१-आर्षोऽयं भवच्छब्दयोगे मध्यमप्रयोगः । २ यदिति स्वरूपसाक्षात्कारपूर्वकं परमानन्दसुखमित्यर्थः । ३ अस्याग्रे 'भगवद्भक्तिसुखार्थमेव प्रयतेत तस्य दुर्लभत्वादित्यर्थः' इत्यधिकः पाठः । ४ 'अङ्ग संबोधने हर्षे संभ्रमासूययोरपि' इति मेदिनी । ५ स्वादुतरपदार्थेन ।

तदेवं भगवल्लीलां प्राधान्येन वर्णयेत्युक्तं, तत्र को भगवान् काश्च तस्य लीला इत्यपेक्षायामाह । इदं विश्वं भगवानेवं । स त्वस्माद्विश्वस्मादितरः । ईश्वरात्प्रपञ्चो न पृथगीश्वरस्तु प्रपञ्चात्पृथगित्यर्थः । तत्र हेतुः—यतो भगवतो हेतोर्जगतः स्थित्यादयो भवन्ति । अनेनैव लीला अपि दर्शिताः । यद्वा इदं विश्वं भगवान् । इतर इव यः स जीवोऽपि भगवान् । चेतनाचेतनः प्रपञ्चस्तद्व्यतिरेकेण नास्ति स एवैकस्तत्त्वमित्यर्थः । हिशब्देन 'सर्वं खल्विदं ब्रह्म' इत्यादिप्रमाणं सूचितम् । तद्धि स्वयमेव भवान्वेद । प्रादेशमात्रमेकदेशमात्रं 'आचार्यवान्पुरुषो वेद' इत्यादिश्रुत्यर्थसंपादनाय प्रदर्शितम् ॥ २० ॥ न च तवाचार्यापेक्षा ईश्वरावतारत्वादित्याह—त्वमिति । हे अमोघदृक्, त्वमात्मना स्वयमात्मानमजमेव सन्तं जगतः शिवाय प्रजातमवेहि । कुतः परस्य पुंसः कलामंशभूतम् । ततस्तस्मान्महानुभावस्य हरेरभ्युदयः पराक्रमः अधि अधिकं गण्यतां निरूप्यताम् ॥ २१ ॥ अनेनैव तपआदि सर्वं तव सफलं स्यादित्याह—इदं हीति । श्रुतादयो भावे निष्ठाः । इदमेव हि तपःश्रवणादेरविच्युतो नित्योऽर्थः फलम् । किं तत् । उत्तमश्लोकस्य गुणानुवर्णनमिति यत् ॥ २२ ॥ सत्सङ्गतो हरिकथाश्रवणादिफलं स्ववृत्तान्तेन प्रपञ्च-

इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवाः ॥ तद्धि स्वयं वेद भवांस्तथापि वै प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २० ॥ त्वमात्मनात्मानमवेह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम् ॥ अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् ॥२१॥ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य[2] सूक्तस्य च[3] बुद्धिदत्तयोः ॥ अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥२२॥ अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ॥ निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥२३॥ ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ॥ चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥२४॥ उच्छिष्टलेपाननुमोदितो[4] द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ॥ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते ॥२५॥ तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाशृणवं मनोहराः ॥ ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रुचिः[5] ॥२६॥

यति—अहमिति । अहं पुरा पूर्वकल्पेऽतीतभवे पूर्वजन्मनि वेदवादिनां दास्याः सकाशादभवं जातोऽस्मि । निरूपितो नियुक्तः । क्व । योगिनां शुश्रूषणे । प्रावृषि वर्षोपलक्षिते चातुर्मास्ये । निर्विविक्षतां निर्वेशमेकत्र वासं कर्तुमिच्छताम् ॥ २३ ॥ अपेतानि गतान्यखिलानि चापलानि यस्मात्तस्मिन् । दान्ते नियतेन्द्रिये । अधृतक्रीडनके त्यक्तक्रीडासाधने । अनुवर्तिन्यनुकूले ॥ २४ ॥ उच्छिष्टस्य लेपान्पात्रलग्नांस्तैर्द्विजैरनुज्ञातः सन् भुञ्जे स्म । तेन भोजनेनापास्तकिल्बिषो जातोऽस्मि । तेषां धर्मे परमेश्वरभजने एवात्मनो मनसो रुचिः प्रजायते स्म इत्यनुषङ्गः ॥ २५ ॥ अशृणवं श्रुतवानस्मि । मे श्रद्धया ममैव स्वतःसिद्धया नत्वन्येन बलाज्जनितया । अतो ममेत्यस्यापौनरुक्त्यम् । अनुपदं प्रतिपदम् । प्रियं श्रवो यशो यस्य तस्मिन् ॥ २६ ॥ ॥ ॥ ॥

१ अत्रत्य एवशब्दः खलु मूलोक्त इवशब्दस्यार्थभूतः । २ स्विष्टस्य शोभनयज्ञस्येत्यर्थः । सूक्तस्य सामान्यतः शोभनोक्तेर्वेदाङ्गात्मकविशेषोक्तेर्वेति दीप० । ३ 'बुद्धदत्तयोः' इति पाठः । तत्र ज्ञानदानयोरित्यर्थ इति दीप० । 'स्विष्टस्य पूर्तस्य सुसूक्तदत्तयोः' इत्यपि द्वितीयचरणे पाठः क्वचित् । ४ अत्र 'लेपाद्यनुमोदित' इति पाठस्तदनुगुणा व्याख्या च क्वचित् । ५ 'अभवद्रतिः' इति पाठः ।

प्रियं श्रवो यस्य तस्मिन्भगवति लब्धरुचेर्ममास्खलिताऽप्रतिहता मतिरभवदित्यनुषङ्गः। यया मत्या परे प्रपञ्चातीते ब्रह्मरूपे मयि सदसत्स्थूलं सूक्ष्मं चैतच्छरीरं स्वमायया स्वाविद्यया कल्पितं नतु वस्तुतोऽस्तीति तत्क्षणमेव पश्यामि ॥ २७ ॥ एवं शुद्धे त्वंपदार्थे ज्ञाते देहादिकृतविक्षेपनिवृत्तेस्तत्कारणभूतरजस्तमोनिवर्तिका दृढा भक्तिर्जातेत्याह—इत्थमिति। हरेर्यशः अनुसवं त्रिकालम् ॥ २८ ॥ तस्यैवेति। तस्य ज्ञानशुद्धत्वंपदार्थस्य दृढभक्तिमतो मे। प्रश्रितस्य विनीतस्य ॥ २९ ॥ गुह्यतममिति। साधनभूतधर्मतत्त्वज्ञानं गुह्यम्। तत्साध्यं विविक्तात्मज्ञानं गुह्यतरम्। तत्प्राप्येश्वरज्ञानं गुह्यतमम्। भगवतोदितं भागवतं शास्त्रमन्ववोचन्ननुपदिष्टवन्तः ॥ ३० ॥ तदेव ज्ञानं पूर्वोक्तत्वंपदार्थज्ञानाद्विवेकेन दर्शयति—येनैवेति। अविदं ज्ञातवानहम् ॥ ३१ ॥ तत्साधनधर्मरहस्यं च सूचितमित्याह—एतदिति। तापत्रयस्याध्यात्मिकादेश्चिकित्सितं भेषजं निवर्तकम्। सत्त्वशोधकमिति यावत्। किं तत्। भगवति भावितं समर्पितं यत्कर्म तत्। कथंभूते भगवति। ईश्वरे सर्वनियन्तरि। एवमपि च ब्रह्मण्यप्रच्युतपूर्णरूपे ॥ ३२ ॥ ननु संसारहेतोः कर्मणः कथं तापत्रयनिवर्तकत्वम्। सामग्रीभेदेन घटत

तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम ॥ ययाहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥ इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं यशोऽमलम् ॥ संकीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥ २८ ॥ तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ॥ श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥ २९ ॥ ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ॥ अन्ववोचन्गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३० ॥ येनैवाहं भगवतो वासुदेवस्य वेधसः ॥ मायानुभावमविदं[2] येन गच्छन्ति तत्पदम् ॥ ३१ ॥ एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ॥ यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥ आमयो यश्च भूतानां जायते येन सुव्रत ॥ तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३ ॥ एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ॥ त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ ३४ ॥ यदत्र[3] क्रियते कर्म भगवत्परितोषणम् ॥ ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥

इति सदृष्टान्तमाह द्वाभ्याम्। य आमयो रोगो येन घृतादिना जायते तदेव केवलमामयकारणभूतं द्रव्यं तमामयं न पुनाति। न निवर्तयतीत्यर्थः। किंतु चिकित्सितं द्रव्यान्तरैर्भावितं सत्पुनात्येव यथा ॥ ३३ ॥ तथा आत्मविनाशाय कर्मनिवृत्तये कल्पन्ते समर्था भवन्ति। परे ईश्वरे कल्पिता अर्पिताः सन्तः। अत्र च प्रथमं महत्सेवा, ततश्च तत्कृपा, ततस्तद्धर्मश्रद्धा, ततो भगवत्कथाश्रवणं, ततो भगवति रतिः, तया च देहद्वयविवेकात्मज्ञानं, ततो दृढा भक्तिः, ततो भगवत्तत्त्वज्ञानं, ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति क्रमो दर्शितः ॥ ३४ ॥ ननु च ज्ञानेनाज्ञानप्राप्तकर्मनाशस्तच्च ज्ञानं भक्तियोगाद्भवति कथं कर्मणा कर्मनाशः स्यात्तत्राह— यदत्रेति ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥

१ अत्र 'महामते' इति क्वचित्पाठः। २ येन मायानुभाववित्त्वेन। ३ अत्र कर्मभूमौ भगवदर्पणेन भगवत्परितोषणं भगवत्प्रीतिकरं यत्कर्म पुरुषैः क्रियते यद्भक्तियोगसमन्वितं ज्ञानं तत् तदधीनं तस्य कर्मण अधीन हीत्यर्थः। भगवदर्पितकर्मणा भगवद्भक्तियुक्त ज्ञानमुत्पद्यते। अपि च कर्मनिवर्तकभक्तिसहितज्ञानोत्पादनद्वारा कर्मणां कर्मनाशकत्वमित्यर्थः।

भगवदर्पणेन क्रियमाणं कर्म भक्तियोगं जनयतीति सदाचारेण दर्शयति । यत्र यदा भगवतः शिक्षया कर्माणि कुर्वाणा भवन्ति तदा श्रीकृष्णस्य गुणनामानि गृणन्त्यनुसरन्ति च कृष्णमित्यर्थः । इयं च भगवच्छिक्षा 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥' इति ॥ ३६॥ कीर्तनस्मरणरूपभक्तिहेतुत्वमुक्तं, ज्ञानहेतुत्वमाह द्वाभ्याम्—नम इति । नमो धीमहि मनसा नमनं कुर्वीमहि ॥ ३७ ॥ अमूर्तिकं मन्त्रोक्तव्यतिरिक्तमूर्तिशून्यम् । यजते पूजयति स पुमान्सम्यग्दर्शनो भवति ॥ ३८ ॥ एवं कृतवति मयि हरिः स्वसदृशं ज्ञानादिकं दत्तवानित्याह । इमं स्वनिगमं स्वोपदेशं मदनुष्ठितं मयानुष्ठितमवेत्य ज्ञात्वा । भावं च प्रीतिं च ॥३९॥ अतस्त्वमप्येवं कुर्वित्याह—त्वमिति । अदभ्रमनल्पं श्रुतं यस्य हे अदभ्रश्रुत, विभोर्विश्रुतं यशः प्रख्याहि

कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ॥ गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥३६॥ नमो भगवते तुभ्यं वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ ३७ ॥ इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ॥ यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥३८॥ इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ॥ अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः ॥ ३९ ॥ त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् ॥ प्रख्याहि दुःखैर्मुहुरर्दितात्मनां यत्क्लेशनिर्वाणमुशन्ति नान्यथा ॥४०॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे व्यासनारदसंवादे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ ६ ॥ ॥ सूत उवाच ॥ एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च ॥ भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः ॥ १ ॥ व्यास उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ॥ वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २ ॥ स्वायंभुव कया वृत्त्या वर्तितं ते परं वयः ॥ कथं चेदमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥ ३ ॥ प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ॥ न ह्येष व्यवधात्काल एष सर्वनिराकृतिः ॥ ४ ॥ ॥ नारद उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ॥ वर्तमानो वयस्याद्ये तत एतदकारषम् ॥ ५ ॥ ॥ ॥

कथय । येन विश्रुतेन बुद्धेन विदां विदुषां बुभुत्सितं बोद्धुमिच्छा समाप्यते । यद्यतो दुःखैः पीडितानां क्लेशशान्तिं प्रकारान्तरेण न मन्यन्ते ॥ ४० ॥ ॥ इति श्रीमद्भागवते प्रथमस्कन्धे भावार्थदीपिकाटीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ व्यासस्य प्रत्ययार्थं च षष्ठे प्राग्जन्मसंभवम् ॥ सभाग्यं नारदः प्राह कृष्णसंकथनोद्भवम् ॥ १ ॥ १ ॥ स्वयमपि तथा चिकीर्षुर्गुरूपदेशानन्तरभावि तच्चरितं पृच्छति—भिक्षुभिरिति । विप्रवसिते दूरदेशगमने कृते सति । विज्ञानस्यादेष्टृभिरुपदेशकर्तृभिः ॥ २ ॥ परं वय उत्तरमायुः । ते त्वया वर्तितं नीतम् । इदमिति दासीपुत्रभूतं कलेवरमुदस्राक्षीरुत्सृष्टवानसि ॥३॥ एष कल्पान्तलक्षणः कालस्ते स्मृतिं कथं न व्यवधान्न खण्डितवान् । अडागमाभावस्त्वार्षः । हि यत एष सर्वस्य निराकृतिरपलापो यस्मात्सः ॥ ४ ॥ अकारषं कृतवानहम् । रेफषकारयो-

१ मूर्त्यभिधानेन मूर्तिवाचकमन्त्रेणेत्यर्थः । २ मन्त्रप्रतिपाद्यमूर्तिम् । मन्त्रध्यानोक्तमूर्तिमन्त्रेणैव जपितेनाविर्भवति मूर्तिः शरीरं यस्येति वा । ३ एतत् इदं वक्ष्यमाणं एकात्मजेत्यादि । ४ 'संकीर्तनोद्भवम्' इति पाठः । ५ चातुर्मास्यान्तेऽन्यत्र गमने कृते सतीति चक्रसं० । ६ पूर्वश्लोकस्थस्यैवात्राप्यनुषङ्गः ।

विश्लेषस्छन्दोऽनुरोधेन ॥ ५ ॥ तत्र तावत्कंचित्कालं तत्रैव मातृस्नेहयन्त्रितो न्यवसमित्याह त्रिभिः । एक एवाहमात्मजो यस्याः सा । योषिदिति मूढेति च स्नेहानुबन्धे हेतुः ॥ ६ ॥ किंकरीत्वस्यार्थं प्रपञ्चयति—सेति । अस्वतन्त्रा सा । अतो न कल्पा न समर्था आसीत् । दारुमयी योषेत्यतिपारवश्ये दृष्टान्तः ॥ ७ ॥ तदेवं सा स्नेहं चक्रेऽहं च दिगादिष्वनभिज्ञोऽतस्तत्रैव न्यवसमित्याह । अहं च तस्मिन्ब्रह्मकुले तस्या मातुः स्नेहानुबन्धस्यावेक्षया । कदा विरमेदिति प्रतीक्षयेत्यर्थः । ऊषिवान्वासं कृतवान् । पञ्चहायनः पञ्चवर्षः ॥ ८ ॥ गेहान्निर्गतां गां दुहन्तीम् । हेतौ शतृप्रत्ययः । दोग्धुं निर्गतामित्यर्थः । पदा पादेनास्पृष्ट ईषदाक्रान्तः अदशददखादत् ॥ ९ ॥ तन्मातुर्मरणं भक्तानां शं कल्याणमभीप्सत ईशस्यानुग्रहं मन्यमानः प्रातिष्ठं प्रस्थितोऽस्मि ॥ १० ॥ स्फीतान् जनपदादीनतियातः सन् महद्विपिनमद्राक्षमिति चतुर्थेनान्वयः । जनपदादिषु नानागुणदोषयुक्तेषु समदृष्टिः सन्गतोऽहमिति तात्पर्यार्थः । स्फीतान्समृद्धान् । जनपदान्देशान् । तत्र तस्यां दिशि । पुरग्रामव्रजाकरान् । तत्र पुराणि राजधान्यः । ग्रामा भृगुप्रोक्ताः—'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति ते ॥ स तु ग्राम

एकात्मजा मे जननी योषिन्मूढा च किंकरी ॥ मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६ ॥ साऽस्वतन्त्रा न कल्पासीद्योगक्षेमं[1] ममेच्छती ॥ ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७ ॥ अहं च तद्ब्रह्मकुल ऊषिवांस्तदवेक्षया ॥ दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥ ८ ॥ एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि ॥ सर्पोऽदशत्पदा स्पृष्टः कृपणां[2] कालचोदितः ॥ ९ ॥ तदा तदहमीशस्य भक्तानां शमभीप्सतः ॥ अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥ स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान् ॥ खेटखर्वटवाटीश्च वनान्युपवनानि च ॥ ११ ॥ चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ॥ जलाशयान् शिवजलान्नलिनीः[3] सुरसेविताः ॥ १२ ॥ चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ नलवेणुशरस्तम्बकुशकीचक[4]गह्वरम् ॥ १३ ॥ एक एवातियातोऽहमद्राक्षं विपिनं महत् ॥ घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४ ॥

इति प्रोक्तः शूद्राणां वास एव च ॥' इति । व्रजा गोकुलानि । आकरा रत्नाद्युत्पत्तिस्थानानि तान् । खेटाः कर्षकग्रामाः । खर्वटा गिरितटग्रामाः, भृगुप्रोक्ता वा 'एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् ॥ मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम् ॥' इति । वाट्यः पूगपुष्पादीनां वाटिकास्ताः । वनानि स्वतःसिद्धवृक्षाणां समूहाः । उपवनानि रोपितवृक्षाणां समूहाः । तानि च ॥ ११ ॥ चित्रैर्धातुभिः स्वर्णरजताद्यैर्विचित्रानद्रींश्च । इभैर्भग्ना भुजाः शाखा येषां ते द्रुमा येषु तान् । शिवानि भद्राणि जलानि येषां तान् । नलिनीः सरसीः ॥ १२ ॥ चित्राः स्वना येषां तैः पत्ररथैः पक्षिभिस्तन्नादप्रबुद्धैरित्यर्थः । विभ्रमद्भिर्भ्रमरैः श्रीः शोभा यासां ता नलिनीरतियातोऽतिक्रम्य गतः सन्महद्विपिनं वनमद्राक्षम् । कीदृशम् । नलवेणुशराणां स्तम्बैः कुशैः कीचकैश्च गह्वरं दुर्गमम् । तत्र वेणुजातय एव विपुलान्तरालगर्भाः कीचकाः ॥ १३ ॥ घोरं दुःसहम् । प्रतिभयाकारं भयङ्कररूपम् । व्यालादीनामजिरं क्रीडास्थानम् ॥ १४ ॥ ॥

१ योगक्षेमं अलब्धलाभलब्धपरिरक्षणरूपमित्यर्थः । २ कृपणां दीनामनाथा वा । ३ नलिनीः पद्मयुक्तदेशाः 'कुमुदिन्यां नलिन्यां तु विसिनीपद्मिनीमुखाः' इति कोशात् तानित्यर्थः । अतएव तस्यार्थः सरसीरिति स्वामी । बृहज्जलाशयानिति यावत् । ४ कीचकाः सच्छिद्रवंशाः ।

परिश्रान्तानीन्द्रियाण्यात्मा देहश्च यस्य । तृषा परीतो व्याप्तः । उपस्पृष्ट आचान्तः ॥ १५ ॥ पिप्पलोपस्थे अश्वत्थमूले । आश्रित उपविष्टः । आत्मना बुद्ध्या मनसा वा । आत्मस्थं हृदिस्थम् । आत्मानं परमात्मानम् ॥ १६ ॥ भावेन भक्त्या निर्जितं वशीकृतं यच्चेतस्तेन । औत्कण्ठ्येनाश्रुकलायुक्ते अक्षिणी यस्य ॥ १७ ॥ प्रेम्णोऽतिभरेण निर्भिन्नपुलकान्यङ्गानि यस्य । आनन्दानां संप्लवे महापूरे परमानन्दे । उभयमात्मानं परं च ॥ १८ ॥ मनसः कान्तमभीष्टम् । शुचा शोकस्तामपहन्तीति तथा तत् । उत्तस्थे व्युत्थितोऽस्मि ॥ १९ ॥ हृदि मनः प्रणिधाय स्थिरीकृत्यावितृप्तोऽहमातुर इवाभवमिति शेषः ॥ २० ॥ गिरामगोचरः

परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः ॥ स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥१५॥ तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः[2] ॥ आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६ ॥ ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा ॥ औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे[3] शनैर्हरिः ॥१७॥ प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ॥ आनन्दसंप्लुवे लीनो नापश्यमुभयं मुने ॥ १८ ॥ रूपं भगवतो यत्तन्मनःकान्तं शुचापहम् ॥ अपश्यन्सहसोत्तस्थे[4] वैक्लव्याद्दुर्मना इव ॥ १९ ॥ दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ॥ वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥ २० ॥ एवं यतन्तं विजने मामाहागोचरो गिराम् ॥ गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २१ ॥ हन्तास्मिन् जन्मनि भवान्मा मा द्रष्टुमिहार्हति ॥ अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥२२॥ सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ ॥ मत्कामः शनकैः साधुः सर्वान्मुञ्चति हृच्छयान् ॥ २३ ॥ सत्सेवयाऽदीर्घया ते जाता मयि दृढा मतिः ॥ हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २४ ॥ मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ॥ प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २५ ॥ एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम् ॥ अहं च तस्मै महतां महीयसे शीर्ष्णाऽवनामं विदधेऽनुकम्पितः ॥ २६ ॥ ॥ ॥ ॥

संवेदनस्य विषयभूत ईश्वरः ॥ २१ ॥ हन्तेति सानुकम्पसंबोधने । मा इति माम् । द्रष्टुं नार्हति । यतः न विपका दग्धाः कषाया मलाः कामादयो येषां तेषां कुयोगिनामनिष्पन्नयोगानाम् ॥ २२ ॥ कुतस्तर्हि दृष्टोऽसि तत्राह । सकृद्दर्शितं मयेति यदेतत्कामाय मय्यनुरागाय । त्वत्कामेन किमित्यत आह । मत्कामः पुमान् । हृच्छयान्कामान् ॥ २३ ॥ अदीर्घयापि सतां सेवया । अवद्यं निन्द्यम् । इमं लोकं देहं हित्वा । मज्जनतां मत्पार्षदतां गन्तासि ॥ २४ ॥ प्रजानां सर्गे सृष्टौ निरोधे संहारेऽपि । प्रजासर्गस्य निरोध इति वा ॥२५॥ तत् प्रसिद्धं महद्भूतम् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः । कर्तरि षष्ठी । महतोऽनवच्छिन्नस्य परमात्मनः प्रकृतस्य भूतस्येति यावत् । निःश्वसितं निःश्वासवदप्रयत्नेनैव जातमित्यर्थः ।

१ महाप्रवाहे इत्यर्थः । २ 'आश्रितः' इति मूलटीकयोः क्वचित्पाठः । ३ हृद्यासीदाविर्भूतवान् । ४ 'उत्तस्थौ' इत्यपि पाठः क्वचित्तथाप्यात्मनेपदपाठ एव युक्तः । समाधिव्युत्थानस्यानूर्ध्वकर्मत्वात् । ५ 'भवान्न मा द्रष्टुम्' इत्यपि पाठः । ६ वेदवाचामविषय इति पाठः । ७ कुयोगिनामिति कुशब्दोऽयमीषदर्थे नतु कुत्सायाम् । ईषद्योगयुक्तानां तत्कालयोगप्रवृत्तानामित्यर्थः । योगमार्गप्रवृत्तस्य कुत्साया अभावादिति व्याख्यालेशः । ८ दासीपुत्ररूपं देहमित्यर्थः । ९ महद्भूतमिति भगवन्नामप्रथमैकवचनम् । तत्र प्रमाणम्—'अस्य' इति श्रुतिः । अस्येत्यादि

कीदृशम् । ईश्वरं सर्वनियन्तृ । नभसि[1] लिङ्गं मूर्तिर्यस्य तन्नभोलिङ्गम् । सन्निहितमपि न लिङ्ग्यत इत्यलिङ्गं तस्मै अदृष्टाय भगवतेऽवनामं प्रणामं विदधे कृतवानहम् । तेनानुकम्पितः सन् ॥ २६ ॥ अनन्तस्य[2] नामानि पठन्ननवरतं गृणन् हतत्रपस्त्यक्तलज्जो विमत्सरो जातोऽस्मि इति शेषः ॥ २७ ॥ काले स्वावसरे कालो मृत्युः प्रादुरभूदाविर्बभूव । अकस्मात्प्रादुर्भावे दृष्टान्तः—तडिदिवेति । सौदामनीति विशेषणं स्फुटत्वप्रदर्शनार्थम् । तथा हि सुदामा[3] माला तत्र भवा सौदामनी मालाकारेत्यर्थः । यद्वा सुदामानामा कश्चित्स्फटिकपर्वतः । ततः 'तेनैकदिक्' इति सूत्रेणाण् । स्फटिकादिमयपर्वतप्रान्ते भवा हि विद्युदतिस्फुटा भवति तद्वदित्यर्थः । यद्वा[4] तडिदित्यन्तिके इत्यर्थः । 'तडिदित्यन्तिकवधयोः' इति नैरुक्तस्मरणात् ॥ २८ ॥ प्रयुज्यमाने मयि तामिति । अयमर्थः—'हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि' इति या भागवती भगवत्पार्षदरूपा शुद्धा सत्त्वमयी तनुः प्रतिश्रुता तां प्रति भगवता मयि प्रयुज्यमाने नीयमाने आरब्धं यत्कर्म तन्निर्वाणं समाप्तं यस्य, आरब्धकर्मणो निर्वाणमेव निर्वाणं यस्येति वा । स पञ्चभूतात्मको देहो न्यपतत् । अनेन पार्षदतनूनामकर्मारब्धत्वं शुद्धत्वं नित्यत्वमित्यादि सूचितं

नामान्यनन्तस्य हतत्रपः पठन्गुह्यानि भद्राणि कृतानि च स्मरन् ॥ गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः ॥ २७ ॥ एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ॥ कालः प्रादुरभूत्काले तडित्सौदामनी यथा ॥ २८ ॥ प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ॥ आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः ॥ २९ ॥ कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ॥ शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः ॥ ३० ॥ सहस्रयुगपर्यन्त उत्थायेदं सिसृक्षतः ॥ मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥ ३१ ॥ अन्तर्बहिश्च लोकांस्त्रीन्पर्येम्यस्कन्दितव्रतः ॥ अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३२ ॥ देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ॥ मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३३ ॥ प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ॥ आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३४ ॥

भवति ॥ २९ ॥ इदं त्रैलोक्यमादायोपसंहृत्योदन्वत एकार्णवस्याम्भसि शयाने श्रीनारायणे शिशयिषोः शयनं कर्तुमिच्छोर्विभोर्ब्रह्मणोऽन्तर्मध्यमनुप्राणं निःश्वासेन सह विविशे प्रविष्टोऽहम् । 'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ॥ अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना ॥' इति कौर्मोक्तेः । 'स्वायनेऽम्भसि' इति पाठे स्वायने स्वस्यायने आश्रयेऽम्भसि शिशयिषोर्ब्रह्मण इति श्रीनारायणेनाभेदविवक्षयोक्तमित्यवगन्तव्यम् ॥ ३० ॥ प्राणेभ्य इन्द्रियेभ्यः अहं मरीचिमिश्रास्तन्मुख्या ऋषयश्च जज्ञिरे ॥ ३१ ॥ ये कर्मिणस्ते बहिर्[5]न यान्ति । ये तपआदिभिर्ब्रह्मलोकं गतास्तेऽन्तर्[7]न यान्ति । अहं तु महाविष्णोरनुग्रहादखण्डितब्रह्मचर्यव्रतः सन्नन्तर्बहिश्च पर्येमि पर्यटामि । क्वचिदप्यविघाताऽप्रतिहता गतिर्यस्य सः ॥ ३२ ॥ किमिति पर्यटसि । ईश्वराज्ञया लोकमङ्गलार्थमित्याह चतुर्भिः । देवेनेश्वरेण दत्ताम् । स्वरा 'निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाः' इति सप्त त एव ब्रह्म, ब्रह्माभिव्यञ्जकत्वात् । तेन विभूषिताम् । स्वतःसिद्धसप्तस्वरामित्यर्थः । मूर्च्छयित्वा मूर्च्छनालापवतीं कृत्वा ॥ ३३ ॥ स्वप्रयोजनमाह—प्रगायत इति ॥ ३४ ॥ ॥ ॥ ॥ ॥

१ नभसि हार्दाकाशे । २ अनन्तस्येत्यादिर्गृणन्नित्यन्तः पाठः प्राचीनपुस्तकेषु न दृश्यते । ३ सुदामेत्यारभ्य नैरुक्तस्मरणादित्यन्तो ग्रन्थः प्राचीनपुस्तकेषूपलब्धः । ४ यद्वेति । अस्मिन्पक्षे तडित्सौदामनीत्यत्र सप्तमीतत्पुरुषसमासो ज्ञेयः । ५ त्रिलोक्या बहिरित्यर्थः । ६ 'बहिर्लोकं गता' इत्यपि पाठः । ७ त्रिलोक्या एवान्तरित्यर्थः ।

परप्रयोजनमाह—एतद्धीति । मात्रा विषयास्तेषां स्पर्शा भोगास्तेषामिच्छया आतुराणि चित्तानि येषां तेषां हरिचर्यानुवर्णनं यदेतदेव भवसिन्धौ प्लवः पोतः । न केवलं श्रुतिप्रामाण्येन किंत्वन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ॥ ३५ ॥ एतदेवेत्युक्तमवधारणमनुभवेन द्रढयति—यमादिभिरिति । यमादिभिस्तथा न शाम्यति । यद्वन्मुकुन्दसेवयाऽद्धा साक्षादात्मा मनः शाम्यति । कथंचिन्मुकुन्दसेवामात्रेण शाम्यति किं पुनस्तद्गुणवर्णनेनेति भावः ॥ ३६ ॥ भवतो मनःपरितोषकं चाख्यातम् ॥ ३७ ॥ आमन्त्र्यानुज्ञाप्य । यादृच्छिकः स्वप्रयोजनसङ्कल्पशून्यः ॥ ३८ ॥ हरिकथागायकनारदभाग्यं श्लाघते—अहो इति । माद्यन् हृष्यन् । तन्त्र्या वीणया ॥ ३९ ॥ ॥ इति श्रीमद्भागवते प्रथमस्कन्धे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ अथ भागवतश्रोतुर्जन्म

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ॥ भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ ३५ ॥ यमादिभिर्योगपथैः कामलोभहतो मुहुः ॥ मुकुन्दसेवया यद्वत्तथात्माऽद्धा न शाम्यति ॥ ३६ ॥ सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयानघ ॥ जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम् ॥ ३७ ॥ ॥ सूत उवाच ॥ एवं संभाष्य भगवान्नारदो वासवीसुतम् ॥ आमन्त्र्य वीणां रणयन्ययौ यादृच्छिको मुनिः ॥ ३८ ॥ अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ॥ गायन्माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत् ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे व्यासनारदसंवादे षष्ठोऽध्यायः ॥ ६ ॥ ॥ शौनक उवाच ॥ निर्गते नारदे सूत भगवान्बादरायणः ॥ श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥ ॥ सूत उवाच ॥ ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे ॥ शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ॥ २ ॥ तस्मिन्स्व आश्रमे व्यासो बदरीषण्डमण्डिते ॥ आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम् ॥ ३ ॥ भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ॥ अपश्यत्पुरुषं पूर्वं मायां च तदुपाश्रयाम् ॥ ४ ॥ यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ ५ ॥ ॥ ॥

वक्तुं परीक्षितः ॥ सुसवालवधाद्द्रौणेर्दण्डः सप्तम उच्यते ॥ १ ॥ तस्य नारदस्याभिप्रेतं श्रुतवान्सन् ॥ १ ॥ ब्रह्मनद्यां ब्रह्मदैवत्यायां ब्राह्मणैराश्रितायां च । सत्रं कर्म वर्धयतीति तथा ॥ २ ॥ बदरीणां षण्डेन समूहेन मण्डिते । मनः प्रणिदध्यौ स्थिरीचकार । 'समाधिनाऽनुस्मर तद्विचेष्टितम्' इति नारदोपदिष्टं ध्यानं कृतवानित्यर्थः ॥ ३ ॥ प्रणिहिते निश्चले । अत्र हेतुः—भक्तियोगेनामले । पूर्वं प्रथमं पुरुषमीश्वरमपश्यत् । 'पूर्णम्' इति वा पाठः । तदुपाश्रयामीश्वराश्रयां तदधीनां मायां चापश्यत् ॥ ४ ॥ ईशमायाकृतां च जीवानां संसृतिमपश्यदित्याह—ययेति । यया संमोहितः स्वरूपावरणेन विक्षिप्तः परोऽपि गुणत्रयाद्य-

१ अथवा यादृच्छिकः कृष्णेतरवस्त्वनासक्त्या यदृच्छाचारी सि० प्र० । २ 'जन्मकर्म परीक्षितः' इति क्वचित्पाठः । ३ 'अहो देवऋषिर्धन्यः' इत्यपि क्वचित्पाठः । ४ शम्येति । शम्या युगकीलास्ताः पुरः परिध्यर्थे प्रास्यन्तेऽस्मिन्निति शम्याप्रासः । अथवा यज्ञियक्षेत्रपरिमाणप्रदर्शनार्थं शम्या नाम यज्ञायुधं प्रास्यते अस्मिन्निति शम्याप्रासः । 'शम्याप्राश' इति पाठे शमीभिः आ सर्वतः प्राश्यते प्राप्यते व्याप्यते वेष्ट्यते वासौ शम्याप्राशः इति व्याख्यालेशः । ५ सत्रं कर्म वर्धतेऽस्मिन्स तथा । अथवा सतः साधून् मुमुक्षूंस्त्रायत इति सत्रं ब्रह्मविचारस्तं वर्धयतीति तथेत्यप्यर्थान्तरम् । ६ समाधिनेति पञ्चमाध्यायस्य त्रयोदशश्लोकान्तिमपादः ।

तिरिक्तोऽपि तत्कृतं त्रिगुणत्वाभिमानकृतमनर्थं च कर्तृत्वादिकं प्राप्नोति ॥ ५ ॥ अनर्थमुपशमयति योऽधोक्षजे साक्षाद्भक्तियोगस्तं चापश्यत्[1]। एतत्सर्वं स्वयं दृष्ट्वा एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे। तदनेन श्लोकत्रयेण भागवतार्थः संक्षेपतो दर्शितः। एतदुक्तं भवति—विद्याशक्त्या मायानियन्ता नित्याविर्भूतपरमानन्दस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरस्तन्मायया संमोहितस्तिरोभूतस्वरूपस्तद्विपरीतधर्मा जीवस्तस्य चेश्वरभक्त्या लब्धज्ञानेन मोक्ष इति। तदुक्तं विष्णुस्वामिना 'ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः। स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः'[2] ॥ तथा 'स ईशो यद्वशे माया स जीवो यस्तयार्दितः ॥ स्वाविर्भूतपरानन्दः स्वाविर्भूतसुदुःखभूः ॥ स्वादृगुत्थविपर्यासभवभेदजभीशुचः ॥ मन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः ॥' इत्यादि ॥ ६ ॥ संहिताया अनर्थोपशामकत्वं दर्शयति—यस्यामिति। यस्यां वै श्रूयमाणायामेव, किं पुनः श्रुतायामित्यर्थः ॥ ७ ॥ अनुक्रम्य शोधयित्वा ॥ ८ ॥ कस्य वा हेतोः। बृहतीं विततताम् ॥ ९ ॥ निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः। तदुक्तं गीतासु—'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि

अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥ ६ ॥ यस्यां वै श्रूयमाणायां
कृष्णे परमपूरुषे ॥ भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥७॥ स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ॥
शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥ ॥ शौनक उवाच ॥ स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥
कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥ ॥ सूत उवाच ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥१०॥ हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ॥ अध्यगान्महदाख्यानं नित्यं
विष्णुजनप्रियः ॥११॥ परीक्षितोऽथ राजर्षेर्जन्मकर्मविलायनम् ॥ संस्थां[3] च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥१२॥
यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु ॥ वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे धृतराष्ट्रपुत्रे ॥ १३ ॥

निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥' इति। यद्वा ग्रन्थिरेव ग्रन्थः ( निर्वृत्तः क्रोधाहंकाररूपो ग्रन्थिर्येषां ते ) निर्वृत्तहृदयग्रन्थय इत्यर्थः। ननु मुक्तानां किं भक्त्येत्यादिसर्वाक्षेपपरिहारार्थमाह—इत्थंभूतगुण इति ॥ १० ॥ ननु भक्तिं कुर्वन्तु नाम, एतच्छास्त्राभ्यासे शुकस्य किं कारणमित्यत आह—हरेरिति। अध्यगादधीतवान्। विष्णुजनाः प्रिया यस्येति। व्याख्यानादिप्रसङ्गेन तत्सङ्गतिकाम इति भावः। एतेन 'तस्य पुत्रो महायोगी' इत्यादिना शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत्पृष्टं तस्योत्तरमुक्तम् ॥ ११ ॥ यदन्यत्पृष्टं परीक्षितः प्रायोपवेशेन श्रवणं कथमिति 'तस्य जन्म महाश्चर्यम्' इत्यादिना तस्योत्तरं वक्तुमाह—परीक्षित इति। विलायनं मुक्तिं मृत्युं वा। संस्थां महाप्रस्थानम्। श्रीकृष्णकथानामुदयो यथा भवति तथा ॥ १२ ॥ तत्र परीक्षितो जन्म निरूपयिष्यन्नादौ तावद्गर्भस्थ एवाश्वत्थाम्नो ब्रह्मास्त्रात्कृष्णेन रक्षित इति वक्तुं कथां प्रस्तौति—यदेत्यादिना[4]। यदा द्रौणिरश्वत्थामा कृष्णासुतानां द्रौपदीपुत्राणां शिरांस्युपाहरत्तदा तन्माताऽरुदत्तां च सान्त्वयन्किरीटमाल्यर्जुन आहेति तृतीयेनान्वयः। किमिति बालानां शिरांस्यानीतवानित्यपेक्षायामाह। मृधे युद्धे। यद्यपि पाण्डवा अपि

१ तं चापश्यदिति भक्तियोगेत्यादि पूर्वश्लोकोक्तक्रिययान्वयः। २ ह्लादिन्येति। ह्लादिनी परमानन्दमयी शक्तिस्तया सविदा ज्ञानेन। स्वाविद्या स्वकीयाज्ञानम्। ३ अत्र 'संस्थानं पाण्डुपुत्राणाम्' इति पाठः। ४ धनुश्चिह्नान्तर्गतो भागः प्राचीनपुस्तकेऽस्ति।

कौरवा एव तथापि सृञ्जयवंशजो धृष्टद्युम्नः पाण्डवानां सेनापतिरिति सृञ्जयानामित्युक्तम् । वीरगतिं स्वर्गम् । अथो अनन्तरम् । वृकोदरेणाविद्धायाः क्षिप्ताया गदाया अभिमर्शेनाभिघातेन भग्नावूरुदण्डौ यस्य तथाभूते धृतराष्ट्रपुत्रे दुर्योधने सति ॥ १३ ॥ भर्तुर्दुर्योधनस्य । स्मेति वितर्के । इत्येवं प्रियं स्यादिति पश्यन् । तस्य तद्विप्रियमेवेति वाक्यान्तरम् । विप्रियत्वे हेतुः—जुगुप्सितमिति ॥ १४ ॥ घोरं दुःसहं यथा भवति । बाष्पस्य कलाभिर्विन्दुभिराकुले अक्षिणी यस्याः । किरीटस्यैकत्वेऽपि तदग्राणां बहुत्वात्किरीटमालीत्युक्तम् ॥ १५ ॥ शुचः शोकाश्रूणि । प्रमृजामि परिमार्जयामि । यद्यदा ब्रह्मबन्धोर्ब्राह्मणाधमस्य आततायिन इति 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ।' इति स्मरणादत्राततायी शस्त्रपाणिस्तेन च पुत्रहन्तृत्वं लक्ष्यते । गाण्डीवाद्धनुषो मुक्तैर्विशिखैर्बाणैरुपाहरे त्वत्समीपमानयामि । यच्छिर आक्रम्यासनं विधाय । दग्धपुत्रा सती ॥ १६ ॥ वलगवो रम्या विचित्रा जल्पा भाषणानि तैः । सोऽर्जुनः । अच्युत एव मित्रं सूतश्च[1] यस्य । दंशितो बद्धकवचः । उग्रं धनुश्चापं यस्य । कपिर्हनुमान् ध्वजे यस्य सः । गुरोः पुत्रं रथेनान्वाद्रवदन्वधावत्

भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि ॥ उपाहरद्विप्रियमेव तस्य तज्जुगुप्सितं कर्म विगर्हयन्ति ॥ १४॥ माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना ॥ तदारुदद्बाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटमाली ॥ १५॥ तदा शुचस्ते प्रमृजामि भद्रे यद्ब्रह्मबन्धोः शिर आततायिनः ॥ गाण्डीवमुक्तैर्[2]विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि[3] दग्धपुत्रा ॥१६॥ इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाऽच्युतमित्रसूतः ॥ अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७॥ तमापतन्तं स विलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथा कः ॥ १८॥ यदाऽशरणमात्मानमैक्षत श्रान्तवाजिनम् ॥ अस्त्रं ब्रह्मशिरो मेन आत्मत्राणं द्विजात्मजः ॥१९॥ अथोपस्पृश्य सलिलं संदधे तत्समाहितः ॥ अजानन्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥ ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतोदिशम् ॥ प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥ ॥

॥ १७ ॥ आपतन्तमाधावन्तम् । स द्रौणिः । कुमारहा बालघाती । उद्विग्नमनाः कम्पितहृदयः । प्राणपरीप्सुः प्राणान् लब्धुमिच्छुर्न तु कीर्तिम् । यावद्गमं यावद्गन्तुं[4] शक्यं तावदुर्व्यां पराद्रवदपलायत । को ब्रह्मा मृगो भूत्वा सुतां यन्धुमुद्यतः सन् रुद्रस्य भयाद्यथा पलायते स्म । 'अर्के' इति पाठे वामनपुराणकथा सूचिता । तथा हि विद्युन्माली नाम कश्चिद्राक्षसो माहेश्वरस्तस्मै रुद्रेण सौवर्णं विमानं दत्तम्, ततोऽसावर्कस्य पृष्ठतो भ्राम्यन्विमानदीप्त्या रात्रिं विलोपितवान्, ततोऽर्केण निजतेजोभिर्द्रावयित्वा तद्विमानं पातितम्, तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पराद्रवत्, ततो रुद्रस्य क्रूरदृष्ट्या दन्दह्यमानः पतन्वाराणस्यां पतितो लोलार्कनाम्ना विख्यात इति ॥ १८ ॥ अशरणं रक्षकरहितम् । ननु पलायनमेव रक्षकमस्ति, न, तस्यापि कुण्ठितत्वादित्याह । श्रान्ता वाजिनो यस्य तम् । ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रम् । द्विजात्मज इत्यदीर्घदर्शितामाह ॥ १९ ॥ तद्ब्रह्मास्त्रम् । समाहितः कृतध्यानः । उपसंहारमजानतोऽपि संधाने हेतुः—प्राणकृच्छ्र इति ॥ २० ॥ ततोऽस्त्रात् सर्वतोदिशं प्रादुष्कृतं प्रकटीभूतं तेजोऽभिप्रेक्ष्य ततः प्राणापदं चाभिप्रेक्ष्य ॥ २१ ॥ ॥ ॥

१ सूतः सारथिरित्यर्थः । २ गांजीवेति पाठे गाण्डीवस्यैव गांजीवेति नामान्तरं ज्ञेयम् । ३ 'स्थास्यसि' इत्यपि पाठः । ४ 'गन्तुं' इति पाठः ।

प्रस्तुतं विज्ञापयितुं प्रथमं स्तौति—कृष्णेति चतुर्भिः । संसृतेर्हेतोर्दह्यमानानां तस्यां अपवर्गोऽपवर्जयिता । नाशक इत्यर्थः ॥ २२ ॥ यतस्त्वमीश्वरः साक्षात् । कुतः । यतः प्रकृतेः परः पुरुषः । तत्कुतः । यत आद्यः कारणम् । कारणत्वेऽप्यविकारितामाह । मायां व्युदस्याभिभूय कैवल्यरूपे आत्मन्येव स्थित इति ॥ २३ ॥ त्रिवर्गदातापि त्वमेवेत्याह—स इति । यस्त्वं मायामभिभूय स्थितः स एव मायाभिभूतस्य जनस्य धर्मादिफलमुपासितः सन्विधत्से । वीर्येण प्रभावेण ॥ २४ ॥ तथा चानेनावतारेण तव साधुपक्षपातो लक्ष्यत इत्याह—तथेति । किं भूभारहरणं मदिच्छामात्रेण न भवति तत्राह । स्वानां ज्ञातीनामनुध्यानाय च । तथानन्यभावानामेकान्तभक्तानां च ॥ २५ ॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति—किमिति । किमात्मकमिदं कुतो वा आयातीति । स्विद्वितर्के ॥ २६ ॥ इदं

अर्जुन उवाच ॥ कृष्ण कृष्ण महाभाग[2] भक्तानामभयंकर ॥ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः[3] ॥ २२ ॥ त्वमाद्यः
पुरुषः साक्षादीश्वरः प्रकृतेः परः ॥ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि[4] ॥ २३ ॥ स एव जीवलोकस्य
मायामोहितचेतसः ॥ विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥ तथायं चावतारस्ते भुवो भारजि-
हीर्षया ॥ स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥ किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम् ॥
सर्वतोमुखमायाति तेजः परमदारुणम् ॥ २६ ॥ ॥ श्रीभगवानुवाच ॥ वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ॥
नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥ न ह्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्शनम् ॥ जह्यस्त्रतेज उन्नद्धम-
स्त्रज्ञो ह्यस्त्रतेजसा ॥ २८ ॥ ॥ सूत उवाच ॥ श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा । स्पृष्ट्वापस्तं परिक्रम्य ब्राह्मं
ब्राह्मायं संदधे ॥ २९ ॥ संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते ॥ आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥ ३० ॥
दृष्ट्वास्त्रतेजस्तु तयोस्त्रींल्लोकान्प्रदहन्महत् ॥ दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत ॥ ३१ ॥ ॥ ॥

द्रोणपुत्रस्य ब्राह्ममस्त्रम् । तेन च प्राणबाधे प्राप्ते प्रदर्शितं केवलम् । न तत्प्रयोगे कुशल इत्यर्थः । यतोऽसावुपसंहारं न वेद । एतच्च त्वं तु वेत्थ जानासि ॥ २७ ॥ प्रत्यवकर्शनं कुशत्वकरम् । निवर्तकमित्यर्थः । अतस्तदस्त्रतेज उन्नद्धमुत्कटं ब्रह्मास्त्रतेजसैव जहि घातय । त्वत्प्रयुक्तं चालं तदुपसंहृत्य स्वयमुपशाम्येत् । यतस्त्वमस्त्रज्ञोऽसि ॥ २८ ॥ परे शत्रवस्त एव वीरास्तान्हन्तीति तथाविधः फाल्गुनोऽर्जुनोऽपः स्पृष्ट्वाचम्य तं श्रीकृष्णं परिक्रम्य प्रदक्षिणीकृत्य । ब्राह्माय ब्रह्मास्त्रं निवर्तयितुम् ॥ २९ ॥ ततश्चोभयोर्ब्रह्मास्त्रयोस्तेजसी शरैः संवृते संवेष्टिते परस्परं मिलित्वा ववृधाते अवर्धेताम् । किं कृत्वा । रोदसी द्यावापृथिव्यौ खमन्तरिक्षं चावृत्य । यथा प्रलये संकर्षणमुखाग्निरुपरिस्थितोऽर्कश्च संहत्य वर्धेते तद्वत् ॥ ३० ॥ तयोर्द्रौणिफाल्गुनयोः । तेन दह्यमानाः सांवर्तकं प्रलयाग्नि-ममंसत मेनिरे ॥ ३१ ॥ ॥ ॥ ॥ ॥

१ तस्याः ससृतेः संसरणस्येत्यर्थः । २ 'महाबाहो' इत्यपि पाठः, तत्र 'बाहू राजन्यः कृतः' इत्युक्तरीत्या राजन्यकुलप्रभव इत्यर्थः इति वि. रा. ३ संसृतिमहाभयक्षपणक्षमस्य तव कियानेतदुपस्थितभयापनयने प्रयास इति भावः । ४ आत्मनि स्थित इत्याधारान्तरानपेक्ष इत्यर्थः । ५ अस्य ब्रह्मास्त्रस्य पूर्वब्रह्मास्त्रनिवर्तकत्वमेव नतु भयोत्कृष्टघातकत्वं तदुक्तं ब्राह्मायेति । ६ मूलदार्ढ्याय शरयोः संवेष्टिते भूत्वा । ७ (प्रदहत्ततः) इति पाठे ततस्तेनेत्यर्थः । अयमेव पाठः समीचीनः । तेनेत्यध्याहारमन्तरेण चारितार्थ्यात् । ८ परेषां शत्रूणां संबन्धिनो वीरान्हन्तीति वा ।

लोकानां व्यतिकरं व्यत्ययं नाशमित्यर्थः । वासुदेवस्य मतं चालक्ष्य ब्रह्मास्त्रद्वयमुपसंहृतवान् ॥ ३२ ॥ गौतमवंशजा गौतमी कृपी तस्याः सुतम् । अमर्षेण कोपेन ताम्रे अक्षिणी यस्य सः । निष्कृपत्वे दृष्टान्तः—पशुं यथेति । तस्य बन्धनं धर्म इत्यत्र दृष्टान्तः—यथा याज्ञिकः पशुमिति । रशनया रज्ज्वा ॥३३॥ शोकरोपादियुक्तस्याप्यर्जुनस्य धर्मनिष्ठाख्यापनाय श्रीकृष्णवाक्यम् । तदाह षड्भिः । शिबिराय[1] राजनिवेशाय नेतुमिच्छन्तम् । प्रकुपित[2] इवेति ॥ ३४ ॥ अनागसो निरपराधान् ॥३५॥ रिपोरपि सुप्तस्य बालस्य च वधो न धर्म इत्यन्यार्थैर्दर्शयति—मत्तमिति । मत्तं मद्यादिना । प्रमत्तमनवहितम् । उन्मत्तं ग्रहवातादिना । जडमनुद्यमम् । प्रपन्नं शरणागतम् । विरथं भग्नरथम् ॥३६॥ तद्वधो दण्डरूपस्तस्यैव श्रेयः पुरुषार्थः । यद्यतो दण्डप्रायश्चित्तरहिताद्दोषात्स पुमानधो यातीति । तथा च स्मरन्ति—

प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ॥ मतं च वासुदेवस्य संजहारार्जुनो द्वयम् ॥ ३२ ॥ तत आसाद्य तरसा दारुणं गौतमीसुतम् ॥ बबन्धामर्षताम्राक्षः पशुं रशनया यथा ॥३३॥ शिबिराय निनीषन्तं रज्ज्वा बद्ध्वा रिपुं बलात् ॥ प्राहार्जुनं प्रकुपितो भगवानम्बुजेक्षणः ॥ ३४ ॥ मैनं[3] पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहि ॥ योऽसावनागसः सुप्तानवधीन्निशि बालकान् ॥३५॥ मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ॥ प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥३६॥ स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ॥ तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥ प्रतिश्रुतं च भवता पाञ्चाल्यै शृण्वतो मम ॥ आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥३८॥ तदसौ वध्यतां पाप आततार्य्यात्मबन्धुहा[4] ॥ भर्तुश्च[5] विप्रियं वीर कृतवान्कुलपांसनः ॥ ३९ ॥ ॥ सूत उवाच ॥ एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ॥ नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं महान् ॥ ४० ॥ अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः ॥ न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान्हतान् ॥ ४१ ॥ तथाऽऽहृतं पशुवत्पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन[6] ॥ निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा कृपया ननाम च ॥ ४२ ॥ उवाच चासहन्त्यस्य बन्धनानयनं सती ॥ मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥

'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ॥ विधूतकल्मषा यान्ति स्वर्गं सुकृतिनो यथा ॥' इति ॥ ३७ ॥ ३८ ॥ ३९ ॥ यद्यपि चोदितस्तथापि हन्तुं नैच्छत् । आत्महनं पुत्रहन्तारमपि[7] । यतो महान् ॥ ४० ॥ गोविन्दः प्रियः सारथिर्यस्य सः । आत्मजान् शोचन्त्यै ॥ ४१ ॥ तथा परिभवेनाहृतमानीतम् । कर्मणो जुगुप्सितेन दोषेणावाङ्मुखमधोवदनम् । अपकृतमपकारिणम् । कृपया निरीक्ष्य । वामः शोभनः स्वभावो यस्याः सा ॥ ४२ ॥ ननाम चोवाच चेति चकाराभ्यां संभ्रमः सूचितः । बन्धनेनाऽऽनयनमसहमाना ॥ ४३ ॥ ॥ ॥ ॥ ॥

१ शिबिराय स्कन्धावाराय सेनानिवेशस्थानायेति यावत् इति विज० । २ प्रकुपितस्तद्वधाभावेनामर्षं प्राप्तः । ३ 'नैनं' इति पाठः । ४ 'आत्मबन्धुः सुतः स्तोकः पुत्राङ्गज उदाहृतः' इत्यभिधानादात्मबन्धून्सुतान्हतवानित्यन्वयः । ५ भर्तुर्धृतराष्ट्रस्य दुर्योधनस्य च । वंशे विद्यमाने तस्याप्युपकारो भवेदित्युक्तं भर्तुश्चेति । ६ कर्मणः स्वकृतस्य जुगुप्सितेन जुगुप्सया । जुगुप्साशब्दात्स्वार्थसन्नन्ताद्भावे क्तः । ७ 'आत्मा वै पुत्रनामासि' इति श्रुतेरात्मशब्देन पुत्रपरामर्शः ।

सरहस्यो गोप्यमन्त्रसहितः। विसर्गोऽस्त्रप्रयोगः उपसंयम उपसंहारः ताभ्यां सहितोऽस्त्रसमूहश्च ॥४४॥ किंच तस्य द्रोणस्यात्मा देहस्तस्यार्धं कृपी आस्ते । अर्धत्वे हेतुः—पत्नी। 'अर्धो वा एप आत्मनो यत्पत्नी' इति श्रुतेः। 'जायापती अग्निमादधीयातां' इति श्रुतेरुभयोरेकाकारत्वावगमाच्च। ननु भर्तरि मृते सा कथं जीवति तत्राह—नान्वगाद्भर्तारम् । यतो वीरसूः पुत्रवती ॥ ४५ ॥ तत्तस्माद्गौरवं गुरोः कुलं भवद्भिः कर्तृभिर्वृजिनं दुःखं प्राप्तुं नार्हति । किंतु पूज्यं वन्द्यं च ॥ ४६ ॥ मृतवत्सा मृतपुत्रा ॥४७॥ विपक्षे दोपमाह—यैरिति । तेषां राजन्यानां कुलं कर्म । कथंभूतम् । सानुबन्धं सपरिवारम् । शुचा शोकेनार्पितं व्याप्तं च । ब्रह्मकुलं कर्तृ । प्रदहति ॥ ४८ ॥ धर्म्यमित्यादयो वचसः षड्गुणाः पूर्वश्लोकपट्के द्रष्टव्याः । तत्र धर्म्यं धर्मादनपेतं मुच्यतां मुच्यतामिति । न्याय्यं न्यायादनपेतं सरहस्य

सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ॥ अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥ स एष भगवान्द्रोणः प्रजारूपेण वर्तते ॥ तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥ तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम् ॥ वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥ मारोदीदस्य जननी गौतमी पतिदेवता ॥ यथाहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥ यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ॥ तत्कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम् ॥ ४८ ॥ ॥ सूत उवाच ॥ धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ॥ राजा धर्मसुतो राज्ञ्याः प्रत्यनन्दद्वचो द्विजाः ॥ ४९ ॥ नकुलः सहदेवश्च युयुधानो धनंजयः ॥ भगवान्देवकीपुत्रो ये चान्ये याश्च योषितः ॥ ५० ॥ तत्राहामर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः ॥ न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून्वृथा ॥ ५१ ॥ निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥ आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥ ॥ श्रीभगवानुवाच ॥ ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः ॥ मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥ ॥ ॥

इत्यादि। सकरुणं तस्यात्मनोऽर्धमिति । निर्व्यलीकं तद्धर्मज्ञेति । समं मारोदीदिति । दुःखसाम्योक्तेः । महत् यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् । एवंभूतं राज्या वचो हे द्विजाः, राजा प्रत्यनन्ददनुमोदितवान् ॥४९॥ नकुलादयश्च प्रत्यनन्दन् । युयुधानः सात्यकिः ॥५०॥ तस्य तथाविधस्य द्रौणेर्वध एव श्रेष्ठः । अन्यथाऽस्य नरकपातप्रसङ्गात् । तदाह—न भर्तुरिति । अहन् जघान ॥५१॥ चतुर्भुजोक्तेरयं भावः—भीमे तं हन्तुं प्रवृत्ते द्रौपद्यां च सहसा तन्निवारणे प्रवृत्तायामुभयोः संवरणायाविष्कृतचतुर्भुज इति । संदिहानस्य सख्युरर्जुनस्य ॥ ५२ ॥ वधार्हणो वधार्हः । मयैव शास्त्रकृता 'ब्राह्मणो न हन्तव्यः' तथा 'आततायिनमायान्तमपि वेदान्तपारगम् ॥ जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥' इति च वदता । तदुभयमप्यनुशासनं परिपालय ॥ ५३ ॥ ॥

१ अर्धमिति समांशाभिप्रायेण नपुंसकनिर्देशः । २ वीरपुत्रवतीत्यर्थः । ३ कुलं कर्मेति । कुलमिति परार्धश्लोकोक्तपदम् । कर्म द्वितीयैकवचनं कर्मपदमित्यर्थः । दीप० । ४ तत्कुलं राजन्यकुलम् । ५ 'याज्ञ्याः' इति पाठे यज्ञसंभूताया द्रौपद्या इति व्याख्या । ६ भगवान् दुर्ज्ञेयाभिप्रायः सर्वेषां सत्त्वपरीक्षार्थं प्रथमं किंचिन्नोक्त्वा पश्चादनुमोदितवान् । व्या० ले० । ७ तत्रत्या द्विजाः सभ्या अपि प्रत्यनन्दन्निति वा । ८ जिघांसी हन्तुमिच्छन्सन् इयात् गच्छेदित्यर्थः ।

तव च प्रतिज्ञां पूरयेत्याह—कुर्विति । प्रियां सान्त्वयता त्वया यत्प्रतिश्रुतं हननं तच्च सत्यं कुरु प्रियं च कुरु । मह्यं मम । तत्र वधे भीमस्य प्रियं भवति । अवधे द्रौपद्याः । द्वयं श्रीकृष्णस्य ॥ ५४ ॥ हार्दमभिप्रायमाज्ञाय ज्ञात्वा । न ह्यशक्यमुभयं विदध्यादतोऽस्यायमभिप्राय इति ज्ञात्वेत्यर्थः । असिना खड्गेन । मूर्धन्यं मूर्धनि जातम् । सहमूर्धजं सकेशम् ॥ ५५ ॥ मणिना च हीनम् । निरयापयन्निःसारितवान् ॥ ५६ ॥ अनेन श्रीकृष्णोक्तं सर्वं संपादितमित्याह—वपनमिति ॥ ५७ ॥ निर्हरणं दाहार्थं नयनम् ॥ ५८ ॥ ॥ इति श्रीम०प्र०भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥७॥ ॥छ॥ ॥ अष्टमे कुपितद्रौणेरस्त्राद्रक्षा परीक्षितः ॥

कुरु प्रतिश्रुतं सत्यं यत्तत्सान्त्वयता प्रियाम् ॥ प्रियं च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥ ॥ सूत उवाच ॥ अर्जुनः सहसाज्ञाय हरेर्हार्दमथासिना ॥ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् [2] ॥ ५५ ॥ विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ॥ तेजसा मणिना हीनं शिबिरान्निरयापयत् ॥ ५६ ॥ वपनं [1] द्रविणादानं [3] स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥ पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया ॥ स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥ ॥ इति श्रीमद्भा० म० प्र० द्रौणिनिग्रहो नाम सप्तमोऽध्यायः ॥७॥

॥ सूत उवाच ॥ अथ ते संपरेतानां स्वानामुदकमिच्छताम् ॥ दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥ ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ॥ आप्लुता हरिपादाब्जरजःपूतसरिज्जले ॥२॥ तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ॥ गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः ॥ ३ ॥ सान्त्वयामास मुनिभिर्हतबन्धून् शुचार्पितान् ॥ भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् [4] ॥ ४ ॥ साधयित्वाऽजातशत्रोः स्वराज्यं कितवैर्हृतम् ॥ घातयित्वाऽसतो राज्ञः [5] कचस्पर्शक्षतायुषः ॥ ५ ॥ याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः [6] ॥ तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥६॥ आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ ७ ॥ ॥

श्रीकृष्णेन स्तुतिः कुन्त्या राज्ञः शोकश्च कीर्त्यते ॥ १ ॥ ते पाण्डवाः संपरेतानां मृतानां गङ्गायामुदकं दातुं सकृष्णाः श्रीकृष्णेन सहिताः । स्त्रियः स्त्रीः पुरस्कृत्याग्रतः कृत्वा । तस्मिन्कार्ये स्त्रीपुरःसरत्वविधानात् ॥ १ ॥ निनीय दत्त्वा । हरिपादाब्जरजोभिः पूता या सरिद्गङ्गा तस्या जले । पुनर्ग्रहणादादावपि स्नाता इति गम्यते । २ ॥ कुरुपतिं युधिष्ठिरम् । सहानुजं भीमादिभिः सहितम् । (पुत्रशोकार्तामिति तिसृणां विशेषणम्) [7] ॥ ३ ॥ मुनिभिः सहितः ॥ ४ ॥ कितवैर्धूर्तैर्दुर्योधनादिभिः । द्रौपद्याः कचग्रहणादिना क्षतं नष्टमायुर्येषां तान् ॥ ५ ॥ याजयित्वेत्यादिभाविकथासंक्षेपः । शतमन्योः शतक्रतोरिव ॥ ६ ॥ शैनेयः शिनेर्नप्ता सात्यकिस्तेन

१ वपनं सर्वमुण्डनमित्यर्थः । २ 'सहमूर्धजैः' इति पाठः । ३ द्रविणस्य धनस्यादानं ग्रहणं अपहरणमिति यावत् । ४ न विद्यते प्रतिक्रिया प्रत्युपायो यस्यास्ताम् । ५ 'राज्याः' इत्यपि पाठः । ६ उत्तमः कल्पो मन्त्रद्रव्यदक्षिणारूपो येषु, यद्वा कल्पो विधानं कल्प्यतेऽनेन कल्पोऽङ्गं स उत्तमो येषु, यद्वा कल्पयन्तीति कल्पका अनुष्ठातारस्ते उत्तमाः श्रेष्ठा येषु तैः । मुख्यकल्पयुतैर्न त्वनुकल्पयुक्तैरित्यर्थः । ७ पुत्रशोकार्तामित्यादि न बहुत्रोपलभ्यते ।

चोद्धवेन च संयुतः ॥ ७ ॥ रथमास्थितः सन्नुत्तरां परीक्षिन्मातरम् । भयेन विह्वलां व्याकुलाम् । अभिमुखं धावन्तीमुपलेभे ददर्श ॥ ८ ॥ उत्तरा श्रीकृष्णं प्रार्थयते —पाहि पाहीति द्वाभ्याम् । अन्यस्तु प्रार्थनायोग्यो नास्तीत्याह । त्वत् त्वत्तोऽन्यमभयं भयरहितं न पश्यामि । यत्र लोके परस्परमन्योन्यं मृत्युर्भवति ॥ ९ ॥ तत्र प्रस्तुतं भयमावेदयति । अभिद्रवत्यभिमुखमायाति । तप्तमायसं लोहमयं शल्यं यस्य सः । अतिकार्पण्येनाह—काममिति । कामं यथेच्छम् ॥ १० ॥ पराभवेनातिकुपितस्य द्रौणेरपाण्डवं पाण्डवशून्यमिदं विश्वं कर्तुं प्रवृत्तं ब्रह्मास्त्रमवुध्यत ॥ ११ ॥ अत एव बहुमुखं तदागतमित्याह—तर्ह्येवेति । तर्ह्येव तदानीमेव ॥ १२ ॥ ब्रह्मास्त्रस्यास्त्रान्तरैरनिवर्त्यत्वात्तद्दुष्परिहरं व्यसनं वीक्ष्य । अनन्यविषय आत्मा येषाम् । स्वैकनिष्ठानामित्यर्थः ॥ १३ ॥ वैराट्या उत्तराया अन्तःस्थः सन्

गन्तुं कृतमतिर्ब्रह्मन्द्वारकां रथमास्थितः ॥ उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम् ॥ ८ ॥ पाहि पाहि महायोगिन्
देवदेव जगत्पते ॥ नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ९ ॥ अभिद्रवति मामीश शरस्तप्तायसो विभो ॥
कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ १० ॥ ॥ सूत उवाच ॥ उपधार्य वचस्तस्या भगवान्भक्तवत्सलः ॥
अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥ तर्ह्येवाथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान्[2] ॥ आत्मनोऽभिमुखान्दीप्ता-
नालक्ष्यास्त्राण्युपाददुः ॥ १२ ॥ व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम् ॥ सुदर्शनेन[3] स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः
॥ १३ ॥ अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ॥ स्वमाययावृणोद्गर्भं[4] वैराट्याः कुरुतन्तवे ॥ १४ ॥ यद्यप्यस्त्रं ब्रह्म-
शिरस्त्वमोघं चाप्रतिक्रियम् ॥ वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह[5] ॥ १५ ॥ मामंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमये-
ऽच्युते ॥ य इदं मायया देव्या सृजत्यवति हन्त्यजः ॥ १६ ॥ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया ॥ प्रयाणा-
भिमुखं कृष्णमिदमाह पृथा सती ॥ १७ ॥ ॥ कुन्त्युवाच ॥ नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम् ॥ अलक्ष्यं
सर्वभूतानामन्तर्बहिरवस्थितम् ॥ १८ ॥ मायाजवनिकाच्छन्नमज्ञाऽधोक्षजमव्ययम् ॥ न लक्ष्यसे मूढदृशा नटो
नाट्यधरो यथा ॥ १९ ॥ ॥ ॥ ॥

गर्भमावृतवान् । तत्र हेतुः—यत आत्मान्तर्यामी । योगेश्वर इति बहिःस्थस्यापि प्रवेशघटनार्थमुक्तम् । कुरूणां तन्तवे सन्तानाय । पाण्डवानामपि कुरुवंशजत्वादेवमुक्तम् ॥ १४ ॥ अमोघमप्रतिक्रियं च । समशाम्यत् संशान्तमासीत् ॥ १५ ॥ एतद्ब्रह्मास्त्रशमनमाश्चर्यं मामंस्था न मन्यस्व । इदं जगत् ॥ १६ ॥ कृष्णया सह ॥ १७ ॥ त्वा त्वां नमस्ये नमस्करोमि । ननु कनिष्ठं मां कथं नमस्करोषि तत्राह । आद्यं पुरुषम् । कुतः । प्रकृतेः परम् । तत्कुतः । ईश्वरं प्रकृतेरपि नियन्तारम् । अत एव सर्वभूतानामन्तर्बहिश्च पूर्णत्वेनावस्थितम् । तथाप्यलक्ष्यम् ॥ १८ ॥ तत्र हेतुः—मायैव जवनिका तिरस्करिणी तया आच्छन्नं प्रतिच्छन्नम् । अतोऽ-

१ अनेन शरेणेत्यर्थः । २ एकस्यैव ब्रह्मास्त्रस्य बहुमुखत्वादत्र पञ्चसायकानिति निर्देशः । ३ सुदर्शनेनेति युधिष्ठिरादीनामेवेति ज्ञेयम् । परीक्षितस्तु गदया । 'अस्त्रतेजः स्वगदया विधमन्तं' इति 'भ्रामयन्तं गदां मुहुः' इत्युत्तरत्र वक्ष्यमाणेनैकवाक्यत्वात् । ४ 'स्वयमेवावृणोत्' इति पाठः । ५ भृगुवंशयानामुद्वह श्रेष्ठ हे शौनक ।

हमज्ञा भक्तियोगानभिज्ञा केवलं नमस्यामि । अधः अक्षजमिन्द्रियजं ज्ञानं यस्मात्तम् । अव्ययमपरिच्छिन्नम् । तत्प्रपञ्चः मूढदृशा देहाभिमानिना पुंसा न त्वं लक्ष्यसे ॥१९॥ किंच परमहंसानामात्मानात्मविवेकिनां ततो मुनीनां मननशीलानामपि ततश्चामलात्मनां निवृत्तरागादीनामपि तथा तेन निजमहिम्ना न लक्ष्यसे, अतो भक्तियोगं विधातुं त्वां वयं स्त्रियः कथं हि पश्येम । यद्वा परमहंसादीनामपि भक्तियोगविधानार्थं त्वां आत्मारामाणामप्यचिन्त्यनिजगुणैराकृष्य भक्तियोगं विधातुं कारयितुमवतीर्णमित्यर्थः ॥ २० ॥ ज्ञानभक्त्योरशक्यत्वमुक्त्वा पुनः केवलं नमस्करोति—कृष्णायेति द्वाभ्याम् ॥२१॥ पङ्कजं नाभौ यस्य । पङ्कजानां मालास्ति यस्य । पङ्कजवत्प्रसन्ने नेत्रे यस्य । पङ्कजाङ्किताबङ्घ्री यस्य तस्मै ॥ २२ ॥ तत्कृतोपकारानुस्मरति—यथेति द्वाभ्याम् । अयमर्थः—मातृतोऽपि मय्यधिका तव प्रीतिः । तथा हि, हे हृषीकेश, यथा देवकी कंसेन रुद्धा त्वया विमोचिता, अहं च तथैव किं विमोचितेति काका महान्विशेष उक्तः । तं दर्शयति—सातिचिरं

तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥२०॥ कृष्णाय वासुदेवाय देवकीनन्दनाय च ॥ नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ २१ ॥ नमः पङ्कजनाभाय नमः पङ्कजमालिने ॥ नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥२२॥ यथा हृषीकेश खलेन देवकी कंसेन रुद्धाऽतिचिरं शुचार्पिता ॥ विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥ २३ ॥ विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ॥ मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चाऽऽस्म हरेऽभिरक्षिताः ॥२४॥ विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो ॥ भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २५ ॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ॥ नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरम् ॥ २६ ॥ नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये ॥ आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ २७ ॥ ॥

रुद्धा सती तस्मादेव सकृद्विमोचिता तथा शुचार्पिता च सती । न च तस्याः पुत्रा रक्षिताः । अस्ति चान्यो नाथस्तस्याः । अहं तु विपद्गणात्तत्रापि मुहुः शीघ्रं च सात्मजा च त्वयैव च नाथेनेति ॥ २३ ॥ विपद्गणमेव दर्शयति । विषाद्भीमस्य विषमोदकदानात् । महाग्नेर्जतुगृहदाहात् । पुरुषादा हिडिम्बादयो राक्षसास्तेषां दर्शनात् । असत्सभाया द्यूतस्थानात् । अभितो रक्षिता आस्म अभवाम ॥२४॥ यत् यासु विपत्सु । कीदृशं दर्शनम् । नास्ति पुनरपि भवदर्शनं यस्मात् ॥२५॥ संपदस्तु श्रेयःपरिपन्थिन्य इत्याह—जन्म सत्कुले । जन्मादिभिरेधमानो मदो यस्य सः । अभिधातुं श्रीकृष्णगोविन्देति वक्तुमपि । अकिंचनानां गोचरं विषयभूतम् ॥२६॥ प्रस्तुतमनोरथपूरणाय पुनः प्रणमति । अकिंचना भक्ता एव वित्तं सर्वस्वं यस्य तस्मै । ततः किम् । निवृत्ता गुणवृत्तयो धर्मार्थकामविषया यस्मात्तस्मै । तत्कुतः । आत्मारामाय । तत्कुतः । शान्ताय रागादिरहिताय । किंच कैवल्यपतये कैवल्यं दातुं समर्थाय ॥ २७ ॥ ॥ ॥ ॥

---

१ अध इति । स्वतःसिद्धज्ञानमित्यर्थः इति दीपनी । यद्वा अज्ञाधोक्षजं अधः अक्षजा इन्द्रियवृत्तयो यस्मात्सोऽधोक्षजः इन्द्रियवृत्त्यविषयः अज्ञानामनुपासकानामधोक्षजमज्ञाधोक्षजमिति वी. रा. । २ नटवदाविर्भूतस्त्वं भगवत्त्वेन न ज्ञायस इत्यर्थः । ३ अपरिच्छेद्यतामाह—पङ्कजमालिने इति । ब्रह्माण्डसर्जनहेतुभूतानां पङ्कजानां माला श्रेणी यस्य । ४ 'कसि हिंसायाम्' इति धातोः कंसेन हिंसाशीलेन खलेन । ५ नास्ति परमार्थतयाभिप्रेतं भवतोऽन्यं किंचनापि वस्तु येषां तेऽकिंचना एकान्तभक्तास्तेषां गोचरं विषयम् । ६ अनेन स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षारूपं कृपालुत्वं, आश्रितानिष्टपरिहर्तृत्वं, निम्नोन्नतानादरेणाश्रितमात्रपक्षपातित्वं च दर्शितम् । ७ यद्वा अपुनर्भवं मोक्षं दर्शयतीति, अथवा अपुनर्भवानां जीवन्मुक्तानां दर्शनं यस्मादित्यपुनर्भवदर्शनम् ।

२९ ॥

ननु देवकीपुत्रं मां कथमेवं स्तौषि तत्राह । मन्ये त्वां कालं ननु देवकीपुत्रम् । तत्र हेतवः—ईशानं नियन्तारम् । अनादिनिधनमाद्यन्तशून्यम् । विभुं प्रभुम् ।
ननु पार्थसारथेः कथं मम साम्यं तत्राह । यद्यतस्त्वत्तो निमित्तभूताद्भूतानामेव मिथः कलिः कलहो भवति ननु स्वत-
समं यथा भवति तथा सर्वत्र चरन्तम् । ननु निग्रहानुग्रहरूपं मयि प्रसिद्धं वैषम्यमत आह—न वेदेति । नृणां विडम्बनमनुकरणमीहमानस्य कुर्वतः । यस्मिंस्त्वयि विषमा
स्त्वयि वैषम्यम् ॥२८॥ ननु निग्रहानुग्रहरूपं मयि प्रसिद्धं वैषम्यमत आह—न वेदेति । नृणां विडम्बनमनुकरणमीहमानस्य कुर्वतः । नृषु रामादिरूपेण । ऋषिषु वामनादिरूपेण । यादःसु मत्स्या-
मतिरनुग्रहनिग्रहरूपा भवति ॥२९॥ ते अजस्य जन्म । अकर्तुः कर्म । तिर्यक्षु वराहादिरूपेण । नृषु रामादिरूपेण । ऋषिषु वामनादिरूपेण । यादःसु मत्स्या-
दिरूपेण ॥ ३० ॥ नरविडम्बनमत्याश्चर्यमित्याह—गोपीति । गोपी यशोदा त्वयि कृतागसि दधिभाण्डस्फोटनं कृतवति यावद्दाम रज्जुमाददे जग्राह तावत्त-
त्क्षणमेव या ते दशावस्था सा मां विमोहयति । किंभूतस्य । अश्रुभिः कलिलं व्यामिश्रमञ्जनं ययोस्ते च ते संभ्रमेण व्याकुले अक्षिणी यस्मिंस्तद्वक्त्रं निनीयाधः

मन्ये त्वां कालमीशानमनादिनिधनं विभुम् ॥ समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ २८ ॥ न वेद कश्चिद्भग-
वंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम् ॥ न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम्
॥ २९ ॥ जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ॥ तिर्यङ्नृषिषु यादःसु तदत्यन्तविडम्बनम् ॥ ३० ॥ गोप्याददे
त्वयि कृतागसि दाम तावद्या ते दशाश्रुकलिलाञ्जनसंभ्रमाक्षम् ॥ वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमो-
हयति भीरपि यद्बिभेति ॥ ३१ ॥ केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ॥ यदोः प्रियस्यान्ववाये मलयस्येव चन्द-
नम् ॥३२॥ अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ॥ अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥३३॥ भारा-
वतरणायान्ये भुवो नाव इवोदधौ ॥ सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥ ३४ ॥ भवेऽस्मिन्क्लिश्यमानाना-
मविद्याकामकर्मभिः ॥ श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ ३५ ॥ ॥ ॥ ७ ॥

कृत्वा ताडयिष्यतीति भयस्य भावनया स्थितस्य । यद्यतस्त्वत्तो भीरपि स्वयं बिभेति तस्य ते दशा ॥३१॥ अत एव जगन्मोहनतया दुर्ज्ञेयत्वात्तव जन्मादि बहुधा
वर्णयन्तीत्याह—केचिदिति चतुर्भिः । पुण्यश्लोकस्य युधिष्ठिरस्य कीर्तये । यदोरेव कीर्तय इति वा । मलयस्य कीर्तये वंशे वा चन्दनं यथा ॥३२॥ तथा वसु-
देवस्य भार्यायां देवक्यामज एव त्वमभ्यगात् । पुत्रत्वमिति शेषः । प्रथमपुरुषस्त्वार्षः । अभवस्त्वमिति पाठः सुगमः । ताभ्यामेव पूर्वं सुतपःपृश्निरूपाभ्यां या-
चितः सन् । अस्य जगतः क्षेमाय ॥३३॥ आत्मभुवेति ब्रह्मप्रार्थनस्य प्राधान्यविवक्षया ॥३४॥ मतान्तरम् । परमानन्दस्वरूपाज्ञानमविद्या ततो देहाद्यभिमा-
नात्कामस्ततः कर्माणि तैः क्लिश्यमानानां तन्निवृत्तये श्रवणाद्यर्हाणि कर्माणि करिष्यन् ॥ ३५ ॥

१ व्यामिश्रमञ्जनं संभ्रम आवेशश्चाक्ष्णोर्यत्र तद्वक्त्रं, अथवा अश्रुव्यामिश्राञ्जने संभ्रमे भयसूचकनेत्रचापल्ये अक्षिणी यस्य तद्वक्त्रं । २ नित्यादीनामुपलक्षणं कलिरिति । ३ अत्र नृ ऋषिष्विति 'ऋति सवर्णे ऋवा' इति पूर्वपरयोर्ऋ आदेशः । ४ 'अजतारणाय' इति पाठः । ५ अत्र भीशब्देन मृत्युर्लक्ष्यते—'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इत्युक्तविधस्याभयस्य तवेत्यर्थः । ६ प्रियस्येति युधिष्ठिरस्येतस्यैव विशेषणम् । ७ यदोरेव विशेषणत्रयमभिन्नपक्षे ज्ञेयम् । ८ मूले 'अजस्त्वं' इत्येकरूपे ।

अस्य पक्षस्य सिद्धान्ततामभिप्रेत्य श्रवणादिफलमाह—शृण्वन्तीति। नन्दन्त्यन्यैः कीर्त्यमानमभिनन्दन्ति। ये जनाः। ईहितं चरितम्। तावकं त्वदीयं पदाम्बुजं त एव, पश्यन्त्येव, अचिरेणैवेति च सर्वत्रावधारणम्। कीदृशम्। भवप्रवाहस्य जन्मपरम्पराया उपरमो यस्मिंस्तत् ॥ ३६ ॥ इदानीं तवास्मत्परित्यागोऽनुचित इत्याशयेनाह—अपीति चतुर्भिः। हे प्रभो, सुहृदोऽतिस्निग्धाननुजीविनश्च नोऽद्यापि स्वित् किंस्वित्त्वं जिहाससि। येषामस्माकमन्यत्परायणं नैवास्ति। तत्कुतः। राजसु योजितमंहो दुःखं यैस्तेषाम्। स्वानां कृतमीहितमपेक्षितं येन तस्य संबोधनम्। विसर्गान्तपाठे त्वंपदविशेषणम् ॥३७॥ ननु तव बन्धवो यदवः पुत्राश्च पाण्डवाः शूराः समर्थाश्च तत्किं कार्पण्यं भाषसेऽत आह—के वयमिति। यर्हि भवतोऽदर्शनं यदा त्वमस्मान्न पश्यसि तदा नामरूपाभ्यां नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सहिताः पाण्डवा नाम के वयं न केऽपि। अतितुच्छा इत्यर्थः। हृषीकाणामिन्द्रियाणामीशितुर्जीवस्यादर्शने यथा न किंचि-

शृण्वन्ति[2] गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः ॥ त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥३६॥ अप्यद्य नस्त्वं स्वकृतेहित प्रभो जिहाससि स्वित्सुहृदोऽनुजीविनः ॥ येषां न चान्यद्भवतः पदाम्बुजात्परायणं राजसु योजितांहसाम् ॥३७॥ के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ॥ भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः ॥३८॥ नेयं शोभिष्यते तत्र यथेदानीं गदाधरः ॥ त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः ॥ ३९ ॥ इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः[3] ॥ वनाद्रिनद्युदन्वन्तो ह्येधन्ते[4] तव वीक्षितैः ॥ ४० ॥ अथ विश्वेश विश्वात्मन् विश्वमूर्ते स्वकेषु मे ॥ स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥४१॥ त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ॥ रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥४२॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥ ४३ ॥ ॥ ॥ ॥

न्नाम च रूपं च तद्वत् ॥३८॥ किंच। यथेदानीमियमसत्पाल्या भूमिः स्वैरसाधारणैर्वज्राङ्कुशादिभिर्लक्षणैर्विलक्षितैश्चिह्नितैस्त्वत्पदैरङ्किता सती भाति। तत्र तदा त्वयि निर्गते सति न शोभिष्यते ॥ ३९ ॥ अपि च इमे जनपदा देशाः स्वृद्धाः सुसमृद्धाः सन्तः ॥ ४० ॥ गमने पाण्डवानामकुशलमगमने च यादवानामित्युभयतो व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते—अथेति। विश्वेशेत्यादिसंबोधनानि स्नेहपाशच्छेदे सामर्थ्यख्यापनाय। दृढं सन्तम् ॥ ४१ ॥ ततः किमत आह—त्वयीति। अनन्यविषया सती मे मतिः रतिमुद्वहतात्। अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः। ओघं पूरम्[5]। यथा गङ्गा प्रतिबन्धं न गणयत्येवं मतिरपि विघ्नान्मा गणयत्विति भावः ॥ ४२ ॥ एवमभ्यर्थ्य पुनः प्रणमति। हे श्रीकृष्ण, ते नमः उपकाराननुस्मरन्ती बहुधा संबोधयति। कृष्णसखार्जुनस्य सखे। वृष्णीनामृषभ श्रेष्ठ। अवन्यै भूम्यै द्रुह्यन्ति ये राजन्यास्तेषां वंशस्य[6] दहन। एवमप्यनपवर्गवीर्याक्षीणप्रभाव। गोविन्द प्राप्तकामधेन्वैश्वर्य। गोद्विजसुरा-

१ योजितमिति। राजानो ह्यस्माभिर्दुःखं प्रापिताः अतस्त्वत्तोऽन्य आश्रयो नास्त्येवेत्यर्थः। २ शृण्वन्ति वक्तृसांनिध्ये, गृणन्ति श्रोतृसांनिध्ये, तदुभयासंनिधौ च स्वयं गायन्ति स्मरन्ति नन्दन्ति च। ३ सुपक्वा ओषधयो व्रीह्याद्या वीरुधो लताश्च येषु। ४ एधन्ते वर्धन्त इत्यर्थः। ५ पूरः प्रवाहस्तमित्यर्थः। ६ वंशस्येति। यथा वायुररण्ये वंशेषु परस्परसंघर्षेण वह्निमुत्पाद्य तेन तान्नाशयति एवं राजन्यवंशेषु परस्परकलहवशाद्वैरमुत्पाद्य तेन तन्नाशकस्त्वमिति वंशदहनपदेन सूचितम्।

णामार्तिहरोऽवतारो यस्येति ॥ ४३ ॥ कलानि मधुराणि पदानि येषु तैर्वाक्यैः परिणूतः स्तुतोऽखिल उदयो महिमा यस्य सः । णुं स्तुतावित्यस्मात् । परिणुतेति वक्तव्ये दीर्घश्छन्दोनुरोधेन । मन्दमीषत् । तस्य हास एव माया । वक्ष्यति हि 'हासो जनोन्मादकरी च माया' इति ॥ ४४ ॥ त्वयि मेऽनन्यविषया मतिरिति यत्प्रार्थितं तद्वाढमित्यङ्गीकृत्य रथस्थानाद्गजसाह्वयमागत्य पश्चात्तां चान्याश्च सुभद्राप्रमुखाः स्त्रिय उपामन्त्र्यानुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णाऽत्रैव किंचित्कालं निवसेति संप्रार्थ्य निवारितः ॥ ४५ ॥ अथ भीष्मनिर्याणोत्सवं वक्तुमुपोद्घातकथां प्रस्तौति । व्यासाद्यैः प्रबोधितोऽपि शुचा व्याप्तः सन्नाबुध्यत विवेकं न प्राप । कुतः ईश्वरेहाया अज्ञैः । स्वभक्तभीष्मनिर्याणमहोत्सवाय राज्ञा सह कुरुक्षेत्रं गन्तव्यं तत्र तन्मुखेनैवायं प्रबोधनीय इतीश्वराभिप्रायः कार्यद्वयविधायकस्तमजानद्भिरित्यर्थः । श्रीकृष्णेनापि प्रबोधितो नाबुध्यत् । अत्र हेतुः—अद्भुतकर्मणेति । यथा कुरुपाण्डवसंधानार्थं गतोऽपि यथोचितमेव वदन्नपि विग्रहमेव दृढीकृतवानेवमत्रापि प्रबोधयन्नबोधमेव दृढीचकारेत्यर्थः ॥ ४६ ॥ अबोधमेव प्रपञ्चयति—आहेति पङ्क्तिः । प्राकृतेनाविवेकव्यासेनात्मना चित्तेन ।

॥ सूत उवाच ॥ पृथयेत्थं कलपदैः परिणूताखिलोदयः ॥ मन्दं जहास वैकुण्ठो मोहयन्निव मायया ॥ ४४ ॥ तां बाढमित्युपामन्त्र्य प्रविश्य गजसाह्वयम् ॥ स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥ व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ॥ प्रबोधितोऽपीतिहासैर्नाबुध्यत शुचार्पितः ॥ ४६ ॥ आह राजा धर्मसुतश्चिन्तयन्सुहृदां वधम् ॥ प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥ ४७ ॥ अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ॥ पारक्यस्यैव देहस्य वह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥ बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः ॥ ४९ ॥ नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम् ॥ इति मे न तु बोधाय कल्पते शासनं वचः ॥ ५० ॥ ॥

हे विप्राः ॥ ४७ ॥ पारक्यस्य श्वशृगालाद्याहारस्य देहस्यार्थे । मे मया । अक्षौहिणीरक्षौहिण्यः । अक्षौहिणीप्रमाणं तु व्यासेनोक्तम्—'अक्षौहिणी प्रसंख्याता रथानां द्विजसत्तमाः ॥ संख्यागणनतत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ॥ गजानां च प्रसंख्यानमेतदेव प्रकीर्तितम् ॥ ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ॥ नराणामपि पञ्चाशच्छतानि त्रीणि चैव हि ॥ पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ॥ दशोत्तराणि षट् प्राहुः संख्यातत्त्वविदो जनाः ॥ एतामक्षौहिणीं प्राहुर्यथावदिह संख्यया ॥' इति ॥ ४८ ॥ सुहृदः संबन्धिनः । मित्राणि सखायः । पितरः पितृव्याः ॥ ४९ ॥ स्मृत्याद्यनुशासनाद्धर्मयुद्धे न दोष इति चेत्तत्राह—नैनो राज्ञ इति । द्विषां वध एनः पापं न भवतीति यच्छासनं शिक्षारूपं वचः । कुतो न कल्पते । यतस्तद्वचः प्रजाभर्तुरेव । अयं भावः—स्वप्रजानामन्यतो बाधे प्रसक्ते तद्वधोऽनुज्ञातः दुर्योधनेन तु प्रजायां पाल्यमानायां मया केवलं राज्यलोभेन हतत्वात्पापमेवेदमिति ॥ ५० ॥ ॥

१ तौदादिकस्य "णू स्तवने" इति दीर्घस्य धातोर्विद्यमानत्वादय प्रयासोऽनन्वित इवाभाति । २ हास इति द्वितीयस्कन्धस्य प्रथमाध्यायीयैकत्रिंशं पद्यमिदम् । ३ वक्ष्यमाणमर्थं मनसि निधाय तदर्थमर्थान्तरवर्णनमुपोद्घातः । ४ स्नेहेति । स्नेहो मृतेषु मोहो जीवत्सु । सुबो० । ५ बालेति । बाला अभिमन्युप्रभृतयः, द्विजा द्रोणादयः, सुहृदः शल्यादयः, मित्राणि कर्णादयः, पितरो भीष्मादयः, भ्रातरो दुर्योधनादयः, एत एव गुरवः । सुबो० । ६ यावदाभूतसंप्लवमित्यर्थः । ७ मे मदीया हता इत्यज्ञानं वस्तुतस्तु भगवता भूभारहरणार्थं लीलया वा हताः । ८ एतां गजाश्वरथानां साकल्येन २१८७०० परिमितान् । तत्र २१८७० रथाः, २१८७० गजाः, १०९३५० नराः, ६५६१० अश्वाः ।

किंच । युद्धे पुंसां वधो भवतु नाम धर्मः, स्त्रीणां तु मया हता बन्धवो यासां तासां योऽसौ द्रोहोऽनुद्दिष्टोऽप्युत्थितस्तं व्यपोहितुमपाकर्तुं कल्पः समर्थो नाहम् । गृहमेधीयैर्गृहाश्रमविहितैः ॥ ५१ ॥ ननु 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति श्रुतेः पापमश्वमेधेन नश्येदेवेत्याशङ्क्य अविवेकविजृम्भितं हेतुवादमाश्रित्य निराकरोति—यथेति । यथा घनपङ्केन पङ्काम्भो न मृज्यते, यथा वा सुरालेशकृतमपावित्र्यं बह्व्या सुरया न मृज्यते तथैव भूतहत्यामेकां प्रमादतो जातां बुद्धिपूर्वहिंसाप्रायैर्यज्ञैर्मार्ष्टुं शोधयितुं नार्हतीति ॥५२॥ ॥ इति श्रीम० म० प्र० भावार्थदीपिकायां टीकायामष्टमोऽध्यायः ॥८॥ ॥ छ ॥ ॥ युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ॥ कृष्णस्तुतिश्च मुक्तिश्च नवमे तस्य वर्ण्यते ॥१॥ यदर्थं तस्याविवेकः श्रीकृष्णेन संवर्धितस्तद्दर्शयति—इतीति । सर्वेषां धर्माणां विवित्सया वेदितुमिच्छया । विनशनं कुरुक्षेत्रम् । देवव्रतो भीष्मः ॥१॥ सन्तः श्रेष्ठा अश्वा येषु ते रथैः ॥ २ ॥ ३ ॥ सानुगाः परिवारसहिताः ॥४॥ तत्र तदा । तत्रासन् । तत्क्षणमेवागता इत्यर्थः । भरतपुङ्गवं भीष्मम् ॥५॥ रेणुकासुतः परशुरामः ॥ ६ ॥ ७ ॥ ब्रह्मरातः शुकः । आङ्गिरसो बृहस्पतिः ॥ ८ ॥ वसूत्तमो भीष्मः । देशकालविभागविदित्युत्थातुमशक्यत्वाच्छयान एव मनसा वाचा च पूजयामासेत्यभिप्रायः ॥ ९ ॥ हृदिस्थं सन्तं पुरतश्चासीनं पूजयामास ॥ १० ॥ ॥ ॥ ॥ ॥ ॥

स्त्रीणां मद्धतबन्धूनां द्रोहो योऽसाविहोत्थितः ॥ कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम्[1] ॥५१॥ यथा पङ्केन पङ्काम्भः[2] सुरया वा सुराकृतम् ॥ भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥५२॥ इति श्रीमद्भा० म० प्र० कुन्तीस्तुतियुधिष्ठिरानुतापो नामाष्टमोऽध्यायः ॥८॥ ॥ सूत उवाच ॥ इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया ॥ ततो विनशनं[3] प्रागाद्यत्र देवव्रतोऽपतत् ॥ १ ॥ तदा[4] ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ॥ अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥ भगवानपि विप्रर्षे रथेन सधनंजयः ॥ स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥३॥ दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम् ॥ प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा ॥४॥ तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम[5] ॥ राजर्षयश्च तत्रासन्द्रष्टुं भरतपुङ्गवम् ॥५॥ पर्वतो नारदो धौम्यो भगवान्बादरायणः ॥ बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥ ६ ॥ वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः ॥ कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥ अन्ये च मुनयो ब्रह्मन् ब्रह्मरातादयोऽमलाः ॥ शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः ॥ ८ ॥ तान्समेतान्महाभागानुपलभ्य वसूत्तमः ॥ पूजयामास धर्मज्ञो देशकालविभागवित् ॥९॥ कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ॥ हृदिस्थं पूजयामास माययोपात्तविग्रहम्[6] ॥ १० ॥ ॥ ॥ ॥ ॥

१ कर्मणा कर्मनिर्हारश्चायुक्त इति भावः । २ 'पङ्काङ्कः' इति पाठः । तत्र पङ्काङ्कितपादाद्यवयवः पुमानित्यर्थः । ३ 'विशसनम्' इति पाठः। ४ 'तदा तम्' इति पाठः। ५ 'सत्तमाः' इति पाठः । ६ माययैवोपात्तो विग्रहो युधिष्ठिरेण साकं प्रबोधहेतुको विवादो येन, यद्वा मायया कृपया उप नेत्रसमीपे आत्त आनीतो निजदेहो येन तम् ।

उपासीनान् समीपे उपविष्टान् । प्रश्रयो विनयः प्रेम स्नेहस्ताभ्यां सङ्गतानुपसन्नान् । पाठान्तरे ताभ्यामवनतान् । अभ्याचष्टाभ्यभाषत । अनुरागास्रैः स्नेहाश्रुभिरन्धीभूतेन चक्षुषोपलक्षितः । ददर्शेति वा ॥ ११ ॥ अभिभाषणमाह—अहो इत्येकादशभिः । हे धर्मनन्दनाः, क्लिष्टं यथा भवत्येवं जीवितुं नार्हथ यूयमिति यदेतदहो कष्टं जुगुप्सितम् । अहो अन्याय्यं चैतत् । यतो यूयं विप्रा धर्मोऽच्युतश्चाश्रयो येषां ते ॥१२॥ किंच संस्थिते मृते । बालाः प्रजाः पुत्रा यस्याः सा । वधूश्चेति दैन्यं प्रदर्शितम् । तोकान्यपत्यानि तद्वती । अपत्यैः सह क्लेशान्प्राप्तेत्यर्थः ॥ १३ ॥ कालकृतत्वेन शोकं वारयति—सर्वमिति द्वाभ्याम् । भवतामपि । यद्वशे यस्य वशवर्ती ॥ १४ ॥ अहो दुर्घटघटनापटुः काल इत्याह—यत्रेति । कृष्णोऽर्जुनः अस्त्री धन्वी । ततस्तत्रापि विपत् । पुण्यशारीरबलास्त्रैःपुण्यशस्त्रदेवसंपत्तावपीत्यर्थः ॥१५॥ ननु कृष्णं कथं कालोऽतिक्रमेदित्यपेक्षायामाह । न ह्यस्य श्रीकृष्णस्येत्यङ्गुल्या निर्दिशति । विधित्सितं कर्तुमिष्टं यत् । यस्य विधित्सि-

पाण्डुपुत्रानुपासीनान्प्रश्रयप्रेमसङ्गतान् ॥ अभ्याचष्टानुरागास्रैरन्धीभूतेन चक्षुषा ॥ ११ ॥ अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दनाः ॥ जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥ संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजा वधूः ॥ युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः ॥ १३ ॥ सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥ सपालो यद्वशे लोको वायोरिव घनावलिः ॥१४॥ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्री गाण्डिवं चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥ न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ॥ यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हि ॥१६॥ तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ ॥ तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥१७॥ एष वै भगवान्साक्षादाद्यो नारायणः पुमान् ॥ मोहयन्मायया लोकं गूढश्चरति वृष्णिषु ॥१८॥ अस्यानुभावं भगवान्वेद गुह्यतमं शिवः ॥ देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥ १९ ॥ यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ॥ अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥२०॥ सर्वात्मनः समदृशो ह्यद्वयस्यानहंकृतेः ॥ तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥२१॥ ॥

तस्य जिज्ञासया ॥१६॥ इदं सुखदुःखादि दैवतन्त्रमीश्वराधीनं व्यवस्य निश्चित्य तस्येश्वरस्यानुविहितोऽनुवर्ती सन् । कर्तरि क्तः । हे नाथ कुलपरम्परागतस्वामिन्, प्रभो समर्थ, अनाथाः प्रजाः पाहि ॥ १७ ॥ अनुविधेयः परमेश्वरश्च श्रीकृष्ण एवेत्याह । एष एव भगवान्सर्वेश्वरः । यत आद्यः पुमान् । तच्च कुतः । यतो नारायणः साक्षात् ॥ १८ ॥ तदुपपादयति—अस्येति । अनुभावं प्रभावम् ॥ १९ ॥ त्वमज्ञानाद्यमेवं मन्यसे । मातुलेयं देवक्याः सुतम् । प्रियं प्रीतिविषयम् । मित्रं प्रीतिकर्तारम् । सुहृत्तमसुपकारानपेक्ष्योपकारकं च । सौहृदाद्विश्वासात् । अकरोः कृतवानसि । सचिवं मन्त्रिणम् ॥२०॥ नन्वीश्वरश्चेत्कथं नीचे सारथ्यादौ प्रवृत्तस्तत्राह—सर्वेति । अस्य तत्कृतं नीचोच्चकर्मकृतं मम योग्यमयोग्यमिति मतेर्वैषम्यं क्वचिदपि नास्ति । कुतः । निरवद्यस्य रागादिशून्यस्य । तत्कुतः । अनहंकृतेः ।

१ पाठान्तरे 'प्रेमसन्नतान्' इत्येवविधे । २ अभ्याचष्ट उवाच, आभिमुख्येनापश्यदिति वा । ३ धर्मेण नन्दयन्तीति 'नन्दिग्रहि—' इत्यादिना कर्तरि ल्युः । यद्यपि युधिष्ठिर एव धर्मनन्दनस्तथापि तत्प्राधान्येन स्थिता इति सर्वे तत्त्वेन व्यपदिश्यन्ते । ४ एतत् क्लिष्टजीवितम् । ५ सपाल इन्द्रादिलोकपालसहितो लोकश्चतुर्दशभुवनात्मक इत्यर्थः । 'स कालः' इत्यपि क्वचित्पाठः । ६ तस्मात् सर्वलोकस्य कालायत्तसुरादिमत्त्वात् । ७ अनुविधेयोऽनुवर्तनीयः । ८ अपहतपाप्मन इत्यर्थः । सुत्रो- ।

तच्च कुतः । अद्वयस्य । तदपि कुतः । समदृशः । तत्रापि हेतुः—सर्वस्यात्मनः । यथेष्टं वा हेतुहेतुमद्भावः ॥ २१ ॥ तथापि समत्वेऽपि । हे भूप, अनुकम्पितमनुकम्पाम् ॥२२॥ इदानी स्वदेहत्यागपर्यन्तं श्रीकृष्णावस्थानं प्रार्थयते—भक्त्येति द्वाभ्याम् ॥ २३ ॥ यावदिति विलम्बं द्योतयति । अहं हिनोमि त्यजामीति स्वातन्त्र्यम् । इदमित्यनात्मत्वेन ज्ञातम् । प्रसन्नहासेनारुणलोचनाभ्यां चोल्लसद्रुचिरं मुखाम्बुजं यस्य । ध्यानस्य पन्था विषयः । योऽन्यैश्चिन्त्यते केवलं सोऽग्रतः स्थितः सन्मां प्रतीक्षतामित्यर्थः ॥२४॥ तत् सानुकम्पं वाक्यमाकर्ण्य ॥ २५ ॥ पुरुषस्वभावेन विहितान्नरजातिसाधारणान् वर्णयामासेति तृतीयेनान्वयः । यथावर्णं वर्णधर्मान् । यथाश्रममाश्रमधर्मांश्च । वैराग्यरागाभ्यामुपाधिभ्यां क्रमेणाम्नातमुभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान् ॥ २६ ॥ पुनस्तत्रैव विशेषमाह—

तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम् ॥ यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः ॥ २२ ॥ भक्त्यावेश्य मनो यस्मिन्वाचा यन्नाम कीर्तयन् ॥ त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः ॥ २३ ॥ स देवदेवो भगवान्प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम् ॥ प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥ ॥ सूत उवाच ॥ युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे ॥ अपृच्छद्विविधान्धर्मानृषीणामनुशृण्वताम् ॥ २५ ॥ पुरुषस्वभावविहितान्यथावर्णं यथाश्रमम् ॥ वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥ दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः ॥ स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥ धर्मार्थकाममोक्षांश्च सहोपायान्यथा मुने ॥ नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥ धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ॥ यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः ॥ २९ ॥ तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसङ्गं मन आदिपूरुषे ॥ कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थितेऽमीलितदृग्व्यधारयत् ॥ ३० ॥ विशुद्धया धारणया हताशुभस्तदीक्षयैवाशु गतायुधव्यथः ॥ निवृत्तसर्वेन्द्रियवृत्तिविभ्रमस्तुष्टाव जन्यं विसृजन् जनार्दनम् ॥ ३१ ॥ ॥ ॥

दानेति । मोक्षधर्मान् शमदमादीन् । भगवद्धर्मान् हरितोषणान् द्वादश्यादिनियमरूपान् । समासव्यासौ संक्षेपविस्तारौ तावेव योगावुपायौ ततस्ताभ्याम् ॥ २७ ॥ धर्मादींश्च यथाधिकारं प्रतिनियतोपायसहितान् । यथा यथावत् नानाख्यानेषु ये इतिहासास्तेषु यथा सन्ति तथा वर्णयामासेति ॥ २८ ॥ छन्देनेच्छया मृत्युर्यस्य ॥२९॥ सहस्रणीर्युद्धे समीपस्थान् सहस्रं रथिनो नयति पालयतीति सहस्रणीर्भीष्मः । 'सहस्रिणीः' इति पाठे सहस्रार्थवतीर्गिरः । लसन्तौ पीतौ पटौ यस्य तस्मिन् । अमीलितदृगेव मनो व्यधारयत् ॥३०॥ अनयैव विशुद्धया धारणया हतमशुभं यस्य सः । तस्य श्रीकृष्णस्येक्षया कृपादृष्ट्यैव गत आयुधश्रमो यस्य सः । अत एव निवृत्तः

१ ध्यानपथ उपासनाविषयः द्रष्टुं ध्यानमेव पन्था विषयो यस्य स तथा । विज० । २ तत् निजचिरस्थितिप्रकाशकं भीष्मवचनम् । क्रम० । ३ वैराग्यरागौ अकामकामौ । ४ एकान्तभक्तेष्वव्यभिचीर्णभक्तिमत्सु अनन्यप्रयोजनेषु । ५ कामनया कृतैः ससारबन्धनहेतुभूतैः कर्मभिः, अथवा कामा विषयास्तेषां निमित्तभूतैः कर्मभिः । 'काम्यकर्मभिः' इत्यपि पाठः । ६ 'धर्मवित्' इति पाठः । ७ 'धर्मान्' इति पाठः स एव युक्तोऽनेकधर्मप्रकथनात् । ८ 'पर्युपस्थितः' इति पाठेऽपि स एवार्थः । ९ सहस्रं स्ववश्यानां नयति सद्गतिं प्रापयतीति वा । १० धारणया भगवद्विग्रहानुध्यानात्मिकया । ११ अत्र मूलस्थव्यथापर्यायेण श्रमशब्देन विग्रहो ज्ञेयः । मुद्रितपुस्तके तु 'गतायुधश्रमः' इति मूले पाठः ।

सर्वेन्द्रियवृत्तीनां विश्रमो विविधं भ्रमणं यस्मात्सः। जन्यं देहं विसृजन् जनार्दनमस्तौत् ॥ ३१ ॥ परमफलरूपां श्रीकृष्णे रतिं प्रार्थयितुं प्रथमं स्वकृतमर्पयति । इति नानाधर्मोद्युपायैर्मतिर्मनोधारणलक्षणा उपकल्पिता समर्पिता । क । सात्वतानां पुङ्गवे श्रेष्ठे भगवति। वितृष्णा निष्कामा। अवितृष्णेति वा छेदः । अवितृप्तेत्यर्थः । विगतो भूमा यस्मात्तस्मिन् । यमपेक्ष्यान्यत्र महत्त्वं नास्तीत्यर्थः । तदेव परमैश्वर्यमाह । स्वसुखं स्वस्वरूपभूतं परमानन्दमुपगते प्राप्तवत्येव । क्वचित् कदाचिद्विहर्तुं क्रीडितुं प्रकृतिं योगमायामुपेयुषि स्वीकृतवति ननु स्वरूपतिरोधानेन जीववत्पारतन्त्र्यमित्यर्थः । विहर्तुमिति यदुक्तं तत्प्रपञ्चयति । यद्यतः प्रकृतेर्भवप्रवाहः सृष्टिपरम्परा भवति ॥ ३२ ॥ इदानीं श्रीकृष्णमूर्तिं वर्णयन् रतिं प्रार्थयते । त्रिभुवनकमनं त्रिलोक्यामेकमेव कमनीयं यत्तद्वपुर्दधाने रतिर्मेऽस्तु । कथंभूतं वपुः । तमालवन्नीलो वर्णो यस्य तत् । प्रातःकालीना रवेः करा इव स्वत एव गौरे पीते वरे निर्मले चाम्बरे यस्मिंस्तत् । अलककुलैरुपर्यावृतमाननाब्जं यस्मिंस्तत् । विजयसखे पार्थसारथौ अनवद्या अहैतुकी फलाभिसन्धिरहिता रतिरस्तु ॥ ३३ ॥ विजयसखित्वमेवानुवर्णयन् रतिं प्रार्थयते । युधि युद्धे तुरगाणां खुररजस्तु-

॥ भीष्म उवाच ॥ इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ॥ स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृ-
तिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥ त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ॥ वपुरलककुलावृताननाब्जं
विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥ युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ॥ मम निशितशरै-
र्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३४ ॥ सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं
निवेश्य ॥ स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ ३५ ॥ व्यवहितपृतनामुखं निरीक्ष्य स्वज-
नवधाद्विमुखस्य दोषबुद्ध्या ॥ कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥ ॥४॥

रगरजस्तेन विधूम्रा धूसरास्ते च ते विष्वञ्च इतस्ततश्चलन्तः कचाः कुन्तलास्तैर्लुलितं विकीर्णं श्रमवारि स्वेदविन्दुरूपं तेन भक्तवात्सल्यद्योतकेनालंकृतमास्यं यस्य तस्मिन् श्रीकृष्णे ममात्मा मनोऽस्तु रमतामित्यर्थः । पुनः किंभूते । मदीयैर्निशितैस्तीक्ष्णैः शरैर्विभिद्यमाना त्वग्यस्य तस्मिन् । शरैरेव विलसन्नुल्यत् कवचं यस्य तस्मिन् ॥ ३४ ॥ किंच । सपदीति 'सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥' इति सख्युरर्जुनस्य वचो निशम्य सपदि तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये रथं निवेश्य स्थिते पार्थसखे मम रतिरस्तु । तत्र स्थित्वा कृतं सख्यं दर्शयति । परस्य दुर्योधनस्य सैनिकानामायुरक्ष्णा कालदृष्ट्या हृतवति। असौ भीष्मोऽसौ द्रोणोऽसौ कर्ण इत्यादितत्तत्प्रदर्शनव्याजेन दृष्ट्यैव सर्वेषामायुराकृष्यार्जुनस्य जयं कृतवति ॥ ३५ ॥ न केवलमर्जुनस्य सपत्नायुर्हरणेनैव जयमावहत् किंत्वविद्याहरणेनापीत्याह । व्यवहिता दूरे स्थिता या पृतना तस्या मुखमिव मुखमग्रे स्थितान् भीष्मादीन्निरीक्ष्येत्यर्थः । स्वजनवधाद्विमुखस्य निवृत्तस्य । तदुक्तं गीतासु 'एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ॥ विसृज्य सशरं चापं शोकसंविग्नमानसः ॥' इति । कुमतिमहं

१ मतिर्वितृष्णेति हेतोः भगवत्युपकल्पिता सादरदृष्टिद्वारा प्रवेशिता भवतीत्यर्थः । २ अवितृप्तेति दर्शनेऽलंबुद्धिराहित्यादिति भावः । ३ 'भूमा त्वेव विजिज्ञासितव्यो यो वै भूमा तत्सुखम्' इति श्रुतिप्रसिद्धेः । ४ 'अशोच्यानन्वशोचस्त्वं' इत्यादिना गीताशास्त्रेणोपदिष्टया । ५ शरैः विभिदि रितभेदे । नन हेतुगर्भं विशेषणं जमानत्वचि येऽन्तरप्रमाणाविग्रहविग्रहे । त्वक्शब्दस्य विग्रहोपलक्षणत्वात् । सि. प्र. । ६ विभिद्यमानत्वचीत्यत्र त्वग्विभेदकथनादिह विलसदिति पदस्य विशिष्टं यथा तथा लसतीत्यर्थः कार्यः । ७ पृतनासंख्या च २४३ गजाः, २४३ रथाः, ७२९ अश्वाः, १२१५ पदातिकाः । एवामेकीकृता संख्या २४३० इत्यमरभरतौ ।

हन्तेत्यादिकुबुद्धिम् ॥ ३६ ॥ मम तु महान्तमनुग्रहं कृतवानित्याह द्वाभ्याम् । स्वनिगममशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्येवंभूतां स्वप्रतिज्ञां हित्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीत्येवंरूपां मत्प्रतिज्ञामृतं सत्यं यथा भवति तथा अधि अधिकां कर्तुं यो रथस्थः सन् अवप्लुतः सहसैवावतीर्णः सन् योऽभ्ययादभिमुखमधावत् । इभं हन्तुं हरिः सिंह इव । किंभूतः । धृतो रथचरणश्चक्रं येन सः । तदा च संरम्भेण मानुष्यनाट्यविस्मृतेरुदरस्थसर्वभूतभुवनभारेण प्रतिपदं चलद्गुश्चलन्ती गौः पृथ्वी यस्मात्सः । तेनैव संरम्भेण पथि गतं पतितमुत्तरीयं वस्त्रं यस्य स मुकुन्दो मे गतिर्भवत्वित्युत्तरेणान्वयः ॥ ३७ ॥ एवं यदाऽभ्ययात्तदा स्मयमानस्याततायिनो धन्विनो मे शितैस्तीक्ष्णैर्विशिखैर्हतोऽतो विशीर्णदंशो विध्वस्तकवचः क्षतजेन रुधिरेण परिप्लुतो व्याप्तः सन् प्रसभं बलाद्वारयन्तमर्जुनमप्यतिक्रम्य मद्वधार्थमभिससाराभिमुखं जगाम । एवं यो लोकप्रतीत्यार्जुनपक्षपातीव लक्षितो वस्तुतस्तु ममैवानुग्रहं कृतवान्यन्मद्भक्तेनोक्तं वचो मा मृषाऽस्त्विति स भगवान्मे गतिर्भवत्वित्यर्थः ॥३८॥ तदेवमन्यायैरपि भृत्यरक्षाव्यग्रे कृष्णे रतिमाशास्ते । विजयोऽर्जुनस्तस्य रथ एव कुटुम्बमकृत्यशतैरपि रक्षणीयो यस्य तस्मिन् । आत्तं तोत्रं प्रतोदो येन तस्मिन् । धृताश्च ते हयानां रश्मयः प्रग्रहास्ते सन्ति यस्य तस्मिन् । 'व्रीह्यादिभ्यश्च' इत्यनकारान्तादपि रश्मिशब्दा-

**स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ॥ धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥३७॥ शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ॥ प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥३८॥ विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ॥ भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः सरूपम् ॥ ३९ ॥ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ॥ कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्किल यस्य गोपवध्वः ॥४०॥ मुनिगणनृपवर्यसंकुलेऽन्तःसदसि युधिष्ठिरराजसूय एषाम् ॥ अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥ ४१ ॥ ॥ ॥४॥**

दिनिः । तच्छ्रिया तया सारथ्यश्रिया ईक्षणीये शोभमाने । मुमूर्षोर्मर्तुमिच्छोः । नन्वन्यायवर्तिनि किमिति रतिः प्रार्थ्यतेऽत आह । भगवत्यचिन्त्यैश्वर्ये । तदाह । इह युद्धे हताः सर्वे यं निरीक्ष्य सरूपं तत्समानं रूपं गताः प्राप्ता इति दिव्यदृष्ट्या पश्यन्नाह ॥ ३९ ॥ क्षत्रधर्मेण युध्यमानास्तत्सरूपं प्रापुरित्येतन्न चित्रम् । यतो मदान्धा अपि प्रापुरित्याह । ललितगतिश्च विलासश्च वल्गुहासादिश्च मञ्जुगत्यादिभिरात्मीयैस्तदीयैर्वा कल्पित उरुर्मानः पूजा यासां ताः । अत उत्कटेन मदेनान्धा विवशाः । अत एव तदेकचित्तत्वेन तस्य कृतं कर्म गोवर्धनोद्धरणादिकमनुकृतवत्यो गोपवध्वो यस्य प्रकृतिं स्वरूपमगन्नगमन् । मकारलोपस्त्वार्षः । किल प्रसिद्धम् । तस्मिन्मे रतिरस्त्विति पूर्वेणैवान्वयः ॥ ४० ॥ जगत्पूज्यतामनुस्मरन्नाह । मुनिगणैर्नृपवर्यैश्च संकुले व्याप्तेऽन्तःसदसि सभामध्ये युधिष्ठिरस्य राजसूये एषां मुनिगणादीनामीक्षणीयः अहो रूपमहो महिमेत्येवमाश्चर्येण विलोकनीयः सन्नर्हणमुपपेदे प्राप । एष जगतामात्मा मम दृशिगोचरो दृष्टिविषयः सन्नाविः प्रकटो वर्तते । अहो मे भाग्यमिति भावः ॥ ४१ ॥ ॥ ॥ ॥ ॥

१-अनुग्रहं मद्वचःसत्यत्वापादनलक्षणम्।२ अकृत्यैरिति। तदाह मनुः—'वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः॥ अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्॥'इति। ३ यद्यपि व्रीह्यादिगणे रश्मिशब्दो न दृश्यते तथापि सख्यावन्मूर्धन्यश्रीधरस्वामिना तथोक्तत्वादाकृतिगणत्वेन लेखकप्रमादेन वा रश्मिशब्दस्य तत्रादर्शनमनुमेयम्। ४ 'स्वरूपम्' इति पाठः स च टीकाननुगुणः। तत्र समानं रूपं गता इति व्याख्यानात्। ५ आविः आविर्भूत, अथवा आविरात्मा प्रकाशस्वरूपः। ६ सारथ्यश्रिया तोत्रहयरश्मिग्रहणशोभया मुखारविन्दे हुंहुमिति तत्रोदनशब्देन च।

सोऽहं कृतार्थोऽस्मीत्याह । तमिममजं सम्यगधिगतः प्राप्तोऽस्मि । सम्यक्त्वमाह । विधूतभेदमोहः । तदर्थं भेदस्यौपाधिकत्वमाह । आत्मकल्पितानां स्वयं निर्मितानां शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितमधिष्ठितम् । अधिष्ठाय स्थितमिति यावत् । अकारलोपस्त्वार्षः । नैकधा अनेकधा । अधिष्ठानभेदादनेकधा भातमित्यर्थः । अत्र दृष्टान्तः—सर्वप्राणिनां दृशं दृशं प्रत्येकमेवार्कमनेकधा प्रतीतमिवेति ॥४२॥ मनोवाग्दृष्टीनां वृत्तिभिः । परमात्मनि श्रीकृष्णे । अन्तरेव विलीनः श्वासो यस्य सः ॥४३॥ निष्कले निरुपाधौ परात्मनि । संपद्यमानं मिलितमाज्ञायालक्ष्य । वयांसि पक्षिण इव ॥४४॥ देवैर्मानवैश्च वादिताः । राज्ञां मध्ये ये साधवोऽनसूयवः ॥४५॥ निर्हरणादीनि दाहसंस्कारादीनि । सम्यक् परेतस्य । मुक्तस्यापीत्यर्थः ॥४६॥ तस्य गुह्यनामभिर्वेदोक्तैः । कृष्ण एव हृदयं येषां ते

तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् ॥ प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥४२॥ ॥ सूत उवाच ॥ कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ॥ आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥४३॥ संपद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ॥ सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥४४॥ तत्र दुन्दुभयो नेदुर्देवमानववादिताः ॥ शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः ॥ ४५ ॥ तस्य निर्हरणादीनि संपरेतस्य भार्गव ॥ युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥४६॥ तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ॥ ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः ॥४७॥ ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ॥ पितरं सान्त्वयामास गान्धारीं च तपस्विनीम् ॥४८॥ पित्रा चानुमतो राजा वासुदेवानुमोदितः ॥ चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥४९॥ इति श्रीम० म० प्र० युधिष्ठिरराज्यप्रलम्भो नाम नवमोऽध्यायः ॥९॥ ॥ छ ॥ ॥ शौनक उवाच ॥ हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः ॥ सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः ॥१॥

कृष्णहृदयाः ॥४७॥ पितरं धृतराष्ट्रम् । तपस्विनीं सन्तापवतीम् ॥४८॥ राजा युधिष्ठिरः अनुमतोऽनुज्ञातः ॥४९॥ ॥ इति श्रीम० म० प्र० भावार्थदीपिकाटीकायां नवमोऽध्यायः ॥९॥ ॥ छ ॥ ॥ दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ॥ स्त्रीभिः संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥१॥ राज्यं चकारेत्युक्तं तत्र पृच्छति—हत्वेति । स्वस्य रिक्थे धने स्पर्धन्ते स्म ये ते तथा । यद्वा स्वरिक्थाय स्पृतसंग्रामो येषामत एव धनादिहरणादाततायिनस्तान्हत्वा । प्रत्यवरुद्धभोजनो बन्धुवधदुःखेन संकुचितभोगो, राज्यलाभेन प्राप्तभोगो वा । कथं राज्ये प्रवृत्तः, प्रवृत्तो वा ततः किमकार्षीत् ॥ १ ॥ ॥ ॥

१ दृष्टान्ते प्रभाव्याप्त्या तत्तच्चक्षुःप्रकाशकतया धिष्ठितत्वं, दार्ष्टान्तिके तु स्वरूपव्याप्त्या तत्तच्छरीरप्रेरकतया धिष्ठितत्वमिति विवेकः । २ मिलितमेकीभावमापन्नमिति यावत् । ३ परेतस्य परं परमात्मानमितस्य प्राप्तस्य मुक्तस्येत्यर्थः । ४ वेदशिरोगतात्यन्तरहस्यनामभि', दुस्तर्क्यमहिमव्यञ्जकैः कृष्णगोविन्देति नामभिर्वा । ५ एतच्छ्लोकात्पूर्वं विजयध्वजयां त्वनन्तरं 'क्षितिभरमवरोपितुं कुरूणां श्वसन इवासृजदक्षवंशवह्निम् ॥ तमिममहमनुव्रतार्तिहाङ्घ्रिं हृदि परिरभ्य जहामि मर्त्यनीडम् ॥' इति श्लोकः तद्व्याख्या च—क्षितीति । श्वसन इव वायुर्यथा वंशेषु वेणुषु मिथःसंघर्षाद्वह्निं सृजति तथायं श्रीकृष्णः क्षितिभरं असुरबललक्षणमवरोपयितुमवतारयितुं कुरूणामक्षवंशे वह्निं द्यूतादयस्तदुत्पन्नमसृजत् तमिममनुव्रतानां भक्तानामार्तिहा अङ्घ्रिर्यस्य तमजं श्रीकृष्णं हृदि परिरभ्य मर्त्यनीडं मरणधर्मशरीरं जहामि सकृष्णोऽत्रानुग्रहं करोत्विति वाक्यशेषः । ६ 'स्वरिक्थस्पृहः' इति पाठः । ७ दुःसहपुत्रशोकसंतप्ताम् । ॥२३॥

राज्यप्रवृत्तौ श्रीकृष्णस्य प्रीतिं पर्यालोच्य प्रवृत्त इत्याशयेनोत्तरमाह । वंशं कुरोः संरोहयित्वा परीक्षिद्रक्षणेन संरोहाङ्कुरितं कृत्वा । कथंभूतम् । वंशदवाग्नि-निर्हृतं वंश एव दवो वनं तस्मादुद्भूतो यः क्रोधरूपोऽग्निस्तेन निर्हृतं दग्धम् । निजराज्ये निवेश्य च ॥ २ ॥ प्रवृत्तौ हेतुमुक्त्वा किमकार्षीदित्यस्योत्तरमाह । प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं जगन्न स्वतन्त्रमित्येवंभूतं तेन विधूतो विभ्रमोऽहंकर्तेत्येवंभूतो मोहो यस्य सः । अनुजैरनुवर्तितः सेवितः सन् । अजितः श्रीकृष्ण एवाश्रयो यस्य सः । परिधिः समुद्रैस्तत्पर्यन्तां[1] गां पृथ्वीं पालयामास ॥ ३ ॥ तस्य राज्यमनुवर्णयति—काममिति त्रिभिः । मही सर्वकामदोग्ध्री बभूव । व्रजान् गोष्ठानि । ऊधस्वतीरूधस्वत्यः ऊधः क्षीराशयस्तद्वत्यः । स्थूलोधस इत्यर्थः । सिषिचुरभ्यषिञ्चन् ॥ ४ ॥ अन्वृतु[2] ऋतावृतौ ॥ ५ ॥ आधयो मनोव्यथाः । व्याधयो

सूत उवाच ॥ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो[3] हरिः ॥ निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥ २ ॥ निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः ॥ शशास गामिन्द्र इवाजिताश्रयः परिध्युपान्तामनुजानुवर्तितः ॥३॥ कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ॥ सिषिचुः स्म व्रजान्गावः पयसोधस्वतीर्मुदा[4] ॥ ४ ॥ नद्यः[5] समुद्रा गिरयः सवनस्पतिवीरुधः ॥ फलन्त्योषधयः[6] सर्वाः काममन्वृतु तस्य वै ॥ ५ ॥ नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ॥ अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित् ॥६॥ उषित्वा हास्तिनपुरे मासान्कतिपयान्हरिः ॥ सुहृदां च विशोकाय स्वसुश्च[7] प्रियकाम्यया ॥ ७ ॥ आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ॥ आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥ सुभद्रा द्रौपदी कुन्ती विराटतनया तथा ॥ गान्धारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥९॥ वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ॥ न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः ॥१०॥ सत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः[8] ॥ कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ ११ ॥ ॥ ६९ ॥

रोगाः । क्लेशाः शीतोष्णादिकृताः । दैवं च भूतानि चात्मा च हेतुर्येषामाधिदैविकादीनां ते जन्तूनां नाभवन् ॥ ६ ॥ इदानीं द्वारकागमनं निरूपयितुमाह—उषित्वेति । स्वसुः सुभद्रायाः ॥७॥ तं युधिष्ठिरम् ॥८॥ युयुत्सुर्धृतराष्ट्राद्वैश्यायां जातः । गौतमः कृपः । यमौ नकुलसहदेवौ ॥९॥ अन्याश्च स्त्रियः । मत्स्यसुता उत्तरा । तस्याः पुनर्ग्रहणं गर्भरक्षककृष्णविरहे मोहाधिक्यात् । यद्वा मत्स्यसुता सत्यवती ॥ १० ॥ तेषां कृष्णविरहासहनं कैमुत्यन्यायेनाह—सत्सङ्गादिति द्वाभ्याम् । सतां सङ्गाद्धेतोर्मुक्तः पुत्रादिविषयो दुःसङ्गो येन सः । सद्भिः कीर्त्यमानं रुचिकरं यस्य यशः सकृदप्याकर्ण्य सत्सङ्गं त्यक्तुं न शक्नोति ॥ ११ ॥

१ दिगन्तावधि चतुःसमुद्रान्तामित्यर्थः । २ अन्वृतु ऋतावृतौ सर्वकालमित्यर्थः । दीप. । अकालफलने दोषनिमित्तत्वेन कदाचिद्भयं भवेत्तन्निवृत्त्यर्थमाह—अन्वृतु ऋतुमनतिक्रम्येति । सुबो. । ३ भवं उद्भवमेव भावयति, भक्तानां भवमुदयं भावयतीति वा सः । अभवेति पदकल्पने मोक्षभावन इत्यर्थः । ४ 'मुहुः' इति पाठः । ५ नद्यः समुद्रा जलमिथुनं, वृक्षा लताश्च परस्परं स्थलमिथुनं, एतद्द्वयमन्नातिरिक्तसर्वहेतुः । ६ देशस्य नदीमातृकत्वसंपादनेन व्रीह्यादिसमृद्धिः नदीनां फलं । रत्नादिसंपत्तिः समुद्राणां । धातुफलपुष्पादिसमृद्धिर्गिरिवनस्पतिवीरुधाम् । यवगोधूमादिसमृद्धिरोषधीनाम् । ७ 'स्वस्रुः' इति पाठः । ८ किमु साक्षादिति भावः ।

दर्शनादिभिस्तस्मिन् श्रीकृष्णे न्यस्ता अध्यस्ता धीर्येषां ते ॥ १२ ॥ अत एवानिमिषैर्नेत्रैस्तमेव वीक्षमाणास्तत्र तत्रार्हणानयनाद्यर्थं चलन्ति स्म । यतः स्नेहेन सम्यग्बद्धाः । अत एव तमनुद्रुतानि गतानि चेतांसि येषां ते ॥ १३ ॥ अगारान्निर्याति निर्गच्छति सति । औत्कण्ठ्यादासक्त्यतिशयाद्धेतोरुद्गलत् स्रवद्बाष्पमश्रु न्यरुन्धन्नेत्रेष्वेव स्तम्भितवत्यः । तत्र हेतुः—अभद्रं नो स्यादमङ्गलं मा भूदित्येतदर्थम् ॥ १४ ॥ मृदङ्गादयो दश वाद्यभेदाः ॥ १५ ॥ प्रेमव्रीडास्मितपूर्वकमीक्षणं यासां ताः ॥१६॥ गुडाका निद्रा तस्या ईशो जितनिद्रोऽर्जुनः ॥ १७ ॥ व्यजने चामरे जगृहतुः । मधुपतिः श्रीकृष्णः ॥ १८ ॥ सत्याः श्रीकृष्णे तासामव्यभिचारात्, किंतु नानुरूपाश्चानुरूपाश्च । निर्गुणस्य परमानन्दस्य सुखी भवेत्यादयो नानुरूपा गुणात्मनो मानुष्यनाट्यावतारेऽनुरूपाश्चेत्यर्थः । सन्धिरार्षः ॥ १९ ॥

तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम् ॥ दर्शनस्पर्शसंल्लापशयनासनभोजनैः ॥ १२ ॥ सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ॥ वीक्षन्तः स्नेहसंबद्धा विचेलुस्तत्र तत्र ह ॥१३॥ न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते ॥ निर्यात्यगारान्नोऽभद्रमिति स्याद्बान्धवस्त्रियः ॥ १४॥ मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः ॥ धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभयस्तथा ॥ १५ ॥ प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ॥ ववृषुः कुसुमैः कृष्णे प्रेमव्रीडास्मितेक्षणाः ॥ १६ ॥ सितातपत्रं जग्राह मुक्तादामविभूषितम् ॥ रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १७ ॥ उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ॥ विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १८ ॥ अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः ॥ नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १९ ॥ अन्योन्यमासीत्संजल्प उत्तमश्लोकचेतसाम् ॥ कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २० ॥ स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ॥ अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु ॥ २१ ॥ ॥ ॥ ॥

सर्वासां श्रुतीनां मनोहरः । उपनिषदोऽपि मूर्तिमत्यः सत्यस्तं संजल्पमभ्यनन्दन्नित्यर्थः ॥ २० ॥ तत्र तेजःसौन्दर्याद्यतिशयेन विस्मिताभ्यः सखीभ्योऽन्याः स्त्रियः कथयन्ति । नात्र विस्मयः कार्यः, साक्षादीश्वरत्वादस्येति । स वा इति चतुर्भिः । वै स्मरणे । किलेति प्रसिद्धा प्रमाणद्योतकम् । य एक एवाद्वितीयः पुरुष आसीत्स एवायं श्रीकृष्णः । कुत्रासीत् । अविशेषे आत्मनि निष्प्रपञ्चे निजस्वरूपे । कदा अग्रे गुणेभ्यो गुणक्षोभात्पूर्वम् । तथा निशि प्रलये च । तस्य लक्षणम् । जगतामात्मनि जीवे । निमीलितात्मनि । निमीलितात्मन्निति लुप्तसप्तम्यन्तं पदम् । जातावेकवचनम् । ईश्वरे लीनरूपेषु जीवेषु सत्स्वित्यर्थः । ननु जीवानां ब्रह्मत्वात्कथं लयस्तत्राह । सुप्तासु शक्तिषु सतीषु । जीवोपाधिभूतसत्त्वादिशक्तिलय एव जीवलय इत्यर्थः ॥ २१ ॥ ॥ ॥

१ प्रेमव्रीडाभ्यां यत्स्मितं तत्पूर्वमीक्षण यासामिति, प्रेमादीनीक्षणेषु व्यञ्जितानि यासां ताः । २ 'निद्रा गुडाका संप्रोक्ता प्रमीला मृत्युरुच्यते', गुडवद्वक्राः केशा यस्येति वा, गुडा वक्रा आसमन्तात् केशा यस्येति वा । ३ 'चर्चरी' 'झर्झरी' इति पाठौ । ४ 'समम्' इति पाठः । ५ कुसुमानि ववृषुरित्यर्थे विभक्तिव्यत्ययो भक्त्यतिशयद्योतनार्थः । पुष्पैः करणैरिति वा । ६ मुक्तादामभिर्मुक्तामालालंकृतप्रान्तमण्डलं, रत्नघटितो दण्डो यस्य तत् । ७ तस्य प्रलयस्य ।

तदेवं सृष्टेरादौ प्रलयानन्तरं च निष्प्रपञ्चावस्थानमुक्त्वा सृष्टिप्रलययोर्मध्ये सप्रपञ्चावस्थानमाहुः । स एवाप्रच्युतस्वरूपस्थितिरेव प्रकृतिमनुससाराधिष्ठितवान् । भूयः पुनः । सृष्टिप्रवाहस्यानादित्वात् । कीदृशीम् । निजवीर्यचोदितां स्वकालशक्तिप्रेरिताम् । स्वांशभूतानां जीवानां मायां मोहिनीम् । अत एव सिसृक्षतीं स्रष्टुमिच्छन्तीम् । किमर्थमनुससार । अनामरूपे आत्मनि जीवे रूपनामनी विधातुमिच्छन् । उपाधिसृष्ट्या जीवानां भोगायेत्यर्थः । कर्माणि च विधातुं वेदान्कृतवानित्याहुः—शास्त्रकृदिति ॥२२॥ अस्य दर्शनमतिदुर्लभमस्माभिर्लब्धमित्याहुः । स वै अयम् । यस्य पदं स्वरूपमङ्घ्रिं वा । निर्जितो मातरिश्वा प्राणो यैः । हृत्स्वमार्पेम् । ते सूरय एव पश्यन्ति । केन । भक्त्या उत्कलित उत्कण्ठितोऽमलो य आत्मा बुद्धिस्तेन । 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः । बुद्धिवैमल्यस्याप्ययमेव हेतुरित्याहुः । ननु हे सखि, एष एव सत्त्वं बुद्धिं परिमार्ष्टुं सम्यक् शोधयितुमर्हति नतु योगादय इत्यर्थः । यद्वा नु अहो एष सत्त्वं ज्ञानं परिमार्ष्टुं नाशयितुं दूरगमनेनाप्रत्यक्षीभवितुं नार्हति, किंत्वनेन सहैव गन्तव्यमित्यर्थः ॥२३॥ पुण्यश्लोकतामाहुः । हे सखि, यो वेदेषु रहस्यागमेषु च रहस्यनिरूपकैरनुगीतसत्कथः । अनुगीताः सत्यः कथा यस्य स एवायम् । गानप्रकारमाहुः—य एक ईश इत्यादि ॥२४॥ एवंभूतस्य नानावतारे कारणमाहुः—यदा हीति । तमोव्याप्ता धीर्येषां ते नृपा यदाऽधर्मेण जीवन्ति केवलं प्राणान्पुष्णन्ति तत्र तदैष एव भवाय स्थित्यै सत्त्वतो विशुद्धसत्त्वेन रूपाणि दधद्भगादीनि धत्ते प्रकटयति । युगे युगे तत्तदवसरे । भगमैश्वर्यम् । सत्यं सत्यप्रतिज्ञत्वम् । ऋतं यथार्थोपदेशकत्वम् । दयां भक्तकृपाम् । यशोऽद्भुतकर्मत्वम् ॥२५॥ विशेषतः श्रीकृष्णावतारसौभाग्यं वर्णयन्ति—अहो इति पञ्चभिः । यद्यस्मादेष पुरुषोत्तमः श्रियः पतिः स्वजन्मना यदोः कुलमञ्चति पूजयति सत्करोति । अतः श्लाघ्यतमं तत् । चङ्क्रमणेन च मधोर्वनं मथुरां सत्करोत्यतस्तत्पुण्यतममिति । तमवर्थस्याप्यत्यन्तातिशयेऽलमिति । तत्राप्याश्चर्ये अहो इत्युक्तम् ॥ २६ ॥ द्वारकां श्लाघन्ते । अहो बताऽत्याश्चर्यम् । किं तत् । कुशस्थली द्वारका । स्वर्ग उत्कृष्ट इति यद्यशस्तस्य तिरस्करी परिभवकर्त्री । भुवश्च पुण्ययशःकर्त्री भवति । यद्यतो यत्रत्याः सर्वाः प्रजाः । स्वानुग्रहेणेषितं प्रेषितम् । स्मितपूर्वकोऽवलोको यस्य तम् । यद्वा अनुग्रहार्थमिषितमिष्टम् । 'अनुग्रहोषितम्' इति पाठे स्वानुग्रहार्थमुषितं कृतनि-

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ॥ अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत् ॥२२॥ स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ॥ पश्यन्ति भक्त्युत्कलितामलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥२३॥ स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ॥ य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥२४॥ यदा ह्यधर्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल ॥ धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥२५॥ अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम् ॥ यदेष पुंसामृषभः श्रियः प्रियः स्वजन्मना चंक्रमणेन चाञ्चति ॥२६॥ अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ॥ पश्यन्ति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥

१ ब्रह्मादिद्वारा वेदशास्त्रप्रवर्तक इत्यर्थः । २ अथवा निर्जितात्मनः प्राणाद्धेतोर्निर्जितेन्द्रियाः । सर्वेषां प्राणाधीनवृत्तित्वात् प्राणजयादेव निर्जितेन्द्रिया इत्यर्थः । ३ अर्थादस्माभिः । ४ नारदपञ्चरात्रादिषु उपनिषत्सु वा । ५ 'तमोजुषः' इति पाठः । ६ 'श्रियः पतिः' इत्यपि पाठः । ७ शुद्धाः अव्यभिचारिण्य इत्यर्थः । ८ मूलस्थप्रियपदस्यैवार्थः पतिरिति । ९ कर्तृभूतेन ।

वासम् । ऐ॰रूपद्यपाठे त्वनुग्रहेणेपितं यत्स्मितं तत्पूर्वकोऽवलोको यस्य तम् । स्वस्यात्मनः पतिं श्रीकृष्णं न तु पित्रादिवद्देहमात्रपतिं नित्यं पश्यन्ति स । नैतत्सर्गेऽस्तीत्यर्थः ॥ २७ ॥ हे सखि । अस्य गृहीतपाणिभिः पत्नीभिरीश्वरोऽयमेव नूनं जन्मान्तरेषु समर्चितः । यस्मिन्नधरामृते आशयश्चित्तं यासां ताः संमोहं प्रासा इति मनोहरत्वमुक्तम् ॥२८॥ एतत्प्रपञ्चयन्ति—या इति द्वाभ्याम् । वीर्यं प्रभाव एव शुल्कं मूल्यं तेन । शुष्मिणो बलिष्ठान् । प्रद्युम्नश्च साम्बश्च अम्बश्च सुता यासां रुक्मिणीजाम्बवतीनाग्नजितीनां ता आदिर्यासां सत्यभामादीनां ताः । याश्चापराः । अस्य श्लोकस्योत्तरश्लोकेनान्वयः ॥२९॥ एताः स्त्रीत्वमेव परं केवलं साधु शोभनं कुर्वते । किंभूतम् । अपास्तं गतं पेशलं भद्रं स्वातन्त्र्यं यस्मात्तत् । निरस्तं शौचं शुचित्वं यस्मात्तथाभूतमपि । जातु कदाचिदपि

नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ॥ पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदाशयाः ॥२८॥ या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान् हि शुष्मिणः ॥ प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः ॥२९॥ एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते ॥ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥३०॥ [3]एवंविधा गदन्तीनां स गिरः पुरयोषिताम् ॥ निरीक्षणेनाभिनन्दन्सस्मितेन ययौ हरिः ॥३१॥ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥ परेभ्यः शङ्कितः स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम् ॥३२॥ अथ दूरागताञ्छौरिः कौरवान्विरहातुरान् ॥ संनिवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः ॥३३॥ कुरुजाङ्गलपाञ्चालाञ्शूरसेनान्स यामुनान् ॥ ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ ॥३४॥ [4]मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ॥ आनर्तान्भार्गवोपागाच्छ्रान्तवाहो मनाग्विभुः ॥ ३५ ॥ तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ॥ सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥३६॥ इति श्रीम० म० प्र० दशमोऽध्यायः ॥१०॥ ॥ ॥छ॥

नापैति न निर्गच्छति । आहृतिभिर्व्याहारैः । यद्वा पारिजातादिप्रियवस्त्वाहरणैः । हृदि स्पृशन्नानन्दयन् ॥ ३० ॥ एवंविधा विचित्रा गिरः सस्मितेन निरीक्षणेनाभिनन्दन् स हरिर्ययौ ॥ ३१ ॥ मधुद्विषोऽपि गोपीथाय रक्षणाय स्नेहात्परेभ्यः शत्रुभ्यः शङ्कितः सन् प्रायुङ्क्त । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम्' इत्येवं चतुरङ्गिणीम् । पृतनां सेनाम् ॥ ३२ ॥ पाण्डोः कुरुवंशजत्वात् पाण्डवा अपि कौरवा एव तान् प्रियैरुद्धवादिभिः सह ॥ ३३ ॥ कुरुक्षेत्रं कुरुदेशान्तरगतमेव । क्रमोऽत्र न विवक्षितः ॥ ३४ ॥ मरुर्निरुदको देशः । धन्वोऽल्पोदकः । आनर्ताख्यो द्वारकादेशः । [5]स विभुरुपागात्प्राप्तः । हे भार्गव । मनागीषत् श्रान्ता वाहा यस्य सः ॥ ३५ ॥ तत्र तत्र देशे तत्रत्यैर्जनैः । प्रत्युद्यतानि निवेदितान्यर्हणान्युपायनानि यस्मै सः । सायमपराह्णे पश्चाद्दिशं पश्चिमां दिशं भेजे प्राप्तः । तदा च गविष्ठः स्वर्गस्थः सूर्यो गा[6]मुदकं गतः प्रविष्टोऽस्तं गत इत्यर्थः । 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति' इति श्रुतेः ।

१ हे सखीति स्पृहया तुल्यदुःखत्वमस्माकमपीति बोधितम् । २ व्रजस्त्रिय इति । गोप्योऽपि कात्यायनीव्रते भक्त्या गानपूर्वकं व्रतस्नानपूजादिक कृतवत्य एव तासामिच्छा न पूर्णा केवलं मोहमाप्तवत्यः इति सुबो० । ३ सूतवाक्यमिदम् । ४ 'मरुधन्वावतिक्रम्य' इति पाठः । ५ पूर्वश्लोकस्थं स इति पदमत्रत्यविभुपदेनान्वितमुभयोरेकान्वयात् । ६ अत्र विजयध्वज्यां 'असौ वा गविष्ठोऽसूदेत्यप्स्वस्तमेति' इति श्रुतेरिति लभ्यते । ७ अस्याः श्रुतेरयमर्थः—सागरतीरस्थैः प्रातः सूर्यः सागरादुदेतीति, अस्तमये च तस्मिन्नेव प्रविशतीति लक्ष्यते ।

यद्वा तदा सायङ्काले जाते रथादवतीर्य गविष्ठो भूमौ स्थितस्ततो गां जलाशयं गतः सन् पश्चाद्दिशं सन्ध्यां भेजे । उपासितवानित्यर्थः ॥३६॥ ॥ इति श्रीम० प्र० भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ ॥छ॥ ॥ आनर्तैः स्तूयमानस्य पुरीं निर्विश्य वन्धुभिः ॥ एकादशे रतिः सम्यग्यादवेन्द्रस्य वर्ण्यते ॥ १ ॥ उत्सवैरुच्चलत्पौरमुदञ्चद्ध्वजतोरणम् ॥ उल्लसद्रत्नदीपालि स्वपुरं प्रभुराविशत् ॥२॥ स्वृद्धान्समृद्धान् । दरवरं पाञ्चजन्यं शङ्खम् । दध्मौ वादितवान् ॥ १ ॥ स इति । दरः शङ्खो दाध्मायमानो भगवता आपूर्यमाण उच्चकाशेऽतिशयेन शुशुभे इत्यन्वयः । कथंभूतो दरः । धवलमुदरं यस्य सः । तथाप्युरुक्रमस्य कृष्णस्याधरस्य यः शोणगुणस्तेन शोणिमा यस्य सः । करकञ्जे करकमले तयोः संपुटे मध्ये वर्तमानः । कथमुच्चकाशे । अब्जषण्डे रक्तकमलसमूहे कलहंसो राजहंस उत्स्वन उच्चशब्दो यथा तद्वत् ॥ २ ॥ जगतो यद्भयं तस्य भयावहम् । प्रत्युद्ययुः प्रत्युज्जग्मुः । भर्तृदर्शने लालसौत्सुक्यं यासां ताः ॥ ३ ॥ तत्र तस्मिन्

॥ सूत उवाच ॥ आनर्तान्स उपव्रज्य स्वृद्धान् जनपदान्स्वकान् ॥ दध्मौ दरवरं तेषां विषादं शमयन्निव ॥१॥ स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ॥ दाध्मायमानः करकञ्जसंपुटे यथाऽब्जषण्डे कलहंस उत्स्वनः ॥२॥ तमुपश्रुत्य निनदं जगद्भयभयावहम् ॥ प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥ तत्रोपनीतबलयो रवेर्दीपमिवादृताः ॥ आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥४॥ प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ॥ पितरं सर्वसुहृदमवितारमिवार्भकाः ॥५॥ नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम् ॥ परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परप्रभुः ॥६॥ भवाय नस्त्वं भव विश्वभावन त्वमेव माताथ सुहृत्पतिः पिता ॥ त्वं सद्गुरुर्नः परमं च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ ७ ॥ अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ॥ प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥ ॥ ॥

श्रीकृष्णे उपनीताः समर्पिता बलय उपायनानि याभिस्ताः । निरपेक्षेऽपि तस्मिन्नादरेण समर्पणे दृष्टान्तः—रवेर्दीपमिवेति । पितरमर्भका इव तं सर्वसुहृदमवितारं प्रोचुरित्युत्तरेणान्वयः । सुहृत्त्वेनैवावितारं नतु कामेन । अत्र हेतुः—आत्मारामम् । तत्रापि हेतुः—परमानन्दनिजस्वरूपलाभेनैव पूर्णकामम् ॥ ४ ॥ ५ ॥ किमूचुरिति तदाह—नताः स्मेति । विरिञ्चो ब्रह्मा । वैरिञ्च्याः सनकादयः । इह संसारे परं क्षेममिच्छतां परायणं परमं शरणम् । कुतः । परेषां ब्रह्मादीनां प्रभुरपि कालो यत्र प्रभुर्न भवेत् ॥ ६ ॥ अतो भवायोद्भवाय नोऽस्माकं त्वं भव । हे विश्वभावन । कृतिनः कृतार्थां बभूविम जाता वयम् ॥ ७ ॥ कृतार्थत्वमेवाहुः । अहो भवता वयं सनाथाः स्मः । यद्यस्मात्तव रूपं पश्येम । त्रैविष्टपानामपि दूरे दर्शनं यस्य तत् । देवानामपि दुर्लभदर्शनमित्यर्थः । प्रेम्णा यत्स्मितं तद्युक्तं स्निग्धं निरीक्षणं यस्मिंस्तदाननं यस्मिंस्तद्रूपम् । सर्वेषु चाङ्गेषु सौभगं यस्मिंस्तत् ॥ ८ ॥ ॥ ॥

१ यद्वेति । नायं पक्षः पूर्वपक्षस्यास्वरसत्वेनोक्तः किंतु श्लेषेणार्थद्वयमपि प्रकृतमुक्तमिति भावः । २ अथवा प्रत्युद्ययुः अन्योन्यप्रतिकूलतया उत् ऊर्ध्वं अग्रे ययुः । अहमहमिकया अग्रे गता इत्यर्थः । ३ 'जगद्भवभयापहम्' इति पाठस्तत्र जगन्तो जीवास्तेषां भवभयमपहन्तीत्यर्थः । ४ रवेरिति । आत्मानं जगच्च प्रकाशयतः प्रकाशान्तरानपेक्षस्य ज्योतीरूपस्यापि सूर्यस्याग्रे यथा दीपं समर्पयन्ति तथा निरपेक्षस्य श्रीकृष्णस्याग्रे समर्पितबलयः स्वाभ्युदयार्थमित्यर्थः । ५ उद्भवाय उत्तमस्थिताय । यद्वा संततं निजदर्शनसमृद्धये इत्यर्थः । ६ विश्वं जगत् भावयति सत्तास्थितिप्रवृत्तिमत्करोतीति तथा ।

अर्भका इव सकरुणमाहुः । यर्हि यदा । भो अम्बुजाक्ष । नो भवानिति पाठे न इत्यनादरे षष्ठी । अस्माननादृत्यापससारापहाय जगाम । कुरून्हस्तिनापुरम् । मधून्मथुरां वा । तत्र तदा । रविं विना आन्ध्यादक्ष्णोर्यथैकोऽपि क्षणोऽब्दकोटिप्रतिमो भवेत् । एवं तव नः त्वदीयानामस्माकमपीत्यर्थः ॥ ९ ॥ इति च एवंविधा अन्याश्चोचारिता वाचः शृण्वन् दृष्ट्या साभिनन्दनावलोकेनानुग्रहं कुर्वन् पुरीं द्वारकां प्राविशत् ॥ १० ॥ तां द्वारकां स्तौति पञ्चभिः । स्वतुल्यबलैर्मधुभोजादिभिर्गुप्तां रक्षिताम् ॥ ११ ॥ सर्वेष्वृतुषु सर्वे विभवाः पुष्पादिसम्पदो येषां ते पुण्यवृक्षा लताश्रमा लतामण्डपाश्च येषु तैरुद्यानादिभिर्वृता ये पद्माकराः सरांसि तैः श्रीः शोभा यस्यां ताम् । उद्यानं फलप्रधानम् । उपवनं पुष्पप्रधानम् । आरामः क्रीडार्थं वनम् ॥ १२ ॥ गोपुरं पुरद्वारम् । द्वारं गृहद्वारम् ।

यर्ह्यम्बुजाक्षापससार भो भवान्कुरून्मधून्वाथ सुहृद्दिदृक्षया ॥ तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाऽक्ष्णोरिव नस्तवाच्युत ॥ ९ ॥ इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ॥ शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ १० ॥ मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥ ११ ॥ सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतपद्माकरश्रियम् ॥ १२ ॥ गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ॥ चित्रध्वजपताकाग्रैरन्तःप्रतिहतातपाम् ॥ १३ ॥ संमार्जितमहामार्गरथ्यापणकचत्वराम् ॥ सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः ॥ १४ ॥ द्वारि द्वारि गृहाणां च दध्यक्षतफलेक्षुभिः ॥ अलंकृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः ॥ १५ ॥ निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः ॥ अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ १६ ॥ प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ॥ प्रहर्षवेगोच्छ्शितशयनासनभोजनाः ॥ १७ ॥ वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः ॥ शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः ॥ १८ ॥ ॥ ॥ ॥ ॥

कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां ताम् । गरुडादिचिह्नाङ्किता ध्वजाः । जयप्रदयन्त्राङ्किताः पताकाः । चित्राणां ध्वजपताकानामग्रैरन्तः प्रतिहत आतपो यस्यां ताम् ॥ १३ ॥ संमार्जितानि निःसारितरजस्कानि महामार्गादीनि यस्यां ताम् । महामार्गा राजमार्गाः । रथ्या इतरमार्गाः । आपणकाः पण्यवीथयः । चत्वराण्यङ्गनानि । फलादिभिरुप्तामवकीर्णाम् ॥ १४ ॥ १५ ॥ प्रेष्ठमन्तरात्मानमायान्तं निशम्य श्रुत्वा वसुदेवादयः प्रत्युज्जग्मुरिति चतुर्थेनान्वयः ॥ १६ ॥ प्रहर्षवेगेनोच्छ्शितान्युत्क्षिप्तानि शयनादीनि यैस्ते । 'श्वस प्लुतगतौ' ॥ १७ ॥ वारणेन्द्रं मङ्गलार्थं पुरतः कृत्वा । ससुमङ्गलैः सुमङ्गलं पुष्पादि तद्युक्तपाणिभिः । ब्रह्मघोषो मन्त्रपाठः ॥ १८ ॥ ॥ ॥ ॥ ॥

१ मधूनित्यस्यार्थो मथुरामण्डलमिति । अनेन 'सान्त्वयामास मत्प्रेमैरायास इति दौत्यकः' इति दशमे ३९ ध्याये ३५ पद्ये ऽक्रूरयाने वक्ष्यति तत्र सङ्गतिरिति बुधर० । २ अत्र नवमश्लोकोत्तर वृन्दावनाङ्कितपुस्तके 'कथं वयं नाथ चिरोषिते त्वयि प्रपन्नतृष्णाग्निलतापशोषणम् ॥ जीवाम ते सुन्दरहासशोभितमपश्यमाना वदनं मनोहरम्' इति मूलेऽधिकः श्लोकः तट्टीका च—कथमिति । हे नाथ, प्रपन्नानां तृष्णारूपोऽग्निर्लता यस्मात्तस्य शोषणं नाशकम् । त्वां प्रपन्नानां तृष्णाऽसंभवात इति । ३ बलिभिः पूजार्हैर्वस्तुभिः । ४ 'ये च साम्बगदादयः' इति पाठः । ५ 'उच्छ्वसित' इति पाठो यद्यपि बहुत्र दृश्यते तथापि न प्रामाणिकः, टीकायां 'श्वस प्लुतगतौ' इति धातुनिर्देशात् । ६ आदिशब्देन कुसुमफलपुष्पाक्षताङ्कुरविकिरणं ज्ञेयम् । ७ प्रेष्ठं निरतिशयप्रियतमम् ।

प्रणयेन स्नेहेनागतं साध्वसं संभ्रमो येषां ते । वारमुख्या नटादयश्च प्रत्युज्जग्मुः । लसत्कुण्डलैर्निर्भातानि यानि कपोलानि तैर्वदनेषु श्रीः शोभा यासां ताः । वारमुख्या नर्तक्यः । वेश्या इति यावत् ॥१९॥ अद्भुतानि चेति चकारस्य वन्दिनश्चेत्यन्वयः । नटा नवरसाभिनयचतुराः । तालाद्यनुसारेण नृत्यन्तो नर्तकाः । गन्धर्वा गायकाः । 'सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः ॥ वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥' ते सर्वे गायन्ति चेत्यन्वयः । उत्तमश्लोकस्याद्भुतानि चरित्राणि भक्तवात्सल्यादीनि ॥२०॥ यथाविधि यैः सह यथोचितं तैस्तथा समागमं कृत्वा । सर्वेषां मानमादधे कृतवानित्यर्थः ॥ २१ ॥ तदाह—प्रह्वेति । प्रह्वं प्रह्वत्वं शिरसा नतिः । अभिवादनं वाचा नतिः । आश्वास्याभयं दत्त्वा । श्वपाकानभिव्याप्य वरैरभीष्टदानैश्च मानं कृतवान् ॥२२॥ अन्यैश्च वन्दिभिश्च ॥२३॥ हे विप्र शौनक । तस्येक्षणेन महानुत्सवो यासां ताः ॥२४॥ यद्यस्मान्नित्यं सदाऽच्युतं निरीक्षमाणानामपि दृशो नैव तृप्यन्त्यत आरुरुहुः । कथं-

प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः ॥ वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ॥ लसत्कुण्डलनिर्भातकपोलवदनश्रियः ॥ १९ ॥ नटनर्तकगन्धर्वाः सूतमागधबन्दिनः ॥ गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ २० ॥ भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम् ॥ यथाविध्युपसंगम्य सर्वेषां मानमादधे ॥ २१ ॥ प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ॥ आश्वास्य चाश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः ॥२२॥ स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि ॥ आशीर्भिर्युज्यमानोऽन्यैर्बन्दिभिश्चाविशत्पुरम् ॥२३॥ राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ॥ हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः ॥२४॥ नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ॥ न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ २५ ॥ श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ॥ बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥२६॥ सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ॥ पिशङ्गवासा वनमालया बभौ घनो यथाऽर्कोडुपचापवैद्युतैः ॥२७॥

भूतम् । श्रियः शोभाया धाम स्थानमङ्गं यस्य तम् ॥२५॥ एतदेवाभिनयेनाह । श्रियो लक्ष्म्याः यस्योरो वक्षो निवासः । यस्य मुखं सर्वप्राणिनां दृशां सौन्दर्यामृतपानाय पात्रम् । यस्य बाहवो लोकपालानां निवासः । सारं श्रीकृष्णं गायन्तीति सारङ्गा भक्तास्तेषां यस्य पदाम्बुजं निवासः तं निरीक्षमाणानां दृश इति पूर्वेणान्वयः ॥२६॥ सितैरातपत्रव्यजनैरुपस्कृतो मण्डितः । अर्कश्चोडुपो नक्षत्रसहितश्चन्द्रश्च चापमिन्द्रधनुश्च वैद्युतं विद्युत्तेजश्च तैः । अर्कश्छत्रस्योपमानम् । नक्षत्राणि पुष्पवृष्टेः । चन्द्रः परिभ्रमकृतमण्डलाकारयोश्चामरव्यजनयोः । चापं वनमालायाः विद्युत्तेजः पिशङ्गवाससोः । अभूतोपमेयम् । यदि घनस्योपरि सूर्यबिम्बमुभयतश्चन्द्रौ सर्वतो नक्षत्राणि मध्ये च मिलितं चापद्वयं स्थिरं विद्युत्तेजश्च यदि भवेत्तर्हि स घनो यथा भाति तथा हरिर्बभावित्यर्थः ॥२७॥

१ लसत्कुण्डलैर्दीप्तकुण्डलैरित्यर्थः । २ अत्र नपुंसकप्रयोगश्चिन्त्यः । ३ नवरसास्तु—'शृङ्गारवीरबीभत्सरौद्रहास्यभयानकाः । करुणाद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः' इति रत्नकोशः । ४ तदीक्षणमेव महानुत्सवो यासां, तदीक्षणे वा उत्सवो यासाम् । ५ सितातपत्रेणावृतः व्यजनाभ्यां वीज्यमान इत्यर्थः । ६ तथा च न ह्यर्कोडुपयोः सहावस्थानमस्तीति । तत्रार्कादिस्थानीया मुकुटवनमालावस्त्रभूषणादयः ।

देवकीप्रमुखाः सप्त ववन्द इति मातृसौन्दर्यादादरविशेषज्ञापनार्थमुक्तम् । अष्टादशापि वसुदेवभार्या मातृतुल्यत्वान्नमस्कृता एव ॥ २८ ॥ नेत्रजैर्जलैर्हर्षाश्रुभिः ॥२९॥ स्वगृहप्रवेशमाह—अथेति । सहस्राणि च षोडशेति चकारादष्टोत्तरशताधिकानीति ज्ञेयम् ॥ ३० ॥ प्रोष्य देशान्तरे उषित्वा । आराद्दूरादेव विलोक्य संजातो मनसि महोत्सवो यासां ताः । आसनादाशयाच्च । आसनाद्देहेनोत्तस्थुः । आशयोऽन्तःकरणं तस्मादप्यात्मनोत्तस्थुः । श्रीकृष्णेनात्मनः संश्लेषेऽन्तःकरणव्यवधानमपि ता नासहन्तेत्यर्थः । व्रीडितानि लोचनान्याननानि च यासां ताः । अपाङ्गैरेव वीक्षणाद्व्रीडितलोचनाः ॥ अवनतमुखत्वाद्व्रीडिताननाः । साकं व्रतैरिति । हास्यक्रीडावर्जनादिनियमा अपि ताभ्य उत्तस्थुरित्यर्थः । धृतव्रता एवोत्तस्थुरिति वा । व्रतानि च याज्ञवल्क्येनोक्तानि—'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका' इति ॥ ३१ ॥ आयान्तं तं पतिं दर्शनात्पूर्वमात्मना बुद्ध्यान्तर्हृदये परिरेभिरे ततो दृष्टिभिस्ततः

प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ॥ ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा ॥२८॥ ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः ॥ हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥२९॥ अथाविशत्स्वभवनं सर्वकाममनुत्तमम्[1] ॥ प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥३०॥ पत्न्यः[2] पतिं प्रोष्य गृहानुपागतं विलोक्य संजातमनोमहोत्सवाः ॥ उत्तस्थुरारात्सहसासनाशयात्साकं[3] व्रतैर्व्रीडितलोचनाननाः ॥ ३१ ॥ तमात्मजैर्दृष्टिभिरन्तरात्मना[4] दुरन्तभावाः[5] परिरेभिरे पतिम् ॥ निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात् ॥३२॥ यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम् ॥ पदे पदे का विरमेत तत्पदाच्चलापि यच्छ्रीर्न जहाति कर्हिचित् ॥३३॥ एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ॥ विधाय वैरं श्वसनो यथाऽनलं मिथो वधेनोपरतो निरायुधः ॥३४॥ स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ॥ रेमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा ॥३५॥ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम् ॥ संमुह्य चापमजहात्प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥

समीपमागतमात्मजैः पुत्रैर्गृहीतकण्ठमालिङ्गयन्त्य इव स्वयमालिङ्गितवत्य इत्यर्थः । अत्र हेतुः—दुरन्तभावा गम्भीराभिप्रायाः । तदा च तासां नेत्रयोर्निरुद्धमप्यम्बु वाष्पं वैक्लव्याद्वैवश्यादास्रवदीपत्सुस्राव । अत एव धैर्यहान्या विलज्जतीनाम् । हे भृगुवर्य । चित्रं शृण्विति ॥३२॥ पार्श्वगतः समीपस्थस्तत्रापि रहोगत एकान्ते प्रवर्तते स्म । पदे पदे प्रतिक्षणं नवं नवमेव । अत्र कैमुत्यन्यायः । का विरमेतेति । चला चञ्चलस्वभावापि ॥ ३३ ॥ उक्तं श्रीकृष्णचरितं संक्षिप्याह—एवमिति द्वाभ्याम् । क्षितेर्भाराय जन्म येषाम् । अक्षौहिणीभिः कृत्वा परिवृत्तं सर्वतः प्रसृतं तेजः प्रभावो येषाम् । श्वसनो वायुर्वेणूनामन्योन्यसंघर्षणानलं विधाय मिथो दाहेन यथोपशाम्यति तद्वत् ॥३४॥ स्त्रीरत्नकूटस्थ उत्तमस्त्रीकदम्बस्थः ॥३५॥ नन्वेवं स्त्रीसङ्गादिभिः संसारप्रतीतेः कथं भगवानवतीर्ण इत्युच्यते

१ अनुत्तममिति न विद्यते उत्तम यस्मात्तत्सर्वोत्तममिति भावः । २ पत्न्यः पतिमिति । एतेन यावत्यः पत्न्यस्तावन्मूर्तिः श्रीकृष्णो युगपदेव तासां गृहान्प्राविशदिति ज्ञायते सर्वासां तुल्यभावत्वादिति व्याख्यालेशः । ३ 'साकम्पिता' इति पाठः । तत्र सहितमाकम्पितं याभिरित्यर्थः इति विज० । ४ 'पुत्रानुदूह्य तत्कण्ठमालिङ्गयन्त्य इव' इति पाठः । टीकान्तरेषु आत्मजैरन्तरात्मना मनसा च त्वात्मजैर्देहजै रोमाञ्चादिभिः सह इत्यर्थः कृतः । ५ वेलातीतस्नेहाः अनन्तशृङ्गारा वा अन्यैरज्ञाताभिप्रायां वा । ६ अत्र चित्र शृण्वित्यध्याहारो वर्णितस्नेहस्यातिरेकात् ।

तत्राह—उद्दामेति द्वाभ्याम् । यासामुद्दामो गम्भीरो यो भावोऽभिप्रायस्तस्य पिशुनः सूचकोऽमलो वल्गुः सुन्दरो हासो व्रीडावलोकश्च ताभ्यां निहतः अमदनः श्रीमहादेवोऽपि संमुह्य लज्जया चापं पिनाकमजहात् । एवंप्रभावा याः स्त्रिय इत्येतावद्विवक्षितम् । यद्वा भगवतो मोहिनीरूपेण महेशोऽपि मोहित एवमेताश्च तादृग्विलासा एवेति तथोक्तम् । ताः कुहकैः कपटैर्विभ्रमैर्यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न शेकुर्न शक्ताः । अथवा निहतस्ताडितो मदनोऽपि जगद्विजयी संमुह्य तत्तत्कर्तव्यतामूढः स्वं चापं धनुर्लज्जयाऽजहाज्जहौ । ताश्च प्रमदोत्तमाः कामविजयिन्योऽपीत्यादिपूर्ववत् ॥३६॥ तं श्रीकृष्णमयं प्राकृतो लोक आत्मौपम्येन स्वसादृश्येन सङ्गिनं मनुजं मन्यते । अत्र हेतुः—व्यापृण्वानं व्याप्रियमाणम् । यतोऽयमबुधोऽतत्त्वज्ञः ॥ ३७ ॥ कुत इत्यपेक्षायामैश्वर्यलक्षणमाह—एतदिति । ईशस्य ईशनमैश्वर्यं नामैतदेव । किं तत् । प्रकृतिस्थोऽपि तस्या गुणैः सुखदुःखादिभिः सदा न युज्यते इति यत् । यथात्मस्थैरानन्दादिभिरात्माश्रयापि बुद्धिर्न युज्यते तद्वत् । वैधर्म्ये दृष्टान्तो वा । आत्मस्थैः सत्ताप्रकाशादिभिर्यथा बुद्धिर्युज्यत इति । एवं वा । असदात्मा देहस्तत्रस्थैर्गुणैस्तदाश्रया बुद्धि-

तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् ॥ आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥३७॥ एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ॥ न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥३८॥ तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः ॥ अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥३९॥ ॥ इति श्रीम० म० प्र० श्रीकृष्णद्वारकाप्रवेशो नामैकादशोऽध्यायः ॥११॥ ॥छ॥ ॥ शौनक उवाच ॥ अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तराया हतो गर्भ ईशेनाजीवितः पुनः ॥ १ ॥ तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः ॥ निधनं च यथैवासीत्स प्रेत्य गतवान्यथा ॥ २ ॥ तदिदं श्रोतुमिच्छामि गदितुं यदि मन्यसे ॥ ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥ ॥ ॥

स्तदुपाधिर्जीवो यथा युज्यते एवं प्रकृतिस्थोऽपि तद्गुणैर्न युज्यत इति यदेतदीशनमीशस्येति ॥ ३८ ॥ तत्पत्न्योऽपि तस्य तत्त्वं न जानन्तीत्याह । तं स्त्रैणमात्मवश्यं रह एकान्तेऽनुव्रतमनुसृतं च मेनिरे । भर्तुरप्रमाणविदः प्रमाणमियत्तां महिमानमजानन्त्य इत्यर्थः । ईश्वरं क्षेत्रज्ञं मतयोऽहंवृत्तयो यथा स्वाधीनं स्वधर्मयोगिनं मन्यन्ते तद्वत् । यद्वा यथा यथा तासां मतयः कल्पनास्तथा तथा तमीश्वरं स्त्रैणादिरूपं मेनिर इत्यर्थः ॥ ३९ ॥ ॥ इति श्रीम० म० प्र० भावार्थदीपिकायां टीकायामेकादशोऽध्यायः ॥११॥ ॥छ॥ ॥ पुरोक्तं यत्प्रसङ्गाय द्रौणिदण्डादि विस्तरात् ॥ द्वादशे तु तदेवाथ परीक्षिज्जन्म वर्ण्यते ॥ 'परीक्षितोऽथ राजर्षेर्जन्मकर्मविलायनम् । संस्थां च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥' इति प्रतिज्ञाय पाण्डवानां राज्यस्थितिरुपोद्घातरूपा सप्रसङ्गं सप्तमाध्यायमारभ्य निरूपिता । इदानीमौपोद्घातिकमुक्तानुवादपूर्वकं पृच्छति—अश्वत्थाम्नेति । उपसृष्टेन विसृष्टेन । तस्य जन्मादि ब्रूहीत्युत्तरेणान्वयः ॥ १ ॥ स परीक्षित् । प्रेत्य देहं त्यक्त्वा ॥२॥ प्रार्थये नत्वाज्ञापयामीत्याह । गदितुं यदि मन्यसेऽनुग्रहेण तर्हि ब्रूहीति । यस्य ज्ञानमदाच्छुकः इति श्रवणेच्छायां कारणम् ॥ ३ ॥ ॥

१ अजहात्त्यक्तवानिति काचित्पुराणप्रसिद्धाख्यायिकेति प्राञ्चः । २ विविधवञ्चनप्रकारैः । ३ मत्कार्यमेता एव करिष्यन्ति किं चापेनेति वा । ४ सत्यभामायामासक्तेरेव पारिजातहरणादिव्यापारविशिष्टमित्यर्थः । ५ कर्तृवश्यत्वापादकत्वस्वरूपप्रच्युतिदोपाजनकत्वादिभिर्वा । ६ जन्मकर्मावदातस्य मृत्योरसम्भवात् गर्भ एव च मृत्योर्निवर्तनात्कथं निधनमिति प्रश्नः । ७ एतत्स्कन्धीयसप्तमाध्यायस्य द्वादशश्लोकोऽयम् । 'अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् । तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः' इति प्रश्नप्रतिवचनार्थमस्यारम्भः । ८ उपोद्घातस्वरूपं च—'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति ।

निस्पृहस्यापि राज्ञः श्रीकृष्णानुग्रहात्तादृक् पौत्रः समजनीति वक्तुं तस्य श्रीकृष्णे भक्त्युद्रेकमाह—अपीपलदिति त्रिभिः । पितृवदपीपलत् पालयामास ॥ ४ ॥ क्रतवस्तदुपार्जिता लोकाश्च ॥५॥ सुरस्पार्हाः सुराणां स्पृहणीयास्ते सम्पदादयः कामा विषया राज्ञः किं मुदं प्रीतिमधिजह्रुः कृतवन्तः । न कृतवन्त इत्यर्थः । अत्र हेतुः । मुकुन्दे एव मनो यस्येति । क्षुधितस्यान्नैकमनसो यथेतरे स्रक्चन्दनादयो न कुर्वन्ति तद्वत् ॥ ६ ॥ प्रस्तुतमाह—मातुरिति । सः परीक्षित् ॥ ७ ॥ पुरटं सुवर्णम् । स्फुरन् पुरटमौलिर्यस्यास्ति तम् । 'व्रीह्यादिभ्यश्च' इति इनिप्रत्ययः । अपीच्यमतिसुन्दरं दृश्यत इति दर्शनं रूपं यस्य तम् । तडिद्वद्वाससी यस्येति श्याममिति च पदाभ्यां विद्युद्युक्तमेघोपमा सूचिता । अच्युतमविकारम् ॥८॥ तप्तं दाहोत्तीर्णं यत्काञ्चनं तन्मये कुण्डले यस्य । क्षतजाक्षं संरम्भाद-

॥ सूत उवाच ॥ अपीपलद्धर्मराजः पितृवद्रञ्जयन्प्रजाः ॥ निस्पृहः सर्वकामेभ्यः कृष्णपादानुसेवया ॥४॥ सम्पदः क्रतवो लोका महिषी भ्रातरो मही ॥ जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥ ५ ॥ किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः ॥ अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥६॥ मातुर्गर्भगतो वीरः स तदा भृगुनन्दन ॥ ददर्श पुरुषं कंचिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥ अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम् ॥ अपीच्यदर्शनं श्यामं तडिद्वाससमच्युतम् ॥८॥ श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम् ॥ क्षतजाक्षं गदापाणिमात्मनः सर्वतोदिशम् ॥ परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः ॥९॥ अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ॥ विधमन्तं संनिकर्षे पर्यैक्षत क इत्यसौ ॥ १० ॥ विधूय तदमेयात्मा भगवान्धर्मगुब्विभुः ॥ मिषतो दशमास्यस्य तत्रैवान्तर्दधे हरिः ॥११॥ ततः सर्वगुणोदर्के सानुकूलग्रहोदये ॥ जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा ॥१२॥ तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः ॥ जातकं कारयामास वाचयित्वा च मङ्गलम् ॥१३॥ हिरण्यं गां महीं ग्रामान् हस्त्यश्वान्नृपतिर्वरान् ॥ प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥ ॥ ॥ ॥

त्यारक्तनेत्रम् । अहो मद्भक्तस्यापि गर्भेऽस्त्रपीडेति क्रोधादिति भावः ॥ ९ ॥ अस्त्रतेजो विधमन्तं विनाशयन्तम् । नीहारं हिमं गोपतिः सूर्य इव । (एवंविधं गर्भगतो बालः) संनिकर्षे समीपे ददर्श । दृष्ट्वा चासौ क इति पर्यैक्षत वितर्कितवान् ॥ १० ॥ अमेयात्मा कथं तद्विधूतवानित्यवितर्क्यरूपः । धर्मं गोपायतीति धर्मगुप् । यद्वा धर्मं गोपायन्तीति धर्मगुपो राजानस्तत्प्रभुस्तेषामपि पालकत्वात् । दशमासपरिच्छेद्यस्य तस्य मिषतः पश्यतो यत्र दृष्टस्तत्रैवान्तर्हितो नत्वन्यत्र गतः । यतो विभुः सर्वगतः ॥११॥ उदर्क उत्तरफलम् । सर्वगुणानामुत्तरोत्तराधिक्यसूचके लग्ने । तत्र हेतुः—अनुकूलैरन्यैर्ग्रहैः सहितानां शुभग्रहाणामुदयो यस्मिन् ॥१२॥ जातकं जातकर्म । मङ्गलं पुण्याहम् ॥१३॥ वरान् श्रेष्ठान् । स्वन्नं शोभनमन्नं च । तीर्थविद्दानकालज्ञः । 'यावन्न च्छिद्यते नालं ताव-

१ सुराणा स्पृहैव स्पार्हः, स्वार्थे अण्, स येषु ते सुरस्पार्हाः । २ 'प्रियः स्त्रीणामपीच्यः' इति श्रुतेरपीच्यमन्यूनातिरिक्तत्वादतिसुन्दरम् । ३ 'दशमासस्य' इति पाठः । ४ अत्र ददर्शेति पूर्वगतसप्तमश्लोकादन्वितमिति ज्ञेयम् । ५ सर्वे गुणा एवोदर्का उत्तरफलानि यस्मिन्निति समासे फलितमिदम् । ६ सतीर्थविदिति वा पदम् । तत्र तीर्थविद्भिः सहितः अतस्तदुपदेशाज्ज्ञाता इत्यनानित्यर्थः ।

प्राप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥' इति वचनात्ततः पूर्वं प्रादात् । आमान्नं वा प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले । 'पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्' इति स्मृतेः । 'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयान्ति हि नृपश्रेष्ठ पुण्याहमिति चाब्रुवन् ॥' इति च ॥ १४ ॥ हे पौरवर्षभ, कुरूणां कुरुवंश्यानां शुक्के शुद्धेऽस्मिन्प्रजातन्तौ । दैवेन । कथंभूतेन । अप्रतिघातेन दुर्वारेण । संस्थां नाशमुपेयुषि गते सति वः युष्माकं अनुग्रहार्थाय यस्मात्प्रभवनशीलेन श्रीविष्णुना रातो दत्तस्तस्माल्लोके विष्णुरात इति नाम्ना भविष्यति महाभागवतश्च । गुणैश्च महान् भविष्यति नात्र संदेह इति तं राजानं ब्राह्मणा ऊचुरिति त्रयाणामन्वयः ॥ १५ ॥ १६ ॥ १७ ॥ महाभागवतो भविष्यतीत्युक्ते हृष्टः पृच्छति । अपिस्वित् किंस्वित् । साधुवादेन यशसा सत्कीर्त्या चानुव-

तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयान्वितम् ॥ एष ह्यस्मिन्प्रजातन्तौ कुरूणां पौरवर्षभ ॥ १५ ॥ दैवेनाप्रतिघातेन शुक्के संस्थामुपेयुषि ॥ रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥ तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ॥ भविष्यति न संदेहो महाभागवतो महान् ॥ १७ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्म-हात्मनः ॥ अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥ ॥ ब्राह्मणा ऊचुः ॥ पार्थ प्रजाविता साक्षादिक्ष्वा-कुरिव मानवः ॥ ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥ एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ॥ यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥ धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः ॥ हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥ मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ॥ तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥ पितामहसमः साम्ये प्रसादे गिरिशोपमः ॥ आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥ सर्वसद्गु-णमाहात्म्य एष कृष्णमनुव्रतः ॥ रन्तिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥ धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ॥ आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥

र्तिता भविष्यतीति पूर्वस्यैवातः परमप्यनुषङ्गः ॥ १८ ॥ हे पार्थ, प्रजानामविता रक्षकः । मानवो मनोः पुत्रः । ब्राह्मणेभ्यो हितः । सत्यप्रतिज्ञश्च श्रीरामो यथा ॥ १९ ॥ उशीनरदेशाधिपतिः शिबिः । येन स्वमांसं श्येनाय दत्त्वा शरणागतः कपोतो रक्षितः । स्वानां ज्ञातीनां यज्वनां च यशोविस्तारको दौष्यन्तिर्भरत इव ॥ २० ॥ अर्जुनयोः पार्थकार्तवीर्ययोः ॥ २१ ॥ हिमवानिव सतां निषेव्योऽनन्यगतिकत्वेन । वसुधेव तितिक्षुः क्षन्ता । प्रीत्या मातापितराविव सहिष्णुः ॥ २२ ॥ पितामहो ब्रह्मा तेन समः साम्ये समत्वे । रमाश्रयो हरिः ॥ २३ ॥ सर्वैः सद्गुणैर्माहात्म्यं यत्तस्मिन् । श्रीकृष्णतुल्यः ॥ २४ ॥ धृत्या धैर्येण । सद्ग्रहः सन् भद्रो ग्रहोऽभिनि-वेशो यस्मिन्विषयभूते तेन यशसानुवर्तिता स्विदिति वान्वयः ।

---

१ ब्रुवन्ति चेत्यर्थः । 'आयान्ति हि गृह तस्मात्सूर्यग्रहशताधिकम्' इति पाठे तु पुत्रजन्माख्यं सूर्यग्रहशताधिक पर्वेत्यर्थः । २ अपिस्विदित्येतद्द्वयं समुदित प्रश्नद्योतकम् । ३ साधूनां वादो यस्मिन्विषयभूते तेन यशसानुवर्तिता स्विदिति वान्वयः । ४ 'पुरूणां' इति पाठः, तत्र पुरुवंश्यानामित्यर्थः । विश्व० । ५ शुक्के निर्दोषे गर्भे गर्भपिण्डे सस्था नाशमुपेयुषि सति । सिद्धां० । ६ बृहच्छ्रवा विपुलकीर्तिः । ७ सत्या सधा प्रतिज्ञा यस्य, सत्ये याचके संधा दृढाऽभिरुचिर्यस्येति वा । ८ कृष्णमनुव्रतः कृष्णानुवर्ती । यद्वा कृष्णतुल्यसद्गुणमाहात्म्ययुक्त इत्यर्थः । ९ वनवासगमनाद्रामे सत्यसन्धत्वम् । तथा च कालस्यापकारजनकत्वं स्वेच्छया भगवत्यपि प्रतिफलतीति भगवद्दृष्टान्तः ।

वेशो यस्य सः । आहर्ता कर्ता ॥ २५ ॥ राजर्षीणां जनमेजयादीनाम् ॥ २६ ॥ द्विजपुत्रेण प्रेरितात्तक्षकादात्मनो मृत्युमुपश्रुत्य विरक्तः सन् हरेः पदं प्रपत्स्यते भजिष्यति ॥२७॥ ततश्च जिज्ञासितमात्मनो याथात्म्यं येन सः । इदं शरीरं गङ्गायां हित्वाऽकुतोभयं पदं यास्यति । अद्धा निश्चयेन ॥ २८॥ लब्धा अपचितिः पूजा यैस्ते ॥ २९ ॥ परीक्षिदिति नाम निर्वक्ति—स एष इति । यद्यस्मात्प्रभुः समर्थः सन् गर्भे दृष्टं पुरुषमनुध्यायन्निह दृश्यमानेषु नरेषु मध्ये सर्वमपि नरं परीक्षेताऽयमसौ भवेन्नो वेति विचारयेदतः परीक्षिदिति विख्यातः । 'पूर्वदृष्टम्' इति वा पाठः । तदा मातृगर्भे पूर्वं दृष्टमित्यर्थः ॥३०॥ शुक्ले शुक्लपक्षे स प्रसिद्ध

राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ॥ निग्रहीता कलेरेष भुवो धर्मस्य कारणात् ॥ २६ ॥ तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ॥ प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥२७॥ जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ॥ हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥ २८॥ इति राज्ञ उपादिश्य विप्रा जातककोविदाः ॥ लब्धापचितयः सर्वे प्रतिजग्मुः स्वकान् गृहान् ॥ २९ ॥ स एष लोकविख्यातः परीक्षिदिति यत्प्रभुः ॥ गर्भदृष्टमनुध्यायन्परीक्षेत नरेष्विह ॥ ३० ॥ स राजपुत्रो ववृध आशु शुक्ल इवोडुपः ॥ आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥३१॥ यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ॥ राजाऽलब्धधनो दध्यावन्यत्र करदण्डयोः ॥ ३२ ॥ तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचोदिताः ॥ धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः ॥ ३३ ॥ तेन संभृतसंभारो धर्मपुत्रो युधिष्ठिरः ॥ वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम् ॥ ३४ ॥ आहूतो भगवान्राज्ञा याजयित्वा द्विजैर्नृपम् ॥ उवास कतिचिन्मासान्सुहृदां प्रियकाम्यया ॥ ३५ ॥ ततो राज्ञाभ्यनुज्ञातः कृष्णया सह बन्धुभिः ॥ ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः ॥३६॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे परीक्षिज्जन्माद्युत्कर्षो नाम द्वादशोऽध्यायः ॥१२॥

उडुपोऽन्वहं यथा काष्ठाभिः पञ्चदशकलाभिरापूर्यमाणो वर्धते, एवं पितृभिर्युधिष्ठिरादिभिः कामैश्चतुःषष्टिकलाभिश्चापूर्यमाणो ववृधे ॥ ३१ ॥ पूर्वमपकृष्योक्तानश्वमेधान् स्वावसरे सप्रकारं कथयति । ज्ञातिद्रोहस्य हानेच्छया यक्ष्यमाणः करदण्डयोरन्यत्र ताभ्यां विनाऽलब्धधनो दध्यौ चिन्तयामास । करदण्डजस्य परिजनभरणमात्रोपक्षीणत्वात् ॥ ३२ ॥ प्रहीणं मरुत्तस्य यज्ञे ब्राह्मणैस्त्यक्तं सुवर्णपात्रादिकमानीतवन्तः ॥ ३३ ॥ संभृतसंभारः संपादितयज्ञोपकरणः । भीतो ज्ञातिद्रोहात् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे भावार्थदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ छ ॥

---

१ शृङ्गिनाम्ना । २ उपसर्जितादित्यस्यार्थः—प्रेरितादिति । ३ जिज्ञासितं सम्यग्विचारपूर्वकं ज्ञातमात्मनो भगवतः स्वस्य च याथात्म्य इदमित्थतया निर्णयो येन । ४ 'लब्धोपचितयः' इति पाठस्तत्र लब्धा उपचितिः प्रत्युपकारो धनादिर्यैस्ते । राजा धर्मराजः । ६ उदीच्यां दिशि प्रहीणमित्यन्वयः । 'उदीच्या भूरिशो दिशः' इति पाठे उदीच्या दिशः सकाशादाजह्रुरित्यर्थः । ७ 'यज्ञेशमयजद्धरिम्' इति पाठः । ८ 'सुहृदः' इति पाठे सुहृदो युधिष्ठिरस्य । ९ ज्ञातिद्रोहस्य ज्ञातिद्रोहजनितपापस्य । १० करो राजहार्यः षष्ठांशः, दण्डो दुष्टनिग्रहजनितो धनलाभः । ११ 'दध्यौ नान्यत्र' इति पाठे न लब्धधन इत्यन्वयः ।

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे । उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महोपथम् ॥१॥ इदानीं परीक्षितः कलिनिग्रहादिकर्माणि कथयिष्यन् विदुरागमनेन धृतराष्ट्रप्रस्थानं ततोऽर्जुनागमनं ततः श्रीकृष्णान्तर्धानं निशम्य पाण्डवप्रस्थानं च निरूपयति त्रिभिरध्यायैः । गतिं हरिम् । तयात्मगत्याऽवासं विवित्सितं ज्ञातुमिष्टं सर्वं येन ॥१॥ तदेवाह । यावतः कर्मयोगव्रतादिविषयान् प्रश्नान्प्रथमं कृतवान् । कौषारवस्य मैत्रेयस्य पुरतः । पश्चात्त्रिचतुःप्रश्नार्थज्ञानमात्रेण गोविन्दे जातैकभक्तिः कृतार्थः संस्तेभ्यः प्रश्नेभ्य उपरराम । ततः परं न विजिज्ञासितवान् ॥२॥ सूतः संजयः । शारद्वतः कृपः । पृथा कुन्ती ॥३॥ कृपी द्रोणभार्या । जामयो ज्ञातिभार्याः । अन्याश्च स्त्रियः ॥४॥ प्राणं तन्व इवेति कुतश्चिन्मूर्च्छादिदोषतः प्राणेऽवसन्ने सति तन्वः कराङ्घ्र्यादयो निश्चेष्टा भवन्ति पुनस्तस्मिन्नाविर्भूते यथोत्तिष्ठन्ति

॥ सूत उवाच ॥ विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ॥ ज्ञात्वाऽगाद्धास्तिनपुरं तयावाप्तविवित्सितः ॥१॥ यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः ॥ जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥ तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ॥ धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥३॥ गान्धारी द्रौपदी ब्रह्मन्सुभद्रा चोत्तरा कृपी ॥ अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः ॥४॥ प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम् ॥ अभिसंगम्य विधिवत्परिष्वङ्गाभिवादनैः ॥५॥ मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्यकातराः ॥ राजा तमर्हयांचक्रे कृतासनपरिग्रहम् ॥६॥ तं भुक्तवन्तमासीनं विश्रान्तं सुखमासने ॥ प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम् ॥७॥ ॥ युधिष्ठिर उवाच ॥ अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान् ॥ विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥८॥ कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम् ॥ तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥९॥ भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो ॥ तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता ॥१०॥ अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः ॥ दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते ॥११॥ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ॥ यथानुभूतं क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥ ॥

तद्वत् ॥५॥ विरहेण यदौत्कण्ठ्यं तेन कातरा विवशाः ॥६॥ तं विदुरम् ॥ ७ ॥ पक्षिणो ह्यपत्यानि यथातिस्नेहेन पक्षच्छायया वर्धयन्ति तद्वद्युष्मत्पक्षपातच्छायया समेधितान्वर्धितान्नोऽस्मान्किं स्मरथ । समेधितत्वमेवाह । विपद्गणाद्यस्मान्मोचिताः स्मः ॥८॥ वो युष्माभिः कया वृत्त्या वर्तितं देहवृत्तिः कृता । कानि च तीर्थादीनि सेवितानीति ॥९॥ भवतां च तीर्थाटनं न स्वार्थं किंतु तीर्थानुग्रहार्थमित्याह—भवद्विधा इति । मलिनजनसंपर्केण मलिनानि तीर्थानि सन्तः पुनः स्वयं तीर्थीकुर्वन्ति । स्वान्तं मनस्तत्स्थेन । स्वर्सान्तः स्थितेनेति वा ॥ १० ॥ अपि किं सुखमासते भवद्भिः क्वापि दृष्टाः श्रुता वा ॥ ११ ॥ १२ ॥ ॥

१ 'महोदयम्' इति पाठोऽयुक्तः, उत्तरत्रावतरणे पाण्डवप्रस्थानं चेति कथनात् । २ आत्मगत्या ज्ञानविषयभूतया । आत्मगतिरूपश्रीकृष्णज्ञानेनेति भावः । ३ ज्ञातत्वादलंबुद्धिमान्भूत् । भक्तौ जातायामन्यस्य जिज्ञासाया वैयर्थ्यादिति भावः । ४ 'कृतकृत्यविवित्सितः' इति पाठे विदितवेद्य इत्यर्थः । ५ 'यथानुभूतं भ्रमता' इति पाठो विजयध्वजीसंमतः । ६ युष्मत् तव पक्षयोः परिग्रहरूपयोश्छायायां वर्धितानिति वि. रा. । ७ 'हरन्त्यघ तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः' इति प्रामाण्यात्तीर्थानामपि पवित्रीकरणं 'पावनं पावनानां' इतिवत्सज्जनसुलभमेव । ८ एतेनात्र स्वान्तःस्थेनेति विसर्गमध्यपाठोऽपि प्रामाणिकः स्वस्यानुमतश्चेति ध्वनितम् । अन्यथा ईदृशविग्रहानुपपत्तेरिति दीपि० ।

यदुकुलक्षयावर्णने कारणमाह—नन्विति ॥१३॥ श्रेयस्कृत्तत्त्वमुपदिशन् ॥१४॥ ननु शूद्रोऽसौ कथमुपदिशेत् । न ह्यसौ शूद्रः किंतु यमस्तद्रूपेणासीत् । किं तत्र कारणं यमे चात्रागतेऽमुत्र को दण्डधर इत्यपेक्षायामाह—अविभ्रदिति । धृतवानित्यर्थः । माण्डव्यस्य शापात् । तथाहि । कश्चिचोराननु धावन्तो राजभटा माण्डव्यस्य ऋषेस्तपश्चरतः समीपे तान् संप्राप्य तेन सह निबध्यानीय राज्ञे निवेद्य तदाज्ञया सर्वान् शूलमारोपयामासुः । ततो राजा तमृषिं ज्ञात्वा शूलादवतार्य प्रसादयामास । ततो मुनिर्यमं गत्वा कुपित उवाच कस्मादहं शूलमारोपित इति । तेनोक्तं त्वं बाल्ये शलभं कुशाग्रेणाविध्य क्रीडितवानिति । तच्छ्रुत्वा माण्डव्यस्तं शशाप । बाल्येऽजानतो मे महान्तं दण्डं यतस्त्वं कारितवानतः शूद्रो भवेति ॥ १५ ॥ इदानीं राज्यस्यापकर्षं निरूपयितुमुत्कर्षं निगम-

नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ॥ नावेदयेत्सकरुणो दुःखितान्द्रष्टुमक्षमः ॥१३॥ कंचित्कालमथावात्सीत्सत्कृतो देववत्सुखम् ॥ भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् ॥ १४ ॥ अबिभ्रदर्यमा दण्डं यथावदघकारिषु ॥ यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥१५॥ युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम् ॥ भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥१६॥ एवं गृहेषु सक्तानां प्रमत्तानां तदीहया ॥ अत्यक्रामदविज्ञातः कालः परमदुस्तरः ॥१७॥ विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ॥ राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥१८॥ प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित्प्रभो ॥ स एव भगवान्कालः सर्वेषां नः समागतः ॥१९॥ येन चैवाभिपन्नोऽयं प्राणैः प्रियतमैरपि ॥ जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥२०॥ पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ॥ आत्मा च जरया ग्रस्तः परगेहमुपाससे ॥२१॥ अहो महीयसी जन्तोर्जीविताशा यया भवान् ॥ भीमेनावर्जितं पिण्डमादत्ते गृहपालवत् ॥२२॥ अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ॥ हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २३ ॥ ॥ ॥

यति—युधिष्ठिर इति । कुलन्धरं वंशधरम् ॥१६॥ तदीहया गृहव्यापारेण प्रमत्तानाम् । अत्यक्रामदायुःकालोऽतिक्रान्तः । यद्वा तानभ्यभवदित्यर्थः ॥ १७ ॥ अभिप्रेत्य ज्ञात्वा ॥ १८ ॥ ननु तत्प्रतीकारः क्रियतां किं निर्गमनेन तत्राह—प्रतिक्रियेति । सर्वेषामिति । यैः प्रतिकर्तव्यं तेषामपीत्यर्थः ॥ १९ ॥ कथं धनादिवियोगः सोढुं शक्योऽत आह—येन चेति । अभिपन्नोऽभिग्रस्तः ॥ २० ॥ अत्रावस्थानमतिदैन्यमिति दर्शयन् वैराग्यमुत्पादयति—पितृभ्रात्रिति सप्तभिः । आत्मा च देहः ॥ २१ ॥ येन पुत्रा हतास्तेन भीमेन दत्तं पिण्डं गृहपाल इव । गृहपालः श्वा ॥ २२ ॥ निसृष्टः प्रक्षिप्तः । गरो विषम् । दूषिता अवमताः तद्दत्तैरन्नादिभिर्लब्धैरसुभिः कियत्प्रयोजनम् । न किंचिदित्यर्थः ॥ २३ ॥ ॥ ॥ ॥

१ 'नावेदयत्' इति पाठे नाकथयदित्यर्थः । २ 'देववत्स्वकैः' इति पाठः । ३ युधिष्ठिर इत्यादिसूतोक्तिः । ४ अत्र विजयध्वज्यां षोडश पद्य 'अथामन्त्र्याच्युतो बन्धून्निर्वर्त्यानुगतान्विभुः । अर्जुनोद्धवशैनेयैर्ययौ द्वारवतीं हयैः' इति विद्यते । ५ तत् कालातिक्रमणम् । 'तमभिप्रेत्य' इति पाठे तं विनाशकालमित्यर्थो ज्ञेयः । ६ भय मरणभयम् । ७ कलयति सर्वानाकलयतीति कालः सर्वेषां शरीरवियोगकरणाय प्राप्त इत्यर्थः । ८ येन कालरूपेण हरिणा । ९ 'भीमापवर्जितम्' इति पाठः । स एव पाठो युक्तः, टीकायां दत्तमित्यर्थकरणात् । १० अत्र स्मृतिः—'द्विपतोऽन्नं न चाश्नीयाद्द्विपन्तं नैव भोजयेत् । द्विपतां हि हविर्भुक्तं नेह नामुत्र तद्भवेत्' इत्युक्तत्वाद्गर्ह्यमेव जीवनमित्यर्थः ।

तस्यापि तवैवं दैन्यमनुभवतोऽपि परैति क्षीयते । अत एव धीरो भवेति ॥ २४ ॥ किंलक्षणो धीर इत्यपेक्षायामाह । गतस्वार्थं यशोधर्मादिशून्यम् । मुक्तबन्धनस्त्यक्ताभिमानः । क्व गत इत्यविज्ञाता गतिर्यस्य । स धीरः । प्राप्तदुःखस्य स्वयं सहनेन मुक्तिप्राप्तेः ॥ २५ ॥ नरोत्तमस्तु ततः प्रागेव कृतप्रतीकारः । स्वकात्स्वत एव । परतः परोपदेशतो वा ॥ २६ ॥ त्वं तु नरोत्तमो नाभूः, अत इदानीं धीरो भवेत्याह—अथेति । अर्वागर्वाचीनः । एष्यन्निलर्थः । गुणान् धैर्यदयादीन् विकर्षत्याच्छिनत्तीति तथा ॥ २७ ॥ आजमीढोऽजमीढवंशजः । प्रज्ञाचक्षुरन्धः । एवं बोधितः सन् । दृढिम्नश्चित्तदार्ढ्यात् । भ्रात्रा संदर्शितोऽध्वा बन्धमोक्ष-

तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः ॥ परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥ गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ॥ अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः ॥२५॥ यः स्वकात्परतो वेह जातनिर्वेद आत्मवान् ॥ हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ २६ ॥ अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ॥ इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७॥ एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधितो ह्याजमीढः ॥ छित्त्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसंदर्शिताध्वा ॥२८॥ पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चानुजगाम साध्वी ॥ हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव सत्संप्रहारः ॥२९॥ अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोभूमिरुक्मैः ॥ गृहं प्रविष्टो गुरुवन्दनाय न चापश्यत्पितरौ सौबलीं च ॥ ३० ॥ तत्र संजयमासीनं पप्रच्छोद्विग्नमानसः ॥ गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः ॥३१॥ अम्बा च हतपुत्रार्ता पितृव्यः क्व गतः सुहृत् ॥ अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्यया ॥ आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥३२॥ पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ॥ अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥ ॥ सूत उवाच ॥ कृपया स्नेहवैक्लव्यात्सूतो विरहकर्शितः ॥ आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३४ ॥ ॥ ॥

योमार्गो यस्य सः ॥ २८ ॥ सुबलस्य पुत्री गान्धारी साध्वी सुशीला हिमालयं प्रयान्तं पतिमनुजगाम । ननु कथं सा सुकुमारी हिमादिदुःखबहुलं हिमवन्तं गताऽत आह । न्यस्तदण्डानां प्रहर्षो यस्मिंस्तम् । दुःखदमपि केषांचित्प्रहर्षहेतुर्भवतीत्यत्र दृष्टान्तः । मनस्विनां शूराणां युद्धे सत्तीव्रः संप्रहारो यथा । पाठान्तरे सत्संप्रहारं युद्धं यथेति ॥ २९ ॥ कृतं मैत्रं मित्रदैवत्यं सन्ध्यावन्दनं येन । नत्वा संपूज्य । पितरौ विदुरधृतराष्ट्रौ ॥ ३० ॥ हे गावल्गणे गवल्गणस्य पुत्र संजय ॥३१॥ अकृतप्रज्ञे मन्दमतौ । शमलमपराधमाशंसमान आशङ्कमानः । भार्यया सह ॥३२॥ यावरक्षतां तौ । इतः स्थानात् ॥३३॥ कृपया स्नेहवैक्लव्याच्चातिपीडित

१ अथोदीचीमित्यग्रिमसप्तविंशश्लोकावतरणे धीरो भवेत्युक्तेरिदमग्रिममवतरणं चात्रासङ्गतमिवेतिभाति । २ प्राप्तेत्यत्र 'यं हि न व्यथयन्त्येते' इति भगवद्गीताद्वितीयाध्यायोक्तकथनेनार्थोऽनुसंधेयः । ३ 'वनमोक्षयोः' इत्यपि पाठः । ४ कृपणस्य दीनस्य 'कृपणः स तु विज्ञेयो योऽनालोचितपाचकः' इति । मीसपाचकस्य वा । ५ नेत्रयोरिति तृतीयार्थे षष्ठी । नेत्राभ्यां हीन इत्यर्थः । ६ सः भार्यया इति पदच्छेदः । ७ न्यस्तस्त्यक्तो दण्डो भूतद्रोहो यैस्तेषां सूऽहृदां योगिनां प्रहर्षकरम् । ८ शमलं अस्य मद्वधात्मकमपि पापं भवत्विति वाञ्छयेत्यर्थः ।

विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ॥ अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥ ॥ संजय उवाच ॥ [2]नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन ॥ गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥३६॥ अथाजगाम भगवान्नारदः सहतुम्बुरुः ॥ प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन्निव ॥३७॥ ॥ युधिष्ठिर उवाच ॥ नाहं वेद गतिं पित्रोर्भगवन्क गतावितः ॥ अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी ॥ कर्णधार इवापारे भगवान्पारदर्शकः ॥३८॥ अथाबभाषे भगवान्नारदो मुनिसत्तमः ॥ मा कंचन शुचो राजन्यदीश्वरवशं जगत् ॥ ३९ ॥ लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः ॥ स संयुनक्ति भूतानि स एव वियुनक्ति च ॥४०॥ यथा गावो नसि प्रोतास्तन्त्यां बद्धाः स्वदामभिः ॥ वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥४१॥ यथा क्रीडोपस्कराणां संयोगविगमौ विह ॥ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥४२॥ यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम् ॥ सर्वथा न हि शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥४३॥

आत्मेश्वरं धृतराष्ट्रमपश्यन् । विरहकर्शितश्च सूतः संजयो न प्रत्युत्तरमाह ॥ ३४ ॥ आत्मना बुद्ध्यात्मानं मनो विष्टभ्य धैर्ययुक्तं कृत्वा । प्रभोर्धृतराष्ट्रस्य ॥ ३५ ॥ गान्धार्याश्च । व्यवसितं निश्चितम् । यतो मुषितो वञ्चितोऽस्मीति ॥३६॥ एवं कंचित्कालं शोचति तस्मिन्नथ नारद आजगाम । अत्रास्ति क्वचित्पुस्तके पाठान्तरं तदुल्लङ्घ्य यथासंप्रदायं व्याख्यायते । शोकवेगादभ्यर्चयन्निवाह राजा नत्वभ्यर्चयत् 'शोकाक्रान्तः कृपाविष्टः श्रद्धया रहितः पुमान् ॥ गुरुदेवद्विजातीनां पूजनं न समाचरेत् ॥' इति स्मृतेः ॥ ३७ ॥ नाहं वेद वेद्मि । तपस्विनी दुःखयुक्ता । अपारे शोकार्णवे भगवांस्त्वमेव पारदर्शकः । अतो ब्रूहीति शेषः ॥३८॥ आदावेव यथावृत्तकथने शोकेन मूर्च्छितः पतेदिति प्रथमं तावच्छोकमुपशमयति । कंचन मा शुचो माशोचः । न केवलं तानेव । यद्यस्मादीश्वराधीनं जगत् ॥३९॥ तदेवाह—लोका इति । संयुनक्ति संयोजयति । वियुनक्ति वियोजयति च ॥४०॥ गावो बलीवर्दा नसि नासिकायां प्रोतास्तन्त्यां दीर्घतन्त्यां दामभिर्बद्धाः स्वामिनो बलिं वहन्ति यथा एवं वाक्तन्त्यां कर्तव्याकर्तव्यविधायकवेदलक्षणायां नामभिर्ब्राह्मणो ब्रह्मचारीत्यादिवर्णाश्रमलक्षणैर्बद्धाः परमेश्वरस्य बलिं तेन प्रेरिताः सर्वे वहन्तीत्यर्थः ॥ ४१ ॥ प्रवृत्तौ पारतन्त्र्यमुक्त्वा संयोगवियोगयोरप्याह—यथेति । क्रीडोपस्कराणां क्रीडासाधनानां ( दारुरचितमेषादीनाम् ) ॥ ४२ ॥ ईश्वराधीनत्वान्न शोकः कार्य इत्युक्तम् । शोकतत्त्वे च विचार्यमाणे निर्विषयोऽयं शोक इत्याह । यद्यदि लोकं जनं ध्रुवं जीवरूपेण । अध्रुवं देहरूपेण । न चेति । न ध्रुवं नाप्यध्रुवम् । शुद्धब्रह्मरूपेणानिर्वचनीयत्वेन वा उभयं वा चिज्जडांशतः । सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः । स्नेहादन्यत्र । स्नेह एव केवलं शोकहेतुः स चाज्ञानमूल इत्यर्थः ॥ ४३ ॥ ॥ ॥ ॥

१ पाठान्तर 'अभ्यर्चयन्मुनिम्' इत्येवंरूपमिति ज्ञेयम् । २ विजयध्वज्यां त्वत्र—'अहं च व्यंसिनो राजन्पित्रोर्वः कुलनन्दन । न वेद साध्व्या गान्धार्या मुषितोऽस्मि महात्मभिः' इति पाठः । ३ विगमो वियोगः । ४ वाक्तन्त्यामिति । वागेव तन्ती तिरश्चीना महती रज्जुस्तत्र बद्धाः, अथवा वाक् त्रयीरूपैव तन्ती तस्याम् । ५ नामभिर्ब्राह्मणक्षत्रियादिभिरिति प्राञ्चः । ६ चतुर्ष्वपीति । ध्रुवमध्रुवं वेति पक्षद्वयम् । न वा इत्युभयमिति पक्षद्वयम् । अयमर्थः—ध्रुवस्य नाशाभाव एव । अध्रुवस्य विनाशित्वमेव । न ध्रुवमिति ध्रुवमपि वक्तुं न शक्यते । अध्रुवमपि वक्तुं न शक्यते । उभयमिति चिद्रूपेण ध्रुवं देहाध्यासाज्जडरूपेणाध्रुवमिति दीपि० ।

तस्मान्मां विना कथं ते वर्तेरन्नित्यात्मनो मनसो वैक्लव्यं व्याकुलतां त्यज ॥४४॥ तत्र त्वद्देहतस्तेषां वृत्तिरेतत्तावन्नास्तीत्याह । कालो गुणक्षोभकः । कर्म जन्मनिमित्तम् । गुणा उपादानम् । तदधीनः पाञ्चभौतिको जडस्तद्विभागे नाशवांश्च । सर्पग्रस्तोऽजगरगिलितो यथाऽन्यं न रक्षति तद्वत् ॥ ४५ ॥ ईश्वरेण विहिता वृत्तिश्च सर्वतः सुलभैवेत्याह । अहस्तानि पश्वादीनि । अपदानि तृणादीनि । तत्र तेष्वहस्तादिष्वपि फल्गून्यल्पानि । एवं जीवः सर्वोऽपि जीवस्य सर्वस्य जीवनं जीविका । एतेनैव सर्वतो मृत्युग्रासत्वं चोक्तम् ॥४६॥ मोहनिवृत्त्यर्थं द्वैतस्यावस्तुत्वमाह । तदिदमहस्तसहस्तादिरूपं जगत् । स्वदृग्भगवानेव न ततः पृथक् । स चैक एव न तु नाना । ननु सजातीयविजातीयभेदे प्रत्यक्षे कुत एतत्तत्राह । आत्मनां भोक्तृणामात्मा स्वरूपम् । अतो न सजातीयभेदः । अन्तरोऽनन्तरश्च अन्तर्बहिश्च भोक्तृभोग्यरूपश्च भाति । अतो न विजातीयभेदोऽपि । नन्वेकः कथं तथा प्रतीयतेऽत आह । मायया बहुधा भाति तं पश्येति

तस्माज्जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः ॥ कथं त्वनाथाः कृपणा वर्तेरंस्ते च मां विना ॥४४॥ कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः ॥ कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथा परम् ॥ ४५ ॥ अहस्तानि सहस्तानामपदानि चतुष्पदाम् ॥ फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥ तदिदं भगवान्राजन्नेक आत्मात्मनां स्वदृक् ॥ अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा ॥४७॥ सोऽयमद्य महाराज भगवान्भूतभावनः ॥ कालरूपोऽवतीर्णोऽस्यामभवाय सुरद्विषाम् ॥४८॥ निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ॥ तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥४९॥ धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ॥ दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥५०॥ स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात् ॥ सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते ॥ ५१ ॥ स्नात्वाऽनुसवनं तस्मिन्हुत्वा चाग्नीन्यथाविधि ॥ अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः ॥ ५२ ॥ ॥ ॥६॥

॥४७॥ कासावस्तीदृशो महामायावी, द्वारकायामित्याह—सोऽयमिति । अस्यां भूम्याम् । अभवाय नाशाय ॥४८॥ तर्हि श्रीकृष्णोऽत्रास्तीत्यत्रैवास्थां मा कृथा इत्याह । तच्च देवानां कार्यं तेन निष्पादितं, केवलमवशेषं प्रतीक्षते । यदुकुलक्षयमिति हृदिस्थम् । ततो निजं धाम यास्यति ततो यूयमपि गच्छतेत्यर्थः । तच्च भूतमपि विदुरवदेव नावर्णयत् ॥४९॥ तदेवं शोकमास्थां च निवार्य जिज्ञासवे तस्मै यथावृत्तं कथयति—धृतराष्ट्र इति षड्भिः । हिमवतो दक्षिणे भागे ॥५०॥ तदपि कुत्रेत्याह—स्रोतोभिरिति । या वै प्रसिद्धा स्वर्धुनी सा आत्मानं यत्र सप्तधा व्यधात् । किमर्थम् । नाना पृथक् सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणां प्रीतये । अतएव तत्तीर्थं सप्तस्रोतो वदन्ति ॥५१॥ तत्र तेन कृतमष्टाङ्गयोगमाह—स्नात्वेति चतुर्भिः । तत्र स्नानं होमोऽब्भक्षणं चेति नियमा उक्ताः । भक्षस्थाने अपां स्वीकारादब्भक्षः । उपशान्त आत्मा यस्य सः । विगताः पुत्राद्येषणा यस्मादिति यमा उक्ताः ॥ ५२ ॥ ॥ ॥

१ शशपारावतपक्षिप्रभृतीनि विज० । २ फल्गूनि मनुष्यादीनि महतां राक्षसादीनां जीवनम् । अथवा फल्गूनि क्षुद्रजीवाः महतामजगरादीनां जीवनमितिज्ञेयम् । ३ 'वर्तेरन्वनमाश्रिताः' 'वर्तेरन् मामनाश्रिताः' इति पाठौ । ४ कालेति । सुरद्विषामभावायैव कालरूपः स्वयं तु परमानन्दरूप एवेत्यर्थः । ५ 'नाम्ना' इति पाठः स चासंबद्ध एव । ६ अत्रात्मशब्देन मनसो ग्रहणम् ।

जितासन इत्यादिना आसनप्राणायामप्रत्याहारा उक्ताः । हरिभावनयेति धारणोक्ता । ध्वस्ता रजःसत्त्वतमोरूपा मला यस्येति फलतो ध्यानमुक्तम् ॥ ५३ ॥ समाधिमाह—विज्ञानेति द्वाभ्याम् । आत्मानं मनोऽहङ्कारास्पदं स्थूलदेहाद्वियोज्य विज्ञानात्मनि बुद्धौ संयोज्यैकीकृत्य तं च विज्ञानात्मानं दृश्यांशाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य तं च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्याधारे आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य । घटाम्बरं घटोपाधेर्वियोज्य यथा महाकाशे प्रविलाप्यते तद्वत् ॥५४॥ व्युत्थानाभावमाह—ध्वस्तेति । अन्तर्गुणक्षोभाद्वा वहिरिन्द्रियविक्षेपाद्वा व्युत्थानं भवेत्, तदुभयं तस्य नास्ति। यतो ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य सः । निरुद्धानि करणानि चक्षुरादीन्याशयो मनश्च यस्य सः । अतएव निवर्तितोऽखिल आहारो भोज्यमिन्द्रियैर्विषयाहरणं वा येन सः । स्थाणुरिव निश्चल आस्ते ॥५५॥ तथाभूतमप्यानेतुमुद्यतं प्रत्याह—तस्येति । अन्तरायो विघ्नः । मैवाभूरित्यडागमश्छान्दसः । दर्शनमपि तावत्कुर्यामित्युद्यतं प्रत्याह ।

जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ॥ हरिभावनया ध्वस्तरजःसत्त्वतमोमलः ॥५३॥ विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ॥ ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥५४॥ ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ॥ निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः ॥५५॥ तस्यान्तरायो मैवाभूः संन्यस्ताखिलकर्मणः ॥ स वा अद्यतनाद्राजन्परतः पञ्चमेऽहनि ॥ कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥५६॥ दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ॥ बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥ ५७ ॥ विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन ॥ हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥५८॥ इत्युक्त्वाथारुहत्स्वर्गं नारदः सहतुम्बुरुः ॥ युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥५९॥ ॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे त्रयोदशोऽध्यायः ॥१३॥ ॥ छ ॥ ॥ सूत उवाच ॥ संप्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ॥ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥ व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः ॥ ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥ २ ॥ ॥ ॥ छ ॥

स वै अद्यतनादह्नः परत उत्तरत्र । स्वं स्वाधीनम् । तर्हि तद्दाहार्थं गमिष्यामि नेत्याह—तच्चेति ॥५६॥ तर्हि गान्धार्यानयनाय गमिष्यामि नेत्याह । पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निना सह गार्हपत्यादिभिर्दह्यमाने तस्य पत्नी बहिःस्थिता सती तं पतिमन्वग्निं वेक्ष्यति प्रवेक्ष्यति ॥५७॥ तर्हि विदुरानयनार्थं गन्तव्यमेव नेत्याह । विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सुगत्या हर्षस्तन्मृत्युना शोकश्च ताभ्यां युक्तस्तस्मात्स्थानात्तीर्थानि सेवितुं गन्ता गमिष्यति ॥ ५८ ॥ शुचः शोकान् ॥ ५९ ॥ ॥ इति श्रीमद्भा० प्र० भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशङ्कितः ॥ अश्रणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥१॥ कृष्णस्य चेति चकारेणाभिप्रायं च ज्ञातुम् ॥१॥ कतिचित्सस । तदा कालातिक्रमेऽपि ततो द्वारकातो 

१ अनेन प्रकृत्यधिष्ठातृत्वं दूरीकृतमित्यर्थः । २ स्थाणुरिवेति । वहिःस्थितवाय्वाद्यचालने दृष्टान्तः 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं' इति श्रुतेस्तत्तुल्यो वा जात इत्यर्थः । ३ 'स्थाणुरिवाधुना' इति पाठः । ४ अश्रृणोदिति । अनुमितवानित्यर्थः । धातूनामनेकार्थत्वात् । अनुमानं तु चरमश्लोके द्रष्टव्यम् ।

नायात् नागतः । निमित्तान्युत्पातान् । कुरूद्वहो युधिष्ठिरः ॥२॥ रौद्रां घोराम् । तदेवाह । विपर्यस्ता ऋतुधर्मा यस्मिंस्तस्य । वार्तां जीविकाम् । क्रोधलोभानृ-
तैर्युक्त आत्मा येषाम् ॥३॥ जिह्मप्रायं कपटबहुलम् । व्यवहृतं व्यवहारम् । शाठ्यं वञ्चनं तन्मिश्रं सौहृदं सख्यम् । पित्रादीनां स्वप्रतियोगिभिः कल्कनं कलहादि
॥४॥ अत्यरिष्टान्यत्यन्तमशुभानि दृष्ट्वा । नृणां लोभाद्यधर्मप्रकृतिं च दृष्ट्वा । अनुजं भीमम् ॥ ५ ॥ ६ ॥ वेति वितर्के । कस्माद्धेतोर्नायातीत्यहं न वेद्मि ॥७॥ अपि
किम् । यदा आत्मन आक्रीडं क्रीडासाधनमङ्गं मनुष्यनाट्यमुत्स्रष्टुमिच्छति स कालः प्राप्तः ॥ ८ ॥ अस्माकं सर्वपुरुषार्थत्वे हेतुः श्रीकृष्णोऽतस्तद्वियोगं विनाऽ-
निष्टं न स्यादित्याशयेनाह । यस्मात् श्रीकृष्णाद्धेतोः । एतच्चोपरिष्टादर्जुनः स्पष्टीकरिष्यति । लोकाश्च यज्ञकरणानुरूपा यस्यानुग्रहात् ॥ ९ ॥ अदूरात्संनिहि-

कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः ॥ पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥ जिह्मप्रायं व्यवहृतं
शाठ्यमिश्रं च सौहृदम् ॥ पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम् ॥ ४ ॥ (कन्याविक्रयिणं[3] तातं सुतं पित्रोरपोष-
कम् ॥ ब्राह्मणान्वेदविमुखान् शूद्रान्वै ब्रह्मवादिनः ॥ ) निमित्तान्यत्यरिष्टानि काले त्वनुगते[4] नृणाम् ॥ लोभाद्यधर्म-
प्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥ ॥ युधिष्ठिर उवाच ॥ संप्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षया ॥ ज्ञातुं च पुण्य-
श्लोकस्य कृष्णस्य च विचेष्टितम् ॥६॥ गताः सप्ताधुना मासा भीमसेन तवानुजः ॥ नायाति कस्य वा हेतोर्नाहं वेदे-
दमञ्जसा ॥७॥ अपि देवर्षिणा दिष्टः स कालोऽयमुपस्थितः ॥ यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥ यस्मान्नः
संपदो राज्यं दाराः प्राणाः कुलं प्रजाः ॥ आसन्सपत्नविजयो लोकाश्च[5] यदनुग्रहात् ॥९॥ पश्योत्पातान्नरव्याघ्र दिव्या-
न्भौमान्सदैहिकान् ॥ दारुणान् शंसतोऽदूराद्भयं[6] नो बुद्धिमोहनम् ॥१०॥ ऊर्वक्षिबाहवो[7] मह्यं स्फुरन्त्यङ्ग पुनः पुनः ॥
वेपथुश्चापि हृदय आराद्दास्यन्ति विप्रियम् ॥ ११ ॥ शिवैषोद्यन्तमादित्यमभिरौत्यनलानना ॥ मामङ्ग सारमेयोऽयम-
भिरौति ह्यभीरुवत्[8] ॥१२॥ शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ॥ वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥१३॥

तम् । नोऽस्माकम् । आशंसत उत्पातान् ॥ १० ॥ दैहिकानाह—ऊर्विति । ऊर्वादयो वामाः स्फुरन्ति । वेपथुः कम्पश्च हृदये वर्तते । एते मह्यमारात्सन्निहितं
विप्रियं दास्यन्ति ॥ ११ ॥ भौमानाह सार्धैस्त्रिभिः । शिवा क्रोष्ट्री उद्यन्तं आदित्यमभिरौत्युद्यत्सूर्याभिमुखं क्रोशति । अनलानना अग्निं मुखेन वमन्ती । अङ्ग हे
भीम । मामभिलक्ष्य सारमेयः श्वाऽभिरौति प्लुतं भषति । अभीरुवन्निःशङ्कम् ॥ १२ ॥ शस्ता गवादयो मां सव्यं वामं कुर्वन्ति । अपरे गर्दभाद्याः प्रदक्षिणं
कुर्वन्ति । वाहानश्वान् ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

१ निमित्तानि घोररूपाण्यप्रियकराणि ददर्श । सिद्धां० । २ अङ्गं स्वधामगमनेन विराड्रूपं भूमेर्विक्षेपयितुमिच्छतीत्यर्थः । ३ अयं पाठोऽधिको वीरराघवसिद्धान्तप्रदीपयोः ।
४ पूर्वकालवैलक्षण्यद्योतकः तुशब्दः । ५ लोकाः स्वर्गादय उत्तमलोकाः वशीकृता आसन् । ६ 'द्धारात्' इति पाठः । ७ ऊर्वक्षीति प्राण्यङ्गत्वेऽपि नैकवद्भावो भिन्नस्वभावत्वेन दोषख्याप-
नार्थः । ८ 'अभिरोदित्यभीरुवत्' इति पाठः । अभिरोदिति प्लुतं भषतीति तत्रार्थः । ९ उद्यदुद्गच्छन्तं प्रकाशमानमिति भावः । १० प्लुतं दीर्घं भषति स्वजातीयशब्दविशेषं करोतीत्यर्थः ।

अयं कपोतो मृत्युदूतो मृत्युसूचकः । उलूको घूकः । प्रत्युलूकस्तत्प्रतिपक्षो घूकः काको वा । कुह्वानैः कुत्सितशब्दैर्विश्वं शून्यं कर्तुमिच्छतः ॥१४॥ धूम्रा धूसरा दिशः परिधयोऽग्निमिव लोकमावृण्वन्ति । दिव्यानाह सार्धाभ्याम् । निर्घातो निरभ्रवज्रपातः । स्तनयित्नवोऽत्र गर्जितानि तैः सह ॥ १५ ॥ तमो विशेषेण सृजन् । असृग्रक्तम् ॥ १६ ॥ ग्रहाणां मर्दं युद्धम् । भूता रुद्रानुचरास्तेषां गणैः संकुलैर्व्यामिश्रैः प्राणिभिः सहितैः । रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव च पश्येति ॥ १७ ॥ पुनर्भौमानाह—नद्य इति सार्धैस्त्रिभिः । प्राणिनां मनांसि च ॥ १८ ॥ दुह्यन्तीति कर्मकर्तर्यात्मनेपदम् । न प्रस्नुवन्तीत्यर्थः ॥ १९ ॥ दैवतानि

मृत्युदूतः कपोतोऽयमुलूकः कम्पयन्मनः ॥ प्रत्युलूकश्च कुह्वानैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥ धूम्रा दिशः परिधयः कम्पते भूः सहाद्रिभिः ॥ निर्घातश्च महानासीत्साकं च स्तनयित्नुभिः ॥ १५ ॥ वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ॥ असृग्वर्षन्ति जलदा बीभत्समिव सर्वतः ॥ १६ ॥ सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ॥ ससंकुलैर्भूतगणैर्ज्वलिते इव रोदसी ॥१७॥ नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ॥ न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥ न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः ॥ रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे ॥ १९ ॥ दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च ॥ इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ॥ भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥२०॥ मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ॥ अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥२१॥ इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ॥ राज्ञः प्रत्यागमद्ब्रह्मन्यदुपुर्याः कपिध्वजः ॥ २२ ॥ तं पादयोर्निपतितमयथापूर्वमातुरम् ॥ अधोवदनमब्बिन्दून्मुञ्चन्तं नयनाब्जयोः ॥ २३ ॥ विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ॥ पृच्छति स सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥ ॥ युधिष्ठिर उवाच ॥ कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ॥ मधुभोजदशार्हार्हाः सात्वतान्धकवृष्णयः ॥ २५ ॥

प्रतिमाः । अघं दुःखम् ॥२०॥ एतैर्महोत्पातैः कृत्वा । न विद्यतेऽन्येषु पुरुषेषु श्रीर्वज्राङ्कुशादिशोभा येषां तैर्भगवतः पदैर्हीना भूरित्यहं मन्ये ॥ २१ ॥ तस्य राज्ञ इत्येवं दृष्टान्यरिष्टानि येन तेन चेतसा चिन्तयतः सतः ॥ २२ ॥ अयथापूर्वं निपतितम् । तदेवाह—आतुरमित्यादि । अपां बिन्दूनश्रूणि नेत्राभ्यां विसृजन्तमित्यर्थः ॥ २३ ॥ उद्विग्नं कम्पितं हृदयं यस्य सः । विच्छायं विगतकान्तिम् ॥ २४ ॥ स्वजना बान्धवाः ॥ २५ ॥

---

१ परिधय इति । यज्ञाग्निं यथा परिधयो यज्ञाग्निवेष्टनात्मकृतकुशा आवरणं कुर्वन्ति तद्वदित्यर्थः । मूले परिधय इति लुप्तोपमा । तत्प्रयोजकं साधर्म्यं चावरकत्वेनेत्येतत्फलितम् । २ अत्र पुनर्भौमानाहेति स्वाम्युक्त्याभासेन मनसः पार्थिवत्वे दर्शितेऽपि शास्त्रान्तरेण तद्विरोधो नाशङ्कनीयः । मनसोऽपञ्चीकृतपञ्चमहाभूतसत्त्वकार्यत्वेऽपि 'अन्नमशितं त्रेधा विधीयते' इत्यारभ्य 'अन्नमयं हि सोम्य मनः' ( छा० ६।५ ) इत्यन्तेन तस्यान्नोपचिततया भौतिकत्वदर्शनात् । दीपि० । ३ अत्र क्षुभिता इत्यस्य लिङ्गव्यत्ययेन क्षुभितानीति प्रयोज्यम् । ४ 'द्वाह् शून्यमिच्छतः' इति पाठे विश्वमित्यस्याध्याहारः । 'कुह्वानैर्विश्वं वै शून्यमिच्छतः' इत्ययं पाठः साधुरेव । ५ ससंकुलैरित्यत्र स इति स एव त्वमित्यर्थः इति क्रम० । ६ दर्शयन्ति दर्शयिष्यन्ति । वर्तमानसामीप्ये वर्तमानप्रयोगः । ७ 'अनन्यपुरुषश्रीभि' इति पाठः । ८ मधुभोजादयः सर्वे यादवभेदास्तेषां संक्षिप्तपरिचयो नवमस्कन्धीयत्रयोविंशाध्याये, विशेषस्तु महाभारते द्रष्टव्य इति ।

किं वक्ष्यतीति शङ्कया व्यवहितक्रमेण पृच्छति—शूर इत्यादिना । मारिषो मान्यो मातामहः शूरो नाम यादवः कुन्त्याः पिता । आनकदुन्दुभिर्वसुदेवः ॥ २६ ॥ किं वक्ष्यतीति ... ॥ आहुक उग्रसेनः । असन् पुत्रो यस्य । अत एव जीवेमा- स्वसारः परस्परम् । वसुदेवक्षेमेण तासामपि क्षेमं पृष्टमेव, तथापि पृथक् पृच्छति—स्वयमिति ॥२७॥ आहुक उग्रसेनः । असन् पुत्रो यस्य । अत एव जीवेमा- त्रमेव पृष्टम् । अनुजश्च देवकः । हृदीकः सुतः कृतवर्मा । जयन्तादयः कृष्णभ्रातरः ॥ २८ ॥ २९ ॥ सर्ववृष्णीनां मध्ये महारथः । गम्भीररयो युद्धे महावेगः । वर्धते मोदत इत्यर्थः ॥ ३० ॥ कृष्णस्यापत्यानि कार्ष्णयस्तेषु प्रवराः ॥ ३१ ॥ सुनन्दनन्दौ शीर्षण्यौ मुख्यौ येषां ते ॥ ३२ ॥ ३३ ॥ भगवति सुखमास्त इति प्रश्न-

शूरो मातामहः कच्चित्स्वस्त्यास्ते वाथ मारिषः ॥ मातुलः सानुजः कच्चित्कुशल्यानकदुन्दुभिः ॥ २६ ॥ सप्त स्वसारस्त-त्पत्न्यो मातुलान्यः सहात्मजाः ॥ आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥२७॥ कच्चिद्राजाहुको जीवत्यसत्पुत्रो॑ऽस्य चानुजः ॥ हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥२८॥ आसते कुशलं कच्चिद्ये च शत्रुजिदादयः ॥ कच्चिदास्ते सुखं रामो भगवान्सात्वतां प्रभुः ॥ २९ ॥ प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ॥ गम्भीररयोऽनिरुद्धो वर्धते भगवानुत ॥ ३० ॥ सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ॥ अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥ तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ॥ सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥ अपि स्वस्त्यासते सर्वे रामकृष्णभुजा-श्रयाः ॥ अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥ भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ॥ कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥ मङ्गलाय च लोकानां क्षेमाय च भवाय च ॥ आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥ यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः ॥ क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥ यत्पादशुश्रूषणमुख्य-कर्मणा सत्यादयो॑ द्व्यष्टसहस्रयोषितः ॥ निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥ यद्बाहु-दण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः ॥ अधिक्रमन्त्यङ्घ्रिभि॑राहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् ३८

स्यानौचित्यमाशङ्क्याह—पुर इत्यादि ॥ ३४ ॥ भगवतोऽत्रावस्थाने हि लोकानां मङ्गलं नान्यथेत्याशयेनाह चतुर्भिः । मङ्गलाय शुभाय । क्षेमाय लब्धपालनाय । भवायोद्भवाय । अनन्तसखो बलभद्रसहायः ॥ ३५ ॥ अर्चिताः सर्वैः पूजिताः । परमानन्दं यथा भवति तथा । महापुरुषो विष्णुस्तदीया म॑हापौरुषिका वैकु-ण्ठनाथानुचरा इव ॥ ३६ ॥ यस्य पादशुश्रूषणमेव मुख्यं तपआदिभ्यः श्रेष्ठं यत्कर्म तेन । सत्यभामादयः संख्ये युद्धे श्रीकृष्णबलेन त्रिदशान्देवान्निर्जित्य । तदा-शिषो देवभोग्यान्पारिजातादीन् । वज्रायुधस्य वल्लभा शची तस्या उचिताः ॥ ३७ ॥ यद्बाहुदण्डप्रभावोपजीविनः सुधर्मामङ्घ्रिभिरधिक्रमन्ति स गोविन्दः

१ जीवनप्रश्ने हेतुरसत्पुत्रत्वाल्लज्जितोऽसौ कदाचिद्देहं वा त्यक्तवानित्यभिप्रायेण । २ सत्याशब्दः सत्यभामावाचकः 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति भामेत्युत्तर-पदस्य लुप्तत्वादिति दीपि० । ३ 'अंह्रिभिः' इति पाठोऽपि युक्त एव । उणादिषु वंक्र्यादयश्चेत्यपि निपातनात् । ४ अथवा महद्भिः पौरुषैर्विजयिन इवेति वा । यद्वा अनन्वयालंकारः ।

सुखमास्ते इति गतपञ्चमश्लोकेनान्वयः ॥ ३८ ॥ इदानीं तस्यैव कुशलं पृच्छति—कच्चिदिति षड्भिः । अनामयमारोग्यम् । न लब्धो मानो येन बन्धुभ्यः सकाशात् । किंवा तैः प्रत्युतावज्ञातस्तिरस्कृतः । यतश्चिरोषितो बहुकालं तत्र स्थितः ॥ ३९ ॥ अभावैरिति छेदः । प्रेमशून्यैः । अमङ्गलैः परुषैः शब्दादिभिर्नाभिहतो न ताडितोऽसि किंम् । यद्वा अर्थिभ्यः किमपि दास्यामीति नोक्तं किम् । यद्वा आशया सह यथा आशा भवति तथा दास्यामीति प्रतिश्रुतं यत्तन्न दत्तं किंम् ॥ ४० ॥ अन्यद्वा शरणागतं सत्त्वं प्राणिमात्रं न त्यक्तवानसि किम् । यतस्त्वं पूर्वं शरणप्रद आश्रयप्रदः ॥ ४१ ॥ अगम्यामिति छेदः । निन्दितां स्त्रियं नागमः किं न गतवानसि । असत्कृतां मलिनवस्त्रादिना नागमः किम् । नोत्तमैरनुत्तमैः समैरित्यर्थः । असमैरधमैर्वा किं न पराजितोऽसीत्यर्थः ॥ ४२ ॥

कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ॥ अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥ कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः ॥ न दत्तमुक्तमर्थिभ्य आशया यत्प्रतिश्रुतम् ॥ ४० ॥ कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ॥ शरणोपसृतं सत्त्वं नात्याक्षीः चरणप्रदः ॥ ४१ ॥ कच्चित्त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ॥ पराजितो वाथ भवान्नोत्तमैर्नासमैः पथि ॥ ४२ ॥ अपिस्वित्पर्यभुङ्क्थास्त्वं संभोज्यान्वृद्धबालकान् ॥ जुगुप्सितं कर्म किंचित्कृतवान्न यदक्षमम् ॥ ४३ ॥ कच्चित्प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना ॥ शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥ ॥ इति श्रीम० म० प्र० युधिष्ठिरवितर्को नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥

॥ सूत उवाच ॥ एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञाऽऽविकल्पितः ॥ नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥ शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ॥ विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुम् ॥ २ ॥ कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः ॥ परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

संभोजनार्हान्वृद्धान्बालकांश्च कच्चित्पर्यभुङ्क्थाः त्यक्त्वा भुक्तवानसि किम् । अक्षमं कर्तुमयोग्यं यत्तन्न कृतवानसि किम् ॥ ४३ ॥ नित्यं सदा प्रेष्ठतमेन हृदयेनान्तरङ्गेण स्वबन्धुना श्रीकृष्णेन रहितः शून्योऽस्मीति मन्यसे । अन्यथा ते रुक् मनःपीडा न घटेत ॥ ४४ ॥ ॥ इति श्रीम० प्र० भावार्थदीपिकायां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति ॥ आरुरोह नृपः स्वर्गमिति पञ्चदशेऽब्रवीत् ॥ १ ॥ कृष्णोऽर्जुनः आविकल्पित इति छेदः । नानाशङ्कास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः । प्रतिभाषितुं नाशक्नोदित्युत्तरेणान्वयः । तत्र हेतवः—कृष्णविश्लेषेण कर्शितः कृशः कृतः ॥ १ ॥ शोकेन हेतुना । वदनं च हृच्च ते एव सरोजे । शुष्यती वदनहृत्सरोजे यस्य सः । हता प्रभा तेजो यस्य सः ॥ २ ॥ शुचः शोकाश्रूणि यान्युद्गच्छन्ति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिना आमृज्य परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धमधिकं यत्प्रेमौत्कण्ठ्यं तेन कातरो व्याकुलः सन्नृपमि-

१ अपित्वभिहत एवेत्यर्थः । २ यद्वा आशया 'चतुर्थ्यर्थे बहुलं छन्दसि' इति आशायै इत्यप्यर्थः । ३ स्नानादिसत्काररहिता एवमपि गम्यामित्यर्थः । ४ अत्र पद्ये ताततेति द्विःसंबोधनमादरातिशयद्योतनायेति ज्ञेयम् । ५ अत्र 'उपेक्ष्यातिथिवृद्धांश्च गर्भिण्यातुरकन्यकाः' इत्यर्धमधिकं क्वचित् । ६ अत्र परीत्यन्वय वर्जनार्थम् । ७ अतः केनचिदुक्तान्यतमेन हेतुना भवितव्यमित्यर्थः । ८ धुरमिति विपुलराज्यभारमित्यर्थः । ९ समुन्नद्धाभ्यां वृद्धाभ्यां प्रणयौत्कण्ठ्याभ्यां स्नेहवैकल्याभ्यां कातरो विह्वल इति वा ।

त्याहेत्युत्तरेणान्वयः ॥३॥ सख्यं हितैषिताम्[1] । मैत्रीमुपकारिताम् । सौहृदं सुहृत्त्वं चात् संवन्धितां च । वाष्पेण कण्ठावरोधाद्गद्गदया ॥ ४ ॥ येन मां वञ्चयता ।
देवान्विस्मापयति यत् ॥५॥ यस्य क्षणवियोगेनेत्यादि यच्छब्दानां तेनाहमद्य मुषित इति सैप्तमश्लोकस्थेन तच्छब्देन संवन्धः । प्रियस्याप्यप्रियत्वे दृष्टान्तः—
उक्थेन प्राणेन । एष पित्रादिः ॥ ६ ॥ श्रीकृष्णोपकाराननुस्मरति—यत्संश्रयादिति दशभिः । यस्य संश्रयाद्बलात् स्मरेण कामेन दुर्मदानामतिमत्तानां तेजः
प्रभावो हृतं धनुर्ग्रहणेनैव । पश्चात्तद्धनुः सज्जीकृतं च । तेन च मत्स्यो यन्त्रोपरि भ्रमन्विद्धः । ततस्तान्विजित्य द्रौपदी प्राप्ता च ॥ ७ ॥ उ इति विस्मये ।
खाण्डवमिन्द्रस्य वनमग्नयेऽदां दत्तवानस्मि । खाण्डवदाहे रक्षितेन मयेन कृता च सभा लब्धा अद्भुतशिल्परूपा माया यस्यां सा । ते अध्वरे यागे राज-
सूये ॥ ८ ॥ अनन्तरश्लोको विगीत[3]स्तथापि व्याख्यायते । नृपशिरःस्वङ्घ्रिर्यस्य तं जरासन्धं तवानुजो भीमो मखार्थमहन् हतवान् । तन्निर्जयं विना राजसूय-

सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ॥ नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥ ॥ अर्जुन उवाच ॥
वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ॥ येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥ यस्य क्षणवियोगेन
लोको ह्यप्रियदर्शनः ॥ उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥ यत्संश्रयाद्द्रुपदगेहमुपागतानां राज्ञां
स्वयंवरमुखे स्मरदुर्मदानाम् ॥ तेजो हृतं खलु मयाभिहतश्च मत्स्यः सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥ य-
त्सन्निधावहमु खाण्डवमग्नयेऽदामिन्द्रं च सामरगणं तरसा विजित्य ॥ लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्यो-
ऽहरन्नृपतयो बलिमध्वरे ते ॥ ८ ॥ यत्तेजसा नृपशिरोङ्घ्रिमहन्मखार्थे आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः ॥ तेना-
हृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन्बलिमध्वरे ते ॥९॥ पत्न्यास्तवाधिमखकॢप्तमहाभिषेकश्लाघिष्ठचारु
कबरं कितवैः सभायाम् ॥ स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यैस्तत्स्त्रियोऽकृत हतेशाविमुक्तकेशाः ॥ १० ॥

मखानुपपत्तेः । गजायुतस्येव सत्त्वमुत्साहशक्तिर्वीर्यं वलं च यस्य सः । तं हत्वा प्रमथनाथो महाभैरवस्तस्य मखाय ये राजानस्तेनाहृतास्ते च यद्यस्मान्मोचि-
तास्तत्तस्मात्तेऽध्वरे वलिमानीतवन्तः ॥ ९ ॥ यैः कितवैर्दुःशासनादिभिस्तव पत्न्याः कवरं विकीर्योन्मुच्य स्पृष्टमाकृष्टं तेषां स्त्रियो हतेशा अत एव वैधव्याद्वि-
मुक्तकेशा अकृत चकार । कथंभूतं कवरम् । अधिमखं राजसूयमधिकृत्य कॢप्तो रचितो यो महाभिषेकस्तेन श्लाघ्यतमम् । चारु रम्यम् । यत्स्मरणात्तदानी-
मेवास्मत्कृपया प्राप्तस्य श्रीकृष्णस्य नमने पादयोः पतितान्यश्रूणि मुखाद्यस्याः पत्न्याः । पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापे-
क्षितत्वात् ॥ १० ॥ ॥ ॥ ॥ ॥

१ उपकारित्वे सति प्रत्युपकारानपेक्षताम् इति सिद्धां० । २ यत्तेजसेत्यादेः नवमश्लोकस्य प्रक्षिप्तत्वेन व्याख्यात्र समतत्वाभावात्सप्तमेत्युक्तम् । ३ विगीत इति प्रक्षिप्त इत्यर्थः । ४ वञ्चि-
तोऽस्मि रहितोऽस्मीत्यर्थः । ५ अर्थात्पशुरूपेणेत्यर्थः । ६ यस्तवानुज इति पूर्वस्यैवानुषङ्गः । 'यस्तत्स्त्रियः' इति पाठे तु सुस्थमेव । ७ पादयोः पतिता चासौ अश्रुमुखी च तस्या इति वा ।
अश्रुशब्द उभयलिङ्गोऽप्यस्ति ।

शिष्याणामयुतस्याग्रे तत्पङ्क्तौ भुङ्क्ते यस्तस्माद्दुर्वाससो हेतोररिणा दुर्योधनेन रचितं यद्दुरन्तं कृच्छ्रं शापलक्षणं तस्मात्सकाशान्नोऽस्मान्वनमेत्य जुगोप । किं कृत्वा । शाकमेवान्नं तस्मिन्नेव पात्रेऽवशिष्टमुपयुज्य जग्ध्वा । यत उपयोगात्सलिले विनिमग्नो मुनीनां सङ्घस्त्रिलोकीं तृप्तामममंस्त । एवं हि भारते कथा—'कदाचिद्दुर्वाससो दुर्योधनेनातिथ्यं कृतम् । तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्वाससः शापात्पाण्डवा नश्येयुरिति मनसि विधाय दुर्योधनेनोक्तम् । युधिष्ठिरोऽस्मत्कुलमुख्यः, अतस्तस्यापि भवतैवमेव शिष्यायुतसहितेनातिथिना भवितव्यं, किंतु द्रौपदी यथा क्षुधा न सीदेत्तथा तस्यां भुक्तवत्यां तद्गृहं गन्तव्यमिति । ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसङ्घोऽघमर्षणाय जले निममज्ज । तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णोऽङ्कस्थां रुक्मिणीं हित्वा तत्क्षणमेव भक्तवत्सलतया चागतः । तया चावेदिते वृत्तान्ते भगवतोक्तं—हे द्रौपदि, अहं च बुभुक्षितोऽस्मि प्रथमं मां भोजयेति । तया चातिलज्जयोक्तं—स्वामिन्, मद्भोजनपर्यन्तमक्षयमप्यन्नं सूर्यदत्तस्थाल्यां मया च सर्वान्संभोज्य भुक्तमतो नास्त्यन्नमिति ।

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग्यः ॥ शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्ताममंस्त सलिले विनिमग्नसङ्घः ॥ ११ ॥ यत्तेजसाऽथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ॥ अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ १२ ॥ तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः ॥ सेन्द्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥ यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमतीर्यसत्त्वम् ॥ प्रत्याहृतं बहुधनं च मया परेषां तेजास्पदं मणिमयं च हृतं शिरोभ्यः ॥ १४ ॥ ॥ ॥ ॥

तथाप्यतिनिर्बन्धेन स्थालीमानाय्य तत्कण्ठलग्नं किंचिच्छाकान्नं प्राश्योक्तमनेन विश्वात्मा भगवान्प्रीयताम् । अथ भोक्तुं मुनिसङ्घमाह्वयेति भीमं प्रहितवान् । स च तावतातितृप्तो वृथापाकभयेन पलायितः' इति ॥११॥ गिरिजासहितो विस्मापितः सन्निजं पाशुपतमस्त्रम् । अन्येऽपि लोकपाला निजान्यस्त्राण्यदुः । अन्यदप्याश्चर्यमाह—अमुनेति । महत इन्द्रस्यासनार्धम् ॥ १२ ॥ तत्रैव स्वर्गे क्रीडतो गाण्डीवं लक्षणं चिह्नं यस्य तत् । अरातयो निवातकवचा दैत्यास्तेषां वधार्थमाश्रितवन्तः । येनानुभावितं प्रभावयुक्तं कृतम् । हे आजमीढ युधिष्ठिर । तेन मुषितो वञ्चितोऽस्मि । कथंभूतेन । भूम्ना निजमहिमावस्थानेन ॥ १३ ॥ यद्बान्धव इत्यादिश्लोकत्रयस्यापि तेन मुषितोऽहमिति पूर्वेणैव संबन्धः । श्रीकृष्णबान्धव एक एवाहं कौरवसैन्याब्धिं नास्त्यन्तो गाम्भीर्येण, पारं च देशतो यस्य तं ततरे तीर्णवानुत्तरगोग्रहे । अतीर्याणि दुस्तराणि सत्त्वानि तिमिङ्गिलादीनि भीष्मादिरूपाणि यस्मिन् । परैर्नीतं गोधनं प्रत्याहृतम् । परेषां च शिरोभ्यः सकाशात्तेजास्पदं प्रभावस्यास्पदमुष्णीषरूपं मणिमयं मुकुटरत्नरूपं च बहुधनं तान्मोहनास्त्रेण मोहयित्वा हृतम् । यद्बान्धवेन मया ॥ १४ ॥ ॥

१ 'उपभुज्य' इति पाठः क्वचित् । २ अत्र महदिति पृथक् पदं युक्तम् । अन्यथा 'आन्महत' इत्यात्वापत्तिः स्यात् । आर्षत्वात्तदभावे महत्यासने इत्यप्यन्वेतुं शक्यम् । ३ अत्र पद्ये ततरे इत्यत्र 'तॄफलभजत्रपश्च' इत्येत्वाभ्यासलोपाभाव आत्मनेपदं, अतीर्यसत्त्वं, तेजास्पदमिति चार्षम् । 'ततराहम्' 'अतार्यसत्त्वम्' 'तेजःपदम्' इति पाठाः । ४ भूम्ना अतिशयेनेति वि. च. । भूम्नाऽपरिमितानन्दरूपेण श्रीकृष्णेनेति वीर० ।

अदभ्रा अनल्पा ये राजन्यवर्यास्तेषां रथमण्डलैर्मण्डितासु भीष्मादीनां चमूषु सारथिरूपेण ममाग्रेचरः सन् हे विभो, तेष रथयूथपानामायुरादीनि यो दृशा दृष्ट्वैवाच्र्छेत् हृतवान् । मनांसीत्युत्साहादिशक्तिम् । सहो बलम् । ओजः शस्त्रादिकौशलम् ॥ १५ ॥ यस्य दोःषु भुजेषु मा मां प्रणिहितं स्थापितं तैरेव गुर्वादिभिर्निरूपितानि प्रयुक्तान्यस्त्राणि न स्पृशन्ति स्म । गुरुर्द्रोणः । त्रिगर्तस्त्रिगर्तदेशाधिपतिः सुशर्मा । शलः शल्यः । सैन्धवः सिन्धुदेशाधिपतिर्जयद्रथः । बाह्लिकः शन्तनोर्भ्राता । अमोघो महिमा येषां तथाभूतान्यपि । पाठान्तरेऽपि स एवार्थः । प्रतीकाराकरणेऽप्यस्पर्शे दृष्टान्तः—नृहरिदासं प्रह्लादमिवेति ॥ १६ ॥ स्वापराधमनुस्मरन् संतप्यमान आह । सौत्ये सारथ्ये कुमतिना मे मया स वृतः । कुमतित्वमेवाह—आत्मद इत्यादिना । अभवाय मोक्षाय । भव्याः श्रेष्ठाः । श्रान्ता वाहा अश्वा यस्य तं माम् । जयद्रथवधे हि जलपानं विनाऽश्वाः श्रान्तास्ततो रथादवतीर्य बाणैर्भुवं भित्त्वा मया जलं संपादितम् । तदा यस्यानुभावेन

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु ॥ अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥१५॥ यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैन्धवबाह्लिकाद्यैः ॥ अस्त्राण्य-मोघमहिमानि[1][2] निरूपितानि नो पस्पृशुर्नृहरिदासमिवासुराणि[3] ॥१६॥ सौत्ये[4] वृतः कुमतिनात्मद ईश्वरो मे यत्पाद-पद्ममभवाय भजन्ति भव्याः ॥ मां श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्तचित्ताः ॥ १७ ॥ नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ॥ संजल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥१८॥ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य[5] ऋतवानिति विप्रलब्धः ॥ सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया[6] कुमतेरघं मे ॥१९॥ सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः[7] ॥ अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन्गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥ ॥ ७ ॥

निरस्तचित्ता अरयो मां न प्रहृतवन्तः स सौत्ये वृत इति कुमतित्वम् ॥ १७ ॥ हे नरदेव, उदारं गम्भीरं रुचिरं च यत् स्मितं तेन शोभितानि नर्माणि परिहासवाक्यानि तथा कार्यप्रस्तावेषु हे पार्थेत्यादीनि मधुराक्षराणि संजल्पितानि च हृदिस्पृशानि मनोज्ञानि माधवस्य यान्येतानि तानीदानीं स्मर्तुर्मम हृदयं लुठन्ति लोठयन्ति क्षोभयन्ति । णिजभाव आर्षः ॥ १८ ॥ विकत्थनं स्वगुणश्लाघनादि । शय्यादिष्वैक्यादव्यतिरेकाद्धेतोः । कदाचिद्व्यभिचारं दृष्ट्वा हे वयस्य, ऋतवान् सत्ययुक्तस्त्वमिति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि । 'ऋभुमान्' इति पाठे ऋभवो देवाः सेवकाः सन्ति यस्य सः । असौ महानपि मया वयस्य इति मत्वा विप्रलब्धस्तिरस्कृत इत्यर्थः । 'ऋतमान्' इति पाठे वत्त्वाभाव आर्षः । मे अघमपराधमसहत । महितया महत्त्वेन । ऐकपद्ये अतिमहत्त्वेनेत्यर्थः । सख्युरघं सखेव । तनयस्याघं पितेव ॥ १९ ॥ त्वया शङ्कितं पराजयं चापि प्राप्तोऽहमित्याह । तेन सख्या रहितोऽतो हृदयेन शून्यः । अङ्ग हे राजन्, उरुक्रमस्य

१ 'अमोघमहितानि' इत्येवंरूपे । २ 'अमेयमहिमानि' इति पाठः । ३ हिरण्यकशिपुप्रेरितान्यस्त्राणि । ४ सौत्ये सारथिकर्मणि । ५ आदिशब्दाद्विरुद्धोक्तीनामपि ग्रहः । ६ ऐकपद्ये 'महामहितया' इत्येवंरूपं तत्र । ७ मूर्च्छितप्राय इत्यर्थः ।

परिग्रहं षोडशसहस्रस्त्रीलक्षणम् । असद्भिर्नीचैः अबला योषेव ॥ २० ॥ श्रीकृष्णवियोग एवात्र हेतुर्नान्य इत्याह—तदिति । यतो येभ्यो नृपतय आनमन्ति ईशेन रिक्तं शून्यमसत्कार्याक्षमं सन्मन्त्रविधानैरपि भस्मनि हुतमिव । अतिप्रीतादपि कुहकान्मायाविनः सकाशाद्राद्धं लब्धं यथा असत् । सम्यक्कर्षणादिना- ॥२५॥
प्यूपरभूमावुप्तं बीजमिव ॥२१॥ सुहृत्पुरे त्वया पृष्टानां नः सुहृदां मध्ये चत्वारः पञ्च वाऽवशेषिताः । तत्र हेतुः—विप्रशापेत्यादि । वारुणीमन्नमयीम् । अजानतामिवान्योन्यमेरकामुष्टिभिर्निघ्नताम् ॥ २२ ॥ २३ ॥ अवशेषिता इत्यनेनोक्तं हेतुकर्तारमाह त्रिभिः—प्रायेणेति । भावयन्ति पालयन्ति ॥ २४ ॥ जलौकसां मत्स्यादीनां मध्ये महान्तः स्थूला अणीयसः सूक्ष्मात् यथाऽदन्ति भक्षयन्ति ॥ २५ ॥ एवं बलिष्ठैर्महद्भिः पाण्डवैर्दुर्योधनजरासन्धादीन्निहत्य यदुभिरितरान्

तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति ॥ सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम् ॥२१॥ राजंस्त्वयाभिपृष्टानां सुहृदां नः सुहृत्पुरे ॥ विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥ वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ॥ अजानतामिवान्योन्यं चतुष्पञ्चावशेषिताः ॥ २३ ॥ प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम् ॥ मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥२४॥ जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः ॥ दुर्बलान्बलिनो राजन्महान्तो बलिनो मिथः ॥ २५ ॥ एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योन्यं भूभारान्संजहार ह ॥ २६ ॥ देशकालार्थयुक्तानि हृत्तापोपशमानि च ॥ हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥ एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ॥ सौहार्देनातिगाढेन शान्तासीद्विमला मतिः ॥२८॥ वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा ॥ भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥ गीतं भगवता ज्ञानं यत्तत्संग्राममूर्धनि ॥ कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ ३० ॥ विशोको ब्रह्मसंपत्त्या संछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसंभवः ॥ ३१ ॥ ॥ ॥ ७ ॥

शाल्वादीन्निहत्य यदून्यदुभिरन्योन्यं निहत्य भगवान् भुवो भारभूतान् संहृतवान् ॥२६॥ अतः परं वक्तुं न शक्नोमीति सूचयन्नाह । देशकालोचितार्थयुक्तानि मनःपीडोपशमकराणि च गोविन्दस्य वचनानि स्मरतो मे मम चित्तं हरन्त्याकर्षन्ति ॥ २७ ॥ एवमिति सूतोक्तिः । अतिदृढेन स्नेहेन कृष्णपादसरोरुहं चिन्तयतोऽर्जुनस्य मतिः शान्ता विशोका विमला विरक्ता चासीत् ॥ २८ ॥ मतिनैर्मल्यफलमाह । वासुदेवाङ्घ्र्यनुध्यानेन परिबृंहितं रंहो वेगो यस्यास्तया भक्त्या निर्मथिता उन्मूलिता अशेषाः कषायाः कामादयो यस्याः सा धिषणा बुद्धिर्यस्य सः । ज्ञानं पुनरध्यगमदित्युत्तरेणान्वयः ॥ २९ ॥ कालेन कर्मभिस्तमसा भोगाभिनिवेशेन च रुद्धमावृतं सत् ॥ ३० ॥ ज्ञानफलमाह—विशोक इति । एतदेव शोकहेत्वभावेनोपपादयति । शोकस्य हि हेतुर्द्वैतभ्रमस्तस्य देहमात्रस्य लिङ्ग ॥२६॥

१ वस्तुतस्तु न विद्यन्ते सन्तो येभ्यस्तैः । २ यद्वा कुहकस्य दोषगर्द्धिनस्य राद्धं राधनं दानादिसत्कारः । अथवा कुहके वञ्चके असत्पात्रे राद्धं दत्तमिन्निर्थान्तरम् । ३ श्रीकृष्णवियोगाव्यवहितक्षण एव । ४ भस्मन्निति लुप्तसप्तमीकं पदम् । ५ एतत् यदुकुलसंहरणम् । ६ यत् यतः निमित्तभूतात् भगवतः । सत्संकल्पादित्यर्थः । ७ एषामशार्मिरनेन भारत्वं न 'भूभारराजपृतना यदुभिर्निरस्य' इत्यत्रैकादशे परिहरिष्यते । क्रम० ।

तस्य गुणास्तेषामविद्या । तत्र ब्रह्मसंपत्त्या वेदान्तश्रवणेन ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिंस्तन्नैर्गुण्यं भवति नतु सुषुप्तिप्रलययोरिवाविद्याशेषः । तस्मान्नैर्गुण्याद्गुणकार्यलिङ्गनाशः । अलिङ्गत्वाच्चासंभवः सम्यग्भोगाय भवति पुनःपुनरिति संभवः स्थूलदेहस्तद्रहितः । ततश्च तत्परिच्छेदाभावात्संछिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य स विशोको जात इति ॥ ३१ ॥ भगवतो मार्गमालक्ष्य यदुकुलस्य संस्थां नाशं श्रुत्वा नारदोक्तं चानुस्मृत्य स्वःपथाय स्वर्गमार्गाय । निभृतात्मा निश्चलचित्तः ॥ ३२ ॥ तां दुर्विज्ञेयाम् । वक्ष्यति ह्येकादशे—'सौदामन्या यथाकाशे यान्त्या हित्वाभ्रमण्डलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः' इति । संसृतेरुपरराम जीवन्मुक्ता बभूव । देहं जहाविति वा ॥ ३३ ॥ तदेवमुक्तमपि यादवेभ्यो भगवतो वैलक्षण्यमबुद्ध्वा तत्साम्यं वदतो मन्दमतीन्प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम् । यया यादवरूपया तन्वा भुवो भारं कण्टकेन कण्टकमिवाहरत् । यादवतनुर्भूभारतनुश्चेति द्वयमपीश्वरस्य संहार्यत्वेन

निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ॥ स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥ पृथाप्यनुश्रुत्य धनंजयोदितं नाशं यदूनां भगवद्गतिं च ताम् ॥ एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः ॥३३॥ ययाहरद्भुवो भारं तां तनुं विजहावजः ॥ कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् ॥ ३४ ॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ॥ भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥ यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ॥ तदाहरेवाप्रतिबुद्धचेतसामधर्महेतुः कलिरन्ववर्तत ॥ ३६ ॥ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तदात्मनि ॥ विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥३७॥ स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः ॥ तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ३८ ॥ ॥ ६१ ॥

सममेव ॥३४॥ श्रीकृष्णमूर्तेर्विशेषमाह—यथेति । तान्यपि यथा धत्ते जहाति च । तदाह । यथा नटो निजरूपेण स्थितोऽपि रूपान्तराणि धत्तेऽन्तर्धत्ते च तथा तदपि कलेवरं जहौ । अन्तरधादित्यर्थः ॥३५॥ युधिष्ठिरस्य स्वर्गारोहप्रसङ्गाय कलिप्रवेशमाह—यदेति । स्वतन्वा जहौ । स्वतनोरेव वैकुण्ठारोहात् । श्रवणार्हा सती कथा यस्य । तदा यदहस्तस्मिन्नेव । अहरिति लुप्तसप्तम्यन्तं पदम् । अप्रतिबुद्धचेतसामविवेकिनां इति । विवेकिनां तु न प्रभुरित्युक्तम् । अन्ववर्ततेति पूर्वमेवांशेन प्रविष्टस्य तेन रूपेणानुवृत्तिरुक्ता ॥ ३६ ॥ बुधो युधिष्ठिरः । तस्य कलेः परिसर्पणं प्रसरणं विलोक्य । कथंभूतम् । लोभाद्यधर्मचक्रं यस्मिन् । जिह्मं कौटिल्यम् । पर्यधात्तदुचितं परिधानमकरोत् ॥३७॥ आत्मनः स्वस्य गुणैः सुसममतिसदृशम् । तोयं परिवेषाकारेण सर्वतः स्थितं समुद्रोदकमेव नीवी परिधानविशेषो यस्यास्तस्या भूमेः पतित्वेनाभिषिक्तवान् ॥ ३८ ॥ ॥ ॥ ॥ ॥

१ लिङ्गनाश इति सप्तदशावयवात्मकस्य लिङ्गशरीरस्य पूर्ववत्कार्यकारित्वनाश इत्यर्थः । २ तद्रहित इति । स्थूलशरीराभिमानरहित इत्यर्थः । ३ अन्यालक्षितचित्तव्यापारो वा । ४ एकादशस्कन्धीयैकत्रिंशाध्यायस्य नवमं पद्यमिदम् । ५ युधिष्ठिर इत्युपलक्षणम् । पञ्चापि भ्रातरः स्वःपथाय श्रीकृष्णधामपथं गन्तुं मतिं चक्रुरिति भावः । ६ 'अभद्रहेतुः इति पाठः । तत्र अशुभहेतुरित्यर्थः । ७ 'तथात्मनि' इति पाठः । ८ 'सम्राट्' इति पाठः । ९ 'आत्मनः सदृशं गुणैः', 'आत्मनोऽनवमं गुणैः' इति पाठौ । १० 'छन्न रूपेण' इति पाठः ।

वक्रमनिरुद्धस्य पुत्रम् । निरूप्य कृत्वेत्यर्थः । अपिवदात्मनि समारोपयामास । ईश्वरः समर्थः ॥३९॥ संछिन्नान्यशेषाणि बन्धनान्युपाधयो येन ॥४०॥ तदेव दर्शयति द्वाभ्याम् । वाचमित्युपलक्षणम् । सर्वेन्द्रियाणि मनसि प्रविलापितवानित्यर्थः । तच्च मनः प्राणे, प्राणाधीनप्रवृत्तित्वात् । तं च प्राणमितरे अपाने, तेनाकर्षणात् । अपानव्यापार उत्सर्गस्तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् । अनेनैव वागादिष्वपि तत्तत्कर्मसाहित्यं ज्ञेयम् । तं मृत्युं पञ्चत्वे पञ्चभूतानामैक्ये देहे । देहस्यैव मृत्युर्नात्मन इति भावितवानित्यर्थः । अजोहवीदिति यद्दलुगन्ताल्लुङि रूपम् ॥ ४१ ॥ त्रित्वे गुणत्रये पञ्चत्वं देहम् । तच्च त्रित्वमेकत्वे अविद्यायाम् । सर्वं सर्वारोपहेतुमविद्यामात्मनि जीवे । अजोहवीदिति वक्तव्ये अजुहवीदित्यार्षम् । एवं शोधितमात्मानं ब्रह्मण्यव्यये कूटस्थे । न तस्यान्यत्र

मथुरायां तथा वज्रं शूरसेनपतिं ततः ॥ प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥३९॥ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ॥ निर्ममो निरहंकारः संछिन्नाशेषबन्धनः ॥ ४० ॥ वाचं जुहाव मनसि तत्प्राण इतरे च तम् ॥ मृत्यावपानं सोत्सर्गं तं पञ्चत्वे ह्यजोहवीत् ॥४१॥ त्रित्वे हुत्वाथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ॥ सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥ चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः ॥ दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥ अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा ॥ उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ॥ हृदि ब्रह्म परं ध्यायन्नावर्तेत यतो गतः ॥४४॥ सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ॥ कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥ ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः ॥ मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥४६॥ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ॥ तस्मिन्नारायणपदे एकान्तमतयो गतिम् ॥ ४७ ॥ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः ॥ विधूतकल्मषास्थानं विरजेनात्मनैव हि ॥ ४८ ॥ विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् ॥ कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ ४९ ॥ ॥ ॥ ॥

लय इत्यर्थः ॥४२॥ तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह—चीरवासा इति द्वाभ्याम् । बद्धवाङ्मौनी ॥ ४३ ॥ अनवेक्षमाणोऽनुजादिप्रतीक्षामकुर्वन् । आशां दिशम् । गतपूर्वां पूर्वं प्रविष्टाम् । महात्मभिर्विवक्षवद्भिः । यतो यां दिशं गतः ॥४४॥ अधर्मो मित्रं यस्य तेन ॥४५॥ साधु सम्यक् कृताः सर्वेऽर्था धर्मादयो यैः । अत एव वैकुण्ठस्य चरणाम्बुजमात्यन्तिकं शरणं ज्ञात्वा ॥४६॥ कथंभूते पदे । विधूतकल्मषाणामास्थानं निवासस्थानं यत्तस्मिन् । विरजेनात्मनैव गतिं प्रापुर्न तु षोडशकलेन लिङ्गेन । गतेर्वा विशेषणम् । विरजेनात्मनैवावस्थानरूपां गतिं ते विधूतकल्मषाः प्रापुरिति ॥ ४७ ॥ ४८ ॥ विदुरोऽपि तीर्थान्यटन्प्रभासे

१ प्राणे इति प्राणशब्दवति नामाग्रस्थानवर्तिनि वायावित्यर्थः । २ अभ्यषिञ्चदिति शेषः । शूरसेनसंज्ञामकदेशविशेषस्तस्य पतिं अधिपतिमित्यर्थः । ३ 'अनपेक्षमाण' इति पाठः । तत्र अनुजाद्यपेक्षामकुर्वन्नित्येवार्थः । ४ तदित्यादिश्लोकद्वयस्यैकोऽन्वयः । ५ आत्यन्तिकं परमपुरुषार्थम् । ६ विधूतकल्मषा यत् आस्थानमिति वा । ७ अत्र यत्तदोर्नित्यसंबन्धात्तच्छब्दानुरोधेन यच्छब्दाध्याहारः । विरजेनेत्यत्र रजस्तमोरहितेनेति ध्येयम् । ८ अस्मिन्पक्षे विधूतकल्मषाः स्थानमिति च्छेदः । तत्र 'खर्परे शरि' इति पाक्षिको विसर्गलोपः ।

श्रीकृष्णावेशेन कृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्त एव संस्तदानीं नेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥४९॥ आत्मानं प्रत्यनपेक्षतां तदा ज्ञात्वा तमाप ॥ ५० ॥ इति एवं यत्संप्रयाणम् । अलमतिशयेन स्वस्त्ययनं मङ्गलास्पदम् । अलं पवित्रं च ॥५१॥ ॥ इति श्रीम० म० प्र० भावार्थदीपिकायां टीकायां पञ्चदशोऽध्याय ॥ १५ ॥ ॥ छ ॥ ॥ ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयो ॥ संवादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १ ॥ द्विजवर्याणां शिक्षया सदुपदेशेन । सूत्यां जन्मनि । अभिजातकोविदा जातकर्मविदः । हे विप्र, महतां गुणा यस्मिन्स. ॥१॥ जनमेजयादीनित्यक्षराधिक्यं छान्दसम् । 'उत्पादयन्' इति पाठे हेतौ शतृप्रत्ययः । सुतानुत्पादयितुमिरावतीमुपयेम इति वाक्ययोजना ॥ २ ॥ आजहार कृतवानित्यर्थः । शारद्वतं कृपम् । यत्र येष्वश्वमेधेषु

द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम् ॥ वासुदेवे भगवति ह्येकान्तमतिराप तम् ॥ ५० ॥ यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोः सुतानामिति सम्प्रयाणम् ॥ शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥ ५१ ॥

॥ इति श्रीम० म० प्र० पाण्डवस्वर्गारोहणं नाम पञ्चदशोऽध्यायः ॥१५॥ ॥ सूत उवाच ॥ ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ॥ यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा ॥ १ ॥ स उत्तरस्य तनयामुपयेम इरावतीम् ॥ जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् ॥ २ ॥ आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् ॥ शारद्वतं गुरुं कृत्वा देवा यत्राक्षगोचराः ॥३॥ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ॥ नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥ ॥ शौनक उवाच ॥ कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ॥ नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ॥५॥ तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् ॥ अथवाऽस्य पदाम्भोजमकरन्दलिहां सताम् ॥६॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः ॥ क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् ॥ ७ ॥ ॥ ॥ ॥

देवा दृष्टिगोचरा बभूवुः ॥ ३ ॥ निजग्राह निगृहीतवान् । कलिमेव निर्दिशति—नृपेति ॥४॥ कस्य हेतोरिति । अयमर्थः—कलिं कस्माद्धेतोः केवलं निजग्राह नतु हतवान् । यतोऽसौ शूद्रः अतिकुत्सितः । यो गा पदाऽहनदहन्निति । ५ । अस्य विष्णोः पदाम्भोजयोर्मकरन्दस्तं लिहन्त्यास्वादयन्ति ये तेषां सतां महतां वा कथाश्रयमिति समासान्निष्कृष्टस्यानुषङ्गः । तर्हि कथ्यताम् । ६ ॥ नो चेत्किमन्यैरसद्भिरालापैः । यथैरायुषो वृथा क्षयः । अस्माकमयं सत्रप्रयत्नोऽपि हरिकथामृतपानार्थ एवेत्याह सार्धाभ्याम् । क्षुद्रमल्पमायुर्येषाम् । अतो मर्त्यानां मरणधर्मवताम् । तथापि ऋत सत्यं मोक्षमिच्छताम् ॥ ७ ॥ ॥

१ जनमेजयादीनिति । 'प्रधानकर्मण्याख्येये ल्यादीनामाहुर्द्विकर्मणाम्' इतिवत्त्रवाक्षरैकपादोऽनुष्टुब्विकल्पो यम । २ उत्प दयदितीष्ट आडभाव आर्षः । आगमशास्त्रस्यानित्यत्वाद्वा । ३ गोमिथुन पुस्त्रीरूपयोर्युगलम् । ४ 'शूद्रकोऽसौ' इति पाठ., तत्र कुत्सितेत्यधिकारे 'सञ्ज्ञाया कन्' इति कुत्सितार्थ शू. शब्दात्कनि शूद्रकश साध्वित्याशयेन शूद्रकः कुत्सितः शूद्र इति च तत्सङ्गतिः । ५ तत् कलिनिग्रहरूपम् । ६ राजचिह्नधारिणामित्यर्थः ।

यो मृत्युः स इह सत्रे शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः । ततः किमत आह—न कश्चिदिति ॥ ८ ॥ ततोऽपि किमत आह । अहो नृलोके हरिलीलामृतं वचः पीयेतेत्येतदर्थम् । हरिलीलैवामृतं यस्मिंस्तत् ॥ ९ ॥ तदभावे वृथैव जीवनमित्याह । मन्दस्यालसस्य । नक्तं रात्रौ यद्वय आयुस्तन्निद्रया ह्रियते । दिवा अह्नि च यद्वयस्तद्व्यर्थकर्मभिरपह्रियते ॥ १० ॥ तत्र तावत्कलिनिग्रहप्रसङ्गमाह—यदेति । यदा निजचक्रवर्तिते स्वसेनया पालिते देशे कलिं प्रविष्टं शुश्राव, तदा तामनतिप्रियां वार्तां किंचित्प्रियां च युद्धकौतुकसंपत्तेः निशम्य ततः शरासनं दुष्टनिग्रहार्थमाददे । संयुगे शौण्डिर्युद्धे प्रगल्भः । पाठान्तरे

इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ॥ न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः ॥ ८ ॥ एतदर्थं हि भगवानाहूतः परमर्षिभिः ॥ अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥ मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ॥ निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥ १० ॥ ॥ सूत उवाच ॥ यदा परीक्षित्कुरुजाङ्गले वसन्कलिं प्रविष्टं निजचक्रवर्तिते ॥ निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥ ११ ॥ स्वलंकृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः पुरात् ॥ वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ १२ ॥ भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून् ॥ किंपुरुषादीनि वर्षाणि विजित्य जगृहे बलिम् ॥ १३ ॥ तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ॥ प्रगीयमानं च यशः कृष्णमाहात्म्यसूचकम् ॥ १४ ॥ आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ॥ स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥ १५ ॥ तेभ्यः परमसंतुष्टः प्रीत्युज्जृम्भितलोचनः ॥ महाधनानि वासांसि ददौ हारान्महामनाः ॥ १६ ॥ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामम् ॥ स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥ ॥ ॥ ६९ ॥

युद्धे शौरिः कृष्णतुल्यः ॥ ११ ॥ ततश्च दिग्विजयाय निर्गतः ॥ १२ ॥ भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि । मेरोः सर्वत इलावृतम् । तत उत्तरतो रम्यकं हिरण्मयं च । दक्षिणतो हरिवर्षं किंपुरुषं च । तानि विजित्य ॥ १३ ॥ प्रगीयमानं यशः । यशआदीनि शृण्वंस्तेभ्यो ददाविति तृतीयेनान्वयः ॥ १४ ॥ १५ ॥ १६ ॥ किंच स्निग्धेषु पाण्डवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि तानि शृण्वन् । तथा विष्णोर्जगत्कर्तृकां प्रणतिं च शृण्वन् । नृपतिः परीक्षिद्विष्णोश्चरणारविन्दे भक्तिं करोति स्म । पारषदमिति रेफषकारयोर्विश्लेषश्छान्दसः । तत्र पार्षदं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनं

१ निजचक्रवर्तिते कुरुजाङ्गले वसन्निति वान्वयः । २ इदमध्याहृतम् 'कुरुजाङ्गलेऽशृणोत्' इति पाठे नाध्याहारापेक्षा । ३ 'संयुगशौरिः' इत्येवंरूपे । ४ 'यतेत बुद्धिमान्मृत्योरभावाय पुरैव हि' इति तृतीयचतुर्थचरणौ क्वचित् । ५ भगवान्मृत्यु॰ । ६ अत्र 'यस्मिन्नीते कृतं सर्वमिष्टापूर्तादिकं भवेत्' इत्यर्धमधिकं क्वचित् । ७ 'स्तवनप्रणामान्', 'स्तवनान्यशृण्वन्', इति पाठौ । ८ 'नृपतिः स्म पदारविन्दे' इति पाठः । ९ पूर्वपश्चादिति मेरोरिति शेषः । समुद्रलग्नानि पार्श्वे इत्यर्थः । १० एतद्विशेषः पञ्चमस्कन्धषोडशाध्यायादौ द्रष्टव्यः । ११ शृण्वन्निति व्याहारलभ्यम । 'स्तवनानि शृण्वन्' इति पाठे तु नाध्याहारापेक्षा । १२ अत्र छान्दसत्वाश्रयणं प्रायश्छन्दोनुरोधेनेति ध्येयम् ।

रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥ १७ ॥ वृत्तिमनुवर्तमानस्य सतः । नातिदूरे शीघ्रमेव ॥ १८ ॥ धर्मो वृषरूपः । विच्छायां हतप्रभाम् । गां गोरूपां पृथ्वीम् । विवत्सां नष्टापत्याम् ॥ १९ ॥ ते आत्मनो देहस्य यद्यपि बहिरामयो न लक्ष्यते तथाप्यन्तर्मध्ये आधिः पीडा यस्यास्तां त्वामालक्षये । केन । यतो विच्छायासि, अत ईषन्म्लायता वैवर्ण्यं भजता मुखेन लिङ्गेन । तत्र कारणानि कल्पयन्पृच्छति—दूरेबन्धुमित्यादिपञ्चभिः । दूरे स्थितं बन्धुम् ॥२०॥ त्रिभिः पादैर्न्यूनमत एवैकपादम् । मा मां मल्लक्षणं जनमित्यर्थः । वृषलैरित ऊर्ध्वं भोक्ष्यमाणम् । पुंस्त्वमात्मपदविशेषणत्वात् । हता यज्ञभागा येषां तान् । यज्ञाद्य-करणात् ॥ २१ ॥ हे उर्वि पृथ्वि, भर्तृभिररक्ष्यमाणाः स्त्रियः पितृभिररक्ष्यमाणान्बालान्प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्तान् क्लिष्टान् । वाचं देवीं सरस्वतीं

तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम् ॥ नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥१८॥ धर्मः पदैकेन चरन्विच्छा-यामुपलभ्य गाम् ॥ पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥१९॥ ॥ धर्म उवाच ॥ कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायतेषन्मुखेन ॥ आलक्षये भवतीमन्तराधिं दूरेबन्धुं शोचसि कंचनाम्ब ॥२०॥ पादैर्न्यूनं शोचसि मै-कपादमात्मानं वा वृषलैर्भोक्ष्यमाणम् ॥ आहो सुरादीन्हतयज्ञभागान्प्रजा उतस्विन्मघवत्यवर्षति ॥२१॥ अरक्ष्यमाणाः स्त्रियं उर्वि बालान् शोचस्यथो पुरुषादैरिवार्तान् ॥ वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥२२॥ किं क्षत्रबन्धून्कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि ॥ इतस्ततो वाशनपानवासःस्नानव्यवायोन्मुखजीनलोकम् ॥२३॥ यद्वाम्ब ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ॥ अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि ॥२४॥ इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे येन विकर्शितासि ॥ कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमम्ब सौभगम् ॥ २५ ॥ धरण्युवाच ॥ भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ॥ चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥

कुकर्मणि दुराचारे स्थिताम् । कुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् ॥२२॥ उपसृष्टान् व्याप्तान् । अवरोपितान्युद्वासितानि । व्यवायो मैथुनम् । इतस्ततो निषेधा-नादरेण सर्वतोऽशनादिपून्मुखं प्रवर्तमानं जीवलोक वा ॥ २३ ॥ हे अम्ब मातः हे धरित्रि, ते तव यो भूरिभारस्तस्यावतारणार्थं कृतावतारस्य कर्माणि स्मरन्ती तेन विसृष्टा सती शोचसि । निर्वाणं विलम्बितमाश्रितं येषु तानि । पाठान्तरे निर्वाणं विडम्बितमुपहसितं यैः । मोक्षादप्यधिकसुखानीत्यर्थः ॥ २४ ॥ हे अम्ब, ते सौभाग्यं कालेन वा हृतम् ॥ २५ ॥ भवान् जानात्येव तथापि वक्ष्यामीत्याह । येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्तसे । यत्र च सत्यादयो महागुणा

१ 'भद्रा गौर्गोमतल्लिका' इत्यभिधानम् । २ 'विच्छायेषन्म्लायता यन्मुखेन' इति पाठः । अत्रेषच्छब्दोऽनायासे वर्तते 'ईषद्दुःसुषु' इत्यत्रेषत्कर [illegible] तततश्चपदनायासेनालक्ष्य इति योज्यम् । ३ वृषलैः वृषं धर्मं लीनं नष्टं कुर्वन्तीति । शूद्रप्राये राजभिरित्यर्थः । ४ उत पक्षान्तरे स्विन् अपिस्वित् इन्द्रेऽवर्षति सति सस्यसमृद्ध्यभावेन दरिद्रा प्रजाः शोचसि किम् । ५ स्त्रियः स्त्रीः, स्त्रिय उद्दिश्येति वा । ६ विकर्शिता विशेषेण कृशीकृतासि । ७ 'धर्मान्नु पृच्छसि' [illegible] पाठः । [illegible] नु नूनं भवान्वेद जानास्येव । कुतः [illegible] पृच्छसि जानतो धर्मप्रश्नो नोपपन्न इति भावः । ८ अथवा निर्वाणं सुखं विलम्बितमधुनान्तरितं येभ्यस्तानि, निर्वाणमपि विडम्बितं यैरिति वा विग्रहः । ९ वर्तसे अवर्तथाः. वर्तस इति वर्तमानसामीप्ये वर्तमानप्रयोगः । दि. च. ।

न वियन्ति (न क्षीयन्ते स्म) तेन श्रीनिवासेन रहितं लोकं शोचामीति षष्ठेनान्वयः ॥२६॥ सत्यं यथार्थभाषणम्। शौचं शुद्धत्वम्। दया परदुःखासहनम्। क्षान्तिः क्रोधप्राप्तौ चित्तसंयमनम्। त्यागोऽर्थिषु मुक्तहस्तता। संतोषोऽलंबुद्धिः। आर्जवमवक्रता। शमो मनोनैश्चल्यम्। दमो बाह्येन्द्रियनैश्चल्यम्। तपः स्वधर्मः। साम्यमरिमित्राद्यभावः। तितिक्षा परापराधसहनम्। उपरतिर्लाभप्राप्तावौदासीन्यम्। श्रुतं शास्त्रविचारः ॥ २७ ॥ ज्ञानमात्मविषयम्। विरक्तिर्वैतृष्ण्यम्। ऐश्वर्यं नियन्तृत्वम्। शौर्यं संग्रामोत्साहः। तेजः प्रभावः। बलं दक्षत्वम्। स्मृतिः कर्तव्याकर्तव्यार्थानुसन्धानम्। स्वातन्त्र्यमपराधीनता कौशलं क्रियानिपुणता। कान्तिः सौन्दर्यम्। धैर्यमव्याकुलता। मार्दवं चित्ताकाठिन्यम् ॥२८॥ प्रागल्भ्यं प्रतिभातिशयः। प्रश्रयो विनयः। शीलं सुस्वभावः। सहओजोबलानि मनसो ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च पाटवानि। भगो भोगास्पदत्वम्। गाम्भीर्यमक्षोभ्यत्वम्। स्थैर्यमचञ्चलता। आस्तिक्यं श्रद्धा। कीर्तिर्यशः। मानः

सत्यं शौचं दया क्षान्तिस्त्यागः संतोष आर्जवम्॥ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्॥ २७॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः॥ स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥ २८ ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः॥ गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥२९॥ एते चान्ये च भगवन्नित्या यत्र महागुणाः ॥ प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥३०॥ तेनाहं गुणपात्रेण श्रीनिवासेन सांप्रतम्॥ शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥३१॥ आत्मानं चानुशोचामि भवन्तं चामरोत्तमम्॥ देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान् ॥३२॥ ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामास्तपः समचरन्भगवत्प्रपन्ना ॥ सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥३३॥ तस्याहमब्जकुलिशांकुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलंकृताङ्गी ॥ त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान्स मां व्यसृजदुत्स्मयतीं तदन्ते ॥३४॥ यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतन्त्रः ॥ त्वां दुःस्थमूनपदमात्मनि पौरुषेण संपादयन्यदुषु रम्यमबिभ्रदङ्गम् ॥३५॥ ॥

पूज्यत्वम्। अनहंकृतिर्गर्वाभावः ॥२९॥ एते एकोनचत्वारिंशत्। अन्ये च ब्रह्मण्यशरण्यत्वादयो महान्तो गुणा यस्मिन्नित्याः सहजा न वियन्ति न क्षीयन्ते स्म ॥३०॥ तेन गुणपात्रेण गुणालयेन। पाप्मना पापहेतुना ॥ ३१ ॥ ३२ ॥ तस्य विरहो दुःसह इत्याह चतुर्भिः। ब्रह्मादयो यस्याः श्रियोऽपाङ्गमोक्षः स्वस्मिन् दृष्टिपातस्तत्कामाः सन्तो बहुतिथं बहुकालं तपः समचरन्सम्यक्चरन्ति स्म। भगवद्भिरुत्तमैः प्रपन्ना आश्रितापि सा श्रीर्यस्य पादलावण्यमलमनुरक्ता सती सेवते ॥ ३३ ॥ तस्य भगवतः श्रीमद्भिः पदैः। केतुर्ध्वजः। अब्जादयः केताश्चिह्नानि येषां तैः। यद्वा अब्जादीनामाश्रयैः सम्यगलंकृतमङ्गं यस्याः साऽहं ततो भगवतो विभूतिं संपदमुपलभ्य प्राप्य त्रीन् लोकानतिक्रम्य अरोचे शोभितवत्यस्मि। पश्चात्तस्या विभूतेरन्ते नाशकाले प्राप्ते सत्युत्स्मयन्तीं गर्वं कुर्वाणां मां स व्यसृजत्त्यक्तवान् ॥ ३४ ॥ किंच यो वै आसुरो वंशो येषां तेषां राज्ञामक्षौहिणीशतरूपं ममातिभरं भारमपनीतवान्। त्वां चोनपदत्वाद्दुःस्थं सन्तं पौरुषेण ॥३९॥

१ श्रीनिवसत्यस्मिन्निति न रहिता। अथवा श्रीयते ब्रह्मादिभिरिति श्रीर्लक्ष्मीस्तस्या निवास इत्यभिप्रेतम्। वीर.। २ पक्षे आसुरवंशा एव राजान इति विग्रहे छिन्नप्ररूढादिवत्समासः। 'आसुरवंशराज्ञाम्' इति पाठः। तत्र आसुरवंशाः आसुरभावं प्रविष्टा इत्यर्थः। नि. च.।

पुरुषकारेणात्मनि स्वस्मिन् संपूर्णण्दं सुस्थं संपादयन् । 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः । संपादयितुमित्यर्थः । अविभ्रत् धृतवानित्यर्थः ॥३५॥ तस्य विरहं का वा सहेत । प्रेम नलोकश्च रुचिरस्मितं च वल्गुजल्पश्च तैर्मधुमानिनीनां सत्यभामादीनां समानं गर्वसहितं स्थैर्यं स्तब्धत्वं योऽहरत् । यस्याङ्घ्रिणा रजस्युत्थितेन विटङ्किताया अलंकृतायाः सस्यादिमिषेण रोमोत्सवो भवति ॥३६॥ कथयतोः सतोः प्राचीं पूर्ववाहिनीं सरस्वतीं कुरुक्षेत्रे ॥३७॥ इति श्रीमद्भागवते प्रथमस्कन्धे भावार्थदीपिकायां षोडशोऽध्याय ॥ १६ ॥ ॥छ॥ ॥ ततः सप्तदशे राज्ञः कलेर्निग्रह उच्यते ॥ तस्यैवं वीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् ॥१॥ हन्यमानं ताड्यमानम् ॥ १ ॥ मृणालं पद्मकन्दस्तद्वद्धवलम् । भयान्मेहन्तं मूत्रयन्तम् । इवेत्यनेन पादावशेषो धर्मो भयान्मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशस्त-

का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ॥ स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदङ्घ्रिविटङ्कितायाः ॥ ३६ ॥ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ॥ परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३७ ॥ ॥ इति श्रीम० म० प्र० पृथ्वीधर्मसंवादो नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ तत्र गोमिथुनं राजा हन्यमानमनाथवत् ॥ दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम् ॥ १ ॥ वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ॥ वेपमानं पदैकेन सीदन्तं शूद्रताडितम् ॥ २ ॥ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ॥ विवत्सां साश्रुवदनां क्षामां यवसमिच्छतीम् ॥ ३ ॥ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् ॥ मेघगम्भीरया वाचा समारोपितकार्मुकः ॥ ४ ॥ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली ॥ नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ॥ ५ ॥ कस्त्वं कृष्णे गते दूरं सहगाण्डीवधन्वना ॥ शोच्योऽस्यशोच्यान् रहसि प्रहरन्वधमर्हसि ॥ ६ ॥ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ॥ वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥ न जातु पौरवेन्द्राणां दोर्दण्डपरिरम्भिते ॥ भूतलेऽनुपतन्त्यस्मिन्विना ते प्राणिनां शुचः ॥ ८ ॥ ॥ ॥ छ ॥

स्याग्यनिर्वाहात्कम्पमान इवेति दर्शितम् ॥ २ ॥ धर्मदुघां हविर्दोग्ध्रीम् । क्षामां कृशाम् । यवसं तृणम् । अत्र सस्यादिप्रसवक्षयाद्विवत्सेव । यज्ञाद्यभावात् कृशा । अत एव यज्ञभागमिच्छन्ती पृथ्वीति सूचितम् ॥ ३ ॥ कार्तस्वरं सुवर्णं तन्मयः परिच्छदः परिकरो यस्य । स्वर्णनिबद्धमित्यर्थः । सज्जीकृतकार्मुकः ॥ ४ ॥ हंसि घातयसि । राजाहमिति चेत्तत्राह । नट इव वेषमात्रेण नरदेवोऽसि । कर्मणा त्वद्विजः शूद्रः ॥ ५ ॥ अशोच्यान्निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽस्यतो वधमर्हसि ॥ ६ ॥ वृषं प्रत्याह । त्वं वा कः । स्वयमेव संभावयति । किं कश्चिद्देवो वृषरूपेणास्मान् परिखेदयन् चरसि ॥ ७ ॥ दोर्दण्डैः परिरम्भिते परिरम्भितवत्सुरक्षिते ते शुचोऽश्रूणि विनान्येषामश्रूणि नानुपतन्तीति खेदहेतुत्वं दर्शितम् ॥ ८ ॥ ॥ ॥

१ मधुमानिनीना मधुवन्मादको मानः पातिव्रत्यादिगर्वो यासामस्ति तासा इति क्रम० । मधुवशराजन्यभार्याणा सिद्धां. । मधु इति भिन्न वा पदम् । २ मृणाल,..कमलनालसूत्रवच्छुभ्रम् । अत्र मृणालशब्दस्य पद्मकन्दवाचकत्वं श्रीधरैः सिद्धान्तप्रदीपकारैश्चोक्त तद्गवेषणीयम् । ३ नृप..मिव लाञ्छन चिह्नं यस्य । नृपवेषधरमिति यावत् । ४ 'धर्मदुहाम्' इति पाठः । ५ 'विवत्सामश्रुवदनाम्' इति प्रचुरः पाठः । ६ 'कौरवेन्द्राणां' इति पाठः । अयमेव चाखिलव्याख्यातृसमत. । ७ यवस यज्ञभागमिति वि. च. । ८ सज्जीकृतकार्मुक इति कलेः पलायनाशङ्कया वि. च. ।

एवमुक्ते पुनरपि शोचन्तं प्रत्याह । भो सुरभेः पुत्र, मा शुचः शोकं मा कुरु । व्येतु अपयातु । गां प्रत्याह । हे अम्ब मातः, शास्तरि मयि जीवति सति ते भद्रमेवाऽतो मा रोदीः ॥ ९ ॥ मद्धितार्थमेवैनं हनिष्यामि न तवोपकारायेत्याह—यस्येति द्वाभ्याम् । हे साध्वि, सर्वा याः काश्चिदपीत्यर्थः । असाधुभिस्त्रस्यन्ते पीड्यन्त इत्यर्थः । भगो भाग्यम् । गतिः परलोक ॥ १० ॥ ११ ॥ पुनरपि शोचन्तं वृषं प्रत्याह । कः अवृश्चच्छिन्नेद । त्वादृशास्त्वद्विधा दुःखिताः ॥ १२ ॥ वो भद्रमस्तु । आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवन्तं कीर्तिं दूषयतीति तथा तमाख्याहि ॥ १३ ॥ ननु तदाख्याने कृते कथं भद्रं स्यादित्यत आह । यस्मादनागसि जने योऽघं दुःखं युञ्जन् कुर्वन् भवत्यस्यैवंभूतस्य मत्तः सकाशात् सर्वत्रापि भयं भवति, ततः साधूनां भद्रं भवेदेवेति ॥ १४ ॥ एतस्य दण्डेऽहमसमर्थ इति माशङ्कीरित्याह—अनागःस्विति । आगस्कृदपराधकर्ता । तस्यामर्त्यस्य देवस्यापि भुजमाहर्तास्म्याहरिष्यामि । साङ्गदमित्यनेन मूलत उत्पाट्याहरिष्या-

मा सौरभेयानुशुचो व्येतु ते वृषलाद्भयम् ॥ मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्व्यसाधुभिः ॥ तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥१०॥ एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः ॥ अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पद ॥ माभूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥१२॥ आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ॥ आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ॥१३॥ जनेऽनागस्यघं युञ्जन्सर्वतोऽस्य च मद्भयम् ॥ साधूनां भद्रमेव स्यादसाधुदमने कृते ॥१४॥ अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः ॥ आहर्ताऽस्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥१५॥ राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् ॥ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह ॥१६॥ ॥ धर्म उवाच ॥ एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः ॥ येषां गुणगणैः कृष्णो दौत्यादौ भगवान्कृतः ॥१७॥ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ॥ पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥१८॥ केचिद्विकल्पवसना आहुरात्मानमात्मनः ॥ दैवमन्येऽपरे कर्म स्वभावमपरे प्रभुम् ॥ १९ ॥ ॥४॥

मीति दर्शितम् ॥ १५ ॥ नन्वेकस्य निग्रहेणान्यस्यानुग्रहे तव किं प्रयोजनं तत्राह—राज्ञो हीति । अन्यानधर्मिष्ठान् । शासतो दण्डयत ॥ १६ ॥ आर्तानामभयं यस्मात्तद्वचो वो युष्माकं युक्तमुचितमेव ॥ १७ ॥ वयं तु यतः पुरुषात्प्राणिनां क्लेशहेतवो भवेयुस्तं पुरुषं न निजानीम । यतो वादिनां वाक्यभेदैर्विमोहिताः ॥ १८ ॥ वाक्यभेदानेवाह । विकल्पं भेदं वसते आच्छादयन्ति ये योगिनस्ते आत्मानमेवात्मनः प्रभुं सुखदुःखप्रदमाहुः । तदुक्तम् 'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' इति । यद्वा विकल्पैः कुतर्कैः प्राावृता नास्तिकाः । एवं हि ते वदन्ति । न तावद्देवतादीनां प्रभुत्वम्, कर्माधीनत्वात् । न च कर्मणः स्वाधीनत्वादचेतनत्वाच्च । अतः स्वयमेव प्रभुर्न चान्यः कश्चिदिति । अन्ये दैवज्ञा दैवं ग्रहादिरूपां देवताम् । परे तु मीमांसकाः कर्म । अपरे लौकायतिकाः स्वभावम् ॥१९॥ ॥४०॥

१ 'सारभेयात्र शुचः' इति पाठः । २ 'राज्ञः पर.' इति पाठः । ३ 'चतुष्पदः' इति पाठः । चतुष्पदस्त्वेति तत्रार्थः । विज० । ४ निरङ्कुश इति काकाक्षिगोलकन्यायेन राज्ञोऽपि विशेषणमिति दीपि० । ५ उत्पथान्मार्गमुत्सृज्य वर्तमानान । आपदि तु विहिताविहितवैपरीत्यकारिणा व्यतिक्रमः सोऽन्य इति सूचयन्नाह—अनापदीति । ६ 'भगवान्कृतः' इति पाठो विजयध्वज्यादिसमतः, स एव समीचीन इति भाति । ७ लौकायतिकाश्चार्वाका इत्यर्थः ।

केष्वपि सेश्वरेषु मध्ये। केष्वपीति दुर्लभत्वं दर्शितम् । निश्चय इति सिद्धान्तत्वम् । अप्रतर्क्यान्मनोऽगोचरादनिर्देश्याद्वचनागोचरात्परमेश्वरात्सर्वं भवतीति विमृश विचारय स्वबुद्ध्या ॥ २० ॥ विखेदो गतमोहः । पर्यचष्ट प्रत्यभाषत ज्ञातवानिति वा ॥ २१ ॥ अनिर्धारितमिव ब्रुवन्घातकं जानन्नपि न सूचयेदित्येवंरूपं धर्मं ब्रवीष्यतो धर्मोऽसि । सूचने को दोष इत्यत आह—यदिति । स्थानं नरकादि ॥ २२ ॥ यद्वा अज्ञानादप्यकथनं भवतीत्याह—अथवेति । देवस्य मायाया गतिर्वंन्यघातकलक्षणा वृत्तिर्भूतानां चेतसो वचसश्चागोचरा सुज्ञेया न भवतीति निश्चय इत्यर्थः ॥ २३ ॥ धर्मोऽसाविति ज्ञात्वा तस्य पादानुवादेन व्यवस्थामाह—तप इति द्वाभ्याम् । अधर्मपादैस्तव त्रयः पादास्त्रिभिरंशैर्भग्नाः । स्मयो विस्मयः ॥ २४ ॥ इदानीं कलौ हे धर्म, ते पादश्चतुर्थोऽशस्तत्रापि सत्यमेवास्ति । यतः

अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ॥ अत्रानुरूपं राजर्षे विमृश स्वमनीषया ॥२०॥ एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ॥ समाहितेन मनसा विखेदः पर्यचष्ट तम् ॥ २१ ॥ ॥ राजोवाच ॥ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ॥ यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥२२॥ अथवा देवमायाया नूनं गतिरगोचरा ॥ चेतसो वचसश्चापि भूतानामिति निश्चयः ॥२३॥ तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ॥ अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥२४॥ इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः ॥ तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥२५॥ इयं च भूर्भगवता न्यासितोरुभरा सती ॥ श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २६ ॥ शोचत्यश्रुकला साध्वी दुर्भगेवोज्झितोऽधुना ॥ अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥२७॥ इति धर्मं महीं चैव सान्त्वयित्वा महारथः ॥ निशातमाददे खड्गं कलयेऽधर्महेतवे ॥२८॥ तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम् ॥ तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥२९॥ पतितं पादयोर्वीक्ष्य कृपया दीनवत्सलः ॥ शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥३०॥ ॥

सत्याद्ध्यानात्मानं निर्वर्तयेत् कथंचिद्धारयेत् । यद्वा पुरुषस्त्वां साधयेत् । तमपि पादमनृतेन संवर्धितः कलिः कलिरूपोऽयमधर्मो ग्रहीतुमिच्छति, तत्रेयं स्थितिः—कृतयुगे प्रथमं संपूर्णश्चतुष्पाद्धर्मः । त्रेतायां चतुर्णामपि पादानां मध्ये स्मयेन तपः, सङ्गेन शौचं, मदेन दया, अनृतेन सत्यमित्येवं चतुर्थांशो हीयते । द्वापरे त्वर्धम् । कलौ चतुर्थोऽशोऽवशिष्यते सोऽप्यन्ते विनङ्क्ष्यतीति ॥२५॥ न्यासितोऽन्योन्यद्वारेणावतारित उरुर्भरो भारो यस्याः । कृतं कौतुकं मङ्गलं यस्याः सा ॥ २६ ॥ अश्रूणि कलयति मुञ्चतीत्यश्रुकला । तेन उज्झिता त्यक्ता सती शूद्रा भोक्ष्यन्ति मामिति शोचति ॥ २७ ॥ निशातं निशितम् । अधर्मस्य हेतुर्यः कलिस्तं हन्तुमित्यर्थः ॥ २८ ॥ अभिप्रेत्य ज्ञात्वा ॥ २९ ॥ शरण्य आश्रयार्हः । श्लोक्यः सत्कीर्त्यर्हः ॥ ३० ॥ ॥ ॥ ॥

१ अधर्मपादैरिति । त्रिभिरंशैः स्मयसङ्गमदलक्षणैरधर्मपादैस्तव त्रयः पादा भग्नाः । स्मयो विस्मयो बुद्धिमोहरूपस्तेन तपोरूपपादभङ्गः । सङ्गः स्त्रीसङ्गस्तेन शौचाख्यपादभङ्गः । मदो गर्वस्तेन दयाख्यपादभङ्गः । तपआदीनां चतुर्णां धर्मपादानां कलौ चतुर्थचतुर्थांशमात्रत्वेनावस्थानार्हत्वेपि ते समुदायेन न सन्ति । सत्य. मकैकपादस्य चतुर्थांशमेवास्तीति भावः । दीपि० । २ स्मयो गर्व इति क्रमसं० पाठः स च युक्तः । 'गर्वद्वारा तपोनाशकत्वेन' इति वक्ष्यमाणटीकासंगतेः । ३ पक्षद्वयमेकीकृत्याह—केष्वपि सेश्वरेषु मध्ये यदृच्छात्वपरपर्यायादप्रतर्क्यादेव एवानिर्देश्यात्परमेश्वरात्सर्वं भवतीति निश्चयः सिद्धान्तः । अत्रैतेषु पूर्वोक्तेषु मध्ये यदनुरूपं तत्स्वमनीषया विमृशेत्यन्वयः । ४ 'वोज्झिता सती' इति पाठः । ५ नेन भगवतेत्यर्थः ।

गुडाकेशोऽर्जुनस्तस्य यशोधरा ये वयं तेषां तान्प्रति वद्धोऽञ्जलिर्येन तस्य ते । किंतु कथंचन केनाप्यंशेन न वर्तितव्यम् । यस्मात्त्वमधर्मस्य वन्धुः ॥ ३१ ॥ तदेवाह । राजदेहेषु वर्तमानं त्वामनु सर्वतः प्रवृत्तः । अनार्यं दौर्जन्यम् । अंहः स्वधर्मत्यागः । ज्येष्ठा अलक्ष्मीः । माया कपटम् ॥ ३२ ॥ तत्तस्माद्धर्मेण सत्येन च वर्तितव्ये वर्तितुमर्हे ब्रह्मावर्ते देशे । यज्ञस्य वितानं विस्तारस्तत्र विज्ञा निपुणाः ॥ ३३ ॥ इज्या यागस्तद्रूपा मूर्तिर्यस्य । शं क्षेमं कामांश्च । नन्विन्द्रादयो देवा इज्यन्ते नतु हरिस्तत्राह—स्थिरेति । एष स्थावरादीनामात्मेति । तथापि जीववन्न परिच्छिन्न इत्याह—अन्तर्बहिरिति । यथा वायुः प्राणरूपेणान्तस्थोऽपि बहिरप्यस्ति तद्वत्सर्वान्तर्यामीश्वरोऽपीति ॥ ३४ ॥ उद्यतासिमुद्धृतखड्गम् । दण्डपाणिं यमम् । उद्यतमुद्युक्तम् ॥ ३५ ॥ अत्र न वस्तव्यमिति या तवाज्ञा तया यत्र क्वापि वत्स्यामि किंतु तत्र तत्राप्यात्तो गृहीत इषुः शरासनं च येन तं त्वामेव लक्षये ॥ ३६ ॥ तत्तस्मात् । नियतो निश्चलः । वत्स्ये वत्स्यामि ॥ ३७ ॥ पानं मद्यादेः । सूना

॥ राजोवाच ॥ न ते गुडाकेशयशोधराणां वद्धाञ्जलेर्वै भयमस्ति किंचित् ॥ न वर्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्मबन्धुः ॥ ३१ ॥ त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः ॥ लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः ॥ ३२ ॥ न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ॥ ब्रह्मावर्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३३ ॥ यस्मिन्हरिर्भगवानिज्यमान इज्यामूर्तिर्यजतां शं तनोति ॥ कामानमोघान्स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा ॥ ३४ ॥ ॥ सूत उवाच ॥ परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ॥ तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३५ ॥ ॥ कलिरुवाच ॥ यत्र क्वचन वत्स्यामि सार्वभौम तवाज्ञया ॥ लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम् ॥ ३६ ॥ तन्मे धर्मभृतांश्रेष्ठ स्थानं निर्देष्टुमर्हसि ॥ यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३७ ॥ ॥ सूत उवाच ॥ अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ॥ द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥ ३८ ॥ पुनश्च याचमानाय जातरूपमदात्प्रभुः ॥ ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम् ॥ ३९ ॥ ॥ ॥ ७ ॥

प्राणिवधः । द्यूतेऽनृतम् । पाने मदः । पूर्वं मदो दयानाशकत्वेनोक्तोऽत्र तु गर्वद्वारा तपोनाशकत्वेन । स्त्रीषु सङ्गः । हिंसायां क्रौर्यं दयानाशकमिति ज्ञेयम् । यद्यपि सर्वं सर्वत्र संभवति, तथापि प्राधान्येनानृतादीनां द्यूतादिषु यथासङ्ख्यं ज्ञेयम् । द्वादशस्कन्धे तु 'सत्यं दया तपो दानमिति पादा विभोर्नृप' इत्यत्र दानशब्देन शौचमेवोक्तम् । मनःशुद्धिरूपत्वाद्भूताभयदानस्य । 'त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः । अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः' इत्यत्र चाऽसन्तोपशब्देन तस्य हेतुर्गर्वो लक्ष्यते । विग्रहशब्देन च तद्धेतुः स्त्रीसङ्ग इत्यविरोधः ॥ ३८ ॥ चतुर्विधस्याप्येकत्रैवावस्थानं देहीति पुनर्याचमानाय जातरूपं सुवर्णं दत्तवान् । ततः सुवर्णदानात् अनृतम्, मदम्, काममिति स्त्रीषु सङ्गम्, रज इति रजोमूलां हिंसाम्, एतानि चत्वारि पञ्चमं वैरं चाददिति ॥ ३९ ॥ ॥

१ ब्रह्मावर्तप्रमाणं च—'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते' इति । ब्रह्मावर्त इत्युपलक्षणं यज्ञियदेशानाम् । २ अथवा इज्या आराध्या इन्द्रादयस्ते मूर्तिः शरीरं यस्य । ३ अधर्मपूगोऽधर्मसमुदायः । ४ 'इज्यात्ममूर्तिः' इति पाठस्तत्राक्षराधिक्यमार्षम् । 'इच्छामूर्तिः' इति विजयध्वजीपाठः । ५ पूर्वं अस्याध्यायस्य पञ्चविंशश्लोके इत्यर्थः । ६ सत्यमिति स्कं० १२ अ० ३ श्लो० १८ । ७ त्रेतायामिति स्कं० १२ अ० ३ श्लो० २० ।

औत्तरेयेण परीक्षिता । अमूंन्यमीषु स्थानेषु न्यवसदित्यर्थः । तस्य राज्ञो निदेशकृदाज्ञाकृत् ॥४०॥ अथ इति हेतोः बुभूषुरुद्भवितुमिच्छुः । स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः ॥४१॥ एवं कलिं निगृह्य वृषस्य पादान्प्रतिसंदधे । तपआदीनि प्रवर्तितवानित्यर्थः ॥४२॥ युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादेवेत्याह त्रिभिः । एतर्हीदानीं युधिष्ठिरेणारण्यं प्रवेष्टुमिच्छता उपन्यस्तं समर्पितमासनमध्यास्ते । अधुना आस्ते पालयत इति वर्तमानसामीप्ये वर्तमानवन्निर्देशः स्मेत्यध्याहारो वा ॥४३॥४४॥ सत्राय सत्रं कर्तुं दीक्षिता दीक्षां कृतवन्तः ॥४५॥ ॥ इति श्रीम० म० प्रथमस्कन्धे भा० दी० टीकायां सप्तदशोऽध्यायः ॥१७॥ ॥ राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ॥

अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः ॥ औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ४० ॥ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ॥ विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ४१ ॥ वृषस्य नष्टांस्त्रीन्पादांस्तपः शौचं दयामिति ॥ प्रतिसंदध आश्वास्य महीं च समवर्धयत् ॥४२॥ स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् ॥ पितामहेनोपन्यस्तं राज्ञारण्यं विविक्षता ॥४३॥ आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन् ॥ गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४४ ॥ इत्थंभूतानुभावोऽयमभिमन्युसुतो नृपः ॥ यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४५ ॥ ॥ इति श्रीम० म० प्र० कलिनिग्रहो नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७॥ ॥ सूत उवाच ॥ यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ॥ अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥१॥ ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् ॥ न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ २ ॥ उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः ॥ वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ॥ स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥ तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः ॥ यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥

स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥ १ ॥ परीक्षितो निर्याणमत्याश्चर्यं वक्तुं तत्संभावनाय जन्माश्चर्यमनुस्मारयति—यो वा इति। विप्लुष्टो निर्दग्धः सन् ॥१॥ ब्रह्मकोपादुत्थितात्तक्षकाद्यः प्राणविप्लवः प्राणनाशस्तस्माद्यदुरु भयं तस्मान्न संमुमोह । तत्र हेतुः—यस्तु भगवत्सेवार्पिताशय इति ॥ २ ॥ किंतु उत्सृज्येति । वैयासकेः शुकस्य शिष्यः सन् । विज्ञाता अजितस्य हरेः संस्थितिस्तत्त्वं येन सः ॥ ३ ॥ न चैतच्चित्रमित्याह । उत्तमश्लोकस्यैव वार्ता येष्वत एव नित्यं तत्कथारूपममृतं जुषतां संभ्रमो मोहो न स्यात् ॥ ४ ॥ तस्मिन्राज्ञि सुतरां तन्न चित्रमित्याशयेनाह—तावदिति । अभिमन्योः पुत्र एकराट् चक्रवर्ती ईशः

---

१ अमूनि अमीषु । अथवा 'कालाध्वभावदेशानाम्' इति कारिकावलात्कर्मत्वम् । २ उद्भवितुमिच्छुरिति अत्यर्थं सद्भावं प्राप्तुमिच्छुरित्यर्थः । ३ आसनमध्यास्त इति । 'अधिशीङ्स्थासां कर्म' इति सप्तम्यर्थे द्वितीया । ४ अधुना आस्ते इति पालयत इति च द्वयमभिमश्लोकद्वयस्थमालोचनीयम् । ५ गुरुः स्ववृत्तेन प्रजाशिक्षयिता । धर्मोपदेष्टा इति विजयध्वजी । ६ इत्थंभूतेति कल्यादिवन्धनलक्षणसामर्थ्योपेतः । ७ पालयत इति वर्तमानसामीप्ये लटः शत्रादेशः । पालितवतः । ८ विज्ञातोऽनुभवगोचरीकृतोऽजितः संस्थितौ मरणकाले येन । यद्वा विज्ञातेऽजिते भगवति सस्थितिर्निष्ठा यस्य । 'विज्ञानार्जितसंस्थितिः' इति विज० पाठः । ९ 'उर्व्या आभिमन्यवः' इति पाठः । १० आशयोऽन्तःकरणम् ।

पतिर्यावत् ॥५॥ ननु तदा कलेरप्रवेश एवास्तु, इह प्रविष्टोऽपि न प्राभवदिति कुतस्तत्राह—यस्मिन्नहनि। यर्हि यस्मिन्नेव क्षणे। गां पृथ्वीम्। अनुवृत्तः प्रविष्टः। अधर्मस्य प्रभवो यस्मिन् ॥ ६ ॥ नन्वधर्महेतुं कलिं सर्वथा किं न हतवांस्तत्राह—नानुद्वेष्टीति। सारङ्गो भ्रमर इव सारग्राही। सारमाह। यद्यस्मिन्कुशलानि पुण्यान्याशु संकल्पमात्रेण फलन्ति। इतराणि पापान्याशु न सिध्यन्ति। यतस्तानि कृतान्येव सिध्यन्ति नतु संकल्पितमात्राणीति ॥ ७ ॥ ननु दोषाधिक्याद्द्वेष एव युक्तः, न, धीरेषु तस्याकिंचित्करत्वादित्याह—किं न्विति। किं नु तेन भवेत्। बालेष्वधीरेषु। अप्रमत्तोऽवहितः सन्यो वृक इव वर्तते ॥ ८ ॥ पारीक्षितमाख्यानम्। अपृच्छत पृष्टवन्तो यूयम् ॥ ९ ॥ किंबहुना नरैरेतावदेव कर्तव्यमिति सर्वशास्त्रार्थसारं कथयति—या या इति। कथनीयान्युरूणि कर्माणि यस्य तस्य गुणकर्मविषयाः। बुभूषुभिः सद्भावमिच्छद्भिः ॥ १० ॥ पुनर्विस्तरेण कथनार्थं सूतोक्तिं तत्सङ्गं चाभिनन्दन्ति—सूतेति त्रिभिः। शाश्वतीः समा अनन्ता-

यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ॥ तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः ॥६॥ नानुद्वेष्टि कलिं सम्राट् सारङ्ग[1] इव सारभुक् ॥ कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥७॥ किं नु बालेषु शूरेण कलिना धीरभीरुणा ॥ अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ॥ वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥९॥ या याः कथा भगवतः कथनीयोरुकर्मणः ॥ गुणकर्माश्रयाः पुंभिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥ ॥ ऋषय ऊचुः ॥ सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ॥ यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥११॥ कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ॥ आपाययति गोविन्दपादपद्मासवं मधु ॥ १२ ॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥ को नाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य ॥ नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥ ॥ ॥४॥

न्वत्सरान् जीव। अत्यन्तसंयोगे द्वितीया। विशुद्धं यशः कीर्तयसि। तच्चास्माकं मर्त्यानाममृतं मरणनिवर्तकम् ॥ ११ ॥ किंच अस्मिन्कर्मणि सत्रेऽनाश्वासेऽविश्वसनीये। वैगुण्यबाहुल्येन फलनिश्चयाभावात्। धूमेन धूम्रो विवर्ण आत्मा शरीरं येषां तानस्मान्। कर्मणि षष्ठी। आसवं मकरन्दम्। मधु मधुरम् ॥ १२ ॥ भगवत्सङ्गिनो विष्णुभक्तास्तेषां सङ्गस्य यो लवोऽत्यल्पः कालस्तेनापि स्वर्गं न तुलयाम समं न पश्याम। न चापवर्गम्। संभावनायां लोट्। मर्त्यानां तुच्छा आशिषो राज्याद्या न तुलयामेति किमु वक्तव्यम् ॥ १३ ॥ एवं सत्सङ्गमभिनन्द्य श्रवणौत्सुक्यमाविष्कुर्वन्ति—को नामेति। रसविद्रसज्ञः। महत्तमानामेकान्तेन परमयनमाश्रयो यस्तस्य कथायाम्। अगुणस्य प्राकृतगुणरहितस्य। कल्याणगुणानामन्तं ये योगेश्वरास्तेऽपि न जग्मुरेतावन्त इति न परिगणयांचक्रुः। भवः शिवः पाद्मो ब्रह्मा च मुख्यौ येषां ते ॥ १४ ॥ ॥ ॥ ॥ ॥

१ वृको 'घोव' इति ख्यातः। वत्सादन इति राजनिघंटुः। २ सारं गायतीति सारङ्गः। ३ अथवा धूमेन धूम्रौ विरञ्जितौ आत्मानौ शरीरचित्ते येषाम्। ४ 'उभयप्राप्तौ कर्मणि' इति सूत्रेणेति यावत्। ५ महत्तमेभ्य एकान्ततः परया उत्कृष्टया श्रियोऽप्ययनस्य इति विज०। ईयते इत्ययनं, ईयत्यनेनेत्ययनं, इयत्यस्मिन्नित्ययनमिति त्रिधा व्युत्पन्नानामयनशब्दानां तन्त्रेण निर्देशः इति वीर०।

नोऽस्माकं मध्ये भगवान्प्रधानं सेव्यो यस्य स भवान्नः शुश्रूषतां हरेश्चरितं विस्तारयतु ॥ १५ ॥ तच्च शुकपरीक्षित्संवादेन कथयेत्याहुः—स वा इति द्वाभ्याम् । वैयासकिना श्रीशुकेन शब्दितेन कथितेन येन ज्ञानेन ज्ञानसाधनेनापवर्ग इत्याख्या यस्य तत् खगेन्द्रध्वजस्य हरेः पादमूलं भेजे ॥ १६ ॥ तदसंवृतार्थं यथा तथा आख्याहि । तदेव निर्दिशन्ति । परीक्षिते कथितं पारीक्षितमाख्यानं श्रीभागवतं पुराणम् । परं पुण्यं सत्त्वशोधकम् । अत्यद्भुते योगे निष्ठा यस्य । अनन्तस्याचरितैरुपपन्नं युक्तम् । अत एव भागवतानामभिरामं प्रियम् । एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम् ॥ १७ ॥ श्रीभागवतव्याख्याने लब्धप्रसङ्गं महतामादरपात्रमात्मानं श्लाघते द्वाभ्याम् । अहो इत्याश्चर्ये । ह इति हर्षे । वयमिति बहुवचनं श्लाघायाम् । प्रतिलोमजा अप्यद्य जन्मभृतः सफलजन्मान आस्म जाताः । वृद्धानामनुवृत्त्या आदरेण । ज्ञानवृद्धः शुकस्तस्य सेवयेति वा । यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडां महत्तमानामभिधानयोगो लौकिकोऽपि संभाषणलक्षणः संबन्धो विधुनोत्यपनयति ॥ १८ ॥ कुतः पुनः किं पुनर्वक्तव्यं तस्यानन्तस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो

तन्नो भवान्वै भगवत्प्रधानो महत्तमैकान्तपरायणस्य ॥ हरेरुदारं[2] चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन् ॥१५॥ स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः[3] ॥ ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ॥ १६ ॥ तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ॥ आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥ सूत उवाच ॥ अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्यापि विलोमजाताः ॥ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥ कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ॥ योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥ एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ॥ हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥२०॥ अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः ॥ सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः ॥ २१ ॥ ॥ ॥ ६९ ॥

दौष्कुल्यं विधुनोतीति । यद्वा नाम गृणतः पुनः कुतो दौष्कुल्यमिति । यद्वा गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमिति कैमुत्यन्यायमेवाह । अनन्ताः शक्तयो यस्य । स्वतोऽप्यनन्तः । किंच महत्सु गुणा यस्य स महद्गुणः तस्य भावस्तस्मात् । यं गुणतोऽप्यनन्तमाहुः ॥ १९ ॥ एतत्प्रपञ्चयति त्रिभिः—एतावतेति । तस्य यदसाम्यमनतिशायनं च गुणैस्तत्साम्यं तदाधिक्यं चान्यस्य नास्तीत्यस्यार्थस्य ज्ञानमेतावता सूचितेनैवालं पर्याप्तं कस्तद्विस्तरतो वक्तुं शक्नोति । तदेवाह । इतरान्ब्रह्मादीन्प्रार्थयमानान् हित्वा विभूतिर्लक्ष्मीरनभीप्सोरपि यस्याङ्घ्रिरेणुं सेवत इति ॥ २० ॥ अथेत्यर्थान्तरे । यस्य पादनखादवसृष्टं निःसृतमपि विरिञ्चेनोपहृतं समर्पितमर्हणाम्भोऽर्घोदकमीशसहितं जगत्पुनाति । विरिञ्चोपहृतं सेशमिति च तयोरप्युपासकत्वमुक्तम् । तस्मान्मुकुन्दव्यतिरिक्तः को नाम भगवत्पदस्यार्थः । स एव सर्वेश्वर इत्यर्थः ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥

१ ब्राह्मण्यां क्षत्रियाज्जाता अपि । २ उदार धर्मार्थकाममोक्षचतुर्विधपुरुषार्थप्रदम् । ३ अदभ्रा अनल्पा बुद्धिर्यस्य सः । ४ असाम्यश्चासावनतिशायनश्चेति । गुणैरसाम्याधिक्यस्येत्यर्थः । क्रम० । ५ ज्ञानशक्तिवलैश्वर्यतेजःप्रभृत्यसंख्येयकल्याणगुणपौष्कल्यवदभिधायकेन भ..व..टब्देन प्रवृत्तिनिमित्तानामाश्रयः को वान्य इत्यर्थः ।

धीराः सन्तः । ऊढं धृतम् । अन्त्यं परमकाष्ठापन्नम् । तदाह । यस्मिन्नहिंसा उपशमश्च स्वाभाविको धर्मः ॥ २२ ॥ एवं स्वभाग्यमभिनन्द्य पारीक्षितोपाख्यानं वक्तुमाह—अहं हीति । हे अर्यमणः हे सूर्यास्त्रयीमूर्तयः, अत्र यावानात्मावगमो मम ज्ञानं तावदाचक्षे प्रवक्ष्यामि । तथाहि । यथा पक्षिणो नभ आत्मसमं स्वशक्त्यनुरूपमेवोत्पतन्ति न कृत्स्नं, तथा विपश्चितोऽपि विष्णोर्गतिं लीलां समं स्वमत्यनुरूपमेव वदन्तीत्यर्थः ॥२३॥ संप्रति कथामुपक्षिपति—एकदेति ॥२४॥ अचक्षाणोऽपश्यन् तं प्रसिद्धमाश्रमम् । तस्मिंश्च मुनिं शमीकम् ॥ २५ ॥ प्रतिरुद्धाः प्रत्याहृता इन्द्रियादयो येन तम् । अत एवोपरतम् । स्थानत्रयाज्जाग्रदादिलक्षणात्परं तुरीयं पदं प्राप्तम् । अत एव ब्रह्मभूतत्वादविक्रियम् ॥ २६ ॥ विप्रकीर्णाभिर्जटाभिराच्छन्नम् । रुरुर्मृगविशेषस्तस्य चर्मणा चाच्छन्नम् । विशेषेण

यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम् ॥ व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशमः स्वधर्मः
॥ २२ ॥ अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ॥ नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं
विष्णुगतिं विपश्चितः ॥२३॥ एकदा धनुरुद्यम्य विचरन्मृगयां वने ॥ मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम्
॥ २४ ॥ जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ॥ ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥ प्रतिरुद्धे-
न्द्रियप्राणमनोबुद्धिमुपारतम् ॥ स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥ विप्रकीर्णजटाच्छन्नं रौरवेणाजि-
नेन च ॥ विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥ अलब्धतृणभूम्यादिरसंप्राप्तार्घसूनृतः ॥ अवज्ञातमिवा-
त्मानं मन्यमानश्चुकोपह ॥२८॥ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ॥ ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च
॥ २९ ॥ स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ॥ विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागत् ॥ ३० ॥ एष किं निभृ-
ताशेषकरणो मीलितेक्षणः ॥ मृषासमाधिराहोस्वित्किं नु स्यात्क्षत्रबन्धुभिः ॥ ३१ ॥ तस्य पुत्रोऽतितेजस्वी विहर-
न्बालकोऽर्भकैः ॥ राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥३२॥ अहो अधर्मः पालानां पीव्नां बलिभुजामिव ॥
स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥ ॥ ॥ ॥

शुष्यत्तालु यस्य सः । तथाभूतं मुनिमुदकमयाचत ॥ २७ ॥ न लब्धं तृणं तृणासनं भूम्याद्युपवेशस्थानं च येन सः । न संप्राप्तोऽर्घः सूनृतं प्रियवचनं च येन सः ॥२८॥ मत्सरस्तदुत्कर्षासहनम् ॥२९॥ गतासुं मृतम् । धनुष्कोट्या चापाग्रेण ॥३०॥ सर्पनिधाने राज्ञोऽभिप्रायमाह । एष किं प्रत्याहृतसर्वेन्द्रियः सन् मीलितेक्षणः स्थितो यद्वा क्षत्रबन्धुभिरागतैर्गतैर्वा किं नु स्यादित्यवज्ञया मृषासमाधिः सन्निति जिज्ञासयेत्यर्थः ॥३१॥ तस्य पुत्रः शृङ्गीनामा । अतितेजस्वी तपोबलसंपन्नः । अघं दुःखम् । तत्र अर्भकमध्ये ॥ ३२ ॥ पालानां राज्ञाम् । पीव्नां पुष्टानाम् । अधर्ममेव निर्दिशति । स्वामिनि दासानां यदघं पापाचरणं बलिभुजां

१ 'प्रत्यभूत्तस्य' 'प्रत्यभूद्राज्ञ.' इति पाठौ । २ 'आगतः' इति पाठः । ३ तृणमिति । तत्र स्मृतिः—'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ॥ एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन' इति । ४ राजसु ब्राह्मणैः पाप्यस्याकर्तव्यत्वादत्रार्घस्यैव ग्रहणमिति सुबो० ।

काकानामिव शुनामिव चेति ॥ ३३॥ दासत्वं दर्शयति—ब्राह्मणैरिति । सभाण्डं भाण्डे एव स्थितम् ॥ ३४ ॥ तत्तदनन्तरम् । अहं शास्मि दण्डयामि ॥ ३५॥ इति वयस्यानुक्त्वा रोषेण ताम्रे अक्षिणी यस्य सः । कौशिकी नदी तस्या अपः । सन्धिरार्षः । वाग्वज्रं शापम् ॥ ३६॥ इत्येवं सर्पनिक्षेपेण । दक्ष्यति भक्षयिष्यति । पाठान्तरे भस्मीकरिष्यति । स्मेति पादपूरणे । कुलस्याङ्गारतुल्यम् । मे मया । ततेति ह्रस्वत्वमार्षम् ॥ ३७ ॥ गले सर्पकलेवरं यस्येत्यलुक्समासः । मुक्तकण्ठः उच्चैरित्यर्थः ॥ ३८ ॥ ३९ ॥ तं सर्पं विसृज्य । केनापकारः कृतः ॥ ४० ॥ अनभिनन्दनवाक्यमहो इत्यादि । बत कष्टम् । ते त्वया महत्पापं कृतम् ।

ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो[3] निरूपितः ॥ स कथं तद्गृहे द्वास्थः सभाण्डं[1] भोक्तुमर्हति ॥ ३४ ॥ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ॥ तद्भिन्नसेतूनद्याहं[4] शास्मि पश्यत मे बलम् ॥ ३५ ॥ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान्[5] ॥ कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥ इति लङ्घितमर्यादं तक्षकः सप्तमेऽहनि ॥ दङ्क्ष्यति स्म[2] कुलाङ्गारं चोदितो मे ततद्रुहम् ॥ ३७ ॥ ततोऽभ्येत्याश्रमं बालो गलेसर्पकलेवरम् ॥ पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३८ ॥ स वा आङ्गिरसो[6] ब्रह्मन् श्रुत्वा सुतविलापनम् ॥ उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् ॥ ३९ ॥ विसृज्य पुत्रं पप्रच्छ[7] वत्स कस्माद्धि रोदिषि ॥ केन वा ते[8] प्रतिकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥ निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत् ॥ अहो बतांहो महदद्य ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४१ ॥ न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे ॥ यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥ अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः ॥ तदा हि चोरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥ ४३ ॥ तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकात् ॥ परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान्पुरुदस्यवो जनाः ॥ ४४ ॥ तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः[9] ॥ ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसंकरः ॥ ४५ ॥ ॥ ६१ ॥ ॥ ६७ ॥

द्रोहे अपराधे । दमो दण्डः ॥ ४१ ॥ परो विष्णुरित्याख्या ख्यातिर्यस्य तं नरदेवम् । नृभिः संमातुं समं द्रष्टुम् ॥ ४२ ॥ अलक्ष्यमाणेऽदृश्यमाने । अविवरूथवन्मेषसङ्घवत् ॥ ४३ ॥ नष्टो नाथो यस्य लोकस्य तस्य वसोर्वसुनो धनस्य विलुम्पकादपहर्तुश्चोरादेर्हेतोर्यत्पापं भविष्यति तदस्मन्निमित्तत्वादस्मानुपैष्यति । अनन्वयं संबन्धशून्यमेव । तदेव पापं दर्शयति—परस्परमिति । शपन्ति परुषं वदन्ति । पश्वादीन्वृञ्जतेऽपहरन्ति । पुरुदस्यवश्चोरबहुलाः ॥ ४४ ॥ आर्यधर्मः सदाचारः । शुनां कपीनामिवार्थकामयोरेवाभिनिवेशितचित्तानाम् ॥ ४५ ॥ ॥ ॥ ॥ ॥

१ सभाण्डमेकपात्र यथा तथा भोक्तुमर्हतीति क्रियाविशेषण वा । २ 'दक्ष्यति स्म' इत्येवंरूपे । ३ द्वारपालत्वेन श्वेव नियोजितः । 'गृहपालः' इति पाठः । ४ भिन्नसेतून् लङ्घितमर्यादान् । ५ 'ऋषिबालकः' इति वीर० पाठः । ६ आङ्गिरसः शमीकः । ७ 'तं च पप्रच्छ' इति पाठः । ८ 'तेऽप्यकृतं' 'ते विप्रकृतं' इति पाठौ । ९ त्रयीमयः त्रैय्या आगतः 'मयट् च' इति मयट् ।

एवं राजमात्रस्य शापानर्हत्वमुक्त्वा प्रस्तुते विशेषमाह—धर्मपाल इति सार्धेन । हयमेधयाऽश्वमेधयाजी । नन्वेवंभूतश्चेत्तत्कुतोऽपकृतवांस्तत्राह—क्षुत्तृडिति । स्वागतप्रश्नाभावेनावज्ञातः प्रत्युत शापं कथमर्हतीत्यर्थः ॥ ४६ ॥ अस्य महापापस्यान्यत्प्रायश्चित्तमदृष्ट्वा पापमावेदयन् भगवन्तं प्रार्थयते—अपापेष्विति ॥ ४७ ॥ राजा चेत्प्रतिशापं दद्यात्तर्हि निष्कृतिर्भवेदपि तत्तु न संभवति तस्य महाभागवतत्वादित्याह । तिरस्कृता निन्दिताः । विप्रलब्धा वञ्चिताः । क्षिप्ता अवज्ञाताः । हतास्ताडिताः । अस्य तिरस्कारादिकर्तुः । न तत्प्रतीकारं कुर्वन्ति । तद्भक्ता विष्णुभक्ताः । प्रभवः समर्था अपि ॥ ४८ ॥ विप्रकृतोऽपकृतः । अघमपराधम् ॥ ४९ ॥ युक्तं चैतदित्याह—प्रायश इति । द्वन्द्वेषु सुखदुःखादिषु । अगुणाश्रयः सुखदुःखाद्याश्रयो न भवति ॥ ५० ॥ ॥ इति श्रीमद्भा० म० प्र० भावार्थदीपिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ प्रायोपविष्टे गङ्गायां राज्ञि योगिजनावृते ॥ शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ १ ॥

धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः ॥ साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ॥ क्षुत्तृट्श्रमयुतो दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥ अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना ॥ पापं कृतं तद्भगवान्सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥ तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हतापि वा ॥ नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥ ४८ ॥ इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ॥ स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥४९॥ प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ॥ न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ ५० ॥ ॥ इति श्रीमद्भा० म० प्र० विप्रशापोपलम्भनं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥छ॥ ॥ सूत उवाच ॥ महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ॥ अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥ ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ॥ तदस्तु कामं त्वघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥ अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ॥ दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवगोभ्यः ॥ ३ ॥ ॥छ॥

स्वकृतं तत्कर्म मुनिस्कन्धे सर्पप्रक्षेपणं गर्ह्यं निन्द्यं चिन्तयन्सुदुर्मना जातः । चिन्तामेवाह सार्धाभ्याम्—अहो इति । नीचं पापम् । अमीवमिति पाठे स एवार्थः । ब्रह्मणि ब्राह्मणे । गूढं गुप्तं तेजो यस्य तस्मिन् ॥ १ ॥ कृतं यद्देवहेलनमीश्वरावज्ञापापमित्यर्थः । तस्मान्मे व्यसनं भविष्यति तत्तु नातिदीर्घात्कालादचिरादेवास्तु तत्राप्यद्धा साक्षान्ममैव न पुत्रादिद्वारेणेति प्रार्थना । काममसंकोचतः । एवं प्रार्थनायाः प्रयोजनम् । अघस्य निष्कृताय प्रायश्चित्ताय । यथा पुनरेवं न कुर्यामिति ॥ २ ॥ एवं साक्षात्स्वस्यैव व्यसनं संप्रार्थ्य ततः प्रागेव किंचित्प्रार्थयते । अद्यैव मे राज्यादि दहतु प्रकोपितं ब्रह्मकुलमेवानलः । पुनर्द्विजादीन्पीडयितुं धीर्मे मा भून्न भवेदित्यर्थः ॥ ३ ॥ ॥ ॥ ॥ ॥

१ बृहत् श्रवः कीर्तिर्यस्य । २ सूतोक्तिरियम् । ३ महामुनिशब्दोऽत्र यौगिकः । महामननशील इति यावत् । ४ गुणाश्रयः शीलाश्रय इति वीर० । ५ 'मयामीवं' इति वीर० पाठस्तत्र अमीवं निकृष्टं कर्म पापमित्यर्थः । ६ 'नूनं ततः' इति पाठः । ७ 'काममघनिष्कृताय' 'कामं त्वघनिष्कृताय' इति पाठौ । ८ न भूयादितीष्टे अभूदिति व्यत्ययो राज्ञो महानुतापसूचनायेति ज्ञातव्यम् । विज० ।

इत्थं चिन्तयन्स राजा मुनेः सुतेनोक्तः सप्तमेऽहनि निर्ऋतिर्मृत्युर्यथा भविष्यति तथाऽशृणोत् । शमीकप्रेषितशिष्याच्छ्रुत्वा च स तक्षकस्य विषाग्निं साधु मेने । यतो विषयेषु प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥ अथो अनन्तरमुभौ लोकौ पुरस्ताद्राज्यमध्य एव हेयतया विचारितौ विहाय श्रीकृष्णाङ्घ्रिसेवामेवाधिमन्यमानः सर्वपुरुषार्थाधिकां जानन् प्रायमनशनं तस्मिन्नित्यर्थः । तत्संकल्पेनोपाविशदिति यावत् । यद्वा प्रायं प्रकृष्टमयनं शरणं यथा भवति तथा ॥ ५ ॥ अमर्त्यनद्यामिति विशेषणस्य फलमाह । या गङ्गा लसन्ती श्रीर्यस्यास्तुलस्यास्तया विमिश्रा ये कृष्णाङ्घ्रिरेणवस्तैरभ्यधिकं सर्वोत्कृष्टं यदम्बु तस्य नेत्री तद्वाहिनी । उभयत्र अन्तर्बहिश्च सेशान् लोकपालैः सहितान् लोकान् पुनाति। मरिष्यमाण आसन्नमरणः। मरणस्यानियतकालत्वात्सर्वोऽपि तथा। अतस्तां को न सेवेत ॥ ६ ॥

स चिन्तयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः ॥ स साधु मेने न चिरेण तक्षकानलं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥ अथो विहायेममसुं च लोकं विमर्शितो हेयतया पुरस्तात् ॥ कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम् ॥ ५ ॥ या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ॥ पुनाति लोकानुभयत्र सेशान् कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥ इति व्यवच्छिद्य स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ॥ दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥७॥ तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ॥ प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥ अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ॥ पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ ॥ ९ ॥ मेधातिथिर्देवल आर्ष्टिषेणो भारद्वाजो गौतमः पिप्पलादः ॥ मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥ १० ॥ अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च ॥ नानार्षेयप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥११॥ सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ॥ विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः ॥ १२ ॥ ॥ ७१ ॥

इत्येवं विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य । पाण्डवेय इति तत्कुलौचित्यं दर्शयति । नास्त्यन्यस्मिन् भावो यस्य सः । कुतः । मुनिव्रत उपशान्तः । तत्कुतः । मुक्तः समस्तसङ्गो येन सः ॥ ७ ॥ तत्र तदा तद्दर्शनार्थं मुनय उपागता न तु तीर्थस्नानार्थम् । कृतार्थत्वात् । ननु तादृशानामपि तीर्थयात्रा दृश्यते तत्राह—प्रायेणेति । तीर्थयात्राव्याजैः ॥ ८ ॥ ९ ॥ १० ॥ अरुणादयः काण्डर्षित्वविशेषेण पृथक् निर्दिष्टाः । नाना यान्यार्षेयाणि ऋषीणां गोत्राणि तेषु प्रवरान् श्रेष्ठान् । शिरसा भुवं स्पृष्ट्वा ववन्दे ॥ ११ ॥ विज्ञापनार्थं पुनः कृतप्रणामः । विविक्तं शुद्धं चेतो यस्य । अभिगृहीतौ संयोजितौ पाणी येन सः । स्वचिकीर्षितं प्रायोपवेशनादियुक्तमयुक्तं वेति विज्ञापयामास ॥ १२ ॥ ॥ ॥ ॥ ॥

१ प्रायस्यान्नपरित्यागरूपस्य भगवद्व्रतत्वेनाभीष्टत्वात्कर्मत्वम् । अन्यथा तादर्थ्ये चतुर्थी स्यात् । २ 'प्रवरास्तान्समेतान्' इति पाठः । समेतान्सङ्घीभूतान् । ३ उपस्थितस्तेषां समीपे तिष्ठन् । ४ विज्ञापयामासेति वक्ष्यमाणमित्येव ज्ञेयम् । क्रम० ।

अनुमोदनेनानुग्रहमालक्ष्यात्मानं श्लाघते—अहो इति । नृपाणां मध्ये महत्तमैरनुग्रहणीयं शील वृत्तं यषां ते । एतच्च राज्ञामतिदुर्लभमित्याह ! ब्राह्मणानां पादशौचात् पादक्षालनोदकात् 'दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत्' इति स्मृते. दूरे हि तैस्तद्विसृज्यत । ततोऽपि दूरादेव विसृष्ट क्षिप्तम् । तत्रापि स्थातुमयोग्यमित्यर्थः । गर्ह्यं कर्म यस्येत्यात्मानमुद्दिश्योक्तम् ॥१३॥ आस्तां तावदनुग्रहः. ब्रह्मशापोऽपि भगवत्प्रसादादव जात इत्याह । तस्य गर्ह्यकर्मण एव । अतोऽघस्य पापात्मनो गृहेष्वासक्तचित्तस्य मे स्वप्राप्तये परावराणामीश एव द्विजशापतया बभूव । यत्र यस्मिन् शापे सति गृहेषु प्रसक्तो भयं धत्ते निर्विण्णो भवति । यतो निर्वेदमूलो निर्वेदो वैराग्यं मूलं प्राप्तिकारणं यस्मिन् । स्वस्य वैराग्यप्राप्यत्वात्तस्य च भयमूलत्वात्तदर्थं द्विजशापं कारितवानित्यर्थः ॥ १४ ॥

॥ राजोवाच ॥ अहो वय धन्यतमा नृपाणां महत्तमानुग्रहणीयशीला. ॥ राज्ञां कुलं ब्राह्मणपादशौचाद्दूराद्विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥ तस्यैव मेऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ॥ निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते ॥ १४ ॥ तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे ॥ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥ १५ ॥ पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु ॥ महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥ इति स्म राजाध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ॥ उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥ १७ ॥ एवं च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः ॥ प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥१८॥ महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः ॥ ऊचुः प्रजानुग्रहशीलसारा यदूत्तमश्लोकगुणाभिरूपम् ॥ १९ ॥ न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु ॥ येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥ सर्वे वयं तावदिहास्महेऽद्य कलेवरं यावदसौ विहाय ॥ लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ २१ ॥ ॥ ७ ॥

तान्प्रार्थयते—तमिति द्वाभ्याम् । तं मा मामुपयातं शरणागतं प्रतियन्तु जानन्तु । देवी देवतारूपा गङ्गा च प्रत्येतु । वाशब्द प्रतिक्रियानादरे । गाथाः कथाः ॥१५॥ स आश्रयो येषां तेषु प्रकृष्टः सङ्गो भूयात् । तस्यां तस्यां सृष्टौ जन्मनि ॥१६॥ अध्यवसायो निश्चय । प्राचीनानि प्रागग्राणि मूलानि येषां तेषु प्रागग्रेषु कुशेष्वास्ते स्म । स्वसुते जनमेजये न्यस्तो भारो राज्यं येन सः ॥१७॥ मुदा व्यकिरन् । देवसङ्घैर्वादिता दुन्दुभयो नेदु' ॥ १८ ॥ प्रजानुग्रहे शीलं स्वभावः सारो वलं च येषाम् उत्तमश्लोकगुणैरभिरूपं सुन्दरम् ॥ १९ ॥ भवत्सु पाण्डोर्वंश्येषु । ये जहुरिति युधिष्ठिराद्यभिप्रायेण ॥ २० ॥ परस्परं संमन्त्रयन्ते—सर्वे

१ यद्वा महत्तमाना भवतामनुग्रहं शीलयन्ति ते । अथवा महत्तमानुग्रहलभ्यं शीलं येषाम् । २ द्विजशापतयेति मूलस्थद्विजशापरूप इत्यस्यार्थः । ३ निर्वेदमूल इति पुंस्त्वमार्षम् । ४ मृत्युचिन्तारहितत्वाद्धीर इत्युक्तम् । ५ समुद्रपत्न्या गङ्गायाः । दक्षिणकूलशब्देन तीरगतप्रासादे इत्यर्थः । अत्र आस्ते इति लडपि विधिविशेषद्योतनार्थः । ६ प्रसूनैः प्रसूनानीत्यर्थः । ७ तस्यां तस्यामिति मूलगतसर्वत्रेत्यस्यार्थः ।

इति । पर श्रेष्ठं लोकम् । तत्र हेतुः—विरजस्कं निर्मोयं विशोकं च यास्यतीति । कुतस्तत्राह—अयमिति ॥ २१ ॥ आश्रुत्याकर्ण्य । समं पक्षपातशून्यम् । मधुच्युदमृतस्रावि । गुरु गम्भीरार्थम् । अव्यलीकं सत्यम् ॥ २२ ॥ त्रयाणां लोकानां पृष्ठे उपरि सत्यलोके वेदा यथा मूर्तिधरा भवन्ति तत्तुल्याः । ज्ञानातिशयमुक्त्वा कृपालुतामाह—नेहेति । भवतां प्रयोजनं परानुग्रहं विना नास्ति । तर्हि स एवार्थः स्यात्, न । आत्मशीलं स्वस्वभावम् ॥ २३ ॥ पृच्छ्यं प्रष्टव्यम् । विश्रभ्य विश्वासं कृत्वा । एवं कर्तव्यमित्यस्य भाव इतिकृत्यता तस्मिन्विषये । सर्वात्मना सर्वावस्थासु यत्कृत्यं विशेषतश्च म्रियमाणैस्तच्च शुद्धं पापसंपर्करहितमामृशत विचारयत ॥ २४ ॥ तत्र तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छया गां पर्यटन्व्यासपुत्रस्तत्राभवत्प्रासः । न लक्ष्यमाश्रमादिलिङ्गं यस्य । अवधूतोऽवज्ञया जनैस्त्यक्तो यस्तस्येव वेषो यस्य सः ॥ २५ ॥ तमित्यादीनां प्रत्युत्थिता इति तृतीयश्लोकेनान्वयः । द्विगुणान्यष्टौ वर्षाणि यस्य । सुकुमारौ

आश्रुत्य तदृषिगणवचः परीक्षित्समं मधुच्युद्गुरु चाव्यलीकम् ॥ आभाषतैतानभिनन्द्य युक्तं शुश्रूषमाणश्चरितानि विष्णोः ॥ २२ ॥ समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे ॥ नेहाथवामुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम् ॥ २३ ॥ ततश्च वः पृच्छ्यमिमं विपृच्छे विश्रभ्य विप्रा इतिकृत्यतायाम् ॥ सर्वात्मना म्रियमाणैश्च कृत्यं शुद्धं च तत्रामृशताभियुक्ताः ॥ २४ ॥ तत्राभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ॥ अलक्ष्यलिङ्गो निजलाभतुष्टो वृतः स्त्रिबालैरवधूतवेषः ॥ २५ ॥ तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाह्वंसकपोलगात्रम् ॥ चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ २६ ॥ निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरं च ॥ दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ २७ ॥ श्यामं सदाऽपीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ॥ प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ २८ ॥ ॥ ॥ ६ ॥

कोमलौ पादौ करावूरू बाहू अंसौ कपोलौ गात्रं च यस्य । चारुणी आयते अक्षिणी यस्मिन् । उन्नता नासा यस्मिन् । लम्बहस्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन् । शोभने च भ्रुवौ यस्मिन् एवंभूतमाननं यस्य । कम्बुवद्रेखात्रयाङ्कितः सुष्ठु जातः कण्ठो यस्य ॥ २६ ॥ कण्ठस्याधोभागयोः स्थिते ते अस्थिनी जत्रुणी । मांसेन निगूढे जत्रुणी यस्य । पृथु विस्तीर्णं तुङ्गमुन्नतं च वक्षो यस्य । आवर्तवन्नाभिर्यस्य । वलिभिस्तिर्यङ्निम्नरेखाभिर्वल्गु रम्यमुदरं यस्य । दिश एवाम्बरं यस्य । वक्त्रा विकीर्णाः केशा यस्य । प्रलम्बौ बाहू यस्य । स्वमरेषु श्रेष्ठदेवेषूत्तमो हरिस्तद्वदाभा यस्य तम् ॥ २७ ॥ सदा अपीच्यमत्युत्तमं यद्वयो यौवनं तेन याऽङ्गलक्ष्मीर्देहकान्तिस्तया रुचिरस्मितेन च । गूढवर्चसमपि प्रत्युत्थितास्तं दृष्ट्वा प्रत्युद्गमं कृतवन्त इत्यर्थः ॥ २८ ॥ ॥ ॥ ॥

१ "आश्रुत्यर्षिगणवचः परीक्षित्' 'आश्रुत्य तेषां वचनं परीक्षित्' इति पाठौ । २ 'अभाषतैनानभिवन्द्य युक्तः' इति पाठः । ३ 'नामुत्र इति पाठः ४ 'पृच्छ्यमिदं' इति पाठः । ५ तत्र तादृशकृत्यविषये । ६ अभियुक्ताः कुशला आप्ता वा सवोधन वा । ७ वृतः स्त्रीबालैरिति चिन्त्यम् । 'वृतश्च बालैरवधूतवेशः' इति पाठः । ८ अपीच्यं कमनीयं वयो यस्मिंस्तस्याङ्गस्य लक्ष्म्या । वीर० ।

शिरसैव सपर्यामाजहारात्मनिवेदनं कृतवान् । तेन सहागताः स्त्र्यादयो निवृत्ताः । स चोपविवेश । सन्धिरार्पः ॥ २९ ॥ स भगवान् ब्रह्मर्ष्यादिसङ्घैः संवृतः सन्नलं व्यरोचत । ग्रहाः शुक्रादयः । ऋक्षाण्यश्विन्यादीनि । अन्यास्ताराः ॥ ३० ॥ न कुण्ठा सर्वार्थेषु मेधा यस्य तम् । प्रणम्य प्रश्नार्थं पुनर्नत्वा ॥ ३१ ॥ सूनृतां गिरमाह—अहो इति पञ्चभिः । सतां सेव्या जाताः । यतः अतिथिरूपेण हेतुना तीर्थका योग्याः कृताः ॥ ३२ ॥ ३३ ॥ विष्णोः सान्निध्यादसुरादय इव ॥ ३४ ॥ पाण्डुसुतानां प्रियोऽतस्तेषां पैतृष्वस्रेयाणां प्रीत्यर्थं तद्गोत्रस्य मे आत्तं स्वीकृतं बान्धवं बन्धुकृत्यं येन सः ॥ ३५ ॥ अन्यथा श्रीकृष्ण-

स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाऽऽजहार ॥ ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः ॥ २९ ॥ स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः ॥ व्यरोचतालं भगवान्यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ३० ॥ प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ॥ प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥ ३१ ॥ अहो अद्य वयं ब्रह्मन्सत्सेव्याः क्षत्रबन्धवः ॥ कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ३२ ॥ येषां संस्मरणात्पुंसां सद्यः शुध्यन्ति वै गृहाः ॥ किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥ ३३ ॥ सान्निध्यात्ते महायोगिन् पातकानि महान्त्यपि ॥ सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥ ३४ ॥ अपि मे भगवान्प्रीतः कृष्णः पाण्डुसुतप्रियः ॥ पैतृष्वस्रेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः ॥ ३५ ॥ अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् ॥ नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥ ३६ ॥ अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ॥ पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥ ३७ ॥ यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो ॥ स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ ३८ ॥ ॥ ॥ ॥

प्रसादं विना । अव्यक्ता गतिर्यस्य । म्रियमाणानां नितरां कथं स्यात् । वनयिता याचयिता वनयितृतमो वनीयांस्तस्य । अत्युदारतया मां याचेथा इति प्रवर्तकस्येत्यर्थः ॥ ३६ ॥ सम्यक् सिद्धिर्यस्मात्तम् । कार्यं कर्तुं योग्यम्, कर्तव्यं त्वावश्यकमिति भेदः । अत एव सर्वथा म्रियमाणस्य पुरुषस्य यस्मिन्कृते संसिद्धिर्मोक्षलक्षणा सिद्धिर्भवति तत्त्वां योगिनां गुरुं पृच्छामि ॥ ३७ ॥ यच्छ्रोतव्यं यज्जाप्यं यत्कर्तव्यं यत्स्मर्तव्यं यदाराध्यं तद्ब्रूहि । विपर्ययमश्रोतव्यादि ॥ ३८ ॥

१सोपविवेशेत्यत्र 'सोचि लोपे चेत्' इत्यनेन निर्वाहे सन्धिरार्प इति स्वामिलेखश्चिन्तनीयः २ 'असुरा भयादय इव' इति पाठः । ३ तद्गोत्रोत्पन्नस्य पौत्रस्य । ४ अकुण्ठमेधसमिति । यद्यपि 'नित्यमसिच्प्रजामेधयोः' इत्यत्र नञ्दुःसुभ्य एवेति नियमस्तथाप्यार्षत्वादसिच् । ५ 'शौचार्चनादिभिः' इति पाठः । ६ 'अद्य मे' इत्यपि पाठः । ७ वनमस्यास्तीति वनी वनवासी प्रकृतऋपिसद्भावापेक्षयातिशयेन वनी वनीयांस्तस्येति वीर० । वनीयानित्यत्र 'तुरिष्ठेमेयःसु' इति तृशब्दस्य लोपः । ततो निमित्तापाये नैमित्तिकस्याप्यपायाट्टेर्लोपाच्च वनीयानिति सिध्यति ।

तव दर्शनस्य पुनर्दुर्लभत्वादिदानीमेव कथनीयमित्याशयेनाह—नूनमिति । गोदोहनमात्रकालमपि अस्माकं भाग्यवशात्त्वद्दर्शनं जातमिति भावः ॥ ३९ ॥ एवमहो इत्यादिकया श्लक्ष्णया मधुरया गिरा आभाषितोऽभिमुखीकृतः पृष्टश्च ॥ ४० ॥ आर्यं धर्मजमाहतारिमवनौ कृत्वा परीक्षिन्नृपं ब्रह्मास्त्रादभिरक्षितं

नूनं भगवतो ब्रह्मन्गृहेषु गृहमेधिनाम् ॥ न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ ३९ ॥ ॥ सूत उवाच ॥ एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ॥ प्रत्यभाषत धर्मज्ञो भगवान्बादरायणिः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां पारमहंस्यां संहितायां प्रथमस्कन्धे शुकागमनं नामैकोनविंशोऽध्यायः ॥ ॥ १९ ॥ ॥ समाप्तोऽयं प्रथमस्कन्धः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कलिजयख्यातं च कृत्वा भुवि ॥ अन्ते यः शुकरूपतः स्वपरमज्ञानोपदेशेन तं शापादावदमुं नमामि परमानन्दाकृतिं माधवम् ॥ १ ॥ ॥ इति श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां प्रथमस्कन्धटीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ समाप्तोऽयं प्रथमस्कन्धः ॥ ॥छ॥ ॥छ॥

१ गोदोहनकालः मुहूर्तस्याष्टमभागपरिमितः परिगणितोऽस्ति । २ शापात् । आवत् । ररक्ष ।

॥ इति श्रीमद्भागवते प्रथमस्कन्धः समाप्तः ॥

श्रीगणेशाय नमः ॥ ॥ द्वितीये तु दशाध्यायैः श्रीभागवतमादितः । उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते ॥१॥ तत्र तु प्रथमेऽध्याये कीर्तनश्रवणादिभिः ॥ स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ २ ॥ यन्नामकीर्तनं दानतपोयोगादिसत्फलम् ॥ तं नित्यं परमानन्दं हरिं नर नम स्मर ॥ ३ ॥ अथ द्वितीयस्कन्धव्याख्या । उक्तः पूर्वमुपोद्घातः सप्रसङ्गः शुकागमः ॥ राज्ञा पृष्टं नृणां कृत्यमथाह शुकसन्मुनिः ॥ ४ ॥ राज्ञः प्रश्नमभिनन्दति—वरीयानिति । ते त्वया पुंसां श्रोतव्यादिषु मध्ये यः परः श्रेष्ठगोचरः प्रश्नः कृतः एष वरीयान् । यतो लोकहितमेतत्, मोक्षहेतुत्वात् । आत्मविदां मुक्तानां च संमतो यतः ॥ १ ॥ तत्र तावत्स्वाभाविकक्रियाणामनर्थहेतुत्वं वदन् 'ब्रूहि यद्वा विपर्ययम्' इत्यस्योत्तरमाह—श्रोतव्यादीनीति त्रिभिः । गृहेषु सक्तानामत एव गृहमेधिनां तद्गतपञ्चसूनापराणाम् । मेधतिर्हिंसार्थः ॥ २ ॥ तैश्च वृथैवायुर्व्ययो भवतीत्याह । नक्तं रात्रौ यद्वय आयुस्तन्निद्रया व्यवायेन रत्या वा ह्रियते । दिवा अह्नि यद्वयस्तत्

ॐ नमो भगवते वासुदेवाय ॥ ॥ श्रीशुक उवाच ॥ ॥ वरीयानेष ते प्रश्नः कृतो लोकहितं नृप ॥ आत्मवित्संमतः पुंसां श्रोतव्यादिषु यः परः ॥१॥ श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः ॥ अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥ निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ॥ दिवा चार्थेहया राजन् कुटुम्बभरणेन वा ॥३॥ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ॥ तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति॥४॥तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥५॥ एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ॥ जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥६॥ प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः ॥ नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥७॥

अर्थेहया अर्थार्थमुद्यमेन, सिद्धेऽर्थे कुटुम्बपोषणेन वा । चकारावनुक्तसमुच्चयार्थौ ॥ ३ ॥ ननु नश्वरकुटुम्बाद्यर्थं कथमायुर्व्ययं कुर्यात्तत्राह । देहादिषु आत्मनः सैन्येषु परिकरेष्वसत्सु मिथ्याभूतेष्वपि प्रमत्तः प्रसक्तस्तेषां पित्रादिदृष्टान्तेन नाशं पश्यन्नपि नानुसंधत्ते ॥ ४ ॥ एवं विपर्ययप्रश्नोत्तरमुक्त्वा श्रोतव्यादिप्रश्नस्योत्तरमाह—तस्मादिति । हे भारत भरतवंश्य । सर्वात्मेति प्रेष्ठत्वमाह । भगवानिति सौन्दर्यम् । ईश्वर इत्यावश्यकत्वम् । हरिरिति बन्धहारित्वम् । अभयं मोक्षमिच्छता ॥ ५ ॥ अतः परमन्यच्छ्रेयो नास्तीत्याह । एतावानेव जन्मनो लाभः फलम् । तमाह—नारायणस्मृतिरिति । सांख्यादिभिः साध्य इति तेषां स्वातन्त्र्येण लाभत्वं वारयति । सांख्यमात्मानात्मविवेकः । योगोऽष्टाङ्गः । अन्ते तु स्मृतिः परो लाभः । न तन्महिमा वक्तुं शक्य इत्यर्थः ॥ ६ ॥ तत्र सदाचारं प्रमाणयति—प्रायेणेति । विधिषेधतो विधिनिषेधाभ्यां निवृत्ता नैर्गुण्ये ब्रह्मणि स्थिता अपि । स्म प्रसिद्धम् ॥ ७ ॥ ॥ ॥

१ यन्नामकीर्तनं दानतपोयोगादि सत्फलम् । तं नित्यं परमानन्दं हरिं नरमहं भजे ॥ इत्यारम्भे श्लोकोऽधिकः पुस्तकान्तरे । २ नाममात्रेण वस्तुसंकीर्तनमुद्देशः । लक्ष्यते ज्ञायते अनेनेति लक्षणम् । असाधारणधर्मकथनमिति यावत् । ३ 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति । प्रतिपाद्यमर्थं मनस्याकलय्य तदर्थमर्थान्तरवर्णनमुपोद्घातः । ४ प्रथमस्कन्धान्ते 'यच्छ्रोतव्यमथो जाप्यम्' इत्याद्युक्तेषु । ५ ब्रूहीति स्कंधः १ अ० १९ श्लो० ३० । ६ 'पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते याश्च वाहयन्' । ७ तैश्च श्रोतव्यजाप्यादिभिः । ८ 'अभवम्' इति पाठः । ९ 'विधिनिषेधतः' इति पाठे आर्षमक्षराधिक्यम् । १० प्रेष्ठत्वमिति । आत्मनः सर्वापेक्षया प्रियतमत्वस्य श्रुत्या बोधनात् । ११ 'अन्ते नारायणस्मृतिः' इत्यनेन 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम्' इति गीतासिद्धान्तोऽत्र प्रतिपादितः ।

किमिदमपूर्वं कथयसि, सत्यम्, अत्यपूर्वमेवेदमित्याह । इदं भगवत्प्रोक्तं तन्नामैकप्रधानं पुराणं ब्रह्मसंमितं सर्ववेदतुल्यम् । यद्वा ब्रह्म सम्यक् मितं येन । कुतस्त्वया प्राप्तमत आह—अधीतवानिति । द्वैपायनात्पितुः । कदा । द्वापरादौ द्वापरः आदिर्यस्य कालस्य तस्मिन् द्वापरान्ते इत्यर्थः । शन्तनुसमकाले व्यासावतारप्रसिद्धेः ॥८॥ सिद्धस्य तव कुतोऽध्ययने प्रवृत्तिस्तत्राह—परिनिष्ठितोऽपीति । गृहीतचेता आकृष्टचित्तः ॥ ९ ॥ महापुरुषो विष्णुस्तदीयः । यस्य यस्मिन् श्रद्धां कुर्वताम् । सती अहैतुकी ॥१०॥ साधकानां सिद्धानां च नातः परमन्यच्छ्रेयोऽस्तीत्याह—एतदिति । इच्छतां कामिनां तत्तत्फलसाधनमेतदेव । निर्विद्यमानानां मुमुक्षूणां मोक्षसाधनमेतदेव । योगिनां ज्ञानिनां फलं चैतदेव निर्णीतम् । नात्र प्रमाणं वक्तव्यमित्यर्थः ॥११॥ अल्पमेवायुरवशिष्टं किमहं साधयेयमिति मा शुच इत्याह—किमिति त्रिभिः । परोक्षैरलक्षितैर्हायनैर्वर्षैः । विदितं वृथा यातीति ज्ञातम् । यतो येन ज्ञानेन । घटेत यत्नं कुर्यात् ॥ १२ ॥ खट्वाङ्गो हि देवपक्षे स्थित्वा दैत्यानजयत्, ततः

इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥ परिनिष्ठितोऽपि नैर्गुण्ये[3] उत्तमश्लोकलीलया ॥ गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥९॥ तदहं[4] तेऽभिधास्यामि महापौरुषिको भवान् ॥ यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती ॥१०॥ एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ॥ योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥११॥ किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ॥ वरं मुहूर्तं विदितं घटेत श्रेयसे यतः ॥१२॥ खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् ॥ १३ ॥ तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः ॥ उपकल्पय तत्सर्वं तावद्यत्सांपरायिकम् ॥१४॥ अन्तकाले तु पुरुष आगते गतसाध्वसः ॥ छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥ गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ॥ शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १६ ॥ ॥ ॥ ॥ ॥

प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते तेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति, ततो देवैरुक्तं तत्तु मुहूर्तमात्रमस्तीति, ततोऽतिशीघ्रं विमानेन भुवमागत्य हरिं शरणं गत इति । यत इयं स्वर्गभूमी रजोधिका । कर्मभूमिः पृथ्वी ॥१३॥ तव तु एतर्ह्यपि इदानीमपि । तावदिति तावता कालेन सांपरायिकं पारलौकिकं साधनं संपादय ॥ १४ ॥ तत्र वैराग्यं तावदाह—अन्तकाल इति । गतसाध्वसो मृत्युभयशून्यः । असङ्गो नाम अनासक्तिस्तेन शस्त्रेण स्पृहां सुखेच्छां, तं देहमनु ये पुत्रकलत्रादयस्तेष्वपि स्पृहां छिन्द्यात् ॥ १५ ॥ किंच गृहात्प्रव्रजितो निर्गतः । गृहे स्थितस्य पुनरप्यासक्तिसंभवात् । तत्राष्टाङ्गयोगमाह । धीर इति ब्रह्मचर्यादियमोपलक्षणम् । पुण्यतीर्थेति स्नानादिनियमोपलक्षणम् । आसनमाह—शुचाविति । विविक्ते एकान्ते । विधिवत् कुशाजिनचैलैः क्रमेण निर्मिते ॥ १६ ॥ ॥

१ युगसंधिसंध्यंशादि हित्वा मध्यस्थो मुख्यो द्वापर इत्यर्थः । २ महापुरुषं कृष्णं प्राप्तुमर्हतीति महापौरुषिकः । यद्वा महापुरुषो विष्णुः सेव्यतयाऽस्यास्तीति महापुरुषः । अर्शआदित्वादच् । ततो विनयादित्वात्स्वार्थे ठक् । उत्तरपदवृद्धिरार्षी । यद्वा महापुरुषमर्हतीत्यर्हार्थे ठक् । ३ नैर्गुण्ये गुणातीते प्राकृतगुणसम्बन्धरहिते ब्रह्मणि । ४ अत्र तदहं इत्यनेन 'जन्माद्यस्य यतः' इत्यारभ्य 'विष्णुरातममूमुचत्' इत्यन्तं सर्वं भागवतं श्रावयामासेति ज्ञेयम् । ५ इह कर्मभूमावागत्येति शेषः । ६ योगस्याष्टावङ्गानि यथा पातञ्जले—'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' इति ।

जपगर्भं प्राणायामं वक्तुं जप्यमाह । त्रिवृद्ब्रह्माक्षरं त्रिवृत्त्रिभिरकारादिभिर्वर्तितं ग्रथितं ब्रह्माक्षरं प्रणवं मनसाऽभ्यसेदावर्तयेत् । मनसेन्द्रियप्रत्याहारं वक्तुं प्राणायामेन मनोनियमनमाह । मनो यच्छेद्वशीकुर्यात् । ब्रह्मबीजं प्रणवमविस्मरन्नेव जितश्वासः सन् ॥१७॥ प्रत्याहारमाह । नियच्छेन्निगृह्णीयात् । अक्षानिन्द्रियाणि । निश्चयात्मिका बुद्धिः सारथिर्यस्य सः । धारणामाह—मन इति । पुनश्च कर्मभिस्तद्वासनाभिराक्षिप्तमाकृष्टम् । शुभार्थे भगवद्रूपे ॥१८॥ ध्यानमाह—तत्रेति । एकमेकं पादाद्यवयवम् । अव्युच्छिन्नेन समग्ररूपादवियुक्तेन । आश्रयविशेषेण सामान्यतश्चित्तस्थिरीकरणं धारणा । अवयवविभावनया तद्दार्ढ्यं ध्यानमिति भेदः । समाधिमाह । निर्विषयं मनो युंक्त्वा समाधाय । स्थिरीभूते मनसि स्फुरत्परमानन्दमात्राकारं कृत्वेत्यर्थः । प्रसीदति उपशाम्यति ॥१९॥ गुणवशात्पुनरपि क्षोभे

अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन् ॥ १७ ॥ नियच्छेद्विषयेभ्यो-
ऽक्षान्मनसा बुद्धिसारथिः ॥ मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥१८॥ तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ॥
मनो निर्विषयं युंक्त्वा ततः किंचन न स्मरेत् ॥ पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति ॥ १९ ॥ रजस्तमोभ्यामा-
क्षिप्तं विमूढं मन आत्मनः ॥ यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम् ॥२०॥ यतः संधार्यमाणायां योगिनो भक्ति-
लक्षणः ॥ आशु संपद्यते योग आश्रयं भद्रमीक्षतः ॥२१॥ ॥ राजोवाच ॥ यथा संधार्यते ब्रह्मन्धारणा यत्र संमता ॥
यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥२२॥ ॥ श्रीशुक उवाच ॥ जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः ॥
स्थूले भगवतो रूपे मनः संधारयेद्धिया ॥ २३ ॥ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ॥ यत्रेदं दृश्यते विश्वं भूतं
भव्यं भवच्च सत् ॥२४॥ आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते ॥ वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥२५॥

सति धारणामेव स्थिरीकुर्यादित्याह । रजसा आक्षिप्तं तमसा विमूढं स्वीयं मनो निरुन्ध्यात् । तत्कृतं रजस्तमोभ्यां कृतम् ॥ २० ॥ यतो यस्यां क्रियमाणायां भद्रं सुखात्मकमाश्रयं विषयं पश्यतस्तत्रैव प्रीतिर्भवति ॥२१॥ यथा यत्र यादृशी चेतिकर्तव्यताविषयतत्तद्विशेषाणां प्रश्नाः ॥२२॥ यथेत्यस्योत्तरं—जितासन इति । विषयमाह—स्थूल इति सार्धेन ॥२३॥ विशेषो विराड्देहः अतिस्थूलानामपि स्थूलतरः । सत् कार्यमात्रम् ॥ २४ ॥ अस्य चोपलक्षणत्वेन विषयत्वं, वस्तुतस्तु विराड् जीवनियन्ता भगवानेव विषय इत्याह । आण्डकोशान्तर्वर्तिनि कटाह एव पृथिव्यावरणम् । ततः अप्तेजोवाय्वाकाशाहंकारमहत्तत्त्वानीति सप्त ॥ २५ ॥

१ जपगर्भं प्राणायाममिति । 'श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति पातञ्जलसूत्रम् । तत्र सगर्भनिर्गर्भलक्षणं च—'सगर्भो मन्त्रजापेन निर्गर्भो मात्रया भवेत्' इति । तत्र प्रणवादिजपसहकृतो जपगर्भ इति ज्ञेयम् । २ 'स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इन्द्रियाणां प्रत्याहारः' इति । ३ 'देशबन्धश्चित्तस्य धारणा' इति । ४ 'प्रत्ययैकतानता ध्यानम्' इति । ५ पादादीति । वक्ष्यमाणस्कंधः ३ अ० २८ श्लो० २० इत्यत्रोक्तदिशेति ज्ञेयम् । ६ अवयवेति । अवयवानां पृथक्पृथग्यथाक्रममेकैकस्य स्वरूपचिन्तयेत्यर्थः । ७ समाधिमाहेति तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । ८ भक्तिलक्षणः पूर्वोक्तधारणादिरूपः । ९ उत्तरमाह 'जितासन' इत्यारभ्य 'यावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत' स्कं० २ अ० २ श्लो० १४ इत्यन्तेन । १० बाह्यतः कपित्थाकारेणान्तश्चरणाद्यवयववता कूर्मोपमेन रूपेण चतुर्मुखाख्यस्वाभिमानिक्षेत्रज्ञभोग्यतया च विशेषतो राजत इति विराट् । तत्रोपास्यतया भवो वैराजः । ११ एवं संक्षेपतोऽष्टाङ्गयोगं श्रुत्वा विस्तरतस्तज्जिज्ञासुः पृच्छति । अयमपि राजप्रश्नोऽन्यहितार्थ एव । १२ यत्र समतेत्यस्योत्तरं स्थूले इति । स्थूले स्थविष्ठे विराड्देहे ।

विराड्देहतज्जीवतदन्तर्यामिणामभेदमारोप्योपासनं कर्तव्यमित्याशयेनाह । पातालं पादमूलं पादस्याधोभागम् । पातालादीनां तदवयवता विधीयते । पाता-
लादीन्यतलान्तान्यधस्तनादारभ्य सप्त भूविवराणि । पठन्ति गृणन्तीत्यादिप्रमाणप्रदर्शनम् । पार्ष्णिप्रपदे पादस्य पश्चात्पुरोभागौ ॥ २६ ॥ ऊरुद्वयस्याधोभागे
वितलम्, उत्तरभागे अतलमिति ज्ञेयम् । नाभिरेव सरः ॥ २७ ॥ ज्योतिरनीकं ज्योतिषां समूहं स्वर्गम् । महर्लोकं ग्रीवेति गृणन्ति । तपोलोकं रराटीं लला-
टम् । सत्यं सत्यलोकम् ॥ २८ ॥ उस्रा देवाः तेजोमयशरीरत्वात् ते दाहव इत्याहुः । दिशोऽस्यादिश्रोत्राधिष्ठात्र्यो देवताः कर्णौ, श्रोत्रस्याधिष्ठानम् । शब्दस्तु
श्रोत्रविषयः स तस्य श्रोत्रेन्द्रियम् । एवं नासिकादिष्वपि । नासत्यदस्रावश्विनौ नासे नासापुटे । इद्धो दीप्तः ॥ २९ ॥ द्यौरन्तरिक्षम् । अक्षिणी नेत्रगोलके ।

पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् ॥ महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे
॥२६॥ द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च ॥ महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृण-
न्ति ॥२७॥ उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य ॥ तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि
सहस्रशीर्ष्णः ॥ २८ ॥ इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः ॥ नासत्यदस्रौ परमस्य नासे
घ्राणोऽस्य गन्धो मुखमग्निरिद्धः ॥२९॥ द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च ॥ तद्भ्रूविजृम्भः पर-
मेष्ठिधिष्ण्यमापोऽस्य तालु रस एव जिह्वा ॥ ३० ॥ छन्दांस्यनन्तस्य शिरो गृणन्ति दंष्ट्रा यमः स्नेहकला द्विजानि ॥ हासो
जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥३१॥ व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठः ॥
कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घाः ॥ ३२ ॥ नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्व-
तनोर्नृपेन्द्र ॥ अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्मगुणप्रवाहः ॥ ३३ ॥ ईशस्य केशान्विदुरम्बुवाहान्
वासस्तु संध्यां कुरुवर्य भूम्नः ॥ अव्यक्तमाहुर्हृदयं मनश्च स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥ ॥ ७ ॥

चक्षुरिन्द्रियम् । पतङ्गः सूर्यः । अहनी रात्र्यहनी । परमेष्ठिधिष्ण्यं ब्रह्मपदम् । तालु अधिष्ठानम् । जिह्वा इन्द्रियम् ॥ ३० ॥ छन्दांसि वेदाः । शिरो ब्रह्मरन्ध्रम् ।
स्नेहकलाः पुत्रादिस्नेहलेशाः । द्विजानि दन्ताः । पण्डत्वमार्पम् । दुरन्तोऽपारः सर्ग इति यत् स तस्य कटाक्षः ॥ ३१ ॥ अधर्ममार्गोऽस्य पृष्ठभागः । कः प्रजा-
पतिः । मित्रौ मित्रावरुणौ ॥३२॥ अनन्तं वीर्यं यस्य सः । वयः कालस्तस्य गमनम् । गुणप्रवाहः प्राणिनां संसारः कर्म तस्य क्रीडा ॥ ३३ ॥ भूम्नो विभोः ।
अव्यक्तं प्रधानम् । सः प्रसिद्धश्चन्द्रमास्तदीयं मनः । सर्वेषां विकाराणां कोश इवाश्रयभूतम् ॥ ३४ ॥ ॥ ॥ ॥

१ गृणन्तीत्यत्र विदुरित्येवान्वेतु युक्तम् । २ एवं नासिकादिष्वपीति प्रागिक्रमेण चक्षुषि व्यभिचारात् । तत्र हि सूर्यस्य गोलकत्वेन प्रावत्वात् । तदेवमत्र युक्तिर्नानुसंधेया किंतूपासनार्थं
शास्त्रान्नैव कारणमिति सर्वं समञ्जसम् । क्रम० । ३ जघन नाभेरधोभाग इत्यर्थः । ४ भुवर्लोकम् । ५ आप इत्यनेन तदधिष्ठाता वरुणः । ६ उन्मादकरी मोहकरी माया कार्योन्मुखप्रकृतिः ।
७ दुरन्तसर्गोऽपारससारः ।

विज्ञानशक्तिं चित्तम् । महिं महत्तत्त्वम् । अन्तःकरणमहंकारम् । गिरित्रं श्रीरुद्रम् । गर्दभाद्वडवायामुत्पन्ना अश्वतरी ॥३५॥ वयांसि पक्षिणः । तस्य व्याकरणं 'नामरूपे व्याकरवाणि' इति श्रुत्युक्तं शिल्पनैपुणम् । यथाहुः—'येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥' इति । मनुः स्वायंभुवः, मनीषा बुद्धिः, मनुजः पुरुषः, निवास आश्रयः । 'पुरुषत्वे चाविस्तरामात्मा' इति श्रुतेः । गन्धर्वादीनां द्वन्द्वैक्यम् । गन्धर्वादयः । स्वरस्मृतीः । षड्जादिस्वरस्मृतय इत्यर्थः । असुरानीकं वीर्यं यस्य सः । 'स्वरः स्मृतिरसुरानीकवर्यः' इति पाठे गन्धर्वादयः स्वरः असुरसमूहश्रेष्ठः प्रह्लादः स्मृतिस्तस्येति ॥३६॥ ब्रह्मा विप्रस्तस्याननं मुखम् । क्षत्रं क्षत्रियो भुजौ यस्य । विड् वैश्य ऊरू यस्य । अङ्घ्रिश्रितः कृष्णवर्णः शूद्रो यस्य । नानाभिधा नामानि येषां ते च ते अभीज्या देवास्तेषां गणैर्वसुरुद्रादिभिरुपपन्नो युक्तो द्रव्यात्मको हविःसाध्यो वितानयोगो यज्ञप्रयोगस्तस्य कर्म कार्यम् । आवश्यकोऽभिप्रेत इत्यर्थः

विज्ञानशक्तिं महिमामनन्ति सर्वात्मनोऽन्तःकरणं गिरित्रम् ॥ अश्वाश्वतर्युष्ट्रगजा नखा[2]नि सर्वे मृगाः[3] पशवः[4] श्रोणिदेशे[5]
॥३५॥ वयांसि तद्व्याकरणं विचित्रं मनुर्मनीषा मनुजो निवासः ॥ गन्धर्वविद्याधरचारणाप्सरः स्वरस्मृतीरसुरानीकवीर्यः
॥३६॥ ब्रह्माननं क्षत्रभुजो महात्मा विडूरुरङ्घ्रिश्रितकृष्णवर्णः ॥ नानाभिधाभीज्यगणोपपन्नो द्रव्यात्मकः कर्म वितानयोगः
॥३७॥ इयानसावीश्वरविग्रहस्य यः संनिवेशः कथितो मया ते ॥ संधार्यतेऽस्मिन्वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति
किंचित् ॥३८॥ स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः ॥ तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत
आत्मपातः ॥३९॥ ॥ इति श्रीम० भा० म० द्वि० महापुरुषसंस्थानुवर्णने प्रथमोऽध्यायः ॥१॥ ॥ श्रीशुक उवाच ॥
एवं पुरा धारणयात्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ॥ तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग्व्यवसायबुद्धिः ॥१॥

॥ ३७ ॥ इयानेतावान्सन्निवेशोऽवयवसंस्थानम् । अस्मिन्स्वबुद्ध्या मनः संधार्यते मुमुक्षुभिः । यतो व्यतिरिक्तं किंचिन्नास्ति तस्मिन् ॥ ३८ ॥ तदेवं चित्तस्थैर्यार्थं विराड्देहजीवेश्वराणामभेदेनोपासनमुक्तं, तत्र तु देहजीवावीश्वरे प्रविलाप्य स एव ध्येय इति निर्धारयति—स इति । सर्वेषां धीवृत्तिभिरनुभूतं सर्वं येन स एक एव सर्वान्तर आत्मा तमेव सत्यं भजेत । अन्यत्रोपलक्षणे न सज्जेत् । यत आसङ्गादात्मनः पातः संसारो भवति । एकस्य तत्तदिन्द्रियैः सर्वानुभूतौ दृष्टान्तः—स्वप्नजनानामीक्षिता यथेति । स्वप्ने हि कदाचिद्बहून्देहान्प्रकल्प्य जीवस्तत्तदिन्द्रियैः सर्वं पश्यति तद्वत् । ईश्वरस्य तु विद्याशक्तित्वान्न बन्धः ॥ ३९ ॥ टीकायां प्रथमोऽध्यायः ॥१॥ ॥ द्वितीये तु ततः स्थूलधारणातो जितं मनः ॥ सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते ॥ १॥ दृश्यालम्बनरूपैवमुक्ता वैराजधारणा ॥ इहोच्यते तु तत्साध्या सर्वान्तर्यामिधारणा ॥२॥ तत्र तावत्पूर्वोक्तधारणाया अवान्तरफलमाह । एवं या धारणा तया तुष्टाद्धरेः पुरा प्रलयसमये नष्टां सृष्टिस्मृतिं प्रत्यवरुध्य [illegible] ब्रह्मा अप्ययात्प्रागिदं विश्वं यथासीत्तथा ससर्ज । व्यवसायात्मिका बुद्धिर्यस्य सः । अत [illegible] घा दृष्टिर्यस्येति । अतस्तया धारणया विश्वसृष्टिसामर्थ्यं भवति ॥१॥

१ वडवा घोटकी । २ नखानि नखोपलक्षितानि ऋक्षादीनीति केचित् । ३ मृगा हरिणादयः । ४ पशवो गवादयः । ५ श्रोणिदेशे उपास्यास्तत्त्वेनानुसंधेया इत्यर्थः । ६ धिया वृत्तिभिरिन्द्रियलक्षणाभिः प्राचीनसहस्रजन्मवर्तिनीभिरनुभूतमेव सर्वं देवेन्द्रत्वनरेन्द्रत्वादिकं [illegible]दिकं येन सः । किं पुनश्चर्वितचर्वणयेति भावः । ७ 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतेः । ८ व्यवसायो निश्चय एवमेवेदं स्रष्टव्यमित्येवंरूपस्तदात्मिका ।

उपासनाफलादपि विरक्तस्य शुद्धात्मधारणायामधिकारः । अतो वैराग्यार्थं सर्वं कर्मफलं निन्दति । शाब्दं शब्दमयम् । ब्रह्म वेदः । तस्य एष पन्थाः कर्मफल-
वोधप्रकारः । कोऽसौ । अर्थशून्यैरेव स्वर्गादिनामभिः साधकस्य धीर्ध्यायति तत्तदिच्छां करोतीति यत् । अपार्थत्वमेवाह । तत्र मायामये पथि सुखमिति वासनया
शयानः स्वप्नान्पश्यन्निव परिभ्रमन्नर्थान्न विन्दति । तत्तल्लोकं प्राप्तोऽपि निरवद्यं सुखं न लभत इत्यर्थः ॥ २ ॥ तर्हि सर्वथा कर्मफलत्यागे सद्य एव देहपातः स्यादि-
त्याशङ्क्याह । अतः कविर्नामसु नाममात्रेषु भोग्येषु यावताऽर्थेनार्थो देहनिर्वाहो यस्य स तथाभूतः स्यात् । अप्रमत्तस्तावन्मात्रेऽप्यनासक्तः । व्यवसायबुद्धिर्नेदं सुख-
मिति निश्चयवान् । तदापि तत्र तस्मिन्नर्थेऽन्यथैव सिद्धे सति तत्र यत्ने परिश्रमं पश्यन्न यतेत ॥३॥ अन्यथासिद्धिमाह द्वाभ्याम्—सत्यामिति । कशिपोः शय्यायाः ।
स्वतःसिद्धे बाहौ सति उपबर्हणैरुच्छीर्षकैः । पुरुधा बहुप्रकारयाऽन्नपात्र्या भोजनपात्रेण ॥ ४ ॥ ननु दिक्सद्भावो नाम नग्नत्वमेव, वल्कलमन्नं तोयं वासस्थानं तु
यात्राप्रयत्नं विना कथं प्राप्येत तत्राह । चीराणि वस्त्रखण्डानि परान्बिभ्रति पुष्णन्ति फलादिभिर्ये । गुहाः गिरिदर्यः । ननु कदाचिदेषामलाभे किं कार्यं तत्राह ।

शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः ॥ परिभ्रमंस्तत्र न विन्दतेऽर्थान्मायामये वासनया शयानः
॥ २ ॥ अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ॥ सिद्धेऽन्यथाऽर्थे न यतेत तत्र परिश्रमं तत्र समीक्ष-
माणः ॥३॥ सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ॥ सत्यञ्जलौ किं पुरुधाऽन्नपात्र्या दिग्व-
ल्कलादौ सति किं दुकूलैः ॥४॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥
रुद्धा गुहाः किमजितोऽवति नोपसन्नान् कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ ५ ॥ एवं स्वचित्ते स्वत एव सिद्ध
आत्मा प्रियोऽर्थो भगवाननन्तः ॥ तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥ कस्तां त्वनादृत्य परा-
नुचिन्तामृते पशूनसतीं नाम युञ्ज्यात् ॥ पश्यञ्जनं पतितं वैतरण्यां स्वकर्मजान्परितापाञ्जुषाणम् ॥ ७ ॥ ॥ ६९ ॥

अजितो हरिरुपसन्नान् शरणागतान्किं नावति न रक्षति । किंशब्दस्य पूर्वत्रापि संबन्धः । धनेन यो दुर्मदस्तेनान्धान्नष्टविवेकान् ॥५॥ तदा तेन किं कर्तव्यं हरिस्तु
सेव्य इत्याह । एवं विरक्तः संस्तं भजेत । भजनीयत्वे हेतवः—स्वचित्ते स्वत एव सिद्धः । यत आत्मा अत एव प्रियः । प्रियस्य च सेवा सुखरूपैव । अर्थः सत्यो न
त्वनात्मवन्मिथ्या । भगवान् भजनीयगुणश्च अनन्तश्च नित्यः । य एवंभूतस्तं भजेत । नियतार्थो निश्चितस्वरूपः । तदनुभवानन्देन निर्वृतः सन्निति स्वतःसुखात्मत्वं
दर्शितम् । किंच यत्र यस्मिन्भजने सति संसारहेतोरविद्याया उपरमो नाशो भवति ॥ ६ ॥ एतदेवान्यचिन्तानिन्दया द्रढयति—क इति । तां तथाभूतां परस्य
हरेरनुचिन्तां धारणामनादृत्य पशून्कर्मजडान्विना । 'यथा पशुरेवायं स देवानाम्' इति श्रुतेः । असती विषयचिन्तां को नाम कुर्यात् । तया चिन्तया वैतरण्यां
पतितं, तत्र च स्वकर्मजानाध्यात्मिकादिक्लेशान्सेवमानं जनं पश्यन् । वैतरणी यमस्य द्वारस्था नदी तत्तुल्यत्वात्संसृतिर्वैतरणी ॥ ७ ॥ ॥ ॥

१ नामभिरिति नामेति रूपस्याप्युपलक्षणं । नामरूपैरित्यर्थः । २ निरवद्यमिति । ऐकान्तिकात्यन्तिकलक्षणमित्यर्थः । ऐकान्तिकत्वं दुःखनिवृत्तेरवश्यंभावः । आत्यन्तिकत्वं नाम निवृत्तस्य दुःखस्य पुनरनुत्पाद इति । ३ कविः क्रान्तदर्शी हेयोपादेयविषयविवेकवान् । ४ नाममात्रसारेषु स्वर्गादिषु भोगेषु वा । ५ दिग्वल्कलादौ सति दिक्षूत्तरीयस्थानीयासु सतीषु वल्कलेष्व-न्तरीयस्थानीयेषु सत्सु । ननु वल्कलाभावे दिक्षु सतीष्वित्यर्थः स्वरसः । 'अपवित्रकरो नग्नः' इति नग्नस्य कर्मानर्हत्वस्मरणान्मुमुक्षोरप्यावश्यकानुष्ठेयत्वात् ।

तामेव धारणां सविशेषणामाह—केचिदिति पङ्क्तिः । स्वदेहस्यान्तर्मध्ये यद्धृदयं तत्र योऽवकाशस्तस्मिन्वसन्तम् । प्रादेशस्तर्जन्यङ्गुष्ठयोर्विस्तारः, स एव मात्रा
प्रमाणं यस्येति हृदयपरिमाणं तत्रोपचर्यते । कञ्जं पद्मम् । रथाङ्गं चक्रम् ॥ ८ ॥ नलिनं पद्मं तद्वत्प्रसन्ने आयते दीर्घे ईक्षणे यस्य । कदम्बकुसुमस्य किञ्जल्काः
केसरास्तद्वत्पिशङ्गे पीते वाससी यस्य । लसन्ति महारत्नानि येषु तानि सुवर्णमयान्यङ्गदानि यस्य । स्फुरन्ति च तानि महारत्नानि च तन्मयानि किरीटकु-
ण्डलानि यस्य ॥ ९ ॥ उन्निद्रं विकसितं यद्धृत्पङ्कजं तस्य कर्णिकैवाऽऽलयः स्थानं तस्मिन् । योगेश्वरैरास्थापितौ पादपल्लवौ यस्य । श्रीरेव लक्ष्म चिह्नं तद्युक्तम् ।
पामादिविहितो मत्वर्थीयो नप्रत्ययः । कौस्तुभरत्नं कन्धरायां यस्य । अम्लाना लक्ष्मीः शोभा यस्यास्तया वनमालया आचितं व्याप्तम् ॥ १० ॥ स्निग्धत्वादिवि-
शिष्टैः कुन्तलैर्विरोचमाने आनने यो हासस्तेन पेशलं सुन्दरम् ॥११॥ अदीनमुदारं यल्लीलाहसितं तेन यदीक्षणं तस्मिन्नुल्लसन्तो ये भ्रूभङ्गा भ्रूविक्षेपास्तैः संसूचितो

केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ॥ चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥८॥
प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम् ॥ लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्ड-
लम् ॥९॥ उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ॥ श्रीलक्ष्मणं कौस्तुभरत्नकन्धरमम्लानलक्ष्म्या
वनमालयाऽऽचितम् ॥१०॥ विभूषितं मेखलयाऽङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः ॥ स्निग्धा[2]मलाकुञ्चितनीलकुन्त-
लैर्विरोचमानाननहासपेशलम् ॥ ११ ॥ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ॥ ईक्षेत चिन्तामय-
मेनमीश्वरं यावन्[3]मनो धारणयाऽवतिष्ठते ॥ १२ ॥ एकैकशोऽङ्गानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः ॥
जितं जितं स्थानमपोह्य धारयेत् परं परं शुध्यति धीर्[5]यथा यथा ॥१३॥ यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि
भक्तियोगः ॥ तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १४ ॥ स्थिरं सुखं चासनमाश्रितो यतिर्यदा
जिहासुरिममङ्ग लोकम् ॥ काले च देशे च मनो न सज्जयेत्प्राणं नियच्छेन्मनसा जितासुः[4] ॥ १५ ॥ ॥ ६ ॥

भूरिरनुग्रहो येन । चिन्तामयं चिन्तया आविर्भवन्तम् ॥ १२ ॥ अस्यैव ध्यानमाह—एकैकश इति । अनुभावयेद्ध्यायेत् । यद्यजितमयत्नतः स्फुरितं पादगुल्फा-
दिस्थानमवयवस्तत्तदपोह्य त्यक्त्वा परं परं जङ्घाजान्वादि धारयेद्ध्यायेत् । शुध्यति तस्मिन्निश्चला भवति ॥१३॥ पूर्वोक्तवैराजधारणाया एतद्धारणाङ्गत्वमाह—याव-
दिति । परे ब्रह्मादयोऽवरे यस्मात् । कुतः विश्वेश्वरे द्रष्टरि न तु दृश्ये, चैतन्यघनत्वात् । भक्तियोगः प्रेमलक्षणः[6] । क्रियावसाने आवश्यककर्मानुष्ठानानन्तरम् । अनेन
कर्मापि भक्तियोगपर्यन्तमेवेत्युक्तम् । प्रयतो नियमतत्परः ॥ १४ ॥ एवं तावदासन्नमृत्योः पुंसः कृत्यमुक्तम्, इदानीं तस्यैव स्वयं देहं त्यक्तुमिच्छतः कृत्यमाह—
स्थिरमिति सार्धैश्चतुर्भिः । अङ्ग हे राजन्, एवंभूतो यतिर्यदा इमं लोकं देहं जिहासुर्हातुमिच्छति, तदा देशे पुण्यक्षेत्रे काले चोत्तरायणादौ मनो न सज्जयेत् सङ्गं
न प्रापयेत् । न हि देशकालौ योगिनः सिद्धिहेतू, किंतु योग एवेति दृढनिश्चयो भूत्वा स्थिरं सुखकरं चासनमास्थितः प्राणं नियच्छेदित्यर्थः ॥ १५ ॥ ॥

१ श्रुतौ तु 'अङ्गुष्ठमात्रं पुरुषं मध्य आत्मनि सस्थितम्' इत्युक्तम् । उभयत्र हृदयकमलापेक्षया व्यापकस्यैव सूक्ष्मत्वं विवक्षितम् । सिद्धां० । २ 'स्निग्धामलैः' इति पाठः। ३ एवंविधमीश्वर यावद्धारणया
मनोऽवतिष्ठते निश्चलं भवेत्तावदीक्षेतोपासीतेत्यर्थः। ४ जितासुर्जितेन्द्रियो जितप्राणो वा एवं कृते जितासुर्भवतीति वा । ५ धीः शुध्यति विषयलाम्पट्यं त्यजतीति वा । ६ योगाङ्गभूतध्यानलक्षणो वा ।

तत् गृहीतविषयं मनो बुद्ध्या निश्चयरूपया नियम्य तन्मात्रं कृत्वा, एतां बुद्धिं क्षेत्रज्ञे बुद्ध्यादिद्रष्टरि निनयेत्प्रविलापयेत् । तं च क्षेत्रज्ञमात्मनि शुद्धे । तं च शुद्धमात्मानमात्मैवाहमित्यात्मनि शुद्धे ब्रह्मण्यवरुध्यैकीकृत्य लब्धोपशान्तिः प्राप्तनिर्वृतिः सन् कृत्याद्विरमेत, ततः परं प्राप्याभावात् ॥ १६ ॥ तदेवाह— न यत्रेति । यत्रात्मस्वरूपे कालो न प्रभुः किमपि कर्तुं न समर्थः । अत एव देवा न प्रभव इत्याह । अनिमिषां देवानां परः प्रभुः कालोऽपि यत्र न प्रभुस्तत्र कुतो नु देवाः प्रभवेयुः । देवनियम्यानां तु जगतां प्राणिनां का वार्तेत्याह—जगतामिति । कुतो न प्रभवन्तीत्यपेक्षायां निरुपाधित्वादित्याह—न यत्रेति । यद्वा जगत्कारणान्यपि न यस्य सृष्ट्यादौ प्रभवन्तीत्याह—न यत्रेति । विकारोऽहंकारः ॥ १७ ॥ निरुपाधित्वं कुत इत्यत आह—परमिति । यद्यस्मात् अतत् आत्मव्यतिरिक्तं नेति नेतीत्येवमुत्स्रष्टुमिच्छवो दौरात्म्यं देहाद्यात्मत्वं विसृज्य अर्हस्य पूज्यस्य श्रीविष्णोः पदं पदे पदे क्षणे क्षणे हृदा उपगुह्य आश्लिष्य नान्य-

मनः स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि ॥ आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥१६॥ न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे ॥ न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम् ॥१७॥ परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्य-सौहृदा हृदोपगुह्यार्हपदं पदे पदे ॥ १८ ॥ इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः ॥ स्वपार्ष्णि-नापीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ॥ १९ ॥ नाभ्यां स्थितं हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ॥ ततोऽनुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २० ॥ तस्माद्भ्रुवोरन्तरमुन्नयेत निरुद्धसं-प्तायतनोऽनपेक्षः ॥ स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन्विसृजेत्परं गतः ॥ २१॥ ॥ ७ ॥ ॥ ७ ॥

स्मिन्सौहृदं येषां तथाभूताः सन्तस्तद्वैष्णवं पदम् अत एव परं सर्वतः श्रेष्ठमामनन्तीत्यन्वयः ॥ १८ ॥ तस्मादित्थं ब्रह्मत्वेन व्यवस्थितो मुनिरुपरमेत् । तुशब्देन 'यदि प्रयास्यन्' इति वक्ष्यमाणात्सकामाद्विशेष उक्तः । तमाह । विज्ञायतेऽनेनेति विज्ञानं शास्त्रं तेन जाता दृग् ज्ञानं तस्य वीर्यं बलं तेन सुरन्धिता विहिंसिता आशया विषयवासना यस्य सः । इदानीं तस्य देहत्यागप्रकारमाह । स्वपार्ष्णिना पादमूलेन गुदं मूलाधारमापीड्य निरुध्यानिलं प्राणमुन्नमयेदूर्ध्वं नयेत् । जितः क्लमो येन । षट्सु स्थानेषु नाभ्यादिषु ॥ १९ ॥ नाभ्यां मणिपूरके स्थितं हृदि अनाहतचक्रेऽधिरोप्य । उरसि कण्ठादधोदेशे स्थिते विशुद्धिचक्रे । मनस्वी जित-चित्तः । स्वतालुमूलं तस्यैव चक्रस्याग्रदेशम् । ततो बहुधा गमनसंभवाच्छनैरित्युक्तम् ॥ २०॥ तस्माद्भ्रुवोरन्तरमाज्ञाचक्रम् । निरुद्धानि श्रोत्रे नेत्रे नासिके मुखं चेत्येवं संप्तायतनानि प्राणमार्गा येन सः । अनपेक्षश्चेत्परं ब्रह्म गतः सन् मूर्धन्मूर्धनि ब्रह्मरन्ध्रे निर्भिद्य देहमिन्द्रियाणि च विसृजेत् ॥ २१ ॥ ॥

१ शुद्धे आत्मन्यन्तर्यामिणि । अथवा शुद्धे शोधितत्वंपदार्थे । २ शुद्धे ब्रह्मणि शोधिततत्पदार्थे । ३ अनिमिषामिति मिषधातोः क्विन्तस्येदं रूपम् । ४ जगतामिति कर्मणि षष्ठी । जगन्ति स्वस्वकार्ये प्रवर्तयामासुः । ५ 'सप्तायतनः' इति पाठः । ६ अत्र ब्रह्मप्राप्तिप्रकारं वक्तुं तावद्देहादुत्क्रान्तिप्रकारमाह इति, यदन्तकाले इति कर्तव्यमुक्तं तदुपसंहरति इत्यवतरणे क्वचित् । ७ यदीत्यस्यैवाध्यायस्य द्वाविंशः श्लोकः । ८ 'सकाशात्' इति पाठः । ९ नाभ्यादिष्विति । अत्र परोक्तेषु मणिपूरानाहतविशुद्धतालुमूलाज्ञाब्रह्मरन्ध्रेष्वित्यर्थः । १० 'सप्तायतनानि' इति पाठः ।

सद्योमुक्तिमुक्त्वा क्रममुक्तिप्रकारमाह—यदीति दशभिः । यदि तु पारमेष्ठ्यं पदं प्रयास्यन्भवति । उत वैहायसानां खेचराणां सिद्धानां यद्विहारं क्रीडास्थानम् । कीदृशम् । अष्टावाधिपत्यान्यणिमाद्यैश्वर्याणि यस्मिंस्तदपि प्रयास्यन् । क्व । गुणसन्निवाये गुणसमुदायरूपे ब्रह्माण्डे । सर्वत्रेत्यर्थः । तर्हि देहत्यागावसरे मनश्चेन्द्रियाणि च न त्यजेत्, किंतु तैः सहैव तत्तल्लोकभोगार्थं गच्छेत् ॥ २२ ॥ यतः कर्मगतिवन्न योगगतिः परिच्छिन्नेत्याह । योगेश्वराणां त्रिलोक्या अन्तर्बहिश्च महर्लोकादिषु ब्रह्माण्डाद्बहिश्च गतिमाहुः । अत्र हेतुः—पवनस्यान्तः आत्मा लिङ्गशरीरं येषामिति । विद्या उपासना, तपो भगवद्धर्मः, योगोऽष्टाङ्गः, समाधिर्ज्ञानं, तान्ये भजन्ति तेषां या गतिस्ताम् ॥ २३ ॥ तामाह—वैश्वानरमित्यष्टभिः । विहायसा आकाशेन, तत्र च ब्रह्मलोकपथेन गतः सन् प्रथमं वैश्वानरमग्न्यभिमानिनीं देवतां याति । केनोपायेन, सुषुम्नया नाड्या । सा च देहाद्बहिरपि विततास्तीत्याह । शोचिषा ज्योतिर्मय्या विधूतस्त्यक्तः कल्को मलो येन सः । क्वाप्यसज्जमान इत्यर्थः । उदस्तादुपरिष्टाद्वर्तमानं हरेः संबन्धि तारारूपम् । नारायणाधिष्ठितमित्यर्थः । शैशुमारं चक्रं पञ्चमस्कन्धे वक्ष्यमाणं शिशुमाराश्रयं ज्योतिश्चक्रम् । चक्रस्थान्यादित्यादि-

यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम् ॥ अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २२ ॥ योगेश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम् ॥ न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥ २३ ॥ वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा ॥ विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैशुमारम् ॥ २४ ॥ तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः ॥ नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ॥२५॥ अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् ॥ निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ २६ ॥ न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित् ॥ यच्चित्ततोऽदः कृपयाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात् ॥ २७ ॥ ॥ ॥ ६ ॥

ध्रुवान्तानि पदानि प्रयातीत्यर्थः ॥ २४ ॥ तद्विष्णोश्चक्रम् । विश्वस्य नाभिं सूर्याद्याश्रयभूतम् । आविष्टलिङ्गत्वान्नाभिशब्दस्य न षण्ढत्वम् । अतिवर्त्यातिक्रम्य । परतः स्वर्गिणां गत्यभावादेक एव निर्मलेन लिङ्गशरीरेण ब्रह्मविदां स्थानमन्यैर्नमस्कृतं महर्लोकमुपैति । यत् यस्मिन्विबुधा महाकल्पायुषो भृग्वादयः ॥२५॥ अथो अनन्तरं कल्पान्ते स विश्वं त्रैलोक्यमतिशयेन दह्यमानं निरीक्ष्य, तत्राप्यूष्मप्राप्तेः । यत् द्विपरार्धस्थायि तत्पारमेष्ठ्यं पदं प्रति निर्याति । सिद्धेश्वरैर्जुष्टानि धिष्ण्यानि विमानानि यस्मिंस्तत् । उ इति श्रैष्ठ्यं सूचितम् ॥ २६ ॥ तदेवाह—न यत्रेति । अर्तिर्दुःखम् । उद्वेगो भयम् । किंतु चित्ततो हेतोर्यद्दुःखं अदः ऋते तदेकं विना । तत्कुतो भवति । अनिदंविदामिदं भगवतो ध्यानमजानतां प्राणिनां दुरन्तदुःखो यः प्रभवो जन्म तस्यानुदर्शनात्तेषां कृपया । यद्वा चित्ततोदो मनःपीडेति यत् तद्विना कुतश्चिदपि यत्र शोकादयो न सन्तीति । तत्र ब्रह्मलोकं गतानां त्रिविधा गतिः । ये पुण्योत्कर्षेण गतास्ते कल्पान्तरे पुण्यतारतम्येनाधिकारिका भवन्ति । ये तु हिरण्यगर्भाद्युपासनाबलेन गतास्ते ब्रह्मणा सह मुच्यन्ते । ये तु भगवदुपासकास्ते स्वेच्छया ब्रह्माण्डं भित्त्वा वैष्णवं पदमारुहन्ति ॥ २७ ॥ ॥

१ परमेष्ठिनो ब्रह्मणः स्थानम् । २ अर्चिरादिमार्गप्राशस्त्यं धूममार्गं चानुपादेयत्वेनोक्त्वार्चिरादिमार्गं दर्शयति । सिद्धां० । ३ कल्कः पापं स च पुण्यस्याप्युपलक्षणं 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यथर्वणे श्रवणात् ।४ 'सन्निपाते' इति पाठः ।५ चक्रं शैशुमारम् ।६ आविष्टलिङ्गत्वादिति । अजहल्लिङ्गत्वादित्यर्थः ।७ अथो लीलागृहीतशरीरेण तद्भोगानन्तरम् । क्रम० ।

तत्र प्रस्तुतस्य भगवद्भक्तस्य ब्रह्माण्डभेदनप्रकारमाह—तत इत्यादिना । तत्रेयं प्रक्रिया—ईश्वराधिष्ठितायाः प्रकृतेः केनचिदंशेन महत्तत्त्वं भवति । तस्यांशेनाहंकारः । तस्यांशेन शब्दतन्मात्रद्वारा नभः । तस्यांशेन स्पर्शतन्मात्रद्वारा वायुः । तस्यांशेन रूपतन्मात्रद्वारा तेजः । तस्यांशेन रसतन्मात्रद्वारा आपः । तदंशेन गन्धतन्मात्रद्वारा पृथ्वी । तैश्च मिलितैश्चतुर्दशभुवनात्मकं विराट्शरीरम् । तस्य च पञ्चाशत्कोटियोजनविशालस्य पृथिव्येवाण्डकटाहविशेषशब्दवाच्या कोटियोजनविशालं प्रथमावरणम् । पञ्चाशत्कोटियोजनविशालमित्येके । ततश्चाबादीनां ये परिणता अंशास्तान्येवोत्तरोत्तरं दशगुणान्यावरणानि । अष्टमं तु प्रकृत्यावरणं व्यापकमेव । तदेवं स्थिते पृथिव्याद्यावरणभेदप्रकारः कथ्यते । ततो विशेषं प्रतिपद्य । लिङ्गदेहेन पृथिव्यात्मतां प्राप्येत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । निर्भयः कथं यास्यामीति शङ्काशून्यः । तेनात्मना पृथिवीरूपेण तन्निरन्तरा अपः प्रतिपद्य । अत्वरंस्त्वरामकुर्वन् तत्तदात्मत्वेन क्लेददाहादिशङ्काभावाद्यथेष्टं भोगान्भुञ्जान इत्यर्थः । एवं ज्योतिर्मयः सन् । काले भोगावसाने । बृहदात्मनो लिङ्गं परमात्ममूर्तित्वेनोपासनेपूक्तम् । यद्वा वेदशब्दात्मना

ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोऽनलमूर्तिरत्वरन् ॥ ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ २८ ॥ घ्राणेन गन्धं रसनेन वै रसं रूपं तु दृष्ट्या श्वसनं त्वचैव ॥ श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी ॥ २९ ॥ स भूतसूक्ष्मेन्द्रियसन्निकर्षं मनोमयं देवमयं विकार्यम् ॥ संसाद्य गत्या सह तेन याति विज्ञानतत्त्वं गुणसन्निरोधम् ॥ ३० ॥ तेनात्मनात्मानमुपैति शान्तमानन्दमानन्दमयोऽवसाने ॥ एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ॥ ३१ ॥ ॥ ॥ ॥

तस्य प्रमापकमिति ॥ २८ ॥ इन्द्रियार्थानां भूतसूक्ष्माणामतिक्रममाह । घ्राणेनाधिष्ठितेन गन्धमुपेत्य । श्वसनं स्पर्शम् । नभोगुणत्वं शब्दात्मताम् । प्राणेन तत्तत्कर्मेन्द्रियेण । आकूतिं तत्तत्क्रियाम् ॥ २९ ॥ तदेवं स्थूलसूक्ष्मभूतातिक्रममुक्त्वा तदावरणभूताहंकारप्राप्त्या महदादिप्राप्तिमाह । स योगी विकार्यं संसाद्य विज्ञानतत्त्वं याति । विविधं कार्यमस्येति विकार्योऽहंकारः । स त्रिविधः, तामसो राजसः सात्त्विक इति । तत्र तामसाज्जडानि भूतसूक्ष्माणि जायन्ते । राजसाद्बहिर्मुखानि दशेन्द्रियाणि । सात्त्विकान्मन इन्द्रियदेवताश्च । तेषां लयश्च तत्तदहंकारे । तत्र भूतसूक्ष्माणामिन्द्रियाणां च सन्निकर्षं लयस्थानं तामसं, राजसं च मनोमयं देवमयं च सात्त्विकं प्राप्य । गत्या एवं गमनेन । तेनाहंकारेण सह विज्ञानतत्त्वं महत्तत्त्वं याति । ततो गुणानां सन्निरोधो लयो यस्मिंस्तत्प्रधानं याति ॥ ३० ॥ तेनात्मना प्रधानरूपेणानन्दमयः सन्नुपाधीनामवसाने शान्तमविकृतमानन्दं परमात्मानमुपैति । न विषज्जते नावर्तत इत्यर्थः ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥



१ प्रतिपद्येत्यादीना अग्रिमश्लोकस्थेन प्राणेनाकूतिमुपैतीत्यनेनान्वयः । २ स्वगुणभूतेनेति भावः । ३ आनन्दमय इति तस्मिन्नेव सायुज्यं प्राप्येत्यर्थः । ४ घ्राणद्वारा गन्धमाविश्येत्यर्थः । एवमुत्तरत्रापि । ५ अहंकारं महत्तत्त्वे प्रविलापयतीत्यर्थः । ६ गुणाः सन्निरुध्यन्ते येन तदिति वा । महत्तत्त्व प्रधाने प्रविलापयतीत्यर्थः ।

सृती मार्गौ, प्रकारावित्यर्थः। हे नृप, ( अनपेक्षो ) 'निर्भिद्य मूर्धन् विसृजेत्परं गतः' इति या सद्योमुक्तिः सैका सृतिः। 'यदि प्रयास्यन्' इत्यादिना क्रममुक्तिश्च द्वितीया सृतिः। एते सृती वेदेन गीते उक्ते नतु स्वोत्प्रेक्षिते। तत्र 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति सद्योमुक्तिः। 'तेऽर्चिरभिसंभवन्ति' इत्यादिना क्रममुक्तिश्च वेदेनोक्ता। यद्वा 'न कर्मभिस्तां गतिमाप्नुवन्ति' इति दक्षिणमार्गस्यापि सूचितत्वादेते सृती इति द्विवचनम्। त्वयाऽभिपृष्टे 'यच्छ्रोतव्यं' इत्यादिप्रश्नेन, अर्थान्मुक्तिविषये द्वे अपि सृती पृष्टे। 'ब्रूहि यद्वा विपर्ययम्' इति दक्षिणमार्गोऽप्यर्थात्पृष्टः। एवं त्वया च ये पृष्टे एते सृती इत्यन्वयः॥ ३२॥ सन्ति संसरतः पुंसो बहवो मोक्षमार्गास्तपोयोगादयः, समीचीनस्त्वयमेवेत्याह— नहीति। यतोऽनुष्ठिताद्भक्तियोगो भवेदतोऽन्यः शिवः सुखरूपो निर्विघ्नश्च नास्त्येव॥ ३३॥ कुत एतदत आह। भगवान्ब्रह्मा। कूटस्थो निर्विकारः। एकाग्रचित्तः सन्नित्यर्थः। त्रिस्त्रीन्वारान् कार्त्स्न्येन साकल्येन ब्रह्म वेदमन्वीक्ष्य विचार्य। यत आत्मनि हरौ रतिर्भवेत्तदेव मनीषया अध्यवस्यत् निश्चितवान्

एते सृती ते नृप वेदगीते त्वयाऽभिपृष्टे ह सनातने च॥ ये वै पुरा ब्रह्मण आह पृष्ट आराधितो भगवान्वासुदेवः
॥ ३२॥ न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह॥ वासुदेवे भगवति भक्तियोगो यतो भवेत्॥ ३३॥
भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया॥ तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्॥ ३४॥ भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः॥३५॥ तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम्॥ ३६॥ पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम्॥ पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम्॥ ३७॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे पुरुषसंस्थावर्णनं नाम द्वितीयोऽध्यायः॥ २॥ ॥ छ॥ ॥ छ॥

॥ ३४॥ नन्वनुभूतेऽर्थे रतिर्भवति, अननुभूते तु भगवति कथं रतिः स्यात्तत्राह। भगवान् लक्षितो दृष्टः। कथम्। स्वात्मना क्षेत्रज्ञान्तर्यामितया। कैः। दृश्यैर्बुद्ध्यादिभिः। तदेव द्वेधा दर्शयति। दृश्यानां जनानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन लक्षणैः स्वप्रकाशान्तर्यामिलक्षकैः। तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि, करणत्वात् वास्यादिवत् इति व्याप्तिमुखेनानुमापकैः। स्वतन्त्रश्च कर्त्रेत्येवमीश्वरसिद्धिः॥ ३५॥ यच्छ्रोतव्यमित्यादिप्रश्नोत्तरमुपसंहरति—तस्मादिति॥ ३६॥ श्रवणादिफलमभिनयेनाह—पिबन्तीति। सतामात्मन आत्मत्वेन प्रकाशमानस्य कथैवामृतम्। विषयैर्विदूषितं मलिनीकृतमाशयं पुनन्ति शोधयन्ति। तस्य चरणपद्मान्तिकं श्रीविष्णुपदं व्रजन्ति॥ ३७॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे टीकायां द्वितीयोऽध्यायः॥ २॥ ॥ ॥ ॥ ॥ छ॥

१ निर्भिद्येति अस्याध्यायस्य २१ श्लोकान्तिमपादः। यदीति २२ श्लोकः न कर्मभिरिति २३ श्लोकश्च। २ तच्छ्रोतव्यमिति स्कं० १ अ० १९ श्लो० ३८। ३ मूलस्थ आत्मन्नित्यस्यात्मनीत्यर्थः। ४ लक्ष्यन्तीति लक्षणानि वेदवाक्यानि 'सत्यं ज्ञानमनन्तं' 'यतो वा इमानि भूतानि' इत्यादीनि तैः।

तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ॥ भक्त्युद्रेकेण तत्कर्मश्रवणादर ईर्यते ॥ १ ॥ इदानीमन्यदेवताभजनस्यापि पुत्रादिभजनवदेव तुच्छफलत्वेन हेयत्वं वक्तुं पूर्वोक्तमनुवदति—एवमिति । ममेति माम् । कदाचिद्दैवयोगेन मनुष्यत्वं प्राप्तेषु जीवेषु ये मनीषिणस्तेषां तत्रापि ये म्रियमाणास्तेषां विशेषत एवमेतद्धरिकथाश्रवणादिकं निगदितं विहितमित्यर्थः ॥ १ ॥ ब्रह्मणस्पतिं वेदस्य पतिं ब्रह्माणम् । इन्द्रियपाटवकामस्त्विन्द्रम् । प्रजाकामः प्रजापतीन्दक्षादीन् ॥ २ ॥ मायां दुर्गाम् । विभावसुमग्निम् । वसुकामो धनार्थी । वीर्यं प्रभावस्तत्कामो वीर्यवान्सन् रुद्रान् यजेत् ॥ ३ ॥ अन्नाद्यं भोज्यं भक्ष्यं च । अदितेः सुतान् द्वादशादित्यान् । विशां देशस्थप्रजानां स्वाधीनतामिच्छन् साध्यान्यजेत् ॥ ४ ॥ इलां पृथ्वीम् । प्रतिष्ठा स्थानादप्रच्युतिः । रोदसी द्यावा-

॥ श्रीशुक उवाच ॥ एवमेतन्निगदितं पृष्टवान्यद्भवान्मम ॥ नृणां[1] यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥
ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ॥ इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥ देवीं मायां तु श्रीकाम-
स्तेजस्कामो विभावसुम् ॥ वसुकामो वसून्रुद्रान् वीर्यकामोऽथ वीर्यवान् ॥ ३ ॥ अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः
सुतान् ॥ विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशाम् ॥ ४ ॥ आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ॥
प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥ ५ ॥ रूपाभिकामो गन्धर्वान् स्त्रीकामोऽप्सरउर्वशीम् ॥ आधिपत्यकामः
सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥ यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम् ॥ विद्याकामस्तु गिरिशं दाम्पत्यार्थ
उमां सतीम् ॥ ७ ॥ धर्मार्थ उत्तमश्लोकं तन्तुं तन्वन्पितॄन्यजेत् ॥ रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥ ८ ॥
राज्यकामो मनून्देवान्निर्ऋतिं त्वभिचरन्यजेत् ॥ कामकामो यजेत्सोममकामः पुरुषं परम् ॥ ९ ॥ अकामः सर्व-
कामो वा मोक्षकाम उदारधीः ॥ तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥ ॥ ॥

भूमी ॥ ५ ॥ अप्सराश्चासावुर्वशी च ताम् ॥ ६ ॥ यज्ञं यज्ञोपाधिं विष्णुम् । कोशो वसुसंचयः । वसुकाम इत्यत्र धनमात्रमिति भेदः । दाम्पत्यमन्योन्यप्रीतिस्तदेवार्थो यस्य सः ॥ ७ ॥ धर्मार्थो धर्मकामः । उत्तमश्लोकोपाधिं विष्णुम् । तन्तुं तन्वन् संतानवृद्धिमन्विच्छन् । रक्षा त्राधानिवृत्तिस्तत्कामः । पुण्यजनान्यक्षान् । ओजो बलं तत्कामो मरुद्गणान्देवान् ॥ ८ ॥ राज्यं राजत्वं तत्कामो मनून्देवान्मन्वन्तरपालान् । राज्ञः कर्म राज्यं तत्कामो विश्वान्देवानिति विशेषः । अभिचरञ्छत्रुमरणमिच्छन् निर्ऋतिं राक्षसम् । कामकामो भोगेच्छुः । अकामो वैराग्यकामः । पुरुषं परं प्रकृतिव्यतिरेकोपाधिमीश्वरम् ॥ ९ ॥ अकाम एकान्तभक्तः उक्तानुक्तसर्वकामो वा पुरुषं पूर्णं निरुपाधिम् ॥ १० ॥ ॥ ॥ ॥ ॥

---

१ मनुष्येषु मनीषिणा यच्छ्रवणादिकम्, यच्च म्रियमाणाना कर्तव्यमित्यन्वयः । २ गलच्छेदनादिसाहसवानित्यर्थः । क्रम० । ३ नृणा च म्रियमाणानाम्' इति पाठः । ४ इदानीं मन्दधियां पुसा कामफलप्राप्त्यर्थं देवतान्तरभजनमाह—ब्रह्मेति । ५ पूर्वोक्ततृतीयश्लोके इति यावत् । पूर्वं चतुर्थश्लोके विश्वान्देवान्राज्यकाम इति, अत्र राज्यकामो मनूनिति द्विरुक्तिः गुणप्रधानविवक्षया वोध्या । अत एव टीकायां विश्वान्देवानिति विशेष इत्युक्तम् ।

पूर्वोक्तनानादेवतायजनस्यापि संयोगपृथक्त्वेन भक्तियोगफलत्वमाह—एतावानिति । इन्द्रादीनपि यजतामिह तत्तद्यजनेन भागवतानां संगतो भगवत्यचलो भावो भक्तिर्भवतीति यत् एतावानेव निःश्रेयसस्य परमपुरुषार्थस्योदयो लाभः । अन्यत्तु सर्वं तुच्छमित्यर्थः ॥ ११ ॥ भागवतसङ्गत इत्यनेन सूचितां हरिकथारतिं स्तौति—ज्ञानमिति । यत् यासु कथासु ज्ञानं भवति । कीदृशम् । आ सर्वतः प्रतिनिवृत्तमुपरतं गुणोर्मीणां रागादीनां चक्रं समूहो यस्मात्तत् । उत अनन्तरम् । तद्धेतुरात्मप्रसादश्च । यत्र यासु मनःप्रसादहेतुः, गुणेषु विषयेष्वसङ्गो वैराग्यं च । उभयत्रेति पाठे इहामुत्र च गुणेष्वसङ्गः । कैवल्यमित्येव संमतः पन्थाः यो भक्तियोगः । निर्वृतः श्रवणसुखेन । अन्यत्रानिर्वृत इति वा । तासु हरिकथासु को रतिं न कुर्यात् ॥ १२ ॥ अभिव्याहृतमुक्तम् । ऋषिं परब्रह्म-

एतावानेव यजतामिह निःश्रेयसोदयः ॥ भगवत्यचलो भावो यद्भागवतसङ्गतः ॥ ११ ॥ ज्ञानं यदा प्रतिनिवृत्तगु-
णोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसङ्गः ॥ कैवल्यसंमतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न
कुर्यात् ॥ १२ ॥ ॥ शौनक उवाच ॥ इत्यभिव्याहृतं राजा निशम्य भरतर्षभः ॥ किमन्यत्पृष्टवान्भूयो वैयासकि-
मृषिं कविम् ॥ १३ ॥ एतच्छुश्रूषतां विद्वन् सूत नोऽर्हसि भाषितुम् ॥ कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम्
॥ १४ ॥ स वै भागवतो राजा पाण्डवेयो महारथः ॥ बालक्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे ॥ १५ ॥ वैया-
सकिश्च भगवान् वासुदेवपरायणः ॥ उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥ आयुर्हरति वै पुंसामुद्यन्नस्तं
च यन्नसौ ॥ तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥ तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ॥
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥ ॥ ७ ॥ ॥ ७ ॥

दर्शिनम् । कविं शब्दब्रह्मनिष्णातम् ॥१३॥ श्रवणेच्छायां हेतुः—हरिकथा एव उदर्कः उत्तरफलं यासु ताः कथाः सतां भागवतानां सदसि सभायां स्युः ॥ १४ ॥ एतत्प्रपञ्चयति—स वा इति द्वाभ्याम् । कृष्णपूजादिरूपां क्रीडां यः स्वीकृतवान् ॥ १५ ॥ उरुगायस्य गुणैरुदारा महत्यः कथाः स्युः ॥ १६ ॥ किंच वृथैव क्षीयमाणमायुर्हरिकथया सफलं कुर्विलाशयेनाह त्रिभिः—आयुरिति । असौ सूर्यः उद्यन्नुद्गच्छन्नस्तमदर्शनं च यन् गच्छन् । यत् येन क्षणो नीतस्तस्य आयुः ऋते वर्जयित्वा वृथैव हरति ॥ १७ ॥ ननु जीवनमेव तेषामायुषः फलमस्ति तत्राह—तरव इति । ननु तेषां श्वासो नास्ति तर्हि, भस्त्राश्चर्मकोशाः । ननु तासामाहारादिकं नास्ति तत्राह । न खादन्ति नाश्नन्ति, न मेहन्ति रेतःसेकं मैथुनं न कुर्वन्ति किम् । उत अपि । नराकारं पशुं मत्वाह—अपरे इति ॥ १८ ॥ ॥

१ सयोगपृथक्त्वेनेति । सबन्धस्य भिन्नत्वेनेत्यर्थः । तत्तद्देवतायजने तत्तदुक्तफलसिद्धिरिति पृथक्त्वम् । तत्तद्देवताभजनेन पापक्षयात् भागवतप्रसङ्गः तत्सगत्या च भगवत्यचला भक्तिरिति संयोगः इति व्याख्यालेशः । अथवा एकस्य तूभयत्वे सयोगपृथक्त्वम् । यथा—खादिरो यूपो भवति खादिरो वीर्यकामस्येति यथैकस्य खदिरयूपस्य क्रत्वङ्गत्वं वीर्यसाधकत्वं च, तथात्र नानादेवताभजनं तत्तत्फलसाधकं हरिभक्तिफलसाधनं च । तत्रोभयफलसाधकत्वेस्थिते हरिभक्तिकामनयेन्द्रादयो यष्टव्याः नान्यकामनयेति समुदायार्थः । यथा गोपकुमारिकाणां कृष्णकामनया कात्यायन्यर्चनम् । २ भागवतसङ्गतो हरिकथाप्राप्तिरित्यर्थाल्लभ्यते । ३ आदिशब्देन जन्ममरणशोकमोहक्षुधापिपासादीनां ग्रहणम् । ४ चक्रं पुनःपुनरापतनम् । ५ 'कथाः स्युः सत्समागमे' इति पाठः । 'सताम्' इति पाठे कथा इत्यस्याध्याहारः । ६ यत् येनोत्तमश्लोकवार्तया क्षणो नीतस्तस्य आयुर्ऋते वर्जयित्वा वृथैव हरतीत्यन्वयः ।

तदेवाह । श्वादिभिः संस्तुतः सदृशो निरूपितः । यस्य कर्णपथं कदाचिदपि नागतः । स अवज्ञास्पदत्वाच्छ्वभिः, कश्मलविषयासक्तत्वाद्विड्वराहैर्ग्रामसूकरैः, कण्टकवदुःखदविषयासक्तत्वादुष्ट्रैः, भारवाहित्वात्खरैस्तुल्य इत्यर्थः ॥१९॥ तस्याङ्गानि च निष्फलानीत्याह—विले इति पञ्चभिः । वतेति खेदे । न शृण्वतोऽशृण्वतो नरस्य ये कर्णपुटे ते विले वृथारन्ध्रे । न चेदुपगायति तस्य जिह्वा असती दुष्टा दर्दुरो भेकस्तदीया जिह्वेव ॥ २० ॥ पट्टवस्त्रोष्णीषेण किरीटेन च जुष्टमपि शिरो यदि न नमेत्तर्हि केवलं भार एव । शवौ मृतकस्तत्करतुल्यौ । लसती काञ्चनकङ्कणे ययोस्तौ । अप्यर्थे वाशब्दः ॥ २१ ॥ ये नयने विष्णोर्मूर्तीर्न निरीक्षेते ते बर्हायिते मयूरपिच्छनेत्रतुल्ये । द्रुमवज्जन्म भजत इति तथा । वृक्षमूलतुल्यावित्यर्थः ॥ २२ ॥ नाभिलभेत अभितो न स्पृशेन्न धारयेत् । श्रीविष्णु-

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ॥ न[1] यत्कर्णपथापेतो जातु नाम गदाग्रजः ॥ १९ ॥ विले बतोरुक्रम-विक्रमान्ये न शृण्वतः कर्णपुटे नरस्य ॥ जिह्वाऽसती दार्दुरिकेव सूत न[3] चोपगायत्युरुगायगाथाः ॥२०॥ भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम् ॥ शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा[4] ॥ २१ ॥ बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये ॥ पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २२ ॥ जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु ॥ श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् ॥२३॥ तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ॥ न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥२४॥ अथाभिधेह्यङ्ग मनोनुकूलं प्रभाषसे भागवतप्रधानः ॥ यदाह वैयासकिरात्मविद्या-विशारदो नृपतिं साधु पृष्टः ॥ २५ ॥ इति श्रीम० म० द्वितीयस्कन्धे तृतीयोऽध्यायः ॥३॥ ॥छ॥ ॥ सूत उवाच ॥ वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्य मतिं कृष्ण औत्तरेयः सतीं व्यधात् ॥ १ ॥ आत्मजायासुतागा-रपशुद्रविणबन्धुषु ॥ राज्ये चा[5]विकले नित्यं विरूढां ममतां जहौ ॥ २ ॥ ॥ ॥

पद्याः श्रीविष्णुपदलक्ष्म्यायाः । न वेदेति अवघ्राय नाभिनन्देदित्यर्थः ॥ २३ ॥ अश्मवत् सारो बलं काठिन्यं यस्य । विक्रियालक्षणमाह—अ[6]थेति । गात्ररुहेषु रोमसु हर्ष उद्गमः ॥२४॥ यस्मादभक्तस्य सर्वमेतद्व्यर्थम् । मनसोऽनुकूलं प्रियं च ब्रूपे । अथ अतः साधु पृष्टः सन् वैयासकिर्नृपतिं प्रति यदाह तदभिधेहीति ॥२५॥ इति श्रीमद्भा० म० द्वि० भा० दी० टीकायां तृतीयोऽध्यायः ॥३॥ ॥छ॥ ॥ तुर्ये परीक्षिता पृष्टं सृष्ट्यादि हरिचेष्टितम् ॥ शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ १ ॥ राज्ञः प्रश्नं कथयितुं तस्य प्राक्तनीं स्थितिमाह चतुर्भिः । वैयासकेः शुकस्य इति एवंभूतमात्मनस्तत्त्वस्य निश्चयो यस्मात्तद्वच उपधार्य आकलय्य । सतीं कृष्ण एव सव्यो नान्य इत्येवंभूताम् ॥ १ ॥ आत्मा देहः । पशवो गजादयः ॥ २ ॥ ॥ ॥ ॥

१ यद्वा श्वादिभिः संस्तुतः सर्वेषामस्माकं यत्किंचिद्गुणादिकं तत्सर्वमनेन श्रुतमिति सम्यक्स्तुत इत्यर्थः । क्रम० । २ 'न यत्कर्णपथोपेत जातु नाम गदाभृतः' इति पाठः । ३ 'न योपगायति' इति पाठः । न चेत्यत्र चशब्दश्चेदर्थे । ४ अप्यर्थे वाशब्दः । ५ अविकले अनुपद्रवे, वैर्यादिभिरनुपद्रुते वा । ६ अथ हरिनामधेयश्रवणोत्तरं यदा नेत्रेषु जलं रोमसु हर्षो भवति तदा विकारो ज्ञेय इत्यर्थः । ७ एतत् देहेन्द्रियपाटवादि ।

इममेवार्थं हरिलीलालक्षणम् ॥३॥ संस्थां मृत्युम् । त्रैवर्गिकं धर्मार्थकामप्रधानम् । संन्यस्य त्यक्त्वा आत्मभावं परमप्रेम्णा भगवदात्मत्वं गतः प्राप्तः सन् पप्रच्छ ॥४॥ मह्यं मम तमोऽज्ञानं विशीर्यते नश्यति तव कथयतः सतः । अतः समीचीनम् ॥५॥ पुनश्च वेदितुमिच्छामि । इदं दुर्विभाव्यमवितर्क्यं विश्वं यथा सृजति ॥ ६ ॥ गोपायति पालयति । संयच्छते संहरते । पुरुशक्तिर्बहुशक्तिमान् । क्रीडन् यथा करोति । आत्मानं ब्रह्मादिरूपिणं क्रीडयन् विकरोति विविधं करोति ॥७॥८॥ एकः गुरुपरूपेण युगपत्, जन्मभिर्ब्रह्माद्यवतारैः क्रमशो वा यथा प्रकृतेर्गुणान्गृह्णाति ॥ ९ ॥ विचिकित्सितं संदिग्धम् । शाब्दे ब्रह्मणि विचारेण निष्णातः परस्मिन्ननुभवेन ॥१०॥ उपामन्त्रितः प्रार्थितः । प्रचक्रमे देवतागुरुनमस्कारादिरूपमुपक्रमं कृतवानित्यर्थः ॥११॥ तदेवाह त्रयोदशभिः । परस्मै सर्वोत्तमाय । तत्र हेतुः—भूयसे अपरि-

पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः[1] ॥ कृष्णानुभावश्रवणे श्रद्दधानो महामनाः ॥३॥ संस्थां विज्ञाय संन्यस्य
कर्म त्रैवर्गिकं च यत् ॥ वासुदेवे भगवति आत्मभावं दृढं गतः ॥ ४ ॥ ॥ राजोवाच ॥ समीचीनं वचो ब्रह्मन्स-
र्वज्ञस्य तवानघ ॥ तमो विशीर्यते मह्यं हरेः कथयतः कथाम् ॥ ५ ॥ भूय एव विवित्सामि[2] भगवानात्ममायया ॥
यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः[3] ॥ ६ ॥ यथा गोपायति विभुर्यथा संयच्छते पुनः ॥ यां यां शक्तिमुपाश्रित्य
पुरुशक्तिः परः पुमान् ॥ आत्मानं क्रीडयन्क्रीडन् करोति विकरोति च ॥ ७ ॥ नूनं भगवतो ब्रह्मन् हरेरद्भुतकर्मणः ॥
दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम् ॥ ८ ॥ यथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा ॥ बिभर्ति भूरिश-
स्त्वेकः कुर्वन्कर्माणि जन्मभिः ॥ ९ ॥ विचिकित्सितमेतन्मे ब्रवीतु भगवान्यथा ॥ शाब्दे ब्रह्मणि निष्णातः
परस्मिंश्च भवान्खलु ॥ १० ॥ ॥ सूत उवाच ॥ इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः ॥ हृषीकेशमनुस्मृत्य
प्रतिवक्तुं प्रचक्रमे ॥११॥ ॥ श्रीशुक उवाच ॥ नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ॥ गृहीत-
तशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने[4] ॥ १२ ॥ भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाखिलसत्त्व-
मूर्तये ॥ पुंसां पुनः[5] पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥

मितमहिम्ने । तद्दर्शयति । सतः प्रपञ्चस्य उद्भवादिषु निमित्तभूता या लीला तया गृहीतं ब्रह्मादिरूपेण रजआदि शक्तित्रितयं येन तस्मै । अन्तर्भवाय अन्तर्यामिणे । अत एव सर्वान्तरत्वादनुपलक्ष्यं वर्त्म यस्य ॥ १२ ॥ विचित्रफलदातृत्वमनुस्मरन् प्रणमति । भूयः पुनश्च नमः । सतां धर्मवर्तिनां वृजिनच्छिदे दुःखहन्त्रे । असतामधर्मशीलानामसंभवायानुद्भवहेतवे । अखिलसत्त्वमूर्तये, तत्तद्देवतादिरूपेण तत्तत्फलदायेत्यर्थः । समग्रसत्त्वमूर्तये इति वा । पुनरिति पूर्वोक्तोभयवैलक्षण्यमाह । पारमहंस्ये प्रत्यङ्निष्ठारूपे आश्रमे व्यवस्थितानां पुंसामनुमृग्यमतन्निरसनेन पुनःपुनर्मृग्यं यदात्मतत्त्वं तस्य दाशुषे दात्रे ॥ १३ ॥

१ हे मुनयः, हरिलीला ब्रूहीति यत्पृच्छथ इममेवार्थमिति योज्यम् । २ विवित्सामीत्यत्र इडभाव आर्षः । ३ अधीश्वरैर्ब्रह्मादिभिः । ४ अनुपलक्ष्यं योगिभिरपि दुर्ज्ञेयमित्यर्थः । ५ पुनःशब्देनेत्यर्थः । अवधारणावाचिना पुनःशब्देनान्ययोगं निवारयति । एतेभ्य एवानुमृग्यं ददाति नान्येभ्य इत्यर्थः 'पुनरपि' इत्यपि पाठः ।

सात्त्वतां भक्तानामृपभाय पालकाय । कुयोगिनां भक्तिहीनानां विदूरा काष्ठा दिगपि यस्य । दुर्ज्ञेयायेत्यर्थः । तदेवं वैषम्यप्रतीतावपि निर्दोषत्वायाचिन्त्यमैश्वर्यमाह । निरस्तं साम्यमतिशयश्च यस्य यदपेक्षया अन्यस्य साम्यमतिशयश्च नास्ति, तेन राधसा ऐश्वर्येण स्वधामनि स्वस्वरूपे ब्रह्मणि रममाणाय ॥ १४ ॥ सर्वसाधनेभ्यो भक्तेः श्रैष्ठ्यमनुसरन्प्रणमति—यत्कीर्तनमिति द्वाभ्याम् । अर्हणं पूजनम् । सुभद्रं मङ्गलं श्रवो यशो यस्य तस्मै ॥ १५ ॥ विचक्षणा विवेकिनो यस्य चरणयोरुपसादनादुपसत्तेर्भजनादन्तरात्मनो मनस उभयत्रेह च परत्र च सङ्गं व्युदस्य निरस्य । गतक्लमाः प्रयासरहिताः ॥ १६ ॥ भक्तिशून्यानां सर्वसाधनवैफल्यं दर्शयन्नमति—तपस्विन इति । मनस्विनो योगिनः । सुमङ्गलाः सदाचाराः । यस्मिंस्तपआद्यर्पणं विना । सुभद्रश्रवसे इत्यस्यावृत्तिर्यशःश्रवणादेः

नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥ निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥१४॥ यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ॥ लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥ १५ ॥ विचक्षणा यच्चरणोपसादनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः ॥ विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥ १६ ॥ तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ॥ क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥ १७ ॥ किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ॥ येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ १८ ॥ स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ॥ गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिङ्गो भगवान्प्रसीदताम् ॥ १९ ॥ श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः ॥ पतिर्गतिश्चान्धकवृष्णिसात्त्वतां प्रसीदतां मे भगवान्सतां पतिः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥

प्राधान्यज्ञापनाय ॥ १७ ॥ भक्तेः परमशुद्धिहेतुत्वं दर्शयन्नाह । किरातादयो ये पापजातयोऽन्ये च ये कर्मतः पापरूपास्ते यदुपाश्रया भागवतास्तदाश्रयाः सन्तः शुध्यन्ति । असंभावनाशङ्कां परिहरति, प्रभविष्णवे प्रभवनशीलायेति ॥ १८ ॥ सर्वोपास्यत्वमनुसरन् प्रार्थयते । स एष आत्मवतां धीराणामात्मा । आत्मत्वेनोपास्य इत्यर्थः । त्रयीमयत्वादिविशेषणैस्तत्तन्मार्गेणोपास्यत्वं विवक्षितम् । गतव्यलीकैर्निष्कपटैर्भक्तैर्वितर्क्यमत्याश्चर्येण वीक्षणीयं लिङ्गं मूर्तिर्यस्य स प्रसीदतु ॥ १९ ॥ सर्वपालकत्वमनुसरन्नाह—श्रिय इति । गतिश्च सर्वापत्सु रक्षकः ॥ २० ॥ ॥ ॥ ॥

१ ऋपं ज्ञानं भासयति दीपयतीत्यृपभः । २ अस्मिन्पद्ये नमसां पौनःपुन्यं तद्गुणविशिष्टाकारोद्देशेनेति ज्ञेयम् । ३ सदातनोऽनुभावोयमिति शतृप्रत्ययः । ४ अस्मिन्पद्ये यच्छब्दावृत्त्या एकवचनेन च सकृत्तत्तन्मात्रमपीत्यभिहितम् । ५ ब्रह्मगतिं ब्रह्मरूपा च सा गतिर्गम्यो लोकश्च ताम् । ६ किरातेति । शवरात्पर्णशवरीजाताः किराताः । वैश्याद्ब्राह्मणीजातो वैदेहकस्तस्मात्पुल्कसीजाता हूणाः । वैदेहकपुत्रा आन्ध्राः । निष्ठ्यात्किरातीजाताः पुलिंदाः । शूद्राद्ब्राह्मणीजाताश्चाण्डालास्तस्माज्जाताः पुल्कसाः । ब्राह्मणाद्वैश्यायां जातोऽम्बष्ठः, तस्य कन्यायां ब्राह्मणाज्जाता आभीराः । कङ्काः कर्पराः । नृपाद्वैश्याया जाता यवनाः । शकास्तुरुष्कविशेषाः । ७ 'शकादयः' इति पाठः । ८ तत्तदिति । त्रयीमयः कर्मकाण्डोपास्यः । धर्ममयो मन्वादिधर्मशास्त्रोपास्यः । तपोमय उपासनाकाण्डोपास्य इति ।

यथारुचं रुच्यनुसारेण सगुणनिर्गुणादिभेदैः । यद्वा रुक्
ज्ञानप्रदत्वमनुस्मरन्नाह—यदङ्घ्रीति द्वाभ्याम् । यस्याङ्घ्योरनुध्यानमेव समाधिस्तेन धौतया शोधितया । यथारुचं रुच्यनुसारेण सगुणनिर्गुणादिभेदैः । यद्वा रुक् ज्ञानप्रदत्वमनुस्मरन्नाह—यदङ्घ्रीति द्वाभ्याम् । यस्याङ्घ्योरनुध्यानमेव समाधिस्तेन धौतया शोधितया । किंच पुरा कल्पादावजस्य हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती सरस्वती तस्य मुखतः किल प्रादुर्भूता ।
प्रतिभा । यथामतीत्यर्थः ॥२१॥ किंच पुरा कल्पादावजस्य हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता येन प्रचोदिता सती सरस्वती तस्य मुखतः किल प्रादुर्भूता । इदानीं स्ववाचं श्रोतृजनाह्लादिनीं शृङ्गारकरुणादिशोभां प्रार्थयते—
स्वानि लक्षणानि शिक्षाद्युक्तानि यस्याः सा । ऋषीणां ज्ञानप्रदानामृषभः श्रेष्ठः ॥ २२ ॥ इदानीं स्ववाचं श्रोतृजनाह्लादिनीं शृङ्गारकरुणादिशोभां प्रार्थयते— यो महद्भिर्भूतैरिमाः पुरः शरीराणि
भूतैरिति । स मे वचांस्यलंकृषीष्ट अलंकरोतु । अन्यस्य वचसामन्येनालंकारासंभवमाशङ्क्य तस्यान्तर्यामितामाविष्करोति । यो महद्भिर्भूतैरिमाः पुरः शरीराणि
सृष्ट्वा अमूषु पूर्ष्वन्तर्यामितया शेते वसति । अत्र पुरुषसमाख्यां प्रमाणयति । यद्यस्मात्पूरुष इति । अत एव य एकादशेन्द्रियपञ्चभूतरूपान्षोडशगुणान्कला भुङ्क्ते
प्रकाशयति पालयतीति वा । तदा त्वात्मनेपदमार्षम् । अत्र हेतुः—यतः षोडशानामात्मा चेतयिता । स्वार्थे कः । नत्वत्र जीवत्वमुच्यते प्रार्थनाविरोधात् ॥२३॥

यदङ्घ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मनः ॥ वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो
भगवान्प्रसीदताम् ॥ २१ ॥ प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ॥ स्वलक्षणा प्रादुर-
भूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥२२॥ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ॥
भुंक्ते गुणान् षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान्वचांसि मे ॥२३॥ नमस्तस्मै भगवते व्यासायामिततेजसे ॥
यदाह हरिरात्मनः ॥ २५ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥ २४ ॥ एतदेवात्मभू राजन्नारदाय विपृच्छते ॥ वेदगर्भोऽभ्यधात्साक्षा-
नारद उवाच ॥ देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ॥ तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥ यद्रूपं
यदधिष्ठानं यतः सृष्टमिदं प्रभो ॥ यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥ २ ॥ ॥ ॥

श्रीव्यासं नमस्करोति—नम इति । सौम्या भक्ताः । यस्य मुखाम्बुरुहे आसवो मकरन्दस्तम् ॥२४॥ इदानीं प्रश्नोत्तरतया ब्रह्मनारदसंवादं प्रस्तौति—एतदिति ।
उत्पत्तिसमय एव वेदा गर्भे यस्य सः । साक्षाद्धरिर्यदाह ॥२५॥ ॥ इति श्रीमद्भा० द्विती० भा० दी० टीकायां चतुर्थोऽध्यायः ॥४॥ ॥ छ ॥ ॥ पञ्चमे नारदेनाथ
पृष्टः सृष्ट्यादि वक्त्रजः ॥ हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ १ ॥ नारदाय विपृच्छते वेदगर्भोऽभ्यधादित्युक्तं, तत्र नारदप्रश्नमाह—देवदेवेति । हे
भूतभावन, अत एव सर्वेषां पूर्वज अनादे, ज्ञायतेऽनेनेति ज्ञानं तत्साधनं यत्तद्विजानीहि । विशेषेण ज्ञापयेत्यर्थः । कथंभूतम् । आत्मतत्त्वं नितरां दृश्यते येन
तत् ॥ १ ॥ उपलक्षणभूतं विश्वमेवात्मज्ञानसाधनमतस्तद्विशेषं पृच्छति । यद्रूपं येन रूप्यते प्रकाश्यते । यदधिष्ठानं यदाश्रयम् । यतो येन सृष्टम् । यत्संस्थं
यस्मिँल्लीयते । यत्परं यदधीनम् । यच्चेति यदात्मकम् । स्वतः सत्कारणतो वेत्यर्थः । तस्य तत्त्वं याथार्थ्यं तत्त्वतो वद ॥ २ ॥ ॥ ॥ ॥

१ रुचिमनतिक्रम्येति यथारुचमित्यव्ययीभावे 'झयः' इति टचि यथारुचमिति सिध्यति । २ स्वान्यसाधारणानि । ३ 'वासुदेवाय वेधसे' इति पाठोस्ति परं च व्यासायेत्येव पाठः श्रीधरसमतः । ४ आत्मन इति द्वितीया । आत्मानं प्रति साक्षाद्धरिर्यदाह तदभ्यधादित्यन्वयः । ५ अन्तर्भावितणिजर्थः । विजानीहि विशेषेण जानासि लडर्थे लोट् ।

न जानामीति न वक्तव्यमित्याह—सर्वमिति । भूतं जातं, भव्यं जनिष्यमाणं, भवत् जायमानं, तेषां प्रभुर्यतः, अतो विशिष्टेन ज्ञानेनावसितं निश्चितम् ॥ ३ ॥ आस्तामिदम्, आदौ तावत्त्वामेव कथयेत्याह । यतो विज्ञानं यस्य । कस्तव विज्ञानद इत्यर्थः । यदाधारः कस्तवाश्रयः । यत्परो यदधीनः । यदात्मको यत्स्वरूपः । मम तु त्वमेव स्वतन्त्रः परमेश्वर इति बुद्धिः । तव तपश्चरणेन तु पराशङ्कया पृच्छामीत्याह सार्धैश्चतुर्भिः । एकोऽसहायः ॥४॥ आत्मनि भावयसे पालयसि स्वयमेव पराभवमप्रापयन् अक्लमः श्रमरहितः । यथोर्णनाभिरात्मन एव शक्तिमवष्टभ्य सृजति तद्वत् ॥ ५ ॥ तस्मादहं त्वय्यस्मिन्विश्वस्मिन्परमुत्तममपरमधमं समं मध्यमं च । तत्रापि नाम मनुष्यादि, रूपं द्विपदत्वादि, गुणः शुक्लत्वादिस्तैर्भाव्यं साध्यं, तत्रापि सदसत्स्थूलं सूक्ष्मं च किंचिदप्यन्यतो न वेद किंतु त्वत्त एव सर्वं भवतीति मन्ये ॥ ६ ॥ स तथाविधोऽपि भवांस्तपोऽचरदिति यत्तेन नोऽस्मान्खेदयसे मोहयसि । यतः पराशङ्कामीश्वरान्तराशङ्कां प्रयच्छसि ॥ ७ ॥ यथैवाहं त्वयाऽनुशासितः शिक्षितः सन्बुध्ये बुध्येयं तथा विजानीहि विशेषेण ज्ञापय ॥८॥ प्रश्नमभिनन्दति । वत्स हे पुत्र, तवेदं विचिकित्सितं संदेहः तत्पूर्वकः

सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः ॥ करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ॥ एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥ आत्मन्भावयसे तानि न पराभावयन्स्वयम् ॥ आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः ॥ ५ ॥ नाहं वेद परं ह्यस्मिन्नापरं न समं विभो ॥ नामरूपगुणैर्भाव्यं सदसत्किंचिदन्यतः ॥ ६ ॥ स भवानचरद्घोरं यत्तपः सुसमाहितः ॥ तेन खेदयसे नस्त्वं पराशङ्कां प्रयच्छसि ॥७॥ एतन्मे पृच्छतः सर्वं सर्वज्ञ सकलेश्वर ॥ विजानीहि यथैवेदमहं बुध्येऽनुशासितः ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ॥ यदहं चोदितः सौम्य परधर्मप्रदर्शने ॥ ९ ॥ नानृतं तव तच्चापि यथा मां प्रब्रवीषि भो ॥ अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥ येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ॥ यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥ ॥ ॥ ॥

प्रश्नोऽयं सम्यगित्यर्थः । यतः कारुणिकस्य तवायं प्रश्नः । अत्र हेतुः—यत् यतः परधर्मप्रदर्शने भगवद्वीर्यप्रकाशने प्रवर्तितोऽस्मि । अतस्त्वं जिज्ञासुरपि मयि कृपामेव कृतवानित्यर्थः ॥ ९ ॥ ननु त्वमेव भगवानित्युक्तं मया 'एकः सृजसि भूतानि' इत्यादिना । सत्यम्, यथा मामीश्वरत्वेन प्रभाषसे तदपि तव भाषणं नात्यन्तमनृतम् । यतः कारणादेतावत्प्रभावस्य भाव एतावत्त्वं मे अस्ति, किंतु मत्तः परमीश्वरमविज्ञाय ब्रूषे । अतः सादृश्यात्तवेयं भ्रान्तिर्न तु बुद्धिपूर्वमनृतमित्यर्थः । यत ईश्वरान्ममैतावत्त्वं तमविज्ञायेति वान्वयः ॥ १० ॥ तर्हि कोऽसावीश्वर इत्यपेक्षायां भक्त्या नमस्कुर्वन्नेव तं कथयति त्रिभिः । येन स्वप्रकाशेन रोचितं प्रकाशितमेव प्रकाशयामि सृष्ट्याऽभिव्यक्तं करोमि । यथाऽर्कादयश्चैतन्यप्रकाश्यमेव प्रकाशयन्ति । तथाच श्रुतिः—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥ तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥ ११ ॥ ॥ ॥

१ अत्रास्तां इत्यादिटीकाया त्वामेवेत्यत्र च आत्मानमेव कथयेति युक्तम् । क्रम० । २ तेषामन्यतः पराभवो यथा न स्यात्तथा भावयामास । अमोघवाञ्छ इत्यर्थ. । ३ यद्विज्ञान इत्यादौ तं वदेति शेषः । मम तु तत्तद्रूपत्वेन त्वमेव भासीत्याह एक इति । ४ 'पर त्वस्मिन्' इति पाठः । ५ 'सोम्य' इति पाठः । ६ 'धर्मे भगवद्वीर्यदर्शने' इति पाठो लभ्यते, परन्तु स न श्रीधरव्याख्यानुगुणः । ७ यथार्कादयस्तत्प्रकाशितास्तच्छक्त्यैव तत्तत्प्रकाशयन्तीत्यर्थः । ८ मुण्डकोपनिषत् २।१०।

तस्मै नमो धीमहि । यस्य मायया विमोहिताः सन्तो युष्मदादयो मां जगद्गुरुं जगत्कारणं वदन्ति तस्मै ॥ १२ ॥ यन्माययेति मायासंबन्धोक्तेस्तस्या दुर्जयत्वो-
क्तेश्च तस्यापि किमस्ति संसारो नैवेत्याह । मत्कपटमसौ जानातीति यस्य दृष्टिपथे स्थातुं विलज्जमानयैव तस्मिन्स्वकार्यमकुर्वत्या अमुया मायया विमोहिता
अस्मदादयो दुर्धियोऽविद्यावृतज्ञाना एव केवलं विकत्थन्ते श्लाघन्ते । अनेन 'यद्रूपम्' इत्यस्य प्रश्नस्योत्तरमुक्तं भवति ॥ १३ ॥ तदेवं स्वस्मादन्यं परमेश्वरं निरू-
प्येदानीं 'यदधिष्ठानम्' इत्यादिनवप्रश्नानां स एवाधिष्ठानादिकं सर्वमित्युत्तरं वक्तुं तद्व्यतिरेकेणान्यस्यासत्त्वमाह—द्रव्यमिति । द्रव्यं महाभूतान्युपादानरूपाणि ।
कर्म जन्मनिमित्तम् । कालस्तत्क्षोभकः । स्वभावस्तत्परिणामहेतुः । जीवो भोक्ता । वासुदेवात्परोऽन्योऽर्थो नास्ति, कारणाव्यतिरेकात्कार्यस्य ॥ १४ ॥ तत्प्रपञ्च-
यति द्वाभ्याम् । नारायणः परः[3] कारणं येषां ते । अनेनैव शास्त्रयोनित्वप्रतिपादनेनेश्वरे प्रमाणं सर्वज्ञत्वादिकं चोक्तम् । देवाश्च तदङ्गाज्जाता अतो न तद्व्यति-

तस्मै नमो भगवते वासुदेवाय धीमहि[1] ॥ यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुम् ॥ १२ ॥ विलज्जमानया यस्य
स्थातुमीक्षापथेऽमुया ॥ विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ १३ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव
एव च ॥ वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः ॥ १४ ॥ नारायणपरा वेदा देवा नारायणाङ्गजाः ॥ नारा-
यणपरा लोका नारायणपरा मखाः ॥ १५ ॥ नारायणपरो योगो नारायणपरं तपः ॥ नारायणपरं ज्ञानं नारायणपरा
गतिः ॥ १६ ॥ तस्यापि[2] द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ॥ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥
सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ॥ स्थितिसर्गनिरोधेषु गृहीता मायया विभोः[4] ॥ १८ ॥ कार्यकारणकर्तृत्वे
द्रव्यज्ञानक्रियाश्रयाः ॥ बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः[5] ॥ १९ ॥ ॥ ॥

रिक्ताः । लोकाः स्वर्गादयस्तदानन्दांशाः । मखास्तत्साधनभूताः ॥ १५ ॥ योगः प्राणायामादिः । तपस्तत्साध्यं चित्तैकाग्र्यम् । ज्ञानं तत्साध्यम् । गतिस्त-
त्फलम् । अनेनैव सर्वं तदधीनमित्युक्तम् ॥ १६ ॥ तर्हि त्वं किं करोषीत्यपेक्षायामाह । तस्य सृज्यमपि तेन सृष्टोऽहं सृजामि । ईक्षया कटाक्षेण । तत्र हेतवः—
द्रष्टुरित्यादयः ॥ १७ ॥ ननु कुतोऽयं जीवेश्वरविभागः, यतस्त्वं प्रेर्यः, स च प्रेरकः स्यादित्यपेक्षायां जीवेश्वरविभागहेतुमाह त्रिभिः—सत्त्वमिति । निर्गुणस्या-
पीश्वरस्यैते त्रयो गुणा बध्नन्तीत्युत्तरेणान्वयः । कथंभूताः । तेनैव स्वातन्त्र्येण स्थित्याद्यर्थं मायया गृहीताः ॥ १८ ॥ वस्तुतः सर्वदा मुक्तमपि मायिनं माया-
विषयं पुरुषं जीवं बध्नन्ति क्व । कार्यमधिभूतं, कारणमध्यात्मं, कर्ताऽधिदैवतं तेषां भावस्तत्त्वं तस्मिन् । द्रव्यं महाभूतानि, ज्ञानशब्देन देवताः, क्रिया इन्द्रि-
याणि, तदाश्रयास्तेषां कारणभूतास्तत्तदभिमानेन बध्नन्ति ॥ १९ ॥ ॥ ॥ ॥

१ नमो धीमहीति । मनसा नमन कुर्वीमहीत्यर्थः । २ परमेश्वरस्यापीत्यर्थः । ३ परः तात्पर्यविषयो येषाम्, अथवा परं प्रतिपाद्य येषाम् । ४ अत्र निर्गुणस्य विभोरीश्वरस्येत्यन्वयो ज्ञेयः । ५ एवमुभयोरेकान्वये एक गुणपदमधिकं भवतीति भाति, परन्तु गुणाः शुक्लरक्तकृष्णवर्णा इति पूर्वश्लोकोक्तस्य त्रयो गुणा इति वाक्यस्य विशेषणम् । यद्वा 'गुणोऽप्रधाने' इति मेदिनीकोशात्स्थित्याद्यर्थं मायया गृहीता अप्रधानरूपा इति पूर्वश्लोकेनैव सबन्धः । अतो न पौनरुक्त्यशङ्केति दीपि० ।

अतः स एष वक्ष्यमाण एभिर्गुणैर्लिङ्गैर्जीवानामावरकैरुपाधिभिः । सुष्ठुलक्षिता गतिस्तत्त्वं यस्य सः, स्वैर्भक्तैरेव लक्षिता गतिस्तत्त्वं यस्येति वा ॥ २० ॥ तस्य सृष्टिप्रकारमाह—कालमिति । कर्म जीवादृष्टम् । विबुभूर्विविधं भवितुमिच्छन् ॥ २१ ॥ गुणानां व्यतिकरः क्षोभः साम्यत्यागः । स्वभावतः परिणामो रूपान्तरापत्तिः । पुरुष ईश्वरस्तेनाधिष्ठितत्वं त्रयाणां विशेषणम् । महतः महत्तत्त्वस्य ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्विक्रियमाणात् तस्य च क्रियाज्ञानशक्तित्वात्त्रिगुणत्वेऽपि रजःसत्त्वाभ्यामुपबृंहितत्वम्, अहंकारस्य त्वावरकत्वात्तमःप्रधानत्वम् । अत एवाहंकारकार्येषु तामसमाकाशादिकं बहु । राजसं सात्त्विकं चाल्पम् । एवं तदुपाधिकेषु जीवेष्वपि तथैव तामसाधिक्यम् ॥ २३ ॥ स च विकुर्वन् रूपान्तरं गच्छन् । त्रैविध्यमेवाह । वैकारिकः सात्त्विकः । तैजसो राजसः । यद्भिदा यस्य भेदः । द्रव्यशक्तिरित्यादीनि प्रातिलोम्येन त्रयाणां लक्षणानि । द्रव्ये महाभूताख्ये शक्तिर्यस्य । क्रियासु इन्द्रियेषु शक्तिर्यस्य । ज्ञानेषु वेदेषु

स एष भगवाँल्लिङ्गैस्त्रिभिरेभिरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः ॥ २० ॥ कालं कर्म स्वभावं च
मायेशो मायया स्वया ॥ आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥२१॥ कालाद्गुणव्यतिकरः परिणामः स्वभावतः ॥
कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥२२॥ महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात् ॥ तमःप्रधानस्त्वभव-
द्द्रव्यज्ञानक्रियात्मकः ॥२३॥ सोऽहंकार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥
द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥ २४ ॥ तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ तस्य मात्रा गुणः
शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः ॥२५॥ नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ॥ परान्वयाच्छब्दवांश्च प्राण ओजः
सहो बलम् ॥ २६ ॥ वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥ २७ ॥
तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् ॥ रूपवत्स्पर्शवच्चाम्भो घोषवच्च परान्वयात् ॥२८॥ ॥ ॥

शक्तिर्यस्य । हे प्रभो वोढुं शक्त ॥ २४ ॥ भूतादेरिति तामसस्य विशेषणम् । ननु तामसात्प्रथमं शब्दो भवतीति प्रसिद्धम् । सत्यम् । स तु तस्य नभसो मात्रा सूक्ष्मं रूपम् । गुणश्चासाधारणो व्यावर्तको धर्मः । शब्दद्वारा नभ उत्पद्यत इत्यर्थः । एवमेव स्पर्शादिष्वपि द्रष्टव्यम् । शब्दस्य लक्षणं लिङ्गमिति । कुड्याद्यन्तरितेन केनचिदुच्चैर्गजो गज इत्युक्ते यो गजद्रष्टा यश्च तेन दृश्यो गजस्तयोर्लिङ्गं बोधकम् । लिङ्गविशेषणत्वाद्यच्छब्दस्य षण्डत्वम् ॥ २५ ॥ परस्य नभसः कारणत्वेनान्वयाच्छब्दवांश्च वायुः । तस्यैव लक्षणं प्राणो देहधारणम् । ओजःसहोबलानीन्द्रियमनःशरीराणां पाटवानि तेषां हेतुरित्यर्थः ॥ २६ ॥ उदपद्यत उत्पन्नम् । स्वतो रूपवत्तेजो वायुनभसोः कारणभूतयोरन्वयात्स्पर्शशब्दवच्च । एवमम्भसः पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥२७॥ घोषः शब्दः ॥२८॥

१ मायेशः स्वया मायया विबुभूषुर्विविधं भवितुमिच्छुर्यदृच्छया स्वैरितया सकल्पमात्रेण वाऽऽत्मनि प्राप्तं लीनं सन्त काल क्षोभक सृष्टिकालेति व्यवहारहेतुं, कर्म जीवादृष्टं, स्वभावं मायादीनां परिणामित्वादिरूपं कारणतया उपाददे स्वीकृतवानित्यन्वयः । २ मात्रा गुणः शब्द इति । कारणाश्रयाया(?)मुद्भूतावस्थायां तदात्मकः सन् मात्रा, कार्याश्रयाया- ॥१०॥
मुद्भूतावस्थायां स्वतस्तु गुणः, द्रष्टृदृश्ययोर्लिङ्गं बोधकं तदेव च शब्द इत्यर्थः ।

विशेषः पृथ्वी । पृथिव्याश्च परान्वयाधिक्याद्गुणाधिक्यम् ॥ २९ ॥ मनःशब्देनैव तदधिष्ठाता चन्द्रोऽपि द्रष्टव्यः । अन्ये च दश देवा वैकारिकाः सात्त्विका-
हंकारकार्याः । तानाह । दिशश्च वातश्च अर्कश्च प्रचेताश्च अश्विनौ च, एते पञ्च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामधिष्ठातारः । वह्निश्च इन्द्रश्च उपेन्द्रश्च मित्रश्च कश्च
प्रजापतिः, एते पञ्च वाक्पाणिपादपायूपस्थानामधिष्ठातारः ॥ ३० ॥ यतो ज्ञानशक्तिर्बुद्धिः क्रियाशक्तिः प्राणश्च तैजसाहंकारकार्यौ । अतो ज्ञानक्रियाविशेष-
रूपाणीन्द्रियाण्यपि तैजसादभवन्नित्यर्थः । तान्याह—श्रोत्रमिति । दोः पाणिः । मेढ्रमुपस्थः । क्रमस्त्वत्र न विवक्षितः ॥ ३१ ॥ एवं कारणसृष्टिमुक्त्वा कार्य-
सृष्टिमाह। यदा एते असङ्गता अमीलिता आसन्, अत एव यदा आयतनस्य शरीरस्य निर्माणे न शेकुः ॥३२॥ तदा सदसत्त्वं प्रधानगुणभावमुपादाय स्वीकृत्य ।

वैकारिकान्मनो जज्ञे देवा वैकारिका दश ॥ दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥ तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् ॥ ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ ॥ श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः ॥ ३१ ॥ यदैतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः ॥ यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः ॥ ३३ ॥ वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् ॥ कालकर्मस्वभावस्थो जीवोऽजीवमजीवयत् ॥ ३४ ॥ स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः ॥ सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥ ३५ ॥ यस्येहावयवैर्लोकान्कल्पयन्ति मनीषिणः ॥ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ॥ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥ ३८ ॥

(Main text as printed line by line, top-down, beginning mid-verse:)

विशेषैस्तु विकुर्वाणादम्भसो गन्धवानभूत् ॥ परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ २९ ॥

उभयं समष्टिव्यष्ट्यात्मकं शरीरम् ॥३३॥ कालकर्मस्वभावानधिष्ठाय स्थितो जीवयतीति जीवः परमात्मा अजीवमचेतनमजीवयच्चेतयति स्म ॥३४॥ निर्भिद्य पृथ-
क्कृत्य स्थित इत्यर्थः ॥३५॥ तदवयवैर्लोकरचनामाह—यस्येति । कटिरित्यूरुमूलयोः पश्चाद्भागः । जघनं पुरोभागः । अधः सप्तलोकान् अतलादीन् । ऊर्ध्वं भूरादी-
न् सप्त ॥ ३६ ॥ वर्णानां तत उत्पत्तिं दर्शयति—पुरुषस्येति । ब्रह्म ब्राह्मणो मुखमिति कार्यकारणयोरभेदविवक्षयोक्तम् । बाहव इति च । क्षत्रं क्षत्रियः ॥३७॥
इदानीमुपासनार्थं लोककल्पनाभेदान्दर्शयन् सप्तलोकपक्षमाह द्वाभ्याम् । भूर्लोकः पातालमारभ्य । पद्भ्यां कटिपर्यन्ताभ्याम् ॥ ३८ ॥ ॥ ॥

---

१ क्रमस्तु श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि वाक्पाणिपादपायूपस्थाः । २ सदसत्त्वं मुख्यगौणभावम् । क्रम० । ३ तुशब्दोऽस्याः सर्ववैलक्षण्यद्योतनार्थः । ४ वैकारिकादिति मनोऽन्तःक-
रणचतुष्टयम् । अस्य तात्पर्येण चन्द्रमा मनसो जात इत्यस्या ऋचोऽर्थो दर्शितः । ५ 'असंहताः' इति सुबो. पाठः । ६ सहस्रेत्यनेन 'सहस्रशीर्षा'इत्यर्धर्चस्यार्थ उक्तः । ७ पुरुषस्येत्यादिना
'ब्राह्मणोऽस्य मुखमासीत्'इत्यस्या ऋचोऽर्थ उक्तः । ८ भूर्लोक इत्यादिना 'नाभ्या आसीत्'इत्यस्या ऋचोऽर्थ उक्तः । ९ भुवरित्यव्ययं अन्तरिक्षलोकस्य नाम । १० ब्रह्माण्डाभिधम् ।
११ पृथक्कृत्य स्थित इत्यर्थो मूलस्थनिर्गत इत्यस्य ।

स्तनद्वयादित्युपमनार्थत्वादूर्ध्वाधोभागवैपरीत्यं न दोषः । यद्वा स्तनच्छन्दं कुर्वद्यदोद्वयं तस्मादित्यर्थः । ब्रह्मलोको वैकुण्ठाख्यः, सनातनो नित्यः नतु सृज्यप्रपञ्चान्तर्वर्तीत्यर्थः ॥ ३९ ॥ इदानीं चतुर्दशलोकपक्षं दर्शयति । तत्र जघनादिभिर्भूरादयः पूर्वोक्ता एव सप्त, कट्यादिभिरधः सप्तलोकानाह—तत्कट्यामिति द्वाभ्याम् । शुद्धं हरिभक्तनिवासत्वात् ॥४०॥४१॥ त्रिलोकपक्षमाह । भूर्लोकः पातालादिसहितः ॥४२॥ इति श्रीमद्भाग० द्वि० भा० दी० टी० पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ षष्ठे विराड्विभूतिश्च प्रोक्ताऽध्यात्मादिभेदतः ॥ दृढीकृतं च पूर्वोक्तं सर्वं पुरुषसूक्ततः ॥ १ ॥ इदानीं वैराजस्य विभूतिः सप्रपञ्चमनुवर्ण्यते । वाचामस्मदादिवागिन्द्रियाणां तदधिष्ठातुर्वह्नेश्च तस्य मुखं क्षेत्रमुत्पत्तिस्थानम् । छन्दसां गायत्र्यादीनां सप्तानां तस्य सप्तधातवस्त्वगादयः क्षेत्रम् । हव्यं देवानामन्नम् । कव्यं पितॄणाम् । अमृतं तदुभयशेषो मनुष्याणाम् । तेषामन्नानां सर्वरसस्य मधुरादेः षड्विधस्य चकारादस्मदादिरसनेन्द्रियस्य तदधिष्ठातु-

ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ॥ मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥३९॥ तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ॥ जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम् ॥ ४० ॥ महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ॥ पातालं पादतलत इति लोकमयः पुमान् ॥ ४१ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्त धातवः ॥ हव्यकव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥१॥ सर्वासूनां च वायोश्च तन्नासे परमायने ॥ अश्विनोरोषधीनां च घ्राणो मोदप्रमोदयोः ॥२॥ रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ॥ कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ ३ ॥ तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम् ॥ त्वगस्य स्पर्शवायोश्च सर्वमेधस्य चैव हि ॥ ४ ॥ रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु संभृतः ॥ केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

र्वरुणस्य चैतस्य जिह्वा क्षेत्रमुत्पत्तिस्थानम् । एवं सर्वत्रानुक्तमुन्नेयम् ॥ १ ॥ सर्वासूनामस्मदादिप्राणानां तस्य नासे नासारन्ध्रे परमायने उत्तमक्षेत्रे । मोदप्रमोदयोश्च सामान्यविशेषगन्धयोर्घ्राणो घ्राणेन्द्रियं परमायनम् ॥ २ ॥ रूपाणां तेजसां रूपप्रकाशानां च चक्षुरिन्द्रियम् । अक्षिणी नेत्रगोलके । सर्वत्र षष्ठ्यन्तानां प्रथमान्तं क्षेत्रं द्रष्टव्यम् । कर्णौ श्रोत्राधिष्ठाने । श्रोत्रमिन्द्रियम् ॥ ३ ॥ तस्य गात्रं शरीरं वस्तूनां ये सारांशास्तेषां भाजनं स्थानम् । अस्य त्वक्स्पर्शस्य वायोश्चेत्यर्थः । सर्वस्य मेधस्य यज्ञस्य ॥ ४ ॥ उद्भिज्जजातीनां सर्ववृक्षाणाम् । यैर्वृक्षैर्यज्ञः सम्यक् साधितस्तेषामेव वा । केशा मेघानां क्षेत्रम्, पूर्वं तथोक्तेः । श्मश्रूणि विद्युताम् । पादकरनखानि शिलालोहानामिति सादृश्यादूह्यम् ॥ ५ ॥ ॥ ॥ ॥ ॥

१ अयं च सत्यलोकस्तदुपरितनः सप्तम इत्यर्थः । २ आदिना उष्णिक्त्रिष्टुब्जगतीपङ्क्तिबृहतीनां ग्रहणम् । ३ आदिशब्देन चर्ममांसरुधिरमेदोमज्जास्थ्नां ग्रहणम् । ४ आदिना कटुतिक्तकषायाम्ललवणानां ग्रहणम् । ५ स्वर्लोको ब्रह्मलोकपर्यन्तः । ६ 'वाचो वह्नेः' इति पाठः । ७ दिवः ज्योतिश्चक्रस्येत्यर्थः ।

क्षेमकर्मणां पालनकर्तृणाम् । विक्रमः पादन्यासो भूरादिलोकानामास्पदमाश्रयः । भूरादिशब्दानामव्ययत्वात्षष्ठ्या लुक् । क्षेमो लब्धरक्षणम् । शरणं भयाद्रक्षणम्
॥६॥ सर्वेषां कामानां वरस्य वरणस्यापि हरेरङ्घ्रिरास्पदम् । वीर्यस्य शुक्रस्य ॥७॥ शिश्नोऽधिष्ठानम् । उपस्थस्त्विन्द्रियम् । प्रजात्यानन्दः सन्तानार्थः संभोगस्तेन या
निर्वृतिस्तापहानिस्तस्याः । परिमोक्षस्य मलत्यागस्य पायुरिन्द्रियम् ॥८॥ गुदः स्थानम् । निर्ऋतेरलक्ष्म्याः । तमसोऽज्ञानस्य । पश्चिमः पृष्ठभागः ॥९॥ गोत्राणां
गिरीणामस्थिसंघातः । अव्यक्तं प्रधानम्, रसोऽन्नादिसारः, सिन्धवः समुद्रास्तेषाम् । निधनस्य लयस्य ॥१०॥ उदरं पदं स्थानं विदितं ज्ञानिभिः । मनसोऽसदा-
दिलिङ्गशरीरस्य । तुभ्यं तव । कुमाराणां सनकादीनाम् । भवस्य श्रीरुद्रस्य ॥११॥ आत्मा चित्तं परमयनम् । एवं तावत्परमेश्वराज्जातं विश्वं ततो न भिन्नम् । यथा
कुण्डलं सुवर्णान्न पृथक् । स तु सर्वनियन्ता सर्वप्रकाशको नित्यमुक्त इत्यर्थादुक्तम् । एतदेव पुरुषसूक्तार्थकथनेन द्रढयति । तत्र 'सहस्रशीर्षा' इत्यर्धर्चस्य 'ब्राह्म-

बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ॥ विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च ॥६॥ सर्वकामवरस्यापि हरे-
श्चरण आस्पदम् ॥ अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ॥ ७ ॥ पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः ॥
पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ॥ ८ ॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ पराभूतेरधर्मस्य तमस-
श्चापि पश्चिमः ॥९॥ नाड्यो नदनदीनां तु गोत्राणामस्थिसंहतिः ॥ अव्यक्तरससिन्धूनां भूतानां निधनस्य च ॥१०॥
उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ॥ ११ ॥ विज्ञानस्य च सत्त्वस्य
परस्यात्मा परायणम् ॥ अहं भवान्भवश्चैव त इमे मुनयोऽग्रजाः ॥१२॥ सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥
गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ॥ १३ ॥ पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ अन्ये च विविधा
जीवा जलस्थलनभौकसः ॥ १४ ॥ ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्
॥ १५ ॥ तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ॥ १६ ॥ ॥

णोऽस्य मुखमासीत्' इत्यादेश्च ऋक्त्रयस्यार्थः पूर्वाध्याय एव दर्शितः । 'पुरुष एवेदं सर्वम्' इत्यस्यार्थं दर्शयति । अहं भवानिति सार्धत्रिभिः । ते तव अग्रजा इमे सनका-
दयो मरीच्यादयश्च ॥ १२ ॥ १३ ॥ जलं च स्थलं च नभश्चौकांसि येषां ते । नभौकस इति सन्धिरार्षः ॥ १४ ॥ सर्वमिदं पुरुष एव न ततः पृथगित्यर्थः ॥ १५ ॥ प्रपञ्चेन
तस्यापरिच्छेदं वक्तुं 'स भूमिम्' इत्यस्यार्थमाह । तेन पुरुषेण । विश्वमिति भूमिपदस्यार्थः । वितस्तिमिति दशाङ्गुलपदस्य, अधीत्यतिशब्दस्य, आवृतमिति वृत्वेत्यस्य,
स च वितस्तिमधिकं व्याप्य तिष्ठतीत्याधिक्यमात्रं विवक्षितं, नतु परिमाणम् । अनुपयोगादपरिच्छिन्नत्वाच्च । एतत्सदृष्टान्तमाह । असौ प्राण आदित्यः 'असौ वा
आदित्यः प्राणः' इति श्रुतेः । स्वधिष्ण्यं मण्डलं प्रकाशयन्यथा बहिश्च प्रकाशयति एवं विराड्देहं प्रकाशयन् ब्रह्माण्डमन्तर्बहिश्च प्रकाशयति ॥ १६ ॥ ॥

१ आस्पदमित्युत्तरश्लोकस्थमनुकृष्य योज्यम् । २ लयस्येति तदानीं सर्वेषां तत्र लयादिति व्याख्यालेशः । ३ मृत्योरिन्द्रियाधिष्ठातुः । तत्र यद्यपि 'वह्नीन्द्रोपेन्द्रमित्रकाः' इति क्रमप्राप्तेर्मित्रस्यैवाधि-
ष्ठातृदेवत्वं लभ्यते तथापि 'गुदं मृत्युरपानेन नोदतिष्ठत्ततो विराट्' इति वक्ष्यमाणप्रामाण्येन मृत्युरेवाधिष्ठातृत्वेन विवक्षितः । ४ नागा हस्तिनः सरीसृपाः सर्पाः उरगास्तदवान्तरजातयः । ५ ऋक्षा-
ण्यश्विन्यादीनि । तारास्तद्भिन्ननक्षत्रावान्तरभेदभिन्नानि । केतवो धूमकेतुप्रभृतयः । ६ दशाङ्गुलमित्युपलक्षणं । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः । वितस्तिमिति दशाङ्गुलपदार्थ एव ।

नित्यमुक्तत्वं दर्शयितुं 'उतामृतत्वस्य' इत्यस्यार्थमाह—स इति । अभयस्येति मन्त्रगतामृतपदव्याख्या । अन्नेनेति पदं विभक्तिव्यत्ययेन व्याचष्टे । मर्त्यं मरणधर्मकमन्नं कर्मफलं यस्मादत्यगादतिक्रान्तवान् । अतो न केवलं सर्वात्मकः, किंत्वमृतत्वस्य निजानन्दस्यापीश्वर इत्यर्थः ॥ १७ ॥ प्रपञ्चात्मकस्य कुतो नित्यमुक्तत्वमित्याशङ्क्य तत्परिहाराय 'एतावानस्य' इत्यस्यार्थमाह—महिमेति । प्रपञ्चात्मकस्याप्यमृतेशत्वमित्येष महिमा दुरत्ययोऽपारः । प्रपञ्चानभिभूतत्वादिति भावः । मन्त्रेण चैतावानस्य महिमा विभूतिः, स तु ज्यायान्महत्तर इति वदताऽयमेवार्थ उक्तः । तदेवमीश्वरो नित्यमुक्त इत्युक्तं 'तदाश्रितानां भूतानां बन्धमोक्षौ व्यवस्थया' इति दर्शयन् 'पादोऽस्य विश्वा भूतानि' इत्यस्यार्थमाह—पादेष्विति । तिष्ठन्त्यत्रेति स्थितयो भूरादिलोकास्ते पादा इव पादा अंशा यस्य स स्थितिपात् तस्य पादेष्वंशभूतेषु लोकेषु सर्वाञ्जीवान्विदुः । मन्त्रे तु 'पादोऽस्य विश्वा भूतानि' इति सामानाधिकरण्यमधिष्ठानाधिष्ठेयाभेदविवक्षया । पाद इत्येकवचनं च सामान्याभिप्रायेणेति व्याख्यातं भवति ॥ १८ ॥ भूतेषु फलवैचित्र्यं दर्शयन् 'त्रिपादस्यामृतं दिवि' इत्यस्यार्थमाह । अस्येश्वरसंबन्धि त्रिपादमृतं नित्यसुखं दिवि ऊर्ध्वलोकेषु । न त्रिलोक्यामित्यर्थः । तदेव त्रिपाच्छब्दोक्तं त्रैविध्यं दर्शयन्नाह । त्रयाणां लोकानां मूर्धा महर्लोकस्तस्य मूर्धन्-

एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥ सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥१७॥ महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ॥ पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ॥ १८ ॥ अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ पादास्त्रयो बहिश्चासन्न प्रजानां य आश्रमाः ॥ अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥ १९ ॥ सृती विचक्रमे विष्वङ् साशनानशने उभे ॥ यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ २० ॥ ॥ ॥ ॥

स्तदुपरितनलोकास्तेषु यथाक्रममसृतादिकमधायि निहितम् । तत्र त्रिलोक्यां नश्वरमेव सुखम् । महर्लोकस्य क्रममुक्तिस्थानत्वेऽपि कल्पान्ते तत्रत्यानां स्थानत्यागान्नाविनाशिसुखम् । जनलोके त्वमृतमविनाशिसुखम् । यावज्जीवं स्वस्थानापरित्यागात् । किंतु महर्लोकवासिनां कल्पान्ते त्रिलोकदाहोष्मपीडितानां तदा तत्र गमनादक्षेमदर्शनमस्ति । तपोलोके तस्याभावात्क्षेममेव । वक्ष्यति हि 'त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना ॥ यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः' इति । सत्यलोके त्वभयं मोक्षः, तत्प्रत्यासत्तेः । एतदेव वैचित्र्यमधिकारिभेदेनोपपादयन् 'त्रिपादूर्ध्वं' इत्यस्यार्थमाह । न प्रजायन्ते पुत्रादिरूपेणेत्यप्रजा नैष्ठिकब्रह्मचारिवानप्रस्थयतयस्तेषामाश्रमास्त्रिलोक्या बहिरासन्, गृहमेधस्त्वन्तः । यस्मादबृहद्व्रतो ब्रह्मचर्यव्रतरहितः ॥ १९ ॥ अयं चाधिकारभेद एकस्यैवावस्थाभेदेन न त्वत्यन्तभिन्नविषय इति दर्शयन् 'ततो विष्वङ्' इत्यस्यार्थमाह । विविधं सुष्ठु अञ्चतीति विष्वङ् पुरुषः क्षेत्रज्ञः सृती मार्गौ दक्षिणोत्तरौ विचक्रमे चलति स्म । कथंभूते सृती, साशनानशने भोगापवर्गप्राप्तिसाधनभूते । अत्र हेतुत्वेन पुनर्विशेषणम् । यद्यतः अविद्या कर्मरूपा एका । विद्या च तत्साधनोपासनारूपान्या ॥ २० ॥ ॥ ॥ ॥ ॥

१ यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याम्नातस्य परब्रह्मण इयत्ताया अभावात्पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः । २ तदुपरितनलोका इति जनस्तपःसत्यलोका इत्यर्थः । ३ तत्र जनलोके इत्यर्थः । ४ त्रिलोक्यामिति । तृतीयस्कन्धीयैकादशाध्यायस्यैकोनत्रिंशः श्लोकः । ५ गृह एव मेधा बुद्धिर्यस्य स गृहमेधः । ६ गच्छतीत्यर्थः । ७ साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातं, अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथा स्यात्तथा ।

तदेवं विराडन्तर्वर्तिनां फलवैचित्र्यमुक्त्वा तत्कारणेश्वरस्य तद्वैलक्षण्यं दर्शयितुं 'तस्माद्विराळजायत' इत्यस्यार्थमाह । यस्मादण्डं जज्ञे, तत्र च भूतेन्द्रियगुणा-
त्मको विराट् च जज्ञे, स ईश्वरस्तद्विश्वं विराड्देहं द्रव्यमण्डं च अतिक्रान्तवान् । सूर्य इवेति पूर्वोक्त एव दृष्टान्तः ॥ २१ ॥ नन्वेवं पुरुष एव चेत्सर्वं तर्हि यज्ञस्य
तत्साधनानां चापृथग्भावाद्यज्ञैः पुरुषाराधनं न सिध्येदित्याशङ्क्य तत्परिहाराय 'यत्पुरुषेण हविषा' इत्यादिमन्त्रार्थं संगृह्य दर्शयति—यदेत्यादिना । अस्येति
विराडन्तर्यामिणः । तस्यैव प्रकृतत्वात् । नाभौ भवं नाभ्यं तस्मात् । यज्ञस्य संभारान्साधनानि नापश्यम् ॥ २२ ॥ तदा तेषु संभारेषु साध्येषु सत्सु 'पुरुषाव-
यवैरेते संभाराः संभृताः' इति चतुर्थेनान्वयः । वनस्पतयो यूपाः । देवयजनं यज्ञभूमिः । इदं चेति वचनात् यज्ञार्हे स्थाने उपविष्टः कथयतीति गम्यते । बहु-
गुणान्वितो वसन्तादिकालः ॥ २३ ॥ वस्तूनि पात्रादीनि । ओषधयो व्रीह्यादयः । स्नेहा घृतादयः । रसा मधुरादयः, सुवर्णादीनि लोहानि, मृदश्च जलं च,

यस्माद्ण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः ॥ तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन् ॥ २१ ॥ यदाऽस्य नाभ्यान्नलि-
नादहमासं महात्मनः ॥ नाविदं यज्ञसंभारान्पुरुषावयवादृते ॥ २२ ॥ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ॥ इदं च
देवयजनं कालश्चोरुगुणान्वितः ॥ २३ ॥ वस्तून्योषधयः स्नेहा रसलोहमृदो जलम् ॥ ऋचो यजूंषि सामानि चातुर्होत्रं
च सत्तम ॥ २४ ॥ नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ॥ देवतानुक्रमः कल्पः संकल्पस्तन्त्रमेव च ॥ २५ ॥ गतयो
मतयश्चैव प्रायश्चित्तं समर्पणम् ॥ पुरुषावयवैरेते संभाराः संभृता मया ॥ २६ ॥ इति संभृतसंभारः पुरुषावयवैरहम् ॥
तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ २७ ॥ ततस्ते भ्रातर इमे प्रजानां पतयो नव[3] ॥ अयजन्व्यक्तमव्यक्तं पुरुषं
सुसमाहिताः ॥ २८ ॥ ततश्च मनवः काले ईजिरे ऋषयोऽपरे ॥ पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम्
॥ २९ ॥ नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥ ३० ॥

चातुर्होत्रं हौत्रादिकं कर्म ॥ २४ ॥ नामधेयानि ज्योतिष्टोमादीनि । ऋगादीनामुक्तत्वान्मन्त्रा इति स्वाहाकारादयः । देवतानामनुक्रम उद्देशः । कल्पो बौधा-
यनादिकर्मपद्धतिग्रन्थः । अनेनाहं यक्ष्य इति संकल्पः । तन्त्रमनुष्ठानप्रकारः ॥ २५ ॥ गतयो विष्णुक्रमाद्याः । मतयो देवताध्यानानि । कृतस्य भगवति
समर्पणम् ॥ २६ ॥ संभृताः संपादिताः संभारा येन सोऽहम् । तेनैव यज्ञेनैव । अनेन 'यज्ञेन यज्ञमयजन्त' इति मन्त्रार्थः सूचितः ॥ २७ ॥ 'तेन देवा
अयजन्त' इत्यस्यार्थं सप्रपञ्चं दर्शयति—तत इति द्वाभ्याम् । व्यक्तमिन्द्रादिरूपेण । अव्यक्तं स्वतः । अनेन 'पुरुषं जातमग्रतः' इत्यस्यार्थो दर्शितः ॥ २८ ॥
काले स्वस्वावसरे ॥ २९ ॥ 'यदधिष्ठानम्' इत्येतत्प्रश्नोत्तरार्थमुपसंहरति—नारायण इति । आहितमधिष्ठितम् । भगवत्त्वे हेतुः—यः स्वतोऽगुणः । सर्गादौ
गृहीता मायया उरवो गुणा येन स तस्मिन् ॥ ३० ॥

---

१ विविधानि वस्तूनि राजन्तेऽत्रेति विराट् ब्रह्माण्डदेहः । २ देवा इज्यन्तेऽस्मिन्निति देवयजनम् । ३ नवेति । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्चेति नव ।
४ यज्ञान्ते 'विष्णोः क्रमोऽस्यभिमातिहा' इत्यादिमन्त्रैर्यजमानकर्तृका गतिविशेषाः । ५ यदधिष्ठानमिति एतत्स्कन्धीयपञ्चमाध्यायस्य द्वितीयश्लोकः ।

'यत्परंस्त्वम्' इत्येतत्प्रश्नोत्तरं यदुक्तं 'स एष भगवान्सर्वेषां मम चेश्वरः' इति तदुपसंहरति—सृजामीति । पाल्नं तु स्वयमेव करोतीत्याह—विश्वमिति । पुरुषरूपेण विष्णुरूपेण । त्रिशक्तिर्माया तां धरतीति तथा सः ॥ ३१ ॥ यच्चेदं विश्वं यदात्मकश्च त्वमित्येवमादिसर्वप्रश्नानां सामान्योत्तरं, यदुक्तं 'वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः' इति 'पुरुष एवेद सर्वम्' इति श्रुत्या च यद्दृढीकृतं तदुपसंहरति—इतीति । सदसदात्मकं कार्यकारणात्मकं भाव्यं सृज्यं भगवतः सकाशादन्यत्पृथङ् न भवतीत्यभिहितम् ॥ ३२ ॥ यदुक्तं 'एतावेत्त्वं यतो हि मे, तमविज्ञाय मामीश्वरं प्रब्रवीषि' इति तदुपपाद्योपसंहरति—न भारतीति । यद्यस्मान्मे मया औत्कण्ठ्यं भक्त्युद्रेकस्तद्युक्तेन हृदा हरिर्धृतो ध्यातः । अङ्ग हे नारद । अतो मे वाङ्मनइन्द्रियाणां वृत्तयः सत्यार्थाः, नतु मन्त्रभावेणेत्यर्थः ॥ ३३ ॥ अत्र स्वानुभवमेवान्वयव्यतिरेकाभ्यां प्रमाणयति द्वाभ्याम् । सोऽहं समाम्नायादिभिः सर्वोत्कृष्टोऽपि योगमाश्रित्यापि यत आत्मनो मम संभवो जन्म तमेव न ज्ञातवान्, कुतोऽन्यस्य वार्ता । एतच्च तृतीयस्कन्धे पद्मोद्भवे वक्ष्यते ॥ ३४ ॥ तदा समीयुषां शरणागतानां संसारनिवर्तकं मङ्गलावहं

सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ॥ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्॥ ३१ ॥ इति तेऽभिहितं तात यथेदमनुपृच्छसि ॥ नान्यद्भगवतः किंचिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥ न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषा गतिः ॥ न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥ ३३ ॥ सोऽहं समाम्नायमयस्तपोमयः प्रजापतीनामभिवन्दितः पतिः ॥ आस्थाय योगं निपुणं समाहितस्तं नाध्यगच्छं यत आत्मसंभवः ॥ ३४ ॥ नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम् ॥ यो ह्यात्ममायाविभवं स्म पर्यगाद्यथा नभः स्वान्तमथापरे कुतः॥३५॥नाहं न यूयं यदृतां गतिं विदुर्न वामदेवः किमुतापरे सुराः ॥ तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्ष्महे ॥ ३६ ॥ यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः ॥ न यं विदन्ति तत्त्वेन तस्मै भगवते नमः ॥ ३७ ॥

सुसेव्यं च तस्य चरणं नतोऽस्मि । ततोऽचिन्त्यमहिमत्वेन ज्ञातवानस्मीति कैमुत्यन्यायेनाह—यो हीति । स्वमायाविस्तारं यः स्वयमपि पर्यगात् । परिशब्दो निषेधे । एतावानिति न ज्ञातवानित्यर्थः । अपरे कुतो जानीयुः । तस्य चरणं नतोऽस्मीति पूर्वेण संबन्धः । ननु सर्वज्ञः कथं न जानाति अन्ताभावादिति दृष्टान्तेनाह । यथा स्वस्यान्तं नभो नाप्नोति तद्वत् । न हि खपुष्पादर्शनं सार्वज्ञ्यं विहन्तीति भावः । तथा च वक्ष्यति 'द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः' इत्यादि । श्रुतिश्च 'यो अस्याध्यक्षः परमे व्योमन्सो अङ्ग वेद यदि वा न वेद' इति ॥ ३५ ॥ एतत्प्रपञ्चयति—नाहमिति द्वाभ्याम् । वामदेवो रुद्रः । यस्य ऋतां गतिं परमार्थस्वरूपम् । किंत्विदं प्रपञ्चरूपं तस्य मायया विनिर्मितं विचक्ष्महे विद्मः । तदप्यात्मसमं स्वज्ञानानुरूपमेव, न तु कृत्स्नम् । मोहितबुद्धय इत्ययं तदज्ञाने प्रपञ्चज्ञाने च हेतुः ॥ ३६ ॥ ननु सर्वेऽपि तं वर्णयन्तो दृश्यन्ते तत्राह—यस्येति ॥ ३७ ॥ ॥ ॥

१ यदिति द्वितीयस्कन्धपञ्चमाध्यायस्य चतुर्थः श्लोकः । २ एतत्स्कन्धीयपञ्चमाध्यायस्य विंशश्लोके । ३ एतत्स्कन्धीयपञ्चमाध्यायोक्तानामिति शेषः । ४ वासुदेव इति स्कं० २ अ० ५ श्लो० १४ । ५ एतावदिति स्कं० २ अ० ५ श्लो० १० । ६ 'त्रिशक्तिधृत्' इति पाठः स च युक्तः । त्रिशक्तिर्माया तां धरतीति व्याख्याया व्युत्पत्तेः । ७ अत्र विपरिणामेनान्वयो यथा—यस्य ऋतां गतिमहं न वेद्मि, यूयं न वित्थ, वामदेवो न वेद, किमुतापरे सुरा विदुरिति । ८ द्युपतय इति । दशमस्कन्धीयसप्ताशीतितमाध्यायस्यैकचत्वारिंशश्लोकः ।

अवतारकर्माणि संक्षेपतो दर्शयति । स एष आद्यो भगवान् यः पुरुषावतारः सन्सृष्ट्यादि करोति । आत्मात्मन्यात्मनात्मानमिति । कर्ता अधिकरणं साधनं
कर्म च स्वयमेवेत्यर्थः । पुरुषावतारः सृष्ट्यादीनि च कर्माणीति संक्षेपोक्तिः ॥ ३८ ॥ 'न यं विदन्ति तत्त्वेन' इत्युक्तं किं तत्तत्त्वमित्यपेक्षायामाह । ज्ञानं केवलं
सत्यं तत्त्वम् । घटाद्याकारवृत्तिज्ञानव्यवच्छेदार्थं विशेषणानि । विशुद्धं विषयाकारशून्यम् । यतः प्रत्यक् सर्वान्तरम् । अत एव सम्यक् संदेहादिरहितम् । अव-
स्थितं स्थिरम् । यतो निर्गुणम् । गुणकार्यं हि गुणव्यतिकराच्चलं भवति । यद्यपि वृत्तिज्ञानमपि स्वरूपज्ञानमेवेति न चाञ्चल्यादिदोषयुक्तं तथाप्यन्तःकरण-
वृत्तिदोषैस्तथा तथा भवतीति व्यवच्छिद्यते । एभिरेव विशेषणैः सत्यत्वमपि समर्थितम् । किंच यद्विकारवत्तदसत्यं दृष्टं, न चास्य जन्मादयः षड्विकाराः
सन्तीत्याह । अनाद्यन्तं जन्मनाशरहितम् । अत एव जन्मानन्तरास्तित्वलक्षणोऽपि विकारो नास्ति । वृद्धिविपरिणामापक्षयाश्च न सन्ति । यतः पूर्णम् । सर्वत्र
हेतुः—नित्यमद्वयं नित्यं सर्वदा द्वैतप्रतीतिसमयेऽपि परमार्थतोऽद्वयमिति ॥३९॥ अत्र विद्वदनुभवं प्रमाणयति । हे ऋषे नारद, प्रशान्तात्मेन्द्रियाशयाः प्रस-
न्नदेहेन्द्रियमनसो यदा भवन्ति तदा विदन्ति । अन्यदा तदज्ञाने कारणमाह । यदा तदेव प्रकाशमानमेवासतां तर्कैर्विप्लुतं स्यात्तदा तिरोधीयेतेति ॥ ४० ॥

स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ॥ आत्मात्मन्यात्मनात्मानं संयच्छति च पाति च ॥३८॥ विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् ॥ सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥३९॥ ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ॥ यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥ आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ॥ द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥४१॥ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ॥ स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः ॥ ४२ ॥ ॥ ६ ॥

अवतारान्विस्तरेणाह—आद्य इत्यादि यावदध्यायसमाप्ति । परस्य भूम्नः पुरुषः प्रकृतिप्रवर्तकः । यस्य 'सहस्रशीर्षा' इत्युक्तो लीलाविग्रहः स आद्योऽवतारः । वक्ष्यति हि 'भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः' । यथोक्तम् 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यतो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते' इति । यद्यपि सर्वेषामविशेषेणावतारत्वमुच्यते, तथापि कालश्च स्वभावश्च सदसदिति कार्यकारणात्मिका प्रकृतिश्च एताः शक्तयः, मनआदीनि कार्याणि, ब्रह्मादयो गुणावताराः, दक्षादयो विभूतय इति विवेक्तव्यम् । मनो महत्तत्त्वम् । द्रव्यं महाभूतानि । क्रमोऽत्र न विवक्षितः । विकारोऽहंकारः । गुणः सत्त्वादिः । विराट् समष्टिशरीरम् । स्वराट् वैराजः । स्थास्नु स्थावरम् । चरिष्णु जङ्गमं च व्यष्टिशरीरम् ॥ ४१ ॥ अहं ब्रह्मा । भवो रुद्रः । यज्ञो विष्णुः । दक्षादयो य इमे प्रजेशाः । तललोकपालाः पातालाधिपतयः ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ घटाद्याकारेति । यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते स एव परिणामो वृत्तिरुच्यते । २ विप्लुतं व्याप्तमित्यर्थः । ३ खगलोकपाला गरुडाद्याः । ४ 'कल्पे कल्पे आत्मानं सृजतीत्युक्तं, तत्र के सृज्यमाना अवतारास्तानवतारान् विस्तरेणाह' इत्यवतरणं प्राचीनपुस्तके लभ्यते । ५ भूतैर्यदेति एकादशस्कन्धीयचतुर्थाध्यायस्य तृतीयश्लोकः । ६ विष्णोरिति तृतीयस्कन्धीयपञ्चमाध्यायस्य सप्तविंशश्लोकव्याख्यायामालोचनीयम् ।

गन्धर्वादीनामीशाः । यक्षादीनां नाथाः । रक्षोरगेति सन्धिरार्पः । ऋषीणां पितॄणां च श्रेष्ठाः । प्रेतादीनामधीशाः ॥ ४३ ॥ किं वहुना, यत्किंचिद्भगवदादि तत्सर्वं परमेव तत्त्वमित्यन्वयः । भगवदैश्वर्ययुक्तम्, महस्तत्तेजोयुक्तम् । ओजःसहसी इन्द्रियमनःशक्ती तद्युक्तम् । वलं दाक्ष्यम् । श्रीः शोभा, ह्रीरकर्मजुगुप्सा, विभूतिः संपत्तिः, आत्मा बुद्धिस्तद्युक्तम् । अर्णो वर्णः । अद्भुतार्णमाश्चर्यवर्णमित्यर्थः । रूपमेव सरूपम्, रूपवदस्वरूपं च यत्तत्सर्वं परं तत्त्वं तद्विभूतिरित्यर्थः ॥ ४४ ॥ शुद्धसत्त्वावतारान्वक्तुमाह—प्राधान्यत इति । असत्कथाश्रवणैर्ये कर्णयोः कपाया मलास्तान् शोपयन्तीति तथा तान् । सुपेशान्सुन्दरान् । सकारलोपश्चार्पः । हे ऋपे, ते तुभ्यमनुक्रमिष्ये, तदनुक्रमेणामृतं त्वया पीयतामित्यर्थः । यद्वा पीयतामिति शत्रन्तम् । आपिवतां कर्णकपायशोपानित्यर्थः ॥ ४५ ॥ इति श्रीमद्भागवते द्वितीयस्कन्धे भा०दी० टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ सप्तमे भगवल्लीलावतारा ब्रह्मणोदिताः ॥ नारदाय तु तत्कर्म प्रयोजनगुणैः

गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ॥ ये वा ऋषीणामृषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ॥ अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः ॥ ४३ ॥ यत्किंच लोके भगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् ॥ श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम् ॥ ४४ ॥ प्राधान्यतो यानृष आमनन्ति लीलावतारान्पुरुषस्य भूम्नः ॥ आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान्सुपेशान् ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्क्रौडीं तनुं सकलयज्ञमयीमनन्तः ॥ अन्तर्महार्णव उपागतमादिदैत्यं तं दंष्ट्रयाद्रिमिव वज्रधरो ददार ॥ १ ॥ जातो रुचेरजनयत्सुयमान्सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ॥ लोकत्रयस्य महतीमहरद्यदार्तिं स्वायंभुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥ जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं नवभिरात्मगतिं स्वमात्रे ॥ ऊचे ययात्मशमलं गुणसङ्गपङ्कमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥ ३ ॥ ॥ ॥ ॥

सह ॥ १ ॥ यत्र यदा क्षितितलोद्धरणार्थं वाराहीं तनुं बिभ्रत्सन्नुद्यतोऽनन्तस्तदा तं सुप्रसिद्धं हिरण्याक्षं दंष्ट्रया ददार ॥ १ ॥ यज्ञावतारमाह । रुचेः प्रजापतेः सकाशात्तद्भार्यायां आकूतेः सूनुः सुतः सुयज्ञो नाम जातः । स च स्वभार्यायां दक्षिणायां सुयमान्देवानजनयत् । स एवेन्द्रः सन् यदा आर्तिमहरत्तदा पूर्वं सुयज्ञ इत्युक्तोऽप्यनु पश्चान्मनुना मातामहेन हरिरित्युक्तः । अनेन देवोत्पादनं लोकत्रयार्तिहरणं च तस्य कर्म दर्शितम् । एवं सर्वत्रावतारस्तत्कर्म च ज्ञेयम् ॥ २ ॥ कपिलावतारमाह । कर्दमस्य प्रजापतेर्गृहे च तद्भार्यायां देवहूत्यां जज्ञे । नवभिः स्त्रीभिर्भगिनीभिः सह । स च स्वमात्रे आत्मगतिं ब्रह्मविद्यामुक्तवान् । यया आत्मगत्या सा आत्मनः शमलं मलिनीकरणं गुणसङ्गरूपं पङ्कमस्मिन्नेव जन्मनि विधूय कपिलस्य गतिं मुक्तिं प्राप्तवती ॥ ३ ॥ ॥ ॥

१ सुपेशस्शब्दगत इत्यर्थः, 'लकारलोपः' इत्यपि कचित् । २ 'पीङ् पाने' इति धातोर्दैवादिकाच्छत्रप्रत्यय आर्पत्वाभिन्त्यः । ३ दैत्येन्द्रेति । दनुनाम्नि दक्षकन्यायां कश्यपाज्जाता एकषष्टिसंख्याका असुरास्तेषु प्रधाना द्विमूर्धादयोऽष्टादश । ४ प्रेतपिशाचादयो भूतजातिभेदाः । तत्र पिशाचा घण्टाकर्णादयः, भूतेशा भैरवादयः, कूष्माण्डेशा भृङ्गादयः, यादांसि जलजन्तवस्तदधीशास्तिमिंगिलादयः । ५ 'सुपेशलान्' इति विजयध्वजः । तत्र मधुरेभ्योऽप्यतिमधुरानित्यर्थः । ६ उद्यत इति । समुद्रे निमज्य रसातलगत्वा महीमुद्धृत्य दंष्ट्राग्रे निधाय ऊर्ध्वं गत इत्यर्थः ।

दत्तात्रेयावतारमाह । मयाऽहमेव तुभ्यं दत्त इति यद्यत आह ततः स नाम्ना दत्तो जातः । स्वभक्तेभ्यो योगैश्वर्यदानं तच्चरितं च दर्शयति । यस्य पादपङ्क-
जयोः परागस्तेन पवित्रा देहा येषां ते । उभयीमैहिकीमामुष्मिकीं च भुक्तिमुक्तिरूपां वा ॥ ४ ॥ कुमारावतारमाह । मे मया आदौ यत्तपस्तप्तं तस्मात्स्वतपसो
मत्तपसो हेतोः स हरिश्चतुःसनोऽभूत् । सनत्कुमारः सनकः सनन्दनः सनातन इति चत्वारः सनशब्दा नाम्नि यस्य सः । कथंभूतात्स्वतपसः । सनादखण्डि-
तात् । यद्वा स्वतपसः सनाद्दानात् समर्पणादित्यर्थः । षणु दाने । स च पूर्वकल्पस्य संप्लवे प्रलये विनष्टमुच्छिन्नसंप्रदायमात्मतत्त्वमिहास्मिन्कल्पे सम्यग्जगा-
दोक्तवान् । सम्यक्त्वं दर्शयति । यद्वदितमात्रमेव मुनय आत्मन् आत्मनि मनस्यचक्षत साक्षादपश्यन् ॥ ५ ॥ नरनारायणावतारमाह । धर्मस्य पत्न्यां दक्ष-
दुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेन जातः । कथंभूतः । स्वोऽसाधारणस्तपःप्रभावो यस्य । तदेवाह । अनङ्गस्य पृतनाः देव्योऽप्सरसो भगवतः

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान्स दत्तः ॥ यत्पादपङ्कजपरागपवित्रदेहा योगर्द्धिमा-
पुरुभयीं यदुहैहयाद्याः ॥४॥ तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् ॥ प्राक्क-
ल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥५॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो
नर इति स्वतपःप्रभावः ॥ दृष्ट्वात्मनो भगवतो नियमावलोपं देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥ ६ ॥ कामं
दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम् ॥ सोऽयं यदन्तरमलं निविशन्बिभेति कामः
कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥ विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि ॥
तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥

सकाशादात्मनः स्वप्रतिरूपा उर्वश्याद्याः स्त्रीर्दृष्ट्वा तस्य नियमावलोपं व्रतभङ्गं घटितुं साधयितुं न शेकुः । यद्वा आत्मनः स्वस्य यो नियमस्तपोनाशनरूपस्त-
स्यावलोपं तत्र दृष्ट्वा भगवतस्तं घटयितुं न शेकुरिति । एतच्चाख्यानमेकादशे भविष्यति ॥६॥ यत्र कामविजयी क्रोधोऽपि बिभेति तत्र कामो न प्रभवतीति
किं वक्तव्यमित्याह—काममिति । कृतिनः श्रीरुद्रप्रमुखा रोषयुक्तया दृष्ट्या कामं दहन्ति । रोषं त्वात्मानं दहन्तमपि ते न दहन्ति । क्रोधेनाभिभूयन्त इत्यर्थः ।
नु अहो सोऽयं रोषो यदन्तरं यन्मध्यं प्रविशन्नलं बिभेति । यद्वा यस्यान्तर्मनः । कथंभूतम् । अमलं निर्मलं प्रविशन्निति ॥ ७ ॥ चरित्रेणैव कमप्यवतारं
सूचयति । मातुः सपत्न्याः उदितान्युक्तानि वाक्यान्येव पत्रिणो बाणास्तैर्विद्धो ध्रुवो राज्ञ उत्तानपदोऽन्ति समीपे तपसे तपस्तप्तुम् । ध्रुवगतिं ध्रुवपदम् ।
यत् यामुपरि स्थितामधस्तात्स्थिता दिवि भवा दिव्याः सप्तर्षयः स्तुवन्ति । यद्वा उपरि भृग्वादयः अधस्तात्सप्तर्षय इति ॥ ८ ॥ ॥ ॥

१ मयाऽहमेव दत्त इत्यत्र एकस्य कर्मकर्तृभावो न भगवद्व्यतिरिक्तस्य भवति । धर्मशास्त्रे—'धर्मदासो ज्येष्ठपुत्रो भार्या स्वात्मा तथैव च । सर्वस्वं गुरुवर्यश्च नैव देयमिति स्थितिः ॥' इति अदेयत्वेन प्रतिपादनात् । अत आह—भगवानिति । २ मुक्तिरणिमाद्यैश्वर्यभोगः । ३ अत्र सनात् इत्यव्ययम् । दीर्घ आर्षः । सनन्नामक इत्यर्थः । यद्वा 'सनात्सनातनतमः' इति सहस्रनामस्तोत्रात्सनान्नामा इत्यर्थः । ४ अस्मिन्पक्षे तपस इति पञ्चम्यन्तम् । ५ अत्रेरिति चतुर्थ्यर्थे षष्ठी । अपगतिं त्याजयतीत्यपत्यं दुर्गतिनिवारकम् । ६ योगर्द्धिं ध्यानसिद्धिं योगसपत्तिं वा । ७ 'मे आदौ' अत्र संहिताया अविवक्षितत्वं बोध्यम् । ८ 'प्रविशन्' इति पाठः । ९ आत्मन इति द्वितीयान्तं दर्शनक्रियाकर्मेति ज्ञेयम् । १० दहन्तमपीति मूलस्थः उतशब्दः अप्यर्थः । ११ कमपीति । यो ध्रुवाय प्रसन्नः सन् ध्रुवपदमदात्तमवतारमित्यर्थः ।

१९

पृथ्ववतारमाह। यद्यदा ऋषिभिरर्थितस्तदा वेनं त्रात्वा अन्वर्थं तत् पुत्र इति पदं नाम लेभे। 'पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥' इति हि पुत्रपदव्युत्पत्तिः। कथंभूतम्। द्विजानां शापवाक्यमेव वज्रं तेन विप्लुष्टं दग्धं पौरुषं भगमैश्वर्यं च यस्य तम्। चरित्रान्तरमाह। येन च जगति जगदर्थे वसून्यन्नादिद्रव्याणि दुग्धा ॥९॥ ऋषभावतारमाह। असौ हरिर्नाभेराग्नीध्रपुत्रात्सुदेव्याः सूनुरास। नाभेर्भार्याया मेरुदेव्या एव सुदेवीत्यपि संज्ञा। जडवद्योगेन नित्यसमाधिना चर्याम्। यदिति याम्। तत्र हेतुः—समदृक्। तत्रापि हेतुः—स्वस्थः स्वस्वरूपे स्थितः। यतः प्रशान्तेन्द्रियः। तत्कुतः। यतः परितो मुक्तसङ्गः ॥१०॥ हयग्रीवावतारमाह—सत्रे इति। अथो इत्यर्थान्तरे। स एव साक्षाद्भगवान्मम ब्रह्मणः सत्रे यज्ञे हयशीर्षा आस। तपनीयं सुवर्णं तद्वद्वर्णो यस्य। छन्दोमयो वेदमयः तद्विधेया ये मखास्तन्मयः। 'अमृतमय' इति वा पाठः। मखैर्यजनीया अखिला देवतास्तदात्मा च। अस्य श्वसतः श्वासं मुञ्चतो नस्तो नासापुटादुशतीरुशत्यः कमनीया वेदलक्षणा वाचो बभूवुः ॥११॥ मत्स्यावतारमाह। मत्स्यो भाविना वैवस्वतेन मनुना दृष्टः। क्षोणीमयः पृथ्वीप्रधानः, तदाश्रय इत्यर्थः। अत एव निखिल-

यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतन्तम् ॥ त्रात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥९॥ नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥१०॥ सत्रे ममास भगवान्हयशीरषाऽथो साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ॥ छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥ मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥ क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ॥ पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकण्डूः ॥१३॥ त्रैविष्टपोरुभयहासनृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येन्द्रमाशु गदयाऽभिपतन्तमाराद्रूरौ निपात्य विददार नखैः स्फुरन्तम् ॥ १४ ॥ ॥ ॥

जीवनिकायानामाश्रयः। मे मुखाद्विस्रंसितान्गलितान् वेदस्य मार्गान्वेदानादाय तत्र युगान्तसलिले विजहार। ह हर्षेण ॥१२॥ कूर्मावतारमाह। क्षीरोदधौ कच्छपवपुः सन् गोत्रं मन्थनार्थं मन्दरगिरिं पृष्ठेन धृतवान्। कदा। अमृतलब्धये क्षीराब्धिमुन्मथ्नतां सताम्। निद्रायाः क्षणोऽवसर उत्सवो वा यस्य सः। निद्रावसरः कुतस्तत्राह। अद्रेः परिवर्तः परिभ्रम एव कषाणः कषणं घर्षणसुखप्रदो यस्यां सा कण्डूर्यस्य सः। यद्वा अद्रिपरिवर्त एव कषः कषणं तेन अणिति अपयातीति कषाणा कण्डूर्यस्य ॥१३॥ श्रीनृसिंहावतारमाह। त्रैविष्टपा देवास्तेषामुरुभयं हन्तीति तथा स भगवान्। यद्वा त्रैविष्टपानां देवानामप्युरुभयं यस्मात्तादृशो हासो यस्य तन्नृसिंहरूपम्। अथवा हिरण्यकशिपो राज्यकाले त्रैविष्टपानां दैत्यानामुरु भयं यस्मात्तादृशो हासो यस्य तन्नृसिंहरूपम्। कथंभूतम्। भ्रमन्त्यौ भ्रुकुट्यौ दंष्ट्राश्च यस्मिंस्तत्करालं वक्त्रं यस्मिंस्तत्। दैत्येन्द्रं स्फुरन्तमारात्समीप एव गदयोपलक्षितमभिपतन्तं नखैर्विददार ॥ १४ ॥ ॥ ॥

१ अर्थित इति अवतरितुं प्रार्थितस्तदा वेनदेहादवतीर्णः सन्नित्यर्थः। २ अन्वर्थमनुगतावयवार्थं यौगिकार्थमिति यावत्। त्रात्वेति क्त्वाप्रत्ययस्तु त्राणावश्यकताविवक्षया भाविनि भूतवन्निर्देशात्। ३ मेरुदेव्या इति। प्रथमस्कन्धे—'अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः' इति कथितायाः। ४ या जडयोगचर्यामित्यर्थः। अथवा या समाधिचर्या पारमहंस्यं पदं परमहंसप्राप्यमामनन्तीत्यर्थः। ५ भाविना सत्यव्रतेनेत्यर्थः। ६ आश्रिताना मध्ये पृथिवी प्रधानं यत्र स इत्यर्थः। वृक्षमयो ग्राम इतिवत्। ७ कषाण इत्यत्र 'कष हिंसायां' यगभाव आर्षः।

हरिसंज्ञकावतारमाह—अन्तरिति युगलेन । गजयूथस्य पतिः । तीर्थरूपं श्रवो यशो यस्य स तीर्थश्रवाः हे तीर्थश्रवः । श्रवणेनैव मङ्गलं नामधेयं यस्य सः
॥ १५ ॥ तद्वचनं श्रुत्वा शरणार्थिनं तं हस्ते शुण्डायां प्रगृह्य । किं कृत्वा । नक्रस्य ग्राहस्य वदनं विनिपात्य विदार्य । तस्मात्तद्वदनात् ॥ १६ ॥ वामनाव-
तारमाह । अदितेः सुतानां द्वादशादित्यानां मध्ये अधियज्ञो यज्ञाधिष्ठाता विष्णुः । अवरजः कनीयानपि गुणैर्ज्यायाञ्ज्येष्ठः । गुणानेवाह । यद्यत इमाँल्लोका-
न्विचक्रमे पादन्यासैः क्रान्तवान् । अथ प्रतिश्रुतानन्तरमेव । तत्र हेतुः । वलेः क्ष्मां वामनरूपेण जगृहे । नन्वीश्वरः स्वयं किमिति दुर्बलवत्तथा चक्रे तत्राह ।
याच्ञां विना धर्ममार्गे वर्तमानो न चाल्यः ऐश्वर्यान्न भ्रंशनीय इति ॥ १७ ॥ ननु तर्हि याच्ञयापि चालनमनुचितमेवेत्याशङ्क्य, ततोऽधिकं स्वसालोक्यादि
दास्यामीत्याशयेन हृतवानित्याह—नार्थ इति । यद्विबुधाधिपत्यमिदानीं बलात्प्रासमग्रे दीयमानं चायं बलेः पुरुषार्थो न भवति । कुत इत्यत आह । आ अप

अन्तःसरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः ॥ आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः
श्रवणमङ्गलनामधेय ॥ १५ ॥ श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ॥ चक्रेण नक्रवदनं
विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥ ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां लोकान्विचक्रम
इमान्यदथाधियज्ञः ॥ क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः ॥१७॥ नार्थो बले-
रयमुरुक्रमपादशौचमापः शिखा धृतवतो विबुधाधिपत्यम् ॥ यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमङ्ग शिरसा
हरयेऽभिमेने ॥१८॥ तुभ्यं च नारद भृशं भगवान्विवृद्धभावेन साधु परितुष्ट उवाच योगम् ॥ ज्ञानं च भागवत-
मात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव ॥१९॥ चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो
बिभर्ति ॥ दुष्टेषु राजसु दमं व्यदधात्स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ॥ २० ॥ ॥ ॥

इति च्छेदः । उरुक्रमस्य पादशौचं चरणक्षालनरूपा अपः आ सर्वतो धृतवतः । क । शिखा शिखायां । मूर्ध्नीत्यर्थः । किंच शुक्रेण वारितः शप्तोऽप्यङ्ग हे नारद,
यः प्रतिश्रुतं विनाऽन्यन्न चिकीर्षितं कर्तुं नैच्छत् । यश्च तृतीयपादपूरणार्थं हरये आत्मानं देहमप्यभिमेनेऽङ्गीकृतवान् । एवं सदेहं त्रैलोक्यं श्रद्धया दत्तवतो विबु-
धाधिपत्यमर्थो न भवतीत्यर्थः ॥ १८ ॥ हंसावतारमाह—तुभ्यमिति । भृशं विवृद्धेन भावेनात्युद्रिक्तया भक्त्या परितुष्टः सन् भक्तियोगं साधु यथा तथा
उवाच । ज्ञानं चेति ज्ञानसाधनम् । किं तत् । भागवतं नाम । कथंभूतम् । तत्त्वमेव सतत्त्वम् । आत्मतत्त्वदीपकम् । विवृद्धभावेनेति विशेषणस्य फलमाह—
यदिति ॥ १९ ॥ तत्तन्मन्वन्तरावतारमाह—चक्रमिति । स्वतेजो निजं प्रभावमेव चक्रं सुदर्शनं बिभर्ति । चक्रवदप्रतिहतं प्रभावं बिभर्तीत्यर्थः । तदेवाह ।
मनुवंशपालकः सन् त्रयाणां लोकानां पृष्ठे उपरि स्थिते सत्यलोकेऽपि कमनीयां स्वकीर्तिं विस्तारयन् राजसु दण्डं विधत्ते ॥ २० ॥ ॥ ॥

१ आहेदमिति । अस्य वाक्यस्य 'नारायणाखिलगुरो भगवन्नमस्ते' इत्यष्टमस्कन्धवाक्येन समाप्तिर्ज्ञेया । क्रम० । २ भुजा भुजयोर्मध्यभागः । पृष्ठमित्यर्थः । क्रम० । ३ क्ष्मामिति तदु-
पलक्षितं त्रैलोक्यमित्यर्थः । ४ शिखा इत्यत्र आर्षः सप्तम्या लुक् । ५ अत्र तुभ्यं चेति चकारेण तुभ्यमवतारायापि भक्तियोगमुवाचेत्युक्तिभङ्ग्यैव नारदावतारोऽप्युक्तः । चक्र० । ६ अत्रा-
डागमाभाव आर्षः । ७ अभिमेने अभिमतीकृत्य ददावित्यर्थः ।

धन्वन्तर्यवतारमाह । लोकेऽवतीर्य धन्वन्तरिः सन् पुरुरुजां महारोगिणां स्वनाम्नैव रुजो रोगान् हन्ति । स्वयमेव कीर्तिरिति कीर्त्यतिशयोक्तिः । अमृतं मरणशून्यमायुर्यस्मात्सः । अथ अवसन्नं पूर्वं दैत्यैः प्रतिबद्धं यज्ञे भागमवरुन्धे लभते । 'अवाप रुद्धम्'इति पाठेऽप्ययमेवार्थः । आयुर्विषयं वेदं चानुशास्ति प्रवर्तयति ॥ २१ ॥ परशुरामावतारमाह । जगतः क्षयाय विधिना दैवेनोपभृतं संवर्धितं, मृत्यवे समर्पितमिति वा । ब्राह्मणेभ्यो द्रुह्यतीति तथा अत उज्झितः पन्था वेदमार्गो येन । अत एव नरकार्तिं लिप्सतीव । एवंभूतमवनेः कण्टकतुल्यं क्षत्रमसौ महात्मा हरिरुद्धन्त्युत्पाटयति, दीर्घतीक्ष्णधारेण परशुना ॥ २२ ॥ रामावतारमाह त्रिभिः—अस्मदिति । अस्माकं ब्रह्मादीनां प्रसादे सुमुखः, कलया भरतादिरूपया सह, कला माया तस्या ईशो गुरोर्दशरथस्याज्ञायां तिष्ठन् सीतालक्ष्मणाभ्यां सहितो वनमाविवेश । यस्मिन्विरोधं कृत्वा रावणो नाशं प्राप्तः ॥२३॥ यस्मै रामायोदधिर्मार्गं ददौ । सपदि शीघ्रं हरो यथा त्रिपुरं दिधक्षु-

धन्वन्तरिश्च भगवान्स्वयमेव कीर्तिर्नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ॥ यज्ञे च भागममृतायुरवावरुन्ध[1] आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥२१॥ क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु ॥ उद्ध-न्त्यसाववनिकण्टकमुग्रवीर्यस्त्रिःसप्तकृत्व उरुधारपरश्वधेन ॥ २२ ॥ अस्मत्प्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ॥ तिष्ठन्वनं सदयितानुज आविवेश यस्मिन्विरुध्य दशकन्धर आर्तिमार्च्छत् ॥ २३ ॥ यस्मा अदादुदधिरूढभयाङ्गवेपो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ॥ दूरेसुहृन्मथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरग-नक्रचक्रः ॥२४॥ वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विडम्बितककुब्जुषं ऊढहासम् ॥ सद्योऽसुभिः सह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये ॥ २५ ॥

स्तद्वदरिपुरं लङ्कां दग्धुमिच्छोः । षष्ठी चतुर्थ्यर्थे । यद्वा पञ्चमीयम् । दिधक्षोः रामाद्रूढं प्राप्तं तेनाङ्गे कम्पो यस्येति । कथंभूत उदधिः । ऊढं प्राप्तं यद्भयं तेनाङ्गेषु वेपः कम्पो यस्य । अत्र हेतुः—दूरे वर्तमाना सुहृत् सीता तया निमित्तभूतया मथितः क्षुभितो रोषस्तेन सुशोणाऽत्यरुणा दृष्टिस्तयाऽत्यन्तं तप्यमानं मकराणामुरगाणां नक्राणां च चक्रं यस्मिन् ॥ २४ ॥ किंच युद्धे रावणस्य वक्षःस्थलस्पर्शेन रुग्णा भग्ना ये महेन्द्रवाहस्यैरावतस्य दन्तास्तैर्विडम्बिताः सधवलिम्ना धवलीकृताः । तत्तद्दिक्षु पतितैः प्रकाशिता इत्यर्थः । या एवंभूताः ककुभो दिशस्ता जुषते सेवते पालयतीति वा तथा तस्य दारहर्तू रावणस्य अहो मत्समः कोऽन्योऽस्तीति महागर्वेणोढं प्राप्तं हासमसुभिः प्राणैः सह सद्यः शीघ्रं विनेष्यत्यपनेष्यति । कैः । धनुषो विस्फूर्जितैः टङ्कारघोषैरेव । कथंभूतस्य । अधिसैन्ये स्वपरसैन्यमध्ये उच्चरत उत्कर्षेण विचरतः । 'ककुब्जयरूढहासम्' इति पाठे दन्तैरुज्ज्वलितानां ककुभां जयेन यो रूढहासः संजातो गर्वस्तमपनेष्यतीत्यर्थः ॥ २५ ॥

१ यद्वा अमृतमिवायुर्लोके प्राकट्यं यस्य । सर्वलोकनैरुज्यदानादिति भावः । २ 'अवाप रुद्धं' इति पाठः । ३ 'उग्रवीर्यं' इति पाठः । ४ 'सुशोपदृक्षा' इति पाठः । तत्र सुशोपोऽग्निस्तेन युक्तया दृशेत्यर्थः । 'अग्निः सुशोपः कक्षघ्नः' इति कोशः । विज० । ५ 'ककुब्जयरूढहासं' इति पाठः । तत्र ककुभो दिशस्तासां यो जनस्तेन रूढ उत्पन्नो हासो यस्य । वीर० । ६ वक्षश्चूर्णितसुरगजदन्तचूर्णैः ।

सैन्यैर्विमर्दिताया भारेण पीडितायाः । कलया रामेण सह जातः सन् ।
श्रीकृष्णावतारमाह—भूमेरिति दशभिः । सुरेतरा असुरांशभूता राजानस्तेषां वरूथैः सैन्यैर्विमर्दिताया भारेण पीडितायाः । कलया रामेण सह जातः सन् ।

कोऽसौ जातः । सितकृष्णौ केशौ यस्य भगवतः स एव साक्षात् । सितकृष्णकेशत्वं शोभैव नतु वयःपरिणामकृतम्, अविकारित्वात् । यत्तूक्तं विष्णुपुराणे—
'उज्जहारात्मनः केशौ सितकृष्णौ महामुने' इति । यच्च भारते 'स चापि केशौ हरिरुज्जहे शुक्लमेकमपरं चापि कृष्णम् ॥ तौ चापि केशावाविशेतां यदूनां
कुले स्त्रियौ रोहिणीं देवकीं च ॥ तयोरेको वलभद्रो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः ॥ कृष्णो द्वितीयः केशवः संबभूव केशो योऽसौ वर्णतः कृष्ण उक्तः'
इति । तत्तु न केशमात्रावताराभिप्रायं, किंतु भूभारावतरणरूपं कार्यं कियदेतन्मत्केशावेवैतत्कर्तुं शक्ताविति द्योतनार्थम् । रामकृष्णयोर्वर्णसूचनार्थं च केशोद्ध-
रणमिति गम्यते । अन्यथा तत्रैव पूर्वापरविरोधापत्तेः, 'कृष्णस्तु भगवान् स्वयम्' इत्येतद्विरोधाच्च । कथंभूतः । परमेश्वरतया जनैरनुपलक्ष्यो मार्गो यस्य ।
तर्हीश्वरत्वे किं प्रमाणम्, अतिमानुषकर्मान्यथानुपपत्तिरेवेत्याह । आत्मनो महिमा उपनिबध्यतेऽभिव्यज्यते येषु तानि ॥ २६ ॥ एतदेव प्रपञ्चयति—तोके-

भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः ॥ जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि
चात्ममहिमोपनिबन्धनानि ॥ २६ ॥ तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः ॥ यद्रि-
ङ्गताऽन्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम् ॥ २७ ॥ यद्वै व्रजे व्रजपशून्विषतोयपीथान्
पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या ॥ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम् ॥ २८ ॥
तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निना शुचिवने परिदह्यमाने ॥ उन्नेष्यति व्रजमतोऽवसितान्तकालं नेत्रे
पिधाप्य सबलोऽनधिगम्यवीर्यः ॥ २९ ॥ गृह्णीत यद्यदुपबन्धममुष्य माता शुल्वं सुतस्य न तु तत्तदमुष्य माति ॥
यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शङ्कितमनाः प्रतिबोधितासीत् ॥ ३० ॥ ॥ ॥ ॥

नेत्यादिना । बालेन पूतनाया जीवहरणम् । यद्रिङ्गता जानुभ्यां गच्छता अन्तरं गतेन मध्यं प्रासेन । दिविस्पृशोरत्युच्चयोः । इतरथाऽनीश्वरत्वे तन्न भवित-
व्यम् ॥ २७ ॥ विषतोयपीथान् विषमयतोयस्य पीथं पानं येषां तान् पालान्गोपांश्च कृपादृष्टिसुधावृष्ट्या जीवयिष्यतीति । यमुनायां क्रीडन्नुरगं कालियमुच्चाट-
यिष्यति । तच्छुद्धये तस्या ह्रदिन्या निर्विषत्वाय । अतिविषवीर्येण विलोलाऽतिचञ्चला जिह्वा यस्य ॥ २८ ॥ दिव्यमलौकिकमिवेति लोकोक्तिः । उन्नेष्य-
त्युद्धरिष्यति । शुचिर्ग्रीष्मस्तत्संबन्धिनि वने । शुष्क इत्यर्थः । अतो दावाग्नेर्हेतोरवसितो निश्चितोऽन्तकालो यस्य तम् । सबलः सरामः । अनधिगम्यं दुर्ज्ञेयं
वीर्यं यस्य । तत्र निशि निःशयानमिति कालियदमने रात्र्यां यमुनातीरे । नेत्रे पिधाप्य पिहिते कारयित्वेति मुञ्जाटव्यामिति ज्ञेयम् ॥ २९ ॥ उपबध्यतेऽने-
नेत्युपबन्धं तत्साधनं शुल्वं दाम अमुष्य माता यशोदाऽग्रहीत् । अमुष्योदरे न माति बन्धनसंमितं न भवति । न पूर्यत इत्यर्थः । गोपी यशोदा संवीक्ष्य दृष्ट्वा
प्रतिबोधिता निजैश्वर्यं ज्ञापिता आसीदिति यत्, तच्च कर्म दिव्यमिवेति सर्वत्र पूर्वेणान्वयः ॥ ३० ॥ ॥ ॥ ॥

---

१ अयं श्लोकः प्रथमस्कन्धीयतृतीयाध्यायस्याष्टाविंशो ज्ञेयः । २ यज्जीवयिष्यति यच्चोच्चाटयिष्यति तदितरथानीश्वरत्वे न भाव्यमिति पूर्वश्लोकेनान्वयः । ३ 'विषतोयपीतान्' इति पाठः । विषतोयस्य पीतं पानं येषामिति टीकापाठश्च । ४ इवेति पादपूरणार्थकमव्ययम् । ५ मुञ्जेति दशमस्कन्धीयोनविंशाध्यायोक्तायां इषीकाटव्यामिति यावत् ।

वरुणस्य पाशाद्भयं तस्मान्मोचयिष्यति । मयसूनुना व्योमनाम्ना । अह्नि आपृतं व्यापारयुक्तं निशि शयानमिति च वैकुण्ठप्राप्तिसाधनानुष्ठानाभावो दर्शितः । उपनेष्यति प्रापयिष्यति गोकुलवासिनं जनम् । स्मेत्याश्चर्ये ॥ ३१ ॥ देवे इन्द्रे । पशून् रिरक्षुः । रिरक्षिषुरित्यर्थः । अनघे श्रमरहिते एकस्मिन्नेव करे सलीलं यथा तथा महीध्रं गोवर्धनं धर्ता धारयिष्यति । उच्छिलीन्ध्रमुद्धृतं छत्राकमिव । सप्तवर्षाणि वयो यस्य सः ॥ ३२ ॥ निशि रात्रौ । निशाकररश्मिभिर्गौर्यां धवलायाम् । वने क्रीडन् कलानि मञ्जुलानि पदानि यस्मिंस्तच्च तदायतं दीर्घं मूर्च्छितमालापविशेषयुक्तं गीतं तेनोद्दीपितः स्मर एव रुक् यासां तासां गोपीनां हर्तुः शङ्खचूडस्य शिरो हरिष्यति ॥ ३३ ॥ ये च प्रलम्बादयस्ते सर्वे हरिणा हेतुभूतेन तदीयं निलयमदर्शनं दर्शनायोग्यं वैकुण्ठमलं यास्यन्तीत्युत्तरेणान्वयः । खरो धेनुकः, दर्दुर इव दर्दुरो बकः, इभः कुवलयापीडः, कुजो नरकः, कपिर्द्विविदः ॥ ३४ ॥ ये च मृधे आत्तचापाः, समितौ संग्रामे शालन्ते श्लाघन्ते ते

नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान्बिलेषु पिहितान्मयसूनुना च ॥ अह्न्यापृतं निशि शयानमतिश्रमेण लोकं विकुण्ठ उपनेष्यति गोकुलं स्म ॥३१॥ गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून्कृपया रिरक्षुः ॥ धर्तोच्छिलीन्ध्रमिव सप्तदिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ॥ ३२ ॥ क्रीडन्वने निशि निशाकररश्मिगौर्यां रासोन्मुखः कलपदायतमूर्च्छितेन ॥ उद्दीपितस्मररुजां व्रजभृद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥ ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ॥ अन्ये च शाल्वकपिबल्वलदन्तवक्त्रसप्तोक्षशम्बरविदूरथरुक्मिमुख्याः ॥ ३४ ॥ ये वा मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुकैकयसृञ्जयाद्याः ॥ यास्यन्त्यदर्शनमलं बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयम् ॥ ३५ ॥ कालेन मीलितधियामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः ॥ आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥ ३६ ॥ देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः ॥ लोकान्घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम् ॥३७॥ ॥६॥

समितिशालिनः । ननु प्रलम्बखरकपिबल्वलरुक्मिप्रमुखा बलभद्रेण निहताः, काम्बोजादयश्च भीमार्जुनादिभिः, शम्बरः प्रद्युम्नेन, यवनो मुचुकुन्देन, ननु हरिणा तत्राह । बलो भीमः पार्थ इत्यादयो व्याजाह्वयाः कपटनामानि यस्य तेन । सप्तोक्षाणस्तु तेन दमिताः कालान्तरे यास्यन्तीति भावः । एतच्च सर्वमपि कर्म दिव्यमिव, तच्चान्यथा न भाव्यमिति पूर्वेणैव संबन्धः ॥ ३५ ॥ व्यासावतारमाह । अनुयुगं मीलिता संकुचिता धीर्येषाम् । स्तोकमल्पमायुर्येषां तेषां स्वनिगमः स्वकृतो वेदराशिर्बताहो दूरे पारं यस्येति दुर्गम इत्यवमृश्य सत्यवत्यामाविर्भूतः सन्स एव हरिः । विटपशः शाखाभेदेन ॥ ३६ ॥ बुद्धावतारमाह । देवद्विषां निगमवर्त्मनि वेदमार्गे निष्ठितानां नितरां स्थितानाम् । तद्बलेन च पूर्भिः पुरीभिः । अदृश्यतूर्भिरलक्ष्यवेगाभिः । मतेर्विमोहो योग्यतात्यागो यस्मात्, मतेः प्रलोभश्चायुक्तस्वीकारो यस्मात्तं पाखण्डवेषं विधाय तेनौपधर्म्यं पाखण्डधर्मम् । स्वार्थे ष्यञ् । बहु भाषिष्यत इत्यर्थः ॥ ३७ ॥ ॥ ॥ ॥१७॥

१ आपृतमिति तद्दिने श्रीनन्दकृष्णयोर्विच्छेददुःखेन तदन्वेषणायुद्युक्तम्। २ 'लोकं विकुण्ठमुपनेष्यति' इति पाठः। ३ अनघ इति संबोधनं वा। ४ रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषः इति स्कं० १० अ० ३३ श्लो० २ व्याख्यायाम्। ५अलमिति भगवद्गुणानां साकल्येन वर्णनासंभवादिति भावः। ६मरणानन्तरमित्यर्थः। ७ त्रिपुरासुरेणायोरजततान्निर्मिताभिः।

कल्क्यवतारमाह । यर्हि यदा सतामप्यालयेषु गृहेषु हरेः कथा न स्युः, त्रैवर्णिकाः पाखण्डिनः स्युः, शूद्राश्च राजानः स्युस्तदा कल्किरूपेण कलेः शास्ता भविष्यति । अत्र च ब्रह्मनारदसंवादात्प्राग्भाविनो वराहादयः, मन्वन्तरावतारास्तु भूता भाविनश्च, धन्वन्तरिपरशुरामौ तदा वर्तेते, श्रीरामादयस्तु भाविनः, तत्र तु क्वचिद्भूतादिनिर्देशश्छान्दस इति द्रष्टव्यम् ॥ ३८ ॥ सृष्ट्यादिकार्यभेदेन मायागुणावतारविभूतीराह—सर्गे इति । स्थाने स्थितौ । मखो विष्णुः । धर्मश्च मखश्च मनवश्च अमराश्च अवनीशाश्च । अन्ते संहारे । हरो रुद्रः । मन्युवशाः सर्पाः । बहुशक्तिधारिणो भगवत इमा मायाविभूतयः ॥३९॥ इदं मया संक्षेपेणोक्तं विस्तरेण वक्तुं न कोऽपि समर्थ इत्याह । पृथिव्याः परमाणूनपि यो विममे गणितवांस्तादृशोऽपि को नु विष्णोर्वीर्यगणनां कर्तुमर्हति । कथंभूतस्य । यो विष्णुस्त्रिपृष्ठं सत्यलोकं चस्कम्भ धृतवान् । किमिति चस्कम्भ । यस्मात्त्रैविक्रमेऽस्खलता प्रतिघातशून्येन स्वरंहसा स्वपादवेगेन त्रिसाम्यरूपं सदनमधिष्ठानं प्रधानं तस्मा-

यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः पाखण्डिनो द्विजजना वृषला नृदेवाः ॥ स्वाहा स्वधा वषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान्युगान्ते ॥ ३८ ॥ सर्गे तपोऽहमृषयो नव ये प्रजेशाः स्थाने च धर्ममखमन्वमरावनीशाः ॥ अन्ते त्वधर्महरमन्युवशासुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ३९ ॥ विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ॥ चस्कम्भ यः स्वरंहसाऽस्खलता त्रिपृष्ठं यस्मात्त्रिसाम्यसदनादुरुकम्पयानम् ॥ ४० ॥ नान्तं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये ॥ गायन्गुणान्दशशताानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ॥ ४१ ॥ येषां स एव भगवान्दययेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् ॥ ते दुस्तरामतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्ये ॥ ४२ ॥ ॥

दारभ्योरु अधिकं कम्पयानं कम्पमानम्, कम्पेन यानं यस्येति वा । अतः कारणाच्चस्कम्भ । आ त्रिपृष्ठमिति वा च्छेदः, सत्यलोकमभिव्याप्य यः सर्वं धृतवानित्यर्थः । तथाच मन्त्रः 'विष्णोर्नु कम्' इति । अस्यार्थः—विष्णोर्नु वीर्याणि कं प्रवोचम्, कः प्रावोचदित्यर्थः । यः पार्थिवानि रजांस्यपि विममे सोऽपि । यो विष्णुस्त्रेधा विचक्रमाणस्त्रिविक्रमं कुर्वन्नुत्तरं लोकमस्कभायदवष्टब्धवान् । कथंभूतम् । सधस्थम् । सहस्य सधादेशः । तिष्ठन्तीति स्थाः, तत्रस्थैर्देवैः सह वर्तमानमित्यर्थः ॥ ४० ॥ एतत्प्रपञ्चयति—नान्तमिति । पुरुषस्य यन्मायाबलं तस्यान्तं न विदामि न वेद्मि । दशशतान्याननानि यस्य स शेषोऽप्यस्य गुणान्गायन्पारं न समवस्यति न प्राप्नोति ॥ ४१ ॥ यदि न केऽपि विदन्ति तर्हि कथं मुच्येरन् तत्कृपयैवेत्याह—येषामिति । दययेद्दयां कुर्यात् । ते च यदि निष्कपटमाश्रितचरणाः भवन्ति । ते दुस्तरां देवमायामतितरन्ति । चकारान्मायावैभवं विदन्ति च । अथेति वा पाठः । प्रत्यक्षमेव तेषां मायातरणमित्याह—नैषामिति । श्वशृगालानां भक्ष्ये देहे ॥४२॥

१ तेच 'वेदमार्गविरोधेन येषां करणमण्वपि । ते हि पाखण्डिनो ज्ञेया वेदार्थस्य विनिन्दकाः' इति । २ त्रिसाम्यरूपमिति त्रिगुणसाम्यलक्षणमधिष्ठानस्वरूपं प्रकृतिरित्यर्थः । ३ वृषं लान्तीति वृषला म्लेच्छाः । ४ असुराद्या इति आद्यपदेन भूतप्रेतपिशाचादयः क्रूरस्वभावाश्च । ५ स्वरंहसेत्यत्र छन्दोभङ्ग आर्षः । 'स्वरहसा' इति पाठोऽयुक्त एव । रहःशब्दस्य वेगवाचित्वे प्रमाणाभावात् । ६ 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तर सधस्थं विचक्रमाणस्त्रेधोरुगायः' । इति विष्णुसूक्ते । ७ मायाबलं मायामहत्त्वमित्यर्थः । ८ अतितरन्ति चेत्यत्र तरन्त्यथेति ।

अन्तर्ज्ञानाभावेऽपि मायेयमिति ज्ञानं तत्कृपया बहूनामस्तीत्याह—नेदाहमिति त्रिभिः। यूयमिति सनकादीनन्नभीव्य बहुत्वम्। दैत्यवर्यः प्रह्लादः। मनुः स्वायम्भुवस्तस्य पत्नी शतरूपा च। तदात्मजाः प्रियव्रतोत्तानपादौ पुत्रौ कन्याश्च। प्राचीनबर्हिषो विसर्गलोपश्छान्दसः। अङ्गो वेनपिता ॥ ४३ ॥ शतधनुः अनुश्च सन्धिरार्षः। रन्तिदेवा इति पाठः सुगमः। ऐकपद्ये एतैः सहितो देवव्रत इत्यर्थः ॥४४॥ उपेन्द्रदत्तः शुकः। विभीषणादयो वर्या मुख्या येषां ते॥४५॥ किं बहुना सत्सङ्गेन सर्वेऽपि विदन्तीत्याह—ते वा इति। अद्भुताः क्रमाः पादन्यासा यस्य हरेस्तत्परायणास्तद्भक्तास्तेषां शीले शिक्षा येषां ते तथा यदि भवन्ति तर्हि तेऽपि विदन्तीत्यर्थः। श्रुतधारणा ब्राह्मणास्ते देवमायां विदन्तीति किमु वक्तव्यम्। शुभेति पाठे शुभे भगवतो रूपे धारणा मनोनियमनं येषां ते विदन्तीति किमु वक्तव्यम् ॥ ४६ ॥ किं तद्भगवतः स्वरूपं यस्मिन्मनोधारणां विधाय मायां तरन्तीत्यपेक्षायामाह—शश्वदिति द्वाभ्याम्। यद्ब्रह्मेति विदुर्मुनयस्तद्वै भगवतः पदं स्वरूपम्। किं तद्ब्रह्म तदाह। अजस्रं नित्यं च तत्सुखं च विशोकं चेति। अजस्रसुखत्वे हेतुः—शश्वत्सदा प्रशान्तम्। अतो नित्यसुखरूपम्। विशोकत्वे हेतुः—अभयम्।

वेदाहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः॥ पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च॥४३॥ इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः॥ मान्धात्रलर्कशतधन्वनुरन्तिदेवा देवव्रतो बलिरमूर्तरयो दिलीपः॥४४॥ सौभर्युतङ्कशिबिदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः॥ येऽन्ये विभीषणहनूमदुपेन्द्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः॥४५॥ ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः॥ यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥ शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् ॥ शब्दो न यत्र पुरुकारकवान्क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना ॥४७॥

तत्कुतः। यतः समं भेदशून्यम्। अतोऽभयम् 'द्वितीयाद्वै भयं भवति' इति श्रुतेः। तत्कुतः। यतः प्रतिबोधमात्रं ज्ञानैकरसम्। ननु ज्ञानस्यापि नीलपीताद्याकारेण चक्षुरादिकरणभेदेन च भेदो दृश्यते, न। शुद्धं निर्मलम्। ननु दर्शितो विषयकरणोपरागरूपो मल इत्यत आह। सदसतः परं विषयकरणसङ्गशून्यम्। वृत्तेरेव तदुपरागो न ज्ञानस्येति भावः। ननु तथापि ज्ञात्रा सह भेदः स्यात्। न, आत्मतत्त्वमात्मनो ज्ञातुः स्वरूपमेव, तत्र, ततो भिन्नम्। ननु 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति शब्दबोध्यत्वप्रतीतेः कुतो बोधरूपत्वं तत्राह—शब्दो न यत्रेति। आरोपितनिवृत्तावेव शब्दस्य व्यापारो न तद्बोध इत्यर्थः। ननु च भवतु नाम निरस्तभेदज्ञानरूपत्वाद्विशोकत्वं, सुखस्य तु नानाकारकसाध्यक्रियाफलत्वात्कथमजस्रसुखत्वं तस्येत्यत आह। यत्र बहुकारकसाध्यः क्रियार्थः उत्पाद्याप्यविकार्यसंस्कार्यरूपं चतुर्विधं क्रियाफलं च नास्ति। इन्द्रियैर्ज्ञानांशाभिव्यक्तिरिव क्रियाभिरानन्दांशाभिव्यक्तिमात्रं क्रियते नोत्पत्त्यादिकमिति भावः। ननु उत्पत्त्याद्यभावेऽपि मायामलापाकरणेन विकार्यत्वमेव स्याद्व्रीहीणामिव तुषापाकरणेनेत्याशङ्क्याह। मायाऽभिमुखे स्थातुं विलज्जमानेव यस्मात्परैति दूरतोऽपसरति ॥ ४७ ॥

१ आकूतिर्देवहूतिः प्रसूतिरिति तिस्रः। २ 'रन्तिदेवदेवव्रता' इत्येवंरूपे इत्यर्थः। ३ 'शुभधारणा' इति पाठे छन्दोभङ्ग आर्षः। ४ उत्तङ्क इति वक्तव्ये उतङ्क इत्यार्षं छन्दोनुरोधेन। ५ सारस्वतो दधीचिः। ६ उपेन्द्रदत्तः परीक्षित्। शुक इति चक्र०। ७ विषयकरणोपरागेति। विषयो रूपादिर्ग्राह्यः। करणं साधनं चक्षुरादि। उपरागो ग्राह्यत्वेन स्वीकारः। तदुक्तम्—'दृश्यानुरञ्जित द्रष्टृ दृश्यं द्रष्ट्रनुरञ्जितं। अहङ्वृत्त्योभयं रक्तं तन्नाशोऽद्वैत आत्मनः' इति। ८ वृत्तेरेव तदुपराग इति। वृत्तेश्चक्षुरादिवृत्तेर्दर्शनश्रवणादेर्व्यावहारिकज्ञानस्य उपराग आरक्तत्वम्। ९ चातुर्विधमिति। नात्र घटं करोति कुलाल इत्यत्र उत्पाद्यं क्रियाफल। चक्षुषा रूपं पश्यतीत्यत्र आप्यं। सोमं सुनेति सोमपा इत्यत्र विकार्यं। संस्कारश्च त्रिविधः, तत्र प्राक्तनपुण्यातिशयजन्यः सुखविशेष आद्यः। द्वितीयो मलापाकरणरूपः। तृतीयो गुणाधानरूपः। राज्यं प्राप्नोति धर्मिष्ठ इत्याद्यं संस्कार्यं। रजको वस्त्रं क्षालयतीति द्वितीयं। वस्त्रं रञ्जयतीति तृतीयम्। १० उत्पत्त्यादीति आदिना प्राप्तिविकृतिसंस्कार्याणां ग्रहणम्।

तस्मादेवंभूते भगवति नियमितमनसां कृतार्थानां न किमपि कृत्यमस्तीत्याह । सहाञ्चतीति सध्र्यङ् सहचरं मनो यं प्रति नियम्य यस्मिन् स्थिरीकृत्य यतयो यतशीलाः कर्तो भेदस्तन्निरासोऽकर्तस्तत्र हेतिं साधनं जहुस्त्यजेयुः । अनुपयोगात्तन्नाद्रियन्त इत्यर्थः । उपयोगाभावेन साधनानादरे दृष्टान्तः—निपीयतेऽस्मिन्निति निपानं कूपस्तस्य खनित्रं खननसाधनं यथा स्वराट् स्वयमेव पर्जन्यरूपेण विराजमान इन्द्रो नादत्ते तद्वदिति । यद्वा स्वेनैव राजत इति स्वराट् दरिद्रः स यथा इन्द्रः समृद्धः सन् कर्मकारदशायां गृहीतं निपानखनित्रं जहाति तद्वदित्यर्थः ॥ ४८ ॥ एवं तावदजस्रसुखं विशोकं ब्रह्मैव भगवतः स्वरूपं तत्रास्थानां च न प्राप्यं कृत्यं वा किंचिदस्तीत्युक्तम् । इदानीं ततः प्राक् स एव सर्वफलदाता सर्वकर्मप्रवर्तकश्चेत्याह । स एव श्रेयसां फलानां विभुर्दातापि । तत्र हेतुः—भावानां ब्राह्मणादीनां स्वभावैः शमदमादिभिर्विशेषणैर्विहितस्यास्य सतः शुभस्य कर्मणो यतः प्रवर्तकात्प्रसिद्धिः । यद्वा भावानां महदादीनां स्वभावेन

तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम् ॥ सध्र्यङ् नियम्य यतयो यमकर्तहेतिं जह्युः स्वराडिव निपानखनित्रमिन्द्रः ॥४८॥ स श्रेयसामपि विभुर्भगवान्यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धिः ॥ देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥४९॥ सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः ॥ समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ॥५०॥ इदं भागवतं नाम यन्मे भगवतोदितम् ॥ संग्रहोऽयं विभूतीनां त्वमेतद्विपुलीकुरु ॥५१॥ यथा हरौ भगवति नृणां भक्तिर्भविष्यति ॥ सर्वात्मन्यखिलाधारे इति संकल्प्य वर्णय ॥ ५२ ॥ मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः ॥ शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे ब्रह्मनारदसंवादे सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥

परिणामेन विहितस्य सतः कार्यस्य प्रसिद्धिः । स एव सर्गादीनां दातेत्यर्थः । ननु कर्मकर्तुर्मूर्तस्य कथं सर्गादिफलं स्यात्तत्राह । स्वारम्भकधातूनां भूतानां विगमे वियोगे सति अन्वनु विशीर्यमाणेऽपि देहे तत्रस्थं व्योमेव यस्तेन सह न विशीर्यते । यतोऽजस्तेन सह न जातः तस्य पुरुषस्य श्रेयसां प्रभुरित्यर्थः ॥ ४९ ॥ अध्यायत्रयस्यार्थमुपसंहरति । सोऽयं ते समासेन संक्षेपेणाभिहितः । तमेवाह । सदसत्कार्यं कारणं च हरेरन्यन्न भवति । ननु हरेस्तदव्यतिरेके तद्गतविकारप्रसङ्गः स्यात्, न । अन्यस्मात्कारणभूतो हरिः कार्याद्व्यतिरिक्त इत्यर्थः ॥ ५० ॥ अयं च विभूतीनां संग्रह उदितः ॥ ५१ ॥ यथा वर्णितेन नृणां भक्तिर्भविष्यतीत्येवं संकल्प्य संचिन्त्य तथा हरिलीलाप्राधान्येन श्रीमद्भागवतं वर्णय । ननु भक्तिरसविघातेन केवलं तत्त्वमित्यर्थः ॥ ५२ ॥ ननु लीला मायाश्रया किं तद्वर्णनेनेत्यत आह—मायामिति ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे भा०दी० टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥

१. अत्र श्लोकद्वयमधिकं क्वचिदस्ति तच्च—'नृजन्मनि न तुष्येत कृतेन भगवान्यदि ॥ धर्मार्थकामैः किं तर्हि कार्यं सिध्यति नश्वरैः ॥५३॥ कृष्णे न चोत्तमश्लोके चेद्भक्तिरनपायिनी । किं स्याद्वर्णाश्रमाचारदानहोमादिभिः कृतैः ॥ ५४ ॥' इति । एतदुपरि वीरराघवटीका । ननु त्रिवर्गो यथा भवेत्तथा वर्णयति किं नोच्यत इत्याशङ्क्याह—नृजन्मनीति । मनुष्यजन्मनि कृतेन साधनकलापेन भगवान्न तुष्येत तर्हि नश्वरैर्धर्मादिभिः किं कार्यं किं प्रयोजनं सिध्यति न किमपीत्यर्थः ॥५२॥ धर्मस्य ह्यापवर्ग्यस्येति पूर्वोक्तरीत्या परम्परया भगवद्भक्तावुपयुज्यमानानामेव साफल्यं तदुपयोगरहितानां तु वैफल्यमेवेति अन्वयव्यतिरेकेणाह—कृष्ण इति । उत्तमश्लोके अविद्यानिवर्तकयशसि श्रीकृष्णे चेद्यदि च कृतैः स्वनुष्ठितैर्वर्णाश्रमाचारादिभिरनपायिनी अव्यभिचारिणी भक्तिर्न स्याच्चर्हि तैः किमन्यत्फलं स्यात्, न किमपि। अन्यफलस्य नश्वरत्वात्तज्जातमप्यजातप्रायमिति भावः ॥५३॥ इति। २ स्वारम्भकाणां पृथिव्यादिमहाभूतानामित्यर्थः ।

अष्टमे देहसंबन्धमाक्षिपन्नीशजीवयोः ॥ बहून्परिक्षिदापृच्छत्पुराणार्थान्बुभुत्सितान् ॥ १ ॥ त्वमेतद्विपुलीकुर्वित्युक्तं तदेव विपुलीकरणं पृच्छति—ब्रह्मणेति त्रिभिः । अगुणस्य गुणातीतस्यापि । देववद्दर्शनं यस्य सः ॥ १ ॥ २ ॥ निःसङ्गं मनः श्रीकृष्णे निवेश्येति स्वप्रयत्नो दर्शितः ॥ ३ ॥ सोऽपि श्रद्धया शृण्वतो नावश्यक इत्याह—शृण्वत इति । स्वप्रयत्नं विनापि भगवान्स्वयमेव हृदि विशति ॥ ४ ॥ भावसरोरुहं हृदयकमलं प्रविष्टश्च तद्गतं सर्वं मलं धुनोति । सलिलस्येति । द्रव्यान्तरव्यामिश्रणादिना कुम्भस्थे जले शोधिते तदेव केवलं शुध्यति नतु नदीतडागादिगतम्, स च मलः कुम्भस्यान्तस्तिष्ठत्येव नतु सर्वथा विलीयते । अत एव किंचिच्चलनेन पुनः क्षुभ्यति च । एवं तपोदानादि प्रायश्चित्तं न सर्वथा सर्वेषां सर्वं पापं धुनोति, किंतु सावशेषम्, तच्च कस्यचिदेव, किंचिदेव, हृदि प्रविष्टमात्रस्तु श्रीकृष्णः सर्वेषां सर्वं पापं निःशेषं हरतीत्यनेन दृष्टान्तेनोक्तं—सलिलस्य मलं यथा शरदिति ॥५॥ ततश्च कृतार्थो भवतीत्याह । धौतात्मा निष्पापः । मुक्ताः सर्वे रागद्वेषादयः परिक्लेशा येन । पान्थः प्रवासादागतः स्वस्य शरणं गृहं यथा न मुञ्चति तद्वत् ॥ ६ ॥ तदेवं श्रवणौत्सुक्यमाविष्कृत्य संदिग्धा-

राजोवाच ॥ ब्रह्मणा चोदितो ब्रह्मन् गुणाख्यानेऽगुणस्य च ॥ यस्मै यस्मै यथा प्राह नारदो देवदर्शनः ॥१॥ एतद्वेदितुमिच्छामि तत्त्वं वेदविदांवर ॥ हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः ॥ २ ॥ कथयस्व महाभाग यथाहमखिलात्मनि ॥ कृष्णे निवेश्य निःसङ्गं मनस्त्यक्ष्ये कलेवरम् ॥ ३ ॥ शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ॥ कालेन नातिदीर्घेण भगवान्विशते हृदि ॥४॥ प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ॥ धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ५ ॥ धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ॥ मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा ॥ ६ ॥ यदधातुमतो ब्रह्मन् देहारम्भोऽस्य धातुभिः ॥ यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ ७ ॥ आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम् ॥ यावानयं वै पुरुष इयत्तावयवैः पृथक् ॥ तावानसाविति प्रोक्तः संस्थावयववानिव ॥ ८ ॥ अजः सृजति भूतानि भूतात्मा यदनुग्रहात् ॥ ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ॥ ९ ॥ ॥

नर्थान्पृच्छति । अधातुमतः धातवो महाभूतानि तत्संबन्धशून्यस्यास्य लौकिकस्यात्मनो जीवस्य धातुभिर्देहारम्भ इति यत् । एतत्किम् । यदृच्छया निर्निमित्तं हेतुना वा कर्मादिना भवन्तो यथावज्जानते । अतः कथयन्त्विति शेषः ॥ ७ ॥ यश्चासावीश्वरः सोऽप्येतत्तुल्यदेहवान्प्रोक्तः, अतस्तस्य को विशेष इत्याशयेन पृच्छति—आसीदिति सार्धेन । लोकानां संस्थानं रचना तदेव लक्षणं स्वरूपं यस्य तत्त्रैलोक्यात्मकं पद्मं यस्योदरादासीत् । असावीश्वर इयत्तायुक्तैः स्वपरिमितैरवयवैरयं लौकिकः पुरुषो यावान् यत्संख्याकावयवयुक्तस्तावान् प्रोक्तः संस्थावानवयववानिव च प्रोक्तः । अतः को विशेषस्तस्येति ॥ ८ ॥ अवश्यं च विशेषो वाच्य इत्याह । अजो ब्रह्मा भूतानां व्यष्ट्युपाधीनामात्मा नियन्ता, समष्ट्युपाधित्वात् । येन चानुगृह्णता तस्य रूपं ददृशे दृष्टवान् । एतच्च 'तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ॥ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥' इत्यादिनोक्तमनूद्यते । अग्रे तु स्पष्टं भविष्यति ॥ ९ ॥ ॥ ॥

१ भावविशेषधारिणो हृदयस्य तत्सुगन्दोपादेयस्थानत्वाद्भावसरोरुहमित्युक्तम् । सलिलशरद्दृष्टान्तस्तु सर्वपावनमात्रांशे । क्रम० । २ सर्वं मलमिति मूलस्थशमलमित्यस्यार्थः । ३ सर्वेषामित्यादि । अत्र सर्वेषामेव सर्वमेव निःशेषमेव हरत्येव इत्यवधारणचतुष्टयं ज्ञेयम् । ४ 'शरणं गृहरक्षित्रोः' इति कोशः । ५ एतत्स्कन्धीयपञ्चमाध्यायस्य सप्तदशोऽयं श्लोकः ।

प्रश्नान्तरमाह—स चापीति । यत्र शेते येन रूपेणावतिष्ठते । विश्वस्य स्थित्यादयो यस्मात् । एवमादिप्रश्नानां 'तत्त्वतोऽर्हस्युदाहर्तुम्' इति सर्वान्ते क्रियया
संबन्धः ॥ १० ॥ प्रश्नान्तरमाह । पुरुषस्यावयवैः पूर्वं कल्पिताः 'यस्येहावयवैर्लोकान्कल्पयन्ति' इत्यादौ । 'लोकैश्चामुष्यावयवा' इति 'पातालमेतस्य हि पाद-
मूलम्' इत्यादौ च त्वन्मुखाच्छ्रुतवन्तो वयम् ॥ ११ ॥ एवं संदेहविपर्ययाभ्यां पृष्टम्, इदानीमज्ञातान्बहूनर्थान्पृच्छति—यावानित्यादिना । कल्पो महान् ।
विकल्पोऽवान्तरः । भूतादिः शब्दो यस्मात्, यस्य वाचक इति वा । सतः स्थूलदेहाभिमानिनो मनुष्यपितृदेवादेरायुषः प्रमाणम् ॥ १२ ॥ अनुमानप्रकारः
पृष्टो विशेषं पृच्छति—कालस्येति । अनुगतिः प्रवृत्तिः । कर्मगतयः कर्मप्राप्याणि स्थानानि । यादृशीः यादृश्यः ॥ १३ ॥ गुणानां सत्त्वादीनां परिणामं देवादि-

स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः ॥ मुक्त्वात्ममायां मायेशः शेते सर्वगुहाशयः ॥ १० ॥ पुरुषावयवै-
र्लोकाः सपालाः पूर्वकल्पिताः ॥ लोकैरमुष्यावयवाः सपालैरिति शुश्रुम ॥ ११ ॥ यावान्कल्पो विकल्पो वा यथा
कालोऽनुमीयते ॥ भूतभव्यभवच्छब्द आयुर्मानं च यत्सतः ॥ १२ ॥ कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृह-
त्यपि ॥ यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३॥ यस्मिन्कर्मसमावायो यथा येनोपगृह्यते ॥ गुणानां गुणिनां
चैव परिणाममभीप्सताम् ॥ १४ ॥ भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम् ॥ सरित्समुद्रद्वीपानां संभवश्चैतदोक-
साम् ॥ १५ ॥ प्रमाणमण्डकोशस्य बाह्याभ्यन्तरभेदतः ॥ महतां चानुचरितं वर्णाश्रमविनिश्चयः ॥ १६ ॥ अवता-
रानुचरितं यदाश्चर्यतमं हरेः ॥ युगानि युगमानं च धर्मो यश्च युगे युगे ॥ १७ ॥ नृणां साधारणो धर्मः सविशे-
षश्च यादृशः ॥ श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥ तत्त्वानां परिसंख्यानं लक्षणं हेतुलक्षणम् ॥
पुरुषाराधनविधिर्योगस्याध्यात्मिकस्य च ॥ १९ ॥ ॥ ॥ ॥

रूपमिच्छतां गुणिनां जीवानां मध्ये यस्मिन्परिणामे कर्मणां पुण्यपापानां समावायः समुदायः । केन कर्मसमुदायेन कथं कृतेन कोऽधिकारी देवादिभावं
प्राप्नोतीत्यर्थः ॥ १४ ॥ भूपातालादीनां संभवः । एतान्योकांसि येषां प्राणिनां तेषां च संभवः । यथेति सर्वत्रानुषङ्गः ॥ १५ ॥ वर्णानामाश्रमाणां च विनि-
श्चयस्तत्तत्स्वभावैर्निर्धारः ॥१६॥ युगे युगे प्रतियुगं यो धर्मो यच्च हरेरवतारानुचरितम् ॥१७॥ सविशेषो वर्णाश्रमनिबन्धनः । श्रेणीनां तत्तद्व्यवसायोपजीविनां
व्यवहारनियमलक्षणो धर्मः । राजर्षीणां प्रजापालनाधिकारिणाम् । कृच्छ्रेष्वापत्सु जीवतां सर्वेषाम् ॥ १८ ॥ सर्वेषां तत्त्वानां प्रकृत्यादीनां परिसंख्यानं
संख्या । लक्षणं स्वरूपम् । हेतुतो लक्षणम् । तत्तत्कार्यहेतुत्वेन च लक्षणमित्यर्थः । पुरुषाराधनस्य विधिर्देवपूजाप्रकारः । अष्टाङ्गयोगस्य च विधिः ॥ १९ ॥

१ तत्त्वत इत्यस्यैवाध्यायस्य चतुर्विंशः श्लोकः । २ यस्येति स्कन्धः २ अ० ५ श्लोक ३६ । ३ पातालमिति स्कन्धः २ अ० १ श्लोकः २६ । ४ यस्मात्कालात्प्रवर्तत इति शेषः ।
५ यावानिति । अत्र कल्पविकल्पपदाभ्यामुत्पत्तिप्रलययोर्मध्यकालस्यैव टीकोक्तमहदवान्तरभेदेन ग्राह्यत्वं 'सप्लवः सर्वभूताना'मित्यग्रिमैकविंशश्लोके सृष्टिस्थितिप्रलयानामुक्तत्वादिति
दीपि० । ६ अस्य पद्यस्य पूर्वोत्तरार्धवैलोम्येन पाठः क्वचित् । ७ साधारणो जा[illegible]निबन्धनः अहिंसालक्षणः । दीपि० ।

योगेश्वराणामैश्वर्येणाणिमादिनाऽर्चिरादिगतिः । लिङ्गशरीरस्य भङ्गः प्रलयः । वेदा ऋग्वेदादयः, उपवेदा आयुर्वेदादयः, धर्माः धर्मशास्त्राणि तेषाम्, इतिहासपुराणयोश्च गतिः स्वरूपम् ॥ २० ॥ संप्लवोऽवान्तरप्रलयः । यद्वा सम्यक् प्लवनमुद्भवः, विक्रमः स्थितिः, प्रतिसंक्रमो महाप्रलयः, इष्टं वैदिकं कर्म, पूर्तं स्मार्तं 'वापीकूपतडागादि देवतायतनानि च ॥ अन्नप्रदानमारामः पूर्तमित्यभिधीयते' इति । तत्र च काम्यानामग्निहोत्रादीनां विधिः । त्रिवर्गस्य धर्मार्थकामस्य विधिरविरोधप्रकारः ॥ २१ ॥ अनुशायिनां लीनोपाधीनां जीवानाम् । आत्मनो जीवस्य । व्यवस्थानं वन्धमोक्षातिरिक्तस्वरूपेणावस्थानम् ॥ २२ ॥ उदास्ते प्रलये ॥ २३ ॥ चशब्दादपृष्टमपि ॥ २४ ॥ प्रमाणं सम्यक् ज्ञाता । यतस्तव ब्रह्मनारदव्यासक्रमेण संप्रदायोऽस्तीति सामान्यन्यायेनाह—परे चेति ।

योगेश्वरैश्वर्यगतिर्लिङ्गभङ्गस्तु योगिनाम् ॥ वेदोपवेदधर्माणामितिहासपुराणयोः ॥२०॥ संप्लवः सर्वभूतानां विक्रमः प्रतिसंक्रमः ॥ इष्टापूर्तस्य काम्यानां त्रिवर्गस्य च यो विधिः ॥ २१ ॥ यश्चानुशायिनां सर्गः पाखण्डस्य च संभवः ॥ आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः ॥ २२ ॥ यथात्मतन्त्रो भगवान् विक्रीडत्यात्ममायया ॥ विसृज्य वा यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥ सर्वमेतच्च भगवन् पृच्छते मेऽनुपूर्वशः ॥ तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय [1]महामुने ॥ २४ ॥ अत्र प्रमाणं हि भवान् परमेष्ठी यथात्मभूः ॥ परे चेहानुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥ न[2] मेऽसवः परायन्ति ब्रह्मन्ननशनाद[3]मी ॥ पिबतोऽच्युतपीयू[4]षमन्यत्र कुपिताद्द्विजात् ॥२६॥ ॥ सूत उवाच ॥ स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः ॥ ब्र[5]ह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥ प्राह भागवतं नाम पुराणं ब्रह्मसं[6]मितम् ॥ ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥ यद्यत्परीक्षिदृषभः पाण्डूनामनुपृच्छति ॥ आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥२९॥ ॥ इति श्रीमद्भागवते म० द्वितीय० प्रश्नविधिर्नामाष्टमोऽध्यायः ॥ ८ ॥ ॥छ॥

यद्वा त्वदन्ये प्रायशो गतानुगतिका एव न तत्त्वविद इत्याह—परे चेति ॥ २५ ॥ ननु तवानशनद्विजकोपाभ्यां व्याकुलस्य कुतः श्रवणं तत्राह—नेति । न परायन्ति नापगच्छन्ति । न व्याकुलीभवन्तीत्यर्थः । अच्युतकीर्तिपीयूषम् ॥ २६ ॥ उपामन्त्रितः पृष्टः । संश्चासौ पतिश्च तस्य ॥ २७ ॥ ब्रह्मकल्पे सृष्ट्युपक्रमकल्पे । भागवताख्यानेनैव प्रश्नानामुत्तरं दातुमुपक्रान्तवानित्यर्थः ॥ २८ ॥ पाण्डूनामृषभः श्रेष्ठः । आनुपूर्व्येणेति प्रस्तावक्रमोऽत्र विवक्षितो न प्रश्नक्रमः ॥ २९ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे भावार्थदीपिकायां टीकायां अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥

१ 'महामते' इति पाठः । तत्र त्रैकालिकवस्तुयाथात्म्यज्ञानवत्त्वं महामतित्वम् । २ 'कुपितद्विजात्' इति पाठः । कुपिताद्विजादिति द्विजक्रोधहेतुर्मरणकालो लक्ष्यते । अन्यनेति द्विजकोपनिदानभूतः सप्तमदिनमृत्युकालादन्यत्रान्यस्मिन्कालेऽच्युतपीयूषं पिबतो मेऽसवोऽनशनान्न परायन्ति । न व्याकुलीभवन्तीत्यर्थः । ननु यथेदममृतं क्षुधा निवारयति तथा शापमपि निवारयिष्यतीत्याह—अन्यत्र कुपितादिति । सुबो० । यद्वा मेऽसवोऽनशनाद्द्विजकोपाच्च न परायन्ति, किंतु अन्यत्र अच्युतपीयूषपानाभावे परायन्तीत्यर्थः । अथवा अच्युतपीयूषं पिबतो मेऽसवः प्राणाः 'तमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति' इति श्रुत्युक्तानीन्द्रियलक्षणानि करणानि अन्यत्र अच्युतपीयूषातिरिक्ते विषये अनशनाद्धेतोः भोजनादौ, कुपितद्विजाद्धेतोः मरणप्रतीकारे धनकलत्रादौ च न परायन्ति न गच्छन्ति । अच्युतकथामृतपाने निश्चला भवन्तीति भावः । सिद्धान्त० । ३ 'अनशनादपि' इति पाठः । ४ 'पीयूषं त्वन्मुखाम्भोजविनिःसृतम्' इति पाठः । ५ 'बालोऽपि स गुरुत्वेन मुनिभ्यो ब्रह्मणा यतः । दत्तोऽतो ब्रह्मरातेति नाम वैयासकेरभूत्' इति वचनाच्छुकस्य ब्रह्मरातत्वं नान्यस्येति विज० । ६ ब्रह्मसमितं ब्रह्मणा वेदेन तुल्यम् ।

राजप्रश्नोत्तरं वक्ष्यन्ब्रह्मणे हरिणोदितम् ॥ कथयामास नवमे शुको भागवतं पुनः ॥ १ ॥ तत्र यत्तावदुक्तं 'यदधातुमतः' इत्यनेन जीवस्य कथं देहसंबन्ध इति तत्रोत्तरमाह । आत्मनो हरेर्मायामन्तरेणानुभवरूपस्यात्मनोऽर्थेन दृश्येन देहादिना संबन्धोऽञ्जसा तत्त्वतो न घटेत । अत्र हेतुः—परस्येति । स्वप्नद्रष्टुर्यथा स्वप्न-देहसंबन्धो न घटते तद्वत् ॥ १ ॥ संसारोऽपि माययैवेत्याह । बहुरूपो बाल्ययुवादिरूपो देवनरादिरूपश्चाभाति । गुणेषु देहादिषु ॥ २ ॥ अत एव भक्ति-योगेन तन्निरासे सति मोक्षोऽपि घटत इत्याह—यर्हीति । वावशब्द एवार्थे । स्व एव महिम्नि यदा रमेत । तदेवाह । कालमाययोः पुरुषप्रकृत्योः परस्मिन् । तदोभयमहं ममेति च त्यक्त्वा उदास्ते पूर्णरूपेणावतिष्ठते । तदुक्तम्—'यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभि-पद्यते । अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥' इति ॥ ३ ॥ यच्चोक्तं परमेश्वरस्यापि देहसंबन्धाविशेषा-त्कथं तद्भक्त्या मोक्षः स्यादिति 'आसीद्यदुदरात्पद्मम्' इत्यादिना तत्राह । आत्मनो जीवस्य तत्त्वविशुद्ध्यर्थं तत्त्वज्ञानार्थं तद्भजत्येव । किं तत् । यत्तपआदिना भजनं भगवान्ब्रह्मणे आह । किं कुर्वन् । ऋतं सत्यं चिद्घनं रूपं दर्शयन् । दर्शने हेतुः—अव्यलीकेन व्रतेन तपसा आदृतः सेवितः सन् । अयं भावः—जीव-

॥ श्रीशुक उवाच ॥ आत्ममायामृते राजन् परस्यानुभवात्मनः ॥ न घटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा ॥१॥ बहुरूप इवाभाति मायया बहुरूपया ॥ रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ २ ॥ यर्हि वाव महिम्नि स्वे परस्मिन्का-लमाययोः ॥ रमेत गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ॥ ३ ॥ आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् ॥ ब्रह्मणे दर्शयन्रूपमव्यलीकव्रतादृतः ॥ ४ ॥ स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ॥ तां नाध्य-गच्छद्दृशमत्र संमतां प्रपञ्चनिर्माणविधिर्यया भवेत् ॥ ५ ॥ स चिन्तयन्द्व्यक्षरमेकदाम्भस्युपाशृणोद्द्विर्गदितं वचो विभुः ॥ स्पर्शेषु यत्षोडशमेकविंशं निष्किंचनानां नृप यद्धनं विदुः ॥६॥ निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः ॥ स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः ॥ ७ ॥ ॥ ॥

स्याविद्यया मिथ्यारूपदेहसंबन्धः, ईश्वरस्य तु योगमायया चिद्घनलीलाविग्रहाविर्भाव इति महान्विशेषः । अतस्तद्भजनान्मोक्षोपपत्तिरिति ॥ ४ ॥ भगवद्भजना-देव तत्त्वज्ञानमित्येतत्प्रपञ्चयिष्यन् ब्रह्मणोऽपि तत्त्वज्ञानं तत्प्रसादादेवेति दर्शयितुमितिहासमाह—स इत्यादिना । परो गुरुर्भक्तिरहस्योपदेष्टा । स्वधिष्ण्यं पद्ममा-स्थायाधिष्ठाय । तस्याधिष्ठानान्वेषणाय पूर्वं जले निमग्नः परावृत्य, स्वधिष्ण्ये स्थित्वेत्यर्थः । ऐक्षत तत्कथं स्रष्टव्यमित्यालोचितवान् । तां दृशं प्रज्ञामत्र सृष्टिविषये संमतामव्यभिचारिणीम् । विधिः प्रकारः ॥ ५ ॥ सृष्टिं चिन्तयन् कदाचित् द्व्यक्षरं वचोऽम्भसि उपाशृणोत् उप समीपे श्रुतवान् । ते अक्षरे दर्शयति । 'कादयो मावसानाः स्पर्शाः' तेषु यत्षोडशं तकारो यच्चैकविंशं पकारः । वचसो निर्देशार्थं तदर्थमाह । हे नृप, निष्किंचनानां त्यक्तधनानां धनं यद्विदुः, येन तपोधना इति प्रसिद्धाः, तच्च द्विर्गदितं तप तपेति । लोण्मध्यपुरुषैकवचनम् । तस्य वीप्सां सादरविधिरूपामशृणोदित्यर्थः ॥ ६ ॥ एवं निशम्य तस्य वचसो वक्तुर्दिदृक्षया ततः प्रचलितः सन् दिशो विलोक्य पुनः स्वधिष्ण्यमास्थाय केनचित्प्रत्यक्षं नियुक्त इव तच्चात्मनो हितं विमृश्य तपसि मनो धृतवानित्यर्थः ॥ ७ ॥ ॥

१ 'यदधातुमत' इति पूर्वाध्यायस्य षष्ठश्लोकः । २ 'यया' इति प्रथमस्कन्धीयसप्तमाध्यायस्य पञ्चमषष्ठश्लोकौ । ३ 'आसीत्' इति पूर्वाध्यायस्य सप्तमश्लोकः । ४ यच्छब्दस्योत्तर-वाक्यगतत्वान्न तत्पदापेक्षा ।

ततश्च स ब्रह्माऽखिलानां लोकानां तापनं प्रकाशकं तपोऽतप्यत स्म कृतवान्। तप तपेत्येतस्य वचसोऽर्थे। अमोघं दर्शनं यस्य जितोऽनिल आत्मा मनश्च येन। विजितान्युभयेन्द्रियाणि ज्ञानकर्मात्मकानि येन। तपतां तपश्चरतां मध्ये तपीयानतिशयेन तपस्वी ॥ ८ ॥ तस्मै ब्रह्मणे स्वलोकं वैकुण्ठाख्यम्। परं श्रेष्ठम् न यत्परं यतः परमुत्कृष्टमन्यन्नास्ति। तमेव लोकमनुवर्णयति पञ्चभिः। व्यपेताः संक्लेशादयो यस्मात्। स्वदृष्टवद्भिः सत्पुण्यवद्भिः। यद्वा स्वस्य दृष्टं दर्शनमस्ति येषाम्। आत्मविद्भिरित्यर्थः ॥ ९ ॥ तयोस्ताभ्यां मिश्रं सत्त्वं च न प्रवर्तते, किंतु शुद्धमेव सत्त्वम्। कालविक्रमो नाशः। अपरे रागलोभादयो न सन्तीति किमु वक्तव्यम्। अनुव्रताः पार्षदाः ॥ १० ॥ श्यामाश्च ते अवदाता उज्ज्वलाश्च, पद्मनेत्राः, पीताम्बराः, सुरुचोऽतिकमनीयाः, सुपेशसोऽतिसुकुमाराः।

दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ॥ अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ ८ ॥ तस्मै स्वलोकं भगवान् सभाजितः संदर्शयामास परं न यत्परम् ॥ व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥ प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ॥ न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ १० ॥ श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ॥ सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥ प्रवालवैदूर्यमृणालवर्चसः परिस्फुरत्कुण्डलमौलिमालिनः ॥ ११ ॥ भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ॥ विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः ॥ १२ ॥ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ॥ प्रेङ्खं श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ १३ ॥ ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ॥ सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥ १४ ॥ ॥

उन्मिषन्त इव प्रभावन्तो मणिप्रवेका मण्युत्तमा येषु तानि निष्काणि पदकान्याभरणानि च येषां ते। सुवर्चसोऽतितेजस्विनः, प्रवालादिवद्वर्चो वर्णो येषां ते, परितः स्फुरन्ति कुण्डलानि मौलयो मालाश्च सन्ति येषां ते ॥ ११ ॥ पार्षदाननुवर्ण्य पुनरपि लोकमनुवर्णयति। भ्राजिष्णुभिर्देदीप्यमानाभिः प्रमदोत्तमानां दिवः कान्तयस्ताभिर्विद्योतमानः। सह विद्युद्भिर्वर्तमानाः सविद्युतस्ताभिरभ्रावलिभिः। तत्र विद्युत इव स्त्रियः, अभ्रपङ्क्तय इव विमानानि, नभ इव लोकः ॥ १२ ॥ श्रीः सम्पत्। रूपिणी मूर्तिमती। मानं पूजाम्। विभूतिभिर्नानाविभवैः प्रेङ्खमान्दोलं संश्रिता। कुसुमाकरो वसन्तस्तस्यानुगा भ्रमरास्तैर्विविधं गीयमाना। स्वयं तु प्रियस्य हरेः कर्म गायन्तीव भवति ॥ १३ ॥ य एवंभूतो लोकस्तत्र तस्मिन् ॥ १४ ॥ ॥ ७ ॥ ॥ ७ ॥

१ आविर्भावकारणमित्यर्थः। २ सभाजितः सम्यगाराधितः। ३ 'सदृष्टवद्भिः' इति पाठः। तत्र सम्यक्परोक्षज्ञानवद्भिरित्यर्थः। ४ विशेषेण बुध्यन्ते इति विबुधा ज्ञानाधिका नित्यमुक्ताश्च। ५ 'अधिष्ठितम्' इति पाठः। ६ 'निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले। वक्षोविभूषणे कर्षे' इति कोशाद्वक्षोलंकारवाची निष्कशब्दो ज्ञेयः। ७ एतादृशं स्वलोकं दर्शयामासेति पूर्वेण नवमश्लोकेनान्वयः।

भृत्यानां प्रसादेऽभिमुखम्, दृगेव आसव इव द्रष्टृणां हर्षकरी यस्य तम्, प्रसन्नहासमरुणलोचनं चाननं यस्य, वक्षसि स्थितया च श्रिया लक्षितम् । अलंकृत-
मित्यर्थः ॥ १५ ॥ अध्यर्हणीयं वरिष्ठं सिंहासनम् । चतस्रः प्रकृतिपुरुषमहदहंकाररूपाः, षोडश एकादशेन्द्रियपञ्चमहाभूताख्याः पञ्चतन्मात्ररूपा याः शक्तय-
स्ताभिर्वृतम् । स्वैर्भगैः स्वाभाविकैरैश्वर्यादिभिः इतरत्र योगिष्वध्रुवैरागन्तुकैः । साधारणैरित्यर्थः । एवं सत्यपि स्व एव धामन् स्वस्वरूप एव रममाणम् । अत
एवेश्वरम् ॥ १६ ॥ तस्य दर्शनेन य आह्लादस्तेन परिप्लुतं व्याप्तमान्तरमन्तःकरणं यस्य । हृष्यन्ती रोमाञ्चिता तनुर्यस्य । प्रेमभरेणाश्रूणि लोचनेषु यस्य ।
विश्वसृक् ब्रह्मा । पारमहंस्येन पथा ज्ञानमार्गेण ॥ १७ ॥ तं ब्रह्माणं भगवान् बभाषे । प्रजाविसर्गे कार्ये निजशासनार्हणं स्वनियोगार्हम् । प्रजाविसर्गे समुप-
स्थितमिति वाऽन्वयः । ईषत्स्मितेन शोचिर्दीप्तिः शोभा यस्यास्तया गिरा ॥ १८ ॥ सिसृक्षया हेतुना चिरं संभृतेन तपसाऽहं सम्यक्तोषितः । दुस्तोषस्तोष-

किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लक्षितं
भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननम् ॥ युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव
श्रिया ॥ १५ ॥ अध्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः ॥ ननाम पादाम्बुजमस्य
धामन् रममाणमीश्वरम् ॥ १६ ॥ तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः ॥ बभाष
विश्वसृग्यत्पारमहंस्येन पथाऽधिगम्यते ॥ १७ ॥ तं प्रीयमाणं समुपस्थितं तदा प्रजाविसर्गे निजशासनार्हणम् ॥ त्वयाहं तोषितः सम्य-
ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशन् ॥ १८[3] ॥ ॥ श्रीभगवानुवाच ॥ वरं वरय भद्रं ते वरेशं माऽभिवाञ्छितम्
ग्वेदगर्भ सिसृक्षया ॥ चिरं भृतेन तपसा दुस्तोषः कूटयोगिनाम् ॥ १९ ॥ यदुपश्रुत्य रहसि
ब्रह्मञ्छ्रेयःपरिश्रामः पुंसो मद्दर्शनावधिः ॥ २० ॥ मनीषितानुभावोऽयं मम लोकावलोकनम् ॥ तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ ॥ २२ ॥
चकर्थ परमं तपः ॥ २१ ॥ प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते ॥ ॥ ॥
सृजामि तपसैवेदं ग्रसामि तपसा पुनः ॥ बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः ॥ २३ ॥

यितुमशक्यः ॥ १९ ॥ मा इति माम् । श्रेयसां फलानां परिश्रामः परिश्रमः साधनप्रयासः मम दर्शनमवधिर्यस्य स तथा । अतोऽधिकं तु पुनः फलं नास्ती-
त्यर्थः ॥ २० ॥ एतच्च मत्कृपयैव त्वया प्राप्तमित्याह । मनीषितमिच्छा तुभ्यमिदं दातव्यमिति या ममेच्छा तस्यानुभावोऽयम् । कोऽसौ तमाह । मम लोक-
स्यावलोकनं यत् । न चेदं मयैव तपोबलेन प्राप्तमिति स्वातन्त्र्यं मन्यस्व तत्प्रवृत्तेरपि मत्कृतत्वादित्याह । रहसि तप तपेति यद्वच उपश्रुत्य परमं तपश्चकर्थ
कृतवानसि ॥ २१ ॥ तदपि त्वां प्रति मयैवादिष्टमुपदिष्टम् । कदा । तत्र तदा सृष्ट्यारम्भे त्वयि कर्मणि कार्येऽर्थे विमोहिते सति । किंच । तपो नाम ममैव
शक्तिरित्याह । तपो मे हृदयमन्तरङ्गा शक्तिः, आत्मा स्वरूपम् । 'यस्य ज्ञानमयं तपः' इति श्रुतेः ॥ २२ ॥ ग्रसामि संहरामि । बिभर्मि पालयामि । वीर्यं शक्तिः ॥ २३ ॥

१ आगंतुकैर्नश्वरैः । तत्प्रमादादेव कदाचित्तदाभासरूपतयैव प्राप्तैरित्यर्थः । २ 'पीतांशुक' इति पाठः । ३ अष्टादशश्लोकोत्तर—'कृताञ्जलिं प्रश्रयनम्रकंधरं विलोकयन्प्रेमदृशा समेध-
यन् ॥' इदमर्धमधिकं क्वचित् । ४ 'सध्र्यक्' इति पाठः । तत्र सम्यगित्येवार्थः । ५ 'पुंसाम्' इति पाठः ।

अध्यक्षोऽधिष्ठाता । गुहां गुहायां बुद्धावयस्थितः सन्यद्यपि वेद तथापीत्युत्तरेणान्वयः ॥ २४ ॥ नाथमानस्य याचमानस्योपतप्यमानस्येति वा । हे नाथ, नाथय आशंसय प्रयच्छ । नाथितं याचितम् । 'नाथृ नाधृ याञ्चोपतापैश्वर्याशीःषु' । नाथितमेवाह । परं सूक्ष्ममवरं स्थूलं च ते रूपं यथा जानीयाम् ॥ २५ ॥ यथा च त्वं क्रीडसि तथा तद्विषयां मनीषां मयि धेहीत्युत्तरेणान्वयः । नानाशक्त्युपबृंहितं विश्वं विलुम्पन्संहरन् विविधं सृजन्बिभ्रत्पालयन्नात्मना स्वयमेवात्मानं ब्रह्मादिरूपं गृह्णन् क्रीडसि ॥ २६ ॥ ऊर्णुते तन्तुभिरात्मानमाच्छादयति॥२७॥तत्किं सृष्टेरुद्विग्न एव तत्त्वज्ञानं प्रार्थयसे नेत्याह । भगवता त्वया शिक्षितमनुशिष्टमतन्द्रितोऽनलसः सन् करिष्यामि । तर्हि किमनेन तत्त्वज्ञानेन तत्राह । यस्मादेवंभूतात्तवानुग्रहात्प्रजासर्गमीहमानः कुर्वन्नप्यहंकारादिभिर्बद्धो न भवेयमिति ॥ २८ ॥ अवश्यं च मदो

ब्रह्मोवाच ॥ भगवन्सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् ॥ वेद ह्यप्रतिरुद्धेन प्रज्ञानेन चिकीर्षितम् ॥ २४ ॥ तथापि नाथमानस्य नाथ नाथय नाथितम् ॥ परावरे यथा रूपे जानीयां ते त्वरूपिणः ॥ २५ ॥ यथात्ममायायोगेन नानाशक्त्युपबृंहितम् ॥ विलुम्पन्विसृजन् गृह्णन्बिभ्रदात्मानमात्मना ॥ २६ ॥ क्रीडस्यमोघसंकल्प ऊर्णनाभिर्यथोर्णुते ॥ तथा तद्विषयां धेहि मनीषां मयि माधव ॥ २७ ॥ भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितः ॥ नेहमानः प्रजासर्गं बध्येयं यदनुग्रहात् ॥ २८ ॥ यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भो जनम् ॥ अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः ॥ २९ ॥ ॥ श्रीभगवानुवाच ॥ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ ३० ॥ यावानहं यथाभावो यद्रूपगुणकर्मकः ॥ तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ ३१ ॥ ॥ ॥ ॥ ॥

भविता सतु कंचित्कालं मा भूदिति प्रार्थयते—यावदिति । भो ईश, ते त्वया लौकिकस्य सख्युः सखेवाहं कृतः करस्पर्शनादिना ममत्वेन संमानितः सन् प्रजासर्गरूपे तव परिकर्मणि सेवायां स्थितोऽविक्लवोऽव्याकुल एव यावज्जनं विभजाम्युत्तममध्यमादिभेदेन सृजामि तावत्त्वत्संमानादहमप्यजः स्वतन्त्र इति मानिनो मे समुन्नद्ध उत्कटो मदो मा भूत् । यद्वा मदो मा समुन्नद्ध मा समुन्नह्यताम् । उद्रिक्तो न भवेदित्यर्थः ॥ २९ ॥ ज्ञानं शास्त्रोत्थम् । विज्ञानमनुभवः । रहस्यं भक्तिः सुगोप्यमपि वक्ष्यामीत्यादिनिर्देशात् तस्याङ्गं साधनम् ॥ ३० ॥ ननु त्वद्दर्शनेप्यसमर्थोऽहं कथं ज्ञानाधिकारी स्यां तत्राह—यावानिति । यावान्स्वरूपतः । यथाभावो यादृक्सत्तावान् । यानि रूपाणि गुणाः कर्माणि च यस्य ॥ ३१ ॥ ॥ ॥ ॥ ॥

१ पर अवर इति । चिदानन्दाद्यात्मकवैराजाख्यं पर रूपम् । सनवावरणाण्डाख्यमवरम् । विज० । परावरे विश्वस्य निर्गमप्रवेशस्थानभूते रूपे सिद्धां० । २ अप्रतिरुद्धेन अनर्गलेन । ३ अत्रात्मनेपदमार्षम् । ४ तुशब्देन ते च रूपे सत्ये इत्यवधारयति । ५ तद्विषयां भगवद्गुणस्वरूपसृष्ट्यादिलीलाविषयाम् । ६ अस्मिन्पक्षे समुन्नद्धेति नहधातोर्लुङि प्रथमपुरुषैकवचनम् । 'न माङ्योगे' इति निषेधान्माङ्योगे अडभावः । ७ यानि रूपाणीत्यत्र यादृग्रूपो यादृग्गुणो यादृक्कर्मा चेत्यर्थः । दीपि० ।

एतदेव सम्यगुपदिशन् यावान्नित्यस्वार्थं स्फुटयति—अहमिति। अहमेवाग्रे सृष्टेः पूर्वमासं स्थितः, नान्यत्किंचित्, यत्सत्स्थूलमसत्सूक्ष्मं परं तयोः कारणं प्रधानम्। तस्याप्यन्तर्मुखतया तदा मय्येव लीनत्वात्। अहं च तदा आसमेव केवलं न चान्यदकरवम्। पश्चात्सृष्टेरनन्तरमप्यहमेवास्मि। यदेतद्विश्वं तदप्यहमस्मि। प्रलये योऽवशिष्येत सोऽप्यहमेव। अनेन चानाद्यनन्तत्वादद्वितीयत्वाच्च परिपूर्णोऽहमित्युक्तं भवति ॥ ३२ ॥ यथात्ममायायोगेनेत्यनेन मायाया अपि पृथग्लक्ष्यमाणोपयोगित्वाच्च मायां निरूपयति। ऋते अर्थं विनापि वास्तवमर्थं यद्यतः किमप्यनिरुक्तमात्मन्यधिष्ठाने प्रतीयेत सदपि च न प्रतीयेत, तत् आत्मनो मम मायां विद्यात्। यथा आभासो द्विचन्द्रादिरित्यर्थं विना प्रतीतौ दृष्टान्तः। यथा तम इति सतोऽप्रतीतौ। तमो राहुर्यथा ग्रहमण्डले स्थितोऽपि न दृश्यते तथा ॥३३॥ यथाभाव इत्येतत्स्पष्टयति। यथा महाभूतानि भौतिकेष्वनु सृष्टेरनन्तरं प्रविष्टानि तेषूपलभ्यमानत्वात्। अप्रविष्टानि च प्रागेव कारणतया तेषु विद्यमानत्वात्।

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३२ ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥ तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥३३॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥३४॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३५ ॥ एतन्मतं समातिष्ठ परमेण समाधिना ॥ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ३६ ॥ ॥ श्रीशुक उवाच ॥ संप्रदिश्यैवमजनो जनानां परमेष्ठिनम् ॥ पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः ॥ ३७ ॥ अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः ॥ सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥३८॥ प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ॥ भद्रं प्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ॥ ३९ ॥ ॥ ॥ ॥

तथा तेषु भूतभौतिकेष्वहं न च तेष्वहम्। एवंभूता मम सत्तेत्यर्थः ॥ ३४ ॥ साधनमाह। आत्मनस्तत्त्वजिज्ञासुना एतावत्त्वमेव जिज्ञास्यं विचार्यम्। तदेवाह। अन्वयः कार्येषु कारणत्वेनानुवृत्तिः। कारणावस्थायां च तेभ्यो व्यतिरेकः। तथा जाग्रदाद्यवस्थासु तत्तत्साक्षितयान्वयः। व्यतिरेकश्च समाध्यादौ। एवमन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा च तदेवात्मेति ॥ ३५ ॥ यत्प्रार्थितं 'नेहमानः प्रजासर्गम्' इति तत्प्रसादीकरोति। एतन्मतं सम्यगनुतिष्ठ। समाधिना चित्तैकाग्र्येण। कल्पेषु ये विकल्पा विविधाः सृष्टयस्तेषु विमोहं कर्तृत्वाभिनिवेशं न यास्यतीति ॥ ३६ ॥ एवं संप्रदिश्योपदिश्य। जनानां परमेष्ठिनं परमे आधिपत्ये स्थितं ब्रह्माणम्। आत्मनस्तद्रूपं न्यरुणदन्तर्हितवान् ॥३७॥ अन्तर्हित इन्द्रियार्थः प्रत्यक्षरूपं येन तस्मै बद्धाञ्जलिः सन् ॥ ३८ ॥ तदनन्तरं पूर्वोक्तो ब्रह्मनारदसंवादः प्रवृत्त इत्याह—प्रजापतिरिति पञ्चभिः। प्रजानां भद्रमन्विच्छन्विमृशन्। सैव स्वार्थे काम्या स्वप्रयोजनेच्छा तया यमनियमानन्वतिष्ठत् ॥ ३९ ॥

---

१ अहमेवासीति नन्वङ्कुरे जाते बीजवदनुपलम्भः। कारणतया पृथगवस्थानात्। एतेनाप्रच्युतस्वरूपत्वमुक्तम्। २ यदेतदिति। अनेन प्रपञ्चस्य वागालम्बनमात्रत्वमुक्तं, वस्तुतः सर्वं ब्रह्म तन्मात्रमित्यर्थः। ३ अहमेवासमित्यारभ्य 'ज्ञानं सर्वत्र सर्वदा' इत्यन्ताश्चतुःश्लोका एव चतुःश्लोकीभागवतत्वेन दीपिन्यामुक्ता व्याख्याताश्च। ४ समष्ट्यात्मकत्वेन सर्वभूतमय.। ५ इदं व्यष्ट्यात्मकम्। ६ अत्रान्वयव्यतिरेकसाधनेनात्मा जिज्ञास्य इत्यर्थः, इत्यधिकं क्वचित्। ७ अन्वयः कार्येष्विति। यदा कार्याणि जायन्ते तदोपादानतयेश्वरस्य सर्वत्रैवानुवृत्तिः कुण्डलादिषु स्वर्णवत्। यदा अविकृतः कारणरूपेण वर्तते तदा कार्याणामभावात्तेभ्यो व्यतिरेकः अविकृतसुवर्णवत् इति दीपि०। ८ अथवा मत्प्रजा यमनियमानातिष्ठन्त्वित्येव स्वार्थकाम्या तया।

रिक्थादानां पुत्राणां मध्ये प्रियतमस्तं पितरं सेवमानः शीलादिना परितोपयामासेत्युत्तरेणान्वयः ॥४०॥ किमिच्छन्विष्णोर्मायां विविदिषन् ॥ ४१ ॥ निशाम्य दृष्ट्वा ज्ञात्वेत्यर्थः । मा माम् ॥ ४२ ॥ भगवता चतुःश्लोक्या संक्षेपेण प्रोक्तं विस्तरेण प्राह । दश लक्षणानि लक्षणीया अर्था विद्यन्ते यस्मिंस्तत् ॥ ४३ ॥ तत्संप्रदायतो भागवतं मया ज्ञातमित्याशयेनाह—नारद इति ॥ ४४ ॥ भागवतव्याख्यानेनैव त्वत्प्रश्नानामुत्तरं दास्यामीत्याह—यदुतेति । 'पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः' इत्यादिना वैराजात्पुरुषादिदं विश्वं कथमासीदिति यदहं त्वया पृष्टः तद्यथावदुपाख्यास्यामि शृण्विति ॥ ४५ ॥ ॥ इति श्री० भा० द्वितीयस्कन्धे भा० दी० टीकायां नवमोऽध्यायः ॥९॥ ॥छ॥ ॥ ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् ॥ राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः ॥ १ ॥ दशलक्षणं पुराणं प्राहेत्युक्तं तानि दश लक्षानि दर्शयति—अत्रेति । मन्वन्तराणि ईशानुकथाश्चेति द्वन्द्वः । सर्गादयोऽत्र दशार्था लक्ष्यन्ते ॥ १ ॥ नन्वेवमर्थभेदाच्छास्त्रभेदः

तं नारदः प्रियतमो रिक्थादानामनुव्रतः ॥ शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥४०॥ मायां विविदिषन्विष्णोर्मायेशस्य महामुनिः ॥ महाभागवतो राजन्पितरं पर्यतोषयत् ॥४१॥ तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् ॥ देवर्षिः परिपप्रच्छ भवान्यन्माऽनुपृच्छति ॥ ४२ ॥ तस्मा इदं भागवतं पुराणं दशलक्षणम् ॥ प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥४३॥ नारदः प्राह मुनये सरस्वत्यास्तटे नृप ॥ ध्यायते ब्रह्म परमं व्यासायामिततेजसे ॥४४॥ यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ॥ यथासीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥४५॥ ॥ इति श्रीमद्भागवते महापुराणे द्वितीयस्कन्धे नवमोऽध्यायः ॥९॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥ दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ॥ वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ॥ २ ॥ भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ॥ ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥३॥ स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ॥ मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः ॥ ४ ॥ ॥

स्यात्तत्राह । दशमस्याश्रयस्य विशुद्ध्यर्थं तत्त्वज्ञानार्थं नवानां लक्षणं स्वरूपम् । एकस्यैव प्राधान्यान्नायं दोप इत्यर्थः । नन्वत्र नैवं प्रतीयतेऽत आह । श्रुतेन श्रुत्यैव स्तुत्यादिस्थानेष्वञ्जसा साक्षाद्वर्णयन्ति । अर्थेन तात्पर्यवृत्त्या च तत्तदाख्यानेपु ॥ २ ॥ सर्गादीनां प्रत्येकं लक्षणमाह । भूतान्याकाशादीनि, मात्राणि च शब्दादीनि, इन्द्रियाणि च, धीशब्देन महदहंकारौ । गुणानां वैपम्यात्परिणामाद्ब्रह्मणः परमेश्वरात्कर्तुर्भूतादीनां यद्विराड्रूपेण स्वरूपतश्च जन्म स सर्गः । विसर्गमाह । पुरुपो वैराजस्तत्कृतः पौरुपश्चराचरसर्गो विसर्ग इत्यर्थः ॥ ३ ॥ वैकुण्ठस्य भगवतो विजयः सृष्टानां तत्तन्मर्यादापालनेनोत्कर्पः । स्थितिः स्थानम् । स्वभक्तेपु तस्यानुग्रहः पोपणम् । तदनुगृहीतानां सतां मन्वन्तराधिपतीनां धर्मः सद्धर्मः । कर्मणां वासनाः, वेञ् तन्तुसंताने । ऊयन्ते कर्मभिः संतन्यन्त इत्यूतयः । यद्वा वृद्ध्यर्थात्संश्लेपार्थाद्वाऽवतेर्धातोरिदं रूपम् । ऊयन्ते कर्मभिर्वृंह्यन्ते संश्लिष्यन्त इति वा ऊतय इत्यर्थः ॥ ४ ॥ ॥ ॥ ॥२३॥

१ रिक्थं धन पैतृकं दायप्राप्तत्वेनाददते इति रिक्थादाः पुत्राः । २ पुरुषावयवैरिति पूर्वाध्यायस्य दशमश्लोकः । ३ नराणा समूहो नारं द्यति खण्डयति जीवाना जीवभावमिति नारदः । ४ एकस्यैवेति दशमस्याश्रयस्यैवेत्यर्थः । ५ ब्रह्मणः परमेश्वरादिति कारणसृष्टिः, पारमेश्वरी कर्मसृष्टिस्तु वैरिञ्चीत्यर्थः । ६ सद्धर्म इति । अत्र मन्वन्तराणीति प्रोक्त इत्यर्थः ।

हरेरवतारानुचरितमस्यानुवर्तिनां च सत्कथा ईशानुकथाः प्रोक्ता इत्यर्थः ॥ ५ ॥ निरोधमाह । अस्यात्मनो जीवस्य हरेर्योगनिद्रामनु पश्चाच्छक्तिभिश्चोपाधिभिः सह शयनं लयो निरोधः । अन्यथारूपमविद्ययाऽध्यस्तं कर्तृत्वादि हित्वा स्वरूपेण ब्रह्मतया व्यवस्थितिर्मुक्तिः ॥ ६ ॥ आभासः सृष्टिर्निरोधो लयश्च यतो भवत्यध्यवसीयते प्रकाशते च स परं ब्रह्मेति परमात्मेति प्रसिद्ध आश्रयः कथ्यते ॥ ७ ॥ आश्रयस्वरूपमपरोक्षानुभवेन स्पष्टं दर्शयितुमध्यात्मादिविभागमाह । योऽयमाध्यात्मिकः पुरुषश्चक्षुरादिकरणाभिमानी द्रष्टा जीवः स एवाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादिः । तत्रैकस्मिन्नेवोभयो द्विरूपो विच्छेदो यस्मात्स आधिभौतिकश्चक्षुर्गोलकाद्युपलक्षितो दृश्यो देहः पुरुष इति पुरुषस्य जीवस्योपाधिः । 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिश्रुतेः ॥ ८ ॥ एकमेकतराभाव इत्येतेषामन्योन्यसापेक्षसिद्धित्वेनानात्मत्वं दर्शयति । तथाहि । दृश्यं विना तत्प्रतीत्यनुमेयं करणं न सिध्यति, नापि द्रष्टा, नच तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादिः, नच तं विना कारणं प्रवर्तते, नच तद्विना दृश्यमित्येवमेकतरस्याभावे एकं नोपलभामहे । तत्र तदा तत्त्रितयमालोचनात्मकेन प्रत्ययेन यो वेद साक्षि-

अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ॥ पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥५॥ निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ॥ मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ॥६॥ आभासश्च निरोधश्च यतश्चाध्यवसीयते ॥ स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥७॥ योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः ॥ यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ॥८॥ एकमेकतराभावे यदा नोपलभामहे ॥ त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥ पुरुषोऽण्डं विनिर्भिद्य यदासौ स विनिर्गतः ॥ आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥१०॥ तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान् ॥ तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥ ॥

तया पश्यति स परमात्मा आश्रयः । तेषामपि परस्परमाश्रयत्वमस्त्येवेति तद्व्यवच्छेदार्थं विशेषणम् । स्वाश्रयोऽनन्याश्रयः स चासावन्येषामाश्रयश्चेति । तथाच भगवान्वक्ष्यति—'दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याखिलसिद्धसिद्धिः' इति । एतेनैव व्यभिचारित्वात्तेषां मायामयत्वमप्युक्तम् । अत एव 'पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ॥ लोकैरमुष्यावयवाः सपालैः' इत्यनेनोक्तो विरोधोऽपि परिहृतः ॥ ९ ॥ उक्तमेवाध्यात्मादिविभागं प्रपञ्चयन् 'यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ॥ यथासीत्तदुपाख्यास्ये' इति यत्प्रतिज्ञातं तदुत्पत्तिप्रकारमाह—पुरुष इत्यादिना । पुरुषो वैराजोऽण्डं विनिर्भिद्य पृथक्कृत्य विनिर्गतः, पृथक् स्थित इत्यर्थः । अयनं स्थानमन्विच्छन्विमृशन् । यतः शुचिः स्वयम् । अतः शुचीः शुद्धा अपो गर्भोदकसंज्ञा अस्राक्षीत्ससर्ज ॥१०॥ अप्सु वासं नारायणनामनिरुक्त्या स्पष्टयति । तेन अप्सु वासेन । यद्यस्मात्पुरुषो नरस्तस्मादुद्भवो यासां ता नारा आपोऽयनमस्येति नारायण इत्यर्थः । तदुक्तम्—'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति ॥ ११ ॥ ॥

---

१ यत इति हेतौ पञ्चमी । २ विच्छेदो भेदः विभाग इत्यर्थः । ३ एषामिति । आध्यात्मिकादीना त्रयाणां मिथः सापेक्षत्वेन सिद्धेस्तेषामाश्रयत्व नास्तीत्याचष्टे इत्यर्थः । ४ दृश्यप्रतीत्यनुमेयम् । ५ तद्विना करणं विना । ६ तत्रितयमाध्यात्मिकादित्रयम् । ७ स्कं० ११ अ० २२ श्लो० ३१ । ८ स्कंधः २ अ० १ श्लोक० १० । ९ स्कं० २ अ० ९ श्लो० ४५ । १० निरुक्त्या प्रकथनेन । व्युत्पत्त्येति यावत् ।

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥१२॥ एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः ॥ वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ॥ १३ ॥ अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ॥ अथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु ॥ १४ ॥ अन्तःशरीर आकाशात्पुरुषस्य विचेष्टतः ॥ ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥१५॥ अनु प्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु ॥ अपानन्तमपानन्ति नरदेवमिवानुगाः ॥ १६ ॥ प्राणेन क्षिपता क्षुत्तृडन्तरा जायते प्रभोः ॥ पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥ १७ ॥ मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ॥ ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥१८॥ विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ॥ जले वै तस्य सुचिरं निरोधः समजायत ॥ १९ ॥ नासिके निरभिद्येतां दोधूयति नभस्वति ॥ तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥ यदात्मनि निरालोकमात्मानं च दिदृक्षतः ॥ निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥ ॥ ॥ ॥

तत्र प्रभावमाह । द्रव्यमुपादानम् । कर्मादीनि निमित्तानि । जीवो भोक्ता । यस्यानुग्रहात्सन्ति, कार्यक्षमा भवन्तीत्यर्थः । २ । योग एव तल्पं शय्या तस्मात् । वीर्यं गर्भरूपं देहम् । हिरण्मयमिव प्रकाशबहुलम् ॥ १३ ॥ तस्यैव प्रपञ्चः अथेत्यादिना ॥ १४ ॥ अन्तः शरीरे य आकाशस्तस्मात्क्रियाशक्त्या तत्र विविधं चेष्टमानस्य सतः । ओज इन्द्रियशक्तिः । सहो मनःशक्तिः । बलं देहशक्तिः । तत शक्त्यात्मकात्सूक्ष्माद्रूपात्प्राणः सूत्राख्यः । महा मुख्यः. असुः प्राणः सर्वेषाम् ॥ १५ ॥ महत्त्वं दर्शयति । प्राणा इन्द्रियाणि यं प्राणन्तं चेष्टां कुर्वन्तमनु पश्चात् प्राणन्ति चेष्टां कुर्वन्ति अपानन्त चेष्टां त्यजन्तमनु अपानन्ति चेष्टां त्यजन्ति । राजानमनु भृत्या इव ॥ १६ ॥ क्षिपता चालयता निमित्तेन क्षुत्तृडादिकम् । प्रभोरिति विराड्जीवाभेदेनोपासनार्थमुक्तम् । आजायतेत्य । ततो जक्षतः, भक्षयितुमिच्छत इत्यर्थः । प्राक् प्रथमम् । निरभिद्यत विभक्तमभूत् ॥ १७ ॥ तात्वधिष्ठानम्, जिह्वेन्द्रियम्, नानारसो विषय, वरुणश्च देवता ज्ञातव्या । एवं सर्वत्राधिष्ठानमिन्द्रियं देवता विषय इत्येतच्चतुष्टयमनुक्तमप्यूह्यम् ॥ १८ ॥ विवक्षोर्वक्तुमिच्छोः मुखत एव । वह्निर्देवता, वागिन्द्रियम्, व्याहृतं भाषणम् । तयोरितीन्द्रियदेवताधीनत्वं कर्मणो दर्शयति ॥ १९ ॥ नभस्वति प्राणवायौ दोधूयति दोधूयमानेऽत्यन्तं प्रचलति सति । तत्र नासिकायां वायुर्देवता गन्धं वहतीति तथा । अनेन गन्धो विषयो दर्शितः । घ्राण इन्द्रियम् । जिघृक्षतो गन्धं ग्रहीतुमिच्छतः ॥ २० ॥ निरालोकं प्रकाशशून्यमासीदिति शेषः । निर्मक्षिकमितिवदव्ययीभावः । तदा आत्मानं देहं चकारादन्यच्च वस्तु दिदृक्षतः । अक्षिणी स्थानम्, ज्योतिरादित्यो देवता, चक्षुरिन्द्रियम्, ततो गुणस्य रूपस्य ग्रहो ग्रहणम् । अनेन रूपं विषयो दर्शितः ॥ २१ ॥ ॥ ॥ ॥ ॥

१ गर्भरूपमिति । चतुर्दशभुवनात्मकं समष्टिदेहम्—'अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रार्कसमद्युति' इति मनुवचनात् । २ स्वव्यापारं कुर्वतेत्यर्थः । ३ प्राणा व्यष्टिगता वायवः । मुख्यप्राणशक्त्यैव व्यष्टिप्राणशक्तिरित्येवात्र विवक्षितं । ४ प्रभोरन्तरा वैराजस्योदरमध्ये । ५ तयोर्वह्निवाचोः सबन्धि तदधीनं व्याहृतं वाग्व्यापार इत्यर्थः । ६ तस्य विराजः । ७ निरोधः प्राणवायुनिरोधः । ८ कर्मणो व्याहृतस्य । ९ प्रकाशाभाव इत्यर्थः ।

ऋषिभिर्वेदै[1]र्बोध्यमानस्य । तदात्मनः प्रबोधनं ग्रहीतुमिच्छतः । ततो गुणग्रहः शब्दस्य ग्रहणम् ॥ २२ ॥ मृदुत्वं च काठिन्यं च लघुत्वं च गुरुत्वं च आ उष्णत्वमीषदुष्णत्वं च शीततां चेत्यर्थः । यद्यप्यत्युष्णत्वमपीन्द्रियविषय एव तथापि तस्य जिघृक्षाभावादोष्णत्वमित्युक्तम् । गुर्वुष्णेति पाठे यणादेशश्छान्दसः । वस्तुन एतान् धर्मान् जिघृक्षतस्त्वङ् निर्भिन्ना । त्वगिन्द्रियाधिष्ठानं चर्म जातमित्यर्थः । तस्यां रोमाणीन्द्रियं, महीरुहाश्च देवता जाताः । वस्तुनि हस्तेनातोलिते लघुत्वगुरुत्वयोर्ज्ञानात्तयोरपि त्वगिन्द्रियविषयत्वमिति पौराणिकाः । तत्र त्वच्यन्तर्बहिश्च वातो वृत आवृत्य स्थितः । कर्तरि निष्ठा । कथंभूतः । त्वचा लब्धो गुणः स्पर्शो येन । अयमर्थः—त्वगिन्द्रियमेव वहिः कण्डूतिसहितं स्पर्शं गृह्णल्लोमशब्देनोच्यते, तत्र महीरुहाणां देवत्वम्, अन्तर्बहिश्च स्पर्शं गृह्णत् तदेव त्वक्शब्देनोच्यते, तत्र वातो देवता । तथाच तृतीये वक्ष्यति 'त्वचमस्य[2] विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः ॥ अंशेन लोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ निर्भिन्ना[3]न्यस्य चर्माणि लोकपालोऽनिलोऽविशत् ॥ प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते' इति । तत्र चर्माणीति चर्मोपलक्षिता त्वगित्यर्थः । प्राणेनांशेनेति,

बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ॥ कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥२२॥ वस्तुनो मृदुकाठिन्यलघुगुर्वोष्णशीतताम्॥जिघृक्षतस्त्वङ्निर्भिन्ना तस्यां लोम महीरुहाः ॥ तत्र चान्तर्बहिर्वातस्त्वचालब्धगुणो वृतः ॥२३॥ हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया ॥ तयोस्तु बलं[4]मिन्द्रश्च आदानमुभयाश्रयम् ॥२४॥ गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम्॥पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः[5] ॥२५॥ निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः ॥ उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम् ॥ २६ ॥ उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम्॥ ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः॥२७॥आसिसृप्सोः[6] पुरः पुर्या नाभिद्वारमपानतः॥तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम्॥२८॥

प्राणवायुव्यासेन त्वगिन्द्रियेणेत्यर्थः । वह्वृचश्रुतौ[7] त्वेक एवांशो निर्दिष्टः 'त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयः' इति ॥२३॥ रुरुहतुर्निर्भिन्नौ । बलमिन्द्रियम्, इन्द्रो देवता, तदुभयाश्रयमादानं कर्म ॥ २४ ॥ अभिकामिकामभीष्टां हितामित्यर्थः । पद्भ्यां सह यज्ञो विष्णुरेव स्वयं तदधिष्ठातृरूपेण स्थितः । कर्मभिरिति गत्याख्या कर्मशक्तिरिन्द्रियमुक्तम् । हव्यं क्रियत इति गतिप्राप्यं यज्ञार्थं द्रव्यं विषय इत्युक्तम् । नृभिरिति व्यष्टिजीवेष्वपीयमेव रीतिरिति दर्शयन्नत्राधिकारित्वं यज्ञादीनां दर्शयति ॥ २५ ॥ प्रजा अपत्यमानन्दोरतिरमृतं स्वर्गादि तदर्थिनः । शिश्नोऽधिष्ठानमुपस्थमिन्द्रियम् प्रजापतिश्चासीदिति ज्ञेयम् । तदुभयाश्रयं कामानां संबन्धि प्रियं सुखम् ॥ २६ ॥ धातुमलं भुक्तान्नादीनामसारांशं त्यक्तुमिच्छोः । गुदपायुमित्रोत्सर्गा अधिष्ठानेन्द्रियदेवताविषयाः ॥ २७ ॥ पुर्या देहात्पुरो देहान्तराणि आसिसृप्सोः सर्वतो गन्तुमिच्छोः । नाभिद्वारं निरभिद्यतेत्यनुषङ्गः । अपानतोऽपगच्छतः । पृथक्त्वं मरणम् । नाभ्यादीन्यधिष्ठानादीनि । नाभ्यां हि प्राणापानयोर्बन्धविश्लेषे मृत्युरिति प्रसिद्धम् ॥ २८ ॥ ॥ ॥ ॥

१ ऋषिभिर्ज्ञानसाधनैर्वेदादिभिरग्न्यादिभिर्वा । २ त्वचमिति तृतीयस्कन्धीयषष्ठाध्यायस्याष्टादशश्लोकः । ३ निर्भिन्नानीति स्कं० ३ अ० ६ श्लो० १६ । ४ 'बलवानिन्द्रः' इति पाठस्तत्र बलविशिष्ट इन्द्र इत्यर्थः । ५ नृभिः कर्तृभिः कर्मभिः कृत्वा हव्यं क्रियते । कर्मभिरिति बहुत्वं तद्वृत्तिभेदापेक्षया क्रम० । ६ आसिसृप्सोरपानत इति विशेषणद्वयं क्रियेच्छाक्रिययोर्भेदेनेति क्रम० । ७ ऐतरेयोपनिषदीत्यर्थः ।

अन्नपानानामादित्सोः संग्रहेच्छोः कुक्षिश्चान्त्राणि च नाड्यश्चासन् । तत्र कुक्षिरधिष्ठानम् । अन्त्राण्यन्नसंग्रहे करणमिन्द्रियस्थानीयम् । नाड्यस्तु पानं ग्रहे । तयोर्नाड्यन्त्रवर्गयोः क्रमेण नद्यः समुद्राश्च देवते । तुष्टिरुदरभरणं, पुष्टिस्तु रसपरिणामतः स्थौल्यम् । तदाश्रये तदुभयनिर्मित्ते । तत्रान्नसंग्रहेच्छोः कुक्ष्यन्त्रसमुद्रतुष्टय इति चतुष्टयम् । पेयसंग्रहेच्छोः कुक्षिनाडीनदीपुष्टय इति विवेकः ॥ २९ ॥ निदिध्यासोर्नितरां चिन्तयितुमिच्छोः । कामोऽभिलापः । हृदयमनश्चन्द्रसंकल्पा अधिष्ठानादयः ॥ ३० ॥ तदेवमधिदैवादिभेदं विभज्योक्त्वा तदंशभूतानां धात्वादीनां स्वरूपमाह—त्वगिति द्वाभ्याम् । त्वक् स्थूलम् । चर्म तदुपरि स्थितं सूक्ष्मम् । त्वगादयोऽस्थ्यन्ता द्वन्द्वैकवद्भावेन निर्दिष्टाः सप्त ये धातवस्ते भूम्यप्तेजोमयाः । तेषां च पाञ्चभौतिकत्वेऽपि वाय्वाकाशयोराहारादिरूपेण संवर्धकत्वाभावादेवमुक्तम् ॥३१॥ गुणात्मकानि गुणेषु शब्दादिष्वात्मा येषाम्, विषयाभिमुखस्वभावानीत्यर्थः । गुणाः शब्दादयः । भूतादिरहंकारस्ततः प्रकर्षेण भवन्तीति तथा । अहंकारकल्पितशोभनस्वभावाः, नतु वस्तुतस्तथेत्यर्थः । अत्र हेतुः—यतो मन एव सर्वविकाराणामात्मा स्वरूपम् । तामसेष्वेव विषयेषु संकल्प-

**आदित्सोरन्नपानानामासन्कुक्ष्यन्त्रनाडयः ॥ नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥२९॥ निदिध्यासोरात्ममायां हृदयं निरभिद्यत ॥ ततो मनस्ततश्चन्द्रः संकल्पः काम एव च ॥ ३० ॥ त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः ॥ भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः ॥ ३१ ॥ गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः ॥ मनः सर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ॥ ३२ ॥ एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ॥ मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ॥ ३३ ॥ अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम् ॥ अनादिमध्यनिधनं नित्यं वाङ्मनसः परम् ॥३४॥ अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ॥ उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ॥ ३५ ॥ स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक् ॥ नामरूपक्रिया धत्ते सकर्माऽकर्मकः परः ॥ ३६ ॥ ॥ ॥**

विकल्पमात्रं करोति, नतु हेयोपादेयविवेकम् । बुद्धिस्तु तथाभूतार्थविज्ञानरूपिणी नतु परमार्थग्राहिणीति वैराग्यार्थमुक्तम् । अनेनैव बुद्धिमनसोः स्वरूपं चोक्तम् ॥ ३२ ॥ उपसंहरति—एतदिति । प्रकृत्या सहाष्टभिः ॥३३॥ स्थूलमुक्त्वा सूक्ष्मं समष्टिलिङ्गशरीरमाह । अतःपरमस्य कारणभूतं सूक्ष्ममतीन्द्रियम् । यतोऽव्यक्तम् । तत्कुतः । यतो निर्विशेषणम् । अनादिमध्यनिधनमुत्पत्तिस्थितिलयशून्यम् । नित्यं सदैकरूपम्, अपक्षयादिशून्यमित्यर्थः । अत एव वाक् मनश्चेति द्वन्द्वैक्यम् । तस्मात्परम् ॥३४॥ उपासनार्थं भगवत्यारोपितं रूपद्वयमपवदति—अमुनी इति । न गृह्णन्ति वस्तुतो नाङ्गीकुर्वन्ति । यतो मायासृष्टे ॥ ३५ ॥ 'यद्रूपंगुणकर्मकः' इति यदुक्तं भगवता ब्रह्माणं प्रति तत्प्रपञ्चयितुं ब्रह्मादिरूपाणि तत्कर्माणि चाह—स इत्यादिना इत्थंभावेनेत्यतः प्राक्तनेन ग्रन्थेन । स भगवान् ब्रह्मरूपधृक् सन् वाच्यवाचकतया नामानि वाच्यतया रूपाणि क्रियाश्च धत्ते, सृजतीत्यर्थः । मायया सकर्मा सव्यापारः सन् वस्तुतस्त्वकर्मकः ॥ ३६ ॥ ॥

१ तदाश्रये तदुभये इति अत्रसमुद्राश्रया तुष्टिः' नाडीनद्याश्रया पुष्टिरित्यर्थः । दीपि० । २ भूम्यादित्रितयकार्यमुक्तमित्यर्थः । ३ सर्वेति कामक्रोधलोभमोहशोकादीनामित्यर्थः । ४ संकल्पस्तत्तत्पदार्थचिन्तनम् । कामस्तत्तद्विषयाभिलापः । ५ प्राणस्तु व्योमाम्बुवायुभिरारब्ध इति शेषः । व्योमाम्बुभ्यां पुष्टा वायवः प्राणः इत्यर्थः । तृतीयाबहुवचनमार्षमिति चक्रवर्ती । ६ पृथिव्यप्तेजोवाय्वाकाशमहदहंकारैः प्रकृत्या चेत्येवमष्टभिः । ७ सूक्ष्मतममित्यनेनैव सूक्ष्ममतिसूक्ष्मं चेति द्वितयं लभ्यते । अत्र सूक्ष्मं लिङ्गशरीरम् । अतिसूक्ष्म मायारूपम् । चक्र० । ८ अव्यक्तमिति न चक्षुरादिभिर्व्यज्यत इति तथा । ९ सर्वव्यावर्तकधर्मरहितम् । १० यद्रूपेति पूर्वाध्यायस्यैकत्रिंशः श्लोकः ।

एतत्प्रपञ्चयति—प्रजापतीनिति सार्धैस्त्रिभिः। द्वितीयान्तानां धत्त इत्यनेनान्वयः। तत्र प्रजापत्यादीनि नामानि तत्तद्वाच्यानि रूपाणि तत्तत्कर्माणि च ज्ञेयानि पृथक् तत्तदवान्तरभेदेन ॥३७॥३८॥ गिरीनित्यस्यानन्तरं नृपेति संबोधनम् ॥३९॥ द्विविधाः स्थावरजङ्गमरूपेण। चतुर्विधाः जरायुजाण्डजस्वेदजोद्भिज्जरूपेण। जलस्थलनभांस्योकांसि येषां तानपि धत्त इति पूर्वेणान्वयः। यच्च राज्ञा पृष्टं 'यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम' इति तस्यापि प्रसङ्गादनेनैवोत्तरमाह। कुशला उत्तमाः, अकुशला नीचाः। मिश्रा इति पदान्तरम्। मिश्रा मध्यमाः। कर्मणां पुण्यपापमिश्राणां गतयः फलानि ॥४०॥ सत्त्वादिभेदेन कर्मगतिवैचित्र्यं प्रपञ्चयति—सत्त्वमिति सार्धेन। सत्त्वादयस्तिस्रो गतयः। सुरादिशब्दा ऋष्यादीनामुपलक्षणार्थाः। अन्याभ्यां गुणाभ्यां स्वभावो गुणः उपहन्यतेऽनुविध्यते ॥४१॥

प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् ॥ सिद्धचारणगन्धर्वान्विद्याध्रासुरगुह्यकान् ॥३७॥ किन्नराप्सरसो नागान्सर्पान्किंपुरुषोरगान् ॥ मातॄ रक्षःपिशाचांश्च प्रेतभूतविनायकान् ॥३८॥ कूष्माण्डोन्मादवेतालान्यातुधानान् ग्रहानपि ॥ खगान्मृगान्पशून्वृक्षान् गिरीन्नृप सरीसृपान् ॥३९॥ द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः ॥ कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः ॥४०॥ सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः ॥ तत्राप्येकैकशो राजन्भिद्यन्ते गतयस्त्रिधा ॥ यदैकैकतरोऽन्याभ्यां स्वभाव उपहन्यते ॥४१॥ स एवेदं जगद्धाता भगवान् धर्मरूपधृक् ॥ पुष्णाति स्थापयन्विश्वं तिर्यङ्नरसुरात्मभिः ॥४२॥ ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ॥ सन्नियच्छति कालेन घनानीकमिवानिलः ॥४३॥ इत्थंभावेन कथितो भगवान् भगवत्तमः ॥ नेत्थंभावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥४४॥ नास्य कर्मणि जन्मादौ परस्यानुविधीयते ॥ कर्तृत्वप्रतिषेधार्थं माययारोपितं हि तत् ॥ ४५ ॥ ॥ ॥

ब्रह्मरूपेण स्रष्टृत्वमुक्त्वा विष्णुरूपेण पालकत्वमाह। स एव भगवांस्तिर्यगाद्यवतारैरिदं विश्वं स्थापयन् पालयन् धर्मरूपेण पुष्णाति भोगैः संवर्धयति ॥४२॥ रुद्ररूपेण संहर्तृत्वमाह—तत इति। आत्मनः सकाशाद्यदिदं सृष्टं तत्सन्नियच्छति संहरति ॥४३॥ कर्तृत्वाद्यपवादेन दशमस्य शुद्धिमाह। इत्थंभावेन स्रष्टृत्वादिरूपेण 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिश्रुत्या कथितः। सूरयस्तु परं केवलमेवंरूपेणैव द्रष्टुं नार्हन्ति ॥४४॥ तत्किम्। यतः अस्य विश्वस्य जन्मादौ कर्मणि परस्येश्वरस्येत्थंभावः कर्तृत्वं नास्ति। श्रुत्यापि तात्पर्येण न प्रतिपाद्यते। किंत्वनुविधीयतेऽनूद्यते। किमर्थम्, कर्तृत्वप्रतिषेधार्थम्। हि यतो माययारोपितं प्रकाशितम्। तथाच श्रुतिः 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्', 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्याद्या ॥ ४५ ॥

१ प्रजापतीन्मरीचिप्रमुखानित्यर्थः। २ द्वितीयस्कन्धीयाष्टमाध्यायस्य त्रयोदशं पद्यमिदम्। ३ अनुविध्यत इति। यथा मनुष्याणां स्वभावतो राजसत्वेपि गुणान्तरानुवेधात्सात्त्विकत्वं तामसत्वं च प्रतीयते। ४ 'किंपुरुषान्नरान्' इति पाठः। ५ तत्रेति यदा एकैकतरः स्वभावो गुणोऽन्याभ्यां गुणाभ्यामुपहन्यतेऽभिभूयते तत्र तदा एकैकशोपि गतयस्त्रिधा भिद्यन्त इत्यन्वयः। अत्र त्रिधा भिद्यन्त इत्येतदपि स्थूलदृष्ट्यैवोक्तम्। वस्तुतस्तु तत्तद्गुणतारतम्येन तत्तत्पुण्यपापतारतम्यानुसारेण नानाविधा गतयो भवन्तीत्यर्थः। दीपि०। ६ 'जगद्धर्ता' इति पाठः। ७ 'तत्काले' इति पाठः। ८ धर्मो विष्णुस्तद्रूपेणेति धर्मरूपधृगित्यस्यार्थः। धर्मरूपधृक् विष्णुरूपधृक् विश्वं मर्यादायां स्थापयन् मत्स्याद्यवतारैः पुष्णाति पालयतीति बाल०। ९ तत्पूर्वोक्तं किं, कुतः इत्यर्थः। १० अनूद्यत इति। उक्तस्यार्थस्य पुनः कर्तव्यत्वेनोपादानमनुवादः। अप्रसक्तस्य च प्रतिषेधो न संभवतीत्यतः प्रसक्तप्रतिषेधार्थमेवात्रानुवादः क्रियते। अनुवर्ण्यते 'अनुवर्त्यते' इति पाठौ। ११ कर्तृत्वेति। अधिष्ठानज्ञाने हि तत्रारोपितस्य प्रतिषेध इति भावः।

उक्तमर्थमुपसंहरति—अयं त्विति । ब्रह्मणः संबन्धी कल्पो महाकल्पो विकल्पोऽवान्तरस्तत्सहित उदाहरणत्वेन संक्षेपत उक्तः । कथंभूतः । यत्र महाकल्पे प्राकृता महदादिसर्गा अवान्तरकल्पे च वैकृताः । स्थावरा विसर्गा इत्ययं विधिः प्रकारोऽन्यैर्महाकल्पादिभिः साधारणः ॥ ४६ ॥ वक्ष्यमाणं विस्तरं प्रतिजानीते । परिमाणं स्थूलं सूक्ष्मं च कल्पस्य लक्षणमियानेवंरूप इति तद्विग्रहमवान्तरकल्पं मन्वन्तरादिरूपं विभागं च यथावद्विस्तरेण पुरस्तात्तृतीयस्कन्धे व्याख्यास्यामि । तत्र पाद्मं कल्पमथो इति कार्त्स्न्येन व्याख्यायमानं शृणु ॥ ४७ ॥ यदर्थं सृष्ट्यादिनिरूपणं तदेव साक्षाच्छ्रोतुकामः कथान्तरं पृच्छति—यदाहेति । क्षत्ता विदुरः । भुवः संबन्धीनि तीर्थानि । यद्वा भुवः क्षेत्राणि चेति ॥ ४८ ॥ कौषारवेर्मैत्रेयस्य तस्य क्षत्तुश्चाध्यात्मज्ञानसंश्रितः संवादः[1] ॥ ४९ ॥ पुनरागतवान् तत्र च निमित्तं ब्रूहि ॥ ५० ॥ राज्ञा पृष्ट इति । अयमर्थः—यद्यूयं पृच्छथ इदमेव राजापि शुकं पृष्टवान् । शुकोऽपि विदुरमैत्रेयसंवादं पुर-

अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ॥ विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥ परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥ ४७ ॥ ॥ शौनक उवाच ॥ यदाह नो भवान्सूत क्षत्ता भागवतोत्तमः ॥ चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्सुदुस्त्यजान् ॥ ४८ ॥ कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंश्रितः ॥ यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह ॥ ४९ ॥ ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ॥ बन्धुत्यागनिमित्तं च तथैवागतवान्पुनः ॥ ५० ॥ ॥ सूत उवाच ॥ राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः ॥ तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां द्वितीयस्कन्धे पुरुषसंस्थानुवर्णनं नाम दशमोऽध्यायः ॥ १० ॥ ॥ द्वितीयस्कन्धः समाप्तः ॥ छ ॥

स्कृत्य ये पूर्वं राज्ञा कृताः प्रश्नास्तदनुसारेण सर्वं पुराणार्थमवोचत् । तदेवाहं वोऽभिधास्यामि तथैव शृणुतेति ॥ ५१ ॥ श्रीमद्भागवतं येन स्वब्रह्ममुखतो[2] मितम् ॥ ब्रह्मनारदयोः प्रोक्तं तं वन्दे गुरुमीश्वरम् ॥ १ ॥ यत्सूत्रयन्त्रितं विश्वं नरीनर्ति जगत्त्रयम् ॥ सन्तस्तमेव पृच्छन्तु यदत्र स्खलितं मम ॥ २ ॥ द्वितीयस्कन्धसंबन्धिपदभावार्थदीपिका ॥ उद्दीप्यतामियं सद्भिर्यथा स्वात्तत्त्वदीपिका ॥ ३ ॥ ईक्षन्तामिच्छया सन्तः क्षमन्तां मम साहसम् ॥ मया हि स्वीयबोधाय कृतमेतन्न सर्वतः[3] ॥ ४ ॥ ॥ इति श्रीमद्भागवतटीकायां श्रीधरस्वामिविरचितायां भावार्थदीपिकायां द्वितीयस्कन्धे दशमोऽध्यायः ॥ १० ॥ ॥ ॥ द्वितीयस्कन्धः समाप्तः ॥ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ ॥ ॥ ॥



१ 'यथैव' इति कचित्पाठः । २ स्वमुखतो ब्रह्ममुखतश्च स्वमुखेन ब्रह्मणे ब्रह्ममुखेन नारदायेत्यर्थः । ३ सार्वविभक्तिकस्तसिः । सर्वेषामर्थे इत्यर्थः । क्वचिन्न गर्वत इति पाठः ।

श्रीगणेशाय नमः ॥ ॥ श्रीगोपालकृष्णाय नमः ॥ तृतीये तु त्रयस्त्रिंशदध्यायैः सर्गवर्णनम् ॥ ईशेक्षया गुणक्षोभात्सर्गो ब्रह्माण्डसंभवः ॥ १ ॥ तत्र तु प्रथमेऽध्याये वन्धून्हित्वा गैतायुषः ॥ निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ २ ॥ भगवद्ब्रह्मसंप्रोक्तं संक्षिप्तं वर्णितं पुरा ॥ प्राह भागवतं शेषप्रोक्तं विस्तरतः पुनः ॥ ३ ॥ द्वेधा हि श्रीमद्भागवतसंप्रदायप्रवृत्तिः । एकतः संक्षेपतः श्रीनारायणब्रह्मनारदादिद्वारेण, अन्यतस्तु विस्तरतः शेषसनत्कुमारसांख्यायनादिद्वारेण । तत्र द्वितीये श्रीनारायणब्रह्मसंवादेन संक्षेपतोऽहमेवासमित्यादि चतुःश्लोक्या श्रीभागवतं निरूपितम् । तदेव ब्रह्मनारदसंवादेन दशलक्षणतया किंचिद्विस्तरेणोक्तम् । तदेव शेषोक्तमतिविस्तरतो वक्तुं तृतीयाद्यारम्भः । तत्र तृतीये प्रथमं क्षत्तुर्मैत्रेयसंगमश्चतुर्भिरध्यायैस्ततोऽष्टभिः सविसर्गः सर्गप्रपञ्चस्ततो विसर्गप्रस्तावेन सप्तभिर्वराहावतारस्तत एकेन विसर्गसमाहारस्तत्प्रसङ्गेन चतुर्भिः कपिलावतारस्ततो नवभिः कपिलाख्यानमिति त्रयस्त्रिंशताऽध्यायैस्तृतीयस्कन्धप्रवृत्तिः । तत्र द्वितीयस्कन्धान्ते 'परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥' इति प्रतिज्ञातमर्थं विस्तरेण निरूप-

ॐ नमो भगवते वासुदेवाय ॥ ॥ श्रीशुक उवाच ॥ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल ॥ क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥ यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः ॥ पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥ ॥ राजोवाच ॥ कुत्र क्षत्तुर्भगवता मैत्रेयेणाऽऽस संगमः ॥ कदा वा सह संवाद एतद्वर्णय नः प्रभो ॥ ३ ॥ न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः ॥ तस्मिन्वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥ ॥ सूत उवाच ॥ स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ॥ प्रत्याह तं सुबहुवित्प्रीतात्मा श्रूयतामिति ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ॥ भ्रातुर्यविष्ठस्य सुतान्विबन्धून् प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥ यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् ॥ न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि ॥ ७ ॥

यितुमितिहासं प्रस्तौति भगवान् शुकः—एवमिति द्वाभ्याम् । ऋद्धिमत्सर्वसंपद्भिः संपूर्णम् ॥ १ ॥ किंचातिश्लाघ्यं त्यागानर्हमित्याह । यद्वै प्रसिद्धं गृहं वः पाण्डवानां मन्त्रकृद्धौत्यकर्ता सन्नयं श्रीकृष्णः । बुद्धिसन्निधानादयमिति निर्देशः । पौरवेन्द्रो दुर्योधनस्तस्य गृहं हित्वाऽनाहूत एव प्रविवेश । तत्र हेतुः—आत्मसात्कृतमात्मीयत्वेन गृहीतम् ॥ २ ॥ कुत्र संगम आस बभूव ॥ ३ ॥ वरीयसि श्रेष्ठे । अल्पस्यार्थस्योदयो यस्मात्तथाभूतो न भवति । साधुवादेन सतामनुमोदनेनोपबृंहितः संवर्धितः । यद्वा साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः ॥ ४ ॥ ५ ॥ त्यागानर्हस्यापि गृहस्य त्यागे हेतुत्वेन कौरवापराधानाह—यदेत्येकादशभिः । एतेषां च तदा स क्षत्ता अयादित्येकादशे क्रियासंबन्धः । यविष्ठस्य कनिष्ठस्य पाण्डोः । विबन्धून्पितृहीनान् ॥ ६ ॥ कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्याः आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः सकुचकुङ्कुमानि रिपुस्त्रीणां वा तद्भर्तृवधेन हरन्त्याः ॥ ७ ॥ ॥ ॥ ॥

१ 'ईषेच्छया' इति पाठः । २ गतायुषः वन्धून् हित्वेति सबन्धः । ३ भगवता ब्रह्मणे सम्यक्प्रोक्तम् । ४ सविसर्गः कारणादिसृष्टिसहितः सर्गप्रपञ्चः कार्यसृष्टिविस्तारः । ५ 'ऋपिवर्योऽथ' इति पाठः । ६ श्रूयतामिति भावे लकारः । ७ राजा धृतराष्ट्रः । ८ आत्मीयगृहे नाह्वानापेक्षेत्यर्थः । ९ एतेषां चेति यदेत्यादिदशपद्यानाम् । १० तदा सादृशापराधदर्शनकाले । ११ अत्र द्रौपद्यश्रुस्रावस्य कारणत्वं रिपुस्त्रीकुङ्कुमहरणस्य कार्यत्वमिति चतुर्थ्यतिशयोक्तिरुत्प्रेक्षा च व्यञ्जिता । १२ क्षालयन्त्याः इत्यर्थः ।

सत्यावलम्बस्य सत्याश्रयस्य वनात्प्रत्यागतस्य समयेन पूर्वकृतेन दायमंशं याचमानस्य यद्यदा नादात्र ददौ । तमो मोहं जुषाणः ( पुत्रं सेवमानः, अविवेकं वा ) ॥ ८ ॥ यानि वचनानि पुंसां भीष्मादीनाममृतायनान्यमृतस्रावीणि राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने । क्षतो नष्टः पुण्यलेशो यस्य सः । न सुखकीर्तिधर्मादिहेतुः किंतु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एवासीत्तस्यापि नष्टत्वादनादृतवानित्यर्थः ॥ ९ ॥ इदानीं विदुरस्यैव कृतं पराभवं दर्शयति—यदेत्यादिषड्भिः । यदा पूर्वजेन धृतराष्ट्रेण मन्त्राय चोपहूतोऽन्तर्गृहं प्रविष्टो मन्त्रं पृष्टः सन्नथानन्तरं तदाह । किम् । मन्त्रिणोऽद्यापि यद्वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदन्ति ॥ १० ॥ तदेवाह—अजातशत्रोरिति त्रिभिः । तव आगोऽपराधं सहमानस्य दायं प्रतियच्छ देहि । यत्रापराधेऽनुजैः सह वर्तमानो वृकोदररूपोऽहिः क्रोधेन श्वसन्वर्तते । यद्यस्मात्त्वमलमत्यर्थं बिभेषि ॥ ११ ॥ ननु मम तादृशाः पुत्रा बहवः सन्तीति गर्वं मा कृथा इत्याह । पार्थांस्तु मुकुन्द आत्मी-

द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य॥ न याचतोऽदात्समयेन दायं तमोजुषाणो यदजातशत्रोः ॥८॥ यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः ॥ न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः ॥ ९ ॥ यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ॥ अथाह तन्मन्त्रदृशां वरीयान्यन्मन्त्रिणो वैदुरिकं वदन्ति ॥ १० ॥ अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः ॥ सहानुजो यत्र वृकोदराहिः श्वसन्रुषा यत्त्वमलं बिभेषि ॥ ११ ॥ पार्थांस्तु देवो भगवान्मुकुन्दो गृहीतवान्सक्षितिदेवदेवः ॥ आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥ स एष दोषः पुरुषद्विडास्ते गृहान्प्रविष्टोऽयमपत्यमत्या ॥ पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशैवं कुलकौशलाय ॥ १३ ॥ इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ॥ असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥ ॥ ॥ ॥

यत्नेन गृहीतवान् । स च देवैस्तत्रापि भगवान्न तु प्राकृतः । किंच सह क्षितिदेवैर्विप्रैर्देवैश्चेन्द्रादिभिर्वर्तमानः । यतोऽसौ तत्रैव विप्रा देवाश्चेत्यर्थः । स च स्वपुर्यामेव सुखमास्ते, न त्वन्यत्र गतः । किंच यदुदेवानां देवः पूज्यः । यतोऽसौ तत्रैव यदुप्रवीरा इत्यर्थः । किंच नृदेवेषु मण्डलेश्वरेषु दीव्यन्ति प्रकाशन्त इति नृदेवदेवा राजानः, विनिर्जिता अशेषा नृदेवदेवा येन । यतोऽसौ तत्रैव सर्वे राजानः । अतः पार्थानां दायं देहीति ॥१२॥ दुर्योधनस्तन्न मन्यत इति चेदत आह । स एष मूर्तो दोष एव गृहान्प्रविष्ट आस्ते । दोषत्वे हेतुः—पुरुषद्विट् श्रीकृष्णद्वेष्टा । कोऽसौ । यं त्वमपत्यमत्या पुष्णासि न त्वपत्यमसौ । न पतत्यस्मादिति ह्यपत्यं प्राहुः । गता श्रीर्यस्मात्स त्वमित्याक्रोशति । अत एनमशैवममङ्गलमाशु त्यज । कथं पुत्रस्त्याज्यस्तत्राह । कुलस्य कौशलाय । 'त्यजेदेकं कुलस्यार्थे' इति हि न्यायः ॥ १३ ॥ इत्यूचिवानेवमुक्तवान् । असौ क्षत्ता विदुरः सतां स्पृहणीयं शीलं यस्य स कर्णदुःशासनशकुनिसहितेन दुर्योधनेनासत्कृतस्तिरस्कृतः ॥ १४ ॥ ॥

१ पुत्रमित्यादिको भागः काचित्कः । २ 'अमृतावहानि' इति पाठः । ३ 'हृतपुण्यलेशः' इति पाठः । ४ 'तं मन्त्रकृताम्' इति पाठः । ५ 'अपत्यबुद्ध्या' इति पाठः । ६ तत्रापि देवेष्वपि । ७ यतः यस्मिन्पक्षे । एवमग्रेऽपि । ८ अशैवमिति । शिव एव शैवः, न शैवोऽशैवः स्वार्थिकोऽण् । ९ 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्' इति समग्रवाक्यं ज्ञेयम् ।

तिरस्कारमाह—क इति । दासीसुतो ह्यत्राह्वानानर्हः । जिह्मश्च कुटिलः । जिह्मतामाह । यस्य बलिनाऽन्नेन पुष्टस्तस्मिन्नेव प्रतीपः प्रतिकूलः परेषां कार्ये वर्तते । अतः पुरान्निर्वास्यताम् । श्वसानः श्वसन् जीवमात्रशेष इत्यर्थः । पाठान्तरे श्मशानवदमङ्गलः ॥ १५ ॥ अत्युल्बणैः कर्णयोर्बाणवत्प्रविशद्भिः परुषवाक्यैर्मर्मसु ताडितोऽपि गतव्यथः । तत्र हेतुः—मायासुरु बहु मानयन्नहो मायाया माहात्म्यमिति तामेव तत्र हेतुं मन्यमानस्तन्निःसारणात्पूर्वं स्वयमेव अयान्निर्जगाम । किं कृत्वा । एते नूनं मरिष्यन्ति किं धनुषेति तस्य द्वारि धनुर्निधाय । यद्वा भीमादिभिः संगत्यास्माभियोत्स्यतीति मा शङ्कीरिति धनुर्निधानम् ॥ १६ ॥ ततो निर्गतस्य तीर्थाटनप्रकारमाह—स इत्यष्टभिः । स गजाह्वयान्निर्गतः संस्तीर्थं पादौ यस्य तस्य हरेः पदानि क्षेत्राणि पुण्यचिकीर्षयाऽन्वाक्रमत्प्रत्यपद्यत । कौरवाणां पुण्येन लब्ध इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितम् । उर्व्यां सहस्रमूर्तिर्ब्रह्मरुद्राद्यनेकमूर्तिः संस्तीर्थपाद्यानि यान्यधिष्ठाय स्थितः तानि

क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ॥ तस्मिन्प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥ स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितोऽपि ॥ स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥ स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ॥ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां स्वधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥ पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु ॥ अनन्तलिङ्गैः समलंकृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥ गां पर्यटन्मेध्यविविक्तवृत्तिः सदाप्लुतोऽधःशयनोऽवधूतः ॥ अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १९ ॥ इत्थं व्रजन्भारतमेव वर्षं कालेन यावद्गतवान्प्रभासम् ॥ तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥ तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम् ॥ संस्पर्धया दग्धमथानुशोचन्सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २१ ॥ ॥ ॥

तानि जगामेत्यर्थः ॥ १७ ॥ पुण्यानि यान्युपवनादीनि तेषु कुञ्जं लतादिगूढस्थानम् । अपङ्कानि तोयानि येषां तेषु सरित्सरःसु च तीर्थेष्वायतनेषु क्षेत्रेषु च । कीदृशेषु । अनन्तस्य लिङ्गैर्मूर्तिभिः सम्यगलंकृतेषु । अनन्य एकाकी ॥ १८ ॥ किंच गां पर्यटन् व्रतानि चेरे आचरत् । मेध्या पवित्रा विविक्ताऽसंकीर्णा वृत्तिर्जीविका यस्य । सदाप्लुतः प्रतितीर्थं स्नातः । अधः शयनं यस्य । अवधूतोऽसंस्कृतदेहः, अवधूतवेषो वल्कलादिधारी । अत एव स्वैरलक्षितः ॥ १९ ॥ एकस्यैव चक्रं सैन्यं यस्याम् । एकमेव राजचिह्नं श्वेतातपत्रं यस्यां ताम् । अजितेन श्रीकृष्णेन सहायेन ॥ २० ॥ तत्र प्रभासे परस्परस्पर्धया निमित्तभूतया सुहृदां कौरवाणां विनष्टिं विनाशमशृणोत् । परस्परनाशे दृष्टान्तः—वेणुजं वह्निं संश्रयते यद्वनं तद्यथा दग्धं भवति तथा प्रत्यगुदङ्मोंभिमुखम् ॥ २१ ॥ ॥

१ अतः शत्रुकार्यपरत्वात् । २ 'पुराच्छ्मशानः' इत्येवंरूपे । ३ पुण्यचिकीर्षया तद्दुःसङ्गप्रायश्चित्तेच्छया । क्रम० । अतो भक्तद्रोहिसङ्गलक्षणदोपग्रस्तमात्मानं मन्यमानो भगवद्दर्शनार्थमपि न जगामेति ज्ञेयम् । दीपि० । ४ भ्रातुः पुर इत्यधिक्षेपस्योत्कर्षो व्यञ्जितः । ५ 'स्मयन्' इति पाठे ईषद्धसन् । ६ 'उर्व्यामधिष्ठितः' इति पाठः । ७ विविक्तत्वं परवृत्तिभिरमिश्रत्वम् । ८ अवधूतवेषत्वादेव । ९ सुहृदां यादवानामिति केचिद्व्याचक्षते । १० प्रवाहाभिमुखम् ।

त्रितादीनामेकादशतीर्थानि तत्तन्नाम्ना प्रसिद्धान्यासेवितवान् ॥२२॥ द्विजदेवैर्ऋषिभिर्देवैश्च कृतानि अङ्गमङ्गं प्रति वर्तन्ते इति प्रत्यङ्गान्यायुधानि तेषु मुख्यं चक्रं तेनाङ्कितानि मूर्धन्यहेमकुम्भेषु चिह्नितानि मन्दिराणि येषु तानि नानाविधानि विष्णोरायतनानि क्षेत्राणि तीर्थानि चासिषेवे । येषां चक्राङ्कितमन्दिरवतां दर्शनाच्छ्रीकृष्णस्मरणं भवति ॥ २३ ॥ अतिव्रज्यातिक्रम्य । यावदुद्धवः आसस्तावत्स्वयमपि यमुनामुपेत्य ॥ २४ ॥ स विदुरः । प्राक्तनयं पूर्वशिष्यं नीतिशास्त्रे । पाठान्तरे प्राप्तो नयो नीतिशास्त्रं येन तम् । प्रतीतं प्रख्यातम् । स्वानां ज्ञातीनां भद्रमपृच्छत् । प्रश्ने हेतुः—भगवतः प्रजानां पोष्याणाम् ॥ २५ ॥ प्रथमं तावद्रामकृष्णयोः कुशलं पृच्छति । कच्चिदिति प्रश्ने । स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनयेहावतीर्णौ कुशलमासाते वर्तेते । कृत-

तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ॥ तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥ अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ॥ प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात्कृष्णमनुस्मरन्ति ॥२३॥ ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान्कुरुजाङ्गलांश्च ॥ कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥२४॥ स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ॥ आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम् ॥२५॥ कच्चित्पुराणौ पुरुषौ स्वनाभ्यपाद्मानुवृत्त्येह किलावतीर्णौ ॥ आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥२६॥ कच्चित्कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः ॥ यो वै स्वसॄणां पितृवद्ददाति वरान्वदान्यो वरतर्पणेन ॥२७॥ कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ॥ यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान्स्मरमादिसर्गे ॥२८॥ कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ॥ यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २९ ॥ कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः ॥ असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३० ॥ ॥ ॥ ॥

क्षणौ दत्तावसरौ सर्वेषां कृतोत्सवाविति वा । तयोर्नित्यकुशलत्वेऽप्युक्तविशेषणविशिष्टौ शूरसेनस्य गृहे कच्चिदासाते इति प्रश्नः ॥ २६ ॥ यदूनां कुशलं पृच्छति नवभिः । भामः पूज्यः । शौरिर्वसुदेवः । यद्वा भामो भगिनीभर्ता । कुन्ती वसुदेवस्य भगिनी । अतो देवकी पाण्डोर्भगिनीति लोकव्यवहारः । वरानर्थान् । वदान्योऽत्युदारः । वराणां तत्पतीनां तर्पणेन संतर्पणेन सह ॥ २७ ॥ वरूथाधिपतिः सेनानीः । आदिसर्गे पूर्वजन्मनि स्मरं कामं संतमभिलेभे पुत्रं लब्धवती ॥ २८ ॥ सात्वतादीनामधिप उग्रसेनः । शतपत्रनेत्रः श्रीकृष्णः । नृपासनाशां राज्याभिलाषं परिहृत्य प्राणभयेन दूरात्स्थितमित्यर्थः ॥ २९ ॥ हे सौम्य । हरेः सुतस्तेन सदृक्षः सदृशः साधु सुखमास्ते । गुहं स्वामिकार्तिकेयम् । अग्रे पूर्वजन्मनि यो भवान्या गर्भे धृतस्तम् ॥ ३० ॥ ॥ ७ ॥ ॥ ७ ॥

१ त्रिततीर्थोशनस्तीर्थादिनाम्ना । २ 'प्राप्तनयं' इत्येवंरूपे । ३ ददाति अदादित्यर्थः । ४ 'भगवत्तः' इति पाठः । ५ निश्चिन्ततया स्वानन्दानुभवे निर्मितक्षणौ वा । भारनिराकरणेन दत्तसुरसमयाविलर्थः । ६ पूर्वार्थे भामशब्दस्य पूज्यतारूपेऽर्थे प्रसिद्धेऽपि हेतुर्नोक्त इत्यरुचेराह—यद्वेति । ७ तर्पणेन तृप्तिकरवस्तुजातप्रदानेन । ८ प्राणभयेनेति कंसो मत्प्राणान्हरिष्यतीति भयेन राज्याशां परिहृत्य दूरात्स्थितं यमुग्रसेनं कृष्णोऽभ्यषिञ्चदित्यन्वयः । 'शापभयेन दूरात्स्थित्वा इत्यर्थ' इत्यपि पाठः क्वचित् ।

युयुधानः सात्यकिः । क्षेमं कुशलमास्ते । फाल्गुनादर्जुनाल्लब्धं धनुषो रहस्यं येन । तदीयामधोक्षजसंबन्धिनीम् ॥ ३१ ॥ श्वफल्कपुत्रोऽक्रूरः । बुधो विद्वान् । अतो भगवन्तं प्रपन्नोऽनुसृतः । अत एवानमीवो निष्पापः । भक्तौ लिङ्गम् । योऽचेष्टत व्यलुठत् । प्रेम्णा विभिन्नं विदीर्णं धैर्यं यस्य सः । स्वस्ति क्षेममास्ते ॥ ३२ ॥ देवकनामा यो भोजस्तस्य पुत्र्या देवक्याः । विष्णुः प्रजा पुत्रो यस्यास्तस्याः देवमातुरदितेरिव । कच्चिच्छिवम् । यज्ञवितानरूपमर्थं त्रयी यथा प्रकाशकतया बिभर्ति तथा दधार ॥ ३३ ॥ सात्वतानामुपासकानां कामान् दोग्धि पूरयतीति कामदुघः । भगवत्त्वे हेतुः—यं शब्दस्य शास्त्रस्य योनिं कारणमामनन्ति वेदाः । कुतः । मनोमयं मनसः प्रवर्तकम् । तत्कुतः । सत्त्वस्यान्तःकरणस्य चतुर्विधस्य तुरीयं तत्त्वं चतुर्थमधिदैवम् । चित्ताहंकारबुद्धिमनसामन्तःकरणभेदानां क्रमेण वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा ह्यधिष्ठातारः । मनसश्च शब्दयोनित्वं प्रसिद्धम् । 'मनः पूर्वरूपं । वागुत्तररूपम्' इति । तथा 'अन्योऽन्तर

क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः ॥ लेभेऽञ्जसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥ कच्चिद्बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ॥ यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥ कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ॥ या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥ अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ॥ यमामनन्ति स्म ह शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३४ ॥ अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ॥ हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥ अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ॥ दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥ किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् ॥ यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥ ॥ ७ ॥

आत्मा मनोमयः' इति प्रस्तुत्य 'तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः' इत्यादिश्रुतेः । तथाच शिक्षायाम् 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' इत्यादि ॥ ३४ ॥ अपिस्वित्किंस्वित् अन्ये च स्वस्ति चरन्ति । निजस्य देहादिव्यतिरिक्तस्यात्मनो दैवं श्रीकृष्णमनन्यवृत्त्यैकान्तभक्तिभावेन ये सम्यगनुव्रताः अनुसृताः । हृदीकश्च सत्यभामाया आत्मजश्च चारुदेष्णश्च गदश्चादिर्येषां तेऽपि ॥३५॥ इदानीं कुरून् पृच्छति षड्भिः । अपि किम् । स्वदोर्भ्यां स्वबाहुवद्वर्तमानाभ्यां विजयाच्युताभ्यामर्जुनकृष्णाभ्यां धर्ममार्गेण धर्मो युधिष्ठिरः सेतुं धर्ममर्यादां परिपाति । यस्य सभायां विजयानुवृत्त्या जयपरम्परया, अर्जुनस्य सेवयेति वा । एवंभूतं यस्यैश्वर्यमित्यर्थः ॥ ३६ ॥ कृताघेषु कृतापराधेषु कुरुषु स्वकर्तृकमघं दीर्घतमं बहुकालानुचिन्तितमहिवदत्यमर्षी भीमः किं व्यमुञ्चन्नो वा । गदाया विचित्रं विविधं मार्गं चरतः ॥ ३७ ॥ ॥

१ अत एव प्रपन्नत्वादेव । २ शब्दो वेदो योनिर्ज्ञप्तिकारण यस्य स तम् । विज० । ३ योगपरिशुद्धमनोग्राह्यम् इति वीर० । ४ यतिभिर्ब्रह्मविद्भिरपि दुर्लभाम् । ५ स्वगर्भेणेति लौकिकोक्तिः । वस्तुतस्तु मनसैव दधार 'काष्ठा यथानन्दकर मनस्तः' इति दशमप्रामाण्यात् । अत एव दृष्टान्ते प्रकाशकतयेति स्वामी व्याचख्यौ । ६ विजयस्य सर्वोत्कर्षस्य अनुवृत्तिर्यस्यां तया । ७ अन्यराजकर्तृकयेत्यर्थः । ८ अघं रोषं क्रोधजं व्यसनं वा ।

रथयूथपानां मध्ये यशोधाः कीर्तिधारी । यद्वा स्वीयानां तेषां कीर्तिप्रदः । उपरता अरयो यस्मात् । यस्य शरकूटेन बाणसमूहेन गूढ आच्छन्नः ॥ ३८ ॥ उतस्वित्किंस्वित् । यमौ नकुलसहदेवौ । रेमाते क्रीडाते इत्यर्थः । माद्र्याः सुतावपि पृथायास्तनयौ पृथायाः पुत्रैर्वृतौ सुपर्णाविव रेमाते । किं कृत्वा । परात् दुर्योधनात्स्वरिक्थं स्वीयं राज्यमुद्दायाच्छिद्य । वज्रिवक्त्रादिन्द्रस्य मुखात्स्वरिक्थममृतं गरुड इवेति । यद्वा सुपर्णाविवेति । यदि द्वौ गरुडावमृतमानयेतां तर्हि तद्वत् । अक्षिणीवेति मणीवादिगणत्वात्सन्धिः ॥ ३९ ॥ पृथायाः किं नु कुशलं पृच्छेयम् । यतस्तस्याः पाण्डुना विना प्राणधारणमेवाश्चर्यमित्याह—अहो इति । ध्रियते जीवति । न चात्याश्चर्यम् । यतोऽर्भकार्थे ध्रियते न भोगार्थम् । तथापि त्वाश्चर्यमेवेत्याह । तेन तथाभूतेन विना । तदेवाह—यस्त्विति । धनुरेव द्वितीयं सहायो यस्य ॥ ४० ॥ पृथा अर्भकार्थे जीवतीति युक्तमेवेत्याह । हे सौम्य, तं धृतराष्ट्रं जीवन्तमनुशोचामि । तत्किम् । अधःपतन्तम् । तत्र हेतुः—परेताय मृताय भ्रात्रे पाण्डवे तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् । किंच जीवतोऽपि भ्रातुर्ममापकृतवानित्याह । येन सुहृद्भ्राताऽहं स्वपुर्याः

कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ॥ अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥३८॥ यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ॥ रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥ अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन ॥ यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥ सौम्यानुशोचे तमधः पतन्तं भ्रात्रे परेताय विदुद्रुहे यः ॥ निर्यापितो येन सुहृत्स्वपुर्या अहं स्वपुत्रान्समनुव्रतेन ॥ ४१ ॥ सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयतो विधातुः ॥ नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र ॥ ४२ ॥ नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः ॥ वधात्प्रपन्नार्तिजिहीर्षयेशोऽप्युपैक्षताघं भगवान्कुरूणाम् ॥ ४३ ॥ ॥ ॥

सकाशान्निर्यापितो विवासितः ॥ ४१ ॥ अहो खलु विस्मयो जानतोऽपि तस्यैवं दुश्चेष्टितं, यतस्त्वं साधुरपि दुःखं प्रापितोऽसीत्यत आह । सोऽहं हरेः प्रसादात्तस्य पदवीं माहात्म्यं पश्यन्गतविस्मयोऽत्र भूतले नान्योपलक्ष्यो गूढः सन्मुखं विचरामि । कथंभूतस्य । मर्त्यविडम्बनेनैश्वर्याच्छादकेन मानुष्यानुकरणेन नृणां दृशश्चित्तवृत्तीश्चालयतो भ्रामयतः ॥ ४२ ॥ ननु हरेः किमेवं लीलया, येन स्वभक्तानां वनवासादिक्लेशा भवन्ति, स्वस्य च दौत्ये बन्धनोद्यमादिपराभवः, तद्वरं तेषामपराधानन्तरमेव हननं नापराधोपेक्षेत्यत आह । नूनं निश्चितं त्रिभिर्मदैरुत्पथानामुद्वृत्तानां वधाद्धेतोः प्रपन्नानामार्तिजिहीर्षयेशोऽघसमय एव हन्तुं समर्थोऽपि कुरूणामघमुपैक्षत । तदानीमेव तेषां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः । 'विद्यामदो धनमदस्तथैवाभिजनो मदः ॥ एते मदा मदान्धानां त एव हि सतां दमाः ॥' इति त्रयो मदाः ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥



१ बाल्यमारभ्य प्रतिपालनादित्यर्थः । २ वज्रिवक्त्रादित्येत्यभूतोपमा । ३ तथाभूतेन महावीरेण । ४ मुद्रतस्य हितकार्येपि । ५ रथमधिरूढोऽधिरथः । ६ 'कुपुत्रान्' इति पाठः ।

सर्वदुष्टवधार्थमेव भगवतो जन्मकर्माणि नान्यथेति कैमुत्यन्यायेनाह । अजस्यापि जन्म, अकर्तुरपि कर्माणि पुंसां ग्रहणाय कर्मसु प्रवृत्तये । अन्यथा न चेदेवं तर्हि भगवतो जन्मादिकथा तावदास्ताम् । को वान्योऽपि गुणानां परो गुणातीतो देहयोगं कर्मविस्तारं वाऽर्हतीति ॥ ४४ ॥ तस्मादेवंभूताचिन्त्यमायाविनोदस्य कथां कथयेत्याह । तस्य प्रपन्ना येऽखिललोकपालास्तेषामन्येषां च स्वीयेऽनुशासने स्थितानामर्थाय प्रयोजनाय यदुषु जातस्य । तीर्थं संसारतारिणी कीर्तिर्यस्येति ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः ॥ क्षत्रे बालचरित्राणि कृष्णस्यावर्णयच्छ्वसन् ॥ १ ॥ तदेवं प्रियवार्तां पृष्टस्योद्धवस्य श्रीकृष्णविरहौत्कण्ठ्यावेशेन प्रतिवचना-

अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ॥ न न्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥ तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ॥ अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥ ४५ ॥ ॥ इति श्रीमद्भा० म० तृतीयस्कन्धे विदुरोद्धवसंवादे प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥

॥ श्रीशुक उवाच ॥ ॥ इति भागवतः पृष्टः क्षत्रा वार्तां प्रियाश्रयाम् ॥ प्रतिवक्तुं न चोत्सेह औत्कण्ठ्यात्स्मारितेश्वरः ॥ १ ॥ यः पञ्चहायनो मात्रा प्रातराशाय याचितः ॥ तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया ॥ २ ॥ स कथं सेवया तस्य कालेन जरसं गतः ॥ पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन् ॥३॥ स मुहूर्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम् ॥ तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृतः ॥४॥ पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशा शुचः ॥ पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥ शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ॥ विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥ ॥

सामर्थ्यमाह पड्भिः—इतीति । स्मारित ईश्वरो यस्य ॥ १ ॥ एतदेव कैमुत्यन्यायेन प्रपञ्चयति—य इति द्वाभ्याम् । यः पञ्चवर्षोऽपि बाललीलयेति कृष्णं कंचित्परिकल्प्य कल्पितैरेव साधनैः परिचर्यां कुर्वन् प्रातर्भोजनार्थं मात्रा प्रार्थितोऽपि तद्भोजनं नैच्छत् ॥ २ ॥ जरसं वृद्धत्वं गतः प्राप्तः ॥ ३ ॥ श्रीकृष्णाङ्घ्रिसुधया साधु निर्वृतः । तस्यामेव तीव्रेण विवशत्वापादकेन भक्तियोगेन भृशं निमग्नश्च ॥ ४ ॥ पुलकैरुद्भिन्नान्युज्जृम्भितानि सर्वाण्यङ्गानि यस्य । मीलन्त्या दृशा शुचोऽश्रूणि मुञ्चन् । तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः । यतो भगवति यः स्नेहस्तस्य प्रसरः पूरस्तस्मिन्संप्लुतो निमग्नः ॥ ५ ॥ भगवानेव लोकस्तस्मात् । नृलोकं देहानुसन्धानम् । उत्स्मयन् यदुकुलसंहारादिभगवच्चातुर्यस्मरणेन विस्मयं प्राप्नुवन् ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

१ पुंसां स्वभक्तानां सर्वत्र मोक्षादिसुखेष्वपि विरक्तानां ग्रहणाय आस्वादनीयत्वेन स्वीकाराय । यद्वा तेषां मुमुक्षुरसारिणामपि ग्रहणाय स्वस्मिन्नाकर्षणाय । २ 'न न्वन्यथा' इत्यत्र मूले न नु इति छेदः । तथाच न इत्यस्य अन्यथेत्यनेन योजना, नु इति वितर्कार्थस्यार्थः चेत् एवं तर्हीति । ३ ब्रह्मनिष्ठ इत्यर्थः । ४ 'गुणानामपि' इति पाठः । ५ प्रियाश्रयां प्रियसंबन्धिनीम् । ६ यः उद्धवः । ७ काले समयेऽपि वृद्धत्वं न गतः । 'तत्र प्रवयसोऽप्यासन्युवानोऽतिवयौजसः' इति प्रामाण्यादिति चक्रवर्ती । ८ 'प्रभोः पादौ' इति पाठः । ९ निमग्नो विस्मृतकृष्णविश्लेषदुःखः । चक्र० । १० यः उद्धवः ।

श्रीकृष्णविरहेण संतप्यमानः प्रत्याह । श्रीकृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये सत्यजगरेण कालमहासर्पेण गीर्णेषु निगिलितेषु नो गृहेषु त्वत्पृष्टानां वन्धूनां किं नु कुशलं ब्रूयाम् ॥ ७ ॥ अनुशोचन्नाह । दुर्भगो भाग्यहीनः । ये सह संवसन्तोऽपि श्रीहरिरयमिति न विदुः । यथा क्षीरसमुद्रे जातमुडुपं चन्द्रं तदा तत्रत्या मीनाः केवलं कमनीयः कश्चिज्जलचर इत्येवं विदुर्न त्वमृतमय इति तद्वत् । यद्वा जले प्रतिविम्बितं चन्द्रं यथेति ॥ ८ ॥ भाग्यहीनत्वादेव न विदुर्न तु ज्ञानसामग्र्यभावादित्याह । इङ्गितं चित्तस्थं जानन्तीति तथा । पुरु अतिशयेन प्रौढा निपुणाः । एकस्मिन्नेव स्थाने आरमन्तीति तथा । एवंभूता अपि भूतानामावासमीश्वरं सन्तं सात्वतामृषभं सात्वतश्रेष्ठममन्यन्त ॥ ९ ॥ ये यादवा देवस्य मायया स्पृष्टा व्याप्ता यादवोऽयमस्मद्बन्धुरिति वदन्ति, ये च शिशुपालादयोऽसदेवान्यद्वैरमाश्रिता निन्दन्ति तेषां वाक्यैरात्मनि हरावुप्तात्मनो निक्षिप्तचित्तस्य मादृशस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते, अन्ये तु मूढा एवेत्यर्थः ॥ १० ॥ कोऽसौ

उद्धव उवाच ॥ कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह ॥ किं[3] नु नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥७॥
दुर्भगो बत लोकोऽयं यदवो नितरामपि ॥ ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥ इङ्गितज्ञाः पुरुप्रौढा
एकारामाश्च सात्वताः ॥ सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥ देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः ॥
भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ १० ॥ प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ॥ आदायान्तरधा-
द्यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥ यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ॥ विस्मापनं स्वस्य
च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥ यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ॥ कार्त्स्न्येन
चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥ यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ॥
व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥ ॥ ॥

हरिरित्यपेक्षायामाह—प्रदर्श्येति । न तप्तं तपो यैरतोऽवितृप्ता दृशो येषां तेषां स्वबिम्बं श्रीमूर्तिमेतावन्तं कालं दर्शयित्वा योऽन्तर्हितवान् । लोकस्य लोचनमादायाऽऽच्छिद्य । तादृशस्यान्यस्य विलोकनीयस्याभावात् ॥ ११ ॥ तदेव विम्बं वर्णयति त्रिभिः । यन्मर्त्यलीलायामौपयिकं योग्यम् । स्वस्यापि विस्मयजनकम् । यतः सौभगर्द्धेः सौभाग्यातिशयस्य परं पदं परा काष्ठा । भूषणानां भूषणान्यङ्गानि यस्मिन् ॥ १२ ॥ दृशां स्वस्त्ययनं परमानन्दकरम् । त्रिभुवनस्थो लोकः प्राणिमात्रम् । अद्येदानीमिह विम्बे । अर्वाक्सृतावर्वाचीनसंसारनिर्माणे मनुष्यनिर्माणे वा यत्कौशलं नैपुणं तत्कार्त्स्न्येन गतमुपक्षीणं नातः परं तस्य कौशलमस्तीत्येवं मेने । तन्मूर्तेर्विधातुः सृज्यत्वाभावेऽपि लोकदृष्टिरियमुक्ता ॥ १३ ॥ अनुरागेण प्लुतो व्याप्तो हासो रासो विनोदश्च लीलावलोकश्च तैः स्वकृतहासाद्यनन्तरं प्रतिलब्धो मानो याभिस्ताः । दृग्भिः सह अनुप्रवृत्ता गच्छन्तं तमेवानुगता धियो यासां ताः । कृत्ये शेषो यासां ताः असमापितकृत्या एव तस्थुः ॥ १४ ॥

१ मीनास्तिमिङ्गिलादयो यथा हरिं मत्स्यरूपिणमुडुपं ससारतारकं न विदुः । अथवा समुद्रमथनात्पूर्वं मीनाः सह संवसन्तोऽप्युडुपं हरिं तापहारिणं न विदुस्तथेति भङ्ग्यन्तरेण व्याख्यातमन्यत्र । २ व्यामोहनशक्त्या । ३ 'किं पुनः' इति पाठः । ४ यत् विम्बम् । ५ येषु वाक्येषु यच्छब्दानां पूर्ववाक्यस्यान्ते पठितत्वान्न पूर्वान्वयापेक्षा । क्रम० । ६ नराकृतीत्यर्थः । ७ कृत्येषु मार्जनलेपनदधिमन्थनपरिवेषणादिषु शेषोवशेषो यस्याम् । ८ अप्राप्तविषयसभोगमनोरथा इत्यर्थः ।

एवंभूतविम्बदर्शने कारणमाह । स्वीयान्येव शान्तान्यशान्तानि च रूपाणि । तत्र शान्तरूपेषु इतरैः पीड्यमानेष्वनुकम्पितः कृतानुकम्प आत्मा यस्य । अजोऽपि जात आविर्भूतः । महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा काष्ठेष्वाविर्भवति तद्वत् । अजस्य जन्मनि हेतुः—महान्महत्तत्त्वमंशः कार्यलेशो यस्याव्यक्तस्य तन्महदंशं तद्युक्त इति ॥ १५ ॥ ननु कुतोऽसौ परावराणामीशः पारतन्त्र्यप्रतीतेस्तत्राह द्वाभ्याम् । मामप्येतद्दुर्वितर्क्यं दुर्घटं च खेदयति, तदेवाह । वसुदेवगेहे वन्धनागारे यज्जन्मनो विडम्बनमनुकरणं, नतु नृसिंहवदकस्मादाविर्भावः । कंसभयादिव निलीय व्रजे वासश्च । कालयवनादिरिपुभयादिव पुरान्मथुराया व्यवात्सीदपलायत ॥ १६ ॥ एतच्च हरेश्चरितं स्मरतो मम चेतः कर्मभूतं दुनोति व्यथयति । तदेव दर्शयति—यदाहेति । हे तात, हे अम्ब, युवां प्रसीदतं प्रसादं कुरुतम् । न कृता निष्कृतिः शुश्रूषणं यैस्तेषाम् । नोऽस्माकमिति वहुवचनं तु रामाद्यभिप्रायम् ॥ १७ ॥ ननु तर्ह्यनीश्वर एव किं न स्यात्,

स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ॥ परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान्यथाऽग्निः ॥ १५ ॥ मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे ॥ व्रजे च वासोऽरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः ॥ १६ ॥ दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवन्द्य पित्रोः ॥ ताताम्ब कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥ को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान्विजिघ्रन् ॥ यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥ दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः ॥ यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥ तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ॥ नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥ स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः ॥ बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्येडितपादपीठः ॥ २१ ॥ ॥ ॥

तव तु श्रद्धामात्रमेतत्तत्राह त्रिभिः । को वा अङ्घ्रिसरोजयोर्यो रेणुस्तमपि विजिघ्रन् सेवमानः पुमान्विस्मर्तुमीशीत शक्नुयात् । विस्फुरन् भ्रूविटपो भ्रूलता स एव कृतान्तस्तेन ॥ १८ ॥ न च तस्येश्वरत्वं साधनीयं, भवद्भिरपि दृष्टत्वादित्याह—दृष्टेति । यां सिद्धिं सम्यग्योगेन प्राप्तुमिच्छन्ति ॥ १९ ॥ आहवे युद्धे पार्थस्यास्त्रैः पूताः निष्पापाः सन्तः ॥ २० ॥ तदेवं परमैश्वर्ये सत्यपि यदुग्रसेनानुवर्तित्वं तत्पुनरस्मानत्यन्तं व्यथयतीत्याह । स्वयं तु य एवंभूतस्तस्य तत्कैङ्कर्यं नोऽस्मान् विग्लापयतीत्युत्तरेणान्वयः । न साम्यातिशयौ यस्य । यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः । तत्र हेतवः—त्र्यधीशस्त्रयाणां पुरुषाणां लोकानां गुणानां वा ईशः । स्वाराज्यलक्ष्म्या परमानन्दस्वरूपसंपत्त्यैव प्राप्तसमस्तभोगः । वलिं करमर्हणं वा हरद्भिः समर्पयद्भिश्चिरकालीनैर्लोकपालैः किरीटाग्रेणेडितं स्तुतं पादपीठं यस्य । प्रणमतां किरीटसंघट्टनध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ इतरैरशान्तरूपैः कंसादिभिः । २ चरित कर्तृभूतम । ३ आदिशब्दाद्द्वरादिग्रहः । ४ स्वरूपैः सुष्ठुरूपैः विकटरूपैरिति श्लिष्टोऽर्थः । ५ अत्र पार्थास्त्रपूतत्व तद्दर्शनयाथार्थ्ये हेतुः । स्वतस्तेपामासुरभावत्वात्सादरावलोकलक्षणपानानुपपत्तेः । दीपि० । ६ त्रयाणां महत्स्रष्ट्रादिपुरुषाणां, तिसृणा चिच्छक्तिजीवशक्तिमायाशक्तीना चेश इति चक्रवर्ती ।

अङ्ग विदुर । भृतान् भृत्यान् । उग्रसेने यत्किंकरत्वं तदेवाह । परमेष्ठिधिष्ण्ये राजासने निषण्णमासीनं स्वयं तिष्ठन् हे देव, निधारयावधारयेति न्यबोधयद्विज्ञापितवान् ॥२२॥ एवमनुवृत्तिः कृपयैवेति सूचयन्नपकारिष्वपि तस्य कृपालुतां दर्शयन्नाह । अहो आश्चर्यं कृपालुतायाः । हन्तुमिच्छयापि स्तनयोः संभृतं कालकूटं विषं यमपाययत् । बकी पूतना असाध्वी दुष्टापि धात्र्या यशोदाया उचितां गतिं लेभे । भक्तवेषमात्रेण यः सद्गतिं दत्तवानित्यर्थः । ततोऽन्यं कं वा भजेम ॥ २३ ॥ ननु भागवतानेव भगवाननुगृह्णातीति प्रसिद्धम्, सत्यम्, असुरानप्यहं भागवतानेव मन्ये, यतो भागवता इव तेऽपि भगवद्ध्यानाभिनिवेशेन भगवन्तमपरोक्षं पश्यन्तीत्याह । संरम्भः क्रोधावेशस्तेन मार्गेणाभिनिविष्टं चित्तं येषां तान् । अत एव ये संग्रामे तार्क्ष्यः कश्यपस्तस्य पुत्रं गरुडमंसे स्कन्धे सुनाभायुधश्चक्रायुधोऽरिर्यस्य तमचक्षतापश्यन् । तस्मात्तेष्वप्यनुग्रहो युक्त एवेत्यर्थः । वक्ष्यति च 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' इति ॥ २४ ॥

तत्तस्य कैङ्कर्यमलं भृतान्नो[2] विग्लापयत्यङ्ग यदुग्रसेनम् ॥ तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति ॥२२॥ अहो बकीयं स्तनकालकूटं[1] जिघांसयाऽपाययदप्यसाध्वी ॥ लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥२३॥ मन्येऽसुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ॥ ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसेसुनाभा[3]युधमापतन्तम् ॥२४॥ वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ॥ चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः ॥२५॥ ततो नन्दव्रजमितः पित्रा कंसाद्विबिभ्यता ॥ एकादश समास्तत्र गूढार्चिः सबलोऽवसत् ॥२६॥ परीतो वत्सपैर्वत्सांश्चारयन्व्यहरद्विभुः[4] ॥ यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥२७॥ कौमारीं[5] दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् ॥ रुदन्निव हसन्मुग्धबालसिंहावलोकनः ॥२८॥ स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् ॥ चारयन्ननुगान्गोपान्रणद्वेणुररीरमत् ॥ २९ ॥ प्रयुक्तान्भोजराजेन मायिनः कामरूपिणः ॥ लीलया व्यनुदत्तांस्तान्बालः क्रीडनकानिव ॥ ३० ॥ विपन्नान्विषपानेन[6] निगृह्य भुजगाधिपम् ॥ उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥ ॥

इदानीं तस्यान्तर्धानप्रकारं वक्तुमादित आरभ्य तच्चरितं संक्षेपतः कथयति । वसुदेवस्य भार्यायां जातः । भोजेन्द्रः कंसस्तस्य बन्धनागारे । अस्याः पृथिव्याः शं सुखं स्वयं चिकीर्षुः । अजेन ब्रह्मणा च याचितः सन् ॥ २५ ॥ पित्रा हेतुभूतेन नन्दव्रजमितो गतः । समाः संवत्सरान् । गूढार्चिर्गुप्ततेजाः ॥ २६ ॥ व्यहरदक्रीडत् । कूजद्भिर्द्विजैः पक्षिभिः संकुलिता व्याप्ता अङ्घ्रिपा यस्मिन् ॥ २७ ॥ रुदन्निवेतीवशब्दस्य यथायोगं सर्वत्राप्यन्वयः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य सः ॥ २८ ॥ स एवाधिकं वयः प्राप्तः सन् गोधनं चारयन् । कथंभूतं गोधनम् । लक्ष्म्याः शोभादिसंपदो निकेतनम् । सिता गोवृषा यस्मिन्नानावर्णे गोसङ्घे । रणन् शब्दं कुर्वन्वेणुर्यस्य । अरीरमद्रमयामास ॥ २९ ॥ व्यनुदज्जघान । क्रीडनकांस्तृणादिनिर्मितान्सिंहादीन्यथा ॥ ३० ॥ विपन्नान्मृतान्गोपान्गाव इति गाश्चोत्थाप्य तदेव तोयं । प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥ ॥ ॥ ॥ ॥



१ संभृतमन्तः पूरितं न केवलं लिप्तम् । २ नो भृतानित्यस्य विग्लापयतीत्यत्र निधारयेत्यत्र च सबन्धः । ३ अंसेसुनाभेति 'अमूर्धमस्तकात्स्वाङ्गादकामे' इत्यनेन अलुक्समासः । ४ 'व्याहरन्' इति पाठः, स च प्रामादिकः, अक्रीडदिति व्याख्यानात् । दीपि० । ५ कौमारीमिति । यद्यप्यनन्तबाल्यलीलेयं वत्सचारणलीलातः प्राग्वर्णनीया तथापि विरहवशेन व्यत्यस्य पठिता । ६ विषदुष्टमेव ।

इन्द्रपूजाभङ्गेन कृता गवां पूजैव गोसवस्तेन । गोपराजं नन्दम् । वित्तस्य चेति चकारादिन्द्रस्य मानभङ्गं कुर्वन् उरुभारस्याऽतिसमृद्धस्य ॥ ३२ ॥ कोपाद्वर्षति ।
गोत्रः पर्वत एव लीलातपत्रं तेन । हे भद्र ॥३३॥ मृष्टमुज्वलम् । स्त्रीणां मण्डलं मण्डयतीति तथा ॥३४॥ ॥ इति श्रीमद्भागवते तृतीये भा० दी० टीकायां द्विती-
योऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ तृतीये मथुरामेत्य व्रजात्कंसवधादिकम् ॥ यत्कृतं द्वारकायां च कृष्णेन तदवर्णयत् ॥ १ ॥ शमित्यव्ययम् ॥ पित्रोः सुखस्य
चिकीर्षयेत्यर्थः । तुङ्गाद्राजमञ्चात् । रिपुयूथानां नाथं कंसम् । व्यसोरपि विकर्षणं पित्रोः सुखार्थम् ॥ १ ॥ ब्रह्म वेदम् । सविस्तरं षडङ्गादिसहितम् । पञ्चज-
नोदरविदारणद्वारा पुत्रमानीयेत्यर्थः ॥ २ ॥ भीष्मककन्यया रुक्मिण्या ये राजानः समाहूताः । ह्रस्वत्वमार्षम् । 'समाहृता' इति पाठे आकृष्टा इत्यर्थः । केन
साधनेन । श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण । यद्यपि तया केवलं श्रीकृष्ण एवाहूतो न सर्वे, तथापि तस्या लावण्यं तेषामागमने हेतुरिति तथैवाहूता
इत्युच्यते । एषां मिषतां पश्यतां मूर्ध्नि पदं दधत् । तया सह गान्धर्ववृत्त्या परस्परसमयरूपया बुभूषया भवितुमिच्छया जहार । कथंभूताम् । स्वभागं

अयाजयद्गोसवेन गोपराजं द्विजोत्तमैः ॥ वित्तस्य चोरुभारस्य चिकीर्षन्सद्व्ययं विभुः ॥ ३२ ॥ वर्षतीन्द्रे व्रजः कोपाद्भग्न-
मानेऽतिविह्वलः ॥ गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥ शरच्छशिकरैर्मृष्टं मानयन्रजनीमुखम् ॥ गायन्कल-
पदं रेमे स्त्रीणां मण्डलमण्डनः ॥३४॥ इति श्रीम० म० तृतीयस्कन्धे द्वितीयोऽध्यायः ॥२॥ ॥छ॥ ॥ उद्धव उवाच ॥
ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ॥ निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम्
॥१॥ सांदीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्तरम् ॥ तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥ समाहुता भीष्म-
ककन्यया ये श्रियः सवर्णेन बुभूषयैषाम् ॥ गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ॥ ३ ॥ ककुद्मतोऽवि-
द्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ॥ तद्भग्नमानानपि गृध्यतोऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥ प्रियं
प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद्द्युतरुं यदर्थे ॥ वज्र्याद्रवत्तं सगणो रुषाऽन्धः क्रीडामृगो नूनमयं वधूनाम् ॥५॥

लक्ष्म्यंशत्वात् । तया स्वात्मनोऽर्पितत्वाच्च । सुपर्णः सुपतनः । यद्वा सुपर्ण इव स्वभागं सुधामित्यर्थः । यद्वा श्रियो रुक्मिण्याः समानं वर्णद्वयं वाचकं यस्य
स श्रियः सवर्णो रुक्मी तेन समाहूताः शिशुपालादयः । किमर्थम् । भीष्मककन्यया सह तेषां बुभूषया भूतिर्भवत्वित्येतदर्थम् । तत्र शिशुपालस्याह्वानं वर-
त्वेन बुभूषया, जरासन्धादीनां तद्विवाहोत्सवेन । शेषं पूर्ववत् ॥ ३ ॥ ककुद्मतो वृषभान् अविद्धनासिकान् । विद्धनासिकान्कृत्वेति वा । तैर्वृषभैस्तद्दमनेन च
भग्नो मानो येषां तथापि तान् गृध्यतः कामयमानान्, अत एवाज्ञान् शस्त्रभृतो राज्ञस्तच्छस्त्रैरक्षत एव जघान ॥ ४ ॥ यदाऽदित्याः कुण्डले दातुं स्वर्गं गत-
स्तदा प्रभुः स्वतन्त्रोऽपि ग्राम्यः स्त्रीपरतन्त्र इव प्रियायाः सत्यभामायाः प्रियं विधातुमिच्छुर्द्युतरुं पारिजातमानीतवान् । यदर्थे यन्निमित्तं तं कृष्णं वज्री स्त्रीप्रे-
रितो योद्धुमन्वधावत् । स्वकार्यसाधकेन तेन युद्धोद्यमस्तस्यायुक्त एवेत्याह—क्रीडामृग इति । अयं वज्री ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

१ 'चिकीर्षुः सद्व्ययम्' इति पाठः । २ शरदित्यनेनाश्विनपूर्णिमायां रासलीला सूचिता । ३ अत्रानीयेत्यध्याहारः, पञ्चजनोदरं विदार्येत्यर्थः । ल्यब्लोपे पञ्चमीयम् ।
४ 'गृभ्नतः' इति क्वचित्पाठो मूलटीकयोः ।

सुनाभेन चक्रेणोन्मथितं सुतं भौमं दृष्ट्वा तस्य मात्रा धरित्र्या भूम्या आमन्त्रितः प्रार्थितः संस्तस्य तनयाय भगदत्ताय हृतशेषं राज्यं दत्त्वा ॥ ६ ॥ तत्रान्तःपुरे कुजेन भौमेन या आहृतास्ताः प्रहर्षश्च व्रीडा चानुरागश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैर्जगृहुः स्वीकृतवत्यः ॥ ७ ॥ आसां योषितां पाणींस्तत्तदनुरूपः सन्सविधं विवाहोचितप्रकारसहितं यथा भवति ॥ ८ ॥ सर्वतः सर्वैर्गुणैः स्वतुल्यानि । प्रकृतेर्मायाया विविधं भवनं विस्तारस्तदिच्छया । यद्वा प्रकृतेर्हेतोर्विविधं भवितुमिच्छया ॥ ९ ॥ कालः कालयवनः । रुन्धत आवृण्वतः । मुचुकुन्दभीमादिभिर्निमित्तमात्रैः स्वयमेवाजीघनद्घातितवान् । तेन च स्वपुंसां तेजः प्रभावं कीर्तिं वा दत्तवान् ॥ १० ॥ शम्बरद्विविदवल्वलानन्यानपि कांश्चित्प्रद्युम्नरामादिभिर्घातयदघातयत् । 'घातयन्' इति वा पाठः । दन्तवक्रादीन्स्वयमवधीत् ॥ ११ ॥ नृपान्घातयदित्यनुषङ्गः । कथंभूतान् । कुरुक्षेत्रमापततां गच्छतां येषां बलैः सैन्यैर्भूः सर्वापि चचाल चकम्पे ॥ १२ ॥ स कृष्णः । हृता श्रीरायुश्च यस्य । भग्नावूरू यस्य तमुर्व्यां शयानं पश्यन्नपि न ननन्द संतोषं न प्राप ॥ १३ ॥ अनभिनन्दनप्रकारमेवाह—कियानिति । द्रोणादिभिर्मूलैः कारणभूतैः । यदिति यः अष्टादशाक्षौहिणीयुक्तः । ह्रस्वत्वमार्षम् । क्षपितो य उरुर्भारो भुवः अयं कियान् । अत्यल्प इत्यर्थः । यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते ॥ १४ ॥ न चात्रान्य उपायः प्रभवति, किंतु मधुना य आमदः सर्वतो मदस्तेनाताम्रविलोचनानामेषां विवादो यदा भविष्यति तदैवानेनैषां वधोपायः अतोऽन्यो नास्ति । एकात्मानोऽपि मय्युद्यते सति स्वयमेव विवादेनान्तर्दधीरन्नित्यर्थः ॥ १५ ॥ ॥ ॥

सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या ॥ आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तःपुरमाविवेश ॥६॥ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम् ॥ उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ७ ॥ आसां मुहूर्त एकस्मिन्नानागारेषु योषिताम् ॥ सविधं जगृहे पाणीननुरूपः स्वमायया ॥ ८ ॥ तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ॥ एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥ कालमागधशाल्वादीननीकै रुन्धतः पुरम् ॥ अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥१०॥ शम्बरं द्विविदं बाणं मुरं बल्वलमेव च ॥ अन्यांश्च दन्तवक्रादीनवधीत्कांश्च घातयत् ॥ ११ ॥ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ॥ चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥ स कर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम् ॥ सुयोधनं सानुचरं शयानं भग्नोरुमुर्व्यां न ननन्द पश्यन् ॥ १३ ॥ कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः ॥ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम् ॥ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥ १५ ॥ ॥ ॥

१ जगृहुर्ममायमेव वर इति प्रत्येक स्वीचक्रुः । २ स्वपुंसां मुचुकुन्दादीना संबन्धे । अत्र यद्यपि चतुर्थ्यपेक्षिता तथापि प्रभावकीर्त्यादिषु स्वत्वध्वंसाभावान्न सम्प्रदानत्वम् । दीपि० । ३ 'पाणीन्पुरुरूपः' इति पाठः । ४ स्वमायया योगशक्त्या, सुष्ठु अमाययेति वा । चक्र० । ५ अत्राडागमाभाव आर्षः । घातयन्निति शत्रन्तो वा पाठः ।

एवं श्लोकद्वयेनोक्तं क्रमेण संचिन्त्य स्वराज्ये स्थापयित्वा ॥ १६ ॥ धृतो रक्षितः ॥ १७ ॥ अनुजैः सह ॥ १८ ॥ सांख्यं प्रकृतिपुरुषविवेकम् ॥ १९ ॥ स्निग्धो यः स्मितसहितोऽवलोकस्तेन । पीयूषकल्पया सुधातुल्यया । पाठान्तरे सुधाप्रवाहरूपया । आत्मना देहेन ॥ २० ॥ क्षणदया रात्र्या दत्त· क्षणोऽवसर उत्सवो वा यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः ॥ २१ ॥ गृहमेधेषु गृहधर्मेषु । योगेषु कामभोगोपायेषु । विरागः औदासीन्यं जातमित्यर्थः ॥ २२ ॥ यदा स्वाधीनेष्वपि भगवतो विरागस्तदा दैवाधीनेषु को विस्रम्भेत विश्वासं प्रीतिं वा कुर्यात् । योगेन चेद्योगेश्वरं श्रीकृष्णमनुव्रतः ॥ २३ ॥ शेपुः शापं ददुः ।

एवं संचिन्त्य भगवान् स्वराज्ये स्थाप्य धर्मजम् ॥ नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥१६॥ उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ॥ स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥१७॥ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोऽपि क्ष्मामनुजै रक्षन् रेमे कृष्णमनुव्रतः ॥१८॥ भगवानपि विश्वात्मा लोकवेदपथानुगः ॥ कामान्सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥१९॥ स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ॥ चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥२०॥ इमं लोकममुं चैव रमयन्सुतरां यदून् ॥ रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥२१॥ तस्यैवं रममाणस्य संवत्सरगणान्बहून् ॥ गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥ दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ॥ को विस्रम्भेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥ पुर्यां कदाचित्क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥२४॥ ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः ॥ ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥२५॥ तत्र स्नात्वा पितॄन्देवानृषींश्चैव तदम्भसा ॥ तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥२६॥ हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ॥ यानं रथानिभान्कन्या धरां वृत्तिकरीमपि ॥२७॥ अन्नं चोरुरसं तेभ्यो दत्त्वा भगवदर्पणम् ॥ गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥२८॥ इति श्रीम० म० तृतीयस्कन्धे विदुरोद्धवसंवादे तृतीयोऽध्यायः ॥३॥ ॥छ॥
॥ उद्धव उवाच ॥ अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ॥ तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥

भगवतो मतेऽभिप्राये कोविदाः अभिज्ञाः ॥ २४ ॥ २५ ॥ वयःशीलादिबहुगुणोपेता या गावस्ताः ॥ २६ ॥ कन्याश्च । वृत्तिकरीं जीविकापर्याप्ताम् ॥ २७ ॥ भगवदर्पणं यथा भवति । गोविप्रार्था असवो येषाम् ॥ २८ ॥ ॥ इति श्रीमद्भागवते तृतीयस्कन्धे भा० दी० टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥
चतुर्थे बन्धुनिधनं श्रुत्वात्मज्ञानलब्धये ॥ उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत् ॥ १ ॥ तैर्ब्राह्मणैरनुज्ञाताः । वारुणीं पैष्टीं मदिराम् ॥ १ ॥ ॥ ॥

१ सांख्यमास्थितः कृतकृत्यतामास्थाय वैराग्यलीला प्रकाशितवानित्यर्थः । २ 'पीयूषकुल्यया' इत्येवंरूपे । ३ अवसरः क्रीडावकाशः । ४ 'स्वाराज्ये' इति विज० पाठः । ५ धृतः स्थापितः । ६ 'संहृष्टः' इति पाठः । ७ 'हयान्रथानिभान्' इति पाठः । ८ 'तया वारुण्या उपलक्षणमात्रया, वस्तुतस्तु भगवतैव विभ्रंशितं ज्ञानं येषां ते' इति दीपि० ।

वारुण्येव मैरेयं तस्य दोषेण । रवौ निम्लोचत्यस्तं गच्छति सति । मर्दनं कदनम् ॥ २ ॥ उपस्पृश्य सरस्वत्यामाचम्य ॥ ३ ॥ अहं चोक्तः पूर्वमेव द्वारकायाम् ॥ ४ ॥ तदभिप्रेतं कुलसंहारादिकम् ॥ ५ ॥ कृतकेतं कृतावासम् । अकेतनमनाश्रयम्[1] ॥ ६ ॥ विरजं विरजसं शुद्धसत्त्वमयम् । विदितं लक्षितम् । कौशं कौशेयम् ॥ ७ ॥ अधिश्रित्योपरि स्थापयित्वा । अपाश्रितः पृष्ठतोऽवष्टब्धोऽर्भको बालः कोमलोऽश्वत्थो येन तम् । त्यक्तं पिप्पलं विषयसुखं येन तम् । तथाप्यकृशमानन्दपूर्णम् ॥ ८ ॥ द्वैपायनः सुहृत्सखा च यस्य सः स्वगुरुपुत्रत्वात्, पराशरशिष्यो मैत्रेय इत्यर्थः ॥ ९ ॥ प्रमोदेन भावेन चानता कन्धरा यस्य । पाठान्तरे प्रमोदस्य भारेण । अनुरागेण सह हासो यस्यां तया समीक्षया विश्रमयन्विगतश्रमं कुर्वन् ॥ १० ॥ हे उद्धव, ते मनसीप्सितमहमन्तः

तेषां मैरेयदोषेण विषमीकृतचेतसाम् ॥ निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥ भगवान्स्वात्ममायाया[2]
गतिं तामवलोक्य सः ॥ सरस्वतीम्[3]उपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥ अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ॥
बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥ ४ ॥ अथापि तदभिप्रेतं जानन्नहमरिन्दम[4] ॥ पृष्ठतोऽन्वगमं भर्तुः पाद-
विश्लेषणाक्षमः ॥ ५ ॥ अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिम् ॥ श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥
श्यामावदातं विरजं प्रशान्तारुणलोचनम् ॥ दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥ वाम ऊरावधिश्रित्य
दक्षिणाङ्घ्रिसरोरुहम् ॥ अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥८॥ तस्मिन्महाभागवतो द्वैपायनसुहृत्सखा[5] ॥
लोकाननुचरन्सिद्ध आससाद यदृच्छया ॥ ९ ॥ तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभावानतकन्धरस्य[6] ॥ आशृण्वतो
मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥ ॥ श्रीभगवानुवाच ॥ वेदाहमन्तर्मनसीप्सितं[7] ते ददामि यत्तद्दु-
रवापमन्यैः ॥ सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥ स एष[8] साधो चरमो भवानामा-
सादितस्ते मदनुग्रहो यत् ॥ यन्मां नृलोकान्रह उत्सृजन्तं दिष्ट्या ददृश्वान्विशदानुवृत्त्या ॥ १२ ॥ ॥ छ ॥

स्थितो वेद वेद्मि । दाने हेतुः—विश्वसृजां वसूनां च मिलितानां सत्रे । हे वसो इति पुरा पूर्वजन्मनि त्वं वसुरभूस्तदा मत्प्राप्तिकामेन त्वयाऽहमिष्टः, अतस्तत्साधनं ददामि दास्यामि । अन्यैर्मत्पराङ्मुखैर्दुष्प्रापम् ॥ ११ ॥ तस्य भाग्यमभिनन्दति । स एष भवो जन्म ते भवानां मध्ये चरमः । यद्यस्मिन्मदनुग्रह आसादितो लब्धः । यत्पुनर्मां रह एकान्ते विशदानुवृत्त्या एकान्तभक्त्या ददृश्वान् दृष्टवानसि एतद्दिष्ट्या । भद्रं जातमित्यर्थः । नृलोकान् नृशब्देन जीवास्तेषां लोकानुत्सृजन्तं वैकुण्ठं गच्छन्तमित्यर्थः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥ ॥छ॥

॥७॥

१ अनाश्रयं सर्वस्याप्याधारत्वादाश्रयान्तररहितम् । २ इन्द्रजालवत्स्वाचिन्त्येच्छाशक्त्याः गतिं वृत्तिं तत्प्रपञ्चतिरोधानलक्षणां मौसललीलाम् । ३ सरस्वतीमिति सप्तम्यर्थे द्वितीया । ४ 'जानन्नहमतन्द्रितः' इति पाठः । ५ सुहृत्सखा इत्यत्र टजभाव आर्ष इति क्रम० । वस्तुतस्तु बहुव्रीहौ टचोऽभावाद्यथास्थितः पाठ एव साधु. । ६ 'प्रमोदभारानतकन्धरस्य' इति पाठः । ७ 'मनसेप्सितं' इति पाठः । ८ अत्र भवानां मध्ये चरम इत्युक्त्या स एष भव इति व्याख्यानम् । 'स एष भावश्चरमः' इति पाठ, तत्र भावो जन्म इत्यर्थः ।

ददामीति यदुक्तं तदेव निर्दिशति । पुरा पूर्वस्मिन्पाद्मे कल्पे । आदिसर्गे सर्गोपक्रमे । मम महिमा लीलाऽवभास्यते येन तत् ॥ १३ ॥ इत्येवमादृतश्चासाधु-कश्चाहम् । प्रतीक्षणं कृपावलोक एवानुग्रहस्तस्य भाजनः पात्रभूतः । पाठान्तरे प्रतिक्षणमनुग्रहस्य पात्रमिति । शुचोऽश्रूणि मुञ्चन्नावभाषे उक्तवानस्मि ॥१४॥ न हि स्वाज्ञाननिवृत्तिमात्रकामोऽहं, किंतु त्वन्निषेवणोत्सुकस्त्वयि चाघटमानाचरणं दृष्ट्वा मे मोहो भवति, अतस्त्वं तत्त्वज्ञानं देहीति प्रार्थयितुमाह—को न्विति । चतुर्षु धर्मादिषु तथापि हे भूमन्, भवत्पदाम्भोजनिषेवणोत्सुकोऽहम् तान्न प्रवृणोमि ॥ १५ ॥ अघटमानाचरणं दर्शयति । कर्माण्यनीहस्य निःस्पृहस्य निष्क्रियस्य वा । अभवस्याजन्मनः भवो जन्म । कालात्मनस्तवारिभयाद्दुर्गाश्रयः पलायनं च स्वात्मनि रतिर्यस्य तस्य वह्वीभिः स्त्रीभिर्गृहस्थाश्रम इति

पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ॥ ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति

॥ १३ ॥ इत्यादृतोक्तः परमस्य पुंसः प्रतीक्षणानुग्रहभाजनोऽहम् ॥ स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चञ्छुचः प्राञ्ज-

लिराबभाषे ॥ १४ ॥ को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ॥ तथापि नाहं प्रवृणोमि भूमन् भव-

त्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥ कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात्पलायनम् ॥ कालात्मनो

यत्प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामिह ॥ १६ ॥ मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्म-

वोधः ॥ पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥ ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच

कस्मै भगवान्समग्रम् ॥ अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद्वृजिनं तरेम ॥ १८ ॥ इत्यावेदितहार्दाय मह्यं

स भगवान्परः ॥ आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥ स एवमाराधितपादतीर्थादधीततत्त्वा-

त्मविबोधमार्गः ॥ प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥ सोऽहं तद्दर्शनाह्लादवियोगा-

र्तियुतः प्रभोः ॥ गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥ ॥ ॥

यदिहास्मिन्विषये विदुषामपि धीः संशयेन खिद्यति ॥ १६ ॥ किंच मन्त्रेषु च प्रस्तुतेषु च सत्सु मामाहूय वै अहो पृच्छेरपृच्छः । अकुण्ठितः कालादिनाऽखण्डः संततः सदात्मा संशयादिरहितो वोधो विद्याशक्तिर्यस्य । मुग्धवदज्ञवत् । अप्रमत्तोऽवहितः सन् ॥ १७ ॥ स्वात्मनस्तव रहो रहस्यं तत्त्वं तस्य प्रकाशकम् । कस्मै ब्रह्मणे । सर्वनामत्वमार्षम् । नोऽस्माकं ग्रहणायापि क्षमं यदि योग्यं तर्हि वद । भर्तः स्वामिन्, यद्यतो वृजिनं संसारदुःखमञ्जसाऽनायासेन तरिष्यामः ॥ १८ ॥ आवेदितो हार्दो हृदिस्थितोऽभिप्रायो येन तस्मै ॥ १९ ॥ आराधितपादो भगवान्स एव तीर्थं गुरुस्तस्मादधीतोऽधिगतस्तत्त्वात्मविबोधस्य परमार्थात्मज्ञानस्य मार्गो येन सोऽहम् । देवं परिवृत्य प्रदक्षिणीकृत्य ॥ २० ॥ तस्य दर्शनेनाह्लादो वियोगेनार्तिश्च ताभ्यां युतो वदर्याश्रमस्थानं गमिष्यामि ॥ २१ ॥

१ पाद्मे इति । यद्यपि द्वितीयस्कन्धे ब्राह्मे कल्पे तत्कथितं तथापि पाद्मे पुनरप्युपदिष्ट कालातिशयेन सदिग्धत्वात् । २ भाजन इत्यत्र पुस्त्वमार्षम् । ३ ममेत्यस्य नाभ्ये पद्मे इत्यनेनान्वयः । 'यदादिसर्गे' इति पाठः । ४ 'प्रतिक्षण' इति पाठः । ५ 'स्नेहोर्ध्वरोमा' इति वीर०पाठः । ६ तन् युगपदेव मौग्ध्यं सार्वज्ञ्यं च । चक्र० । ७ मन्त्रेषु जरासंधवधराजसूयाद्यर्थगमनविचारादिषु । चक्र० ।

मृदु परोपद्रवशून्यम् । तीव्रं दुश्चरम् । दीर्घमाकल्पान्तम् । तेपाते तपश्चरत इत्यर्थः । लोकभावनौ लोकानुग्रहकाङ्क्षौ ॥ २२ ॥ ज्ञानेन विवेकेन ॥ २३ ॥ विश्रम्भाद्विश्वासात् ॥ २४ ॥ यद्यस्माद्विष्णोर्भृत्याः स्वभृत्यप्रयोजनसाधकाः सन्तश्चरन्ति । न हि कृतार्थानामन्यत्फलमस्तीत्यर्थः ॥ २५ ॥ तत्त्वाय मयाराध्य इति । अयं भावः—भगवतैव स्मरणमात्रेण तवापि तत्त्वमुपदिष्टप्रायम् । अथ केवलमसंभावनादिनिवृत्तये ज्ञानी कश्चिदाराध्यः । स च तवाराध्यो मैत्रेयो न त्वहम् । समान्तिक एव त्वदुपदेशे तस्यादिष्टत्वादिति ॥ २६ ॥ प्लावितोऽपनीत उरुस्तापो यस्य । यमस्वसुर्यमुनायाः पुलिने तीरे तां निशां क्षणमिव समुषितः । औपगविः उद्धवः ॥ २७ ॥

यत्र नारायणो देवो नरश्च भगवानृषिः ॥ मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥ ॥ श्रीशुक उवाच ॥ इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् ॥ ज्ञानेनाशमयत्क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥ स तं महाभागवतं व्रजन्तं कौरवर्षभः ॥ विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥ ॥ विदुर उवाच ॥ ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ॥ वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥ ॥ उद्धव उवाच ॥ ननु ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्तिं मे ॥ साक्षाद्भगवतादिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥ ॥ सूत उवाच ॥ इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः ॥ क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥ ॥ राजोवाच ॥ निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ॥ स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥ ॥ श्रीशुक उवाच ॥ ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ॥ संहृत्य स्वकुलं नूनं त्यक्ष्यन्देहमचिन्तयत् ॥ २९ ॥ अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ॥ अर्हत्युद्धव एवाद्धा संप्रत्यात्मवतां वरः ॥ ३० ॥ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः ॥ अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥ एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना ॥ बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥ ॥ ॥ ४ ॥

ब्रह्मशापेन निधनं प्राप्तेषु यद्यस्मात्त्र्याणां ब्रह्मादीनामीशो हरिरप्याकृतिं मनुष्याकारं त्यक्तवान् ॥ २८ ॥ ब्रह्मशापः अपदेशो मिषं यस्य तेन कालेन स्वशक्तिरूपेण । अमोघं वाञ्छितं यस्य । न ह्यत्र शापः प्रभुः, किंतु भगवदिच्छैवेत्यर्थः ॥ २९ ॥ मय्युपरते सति ज्ञानमर्हति ज्ञानयोग्यो भवति ॥ ३० ॥ मत्तः मत्काशादीपदपि न्यूनो न भवति । यद्यस्माद्गुणैर्विषयैर्न क्षोभितः । मद्वयुनं मद्विषयं ज्ञानं लोकस्योपदिशन् ॥ ३१ ॥ एवमनेनाभिप्रायेण शब्दयोनिना वेदकर्त्रा ईजे पूजयामास ॥ ३२ ॥

१ ज्ञानेन 'कृष्णद्युमणिनिम्लोचे' इत्याद्युद्धवोक्तितात्पर्यपर्यालोचनजनितेन । २ तमुद्धवम् । ३ विदुरः । अत्र 'कौरवर्षभ' इति विसर्गहीनपाठे पर्गाभिस्तसुद्धि. । ४ कृष्णपरिजने मुख्यम् । ५ नः इति 'अस्मदो द्वयोश्च' इत्येकत्वेऽपि बहुत्वम् । ६ कौषारवो मैत्रेयऋषिस्ते त्वया तत्त्वसंराध्य इत्यन्वयः । ७ मे मम अन्ति समीपे आदिष्ट इत्यन्वयः । ८ 'शमितोपनीतः' इति पाठः । अत्रापि वृत्तभङ्ग आर्षः । 'सुधया प्लुतोरुतापः' इति वीर० पाठः । ९ 'अतिरथ' इति पाठः । १० मुख्यो हरिरित्यन्वयः । ११ 'स्फीतम्' इति वीर० पाठः । तत्र स्फीतं प्रवृद्धमित्यर्थः । १२ 'गुणैर्निर्जितः' इति पाठः । १३ समाधिना स्फूर्तिविशेषेण । दीपि० । १४ अत्र धार्मिकयदुकुलसंहरणे ।

॥३३॥ अन्येषां पशुतुल्यानाम् । विक्लवात्मनामधीरचित्तानाम् ॥३४॥ मनसेक्षितं चिन्तितम् ॥३५॥ कालिन्द्याः सकाशात्सिद्ध एव विदुरः कतिपयैर्दिनैः स्वःसरितं गङ्गां प्रापद्यत प्राप्तः ॥३६॥ इति श्रीम० तृती० भा०दी०टीकायां चतुर्थोऽध्यायः ॥४॥ ॥ पञ्चमे भगवल्लीलां क्षत्रा पृष्टो महामुनिः ॥ प्रोवाच महदादीनां सर्गं तैश्च हरेः स्तुतिम् ॥१॥ उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसङ्गमः ॥ संवादस्तु तयोः स्कन्धद्वयेनाथ निगद्यते ॥ २ ॥ द्युनद्या गङ्गाया द्वारि हरिद्वारे आसीनं नतु कर्मव्यग्रम् । तत्र हेतुः— अगाधोऽपरिच्छिन्नो बोधो यस्येति । मैत्रेयस्य सौशील्यमार्जवादि, गुणाश्च करुणादयस्तैरभितृप्तः । पाठान्तरे क्षत्तुः सौशील्यादिभिरभितृप्तं संतुष्टं मैत्रेयम् ॥ १ ॥ प्रश्नानेवाह—सुखायेति पञ्चदशभिः । तैः कर्मभिः । सुखं वाऽन्यस्य दुःखस्योपशमं वेत्यर्थः । अथवाऽन्यद्वा न विन्देत । किं तदित्यपेक्षायां तस्यैव निर्देशः । उपारमं

विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः ॥ क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥३३॥ देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् ॥ अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥३४॥ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् ॥ ध्यायन्गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥ कालिन्द्याः कतिभिः सिद्ध अहोभिर्भरतर्षभः ॥ प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥३६॥ ॥ इति श्रीम० म० तृतीयस्कन्धे विदुरोद्धवसंवादे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ७ ॥

॥ श्रीशुक उवाच ॥ द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ॥ क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥ ॥ विदुर उवाच ॥ सुखाय कर्माणि करोति लोको न तैः सुखं वाऽन्यदुपारमं वा ॥ विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः ॥२॥ जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ॥ अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥३॥ तत्साधुवर्यादिश वर्त्म शं नः [12]संराधितो भगवान्येन पुंसाम् ॥ हृदिस्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥ करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ॥ यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥ ॥ ॥

वेति । ततस्तैः कर्मभिर्भूयः पुनःपुनर्दुःखमेव विन्देत । अत्रैवंविधे संसारे नोऽस्माकं यद्युक्तं कर्तुं योग्यं तत्सर्वज्ञो भगवान्वदेन्निरूपयतु ॥२॥ दैवात्प्राचीनकर्मणो निमित्तभूतात्कृष्णाद्विमुखस्यातोऽधर्मशीलस्यातः सुदुःखितस्य जनस्यानुग्रहाय भव्यानि मङ्गलानि भूतानि चरन्ति । भवन्तः परोपकारस्वभावा एवेत्यर्थः ॥३॥ तत्तस्मात् हे साधुवर्य, शं सुखरूपं वर्त्म नः आदिश कथय । येन वर्त्मना संराधितो हृदिस्थितः सन् । सतत्त्वाधिगम आत्मापारोक्ष्यं तत्सहितम् । पुराणमनादिवेदप्रमाणकम् ॥ ४ ॥ करोति कर्माणीत्यादीनां वर्णयेति पञ्चमश्लोके क्रियासंबन्धः । यथा येन प्रकारेण पुरुषरूपेण कृतावतारः सन् त्र्यधीशः त्रिगुणमायानियन्ता अतः स्वतन्त्र एव यानि कर्माणि करोति । कर्माण्येव विशेषतः पृच्छति—यथेत्यादिना । निरीहो निष्क्रियो निःस्पृहो वा संस्थाप्य सुस्थितं कृत्वा । वृत्तिं जीविकाम् ॥५॥

१ कतिभिरहोभिः सिद्धे निष्पन्ने सतीति भावे क्तः । कतिष्वहःसु वृत्तेषु सत्स्वित्यर्थः । चक्र० । २ 'गुणाभितृप्तं' इति पाठे इत्यर्थः । ३ मूले अन्यदित्यव्ययमन्यार्थकम् । ४ 'दुष्करतमम्' इति पाठः । ५ 'मनसा वृतम्' इति पाठः । ६ भागवते उद्धवे । ७ सिद्धः कृतकृत्यः, 'सिद्धोऽहोभिः' इति पाठः । ८ 'शुसरितम्' इति विज० पाठः । ९ 'गुणातितृप्तः' इति पाठः । १० अह न वदामीति त्वया न वाच्यं, भवादृशा परोपकारस्वभावत्वादित्याह—जनस्येति । ११ 'शर्मवर्त्म' इति विज०पाठः । १२ 'आराधितः' इति वीर०पाठः । १३ जनार्दनस्य भूतानीति सामान्यतो भगवद्भक्तनिर्देशः ।

स्वे स्वीये खे हृदयाकाशे निवेश्य स्थापयित्वा । निवृत्ता वृत्तयो यस्य । गुहायां योगमायायाम् । बहुधा ब्रह्मादिरूपेण ॥ ६ ॥ मत्स्याद्यवतारभेदैः क्रीडन् यानि यथा कर्माणि विधत्ते । पुनर्विक्षेपं प्रष्टुमौत्सुक्यमाविष्करोति—मन इति । सुश्लोकाः पुण्यकीर्तयस्तेषां मौलिरिवाधिक्येनोपरि विराजमानस्तस्येत्यर्थः ॥ ७ ॥ अधिलोकनाथो लोकनाथाधिपतिः । अलोकान् लोकालोकपर्वताद्बहिर्भागान् । अचीक्लृपत्कल्पयामास । यत्र येषु सर्वाणि यानि सत्त्वानि तेषां निकायास्तेषां भेदोऽधिकृतस्तत्तत्कर्माधिकारी आश्रित इति वा ॥ ८ ॥ उताऽपि च येन प्रकारेण जीवानामात्मा स्वभावस्तत्कृतं कर्म तत्कृतं रूपं तत्कृता अभिधास्तासां भेदं कृतवान् । विश्वस्रष्टा स्वयमात्मयोनिः स्वतःसिद्धः ॥ ९ ॥ ननु महाभारते त्वया सर्वं श्रुतमेव, किं पुनः प्रश्नैस्तत्राह । परे त्रैवर्णिका अवरे शूद्रादयस्तेषां व्रतानि धर्मा. । मे मया । अभीक्ष्णं पुनः पुनः । तेषां श्रवणेनातृप्नुम तृप्ताः स्म । तेषां तुच्छसुखावहत्वात् । यस्तु तत्र कृष्णकथामृतौघः सूचितस्तस्मादृते ।

यथा[2] पुनः स्वे ख इदं निवेश्य शेते[3] गुहायां स निवृत्तवृत्तिः ॥ योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथासीत् ॥ ६ ॥ क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ॥ मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥ यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सहलोकपालान् ॥ अचीक्लृपद्यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः[1] ॥ ८ ॥ येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त ॥ नारायणो विश्वसृडात्मयोनि[4]रेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥ परावरेषां भगवन्व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ॥ अतृप्नुम[5] क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥१०॥ कस्तृप्नुयात्तीर्थपदोऽभिधानात्सत्रेषु वः सूरिभिरीड्यमानात् ॥ यः[6] कर्णनाडीं पुरुषस्य[7] यातो भवप्रदां गेहरतिं छिनत्ति ॥ ११ ॥ मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः ॥ यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥ १२ ॥ ॥ ॥

तत्र त्वलंबुद्धिर्नास्तीत्यर्थः ॥ १० ॥ तत्र हेतुः—क इति । तीर्थपदः कृष्णस्य । अभिधानात् कथामृतौघात् । सत्रेषु समाजेषु । सूरिभिर्नारदादिभिः ॥ ११ ॥ महाभारतस्याप्यत्रैव तात्पर्यमित्याह । मुनिः कृष्णो वेदव्यासो भगवद्गुणान्मोक्षधर्मान्ते नारायणीयाख्याने वक्तुमिच्छुः सन् । अर्थकामादिवर्णनं तु हरिकथायां मतिप्रवेशार्थमेवेत्याह—यस्मिन्निति । नृणां मतिर्ग्राम्यसुखानुवादैर्द्वारभूतैर्नु निश्चितं हरेः कथायां गृहीता नीता । तदुक्तमितिहाससमुच्चये—'कामिनो वर्णयन्कामाँल्लोभं लुब्धस्य वर्णयन् ॥ नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन् ॥ लोकचित्तावतारार्थं वर्णयित्वाऽत्र तेन तौ ॥ इतिहासैः पवित्रार्थैः पुनरत्रैव निन्दितौ ॥ अन्यथा घोरसंसारबन्धहेतू जनस्य तौ[13] ॥ वर्णयेत्स कथं विद्वान्महाकारुणिको मुनिः ॥' इति ॥ १२ ॥ ॥ ॥

१ प्रतीतः प्रतीतिविषय इति योज्यम । २ 'यथा पुमान्' इति पाठः । ३ शेते ब्रह्मतादात्म्येन तिष्ठति । योगमायाया हेतुरूपया सत्या यथा एतद्विश्वमन्तर्यामिरूपेणानु ब्रह्माण्डमृष्ट्वनन्तरं तस्मिन्नण्डे प्रविष्टः सन् बहुधा ब्रह्मादिरूपेण यथासीदिति योजनीयम । दीपि० । ४ 'विश्वसृगात्मयोनिः' इति पाठः । स च 'सृजिदृशोः' इति सूत्रस्थरज्जुसृड्भ्यामिति भाष्यप्रयोगाद्विश्वसृजः पदान्ते कुत्वाभावादयुक्तः । आर्षं वा कुत्वं कल्प्यम् । ५ तेषामित्यत्र नामिस्तृप्यति काष्ठानामितिवत्षष्ठी । तैरतृप्नुम इत्यर्थः । चक्र० । ६ यः कथामृतौघः कर्णनाडीं कर्णप्रदेशम् । ७ पुरुषस्येति वर्णाश्रमादिनियमो व्यावृत्तः । ८ यस्मिन्भारते । ९ अभिधीयमानात्कथामृतौघादित्यर्थः । १० जनाना कृष्णकथायां मतिप्रवेशार्थम् । ११ व्यासेन । १२ निरुक्तप्रयोजनविरहे । १३ तौ कामलोभौ ।

॥ १३ ॥ एवंभूतायां कथायां ये न रमन्ते
श्रीहरिकथायां मतिप्रवेशस्य फलमाह । सा कथा मतिर्वा । अन्यत्र ग्राम्यसुखे । ततः किमत आह—हरेरिति ॥ १३ ॥ एवंभूतायां कथायां ये न रमन्ते
तान् शोचति । शोच्या ये तेपामपि शोच्यांश्च । तत्राऽविदो भारततात्पर्यानभिज्ञान् शोच्यान् । ये तु ज्ञात्वापि हरेः कथायां विमुखास्तांस्तेपामपि शोच्या-
निति योज्यम् । अनिमिपः कालो येपामायुः क्षिपति । अत्रैव हेतुः—वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येपाम् ॥ १४ ॥ तत्तस्माद्धे कौपारव,
अस्य विश्वस्य शिवाय कथासु सारभूतां हरेः कथामेवोद्धृत्य नः कीर्तय । यथा पुष्पेभ्यो मधु मधुप उद्धरति तद्वदुद्धृत्य ॥ १५ ॥ विशेपतः श्रीकृष्णकथा
कथनीयेत्याशयेनाह—स इति । यो विश्वसर्गाद्यर्थं पूर्वं गृहीतशक्तिः स एव पुरुपेपु कृतावतारः सन् पुरुपानतिक्रम्य वर्तमानानि यानि चकार तानि विस्तरा-

सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ॥ हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते
॥ १३ ॥ तान् शोच्यशोच्यानविदो नु शोचे हरेः कथायां विमुखानघेन ॥ क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावा-
दगतिस्मृतीनाम् ॥ १४ ॥ तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ॥ उद्धृत्य पुष्पेभ्य इवार्तबन्धो
शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥ स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ॥ चकार कर्माण्य-
तिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥ ॥ श्रीशुक उवाच ॥ स एवं भगवान्पृष्टः क्षत्त्रा कौषार-
विर्मुनिः ॥ पुंसां निःश्रेयसार्थेन तमाह बहु मानयन् ॥ १७ ॥ ॥ मैत्रेय उवाच ॥ साधु पृष्टं त्वया साधो लोका-
न्साध्वनुगृह्णता ॥ कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः ॥ १८ ॥ नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ॥
गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः ॥ १९ ॥ माण्डव्यशापाद्भगवान्प्रजासंयमनो यमः ॥ भ्रातुः क्षेत्रे भुजिष्यायां
जातः सत्यवतीसुतात् ॥ २० ॥ भवान्भगवतो नित्यं संमतः सानुगस्य च ॥ यस्य ज्ञानोपदेशाय मादिशद्भगवा-
न्व्रजन् ॥ २१ ॥ अथ ते भगवल्लीला योगमायोपबृंहिताः ॥ विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥

द्वद ॥ १६ ॥ पुंसां निःश्रेयसमेवार्थः प्रयोजनं तेन हेतुना पृष्टः ॥ १७ ॥ वहुमानमेवाह—साध्विति पञ्चभिः । अधोक्षजे एवात्मा मनो यस्य तस्यात्मनः
स्वस्य कीर्तिं च प्रसङ्गाद्वितन्वता ॥ १८ ॥ हरिर्यद्गृहीतः एतच्चित्रं न भवति । कुतः । वादरायणवीर्यजे । ननु वादरायणवीर्यजो धृतराष्ट्रोऽपि भवति, सत्यम्,
परंतु त्वयि ततो विशेप इत्याह—गृहीत इति ॥ १९ ॥ ननु तर्हि कथं शूद्रत्वं, कथं च लोकानुग्राहकत्वं तत्राह—माण्डव्यशापादिति । भ्रातुर्विचित्रवी-
र्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्यां यम एव त्वं जातोऽसि ॥ २० ॥ किंच । भवानिति । कुतः । यस्य तव ज्ञानोपदेशाय मामादिष्टवान् ।
चकारात्त्वयमपि स्मृत्यैवोपदिष्टवानिति ॥ २१ ॥ विश्वस्थित्यादयोऽर्था विपया यासां ताः ॥ २२ ॥ ॥ ॥ ॥

१ 'चचार' इति पाठः । २ मह्य मा प्रसादयितुम् । ३ 'निःश्रेयसार्थाय' इति विज० पाठः ।

तत्र सृष्टिलीलां वर्णयितुं ततः पूर्वावस्थामाह । इदं विश्वमग्रे सृष्टेः पूर्वं परमात्मा भगवानेक एव आस आसीत् । आत्मनां जीवानामात्मा स्वरूपं विभुः स्वामी च । नान्यद्द्रष्टृदृश्यात्मकं किंचिदासीत् । कारणात्मना सत्त्वेऽपि पृथक्प्रतीत्यभावादित्याह । अनानामत्युपलक्षणो नानाद्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यत इति तथा । यद्वा अकारप्रश्लेषं विनैवायमर्थः । यः सृष्टौ नानामतिभिरुपलक्ष्यते स तदैक एवासीदिति । कुतः । आत्मेच्छा माया तस्या अनुगतौ लये सति । यद्वा आत्मन एकाकित्वेनावस्थानेच्छायामनुवृत्तायामित्यर्थः ॥ २३ ॥ तत्र प्रथमं मायोद्भवप्रकारमाह द्वाभ्याम् । स वै एष द्रष्टा सन् दृश्यं नापश्यत् । यत एकराट् एक एव तदा प्रकाशते । आत्मानमसन्तमिव मेने । दृश्याभावे द्रष्टृत्वाभावात् । तदाह । सुप्ता मायाद्याः शक्तयो यस्य सः । न त्वसन्तमेव मेने । यतोऽसुप्ता दृक् चिच्छक्तिर्यस्येति ॥ २४ ॥ सा वै द्रष्टृदृश्यानुसंधानरूपा सदसदात्मिका कार्यकारणरूपा । यद्वा सत् दृश्यम्, असत् अदृश्यमात्मस्वरूपं च तयोरात्मा यस्याः । तदुभयानुसन्धानरूपत्वात् ॥२५॥ कालवृत्त्या कालशक्त्या गुणमय्यां क्षुभितगुणायाम् । अधोक्षजः परमात्मा । आत्मांशभूतेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त ।

भगवानेक आसेदमग्र आत्मात्मनां विभुः॥ आत्मेच्छानुगतावात्माऽनानामत्युपलक्षणः ॥२३॥ स वा एष तदा द्रष्टा नापश्यदृश्यमेकराट्॥ मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥ सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ॥ माया नाम महाभाग ययेदं निर्ममे विभुः ॥ २५ ॥ कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ॥ पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २६ ॥ ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ॥ विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः ॥२७॥ सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ॥ आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ २८ ॥ महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत॥ कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः ॥२९॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥ वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ॥ ३० ॥

वीर्यवांश्चिच्छक्तियुक्तः ॥ २६ ॥ कालप्रेरितादव्यक्तान्मायातः । तत्त्वपदं परित्यज्य महतो लक्षणम्, अतः पुंलिङ्गनिर्देशो विज्ञानात्मेति । सत्त्वप्रधानत्वात्स्वदेहस्थं विश्वसुच्छूनबीजगतमङ्कुरादिरूपं वृक्षमिव व्यञ्जन् व्यञ्जयन्प्रकाशयन् । यतोऽसौ तमो नुदतीति तमोनुदः । तदुक्तं सात्वततन्त्रे—'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते' इति ॥ २७ ॥ अहंकारोत्पत्तिमाह सार्धाभ्याम्—सोऽपीति । अंशश्चिदाभासो निमित्तं, गुणा उपादानं, कालः क्षोभकः, तदात्मा तदधीनः भगवान् सर्वाध्यक्षस्तद्दृष्टिगोचरः सन् स्वयमात्मानं व्यकरोत् रूपान्तरमनयत् ॥ २८ ॥ अहंकारस्य लक्षणमाह । कार्यमधिभूतम्, कारणमध्यात्मम्, कर्तृ अधिदैवं, तेषामात्मा आश्रयः । अत्र हेतुः—भूतेन्द्रियमनोमयस्तद्विकारवान् । मन इति देवानामप्युपलक्षणम् ॥ २९ ॥ एतदेव विभागतः प्रपञ्चयति—वैकारिक इत्यादिना । वैकारिकः सात्त्विकः, तैजसो राजसः । देवाश्च वैकारिकाः, सात्त्विकाहंकारकार्यभूता इत्यर्थः । यतो येभ्य इन्द्रियाधिष्ठातृभ्यो देवेभ्यो हेतुभ्योऽर्थाभिव्यञ्जनं शब्दादिप्रकाशो भवति ॥ ३० ॥ ॥

१ दृश्यं सृष्ट्यर्थं द्रष्टव्यं प्रधानम् । २ यद्वा उत्पत्स्यमानमात्मानं समष्टिविराजं स्वसित्सूक्ष्मरूपेण सन्तमप्यसन्तमेव मेने । प्रकृतीक्षणं विना तस्य प्राकट्यासंभवादिति भाव । चक्र० । ३ 'अनुगतो ह्यात्मा नानाशक्त्युपलक्षणः' इति पाठः । ४ 'सद्रष्टुः' इति पाठे सतो दृश्यस्य द्रष्टुरित्यर्थो ज्ञेयः । ५ 'कालवृत्त्या' इति पाठः । ६ 'भूतेन्द्रियमनोमयः' इति पाठः । ७ विज्ञानात्मा । ८ विकुर्वाणादंशेन परिणतात् । ९ विज्ञानात्मा विशिष्टानुसंधानमयः । १० तत् पुरुषरूपेण महत्स्रष्टृत्वम् ।

तैजसान्येवेत्यन्वयः । ज्ञानमयानां सात्त्विकत्वशङ्का मा भूदित्येवकारः । तामसो भूतसूक्ष्मस्य शब्दस्यादिः कारणम् । यतः शब्दात्खमाकाशो भवति । आत्मनो लिङ्गं स्वगुणेशब्दरूपेण प्रकाशकं हृदयाकाशतया वा । यद्वा लिङ्गं शरीरम् 'आकाशशरीरं ब्रह्म' इति श्रुतेः ॥ ३१ ॥ नभसः खस्मादनुसृतमुद्भूतं स्पर्शं विकुर्वद्रूपान्तरं नयदनिलं वायुम् । एवं सर्वत्र तन्मात्रद्वारा भूतोत्पत्तिरिति ज्ञातव्यम् ॥ ३२ ॥ नभसा सहितः स्वयं चोरुबलान्वितः ततो ज्योतिस्तेजः । लोचनं प्रकाशकम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ हे भव्य विदुर । पाठान्तरे भाव्यं कार्यम् । यद्यदवरमवरं कार्यं तेषां कार्याणां परैः कारणैरनुसंसर्गाद्यथासंख्यं यथाक्रममुत्तरोत्तरमधिकान्गुणान्विदुः । तथाहि नभसः शब्द एव गुणोऽन्यान्वयाभावात् । वायोस्तु स्पर्श आकाशान्वयाच्छब्दश्च । एवं तैजसस्तौ च रूपं च । अम्भसस्तानि रसश्च । मह्याः सर्वे ॥ ३६ ॥ देवा महदाद्यभिमानिनः । विष्णोः कला अंशाः, काललिङ्गं विकृतिः, मायालिङ्गं विक्षेपः, अंशलिङ्गं चेतना,

तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च ॥ तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ ३१ ॥ कालमायांशयोगेन भगवद्वीक्षितं नभः ॥ नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ३२ ॥ अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ॥ ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥ अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम् ॥ आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ ३४ ॥ ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितम् ॥ महीं गन्धगुणामाधात्कालमायांशयोगतः ॥ ३५ ॥ भूतानां नभआदीनां यद्यद्भव्यावरावरम् ॥ तेषां परानुसंसर्गाद्यथासंख्यं गुणान्विदुः ॥ ३६ ॥ एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ॥ नानात्वात्स्वक्रियाऽनीशाः प्रोचुः प्राञ्जलयो विभुम् ॥३७॥ ॥ देवा ऊचुः ॥ नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ॥ यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ ३८ ॥ धातर्यदस्मिन्भव ईश जीवास्तापत्रयेणोपहता न शर्म ॥ आत्मँल्लभन्ते भगवंस्तवाङ्घ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥ ॥छ॥ ॥छ॥ ॥छ॥

तानि विद्यन्ते येषु । अतः समत्वेन नानात्वात्परस्परासंबन्धात्स्वक्रियायां ब्रह्माण्डरचनायामनीशा अशक्ताः सन्तो विभुं परमेश्वरं प्रोचुः ॥ ३७ ॥ मिथः स्पर्धिष्णवो देवानमिलन्तः परस्परम् ॥ विश्वकर्मण्यनीशाना निर्विण्णा हरिमीडिरे ॥ नमामेति । प्रपन्नानां तापोपशमे आतपत्रं छत्रम् । तत्र हेतुः । यस्य पादारविन्दस्य मूलं तलं केत आश्रयो येषां ते । संसारदुःखं बहिर्दूरत उत्क्षिपन्ति परित्यजन्ति । पान्थाः स्वगृहं प्राप्य मार्गश्रममिव ॥ ३८ ॥ श्रमं विनिवेदयन्त आहुः । हे धातः पितः, यत् यस्माद्भवे संसारे । आत्मन्नात्मनि । संबोधनं वा । शर्म सुखम् । ऋते यदिति पाठे यत्पादभजनं विना शर्म न लभन्ते । ननु ज्ञानादज्ञानकृतस्तापो निवर्तते, किं मदङ्घ्रिच्छायाश्रयणेन तत्राहुः । सविद्यां तदाश्रयणमेव विद्याप्रापकमित्यर्थः ॥ ३९ ॥ ॥ ॥

१ ज्ञानेन्द्रियाणाम् । २ स्वगुणशब्दरूपेण 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति, 'शास्त्रयोनित्वात्' इत्यादि श्रुतिसूत्रात्मकशब्दद्वारेत्यर्थः । ३ स्पर्शं स्पर्शतन्मात्रम् । ४ ततो रूपतन्मात्रात् । ५ भाव्यावरावरमित्येवंरूपे । भाव्येषु कार्येषु मध्ये यद्यदवरमवरं कार्यमस्ति तेषामित्यादि । ६ परेण परमेश्वरेण वीक्षितम् । ७ रसमयं रसतन्मात्रद्वारेत्यर्थः । ८ कालेति कालः सृष्टिप्रवर्तकः, माया परेच्छाऽऽभासो विक्षेपशक्तिर्वा, अंशश्चिदाभासस्तत्संबन्धात् । ९ 'भव्यपरात्परम्' इति पाठः । १० 'तापत्रयेणाभिहताः' इति पाठः । ११ धातर्यदित्यत्र ।

अज्ञातस्याश्रयणायोगात्तज्ज्ञानसाधनमाहुः । मार्गन्त्यन्वेषयन्ति यत्तत्तीर्थपदस्तव पदं वयं प्रपन्नाः । कैर्मार्गन्ति, छन्दःसुपर्णैर्वेदपक्षिभिः । तवैव मुखपद्मं नीडं येषाम् । यथा पक्षिणो नीडादुद्गतास्ततस्ततः परिभ्रम्य पुनस्तत्रैव विशन्ति तथा वेदा अपि त्वत्त उद्गतास्त्वय्येव पर्यवस्यन्ति । अतो वेदानाश्रित्य त्वत्पदं मृगयन्त इति । विविक्ते असङ्गे मनसि । किंचाघमर्षमघनाशकमुदकं यासां सरितां तासु वराया गङ्गायाः पदमुद्गमस्थानम् । अतो गङ्गामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवन्तीत्यर्थः ॥ ४० ॥ ननु विषयाकृष्टचित्तानां कुतस्तदन्वेषणं तत्राहुः । यद्धृदयेऽवधाय ध्यात्वा । वैराग्यं बलं यस्य तेन ज्ञानेन धीरा भवन्ति । सरागे चित्ते ध्यानमेव कुतस्तत्राहुः । श्रद्धया श्रवणपूर्विकया भक्त्या च संमृज्यमाने संशोध्यमाने ॥ ४१ ॥ भक्तानुग्रहं स्मरन्त आहुः—विश्वस्येति ॥ ४२ ॥ अन्तर्यामितया नित्यं संनिहितेऽनर्थकं व्रजनमित्याशङ्क्याहुः—यदिति । सानुबन्धे सोपकरणे । असति तुच्छे । पुर्यां स्वदेह एव वसतोऽपि ।

मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते ॥ यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ॥ ४० ॥ यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय ॥ ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् ॥ ४१ ॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते ॥ व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ ४२ ॥ यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ॥ पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ॥ ४३ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश ॥ अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ४४ ॥ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ॥ वैराग्यसारं प्रतिलभ्य बोधं यथाऽञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥ ४५ ॥ ॥७॥ ॥७॥

यत्सुदूरं दुष्प्रापम् ॥ ४३ ॥ ननु यदि हृदिस्थस्यापि पदाब्जं केषांचित्सुदूरं तर्ह्यन्येषामपि तथैव स्यादविशेषादित्याशङ्क्याहुः—तानिति । असद्वृत्तिभिर्बहिर्मुखैरक्षिभिरिन्द्रियैः पराहृतं दूरमपहृतमन्तस्थं मनो येषां ते । अथो अत एव ते नूनं तान्न पश्यन्ति । वै प्रसिद्धम् । कुतः पुनस्तेषां तत्सङ्गः स्यात् । कान् । ते तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्या ये । त्वल्लीलाकथादिभिः शोभमानांस्त्वद्भक्तानित्यर्थः । पथ इति लक्ष्या इति च पाठे त्वत्पदन्यासविलासो लक्ष्यो येषां तान् । पथस्त्वन्मार्गभूतान्सतो मार्गान्वा श्रवणादीन्न पश्यन्तीत्यर्थः । यद्वा ये एवंभूता भागवतास्ते तानुन्मत्तान्नूनं नैव पश्यन्तीत्यन्वयः । सत्सङ्गाभावेन हरिकथाश्रवणाभावाद्धृदि स्थितमपि तेषां सुदूरमिति भावः ॥ ४४ ॥ एतदेव स्फुटयन्ति—पानेनेति द्वाभ्याम् । वैराग्यं सारो बलं यस्य बोधस्य तं लब्ध्वा । अन्वीयुः प्राप्नुयुः । अकुण्ठधिष्ण्यं वैकुण्ठलोकम् ॥ ४५ ॥ ॥ ॥ ॥

१ यदङ्घ्रिसरोजम् । २ यस्य यत्पदं मार्गन्ति तस्य तत्पदं वयं प्रपन्ना इति योज्यम् । यद्याघमर्षेति पाठोऽन्वयक्लेशाभावात् युक्तो भाति । ३ 'अनभार्य' इति पाठः । ४ यत्पदाम्बुजं कर्तृ स्मृतं सत् स्वपुंसामभयं प्रयच्छति । ५ यत्पदाम्बुजं निकटमपि सुदूरं भवति । ६ 'तान्वै ह्यसद्वृत्तिभिः' इति पाठः । ७ यथा यथावत् । ८ संबन्धिनो ये इत्यर्थः । ९ अथो इत्यत्र पथ इति, लक्ष्म्या इत्यत्र लक्ष्या इत्येव पाठः सुवचः नतु लक्ष्यानिति । यत्तच्छब्दयोरनन्वितत्वापत्तेः । लक्ष्यः प्राप्यः दीपि० । १० ननु दर्शनादिनाननुसरणेऽपि याहच्छिकी महत्कृपा तेषु कुतो न जायत इत्याशङ्क्य पक्षान्तरमुक्तं—यद्वेति । ११ उन्मत्तान् भगवद्भक्तद्वेषिणः । १२ हरिपदाब्जमित्यादि । ये सत्सङ्गं हरिकथाश्रवणं च कुर्वन्ति तेषां सुदूरं नेति सिद्धम् । १३ एतदेव हृदिस्थत्वाविशेषेऽपि श्रवणादिना वैशिष्ट्यमेव । दीपि० ।

आत्मनि समाधिर्मनःस्थैर्यं स एव योग उपायस्तस्य बलेन । ज्ञानयोगतः श्रमेण मोक्षः सत्सङ्गतस्त्वत्कथाश्रवणादिना त्वनायासेनैव । अहंममताविष्टानां तु न कथंचिदिति भावः ॥४६॥ तदेवं स्तुत्वा प्रार्थयन्ते चतुर्भिः । तत्तस्मात् हे आद्य, ते त्वदीया वयं यस्माल्लोकानां सिसृक्षया त्वयाऽनुसृष्टाः क्रमेणोत्पादिताः । त्रिभिरात्मभिः सत्त्वादिस्वभावैः अत एव विरुद्धस्वभावत्वाद्वियुक्ताः सन्तो यदर्थं सृष्टास्तत्स्वविहारतन्त्रं त्वत्क्रीडोपकरणं ब्रह्माण्डं ते तुभ्यं प्रतिहर्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमः, अतस्त्वं नः स्वचक्षुः परिदेहीति त्रयाणां श्लोकानां चतुर्थेनान्वयः ॥ ४७ ॥ असामर्थ्यमेव प्रपञ्चयितुं कार्यस्यातिवैचित्र्यमाहुः । भो अज, काले तत्तदवसरे बलिं भोगं यावत्साकल्येन ते तुभ्यं हराम समर्पयाम । यथा येन प्रकारेणान्नमदाम भक्षयामेत्यनेनान्नमात्रं चास्माकम्, ऐश्वर्येण तु भोगस्तवैवेत्युक्तम् । उभयेषां तव चास्माकं च यत्र स्थित्वा इमे जीवा अनूहा अप्रत्यूहा निर्विघ्नाः । यद्वा अनूहा अवितर्काः, निःसंशया इत्यर्थः । तथाच श्रुतिः—'ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदाम' इति ॥ ४८ ॥ अवश्यं च त्वयाऽस्माकमेषां च कार्योपाधीनां जीवानां वृत्तिः परि-

तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया[1] ते ॥ ४६ ॥ तत्ते वयं लोकसिसृक्षयाऽद्य त्वयाऽनुसृष्टास्त्रिभिरात्मभिः स्म[3] ॥ सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ ४७ ॥ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ॥ यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः ॥ ४८ ॥ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ॥ त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ ४९ ॥ ततो[4] वयं सत्प्रमुखा[5] यदर्थे बभूविमात्मन् करवाम किं ते ॥ त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे[6] यदनुग्रहाणाम्[7] ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

कल्पनीया जनकत्वादित्याहुः । नोऽस्माकं सान्वयानां सकार्याणाम् । यद्वा । अन्वेतीत्यन्वयः कारणं तत्सहितानां त्वमेवाद्यः कारणम् । अत्र हेतवः । कूटस्थोऽविक्रियः । पुरुषोऽधिष्ठाता । पुराणः पुरातनः । एतदुपपादयन्ति—त्वमिति । हे देव, अज एव त्वं गुणानां सात्त्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां शक्त्यां मायायां प्रथमं रेतं आदधे । निहितवानसीत्यर्थः । कीदृशम् । कविं सर्वज्ञं महत्तत्त्वरूपम् ॥ ४९ ॥ तथा हे आत्मन् देव, सत्प्रमुखा महदादयो वयं यदर्थं बभूविम, तत्किं ते कार्यं करवाम । सृष्टिमिति चेत्तत्राहुः । तर्हि नोऽस्माकं त्वं स्वचक्षुः स्वीयं ज्ञानं शक्त्या सह परिदेहि प्रयच्छ । यस्मात्त्वत्त एवानुग्रहो येषां ते यदनुग्रहास्तेषामस्माकम् । क्रियार्थे इयानेवैतावाननुग्रहो येषामित्येकं वा पदम् । त्वदीयज्ञानक्रियाशक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथेत्यर्थः ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

१ अन्नं यत्किंचिद्देवदत्त स्वस्वोपजीव्यम् । २ सेवा सत्सङ्गरूपा त्वत्कथाश्रवणादिरूपा च । ३ 'रात्मनि स्वे' इति वीर० पाठः । ४ 'तत्ते वय' इति पाठः । ५ 'सत्प्रमुखाः' इति पाठः । महदाद्याः वयमिति चक्रवर्ती । ६ सर्जनक्रियारूपार्थे । ७ 'त्वदनुग्रहाणाम्' इति पाठः । ८ रेतः समष्टिजीवरूपम् ।

पष्ठे तैरीश्वराविष्टैः सृष्टिमाह विराट्तनोः ॥ अधिदैवादिभेदं च तत्रैव भगवत्क्रमात् ॥ ॥ स्वशक्तीनां महदादीनामसमेत्यामिलित्वा सतीनां स्थितानाम् । प्रसुप्तं लोकतन्त्रं विश्वरचना यासाम् । यद्वा प्रसुप्तजीवोपकरणानां गतिं स्थितिं दृष्ट्वा आविशदित्युत्तरेणान्वयः ॥ १ ॥ कालेन संज्ञा उद्बोधो यस्याः, कालयति क्षोभयति स्वकार्याणीति वा कालसंज्ञा प्रकृतिस्तां शक्तिम् । प्रकृत्या सह प्रवेशात्त्रयोविंशतितत्त्वानामित्युक्तम् । अन्तर्यामितया प्राविशत् ॥ २ ॥ चेष्टारूपेण क्रियाशक्त्या । कर्म तेषां क्रियां जीवानामदृष्टं वा ॥३॥ प्रबुद्धं कर्म क्रियाशक्तिर्यस्य स त्रयोविंशतेर्गणः दैवेनेश्वरेण प्रेरितः । मात्राभिरंशैः । अधिपूरुषं विराड्देहम् । ॥४॥ जननमेवाह । परेणेश्वरेण । विश्वसृजां सत्त्वानां गणः । मात्रया चुक्षोभ परिणतो न सर्वात्मना । यस्मिँल्लोकाः स्थिताः ॥५॥ स पुरुषोऽधिपुरुष इत्युक्तः । आण्डकोशे ब्रह्माण्डकोशे ब्रह्माण्डमध्ये । सर्वैः सत्त्वैरनुशायिभिर्जीवैः सहितः ॥ ६ ॥ गर्भः कार्यरूपो विराट् । देवशक्तिर्ज्ञानशक्तिस्तयैकधा हृदयावच्छिन्नचैत-

॥ ऋषिरुवाच ॥ इति तासां स्वशक्तीनां सतीनामसमेत्य सः ॥ प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥ १ ॥ कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ॥ त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् ॥ भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥ प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ॥ प्रेरितोऽजनयत्स्वाभिर्मात्राभिरधिपूरुषम् ॥ ४ ॥ परेण विशता स्वस्मिन्मात्रया विश्वसृड्गणः ॥ चुक्षोभान्योन्यमासाद्य यस्मिँल्लोकाश्चराचराः ॥ ५ ॥ हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ॥ आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥ स वै विश्वसृजां गर्भो देवकर्मात्मशक्तिमान् ॥ विबभाजात्मनात्मानमेकधा दशधा त्रिधा ॥ ७ ॥ एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ॥ आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥ साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा ॥ विराट् प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥ स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ॥ विराजमतपत्स्वेन तेजसैषां विवृत्तये ॥ १० ॥ ॥ ॥ ॥

न्यरूपेण । कर्मशक्तिः क्रियाशक्तिस्तया दशधा प्राणरूपेण प्राणादयः पञ्च 'नागः कूर्मश्च कृकलो देवदत्तो धनंजयः' इत्येते पञ्च । एवं वृत्तिभेदेन दशविधः प्राणः । आत्मशक्तिर्भोक्तृशक्तिस्तयाऽध्यात्माधिभेदेन त्रिधात्मानं विभक्तं कृतवान् ॥७॥ एवं विभागसामर्थ्याय तस्योत्कर्षमाह—एष हीति । अशेषसत्त्वानां प्राणिनामात्मा । व्यष्टीनां तदंशत्वात् । अंशो जीवः । अवतारत्वोक्तिस्तस्मिन्नारायणाविर्भावाभिप्रायेण ॥ ८ ॥ पूर्वश्लोकार्थं विवृणोति । साध्यात्मः अध्यात्मानीन्द्रियाणि तत्सहितः । विराडिति सर्वत्र ॥ ९ ॥ अध्यात्मादिभेदं प्रपञ्चयितुमाह—स्मरन्निति । विज्ञापितं 'यावद्बलिं तेऽज हराम' इत्यादि । स्वेन तेजसा चिच्छक्त्या । अतपत् एवं करिष्यामीत्यालोचितवान् । 'यस्य ज्ञानमयं तपः' इति श्रुतेः । विवृत्तये विविधवृत्तिलाभाय ॥ १० ॥ ॥ ॥



१ तैर्महदादिभिः कर्तृभिः । २ तत्रैव विराड्येन । ३ अप्रबुद्धलोकरचनासामर्थ्यानामित्यर्थः । ४ चेष्टारूपेण पूर्वोक्तेन कालाख्येनैव कारणभूतेन । 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुः' इत्युक्तेः दीपि० । ५ 'क्वाहं तमोमहदहंखचराग्निवार्भूः' इत्याशुकेः । ६ सर्वात्मना परिणामे तत्र तत्र कार्याणां स्वस्वकारणे लयोक्तिर्विरुध्येत । ७ त्रयोविंशेति महदहंकारपञ्चभूतपञ्चतन्मात्रैकादशेन्द्रियरूपाणाम् । ८ विशता सता । ९ 'विश्वसृग्गणः' इति पाठः । १० परस्परमासाद्य संहत्य चुक्षोभेत्यर्थः । ११ महदादीनाम् ।

मे मत्तः शृणु ॥ ११ ॥ आयतनान्येवाह—तस्याग्निरित्यादि चतुर्दशभिः । आस्यं निर्भिन्नं पृथग्जातम् । पदं स्वस्थानम् । स्वांशेन स्वशक्त्या वाचा सहाविशत् ।
असौ जीवः वक्तव्यं प्रतिपद्यते, शब्दमुच्चारयतीत्यर्थः । सर्वत्र यन्निर्भिन्नं तदधिष्ठानम् । अग्न्यादिप्रथमान्तमधिदैवम् । वागादीन्द्रियम् । तृतीयान्तमध्यात्मम् ।
प्रतिपत्तव्यमधिभूतम् ॥१२॥ हरेर्विराजः ॥१३॥१४॥ त्वष्टा आदित्यः ॥१५॥ प्राणेनेति । प्राणवद्देहव्यापिना त्वगिन्द्रियेणेत्यर्थः ॥१६॥ शब्दस्य सिद्धिं ज्ञानम्

अथ[2] तस्याभितप्तस्य कति चायतनानि[3] ह ॥ निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥११॥ तस्याग्निरास्यं निर्भिन्नं
लोकपालोऽविशत्पदम् ॥ वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते[5] ॥१२॥ निर्भिन्नं तालु वरुणो लोकपालोऽविश-
द्धरेः ॥ जिह्वयांऽशेन च रसं ययाऽसौ प्रतिपद्यते ॥१३॥ निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम्[6] ॥ घ्राणेनांशेन[7]
गन्धस्य प्रतिपत्तिर्यतो भवेत् ॥ १४ ॥ निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशद्विभोः ॥ चक्षुषांशेन[8] रूपाणां प्रतिप-
त्तिर्यतो भवेत् ॥ १५ ॥ निर्भिन्नान्यस्य चर्माणि[9] लोकपालोऽनिलोऽविशत् ॥ प्राणेनांशेन[10] संस्पर्शं येनासौ प्रतिपद्यते
॥१६॥ कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ॥ श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥१७॥ त्वचमस्य
विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः ॥ अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥१८॥ मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं
क उपाविशत् ॥ रेतसांऽशेन[11] येनासावानन्दं प्रतिपद्यते ॥१९॥ गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् ॥ पायु-
नांऽशेन येनासौ विसर्गं प्रतिपद्यते ॥२०॥ हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिरा[12]विशत् ॥ वार्तयांऽशेन पुरुषो यया
वृत्तिं प्रपद्यते ॥ २१ ॥ पादावस्य विनिर्भिन्नौ लोकेशो विष्णुरा[13]विशत् ॥ गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते
॥ २२ ॥ (बुद्धिं[14] चास्य विनिर्भिन्नां वागीशो[15] धिष्ण्यमाविशत् ॥ बोधेनांशेन बोद्धव्यं प्रतिपत्तिर्यतो भवेत्) ॥२३॥

॥१७॥ त्वचं चर्म । ओषधीरोषधयः । त्वगिन्द्रियस्यैव स्थानभेदेन विषयद्वयं कण्डूः स्पर्शश्च । तत्र चायं नामभेदो देवताभेदश्चेति द्वितीयस्कन्ध एव व्याख्या-
तम् ॥ १८ ॥ कः प्रजापतिः ॥ १९ ॥ २० ॥ स्वर्पतिः स्वर्गस्य पतिः । वार्तया क्रयविक्रयादिशक्त्या । वृत्तिं जीविकाम् ॥ २१ ॥ २२ ॥ २३ ॥ ॥

१ स्वशक्त्या वह्निशक्त्या । एवं परत्रापीन्द्रियाणा स्वस्वदेवताशक्तिरूपत्वं व्याख्येयम् । २ अथ ईश्वरालोचनानन्तरम् अभितप्तस्य लोचनविषयीभूतस्य तस्य विराजः निरभिद्यन्त पृथ-
क्पृथग्जातानि । दीपि० । ३ आस्यादीनि । ४ अग्न्यादीनाम् । ५ प्रतिपद्यते अनुभवति । ६ नासारूपं स्थानम् । ७ अंशेन देवताशक्तिरूपेण घ्राणेन्द्रियेण सह । ८ आदित्यशक्तिरूपेण
चक्षुरिन्द्रियेण सह । ९ चर्मोपलक्षिता त्वगित्यर्थः । १० अंशेन वायुशक्तिरूपेण प्राणेन त्वगिन्द्रियेण । ११ अंशेन प्रजापतेः संतानोत्पादकशक्तिरूपेणेन्द्रियेण सह । १२ अत्राहरादित्वाद्रेफः ।
स्वःपतिरित्यपि पाठः । १३ विष्णुस्तदाविष्टो देवविशेषः स्वांशेन स्वशक्त्या गत्या इन्द्रियेण सह प्राप्यं गमनेन प्राप्तव्यं यज्ञियद्रव्यं द्वितीयसवादात् दीपि० । १४ अयं श्लोको वीरराघवसंगृही-
तोऽस्ति परं च नायं श्रीधरस्वामिसमतः । तस्याग्निरास्यमित्यस्यैवाध्यायस्य १२ श्लोकव्याख्याने तस्याग्निरित्यादिचतुर्दशभिरिति प्रतीके प्रतिज्ञानात् अग्रे च सत्त्वं चास्येति २६ श्लोकव्याख्यायां सत्त्व-
मिति बुद्धिचित्तयोरभेदेन निर्देश इति कथनाच्च । १५ वागीशो ब्रह्मा बोधेन सर्वव्यवहारहेतुव्यवसायेनांशेनेन्द्रियेण सह बोद्धव्यस्य ज्ञेयस्य व्यवह्रियमाणवस्तुनः प्रतिपत्तिर्ज्ञानम् । दीपि० ।

विक्रियां संकल्पादिरूपाम् ॥२४॥ आत्मानमहंकारम् । अभिमन्यतेऽनेनेत्यभिमानो रुद्रः । कर्मणाऽहंवृत्त्या । कर्तव्यमिति क्रियाम् ॥ २५ ॥ सत्त्वमिति बुद्धिचित्तयोरभेदेन निर्देशः । महानिति ब्रह्मा । चित्तेन चेतनया ॥२६॥ त्रिलोकोत्पत्तिमाह—शीर्ष्ण इति । वृत्तयः परिणामाः ॥२७॥ एतदेव प्रपञ्चयति द्वाभ्याम् । आत्यन्तिकेनोर्जितेन । 'पण व्यवहारे'। पणन्ते यागादिना व्यवहरन्तीति पणयो मनुष्याः ताननु एतदुपकरणभूता ये गवादयस्तेऽपि धरां प्रपेदिरे ॥२८॥ तृतीयं तमस्तदीयेन तामसेन । उभयोर्द्यावापृथिव्योरन्तरं मध्यं व्योमान्तरिक्षं तदेव भगवतो नाभिस्तामाश्रिता रुद्रपार्षदा रुद्रस्य पार्षदानां भूतादीनां गणाः ॥ २९ ॥ अवर्तत प्रवृत्तम्। ब्रह्म वेदः। यस्तून्मुखत्वान्मुखोद्भवत्वाद्वर्णानां मुख्यः मुखमिव प्रथमो गुरुश्च अभूत्सोऽपि मुखतोऽवर्ततेत्यनुषङ्गः । अध्यापनादिना ब्राह्मणस्य वेदो

हृदयं चास्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत् ॥ मनसांऽशेनं येनासौ विक्रियां प्रतिपद्यते ॥ २४ ॥ आत्मानं चास्य निर्भिन्नमभिमानोऽविशत्पदम् ॥ कर्मणांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥२५॥ सत्त्वं चास्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् ॥ चित्तेनांशेन येनासौ विज्ञानं[2] प्रतिपद्यते ॥२६॥ शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ॥ गुणानां वृत्तयो येषु[3] प्रतीयन्ते सुरादयः ॥२७॥ आत्यन्तिकेन[4] सत्त्वेन दिवं देवाः प्रपेदिरे ॥ धरां रजःस्वभावेन पणयो ये च ताननु ॥ २८ ॥ तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ॥ उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः ॥२९॥ मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ॥ यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः ॥३०॥ बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ॥ यो जातस्त्रायते वर्णान् पौरुषः कण्टकक्षतात् ॥३१॥ विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः[5] ॥ वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥ ३२ ॥ पद्भ्यां भगवतो जज्ञे शुश्रूषाधर्मसिद्धये ॥ तस्यां जातः पुरा शूद्रो यद्वृत्त्या[10] तुष्यते हरिः ॥ ३३ ॥ एते वर्णाः स्वधर्मेण यजन्ति[6] स्वगुरुं हरिम् ॥ श्रद्धयात्मविशुद्ध्यर्थं यज्जाताः सह[7]वृत्तिभिः ॥ ३४ ॥ एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ॥ कः श्रद्दध्यादुपाकर्तुं[8] योगमायाबलोदयम्[9] ॥ ३५ ॥

वृत्तिः । तया वृत्त्या सह ब्राह्मणो मुखतो जात इत्यर्थः । एवमुत्तरत्र वर्णत्रयेऽपि ज्ञातव्यम् ॥३०॥ क्षत्रं पालनरूपा वृत्तिस्तत्क्षत्रमनुव्रतोऽनुसृतः क्षत्रियोऽपि बाहुभ्योऽवर्तत इत्यर्थः । तदनुव्रतत्वमेवाह—य इति । पौरुषः पुरुषस्य विष्णोरंशः । कण्टकाश्चोरादयस्तेभ्यो यत्क्षतमुपद्रवस्तस्मात्त्रायते रक्षति ॥३१॥ विशः कृष्यादिव्यवसायाः । लोकस्य वृत्तिकरीर्जीविकाहेतवः । तस्य विभोरूर्वोः प्रवृत्ताः । तदुद्भव ऊरुजो वार्तां जीविकां यः स्ववृत्त्या संपादितवान् ॥३२॥ तस्यां निमित्तभूतायाम् । यस्य वृत्त्या हरिः स्वयमेव तुष्यति॥३३॥यत् यस्माज्जाताः गुरुत्वाज्जनकत्वाद्वृत्तिप्रदत्वाच्च हरेराराधनं तेषां परो धर्म इत्यर्थः॥३४॥ भो क्षत्तः, दैवकर्मात्मरूपिणः कालकर्मस्वभावशक्तिमतो भगवतो योगमायाबलेनोज्जृम्भितमेतद्विराड्रूपमुपाकर्तुं साकल्येन निरूपयितुं कः श्रद्दध्यादिच्छेत । इच्छाऽप्यशक्या निरूपणं तु दूरत इत्यर्थः ॥३५॥

१ सुखाद्युत्पत्तिसाधनेनेन्द्रियेण सह । २ विज्ञानमनुसंधानम् । 'चेतव्यं प्रतिपद्यते' इति पाठे चेतव्यं चेतनामिति व्याख्यानम् । ३ शुभ्रभृतिषु लोकेषु । ४ 'औत्पत्तिकेन' इति विज० पाठः । ५ वृत्तिकरीर्वृत्तिकर्यः । ६ यजन्ति तस्मिंस्तदर्पणेन तमाराधयन्तीत्यर्थः । ७ सहवृत्तिभिरिति हरियजने जीविकार्थं चिन्ता न कार्येति भाव इति चक्रवर्ती । ८ 'उदाहर्तुम्' इति विज० पाठः । ९ योगमायात्र विश्वसृष्ट्यादिशक्तिः इति क्रम० । १० यस्य वृत्त्या ब्राह्मणवैष्णवसेवारूपया ।

अङ्ग विदुर, अथापि हरेः कीर्तिं कीर्तयामि । यथाश्रुतं गुरुमुखात् । तदपि न सर्वात्मना, किंतु यथामति स्वमत्यनुसारेण । अन्याभिधा हरिव्यतिरिक्तार्था-भिधानं तया असतीं मलिनां स्वीयां वाचं सत्कर्तुं पवित्रीकर्तुम् ॥ ३६ ॥ अज्ञात्वापि यथामति कीर्तने श्रवणे वा आवश्यकं कैवल्यमित्याह । एकान्ततो लाभं नु निश्चितमाहुः । श्रुतेः श्रोत्रस्य । उपाकृतायां निरूपितायाम् । उपसंप्रयोगं सन्निधावर्पणम् ॥ ३७ ॥ न चातीव ज्ञाने निर्बन्धः कर्तव्यः, ब्रह्मणोऽपि दुर्ज्ञे-यत्वादित्याह । आत्मनो हरेर्महिमा योगविपक्वयापि धिया संवत्सरसहस्रान्तेऽप्यादिकविना ब्राह्मणापि किमवसितः किं ज्ञात इति काक्वा एतावा-निति न ज्ञात एवेत्युक्तम् ॥ ३८ ॥ यत् यस्मात्स्वयमप्यात्मा हरिरात्मवर्त्म स्वमायागतिमेतावदिति न वेद, अनन्तत्वात् ॥ ३९ ॥ अतो दुर्ज्ञेयत्वात्केवलं नम-स्करोति—यत इति । यस्य ज्ञानाय प्रवृत्ता वाचोऽपि मनसा सह तमप्राप्यैव न्यवर्तन्त दुर्ज्ञेयत्वात् । न केवलं वाङ्मनसी, अहमहंकारस्याधिष्ठाता रुद्रोऽपि ।

अथापि[1] कीर्तयाम्यङ्ग यथामति यथाश्रुतम् ॥ कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधाऽसतीम् ॥ ३६ ॥
एकान्तलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः ॥ श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगम्
॥३७॥ आत्मनोऽवसितो वत्स महिमा कविनाऽऽदिना ॥ संवत्सरसहस्रान्ते धिया योगविपक्वया ॥ ३८ ॥ अतो भग-[3]
वतो माया मायिनामपि मोहिनी ॥ यत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥३९॥ यतोऽप्राप्य न्यवर्तन्त[4] वाचश्च
मनसा सह ॥ अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे
षष्ठोऽध्यायः ॥ ६ ॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ॥ प्रीणयन्निव भारत्या विदुरः
प्रत्यभाषत ॥ १ ॥ ॥ विदुर उवाच ॥ ब्रह्मन्कथं भगवतश्चिन्मात्रस्याविकारिणः ॥ लीलया चापि युज्येरन्निर्गुणस्य गुणाः
क्रियाः ॥ २ ॥ क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः ॥ स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यतः ॥ ३ ॥

इमे इन्द्रियाधिष्ठातारो देवा अन्ये च ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ सप्तमे संशयच्छेदि प्रतिनन्द्य मुनेर्वचः ॥ पुनः क्षत्त्रा कृता नाना प्रश्नाः सम्यगुदीरिताः ॥ १ ॥ 'अथ ते भगवल्लीलायोगमायोपबृंहिताः' इत्यादिना मायागुणैर्लीलया भगवान् सृष्ट्यादि करोतीत्येवं ब्रुवाणं मैत्रेयं भारत्या प्रार्थनारूपया प्रीणयन्निवेत्यभिप्रायाज्ञानेनाक्षेपात्[5] ॥ १ ॥ निर्विकारस्य[6] क्रिया, निर्गुणस्य च गुणाः कथम् । लीलयेत्युक्तिः प्रयोजनाभावं परिहरति न वस्तुविरोधमिति भावः ॥ २ ॥ अर्भकवल्लीलापि न युज्यते वैषम्यादित्याह[7] । उद्यमयति प्रवर्तयतीत्युद्यमः । अर्भकस्य क्रीडायां प्रवृत्तिहेतुः कामोऽस्ति । अन्यतस्तु वस्त्वन्तरेण बालान्तरप्रवर्तनेन वा तस्य क्रीडेच्छा भवति । ईश्वरस्य तु स्वतस्तृप्तस्य कथं कामोऽन्यतः सदा निवृत्तस्य चासङ्गाद्द्वितीयस्य कथमन्यतश्चिक्रीडिषेत्यर्थः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ एकान्ततोऽव्यभिचारेण । २ 'तथापि' इति पाठः । ३ 'अहो भागवती माया' इति पाठः । ४ 'निवर्तन्ते' इति पाठः । ५ आक्षेपात् मैत्रेयकृतसिद्धान्तस्य तिरस्कारात् ।
६ निर्विकारस्यावस्थान्तरप्राप्तिरूपविकारशून्यस्य । दीपि० । ७ वैषम्याद्बालेश्वरयोः सकामत्वस्वतस्तृप्तत्वादिना विषमत्वात् ।

यच्चोक्तं 'स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजे' इत्यादिनाऽविद्योपाधेर्जीवस्य भोगार्थमीश्वरः सृष्ट्यादि करोतीति तदप्याक्षेप्तुमनुवदति—अस्राक्षीदिति । गुणमयी आत्मनो जीवस्य कर्तृत्वभोक्तृत्वादिमोहोत्पादिका या माया तया सृष्टवान् । तदुक्तं प्रथमे 'यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥' इत्यादिना । अत्र च 'अतो भगवतो माया मायिनामपि मोहिनी' इति । संस्थापयति पालयति । प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति । पाठान्तरे प्रातिलोम्येनात्मन्यभितो धारयिष्यति ॥ ४ ॥ एतच्च जीवस्याविद्याश्रयत्वे घटेत, नतु तत्संभवतीत्याह—देशत इति । योऽसौ देशादिभिरविलुप्तावबोध आत्मा जीवः, ब्रह्मस्वरूपत्वात् । स कथमजयाऽविद्यया युज्येत । तत्र देशतो दीपप्रभाया इव लोपो नास्ति, सर्वगतत्वात् । न कालतः, विद्युत इव नित्यत्वात् । नावस्थातः, स्मृतिवदविक्रियत्वात् । न स्वतः, स्वप्नवत्सत्यत्वात् । नान्यतः, घटादिवदद्वितीयत्वात् । एवमेतैर्यस्य बोधो न लुप्यते स कथमजया युज्येत । अजा चात्राविद्यैव न माया, तस्या अवबोधेन विरोधाभावात् ॥५॥ किंच ब्रह्मरूपत्वादेव जीवस्य संसारोऽपि न विद्यत इत्या-

अस्राक्षीद्भगवान्विश्वं गुणमय्यात्ममायया ॥ तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति ॥ ४ ॥ देशतः कालतो योऽसावस्थातः स्वतोऽन्यतः ॥ अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥ ५ ॥ भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः ॥ अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥ एतस्मिन्मे मनो विद्वन् खिद्यतेऽज्ञानसंकटे ॥ तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ॥ प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ८ ॥ ॥ मैत्रेय उवाच ॥ सेयं भगवतो माया यन्नयेन विरुध्यते ॥ ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ९ ॥ यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ॥ प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥ १० ॥ यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ॥ दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥ ११ ॥ ॥

क्षिपति । सर्वक्षेत्रेष्ववस्थितो भोक्तापि वस्तुतो भगवानेव, चिद्रूपत्वेन तद्व्यतिरेकाभावात् । एवं च सत्यमुष्य जीवस्य दुर्भगत्वमानन्दादिभ्रंशः कर्मभिर्हेतुभूतैः क्लेशो वा कुतः, कर्मसंबन्धाभावात् । अन्यथेश्वरस्यापि तत्प्रसङ्गः स्यादिति भावः ॥ ६ ॥ अज्ञानमेव संकटं दुर्गं तस्मिन् । तन्मानसं कश्मलं मोहं पराणुद अपाकुरु ॥७॥ चोदित आक्षिप्तः स्मयन्निव प्रौढिमाविष्कुर्वन्निव । वस्तुतस्तु गतस्मयः ॥ ८ ॥ भगवतोऽचिन्त्यशक्तेरीश्वरस्य सेयं माया यन्नयेन तर्केण विरुध्यत इति यत् । तर्कविरोधमेवानुवदति । विमुक्तस्यैव पुंसोऽविद्याबन्धनं कार्पण्यं चेति ॥ ९ ॥ अत्रोदाहरणमाह । यत् यथा अर्थेन शिरश्छेदादिना विनाप्युपद्रष्टुः स्वप्नसाक्षिणो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते तद्वत् ॥ १० ॥ तर्हीश्वरस्यापि किं न प्रतीयेत, तत्राह । यथा जले प्रतिबिम्बितस्यैव चन्द्रमसो जलोपाधिकृतः कम्पादिधर्मो दृश्यते, न त्वाकाशे स्थितस्य । तथाऽनात्मनो देहादेर्धर्मोऽसन्नपि तदभिमानिनो द्रष्टुरात्मनो जीवस्यैव नत्वीश्वरस्येत्यर्थः ॥ ११ ॥

१ तया संस्थापयत्येतदात्मन्प्रत्यभिधास्यतीत्येवंरूपे । प्रातिलोम्येन सृष्टिप्रतिलोमतया । २ 'खिद्यत्यज्ञानसंकटे' इति पाठे परस्मैपदमार्षम् । ३ पुंसो जीवस्य यद्यया माययैव अविद्यया स्ववृत्त्या बन्धनं गुणमयजालप्रवेशः कार्पण्यं स्वरूपज्ञानतिरोभावश्चासन्नपि प्रतीयते सेयं भगवतो मायेत्यन्वयः । दीपि० । ४ एवं च सति वस्तुतो ब्रह्मत्वे सति । ५ अन्यथा वस्तुतो ब्रह्मत्वेऽपि दुर्भगत्वादिसत्त्वं तत्प्रसङ्गो दुर्भगत्वादिप्रसङ्गः । ६ प्रौढिमुत्तरदाने प्रागल्भ्यम् । अत्र 'विस्मयमाविष्कुर्वन्निव' इति पाठः । ७ अत्र असतोऽपि बन्धादेः प्रतीतौ ।

तन्निवृत्त्युपायमाह । स वै अनात्मनो गुणो निवृत्तिधर्मेण वासुदेवस्यानुकम्पा तया च तस्मिन्भक्तियोगस्तेन तिरोधत्तेऽदृश्यो भवति । शनैरित्यनेन साधनानु-
सारेणेत्युक्तम् ॥ १२ ॥ तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह । यदेन्द्रियाणामुपरामो नैश्चल्यम् । क । द्रष्टुरात्मन्यन्तर्यामिरूपे । अथानन्तरमेव । कृत्स्नक्लेश-
विलयमात्रे दृष्टान्तः संसुप्तस्येवेति । नतु पुनरुत्थाने ॥ १३ ॥ भक्तियोगेन क्लेशनिवृत्तिं दर्शयति—अशेषेति । गुणानामनुवादश्च श्रवणं च । आत्मनि मनसि
लब्धा श्रवणकीर्तनापेक्षया सप्रेमध्याने किं पुनर्न्यायोक्तिः ॥ १४ ॥ उत्तरमभिनन्दन्नात्मनः कृतार्थतामाविष्करोति—संछिन्न इति पड्भिः । चिद्रूपत्वाविशे-
षेऽपि कथमीश्वरस्य जगत्कर्तृत्वादि, कथं वा जीवस्य संसार इति यः संशयो ममासीत्स तव सूक्तं सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन संछिन्नः । अत इदानीं
मे मन उभयत्रापीश्वरस्वातन्त्र्ये जीवपारतन्त्र्ये च संप्रधावति सम्यक् प्रविशति । एवं वाऽविलुप्तावबोधरूपस्यात्मनः कथमविद्यया बन्धः, कुतो वा तन्निवृ-
त्तिरिति संशयः । उभयत्रेति, बन्धे मोक्षे चेत्यर्थः ॥ १५ ॥ यस्मात्त्वया साधु व्याहृतम् । किं तत् । हरेः शक्तिर्या आत्ममाया जीवविषया माया तदयनं

स वै निवृत्तिधर्मेण वासुदेवानुकम्पया ॥ भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥१२॥ यदेन्द्रियोपरामोऽथ द्रष्ट्रात्मनि
परे हरौ ॥ विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥ अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ॥
कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १४ ॥ ॥ विदुर उवाच ॥ संछिन्नः संशयो मह्यं तव सूक्ता-
सिना विभो ॥ उभयत्रापि भगवन् मनो मे संप्रधावति ॥१५॥ साध्वेतद्व्याहृतं विद्वन्नात्ममायायनं हरेः ॥ आभा-
त्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः ॥ १६ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ॥ तावुभौ सुखमेधेते क्लिश्य-
त्यन्तरितो जनः ॥ १७ ॥ अर्थाभावं विनिश्चित्य प्रतीतस्यापि नात्मनः ॥ तां चापि युष्मच्चरणसेवयाऽहं पराणुदे
॥ १८ ॥ यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ॥ रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥ ॥

त्तदाश्रयमेतद्दुर्भगत्वादिकं भातीति । यत् यस्मात्स्वशिरश्छेदादिवदपार्थमवस्तुभूतं निर्मूलं मूलशून्यं च । यस्मादस्य मूलं विश्वस्य मूलं स्वाज्ञानं बहिर्विना नास्ति
॥ १६ ॥ अल्पज्ञत्वात्पूर्वं मम संशयो जात इत्याह—यश्चेति । मूढतमो देहाद्यासक्तो यश्च बुद्धेः प्रकृतेः परमीश्वरं प्राप्तः, तौ सुखं यथा भवति तथा एधेते जीवत
इत्यर्थः । संशयक्लेशाभावात् । यस्तु दुःखानुसंधानेन प्रपञ्चं जिहासति स्वानन्दसंवेदनाभावाद्धातुं न शक्नोति स तु क्लिश्यतीत्यर्थः ॥ १७ ॥ इदानीं तु कृता-
र्थोऽस्मि, यतस्त्वया संशयश्छिन्नः, केवलं बाधितानुवृत्तिरेवावशिष्टा, सापि युष्मत्प्रसादान्निवर्तिष्यत इत्याह । नात्मनः अनात्मनः प्रपञ्चस्य प्रतीतस्याप्यर्था-
भावमर्थोऽत्र नास्ति, किंतु प्रतीतिमात्रमिति युष्मच्चरणसेवया निश्चित्य तां प्रतीतिमप्यहं पराणुदे, अपनेष्यामीत्यर्थः ॥ १८ ॥ मधुद्विषः पादयोः रतिरासः
प्रेमोत्सवस्तीव्रो दुर्वारः स्वाभाविकः । व्यसनं संसारमर्दयति नाशयतीति तथा ॥ १९ ॥ ॥ ॥ ॥ ॥

१ निष्कामभागवतधर्मेण । भक्तियोगेन श्रवणादिना । २ भावेन तदेकपरत्वम् । ३ कैमुत्यन्यायोक्तिः । तथा च सप्रेमध्यानेन तद्वशीकरणमेव मुख्यं फलं, अशेषक्लेशशमस्त्वानुषङ्गिक एवेति दीपि० । ४ चिन्मात्रत्वलक्षणजीवेश्वरयोस्तुल्यत्वेऽपि । ५ वाक्यं सेयं भगवतो मायेत्यादिकम् । ६ असंदिग्धं प्रवर्तत इत्यर्थः । ७ येषां युष्माकं सेवया । 'सत्सेवया' इति पाठः । ८ दुर्भगत्वमानन्दादिभ्रंशः । ९ अस्य दुर्भगत्वादेः । १० विश्वस्य देहादिप्रपञ्चस्य । ११ बाधितानुवृत्तिः बाधितस्य मिथ्यात्वेन ज्ञातस्यानुवृत्तिः प्रतीतिः । यथा द्विचन्द्रज्ञानं बाधितमपि नेत्रदोषादनुवर्तते मात्रं तथा प्रपञ्चस्य प्रतीतिमात्रमेवावशिष्टमित्यर्थः इति दीपि० । १२ अर्थः परमार्थसत्यत्वम् ।

अहो दुर्लभं प्राप्तं मयेत्याह । दुरापा दुर्लभा । वैकुण्ठस्य विष्णोस्तल्लोकस्य वा वर्त्मसु मार्गभूतेषु महत्सु । यत्र येषु । महत्सेवया हरिकथाश्रवणं, ततो हरौ प्रेम, तेन च देहाद्यनुसंधानमपि निवर्तत इति तात्पर्यम् ॥ २० ॥ अर्थान्तरं प्रष्टुं तदुक्तमनुवदति त्रिभिः—सृष्ट्वेति । विकारैरिन्द्रियादिभिः सहितानि । उद्धृत्य तदंशैर्विराजं सृष्ट्वा॥२१॥प्रविष्टस्य रूपमाह—यमिति । विराजं विशिनष्टि—यत्रेति । ते इमे विश्वे सर्वे लोकाः । सविकाशमसंकोचेन॥२२॥प्राणादयः पञ्च नागादयः पञ्चेत्येवं दशविधः । इन्द्रियाणि च अर्थाश्च इन्द्रियाणि चेति पुनरुक्तिस्तद्देवतालक्षणार्थो, तत्सहितः । सर्वोपबृंहकत्वात्प्राणस्य तत्साहित्यम् । एवं त्रिवृत्त्रिविधः प्राणस्त्वयेरित उक्तः । तस्य विभूतीर्ब्रह्माद्या विसर्गशब्दवाच्याः ॥२३॥ यत्र यासु इदं विश्वम् । ततं व्याप्तम् ॥ २४ ॥ 'एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल' इति

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ॥ यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥२०॥ सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ॥ तेभ्यो विराजमुद्धृत्य तमनु प्राविशद्विभुः ॥ २१ ॥ यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ॥ यत्र विश्व इमे लोकाः सविकाशं समासते ॥ २२ ॥ यस्मिन्दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ॥ त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥ यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ॥ प्रजा विचित्राकृतय आसन्याभिरिदं ततम् ॥२४॥ प्रजापतीनां स पतिश्चक्लृपे कान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्च मनून्मन्वन्तराधिपान् ॥२५॥ एतेषामपि वंशांश्च वंश्यानुचरितानि च ॥ उपर्यधश्च ये लोका भूमेर्मित्रात्मजाऽऽसते ॥ २६ ॥ तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम् ॥ वद नः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥ गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम् ॥ सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥ वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ॥ ऋषीणां जन्मकर्मादि वेदस्य च विकर्षणम् ॥ २९ ॥ यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ॥ ३० ॥ ॥ ७ ॥

परीक्षित्प्रश्नोत्तरतया विदुरमैत्रेयसंवादः प्रस्तावितः, अतस्तानेव विदुरेण कृतान्प्रश्नानाह यावत्समाप्ति । प्रजापतीनां पतिर्ब्रह्मेत्यादीनां वर्णयेति वक्ष्यमाणेनान्वयः । चक्लृपेऽकल्पयत् । सर्गान् नवविधान् । अनुसर्गांस्तद्भेदान् ॥२५॥ हे मित्राया आत्मज ॥ २६ ॥ संस्थां सन्निवेशम् । सर्गाणां संव्यूहं संविभागम् । गार्भस्वेदद्विजोद्भिदाम् । गार्भा जरायुजाः, स्वेदाच्च द्वाभ्यां च जाताः स्वेदद्विजाः उद्भिदश्च तेषाम् ॥२७॥ सर्गादीनाश्रयं च सृजतः ॥२८॥ रूपं लिङ्गम्, शीलमाचारः स्वभावः शमादिः, ततः विकर्षणं विभागम् ॥ २९ ॥ वितानानि विस्तारान् । नैष्कर्म्यस्य च ज्ञानस्य तदुपायस्य च सांख्यस्य पथः मार्गान् तन्त्रं चेत्यर्थः ॥ ३० ॥ ॥१५॥

१ अत्रत्यापिना प्रेम्ण एव पुरुषार्थत्वं देहानुसधाननिवृत्तेस्तस्यानुषङ्गिकत्व व्यज्यते । २ पूर्वश्रुतलीलाशेषम् । ३ यं कारणार्णवे गर्भोदके च शयानम् । ४ 'गार्भस्वेदाण्डजोद्भिदाम्', 'गर्भजस्वेदजोद्भिजाम्' इति पाठौ । ५ ब्रह्मादिभिः । ६ केवलात्स्वेदात्केवलात् अण्डात् स्वेदाण्डाभ्यां च जाताः । स्वेदजा अण्डजाश्चेत्यर्थः । ७ आश्रयं च तेषां सर्गस्थित्यप्ययानां करणं प्रजापतिमनुसर्गादिरूपम् । दीपि० । ८ लिङ्गं पुस्तक-खड्ग-तुलाधारण-नग्नत्वादिचिह्नम् । तत्तद्रूपादिवर्णनपूर्वकमित्यर्थः । ९ वक्त्रं नारदपञ्चरात्रम् ।

पाखण्डानां पन्थाः प्रवृत्तिस्तदेव वैषम्यम् ॥३१॥ निमित्तान्युपायान्परस्पराविरोधेन ॥३२॥ ग्रहादीनां कालचक्रे संस्थितिम् ॥३३॥३४॥ येन मार्गेण संतुष्येत् ।
येषामिति याद्दशानाम् ॥३५॥ अनापृष्टमप्यपृष्टमपि मद्योग्यं वक्तव्यमिति भावः ॥३६॥ प्रतिसंक्रमः प्रलयः । तत्र प्रलये इमं परमेश्वरं शयानं राजानमिव चामर-
ग्राहिणः के वाऽनुशेरते शयानमनु स्वपन्ति ॥ ३७ ॥ पुरुषस्य संस्थानं जीवस्य तत्त्वम् । परमेश्वरस्य स्वरूपम् । येनांशेन तयोरैक्यम् । तथा ज्ञानं च । नैगममौप-
निषदम् ॥३८॥ यानि सूरिभिः प्रोक्तानि तस्य ज्ञानस्य साधनानि तानि च ब्रूहि । गुरुं विनैतन्न भवतीत्याह—स्वत इति ॥३९॥ मे प्रश्नान्मे मित्रत्वात्स्निग्धत्वा-

धर्मार्थकाममोक्षाणां निमि- पाखण्डपथवैषम्यं प्रतिलोमनिवेशनम्[2] ॥ जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ॥३१॥
त्तान्यविरोधतः ॥ वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् ॥३२॥ श्राद्धस्य च विधिं ब्रह्मन् पितॄणां सर्गमेव च ॥
ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ॥ ३३ ॥ दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम् ॥ प्रवासस्थस्य यो धर्मो
यश्च पुंस उतापदि ॥३४॥ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ॥ संप्रसीदति वा येषामेतदाख्याहि चानघ[3] ॥३५॥
अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥३६॥ तत्त्वानां भगवंस्तेषां
कतिधा प्रतिसंक्रमः ॥ तत्रेमं क उपासीरन् क उ स्विदनुशेरते ॥ ३७ ॥ पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥
ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम्[4] ॥३८॥ निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ स्वतो ज्ञानं कुतः पुंसां
भक्तिर्वैराग्यमेव वा ॥३९॥ एतान्मे पृच्छतः प्रश्नान्हरेः कर्मविवित्सया ॥ ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः
॥ ४० ॥ सर्वे वेदाश्च यज्ञाश्च तपो दानानि चानघ ॥ जीवाभयप्रदानस्य न[5] कुर्वीरन्कलामपि ॥ ४१ ॥ ॥ श्रीशुक
उवाच ॥ स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ॥ प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाह
॥४२॥ ॥ इति श्रीमद्भा० महापुराणे तृतीयस्कन्धे सप्तमोऽध्यायः ॥७॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥ सत्सेव-
नीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः[6] ॥ बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्षणम् ॥ १ ॥

दित्यन्वयभेदान्न मेपदस्य पौनरुक्त्यम् ॥४०॥ तत्त्वोपदेशेन जीवाभयप्रदानस्य ॥४१॥ पुराणे कल्पते प्रकाशत इति पुराणकल्पो बुभुत्सितोऽर्थः, आपृष्टः पुरा-
णकल्पोऽयं स मुनिप्रधानः ॥४२॥ ॥ इति श्रीमद्भा० म० तृतीयस्कन्धे भा० दी० टीकायां सप्तमोऽध्यायः ॥७॥ ॥छ॥ ॥ अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः ॥
तमजानञ्जले विभ्यत्तपसाऽतोपयद्विभुम् ॥ १ ॥ श्रोतारमभिनन्दति । सतां सेवितुं योग्यः । बत अहो । यत् यस्मादिहास्मिन्वंशे लोकपालो धर्मराजस्त्वं
बभूविथ जातोऽसि । कथंभूतः । भगवानेव प्रधानभूतो यस्य सः । अत्र[7] हेतुः—अजितेति । प्रतिक्षणं नूतनयसि नवीनां करोषि ॥ १ ॥ ॥ ॥

१ स्वपन्ति लीनास्तिष्ठन्ति । २ प्रातिलोम्येन सर्वेषां ब्रह्मणि निवेशनं प्रवेशो लय इत्यर्थः । अथवा प्रतिलोमाः सूतवैदेहकादयस्तेषां निवेशनं प्रवृत्तिम् । ३ 'मेऽनघ' इति पाठः । ४ गुरु-शिष्यौ प्रयोजनं हेतुभूतौ यस्य तथाविधम् । प्रयोजनं कार्यहेत्वोरिति हैमसेदिन्यौ । 'कलां नार्हन्ति षोडशीम्' इति पाठः । ६ प्रधानभूतो मुख्यसेव्यस्वरूपः । ७ अत्र भगवत्प्रधानत्वे ।

अल्पसुखाय महद्दुःखं प्राप्तानां तस्य दुःखस्य विरमाय प्रवर्तये प्रारभे ॥ २ ॥ कोऽसौ भगवान्, केभ्यश्चर्षिभ्य आह, कथं च त्वया प्राप्तमित्यपेक्षायामाह—आसीनमिति सप्तभिः। उर्व्यां पातालतले अकुण्ठसत्त्वमप्रतिहतज्ञानम्। अतः संकर्षणात्परस्य श्रीवासुदेवस्य ॥ ३ ॥ तमेव विशिनष्टि। स्वमेव धिष्ण्यं स्वीयमाश्रयं वासुदेवसंज्ञं परमानन्दरूपं ध्यानपथेऽनुभूय बहु मानयन्तं सर्वोत्कर्षेण पूजयन्तम्। प्रत्यग्धृतमन्तर्मुखीकृतं नेत्राम्बुजमुकुलं किंचिदुन्मीलयन्तम्। कृपावलोकेन सनत्कुमारादीनामभ्युदयार्थम् ॥४॥ मुनीनां विशेषणं सार्धेन। स्वर्धुन्या उदकेनार्द्रैरिति। श्रीभागवतश्रवणार्थं सत्यलोकात्पातालं प्रत्यवतरन्तो निरन्तरं गङ्गामध्यत एवावतीर्णा इति भावः। चरणावुपधीयेते। यस्मिन् पद्मे। तदुपस्पृशन्तो नमन्तः। कथंभूतं तदाह। यत्पद्मं प्रेमसहितं यथा भवत्येवं नानोपहारैः पूजयन्ति। वरार्थाः पतिकामाः ॥५॥ कृतानि कर्माणि गृणन्तः। केन। अनुरागेण स्खलन्ति पदानि यस्मिंस्तेन वचसा। तानि जानन्तीति तज्ज्ञाः। सहस्रमेव

सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य ॥ प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः॥२॥आसीनमुर्व्यां भगवन्तमाद्यं संकर्षणं देवमकुण्ठसत्त्वम् ॥ विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥३॥ स्वमेव धिष्ण्यं बहु मानयन्तं यं वासुदेवाभिधमामनन्ति ॥ प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥४॥ स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ॥ पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्थाः ॥ ५ ॥ मुहुर्गृणन्तो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥ प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन ॥ सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्ग धृतव्रताय ॥७॥ सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ॥ जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ॥८॥ प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ॥ सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥९॥ उदाप्लुतं विश्वमिदं तदासीद्यन्निद्रयाऽमीलितदृङ् न्यमीलयत् ॥ अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः ॥ १० ॥

साहस्रं किरीटानां साहस्रे ये मणिप्रवेका रत्नोत्तमास्तैः प्रद्योतितमुद्दामफणानां सहस्रं यस्य तमपृच्छन्निति पूर्वेणान्वयः ॥६॥ तेन संकर्षणेन सनत्कुमाराय प्रोक्तम् ॥७॥ पारमहंस्ये धर्मे मुख्यः। विवक्षमाण इत्यात्मनेपदं, ब्रूञादेशस्य वचेरुभयपदित्वात्। अन्वितायानुगताय ॥ ८ ॥ पुलस्त्येनोक्त इत्यत्रैवमाख्यायिका। पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वसिष्ठवचनान्निवृत्तस्ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भविष्यसीति ॥ ९ ॥ तदेवं संकर्षणात्संप्रदायप्रवृत्तिं प्रदर्श्य विभूतिकथनाय पद्मोद्भवं वक्तुमाह। उदाप्लुतमेकार्णवोदके निमग्नं यद्यदा आसीत्तदाऽमीलितदृगतिरोहितचिच्छक्तिरेव श्रीनारायणो नेत्रे निमीलितवानित्यर्थः। मायाविनोदं परित्यज्य स्वात्मरतौ स्वरूपानन्द एव कृतोत्सवः। अत एव निरीहो निष्क्रियः सन् ॥ १० ॥ ॥

१ सकर्षणात्परस्येत्युक्त्या मूल एवांशांशिभावो विवक्षित इति सर्वावतारावतारिसाम्यं व्याचक्षाणा भ्रान्ता ज्ञेया इति दीपि०। २ पूजयन्तमिति सेव्यसेवकभावो विवक्षितः। ३ कृतानि चरितानि। ४ य इत्थं त्वया पृष्टः सोऽहमित्यन्वयः। ५ 'मुहुर्गृणन्तो वचसा' इति पाठः। ६ श्रीभागवतश्रवणार्थं धृतब्रह्मचर्यादिनियमाय। ७ बृहस्पतेश्चेत्यत्र बृहस्पतयेऽपि जगादेति योजनीयम्। ८ उक्तो दत्तवरः। ९ सप्तम्यार्षी। १० अनुगताय शिष्याय।

वहिर्वृत्त्यभावे दृष्टान्तः—यथाऽनल इति ॥ ११ ॥ स्वया चिच्छक्त्या सह वर्तमान एव योग-कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रवोधनार्थम् । स्वे पदेऽधिष्ठाने । वहिर्वृत्त्यभावे दृष्टान्तः—यथाऽनल इति ॥ ११ ॥ अपीतान् लीनान् ददर्श ॥१२॥ लोकसृष्ट्यर्थमर्थ-निद्रया स्वपन् पूर्वमेव वोधनार्थं नियुक्तया स्वकालशक्त्या आसादितं प्रापितं कर्मतन्त्रं क्रियाकलापो यस्य सः । अपीतान् लीनान् ददर्श ॥१२॥ लोकसृष्ट्यर्थमर्थ-सूक्ष्मेऽभिनिविष्टा दृष्टिर्यस्य । कालानुसारिणा रजोगुणेन विद्धः संक्षोभितः सन् तनीयानतिसूक्ष्मोऽर्थः सूष्यन्प्रसोष्यन्नुद्भविष्यन्नाभिदेशादुद्भूत इत्यर्थः ॥ १३ ॥ स तनीयानर्थः पद्मकोशः सन्नुदतिष्ठत् । कर्माणि जीवादृष्टानि प्रतिप्रवोधयति यः कालस्तेन । आत्मा श्रीविष्णुर्योनिर्यस्य ॥ १४ ॥ तल्लोकात्मकं पद्मं सर्वान्गु-णान् जीवभोग्यानर्थानवभासयतीति तथा । तद्यस्माज्जातं स एव विष्णुः । उ इति संवोधने । प्राचीविशत्प्रकर्षेणात्मसशक्तिरेवान्तर्यामितया विवेश । तस्मि-न्विष्णुनाऽधिष्ठिते पद्मे विधाता ब्रह्माऽभूत् । कथंभूतः । स्वयमेव वेदमयो न त्वध्ययनेन प्राप्तवेदः । कोऽसौ । अदृष्टपितृत्वेन यं स्वयंभुवं वदन्ति सः । प्राक्

सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ॥ उवास तस्मिन्सलिले पदे स्वे यथाऽनलो दारुणि रुद्ध-वीर्यः ॥ ११ ॥ चतुर्युगानां च सहस्रमप्सु स्वपन्स्वयोदीरितया स्वशक्त्या ॥ कालाख्ययासादितकर्मतन्त्रो लोकानपी-तान्ददृशे स्वदेहे ॥ १२ ॥ तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् ॥ गुणेन कालानुगतेन विद्धः सूष्यं-स्तदाऽभिद्यत नाभिदेशात् ॥ १३ ॥ स पद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधनेन ॥ स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥ तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ॥ तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥ तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्य-मानः ॥ परिक्रमन्व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥ तस्माद्युगान्तश्वसनावघूर्णजलोर्मिचक्रा-त्सलिलाद्विरूढम् ॥ उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाऽविददादिदेवः ॥ १७ ॥ क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाऽब्जमनन्यदप्सु ॥ अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सता नु भाव्यम् ॥ १८ ॥ ॥

कल्पान्ते नारायणेन सह निद्रयैकीभूत आसीत्तस्मिंश्च प्रवुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त इत्यर्थः ॥ १५ ॥ स च तस्मिन्कल्पे चतुर्मुखोऽभूदि-त्याह—तस्यामिति । परिक्रमंस्तत्रस्थ एव ग्रीवां चालयन् लोकनिरीक्षणार्थं विवृत्ते विचलिते नेत्रे यस्य ॥ १६ ॥ तस्य च श्रीनारायणोपासनयैवाविर्भूतज्ञान-क्रियाशक्तेर्लोककर्तृत्वं न स्वत इति वक्तुं प्रथमं तस्य विमोहमाह । तस्मात्सलिलाद्विरूढमुद्गतं कञ्जमुपाश्रितोऽपि साकल्येन तत्कञ्जं लोकतत्त्वं चात्मानं च साक्षान्न ज्ञातवान् । उ इति विस्मये । कथंभूतात् । युगान्तश्वसनः प्रलयवायुस्तेनावघूर्णं तत्र तत्र प्रकम्पितं यस्मात्सवर्तं ऊर्मिचक्रं यस्मिन् ॥ १७ ॥ अविदु-षस्तस्य वितर्कमाह । योऽसावहमब्जपृष्ठे एष कः । अनन्यदेकमेवैतदब्जं कुतो वा जातम् । यत्रैतदधिष्ठितं तेनाधस्तात्सता वर्तमानेन नु निश्चितं भाव्यम् । स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः । तथा च श्रुतिः—'सोऽपश्यत्पुष्करपर्णे तिष्ठन्सोऽमन्यत अस्ति वैतद्यस्मिन्निदमधितिष्ठति' इति ॥ १८ ॥ ॥ ॥

१ प्रापितमुद्बोद्धुं भगवद्दृष्टिगोचरतां नीतम् । २ अर्थसूक्ष्मे भूतसूक्ष्मवर्गे । ३ अतिसूक्ष्मोऽर्थः भूतसूक्ष्मवर्गः । ४ भूतसूक्ष्माण्यत्र विलीनपार्थिवांशतन्मात्रसहितानि त्रैलोक्यगतजीवानां लिङ्ग-शरीराणि । यान्येव समष्टिलिङ्गशरीरमित्युच्यते । दीपि० । ५ रुद्धवीर्य इत्यत्रानलपक्षे दहनशक्तिः, भगवत्पक्षे सृष्टिशक्तिः । ६ क्वचित् 'अपाश्रितः' इति मूले टीकायां च पाठः । ७ कञ्जं पद्मम् ।

तस्य च वहिर्मुखप्रवृत्त्या महतापि कालेन तदप्राप्तिमाह—स इति द्वाभ्याम् । तस्याजस्य यन्नालं तस्य नाडीभिरन्तश्छिद्रैः । तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं विचिन्वन्नर्वाग्गतोऽपि तत्तदा नाविन्दत ॥ १९ ॥ हे विदुर, आत्मसर्गं स्वकारणम् । त्रिणेमिः कालः । अजस्य विष्णोर्हेतिः सुदर्शनरूपं शस्त्रम् । देहभाजां नराणां भयमुत्पादयन्निति संवत्सरशतमतिक्रान्तमित्युक्तं भवति ॥ २० ॥ अन्तर्मुखतया तु भगवन्तं दृष्टवानित्याह द्वाभ्याम् । ततोऽन्वेपणान्निवृत्तः । न प्रतिलब्धः कामो मनोरथो येन । स्वधिष्ण्यं पद्मम् । जितेन श्वासेन निवृत्तं संयतं चित्तं यस्य, अत एवारूढ आश्रितः समाधियोगो येन तथाभूतः सन्न्यषीददुपविवेश ॥ २१ ॥ पुरुषायुषा संवत्सरशतेन कालेनाभिप्रवृत्तः सुनिष्पन्नो योगस्तेन विरूढ उत्पन्नो वोधो यस्य । यत्पूर्वं विचिन्वन्नपि नापश्यत्तत्स्वयमेवान्तर्हृदयेऽवभातमपश्यत् ॥ २२ ॥ यदपश्यत्तद्वर्णयति—मृणालेति नवभिः । नवस्वप्यपश्यदित्यस्यैवानुषङ्गः । मृणालवद्गौर-

स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश ॥ नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताजः ॥ १९ ॥ तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ॥ यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ॥ शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥ कालेन सोऽजः पुरुषायुषाऽभिप्रवृत्तयोगेन विरूढबोधः ॥ स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम् ॥ २२ ॥ मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ॥ फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥ प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ॥ रत्नोदधारौषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥ ॥ ॥ ॥

श्वासावायतश्च यः शेषस्तस्य भोगो देहः स एव पर्यङ्कस्तस्मिन् । कुत्र स्थिते पर्यङ्के । फणातपत्रैरायुताः सर्वतो युक्ता ये मूर्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतध्वान्ते युगान्ततोये ॥ २३ ॥ कथंभूतं पुरुषम् । हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्वन्तम् । सन्ध्याभ्रं नीवी परिधानं यस्य तस्य शोभां पीताम्वरेण क्षिपन्तम् । उरुरुक्ममूर्ध्नोऽनेकस्वर्णशिखरस्य तस्य स्वकिरीटैः । रत्नानि च उद्धाराश्च ओषधयश्च सौमनस्यानि च, पुष्पसमूहाः सुमनस एव वा तेषां वनस्रजो वनमाला यस्य, वेणव एव भुजा यस्य, अङ्घ्रिपा एवाङ्घ्रयो यस्य स चासौ स च तस्य । अयमर्थः—यदि तस्मिन्माला इव स्थिता रत्नादयो भवन्ति, वेणवश्च भुजा इव, वृक्षाश्च पादा इव तर्हि तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पदामभिर्भुजैरङ्घ्रिभिश्च क्षिपन्तमिति ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ आत्मसर्गं सृज्यतेऽनेनेति कर्तुरेव करणत्वविवक्षायां वा अधिकरणे वा घञ्। आत्मकारणमित्यर्थः इति वीर॰ । २ त्रिणेमिः न्यूनाधिकसमदिवसरूपनेमित्रययुक्तः। ३ अन्तर्मुखतया वहिरिन्द्रियनिग्रहेण तदेकध्यानपरतया । ४ समाधिरत्र विशेषज्ञानाभावात् सामान्याकारे स्वकारणे वृत्तिनिरोधः । ५ 'निवृत्त्या' इति पाठः । ६ 'आतपत्राचित' इति पाठः । ७ पर्यङ्के तोये इति व्यधिकरणसप्तम्यौ । ८ प्रेक्षामुत्प्रेक्षां क्षिपन्तं किमयं मरकतमणिमयः पर्वत इति चक्र॰ । ९ एतादृशमरकताद्रेरप्रसिद्धत्वादभूतोपमां बाधयितुं समासेन व्याचष्टे—अयमर्थ इति । दीपि॰ ।

किंच आयामतो दैर्घ्येण विस्तरतश्च स्वमानदेहेन मीयतेऽनेनेति मानमुपमा शोभनश्चासावमानो निरुपमो देहस्तेन । यद्वा सुष्ठु अमानोऽपरिच्छिन्नस्तेन । यद्वा ताभ्यां स्वानुरूपप्रमाणेन अत एव लोकत्रयं संगृह्यते यस्मिंस्तथा । विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि चाभरणान्यंशुकानि च तेषां कृता आसमन्ताच्छ्रीः शोभा येन, तेन देहेन विशिष्टम् । एवं स्वत एवातिरम्यत्वेऽप्यपाश्रितवेषः स्वीकृतालंकारो देहो यस्य तमपश्यत् । यद्वा केन प्रेक्षां क्षिपन्तमित्यपेक्षायामेवंभूतेन देहेनेति संबन्धः ॥ २५ ॥ स्वाभिलषितफलाय विविक्तैः शुद्धैर्वेदोक्तैर्मार्गैरभ्यर्चतां पुंसां कामदुघमङ्घ्रिपद्मं प्रदर्शयन्तं किंचिदुन्नमय्य समर्पयन्तम् । नखा एव इन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्नाः संभिन्ना अङ्गुलय एव चारूणि पत्राणि यस्य तत् ॥ २६ ॥ लोकार्तिहरं स्मितं यस्मिंस्तेन । परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेन । अधरबिम्बदीप्त्या शोणवदाचरितेन शोभननासायुक्तेन सुभ्र्वा शोभनया भ्रुवा च प्रत्यर्हयन्तं पूजकान्प्रति पूजयन्तं संमानयन्तम् ॥ २७ ॥ कदम्बकिञ्जल्कवत्पिशङ्गं यद्वासस्तेन मेखलया च नितम्बे स्वलंकृतम् । हे वत्स, श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन वक्षस्यनर्घ्येण हारेण स्वलंकृतमित्यर्थः ॥ २८ ॥

आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ॥ विचित्रदिव्याभरणांशुकानां कृताश्रियापाश्रितवेषदेहम् ॥ २५ ॥ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम् ॥ प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥ मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ॥ शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥ कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे ॥ हारेण चानन्तधनेन वत्स श्रीवत्सवक्षःस्थलवल्लभेन ॥ २८ ॥ परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ॥ अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम् ॥ २९ ॥ चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ॥ किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥ ॥ ॥ ॥

महाचन्दनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि । परार्ध्यानि श्रेष्ठानि केयूराण्यङ्गदानि मणिप्रवेकाश्च मण्युत्तमास्तैः पर्यस्ता व्याप्ता दोर्दण्डा एव सहस्रमनन्ताः शाखा यस्य । चन्दनवृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति । अव्यक्तं प्रधानं मूलमधोभागो यस्य । यद्वा अव्यक्तं ब्रह्म मूलं यस्य, ब्रह्माभिव्यक्तिरूपत्वात् । वृक्षस्यापि मूलं न व्यक्तम् । भुवनात्मकमङ्घ्रिपेन्द्रम् । अहीन्द्रस्यानन्तस्य भोगैः फणैर्देहावयवैर्वाऽधिवीताः संवेष्टिताः स्पृष्टा वल्शाः स्कन्धा यस्य । 'वनस्पते शतवल्शो विरोह' इति श्रुतेः । सोऽपि सर्पैर्वेष्टितो भवति ॥ २९ ॥ प्रेक्षां क्षिपन्तमित्यत्रैव पर्वतरूपकेण निरूपितमपि विशेषणान्तरैः पुनर्निरूपयति । भगवानेव महीध्रस्तम् । चराचराणामोकः स्थानम् । सोऽपि तथा । अहीन्द्रस्य बन्धुम् । सोऽप्यहीन्द्राणां बन्धुः । सलिलेनोपगूढमावृतम् । पर्वतोऽपि मैनाकादिस्तथा । किरीटसाहस्रमेव हिरण्यशृङ्गाणि यस्य । सोऽपि मेर्वादिस्तथा । यथा पर्वतस्य गर्भे क्वचिद्रत्नमाविर्भवति तथा आविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तम् ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

१ अपाश्रितवेषदा ईहा इच्छा यस्य तम् । यदैव यं यं स्वमिच्छति तदैव सत्यसंकल्पत्वात्त प्राप्नोतीत्यर्थः । चक्र० । २ संभिन्नाः संयुक्ताः । ३ 'कृतश्रियापाश्रित' इति पाठः । ४ मुखविशेषणत्वे सुभ्रुणेति स्यादिति व्याख्यायां पृथगेव चकारोऽध्याहृतः इति दीपि० । सुभ्र्वा इत्यार्षम् । ५ 'वल्कम्' इति विज० पाठः । ६ रूपकेण द्वयोस्तादात्म्येन । ७ विशेषणान्तरैश्चराचरौकस्त्वादिभिः । ८ ओकःशब्दस्य नित्यनपुंसकत्वम् ।

किंच वनमालया निवीतं कण्ठलम्बिन्या व्याप्तम्। आम्नाया वेदा एव मधुव्रतास्तैः श्रीर्यस्यास्तया हरिमिति पर्वतादिरूपमपश्यत्, हरिरसाविति ज्ञातवानित्यर्थः। सूर्यादिभिरगममगम्यम्। स्वव्यापारैराकलयितुमशक्यमित्यर्थः। किंच त्रिष्वपि लोकेषु धाम स्फूर्तिर्येषां तैः, रक्षणार्थं परिक्रमद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तत्प्रयोजनैः सुदर्शनादिभिर्हेतुभूतैर्दुरासदं दुष्प्रापम् ॥३१॥ यदैवं हरिमपश्यत्तदैव तदेव लोकविसर्गदृष्टिः संस्तस्य नाभिसरसि सरोजं श्वसनं प्रलयवायुं वियदाकाशं च ददर्श ॥३२॥ कर्मबीजं लोकसृष्टेः कारणम्। रजसा उपरक्तो रजोगुणयुक्तः। अतः प्रजाः स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपञ्चकमेव। विसर्गेऽप्यभिमुखो दत्तचित्तः अव्यक्तवर्त्मनि भगवति निवेशितचित्तः॥३३॥इति श्रीमद्भा०तृ०भा०दी०टीकायामष्टमोऽध्यायः॥८॥ ॥छ॥ ॥ नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ॥ अस्तौदेकार्णवे सीदँल्लोकसर्गचिकीर्षया ॥१॥ भगवज्ज्ञानेनात्मनः कृतार्थतामाविष्कुर्वन्नज्ञांश्च शोचन्नाह—ज्ञातोऽसीति। सुचिराद्बहुकालोपासनेनाद्य मे मया ज्ञातोऽसि। नन्वहो देहभाजामेतदवद्यं दोषः। किं तत्। यद्भगवतस्तव गतितत्त्वं न ज्ञायत इति। यतस्त्वमेव ज्ञातुं योग्यः सत्यत्वान्नान्यदसत्यत्वादित्याह।

निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् ॥ सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥३१॥ तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः श्वसनं वियच्च ॥ ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥३२॥ स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ॥ अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥३३॥ ॥ इति श्रीमद्भा० महा० तृतीयस्कन्धेऽष्टमोध्यायः ॥८॥ ॥छ॥ ॥ ब्रह्मोवाच ॥ ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् ॥ नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥१॥ रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय ॥ आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥२॥ नातः परं परम यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्धवर्चः ॥ पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥३॥ ॥ ॥

त्वत् त्वत्तोऽन्यन्नास्ति। यदप्यस्तीति प्रतिभाति तदपि शुद्धं सत्यं न भवति। कथमसतः प्रतीतिस्तत्राह। यद्यतो मायागुणक्षोभात्त्वमेवोरुर्बहुरूपो विभासि ॥१॥ ननु त्वमपि सम्यङ्न जानासि। यत्त्वया दृष्टं रूपमेतदपि गुणात्मकमेव। निर्गुणं ब्रह्मैव तु सत्यं तत्राह—रूपमिति द्वाभ्याम्। अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत्सदा निवृत्तं तमो यस्मात्तस्य तव यदेतद्रूपं त्वयैव स्वातन्त्र्येण सतामुपासकानामनुग्रहाय गृहीतमाविष्कृतमवतारशतस्य शुद्धसत्त्वात्मकस्य यदेकं बीजं मूलम्। तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति—यन्नाभीति ॥ २ ॥ हे परम, अविद्धवर्चोऽनावृतप्रकाशम्। अतोऽविकल्पं निर्भेदम्। अत एवानन्दमात्रम्। एवंभूतं यद्भवतः स्वरूपं तदतो रूपात्परं भिन्नं न पश्यामि किंत्विदमेव तत्। अतः कारणात्ते तव अदः इदं रूपमाश्रितोऽस्मि। योग्यत्वादपीत्याह। एकमुपास्येषु मुख्यम्। यतो विश्वसृजं विश्वं सृजतीति विश्वसृजमत एवाऽविश्वं विश्वस्मादन्यत्। किंच भूतेन्द्रियात्मकं भूतानामिन्द्रियाणां चात्मानं कारणमित्यर्थः ॥ ३ ॥ 

१ स्वव्यापारैरातपादिभिराकलयितुमभिभवितुम्। २ सीदन् लोकास्वाज्ञानादिग्लायन्। ३ अतः सरोजादिपञ्चकात्परमन्यत्सृष्ट्युपकारकं न दृष्टवानयः। ४ हे आत्मन्निति संबुद्धिः। ५ निर्भेदं समानासमानजातीयभेदशून्यम्। ६ विश्वसृजमित्यत्र उपास्येति कः। ७ भूतेन्द्रियात्मकमित्यत्र सार्गे कः।

नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशङ्क्याह । तद्वै तदेवेदम् । हे भुवनमङ्गल । यतस्ते त्वया नोऽस्माकमुपासकानां मङ्गलाय ध्याने दर्शितम् । न ह्यव्यक्त-
वर्त्माभिनिवेशितचित्तानामस्माकं सोपाधिकदर्शनं युक्तमिति भावः । अतस्तुभ्यं नमोऽनुविधेमाऽनुवृत्त्या करवाम । तर्हि किमिति केचिन्मां नाद्रियन्ते
तत्राह—योऽनादृत इति । असत्प्रसङ्गैर्निरीश्वरकुतर्कनिष्ठैः ॥ ४ ॥ आदरेण तु त्वां भजन्तः कृतार्था इत्याह—ये त्विति । श्रुतिर्वेदः स एव वातस्तेन नीतं
प्रापितम् । नापैपि नापयासि । ये त्वत्कथाश्रवणमत्यादरेण कुर्वन्ति तेषां हृदि नित्यं प्रकाशसे इत्यर्थः ॥ ५ ॥ ततः किमत आह—तावदिति । द्रविणादौ
विद्यमाने भयं, गते शोकः, पुनश्च स्पृहा, ततः परिभवः, तथापि विपुलो लोभस्तृष्णा पुनः कथंचित्प्रासे ममेत्यसदाग्रहः । आर्तिमूलं भयशोकादेः कारणम् ।
न प्रवृणीत नाश्रयेत् । त्वत्पादाश्रयणमात्रेण भयादिनिवृत्तिः किं पुनस्त्वत्प्रकाशे सतीति भावः ॥ ६ ॥ ये निष्कामा अपि सन्तस्त्वां नाद्रियन्ते ते नरक-

तद्वा इदं भुवनमङ्गल मङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् । तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽना-
दृतो नरकभागिभरसत्प्रसङ्गैः ॥ ४ ॥ ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ॥
भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥५॥ तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः
स्पृहा परिभवो विपुलश्च लोभः ॥ तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥६॥ दैवेन
ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ॥ कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतम-
नसोऽकुशलानि शश्वत् ॥७॥ क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च ॥ कामाग्निनाऽच्यु-
तरुषा च सुदुर्भरेण संपश्यतो मन उरुक्रम सीदते मे ॥८॥ यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमायाबलं भगवतो
जन ईश पश्येत् ॥ तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥ ॥ ॥

भाज इत्युक्तं, ये तु त्वत्कथाश्रवणादिविमुखाः सन्तः काम्यकर्मपरास्तेऽतिमन्दा इत्याह । दैवेन ते हतधियो नष्टमतयः । प्रसङ्गाच्छ्रवणकीर्तनादिरूपात्सर्व-
दुःखनिवर्तकाद्विमुखानीन्द्रियाणि येषाम् । अकुशलान्यक्षेमकराणि ॥७॥ अकुशलत्वमेव दर्शयति । क्षुच्च तृट् च त्रिधातवश्च वातपित्तश्लेष्माणस्तैः । इमाः प्रजाः
सुदुर्भरेण दुःसहेन कामाग्निनाऽच्युतया रुषाऽविच्छिन्नक्रोधेन च पीड्यमानाः संपश्यतो मे मनः सीदति ॥८॥ नन्वेवंभूतायाः संसृतेरपरमार्थत्वात्किमर्थं विषादः
क्रियते तत्राह—यावदिति । आत्मन इदं पृथक्त्वं देहादिभावम् । भगवतस्तवेन्द्रियार्थरूपा या माया तया बलमाधिक्यं यस्य तत् । न प्रतिसंक्रमेत नोपरमेत ।
दुःखसमूहं प्रापयन्ती । क्रियाणामर्थः फलं यस्याम् । पृथक्त्वमिदमिति पाठे इदं देहादि त्वदिति त्वत्तः पृथक् पश्येद्यावत्तावद्व्यर्थापि नोपरमेत ॥ ९ ॥

१ प्रकाशप्रयोजनस्य वाच्यार्थेऽनभिव्यक्तेर्व्यङ्ग्यार्थमाह त्वत्पादेति । तथाच भयादिनिवृत्तिः प्रकाशस्यानुषङ्गिकं प्रयोजनं मुख्यं तु प्रेमैवेति ज्ञेयम् । २ 'निरयभागिभिः' इति पाठः । तत्र
अयगताविति धातोः अयनं गमनं निरस्तं यस्मात्सः तद्भजन्तीति । ३ जिघ्रन्ति आदरेण शृण्वन्तीत्यर्थः । ४ अत्र बहुवचनान्तोऽपि पाठस्तत्र ये इत्यस्य विशेषणम् । एकवचनान्तपाठेऽध्या-
हृतस्य त्वमित्यस्य विशेषणमिति ज्ञेयम् । ५ 'इतरेतरैश्च' इति पाठः । ६ दैवेन दुरदृष्टेन । ७ सीदति कथमासां निस्तारो भवितेत्यवसीदति ।

भवत्वेवमविवेकिनां, विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यमत आह । अह्नि आपृतानि व्यापृतानि च तान्यार्तानि क्लिष्टानि करणानीन्द्रियाणि येषां रात्रौ विषयसुखलवोऽपि नास्ति, यतो निशि निःशयानाः स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्रा दैवेनाहताः सर्वतः प्रतिहता अर्थरचना अर्थोद्यमा येषाम् ॥ १० ॥ तदेवमभक्तानां संसारानिवृत्तिमुक्त्वा भक्तानां तन्निवृत्तिमाह—त्वमिति । भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि । श्रुतेन श्रवणेनेक्षितः पन्था यस्य । किंच श्रवणं विनापि त्वद्भक्ता मनसा यद्यत्तव वपू रूपं स्वेच्छया ध्यायन्ति तत्तत्प्रणयसे प्रकटयसि । सतां भक्तानामनुग्रहाय ॥ ११ ॥ भक्तानां च निष्कामानां त्वमतिसुलभो नेतरेषामित्याह—नेति । उपचितैरूर्जितैरुपचारैः पुष्पोपहारादिभिः । यद्यथा असतामभक्तानामलभ्यया सर्वभूतदयया । प्रसादे हेतुः—एक इत्यादि ॥ १२ ॥ यतः सकामानां भवान्नातिप्रसीदत्यतः कामप्राप्तिः क्रियाणामुत्तमं फलं न भवति, किंतु त्वत्प्रीणनमेव । कामसंयोगस्त्ववान्तरफलेन प्ररोच-

अह्न्यापृतार्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः ॥ दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १० ॥ त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ॥ यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥ नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ॥ यत्सर्वभूतदयया सदलभ्ययैको नाना जनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥ पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ॥ आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र ॥ १३ ॥ शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ॥ विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥ १४ ॥ यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ॥ ते नैकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥ ॥ ॥

नार्थमित्याह—पुंसामिति । भगवतस्तवाराधनमेव संश्चासौ क्रियार्थश्च श्रेष्ठं क्रियाफलम् । श्रेष्ठत्वे हेतुः—यत्र त्वय्यर्पितो धर्मो न कदाचिद्ध्रियते न नश्यति, कामार्थस्तु धर्मः कामं दत्त्वा नश्यतीत्यर्थः ॥ १३ ॥ अतस्त्वामेव वयं नता इत्याह । शश्वत्सर्वदा स्वरूपचैतन्येनैव निरस्तभेदभ्रमाय । पुनश्च बोध एव धिषणा विद्याशक्तिर्यस्य । यद्वा धिषणमाश्रयः । अत एव परस्मै । अत्र हेतुः—विश्वोद्भवादिनिमित्तं या माया तस्या लीला विलासस्तया रासः क्रीडा यस्य । ते तुभ्यमिदं नमः नमनं चकृम कृतवन्तो वयम् ॥ १४ ॥ नामग्रहणमात्रतः कैवल्यप्रदत्वेनैश्वर्यं व्यञ्जयन्नमस्करोति—यस्येति । अवतारादीनां विडम्बनमनुकरणमस्ति येषु । तत्रावतारविडम्बनानि देवकीनन्दन इत्यादीनि । गुणविडम्बनानि सर्वज्ञो भक्तवत्सल इत्यादीनि । कर्मविडम्बनानि गोवर्धनोद्धरणः कंसारातिरित्यादीनि । असुविगमेऽपि विवशा अपि गृणन्त्युच्चारयन्ति केवलम् । शमलं पापम् । अपावृतं निरस्तावरणम् । ऋतं ब्रह्म प्राप्नुवन्ति ॥ १५ ॥ ॥

१ नानेत्यादेरयमर्थः । २ श्रवणं वेदवैदिकविचारश्रवणम् । ३ यद्यदिति सामान्योक्त्या रूपाणामचिन्त्यानन्तत्वमभिव्यञ्जितम् । ४ प्ररोचनार्थं खण्डलड्डुकादिभिर्बालस्येव प्रलोभनार्थमेव । ५ 'प्रसीदसि' इति विज० पाठः । ६ अवहितः प्रविष्टः । ७ 'भ्रियते' इति विज० पाठः । ८ 'तेऽनेकजन्म' इति पाठः । ९ अत्र ह्रियत इति च्छेदे हृधातोः कर्मकर्तरिप्रयोगः । ध्रियत इति छेदे तु धृङ् अनवस्थाने इति तौदादिकस्य । १० प्राणोत्क्रमणसमये ।

तत्र गुणावतारकर्माणि दर्शयन्प्रणमति । यो वै एकस्त्रिपात् त्रयो ब्रह्मादयः पादाः स्कन्धा यस्य । प्रत्येकं च उरवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपा यस्य तथाभूतः सन्ववृधे तस्मै भुवनाकाराय द्रुमाय नमः । किं कृत्वा ववृधे । आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत्प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य । त्रिपात्त्वमेवाह । अहं ब्रह्मा, गिरिशश्च, स्वयं विभुर्विष्णुश्चेति स्थित्युद्भवप्रलयहेतवो ये वयम् । त्रिपाद्भूत्वा यो ववृधे इत्यर्थः ॥१६॥ एवं गुणावतारकर्मविडम्बनमुक्त्वा तस्यैव तत्कालाख्यं रूपं तत्कर्म च दर्शयन्प्रणमति—लोक इति द्वाभ्याम् । विकर्मनिरतो विरुद्धकर्मनिष्ठः कुशले हिते स्वे आत्मीये त्वदुदिते त्वयैव साक्षादुक्ते भवदर्चनरूपे कर्मणि । उक्तं हि गीतासु—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥' इति । तस्मिन्प्रमत्तोऽदत्तचित्तो यावद्वर्तते तावदस्य लोकस्य । अनिमिषाय कालाय ॥ १७ ॥ आस्तां तावल्लोकस्य कथा, यस्मात्कालाख्यात् त्वत्तो यद्द्विपरार्धावस्थायि धिष्ण्यं स्थानं तदारूढोऽपि विभेमि, भीतश्च संस्त्वामेवावरुरुत्समानः प्राप्तुमिच्छंस्तपस्तप्तवान् । कथंभूतः । बहुसवः बहवः सवा यागाः संवत्सरा

योवा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ॥ भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥ यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत् ॥ तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिमखाय तुभ्यम् ॥ १८ ॥ तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ॥ रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥ योऽविद्ययाऽनुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः ॥ अन्तर्जलेऽहिकशिपुस्पर्शानुकूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥ २० ॥ ॥ ॥

वा यस्य । बहून्यागान्कृत्वापि बहून्संवत्सरान्वा तपस्तप्तवानित्यर्थः । अधिमखाय मखाधिष्ठात्रे ॥ १८ ॥ इदानीं तत्तत्कालभाविलीलावतारकर्माणि दर्शयन्नाह । तिर्यगादिषु जीवयोनिषु स्वेच्छया स्वीकृतमूर्तिः सन् स्वकृतधर्ममर्यादापालनेच्छया रेमे । वस्तुतः स्वानन्दानुभवेनैव निरस्तविषयसुखोऽपि योऽत एव पुरुषोत्तमः तत्तदुपाधिधर्मासंस्पर्शात् । तदुक्तं गीतासु—'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति ॥१९॥ इदानीं दृश्यमानामेव मूर्तिं प्रणमति—योऽविद्ययेति द्वाभ्याम् । दशार्धाः पञ्च वृत्तयो यस्यास्तयाऽविद्यया निद्राहेतुभूतयाऽनभिभूतोऽपि योगनिद्रामुवाह तस्मै ते नम इत्युत्तरेणान्वयः । जठरीकृता उदरे प्रविलापिता लोकयात्रा लोकस्थितिर्येन । अहिरेव कशिपुः शय्या तस्याः स्पर्शोऽनुकूलो यस्यास्तां निद्राम् । भीमानामूर्मीणां माला विद्यन्ते यस्मिन्नन्तर्जले निद्राणस्याविवेकिनो जनस्य निद्रासुखमीदृगिति विवृण्वन्प्रदर्शयन्, उपहसन्नित्यर्थः । अत एवान्तर्जलादिविशेषणानि । यद्वा पूर्वकल्पे श्रान्तस्य जनस्य विश्रामसुखं विवृण्वन्स्फारयन् । तदा तु परोपकाराय स्वयं दुःसहमपि दुःखं सोढव्यमिति द्योतनार्थं विशेषणानि ॥ २० ॥ ॥ ॥

१ तत्कर्म च कालकर्म विरुद्धकर्म भगवद्बहिर्मुखं कर्म च इति दीपि० । २ 'स्वकृतसेतु' इति पाठः । ३ तत्काले प्रातिस्विकोचितावसरे भवितुं शीलं येषां तथाभूता ये लीलार्थमवतारास्तेषाम् । ४ अविद्या-ऽस्मिता-राग-द्वेषा-भिनिवेशरूपाः, तमो-मोह-महामोह-तामिस्रा-न्धतामिस्राख्या वा । ५ जन्ममरणादिभिः खिन्नस्य ।

किंच यस्य नाभिपद्ममेव भवनं तस्मात्। लोकत्रयमुपकरणं यस्य। यद्वा लोकत्रयस्य सृष्ट्यादिद्वारेणोपकरोतीति तथा तादृशोऽहं यदनुग्रहेणाऽऽसम्। उदरे स्थितो भवः संसारप्रपञ्चो यस्य। योगनिद्रावसाने किंचिद्विकसन्नलिनवदीक्षणं यस्य ॥ २१ ॥ एवं स्तुत्वा प्रार्थयते—सोऽयमिति चतुर्भिः। यद्येन सत्त्वेन ज्ञानेन भगेनैश्वर्येण च मृडयते सुखयति विश्वम्। दृशं प्रज्ञामनुस्पृशताद्योजयतु, यथाऽहं स्रष्टुं क्षमो भविष्यामि। यतः प्रणतप्रियोऽसावहं च प्रणतो न चान्यः प्रार्थनीयोऽस्ति। यतो भगवान्। स एव समस्तजगतां सुहृद्यतोऽसावेकोऽनुस्यूत आत्माऽन्तर्यामी ॥ २२ ॥ आत्मशक्त्या रमया सह यद्यत्कर्म[3] करिष्यति। स्वविक्रमं स्वस्य विष्णोरेव विक्रमः प्रभावो यस्मिंस्तदिदं विश्वं तदाज्ञया सृजतोऽपि मे चेतः स एव युञ्जीत प्रवर्तयतु। कर्मासक्तिं तत्कृतं शमलं च वैषम्यादि-

यन्नाभिपद्मभवनादहमासमीड्य लोकत्रयोपकरणो यदनुग्रहेण ॥ तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय ॥२१॥ सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान्भगेन ॥ तेनैव मे दृशमनुस्पृशताद्यथाहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥२२॥ एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः ॥ तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा विजह्याम् ॥२३॥ नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः ॥ रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्ट निगमस्य गिरां विसर्गः ॥२४॥ सोऽसावदभ्रकरुणो भगवान्विवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ॥ उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिराऽपनयतात्पुरुषः पुराणः ॥२५॥ ॥ मैत्रेय उवाच ॥ स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः ॥ यावन्मनोवचः स्तुत्वा विरराम सखिन्नवत् ॥ २६ ॥ अथाभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः ॥ विपण्णचेतसं तेन कल्पव्यतिकराम्भसा ॥ २७ ॥ लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ॥ तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥

पापं यथा विजह्यां त्यक्ष्यामि ॥ २३ ॥ अम्भसि सतो यस्य नाभिह्रदादिहासम्। विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी अस्य रूपमिदं विस्तारयतो मे निगमस्यावयवभूतानां गिरां विसर्ग उच्चारणं मारीरिषीष्ट। हलान्तं ब्रह्मवर्चसमिति न्यायेन मालुप्यतामित्यर्थः ॥ २४ ॥ विवृद्धप्रेम्णा स्मितेन विजृम्भयन्। विश्वस्य विजयायोद्भवाय। चकारादस्मदनुग्रहाय चोत्थाय ॥ २५ ॥ स्वस्य संभवो यस्मात्तम्। तपः शारीरम्, विद्या उपासना, समाधिरैकाग्र्यम्, तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा श्रान्तवद्विरराम ॥ २६ ॥ आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोऽभिप्रेतमालक्ष्य तमाहेति द्वयोरन्वयः। तेन प्रलयोदकेन विपण्णचेतसम् ॥ २७ ॥ कश्मलं मोहम्। इवेति समस्तमोहाशमनं दर्शयति ॥ २८ ॥ ॥ ॥

१ उपकरणं नियम्यत्वेन भोगसाधनम्। २ उपकरोति धर्मादिपुरुषार्थं जनयति। ३ कर्म धरोद्धरणादिरूपं देवतिर्यङ्मनुष्यादिचेष्टितं वा। ४ तस्मिन्कर्मणि। ५ विश्वात्मकम्। ६ रिष हिंसायामित्यस्य यङ्लुगन्तात्कर्मकर्तरि लिङि छान्दसं रूपम्। ७ उल्लासयन् विकासयन्निति यावत्। ८ अनुग्रहाय बोधाय। ९ यावन्मनोवचः [illegible] पुनरपि स्तोतुमिच्छा सूचयति। १० लोकानां संस्थानस्यावयवशो विन्यासविशेषस्य।

हे वेदगर्भ, तन्द्रीं विषादकृतमालस्यं मा गाः । तेनैव मे दृशमनुस्पृशतादित्यादि यत्प्रार्थयते तदग्रे पूर्वमेव संपादितम् ॥ २९ ॥ तर्हि कथमहं न जानामीत्यत
आह—भूय इति ॥ ३० ॥ भक्तियुक्तः समाहितश्च सन्नात्मनि स्वस्मिन् लोके च मां ततं व्याप्य स्थितं द्रष्टासि द्रक्ष्यसि । आत्मनो जीवांश्च ॥ ३१ ॥ सर्वत्र
मद्दर्शने मोहो निवर्तत इत्याह—यदा त्विति । प्रतिचक्षीत पश्येत् ॥ ३२ ॥ तदा च मिथ्याज्ञाननिवृत्तौ मुच्यत इत्याह—यदेति । भूतादिभिर्विरहितमा-
त्मानं जीवं शुद्धत्वंपदार्थं स्वरूपेण स्वस्यात्मभूतेन मया तत्पदार्थेनोपेतमेकीभूतं पश्यन्भवति तदा स्वाराज्यं मोक्षं प्राप्नोति ॥ ३३ ॥ यतो वर्षीयान् वृद्धतरः ।
अत्यधिकोऽस्तीत्यर्थः ॥ ३४ ॥ अनुग्रहमेवाह—ऋषिमिति चतुर्भिः । यत् यतस्ते मनो मयि निर्बद्धम् ॥ ३५ ॥ यद्यस्माद्भूतैरिन्द्रियैर्गुणैः सत्त्वादिभिरात्मना-

श्रीभगवानुवाच ॥ मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह ॥ तन्मयापादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥
भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् ॥ ताभ्यामन्तर्हृदि ब्रह्मँल्लोकान्द्रक्ष्यस्यपावृतान् ॥ ३० ॥ तत आत्मनि
लोके च भक्तियुक्तः समाहितः ॥ द्रष्टाऽसि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनः ॥ ३१ ॥ यदा तु सर्वभूतेषु दारु-
ष्वग्निमिव स्थितम् ॥ प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥ यदा रहितमात्मानं भूतेन्द्रियगुणा-
शयैः ॥ स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति ॥ ३३ ॥ नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः ॥ नात्माव-[2]
सीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥ ३४ ॥ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ॥ यन्मनो मयि निर्बद्धं
प्रजाः संसृजतोऽपि ते ॥ ३५ ॥ ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ॥ यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रि-
यगुणात्मभिः ॥ ३६ ॥ तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः ॥ नालेन सलिले मूलं पुष्करस्य विचि-
न्वतः ॥ ३७ ॥ यच्चकर्थाङ्ग मत्स्तोत्रं मत्कथाभ्युदयाङ्कितम् ॥ यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥ ३८ ॥
प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया[3] ॥ यदस्तौषीर्गुणमयं निर्गुणं माऽनुवर्णयन् ॥ ३९ ॥ य एतेन पुमान्नित्यं
स्तुत्वा स्तोत्रेण मां भजेत् ॥ तस्याशु संप्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥ ॥ ॥

ऽहंकारेण चायुक्तं मन्यसे ॥ ३६ ॥ तुभ्यं तव नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वतो मयि विचिकित्सायां भवितव्यमस्याश्रयेण, नच दृश्यते
ततोऽस्ति नास्तीति संदेहे सत्यात्मा स्वरूपं मे मया अबहिरन्तर्हृदि दर्शितः ॥ ३७ ॥ अङ्ग हे ब्रह्मन् । चकर्थ कृतवानसि । मत्कथैवाभ्युदयस्तेनाङ्कितम् ।
स एष बन्धाभावो मयि मनोनिर्बन्धो मज्ज्ञानं मद्रूपस्य हृदि दर्शनं मत्स्तुतिस्तपोनिष्ठा चेति यद्येष सर्वोऽपि मदनुग्रहः ॥ ३८ ॥ गुणमयत्वेन प्रतीयमान-
मपि निर्गुणमेवानुवर्णयन् ॥ ३९ ॥ तव प्रीत इति किं वक्तव्यमित्याह—य इति ॥ ४० ॥ ॥ ॥ ॥

१ सूक्ष्मसामर्थ्यप्रयुक्तम् । २अस्मिन्सिसृक्षासमयेऽपि ते आत्मा चित्तं यन्नावसीदति मोहं न प्राप्नोति स एव वर्षीयान्मदनुग्रह इत्यन्वयः । ३ विजयेच्छया सर्गेच्छया उद्भवेच्छया
वा । ४ अयुक्तं भूतादिभ्यः पृथग्भूतम् । तत्साक्षिणमित्यर्थः । ५ निर्गुणमेव अप्राकृतस्वरूपभूतगुणप्रचुरमेव ।

नच मत्प्रीतेरप्यधिकं किंचिदस्तीत्याह । पूर्तादिभिः राद्धं सिद्धं यन्निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् ॥ ४१ ॥ अत्र हेतुमाह—अहमिति । आत्मनामहंकारोपाधीनां जीवानामात्मा । अतः प्रेयसामतिप्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन् निरवद्यः । यत्कृते यदर्थम् ॥ ४२ ॥ अतस्त्वं कृतार्थ एव तथापि मत्प्रियार्थं सृष्टिं कुर्वित्याह—सर्वेति । आत्मा त्वमिदं त्रैलोक्यं या मय्यनुशेरते ताः प्रजाश्च सृज । केन आत्मनैवान्यनिरपेक्षेण । तत्र ज्ञापकापेक्षाभावमाह—सर्ववेदमयेनेति । आत्मा अहं योनिः कारणं यस्येति ज्ञानक्रियाशक्त्यतिशयं सूचयति । यथापूर्वमिति तवात्राभ्यासोऽप्यस्तीत्युक्तम् । मय्यनुशेरत इति स्थितानामभिव्यक्तिमात्रमेव कर्तव्यमित्यनायासत्वमुक्तम् ॥४३॥ इदं सृज्यं व्यज्य प्रकाश्य पद्मनाभः श्रीनारायणरूपेण तिरोदधेऽदृश्योऽभवत् ॥ ४४ ॥

पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना ॥ राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥ अहमात्मात्मनां धातः प्रेष्ठः सन्प्रेयसामपि ॥ अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥४२॥ सर्ववेदमयेनेदमात्मनात्मात्मयोनिना ॥ प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥ ४३ ॥ ॥ मैत्रेय उवाच ॥ तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः ॥ व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥ ॥ इति श्रीमद्भा० म० तृतीयस्कन्धे पद्मोद्भवे विदुरमैत्रेयसंवादे नवमोऽध्यायः ॥९॥ ॥छ॥ ॥ विदुर उवाच ॥ अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ॥ प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥ ये च मे भगवन्पृष्टास्त्वय्यर्था बहुवित्तम ॥ तान्वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥ ॥ सूत उवाच ॥ एवं संचोदितस्तेन क्षत्त्रा कौषारवो मुनिः ॥ प्रीतः प्रत्याह तान्प्रश्नान् हृदिस्थानथ भार्गव ॥ ३ ॥ ॥ मैत्रेय उवाच ॥ विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ॥ आत्मन्यात्मानमावेश्य यथाह भगवानजः ॥ ४ ॥ तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितः ॥ पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥ तपसा ह्येधमानेन विद्यया चात्मसंस्थया ॥ विवृद्धविज्ञानबलो न्यपाद्वायुं सहाम्भसा ॥ ६ ॥ ॥ ॥ ॥

इति श्रीमद्भा० तृ० भावार्थदीपिकायां भा० दी० टीकायां नवमोऽध्यायः ॥९॥ ॥छ॥ ॥ दशमे कालसंख्याप्रसंगे सर्गः सप्तदशः ॥ प्राकृतादिविभागेन सर्गस्तु दशधो-च्यते ॥ १ ॥ १ ॥ मे मया । वदस्व वद । भार्गवेति या ॥ २ ॥ संचोदितः प्रार्थितः । हृदिस्थानेवाह ननु ते प्रश्नाभावेन विस्मृता इत्यर्थः ॥ ३ ॥ आत्मनि श्रीनारायणे आत्मानं मन आवेश्य ॥४॥ अब्जसंभूतो ब्रह्मा यदधिष्ठाय स्थितः, कर्तरि क्तः । तत्पद्ममम्भश्च विलोक्य । कथंभूतं पद्ममम्भश्च । तेन कालकृतेन कृतं वीर्यं यस्य तेन वायुना कम्पितं, न्यपादित्युत्तरेणान्वयः ॥ ५ ॥ विवृद्धं विज्ञानं बलं च यस्य । न्यपात्पीतवान् ॥ ६ ॥ ॥ ॥

१ 'राद्धं' इति पाठे राद्धं राधनीयं साधनीयमिति यावत्तत्प्रीतिरेव इति विज०। २ 'प्रभुः' इति वीर० पाठः। ३ 'ससर्जिथ' इति वीर० पाठः। ४ 'भारत' इति पाठः। ५ 'यथाह' इति क्वचित्पाठः। ६ उग्ररूपेण प्रकाशेनेत्यर्थः। 'भगवतोपासनया' इत्यादिना सर्वे भगवत उपासकाः स्युः इति भावः।

पुष्करं पद्मम् । प्राग्लीनान् त्रींल्लोकान् कल्पितास्मि स्रक्ष्यामि ॥ ७ ॥ भगवता स्वयं करणीये कर्मणि चोदितो नियुक्तः संस्तदा पद्मकोशं प्रविश्य तमेकमेव पुष्करं पद्मम् । प्राग्लीनान् त्रींल्लोकान् कल्पितास्मि स्रक्ष्यामि ॥ ७ ॥ त्रिधा लोकरूपेण व्यभाङ्क्षीद्विबभाज । एकेन कमलमुकुलेन कथं लोकत्रयसृष्टिरित्यसंभावनां वारयितुं तस्य विशालतामाह । द्विसप्तधा चतुर्दशलोकरूपेण । उरुधा ततोऽपि बहुप्रकारेण । भाव्यं भावयितुं योग्यम् । अतो न तेन त्रिलोकीकरणं चित्रमित्यर्थः ॥ ८ ॥ त्रिलोकीरूपेणैव विभागे हेतुमाह । एतावांस्त्रिलोकीरूपो जीवलोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्थाभेदो रचनाविशेष उक्तः । ननु परमेष्ठिनोऽपि जीवत्वाविशेषाद्ब्रह्मलोकस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राह । हि यस्मादनिमित्तस्य निष्कामस्य धर्मस्य विपाकः फलरूपोऽसौ । उपलक्षणमेतत्सत्यलोकस्य महःप्रभृतिलोकानां तद्वासिनां च । त्रैलोक्यस्य काम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौ भवतः । महःप्रभृतीनामुपासनासमुचितनिष्कामधर्मफलत्वाद्द्विपरार्धपर्यन्तं न नाशः । तत्रस्थानां च ततःपरं प्रायेण मुक्तिरिति भावः ॥ ९ ॥ कालभेदेन लोकसृष्टिभेदं श्रुत्वा तमेव कालं जिज्ञासुः पृच्छति । यत्कालाख्यं लक्षणं स्वरूपमात्थ अब्रवीः । कथं

तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम्[2] ॥ अनेन लोकान्प्राग्लीनान् कल्पितास्मीत्यचिन्तयत् ॥ ७ ॥ पद्मकोशं तदाविश्य भगवत्कर्मचोदितः ॥ एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा ॥ ८ ॥ एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः ॥ धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥ ॥ विदुर उवाच ॥ यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ॥ कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ॥ १० ॥ ॥ मैत्रेय उवाच ॥ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ॥ पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥ विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ॥ ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥ ॥ ॥ ॥

कालः कल्पते[3], किं वा तस्य सूक्ष्मं स्थूलं च रूपमिति यथावद्वर्णयेत्यर्थः ॥ १० ॥ तत्र सामान्यतः कालस्य स्वरूपमत्रोच्यते, उत्तराध्याये तु विशेषतः । गुणानां व्यतिकरो महदादिपरिणामस्तेनैवाक्रियते[4] यः स काल इति शेषः । वक्ष्यते चैकादशे 'गुणव्यतिकरः कालः स्वभावः सूत्रमेव च' इति । स्वतस्तु निर्विशेषः । अप्रतिष्ठितः क्वाप्यपर्यवसितः । आद्यन्तशून्य इत्यर्थः । एतदेव दर्शयितुमीश्वरः । सृष्ट्यादि तेन निमित्तभूतेन करोतीत्याह—पुरुष इति । उपादीयते निमित्ततया स्वीक्रियते इत्युपादानम् । स कालः उपादानं निमित्तं यस्मिंस्तमात्मानमेव विश्वरूपेणासृजत् । स्वव्यतिरेकेण सृज्यस्याभावात् । एतच्च वस्तुकथनमात्रम्[5] । कालेन निमित्तेन चासृजदित्येतावदेव विवक्षितम् ॥ ११ ॥ स्वव्यतिरिक्तसृज्याभावं दर्शयन् कालस्य सृष्टिनिमित्ततां दर्शयति—विश्वमिति । विष्णुमायया संस्थितं संहृतं ब्रह्मतन्मात्रं[6] सद्विश्वम् । ईश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम् । अव्यक्ता मूर्तिः स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

१ प्रत्यहं ब्रह्मण इति शेषः । २ स्वेनाधिष्ठितं वियद्व्यापि यत्पुष्करं तद्विलोक्येत्यन्वयः । 'यदधिष्ठितः' इति वीर० पाठस्तत्रापि स एवार्थः । ३ कल्पते केन लक्षणेनानुमीयते । ४ तत्पौर्वापर्यानुसंधानमित्यर्थः । आक्रियते आकारभेदैर्लक्ष्यते । ५ वस्तुकथनमात्रं विश्वस्य तत्कार्यत्वात्तदभिन्नत्वमिति सिद्धान्तकथनमात्रम् । ६ ब्रह्मतन्मात्रं सदिति । कार्यं हि स्वाविर्भावात्पूर्वं कारणमात्रात्मकं । यथा घटादि पृथिव्यात्मकं तथा ब्रह्मलक्षणकारणमात्रात्मकं सदित्यर्थः ।

अप्रतिष्ठितत्वं दर्शयितुं तत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह । यथेदानीमस्ति तथाऽग्रे पूर्वमप्यासीत्पश्चादपि भविष्यति । एवं सामान्यतः कालं निरूप्य विशेषतो निरूपयिष्यंस्तन्निमित्तस्य सर्गस्य पूर्वोक्तानेव भेदाननुवदति—सर्ग इति । यस्तु प्राकृतो वैकृतश्च स दशमः ॥१३॥ तन्निमित्तमेव त्रिविधं प्रलयमाह । कालेनैव केवलेन नित्यः प्रलयः । द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः । गुणैः स्वस्वकार्यं ग्रसद्भिः प्राकृतिकः । तानेव सर्गान्प्रपञ्चयति—आद्य इत्यादिना यावदध्यायसमाप्ति । महतो लक्षणमात्मनो हरेः सकाशाद्गुणानां वैषम्यमिति ॥ १४ ॥ अहमोऽहंकारस्य । तस्य लक्षणम्—यत्रेति । द्रव्यादयो वक्ष्यमाणास्त्रयः सर्गाः तन्मात्रो भूतसर्गः, भूतसूक्ष्मसर्ग इत्यर्थः । द्रव्यशक्तिमान् महाभूतोत्पादकः ॥ १५ ॥ ज्ञानकर्मेन्द्रियात्मकश्चतुर्थः । पञ्चमो वैकारिकः इन्द्रियाधिष्ठातारो देवा मनश्च ॥ १६ ॥ षष्ठस्तु तमसः पञ्चपर्वाऽविद्यायाः । अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य । मे मत्तः शृणु ॥ १७ ॥ अनुद्वेगेन श्रोतव्यतामाह । यद्विषया मेधा संसारं हरति तस्य हरेर्लीला । यद्वा इयमिति तमआदिसर्गरूपा । रजोभाज इति ब्रह्मरूपस्येत्यर्थः । अस्मिन्पक्षे अबुद्धिकृत इति प्रथमा-

यथेदानीं तथाऽग्रे च पश्चादप्येतदीदृशम् ॥ सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ॥ १३ ॥ कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥ आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥ द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥ भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ॥ १५ ॥ चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥ वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥ षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो ॥ षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥ १७ ॥ रजोभाजो भगवतो लीलेयं हरिमेधसः ॥ सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥१८॥ वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ॥ उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः ॥ १९ ॥ तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ॥ अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ॥ २० ॥ ॥

न्तम् । अनवधानकृत इत्यर्थः । मुखमिव प्रथमं कृतो मुख्यसर्गः । तस्थुषां स्थावराणाम् ॥ १८ ॥ षड्विधत्वमेवाह । ये पुष्पं विना फलन्ति ते वनस्पतयः । ओषधयः फलपाकान्ताः । लता आरोहणापेक्षाः । त्वक्सारा वेण्वादयः । लता एव काठिन्येनारोहणानपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते द्रुमाः । तेषां साधारणं लक्षणमाह । ऊर्ध्वं स्रोतः आहारसंचारो येषाम् । तमःप्राया अव्यक्तचैतन्याः । अन्तःस्पर्शाः स्पर्शमेव जानन्ति नान्यत् । तदप्यन्तरेव न बहिः । विशेषिणोऽव्यवस्थितपरिणामाद्यनेकभेदवन्तः ॥ १९ ॥ तिर्यक्स्रोतसां सर्गमाह—तिरश्चामिति । स चाष्टाविंशतिभेदः । तिरश्चां लक्षणम् । अविदः श्वस्तनादिज्ञानशून्याः । भूरितमसः आहारादिज्ञानमात्रनिष्ठाः । घ्राणेनैवेष्टमर्थं जानन्ति । हृदि अवेदिनो दीर्घानुसंधानशून्याः । तथा च श्रुतिः 'अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ' इति ॥ २० ॥ ॥ ॥

१ प्राकृतवैकृतोभयात्मकः कौमार इत्यर्थः । २ तन्मात्रस्तेषां महाभूताना मात्रा सूक्ष्मावस्था यस्मिन् भूतसूक्ष्मसर्गे । ३ इदं तमसो विशेषणम् । ४ अस्मिन्पक्ष इयं हरिलीला सामान्यतः सर्गरूपा । ५ तमआदीत्यादिना वक्ष्यमाणमुख्यसर्गादीना परिग्रहः । ६ वैकारिकः सात्त्विकाहंकारकार्यभूतो देवसर्ग इन्द्रियाभिमानिदिग्वातादिदेवतासर्गः । ७ यन्मयं सात्त्विकाहंकारकार्यस्वरूपं मनः । तथा च मनःसर्गोऽपि पञ्चमान्तर्भूत इत्यर्थः । ८ 'प्रभोः' इति पाठः । ९ अस्मिन्पक्षे हरिमेधस इत्यस्य हरौ मेधा यस्येति, हरिर्मेधायां यस्येति वाऽर्थो ज्ञेयः । १० परिणामादीत्यादिना फलपुष्पादिपरिग्रहः । ॥२२॥

अष्टाविंशतिभेदानेवाह । गवादय उष्ट्रान्ता द्विशफा द्विखुरा नव ॥ २१ ॥ खरादय एकशफाः षट् ॥ २२ ॥ श्वादयो गोधान्ताः पञ्चनखा द्वादश । एवमेते भूचराः सप्तविंशतिः । मकरादयो जलचराः । कङ्कादयश्च खगा अभूचरत्वेनैकीकृत्य गृहीताः । तदेवमष्टाविंशतिभेदा भवन्ति। तेषु कृष्णरुरुगौरा मृगविशेषाः। अन्येषामपि तिर्यक्प्राणिनां यथायथमेतेष्वेवान्तर्भावः ॥२३॥२४॥ अथ आहारसंचारो यस्य सोऽर्वाक्स्रोताः । हस्वत्वमार्षम् । नृणां सर्गो नृणां लक्षणम् । रजोऽधिकं येषु ते ॥ २५ ॥ एते त्रयो वैकृता एव न कौमारवदुभयात्मकाः । देवसर्गश्च वैकृत इत्यनुषङ्गः । वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्वमेव प्रोक्तः । अयं तु ततो न्यूनत्वाद्वै-कृतो देवसर्गत्वात्तदन्तर्भूतश्च । सनत्कुमारादीनां सर्गस्तु प्राकृतो वैकृतश्च देवत्वेन मनुष्यत्वेन च सृज्य इत्यर्थः ॥२६॥ वैकृतश्च देवसर्गोऽष्टविधः । तत्र विबुधा-

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ॥ द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥ एते चैकशफाः क्षत्तः शृणु पञ्चनखान्पशून् ॥ २२ ॥ श्वा सृगालो वृको व्याघ्रो मार्जारः शश-शल्लकौ ॥ सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥ कङ्कगृध्रवटश्येनभासभल्लूकबर्हिणः ॥ हंससारसचक्रा-ह्वकाकोलूकादयः खगाः ॥ २४॥ अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ॥ रजोधिकाः कर्मपरा दुःखे च सुख-मानिनः ॥ २५ ॥ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम॥ वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २६ ॥ देवसर्ग-श्चाष्टविधो विबुधाः पितरोऽसुराः ॥ गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥२७॥ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ॥ दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८॥ अतःपरं प्रवक्ष्यामि वंशान्मन्वन्तराणि च ॥ एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ॥ सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना ॥२९॥ (गुणव्यत्यय एतस्मिन्मा-यावित्वादधीशितुः ॥ न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिव ॥ १ ॥ देवासुरादयः क्षत्तः कल्पेऽस्मिन्ये च कीर्तिताः ॥ त एव नामरूपाभ्यामासन्मन्वन्तरान्तरे ॥ २ ॥) इति श्रीमद्भा० म० तृ० दशमोऽध्यायः ॥ १० ॥

दयस्त्रयो भेदाः । गन्धर्वाप्सरस एकः । यक्षरक्षांस्येकः ॥ २७ ॥ भूतप्रेतपिशाचा एकः । सिद्धचारणविद्याधरा एकः । किन्नरादय एकः । आदिशब्दात्किं-पुरुषाश्वमुखादयः । एतद्विशेऽध्याये स्पष्टं भविष्यति ॥ २८ ॥ २९ ॥ ननु तर्हि प्रथमं सृष्टिः प्रलयो वा, तत्राह—गुणेति । गुणव्यत्यये सर्गे भ्राम्यन्भ्रमणशीलो भ्रमिरविशेषाद्भ्राम्यद्भ्रमिस्तस्य नद्यां भ्रमतो यथा नादिर्नान्तस्तथा सृष्टिसंहारयोरित्यर्थः ॥ ३० ॥ संसारस्यानादित्वमेकरूपत्वं चाह—देवासुरादय इति । त एवेति । तन्नामानस्तद्रूपाश्चेत्यर्थः ॥ ३१ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥

१ गौरज इत्येकैकोयं बहूनामुपलक्षणरूपो ज्ञेयः । गवादिषु पठितौ रुरुगवयौ मृगविशेषौ । छत्रिन्यायेन पशवश्चेति निर्देशः । २ मकरादिषु स्वजातिविशेषभिन्नेष्वप्यभूचरत्वेनैका-कारत्वं बोध्यम् । ३ इतः श्लोकद्वयमधिकं तट्टीका च कचिदस्ति । ४ 'सृष्टे नद्यां यथा भ्रमे' इति पाठः । ५ 'देवासुरादयो नामरूपाभ्यां ये प्रकीर्तिताः । अस्मिन्कल्पे त एवासन्क्ष-त्तर्मन्वन्तरान्तरे' इति पाठः ।

तत एकादशे कालः परमाण्वादिलक्षणैः ॥ युगमन्वन्तरादिभ्यः कल्पमानादि वर्ण्यते ॥ १ ॥ तदेवं सामान्यतः कालस्योपलक्षणभूतं गुणव्यतिकरं दशविधं निरूप्येदानीं तस्यैव विशेषं निरूपयितुं तत्परिच्छेद्यं वस्तु लक्षयति द्वाभ्याम् । सतः कार्यस्य विशेषाणामंशानां यश्चरमोऽन्त्यो यस्यांशो नास्ति । अनेकः कार्यावस्थामप्राप्तः । असंयुतः समुदायावस्थां चाप्राप्तः । अत एव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः । किं तत्र प्रमाणमत आह । यतो येभ्यः समुदितेभ्यो नृणां व्यवहर्तॄणामैक्यभ्रमोऽवयविबुद्धिः । तथा च पञ्चमेऽवयविनिराकरणे वक्ष्यति, येषां समूहेन कृतो विशेष इति । कार्यानुपपत्त्या कल्प्यत इति भावः ॥१॥ सूक्ष्ममुक्त्वा स्थूलमाह—सत एवेति । यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य स्वरूपावस्थितस्य परिणामान्तरमप्राप्तस्य यत्कैवल्यमैक्यं स परममहान् । पुंस्त्वं तु परमाणुप्रतियोगित्वात् । ननु नानाविशेषवान् परस्परं भिन्नश्च सर्वः पदार्थः, कथमैक्यं तस्य तत्राह । अविशेषो विशेषविवक्षारहितो निरन्तरो भेदविवक्षारहितश्च सर्वोऽपि प्रपञ्चः परममहानित्यर्थः ॥ २ ॥ यथा सूक्ष्मस्थूलश्चायं पदार्थः । एवं कालोऽप्यनुमितः । चकारान्मध्यमावस्था गृह्यते ।

॥ मैत्रेय उवाच ॥ चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ॥ परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥१॥ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ॥ कैवल्यं परममहानविशेषो निरन्तरः ॥२॥ एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ॥ संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥ स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ॥ ततोऽविशेषभुग्यस्तु स कालः परमो महान् ॥४॥ अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ॥ जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥ त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः ॥ शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥ निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः ॥ क्षणान्पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥ ॥

संस्थानं परमाण्वाद्यवस्थानस्य भुक्तिर्व्याप्तिस्तया भगवानिति हरेः शक्तिः स्ततोऽव्यक्तो व्यक्तं भुङ्क्ते व्याप्नोति परिच्छिनत्तीति तथा । विभुरुत्पत्त्यादिषु दक्षः ॥ ३ ॥ एतदेव प्रपञ्चयति—स इत्यादिना । सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो भुङ्क्ते स कालः परमाणुः । तस्यैवाविशेषं साकल्यं यो भुङ्क्ते स परममहान् । अयमर्थः—ग्रहर्क्षताराचक्रस्थ इत्यादिना यत्सूर्यपर्यटनं वक्ष्यते, तत्र सूर्यो यावता परमाणुदेशमतिक्रामति तावान्कालः परमाणुः, यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशमतिक्रामति स परममहान् संवत्सरात्मकः कालः, तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्धान्तत्वमिति । तथा च पञ्चमे सूर्यगत्यैव कालादिविभागं वक्ष्यति ॥४॥ इदानीं द्व्यणुकादिलक्षणपूर्वकं मध्यमकालावस्थां कथयति । द्वौ परमाणू अणुः स्यात् । त्रयोऽणवस्त्रसरेणुः । स तु प्रत्यक्ष इत्याह—जालार्केति । गवाक्षप्रविष्टेष्वर्करश्मिष्ववगतः । कोऽसौ । योऽतिलघुत्वेन खमेवानुपतन्नगाद्गतः । पाठान्तरे खमेवानुपतन्नवगतो नतु गां पृथ्वीम् ॥ ५ ॥ शतं भागाः त्रुटिरूपा यस्मिन्स वेधः ॥ ६ ॥ ते निमेषास्त्रयः क्षण इत्याम्नातः । काष्ठाः पञ्चदश एकं लघु ॥ ७ ॥ ॥ ॥ ॥२३॥

१ विभागानर्ह इत्यर्थः । २ भुङ्क्ते व्याप्नोति । ३ त्रुटिलक्षणं सूर्यसिद्धान्ते 'सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते' इति । एकस्मिन्पद्मपत्रे सूच्या भिन्ने विद्धे सति यावान्कालः स त्रुटिरित्यर्थः । ४ पाठान्तरे अनुपतन्न गामित्येवंरूपे ।

नाडिकाः पद् सप्त वा प्रहरः । स एव यामो दिनस्य रात्रेश्च चतुर्थो भागः । ह्रासे पद् वृद्धौ सप्त । सन्ध्यांशमुहूर्तद्वयं विनेति ज्ञातव्यम् । तत्राप्यनियमार्थो वाशब्दः । प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥ नाडिकाया उन्मानमाह । उन्मीयतेऽनेनेत्युन्मानं पात्रं पद्पलताम्रविरचितम् । पञ्चगुञ्जो मापस्तैश्चतुर्भिश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं निमग्नं भवति तावान्कालो नाडिका । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेदल्पत्वे च विलम्बेनेति पलशलाकयोर्नियमः ॥ ९ ॥ अहनी अहोरात्रम् ॥ १० ॥ षण्मासा अयनम् । दिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥ दिवीति देवानामहोरात्रे प्राहुः । द्वादश मासाः ॥ १२ ॥ अनेन क्रमेणासौ सूर्यो नित्यमायुः क्षपयतीत्याह । ग्रहाश्चन्द्रादयः, ऋक्षाण्यश्विन्यादीनि, तारा अन्यानि नक्षत्राणि, तदुपलक्षितं यत्कालचक्रं तत्र स्थितोऽनिमिषः कालात्मा विभुरीश्वरः सूर्यो जगद्द्वादशराश्यात्मकं भुवनकोशं पर्येति

लघूनि वै समाम्नाता दश पञ्च च नाडिका ॥ ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम् ॥ ८ ॥ द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ॥ स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ॥ ९ ॥ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ॥ पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥ तयोः समुच्चयो मासः पितॄणां तदहर्निशम् ॥ द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥ अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः ॥ संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥ ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ॥ संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥१३॥ संवत्सरः परिवत्सर इडावत्सर एव च ॥ अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥ यः सृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः ॥ कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥ ॥

पर्यटति ॥ १३ ॥ संवत्सरादिभेदश्च सौरबार्हस्पत्यसावनचान्द्रनाक्षत्रमासभेदेन द्रष्टव्यः । केचित्पुनरेवमाहुः । यदा शुक्लपक्षप्रतिपदि संक्रान्तिर्भवति सौरचान्द्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः । ततः सौरमानेन वर्षे पद् दिनानि वर्धन्ते चान्द्रमानेन वर्षे पद् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति । एवं व्यवधानतारतम्येन पञ्चवर्षाणि गच्छन्ति । तन्मध्ये द्वौ मलमासौ भवतः । पुनः षष्ठः संवत्सरो भवति ॥ १४ ॥ एवंभूतः कालात्मा नित्यमप्रमत्तैः पूजनीय इत्याह—य इति । सृज्यं कार्यमङ्कुरादि तद्विषयां बीजादीनां शक्तिं कालरूपया स्वशक्त्या बहुधोच्छ्वसयन्कार्याभिमुखीकुर्वन् दिव्यन्तरिक्षे धावति । कोऽसौ । भूतभेदो महाभूतविशेषस्तेजोमण्डलरूपी सूर्यः । किमर्थं धावति । पुरुषस्याभ्रमाय भ्रमो मोहस्तन्निवृत्तये । आयुरादिव्ययेन विषयासक्तिं निवर्तयन्नित्यर्थः । सकामानां तु गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् । तस्मै संवत्सरपञ्चकप्रवर्तकाय पूजां कुरुत ॥ १५ ॥ ॥ ॥

१ तद्भेदानां पलविपलप्रयुक्तानाम् । २ उन्मानं मानज्ञानसाधनम् । ३ तत्र सूर्यसंक्रान्तिरूपो मासः सौरस्तन्मानेन द्वादशमासाः संवत्सरः १, यावता बृहस्पतिरेकस्मिन्राशौ चरति तस्य द्वादशो भागो बार्हस्पत्यः परिवत्सरः २, कुसीदवृत्त्या व्यवह्रियमाणस्त्रिंशद्दिनात्मको मासः सावनस्तैर्द्वादशभिरिडावत्सरः ३, दर्शावधिर्मासश्चान्द्रस्तन्मानेन द्वादशमासा अनुवत्सरः ४, इन्दोः सप्तविंशतिनक्षत्रभ्रमणात्मको मासो नाक्षत्रस्तन्मानेन द्वादशमासा वत्सरः ५, इति । ४ कारणानाम् । ५ शक्तिं कार्यसूक्ष्मावस्थाम् । ६ अङ्कुरादेः सूक्ष्मस्थूलादिविशेषस्य प्रतिव्यक्तिभेदाद्बहुधेत्युक्तम् । ७ बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं महाभूतत्वम् ।

इदं स्वस्वमानेन वर्षशतं गणितमायुर्मानम् । प्रत्यहं कल्प्यते सृज्यते इति कल्पस्त्रैलोक्यं तस्माद्वाह्यतः । विदो ज्ञानिनः ॥ १६ ॥ योगराद्धेन योगसिद्धेन ॥ १७ ॥ द्वादशभिर्वर्षसहस्रैरित्युत्तरश्लोकसामर्थ्याज्ज्ञातव्यम् । अवधीयत इत्यवधानं सन्ध्या चांशश्च तत्सहितम् ॥ १८ ॥ कृतयुगे चत्वारि सहस्राणि सन्ध्यासन्ध्यांशयोश्चत्वारिचत्वारीत्यष्टौ शतानि च । एवं त्रेतादिष्वपि योज्यम् ॥ १९ ॥ युगस्यादौ सन्ध्या अन्तेंऽशः सन्ध्यांशः । उक्तानि शतानि संख्या ययोस्तयोरन्तरेण मध्ये युगम् । तस्य विशेषमाह—यत्रेति । गवालम्भादिधर्मविशेषो यत्र विधीयत इत्यर्थः । साधारणधर्मस्तु सन्ध्यांशयोरप्यस्त्येव ॥२०॥ चतुष्पात् संपूर्णः । त्रेतादिषु पादेन पादेन व्येति ह्रसति । पादेन पादेन वर्धमानेनाधर्मेण हेतुना । एतच्च स्वरूपकथनमात्रं वैराग्यार्थं नतु धर्मसंकोचनार्थम् ॥२१॥ त्रिलोक्या वहिर्महर्लोकप्रभृति ब्रह्मलोक-

॥ विदुर उवाच ॥ पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ॥ परेषां गतिमाचक्ष्व ये स्युः कल्पाद्वहिर्विदः ॥ १६ ॥
भगवान्वेद कालस्य गतिं भगवतो ननु ॥ विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥ १७ ॥ ॥ मैत्रेय उवाच ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम् ॥ १८ ॥ चत्वारि त्रीणि द्वे
चैकं कृतादिषु यथाक्रमम् ॥ संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥१९॥ सन्ध्यांशयोरन्तरेण यः कालः
शतसंख्ययोः ॥ तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ २० ॥ धर्मश्चतुष्पान्मनुजान्कृते समनुवर्तते ॥ स एवा-
न्येष्वधर्मेण व्येति पादेन वर्धता ॥२१॥ त्रिलोक्या युगसाहस्रं वहिराब्रह्मणो दिनम् ॥ तावत्येव निशा तात यन्नि-
मीलति विश्वसृक् ॥२२॥ निशावसान आरब्धो लोककल्पोऽनुवर्तते ॥ यावद्दिनं भगवतो मनून्भुञ्जंश्चतुर्दश ॥२३॥
स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम् ॥ मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ॥ भवन्ति चैव युगपत्सुरे-
शाश्चानु ये च तान् ॥ २४ ॥ एष दैनंदिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः ॥ तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः
॥ २५ ॥ मन्वन्तरेषु भगवान्बिभ्रत्सत्त्वं स्वमूर्तिभिः ॥ मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥ तमोमात्रा-
मुपादाय प्रतिसंरुद्धविक्रमः ॥ कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥ ॥ ॥ ॥

मभिव्याप्य चतुर्युगसहस्रमेकं दिनम् । यत् यस्यां विश्वसृक् ब्रह्मा निमीलति स्वपिति ॥२२॥ तत्र दिनस्थितिमाह—निशावसान इत्यादिसार्धैश्चतुर्भिः । चतुर्दशमनून्भुञ्जन्पालयन् । व्याप्नुवन्नित्यर्थः ॥२३॥ किंचिदधिकां युगानामेकसप्ततिम् । मनुवंश्याः पृथ्वीपालकाः क्रमेण भवन्ति । सप्तर्षिप्रभृतयस्तु युगपत्समकालमेव भवन्ति । सुरेशा इन्द्राः ।ताननुवर्तन्ते ये गन्धर्वादयस्तेऽपि ॥ २४ ॥ त्रैलोक्यं वर्तयतीति तथा ॥ २५ ॥ स्वमूर्तिभिर्मन्वन्तरावतारैर्मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषकारः सन्विश्वं रक्षति ॥ २६ ॥ रात्रिगतां स्थितिमाह पञ्चभिः । तमसो मात्रां लेशम् । प्रतिसंरुद्धः प्रत्याहृतो विक्रमो येन । अनुगतमनुप्रविष्टमशेषं यस्मिन् ॥ २७ ॥ ॥२४॥

१ 'विदुः' इति वीर० पाठः । २ 'सन्ध्यासन्ध्याशयोरन्तः' इति पाठः । ३ लोककल्पो लोकरचना । ४ यत्र दैनंदिनसर्गे । ५ वर्तयति विषयीकरोति । ६ .अशेषं त्रैलोक्यस्थजीववृन्दम् ।

तदेव स्पष्टयति—तमेवेति । अन्वपिधीयन्त इति कर्मकर्तरिप्रयोगः । तिरोहिता भवन्तीत्यर्थः । कथम् । निर्मुक्तो रहितः शशी भास्करश्च यथा भवति तथा ॥ २८ ॥ भगवच्छक्तिरूपो यः संकर्षणमुखाग्निस्तेनोष्मणाऽर्दिताः सन्तो जनलोकं यान्ति ॥ २९ ॥ कल्पान्तेनैधिताः सिन्धवः समुद्राः । उत्कट आटोपः क्षोभो येषां ते च ते चण्डवातैरीरितोर्मयश्च ॥ ३० ॥ जनलोक आलयो येषां महर्लोकगतानामन्येषां च तैः ॥ ३१ ॥ वैराग्यार्थमाह । एवंविधैरहोरात्रैर्वर्षशतं सर्वेषां प्राणिनामायुर्पः परमधिकमस्य ब्रह्मणो यदायुस्तदप्यपक्षितमिव क्षीणमिवेति लोकोक्तिः । गतप्रायमित्यर्थः ॥ ३२ ॥ तदेवाह—यदिति ॥ ३३ ॥ पूर्वस्य परार्धस्यादाविति त्रिभिर्वस्तुकथनमात्रम् ॥ ३४ ॥ पाद्मत्वे हेतुः—यदिति ॥ ३५ ॥ अयं तु द्वितीयस्यादौ कथितः ॥ ३६ ॥ तदेवं कालेन निमित्तेन

तमेवान्वपिधीयन्ते लोका भूरादयस्त्रयः ॥ निशायामनुवृत्तायां निर्मुक्तशशिभास्करम् ॥२८॥ त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना॥यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः॥२९॥तावत्त्रिभुवनं सद्यःकल्पान्तैधितसिन्धवः॥ प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः॥३०॥ अन्तः स तस्मिन्सलिल आस्तेऽनन्तासनो हरिः ॥ योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ॥३१॥ एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ॥ अपक्षितमिवास्यापि परमायुर्वयः शतम् ॥३२॥ यदर्धमायुषस्तस्य परार्धमभिधीयते ॥ पूर्वः परार्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्तते॥३३॥ पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ॥ कल्पो यत्राभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः ॥३४॥ तस्यैव चान्ते कल्पोऽभूद्यं पाद्ममभिचक्षते ॥ यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥३५॥ अयं तु कथितः कल्पो द्वितीयस्यापि भारत ॥ वाराह इति विख्यातो यत्रासीत्सूकरो हरिः ॥ ३६ ॥ कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ॥ अव्याकृतस्यानन्तस्य अनादेर्जगदात्मनः ॥ ॥ ३७ ॥ कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः ॥ नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः ॥ आण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥ ॥ ॥

सृज्यानामायुःपरिमाणमुक्त्वा कालपरिच्छेदरहितं तत्त्वमाह—कालोऽयमिति पञ्चभिः । उपचर्यते केवलं न त्वनेनापि क्रमेणायुर्गणनं तस्येत्याह । अव्याकृतस्य कार्योपाधिशून्यस्य अत एवानन्तस्यानादेश्च जगदात्मनो जगत्कारणस्य ॥ ३७ ॥ तत्परिच्छेदे कालस्यासामर्थ्यादित्याह । कालोऽयमीश्वरः समर्थोऽपि भूम्नः परिपूर्णस्येशितुं नैव प्रभुः समर्थः । यतो धाममानिनां देहगेहाभिमानिनामेवेश्वरः ॥ ३८ ॥ 'भूम्न' इत्युक्तं तत्प्रपञ्चयन्नाह । विकारैः षोडशभिर्युक्तैरष्टप्रकृतिसंयुतैः सहितस्तदारब्ध इत्यर्थः । अयमाण्डकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यते इत्युत्तरेणान्वयः । कीदृशः । अन्तः पञ्चाशत्कोटियोजनविस्तृतः, बहिश्च विशेषादिभिः पृथिव्यादिभिः सप्तभिरावृतः ॥ ३९ ॥ ॥ ॥ ॥ ॥

१ अन्येषां च सदा तत्रत्यानाम् । २ परमायुरित्यत्र आयुषः परमं परमायुरिति विग्रहो ज्ञेयः । ३ मूले वयः शतमित्यत्रत्य वय इत्यस्यायमर्थः । ४ इवशब्देन किंचिदायुरपक्षीणं किंचिदवशिष्टमिति सूच्यते । वीर० । ५ 'अनुविलीयन्ते' इति विज० पाठः । ६ निमीलाक्षो निमीलिताक्षः । ७ सत्यलोकाद्यधिकारमानिनामिति क्रम० । ८ महाभूतैकादशेन्द्रियरूपैः । ९ प्रकृतिमहदहंकारपञ्चतन्मात्ररूपाः प्रकृतयः ।

कीदृशैः । आण्डकोशप्रमाणाद्दशगुणमुत्तरोत्तरोऽधिको येषु तैः । न केवलमयमेक एव अपितन्येऽपि लक्ष्यन्ते ॥ ४० ॥ सर्वेषां कारणानां कारणम् । धाम स्वरूपम् ॥४१॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायामेकादशोऽध्यायः ॥११॥ ॥छ॥ ॥ द्वादशे तु कुमारादिमनःसर्गोऽसमेधनात् । कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १ ॥ १ ॥ अग्र इति । ब्रह्मा स्वसृष्टौ प्रथममविद्यावृत्तीः ससर्ज । तत्र तमो नाम स्वरूपाप्रकाशः । मोहो देहाद्यहंबुद्धिः । महामोहो भोगेच्छा । तामिस्रं तत्प्रतिघाते क्रोधः । अन्धतामिस्रं तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः । तदेवोक्तं वैष्णवे—'तमोविवेको मोहः स्यादन्तःकरणविभ्रमः ॥ महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥ मरणं ह्यन्धतामिस्रं तामिस्रः क्रोध उच्यते ॥ अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥'

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ॥ लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥४०॥ तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ॥ विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः ॥ ४१ ॥ ॥ इति श्रीमद्भागवते म० तृतीयस्कन्धे एकादशोऽध्यायः ॥११॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः ॥ महिमा वेदगर्भोऽथ यथाऽस्राक्षीन्निबोध मे ॥१॥ ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् ॥ महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥२॥ दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत ॥ भगवद्ध्यानपूतेन मनसाऽन्यां ततोऽसृजत् ॥३॥ सनकं च सनन्दं च सनातनमथात्मभूः ॥ सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥४॥ तान्बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः ॥ तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥५॥ सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः ॥ क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥ धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः ॥ सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥ स वै रुरोद देवानां पूर्वजो भगवान्भवः ॥ नामानि कुरु मे धातः स्थानानि च जगद्गुरो ॥ ८ ॥ इति तस्य वचः पाद्मो भगवान्परिपालयन् ॥ अभ्यधाद्भद्रया वाचा मारोदीस्तत्करोमि ते ॥ ९ ॥ ॥ ॥

इति । पातञ्जलेऽप्येत एवोक्ताः—'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इति, श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः । तदुक्तम् 'स्वादृगुत्थविपर्यास' इत्यादि ॥ २ ॥ न बह्वमन्यत नाभ्यनन्दत् ॥ ३ ॥ यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादिहोच्यते । वस्तुतस्तु मुख्यसर्गादय एव प्रतिकल्पं भवन्ति सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तन्ते ॥ ४ ॥ स्वभूर्ब्रह्मा ॥ ५ ॥ अवध्यातोऽवज्ञातः । प्रत्याख्यातमनङ्गीकृतमनुशासनं यैः ॥ ६ ॥ स चासौ मन्युश्च तन्मन्युः ॥ ७ ॥ ८ ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥



१ अथ कालवर्णनानन्तरं । मे मत्तः । निबोध शृणु । २ 'अन्यान्' इति पाठः । ३ एवं निवृत्ताधिकारतया । ४ देवाना देवेभ्यः । ५ नामान्तरैरित्यर्थः । ६ स्वादृक् स्वरूपाज्ञानम् । आदिशब्दात् 'भवभेदजभीशुचः ॥ यन्मायया जुषन्नास्ते तं नृसिंहमहं भजे' इति पादत्रयं ज्ञेयम् । ७ तन्मन्युः जातक्रोधः ।

बालक इव ॥ १० ॥ अग्रे पूर्वमेव मे मया कृतानि ॥ ११ ॥ १२ ॥ १३ ॥ सयोषणः सस्त्रीकः । एभिः स्थानैर्नामभिश्च युक्तः प्रजाः सृज ॥ १४ ॥ सत्त्वं

यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः ॥ ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः ॥१०॥ हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही ॥ सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि मे ॥११॥ मन्युर्मनुर्महिनसो महान् शिव ऋतुध्वजः ॥ उग्ररेता भवः कालो वामदेवो धृतव्रतः ॥ १२ ॥ धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाम्बिका ॥ इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः ॥१३॥ गृहाणैतानि नामानि स्थानानि च सयोषणः॥एभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः ॥१४॥ इत्यादिष्टः स गुरुणा भगवान्नीललोहितः ॥ सत्त्वाकृतिस्वभावेन ससर्जात्मसमाः प्रजाः ॥१५॥ रुद्राणां रुद्रसृष्टानां समन्ताद्ग्रसतां जगत् ॥ निशाम्यासंख्यशो यूथान् प्रजापतिरशङ्कत ॥१६॥ अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम ॥ मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥ १७ ॥ तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् ॥ तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥ तपसैव परं ज्योतिर्भगवन्तमधोक्षजम् ॥ सर्वभूतगुहावासमञ्जसा विन्दते पुमान् ॥१९॥ ॥ मैत्रेय उवाच ॥ एवमात्मभुवादिष्टः परिक्रम्य गिरांपतिम् ॥ बाढमित्यमुमामन्त्र्य विवेश तपसे वनम् ॥२०॥ अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे ॥ भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥२२॥ उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ॥ प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥२३॥ पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ॥ अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥ धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् ॥ अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयंकरः ॥२५॥ हृदि कामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात् ॥ आस्याद्वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥ २६ ॥ छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ॥ मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥ ॥

बलम् । आकृतिर्नीललोहितता । स्वभावस्तीव्रता तेन ॥ १५ ॥ रुद्राणां यूथानि दृष्ट्वा ॥ १६ ॥ १७ ॥ स्रष्टा स्रक्ष्यति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अधरदच्छदादधरोष्ठात् ॥ २६ ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥

१ यत् यस्मात् । २ 'महिनसः' इति पाठोऽनर्थकत्वाद्धेय इति दीपि० । ३ 'ऋतुध्वजः' इति पाठः । ४ धीरित्यादीन्येकादश तच्छक्तीनां नामानि । ५ यूथानिति पुंस्त्वमार्षम् । ६ तप आलोचन इत्यस्मात्तपोऽत्र भगवद्ध्यानमिति । दीपि० । ७ पुमानिति ध्यानोपलक्षितभक्तौ सर्वस्याधिकारित्वं सूचितम् । ८ यत्र यस्माद्धर्मात् । ९ हृदीत्यस्य हृद इत्यर्थः । १० आस्यात् मुखान्तर्वर्तिछिद्रादिति दीपि० । ११ 'पाय्वपाश्रयः' इति पाठः । १२ विश्वकृतो ब्रह्मणः । १३ मूले समाहारद्वन्द्वः ।

देहान्तरेण कृतं सर्गं वक्तुं तद्देहत्यागे कारणमाह—वाचमित्यादिना ॥ २८ ॥ २९ ॥ त्वत् त्वत्तो ये पूर्वे ब्रह्मादयोऽन्ये वा तैरेतन्न कृतम् । अपरे त्वत्तोऽर्वाचीनास्तेऽपि न करिष्यन्ति । अङ्गजं कामम् ॥ ३० ॥ तेजीयसामतितेजस्विनामपि सुश्लोक्यं सत्कीर्तिदं न भवति । येषां तेजीयसाम् वृत्तम् ॥ ३१ ॥ ३२ ॥ तन्वं तनुम् ॥ ३३ ॥ कथं स्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणश्चतुःसंख्यायुक्तान्मुखात् । समवेतान्सुसङ्गतान् । यथापुरा प्राक्कल्पे ॥ ३४ ॥ चातुर्होत्रं होत्रादीनां चतुर्णां कर्म । कर्मतन्त्रं यज्ञविस्तारः । उपवेदैर्न्यायैश्च सह । आश्रमास्तद्वृत्तयश्चासन् ॥ ३५ ॥ मुखतो मुखेभ्यः ॥ ३६ ॥ चातुर्होत्रसृष्टिक्रममाह । शस्त्रमप्रे-

वाचं दुहितरं तन्वीं स्वयंभूर्हरतीं मनः ॥ अकामां चकमे क्षत्तः सकाम इति नः[3] श्रुतम् ॥२८॥ तमधर्मे कृतमतिं विलोक्य पितरं सुताः ॥ मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥ २९ ॥ नैतत्पूर्वैः[4] कृतं त्वद्ये न करिष्यन्ति चापरे ॥ यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥ ३० ॥ तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ॥ यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते ॥३१॥ तस्मै[5] नमो भगवते य इदं स्वेन रोचिषा ॥ आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥३२॥ स इत्थं गृणतः पुत्रान्पुरो दृष्ट्वा प्रजापतीन् ॥ प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ ३३ ॥ तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ॥ कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ॥ कथं स्रक्ष्याम्यहं लोकान्समवेतान्यथापुरा ॥ ३४ ॥ चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह ॥ धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥ ॥ विदुर उवाच ॥ स वै विश्वसृजामीशो वेदादीन्मुखतोऽसृजत् ॥ यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥ ॥ मैत्रेय उवाच ॥ ऋग्यजुःसामाथर्वाख्यान् वेदान्पूर्वादिभिर्मुखैः ॥ शस्त्रमिज्यां[6] स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥ ३७ ॥ आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ॥ स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥३८॥ इतिहासपुराणानि पञ्चमं वेदमीश्वरः ॥ सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥३९॥ षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ ॥ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥ ॥ ॥

गीतमन्त्रस्तोत्रं होतुः कर्म । इज्यामध्वर्योः कर्म । स्तुतिस्तोमं स्तुतिः संगीतं, स्तोमं तदर्थमृक्समुदायं 'त्रिवृत्स्तोमो भवति' इत्यादिविहितमुद्गातृप्रयोज्यम् । प्रायश्चित्तं ब्राह्मम् ॥ ३७ ॥ उपवेदक्रममाह—आयुर्वेदमिति । आत्मनो मुखैः । स्थापत्यं विश्वकर्मशास्त्रम् ॥ ३८ ॥ ३९ ॥ कर्मतन्त्रक्रममाह—षोडश्युक्थाविति । पुरीषी चयनम् । अग्निष्टुदग्निष्टोमः ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ आदिनोद्गात्रध्वर्युब्रह्मणा परिग्रहः । २ अप्रगीतैः स्वरानुपूर्वीरहितैर्मन्त्रैः स्तूयते तत्स्तोत्रम् । ३ नः श्रुतमित्युक्त्या दर्शनाभावात्पूर्वकल्पवृत्तमिदं न साम्प्रतिकमिति सूचितम् । अथवा महत्सु दूषणमात्मना दृष्टमपि स्वतो न वाच्यमिति सूचयति । ४ 'नैतत्पूर्वे कृतं त्वद्ये' इति पाठस्तत्र तैरिति शेषः । अयं पाठः टीकानुरोधात् युक्तो भाति । ५ एवं प्रबोधितस्यापि तस्मान्निवृत्तिमपश्यतां तेषामेव नमस्कारपूर्वकं प्रार्थनेयम् । ६ देवतोद्देशेन द्रव्यत्यागरूपाम् । ७ स्वरानुपूर्वीसहितम् ।

विद्येति शौचम् । 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति स्मृतेः । दानमिति दया । 'भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्' इति वचनात् । एवं च 'तपः शौचं दया सत्यमिति पादाः कृते कृताः' इति प्रथमस्कन्धोक्तेरविरोधः ॥ ४१ ॥ ब्रह्मचर्याद्याश्रमेष्वेकैकस्य चातुर्विध्यमाह । सावित्रं ब्रह्मचर्यं, उपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रम् । प्राजापत्यं व्रतान्याचरतः संवत्सरम् । ब्राह्मं वेदग्रहणान्तम् । बृहन्नैष्ठिकम् । वार्ता अनिषिद्धकृष्यादिवृत्तिः । संचयो याजनादिवृत्तिः । शालीनमयाचितवृत्तिः । शिलोञ्छः पतितकणिशकणवृत्तिः । एकवचनमार्षम् । इत्येता गृहे वृत्तय इति । यद्वा शिलोञ्छ इति द्वन्द्वैक्ये सप्तमी । एवं वृत्तिभेदे सति गृहे स्थिता भवन्तीत्यर्थः ॥ ४२ ॥ वने स्थिताश्चत्वारः । तत्र वैखानसा अकृष्टपच्यवृत्तयः । वालखिल्या नवेऽन्ने लब्धे पूर्वसंचितान्नत्यागिनः । औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः । फेनपाः स्वयं पतितैः फलादिभिर्जीवन्तः । कुटीचकः स्वाश्रमकर्मप्रधानः । बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः । हंसो ज्ञानाभ्यासनिष्ठः, निष्क्रियः प्राप्ततत्त्वः । एते च सर्वे यथोत्तरं श्रेष्ठाः ॥ ४३ ॥

विद्या दानं तपः सत्यं धर्मस्येति पदानि च ॥ आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः ॥ ४१ ॥ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा ॥ वार्ता संचयशालीनशिलोञ्छ इति वै गृहे ॥ ४२ ॥ वैखानसा वालखिल्यौदुम्बराः फेनपा वने ॥ न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥ ४३ ॥ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ॥ एवं व्याहृतयश्चासन्प्रणवो ह्यस्य दह्रतः ॥ ४४ ॥ तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः ॥ त्रिष्टुम्मांसात्स्नुतोऽनुष्टुग्जगत्यस्थ्नः प्रजापतेः ॥ ४५ ॥ मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥ स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः ॥ ४६ ॥ ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः ॥ स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ॥ ४७ ॥ शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः ॥ ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः ॥ ४८ ॥ ॥

न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह—आन्वीक्षिकीति । आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्याः । भूर्भुवःस्वरिति व्यस्तास्तिस्रः । समस्ता चतुर्थी । यथाहआश्वलायनः—'एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ताः' इति । यद्वा मह इति चतुर्थी । तथा च श्रुतिः—'भूर्भुवःसुवरिति वा एतास्तिस्रो व्याहृतयः ॥ तासामु ह स्मैतां चतुर्थीं माहाचमस्यः प्रवेदयते मह इति' इति । दह्रतो हृदयाकाशात् ॥ ४४ ॥ स्नुतः स्नायुतः । 'अनुष्टुप् स्नावान्' इति श्रुतेः ॥ ४५ ॥ महाकल्पे ब्रह्मा शब्दब्रह्मरूपोऽभवदित्युक्तं तदेव दर्शयन्वर्णानामुत्पत्तिमाह—स्पर्श इति सार्धेन । स्पर्शः कादिवर्गपञ्चकम् । स्वरोऽकारादिः ॥ ४६ ॥ ऊष्माणं शषसहचतुष्कम् । अन्तस्था यरलवाः । सप्त स्वराः षड्जादयः । विहारेण क्रीडया ॥ ४७ ॥ अत एव शब्दतनुत्वाद्ब्रह्मणः परमेश्वरो नित्यं प्रकाशत इत्याह । व्यक्ता वैखरी अव्यक्तः प्रणवस्तदात्मनस्तस्य ब्रह्मणः परः परमेश्वरोऽवभाति । कीदृशः । ब्रह्म परिपूर्णः, तत्राव्यक्तात्मनो ब्रह्मरूपो विततोऽवभाति व्यक्तात्मनो नानाभक्त्युपबृंहित इन्द्रादिरूपोऽवभाति ॥ ॥ ४८ ॥ ॥ ॥ ॥ ॥

१ एतेच प्रत्येकं चतुर्विधा गृहस्थादयः । २ 'हृत्स्वतः' इति पाठेऽपि स एवार्थः । ३ 'मज्जातः' इति पाठः । ४ सर्वाङ्गाच्छादकनाडीत इत्यर्थः चक्र० । ५ स्नावान् स्नायुजन्यः । ६ वर्णोत्पादकत्वादेव । ७ विततो व्यापकः ।

यां पूर्वं विसृष्टा सती नीहारं तमोऽभवत् । ततोऽपरामनिषिद्धकामासक्तां तनुम् । शब्दब्रह्मतनुस्तु सदाऽस्त्येव । तन्वन्तरग्रहणे कारणमाह—ऋषीणामित्यादिना ॥ ४९ ॥ चिन्तामेवाह—अहो इति । व्यापृतस्य व्यापारं कुर्वाणस्य ॥ ५० ॥ युक्तकृतो यथोचितं कुर्वतः ॥ ५१ ॥ अत एव कस्य ब्रह्मणो रूपं द्विधा भूतमित्याश्चर्यात्कायमद्याप्यभिचक्षते ॥ ५२ ॥ या स्त्री सा अस्य महिष्यासीत् ॥ ५३ ॥ एधांबभूविरे वृद्धिं प्राप्ताः । तदेवाह—स चापीति ॥ ५४ ॥ ॥ ५५ ॥ यैतो यासां सन्ततिभिः ॥ ५६ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ छ ॥

ततोऽपरामुपादाय स सर्गाय मनो दधे ॥ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥४९॥ ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव ॥ अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥५०॥ न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ॥ एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ॥५१॥ कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ॥ ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ ५२ ॥ यस्तु तत्र पुमान्सोऽभून्मनुः स्वायंभुवः स्वराट् ॥ स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ ५३ ॥ तदा मिथुनधर्मेण प्रजा ह्येधांबभूविरे ॥ स चापि शतरूपायां पञ्चापत्यान्यजीजनत् ॥ ५४ ॥ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥ ५५ ॥ आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम् ॥ दक्षायाऽदात्प्रसूतिं च यत आपूरितं जगत् ॥ ५६ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ॥ भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥ ॥ विदुर उवाच ॥ स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ॥ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥ चरितं तस्य राजर्षेरादिराजस्य सत्तम ॥ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः ॥ यत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥ ॥ ॥ ॥

त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम् । धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १ ॥ १ ॥ स्वयंभुवः पुत्रस्तद्देहांशत्वात् ॥ २ ॥ विष्वक्सेनो हरिरेवाश्रयो यस्य सः ॥ ३ ॥ अतस्तस्य चरितं श्रोतव्यमित्याह । सुचिरं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्याञ्जसा मुख्यत्वेनायमेवार्थ ईडितः स्तुतो ननु । मुकुन्दपादारविन्दं येषां हृदयेष्वस्ति तेषां भागवतानां गुणानुश्रवणमिति यत् ॥ ४ ॥ ॥ ॥ ॥ ॥

१ निषिद्धकामासक्ता । २ सनातनीत्वात्सर्वकारणरूपत्वाच्च । ३ कायमित्यत्र नद्यादित्वात्कप् नलोपश्छान्दसः । ४ यतः कन्यात्रयात् । ५ मनो दधे मनसाऽचिन्तयदित्यर्थः । ६ सर्गवृद्धये 'तद्धृदये' इति क्वचित्पाठः । ७ 'या स्त्री सा शतरूपाऽस्य महिषी तु महात्मनः' इति पाठः । ८ 'स च स्वायंभुवः' इति पाठः । ९ आकस्मिकेति कारणमन्तरेव । १० हरिरेवेत्यन्ययोगव्यवच्छेदकावधारणेनैकान्तिकत्वं व्यक्तम् । ११ श्रुतस्य शास्त्रश्रवणस्य । भावे निष्ठा । १२ गुणानुश्रवणमिति यत् अयमेवेति योजनीयम् ।

सहस्रशीर्षा श्रीकृष्णस्तच्चरणावुपधीयेते यस्मिन्, श्रीकृष्णः प्रीत्या यस्योत्सङ्गे चरणौ प्रसारयतीत्यर्थः । तमभ्यचष्ट अभ्यभाषत । मुनिर्मैत्रेयः । प्रणीयमानस्तेन प्रवर्त्यमानः ॥ ५ ॥ वेदगर्भं ब्रह्माणम् ॥ ६ ॥ त्वमेवैकः पिता सर्वेषाम् । यतो जन्मकृद्वृत्तिदः पोषकश्च त्वमेव । अतस्तव यद्यप्यन्यापेक्षा नास्त्यथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ हे ईड्य, आत्मशक्तिष्वस्मच्छक्त्येषु कर्मसु मध्ये केन कर्मणा भवेत्तद्विधेहि इदं कर्तव्यमिति कथय । यत्कृत्वा यस्मिन्कृते सति । विष्वक् सर्वतः । अमुत्र परलोके ॥८॥ वां युवाभ्यां स्वस्ति भद्रं स्तात् भूयात् । यद्यतो मा मां शाध्यनुशिक्षयेत्यात्मना स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥ अपचितिः पूजा । गृह्येत आज्ञेति शेषः । सनकादयो न कुर्वन्ति वयं किमिति करिष्याम इत्येवंभूतो गतो मत्सरो येभ्यः

श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ॥ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥ ॥ मैत्रेय उवाच ॥ यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ॥ प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥६॥ त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ॥ अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥७॥ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु ॥ यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥८॥ ॥ ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहं तात स्वस्ति स्ताद्वां क्षितीश्वर ॥ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनाऽर्पितम् ॥ ९ ॥ एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥१०॥ स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ॥ उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ॥ भगवांस्ते प्रजाभर्तुर्हृषीकेशो नु तुष्यति ॥ १२ ॥ येषां न तुष्टो भगवान्यज्ञलिङ्गो जनार्दनः ॥ तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम् ॥१३॥ ॥ मनुरुवाच ॥ आदेशेऽहं भगवतो वर्तेयामीवसूदन ॥ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥१४॥ यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि ॥ अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥१५॥ ॥ मैत्रेय उवाच ॥ परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम् ॥ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥ ॥

॥ १० ॥ गां शास शाधि । पालयेत्यर्थः । पुरुषं हरिम् ॥११॥ प्रजापालकस्य ते तुष्टो भविष्यति ॥ १२ ॥ उदासीनस्य भगवतोऽतोषे मे को दोषस्तत्राह—येषामिति । यज्ञलिङ्गो यज्ञमूर्तिः । अपगतोऽर्थो यस्मात् । केवलं श्रमायैवेत्यर्थः । यद्यस्मादात्मैव स्वयं नादृतः । तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वाच्च तस्य ॥ १३ ॥ वर्तेय वर्तिष्ये । अमीवसूदन पापनाशन । अनुजानीह्यत्र स्थातव्यमित्यनुज्ञां देहि ॥ १४ ॥ महीति चेदत आह । यदोकः स्थानं सा मही । हे देव, अस्या देव्याः ॥ १५ ॥ पूर्वं पाने कृतेऽपि पुनरकाण्ड एवोद्भूतानामपां मध्ये सन्नामवसन्नां निमग्नाम् । समुन्नेष्ये उद्धरिष्यामि ॥ १६ ॥ ॥

१ उपधीयेते प्रसार्येते । २ युवाभ्यामित्यत्रोद्देशश्चतुर्थ्यर्थः । युवामुद्दिश्येत्यर्थः । ३ शक्त्या शक्त्यनुसारेण । ४ गा शासेत्यत्र पृथिव्याः शिक्षणासंभवात्पालने लक्षणा इति दीपि० ।

चिन्तामेवाह । सृजतः सतः । वार्भिरद्भिः । रसां रसातलम् । ईश्वरेण सर्गे नियुक्तैः मेऽनुष्ठेयं स एव विदधातु संपादयतु ॥ १७ ॥ वराहतोकः सूक्ष्मो वराहः ॥ १८ ॥ खस्थ आकाशे स्थितः सन् ॥ १९ ॥ चित्रधा अनेकधा ॥ २० ॥ २१ ॥ पूर्वमङ्गुष्ठाग्रप्रमाणो दृष्टः । गण्डशिला स्थूलपाषाणस्तत्समः । यज्ञो विष्णुः । निजरूपतिरोधानेन मे मनः खेदयन् ॥ २२ ॥ इति मीमांसमानस्य सतः । जगर्जागर्जत् । गिरीन्द्रतुल्यः ॥ २३ ॥ गर्जनप्रयोजनमाह—ब्रह्माणमिति ॥ २४ ॥ घर्घरितं तज्जात्यनुकरणध्वनिम् । अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु क्षपयिष्णु नाशकम् । ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था । त्रिभिः

सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता ॥ अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ यस्याहं हृदयादासं स ईशो विदधातु मे ॥१७॥ इत्यभिध्यायतो नासाविवरात्सहसाऽनघ ॥ वराहतोको निरगादङ्गुष्ठपरिमाणकः ॥१८॥ तस्याभिपश्यतः खस्थः क्षणेन किल भारत ॥ गजमात्रः प्रववृधे तदद्भुतमभून्महत् ॥१९॥ मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह ॥ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा॥२०॥किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम्॥अहो बताश्चर्यमिदं नासाया मे विनिःसृतम् ॥ २१ ॥ दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलासमः ॥ अपिस्विद्भगवानेष यज्ञो मे खेदयन्मनः ॥२२॥ इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः ॥ भगवान्यज्ञपुरुषो जगर्जागेन्द्रसन्निभः॥२३॥ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥२४॥ निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य ॥ जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २५ ॥ तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम् ॥ विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश ॥ २६ ॥ उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन्खररोमशत्वक् ॥ खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २७ ॥ ॥ ॥

पवित्रैर्ऋग्यजुःसाममन्त्रैरगृणन्नस्तुवन् ॥ २५ ॥ वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः । अत एवात्मनो गुणाननुवदति तथा तत्तेषां ब्रह्म उच्चारितं वेदमवधार्य ज्ञात्वा ॥ २६ ॥ कथंभूतः सन्नाविवेशेत्यपेक्षायामाह द्वाभ्याम् । उच्चैः क्षिप्तो वालः पुच्छं येन । खचर आकाशचारी । कठोरः कठिनः । सटाः स्कन्धवालान् । खराणि तीक्ष्णानि रोमाणि यस्याः सा त्वग्यस्य । खुरैराहतान्यभ्राणि येन । सितदंष्ट्रोऽतिशुक्लदंष्ट्रः । ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य । तदा प्रकाशान्तराभावात् । बभासेऽशोभत । महीध्रः पृथिव्या उद्धर्ता ॥ २७ ॥ ॥ ॥ ॥ ॥

१ ब्रह्मनासात उत्पन्नत्वेऽपि न तत्पुत्रत्वं किंतु वराहतोकत्वव्यवहार एव । २ गर्जनस्य मैत्रेयकथनात्पूर्वं चिरमतीतत्वादगर्जदितिलकारव्यत्ययो व्याख्यातः । ३ षोडशश्लोकोत्तरं 'पीतं मया जलं पूर्वं पृथिवी च निवेशिता । तथापि किमिदं साऽद्य प्लाव्यते पुनरम्बुभिः ॥ १७॥ प्रजादेवासुरपितृमनुष्यपशुपक्षिणः । सरीसृपान्नगान्नागान्भूतान्युच्चावचानि च ॥१८॥ इत्यधिकं विजयध्वज्याम् । ४ एतदग्रे 'कर्तव्यं करुणासिन्धुस्तीर्थकीर्तिरधोक्षजः' इत्येकमर्धमधिकं विजयध्वज्याम् । ५ 'परिमाणतः' इति वीर० पाठः । प्रातिपदिकार्थे सार्वविभक्तिकस्तसिः । ६ आकारेण सूकरसदृशम् । सत्त्वं प्राणिविशेषः । ७ 'पश्चात्' इति पाठः । ८ निजरूपतिरोधानेनादृष्टरूपाविर्भावेन च संशयैर्मनः खेदयन् । ९ 'मीमांसमानस्य' इति पाठः । १० मायामयस्य कृपाप्रचुरस्य ज्ञानस्वरूपस्य वा । किंवा मायाया अविद्याया अपि आमयो रोगो यस्मात्स तथा ।

क्रोडापदेशो वराहच्छद्मा । अतः स्वयमध्वराङ्गोऽपि पशुरिव घ्राणेन विजिघ्रन् । गृणतः स्तोतॄन्विप्रानुद्वीक्ष्योर्ध्वं वीक्ष्य कं जलमाविशत् ॥ २८ ॥ तदानींतनसमुद्रध्वनिमुत्प्रेक्षते । स उदन्वान्समुद्र आर्त इव स्तनयन् शब्दं कुर्वन् भो यज्ञेश्वर, मा मां पाहि माम् अव इत्येवं चुक्रोश । आर्तसादृश्यमाह । उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः । आर्तत्वे हेतुः—वज्रकूटो वज्रमयः पर्वतस्तद्वदङ्गं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य ॥ २९ ॥ तदा रसायां रसातले गां पृथ्वीं ददर्श । कः । त्रिपरुः त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य । यज्ञमूर्तिरित्यर्थः । किं कुर्वन् । क्षुरप्रा आयताग्राः शरास्तत्सदृशैः खुरैरपो दरयन् । कथम् । उत्पारपारं उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा भवति तथा विदारयन् । कथंभूतः । अग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवा धीयन्ते यस्यां सर्वजीवाधारभूतां यां स्वयमभ्यधत्त आभिमुख्येन दधार । जठरे धृतवानित्यर्थः । अनेन तदुद्धरणेऽनायासं द्योतयति

घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्क्रोडापदेशः स्वयमध्वराङ्गः ॥ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम् ॥ २८ ॥ स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति॥२९॥खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारपारं त्रिपरू रसायाम् ॥ ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त॥३०॥ स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः॥ तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसंदीपिततीव्रमन्युः ॥ ३१ ॥ जघान रुन्धानमसह्यविक्रमं सलीलयेभं मृगराडिवाम्भसि ॥ तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३२ ॥ तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग॥ प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३३ ॥ ॥ ऋषय ऊचुः ॥ जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः ॥ यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ ३४ ॥ ॥

॥ ३० ॥ रसायाः सकाशादुत्थितः संरुरुचे सम्यगशोभत । तत्राप्यम्भसि गदामुद्यम्यागच्छन्तं रुन्धानं प्रतिघ्नन्तं न सह्यः सहनानर्हो विक्रमो यस्य तं दैत्यं सुनाभं चक्रं तद्वत्संदीपितस्तीव्रो मन्युर्यस्य । यद्वा मयि विद्यमाने किमिति परिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान्सिंहो गजमिव लीलया जघानेत्युत्तरेणान्वयः ॥ ३१ ॥ गजेन्द्रो जगतीं क्रीडया विदारयन् गैरिकया यथा अरुणगण्डतुण्डो भवति तथा तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डं च यस्य सः ॥ ३२ ॥ प्रज्ञाय आलक्ष्य । अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥ भो अजित, ते त्वया जितं जितमिति संभ्रमे वीप्सा। यज्ञैर्भाव्यते आक्रियत इति तथा । त्रयीं वेदमयीम् । निलिल्युर्लीनप्रायाः । कारणं पृथिव्युद्धरणं तेन सूकराय ॥ ३४ ॥ ॥ ॥ ॥

१ उत्प्रेक्षते आर्तध्वनित्वेन। २ सः भगवता प्रवेशेन स्वीकृतः । ३ प्रान्ति उच्चदेशं निम्नत्वेन पूरयन्तीति प्राः क्षुराश्च ते प्राश्च क्षुरप्राः क्षुरसदृशा इत्यर्थः । ४ तत्रापि तादृशसंप्लवाम्भसीत्यपिर्विस्मये । 'तत्रादिदैत्यं' इति पाठः । ५ 'अन्धयः' इति वीर० पाठः । ६ आक्रियतेऽभिव्यज्यते । 'आद्रियते' इत्यपि पाठः । ७ कारणं परंब्रह्म तत्स्वरूपाय सूकरायेति दीपि० ।

यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति—रूपमित्यादिचतुर्भिः । छन्दांसि गायत्र्यादीनि । यज्ञाङ्गभूतच्छन्दआद्यनुवादेन भगवदवयवता विधीयते । वर्हिःशब्दे दीर्घाभाव आर्षः । दृशि चक्षुषि । चातुर्होत्रं होत्रादिकर्मचतुष्टयम् ॥ ३५ ॥ स्रुक् जुहूस्तुण्डे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षणपात्री । चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रम् । ग्रसतेऽनेनेति ग्रसनं मुखान्तर्वर्तिच्छिद्रम् । चर्वणं भक्षणम् ॥ ३६ ॥ दीक्षा दीक्षणीयेष्टिः । अनुजन्म वारंवारमभिव्यक्तिः । उपसदस्तिस्र इष्टयः । शिरोधरं ग्रीवा । प्रायणीया दीक्षाऽनन्तरेष्टिः, उदयनीया समाप्तीष्टिः, ते एव दंष्ट्रे यस्य । प्रवर्ग्यो महावीरैः प्रत्युपसदं पूर्वं क्रियते । सभ्यो होमरहितोऽग्निः आवसथ्यमौपासनाग्निः तयोर्द्वन्द्वैक्यम् । तत्तव क्रतुरूपस्य शीर्षं शिरः । चितय इष्टकाचयनानि पञ्चासवः प्राणाः ॥ ३७ ॥ प्रातःसवनादीन्यवस्थितिरासनं बाल्याद्यवस्था वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्तसंस्थादिभेदास्त्वङ्मांसादि-

रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् ॥ छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥३५॥ स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे ॥ प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३६ ॥ दीक्षाऽनुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ३७ ॥ सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः ॥ सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥३८॥ नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ॥ वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ३९ ॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा ॥ यथा वनान्निःसरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥ ४० ॥ त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ दता धृतेन ते ॥ चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४१ ॥ ॥

सप्तधातवः । सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि । असोमा यज्ञाः, ससोमाः क्रतवः, तद्रूपस्त्वम् । इष्टियजनमनुष्ठानं तदेव बन्धनं यस्य सः ॥३८॥ पूर्वोक्तमेव सपरिकरं कीर्तयन्तः प्रणमन्ति—नमो नम इति । अखिलमन्त्रादिरूपाय । क्रियात्मने सामान्यव्यापाररूपाय । किंच वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिस्ततो भक्तिस्तत आत्मजयश्चित्तस्थैर्यं तेनानुभावितं साक्षात्कृतं यज्ज्ञानं तस्मै । एवंभूतज्ञानप्रदाय गुरवे च ॥ ३९ ॥ हे भूधर । सभूधरा सपर्वता । वनादुदकान्निर्गच्छतो गजेन्द्रस्य । दता दन्तेन ॥ ४० ॥ त्वया धृता भूर्विराजत इत्युक्तम्, इदानीं भूमण्डलेन त्वद्रूपं विराजत इत्याहुः—त्रयीति । अथेत्यर्थान्तरे । ते इदं रूपं दन्तेन धृतं यद्भूमण्डलं तेन चकास्ति शोभते । शृङ्गेणोढो धृतो यो घनस्तेन । भूयसाऽतिमहता विभ्रमो विलासः ॥ ४१ ॥ ॥ ॥

१ छन्दआद्यनुवादेनेति । तत्र छन्दआदीनि ज्ञातत्वादनुवाद्यरूपाणि, भगवदवयवता त्वज्ञातत्वाद्विधीयते। २ महावीरो गरुडयागः, सन्तप्तघृतपूर्णे क्षीरप्रक्षारणम् ३ अवसीयते अत्रेत्यवस्थितिः । 'अवस्थानमिति' पाठः । ४ 'क्रतोः' इति विज० पाठः । ५ त्रयीमयं पूर्ववर्णितयज्ञात्मरूपमपि । ६ बन्धनं संधिसंधानम् । ७ अर्थान्तरे भगवद्रूपस्य विराजमानत्वरूपेऽर्थे । ८ विलासोऽत्र शोभातिशयः इति दीपि० ।

लोकाय वासस्थानार्थम् । ते पत्नीम् । जगतां मातरम् । यतस्त्वं पितासि । एवं सति तत्र स्थिताः सन्तस्त्वया पित्रा सहास्यै मात्रे मनसा विधेम नमनं करिष्यामः, नमस्कारेण परिचरेमेति वा । स्वतेजोधारणशक्तिं याज्ञिका मन्त्रतोऽग्निमरणाविवाधाः निहितवानसि ॥ ४२ ॥ इदं च त्वयाऽतिदुष्करं कृतमित्याहुः—क इति । प्रभो, तव त्वया कृतं भुव उद्विबर्हणमुद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत् । अध्यवसेदित्यर्थः । त्वयि पुनरसौ विस्मयो न भवति । यतो विश्वे सर्वे विस्मया यस्मिन् । कुतः । यो भवान् । अतिविस्मयमत्यद्भुतमिदं विश्वम् । क्रियाविशेषणं वा । ससृजे सृष्टवान् ॥ ४३ ॥ विस्मयं दर्शयन्तः प्रार्थयन्ते—विधुन्वतेति द्वाभ्याम् । सटानां शिखाभिरग्रैरुद्भूता उच्छलिता ये शिवा अम्बुविन्दवस्तैः सिच्यमाना वयं पवित्रीकृताः ॥ ४४ ॥ तव कर्मणां पारं

संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ॥ विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४२ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ॥ न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ॥ सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ४४ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ॥ यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥ ४५ ॥ ॥ मैत्रेय उवाच ॥ इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ सलिले स्वखुराक्रान्त उपाधत्तावितावनिम् ॥ ४६ ॥ स इत्थं भगवानुर्वीं विष्वक्सेनः प्रजापतिः ॥ रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४७ ॥ य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ॥ शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ४८ ॥ तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ॥ अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९ ॥ ॥ ॥ ॥

य एष तेऽवलोकयति ज्ञातुमिच्छतीत्यर्थः । यस्य तव योगमायया यो गुणैः सह योगस्तेन मोहितम् । अतो विश्वस्य शं मङ्गलं विधेहि । यथा त्वामचिन्त्यानन्तशक्तिं ज्ञात्वा भजे तथाऽनुगृहाणेत्यर्थः ॥ ४५ ॥ उपस्थीयमानः स्तूयमानः । स्वखुराक्रान्त इति जलेऽपि धारणशक्त्याधानं दर्शयति । अविता रक्षकः ॥ ४६ ॥ ॥ ४७ ॥ कथनीयानि मायीनि मायावन्ति चरित्राणि यस्य । श्रवयेत श्रावयेत । ह्रस्वत्वमार्षम् । उशतीं कमनीयाम् । हृदि प्रसीदति स्वमनसि संतुष्यतीत्यर्थः ॥ ४८ ॥ आशिषो यद्यपि सुलभास्तथापि न प्रार्थनीया इत्याह । ताभिराशीर्भिरलम् । लवात्मभिस्तुच्छाभिः । न च तदा भजनस्य वैफल्यं शङ्कनीयमित्याह । भगवद्भजनव्यतिरेकेण फलान्तरदृष्टिं विना भजतां स्वपदप्राप्तिं स्वयमेव विधत्ते । गुहाशयत्वादहैतुकीं भक्तिं जानन् ॥ ४९ ॥ ॥ ॥

१ अध्यवस्येत् स्वर्सिस्तदुद्धारणयोग्यता संभावयेत् । २ विधुन्वता कम्पयता त्वया । 'विधुन्वतः' इति विज० पाठः । ३ एपते इति भौवादिकस्य ऋकारानुबन्धस्य रूपम् । ४ 'मानोऽसौ' इति पाठः । ५ हरिमेधसो लोकदुःखहरसंकल्पस्य । ६ स्वगतिं स्फूर्त्यात्मकं ज्ञानम् । ७ कथनीया प्रशस्या या माया कृपा तद्युक्तस्य इति दीपि० ।

अतः को नाम पुराकथानां पूर्ववृत्तानां मध्ये कथंचिदापीय विरज्येत विरमेत्। नरेतरं पशुं विना ॥५०॥ ॥ इति श्रीमद्भा० म० तृ० भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥१३॥ ॥छ॥ चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ॥ संध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः ॥१॥१॥ तेनैव येन भूमिरुद्धृता। अनुशुश्रुम त्वन्मुखात्॥२॥ मृधो युद्धम्॥३॥ साधुत्वे हेतुः,—यद्यस्मात्त्वं हरेरवतारकथां पृच्छसीति। मृत्योः पाशं विशातयति मोचयतीति तथा ॥४॥ तदेव दर्शयति। यया कथया उत्तानपदः पुत्रो ध्रुवः। मुनिना नारदेन। अर्भक एव। यदा ध्रुवाय सुनन्दादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज किंतु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः। वक्ष्यति हि 'परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः॥ इयेष तद-

को नाम लोके पुरुषार्थसारवित्पुराकथानां भगवत्कथासुधाम्॥ आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम्॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे वराहप्रादुर्भावानुवर्णने त्रयोदशोऽध्यायः ॥१३॥

॥ श्रीशुक उवाच॥ निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः॥ पुनः[1] स पप्रच्छ तमुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥ ॥ विदुर उवाच॥ तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ॥ आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम॥ २॥ तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया॥ दैत्यराजस्य च ब्रह्मन् कस्माद्धेतोरभून्मृधः ॥ ३ ॥ ॥ मैत्रेय उवाच॥ साधु वीर त्वया पृष्टमवतारकथां हरेः॥ यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम्॥ ४ ॥ ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः॥ मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम्॥ ५ ॥ अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा॥ ब्रह्मणा देवदेवेन देवानामनुपृच्छताम्॥ ६ ॥ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम्॥ अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥ ७ ॥ इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम्॥ निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम्॥ ८॥ ॥ दितिरुवाच॥ एष मां त्वत्कृते विद्वन् काम आत्तशरासनः॥ दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः॥ ९॥

धिष्ठातुं बिभ्रद्रूपं हिरण्मयम्॥' इति ॥५॥ तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति—अथेति। अनुपृच्छतां देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः॥६॥ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसङ्गमाह—दितिरित्यादिना यावदध्यायपरिसमाप्ति। मरीचेः पुत्रं कश्यपम्। हृच्छयः कामस्तेनार्दिता। अतः सन्ध्यायामेव कामितवती ॥७॥ तदप्यग्निहोत्रशालायाम्। तत्रापि समाहितम्। अग्निर्जिह्वा यस्य। यजुषां यज्ञानां पतिं पुरुषं श्रीविष्णुम्॥८॥ 'कृपणां बहुभाषिणीम्' इति वक्ष्यति, तत्र एष मामिति द्वाभ्यां कार्पण्यं, भर्तरीति चतुर्भिश्च बहुभाषणं वर्ण्यते। दुनोति पीडयति। विक्रम्य शौर्यमाविर्भाव्य। रम्भां कदलीम्॥९॥ ॥३०॥

१ निदानं सनकादिशापरूपं कारणम्। २ मैत्रेयेण। ३ 'पुनश्च' इति दीपि० पाठः। ४ 'समुद्धृताञ्जलिः' इति विज० पाठः। ५ अथ वक्ष्यमाणः। ६ तदपि निषिद्धेऽर्कनिम्लोचनकालेऽपि। ७ समाधिनिष्ठम्।

आयुङ्क्षां सर्वतो युनक्तु सम्यक्करोतु ॥ १० ॥ भर्तरि प्राप्तबहुमानानां स्त्रीणां यशो लोकानाविशते व्याप्नोति । प्रजया पुत्ररूपेण । 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः ॥ ११ ॥ नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत् । अयं भावः—त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये वैषम्याचरणं तवानुचितमिति ॥ १२ ॥ १३ ॥ मोघं न भवति हि । महीयसि त्वादृशे महत्तमे ॥ १४ ॥ प्रवृद्धानङ्गेन कश्मलं मोहो यस्यास्ताम् ॥ १५ ॥ सन्ध्याकालवञ्चनाय भार्याप्रशंसा—एष इति पञ्चभिः । यतो यस्याः सकाशात् ॥ १६ ॥ सर्वाश्रमानुपादायेति । तानप्यन्नादिदानेन कृच्छ्रतस्तारयन् स्वयं तरतीत्यर्थः ॥ १७ ॥

तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः ॥ प्रजावतीनां भद्रं ते मय्यायुङ्क्ष्वामनुग्रहम् ॥ १० ॥ भर्तर्याप्तोरुमानानां लोकानाविशते यशः ॥ पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥ पुरा पिता[2] नो भगवान् दक्षो दुहितृवत्सलः ॥ कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥ १२ ॥ स विदित्वात्मजानां नो भावं सन्तानभावनः ॥ त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः ॥ १३ ॥ अथ मे कुरु कल्याण कामं कञ्जविलोचन ॥ आर्तोपसर्पणं[3] भूमन्न मोघं हि महीयसि ॥ १४ ॥ इति तां वीर मारीचः कृपणां बहुभाषिणीम् ॥ प्रत्याहानुनयन्वाचा प्रवृद्धानङ्गकश्मलाम्[4] ॥ १५ ॥ एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ॥ तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ॥ व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥ १७ ॥ यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि ॥ यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥ यामाश्रित्येन्द्रियारातीन्दुर्जयानितराश्रमैः ॥ वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा ॥ १९ ॥ न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ॥ अप्यायुषा वा कार्त्स्न्येन ये चान्ये गुणगृध्नवः ॥ २० ॥ अथापि काममेतं ते प्रजात्यै करवाण्यलम् ॥ यथा मां नातिवोचन्ति मुहूर्तं प्रतिपालय ॥ २१ ॥ ॥ ॥ ॥

आत्मनो देहस्यार्धम् । कर्मसु द्वयोः सहाधिकारात् । यच्छब्दानां तां त्वामिति तृतीयश्लोकेन संबन्धः । स्वधुरं दृष्टादृष्टकर्मभारम्[5] । विज्वरो निश्चिन्तः ॥ १८ ॥ हेलाभिर्लीलाभिः । जयेमेति । सभार्यस्येन्द्रियाणि प्रायेणेतस्ततो न सर्पन्तीति भावः ॥ १९ ॥ तामनेकोपकारकर्त्रीं त्वां कार्त्स्न्येनानुकर्तुं प्रत्युपकारैस्त्वत्सदृशा भवितुं न प्रभवो न समर्थाः । ये चान्ये गुणगृध्नवो गुणप्रियास्तेऽपि न समर्थाः । संपूर्णेनाप्यायुषा । वाशब्दाज्जन्मान्तरैरपि न प्रभव इत्युक्तम् ॥ २० ॥ यद्यपि त्वदनुकरणमशक्यम् । प्रजात्यै पुत्रोत्पत्त्यै । नातिवोचन्ति[6] न निन्दन्ति । प्रतिपालय प्रतीक्षस्व ॥ २१ ॥ ॥ ॥

१ सम्यक्त्वं पुत्रोत्पादकतया । २ 'पितापि' इति क्वचित्पाठस्तत्र मे इति पदमावर्तनीयम् । ३ 'आप्तोपसर्पणं' इति विज० पाठः । उपसर्पणं कामोपलब्धये सविधगमनम् । ४ अत्र कश्यप उवाचेति क्वचित् । ५ दृष्टादृष्टेति । दृष्टभारं पुत्रादिभरणरूपं अदृष्टभारमग्निहोत्रादिरूपमध्यसारोप्य । ६ नातिवोचन्तीति वचधातोश्छान्दसं रूपम् । अत्र शोचन्तीति पाठः ।

स्वनिन्दामगणयन्तीं भीपयन् श्रीरुद्रमनुवर्णयति—एपेति सप्तभिः । घोराणामेपा वेला । स्वयं च घोरदर्शना ॥ २२ ॥ भूतपर्षद्भिर्भूतगणैः ॥ २३ ॥ तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह । श्मशाने यश्चक्रानिलो वातमण्डली तस्मिन् या धूलिस्तया धूम्रो विकीर्णो विक्षिप्तो विद्योतो द्युतिमाञ्जटाकलापो यस्य । भस्मनाऽवगुण्ठः प्रावृतोऽमलो रुक्मवद्देहो यस्य स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेऽप्यनुपङ्गः । एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियन्ते । अतो मम भ्राता असौ तव देवर इति लज्जार्थमुक्तम् ॥२४॥ ननु तथापि महत्त्वेनादरणीयस्य स्वजनस्य च तव स सर्वं क्षमेतैव तत्राह । यस्य स्वजनादिर्नास्ति समत्वादीश्वरस्य । ऐश्वर्यमेवाह । येन चरणेनापविद्धां निर्माल्यवद्दूरतस्त्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं महाप्रसाद इत्याशास्महे ।

एषा घोरतमा वेला घोराणां घोरदर्शना ॥ चरन्ति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥ एतस्यां साध्वि सन्ध्यायां भगवान्भूतभावनः ॥ परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥ श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ॥ भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥ न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः ॥ वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥ यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः ॥ निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥ हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम् ॥ यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥ ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ॥ आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥ ॥ मैत्रेय उवाच ॥ सैवं संविदिते भर्त्रा मन्मथोन्माथितेन्द्रिया ॥ जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥ स विदित्वाऽथ भार्यायास्तं निर्बन्धं विकर्मणि ॥ नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ॥ ३० ॥ ॥ ॥ ॥

व्रतैस्तमाराध्य ॥ २५ ॥ अनिषिद्धसुखत्यागादसौ पिशाच इत्युपहासो न कार्य इत्याह द्वाभ्याम् । यस्यानवद्यं विपयासक्तिशून्यमाचरितम् । विभित्सवो भेत्तुमिच्छवः ॥ २६ ॥ समीहितमभिप्रेतं लोकशिक्षारूपम् । अविदुपोऽविद्वांसः । यद्वा न विद्वानन्यो यस्मादिति तस्य । सर्वज्ञस्येत्यर्थः । दुर्भगानेवाह—यैरिति । श्वभोजनं शुनां भोज्यं शरीरम् । स्वात्मतयाऽयमेवात्मेति बुद्ध्या ॥ २७ ॥ अहो अतर्क्यं तस्याचरणमित्याह । ब्रह्मादयो येन कृतान्सेतून्स्वस्वाधिकारान्पालयन्ति यः कारणं यस्य । येन कृतमिदं विश्वम् । माया च यस्याज्ञाकरी । विभूम्नः परमेश्वरस्य विडम्बनमतर्क्यमित्यर्थः ॥ २८ ॥ भर्त्रा निरूपकेणैवं संविदिते ज्ञापितेऽपि सति । वृपलीव वेश्येव ॥ २९ ॥ विकर्मणि निषिद्धे कर्मणि । दिष्टाय दैवरूपायेश्वराय । उपविवेशेति मैथुनं लक्ष्यते ॥ ३० ॥ ॥ ॥

१ घोराणामिति स्वस्वामिभावसंबन्धे षष्ठी । घोरस्वामिकेत्यर्थः । २ तन्मयीं मायाकार्यभूतां, विभूतिं धनादिसंपत्तिम् । ३ वृषेण वृषमारुह्येत्यर्थः । ४ अभिप्रेतमभिप्रायविषयभूतम् । ५ देहस्य भाविदशानुकरणं विडम्बनम् । ६ निरूपकेण वक्त्रा । एवं संध्याकालवञ्चनप्रकारेण ।

उपस्पृश्य स्नात्वा भर्गशब्दवाच्यं विरजं ज्योतिर्ध्यायन् सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप ॥ ३१ ॥ कर्मावद्येन कर्मदोषेण ॥ ३२ ॥ माऽवधीन्मा हन्त्वित्यर्थः। वधशङ्काबीजमाह—रुद्र इति । अंहसमंहोऽपराधमकरवं कृतवत्यस्मि ॥ ३३ ॥ रुत् दुःखं तद्द्रावयतीति रुद्रस्तस्मै । उग्रायानतिलङ्घ्याय मीढुषे सकामेषु फलसेचनकर्त्रे । निष्कामेषु शिवाय । वस्तुतो न्यस्तदण्डाय । दुष्टेषु धृतदण्डाय संहारे मन्यवे ॥ ३४ ॥ भामो भगिनीभर्ता । उरुरनुग्रहो यस्य । व्याधस्य निर्दयस्यापि । सतीपतिरित्यनेन स्त्रीणां स्वभावं स्वयमपि वेत्तीति सूचयति ॥ ३५ ॥ स्वसर्गस्य स्वसन्तानस्याशिषं शुभम् । लोक्यां लोकद्वयार्हाम् । सन्ध्यायां यो

अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ॥ ध्यायन् जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥ दितिस्तु[1] व्रीडिता तेन कर्मावद्येन भारत ॥ उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥ ॥ दितिरुवाच ॥ मा मे गर्भमिमं ब्रह्मन् भूतानामृषभोऽवधीत् ॥ रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥ नमो रुद्राय महते देवायोग्राय मीढुषे ॥ शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥ स नः प्रसीदतां भामो भगवानुर्वनुग्रहः ॥ व्याधस्याप्यनुकम्प्यानां[2] स्त्रीणां देवः सतीपतिः ॥ ३५ ॥ ॥ मैत्रेय उवाच ॥ स्वसर्गस्याशिषं लोक्यामाशासानां[3] प्रवेपतीम् ॥ निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥ ॥ कश्यप उवाच ॥ अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ॥ मन्निदेशातिचारेण देवानां चातिहेलनात् ॥ ३७ ॥ भविष्यतस्तवाभद्रावभद्रे जाठराधमौ ॥ लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः[4] ॥ ३८ ॥ प्राणिनां हन्यमानानां दीनानामकृतागसाम् ॥ स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥ तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः ॥ हनिष्यत्यवतीर्यासौ यथाद्रीन् शतपर्वधृक् ॥ ४० ॥ ॥ दितिरुवाच ॥ वधं भगवता साक्षात्सुनाभोदारबाहुना ॥ आशासे[5] पुत्रयोर्मह्यं मा क्रुद्धाद्ब्राह्मणाद्विभो ॥ ४१ ॥ न ब्रह्मदण्डदग्धस्य[6] न भूतभयदस्य च ॥ नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥ ४२ ॥

नियमः स निवृत्तो यस्य ॥ ३६ ॥ ते आत्मनश्चित्तस्याप्रायत्यादशुचित्वात् । मौहूर्तिकात्सन्ध्यारूपात् । उत अपि मम निदेशस्याज्ञाया अतिचारेणातिक्रमेण । देवानां रुद्रानुचराणाम् ॥ ३७ ॥ एतैश्चतुर्भिर्हेतुभिर्जाठराधमौ पुत्रापसदौ । हे चण्डि कोपने ॥ ३८ ॥ हन्यमानानां सताम् ॥ ३९ ॥ शतपर्वधृक् वज्रधर इन्द्रः ॥ ४० ॥ सुनाभेनोदारो बाहुर्यस्य । मह्यं मम कोपितेष्वित्युक्तत्वाच्छङ्कितचित्ता सती प्रार्थयते—ब्राह्मणान्मा भूदिति ॥ ४१ ॥ नारका अपि तथा यां यां योनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णन्ति कृपां न कुर्वन्ति ॥ ४२ ॥ ॥ ॥ ॥

१ तुशब्दः पूर्वभावव्यावृत्त्यर्थः । २ व्याधस्यात्यन्तक्रूरस्यापि दयापात्रभूतानामित्यर्थः । ३ आशासानामिच्छन्तीम् । ४ यदा लोकानाक्रन्दयिष्यतः तदा प्राणिनां हन्यमानाना स्त्रीणां निगृह्यमाणानां सवन्धे महात्मसु कोपितेषु सत्स्वित्यन्वयः । क्रम० । ५ आशासेऽभिकाङ्क्षे । ६ न ब्रह्मेति द्वितीयार्थे षष्ठ्यौ । ७सुष्ठु नाभिर्वलयं यस्य तत्सुनाभं सुदर्शनचक्रं तेनोदारो मोक्षदो महांश्च ।

क्तो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन । प्रत्यवमर्शनाद्युक्तायुक्तविचारात् । भगवति हरौ । भवे श्रीरुद्रे । एतैः पञ्चभिः कारणैः ॥ ४३ ॥ पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति । तमेव वर्णयति—गास्यन्तीति सार्धैः पञ्चभिः । समं सह सदृशं वा ॥ ४४ ॥ हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥ विश्वप्रसादे हेतुर्यदात्मकम् । स्वदृगात्मसाक्षी । यस्यानन्यया भगवानेव सत्य इत्येवंभूतया दृशा तोष्यते तोषं प्राप्स्यते ॥ ४६ ॥ तत्र हेतुः—स वा इति । महात्माऽपरिच्छिन्नदृष्टिः महानुभावो महाप्रभावः । महतामपि मध्ये महिष्ठोऽतिशयेन महान् । प्रवृद्धया भक्त्याऽनुभाविते शोधिते चित्ते वैकुण्ठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ॥ ४७ ॥ महाभागवतत्वमाह—अलम्पट इति । शीलधरः सुस्वभावः । गुणानां धैर्यादीनामाकरो जन्मभूमिः । परेषां समृद्ध्या हृष्टः ।

॥ कश्यप उवाच ॥ कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् ॥ भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥ ४३ ॥ पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः ॥ गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥ योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः ॥ निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् ॥ स स्वदृग्भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥४६॥ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ॥ प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति ॥४७॥ अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु ॥ अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥ ४८ ॥ अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् ॥ पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥ ॥ मैत्रेय उवाच ॥ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ॥ पुत्रयोश्च वधं कृष्णाद्विदित्वासीन्महामनाः ॥ ५० ॥ इति श्रीम० म० तृ० दितिकश्यपसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ६९ ॥ ॥ मैत्रेय उवाच ॥ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ॥ दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥ ॥ ॥ ॥

परेषु दुःखितेषु सत्सु । न भूतो जातः शत्रुर्यस्य । निदाघे भवं तापं चन्द्रो यथा हरत्येवं जगतः शोकहर्ता भविष्यति ॥ ४८ ॥ अपरिच्छिन्नदृष्टित्वमाह—अन्तरिति । स्वपुरुषाणामिच्छया पुनः पुनर्गृहीतानि रूपाणि येन । श्रीरेव ललना सुन्दरी तस्या ललामं मण्डनम् । द्रष्टा द्रक्ष्यति ॥ ४९ ॥ महामनाः सोत्साहचित्ता । हरिणा सह युद्धेन मरणे पुत्रयोः कीर्तिः सद्गतिश्च भवेदिति ॥ ५० ॥ ॥ इति श्रीमद्भा० म० तृतीयस्कन्धे भा० दी० टीकायां चतुर्दशोऽध्यायः ॥१४॥ ॥ हतप्रभैः सुरैः पृष्टः प्राह पञ्चदशे विधिः ॥ तद्बीजं विप्रशापादि वैकुण्ठे विष्णुभृत्ययोः ॥ १ ॥ तदेवं देवानां ब्रह्मणश्च संवादप्रस्तावमुक्त्वेदानीं तं संवादं वक्तुमाह । प्राजापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हन्तीति तथा । आर्षः । स्वपुत्राभ्यां करिष्यते यत्सुराणामर्दनं पीडनं तस्माच्छङ्कमाना ॥ १ ॥ ॥

१ आत्मानं चित्तम् । २ यदात्मकं यदधीनम् । यो हि यदात्मको भवति स तत्प्रसादात्प्रसीदतीति व्याप्तिदर्शनात् । ३ 'अनुभाविताशयः' इति पाठः तत्र शोधितचित्ते इत्यर्थः । ४ तद्बीजं तमसा हतप्रभत्वस्य बीजम् । ५ परतेजोघ्नमिति वक्तव्ये तेजोहनमिति मूलविभुजादित्वात्के उपधालोपाभावः । पद्मायच्चरे तु नार्पतेति यत्तत्पर्येण व्याख्यातं तदमनुष्यकर्तृके चेति विशेषणात्तद्विरुद्धत्वान्नादरणीयम् इति दीपि० ।

तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे । हतौजसो हतप्रभावाः । ध्वान्तेन व्यतिकरं संकरम् ॥ २ ॥ वेत्थ जानासि किं विचारयसि । यद्यतो वयं संविग्ना भीताः । अव्यक्तमज्ञातम् । न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ॥ ३ ॥ ब्रह्माणं परमेश्वरत्वेन स्तुवन्तः प्रार्थयन्ते—देवदेवेति सप्तभिः । लोकनाथानां शिखामणे । भावविदभिप्रायज्ञोऽसि । केनाभिप्रायेण दितेर्गर्भो वर्धत इति जानासीत्यर्थः ॥ ४ ॥ विज्ञानं वीर्यं बलं यस्य । इदं ब्रह्मदेहमुपेयुषे प्राप्तवते । गृहीतो गुणभेदो रजोगुणो येन । व्यक्तस्य प्रपञ्चस्य योनये कारणाय । न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्येति वा ॥ ५ ॥ सकामतया प्रतिक्षणं दुःखमनुभवन्तो निष्कामभक्तान् स्तुवन्त आहुर्द्वाभ्याम् । ये त्वा त्वामनन्येन निष्कामेन भावेन भक्त्या ध्यायन्ति । आत्मनो जीवान्भावयतीति तथा । यस्मिन्प्रोतानि

लोके तेन हतालोके लोकपाला हतौजसः ॥ न्यवेदयन्विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥ ॥ देवा ऊचुः ॥
तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम् ॥ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेव जगद्धातर्लो-
कनाथशिखामणे ॥ परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥ नमो विज्ञानवीर्याय माययेदमुपेयुषे ॥ गृहीत-
गुणभेदाय नमस्ते व्यक्तयोनये ॥५॥ ये त्वाऽनन्येन भावेन भावयन्त्यात्मभावनम् ॥ आत्मनि प्रोतभुवनं परं सदस-
दात्मकम् ॥ ६ ॥ तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम् ॥ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥
यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः ॥ हरन्ति बलिमायत्तास्तस्मै मुख्याय ते नमः ॥८॥ स त्वं विधत्स्व
शं भूमंस्तमसा लुप्तकर्मणाम् ॥ अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ९ ॥ एष देव दितेर्गर्भ ओजः काश्य-
पमर्पितम् ॥ दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि ॥ १० ॥ ॥ मैत्रेय उवाच ॥ स प्रहस्य महाबाहो भगवान्
शब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवान् प्रीणन् रुचिरया गिरा ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ मानसा मे सुता युष्मत्पूर्वजाः
सनकादयः ॥ चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥ ॥ ॥ ॥

ग्रथितानि भुवनानि येन । चेतनाचेतनप्रपञ्चकारणमित्यर्थः । तत्र हेतुः—सदसदात्मकं कार्यकारणरूपं वस्तु तताभ्यां परम् ॥ ६ ॥ जितः श्वास इन्द्रियाण्यात्मा मनश्च यैः । अतः सुपक्वयोगाः । अत एव प्राप्तो युष्मत्प्रसादो यैस्तेषाम् ॥ ७ ॥ अन्ये तु नित्यं कर्मक्लेशिन इत्याहुः—यस्येति । तन्त्या दामन्या आयत्ता अधीनाः । मुख्याय नियन्त्रे प्राणरूपायेति वा । तथाच श्रुतिः—'तस्य वाक्तन्तिर्नामानि दामानि' इत्यादिः ॥ ८ ॥ तमसा अहोरात्रविभागाभावेन लुप्तानि कर्माणि येषाम् । आपन्नानापद्गतानस्मान् ॥९॥ आपत्कारणमाहुः । एष गर्भः तस्य विशेषणम् । अर्पितं निक्षिप्तं काश्यपमोजो वीर्यम् । दिशस्तिमिरयन् तमोव्याप्ताः कुर्वन् ॥ १० ॥ दितेः कुचेष्टितं ज्ञात्वा प्रहस्य देवानां ये शब्दा विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतः प्रत्यभाषत ॥ ११ ॥ युष्मत्सकाशात्पूर्वं जाताः ॥ १२ ॥

१ व्यतिकरशब्दो व्यतिषङ्गवाचकः । दीपि० । व्यतिकरो व्यत्यासः इति वीर० । २ यतं यतस्तमसः । ३ विज्ञानं चिच्छक्तिः । ज्ञानविज्ञाननिधये इत्यत्र तथा व्याख्यास्यमानत्वात् । ४ भावयत्युत्पादयति । ५ अत्राव्यक्तेति नञ्प्रश्लेषपक्षे निष्कारणायेत्यर्थः । ६ वस्तुतः स्वरूपशक्त्या । ताभ्यां कार्यकारणाभ्याम् । कार्यमाकाशादि, कारणं महदादि । ७ वेदलक्षणवाक्तन्तिः दीर्घरज्जुः । नामानि ब्राह्मणादिशब्दाः । दामानि गलबन्धनरज्जवः ।

वैकुण्ठाख्यं लोकं ययुः ॥ १३ ॥ तं वर्णयति—वसन्तीत्यादिद्वादशभिः । वैकुण्ठस्य हरेरिव मूर्तिर्येषां ते । निमित्तं फलं न निमित्तं प्रवर्तकं यस्मिन् । निष्कामेन धर्मेणेत्यर्थः । आराधयन् आराधितवन्तः ॥ १४ ॥ यत्रेति । शब्दगोचरो वेदान्तैकवेद्यः । विरजं सत्त्वमूर्तिं विष्टभ्य धृत्वा । वृषो धर्ममूर्तिः । स्वानां स्वान् ॥ १५ ॥ तत्रत्यं वनं विशिनष्टि—यत्रेति चतुर्भिः । सर्वेष्वप्यृतुषु श्रीः पुष्पादिसंपद्येषां तैः ॥ १६ ॥ चरितानि चरित्राणि । भर्तुः प्रभोः । अनुविकसन्त्यो मधु मकरन्दस्तद्युक्ता माधव्यो वासन्त्यो लताः । यद्वा अनुविकसन्मधवः प्रसरन्मकरन्दा माधव्यो मधुकालीनाः सुमनसस्तासां गन्धेन खण्डिता विघ्निता धीर्येषां तेऽपि तद्गन्धप्रापकमनिलं क्षिपन्तस्तिरस्कुर्वन्तो गायन्ति । अनेन भगवत्पार्षदानां निरतिशयविषयसुखेऽपि भगवद्गुणानन्दासक्तिर्दर्शिता ॥ १७ ॥ अन्यभृताः कोकिलाः । दात्यूहश्चातकः । अचिरमात्रं क्षणमात्रं विरमति । अनेन तत्रत्यपक्षिणामपि हरिकथाश्रवणादिपरमानन्दो दर्शितः ॥ १८ ॥ मन्दार-

त एकदा भगवतो वैकुण्ठस्यामलात्मनः ॥ ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥ वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ॥ येऽनिमित्तनिमित्तेन धर्मेणाराधयन्हरिम् ॥ १४ ॥ यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः ॥ सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन्वृषः ॥ १५ ॥ यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥ वैमानिकाः सललनाश्चरितानि यत्र गायन्ति लोकशमलक्षपणानि भर्तुः ॥ अन्तर्जलेऽनुविकसन्मधुमाधवीनां गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥ पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ॥ कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥ १८ ॥ मन्दारकुन्दकुरबोत्पलचम्पकार्णपुन्नागनागबकुलाम्बुजपारिजाताः ॥ गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयन्ति ॥ १९ ॥ यत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥ ॥ ॥

पारिजातौ सुरतरुविशेषौ, कुरबस्तिलकवृक्षः, उत्पलं रात्रिविकासि, अम्बुजं दिनविकासि, नागो नागकेसरः, एताः सुमनसः पुष्पजातयः सुगन्धा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गन्धेऽर्चिते सति यस्मिन्वने तस्यास्तपो बहु मानयन्ति । अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तम् । एवंभूतं वनं यत्र तद्वैकुण्ठं ययुरिति पूर्वेणान्वयः ॥ १९ ॥ पुनर्वैकुण्ठमेव विशिनष्टि । यत्संकुलं व्याप्तं भवति । कैः । हरिपदयोरानतिः प्रणामस्तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न कर्मादिप्राप्यैर्वैदूर्यमारकतैर्हेममयैश्च विमानैः । बृहन्ति कटितटानि यासाम् । स्मितशोभीनि मुखानि यासां ता अपि । कृष्णे आत्मा येषाम् । रजःकाममुत्स्मयाद्यैः परिहासादिभिर्न आदधुर्न जनयामासुः ॥ २० ॥ ॥ ॥ ॥ ॥



१ वस्तुतस्तु निर्निमित्तो भगवानेव निमित्तं फलं यत्र निष्किञ्चनभागवतधर्मे स तथा तेन इति दीपि० । २ निलय गृहं नितरा लीयतेऽस्मिन्सर्वमिति । ३ यद्वैकुण्ठभुवनम् । पूर्वत्रोत्तरत्र सर्वत्र यच्छब्दश्रवणादयमेव युक्तः पाठः । 'तत्संकुलं' इति पाठः । ४ तत्रत्या वैकुण्ठवनस्थाः । एतेन तत्रत्यस्थावराणामपि ज्ञानशालित्वेन सच्चिदानन्दत्वं व्यज्यते ५ । अत्रानतिरित्युपलक्षणम् । भक्तिमात्रेणेत्यर्थः । ६ मात्रपदं व्याचष्टे—न कर्मादिप्राप्यैरिति ।

श्रीर्लक्ष्मीः रूपिणी मनोहरमूर्तिधारिणी सती श्रीहरेः सद्मनि संमार्जनं कुर्वतीव यस्मिन् लोके सँल्लक्ष्यते । चरणारविन्दं क्वणयती नूपुरेण शब्दयन्ती । मुक्तो दोषश्चाञ्चल्यं यया । यद्वा मुक्तेन दोषा प्रसारितेन बाहुना । कीदृशे सद्मनि । स्फटिकमयानि कुड्यानि यस्मिन् । मध्ये मध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिन् ।-यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा । अयं भावः—यद्यपि तत्र रजो नास्त्येव तथापि स्वर्णपट्टिकावच्छिन्नभित्तिभागेषु बहुधा प्रतिबिम्बिता सती लीलाम्बुजं भ्रामयन्ती विनयभक्तिभ्यां तथा लक्ष्यते इति ॥२१॥ अङ्ग हे देवाः, यद्यस्मिँल्लोके श्रीरेवं अमत अमंस्त मेने । किं कुर्वती । विद्रुममयानि तटानि यासाम् । अमला अमृततुल्या आपो यासां तासु वापीषु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयन्ती । तदोदके प्रतिबिम्बितं शोभनालकयुक्तमुत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुम्बितमित्यमन्यत । अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥२२॥ पुनः कथंभूतं तत् । यद्वैकुण्ठं न व्रजन्ति । के । ये कुकथाः शृण्वन्ति । कास्ताः । अघं भिनत्तीत्यघभित् तस्य हरेः रचना सृष्ट्यादि-

श्री रूपिणी क्वणयती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ॥ सँल्लक्ष्यते स्फटिककुड्य उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥ वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ॥ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ॥ २२ ॥ यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ॥ यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान्क्षिपन्त्यशरणेषु तमःसु हन्त ॥ २३ ॥ येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ॥ नाराधनं भगवतो वितरन्त्यमुष्य संमोहिता विततया बत मायया ते ॥ २४ ॥ यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ॥ भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥ ॥ ॥

लीला तस्या अनुवादादन्यविषया अर्थकामादिवार्ता मतिभ्रंशिकाः । तेषामव्रजने हेतुः—यास्तु हतभाग्यैर्नरैः श्रुताः सत्यस्तांस्तान् श्रोतॄनशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपन्ति । हन्त खेदे । कथंभूताः । आत्तः सारः श्रोतॄणां पुण्यं याभिस्ताः ॥ २३ ॥ प्रसङ्गात्तान् शोचन्ति । नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि हरेराराधनं न कुर्वन्ति । कीदृशीं नृगतिम् । यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति । तदुभयसाधकत्वात्तस्याः । तेऽमुष्य भगवतो विस्तृतया मायया ननु संमोहिताः । बतेति खेदे । यदि वैवं संबन्धः । केवलं ते एव न व्रजन्ति, किंतु ये भगवदाराधनं न कुर्वन्ति तेऽपि तेषां मायामोहितत्वादिति ॥२४॥ पुनः कथंभूतम् । यच्च नः उपरि स्थितं व्रजन्ति । के । अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या दूरे यमो येषाम् । यद्वा दूरीकृतयमनियमाः । पाठान्तरे दूरीकृताहंकारा इत्यर्थः । स्पृहणीयं करुणादि शीलं येषाम् । किंच भर्तुर्हरेर्यत्सुयशस्तस्य मिथः कथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला तया सह पुलकीकृतमङ्गं येषाम् । यद्वा नः उपरीति व्रजतां विशेषणम् । निरहंकारत्वादसत्तोऽपि येऽधिकास्ते यद्व्रजन्तीत्यर्थः ॥ २५ ॥ ॥

---

१ भगवत्कृतचुम्बनप्रभावादिदं मदीयं सौन्दर्यमित्यमन्यतेति भावः । २ तत्त्वं भगवत्तन्वं तस्य ज्ञानमनुभवः । ३ यदि वा अथवा । ४ त एव पूर्वश्लोकोक्ताः । ५ अनिमिषां कालानधीनानामित्यर्थः । क्रम० । ६ पाठान्तरे 'दूरेहमा ह्युपरि' इत्येवंरूपे । ७ ये नः उपरि अधिकास्ते यद्व्रजन्तीत्यन्वयः ।

तत्तदा तदपूर्वं विकुण्ठं अथो अनन्तरमुपेत्य मुनयः परामुत्कृष्टां मुदमापुः । अपूर्वत्वे हेतवः—विश्वगुरुणा हरिणाऽधिकृतमधिष्ठितम् । भुवनानामेकमेव वन्द्यम् । दिव्यमलौकिकम् । विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन् । योगमायाबलेनेति अष्टाङ्गयोगप्रभावेणोपेत्य । परमेश्वरे तु योगमायेति चिच्छक्तिविलास इति द्रष्टव्यम् ॥ २६ ॥ तस्मिन्वैकुण्ठे षट् कक्षाः प्राकारद्वाराणि । असज्जमानाः भगवद्दर्शनोत्कण्ठया तत्तदद्भुतदर्शने आसक्तिमकुर्वाणाः । द्वारपालौ देवावपश्यन् । समानं वयो ययोः । गृहीते गदे याभ्याम् । परार्ध्यैः केयूरादिभिर्विटङ्कः सुन्दरो वेषो ययोः ॥ २७ ॥ तावेव वर्णयति । मत्ता द्विरेफा यस्यां तया वनमालया निवीतौ कण्ठलम्बिन्या अलंकृतौ । असिता नीलाश्चतुष्टये चतुःसंख्याका बाहवस्तेषां मध्ये विन्यस्तया । वक्रं च मनाग्रभसं किंचित्क्षुब्धं दधानौ । स्फुटावुत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याम् ॥ २८ ॥ एतयोर्मिषतोः पश्यतोस्तावनापृष्ट्वैव याः पूर्वाः

तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥ आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥ तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम्[1] ॥ देवावचक्षत[2] गृहीतगदौ परार्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥ मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ॥ वक्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं[3] दधानौ ॥ २८ ॥ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः ॥ सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये[4] संचरन्त्यविहता विगताभिशङ्काः ॥ २९ ॥ तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्वृद्धान्दशार्धवयसो विदितात्मतत्त्वान् ॥ वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥ ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ॥ ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥ ॥

पद्—द्वारः । पुरटालंकृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथा सप्तमायामपि द्वारि ते निविविशुः । अप्रश्ने हेतुः—सर्वत्र ये अविहता अनिवारिताः संचरन्ति । निःशङ्कत्वे हेतुः—अविषमया स्वदृष्ट्येति ॥ २९ ॥ वातरशनान्नग्नान्वृद्धानपि पञ्चवर्षबालकवत्प्रतीयमानान् । चकारादाज्ञया च । अस्खलयतां निवारितवन्तौ । न तत् स्खलनमर्हन्तीति तथा तान् । अहो अत्रापि धार्ष्ट्यमित्येवं तेषां तेजो विहस्य । भगवतो ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोः ॥ ३० ॥ हरेर्द्वारपालपतिभ्यां देवेषु पश्यत्सु वार्यमाणास्ते मुनयः 'को वाम्' इत्यादिश्लोकत्रयीमूचुः । सुहृत्तमः श्रीहरिस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भङ्गे सति कामस्यानुजः क्रोधस्तेन सहसाऽकस्मादेवोपप्लुतानि क्षुभितान्यक्षीणि येषां ते । सुष्ठु पूज्यतमा अपीति निषेधानर्हत्वे क्रोधानर्हत्वे वा हेतुः ॥ ३१ ॥ ॥

१ सप्तमायां कक्षायाम् । २ अचक्षत दृष्टवन्तः । ३ मनाक् ईषद्रभस क्षुब्धम् । ४ 'विश्वं चरन्ति' इति पाठः । ५ अत्रापि वैकुण्ठेऽपि धार्ष्ट्यं ब्रह्मज्ञानप्रयुक्तसमदृष्टेः प्रागल्भ्यम् । ६ ब्राह्मणनिरोधात्मकं चरित्रम् । ७ दिदृक्षितेतिभावे निष्ठा । ८ क्षुभितान्यरुणानि ।

उच्चैर्महत्या भगवत्परिचर्यया एत्य प्राप्य इह वैकुण्ठे निवसता तद्धर्मिणा भगवद्धर्मिणा समदर्शिनां मध्ये वा युवयोरेव कोऽयं विषमः स्वभावः । कैश्चिन्न-
वेष्टव्यं कैश्चिन्नेत्येवंभूतः । ननु स्वामिनो रक्षार्थं द्वारपालयोरेष स्वभावो गुण एवेति चेदत आहुः—तस्मिन्निति । कुहकयोः कपटयोः । आत्मवत्स्वदृष्टान्तेन ।
यथा आवां कपटौ तथाऽन्योऽपि कश्चित्कपटः प्रवेक्ष्यतीतीति । अयं भावः—न ह्यत्र भगवद्भक्तं विना कश्चिदागच्छति । न चेश्वरे प्रशान्तत्वादविद्यमानविरोधे
भयशङ्का । अतो युवां केवलं धूर्तावेवेति ॥ ३२ ॥ भयशङ्काबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः—न हीति । समस्तं विश्वं कुक्षौ यस्य यत्र यदेह
भगवति धीरा विद्वांस आत्मनोऽन्तरं भेदं न पश्यन्ति किंत्वस्मिन्परमात्मन्यात्मानमन्तर्भूतं पश्यन्ति महाकाशे घटाकाशमिव तदा यथान्यस्य राजादेरुदरभे-
द्युदरभेदयुक्तं भयं भवति तथास्य श्रीहरेस्ताद्दग्भयं यतो येन कारणेन सुरवेषधारिणोर्युवयोर्विशेषेणोत्पादितं तत्किम्, न किंचिदित्यर्थः ॥ ३३ ॥ तत्तस्माद-
मुष्य वैकुण्ठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे यद्युक्तं तद्धीमहि चिन्तयेम । तदेवाहुः । अन्तरस्य भेदस्य भावः सत्ता तद्दर्शनेन

॥ मुनय ऊचुः ॥ को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ॥ तस्मिन्प्रशान्तपुरुषे गत-
विग्रहे वां को वात्मवत्कुहकयोः परिशङ्कनीयः ॥ ३२ ॥ न ह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभ-
सीव धीराः ॥ पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥ तद्वाममुष्य
परमस्य विकुण्ठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् ॥ लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे
रिपवोऽस्य यत्र ॥ ३४ ॥ तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ॥ सद्यो हरेरनुचरावुरु
बिभ्यतस्तत्पादग्रहावपततामतिकातरेण ॥ ३५ ॥ भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्य-
शेषम् ॥ मावोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोधः ॥ ३६ ॥ ॥ ॥

इतो वैकुण्ठलोकाद्व्रजतम् । यत्र येषु लोकेष्वस्य पापीयसोऽन्तरभावद्रष्टुरिमे 'कामः क्रोधस्तथा लोभः' इति गीतोक्तास्त्रयो रिपवो भवन्ति । इतो वैकुण्ठा-
त्पापीयसो लोकानिति वा ॥ ३४ ॥ इति तेषामीरितं भाषणं घोरमवधार्य, तं च ब्रह्मदण्डं ब्रह्मशापमवधार्य, तं चास्त्रसमूहैरप्यनिवार्यमवधार्य । हरेरनुचरा-
वतिकातर्येण भयेन तत्पादग्रहणं कुर्वन्तौ सन्तौ दण्डवदपतताम् । कथंभूतस्य हरेः । एवंभूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं बिभ्यतो भयं भावयतः ॥ ३५ ॥
अहो अपराद्धमस्माभिरित्यनुतप्यमानान्प्रत्यूचतुः । अघोन्यघवति य उचितो दण्डः स एव भगवद्भिरकारि । नात्र भवतामपराधः कश्चित् । अतोऽसौ नौ
आवयोर्भूयात् । योऽशेषमपि सुरहेलनमीश्वराज्ञातिक्रमरूपं पापं हरेत्, किंतु युष्माकं यः कृपानिमित्तोऽनुतापस्तस्य लेशेन नौ अधोऽधो मूढयोनीर्व्रजतोरपि
भगवत्स्मृतिप्रतिघातको मोहो मा भवेत्, किंतु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ ३६ ॥ ॥ ॥ ॥

१ कुहकयोरिति कर्तरि षष्ठी । कुहकाभ्या युवाभ्यामित्यर्थः । २ आत्मानं त्वंपदार्थं अन्तर्भूतं जहदजहल्लक्षणया सामानाधिकरण्येनाभिन्नम् । दीपि० । ३ युवयोर्युवाभ्याम् । ४ युवाभ्यामिति चतुर्थी उद्देशार्थिका । ५ 'को वा इहैत्य' इति पाठः । ६ तेषामित्यादि ब्रह्मोक्तिः । ७ भूयादित्यादि प्रतीहारोक्तिः । ८ अत्र तयोर्द्वित्वादघवतीत्येकवचनमसंबद्धं स्यात् अत उचितमिति पदमध्याहृतम् ।

एवं स्वानां महत्स्वतिक्रममपराधं तत्क्षणमेव विबुध्य तस्मिन्यत्र ते रुद्धास्तं देशं ययौ । आर्याणां हृद्यो मनोज्ञः । चरणौ चलयन्निति । अयं भावः—मच्चरणदर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ । श्रीसाहित्यं च निष्कामानपि विभूतिभिः पूरयित्वा क्षमापयितुम् ॥३७॥ तत्र तैर्दृष्टं देवमनुवर्णयति पञ्चभिः । तं त्वागतं तेऽचक्षत अपश्यन् । आपञ्चमादिदमेव क्रियापदम् । स्वपुंभिः शीघ्रं प्रतिहृतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य । कथंभूतम् । स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवाक्षविषयम् । हंसवच्छ्रीर्ययोस्तयोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलन्तश्चलन्तः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशिसादृश्याच्छशी तस्य केसरा मुक्ताहारविलम्बास्तेभ्यो गलन्ति सीकराम्बूनि यस्मिंस्तम् । सीकरोऽम्बुकणः ॥३८॥ कृत्स्नस्य द्वारपालमुनिवृन्दस्य प्रसादे सुमुखम् । स्पृहणीयानां गुणानां धाम स्थानम् । स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशन्तं सुखयन्तम् । त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यन्तः स्वर्गस्तस्य चूडामणिवत्स्थितं स्वधिष्ण्यं वैकुण्ठं सुभगयन्तं शोभयन्तम् ॥३९॥ पृथुर्नितम्ब आश्रयत्वेन विद्यते यस्य तस्मिन्पीतांशुके । अलिभिर्नादितया वनमालया च युक्तम् । सुभगयन्तमिति पूर्वेणैव वा संबन्धः । वल्गुषु प्रकोष्ठेषु वलयानि यस्य । गरुडस्य स्कन्धे विन्यस्त एको हस्तो येन । इतरेणान्येनाब्जं लीलाकमलं धुनानं भ्रामयन्तम् । विन्यस्तेति पाठे च वल्गिवलयादि हस्तस्य विशेषणम् ॥ ४० ॥ सकान्त्या विद्युतः क्षिपती ये मकराकारे कुण्डले तयोर्मण्डनस्यार्हे गण्डस्थले यस्मिंस्तच्च तदुन्नसं च मुखं यस्य । मणियुक्तं किरीटं यस्य । दोर्दण्डानां षण्डं समूहस्तस्य विवरे मध्ये स्थितेन हरता मनोहरेण विहरतेति वा परार्घ्यं उत्कृष्टस्तेन हारेण । कंधरायां स्थितेन ॥४१॥ किंबहुना । इन्दिराया उत्स्मितमहमेव सर्वसौन्दर्यनिधिरित्यहंकरणमत्र भगवत्सौन्दर्ये उपसृष्टमसंगतमिति स्वानां भक्तानां धिया विरचितम् । भक्तैः स्वमनस्येवं वितर्कितमित्यर्थः । कुतः । बहुसौष्ठवेन सौन्दर्येणाढ्यं युक्तम् । किंच मह्यं मम भवस्येश्वरस्य भवतां च कृतेऽङ्गं भजन्तं मूर्तिं प्रकटयन्तमचक्षत । निरीक्ष्य च कैः शिरोभिर्मुदा नेमुर्नेमश्चक्रुः । न विशेषेण तृप्ता दृशो नेत्राणि येषां ते ॥ ४२ ॥

एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ॥३७॥ तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम् ॥ हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरसीकराम्बुम् ॥३८॥ कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम् ॥ श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥३९॥ पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्याऽलिभिर्विरुतया वनमालया च ॥ वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥ विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलोन्नसमुखं मणिमत्किरीटम् ॥ दोर्दण्डषण्डविवरे हरता परार्घ्यहारेण कन्धरगतेन च कौस्तुभेन ॥४१॥ अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ॥ मह्यं भवस्य भवतां च भजन्तमङ्गं नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ॥ ४२ ॥ ॥ ॥

॥ ७ ॥ ॥३५॥

१ तौ चरणौ । २ तं त्वागतमित्यत्र तु आगतमिति छेदः । ३ स्वानां भक्तानां समाधेर्भाग्यं फलम् इति सिद्धां० । ४ 'अत्र छत्रस्य शशितया केसराणां शीकराम्बुत्वेन रूपकम् । शशिसंबन्धात्सीकराम्बूनाममृतत्वं लभ्यते । क्रम० । ५ इयमपि वक्रोक्तिः । ६ 'अक्षिविषयं' इति पाठः । ७ इवशब्दो वाक्यालंकारे । ८ युक्तमिति वा सुभगयन्तमिति वा संबन्धः । ९ युक्तमित्यध्याहाराद्विशेषणे तृतीया ।

स्वरूपानन्दादपि तेषां भजनानन्दाधिक्यमाह । तस्य पदारविन्दयोः किञ्जल्कैः[1] केसरैर्मिश्रा या तुलसी तस्या मकरन्देन युक्तो वायुः स्वविवरेण नासाछिद्रेण । अक्षर-जुषां ब्रह्मानन्दसेविनामपि । संक्षोभं चित्तेऽतिहर्षं तनौ रोमाञ्चम् ॥ ४३ ॥ हर्षकारितं संभ्रममाह द्वाभ्याम् । ते वै किलामुष्य वदनमेवासितपद्मस्य कोशोऽन्तर्भा-गस्तम् । असितपद्मकोशमित्यभूतोपमा[2] । सुन्दरतरे अरुणे अधरोष्ठे कुन्दवद्धासो यस्मिंस्तम् । उत् ऊर्ध्वं वीक्ष्य लब्धमनोरथाः सन्तो नखा एवारुणमणयस्तेषां श्रयण-माश्रयभूतमङ्घ्रिद्वन्द्वं पुनरवेक्ष्याऽधोदृष्ट्या वीक्ष्य पुनःपुनरेवं निरीक्ष्य युगपत्सर्वाङ्गलावण्यग्रहणाशक्तेः पश्चान्निदध्युर्ध्यातवन्तः ॥ ४४ ॥ योगमार्गैर्गतिं[3] मृगयतां पुंसां ध्यानस्य विषयभूतम् । बहुमतमत्यादरास्पदम्, बहूनां तत्त्वदृशां संमतमिति वा । पौंस्नं पौरुषं वपुर्दर्शयन्तम् । अन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैर्नित्यैरणिमाद्यष्टै-श्वर्यैर्युतम् । समगृणन् सम्यगस्तुवन् ॥४५॥ नित्यं ब्रह्मरूपेण प्रकाशसे, न तच्चित्रम् । इदानीं तु परममङ्गलविशुद्धसत्त्वश्रीमूर्त्या प्रत्यक्षोऽसि । अहो भाग्यमस्माकमित्याहुः । हे अनन्त, यस्त्वं हृद्गतोऽपि दुरात्मनामन्तर्हितो न स्फुरसि स नोऽस्माकमन्तर्हितो न[4] भवसि । नयनमूलं त्वद्यैव राद्धः प्राप्तोऽसि । अन्तर्धानाभावे हेतुः—भवतः सकाशा-

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः ॥ अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्ष-रजुषामपि चित्ततन्वोः ॥ ४३ ॥ ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् ॥ लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥ ४४ ॥ पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहु-मतं नयनाभिरामम् ॥ पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन्युतमष्टभोगैः ॥ ४५ ॥ ॥ कुमारा ऊचुः ॥ योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनन्त राद्धः ॥ यर्ह्येव कर्णविवरेण गुहां गतो नः पित्रा-नुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥ तं त्वा विदाम भगवन्परमात्मतत्त्वं सत्त्वेन संप्रति रतिं रचयन्तमेषाम् ॥ यत्तेऽनु-तापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥ नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किंत्व-न्यदर्पितभयं भ्रुव उन्नयैस्ते ॥ येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥

दुद्भवो यस्य तेनास्मत्पित्रा यर्हि यदैवानुवर्णितरहा उपदिष्टरहस्यस्तदैव नः कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसीति ॥ ४६ ॥ ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमा-त्मतत्त्वमहं त्वन्य एव स्वां दृश्यत्वात् । नैवम् । अस्मत्प्रत्यभिज्ञया भेदनिरासादित्याहुः—तमिति । हे भगवन्, आत्मतत्त्वमेव परं त्वां विदाम विद्मः प्रत्यभिजानीमः । ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशमैश्वर्यं स्यादत आहुः । सत्त्वेन विशुद्धसत्त्वमूर्त्या । एषां भक्तानाम् । सम्यक् प्रतिक्षणं संप्रति रतिः प्रीतिस्तां रचयन्तम् । आत्मतत्त्व-मेवाहुः । तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः । कीदृशाः । उद्ग्रन्थयो निरहंमाना अत एव विगतरागाः ॥४७॥ स्वयमपि भक्तिं[5] प्रार्थयितुं भक्तानां सुखातिशयमाहुः । आत्यन्तिकं मोक्षाख्यमपि तव प्रसादं ते न गणयन्ति नाद्रियन्ते । किंतु किमुतान्यदिन्द्रादिपदम् । ते भ्रुव उन्नयैरुज्जृम्भैरर्पितं निहितं भयं यस्मिंस्तत् । ते के । अङ्ग हे भगवन्, ये भवतः कथाया रसज्ञाः । कथंभूतस्य । रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं पवित्रं च यशो यस्य ॥४८॥

१ तत्तुल्यै रजोभिरित्यर्थः । अथवा तत्स्थानीयैः श्वेतारुणकान्तिमन्नखैः इति दीपि० । २ अभूतोपमेति । असितपद्मस्य कोशो हि पीतो भवति, यदि कथंचित्सोऽप्यसितः स्यात्तर्हि तमिव वदनमि-त्युपमितसमासः । मयूरव्यंसके तु कोशस्य प्राधान्ये सुन्दरतरेत्यादिविशेषणं तत्रासंभवं स्यादिति ज्ञेयम् । ३ गतिं आत्मतत्त्वम् । ४ इदमर्थसिद्धम् । ५ भक्तिं स्वस्वामिसंबन्धरूपभेदात्मिकाम् ।

इदानीं स्वीयापराधं द्योतयन्तो भक्तिं प्रार्थयन्ते—काममिति । हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत् । इदानीं सर्वाण्यपि जातानि । यतस्त्वद्भक्तौ शसौ । अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्म स्तात्स्यात् । नु वितर्के । यदि तु नश्चेतस्ते पदयो रमेत अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नानविगणय्य यदि रमेत । अङ्घ्रिभ्यां शोभा यासाम् । यथा च तुलसी गुणनैरपेक्ष्येण त्वदङ्घ्रिसंबन्धेनैव शोभते तथा यदि नो वाचः शोभेरन् । यदि च ते गुणगणैरापूर्येत । कर्णरन्ध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते । अयं तु गूढोऽभिप्रायः । कर्णरन्ध्रस्याकाशत्वाद्गुणगणानां चामूर्तत्वान्न कदाचित्पूरणम् । अतो नित्यमेव श्रवणं फलिष्यतीति ॥ ४९ ॥ अद्य वयं कृतार्थाः स्मेत्याहुः । हे पुरुहूत विपुलकीर्ते, यदिदं प्रादुश्चकर्थ प्रकटितवानसि । दृशो नेत्राणि । अनात्मनामजितेन्द्रियाणां दुरुदयोऽप्रकटोऽपि इत् इत्थं यः प्रतीतोऽसि । तस्मै तुभ्यमिदं नमो विधेम ॥ ५० ॥ ॥ इति श्रीम-

कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत ॥ वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥४९॥ प्रादुश्चकर्थ यदिदं पुरुहूत रूपं तेनेश निर्वृतिमवापुरलं दृशो नः ॥ तस्मा इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान्प्रतीतः ॥५०॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ ब्रह्मोवाच ॥ इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् ॥ प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ एतौ तौ पार्षदौ मह्यं जयो विजय एव च ॥ कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥ २ ॥ यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतः ॥ स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥ ३ ॥ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ॥ तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ॥ ४ ॥ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ॥ सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवाम. यः ॥ ५ ॥ ॥

द्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ हरिणा सान्त्वितैर्विप्रैरनुतप्तैस्तु पोड्यते ॥ तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥ १ ॥ इति गृणतां तेषां तद्वाक्यं प्रतिनन्द्येदं जगाद एताविल्येकादशभिः ॥ १ ॥ ययस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा भवति तथा अतिक्रमं वः कृतवन्तौ ॥ २ ॥ तस्मात्स एव दण्डोऽङ्गीकृतः ॥ ३ ॥ हि यस्माद्ब्रह्म ब्राह्मणा एव मे परमं दैवं दैवतं तत्तस्मादद्य वः प्रसादयामि । तव कोऽपराध इति चेत्तत्राह—तद्धीति । मदीयैः पुंभिरसत्कृतास्तिरस्कृता इति यत्तदात्मकृतमेव मन्ये ॥ ४ ॥ किंच ममैवैताभ्यामनिष्टं कृतमित्याह । यस्य स्वामिनो नामानि तस्य कीर्तिम् । आमयोऽत्र श्वेतकुष्ठम् ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥

१ पुरुभिर्बहुभिः हूत स्तुत । सर्वोपनिषद्वेद्येत्यर्थः । यद्वा रूपविशेषणं पुरुभिर्हूतं येषां यदिदं रूपं दिव्यमङ्गलविग्रहं इति वीर० । २ रन्ध्रशब्दस्य पुंस्त्वमार्षम् । ३ मतं मम । ४ अक्रातामित्यार्षम् इति दीपि० । ५ देववत्पूज्यानां देवानां वा युष्माकं हेलनात्यमानात् इति वीर० । ६ स्वपुंभिरित्यत्र स्वस्य मम पुंभिरित्यर्थः । अत्र 'यन्मत्पुंभिः' इति पाठः । अयमेव श्रीधरसमतः मदीयैरिति व्याख्यानात् । ७ गृणतां स्तुवताम् । ८ भृत्यकृतं स्वामिनि प्रतिफलतीति न्यायान्ममैवेत्युक्तम् ।

यस्य मेऽमृतरूपेऽमले यशसि श्रवणेनावगाहः प्रवेशः श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेव पुनाति सोऽहं विकुंण्ठो भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सु शोभना तीर्थभूता कीर्तिर्येन सः । स्वबाहुस्थानीयं लोकेश्वरमपि हन्यां, काऽन्यस्य कथेत्यर्थः । स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव ॥ ६ ॥ चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य । अत एव क्षतो निरस्तोऽखिलस्य लोकस्य मलो येन । यद्वा चरणपद्माल्लब्धः पवित्रो रेणुर्यस्मिन्निति, क्षतोऽखिलो मलो यस्येति च विग्रहः । प्रतिलब्धं प्राप्तं शीलं येन । येषां सेवया एते गुणा मम, अत एव श्रीमां न विजहाति प्रेक्षालवार्थेऽवलोकनलेशार्थम् । इतरे ब्रह्मादयः । तेषां वः प्रतिकूलवृत्तिं छिन्द्यामिति पूर्वेणैव संबन्धः ॥७॥ किंच ब्राह्मणो ममैव श्रेष्ठं मुखम्, अतो युष्मदवज्ञया मन्मुखतिरस्कार एव कृत इत्याह—नाहमिति । विताने यज्ञे यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेन अदन्नश्नन्नपि तथा नाद्मि नाश्नामि । यद्यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि प्रतिग्रासं रसास्वादपूर्वकं चरतो भुञ्जानस्य ज्ञानिनो ब्राह्मणस्य मुखतोऽश्नामि । मयि समर्पितैः कर्मफलैस्तुष्टस्य निष्कामस्येत्यर्थः ॥ ८ ॥ किंच येषाममलमङ्घ्रिरजोऽहं किरीटैः

यस्यामृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदाश्वपचाद्विकुण्ठः ॥ सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥ यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ॥ न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान्वहन्ति ॥७॥ नाहं तथाऽद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ८ ॥ येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरजः किरीटैः ॥ विप्रांस्तु को न विषहेत यदर्हणाम्भः सद्यः पुनाति सहचन्द्रललामलोकान् ॥९॥ ये मे तनूर्द्विजवरान्दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ॥ द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान्गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः ॥ १० ॥ ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्यानुरागकलयात्मजवद्गृणन्तः संबोधयन्त्यहमिवाहमुपाहृतस्तैः ॥ ११ ॥ ॥

बिभर्मि तान्विप्रानपकुर्वतोऽपि कोऽन्यो न विषहेत । कथंभूतोऽहम् । अखण्डाऽनवच्छिन्ना विकुण्ठाऽप्रतिहता च योगमायाविलासभूता विभूतिर्यस्य सः । तथा यस्य ममार्हणाम्भः पादोदकं चन्द्रललामेनेश्वरेण सहितान्लोकान् सद्यः पुनाति । एवं परमेश्वरः परमपावनोऽपि सन्नहं बिभर्मीति ॥९॥ किंच मे तनूरधिष्ठानानि । कास्ताः । द्विजवरान्दुहतीर्दोग्ध्रीः, गा इत्यर्थः । दुहितुरिति पाठेऽपि गा एव । विष्णुरूपात्सूर्यादुत्पन्नत्वात् । 'सूर्यसुताश्च गावः' इति वचनात् । अलब्धशरणानि रक्षकहीनानि भेदबुद्ध्या मदधिष्ठानं न भवन्तीति पृथग्दृष्ट्या ये द्रक्ष्यन्ति । अघेन क्षता नष्टा दृष्टिर्येषां तान् । मदीयोऽधिकृतो दण्डनेता यो यमस्तस्य गृध्राकारा ये दूताः । अहिवन्मन्युर्येषाम् । रुषा क्रोधेन कुषन्ति चक्षुभिश्छिन्दन्ति ॥१०॥ एवंभूतास्तु मां वशीकुर्वन्तीत्याह । ये क्षिपतः पुरुषं भाषमाणानपि ब्राह्मणान्संबोधयन्ति । मयि या धीस्तया वासुदेवदृष्ट्याऽर्चयन्तः सन्तः तुष्यद्धृदः प्रीयमाणचित्ताः । स्मितमेव सुधा तयोक्षितं सिक्तं पद्मतुल्यं वक्त्रं येषाम् । अनुरागकलया प्रेमशोभया वाचा गृणन्तः स्तुवन्तः । यथा कुपितमात्मजं स्निग्धः पिता सत्पुत्रो वा पितरम् । अहमिव भृगुं युष्मान्वा । तैरहमुपाहृतो वशीकृतः ॥ ११ ॥

१ विकुण्ठ उपाध्यनावृतः ।२ शील सुखभावरूपम् ।३ 'लवार्थमितरे' इति पाठः । ४अनवच्छिन्ना देशपरिच्छेदशून्या । अप्रतिहता कालपरिच्छेदशून्या । दीपि० । ५ अघेन मदधिष्ठानद्रोहरूपपापेन ।

तत्तस्मान्मेऽवसायमभिप्रायमलक्षमाणावजानन्तौ युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीपं इतां प्राप्तुताम्। तदिति स मेऽनुग्रहः। तमेवाह। यत् भृतयोर्विवासोऽचिरतः शीघ्रं कल्पतां संपद्यतां समाप्यतामिति ॥१२॥ उशतीं कमनीयां प्रियां देवीं द्योतमानामृषिकुल्यां ऋषयो मन्त्रास्तत्प्रवाहरूपाम्, ऋषिकुलयोग्यामिति वा। सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय सर्पप्रायेण मन्युना दष्टानामपि। क्रोधविषयव्यासानां हि मनो रसानुभवाभावात्प्रियभाषणमपि न सहते, तेषां त्वात्मा मनो नातृप्यत अलमिति नामन्यत ॥ १३ ॥ सतीं श्रेष्ठाम्। व्यादाय प्रसार्य। कर्णं दत्त्वेत्यर्थः। लघ्वीं मिताक्षराम्। गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम्। अगाधामभिप्रायतः। गैम्भीरामर्थतः। विगाह्य विचार्यापि किमस्मानभिनन्दति निन्दति वाऽसत्कृतं दण्डं वा संकोचयतीति न विदुः ॥ १४ ॥ ततेश्चाभिनन्दतीति ज्ञात्वा ते प्रहृष्टाः सन्तः प्रोचुः। क्षुभिता रोमाञ्चिता त्वक् येषाम्। कूपितेति पाठे संजातरोमकूपोक्त्या रोमाञ्चितत्वमेवोक्तम्। आरब्ध

तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ॥ भूयो ममान्तिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः ॥ १२ ॥ ॥ ब्रह्मोवाच ॥ अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ॥ नास्वाद्य मन्युदष्टानां तेषामात्माप्यतृप्यत ॥ १३ ॥ सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ॥ विगाह्यागाधगम्भीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥ ते योगमाययारब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥१५॥ ॥ ऋषय ऊचुः ॥ न वयं भगवन्विद्मस्तव देव चिकीर्षितम् ॥ कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥ ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो ॥ विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ॥ धर्मस्य परमो गुह्यो निर्विकारो भवान्मतः ॥ १८ ॥ तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ॥ योगिनः स भवान्किंस्विदनुगृह्येत यत्परैः ॥ १९ ॥ ॥ ॥

आविष्कृतः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तम्। अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान्मानयतीति ज्ञात्वेत्यर्थः ॥ १५ ॥ अध्यक्षः सर्वेश्वरः सन् 'तद्धीत्यात्मकृतं मन्ये' इत्युक्त्या मयाऽपराधः कृत इति, 'तथा तदनुग्रहो मे' इत्यादिवचनेन ममानुग्रहश्चेति यत्प्रभाषसे तेन तव यच्चिकीर्षितं तन्न विद्मः ॥ १६ ॥ किलेति लोकशिक्षार्थं सूचितं परमार्थमाहुः—विप्राणामिति। देवदेवानां देवपूज्यानामपि भगवांस्त्वमात्मा च दैवतं च ॥ १७ ॥ लोकशिक्षार्थताप्रपञ्चः—त्वत्त इत्यष्टभिः। धर्मस्त्वत्त एव भवति रक्ष्यते च त्वदवतारैः। परमः फलरूपोऽत एव गुह्यो गोप्यः। नच स्वर्गादिफलवद्विकारी भवान् किंतु निर्विकारो मतः। अत एवंभूतस्य तवेदं लोकशिक्षामात्रमिति भावः ॥ १८ ॥ विपरीतं चेदमित्याहुः—तरन्तीति। यस्यानुग्रहादेव निवृत्ता विरक्ता योगिनश्च सन्तो मृत्युं तरन्ति स भवान्परैरनुगृह्येतेति किंस्वित्। न किंचिदित्यर्थः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥

१ मेऽनुग्रहः महदतिक्रमफलमवाप्य पुनराशु मत्समीपागमनमेव मदनुग्रह इत्यर्थः। वीर०। २ भृतयोर्भृत्ययोः। वीर०। ३ अर्थतो वाच्यार्थमर्यादयापि गम्भीरा दुर्बोधाशयाम्। दीपि०। ४ ततश्च ज्ञापनहेतुभगवदिच्छानन्तरम्। ५ 'कम्पिततत्वचः' इति विज० पाठः। 'कुपिततत्वचः' इति क्रम०। ६ आत्मा रश्मीना सूर्यवन्मूलस्वरूपः। दैवतमिष्टत्वेन पूज्यः। ७ इति यत्तन्न किंस्विदित्यन्वयः।

यच्चोक्तं 'यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्' इत्यादि, तदत्यन्तमसंभावितमित्याहुर्द्वाभ्याम् । यं वै विभूतिर्लक्ष्मीरनुवेलमवसरेऽवसरे उपयाति सेवते । धृतः पादरेणुर्यस्याः । धन्यैः सुकृतिभिरर्पितमङ्घ्रौ यत्तुलस्या नवं दाम माला तद्धाम स्थानं यस्य तस्य । मधुव्रतपतेर्भ्रमरमुख्यस्य लोकं स्थानमङ्घ्रिं कामयमानेव ॥ २० ॥ विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि यो नात्याद्रियत् नातीवादृतवान्, स एवंभूतस्त्वम् । अयं भावः—इत्थं नामातिलम्पटतया लक्ष्मीस्त्वां सेवते । कथम् । एवं हि सा मेने । अयं हि सारग्राही मधुव्रतश्चञ्चलश्च स चाङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमते अतोऽङ्घ्रिलावण्यमत्यधिकं स्यात्ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघर्षमङ्गीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्यामीति तदेवमत्यौत्सुक्येनानुवर्तमानामपि तां त्वं नातीवाद्रियसे । यतः परमभागवतेष्वेव प्रकृष्टसङ्गवान् । स एवं परमसौभाग्यनिधिस्त्वम् । अतो ब्राह्मणप्रसादान्मां श्रीर्न विजहातीत्यलभ्यलाभत्वेन निर्देशो न समञ्जस इति । किंच स्वत एव त्वं भगभाजनो भजनीयानां गुणानामाश्रयः परमशुद्धश्च तं त्वां द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तथा श्रीवत्सलक्ष्म च किं पुनीतः पवित्रीकुरुतः । किं किमर्थं च ते उभे अगाः प्राप्तो भूपणत्वेन स्वीकृतवा-

यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ॥ धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥ यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसङ्गः ॥ स त्वं द्विजानुपथपुण्यरजः पुनीतः[1] श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम्[3] ॥ २१ ॥ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ॥ नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥ न त्वं द्विजोत्तमकुलं यदि हात्मगोपं गोप्ता वृषः स्वर्हणेन[4] ससूनृतेन ॥ तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥ २३ ॥

नसि । अतो 'यत्सेवया चरणपद्मपवित्ररेणुम्' इत्यादिवचनं लोकसंग्रहमात्रमित्यर्थः ॥ २१ ॥ धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः—धर्मस्येति त्रिभिः । त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः । यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणा भगशब्दवाच्याः सन्त्यस्येति त्रियुगः । हे त्रियुग, धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैस्तपःशौचदयाभिः । सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात्त्रिभिरित्युक्तम् । भृतं पालितम् । किं कृत्वा । नोऽस्माकं वरदया सत्त्वेन तनुवा तन्वा सत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निरस्य निराकृत्य । द्विजानां देवतानां च प्रयोजनाय नूनं भृतम् । यद्वा हिलोपे रूपं निरस्येति । अस्माकं तन्निवर्तयेत्यर्थः ॥ २२ ॥ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलम् । यदि ह स्फुटं त्वं न गोप्ता न रक्षिता । तृन्प्रत्ययान्तत्वान्न षष्ठीप्रयोगः । वृषः श्रेष्ठः । हे देव, पन्था वेदमार्गो नङ्क्ष्यति नाशं यास्यति । ऋषभस्य श्रेष्ठस्य । हि यस्मात्तदनर्हणमसूनृतं चाग्रहीष्यत् । तदुक्तं गीतासु 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' इति ॥ २३ ॥

१ उभे रजःश्रीवत्सलक्ष्मणी । २ पुनीत इत्यत्र कर्मत्वेन तं त्वामित्यध्याहृतं बोध्यम् । सत्त्वमित्यत्र 'त त्वां' इति पाठे सत्त्वमित्यध्याहारो ज्ञेयः । दीपि० । ३ 'भगभाजनस्तम्' इति पाठः । ४ 'वृषस्तदर्हणेन' इति पाठः । तत्र तेषां ब्राह्मणानामर्हणेनेत्यर्थो ज्ञेयः ।

नश्यत्विति चेत्तत्राहुः । तद्वेदमार्गेनाशनम् । इवेति लोकोक्तिः । सत्त्वनिधित्वाज्जनाय क्षेमं शं विधातुमिच्छोरत एव निजशक्तिभी राजादिभिरुत्पादितधर्मप्रतिपक्षस्य । अतस्तव ब्रह्मकुलेऽवनतिर्युक्तैव । ननु महतोऽन्येष्ववनतिस्तेजोहानिकरी तत्राहुः । एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं न क्षीणम् । यतः स नमनादिस्ते विनोदः ॥२४॥ शापाग्रहं परित्यज्य विज्ञापयन्ति । यं वाऽन्यं दण्डं विधास्यति भवान्, वृत्तिं नु अधिकजीविकां वा तत्सर्वमनुमन्यामहे । ये वयं निरपराधावेतौ किल्बिषेण शापेनायुङ्क्ष्महि योजितवन्तः ॥ २५ ॥ मत्कारितत्वाच्छापस्य युष्माकं नापराध इत्याश्वासयन्नाह । एतौ सद्य एवासुरयोनिं प्राप्य भूयोऽप्याशु मत्समीपमागमिष्यतः । संरम्भेण क्रोधावेशेन संभृतः संवृद्धो यः समाधिरेकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोः । हे विप्राः, यो वः शापो युष्मत्कृतः शापस्तदिति स मयैव निमितो निर्मित इत्यवैत जानीत ॥ २६ ॥ नेत्रोत्सवजनकं विकुण्ठं हरिं

तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ॥ नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः ॥२४॥ यं वाऽनयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनु मन्महि निर्व्यलीकम् ॥ अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥ ॥ श्रीभगवानुवाच ॥ एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसंभृतसमाध्यनुबद्धयोगौ ॥ भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ॥ २६ ॥ ॥ ब्रह्मोवाच ॥ अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ॥ वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयंप्रभम् ॥ २७ ॥ भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ॥ प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥ भगवाननुगावाह यातं मा भैष्टमस्तु शम् ॥ ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥ एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा ॥ पुराऽपवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥ ॥ ॥

तन्निवासं च वैकुण्ठं लोकम् । स्वयंप्रकाशं प्रकाशान्तरानपेक्षम् । सत्त्वपरिणामत्वात् ॥ २७ ॥ अनुमान्यानुज्ञाप्य । परिक्रम्य प्रदक्षिणीकृत्य । वैष्णवीं श्रियं वैकुण्ठे वर्णिताम् ॥ २८ ॥ ममैव तु मतं संमतम् । इदमत्र तत्त्वम्—यद्यपि सनकादीनां क्रोधो न संभवति, नच भगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यम्, नच भगवतः स्वभक्तोपेक्षा, नच वैकुण्ठगतानां पुनर्जन्म, तथापि भगवतः सिसृक्षादिवत्कदाचिद्युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात्स्वपार्षदानां तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं संपादनीयमिति भगवतैव व्यवसितं, अतः सर्वं संगच्छते । तदिदमुक्तं शापो मयैव निमित इति, मा भैष्टमिति, अस्तु शमिति, हन्तुं नेच्छे मतं तु मे इत्यादि च ॥ २९ ॥ यदा मयि उपारते योगनिद्रां गतवति सति द्वारि विशन्ती युवाभ्यां पुराऽपवारिता तदा क्रुद्धया रमया एतद्यद्ब्राह्मणैरिदानीमुक्तं तत्पुरैव निर्दिष्टम् ॥ ३० ॥ ॥ ॥

१ वेदोक्तधर्मानुष्ठातरि । २ पूर्वमेव वृत्तेः सत्त्वादधिकजीविकामित्यध्याहृतम् । ३ विकुण्ठं उपाध्यावरणशून्यम् । ४ सत्त्वनिधेरिति हेतुगर्भं विशेषणम् । सत्त्वनिधित्वादित्यर्थः । ॥३८॥
दीपि० । ५ 'त्र्यधिपते वत', 'त्र्यधिपते तव' इति पाठौ । तत्पक्षे संबोधनम् । ६ एतत्पद्यं गुर्जरपाठे सटीकमस्ति वीरराघवादिभिर्व्याख्यातं च । ७ विशुद्धसत्त्वविलासत्वात् ।
८ प्रातिपक्ष्यानुपपत्तेः शत्रुत्वासंभवात् ।

प्रत्येष्यतं प्रत्येष्यथः । निकाशं समीपम् ॥ ३१ ॥ ३२ ॥ दुस्तराद्ब्रह्मशापात् हरिलोकतः पतन्ताविति शेषः । हरिलोकत एव हतश्रियावभूतामिति वा । विग-
तस्मयौ नष्टगर्वौ च ॥ ३३ ॥ विकुण्ठस्य धिषणात्स्थानात् । पुत्रका हे देवाः ॥ ३४ ॥ काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥ सहैव गर्भे प्रविष्टौ यमौ तयोस्ते-
जसा वस्तेज आक्षिप्तं तिरस्कृतम् । नचात्र प्रतिविधिः शक्यः । यत एतर्हीदानीं भगवानेव तदेवं विधातुमिच्छति ॥ ३६ ॥ तथापि कोऽप्युपायो विचार्य-
तामिति चेत्तत्राह—विश्वस्येति । त्रयाणां गुणानामीशः स एव सत्त्वोत्कर्षकाले नः क्षेमं विधास्यति । विमृशेन विमर्शनेन ॥ ३७ ॥ ॥ इति श्रीमद्भागवते

मयि संरम्भ[1]योगेन निस्तीर्य ब्रह्महेलनम् ॥ प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥ द्वास्थावादिश्य भगवा-
न्विमान[4]श्रेणिभूषणम् ॥ सर्वातिशयया[5] लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥ तौ तु गीर्वाणऋषभौ दुस्तराद्धरि-
लोकतः ॥ हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥ तदा विकुण्ठधिषणात्तयोर्निपतमानयोः ॥ हाहाकारो महा-
नासीद्विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ॥ दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम्
॥ ३५ ॥ तयोरसुरयोरद्य तेजसा यमयोर्हि वः ॥ आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥ विश्वस्य यः स्थिति-
लयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्ययोगमायः ॥ क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन
कियानिहार्थः ॥ ३७ ॥ ॥ इति श्रीमद्भा० म० तृतीयस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥
निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ॥ ततः[6] सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥ दितिस्तु भर्तुरादेशा-
दपत्यपरिशङ्किनी ॥ पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥ उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ॥ दिवि
भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥ सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ॥ सोल्काश्चाशनयः पेतुः केत-
वश्चार्तिहेतवः ॥ ४ ॥ ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः ॥ उन्मूलयन्नगपतीन्वात्यानीको रजोध्वजः ॥ ५ ॥

तृतीयस्कन्धे भावार्थदीपिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ ततः सप्तदशे जन्म तयोर्लोकभयंकरम् ॥ हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः
॥ १ ॥ क्षेमं विधास्यतीति ब्रह्मवचनानन्तरं शङ्कया त्यक्ताः ॥ १ ॥ भर्तुरादेशात् 'लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः' इति वाक्यात् । स्वापत्याभ्यां
परिशङ्किनी देवोपद्रवं शङ्कमाना ॥ २ ॥ तत्र तदा निपेतुरुद्बभूवुः । उरु भयमासमन्ताद्वहन्तीति ॥ ३ ॥ अचलैः सहिता भुवः प्रदेशाः । केतवश्चोदयं चक्रु-
रिति शेषः ॥ ४ ॥ फूत्कारानिति तीव्रवायुशब्दानुकरणम् । नगपतीन् महावृक्षान् । वात्या एवानीकं यस्य । रज एव ध्वजो यस्य ॥ ५ ॥ ॥ ॥

१ ब्रह्मशापं व्याजीकृत्य भगवदिच्छयैवेत्यर्थः । २ अत्र तेजस्तिरस्कृतौ । ३ सरम्भः क्रोधाभासस्तस्य योगेन संबन्धाभासेन । ४ विमानान्यत्र प्रासादाः । ५ निरतिशयया ।
६ ततः मेरुस्थब्रह्मसदनात् । ७ शङ्कमाना लोकोपद्रवमपत्यं प्रति विष्णुहस्ततो वधाद्वा । दीपि० । ८ केतवो भयसूचका लम्वायमानास्ताराः ।

उच्चैर्हसन्त्य इव तडितो येषु तेषामम्बुदानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिन् । पदं स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥ वार्धिः समुद्रो विमना इव । उद्गता ऊर्मयो यस्मात् । क्षुभिता उदरस्था मकरादयो यस्मिन् । उदपानैर्वापीकूपादिभिः सहिताः । शुष्काणि पङ्कजानि यासु ॥ ७ ॥ परिधयः परिवेषाः । सराह्वो राहुग्रस्तयोः । निर्घाता निरभ्रगर्जितानि । रथनिर्ह्रादतुल्या ध्वनयः । विवरेभ्यो गिरिगुहाभ्यः ॥ ८ ॥ सृगालानामुलूकानां च टङ्कारैर्ध्वनिभिः सह । शिवाः सृगाल्यः ॥ ९ ॥ ग्रामसिंहाः श्वानः ॥ १० ॥ कर्कशैस्तीक्ष्णैः । हे क्षत्तः । खार्कारो गर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमो येषाम् । वरूथशः सङ्घशः ॥ ११ ॥ रासभशब्दात्त्रस्ताः सर्वतः क्रोशन्तः ॥ १२ ॥ गावोऽत्रसन् त्रस्ताः । असृग्दोहाश्च

उद्धसत्तडिदम्भोदघटया नष्टभागणे ॥ व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥ चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः ॥ सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥ मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः ॥ निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥ अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ॥ सृगालोलूकटङ्कारैः प्रणेदुरशिवं शिवाः ॥ ९ ॥ संगीतवद्रोदनवदुन्नमय्य शिरोधराम् ॥ व्यमुञ्चन्विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥ खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ॥ खार्काररभसा मत्ताः पर्यधावन्वरूथशः ॥ ११ ॥ रुदन्तो रासभत्रस्ता नीडादुदपतन्खगाः ॥ घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ॥ व्यरुदन्देवलिङ्गानि द्रुमाः पेतुर्विनाऽनिलम् ॥ १३ ॥ ग्रहान्पुण्यतमानन्ये भगणांश्चापि दीपिताः ॥ अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥ दृष्ट्वाऽन्यांश्च महोत्पातानतत्तत्त्वविदः प्रजाः ॥ ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥ तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ ॥ ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ ॥ गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्याऽर्कमतीत्य तस्थतुः ॥ १७ ॥ ॥ ॥ ॥ ॥

बभूवुः । देवलिङ्गानि व्यरुदन्, प्रतिमानामश्रुस्राव आसीदित्यर्थः ॥ १३ ॥ पुण्यतमान् गुरुबुधादीन्भगणान् । बहूनि नक्षत्राणि चान्ये क्रूरग्रहा मङ्गलादयोऽतिचेरुरतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥ १४ ॥ ब्रह्मपुत्रानृते विना, तेषां स्वशापादिज्ञानात् ॥ १५ ॥ व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोः ॥ १६ ॥ निरुद्धा व्याप्ताः काष्ठा दिशो याभ्याम् । स्फुरन्त्यङ्गदानि येषु ते भुजा ययोः । अङ्गदेति दावन्ततत्वमार्षम् । शोभना काञ्ची यस्यां तया कट्या ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

१ परिवेषा मण्डलानि । २ 'अशिवाः शिवाः' इति सुबो० पाठः । ३ 'दैवलिङ्गानि' इति पाठः । ४ चरणैश्चरणचालनैः ।

यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं विदुः । सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः । अयं भावः—यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तं आदिपश्चाद्भावेन प्रविशति तदा यमौ भवतस्तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः । 'यदा विशेद्विधा भूतं बीजं पुष्पं परिक्षरत् ॥ द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ॥' इति पिण्डसिद्धिस्मरणात् । अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितिः प्रथमं यमसूत तस्य हिरण्याक्ष इति नाम कृतवानिति ॥ १८ ॥ दोर्भ्यामुद्धतो ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥ रणं युद्धम् ॥ २० ॥ दुःसहो जवो वेगो यस्य । रणन्तौ काञ्चनमयौ नूपुरौ यस्य । अंसे न्यस्ता महती गदा येन ॥ २१ ॥ मनसा शौर्येण वीर्येण बलेन वरेण चोत्सिक्तं

प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत ॥ तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥ चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ॥ वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥ हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ॥ गदापाणिर्दिवं यातो युयुत्सुर्मृगयन्रणम् ॥ २० ॥ तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम् ॥ वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥ मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् ॥ भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥२२॥ स वै तिरोहितान्दृष्ट्वा महसा स्वेन दैत्यराट् ॥ सेन्द्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम् ॥२३॥ ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिःस्वनम् ॥ विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥ तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ॥ अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥ स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीन् श्वसनेरितान्मुहुः ॥ मौर्व्याऽभिजघ्ने गदया विभावरीमासेदिवांस्तात पुरीं प्रचेतसः ॥ २६ ॥ तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ॥ स्मयन्प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज संयुगम् ॥ २७ ॥ ॥ ॥

गर्वितम् । असृण्यं निरङ्कुशम् । निलिल्यिरे लीना बभूवुः ॥ २२ ॥ स्वेन महसा तेजसा तिरोहितान्स दृष्ट्वा ज्ञात्वा क्षीबान्मत्तानपश्यन्सन् । 'क्लीबान्'इति पाठे पौरुषहीनान् ॥ २३ ॥ २४ ॥ सन्ना अवसन्ना धीर्येषाम् । वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तः ॥ २५ ॥ महोर्मीनभिजघ्ने । मौर्व्या मारयतीति मौर्वं कार्ष्णायसं तन्मय्या । यद्वा मूर्वा नाम तृणविशेषः, तन्मयरज्ज्वा दृढनिबद्धयेत्यर्थः । विभावरीसंज्ञां आसेदिवान् प्राप्तः ॥ २६ ॥ असुराणां लोकः पातालं तत्पालकम् । प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ पितृतः सकाशाद्वीर्यस्य योनिपुष्पं प्रति यो द्विधा प्रवेशक्रमस्तस्माद्विपर्ययेण प्रथमप्रविष्टस्य पश्चात्प्रसूतिः पश्चात्प्रविष्टस्य प्रथमं प्रसूतिरित्यर्थः। यथा संकुचितवीथ्यां प्रथमं प्रविष्टस्य रथादेः पश्चान्निःसृतिः पश्चात्प्रविष्टस्य तु प्रथमं निःसृतिस्तद्वदिति दीपि० । २ अकुतोमृत्युः न कुतश्चिदपि बहिरन्तःशुष्कार्द्रादेरपि मृत्युर्यस्य सोऽकुतोमृत्युः विज० । ३ 'क्षीबो न पश्यन्' इति वीर० पाठः स च समीचीनः । क्षीबान्मत्तानिति स्वामिव्याख्यानेपि देवानां भीतत्वेन मत्तत्वासंभवात् ।

यद्यस्माद्राजसूये भवानयजत् ॥ २८ ॥ उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥ युद्धमार्गेनिपुणं त्वां यस्तोपयिष्यति तमिहि गच्छ । गृणते स्तुवन्ति ॥ ३० ॥ आराच्छीघ्रम् । विस्मयो नष्टगर्वः । वीरशये रणाङ्गणे । रूपाणि वराहाद्यवतारान् ॥३१॥ ॥ इति श्रीमद्भा० तृतीयस्कन्धे भा० दी० टीकायां सप्तदशोऽध्यायः ॥ १७॥
अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः ॥ [1]निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते ॥१॥प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यस इति यदुक्तं तद्विगणय्यागणयित्वा । यतो दुर्मदः ॥१॥ अभितो जयतीत्यभिजित्तं श्रीहरिम् । प्रकर्षेणोर्ध्वं नीयमानाऽवनिर्येन । अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचो हिरण्याक्षतेजांस्यरुणश्रिया युक्तं यत्तेनाक्ष्णा नेत्रेण मुष्णन्तं तिरस्कुर्वन्तम् । अहो चित्रं वनगोचरो मृगो वारिचरो वराहः ॥ २ ॥ एह्यागच्छ । रसौकसां पातालवासिनां नोऽस्माकं समर्पिता । अन्यथा पातालावतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्तापि भारती वस्तुतो भगवन्तं स्तौति । तथाहि । वनगोचरो जले शयानः श्रीनारायणः स एव

त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ॥ विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूयेन पुराऽयजत्प्रभो ॥२८॥ स एवमुत्सिक्तमदेन[2] विद्विषा दृढं प्रलब्धो भगवानपांपतिः ॥ रोषं समुत्थं शमयन्स्वया धिया व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥ पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ॥ आराधयिष्यत्यसुरर्षभेहितं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥ तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः ॥ यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते[3] सदनुग्रहेच्छया ॥ ३१ ॥ ॥इति श्रीम० म० तृ० हिरण्याक्षदिग्विजये सप्तदशोऽध्यायः॥१७॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ॥ हरेर्विदित्वा गतिमङ्ग नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥१॥ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ॥ मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः ॥ २ ॥ आहैनमेह्यज्ञ मही विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता ॥ न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते ॥ ३ ॥ त्वं नः सपत्नैरभवाय किं भृतो यो मायया हन्त्यसुरान्परोक्षजित् ॥ त्वां योगमायाबलमल्पपौरुषं[4] संस्थाप्य मूढप्र[5] मृजे सुहृच्छुचः ॥ ४ ॥ ॥

योगिभिर्मृग्यते, दुष्टान्वा हन्तुं मृगयत इति मृगः । अज्ञ नास्ति ज्ञो यस्मात् सर्वज्ञेत्यर्थः । सुरा अधमा यस्मात् हे सुरोत्तम । ममेक्षमाणस्यापि सतो मामनादृत्यापि त्वमनया सह वर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मङ्गलं राज्यं यास्यसि प्राप्स्यसि नात्र संदेहः । तथाप्यसत्कृपया विमुञ्चेत्यर्थः । आसादिता लीलया स्वीकृता सूकराकृतिर्येन ॥३॥ अभवाय नाशाय भृतः पुष्टः । वस्तुतस्तु मोक्षाय भृतो धृत आश्रित इत्यर्थः । यो भवान्परोक्षेण चौर्येण जयतीति तथा । वस्तुतस्तु दूरत एव स्थित्वा जयतीति । संस्थाप्य हत्वा । वस्तुतस्तु योगमायारूपमचिन्त्यं बलं यस्य । अल्पं पौरुषं यस्मात् । तं त्वां सम्यक् स्थापयित्वा । भक्त्या हृदि स्थिरीकृत्येत्यर्थः । हे मूढप्र, मूढान्प्राति आप्याययतीति तथा । प्रा पूर्ताविति धातुः । सुहृदां शुचः संसारदुःखानि मृजे नाशयामि । यतस्त्वं स्वर्तुर्बान्धवानपि मोचयसीति भावः ॥४॥

१ निर्विशेष जयादिविशेषरहितम् । २ उत्सिक्तमदेन निरङ्कुशगर्वेण प्रलब्ध उपहसितः । ३ धत्ते जगति प्रकटयति । ४ योगमायारूपं चिच्छक्तिविलासात्मकम् । ५ स्तुतिपक्षे मूढान् भक्तिविवशान् ।



॥४०॥

असद्भुजच्युतयापि गदया अशीर्णं शीर्षं यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरन्ति नवीना भक्ताः ये च पूर्वं भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैवामूला न भविष्यन्ति किंतु दृढमूला एव भविष्यन्तीत्यर्थः ॥ ५ ॥ स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदं दुरुक्तव्यथां मृषन्सहमान एव निर्गतः । करेणुर्हस्तिनी । वस्तुतस्त्वरिदुरुक्ततोमरैर्निमित्तभूतैस्तुद्यमानः । यथाश्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वानुकम्पया पीड्यमान इत्यर्थः । तोदं मृषन्नित्यस्याप्ययमेवार्थः ॥ ६ ॥ सलिलान्निर्गच्छन्तमनुगतः सन् । हिरण्यवत्कपिशाः केशा यस्य दैत्यस्य । झषो मकरः । करालास्तुङ्गा दंष्ट्रा यस्य । अशनिवन्निःस्वनो यस्य । निर्लज्जानामसतां किं विगर्हितमस्ति । निन्दाभयाभावात्पलायनमपि नायुक्तमित्यर्थः । वस्तुतस्तु गतह्रियः प्राप्तह्रियः । न सन्तो येभ्यस्तेषां कृपालूनां किं विगर्हितम्। न किंचित् । अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किंचित्पलायनमपि न निन्दित-

त्वयि संस्थिते गदयाऽशीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ॥ बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ॥५॥ स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ॥ तोदं मृषन्निरगादम्बुमध्याद्ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥ तं निःसरन्तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः ॥ करालदंष्ट्रोऽशनिनिःस्वनोऽब्रवीद्गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥ स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् ॥ अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥ परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम् ॥ मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ॥ न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥

मित्यर्थः । यद्वा लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति । गतह्रियां स्वार्थैकपराणां असतामस्माकं किं विगर्हितगणनाऽस्ति, अपितु नास्त्येव । धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥ स भगवान्विश्वसृजाभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाणः । पाठान्तरे विश्वसृजां प्रसूनैर्विबुधैरभिष्टुत इति । सलिलस्योदस्तादुपरि व्यवहारगोचरे देशे गां पृथ्वीं विन्यस्य तस्यां स्वसत्त्वमाधारशक्तिं निहितवान् । अरेस्तु पश्यत एव ॥ ८ ॥ परा पराक् पृष्ठतोऽनुषक्तं लग्नम् । तपनीयोपकल्पं सुवर्णाभरणम् । काञ्चनमयश्चित्रो दंशः कवचं यस्य तं दैत्यम् । प्रचण्डमन्युत्वमधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये । वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥ ग्रामसिंहान् शुनः । प्रतिमुक्तस्य बद्धस्य । विकत्थनं श्लाघाम् ॥ १० ॥ ॥

१ अयमेवार्थ इति । निगूढार्थमजानतां ब्रह्मादीनां स्वनिन्दानिमित्तकं तोदं व्यथा मृषन्सहमान इत्येवार्थः इति दीपि० । २ 'तपनीयोरुकल्पम्' इति पाठः । ३ मृगये मृगयामहे मोचयितुमिति शेषः । 'मृगयन्' इति वीर० पाठः । तत्र युष्मद्विधान्मृगयन्मृगो जात इत्यर्थः । ४ विश्वसृजां मरीच्यादीनां प्रसूनैः पुष्पतुल्यैः सन्ततिरूपैर्विबुधैरभिष्टुत इति । अस्मिन्पक्षे आपूर्यमाण इत्यस्य कारणाकाङ्क्षा न शाम्यतीत्यर्थात्प्रसूनैरिति योजनीयम् । विश्वसृग्भिः प्रजापतिभिरभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाण इति शेषे षष्ठीमूरीकृत्य चक्रवर्ती व्याचख्यौ ५ पश्यत एव पश्यन्तं तमनादृत्येत्यर्थः ।

न्यासहरा निक्षेपहराः । द्राविताः पलायनं कारिताः । अथाप्यसमर्था अपि तिष्ठामः । तत्किम् । यतः स्थेयं स्थातव्यमेवास्माभिः । तत्किमित्यत आह । क्व यामः । गन्तव्यदेशाभावात् ॥ ११ ॥ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः । मुख्य इत्यर्थः । अस्वस्तये पराभवार्थमाशु घटस्व यतस्व । अनूहो निर्वितर्कः । यो नातिपिपर्ति न पूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥ सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन । रुषा प्रलब्ध उपहसितश्च एते वयमिति द्वाभ्याम् । क्रीडां कार्यमाणोऽहिराड् महासर्प इव ॥ १३ ॥ मन्युना प्रचलितानि क्षुभितानीन्द्रियाणि यस्य ॥ १४ ॥ अन्तकं मृत्युम् ॥ १५ ॥ १६ ॥ सौम्य

एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताऽस्ते ॥ तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥११॥ त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ॥ संस्थाप्य चास्मान्प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥१२॥ ॥ मैत्रेय उवाच ॥ सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ॥ आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥१३॥ सृजन्नमर्षितः श्वासान्मन्युप्रचलितेन्द्रियः ॥ आसाद्य तरसा दैत्यो गदयाऽभ्यहनद्धरिम् ॥१४॥ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ॥ अवञ्चयत्तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥ पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः ॥ अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदम् ॥१६॥ ततश्च गदयाऽरातिं दक्षिणस्यां भ्रुवि प्रभुः ॥ आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥१७॥ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ॥ जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥ तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्य्वोः ॥ विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥ दैत्यस्य यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः ॥ कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥ ॥

विदुर, तां गदामप्राप्तामेवाहनत् ॥ १७ ॥ हर्यक्षो हिरण्याक्षः ॥ १८ ॥ स्पृधोः स्पर्धमानयोः । तिग्माभ्यां गदाभ्यां आहतान्यङ्गानि ययोः । क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः । विचित्रान्मार्गान् गदायुद्धभ्रमणभेदान् । इला गौस्तस्यां निमित्तभूतायां शुष्मिणोः मत्तयोर्वृषभयोः । प्रस्तुतेऽपि इला पृथ्वी तदर्थम् । वृषभौ हि खलु बहूनि दिनानि संग्रथितोत्तुङ्गशृङ्गसंघर्षविदीर्णाङ्गगलद्रुधिरौ परस्परोपमर्दव्यग्रोग्रसंरम्भौ चमत्कारितगजयूथपौ युध्यमानौ तिष्ठत इति प्रसिद्धम् ॥१९॥ यज्ञा एवावयवा यस्य च । मह्यां महीनिमित्तं द्विषतोः । एवंविधं विमर्दनं युद्धं दिदृक्षुः स्वराड् ब्रह्मा तत्रागात् ॥ २० ॥

१ नोऽस्माकं पद्रथाः पार्षदास्तेषां मध्ये असूना प्राकृतप्राणानामस्तये त्यागाय यतस्व, संस्थाप्य हृदये सम्यक्स्थापयित्वा स्वकानां समानजातीयपार्षदानामश्रु 'अहोऽस्मत्सखोऽपि क्व गत इति' शोकं प्रमृज । दीपि० । २ रसौकसां रसो भक्तिरस एवौको निवासो येषां भक्तानां ते । न्यासहराः न्यासो भावेनात्मनिवेदनं तं हरन्ति स्वीकुर्वन्तीति तथा । अत एव ऋणित्वेन गतह्रियः प्राप्तलज्जाः । यद्यपि प्रातिकूल्येन ते गदया द्राविताः अथापि पूर्वभक्तवात्सल्येन तिष्ठामहे मोचितुं सामर्थ्यं प्रकाशयामह इत्यर्थः । दीपि० । ३ आजहार प्राप । ४ अमर्षितोऽसहिष्णुः । ५ योगारूढ ऐच्छिकमृत्युः । ६ सरम्भात्क्रोधात् । ७ कोविदो गदायुद्धमार्गप्रभेदप्रज्ञानपटुः । ८ मायया कृपया गृहीतत्वं प्रपञ्चं प्रत्यानीतत्वम् । ९ हर्यक्षो हरितनेत्रः इति दीपि० ।

आगत्य च नारायणमाह । किं कृत्वा । दैत्यं विलक्ष्य । कथंभूतम् । आसन्नं प्राप्तं शौण्डीरं शौर्यं मदो वा येन । अपेतं साध्वसं यस्मात् । कृतः प्रतीकारो येन । अहार्योऽप्रतिकार्यो विक्रमो यस्य । सहस्रणीः सहस्राणामृषिसहस्राणां नेता ॥ २१ ॥ हे देव, तेऽङ्घ्रिमूलं ग्रासानां देवादीनाम् । एषोऽसुरः ॥ २२ ॥ आगस्कृद्भये-वापराधारोपकः । तत्परिहाराय प्रवृत्तौ भयकृत् । भीतं ज्ञात्वा दुष्कृदर्थप्राणादिहर्ता । अस्मत्तो राद्धो लब्धो वरो येन । अन्वेषन् प्रतिरथमवलोकयन् । अप्र-तिरथः प्रतिपक्षशून्यः ॥ २३ ॥ यद्यस्मादेवंभूतोऽयं तस्मादेनं माक्रीड माक्रीडय । हे देव, यथोत्थितं क्षुभितमाशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीड-यति तद्वत् ॥ २४ ॥ स्वामासुरीम् । हे देव, स्वां मायाम् । अघं पापरूपम् ॥ २५ ॥ वेलामेवाह—एषेति । लोकानां छम्बट्करी विनाशकरी । छम्बंडि-

विलक्ष्य दैत्यं भगवान्सहस्रणीर्जगाद नारायणमादि-
आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ॥
सूकरम् ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम् ॥ विप्राणां सौरभेयीणां भूतानामप्यनाग-
साम् ॥ २२ ॥ आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः ॥ अन्वेषन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥ मैनं माया-
विनं दृप्तं निरङ्कुशमसत्तमम् ॥ आक्रीड बालवद्देव यथाशीविषमुत्थितम् ॥ २४ ॥ न यावदेष वर्धेत स्वां वेलां प्राप्य
दारुणः ॥ स्वां देव मायामास्थाय तावज्जह्यघमच्युत ॥ २५ ॥ एषा घोरतमा संध्या लोकच्छम्बट्करी प्रभो ॥ उप-
सर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥ अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ॥ शिवाय नस्त्वं सुहृदा-
माशु निस्तर दुस्तरम् ॥ २७ ॥ दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् ॥ विक्रम्यैनं मृधे हत्वा लोकाना-
धेहि शर्मणि ॥२८॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे हिरण्याक्षवधेऽष्टादशोऽध्यायः ॥१८॥ ॥छ॥
॥ मैत्रेय उवाच ॥ अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः ॥ प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥
ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ॥ जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥ ॥छ॥ ॥छ॥

त्यव्ययं विनाशे वर्तते ॥ २६ ॥ अभिजिन्मध्याह्नः । स एव मौहूर्तिको योगः सन् । मुहूर्तः शुभदः कालः अगाद्गतप्रायः । अतो यावन्मुहूर्तशेषोऽस्ति तावदेव सुदुस्तरमेनं निस्तर जहि ॥ २७ ॥ त्वां मृत्युं त्वयैव शापानुग्रहकाले विहितं निर्मितम् । आसादितः प्राप्तः । शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ ऊनविंशे विरिञ्च्यादिप्रार्थितेन महामृधे । वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ १ ॥ निर्व्यलीकं च तदमृतं च । पाठान्तरे निष्कपटाभिप्रायं च तद्दत्तं च । कालात्मनोऽपि मम मुहूर्तबलमुप-दिशतीति प्रहस्यापाङ्गालोकनेन स्वीकृतवान् ॥ १ ॥ मुखतः अभिमुखे । हनौ कपोलस्याधोभागे । अक्षजो ब्रह्मणो घ्राणेन्द्रियादाविर्भूतः ॥ २ ॥ ॥

१ छंवडिति 'तेनैकाष्टकान् छंवट्कुरु' इति श्रुतेः छंवट्शब्दो वैदिको नाशवाचकः इति सुबोधिनी । २ 'यथाशीविषं' इति पाठोऽस्ति स न स्वामिसम्मतः यद्यस्मादिति व्याख्यानात्। अग्रे यथेति तु वत्प्रत्ययस्यैवार्थः । दीपि० । ३ तत् 'विक्रम्यैनं मृधे हत्वा' इति वाक्यम् । ४ उत्पत्य उत्प्लुत्य उपरि पतित्वा वा । ५ 'निर्व्यलीक ऋतं वचः' इत्येवंरूपे । अत्र समासे 'ऋत्यकः' इति प्रकृतिभावः ।

सा स्वगदया तेन हता ततो विहता विच्युता सती विघूर्णिता भूत्वाऽपतद्रेजे च । तद्भगवत्करात्पतनम् । यद्वा तत्पदस्यावृत्त्या रेजे इत्यनेनापि संबन्धः तद्दैत्यपौरुषं रेजे इति ॥ ३ ॥ लब्धतीर्थो लब्धावसरः स च न बबाधे न प्राहरत् । स मानयन्बभूवेति वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् ॥ ४ ॥ ५ ॥ व्यग्रं ससंभ्रमं चक्रं यस्य । विपज्जमानं विशेषेण सङ्गं प्राप्नुवन्तं प्रति । अतद्विदां तत्प्रभावमजानताम् । आसमन्तादासन् स्म ॥ ६ ॥ स दैत्यस्तमात्तचक्रं निशाम्य दृष्ट्वाऽग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानीन्द्रियाणि यस्य सः । आदशत् दष्टवान् ॥ ७ ॥ चक्षुर्भ्यां दहन्निव संचक्षाणः पश्यन् । इवेति वस्तुतः क्रोधाभावमाह । हतोऽसि ज्ञातोऽसीति वास्तवोऽर्थः ॥ ८ ॥ वातरंहसं वायुवेगाम् ॥ ९ ॥ घटस्वोद्यमं कुरु । यतस्त्वं जेतुमि-

सा हता तेन गदया विहता भगवत्करात् ॥ विघूर्णिताऽपतद्रेजे तदद्भुतमिवाभवत् ॥ ३ ॥ स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ॥ मानयन्स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥ गदायामपविद्धायां हाहाकारे विनिर्गते ॥ मानयामास तद्धर्मं सुनाभं चाऽस्मरद्विभुः ॥ ५ ॥ तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ॥ चित्रा वाचोऽतद्विदां खेचराणां तत्रास्मासन्स्वस्ति तेऽमुं जहीति ॥ ६ ॥ स तं निशाम्यात्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ॥ विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥ करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ॥ अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥ पदा सव्येन तां साधो भगवान्यज्ञसूकरः ॥ लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥ ९ ॥ आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ॥ इत्युक्तः स तदा भूयस्ताडयन्व्यनदद्भृशम् ॥ १० ॥ तां स आपततीं वीक्ष्य भगवान्समवस्थितः ॥ जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥ ११ ॥ स्वपौरुषे प्रतिहते हतमानो महासुरः ॥ नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥ जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ॥ यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा ॥ १३ ॥ तदोजसा दैत्यमहाभटार्पितं चकासदन्तः ख उदीर्णदीधिति ॥ चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥ ॥

च्छसि ॥ १० ॥ ११ ॥ हतो मानो गर्वो यस्य ॥ १२ ॥ ज्वलन्यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रम् । यज्ञाय विष्णुमालक्ष्य । अकार्यकरत्वे दृष्टान्तः—विप्रमुद्दिश्याभिचारं कुर्वन्यथा ॥ १३ ॥ अन्तः खे आकाशमध्ये चकासत्प्रकाशमानम् । उदीर्णोत्कटा दीधितिर्दीप्तिर्यस्य । निशातनेमिना शितधारेण । हरिरिन्द्रो यथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद । देवान्विनिर्जित्य अमृतकलशं नयता गरुडेनेन्द्रप्रयुक्तवज्रस्यामोघस्य मानं दातुं पिच्छमेकं त्यक्तं तद्यथेन्द्रश्चिच्छेद छिन्नं च तद्यथा खे प्रचकाशे तद्वत्प्रकाशमानमित्यभिसन्धिः ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ 

१ तद्धर्मं निरायुधाबाधनरूपं धर्मम् । २ 'दितिजाभिधेन' इति पाठः । ३ अहनत् क्षात्रधर्मेण सेवितवान् । दीपि० । ४ 'धातरहसा' इति विज० पाठः । ५ 'तया' इति पाठस्तत्र गदयेत्यर्थः । ६ हरिपदस्योभयत्र संबन्धः । एकत्र महावराहः, अपरत्र इन्द्रः । ७ यथा हवनीयद्रव्यं गृह्णाति कश्चित् ।

अराः सन्त्यस्येत्यरि चक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्याभिमुख्यमागत्य हरेरुरो वक्षः प्रहृत्य ॥ १५ ॥ मनागीषदपि । क्वाप्यंशे ॥ १६ ॥ अस्य जगतः । उपसंयमं प्रलयम् ॥ १७ ॥ पांसुकृतं तमश्च प्रेरितवन्तः क्षेपणैर्यन्त्रैः ॥ १८ ॥ नष्टो भगणो नक्षत्रसमूहो यस्याम् । अनेन दैत्यबलातिरेकाद्ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते । अह्नि नक्षत्राणामसंभवात् ॥ १९ ॥ नानायुधानि मुञ्चन्तीति तथा यातुधान्यश्च प्रत्यदृश्यन्त ॥ २० ॥ हिंस्राश्छिन्धिभिन्धीत्येवंभूता अतिवैशसा अत्युग्रा वाच उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः ॥ २१ ॥ प्रादुष्कृतानामिति प्रकटिता माया विनाशयत् । 'विनाशनम्' इति पाठे यथाश्रुतैव षष्ठी । त्रीणि सव-

वृक्णे स्वशूले बहुधाऽरिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ॥ प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहृत्यान्तरधीयतासुरः ॥ १५ ॥ तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः ॥ नाकम्पत मनाक् क्वापि स्रजा हत इव द्विपः ॥ १६ ॥ अथोरुधासृजन्मायां योगमायेश्वरे हरौ ॥ यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥ प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन् ॥ दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥ द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः ॥ वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥ १९ ॥ गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ॥ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥ बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः ॥ आततायिभिरुत्सृष्टा हिंस्रा वाचोऽतिवैशसाः ॥ २१ ॥ प्रादुष्कृतानां मायानामासुरीणां विनाशयत् ॥ सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात् ॥ २२ ॥ तदा दितेः समभवत्सहसा हृदि वेपथुः ॥ स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् ॥ रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥ तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः ॥ करेण कर्णमूलेऽहन्यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥ स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ॥ विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥ क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ॥ अजादयो वीक्ष्य शशंसुरागता अहो इमां कोऽनुलभेत संस्थितिम् ॥ २७ ॥

नानि पादा यस्य । यज्ञमूर्तिरित्यर्थः । 'त्रयो अस्य पादाः' इति श्रुतेः ॥ २२ ॥ भर्तुरादेशं त्वत्पुत्रौ भगवान्हनिष्यतीत्येवंभूतम् ॥ २३ ॥ उपगूहमानो बाह्वोरन्तर्निधाय सङ्घट्टयन् ॥ २४ ॥ अहन् जघान । त्वाष्ट्रं वृत्रम् । मरुत्पतिरिन्द्रः ॥ २५ ॥ परितो भ्रमद्गात्रं शरीरं यस्य । उदस्ते बहिर्निर्गते लोचने यस्य । विशीर्णा बाह्वादयो यस्य । नगेन्द्रो महाद्रुमः । लुलित उन्मूलितः । नभस्वता वायुना ॥ २६ ॥ संस्थितिं मृत्युम् ॥ २७ ॥ ॥ ॥

१ अशोऽङ्गे स्रजा हत इति दृष्टान्तेन तदेव स्पष्टीकृतम् । २ उत्सृष्टा उच्चारिता आसन्निति । ३ प्रादुष्कृतानामिति षष्ठी द्वितीयार्थे । ४ 'प्रहृत्य' इति क्वचित्पाठः । ५ विद्युतस्तडितः स्तनयित्नवो गर्जितानि तत्सहितैः । ६ 'मुचो दिवि' पाठः । ७ 'आहताः' इति पाठः । ८ इमां मुक्तिजनिकाम् । ९ संमर्दयन् ।

असत आरोपिताल्लिङ्गाल्लिङ्गशरीरान्मोक्तुमिच्छया । वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्निति पदा हत इति चाविरुद्धम् ॥ २८ ॥ २९ ॥ अखिलयज्ञानां तन्तवे विस्ताराय कारणायेति वा । अरुंतुदो मर्मभेत्ता ॥ ३० ॥ सादयित्वा हत्वेत्यर्थः । पुष्करविष्टरादिभिर्ब्रह्मादिभिः संस्तुतः ॥ ३१ ॥ यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मयाऽवादि तव कथितम् । हे सुमित्र । यथा येन प्रकारेण ॥ ३२ ॥ हे द्विज शौनक ॥ ३३ ॥ कथामुपश्रुत्य ॥ ३४ ॥ भक्तिमात्रेण पशूनामपि सुलभोऽन्यथा देवानामपि दुर्लभ इति तत्कथाश्रवणे कस्यानन्दो न स्यादित्याह—य इति द्वाभ्याम् । झषो ग्राहः । क्रोशन्तीनां सतीनामिति कृपालु-

यं योगिनो योगसमाधिना रहो ध्यायन्ति लिङ्गादसतो मुमुक्षया ॥ तस्यैष दैत्यऋषभः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥ एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम् ॥ पुनः कतिपयैः स्थानं प्रपत्स्येतेह जन्मभिः ॥ २९ ॥

॥ देवा ऊचुः ॥ नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये ॥ दिष्ट्या हतोऽयं जगतामरुंतुदस्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥ ॥ मैत्रेय उवाच ॥ एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ॥ जगाम लोकं स्वमखण्डितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥ मया यथाऽनूक्तमवादि ते हरेः कृतावतारस्य सुमित्र चेष्टितम् ॥ यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥ ॥ सूत उवाच ॥ इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम् ॥ क्षत्तानन्दं परं लेभे महाभागवतो द्विज ॥ ३३ ॥ अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ॥ उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ ३४ ॥ यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ॥ क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद्द्रुतम् ॥ ३५ ॥ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ॥ कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥ यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः ॥ शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्मवधादपि द्विजाः ॥ ३७ ॥ एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम् ॥ प्राणेन्द्रियाणां युधि शौर्यवर्धनं नारायणोऽन्ते गतिरङ्ग शृण्वताम् ॥ ३८ ॥ इति श्रीम० म० तृ० हिरण्याक्षवधो नाम एकोनविंशोऽध्यायः ॥ १९ ॥

त्वमुक्तम् । संकटादमोचयत् ॥ ३५ ॥ ३६ ॥ कारणेन पृथिव्युद्धरणादिना सूकररूपस्य हरेः ॥ ३७ ॥ एतद्धरेर्विक्रीडितं शृण्वतामन्ते श्रीनारायणो गतिर्भवति । महापुण्यं स्वर्गादिप्रदम् । अलं पवित्रमतिशयेन शोधकम् । धन्यं धनावहम् । यशस्यं कीर्तिकरम् । आयुरआशिषां च पदं स्थानं परित्राणं वा प्राणानामिन्द्रियाणां च पदम् । अङ्ग हे विदुर ॥ ३८ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥

१ येन प्रकारेण निराकृतो हतस्तत्प्रकारविशिष्टं चेष्टितं मया कथितमित्यन्वयः । २ कथामिति पूर्वश्लोकस्थं पदमत्रापि योजितमस्ति । ३ 'दैत्यापसद.' इति पाठः । ४ कतिपयैस्त्रिभिः । ५ स्थितौ पालनार्थं गृहीता विशुद्धसत्त्वात्मिका मूर्तिर्येन तस्मै विष्णुरूपाय । ६ ऋजुभिरकुटिलैर्नृभिः । अथवा सरलोपायैरित्यर्थः । ७ आदिना दैत्यवधभक्तविनोदपरिग्रहः ।

॥४३॥

विंशे वराहजन्मादिव्र्यवधानादथादितः ॥ सर्गोऽनुसार्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥ १ ॥ प्रतिष्ठां स्थानम् । अध्यस्य प्राप्य । सौते सूतस्य रोमहर्षणस्य पुत्र । अवरमर्वाचीनं जन्म येषां तेषां ईश्वरे लीनानां मार्गाय निर्गमाय कानि द्वाराणि कृतवान् । अर्वाचीनान्प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ विदुरमैत्रेयसंवादेनैवैतज्ज्ञास्यत इति तमेव संवादं प्रष्टुमाह—क्षत्तेति पञ्चभिः । श्रीकृष्णसुहृत्त्वे हेतुः—य इति । दुर्योधनादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रं मघवान्कृतापराध इति हेतोः श्रीकृष्णोक्तमन्त्रानादरात् यः तत्याज ॥ २ ॥ अनवरोऽन्यूनः । महित्वे महिम्नि ॥ ३ ॥ कुशावर्ते गङ्गाद्वारे ॥ ४ ॥ यत्किमपि

॥ शौनक उवाच ॥ महीं प्रतिष्ठामध्यस्य सौते स्वायंभुवो मनुः ॥ कान्यैन्वतिष्ठद्द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥
क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् ॥ यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥ द्वैपायनादनवरो
महित्वे तस्य देहजः ॥ सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥ किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया ॥
उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥ तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ॥ आपो गाङ्गा इवा-
घघ्नीर्हरेः पादाम्बुजाश्रयाः ॥ ५ ॥ ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ॥ रसज्ञः को नु तृप्येत हरिलीलामृतं
पिबन् ॥ ६ ॥ एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः ॥ भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥ ॥ सूत उवाच ॥
हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात् ॥ लीलां हिरण्याक्षमवज्ञया हतं संजातहर्षो मुनिमाह
भारतः ॥ ८ ॥ ॥ विदुर उवाच ॥ प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ॥ किमारभत मे ब्रह्मन् प्रब्रूह्यव्यक्त-
मार्गवित् ॥ ९ ॥ ये मरीच्यादयो विप्रा यस्तु स्वायंभुवो मनुः ॥ ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥
सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मसु ॥ आहोस्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥ ॥

पृच्छतु किं तवेति चेत्तत्राह—तयोरिति । अघघ्नीरघघ्यो नूनं कथाः प्रवृत्ताः ॥ ५ ॥ कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि यस्य हरेः ॥ ६ ॥ एवमिति व्यासवाक्यम् । उग्रश्रवा रोमहर्षणपुत्रः । नैमिषमयनमाश्रयो येषाम् । अर्पितमध्यात्मं मनो येन ॥ ७ ॥ गोरुद्धरणं लीलां हिरण्याक्षं चावज्ञया हतं निशम्य । भारतो विदुरः ॥ ८ ॥ यस्मात्त्वमव्यक्तमार्गवित् । ब्रह्मणो वा विशेषणम् ॥ ९ ॥ एतज्जगत् । अभावयन्नुत्पादयामासुः ॥ १० ॥ सद्वितीयाः सभार्याः । स्वतन्त्रा भार्यानपेक्षाः । कर्मसु प्रजासर्गादिषु । संहताः परस्परापेक्षाः । इदं जगत् ॥ ११ ॥ ॥ ॥ ॥ ॥

---

१ व्यवधानात् प्रासङ्गिकेन वराहजन्मतच्चरितादिना यद्व्यवधानं तस्माद्धेतोः । २ निर्गमाय ईश्वरान्निःसरणाय । ३ 'कान्यध्यतिष्ठत्' इति पाठः । ४ 'अनवमः' इत्यपि पाठः । ५ सर्वात्मनान्यव्यावृत्त्या । ६ सूतेत्यत्र नूनमिति पाठो युक्त इति टीकानुरोधाद्भाति । ७ पादाम्बुजविषयिण्य इत्यर्थः । ८ अत्र पद्ये प्रश्नत्रयं भार्यासहकारितया, तदनपेक्षतया, प्रजापत्यन्तरसहकारितयेति । दीपि० । ९ पृथिव्युद्धरणरूपामित्यर्थः । १० अव्यक्तस्य भगवतो मार्गं वेत्तीति तथाविधः अस्मदाद्यगोचरवस्तुवेत्ता । ब्रह्मविशेषणपक्षे ब्रह्मवर्त्मज्ञः ।

ब्रह्मा किमारभतेति प्रश्नस्य यक्षादीन् सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति—दैवेनेति सप्तभिः । मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति । दुर्वितर्क्येण दैवेन जीवादृष्टेन, परेण प्रकृत्यधिष्ठात्रा महापुरुषेणानिमिषेण कालेन च हेतुना भगवतो निर्विकाराज्जातक्षोभं यद्गुणत्रयं प्रधानं तस्मान्महानासीत् । तदुक्तं तन्त्रे 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ॥ प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥' इति ॥ १२ ॥ महतो जातो भूतादिरहंकारस्त्रिलिङ्गस्त्रिगुणः । रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतोऽहंकारोत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं भवतीति भावः । पञ्चशः तन्मात्राणि महाभूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि तत्तद्देवताश्चेति पञ्च पञ्च ससर्जेत्यर्थः ॥ १३ ॥ भौतिकं हैममण्डमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि सन्ति संहत्य ससृजुः ॥ १४ ॥ अन्ववात्सीदधिष्ठितवान् ॥ १५ ॥ सहस्रार्काणामिवोरुर्दीधितिर्यस्य तत् । सर्वजीव-

॥ मैत्रेय उवाच ॥ दैवेन दुर्वितर्क्येण परेणानिमिषेण च ॥ जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥१२॥ रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् ॥ जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः ॥ १३ ॥ तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ॥ संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥ सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः ॥ साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ॥ सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥ सोऽनुविष्टो भगवता यः शेते सलिलाशये ॥ लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥ ससर्ज छाययाऽविद्यां पञ्चपर्वाणमग्रतः ॥ तामिस्रमन्धतामिस्रं तमो मोहो महातमः ॥ १८ ॥ विससर्जात्मनः कायं नाभिनन्दंस्तमोमयम् ॥ जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥ क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ॥ मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥ ॥ ॥ ॥

निकायानामोकः स्थानं पद्मम् । स्वराट् ब्रह्मा ॥ १६ ॥ यः सलिलाशये गर्भोदकस्यान्तः शेते तेन भगवताऽनुविष्टोऽधिष्ठितः सन् । स स्वराट् । स्वया संस्थया नामरूपादिक्रमेण ॥ १७ ॥ छाया प्रभाप्रतियोगिनी तया । अबुध्येत्यर्थः । 'यस्त्वबुद्धिकृतः प्रभोः' इत्युक्तत्वात् । महातम इति महामोहः । स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः ॥ १८ ॥ तदेवं प्रथमोक्तां साधारणां सृष्टिमनूद्य केनचिद्विशेषेणासाधारणां सृष्टिमाह—विससर्जेत्यादिना यावत्समाप्ति । तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः । क्षुत्तृषोः समुद्भवो यस्यां ताम् । अत्र च 'याऽस्य सा तनूरासीत् तामपाहत सा तमिस्राभवत्' इत्यादिश्रुतिरनुसन्धेया ॥ १९ ॥ उपसृष्टा अभिभूताः । जग्धुमत्तुं भक्षयितुम् । यतो वयं क्षुत्तृड्भ्यामर्दिता अत एनं पिबतेति कृपया मा रक्षतेत्येके । अन्ये तु जक्षध्वं भक्षयतेति ब्रुवन्तः । जक्ष भक्षहसनयोरिति धातुः ॥ २० ॥ ॥ ॥ ॥ ॥

१ जातः क्षोभो गुणसाम्यत्यागो कार्योन्मुख्यव्यापारो वा यस्य तादृशम् । २ दैवयोगेन भगवच्छक्तिसंबन्धेन । 'यदा सहत्य चान्योन्यं भगवच्छक्तिचोदिता' इति द्वितीयोक्तेः दीपि० । ३ आण्डकोशस्तदन्तर्वर्ती विराड् वा । ४ कायं तन्मनोभावम् । ५ निकायाः समूहाः । ६ स्वया वेदेन स्वसिद्धनेकधा विचारितया । ७ सर्वेन सृष्टिक्रियाकर्मत्वेन द्वितीयास[illegible] मोह इति प्रथमाप्रयोगः नाम्ना स्वरूपकथनमात्रापेक्षया । दीपि० ।

अध्या. ॥२०॥

॥६४॥

देवो ब्रह्मा संविग्नो भीतः सन्मां मा जक्षत मा भक्षयत, किंतु रक्षत । अहो हे यक्षरक्षांसि, यूयं मे प्रजाः सुता बभूविथ जाताः स्थ । एवमुग्रस्वभावा यक्षराक्षसा जाता इत्यर्थः । तत्र ये जक्षध्वमित्यूचुस्ते यक्षाः, ये तु मा रक्षतेति ते राक्षसा इति ज्ञेयम् । एतच्च तिर्यगादितामससर्गस्याप्युपलक्षणम् ॥ २१ ॥ प्रभया दीव्यन् द्योतमानो या या देवता द्युतिमत्यः सात्त्विक्यस्तास्ताः प्रमुखतः प्राधान्येनासृजत् । ते देवाः । देवता इति स्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षया त इति पुंस्त्वेन प्रतिनिर्देशः । एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम् । तेन विसृष्टां त्यक्तां प्रभामहः दिवसरूपां सतीं देवयन्तः क्रीडयन्तोऽहार्षुर्जगृहुः ॥ २२ ॥ अदेवानिति च्छेदः । 'स जघनादसुरानसृजत' इति श्रुतेः । अतिलोलुपान् स्त्रीलम्पटान् । अभिपेदिरे प्राप्ताः ॥२३॥ परापतदपलायत ॥ २४ ॥ भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा तमुपैत्रज्य ॥ २५ ॥ पाहीति द्वाभ्यां प्रार्थितवान् । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥ लोकानां जनानाम् । तव अनासन्नावनाश्रितौ पादौ

देवस्तानाह संविग्नो मा मां जक्षत रक्षत॥ अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ॥ २१॥ देवताः प्रभया या या दीव्यन्प्रमुखतोऽसृजत् ॥ ते[4] अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः ॥ २२ ॥ देवोऽदेवान् जघनतः सृजति स्मातिलोलुपान् ॥ त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥ ततो हसन्स भगवानसुरैर्निरपत्रपैः ॥ अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥ स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ॥ अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥ पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ॥ ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो ॥ २६ ॥ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ॥ त्वमेकः क्लेशदस्तेषामनासन्नपदां तव ॥ २७ ॥ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ॥ विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥ तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम् ॥ काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥ अन्योन्यश्लेषयोत्तुङ्गनिरन्तरपयोधराम् ॥ सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥ ३० ॥ ॥ ॥ ॥

यैस्तेषाम् ॥ २७ ॥ विविक्तमसन्दिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य हरेः । घोरां कामकश्मलां स्वतनुं विमुञ्चेति उक्तवानिति शेषः । इत्युक्तश्च ब्रह्मा तां तनुं विमुमोच । सर्वत्र तनुत्यागो नाम तत्तन्मनोभावत्यागो विवक्षितः । ग्रहणं च तत्तद्भावापत्तिरिति द्रष्टव्यम् ॥२८॥ 'साऽहोरात्रयोः सन्धिरभवत्' इति श्रुतेः । सा तेन विसृष्टा तनुः सायन्तनी सन्ध्या बभूव । सा च कामोद्रेकवेला । असुराश्च राजसत्वात्स्त्रीलम्पटाः । अतस्तां सन्ध्यामेव स्त्रियं कल्पयित्वा ते संमोहं प्राप्ता इत्याह—तामिति त्रिभिः । नूपुराभ्यां क्वणती चरणाम्भोजे यस्याः । मदेन विह्वले लोचने यस्याः । काञ्चीकलापेन विलसद्दुकूलं तेन छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥ अन्योन्यं श्लेषयोपमर्देन हेतुनोत्तुङ्गौ निरन्तरौ पयोधरौ यस्याः । सुद्विजां सुदतीम् । स्निग्धो हासो लीलावलोकनं च यस्याः ॥ ३० ॥ ॥

१ अर्थमात्रेति । उभयत्रापि देवत्वरूपा जातिस्तुल्य एवार्थः । जातेरेव सर्वत्र प्रवृत्तिनिमित्तत्वादिति विवक्षयेत्यर्थः । एवं यक्षरक्षांसीत्यत्रापि क्लीबत्वेन निर्दिष्टानां तेषां देवस्तानाहेत्यत्र पुंस्त्वेन प्रतिनिर्देशोऽप्यर्थमात्रविवक्षयैवेति ज्ञेयम् । दीपि० । २ अदेवानिति विरोधे नञ् । ३ ""व्रज्य प्रार्थितवानिति शेषः । ४ 'तेऽहार्षुः' इति वीर० पाठः । तत्र रेफविश्लेषश्छान्दसः, ते अहार्षुरित्यत्र सन्ध्यभावोऽविवक्षया । ५ क्लेशदः स्वसांमुख्यं कर्तुं । ६ 'अन्योन्याश्लेषणोत्तुङ्ग' इति वीर० विज० पाठः । ७ अतो द्विपरार्धायुष्टं तस्य न व्याहन्यत इत्यर्थः । ८ श्लेषयेति लेखादिवत् लेषाप्यङ्गीकृता । यद्वा सुपां सुलुगित्यादिना यादेशः । क्रम० । ९ 'स्निग्धहासं लीलावलोकनं यस्याः' इति पाठः ।

गृह्णन्तीं वस्त्राञ्चलेनावृण्वानाम् । नीलानामलकानां वरूथः स्तोमो विद्यते यस्याः । हे धर्म विदुर, तां स्त्रियमुपलभ्य मत्वा ॥ ३१ ॥ संमूढानां विभावनाक्रममाह— अहो इति ॥३२॥ अभिसंभाव्य सत्कृत्य । विश्रम्भात्प्रणयात् । कुबुद्धयस्ते तां पप्रच्छुः ॥३३॥ कासीति त्रिभिः । कासि जाता । कस्य वा कन्या । हे भामिनि कोपने, रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तदसमर्पणेन नो विबाधसे॥३४॥किं जातिकुलादिप्रश्नेन या वा काचिद्भव । दिष्ट्येदं तावद्भद्रं जातं यत्तव दर्शनम् । किंतु केवलं नो मन उत्सुनोपि विमथ्नासि ॥३५॥ क्षुभितचित्तानां वाक्यं नैकत्रेति । हे शालिनि श्लाघ्ये । एकत्र न जयति न स्थिरीभवति । यद्वा नैकत्रानेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते । पतत्पतङ्गमुच्छलन्तं कन्दुकम् । बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यं विषीदति श्राम्यति । शान्ता मन्थरेव प्रसरति ।

गृह्णन्तीं व्रीडयात्मानं नीलालकवरूथिनीम् ॥ उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रियम् ॥ ३१ ॥ अहो रूपमहो धैर्यमहो अस्या नवं वयः ॥ मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥ वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् ॥ अभिसंभाव्य विश्रम्भात्पर्यपृच्छन्कुमेधसः ॥ ३३ ॥ कासि कस्यासि रम्भोरु को वार्थस्तेऽत्र भामिनि ॥ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥ या वा काचित्त्वमबले दिष्ट्या संदर्शनं तव ॥ उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥ नैकत्र ते जयति शालिनि पादपद्मं घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ॥ मध्यं विषीदति बृहत्स्तनभारभीतं शान्तेव दृष्टिरमला सुशिखासमूहः ॥ ३६ ॥ इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम् ॥ प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥ प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना ॥ कान्त्या ससर्ज भगवान्गन्धर्वाप्सरसां गणान् ॥ ३८ ॥ विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् ॥ त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा ॥ दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद्दृशौ ॥ ४० ॥ जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः ॥ निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते ॥ येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥ ॥

सुशिखासमूहः शोभनः केशकलापस्ते । पाठान्तरे सुशिखाः शोभनान्केशानवकीर्यमाणान्समूहः बधानेति । अत्र चास्तं गच्छन्सूर्य एव पतत्पतङ्गः, मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः, तम एव केशा इत्याद्यूह्यम् ॥३६॥ प्रमदेवाचरन्तीं स्त्रियं मत्वा जगृहुः ॥३७॥ प्रहस्यात्मानमात्मना जिघ्रन्त्या । कान्त्या सौन्दर्येण । प्रहसनमात्मावघ्राणं च सौन्दर्यानुभावचातुर्यविकारः ॥३८॥ ज्योत्स्नां चन्द्रिकारूपाम् । त एव गन्धर्वादिगणाः । विश्वावसुः पुरोगमो मुख्यो येषु ॥ ३९ ॥ आत्मनस्तन्द्रिणा आलस्येन । तांश्च मुक्तकेशान्वीक्ष्य नेत्रे निमीलितवान् ॥ ४० ॥ इन्द्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते । येनेन्द्रियविक्लेदेन हेतुनोच्छिष्टांश्च सतो धर्षयन्ति भ्रान्तान्कुर्वन्ति तं भूतादिगणमुन्मादं प्रचक्षते । तन्द्राजृम्भिकानिद्रोन्मादहेतुत्वेन भूतादीनां तनूनां च चातुर्विध्यमुक्तम् ॥ ४१ ॥ ॥

१ इदमार्थिकम् । २ मन्थरेव घूर्णायमानेव । ३ अकामेवाकामयमानेव । वीर० । ४ दुर्भगान् एतन्मूल्यद्रव्यहेतुभाग्यशून्यान् । दीपि० । ५ व्यञ्जितस्वाभियोगं यथा स्यात्तथा प्रहस्य । यद्वा भावोऽत्र सौन्दर्यजन्यो गर्वः, तेन गम्भीर तेष्वदत्तदृष्टित्वादिकं यथा तथा । दीपि० । ६ 'सुशिखाः समूहः' इत्येवंरूपे । ७ सौन्दर्येति सौन्दर्यविषयको योऽनुभावः सूचनं तद्विषयकं यचातुर्यं तत्सूचको विकारः । ८ आत्मनो देहिनस्तन्द्री सुखव्यापादानाद्विलक्षणामुत्पादयतीत्यात्मतन्द्री तेन जृम्भणाख्येन देहेन ।

ऊर्जस्वन्तं बलवन्तम् । परोक्षेणादृश्यरूपेण ॥ ४२ ॥ आत्मनः सर्गो यस्मात्तम् । यद्येन कार्येण संप्रदानत्वनिमित्तेन । कवयः कर्मकोविदाः । साध्येभ्यः
पितृभ्यश्च स्वपितृरूपेभ्यः । वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ तिरोधानेन दृश्यत्वे सत्यप्यन्तर्धानशक्त्या ॥ ४४ ॥ प्रत्यात्म्येन प्रति-
बिम्बेन । आत्माभासं प्रतिबिम्बमात्मनात्मनो मानः प्रतिबिम्बदर्शिनः सुन्दरस्य शिरःकम्पादिचेष्टा । अत एव तत्सृष्टानां मिथः संमाननेन नित्यं मिथुनी-
भावः ॥ ४५ ॥ तत् प्रतिबिम्बरूपम् । कर्मभिस्तत्पराक्रमानुवर्णनैः ॥ ४६ ॥ भोग आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन । अनुपचिते वृद्धिमप्राप्ते ।
तत् भोगक्रोधादियुक्तम् ॥ ४७ ॥ असुतोऽमुष्माद्देहाद्ये केशा अहीयन्त प्रच्युतास्तेऽहयो जाताः । प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽमुष्मात्सर्पाः । अत एव

ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः ॥ ४२ ॥ त आत्मसर्गं
तं कायं पितरः प्रतिपेदिरे ॥ साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥ सिद्धान्विद्याधरांश्चैव तिरोधा-
नेन सोऽसृजत् ॥ तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥ सकिन्नरान्किंपुरुषान् प्रत्यात्म्येनासृजत्प्रभुः ॥
मानयन्नात्मनात्मानमात्माभासं विलोकयन् ॥ ४५ ॥ ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना ॥ मिथुनीभूय गाय-
न्तस्तमेवोषसि कर्मभिः ॥ ४६ ॥ देहेन वै भोगवता शयानो बहुचिन्तया ॥ सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह
तद्वपुः ॥ ४७ ॥ येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे ॥ सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥
स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ॥ तदा मनून्ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥ तेभ्यः सोऽत्य-
सृजत्स्वीयं पुरं पुरुषमात्मवान् ॥ तान्दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥ अहो एतज्जगत्स्रष्टः
सुकृतं बत ते कृतम् ॥ प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदाम हे ॥ ५१ ॥ तपसा विद्यया युक्तो योगेन सुसमा-
धिना ॥ ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥ ॥ ॥ ॥

अगा न भवन्तीति नागाः । अतिवेगवन्त इत्यर्थः । भोगवतो जातत्वाद्भोगेन फणेनोरुर्विस्तीर्णा कन्धरा येषाम् । सर्वे चैते तत्क्रोधयोगात्क्रूराः । तेषाम-
वान्तरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥ ४८ ॥ यदा मन्यमानोऽभूत्तदा मनून्ससर्ज ॥ ४९ ॥ तेभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहमत्यसृजद्ददौ ।
तान्मनून् ॥ ५० ॥ ते त्वया यत्कृतं तत्सुकृतम् । सुकृतत्वमाहुः । यस्मिन्मनुसर्गे । क्रिया अग्निहोत्राद्याः । अतोऽस्मिन्सर्वे वयं साकं सहान्नं हविर्भागा-
न्यदाम भक्षयाम । हे ब्रह्मन् ॥ ५१ ॥ कायसृष्टिमुक्त्वा ऋषीणां सृष्टिमाह—तपसेति । विद्या उपासना । योगोऽत्रासनादिः । सुसमाधिर्वैराग्यैश्वर्यादियुक्तः
समाधिः तेन च युक्तः । हृषीकेशः स्ववशेन्द्रियः सन् । ऋषिर्ब्रह्मा ऋषीन्प्रजाः ससर्ज ॥ ५२ ॥ ॥ ॥

१ आत्मानं शरीरम् । २ प्रतिबिम्बगतसौन्दर्यातिशयदर्शनेनात्मानं सुन्दरं मानयन्निति योजनीयम् । ३ चिन्तया सृष्टिविषयिण्या । ४ कर्मणा लोकोद्भवहेतून्, धर्मादिप्रवर्तनेन सर्वलोक-
पालकान्वा । ५ आत्मवान् समष्टिजीवत्वात्सर्वाश्रयः । 'आत्मनः' इति पाठे परमात्मनः प्रकाशस्थानम् इति दीपि० । ६ अथवा उरुशब्दस्य मध्ये प्रयोगादुरुभोगा उरुकन्धराश्चेति सुबो० ।

किं तद्देहं यस्यांशमदादित्यत आह—यदिति । समाधिश्च योगश्च ऋद्धिश्च ऐश्वर्यं तपश्च विद्या च विरक्तिश्च विद्यन्ते यस्मिंस्तत् ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ एकविंशे तपोविद्यातोपितेन तु विष्णुना ॥ कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ १ ॥ एधिरे एधांचक्रिरे ॥ १ ॥ धर्मं महीं च यथा जुगुपतुः ररक्षतुस्तन्मे वदेति तृतीयेनान्वयः ॥ २ ॥ तस्य मनोः ॥ ३ ॥ योगलक्षणैर्यमादिभिर्युक्तायाम् । कतिधा वीर्यं ससर्ज । कति पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ मानवीं मनोः कन्यामाकूतिं च प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारस्यार्थः ॥ ५ ॥ सहस्राणां समा दश । दशसहस्राणि संवत्सरानित्यर्थः ॥ ६ ॥ ततस्तस्मिंस्तपसि । क्रियायोगेन पूजाप्रकारेण ।

तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ॥ यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥५३॥ इति श्रीम० म० तृ० विंशतितमोऽध्यायः ॥ २० ॥ ॥छ॥ विदुर उवाच ॥ स्वायंभुवस्य च मनोर्वंशः परमसंमतः ॥ कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः ॥१॥ प्रियव्रतोत्तानपादौ सुतौ स्वायंभुवस्य वै॥यथा धर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥२॥ तस्य वै दुहिता ब्रह्मन् देवहूतीति विश्रुता ॥ पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयानघ ॥ ३ ॥ तस्यां स वै महायोगी युक्तायां योगलक्षणैः ॥ ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥४॥ रुचिर्यो भगवान्ब्रह्मन् दक्षो वा ब्रह्मणः सुतः ॥ यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥५॥ ॥ मैत्रेय उवाच ॥ प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः ॥ सरस्वत्यां तपस्तेपे सहस्राणां समा दश॥६॥ततः समाधियुक्तेन क्रियायोगेन कर्दमः ॥ संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥७॥ तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे ॥ दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥८॥ स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ॥ स्निग्धनीलालकव्रातवक्त्राब्जं विरजोऽम्बरम् ॥ ९ ॥ किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम् ॥ श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥१०॥ विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः ॥ दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकन्धरम् ॥११॥ जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ॥ गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृताञ्जलिः ॥ १२ ॥ ॥

संप्रपेदे सिषेवे । प्रपन्नेभ्यो भक्तेभ्यो वरदातारम् ॥ ७ ॥ शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्तं प्रत्यात्मानं दर्शयामास ॥ ८ ॥ स कर्दमस्तं खेऽवस्थितं दृष्ट्वा मूर्ध्ना क्षितावपतत् । गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः । पद्मोत्पले दिनरात्रिविकासे । सितानां पद्मानामुत्पलानां च स्रक् यस्य तम् । स्निग्धा नीलाश्च येऽलकास्तेषां व्रातो वक्त्राब्जे यस्य ॥ ९ ॥ श्वेतोत्पलं क्रीडनकं यस्य । मनःस्पर्शं मनसानन्दजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥ वक्षसि श्रीर्यस्य । कौस्तुभः कन्धरायां यस्य ॥ ११ ॥ प्रीतिरेव स्वभावः स्वतःसिद्धो धर्मो यस्य तथाविध आत्मा मनो यस्य ॥ १२ ॥ ॥ ॥ ॥

१ विष्णुनेति विष्णुकर्तृकेत्यर्थः । २ वीर्यशब्दस्य वीर्यजन्यपुत्रेषु लक्षणा । ३ सहस्राणामिति बहुवचनमार्षं, सहस्रसंख्यामात्रस्य विवक्षितत्वात् । ४ 'परमपावनः' इति पाठः । ५ 'देवहूतिरिति श्रुता' इति पाठः । ६ गरुत्मत इति कर्दमसृष्टेः पूर्वं विनताया जन्माभावाद्गरुडस्य नित्यसिद्धत्वं व्यञ्जितम् इति दीपि० । ७ स्वाभिप्रायं निवेदयन्नस्तौषीत् इति प्रदी० ।

त्वामृते परमानन्दं धिगन्यवरकामुकम् ॥ अथापि कृपणं मानुगृहाण वरदानतः ॥ १ ॥ बतेति हर्षे । हे ईड्य, नोऽस्माभिः समग्रसत्त्वनिधेस्तव दर्शनादद्याक्ष्णोः
सांसिध्यं साफल्यं जुष्टं सेवितम् । त्वद्दर्शनमेव महाफलमित्युपपादयति । यस्य तव दर्शनं सद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभी रूढो विरूढो योगो यैस्तेऽपि
॥ १३ ॥ सकामभक्तान्विगर्हयन्नाह—य इति । हे ईश, ये निरयेऽपि स्युस्तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते । त्वं तु तेषां तान्कामानपि
रासि ददासि ॥ १४ ॥ यः सकामान्निन्दामि सोऽहमपि तादृश एवेत्याह—तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमि-
च्छन्कामदुघाङ्घ्रिपस्य कल्पद्रुमस्य तव मूलमङ्घ्रिमुपेयिवानुपगतोऽस्मि । ननु कामाद्यर्थमन्यत्किमप्युपास्यताम्, न । यतोऽशेषस्य पुरुषार्थस्य मूलमेतदेव ॥ १५ ॥ ननु
तर्हि मुक्त्यर्थमेव किं न भजसि, अनधिकारादित्याह । हे अधीश, यस्त्वं प्रजापतिस्तस्य तव वचसा तन्त्याऽयं कामहतो लोकः पशुवद्बद्धः हे शुक्ल शुद्धधर्ममूर्ते,
अहं च किल लोकानुगतः । अतस्तुभ्यं बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते । अनिमिषाय कालात्मने । तदर्थं भार्यां चेच्छामीति चकारस्यार्थः । न केवलं

॥ ऋषिरुवाच ॥ जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः ॥ यद्दर्शनं जन्मभिरीड्य सद्भिराशासते
योगिनो रूढयोगाः ॥ १३ ॥ ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ॥ उपासते कामलवाय तेषां
रासीश कामान्निरयेऽपि ये स्युः ॥ १४ ॥ तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम् ॥ उपेयिवान्मूल-
मशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥ प्रजापतेस्ते वचसाधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः ॥
अहं च लोकानुगतो वहामि बलिं च शुक्लाऽनिमिषाय तुभ्यम् ॥१६॥ लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते
चरणातपत्रम् ॥ परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥ न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं
त्रिशतं षष्टिपर्व ॥ षण्नेम्यनन्तच्छदि यत्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥ ॥ ॥

लोकानुगतो बलिं वहामि किंतु ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥१६॥ अनिमिषायेत्यनेन कालात्मकात्त्वत्तो भीतः कर्म करोमीत्युक्तम् । एतत्तु भयं त्वद्भ-
क्तानां नास्तीत्याह द्वाभ्याम् । लोकान्कामाभिभूतांस्ताननुसृतान्पशूंश्च । विवेके सत्यपि पुनः कर्मजडान्माद्दशान्हित्वाऽनादृत्य ये तव चरणरूपमातपत्रं श्रिताः ।
तानेवाह । त्वद्गुणानां वादः कथा तदेव सीधु मदिरा संसारविस्मारकत्वात् । पीयूषं रुचिकरत्वात् । तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासादयो यैः
एषामित्युत्तरेणान्वयः ॥ १७ ॥ तव यत्रिणाभि कालचक्रं तज्जगदाच्छिद्याकृष्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथंभूतम् । अजरं ब्रह्म
तस्मिन्नक्षरूपे भ्रमिर्भ्रमणम् । भ्रमदिति वक्तव्येऽतिभ्रमणशीलत्वादुपचारेण भ्रमिरित्यभेदनिर्देशः । अधिकमासेन सह त्रयोदश मासा अरा यस्य । त्रिशतं
षष्टिश्चाहोरात्राः पर्वाणि यस्य । शतशब्दे विभक्तेरलुगार्षः । षड् ऋतवो नेमयो यस्य । अनन्ताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य ।
त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य । करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव संवत्सरात्मकं चक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥ ॥

१ त्वामृत इति समस्तवस्तुवाक्याभिप्रायमेकेन व्याचष्टे इति दीपि० । २ अत्र वीरराघवादिभिः नोऽस्माकमक्ष्णोरितिपष्ठ्येव व्याख्याता । ३ मूलं कारणमेतदेव चरणारविन्दमेव ।
४ तदर्थं कर्माज्ञानुवर्तनार्थम् । ५ अत्र ऋषिः कर्दमः । ६ शुद्धभक्तैर्लोकसकोचादिना काम्यकर्माग्रहो न कर्तव्य इति विवेके सत्यपि इति दीपि० । ७ अभेदनिर्देश इति । भ्रमेर्धर्मत्वा-
च्चक्रस्य च धर्मित्वाद्यद्यपि भ्रमदिति वक्तव्यं तथापि आयुर्घृतमितिवदुपचारेण सादृश्यप्रतीत्याऽभेदनिर्देशः । प्रयोजनं च भ्रमेरनुपरम इति प्रयोजनवती लक्षणा इति दीपि० ।

नन्वु निरुपाधिमुदासीनं मां किं याचसे तथापि मायया विश्वसृष्ट्यादिकर्तृत्वात्त्वमेव याच्य इत्याह । स्वयमेक एव सन्नप्यात्मन्यधिकृतया योगमायया हेतुभूतया याः स्वीकृताः शक्तयः सत्त्वाद्यास्ताभिः । अदो विश्वम् । स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टान्तः यथेति ॥ १९ ॥ यद्यपि मायिकत्वाद्भक्तेभ्यो विषयसुखं दातुं नेच्छसि तथाप्यस्मदभिप्रायानुसारेण तत्संपादयेत्याह—नैतदिति । हे अधीश, नोऽस्माकं भजतां भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया तनुषे विस्तारयसीति यदेतत्तव यद्यपीप्सितं न भवति तथाप्यस्मदनुग्रहायास्तु । ऋणत्रयापाकरणानन्तरमेवापवर्गाय भवत्वित्यर्थः । यर्हि यतो मायया परिच्छिन्न इव लसन्त्या तुलस्या युक्तस्त्वं विलक्षितोऽसि । एवंभूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥२०॥ तं त्वा त्वां भुक्तिमुक्तिप्रदं नमामि । मुक्तिदत्वे हेतुः—

एकः स्वयं सञ्जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया ॥ सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगव-न्स्वशक्तिभिः ॥१९॥ नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ॥ अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या भगवान्विलक्षितः[3] ॥ २० ॥ तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमाययावर्तितलोकतन्त्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥ ॥ ऋषिरुवाच[4] ॥ इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमावभाषे वचसा-ऽमृतेन ॥ सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥ ॥ श्रीभगवानुवाच ॥ विदित्वा तव चैत्यं मे पुरैव समयोजि तत् ॥ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् ॥ भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥ प्रजापतिसुतः सम्राण्मनुर्विख्यातमङ्गलः ॥ ब्रह्मावर्तं योऽधिवस-ञ्शास्ति सप्तार्णवां महीम् ॥२५॥ स चेह विप्र राजर्षिर्महिष्या शतरूपया ॥ आयास्यति दिदृक्षुस्त्वां परश्वो धर्म-कोविदः ॥२६॥ आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् ॥ मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो ॥२७॥ समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ॥ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥ ॥

अनुभूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् । भोगदत्वे हेतुः—स्वमायया आवर्तितं लोकतन्त्रं विश्वोपकरणं येन । अतः सकामैर्निष्कामैश्च नमनीयं पादसरोजं यस्य तम् । तत्राल्पीयसि सकामे पुंसि भजने वा कामान्वर्षतीति तथा तम् ॥ २१ ॥ अमृतेन सुखकरेण । प्रेमस्मिताभ्यामीक्षणेन विभ्रमन्ती भ्रूर्यस्य ॥ २२ ॥ चैत्यं हार्दं भावम् । मे मया समयोजि संघटितम् । यदर्थमेवाहं समर्चितस्तत् ॥ २३ ॥ मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् । त्वादृशेष्वतितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥ विख्यातं मङ्गलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ हे विप्र । महिष्या सह ॥ २६ ॥ २७ ॥ यत्र यस्यां भार्यायाम् । समाहितमभिसंन्धानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥ ॥ ॥ ॥

१तथापि निरुपाधितयोदासीनत्वेपि । २'भगवानिति' पाठः। ३ 'तनुवा विलक्षितः' इति पाठः स तु स्वाम्यसमतः। टीकायां लसन्ती तुलसी यस्यामिति बहुव्रीहिणा तनुविशेषणत्वेनान्वयसामञ्जस्ये लसन्त्या तुलस्या युक्तस्त्वमिति युक्तपदाध्याहारात्तनुपदस्यानुल्लेखाच्च ।४ऋषिर्मैत्रेयः।५यद्यपि प्रियव्रतरथखातरूपाणामर्णवाना तदानीमुत्पत्तेरभावात्सप्तार्णवत्वं न संगच्छते तथापि भाविनि भूतवदुपचारः।६ 'वेऽनघः' इति पाठः।७दशसहस्रवर्षपर्यन्तं।८आवर्तितं संपादितं पुनःपुनः कृतं वा ।९सगृभित इत्यत्र 'हृग्रहो.' इति हस्य भकारो ग्रस्वत्वं चार्षं।'संगृभितात्मसु'इति पाठः।१०इच्छया ।

ते वीर्यमात्मनि भृतं धृतं या प्रसविष्यति सा भजिष्यति । वीर्ये वीर्यप्रसूतासु कन्यासु । अञ्जसा आत्मने पुत्रानाधास्यन्ति ॥ २९ ॥ निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः । तीर्थं पात्रं, तेन दानं लक्ष्यते । मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥ गार्हस्थ्येन दयां कृत्वा संन्यासेनाभयं दत्त्वा मय्यात्मानं जगच्च [1]सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ [2]त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः ॥ ३२ ॥ [3]प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः । सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ अशेषैस्तपोमन्त्रादिसिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुण्ठमार्गो यस्य । [4]यद्वा अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ । पत्ररथेन्द्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं साम आकर्णयन्, 'बृहद्रथन्तरे पक्षौ' इति श्रुतेः । उच्चारितं स्तोमं च सामाधारभूतानामृचां समुदायं

या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ॥ वीर्ये त्वदीये ऋषय आधास्यन्त्यञ्जसात्मनः ॥ २९ ॥ त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः ॥ मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ॥ मय्यात्मानं सह जगद्द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥ सहाहं स्वांशकलया त्वद्वीर्येण महामुने ॥ तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥ ॥ मैत्रेय उवाच ॥ एवं तमनुभाष्याथ भगवान्प्रत्यगक्षजः ॥ जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥ निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेन्द्रपक्षैरुच्चारितं स्तोमसुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ॥ आस्ते स बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥ मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ॥ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥ तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत् ॥ उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥ यस्मिन्भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः ॥ कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥ तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ॥ पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥ ॥ ॥ ॥

शृण्वन् । 'स्तोम आत्मा' इति श्रुतेः । [5]समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य साम्न इति ॥ ३४ ॥ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥ शातकौम्भाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ हे सुधन्वन्विदुर । यदहः ॥ ३७ ॥ तत्प्रवेशमात्रेण परमानन्दं प्राप्त इति दर्शयितुमाश्रमं वर्णयति—यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ शिवमारो[6]ग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥ कूजन्तः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥ ॥ ॥ ॥

१ एकीभूतं अधिष्ठानाभिन्नम् । २ त्वद्वीर्येण त्वत्तपःप्रभावेण तज्जन्येन यशसा सहेत्यर्थः । ३ प्रत्यग्भूतेषु निरुद्धेषु । ४ सिद्धशब्दस्य वैकुण्ठवाचकत्वमप्रसिद्धमित्यतो यद्वेति । ५ समासपाठे उच्चारितस्तोममित्येवंरूपे । ६ आरोग्यमारोग्यजनकमित्यर्थः । रोगेत्यपि पाठोऽस्ति ।

घुष्टं नादितम् । मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । आह्वयन्तो मिथो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ कदम्बादिभिर्वृक्षैरलंकृतम् ॥ ४२ ॥ कारण्डवादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥ हरिणादिभिर्वृतम् । तत्र क्रोडः सूकरः । श्वाविच्छल्लकः । मर्को मर्कटः । तद्विशेषो गोपुच्छः । हरिर्वानरः सिंहो वा । नाभिः कस्तूरीमृगः ॥ ४४ ॥ हुतो हुताशनो ब्रह्मचारियोग्यो येन ॥ ४५ ॥ उग्रा युक् योगो यस्य तेन वपुषा विद्योतमानम् । तस्य भगवतो व्याहृतं भाषणमेवामृतकला अमृतमयस्य चन्द्रस्य कला तन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं सन्तमप्यकृशम् ॥ ४६ ॥ पांशुसुन्नतम् । उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वेव क्रिया । अर्हतेऽनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं

मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥ कदम्बचम्पकाशोककरञ्जबकुलासनैः ॥ कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥ कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः ॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥४४॥ प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः ॥ ददर्श मुनिमासीनं तस्मिन्हुतहुताशनम् ॥ ४५ ॥ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ॥ नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ॥ तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥ प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ उपसंसृत्य मलिनं यथार्हणमसंस्कृतम् ॥ ४७ ॥ अथोटजमुपायातं नृदेवं प्रणतं पुरः ॥ सपर्यया पर्यगृह्णात्प्रतिनन्द्यानुरूपया ॥ ४८ ॥ गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥ नूनं चंक्रमणं देव सतां संरक्षणाय ते ॥ वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥ योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ॥ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥ न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ॥ विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥ स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः ॥ विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥ ॥ ॥

यथा मलिनं दृश्यते तद्वत् ॥४७॥ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभिनन्द्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥४८॥ ४९ ॥ ते चंक्रमणं पर्यटनम् । हि यस्मात् ॥५०॥ मनुस्थं विष्णुं प्रणमति—य इति । स्थाने तत्तत्कार्यावसरे शुक्लाय विष्णवे ॥५१॥ न यदेति पञ्चानामयमर्थः—यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसङ्गादप्यागमनं संभवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति । जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मण्डलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । विस्फूर्जन्नादं कुर्वच्चण्डं कोदण्डं धनुर्यस्य ॥ ५२ ॥ स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितम् ॥ ५३ ॥ ॥४८॥

१ वल्गु मधुर सुन्दर वा । २ आदिराजो मनुः । ३ भगवदादेश आयास्यति दिदृक्षुस्त्वामित्यादि दीपि० । ४ अत्र कर्दम उवाचेति क्वचित् । ५ रथेन रथनादेन । ६ अघान्दस्यून् धर्मविरोधिनश्च । ७ अर्पिताः खचिताः ।

वर्णाश्रमाणां निबन्धनं यैः । बत अहो ॥ ५४ ॥ निरङ्कुशैर्नृभिर्निर्निमित्तभूतैः । शयाने निश्चिन्ते ॥ ५५ ॥ निर्व्यलीकेन सहर्षेण । प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥ एवमाविष्कृतोऽभिष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः । सव्रीड इव स्वकीर्तिश्रवणात्, प्रत्याख्यानशङ्कया वा तं मुनिमुवाच । उपारतं निवृत्तिनिरतम् ॥ १ ॥ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्यन् युष्मदस्मत्संबन्धस्तावदीश्वरेण पूर्वमेव घटित इत्याह—ब्रह्मेति सार्धाभ्याम् । आत्मनः परीप्सया पर्याप्तुमिच्छया । छन्दोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया । युष्मान् ब्राह्मणान् ॥ २ ॥ तत्त्राणाय ब्राह्मणपालनाय । ब्रह्म ब्राह्मणजातिः । क्षत्रं क्षत्रियजातिः ॥ ३ ॥ एवं स देव एव रक्षति स्म । कोऽसौ । यः सदसदात्मकः सर्वात्मकः । तथाप्यव्ययो निर्विकारः ॥ ४ ॥ तं विज्ञापयितुमेव तद्दर्शनादिकमभिनन्दति—तवेति त्रिभिः ॥ ५ ॥ अकृतात्मनामवशीकृतचित्तानाम् ॥ ६ ॥ अनुग्रहोऽनुशासनादिरूप एव । उशतीरुशत्यः ॥ ७ ॥ विज्ञापयति—स भवानिति सप्तभिः । दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य । श्रावितं विज्ञापनम् ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशङ्का निरस्ता । मम सुतेति क्षत्रकन्या तव योग्येति दर्शितम् ॥ ९ ॥ ॥ ॥ ॥

तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ॥ भगवद्रचिता राजन् भिद्येरन्बत दस्युभिः ॥५४॥ अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ॥ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनंक्ष्यति ॥ ५५ ॥ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ॥ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥५६॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे एकविंशतितमोऽध्यायः ॥२१॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् ॥ सव्रीड इव तं सम्राडुपारतमुवाच ह ॥१॥ ॥ मनुरुवाच ॥ ब्रह्मासृजत्स्वमुखतो युष्मानात्मपरीप्सया ॥ छन्दोमयस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥ तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपात् ॥ हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥३॥ अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः ॥ रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥४॥ तव संदर्शनादेव च्छिन्ना मे सर्वसंशयाः ॥ यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम् ॥ दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥६॥ दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान् ॥ अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥ स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम ॥ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ॥ अन्विच्छति पतिं युक्तं वयःशीलगुणादिभिः ॥ ९ ॥ ॥

१ प्रत्याख्यानं निषेधः । २ तपः कर्मयोगः, विद्या भगवदुपासना, योगो ज्ञानयोगस्तैर्युक्तान् । ३ हृदयं ज्ञानशक्तिप्राधान्यात् । ४ अङ्गं क्रियाशक्तिप्राधान्यात् । ५ स्वयं प्रश्नं विनैव । ६ अपावृतैर्बाधिर्यानवधानादिदोषाच्छन्नैः । बहुत्वं स्पृहयानेकायमानत्वात् । दीपि० क्रम० । ७ वयआद्यनुसंधानं तत्कथनं च तादृशानां धर्मसाचिव्यप्राधान्येनैवेति न लज्जाकरम् इति क्रम० ।

एषा देवहूतिः ॥१०॥ प्रतीच्छ स्वीकुरु ॥११॥ उद्यतस्य स्वतःप्राप्तस्य विषयस्य । प्रतिवादः प्रत्याख्यानम् ॥१२॥ कीनाशं कृपणम् । अवज्ञया परापमानेन ॥१३॥ यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः । मे प्रत्तां मया दत्ताम् ॥ १४ ॥ अप्रत्ता चेति मय्येव कृतनिश्चयत्वात्कस्मैचित्प्रतिश्रुता च न भवतीत्यर्थः । आद्यः प्रथमः, ततः पूर्वं विवाहाभावात् । मुख्य इति वा ॥ १५ ॥ भूयाद्भवेत् । प्रतीतः 'गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या' इत्यादिमन्त्रप्रसिद्धः । स्वयाङ्गकान्त्यैव । श्रियं भूषणादिशोभाम् ॥ १६ ॥ यां विलोक्य न्यपतत् । संमोहेन विमूढं व्याकुलं चेतो यस्य । क्वणद्भ्यामङ्घ्रिभ्यां शोभा यस्याः ॥ १७ ॥ तां ललनानां ललामं भूषणभूताम् । असेवितौ श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्याम् । उच्चपद उत्तानपादस्य । अभियातां स्वयं प्राप्ताम् ॥ १८ ॥ भजिष्ये स्वीकरिष्ये । 'यावद-





यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां[3] मया ॥ सर्वात्मनाऽनुरूपां[4] ते गृहमेधिषु[5] कर्मसु ॥ ११ ॥ उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ॥ अपि निर्मुक्तसङ्गस्य[6] कामरक्तस्य किं पुनः ॥१२॥ य उद्यतमनादृत्य कीनाशमभियाचते ॥ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥ १३ ॥ अहं त्वाऽशृणवं विद्वन्विवाहार्थं समुद्यतम् ॥ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥ १४ ॥ ॥ ऋषिरुवाच ॥ बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा ॥ आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥ कामः स भूयान्नरदेव तेऽस्याः पुत्र्याः समाम्नायविधौ प्रतीतः ॥ क एव ते तनयां नाद्रियेत स्वयैव[7] कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥ यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम्[8] ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७॥ तां प्रार्थयन्तीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥ अतो भजिष्ये समयेन साध्वीं यावत्तेजो विभृयादात्मनो मे ॥ अतो[9] धर्मान्पारमहंस्यमुख्यान् शुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान् ॥ १९ ॥ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाव[10] तिष्ठते ॥ प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥ ॥

पत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यासः' इति भाषाबन्धः समयः । तमेवाह । यावदात्मनो मम तेजो गर्भं बिभृयात् । यद्वा ममात्मनो देहाच्च्युतं तेजो वीर्यं बिभृयादिति । अतः परं पारमहंस्यं ज्ञानं तस्मिन्मुख्यान् शुक्लेन विष्णुना साक्षात्प्रकर्षेणोक्तानविहिंस्रान्हिंसारहितान् शमादीन्बहु यथाभवत्येवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह—यत इति । संस्थास्यते च लयं यास्यति । वांवेति एवार्थे । ऋणत्रयापाकरणानन्तरं संन्यास एव मादृशानां भगवतोक्त इत्यर्थः ॥ २० ॥ ॥ ॥ ॥ ॥

॥४९॥

१ आद्यो ब्राह्मो विवाहविधिः । २ उच्चपद इति प्रियव्रतस्य तदानीं विरागश्रवणादुत्तानपादमात्रकथनम् इति क्रम० । ३ उपहृतां समर्पिताम् । ४ सर्वात्मना सर्वथा । ५ गृहमेधिषु गृहस्थाश्रमसम्बन्धिषु । 'गृहमेधेषु' इत्यपि पाठः । ६ विषयोपार्जनेऽपि मनस्यनासक्तस्य । ७ 'स्वयाङ्गकान्त्या' इति पाठः । अयमेव टीकानुरोधाद्युक्तः । ८ 'विह्वलाङ्गीम्' इति पाठः । ९ 'ततो धर्मात्' इति पाठः । १० वेत्येवार्थे इति पाठे अवतिष्ठते इत्यात्मनेपदं संगच्छते ।

हे उग्रधन्वन्विदुर। लुलुभे मुनेर्मुखेन प्रलोभ्यते स्म। यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥ स मनुः। अन्वनन्तरम्। महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा ॥ २२ ॥ पारिबर्हान्विवाहकाले प्रदेयान्। भूषाः भूषणानि वासांसि परिच्छदान्गृहोपकरणानि च ॥ २३ ॥ प्रत्तां दत्ताम्। सदृक्षाय सदृशाय। गता व्यथा चिन्ता यस्य। औत्कण्ठ्येनोन्मथितः क्षुभित आशयो यस्य ॥ २४ ॥ तस्या विरहं सोढुं हे अम्ब हे वत्से इति ब्रुवन्। सन्धिरार्षः। शिखाः केशानासिञ्चत् ॥ २५ ॥ २६ ॥ ऋषिकुलहितायाः उभयोः सुरोधसोः शोभनतटयोः ॥ २७ ॥ अभिप्रेत्य ज्ञात्वा ब्रह्मावर्तादेशात्प्रजाः पतिं प्रत्युज्जग्मुः ॥ २८ ॥ कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह—यत्र बर्हिष्मती नाम पुरीति। साऽपि कुत्र। यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति। यत्रेति सर्वत्र संबध्यते

॥ मैत्रेय उवाच ॥ स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ॥ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥ सोऽनु ज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ॥ तस्मै गुणगणाढ्याय ददौ तुल्यां[1] प्रहर्षितः ॥२२॥ शतरूपा महाराज्ञी[2] पारिबर्हान्महाधनान् ॥ दम्पत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥२३॥ प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ॥ उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥ अशक्नुवंस्तद्विरहं मुञ्चन्बाष्पकलां मुहुः ॥ आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥ आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः ॥ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥२६॥ उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ॥ ऋषीणामुपशान्तानां पश्यन्नाश्रमसंपदः ॥२७॥ तमायान्तमभिप्रेत्य ब्रह्मावर्तात्[3] प्रजाः[4] पतिम् ॥ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥ बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता ॥ न्यपतन्यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥२९॥ कुशाः काशास्त एवासन् शश्वद्धरितवर्चसः ॥ ऋषयो यैः पराभाव्य यज्ञघ्नान्यज्ञमीजिरे ॥ ३० ॥ कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः ॥ अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम् ॥ ३१ ॥ बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ॥ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ ३२ ॥ ॥ ॥

॥ २९ ॥ बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसङ्गाद्देशस्य श्रैष्ठ्यमाह द्वाभ्याम्। कुशाः काशाश्चासन्। शश्वन्नित्यं हरितं वर्चो वर्णो येषाम्। यज्ञघ्नान् राक्षसादीन्। पराभवं नीत्वा यज्ञं विष्णुम् ॥ ३० ॥ यज्ञपुरुषं विष्णुं यत इति यत्रायजत्। भुवं स्थानम्। लब्धेति तृन्प्रत्ययान्तम्। लब्धवान्सन्नित्यर्थः। यतो लब्धवांस्तं यज्ञपुरुषमिति वा। एतेन स्वर्गादपि भूमिः श्रेष्ठा, तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥ प्रस्तुतमाह। यां बर्हिष्मतीं नाम पुरीं समावसत्। पूर्वं यस्यामुषितस्तस्यां निर्विश्य भवनं प्रविष्टः सन् भोगान्बुभुज इत्यन्वयः ॥ ३२ ॥ ॥ ॥ ॥

१ तुल्यां तादृशगुणगणाढ्याम्। २ 'मनोः पत्नी' इति पाठः। ३ 'ब्रह्मावर्तान्' इति द्वितीयान्तपाठे तान्प्रति आयान्तमित्यन्वयः। ४ 'प्रजापतिम्' इति समस्तपाठे प्रजाना पतिं मनुमित्यर्थः। अत्र प्रजा इत्यस्याध्याहारो बोध्यः।

अन्येषां धर्मादीनामविरोधेन । प्रत्यूषेषु उषःसु संगीयमाना सत्कीर्तिर्यस्य, तथापि स्वयं हरेरेव कथाः शृण्वन्भोगान्बुभुजे ॥ ३३ ॥ योगमायासु ऐच्छिकभोगरचनासु । यद्यतः आभ्रंशयितुं आ ईपदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥ अतो यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवति, अतोऽन्यदपि गतसारं यातयाममुच्यते । अयातयामा अगतसारा आसन् । स्वान्तरं तदीयं मन्वन्तरं यापयन्ति गमयन्ति ते यामाः कालावयवाः । कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥ परिभूतं गतित्रयं जाग्रदादि सात्त्विकादि वा येन ॥ ३६ ॥ दिव्यास्त्वान्तरिक्षाः । मानुषाः शत्रुप्रभवाः । भौतिकाः शीतोष्णादिप्रभवाः । वैयासे

सभार्यः सप्रजः कामान्बुभुजेऽन्याविरोधतः ॥ संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेन हृदा
शृण्वन्हरेः कथाः ॥३३॥ निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ॥ यदाभ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥३४॥
अयातयामास्तस्यासन्यामाः स्वान्तरयापनाः ॥ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥ स एवं स्वान्तरं
निन्ये युगानामेकसप्ततिम् ॥ वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥३६॥ शारीरा मानसा दिव्या वैयासे ये च मानुषाः ॥
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥३७॥ यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधान् शुभान् ॥ नृणां वर्णा-
श्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥ एतत्त आदिराजस्य मनोश्चरितमद्भुतम् ॥ वर्णितं वर्णनीयस्य तदपत्योदयं
शृणु ॥३९॥ इति श्रीमद्भा० म० तृतीयस्कन्धे द्वाविंशतितमोऽध्यायः ॥२२॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ पितृभ्यां
प्रस्थिते साध्वी पतिमिङ्गितकोविदा ॥ नित्यं पर्यचरत्प्रीत्या भवानीव भवं प्रभुम् ॥१॥ विश्रम्भेणात्मशौचेन गौरवेण
दमेन च ॥ शुश्रूषया सौहृदेन वाचा मधुरया च भो ॥२॥ विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ॥ अप्रमत्तो-
द्यता नित्यं तेजीयांसमतोषयत् ॥३॥ स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ॥ दैवाद्गरीयसः पत्युराशासानां महा-
शिषः ॥ ४ ॥ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ॥ प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ ५ ॥ ॥

हे विदुर ॥ ३७ ॥ तस्य ज्ञानातिशयमाह—य इति । नृणां साधारणधर्मान् ॥ ३८ ॥ तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम् ॥ ३९ ॥ · ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ त्रयोविंशे ततो योगनिर्मिते सर्वसंपदि ॥ विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ १ ॥ प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥ दम्भं कपटम् । अघं निषिद्धाचरणम् । तेजीयांसमतितेजस्विनम् ॥ ३ ॥ दैवाद्गरीयसो दैवादपि गुरुतरात् । दैवमप्यन्यथा कर्तुं समर्थादित्यर्थः ॥ ४ ॥ व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः ॥ ५ ॥ ॥

१ ऐहिकेत्यपि पाठः । २ उपनिबध्नतो ग्रथयतः । ३ गतित्रयं 'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।' इति गीतोक्तम् । यद्वा गतयोऽवगतयः क्लेशावगतयस्तासां त्रयम् इति वीर० । ४ अनुबद्धेन तदेकासक्तेन । ५ एवं भगवत्कथाश्रवणकीर्तनध्यानतदाराधनादिभिः । ६ कर्दमवाक्ये विश्वासेन । ७ गौरवेण तन्निष्ठगुरुबुद्ध्या । दमेन बहिरिन्द्रियनियमेन । ८ 'मानं दम्भं च' इति पाठः । ९ तयोः देवहूतिकर्दमयोः ।

सुहृत्प्रियः । मदर्थे क्षपयितुं नावेक्षितो न गणितः । समुचितः श्लाघ्योऽपि मत्सेवासक्तयोपेक्षित इत्यर्थः ॥६॥ तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्यभोगास्तानेव तेऽवरुद्धांस्त्वयाऽपि वशीकृतान्प्रपश्य । ते दिव्यां दृष्टिं वितरामि । यया दृष्ट्या द्रक्ष्यसि॥७॥ अन्ये पुनर्भोगाः किं । न किमपि । अतितुच्छा इत्यर्थः । तत्र हेतुः—भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृम्भो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु । निजधर्मेण पातिव्रत्येन दुह्यन्त इति तथा तान् । दुरधिगान् दुष्प्रापान् । नृपा वयमिति या विक्रियास्तत्तद्भोगविकृतयस्ताभिः ॥ ८ ॥ अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिन्ता जाता । संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्विकसितं हसितं जातहासं चाननं यस्याः सा । आह जगाद ॥ ९ ॥ वतेति हर्षे । द्विजवृष द्विजश्रेष्ठ हे भर्तः, त्वय्येतत्सर्वं राद्धं सिद्धमेव ।

॥ कर्दम उवाच ॥ तुष्टोऽहमद्य तव मानवि मानदायाः शुश्रूषया परमया परया च भक्त्या[3] ॥ यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥ ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥ तानेव ते मदनुसेवनयाऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥ अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य ॥ सिद्धासि भुङ्क्ष्व विभवान्निजधर्मदोहान्दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥ एवं ब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ॥ संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविलसद्धसिताननाह ॥ ९ ॥ ॥ देवहूतिरुवाच ॥ राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः ॥ यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥ तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयात्मा ॥ सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥ ॥ ॥ ॥

तदहमवैमि जानामि । किंतु यस्ते त्वया समयोऽभिहितः स तावद्भूयात् । सकृदिति गर्भसंभवमात्रपर्यन्त इत्यर्थः । यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः । समासपाठे गरीयसि पत्यौ सति सतीनां यतो गुणप्रसवो गुणविस्तारो भवति । अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवत्विति भावः ॥ १० ॥ अङ्गसङ्गार्थं च प्रथममितिकर्तव्यतां संपादयेत्याह । हे ईश, तत्राङ्गसङ्गे इतिकृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष संजानीहि । उपकल्पयेत्यर्थः । येन साधनेनाभ्यङ्गभोजनपानादिनातीव रन्तुमिच्छया कर्शितो दीनश्च ममैष आत्मा देहः सिध्येत रतिसमर्थो भवेत् । कथंभूतायाः । ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः । तत्ततोऽनुरूपं भवनं विचक्ष्व वितर्कय । विचारयेति यावत् ॥ ११ ॥ ॥ ॥

१ हेतुभूताभिः भोग्यादिसंपद्भिरिति शेषः । २ एतत् तत्तद्दिव्यभोगप्रदर्शनदिव्यदृष्टिप्रदानादि । ३ भक्त्या मद्विषयकैकान्तभावेन । ४ समयो भाषाबन्धः । ५ प्रसवः अपत्योत्पत्तिः । ६ 'गुणप्रसवः' इत्येवंरूपे । ७ अनुरूपं रत्यनुकूलम् ।

तर्हि तत्क्षणमेव आविरचीकरदाविर्भावयांबभूव ॥ १२ ॥ तदेव विशिनष्टि—सर्वकामदुघमिति नवभिः । सर्वैश्च रत्नादिभिः समन्वितम् । सर्वर्द्धीनां सर्वसंपदां च उपचयस्तस्योदर्क उत्तरोत्तराभिवृद्धिर्यस्मिन् । उपस्कृतं शोभितम् ॥ १३ ॥ उपकरणं परिकरः । पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः, पताका विस्तृतास्ताभिः ॥ १४ ॥ विचित्राणि माल्यानि पुष्पाणि यासु । मञ्जु यथा भवत्येवं सिञ्जन्तः कूजन्तः षडङ्घ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥ उपर्युपरि विरचितगृहेषु । कशिपुभिः शय्याभिः कान्तं कमनीयम् । पर्यङ्कादिभिश्च कान्तम् ॥ १६ ॥ १७ ॥ द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुम्बरस्तया भातं शोभितम् । वज्ररचितकपाटयुक्तम् । इन्द्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु ॥ १८ ॥ चक्षुष्मन्त इव ये पद्मरागाग्र्यास्तैः । यद्वा चक्षुष्मदिव । कैः । पद्मरागाग्र्यैः ।

॥ मैत्रेय उवाच ॥ प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः[2] ॥ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥ सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥ दिव्योपकरणोपेतं सर्वकालसुखावहम् ॥ पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥ उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ॥ क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥१६॥ तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥१७॥ द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटवत् ॥ शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८॥ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः ॥ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९॥ हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ॥ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः ॥ यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥ ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा ॥ सर्वभूताशयाऽभिज्ञः प्रावोचत्कर्दमः स्वयम् ॥२२॥ निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह ॥ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥२३॥ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ॥ सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥ ॥ ॥

विचित्रैर्वैतानैर्वितानसमूहैः ॥ १९ ॥ कृत्रिमानपि हंसादीन्स्वान्सजातीयान्मन्यमानैस्तत्र तत्राधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥ विहारस्थानं क्रीडाप्रदेशः, विश्रामः शयनगृहम्, संवेश उपभोगस्थानम्, प्राङ्गणं गृहाद्बहिः, अजिरं प्राकाराद्बहिः, यथोपजोषं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव ॥ २१ ॥ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च ॥ २२ ॥ अस्मिन्ह्रदे विन्दुसरसि । आरुहाधिरोह । शुक्लेन विष्णुना कृतमानन्दविन्दुनिपातनेन । यापकं प्रापकम् ॥ २३ ॥ समादायाहृत्य । सरजं मलिनम् । वेणीभूतान् जटिलान् ॥ २४ ॥ ॥ ॥ ॥ ॥

१ उपचयोऽत्र समूहः, अन्यथा पुनरुक्तिः प्रसज्येत इति दीपि० । २ योगप्रभावमाविष्कुर्वन्सन् । 'योगमाश्रितः' इति पाठः । ३ दुकूलक्षौमयोः पर्यायत्वेऽप्यत्र परिधानीयोत्तरीयत्वेन भेदो ज्ञेयः । ४ क्षिप्तैः स्थापितैः । ५ तत्र तत्र उपर्युपरि गृहभित्तिशिखरादिषु । ६ विनिक्षिप्तत्व विरचितत्वम् । ७ 'अलंकृतम्' इत्यपि पाठः । ८ 'सद्दारैः' इति पाठः । ९ अत्र कर्दम उवाचेति क्वचित् । १० 'वेणीभूतान्स्वमूर्धजान्' इति पाठः । ११ सरजं मलिनमिति व्याख्यानाद्रजशब्दोऽकारान्तोऽप्यस्तीति गम्यते । द्वितीयपक्षे सरस्वत्याः संबन्धि सर इति योग्यम् । दीपि० ।

शबलौ विवर्णौ स्तनौ यस्मिंस्तत् । सरस्वत्याः शिवानि जलान्याशेरते यस्मिन्, शिवा जलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥ सा तत्र निमग्ना सती विस्मयं ददर्श । तमाह—सान्तःसरसीति दशभिः । उत्पलगन्धयः कमलागन्धीः ॥ २६ ॥ तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥ ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥ परार्ध्यान्युत्कृष्टानि । वरीयांसि तत्प्रियाणि द्युमन्ति दीप्तिमन्ति च । पानं पेयम् । अमृतं स्वादु । आसवं मादकम् ॥ २९ ॥ आदर्शे स्वमात्मानं ददर्शेति शेषः । आत्मानं विशिनष्टि चतुर्भिः । कृतं स्वस्त्ययनं मङ्गलं यस्य । पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥ विरजमित्यस्य प्रपञ्चः । स्नातमुद्वर्त्य क्षालितम् । कृतं शिरःस्नानमभ्यङ्गो येन । भूषितत्वमेवाह । निष्कं पदकं ग्रीवायां यस्य ॥३१॥ बहूनि रत्नानि यस्यां तया ।

अङ्गं च मलपङ्केन संछन्नं शबलस्तनम् ॥ आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥ सान्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ॥ सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥२६॥ तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ॥ वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥ स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ दुकूले निर्मले नूत्ने ददुरस्यै च मानदाः ॥ २८ ॥ भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ॥ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥ अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ॥ विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥ स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् ॥ निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥ श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ॥ हारेण च महार्हेण रुचकेन च भूषितम् ॥३२॥ सुदता सुभ्रुवा श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा ॥ पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥ यदा सस्मार ऋषभमृषीणां दयितं पतिम् ॥ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ॥ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥ स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ॥ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥ ॥

रुचकेन मङ्गलद्रव्येण कुङ्कुमादिना । तदुक्तं विश्वप्रकाशे 'रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः' इति ॥ ३२ ॥ सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि । एतैर्लसच्छोभमानं मुखं यस्य । कथंभूतेन चक्षुषा । श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य । पद्मकोशेन स्पर्धत इति पद्मकोशस्पृत्तेन ॥ ३३ ॥ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ तत्रैव स्वयमप्यास्ते ॥ ३४ ॥ आत्मानं निशाम्य दृष्ट्वा । तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा । संशयं किमिदमिति विस्मयम् ॥ ३५ ॥ स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्विभ्रतीम् । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः । पाठान्तरे तु रूपविशेषम् ॥ ३६ ॥ ॥

१ उत्पलगन्धय इत्यार्षम् । उत्पलगन्ध्यः स्त्रियः प्रोचुरिति योजनीयम् । २ अभ्यङ्गः सुगन्धितैलादिना शिरःसंस्कारः । ३ 'विभूषितम्' इति पाठः । ४ आस्ते उपविवेशेत्यर्थः इति वीर० । ५ तां विमानाविर्भावमारभ्य सरसो निष्क्रम्य तदग्रे स्वस्थितिपर्यन्ताम् इति दीपि० । ६ संशयस्य विस्मयाधायकत्वाद्विस्मये लक्षणा । ७ 'संवीतरुचिरस्तनम्' इत्येवंरूपे ।

शोभने वाससी यस्याः । जातो भावः प्रेम यस्य । हे अमित्रहन् जितकाम ॥ ३७ ॥ तस्मिन्विमाने मुनिर्बभ्राजे । न लुप्तो महिमा स्वातन्त्र्यं यस्य । उपचीर्णं शुश्रूपितं वपुर्यस्य । विकसितकुमुद्गणवानपीच्योऽतिसुन्दरः । पूर्णचन्द्र इव मुनिः, नभ इव विमानम्, तारा इव ताः स्त्रियः, कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ तेन विमानेन । अष्टलोकपालानां विहारो यस्मिन्कुलाचलेन्द्रे मेरौ तस्य द्रोणीषु दरीषु । अनङ्गस्य सखा यो मारुतः शीतसुगन्धमन्दानिलस्तेन सौभगं सौन्दर्यं यासु । सिद्धैर्नुतः स्तुतः सन् । द्युधुनिर्गङ्गा तस्याः पातेन शिवः स्वनो यासु तासु रेमे । ललनावरूथी स्त्रीरतसमूहवान् ॥ ३९ ॥ वैश्रम्भकादिषु देवोद्यानेषु । मानसे च सरसि । रतः प्रीतः सन् ॥ ४० ॥ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ उद्दामचेतसां धीराणाम् । व्यसनं संसारस्तस्यात्ययो यस्मात्

विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ॥ जातभावो विमानं तदारोहयदमित्रहन् ॥३७॥ तस्मिन्नलुप्तमहिमा प्रिययानुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ॥ बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृतइवोडुपतिर्नभःस्थः॥३८॥ तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु ॥ सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥ वैश्रम्भके सुरसने नन्दने पुष्पभद्रके ॥ मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ४० ॥ भ्राजिष्णुना विमानेन कामगेन महीयसा ॥ वैमानिकानत्यशेत चरन् लोकान्यथाऽनिलः ॥४१॥ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् ॥ यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥४२॥ प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्स्वसंस्थया ॥ बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥ विभज्य नवधात्मानं मानवीं सुरतोत्सुकाम् ॥ रामां निरमयन् रेमे वर्षपूगान्मुहूर्तवत् ॥४४॥ तस्मिन्विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ॥ न चाबुध्यत तं कालं पत्याऽपीच्येन संगता ॥४५॥ एवं योगानुभावेन दम्पत्यो रममाणयोः ॥ शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥४६॥ तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित् ॥ नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥ ४७ ॥ ॥

॥ ४२ ॥ प्रेक्षयित्वा दर्शयित्वा । गोलं मण्डलम् । स्वसंस्थया द्वीपवर्षादिरचनया यावांस्तावन्तम् । बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥ नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥ शरदः संवत्सराः । मनागीषदिव व्यतीयुः ॥ ४६ ॥ आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् । तथा सति सदपत्यं भवेदिति । नोधा नवधा । सर्वसंकल्पविदिति । तस्या बह्वपत्यसंकल्पं जानन्नित्यर्थः । विभुस्तथा कर्तुं समर्थश्च । आत्मविदिति च तस्यामनासक्तत्वात्स्त्रियो जाता इति भावः । 'पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः' इति स्मृतेः ॥ ४७ ॥ ॥ ॥ ॥

१ शीतलत्वादिकमनङ्गसखत्वेनाक्षिप्तम् इति दीपि० । २ उद्दामं विषयान्तरापेक्षाराहित्येनोत्कृष्टं निजाश्रये धैर्यं गतं चित्तं येषाम् । ३ रामया देवहूत्या सह । ४ महीयसा विपुलेन । ५ 'अप्ययः' इति पाठः । ६ स्वाश्रमाय स्वाश्रमं गन्तुम् । ७ अपीच्येन सर्वाङ्गसुन्दरेण । ८ नवप्रभेदेन तत्तदपत्योत्पत्तौ तत्तद्गुणप्रधानत्वप्रयुक्तनवभेदेन विशिष्टं। आत्मानं स्वं कृत्वा ध्यात्वा ।

अतोऽनन्तरमेव । सद्य एकस्मिन्नेवाहनि । चारूणि सर्वाण्यङ्गानि यासाम् ॥ ४८ ॥ प्रव्रजिष्यन्तमालक्ष्य वितर्क्य स्मयमाना बहिः, अन्तस्तु विक्लवेन व्याकुलेन विदूयता संतप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥ नखा एव मणयस्तैः श्रीः शोभा यस्य तेन पदा भुवं लिखन्तीति दुरन्तचिन्तालक्षणम् ॥ ५० ॥ उपोवाह संपादितवान् । अभयमिति भाविनो दैन्यात्संसाराच यद्भयं तन्निवर्तयेत्यर्थः ॥ ५१ ॥ तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् । संसारभयमुररीकृत्याह—कश्चिदिति । विशोकाय ज्ञानोपदेशाय । स्त्रीभिर्ऋणानपाकरणात्कंचित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ॥ ५२ ॥ विषयान्भुंक्ष्व किं ब्रह्मविद्ययेति चेत्तत्राह । एतावताऽलं पूर्यताम् । परित्यक्तः पर

अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः ॥ सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥ पतिं सा प्रव्रजिष्यन्तं तदालक्ष्योशती सती ॥ स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥ लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया ॥ उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥ ॥ देवहूतिरुवाच ॥ सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम् ॥ अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः ॥ कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥ एतावताऽलं कालेन व्यतिक्रान्तेन मे प्रभो ॥ इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥५३॥ इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः ॥ अजानन्त्या परं भावं तथाऽप्यस्त्वभयाय मे ॥ ५४ ॥ सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया ॥ स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥ नेह यत्कर्म धर्माय न विरागाय कल्पते ॥ न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥ साहं भगवतो नूनं वञ्चिता मायया दृढम् ॥ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥५७॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ ॥छ॥

आत्मा यया तस्या मम ॥ ५३ ॥ स्वकृतमनुशोचन्त्याह—इन्द्रियार्थेष्विति चतुर्भिः । मे मया । परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥ प्रसङ्गः कथमभयायास्तु तत्राह—सङ्ग इति । अधियाऽज्ञानेन ॥ ५५ ॥ स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवसेदित्यर्थः ॥ ५६ ॥ न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ ॥ ॥

१ एकस्मिन्नेवाहनीति योगप्रभावो दर्शितः । २ भाविनो भविष्यात्स्वयंवरान्वेषणरूपाद्दैन्यात् । ३ तत्र दैन्यसंसारयोर्मध्ये । ४ अत्रालं किमिति पदं नापेक्षितमिति प्रतीयते । ५ परित्यक्तो विस्मृतः । ६ तदा नवपुत्र्युत्पत्त्यनन्तरकाले । ७ प्रतिश्रुतं प्रतिज्ञप्तं दिव्यदृष्टिदानादि । ८ भावं ब्रह्मवित्त्वम् । ९ तद्द्वारा विरागद्वारा । अन्यवेशपरित्यागेन भक्तिविशेषोपयोगित्वं द्वारत्वम् ।

चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः । प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ १ ॥ शालिनीं श्लाघ्याम् । शुक्लेनाभिव्याहृतं 'सहाहं स्वांशकलया' इत्यादि ॥ १ ॥ इत्थं मा खिदः खेदं माकार्षीः आत्मानं प्रति अहं भाग्यहीनेति । अदूराच्छीघ्रम् ॥ २ ॥ दमेनेन्द्रियसंयमेन । नियमेन स्वधर्मेण । तपांसि द्रविणदानानि च तैः ॥ ३ ॥ हृदयग्रन्थिं चिज्जडात्मकमहंकारलक्षणं बन्धं छेत्ता छेत्स्यति । औदर्यः पुत्रः सन् । ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥ श्रद्धाय विश्वस्य ॥५॥ बहुतिथे बहुतरे कालेऽतिक्रान्ते सति । कार्दमं कर्दमसंबन्धि ॥ ६ ॥ घनाघना इत्येकं पदम् । वर्षन्तो मेघाः । गायन्ति स्म नृत्यन्ति स्म

॥ मैत्रेय उवाच ॥ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ॥ दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥१॥ ॥ ऋषिरुवाच ॥ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ॥ भगवांस्तेऽक्षरो गर्भमदूरात्संप्रपत्स्यते ॥ २ ॥ धृतव्रतासि भद्रं ते दमेन नियमेन च ॥ तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥ स त्वयाराधितः शुक्लो वितन्वन्मामकं यशः ॥ छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥४॥ ॥ मैत्रेय उवाच ॥ देवहूत्यपि संदेशं गौरवेण प्रजापतेः ॥ सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥५॥ तस्यां बहुतिथे काले भगवान्मधुसूदनः ॥ कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥६॥ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥ गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥७॥ पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः ॥ प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥८॥ तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ॥ स्वयंभूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥९॥ भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ॥ तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥ सभाजयन्विशुद्धेन चेतसा तच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात् ॥११॥ ॥ ब्रह्मोवाच ॥ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ॥ यन्मे संजगृहे वाक्यं भवान्मानद मानयन् ॥ १२ ॥ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ॥ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥ इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ॥ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा ॥ १४ ॥ ॥

॥ ७ ॥ अपवर्जिता मुक्ताः ॥८॥ परिश्रितं परिवेष्टितम् ॥ ९ ॥ आगत्य किं कृतवांस्तदाह—भगवन्तमिति द्वाभ्याम् । तत्त्वानां संख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवन्तं जातं विद्वानजो ब्रह्मा स्वराट् स्वतःसिद्धज्ञानस्तस्य चिकीर्षितं सभाजयन् पूजयन् प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमं चेदमभ्यधादिति द्वयोरन्वयः । चकाराद्देवहूतिं च ॥ १० ॥ ११ ॥ तत्र—त्वयेति पञ्चभिः कर्दमं प्रत्याह । अपचितिः पूजा कृता । यत् यस्मात् । निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥ अनुमन्येतेति यदेतावत्येव ॥ १३ ॥ अनेकधा प्रभावैर्वैशैर्बृंहयिष्यन्ति वर्धयिष्यन्ति ॥ १४ ॥ ॥

१ इत्थं नाम 'कश्चित्स्यान्मे विशोकाय' इत्यादि पूर्वाध्यायगत ५२ पद्योक्तप्रकारेण । २ संदेशमुपदेशम् । ३ गुरुं तयोपदेष्टृत्वेन चिन्त्यमानम् । ४ वीर्यं भक्तिप्रभावम् । ५ देवा इति शेषः । घनाघना इत्यस्य जगर्जुरिति शेषः । ६ एतावती गुरुवचनानुमतिरूपा । ७ चिकीर्षितं सांख्यप्रवर्तनादि ।

ऋषिमुख्येभ्यो मरीच्यादिभ्यः ॥ १५ ॥ पुत्रस्तु साक्षादीश्वर इत्याह—वेदाहमिति । शेवधिं निधिं सर्वाभीष्टदम् ॥ १६ ॥ देवहूतिं प्रत्याह त्रिभिः । ज्ञान-शास्त्रोक्तं विज्ञानमपरोक्षं च ते एव योग उपायस्तेन कर्मणा जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् । पद्ममुद्रायुक्तं पदाम्बुजं यस्य ॥ १७ ॥ हे मानवि, अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रन्थिम् ॥ १८ ॥ सुसंमतः सुपूजितः सन् । गन्ता प्राप्स्यति ॥ १९ ॥ कुमारैः सहेति शेषः । सहनारदो नारदसहितश्च । मरीच्यादीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पञ्चभिः सहितो हंसो ब्रह्मा ययौ । त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्य-

अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि ॥ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ॥ भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने[1] ॥ १६ ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरञ्जटाः ॥ हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ॥ अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥ अयं सिद्धगणाधीशः सांख्याचार्यैः सुसंमतः ॥ लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥ ॥ मैत्रेय उवाच ॥ तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः ॥ हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ॥ यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां[2] ततः ॥ २१ ॥ मरीचये कलां प्रादादनसूयामथात्रये ॥ श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥ २२ ॥ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ॥ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥ अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ॥ विप्रर्षभान्[4]कृतोद्वाहान् सदारान्समलालयत् ॥ २४ ॥ ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ॥ प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम् ॥ २५ ॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ॥ विविक्त उपसंगम्य प्रणम्य समभाषत ॥ २६ ॥ अहो पापच्यमानानां निरये स्वैरमङ्गलैः ॥ कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥ बहुजन्मविपक्वेन सम्यग्योगसमाधिना ॥ द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥ ॥ ॥

लोकम् ॥ २० ॥ शतधृतौ ब्रह्मणि ॥ २१ ॥ २२ ॥ युक्तां योग्याम् । अयच्छत् अदात् ॥ २३ ॥ वितन्यते समृद्धः क्रियते । शान्त्यधिष्ठात्रीं देवतामित्यर्थः । समलालयत्संतोषितवान् ॥ २४ ॥ निमन्त्र्य पृष्ट्वा । नन्दिं हर्षं प्राप्ताः सन्तः ॥ २५ ॥ स च मुनिः । त्रियुगं[5] विष्णुम् । विविक्ते रहसि ॥ २६ ॥ पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे । स्वीयैरमङ्गलैः पापैः ॥ २७ ॥ कुतः । सर्वा देवताः प्रसन्ना इति ज्ञातम्[6], अलभ्यलाभादित्याह द्वाभ्याम् । बहुषु जन्मसु विपक्वेन सुसिद्धेन । सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन । शून्यागारेषु विविक्तस्थानेषु । यस्य तव पदम्[7] ॥ २८ ॥ ॥ ॥

१ अतो दुहितॄणां वशवृद्धिशक्तिमत्त्वात् । २ 'मुनिम्' इति पाठः । ३ विश्वसृजा विश्वम्भृद्भ्य इत्यर्थः । ४ 'विप्रर्षिस्तान्' इति पाठः । ५ त्रियुगमिति 'युगत्रयावतारेण त्रिगुणश्चेति कथ्यते' इति वचनात् । ६ ज्ञातमनुमितम् । ७ पदं स्वरूपम् ।

हेलनमवज्ञां लाघवं नगणय्यागणयित्वा । उचितमेव तवैतदित्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥ एतत्प्रपञ्चयति द्वाभ्याम् । स्वयमेवावतीर्णोऽसि स्ववाक्यं तव पुत्रो भविष्यामीति यत्तत्सत्यं कर्तुम् । ज्ञानं ज्ञानसाधनं सांख्यं च चिकीर्षुः सन् ॥ ३० ॥ यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि । यानि च स्वजनानां रोचन्ते मनुष्यसरूपाणि तान्यपि ते रोचन्त इत्यर्थः । अरूपिणः प्राकृतरूपरहितस्य ॥ ३१ ॥ अभिवादार्हं पादपीठं यस्य । ऐश्वर्यादिभिः पूर्तं पूर्णम् ॥३२॥ ऐश्वर्यादिकं विवृण्वन्नाह । परं परमेश्वरम् । तत्र हेतुः—स्वच्छन्दाः स्वाधीनाः शक्तयो यस्य । ता एवाह । प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महान्तं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहंकाररूपं लोकात्मकं तत्पालात्मकं च । तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपञ्चतामाह । आत्मानुभूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपञ्चो यस्य तम् । कविं सर्वज्ञम् । प्रधानाद्या-

स एव भगवानद्य हेलनं नगणय्य नः ॥ गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥ स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ॥ चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ॥ यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥ त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाऽभिवादार्हणपादपीठम् ॥ ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रियां पूर्तमहं प्रपद्ये ॥ ३२ ॥ परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ॥ आत्मानुभूत्याऽनुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥ आस्माभिपृच्छेऽद्य पतिं प्रजानां त्वयाऽवतीर्णर्ण उताप्तकामः ॥ परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्विशोकः ॥ ३४ ॥ ॥ श्रीभगवानुवाच ॥ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ॥ अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥ एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात् ॥ प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने ॥ ३६ ॥ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ॥ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥ ३७ ॥ ॥ ॥

विर्भावलयसाक्षिणमित्यर्थः ॥ ३३ ॥ संन्यासानुज्ञां प्रार्थयते । आस्माभिपृच्छे यत्किंचिदभिपृच्छामीत्यर्थः । त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि दैवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युञ्जन् स्मरन्विचरिष्यामि ॥ ३४ ॥ अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव । यद्यवश्यं गन्तव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह—मयेति पड्भिः । सत्यलौकिके वैदिके लौकिके च कृत्ये । स्वोक्तस्य प्रामाण्यमभिदर्शयति । यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम् अथ अत एव तदृतं सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम् ॥ ३५ ॥ दुराशयाल्लिङ्गान्मुमुक्षूणां मुनीनामात्मदर्शने संमताय तत्त्वानां प्रसंख्यानाय विद्धीत्युत्तरस्यानुषङ्गः ॥ ३६ ॥ नन्वयमात्मज्ञानमार्गः पूर्वसिद्ध एव नेदानीमपूर्ववत्प्रवर्तनीयस्तत्राह—एष इति । अव्यक्तः सूक्ष्मः ॥ ३७ ॥ ॥ ॥ ॥ 

१ सांख्यं सांख्यशास्त्रम् । २ भक्तानामस्मदाद्याश्रयरूपाणां ब्रह्मादीनाम् । दीपि० । ३ श्रियामिति षष्ठी तृतीयार्थे । ४ 'अथाभिपृच्छे' इति पाठः । तत्र आ अभिपृच्छे इति छे…
५ आत्मपथ आत्ममार्गः । ६ भृतं प्रकाशितम् । ७ ऋणमत्र पितुराज्ञापालनरूपम् । ८ लिङ्गात् लिङ्गदेहात् ।

कामं यथेच्छम् । आपृष्टोऽनुज्ञातः । यद्वा यथा त्वं गन्तुं मां पृष्टवांस्तथात्रावस्थातुं मयापि त्वमापृष्ट इत्यर्थः । मयि संन्यस्तेन समर्पितेन कर्मणा 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति श्रुतेः ॥३८॥ ततश्च मां परमं परमात्मानमात्मनि स्वस्मिन्नात्मना अन्वीक्षमाणोऽभयं मोक्षं प्राप्स्यसि ॥३९॥ मात्रे देवहूत्यै । शमनीमुन्मूलनीम् । भयमतिशयेन तरिष्यति । परमानन्दं प्राप्स्यतीति चकारार्थः ॥४०॥ समुदितः सम्यगुक्तः सन् । तं प्रदक्षिणीकृत्य ॥४१॥ मुनीनामिदं मौनम् । व्रतमहिंसालक्षणम् ॥४२॥ सदसतः परं यत्तस्मिन् ब्रह्मणि । गुणावभासके निर्गुणे । एकभक्त्याव्यभिचारिण्या भक्त्यानुभावितेऽपरोक्षीकृते ॥४३॥ अतो देहादिष्वहंकारादिरहितः । अत एव निर्द्वन्द्वः शीतोष्णाद्यनाकुलः । समदृग्भेदाग्राहकः किंतु स्वदृक् स्वमेव पश्यन् । प्रत्यक् प्रवणा शान्ता विक्षेपरहिता धीर्यस्य ॥४४॥

गच्छ कामं मयापृष्टो मयि संन्यस्तकर्मणा ॥ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥३८॥ मामात्मानं स्वयंज्योतिः सर्वभूतगुहाशयम् ॥ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥३९॥ मात्रे आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ॥ वितरिष्ये यया चासौ भयं चातितरिष्यति ॥४०॥ ॥ मैत्रेय उवाच ॥ एवं समुदितस्तेन कपिलेन प्रजापतिः ॥ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥ ४१ ॥ व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ॥ निःसङ्गो व्यचरत्क्षोणीमनग्निरनिकेतनः॥४२॥मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम्॥गुणावभासे विगुण एकभक्त्यानुभाविते ॥४३॥ निरहंकृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ॥ प्रत्यक् प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४४ ॥ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ॥ परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥४५॥ आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ॥ अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ॥ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥ ॥ इति श्रीमद्भा० म० तृ० कापिलेयाख्याने चतुर्विंशतितमोऽध्यायः ॥२४॥ ॥ ७ ॥
॥ शौनक उवाच ॥ कपिलस्तत्त्वसंख्याता भगवानात्ममायया ॥ जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥

तदेवंविधकल्पितोपाधिनिवृत्तिमुक्त्वा परमेश्वरपदप्राप्तिमाह—वासुदेव इति त्रिभिः । प्रतीचो जीवस्यात्मनि लब्ध आत्मा चित्तं येन, यतो मुक्तं बन्धनमज्ञानं यस्य ॥४५॥ लब्धात्मतामेवाह—आत्मानमिति ॥४६॥ तदेवं तेन भागवती गतिः प्राप्ता । पाठान्तरे स एव तां गतिं प्राप्त इति ॥४७॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥२४॥ ॥ ७ ॥ ॥ पञ्चविंशे जनन्या तु पृष्टो बन्धविमोचनम् ॥ आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १ ॥ कपिलेनार्पिता मात्रे गूढभावनियन्त्रिता ॥ योगमाणिक्यमञ्जूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥ उक्तानुवादपूर्वकं कापिलं योगं पृच्छति—कपिल इति त्रिभिः । तत्त्वानां संख्याता गणकः, सांख्यप्रवर्तक इत्यर्थः । अत एव स्वयं जातः । आत्मप्रज्ञप्तये आत्मतत्त्वज्ञापनाय ॥ १ ॥ ॥

१ वीक्ष्येत्यतः फलितमिदम् । वीक्ष्यमाणोऽनुभवन् । २ परमानन्दं सुतत्वेन भगवत्साक्षात्कारलक्षणम् । ३ अतो ब्रह्मसाक्षात्कारात् । ४ प्रतीचः प्रत्यग्वृत्तिलभ्यस्य । ५ 'प्राप्तो भागवतीं गतिम्' इत्येवंरूपे । अत्र भगवद्भक्तियुक्तेनातएव इच्छाद्वेषादिरहितेन सर्वत्र समेन चेतसा हेतुभूतेनेत्याद्यन्वयः ।

पुंसां मध्ये वर्ष्मणो वृद्धस्योत्तमस्येत्यर्थः । सर्वयोगिनां मध्ये वरिम्णः, वरस्य भावो वरिमा, भवितृप्रधानोऽयं निर्देशः । वरिष्ठस्येत्यर्थः । यद्वा वरीयस्त्वादित्यर्थः । विश्रुतौ कीर्तौ । असव इन्द्रियाणि भूर्यलं न तृप्यन्ति । श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य । यद्वा भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति संबन्धः ॥ २ ॥ स्वानां पुंसां छन्देनेच्छया आत्मा देहो यस्य सः । यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ॥ ३ ॥ यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् । तथा तत्प्रश्नानुसारेण । आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥ विन्दुसरे विन्दुसरसि ॥ ५ ॥ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् । 'एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः' इत्यादि धातुर्वचः ॥ ६ ॥ असतामिन्द्रियाणां तर्पणाद्विषयाभिलाषान्निर्विण्णा श्रान्तास्मि ।

न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् ॥ विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥ यद्यद्विधत्ते भगवान्स्वच्छन्दात्मात्ममायया ॥ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥ ॥ सूत उवाच ॥ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ॥ प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥ ॥ मैत्रेय उवाच ॥ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ॥ तस्मिन्बिन्दुसरेऽवात्सीद्भगवान्कपिलः किल ॥ ५ ॥ तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥ ॥ देवहूतिरुवाच ॥ निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात् ॥ येन संभाव्यमानेन प्रपन्नाऽन्धं तमः प्रभो ॥ ७ ॥ तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् ॥ सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥ य आद्यो भगवान्पुंसामीश्वरो वै भवान्किल ॥ लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ॥ ९ ॥ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ॥ योऽवग्रहोऽहंममेतीत्येतस्मिन्योजितस्त्वया ॥ १० ॥ तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ॥ जिज्ञासयाऽहं प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ ॥ मैत्रेय उवाच ॥ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ॥ धियाऽभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ १२ ॥ ॥ ॥

येन संभाव्यमानेन पूर्यमाणेन ॥ ७ ॥ पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् । त्वदनुग्रहाज्जन्मनामन्ते भाग्ये सति ॥ ८ ॥ तत्प्रपञ्चयति । स भगवान् भवांश्चक्षूरूप उदितः सूर्यो यथा ॥ ९ ॥ अपाक्रष्टुमपनेतुम् । कोऽसौ संमोहस्तमाह । एतस्मिन्देहादौ त्वयैव योजितो योऽहंममेत्यवग्रह आग्रहः । द्वितीय इतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः । कुठारं छेत्तारम् ॥ ११ ॥ अपवर्गवर्धनं मोक्षे रतिजनकम् । ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥ ॥ ॥ ॥ ॥५५॥

१ भवित्रिति । निर्देशो द्विविधः भावप्रधानो भवितृप्रधानश्च । तत्र प्रकृतिजन्यबोधे प्रकारो भावः । प्रकृतिर्हि भवितेति ज्ञेयम् । तथा च धर्मितात्पर्यको निर्देश इति फलितोऽर्थः । २ अदन्तत्वमार्षम् । अथवा विन्दुः सरसि यस्मिन्निति टच् समासान्तः । सुबो० । ३ अकर्माणं जीयवत्कर्मलेपशून्यम् । ४ प्रपन्ना प्रविष्टा । ५ तस्यापूर्यमाणविषयाभिलाषसंजातस्य । ६ तत्काभिर्हममतायेम् ।

आध्यात्मिक आत्मनिष्ठः । यत्र यस्मिन् ॥ १३ ॥ १४ ॥ तत्र सर्वाङ्गनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह—चेत इति । अस्यात्मनो जीवस्य गुणेषु विषयेषु । पुंसि परमेश्वरे । वाशब्दस्तुशब्दार्थे ॥ १५ ॥ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति—अहमिति त्रिभिः । मलैर्वीतं विरहितं यदा शुद्धं मनो भवति । मनःशुद्धेर्ज्ञापकमाह—अदुःखमिति ॥ १६ ॥ निरन्तरं निर्भेदम् । अणिमानं सूक्ष्मम् । अखण्डितमपरिच्छिन्नम् ॥ १७ ॥ हतौजसं क्षीणबलाम् ॥ १८ ॥ मनःशुद्धौ च भक्तिरेवान्तरङ्गसाधनमित्याह—नेति ॥ १९ ॥ अस्य सर्वस्यापि सत्सङ्गो मूलमित्याह—प्रसङ्गमिति । अपावृतं निरावरणम् ॥ २० ॥

॥ श्रीभगवानुवाच ॥ योग आध्यात्मिकः पुंसामतो निःश्रेयसाय मे ॥ अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ १३ ॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ॥ ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ॥ १४ ॥ चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ॥ गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥ अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ॥ वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥ तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ॥ निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥ १७ ॥ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ॥ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि ॥ सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥ प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ॥ स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ॥ अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ॥ मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ॥ तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥ त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ॥ सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥ सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥ ॥ ॥

साधूनां लक्षणमाह—तितिक्षव इति चतुर्भिः । साधवः शास्त्रानुवर्तिनः । साधु सुशीलं तदेव भूषणं येषाम् ॥ २१ ॥ २२ ॥ एतान् उक्तलक्षणान्भक्तान् । तापा आध्यात्मिकादयो न तपन्ति न व्यथयन्ति । कुतः । मद्गतं चेतो येषां तान् ॥ २३ ॥ ये तापैर्नाभिभूयन्ते ते साधव इत्यर्थः ॥ २४ ॥ सत्सङ्गस्य भक्त्यङ्गतामुपपादयति—सतामिति । वीर्यस्य सम्यग्विद्वेदनं यासु ता वीर्यसंविदः । हृत्कर्णयो रसायनाः सुखदाः । तासां जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ । प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ २५ ॥ ॥ ॥ ॥

१ पुरुषार्थसिद्धिः परमात्मसाक्षात्कारः । २ निर्भेदं सजातीयादित्रिविधभेदरहितम् । ३ सर्वेषामङ्गाना नैपुणं नैपुण्यमैकाग्र्यं यस्मिंस्तम्, 'उर्वङ्गनैपुणम्' इति पाठः । ४ समसन्यत्र हेयोपादेयज्ञानरहितम् । ५ ब्रह्मसिद्धये ब्रह्मत्वप्राप्तये । ६ प्रसङ्गं प्रकृष्टामासक्तिम् । ७ अनन्येन नास्त्यन्यो ज्ञानादिसंपर्को यस्मिंस्तेन शुद्धेन । दीपि० । ८ अथेति प्राथम्ये । प्रथममित्यर्थः । विज० ।

अध्या ॥२५॥

ततः किमत आह—भक्त्येति । मम रचना या सृष्ट्यादिलीला तस्या अनुचिन्तया या भक्तिस्तया ऐन्द्रियात्सुखाज्जातविरागः सन् । दृष्टश्रुतादैहिकामुष्मिकात् । ततो यत्त उद्युक्तः सन् चित्तस्य ग्रहणे यतिष्यते । ऋजुभिर्भक्तिप्रधानत्वादनायासैः ॥ २६ ॥ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुन्धे प्राप्नोति ॥ २७ ॥ काचिदिति । काश्चिदित्यर्थः । उचिता योग्या । तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या । निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनन्तरमेव सर्वात्मना प्राप्स्यामि । अञ्जसा त्विति पाठे अहं त्विति संबन्धः ॥ २८ ॥ भगवद्बाणो यो भगवन्तं लक्षीकरोतीत्यर्थः । यतो यस्माद्योगात् ॥ २९ ॥ विजानीहि विशेषेण ज्ञापय । सुखमनायासेन ॥ ३० ॥ इत्थं मातुरर्थं प्रयोजनं विदित्वा । जातस्नेहत्वे हेतुः—यत्र यस्यां तन्वा देहेनाविर्भूतः । तत्त्वान्याम्नायन्तेऽनुक्रम्यन्ते यस्मिन् । किं तत् । यत्सांख्यं प्रवदन्ति तत्प्रोवाच भक्तिवितानं वितानं च योगं च ॥ ३१ ॥ 'काचित्त्वय्युचिता

भक्त्या पुमान् जातविराग ऐन्द्रियाद्दृष्टश्रुतान्मद्रचनानुचिन्तया ॥ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥२६॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ॥ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥२७॥ ॥ देवहूतिरुवाच ॥ काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ॥ यया पदं ते निर्वाणमञ्जसाऽन्वाश्नवा अहम् ॥२८॥ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः ॥ कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥२९॥ तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे ॥ सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ॥३०॥ ॥ मैत्रेय उवाच ॥ विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः ॥ तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रोवाच वै भक्तिवितानयोगम् ॥३१॥ ॥ श्रीभगवानुवाच ॥ देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ॥ सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥३२॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ॥ जरयत्याशु या कोशं निगीर्णमनलो यथा ॥३३॥ नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ॥ येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥ ॥५६॥

भक्तिः' इति पृष्टासुत्तमां भक्तिं लक्षयति । गुणा विषया लिङ्ग्यन्ते ज्ञायन्ते यैस्तेषां देवानां द्योतनात्मकानामिन्द्रियाणां तदधिष्ठातॄणां या सत्त्वे सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः । कथंभूता । अनिमित्ता निष्कामा । स्वाभाविक्ययत्नसिद्धा । तेषामेवंविधवृत्तौ हेतुमाह । गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषाम् । अत एवैकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥ मुक्तिश्च प्रासङ्गिकी भवत्येवेत्याह । या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति । स्वप्रयत्नं विनैव सिद्धौ दृष्टान्तः—निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयतीति ॥ ३३ ॥ भक्तेर्गरिष्ठत्वमेवोपपादयति—नैकात्मतामिति पञ्चभिः । एकात्मतां सायुज्यमोक्षम् । मदर्थमीहा क्रिया येषाम् । प्रसज्यासक्तिं कृत्वा । पौरुषाणि वीर्याणि ॥ ३४ ॥

१ भगवद्बाणः भगवति लक्ष्ये बाण इव । २ असेवया हेयत्वविचारेण । ३ तत्त्वावबोधनं त्वंपदार्थतादात्म्येन तत्पदार्थसाक्षात्कारो भवतीत्यर्थः । दीपि० । ४ भक्तिवितानसहितं योगमित्यर्थः । 'भक्तिवितानयोगौ' इति पाठः । ५ 'सभाजयन्तः' इति पाठः । ६ अस्य देवानामित्यनेन सबन्धः ।

प्रसन्नानि वक्त्राण्यरुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सह । नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ॥ ३५ ॥ आत्मानन्दस्त्ववश्यंभावीत्याह—तैरिति । दर्शनीया मनोहरा अवयवा मुखनेत्रादयो येषु तैः । हृत आत्मा चित्तं येषाम् । हृता आकृष्टाः प्राणाश्चेन्द्रियाणि येषां तान्भजतोऽनिच्छत इच्छाहीनानप्यण्वीं गतिं मुक्तिं प्रयुङ्क्ते प्रापयति । कैः साधनैर्हृतात्मनः । उदारैर्विलासादिभिः । तत्र विलासो लीला, वामं मनोहरं सूक्तं मधुरभाषणम् ॥ ३६ ॥ विभूत्यादिकं च तत्राधिकमित्याह । अथो अविद्यानिवृत्त्यनन्तरं विभूतिं सत्यलोकादिगतां भोगसम्पत्तिमणिमाद्यष्टाङ्गमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुण्ठस्थां संपत्तिमस्पृहयन्ति । ते यद्यपि न स्पृहयन्तीत्यर्थः । तथापि लोके वैकुण्ठे अश्नुवते तु प्राप्नुवन्त्येव ॥३७॥ नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह । हे शान्तरूपे । यद्वा शान्तं शुद्धसत्त्वं तद्रूपे वैकुण्ठे मत्पराः कदाचिदपि न नङ्क्ष्यन्ति भोग्यहीना

पश्यन्ति ते मे रुचिरा[1]ण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि ॥ रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥ तै[3]र्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥ हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे[4] गतिमण्वीं प्रयुङ्क्ते[5] ॥ ३६ ॥ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ॥ श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके ॥३७॥ न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मे निमिषो लेढि हेतिः ॥ येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥ इमं लोकं तथैवामुमात्मानमुभयायिनम् ॥ आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥ विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ॥ भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ४० ॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ॥ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ४१ ॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ॥ वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ॥ क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥ ॥ ॥

न भवन्ति । अनिमिषो मे हेतिर्मदीयं कालचक्रं च नो लेढि तान्न ग्रसति । तत्र हेतुः—येषामिति । सुत इव स्नेहविषयः, सखेव विश्वासास्पदम्, गुरुरिवोपदेष्टा, सुहृदिव हितकारी, इष्टं दैवमिव पूज्यः । एवं सर्वभावेन मां ये भजन्ति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ॥ ३८ ॥ एवंभूतां तु मुक्तिमेकान्तभक्तेभ्यो ददामीत्याह—इममिति द्वाभ्याम् । उभयायिनं लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वादयः । रायः धनानि ॥ ३९ ॥ अन्यांश्च परिग्रहान् । मृत्योः संसारादतिपारयेऽतितारयामि ॥४०॥ अभक्तानां तु कथंचिदपि न मोक्ष इत्याह—नेति । मद्भगवतोऽन्यत्र भगवतो मत्तो विना । सर्वभूतानामात्मनः । भगवदादिविशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं[6] हितकारित्वं चोक्तम् ॥ ४१ ॥ ऐश्वर्यं स्फुटयति—मद्भयादिति । श्रुतिश्च 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति ॥ ४२ ॥ मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति—ज्ञानेति ॥ ४३ ॥ ॥

१ श्रियमिति योज्यम् । २ 'रुचिरावतंसप्रसन्न' इति पाठस्तत्र रुचिराणि अवतंसानि कर्णाभरणानि येषाम् इति सुबो० । ३ तै रूपैः । ४ मे भक्तिरिति संबन्धः । मे इति पदं क्वचिन्नास्त्येव । ५ 'प्रयुङ्क्ते' इति विज० पाठः । ६ अत्र निरपेक्षत्वं प्रधानपुरुषापेक्षारहितत्वम् ।

उपसंहरति—एतावानिति । मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥४४॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा०दी० टीकायां पञ्चविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ॥ सांख्येन सर्वभावानां जन्मलक्षणभेदतः ॥ १ ॥ धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् ॥ मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २ ॥ 'तत्त्वाम्नायं यत्प्रवदन्ति सांख्यम्' इत्यत्र सांख्यं भक्तिर्योगश्चेति त्रयमुपक्षिप्तम् । तत्र भक्तिमुक्त्वेदानीं सांख्यमाह—अथेति ॥ १ ॥ ननु मुक्तिरात्मज्ञानादेव, नतु तत्त्वलक्षणज्ञानात् । 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेरत आह—ज्ञानमिति । आत्मदर्शनरूपं ज्ञानमत एव हृदयग्रन्थिभेदनमहंकारनिवर्तकं निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णयामि । तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ तत्र पुरुषं लक्षयति—अनादिरिति । आत्मैव पुरुषः । कोऽसावात्मा । प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य । क्षणिकपक्षं व्यावर्तयति—अनादिरिति । संसारित्वपक्षं व्यावर्तयति—प्रकृतेः परः । अन्योऽसङ्गः । ज्ञानादिगुणत्वं वारयति—निर्गुणः । मीमांसकाद्यभिमतज्ञानविपयत्वं वारयति—स्वयं-

एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः ॥ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥४४॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने पञ्चविंशतितमोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ॥ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥ ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥ २ ॥ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ॥ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥ स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ॥ यदृच्छयैवोपगताम्भ्यपद्यत लीलया ॥ ४ ॥ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ॥ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ॥ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥ ॥

ज्योतिः । अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम् । स्वयंज्योतिष्ट्वे हेतुः—विश्वं येन समन्वितम्, प्रकाशते इति शेषः । एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥३॥ अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा, तत्रावरणशक्त्या सैव जीवोपाधिरविद्या, विक्षेपशक्त्या सैव माया पारमेश्वरी । पुरुषश्च जीवेश्वररूपेण द्विविधः, तत्र यः प्रकृत्यविवेकेन संसरति स जीवः, यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरः । तत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह—स एष इति पञ्चभिः । सूक्ष्मामव्यक्तां दैवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥४॥ तस्या लीलामाह—गुणैरिति । ज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया । तथा च श्रुतिः 'अजामेकां लोहितशुक्लकृष्णां वह्वीं प्रजां जनयन्तीं सरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति । मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥ पराभिध्यानं प्रकृत्यध्यासस्तेन । प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥

१ प्रकृतिपुरुषादिसर्वतत्त्वानाम् । २ विविक्तस्य सर्वस्मात्पृथक्त्वेन शुद्धतया ज्ञातस्यात्मनो ज्ञानम् । ३ क्षणिकपक्षं विज्ञानवादिमत क्षणिकविज्ञानसन्ततिरात्मेत्येवरूपम् । एवं च क्षणिकविज्ञानमेवात्मा तस्योत्पत्तिमत्त्वान्नानादित्वमिति तद्व्यावृत्तिर्ज्ञेया । ४ तार्किकमते स्वतो जडाश्चियोगाचेतना आत्मानो भवन्ति तन्मतं निराकर्तुं व्याचष्टे—ज्ञानादिगुणत्वमिति । ५ निःश्रेयसस्य परमपुरुषार्थस्योदय आविर्भावः । ६ तीव्रेण ज्ञानकर्माद्यपेक्षाराहित्याद्दृढेन । ७ स जीवः । ८ अत्र सेश्वरसांख्यमते । ९ रजःसत्त्वानभिभूतं तम आवरणशक्तिः । तमःसत्त्वानभिभूतं रजो विक्षेपशक्तिस्तद्भेदेन ।

॥५७॥

तदिति कर्तृत्वमननमेव । अस्य पुरुषस्य । साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बन्धः । ईशस्यापरतन्त्रस्यैव कर्मबन्धकृतं भोगे पारतन्त्र्यं निर्वृतात्मनः सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥ ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदङ्गीक्रियतां, नेत्याह । कार्यं शरीरम्, कारणमिन्द्रियम्, कर्ता देवतावर्गः, तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः । कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेव कर्तृत्वादिकमित्यर्थः । 'भोक्तृत्वे तु पुरुषं कारणं विदुः' इत्यस्यायं भावः—यद्यप्यहंकारगतमेव कर्तृत्वादिकं भोक्तृत्वं च, तथापि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥ तदेवं संसारिणं पुरुषं तद्धेतुं प्रकृतिं च ज्ञात्वेदानीं जगत्कारणमीश्वरं तत्प्रकृतिं च पृच्छति—प्रकृतेरिति । अस्य विश्वस्य । सदसच्च स्थूलं सूक्ष्मं च कार्यं यदात्मकं तयोः प्रकृतिपुरुषयोः ॥ ९ ॥ तत्र प्रकृतिं लक्षयति । यत्प्रधानं तदेव

तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ॥ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ॥ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥८॥ ॥ देवहूतिरुवाच ॥ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ॥ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥ पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥ महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ॥ तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥१२॥ इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ॥ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥ मनोबुद्धिरहंकारश्चित्तमित्यन्तरात्मकम् ॥ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥ एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ॥ संनिवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १५ ॥ ॥ ॥

प्रकृतिं प्राहुः । किं तत्प्रधानम्, स्वतोऽविशेषं[2] विशेषवद्विशेषाणामाश्रयः । तर्हि[4] किं ब्रह्म, न, त्रिगुणम् । किं[6] महत्तत्त्वादि, न, अव्यक्तमकार्यम् । किं[7] कालादि, न, सदसदात्मकं कार्यकारणरूपम् ॥ किं[8] जीवः प्रकृतिः, न, नित्यम् ॥ १० ॥ अन्येषां तत्त्वानां लक्षणं वक्तुं तानि गणयति—पञ्चभिरित्यादि । संख्याभेदेनैतच्चतुर्विंशतिकं एतानि चतुर्विंशतिर्यस्मिन् गणे तं गणं प्राधानिकं प्रधानकार्यात्मकं ब्रह्म[9] विदुः ॥ ११ ॥ एतद्विवृणोति—महाभूतानीति त्रिभिः । तावन्ति पञ्चैव ॥ १२ ॥ १३ ॥ अन्तरात्मकमन्तःकरणम् । लक्षणरूपया व्यवच्छेदिकया[10] ॥ १४ ॥ यावान्मया प्रोक्त एतावानेव संख्यातो गणितस्तत्त्वज्ञैः । काले तु मतद्वयमाह । यः कालः स पञ्चविंशकः । अल्पार्थे कप्रत्ययः । प्रकृतेरेवावस्थाविशेष इत्यर्थः ॥ १५ ॥ ॥ ॥ ॥

१ यत्प्रधानं महदादिभ्यः श्रेष्ठतया प्रधानशब्दवाच्यमुपादानशक्तिस्वरूपम् । २ अविशेषं गुणत्रयसाम्यावस्थत्वादनभिव्यक्तविशेषम् । ३ विशेषवद्विशेषाणां स्वांशकार्यरूपाणां महदादीनामाश्रयः । दीपि० । ४ तर्हि किमिति ब्रह्मण्यतिव्याप्तिमाशङ्कते । ५. ब्रह्मणो निर्गुणत्वान्न तत्रातिव्याप्तिरित्यर्थः । ६ स्वतोऽविशेषत्वेन सर्वविशेषाश्रयत्वे सति त्रिगुणत्वं महत्तत्त्वेऽतिव्याप्तमित्याशङ्कते—कि महत्तत्त्वादीति । ७ तावत्यपि लक्षणे कालेऽतिव्याप्तिमाशङ्कते—कि कालादीति । आदिना मतान्तराभिमतपरमाणुपरिग्रहः तथा च कालस्य निमित्तमात्रत्वात्परमाणूनां चासत्कार्यमते कार्यकारणरूपत्वाभावान्न तत्रातिव्याप्तिरित्यर्थः । ८ अविद्यायामतिव्याप्तिमाशङ्कते—कि जीवः प्रकृतिरिति । तस्यास्तु ज्ञाननाश्यत्वेनानित्यत्वान्न तत्रातिव्याप्तिरित्यर्थः । ९ ब्रह्म विदुः ब्रह्मत्वेनोपासत इत्यर्थः । १० व्यावर्तकया वृत्त्या धर्मेण ।

एके तु पौरुषं पुरुषस्येश्वरस्य प्रभावं विक्रमं कालमाहुः । तमेव कालं द्वेधा लक्षयति, यतो भयं भवति । कस्य । प्रकृतिमीयुषः प्राप्तस्य । अत एव देहेऽहंकारेण विमूढस्य कर्तुर्जीवस्य । अनेन संहारकत्वेन लक्षितः ॥ १६ ॥ सृष्टिहेतुत्वेन लक्षयति—प्रकृतेरिति ॥ १७ ॥ कोऽसौ भगवांस्तमाह—अन्तरिति । अन्तः सर्वप्राणिनां यः पुरुषरूपेण नियन्तृत्वेन समत्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते बहिश्च कालरूपेण एष भगवान् । यद्वा यः पुरुष इति प्रसिद्धः कालः स पञ्चविंशः । एके तु पुरुषस्य प्रभावं कालमाहुः । प्रभावस्यैव लक्षणं यत इति । पुरुषस्यैव कालत्वे हेतुः—प्रकृतेरिति । उभयथा विवक्षायां हेतुः—अन्तरिति । शेषं समानम् । तदेवं प्रकृतेश्चतुर्विंशतिभेदाः । जीवेश्वरयोश्चैक्यविवक्षातः पञ्चविंशतितत्त्वानि भवन्ति । तयोर्भेदविवक्षया च षड्विंशतिर्भवन्ति ॥ १८ ॥ इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह—दैवादित्यादिना एतान्यसंहत्यैतः प्राक्तनेन ग्रन्थेन । तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह चतुर्भिः । दैवाज्जीवादृष्टात्क्षुभिता धर्मा गुणा यस्याः । योनावभिव्यक्तिस्थाने प्रकृतौ । वीर्यं चिच्छक्तिम् । सा प्रकृतिर्महत्तत्त्वमसूत । महतः स्वरूपमाह—हिरण्मयं

प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ॥ अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ १६ ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ॥ चेष्टा यतः स भगवान्काल इत्युपलक्षितः ॥ १७॥ अन्तः पुरुषरूपेण कालरूपेण यो बहिः ॥ समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ॥ आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥ विश्वमात्मगतं व्यञ्जन्कूटस्थो जगदङ्कुरः ॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥ यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् ॥ यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥ स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः ॥ वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत ॥ २३ ॥ ॥ ॥

प्रकाशबहुलम् ॥ १९ ॥ विश्वमहंकारादिप्रपञ्चम् । आत्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं व्यञ्जन्प्रकटयन् महांस्तीव्रं प्रलयकालीनं तमोऽपिबत् । कूटस्थो लयविक्षेपशून्यः । कथंभूतं तमः । आत्मानं प्रस्वापयति प्रच्छादयतीति तथा । यत्पूर्वं प्रलयसमये महान्तं प्रकृतौ विलापयामासेत्यर्थः ॥ २० ॥ प्रसङ्गाच्चतुर्व्यूहोपासनामाह—यत्तदिति । सर्वागमप्रसिद्धत्वमाह । स्वच्छं विशदम् । शान्तं रागादिरहितम् । भगवतः पदमुपलब्धिस्थानम् । अत एव वासुदेवाख्यं यदाहुः । अयमर्थः—अधिभूतरूपेण तस्यैव महानिति संज्ञा, अध्यात्मरूपेण चित्तमिति, उपास्यरूपेण वासुदेव इति, अधिष्ठाता तु तस्य क्षेत्रज्ञः, एवमहंकारे संकर्षण उपास्यः, रुद्रोऽधिष्ठाता, मनस्यनिरुद्ध उपास्यः, चन्द्रोऽधिष्ठाता, बुद्धौ प्रद्युम्न उपास्यः, ब्रह्माधिष्ठातेति ज्ञातव्यम् ॥ २१ ॥ स्वच्छत्वं भगवद्बिम्बग्राहित्वम् । अविकारित्वं लयविक्षेपराहित्यम् । अपां प्रकृतिः फेनतरङ्गादिरहितावस्था । परा भूसंसर्गात्प्राक्तनी सा यथा मधुरा स्वच्छा शान्ता च तद्वदित्यर्थः ॥ २२ ॥ अहंकारस्योत्पत्तिपूर्वकं लक्षणमाह—महत्तत्त्वादिति चतुर्भिः । क्रियासु शक्तिर्यस्य स क्रियाशक्तिः ॥ २३ ॥ ॥ ॥ ॥

१ द्वेधा संहारकत्वेन स्रष्टृत्वेन च । २ उभयथा पुरुषत्वेन प्रभावत्वेन च । ३ जीवाख्यचिद्रूपशक्तिम् । ४ स्वस्मिन् कारणरूपे । ५ अधिभूतरूपेण गोलकाधिष्ठानरूपेण । ६ अध्यात्मरूपेणेन्द्रियरूपेण । ७ चित्तमित्यनन्तरं क्रियाशक्तिरूपेण सूत्रमिति पूरणीयम् । ८ क्रियासु मनआदरादनेपु ।

त्रैविध्यमाह—वैकारिक इति । तस्य कार्यमाह । यतो यस्मान्मनआदीनां भव उत्पत्तिः ॥ २४ ॥ तस्मिन्नुपास्यव्यूहमाह—सहस्रशिरसमिति ॥ २५ ॥ लक्षणमाह—कर्तृत्वमिति । कर्तृत्वं देवतादिरूपेण । करणत्वमिन्द्रियरूपेण । कार्यत्वं भूतरूपेण । शान्तत्वादिकं तु तत्तत्कारणगुणत्रयरूपेण ॥ २६ ॥ मनस उत्पत्तिपूर्वकं लक्षणमाह—वैकारिकादिति द्वाभ्याम् । संकल्पश्चिन्तनम्, विकल्पो विशेषचिन्तनम् । यस्य मनसः संकल्पविकल्पाभ्यां कामसंभवो वर्तेत इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता, नतु प्रद्युम्नव्यूहोत्पत्तिः, तस्य संकल्पादिकार्यत्वाभावात्, उपास्यव्यूहस्य चानिरुद्धस्योक्तेः ॥ २७ ॥ शारदं शरत्कालीनमिन्दीवरं नीलोत्पलं तदिव श्यामम् । यच्छनैः संराध्यं वशीकर्तुं योग्यम्, दुर्ग्रहत्वात् ॥ २८ ॥ बुद्धेरुत्पत्तिपूर्वकं लक्षणमाह—तैजसादिति द्वाभ्याम् । हे सति । द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इन्द्रियाणामनुग्रह इति सविकल्पज्ञाने । हृषीकाणामधीश्वरमिति यदुक्तं तत्तु निर्विकल्पकज्ञाने ॥ २९ ॥ द्रव्य-

वैकारिकस्तैजसश्च तामसश्च यतो भवः ॥ मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २४ ॥ सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते ॥ संकर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २५ ॥ कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ॥ शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २६ ॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ॥ यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः ॥ २७ ॥ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ॥ शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥ तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ २९ ॥ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ॥ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥३०॥ तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ॥ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ॥ शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ ३२ ॥ अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ॥ तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३३ ॥ ॥ ॥ ॥ ॥

स्फुरणस्यैव प्रपञ्चः संशयादिः । विपर्यासो मिथ्याज्ञानम् । निश्चयः प्रमाणज्ञानम् । स्वापो निद्रा । 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति पातञ्जलोक्तेः ॥३०॥ इन्द्रियाणामुत्पत्तिमाह । तैजसानि तैजसाहंकाराज्जातानि । ज्ञानेन्द्रियाणां वैकारिकत्वशङ्कानिवृत्त्यर्थमेवकारः । द्विविधान्यपीन्द्रियाणि तैजसान्येवेत्यन्वयः । तत्र हेतुः—प्राणस्येति । हि यस्मात्प्राणस्य क्रियाशक्तिर्बुद्धेश्च विज्ञानशक्तिता । अतः प्राणस्य तैजसत्वात्तत्क्रियाशक्तिमतामिन्द्रियाणां तैजसत्वम् । तथा बुद्धेस्तैजसत्वात्तदीयज्ञानशक्तिमतामपीन्द्रियाणां तैजसत्वमित्यर्थः ॥ ३१ ॥ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तल्लक्षणं चाह—तामसादिति पञ्चदशभिः । श्रोत्रं तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनन्तरं तत्संबन्धमात्रं कथ्यते न तूत्पत्तिः । प्रागेवोत्पन्नत्वात् । शब्दं गच्छति प्राप्नोतीति शब्दगम् ॥३२॥ शब्दस्य लक्षणमाह । अर्थाश्रयत्वमर्थवाचकत्वम् । द्रष्टुर्लिङ्गत्वं कुड्यान्तरितस्य वक्तुर्ज्ञापकत्वम् । तदुक्तम्—लिङ्गं यद्द्रष्टृदृश्ययोरिति । नभसस्तन्मात्रत्वं सूक्ष्मत्वं शब्दस्य लक्षणमित्यन्वयः ॥३३॥

१ उपास्यव्यूहो मूर्तिभेदः । २ तत्कारण शान्तत्वादिकारणम् ।

नभसो लक्षणमाह—भूतानामिति । छिद्रदातृत्वमवकाशदातृत्वम् । बहिरन्तर्व्यवहारास्पदत्वम् । आत्मा मनः । प्राणादीनां धिष्ण्यत्वमाश्रयत्वं नाड्यादिच्छिद्ररूपेण । वृत्तिः कार्यमेव लक्षणं वृत्तिलक्षणम् । एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः । द्वितीयेन तन्मात्रलक्षणम् । तृतीयेन महाभूतलक्षणमित्यनुसंधेयम् ॥ ३४ ॥ का सा त्वक् । स्पर्शस्य संग्रहः सम्यग्ग्रहणं यया । पुंस्त्वं नियतलिङ्गत्वात् । यद्वा स्पर्शस्य संग्रहस्ततो भवतीति शेषः । शब्दतन्मात्रादित्यादितन्मात्राणामुत्तरोत्तरान्वयार्थमुक्तम् ॥ ३५ ॥ स्पर्शलक्षणमाह—मृदुत्वमिति । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वं च ॥ ३६ ॥ चालनं वृक्षशाखादेः । व्यूहनं मेलनं तृणादेः । प्राप्तिः संयोगो द्रव्यस्य गन्धवतो घ्राणं प्रति । तथा शैत्यादिमतः स्पर्शनं प्रति । शब्दस्य श्रोत्रं प्रति नेतृत्वम् । सर्वेन्द्रियाणामात्मत्वमुपोद्बलकत्वम् । कर्मणा कार्येणाभिलक्षणम् । भावे ल्युट् । कर्मैवाभिलक्षणमिति विग्रहे तु करणे ॥ ३७ ॥ ३८ ॥ द्रव्याकृतित्वं

भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ॥ प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥ ३४ ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः ॥ स्पर्शोऽभवत्ततो वायुस्त्वक् स्पर्शस्य च संग्रहः ॥ ३५ ॥ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ॥ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥ सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥ वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ॥ समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ ३८ ॥ द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ॥ तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ३९ ॥ द्योतनं पचनं पानमदनं हिममर्दनम् ॥ तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४० ॥ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् ॥ रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः ॥ ४१ ॥ कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ॥ भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥ क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् ॥ तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४३ ॥ ॥ ॥ ॥

द्रव्यस्याकारसमर्पकत्वम् । गुणता द्रव्योपसर्जनतया प्रतीतिः । शब्दस्य तु स्वातन्त्र्येणैव प्रतीतिः । अप्रत्यक्षद्रव्यस्य स्पर्शादेरपि स्वातन्त्र्येणैव प्रतीतिः रूपस्य तु नैवमिति तस्यायं विशेष उक्तः । व्यक्तिसंस्थात्वं व्यक्तेर्द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तत्परिणामतया प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥ द्योतनं प्रकाशनं, पचनं तण्डुलादेः । क्षुत्तृडशना पिपासा च तद्द्वारेण पानमदनं च ॥ ४० ॥ जिह्वा रसनेन्द्रियम् । रसो गृह्यतेऽनयेति रसग्रहः । यद्वा रसग्रहस्ततो भवतीति शेषः ॥ ४१ ॥ कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गिद्रव्याणाम् । य एको मधुर एव सन्नेवमनेकधा भिद्यते स रस इत्यर्थः ॥ ४२ ॥ क्लेदनमार्द्रीकरणम् । पिण्डनं मृदादेः पिण्डीकरणम् । तृप्तिस्तृप्तिदातृत्वम् । प्राणनं जीवनम् 'आपोमयः प्राणः' इति स्मृतेः, आप्यायनं तृड्वैक्लव्यनिवर्तनम्, उन्दनं मृदूकरणम् । ओन्दनमिति पाठेऽपि स एवार्थः । भूयस्त्वं कूपादावुद्धृतस्यापि पुनःपुनरुद्भवः ॥ ४३ ॥ ॥

१ आदिना मुखनासिकानाभ्यादिपरिग्रहः । २ चालनादिकर्मणाभिलक्षण वायोर्ज्ञापनम् । ३ विग्रहे अभिलक्ष्यतेऽनेनेत्यभिलक्षणमित्येवरूपे । ४ दैवेरितादन्तर्यामिप्रेरितात् । ५ चक्षुरिति । चक्षुः रूपग्राहकमासीदिति । तथा च चक्षुर्मात्रग्राह्यत्वं रूपलक्षण रूपग्राहकत्वं च चक्षुर्लक्षणमिति द्वयोरपि लक्षणमूह्यम् । ६ रसग्रहो जिह्वेति वक्तव्ये पूर्ववत्पुंस्त्वं नियतलिङ्गत्वात् ।

गन्धगो गन्धं प्राप्नोति ॥ ४४ ॥ करम्भो मिश्रगन्धः, यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारेण, पूतिर्दुर्गन्धः, सौरभ्यं कर्पूरादेः, शान्तः शतपत्रादेः, उग्रो लशुनादेः, अम्लस्तिन्तिण्यादेः । संसर्गिणां द्रव्यावयवानां वैषम्यात्स एवं विभिद्यते स गन्ध इत्यर्थः ॥४५॥ ब्रह्मणो भावनं प्रतिमादिरूपेण साकारतापादनम् । स्थानं जलादिविलक्षणतयाश्रयान्तरनैरपेक्ष्येण स्थितिः । धारणं जलाद्याधारत्वम् । सतामाकाशादीनां विशेषणमवच्छेदकत्वम् । सर्वेषां सत्त्वानां प्राणिनां तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम् ॥४६॥ श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह पञ्चभिः श्लोकार्धैः । नभसो गुणविशेषः शब्दो यस्यार्थो विषयः ॥४७॥४८॥ गुणविशेषशब्दव्यावर्त्यं दर्शयति—परस्येति । परस्य कारणस्य धर्मः शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयात् दृश्यते ।

रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् ॥ गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥४४॥ करम्भपूतिसौरभ्यशा[2]न्तोग्राम्लादिभिः पृथक् ॥ द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥ ४५ ॥ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥ नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ॥ वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥४७॥ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ॥ अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥ भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ॥४८॥ परस्य दृश्यते धर्मो ह्यपरस्मिन्समन्वयात् ॥ अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥४९॥ एतान्यसंहत्य यदा महदादीनि सप्त वै[3] ॥ कालकर्मगुणोपेतो[4] जगदादिरुपाविशत् ॥५०॥ ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् ॥ उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट्[6] ॥५१॥ एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ॥ तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः ॥ यत्र लोकवितानोऽयं[5] रूपं भगवतो हरेः ॥ ५२ ॥ हिरण्मयादण्डकोशादुत्थाय सलिलेशयात् ॥ तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥ निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ॥ वाण्या वह्निरथो नासे प्राणोतो घ्राण एतयोः ॥ ५४ ॥ ॥ ॥

अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि शब्दादिर्भूमावेवोपलभ्यते । चतुर्णां तत्रान्वयात् । जलादिषु यथान्वयमेव न सर्वः । आकाशे त्वन्यान्वयाभावादेक एव ॥४९॥ एवं कारणोत्पत्तिमुक्त्वा कार्योत्पत्तिमाह सार्धैस्त्रिभिः । एतान्यसंहत्यामिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् । सप्तेति च प्राधान्याभिप्रायेणोक्तम् । प्रवेशस्तु सर्वेष्वपि विवक्षित एव ॥५०॥ अनुविद्धेभ्यः क्षुभितेभ्यः । यस्मादण्डादसौ विराट् पुरुष उदतिष्ठत् ॥५१॥ भगवतो रूपमिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥ तस्मिन्नध्यात्मादिविभागमाह—हिरण्मयादिति नवभिः । उत्थायौदासीन्यं विहाय तमाविश्याधिष्ठाय । महांश्चासौ देवश्च । खं छिद्रम् ॥ ५३ ॥ वाण्या सह वह्निरभवत्प्राविशत् । नासे निरभिद्येताम् । प्राणोतः प्राणेन ऊतः स्यूतः सन् घ्राण एतयोर्नासिकयोरभवदित्यनुषङ्गः ॥ ५४ ॥ ॥

१ रूपान्तरापत्तिप्रकारैः । २ 'शान्तोदग्रादिभिः' इति पाठः । ३ अत्र 'न शेकुः पुरुषं स्रष्टुं भोगायतनमञ्जसा' इत्यर्धमधिकं विजयध्वज्याम् । ४ कालः सृष्टिसमयः, कर्म जीवानामदृष्टं, गुणा उपादानम् इति दीपि० । ५ लोकवितानश्चतुर्दशभुवनसमूहः । ६ विराट् हिरण्यगर्भात्मकः सूक्ष्मः समष्टिजीवः उदतिष्ठत् सुषुप्तिमिवातिक्रम्य सचेतनो बभूव ।

घ्राणादनन्तरं वायुश्च । प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यम् । न्यभिद्येतामन्वभिद्येतामिति पाठद्वयेऽप्येक एवार्थः । ततो दिशः प्राविशन् ॥ ५५ ॥ आदिशब्देन केशाः ॥ ५६ ॥ ५७ ॥ स्वराडिन्द्रः । हरिर्विष्णुः ॥ ५८ ॥ आभृतं जातम् ॥ ५९ ॥ ६० ॥ बुद्ध्यादिषु हृदयमेवाधिष्ठानम् । गिरां पतिर्ब्रह्मा ।



घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः ॥ तस्मात्सूर्यो न्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥ निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः ॥ ५६ ॥ रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ॥ गुदादपानोऽपानाच्च मृत्युर्लोकभयंकरः ॥ ५७ ॥ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ॥ पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥ नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् ॥ नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥ क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ॥ अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥ मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ॥ अहंकारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६१ ॥ एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ॥ पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् ॥ घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ ६३ ॥ अक्षिणी चक्षुषादित्यो नोदतिष्ठत्तदा विराट् ॥ श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ ६४ ॥ त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् ॥ रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ ६५ ॥ गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् ॥ हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ ६६ ॥ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् ॥ नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ ६७ ॥ क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट् ॥ हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट् ॥ ६८ ॥ बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् ॥ रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६९ ॥ चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा ॥ विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥७०॥ यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ॥ प्रभवन्ति विना येन[3] नोत्थापयितुमोजसा ॥ ७१ ॥ ॥ ॥

चैत्यः क्षेत्रज्ञः ॥ ६१ ॥ अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञं विवेक्तुं सर्वेषां पुनः प्रवेशमाह—एत इति नवभिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ विराड्देहस्य व्यष्टिदेहं दृष्टान्तत्वेन दर्शयन्सांख्यानुकथनस्य प्रयोजनमाह—यथेति द्वाभ्याम् ॥ ७१ ॥ ॥ ॥

१ 'ततो विराट्' इति क्वचित्पाठो दृश्यते । २ पुरुषाकारम् । ३ येन क्षेत्रज्ञेन विना ।

प्रथमं परमेश्वरे भक्तिस्ततोऽन्यत्र विरक्तिस्ततो योगप्रवृत्ता धीः एकाग्रं चित्तं ततो यज्ज्ञानं तेन प्रत्यगात्मानं क्षेत्रज्ञमस्मिन्नात्मनि कार्यकारणसङ्घाते विविच्य चिन्तयेत् ॥ ७२ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां षड्विंशतितमोऽध्यायः ॥२६॥ ॥छ॥ ॥ सप्तविंशे ततः सम्यग्बहुसाधनयोगतः ॥ पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ १ ॥ विवेकज्ञानेन मोक्षमुपपादयितुं शुद्धस्यैव पुरुषस्य प्रकृत्यविवेकतः पूर्वोक्तं संसारमनुस्मारयति—प्रकृतिस्थोऽपीति त्रिभिः । देहस्थोऽपि नाज्यते न लिप्यते । गुणैस्तत्कृतैः सुखदुःखादिभिः । निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्मात् ॥ १ ॥ ॥ २ ॥ अनिर्वृतः सन् । प्रासङ्गिकैः प्रकृतिसङ्गकृतैः । सदसन्मिश्रयोनिषु देवतिर्यङ्नरादिषु संसारपदवीं प्राप्नोति ॥ ३ ॥ ननु तर्ह्यवास्तवत्वात्संसृतेः किं

तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ॥ भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥ ७२ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने तत्त्वसमाम्नाये षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥छ॥

॥ श्रीभगवानुवाच ॥ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ ॥ १ ॥ स[3] एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ॥ अहंक्रियाविमूढात्मा कर्ताऽस्मीत्यभिमन्यते ॥ २ ॥ तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः ॥ प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥३॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४ ॥ अत एव शनैश्चित्तं प्रसक्तमसतां पथि ॥ भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् ॥ ५ ॥ यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः ॥ मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ६ ॥ सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः ॥ ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा ॥ ७ ॥ यदृच्छयोपलब्धेन संतुष्टो मितभुङ्मुनिः ॥ विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥ ८ ॥ सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् ॥ ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ ९ ॥ ॥ ॥ ॥

तन्निवृत्तिप्रयासेन तत्राह—अर्थे हीति ॥ ४ ॥ यतो विषयध्यानमनर्थहेतुः, अतो मनो नियन्तव्यमित्याह—अत एवेति । असतामिन्द्रियाणां पथि विषयमार्गे । तीव्रेन दृढेन । विरक्त्या च तीव्रया ॥ ५ ॥ भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह षड्भिः । यमादिभिर्योगमार्गैश्चित्तमभ्यसन् पुनःपुनरेकाग्रीकुर्वन्नात्मानमुपलभ्य सर्वानुस्यूतमद्वयं परमात्मानं प्रतिपद्यत इति षष्ठेनान्वयः । सत्येन निष्कपटेन । भावेन प्रेम्णा ॥ ६ ॥ अप्रसङ्गतः सङ्गत्यागेन । बलीयसा ईश्वरेऽर्पितेन ॥ ७ ॥ विविक्तशरण एकान्तवासी ॥ ८ ॥ असदाग्रहम् अहंममताम् । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तेन ज्ञानेन ॥ ९ ॥ ॥

१ नानासाधनोपायैस्तत्संबन्धाद्वा इति दीपि० । २ जले दृष्टोऽप्यर्को यथा वस्तुतस्तद्गुणैरार्द्रत्वादिभिर्न लिप्यते तद्वत् । ३ 'स एवं' इति पाठः । ४ अभिविषज्जते धर्म्यध्यास प्राप्नोति । ५ संसारपदवीं जन्ममरणादिपरम्पराम् । ६ कर्मभिर्धर्माधर्मैः दोषै रागद्वेषादिभिः । ७ अनर्थागमः स्वशिरश्छेदादिरूपः । ८ चतुर्थश्लोकोत्तरं 'प्रबुध्य स्वप्रसुप्तिभ्यां संसारन्नात्मवैशसम् । वैतथ्यं व्यभिचारं च नासौ ध्यायेयतो भयम् ॥' इति विजयध्वज्यामधिकः श्लोकः । ९ 'उपस्थितेन' इति पाठः ।

निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः । अत एव दूरीभूतमन्यदर्शनं यस्य । आत्मनाऽहंकारावच्छिन्नेनात्मानं शुद्धमुपलभ्य । एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे दृष्टान्तमाह । चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव । एवमात्मदृक् शुद्धमात्मानं पश्यन् ॥ १० ॥ मुक्तलिङ्गं निरुपाधिकमसति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणाभासमानं ब्रह्म प्राप्नोति । शुद्धजीवस्वरूपाद्विशेषमाह । सतः कारणस्य प्रधानस्य बन्धुमधिष्ठानम् । असतः कार्यस्य चक्षुरिव प्रकाशकम् । सर्वेषु कार्यकारणेष्वनुस्यूतम् । अद्वयं परिपूर्णम् ॥११॥ अहंकारोपहितेन शुद्धब्रह्मप्रतिपत्तिं सदृष्टान्तमाह—यथेति । जले स्थित आभासः सूर्यप्रतिबिम्बो यदा गृहान्तर्वर्तिभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिम्बेन यथा प्रथमं जलस्थ आभासोऽवदृश्यते लक्ष्यते, गगनस्थस्य गृहमध्ये प्रतिबिम्बायोगात् । चार्थे तथाशब्दः । यथा चेत्यर्थः । यथा च जलस्थेन दिवि स्थितः सूर्यो लक्ष्यते ॥१२॥ एवं भूतेन्द्रियमनोमयैः देहेन्द्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिम्बैस्त्रिवृत्त्रिगुणोऽहंकारः सतो ब्रह्मण आभासो यस्मिंस्तेन रूपेण लक्षितः । अहंकारस्याभासं विना विषयाभासानुत्पत्तेः । अनेन चाहंकारेण सदाभासवता सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षित इत्यर्थः ॥१३॥ इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति त्रिभिः । भूतादिष्वसत्सत्सु-

निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ॥ उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥ मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते ॥ ततो बन्धुमसच्चक्षुः सर्वानुस्यूतमद्वयम् ॥ ११ ॥ यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ॥ स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥ एवं त्रिवृदहंकारो भूतेन्द्रियमनोमयैः ॥ स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥ भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया ॥ लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥ मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ॥ नष्टेऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ॥ साहंकारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥ ॥ देवहूतिरुवाच ॥ पुरुषं प्रकृतिर्ब्रह्मन्न विमुञ्चति कर्हिचित् ॥ अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥ १७ ॥ ॥ ॥

त्स्वेऽव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥१४॥ ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटः किं नावभासते तत्राह । पूर्वं स द्रष्टाऽतो द्रष्टृत्वेन सविकल्पतया स्फुटं प्रतीतः । सुषुप्तौ तु भूतादेरहंकारविषयस्य लीनत्वात्तद्विषयेऽहंकारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो यः । अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टान्तः—नष्टवित्तो यथा ऽऽतुरो विवशः, नष्टवद्भवतीत्यर्थः ॥१५॥ ननु सुषुप्तौ न किंचिदनुभूयते, मैवम्, 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसंधानादित्याह—एवमिति । ननु प्रतिसंधाने साहंकारस्य प्रतीतेः कथं निरहंक्रियत्वं तत्राह । साहंकारस्य द्रव्यस्य कार्यकारणसंघातस्यानुग्रहः प्रकाशकः अवस्थानं च । द्रव्यविशेषणतयाऽहंकारस्यापि दृश्यत्वाच्च तद्द्रष्टात्मा तद्व्यतिरिक्तः । तमात्मानमित्यन्वयः ॥१६॥ भक्तिविरक्तिभ्यां सत्यपि विवेके प्रकृतिपुरुषयोः परस्परत्यागाभावात्कथं मुक्तिरिति पृच्छति—पुरुषमिति चतुर्भिः । ॥६१॥
पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुञ्चतीत्यर्थः ॥१७॥

१ अनुग्रहोऽनुग्राहकः । २ साहंकारस्य सान्तःकरणस्य द्रव्यस्य देहस्य । ३ अधिष्ठानं च धारक इत्यर्थः ।

व्यतिरेकाभावमात्रे दृष्टान्तः—यथा व्यतिरेकतो भावः सत्ता नास्ति । गन्धस्य कदाचिदपक्षयदर्शनाद्दृष्टान्तान्तरम्—अपामिति । बुद्धेः प्रकृतेः । परस्य पुरुषस्य च ॥ १८ ॥ ततः किमत आह—अकर्तुरिति । ये गुणा आश्रयो यस्य सः । तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य कैवल्यं कथम् ॥ १९ ॥ अत एव कचिन्निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यत इत्याह—कचिदिति ॥ २० ॥ न हि प्रकृतिसंबन्धमात्रं बन्धहेतुः किंतु गुणबुद्ध्या तदासक्तिस्तन्निवृत्तौ सत्यां मोक्षो घटते । कचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन्परिहरति त्रिभिः । निमित्तं फलम् । तन्न निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेन धर्मेण । अमलात्मना निर्मलेन मनसा । श्रुतेन कथाश्रवणेन संभृतया पुष्टया ॥ २१ ॥ २२ ॥ दह्यमानाभिभूयमाना तिरोहिता भवति ॥ २३ ॥ एवं च सति

यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ॥ अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥१८॥ अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ॥ गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥ कचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ॥ अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते ॥ २० ॥ ॥ श्रीभगवानुवाच ॥ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ॥ तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥२१॥ ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ॥ तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥२२॥ प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ॥ तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥२३॥ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ॥ नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥२४॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ॥ युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥ यदैवमध्यात्मरतः कालेन बहुजन्मना ॥ सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः ॥ २७ ॥ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ॥ निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥ प्राप्नोतीहाञ्जसा धीरः स्वदृशा छिन्नसंशयः ॥ यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे ॥ २९ ॥ ॥

पुनरुद्भवो नास्तीत्याह । भुक्तो भोगो यस्याः । नित्यशः सदा दृष्टो दोषो यस्याः । अत एव परित्यक्ता सतीश्वरस्यापरतन्त्रस्य स्वे महिम्नि स्थितस्य स्वानन्दं प्राप्तस्य ॥ २४ ॥ अविवेकावस्थायामनर्थहेतुरपि विवेकानन्तरं न भवतीति सदृष्टान्तमाह—यथेति । द्वाभ्याम् । प्रस्वापः स्वप्नः बह्वनर्थान्बिभर्ति पुष्णाति । प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५ ॥ २६ ॥ उपसंहरति—यदैवमिति त्रिभिः । बहूनि जन्मानि यस्मिन्काले ॥ २७ ॥ प्रतिबुद्धार्थो विदितात्मतत्त्वः । कैवल्याख्यं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं मदाश्रयं निःश्रेयसं निरतिशयानन्दम् ॥ २८ ॥ स्वदृशा आत्मज्ञानेन छिन्नाः संशया मिथ्याज्ञानानि यस्य लिङ्गाद्विनिर्गमे लिङ्गशरीरनाशे सतीत्यर्थः ॥ २९ ॥ ॥ ॥ ॥ ॥

१ अतः बन्धनहेतुप्रकृतिगुणसद्भावात् । २ ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः । तस्य तीव्रत्वं चिरकालोदितत्वरत्वम् । ३ अग्नेः प्राबल्ये सति तस्यैवाविर्भावनिदानभूताप्यरणिः स्वस्मादुत्पन्नेनाग्निना दह्यमाना यथा विनश्यति तथा साधनदशायामविद्याप्रयुक्तदेहाद्यभिमानाज्जातैर्ज्ञानादिसाधनैर्दह्यमाना प्रकृतिर्नश्यतीत्यर्थः । ४ 'लिङ्गविनिर्गमे' इति पाठः । ५ बह्वनर्थान् चौरव्याघ्रसर्पाद्युपद्रवान् ।

तदा त्वणिमादिसिद्धयोऽन्तरायरूपा भवन्ति । तासु योगेनोपचितासु समृद्धासु न योगादन्यो हेतुर्यासां तासु यदा सिद्धस्य चेतो न विपज्जते । अङ्ग हे मातः, अथ तदान्तमतिक्रान्तोऽत्यन्तो योऽहं तत्संबन्धिनी । यत्र यस्यां गतौ मृत्योर्हासो न भवति । विपक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः ॥३०॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भा० दी० टीकायां सप्तविंशतितमोऽध्यायः ॥२७॥ ॥छ॥ ॥ अष्टाविंशे ततोऽष्टाङ्ग-योगेन ध्यानशोभिना ॥ सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते ॥ १ ॥ भक्तिं संक्षेपतः प्रोच्य सांख्यामाख्याय विस्तृतम् ॥ अथाह वैष्णवं[1] योगमष्टाङ्गं कपिलो हरिः ॥ २ ॥ सवीजस्य[2] सालम्बनस्य । प्रसन्नं सत् ॥ १ ॥ तत्र यमनियमानाह[3] त्रिभिरक्षरद्वयाधिकैः । शक्त्या स्वधर्माचरणम् ॥ २ ॥ ग्राम्यस्त्रैव-र्गिको धर्मस्तस्मान्निवृत्तिः । मितं च तन्मेध्यं शुद्धं च तस्यादनम् । तत्र मितं नाम 'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ॥ मारुतस्य प्रचारार्थं चतुर्थमव-

यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग[4] ॥ अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्यु-हासः ॥ ३० ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे सप्तविंशतितमोऽध्यायः॥ २७ ॥ ॥ छ ॥ ॥

॥ श्रीभगवानुवाच ॥ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ॥ मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥ स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥ दैवाल्लब्धेन संतोष आत्मविच्चरणार्चनम् ॥ २ ॥ ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ॥ मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥ अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ॥ ब्रह्म-चर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥ मौनं सदासनजयस्थैर्यं प्राणजयः शनैः ॥ प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ॥ वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥ ६ ॥ एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ॥ बुद्ध्या[5] युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥ शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ॥ तस्मिन्स्वस्ति[6] समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥ ॥ ॥

शेषयेत् ॥' इति स्मृतिप्रसिद्धम् । विविक्तं विजनं क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ यावतार्थः प्रयोजनं तावन्मात्रस्य परिग्रहः ॥ ४ ॥ आसनादीन्य-ङ्गान्याह त्रिभिः । सत आसनस्य जयेन स्थैर्यम् ॥ ५ ॥ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणं धारणा । आत्मनो मनसः समाधानमात्माकारता ॥ ६ ॥ अन्यैश्च व्रतदानादिभिः । पथिभिरुपायैः ॥ ७ ॥ आसनादीनि प्रपञ्चयति—शुचाविति यावत्समाप्ति । आसनं कुशाजिनचैलोत्तरं प्रतिष्ठाप्य, स्वस्तिकासनेन यथासुखमिति वा । समभ्यसेत् प्राणमिति शेषः । 'ऊरू जङ्घान्तराधाय पादाग्रे जानुमध्यगे ॥ योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ॥' इति ॥ ८ ॥ ॥ ॥ ॥ ॥

१ वैष्णवं विष्णुध्यानमयम् । २ सवीजस्य सकारणस्य ससाधनकस्येत्यर्थः इति वीर० । ३ अहिंसाऽसत्याऽस्तेयापरिग्रहब्रह्मचर्यमौनानि यमाः । तदन्यानि स्वधर्माचरणादीनि नियमाः । ४ 'अम्ब' इति पाठः । ५ बुद्ध्या विषयाणां हेयत्वनिश्चयेन । ६ 'स्वस्तिकमासीनः' इत्यपि पाठः ।

वाय्वयोरन्तःप्रवेशनं पूरकः, प्रवेशितस्य धारणं कुम्भकः, धृतस्य बहिर्निःसारणं रेचकः, प्रतिकूलेन वा रेचककुम्भकपूरकैः । यद्वा इडयाऽऽपूर्य पिङ्गलया रेचनम्, पिङ्गलयाऽऽपूर्य इडया रेचनमित्येवं प्रतिकूलेन । वाशब्दश्चार्थे । स्थिरं सत्पुनरपि चञ्चलं यथा न भवति तथा शोधयेत् ॥ ९ ॥ ध्मातं संतप्तमित्यर्थः । लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात् । ततश्चञ्चलं न स्यादिति भावः ॥ १० ॥ प्राणायामादीनां समाधौ द्वारकार्याण्याह—प्राणायामैरिति । दोषान् वातश्लेष्मादीन् । संसर्गान्विषयसंसर्गान् । अनीश्वरान् रागादीन् । वायुना सह मनसः स्थिरीकरणं धारणा, स्थिरस्य वृत्तिसंततिः[1] ध्यानम्, वृत्तिनिरोधः[2] समाधिरिति भेदः ॥ ११ ॥ सुसमाहितं स्थिरं जातम् । काष्ठां कलाम् । मूर्तिमित्यर्थः । स्वनासाग्रेऽवलोकनं यस्य । एतच्च लयविक्षेपयोः परिहाराय ॥ १२ ॥ ध्येयं हरिमाह सप्तभिः । प्रसन्नं वदनाम्भोजं यस्य तं ध्यायेदिति पष्ठेनान्वयः । पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य । नीलोत्पलदलवच्छ्यामम् ॥ १३ ॥ लस-

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥९॥ मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः ॥ वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥१०॥ प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान्[3] ॥ प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्गुणान् ॥११॥ यदा मनः स्वविरजं योगेन[4] सुसमाहितम् ॥ काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥ प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ॥ नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥ लसत्पङ्कजकिंजल्कपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥१४॥ मत्तद्विरेफकलया परीतं वनमालया ॥ परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥ काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ॥ दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥१६॥ अपीच्यदर्शनं[5] शश्वत्सर्वलोकनमस्कृतम् ॥ सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम्[6] ॥ १७ ॥ कीर्तन्यतीर्थयशसं[7] पुण्यश्लोकयशस्करम् ॥ ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥१८॥ स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ॥ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥ ॥ ॥

त्पङ्कजस्य किंजल्कवत्पीते कौशेये वाससी यस्य । श्रीवत्सो लाञ्छनं वक्षसि यस्य । भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कन्धरा यस्य ॥ १४ ॥ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया । परीतं व्याप्तम् । परार्ध्यान्यमूल्यानि हारादीनि यस्य ॥ १५ ॥ काञ्चीगुणेनोल्लसन्ती श्रोणी यस्य । भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य । भक्तानां मनोनयनानि वर्धयति हर्षयतीति तथा ॥ १६ ॥ अपीच्यमतिसुन्दरं भक्तविषयं दर्शनं यस्य । कैशोरे तारुण्ये वयसि सन्तं स्थितम् । भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य । पुण्यश्लोका बलिप्रमुखास्तेषां यशस्करम् । समग्राण्यङ्गानि यस्मिन् । न च्यवते नापयाति न पर्येति वा ॥ १८ ॥ प्रेक्षणीयमीहितं लीला यस्य ॥ १९ ॥ ॥ ॥ ॥ ॥

१ संततिर्नैरन्तर्यम् । २ वृत्तिनिरोधः ध्यातृध्येयविभागाभावेन शुद्धब्रह्मरूपता। ३ किल्बिषान् पापानि। ४ योगेन प्राणायामाद्युपायेन। ५ अपीच्यशब्दस्यातिसुन्दररूपेऽर्थे शक्तिग्रहः। ६ भृत्यार्थकातरं सदैवाधिकभक्तिसुखदानेऽप्यपरितोषात् । ७ तीर्थं सर्वदोषनिवर्तकम् ।

तदेवं समग्रध्यानमुक्त्वैकैकावयवध्यानमाह । तस्मिन् लब्धं पदं स्थितिर्येन तच्चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य । एकत्रैकैकस्मिन्नङ्गे इत्यर्थः ॥ २० ॥ तदेव पादादिक्रमेणाह त्रयोदशभिः । सम्यक् चिन्तयेत् । पादतले रेखात्मकानि वज्रादीनि लाञ्छनानि तैः आढ्यं युक्तम् । उत्तुङ्गाश्च रक्ताश्च विलसन्तो नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयान्धकारो येन । एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनैवोच्यते ॥ २१ ॥ किंच यस्य शौचेन क्षालनेन निःसृतायाः सरित्प्रवराया गङ्गाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन धृतेन शिवोऽपि शिवोऽभूत्, अत्यधिकं सुखं प्रापेत्यर्थः । ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं क्षिप्तं वज्रमिव यत् । यद्वा शमलशैले निसृष्टं खलाञ्छनरूपं वज्रं येन तत् ॥ २२ ॥ विभोर्जानुद्वयं तत्पर्यन्तं जङ्घाद्वयमखिलस्य विधातुर्ब्रह्मणो जनन्या लक्ष्म्या सँल्लालितं स्पर्शचातुर्येण संसेवितम् । संसारित्वमिव प्रतीतं वारयति—अभवस्येति । हृदि कुर्याद्ध्यायेत् ॥ २३ ॥

तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ॥२०॥ संचिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ॥ उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥ यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥ जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः ॥ ऊर्वोर्निधाय करपल्लवरोचिषा यत्सँल्लालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥ ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ ॥ व्यालम्बिपीतवरवाससि वर्तमानकाञ्चीकलापपरिरम्भिनितम्बबिम्बम् ॥ २४ ॥ नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ॥ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥ वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ॥ कण्ठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥ ॥ ॥

सुपर्णस्य भुजयोः स्कन्धयोरधि उपरि । ओजसो बलस्य निधी आधारौ । अतसिकायाः कुसुमवत्कान्त्याऽवभासमानौ । व्यालम्बि आगुल्फं लम्बमानं यत्पीताम्बरं वासस्तस्मिन् वर्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेषो विद्यते यस्य तद्विभोर्नितम्बबिम्बं च हृदि कुर्यादिति पूर्वेणान्वयः ॥ २४ ॥ अमुष्य हरेर्नाभिह्रदं ध्यायेत् । कथंभूतम् । भुवनानां कोशस्य समूहस्य गुहाधिष्ठानं यदुदरं तत्र स्थितम् । यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढं उत्थितम् । तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत् । विशदहाराणां मयूखैर्गौरं श्वेतम् ॥ २५ ॥ ऋषभस्य श्रेष्ठस्य महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं वक्षः कण्ठं च मनसि कुर्यात् । कथंभूतं कण्ठम् । कौस्तुभमणियो भूषणार्थं भूतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य । कौस्तुभमणिमेव स्वयमलंकुर्वन्तमित्यर्थः । पुंसां सतृणां द्रष्टृणां च मनोनयनानां निर्वृतिमादधानमित्युभयोर्विशेषणम् ॥ २६ ॥ ॥

१ निश्चित्य ज्ञात्वेत्यर्थः । २ अन्धकारोऽसामर्थ्यम् । ३ ध्येयत्वेनोपादेयं चारुत्वेन प्राप्यं यद्भगवच्चरणारविन्दं तद्विशेषणं यथाङ्कुशादिकमित्यर्थः । ४ अति अधिक सुखमित्यर्थोऽर्थः । ५ कमलकोमलचरणे वज्रोपमाऽश्लीलत्वरुचो यद्वेति । ६ श्यामस्यापि श्वेतत्वं चाकचक्येनाभिरूप्यात् । ७ कौस्तुभमणिनिषेवणेन भूषणभूषणात्मकमिति न्यायो दर्शितः ।

निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु । अधिश्रिता लोकपाला येषु । दशशतारं चक्रम् । न सह्यं तेजो यस्य । करसरोरुहे राजहंसमिव ॥ २७ ॥
अरातयो ये भटा योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्ताम् । अस्य कण्ठे मालां मणिं च स्मरेत् । मधुव्रतानां वरूथस्य गिरा उपघुष्टां नादिताम् ।
चैत्यस्य जीवस्य तत्त्वम् । तदुक्तं वैष्णवे 'आत्मानमस्य जगतो निर्लेपमगुणामलम् ॥ बिभर्ति कौस्तुभमणिं स्वरूपं भगवान्हरिः ॥' इति ॥ २८ ॥ भृत्येष्वनुक-
म्पिता कृतानुकम्पा या धीस्तया गृहीता मूर्तिर्येन तस्य । विस्फुरती ये मकरकुण्डले तयोर्वल्गितेन प्रचलनेन विद्योतिताावमलौ कपोलौ यस्मिंस्तत् । उदारा
उन्नता नासा यस्मिंस्तत् ॥ २९ ॥ यच्च स्वया भूत्या शोभयाऽलिभिः परिसेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतनं पद्ममधिक्षिपद्वर्तते तद्ध्यायेत् । तत्र कुन्तलैरली-
नामधिक्षेपः । नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यम् । अब्जे इव नेत्रे यस्मिन्नित्युपमानान्तरम् । उल्लसन्त्यौ भ्रुवौ यस्मिन् । मनोमयं मनसाविर्भवत् ॥ ३० ॥

संचिन्तयेद्दशशतारमसह्यतेजः शङ्खं च तत्कर-
बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिन्तयेद्दशशतारमसह्यतेजः शङ्खं च तत्कर-
सरोरुहराजहंसम् ॥२७॥ कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ॥ मालां मधुव्रतवरूथ-
गिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २८ ॥ भृत्यानुकम्पितधियेह गृहीतमूर्तेः संचिन्तयेद्भगवतो वदनार°
विन्दम् ॥ यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥२९॥ यच्छ्रीनिकेतमलिभिः परिसेव्य-
मानं भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ॥ मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ ३० ॥
तस्यावलोकमधिकं कृपयातिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ॥ स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं
विपुलभावनया गुहायाम् ॥ ३१ ॥ हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ॥ संमोहनाय
रचितं निजमाययाऽस्य भ्रूमण्डलं मुनिकृते मकरध्वजस्य ॥ ३२ ॥ ध्यानायनं प्रहसितं बहुलाधरोष्ठभासारुणायिततनु-
द्विजकुन्दपङ्क्ति ॥ ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्यार्द्रयार्पितमना न पृथग्दिदृक्षेत् ॥ ३३ ॥

॥ गुहायां हृदि ॥ ३१ ॥ अवनता येऽखिललो-
कृपयाऽधिकमत्यर्थम् । अक्षिभ्यां निसृष्टं प्रयुक्तम् । स्निग्धस्मितेनानुगुणितं संयुक्तम् । विपुलः प्रसादो यस्मिन् । गुहायां हृदि ॥ ३१ ॥ अवनता येऽखिललो-
कास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा तं हरेर्हासम् । अस्यात्युदारं भ्रूमण्डलं च ध्यायेत् । कथंभूतम् । निजमायया मकरध्वजस्यापि
संमोहनाय रचितम् । मुनिकृते मुनीनामुपकाराय । मुनीनां संमोहने प्रवृत्तं काममेव संमोहयितुमित्यर्थः ॥ ३२ ॥ मन्दहासध्यानमुक्त्वा स्फुटहासध्यान-
माह । विष्णोः प्रहसितमुच्चैर्हसितं ध्यायेत् । कीदृशम् । ध्यानायनमतिसुन्दरतया प्रयत्नं विनैव ध्यानस्य विषयभूतम् । सौन्दर्यमेवाह । बहुलयाऽधिकयाऽधरो-
ष्ठस्य भासा कान्त्यारुणीभूतास्तनवः सूक्ष्मा द्विजा एव कुन्दमुकुलानि तेषां पङ्क्तिः स्फुरति यस्मिंस्तत् । देहकुहरे हृदयाकाशेऽवसितस्य ज्ञातस्य । प्रेमरसेनार्द्रया
भक्त्या तस्मिन्नेवार्पितमनाः सन् पृथक्तद्व्यतिरिक्तं द्रष्टुं नेच्छेत् । न चित्तं विचालयेदित्यर्थः ॥ ३३ ॥ ॥ ॥ ॥

१ 'अगुणात्मकम्' इति क्वचित्पाठः । २ गृहीता अप्रपञ्चात्प्रपञ्चे आनीता । ३ मुनिकृते किं रचितमिति काकोत्प्रेक्षा व्यङ्ग्या तस्य परमसुन्दरत्वेन नित्यसिद्धत्वात् इति दीपि० । ४ 'देहकुहरे' इति पाठस्तत्र हृदयविवरे इत्यर्थः । अयमेव च युक्त इति प्रतीयते । ५ स्नेहातिशयाभिव्यञ्जकस्मितेन । मनुसुते' इति विज० पाठः तत्र मातुः संबोधनम् ।

समाधिमाह—एवमिति द्वाभ्याम् । निर्बीजः सबीजश्चेति द्विविधो योगः । तत्र निर्बीजयोगे 'यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥' इति गीताद्युक्तमार्गेण क्रियमाणोऽपि दुष्करः समाधिः । सबीजे तु सुकरः[1] । तत्र हि परमानन्दमूर्तौ हरौ ध्यायमानेऽयत्नत एव चित्तोपरमो भवति । तदुक्तम् 'हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते' इति । अतः[2] स एवोपक्षिप्तो[3] योगस्य लक्षणं वक्ष्ये सबीजस्येति । तदेवायत्नसिद्धत्वं दर्शयति । एवं ध्यानमार्गेण हरौ प्रतिलब्धो भावः प्रेमा येन, तथा भक्त्या द्रवद्धृदयं यस्य, प्रमोदादुद्गतानि पुलकानि यस्य । औत्कण्ठ्यप्रवृत्ताश्रुकलया च मुहुरर्द्यमान आनन्दसंप्लुवे निमज्जमानो दुर्ग्रहस्य भगवतो ग्रहणे बडिशं मत्स्यवेधनमिवोपायभूतं चित्तमपि ध्येयाद्वियुङ्क्ते । तद्धारणे शिथिलप्रयत्नो भवतीत्यर्थः ॥ ३४ ॥ यर्हि यदैवं निर्विषयं भगवत्यत एव मुक्ताश्रयं च । ध्येयसंबन्धं विना ध्यातर्यवस्थानासंभवात् । नच पूर्ववच्छब्दादिर्विषयः स्यात् । यतस्तत्र विरक्तं परमानन्दानुभवेन । अतो निर्वाणं लयमृच्छति । वृत्तिरूपतां परित्यज्य ब्रह्माकारेण परिणमत इत्यर्थः । यथा अर्चिर्ज्वालाश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते । अत्रास्यां दशायामव्यवधानं ध्यातृध्येयविभागशून्यमेकमखण्डमात्मानमनुगतमीक्षते । अत्र हेतुः—

एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् । औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥ ३४ ॥ मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः । आत्मानमत्र पुरुषो व्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥ सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये । हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ॥ ३६ ॥ देहं च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३७ ॥

प्रतिनिवृत्तोऽपगतो गुणप्रवाहो देहाद्युपाधिर्यस्य ॥ ३५ ॥ नच सुप्तोत्थित इव पुनः संसरतीत्याह । सोऽपि स एव पुरुषस्तस्मिन्महिम्नि ब्रह्मरूपेऽवसितोऽवसानं निष्ठां प्राप्तः । कया । मनसो निवृत्त्या चरमयाऽविद्यारहितयेति[4] सुषुप्ताद्विशेषः । तत्र ह्यविद्याऽस्ति, नत्विदानीम् । अत्र हेतुः—एतया योगाभ्यासकृतयेत्यर्थः । नन्वेवमपि सुखदुःखयोरात्मधर्मत्वे कुतो ब्रह्मैक्यं तत्राह । दुःखयोः सुखदुःखयोर्हेतुत्वं भोक्तृत्वं च यत्पूर्वमासीत्तदप्यसत्यविद्याकृते कर्तर्यहंकारे विधत्ते । तन्निष्ठमेव पश्यतीत्यर्थः । यत उपलब्धपरात्मकाष्ठोऽपरोक्षीकृतात्मतत्त्वः ॥ ३६ ॥ तस्य जीवन्मुक्तिमाह—देहं चेति द्वाभ्याम् । चरम उक्तलक्षणः सिद्धो देहमपि न विपश्यति, कुतः सुखदुःखे । आसनादुत्थितमुत्थाय तत्रैव स्थितं तत्स्थानादपेतं ततो दैववशात्पुनरप्युपेतं वा न विपश्यति । यतः स्वरूपं प्राप्तः । यतो देहात्स्वरूपमध्यगमत्तं देहमिति वा । सतोऽप्यननुसंधाने दृष्टान्तः—वासः परिकृतं कटितटे परिवेष्टितं स्थितं गतं वा मदिरामदेनान्धो यथा न पश्यति ॥ ३७ ॥

१ तत्र हि सालम्बयोगे । २ अतः सालम्बनसमाधेः सुकरत्वात् । ३ उपक्षिप्तः समारब्धः । ४ चरमोऽविद्यारहितः ।

ननु तर्हि देहस्य कथं प्रवृत्तिनिवृत्ती जीवनं वा तत्राह—देहोऽपीति । दैवं पूर्वसंस्कारः, तद्वशेन गच्छन्यावत्स्वारम्भकं कर्मास्ति तावत्प्रतिसमीक्षते जीवत्येव । सासुः सेन्द्रियः । ननु तर्हि तस्मिन्पुनः सङ्गः स्यात्तत्राह । तं देहं स्वाप्नदेहादितुल्यं सप्रपञ्चं पुत्रादिसहितं पुनर्न भजतेऽहंममेति नाभिमन्यते । अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येन । अत एव प्रतिबुद्धं वस्त्वात्मतत्त्वं येन सः ॥ ३८ ॥ प्रतिबोधप्रकारमाह षड्भिः—यथेति । अतिस्नेहवशादात्मत्वेनाभिमतादपि पुत्रादेः । मर्त्यः पित्रादिः । पुरुषो देहादेर्द्रष्टा ॥ ३९ ॥ पृथगवस्थानाभावेऽपि भेदं सदृष्टान्तमाह । यथोल्मुकादिदानीं ज्वलतः काष्ठात् । स्वसंभवात् अग्नेः संभूतात् । आत्मत्वेनाग्नेः स्वरूपत्वेनाभिमतादपि । अत्यन्ताविवेकिनो हि धूमेऽप्यग्न्यभिमानोऽस्ति । उल्मुकात्पूर्वसिद्धादपि तद्दाहकः प्रकाशकश्चाग्निः पृथगेव ॥ ४० ॥

**देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३८ ॥ यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥ यथोल्मुकाद्विस्फुलिङ्गाद्धूमाद्वापि स्वसंभवात् ॥ अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात् ॥ ४० ॥ भूतेन्द्रियान्तःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मा तथा पृथग्द्रष्टा भगवान्ब्रह्मसंज्ञितः ॥ ४१ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥ स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ॥ योनीनां गुणवैषम्यात्तथात्मा प्रकृतौ स्थितः ॥ ४३ ॥ तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ॥ दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४४ ॥ इति श्रीम०म०तृ० कापिलेयोपाख्याने साधनानुष्ठानं नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥**

भूतादेर्द्रष्टा तेभ्यः पृथक् तस्मादपि जीवसंज्ञिताद्ब्रह्मसंज्ञितः पृथक् । तथा प्रधानादपि तत्प्रवर्तको भगवान्पृथगित्यर्थः ॥ ४१ ॥ उपाधितो विवेकमुक्त्वा तस्यैक्यमाह—सर्वभूतेष्विति । भूतेषु चतुर्विधेषु । तदात्मतां महाभूतात्मताम् ॥ ४२ ॥ धर्मभेदस्याप्यौपाधिकतां सदृष्टान्तमाह । स्वयोनिषु काष्ठेषु । ज्योतिरग्निः । गुणवैषम्याद्दीर्घह्रस्वादिभेदात् । प्रकृतौ देहे ॥ ४३ ॥ स्वां स्वांशस्य जीवस्य बन्धहेतुं दैवीं देवस्य विष्णोः शक्तिं पराभाव्य तत्प्रसादेनैव जित्वा स्वरूपेण ब्रह्मत्वेनावतिष्ठते ॥ ४४ ॥

॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ॥ छ ॥

१ प्रवृत्तिनिवृत्ती विहितनिषिद्धयोर्यथाक्रमम् । २ तस्मिन्देहे । ३ प्रतिबोधो विवेकः । ४ वक्ष्यमाणोल्मुकेन पौनरुक्त्यमाशङ्क्येदानीं ज्वलतः काष्ठादिति विशेषपरतया व्याख्यातम् । ५ पूर्वसिद्धात् इदानीं ज्वलत्काष्ठस्य कारणीभूतात् । ६ अस्मिन्पद्ये यथाशब्दस्योल्मुकशब्दस्य च पौनरुक्त्यपरिहारश्चेत्थम्—स्वसंभवादात्मत्वेनाभिमतादपि यथेदानीं ज्वलतः काष्ठाद्यथा च विस्फुलिङ्गाद्यथा च धूमाद्यथा च पूर्वसिद्धादुल्मुकादग्निः पृथगिति मूले यथाशब्दस्य प्रत्येकं संबन्धेनान्वयः । द्विर्यथाशब्दोपादानमेतदर्थमेव । चक्रवर्ती तु अत्र यथाशब्दस्योल्मुकशब्दस्य च पौनरुक्त्यादेवं व्याख्येयमित्युक्त्वा उल्मुकाद्दह्यमानात्काष्ठाद्यथाग्निः पृथग्भवति यथा चोल्मुकात्पृथक् तथा विस्फुलिङ्गादपि यथा विस्फुलिङ्गात्पृथक् तथा धूमादपि स्वकार्यभूतात् पृथक् । कीदृशात् आत्मत्वेनाग्निस्वरूपत्वेनाभिमतादपि । अविवेकेन ह्युल्मुको धूमोऽप्यग्निरयमित्यभिधीयते । यद्वा द्वितीययथाशब्दस्य यथावदित्यर्थः । द्वितीयमुल्मुकादिति उल्मुकमत्ति ज्वालयतीत्युल्मुकादित्यग्निविशेषणम् । ७ 'मित्राच्च' इति पाठः । ८ भूतादेरित्यादि तस्मादपीत्यादि च दृष्टान्तद्वयम् । तथा प्रधानादित्यादिदार्ष्टान्तिकम् । अनेन 'पुरुषं प्रकृतिर्ब्रह्मन्कर्हिचिन्न विमुञ्चति' इति प्रश्नोत्तरमुक्तं भवतीति ज्ञेयम् । चक्रवर्ती तु दार्ष्टान्तिकं योजयतीत्यवतरणं दत्त्वा प्रधानादुल्मुकस्थानीयात् । जीवसञ्ज्ञिताज्जीवरूपो यः सञ्ज्ञितः सञ्ज्ञा चेतना प्राप्तस्तस्मादुल्मुकस्थानीयात् । भूतेन्द्रियान्तःकरणाद्धूमस्थानीयादात्मा परमात्माऽग्निस्थानीयः पृथक् । यतो द्रष्टा । स हि दृश्यात्पृथगेव सहस्थितोऽप्यसङ्गो यतो भगवानचिन्त्यैश्वर्यः । भगवानेव ब्रह्मसंज्ञा प्राप्तः कस्मिंश्चिदधिकारिणि निर्विशेषचिन्मात्रत्वेन भातश्च भवतीत्यर्थ इति व्याचख्यौ ।

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ॥ कालस्य च बलं घोरा संसृतिश्च विरक्तये ॥१॥ उक्तानुवादपूर्वकं भक्तिमार्गभेदान्पृच्छति द्वाभ्याम् । लक्षणं महदादीनां यथा सांख्येषु तथा कथितम् । येन लक्षणेन । तत्पारमार्थिकं परस्परविभक्तमित्यर्थः । यो भक्तियोगो मूलं प्रयोजनं यस्य तद्यन्मूलम् । तत्कथितम् । तस्य भक्तियोगस्य मार्गं प्रकारं विस्तरतो मे ब्रूहि ॥१॥२॥ येन संसृतीनामाख्यानेन विगतरागो भवेत् ॥३॥ ईश्वररूपस्य महाप्रभावस्य ते त्वदात्मकस्य । यद्धेतोर्यद्भयात्कुशलं पुण्यं कुर्वन्ति ॥४॥ अचक्षुषोऽज्ञस्य । अतो मिथ्याभूते देहादावभिमतिरहंकारो यस्य । अतः कर्मसु अनुविद्धया आसक्तया धिया श्रान्तस्य । अत एवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगप्रकाशको भास्करः किलाविर्भूतोऽसि ॥५॥ श्लक्ष्णं सुन्दरम् ॥६॥ मार्गैः प्रकारविशेषैः । तानेवाह । स्वभावभूता ये

॥ देवहूतिरुवाच॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ॥ स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥ यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते ॥ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥२॥ विरागो येन पुरुषो भगवन्सर्वतो भवेत् ॥ आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥३॥ कालस्येश्वररूपस्य परेषां च परस्य ते ॥ स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥४॥ लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ॥ श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥५॥ ॥मैत्रेय उवाच॥ इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ॥ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥६॥ ॥ श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ॥ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ ७ ॥ अभिसंधाय यो हिंसां दम्भं मात्सर्यमेव वा ॥ संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥८॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा ॥ अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥९॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १० ॥ ॥ ॥

गुणास्तेषां मार्गेण वृत्तिभेदेन । भावोऽभिप्रायः । फलसंकल्पभेदाद्भक्तिभेद इत्यर्थः ॥ ७ ॥ अभिसंधाय संकल्प्य । संरम्भी क्रोधी । भिन्नदृक् भेददर्शी । यो भावं भक्तिं कुर्यात्स त्रिविधोऽपि तामसः ॥ ८ ॥ पृथग्भावो भेददर्शी ॥ ९ ॥ कर्मनिर्हारं पापक्षयम् । परस्मिन्परमेश्वरे । तदर्पणं कर्मार्पणम्, भगवत्प्रीतिमुद्दिश्येत्यर्थः । यष्टव्यमिति, विधिसिद्धिमुद्दिश्येत्यर्थः । भेददर्शित्वमर्चादावर्चनं च त्रिष्वपि समानम् । तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः । तासु यथोत्तरं श्रैष्ठ्यम् । एवं च श्रवणकीर्तनादयो नवापि प्रत्येकं नव नव भेदाः । तदेवं सगुणा भक्तिरेकाशीतिभेदा भवति ॥ १० ॥ ॥ ॥

१ बहुधा सगुणनिर्गुणतदवान्तरभेदेनानेकधा । २ तत्स्वरूपम् । ३ योगप्रकाशको भक्तिज्ञानयोगरूपपद्मविकाशकः । ४ 'लोकसमृतीः' इति पाठः । ५ परेषा परस्य ब्रह्मादीना नियन्तुः । ६ आचक्ष्वेति पूर्वपद्योक्तक्रियया सबन्धः । ७ 'अनुबद्धया' इति पाठः । ८ पृथक् मत्तोऽन्यत्र विषयादिष्वेव भावः स्पृहा यस्य सः । ९ स्वं च भावश्च गुणाश्च तेषां, तत्र स्वशब्दवाच्यभक्तियोगस्य वृत्तिभेदेन शमादिकार्यभेदेन । वृत्तिभेदः श्रवणादिः । भावस्य वृत्तिभेदो दास्यादिः गुणानां वृत्तिभेदो हिंसादिसंकल्पस्तेन इति दीपि० । १० प्रत्येकं नवभेदा इति । यथा—श्रवणं त्रिविधं तामसं, त्रिविधं राजसं, त्रिविधं सात्त्विकमेवं नवविधं । एवं कीर्तनादिकमपि नवनवविधमेव इति दीपि० ।

मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य
निर्गुणा तु भक्तिरेकविधैव, तामाह—मद्गुणश्रुतिमात्रेणेति द्वाभ्याम् । अहैतुकी फलानुसन्धानशून्या । अव्यवहिता भेददर्शनरहिता च ॥ १२ ॥ भक्तानां निष्का-
लक्षणमित्यन्वयः । अविच्छिन्ना संतता ॥ ११ ॥ लक्षणं स्वरूपम् । अहैतुकी फलानुसन्धानशून्या । सार्ष्टिं समानैश्वर्यम्, सामीप्यं निकटवर्तित्वम्, सारूप्यं समानरूपताम्, एकत्वं सायु-
मतां कैमुत्यन्यायेनाह—सालोक्यं मया सहैकस्मिन् लोके वासम्, किमिति तर्हि भजन्ते भक्तेरेव परमफलत्वादित्याह—स एवेति । ननु त्रैगुण्यं
ज्यम् । उत अपि दीयमानमपि न गृह्णन्ति, कुतस्तत्कामनेत्यर्थः ॥ १३ ॥ मद्भावाय ब्रह्मत्वाय ॥ १४ ॥ एवंभूताया भक्तेः साधना-
हित्वा ब्रह्मप्राप्तिः परमफलं प्रसिद्धम् । सत्यम् । तत्तु भक्तावानुषङ्गिकमित्याह । येन भक्तियोगेन ।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ मनोगतिरविच्छिन्ना तथा गङ्गाम्भसोऽम्बुधौ ॥११॥ लक्षणं भक्तियोगस्य निर्गु-
णस्य ह्युदाहृतम् ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१२॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीय-
मानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥ येनातिव्रज्य त्रिगुणं मद्भा-
वायोपपद्यते ॥ १४ ॥ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥
मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ॥ भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥ १६ ॥ महतां बहुमानेन दीनाना-
मनुकम्पया ॥ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥ १७ ॥ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥ आर्ज-
वेनार्यसङ्गेन निरहंक्रियया तथा ॥ १८ ॥ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥ पुरुषस्याञ्जसाऽभ्येति श्रुतमात्र-
गुणं हि माम् ॥१९॥ यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ॥ एवं योगरतं चेत आत्मानमविकारि यत् ॥२०॥
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ॥ तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥

न्याह पञ्चभिः । निषेवितेन सम्यगनुष्ठितेन । अनिमित्तेन स्वधर्मेण नित्यनैमित्तिकेन । महीयसा श्रद्धादियुक्तेन । क्रियायोगेन पञ्चरात्राद्युक्तपूजाप्रकारेण ।
शस्तेन निष्कामेन ॥ १५ ॥ मद्धिष्ण्यं मत्प्रतिमादि तस्य दर्शनादिभिः । सत्त्वेन धैर्येण । असङ्गमेन वैराग्येण ॥ १६ ॥ १७ ॥ आर्जवेनाकौटिल्येन ॥ १८ ॥
मद्धर्मणो भगवद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तम् ॥ १९ ॥ प्रयत्नं विनैव प्राप्तौ दृष्टान्तः—वातो रथः प्रापको यस्य गन्धस्य । आशयात्स्थानात् । आवृङ्क्ते आत्म-
सात्करोति । अविकारि समं यच्चेतः ॥ २० ॥ चित्तशुद्धिश्च सर्वभूतात्मदृष्ट्यैव भवतीति वक्तुं केवलप्रतिमादिनिष्ठां निन्दन्नाह—अहमिति सप्तभिः । अर्चैव
विडम्बनमनुकरणम् । अर्चायां पूजांविडम्बनमिति वा । अवज्ञोपेक्षाद्वेषनिन्दाः क्रमेण चतुर्भिर्निषिध्यन्ते ॥ २१ ॥

१ स एवेति । पूर्वोक्तलक्षणो भक्तियोगनामा योगः अथवा निर्गुणभक्तियोगः । २ एवंभूताया निरन्तरोक्तमोक्षप्रापिकायाः । ३ आत्यन्तिक इति । अन्तमतिक्रान्तोऽत्यन्तः स एवात्य-
न्तिकः । विनयादित्वाट्ठक् । अविनाशी इत्यर्थः । ४ त्रिगुणं गुणत्रयकार्यभूतं संसारम् । ५ 'निषेवितानिमित्तेन' इति पाठस्तत्र कर्मधारयः । अत्रत्यतृतीयान्तानामेतैः परिसंशुद्ध आशय
इति पञ्चमेनान्वयः । ६ आत्मानात्मविवेकशास्त्रश्रवणात् । ७ पुरुषस्याशयश्चित्तम् । अञ्जसा प्रयत्नं विनैव । ८ 'सर्वात्मा' इति पाठः । ९ अत्र चित्तशुद्ध्यर्थमेव सर्वत्रान्तर्यामिदृष्ट्योपा-
सनं विधीयते नतु प्रतिमापूजनं निन्द्यत इति दीपि० ।

हित्वा उपेक्ष्य ॥ २२ ॥ २३ ॥ द्रव्यैरुत्पन्नया क्रियया । भूतग्रामावमानिनस्तन्निन्दकस्य ॥ २४ ॥ तर्हि किमर्चादावर्चनमनर्थकमेव, नेत्याह—अर्चादाविति । सर्वभूतेष्ववस्थितं मां स्वहृदि यावन्न वेद । स्वकर्मकृत्कर्माविरोधेन यथावकाशम् । अनेन कर्मनिष्ठाया अपि स एवावधिरित्युक्तं भवति ॥ २५ ॥ अन्तरा अन्तरं भेदम् । उत् अपि । अरमल्पम् । अल्पमपि भेदं यः पश्यतीत्यर्थः । यद्वा अन्तरा मध्ये । उदरं शरीरम् । मृत्युरहं तस्य भयं विदधे करोमि ॥ २६ ॥ अथ अतः सर्वभूतेषु कृतालयं कृतावासम् । तत्र हेतुः—भूतानामात्मानमन्तर्यामिणम् । अभिन्नेन चक्षुषा समदर्शनेन ॥ २७ ॥ तत्रापि यथोत्तरं मानाद्यतिशयः कर्तव्य इति वक्तुं तारतम्यमाह—जीवा इति सार्धैः षड्भिः । अजीवानामचेतनेभ्यः[1] । ततस्तेष्वपि प्राणभृतः प्राणवृत्तिमन्तः । सचित्ता ज्ञानवन्तः ।

योमां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ॥ हित्वार्चां[2] भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः[3] ॥ भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति॥२३॥ अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ॥ नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ॥ यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥ आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्॥तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम्॥२६॥ अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ॥ अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ॥ ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥२८॥ तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ॥ तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥ रूपभेदविदस्तत्र ततश्चोभयतोदतः ॥ तेषां बहुपदाः[4] श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ॥ ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥३१॥ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत् ॥ मुक्तसङ्गस्ततो भूयानदोग्धा[5] धर्ममात्मनः ॥ ३२ ॥ तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥ मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥ न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥ ॥ ॥

इन्द्रियाणां वृत्तयो येषु । इन्द्रियवृत्तयो वृक्षाणामपि सूक्ष्माः सन्त्येव । तथाहि महाभारते मोक्षधर्मेषु स्मर्यते 'तस्मात्पश्यन्ति पादपाः' । 'तस्माजिघ्रन्ति पादपाः' इत्यादि । प्रसिद्धा तु स्पर्शनेन्द्रियवृत्तिरेव ॥ २८ ॥ अतस्तेभ्यः स्पर्शवेदिभ्यो रसवेदिनो मत्स्यादयः श्रेष्ठाः । गन्धविदो भ्रमरादयः । शब्दविदः सर्पादयः ॥ २९ ॥ रूपभेदविदः काकादयः । उभयतो दन्ताः येषाम् । अपादेभ्यो बहुपादास्तेभ्यश्चतुष्पादा इत्यर्थः । ततो द्विपान्मनुष्यः ॥ ३० ॥ ततस्तेषु वर्णाः ॥ ३१ ॥ संशयच्छेत्ता मीमांसकः । ततोऽपि केवलात्स्वकर्मकृत् । मुक्तसङ्गस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥ अर्पिता अशेषाः क्रिया अर्थास्तत्फलान्यात्मा देहश्च येन अत एव निरन्तरोऽव्यवहितः । अकर्तुः कर्तृत्वाभिमानशून्यात् ॥ ३३ ॥ ॥ ॥ ॥

१ अजीवानामित्यपादानस्य शेषत्वविवक्षया षष्ठी । अचेतनेभ्यो जीर्णसस्यादिभ्यः । जीवा जीवत्सस्यादयः । २ अर्चां प्रतिमाम् । ३ भिन्नदर्शिनः सर्वतान्तर्याम्येकत्वदृष्टिरहितस्य इति क्रम० । ४ ते च मर्कटादयः । ५ धर्ममदोग्धा धर्मजन्यफलानभीप्सुः ।

जीवानां कलया परिकलनेनं अन्तर्यामितया प्रविष्ट इति द्रष्टव्येत्यर्थः ॥ ३४ ॥ उक्तं भक्तियोगं पूर्वोक्तेनाष्टाङ्गयोगेन सहोपसंहरति—भक्तियोगश्चेति । हे मानवि । पुरुषं परमेश्वरम् ॥३५॥ यदन्यत्पृष्टं जीवस्य संसृतीः कालस्य स्वरूपं चाचक्ष्वेति तदाह—एतदिति सार्धेन । एतत्सर्वनियन्तृ यद्भगवतो रूपम् । कीदृशम् । प्रधान-पुरुषात्मकं परं तद्व्यतिरिक्तं च एतदेव दैवमित्यभिधीयते । कीदृशम् । कर्मणो विचेष्टितं नानासंसृतिलक्षणं यस्मात्तत् । दैवप्रेरितकर्मकृताः संसृतयो विचित्रा इत्यर्थः ॥३६॥ एतदेव भगवतो रूपं काल इति चाभिधीयते । कीदृशम् । रूपभेदस्य वस्तूनामन्यथात्वस्यास्पदमाश्रयः कारणम् । उक्तं हि 'कालाद्गुणव्यतिकरः' इति । वक्ष्यते च 'गुणव्यतिकरः कालः' इति । दिव्यमद्भुतप्रभावम् । तदेवाह—भूतानामिति यावत्समाप्ति । महदादीनां तत्तदभिमानिनां जीवानाम् ॥३७॥ भयहेतुत्व-

मनसैतानि भूतानि प्रणमेद्बहु मानयन् ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥ भक्तियोगश्च योगश्च मया मानव्युदीरितः ॥ ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥ एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ॥ परं प्रधानं पुरुषं दैवं कर्मविचेष्टितम् ॥३६॥ रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ॥ भूतानां महदादीनां यतो भिन्न-दृशां भयम् ॥३७॥ योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ॥ स विष्णवाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥३८॥ न चास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः ॥ आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥३९॥ यद्भया-द्वाति वातोऽयं सूर्यस्तपति यद्भयात् ॥ यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥ यद्वनस्पतयो भीता लता-श्चौषधिभिः सह ॥ स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥४१॥ स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ॥ अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥४२॥ नभो ददाति श्वसतां पदं यन्नियमाददः ॥ लोकं स्वदेहं तनुते महान्सप्तभिरावृतम् ॥४३॥ गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ॥ वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥ सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ॥ जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥ ४५ ॥ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने एकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ छ ॥

माह—य इति । भूतैरेव भूतान्यत्ति संहरति । अधियज्ञो यज्ञफलदाता । कलयतां वशीकुर्वताम् ॥३८॥३९॥४०॥ यत् यस्माद्भीताः ॥४१॥ यतो भीताः सरितः स्रवन्ति । इन्धे दीप्यते सहगिरिभिर्भूः ॥४२॥ अदो नभो यन्नियमाद्यस्याज्ञया । महान्महत्तत्त्वमङ्कुरात्मकं स्वदेहं लोकत्वेन तनुते विस्तारयति ॥४३॥ गुणाभि-मानिनो गुणनियन्तारो देवाः ब्रह्मादयोऽस्य विश्वस्य सर्गादिषु प्रवर्तन्ते । अनुयुगं वारंवारमित्यर्थः ॥४४॥ जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृत् । मृत्युना-ऽन्तकमपि मारयन्नन्तकरः स्वयं त्वनादिरनन्तोऽव्ययश्च ॥४५॥ इति श्रीमद्भा० म० तृ० भावार्थदीपिकायां टीकायामेकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥छ॥

१ परिकलनेन नियमनेन । २ एवं भावनया । ३ एकतरेणैवेत्यवधारणेन साधनान्तरव्युदासः । ४ आविशति रोगरूपेण प्रविशति । ५ पदं स्थानं श्वासक्रियाणामवकाशमिति यावत् । ६ अव्ययश्च मारणादौ श्रमादिविकारशून्यः ।

त्रिंशे तु कायकान्तादिलालनाकुलचेतसाम् ॥ कामिनां तामसी पापादधोगतिरुदीर्यते ॥ १ ॥ कालप्रभाववर्णनपूर्वकं वैराग्याय विचित्रकर्मकृतां संसृतिमध्यायत्रयेण प्रपञ्चयति । तस्यैतस्य बलिनः कालस्य । वलिनेति वा पाठः । काल्यमानो विचाल्यमानोऽपि । वायोर्विक्रमं यथा मेघपङ्क्तिर्न वेद ॥ १ ॥ विक्रममेवाह । यं यमर्थं दुःखेन प्रयासेनोपादत्ते आपादयति तं तमर्थं भगवान्कालो धुनोति विनाशयति । यत्कृते यन्निमित्तम् ॥ २ ॥ शोके हेतुः—यत् यस्मात् सानुबन्धस्य कलत्रादिसहितस्य देहस्य संबन्धीनि गृहादीनि । वसु द्रव्यम् । अनुक्तसमुच्चयार्थश्चकारः ॥ ३ ॥ दुर्मतित्वं दर्शयन् दुःखं प्रपञ्चयति—जन्तुरिति चतुर्दशभिः ॥ ४ ॥ नारक्यां नरकाहारादिभिर्जातायाम् ॥ ५ ॥ निरूढमूलं प्रसृतमनोरथं हृदयं यस्य । बहुमन्यते कृतार्थोऽहमिति श्लाघते ॥ ६ ॥ उद्वहनाधिना

॥ कपिल उवाच ॥ ॥ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ॥ काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥१॥ यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ॥ तं तं धुनोति भगवान्पुमान् शोचति यत्कृते ॥ २ ॥ यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः ॥ ध्रुवाणि मन्यते मोहाद्गृहक्षेत्रवसूनि च ॥३॥ जन्तुर्वै भव एतस्मिन्यां यां योनिमनुव्रजेत् ॥ तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥ नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ॥ नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥ आत्मजायासुतागारपशुद्रविणबन्धुषु ॥ निरूढमूलहृदय आत्मानं बहुमन्यते ॥ ६ ॥ संदह्यमानसर्वाङ्ग एषामुद्वहनाधिना ॥ करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥ आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ॥ रहोरचितयालापैः शिशूनां कलभाषिणाम् ॥ ८ ॥ गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ॥ कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥ अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ॥ पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥ वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ॥ लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥११॥ कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ॥ श्रिया विहीनः कृपणो ध्यायन् श्वसिति मूढधीः ॥१२॥ एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा ॥ नाद्रियन्ते यथा पूर्वं कीनाशा इव गोजरम् ॥ १३ ॥ ॥

पोषणचिन्तया ॥ ७ ॥ दुराशयत्वमाह । आक्षिप्त आत्मा इन्द्रियाणि च यस्य । कया । असतीनां पुंश्चलीनामपि रहसि रचितया संभोगादिरूपया । मधुरभाषिणां शिशूनामालापैश्च । सुखवन्मन्यत इत्युत्तरेणान्वयः ॥ ८ ॥ कूटाः वित्तशाठ्यादिबहुला धर्मा येषु दुःखप्रधानेषु ॥ ९ ॥ येषां पोषणेनाधो याति तान्पुष्णाति । शेषभुगिति भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥ वार्तायां जीविकायाम् । निःसत्त्वोऽशक्तः । परार्थे परस्वे ॥ ११ ॥ अकल्पोऽसमर्थः ॥१२॥ पूर्वं यथाद्रियन्ते तथादरं न कुर्वन्ति । कीनाशाः कृपणाः कृषीवलाः । गोजरं वृद्धं बलीवर्दम् ॥ १३ ॥ ॥ ॥ ॥

१ पापात्कायकान्तादिनिमित्तात् । २ तस्य पूर्ववर्णिताद्भुतप्रभावस्य । ३ 'बलिना' इति पाठः । तत्र बलवता कालेनेत्यर्थः । ४ एतस्मिन्प्रपञ्चे । ५ नारकिशरीरम् । ६ लुप्यमानायामिति ज्ञानचारम्भकालीनस्य लोपस्य व्यञ्जितम् । ७ मन्दभाग्यत्वादेवोद्यमस्य वैयर्थ्यं तद्वैयर्थ्यादेव श्रिया विहीनः अत एव कृपण इति योजनीयम् । ८ अत्रात्मा मनः ।

म्रियमाणः पुष्यमाणः ॥ १४ ॥ अवमत्याऽवज्ञयोपन्यस्तं समीपे प्रक्षिप्तम् । गृहपालः श्वा । आहरन् भुञ्जानः । आमयावी रोगी ॥ १५ ॥ उत्तारो बहिर्निर्गतनेत्रः । कफेन संरुद्धाः नाड्यो मार्गभूता यस्य । कासश्वासाभ्यां कृत आयासो यस्य । घुरघुर इति शब्दं करोति ॥ १६ ॥ परिवीतः परिवेष्टितः । वाच्यमानो बन्धो तातेत्याहूयमानः ॥ १७ ॥ अस्तधीर्नष्टमतिः ॥ १८ ॥ मृतस्य पुण्यपापाभ्यां द्वे गती, तत्र पापगतिमाह—यमदूतावित्यादि यावत्समाप्ति । सरभसं सक्रोधमीक्षणं ययोस्तौ दृष्ट्वा ॥ १९ ॥ आवृत्य निरुध्य ॥ २० ॥ तयोस्तर्जनैर्निर्भिन्नं हृदयं यस्य । आर्तः संश्वलतीति द्वितीयेनान्वयः ॥ २१ ॥

तत्राप्यजातनिर्वेदो[1] म्रियमाणः स्वयंभृतैः ॥ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥ आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ॥ आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः[2] ॥१५॥ वायुनोत्क्रमतोत्तारः[3] कफसंरुद्धनाडिकः ॥ कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १६ ॥ शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ॥ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७ ॥ एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः ॥ म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥ १८ ॥ यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ॥ स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥ १९ ॥ यातनादेह[4] आवृत्य पाशैर्बद्ध्वा गले बलात् ॥ नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥२०॥ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥ २१ ॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि तप्तवालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥ २२ ॥ तत्र तत्र पतन् श्रान्तो मूर्च्छितः पुनरुत्थितः ॥ पथा पापीयसा नीतस्तमसा[5] यमसादनम् ॥ २३ ॥ योजनानां सहस्राणि नवतिं नव चाध्वनः ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ २४ ॥ आदीपनं[6] स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ॥ आत्ममांसादनं[7] क्वापि स्वकृत्तं परतोऽपि वा ॥ २५ ॥ जीवतश्चान्त्राभ्युद्धारः[8] श्वगृध्रैर्यमसादने ॥ सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥ ॥ ॥ ॥ ॥

क्षुत्तृड्भ्यां परीतो व्याप्तः । तप्ता वालुका यस्मिन् । निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन् ॥ २२ ॥ यमसादनं नीतो भवति ॥ २३ ॥ तत्रैव विशेषमाह । अध्वनः संबन्धिनां योजनानां नवतिं नव च सहस्राणि पापाधिक्ये द्वाभ्यां वा नीतः सन् ॥ २४ ॥ यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनं प्रज्वलनं प्राप्नोति । स्वेन कृत्तमन्येन वा कृत्तं छिन्नं यत्स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥ २५ ॥ आत्मनो वैशसं पीडाम् ॥ २६ ॥ ॥ ॥

१ अजातनिर्वेदोऽनुत्पन्नपरितापः । २ आमयाव्यादिपदानां यथोत्तरं हेतुहेतुमद्भावः । ३ उत्क्रमता ऊर्ध्वश्वासरूपेण वहता । ४ यातनायोग्ये देहे । ५ तमसाऽन्धकारप्रचुरेण । 'तरसा' इत्यपि पाठः । ६ आदीपनं दूतैः कृतमिति शेषः । ७ आत्ममांसस्यादनं प्राप्नोति । किं तदात्ममासम् । यत्स्वकृत्तं परतः परेण वा कृत्तमित्यन्वयः । ८ जीवतश्च जीवतोऽपि स्वस्य गृध्रकर्तृकमन्त्राभ्युद्धारं प्राप्नोति । सर्वत्र द्वितीयान्त एव पाठः । सर्पादिकर्तृभिः स्वसंबन्धिनीं पीडां प्राप्नोति ।

भिदापनं भेदप्रापणम् ॥ २७ ॥ २८ ॥ न चैतदसंभावितमत्रापि दृश्यमानत्वादित्याह—अत्रैवेति ॥ २९ ॥ उभयं कुटुम्बं स्वं देहं च ॥ ३० ॥ पापार्जितं धनं भुञ्जते वहवः, कर्तैव नरकं यातीत्याह—एक इति । भूतद्रोहेण यद्भृतं तत्स्थूलं स्वकलेवरमिहैव हित्वा । कुशलादितरत् पापं तदेव पाथेयं भोग्यं यस्य ॥ ३१ ॥ ननु पापमपि विहाय गच्छतु तत्राह—दैवेनेति । तस्य कुटुम्बपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं भुङ्क्ते ॥ ३२ ॥ ननु कुटुम्बपोषणं विहितमेव तत्राह—केवलेनेति । तमसो नरकस्य चरमं पदं स्थानम् ॥ ३३ ॥ पुनर्मनुष्यशरीरप्राप्तिप्रकारमाह । नरलोकस्य मनुष्यदेहस्य प्राप्तेरधस्तादर्वाग्यावत्यो यातनाः । आदिशब्देन श्वसूकरादियोनयश्च यास्ताः सर्वाः क्रमेण संप्राप्य भोगेन क्षीणपापः शुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥

कृन्तनं चावयवशो गजादिभ्यो भिदापनम् ॥ पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्तयोः ॥२७॥ यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः ॥ भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ॥२८॥ अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ॥ या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥२९॥ एवं कुटुम्बं बिभ्राण उदरंभर एव वा ॥ विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥३०॥ एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम् ॥ कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥३१॥ दैवेनासादितं तस्य शमलं निरये पुमान् ॥ भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥ केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ॥ याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥३३॥ अधस्तान्नरलोकस्य यावतीर्यातनादयः ॥ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥३४॥ ॥ इति श्रीमद्भा० महा० तृतीयस्कन्धे कापिलेयोपाख्याने कर्मविपाको नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥श्रीभगवानुवाच॥ कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ॥ स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥ कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ॥ दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥२॥ मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ॥ नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥३॥

॥ एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहान्तरा ॥ मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥ १ ॥ पुनरत्राव्रजेदित्युक्तं तदेव विशेषतो दर्शयति । कर्मणा पूर्वकृतेन । दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्तकं यस्य । प्रविष्टो भवति ॥ १ ॥ कललं शुक्रशोणितमिश्रितं भवति । बुद्बुदं वर्तुलाकारम् । कर्कन्धूर्बदरीफलं तदाकारं कठिनम् । पेशी मांसपिण्डाकारम् । अण्डं वा योन्यन्तरे ॥ २ ॥ बाह्वङ्घ्र्यादीनामङ्गानां विग्रहो विभागः । लिङ्गं च छिद्राणि च तेषामुद्भवः ॥ ३ ॥ ॥ ॥ ॥

१ अवयवशः प्रत्यवयवम् । २ 'उदरभरिरेव वा' इति पाठः । ३ ध्वान्तं नरकम् । 'अध्वानम्' इति पाठः । तत्राध्वानं नरकमार्गम् । ४ 'मर्माणि' इति पाठः । ५ भवतीति साध्यक्रियाध्याहारः । ६ लिङ्गं पुंस्त्वाद्यभिव्यञ्जकशरीरं इन्द्रियाणां चिह्नानि च ।

जरायुणा गर्भवेष्टनेन वीतः प्रावृतः ॥४॥ मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्चैधमाना धातवो यस्य । जन्तूनां संभवो यस्मिंस्तस्मिन्नसंमते गर्ते शेते । तथा च मार्कण्डेयपुराणे 'नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते ॥ स्त्रीणां तथान्त्रसुषिरे सा निबद्धोपजायते ॥ क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥ तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै ॥' इति ॥५॥ तत्रत्यैः कृमिभिः खादद्भिः । सौकुमार्यात्कोमलत्वेन क्षतानि सर्वाङ्गाणि यस्य ॥ ६ ॥ उल्बणैर्दुःसहैः । सर्वेष्वङ्गेषूत्थिता वेदना यस्य । आस्ते इत्युत्तरेणान्वयः ॥७॥ उल्वेन जरायुणा । भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥८॥ दैवात्पूर्वकर्मवशात् । लब्धा स्मृतिर्येन सः । दीर्घं दुरन्तमनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् ॥ ९ ॥ सूतिहेतुभिर्वातैर्वेपितः । सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिवेति ॥१०॥ नाथमानो याचमान

चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः ॥ षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥४॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते ॥ शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसंभवे ॥५॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् ॥ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥ कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ७ ॥ उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः ॥ आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ८ ॥ अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ॥ तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ॥ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥९॥ आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ॥ नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥१०॥ नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः ॥ स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥ ॥ जन्तुरुवाच ॥ तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि चलच्चरणारविन्दम् ॥ सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥ यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ॥ आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि ॥ १३ ॥ ॥ ॥

उपतप्यमान इति वा ऋषिर्देहात्मदर्शी । भीतः पुनर्गर्भवासात् । सप्त वध्रयो बन्धनभूता धातवो यस्य सः । विक्लवया व्याकुलया ॥ ११ ॥ उपसन्नं जगद्रक्षितुं स्वेच्छया गृहीतनानामूर्तेर्भगवतश्चरणारविन्दमकुतोभयं सोऽहं शरणं व्रजामि । भुवि चलदिति श्रीकृष्णावताराभिप्रायेण । असतो मेऽनुरूपा योग्या येनेदृशी गर्भवासलक्षणा गतिर्दर्शिता तस्य ॥१२॥ ननु कोऽसौ यं शरणं व्रजसि, को वा तव तस्य च विशेषो येन सेव्यसेवकत्वमित्यपेक्षायामाह । अत्र मातुर्देहे भूतेन्द्रियाशयमयीं देहाकारपरिणतां मायामवलम्ब्याश्रित्य कर्मभिरावृतस्वरूप इव बद्ध इव च य आस्ते सोऽहम् । यस्त्वत्रैवास्ते तं नमामि । कथंभूतमित्यपेक्षायां तुशब्दोक्तं विशेषं दर्शयति । आतप्यमाने हृदयेऽवसितं प्रतीतमेवमप्यविकारम् । कुतः । विशुद्धं निरुपाधिम् । तत्कुतः । अखण्डो बोधो यस्य तम् ॥ १३ ॥ ॥

१ नाथमान इत्यात्मनेपदमार्षम् । नाथमानो भगवत्कृपा मम भूयादिति स्वस्मिन्नाशिषः कुर्वन्निति चक्रवर्तिटीकाया त्वात्मनेपदं साधु । २ दक्षिणे इति 'पुत्रो दक्षिणकुक्षौ स्याद्वामे कन्या भवेद्ध्रुवम्' इति प्रसिद्धेर्दक्षिणे इति पुंप्राधान्येनोक्तम् । ३ देहात्मानौ पश्यतीति देहात्मदर्शी । उभयस्वरूपज्ञ इत्यर्थः । ऋषिरात्मदर्शीति चक्रवर्ती । ४ अखण्डो विषयकालानवच्छिन्नः ।

ननु त्वमपि वस्तुतः शुद्ध एव 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेः । तत्कथं युवयोरयं विशेषस्तत्राह । यः पञ्चभिर्भूतै रचिते शरीरे अयथा मिथ्यैव छन्नो न वस्तुतः । यतस्तेन शरीरेण रहितोऽसङ्गोऽतोऽयथैवेन्द्रियगुणार्थचिदात्मकः इन्द्रियाणि च गुणाश्च अर्थाश्च चिदाभासश्च तदात्मकः सोऽहं तं वन्दे । कथंभूतम् । तेन शरीरेणाविकुण्ठो महिमा यस्य तम् । अवगुण्ठेति पाठेऽवसन्नं गुण्ठनमावरणं यस्य स महिमा यस्येत्यर्थः । तत्र हेतुः—प्रकृतिपुरुषयोः परं नियन्तारम् । कुतः । ऋषिं सर्वज्ञं विद्याशक्तिमित्यर्थः । विद्याऽविद्याकृतो विशेष इति भावः ॥१४॥ ननु ज्ञानेनायं बन्धो निवर्तिष्यते किं परमेश्वरवन्दनेन तत्राह । यस्य मायया नष्टस्मृतिः सन् संसारसंबन्धिनि पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन्नयं जीवो महतस्तस्यैवेश्वरस्यानुग्रहं विना पुनः कया युक्त्या लोकं निजस्वरूपं प्रवृणीत संभजेत । अभिश्रमहेतुत्वेन पन्थानं विशिनष्टि उरूणि गुणनिमित्तानि कर्माणि नितरां बन्धनानि यस्मिन् । ईश्वरस्य प्रसादं विना ज्ञानाभावात्स एव सेव्य इत्यर्थः ॥१५॥ ईश्वर एव ज्ञानद इत्युपपादयन्नाह । यदेतत्त्रिकालविषयं ज्ञानं तत्तं विना कतमो मय्यदधान्न कोऽपि । किंतु स देव ईश्वर एव । नन्वन्यः प्रकृष्टो जीवो दधातु, नेत्याह । जीवरूपां

यः पञ्चभूतरचिते रहितः शरीरे छन्नोऽयथेन्द्रियगुणार्थचिदात्मकोऽहम् ॥ तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १४ ॥ यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन्सांसारिके पथि चरंस्तदभिश्रमेण ॥ नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥१५॥ ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ॥ तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥१६॥ देह्यन्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः ॥ इच्छन्नितो विवसितुं गणयन्स्वमासान्निर्वास्यते कृपणधीर्भगवन्कदा नु ॥ १७ ॥ येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन ॥ स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाऽञ्जलिमस्य कुर्यात् ॥ १८ ॥ पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे ॥ यत्सृष्टयाऽऽसं तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम् ॥ १९ ॥ ॥

कर्मपदवीमनुवर्तमाना वयमिति तद्व्यतिरेकेण न कोऽपि समर्थ इत्यर्थः । अन्यस्यात्रासंभवमुक्त्वा तस्य संभवमाह । स्थिरेषु चरेषु चान्तर्यामिरूपोऽनुवर्तितोंऽशो येन तं भजेम ॥ १६ ॥ स्वदुःखं विज्ञापयन्नाह—देहीति । अन्यदेहविवरे मातुरुदरकुहरे योऽसृग्विण्मूत्रकूपस्तस्मिन्पतितस्तत्र जठराग्निना भृशं तप्तो देहो यस्य । अत एव कृपणधीरितो विवराद्विवसितुं निर्गन्तुमिच्छन्स्वमासान्गणयन्नसौ कदा नु अहो बहिर्निर्वास्यते ॥ १७ ॥ तत्कृतमुपकारं स्मरन्नाह । येनेदृशीं गतिं ज्ञानम् । भवादृशेनेति निरुपमेनेत्यर्थः । स्वकृतेनैव स्वयं तुष्यतु । अञ्जलिमात्रं विना तत्कृतोपकारे प्रत्युपकारं कः कुर्यादित्यर्थः ॥ १८ ॥ ईदृशीं गतिमित्यनेन जात्यन्तरविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यमाह—पश्यतीति । अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वदेहे शारीरके शरीरभवे सुखदुःखे केवलं ननु पश्यति । अहं पुनर्यत्सृष्टया धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी । दम इत्युपलक्षणम् । शमदमादियुक्तशरीरवान् आसमभवं तमेव च पुराणमनादिं पुरुषं पूर्णं बहिश्च हृदि च पश्ये पश्यामीत्यन्वयः । कथम् । अपरोऽक्षतया प्रतीतं चैत्यमिव । अहंकारास्पदं भोक्तारमिवेत्यर्थः ॥ १९ ॥ ॥ ॥ ॥ ॥६९॥

१ विशेषः नित्यत्वसर्वज्ञत्वबद्धत्वकिंचिज्ज्ञत्वलक्षणः इति दीपि० । २ जन्ममरणलक्षणससारकृतेन । ३ वयमिति स्वसाधारणजीवान्तरदृष्ट्या बहुवचनम् इति दीपि० । ४ 'आस' इति पाठोऽस्ति परंतु बहुषु प्राचीनपुस्तकेषु 'आस' इत्येव दृश्यते स एव समीचीनः । छन्दोभङ्गस्त्वार्षः । ५ त्वयेति शेषः । ६ सप्त वध्रयस्त्वगाद्यावरणानि यस्य । ७ बहिश्च सत्तारूपेण अन्तश्चान्तर्यामिरूपेण ।

विवेकाज्ञानकृतं संसारोद्वेगमनुवदन्मोक्षमार्गमेवाध्यवस्यति । सोऽहमिति द्वाभ्याम् । हे विभो, बहुदुःखवासं यथा भवति तथा गर्भे वसन्नपि सोऽहं गर्भाद्बहिर्न निर्गन्तुमिच्छामि । तत्र हेतुः—अन्धकूपप्राये यत्र बहिरुपयातं गतं प्राणिनं देवस्य तव मायोपसर्पति व्याप्नोति । यदनु यां मायामनु मिथ्यामतिर्देहेऽहंबुद्धिः संसृतिचक्रं च कलत्रपुत्रादिसंबन्धादुपसर्पति ॥ २० ॥ तस्मादत्रैव स्थितोऽपि विगतविक्लवोऽव्याकुलः सन् सुहृदा आत्मना सारथिरूपया बुद्ध्यैवात्मानं तमसः संसारादुद्धरिष्यामि । अनेकरन्ध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं यथा मे मा भविष्यत् न भविष्यति तथा । कात्र तव साधनसामग्री तत्राह । उपसादितौ हृदयं प्रापितौ विष्णोः पादौ येन मया सः ॥ २१ ॥ दशमासाः परिच्छेदका यस्येति प्रसूतिपूर्वक्षणोपलक्षणम् । ऋषिर्जीवः । सद्यस्तत्क्षणमेव । अवाचीनमवाङ्मुखम् ।

सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे ॥ यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २० ॥ तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव ॥ भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः॥२१॥ ॥कपिल उवाच॥एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः॥ सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥ तेनावसृष्टः सहसा कृत्वाऽवाक्शिर आतुरः ॥ विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २३ ॥ पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ॥ रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥२४॥ परच्छन्दं नविदुषा पुष्यमाणो जनेन सः ॥ अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥ शायितोऽशुचिपर्यङ्के जन्तुस्वेदजदूषिते ॥ नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥ तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ॥ रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७॥ इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ॥ अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ॥ २८ ॥ सह देहेन मानेन वर्धमानेन मन्युना ॥ करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ २९ ॥ भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् ॥ अहंममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥

सूतिहेतुर्मारुतः । क्षिपति नुदति ॥२२॥ अवसृष्टोऽधः क्षिप्तः सन् ॥ २३ ॥ रोरूयति रोरूयते ॥२४॥ परस्य छन्दमभिप्रायमविदुषा । अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निम्बरसपानमुदरव्यथया रोदने स्तनपानमित्यादि ॥ २५ ॥ आसनोत्थानचेष्टने चानीशः सन् रोरूयतीत्यनुषङ्गः ॥ २६ ॥ आमा कोमला त्वग्यस्य तम् । विगतं गर्भे जातं ज्ञानं यस्य ॥ २७ ॥ शैशवं पञ्चवर्षाणि । ततः पौगण्डं यौवनादर्वाक् । तत्र चाध्ययनादि दुःखम् । यौवने दुःखमाह सार्धैस्त्रिभिः । अलब्धाभीप्सितत्वेन शुचार्पितो व्यासः । अज्ञानादिद्धो दीप्तो मन्युर्यस्य सः ॥ २८ ॥ देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधं करोति । आत्मनोऽन्ताय नाशाय ॥ २९ ॥ अज्ञानं प्रपञ्चयति । भूतैरारब्धे देहे । असदाग्रहोऽहंममेति मतिं करोति ॥ ३० ॥ ॥ ॥

१ विवेको देहादात्मनः पृथक्त्वं तदज्ञानेन कृतम् । विवेकज्ञानकृतमिति लेखकभ्रमः । २ यावत्स्तुवन्नास्ते तावत्सूतिमारुतः सद्यः प्रसूत्यै तमवाङ्मुखं क्षिपतीत्यन्वयः । ३ हतस्मृतिः 'मृतश्चाहं पुनर्जातः' इत्यादि पूर्वपूर्वजन्मानुसंधानलक्षणा यस्य सः इति क्रम० । ४ 'परच्छन्दमविदुषा' इति पाठः ।

तदर्थं देहार्थम् । यद्येन कर्मणा बद्धः । यो देहः अनुयाति पुनःपुनरायात्यनुवर्तत इति वा । कुतः । अविद्याकर्मभ्यां बध्यत इति तथा ॥ ३१ ॥ यद्यसद्भिराश्रितोऽधिष्ठितः संस्लेपां पथि रमते । पथि सन्मार्गे आस्थितोऽपि यद्यसद्भिः सह रमत इति वा तर्हि यातनादेह आवृत्येत्यादिपूर्वोक्तप्रकारेण तमो नरकं प्रविशति ॥ ३२ ॥ असत्सङ्गं निन्दति—सत्यमिति त्रिभिः । बुद्धिः परमपुरुषार्थविषया । श्रीर्धनधान्यलक्षणा । ह्रीर्लज्जा । यशः कीर्तिः । क्षमा सहिष्णुत्वम् । शमो बाह्येन्द्रियनिग्रहः । दमो मनोनिग्रहः । भग[1] उन्नतिः । यत्सङ्गाद्येषामसतां सङ्गात् ॥ ३३ ॥ खण्डितात्मसु देहात्मबुद्धिषु । योषितां क्रीडामृगवदधीनेषु ॥ ३४ ॥ यथा च योषित्सङ्गिनां सङ्गतो बन्धस्तथाऽन्यप्रसङ्गतो न भवेत् ॥ ३५ ॥ योषित्सङ्गस्यानर्थहेतुतां प्रपञ्चयति—प्रजापतिरिति सप्तभिः । रोहिद्भूतां

तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ॥ योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धनः ॥ ३१ ॥ यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ॥ आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥ सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ॥ शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ३३ ॥ तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ॥ सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४॥ न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ॥ योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३५ ॥ प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ॥ रोहिद्भूतां सोऽन्वधावदृक्षरूपी[2] हतत्रपः ॥ ३६ ॥ तत्सृष्टसृष्टसृष्टेषु को न्वखण्डितधीः पुमान् ॥ ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ३७ ॥ बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ॥ या करोति पदाक्रान्तान्भ्रूविजृम्भेण केवलम् ॥ ३८ ॥ सङ्गं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ॥ मत्सेवया प्रतिलब्धात्मलाभो[3] वदन्ति या निरयद्वारमस्य[4] ॥३९॥ योपयाति शनैर्माया योषिद्देवविनिर्मिता ॥ तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४० ॥ यां मन्यते पतिं मोहान्मन्मायामृषभायतीम् ॥ स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४१ ॥ ॥ ॥

मृगीरूपां सतीमृक्षरूपी मृगाकारः सन् । हतत्रपो निर्लज्जः ॥ ३६ ॥ तेन ब्रह्मणा सृष्टा मरीच्यादयस्तैः सृष्टाः कश्यपादयस्तैरपि सृष्टा देवमनुष्यादयस्तेषु को नु पुमानखण्डितधीरनाकृष्टमनाः ॥ ३७ ॥ दिशां जयिनः शूरानपि ॥ ३८ ॥ प्रतिलब्ध आत्मरूपो लाभो येन । अस्य मुमुक्षोर्याः प्रमदा निरयद्वारं वदन्ति योगिनः ॥ ३९ ॥ शनैः शुश्रूषादिमिषेणोपयाति या योषिद्रूपा माया तां मृत्युं प्रतिकूलामीक्षेत ॥ ४० ॥ मुमुक्षुं स्त्रियं प्रत्येतदेवाह—यां मन्यते इति द्वाभ्याम् । ऋषभायतीं पुरुषवदाचरन्तीं यां मम मायां वित्तादिप्रदं पतिं मन्यते तदा तां पुरुषरूपां मायां मृत्युं विद्यादित्युत्तरेणान्वयः । यतः पूर्वजन्मनि स्वयं पुमान्स्त्रीसङ्गतोऽन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तो जीवः ॥ ४१ ॥ ॥ ॥ ॥

१ भग इत्यत्र 'भवः' इति पाठः । २ 'ऋश्यरूपी' इति कचित्पाठः । ३ प्रतिलब्धः श्रेष्ठतया ज्ञातः । ४ निरयः संसारः ।

तां पत्यादिरूपं मृत्युं विजानीयात् । मृगयोर्लुब्धकस्य गायनमनुकूलत्वेन प्रतीयमानमपि यथा मृगस्य मृत्युः ॥ ४२ ॥ तदेवं जीवस्य संसृतिः प्रपञ्चिता तत्र च तस्य कर्मवशेन लोकाल्लोकान्तरगमनं जन्ममरणं चोक्तम् । तत्रैवं शङ्क्यते—ननु व्यापकस्य कथं लोकाल्लोकान्तरगमनम्, नित्यस्य च कथं जन्ममरणे, भोगेन कर्मक्षये च सति जन्ममरणं च नेष्यते, तत्कुतः पुनरपि तस्य कर्मसंभव इति, तत्र लोकान्तरगमनं कर्म च संभवतीत्याह—देहेनेति । जीवस्योपाधितया भूतेन जातेन लिङ्गदेहेन लोकान्तरमनुव्रजन् । अविरतं कर्माणि करोतीति कर्मणामसमासिरुक्ता ॥ ४३ ॥ जन्ममरणसंभवमाह । जीवो जीवोपाधिलिङ्गदेहोऽस्यात्मनोऽनुगोऽनुवर्ती । भूतेन्द्रियमनोमयः स्थूलभूतादिविकारो देहो भोगायतनं तयोर्निरोधः कार्यायोग्यता तदस्य जीवस्य मरणमुच्यते । आविर्भावस्तु संभवो जन्मोच्यते ॥ ४४ ॥ एतदेव दृष्टान्तेन स्पष्टयति । द्रव्योपलब्धिस्थानस्य नेत्रगोलकादेर्द्रव्येक्षायां रूपादिदर्शने काचकामलादिदोषेण यदा-

तामात्मनो विजानीयात्पत्यपत्यगृहात्मकम् ॥ दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥४२॥ देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ॥ भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४३ ॥ जीवो ह्यस्यानुगो देहो भूतेन्द्रियमनोमयः ॥ तन्निरोधोऽस्य मरणमाविर्भावस्तु संभवः ॥४४॥ द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ॥ (तत्पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥ ४५ ॥ यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ॥) तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यताऽनयोः ॥ ४६ ॥ तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः ॥ बुद्ध्वा जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ॥४७॥ सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ॥ मायाविरचिते लोके चरेन्न्यस्य कलेवरम् ॥४८॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने जीवगतिर्नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥

ऽयोग्यता भवति तदैव चक्षुष इन्द्रियस्याप्ययोग्यता । अनयोः स्थानचक्षुषोर्यदाऽयोग्यता तदैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता । एवं स्थूलदेहवैकल्ये लिङ्गस्य वैकल्यं तदेव जीवस्य मरणं न स्वत इत्यर्थः । क्वचिदेकः श्लोकोऽधिकः पठ्यते । तत्रायमर्थः—द्रव्योपलब्धिस्थानस्य स्थूलशरीरस्य द्रव्येक्षायां यदाऽयोग्यता तत्पञ्चत्वं मरणम् । अहंमानादिदमेवाहमित्यभिमानेन द्रव्यस्य स्थूलशरीरस्य दर्शनमुत्पत्तिः । अक्ष्णोर्गोलकयोर्द्रव्यावयवस्य रूपादेर्दर्शनेऽयोग्यता । शेषं समानम् ॥ ४५ ॥ ॥ ४६ ॥ यस्मान्न वस्तुतो जीवस्य जन्ममरणादि तस्मान्मरणात्संत्रासो न कार्यो जीवने च न कार्पण्यं दैन्यं कार्यम् । संभ्रमश्च जीवनप्रयत्ने ॥ ४७ ॥ ननु सर्वथा मुक्तसङ्गत्वे कथं जीवितमत आह । सम्यक् पश्यति विचारयतीति सम्यग्दर्शना तया बुद्ध्या मायाविरचिते लोके कलेवरं न्यस्य निक्षिप्य । तस्मिन्नासक्तिं त्यक्त्वा विचरेदित्यर्थः ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायामेकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥

१ तत्र शङ्कान्तरमध्ये । २ उपाधितयेति । यथा व्यापकस्याकाशस्यान्यत्र गत्यसंभवेऽपि घटगतौ घटावच्छिन्नस्याकाशस्यापि गतिः प्रतीयते तथा लिङ्गशरीरावच्छिन्नतया लोकान्तरगमनं सघटते । ३ अविरतमित्युक्त्या तद्देहप्रारब्धनाशेऽपि देहान्तरारम्भकाणां कर्मणा सत्वात्कर्मसंभव एवेति शङ्काद्वयसमाधिः इति दीपि० । ४ द्रव्येक्षायां सर्वेन्द्रियकरणकसर्वपदार्थज्ञाने । ५ अनयोः स्थूलसूक्ष्मशरीरयोः । ६ जीवगतिं जीवस्य नित्यज्ञानस्वरूपताम् । ७ द्रव्येति तदैव चक्षुष इत्यनयोरन्तरा तदित्यारभ्य यदेत्यन्त, इत्यर्थः । ८ तस्मिन्कलेवरे ।

द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वं गतिरुदीर्यते ॥ तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः ॥ १ ॥ तदेवं पापकर्मणो गतिरुक्ता, इदानीं काम्यकर्मणो गतिमाह— अथेति चतुर्भिः । यो गृह एवावसन्स्वान्धर्मान्दोग्धि । दोह्यमाह । काममर्थं च तान्दुग्धान्धर्मान्भूयः पिपर्ति पूरयत्यनुतिष्ठति ॥ १ ॥ सोऽपि भगवदाराधनरूपाद्धर्मात्पराङ्मुखः सन्प्राकृतानपि देवान्पितॄंश्च यजते ॥ २ ॥ ततः किं तत्राह । तेषां श्रद्धयाक्रान्ता व्याप्ता मतिर्यस्य । पित्रर्थं देवार्थं च व्रतं नियमो यस्य । सोमपाः, तत्र सोमं पीत्वेत्यर्थः ॥३॥ लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह । यदा चाहरहः प्रलये ॥४॥ भगवद्धर्मनिष्ठानां तत्रास्मिन्नेव गतिमाह त्रिभिः । ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यन्ति न दुहन्ति । निःसङ्गा अनासक्ताः । न्यस्तानीश्वरे समर्पितानि कर्माणि यैः ॥५॥६॥ विश्वतोमुखं

॥ कपिल उवाच ॥ अथ यो गृहमेधीयान्धर्मानेवावसन्गृहे ॥ काममर्थं च धर्मान्स्वान्दोग्धि भूयः पिपर्ति तान् ॥१॥
स चापि भगवद्धर्मात्काममूढः पराङ्मुखः ॥ यजते क्रतुभिर्देवान्पितॄंश्च श्रद्धयान्वितः ॥ २ ॥ तच्छ्रद्धयाक्रान्त-
मतिः पितृदेवव्रतः पुमान् ॥ गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥ यदा चाहीन्द्रशय्यायां शेतेऽन-
न्तासनो हरिः ॥ तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥ ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे ॥
निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥ निवृत्तिधर्मनिरता निर्ममा निरहंकृताः ॥ स्वधर्माख्येन
सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥ सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ॥ परावरेशं प्रकृतिमस्योत्पत्त्यन्तभा-
वनम् ॥ ७ ॥ द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥ तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥ क्ष्माम्भो-
नलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतं प्रतिसंजिहीर्षुः ॥ अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परा-
ख्यमनुभूय परः स्वयंभूः ॥ ९ ॥ एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥ तेनैव
साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥ ॥ ॥

परिपूर्णं पुरुषं यान्ति । तथा च श्रुतिः—'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा' इति । प्रकृतिमुपादानकारणम् । उत्पत्त्यन्तभावनं निमित्तकारणम् ॥७॥ परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण तत्प्राप्तिमाह—द्विपरार्धावसान इति त्रिभिः । परस्य हिरण्यगर्भस्य । परचिन्तकाः परमेश्वरदृष्ट्या हिरण्यगर्भोपासकाः ॥८॥ क्ष्मादीनि पञ्चमहाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयो भूतादिश्चाहंकारः एवमादिभिः परिवृतं युक्तं ब्रह्माण्डं प्रतिसंहर्तुमिच्छुः सन् । अव्याकृतमीश्वरम् । पराख्यं द्विपरार्धलक्षणं कालम् ॥९॥ परेत्य दूरं गत्वा भगवन्तं हिरण्यगर्भमनुप्रविष्टा ये योगिनोऽमृतं परमानन्दरूपं प्रधानमुत्कृष्टं ब्रह्म तेनैव सहोपयान्ति, नतु पूर्वम् । यतस्तदाऽगताभिमानाः । तथा च स्मृतिः—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे॥ परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति ॥ १० ॥

१ धर्मैर्वर्णाश्रमनिबन्धनैः । २ धर्मान् प्रति तेभ्यः सकाशात् । ३ अयमेव पाठो युक्तो नतु 'धर्मांश्च' इति । व्याख्यानानुरोधात् । ४ लोकात्रीण्यपि भोगस्थानानि । ५ यर्हि यदा स्वयंभूरव्याकृतं विशति तदा तेनैव साकं योगिन उपयान्तीत्यन्वयेन दशमश्लोकेनान्वयः । ६ विरजाः प्रक्षीणसकलरजस्काः । ७ प्रतिसंचरे प्रलये । ८ परस्य द्विपरार्धस्यान्ते ।

भगवदुपासकास्तु साक्षादेव तं प्राप्नुवन्ति नतु क्रमेण, अतस्त्वं साक्षात्तमेव भजेत्याह । अथ तस्मात् । भावेन प्रेम्णा ॥ ११ ॥ एवं तावद्भगवद्भक्तानां निरन्तरमेव तत्प्राप्तिर्भगवदभेदेन हिरण्यगर्भोपासकानां तु क्रमेणेत्युक्तम् । भेदेनोपासने तु ब्रह्मादयोऽप्यावर्तन्ते किमुतान्य इत्याह—आद्य इति चतुर्भिः । यो वेदगर्भः सोऽपि गुणव्यतिकरे जाते यथापूर्वं ब्रह्मपदाधिकृतः सन् प्रजायते इति तृतीयेनान्वयः । न केवलं स एवैकः किंतु ऋषिभिर्मरीच्यादिभिर्योगेश्वरादिभिश्च सह ॥ १२ ॥ जन्मनि हेतुद्वयम् । भेददृष्ट्याभिमानेन कर्तृत्वादिति च । यथापूर्वत्वे हेतुः—निःसङ्गेन निष्कामेन कर्मणेति ॥ १३ ॥ किं कृत्वाऽत्र प्रजायते । प्रथमं पारमेष्ठ्यमैश्वर्यं निषेव्य, पश्चात्प्रलये सगुणं गुणाधिष्ठातारं प्रथमावताररूपं पुरुषं संसृत्य प्राप्य, तेऽपि ऋषिप्रमुखाः स्वकर्मनिर्मितमैश्वर्यं निषेव्य पुरुषं च संसृत्य यथापूर्वं स्वस्वाधिकारेण पुनरायान्तीत्यन्वयः ॥ १४ ॥ १५ ॥ यदा ब्रह्मोपासकानामपि भेददर्शनाभिमानाभ्यामेवमावृत्ति-

अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥ श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ११ ॥ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥ योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥ भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १३ ॥ स संसृत्य पुनः काले कालेनेश्वरमूर्तिना ॥ जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥ ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ॥ निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥ ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ॥ कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥ रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ॥ पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥ त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ॥ कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥ नूनं दैवेन विहता ये चाच्युतकथासुधाम् ॥ हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥ दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते ॥ प्रजामनु प्रजायन्ते श्मशानान्तक्रिया-कृतः ॥ २० ॥ ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ॥ पतन्ति विवशा दैवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥ ॥

स्तदा काम्यकर्मिणां किं वक्तव्यमिति तान्निन्दन्नाह षड्भिः । ये त्विह कर्मस्वासक्तमनसः सन्तोऽप्रतिषिद्धानि काम्यानि नित्यानि च कर्माणि कृत्स्नानि कुर्वन्ति तेऽर्यम्णो दक्षिणेन पथा धूममार्गेण पितृलोकं व्रजन्तीति पञ्चमेनान्वयः । मध्ये तन्निन्दा ॥ १६ ॥ १७ ॥ हरति संसारं मेधा यस्य । कथनीया उरवो विक्रमा यस्य तस्य मधुद्विषः कथायां विमुखाः सन्तो ये त्रैवर्गिकाः । ये चाच्युतस्य कथासुधां हित्वाऽसतां गाथाः शृण्वन्ति ते नूनं दैवेन विहिता इत्यन्वयः ॥ १८ ॥ १९ ॥ पितृलोकात्पुनः प्रजामनु स्वपुत्रादिषु प्रजायन्ते । गर्भाधानादारभ्य श्मशानान्ताः क्रियाः कृतवन्तः । यथोक्तकारिण इत्यर्थः ॥ २० ॥ कथं प्रजायन्ते तदाह । ततस्ते पुनरिमं लोकं प्रति पतन्ति । विभ्रंशित उदयो भोगसाधनं येषाम् ॥ २१ ॥ ॥ ॥ ॥

१ तस्मात्साक्षात्प्राप्तेर्दुर्घटत्वात् । २ यत्र ब्रह्मणा भेदेनोपासनं हिरण्यगर्भे एवाहमीश्वर इति प्रतीकोपासनम् । ३ भेददृष्ट्या परमेश्वराद्भिन्नत्वेन हिरण्यगर्भत्वस्योत्कृष्टत्वदृष्ट्या । ४ 'पुरुषर्षभः' इति पाठस्तत्र पुरुषर्षभो ब्रह्मा । ५ ता लब्धवन्त इत्यर्थः इति क्रम० । ६ इमं मर्त्यलोकम् ।

परमेष्ठिनं परमेश्वरम्। सर्वभावेनातिप्रीत्या। तस्य गुणानाश्रयते या भक्तिस्तया ॥ २२ ॥ भजने च ज्ञानवैराग्ये स्वत एव भवत इत्याह—वासुदेव इति ॥ २३ ॥ तदेवोपपादयति। यदास्य भक्तस्य चित्तं भगवद्गुणानुरागेण तस्मिन्नेव निश्चलं सदिन्द्रियवृत्तिभिर्वैषम्यमर्थेषु न विगृह्णाति ॥ २४ ॥ तदैवात्मनात्मानं स्वप्रकाशमीक्षते। कथंभूतम्। समं—च तद्दर्शनं च। तत्कुतः। निःसङ्गम्। सङ्गाद्धि वैषम्यं भवति। निःसङ्गत्वे हेतुः हेयोपादेयरहितम्। तत्कुतः। पदं व्यवसितमारूढम्। परमानन्दोऽहमिति निश्चयं प्राप्तमित्यर्थः ॥ २५ ॥ समेष्वर्थेष्वित्युक्तं तदेव साम्यं दर्शयति। ज्ञानमात्रमेव परब्रह्मादिशब्दैः प्रसिद्धम्। दृश्यादिभिर्दृश्यद्रष्टृकरणरूपेण पृथक् प्रतीयते। ज्ञानमात्रत्वेन समेष्वित्यर्थः ॥ २६ ॥ ननु ज्ञानमात्रमात्मनः स्वरूपत्वान्नित्यप्राप्तमेवेति किमनेकसाधनसाध्येन योगेन प्राप्यते तदाह—एतावानिति। युज्यते प्राप्यते। प्रपञ्चसङ्गव्युदास एव योगफलमित्यर्थः ॥ २७ ॥ ननु कथं प्रत्यक्षादिप्रतीतः प्रपञ्चो व्युदसितुं शक्यते प्रतीतेर्भ्रान्तित्वादित्याह—ज्ञानमिति। पराचीनैः

तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्॥ तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम्॥ २२॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः॥ जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम्॥ २३॥ यदाऽस्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः॥ न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत॥ २४॥ स तदैवात्मनात्मानं निःसङ्गं समदर्शनम्॥ हेयोपादेयरहितमारूढं पदमीक्षते॥२५॥ ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्॥ दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते॥२६॥ एतावानेव योगेन समग्रेणेह योगिनः॥युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः॥२७॥ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्॥ अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥ २८॥ यथा महानहंरूपस्त्रिवृत्पञ्चविधः स्वराट्॥ एकादशविधस्तस्य वपुरण्डं जगद्यतः॥ २९॥ एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः॥ समाहितात्मा निःसङ्गो विरक्त्या परिपश्यति॥ ३०॥ इत्येतत्कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम्॥ येनानुबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च॥ ३१॥ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः॥ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः॥ ३२॥ ॥ ॥

पराङ्मुखैः। शब्दादिर्धर्मो यस्य तेनार्थरूपेण ज्ञानरूपं निर्गुणं ब्रह्मैवावभाति। न त्वर्थः पृथगस्तीत्यर्थः ॥ २८ ॥ अर्थरूपत्वमेवोदाहृत्य दर्शयति—यथेति। अहंरूपोऽहंकारः। स च त्रिवृत् त्रिगुणात्मकः। पुनश्च भूतरूपेण पञ्चविधः, इन्द्रियरूपेणैकादशविधश्च। स्वराड् जीवरूपः। तस्य जीवस्य वपुरण्डं जगच्च। यतो येभ्यो महदादिभ्यः। तथाऽवभाति ॥ २९ ॥ ननु तर्हि जनः किमित्येवं न प्रत्येति तत्राह। एतद्ब्रह्म ॥ ३० ॥ उक्तमेवार्थं सुखप्रतिपत्त्यर्थं संक्षेपेणानुवदति—इतीति। हे गुर्वि पूज्ये ॥ ३१ ॥ अनेन च ज्ञानयोगेन भगवानेव प्राप्यो यथा भक्तियोगेनेत्याह। नैर्गुण्यो ज्ञानयोगश्च मन्निष्ठो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरप्येक एवार्थः प्रयोजनम्। कोऽसौ। भगवच्छब्दो लक्षणं ज्ञापको यस्य। तदुक्तं गीतासु 'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः' इति ॥ ३२ ॥ ॥ ॥

१ तद्गुण एवाश्रयः प्रवृत्तिहेतुर्यस्या इति वा। २ समं अविषमज्ञानरूपमित्यर्थः। ३ वैषम्यं श्रेष्ठत्वनिकृष्टत्वरूपम्। ४ यद्योऽर्थः कृत्स्नशः साकल्येन सर्वत्रासङ्गोऽनासक्तिस्तद्रूपः ५ शब्दादिधर्मिणार्थरूपे आकाशाद्यर्थरूपेणैकं ज्ञानरूपं निर्गुणं ब्रह्मैव भ्रान्त्यावभातीत्यन्वयः। ६ 'विरक्तः' इति पाठः। ७ 'येनावबुध्यते' इति पाठः। ८ अर्थरूपत्वमेव कल्पितस्वरूपत्वमेव।

ननु ज्ञानयोगस्यात्मलाभः फलं शास्त्रेणावगम्यते भक्तियोगस्य तु भजनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशङ्क्य दृष्टान्तेनोपपादयति । यथा बहूनां रूपरसादीनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिन्द्रियैर्नाना प्रतीयते । चक्षुषा शुक्ल इति, रसनेन मधुर इति, स्पर्शनेन शीत इत्यादि तथा भगवानेक एव तत्तद्रूपेणावगम्यते ॥ ३३ ॥ शास्त्रमार्गानेव प्रपञ्चयति—क्रिययेति त्रिभिः । क्रियया पूर्तरूपया । क्रतुभिर्यागैः । मर्शनं मीमांसा । आत्मेन्द्रियजयो निषिद्धवर्जनम् ॥ ३४ ॥ उभयचिह्नेन सकामनिष्कामलक्षणेन । तमेवाह—य इति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमिति भावः ॥ ३५ ॥ एभिर्वर्त्मभिः । स्वदृक् स्वप्रकाशः ॥ ३६ ॥ तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगेन समानार्थत्वमुक्त्वा भक्तियोगा-

यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ॥ एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः ॥३३॥ क्रियया क्रतुभिर्दानैस्त-
पःस्वाध्यायमर्शनैः ॥ आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥३४॥ योगेन विविधाङ्गेन भक्तियोगेन चैव हि ॥
धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥३५॥ आत्मतत्त्वावबोधेन वैराग्येण दृढेन च ॥ ईयते भगवानेभिः सगुणो
निर्गुणः स्वदृक् ॥३६॥ प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ॥ कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु
॥ ३७॥ जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वङ्ग प्रविशन्नात्मा न वेद गतिमात्मनः ॥३८॥ नैतत्खलायो-
पदिशेन्नाविनीताय कर्हिचित् ॥ न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥३९॥ न लोलुपायोपदिशेन्न गृहारूढ-
चेतसे ॥ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि ॥४०॥ श्रद्दधानाय भक्ताय विनीतायाऽनसूयवे ॥ भूतेषु कृत-
मैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥ बहिर्जातविरागाय शान्तचित्ताय दीयताम् ॥ निर्मत्सराय शुचये यस्याहं
प्रेयसां प्रियः ॥ ४२ ॥ य इदं शृणुयादम्ब श्रद्धया पुरुषः सकृत् ॥ यो वाऽभिधत्ते मच्चित्तः स ह्येति पदवीं च मे
॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे कापिलेयोपाख्याने द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥छ॥

ह्युपसंहरति—प्रावोचमिति द्वाभ्याम् । चतुर्विधं त्रिगुणनिर्गुणभेदेन । अन्तर्धावति उत्पत्तिनिधनादि करोति ॥ ३७ ॥ अङ्ग हे मातः ॥ ३८ ॥ उपदेशेऽनधिकारिणो दर्शयति—नैतदिति द्वाभ्याम् । खलाय परोद्वेजकाय । भिन्नाय दुराचाराय । धर्मध्वजाय दाम्भिकाय ॥ ३९ ॥ ४० ॥ अधिकारिण आह—श्रद्दधानायेति द्वाभ्याम् ॥ ४१ ॥ ४२ ॥ एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिरेव फलमित्याह—य इति । अप्यर्थे चकारः । सोऽपि मत्पदवीमेति । हि निश्चितम् ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे भावार्थदीपिकायां टीकायां द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ छ ॥

१ आत्मा जीवः । २ गतिं स्वरूपयाथात्म्यम् । ३ 'दीयते' इत्यपि पाठः ।

त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ॥ ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ १ ॥ विस्रस्तं मोहरूपं पटलमावरणं यस्याः सा । तत्त्वान्येव विषयस्तेनाङ्किता सिद्धिः साङ्ख्यज्ञानं तस्य भूमिं क्षेत्रं प्रवर्तकम् ॥ १ ॥ [1]अथेति वाक्यान्तरे । अजोऽपि तव वपुः केवलं दध्यौ, न तु दृष्टवान् । स च स्वयं साक्षाद्यस्य तव जठराज्जातः स भवानेव विश्वस्य सर्गादि विधत्ते, नतु तत्र सर्गादिकर्ता कश्चिदस्ति । स एवंभूतस्त्वं मे मया कथं जठरेण धृत इति त्रयाणामन्वयः । कथंभूतं वपुः । सत् व्यक्तम् । तत्र हेतुः—अन्तःसलिले शयानम् । कीदृशम् । भूतानीन्द्रियाणि च अर्थाश्च शब्दादय आत्मा च मन एतन्मयमेतैर्व्याप्तमित्यर्थः । कुतः । गुणानां प्रवाहो यस्मिंस्तत् । कुतः । अशेषस्य कार्यकारणस्य बीजं कारणम् ॥ २ ॥ कथंभूतो भवान्सर्गादि विधत्ते । गुणप्रवाहरूपेण विभक्तं वीर्यं शक्तिर्येन सः । शक्तिद्वारेण विधत्ते न साक्षादित्यर्थः । यतोऽनीहो निष्क्रियः । तर्हि कथं शक्तिद्वारेणापि सर्गादि विधत्ते

॥ मैत्रेय उवाच ॥ एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् ॥ १ ॥ ॥ देवहूतिरुवाच ॥ अथाप्यजोऽन्तःसलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ॥ गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥ स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः ॥ सर्गाद्यनीहो वितथाभिसन्धिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥३॥ स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ॥ विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥ ४ ॥ त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ॥ यथावतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥ ५ ॥ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ॥ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥ ६ ॥ ॥ ॥ ॥

तत्राह । अवितथाभिसन्धिः सत्यसंकल्पः । किमर्थं विधत्ते । आत्मनां जीवानामीश्वरः । जीवानां भोगार्थमित्यर्थः । ननु कथं विचित्रान्भोगानेक एव विदध्यात्तत्राह । अतर्क्याः सहस्रमपरिमिताः शक्तयो यस्य ॥ ३ ॥ किंच प्रलये यस्योदरे एतद्विश्वमासीत्स त्वं मया जठरेण कथं धृतः । ननु शिशौ मयि किमेतदुच्यते तत्राह—वटपत्र इति । अङ्घ्रिं पादाङ्गुष्ठं पिबतीत्यङ्घ्रिपानः । इदमपि शिशुत्वं तद्वदेव मायेति भावः ॥ ४ ॥ अथवा न त्वं मयाऽपत्यान्तरमिव जठरे भृतः, किंतु वराहाद्यवतारवदिच्छयैवाविर्भूतोऽसीत्याह । त्वं देहतन्त्रो देहपरिकरः स्वीकृतमूर्तिरसि । पाप्मनां दुष्टानाम् । निदेशभाजामाज्ञानुवर्तिनां विभूतये समृद्धये । आत्मपथोपलब्धये ज्ञानमार्गप्रदर्शनाय ॥ ५ ॥ अतस्त्वद्दर्शनादहं कृतार्थास्मीति कैमुत्यन्यायेनाह । यन्नामधेयस्य श्रवणमनुकीर्तनं च तस्मात् । क्वचित् कदाचिदपि । श्वानमत्तीति श्वादः श्वपचः सोऽपि सवनाय सोमयागाय कल्पते योग्यो भवति । अनेन पूज्यत्वं लक्ष्यते ॥ ६ ॥ 

[1] 'अथेति वाक्यारम्भे' इति क्वचित्पाठः ।

तदुपपादयति । अहो वतेत्याश्चर्ये । यस्य जिह्वाग्रे तव नाम वर्तते स श्वपचोऽप्यतोऽस्मादेव हेतोर्गरीयान् । यद्यस्माद्वर्तते अत इति वा । कुत इत्यत आह । त एव तपस्तेपुः कृतवन्तः । जुहुवुर्होमं कृतवन्तः । सस्नुः तीर्थेषु स्नाताः । आर्यास्त एव सदाचाराः । ब्रह्म वेदमनूचुरधीतवन्तः । त्वन्नामकीर्तने तपआद्यन्तर्भूतमतस्ते पुण्यतमा इत्यर्थः । यद्वा जन्मान्तरे तैस्तपोहोमादि सर्वं कृतमिति त्वन्नामकीर्तनमहाभाग्योदयादवगम्यत इत्यर्थः ॥ ७ ॥ प्रत्यक्स्रोतसि प्रत्याहृते आत्मनि मनसि संविभाव्यं संचिन्त्यम् । वेदा गर्भे यस्य सः ॥ ८ ॥ अविक्लवया गम्भीरया वाचा ॥ ९ ॥ ते तव सुसेव्येन सुखसेव्येन । मे मयोदितेन । आस्थितेनानुष्ठितेन । परां काष्ठां जीवन्मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ यायाः यास्यसि । अतद्विदो मन्मतमविद्वांसः ॥ ११ ॥ अनु-

अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ॥ तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति
ये ते ॥७॥ तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं
कपिलं वेदगर्भम् ॥ ८ ॥ ॥ मैत्रेय उवाच ॥ ईडितो भगवानेवं कपिलाख्यः परः पुमान् ॥ वाचाऽविक्लवयेत्याह
मातरं मातृवत्सलः ॥ ९ ॥ ॥ कपिल उवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥ आस्थितेन परां काष्ठा-
मचिरादवरोत्स्यसि ॥ १० ॥ श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः ॥ येन मामभवं याया मृत्युमृच्छन्त्यतद्विदः
॥ ११ ॥ ॥ मैत्रेय उवाच ॥ इति प्रदर्श्य भगवान्सतीं तामात्मनो गतिम् ॥ स्वमात्रा ब्रह्मवादिन्या कपिलोऽनु-
मतो ययौ ॥१२॥ सा चापि तनयोक्तेन योगादेशेन योगयुक् ॥ तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहिता ॥१३॥
अभीक्ष्णावगाहकपिशान् जटिलान्कुटिलालकान् ॥ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥१४॥ प्रजापतेः
कर्दमस्य तपोयोगविजृम्भितम् ॥ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥ पयःफेननिभाः शय्या दान्ता
रुक्मपरिच्छदाः ॥ आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥ ॥ ॥

मतोऽनुज्ञातः ॥ १२ ॥ सरस्वत्या आपीडे पुष्पमुकुटतुल्ये । सरस्वत्येति पाठे मुकुटेनेव संवेष्टिते । विन्दुसरसि समाहिता बभूव ॥ १३ ॥ कथंभूता सती समाहिता तदाह । अभीक्ष्णं त्रिषवणमवगाहः स्नानं तेन कपिशान्पिशङ्गान्स्वत एव कुटिलानलकान्केशांस्तथात्मानं देहं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ ॥ प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृम्भितमतिशयितं स्वगार्हस्थ्यं हित्वा पुत्रभूतेश्वरविरहातुरा सती वदनं किंचिदनिर्वाच्यं शोकव्याकुलं चकारेति पञ्चेनान्वयः ॥ १५ ॥ यत्र गार्हस्थ्ये । क्षीरफेननिभा मृदुशुभ्राः शय्या आस्तरणान्याभान्ति दन्तघटिता मञ्चकाश्च । स्वर्णमयाः परिकराः । आसनानि पीठादीनि । सुस्पर्शान्यास्तरणानि येषु ॥ १६ ॥ ॥ ॥ ॥ ॥

१ 'अभयम्' इति पाठः । २ 'इति प्रदिश्य भगवानुशतीमात्मनो गतिम्' इति पाठः । ३ 'हस्तिदन्तरचिताः' इति पाठः ।

॥ १७ ॥ बहुभिरमरद्रुमैः रम्यम् ॥ १८ ॥ यत्रोद्याने प्रविष्टमात्मानं देवहूतिम् ॥ १९ ॥ आखण्डल इन्द्रस्तस्य या योषितस्तासामपीप्सिततमं प्राप्तुमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा ॥ २० ॥ सुहृद्वियोगस्य दुःसहतामाह—वनमिति । नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥ विरहकृतध्यानफलमाह । निस्पृहा निर्वासना । वत्स विदुर ॥ २२ ॥ ततः स्वसुतः कपिलो यदाह तद्भगवतो रूपं ध्यायती तदात्मानं च विश्वतोमुखं सर्वगतं ध्यायती ब्रह्मण्यवस्थितमतिर्बभूवेति पूर्वस्यैवानुषङ्गः । केन ध्यायती । विशुद्धेनात्मना मनसा ॥ २३ ॥ विशुद्धौ कारणान्याह । भक्तिप्रवाहरूपेण योगेन वैराग्येण च युक्तानुष्ठानेन जातं यज्ज्ञानं तेन च । युक्तानुष्ठानं च गीतासूक्तम् 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥ युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥'

स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नप्रदीपा आभान्ति ललना रत्नसंयुताः ॥ १७ ॥ गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ॥ कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥ वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥ हित्वा तदीप्सिततममप्याखण्डलयोषिताम् ॥ किंचिच्चकार वदनं पुत्रविश्लेषणातुरा ॥२०॥ वनं प्रव्रजिते पत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥ तमेव ध्यायती देवमपत्यं कपिलं हरिम् ॥ बभूवाचिरतो वत्स निस्पृहा तादृशे गृहे ॥ २२ ॥ ध्यायती भगवद्रूपं यदाह ध्यानगोचरम् ॥ सुतः प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥ भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥ युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥ विशुद्धेन तदात्मानमात्मना विश्वतोमुखम् ॥ स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवापत्तित्वात्क्षीणक्लेशाप्तनिर्वृतिः ॥ २६ ॥ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ न सस्मार तदात्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥ तद्देहः परतः पोषोऽप्यकृशश्चाध्यसंभवात् ॥ बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥ ॥ ॥

इति । ब्रह्महेतुना ब्रह्मत्वापादकेन ॥ २४ ॥ विश्वतोमुखत्वे हेतुः—स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतम् । मायागुणैर्विशेषणं परिच्छेदो यस्य ॥ २५ ॥ कथंभूते ब्रह्मणि । आत्मनां जीवानां संश्रये भगवति । तस्या जीवन्मुक्तिमाह सार्धैस्त्रिभिः । तदा च निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् । विगतक्लेशा प्राप्तनिर्वृतिश्च सत्यात्मानं देहं न सस्मारेत्युत्तरेणान्वयः ॥ २६ ॥ ननु तथापि गुणानां विद्यमानत्वात्कथमस्मरणं तत्राह । नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् । परावृत्तः शान्तो गुणनिमित्तो भ्रमो यस्याः सा ॥ २७ ॥ परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य । आधिर्मनोग्लानिस्तदसंभवादकृशः मलैरवच्छन्नोऽपि बभौ ॥ २८ ॥ ॥ ॥ ॥

१ ततः स्वसुताया इत्यारभ्य षड्विंशश्लोकटीकास्थजीवानां संश्रये भगवतीत्यन्तेन ग्रन्थेन सार्धश्लोकत्रयस्य यथायोग्यं पदयोजनया व्याख्यानं ज्ञेयम् ।

दैवगुसमारब्धकर्मपालितम् ॥ २९ ॥ निर्वाणं नित्यमुक्तम् ॥ ३० ॥ हे वीर विदुर, उपेयुषी प्राप्ता ॥ ३१ ॥ हे सौम्य, तस्यास्तन्मर्त्यं शरीरं सरिदभूत् । कथंभूतम् । योगेन विधूता विलीना मार्त्या दैहिका धातुमला यस्य ॥ ३२ ॥ कपिलोऽपि ययावित्युक्तं तदेव प्रपञ्चयति—कपिलोऽपीति त्रिभिः । समनुज्ञाप्याऽनुज्ञां संप्रार्थ्य ॥ ३३ ॥ दत्तमर्हणमर्घ्यं निकेतनं च यस्मै ॥ ३४ ॥ उपशान्त्यर्थं समाहित आस्ते ॥ ३५ ॥ प्रकरणार्थमुपसंहरति—एतदिति । तव त्वया ॥ ३६ ॥ एतच्छ्रवण-

स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ॥ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥२९॥ एवं सा कपिलोक्तेन मार्गेणाचि-
रतः परम् ॥ आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप ह ॥३०॥ तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ॥ नाम्ना सिद्धपदं
यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसे-
विता ॥ ३२ ॥ कपिलोऽपि महायोगी भगवान्पितुराश्रमात् ॥ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥
सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥ आस्ते योगं समास्थाय
सांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥३५॥ एतन्निगदितं तात यत्पृष्टोऽहं तवानघ ॥
कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥ य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ॥
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥३७॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टादश-
साहस्र्यां पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेयोपाख्याने त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ ॥ छ ॥

॥ समाप्तोऽयं तृतीयः स्कन्धः ॥ ३ ॥

कीर्तनफलमाह—य इति । सुवर्णकेतौ गरुडध्वजे । उपलभते प्राप्नोति ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ समाप्तोऽयं तृतीयः स्कन्धः ॥ ॥ छ ॥ ॥

१ स्वाचारेण योगप्रवृत्त्या विमोक्षायेत्यर्थ इति बालबोधिन्याम् ।

अथ भागवतचतुर्थस्कंधप्रारंभः ॥



॥ ध्रुवः तन्माता सुनीतिश्च ॥

श्रीगणेशाय नमः ॥ ॥ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥ ॥ अथैकत्रिंशताऽध्यायैर्विसर्गस्तुर्य ईर्यते ॥ विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः ॥ १ ॥ तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् ॥ वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥ २ ॥ मनुकन्यान्वयं विस्तरेण वक्तुमाह—मनोस्त्विति । चकाराद्द्वौ पुत्रौ च ॥ १ ॥ तुशब्दादन्यतोऽपि पुत्रलाभः सूचितस्तद्दर्शयितुमाह—पुत्रिकाधर्ममाश्रित्येति । 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ॥ अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति' भाषाबन्धेन कन्यादानं पुत्रिकाधर्मः । स चाभ्रातृकायां कन्यायां पुत्रार्थिन एव प्रसिद्धस्तथापि पुत्रबाहुल्यकामस्तथा कृतवानित्याह—भ्रातृमतीमपीति ॥ २ ॥ मिथुनं पुरुषं स्त्रियं च । समाधिना ईश्वरध्यानेन ॥ ३ ॥

॥ ॐनमो भगवते वासुदेवाय ॥ ॥ मैत्रेय उवाच ॥ मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः[1] ॥ १ ॥ आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः[2] ॥ पुत्रिकाधर्ममाश्रित्य शतरूपानुमोदितः ॥ २ ॥ प्रजापतिः स भगवान् रुचिस्तस्यामजीजनत् ॥ मिथुनं ब्रह्मवर्चस्वी परमेण[4] समाधिना ॥ ३ ॥ यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी ॥ ४ ॥ आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम्[3] ॥ स्वायंभुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम् ॥ ५ ॥ तां कामयानां[5] भगवानुवाह यजुषां पतिः ॥ तुष्टायां तोषमापन्नोऽजनयद्द्वादशात्मजान् ॥ ६ ॥ तोषः प्रतोषः संतोषो भद्रः शान्तिरिडस्पतिः ॥ इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥ ७ ॥ तुषिता नाम ते देवा आसन्स्वायंभुवान्तरे ॥ मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः ॥८॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ ॥ तत्पुत्रपौत्रनप्तॄणामनुवृत्तं तदन्तरम् ॥ ९ ॥ देवहूतिमदात्तात कर्दमायात्मजां मनुः ॥ तत्संबन्धि श्रुतप्रायं भवता गदतो मम[6] ॥ १० ॥ दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान्मनुः ॥ प्रायच्छद्यत्कृतः[7] सर्गस्त्रिलोक्यां विततो महान् ॥ ११ ॥ ॥ ॥ ॥

भूतेर्लक्ष्म्या अंशभूता, अतस्तयोर्विवाहो न विरुद्ध इति भावः ॥ ४ ॥ पुत्र्या आकूतेः पुत्रं यज्ञम् ॥ ५ ॥ यजुषां यज्ञानां मन्त्राणां वा पतिर्विष्णुः ॥ ६ ॥ द्विषट् द्वादश ॥ ७ ॥ प्रसङ्गात्स्वायंभुवमन्वन्तरगतं षट्कमाह—तुषिता इति द्वाभ्याम् । 'मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥' इति वक्ष्यति । तत्र स्वायंभुवो मनुः । तुषिता देवाः । मरीचिप्रमुखाः सप्तर्षयः । यज्ञो हरेरवतारः । स एव सुरगणेश्वर इन्द्रः ॥ ८ ॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ । तदेवं यज्ञस्य द्वैरूप्येण[8] षड्विधत्वम् । तयोः पुत्रपौत्रनप्तॄणां वंशैरनुवृत्तं व्याप्तं पालितं तन्मन्वन्तरम् ॥ ९ ॥ श्रुतप्रायं बाहुल्येन श्रुतम् । तत्कन्यावंशानामश्रुतत्वात्प्रायग्रहणम् ॥ १० ॥ ११ ॥ ॥ ॥ ॥

१ निसर्गश्चराचरसर्गः । २ प्रियव्रतोत्तानपादौ । ३ 'सुव्रताः' इति पाठः । ४ सूक्ष्मनुकूलवैशिष्ट्यं समाधेः परमत्वम् इति दीपि० । ५ कामयाना पतिं कामयमानाम् । ६ मम गदतः । ७ यत्कृतो यया प्रसूत्या कृतः । ८ द्वैरूप्येण अवतारत्वेन्द्रत्वलक्षणद्वैविध्येन ।

प्रसूतिप्रसवं पुत्रपौत्रादिभिर्विस्तारम् ॥ १२ ॥ ययोर्वंशेनापूरितम् ॥ १३ ॥ कश्यपस्य वंशं षष्ठे वक्ष्यति । द्वितीयस्य वंशमाह—पूर्णिमेति । देवकुल्यां नाम कन्यां च । हरेः पादक्षालनाजन्मान्तरे या दिवः सरिद्गङ्गाऽभूत् ॥ १४ ॥ आत्मेशब्रह्मसंभवान्विष्णुरुद्रब्रह्मणामंशैः संभूतान् ॥ १५ ॥ किंचिर्त्किंस्वित् । किं कर्तुमिच्छव इत्यर्थः ॥ १६ ॥ ऋक्षं नाम कुलाद्रिम् । तपसि स्थितः सन् ॥ १७ ॥ तस्मिन्कुलाद्रौ । प्रसूनानां स्तवका येषु पलाशाशोकेषु तेषां कानने । निर्विन्ध्या नाम नदी तस्याः स्रवद्भिर्वार्भिरुद्घुष्टे नादिते ॥ १८ ॥ १९ ॥ २० ॥ प्राणायाम एव एधः संदीपको यस्य तेन मुनेर्मूर्ध्नो निर्गतेनाग्निना तप्यमानं

याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः ॥ तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे ॥ १२ ॥ पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा ॥ कश्यपं पूर्णिमानं च ययोरापूरितं जगत् ॥१३॥ पूर्णिमाऽसूत विरजं विश्वगं च परंतप ॥ देवकुल्यां हरेः पादशौचाद्याऽभूत्सरिद्दिवः ॥१४॥ अत्रेः पत्न्यनसूया त्रीञ्जज्ञे सुयशसः सुतान् ॥ दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्[1] ॥ १५ ॥ ॥ विदुर उवाच ॥ अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः ॥ किंचिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥१६॥ ॥ मैत्रेय उवाच ॥ ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः ॥ सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥ तस्मिन्प्रसूनस्तवकपलाशाशोककानने ॥ वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः ॥ १८ ॥ प्राणायामेन संयम्य मनो वर्षशतं मुनिः ॥ अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः[2] ॥ १९ ॥ शरणं तं प्रपद्येऽहं य एव जगदीश्वरः ॥ प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ॥ २० ॥ तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना ॥ निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥ अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः ॥ वितायमानयशसस्तदाश्रमपदं ययुः ॥ २२ ॥ तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः ॥ उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान् ॥ २३ ॥ प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः ॥ वृषहंससुपर्णस्थान्स्वैः स्वैश्चिह्नैश्च चिह्नितान् ॥ २४ ॥ कृपावलोकेन हसद्वदनेनोपलम्भितान्[3] ॥ तद्रोचिषा प्रतिहते निमील्य मुनिरक्षिणी ॥ २५ ॥

समीक्ष्य तदाश्रमपदं ययुरित्युत्तरेणान्वयः ॥ २१ ॥ अप्सरःप्रमुखैर्वितायमानं विस्तार्यमाणं यशो येषां ते ॥ २२ ॥ तेषां प्रादुर्भावः प्राकट्यं तस्य संयोगः सन्निधिस्तेन विद्योतितं मनो यस्य उत्तिष्ठन्नुत्कर्षेण तिष्ठन् ॥२३॥ अर्हणं पुष्पादिकमञ्जलौ यस्य । उपतस्थे पूजयामास । वृषाद्यारूढान् । स्वैः स्वैश्चिह्नैस्त्रिशूलकमण्डलुचक्रादिभिः ॥ २४ ॥ कृपयाऽवलोको यस्मिन् । हसच्च नद्वदनं च तेनोपलम्भितान्प्रसन्नत्वेन ज्ञापितान् । तेषां रोचिषा दीप्त्या ॥ २५ ॥ ॥

१ यद्वा आत्मेशब्रह्मणा सभवोऽभिव्यक्तिर्येषु तान्। २ 'आसन्' इति, 'क्षत्तः' इति च पाठौ। ३ 'विजृम्भितान्' इति पाठः।

श्लक्ष्णया मधुरया। सूक्तया गम्भीरार्थया ॥ २६ ॥ अनुयुगं कल्पे कल्पे विभज्य गृहीतो देहो यैस्ते प्रसिद्धा ब्रह्मविष्णुगिरिशा यूयम्। यो युष्मान्प्रणतोऽस्मि। तेभ्यः सकाशादेक एव मे मयोपहूतः। 'शरणं तं प्रपद्ये' इत्येकस्यैव निर्दिष्टत्वात्। स च युष्मासु क इति युष्माभिरेव कथ्यतामित्यर्थः ॥ २७ ॥ अस्य प्रपञ्चः—एक इति। विविधैः प्रधानैरुपचारैः। विबुधप्रधान इति वा पाठः। प्रजननाय पुत्रोत्पत्त्यै। चित्तीकृतश्चित्तेनैक्यं नीतः। मनसोऽपि दूरा अगोचराः सन्तः कथं नु त्रयोऽप्यत्रागताः ॥ २८ ॥ २९ ॥ ते त्वया यथा कृतः संकल्पस्तेन तथैव भाव्यं नान्यथा। यतः सत्संकल्पस्य ते संकल्पः। तर्हि कथमेकस्मिन्

चेतस्तत्प्रवणं युञ्जन्नस्तावीत्संहताञ्जलिः ॥ श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः ॥ २६ ॥ ॥ अत्रिरुवाच ॥ विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः ॥ ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां म इहोपहूतः ॥ २७ ॥ एको मयेह भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् ॥ अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मे ॥२८॥ ॥ मैत्रेय उवाच ॥ इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः ॥ प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो ॥ २९ ॥ ॥ देवा ऊचुः ॥ यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा ॥ सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम् ॥ ३० ॥ अथास्मदंशभूतास्ते[2] आत्मजा लोकविश्रुताः ॥ भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति च ते यशः ॥ ३१ ॥ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः ॥ सभाजितास्तयोः सम्यग्दम्पत्योर्मिषतोस्ततः ॥ ३२ ॥ सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् ॥ दुर्वासाः शंकरस्यांशो निबोधाङ्गिरसः प्रजाः ॥ ३३ ॥ श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः ॥ सिनीवाली[3] कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥ तत्पुत्रावपरावास्तां[4] ख्यातौ स्वारोचिषेऽन्तरे ॥ उतथ्यो भगवान्साक्षाद्ब्रह्मिष्ठश्च बृहस्पतिः ॥ ३५ ॥ पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि ॥ सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च[5] महातपाः ॥ ३६ ॥ ॥

ध्यायमाने त्रयः प्रतीताः स्थ तत्राहुः। यदेकं जगदीश्वराख्यं तत्त्वं भवान् ध्यायति ते एते वयम्। त्रयोऽपि तदेवैकं तत्त्वं नास्माकं भेदोऽस्तीत्यर्थः ॥ ३० ॥ विस्रप्स्यन्ति विस्तारयिष्यन्ति। अन्तर्भूतणिजर्थस्य सृप्लृ गतावित्यस्य रूपम् ॥ ३१ ॥ ताभ्यां सम्यक् सभाजिताः पूजिताः सन्तः ततः स्थानात्प्रतिजग्मुः ॥ ३२ ॥ अङ्गिरसो ब्रह्मणस्तृतीयपुत्रस्य। निबोध बुध्यस्व ॥ ३३ ॥ ताः कन्या निर्दिशति—सिनीवालीति ॥ ३४ ॥ ३५ ॥ पुलस्त्यो हविर्भुवि पत्न्यामित्यन्वयः। सोऽगस्त्यः। दह्राग्निर्जाठराग्निः। विश्रवाश्च पुलस्त्यस्य सुत इति शेषः ॥ ३६ ॥ ॥ ॥ ॥

१ सत्लोऽयं ब्राह्मणः असत्तत्त्वाज्ञानादिति प्रहस्य। २ अथ अतो हेतोः अंशेन शक्तिविशेषेण भूताः प्राप्ताः आविष्टा इत्यर्थः। ३ 'दृष्टे शशिनि सिनीवाली स्यान्नष्टे कुहूरमावास्या॥ अनुमतिरूने राका सपूर्णे पूर्णमासी च ॥' इति लक्षितानां चतसृणामधिष्ठात्र्यो देवता एताः। ४ तत्पुत्रावङ्गिरसः पुत्रौ। ५ बालबोधिन्यां तु महातपा विश्रवाश्च पुलस्त्यस्य द्वितीयः पुत्र इति शेष इति विशेषः।

तस्य विश्रवस इडविडायां जातः सुतः कुवेरः । अन्यस्यां भार्यायां केशिन्यां रावणादयस्त्रयः सुताः ॥ ३७ ॥ ३८ ॥ ज्वलतः प्रकाशमानान् ॥ ३९ ॥ चित्रकेतुप्रमुखा जज्ञिरे । ते च सप्तर्षयो जाताः ॥ ४० ॥ तानेवाह—चित्रकेतुरिति । वसुभृद्यानो नामैकः । शक्त्यादयोऽपरेऽन्यस्याः पुत्राः ॥ ४१ ॥

तस्य यक्षपतिर्देवः कुवेरस्त्विडविडासुतः ॥ रावणः कुम्भकर्णश्च तथान्यस्यां विभीषणः ॥ ३७ ॥ पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान् ॥ कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥३८॥ क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥ ऋषीन्षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा ॥ ३९ ॥ ऊर्जायां जज्ञिरे पुत्रा वसिष्ठस्य परंतप ॥ चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः ॥ ४० ॥ चित्रकेतुः सुरोचिश्च विरजा मित्र एव च ॥ उल्वणो वसुभृद्यानो द्युमान् शक्त्यादयोऽपरे ॥४१॥ चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम् ॥ दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥४२॥ भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् ॥ धातारं च विधातारं श्रियं च भगवत्पराम् ॥४३॥ आयतिं नियतिं चैव सुते मेरुस्तयोरदात् ॥ ताभ्यां तयोरभवतां मृकण्डः प्राण एव च ॥ ४४ ॥ मार्कण्डेयो मृकण्डस्य प्राणाद्वेदशिरा मुनिः ॥ कविश्च भार्गवो यस्य भगवानुशना सुतः ॥४५॥ त एते मुनयः क्षत्तर्लोकान्सर्गैरभावयन् ॥ एष कर्दमदौहित्रसन्तानः कथितस्तव ॥४६॥ शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः ॥ प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ॥ ४७ ॥ तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥ त्रयोदशादाद्धर्माय तथैकामग्नये विभुः ॥ ४८ ॥ पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥ श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः ॥४९॥ बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ॥ श्रद्धाऽसूत शुभं मैत्री प्रसादमभयं दया ॥५०॥ शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ॥ योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत ॥५१॥ मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ॥ मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ॥ ५२ ॥ ॥

॥ ४२ ॥ ख्यात्यां पत्न्याम् । पुत्रान्पुत्रौ पुत्रीं च । तानेवाह—धातारमिति ॥ ४३ ॥ तयोर्धातृविधात्रोः ॥ ४४ ॥ कविश्च भार्गवो भृगोः पुत्रः । यस्य कविः सुत उशना ॥ ४५ ॥ ४६ ॥ अजात्मजो ब्रह्मपुत्रः नतु प्राचेतसः ॥ ४७ ॥ ४८ ॥ युक्तेभ्यः संयतेभ्यो मिलितेभ्यो वा ॥ ४९ ॥ ५० ॥ ५१ ॥ सर्वेषां गुणानामुत्पत्तिर्यस्यां सा ॥ ५२ ॥ ॥ ॥ ॥ ॥

१ क्रिया तच्छक्त्यधिष्ठात्री । २ पूर्वं तृतीयस्कन्धनिर्दिष्टाया अरुन्धत्या एवेदं नामान्तरम् । ३ 'ते च सप्तर्षयोऽमलाः' इति पाठः । ४ तृतीयस्कन्धे उक्तायाः शान्ताया एव चित्तिरिति नाम । अथर्वा ब्रह्मपुत्रेष्वगणितोऽपि तत्पुत्र एव बोध्यः । ५ 'सर्वे ते मुनयः' इति पाठः । 'नचैते' इति च पाठः । ६ अभावयन्नुत्पादितवन्तः । ७ मिलितेभ्य एकचित्तेभ्य इति एकभार्यात्वेऽपि दोषः परिहृतः ।

॥ ५३ ॥ ५४ ॥ उपतस्थुर्भेजुः ॥ ५५ ॥ निजया मायया यस्मिन्नात्मनि । खे गगने रूपभेदं गन्धर्वनगरमिवेदं विश्वं विरचितम् । तस्यात्मनः प्रतिचक्षणाय प्रकाशनायात्मानं योऽद्य प्रादुश्चकार प्रकटितवान् तस्मै पुरुषाय नमः । केन रूपेण प्रादुश्चकार । ऋषेर्मूर्तिराकारो यस्मिंस्तेन रूपेण ॥ ५६ ॥ सोऽयं नोऽस्मान्सुरगणाननल्पकरुणायुक्तेन विलोकनेन विशिष्टनेत्रेण दृश्यात् पश्यतु । कथंभूतेन । यच्छ्रीनिकेतममलमरविन्दं तत्क्षिपता तिरस्कुर्वता । कथंभूतः । अनुमेयं शास्त्रतो विचार्य, नत्वस्माकमपरोक्षं तत्त्वं यस्य । कथंभूतानस्मान् । स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्यथात्वं तस्योपशमाय सत्त्वेन गुणेन सृष्टान् ॥ ५७ ॥ लब्धोऽवलोको यैः सुरगणैस्तैरभिष्टुतावर्चितौ सन्तौ ययतुः ॥५८॥ भुवो भारस्य व्ययाय नाशाय । चकार एकवाक्यत्वार्थः । तौ च सांप्रतमिहागताविसर्थः ।

ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम् ॥ मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः ॥ ५३ ॥ दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः ॥ मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः ॥ ५४ ॥ नृत्यन्ति स्म स्त्रियो देव्य आसीत्परममङ्गलम् ॥ देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥ ५५ ॥ ॥ देवा ऊचुः ॥ यो मायया विरचितं निजयात्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय ॥ एतेन धर्मसदने ऋषिमूर्तिनाऽद्य प्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५६ ॥ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्सत्त्वेन नः सुरगणाननुमेयतत्त्वः ॥ दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपताऽरविन्दम् ॥ ५७ ॥ एवं सुरगणैस्तात भगवन्तावभिष्टुतौ ॥ लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम् ॥ ५८ ॥ ताविमौ वै भगवतो हरेरंशाविहागतौ ॥ भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥५९॥ स्वाहाऽभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् ॥ पावकं पवमानं च शुचिं च हुतभोजनम् ॥ ६० ॥ तेभ्योऽग्नयः समभवंश्चत्वारिंशच्च पञ्च च ॥ त एवैकोनपञ्चाशत्साकं पितृपितामहैः ॥ ६१ ॥ वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः ॥ आग्नेय्य इष्टयो यज्ञे निरूप्यन्तेऽग्नयस्तु ते ॥६२॥ अग्निष्वात्ता बर्हिषदः सौम्याः पितर आज्यपाः ॥ साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥ ६३ ॥ ॥ ॥ ॥

तदुक्तं तन्त्रे 'अर्जुने तु नरावेशः कृष्णो नारायणः स्वयम्' इति । यदूद्वहः श्रीकृष्णः । कुरूद्वहोऽर्जुनः । उभावपि कृष्णनामानौ ॥ ५९ ॥ अग्न्यभिमानिनो देवान् । स्वाहा नाम तस्य भार्या । हुतभोजनमिति त्रयाणां विशेषणम् ॥ ६० ॥ पितरस्त्रयः पितामह एकस्तैः साकं सह ॥ ६१ ॥ वैतानिके वैदिके कर्मणि यज्ञे येषां नामभिरग्निदेवताका इष्टयो निरूप्यन्ते क्रियन्ते त एतेऽग्नयो न लौकिकाः । अतो बहूनां न वैयर्थ्यमिति भावः ॥ ६२ ॥ सौम्याः सोमपाः । येषामग्नौकरणमस्ति ते साग्नयः । तद्रहितास्त्वनग्नयः ॥ ६३ ॥ ॥ ॥ ॥ ॥

१ गन्धर्वनगरमिवेति नश्वरत्वे नतु मिथ्यात्वे । २ सोऽयं सर्वाधारस्रष्टृत्वेन प्रसिद्धः । ३ ककुभां प्रसादश्च दूरस्थदर्शनहेतुः प्रकाशविशेषः । वातप्रसादस्तत्स्पर्शस्य सुखजनकत्वम् । सरितां प्रसादो नैर्मल्यादिः । अद्रीणां प्रसादः स्वान्तस्थमणिरत्नादीनां बहिराविष्करणम् । ४ 'अग्नयः' इति पाठः ।

तयोस्तु संततिर्नाभवज्जीवन्मुक्तत्वादित्याह—उभे त इति ॥ ६४ ॥ गुणशीलत आत्मनः सदृशं देवमनुव्रतापि सती पुत्रं न लेभे ॥ ६५ ॥ तत्र हेतुः—स्वे पितरि दक्षेऽप्रतिरूपेऽसदृशे प्रतिकूले सतीत्यर्थः । आत्मना स्वयमेवात्मानं देहमजहात्त्यक्तवती । योगसंयुता योगमाश्रित्येति ॥ ६६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ द्वितीये प्रथमाध्यायोपक्षिप्ते भवदक्षयोः ॥ विद्वेषे वर्ण्यते हेतुर्विश्वसृड्यज्ञसंभवः ॥ १ ॥ सतीं सतीनाम्नीम् । न चासौ कस्यचिद्द्वेषार्ह इत्याह—क इति । चराचरगुरुं जगतो दैवतं च तं को द्वेष्टि, कथं च निर्वैरं द्वेष्टि ।

तेभ्यो दधार कन्ये द्वे वयुनां धारिणीं स्वधा ॥ उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥ ६४ ॥ भवस्य पत्नी तु सती भवं देवमनुव्रता ॥ आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः ॥६५॥ पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ॥ अप्रौढैवात्मनात्मानमजहाद्योगसंयुता ॥ ६६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे विदुरमैत्रेयसंवादे प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ विदुर उवाच ॥ ॥ भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः ॥ विद्वेषमकरोत्कस्मादनादृत्यात्मजां सतीम् ॥१॥ कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम् ॥ आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् ॥ २ ॥ एतदाख्याहि मे ब्रह्मञ्जामातुः श्वशुरस्य च ॥ विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान्सती ॥ ३ ॥ ॥ मैत्रेय उवाच ॥ पुरा विश्वसृजां सत्रे समेताः परमर्षयः ॥ तथाऽमरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥ ४ ॥ तत्र प्रविष्टमृषयो दृष्ट्वाऽर्कमिव रोचिषा ॥ भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः ॥ ५ ॥ उदतिष्ठन्सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः ॥ ऋते विरिञ्चं शर्वं च तद्भासाक्षिप्तचेतसः ॥६॥ सदसस्पतिभिर्दक्षो भगवान्साधुसत्कृतः ॥ अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥ प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः ॥ उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥८॥ श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः ॥ साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥

निर्वैरत्वे हेतुः—शान्तं, भावे क्तः । शान्तिरेव विग्रहो यस्य । कुतः आत्मन्येवारामो रतिर्यस्य तम् । यद्वा कः प्रजापतिर्दक्षः कथं द्वेष्टि । एवंभूते तस्मिन्द्वेषोऽयुक्तोऽशक्यश्चेत्यर्थः ॥ २ ॥ यतो हेतोर्विद्वेषः, यतो विद्वेषात्प्राणांस्तत्याज, एतदाख्याहि ॥ ३ ॥ तदेवाख्यातुमितिहासं प्रस्तौति—पुरेति । समेता आसन् ॥ ४ ॥ प्रविष्टं दक्षमिति शेषः । महत्सदो महतीं सभाम् ॥ ५ ॥ स्वधिष्ण्येभ्यः स्वीयासनेभ्यः ॥ ६ ॥ ७ ॥ प्राक् स्वोपवेशनात्पूर्वमेव निषण्णमुपविष्टं मृडं शिवम् । तदनादृतस्तेनाभ्युत्थानादिभिरकृतादरः । नामृष्यत् नासहत । वामं वक्रं यथा भवति तथाऽभिवीक्ष्य ॥८॥ मे वचनं श्रूयताम् । अज्ञानान्मत्सराच्च न ब्रुवतः ॥९॥ ॥ २ ॥

१ उपक्षिप्ते आरब्धे । २ वसिष्ठनारदाद्याः । ३ वसिष्ठाद्व्यतिरिक्ता अप्रसिद्धा अपि सर्वे मुनयः । ४ सहाग्नय इति कुण्डेभ्योऽग्नयोऽभ्युत्थानं चक्रुः । ५ 'विरिञ्चाच्छर्वाच्च' इति पाठः क्रम० ।

स्तब्धेनोचितक्रियाशून्येन । ध्वस्तेनेति पाठे भ्रष्टेन ॥ १० ॥ तदेवाह—एष इति । यद्यस्माद्विप्राग्निसमक्षं सावित्रीतुल्याया मे दुहितुः पाणिमग्रहीत् ॥ ११ ॥ मृगशावस्य हरिणबालस्याक्षिणीवाक्षिणी यस्याः । प्रत्युत्थानाभिवादार्हे मय्युचितं सन्मानं वाचापि नाकरोत् ॥ १२ ॥ अनर्हाय कन्या दत्तेत्यनुतप्यमान आह—लुप्तक्रियायेति सार्धैश्चतुर्भिः । उशती वेदलक्षणां गिरम् ॥ १३ ॥ प्रेतावासेषु श्मशानेषु । व्युप्ता विकीर्णाः केशा यस्य ॥ १४ ॥ चिताभस्मना कृतं स्नानं येन । प्रेतानां स्रजो माल्यानि यस्य प्रेतस्रक् । नृणामस्थीनि भूषणानि यस्य । शिव इत्यपदेशो नाममात्रं यस्य । तमोमात्रात्मकः केवलतमोरूप आत्मा स्वभावो येषाम् ॥ १५ ॥ उन्मादा भूतविशेषास्तेषां नाथाय । दुर्हृदे दुष्टचित्ताय । वतेति खेदे । वास्तवस्त्वयमर्थः—लुप्ताः क्रिया यस्मिन्, परब्रह्मरूपत्वात् । अत एव नास्ति शुचिर्यस्मात् । अमानिने अभिन्नसेतवे इति च छेदः । तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्या स्यादिति लज्जादिना दातुमनिच्छ-

अयं तु लोकपालानां यशोघ्नो[1] निरपत्रपः ॥ सद्भिराचरितः पन्था येन स्तब्धेन दूषितः ॥१०॥ एष मे शिष्यतां[2] प्राप्तो यन्मे दुहितुरग्रहीत् ॥ पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥११॥ गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः[3] ॥ प्रत्युत्थानाभिवादार्हे वाचाप्यकृत नोचितम् ॥१२॥ लुप्तक्रियायाशुचयेऽमानिनेऽभिन्नसेतवे ॥ अनिच्छन्न[4]प्यदां बालां शूद्रायेवोशतीं गिरम् ॥१३॥ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ॥ अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥१४॥ चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः ॥ शिवापदेशो ह्यशिवोऽमत्तोऽमत्तजनप्रियः ॥ पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम् ॥ १५ ॥ तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे ॥ दत्ता बत मया साध्वी चोदिते[5] परमेष्ठिना ॥ १६ ॥ ॥ मैत्रेय उवाच ॥ विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम् ॥ दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १७ ॥ अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः ॥ सह भागं न लभतां देवैर्देवगणाधमः ॥ १८ ॥

न्नपि तत्संबन्धलोभेन दत्तवान् । शूद्रायेत्यनर्हत्वमात्रे दृष्टान्तो न हीनत्वे । पूर्वापरस्ववचनविरोधापत्तेः । एतदुक्तं भवति—यथा कश्चिच्छूद्राय वेदमर्थलोभेन ददाति तद्वदिति । प्रेतावासेष्वित्यादि सर्वं विडम्बनमात्रमिति स्वयमेवाह—उन्मत्तवदिति । अन्यथोन्मत्त इत्येवावक्ष्यत् । अशिवो नास्ति शिवो यस्मात् । अमत्तोऽमत्तजनप्रिय इति छेदः । पतिः प्रमथभूतानामिति भक्तवात्सल्यमाह । तामसानपि दोषमपनीय पातीति नष्टानामपि शौचं शुद्धिर्यस्मात् । दुष्टेष्वप्येते मयानुकम्प्या इति हृन्मनो यस्य स दुर्हृत्तस्मै । वतेति हर्षे । ब्रह्मणो वाक्याल्लज्जाभयादिकं परित्यज्य दत्तेत्यर्थः ॥ १६ ॥ अप्रतीपमप्रतिकूलं यथा भवत्येवमवस्थितमपि विनिन्द्य ॥ १७ ॥ देवानां यजनसमये देवैः सह भागं न लभतां किंतु तेभ्यः पूर्वमेव लभताम् । अग्रभोजित्वात् । यद्वा । तेषु भुक्तवत्सु लभताम्, सर्वपोषकत्वात् । तत्र हेतुः—देवगणोऽधमो यस्मा[6]त्सः ॥ १८ ॥ ॥ ॥ ॥ ॥

१ सरस्वतीपक्षे तु यशोघ्नः परमतेजस्वित्वात्तद्यशआच्छादकः । निरपत्रपः निर्गता अप समन्तात् त्रा त्राणं रक्षणं येषां तानत्रपान्रक्षकहीनान्पातीति तथा । स्तब्धेन वेदावमन्ता पाखण्डिजनेन कर्त्रा दूषितो वेदमार्गो येनैव हेतुना सद्भिराचरितोऽनुष्ठितः । २ सरस्वतीपक्षे अशिष्यता शिष्यलक्षणानाक्रान्तत्वं प्राप्त इति । ३ मर्कटतुल्यकामिनोऽपि मे लोचनः संबन्धेन द्रष्टा कृपया बभूवेति शेषः । तथापि मल्लक्षणो जनस्त्वयि वाचाप्युचितं नाकरोत्तन्मां धिगित्यर्थः । ४ अत्र काका इच्छन्नेवाऽदामित्यर्थः । ५ 'चोदितः' इति वीरपाठः । तत्र परमेष्ठिना चोदितोऽहं दत्तवानित्यध्याहारः । आर्षत्वाद्व्यत्ययेन तृतीयार्थे प्रथमा । ६ देवगणाधीश इत्यर्थः ।

स दक्षस्तस्मात्स्थानाद्विनिष्क्रम्य जगाम। हे कौरव्य ॥ १९ ॥ गिरिशस्यानुगानामग्रणीर्मुख्यः। रोष एव कषायस्तेन दूषितः, आरक्तनेत्र इत्यर्थः। तस्य गिरिशस्यावाच्यतां वचनानर्हताम्। निन्द्यतामित्यर्थः। तेभ्योऽपि शापं विससर्ज ॥ २० ॥ दक्षं शपति सार्धैस्त्रिभिः। एतन्मर्त्यं दक्षशरीरमुद्दिश्य श्रेष्ठं मत्वा। अप्रतिद्रुहि प्रतिद्रोहमकुर्वेति पृथग्दृष्टिर्भेददर्शी तत्त्वतः परमार्थात् ॥२१॥ अज्ञत्वमेवाह—गृहेष्विति। कर्मतन्त्रं कर्मपरिकरम्। वेदे ये वादा अर्थवादाः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादयस्तैर्विपन्ना विनष्टा धीर्यस्य ॥२२॥ परो देहादिस्तमेवात्मत्वेनाभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृतात्मनो गतिस्तत्त्वं येन। अतः पशुतुल्यः। अतितरां स्त्रीकामोऽस्त्विति द्वितीयः शापः। बस्तस्य मुखमेव मुखं यस्येति तृतीयः शापः ॥ २३ ॥ अयं च शापोऽस्यानुरूप

निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम् ॥ तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ १९ ॥ विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः ॥ दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥२०॥ य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ॥ द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥२१॥ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया ॥ कर्मतन्त्रं वितनुते वेदवादविपन्नधीः ॥२२॥ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः ॥ स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥२३॥ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः ॥ संसरन्त्विह ये चामुमनु शर्वावमानिनम् ॥२४॥ गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा ॥ मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः ॥२५॥ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः ॥ वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥२६॥ तस्यैवं ददतः शापं श्रुत्वा द्विजकुलाय वै ॥ भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥ २७ ॥ भवव्रतधरा ये च ये च तान्समनुव्रताः ॥ पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥ २८ ॥ ॥

एवेत्याह। विद्याबुद्धिः इयमेव तत्त्वविद्येति बुद्धिर्यस्य। अतोऽसौ जड एव। द्विजान् शपति—संसरन्त्विति सार्धद्वाभ्याम्। शर्वमवमन्यत इति तथा तममुं दक्षं ये चानुवर्तन्ते संसरन्तु जन्ममरणाद्यनुभवन्त्वित्येकः शापः ॥२४॥ श्रुताया वेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादा मनःक्षोभकत्वात्। अर्थवादबहुलाया इत्यर्थः। मधुगन्धतुल्येन प्ररोचनेन मथ्ना मनःक्षोभकेणोन्मथित आत्मा मनो येषां ते संमुह्यन्तु कर्मस्वासक्ता भवन्त्विति द्वितीयः शापः ॥ २५ ॥ सर्वभक्षा भक्ष्याभक्ष्यविचारशून्याः। वृत्त्यै देहादिपोषणाय धृतानि विद्यातपोव्रतानि यैः। वित्तादिष्वेवारामो रतिर्येषां ते। याचकाः सन्तो विचरन्त्विति च शापचतुष्टयम् ॥ २६ ॥ प्रत्यसृजत् प्रत्यदात्। शापरूपं ब्रह्मदण्डम् ॥ २७ ॥ सच्छास्त्रस्य परिपन्थिनः प्रतिकूलाः ॥ २८ ॥ ॥ ॥ ॥

१ भगवानयं न भवतीति भेददर्शी। २ विनष्टा नश्वरफलासक्तत्वात् अर्थवादानां प्रशंसामात्रपरत्वेन मुख्यार्थपरत्वाभावात्। ३ 'कषायरूपितः' इति वीर० पाठः। ४ 'वितनुयात्' इति पाठः। ५ 'असावजः' इति पाठः। ६ द्विजकुलाय द्विजकुलमुद्दिश्य। ७ दक्षमनुसृत्य निन्दन्ति। ८ रुचिजनकेन धर्मविशेषेण।

सुरा गौडी पैष्टी माध्वी च । आसवस्तालादिसंभवं मद्यम् । द्वन्द्वैक्यात्पण्ढत्वम् । तद्यत्र दैवं पूज्यं देवतावदादरणीयमिति वा ॥२९॥ ब्रह्म वेदम् । कथंभूतम् । सेतुं मर्यादारूपम् । तदेवाह । पुंसां वर्णाश्रमाचारवतां विधारणं धारकम् ॥ ३० ॥ सेतुत्वं प्रपञ्चयति द्वाभ्याम् । एष वेदलक्षण एव शिवः पन्थाः । यं पूर्वे ऋषयोऽनुसंतस्थुराश्रितवन्तः । यद्यस्मिन् जनार्दनः प्रमाणं मूलम् ॥ ३१ ॥ भूतराट् भूतानां तामसानां पतिः ॥ ३२ ॥ अन्योन्यशापेनोभयोर्नाशाद्विमना इवेति । तथापि भगवदनुगृहीतानां नाशो न स्यादिति भावः ॥३३॥ ऋषभः सर्वश्रेष्ठो हरिर्यत्र इज्यः पूज्यस्तत्सत्रं सम्यग्विधाय । हे महेष्वास विदुर ॥ ३४ ॥ यत्र प्रयागेऽन्विता तत्रावभृथस्नानं कृत्वा ततः स्थानाद्ययुः ॥३५॥ ॥ इति श्रीमद्भा० म० पु० चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥२॥

नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ॥ विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ २९ ॥ ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ ॥ सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥ ३० ॥ एष एव हि लोकानां शिवः पन्थाः सनातनः ॥ यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ ३१ ॥ तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ॥ विगर्ह्य यात पाषण्डं दैवं वो यत्र भूतराट् ॥ ३२ ॥ ॥ मैत्रेय उवाच ॥ तस्यैवं वदतः शापं भृगोः स भगवान् भवः ॥ निश्चक्राम ततः किंचिद्विमना इव सानुगः ॥ ३३ ॥ तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् ॥ संविधाय महेष्वास यत्रेज्य ऋषभो हरिः ॥ ३४ ॥ आप्लुत्यावभृथं यत्र गङ्गा यमुनयान्विता ॥ विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे दक्षशापो नाम द्वितीयोऽध्यायः ॥२॥ ॥छ॥

॥ मैत्रेय उवाच ॥ सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः ॥ जामातुः श्वशुरस्यापि सुमहानतिचक्रमे ॥ १ ॥ यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना ॥ प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥ इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च ॥ बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ ३ ॥ तस्मिन्ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः ॥ आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥ ॥ ॥ ॥

तृतीये तु सती तातयज्ञोत्सवदिदृक्षया ॥ गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ १ ॥ ध्रियमाणयोरवतिष्ठमानयोः । 'धृङ् अवस्थाने' इत्यस्मात् ॥ १ ॥ यद्यपि रुद्रविहीनो यज्ञो नास्त्येव, तथापि दक्षस्य रुद्रपरित्यागो द्वेषाद्बर्वाच । तत्र द्वेषे हेतुरुक्तः । गर्वे हेतुमाह । यदा तु प्रजापतीनामाधिपत्येऽभिषिक्तस्तदा तस्य स्मयो गर्वोऽभवत् ॥ २ ॥ गर्वादेव ब्रह्मिष्ठान्सेश्वरानभिभूय तिरस्कृत्य । 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति श्रुतेर्वाजपेयेनेष्ट्वा समारेभे ॥ ३ ॥ कृतस्वस्त्ययनाः कृतमङ्गलाः । सभर्तृका इति दक्षिणादिभिः प्रथममर्हितानामपि पत्न्यर्हणे पुनरर्हणमुक्तम् ॥ ४ ॥ ॥ ॥

१ यत्र पाषण्डे । २ ततः यज्ञशालातः । ३ अवभृथो यज्ञान्तस्नानम् । ४ नीतिहेतुभिः नीत्या युक्तिभिश्च । ५ भवं भवानुयायिनश्च भागदानामन्त्रणसत्कारायकरणेन तिरस्कृत्येत्यर्थः ।

तत्तदा खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा तत्र व्रजन्तीरुपदेवानां गन्धर्वादीनां वरस्त्रियश्च स्वस्य निलयस्याभ्याशे समीपे दृष्ट्वौत्सुक्यात्पतिमभ्यभाषतेति त्रयाणामन्वयः ॥ ५ ॥ कथंभूताः स्त्रियो दृष्ट्वा । विमानानि यानानि यासां ताः । प्रेष्ठैः सहिताः । निष्काणि पदकानि कण्ठेषु यासाम् । शोभमानानि वासांसि यासाम् ॥ ६ ॥ लोलानि चञ्चलान्यक्षीणि यासाम् । मृष्टान्युज्ज्वलानि कुण्डलानि यासां ताः ॥ ७ ॥ निर्यापितः प्रवर्तितः[1] । हे वाम शिव, ते यद्यर्थिता इच्छा तर्हि वयं च तत्राभिसराम गच्छामः । न चाद्यापि यागो निवृत्तः । यतोऽमी विबुधा व्रजन्ति ॥ ८ ॥ औत्सुक्यं प्रकटयन्नाह—तस्मिन्निति षड्भिः । पितृभ्यामुपनीतं दत्तं परिवर्हमलंकारादिद्रव्यं भवता सहार्हितुं स्वीकर्तुमभिकामये । अर्हितमिति पाठे तत्कृतं परिवर्हमिच्छामीति ॥ ९ ॥ स्वसॄर्भगिनीः । भर्तृभिः संमिताः सदृशीः । क्लिन्नधियं स्नेहार्द्रचित्ताम् । चिरमुत्कण्ठमुत्सुकं मनो यस्याः साहं द्रक्ष्यामि । हे मृड, उन्नीयमानं प्रवर्त्यमान-

तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् ॥ सती दाक्षायणी देवी पितुर्यज्ञमहोत्सवम् ॥ ५ ॥ व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः ॥ विमानयानाः सप्रेष्ठा निष्ककण्ठीः सुवाससः ॥ ६ ॥ दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः ॥ पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत ॥ ७ ॥ ॥ सत्युवाच ॥ प्रजापतेस्ते श्वशुरस्य सांप्रतं निर्यापितो यज्ञमहोत्सवः किल ॥ वयं च तत्राभिसराम वाम ते यद्यर्थिताऽमी विबुधा व्रजन्ति हि ॥ ८ ॥ तस्मिन्[2]भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं रमिष्यन्ति सुहृद्दिदृक्षवः ॥ अहं च तस्मिन्भवताभिकामये सहोपनीतं परिवर्हमर्हितुम् ॥ ९ ॥ तत्र स्वसॄर्मे ननु भर्तृसंमिता मातृष्वसॄः क्लिन्नधियं च मातरम् ॥ द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥ त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम् ॥ तथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम् ॥ ११ ॥ पश्य प्रयान्तीरभवान्ययोषितोऽप्यलंकृताः कान्तसखा वरूथशः ॥ यासां व्रजद्भिः शितिकण्ठ मण्डितं नभो विमानैः कलहंसपाण्डुभिः ॥ १२ ॥ ॥ ॥

मध्वरेषु ध्वजमिव दृश्यं श्रेष्ठमध्वरम् । यद्वा उत्क्षिप्यमाणं यज्ञे केतुं यूपं वा ॥ १० ॥ अहो किं तत्राश्चर्यं येन तवैतदौत्सुक्यमिति चेदत आह—त्वयीति । हे अज, एतद्विश्वमाश्चर्यरूपं त्वय्येव त्वन्मायया रचितं विभाति । अतो[3] यद्यपि तव नाश्चर्यबुद्धिः, तथाप्यहं योषिदुत्सुकस्वभावा तव तत्त्वं न जानामि । अतो दीना कृपणा सती हे भव, मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि ॥ ११ ॥ दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति—पश्येति द्वाभ्याम् । हे अभवेति । सुहृद्वियोगदुःखं त्वया नास्वादितमिति भावः । अन्या योषितः संवन्धरहिता अपि प्रयान्तीः पश्य । कान्तसखा भर्तृसहिताः । वरूथशः सङ्घशः । कथंभूताः । यासां विमानैर्नभो मण्डितं ताः । हे शितिकण्ठ नीलकण्ठेति परानुग्रहाय त्वया विषमपि भक्षितमिति सूचयति ॥ १२ ॥ ॥ ॥

१ प्रवर्तितः ऋषिभिरिति शेषः । २ तस्मिन् यज्ञमहोत्सवे । ३ आश्चर्यविश्वाधिष्ठानत्वात् ।





॥ ५ ॥

तदा हे गुरश्रेष्ठ, पितृगेहोत्सवं निशम्य सुताया देहः कथं नेङ्गते द्रष्टुं न प्रचलति । तथाप्यनाहुताः सन्तः कथं गच्छामस्तत्राह । सौहृदं सुहृत्संबन्धि केतनं गृहं तथा भर्त्रादीनां च गृहमनाहूता अप्यभियन्ति सन्तः । ह्रस्वत्वमार्षम् ॥ १३ ॥ हे अमर्त्य, तत्तस्मात्प्रसीद । इदं मे वाञ्छितं कर्तुं भवानर्हति । कारुणिकत्वमेवाह । अदभ्रचक्षुपाऽनल्पज्ञानेनापि त्वयात्मनो देहस्यार्धेऽहं निरूपिता धृता । यतोऽर्धनारीश्वर इति ख्यातोऽसि, अतो मामनुग्रहाण । याचितः सन् ॥ १४ ॥ अभिभाषितो याचितः । को दक्षो यानाह । मर्म भिन्दन्ति ये तान्कुवागिपून्दुरुक्तिबाणान्संस्मारितः ॥ १५ ॥ अनाहुता अपीति त्वया यदुदितमुक्तं तच्छोभनमेव किंत्वनात्म्यं देहादावहंकारस्तत्कृतेन मदेन मन्युना च ते बन्धवो यद्यनुत्पादितदोपदृष्टयो भवन्ति तर्हि । न उत्पादिते आरोपिते दोपे दृष्टिर्येषां ते ॥ १६ ॥ ननु विद्यादिगुणयुक्तो दक्षस्त्वादृशेषु महत्सु कथं दोपदृष्टिर्भवेत्तत्राह । विद्यादिभिरेव स्मृतौ हतायां विवेकज्ञाने नष्टे सति भूयसां महत्तमानां धाम

कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते ॥ अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ १३ ॥ तन्मे प्रसीदेदममर्त्य वाञ्छितं कर्तुं भवान्कारुणिको बतार्हति[1] ॥ त्वयात्मनोऽर्धेऽहमदभ्रचक्षुषा निरूपिता माऽनुगृहाण याचितः ॥ १४ ॥ ॥ ऋषिरुवाच[2] ॥ एवं गिरित्रः प्रिययाऽभिभाषितः[3] प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रियः ॥ संस्मारितो मर्मभिदः कुवागिषून्यानाह को विश्वसृजां समक्षतः ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियन्ति बन्धुषु ॥ ते यद्यनुत्पादितदोषदृष्टयो बलीयसाऽनात्म्यमदेन मन्युना ॥ १६ ॥ विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भिरसत्तमेतरैः ॥ स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम् ॥ १७ ॥ नैतादृशानां स्वजनव्यपेक्षया गृहान्प्रतीयादनवस्थितात्मनाम् ॥ येऽभ्यागतान्वक्रधियाऽभिचक्षते[4] आरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥ तथारिभिर्न व्यथते शिलीमुखैः शेतेऽर्दिताङ्गो हृदयेन दूयता ॥ स्वानां यथा वक्रधियां[5] दुरुक्तिभिर्दिवानिशं[6] तप्यति मर्मताडितः ॥ १९ ॥ ॥ ॥

तेजो न पश्यन्ति हि । ननु गुणैः कथं विवेकनाशस्तत्राह । सतां गुणैर्विवेकहेतुभिरप्यसत्तमानामितरैर्दोपभूतैः । अत एव तैर्भृतो धृतः पुष्टो वाहं विद्वांस्तापस इत्यादिर्मानो गर्वस्तेन दुष्टा दृष्टिर्येषां ते ॥ १७ ॥ स्वजनव्यपेक्षया बन्धुदृष्ट्या । गृहान्न प्रतीयान्नावलोकयेत् । अनवस्थितचित्तत्वमेवाह । ये वक्रधिया कुटिलया बुद्ध्या पश्यन्ति । आरोपिता उत्तम्भिता भ्रूर्येषु तान्यारोपितभ्रूणि तैः । आरोपिताभिर्भ्रूभिरिति वा । अमर्पणैः सक्रोधैरक्षिभिः ॥ १८ ॥ ननु स्वजनानां गृहं सुहृद्भिर्गन्तव्यं तेषां दुश्चेष्टितं च सोढव्यम्, न, तस्य दुःसहत्वादित्याह—तथेति । अरिभिः शिलीमुखैर्बाणैरर्दिताङ्गः खण्डितगात्रोऽपि तथा न व्यथते । यतः शेते स्वपिति । स्वानां दुरुक्तिभिर्मर्मसु ताडितो यथा दूयता व्यथमानेन हृदा दिवानिशं तप्यति ॥ १९ ॥ ॥ ॥

१ 'बतार्हसि' इति चित्सुखपाठः । २ ऋषिर्मैत्रेयः । ३ 'अभिनाथितः' इति पाठः । ४ अभिचक्षते पश्यन्ति । ५ अस्मिन्नर्थे वक्रधियेति हेतौ तृतीया । ६ कदाचिन्निद्रालपीत्यर्थः ।

मयि तत्र गतायां नेयं शङ्केति चेत्तत्राह। व्यक्तं निश्चितमुत्कृष्टा गतिः स्थितिर्यस्य तस्यात्मजानां कन्यानां मध्ये त्वं प्रियेति मे संमतासि, अथापि पितुः सकाशान्मानं न लप्स्यसे। मदाश्रयान्मत्संबन्धात् ॥ २० ॥ ननु भगवंस्त्वया किमिति दक्षस्तिरस्कृतो यतोऽसौ त्वां द्वेष्टीत आह। पापच्यमानेनालं दह्यमानेन हृदा मनसा दुःखितेन्द्रियः काभिः, पूरुषो जीवस्तस्य बुद्धिश्चित्तं तत्साक्षिणां निरहंकाराणामित्यर्थः। समृद्धिभिः पुण्यकीर्त्यादिभिः। एषां पदं स्थानमैश्वर्यं प्राप्तुमकल्पोऽशक्तः सन्परं द्वेष्टि। असुरा यथा हरिं केवलं द्विषन्ति ॥२१॥ ननु त्वया प्रत्युत्थानविनयाद्यकरणादवज्ञात एवासौ तत्राह। हे सुमध्यमे, प्रत्युद्गमादिकं मिथो जनैर्यद्विधीयते तत्प्राज्ञैः साधु विधीयते। साधुत्वमेवाह। परस्मै श्रीवासुदेवाय। गुहाशयायान्तर्यामिण एव। तच्च चेतसैव। परिपूर्णे तस्मिन्कायिकव्यापारायोगात्। अतोऽन्तर्यामिदृष्ट्या मनसा सर्वं कृतमिति भावः ॥ २२ ॥ किंच न केवलमभ्यागतेष्वेव वासुदेवदृष्ट्या नमनं क्रियते किंतु नित्यमेव मनसि वासुदेवश्चिन्त्यत इत्याह। विशुद्धं सत्त्वमन्तःकरणं सत्त्वगुणो वा वसुदेवशब्दितं वसुदेवशब्देनोक्तम्। कुतः। यद्यस्मात्तत्र सत्त्वे पुमान्वासुदेव ईयते प्रकाशते। अपगतमावृतमावरणं यस्मात्सः। अयमर्थः—

व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु संमता ॥ अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥ २० ॥ पापच्यमानेन हृदातुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ॥ अकल्प एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥ २१ ॥ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ॥ प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ॥ सत्त्वे च तस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे नमसा विधीयते ॥ २३ ॥ तत्ते निरीक्ष्यो न पितापि देहकृद्दक्षो मम द्विट् तदनुव्रताश्च ये ॥ यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाऽकरोत्तिरः ॥२४॥ यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति ॥ संभावितस्य स्वजनात्पराभवो यदा स सद्यो मरणाय कल्पते ॥ २५ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे उमारुद्रसंवादे तृतीयोऽध्यायः ॥ ३ ॥ ॥ ६९ ॥

वसुदेवे भवति प्रतीयत इति हि वासुदेवः परमेश्वरः प्रसिद्धः, स च विशुद्धे सत्त्वे प्रतीयते। अतः प्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थो निर्धार्यते। ततश्च वासयति देवमिति व्युत्पत्त्या वसत्यस्मिन्निति वा वसुः। देवो दीव्यति द्योतत इति वा। वसुभिः पुण्यैर्दीव्यति प्रकाशत इति वा वसुदेवशब्दवाच्यं शुद्धं सत्त्वम्। ततः किमत आह। सत्त्वे च तस्मिन्मे मया नमसा नमस्कारेणानुविधीयते सेव्यत इत्यर्थः। मनसेति पाठे मनसा विशेषेण धीयते धार्यते चिन्त्यत इत्यर्थः। यतोऽधो भूतेषु प्रत्याहृतेष्वक्षेषु जायते प्रकाशते। इन्द्रियागोचर इत्यर्थः ॥ २३ ॥ तत्तस्मात्त्वया न निरीक्ष्यः। देहकृदपीति पोषकत्वादिभिरौपचारिकपितृत्वव्यावृत्त्यर्थम्। द्विट् शत्रुः। तदेवाह। हे वरोरु, यो दक्षो विश्वसृजां यज्ञगतं मां निरपराधं तिरोऽकरोत्तिरस्कृतवान् ॥२४॥ विपक्षे दोषमाह—यदीति। मद्वचोऽतिहायातिक्रम्य। यतः संभावितस्य सुप्रतिष्ठितस्य यदा पराभवो भवति तदा स पराभवस्तस्य मरणाय कल्पते ॥२५॥ ॥ इति श्रीमद्भा० म० च० भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३॥ ॥६९॥

१ तच्च प्रत्युद्गमादि। २ को दक्षः। ३ वासुदेव इत्यत्र शैषिकोऽण्। ४ अनेनान्तर्भावितण्यर्थो वसधातुरिति सूचितम्। वासुश्चासौ देवश्चेति कर्मधारयः। ५ तस्मात् निरपराधे मयि वृथा द्वेषकर्तृत्वात्। ६ 'जनिता चोपनेता च यस्तु विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥' इति प्रासपितृत्वस्य।

चतुर्थे तु पतिं हित्वा गता पित्रावमानिता ॥ रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥ १ ॥ उभयत्रानुज्ञाने बलान्निवारणे च । सुहृद्दिदृक्षुर्निष्क्रामन्ती भयात्परिशङ्किता पुनर्निर्विशन्ती च तदा सा सती द्विधा आस बभूव । न गता न च स्थिता आन्दोलावद्गतिरभवत् ॥ १ ॥ सुहृदां दिदृक्षायाः प्रतिघातेन दुर्मनाः । अश्रूणां कलाभिर्लेशैरतिविह्वला व्याकुला । अप्रतिपूरुषं स्वसमानपुरुषान्तररहितम् । प्रधक्ष्यतीव भस्मीकरिष्यतीव रुषा जातो वेपथुः कम्पो यस्याः ॥ २ ॥ ततस्तं विहाय पित्रोर्गृहानगात् । कथंभूतम् । यः प्रीत्या तस्यै आत्मनो देहस्यार्धमदात् । त्यागे हेतुः—स्त्रैणं स्त्रीस्वभावस्तेन विमूढा धीर्यस्याः ॥ ३ ॥ द्रुतविक्रमां शीघ्रं गच्छतीम् । सह पार्षदैर्यक्षैश्च वर्तमानाः । मणिमान्मदश्चादिर्येषां ते । पुरः पुरतो वृषेन्द्रो येषां ते गतव्यथा निर्भयाः । रुद्रातिक्रमेण तस्या-गमनादागतव्यथा इति वा ॥ ४ ॥ तां वृषेन्द्रमारोप्य सारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्च महाराजविभूतिभिः सह विटङ्किताः शोभिताः ययुः ।

॥ मैत्रेय उवाच ॥ एतावदुक्त्वा विरराम शङ्करः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ॥ सुहृद्दिदृक्षुः परिशङ्किता भवा-न्निष्क्रामती निर्विशती द्विधाऽऽस सा ॥ १ ॥ सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदत्यश्रुकलाऽतिविह्वला ॥ भवं भवा-न्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः ॥ २ ॥ ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ॥ पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णात्मनो योऽर्धमदात्सतां प्रियः ॥ ३ ॥ तामन्वगच्छन्द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः ॥ सपार्षदयक्षा मणिमन्मदादयः पुरो वृषेन्द्रास्तरसा गतव्यथाः ॥ ४ ॥ तां सारिकाकन्दु-कदर्पणाम्बुजश्वेतातपत्रव्यजनस्रगादिभिः ॥ गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य विटङ्किता ययुः ॥ ५ ॥ आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः ॥ मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं यजनं समा-विशत् ॥ ६ ॥ तामागतां तत्र न कश्चनाद्रियद्विमानितां यज्ञकृतो भयाज्जनः ॥ ऋते स्वसॄर्वै जननीं च सादराः प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥ ७ ॥ सौदर्यसंप्रश्नसमर्थवार्तया मात्रा च मातृष्वसृभिश्च सादरम् ॥ दत्तां सपर्यां वरमासनं च सा नादत्त पित्राऽप्रतिनन्दिता सती ॥ ८ ॥ ॥ ॥ ॥

सारिका पठननिरूपिता पक्षिणी । गीतायनैर्गीताश्रयैः ॥ ५ ॥ आसमन्ताद्यो वेदघोषस्तेनोर्जितं शोभमानं यक्षसंबन्धि पशुविशसनं यस्मिन् । यद्वा तेनो-र्जितमतिशयितं यज्ञवैशसं परस्परं स्पर्धा यस्मिन् । तद्यजनं यज्ञस्थानं समाविशद्देवी । विबुधैश्च जुष्टम् । मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि पात्राणि यस्मिन् ॥ ६ ॥ कश्चन नाद्रियत् नादृतवान् । यज्ञकृतो दक्षाद्यद्भयं तस्मात् । तत्र हेतुः—तेन विमानिताम् । स्वसॄर्जननीं च ऋते विना । तास्तु सादराः परिषस्वजुरालिङ्गितवत्यः । प्रेमाश्रुभिर्निरुद्धः कण्ठो यासाम् ॥ ७ ॥ अप्रतिनन्दिताऽनादृता सती नादत्त गृहीतवती । कथम् । सौदर्येण सोदरत्वेन भगिनीनां यः संप्रश्नस्तत्र समर्था योग्या या वार्ता तया सह । तां च नादत्त नाश्रृणोदित्यर्थः ॥ ८ ॥ ॥ ॥ ॥ ॥

१ 'स्त्रैण्य' इति पाठः, तत्र स्त्रैणशब्दात्स्वार्थे ष्यञ् बोध्यः । २ निरूपिता लक्षितेत्यर्थः । पठननिरूपणेत्येकत्र पाठः ।

न विद्यते रुद्रस्य भागो यस्मिंस्तम् । देवे रुद्रे कृतं हेलनमवज्ञामाह्वानाद्यकरणात् ॥ ९ ॥ जगर्ह निन्दितवती । अमर्षेण कोपेन विपन्नाऽव्यक्ता तया । शिवं द्वेष्टीति शिवद्विट् तम् । धूमपथः कर्ममार्गस्तत्र श्रमोऽभ्यासस्तेन स्मयो गर्वो यस्य । दक्षवधाय समुत्थितान्स्वाज्ञया निगृह्य निवार्य ॥ १० ॥ निन्दामेवाह—न यस्येति त्रयोदशभिः । मुक्तवैरके त्यक्तविरोधे तस्मिन् शिवे भवन्तमृते विना कतमः प्रतीपयेत्प्रतिकूलमाचरेत् । वैराभावे हेतवः—यस्य लोके अतिशायनोऽतिशयितो नास्ति । तथा प्रियश्चाप्रियश्च नास्ति । समासपाठेऽतिशयेन प्रियो नास्ति । देहभृतां प्रियोऽयमात्मा तस्य । समस्तस्यात्मनि कारणभूते समस्तरूप इति वा ॥ ११ ॥ तस्य च प्रतिकूलकरणं द्वेधा । महत्तमद्रोहेण साक्षात्तद्द्रोहेण च । तत्र पुरुषाणां चातुर्विध्यं वदन्ती महत्तमद्रोहमाह—दोषानिति द्वाभ्याम् । हे द्विजेत्यधिक्षेपः । भवादृशास्त्वद्विधा असूयकाः परेषां गुणेषु दोषानेव गृह्णन्ति नतु गुणान् । केचिन्मध्यस्था गुणेषु दोषान्न गृह्णन्ति किंतु यथास्थितान्गुणदोषान्विवेकेन गृह्णन्ति ते तु महान्त उच्यन्ते । साधवस्तु केवलं गुणानेव गृह्णन्ति न दोषांस्ते तु महत्तरा उच्यन्ते । महत्तमास्तु दोषान्न गृह्णन्त्येव ते च प्रत्युत फल्गूंस्तुच्छानपि गुणान्बहुलीकुर्वन्तीति

अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ ॥ अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥९॥ जगर्ह साऽमर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ॥ स्वतेजसा भूतगणान्समुत्थितान्निगृह्य देवी जगतोऽभिश्रृण्वतः ॥१०॥ ॥ श्रीदेव्युवाच ॥ न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाऽप्रियो देहभृतां प्रियात्मनः ॥ तस्मिन्समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत् ॥११॥ दोषान्परेषां हि गुणेषु साधवो गृह्णन्ति केचिन्न भवादृशा द्विज ॥ गुणांश्च फल्गून्बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् ॥१२॥ नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दाकुणपात्मवादिषु ॥ सेर्ष्यं महापूरुषपादपांसुभिर्निरस्ततेजःसु तदेव शोभनम् ॥१३॥ यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ॥ पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥१४॥ यत्पादपद्मं महतां मनोलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः ॥ लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान्द्रुह्यति विश्वबन्धवे ॥१५॥

करिष्णवो भवन्ति, तेषु भवानवमविदत् विदितवान्, कल्पितवानित्यर्थः । तच्च ब्रह्मिष्ठानभिभूयेत्यनेन सूचितम् ॥ १२ ॥ एतच्च दुर्जनेषु युक्तमेवेत्याह—नेति । कुणपं जडं शरीरं तदेवात्मेति वदन्ति ये तेषु । ईर्ष्या अक्षान्तिः । सेर्ष्यं यथा भवत्येवं महतां विनिन्देति यदेतदाश्चर्यं न भवति सेर्ष्यं निरस्तं तेजः प्रभावो येषामिति वा । यद्यपि महापुरुषाः स्वनिन्दां सहन्ते तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजो निरस्यन्ति । अतोऽशक्तेषु महन्निन्दनमेवोचितमित्यर्थः ॥ १३ ॥ तदेवं महत्तमद्रोहमुक्त्वा तस्मिन्नेव कृतं द्रोहमाह—यदिति द्वाभ्याम् । यद्यस्य द्व्यक्षरमात्रं शिव इति तत्प्रसिद्धं नाम नृणां सर्वेषामाश्रघं सद्य हन्ति । केवलं गिरैवेरितमुच्चारितं नतु मनःपूर्वकम् । तत्तु सकृदपि प्रसङ्गादपि । तं शिवं द्वेष्टि । न लङ्घ्यं शासनमाज्ञा यस्य । अहो शिवेतरोऽमङ्गलरूपः ॥ १४ ॥ पापहरत्वमुक्त्वा भुक्तिमुक्तिप्रदत्वेन शिवं वर्णयन्नाह । यस्य पादपद्मं मनांस्येवालयस्तैः । ब्रह्मरसो ब्रह्मानन्दः स एवासवो मकरन्दस्तदर्थिभिः । यच्चार्थिनः सकामस्य लोकस्य तास्ता आशिषो वर्षति ॥ १५ ॥



१ चातुर्विध्यं मध्यस्थमहन्महत्तरमहत्तमरूपं चतुर्विधत्वम् । २ लोकदाहस्यास कल्पादिवेत्युक्तम् । ३ 'प्रतीयते' इति चित्सुखपाठः । ४ 'गुणेष्वसाधव' इति पाठः । ५ ब्रह्मिष्ठेत्यादि तृतीयाध्यायस्थतृतीयश्लोकस्थेन । ६ तास्तास्तदपेक्षिताः पुत्रादिरूपाः ।

यदुक्तं शिवापदेशो ह्यशिव इति, यच्चोक्तं प्रेतावासेष्वित्यादि तदाक्षिपन्त्याह—किं वेति । यो जटा अवकीर्य श्मशानेऽवसद्वसति स्म । तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च भूषणत्वेन सन्ति यस्य । तं त्वत्तोऽन्ये न विदुः किम्, विदन्त्येवेति चेन्न, तथा सति तेषां तद्दास्यानुपपत्तेरित्याह । तच्चरणादवसृष्टं गलितं निर्माल्यं मूर्धभिर्धारयन्ति ॥ १६ ॥ इदानीं देहं त्यक्तुकामा धर्मतत्त्वमाह । कर्णावाच्छाद्य निर्गच्छेत् । यद्यदि मर्तुं मारयितुं वा कल्पो न भवति । कदा । धर्मावितरि धर्मरक्षके ईशे स्वामिन्यसृणिभिर्निरङ्कुशैर्नृभिरस्यमानेऽधिक्षिप्यमाणे । प्रभुः शक्तश्चेत् । रुशतीमकल्याणवादिनीम् । प्रसह्य बलाच्छिन्द्यात् । ततोऽपि स्वयं प्राणान्विसृजेदिति यत्स धर्मः ॥१७॥ तव त्वत्त उत्पन्नम् । शितिकण्ठो नीलकण्ठस्तन्निन्दकात् । प्रमादादापन्नस्यापवित्रस्य त्यागं विना न शुद्धिरिति दृष्टान्तेनाह । जग्धस्य भक्षितस्यान्नस्योद्धरणं वमनमेव पुंसो विशुद्धिं प्रचक्षते ॥ १८ ॥ यदुक्तं लुप्तक्रियायाशुचय इति तत्रत्याह—नेति । वेदवादान्विधिनिषेधरूपान्स्व एव लोके स्वात्मन्येव रममाणस्य महतो मुनेः सम्यग्विरक्तस्य मतिर्नानुवर्तते, निवृत्ताधिकारत्वात् । अधिकारभेदे दृष्टान्तः—

किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने ॥ तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥१६॥ कर्णौ पिधाय निरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने ॥ छिन्द्यात्प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥१७॥ अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः ॥ जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते ॥१८॥ न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः ॥ यथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत्स्थितः ॥१९॥ कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिङ्गमाश्रितम् ॥ विरोधि तद्यौगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥ २० ॥

यथा देवानां गतिराकाश एव मनुष्याणां पृथिव्यामेव । अतः स्व एव धर्मे प्रवृत्तिलक्षणे निवृत्तिलक्षणे वा स्थितः सन् परमन्यं धर्मं पुरुषं वा न क्षिपेन्न निन्देत्, व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात् । न क्षिपेदेवेति वान्वयः ॥ १९ ॥ एतदेवोपपादयन्त्याह । प्रवृत्तमग्निहोत्रादि, निवृत्तं शमदमादि, ऋतं सत्यमेव यतो वेदे आश्रितं विहितम् । तच्च विविच्य व्यवस्थयाश्रितं न त्वविशेषेण । व्यवस्थामेवाह । उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नमधिकारिविशेषणं यस्मिंस्तत् । ननु 'यावज्जीवमग्निहोत्रं जुहोति', 'शान्तो दान्तः' इत्यादिषु नैवं व्यवस्था प्रतीयते । सत्यम्, तथाप्युभयोरेकाधिकारविरोधात्तथा पर्यवस्यतीत्याह । युगपद्भावो यौगपद्यं यौगपद्येनैकस्मिन्कर्तरि तत्कर्मद्वयं विरोधि । ननु तर्हि निवृत्तं कर्म शिवेनापि कर्तव्यमेव नेत्याह । ब्रह्मणि सदाशिवे किंचिदपि कर्म न ऋच्छति न प्राप्नोति । अतो यथा प्रवृत्तनिवृत्तयोः परस्परधर्माकरणेन दोषस्तथेश्वरे एतदुभयधर्माकरणेऽपीति भावः ॥ २० ॥ ॥ ॥

१ आक्षिपन्ती सिद्धान्तेन तिरस्कुर्वन्ती इति दीपि० । २ धर्मतत्त्वं धर्मस्य यथावत्स्वरूपम् । ३ जिह्वाच्छेदनापेक्षयापि । ४ 'असताम्' इति पाठः । ५ व्यवस्थितेति । आत्मज्ञानशून्यैर्विविदिषार्थं प्रवृत्तिधर्म एवानुष्ठेयः । तत्सहितैस्तु शमादिनिवृत्तिधर्म एवेति व्यवस्थितो नियमितोऽधिकारो ययोः प्रवृत्तिनिवृत्तिधर्मयोस्तत्त्वेन इति दीपि० । ६ व्यवस्थया तत्तदधिकारिनियमेनेत्यर्थः । ७ उभयोः प्रवृत्तिनिवृत्तिकर्मणोः एकस्मिन्नधिकारिणि विरोधेन । न ह्यग्निहोत्रादिकर्मव्यग्रेण शमादि कर्तुं शक्यते न च शमादिमता विरक्तेन तादृशं कर्म कर्तुं शक्यते इति विरोधादुभयमपि कर्म तथा तत्तदधिकारिविशेषणरूपया व्यवस्थया पर्यवसति ।

चिताभस्मकृतस्नानस्तथा नग्न इत्यादिना यो भोगाद्यभाव उक्तस्तत्राह । हे पितः, अस्माभिरास्थिता आश्रिताः पदव्योऽणिमादिसमृद्धयो वो युष्माकं मा । न सन्तीत्यर्थः । यतो वः पदव्यो यज्ञशालास्वेव भवन्ति । ताश्च तदन्नेन यज्ञगतेनान्नेन तृप्तैः केवलमीडिता धूमवर्त्मभिश्च भुज्यन्ते । या अस्मत्पदव्यस्तास्तु नैवंभूताः किंत्वव्यक्तलिङ्गाः न व्यक्तं लिङ्गं हेतुर्यासाम्, इच्छामात्रप्रभवत्वात् । अवधूतैर्ब्रह्मविद्भिः सेविताः । अतोऽहमाढ्यः, रुद्रो दरिद्र इति गर्वं मा कृथा इति भावः ॥ २१ ॥ किं बहुनोक्तेनेमं देहं त्यक्ष्याम्येवेत्याह द्वाभ्याम् । एतेन नालं न पूर्यते किम् । अपि त्वलमेव । कथंभूतेन । कुजन्मना । तदेवाह । हरे, कृतापराधस्य तव देहादुद्भूतेनोत्पन्नेन । ननु श्लाघ्योऽयं देहः कथं त्याज्यस्तत्राह । कुजनस्य तव प्रसङ्गतः संबन्धान्मम लज्जाऽभूत् । अतो यो महतामप्रियकर्ता तस्माद्यज्जन्म तद्धिक् । त्वत्संबन्धादश्लाघ्यमित्यर्थः ॥२२॥ किंच परिहासादिषु विनोदेनापि दाक्षायणीति संबोधयंस्त्वदीयं त्वत्संबन्धवाचकं गोत्रं

मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासु न धूमवर्त्मभिः ॥ तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः ॥ २१ ॥ नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना ॥ व्रीडा ममाभूत्कुजनप्रसङ्गतस्तज्जन्म धिग्यो महतामवद्यकृत् ॥२२॥ गोत्रं त्वदीयं भगवान्वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः ॥ व्यपेतनर्मस्मितमाशु तद्ध्यहं व्युत्स्रक्ष्य एतत् कुणपं त्वदङ्गजम् ॥ २३ ॥ ॥ मैत्रेय उवाच ॥ इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षितावुदीचीं निषसाद शान्तवाक् ॥ स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत् ॥ २४ ॥ कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः ॥ शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद्भ्रुवोर्मध्यमनिन्दिताऽनयत् ॥ २५ ॥ एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात् ॥ जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् ॥ २६ ॥ ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् ॥ ददर्श देहो हतकल्मषा सती सद्यः प्रजज्वाल समाधिनाग्निना ॥ २७ ॥ ॥ ॥

नाम यदा वृषध्वज आह गृह्णाति तदाहं व्यपेतनर्म स्मितं यथा भवत्येवं सुदुर्मना अतिदुःखितचित्ता भवामि । तत्तस्माद्धि निश्चितमेतत्कुणपप्रायं व्युत्स्रक्ष्ये त्यक्ष्यामि ॥ २३ ॥ दक्षं प्रत्यनुवादं कृत्वा शत्रुहन् । क्रोधादिरिपुघातिन् । उदीचीमुदीच्यां दिशि । पाठान्तरे उदङ्मुखी । शान्तवाक् गृहीतमौना । जलं स्पृष्ट्वाचम्य । दृक् दृशम् ॥ २४ ॥ योगमार्गमेवाह—कृत्वेति । अनिलौ प्राणापानावूर्ध्वाधोवृत्तिकरौ निरोधेन समानावेकरूपौ नाभिचक्रे कृत्वा तत उदानमुत्थाप्य धिया सह हृदि स्थापयित्वा कण्ठमार्गेण भ्रुवोर्मध्यमनयत् ॥ २५ ॥ महतां पूज्यतमेन श्रीरुद्रेण ॥ २६ ॥ चरणाम्बुजे आसवं भजनानन्दम् । भर्तुरपरं न ददर्श । देहश्च सद्यः प्रज्वलितोऽभूत् । समाधिना योऽग्निस्तेन ॥ २७ ॥ ॥ ॥ ॥ ॥

१ पदव्यो यज्ञानुष्ठानेन कीर्त्यादिसमृद्धयः । २ अनिलेति वायुयुक्ताग्निधारणम् । ३ 'हतकल्मष' इति पाठे देहविशेषणम् । ४ 'समाधिजाग्निना' इति क्वचित्पाठः । ५ अनुवादं कृत्वा अनुवादमुखेन तद्वाक्यं प्रत्याख्यायेत्यर्थः । ६ 'उदीची' इति प्रथमान्तपाठे तस्यैवोदङ्मुखीति व्याख्येति चक्रवर्ती । ७ नाभिचक्रे मणिपूराख्ये । ८ हृदि अनाहतचक्रे । ९ कण्ठमार्गेण विशुद्धिचक्रद्वारेत्यर्थः । १० भ्रुवोर्मध्यमाज्ञाचक्रम् । ११ चरणाम्बुजासवं चरणारविन्दमकरन्दमित्यन्यत्र व्याख्यातम् ।

खे भुवि च हाहेत्यादिवादः । तमेवाह । हन्तेति विषादे । दैवतमस्य प्रिया केन दक्षेण प्रकोपिता सती ॥ २८ ॥ महदनात्म्यं दौर्जन्यम् । अस्य सर्वत्र स्नेह एव न्याय्य इत्याहुः—यस्येति । येन विमताऽवज्ञाता ॥ २९ ॥ दुर्मर्षमलसहनं हृदयं यस्य । लोके जनमध्ये । चशब्दान्नरकं च । यद्यतः स्वीयामङ्गजां सुतामपराधतः स्वावज्ञया मृतये मरणायोद्यतां न निवारितवान् । पुरुषद्विद् शिवद्वेषी ॥ ३० ॥ अद्भुतं दृष्ट्वा च ॥ ३१ ॥ यज्ञघ्नान्हन्तीति यज्ञघ्नघ्नं तेनापहतं रक्ष इत्यादिना ॥३२॥ अध्वर्युणा भृगुणा । ये तपसा सोमं प्रासास्ते ऋभवो नाम देवा उत्थिताः ॥ ३३ ॥ ब्रह्मतेजसोशद्भिर्देदीप्यमानैः ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भा० दी० टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥छ॥ ॥ पञ्चमे तु सतीदेहत्यागमाकर्ण्य शंकरः ॥ वीरभद्रं समुत्पाद्य तेन दक्षमघातयत् ॥

तत्पश्यतां खे भुवि चाद्भुतं महद्धाहेति वादः सुमहानजायत ॥ हन्त प्रिया दैवतमस्य देवी जहावसून्केन सती प्रकोपिता ॥२८॥ अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः ॥ जहावसून्यद्विमतात्मजा सती मनस्विनी मानमभीक्ष्णमर्हति ॥२९॥ सोऽयं दुर्मर्षहृदयो ब्रह्मध्रुक् च लोकेऽपकीर्तिं महतीमवाप्स्यति ॥ यदङ्गजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधन्मृतयेऽपराधतः ॥३०॥ वदत्येवं जने सत्या दृष्ट्वाऽसुत्यागमद्भुतम् ॥ दक्षं तत्पार्षदा हन्तुमुदतिष्ठन्नुदायुधाः ॥३१॥ तेषामापततां वेगं निशाम्य भगवान्भृगुः ॥ यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥३२॥ अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ॥ ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥३३॥ तैरलातायुधैः सर्वे प्रमथा सह गुह्यकाः ॥ हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे सतीदेहोत्सर्गो नाम चतुर्थोऽध्यायः ॥४॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् ॥ स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥ क्रुद्धः सुदष्टोष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम् ॥ उत्कृत्य रुद्रः सहसोत्थितो हसन्गम्भीरनादो विससर्ज तां भुवि ॥२॥ ततोऽतिकायस्तनुवा स्पृशन्दिवं सहस्रबाहुर्घनरुक् त्रिसूर्यदृक् ॥ करालदंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥ ३ ॥ ॥

॥ १ ॥ प्रजापतेर्हेतोर्निधनम् । कुतः । तेनासत्कृतायाः । तस्याध्वरे ऋभवो देवास्तैः ॥ १ ॥ स धूर्जटिः रुद्रो घोरैः सन् जटामुत्कृत्योत्पाट्योत्थितः संस्तां भुवि विससर्ज । सुदष्ट ओष्ठपुटो येन । तडितां वह्नीनां च सटा ज्वालास्तद्वदुग्रं रोचिर्यस्यास्ताम् ॥ २ ॥ ततो जटायाः सकाशादतिकायो वीरभद्रो जात इति शेषः । तनुवा तन्वा देहेन दिवं स्पृशन् । अत्युच्च इत्यर्थः । घनरुक् कृष्णवर्णः । त्रयः सूर्या इव दृशो यस्य । करालास्तुङ्गा दंष्ट्रा यस्य । ज्वलदग्निरिव मूर्धजा यस्य । कपालमालायुक्तः । विविधान्युद्यतान्यायुधानि यस्य ॥ ३ ॥ ॥ ॥ ॥

१ 'अहो त्वनात्म्यम्' इति पाठः । २ अत्र विजयध्वजयां—'दक्षस्तु दृष्ट्वा दुहितुः स्वनिमित्तं विनाशनम् । वह्वतप्यत घोरेण मयाऽसाधु कृतं बत ॥ धिङ्मामविजितात्मानं निर्गुणं निरपत्रपम् । योऽहं स्त्रीकृत्य मृतकं व्यर्थमेनो महीयसि ॥' इति पद्यद्वयमधिकम् । ३ हेतोरिति हेतुत्वं च क्रोधोत्पादने निमित्तत्वम् । ४ घोरो भयानकः ।

हे रुद्र, हे भट युद्धकुशल, मद्भटानां त्वमग्रणीः सन्सयज्ञं दक्षं जहि । ब्रह्मतेजो दुर्जयमिति मामंस्थाः । यतस्त्वं मेंऽशकः ॥ ४ ॥ मन्युना रुद्रेण । परिचक्रमे प्रदक्षिणीचकार । असङ्गमप्रतिघातं यद्रंहो वेगस्तेन । भो तात, महीयसां वलीयसामपि सहःसहिष्णुं वलं सोढुं क्षमं मेने ॥ ५ ॥ जगदन्तको मृत्युस्तस्याप्यन्तकं शूलम् । घोषयन्ति शब्दं कुर्वन्तीति घोषणानि नूपुरादीनि भूषणानि ययोस्तावङ्घ्री यस्य सः ॥ ६ ॥ ककुभि दिशि । तमो न भवति किंतु रज इति ज्ञात्वाहुः । रज एतत्कुतोऽभूत् । दध्युश्चिन्तयामासुः ॥ ७ ॥ हेत्वन्तरासंभवेनौत्पातिकं कल्पयन्ति—वाता इति । दस्यूनामभावे हेतुः—प्राचीनवर्हिस्तदानीन्तनो राजा जीवतीति । न काल्यन्ते न शीघ्रं नीयन्ते ॥ ८ ॥ प्रसूतिर्दक्षपत्नी सा मिश्रा मुख्या यासाम् । विपाकः फलम् । पश्यन्तीनामिति तस्याः

तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान्भूतनाथः ॥ दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्रभटांशको मे ॥ ४ ॥ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ॥ मेने तदात्मानमसङ्गरंहसा महीयसां तात सहःसहिष्णुम् ॥ ५ ॥ अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम् ॥ उद्यम्य शूलं जगदन्तकान्तकं स प्राद्रवद्घोषणभूषणाङ्घ्रिः ॥ ६ ॥ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ॥ तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥ वाता न वान्ति न हि सन्ति दस्यवः प्राचीनवर्हिर्जीवति होग्रदण्डः ॥ गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ॥ ८ ॥ प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैष तस्य ॥ यत्पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ॥ ९ ॥ यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ॥ वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् ॥ १० ॥ अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ॥ करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥ ॥ ॥ ॥ ॥

दुःखाधिक्ये हेतुः—अवदध्याववज्ञातवान् । अनागामनागसम् ॥ ९ ॥ न चेदं सुतावज्ञामात्रं किंतु रुद्रावज्ञानं च, अतो नास्य भद्रं भविष्यतीत्याहुः—यस्त्विति द्वाभ्याम् । व्युप्तो विकीर्णो जटाकलापो यस्य । स्वशूलस्य सूच्यामग्रेऽर्पिताः प्रोता दिग्गजेन्द्रा येन । उदितान्युन्नमितान्यस्त्राणि यैस्ते । दोषो बाहव एव ध्वजास्तान्वितत्य हर्षेण नृत्यति । उच्चोऽट्टहासः कठोरो हास एव स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन सः ॥ १० ॥ अमर्षयित्वाऽसहनयुक्तं कृत्वा । मन्युप्लुतं क्रोधव्याप्तम् । उदस्तो विक्षिप्तो भगणो नक्षत्रसङ्घो येन । पुनश्च तं कोपयतो विधातुरपि किं स्वस्ति स्यान्न स्यादेव, काऽन्यस्य कथा ॥ ११ ॥ 

१ यद्वा असङ्गस्यात्मारामस्य रुद्रस्य रंहसा । २ एषोऽकस्माद्रजआगमनरूपः । अवज्ञातवानिति यत् तस्य वृजिनस्येति योज्यम् इति दीपि० । ३ यः स्वत एव प्रलये ईदृशः पुनश्च तं कोपयत इत्यग्रिमेण योज्यम् । ४ असहनयुक्तं कृत्वेत्यत्र असहनस्य कारणत्व कोपस्य कार्यत्वमिति भेदः इति दीपि० ।

उद्विग्ना प्रचलिता इत्यस्य तेन जनेन वहु यथा भवत्येवमुच्यमाने सत्युत्पाततमा महोत्पाता उत्थिताः । पर्यक् सर्वतश्च । कथंभूताः । महात्मनोऽपि दक्षस्य भयावहाः ॥१२॥ नानायुधानि येषाम् । वामनकैर्ह्रस्वैः । उद्यतायुधैः । पिङ्गैः कपिलैः । पिशङ्गैः पीतैः । मकरस्येवोदरमाननं च येषां तैः । परितो धावद्भिरवरुद्धः ॥ १३ ॥ यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशस्तम् । यज्ञशालायाः पश्चिमतः पत्नीशाला ताम् । यज्ञशालायाः पुरतः स्थितं सदोमण्डपम् । सदसः पुरो हविर्धानं तस्योत्तरत आग्नीध्रशालाम् । तद्विहारं यजमानगृहम् । महानसं पाकभोजनशालाम् ॥ १४ ॥ रुरुजुर्बभञ्जुः । उत्तरवेद्या मेखलाः सीमासूत्राणि । 'आज्ञा गुरूणां ह्यविचारणीया' इति हेतोर्न ते दोषभाजिन इति भावः ॥ १५ ॥ प्रत्यासन्नान्पलायितान्समीपस्थान्पलायितानपि जगृहुः ॥१६॥१७॥ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः ॥१८॥ स्रुवो हस्ते यस्य । भवो वीरभद्रः । लुलुञ्चे उत्पाटितवान् ॥ १९ ॥ उज्जहारोद्धृतवान् ।

बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुहुर्महात्मनः ॥ उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥ तावत्स रुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः ॥ पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥ केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथा परे ॥ सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ॥ कुण्डेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥ अबाधन्त मुनीनन्य एके पत्नीरतर्जयन् ॥ अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् ॥ १६ ॥ भृगुं बबन्ध मणिमान्वीरभद्रः प्रजापतिम् ॥ चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥१७॥ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ॥ तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः ॥ भृगोर्लुलुञ्चे सदसि योऽहसच्छ्मश्रु दर्शयन् ॥ १९ ॥ भगस्य नेत्रे भगवान्पातितस्य रुषा भुवि ॥ उज्जहार सदस्थोऽक्ष्णा यः शपन्तमसूसुचत् ॥ २० ॥ पूष्णश्चापातयद्दन्तान्कालिङ्गस्य यथा बलः ॥ शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः ॥ २१ ॥ ॥ ॥

यः सदस्थः सभायां स्थितः सन् शपन्तं शिवनिन्दां कुर्वन्तं दक्षमक्ष्णाक्षिनिकोचेनासूसुचत्प्रेरितवान् ॥ २० ॥ कलिङ्गदेशराजस्यानिरुद्धोद्वाहे बलभद्रो यथा द्यूते दन्तान्पातितवान् । गरिमणि गुरुतरे रुद्रे निन्द्यमाने दतो दन्तान्दर्शयन्यो जहास । पूष्णोरिति पाठे द्विवचनं 'ऐन्द्रापौष्णश्चरुर्भवति' इत्यत्रान्यसंहितस्यापि पूष्णो दन्तपातप्राप्त्यर्थं सूचितवान् । तथाहि 'पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन्' इति विहितस्य पेषणस्य द्विदैवत्याभावात्तत्र, तस्य दन्ताः सन्तीति वक्तव्यं स्यात् । नचैतत्सङ्गच्छत इत्याशङ्क्य तत्रापि तस्य दन्तपातोऽवस्थाभेदे प्रवृत्तेन द्विवचनेन प्राप्यते, अत एव पूष्णोऽनुग्रहं द्वेधा वक्ष्यति । 'पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक्' इति । केवलश्चेत्प्रपिष्टभुग्भविष्यति । अन्यसहितश्चेद्यजमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः ॥ २१ ॥ ॥ ॥

१ हविर्धानं होमद्रव्यस्थलमिति प्रकरणात्सनिवेशार्थं रिक्तपूरणम् । २ हविर्धानोत्तरदेशस्थवेद्याः सीमासूत्राणि अवधिपरिधीः । ३ ग्रावभिः प्रस्तरैः । ४ 'मुखे महात्मनः' इति पाठः । तत्र दक्षस्य समुखे इत्यर्थ. । ५ अन्यसहितस्यापि इन्द्रसाहित्यावस्थावतोऽपि । ६ दन्तपातप्राप्त्यर्थं दन्तपातप्राप्तिः अर्थः प्रयोजनं यस्य तदिति द्विवचनमित्यस्य विशेषणम् । ७ सूचितवान् मैत्रेय इत्यर्थः । ८ पूषाप्रपिष्टेत्यत्र पूषेत्येकवचनश्रुतेरिति भावः । ९ तत्र इन्द्रसाहित्यावस्थायाम् । १० पिष्टातिरिक्तचरुद्रव्यस्य सत्त्वात् । ११ वस्य सदन्तत्वे 'पूषा तु यजमानस्य दद्भिर्भक्षतु' इत्यग्रिमानुभक्षस्यायोग्यत्वापातादिति भावः । १२ इन्द्रसाहित्यावस्थायाम् । १३ अवस्थाभेदेन पूष्णो द्विविधत्वादेव ।

हे रुद्र, हे भट युद्धकुशल, मद्भटानां त्वमग्रणीः सन्सयज्ञं दक्षं जहि। ब्रह्मतेजो दुर्जयमिति मामंस्थाः। यतस्त्वं मेंऽशकः ॥ ४ ॥ मन्युना रुद्रेण। परिचक्रमे प्रदक्षिणीचकार। असङ्गमप्रतिघातं यद्रंहो वेगस्तेन। भो तात, महीयसां बलीयसामपि सहःसहिष्णुं बलं सोढुं क्षमं मेने ॥ ५ ॥ जगदन्तको मृत्युस्तस्याप्यन्तकं शूलम्। घोषयन्ति शब्दं कुर्वन्तीति घोषणानि नूपुरादीनि भूषणानि ययोस्तावङ्घ्री यस्य सः ॥ ६ ॥ ककुभि दिशि। तमो न भवति किंतु रज इति ज्ञात्वाहुः। रज एतत्कुतोऽभूत्। दध्युश्चिन्तयामासुः ॥ ७ ॥ हेत्वन्तरासंभवेनौत्पातिकं कल्पयन्ति—वाता इति। दस्यूनामभावे हेतुः—प्राचीनबर्हिस्तदानीन्तनो राजा जीवतीति। न काल्यन्ते न शीघ्रं नीयन्ते ॥ ८ ॥ प्रसूतिर्दक्षपत्नी सा मिश्रा मुख्या यासाम्। विपाकः फलम्। पश्यन्तीनामिति तस्याः

तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान्भूतनाथः ॥ दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्रभटांशको मे ॥ ४ ॥ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ॥ मेने तदात्मानमसङ्गरंहसा महीयसां तात सहःसहिष्णुम् ॥ ५ ॥ अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम् ॥ उद्यम्य शूलं जगदन्तकान्तकं स प्राद्रवद्घोषणभूषणाङ्घ्रिः ॥ ६ ॥ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ॥ तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥ वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः ॥ गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ॥ ८ ॥ प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैष[1] तस्य ॥ यत्पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ॥ ९ ॥ यस्त्वन्तकाले[3] व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ॥ वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् ॥ १० ॥ अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ॥ करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥ ॥ ॥ ॥ ॥

दुःखाधिक्ये हेतुः—अवदध्याववज्ञातवान्। अनागामनागसम् ॥ ९ ॥ न चेदं सुतावज्ञामात्रं किंतु रुद्रावज्ञानं च, अतो नास्य भद्रं भविष्यतीत्याहुः—यस्त्विति द्वाभ्याम्। व्युप्तो विकीर्णो जटाकलापो यस्य। स्वशूलस्य सूच्यामग्रेऽर्पिताः प्रोता दिग्गजेन्द्रा येन। उदितान्युन्नमितान्यस्त्राणि यैस्ते। दोषो बाहव एव ध्वजास्तान्वितत्य हर्षेण नृत्यति। उच्चोऽट्टहासः कठोरो हास एव स्तनयित्नुर्गर्जितं तेन भिन्ना विदीर्णा दिशो येन सः ॥ १० ॥ अमर्षयित्वाऽसहनयुक्तं[4] कृत्वा। मन्युप्लुतं क्रोधव्याप्तम्। उदस्तो विक्षिप्तो भगणो नक्षत्रसङ्घो येन। पुनश्च तं कोपयतो विधातुरपि किं स्वस्ति स्यान्न स्यादेव, काऽन्यस्य कथा ॥ ११ ॥

१ यद्वा असङ्गस्यात्मारामस्य रुद्रस्य रंहसा। २ एषोऽकस्माद्रजआगमनरूपः। अवज्ञातवानिति यत् तस्य वृजिनस्येति योज्यम् इति दीपि०। ३ यः स्वत एव प्रलये ईदृश पुनश्च तं कोपयत इत्यग्रिमेण योज्यम्। ४ असहनयुक्तं कृत्वेत्यत्र असहनस्य कारणत्व कोपस्य कार्यत्वमिति भेदः इति दीपि०।

उद्विग्ना प्रचलिता दृग्यस्य तेन जनेन बहु यथा भवत्येवमुच्यमाने सत्युत्पाततमा महोत्पाता उत्थिताः । पर्यक् सर्वतश्च । कथंभूताः । महात्मनोऽपि दक्षस्य भयावहाः ॥१२॥ नानायुधानि येषाम् । वामनकैर्ह्रस्वैः । उद्यतायुधैः । पिङ्गैः कपिलैः । पिशङ्गैः पीतैः । मकरस्येवोदरमाननं च येषां तैः । परितो धावद्भिरवरुद्धः ॥ १३ ॥ यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशस्तम् । यज्ञशालायाः पश्चिमतः पत्नीशाला ताम् । यज्ञशालायाः पुरतः स्थितं सदोमण्डपम् । सदसः पुरो हविर्धानं तस्योत्तरत आग्नीध्रशालाम् । तद्विहारं यजमानगृहम् । महानसं पाकभोजनशालाम् ॥ १४ ॥ रुरुजुर्बभञ्जुः । उत्तरवेद्या मेखलाः सीमासूत्राणि । 'आज्ञा गुरूणां ह्यविचारणीया' इति हेतोर्न ते दोषभाजिन इति भावः ॥ १५ ॥ प्रत्यासन्नान्पलायितान्समीपस्थान्पलायितानपि जगृहुः ॥१६॥१७॥ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः ॥१८॥ स्रुवो हस्ते यस्य । भवो वीरभद्रः । लुलुञ्चे उत्पाटितवान् ॥ १९ ॥ उज्जहारोद्धृतवान् ।

बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुहुर्महात्मनः ॥ उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥ तावत्स रुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः ॥ पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥ केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथा परे ॥ सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ॥ कुण्डेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥ अबाधन्त मुनीनन्य एके पत्नीरतर्जयन् ॥ अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् ॥ १६ ॥ भृगुं बबन्ध मणिमान्वीरभद्रः प्रजापतिम् ॥ चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥१७॥ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ॥ तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः ॥ भृगोर्लुलुञ्चे सदसि योऽहसच्छ्मश्रु दर्शयन् ॥ १९ ॥ भगस्य नेत्रे भगवान्पातितस्य रुषा भुवि ॥ उज्जहार सदस्थोऽक्ष्णा यः शपन्तमसूसुचत् ॥ २० ॥ पूष्णश्चापातयद्दन्तान्कालिङ्गस्य यथा बलः ॥ शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः ॥ २१ ॥ ॥ ॥

यः सदस्थः सभायां स्थितः सन् शपन्तं शिवनिन्दां कुर्वन्तं दक्षमक्ष्णाक्षिनिकोचेनासूसुचत्प्रेरितवान् ॥ २० ॥ कलिङ्गदेशराजस्यानिरुद्धोद्वाहे बलभद्रो यथा द्यूते दन्तान्पातितवान् । गरिमणि गुरुतरे रुद्रे निन्द्यमाने दतो दन्तान्दर्शयन्यो जहास । पूष्णोरिति पाठे द्विवचनं 'ऐन्द्रापौष्णश्चरुर्भवति' इत्यत्रान्यसंहितस्यापि पूष्णो दन्तपातप्राप्त्यर्थं सूचितवान् । तथाहि 'पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन्' इति विहितस्य पेषणस्य द्विदेवत्याभावात्तत्र, तस्य दन्ताः सन्तीति वक्तव्यं स्यात् । नचैतत्सङ्गच्छत इत्याशङ्क्य तत्रापि तस्य दन्तपातोऽवस्थाभेदे प्रवृत्तेन द्विवचनेन प्राप्यते, अत एव पूष्णोऽनुग्रहं द्वेधा वक्ष्यति । 'पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक्' इति । केवलश्चेत्प्रपिष्टभुग्भविष्यति । अन्यसहितश्चेद्यजमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः ॥ २१ ॥ ॥ ॥

१ हविर्धानं होमद्रव्यस्थलमिति प्रकरणात्संनिवेशार्थे रिक्तपूरणम् । २ हविर्धानोत्तरदेशस्थवेद्याः सीमासूत्राणि अवधिपरिधीः । ३ ग्रावभिः प्रस्तरैः । ४ 'मुखे महात्मनः' इति पाठः । तत्र दक्षस्य संमुखे इत्यर्थः । ५ अन्यसहितस्यापि इन्द्रसाहित्यावस्थावतोऽपि । ६ दन्तपातप्राप्त्यर्थं दन्तपातप्राप्तिः अर्थः प्रयोजनं यस्य तदिति द्विवचनमित्यस्य विशेषणम् । ७ सूचितवान् मैत्रेय इत्यर्थः । ८ पूषाप्रपिष्टेत्यत्र पूषेत्येकवचनश्रुतेरिति भावः । ९ तत्र इन्द्रसाहित्यावस्थायाम् । १० पिष्टातिरिक्तचरुद्रव्यस्य सत्त्वात् । ११ तस्य सदन्तत्वे 'पूषा तु यजमानस्य दद्भिर्भक्षतु' इत्यभिगानुमहस्यायोग्यत्वापातादिति भावः । १२ इन्द्रसाहित्यावस्थायाम् । १३ अवस्थाभेदेन पूष्णो द्विविधत्वादेव ।

छिन्दन्नपीत्यत्र शिर इत्युपरि व्यक्तीभविष्यति । त्र्यम्बको वीरभद्रः ॥ २२ ॥ अस्त्रान्वितैर्मन्त्रसहितैः । अनिर्भिन्ना त्वगस्य तथाभूतं दृष्ट्वेति शेषः ॥ २३ ॥ स पशूनां पतिर्मखे संज्ञपनं योगं कण्ठनिष्पीडनादिरूपं मारणोपायं दृष्ट्वा तेनोपायेनाहरत् ॥ २४ ॥ अन्येषां ब्राह्मणादीनां तद्विपर्ययोऽसाधुवादः अभूदिति शेषः ॥२५॥ गुह्यकालयं कैलासम् ॥ २६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥५॥ ॥छ॥ षष्ठे तु देवसङ्घेन सह गत्वा भवं विधिः ॥ सान्त्वयामास दक्षादि जीविताद्यर्थमादरात् ॥ १ ॥ अथ देवगणाः स्वयंभुवे न्यवेदयन्निति द्वितीयेनान्वयः ॥ १ ॥ शूलादिभिः संछिन्नानि त्रुटितानि भिन्नानि विदीर्णान्यङ्गानि येषाम् । सह ऋत्विग्भिः सभ्यैश्च वर्तमानाः ॥ २ ॥ कस्य दक्षस्य यज्ञे ब्रह्मा विष्णुश्च

आक्रम्योरसि दक्षस्य शितधारेण हेतिना ॥ छिन्दन्नपि तदुद्धर्तु नाशक्नोत्र्यम्बकस्तदा ॥ २२ ॥ शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः ॥ विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥ दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे ॥ यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥ २४ ॥ साधुवादस्तदा तेषां कर्म तत्तस्य शंसताम् ॥ भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥ जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः ॥ तद्देवयजनं दग्ध्वा प्रातिष्ठद्गुह्यकालयम् ॥२६॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे दक्षयज्ञविध्वंसो नाम पञ्चमोऽध्यायः ॥५॥ ॥छ॥

॥ मैत्रेय उवाच ॥ अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः ॥ शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥ संछिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः ॥ स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥ २ ॥ उपलभ्य पुरैवैतद्भगवानब्जसंभवः ॥ नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ ३ ॥ तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि[2] ॥ क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥ अथापि यूयं कृतकिल्बिषा भवं[3] ये बर्हिषो भागभाजं परादुः ॥ प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम् ॥ ५ ॥ आशासाना जीवितमध्वरस्य लोकः सपालः कुपितेन यस्मिन् ॥ तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ ६ ॥ ॥ ॥ ॥

नेयतुर्न जग्मतुः । यत्रारुद्रको[4] यज्ञस्तत्र नारायणविरिञ्चावपि नागतौ ॥ ३ ॥ विभुर्ब्रह्मा । तेजीयस्यतितेजस्विनि पुरुषे कृतागसि सत्यपि स्वयं तत्र कृतागसा बुभूषतामपराधं कर्तुमिच्छतां सा तथा बुभूषा तेषां क्षेमाय न भूयात् । प्रायेणेति लोकोक्तिः । न भवेदेवेत्यर्थः ॥ ४ ॥ अथापि प्रसादयध्वं क्षमापयत । ये भवन्तो बर्हिषो यज्ञस्य भागभाजं परादुर्दूरादेव खण्डितवन्तः । प्रगृहीताङ्घ्रिपद्मं पादौ प्रगृह्येत्यर्थः ॥ ५ ॥ अध्वरस्य जीवितं पुनः संधानं प्रार्थयमानाः सन्तः । यस्मिन्कुपिते सति सपालो लोको न भवेन्नश्येदित्यर्थः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

१ कस्य दक्षस्य । 'तस्य' इति पाठः । २ 'कृतागसम्' इति पाठः । ३ 'भवे' इति पाठः । ४ यत्रेत्यादिभागो नास्ति क्वचित् अनुपयुक्तश्च ।

वयं तु तत्र गन्तुं बिभीमस्त्वमेव कंचिदुपायं विधत्स्वेति चेदत आह—नेति । यज्ञस्तदानींतन इन्द्रः । यस्य तत्त्वं बलवीर्ययोः प्रमाणमियत्तां च न विदुः । वीर्यं पराक्रमः । पापमिति पाठेऽपराधम् ॥ ७ ॥ ८ ॥ कैलासं वर्णयति—जन्मौषधीत्यादिचतुर्दशभिः । नरेतरैः देवैर्जुष्टम् ॥ ९ ॥ शृङ्गैः रमणं रतिप्रदमित्युत्तरेणान्वयः । कथंभूतैः । नानाधातुभिर्विचित्रितैः नानाद्रुमलता गुल्माश्च येषु ॥ १० ॥ नाना अमलानि प्रस्रवणानि येषु । नाना कन्दराः सानवश्च येषु । रमणैः सह क्रीडन्तीनाम् ॥ ११ ॥ मयूराणां केकाभिः स्वनैर्नादितम् । मदान्धैरलिभिर्विमूर्च्छितं मूर्च्छना रागगतिविशेषस्तद्व्यासं कृतम् । रक्तकण्ठानां कोकिलानां प्लावितैः प्लुतत्वं नीतैः स्वरैः अन्येषां च पतत्रिणां कूजितैः ॥ १२ ॥ उद्धस्तैरुन्नतशाखैर्द्रुमैर्द्विजान्पक्षिण आह्वयन्तमिव । लोके हि हस्तमुत्क्षिप्योच्चैःस्वरेणा-

नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ॥ विदुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥ ७ ॥ स इत्थमादिश्य सुरानजस्तैः समन्वितः पितृभिः सप्रजेशैः ॥ ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥ जन्मौषधितपोमन्त्रयोगसिद्धैर्नरेतरैः ॥ जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥ नानामणिमयैः शृङ्गैर्नानाधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः ॥ १० ॥ नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः ॥ रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥ ११ ॥ मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम् ॥ प्लाविते रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥ आह्वयन्तमिवोद्धस्तैर्द्विजान्कामदुघैर्द्रुमैः ॥ व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः ॥ १३ ॥ मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम् ॥ तमालैः शालतालैश्च कोविदारासनार्जुनैः ॥ १४ ॥ चूतैः कदम्बैर्नीपैश्च नागपुन्नागचम्पकैः ॥ पाटलाशोकबकुलैः कुन्दैः कुरबकैरपि ॥ १५ ॥ स्वर्णार्णशतपत्रैश्च वररेणुकजातिभिः ॥ कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम् ॥ १६ ॥ पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः ॥ भूर्जैरोषधिभिः पूगै राजपूगैश्च जम्बुभिः ॥ १७ ॥ खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः ॥ द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ १८ ॥ कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः ॥ नलिनीषु कलं कूजत्खगवृन्दोपशोभितम् ॥ १९ ॥ ॥ ॥

ऽऽह्वानमर्थिनां कुर्वन्ति । अद्रिश्चोत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्च तथा लक्ष्यत इत्यर्थः । व्रजद्भिर्मातङ्गैर्व्रजन्तमिव निर्झरध्वनिभिर्गृणन्तं भाषमाणमिव ॥ १३ ॥ १४ ॥ चूताम्रयोर्नीपकदम्बयोरवान्तरजातिभेदः । वेणुकीचकयोश्च नीरन्ध्रसरन्ध्रत्वेन भेदः ॥ १५ ॥ स्वर्णार्णैः स्वर्णवर्णैः शतपत्रैर्मण्डितम् । रेणुकजातिभिरित्यत्र रेणुका एला । जातिर्मालती ॥ १६ ॥ १७ ॥ द्रुमजातिभिरित्यत्र जातिरवान्तरभेदसामान्यम् ॥ १८ ॥ कुमुदादिसमृद्धिभिर्हेतुभिर्नलिनीषु सरस्सु कलं मधुरं यथा भवत्येवं कूजन्ति यानि पक्षिवृन्दानि तैरुपशोभितम् ॥ १९ ॥ ॥ ॥ ॥

१ क उपायमित्यत्र । २ 'तस्यात्मनः क उपायं' सिद्धान्तप्र० पाठः । 'तस्यात्मतन्त्रस्य क उद्विधित्सेत्' इति विज० पाठः । ३ 'पुरारेः' इति पाठः । ४ 'तपोयोगमन्त्रसिद्धैः' इति पाठः । ५ 'गणान्वितैः' इति पाठः । ६ 'वरवेणुकजातिभिः' इति पाठः । तत्र वेणुका एला इत्यर्थः । ७ 'कुटजैः' इति पाठः । ८ 'अन्याभिः' इति पाठः । ९ टीका चेयं प्राचीनपुस्तकोपलब्धा ।

मृगादिभिर्निर्जुष्टं निषेवितम्। पूर्वं मृगगणाः शृङ्गविशेषणत्वेनोक्ता इदानीं स्वातन्त्र्येणेत्यपौनरुक्त्यम् ॥ २० ॥ नाभिभिः कस्तूरीमृगैः कदलीषण्डैः संरुद्धान्यावृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यस्मिन् ॥ २१ ॥ नन्दया गङ्गया पर्यस्तं परिवेष्टितम्। सत्या भवान्याः स्नानेन पुण्यतरमतिसुगन्धमुदकं यस्याम् ॥ २२ ॥ तत्र गिरौ वनं च ददृशुः। यत्र वने तन्नाम सौगन्धिकं पङ्कजं भवति। जातावेकवचनम् ॥ २३ ॥ पुरीं वर्णयति—नन्दा चेति चतुर्भिः। सरितौ पुरः पुराद्बाह्यतो भवतः। तीर्थपादस्य हरेः पादाम्भोजरजसा ॥ २४ ॥ ययोर्विगाह्य प्रविश्य क्रीडन्ति ॥ २५ ॥ ययोरम्भो विगततृषोऽपि गजाः पिबन्ति। तत्र हेतुः—तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं यन्नवं कुङ्कुमं तेन पिञ्जरं पीतवर्णम्। गजीः करिणीः ॥ २६ ॥ तारं रूप्यम्। तारादिमयविमानानां शतैः

मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः ॥ गवयैः शरभैर्व्याघ्रै रुरुभिर्महिषादिभिः ॥ २० ॥ कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं वृकनाभिभिः ॥ कदलीषण्डसंरुद्धनलिनीपुलिनश्रियम् ॥ २१ ॥ पर्यस्तं नन्दया सत्याः स्नानपुण्यतरोदया ॥ विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः ॥ २२ ॥ ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम् ॥ वनं सौगन्धिकं चापि यत्र तन्नाम पङ्कजम् ॥ २३ ॥ नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः ॥ तीर्थपादपदाम्भोजरजसाऽतीव पावने ॥ २४ ॥ ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः ॥ क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २५ ॥ ययोस्तत्स्नानविभ्रष्टनवकुङ्कुमपिञ्जरम् ॥ वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः ॥ २६ ॥ तारहेममहारत्नविमानशतसंकुलम् ॥ जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम् ॥ २७ ॥ हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत् ॥ द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २८ ॥ रक्तकण्ठखगानीकस्वरमण्डितषट्पदम् ॥ कलहंसकुलप्रेष्ठं खरदण्डजलाशयम् ॥ २९ ॥ वनकुञ्जरसंघृष्टहरिचन्दनवायुना ॥ अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः ॥ ३० ॥ वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः ॥ प्राप्तं किंपुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ॥ ३१ ॥

संकुलाम्। तडिद्भिः स्त्रीणां, घनैर्विमानानां, खेन पुर्याः सादृश्यम् ॥ २७ ॥ यक्षेश्वरपुरीं हित्वाऽतिक्रम्य तद्वनं च दृष्ट्वा ते देवा आराद्दूराद्वटं ददृशुरिति चतुर्थेनान्वयः। कथंभूतं वनम्। चित्राणि माल्यानि फलानि छदाश्च पत्राणि येषु तैर्द्रुमैर्हृद्यं सुखकरम् ॥ २८ ॥ रक्तकण्ठखगानामनीकस्य स्वरैर्मण्डिताः षट्पदाः षट्पदस्वरा यस्मिन्। कलहंसानां कुलस्य प्रेष्ठम्। खरदण्डानि पद्मानि तैर्युक्ता जलाशया यस्मिन् ॥ २९ ॥ वनकुञ्जरैः संघृष्टा ये हरिचन्दनद्रुमास्तत्संबन्धिना वायुना पुण्यजनस्त्रीणां मनः अधि अधिकमुन्मथयत् ॥ ३० ॥ यत्र चोत्पलमालिन्यो वाप्यस्तत्किंपुरुषैः प्राप्तं वनं दृष्ट्वा। पाठान्तरे किंपुरुषैः प्राप्ता वापीश्च दृष्ट्वेत्यर्थः ॥ ३१ ॥

॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ अयं पाठः एतदग्रे कर्णान्त्रेत्याद्यर्धमधिकं चोपलब्धं तच्च युक्तमिति प्रतीयते। एतदर्धमन्तरा कैलासं वर्णयति जन्मौषधीत्यादिचतुर्दशभिरिति स्वाम्युक्तचतुर्दशानां पूर्त्यसंभवात्। २ 'कर्णान्त्रैक' इति पाठः। ३ 'मृगनाभिभिः' इति पाठः। ४ 'पर्यन्तं' इति चक्र० पाठः। 'परितं' इति वीर० पाठः। ५ 'तमोदया' इति पाठः। ६ वाप्य इत्यस्य वापीरित्यर्थः। ७ 'प्राप्ता' इत्येवंरूपे।

योजनशतमुत्सेध उच्छ्रायो यस्य । पादोनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः । पर्यक् सर्वतः कृता अचला छाया येन । निर्गतं नीडं यस्मात् ॥ ३२ ॥ मुमुक्षूणां शरणे आश्रये । त्यक्तामर्षो योऽन्तकस्तत्तुल्यम् ॥ ३३ ॥ तं विशिनष्टि—सनन्दनाद्यैरिति पञ्चभिः । सख्या कुबेरेणोपासमानम् ॥ ३४ ॥ विद्या उपासना, तपश्चित्तैकाग्र्यं योगः समाधिस्तेषां पन्थानं प्रवर्तनद्वारा । लोकस्य मङ्गलं हितं तपोवात्सल्यात्स्नेहादाचरन्तम् ॥ ३५ ॥ सन्ध्याभ्ररुचा रक्तवर्णेनाङ्गेन भस्मादिलिङ्गं चन्द्रलेखां च बिभ्रतम् ॥ ३६ ॥ व्रतिनामासनं बृसी तस्याम् । ब्रह्म प्रवोचन्तम् ॥ ३७ ॥ सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा विन्यस्य जानुनि च सव्ये बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां च कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीन-

स योजनशतोत्सेधः पादोनविटपायतः ॥ पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ॥ ३२ ॥ तस्मिन्महायोगमये मुमुक्षुशरणे सुराः ॥ ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥ सनन्दनाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम् ॥ उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥ विद्यातपोयोगपथमास्थितं तमधीश्वरम् ॥ चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३५ ॥ लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम् ॥ अङ्गेन सन्ध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम् ॥ ३६ ॥ उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम् ॥ नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ३७ ॥ कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि ॥ बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३८ ॥ तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम् ॥ सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः ॥ ३९ ॥ स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः ॥ उत्थाय चक्रे शिरसाभिवन्दनमर्हत्तमः कस्य यथैव विष्णुः ॥ ४० ॥ तथा परे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम् ॥ नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ ४१ ॥ ॥ ॥

मित्यर्थः । तदुक्तं योगशास्त्रे 'एकपादमथैकस्मिन्विन्यसेदूरुसंस्थितम् ॥ इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम् ॥' तर्कमुद्रा चोक्ता 'तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुलीः ॥ प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः ॥' इति ॥ ३८ ॥ ब्रह्मनिर्वाणं ब्रह्मानन्दस्तत्र समाधिरैकाग्र्यं तमाश्रितम् । योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं विशेषेणोपाश्रितवन्तम् । मननशीला मनवस्तेषामाद्यं मुख्यम् ॥ ३९ ॥ अर्हत्तमो विष्णुर्वामनमूर्तिर्यथा । कस्य कश्यपस्य ॥ ४० ॥ महर्षिभिः सहिता ये नीललोहितमनुवर्तन्ते तेऽपि तस्मै वन्दनं चक्रुः । एवं सर्वैर्नमस्कृतः प्राह । कृतः प्रणामो देवैर्यस्मै तम् ॥ ४१ ॥ ॥ ॥

१ 'पर्यगगतामलच्छायो' इति पाठः । २ पक्षिवासरहितत्वादनुपद्रव इत्यर्थः । ३ महायोगो भगवदुपासनायोगस्तत्प्रचुरे । ४ 'शरणम्' इति पाठे शिवविशेषणम् । ५ 'सनन्दाद्यैः' इति पाठः । तत्र सनन्दः सनन्दनः । ६ चरन्तं कुर्वन्तम् । ७ बृंहति बृंहयति तद्ब्रह्मेति श्रुतेः स्वरूपेण गुणैश्चानतिशयं ब्रह्म भगवत्तत्त्वम् । ८ 'मुनीनामाद्य मुनिम्' इति पाठः क्वचिदुपलभ्यते । ९ 'अभिवन्द्यिताङ्घ्रिम्' इति पाठः ।

यद्यपि त्वं नीचवन्मां नमस्करोषि तथापि तवैश्वर्यमहं वेद्मीत्याह—जान इति । त्वां विश्वस्येशं जाने । तत्र हेतुः—जगतो योनिर्या शक्तिः प्रकृतिर्बीजं च शिवः पुरुषस्तयोः कारणम् । तथापि निरन्तरं निर्भेदं यद्ब्रह्म निर्विकारं तदेव त्वमिति जाने ॥ ४२ ॥ ननु विरुद्धमेतत्तत्राह । त्वमेव सरूपयोरविभक्तयोः शिवशक्त्योः[3] क्रीडन्विश्वसृष्ट्यादि करोषि । ऊर्णनाभिरिव । स्वरूपयोरिति पाठे स्वांशयोः । अतो न विरोधः ॥ ४३ ॥ धर्ममर्थं च दोग्धि या त्रयी तस्या अभिपत्तये रक्षणायाध्वरं सृष्टवानसि । यद्वा हे धर्मार्थदुघ, धर्माद्यभिपत्तये तत्प्राप्तये । दक्षेण[4] सूत्रेण निमित्तेन । सेतवो वर्णाश्च मर्यादाश्च अवसिता निबद्धा निर्णीता इति वा श्रद्दधते श्रद्धयाऽनुतिष्ठन्ति ॥४४॥ सर्वकर्मफलदातापि त्वमेवेत्याह । हे मङ्गल, मङ्गलानां शुभानां कर्मणां कर्तुः स्वः स्वर्गं परं मोक्षं वा तनुषे । अमङ्गलानामशुभानां कर्मणां कर्तुश्च तमिस्रं नरकं तनुषे । तत्र केन हेतुना तदेव तस्मिन्नेव कस्यचिद्विपर्ययो भवति ॥ ४५ ॥ त्वत्कोपोऽत्र हेतुरित्यसंभावित-

॥ ब्रह्मोवाच ॥ जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः ॥ शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ ४२ ॥ त्वमेव भगवन्नेतच्छिवशक्त्योः[3] सरूपयोः ॥ विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ॥ ४३ ॥ त्वमेव धर्मार्थदुघाभिपत्तये दक्षेण[4] सूत्रेण ससर्जिथाध्वरम् ॥ त्वयैव लोकेऽवसिताश्च सेतवो यान्ब्राह्मणाः श्रद्दधते धृतव्रताः ॥४४॥ त्वं कर्मणां मङ्गल मङ्गलानां कर्तुः स्म लोकं तनुषे स्वः परं वा ॥ अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केन तदेव कस्यचित् ॥ ४५ ॥ न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव ॥ भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम् ॥ ४६ ॥ पृथग्धियः कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम् ॥ परान्दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान्मावधीद्दैववधान्भवद्विधः ॥ ४७ ॥ यस्मिन्यदा पुष्करनाभ मायया दुरन्तया स्पृष्टधियः पृथग्दृशः[5] ॥ कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम् ॥ ४८ ॥ ॥ ॥

मिति कैमुत्यन्यायेनाह । न वै सतां सतः रोषोऽभिभवेत् । तव त्वाम् । द्वितीयार्थे षष्ठ्यौ । पशुमज्ञं यथाऽभिभवति तद्वत् ॥ ४६॥ अतो ये पृथग्धियो भेददृशोऽतः कर्मण्येव दृष्टिर्येषाम् । दुष्ट आशयो येषाम् । परेषामुदयेन सम्पदा अर्पिता हृदि रुग्येषाम् । अरुन्तुदा मर्मभेत्तारः । दैवेनैव वधो येषां तान्भवद्विधो निरुपमः साधुर्मावधीन्न हन्यात् ॥ ४७ ॥ प्रत्युत साधूनां वृत्तमालोक्यानुग्रहमेव कर्तुमर्हसीत्याह द्वाभ्याम् । यस्मिन्देशे । यदा काले । स्पृष्टधियो मोहितचित्ताः पृथग्दृशो भवन्ति । तत्रापराधे साधवो ह्यनुकम्पयाऽनन्तरमेव परदुःखासहिष्णुतया चित्तप्रकम्पेन कृपां कुर्वन्ति, नतु क्रमं पराक्रमम् । कुतः । दैवबलात्कृतेऽर्थे ममैव दैवमेवंभूतं कोऽत्रापराधस्तेषामिति मत्वा तद्धननं न कुर्वत इत्यर्थः ॥ ४८ ॥ ॥ ॥ ॥

१ ऐश्वर्यं तन्त्रप्रतिपाद्यं शैवोपास्यम् । २ एतत् कारणत्वं निर्विकारत्वं च परस्परविरुद्धं विकारव्याप्यत्वात्कारणत्वस्य । ३ शिवशक्त्योरित्यधिकरणसप्तमीति पक्षे क्रीडन्नित्यर्थः । अथवा शिवशक्त्योरिति षष्ठी द्वितीयार्थे । तत्र क्रीडन् क्रीडयिष्यन्नित्यर्थः । चक्रवर्ती तु तृतीयार्थे षष्ठी । ताभ्यां क्रीडन्नित्यर्थं इति व्याचख्यौ । ४ दक्षेण सूत्रेणेति । सूत्रेण तन्तुना निमित्तेन कारणेन निबद्धाः । निर्णीता इत्यत्र तु सूत्रेण 'स्वल्पाक्षरमसंदिग्धं' इत्यादिलक्षणेन शास्त्रेणेति ज्ञेयं । किंतु सन्निहितत्वाद्दक्षरूपेण तन्तुनाऽध्वररूपं पटं तन्तुवाय इव त्वं ससर्जिथेत्यपि व्याख्येयम् इति दीपि० । ५ पृथग्दृशः साधुषु सापराधाः ।

भवांस्त्वस्पृष्टमतिः । अत एव समस्तदृक् सर्वज्ञः । तया मायया हत आत्मा येषां तेष्वत एव कर्मानुगतचित्तेष्विहापराधेऽनुग्रहं कर्तुमर्हसि ॥ ४९ ॥ एवं सामान्येनोक्त्वा प्रस्तुतमाह—कुर्विति त्रिभिः । त्वया हतस्य, अत एवासमाप्तस्य प्रजापतेरध्वरस्य । हे मनो, यत्राध्वरे कुयाज्ञिका भागिनोऽपि तव भागं न ददुः । भागार्हत्वमाह । येन त्वया मखो निनीयते फलं प्राप्यते ॥ ५० ॥ ५१ ॥ हे मन्यो, अनातुरमारोग्यमस्तु ॥ ५२ ॥ भागश्च तवास्त्वित्याह—एष इति । हे रुद्र । यावदित्यर्थे यदित्यव्ययम् । यज्ञे कृते यावानुच्छिष्टोऽवशिष्टोऽर्थस्तावानेष तव भागोऽस्तु । हे रुद्र, ते भागेनाद्य यज्ञः कल्पतां संपद्यताम् ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥छ॥ ॥ सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः ॥ यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते ॥ १ ॥

भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ॥ तया हतात्मस्वनुकर्मचेतःस्वनुग्रहं कर्तुमिहार्हसि प्रभो॥४९॥कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वयाऽसमाप्तस्य मनो प्रजापतेः॥ न यत्र भागं तव भागिनो ददुः कुयज्विनो येन मखो निनीयते॥५०॥जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः॥ भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ॥५१॥ देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः॥ भवतानुगृहीतानामाशु मन्योऽस्त्वनातुरम् ॥५२॥ एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै ॥ यज्ञस्ते रुद्र भागेन कल्पतामद्य यज्ञहन् ॥५३॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे रुद्रसान्त्वनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥ इत्यजेनानुनीतेन भवेन परितुष्यता ॥ अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥१॥ ॥ श्रीमहादेव उवाच ॥ नाघं प्रजेश बालानां वर्णये नानुचिन्तये ॥ देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ २ ॥ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः ॥ मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ ३ ॥ पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् ॥ देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४॥ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः ॥ भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥५॥ ॥ मैत्रेय उवाच ॥ तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् ॥ परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन् ॥ ६ ॥ ॥

अजेन योऽनुनीतः प्रार्थितो भवस्तेनाभिहितम् । हे महाबाहो विदुर ॥ १ ॥ अघमपराधम् ॥ २ ॥ सापराधमपहत्यानुगृह्णाति । दग्धं शीर्षं यस्य तस्य प्रजापतेरजस्य मुखं यस्मिंस्तत्तथाभूतं शिरोऽस्तु । बर्हिषः संबन्धिनं भागम् । मित्रनाम्नो देवस्य ॥ ३ ॥ प्रकर्षेण कृतानि लग्नान्यङ्गानि येषां ते भवन्तु । उच्छेषणं यज्ञावशिष्टम् ॥ ४ ॥ येषां त्वङ्गानि नष्टानि ते त्वश्विनोर्बाहुभ्यां कृतबाहवः पूष्णोहस्ताभ्यां कृतहस्ताश्च भवन्तु । अध्वर्यवः अन्ये च ऋत्विजः । बस्तस्य श्मश्रूण्येव श्मश्रूणि यस्य ॥ ५ ॥ मीढुष्टमः शिवस्तेनोक्तम् । परितुष्टैश्चित्तैः ॥ ६ ॥ ॥

१ तुशब्दः साधारणसाधुभ्यो वैशिष्ट्यं बोधयति । २ मन्यो अस्तु इति छेदः । हे मन्यो, भवन्तमन्तरा न कस्याप्यत्र सामर्थ्यमिति भावः । ३ 'परेश' इति पाठः । ४ दण्डो द्विवार्थ शिक्षा । ५ 'चक्षुषीक्षेत' इति पाठः । ६ केवलकेऽपिष्टभुक् अन्यसहितश्चेयजमानस्य दद्भिर्जक्षत्वित्यनुग्रहः इति दीपि० । ७ दक्षेण द्वारेण । ८ चित्तैरुपलक्षिता इति संबन्धः ।

मीढ्वांसं शिवं त्वयागत्य सर्वं कार्यमित्यामन्त्र्य संप्रार्थ्य । शुनासीरा देवाः सहमीढुषा वेधसा च वर्तमानाः समीढ्वद्वेधसः ॥ ७ ॥ कार्त्स्न्येन वक्रहस्तबाह्वादिसाधारण्यं विधाय ॥ ८ ॥ ९ ॥ पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा यस्य सः । तदा शरत्कालीनो ह्रद इवामलोऽभवत् ॥ १० ॥ ११ ॥ ॥ १२ ॥ यदपि यद्यपि प्रलब्धः पराभूतो मया भवांस्तथापि त्वया दण्डो भृतः शिक्षा कृता, नतूपेक्षितोऽस्मि । युक्तमेवैतदित्याह । ब्रह्मबन्धुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञोपेक्षा नास्ति ॥ १३ ॥ तत्र हेतुमाह—विद्येति । ब्रह्मा भूत्वा त्वमस्राक्षीः । किमर्थम् । आत्मतत्त्व-

ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः ॥ भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥ विधाय कार्त्स्न्येन च तद्यदाह[2] भगवान्भवः ॥ संदधुः कस्य कायेन सवनीयपशोः[3] शिरः ॥८॥ संधीयमाने शिरसि दक्षो रुद्राभिवीक्षितः[4] ॥ सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥ तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः ॥ शिवावलोकादभवच्छरद्ध्रद[5] इवामलः ॥ १० ॥ भवस्तवाय कृतधीर्नाशक्नोदनुरागतः ॥ औत्कण्ठ्याद्बाष्पकलया संपरेतां सुतां स्मरन् ॥ ११ ॥ कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः ॥ शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः ॥ १२ ॥ ॥ दक्ष उवाच ॥ भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः ॥ न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥ विद्यातपोव्रतधरान्मुखतः स्म विप्रान्ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक्[6] ॥ तद्ब्राह्मणान्परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥ योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् ॥ अर्वाक्पतन्तमर्हत्तमनिन्दयाऽपादृष्ट्यार्द्रया स भगवान्स्वकृतेन तुष्येत् ॥ १५ ॥ ॥ मैत्रेय उवाच ॥ क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः ॥ कर्म संतानयामास सोपाध्यायर्त्विगग्निभिः ॥१६ ॥ वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः ॥ पुरोडाशं निरवपन्वीरसंसर्गशुद्धये ॥१७॥ अध्वर्युणाऽऽत्तहविषा यजमानो विशांपते ॥ धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥ ॥

मवितुम् । यद्वा ब्रह्म वेदमात्मतत्त्वं चावितुं संप्रदायप्रवर्तनेन ज्ञापयितुमित्यर्थः । तत्तस्मात् । हे परम उत्कृष्ट ॥ १४ ॥ अत्र च प्रत्युपकारो नास्तीत्याह—योऽसाविति । अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन । तदगणय्य विस्मृत्य । अर्हत्तमनिन्दयाऽर्वागधः पतन्तं मामपाद्रक्षितवान् । स्वकृतेनैव परानुग्रहेणैव तुष्येत् । न मया तत्प्रतिकर्तुं शक्यमित्यर्थः ॥ १५ ॥ अनुमन्त्रितोऽनुज्ञातः । उपाध्यायसहितैर्ऋत्विगादिभिः अनुवर्तयामास ॥ १६ ॥ वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्धये निवृत्त्यर्थम् ॥ १७ ॥ उपात्तहविषाऽध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ । हे विशांपते विदुर ॥ १८ ॥ ॥

१ मीढ्वांस वरसेक्तारम् । २ 'यथाह' इति वीर० पाठः । ३ सवनीयपशोश्छागस्य कायेन कबन्धेन सदधुः सयोजितवन्तः । ४ अभिवीक्षितोऽभितः कृपादृष्टिविषयीकृतः । ५ 'शरच्चन्द्र इवामलः' इति पाठः । ६ तस्माद्वेदादिप्रवर्तनेच्छया स्वयमेव सृष्टत्वात् ।

स्वया प्रभया तेषां तेजो मुष्णंस्तिरस्कुर्वन् । उपानीतः समीपं प्रापितः । स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ तद्वता । 'बृहद्रथन्तरे पक्षौ' इति श्रुतेः ॥ १९ ॥ तमेवानुवर्णयति—श्याम इति द्वाभ्याम् । हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते । अर्कतुल्येन किरीटेन जुष्टः । नीलालका एव भ्रमरास्तैर्मण्डितं कुण्डलयुक्तमास्यं यस्य । कम्ब्वादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैर्भुजैः पुष्पितः कर्णिकार इव शोभमानः । भुजानां हिरण्मयत्वं केयूरकङ्कणमुद्रिकाद्यलंकारैः ॥ २० ॥ वक्षस्यधिश्रिता वधूर्लक्ष्मीर्यस्य सः । उदारो हासोऽवलोकश्च तयोः कलया लेशेन । पार्श्वे उभयतो भ्रमती व्यजनचामरे एव राजहंसौ यस्मिन्सः । रज्यमानः शोभातिशयं नीयमानः ॥ २१ ॥ ब्रह्मेन्द्रत्र्यक्षा नायका मुख्या येषां ते ॥ २२ ॥ हतरुचस्तिरस्कृतप्रभाः । सन्नजिह्वा गद्गदवाचः । ससाध्वसास्तन्महिम्ना क्षुभितचित्ताः । उपतस्थुस्तुष्टुवुः ॥ २३ ॥ यस्य महिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेऽपि यथामति गृणन्ति स अस्तुवन् ।

तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश ॥ मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना ॥ १९ ॥ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ॥ कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः ॥ २० ॥ वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम् ॥ पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः ॥ २१ ॥ तमुपागतमालक्ष्य सर्वे सुरगणादयः ॥ प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ २२ ॥ तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः ॥ मूर्ध्ना धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २३ ॥ अप्यर्वाग्वृत्तयो यस्य महि त्वात्मभुवादयः ॥ यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ २४ ॥ दक्षो गृहीतार्हणसादनोत्तमं यज्ञेश्वरं विश्वसृजां परं गुरुम् ॥ सुनन्दनन्दाद्यनुगैर्वृतं मुदा गृणन्प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥ ॥ ॥ ॥

कृतः प्रकटीकृतोऽनुग्रहार्थं विग्रहो येन तम् । यद्वा तेषामर्वाग्वृत्तित्वे हेतुः—ते तु यस्य महि महिमा । विभूतिमात्ररूपा इत्यर्थः ॥ २४ ॥ तत्र तावद्दक्षस्तुतिप्रकारमाह—दक्ष इति । गृहीतमर्हणसादनोत्तमं येन तम् । उत्तमे पात्रे आसाद्यार्हणेषु समर्पितेषु प्रीत्या सार्हणपात्रं स्वयमेव येन गृहीतमित्यर्थः । यद्वा कथं प्रपेदे । गृहीतमर्हणसादनोत्तमं यथा भवति तद्गृहीत्वा प्रपेदे इत्यर्थः । गृहीत्वेति पाठस्तु सुगमः । गृणन्स्तुवन् प्रपेदे शरणं जगाम । 'दक्षऋत्विक्सदस्येशभृगुब्रह्मेन्द्रयोषितः ॥ ऋषयश्च तथा सिद्धा यजमानी च लोकपाः ॥ योगिब्रह्माग्निदेवाश्च स्तुवन्ति जगदीश्वरम् ॥ तथा गन्धर्वविद्याधरब्राह्मणाश्च पृथक्पृथक्तैः ॥' ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥

१ बृहद्रथन्तरे तत्सदृशकसामभागौ । २ कर्णिकारः 'पाङ्गारा' इति 'कंचनार' इति च प्रसिद्धो वृक्षविशेषः स इव शोभमानः । कश्चित्कर्णिकां राति ददातीति व्युत्पत्त्या पद्मं व्याचष्टे तचिन्त्यम् । रूढिर्योगमपहरतीति न्यायात् इति दीपि० । ३ उदारहासयुक्तोऽवलोकः इति वीर० । ४ मूर्ध्नेति मूर्धसु धृताञ्जलिपुटा इत्यर्थः ।

ननु साक्षात्परमेश्वर एव रुद्रस्तस्य ब्रह्मपुत्रत्वेन जीवत्वमनुकारमात्रम् । हन्त किमिति त्वया भेददृष्ट्याऽप्यावज्ञात इति मां भगवानाक्षेप्स्यतीत्याशङ्क्य, अप्रच्युतस्वरूपस्य जीवधर्मनाख्यं तवैव सङ्गच्छते नान्यस्येत्याह—शुद्धमिति। स्वधाम्नि स्वरूपे तिष्ठन्भवान् शुद्धं चिन्मात्रं चैतन्यघनः । शुद्धत्वे हेतुः—उपरता नित्यनिवृत्ताऽखिला बुद्ध्यवस्था यस्मात् । अतः एकं भेदशून्यम् । अत एवाभयम् । 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । जीवस्यापि वस्तुत एवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तम् । मायां प्रतिषिध्याभिभूय स्वतन्त्र एव संस्तया मायया पुरुषत्वं मनुष्यनाट्यमुपेत्य तस्यां मायायां तिष्ठन्नपरिशुद्ध इव रागादिमानिवास्ते । रामकृष्णाद्यवतारे तथा प्रतीयते भवानित्यर्थः । अन्ये त्वविद्योपाधयो मायाभिभूताः संसरन्ति। अतस्त्वमेवेश्वरो न रुद्रादय इति भावः । अत एवेमां दृष्टिं भगवान्वारधिष्यति। 'अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्' इत्यादिना ॥ २६ ॥ ऋत्विजोऽपि स्वस्यापराधं परिहरन्तः स्तुवन्ति । भो अनञ्जन उपाधिमलशून्य, यद्यपि त्वमेव रुद्रादिदेवतारूपस्तथापि नन्दीश्वरशापात्कर्मण्येव दुराग्रहधियः सन्तस्तव तत्त्वं न विद्मः किंतु धर्मस्यापूर्वस्योपलक्षणभूतं त्रिवृत् त्रयीप्रतिपाद्यमध्वराख्यं तव रूपमस्माभिर्ज्ञातम्। कीदृशम् । यदर्थं यस्य सिद्धयेऽधिदैवं देवताऽधिकारेणादोऽव्यवस्थाः अमूर्व्यवस्थाः । अत्रेयमेव देवता नान्येत्येवंभूता नियमा इत्यर्थः । यद्वा व्यवस्था इत्याख्यातं । अडागमा-

॥दक्ष उवाच॥शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम्॥ तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्ध इवात्मतन्त्रः॥२६॥ ॥ऋत्विज ऊचुः॥ तत्त्वं न ते वयमनञ्जन रुद्रशापात्कर्मण्यवग्रहधियो भगवन्विदामः॥ धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थमधिदैवमदोव्यवस्थाः॥२७॥ ॥सदस्या ऊचुः॥ उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेऽन्तकोग्रव्यालान्विष्टे विषयमृगतृष्यात्मगेहोरुभारः॥ द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः पादौकस्ते शरणद कदा याति कामोपसृष्टः॥२८॥ ॥रुद्र उवाच॥ तव वरद वराङ्घ्रावाशिषेहाखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणार्हणीये॥ यदि रचितधियं माविद्यलोकोपविद्धं जपति न गणये तत्त्वत्परानुग्रहेण ॥ २९ ॥ ॥

वर्भाव आर्षः । यदर्थमद इदमिन्द्राद्यधिदैवं रूपं विशेषेणास्थितवानसीत्यर्थः ॥ २७ ॥ सदस्यास्तु निरीश्वरेऽपि दक्षाध्वरे धनलोभेन स्वप्रवृत्तिमनुचिन्त्यानुतप्ता विरक्तिमाशासानाः स्तुवन्ति । हे शरणद आश्रयपद, उत्पत्त्यध्वनि संसारमार्गे वर्तमानोऽज्ञानां सार्थः समूहस्ते पादौकः त्वत्पादरूपं निवासं कदा यास्यति । कथंभूते संसारमार्गे । अशरणे विश्रामस्थानशून्ये । उरुक्लेशा एव दुर्गमस्थानानि यस्मिन् । अन्तक एवोग्रो व्यालस्तेनान्विष्टे लक्षीकृते विषयरूपा मृगतृष्णमृगतृष्णिका यस्मिन् । आत्माहंकारास्पदं शरीरं ममत्वास्पदं गेहं च स एवोरुभारो यस्य सः । द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन् । खला एव मृगा व्याघ्रादयस्तेभ्यो भयं यस्मिन् । शोक एव दावाग्निर्यस्मिन् । कामेनोपसृष्टः पीडितः ॥ २८ ॥ श्रीरुद्रस्तु पूर्वं मम निन्दा दुःसहा आसीत्, इदानीं तु तां न गणयामीत्याह—तवेति । आशिषा कामेनासक्तैर्निष्कामै रचितधियमभिनिवेशितचित्तम् । मा कामविद्यो विद्याहीनो लोको यद्यपविद्धं जपत्याचारभ्रष्टं जल्पति तज्जल्पनमहं न गणये । तत्र हेतुः—तव यः परोऽनुग्रहस्तेन । त्वत्पराणां वा योऽनुग्रहस्तेन ॥ २९ ॥ ॥ ॥ ॥

१ बुद्ध्यवस्थाः सङ्गद्वेषादिरूपा जागरादिरूपाश्च इति चक्र० । २ तयैव मायया निमित्तभूतया। अध्ययनेन वसतीतिवत्तृतीया । ३ तत्त्वं निर्विकारस्यैव सर्वात्मकत्वम् । ४ आख्यातं तिङन्तम् । ५ आदिना आत्मनेपदं चार्षम् । ६ व्यालाक्रष्टेति चित्सुखः। तत्र विषयाख्या मृगतृष्णा च आत्मा आत्मत्वेन गृहीतो देहादिश्च गेहं चेति विग्रहः इति सिद्धां० । ७ 'मृगतृष्णात्म' इति पाठः । ८ इदं कामोपसृष्ट इति च द्वे अज्ञसार्थविशेषणे ।

भृगुस्तु स्वभावतस्तत्त्वज्ञानहीना जीवा अतोऽज्ञानकृतं मम दुश्चेष्टितं क्षमस्वेत्याह—यन्माययेति । आत्मन्नात्मनि श्रितमनुगतं तव तत्त्वं न विदन्ति । प्रणतानामात्मा बन्धुश्च ॥ ३० ॥ ब्रह्मादयो न विदन्तीति भृगुणोक्ते तदसहमानो ब्रह्मा तत्त्वज्ञानमाविष्कुर्वन्निवाह—नैतदिति । पदार्थभेदग्राहकैरिन्द्रियैः । गुणस्येन्द्रियस्य । यद्वा ज्ञानार्थयोः कारणस्य सत्त्वादेः । अत एवासत्तो मायामयाद्व्यतिरिक्तो भवान् ॥ ३१ ॥ इन्द्रस्त्विन्द्रियविषयः सर्वोऽपि मिथ्येति ब्रह्मणोक्तमसहमान आह । इदं तव वपुरप्युपपन्नमेव नतु प्रपञ्चवदनिर्वचनीयतयानुपपन्नम् । सुराणां विद्विषः क्षपयन्तीति तथा तैर्भुजदण्डैरुपलक्षितम् ॥ ३२ ॥ ऋत्विजां पत्न्यः स्तुवन्ति । यज्ञोऽयं तव यजनाय त्वां दष्टुं केन ब्रह्मणा पूर्वं सृष्टः । हे यज्ञात्मन्, तं नो यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु । कथंभूतं यज्ञम् । शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीतिर्यस्य स चासौ शान्तमेधश्चोपरतोत्सवः । मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते ।

॥ भृगुरुवाच ॥ यन्मायया गहनयापहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ॥ नात्मन् श्रितं तव विदन्त्यधुनापि तत्त्वं सोऽयं प्रसीदतु भवान्प्रणतात्मबन्धुः ॥ ३० ॥ ॥ ब्रह्मोवाच ॥ नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ॥ ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद्व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥ ॥ इन्द्र उवाच ॥ इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम् ॥ सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥ ३२ ॥ ॥ पत्न्य ऊचुः ॥ यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाऽद्य दक्षकोपात् ॥ तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन्नलिनरुचा दृशा पुनीहि ॥ ३३ ॥ ॥ ऋषय ऊचुः ॥ अनन्वितं ते भगवन्विचेष्टितं यदात्मनाऽऽचरसि हि कर्म नाज्यसे ॥ विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवान् ॥३४॥ ॥ सिद्धा ऊचुः ॥ अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ॥ तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसंपन्नवन्नः ॥ ३५ ॥ ॥ ॥ ॥

शवसुदकं तत्र शेते इति तथा पद्म तन्नामेति संबोधनं वा ॥ ३३ ॥ ऋषयस्तु कर्माण्यनुतिष्ठन्तस्तत्पुण्येन तत्फलेन च युज्यन्ते भगवति तु तदभावमालक्ष्य विस्मिताः स्तुवन्ति । अनन्वितमघटमानं यद्यस्मादात्मना स्वयं कर्माचरस्यनुतिष्ठसि न त्वज्यसे लिप्यसे । यतश्चान्ये विभूतये संपदे ईश्वरीं लक्ष्मीमुपसेदुर्भेजुः । यद्वा यत इति सार्वविभक्तिकस्तसिः । यामित्यर्थः । भवांस्तु स्वयमेवानुवर्तमानां तां न मन्यते नाद्रियते ॥ ३४ ॥ सिद्धास्तु तत्कथासुखमभिनन्दन्तः स्तुवन्ति । अयं नो मनोगजस्त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न संस्मरति स्म । नच ततो निर्गच्छति । ब्रह्मसंपन्नवद्ब्रह्मैक्यं प्राप्त इव ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ मेधृधातोः हिंसार्थकत्वात् । २ पदार्थाः शब्दस्पर्शादयस्तेषां भेदो गृह्यते यैरिति विग्रहः । ३ यावत् सकलं स्वरूपमित्यर्थः । ४ अर्थस्य ज्ञानविषयस्य घटादेः । ५ शवशब्दस्य जलवाचित्वं वैदिकनिघण्टौ प्रसिद्धम् ।

यजमानी दक्षपत्नी स्तौति । ते स्वागतं भद्रमागमनं जातम् । हे अधीश, यथा शिरसा हीनः कबन्धमात्रः पुरुषोऽङ्गैः करचरणाद्यवयवैः शोभमानैरपि न शोभते तथा त्वां विना केवलं प्रयाजाद्यङ्गैर्मखो न शोभते । अतो नः श्रिया सह त्रायस्व त्वद्भक्तान्कुर्वित्यर्थः ॥ ३६ ॥ लोकपालास्त्वीश्वरत्वाभिमानारूढा भगवतस्तत्त्वमपश्यन्त ऊचुः । दृष्टः किं, न दृष्ट इत्यर्थः । कुतः । असद्ग्रहैः । पुंस्त्वमाविष्टलिङ्गत्वात् । असत्प्रकाशरूपाभिर्दृग्भिरिन्द्रियैः । अयं भावः—शुद्धचित्तानां त्वं शुद्धसत्त्वमूर्तिर्भासि । अस्माकं तु बहिर्मुखेन्द्रियाणां पञ्चभूतोपलक्षितो जीवविशेष इवावभासि । अतस्त्वमस्मदिन्द्रियगोचरो न भवसि । धिगस्मज्जीवितमिति ॥ ३७ ॥ योगेश्वरास्तदभेदेन भजतामनुग्रहभाक्त्वं मन्यमानाः स्वामिभृत्यभावेन भजतामप्यनुग्रहं प्रार्थयमानाः स्तुवन्ति द्वाभ्याम्—प्रेयानिति । विश्वात्मनि परब्रह्मणि त्वयि य आत्मनः पृथक्त्वं नेक्षेत अमुतोऽमुष्मादन्यस्ते प्रेष्ठो नास्ति आत्मनो जीवान्पृथङ्नेक्षेतेति वा । हे वत्सल भक्तजनप्रिय, अनन्यवृत्त्याऽव्यभिचारिण्या भक्त्या भजतोऽनुगृहाणेत्यर्थः ॥ ३८ ॥ अव्यभिचारिणी भक्तिः कथं स्याद्भजनीयानां बहुत्वादित्याशङ्क्याहुः । जगत उद्भवादिषु निमित्तेषु दैवतो जीवादृष्टाद्बहुधा भिद्यमाना गुणा

॥ यजमान्युवाच ॥ स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः ॥ त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः ॥ ३६ ॥ ॥ लोकपाला ऊचुः ॥ दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन दृश्यम् ॥ माया ह्येषा भवदीया हि भूमन्यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥३७॥ ॥ योगेश्वरा ऊचुः ॥ प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः ॥ अथापि भक्त्येश तयोपधावतामनन्यवृत्त्याऽनुगृहाण वत्सल ॥ ३८ ॥ जगदुद्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयात्ममायया ॥ रचितात्मभेदमतये स्वसंस्थया विनिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥ ॥ ब्रह्मोवाच ॥ नमस्ते श्रितसत्त्वाय धर्मादीनां च सूतये ॥ निर्गुणाय च यत्काष्ठां नाहं वेदापरेऽपि च ॥ ४० ॥ ॥ अग्निरुवाच ॥ यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम् ॥ तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ४१ ॥ ॥ ॥

यस्यास्तया स्वमाययात्मनि स्वरूपे रचिता ब्रह्मादिभेदमतिर्येन तस्मै । स्वसंस्थया केवलस्वरूपावस्थानेन च विनिवर्तितो भेदभ्रमो गुणाश्च तद्धेतव आत्मनि येन तस्मै ॥ ३९ ॥ शब्दब्रह्म स्तौति—नमस्त इति । श्रितं स्वीकृतं सत्त्वं येनातो धर्मादिफलप्रसवित्रे । ननु सत्त्वगुणत्वं निर्गुणत्वं चैकस्य कथमित्याशङ्क्याह । यस्य काष्ठां तत्त्वं नाहं वेद्मि, अपरे ब्रह्मादयश्च न विदुस्तस्मै ॥ ४० ॥ अग्निस्तु यज्ञमूर्तिं प्रणमति । यस्य तेजसा सुष्ठु समिद्धं प्रदीप्तं तेजो यस्य सोऽहं प्रशस्तेऽध्वरे हविर्वहामि । तं यज्ञियं यज्ञाय हितं पालकम् । यज्ञं यज्ञमूर्तिम् । पञ्चविधत्वमैतरेयके उक्तम्—'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इति । पञ्चभिर्यजुर्भिर्यज्ञमन्त्रैः स्विष्टं सुपूजितम् । तथा च श्रुतिः—'आश्रावयेति चतुरक्षरं, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः । स्मृतिश्च 'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ॥ हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥' इति ॥ ४१ ॥ ॥

१ प्रयाजाद्यङ्गानि समिधो यजति, इडां यजति, बर्हिर्यजति, तनूनपातं यजति, स्वाहाकारं यजतीति पञ्चविधानि । आदिना व्रीह्यादिपरिग्रहः । २ षष्ठः पञ्चभूतातिरिक्तः सच्चिदानन्ददेह इत्यर्थः । ३ 'तव' इत्यपि पाठः । ४ इय द्वितीयार्थे षष्ठी । ५ यज्ञं यज्ञमूर्तिम् । ६ भेदमतिर्नानात्वज्ञानं तद्रूपा वा भेदमतिर्येन । ७ स्वीकृतं स्वसान्निध्येनोपकृतम् । ८ काष्ठामवधिम् ।

देवास्तु सत्यं वयमपि देवास्तथापि जगदाद्यन्तयोस्त्वमेव नान्यः कश्चिदित्याहुः—पुरेति कल्पापाये प्रलये विकृतं कार्यजातमुदरीकृत्य संहृत्य त्वमेवाद्यः पुमानुरगेन्द्र एवाधिकं शयनं शय्या तस्मिन् शेषे शयनं करोषि। सिद्धैर्जनलोकादिवासिभिर्विमृशिता विचिन्तिताऽध्यात्मपदवी ज्ञानमार्गो यस्य स एव त्वं य इदानीमक्ष्णोः पथि चरसि प्रत्यक्षोसि। अवसि रक्षसि ॥ ४२ ॥ गन्धर्वाप्सरसस्तु वयं भिया केवलं सर्वानपि परमेश्वरत्वेनोपश्लोकयामस्त्वमेव तु परमेश्वरोऽन्ये तु त्वदंशा एवेत्याहुः—अंशांशा इति। हे विभूमन्महत्तम, क्रीडाभाण्डं क्रीडोपकरणं विश्वं ब्रह्माण्डं यस्य तस्मै ते नमनं कुर्मः ॥ ४३ ॥ विद्याधरास्तु केवलं विद्याभिः संपदः प्राप्यन्ते अहंकारादिव्यामोहनिवृत्तिस्तु त्वत्कथाश्रवणं विना नास्तीत्याहुः। अर्थं पुरुषार्थसाधनं कलेवरमभिपद्य प्राप्य त्वन्माययास्मिन्ममेत्यहमिति चाभिमानं कृत्वेममात्ममोहं युष्मत्कथामृतनिषेवक उदुच्चैर्व्युदस्येत् परित्यजेन्नान्यः। ननु स्वैः पुत्रादिभिरधिक्षिप्तो दुःखितः सन्परित्यजेदेव, नेत्याहुः। क्षिप्तोऽपि

॥ देवा ऊचुः ॥ पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन्सलिल उरगेन्द्राधिशयने ॥ पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः ॥४२॥ ॥ गन्धर्वा ऊचुः ॥ अंशांशास्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ॥ क्रीडाभाण्डं विश्वमिदं यस्य विभूमंस्तस्मै नित्यं नाथ नमस्ते करवाम ॥४३॥ ॥ विद्याधरा ऊचुः ॥ त्वन्माययार्थमभिपद्य कलेवरेऽस्मिन्कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ॥ क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत् ॥ ४४ ॥ ॥ ब्राह्मणा ऊचुः ॥ त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च ॥ त्वं सदस्यर्त्विजो दंपती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥४५॥ त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा ॥ स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः ॥४६॥ स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ॥ कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥४७॥ मैत्रेय उवाच ॥ इति दक्षः कविर्यज्ञं भद्र रुद्राभिमर्शितम्[2] ॥ कीर्त्यमाने हृषीकेशे संनिन्ये यज्ञभावने[3] ॥४८॥ भगवान्स्वेन भागेन सर्वात्मा सर्वभागभुक् ॥ दक्षं बभाष आभाष्य प्रीयमाण इवानघ ॥ ४९ ॥ ॥

दुर्मतिः। असत्सु विषयेष्वेव लालसा तृष्णा यस्य सः ॥ ४४ ॥ ब्राह्मणाः स्तुवन्ति—त्वमिति त्रिभिः। सदस्याश्च ऋत्विजश्च ॥ ४५ ॥ गां पृथ्वीं रसाया रसातलाद्दंष्ट्रया व्युज्जहर्थ विशेषेणोद्धृतवानसि योगिभिः स्तूयमानः। हे त्रयीगात्र वेदमूर्ते, यज्ञो यागः सयूपस्तद्विशेषः, क्रतुस्तद्रूपी यज्ञसंकल्परूप इति वा। यज्ञः क्रतुः कर्म यस्येति वा ॥ ४६ ॥ स त्वमस्माकं त्वद्दर्शनमाकाङ्क्षतां प्रसीद अस्मद्यज्ञमप्युद्धरेत्यर्थः। न चाशक्यं तवैतत्। यतस्तव नाम्नि कीर्त्यमान एव यज्ञविघ्नाः क्षयं यान्ति। एवंप्रभावो यस्तस्मै नमः ॥ ४७ ॥ इत्यनेन प्रकारेण सर्वैः कीर्त्यमाने। हे भद्र विदुर। संनिन्ये प्रवर्तयामास ॥ ४८ ॥ सर्वात्मतया सर्वभागभोक्तापि भगवान्निजानन्दतृप्तोऽपि स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इव दक्षमाभाष्य संबोध्य बभाषे ॥ ४९ ॥ ॥ ॥

१ पथि चरसि भृत्यानवसीति पदाभ्यां त्वत्पालितैर्भृत्यैरेव त्वं दृश्यसे नान्यैरिति याज्ञिककर्मिषु ज्ञानिषु च कटाक्षः। २ रुद्रेण वीरभद्रेणावमर्शितं विदूषितम्। ३ यज्ञभावने यज्ञपालके।

योऽहं जगतः कारणं आत्मा चेश्वरश्च उपद्रष्टा साक्षी च स्वयंप्रकाशश्च निरुपाधिश्च स एव ब्रह्मा शर्वश्चेत्यन्वयः ॥ ५० ॥ कुत इत्यत आह । अहमेवात्ममायामधिष्ठाय जगत्सृष्ट्यादि कुर्वन्स च स च सन्सर्वशक्तिः क्रियोचितां संज्ञां धारयामि ॥ ५१ ॥ तस्मिन्केवलेऽद्वितीये समानासमानजातीयभेदरहिते ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च भेदेनाज्ञः पश्यतीत्यर्थः ॥ ५२ ॥ विद्वांस्तु भेदं न पश्यतीति सदृष्टान्तमाह—यथेति ॥ ५३ ॥ तस्मादेवमैक्यं पश्यन्कृतार्थो भवतीत्याह । त्रयाणामेको भावः स्वरूपं येषाम् ॥ ५४ ॥ स्वेन क्रतुना त्रिकपालेष्ट्या । उभयतोऽङ्गैः प्रधानेन च ॥ ५५ ॥ स्वेन भागेन यज्ञावशिष्टेन ।

॥ श्रीभगवानुवाच ॥ अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ॥ आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ॥ ५० ॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज ॥ सृजन्रक्षन्हरन्विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ ५१ ॥ तस्मिन्ब्रह्मण्यद्वितीये केवले परमात्मनि ॥ ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनु पश्यति ॥५२॥ यथा पुमान्न स्वाङ्गेषु शिरःपाण्यादिषु क्वचित् ॥ पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥ ५३ ॥ त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ॥ सर्वभूतात्मनां ब्रह्मन्स शान्तिमधिगच्छति ॥ ५४ ॥ ॥ मैत्रेय उवाच ॥ एवं भगवतादिष्टः प्रजापतिपतिर्हरिम् ॥ अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥५५॥ रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः ॥ कर्मणोदवसानेन सोमपानितरानपि ॥ उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः ॥५६॥ तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे ॥ धर्म एव मतिं दत्त्वा त्रिदशास्ते दिवं ययुः ॥५७॥ एवं दाक्षायणी हित्वा सती पूर्वकलेवरम् ॥ जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ॥ ५८ ॥ तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका ॥ अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम् ॥ ५९ ॥ एतद्भगवतः शंभोः कर्म दक्षाध्वरद्रुहः ॥ श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥६०॥ इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् ॥ यो नित्यदाकर्ण्य नरोऽनुकीर्तयेद्धुनोत्यघं कौरव भक्तिभावतः ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे दक्षयज्ञसंधानं नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥

उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा । सोमपानितरानप्युपाधावदित्यनुषङ्गः । ततश्चोदवस्य कर्म समाप्यावभृथरूपं यथा भवति तथा स्नातवान् ॥ ५६ ॥ स्वेनैवानुभावेनाप्तराधसे प्राप्तसिद्धये तस्मा अपि ॥ ५७ ॥ ५८ ॥ आवृङ्क्ते भजते स्म । अनन्यभावानामेकैव गतिर्यस्तम् । प्रलयकाले सुप्ता शक्तिरीश्वरमिव ॥ ५९ ॥ बृहस्पतेः शिष्यान्मया श्रुतम् ॥ ६० ॥ परं पवित्रं य आकर्ण्य तथानुकीर्तयेत्स आत्मनः परस्याप्यघं संसारव्यसनं सर्वदा धुनोति ॥ ६१ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥

१ यज्ञादिक्रियायोग्याम्। २ भेदेन दर्शने एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधादज्ञ एव भेदेन पश्यति । ३ अङ्गैः प्रयाजादिभिः प्रधानेन दर्शपौर्णमासादिना। ४ ततश्च सर्वयजनानन्तरम् ।

दक्षकन्यान्वये प्रासा दक्षयज्ञकथोदिता ॥ मनुपुत्रान्वये प्राप्ता ध्रुवचर्याथ पञ्चभिः ॥ १ ॥ अष्टमे गुरुदारोक्तिरोपमत्सरतः पुरात् ॥ निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः ॥२॥ एवं तावन्मनुकन्यान्वयोक्त्यैव मरीच्यादीनां ब्रह्मपुत्राणां वंशा वर्णितास्तत्रावशिष्टं किंचिदाह—सनकाद्या इति । नावसन्नाश्रिताः ऊर्ध्वरेतसो नैष्ठिकाः । अतस्तेषां वंशो नास्ति ॥१॥ अधर्मोऽपि ब्रह्मपुत्रस्तस्य वंशमाह—मृषेति चतुर्भिः । दम्भः परप्रतारणम् । माया तदुचिता चेष्टा । तयोः सोदरयोरपि दाम्पत्यमधर्मांशतया । एवमुपर्यपि । अप्रजोऽपुत्रः ॥ २ ॥ निकृतिः शठता । यत् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्चेत्यर्थः ॥ ३ ॥ यातना

॥ मैत्रेय उवाच ॥ सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ॥ नैते गृहान्ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ॥१॥ मृषाऽधर्मस्य भार्यासीद्दम्भं मायां च शत्रुहन् ॥ असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥२॥ तयोः समभवल्लोभो निकृतिश्च महामते ॥ ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥ ३ ॥ दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम ॥ तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥ संग्रहेण मयाख्यातः प्रतिसर्गस्तवानघ ॥ त्रिः श्रुत्वैतत्पुमान्पुण्यं विधुनोत्यात्मनो मलम् ॥५॥ अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ॥ स्वायंभुवस्यापि मनोर्हरेरंशांशजन्मनः ॥६॥ प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ॥ वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ७ ॥ जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ॥ सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥८॥ एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन् ॥ उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ ९ ॥ तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम् ॥ सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥१०॥ न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति ॥ न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः ॥ ११ ॥ बालोऽसि बत नात्मानमन्यस्त्रीगर्भसंभृतम् ॥ नूनं वेद भवान्यस्य दुर्लभेऽर्थे मनोरथः ॥ १२ ॥ तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे ॥ गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम् ॥ १३ ॥ ॥ ॥

तीव्रवेदना ॥४॥ प्रतिसर्गोऽनुसर्ग एव । यद्वा प्रतिसर्गः प्रलयः । अधर्मस्य प्रलयहेतुत्वात्प्रतिसर्गत्वम् । एतदेतमधर्मवंशम् । पुण्यमिति वर्जनद्वारा पुण्यहेतुत्वात् ॥ ५ ॥ मनोः पुत्रवंशम् । हरेरंशो ब्रह्मा तस्यांशाद्देहार्धाज्जन्म यस्य ॥ ६ ॥ जगतो रक्षायां स्थितौ ॥ ७ ॥ सुनीतिः सुरुचिश्च जाये । तयोर्मध्ये इतरा सुनीतिः ॥ ८ ॥ तयोः प्रियाप्रियत्वे प्रपञ्चयन् ध्रुवचरित्रमाह पञ्चभिरध्यायैः । सुरुचेः पुत्रमुत्तमसंज्ञं लालयन् ॥ ९ ॥ तथा अङ्कारोहणं चिकीर्षमाणम् ॥ १० ॥ गर्वोक्तिमेवाह त्रिभिः—नेति । नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपि भवान्नारोढुमर्हति ॥ ११ ॥ १२ ॥ पुरुषमीश्वरम् ॥ १३ ॥ ॥ ॥

१ रोपगतसरतः क्रोधेर्ष्याभ्याम्। २ भयं मृत्युमिति मृत्युः स्त्रीरूप इति महाभारते प्रतिपादितमतो भयाख्यः पुमान्मृत्युश्च स्त्रीति ज्ञेयम्। ३ चतुर्थश्लोकोत्तरं 'एते ह्यधर्मवृक्षस्य शाखाः (वश्याः) संसृविधेतवः॥ श्रेयस्कामो न सेवेत सु(नि)तरामाश्रमोत्तमः' इति पद्यं वीर० विज० व्याख्ययोरधिकम्। ४ शृण्वत इत्यनादरे षष्ठी। ५ तथा उत्तमवत्। ६ नृपात्मजोपीति नृपेप्यनादरो व्यञ्जितः।

मिषन्तं पश्यन्तम् । सन्नवाचं कुण्ठितवाचम् ॥ १४ ॥ उदुह्यारोप्य । अन्तःपुरजनमुखाच्छ्रुत्वा ॥ १५ ॥ शोक एव दावाग्निस्तेन । दावाग्निगता लतेव स्थिता सा बाला विलापं चकार ॥ १६ ॥ वृजिनस्य दुःखस्य । अमङ्गलमपराधं परेषु मामंस्थाः । यद्यतः परेभ्यो दुःखं ददाति यः स स्वदत्तमेव दुःखं भुङ्क्ते ॥ १७ ॥ दुर्भगया मया उदरे गृहीतस्तस्या एव स्तन्येन वृद्धश्च । दुर्भगत्वमेवाह । यां मामिडस्पतिर्भूपतिर्भार्येति वोढुं स्वीकर्तुं विलज्जते । वाशब्दाद्दासीत्यपि ॥ १८ ॥ पितृभार्यात्वेन मात्रा समा मातुः सपत्नी तयापि यदुक्तं 'तपसाराध्य पुरुषम्' इत्यादि तदातिष्ठ कुरु । अध्यासनं यदीच्छसि ॥ १९ ॥ परिचर्यं निषेव्य ।

॥ मैत्रेय उवाच ॥ मातुः सपत्न्याः सुदुरुक्तिविद्धः[1] श्वसन् रुषा दण्डहतो यथाऽहिः ॥ हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन्सकाशम् ॥ १४ ॥ तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदुह्य बालम् ॥ निशम्य तत्पौरमुखान्नितान्तं[3] सा विव्यथे यद्गदितं सपत्न्याः[4] ॥ १५ ॥ सोत्सृज्य धैर्यं विललाप शोकदावाग्निना[5] दावलतेव बाला ॥ वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह ॥ १६ ॥ दीर्घं[6] श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला ॥ माऽमङ्गलं तात परेषु मंस्था भुङ्क्ते जनो यत्परदुःखदस्तत् ॥ १७ ॥ सत्यं सुरुच्याऽभिहितं भवान्मे[7] यद्दुर्भगाया उदरे गृहीतः ॥ स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम्[8] ॥ १८ ॥ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्रापि[9] यदव्यलीकम् ॥ आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥ १९ ॥ यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनायात्तगुणाभिपत्तेः ॥ अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवन्द्यम् ॥ २० ॥ तथा मनुर्वो भगवान्पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः ॥ इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम्[10] ॥ २१ ॥ तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ॥ अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २२ ॥ नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि[11] कंचन ॥ यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया ॥ २३ ॥ ॥

विश्वस्य विभावनाय पालनायात्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य । जित आत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवन्द्यम् ॥ २० ॥ एकमत्या सर्वान्तर्यामिदृष्ट्या ॥ २१ ॥ मृग्या पदाब्जयोः पद्धतिर्मार्गो यस्य तमेवाश्रय शरणं व्रज । ततो भजस्व । नान्यस्मिन्भावो[12] यस्य तस्मिन् । निजधर्मैर्भाविते शोधिते ॥ २२ ॥ तमेवेत्यनेन सूचितं सर्वोत्तमत्वं प्रपञ्चयति—नान्यमिति । हस्तेन गृहीतं दीप्यत्पद्मं[13] यया । इतरैर्ब्रह्मादिभिः ॥ २३ ॥ ॥ ॥

१ अधिक श्रेष्ठ वासनम् । २ 'स दुरुक्तिं' इति पाठः । ३ तत् गर्ववाक्यम् । ४ 'सपत्न्या' इति पाठः । ५ शोकाग्निनेति हेतौ तृतीया, तेन व्याप्तेत्यध्याहारो वा । ६ दीर्घं यथा स्यात्तथा । ७ मे इति दुर्भगाया इति च पष्ठ्यौ तृतीयार्थे । ८ इडस्पतिरितिडलयोरभेदात् इडा इला भूमिस्तस्याः पतिः । पारस्करादित्वात्सुडूह्रस्वौ इति वीर० । ९ मात्रा समा समाता तयेति समासः । सभावश्छान्दसः । १० भौमं सार्वभौमत्वम् अपवर्ग्यं मोक्षसुखम् । ११ न मृगयामि विचारेण न पश्यामीत्यर्थः । १२ भाव आसक्तिर्यस्य तादृशे मनसि पंचवार्षिकस्यानुपनीतस्य ते कर्मानधिकारात् निजधर्मैर्भक्तिवर्भैर्भाविते शोधिते इति चक्र० । १३ विलासाद्गृहीतं पद्मं दीपत्वेनोत्प्रेक्षितम् इति दीपि० ।

संजल्पितं विलापम् । ततोऽर्थस्यागमो यस्मात्तथाभूतं वच आकर्ण्य ॥२४॥२५॥ विस्मित इत्युक्तं तदेवाह । अहो तेजः प्रभावः ॥ २६ ॥ २७ ॥ विकल्पे माना-
पमानविवेके सत्यपि भिन्ना न सन्ति किंतु मोहकल्पिता एवेत्यर्थः । कुतः । यत्सुखं दुःखं वा तन्निजकर्मभिरेव भवति यतः ॥ २८ ॥ उपशमोपदेशेन निवर्त-
यति—परितुष्येदिति पद्भिः । ईश्वरगतिं वीक्ष्येश्वरानुकूल्यं विना नोद्यमाः फलहेतव इति ज्ञात्वा परितुष्येत् सन्तोषमेव कुर्यात् ॥ २९ ॥ दुष्करश्च तवायमुद्यम
इत्याह—अथेति द्वाभ्याम् । यस्य प्रसादमवरोढुं प्राप्तुमिच्छसि ॥ ३० ॥ निःसङ्गेन तीव्रयोगेन युक्तेन समाधिना मृगयन्तोऽपि यस्य पदवीं मार्गं न विदुः

॥ मैत्रेय उवाच ॥ एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः ॥ संनियम्यात्मनात्मानं निश्चक्राम पितुः पुरात्
॥ २४ ॥ नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम् ॥ स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः ॥ २५ ॥ अहो
तेजः क्षत्रियाणां मानभङ्गममृष्यताम् ॥ बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः ॥ २६ ॥ ॥ नारद उवाच ॥
नाधुनाप्यवमानं ते संमानं वापि पुत्रक ॥ लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ २७ ॥ विकल्पे विद्यमा-
नेऽपि न ह्यसंतोषहेतवः ॥ पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः ॥ २८ ॥ परितुष्येत्ततस्तात तावन्मात्रेण
पूरुषः ॥ दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः ॥ २९ ॥ अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि ॥ यत्प्रसादं स
वै पुंसां दुराराध्यो मतो मम ॥ ३० ॥ मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः ॥ न विदुर्मृगयन्तोऽपि तीव्रयो-
गसमाधिना ॥ ३१ ॥ अतो निवर्ततामेष निर्बन्धस्तव निष्फलः ॥ यतिष्यति भवान्काले श्रेयसां समुपस्थिते
॥ ३२ ॥ यस्य यद्दैवविहितं स तेन सुखदुःखयोः ॥ आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ ३३ ॥ गुणाधि-
कान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ॥ मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ ३४ ॥ ॥ ध्रुव उवाच ॥ सोऽयं
शमो भगवता सुखदुःखहतात्मनाम् ॥ दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥३५॥ अथापि मेऽविनीतस्य
क्षात्रं घोरमुपेयुषः ॥ सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥ ३६ ॥ ॥ ॥

स देवो दुराराध्यः ॥ ३१ ॥ श्रेयसां काले वृद्धत्वे ॥ ३२ ॥ सुखदुःखयोर्मध्ये । सुखे सति पुण्यं क्षीयत इति दुःखे सति पापं क्षीयत इत्यात्मानं तोषयंस्त-
मसः पारं मोक्षं प्राप्नोति ॥३३॥ किंच गुणैरधिकात्पुंस इति ल्यब्लोपे पञ्चमी । तं दृष्ट्वा प्रीतिं कुर्यात्, न त्वसूयामित्यर्थः । अनुक्रोशं कृपां लिप्सेत्, नतु
तिरस्कारम् । समानान्मैत्रीं नतु स्पर्धाम् ॥ ३४ ॥ ३५ ॥ क्षात्रं स्वभावं प्राप्तवतोऽत एवाविनीतस्य दुर्वाक्यबाणैर्भिन्ने हृदि न श्रयते न तिष्ठति ॥ ३६ ॥

१ अत्र—'क यात्येको भवान्वत्स हित्वा स्वगृहमृद्धिमत् । लक्षये त्वावमताद्य सताप स्वजनोत्थया ॥१॥ ध्रुव उवाच ॥ किमेतद्भगवन्ध्यानाद्धृष्टं किं योगराधसा । नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम् ॥' इति वीर० अधिकम् । २ दुःखहेतवोऽपमानादयस्तत्कर्तारश्च । ३ सर्वतः सङ्गत्यागेन । ४ तीव्रयोगो निरन्तरं यमनियमादिः । ५ अर्थान्तरं—अतो योगादिभिर्दुष्प्राप्यत्वात् मात्रोपदिष्टयोगे भवान्निवरां वर्तता । एष तव निर्बन्धो निष्फलो निश्चितं फलं यत्र तादृश एव । तस्मात् काले कौमारे एव इत्यादि दीपि० ।

तपःप्रभावं गतिं च विशिनष्टि द्वाभ्याम् । गुरुदाराः पितृपत्नी सुरुचिस्तस्या वाक्शरैर्भिन्नेनात एव दूयता हृदयेन वनं यातः सन्नजितमपि यो जिगाय वशीकृतवान् ॥ ४२ ॥ तस्याधिरूढं तेन प्राप्तं पदं यो भुवि क्षत्रबन्धुः क्षत्रियो भवेत्स तमनु वर्षसमूहैरप्यारोढुमिच्छेदपि किम् । तत्संकल्पोऽप्यशक्यो दूरत आरोहणमित्यर्थः । कथंभूतं पदम् । षड्वा पञ्च वा वर्षाणि यस्य सः । अल्पैरेवाहोभिर्वैकुण्ठं प्रसाद्य यत्तस्य पदमवाप तत् ॥ ४३ ॥ उद्दाममुत्कृष्टं यशो यस्य ॥४४॥ धनादेर्निमित्तम् । ध्रौव्यं ध्रुवस्थानप्रापकम् । प्रशस्यं प्रशंसार्हम् । अघमर्षणं पापनाशनम् ॥ ४५ ॥ अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रुत्वा यो वर्तेते तस्य

यः पञ्चवर्षो गुरुदारवाक्शरैर्भिन्नेन यातो हृदयेन दूयता ॥ वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तगुणैः पराजितम् ॥४२॥ यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ॥ षट्पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥ ४३ ॥ ॥ मैत्रेय उवाच ॥ एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया ॥ ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् ॥ ४४ ॥ धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ॥ स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४५ ॥ श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम् ॥ भवेद्भक्तिर्भगवति यया स्यात्क्लेशसंक्षयः ॥ ४६ ॥ महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ॥ यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४७ ॥ प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम् ॥ सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ४८ ॥ पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथ वा ॥ दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥४९॥ श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ॥ नेच्छंस्तत्रात्मनात्मानं संतुष्ट इति सिध्यति ॥ ५० ॥ ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृतम् ॥ कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५१ ॥ इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः ॥ हित्वार्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे ध्रुवचरितं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

भक्तिर्भवेत् ॥ ४६ ॥ तीर्थं महत्त्वावाप्तिस्थानम् । गुणा यत्र भवन्ति ॥ ४७ ॥ समवाये सभायाम् ॥ ४८ ॥ ४९ ॥ नेच्छन्निष्कामस्तत्र श्रवणे आत्मनैवात्मानं प्रति संतुष्टो भवतीति हेतोः सिद्धिं प्राप्नोति ॥ ५० ॥ किंच सत्पथे भगवन्मार्गेऽमृतरूपं ज्ञानं यो दद्यात् ॥ ५१ ॥ ध्रुवस्य चरितं मया तेऽभिहितम् । मातुर्गृहं च हित्वा ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥

---

१ तद्भक्तगुणैस्ते प्रसिद्धा ये भक्तास्तेषां गुणैर्भूतमैत्र्यादिभिः पराजितं वशीकृतम् । २ तदिच्छूना तेजइच्छूनाम् । ३ सत्पथे सता साधूना पथि, सतो भगवतो वा मार्गे । ४ यत्र श्रुते सतीत्यर्थः । ५ ज्ञानं तत्साधनं ध्रुवचरितम् ।

एवं पञ्चभिरध्यायैर्ध्रुवचर्याऽनुवर्णिता ॥ अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ १ ॥ तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये ॥ अङ्गो वेनपिता पुत्रक्रौर्याद्रुत इतीर्यते ॥ २ ॥ प्ररूढो भावो भक्तिर्यस्य ॥ १ ॥ अन्ववाये वंशे ॥ २ ॥ नारदेन प्रचेतसां सत्रे वर्णिताः कथाः प्रष्टुं तन्महिमानमाह—मन्य इति । देवस्य दर्शनं यस्य । हरेः परिचर्याप्रकारः क्रियायोगः पञ्चरात्रे येन प्रोक्तः ॥ ३ ॥ स्वधर्मशीलैः पुरुषैः प्रचेतोभिः ॥ ४ ॥ ५ ॥ ध्रुवस्य वंशे ते जाता इति वक्तुं ध्रुवस्य वंशमनुक्रामति—ध्रुवस्येत्यादिना । पितुः सार्वभौमश्रियं नैच्छदधिराजासनं च ॥ ६ ॥ अनिच्छायां हेतुमाह—स इति चतुर्भिः ॥ ७ ॥ आत्मानं स्वरूपभूतं

॥ सूत उवाच ॥ निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ॥ प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥ ॥ विदुर उवाच ॥ के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत ॥ कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासते ॥ २ ॥ मन्ये महाभागवतं नारदं देवदर्शनम् ॥ येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥ स्वधर्मशीलैः पुरुषैर्भगवान्यज्ञपूरुषः ॥ इज्यमानो भक्तिमता नारदेनेरितैः किल ॥ ४ ॥ यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ॥ मह्यं शुश्रूषवे ब्रह्मन्कार्त्स्न्येनाचष्टुमर्हसि ॥ ५ ॥ ॥ मैत्रेय उवाच ॥ ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ॥ सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥ स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः ॥ ददर्श लोके विततमात्मानं लोकमात्मनि ॥७॥ आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम् ॥ अवबोधरसैकात्म्यमानन्दमनुसंततम् ॥ ८ ॥ अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ॥ स्वरूपमवरुन्धानो नात्मनोऽन्यं तदैक्षत ॥९॥ जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ॥ लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥१०॥ मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ॥ वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥११॥ स्वर्वीथिर्वत्सरस्येष्टा भार्याऽसूत षडात्मजान् ॥ पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥ ॥ ॥

ब्रह्मावरुन्धान आप्नुवन् जानन्नात्मनो नान्यं तदैक्षत । स्वयं तु सर्वस्मादन्यः सन् । कथंभूतं ब्रह्म । निर्वाणं शान्तम् । प्रत्यस्तमितः शान्तो विग्रहो भेदो यस्मिन् । अवबोधरसेनैकात्म्यं यस्य ॥ ८ ॥ कथंभूतः । अव्यवच्छिन्नो यो योगः स एवाग्निस्तेन दग्धः कर्ममल आशयो वासना च यस्य ॥ ९ ॥ जडादीनामिवाकृतिर्यस्य तथाभूतो लक्षितः । अतन्मतिः न तेषामिव मतिर्यस्य सर्वज्ञत्वात् । प्रशान्तान्यर्चींषि ज्वाला यस्यानलस्य तद्वत् स्थितः ॥ १० ॥ यवीयांसमुत्कलात्कनिष्ठम् ॥ ११ ॥ इष्टा प्रिया भार्या ॥ १२ ॥ ॥ ॥ ॥ ॥

१ प्ररूढभावः प्रोद्दीप्तरतिः । २ 'ईडितः' इति पाठः । ३ तत्र प्रचेतसां सत्रे । ४ विततमनुगतम् । ५ आत्मन्यधिष्ठाने । ६ अनुसततं सर्वत्रानुस्यूतम् । ७ बालानामिति तृतीयार्थे षष्ठी । बालैरज्ञैर्लक्षित इत्यर्थः । ८ 'सुमन्त्रिणः' इति पाठः । ९ तदैक्षतेत्युत्तरश्लोकेनान्वयः । १० उत्कलात् कनिष्ठमिति व्याख्यानादुत्कलः सर्वापेक्षया ज्येष्ठस्ततः कनीयान्वत्सरस्ततः कनीयान्कल्प इति बोध्यम् ।

॥ १३ ॥ निशिथो निशीथः ॥ १४ ॥ स सर्वतेजाः चक्षुःसंज्ञः मनुं सुतं पुत्रमवाप । मनोर्महिषी नड्वला विरजान् शुद्धान्पुरुप्रमुखान्द्वादश सुतानसूत
॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अङ्ग हे विदुर । वागेव वज्रं येषाम् ॥ १९ ॥ मथने हेतुः—अराजक इति । आद्यः पुरग्रामादीनां तेनै रचितत्वात् ॥ २० ॥

प्रातर्मध्यन्दिनं सायमिति ह्यासन्प्रभासुताः ॥१३॥ प्रदोषो निशिथो
पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ॥
व्युष्ट इति दोषासुतास्त्रयः ॥ व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे॥१४॥स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह ॥
मनोरसूत महिषी विरजान्नड्वला सुतान् ॥१५॥ पुरुं कुत्सं त्रितं द्युम्नं सत्यवन्तमृतं व्रतम् ॥ अग्निष्टोममतीरात्रं प्रद्युम्नं
शिबिमुल्मुकम् ॥ १६ ॥ उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान् ॥ अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम्
॥ १७ ॥ सुनीथाऽङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् ॥ यद्दौःशील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात् ॥१८॥ यमङ्ग
शेपुः कुपिता वाग्वज्रा मुनयः किल ॥ गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥ अराजके तदा लोके दस्युभिः
पीडिताः प्रजाः ॥ जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥ २० ॥ ॥ विदुर उवाच ॥ तस्य शीलनिधेः साधोर्ब्र-
ह्मण्यस्य महात्मनः ॥ राज्ञः कथमभूद्दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥ किंवांऽहो वेन उद्दिश्य ब्रह्मदण्डमयूयुजन् ॥
दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥ नावध्येयः प्रजापालः प्रजाभिरघवानपि ॥ यदसौ लोकपालानां
बिभर्त्योजः स्वतेजसा ॥ २३ ॥ एतदाख्याहि मे ब्रह्मन्सुनीथात्मजचेष्टितम् ॥ श्रद्दधानाय भक्ताय त्वं परावरवित्तमः
॥ २४ ॥ ॥ मैत्रेय उवाच ॥ अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ॥ नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः
॥ २५ ॥ तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः ॥ हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥ राजन्हवीं-
ष्यदुष्टानि श्रद्धयासादितानि ते ॥ छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥ ॥ ॥

यद्यस्याः प्रजाया हेतोर्विमनाः सन्ययौ ॥ २१ ॥ किंवा अंहः अपराधं वेने उद्दिश्य आलक्ष्य ॥ २२ ॥ यतोऽयमधर्मे इत्याह । नावध्येयोऽवज्ञेयोऽपि न
भवति ॥ २३ ॥ परावरविदां मध्येऽतिश्रेष्ठः ॥ २४ ॥ अभावी पुत्रः काम्यकर्मणा बलादापादितो न सुखाय भवेदिति द्योतयन्नङ्गस्य पुत्रोत्पत्तिक्रममाह—
अङ्ग इत्यादिना ॥ २५ ॥ २६ ॥ अयातयामान्यगतवीर्याणि ॥ २७ ॥ ॥ ॥ ॥ ॥

१ अत्र 'चक्षुःसञ्ज्ञ'मिति द्वितीयान्तपाठो बहुत्र दृश्यते सोऽपपाठः । वक्ष्यते चाष्टमे 'षष्ठश्च चाक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः' इति । २ सुत चाक्षुषनामानम् । ३ तेन पृथुना । ४ प्रातरित्यादि प्रातराद्यभिमानिन्यो देवताः । ५ प्रदोषाद्यभिमानिन्यो देवताः । ६ 'धृतव्रतम्' इति क्वचित्पाठः । ७ तस्य अङ्गस्य । ८ दण्डव्रतधरे शासनरूपव्रतधारके । ९ यत् यस्मात् । १० छन्दांसि मन्त्रादीनि । ११ योजितानि प्रयुक्तानि तथापि न गृह्णन्तीति पूर्वेणैवान्वयः ।

॥ २८ ॥ यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत् प्रायुंक्त ॥ २९ ॥ आहुता आहूताः । ग्रहान्सोमपात्राणि । इह यज्ञे न गृह्णन्ति ॥ ३० ॥ इह जन्मनि न तावन्मनागीपदप्यघं
स्थितम् । कथंचिज्जातस्य अघस्य सद्य एव प्रायश्चित्तैः क्षालनात् । किंतु प्राक्तनमेकमघमस्ति । यद्यस्मादीदृक् गुणाधिकोऽपि त्वं प्रजारहितः ॥३१॥ अतो यथा देवा
॥ २९ ॥ हविर्गृह्णन्ति तथात्मानं सुप्रजं साधय । कथं साधनीयं तदाहुः—इष्ट इति ॥ ३२ ॥ तथा सति स्वभागान् ग्रहीष्यन्ति । यद्यतो हरिः साक्षाद्वृतः स्यात् । अतस्तेन सह
सर्वे देवा आगमिष्यन्तीत्यर्थः ॥३३॥ नन्वतितुच्छान्कामान्हरिः कथं दद्यात्तत्राह—तांस्तानिति ॥३४॥ प्रजातये पुत्रोत्पत्तये । शिपिविष्टाय शिपिषु पशुषु यज्ञरूपेण

न विदामेह देवानां हेलनं वयमण्वपि ॥ यन्न गृह्णन्ति भागान्स्वान्ये देवाः कर्मसाक्षिणः ॥२८॥ ॥ मैत्रेय उवाच ॥
अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ॥ तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥ नागच्छन्त्याहुता देवा
न गृह्णन्ति ग्रहानिह ॥ सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥ ॥ सदसस्पतय ऊचुः ॥ नरदेवेह भवतो
नाघं तावन्मनाक् स्थितम् ॥ अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रजः ॥ ३१ ॥ तथा साधय भद्रं ते आत्मानं सुप्रजं
नृप ॥ इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥ तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ॥ यद्यज्ञपुरुषः
साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥ तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः ॥ आराधितो यथैवैष तथा पुंसां फलोदयः
॥ ३४ ॥ इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये ॥ पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥ तस्मात्पुरुष
उत्तस्थौ हेममाल्यमलाम्बरः ॥ हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥ स विप्रानुमतो राजा गृहीत्वाऽञ्ज-
लिनौदनम् ॥ अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः ॥ ३७ ॥ सा तत्पुंसवनं राज्ञी प्राश्य वै पत्युरादधे ॥
गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा ॥ ३८ ॥ स बाल एव पुरुषो मातामहमनुव्रतः ॥ अधर्मांशोद्भवं मृत्युं तेना-
भवदधार्मिकः ॥ ३९ ॥ स शरासनमुद्यम्य मृगयुर्वनगोचरः ॥ हन्त्यसाधुर्मृगान्दीनान्वेनोऽसावित्यरौज्जनः ॥ ४० ॥
आक्रीडे क्रीडतो बालान्वयस्यानतिदारुणः ॥ प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥ तं विचक्ष्य खलं
पुत्रं शासनैर्विविधैर्नृपः ॥ यदा न शासितुं कल्पो भृशमासीत्सुदुर्मनाः ॥ ४२ ॥ ॥ ॥

प्रविष्टाय । तथा च श्रुतिः 'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति' इति ॥ ३५ ॥ तस्मादिति योग्यतयाऽग्नेः ॥ ३६ ॥ पत्न्यै प्रादात् ॥ ३७ ॥
पुमांसं सूतेऽनेनेति तथा तत्प्राश्य पत्युः सकाशाद्गर्भमादधे । अप्रजा सती ॥ ३८ ॥ मातामहं मृत्युम् । मृत्योर्हि पुत्री सुनीथा ॥ ३९ ॥ मृगयुर्लुब्धकः सन् ॥२९॥
तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौत् चुक्रोश ॥ ४० ॥ आक्रीडे क्रीडास्थाने बालान्पशूनिवामारयत् ॥ ४१ ॥ विचक्ष्य दृष्ट्वा ॥ ४२ ॥ ॥

१ इह अस्मिञ्जन्मनि । २ तत् भागाग्रहणहेतुं हेलनम् । ३ 'प्राश्य तौ' इति पाठः । ४ अप्रजा इति समासान्तविधेरनित्यत्वात्सिद्धम् ।

दुर्मनसस्तस्य कुपुत्रनिन्दावाक्यान्याह—प्रायेणेति त्रिभिः । अप्रजा ये तैरभ्यर्चितः । तत्र हेतुः—कुत्सितैरपत्यैः संभृतं दुर्भरं धारयितुमशक्यं दुःखं ये न विन्दन्ति
॥ ४३ ॥ सर्वेषां सर्वैः सह । आधिर्मानसीव्यथा ॥ ४४ ॥ तं प्रजापदेशं पुत्रनाममात्रमप्यात्मनो मोहेन बन्धनम् । यदर्था यन्निमित्ताः क्लेशदा गृहा भवन्ति
॥ ४५ ॥ इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति—कदपत्यमिति । शुचां पदाच्छोकानां स्थानात् । वरत्वे हेतुः—निर्विद्येतेति । तत्कुतः । यद्यतः
कदपत्यात् । गृहाः क्लेशनिवहा भवन्ति ॥ ४६ ॥ महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्माद्गृहाद्गतः । या वेनं सूते स ताम् ॥ ४७ ॥ प्रजाः पुरोहितादयश्च

प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः ॥ कदपत्यभृतं दुःखं ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥ यतः पापीयसी
कीर्तिरधर्मश्च महान्नृणाम् ॥ यतो विरोधः सर्वेषां यत आधिरनन्तकः ॥ ४४ ॥ कस्तं प्रजापदेशं वै मोहबन्धन-
मात्मनः ॥ पण्डितो बहु मन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥ कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् ॥
निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥ ४६ ॥ एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयो-
दयात् ॥ अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥४७॥ विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरो-
हितामात्यसुहृद्गणादयः ॥ विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥४८॥ अलक्षयन्तः पदवीं
प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ॥ ऋषीन्समेतानभिवन्द्य साश्रवो न्यवेदयन्पौरव भर्तृविप्लवम् ॥ ४९ ॥ ॥
इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥१३॥ ॥छ॥ ॥मैत्रेय उवाच॥ भृग्वादयस्ते मुनयो
लोकानां क्षेमदर्शिनः ॥ गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् ॥ १ ॥ वीरमातरमाहूय सुनीथां ब्रह्मवादिनः ॥
प्रकृत्यसंमतं वेनमभ्यषिञ्चन्पतिं भुवः ॥ २ ॥ श्रुत्वा नृपासनगतं वेनमत्युग्रशासनम् ॥ निलिल्युर्दस्यवः सद्यः सर्प-
त्रस्ता इवाखवः ॥ ३ ॥ स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ॥ अवमेने महाभागांस्तब्धः संभावितः स्वतः ॥४॥
एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः ॥ पर्यटन् रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥ ॥

विचिक्युरन्वेषितवन्तः । तं तत्रैव सन्तमपि नापश्यन्निति दृष्टान्तेनाह—यथेति ॥ ४८ ॥ साश्रवो रुदन्तः । भर्तुर्विप्लवं नाशमदर्शनमित्यर्थः ॥ ४९ ॥ इति श्रीम-
द्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥छ॥ ॥ चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजैः ॥ अभिषिक्तस्य वेनस्य
रोपात्तैर्वध उच्यते ॥ १ ॥ क्षेमदर्शिनः क्षेमचिन्तकाः । पशुसमानरूपतां पश्यन्तः ॥ १ ॥ अमात्यादीनां प्रकृतीनामसंमतम् । पाठान्तरे प्रकृत्या स्वभावेना-
संमतम् ॥ २ ॥ चोराः सर्वे लीना बभूवुः ॥ ३ ॥ आरूढं नृपस्थानं राजासनं येन । अष्टविभूतिभिर्लोकपालैश्वर्यैः ॥ ४ ॥ ५ ॥ ॥ ॥

१ यतः ममतास्पदत्वेन स्नेहविषयात् । २ हे पौरव विदुर । ३ 'सर्वे' इति पाठः । अयमेव श्रीधरसंमत इत्यनुमीयते । ४ 'आत्मसंभावितः' इति पाठः । ५ स्वतः स्वेनैव संभा-
वितः शूरोऽहं पण्डितोऽहमिति कृतात्मकत्थनः । ६ 'प्रकृत्याऽसमतं' इत्येवंरूपे ।

॥ ६ ॥ सत्रिणो मिलिताः सन्तः ॥ ७ ॥ मूलतश्चाग्रतश्च दीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनम्, एवं तस्करेभ्यः पालकाच्च दुःखं प्राप्तमित्यर्थः ॥८॥ तदेवाहुः—अराजकभयादिति । अतदर्हणो राज्यानर्हः ॥ ९ ॥ अस्माकमप्यनिष्टं जातमित्याहुः । अहेर्यथा पयःपोषः क्षीरेण पोषणं

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ॥ इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः ॥ ६ ॥ वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम् ॥ विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥ अहो उभयतः प्राप्तं लोकस्य व्यसनं महत् ॥ दारुण्युभयतो दीप्त इव तस्करपालयोः ॥ ८ ॥ अराजकभयादेष कृतो राजाऽतदर्हणः ॥ ततोऽप्यासीद्भयं त्वद्य कथं स्यात्स्वस्ति देहिनाम् ॥ ९ ॥ अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत् ॥ वेनः प्रकृत्यैव खलः सुनीथागर्भसंभवः ॥ १० ॥ निरूपितः प्रजापालः स जिघांसति वै प्रजाः ॥ तथापि सान्त्वयेमामुं नास्मांस्तत्पातकं स्पृशेत् ॥ ११ ॥ तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ॥ सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ॥ १२ ॥ लोकधिक्कारसंदग्धं दहिष्यामः स्वतेजसा ॥ एवमध्यवसायैनं मुनयो गूढमन्यवः ॥ उपव्रज्याब्रुवन्वेनं सान्त्वयित्वा च सामभिः ॥ १३ ॥ ॥ मुनय ऊचुः ॥ नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः ॥ आयुःश्रीबलकीर्तीनां तव तात विवर्धनम् ॥ १४ ॥ धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः ॥ लोकान्विशोकान्वितरत्यथानन्त्यमसङ्गिनाम् ॥ १५ ॥ स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः ॥ यस्मिन्विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १६ ॥ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः ॥ रक्षन्यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १७ ॥ यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः ॥ इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः ॥ १८ ॥ तस्य राज्ञो महाभाग भगवान्भूतभावनः ॥ परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥ तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ॥ लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २० ॥ ॥ ॥

पोषकस्याप्यनर्थं बिभर्ति पुष्णाति । तदेवाहुः—वेन इति ॥१०॥ निरूपितो नियुक्तोऽस्माभिः । सान्त्वयेमोपपत्तिभिः प्रार्थयिष्यामः । तस्य पातकम् ॥ ११ ॥ स्वस्य तत्पातकस्पर्शे हेतुः—तत्पातकित्वं विद्वद्भिः ॥ १२ ॥ गूढो मन्युर्येषाम् । सामभिः प्रियोक्तिभिः ॥ १३ ॥ १४ ॥ निष्कामानामानन्त्यं मोक्षमपि ॥१५॥ मा विनशेन्मा विनश्यतु ॥ १६ ॥ असाधवो ये अमात्यास्तेभ्यः । यथा यथाशास्त्रम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ ॥

१ मिलिताः सन्त इत्यार्थिकोऽयमर्थः । २ तस्करपालकयोः सम्बन्धि व्यसनमित्यन्वये फलितमिदम् । वनदुर्गादौ पलायने तस्करेभ्यः, राष्ट्रे स्थितौ पालकादित्यर्थः । ३ पुंसा पुंभिरित्यर्थः । ४ 'वर्णाश्रमात्मकैः' इति पाठः ।

सर्वान् लोकांश्च तत्पालानमरांश्च तत्प्रापकान्यज्ञांश्च संगृह्णाति नियच्छतीति तथा तम् । विचित्रैर्द्रव्ययज्ञादिभिः । भवाय समृद्धये । स्वदेशास्तद्वासिनो जनान् । अनुरोद्धुमनुवर्तितुम् ॥ २१ ॥ युष्मद्विषये त्वद्देशे । हरेः कला अंशाः सुराः । तेषां सुराणां हेलनमवज्ञाम् ॥ २२ ॥ बालिशा अज्ञाः । वृत्तिदमन्नादिप्रदं मां हित्वा ॥ २३ ॥ २४ ॥ भर्तृस्नेहो विदूरो येषाम् ॥ २५ ॥ २६ ॥ देहे भवन्ति नृपतेरतो नृपतिरेवेश्वर इतरे तदंशा इति भावः ॥ २७ ॥ बलिं च करा-

तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं द्रव्यमयं तपोमयम् ॥ यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्स्वदेशाननुरोद्धुमर्हसि ॥ २१ ॥ यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः ॥ स्विष्टाः सुतुष्टाः[1] प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २२ ॥ ॥ वेन उवाच ॥ बालिशा बत यूयं वा अधर्मे धर्ममानिनः ॥ ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २३ ॥ अवजानन्त्यमी मूढा नृपरूपिणमीश्वरम् ॥ नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥२४॥ को[2] यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी ॥ भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २५ ॥ विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ॥ पर्जन्यो धनदः सोमः क्षितिरग्निरपांपतिः ॥ २६ ॥ एते चान्ये च विबुधाः प्रभवो वरशापयोः ॥ देहे भवन्ति नृपतेः सर्वदेवमयो नृपः ॥ २७॥ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ॥ बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥२८॥ ॥ मैत्रेय उवाच ॥ इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ॥ अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमङ्गलः ॥२९॥ इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ॥ भग्नायां भव्ययाच्ञायां[3] तस्मै विदुर चुक्रुधुः ॥३०॥ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ॥ जीवञ्जगदसावाशु कुरुते[4] भस्मसाद्ध्रुवम्[5] ॥ ३१ ॥ नायमर्हत्यसद्वृत्तो नरदेववरासनम् ॥ योऽधियज्ञपतिं[6] विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥ को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ॥ प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः[7] ॥ ३३ ॥ इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ॥ निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया ॥ ३४ ॥ ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ॥ सुनीथा पालयामास विद्यायोगेन[8] शोचती ॥ ३५ ॥ ॥

दिकम् । अग्रभुगाराध्यः ॥ २८ ॥ २९ ॥ तेनासत्कृताः । भग्नायां याच्ञायां चुक्रुधुः क्रोधं चक्रुः ॥ ३० ॥ ३१ ॥ ३२ ॥ परिचक्षीत निन्देत । अशुभं वेनं विना । कृतघ्नतामाहुः । यदनुग्रहविषयः सन्नीदृशमैश्वर्यं यः प्राप्तः ॥ ३३ ॥ पूर्वं गूढमन्यव इदानीं रूढमन्यवः प्रकटकोपाः । हुंकृतैर्हुंकारैः ॥ ३४ ॥ स्वाश्रमपदं प्रति ऋषिभिर्गते गमने कृते सति विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ॥ ३५ ॥ ॥ ॥ ॥

१ 'प्रतुष्टाः' इति पाठः । २ 'क यज्ञपुरुषः' इति शुकदेवपाठः । ३ भव्यायां श्रेष्ठाया लोकशुभावहयाच्ञायाम् । ४ कुरुते करिष्यति । ५ ध्रुवमिति सभावनायाम् । ६ अधियज्ञो यज्ञाधिष्ठाता स चासौ पतिः पालकस्तम् । ७ आर्षमिदमत्र भाजनशब्दस्य पुंस्त्वम् । 'भाजनम्' इत्यपि पाठः । ८ युक्त्या औषधिसहिततैलप्रक्षेपादिकयेत्यर्थः ।

पुंवद्धाव आर्षः । सरस्वत्याः सलिले आप्लुताः कृतस्नानाः । विष्णुकथाश्चक्रुः ॥ ३६ ॥ तदा तूत्पातान्वीक्ष्य भुवोऽभद्रं न भवेत्किमित्याहुश्च ॥ ३७ ॥ एवं मृशन्तस्तर्कयन्त ऋषयः स्थिताः । तदा धावतां चोराणां भूरिः पांसुः समुत्थितः ॥ ३८ ॥ तत् तदा तेषां लोकस्य धनं लुम्पतां जिघांसतां चोपद्रवमाज्ञाय ॥ ३९ ॥ तथा चोरप्रायमराजकं हीनसत्त्वं च जनपदमाज्ञाय । शक्ता अप्यवारणे दोषदर्शिनोऽपि जना लुम्पतो लोकान्नावारयन्नित्यन्वयः ॥ ४० ॥ शक्तानां क्षत्रियाणामवारणे दोष इति किं वक्तव्यम् । समदृगपि शान्तोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्यापि ब्रह्म तपः स्रवति ॥ ४१ ॥ अत उपेक्षादोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य महीपतेरूरुं तरसा ममन्थुरित्यन्वयः । संस्थातुं नाशं गन्तुम् । यद्वा ऋषय एव लुम्पतो लोकान्नावारयन् ।

एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः ॥ हुत्वाग्नीन्सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३६ ॥ वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् ॥ अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥ एवं मृशन्त ऋषयो धावतां सर्वतोदिशम् ॥ पांसुः समुत्थितो भूरिश्चोराणामभिलुम्पताम् ॥ ३८ ॥ तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् ॥ भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ३९ ॥ चोरप्रायं जनपदं हीनसत्त्वमराजकम् ॥ लोकान्नावारयन् शक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥ ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ॥ स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा ॥ ४१ ॥ नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ॥ अमोघवीर्या हि नृपा वंशेऽस्मिन्केशवाश्रयाः ॥ ४२ ॥ विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ॥ ममन्थुरूरुं तरसा तत्रासीद्बाहुको नरः ॥ ४३ ॥ काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः ॥ ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४४ ॥ तं तु तेऽवनतं दीनं किं करोमीति वादिनम् ॥ निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ४५ ॥ तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ॥ येनाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुचरिते निषादोत्पत्तिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ९ ॥ ॥ ९ ॥

कथंभूताः । हुंकारेणैव वेनं निवारयितुं शक्ता अपि । तत्किम् । तस्मिन्निवारणे तन्मरणादिदोषदर्शिनः । न चोदासत । चोरोपद्रुते दीनोपेक्षायां तपोहानिप्रसङ्गात् । न चान्यं तन्निवारकं राजानमकुर्वन् । अङ्गवंशोच्छेदस्यानर्हत्वात् । अतो वेनस्यैव देहं ममन्थुरिति योज्यम् । बाहुको वामनः ॥ ४२ ॥ ४३ ॥ तमेवाह । काक इव कृष्णः । महत्यौ हनू कपोलप्रान्तौ यस्य । ह्रस्वौ पादौ यस्य ॥ ४४ ॥ ४५ ॥ गिरिः काननं च गोचर आश्रयो नतु परादिप्रवेशो येषाम् । तत्र हेतुः— येन कारणेन असावहरत्ततस्तस्य वंश्यास्तथाभूताः ॥ ४६ ॥ ॥ इति श्रीमद्भागवते म० चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

१ 'तदोत्पातात्' इति पाठः । अयमेव च स्वामिसमत इति दीपि० । २ तत् तस्मिन्निवारणे तपःक्षयरूपदोषदर्शिनः इति क्रम० । ३ तथाभूताः गिरिकाननगोचरा इत्यर्थः ।

ततः पञ्चदशे विप्रैर्मन्थनाद्वेनबाहुतः ॥ जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ १ ॥ १ ॥ २ ॥ किमूचुरित्यत आह—एष इति चतुर्भिः । लक्ष्म्याः संभूतिः कला ॥३॥ अत्र यः पुमान्स तु महाराजो भविष्यति ॥४॥ सुदती शोभनदन्तवती ; गुणानां भूषणानां च भूषणरूपा । अवरुन्धती भर्तृत्वेन भजन्ती भविष्यति

॥ मैत्रेय उवाच ॥ अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ॥ बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥ तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ॥ ऊचुः परमसंतुष्टा विदित्वा भगवत्कलाम् ॥२॥ ॥ ऋषय ऊचुः ॥ एष विष्णोर्भगवतः कला भुवनपालनी ॥ इयं च लक्ष्म्याः संभूतिः पुरुषस्यानपायिनी[2] ॥ ३ ॥ अत्र[3] तु प्रथमो राज्ञां पुमान्प्रथयिता यशः ॥ पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥ इयं च सुदती देवी गुणभूषणभूषणा ॥ अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥५॥ एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ॥ इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥६॥ ॥ मैत्रेय उवाच ॥ प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः ॥ मुमुचुः सुमनोधाराः[4] सिद्धा नृत्यन्ति स्वःस्त्रियः ॥७॥ शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ॥ तत्र सर्व उपाजग्मुर्देवर्षिपितृणां गणाः ॥८॥ ब्रह्मा जगद्गुरुर्देवैः सहासृत्य सुरेश्वरैः ॥ वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ९ ॥ पादयोररविन्दं च तं वै मेने हरेः कलाम् ॥ यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः ॥१०॥ तस्याभिषेक आरब्धो ब्राह्मणैर्ब्रह्मवादिभिः ॥ आभिषेचनिकान्यस्मै[5] आजह्रुः सर्वतो जनाः ॥११॥ सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ॥ द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥१२॥ सोऽभिषिक्तो महाराजः सुवासाः साध्वलंकृतः ॥ पत्न्याऽर्चिषाऽलंकृतया विरेजेऽग्निरिवापरः ॥ १३ ॥ तस्मै जहार धनदो हैमं वीर वरासनम् ॥ वरुणः सलिलस्रावमातपत्रं शशिप्रभम् ॥ १४ ॥ वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ॥ इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥१५॥ ॥ ॥

॥५॥ अत्र हेतुः—एष इति। लोकस्य रिरक्षया रिरक्षयिषया ॥६॥ स्वःस्त्रियः अप्सरसो नृत्यन्ति स्म ॥७॥८॥ देवैः सहासृत्यागत्य। वैन्यस्य पृथोः। चिह्नं रेखात्मकं चक्रम् ॥९॥ अप्रतिहतं रेखान्तरैरभिन्नं चक्रं यस्य चिह्नं स परमेश्वरस्यांशः ॥१०॥ आभिषेचनिकान्यभिषेकसाधनानि ॥११॥१२॥१३॥ हे वीर । वरासनमुत्तमासनम् । सलिलस्य स्रावो यस्मात् ॥ १४ ॥ द्वे वालव्यजने ॥ १५ ॥ ॥ ॥ ॥

१ अथ निपादलक्षणमलापगमानन्तरम्। २ अनपायिनी अपायो वियोगस्तद्रहिता । ३ अत्र मिथुने यः पुमान्स पुरग्रामादिकल्पकत्वाद्राज्ञा प्रथमः, यतो यशःप्रथयिता अतः पृथुर्नाम पृथुरिति प्रसिद्धः पृथुश्रवा महाराजो भविष्यतीति योजनीयम् । 'अयं तु प्रथमो राज्ञाम्' इति पाठः। स च न स्वामिसमतः। ४ सुमनसां पुष्पाणां धारा इव धारा मुमुचुः। ५ अन्यस्मै इति च्छेदः। ६ अभिन्नमसंमिश्रम्।

ब्रह्ममयं वेदमयं वर्म कवचम् । तत्पत्नी श्रीः । श्रियं संपदम् ॥ १६ ॥ दशचन्द्राकाराणि बिम्बानि कोशे यस्य तम् । असिं खड्गम् । शतचन्द्रं चर्म रूपाश्रयमतिसुन्दरम् ॥ १७ ॥ अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापम् । योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके ॥ १८ ॥ नाट्यादिकौशलं खेचराः । आत्मजं स्वप्रभवम् ॥ १९ ॥ तं स्तोतुमुपस्थिताः ॥२०॥ स्तावकान् स्तोतुमुद्यतान् । अभिप्रेत्य ज्ञात्वा ॥२१॥ लोके स्पष्टगुणस्य सतो मे स्तुतिः स्यात् । अधुना तु किमाश्रयो मे स्तवो योज्यताम् । अतो वो गिरोऽधुना मयि वितथा माभूवन् । यद्वा लोकेऽधुना स्पष्टगुणस्य मे किमाश्रयः स्तवः स्यात् । अत एव क्रियमाणः स्तवोऽमे मद्न्यस्य योज्यतां, नतु मे वितथाभिधानापत्तेरित्यर्थः ॥२२॥ तस्मात् परोक्षे कालान्तरे स्पष्टेषु गुणेषु सत्स्वस्माकमुपश्रुतानि यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ ।

ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् ॥ हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां[3] श्रियम् ॥१६॥ दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका ॥ सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम् ॥ १७ ॥ अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् ॥ भूः पादुके योगमय्यौ द्यौः पुष्पावलिमन्वहम् ॥१८॥ नाट्यं[1] सुगीतं वादित्रमन्तर्धानं च खेचराः ॥ ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम् ॥१९॥ सिन्धवः पर्वता नद्यो रथवीथी[4]र्महात्मनः ॥ सूतोऽथ मागधो बन्दी तं स्तोतुमुपतस्थिरे ॥२०॥ स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान् ॥ मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् ॥ २१ ॥ ॥ पृथुरुवाच ॥ भो सूत हे मागध सौम्य बन्दिँल्लोकेऽधुना स्पष्टगुणस्य मे स्यात् ॥ किमाश्रयोऽमे[2] स्तव एष योज्यतां मा मय्यभूवन्वितथा गिरो वः ॥२२॥ तस्मात्परोक्षेऽसदुपश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः ॥ सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥२३॥ महद्गुणानात्मनि कर्तुमीशः क स्तावकैः स्तावयतेऽसतोपि ॥ तेऽस्या भविष्यन्निति विप्रलब्धो[5] जनावहासं कुमतिर्न वेद ॥ २४ ॥ प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ॥ ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम् ॥ २५ ॥ ॥ ॥

हे अपीच्यवाचो मधुरगिरः । सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह । उत्तमश्लोकस्य गुणानुवादे कार्ये सति जुगुप्सितमर्वाचीनं न स्तावयन्ति ॥२३॥ ननु संभावितैरेव गुणैरात्मानं जनः स्तावयतीति चेत्तत्राह । महतां गुणानात्मनि संपादयितुं शक्तोऽप्यसतो गुणान्संभावनामात्रेण कः स्तावयते । यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव प्रख्यातिसिद्धेः । अन्यस्तु मिथ्यागुणस्तुतिश्लाघी मन्द इत्याह—त इति । यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणा अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धो जनानामवहासं न वेद ॥ २४ ॥ किंच प्रभवोऽपि विश्रुता अपि ह्रीमन्तोऽपि जुगुप्सन्ति । वेति दृष्टान्ते । यथाऽतिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादिपौरुषं निन्दति तथोचितामपि स्तुतिं न सहन्त इत्यर्थः ॥ २५ ॥ ॥ ॥



१ नाट्यादेर्दानस्यासंभवाल्लक्षणया तत्कौशलमिति व्याख्यातम् । २ मूले किमाश्रयोऽमे इत्यत्र अमे इति पदच्छेदः । ३ अव्याहतामविच्छिन्नाम् । ४ रथवीथीः रथाश्वादिमार्गान् । ५ क्रियातिपत्त्या स्तुतिकाले विविधविद्याभ्यासादिक्रियाया अनिष्पत्त्या ।

वरीमभिरिति दीर्घत्वमार्षम् । भवितृप्रधानोऽयं निर्देशः । वरिष्ठैः कर्मभिरविदिता इत्यर्थः ॥ २६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम् ॥ मुनिप्रयुक्ताः सूताद्याः स्तुवन्ति स्मेति वर्ण्यते ॥ १ ॥ गायकाः सूतादयः ॥ १ ॥ नालं न समर्थाः । यो भवान् । अवतारेष्वप्यस्याधिक्यमाहुः । वेनस्याङ्गाज्जातस्य ते पौरुषाणि प्रत्यचितर्क्यतया ब्रह्मादीनामपि धियो बभ्रमुः । कुतः पुनर्वयं तद्वर्णने समर्था भवेम ॥ २ ॥ अथापि यथावद्वर्णयितुमशक्ता अपि कथामृते सादराः । मुनिभिः कृत उपदेशो योगबलेन हृदि प्रकाशनं तदनतिक्रम्य । वितन्महि विस्तारयामः ॥ ३ ॥ ४ ॥ तनौ स्वदेहे लोकपालानां तनूर्मूर्तीः काले काले बिभर्ति । यथाभागं पालन-

वयं त्वविदिता लोके सूताद्यापि वरीमभिः ॥ कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥२६॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुचरिते पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ मैत्रेय उवाच ॥ इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ॥ तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥ १ ॥ नालं वयं ते महिमानुवर्णने यो देववर्योऽवततार मायया ॥ वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥ २ ॥ अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ॥ यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि ॥ ३ ॥ एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ॥ गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥ ४ ॥ एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ॥ काले काले यथाभागं लोकयोरुभयोर्हितम् ॥ ५ ॥ वसु काल उपादत्ते काले चायं विमुञ्चति ॥ समः सर्वेषु भूतेषु प्रतपन्सूर्यवद्विभुः ॥ ६ ॥ तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ॥ भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥ ७ ॥ देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ॥ कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥ ८ ॥ आप्याययत्यसौ लोकं वदनामृतमूर्तिना ॥ सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥ ॥

पोषणानुरञ्जनादिकार्यानुसारेण यज्ञादिप्रवर्तनेन स्वर्गस्य हितं वृष्ट्यादिना च भूर्लोकस्य हितं यथा भवति तथा ॥ ५ ॥ सूर्यादितनुधारणमेवाहाष्टभिः । वसु धनं करादानकाले आदत्ते, दुर्भिक्षादिकाले विमुञ्चति च । अष्टौ मासान्सूर्यो यथा वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत् ॥ ६ ॥ मस्तके पादेनाक्रमतामप्यार्तानां भूतानामतिक्रमं सहिष्यते, क्षितेर्वृत्तिः सर्वसहनं सा वृत्तिर्यस्यास्ति स तथा ॥ ७ ॥ देवेऽवर्षति एष कृच्छ्रं गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति । अत्र हेतुः—असौ नरदेववपुर्हरिरिति ॥ ८ ॥ वदनमेवामृतमूर्तिश्चन्द्रस्तेन । सानुरागोऽवलोको यस्मिन् । विशदं यत्स्मितं तेन चारुणा । अत्र च क्वचिद्वर्तमाननिर्देशो 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भूतनिर्देशश्च 'आशंसायां भूतवच्च' इति द्रष्टव्यः ॥ ९ ॥ ॥ ॥

१ भवति पूर्वं तिष्ठति पश्चाद्विकृतिं गच्छतीति भविता प्रकृतिस्तत्प्रधानोऽयं वरिमशब्दः । अन्यथा वरत्वकर्मणोः सामानाधिकरण्यासंभवात् इति दीपि० । २ मुनिप्रयुक्ता मुनिभिर्विनियुक्ताः ।

न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य । निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य । तच्च कार्यं गम्भीरं किमर्थमेतत्कृतमित्यन्यैरज्ञाताभिप्रायं विधत्त इति तथा । उपगुप्तं सुरक्षितं वित्तं यस्य । अनन्तमाहात्म्यश्चासौ गुणानामेकं धाम विष्णुर्यस्मिन् । अनन्तमाहात्म्योपेता गुणा एवैकं धाम स्थानं यस्येति वा । संवृतात्मा संयतमूर्तिः । समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥ दुरासदः शत्रोर्मनसापि प्राप्तुमशक्यः । दुर्विषहः शत्रुभिः सोढुमशक्यः । विदूरवत्पौरुषेणाभिभवितुमशक्यः । वेन एवारणिस्तस्मादुत्थितः ॥ ११ ॥ चारणैर्गुप्तभृत्यैः पश्यन्नपि स्वस्तुतिनिन्दादावुदासीन इव वर्तिष्यते यथा देहिनामध्यक्षोऽविकृत आत्मभूतो वायुः सूत्रात्मा तद्वत् ॥ १२ ॥ आत्मद्विषां सुतमिति सुतग्रहणं स्वात्मजसाम्यार्थम् । धर्मपथे यमस्य वृत्ते स्थितः ॥ १३ ॥ चक्रमाज्ञा सेना वा

अव्यक्तवर्त्मैष निगूढकार्यो गम्भीरवेधा उपगुप्तवित्तः ॥ अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥१०॥ दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ॥ नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥११॥ अन्तर्बहिश्च भूतानां पश्यन्कर्माणि चारणैः ॥ उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥ नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ॥ दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥ अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ॥ वर्तते भगवानर्को यावत्तपति गोगणैः ॥ १४ ॥ रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ॥ अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥१५॥ दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः ॥ शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥ मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ॥ प्रजासु पितृवत्स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥१७॥ देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः ॥ मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥१८॥ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयावतीर्णः ॥ यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतम् ॥१९॥ अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ॥ आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः ॥ २० ॥ ॥ ॥

रथस्य वा चक्रं मानसाचलमभिव्याप्य प्रवर्तते । किंपर्यन्तमित्यत आह । अर्को रश्मिगणैर्यावत्तपति तावत् ॥ १४ ॥ यद्यस्माद्रञ्जयिष्यत्यथ तस्मान्मनोरञ्जनैर्हेतुभिरमुं राजानमाहुः । मनोरञ्जनकैरिति चेष्टितविशेषणं वा ॥ १५ ॥ १६ ॥ मातरीव भक्तिर्भजनं यस्य । आत्मनो देहस्यार्ध इव पत्न्यां प्रीतिमान् ॥ १७ ॥ नन्दिं सुखं वर्धयतीति तथा । मुक्तसङ्गेषु प्रकृष्टः सङ्गो यस्य । दण्डपाणिरित्येत्यपराधानुपेक्षणमुच्यते । नादण्ड्यमित्यत्र पक्षपाताभाव उक्तः ॥ १८ ॥ अयं त्विति तुशब्देन निरुपमत्वं दर्शयति । कोऽसावात्मा तमाह । यस्मिन्प्रतीतमपि नानात्वमर्थशून्यं पश्यन्ति ॥ १९ ॥ आ उदयाद्रेरस्तपर्यन्तं गोप्ता गोपायिष्यति तदर्थं पर्यस्यते पर्यटिष्यति । प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २० ॥ ॥ ॥ ॥ 

१ अष्टादशश्लोकोत्तर 'एष दोग्धा महीं वीरो गां सतीमोजसौषधीः । समां करिष्यते चेमां धनुष्कोट्या समन्ततः ॥ १९ ॥' इति पद्यं क्वचिदधिकं दृश्यते वीरराघवादिभिर्व्याख्यातं च ।
२ अविद्याकल्पितत्वेनातितुच्छत्वादिति भावः ।

अस्मै तथा प्रदक्षिणं कुर्वते । मंस्यन्ते ज्ञास्यन्ति । तस्य यश उद्धरन्त्य उदाहरन्त्यः कीर्तयन्त्यः ॥ २१ ॥ इन्द्र इवाद्रीन्विभिन्दन् ॥ २२ ॥ लाङ्गूलमुन्नमय्य यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन्यदा क्ष्मामचरत् ॥ २३ ॥ सरस्वती यत्र प्रादुरभावि प्रादुरभूत् । कर्मकर्तरि चिण् । तत्राहार्षीत् । हरणं करिष्यतीत्यर्थः ॥ २४ ॥ २५ ॥ विश्रुता विक्रमा यस्य । गाथाः प्रबन्धान् । आत्माश्रिता विष्ण्वाश्रिताः ॥ २६ ॥ उपगीयमानो महानुभावो यस्य ॥ २७ ॥ ॥

अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः ॥ मंस्यंत एषां स्त्रिय[1] आदिराजं चक्रायुधं तद्यश उद्ध[2]रन्त्यः ॥ २१ ॥ अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ॥ यो लीलयाऽद्रीन्स्वशरासकोट्या भिन्दन्समां गामकरोद्यथेन्द्रः ॥ २२ ॥ विस्फूर्जयन्नाजगवं धनुः स्वयं यदाऽचरत्क्ष्मामविषह्यमाजौ ॥ तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २३ ॥ एषोऽश्वमेधान् शतमाजहार सरस्वती प्रादुरभावि यत्र ॥ अहारषीद्यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने ॥ २४ ॥ एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम् ॥ आराध्य भक्त्यालभतामलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति ॥ २५ ॥ तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः ॥ श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २६ ॥ दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ॥ सुरासुरेन्द्रैरुपगीयमानमहानुभावो भविता पतिर्भुवः ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥ एवं स भगवान्वैन्यः ख्यापितो गुणकर्मभिः ॥ छन्दयामास तान्कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः ॥ पौराञ्जानपदान् श्रेणीः प्रकृतीः स[3]मपूजयत् ॥ २ ॥ ॥ विदुर उवाच ॥ कस्माद्दधार गोरूपं धरित्री बहुरूपिणी ॥ यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥ प्रकृत्या विषमा देवी कृता तेन समा कथम् ॥ तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥ सनत्कुमाराद्भगवतो ब्रह्मन्ब्रह्मविदुत्तमात् ॥ लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥ ॥ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ ततः सप्तदशे लोकक्षुधाः प्रशमयन्पृथुः ॥ ग्रस्तबीजां महीं हन्तुं यत्तो भीत्या तया स्तुतः ॥ १ ॥ छन्दयामास तोषितवान् ॥ १ ॥ भृत्यानमात्यान् पुरोधसः पुरोहितांश्च । श्रेणीस्तैलिकताम्बूलिकादीन्पौरविशेषान् । प्रकृतीर्नियोगिनः ॥ २ ॥ दोहनं पात्रम् ॥ ३ ॥ मेध्यं यज्ञार्हम् ॥ ४ ॥ सविज्ञानमपरोक्षज्ञानसहितम् ॥ ५ ॥ ॥ ॥

१ स्त्रियः स्त्रियोऽपीत्यर्थः । २ 'उध्दरन्त्यः' इति पाठः । ३ समपूजयत् धन्याः स्थ युष्मानहं साधु पालयानीत्येतदेव मत्कर्तृक युष्मत्परिचरणं भूयादिति मधुरमभाषत । इति चक्र० ।

पूर्वदेहः पृथ्ववतारस्तत्कथाश्रयम् । श्रवो यशः । सुष्ठु श्रवो यस्य ॥ ६ ॥ अदुह्यद्दुग्धवान् ॥ ७ ॥ ८ ॥ जनतायास्त्वं पाल इत्यामन्त्रितो नियुक्तः । तदा निरन्ने क्षितितले सति । क्षुधाक्षामाः क्षीणा देहा यासां ताः प्रजा एत्य पतिं पृथुमब्रुवन् ॥ ९ ॥ जाठरेणाग्निनाभितप्ताः । यः साधितो विप्रैर्मन्थनेन संपादितस्तं त्वां शरणं याताः ॥ १० ॥ तत्तस्मान्नोऽस्माकमन्नं रातवे रातुं दातुमीहतु ईहतां यत्नं करोतु । उज्झितोर्जास्त्यक्तान्नाः सत्यः । वार्तायां जीवि-

यच्चान्यदपि कृष्णस्य भवान्भगवतः प्रभोः ॥ श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥ भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च ॥ वक्तुमर्हसि योऽदुह्यद्वैन्यरूपेण गामिमाम् ॥ ७ ॥ ॥ सूत उवाच ॥ चोदितो विदुरेणैवं वासुदेवकथां प्रति ॥ प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥ ॥ मैत्रेय उवाच ॥ यदाऽभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः ॥ प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥ वयं राजन् जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षाः ॥ त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः ॥ १० ॥ तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेवदेव ॥ यावन्न नङ्क्ष्यामह उज्झितोर्जा वार्तापतिस्त्वं किल लोकपालः ॥ ११ ॥ ॥ मैत्रेय उवाच ॥ पृथुः प्रजानां करुणं निशम्य परिदेवितम् ॥ दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥ १२ ॥ इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ॥ संदधे विशिखं भूमेः क्रुद्धस्त्रिपुरहा यथा ॥ १३ ॥ प्रवेपमाना धरणी निशाम्योदायुधं च तम् ॥ गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता ॥ १४ ॥ तामन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः ॥ शरं धनुषि सन्धाय यत्र यत्र पलायते ॥ १५ ॥ सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ॥ धावन्ती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥ लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः ॥ त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥ उवाच च महाभागं धर्मज्ञापन्नवत्सल ॥ त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥ स त्वं जिघांससे कस्मादीनामकृतकिल्बिषाम् ॥ अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः ॥ १९ ॥ ॥

कायाः पतिः ॥ ११ ॥ परिदेवितं विलापम् । निमित्तं हेतुमन्वपद्यत ज्ञातवान् ॥ १२ ॥ पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितो निश्चितवान्सन् ॥ १३ ॥ मृगयुना द्रुताऽनुगता मृगीव ॥ १४ ॥ १५ ॥ रोदसी द्यावापृथिव्यौ तयोरन्तरमन्तरिक्षं च । अनु पृष्ठतः उद्यतमायुधं येन ॥ १६ ॥ १७ ॥ १८ ॥ यो धर्मज्ञ इति मतः स भवान् योषां मां कथमहनिष्यद्धनिष्यति ॥ १९ ॥ ॥ ॥ ॥



१ भूमेः भूमिं प्रति । द्वितीयार्थे षष्ठी । २ 'तामेवान्वद्रवत्' इति पाठः । ३ तदिति तत्र तत्रेत्यर्थः । ४ निमित्तं वक्ष्यमाणानुसारेण पृथिव्या ग्रस्तबीजत्वम् ।

॥२०॥ अजरां दृढाम् । धास्यसि धारयिष्यसि ॥२१॥ बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृङ्क्ते भजते । वसु धान्यादिकम् ॥२२॥ गोरूपेण तु यवसं तृणं जग्धि अत्तीत्यर्थः । पयस्तु नैव दोग्धि दुग्धं न स्रवति । अत्रास्मिन्नपराधे ॥२३॥ आत्मनि देहे रुद्धानि ॥२४॥ मद्वधे सर्वथा अन्नं न स्यादिति चेदत आह । अमूषां प्रजानाम् । मेदसा मांसेन ॥२५॥ यदुक्तं योषां कथं हनिष्यतीति तत्राह—पुमानिति । तस्य वधोऽवध एव ॥२६॥ यच्चोक्तं कथमम्भसि धास्यसीति तत्राह—त्वामिति । तिलशस्तिलप्रमाणानि खण्डानि इत्येवंभूतामवस्थां नीत्वा ॥२७॥ मन्युमयीं मूर्तिं बिभ्रतः कृतान्ततुल्यत्वमुच्यते, नतु कृतान्तस्य मन्युमयी मूर्तिरिति

प्रहरन्ति न वै स्त्रीषु कृतागस्स्वपि जन्तवः[1] ॥ किमुत त्वद्विधा राजन्करुणा दीनवत्सलाः ॥ २० ॥ मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम् ॥ आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि ॥ २१ ॥ ॥ पृथुरुवाच ॥ वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ॥ भागं बर्हिषि या वृङ्क्ते न तनोति[2] च नो वसु ॥ २२ ॥ यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः ॥ तस्यामेवं हि दुष्टायां दण्डो[3] नात्र न शस्यते ॥२३॥ त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयंभुवा ॥ न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २४ ॥ अमूषां क्षुत्परीतानामार्तानां परिदेवितम् ॥ शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥ पुमान्योषिदुत क्लीब आत्मसंभावनो[4]ऽधमः ॥ भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः ॥ २६ ॥ त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ॥ आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २७ ॥ एवं मन्युमयीं मूर्तिं कृतान्तमिव बिभ्रतम् ॥ प्रणता प्राञ्जलिः प्राह मही संजातवेपथुः ॥ २८ ॥ ॥ पृथिव्युवाच ॥ नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ॥ नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥ येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः ॥ स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥ य एतदादावसृजच्चराचरं स्वमाययात्माश्रययाऽवितर्क्यया ॥ तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥ ३१ ॥ ॥ ॥

॥ २८ ॥ शुद्धसत्त्वतनुं देवमकस्मादतिदारुणम् ॥ वीक्षमाणा पृथुं पृथ्वी तुष्टाव करुणोक्तिभिः ॥ १ ॥ मायया विन्यस्ता रचिता नाना घोरादितनवो येन । गुणात्मने गुणमयत्वेन प्रतीयमानाय । वस्तुतस्तु निर्धुता निरस्ता द्रव्यक्रियाकारकेष्वधिभूताध्यात्माधिदैवेषु विभ्रमोऽहंकारस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिंस्तस्मै ॥ २९ ॥ अहो सर्वजीवाश्रयत्वेन सृष्टां मां कथं हन्तुं प्रवर्तत इत्याह । येन विधात्रात्मनां जीवानामायतनमहं निर्मिता । यतो यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य संग्रहो धारणम् । स्वराट् स्वतन्त्रः ॥३०॥ सृष्टिसंहारकारकोऽहमेवेति चेत्तथापि प्रजापालने प्रवृत्तस्य मद्वधोऽनुचित एवेत्याह—य एतदिति । आत्माश्रयया जीवविषयिण्या ३१

१ जन्तवः साधारणजन्तुतुल्या मूढा अपि मनुष्या इत्यर्थः । २ 'तनोपि' इति पाठः क्वचित् । त्वामित्यध्याहारः । ३ अत्र दण्डो न शस्यत इति न किंतु शस्यत एवेत्यर्थः । 'दण्डो नात्रैव दोषभाक्' इति पाठः । ४ आत्मसभावनो मिथ्याहंकारमत्त इति चक्रवर्ती ।

अतो दुर्ज्ञेयमीश्वरचेष्टितमित्याह—नूनमिति। अकृतात्मभिर्विक्षिप्तचित्तैः। य ईश्वरः स्वतन्त्रः। अकरोद्ब्रह्माणम्। परत इति तेन ब्रह्मणा चराचरमकारयत्। यश्च स्वत एकः परतो मायया‌ऽनेकः ॥ ३२ ॥ तस्मादचिन्त्यशक्तये केवलं नम इत्याह। सर्गादिजन्मस्थितिभङ्गमस्य जगतोऽनुरुणद्ध्यनुवर्तते करोति। द्रव्याणि महाभूतानि। क्रिया इन्द्रियाणि। कारकाः देवाः। चेतना बुद्धिः। आत्माऽहंकारः। तैः स्वशक्तिरूपैः समुन्नद्धाः समुत्कटा निरुद्धाः शक्तयो यस्य ॥ ३३ ॥ प्राणिनां धारणार्थं मां रसातलादुद्धृत्येदानीं प्रजारक्षणे प्रवृत्तस्य मद्वधो न युक्त इति सकरुणमाह द्वाभ्याम्। हे अज, यः सृष्टवान्स एव भवान्स्वनिर्मितं चराचरं जगत्सम्यक् स्थापयितुमादिसूकरः सन् मामभ्युजहार ॥३४॥ स एव धराधरो वराहोऽद्य अपामुपस्थे उपरि मयि नावि आधारभूतायामवस्थिताः प्रजा रक्षितुमिच्छुर्वीरमूर्तिः पृथुरूपः समभूत्। एवंभूतो यः स त्वं पयसि निमित्ते मां जिघांससीति चित्रमित्यर्थः ॥ ३५ ॥ तस्मादीश्वरचेष्टितं दुर्ज्ञेयमिति कैमुत्य-

नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जयया‌ऽकृतात्मभिः ॥ न लक्ष्यते यस्त्वकरोदकारयद्योऽनेक एकः परतश्च ईश्वरः ॥ ३२ ॥ सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः ॥ तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥ ३३ ॥ स वै भवानात्मविनिर्मितं जगद्भूतेन्द्रियान्तःकरणात्मकं विभो ॥ संस्थापयिष्यन्नज मां रसातलादभ्युज्जहाराम्भस आदिसूकरः ॥ ३४ ॥ अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ॥ स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि ॥ ३५ ॥ नूनं जनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ॥ न ज्ञायते मोहितचित्तवर्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुविजये धरित्रीनिग्रहो नाम सप्तदशोऽध्यायः ॥१७॥ ॥छ॥ ॥मैत्रेय उवाच॥ इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ॥ पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥ संनियच्छाभिभो मन्युं निबोध श्रावितं च मे ॥ सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥ ॥ ॥

न्यायेनोपसंहरति—नूनमिति। तस्येश्वरस्य गुणसर्गरूपया मायया मोहितं चित्तमेव वर्त्म येषाम्। मोहितानि चित्तवर्त्मानि येषामिति वा तैर्जनैरीश्वराणां हरिभक्तानामेव तावदीहितं न ज्ञायते, किं पुनस्तस्य परमेश्वरस्य। अत एव परमेश्वरवत्तेभ्योऽपि नम एव केवलम्। वीराणां जितेन्द्रियाणां यशः कुर्वन्ति ये तेभ्यः यथा वीराणां यशो वर्धेत तथा चेष्टितां नतु यथेष्टमिति भावः ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः ॥ पृथ्व्यादिभिस्तु सा दुग्धा स्वं स्वं दुग्धमितीर्यते ॥ १ ॥ १ ॥ हे अभिभो प्रभो, यद्वा भो देव, अभि अभयं यथा भवत्येवं मन्युं संनियच्छ। श्रावितं विज्ञापितम्। न मद्वाक्येऽनादरः कर्तव्य इत्याह। बुधो हि सर्वतः सारमादत्ते ॥२॥ ॥३५॥

१ परतः जगतः परस्मिन्। २ कारकाः प्रकृतिप्रवर्तकाः। ३ निरुद्धाः स्वाधीनाः शक्तयः सृष्ट्यादिविषयाः। ४ उपरि उपरिस्थायाम्। ५ पयसि निमित्ते पयउपलक्षितेऽन्नादौ। ६ अम्भस ऽपरीति शेषः। ७ आत्मानं मनः आत्मना बुद्ध्या संस्तभ्य निर्भयं कृत्वा। ८ भवांस्तथा चेष्टताम्। प्रार्थनायां लोट्। ९ 'पृथ्व्यादिभिस्तु क्रमशः सा च दुग्धा त्वितीर्यते' इति पाठः।

मयि जीर्णाश्चौषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिध्यति नान्यथेत्याह—अस्मिन्निति त्रिभिः । पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्ध्येऽस्मिन् लोके कृष्यादयोऽमुष्मिंश्च लोकेऽग्निहोत्रादयो योगा उपाया दृष्टाः प्रयुक्ता अनुष्ठिताश्च ॥ ३ ॥ पूर्वैर्दर्शितान् । अवरोऽर्वाचीनः ॥ ४ ॥ अविद्वान्विद्वानपीति वा । व्यभिचरन्ति न सिध्यन्ति ॥५॥ सहेतुकमुपायनमाह—पुरेति पङ्क्तिः ॥६॥ भवद्भिरिति राजसामान्याभिप्रायेण, वेनादिभिरिति वा । अपालिता चोराद्यनिवारणात् । अनादृता च यज्ञादिप्रवर्तनाभावात् । यज्ञार्थे अग्रसं गिलितवती । अन्यथाऽधृतव्रतैर्भुक्ता न प्रसोष्यन्ते ततश्च यज्ञादयो न सिध्येरन्निति भावः ॥ ७ ॥ क्षीणा जीर्णाः ॥ ८ ॥

अस्मिँल्लोकेऽथवामुष्मिन्मुनिभिस्तत्त्वदर्शिभिः ॥ दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥३॥ तानातिष्ठति यः सम्यगुपायान्पूर्वदर्शितान् ॥ अवरः श्रद्धयोपेत उपेयान्विन्दतेऽञ्जसा ॥४॥ ताननादृत्य योऽविद्वानर्थानारभते स्वयम् ॥ तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनः ॥ ५ ॥ पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशांपते ॥ भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥ ६ ॥ अपालिताऽनादृता च भवद्भिर्लोकपालकैः ॥ चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः ॥ ७ ॥ नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ॥ तत्र योगेन दृष्टेन भवानादातुमर्हति ॥ ८ ॥ वत्सं कल्पय मे वीर येनाहं वत्सला तव ॥ धोक्ष्ये क्षीरमयान्कामाननुरूपं च दोहनम् ॥ ९ ॥ दोग्धारं च महाबाहो भूतानां भूतभावन ॥ अन्नमीप्सितमूर्जस्वद्भगवान्वाञ्छते यदि ॥ १० ॥ समां च कुरु मां राजन् देववृष्टं यथा पयः ॥ अपर्तावपि भद्रं ते उपावर्तेत मे विभो ॥ ११ ॥ इति प्रियं हितं वाक्यं भुव आदाय भूपतिः ॥ वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः ॥ १२ ॥ तथा परे च सर्वत्र सारमाददते बुधाः ॥ ततोऽन्ये च यथाकामं[3] दुदुहुः पृथुभाविताम् ॥ १३ ॥ ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम ॥ वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥ कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ॥ हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥ दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ॥ विधायादूदुहन्क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥ ॥ ॥ ॥ ॥

दोहनं दोहपात्रम् । दोग्धारं चोपकल्पय । धोक्ष्ये प्रपूरयिष्यामि ॥९॥ भूतानामभीप्सितमन्नम् । ऊर्जस्वद्बलप्रदम् ॥१०॥ अपगतेऽपि वर्षर्तौ देववृष्टमुदकं यथा मे मयि सर्वतो वर्तेत ॥११॥ मनुं स्वायंभुवम् । ओषधीर्व्रीह्यादीः ॥१२॥ प्रसङ्गादर्थान्तरमाह—तथेति । यथा पृथुरेवं सर्वत्र वाक्ये परेऽपि सारमाददते । प्रस्तुतमनुवर्तयति । ततोऽन्ये च ऋष्यादयः पञ्चदश दुदुहुः । पृथुना भावितां वशीकृताम् ॥१३॥ देवीं पृथ्वीम् । वाङ्मनःश्रवणैर्वेदग्रहणादिन्द्रियाणां पात्रत्वम् ॥१४॥ सोमममृतम् । वीर्यं मनःशक्तिम्, ओज इन्द्रियशक्तिम्, बलं देहशक्तिं च तदेव पयः ॥ १५ ॥ सुरामासवं च तालादिमद्यम् ॥ १६ ॥ ॥ ॥

१ उपेयान्साध्यवस्तूनि । 'उपायान्' इति पाठे उपायसाध्यानि फलानीत्यर्थः । २ अधृतव्रतैः लोकपालनयज्ञानुष्ठानव्रतरहितैः । ३ यथाकामं स्वस्वकामानुरूपम् । ४ सुरा 'गौडी पैष्टी च माध्वी च' इति त्रिविधामपि । चक्रवर्ती तु सुरैवासवो मादकः पदार्थस्तामिति व्याचख्यौ ।

मधु वाङ्माधुर्यं सौभगं सौन्दर्यं तत्सहितम् ॥ १७ ॥ कव्यं पितॄणामन्नम् । आमपात्रे अपक्के मृण्मये । अधुक्षत दुदुहुः ॥ १८ ॥ संकल्पनामयीमणिमादिसिद्धिम् । ये विद्याधरादयस्ते च तमेव वत्सं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां दुदुहुः ॥ १९ ॥ अन्ये च किंपुरुषादयोऽन्तर्धानेनाद्भुतात्मनां संबन्धिनीं मायाम् । धारणामयीं संकल्पमात्रप्रभवाम् ॥ २० ॥ भूतेशो रुद्रः स एव वत्सो येषाम् । क्षतजं रुधिरं तदेवासवम् ॥ २१ ॥ अहयो निष्फणाः । दन्दशूका वृश्चिकादयः । सर्पाः सफणास्त एव कद्रुसन्ततिजा नागाः । बिलपात्रे मुखे ॥ २२ ॥ यवसं तृणम् । गोवृषं रुद्रवाहं वृषभम् । मृगेन्द्रेणेत्युत्तरेण

गन्धर्वाप्सरसोऽधुक्षन्पात्रे पद्ममये पयः ॥ वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम् ॥१७॥ वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत ॥ आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः ॥ १८ ॥ प्रकल्प्य वत्सं कपिलं सिद्धाः संकल्पनामयीम् ॥ सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥ अन्ये च मायिनो मायामन्तर्धानाद्भुतात्मनाम् ॥ मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥ यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ॥ भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥२१॥ तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् ॥ विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥२२॥ पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ॥ अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥२३॥ क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे ॥ सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥ वटवत्सा वनस्पतयः पृथग्रसमयं पयः ॥ गिरयो हिमवद्वत्सा नानाधातून्स्वसानुषु ॥ २५ ॥ सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः ॥ सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥ एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः ॥ दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥ ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ॥ दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥ २८ ॥ चूर्णयन्स्वधनुष्कोट्या गिरिकूटानि राजराट् ॥ भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥ अथास्मिन्भगवान्वैन्यः प्रजानां वृत्तिदः पिता ॥ निवासान्कल्पयांचक्रे तत्र तत्र यथार्हतः ॥ ३० ॥ ॥

अन्वयः ॥ २३ ॥ क्रव्यं मांसम् । चरं कीटादि अचरं फलादि ॥ २४ ॥ २५ ॥ अनुक्तसर्वसंग्रहार्थमाह—सर्वे इति । सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन ॥ २६ ॥ उपसंहरति—एवमिति । स्वन्नमभीष्टमन्नम् । तमेव क्षीरभेदं दुदुहुः । दोहः पात्रम् ॥ २७ ॥ इमां पृथ्वीम् ॥ २८ ॥ धनुषोऽग्रेण गिरिशृङ्गाणि चूर्णयन् । राजराट् राज्ञां राजा । सर्वेषामाजीविकादानात् ॥ २९ ॥ ३० ॥ ॥ ॥ ॥ ॥

१ गान्धर्वं गानम् । सौभाग्यलक्षणं च मधु । मधुसौभगमित्यत्रार्षो आगमः । २ अत्रापि पूर्वोक्तं नभ एव पात्रं बोध्यम् । ३ पश्वादयस्तत्तद्देवताः । ४ स्वे कलेवरे स्वस्वभक्ष्यकलेवरे इत्यर्थः । ५ अत्रोत्तरत्र च स्वकलेवरमेव पात्रं बोध्यम् । ६ 'पृथ्वीं मन्वाना' इति पाठः ।

ग्रामा हट्टादिशून्याः । पुरो हट्टादिमत्यः । ता एव महत्यः पत्तनानि । दुर्गाणि विविधानि । यथाह बृहस्पतिः—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा' इति । घोषान् आभीराणां निवासान् । व्रजान् गवां निवासान् । शिबिरं सेनानिवासस्थानं तत्सहितानाकरान्स्वर्णादिस्थानानि । खेटाः कर्षकग्रामाः खर्वटाः पर्वतप्रान्तग्रामास्तांश्च ॥ ३१ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥
ऊनविंशेऽश्वमेधाङ्गहयापहरणात्पृथोः ॥ इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ १ ॥ हयमेधशतेन निमित्तेनादीक्षत दीक्षितोऽभूत् शताश्वमेधसंकल्पमकरोदित्यर्थः । ब्रह्मावर्ते—'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते' ॥ १ ॥ आत्मनः स्वस्य कर्मातिशेत इत्यतिशयमभिप्रेत्य

ग्रामान्पुरः पत्तनानि दुर्गाणि विविधानि च ॥ घोषान्व्रजान्सशिबिरानाकरान् खेटखर्वटान् ॥ ३१ ॥ प्राक्पृथोरिह नैवैषा
पुरग्रामादिकल्पना ॥ यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः ॥३२॥ ॥ इति श्रीमद्भा० म० च० पृथुविजयेऽष्टा-
दशोऽध्यायः ॥१८॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ अथादीक्षत राजा तु हयमेधशतेन सः ॥ ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची
सरस्वती ॥ १ ॥ तदभिप्रेत्य भगवान्कर्मातिशयमात्मनः ॥ शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥ यत्र यज्ञपतिः
साक्षाद्भगवान्हरिरीश्वरः ॥ अन्वभूयत[1] सर्वात्मा सर्वलोकगुरुः प्रभुः ॥३॥ अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ॥
उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥४॥ सिद्धविद्याधरा दैत्या दानवा गुह्यकादयः ॥ सुनन्दनन्दप्रमुखाः पार्षद-
प्रवरा हरेः ॥५॥ कपिलो नारदो दत्तो योगेशाः सनकादयः ॥ तमन्वीयुर्[2]भागवता ये च तत्सेवनोत्सुकाः ॥६॥ यत्र धर्मदुघा[3]
भूमिः सर्वकामदुघा सती ॥ दोग्धि स्माभीप्सितानर्थान्यजमानस्य भारत ॥ ७ ॥ ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोर-
सान् ॥ तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः ॥ ८ ॥ सिन्धवो रत्ननिकरान्गिरयोऽन्नं चतुर्विधम् ॥ उपायनमुपा-
जह्रुः सर्वे लोकाः सपालकाः ॥९॥ इति[4] चाधोक्षजेशस्य पृथोस्तु परमोदयम् ॥ असूयन्भगवानिन्द्रः प्रतिघातम-
चीकरत् ॥ १० ॥ चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ॥ वैन्ये यज्ञपशुं स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥

ज्ञात्वा । तदिति तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे ॥ २ ॥ अतिशयमेव दर्शयति—यत्रेति सप्तभिः । साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ॥ ३ ॥ ४ ॥ सिद्धादयश्च तं हरिमन्वीयुरित्युत्तरेणान्वयः ॥ ५ ॥ ६ ॥ धर्मदुघा हविर्दोग्ध्री । धेनुः सती ॥ ७ ॥ ऊहुर्वहन्ति स्म । सर्वरसानिक्षुद्राक्षादिरसान् । क्षीरं च दधि च अन्नं च पानकादि गोरसो घृतं तक्रं च तांश्च । भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते, फलादि प्रासूयन्त । मधुच्युतो मधुस्राविणः सन्तः ॥ ८ ॥ चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ॥९॥ अधोक्षज ईशो नाथो यस्य । परम उदयोऽभिवृद्धिर्यस्मिंस्तत् कर्म असूयन्नसहमानः प्रतिघातं विघ्नं चकारेत्यर्थः ॥ १० ॥ वैन्ये यजुष्पतिं विष्णुं यजमाने सति स्पर्धमान इन्द्रस्तिरोहितः सन्नश्वमपहृतवान् ॥ ११ ॥ ॥ ॥ ॥

१ उपगीयमानोऽन्वभूयत इति पूर्वेणान्वयः । २ अन्वीयुरनुसृत्य गतवन्तः । ३ अत्र धर्मशब्दो धर्मसाधनपरः । ४ इतिशब्दः प्रकारवचनः । उक्तप्रकारयज्ञे ।

निवेदनं तु तदीयस्यैव समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण ताम्बूलादिकमर्पयति तथा मयापि सर्वं निवेदितं स्वीकुरुतेत्याह—प्राणा इति ॥ ४४ ॥ आत्मनः स्वत्वाभावं प्रपञ्चयति—सैनापत्यं चेति द्वाभ्याम् ॥ ४५ ॥ वस्ते परिधत्ते । अन्नमात्रं केवलं भुञ्जते न तु दाने स्वतन्त्राः ॥ ४६ ॥ सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह—यैरिति । आत्मवादेऽध्यात्मविचारे । एकान्ततो निश्चयेन । निगमिभिर्वेदविद्भिः । ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनो-द्धरणकर्मणा तुष्यन्तु । को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोति उदपात्रमञ्जलिं विना । मयाञ्जलिरेव तेभ्यो बद्ध इत्यर्थः । यद्वा विनोदपात्रमुपहासास्पदम् ।

सैनापत्यं च
प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिच्छदाः ॥ राज्यं बलं मही कोश इति सर्वं निवेदितम् ॥ ४४ ॥ स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं
राज्यं च दण्डनेतृत्वमेव च ॥ सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥ यैरीदृशी भगवतो गतिरात्मवाद एकान्ततो निग-
ददाति च ॥ तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ॥ ४६ ॥ को नाम तत्प्रतिकरोति विनोदपात्रम् ॥ ४७ ॥
मिभिः प्रतिपादिता नः ॥ तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं शीलं तदीयं शंसन्तः खेऽभूवन्मिषतां नृणाम् ॥ ४८ ॥
॥ मैत्रेय उवाच ॥ त आत्मयोगपतय आदिराजेन पूजिताः ॥ आत्मन्यवस्थितः ॥ ४९ ॥ कर्माणि च
वैन्यस्तु धुर्यो महतां संस्थित्याध्यात्मशिक्षया ॥ आप्तकाममिवात्मानं मेन ॥ ५० ॥ फलं ब्रह्मणि विन्यस्य निर्विषङ्गः
यथाकालं यथादेशं यथाबलम् ॥ यथोचितं यथावित्तमकरोद्ब्रह्मसात्कृतम् स साम्राज्यश्रियान्वितः ॥
समाहितः ॥ कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५१ ॥ गृहेषु वर्तमानोऽपि ॥ पुत्रानुत्पादयामास पञ्चा-
नासज्जतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५२ ॥ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् दधारैकः पृथुर्गुणान्
र्चिष्यात्मसंमतान् ॥ ५३ ॥ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् ॥ सर्वेषां लोकपालानां संरञ्जयन्प्रजाः ॥ ५५ ॥
॥ ५४ ॥ गोपीथाय[1] जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ॥ मनोवाग्वृत्तिभिः[2] सौम्यैर्गुणैः ॥ ॥
राजेत्यधान्नामधेयं सोमराज इवापरः ॥ सूर्यवद्विसृजन्गृह्णन्प्रतपंश्च भुवो वसु[3] ॥ ५६ ॥

अध्यात्मशिक्षया संस्थितिरेकाग्रता तथा-प्रत्युपकारे प्रवृत्तौ जनानामुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥ खेऽभूवन् आकाशमार्गेणोद्गताः ॥ ४८ ॥ धुर्यो मुख्यः । कर्माध्यक्षं कर्मसाक्षिणमुदासीनं मन्वानोऽरू-तमन्यवस्थितः सन्मेने ॥ ४९ ॥ ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥ निर्विषङ्गः कर्मस्वनासक्तः । सोमश्चासौ राजा च म इव । भुवो वसु धनं रोदिति पूर्वेणैवान्वयः । नासज्जतेत्युत्तरेण वा ॥ ५१ ॥ ५२ ॥ अर्चिषि भार्यायाम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ॥ ॥ गृह्णन्विसृजंश्चासौ सूर्यवत् । राज्ञः प्रतपनमाज्ञाकरणम् ॥ ५६ ॥

१ गोपीथाय रक्षणाय । २ 'मनोवाङ्मूर्तिभिः' इति पाठः । ३ वसु धन रत्न च ।

अग्निरिव दुर्धर्षः । द्यौः स्वर्ग इव ॥५७॥ समुद्रो यथा गाम्भीर्येणैतावानिति न बुध्यते तथासावभिप्रायतो दुर्बोधः । अचलराट् मेरुरिव ॥५८॥५९॥ सर्वात्मा सर्वत्र संचारशक्तिः । गत्यादिभिर्गतिरिश्वेव । भूतराट् श्रीरुद्रः ॥६०॥ अजो ब्रह्मेव ॥ ६१ ॥ आत्मवत्त्वे जितेन्द्रियत्वे । भक्त्यादिभिः परार्थोद्यमे चात्मनैव तुल्यो निरुपमः ॥६२॥ पुम्भिः सत्पुरुषैः । रामः सीतापतिर्यथा सतां कर्णरन्ध्रेषु प्रविष्टः ॥६३॥ ॥ इति श्रीम० म० पु० च० भा० दी० टीकायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥ त्रयोविंशे सभार्यस्य वने निस्समाधितः ॥ विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते ॥ १ ॥ प्रवयसं वृद्धं दृष्ट्वा तपोवनमगादिति तृतीयेनान्वयः । स्वकृतोऽनुसर्गो

दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः ॥ तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥५७॥ वर्षति स्म यथाकामं[1] पर्जन्य इव तर्पयन् ॥ समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥५८॥ धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ॥ कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥५९॥ मातरिश्वेव सर्वात्मा बलेन[2] सहसौजसा ॥ अविषह्यतया देवो भगवान्भूतराडिव ॥६०॥ कन्दर्प इव सौन्दर्ये मनस्वी[3] मृगराडिव ॥ वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः ॥६१॥ बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः ॥ भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ॥६२॥ कीर्त्योर्ध्वगीतया[4] पुम्भिस्त्रैलोक्ये तत्र तत्र ह ॥ प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥६३॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पृथुचरिते द्वाविंशतितमोऽध्यायः ॥२२॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ दृष्ट्वात्मानं प्रवयसमेकदा वैन्य आत्मवान् ॥ आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥१॥ जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत्सताम् ॥ निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥ आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव[5] ॥ प्रजासु विमनस्स्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥ तत्राप्यदाभ्यनियमो[6] वैखानससुसंमते ॥ आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥४॥ कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित् ॥ अब्भक्षः कतिचित्पक्षान्वायुभक्षस्ततः परम् ॥ ५ ॥ ग्रीष्मे पञ्चतपा वीरो[7] वर्षास्वासारषाण्मुनिः ॥ आकण्ठमग्नः शिशिर उदके स्थण्डिलेशयः ॥ ६ ॥ ॥

ऽन्नादिसर्गः पुरग्रामादिसर्गश्च । वर्धितोऽशेषः स्वानुसर्गो येन ॥१॥ निष्पादित ईश्वरादेशः प्रजापालनादिर्येन । जज्ञिवान् जातः ॥२॥ आत्मजां पृथ्वीम् । विमनस्सु चिन्तातुरासु । सदारः सभार्यः ॥ ३ ॥ अदाभ्या विघ्नैर्नाशयितुमशक्या नियमा यस्य । वानप्रस्थानां सुसंमते उग्रे तपस्यारब्धः प्रवृत्तः । कर्तरि क्तः । यथा स्वस्य धरामण्डलस्य विजये पूर्वं महता यत्नेन प्रवृत्तस्तथेति ॥ ४ ॥ उग्रं तपो दर्शयति—कन्दमूलेति त्रिभिः । क्वचित्कदाचित् ॥ ५ ॥ चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पञ्चानां तपः संतापो यस्य स पञ्चतपाः । आसारं सहत इत्यासारषाट् । शिशिरतौ । स्थण्डिलेशयो भूमिशयनः सर्वदा ॥ ६ ॥ ॥ ॥

१ यथा यथावत् काममभीष्टमर्थम् । २ बलं शरीरबलं, सहो देहकान्तिः मनोबलं वा, ओज इन्द्रियबलम् इति चक्र० । ३ मनस्वी धीरो निर्भयश्च । ४ ऊर्ध्वं उच्चैर्गीतयेत्यर्थः । 'कीर्त्योरुगीतया' इति पाठः । ५ रोदने लिङ्गं प्रजासु विमनस्स्विति । ६ अदाभ्य इति दभ नोदने इति धातो रूपम् इति क्रम० । ७ 'वीरः' इति पाठः । ८ स्वस्य स्वीयस्य । ९ आसारो धारासंपातः ।



॥२३॥

॥४६॥

॥ ७ ॥ तेन तपसा । क्रमानुसिद्धेन शनैः प्रासेन । ध्वस्तानि कर्माणि यस्मात्तोऽमल आशयो यस्य । छिन्नानि वन्धनानि वासना यस्य ॥ ८ ॥ ९ ॥ १० ॥ परिकर्मणा परिचर्यया शुद्धसत्त्व आत्मा मनो यस्य तस्य ज्ञानमभूत् । कीदृशम् । येन निजमुपाधिं जीवकोशं हृदयग्रन्थिं संशयानामसंभावनादीनां पदमाश्रयं चिच्छेद । कीदृशेन । अनया भक्त्या निशितेन तीक्ष्णेन । कथंभूतया । तस्य भगवतोऽनुसंस्मरणेनानुपूर्तिः संपूर्तिर्यस्यास्तया निशितेन ॥ ११ ॥ किंच छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य । यतोऽधिगतात्मगतिरत एव निरीहः प्राप्तासु सिद्धिषु निस्पृहः । येन वयुनेन ज्ञानेनेदं संशयपदं चिच्छेद तत्तत्यजे त्यक्तवान् । तत्प्रयत्नादप्युपरराभेत्यर्थः । तस्य योगसिद्धिष्वपि निस्पृहत्वं युक्तमेवेत्याह । तावन्नाप्रमत्तः किंतु प्रमत्तो भवति । तस्य श्रीकृष्णकथारतत्वान्न तासु लोभो जात

तितिक्षुर्यतवाग्दान्त ऊर्ध्वरेता जितानिलः॥ आरिराधयिषुः कृष्णमचरत्तप उत्तमम्॥७॥ तेन क्रमानुसिद्धेन ध्वस्तकर्मामलाशयः॥ प्राणायामैः संनिरुद्धषड्वर्गश्छिन्नबन्धनः॥ ८॥ सनत्कुमारो भगवान्यदाहाध्यात्मिकं परम्॥ योगं तेनैव पुरुषमभजत्पुरुषर्षभः॥९॥ भगवद्धर्मिणः साधोः श्रद्धया यततः सदा॥ भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत्॥१०॥ तस्यानया भगवतः परिकर्मशुद्धसत्त्वात्मनस्तदनु संस्मरणानुपूर्त्या ॥ ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम्॥ ११ ॥ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन येन॥ तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात्॥ १२ ॥ एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ॥ ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम्॥ १३ ॥ संपीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयन् शनैः ॥ नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकण्ठशीर्षणि ॥१४॥ उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निस्पृहः ॥ वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥ १५ ॥ खान्याकाशे द्रवं तोये यथास्थानं विभागशः ॥ क्षितिमम्भसि तत्तेजस्यदो वायौ नभस्यमुम्॥ १६ ॥ ॥

इत्यर्थः ॥१२॥१३॥ देहत्यागप्रकारमाह—संपीड्येति पञ्चभिः । पायुं गुदं संपीड्येति मुक्तासनं सूचितम् । 'संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः ॥ सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितम् ॥' मूलाधाराद्वायुमुत्सारयन्नूर्ध्वं नयन्नाभ्यामवस्थाप्य ततः कोष्ठेष्ववस्थाप्य अयूयुजदित्युत्तरेणान्वयः । हृदादीनां द्वन्द्वैक्यम् । शीर्षं भ्रूमध्यं तस्मिन् ॥ १४ ॥ तं वायुम् । पाठान्तरे एवमसून्प्राणानुत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे आवेश्य ततो देहारम्भकपञ्चभूतानि समष्टिभूतेषु विलापितवांस्तदाह । वायुं वायावयूयुजदेकीकृतवान् । कायं देहगतं कठिनांशं क्षितौ ॥ १५ ॥ खानीन्द्रियच्छिद्राणि । द्रवांशं तोये । तदेवं देहं प्रविलाप्याद्वितीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयमाह । क्षितिमम्भस्येकीकृतवान् । तदम्भस्तेजसि । अदस्तेजो वायौ । अमुं वायुं नभसि ॥ १६ ॥ ॥ ॥

१ आशयोऽन्तःकरणम् । २ आत्मगतिर्ज्ञानम् । ३ 'यतानिलः' इति पाठः । ४ 'आनुपूर्व्या' इति पाठः । ५ 'धीरप्रवरः' इति कचित्पाठः । ६ काले भगवतस्तान्शेच्छावसरे । ७ 'उत्सर्पयन्' इति पाठः । ८ ऊर्ध्वं स्वाधिष्ठानचक्रं, नाभ्या मणिपूरचक्रे । ९ हृत् अनाहतचक्रम्, उरः कण्ठाधो विशुद्धिचक्रम्, कण्ठस्तस्यैव चक्रस्याग्रदेशः, शीर्षं भ्रूमध्याज्ञाचक्र तस्मिन् । १० 'उत्सर्पयन्नसून्मूर्ध्नि' इत्येवंरूपे । ११ समष्टिवायौ ।

तदेवं तामसाहंकारकार्यस्याकाशपर्यन्तस्य लयमुक्त्वा सात्त्विकराजसाहंकारकार्याणां लयमाह—इन्द्रियेष्विति । इन्द्रियेषु मन इति देवानामप्युपलक्षणम् । सविकल्पकज्ञाने मनस इन्द्रियैराकर्षणात्तेषु लयाभिधानं नतु कार्यत्वात् । यदुक्तं गीतासु 'इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते' इति । अत्र च 'इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः' इति । इन्द्रियेषु नभ इति पाठेऽप्ययमर्थः । भट्टादीनां मते नभश्चाक्षुषं केषांचिन्मानसम् । आनुमानिकत्वमतेऽपीन्द्रियव्यापारोऽस्त्येव । नभोगुणश्च शब्दः श्रोत्रग्राह्योऽत इन्द्रियग्राह्यत्वादिन्द्रियेषु नभो विलापितमिति । तानीन्द्रियाणि यथोद्भवम् । उद्भवोऽत्र वृत्तिलाभः, स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः । यद्वा तन्मात्रकार्याण्येवेन्द्रियाणि मनोऽप्यपञ्चीकृततन्मात्रकार्यम् । आहंकारिकत्वाभिधानं तदधीनत्वविवक्षयेत्यविरोधः । भूतादिनाहंकारेण प्रागवशिष्टनभःसहितानीन्द्रियाण्युत्कृष्य परतो नीत्वा भूतादौ क्षिप्त्वा तेन सह महत्तत्त्वे संदध इत्यर्थः ॥ १७ ॥ सर्वेषां

इन्द्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम् ॥ भूतादिनाऽमून्युत्क्षिप्य महत्यात्मनि संदधे ॥१७॥ तं सर्वगुणविन्यासं जीवे मायामये न्यधात्[2] ॥ तं चानुशयमात्मस्थमसावनुशयी पुमान् ॥ ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽजहात्प्रभुः ॥१८॥ अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ॥ सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥ अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चारषदेहयात्रया ॥ नाविन्दतार्तिं परिकर्शितापि सा प्रेयस्करस्पर्शनमाननिर्वृतिः[3] ॥२०॥ देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ॥ आलक्ष्य किंचिच्च विलप्य[4] सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥ विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः ॥ नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादौ ॥ २२ ॥ विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ॥ तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥ कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि ॥ नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥२४॥ ॥ देव्य ऊचुः ॥ अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ॥ सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव ॥ २५ ॥ ॥ ॥

गुणानां कार्याणां विन्यासः स्थितिर्यस्मिंस्तं महान्तं मायामये मायोपाधिप्रधाने जीवे । तं चानुशयमुपाधिं यः पूर्वमनुशयी पुमान् जीवोऽसौ पृथुर्ब्रह्मणि स्थितः सन्नजहादित्यर्थः ॥ १८ ॥ वनप्रवेशमारभ्य राज्ञीकथामाह—अर्चिर्नामेति चतुर्भिः । अनुगतानुजगाम । अतदर्हा तदपि नार्हति या । किं पद्भ्यां भुवः स्पर्शनमिति यत् ॥ १९ ॥ भर्तुर्व्रतं यद्भूमिशयनादि तस्मिन् धर्मे या निष्ठा तया । ऋषीणामियमार्षी देहयात्रा कन्दमूलादिवृत्तिस्तया चार्तिं दुःखं न प्राप । तत्र हेतुः—प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृतिर्यस्याः ॥ २० ॥ पृथिव्याः पत्युः । दुहितृत्वं तु तस्या देवतारूपेण । विपन्नं नष्टमखिलं चेतनादिकं यस्मिंस्तथाभूतं देहमालक्ष्य तं देहं चितामारोपयत् ॥ २१ ॥ कृत्यं तत्कालोचितं विधाय ह्रदिन्या जले आप्लुता स्नाता सती भर्तुरुदकं दत्त्वा दिव्यन्तरिक्षे स्थितान्देवान्नत्वा वह्निं त्रिः प्रदक्षिणीकृत्य ॥ २२ ॥ देवैः सहिताः ॥ २३ ॥ गृणन्ति स्म अभाषन्त ॥ २४ ॥ २५ ॥ ॥ ॥ ॥

१ 'इन्द्रियेषु नभः' इति पाठः तत्र यथास्थानमित्यस्यानुवृत्तेः सर्वत्राधाराधेयभावेनैव लयो ज्ञेयः इति चक्र० । २ 'अप्यधात्' इति पाठः । ३ 'निर्वृतः' इति पाठः । ४ किंचिद्विलप्येति स्नेहेन विलप्य विचारेण तु तत्परित्यज्येत्यर्थः ।

असतीनां दुर्विभाव्येन कर्तुमशक्येन कर्मणा ॥ २६ ॥ भगवान् पद्यते गम्यतेऽनेनेति तथा तन्नैष्कर्म्यं ज्ञानं ये चञ्चलायुषोऽपि साधयन्ति तेषामन्यद्देवादिपदं किमु दुर्लभम् । न किंचिदित्यर्थः ॥ २७ ॥ अभक्तं शोचन्ति—स वञ्चित इति । यत आत्मने द्रुह्यति योऽपवर्गसाधनं मानुष्यं लब्ध्वापि विषयेष्वासक्तिं याति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ विशां पश्वादीनां वैश्यादीनां वा पतिः स्यात् । शूद्रः शृण्वन्निति शेषः । तस्य पाठानधिकारात् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती ॥ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥२६॥ तेषां दुरापं किं त्वन्यन्मर्त्यानां भगवत्पदम् ॥ भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥२७॥ स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि ॥ लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥२८॥ ॥ मैत्रेय उवाच ॥ स्तुवतीष्वमरस्त्रीषु पतिलोकं गता वधूः ॥ यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः ॥ २९ ॥ इत्थंभूतानुभावोऽसौ पृथुः स भगवत्तमः ॥ कीर्तितं तस्य चरितमुद्दामचरितस्य ते ॥३०॥ य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् ॥ श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात् ॥ ३१ ॥ ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ॥ वैश्यः पठन्विट्पतिः स्याच्छूद्रः सत्तमतामियात् ॥ ३२ ॥ त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवादृता ॥ अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ ३३ ॥ इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ ३४ ॥ धर्मार्थकाममोक्षाणां सम्यक्सिद्धिमभीप्सुभिः ॥ श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥३५॥ विजयाभिमुखो राजा श्रुत्वैतदभियाति यान् ॥ बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥ मुक्तान्यसङ्गो भगवत्यमलां भक्तिमुद्वहन् ॥ वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत्पठेत् ॥३७॥ वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् ॥ अस्मिन्कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥३८॥ अनुदिनमिदमादरेण शृण्वन्पृथुचरितं प्रथयन्विमुक्तसङ्गः ॥ भगवति भवसिन्धुपोतपादे स च निपुणां लभते रतिं मनुष्यः ॥३९॥ ॥ इति श्रीम० म० चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ॥२३॥ ॥छ॥

॥ ३६ ॥ यद्यपि बहूनि फलानि भवन्ति तथापि मुक्तान्यसङ्ग एव श्रवणादि कुर्यात् ॥ ३७ ॥ महतो भगवतो माहात्म्यस्य सूचकम् । पार्थवीं पृथुसंबन्धिनीम् । पार्थिवीमिति वा पाठः ॥३८॥ प्रथयन्कीर्तयन् । भवसिन्धौ पोतः पादो यस्य ॥३९॥ ॥इति श्रीमद्भा०म०पु०च०भा०दी०टीकायां त्रयोविंशोऽध्यायः ॥२३॥ ॥छ॥

१ ऊर्ध्वं श्रीवैकुण्ठलोकम् । २ 'किम्वन्यन्' इति पाठः साधुश्रीकानुगुणश्च । ३ 'विगुल्लोलायुषः' इति पाठः । ४ आपवर्ग्यं सालोक्यादिसिद्धिद भक्तियोगसिद्धिदं वा । ५ 'पृथुपराक्रमः' इति पाठः । ६ 'सग्रामाभिमुखः' इति विज० पाठ. । ७ 'मतिं' 'गतिं' इति पाठौ । ८ मनुष्य इत्यनेन मनुष्यमात्रस्याधिकारिता दर्शिता ।

एकादशभिरध्यायैः पृथोश्चरितमीरितम् ॥ प्रचेतसामथाष्टाभिस्तन्मध्ये पञ्चभिः पितुः ॥ १ ॥ चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ॥ प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ २ ॥ अधिराज आसीदित्यर्थः । यवीयोभ्यः कनिष्ठेभ्यः । काष्ठा दिशः ॥ १ ॥ तुर्यां चतुर्थीमुत्तरां दिशम् ॥ २ ॥ शक्राल्लब्ध्वा पृथोरश्वमेधेऽश्वविजयावसरे ॥ ३ ॥ अपत्यत्रयमेवाह—पावक इति । पुरा यः शापस्तस्मान्मनुष्येषूत्पन्नाः सन्तो योगगतिमग्नित्वं प्राप्ताः ॥ ४ ॥ नभस्वत्यामन्यस्यां भार्यायाम् । अन्तर्धानस्य विशेषणं य इति । एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम् ॥५॥ स चान्तर्धानो राज्ञां वृत्तिं करादानादिभिर्दारुणां परपीडात्मिकां मन्यमानो विससर्ज ह ॥६॥ हन्ति स्वानां क्लेशमिति हंसस्तं पुरुषं पूर्णम् । कुशलं पुण्यं तद्रूपेण समाधिना ॥७॥८॥ हाविर्धानिर्हविर्धानस्य पुत्रः । योगेषु च

॥ मैत्रेय उवाच ॥ विजिताश्वोऽधिराजासीत्पृथुपुत्रः पृथुश्रवाः ॥ यवीयोभ्योऽददात्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥ १ ॥ हर्यक्षायादिशत्प्राचीं धूम्रकेशाय दक्षिणाम् ॥ प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥२॥ अन्तर्धानगतिं शक्राल्लब्ध्वान्तर्धानसंज्ञितः[2] ॥ अपत्यत्रयमाधत्त[3] शिखण्डिन्यां सुसंमतम् ॥३॥ पावकः पवमानश्च शुचिरित्यग्नयः पुरा ॥ वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥४॥ अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ॥ य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान् ॥५॥ राज्ञां वृत्तिं करादानदण्डशुल्कादिदारुणाम् ॥ मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥६॥ तत्रापि हंसं पुरुषं परमात्मानमात्मदृक्[4] ॥ यजंस्तल्लोकतामाप कुशलेन[5] समाधिना ॥७॥ हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ॥ बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥८॥ बर्हिषत्सुमहाभागो हाविर्धानिः प्रजापतिः ॥ क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥ यस्येदं देवयजनमनुयज्ञं वितन्वतः ॥ प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥ सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ॥ यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलंकृताम् ॥ परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ॥११॥ विबुधासुरगन्धर्वमुनिसिद्धनरोरगाः ॥ विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥ १२ ॥ ॥

प्राणायामादिषु ॥९॥ क्रियाकाण्डनिष्णातत्वमाह—यस्येति । इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः । यत्रैको यज्ञः कृतस्तत्समीप एव यज्ञान्तरं कुर्वतः सतः । अत एव प्राचीनबर्हिरित्युच्यते ॥१०॥ समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नाम किशोरीं बालां परिक्रमन्तीं प्रदक्षिणं गच्छन्तीम् । शुकीमिवेति । एवं व्याख्यायते । सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसंतप्तोऽभूत् । तं च तद्भार्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास । रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधायागच्छत् । तां यथा सप्तर्षिभार्याभ्रान्त्या अग्निः कामितवांस्तद्वदिति । स्रुचीमिवेति पाठे स्रोकघृतधारामिवेत्यर्थः ॥ ११ ॥ सूर्यया नवोढयैव विबुधादयो विजिता अभिभूतास्तच्च नूपुरैः पादौ क्वणयन्त्यैव । तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥ ॥ ॥

१ ह इत्याश्चर्ये । २ विजिताश्व एवान्तर्धानसंज्ञितो जातः । ३ आधत्त उत्पादयामास । ४ आत्मदृक् प्रकृतिविलक्षणमद्वात्मकस्वात्मयाथात्म्यज्ञानी सन् । ५ कुशलेन विघ्नानुपहतेन ।

तुल्यं नाम व्रतमाचारश्च येषाम् । धर्मस्नाता धर्मपारगाः ॥ १३ ॥ तपसा तपसां पतिं हरिमर्चन्नर्चयामासुः ॥ १४ ॥ १५ ॥ १६ ॥ मुनयोऽपि सङ्गत्यागेनामुमिष्टं यं दध्युरेव केवलं, नतु प्रापुः । तेन शिवेन ॥ १७ ॥ ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशङ्क्याह । आत्मारामोऽपि लोकरचनायाः पालनाय ॥ १८ ॥ गुर्वाज्ञाकारिणां शिवदर्शनं स्वत एव भवतीत्याशयेनाह—प्रचेतस इति ॥ १९ ॥ समुद्रमुप समुद्रात्किंचिन्न्यूनम् । 'उपोधिके च' इति कर्मप्रवचनीयः । प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन् ॥ २० ॥ नीलोत्पलादीनामाकरं जन्मस्थानम् । उत्पलाम्भोजकह्लाराणि रात्रिदिनसन्ध्याविकासीनि । इन्दीवरं नीलोत्पलम् ।

प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन् ॥ तुल्यनामव्रताः सर्वे धर्मस्नाता[2]ः प्रचेतसः ॥ १३ ॥ पित्रादिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ॥ दशवर्षसहस्राणि तपसाऽर्चंस्तपस्पतिम् ॥ १४ ॥ यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ॥ तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥ ॥ विदुर उवाच ॥ प्रचेतसां गिरित्रेण यथासीत्पथि सङ्गमः ॥ यदुताह[3] हरः प्रीतस्तन्नो ब्रह्मन्वदार्थवत् ॥ १६ ॥ सङ्गमः खलु विप्रर्षे शिवेनेह शरीरिणाम् ॥ दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम् ॥ १७ ॥ आत्मारामोऽपि यस्त्वस्य लोककल्पस्य[1] राधसे ॥ शक्त्या युक्तो विचरति घोरया भगवान्भवः ॥ १८ ॥ ॥ मैत्रेय उवाच ॥ प्रचेतसः पितुर्वाक्यं शिरसादाय साधवः ॥ दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः ॥ १९ ॥ समुद्रमुप विस्तीर्णमपश्यन्सुमहत्सरः ॥ महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥ नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् ॥ हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥ मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् ॥ पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥ तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् ॥ विसिस्म्यू राजपुत्रास्ते मृदङ्गपणवाद्यनु[6] ॥ २३ ॥ तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् ॥ उपगीयमानममरप्रवरं विबुधानुगैः ॥ २४ ॥ तप्त[4]हेमनिकायाभं शितिकण्ठं त्रिलोचनम् ॥ प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ २५ ॥ स तान्प्रपन्नार्तिहरो[5] भगवान्धर्मवत्सलः ॥ धर्मज्ञाञ्शीलसंपन्नान्प्रीतः प्रीतानुवाच ह ॥ २६ ॥ ॥ ॥

तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थम् । हंसादिभिर्निकूजितम् ॥ २१ ॥ मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लताङ्घ्रिपा यस्मिन्, पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् ॥ २२ ॥ तत्र मृदङ्गपणवादिवाद्यमनु पश्चाद्दिव्यैर्मार्गभेदैर्मनोहरं गान्धर्वं गानमाकर्ण्य विस्मयं प्राप्ताः । पाठान्तरे मृदङ्गपणवादि अयत् रक्षत् । तेषां ध्वनिमतिरस्कुर्वदित्यर्थः ॥ २३ ॥ ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः ॥ २४ ॥ तप्तहेमराशिसदृशकान्तिम् । शितिः नीलः कण्ठो यस्य तम् ॥ २५ ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

१ लोकमनोरथकल्पस्य सिद्धये इति चक्रवर्ती । लोकस्य कल्पः कल्पनं रचनेति मूलपदस्यार्थः । २ 'धनुःस्नाताः' इति पाठस्तत्र धनुर्वेदपारगा इत्यर्थः । ३ 'यच्चाप्याह हरः' 'यदप्याह हरः', 'यदभ्याह हरः', 'यद्वाप्याह हरः' इति पाठाः । ४ 'तप्तहेमनिकर्षाभं' इति पाठः । ५ 'प्रपन्नान्गिरिशः' इति पाठः । ६ 'पणवाद्यवत्' इत्येवंरूपे ।

वेदिपदो वर्हिपदः । चिकीर्षितं भगवदाराधनं विदितम् ॥ २७ ॥ अनुग्रहकारणमाह । यः साक्षाद्वासुदेवं प्रपन्नः स हि मे प्रियः । कथंभूतम् । रंहसः सूक्ष्मा-त्रिगुणात्प्रधानाज्जीवसंज्ञितात्पुरुषाच्च परम् । प्रकृतिपुरुषयोर्नियन्तारमित्यर्थः ॥ २८ ॥ तत्किं तस्य महत्तमत्वादित्याह । स्वधर्मनिष्ठः पुमान्बहुभिर्जन्मभिर्विरिञ्चतां प्राप्नोति । ततोऽपि पुण्यातिशयेन मामेति । भागवतस्त्वथ देहान्तेऽव्याकृतं प्रपञ्चातीतं वैष्णवं पदमेति । यथाहं रुद्रो भूत्वाधिकारिकवद्वर्तमानो विबुधा देवाश्चाधिकारिकाः कलात्ययेऽधिकारान्ते लिङ्गभङ्गे सत्येष्यन्ति ॥ २९ ॥ अथ भागवतत्वाद्यूयं मे प्रियाः स्थ । भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह । मदन्यो भागवतानां च प्रेयान्नास्ति ॥ ३० ॥ अत इदं जप्यं श्रूयतामिति । विविक्तमसंकीर्णं यथा भवति ॥ ३१ ॥ सृष्ट्यादौ ब्रह्मणा सृष्ट्वा पुत्रेभ्यः प्रोक्तमिष्टदम् ॥ स्तोत्रं प्राह प्रचेतोभ्यः कृपया भगवान् शिवः ॥ ३२ ॥ ते जितं तवोत्कर्षः । आत्मविद्वुर्याणां स्वस्तये शोभनसत्तायै स्वानन्दलाभायेत्यर्थः । अतो

॥ श्रीरुद्र उवाच ॥ यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ॥ अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥
यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् ॥ भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥ स्वधर्मनिष्ठः शत-
जन्मभिः पुमान्विरिञ्चतामेति ततः परं हि माम् ॥ अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये
॥ २९ ॥ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा ॥ न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित ॥ ३० ॥
इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ॥ निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः ॥ ३१ ॥ ॥ मैत्रेय उवाच ॥
इत्यनुक्रोशहृदयो भगवानाह तान् शिवः ॥ बद्धाञ्जलीन् राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥ ॥ श्रीरुद्र उवाच ॥
जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे ॥ भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥ नमः पङ्कजना-
भाय भूतसूक्ष्मेन्द्रियात्मने ॥ वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥ संकर्षणाय सूक्ष्माय दुरन्तायान्त-
काय च ॥ नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ३५ ॥ ॥ ॥ ॥

मे स्वस्तिः स्वानन्दसत्ताऽस्तु । ननु ममोत्कर्षो मदर्थ एव किं न स्यात्तत्राह । भवता राधसा स्वानन्दरूपेण राद्धं सिद्धम् । त्वं परमानन्दरूपेणैव नित्यं स्थित इत्यर्थः । अत एवंभूतायात्मने तुभ्यं नमः । सर्वस्मै सर्वरूपाय च ॥ ३३ ॥ सर्वरूपत्वं प्रपञ्चयन् प्रणमति सार्धैर्दशभिः । पङ्कजं लोकात्मकं नाभौ यस्य तस्मै कारणात्मने नमः । कारणत्वादेव सृज्यानां प्राणिनां ये उपाधयो भूतानि सूक्ष्माणि तन्मात्राणीन्द्रियाणि च तेषामात्मने नियन्त्रे । अन्तःकरणचतुष्टयाधिष्ठातृत्वेन प्रणमति चतुर्भिः श्लोकार्धैः । वासुदेवाय चित्ताधिष्ठात्रे । कूटस्थाय निर्विकाराय, चित्तस्यैकरूपत्वात् ॥ ३४ ॥ संकर्षणायाहंकाराधिष्ठात्रे । सूक्ष्मायाव्यक्ताय । दुरन्तायानन्ताय । अन्तकाय मुखाग्निना लोकदाहकाय । विश्वस्य प्रकृष्टो बोधो यस्मात् । अन्तरात्मने बुद्ध्यधिष्ठात्रे ॥ ३५ ॥ ॥ ॥ ॥५९॥

१ तत्किं तत्कुत इत्यर्थः । २ वोऽनुग्रहाय दर्शनमस्मद्दर्शनं मे मया कृतं कारितम् इति सिद्धां० । दर्शनं कृतं दत्तम् । यद्वा वोऽनुग्रहाय युष्मत्कर्तृकानुग्रहप्राप्तये मयैव दर्शनं कृतम् इति चक्र० । ३ 'रहसः' इति पाठः, तत्र रहस्याख्यस्य प्रेम्ण इत्यर्थः । 'तमसः' इति कचित्पाठः । ४ 'विबुधैः' इति पाठः । तत्र विबुधैः कार्यैः । ५ 'न मे भागवताना च' इति पाटः । तत्र मे मत्त इत्यर्थः । ६ 'यद्वदामि' इति पाठः । ७ अनुक्रोशः कृपा ।

हृषीकाणामीशं यदिन्द्रियं मनस्तदात्मने । सूर्यरूपेण प्रणमति । परमहंसाय सूर्याय । पूर्णाय तेजसा विश्वव्यापिने । निभृतात्मने क्षयवृद्धिशून्याय ॥३६॥ स्वर्गापवर्गयोर्द्वाराय । शुचिन्यन्तःकरणे निषीदतीति शुचिषत्तस्मै । 'हंसः शुचिषत्' इति श्रुतेः हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय । चातुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः । कुतस्तन्तवे तद्विस्तारकाय ॥ ३७ ॥ सोमत्वमाह । ऊर्जे पितॄणामन्नाय । इषे देवानामन्नाय । यज्ञरेतसे सोमाय । स हि पितॄणां देवानां चान्नम् । एवंरूपाय त्रय्याः पतये हरये नमः । सूर्याग्निसोमत्वेनैव तेजस्त्वमुक्तम् । जलत्वमाह । सर्वरसात्मने जलरूपाय ॥ ३८ ॥ विशेषाय पृथ्वीरूपाय । सर्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय च । त्रैलोक्यपालाय वायवे । सहआदिरूपाय । स हि प्राणरूपेण त्रैलोक्यं पालयति सहआदिधर्मो च ॥ ३९ ॥ नभसे आकाशायार्थानां लिङ्गाय ज्ञापकाय, शब्दगुणत्वात् । अन्तर्बहिरात्मनेऽन्तर्बहिर्व्यवहारालम्बनाय । एवं महाभूतरूपत्वमुक्तम् ।

नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने ॥ नमः परमहंसाय पूर्णाय निभृतात्मने ॥३६॥ स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः ॥ नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७॥ नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे ॥ तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे ॥ नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९॥ अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने ॥ नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥४०॥ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ॥ नमोऽधर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥ नमस्त आशिषामीश मनवे कारणात्मने ॥ नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥ ४२ ॥ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ॥ चेतआकूतिरूपाय नमो वाचोविभूतये ॥ ४३ ॥ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ॥ ४४ ॥

अमुष्मै स्वर्गाय भूरिवर्चसे । 'एष वै ज्योतिष्मन्तं पुण्यं लोकं याति' इति श्रुतेः ॥ ४० ॥ प्रवृत्ताय च निवृत्ताय च कर्मणे । पितृदेवाय यथाक्रमं पितृदेवप्राप्तिफलाय । अधर्मफलरूपाय च मृत्यवे ॥ ४१ ॥ हे ईश, आशिषां कारणात्मने सर्वकर्मफलदात्रे । मनवे सर्वज्ञाय मन्त्रात्मकायेति वा । विष्णुत्वेन प्रणमति । बृहते धर्माय परमधर्मात्मने कृष्णाय ॥ ४२ ॥ रुद्ररूपेण प्रणमति । मीढुषे रुद्राय । अहंकृतमहंकारस्तदात्मने । स च कर्तृकरणकर्मशक्तित्रयसमेतस्तस्मै । ब्रह्मत्वेन प्रणमति । चेतो ज्ञानमाकूतिः क्रिया तद्रूपाय । वाचो विविधा भूतिः सृष्टिर्यस्मात्तस्मै ॥ ४३ ॥ एवं नमस्कृत्य दर्शनं प्रार्थयते—दर्शनमिति नवभिः । भागवतैः सत्कृतं दर्शनं देहीत्यस्य विवरणं रूपमित्यादि प्रदर्शयेत्यन्तम् । स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः । सर्वेषामिन्द्रियाणां ये गुणा विषयास्तेषामञ्जनं व्यञ्जकम् । सर्वेन्द्रियविषयविषयिरूपमित्यर्थः । सर्वेन्द्रियाणि स्वगुणैरनक्ति रञ्जयतीति वा ॥ ४४ ॥

१ 'यज्ञविस्तारकाय च' इति पाठः । २ सहआदीति सहो मनःशक्तिः, ओज इन्द्रियशक्तिः, बलं देहशक्तिः । ३ 'नमोऽधर्मविपाकाय' इति चक्रवर्तिपाठस्तत्र अधर्मस्य विपाकः फलं यस्मात्तस्मै इत्यर्थः ।

स्निग्धः प्रावृषि यो घनस्तद्वच्छ्यामम् । सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् । चारव आयताश्चत्वारो बाहवो यस्मिन् । सुजातं यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥४५॥ पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदक्षिणी यस्मिन् । सुकपोलमास्यं यस्मिन् । समौ कर्णौ विभूषणं यस्य । कुण्डलयोरग्रे वक्ष्यमाणत्वात् ॥४६॥ प्रीत्या प्रहसिताविवापाङ्गौ यस्मिन् ॥४७॥ स्फुरन्ति किरीटादीनि यस्मिन् । शङ्खादिमत् । उत्तमर्द्धिः लक्ष्मीः । यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्ति तत् ॥४८॥ सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा एव त्विषस्तादृशीः सर्वतस्त्विषो बिभ्रच्चासौ सौभगग्रीवः कौस्तुभो यस्मिन् । यद्वा । सिंहसौभगयुक्ता ग्रीवा येन । सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा एव त्विषस्तादृशीः सर्वतस्त्विषो बिभ्रच्चासौ सौभगग्रीवः कौस्तुभो यस्मिन् । यद्वा । सिंहस्येव स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रदिति पृथग्विशेषणम् । सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिन् । श्रिया हेतुभूतया क्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषणपाषाणो येन तादृशेनोरसा उल्लसच्छोभमानम् ॥ ४९ ॥ श्वासोच्छ्वासाभ्यां मंविग्नाश्चञ्चला वलयस्ताभिर्वल्गु सुन्दरं दलवदश्वत्थ-

स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् ॥ चार्वायतचतुर्बाहुं सुजातरुचिराननम् ॥ ४५ ॥ पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥ सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ ४६ ॥ प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् ॥ लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ॥ ४७ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ ४८ ॥ सिंहस्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् ॥ श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥ ४९ ॥ पूररेचकसंविग्नवलिवल्गुदलोदरम् ॥ प्रतिसंक्रामयद्विश्वं नाभ्यावर्तगभीरया ॥ ५० ॥ श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ॥ समचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ॥ ५१ ॥ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता ॥ प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ ५२ ॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ॥ यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥ भवान्भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् ॥ स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ॥ ५४ ॥ ॥ ॥

पत्रसदृशमुदरं यस्मिन् । प्रतिसंक्रामयद्यतो निर्गतं तेनैव द्वारेण पुनः प्रवेशयदिव ॥५०॥ श्यामश्रोण्याधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् । अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च । समैश्चारुभिरेतैः शोभनं दर्शनं यस्य । समाश्चारवोऽङ्घ्र्यादयो यस्मिन् । निम्ने जानुनी यस्मिन् । शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥ पदा दीपस्थानीयेन । यद्वा एवंभूतेन पदोपलक्षितं रूपं पदं शरणं प्रदर्शयेत्यर्थः । शरदि यत्पद्मं तस्य पलाशं तद्वद्रोचिर्यस्य तेन । नखदीप्तिभिरन्तर्भवमघमज्ञानं विधुन्वता स्वीयं रूपं पदं शरणं प्रदर्शय । अपास्तं प्रह्लादादीनां साध्वसं येन तत् । हे गुरो, यतस्त्वमेव तमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ॥ ५२ ॥ अतिदुर्लभमिदं मया प्रार्थितमिति स्तोतैवाह । एतद्रूपमनुध्येयं ध्यानार्हमेव । नतु प्रत्यक्षतः प्राप्यमित्यर्थः ॥ ५३ ॥ तर्हि किं केनापि न प्राप्यते तत्राह—भवानिति । दुर्लभत्वमेवाह । स्वर्गे राज्यं यस्य तस्याप्यभिमतः स्पृहणीयः । किंच ऐकान्तेन य आत्मवित्तस्यापि गतिर्गम्यः ॥ ५४ ॥ ॥ ॥५०॥

१ समकर्णत्वं यथाशोभिप्रमाणत्वम् । २ 'नोतुरघं' इति विज० पाठः, तत्र नोतुः स्तोतुः । ३ 'पुरोमार्गगुरुः' इति पाठः । ४ आवर्तगभीरया नाभ्या विश्वं प्रतिसंक्रामयदित्यन्वयः । ५ एकान्तेन सालोक्यादिसुखनिरपेक्षेण ।

अतस्त्वद्व्यतिरेकेण न किंचिद्वाञ्छामीत्याह । तं त्वामेकान्तभक्त्याराध्य । बहिः स्वर्गादिसुखम् ॥५५॥ तत्र हेतुः—यत्र पादमूले शरणं प्रविष्टं कृतान्तः कालो ममायं वश्य इति नाभिमानं करोति । किं कुर्वन् । वीर्यं प्रभावः, शौर्यं उत्साहः, ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि ॥ ५६ ॥ त्वत्पादमूले प्रविष्टस्य कृतान्तभयाभावः कियानयं लाभो यतस्त्वद्भक्तसङ्ग एव सकलपुरुषार्थश्रेणिशिरसि नरीनर्तीत्याह । भगवतस्तव सङ्गिनां सङ्गस्य क्षणार्धेनापि स्वर्गं न तुलये समं न गणयामि । न चापुनर्भवं मोक्षम् । मर्त्यानामाशिषो राज्याद्याः किमुत ॥ ५७ ॥ अथ अतो हेतोरनघावघहरावङ्घ्री यस्य तस्य तव कीर्तिर्यशस्तीर्थं गङ्गा तयोः क्रमेणान्तर्बहिःस्नानाभ्यां विधूतः पाप्मा येषाम् । अत एव भूतेष्वनुक्रोशः कृपा सुसत्त्वं च रागादिरहितं चित्तं शीलं चार्जवादि विद्यते येषां तेषां सङ्गमोऽस्माकं स्यात् । एष एव नस्तवानुग्रहः ॥ ५८ ॥ तत्त्वज्ञानं च त्वद्भक्तसङ्गादेव भवतीत्याह—न यस्येति ॥ येषां सतां भक्तियोगेनानु-

तं दुराराध्यमाराध्य सतामपि दुरापया ॥ एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः ॥ ५५ ॥ यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ॥ विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ॥ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥ अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ॥ भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥ न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ॥ यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ५९ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ॥ तत्त्वं ब्रह्म परंज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥ यो माययेदं पुरुरूपयासृजद्बिभर्ति भूयः क्षपयत्यविक्रियः ॥ यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतन्त्रं भगवन्प्रतीमहि ॥ ६१ ॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये ॥ भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः ॥ ६२ ॥ ॥ ॥ ॥

गृहीतं शुद्धं यद्यस्य चित्तं बाह्यार्थविक्षिप्तं न भवति तमोरूपायां गुहायां च नाविशल्लयं न प्राप । तत्र तदा मुनिस्तव गतिं तत्त्वं पश्यति ॥ ५९ ॥ कीदृशं तत्त्वं तदाह—यत्रेति ॥ ६० ॥ जगत उपादानत्वेन तत्त्वं लक्षितं निमित्तत्वेनापि तदेव लक्षयन्नाह । य इदं विश्वं सदिव परमार्थमिव माययासृजत् । कथंभूतया । यया भेदबुद्धिरन्येषां भवति तया । आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया । तं त्वां निरस्तभेदं प्रतीमहि जानीमः ॥ ६१ ॥ यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि प्रागुक्तं साकारमिदं तव रूपं ये यजन्ति त एव वेदागमतत्त्वज्ञा इत्याह । क्रियाकलापैर्ये कर्मयोगिनः पूजयन्ति त एव कोविदा न त्वेतदनादृत्य केवलज्ञाने प्रवृत्ताः । तन्त्रे आगमे । कथंभूतमिदम् । भूतेन्द्रियान्तःकरणैरस्वतन्त्रैर्यदुपलक्ष्यते नियन्तृरूपं तत् ॥ ६२ ॥ ॥ ॥ ॥

१ विधूतो जगतोऽपि पाप्मा यैरिति वा । २ गतिं गुणलीलामयीं स्वरूपावस्थितिमिति [illegible] । ३ आत्मतन्त्रमित्यस्यार्थो निरस्तभेदमिति ।

नन्वभिन्ने मयि भेदं कुर्वन्तः सन्तः कथं ते कोविदाः, नहि तैर्भेदः क्रियते, त्वयैव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह—त्वमिति । आद्यस्त्वमेक एव सुप्ता मायाख्या शक्तिर्यस्य । पश्चात्तया शक्त्या । रजःसत्त्वतमसां द्वन्द्वैक्यम् । यतो रजआदेः महानहंकारः खं च मरुदग्निर्वार्धराश्च । वाः उदकम् । सुराश्चर्षयश्च भूतगणाश्चैवमिदं जगद्यतो भवति तद्विभिद्यते इत्यन्वयः ॥ ६३ ॥ एतदुपपादयति—सृष्टमिति । जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं स्वांशेन प्रविष्टः । अथो इति हेतोः परस्मान्तः सन्तमंशं चिदाभासं पुरि शयनात्पुरुषं विदुः । तर्हि किमीश्वरमेव संसारिणं विदुर्नेत्याह । सरघा मधुमक्षिकास्ताभिः सृष्टं मध्विव क्षुल्लकं विषयसुखमविद्यावृतः सन् यो भुङ्क्ते तं जीवं विदुः । तथाच श्रुतिः 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' । निर्णीतं च 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यत्र ॥ ६४ ॥ तव तु सर्वनियन्तुः कुतः संसार इत्याह । यः स्वशक्त्येदं सृष्टवान्स एष त्वं खलु भूतैरेव भूतानि मेघ-

त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते ॥ महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥६३॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन ॥ अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं यः ॥६४॥ स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः ॥ भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥ ६५ ॥ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥ कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः ॥ विशङ्कयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥ अथ त्वमसि नो ब्रह्मन्परमात्मन्विपश्चिताम् ॥ विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६८ ॥ इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः ॥ स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥६९॥ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ॥ पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥७०॥ ॥

पङ्क्तीर्वायुरिव कालयन्विचालयन् । लोकान्विकर्षसि संहरति । अनुमेयतत्त्वोऽलक्ष्यस्वरूपः ॥ ६५ ॥ विकर्षणप्रकारमाह—प्रमत्तमिति । इतिकृत्यमेवमेवमिदं कर्तव्यमिति चिन्तयोच्चैः प्रमत्तम् । तत्र हेतुः—विषयेषु लालसमतिकामुकम् । प्राप्तेऽपि विषये प्रवृद्धलोभम् । अन्तकस्त्वमभिपद्यसे आक्रमसि क्षुधा लेलिहानौ जिह्वयौष्ठप्रान्तौ स्पृशन्सर्पो मूषकमिव ॥ ६६ ॥ अतः कस्तव पदाब्जं त्यजेत्पण्डितश्चेत् । कथंभूतः । यस्तवावमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य सः । यदस्माकं गुरुर्ब्रह्मार्चति स्मेति सर्वेषां स्तोतॄणां वाक्यम् । विशङ्कया नाशशङ्कया । विनोपपत्तिमिति दृढविश्वासेन । मनवश्चतुर्दशार्चन्ति स्म ॥ ६७ ॥ उपसंहरति—अथेति । रुद्रभयेन ध्वस्तम् । अतो न कुतश्चिद्भयं यस्यां तादृशी गतिरसि ॥ ६८ ॥ ६९ ॥ ७० ॥ ॥ ॥

१ तया प्रवुद्धया मायाशक्त्या । २ तत् रजआदि विभिद्यते त्वत्तो भिन्नं भवतीत्यर्थः । ३ गुहा बुद्धिं प्रविष्टौ तस्या अन्तःस्थितावात्मानौ जीवपरात्मानौ हि यस्मात्तद्दर्शनात्तस्य जीवस्य दर्शनं प्रत्यक्षेण तस्य परमात्मनश्च दर्शनं श्रुत्या तस्मादिति । ४ 'यद्दिनोपपत्तिः' इति वीर० पाठस्तत्र दिननिष्पत्तिरित्यर्थः । ५ नाशं प्राप्तमिव कम्पमानं वा । ६ उपपत्ति युक्तिं विनेत्यस्यार्थो दृढविश्वासेनेति ।

योगादेशं नामैतत्स्तोत्रमुपासाद्य पाठतः प्राप्य मनसा धारयन्तोऽभ्यासेन जपत ॥ ७१ ॥ विश्वसृजां पतिर्ब्रह्मा ॥ ७२ ॥ सिसृक्षमः सृष्टवन्तः ॥ ७३ ॥ युक्त एकाग्रचित्तः ॥७४॥ ज्ञानमेव नौर्यस्य ॥७५॥ योऽधीयानो भवत्यसौ हरिमाराधयति ॥७६॥ अमुष्माद्धरेः । असत्वरन् स्थिरः सन् । मद्गीतं स्तोत्रं तेन गीता-त्स्तुतात् यद्यदिच्छति तत्तद्विन्दते । एक एव वल्लभः प्रिय आश्रयस्तस्मात् ॥ ७७ ॥ कल्ये उपसि ॥ ७८ ॥ तपश्चरेत तपसोऽन्ते ईप्सितं प्राप्स्यथ ॥७९॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥छ॥ ॥ प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ॥

योगादेशमुपासाद्य धारयन्तो मुनिव्रताः ॥ समाहितधियः सर्व एतदभ्यसतादृताः ॥७१॥ इदमाह पुरास्माकं भग-वान्विश्वसृक्पतिः ॥ भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥७२॥ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ॥ अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥७३॥ अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ॥ अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥७४॥ श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ॥ सुखं तरति दुष्पारं ज्ञाननौर्व्यसना-र्णवम् ॥७५॥ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ॥ अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७६ ॥ विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् ॥ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥ इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः ॥ शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७८ ॥ गीतं मयेदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम् ॥ जपन्त एकाग्रधियस्तपो महच्चरध्वमन्ते तत आप्स्यथेप्सितम् ॥७९॥ ॥ इति श्रीम-द्भागवते महापुराणे चतुर्थस्कन्धे रुद्रगीतं नाम चतुर्विंशोऽध्यायः ॥२४॥ ॥छ॥ ॥ मैत्रेय उवाच ॥ इति संदिश्य भगवान्बार्हिषदैरभिपूजितः ॥ पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥ रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ॥ जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥ प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ॥ नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयन् ॥३॥ श्रेयस्त्वं कतमद्राजन्कर्मणात्मन ईहसे ॥ दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥ ॥

प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पञ्चभिः ॥ १ ॥ पुरंजनकथाव्याजात्पञ्चविंशे तु नारदः ॥ आत्मनो बुद्धिसङ्गेन विविधामाह संसृतिम् ॥ २ ॥ प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः ॥ पुरंजनकथाकूटं प्राह प्राचीनबर्हिषे ॥ ३ ॥ १ ॥ २ ॥ प्रचेतस्सु तपश्चरत्सु नारदः प्राचीनबर्हिषं बोधितवान् । अतः प्रचे-तसां कथामसमाप्यैव तत्पितुर्वृत्तमाह—प्राचीनबर्हिषमिति ॥ ३ ॥ श्रेयः फलमीहसे इच्छसि । इह कर्मणि तदुभयं नेष्यते विचारकैः ॥ ४ ॥ ॥

१ तपश्च भगवदाराधनलक्षणमेव । २ अस्माकं अस्मान् । ३ अथ अतः । ४ ज्ञान भगवद्रूपगुणैश्वर्यज्ञानमिति चक्रवर्ती । ५ बार्हिषदैः प्रचेतोभिः । ६ जपरूपमेव तपश्चक्रुरित्यर्थः ।

परं श्रेयो मोक्षम् । कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य ॥५॥ किंच गृहेषु स्थितः । पुत्रादिष्वेव पुरुषार्थधीर्यस्य ॥ ६ ॥ कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून्प्रत्यक्षं प्रदर्शयन्नाह—भो भो इति । संज्ञापितान्मारितान् ॥७॥ एते त्वां संपरेतं मृतं संप्रतीक्षन्ते । वैशसं त्वत्कृतां पीडां स्मरन्तः । ततश्चायःकूटैर्लोहयन्त्रमयैः शृङ्गैश्छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥ अत्रास्मिन्संकटे निस्तारकममुमितिहासं कथयिष्यामि ॥ ९ ॥ तत्र जीवस्य विषयासक्त्या संसारः स चेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य साक्षाद्बोधयितुमशक्ते राजवृत्तान्तमिवाह—आसीदिति । पुरंजनादीन्स्वयमेवेतः पञ्चमेऽध्याये व्याख्यास्यति, तथापि सुखग्रहणाय यथोपयोगं किंचित्किंचिद्व्याख्यास्यामः । तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरंजनो जीवः । न विज्ञातं नाम यस्य । नच विज्ञातं चेष्टितं यस्य स ईश्वरस्तस्य सखा । यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य । जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥ शरणं भोगायतनं देहम् । पृथिवीं तदुपलक्षितं ब्रह्माण्डम्

॥ राजोवाच ॥ न जानामि महाभाग परं कर्मापविद्धधीः ॥ ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥ गृहेषु कूटधर्मेषु पुत्रदाराधनार्थधीः ॥ न परं विन्दते मूढो भ्राम्यन्संसारवर्त्मसु ॥६॥ ॥नारद उवाच॥ भो भो प्रजापते राजन्पशून्पश्य त्वयाऽध्वरे ॥ संज्ञापितान् जीवसंघान्निर्घृणेन सहस्रशः॥७॥एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव॥ संपरेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥ [3]अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् ॥ पुरंजनस्य चरितं निबोध गदतो मम ॥९॥ आसीत्पुरंजनो नाम राजा राजन्बृहच्छ्रवाः ॥ तस्याविज्ञातनामासीत्सखाऽविज्ञातचेष्टितः ॥१०॥ सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ॥ नानुरूपं[4] यदाऽविन्ददभूत्स विमना इव ॥ ११ ॥ न साधु मेने ताः सर्वा भूतले यावतीः[5] पुरः ॥ कामान्कामयमानोऽसौ तस्य तस्योपपत्तये ॥ १२ ॥ स एकदा हिमवतो दक्षिणेष्वथ सानुषु ॥ ददर्श नवभिर्द्वार्भिः पुरं लक्षितलक्षणाम् ॥ १३ ॥ प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ॥ स्वर्णरौप्यायसैः शृङ्गैः[6] संकुलां सर्वतो गृहैः ॥ १४ ॥ ॥ ॥ ॥ ॥

॥११॥ यावत्यः पुरस्तास्तस्य तस्य कामस्योपपत्तये प्राप्त्यै असौ साधु न मेने । गवादिदेहानामैहिकपारलौकिकभोगभोग्यत्वाभावात् । तथाच श्रुतिः 'ताभ्यो गामानयत्ता अब्रुवन्नवैनोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोऽयमलमिति' इति ॥१२॥ हिमवतो दक्षिणेषु सानुषु । कर्मक्षेत्रे भारतवर्षे । पुरं मनुष्यशरीरम् । लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्याम् । अन्धपङ्गुत्वादिदोषरहितामित्यर्थः ॥१३॥ तामनुवर्णयति त्रिभिः । अत्र किंचित्किंचित्सादृश्यमवलम्ब्य कथासौन्दर्याय प्राकारादीनि वर्ण्यन्ते । परिखैरिति पुंस्त्वमार्षम् । अक्षाणीन्द्रियाणि गवाक्षाः । त्वगादयः शरीरावयवाः प्राकारादिपुरावयवत्वेन निरूप्यन्ते । स्वर्णादिशृङ्गैः शिखरैर्युक्ता ये गृहास्तैः संकुलामिति । आधारादिचक्राणि गृहाः शृङ्गाणि च राजसादिस्वभावा विवक्षिताः ॥ १४ ॥ ॥ ॥ ॥

१ अत्र रूपके जीवो राजत्वेन शरीर पुरत्वेन परमात्मा सखित्वेन बुद्धिर्भार्यात्वेन च निरूप्यत इति ज्ञेयम् । २ अत्रेवशब्दप्रयोगो वक्ष्यमाणरूपके पुरंजनादिशब्देन जीवमुद्दिश्य तस्यैव ससारादिवर्णनादिति ज्ञेयम् । ३ अत्र काम्यकर्मासक्तित्यागपूर्वकनिःश्रेयससाधनग्रहणे इति सिद्धां० । ४ अनुरूपं शरणमित्यनुपज्जते । ५ यावतीश्चतुरशीतिलक्षाण्यपि । ६ आधारादीति मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धिब्रह्मरन्ध्राख्यचक्राणि ज्ञेयानि ।

नीलादिभिः क्लृप्ता हर्म्यस्थली यस्याम् । अरुणं माणिक्यम् । स्थली हृदयम् । नाड्यो नीलादिभावेन निरूप्यन्ते तत्तद्विषयवासना वा । भोगवतीं नागानां
पुरीमिव ॥ १५ ॥ सभा समाजस्थानम्, चत्वरं चतुष्पथः, रथ्या राजमार्गः, आक्रीडायतनं द्यूतादिस्थानम्, आपणो हट्टः, तैः । चैत्यं जनानां विश्राम-
स्थानम्, ध्वजेषु पताकाः, ताभिश्च युक्ताम् ॥ १६ ॥ अत्र च विषयनिष्ठबुद्धियोगेन जीवस्य देहसंबन्ध इति विवक्षया विषयवर्गं बाह्योपवनत्वेन निरूपयति ।
तद्विशेषाम् स्रक्चन्दनादीन् दिव्यद्रुमलतादिभावेन । शेषः कथालंकारः । बाह्योपवने प्रमदां ददर्शेति चतुर्थेनान्वयः । नदतां विहङ्गालिकुलानां कोलाहलो
येषु ते जलाशया यस्मिन् ॥ १७ ॥ हिमनिर्झराणां विप्रुषो बिन्दवस्तद्वता कुसुमाकरसंबन्धिना वायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तैर्वृक्षैर्नलिनीनां
सरसीनां तटेषु सम्पत्समृद्धिर्यस्मिन् ॥ १८ ॥ अनाबाधे तत्कृतबाधारहिते । मुनिव्रतैरहिंस्रैः । आत्मानमाहूतं मन्यते यत्र ॥ १९ ॥ तत्र प्रमदोत्तमां विषय-

नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ॥ क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥ १५ ॥ सभाचत्वररथ्याभिरा-
क्रीडायतनापणैः ॥ चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥ १६ ॥ पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ॥
नदद्विहङ्गालिकुलकोलाहलजलाशये ॥ १७ ॥ हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ॥ चलत्प्रवालविटपनलिनीतटसं-
पदि ॥ १८ ॥ नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ॥ आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥ यदृच्छ-
यागतां तत्र ददर्श प्रमदोत्तमाम् ॥ भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥ पञ्चशीर्षाहिना गुप्तां प्रतीहारेण
सर्वतः ॥ अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २१ ॥ सुनासां सुदतीं बालां सुकपोलां वराननाम् ॥ समविन्यस्त-
कर्णाभ्यां बिभ्रतीं कुण्डलश्रियम् ॥ २२ ॥ पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ॥ पद्भ्यां क्वणद्भ्यां चलतीं नूपुरै-
र्देवतामिव ॥ २३ ॥ स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ॥ वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम् ॥ २४ ॥

विवेकवर्ती बुद्धिं ददर्श । यदृच्छयागतामिति तयोः संबन्धस्य दुर्निरूप्यत्वं दर्शयति । तामनुवर्णयति सार्धैश्चतुर्भिः । दशभिर्ज्ञानकर्मेन्द्रियैः । एकैकं प्रत्येकं
शतमनन्ता वृत्तयस्तासां नायकैः पतिभिः सह । पाठान्तरे नायिकाः स्त्रियो येषां तैः ॥ २० ॥ पञ्चशीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतीहारेण पाल-
केन गुप्ताम् । ऋषभं भर्तारम् । अप्रौढां षोडशवार्षिकीम् ॥ २१ ॥ गन्धज्ञानादिभिर्बुद्ध्यवयवैः सुनासत्वादि निरूप्यते । समं विन्यस्तौ रचितौ कर्णौ ताभ्यां
कुण्डलशोभां दधतीम् ॥ २२ ॥ 'अन्नमयं हि सौम्य मनः' इति 'यत्कृष्णं तदन्नस्य' इत्यादिश्रुत्यनुसारेण श्यामामित्युक्तम् । नूपुरैः क्वणद्भ्याम् । नूपुरेण पादा-
ङ्गुलीयकानामप्युपलक्षणाद्बहुवचनम् ॥ २३ ॥ व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्याम् । समौ च वृत्तौ च ॥ २४ ॥

१ दिव्यद्रुमेति रूपवैचित्र्यम् । २ नदद्विहंगेति शब्दवैचित्र्यम् । ३ विंशतिश्लोकोत्तर—'तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् ॥ सस्त्रीकाणा सरता तस्या बहुरूपोऽग्रणीः स्त्रियः ॥'
इति श्लोकोऽधिको विजयध्वज्याम् । ४ 'शतनायिकैः' इत्येवंरूपे ।

तामाहेति तयोः संवादोक्तिः संवन्धदार्ढ्याय । अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य कटाक्षस्य बाणस्य तेन स्पृष्टो विद्धः । प्रेम्णा उच्चैर्भ्रमन्ती भ्रूर्धनुस्थानीया यस्मिंस्तेन ॥ २५ ॥ कुतः स्थानादिहागताऽसि । हे सति, पुर्याः समीपस्था उपपुरी भूस्तामालक्ष्य किं कर्तुमिच्छसीत्यर्थः ॥ २६ ॥ ते तव येऽनुपथा अनुवर्तिन एते के । एकादशो महान्भटो बृहद्बलत्वेन वक्ष्यमाणो येषु दशसु ते । बुद्धेर्मनसः पृथगुपादानं बुद्धिपरिचारकेन्द्रियसहायतया तत्परिचारकत्वविवक्षया ॥ २७ ॥ त्वं ह्रीः किं पतिं धर्मं विचिन्वती, अथवा भवानी पतिं शिवं विचिन्वती, अथवा किं वाक् सरस्वती पतिं ब्रह्माणम्, रमा पतिं विष्णुम् । मुनिरिव संयता सती । कथंभूतं पतिम् । त्वदङ्घ्रिकामेनैव त्वत्कृतया त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम् ॥ २८ ॥ हे वरोरु, आसां मध्ये त्वमन्यतमापि न संभवसि । यतो भुविस्पृक् । नहि देवता भुवं स्पृशन्ति । वीरवरेण मया । ननु त्वमकर्मा कथं त्वया सहालंकरोमीति चेत्तत्राह । अदभ्रमनल्पं

तामाह ललितं वीरः सव्रीडस्मितशोभनाम् ॥ स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा ॥ २५ ॥ का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति ॥ इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥२६॥ क एतेऽनुपथा ये त एकादश महाभटाः ॥ एता वा ललनाः सुभ्रूः कोऽयं तेऽहिः पुरःसरः ॥२७॥ त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने ॥ त्वदङ्घ्रिकामाप्तसमस्तकामं क्व पद्मकोशः पतितः कराग्रात् ॥२८॥ नासां वरोर्वन्यतमा भुविस्पृक्पुरीमिमां वीरवरेण साकम् ॥ अर्हस्यलंकर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥२९॥ यदेष माऽपाङ्गविखण्डितेन्द्रियं सव्रीडभावस्मितविभ्रमद्भ्रुवा ॥ त्वयोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथानुगृहाण शोभने ॥ ३० ॥ तदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकवृन्दसंवृतम् ॥ उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाभिमुखं शुचिस्मिते ॥३१॥ ॥ नारद उवाच ॥ इत्थं पुरंजनं नारी याचमानमधीरवत् ॥ अभ्यनन्दत तं वीरं हसन्ती वीर मोहिता ॥ ३२ ॥ न विदाम वयं सम्यक्कर्तारं पुरुषर्षभ ॥ आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम् ॥ ३३ ॥ ॥

कर्म त्वत्सङ्गाद्यस्य मम तेन स्वतोऽकर्मत्वेन त्वत्सङ्गात्सकर्मा भवामीत्यर्थः । परं वैकुण्ठम् ॥ २९ ॥ यद्यस्मात्तवापाङ्गेन विखण्डितमिन्द्रियं मनो यस्य तं मां मनोभवो बाधते । अथ तस्मादनुगृहाण । सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूस्तयोपसृष्टः प्रेरितः ॥ ३० ॥ यद्व्रीडया सन्मुखं न भवति तदाननमुन्नीय मे दर्शय । शोभने भ्रुवौ यस्मिन् । सुतारे शोभनकनीनिके लोचने यस्मिन् । व्यालम्बिनो दीर्घा ये अलकास्तेषां वृन्देन संवृतम् । वल्गूनि वाचकानि वाक्यानि यस्मिन् ॥ ३१ ॥ हे वीर, सापि तं दृष्ट्वा मोहिता सती तमाह ॥ ३२ ॥ यत्पृष्टं कस्यासीत्यनेन कस्य पुत्री गोत्रजेति का त्वमिति च किं नामासीति तत्राह । आत्मनो मम परस्य तवापि कर्तारं सम्यङ्न विद्मः । गोत्रं नाम च यत्कृतं भवति तं च न विद्मः ॥ ३३ ॥ ॥ ॥

१ केति अन्तिमं पक्षं निश्चित्य पृच्छति । २ 'यदेप तेऽपाङ्ग' इति पाठः । ३ 'अथोपसृष्टो' इति पाठः । ४ भगवानित्यनेन मनोभवस्यापरिहार्यत्वं बोधितम् । ५ 'माऽनुगृहाण' इति पाठः । ६ अभ्यनन्दत अङ्गीचकार । ७ प्राचीनबर्हिषः संबोधन हे वीरेति, तवेव कथेयं कथ्यत इति ध्वनिः इति चक्र० । ८ न विद्म इत्यनन्तर 'अयमाशयः—कालः कर्मस्वभावः प्रकृतिर्गुणा ईश्वरो वा कर्तेत्यहं न जानामि किन्त्वज्ञानेनात्मनि सर्वं कल्पितमिति' इति व्याख्यायां विशेषः इति चक्र० ।

आत्मनो मम शरणमियं पुरी येन निर्मिता तं च न विद्मः॥३४॥यत्पृष्टं क एते अनुपथा इति तत्राह—एत इति ॥३५॥ आस्तां नामगोत्रादि, यदत्रागतोऽसि एत-
दिष्ट्या भद्रं तावत् । ग्राम्यानिन्द्रियग्रामाहान् । उद्वहिष्यामि संपादयिष्यामि । स्वबन्धुभिः सखिभिः सखीभिश्च ॥३६॥ समाः संवत्सरान् । मनुष्यदेहप्रवेशाच्छत-
मित्युक्तम्॥३७॥प्रवृत्तिस्वभावत्वान्निवृत्तिनिन्दापूर्वकं तत्सङ्गमभिनन्दति—कमिति पञ्चभिः । त्वत्तोऽन्यं कं नु रमये । अरतिज्ञं नैष्ठिकम् । अकोविदमनिषिद्धसुख-
त्यागिनम् । संपरायो मृत्युस्तदनभिमुखं परलोकचिन्ताशून्यम् । अश्वस्तनविदं श्व इदं कर्तव्यमितीह लोकचिन्ताशून्यम् । अत एव पशुतुल्यम् ॥३८॥ अत्र गार्हस्थ्ये ।
प्रजानन्दः पुत्रसुखम् । अमृतं मोक्षः । केवलिनो यतयः ॥ ३९ ॥ गृहाश्रम इति यदेतत्क्षेमार्हं शरणमाश्रयं वदन्ति ॥ ४० ॥ ४१ ॥ भोगिभोगयोः सर्पदेहाकारयोस्तव

इहाद्य सन्तमात्मानं विदाम न ततः परम् ॥ येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३४ ॥ एते सखायः सख्यो मे नरा नार्यश्च मानद ॥ सुप्तायां मयि जागर्ति नागोऽयं पालयन्पुरीम् ॥ ३५ ॥ दिष्ट्यागतोऽसि भद्रं ते ग्राम्यान्कामानभीप्ससे ॥ उद्वहिष्यामि तांस्तेऽहं स्वबन्धुभिररिन्दम ॥३६॥ इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ॥ मयोपनीतान्गृह्णानः कामभोगान् शतं समाः ॥ ३७ ॥ कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम् ॥ असंपरायाभिमुखमश्वस्तनविदं पशुम् ॥ ३८ ॥ धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः ॥ लोका विशोका विरजा यान्न केवलिनो विदुः ॥ ३९ ॥ पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ॥ क्षेम्यं वदन्ति शरणं भवेऽस्मिन्यद्गृहाश्रमः ॥ ४० ॥ का नाम वीर विख्यातं वदान्यं प्रियदर्शनम् ॥ न वृणीत प्रियं प्राप्तं मादृशी त्वादृशं पतिम् ॥ ४१ ॥ कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज ॥ योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरत्यपोहितुम् ॥ ४२ ॥ ॥ नारद उवाच ॥ इति तौ दम्पती तत्र समुद्य समयं मिथः ॥ तां प्रविश्य पुरीं राजन्मुमुदाते शतं समाः ॥ ४३ ॥ उपगीयमानो ललितं तत्र तत्र च गायकैः ॥ क्रीडन्परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४४ ॥ सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ॥ पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः ॥ ४५ ॥ ॥ ॥

भुजयोर्यत्र सज्जेदेवंभूतं कस्याः स्त्रिया मनः स्यान्न कस्या अपि । यो भवाननाथवर्गा दीनस्तेषामाधिमलमत्यर्थमपोहितुं सर्वत्र चरति । केनापोहितुम् । घृणयो-
द्धतोऽतिशयितो यः स्मितपूर्वकोऽवलोकस्तेन ॥ ४२ ॥ समुद्य समुदीर्य । समाः संवत्सरान् ॥ ४३ ॥ तत्र जाग्रदवस्थां संक्षेपेणाह—उपगीयमान इति । सुषुप्तावस्था-
माह । ह्रदिनी हृदयाकाशं स्वापस्थानम् । शुचौ निदाघे ॥ ४४ ॥ इदानीं नवद्वारप्रदर्शनपूर्वकं जाग्रदवस्थां प्रपञ्चयति—सप्तेति यावदध्यायसमाप्ति । तस्याः पुरः उपरि
कृता द्वारः सप्त । वृता इति पाठे संवृताः । नेत्रे नासिके श्रोत्रे मुखं चेति सप्त । अधो द्वे द्वारौ गुदलिङ्गे । यः कश्चनेति आत्मनः सम्यग्विज्ञानादनियतत्वाच्च ॥४५॥

१ इह पुरि सन्तं विद्यमानमात्मानं मामेव वय विदाम ततो मत्तः परमन्य न विदामेत्यन्वयः । २ लोकाः स्वर्गाद्याः । ३ विरजाः शुद्धाः । ४ वदान्यं पुत्रकलत्राद्यभीष्टदातारम् ।
५ 'न वृणीत पतिं प्राप्तं मादृशी त्वादृशं स्वयम्' इति पाठः । ६ समयं सकेतम् ।

तासु सप्तसु पञ्चद्वारः पौरस्त्याः पूर्वदिग्भवाः ॥ ४६ ॥ खद्योतवदल्पप्रकाशा वामनेत्ररूपा । आविः प्रकटं मुखं यस्याः सा बहुप्रकाशा दक्षिणनेत्रलक्षणा 'तस्माद्दक्षिणेऽर्ध आत्मनो वीर्यावत्तरः' इति श्रुतेः । स्वानुभवाच्च तत्र प्रकाशाधिक्यम् । एकत्र संलग्ने । विभ्राजितं रूपम् । द्युमत्सखश्चक्षुःसहितः ॥ ४७ ॥ नलनालशब्दौ छिद्रवचनौ । तद्वती नलिनी नालिनी च वामदक्षिणनासिके । अत्रापि संज्ञाभेदादेव कार्ये न्यूनाधिक्यं पूर्ववज्ज्ञेयम् । अवधूतो वाय्वधिष्ठितो घ्राणः । सौरभं गन्धम् ॥ ४८ ॥ मुख्या प्रधाना आस्यम् । आपणो भापणम् । बहूदनश्चित्रमन्नम् । बह्वोदन इत्यनुक्तिः परोक्षवादत्वाय । रसज्ञं रसनेन्द्रियं विपणो वागिन्द्रियं ताभ्यामन्वितः ॥ ४९ ॥ दक्षिणेनेति न तृतीया, किंतु दक्षिणस्यां दिशीत्यस्मिन्नर्थे तद्धितोऽयमेनप्प्रत्ययोऽव्ययसंज्ञः । एवमुत्तरेणेति । अयमर्थः—पञ्चानां विपयाणामन्यतोऽनवगतानां प्रकाशायालमिति पञ्चालं शास्त्रम् । श्रवणकाले च बलाधिक्याद्दक्षिणकर्णः प्रथमं प्रवर्तते । शास्त्रे च प्रथमं

पञ्चद्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ॥ पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४६ ॥ खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ॥ विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४७ ॥ नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ॥ अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४८ ॥ मुख्या नाम पुरस्ताद्द्वास्तयापणबहूदनौ ॥ विषयौ याति पुरराड्रसज्ञविपणान्वितः ॥ ४९ ॥ पितृहूर्नृप पुर्या द्वार्दक्षिणेन पुरंजनः ॥ राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः ॥ ५० ॥ देवहूर्नाम पुर्या द्वा उत्तरेण पुरंजनः ॥ राष्ट्रमुत्तरपञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥ आसुरी नाम पश्चाद्द्वास्तया याति पुरंजनः ॥ ग्रामकं नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥ निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरंजनः ॥ वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५३ ॥ अन्धावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ ॥ अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५४ ॥ ॥ ॥ ॥

श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणकर्णेन श्रवणमिष्यते । अतस्तदर्थमनुष्ठाय पितृभिराहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते तदनेन प्रकारेण पितॄणामाह्वानमनेन भवतीति पितृहूर्दक्षिणः कर्णः । एवं तद्वैपरीत्येनोत्तरः कर्णो देवहूः । तथाच व्याख्यास्यति—'पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत्' इति ॥ ५० ॥ ५१ ॥ असुरा इन्द्रियारामास्तेपामियमासुरी शिश्नद्वाः । ग्रामकं ग्रामस्थजनानां कं सुखं व्यवायम् । दुर्मदेन गुह्येन्द्रियेण ॥ ५२ ॥ निर्ऋतिर्नाम गुदो मृत्युद्वारत्वात् । वैशसं मलविसर्गम् । लुब्धकेन पायुना । तेनोत्क्रान्तस्य दुःखप्राप्तेर्लुब्धकसाम्यम् ॥ ५३ ॥ अमीपां मध्ये । निर्वाक् पादः, पेशस्कृत् हस्तः, तावुभावन्धौ, छिद्राभावात्, स्वतो ज्ञानक्रियाशक्त्यभावाच्च । अक्षण्वतामिन्द्रियवतां देहानामधिपतिः पुरंजनः । त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात् ॥ ५४ ॥ ॥ ॥ ॥५४॥

१ विभ्राजितं जनपद रूपं विपयं याति । २ सर्वद्वारमुख्यत्वात्सर्वसजीवकत्वाच्च मुख्या । द्वाभ्या द्वाभ्यामेकदेशं यातीत्यपि मुख्यत्वे हेतुः । ३ श्रुतधरान्वितः श्रोत्रेन्द्रियान्वितः । याति प्राप्नोति । ४ 'निर्वाक्योपस्करावुभौ' इति विजयध्वजीयः पाठस्तत्र निर्गतं वाक्य यस्मात्स निर्वाक्यः पादः । कर्तुः पुरुपस्योपकरणभूतत्वादुपस्करो हस्त इत्यर्थः ।

अन्तःपुरं हृदयं गतः। विषूचीनं सर्वतोमुखं मनः। मोहप्रसादहर्षास्तमःसत्त्वरजःकार्याणि। जाया बुद्धिः, आत्मजा इन्द्रियपरिणामास्तदुद्भवम् ॥ ५५ ॥ ५६ ॥ जक्षत्यां भक्षयन्त्याम् ॥ ५७ ॥ ५८ ॥ आसतीमासीनाम् ॥ ५९ ॥ ६० ॥ ६१ ॥ सवामहन्त्वादिलक्षणा प्रकृतिः स्वभावो वञ्चितो यस्य। सर्वथा प्रकृत्या वञ्चित इति वा। नेच्छन् अनिच्छन्। क्लैब्यात् पारवश्यात् ॥६२॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भा० दी० टीकायां पञ्चविंशोऽध्यायः ॥२५॥ ॥

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः ॥ सद्बुद्धित्यागयोगाभ्यां संसृतिः सा प्रपञ्च्यते ॥ १ ॥ तदेवमात्मन उपाधिकृतां सुषुप्तावस्थां जाग्रदवस्थां चोक्त्वेदानीं स्वप्नावस्थामाह—स एकदेति दशभिः। महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य स रथमारुह्य पञ्चप्रस्थं वनमगादिति तृतीयेनान्वयः।

स यर्ह्यन्तःपुरगतो विषूचीनं समन्वितः[1] ॥ मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥ एवं कर्मसु संसक्तः कामात्मा वञ्चितोऽबुधः ॥ महिषी यद्यदीहेत तत्तदेवान्ववर्तत ॥ ५६ ॥ क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः ॥ अश्नन्त्यां क्वचिदश्नाति जक्षत्यां[2] सह जक्षति ॥ ५७ ॥ क्वचिद्गायति गायन्त्यां रुदत्यां रुदति क्वचित् ॥ क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥ ५८ ॥ क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति ॥ अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥ ५९ ॥ क्वचिच्छृणोति शृण्वत्यां पश्यन्त्यामनुपश्यति ॥ क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥ ६० ॥ क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ॥ अनुहृष्यति हृष्यन्त्यां मुदितामनुमोदते ॥ ६१ ॥ विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः ॥ नेच्छन्ननुकरोत्यज्ञः[3] क्लैब्यात्क्रीडामृगो यथा ॥ ६२ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पुरंजनोपाख्याने पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ नारद उवाच ॥ स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् ॥ द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥ १ ॥ एकरश्म्येकदमनमेकनीडं द्विकूबरम् ॥ पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥ ॥ ॥

रथं तदानीमेव विधृतं स्वप्नदेहम्, जाग्रद्देहस्य शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात्। पञ्च ज्ञानेन्द्रियाण्यश्वा यस्य। आशुगं शीघ्रगतिम्। द्वे अहंताममते ईषे दण्डिके यस्य। द्वे पुण्यपापे चक्रे यस्य। एकं प्रधानमक्षो यस्य। त्रयो गुणा वेणवो ध्वजा यस्य। पञ्च प्राणा बन्धुराणि बन्धनानि यस्य ॥ १ ॥ एकं मनो रश्मिः प्रग्रहो यस्य, एका बुद्धिर्दमनः सूतो यस्य तं च तं च। एकं हृदयं नीडं रथिन उपवेशस्थानं यस्मिन्। द्वौ शोकमोहौ कूबरौ युगबन्धनस्थानं यस्य। पञ्च शब्दादयो विषयाः प्रहियन्ते प्रक्षिप्यन्ते यस्मिन्। अस्य व्याख्यानं भविष्यति पञ्चेन्द्रियार्थप्रक्षेप इति। सप्त धातवो वरूथा रक्षार्थं चर्माद्यावरणानि यस्य। पञ्च कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य ॥ २ ॥ ॥ ॥ ॥ ॥

१ 'सयुक्तः' इति पाठः। २ जक्षतीति वचनव्यत्ययो विकरणव्यत्ययो वा छान्दसः। ३ अनुकरोति तद्धर्ममात्मन्यध्यवस्यति।

हैमोपस्करं सौवर्णाभरणम् । स्वर्णवर्मा, वर्म कवचम्, रजोगुणावृतः । अक्षयेषुधिः, इषुधिर्निषङ्गः, अनन्तवासनाहंकारोपाधिः । एकादशो मनोरूपश्चमूनाथः सेनापतिर्यस्य । वासनामयस्य मनसः प्रग्रहत्वं संकल्पविकल्पात्मकस्य बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्वमिति विभागः । पञ्च शब्दादयो विषयाः प्रस्थाः सानवो यस्मिंस्तद्वनं भजनीयं देशमगात् ॥३॥ आत्ता गृहीता इषवो रागादिरूपाः, कार्मुकं च भोगाद्यभिनिवेशरूपं येन । जायां विवेकवतीं बुद्धिं विहाय । अतदर्हां त्यागानर्हाम्[1]। त्यागे हेतुः—मृग्यन्त इति मृगा विषयास्तेषु व्यसनं भोगासक्तिस्तेन लालसाऽतिस्पृहा यस्य ॥ ४ ॥ बाणै रागादिभिः । वनेषु भजनीयदेशेषु । वनगोचरान्भजनीयविषयान् । न्यहनत् आत्मसात्कृतवान् । कथापक्षे तु स्पष्टमेव ॥ ५ ॥ नन्वासुरीं वृत्तिमाश्रित्येति किमिति मृगया निन्द्यते, कथापक्षे तावद्राज्ञो विहितैव सा, अध्यात्मपक्षेऽपि जीवस्य विषयभोगो विहित एवेत्याशङ्क्याह—तीर्थेष्विति त्रिभिः । अयं भावः—नहि मृगया विधीयते रागप्राप्तत्वात्किंतु नियम्यते प्रवृत्तिः संकोच्यते । नियममेव षड्विधं दर्शयति । यद्यलमत्यर्थं लुब्धो रागी सन् हन्यात्तर्हि तीर्थेषु श्राद्धादिष्वेव । तत्रापि प्रतिदृष्टेषु

हैमोपस्करमारुह्य स्वर्णवर्माऽक्षयेषुधिः ॥ एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम् ॥३॥ चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः ॥ विहाय जायामतदर्हां मृगव्यसनलालसः ॥४॥ आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ॥ न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥५॥ तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्पशून्वने ॥ यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥६॥ य एवं कर्म नियतं विद्वान् कुर्वीत मानवः ॥ कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते ॥७॥ अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते ॥ गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥८॥ तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः ॥ विप्लवोऽभूद्दुःखितानां दुःसहः करुणात्मनाम् ॥ ९ ॥ शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् ॥ मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममध्यगात् ॥१०॥ ततः[2] क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान् ॥ कृतस्नानोचिताहारः[3] संविवेश गतक्लमः ॥ ११ ॥ आत्मानमर्हयांचक्रे धूपालेपस्रगादिभिः ॥ साध्वलंकृतसर्वाङ्गो महिष्यामादधे मनः ॥१२॥ ॥

प्रख्यातेष्वेव न नित्यश्राद्धादिषु । तत्रापि राजैव मेध्यानेव वन एव यावदुपयोगमेवेति । एवं जीवस्य विषयसेवापि यावदुपयोगं न यथेष्टमिति नियम एवेत्यर्थः ॥ ६ ॥ अतो नावश्यकत्वमित्याह—य इति । एवं नियतं कर्म विद्वान् । तेनेत्युपलक्षणम् । तेनान्येन वा कर्मणैवमनुष्ठितेन यज्ज्ञानं भवति तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते ॥ ७ ॥ अन्यथा नियमोल्लङ्घनेनान्तःकरणशुद्ध्यभावात् । कर्तृत्वाभिमानमारूढः कर्मभिरनुबध्यते, ततश्च गुणप्रवाहे पतितोऽधो व्रजति ॥ ८ ॥ प्रासङ्गिकं परिसमाप्य पुनर्मृगयामेवानुवर्णयति—तत्रेति । चित्रा वाजाः पक्षा येषां तैः । विप्लवो नाशः करुणात्मनां कृपालूनां दुःसहः ॥ ९ ॥ १० ॥ तदेवं स्वप्नावस्था दर्शिता, इदानीं पुनरपि विवेकवत्या बुद्ध्या रममाणस्य पुत्रादिसंततिं प्रपञ्चयिष्यन् कथासौन्दर्याय तस्याः प्रणयकुपिताया अनुनयं प्रस्तावसहितमाह—तत इत्यारभ्य यावदध्यायसमाप्ति । एयिवान् आगतः । कृतं स्नानमुचित आहारश्च येन । संविवेश शय्यामाश्रितः ॥ ११ ॥ १२ ॥ ॥५५॥

१ अन्यान् मेध्येतरानमेध्यान् । २ 'ततस्तूरुपरिश्रान्तः' इति पाठः । ३ कृतस्नान इति ब्राह्मणानामभक्ष्य पापप्रायश्चित्तं कृतवानित्यर्थः इति चक्र० ।

गृहमेधिनीं सात्त्विकीं बुद्धिं, राजसां बुद्ध्यां वर्तमानो नापश्यत् ॥ १३ ॥ वेदिपत् हे प्राचीनबर्हिः । अन्तःपुरस्त्रियस्तत्सखीः । सेश्वरीणां स्वामिनीसहितानाम् । यथा पुरेत्यादि पृथग्वाक्यम् ॥ १४ ॥ व्यङ्गे चक्रादिहीने ॥ १५ ॥ १६ ॥ निरवस्तारे आस्तरणरहिते ॥ १७ ॥ अवधुतां त्यक्तदेहादराम् । तत्सङ्गेनोन्मथितं व्याकुलं ज्ञानं यस्य ॥ १८ ॥ स्नेहसंरम्भः प्रणयकोपस्तस्य लिङ्गं कुटिलदृष्ट्यादि तस्मिन्न लब्धवान् ॥ १९ ॥ उत्सङ्गमारोप्य लालिताम् ॥ २० ॥ कृतमागोऽपराधो यैस्तेषु । आत्मसात्कृत्वा अस्मदधीनोऽयमिति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्याः ॥ २१ ॥ यतः परमोऽनुग्रहो दण्डः,

तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः ॥ न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥ अन्तःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत् ॥ अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ १४ ॥ न तथैतर्हि रोचन्ते गृहेषु गृहसंपदः ॥ यदि न स्याद्गृहे माता पत्नी वा पतिदेवता ॥ व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ॥ १५ ॥ क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे ॥ या मामुद्धरते प्रज्ञां दीपयन्ती पदे पदे ॥१६॥ ॥ रामा ऊचुः ॥ नरनाथ न जानीमस्त्वत्प्रिया यद्व्यवस्यति ॥ भूतले निरवस्तारे शयानां पश्य शत्रुहन् ॥१७॥ ॥ नारद उवाच ॥ पुरंजनः स्वमहिषीं निरीक्ष्यावधुतां भुवि ॥ तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ ॥१८॥ सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ॥ प्रेयस्याः स्नेहसंरम्भलिङ्गमात्मनि नाभ्यगात् ॥ १९ ॥ अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ॥ पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥२०॥ ॥ पुरंजन उवाच ॥ नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे ॥ कृतागःस्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते ॥२१॥ परमोऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः ॥ बालो न वेद तत्तन्वि बन्धुकृत्यममर्षणः ॥२२॥ सा त्वं मुखं सुदति सुभ्र्वनुरागभारव्रीडाविलम्बविलसद्धसितावलोकम् ॥ नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥ २३ ॥ तस्मिन्दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम् ॥ पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात् ॥ २४ ॥ ॥

यस्तु दण्डतो विषीदति सोऽज्ञ इत्याह—बाल इति । बन्धुकृत्यं शिक्षाकरणम् । अमर्षणः क्रोधी ॥ २२ ॥ हे सुदति हे सुभ्रु हे मनस्विनि, सा त्वमस्माकं स्वामिनी, अतः स्वानां मुखं प्रदर्शय । कीदृशम् । अनुरागभारेण व्रीडया यो विलम्बो मन्थरता तेन विलसन्हसितावलोको यस्मिन् । नीला अलका एवालयस्तैरुपस्कृतं भूषितम् । उन्नतनासिकम् । वल्गु वाक्यं यस्मिंस्तत् ॥२३॥ हे वीरपत्नि वीरस्य मम भार्ये, यस्ते कृतापराधस्तस्मिन्नहं ब्राह्मणकुलादन्यत्रान्यस्मिन्मुररिपुदासादितरत्र च दमं दधे दण्डं करोमि । किंतु तं विगतभयमुच्चैर्मुदितं त्रिलोक्यामन्यत्र वै लोकत्रयाद्बहिरपि न पश्यामि । मद्भयादेवासौ मरिष्यतीत्यर्थः ॥ २४ ॥

१ अह तु ते दण्डपात्रीभवन्नात्मान भूरिभाग्यमेव मन्ये इति भावः । २ 'प्राज्ञा बोधयन्ती पदे पदे' इति पाठः । ३ व्यवस्यति निश्चिनोति । ४ 'प्रेमसरम्भलिङ्गं' इति पाठः ।

४६१

ते वक्रमितः पूर्वं कदाचिदपि वितिलकं न पश्यामि । संरम्भेण कोपावेशेन भीमं भयंकरम् । अविमृष्टमनुज्ज्वलम् । अपेतरागं स्नेहशून्यम् । तथा ते सुजातौ शोभनौ स्तनावपि शोकाश्रुभिरुपहतौ न पश्यामि । तथा बिम्बफलाकारमधरं च विगतः कुङ्कुमपङ्कतुल्यस्ताम्बूलरागो यस्मात्तादृशं न पश्यामि । इदानीं कुत एवं जातमिति शेषः । पाठान्तरे एवंभूतं मुखं स्तनौ च पश्यन् शं न विन्दामीत्यन्वयः । विगतः कुङ्कुमपङ्करागो याभ्यामिति स्तनयोर्विशेषणम् ॥ २५ ॥ तत्तस्मात्कृतं किल्बिषमपराधो येन तस्य । किल्बिषमेवाह । स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयां गतस्य । देवो देवनं क्रीडा तां राति ददातीति देवरः कान्तस्तम् । कामवेगेन विस्रस्तं गतं पौंस्नं पौरुषं धैर्यं यस्य तम् । उशती कामयमाना कृत्ये कर्तुं योग्येऽर्थे का न भजेत ॥२६॥ ॥ इति श्रीमद्भा०म०पु०चतु०भा०दी०टीकायां षड्विंशोऽध्यायः॥२६॥

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः ॥ कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ १ ॥ तदेवं जीवस्यानुनयादिकथासौन्दर्येणात्यन्तमुपाधिवश्यत्वमुक्त्वा तन्निमित्तां संसारपरम्परां निरूपयितुमाह—इत्थमिति । अत्र च प्रतिपदं कथंचिदध्यात्मपक्षेऽपि योजयितुं शक्यमेव । श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासना-

वक्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम् ॥ पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम् ॥२५॥ तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य ॥ का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती न भजेत कृत्ये ॥२६॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पुरंजनोपाख्याने षड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ इत्थं पुरंजनं सम्यग्वशमानीय विभ्रमैः ॥ पुरंजनी महाराज रेमे रमयती पतिम् ॥ १ ॥ स राजा महिषीं राजन्सुस्नातां रुचिराननाम् ॥ कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥ तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः ॥ न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥ शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः ॥ तामेव वीरो मनुते परं यतस्तमोभिभूतो न निजं परं च यत् ॥ ४ ॥ ॥ ॥ ॥

दार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्यं दर्शितम् । 'क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ॥ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः' इति वदता । तत्रादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता । ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्येश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्तम् । ततस्तदेव यथोपयोगं व्याख्यातमिति पश्चाध्याय्यारम्भः प्रतीयते । प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढिख्यापनमनादृत्य यथोपयोगमेव व्याख्यास्यामः । सम्यक् सम्यक् । विभ्रमैर्विलासैः ॥ १ ॥ कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिन्दूरादिभिर्यस्यास्ताम् ॥ २ ॥ उपगूढः परिरब्धः । परिरब्धा कन्धरा तस्या येन । रह एकान्ते । अनुमन्त्रैरनुकूलैर्गुह्यभाषणैः । अपकृष्टा चेतना विवेको यस्य । कालरंह आयुर्व्ययम् । प्रमदैव परिग्रहो न ज्ञानसाधनं यस्य ॥ ३ ॥ महार्हतल्पे उत्कृष्टशय्यायां शयानः । महिष्या भुज उपधिरुपधानमुच्छीर्षकं यस्य । अविसर्गपाठे शयनक्रियाविशेषणम् । तां महिषीमेव परं पुरुषार्थममन्यत न तु यन्निजं रूपं ब्रह्म तत् । तमसाऽज्ञानेनाभिभूतो यतः ॥ ४ ॥ ॥ ॥ ॥ ॥

१ 'पश्यंस्तनावपि शुचोपहतौ सजातौ विन्दामि शं विगतकुङ्कुमपङ्करागौ' इत्येवंरूपे । २ अथवा प्रमदया परितः ग्रहो ग्रहणं यस्य सः । ३ 'भुजोपधि' इत्येवरूपे । ४ अभिभूत आवृतः ।

॥ ५ ॥ पुत्रानिन्द्रियपरिणामान् । दुहितृस्तदनन्तरं बुद्धिवृत्तीः । पुत्रसंख्या च बाहुल्यमात्रविवक्षया । दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्थमेव । विराट् सम्राट् । आयुषोऽर्धमित्याद्यपि कथासौन्दर्यार्थमेव ॥ ६ ॥ पुरंजनकन्यात्वात्पौरंजन्यः । हे प्रजापते ॥ ७ ॥ दारैः परिणामानन्तरं हिताहितचिन्ताभिः । वरैरुचितविषयभोगैः ॥ ८ ॥ पुत्राणां पुत्राः कर्माणि । पञ्चालेषु शब्दादिविषयेषु ॥ ९ ॥ तेषु पुत्रादिषु तेषामपि ये रिक्थहाराः पुत्रास्तेषु च ॥ १० ॥ ११ ॥ युक्तेष्वात्महितेषु कर्मस्वनवहितस्य । स वै कालो जराममयः ॥ १२ ॥ चण्डवेगः संवत्सरेणावर्तमानेनोपलक्षितः । गन्धर्वा दिवसाः ॥ १३ ॥ गन्धर्व्यो

तयैवं रममाणस्य कामकश्मलचेतसः ॥ क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥ तस्यामजनयत्पुत्रान्पुरंजन्यां पुरंजनः ॥ शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥६॥ दुहितॄर्दशोत्तरशतं पितृमातृयशस्करीः ॥ शीलौदार्यगुणोपेताः पौरंजन्यः प्रजापते ॥ ७ ॥ स पञ्चालपतिः पुत्रान्पितृवंशविवर्धनान् ॥ दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥ ८ ॥ पुत्राणां चाभवन्पुत्रा एकैकस्य शतं शतम् ॥ यैर्वै पौरंजनो वंशः पञ्चालेषु समेधितः ॥ ९ ॥ तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ॥ निरूढेन ममत्वेन विषयेष्वन्वबध्यत ॥ १० ॥ ईजे च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः ॥ देवान्पितॄन्भूतपतीन्नानाकामो यथा भवान् ॥ ११ ॥ युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः ॥ आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥ चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप ॥ गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥ गन्धर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः ॥ परिवृत्त्या विलुम्पन्ति सर्वकामविनिर्मिताम् ॥ १४ ॥ ते चण्डवेगानुचराः पुरंजनपुरं यदा ॥ हर्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः ॥ १५ ॥ स सप्तभिः शतैरेको विंशत्या च शतं समाः ॥ पुरंजनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥ क्षीयमाणे स्वसंबन्धे एकस्मिन्बहुभिर्युधा ॥ चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥ १७ ॥ स एव पुर्यां मधुभुक्पञ्चालेषु स्वपार्षदैः ॥ उपनीतं बलिं गृह्णन्स्त्रीजितो नाविदद्भयम् ॥ १८ ॥ कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती ॥ पर्यटन्ती न बर्हिष्मन्प्रत्यनन्दत कश्चन ॥ १९ ॥ ॥

रात्रयः । तादृशीस्तादृश्यः । मैथुन्यो दिवसैर्मिथुनीभूय स्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन सर्वैः कामैः सह विनिर्मितां पुरीमपहरन्ति ॥ १४ ॥ प्रजागरः प्राणः ॥ १५ ॥ विंशत्या च सह ॥ १६ ॥ स्वसंबन्धे स्वसंबन्धिनि प्राणे ॥ १७ ॥ स एव मधुभुक् क्षुद्रसुखभोक्ता । स्वपार्षदैरिन्द्रियैः । नाविदन्नालोचितवान् ॥ १८ ॥ कालस्य दुहिता जरास्ति तां न प्रत्यनन्दत नैच्छत् । बर्हिष्मन् हे प्राचीनबर्हिः ॥ १९ ॥ ॥ ॥

१ नव वयः परिशुद्ध ज्ञानमानन्दस्वरूप व्यतिक्रान्तं गतप्रायमित्यन्यत्र । २ संवत्सरात्मकस्य कालस्य । ३ सप्तभिरित्यत्राहोरात्रैर्मिलितैर्विंशत्यधिकसप्तशतानि भवन्ति । ४ 'विवेकेन' इति 'विंशद्भिश्च' इति पाठौ ।

पूर्वे ययातिपुत्राय । तेन वृता सती वरमदात् । ययातिः शुक्रशापाज्जरां प्राप्य पुत्रानुवाच इमां गृह्णीतेति, तां ज्येष्ठाश्चत्वारो न जगृहुः पूरुस्तु जगृहे, ततो ययातिस्तस्मै राज्यं ददाविति जरैवाददादित्युक्तम् ॥ २० ॥ सा जरा । बृहद्व्रतं नैष्ठिकम् ॥ २१ ॥ प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा नैकत्र स्थातुमर्हसीति शापमदात् ॥ २२ ॥ आधयो व्याधयश्च यवनास्तेषामीश्वरं भयनामानं वव्रे ॥ २३ ॥ हे वीर, त्वामीप्सितं पतिं वृणे । न रिष्यति न नश्यति ॥ २४ ॥ लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याच्यमानं यो न ददाति यश्च दीयमानं नेच्छति न गृह्णाति इमौ द्वौ कर्मभूतावनुशोचन्ति सन्तः ॥ २५ ॥ पुरुषेण कर्तव्यो धर्मः पौरुषः ॥ २६ ॥ दैवगुह्यं मरणम् । तद्धि प्राणिनां वैराग्यानुदयाय दैवैर्गोप्यते ॥ २७ ॥ तुभ्यं तव । आत्मसमाधिना ज्ञान-



दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ॥ या तुष्टा राजर्षये तु वृत्ताऽदात्पूरवे वरम् ॥ २० ॥ कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् ॥ वव्रे बृहद्व्रतं मां तु जानती काममोहिता ॥ २१ ॥ मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् ॥ स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने ॥ २२ ॥ ततो विहतसंकल्पा कन्यका यवनेश्वरम् ॥ मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥ ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ॥ संकल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥ द्वाविमावनुशोचन्ति बालावसदवग्रहौ ॥ यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥ अथो भजस्व मां भद्र भजतीं मे दयां कुरु ॥ एतावान्पौरुषो धर्मो यदार्ताननुकम्पते ॥ २६ ॥ कालकन्योदितवचो निशम्य यवनेश्वरः ॥ चिकीर्षुर्देवगुह्यं स सस्मितं तामभाषत ॥ २७ ॥ मया निरूपितस्तुभ्यं पतिरात्मसमाधिना ॥ नाभिनन्दति लोकोऽयं त्वामभद्रामसंमताम् ॥ २८ ॥ त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम् ॥ या हि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि ॥ २९ ॥ प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव ॥ चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ॥ ३० ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पुरंजनोपाख्याने सप्तविंशोऽध्यायः ॥ २७ ॥ ॥

दृष्ट्वा । याच्यमानोऽयं लोकस्त्वां नेच्छति ॥ २८ ॥ अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिः सती लोकमाक्रम्य भुङ्क्ष्व । एवं सर्वोऽपि लोकस्तव पतिः स्यादित्यर्थः । नचैवं त्वया शङ्कनीयं प्रतिकूलां मां लोको हनिष्यतीति । यस्मात्त्वमेव प्रजानाशं करिष्यसीत्याह—या हीति । या मदीया यवनपृतना तया युक्ता ॥ २९ ॥ किंच । प्रज्वार इति । मारको वैष्णवो ज्वरः माहेश्वरस्य व्याध्यन्तःपातित्वात् । भीमा घोराः सैनिका यस्य ॥ ३० ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ दीव्यति व्यवहरति पित्रादिरूपेणेति देवो जीवः सगुह्यः तादृशव्यवहारानर्हो भवति यस्मात्तन्मरणम् इति शुक० । २ चित्तैकाग्र्येण बहुधा विचार्येत्यर्थः । ३ एतदग्रे 'प्रत्याख्याता मया सा तु कालकन्या विशांपते' इत्यर्धमधिकं वीरराघवव्याख्यायामस्ति । ४ इयमुक्तिः कथासौन्दर्यार्था । ५ भूतानामिति तृतीयार्थे षष्ठी । अन्यैरपि भूतैस्त्वयि कृतः सकल्प इति व्याख्या इति क्रम० । ६ मे मयि ममोपरि । ७ सः भयनामा । ८ 'अग्रजोऽयं' इति पाठः ।

अष्टाविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिन्तया ॥ स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥ १ ॥ इदानीं तु पुरंजनस्य पुंदेहत्यागपूर्वकं स्त्रीत्वप्रकारमाह— सैनिका इत्यादि राजसिंहस्य वेश्मनीत्यन्तेन । दिष्टं दैवं कुर्वन्त्यधिकुर्वन्तीति तथा । मृत्योरादेशकारिण इति वा ॥१॥ जरत्पन्नगेन जीर्णप्राणेन पालिताम् ॥२॥ ॥ ३ ॥ द्वार्भिश्चक्षुरादिभिः रोगरूपेण प्रविश्य ॥४॥५॥ कन्यया जरयोपगूढः संस्तत्प्रतिक्रियां न लेभे इति तृतीयेनान्वयः । हृतैश्वर्य उत्थानादिष्वशक्तः ॥६॥ प्रतिकूलाननपेक्षितविषयप्रापणान् अनादृतानादरमकुर्वाणान्, स्वाधीनत्वाभावात् । अनुगा इन्द्रियाणि । अमात्या इन्द्रियदेवाः । गतसौहृदामध्यवसायाभावात्

॥ नारद उवाच ॥ सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः ॥ प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥ त एकदा तु रभसा पुरंजनपुरीं नृप ॥ रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥ कालकन्यापि बुभुजे पुरंजनपुरं बलात् ॥ ययाभिभूतः पुरुषः सद्यो निःसारतामियात् ॥ ३ ॥ तयोपभुज्यमानां वै यवनाः सर्वतोदिशम् ॥ द्वार्भिः प्रविश्य सुभृशं प्रार्दयन्सकलां पुरीम् ॥४॥ तस्यां प्रपीड्यमानायामभिमानी पुरंजनः ॥ अवापोरुविधांस्तापान्कुटुम्बी ममताकुलः ॥५॥ कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ॥ नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥ विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ॥ पुत्रान्पौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥७॥ आत्मानं कन्यया ग्रस्तं पञ्चालानरिदूषितान् ॥ दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥ कामानभिलषन्दीनो यातयामांश्च कन्यया ॥ विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥ गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् ॥ हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥१०॥ भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ॥ ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥ ११ ॥ तस्यां संदह्यमानायां सपौरः सपरिच्छदः ॥ कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥ यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ॥ पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥ ॥

॥ ७ ॥ कन्यया जरया ग्रस्तम् । पञ्चालान्विषयान् । अरिभिर्व्याध्यादिभिर्दूषितान् ॥ ८ ॥ कालकन्यया हेतुभूतया । यातयामान्निःसारानपि कामानभिलषन् । विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः । गतिः स्नेहादिति वा पाठः । स राजा पुरंजनो हातुं प्रचक्रमे उपक्रान्तवानिति द्वयोरन्वयः ॥९॥ अनिकामतोऽनिच्छयापि ॥१०॥११॥ सपरिच्छदो भृत्यवर्गसहितः । कुटुम्बेन दीव्यतीति कौटुम्बिकः । कुटुम्बिन्या । सन्धिर्नात्र विवक्षितः । सान्वयः पुत्रादिसहितः ॥ १२ ॥ यवनैरुपरुद्धान्यायतनानि यस्य स पुरपालः ॥ १३ ॥ ॥ ॥ ॥

१ शतवर्षस्थायिना । २ अध्यवसायो निश्चयः । ३ सैनिका व्याधयः । ४ प्रारब्धकर्मक्षये । ५ 'यौवने भौमभोगाढ्याम्' इति पाठः । ६ कालकन्या जरा । ७ यवना व्याधयः । ८ 'कुटुम्बममताकुलः' इति पाठः । ९ गन्धर्वैरहोरात्रैः यवनैराधिभिश्च । १० भ्रातुर्भयनाम्नः मृत्योर्वा ।

पुरु बहु कृच्छ्रं तेन उरुर्वेपथुर्यस्य । वृक्षकोटरादिव सर्पः ॥ १४ ॥ कण्ठे उपरुद्धो रुरोद घुरघुरध्वनिं चकार ॥ १५ ॥ दुहित्रादीन्दध्यावित्युत्तरेणान्वयः । जामयोऽत्र स्नुषाः । स्वत्वमात्रेणावशिष्टम् । भोगस्तु प्रागेव क्षीणः ॥ १६ ॥ १७ ॥ ध्यानमेवाह—लोकान्तरमिति ॥ १८ ॥ अनाशितेऽभोजिते । भर्त्सिते भर्त्सने कृते यतवाग्भवति ॥ १९ ॥ अविज्ञमविवेकिनं माम् । व्युषिते देशान्तरं गते । गृहमेधीयं वर्त्म गृहधर्ममपि किं नेष्यत्यनुवर्तयिष्यति । युक्तमेतत् । यतो वीरसूः पुत्रवती । किंवा मद्विरहमसहमाना मरिष्यत्येवेत्यर्थः ॥ २० ॥ न विद्यते परमयनमाश्रयो येषां तेऽपरायणाः पुत्राः कन्याश्च । यद्वा पराश्रयाः

न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ॥ गन्तुमैच्छत्ततो वृक्षकोटरादिव सानेलात् ॥ १४ ॥ शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः ॥ यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥ दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ॥ स्वत्वावशिष्टं यत्किंचिद्गृहकोशपरिच्छदम् ॥ १६ ॥ अहंममेति स्वीकृत्य गृहेषु कुमतिर्गृही ॥ दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥ लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी ॥ वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥ १८ ॥ न मय्यनाशिते भुङ्क्ते नास्नाते स्नाति मत्परा ॥ मयि रुष्टे सुसंत्रस्ता भर्त्सिते यतवाग्भयात् ॥ १९ ॥ प्रबोधयति माऽविज्ञं व्युषिते शोककर्शिता ॥ वर्त्मैतद्गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥ कथं नु दारका दीना दारकीर्वाऽपरायणाः ॥ वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥ एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् ॥ ग्रहीतुं कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥ पशुवद्यवनैरेष नीयमानः स्वकं क्षयम् ॥ अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥२३॥ पुरीं विहायोपगत उपरुद्धो भुजङ्गमः ॥ यदा तमेवानु पुरी विशीर्णा प्रकृतिं गता ॥२४॥ विकृष्यमाणः प्रसभं यवनेन बलीयसा ॥ नाविन्दत्तमसाविष्टः सखायं सुहृदं पुरः ॥ २५ ॥ तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ॥ कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य तत् ॥२६॥ अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः ॥ शाश्वतीरनुभूयार्तिं प्रमदासङ्गदूषितः ॥ २७ ॥ ॥ ॥ ॥

कन्याः । भिन्ना नौर्येषाम् ॥ २१ ॥ अतदर्हणं वस्तुतस्तस्य अक्षरत्वात् ॥ २२ ॥ एष यदा क्षयं स्थानं नीयमानस्तदा अनुपथाः प्राणा इन्द्रियाणि च । तथाच श्रुतिः 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति ॥ २३ ॥ प्रकृतिं महाभूतात्मताम् ॥ २४ ॥ नाविन्दन्न सस्मार । पुरः पूर्वं सखायं सन्तमीश्वरम् ॥ २५ ॥ अदयालुना काम्यकर्मसु ये संज्ञप्ता हताः । अमीवं पापं क्रौर्यं वा ॥ २६ ॥ शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥

१ स पुरञ्जनः प्राणो वा । 'न शशाकोपितु तत्र' इति पाठः । २ 'सोऽद्विराट्' इति पाठः । ३ 'मामज्ञम्' इति 'मां विज्ञं' इति पाठो । ४ यवनैः आधयारिभिः । ५ यवनैरुपरुद्धो भुजङ्गमः प्राणो यदा पुरीं विहायापगतस्तदा तं प्राणमनु विशीर्णा पुरी प्रकृतिं पञ्चमहाभूतात्मतां गतेत्यन्वयः ।

अन्तकाले तां भार्यामेव मनसा गृह्णन्स्मरन्ननन्तरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव । अतःपरमस्मिन्प्रकरणे एतावदेव प्रकृतोपयोगि विवक्षितम् । स्त्रीध्यानेन स्त्रीत्वप्राप्तावपि पतिव्रताध्यानेन पूर्वाद्दृष्टेन च धार्मिकाद्विदर्भाज्जन्माभूत् । धार्मिकसङ्गेन च विशुद्धस्य भागवतेन मलयध्वजेन सङ्गोऽभूत् । ततो विष्णुभक्तिस्ततो वैराग्यं ततस्तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो भगवत्प्रसादलब्धज्ञानेन मोक्ष इति । अन्यत्तु कथालङ्कारमात्रं तथापि किंचिद्वृत्तिसामान्येनेह योजयिष्यामः । विदर्भस्य विशिष्टदर्भोपलक्षितस्य कर्मठस्य राजसिंहस्य । धर्मेण हि प्रजापालनेन यज्ञादिना च क्षत्रिया राजन्ते तेषु श्रेष्ठस्य वेश्मनि ॥ २८ ॥ मलयोपलक्षिते दक्षिणदेशे ध्वज इव दर्शनीयः । स हि श्रीविष्णुभक्तप्रधानो देशः । तत्र मुख्यो महाभागवत इत्यर्थः । पण्डा निश्चयबुद्धिस्तामर्हतीति पाण्ड्यः स उपयेमे । पुरंजनो भागवतसङ्गं प्राप इत्यर्थः ॥ २९ ॥ आत्मजां श्रीकृष्णसेवारुचिम् । तत्सङ्गेन भगवद्धर्मे रुचिरभूदित्यर्थः । असितस्य श्रीकृष्णस्येक्षणं यया ताम् । यवीयसः सप्त सुतान् । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वन्दनं दास्यं' इति भक्तिप्रकारान् । सख्यात्मनिवेदनयोस्त्वंपदार्थज्ञानोत्तरकालत्वात्तस्य च भगवतैवोत्तरत्रोपदेक्ष्यमाणत्वादिदानीमनुत्पत्तेः सप्तेत्युक्तम् । भगवद्धर्मरुच्या तन्नामकीर्तनादिकं जातमित्यर्थः । द्रविडभूमि-

तामेव मनसा गृह्णन्बभूव प्रमदोत्तमा ॥ अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥ उपयेमे वीर्यपणां वैदर्भी मलयध्वजः ॥ युधि निर्जित्य राजन्यान्पाण्ड्यः परपुरंजयः ॥ २९ ॥ तस्यां स जनयांचक्र आत्मजामसितेक्षणाम् ॥ यवीयसः सप्त सुतान्सप्त द्रविडभूभृतः ॥ ३० ॥ एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम् ॥ भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम् ॥३१॥ अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् ॥ यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥३२॥ विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ॥ आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥ ३३ ॥ हित्वा गृहान्सुतान्भोगान्वैदर्भी मदिरेक्षणा ॥ अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥ ॥ ॥

पालकान् । द्रविडभूमिर्हि श्रवणादिभक्तिभिरेव सुरक्षितास्तीति प्रसिद्धम् ॥ ३० ॥ अर्बुदमिति । श्रवणादीनां प्रत्येकमनेके प्रकारा अभवन्नित्यर्थः । तदुक्तम्—'भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते' इति । येषां वंशधरैर्यतः प्रवृत्तैः संप्रदायभेदैः कृत्स्ना मही मन्वन्तरं ततः परं च भोक्ष्यते नित्यकामकर्मभ्योऽपि रक्षिष्यते ॥ ३१ ॥ अगस्त्यः अगानि निष्क्रियाणि गात्राणि स्त्यायति संघातयतीत्यगस्त्यो मनः । स प्राक्प्रथमजातां दुहितरं कृष्णसेवारुचिमुपयेमे, तस्य मनः कृष्णे दृढां रतिं बबन्धेत्यर्थः । धृतानि शमदमादीनि व्रतानि यया तां रतिम् । दृढेभ्यः सत्यलोकादिभोगेभ्योऽपि च्युतस्तद्रहितः, कृष्णरतात्रिहामुत्र भोगविरागो जात इत्यर्थः । स एवोपशमात्मकत्वान्मुनिः । कथंभूतः । इध्मवाह आत्मजो यस्य सः । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्यादिश्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरूपसत्तिर्वैराग्यादभूदित्यर्थः । नह्यविरक्तस्य गुरूपसत्तिः संभवति । कथापक्षे यथाश्रुतमेव ॥ ३२ ॥ क्ष्मां विभज्य तत्र श्रवणादिभक्तिभेदं व्यवस्थाप्य ॥ ३३ ॥ इदानीं पुंजनस्य स्त्रीभावं प्राप्तस्य सर्वतो विरक्तस्य 'पतिरेव गुरुः स्त्रीणां' इति वचनात्पतिसेवया गुरुशुश्रूषाप्रकारं दर्शयितुमाह—हित्वेत्यादिना मनो दध इत्यन्तेन ग्रन्थेन । मदयतीति मदिरमीक्षणं यस्याः ॥ ३४ ॥ ॥ ॥

१ कुलचल कुल श्रीकृष्णभजनोपकरणसमूहः अचलं सुदृढ यत्र तदेकान्तम् । वङ्कटाद्रिमित चक्र० ।

तत्र चन्द्रवसाद्या नद्यस्तासां पुण्यैः सलिलैरुभयत्रान्तर्बहिश्चात्मनो मलं क्षालयंस्तप आस्थित इत्युत्तरेणान्वयः ॥ ३५ ॥ अस्यते भूमौ क्षिप्यत इत्यष्टिर्बीजम् ॥ ३६ ॥ ३७ ॥ विद्ययोपासनया पक्वकषायो दग्धकामादिवासनः । युयुजे आत्मनो ब्रह्मतां भावयामास १ अक्षाणीन्द्रियाणि । अनिलः प्राणः । आशयश्चित्तम् । विजिता अक्षादयो येन ॥ ३८ ॥ आस्ते स्म वर्षशतमिति ज्ञानस्य दुःसाधनतां दर्शयति । अत एव हरौ भक्तिं कृतवानित्याह । वासुदेवे रतिमुद्वहन्नन्यद्देहादिकं न वेद ॥३९॥ स एवं वर्तमान आत्मन्यात्मानं विद्वानन्यस्मादुपरराम । कथं विद्वान् । व्यतिरिक्ततया देहादिव्यतिरिक्तत्वेन । कुतः । व्यापकतया देहादिप्रकाशकत्वेन । ननु देहाद्याकारो विमर्श एतत्प्रकाशति ननु निराकार आत्माऽत आह । आमर्शस्यापि साक्षिणम् । अयं भावः—आमर्शो नामान्तःकरणवृत्तिः सा च जडत्वादात्मप्रकाश्यैवेति । यथा स्वप्ने ममेदं शिरश्छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं वेत्ति तद्वत् ॥४०॥ केन विद्वांस्तत्राह । साक्षाद्धरिरेव यो

तत्र चन्द्रवसा नाम ताम्रपर्णी वटोदका॥ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन्॥३५॥ कन्दाष्टिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः ॥ वर्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ३६ ॥ शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ॥ सुखदुःखे इति द्वन्द्वान्यजयत्समदर्शनः ॥३७॥ तपसा विद्यया पक्वकषायो नियमैर्यमैः ॥ युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः ॥३८॥ आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः ॥ वासुदेवे भगवति नान्यद्वेदोद्वहन्रतिम् ॥ ३९ ॥ स व्यापकतयात्मानं व्यतिरिक्ततयात्मनि ॥ विद्वान्स्वप्न इवामर्शसाक्षिणं विरराम ह ॥ ४० ॥ साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप ॥ विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥४१॥ परे ब्रह्मणि चात्मानं परं ब्रह्म तथात्मनि ॥ वीक्षमाणो विहायेक्षामस्मादुपरराम ह ॥ ४२ ॥ पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ॥ प्रेम्णा पर्यचरद्धित्वा भोगान्सा पतिदेवता ॥ ४३ ॥ चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ॥ बभावुपपतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥ अजानती प्रियतमं यदोपरतमङ्गना ॥ सुस्थिरासनमासाद्य यथापूर्वमुपाचरत् ॥ ४५ ॥ यदा नोपालभेताङ्घ्रावूष्माणं पत्युरर्चती ॥ आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥ ॥ ॥ ॥

गुरुस्तेनोक्तेन सर्वतोमुखं यथा तथा स्फुरताऽनवच्छिन्नेन ज्ञानेन ॥४१॥ तदेवाह—पर इति । ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे शोकादिनिवृत्तिः । अहमेव ब्रह्मेत्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः । अतो व्यतिहारेणेक्षमाणोऽस्मात्संसारादुपरराम । नन्वेवमपि जीवस्य कुतो ब्रह्मत्वापत्तिः । ईक्षणस्यैव व्यवधायकत्वादित्याशङ्क्याह । ईक्षां विहाय दग्धेन्धनानलवत्तस्याः स्वयमेवोपशान्तेरिति भावः ॥४२॥४३॥ उपपतिं पत्युः समीपे । यद्वा पत्युः किंचिन्मात्रं न्यूना । तत्समाना सती बभावित्यर्थः । 'उपोऽधिके च' इति कर्मप्रवचनीयस्तद्योगे च द्वितीया । शान्तमङ्गारावस्थमनलमुपशान्ता शुद्धा ज्वाला यथा भवति तद्वत् ॥ ४४ ॥ तदानीमपि सुस्थिरमासनं यस्य । अत एवाजानती यदा तदा यथापूर्वमसेवत ॥ ४५ ॥ पत्युरङ्घ्रिमर्चयन्ती यदा तस्मिन्नङ्घ्रावूष्माणं नापश्यत् ॥ ४६ ॥ ॥ ॥५९॥

१ 'चन्द्रमसा' इति, 'चन्द्रवटं नाम' इति पाठौ । २ 'कन्दादिभिः' इति पाठः ।

अवन्धुं पतिरहितम् । अश्रुभिरासिच्य ॥४७॥ क्षत्रवन्धुभ्योऽधार्मिकक्षत्रियेभ्योऽपि ॥४८॥ अवर्तयत्प्रवर्तयामास ॥४९॥ तस्यां निधायाग्निदानेनादीप्य च ॥५०॥ पूर्वतरोऽनादिरीश्वरः सखा । 'द्वा सुपर्णा' इति श्रुतेः । साम्ना प्रियवाक्येन बोधयन् ॥५१॥ यस्य यं शोचसि । अग्रे सृष्टेः पूर्वम् । विचचर्थ ह मयि स्थितत्वेन सख्यसुखमनुभूतवांनसि ॥ ५२ ॥ ननु नाहमावयोः सख्यं सहचरत्वं च जानामीति चेत्तत्राह । यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदित्येवं किं स्मरसि । सख इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय । सख्यं स्मारयन्स्ववियोगकृतमनर्थमाह—हित्वेति सार्धैः पङ्क्तिः । पदं स्थानम् ॥५३॥ हंसौ शुद्धौ मानसं हृदयमयनं ययोः । कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ । ओको गृहम् । अन्तरा विनैव । वाशब्द एवार्थे । सहस्र-

आत्मानं शोचती दीनमबन्धुं विक्लवाश्रुभिः ॥ स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥४७॥ उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् ॥ दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥ एवं विलपती बाला विपिनेऽनुगता पतिम् ॥ पतिता पादयोर्भर्तू रुदत्यश्रूण्यवर्तयत् ॥ ४९ ॥ चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम् ॥ आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥ तत्र पूर्वतरः कश्चित्सखा ब्राह्मण आत्मवान् ॥ सान्त्वयन्वल्गुना साम्ना तामाह रुदतीं प्रभो॥५१॥ ॥ ब्राह्मण उवाच॥का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ॥ जानासि किं सखायं मां येनाग्रे विचेचर्थ ह[2] ॥५२॥ अपि स्मरसि चात्मानमविज्ञातसखं सखे ॥ हित्वा मां पदमन्विच्छन्भौमभोगरतो गतः॥५३॥हंसावहं च त्वं चार्य सखायौ मानसायनौ ॥ अभूतामन्तरा वौकः सहस्रपरिवत्सरान् ॥ ५४ ॥ स त्वं विहाय[3] मां बन्धो गतो ग्राम्यमतिर्महीम् ॥ विचरन्पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥५५॥ पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ॥ षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥५६॥ पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो ॥ तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः ॥५७॥ विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ॥ शक्त्यधीशः पुमांस्त्वत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥ तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः ॥ तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं प्रभो[4] ॥ ५९ ॥ ॥

परिवत्सरान् महाप्रलयो यावत् ॥५४॥ हे बन्धो, ग्राम्ये सुखे मतिर्यस्य । स्त्रिया मायया ॥५५॥ पञ्च शब्दादय आरामा उपवनानि यस्मिन् । नव द्वाराणि प्राणच्छिद्राणि यस्मिन् । एकः प्राणः पालो यस्मिन् । त्रीणि पृथिव्यप्तेजांसि कोष्ठानि प्राकारा यस्मिन् । षट् ज्ञानेन्द्रियमनांसि कुलान्यभीष्टविपयसमर्पका वणिजो यस्मिन् । पञ्च विपणा हट्टाः कर्मेन्द्रियाणि यस्मिन् । पञ्चभूतानि प्रकृतिरुपादानकारणं यस्य । स्त्री बुद्धिरेव धवः पतिः स्वामिनी यस्मिन् ॥ ५६ ॥ स्वयमेवेमं श्लोकं व्याचष्टे—पञ्चेन्द्रियार्था इति । षट्कुलमिति षट्त्वमेकपालमिति च स्पष्टत्वान्न व्याख्यातम् ॥ ५७ ॥ भूतान्येवाव्यया प्रकृतिरुपादानं यस्य । स्त्रीधवमित्यस्य व्याख्यानम् । शक्तिरधीशा यस्य । तद्वशः सन्नित्यर्थः ॥ ५८ ॥ स्पृष्टोऽभिभूतः । अतो न विद्यते श्रुते ब्रह्मत्वे स्मृतिर्यस्य ॥ ५९ ॥ ॥

१ पूर्वजन्मगतपुंस्त्वानुसंधानेनेदं व्याख्यानम् । २ 'विचकर्थ ह' इति वीरपाठः, विकृतवानसीति तदर्थः । ३ मा विहाय अहंतामसताभ्या व्यवधाय । ४ 'विभो' इति पाठः ।

तत्त्वमुपदिशति—न त्वमिति चतुर्भिः । सुहृत्पतिः । नवद्वारे पुरे यया रुद्धोऽसि तस्याः ॥ ६० ॥ पुमांसं पूर्वजन्मनि यदमन्यथा इदानीं च सतीं श्रेष्ठां स्त्रियं यन्मन्यसे एषा माया । यत उभयमपि वस्तुतो नास्ति । यस्मादावां हंसौ शुद्धौ । नौ आवयोर्वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥ तत्त्वंपदार्थयोश्चिदंशे-नैक्यमाह । अहमेव भवान् । उपचारं वारयति—न चान्य इति । व्यतिहारोपदेश उक्ताभिप्रायः । छिद्रमन्तरम् ॥ ६२ ॥ तर्हि कथमावयोरज्ञत्वसर्वज्ञत्वा-दिधर्मभेदस्तत्राह—यथेति । आत्मानं देहमादर्शे निर्मलं महान्तं स्थिरं चावेक्षेत । परस्य चक्षुषि च तद्विपरीतम् । विद्याविद्योपाधिकृतो धर्मभेद इत्यर्थः ॥ ६३ ॥ एवममुना प्रकारेण स मानसो हंसः क्षेत्रज्ञो हंसेन परमात्मना बोधितः सन्स्वस्थ आत्मनि स्थितः संश्चिरं ध्यात्वा तद्व्यभिचारेणेश्वरनियोगेन विप-याभिलापबुद्ध्या नष्टां स्मृतिमहं ब्रह्मास्मीति ज्ञानं पुनः प्राप्तवान् ॥ ६४ ॥ कथामात्रमिति बुद्धिं वारयति—बर्हिष्मन्निति । पारोक्ष्येण राजकथामिषेण ।

न त्वं विदर्भदुहिता नायं वीरः सुहृत्तव ॥ न पतिस्त्वं पुरंजन्या रुद्धो नवमुखे यया ॥ ६० ॥ माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम् ॥ मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥ अहं भवान्न चान्यस्त्वं त्वमेवाहं विच-क्ष्व भो ॥ न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥ यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ॥ द्विधाभूत-मवेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥ एवं स मानसो हंसो हंसेन प्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥ बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ॥ यत्परोक्षप्रियो देवो भगवान्विश्वभावनः ॥ ६५ ॥

॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे पुरंजनोपाख्यानेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥

॥ प्राचीनबर्हिरुवाच ॥ भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ॥ कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥
॥ नारद उवाच ॥ पुरुषं पुरंजनं विद्याद् यद्व्यनक्त्यात्मनः पुरम् ॥ एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥
योऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः ॥ यन्न विज्ञायते पुंभिर्नामभिर्वा क्रियागुणैः ॥ ३ ॥ ॥ ॥

तत्र हेतुः—यद्यस्मात् हे बर्हिष्मन्प्राचीनबर्हिः, एतद्राजकथामिषेणात्मकथा प्रदर्शिता । यस्माद्देवः श्रीनारायणः परोक्षप्रियः । साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायातीति भावः ॥ ६५ ॥ ॥ इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे भावार्थदीपिकायां टीकायामष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ॥ स्त्रीसङ्गतो भवस्त्वीशसङ्गान्मुक्तिरिति स्फुटम् ॥ १ ॥ कवयोऽध्यात्मविदः ॥ १ ॥ व्यनक्ति लिम्पति । चेतनी-करोतीत्यर्थः । यद्वा व्यनक्ति प्रकटयति । ततश्च स्वकर्मणा पुरं जनयतीति पुरंजनपदं व्याख्यातं भवति । एकाद्यादयः पादा यस्य ॥ २ ॥ अविज्ञातशब्दे-नाहतो व्याहृत उक्तो यः स ईश्वरः । अविज्ञातनामनिरुक्तिः यद्यस्मात्पुम्भिर्नामादियोगेन न विज्ञायते ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

१ 'हंस पश्य' इति विज० पाठः, तत्र हंसं निर्मलमित्यर्थः । २ 'पश्याव नौ गतिम्' इति, 'पश्यथ नौ' इति पाठौ । ३ इद नारदवाक्यम् । ४ पुरजन इति पूःशब्दे उपपदे अञ्जे-र्ड्युंट् । पूःशब्दस्तु शरीरे गौण्या वृत्त्या प्रयुज्यते । ५ नामभिरीश्वरादिभिः, क्रियाभिर्जीवप्रेरणादिभिः, गुणैः सर्वज्ञत्वादिभिः ।

तत्र तेषु पुरेषु मध्ये ॥ ४ ॥ अक्षभिरिन्द्रियैः ॥ ५ ॥ पञ्चवृत्तित्वात्पञ्चशिराः सर्प इव प्राणः ॥ ६ ॥ एकादशमहाभट इत्यनेन एकादशो महाभटो नायक इत्युक्तस्तं दर्शयति बृहद्बलं यस्य तन्मनः । नव खानि द्वाराणि यस्य ॥ ७ ॥ द्युमत्सख इत्यादेरर्थं संक्षेपेणाह । यस्तदिन्द्रियसंयुतः स आत्मा ताभिर्द्वार्भिर्बहिर्यातीति ॥ ८ ॥ पुरः पूर्वभागे कृताः ॥ ९ ॥ नेत्रे इति रूपमिति चक्षुषेति खद्योतादीनां व्याख्यानम् । शेषोऽनुवादः । ईश्वरः पुरंजनः ॥ १० ॥ नासे इति व्याख्या । अवधुनोतीत्यवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वात् घ्राणोऽवधूतः । आस्यमिति व्याख्या । रसज्ञविपणान्वित इत्यत्र रसज्ञ-

यदा जिघृक्षन्पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ॥ नवद्वारं द्विहस्ताङ्घ्रि तत्रामनुत साध्विति ॥ ४ ॥ बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ॥ यामधिष्ठाय देहेऽस्मिन्पुमान्भुङ्क्तेऽक्षभिर्गुणान् ॥५॥ सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम् ॥ सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः ॥ ६ ॥ बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् ॥ पञ्चालाः पञ्च विषया यन्मध्ये नवखं पुरम् ॥७॥ अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ॥ द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः ॥८॥ अक्षिणी नासिके आस्यमिति पञ्च पुरः कृताः ॥ दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥९॥ पश्चिमे इत्यधोद्वारौ गुदं शिश्नमिहोच्यते ॥ खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते ॥ रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ॥ १० ॥ नलिनी नालिनी नासे गन्धः सौरभ उच्यते ॥ घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः ॥ ११ ॥ आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ॥ पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥ १२ ॥ प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत् ॥ १३ ॥ आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः ॥ उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १४ ॥ वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ॥ हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥ १५ ॥ अन्तःपुरं च हृदयं विषूचिर्मन उच्यते ॥ तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ॥ १६ ॥ यथा यथा विक्रियते गुणाक्तो विकरोति वा ॥ तथा तथोपद्रष्टात्मा तद्वृत्तीरनुकार्यते ॥ १७ ॥ ॥

शब्दनिर्दिष्टस्य रसविदित्यनुवादः रस इति व्याख्या । रसनेन्द्रियमित्यर्थः । विपणो वाग्रसविद्रस इत्येव पाठः । आर्षत्वान्न दोषः ॥ ११ ॥ अन्धोऽन्नम् ॥ १२ ॥ ॥ १३ ॥ ग्रामकर्मित्यस्यानुवादो ग्रामिणां रतिरिति । तस्य व्याख्या—व्यवाय इति ॥ १४ ॥ १५ ॥ विषूचीनपदार्थानुवादो विषूचिरिति । तद्गुणैर्मनोगुणैस्तमःसत्त्वरजोभिः ॥ १६ ॥ महिषी यद्यदीहेतेत्यादेरर्थं संगृह्याह । यथा यथा बुद्धिः स्वप्ने विक्रियते जाग्रति विकरोति वा इन्द्रियाणि परिणमयति । तस्या गुणैरक्तो लिप्त आत्मा तथा तथा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः । केवलमुपद्रष्टैव सन्बलादनुकार्यते ॥ १७ ॥ ॥ ॥ ॥

१ विभ्राजितं जनपदमस्य व्याख्यानमिदम् । २ इद द्युमत्सख इति द्युमत्पदस्य । ३ 'अजिघृक्षत्' इति छेदः । 'जिघृक्षुः' इति पाठः । ४ तत्र पुरेषु मध्ये नवद्वार द्विहस्ताङ्घ्रि पुरं मनुष्यशरीर साध्वित्यमन्यत मेने । अङ्घ्रिमित्यार्षम् । ५ गुणान् विषयान् । ६ मुखातिरिक्तद्वाराभिप्रायेणेदं द्वे द्वे इति मुखस्यापि वाग्रसनाभेदेन द्वित्वात् । ७ वाग्व्यवहारो भाषणम् । ८ श्रुतधरादिति ल्यपि । श्रोत्रेन्द्रियमालम्ब्येत्यर्थः ।

आशुगमित्येतद्याचष्टे । संवत्सरस्येवाप्रतिहतो रयो वेगः प्रतीतितो यस्य स संवत्सररयः । वस्तुतस्त्वगतिः । स्वप्नशरीरादेर्बुद्धावेव विवृतत्वेन देशान्तरगत्यभावात् । पाठान्तरे संवत्सरश्च तत्कृतं वयश्च ताभ्यां गतिर्यस्येति । द्वीपमित्यस्य व्याख्या नारदेन न कृता । द्विचक्रमित्यस्य व्याख्या द्विकर्मचक्र इति । त्रिगुणध्वज इति त्रिवेणुपदव्याख्या ॥ १८ ॥ पञ्चप्रहरणमित्येतद्याचष्टे पञ्चेन्द्रियार्थप्रक्षेप इति ॥ १९ ॥ पञ्चेन्द्रियैः सूनाविनोदमिवान्यायेन विषयसेवां करोतीति पञ्चसूनाविनोदकृत् । अनेन चचार मृगयां तत्रेत्यादि व्याख्यातम् ॥ २० ॥ परिक्रान्त्या परिभ्रमणेन ॥२१॥ भगिनीत्वेन जगृहे । लोकानां क्षयाय ॥२२॥ चराः संचारिणः । भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतू रयो वेगो यस्य प्रज्वारस्येति प्रशब्दव्याख्या । पाठान्तरे[3] भूतकृता अरयः । अनेन चारिभिरुपरुद्ध इत्यरि-

देहो रथस्त्विन्द्रियाश्वः संवत्सररयोऽगतिः ॥ द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चासुबन्धुरः ॥ १८ ॥ मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ॥ पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥ आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ॥ एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ॥ संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ २० ॥ तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः ॥ हरन्त्यायुः परिक्रान्त्या षष्ट्युत्तरशतत्रयम् ॥ २१ ॥ कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति ॥ स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २२ ॥ आधयो व्याधयस्तस्य सैनिका यवनाश्चराः ॥ भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः ॥ २३ ॥ एवं बहुविधैर्दुःखैर्दैवभूतात्मसंभवैः ॥ क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥२४॥ प्राणेन्द्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः ॥ शेते कामलवान्ध्यायन्ममाहमिति कर्मकृत् ॥ २५ ॥ यदात्मानमविज्ञाय भगवन्तं परं गुरुम् ॥ पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥ २६ ॥ गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ॥ शुक्लं कृष्णं लोहितं वा यथाकर्माभिजायते ॥२७॥ शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोति कर्हिचित् ॥ दुःखोदर्कान् क्रियायासांस्तमःशोकोत्कटान्क्वचित् ॥ २८ ॥ ॥ ॥

पदं व्याख्यातम् । द्विविधः शीतोष्णरूपेण प्रवेशनिर्गमभेदात् ॥ २३ ॥ एवं परोक्षत्वेनोक्तमर्थं व्याख्याय सर्वकथातात्पर्यमाह—एवमित्यादिविरमक्रमेणेत्यन्तेन । आधिदैविकादिभिर्दुःखैः क्लिश्यमानो ममाहमिति देहे शतं वर्षाणि शेते वर्तेत इति द्वयोरन्वयः ॥ २४ ॥ अशनापिपासादीन्प्राणधर्मान् अन्धत्वादीनिन्द्रियधर्मान् कामादीन्मनोधर्मांश्च निर्गुणोऽप्यात्मन्यध्यस्य कामलवान्विषयसुखलेशान्ध्यायन्कर्मकृत् ॥ २५ ॥ ततः किमत आह—यदेति द्वाभ्याम् । स्वदृक् स्वप्रकाशस्वभावोऽपि ॥ २६ ॥ शुक्लं सात्त्विकम् । कृष्णं तामसम् । लोहितं राजसम् । यथा कर्म तथा जायते ॥ २७ ॥ तदेवाह—शुक्लादिति द्वाभ्याम् । प्रकाशो भूयिष्ठो येषु । दुःखमुदर्क उत्तरफलं येषु । क्रियया आयासो येषु तान् लोहितात् । तमःशोकावुत्कटौ येषु तान् कृष्णादिति ज्ञेयम् ॥ २८ ॥ ॥



१ 'संवत्सरवयोगतिः' इत्येवरूपे । २ लोकाना मृत्युर्मरणदस्तत्र जरा सहकारिणीत्यर्थः । ३ 'भूतोपसर्गा ह्यरयः' इत्येवंरूपे । तत्र भूतकृता उपसर्गा एवारय इत्यर्थः । ४ द्वे कर्मणी पुण्यपापरूपे चक्रे यस्य । ५ द्वन्द्वं शोकमोहाख्य कूबरो युगबन्धनस्थानं यस्य । ६ बाह्या विक्रमा गतिप्रकारा आकूतिः कर्मेन्द्रियरूपा इति पञ्चविक्रमपदव्याख्या । ७ 'परीवृत्त्या' इति 'परीसृत्या' इति च पाठौ । ८ 'निर्गुणे' इति पाठः ।

नोभयं नपुंसकम् । यथाकर्मगुणं कर्मगुणावनतिक्रम्य ॥२९॥ तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह द्वाभ्याम् । क्षुधा परीतो व्याप्तः सारमेयः श्वा । दण्डं दण्डेन ताडनम् ॥ ३० ॥ कामव्याप्त आशयो यस्य ॥ ३१ ॥ ननु तर्हि सुखस्य संभवाद्दुःखस्य च प्रतीकारसंभवान्नैकान्ततो हेयत्वं तत्राह—दुःखेष्विति । दुःखस्य प्रतीकारस्तावन्नास्ति । स्याच्चेत्तस्य तस्य प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति ॥ ३२ ॥ प्रतिक्रियाणामपि दुःखरूपत्वादिति सदृष्टान्तमाह—यथा हीति ॥ ३३ ॥ दुःखस्य मूलभूतानि कर्माणि प्रतिक्रियादिकर्मभिर्नैव निवर्तन्त इत्याह । नैकान्ततोऽत्यन्तं सवासनम् । केवलं ज्ञानरहितम् । अविद्ययोपसृतं प्रासम् । अतोऽविरोधान्न निवर्तकत्वमिति भावः । अत्र दृष्टान्तः । स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्न-

क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ॥ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः ॥२९॥ क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ॥ चरन्विन्दति यद्दिष्टं दण्डमोदनमेव वा ॥३०॥ तथा कामाशयो जीव उच्चावचपथा भ्रमन् ॥ उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३१ ॥ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ॥ जीवस्य न व्यवच्छेदः स्याच्चेत्तत्प्रतिक्रिया ॥३२॥ यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् ॥ तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥३३॥ नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् ॥ द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥३४॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥३५॥ अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा ॥ संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥ ३६ ॥ वासुदेवे भगवति भक्तियोगः समाहितः ॥ सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३७ ॥ सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः ॥ शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३८ ॥ यत्र भागवता राजन् साधवो विशदाशयाः ॥ भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥ ॥

मत्यन्तं न प्रतिकरोतीत्यर्थः ॥३४॥ ननु तर्ह्यज्ञानविलसितत्वेन संसृतिहेतोर्देहादेरप्यसत्त्वात्किं तन्निवर्तनप्रयासेन तत्राह—अर्थे हीति । लिङ्गरूपेणोपाधिभूतेन ॥ ३५ ॥ तदेवं संसृतिप्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह । अथ तस्मात्पुरुषार्थभूतस्यैवात्मनो यतोऽज्ञानान्मनसो वाऽनर्थपरम्परारूपा संसृतिर्भवति तस्य व्यवच्छेदो गुरुरूपे वासुदेवे भक्त्यैव ॥ ३६ ॥ ननु संसृतिनिवृत्तिर्वैराग्यपूर्वकाज्ज्ञानादेव नतु भक्त्या 'तरति शोकमात्मवित्' इत्यादिश्रुतेस्तत्राह—वासुदेव इति । सध्रीचीनेन समीचीनेन प्रकारेण ॥ ३७ ॥ नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह । स त्वच्युतस्य कथामाश्रित्य वर्तमानोऽचिरात्स्यात् । कस्य स्यात्तदाह । शृण्वतोऽधीयानस्य च ॥ ३८ ॥ कुत्र स्यात्तदाह—यत्रेति । भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते ॥ ३९ ॥ ॥ ॥

१ दुःखस्यादृष्टाधीनत्वाददृष्टस्यापि दुःखप्राप्तेः पूर्वमशक्यज्ञानत्वात्तत्प्रतिक्रियाणामपि दुःखरूपत्वादिति भावः इति चक्र० । २ द्वय निवर्त्यं निवर्तकं चेत्युभयविधम् । ३ लिङ्गरूपेणोपाधिभूतेन मनसा स्वप्ने विचरतः पुरुषस्य तत्र दृष्टेभ्यो व्याघ्रादिभ्यो वस्तुतोऽविद्यमानेभ्य उद्भूतं भयादिकं यथा न निवर्तते तथेत्यर्थः । ४ 'श्रवणाव्यग्र' इति विज० पाठः, तत्र तदेकचित्ता इत्यर्थः ।

ननु साधुसङ्गं विना स्वयमेव हरिकथाचिन्तनादिना भक्तिर्भवेदित्याशङ्क्याह द्वाभ्याम् । तस्मिन्स्थाने महद्भिर्मुखरिताः कीर्तिताः । मधुभिच्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु । आसाराशरहितशुद्धामृतवाहिन्य इत्यर्थः । अवितृषोऽलंबुद्धिशून्याः सन्तो गाढैः सावधानैः कर्णैर्ये ताः सरितः पिबन्ति सेवन्ते । अशनशब्देन क्षुल्लक्ष्यते । अशनादयस्तान्न स्पृशन्ति । भक्तिरसिकान्न बाधन्त इत्यर्थः ॥ ४० ॥ सत्सङ्गमन्तरेण स्वयमेव कथाचिन्तनादावालस्यादिना रसावेशाभावाच क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न संभवतीत्याह—एतैरिति ॥ ४१ ॥ भगवदनुग्रहमन्तरेण तु न कस्यापि ज्ञानसंभव इति कैमुत्यन्यायेनाह चतुर्भिः । प्रजापतिपतिर्ब्रह्मा ॥ ४२ ॥ मदन्ताः अहं नारदोऽन्ते येषाम् ॥ ४३ ॥ वाचां पतयोऽपि तपोविद्यासमाधिभिरुपायैः पश्यन्तो विचिन्वन्तोऽपि पश्यन्तं सर्वसाक्षिणं न पश्यन्ति ॥ ४४ ॥ कुत इत्यत आह । शब्दब्रह्मणि वेदे उरुर्विस्तरो यस्य । अर्थतोऽपि पारशून्ये तस्मिन्वर्तमानाः । मन्त्राणां लिङ्गै-

तस्मिन्महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति ॥ ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृश-न्त्यशनतृड्भयशोकमोहाः ॥ ४० ॥ एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ॥ न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥४१॥ प्रजापतिपतिः साक्षाद्भगवान्गिरिशो मनुः ॥ दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४२ ॥ मरीचिर-त्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥४३॥ अद्यापि वाचस्पतयस्तपोविद्या-समाधिभिः ॥ पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम् ॥४४॥ शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ॥ मन्त्र-लिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४५ ॥ यदा यमनुगृह्णाति भगवानात्मभावितः ॥ स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥४६॥ तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ॥ मार्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ४७ ॥ स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः ॥ आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ४८ ॥ ॥

र्वज्रहस्तत्वादिगुणयुक्तविविधदेवताभिधानसामर्थ्यैः परिच्छिन्नमेवेन्द्रादिरूपं तत्तत्कर्माग्रहेण भजन्तः परं परमेश्वरं न विदुः ॥ ४५ ॥ तर्ह्यन्यः को नाम कर्माद्याग्रहं हित्वा परमेश्वरमेव भजेदित्यत आह । यदा यमनुगृह्णाति । अनुग्रहे हेतुः—आत्मनि भावितः सन् । स तदा लोके लोकव्यवहारे वेदे च कर्ममार्गे परिनिष्ठितां मतिं त्यजति ॥ ४६ ॥ अर्थकाशिषु परमार्थत्वेन प्रकाशमानेषु पुरुषार्थबुद्धिं मा कृथाः । प्ररोचनाय केवलं श्रोत्रप्रियेषु । न स्पृष्टं वस्तु यैः ॥ ४७ ॥ ननु वेदेन स्वर्गादिसाधनत्वेनोक्तानि कर्माणीति वेदवादिनो वदन्ति कथमस्पृष्टवस्तुष्वित्युच्यते तत्राह । ये धूम्रधियो मलिनबुद्धयः सकर्मकं कर्मपरं वेदमाहुस्ते अतद्विदोऽवेदज्ञाः । यतस्ते स्वं स्वरूपभूतं लोकमात्मतत्त्वं वेदतात्पर्यगोचरं न विदुः । यत्र देवोऽस्ति ॥ ४८ ॥ ॥ ॥

१ महान्तो मुखरिता याभिरिति आहिताग्न्यादित्वान्निष्ठायाः परनिपातः इति क्रम० । २ महत्सदसि सुखं रान्ति गृह्णन्तीति सुरारा महद्भिर्मुखराः कृता इति मुखरिताः सदा सन्तिष्ठतीत्यर्थः इति चक्र० । ३ आत्मनि मनसि । ४ वस्तु परमब्रह्मलक्षणम् ।

त्वं तु महामूर्खे इत्याह—आस्तीर्येति । बृहद्वधात् बहुपशुवधात् । मानी यज्वाहमित्यहंकारी । अतः स्तब्धोऽविनीतः सन्कर्म नावैषि । परं विद्यास्वरूपं तच्च न
वेत्सि । नारदः स्वयं कृपया तद्द्वयं निरूपयति । हरिं तोषयतीति हरितोषं यत्तदेव कर्म । यया तस्मिन्हरौ मतिर्भवति सैव विद्या । महाफलत्वात् ॥ ४९ ॥
कुत इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह द्वाभ्याम् । हरिर्देहभृतामात्मा ईश्वरश्च । तत्र हेतुः—स्वयं स्वातन्त्र्येण प्रकृतिः कारणमतस्तेषां तत्पादमूलमेव
शरणमाश्रयः । यतो यस्मिन् ॥ ५० ॥ नच तद्भजनेऽन्यभजन इव दुःखं भयं चेत्याह—स वा इति । इति यो वेद स एव विद्वान्स गुरुः स एव हरिश्च
॥ ५१ ॥ उक्तमुपसंहरति—प्रश्न इति । एवं भवतः प्रश्नः संछिन्नः परिहृतः । तदेवमात्मनो वन्धमोक्षप्रकारे कथारूपेण कथितेऽपि नातिनिर्विण्णचित्तं
पुत्रागमनं प्रतीक्षमाणं सन्तं तत्क्षणमेव महाभयकम्पितसकलगात्रं गृहान्निर्वासयितुं हरिणरूपकमाह—अत्रेति । वदतो मे वचः शृणु ॥ ५२ ॥ क्षुद्रमल्पं

आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ॥ स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम् ॥ तत्कर्म हरितोषं
यत्सा विद्या तन्मतिर्यया ॥ ४९ ॥ हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ तत्पादमूलं शरणं यतः क्षेमो नृणा-
मिह ॥ ५० ॥ स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥ इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः ॥ ५१ ॥
॥ नारद उवाच ॥ प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ॥ अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५२ ॥
क्षुद्रंचरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ॥ अग्रे वृकानसुतृपोऽविगणय्य यान्तं पृष्ठे
मृगं मृगय लुब्धकबाणभिन्नम् ॥ ५३ ॥ सुमनःसमधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्य-
कर्मविपाकजं कामसुखलवं जैह्व्यौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवद-
तिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान्काललववि-
शेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमि-
ममात्मानमहो राजन्भिन्नहृदयं द्रष्टुमर्हसीति ॥ ५४ ॥ ॥ ॥ ॥

चरतीति तथा तम् । अलुक् । सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा तत्रैव रक्तमासक्तम् । षडङ्घ्रयो भ्रम-
रास्तेषां गणास्तेषां सामसु गीतेषु लुब्धः कर्णो यस्य तम् । परेषामसुभिर्हृतैः स्वीयानसूंस्तर्पयन्तीत्यसुतृपः तानविगणय्यागणयित्वा । लुब्धकस्य बाणेन भिन्नं
मृगं मृगय अन्वेषय ॥५३॥ श्लोकं प्रस्तुते योजयन्व्याचष्टे । सुमनोभिः समानो धर्मः परिणामविरसत्वं यासां स्त्रीणाम् । मिथित्वेत्यस्य व्याख्या—मिथुनीभूय ।
स्त्रीभिः सहेति शेषः । रक्तमित्यस्य व्याख्या—तास्वभिनिवेशितं मनो येन । असुतृप इत्यस्य व्याख्या—आयुर्हरत इति । यान्तमित्यस्य व्याख्या—विहरन्त-
मिति । अन्तर्नलिकायां गूढेन शरेण पराविध्यति दूरादेव ताडयति ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥

१ वृद्धवधादात्मविस्मरणात् इति सिद्धां० । २ धर्मः सन्नोविरूपत्वादिलक्षण इति सिद्धां० ।

उपदेशसारमाह—स इति । विचक्ष्य विचार्य । अन्तर्हृदि चित्तं कर्णयोर्धुनीं नदीमिव बहिर्वृत्तिं चित्ते नियच्छ । एतच्च सर्वेन्द्रियोपलक्षणार्थम् । अङ्गनाश्रमं गृहाश्रमं च जहि । कीदृशम् । असत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन् । हंसानां जीवानां शरणमीश्वरम् । एवं क्रमेण सर्वतो विरम ॥ ५५ ॥ अर्थान्तरं प्रष्टुं पूर्वोक्तमर्थमनुवदति । श्रुतमन्वीक्षितं विचारितं च । ब्रह्मन् हे नारद, एतत्त्वदुक्तमात्मतत्त्वमुपाध्याया ये मम कर्मोपदेष्टार आचार्यास्ते न जानन्ति ॥ ५६ ॥ अतस्तत्कृत उपाध्यायकृतस्तद्वाक्यविरोधेनात्मतत्त्वेऽसंभावनारूपो महान् संशयः संछिन्नस्त्वया । अत्र तु कश्चित्संशयो वर्तते, यत्रेन्द्रियवृत्तीनामप्रवृत्तेर्मुह्यन्ति ॥ ५७ ॥ संशयमाह द्वाभ्याम् । कर्माणि येन देहेन करोति तमत्रैव विहायामुत्र लोकान्तरे कर्मोपस्थापितेनान्येन देहेन जुष्टान्युपभुक्तानि जीवोऽश्नुते प्राप्नोति ॥५८॥ इतिवादः श्रूयते 'प्राप्य पुण्यकृतॉल्लोकान्' इति । 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इति । त्वया चोक्तं 'शाश्वतीरनुभूयार्तिम्' इति । एतच्च कर्तृभोक्तृदेहभेदेन कृतनाशाकृताभ्यागमप्रसङ्गान्न संगच्छत इति भावः । संशयान्तरमाह । प्रोक्तं वेदोक्तं कर्म यत्क्रियते

स त्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते ॥ जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥५५॥ ॥ राजोवाच ॥ श्रुतमन्वीक्षितं ब्रह्मन्भगवान्यदभाषत ॥ नैतज्जानन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि ॥ ५६ ॥ संशयोऽत्र तु मे विप्र संछिन्नस्तत्कृतो महान् ॥ ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥ ५७ ॥ कर्माण्यारभते येन पुमानिह विहाय तम् ॥ अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥ ५८ ॥ इति वेदविदां वादः श्रूयते तत्र तत्र ह ॥ कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ५९ ॥ ॥ नारद उवाच ॥ येनैवारभते कर्म तेनैवामुत्र तत्पुमान् ॥ भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम् ॥ ६० ॥ शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा ॥ कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६१ ॥ ममैते मनसा यद्यदसावहमिति ब्रुवन् ॥ गृह्णीयात्तत्पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६२ ॥ ॥ ॥ ॥

जनैस्तच्चानन्तरक्षण एव परोक्षमदृश्यं सन्न प्रकाशते । अतः कर्मणो नष्टत्वात्तद्भोगोऽपि दुर्घट इति भावः ॥ ५९ ॥ प्रथमस्योत्तरम्—येनैवेति । अव्यवधानेन कर्तृभोक्तृदेहविच्छेदं विना । स्थूलदेहनाशेऽपि मनःप्रधानस्य लिङ्गदेहस्यानाशान्नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ६० ॥ लिङ्गदेहविशिष्टस्य भोक्तृत्वं स्वप्नदृष्टान्तेन स्पष्टयति । शयानमिमं जाग्रद्देहं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वात्मनि मनसि संस्काररूपेणाहितं कर्म यथा भुङ्क्ते तादृशेन शयानदेहसदृशेन कर्मोपस्थापितेन देहेनान्येन वा पश्वादिदेहेन तथा लोकान्तरेऽपीति भावः ॥६१॥ ननु भवतु नाम लिङ्गविशिष्टस्यानेन दृष्टान्तेन भोक्तृत्वं, कर्तृत्वं तु दानप्रतिग्रहादिषु स्थूलदेहविशिष्टस्यैव दृश्यते तत्राह । ममैते पुत्रादयोऽसावहं ब्राह्मण इति ब्रुवन्मनसा यद्यद्देहं गृह्णीयात्ततो देहाद्राद्धं सिद्धं कर्म पुमान् गृह्णीयात् । येन कर्मणाहंकारगृहीतेन पुनर्भवो भवति । अन्यथा जन्मानुपपत्तेः । अतोऽभिमन्तुर्मनोविशिष्टस्यैव कर्तृत्वमभिमानविषयस्य तु देहस्य पुत्रादिदेहवद्द्वारमात्रत्वमिति भावः ॥६२॥

१ चित्ते नियच्छ निलीनीकुर्विति फलश्रुतेर्विचारासहत्वेन वैयर्थ्यादिति भावः । २ राजा प्राचीनबर्हिः । ३ लिङ्गेन मनःप्रधानलिङ्गदेहेन । ४ अनेन देहद्वयस्योपयोगित्वमात्रं जीवस्य कर्तृत्वभोक्तृत्वादिधर्मवत्त्वमुक्तम् इति सिद्धां० ।

भगवन्तं क्षमापयति—तदिति । अयं भावः—नः स्वपुरुषैरस्मदीयत्वेन स्थितैः स्वीयैरेव पुरुषैर्यद्यस्मादसदन्याय्यं कृतं तत्तस्मात्स्वयमेव क्षम्यतां सहताम् । स्वानां स्वीयानां भक्तानां नोऽस्माकं नविदुषामज्ञानाम् । अहो गरीयसि तस्मिन् क्षान्तिर्युक्तैव । मेह इति पाठे स्वीयानां माहात्म्यमविदुषां नः क्षमां करोत्वित्यर्थः ॥ ३० ॥ तस्मादित्यादिः शुकोक्तिः । जगतोऽपि मङ्गलरूपम् ॥ ३१ ॥ एकान्तिकत्वमेवाह—शृण्वतामिति । व्रतादिभिस्तथा न शुध्येत् ॥ ३२ ॥ एतदुपपादयति । कृष्णाङ्घ्रिपद्मयोर्मधु लेढि आस्वादयतीति तथा । मधुलिहताऽतितुच्छत्वेन विसृष्टा ये मायागुणा विषयास्तेषु पुनर्न रमते । अन्यस्तु तन्मध्वास्वादरहितोऽत एव कामाभिभूतः सन् आत्मनो रजः पापं प्रमार्ष्टुमपि कर्मैव प्रायश्चित्तरूपमीहेत । यतः कर्मणः पुनरपि रजः पापं स्यादेव कुञ्जरशौचवत् । सत्त्वशोधकत्वाभावात् ॥ ३३ ॥ नैव विस्मितधियो बभूवुः किंतु सत्यमुक्तमित्येव मेनिरे । ततःप्रभृति शङ्कमाना अस्मानेवैष हन्यादिति शङ्कां वहन्तस्तं द्रष्टुमपि

तत्क्षम्यतां स भगवान्पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ॥ स्वानामहो नविदुषां रचिताञ्जलीनां क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥३०॥ तस्मात्संकीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ॥ महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतम् ॥ ३१ ॥ शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः ॥ यथा सुजातया भक्त्या शुध्येन्नात्मा व्रतादिभिः ॥३२॥ कृष्णाङ्घ्रिपद्ममधुलिण्न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु ॥ अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३३ ॥ इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिंकरास्ते ॥ नैवाच्युताश्रयजनं प्रतिशङ्कमाना द्रष्टुं च बिभ्यति ततःप्रभृति स्म राजन् ॥३४॥ इतिहासमिमं गुह्यं भगवान्कुम्भसंभवः ॥ कथयामास मलय आसीनो हरिमर्चयन् ॥३५॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे तृतीयोऽध्यायः ॥३॥

॥ राजोवाच ॥ देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ॥ सामासिकस्त्वया प्रोक्तो यस्तु स्वायंभुवेऽन्तरे ॥ १ ॥ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा ॥ अनुसर्गं यया शक्त्या ससर्ज भगवान्परः ॥ २ ॥ ॥ ॥

बिभ्यति स्म । पाठान्तरे तु विस्मितधियो जाताः । ते च ततःप्रभृति बिभ्यति स्मेत्यर्थः ॥३४॥ कुम्भसंभवोऽगस्त्यो मलये पर्वते आसीनोऽव्यग्रो हरिमर्चयन् पुनःपुनर्विश्वासार्थं हरेः पादौ स्पृशन्नित्यर्थः ॥ ३५ ॥ ॥ इति श्रीमद्भागवते म० पु० षष्ठस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ चतुर्थादित्रिभिर्विश्वरूपजन्मविवक्षया । प्रचेतःसुतदक्षस्य वंशस्तावत्प्रतन्यते ॥ १ ॥ चतुर्थे तु प्रजासृष्ट्यै दक्षेणाराधनं हरेः ॥ तपसा हंसगुह्याख्यस्तोत्रेण च निरूप्यते ॥ २ ॥ प्रसक्तानुप्रसक्तेन स्वायंभुवसुतान्वये ॥ नामप्रभावमाकर्ण्य वंशव्यासं बुभुत्सते ॥ ३ ॥ देवासुरेति द्वाभ्याम् । सामासिकः संक्षिप्तो यः प्रोक्तस्तृतीयस्कन्धे ॥ १ ॥ व्यासं विस्तारम् । ते त्वत्तः यया शक्त्या यथा ससर्ज तां शक्तिं तत्प्रकारं च ज्ञातुमिच्छामि । अनुसर्गमनुवृत्तं सर्गम् ॥ २ ॥

१ क्षम्यतामिति भौवादिकस्य दैवादिकस्य वा रूपम् । भौवादौ विकरणव्यत्ययः, दैवादिके त्वात्मनेपदं दीर्घाभावश्चार्षः । २ 'स्वानां महः' इत्येवंरूपे । ३ अन्यो भक्त्याहीनः । ४ 'पुना रजः स्यात्' इति वीर० पाठः । ५ 'तेनाच्युत' इति पाठः । ६ परो ब्रह्मा । ७ 'ते चाच्युताश्रयजनम्' इत्येवंरूपे ।

॥३॥ दक्षादिरूपेण ससर्जेति वक्तुं दक्षजन्मप्रकारमाह—यदेति । प्राचीनबर्हिषः पुत्रा यदा समुद्रमध्यादुन्मग्ना निर्गतास्तदा गां पृथ्वीं द्रुमैर्वृतां ददृशुः । नारदोपदेशतः प्राचीनबर्हिषो निवृत्त्या अराजके सति कृष्याद्यभावात् ॥४॥ तपसा दीपितो मन्युर्येषां ते तेषां द्रुमाणां दग्धुमिच्छया ॥ ५ ॥ ताभ्यां वाय्वग्निभ्यां दह्यमानांस्तान् द्रुमान् । वनस्पतीनां राजा सोम उवाच । मा द्रुमेभ्य इति नवभिः ॥ ६ ॥ हे महाभागाः । विवर्धयिषवो विशेषेण वर्धयितुमिच्छवः ॥ ७ ॥ प्रजापतीनां तद्भक्ष्यभोज्यदाहोऽनुचित इत्याह—अहो इति त्रिभिः । ऊर्जं भक्ष्यम् । इषम् अन्नम् ॥ ८ ॥ ९ ॥ १० ॥ अत आतिष्ठत आश्रयत । सतां

॥ सूत उवाच ॥ इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ॥ प्रतिनन्द्य महायोगी जगाद मुनिसत्तमाः[1] ॥ ३ ॥ ॥ श्रीशुक उवाच ॥ यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ॥ अन्तः समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥ द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ॥ मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५॥ ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ॥ राजोवाच महान्सोमो मन्युं प्रशमयन्निव[3] ॥ ६ ॥ मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ॥ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥ अहो[4] प्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्च ससर्जोर्जमिषं[5] विभुः ॥ ८॥ अन्नं चराणामचरा[6] ह्यपदः[7] पादचारिणाम् ॥ अहस्ता[8] हस्तयुक्तानां द्विपदां च चतुष्पदः[9] ॥ ९॥ यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ॥ प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ ॥ १० ॥ आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ॥ पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥ तोकानां पितरौ बन्धुर्दृशां पक्ष्म स्त्रियाः पतिः ॥ पतिः[10] प्रजानां भिक्षूणां[11] गृह्यज्ञानां बुधः सुहृत् ॥ १२॥ अन्तर्देहेषु भूतानामात्मास्ते हरिरीश्वरः ॥ सर्वं तद्धिष्ण्यमीक्षध्वमेवं[12] वस्तोषितो ह्यसौ ॥१३॥ यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते ॥ १४॥ अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः ॥ वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥ ॥

मार्गमुपशमम् । पित्रादिभिर्जुष्टम् ॥ ११ ॥ प्रजानां प्रजापतिरेव बन्धुरतस्तज्जीविकानाशो न कर्तव्य इति दृष्टान्तपञ्चकेनाह । तोकानां बालानां मातापितरौ । अज्ञानां ज्ञानदो बुध एव सुहृत् ॥ १२ ॥ ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह—अन्तर्देहेष्विति । वो युष्माभिः ॥ १३ ॥ आकाशाद्देहे समुत्पतितमाकस्मिकमित्यर्थः । आत्मविचारेण यो नियच्छेत् ॥ १४ ॥ खिलानां शेषाणां वो युष्माकं च शिवमस्तु । वृक्षरक्षणार्थं तदीयां कन्यां ददाति । वार्क्षी वृक्षैः पालिता ॥ १५ ॥ ॥ ॥ ॥ ॥

१ वक्ष्यमाणैरित्यर्थः । २ शौनकादिसंबोधनम् । ३ प्रशमयन्निवेति साम्ना मन्योरपगमासंभवादिति भावः । ४ 'आदौ प्रजापतिः' इति पाठः । ५ ऊर्जमन्नातिरिक्त फलादि । ६ अचराः पुष्पफलाद्याः । ७अपदस्तृणघासाद्याः । ८अहस्ता गवाद्याः । ९चतुष्पदो हरिणाद्याः । १०पतिः प्रजापतिः । 'नृपः' इति पाठः । ११भिक्षूणां ब्रह्मचर्यादीनां गृही गृहस्थः । १२धिष्ण्यमधिष्ठानम् ।

आमन्त्र्य सान्त्वयित्वा आप्सरसीमप्सरसः प्रम्लोचायाः सुताम् ॥ १६ ॥ १७ ॥ दुहितृवत्सल इति तस्य कन्यावंश एवेत्युक्तम् । मम मत्तः ॥ १८ ॥ प्रजापतिर्दक्षः ॥ १९ ॥ अबृंहितमसंवृद्धम् । विन्ध्यस्य पादान्संनिहितपर्वतान् ॥२०॥२१॥ हंसगुह्याख्येन स्तोत्रेण । कस्य दक्षस्य ॥ २२ ॥ पराय सर्वोत्तमाय नमो दधे नमनं करोमि । परत्वे हेतुः—अवितथा अनुभूतिश्चिच्छक्तिर्यस्य । अतो गुणत्रयाभासो जीवो निमित्तं माया च तयोर्बन्धवे नियन्त्रे । एवमपि गुणेषु तत्त्वबुद्धिर्येषां तैर्जीवैरदृष्टं धाम स्वरूपं यस्य । तत्र हेतुः—निवृत्तं मानं यस्मात् । पाठान्तरे निवृत्तं निरस्तं मानमवधिश्च यस्मात् । तर्हि कथं तस्य सिद्धिरत आह । स्वयंभुवे स्वप्रकाशाय ॥२३॥ अदृष्टधामत्वं दर्शयन्नाह—नेति । पुरुषः सखा जीवोऽस्मिन्पुरे देहे वसन्नप्यत्रैव संवसतः सख्युर्यस्य सख्यं करणप्रवर्तकत्वादिकं नावैति न जानाति तस्मै । कुतः । व्यक्तदृष्टेः प्रपञ्चद्रष्टुः । नहि द्रष्टा दृश्यो भवतीति । प्रथमान्तपाठे व्यक्ते प्रपञ्च एव दृष्टिर्यस्य स गुणो विषयो गुणिनो विषयिण इन्द्रियादेः सख्यं प्रकाशकत्वं

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ॥ सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥१६॥ तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल ॥ यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥१७॥ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ॥ रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः ॥ देवासुरमनुष्यादीन्नभस्थलजलौकसः ॥१९॥ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ॥ विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः ॥ २० ॥ तत्राघमर्षणं नाम तीर्थं पापहरं परम् ॥ उपस्पृश्यानुसवनं तपसातोषयद्धरिम् ॥ २१ ॥ अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम् ॥ तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥ २२ ॥ ॥ प्रजापतिरुवाच ॥ नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे ॥ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयंभुवे ॥२३॥ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन्संवसतः पुरेऽस्मिन् ॥ गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि ॥२४॥ देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ॥ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥ यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसंप्रमोषात् ॥ य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥

यथा न वेत्ति तद्वत् ॥ २४ ॥ ननु गुणो जडत्वान्न जानातीति जीवस्तु चेतनः किमिति न जानात्यत आह—देह इति । देहश्चासवश्च प्राणा अक्षाणीन्द्रियाणि मनवश्चान्तःकरणानि भूतानि च मात्राश्च तन्मात्राण्यात्मानं स्वरूपं दृश्यमन्यमिन्द्रियवर्गं तयोः परं देवतावर्गं च न विदुः । पुमान् जीवस्तु सर्वमेतत्त्रयं वेद गुणांश्च तन्मूलभूतान्वेद ॥ तज्ज्ञोऽपि सन् यं सर्वज्ञं न वेद । तमनन्तमीडे स्तौमि ॥ २५ ॥ अदृष्टधामत्वमुक्त्वा स्वप्रकाशत्वमाह । यदा मनस उपरामः समाधिर्न तु सुषुप्ताविव लयो नच जाग्रत्स्वप्नयोरिव विक्षेपः । तदाह—नामरूपे रूप्येते येन तत्तथा तस्य । उपरामे हेतुः—दृष्टं दर्शनं स्मृतिश्च तयोः संप्रमोषान्नाशात् । तदा यः केवलेन स्वरूपज्ञानेन प्रतीयते तस्मै हंसाय शुद्धाय शुचि शुद्धं मनः सद्म प्रतीतिस्थानं यस्य तस्मै नमः ॥ २६ ॥ ॥ ॥

॥ ९॥

१ प्रम्लोचादेहाविर्भूता कण्डोरुत्पन्नामित्यर्थः । २ 'निवृत्तमानावधये स्वयभुवे' इत्येवंरूपे । ३ 'व्यक्तदृष्टस्तस्मै' इत्येवंरूपे । ४ भूतानि पृथिव्यादीनि । ५ तन्मात्राः शब्दादयः ।

एवंभूतः केषां प्रतीयत इत्यपेक्षायामाह—मनीषिण इति द्वाभ्याम् । विवेकिनो यं निष्कर्षन्ति विविच्य ध्यायन्ति स निर्वाणसुखानुभूतिर्मम प्रसीदतामिति द्वयोरन्वयः । एवं निष्कर्षतां प्रतीयत इति भावः । किमिति निष्कर्षन्ति । स्वशक्तिभिर्गूढमप्रकाशमानम् । कतिभिर्नवभिः पुनश्च त्रिवृद्भिः त्रिगुणाभिः सप्तविंशत्युपाधिभिर्गूढमष्टाविंशं निष्कर्षन्तीत्यर्थः । यद्वा नवभिः प्रकृतिपुरुषमहदहंकारपञ्चतन्मात्ररूपाभिः । त्रिवृद्भिस्त्रिगुणात्मिकाभिः । चकारात्पोडशविकाररूपाभिश्च । कथंभूतं निष्कर्षन्ति । मनीषयान्तर्हृदि संनिवेशितं निश्चलीकृतं पाञ्चदश्यं पञ्चदशसामिधेनीमन्त्रैः प्रकाश्यमलौकिकं वह्निमिवाहंकारास्पदादात्मनोऽन्यं परमात्मानं निष्कर्षन्तीत्यर्थः ॥ २७ ॥ अशेषा विशेषा यस्मात्तस्या मायाया निषेधेन निर्वाणसुखेऽनुभूतिर्यस्य अप्रसक्तनिषेधासंभवात्प्रसक्तिमाह । अनिरुक्ता आत्मनि शक्तिर्माया यस्य सः ॥ २८ ॥ ननु यदि स एव सर्वनामा स एव विश्वरूप इति । तद्रूपत्वेऽपि वास्तवत्वाभावान्निषेधः संभवतीत्याह । अनिरुक्ता[3] आत्मनि ... सर्वैर्नामभिर्वाच्यं प्रत्यक्षादिदृश्यं च तस्य स्वरूपं वस्तुतो माभूत्केवलया स्वसंस्थया प्रतीयते तर्हि सर्वनामत्वं विश्वरूपत्वं चानुपपन्नं वागाद्यगोचरत्वादित्याशङ्क्य सर्वैर्नामभिर्वाच्यं प्रत्यक्षादिदृश्यं च तस्य स्वरूपं वस्तुतो माभूत्तथापि मायया घटत इति श्लोकत्रयेणोपपादयन्नमस्करोति—यद्यदिति । यद्यद्वचसा निरुक्तमभिहितं धिया निरूपितं व्यवसितमक्षभिर्वा इन्द्रियैर्निरूपितं गृहीतमुत अपि मनसापि निरूपितं संकल्पितं यस्य स्वप्रकाशत्वं तस्य तत्स्वरूपं मा भूत् । स्वरूपत्वाभावे हेतुः—हि यस्मात्तत्तद्गुणानामेव रूपम् । पाठान्तरे

वह्निं यथा दारुणि पाञ्चदश्यं[1] मनीषया निष्कर्षन्ति गूढम् ॥ २७ ॥
मनीषिणोऽन्तर्हृदि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ॥
स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः[2] ॥
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥
यद्यन्निरुक्तं वचसा निरूपितं धियाऽक्षभिर्वा मनसा वोत यस्य ॥
मा भूत्स्वरूपं गुणरूपं[4] हि तत्तत्स वै गुणापायविसर्गलक्षणः ॥ २९ ॥
यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च ॥ ॥ ॥ ॥
परावरेषां[5] परमं प्राक् प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥

पाठान्तरे गृहीतमुत ... गुणैर्वर्धितम् । स तु गुणव्यतिरिक्तः । यतो गुणानामपायविसर्गाभ्यां प्रलयोत्पत्तिभ्यां लक्ष्यत इति तथा । चेतनाधिष्ठानं विना तयोरसंभवात् । यद्वा यस्य स्वरूपं मा भून्न भवति तस्मै नम इति तृतीयेनान्वयः ॥ २९ ॥ तदेवं वस्तुतो गुणस्वरूपत्वाभावमङ्गीकृत्यानिरुक्तात्मशक्तिरित्यनेन द्योतितं मायया सर्ववाच्यत्वेन विश्वरूपत्वमाह । यस्मिन्नधिकरणे । यतोऽपादानात् । येन करणेन । यस्य संबन्धि । यस्मै संप्रदानाय यदीप्सिततमम् । यः कर्ता । कुरुते स्वतन्त्रः । कार्यते चान्येन प्रयोज्यकर्त्रा । तद्ब्रह्मेति प्रत्येकं संबन्धः । अत्र च सप्तभिर्यच्छब्दैः सप्तविभक्त्यर्था दर्शिताः । यथेति च क्रियाकारकसंबन्धप्रकारवाचिनामव्ययानामर्थाः । कुरुते कार्यते चेति स्वार्थपरार्थक्रियान्वयश्च सर्वेषां दर्शितः । चशब्देन भावकर्मादिविहितप्रत्ययार्थाः संगृहीताः । तद्ब्रह्मैवेति कुतस्तत्राह । परेषामवरेषां च हेतूनां तद्धेतुस्तेषां कारणम् । तत्कुतः । सर्वेभ्यः प्राक्प्रसिद्धम् । ननु ब्रह्मादयस्तद्धेतवः श्रूयन्तेऽवरे च दृश्यन्ते तत्कथं ब्रह्मैव तद्धेतुस्तत्राह । अनन्यद्विजातीयशून्यम् । परमं कारणम् । ननु सर्वकारणत्वे तस्य किं नाम सहकारि भवत्तदानीमन्यस्याभावात् । सत्यम्, निरपेक्षमेव तत्कारणमित्याह । एकं सजातीयशून्यं च । तस्मै नम इत्युत्तरेणान्वयः ॥ ३० ॥ ॥ ॥ ॥ ॥

१ पाञ्चदश्यं पञ्चदशीयकर्मसंबन्धिनं दर्शपूर्णमासानुष्ठानं हि पञ्चदश्युपक्रममग्न्याधानमपीति वैदिकोऽग्निः पाञ्चदश्य इत्युच्यते । २ बवयोरभेदाद्यन्निर्वाणसुखं वाणा दुःखदारका आध्यात्मिकादिदुःखशरा न सन्ति यत्र तस्मिन्नेव सुखे इत्यर्थः । ३ निर्वचनानर्हा अनिर्वचनीयेति यावत् । ४ 'मा भूत्स्वरूपं गुणबृंहितं तत्' इत्येवंरूपे । ५ परेषां प्रकृतिपुरुषकालादीनां अवरेषां महदादीनां ब्रह्मादीनां च ।

नन्वेवं ब्रह्म चेद्विश्वस्य हेतुस्तर्हि न कदाचिदनीदृशं जगदिति वदन्तो मीमांसकाः कुतोऽत्र विवदन्ते । तैश्चान्ये स्वभाववादिनः संवदन्ते । ते च ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनः पुनर्मुह्यन्ति तत्राह । यस्य मायाविद्यायाः शक्तयो विवादस्य क्वचित्संवादस्य भुवः स्थानानि भवन्ति तस्मै नमः ॥ ३१ ॥ ननु किं तद्ब्रह्म यस्य शक्तयो विवादादिभुवो भवन्ति तत्राह—अस्तीति । योग उपासनाशास्त्रम् । तत्र हि विराड्रूपेणोपासनायां पातालपादादिकमस्तीत्युपास्यत्वेन विधीयते । नास्तीति सांख्यं ज्ञानशास्त्रम् । तत्र 'अपाणिपादः' 'अचक्षुरश्रोत्रम्' इति च पादादि नास्तीति निषिध्यते । तयोर्योगसांख्ययोर्यत्किंचित्सममनुवर्तमानमवेक्षितं प्रतीतं तद्बृहद्ब्रह्म । विवादास्पदं ब्रह्मेत्यर्थः । विवादं स्फुटयति । भिन्नावस्तिनास्तीत्येवंभूतौ विरुद्धौ धर्मौ ययोः । तयोर्भिन्नविषयत्वेऽपि विरोधो न स्यादित्येकस्थयोरित्युक्तमेकविषययोः कुतः वस्तुनिष्ठयोः पादादिविधिप्रतिषेधयोरेकवस्तुनिष्ठत्वात् । समत्वे हेतुः—परम् । हि यतः । विधिप्रतिषेधयोरविषयस्तयोः पादादिविषयत्वात् । तथा तद्विषयस्य सद्भावे किं प्रमाणं तदाह । अनुकूलमधिष्ठानं विना पादादिकल्पनायोगात्, अवधिं विना तन्निषेधायोगाच्च तयोरुपपादकत्वेन सिद्धमित्यर्थः । तस्मै नम इति पूर्वस्यानुषङ्गः ॥ ३२ ॥ ननूदासीनस्य समस्य नमस्कारे को लाभस्तत्राह—य इति । पादमूलं भजतामनुग्रहार्थं

यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति ॥ कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥३१॥
अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ अवेक्षितं किंचन योगसांख्ययोः समं परं ह्यनुकूलं
बृहत्तत् ॥३२॥ योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः ॥ नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं
परमः प्रसीदतु ॥३३॥ यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ॥ यथाऽनिलः पार्थिवमाश्रितो गुणं स ईश्वरो
मे कुरुतान्मनोरथम् ॥ ३४ ॥ ॥ श्रीशुक उवाच ॥ इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे ॥ आविरासीत्कुरुश्रेष्ठ भग-
वान्भक्तवत्सलः ॥ ३५ ॥ कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ॥ चक्रशङ्खासिचर्मेषुधनुःपाशगदाधरः ॥ ३६ ॥

प्राकृतनामरूपरहितोऽपि जन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानि रूपाणि कर्मभिर्नामानि च यो भेजे । तत्कुतः । भगवानचिन्त्यैश्वर्यः । स मह्यं प्रसीदतु ॥ ३३ ॥ ननु त्वादृशाः सकामा गणेशादीन् प्रार्थयन्ते त्वं तु तान्विहाय किमिति भगवन्तमेव प्रार्थयसे तत्राह । प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैर्यथाशयं तत्तद्वासनानुसारेण यो देहगतोऽन्तर्यामी तत्तद्देवतारूपेण विविधो भाति । यथा वायुः पार्थिवं गुणं चम्पकादिगन्धभेदमाश्रित्य नानागन्धवान्विभाति रेणोर्गुणं धूसरत्वादिकमाश्रित्य नानारूपवान् प्रतीयते तद्वत्तस्यैव तत्तद्देवतारूपेण फलदातृत्वात्स ईश्वर एव मे मनोरथं सत्यं करोतु किमन्तर्गडुभिर्देवतान्तरैरित्यर्थः । तदुक्तं गीतासु—'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥ तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥ लभते च ततः कामान्मयैव विहितान् हि तान्' इति । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति चेति ॥ ३४ ॥ संस्तुवतो दक्षस्य स भगवान् प्रत्यक्षोऽभूत् ॥३५॥ तं वर्णयति सार्धैश्चतुर्भिः । सुपर्णस्यांसे स्कन्धे कृतौ पादौ येन । प्रलम्बा अष्टौ महान्तो भुजा यस्य । चक्राद्यष्टायुधधरः ॥ ३६ ॥ ॥

१ विवादः पूर्वपक्षः । २ संवादः सिद्धान्तस्थापनम् । ३ विवादस्यास्पदमधिष्ठानम् । 'विवादेऽप्यविवादास्पदम्' इति पाठः । ४ 'इति संस्तुवतस्तस्य' इति, 'इति स्तवैः संस्तुवतः' इति च पाठः । ५ भेजे प्रकटीचकार । ६ अन्तर्गडुभिरन्यथासिद्धैः ।

प्रसन्नं वदनमीक्षणे च यस्य । वनमालया निवीतं कण्ठादिपादान्तव्याप्तमङ्गं यस्य । लसन्तौ श्रीवत्सकौस्तुभौ यस्य ॥ ३७ ॥ महान्ति किरीटकटकानि यस्य । स्फुरती मकरकुण्डले यस्य । काञ्च्यादिभिर्विभूषितः । वलयमत्र पादभूषणं द्रष्टव्यम् । कटकस्योक्तत्वात् ॥३८॥ त्रैलोक्यमोहनं श्रीपुरुषोत्तमाख्यम् । सुरयूथपैर्लो-कपालैः ॥३९॥४०॥ आपूरितानि मनोद्वाराणि इन्द्रियाणि तैः[१] । यथा ह्रदिन्यो नद्यो निर्झरैरापूर्यन्ते तथा महानन्दापूर्णत्वेनावृत्तिकत्वाद्गागादिना न किंचिद्वक्तुं शक्तोऽभूदित्यर्थः ॥४१॥ यद्यप्यसौ नावोचत्तथापि चित्तज्ञ इदं वक्ष्यमाणमाह ॥४२॥ भावं भक्तिं । गतः प्राप्तः ॥४३॥ यद्यतस्ते तपोऽस्य विश्वस्योद्बृंहणं वृद्धिकर-मतस्तेऽहं प्रीतः । मत्तपसो लोकसमृद्ध्यर्थत्वे त्वत्प्रीतेः किं कारणं तत्राह—ममेति । भूतानां विभूतयः समृद्धयो भूयासुरिति यदेष एव मम कामः । अतो मत्कामपूर-णादेवाहं प्रीतोऽस्मीत्यर्थः ॥ ४४ ॥ भूतिविस्तारप्रयत्नश्च तवोचित एवेत्याह—ब्रह्मेति । भवन्तः प्रजापतयः भूतेरुद्भवस्य हेतवः ॥ ४५ ॥ विश्ववृद्ध्यर्थेन त्वत्तपसाऽहं

पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ॥ वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥ महाकिरीटकटकः स्फुरन्मकरकुण्डलः ॥ काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥ त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः ॥ वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥३९॥ स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ॥ रूपं तन्महदाश्चर्यं विचक्ष्यागतसाध्वसः[२] ॥४०॥ ननाम दण्डवद्भूमौ प्रहृष्टात्मा प्रजापतिः ॥ न किंचनोदीरयितुमशकत्तीव्रया मुदा ॥ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः ॥४१॥ तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ॥ चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥४२॥ ॥ श्रीभगवानुवाच ॥ प्राचेतस महाभाग संसिद्धस्तपसा भवान् ॥ यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥४३॥ प्रीतोऽहं ते प्रजानाथ यत्तेऽस्योद्बृंहणं तपः ॥ ममैष कामो भूतानां यद्भूयासुर्विभूतयः ॥४४॥ ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ॥ विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥४५॥ तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रियाकृतिः ॥ अङ्गानि क्रतवो जाता धर्म आत्मासवः सुराः ॥ ४६ ॥ अहमेवासमेवाग्रे नान्यत्किंचान्तरं बहिः ॥ संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७॥

प्रीत इत्युक्तं तदेव तपः स्तुवन्प्रसङ्गादन्यान्यपि लोकवृद्धिकराणि विद्यादीनि स्तौति । तपो यमनियमादिसहितं ध्यानं मे हृदयम् । विद्या साङ्गमन्त्रजपः सा ध्यानं तनोतीति तनुर्देहः । क्रिया ध्यानादिविषयः पुंव्यापारो भावनाशब्दवाच्यस्तेन हि ध्यानादिकमाक्रियत इत्याकृतिः । जाताः सुनिष्पन्नाः क्रतवोऽङ्गानि । 'शिरो वा एतद्यत्प्रवर्ग्यः ग्रीवा उपसदश्चक्षुषी आज्यभागौ' इत्यादिश्रुतेः । धर्मः क्रत्वाद्यपूर्वमात्मा मनः, हृदयाश्रयत्वात् । सुरा यज्ञभुजस्त एवासवः प्राणाः, संतर्पणीयत्वात् ॥४६॥ तपसः संतानवृद्धिहेतुत्वं दर्शयितुं द्वितीयतृतीयोक्तमितिहासमाह चतुर्भिः । अहमेवेति वस्त्वन्तरव्यावृत्तिः । आसमेवेति क्रियान्तर-व्यावृत्तिः । आन्तरं ग्राहकम् । बहिर्ग्राह्यम् । संज्ञानमात्रं चैतन्यमात्रम् । अव्यक्तमिन्द्रियवृत्तिभिरनभिव्यक्तम् । अत एव प्रसुप्तमिव विश्वतः सर्वत्र ॥ ४७ ॥

१ तैर्हेतुभूतैरित्यर्थः । २ भूतिहेतवो विभूतिवृद्धिकरा इति सिद्धां० । ३ आगतसाध्वसः आ सर्वतो गतं साध्वसं भयं यस्येत्यर्थः । 'विचक्ष्य गतसाध्वसः' इति पाठः । ४ आनन्दि-तान्तःकरणबहिरिन्द्रियैः । ५ द्वितीयस्कन्धे नवमाध्याये 'स आदिदेवः' इत्यादौ । तृतीयस्कन्धे चाष्टमाध्यायमारभ्योक्तम् ।

गुणतो मायातः । गुणमयो विग्रहो ब्रह्माण्डम् । ततस्तदैव । अजोऽयोनिजः ॥ ४८ ॥ खिलमसमर्थमिव ॥ ४९ ॥ मे मया तपतपेत्यभिहितः सन् । येन तपसा ॥५०॥ सन्ततिवृद्ध्युपायमाह—एषेति । अङ्ग हे दक्ष । पञ्चजनाख्यस्य प्रजापतेः ॥५१॥ मिथुनस्य यो व्यवायो रतिः स एव धर्मो यस्य स त्वम् । तथाभूतायां तस्याम् ॥५२॥ मायया निमित्तभूतया । स्त्रिया सह मिथुनीभूय भविष्यन्ति पुत्रादिरूपेणोत्पत्स्यन्ते॥५३॥५४॥ इति श्रीमद्भा०म०पु०षष्ठस्कन्धे चतुर्थोऽध्यायः ॥४॥ पञ्चमे नारदेनाथ वाचःकूटैस्तु नाशितान् ॥ सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥ १ ॥ १ ॥ अपृथग्धर्मशीला एकाचारस्वभावाः॥२॥तत्र प्रतीच्यां दिशि सिन्धोर्नद्याः समुद्रस्य च यत्र

मय्यनन्तगुणेऽनन्ते गुणतो गुणविग्रहः ॥ यदासीत्तत एवाद्यः स्वयंभूः समभूदजः ॥४८॥ स वै यदा महादेवो मम वीर्योपबृंहितः ॥ मेने खिलमिवात्मानमुद्यतः सर्गकर्मणि ॥४९॥ अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ॥ नव विश्वसृजो युष्मान्येनादावसृजद्विभुः ॥५०॥ एषा पञ्चजनस्याङ्ग दुहिता वै प्रजापतेः ॥ असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥ मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ॥ मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥ त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूय मायया ॥ मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा मिषतस्तस्य भगवान्विश्वभावनः ॥ स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥ ५४ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः ॥ १ ॥ अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ॥ पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥ तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः ॥ सङ्गमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥३॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥ ४ ॥ तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः ॥ प्रजाविवृद्धये यत्तान् देवर्षिस्तान्ददर्श ह ॥५॥ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ॥ अदृष्ट्वाऽन्तं भुवो यूयं बालिशा बत पालकाः ॥ ६ ॥ ॥ ॥

सङ्गमस्तत्रस्थं नारायणसरो नाम तीर्थं प्रययुरित्यन्वयः । सुमहदतिविस्तीर्णम् ॥३॥ विनिर्धूतो मलो रागादिर्यस्मात्स आशयो येषाम् ॥४॥ तान् शुद्धसत्त्वानपि पित्रादेशजाड्येन प्रजाविवृद्धये यत्तान् उद्युक्तान्ददर्श ॥ ५ ॥ अहो कष्टं मोक्षमार्गाधिकारिणः सन्त एते प्रवृत्तिनिष्ठैः कर्मभिर्नश्येरन्निति कृपया तान्निगूढार्थैर्वाक्यैरुपदिशति स्म । तदाह—उवाचेति चतुर्भिः । पालकाः सन्तोऽपि बालिशा अज्ञा यूयं कथं प्रजाः स्रक्ष्यथ । बतेति खेदे । बालका इति पाठे बालिशत्वे हेतुः ॥ ६ ॥

१ युष्मच्छब्दोच्चया ब्रह्मपुत्र एव महादेवशापादिदानीं प्रचेतोभ्यः पुनरुत्पन्नोऽयमिति ज्ञेयम् । इदं च चतुर्थस्कन्धे त्रिंशेऽध्याये स्फुटमस्ति । २ 'उतात्यर्थविकल्पयोः' इति मेदिनीकोशादुत अत्यर्थमुग्रं तप इत्यन्वयः । पादपूरणार्थं वा उतेति । 'प्रोत्पन्नमतयोऽभवन्' इति पाठः । ३ भुवोऽन्तमदृष्ट्वा प्रजाः कथं स्रक्ष्यथ इत्यस्य व्याख्या तु स्वयमग्रे करिष्यत इति न व्याख्यायन्ते । चक्र० ।

एक एव पुरुषो यस्मिंस्तद्राष्ट्रमदृष्ट्वेत्यनुषङ्गः । बिलं चेत्यादिद्वितीयान्तानामविज्ञाय कथं सर्गं करिष्यथेति तृतीयेनान्वयः ॥७॥ पञ्चपञ्चानां पञ्चविंशतेरद्भुतं गृहम् ।
क्षौरपव्यं क्षुरैः पविभिर्वज्रैश्च निर्मितमिवातितीक्ष्णं दृढं चेत्यर्थः । स्वयं स्वतन्त्रम् । भ्रमिं भ्रमणस्वभावम् ॥ ८ ॥ विपश्चितः सर्वज्ञस्य स्वपितुरादेशमात्मनोऽनुरूपमवि-
द्वांसोऽजानन्तः पूर्वोक्तं चैकपुरुषं राष्ट्रमित्याद्यविज्ञायाहो कथं सर्गं करिष्यथेत्यन्वयः ॥ ९ ॥ वाचःकूटं परोक्षवादेनार्थान्तरमिव प्रतीयमानं वचनम्। औत्पत्तिकी
सहजा मनीषा विचारशक्तिर्यस्यास्तया धिया स्वयमेव विमम्रृशुर्विचारितवन्तः ॥ १० ॥ नारदोक्तदशवाक्यानां तैर्विमृश्य निर्णीतानर्थानाह दशभिः । अदृष्ट्वाऽन्तं भुव
इत्यत्र भूशब्दार्थमाह—भूरिति । क्षेत्रं तच्चात्र जीवसंज्ञं लिङ्गशरीरम् । यन्निजबन्धनमात्मनो बन्धकारणम् । अन्तशब्दार्थमाह । निर्वाणं नाशम् । असद्भिर्मोक्षानुपयो-
गिभिः कर्मभिः किं भवेन्न किमपि ॥११॥ एकपुरुषमित्यस्यार्थमाह—एक एवेति । तुर्यः सर्वसाक्षी । स्वाश्रयः स्वाधारः । अभवं नित्यमुक्तम् । असद्भिरीश्वरासमर्पितैः
कर्मभिः ॥१२॥ बिलं चादृष्टनिर्गममित्यस्यार्थमाह—पुमान् यद्गत्वा प्राप्य बिलस्वर्गं पातालं गत इव नैवैति नावर्तते तत् प्रत्यग्धाम ज्योतीरूपं ब्रह्म । अविदोऽविदुषः

तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमम् ॥ बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥७॥ नदीमुभयतोवाहां पञ्चपञ्चा-
द्भुतं गृहम् ॥ क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमिम् ॥८॥ कथं स्वपितुरादेशमविद्वांसो विपश्चितः ॥ अनुरूपमवि-
ज्ञाय अहो सर्गं करिष्यथ ॥९॥ ॥ श्रीशुक उवाच ॥ तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ॥ वाचःकूटं तु देवर्षेः स्वयं
विमम्रृशुर्धिया ॥ १० ॥ भूः क्षेत्रं जीवसंज्ञं यदनादिनिजबन्धनम् ॥ अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥
एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः ॥ तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥ पुमान्नैवैति यद्गत्वा बिलस्वर्गं
गतो यथा ॥ प्रत्यग्धामाऽविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥ नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ॥ तन्नि-
ष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥ तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ॥ तद्गतीरबुधस्येह किमसत्कर्म-
भिर्भवेत् ॥ १५ ॥ सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् ॥ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥

असद्भिर्नश्वरस्वर्गादिसाधनैः कर्मभिः ॥१३॥ बहुरूपां स्त्रियमित्यस्यार्थमाह—नानारूपेति । स्वैरिणीव पुंश्चलीव विमोहकै रजआदिगुणैरन्विता । तन्निष्ठां तस्या अव-
सानं विवेकमगतस्याप्राप्तस्य । असद्भिरशान्तैः ॥ १४ ॥ पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह । तस्याः सङ्गेन भ्रंशितमैश्वर्यं स्वातन्त्र्यं यस्य । कुत्सिता भार्या यस्य तद्वत् ।
तस्या गतीः सुखदुःखलक्षणाः । संसरन्तं गच्छन्तं जीवमबुधस्याजानतः । असद्भिर्बुद्ध्यविवेकप्राप्तैः ॥ १५ ॥ नदीमुभयतोवाहामित्यस्यार्थमाह । सृष्ट्यप्ययौ करोती-
त्युभयतःप्रवाहो दर्शितः । वेला कूलं प्रवाहपतितानां निर्गमस्थानं तपोविद्यादि तस्यान्ते समीपे वेगितां निर्गमप्रतिबन्धाय क्रोधाहंकारादिभिः कृतवेगाम् । मत्तस्य
तद्वेगेन विवशस्य । अत एव तां तथाभूतामविज्ञस्याविचारयतः । असद्भिर्मायिकैः । यद्वा वेलाकूलं समुद्रस्य व्यवहारस्थानं तस्य समीपे समुद्रवृद्धिह्रासाभ्यां यथो-
भयतोऽन्तर्बहिः कृतवेगा नदी भवत्येवं समुद्रतुल्यस्यात्मनो व्यवहारस्थाने देहे जन्ममरणादिभिः कृतवेगामित्यर्थः । वेगिनीमिति पाठे वेगवतीम् ॥ १६ ॥

१ बन्धकारणं जन्महेतुः । २ तस्य जीवाख्यस्य लिङ्गशरीरस्य । ३ पूर्वतनसप्तमश्लोकस्थराष्ट्रशब्देन जगद्विवक्षितम् । तथा च तत्र जगति ईश्वरो नियन्तृत्वेन स्थित इत्याद्यर्थोऽवगन्तव्यः ।
४ अप्राप्तस्य अविचारयत इत्यर्थः । ५ तस्या बुद्धेः ।

पञ्चपञ्चेत्यस्यार्थमाह । पञ्चविंशतितत्त्वानां पुरुषोऽन्तर्यामी । अद्भुतदर्पणमाश्चर्यरूप आश्रयः । अध्यात्मं कार्यकारणसङ्घाताधिष्ठातारम् । तमबुधस्य । असद्भिर्मिथ्यास्वातन्त्र्यकृतैः ॥ १७ ॥ क्वचिद्धंसमित्यस्यार्थमाह । ऐश्वरमीश्वरप्रतिपादकम् । विविक्तं पदं चिज्जडरूपं वस्तु येनेति हंसपदव्याख्यानम् । बन्धमोक्षावनुदर्शयतीति तथा । अनेन चित्राः कथा यस्येति व्याख्यातम् । तदुत्सृज्यानभ्यस्य अज्ञायाविदुषः । असद्भिर्बहिर्मुखैः ॥१८॥ क्षौरपव्यमित्यस्यार्थमाह—कालचक्रमिति । भ्रमिर्भ्रमणात्मकम् । तीक्ष्णमिति निष्कर्षयदिति च क्षौरपव्यपदं व्याख्यातम् । तदबुधस्यात एव फलस्य नित्यबुद्ध्या काम्यकर्मानुष्ठाने वैगुण्यबाहुल्यादसद्भिः ॥१९॥ स्वपितुरादेशमित्यस्यार्थमाह । शास्त्रस्य स्वपितुर्द्वितीयजन्महेतोः । तदनुरूपाय निवृत्त्यनुरूपाय । निवर्तकमादेशं यो न वेद स कथं गुणविश्रम्भी

पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥१७॥ ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥१९॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥२०॥ इति व्यवसिता राजन् हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पन्थानमनिवर्तनम् ॥२१॥ स्वरब्रह्मणि निर्भातहृषीकेशपदाम्बुजे ॥ अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः ॥२२॥ नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचां पदम् ॥ २३ ॥ स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः ॥ पुत्रानजनयद्दक्षः शबलाश्वान्सहस्रशः ॥ २४ ॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ॥ नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥२५॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपन्तो ब्रह्म परमं तेपुस्तेऽत्र महत्तपः ॥ २६ ॥ अब्भक्षाः कतिचिन्मासान्कतिचिद्वायुभोजनाः ॥ आराधयन्मन्त्रमिममभ्यस्यन्त इडस्पतिम् २७ ॥ ओं नमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥ ॥

गुणमयप्रवृत्तिमार्गविश्वासवान्सन्नुपक्रमेत्सृष्ट्यादौ प्रवर्तेत । 'मोक्षेशब्रह्मबुद्धीनां जीवमायान्तरात्मनाम् ॥ शास्त्रकालोपदेशानामज्ञाने किमु कर्मभिः ॥' इति वाचःकूटसंग्रहश्लोकः ॥ २० ॥ इति व्यवसिता एवं निश्चितवन्तः । एकचेतस ऐकमत्ययुक्ताः । तं नारदं प्रदक्षिणीकृत्यापुनरावृत्तिमार्गं प्रययुः ॥२१॥ निर्भातः साक्षात्कृतो यो हृषीकेशस्तस्य पदाम्बुजे । अनुचरत् अन्वचरदित्यर्थः ॥ २२ ॥ नाशमदर्शनं स्वधर्मभ्रंशं वा । शीलेन शालन्ते शोभन्त इति तथा तेषाम् । को दक्षः । सुप्रजास्त्वं सत्पुत्रवत्त्वम् । शुचां शोकानां स्थानम् ॥ २३ ॥ अजेन ब्रह्मणा । सहस्रशः सहस्रसंख्यान् ॥ २४ ॥ २५ ॥ परमं ब्रह्म प्रणवं वक्ष्यमाणमन्त्रं वा ॥ २६ ॥ इडस्पतिं वाचां मन्त्राणां पतिं विष्णुमाराधयामासुः ॥ २७ ॥ विशुद्धसत्त्वाश्रयाय परमहंसाय नमो धीमहि ॥ २८ ॥ ॥ ॥

१ अबुधस्य सम्यक्त्वेनाजानतः । २ विविक्तानि विचारयुक्तान्येन पदानि सुप्तिङन्तानि यत्रेति चक्र० । ३ निष्कर्षयत् विनाशयत् । ४ क्षुरपविभ्यां निर्वृत्तमिति । ५ निवृत्त्यर्हमधिकारिणमुद्दिश्येत्यर्थः । 'निवृत्त्यर्हाय' इति पाठः । ६ स्वरब्रह्मणि स्वराः षड्जादय एव ब्रह्म । ७ स्वपूर्वजाः स्वज्येष्ठभ्रातरः ।

प्रतिसर्गे धीर्येषां तान् । वाचःकूटानि 'अदृष्ट्वाऽन्तं भुवः' इत्यादीनि पूर्वोक्तानि प्राह ॥२९॥ हे दाक्षायणाः, संशृणुतेत्यादिपुनरन्यदपि प्राह । निगममुपदेशम् । अन्विच्छतावलोकयत ॥३०॥ प्रायणं प्रकृष्टं गमनम् । पुण्यमेव बन्धुर्यस्य मरुद्भिर्भ्रातृवत्सलैर्देवैः ॥३१॥ अमोघं दर्शनं यस्य । हे मारिष आर्य ॥३२॥ सध्रीचीनं समीचीनम् । प्रतीचीनं प्रत्यग्वृत्तिलभ्यम् । अनुपथमनुगुणपन्थानम् । पश्चिमा यामिनीर्गता रात्रय इव ॥ ३३ ॥ ३४ ॥ पुत्राणां पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि प्रायशो विरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वं गतस्तदा तमुपलभ्य दक्ष आह ॥ ३५ ॥ साधोरिव लिङ्गं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतम् । तदेवाह—साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ॥३६॥ ननु संन्यासिनो मार्गः साधुरेव, मोक्षहेतुत्वात् । सत्यम्, ऋणत्रयापाकरणं विना तु महाननर्थ एवेत्याह—ऋणैरिति । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री

इति तानपि राजेन्द्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचःकूटानि पूर्ववत् ॥ २९ ॥ दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥३०॥ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ॥३२॥ सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ॥ नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥३३॥ एतस्मिन्काल उत्पातान्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥३४॥ चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः ॥ देवर्षिमुपलभ्याह रोषाद्विस्फुरिताधरः ॥३५॥ ॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥ ३८ ॥ ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणाम् ॥ ३९ ॥ ॥

यज्वा ब्रह्मचारीवासि' इति श्रुतेः । ऋणैरमुक्तानाम् । न मीमांसितानि विचारितानि कर्माणि यैः । तेषां तावदृणविमोको नास्ति । तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवर्षिऋणाद्विमुक्तिश्च नास्ति । अतो हे पाप, विषयभोगत्यागादिह लोके श्रेयसो विघातः कृतः । मोक्षानधिकारित्वाच्च परलोकेऽपि श्रेयसो विघातः कृत इत्यर्थः । तथाच मनुः—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥' इति ॥३७॥ बालानां मतिं पुत्रादिविषयां भिनत्तीति तथा । एवं निरनुक्रोशो निर्घृणः । हरेर्यशोनाशकः सन् तत्पार्षदानां मध्ये कथं चरसि ॥ ३८ ॥ निर्लज्जत्वमेवाह—नन्विति । ननु त्वामृते भागवताः सर्वे भूतानुग्रहपरवशास्त्वं तु भूतविप्रियं कुर्वन्कथं न लज्जस इति भावः ॥ ३९ ॥ ॥ ॥

१ अनुगुणं पन्थानं भक्तिमार्गम् । २ परस्य परमेश्वरस्य । ३ असाधो न विद्यते साधुर्यतस्तथाभूत, न विद्यते साधुर्यतस्तथाभूतं यथा स्यात्तथा दर्शित इति सरस्वत्यभिप्रेतोऽर्थो ज्ञेयः इति चक्र० । ४ साधूनां नः इति गौरवेण बहुवचनम् । ५ मोक्षानधिकारेऽपि वैराग्यप्रवर्तनात् । ६ नन्वित्याश्चर्ये संबोधने वा ।

ननु वैराग्यादुपशम उपशमाच्च भूतस्नेहपाशच्छेदनं भवति, नच विरक्तस्य ऋणत्रयापाकरणमावश्यकम्, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिश्रुतेः। अतो वैराग्योपदेशेन तेषां मयानुग्रह एव कृत इति चेत्तत्राह—नेति। यद्यपि त्वमेवं मन्यसे तथापि मृषा केवलिना ज्ञानं विनाऽवधूतवेषेण त्वयेत्थं मतिचालने कृतेऽपि पुंसां विरागो नैव स्यात्। नच विरागं विनोपशमः, नच तेन विना स्नेहपाशनिकृन्तनमित्यर्थः ॥ ४० ॥ इत्थं विरागो न स्यादित्यत्र हेतुमाह—नानुभूय अननुभूय विषयाणां तीक्ष्णतां दुःखहेतुत्वं न जानाति। तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात् ॥ ४१ ॥ अतस्त्वयास्माकमप्रियमेव कृतं तथापि वयं न कुर्म इत्याह—यदिति। कर्मसंधानां[1] कर्ममर्यादानाम्। कर्तुमन्धानामिति पाठे विप्रियं कर्तुमजानतामित्यर्थः। दुःसहं यत्त्वं कृतवानसि तन्मर्षितं सोढम् ॥ ४२ ॥ तथापि तवाभद्रं भविष्यत्येवेत्याह। तन्तुकृन्तन संतानच्छेदक। यद्यस्मादभद्रं[3] पुत्राणां स्थानभ्रंशमचरस्तत्तस्मात्तव

नेत्थं पुंसां विरागः स्यात्त्वया केवलिना मृषा ॥ मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम् ॥४०॥ नानुभूय न जानाति पुमान्विषयतीक्ष्णताम् ॥ निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः[4] परैः ॥४१॥ यन्नस्त्वं कर्मसंधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥४२॥ तन्तुकृन्तन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतः पदम् ॥ ४३ ॥ ॥ श्रीशुक उवाच ॥ प्रतिजग्राह तद्बाढं नारदः साधुसंमतः ॥ एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥४४॥ ॥ इति श्रीम० म० पु० ष० स्कन्धे नारदशापो नाम पञ्चमोऽध्यायः ॥५॥ ॥ श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्याम्[5]अनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥ दश धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान् ॥ भूताङ्गिरःकृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः ॥ २ ॥ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥३॥ भानुर्लम्बा ककुज्जामिर्विश्वा साध्या मरुत्वती ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुतान् शृणु ॥ ४ ॥ भानोस्तु देवऋषभ[7] इन्द्रसेनस्ततो नृप ॥ विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥ ५ ॥ ॥

लोकेषु भ्रमतः पदं[6] स्थानं न भवेदिति मृदुच्छलेन शापः ॥ ४३ ॥ बाढं तथेति स्वीकृतवान्। ईश्वरोऽपि प्रतिशप्तुं समर्थोऽपि। तितिक्षेत सहेतेति यदेतावानेव ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भा० दी० टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे दक्षेण सृष्टायां कन्यापष्ट्यां प्रकीर्तिताः ॥ पृथग्वंशा यतो जातो विश्वरूपो दितेः सुतात् ॥ १ ॥ नारदात्पुत्राणां नाशमाशङ्कमानो दुहितॄर्जनयामास ॥ १ ॥ काय कश्यपाय। द्विपट् द्विगुणाः षट् द्वादश यासु ताः, त्रयोदशेत्यर्थः। इन्दोः सोमाय। त्रिणव सप्तविंशतिम्। तार्क्ष्याय नामान्तरं प्राप्ताय कश्यपायैव। अपरा अवशिष्टाश्चतस्रः ॥ २ ॥ सापत्यानामपत्यसहितानाम्। मे मत्तः शृणु। प्रसूतिप्रसवैः पुत्रपौत्रादिभिः ॥ ३ ॥ ४ ॥ ततो देवऋषभात् ॥ ५ ॥ ॥ ॥ ॥

१ कर्मविषये सन्धा मर्यादा येषाम्। 'कर्तसन्धानाम्' इति पाठे कर्त कर्म। २ अत्र यत्तच्छब्दयोरध्याहारः। ३ अभद्रं ऐहिकसुखानुभवविरोधिरूपम्। ४ भिन्नधीः विदीर्णमतिः। ५ असिक्न्यां भार्यायाम्। ६ पदं एकत्रनिवासलक्षणम्। ७ 'वेदऋषभः' इति पाठः।

यतः कीकटाद्भुवो दुर्गाणि दुर्गाभिमानिनो देवाः । जामेयो जाम्याः पुत्रः स्वर्गस्ततः स्वर्गान्नन्दिः पुत्रोऽभवत् ॥ ६ ॥ तत्सुतः साध्यानां सुतः ॥ ७ ॥ ८ ॥ ॥ ९ ॥ वसोर्वंशस्य भूयस्त्वादन्ते निर्देशः । मे मत्तः ॥ १० ॥ अभिमतिर्नाम पत्नी तस्या हर्षादयः पुत्राः ॥ ११ ॥ सहश्च आयुश्च पुरोजवश्च पुत्राः । पुरः पुराणि ॥ १२ ॥ १३ ॥ स्कन्दश्च कृत्तिकासुतोऽग्नेः पुत्रः । पाण्मातुर इत्यग्निभूरिति च प्रसिद्धेः । ततः स्कन्दात् ॥ १४ ॥ आकृतीपतिः शिल्पाचार्यः ।

ककुभः संकटस्तस्य कीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तु विश्वाया अप्रजांस्तान्प्रचक्षते ॥ साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥७॥ मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः ॥ जयन्तो वासुदेवांश उपेन्द्र[१] इति यं विदुः ॥ ८ ॥ मौहूर्तिका[२] देवगणा मुहूर्तायाश्च जज्ञिरे ॥ ये वै फलं[३] प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥ ९ ॥ संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः ॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥१०॥ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥११॥ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः ॥१२॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा[४] पुत्रा द्रविणकादयः ॥ १३ ॥ स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ॥ दोषस्य शर्वरी पुत्रः शिशुमारो हरेः कला ॥१४॥ वसोराङ्गिरसी पुत्रो विश्वकर्माऽऽकृतीपतिः ॥ ततो मनुश्चाक्षुषोऽभूद्विश्वे साध्या मनोः सुताः ॥ १५ ॥ विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥ पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥ सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥ अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये घोरा भूतविनायकाः ॥ १८ ॥ प्रजापतेरङ्गिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत्सती ॥ १९ ॥ ॥ ॥

ततो विश्वकर्मणश्चाक्षुषो मनुरासीत् ॥ १५ ॥ विभावसोरुषा नाम भार्या । अथ आतपात्पञ्चयामो दिवसो जातः । अत एव रात्रिस्त्रियामा प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् ॥ १६ ॥ भूतस्य द्वे भार्ये तयोर्वंशमाह—सरूपेति ॥१७॥ महानित्येवमेकादशरूपस्य रुद्रस्य । पार्षदाः प्रेतादयः । अन्येऽन्यस्यां जाताः ॥१८॥ अङ्गिरसः स्वधा सती चेति द्वे भार्ये तयोर्वंशमाह—प्रजापतेरिति । स्वधा नाम पत्नी पितॄन्पुत्रत्वेऽकरोत् । अथ सती चाथर्वाङ्गिरसं नाम वेदम् ॥ १९ ॥ ॥

१ अस्योपेन्द्रत्वं तु कल्पभेदाभिप्रायेणेति ज्ञेयम् । आदित्याः पुत्र उपेन्द्र इव जयन्तोऽप्युपेन्द्रसंज्ञ इत्यर्थ इति चक्रवर्त्यव्याख्यत् । २ मौहूर्तिका मुहूर्ताभिमानिनः । ३ 'यथाफलं' इति विज० पाठः । तत्र यथोचितं फलं स्वस्वमुहूर्तजम् । ४ वसोः पुत्रस्याग्नेर्भार्या धारा स्वाहापरपर्याया इति विज० ।

कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्वंशमाह—कृशाश्व इति ॥ २० ॥ २१ ॥ सुपर्णा विनता । अनूरुमरुणम् ॥ २२ ॥ रोहिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणात्कुपितस्य दक्षस्य शापाद्यक्ष्मग्रहार्दितः क्षयरोगपीडितः सन् तास्वनपत्योऽभूत् ॥ २३ ॥ तं दक्षं प्रसाद्य केवलं कला एव लेभे न त्वपत्यानि । कथंभूताः । क्षये कृष्णपक्षे दिताः खण्डिताः सतीः । पाठान्तरे क्षये सति पुनरेधितास्तेनैव वर्धिताः सतीः ॥ २४ ॥ २५ ॥ अल्पत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण

कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥ धिषणायां वेदशिरो देवलं वयुनं मनुम् ॥२०॥ तार्क्ष्यस्य विनता कद्रूः पतङ्गी यामिनी इति ॥ पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥ सुपर्णासूत गरुडं साक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥ कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत ॥ दक्षशापात्सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ २३ ॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः ॥ शृणु नामानि लोकानां मातॄणां शंकराणि च ॥ २४ ॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ॥२५॥ मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः ॥ तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः ॥२६॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ॥ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥ २७ ॥ दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः ॥ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २८॥ अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः ॥ सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु ॥२९॥ द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः ॥ अयोमुखः शङ्कुशिराः स्वर्भानुः कपिलोऽरुणः ॥ ३० ॥ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ॥ धूमकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥ ३१ ॥ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३२ ॥ वैश्वानरसुतायाश्च चतस्रश्चारुदर्शनाः ॥ उपदानवी हयशिरा पुलोमा कालका तथा ॥ ३३ ॥ उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ॥ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ ३४ ॥ उपयेमेऽथ भगवान्कश्यपो ब्रह्मचोदितः ॥ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥३५॥ ॥ ॥

तासां वंशानाह—तिमेरित्यादिना ॥ २६ ॥ २७ ॥ सौरसाः सुरसायाः पुत्राः ॥ २८ ॥ प्राधानिकान्मुख्यानष्टादश शृणु ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वैश्वानरो दनोः पुत्रस्तस्य सुताः ॥ ३३ ॥ कः प्रजापतिः कश्यप उपयेम इत्यन्वयः ॥ ३४ ॥ दानवीपरिणयने हेतुः—ब्रह्मणा चोदित इति ॥ ३५ ॥ ॥ ॥१४॥

१ 'क्षयेधिताः' इत्येवंरूपे । अत्र वृद्ध्यभाव आर्षः । अथ वा इधि दीप्ताविति धातोर्निष्ठायां नुमो लोपे इधिता इति रूपं तस्य गुणः । 'क्षयेर्दिताः' इति वीर० पाठः । तत्र अर्दिताः खण्डिताः । २ वेदशिरसमित्यर्थः ।

तयोः षष्टिसहस्राणि निवातकवचाः पुत्रा जातास्तांश्च स्वर्गतः संस्ते पितामहोऽर्जुनो जघान ॥३६॥ राहुर्ज्येष्ठो यस्य ॥३७॥३८॥३९॥ असूयताजनयत् । भुवि
वर्तमाना ॥४०॥ ततो विवस्वतः ॥४१॥ चर्षणयः कृताकृतज्ञानवन्तः । पश्यति कर्मत्वेन निघण्टावुक्तेः । यत्र येषु आत्मानुसंधानविशेषेण मानुषी जातिश्चो-
पकल्पिता । तथाच श्रुतिः 'पुरुषत्वे चाविस्तरामात्मा' इति ॥४२॥ कुपितं हरमिति शेषः । विवृतद्विजः प्रकटितदन्तः सन् ॥ ४३ ॥ ४४ ॥ यद्यदा विमते-
नावज्ञातेन बृहस्पतिना परित्यक्तास्तदा द्विषतां शत्रूणां भागिनेयमपि विश्वरूपं पौरोहित्ये वृतवन्तः ॥ ४५ ॥ ॥ इति श्रीमद्भा० म० पु० षष्ठस्कन्धे भा० दी०

तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ॥ जघान स्वर्गतो राजन्नेक इन्द्रप्रियंकरः ॥ ३६ ॥ विप्रचित्तिः सिंहि-
कायां शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः ॥३७॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ॥
यत्र नारायणो देवः स्वांशेनावतरद्विभुः ॥ ३८ ॥ विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः ॥ धाता विधाता वरुणो
मित्रः शक्र उरुक्रमः ॥३९॥ विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥
सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि ॥४०॥ छाया शनैश्चरं लेभे[3] सावर्णिं च मनुं ततः ॥ कन्यां च तपतीं या वै
वव्रे संवरणं पतिम् ॥ ४१ ॥ अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ॥ यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता
॥ ४२ ॥ पूषानपत्यः पिष्टादो भग्नदन्तोऽभवत्पुरा ॥ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४३ ॥ त्वष्टुर्दैत्या-
नुजा भार्या रचनानाम कन्यका ॥ संनिवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥४४॥ तं वव्रिरे सुरगणा दौहित्रं द्विष-
तामपि ॥ विमतेन परित्यक्ता गुरुणाङ्गिरसेन यत् ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे षष्ठोऽ-
ध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ राजोवाच ॥ कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व भगवन् शिष्या-
णामक्रमं गुरौ ॥ १ ॥ ॥ श्रीशुक उवाच ॥ इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋ-
भुभिर्नृप ॥ २ ॥ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ ॥

टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः ॥ गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् ॥ १ ॥ कस्य हेतोः कस्माद्धेतो-
रात्मनः शिष्याः सुराः परित्यक्ताः । अक्रममपराधम् ॥ १ ॥ स इन्द्रो यदा संप्राप्तं वाचस्पतिं नाभ्यनन्दत नाद्दतवांस्तदा स आङ्गिरसस्ततो निर्गत्य तूष्णीं
स्वगृहमाययाविलयष्टानामन्वयः । अनादरे हेतुं मदं दर्शयितुं तं विशिनष्टि । त्रिभुवनैश्वर्यमदेनोल्लङ्घितः सतां पन्था येन सः ॥ २ ॥ परिश्रितः परिवृतः ॥ ३ ॥

१ चतुर्थे चैष वृत्तान्तोऽभिव्यक्त एव । २ एकाधिकं शतमित्यर्थः । तस्यैव विवरणं राहुज्येष्ठमित्यादि । केतूनां शतं यासींसत् । केतूना राहुसहितानामेकाधिकशतत्वं ज्योतिर्निबन्धादौ द्रष्टव्यं । ३ लेभे सुषुवे । ४ तयोरिति कर्तरि षष्ठी । ताभ्यामित्यर्थः । ५ तयोस्त्वष्टृरचनाभ्या सनिवेशसंज्ञक एकः पुत्रो विश्वरूपश्चापरो जज्ञे । सनिवेशो मिथुनमिति केचित् । ६ ब्रह्मवादिभिर्वेदान्पठद्भिः ।

॥ ४ ॥ आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः ॥ ५ ॥ पारमेष्ठ्यैर्महाराजचिह्नैः । आसनस्यार्धे स्थितया पौलोम्या सह विराजमानः सन् ॥ ६ ॥ प्रत्युत्थानादिना नाभ्यनन्दत नादृतवान् ॥ ७ ॥ न चोच्चचाल आसन एव स्थितोऽपि किंचिन्न चलितवान् ॥ ८ ॥ श्रीमदेन या विक्रिया तां विद्वान् जानन् ॥ ९ ॥ प्रतिबुध्यानुस्मृत्य ॥१०॥ मम कृतं कर्म अहो असाधु । यद्यस्माद्दभ्रबुद्धिनाल्पमतिना मया कात्कृतस्तिरस्कृतः ॥ ११ ॥ विबुधानां सात्त्विकानां

विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवान्स्तूयमानश्च भारत ॥ ४ ॥ उपगीयमानो ललितमास्थानाध्यासनाश्रितः ॥ पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥ युक्ताश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनन्दत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ नोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम् ॥८॥ ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ॥ आययौ स्वगृहं तूष्णीं विद्वान् श्रीमदविक्रियाम् ॥९॥ तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥१०॥ अहो बत ममासाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥ को गृध्येत्पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥१२॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥१३॥ तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥१४॥ अथाहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥१५॥ एवं चिन्तयतस्तस्य मघोनो भगवान्गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतः संज्ञां परीक्षन्भगवान्स्वराट् ॥ ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥१७॥ तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् ॥ देवान्प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥१८॥

देवानामीश्वरोऽप्यहम् ॥ १२ ॥ ननु सिंहासनस्थो राजाऽभ्युत्थानं न कुर्यादिति वृद्धा वदन्ति तत्राह—य इति द्वाभ्याम् । धिषणमासनम् ॥ १३ ॥ कुपथं दिशन्त्युपदिशन्त्युत्पथदेष्टारस्तेषां वचः । अश्ममयः प्लवो येषां ते यथा मज्जन्तं प्लवमनु मज्जन्ति तद्वत् ॥ १४ ॥ अगाधा गम्भीरा धिषणा यस्य तम् । निशठः शाठ्यहीनः सन् ॥१५॥ अधिकया आत्ममायया ॥१६॥ गुरोः संज्ञां ज्ञानोपायं परीक्षमाणोऽपि नाधिगतोऽप्राप्तः सन् ॥१७॥ आततायिन उद्यतास्त्राः ॥१८॥

१ अर्धासनमेवासन यस्यास्तया सह । मृगलोचनेतिवदासनपदस्य वृत्तावन्तर्भावः । २ स्वयं परप्रेरणामन्तरा प्रतिबुध्येत्यन्वयः । ३ त्रीन्विष्टपान् लोकान्पातीति त्रिविष्टपं तस्य पतेः सत्यलोकाधिपतेरपि । ४ न विद्यते दृष्टं दर्शनं यस्यां ताम् । 'अदृश्याम्' इति पाठः । ५ 'शुचा युक्तः' इति पाठः ।

येषाम् ॥ १९ ॥ २० ॥ वो युष्माकं कृतं करणं महदभद्रम् । तदाह—ब्रह्मिष्ठमिति । नाभ्यनन्दत नाभि-
निर्भिन्नान्यङ्गान्युत्तमाङ्गानि शिरांसि ऊरवो बाहवश्च येषाम् ॥ १९ ॥ २० ॥ वो युष्माकं कृतं करणं महदभद्रम् । तदाह—ब्रह्मिष्ठमिति । नाभ्यनन्दत नाभि-
नन्दितवन्तः ॥ २१ ॥ परेभ्यः शत्रुभ्यो वः पराभव इति यदयं तस्याऽनयस्यान्यायस्य संबन्धी फलरूप आसीत् । उक्तंच 'ब्राह्मणं कुलसंपन्नं भक्तं विष्णोर्म-
हात्मनः ॥ आयान्तं वीक्ष्य नोत्तिष्ठेत्स दुःखैः परिभूयते ॥' इति । स्वयमेव वैरिणो हन्तारो येषां तेभ्यः ॥ २२ ॥ गुरुतिरस्कारसत्कारावेवापचयोपचयका-
रणमित्यसुरदृष्टान्तेनाह—मघवन्निति । द्विषतः शत्रून् । काव्यं भार्गवं गुरुमेवासेव्योपचितान् । उपचितत्वमेवाह । आददीरन्गृह्णीयुः ॥ २३ ॥ अभेद्यो मन्त्रो

तांस्तथाभ्यर्दिता-
न्वीक्ष्य भगवानात्मभूरजः ॥ कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥ ॥ ब्रह्मोवाच ॥ अहो बत सुरश्रेष्ठा
ह्यभद्रं वः कृतं महत् ॥ ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥ २१ ॥ तस्यायमनयस्यासीत्परेभ्यो वः पराभवः ॥
प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत्सुराः ॥ २२ ॥ मघवन्द्विषतः पश्य प्रक्षीणान्गुर्वतिक्रमात् ॥ संप्रत्युपचिता-
न्भूयः काव्यमाराध्य भक्तितः ॥ आददीरन्निलयनं ममापि भृगुदेवताः ॥ २३ ॥ त्रिविष्टपं किं गणयन्त्यभेद्यमन्त्रा
भृगूणामनुशिक्षितार्थाः ॥ न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥ २४ ॥ तद्विश्वरूपं भजताशु
विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम् ॥ सभाजितोऽर्थान्स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥ ॥
श्रीशुक उवाच ॥ त एवमुदिता राजन्ब्रह्मणा विगतज्वराः ॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥
॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः संपाद्यतां तात पितॄणां समयोचितः ॥ २७ ॥
पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन्किमुत ब्रह्मचारिणाम् ॥ २८ ॥ आचार्यो ब्रह्मणो
मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः ॥ २९ ॥ दयाया भगिनी मूर्तिर्धर्मस्या-
त्माऽतिथिः स्वयम् ॥ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥ ॥ ॥ ॥

ब्रह्माणं शरणं जग्मुः सहेन्द्रानतकन्धराः ॥ १९ ॥
तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नाङ्गोरुबाहवः ॥

येषाम् । अनुशिक्षितार्थाः शिष्याः यतो विप्रा गोविन्दो गावश्चेश्वरा आनुग्राहका येषां तेषामेवाऽभद्राणि न भवन्त्यन्येषां तु भवन्ति ॥ २४ ॥ तत्तस्मात् ।
अथानन्तरमेव भजत । अस्य कर्मासुरपक्षपातम् ॥ २५ ॥ उदिता उक्ताः ॥ २६ ॥ २७ ॥ २८ ॥ अतिथीनां पितॄणां च प्रशंसार्थमाहुः—आचार्य उपनीय वेदा-
ध्यापकः । ब्रह्मणो वेदस्य मूर्तिः ॥ २९ ॥ धर्मस्यात्मा मूर्तिरतिथिः स्वयं साक्षात् । आत्मनः श्रीविष्णोः । यद्वा आत्मनः स्वस्य । सर्वभूतेष्वात्मदृष्टिः कर्तव्येत्यर्थः ॥ ३० ॥

१ अत्र 'अद्य श्वो वा परश्वो वा द्रष्टास्ते बलशालिनः' इति वीर० पाठः । 'गुरोः प्रसादमासाद्य न किंचिद्दुर्लभं नृणाम्' इति पाठोऽन्यत्र । २ 'स भावितार्थान्' इति वीर० पाठः ।
तत्र भावितो निष्पादितोऽर्थो येषामित्यर्थः ।

परेभ्यः पराभव एवार्तिस्ताम् ॥ ३१ ॥ संदेशमाहुः—वृणीमह इति ॥ ३२ ॥ ननूपाध्यायत्वे कनिष्ठस्य ममाभिवन्दनं करिष्यथ तच्च गर्हितं तत्राहुः—नेति । अर्थेषु प्रयोजननिमित्तं यविष्ठानामभिवादनं न निन्दन्ति । किंच छन्दोभ्यो मन्त्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं नतु मन्त्रेषु । अतोऽस्मभ्यं मन्त्रदातृत्वेन त्वमेव ज्येष्ठो भविष्यसि । यद्वा छन्दोभ्योऽन्यत्र वेदान्विहाय वय एव ज्यैष्ठ्यस्य कारणं न भवति, किंतु वेदा एव मुख्यं कारणम् । तत्साम्ये तु वयः । वेदज्ञत्वाच्च त्वमेव ज्येष्ठ इत्यर्थः ॥ ३३ ॥ ३४ ॥ निन्दितमपीदं युष्मदाज्ञाभङ्गभयेन करिष्यामीत्याह सार्धेन । विगर्हितं पौरोहित्यं धर्मशीलैः, अधर्महेतुत्वात् । किंच ब्रह्मवर्चउपव्ययं पूर्वसिद्धस्य ब्रह्मवर्चसो व्ययकरम् । प्रत्याख्यातुं च मादृशो नार्हतीत्याह—कथं न्विति । तेषां शिष्यः शिक्षणार्हः । स एव प्रत्याख्यानाभाव

तस्मात्पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपनयंस्तात संदेशं कर्तुमर्हसि ॥ ३१ ॥ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथाञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ॥ छन्दोभ्योऽन्यत्र न ब्रह्मन्वयो ज्यैष्ठ्यस्य कारणम् ॥३३॥ ॥ ऋषिरुवाच[1] ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥३४॥ ॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथं नु[2] मद्विधो नाथा[3] लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥ अकिंचनानां हि धनं शिलोञ्छनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥३६॥ तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥३७॥ ॥ श्रीशुक उवाच ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥३८॥ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ॥ आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥३९॥ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ॥ तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥४०॥ ॥ इति श्रीमद्भागवते म० पु० षष्ठस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

एव हि शिष्यस्य स्वार्थ उच्यते ॥ ३५ ॥ ननु पौरोहित्येन धनलाभाद्धर्मः सिध्येत् । अन्यथा निर्धनस्य कुतो धर्मः । अत एव तेन लोको हृष्यति तत्राह । अकिंचनानां शिलोञ्छनं हि धनम् । क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलम् । हट्टादौ पतितमीहादेरुपादानमुञ्छनम् । इह गृहाश्रमे तेनैव निर्वर्तिता साधूनां सत्क्रिया येन ॥ ३६ ॥ कियदेतत्प्रार्थितमल्पमेव । अभ्यधिकमपि करिष्यामीत्याह—भवतामिति ॥ ३७ ॥ परमेण समाधिना परमोद्यमेन ॥ ३८ ॥ वैष्णव्या श्रीनारायणकवचात्मिकया ॥३९॥ असुरचमूर्दैत्यसेनाः ॥४०॥ ॥ इति श्रीमद्भागवते म० पु० षष्ठस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥

१ अत्र ऋषिः शुकः । २ 'कथं तु' इति पाठः । ३ 'नाथ' इति एकवचनान्तपाठे नाथत्वेन रक्षकत्वेन याचितः स एव स्वार्थ इत्यर्थः । ४ 'गां प्रतिष्ठासुरा[illegible] नारायणात्मिकाम् । अजैषीद्रूपमस्यात सिंहः क्षुद्रमृगानिव ॥' इत्यधिकं पद्यं विजयध्वजपाठे । ५ ममाधिना चित्तैकाग्र्येणेति चक्रवर्ती ।

अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् ॥ इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥ त्रिलोक्याः संबन्धिनीं श्रियम् ॥१॥२॥३॥ मन्त्राभ्यामष्टाक्षरद्वादशाक्षराभ्याम् । कृतः स्वाङ्गेषु करयोश्च न्यासो येन ॥ ४ ॥ नारायणमयं वर्म संनह्येद्बध्नीयात् । तत्राष्टाक्षरेण पादाद्यष्टाङ्गेषु न्यासमाह—पादयोरिति सार्धेन ॥५॥ प्रणवसंपुटितमोंकाराद्येकैकमक्षरं विन्यसेत् । विपर्ययं यथा भवत्येवं शिरआदिपादान्तं वा विन्यसेत् । उत्पत्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ॥६॥ द्वादशाक्षरस्योद्धारः प्रणवादियकारान्तमिति । प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यन्तमङ्गुलीषु । परिशिष्टमक्षरचतुष्टयमङ्गुष्ठयोराद्यन्तपर्वसु न्यसेत् ॥ ७ ॥

॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥१॥
भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाततायिनः शत्रून्येन गुप्तोऽजयन्मृधे ॥२॥ ॥ श्रीशुक उवाच ॥
वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥३॥ ॥ विश्वरूप उवाच ॥
धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥ कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं
वर्म संनह्येद्भय आगते[2] ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्य-
सेत् ॥ ओं नमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ प्रणवादिय-
कारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥७॥ न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखयादि-
शेत् ॥८॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः ॥ ९ ॥ सविसर्गं फडन्तं
तत्सर्वदिक्षु विनिर्दिशेत् ॥ ॐ विष्णवे नम इति ॥१०॥ आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् ॥ विद्या-
तेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ११ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ॥ दरारिच-
र्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥१२॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥
स्थलेषु मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥ ॥ ॥ ॥

मन्त्रान्तरन्यासमाह—न्यसेदिति । षकारणकारयोर्विश्लेषेण षडक्षराणि हृदयादिषु न्यसेत् ॥ ८ ॥ मकारमस्त्रमुद्दिश्य ध्यात्वा ॥९॥ तन्मकारास्त्रं 'मः अस्त्राय फट्' इत्येवं दिग्बन्धे विनिर्दिशेत् ॥ १० ॥ ध्येयमीश्वररूपमात्मानं ध्यायेत् । षट्शक्तिभिरैश्वर्यादिभिर्भगशब्दवाच्याभिः । विद्या च तेजश्च तपश्च मूर्तिर्यस्य तम् । इमं वक्ष्यमाणं श्रीमन्नारायणकवचाख्यम् ॥ ११ ॥ अष्टगुणोऽणिमाद्यैश्वर्ययुक्तः ॥ १२ ॥ यादसां गणा एव वरुणस्य पाशस्तस्मात् ॥ १३ ॥ ॥ ॥

१ 'नारायणपर' इति पाठः । २ एतदग्रे 'दैवभूतात्मकर्मभ्यो नारायणमयः पुमान्' इत्यर्धमधिकं वीर० विज० पाठे । तत्र दैवाद्भयमनावृष्ट्यादिलक्षणम् । भूतेभ्य उन्मादादिलक्षणम् । आत्मकर्मभ्यः कुष्ठभगन्दरादिलक्षणम् । ३ ओमिति 'स्ववत्यनोंकृतं पूर्वं' इति न्यायेन मन्त्रादावोंकारः प्रयुक्तः । 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' इति वचनात् । मङ्गलार्थश्चायम् ओंशब्दः ।

अटवी आजिमुखं संग्रामोपक्रमश्च आदिर्येषां तेषु संकटस्थानेषु ॥ १४ ॥ असौ प्रसिद्धो वराहो मा मामध्वनि रक्षतु । यज्ञैरवयवरूपैः कल्प्यते निरूप्यत इति तथा । उन्नीता उद्धृता धरा येन सः । अद्रिकूटेषु गिरिशिखरेषु । रामो जामदग्न्यः ॥ १५ ॥ उग्रधर्मादभिचारादिलक्षणात् हासाद्गर्वान्नरोऽवतु । दत्तो दत्तात्रेयः । अयोगाद्योगभ्रंशात् ॥ १६ ॥ पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात् । पुरुषार्चनस्यान्तरादेवपूजाच्छिद्राद्द्वात्रिंशदपराधरूपान्नारदः ॥ १७ ॥ लोकाज्जनापवादाद्यज्ञः । जननिमित्तो योऽन्त उपघातस्तस्माद्बलभद्रोऽवतात् । कृतान्तादिति पाठे कृतान्तात् कालाद्रक्षतु । क्रोधवशात्सर्पाणां गणात् । अहीन्द्रः शेषः ॥ १८ ॥ कालमलभूतात्कलेः कल्किः । धर्मावनाय धर्मरक्षणायोरुर्महान्कृतोऽवतारो येन ॥ १९ ॥ दिनस्य पट्सु भागेषु क्रमेण

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् ॥ १५ ॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ धन्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनान्ताद्बलो गणात्क्रोधवशादहीन्द्रः ॥ १८ ॥ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखण्डगणात्प्रमादात् ॥ कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥ मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः[2] ॥ २० ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसन्ध्यं[3] प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥ २२ ॥ चक्रं युगान्तानलतिग्मनेमि भ्रमत्समन्ताद्भगवत्प्रयुक्तम् ॥ दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥ ॥ ॥

प्रातरादिसंज्ञेषु रात्रेश्च प्रदोषादिसंज्ञेषु रक्षाप्रार्थनम्—मां केशव इति त्रिभिः । आसङ्गवं सङ्गवमभिव्याप्य ॥ २० ॥ त्रिधामा ब्रह्मादित्रिमूर्तिः श्रीमाधवः । दोषे प्रदोषे आर्धरात्रे अर्धरात्रिपर्यन्ते काले निशीथे चैक एव पद्मनाभोऽवतु ॥ २१ ॥ [4]अपररात्रे ईशः श्रीवत्सधामा अवतु । प्रत्यूष ईशः श्रीजनार्दनः । श्रीदामोदरः प्रभाते श्रीविश्वेश्वरोऽनुसन्ध्यम् ॥ २२ ॥ युगान्तानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सत् अरिसैन्यं दन्दग्धि दन्दग्धि अतिशयेन दहति । तस्यायं स्वभाव एव, नतु तस्मात्प्रार्थनीयमित्यर्थः । यद्वा दन्दग्धीति लोण्मध्यमपुरुषः । अत्र त्वमेवंभूतं चक्रमिति स्वरूपमुक्त्वा संबोध्य प्रार्थ्यतेऽतिशयेन दहेति । कक्षं शुष्कतृणम् ॥ २३ ॥ ॥ ॥ ॥ ॥

१ अत्रैव 'द्वात्रिंशदपराधान्' पदं चक्रवर्तिनापि विन्यस्तं परंतु तद्धेतुर्न ज्ञायते । २ अरीन्द्रपाणिश्चक्रपाणिः । ३ अनुसन्ध्यं दिनरात्रिसन्ध्ययोः । ४ निशीथादूर्ध्वम् अरुणोदयात्प्राक् अपररात्रः ।

अशनिवत्स्पर्शो येषां ते विस्फुलिङ्गा यस्यास्तस्याः संबोधनं हे गदे, त्वमजितस्य प्रियासि। अहमच्युतस्य दासः। अतः कूश्माण्डादीन्निष्पिण्ढि निष्पिण्ढि संचू-
र्णय संचूर्णय। अरींश्च चूर्णय चूर्णय। सर्वत्र वीप्सातिशीघ्रत्वाय ॥ २४ ॥ हे दरेन्द्र पाञ्चजन्य, त्वं यातुधानादीन्विद्रावय। विप्रग्रहा ब्रह्मराक्षसाः, येऽन्ये च
घोरदृष्टयस्तान् ॥२५॥ तिग्मा धारा यस्य हे तिग्मधार असिवर खड्गश्रेष्ठ, त्वं ममारिसैन्यं छिन्धि छिन्धि। शतचन्द्राकाराणि मण्डलानि यस्मिन् हे शतचन्द्र
चर्मन्, अघोनामघवतां द्विषां चक्षूंषि छादय, पापचक्षुषां चोग्रदृष्टीनां चक्षूंषि हर ॥२६॥ यत् येभ्यो भयम्। अंहोभ्यः पापेभ्यः ॥२७॥ श्रेयःप्रतीपका इष्ट-
व्याघातकाः ॥२८॥ स्तोत्राणि बृहद्रथन्तरादिसामानि तैः स्तोभ्यते संस्तूयत इति स्तोत्रस्तोभः। छन्दोमयो वेदमूर्तिः 'सुपर्णोऽसि गरुत्मान्' इत्यादि श्रुतेः।

गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि ॥ कूश्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्ण-
यारीन् ॥ २४ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽ-
रेर्हृदयानि कम्पयन् ॥ २५ ॥ त्वं तिग्मधाराऽसिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ॥ चक्षूंषि चर्मन् शत-
चन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २६ ॥ यन्नोभयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च[१] ॥ सरीसृपेभ्यो
दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा[२] ॥ २७ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयान्तु संक्षयं सद्यो ये नः
श्रेयःप्रतीपकाः ॥२८॥ गरुडो भगवान्स्तोत्रस्तोभश्छन्दोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः[३] स्वनामभिः
॥ २९ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ॥ बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः[७] ॥ ३० ॥ यथा[४] हि
भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन[५] नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विक-
ल्परहितः स्वयम् ॥ भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः ॥
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः ॥ प्रहा-
पयँल्लोकभयं[६] स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥

ऐकपद्यपाठे स्तोभा गीतिपूरकाक्षराणि। स्तोत्रस्तोमेति पाठे सामाधारभूतऋक्समुदायः स्तोमः ॥ २९ ॥ नामानि च रूपाणि च यानानि च वाहनानि आयुधानि च
नो बुद्ध्यादीन् पान्तु। पार्षदभूषणाः पार्षदमुख्याश्च पान्तु ॥३०॥ सच्च असच्च मूर्तामूर्तं यत्तत्सर्वं जगत् ॥ ३१ ॥ ऐकात्म्यस्यानुभावोऽनुभवनं येषां तेषाम्। विकल्पो
भेदस्तद्रहितोऽपि ॥ ३२ ॥ सत्यमानेन सत्यभूतेन प्रमाणेन ॥ ३३ ॥ पुनरपि श्रीनृसिंह एव प्रार्थ्यते—विदिक्ष्विति। पात्वित्यनुषङ्गः। यद्वा नारसिंहः प्रह्लादः।
स्वनेन श्रीनृसिंहनामगर्जनेन। स्वतेजसा स्वप्रभावेण। ग्रस्तानि समस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः ॥ ३४ ॥

१ 'एव वा' इति पाठः। २ 'भूतेभ्योऽघेभ्य एव च' इति पाठः। ३ विष्वक्सेनः स्वनामभिः सर्वापद्भ्यो रक्षत्वित्यन्वयः। ४ यथाहि यथार्थं चेत्। ५ सत्येन शपथेनानेन इति यद्येवंभूतो भगवान् सत्यः स्यात् 'यदि वेदाः प्रमाणं' इतिवत् इति चक्र०। ६ प्रहापयन्निति स्वार्थे णिच्। परिहरन्नित्यर्थः। ७ पार्षदान्भूषयन्तीति पार्षदभूषणा इति व्युत्पत्त्या भूषणशब्दस्य पुंस्त्वोपपत्तिः।

दंशितः कवचितः ॥ ३५ ॥ सोऽपि साध्वसाद्भयाद्विमुच्यते ॥ ३६ ॥ तस्य तु भयं न भवेदेव ॥ ३७ ॥ एतद्विद्याप्रभावमितिहासेनाह—इमामिति सार्धैस्त्रिभिः । मरुधन्वनि निरुदके देशे । अनेन विद्यायाः क्षेत्रतीर्थानपेक्षत्वं दर्शितम् ॥ ३८ ॥ यत्र द्विजस्य क्षयो देहत्यागस्तस्योपरि ॥ ३९ ॥ सद्यस्तत्क्षणादेव गगनान्न्यपतत् । पाठान्तरे अङ्गनाभिः सह । वालखिल्योपदेशात्तस्यास्थीनि प्रास्य प्रक्षिप्य विस्मितः सन् स्वं धाम गन्धर्वलोकं जगाम ॥ ४० ॥ ४१ ॥ अधिगतः प्राप्तः सन् ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भावार्थदीपिकायां टीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमे विश्वरूपे तु

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ॥ विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ॥ पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३७ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः ॥ योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३८ ॥ तस्योपरि विमानेन गन्धर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ ४० ॥ ॥ श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यन्ति भूतानि मुच्यते सर्वतोभयात् ॥ ४१ ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नारायणवर्मनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ३ ॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥ ॥ ॥

हते शक्रेण कोपतः ॥ त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः ॥ १ ॥ सोमस्य पीथं पानं यस्मिन् एवं सुरापीथम् । अन्नमत्तीत्यन्नादम् । अत्र 'विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्' इत्यादिश्रुतिरनुसन्धेया ॥ १ ॥ तस्यासुरपक्षपातमाह—स वा इति द्वाभ्याम् । प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं देवेभ्यो हविर्भागमिन्द्रायेदमग्नय इदमित्युच्चैरवदत् । अत्र हेतुः—यस्य पितरो देवाः सः ॥ २ ॥ असुरेभ्यस्तु परोक्षं गुप्तं भागं ददौ । तदेवाह—देवान्यजमानोऽसावसुरान्प्रति भागमवहत्, केनाप्युपायेन प्रापयामास । यतो मातृस्नेहवशेनासुराननुगच्छति ॥ ३ ॥ ४ ॥ ॥ ॥ ॥

१ 'साङ्गनो न्यपतत्' इत्येवंरूपे । २ वर्म कवचम् । ३ 'व्याध्यादिभ्यः' इति पाठः । ४ काले भयागमकाले । ५ धर्मालीकं धर्मे कपटम् । ६ 'देवानामासीत्स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन् सोमपानं सुरापानमन्नादं' इति श्रुतिशेषः ।

॥ ५ ॥ तां वारयितुं समर्थस्तथापि जग्राह । संवत्सरं तथैव स्थित्वा संवत्सरान्ते भूताक्रोशभीतः सन् भूतानां मध्ये विशुद्धये लोकापवादपरिहाराय स हरि-
रिन्द्रो भूम्यादिभ्यस्तदघं व्यभजद्विभज्य ददावित्यन्वयः ॥ ६ ॥ तुरीयं चतुर्थं भागम् । खातस्य गर्तस्य पूरः पूरणं तेन वरेण । यदि खातपूरणं स्वत एव
भविष्यति तर्हि ग्रहीष्यामीत्येवं भाषाबन्धेन जग्राहेत्यर्थः ॥ ७ ॥ ईरणमूषरम् । अत एवोपरेऽध्ययनादि निषिध्यते । छेदे सति पुनर्विरोहः प्ररोहो भवत्विति
वरेण ॥ ८ ॥ निर्यासरूपेण ब्रह्महत्याया दृष्टत्वान्निर्यासो न भक्ष्यः । शश्वत्कामवरेण यावत्प्रसवं गर्भानुपघातेनैव संभोगवरेण ॥ ९ ॥ रज इति । अत एव
रजोदर्शने तत्सङ्गादि न कार्यम् । द्रव्यभूयोवरेण यस्मिन्द्रव्ये क्षीरादावापो मिश्रा भवेयुस्तस्य भूयस्त्वमाधिक्यं स्यादिति वरेण । यद्वा स्वस्यैव निर्झरोद्गमादिना
भूयस्त्ववरेण । द्रवभूय इति पाठेऽप्ययमेवार्थः । यद्वा द्रवभूयस्त्वं सांसिद्धिकद्रवत्वं तेन वरेण । अस्य विभागस्य 'विश्वरूपो वै त्वाष्ट्रः' इत्यस्यां श्रुतावुक्तेः
॥ १० ॥ तद्विभागफलमाह । तत्पापं हरति निराकरोति । कः क्षिपन् । बुद्बुदादिजलाद्बहिः प्रक्षिपन्नित्यर्थः । यद्वा क्षिपन् जलं पापं हरति आहरति

सोमपीथं तु यत्तस्य शिर आसीत्कपिञ्जलः ॥ कलविङ्कः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामञ्जलिना
जग्राह यदपीश्वरः ॥ संवत्सरान्ते तदघं भूतानां स विशुद्धये ॥ ६ ॥ भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ भूमि-
स्तुरीयं जग्राह खातपूरवरेण वै ॥ ७ ॥ ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः
॥८॥ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥९॥ रजोरूपेण तास्वंहो मासि
मासि प्रदृश्यते ॥ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ॥१०॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥ हतपुत्र-
स्ततस्त्वष्टा जुहावेन्द्राय शत्रवे ॥११॥ इन्द्रशत्रो विवर्धस्व माचिरं जहि विद्विषम् ॥ अथान्वाहार्यपचनादुत्थितो
घोरदर्शनः ॥१२॥ कृतान्त इव लोकानां युगान्तसमये यथा ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ॥१३॥
दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम् ॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥१४॥ ॥ ॥

गृह्णातीत्यर्थः । अयं च 'तस्मादापो न परिचक्ष्या' इत्यादिश्रुत्यर्थ उक्तः । पाठान्तरे हरिकिल्बिषमिन्द्रपापम् । इन्द्रायेन्द्रं हन्तुम् । शत्रवे शत्रूत्पत्त्यै ॥ ११ ॥
तदाह—इन्द्रशत्रो विवर्धस्वेति । अत्र चेन्द्रशत्रुपदस्याद्युदात्तत्वात् 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति स्मृतेर्बहुव्रीहिलक्षणापत्त्या इन्द्र एव तस्य शत्रुरभूत् ।
तदुक्तं श्रुत्या 'यदब्रवीत्स्वाहेन्द्रशत्रो वर्धस्वेति तस्मादस्येन्द्रः शत्रुरभवत्' इति । तथाच शिक्षायाम् 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति । अन्वाहार्यपचनाद्दक्षिणाग्नेः ॥ १२ ॥ तं वीक्ष्य वित्रस्ता लोका दश दिशो विदुद्रुवुरिति
पञ्चमेनान्वयः । कथंभूतम् । विष्वक् समन्तत इषुविक्षेपमात्रं प्रतिदिनं वर्धमानम् ॥ १३ ॥ दग्धशैलप्रतीकाशं कृष्णवर्णम् । सन्ध्याभ्रानीकवद्वर्चो दीप्ति-
र्यस्य तम् । तप्तताम्रवच्छिखाः श्मश्रूणि च यस्य । मध्याह्नार्कवदुग्रे लोचने यस्य ॥ १४ ॥ ॥ ॥ ॥ ॥

---

१ 'भूताशंसाविशुद्धये' इति पाठः । २ युगान्तसमये कृतान्त इव लोकाना घोरदर्शन इति पूर्वपद्येन संबन्धः । ३ 'दृष्टं तद्धरिकिल्बिषम्' इत्येवंरूपे । ४ इन्द्रस्य शत्रुः सन् विवर्धस्वेति तत्पुरुषसमासस्य विवक्षितत्वेऽपि इन्द्र एव शत्रुर्यस्येति बहुव्रीह्यर्थ एव दैवादापतितः स्वरव्यतिक्रमात् । ५ तत्पुरुषे तु वृत्रस्य इन्तृत्वमायातीति बहुव्रीहिरेवात्रेष्टः ।

रोदसी आरोप्येवेत्यर्थः ॥ १५ ॥ दरीवद्गम्भीरेण वक्रेण मुहुर्मुहुर्जृम्भमाणमित्यन्वयः । कथंभूतेन । नभस्तलं पिबता, ऋक्षाणि जिह्वया लिहता, भुवनत्रयं ग्रसता ॥ १६ ॥ महता विस्तीर्णेन । रौद्रा दंष्ट्रा यस्मिन् ॥१७॥ वृत्रनाम निर्वक्ति—येनावृता इति । त्वाष्ट्री मूर्तिर्यस्य तमसस्तेन । तथाच श्रुतिः—'स इमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्' इति ॥ १८ ॥ अग्रसद्भक्षितवान् ॥ १९ ॥ ग्रस्तं तेजो येषाम् । प्रत्यञ्चमन्तर्यामिणम् । त्रिभुवनस्य तेन व्याप्तत्वात्क्वापि गमनासंभवात्तत्रैव स्थित्वा तुष्टुवुरित्यर्थः । 'महाभये परित्राणमन्यतो न भवेदिति । हरिमेव प्रपद्यन्ते सुराः शरणमातुराः ॥' ॥ २० ॥ वाय्वादीनि पञ्चमहाभूतानि तैर्निर्मितास्त्रयो लोकास्तेषामधिपतयो ब्रह्मादयश्च ततोऽर्वाचीना वयं च सर्वे यस्मै अन्तकाय कालायोद्विजन्तः सन्तो बलिं हराम । असावपि यस्माद्बिभेति

देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी ॥ नृत्यन्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १५ ॥ दरीगम्भीरवक्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥ १६ ॥ महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥१७॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ १९ ॥ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ॥ प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥ ॥ देवा ऊचुः ॥ वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ॥ हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः ॥२१॥ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ॥ विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्ति सिन्धुम् ॥ २२ ॥ यस्योरुशृङ्गे जगतीं स्वनावं मनुर्यथाबध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरन्तात्त्राताश्रितान्वारिचरोऽपि नूनम् ॥ २३ ॥

ततः परमेश्वरादेव नोऽस्माकमरणं शरणं रक्षणमस्तु ॥ २१ ॥ तत एवेत्यवधारणे हेतुमाहुः—अविस्मितं[1] निरहंकारम्, कुतूहलशून्यं वा । कुतः, प्रशान्तं रागादिशून्यम् । तच्च कुतः, स्वेनैव लाभेन परिपूर्णकामम् । तच्च कुतः, सममुपाधिपरिच्छेदशून्यम् । एवंभूतं परमेश्वरं विनाऽपरं[2] यः शरणार्थमुपसर्पति स बालिशोऽज्ञः । यतोऽसौ शुनो लाङ्गूलेन पुच्छेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः । यथा तेन[3] समुद्रतरणं न भवति तथा निरीश्वराश्रयणेन व्यसनार्णवतरणं न भवतीति भावः ॥२२॥ महाभये स एव रक्षक इति दृष्टमित्याहुः—यस्येति द्वाभ्याम् । यस्य[4] महाशृङ्गे जगतीं पृथ्वीमेव स्वनावं बद्ध्वा मनुः सत्यव्रतो यथावद्दुर्गं संकटं ततार स एव वारिचरो मत्स्यमूर्तिर्नोऽस्मानप्याश्रितान्सतो नूनं त्राता रक्षिष्यति ॥ २३ ॥

१ न विद्यते विस्मितं किमप्यद्भुतं यत्र । २ अपर देववान्तर कर्मयोगं ज्ञानयोगमपरयोगं वेति चक्र० । ३ तेन शुना । ४ यस्य मत्स्यमूर्तेः ।

संयमाम्भसि प्रलयोदके । उदीर्णैरुद्धतैर्वातैर्ये ऊर्मयस्तेषां रवैः कराले भयंकरे । अरविन्दान्नाभिकमलात्पतितप्राय एकोऽसहाय एव तस्माद्भयाद्येन ततार स एव नः पारस्तारकोऽस्तु ॥ २४ ॥ किंच वयं भगवतैव सृष्टाः पालिताश्च बहुशोऽतस्तमेव शरणं व्रजामेत्याहुः—य एक इति त्रिभिः । येनानुगृहीताः सन्तो विश्वं सृजाम । ननु यूयमेव स्रष्टारो नान्यो युष्माकमनुग्राहकोऽस्ति तस्याऽदर्शनात्तत्राहुः—असक्तः पुरः पूर्वमेवान्तर्यामितया समीहमानस्यापि यस्य लिङ्गं रूपं न पश्यामः । तत्र हेतुः—पृथक्पृथगीशा इत्यभिमानिनः ॥ २५ ॥ देवादिपूपेन्द्रपरशुराममत्स्यरामादितनुभिः कृतावतारः सन्नात्मसात्कृत्वा पाति च ॥ २६ ॥ आत्मभूतं दैवतम् । कुतः । विश्वं विश्वात्मकम् । तथापि विकारं वारयन्ति, अन्यम् । विश्वात्मत्वे हेतुः—परं कारणम् । ननु प्रधानं पुरुषश्च विश्वस्य कारणं तत्राहुः—प्रधानं पुरुषं च । तदात्मकोऽपि स एवेत्यर्थः । स एव नः शं विधास्यति ॥ २७ ॥ प्रतीच्यां दिशि हृदि प्रथममाविरभूत् ॥ २८ ॥ पुनश्च तं

पुरा स्वयंभूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले ॥ एकोऽरविन्दात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥२४॥ य एक ईशो निजमायया नः ससर्ज येनानु सृजाम विश्वम् ॥ वयं न यस्यापि पुरः समीहतः पश्याम लिङ्गं पृथगीशमानिनः ॥२५॥ यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव ॥ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगे युगे च ॥२६॥ तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यम् ॥ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥२७॥ ॥ श्रीशुक उवाच ॥ इति तेषां महाराज सुराणामुपतिष्ठताम् ॥ प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥ २८ ॥ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥ २९ ॥ दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः ॥ दण्डवत्पतिता राजन् शनैरुत्थाय तुष्टुवुः ॥ ३० ॥ ॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥ ३१ ॥ यत्ते गतीनां तिसृणामीशितुः परमं पदम् ॥ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥ ॥

पुरो दृष्ट्वा ईक्षणाह्लादेन विवशा अवनौ दण्डवत्पतिताः सन्तः शनैरुत्थाय तुष्टुवुरित्यन्वयः । कथंभूतम् । श्रीवत्सकौस्तुभौ विना स्वतुल्यैः षोडशभिः सुनन्दादिभिः परितः सेवितम् । उन्निद्रशरदम्बुरुहवदीक्षणे यस्य तम् ॥ २९ ॥ ३० ॥ यज्ञो वीर्यं स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः । वयसे उत तत्फलपरिच्छेदककालात्मनेऽपि । तद्विघातकेषु दैत्येष्वस्तं प्रक्षिप्तं चक्रं येन एवंभूतैः प्रभावैः सुपुरुहूतये शोभनबहुनाम्ने ॥ ३१ ॥ ननु मम गुणातीतं रूपं विहाय गुणोपाधिकं यज्ञवीर्येत्यादि किमिति वर्ण्यते तत्राहुः—यत्तव गुणत्रयस्येशितुर्नियन्तुस्त्रिगुणात्मिकानां तिसृणां गतीनां परमं पदं निर्गुणस्वरूपं तद्विसर्गस्यार्वाचीन इदानींतनो हे धातः, वेदितुं नार्हति । अतः केवलं तस्मै ते नमोऽस्तु ॥ ३२ ॥ ॥ ॥ ॥

१ पतितप्राय इति नाभिकमले स्थितस्यैव मोहोद्भवात्पतिततुल्यत्वादेवं व्याख्येति ज्ञेयम् । २ अनुगृहीता इति मूलस्थानुशब्दस्यैवार्थः । ३ समीहमानस्य रामकृष्णादिरूपेण लीला कुर्वतोऽपि । ४ विश्वस्मादन्यम् ५ सर्वत्र दैत्याक्रान्तत्वेन हृदयादन्यत्र गमनासंभवादत एव तत्रैव स्थित्वाऽन्तर्यामिणः स्तुतत्वान्मुख्यायाः प्रतीच्या दिशोऽसंभवाल्लक्षणया हृदीत्यर्थकरणमिति बोध्यम् । ६ मायया कृपया चिच्छक्त्या वा । ७ 'तमेव देवा वयम्' इति पाठः ।

मिताक्षराणि पद्यानि न मीयन्ते हरेर्गुणाः ॥ इति पद्यैरतुष्यन्तः सद्यो गद्येन तुष्टुवुः ॥ भक्त्युद्रेकेण बहुधा संबोधयन्तो दुर्ज्ञेयत्वं प्रपञ्चयन्ति—भगवन्नित्यादिना । परमं मङ्गलं शुद्धो धर्मो यस्मिन् । आत्मयोगेनाष्टाङ्गेन यः समाधिश्चित्तैकाग्र्यं तेन परिभावितः सुशीलितः परिस्फुटो यः पारमहंस्य धर्मो भगवद्भजनं तेनोद्घाटितं तमोरूपं कपाटं यस्मिंस्तस्मिन् द्वारभूते चित्ते अपावृते प्रकटे आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तं यन्निजसुखं तदनुभवरूपो भवान् ॥३३॥१॥ ननु केवलानुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथं तत्राहुः—दुरवबोध इव तवायं विहारयोगो यदशरणो निराश्रयः । इदं विश्वम् । अनवेक्षितोऽस्माकं समवायो मेलनं साहाय्यं येन सः ॥३४॥२॥ दुर्ज्ञेयान्तरमाहुः—अथ तत्रेति । यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवान् ब्रह्मस्वरूपो जीवरूपेण गुणविसर्गे पतितः सन्नुपाददाति । यद्वा समञ्जसमप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवानुदास्ते उदासीनः साक्षितया वर्तेत इति ॥ ३५ ॥३॥ तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा

ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावित परिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥३३॥ १ ॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥३४॥२॥ अथ तत्रभवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददात्याहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ॥३५॥ ३॥ न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय कोन्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥ ४ ॥ ॥ ॥ ॥

तत्परिहारेण ज्ञानप्रकारमाहुः—नहीति। विरुध्यत इति विरोधः। उभयं न विरुद्धमित्यर्थः। नह्यन्यदृष्टान्तेन त्वयि विकल्पो युज्यतेऽतर्क्यैश्वर्यत्वादित्याहुः—भगवतीति। अपरिमिता गुणगणा यस्य तस्मिन्नीश्वरे स्वतन्त्रेऽनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । विकल्प एवं एवं वेति, वितर्कः किमत्र युक्तमिति, विचार इत्थमेवेति । तत्र प्रमाणाभासास्तदनुग्राहकाः । कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्ते येषु शास्त्रेषु तैः कलिलं व्याकुलमन्तःकरणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरेऽगोचरे । ननु श्रद्धामात्रमेतत्, युक्तिरुच्यतां तत्राहुः—उपरतो मायामयः संसारो यस्मिंस्तस्मिन्केवलेऽप्यात्ममायां मध्ये निधाय कोन्वर्थः कर्तृत्वादिर्न संभवति । यदि वस्तुतः कर्तृत्वादि भवेत्तर्हि विरोधः स्यान्नतु तदस्तीत्याहुः—स्वरूपद्वयाभावादिति ॥ ३६ ॥ ४ ॥ ॥ ॥

१ गद्यलक्षणं च 'अपादः पदसन्तानो गद्यं तच्च त्रिधा मतम् ॥ चूर्णिकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः' इति । २ विहारयोगः क्रीडायुक्तिः । ३ देवदत्तः प्राकृतजीवः । ४ गुणविसर्गे गुणाना विविधे सर्गे देवासुरराक्षसादिके परस्परविघातरूपे । ५ केवलेत्यारभ्य लक्ष्मीनाथेत्यन्तानि संबोधनानि क्वचिन्न सन्ति । ६ 'अगुणः स्वयं सृजसि' इति पाठः । ७ उभयं आत्मारामत्वमप्राकृतसुखदुःखित्वं च । ८ दुरवग्रहस्य दुराग्रहस्य ।

अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः—समा विषमा च मतिर्येषां तेषां मतमभिप्रायम् । सर्पादिविषया धीर्येषां तेषां यथा रज्जुखण्डस्तथा तथा भाति । यद्वा तमेवाविरोधं पुरुषमतिभेदेन दर्शयति—समविषमेति ॥ ३७ ॥ ५ ॥ तदेवं विरोधं परिहृत्य निश्चितं परमार्थमाहुः—स एव हि नानारूपेण प्रतीतः । वस्तुस्वरूपः सद्रूपः । सर्वेषां गुणानां विषयाणामाभासैः प्रकाशैरुपलक्षितः । ननु तैर्जीव एवोपलक्ष्यते, न । सर्वप्रत्यगात्मत्वात्सर्वजीवान्तर्यामित्वात् । जडतादात्म्याध्यासेन जीवस्यापि जडप्रायत्वान्न तेन विना प्रकाश इति भावः । पर्यवशेषितो 'नेति नेति' इत्यादिश्रुतिभिः ॥ ३८ ॥ ६ ॥ अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः—अथ हेत्यादिपर्यावर्त इत्यन्तेन । यस्मादेवंभूतस्त्वं परमेश्वरः । अथ ह वाव अत एव हि । हे मधुमथन, परमभागवता एते त्वत्पादाम्भोजानुसेवां कथं मुहुर्मुहुर्विसृजन्तीत्यन्वयः । हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणाः । अत एव आत्मा त्वमेव

समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ॥ ३७ ॥ ५ ॥ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ ६ ॥ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपर्यावर्तः ॥ ३९ ॥ ७ ॥ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दण्डं दण्डधर दधर्थ एवमेनमपि भगवञ्जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ ८ ॥ ॥

प्रियः सुहृच्च येषां ते साधवो रागादिशून्याः । तत्र हेतुः—तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिन्दुमात्रेण सकृदवलीढया आस्वादितया स्वमनसि निष्यन्दमानमतिशयेन स्रवद्यन्निरन्तरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशाभासा येषां ते । अत एव भगवति त्वयि नितरां निरन्तरं निर्वृतं च मनो येषां ते यत्र यस्यामनुसेवायां सत्याम् ॥ ३९ ॥ ७ ॥ प्रस्तुतं विज्ञापयन्ति—त्रिभुवनेत्यादिना यावत्समाप्ति । त्रिभुवनमात्मा स्वरूपं भवनं च यस्य । त्रिभुवनस्यात्मा भवनं चेति वा । त्रयो विक्रमा यस्य । त्रीन् लोकान्नयतीति तथा त्रयाणां लोकानां मनोहरोऽनुभावो यस्य । एवं चतुर्धा संबोध्याहुः—तेषामनुपक्रमसमय उद्यमकालो न भवतीति मत्वा हे दण्डधर, पूर्वं यथा दण्डं दधर्थ धृतवानस्येवमेनं त्वाष्ट्रमपि जहि, यदि मन्यसे हन्तुं यदीच्छसि ॥ ४० ॥ ८ ॥ ॥

१ समा ब्रह्मविषयत्वात् विषमा प्रातिकूल्यवत्त्वाच्च । २ बुद्धीन्द्रियादीनाम् । ३ उपलक्षितः अनुमित इत्यर्थः । ४ 'जगत्कारणभूतः' इति पाठः । ५ संसारपर्यावर्तो जन्ममरणप्रवाहः ।

प्रथमं तावत्त्वदीयानामस्माकमन्तस्तापं शमयितुमर्हसि। तावकानामित्यत्र हेतुः—हे पितः, हे पितामह, तव चरणनलिनयुगलध्यानेनैवानुबद्धो हृदये निगडः शृङ्खला येषाम्। स्वलिङ्गविवरणेन निजमूर्तिप्रकटनेन स्वीकृतानाम्। केन। अनुकम्पयानुरञ्जितं सानुरागं च तद्विशदं रुचिरं शिशिरं च स्मितं तत्सहितेनावलोकेन। तथानुकम्पयैव विगलितो मधुरो मुखरसः प्रियवाक् सैवामृतकला तया च ॥४१॥९॥ किंच अस्मदभिप्रायस्त्वया ज्ञायत एव किमत्रास्माभिर्विज्ञापनीयमित्याहुः—अथ हे भगवन्, तवास्माभिरिह कियान्वार्थविशेषो विज्ञापनीयः स्यादित्यन्वयः। यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिङ्गादिभिः प्रकाशो न क्रियते तथा तवास्माभिः कार्यार्थप्रकाशनं न कार्यमित्यर्थः। अत्र हेतुगर्भाणि विशेषणानि। अखिलजगतामुत्पत्त्यादिषु निमित्तायमानया दिव्यमायया विनोदो यस्य। अत एव सर्वजीवनिकायानामन्तर्हृदयेषु ब्रह्मस्वरूपेण प्रत्यगात्मान्तर्यामी तद्रूपेण च बहिरपि प्रधानरूपेण देशकालदेहावस्थानविशेषाननुलङ्घ्यानुभवतः। कथम्। तेषामुपादानतयोपलम्भकतया च, उपादानस्योपलम्भकतयेति वा। अत एव सर्वेषां प्रत्ययानां बुद्ध्यादीनामपि साक्षिणः। साक्षित्वे हेतुः—आकाशवदलिप्तं शरीरं स्वरूपं यस्य। अलिप्तत्वे

**अस्माकं तावकानां तव नतानां तत[3] ततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिङ्गविवरणेनात्मसात्कृतानामनुकम्पानुरञ्जितविशदरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चान्तस्तापमनघार्हसि[4] शमयितुम् ॥४१॥९॥ अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयानुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिङ्गादिभिरिव हिरण्यरेतसः॥४२॥१०॥अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥४३॥११॥ अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम् ॥ ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च ॥ ४४ ॥ हंसाय[5] दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय॥सत्संग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते ॥४५॥**

हेतुद्वयम्, साक्षात्परब्रह्मणो निरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेश्च॥४२॥१०॥अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापितास्तदस्माकं कार्यं स्वयमेवोपकल्पय संपादयेति। चरणमेव शतपलाशं कमलं तस्य छायां विविधैर्वृजिनैर्यः संसारपरिश्रमस्तस्योपशमकरीमुपसृतानां प्राप्तानाम् ॥ ४३॥११ ॥ पूर्वं भक्तेरुत्कर्षोक्तेस्तत्कामशङ्का मा भूदिति सकामं कथयन्ति। अथोऽनन्तरमेव ॥४४॥ शीघ्रं तद्वधाय पुनः प्रणमन्ति। हंसाय शुद्धाय हरये आर्तिहराय ते नमः। शुद्धत्वे हेतवः—दह्रनिलयाय हृदयाकाशनिकेताय। निरीक्षकाय बुद्ध्यादिसाक्षिणे। कृष्णाय सदानन्दरूपाय। 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥' इति निरुक्तेः। आर्तिहरत्वे हेतवः—मृष्टं रुचिकरं यशो यस्य। निरुपक्रमायादिशून्याय। सद्भिः संगृह्यत इति तथा तस्मै। भवपान्थो भवरूपे पथि वर्तमानस्तस्य जनस्य निजाश्रमाप्तौ स्वशरणप्राप्तौ सत्यां संसारस्यान्ते परीष्टा सर्वतः पूजिता उत्तमा गतिः फलं यस्तस्मै ॥ ४५ ॥ ॥

१ वाल्यादिः। २ उपादानतया कारणत्वेन उपालम्भकतया प्रकाशकत्वेन च। ३ हे तत इति सम्बुद्धिः। ४ हे अनघ प्रत्युपकारादिवासनारूपाघशून्य। ५ हंसाय सारासारौ विमृश्य सारग्राहिणे।

अभिनन्दितः संतोषितः ॥ ४६ ॥ मदीयमुपस्थानं स्तोत्रं तत्सहितया विद्यया ज्ञानेन । आत्मन ऐश्वर्यमसंसारित्वं तस्य स्मृतिर्यया । नहि विरोध उभयमित्यादिना कर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः । भक्तिश्च यया भवति ॥ ४७ ॥ अथ ह भगवन्नित्यादिना भक्तेः सर्वोत्कर्षोक्तेर्भक्तमभिनन्दति—किमिति ॥ ४८ ॥ यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्संपादनं कृपालोर्ममानुचितमित्याशयेनाह—न वेदेति द्वाभ्याम् । गुणेषु विषयेषु तत्त्वदर्शी । तान्निषयान् तथाविधोऽज्ञ एव ॥ ४९ ॥ कर्म न वक्ति प्रवृत्तिमार्गं न वक्ति हि । अपथ्यं यथा न राति न ददाति । भिषक्तमः सद्वैद्यः ॥ ५० ॥ एवं तत्त्वकथनेनानौचित्यं परिहृत्य तदभिप्रायमनुसरन्नाह—मघवन्निति । विद्यया व्रतैस्तपसा च सारं दृढं गात्रं शरीरं याचत याचध्वम् ॥ ५१ ॥ तत्र तदीयं विद्यातिशयमाह—स वा इति द्वाभ्याम् । एवं ह्यत्र प्रसिद्धा कथा । 'निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः ॥ दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ ॥ भगवन्देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् ॥ कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् ॥ तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् ॥ उवाच भिषजोर्विद्यां मावदीरश्विनोर्मुने ॥

॥श्रीशुक उवाच॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः॥४६॥ ॥श्रीभगवानुवाच॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि॥४७॥ किं दुरापं मयि प्रीते तथापि विबुधर्षभाः॥ मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित्॥४८॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक्॥ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः॥४९॥ स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि॥ न राति रोगिणोऽपथ्यं वाञ्छतो हि भिषक्तमः॥५०॥मघवन्यात भद्रं वो दध्यञ्चमृषिसत्तमम्॥ विद्याव्रततपःसारं गात्रं याचत मा चिरम्॥ ५१ ॥ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्[2]॥ यद्वा अश्वशिरोनाम तयोरमरतां व्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्यं मदात्मकम्॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः॥ ५३ ॥ ॥

यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते ॥ शिरश्छिन्द्यां न संदेह इत्युक्त्वा स ययौ हरिः ॥ इन्द्रे गते तथाभ्येत्य नासत्यावूचतुर्द्विजम् ॥ तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः ॥ आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् ॥ संधास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज ॥ तस्मिन्निन्द्रेण संछिन्ने पुनः संधाय मस्तकम् ॥ निजं ते दक्षिणां दत्त्वा गमिष्यावो यथातथम् ॥ एतच्छ्रुत्वा तयोवाच दध्यङ्ङाथर्वणस्तयोः ॥ प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशङ्कितः ॥' इति । ततश्चायमर्थः—दध्यङ् निष्कलं शुद्धं ब्रह्माधिगतो ज्ञातवान् । पाठान्तरे तु निष्कृतं नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतो ज्ञातवान् । ततोऽश्विभ्यां प्रादादित्युत्तरस्यानुषङ्गः । उपदिदेशेत्यर्थः । कथंभूतं ब्रह्म । यद्वै अश्वशिरसा प्रोक्तत्वादश्वशिरोनाम प्रसिद्धम् । तयोरमरतां जीवन्मुक्तत्वं व्यधात् । तथाच श्रुतिः 'अश्वस्य शीर्ष्णा प्रयदीमुवाच' इति ॥ ५२ ॥ मदात्मकं वर्म श्रीनारायणकवचं चाधिगत इति पूर्वस्यानुषङ्गः । तत्र हेतुः—यस्मात्त्वष्ट्रे प्रादात् । किं तत् । यत्त्वष्टा विश्वरूपाय पुत्राय प्रादात् । कीदृशम् । यत्त्वं ततो विश्वरूपादधाः धृतवानसि । तदेवं विद्यया सारं गात्रं याचध्वमित्यर्थः ॥ ५३ ॥ ॥

१ उपस्थानं स्तोत्रम् । २ 'ब्रह्म निष्कृतम्' इत्येवंरूपे ।

ननु प्रेष्ठं देहं कथं दास्यति तत्राह । युष्मभ्यमङ्गान्यस्थीनि याचितः सन् दास्यति । यतो धर्मज्ञः । विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति । अस्थीनीत्यनने हेयत्वं दर्शितम् । तैरस्थिभिर्विश्वकर्मणा विनिर्मित आयुधश्रेष्ठो वज्रो भविष्यतीति शेषः ॥ ५४ ॥ येन भवान्वृत्रशिरो हर्ता हरिष्यति । मम तेजसा उपबृंहितः सन् । तेजश्चास्त्राणि चायुधानि च संपदश्च भूयः प्राप्स्यथ । महाकायस्त्रिभुवनग्रासी स एवास्मान्हन्यादिति शङ्काकुलचित्तान्प्रत्याह । मत्परांश्च केऽपि न हिंसन्त्यतो युष्माकं भद्रमेवेति ॥ ५५ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ छ ॥

दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रधृत् ॥ इन्द्रोऽयुध्यत वृत्रेण सासुरेण सनिर्जरः ॥ १ ॥ १ ॥ मोदमान एव तन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाण इवोवाच—

युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥५४॥ येन वृत्रशिरो हर्ता मत्तेजउपबृंहितः ॥ तस्मिन्विनिहते यूयं तेजोऽस्त्रायुधसंपदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ५५ ॥ ॥ इति श्रीम० म० पु० ष० नवमोऽध्यायः ॥९॥ ॥ श्रीशुक उवाच ॥ इन्द्रमेवं समादिश्य भगवान्विश्वभावनः ॥ पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥ १ ॥ तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् ॥ मोदमान उवाचेदं प्रहसन्निव भारत ॥ २ ॥ अपि वृन्दारका यूयं न जानीथ शरीरिणाम् ॥ संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः[2] ॥ ३ ॥ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ॥ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥४॥ ॥ देवा ऊचुः ॥ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकम्पिनाम् ॥ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥ ननु[3] स्वार्थपरो लोको न वेद परसंकटम् ॥ यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥ ॥ ऋषिरुवाच ॥ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ॥ एष[4] वः प्रियमात्मानं त्यजन्तं संत्यजाम्यहम् ॥ ७ ॥ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ॥ ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ॥ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥ ॥

अपीति द्वाभ्याम् ॥ २ ॥ हे वृन्दारकाः, अपि किं संस्थायां मृत्यौ योऽभिद्रोहो दुःखं तं न जानीथ ॥ ३ ॥ आत्मा देहः । वयं जानीम एव किंतु श्रीविष्णुरस्मन्मुखेन याचत इति चेत्तत्राह—याचते विष्णवेऽपि दातुं क उत्सहेत ॥ ४ ॥ पुण्यश्लोकैरीड्यानि कर्माणि येषाम् ॥ ५ ॥ याचको यदि वेद तर्हि न याचेत । यदीश्वरो दानसमर्थश्चेत्तर्हि सोऽपि नेति[5] नाह । अतो यथा तव संकटं स्वार्थपरा वयं न जानीम एवं प्रत्याचक्षाणस्त्वमस्मत्संकटं न जानासीति भावः ॥ ६ ॥ मे मया प्रत्युदाहृताः प्रत्युक्ताः । मां त्यजन्तं त्यक्त्वा यान्तमात्मानं देहम् ॥ ७ ॥ अध्रुवेणात्मना देहेन । हे नाथाः ॥ ८ ॥ भूतानां शोकेन शोचति हर्षेण हृष्यति य आत्मा स्वयं तस्य यो धर्म एतावानेवाव्यय इत्यर्थः ॥ ९ ॥ ॥ ॥ ॥ ॥

१ अश्विभ्यां हेतुभ्यामिति वा । २ चेतनापहो मूर्च्छाजनकः । ३ 'नून स्वार्थपरः' इति वीर० पाठः । ४ एषोऽहं प्रियमप्यात्मानं मां त्यजन्तं वो युष्मानुद्दिश्य त्यजामीत्यन्वयः । वो युष्माकं प्रियमिति वा योजनीयम् । ५ नेति नाह न ब्रूयात् ।

पारक्यैः श्वशृगालादिभक्ष्यैः । अस्वार्थैरात्मोपयोगशून्यैः । स्वं वित्तम् । ज्ञातयः पुत्रादयः । विग्रहो देहः । तैर्नोपकुर्यादिति यत् ॥ १० ॥ कृतं व्यवसितं निश्चयो येन । आत्मानं क्षेत्रज्ञं संनयन्नेकीकुर्वंस्तनुं जहौ ॥ ११ ॥ यता अक्षादयो येन । तत्त्वं पश्यतीति तथा । ध्वस्तानि बन्धनानि यस्य ॥ १२ ॥ अथेन्द्रोऽशोभतेत्युत्तरेणान्वयः । मुनेः शुक्तिभिरस्थिभिर्निर्मितम् । उत्सिक्त ऊर्जितः । मुनेरस्थिभिरिति वा पाठः ॥ १३ ॥ १४ ॥ असुरानीकानां यूथपैः पर्यस्तं

अहो दैन्यमहो कष्टं पारक्यैः क्षणभङ्गुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥१०॥ ॥ श्रीशुक उवाच ॥
एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ॥ परे भगवति ब्रह्मण्यात्मानं संनयञ्जहौ ॥ ११ ॥ यताक्षासुमनोबुद्धिस्त-
त्त्वदृग्ध्वस्तबन्धनः ॥ आस्थितः परमं योगं न देहं बुबुधे गतम् ॥१२॥ अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ॥
मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसान्वितः ॥१३॥ वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत ॥ स्तूयमानो मुनिगणैस्त्रै-
लोक्यं हर्षयन्निव ॥ १४ ॥ वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः[1] ॥ पर्यस्तमोजसा राजन् क्रुद्धो रुद्र इवान्तकम् ॥ १५ ॥
ततः सुराणामसुरै रणः परमदारुणः ॥ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥१६॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृ-
वह्निभिः ॥ मरुद्भिरृभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वया[2] श्रिया ॥ नामृष्य-
न्नसुरा राजन्मृधे वृत्रपुरःसराः ॥१८॥ नमुचिः शम्बरोऽनर्वा द्विमूर्धा ऋषभोऽम्बरः ॥ हयग्रीवः शङ्कुशिरा विप्रचित्ति-
रयोमुखः ॥१९॥ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः[3] ॥ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥२०॥ सुमालि-
मालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ प्रतिषिध्येन्द्रसेनाग्रं मृत्योरपि दुरासदम् ॥२१॥ अभ्यर्दयन्नसंभ्रान्ताः सिंहनादेन
दुर्मदाः ॥ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥२२॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः ॥ सर्वतोऽ-
वाकिरन् शस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २३ ॥ न तेऽदृश्यन्त संछन्नाः शरजालैः समन्ततः ॥ पुङ्खानुपुङ्खपतितैर्ज्यो-
तींषीव नभोघनैः ॥ २४ ॥ ॥ ॥ ॥

परिवृतम् ॥ १५ ॥ रणः संग्रामः । प्रथमे चतुर्युगे त्रेतायुगस्य मुखे आरम्भे ॥ १६ ॥ १७ ॥ नामृष्यन् नासहन्त ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ 'शतघ्नी च चतुर्हस्ता लोहकण्टकसंचिता ॥ भुशुण्डी सर्वतोलोहकण्टकानुक्रमोन्नता ॥' इत्यभिधानम् ॥ २३ ॥ पुङ्खो मूलदेशः । एकस्य मूलदेशमनु तत्संलग्नोऽपरस्य पुङ्खो यथा भवति तथा । नभस्थैर्घनैर्ज्योतींषीवेत्यनेन तेषां तदप्राप्तिः सूचिता ॥ २४ ॥ ॥ ॥ ॥

१ 'अभ्यद्रवच्छत्रुम्' इति पाठः । २ 'स्वमायया' इति पाठः । ३ 'उत्कटः' इति पाठः । एतदनन्तरम् 'धूम्रकेशो (व्योमकेशो) विरूपाक्षः कपिलोऽथ विभावसुः' इत्यर्धमधिक विजयध्वजायाम् । तथाच सहस्रश इत्यनन्तरम् 'इल्वलः पल्वलश्चैव दन्दशूको वृषध्वजः॥ कालनाभमहानाभौ भूतसंतापनो वृकः ।' इति श्लोकपाठस्तैलङ्गश्रीधरीये । वीर० विज० तु निर्व्याख्योस्ति ।

तामेवाह—न त इति । शस्त्राणामस्त्राणां च यानि वर्षाणि तेषामोघाः नासेदुर्न प्रापुः । सिद्धपथे आकाशे ॥ २५ ॥ क्षीणा अस्त्राणां च शस्त्राणां च ओघा येषाम् । गिरिशृङ्गैर्द्रुमैरुपलैश्च ॥ २६ ॥ तानिन्द्रसैनिकान् शस्त्राणामस्त्राणां च पूगैः समूहैरक्षतान् क्षतशून्यान्स्वस्तिमतः सुखिनो द्रुमादिभिश्चाविक्षतान्निशाम्य दृष्ट्वा । वृत्रो नाथो येषां ते । तत्रसुर्भीताः ॥ २७ ॥ कृताः कृताः पुनः पुनः कृताः । कृष्णोऽनुकूलो येषां तेषु देवगणेषु । रुशतीः रुशत्यः अकल्याण्यो रूक्षाः परुषा वाचो यथा महत्सु क्षोभकर्त्र्यो न भवन्ति तद्वत् ॥ २८ ॥ हतो युद्धे दर्पो येषां ते । आत्तः परैर्गृहीतः सारो धैर्यं येषाम् । ते अतिप्रसिद्धा अपि ते दैत्याः । एवं ते इत्यस्यापौनरुक्त्यम् । आजिमुखे युद्धारम्भे । पतिं विसृज्य पलायनाय मनो दधुः । यतो हरावभक्ताः ॥ २९ ॥ प्रधावतः

न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः[1] सहस्रधा ॥२५॥ अथ क्षीणास्त्रशस्त्रौघा
गिरिशृङ्गद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥२६॥ तानक्षतान्स्वस्तिमतो निशाम्य शस्त्रास्त्रपू-
गैरथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृङ्गैरविक्षतांस्तत्रसुरिन्द्रसैनिकान् ॥ २७ ॥ सर्वे प्रयासा अभवन्विमोघाः[2]
कृताः कृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥२८॥ ते स्वप्रयासं
वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥२९॥ वृत्रोऽसु-
रांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥३०॥
कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वन् शम्बर मे शृणुध्वम्
॥ ३१ ॥ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ॥ लोको यशश्चाथ ततो यदि ह्यमुं को नाम[3]
मृत्युं न वृणीत युक्तम् ॥३२॥ द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विज-
ह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥३३॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे दशमोऽध्यायः ॥ १० ॥

पलायमानान्प्रेक्ष्य आदावेव तीव्रेण भयेन पलायितं भग्नं च तद्बलं सैन्यं तच्च प्रेक्ष्य एतद्वक्ष्यमाणं बभाषे ॥३०॥ तदेव विशिनष्टि । कालोपपन्नामवसरोचिताम् । मनस्विनां रुचिराम् । हे मय, हे अनर्वन्, मे वाचं शृणुत ॥ ३१ ॥ ततो मृत्योरिह यशो लोकः स्वर्गश्च यदि स्यात् अथ तर्हि अमुं मृत्युम् । युक्तं समीचीनं प्राप्तं वा ॥ ३२ ॥ ब्रह्मसंधारणया कलेवरं जह्यादिति यत्स एको मृत्युः । वीरशये रणभूमावनिवृत्तोऽपराङ्मुखः सन् जह्यादिति यत्स एकः । तौ द्वाविह शास्त्रे संमतौ मृत्यू । तथाच स्मृतिः—'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ॥ परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ ॥छ॥ ॥छ॥ ॥छ॥

[1] लघुहस्तैर्हस्तलाघवशालिभिः । [2] विमोघा विशेषतो निरर्थकाः । [3] 'मृत्युं वर को न वृणीत युक्तम्' इति पाठः ।

एकादशे तु वृत्रस्य युध्यमानस्य वज्रिणा ॥ भक्तिज्ञानबलोदर्काश्चित्रा वाचोऽनुवर्णिताः ॥ १ ॥ शंसतः कथयतः पत्युर्वचः ॥ १ ॥ कालानुकूलैः कालानुवर्तिभिः । काल्यमानां विद्राव्यमाणाम् ॥ २ ॥ अमर्षितोऽसहमानस्तांस्त्रिदशान्निवार्य निर्भर्त्स्य चेदं वक्ष्यमाणमुवाच ॥ ३ ॥ तदेवाह द्वाभ्याम् । मातुरुच्चरितैः पुरीषप्रायैः । प्रथमान्तपाठे देवानां संबोधनम् । पृष्ठतो हतैर्वैस्तैः किम् । न किंचित् । न यशो नापि धर्मः । तदेवाह—नहीति ॥ ४ ॥ प्रधने संग्रामे । सारं धैर्यं हृदि चेत्तर्हि हे क्षुल्लकाः क्षुद्राः, मात्रं क्षणमात्रमग्रे तिष्ठत । न चेदिह लोकभोगे स्पृहास्ति ॥ ५ ॥ सुरगणान् । सुमहान्प्राणो बलं यस्य । येन

॥ श्रीशुक उवाच ॥ त एवं शंसतो धर्मं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पलायनपरा नृप ॥ १ ॥ विशीर्यमाणां पृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत्[1] ॥ २ ॥ दृष्ट्वाऽतप्यत संक्रुद्ध इन्द्रशत्रुरमर्षितः ॥ तान्निवार्यौजसा राजन्निर्भर्त्स्येदमुवाच ह ॥ ३ ॥ किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ॥ न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥ यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि ॥ अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्यसुखे स्पृहा ॥ ५ ॥ एवं सुरगणान्क्रुद्धो भीषयन्वपुषा रिपून् ॥ व्यनदत्सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥ तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै ॥ निपेतुर्मूर्च्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥ ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ॥ गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥ विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते[3] महागदाम् ॥ चिक्षेप तामापततीं सुदुःसहां जग्राह वामेन करेण लीलया ॥ ९ ॥ स इन्द्रशत्रुः कुपितो भृशं तया महेन्द्रवाहं गदयोग्रविक्रमः ॥ जघान कुम्भस्थल उन्नदन्मृधे तत्कर्म सर्वे समपूजयन्नृप ॥ १० ॥ ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ॥ अपासरद्भिन्नमुखः सहेन्द्रो मुञ्चन्नसृक्सप्तधनुर्भृशार्तः ॥ ११ ॥ न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा ॥ इन्द्रोऽमृतस्यंदिकराभिमर्शवीतव्यथः क्षतवाहोऽवतस्थे ॥ १२ ॥ स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ॥ स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसन् जगाद ॥ १३ ॥

विचेतसो बभूवुः ॥ ६ ॥ वृत्रस्य विस्फोटनेन नादेन ॥ ७ ॥ उद्यतं शूलं येन । नालं वनं नलानां वनं उद्धतो मदो यस्य स यूथपतिर्गजो यथा मर्दयति ॥ ८ ॥ ९ ॥ १० ॥ सप्तधनुःप्रमाणं देशम् ॥ ११ ॥ सन्नोऽवसन्नो वाहो यस्य तस्मै न प्रायुङ्क्त । अमृतस्यन्दी अमृतस्रावी यः स्वकरस्तेनाभिमर्शः स्पर्शस्तेन वीतव्यथो गतदुःखः क्षतो वाहो यस्येन्द्रस्य स तथाभूतोऽवतस्थे ॥ १२ ॥ स वृत्रः हे नृपेन्द्र, आहवकाम्यया युद्धेच्छयावस्थितम् । भ्रातृहणं भ्राता विश्वरूपस्तस्य हन्तारम् । नृशंसं क्रूरं तदेवांहः पापं तस्य कर्म स्मरन् ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

१ हे मातुरुच्चरिताः पुरीषतुल्या देवाः इति । तृतीयान्तपाठे देवानां विशेषणम् । २ अनाथवत् अनाथामिव ३ अभिद्रवते सम्मुखमागच्छते । ४ 'वमन्नसृक्' इति पाठः । ५ विस्फोटितं ऊरुप्रगण्डयोः करतलाघातस्तेन ।

यो ब्रह्महा ब्राह्मणं हतवान्विशेषतः स्वगुरुं मम च भ्रातरं स भवानग्रतः समवस्थितः एतद्दिष्ट्या भद्रं जातम्। दिष्ट्येत्यव्ययमानन्दार्थे। हे असत्तम, मम शूलेन निर्भिन्नं
दृषत्तुल्यं हृत् हृदयं यस्य तेन त्वया निमित्तभूतेनाद्याचिरादेव भ्रातुरनृणोऽहं स्यामेतच्च दिष्ट्या ॥१४॥ स्वर्गकामो यो भवानवृश्चत्। स्वर्गकामो याज्ञिकः पशोरिवेति वा
॥१५॥ तं त्वामस्पृष्टवह्निमदग्धदेहं समदन्ति। वर्तमानसामीप्ये वर्तमानवन्निर्देशः ॥१६॥ अन्येऽपि ये अज्ञा इह त्वा त्वां नृशंसमनु मह्यमुद्यतास्त्राः सन्तो यदि प्रह-
रन्ति तैर्भूतनाथान्भैरवादीन्यक्ष्यामि। कथंभूतैः। निशातं तीक्ष्णीकृतं यन्मम त्रिशूलं तेन निर्भिन्नो गलो येषां तैः ॥१७॥ अथो अथवा। हरे भो इन्द्र, यदि भवानेव मम
शिरो हर्ता हरिष्यति तत्र तथा सत्यनृणो विमुक्तकर्मबन्धः सन्भूतेभ्यो बलिं देहेन विधाय मनस्विनां पादरजः प्रपत्स्ये धीराणां पदं प्राप्स्यामि ॥ १८ ॥ जीवितादपि

॥ वृत्र उवाच ॥ दिष्ट्या भवान्मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ॥ दिष्ट्याऽनृणोऽद्याहमसत्तम त्वया मच्छू-
लनिर्भिन्नदृषद्धृदाऽचिरात् ॥१४॥ यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ॥ विश्रम्य खड्गेन शिरांस्य-
वृश्चत्पशोरिवाकरुणः स्वर्गकामः ॥१५॥ ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ॥ कृच्छ्रेण मच्छूल-
विभिन्नदेहमस्पृष्टवह्निं समदन्ति गृध्राः ॥ १६ ॥ अन्येऽनु ये त्वेह नृशंसमज्ञा ये ह्युद्यतास्त्राः प्रहरन्ति मह्यम् ॥ तैर्भूतना-
थान्सगणान्निशातत्रिशूलनिर्भिन्नगलैर्यजामि ॥१७॥ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह ॥ तत्रानृणो
भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥१८॥ सुरेश कस्मान्न हिनोषि वज्रं पुरः स्थिते वैरिणि मय्यमोघम् ॥ मा संश-
यिष्ठा न गदेव वज्रं स्यान्निष्फलं कृपणार्थेव याच्ञा ॥१९॥ न त्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः ॥
तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥ अहं समाधाय मनो यथाह संकर्षणस्तच्चर-
णारविन्दे ॥ त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥ पुंसां किलैकान्तधियां स्वकानां याः
संपदो दिवि भूमौ रसायाम् ॥ न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः ॥ २२ ॥ ॥ ॥

मृत्युरेव ममाभिमत इत्याशयेनाह—सुरेशेति। न हिनोषि नहि क्षिपसि। गदेव विफलो यास्यतीति संशयं मा कार्षीः। कृपणादर्थः प्रयोजनं यस्याः सा याच्ञा यथा नि-
ष्फला तथा न स्यात् ॥१९॥ अमोघत्वे हेतुं वदंस्तं प्रोत्साहयति—नन्विति। तेजितस्तीक्ष्णीकृतः। शत्रुं मां जहि। विष्णुना यन्त्रितः प्रेरितः ॥२०॥ हननेन मम पीडा
स्यादित्यपि मा संशयिष्ठा इत्याह—अहमिति। संकर्षणो मत्पतिर्यथाह तथा तदीयचरणारविन्दे मनः समाधाय मुनेर्योगिनो गतिमहं यास्यामि। तव वज्रस्य रंहसा
लुलितश्छिन्नो ग्राम्यपाशो विषयभोगलक्षणो यस्य। अपविद्धलोकस्त्यक्तदेहः ॥ २१ ॥ तर्हि भगवान्संकर्षणः स्वभृत्याय मह्यमेव स्वर्गादिसंपदो दास्यतीत्यपि मा
संशयिष्ठा इत्याह—पुंसामिति। स्वर्गे भूमौ रसातले च याः संपदस्ताः किल निश्चितं न राति न ददाति। तत्र हेतुः—यद्याभ्यो द्वेषादयो भवन्ति ॥ २२ ॥

१भूतेभ्यः सृगालादिभ्यः स्वदेहेन बलिम्। २ द्विजातेरित्यादीनि विशेषणान्यवध्यत्वसूचकानि। ३ यतः यस्मिन्पक्षे। ४गुणाः सर्वादरणीयत्वादयः। ५ एकान्तधियां प्रयोजनान्तररहितमतीनाम्।

तर्हि स्वभक्तस्य किं विधत्ते तत्राह—त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते । तत आयासोपरमादनुमेयो न त्वैश्वर्यादिना । अतः सम्य-
ग्भगवत्प्रसादाभावात्तव संपदो भविष्यन्तीति भावः ॥२३॥ एवमिन्द्राय स्वाभिप्रायं निवेद्य भगवन्तं प्रार्थयते—अहमिति । तव पादावेव एकं मूलमाश्रयो येषां
तेषां दासानामनुदासो भूयो भवितास्मि भविष्यामि भवेयम् । असुपतेः प्राणनाथस्य तव गुणान्मम मनः स्मरतु । वागपि तानेव कीर्तयतु । कायस्तवैव कर्म करोतु
॥ २४ ॥ ननु किं दास्येन तुभ्यं महाफलानि दास्यामि तत्राह—नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च हे समंजस, निखिलसौभाग्यनिधे, त्वा त्वां विरहय्य पृथक्कृत्य
न काङ्क्षे नेच्छामि ॥ २५ ॥ तर्हि किमिच्छसि तदाह—अजातपक्षाः खगा धूकादिभिः पीडिता यथा मातरम् । यथाच दाम्ना बद्धा बालवत्साः स्तन्यम् ।

त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ॥ ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोऽन्यैः
॥ २३ ॥ अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ॥ मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु
कायः॥२४॥न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्॥न योगसिद्धीरपुनर्भवं वा समंजस त्वा विरहय्य
काङ्क्षे ॥ २५ ॥ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ॥ प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ २६ ॥ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ॥ त्वन्मायया-
त्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे एकाद-
शोऽध्यायः ॥११॥ ॥छ॥ ॥ ऋषिरुवाच ॥ एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः ॥ शूलं प्रगृ-
ह्याभ्यपतत्सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥१॥ ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसासुरेन्द्रः ॥ क्षिप्त्वा
महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद ॥ २ ॥ ख आपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजात-
विक्लवः ॥ वज्रेण वज्री शतपर्वणाऽच्छिनद्भुजं च तस्योरगराजभोगम् ॥ ३ ॥ ॥ ॥

दिदृक्षते द्रष्टुमिच्छतीत्यर्थः
यथा च व्युषितं दूरदेशगतं प्रियं कामेन विषण्णा प्रिया । तथा मे मनस्तापत्रयपीडितं कर्मभिर्बद्धं च कामादिभिर्विषण्णं च त्वां
॥ २६ ॥ उत्तमश्लोकस्य तव जनेषु भक्तेष्वेव सख्यं भूयात् । त्वन्मायया देहादिष्वासक्तचित्तस्य भूयोऽपि तेष्वासक्तिर्न भूयात् ॥ २७ ॥ ॥ इति श्रीमद्भा-
गवते म० पु० षष्ठस्कन्धे भावार्थदीपिकायां टीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु ॥ महेन्द्रेण महायुद्धे वृत्रस्य
वध ईर्यते ॥ १ ॥ महापुरुषं श्रीविष्णुम् । अप्सु प्रलयोदके ॥ १ ॥ युगान्ताग्निवत्कठोरा जिह्वा शिखा यस्य तत् । आविध्य भ्रामयित्वा ॥ २ ॥ तत् खे
आपतदागच्छत् । विचलत्परिभ्रमत् । ग्रहश्चोल्का च ग्रहोल्कं तद्वद्दुष्प्रेक्ष्यम् । शतं पर्वाणि यस्य तेन । उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारम् ॥ ३ ॥

१ अथवा असुपतेः आत्मपदं स्मरेत् । अधीगर्थेति षष्ठी । नो वाक् गुणान् गृणीत इति योज्यम् । २ पुरुषस्य स्वान्तरङ्गभक्तस्य । ३ अकिंचनगोचरः निष्कामस्वभक्तविषयः ।
४ विनद्य सिंहनादं कृत्वा । ५ ग्रहश्च उल्काश्चेति द्वन्द्वाद्वतिः । ग्रहः सूर्यः उल्का अङ्गाराः ।

हनौ कपोलप्रान्ते । अमरेभमैरावतं च ॥४॥५॥ पुनश्च तमाह वृत्रः । हे हरे इन्द्र ॥ ६ ॥ सदा जयो नैव किंतु कुत्रचिज्जय एकत्र कुत्रचिन्नैव । यद्वा कुत्रचिदपि युयुत्सतां सदा जयो नैव किंत्वेकत्रैव । कदाचिदेवेत्यर्थः । परो देह आत्मा येषां, पराधीनात्मनामिति वा । आद्यमनादिम्। सनातनं नित्यम् ॥७॥ पराधीनतामेवाह—लोका इति सप्तभिः । यस्य वशे स्थिताः स्वयं विवशाः सन्तः श्वसन्ति चेष्टन्ते । द्विजाः पक्षिणः । शिचा जालेन । कालः कलयतीति भगवान् । इह जयादौ कारणम् ॥ ८ ॥ ओजआदिरूपं कालं तं हेतुमज्ञायाविज्ञाय जडं सन्तमात्मानं देहं हेतुं मन्यते ॥९॥१०॥ ननु स्वारम्भकप्रधानपुरुषादितन्त्राणीति युक्तं

छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ॥ हनौ तताडेन्द्रमथामरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥४॥ वृत्रस्य कर्मातिमहाद्भुतं तत्सुरासुराश्चारणसिद्धसङ्घाः ॥ अपूजयंस्तत्पुरुहूतसंकटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥५॥ इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसंनिधौ पुनः ॥ तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥ युयुत्सतां कुत्रचिदाततायिनां जयस्तदैकत्र न वै परात्मनाम् ॥ विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे ॥ द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ८ ॥ ओजः सहो बलं प्राणममृतं मृत्युमेव च ॥ तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥ ९ ॥ यथा दारुमयी नारी यथा यन्त्रमयो मृगः ॥ एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः ॥१०॥ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः ॥ शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात् ॥११॥ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम् ॥ १२ ॥ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ॥ भवन्त्येव हि तत्काले यथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥ तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥१४॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥ १५ ॥ पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे ॥ घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ १६ ॥ ॥

तत्राह—पुरुष इति । व्यक्तं महत्तत्त्वम् । आत्माऽहंकारः ॥११॥ ननु स्वकर्मद्वारा जीव एव सृष्ट्यादिहेतुरिति मीमांसका मन्यन्ते तत्राह—एवमविद्वाननीशमेवात्मानमीश्वरं स्वतन्त्रं मन्यते । ननु पित्रादयः स्रष्टारो दृश्यन्ते व्याघ्रादयस्तु हन्तारस्तत्राह—भूतैरिति । स्वयमीश्वरः ॥१२॥ ननु त्वया पराजितस्य मम जयादिशङ्कैव नास्ति किमिति मां बलाद्युद्धे प्रवर्तयसि तत्राह—आयुरिति । तत्काले जयादिकाले । विपर्यया अकीर्त्यादयः ॥१३॥ यस्मादेवं सर्वमीश्वराधीनं तस्मात्समः स्याद्धर्षविषादहीनो भवेत् ॥१४॥ समदृष्ट्यावुपायमाह—सत्त्वमिति । हर्षादिभिर्न बध्यते ॥१५॥ हर्षविषादनिवृत्त्यै तवाहमेव गुरुरित्याह—पश्येति । वृक्णमायुधं भुजश्च यस्य ॥१६॥

॥२५॥

१ सुखदुःखाभ्यां सुखदुःखयोः । २ आयुराद्यनुकूले काले इति चक्र० ।

ततः सप्तदशेऽमोघमहर्द्धिं प्राप्य खे चरन् ॥ विहस्य गिरिशं शापादुमाया वृत्रतां गतः ॥ १ ॥ यतो यस्मात् । तस्मै दिशे नमः नमनं कृत्वा ॥ १ ॥ स चित्रकेतुर्विद्याधरस्त्रीभिर्हरिं गापयन् रेम इति द्वयोरन्वयः । अव्याहतं बलमिन्द्रियपाटवं च यस्य ॥ २ ॥ नानाविधाः संकल्पेनैव सिद्धयो यासु तासु ॥ ३ ॥ "अकस्माद्भुतैश्वर्यगर्वात्प्राचीनकर्मतः । आसुरीं योनिमापन्नो भवानीशापतः स तु ॥" तदाह—एकदेत्यादिना ॥ ४ ॥ अङ्कीकृतामुत्सङ्गेनैकीकृत्य देवीं बाहुनालिङ्ग्य स्थितम् । उवाच जहास च । तस्यान्तिके स्थितः सन् ॥ ५ ॥ धर्मं वक्ता वदति । शरीरिणां मध्ये मुख्यश्च भार्यया मिथुनीभूय चास्ते ॥ ६ ॥

॥ श्रीशुक उवाच ॥ यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः ॥ विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥ १ ॥ स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः ॥ स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥ कुलाचलेन्द्रद्रोणीषु नानासंकल्पसिद्धिषु ॥ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ॥ ३ ॥ एकदा स विमानेन विष्णुदत्तेन भास्वता ॥ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥४॥ आलिङ्ग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि ॥ उवाच देव्याः शृण्वत्या जहासोच्चैस्तदन्तिके ॥५॥ ॥ चित्रकेतुरुवाच ॥ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम् ॥ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥ जटाधरस्तीव्रतपा ब्रह्मवादिसभापतिः ॥ अङ्कीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥ प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ॥ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥ ॥ श्रीशुक उवाच ॥ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप ॥ तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥ इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ॥ रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥ ॥ पार्वत्युवाच ॥ अयं किमधुना लोके शास्ता दण्डधरः प्रभुः ॥ अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥ ११ ॥ न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः ॥ न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥ एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम् ॥ यः क्षत्रबन्धुः परिभूय सूरीन्प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ॥ १३ ॥

॥ ७ ॥ ८ ॥ अगाधा गम्भीरा धीर्यस्य सः ॥ ९ ॥ न तस्य वीर्यं प्रभावं विद्वानतद्वीर्यविद्वांस्तस्मिन् । निर्जितात्माभिमानिने जितेन्द्रियोऽहमित्यभिमानवते । इति रुषा क्रोधेनाह ॥ १० ॥ विरुद्धं प्रकर्षेण करोतीति विप्रकृत् ॥११॥ अतिवर्तिनं शास्त्रमतिक्रम्य वर्तनशीलम् । ये नो निषेधन्ति न निवारयन्ति ॥१२॥ एषां ब्रह्मादीनामनुध्येयं पदाब्जयुग्मं यस्य तम् । मङ्गलमङ्गलं परमधर्ममूर्तिम् । सूरीन् परिभूयाज्ञान् कृत्वा जगद्गुरुं यः प्रशास्ति । तत्तस्मात् ॥ १३ ॥ ॥

१.'योगमहर्धिम्' इति पाठः। २ 'विद्याधरैः' इति पाठः । तत्र तैः सहेत्यर्थः। ३ हरिं गापयन् गानं कारयन्। हरेर्गुणश्रवणकीर्तनयोरेव रतोऽभूदित्यर्थः इति चक्र०। ४ 'उवाच देव्याः शृण्वत्याम्' इति पाठः। ५ महाव्रतधरो नैष्ठिकब्रह्मचारी। ६ धृष्टायेति क्रुधद्रुहेत्यादिना चतुर्थी। ७ विशेषेण प्रकर्षेण करोतीति। शासनेन हितकृदित्यर्थः इति चक्र०। ८ इति वक्ष्यमाणम्।

ननु हरिभक्तोऽयं न दण्डार्हं इति चेत्तत्राह—नायं साधुभिः परिसेवितं वैकुण्ठस्य पादमूलोपसर्पणमर्हति । यतः संभाविता अहमधिक इति कृता मतिर्येन । अत एव स्तब्धोऽनम्रः ॥ १४ ॥ तदेवं स्वयं दण्ड्यत्वं निश्चित्य तं प्राह—अत इति । हे पुत्र, यथा भूयो महतां किल्बिषमपराधं न कर्ता न करिष्यसि तथा याहीत्यर्थः ॥ १५ ॥ १६ ॥ पूर्वदिष्टं प्राचीनकर्मप्राप्तमेव ॥ १७ ॥ अयं च संसारचक्रस्वभाव एव न चित्रमित्याह—संसारचक्र इति ॥ १८ ॥ अत एवात्र मम च तव च न कोऽपि दोप इत्याह—नैवेति ॥ १९ ॥ एवं तावत्सुखदुःखादिकमङ्गीकृत्योक्तमिदानीं तदपि वस्तुतो नास्तीत्याह—गुणानां मायामयानां प्रवाहे संसारे ॥ २० ॥ ननु मायागुणानां चेदयं प्रवाहस्तर्हि तेपां जडत्वाद्बन्धमोक्षाद्यनुभवो न स्यात्तत्राह—एकः परमेश्वरो मायया निमित्तभूतया

नायमर्हति वैकुण्ठपादमूलोपसर्पणम् ॥ संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥ अतः पापीयसीं योनि-
मासुरीं याहि दुर्मते ॥ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥१५॥ ॥ श्रीशुक उवाच ॥ एवं शप्तश्चित्रकेतुर्विमाना-
दवरुह्य सः ॥ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥१६॥ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामि ते शापमात्मनोऽञ्जलि-
नाम्बिके ॥ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥ संसारचक्र एतस्मिन् जन्तुरज्ञानमोहितः ॥ भ्राम्यन्सुखं
च दुःखं च भुङ्क्ते सर्वत्र सर्वदा ॥१८॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ॥ कर्तारं मन्यतेऽप्राज्ञ आत्मानं
परमेव च ॥ १९ ॥ गुणप्रवाह एतस्मिन्कः शापः कोन्वनुग्रहः ॥ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥२०॥
एकः सृजति भूतानि भगवानात्ममायया ॥ एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः[1] ॥२१॥ न तस्य कश्चिद्दयितः
प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः ॥ समस्य सर्वत्र निरञ्जनस्य सुखेन रागः कुत एव रोषः ॥ २२ ॥ तथापि
तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ॥ बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते
॥ २३ ॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि ॥ यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥ ॥

भूतानि प्राणिनः सृजति । एषां बन्धादिकं च सृजति । निष्कलः स्वयं बन्धादिशून्यः ॥२१॥ नन्वेवंभूतविपमसृष्टौ तस्य किं कारणं, प्रियादिवैपम्याभावादित्याशङ्क्य यद्यपि प्रियादयो न सन्ति तथापि तत्तत्कर्मवशात्सर्वं घटत इत्याह—न तस्येति द्वाभ्याम् । प्रतीपोऽप्रियः । न ज्ञातिर्बन्धुश्चेत्यर्थः । तत्र हेतुः—सर्वत्र समस्य । तत्कुतः, निरञ्जनस्य निःसङ्गस्य । अत एव तन्निमित्ते सुखे रागो नास्ति, रागानुबन्धी रोपः कुतः स्यात् ॥२२॥ यद्यप्येवं तथापि तस्य शक्त्या मायया यो विसर्गः पुण्यपापादिलक्षणं कर्म एषां शरीरिणां सुखाद्यर्थमवकल्पते समर्थो भवति । यथोक्तं गीतासु 'भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः' इति ॥२३॥ अथ तस्माद्भामिनि हे कोपने, त्वां केवलं प्रसादयामि नतु शापमोक्षाय । तर्हि किं प्रसादनेनात आह—ममोक्तमुक्तिं साध्व्यप्यसाधुवन्मन्यसे तत्त्वया क्षम्यताम् ॥२४॥ ॥३५॥

[1] निष्कलः कला माया तद्रहितः इति चक्र० ।

॥ २८ ॥ स्वर्गादावेव तुल्योऽर्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते तथा ॥ २८ ॥
गिरिशौ भवानीशङ्करौ प्रसाद्य । स्मयतोर्विस्मयं कुर्वतोः सतोः ॥ २५ ॥ ॥२६ ॥ २७ ॥ ईर्ष्यानिष्टभेद इव
तत्र तदुक्तमेव हेतुमाह द्वाभ्याम् । देहिनां सुखं दुःखमित्यादिद्वन्द्वानीश्वरस्य लीलया मायया भवन्ति । तेषु च गुणदोषविकल्पश्चेत्यन्वयः ॥२९॥
यः स्फुरति स आत्मन्यर्थभेदः सुखादिभेदः पुंसः स्वप्ने यथा अविवेककृतो भवति । स्रजिवत् सर्पमालादिभिर्यथा तथैव कृत इत्यर्थः । स्रग्वदिति वक्तव्ये स्रजिव-
दित्यार्षम् । पाठान्तरे तु सुगमम् ॥ ३० ॥ अतो भागवतानां निस्पृहत्वमुचितमेवेत्याह—वासुदेव इति । ज्ञानवैराग्ययोर्वीर्यं बलं येषां तेषाम् । व्यपाश्रयो

॥श्रीशुक उवाच ॥ इति प्रसाद्य गिरिशौ चित्रकेतुररिंदम ॥ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः॥२५॥ ततस्तु भग-
वान् रुद्रो रुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥२६॥ ॥श्रीरुद्र उवाच ॥ दृष्टवत्यसि सुश्रोणि
हरेरद्भुतकर्मणः ॥ माहात्म्यं भृत्यभृत्यानां निस्पृहाणां महात्मनाम् ॥ २७ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया ॥ सुखं दुःखं मृतिर्जन्म शापोऽनु-
ग्रह एव च ॥२९॥ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ॥ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥३०॥ वासुदेवे भग-
वति भक्तिमुद्वहतां नृणाम् ॥ ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥ नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा
मुनयः सुरेशाः ॥ विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥ नह्यस्यास्ति प्रियः कश्चिन्नाप्रियः
स्वः परोऽपि वा ॥ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥३३॥ तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः ॥ सर्वत्र
समदृक् शान्तो ह्यहं चैवाच्युतप्रियः ॥ ३४ ॥ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु ॥ महापुरुषभक्तेषु शान्तेषु
समदर्शिषु ॥ ३५ ॥ श्रीशुक उवाच ॥ इति श्रुत्वा भगवतः शिवस्योमाभिभाषितम् ॥ बभूव शान्तधी राजन्देवी
विगतविस्मया ॥ ३६ ॥ इति भागवतो देव्याः प्रतिशप्तुमलंतमः ॥ मूर्ध्ना संजगृहे शापमेतावत्साधुलक्षणम् ॥३७॥
जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ॥ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥ ॥ ॥

नाहमिति द्वाभ्याम् । ईहितमभिप्रायं
विशिष्टबुद्ध्या आश्रयणीयोऽर्थो नास्ति ॥ ३१ ॥ अस्य च हरिदासत्वेन तत्स्वभावत्वान्नैतच्चित्रमिति वक्तुं हरेर्माहात्म्यमाह—
लीलां वा यदा वयं न विद्मस्तदा तस्य स्वरूपमंशकांशका अपि सन्तः पृथगीशमानिनो न विदुरेव ॥ ३२ ॥ अत एव हरिरपि सर्वेषां भूतानां प्रियः ॥ ३३ ॥
अहं चैवाच्युतस्य प्रियः । तस्मान्ममास्मिन्क्रोधो नाभूदिति भावः ॥ ३४ ॥ ३५ ॥ ३६ ॥ प्रतिशापं दातुमलंतमः समर्थतमोऽपि ॥ ३७ ॥ ३८ ॥ ॥

१ तेषु द्वन्द्वेषु । २ इष्टानिष्टभेद इवेति भिदेवेत्यस्यार्थः । भिदेति टावन्तम् । ३ 'स्रजिवत्' इत्यत्र 'इव वद्वेति सादृश्ये' इत्यभिधानात् वत् अव्ययं सादृश्यवाचकं पृथगेव । अत
आर्षमित्युक्तिरयुक्ता इति सिद्धां० । ४ 'स्रजि सर्पवत्' इत्येवंरूपे, 'स्रजि तत्कृत' इत्येवंरूपे वा । अत्र तत्कृतः अविवेककृत इत्यर्थः । स्रजीति सप्तमी । ५ स्वर्गादिष्वाधारत्वेन
अंतःप्रविष्टत्वेन इति यस्तुल्यः समर्थो भगवान् तद्दर्शिनः इति सिद्धां० । ६ देव्याः देव्यै ।

अमुरजातेरसुरभावेनोत्पत्तेः । भगवति मतेश्च ॥ ३९ ॥ ४० ॥ एतदेतम् ॥ ४१ ॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ आदित्यानां चतुर्थस्य त्वष्टुर्वंशप्रसङ्गतः ॥ प्रोक्तमिन्द्रकृतं विश्वरूपवृत्रवधादिकम् ॥ १ ॥ अदितेः पञ्चमादीनां पुत्राणामन्वयोक्तिभिः ॥ अष्टादशे दितेर्गर्भे शक्रेण मरुतां भिदा ॥ २ ॥ त्वष्टुर्वंशमनुक्रम्य सप्रसङ्गं यथाक्रमम् ॥ आदित्यानामथान्येषां वंशानाह मुनीश्वरः ॥ ३ ॥ दक्षकन्यान्वयानुकथने अदित्या द्वादश पुत्राः प्रोक्ताः, 'विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥' इति । तत्र पष्ठाध्यायान्तमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैस्त्वष्टुर्वंशमनुवर्ण्येदानीं सवितुर्वंशमाह—पृश्निस्त्विति । सावित्रीमित्यादिषु प्रासूतेत्युत्तरस्यानुषङ्गः ।

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥३९॥ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ॥ माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते ॥ ४० ॥ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ॥ इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥४१॥ ॥ इति श्रीम० म० पु० षष्ठस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

॥ श्रीशुक उवाच ॥ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम् ॥ अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान्
॥१॥ सिद्धिर्भगस्य भार्याऽङ्ग महिमानं विभुं प्रभुम् ॥ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २ ॥ धातुः कुहूः
सिनीवाली राका चानुमतिस्तथा ॥ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥ अग्नीन्पुरीष्यानाधत्त क्रियायां
समनन्तरः ॥ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ ४ ॥ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ॥
अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥५॥ रेतः सिषिचतुः कुम्भे उर्वश्याः संनिधौ द्रुतम् ॥ रेवत्यां मित्र उत्स-
र्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥ पौलोम्यामिन्द्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ॥ जयन्तमृषभं तात तृतीयं मीढुषं
प्रभुः ॥ ७ ॥ उरुक्रमस्य देवस्य मायावामनरूपिणः ॥ कीर्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः ॥ ८ ॥ ॥

पशुं पशुयागम् । महामखान् पञ्चयज्ञान् ॥ १ ॥ २ ॥ धातुर्भार्या कुहूः सायं पुत्रं प्रासूत । एवं सिनीवाली दर्शमित्यनुक्रमात् ॥ ३ ॥ समनन्तरो विधाता क्रियायां भार्यायां पुरीष्यानग्नीन्पञ्च चितान् 'पुरीष्यासो अग्नयः' इति 'पञ्च वा एतेऽग्नयो यच्चितयः' इति श्रुतेः । चर्षणी वरुणस्य भार्यासीत् । पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः ॥ ४ ॥ वाल्मीकिर्वरुणस्यैव पुत्रोऽभवत् । एतौ वरुणस्यासाधारणौ पुत्रौ, तयोरुत्सर्गादयोऽपि मित्रस्यासाधारणाः । तयोरेव साधारणौ द्वौ पुत्रावाह । अगस्त्यश्च वसिष्ठश्च ऋषी मित्रावरुणयोरभवताम् ॥ ५ ॥ यत उभावपि कुम्भे रेतः सिषिचतुः । 'सत्रे ह जातावि‍षिता नमोभिः कुम्भे रेतः सिषिचतुः समानम्' इति श्रुतेः । द्रुतं स्कन्नम् ॥ ६ ॥ ७ ॥ ८ ॥ ॥ ॥ ॥

१ 'भगवत्स्मृतेः' इति पाठः २ नः अस्माभिः । ३ भृगुवाल्मीकी । ४ उत्सर्गादयो रेवत्यामित्यादिना वक्ष्यमाणाः । ५ तयोर्मित्रावरुणयोः ।

पश्चादष्टमस्कन्धे ॥ ९ ॥ अथेति । कश्यपस्यादितेः पुत्राणां द्वादशादित्यानां संततिमुक्त्वा दितेः पुत्रान्कथयामीत्यर्थः ॥ १० ॥ हिरण्यकशिपुर्हिरण्याक्षश्चेति प्रथमं द्वावेव । तौ च कीर्तितौ तृतीयस्कन्धे ॥ ११ ॥ १२ ॥ विप्रचित्तो दानवाद्भर्तुः सकाशाद्राहुं पुत्रमग्रहीत् ॥ १३ ॥ ततः संह्रादादसूत ॥ १४ ॥ यो मेषरूपं वातापिं पेचे तमिल्वलम् । यं पेचे तं वातापिं चासूतेत्यन्वयः ॥ १५ ॥ १६ ॥ ततो बलेः सकाशादभवत् तस्य बलेरनुभावः सुश्लोक्यः

तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः ॥ पश्चाद्वक्ष्याम [1]हेऽदित्यां यथैवावततार ह ॥ ९ ॥ अथ कश्यपदायादान्दैतेयान्कीर्तयामि ते ॥ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च ॥ १० ॥ दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ ॥ हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ॥ जम्भस्य तनया [2]दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥ संह्रादं प्रागनुह्रादं ह्रादं प्रह्लादमेव च ॥ तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥ शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ॥ संह्रादस्य कृतिर्भार्याऽसूत पञ्चजनं ततः ॥ १४ ॥ ह्रादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ॥ योऽ[3]गस्त्याय त्वतिथये पेचे वातापिमिल्[4]वलम् ॥ १५ ॥ अनुह्रादस्य सूर्म्यायां बाष्कलो महिषस्तथा ॥ विरोचनस्तु प्राह्लादिर्दे[5]व्यांस्तस्याभवद्बलिः ॥ १६ ॥ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ॥ तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥ बाण आराध्यगिरिशं लेभे तद्गणमुख्यताम् ॥ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ॥ त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥ ॥ राजोवाच ॥ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ॥ इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः ॥ २० ॥ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ॥ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥ ॥ सूत उवाच ॥ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्याद्दतमल्पमर्थवत् ॥ सभाजयन्[6]सन्निभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः ॥ २२ ॥ ॥ श्रीशुक उवाच ॥ हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥ २३ ॥ ॥

पुण्यकीर्त्यर्हैः । [7]यद्वा, अनुभाव्यते सद्भिः स्तूयत इत्यनुभावम् । सुश्लोक्यं यश इति शेषः ॥ १७ ॥ तस्य गणेषु मुख्यतां प्राधान्यम् ॥ १८ ॥ सात्मतां समानरूपताम् ॥ १९ ॥ सात्म्यं देवत्वं प्रापिताः ॥ २० ॥ २१ ॥ आद्दतं सादरम् । अल्पं मिताक्षरम् । अर्थवत् बह्वर्थयुक्तम् । सत्रमयनमाश्रयो यस्य हे सत्रायण शौनक ॥ २२ ॥ शक्रस्य पार्ष्णिग्राहेण पृष्ठतः सहायेन ॥ २३ ॥ ॥ ॥ ॥

१ हे राजन् । २ जम्भेनैव दत्ता । ३ अगस्त्यायागस्त्यं भोजयितुम् । ४ 'इल्वलः' इति प्रथमान्तः पाठः सुगमः । ५ 'बलिस्तस्याभवत्किल' इति पाठः । 'देव्याम्' इत्यपि पाठः क्वचित् । ६ सन्निभृतेन आनन्दपूर्णेन । ७ अग्रिमव्याख्यानुरोधेन यद्वेत्यस्य स्थाने पाठान्तरे ह्रत्यपेक्षितम् । तच्च 'तस्यानुभावं सुश्लोक्यम्' इत्येवंरूपम् ।

भ्रातृहन्तारमिन्द्रं मारयित्वा सुखिनी कदा स्यामिति चिन्तयामास दितिः । उल्बणं क्रूरम् । अक्लिन्नहृदयं कठिनचित्तम् ॥ २४ ॥ ननु राजा स्वदेहरक्षार्थमन्येषां घातं करोत्येव किमत्र चित्रं तत्राह—कृमीति । ईशः प्रभुरित्यभिहितस्यापि यस्य पूर्वेषां राज्ञां देहस्य मरणानन्तरं द्वित्रिदिनावस्थितस्य कृमय इति, श्वादिभिर्भक्षितस्य तु विष्ठेति, दग्धस्य भस्मेति च संज्ञा आसीत्तत्कृते तस्य देहस्यार्थे यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद, न वेदैव । तत्र हेतुः—यतो भूतद्रोहान्निरयो भवति ॥ २५ ॥ इदं देहादिकं ध्रुवं नित्यमाशासानस्य मन्यमानस्यात उन्नद्धमुच्छृङ्खलं चेतो यस्य तस्येन्द्रस्य यो मदस्तस्य शोषकः पुत्रो मे येन हेतुना भूयाद्भवेत् ॥ २६ ॥ भर्तुः प्रियाचरणमेवेति भावेन सा भर्तुः प्रियमसकृदाचचार ॥ २७ ॥ २८ ॥ विवशः स्त्रीपरतन्त्रः सन् बाढं तव मनोरथं पूरयि-

कदा नु भ्रातृहन्तारमिन्द्रियाराममुल्बणम् ॥ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥२४॥ कृमिविड्भस्मसंज्ञासी-
द्यस्येशाभिहितस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥२५॥ आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ॥
मदशोषक इन्द्रस्य भूयाद्येन सुतो हि मे ॥ २६ ॥ इति भावेन सा भर्तुराचचारासकृत्प्रियम् ॥ शुश्रूषयानुरागेण प्रश्र-
येण दमेन च ॥ २७ ॥ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनो जग्राह भावज्ञा सुस्मितापाङ्गवीक्षणैः ॥ २८ ॥
एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ॥ बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥ विलोक्यैकान्तभू-
तानि भूतान्यादौ प्रजापतिः ॥ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता ॥३०॥ एवं शुश्रूषितस्तात भगवान्कश्यपः
स्त्रिया ॥ प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥३१॥ ॥ कश्यप उवाच ॥ वरं वरय वामोरु प्रीतस्तेऽहमनि-
न्दिते ॥ स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥ पतिरेव हि नारीणां दैवतं परमं स्मृतम् ॥ मानसः
सर्वभूतानां वासुदेवः श्रियः पतिः ॥३३॥ स एव देवतालिङ्गैर्नामरूपविकल्पितैः ॥ इज्यते भगवान्पुम्भिः स्त्रीभिश्च
पतिरूपधृक् ॥ ३४ ॥ तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे ॥ यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥३५॥
सोऽहं त्वयार्चितो भद्रे ईदृग्भावेन भक्तितः ॥ तत्ते संपादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥ ॥

ष्यामीति यदाह तन्न चित्रम् ॥ २९ ॥ तत्र हेतुमाह—विलोक्येति । एकान्तभूतानि निःसङ्गानि मैथुनेन सृष्टिवृद्ध्यर्थं स्वदेहार्धमेव स्त्रियं चक्रे ॥ ३० ॥ एवं स्त्रिया शुश्रूषितः सन् ॥ ३१ ॥ इह चकारात्परत्र च । अगमोऽप्राप्यः ॥ ३२ ॥ ननु परमेश्वरे सुप्रीते सर्वकामप्राप्तिरिति प्रसिद्धं तत्राह—पतिरेवेति । ननु मनसि स्थितः श्रीवासुदेव एव लक्ष्मीपतिः परं दैवतमिति प्रसिद्धम् । सत्यम्, स एव स्वाधिकारेण रूपभेदैः पूज्यत इत्याह—मानस इति सार्धेन ॥ ३३ ॥ ॥३७॥
देवतालिङ्गैर्मूर्तिभिरुपलक्षितः । तान्येवाह—नाम इन्द्रादि, रूपं वज्रहस्तत्वादि, ताभ्यां विविधं कल्पितैः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥

१ स च हेतुरिति शेषः । २ जग्राह वशीकृतवती । ३ स्त्रियं स्वदेहार्धं चक्रे मिथुनीभूतो बभूवेत्यर्थः ।

इन्द्रहणं इन्द्रहन्तारम् । अमृत्युं मृत्युशून्यम् । येनेन्द्रेण विष्णुना सहायेन घातितौ ॥३७॥३८॥३९॥ स्वभावमनुवर्तमानाया योषितः कोऽतिक्रमोऽपराधः ॥ ४० ॥ स्वभावमेवाह द्वाभ्याम् । शरत्पद्मस्येवोत्सवो विकासो यस्मिन् । श्रवणे श्रुती तयोरमृतम् । क्षुरधारोपमं चित्तम् ॥ ४१ ॥ स्वाशिषात्मनां स्वार्थकामनयाऽऽत्मवत्प्रेष्ठत्वेन प्रतीयमानानाम् ॥४२॥ तत्रेदमुपकल्पते योग्यं भवति । अयं भावः—वैष्णवं व्रतं तावदुपदेक्ष्यामि तेनैवास्याः शुद्धचित्तायाः इन्द्रं प्रति क्रोधो निवर्तिष्यते । पुत्रस्त्वमर्त्यो भविष्यति । दीर्घकालत्वे च व्रतस्य कथंचिद्वैगुण्ये सतीन्द्रस्य वधोऽपि न भविष्यतीति ॥४३॥४४॥ हे भद्रे, अज्ञः यथावद्यदि

॥ दितिरुवाच ॥ वरदो यदि मे ब्रह्मन्पुत्रमिन्द्रहणं वृणे ॥ अमृत्युं मृतपुत्राहं येन मे घातितौ सुतौ ॥३७॥ निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ॥ अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥३८॥ अहो अद्येन्द्रियारामो योषिन्मय्येह मायया ॥ गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥३९॥ कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः ॥ धिङ्मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः[1] ॥ ४० ॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ॥ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥४१॥ न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ॥ पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥ ४२ ॥ प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ॥ वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥ इति संचिन्त्य भगवान्मारीचः कुरुनन्दन ॥ उवाच किंचित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥ ॥ कश्यप उवाच ॥ पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः ॥ संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥४५॥ ॥ दितिरुवाच ॥ धारयिष्ये व्रतं ब्रह्मन्ब्रूहि कार्याणि यानि मे ॥ यानि चेह निषिद्धानि न व्रतं घ्नन्ति यानि तु ॥४६॥ ॥ कश्यप उवाच ॥ न हिंस्याद्भूतजातानि न शपेन्नानृतं वदेत् ॥ न च्छिन्द्यान्नखरोमाणि न स्पृशेद्यदमङ्गलम् ॥ ४७ ॥ नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ॥ न वसीताधौतवासः स्रजं[3] च विधृतां क्वचित् ॥४८॥ नोच्छिष्टं चण्डिकान्नं[4] च सामिषं वृषलाहृतम् ॥ भुञ्जीतोदक्यया दृष्टं पिबेदञ्जलिना त्वपः ॥ ४९ ॥ ॥ ॥

धारयिष्यसि तर्हीन्द्रहा भविष्यति । वैगुण्ये तु देवबान्धवो भविष्यति वैष्णवत्वाद्व्रतस्य, कथंचिद्वैगुण्येऽपि सति सर्वथा वैकल्याभावात् ॥ ४५ ॥ कार्याण्यावश्यकानि । व्रतं यानि न घ्नन्ति नावश्यकानि नच निषिद्धानि किंत्वभ्यनुज्ञातानि । तानि सर्वाण्यपि ब्रूहि ॥ ४६ ॥ तत्रैकत्रिंशन्निषेधानाह—न हिंस्यादिति पञ्चभिः । न शपेन्नाक्रोशेत् । यदमङ्गलं कपालास्थ्यादिकं तन्न स्पृशेत् ॥ ४७ ॥ नाप्सु प्रविश्य स्नायात् । पूर्वं विधृतां स्रजं पुनर्न धारयेत् ॥ ४८ ॥ भोजने पञ्च निषेधानाह—नोच्छिष्टमिति । चण्डिकान्नं भद्रकाल्यै निवेदितं पिपीलिकादिदूषितं वा । अञ्जलिना त्वपो न पिबेत् ॥ ४९ ॥ ॥ ॥

१ 'यदहं लालितेन्द्रियः' इति वीर० पाठः । २ 'धान्युत' इति पाठः । ३ अत्र पूर्ववाक्यस्थनञः सबन्धः । 'स्रज न विधृतां' इति पाठः । ४ 'चण्डिका स्यात्पिपीलिका' इत्यभिधानात् ।

गृहाद्बहिर्निर्गमे सप्त निषेधानाह—नोच्छिष्टेति । अनर्चिता मण्डनहीना । असंवीताऽप्रावृता ॥ ५० ॥ शयनेऽष्टौ निषेधानाह—नाधौतपादेति । नापराक्पश्चिमशिराः ॥ ५१ ॥ कार्याण्याह—धौतवासा इति द्वाभ्याम् । प्रातराशात् प्रथमभोजनात् ॥ ५२ ॥ वीरवतीर्जीवद्भर्तृकाः । आर्च्य संपूज्य कोष्ठगतं कुक्ष्यन्तरगतम् ॥ ५३ ॥ पुंसवनं पुत्रोत्पत्तिकरम् । तुभ्यं तव ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ हरिरिन्द्रो व्रतस्य च्छिद्रं प्रेप्सुः प्राप्तुमिच्छुः । जिह्मः कुटिलः

नोच्छिष्टास्पृष्टसलिला सन्ध्यायां मुक्तमूर्धजा ॥ अनर्चिताऽसंयतवाङ्नासंवीता बहिश्चरेत् ॥ ५० ॥ नाधौतपादाऽप्रयता[2] नार्द्रपान्नो उदक्शिराः ॥ शयीत नापराङ्नान्यैर्न नग्ना न च सन्ध्ययोः ॥ ५१ ॥ धौतवासाः शुचिर्नित्यं सर्वमङ्गलसंयुता ॥ पूजयेत्प्रातराशात्प्राग्गोविप्रान् श्रियमच्युतम् ॥५२॥ स्त्रियो वीरवतीश्चार्चेत्स्रग्गन्धबलिमण्डनैः ॥ पतिं चार्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम्[1] ॥ ५३ ॥ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ॥ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥ बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः ॥ काश्यपं गर्भमाधत्त व्रतं चाञ्जो[3] दधार सा ॥५५॥ मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ॥ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ॥ ५६ ॥ नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ॥ पत्राङ्कुरमृदोऽपश्च काले काल उपाहरत् ॥५७॥ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ॥ प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ॥ चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९ ॥ एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ॥ अस्पृष्टवार्यधौताङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥ लब्ध्वा तदन्तरं शक्रो निद्रापहृतचेतसः ॥ दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥ चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥ रुदन्तं सप्तधैकैकं मा रोदीरिति तान्पुनः ॥६२॥ ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप ॥ नो जिघांससि किमिन्द्र भ्रातरो मरुतस्तव ॥६३॥ मा भैष्ट भ्रातरो मह्यं[4] यूयमित्याह कौशिकः ॥ अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥ ॥ ॥

साधुवेषः । मृगहा लुब्धको यथा मृगवञ्चनाय मृगवेषो भवति तद्वत् ॥ ५८ ॥ केन मे शिवं स्यादिति चिन्तां प्राप्तः ॥ ५९ ॥ अस्पृष्टवारिश्चासावधौताङ्घ्रिश्च ॥ ६० ॥ निद्रयापहृतं चेतो यस्याः ॥ ६१ ॥ मा रोदीरित्युपलालयन्निव तान्पुनः सप्तधा चकर्त चिच्छेद ॥ ६२ ॥ ६३ ॥ कौशिक इन्द्रः । गणान्सस । 'सप्तगणा वै मरुतः' इति श्रुतेः ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥३८॥

१ स्वपतिमेव स्वोदरगत ध्यायेत् । एतावता निषिद्धावश्यकयोः कथने अनिषिद्धानि अनावश्यकानि च कथितप्रायाण्येव । २ अप्रयता अपवित्रा । ३ अञ्जः यथावत् शीघ्रं वा । ४ मह्य मम ।

॥ ६५ ॥ ६६ ॥ सजूः सह ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ दित्या निष्कपटमुक्ते सतीन्द्रोऽपि निष्कपटमेवाह—अम्बेति । लब्धमन्तरं येन । अर्थे एव बुद्धिर्यस्य ॥ ७१ ॥ ७२ ॥ ७३ ॥ अपि परं मोक्षमपि ॥ ७४ ॥ गुणस्पर्शं विषयभोगं बुधः को वृणीते । यद्यस्मान्नरकेऽपि विषयभोगः स्यात् ॥७५॥ महीयसि

न ममार दितेर्गर्भः श्रीनिवासानुकम्पया ॥ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥ सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यताम्[1] ॥ संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥ सजूरिन्द्रेण पञ्चाशद्देवास्ते मरुतोऽभवन् ॥ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७ ॥ दितिरुत्थाय ददृशे कुमाराननलप्रभान् ॥ इन्द्रेण सहितान्देवी पर्यतुष्यदनिन्दिता ॥६८॥ अथेन्द्रमाह तताहमादित्यानां भयावहम् ॥ अपत्यमिच्छन्त्यचरं व्रतमेतत्सुदुष्करम् ॥६९॥ एकः संकल्पितः पुत्रः सप्त सप्ताभवन्कथम् ॥ यदि ते विदितं पुत्र सत्यं कथय मा मृषा ॥७०॥ ॥इन्द्र उवाच॥ अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ॥ लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥७१॥ कृत्तो मे सप्तधा गर्भ आसन्सप्त कुमारकाः ॥ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥७२॥ ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ॥ महापुरुषपूजायाः सिद्धिः काप्यानुषङ्गिणी ॥ ७३ ॥ आराधनं भगवत ईहमाना निराशिषः ॥ ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥७४॥ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् ॥ को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥ तदिदं मम दौर्जन्यं बालिशस्य महीयसि ॥ क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥७६॥ ॥श्रीशुक उवाच॥ इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ॥ मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥७७॥ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ मङ्गलं मरुतां जन्म किं भूयः कथयामि ते ॥७८॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धेऽष्टादशोऽध्यायः ॥१८॥ ॥छ॥ ॥

॥ राजोवाच ॥ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम् ॥ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥ ॥

महत्तमे । मृतः सन्नुत्थितः ॥७६॥७७॥७८॥ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे भा० दी० टीकायामष्टादशोऽध्यायः ॥१८॥ ॥छ॥ ॥ ऊनविंशे तु यत्प्रोक्तं कश्यपेन दितेर्व्रतम् ॥ तदेव विवृतं लोकहिताय हरितोषणम् ॥ १ ॥ तस्य प्रकारमिति शेषः ॥ १ ॥ ॥ ॥ ॥ ॥

१ समशब्दाच्चतुर्वर्णादित्वात्स्वार्थे ष्यञि तदन्ताट्टल् । समानरूपतामित्यर्थः । 'सात्मताम्' इति चक्र० पाठः ।

मार्गशिरे मासे शुक्लपक्षे । आदितः प्रतिपदि ॥ २ ॥ अनुमन्त्र्य पृष्ट्वा । शुक्ला दन्ता यस्याः सा शुक्लदती धौतदन्ता । अलंकृता सती पूजयेत् ॥ ३ ॥ आदौ तावन्नमस्कारमन्त्रानाह त्रिभिः । तुभ्यमलं पर्याप्तमेव सर्वं न किंचिदन्यैः कृत्यमस्ति, अतः केवलं ते तुभ्यं नमोऽस्तु । पर्याप्तौ हेतवः—निरपेक्षाय हे पूर्णकाम, महाविभूतिपतये लक्ष्मीपतये । सकलाः सिद्धयोऽणिमाद्या यस्मिंस्तस्मै ॥ ४ ॥ भो ईश, यथा यथावत् । त्वं कृपादिभिर्जुष्टः । अन्यैश्च सत्यसंकल्पत्वादिभिः



॥ श्रीशुक उवाच ॥ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ॥ आरभेत व्रतमिदं सार्वकामिकमादितः ॥२॥ निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ॥ स्नात्वा शुक्लदती शुक्ले वसीतालंकृताम्बरे ॥ पूजयेत्प्रातराशात्प्राग्भगवन्तं श्रिया सह ॥ ३ ॥ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ॥ महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥ यथा त्वं कृपया भूत्या तेजसा महिनौजसा ॥ जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान्प्रभुः ॥ ५ ॥ विष्णुपत्नि महामाये महापुरुषलक्षणे ॥ प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सहमहाविभूतिभिर्बलिमुपहराणीति ॥ अनेनाहरहर्मन्त्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगन्धपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥ हविःशेषं तु जुहुयादनले द्वादशाहुतीः ॥ ॐनमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥८॥ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ॥ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसम्पदः ॥९॥ प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा ॥ दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥ १० ॥ युवां तु विश्वस्य विभू जगतः कारणं परम् ॥ इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया ॥११॥ तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः ॥ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥१२॥ गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान् ॥ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशया ॥ नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः ॥१३॥ यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ॥ तथा म उत्तमश्लोक सन्तु सत्या महाशिषः ॥१४॥

सर्वैर्गुणैः । ततस्तस्मात् ॥ ५ ॥ महापुरुषस्य परमेश्वरस्येव लक्षणानि निरपेक्षत्वादीनि यस्यास्तस्याः संबोधनम् ॥ ६ ॥ पूजामन्त्रमाह—ॐ नम इति ॥ ७ ॥ हविःशेषमुपहारावशिष्टम् । होममन्त्रं दर्शयति—ओमिति ॥ ८ ॥ प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ ॥ ९ ॥ १० ॥ ११ ॥ इज्या यज्ञाभिनिवर्तकः पुरुषव्यापारो भावनाख्यः । क्रिया लौकिकी ॥ १२ ॥ प्रत्ययो नामरूपयोः प्रकाशकः । अपाश्रयस्तयोराधारः ॥ १३ ॥ १४ ॥ ॥ ॥



१ 'प्रिये धामे' इति पाठः । तत्र सर्वलोकसपदाश्रयभूते इत्यर्थः । २ 'समाहितोपाहरेत्' इति पाठः ।

॥ १५ ॥ १६ ॥ महापुरुषचेतसा ईश्वरबुद्ध्योपनमेद्भजेत् । पतिश्च स्वयं प्रेमशीलः सन् पत्न्याः कर्माणि बिभृयात् । तदनुकूलो भवेदित्यर्थः ॥ १७ ॥ यतो दम्पत्योर्मध्ये एकतरेण कृतमुभयोरपि भवति ॥ १८ ॥ न विहन्यान्न विच्छिन्द्यात् ॥ १९ ॥ २० ॥ द्वादशमासानित्युक्ते कदाचित्तन्मध्ये मलमासे सति तेन सह द्वादश संख्यायां सत्यां शुद्धस्यैकस्य त्यागः स्यात् । हायनमित्युक्ते तन्मध्यपतितस्य तस्यापि प्रसङ्गः स्यात् । तदुभयं वारयितुमुभयमुक्तम् ।

इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ॥ तन्निःसार्योपहरणं दत्त्वाचमनमर्चयेत् ॥ १५ ॥ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ॥ यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १६ ॥ पतिं च परया भक्त्या महापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः ॥ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ १७ ॥ कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः ॥ १८ ॥ विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथंचन ॥ विप्रान्स्त्रियो वीरवतीः स्रग्गन्धबलिमण्डनैः ॥ अर्चेदहरहर्भक्त्या देवं नियममास्थितः ॥१९॥ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ॥ अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा ॥ २० ॥ एतेन पूजाविधिना मासान्द्वादश हायनम् ॥ नीत्वाऽथोपचरेत्साध्वी कार्तिके चरमेऽहनि ॥२१॥ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ॥ पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ॥ पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २२ ॥ आशिषः शिरसादाय द्विजैः प्रीतैः समीरिताः ॥ प्रणम्य शिरसा भक्त्या भुञ्जीत तदनुज्ञया ॥२३॥ आचार्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः ॥ दद्यात्पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम् ॥ २४ ॥ एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह ॥ स्त्री त्वेतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥ २५ ॥ कन्या च विन्देत समग्रलक्षणं वरं त्ववीरा हतकिल्बिषा गतिम् ॥ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २६ ॥ ॥

उपचरेदुपवसेत् ॥ २१ ॥ श्वोभूते प्रभाते सति । पयसि शृतेन पक्वेन । पाकयज्ञविधानेन पार्वणस्थालीपाकविधानेन ॥ २२ ॥ २३ ॥ सुप्रजास्त्वं सत्पुत्रत्वमित्यर्थः । तद्यतस्तं शेषम् ॥ २४ ॥ २५ ॥ अवीरा विधवा । धनेश्वरी सत्यपि या सुदुर्भगा सा सुभगा भवति ॥ २६ ॥ ॥ ॥

१ यस्मिन्वर्षेऽधिको न स्यात्तस्मिन्वर्ष इत्यर्थः । द्वादशमासयुक्तं हायनं मलमासयुक्तहायनव्यतिरिक्तमित्यर्थः सिद्धां० । २ तदुपहरणं नैवेद्यं निःसार्य पूजादिद्रव्यमपनीय । ३ द्वाविंशतिश्लोकोत्तर 'ब्राह्मणान्भोजयेद्भक्त्या साध्वन्नैर्द्वादशात्मवित् । तेभ्यो दद्यात्तिलान्राजन् सोदपात्रान्गुडान्वितान् ॥' इत्यधिकं वीर० विज० पाठे । ४ शोभनं सौभगं यस्मात्तमिति चरुशेषविशेषणम् । ५ यत्तच्छब्दाध्याहारेण यतः सत्पुत्रत्वं भवति तं शेषमित्यर्थः । 'अवीरा निष्पतिसुता' इत्यमरात् पतिपुत्ररहिता ज्ञेया ।

य आमयावी रोगी स विरुजा विशिष्टया रुजा विमुच्यते । इन्द्रियैः सहितं कल्पं देहं च विन्देदिति शेषः । पठन्यो वर्तेत तस्य पितॄणां देवतानां चानन्ता तृप्तिर्भवतीत्यर्थः ॥ २७ ॥ उपसंहरति—राजन्निति । महत्पुण्यं जन्म महद्व्रतं च ॥ २८ ॥ षष्ठस्कन्धनिगूढार्थपदभावार्थदीपिका ॥ सद्भिरासेव्यतामेषा

विन्देद्विरूपा विरुजा विमुच्यते य आमयावीन्द्रियकल्पदेहम् ॥ एतत्पठन्नाभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ २७ ॥ तुष्टाः प्रयच्छन्ति समस्तकामान्होमावसाने हुतभुक् श्रीहरिश्च ॥ राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २८ ॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां वैयासिक्यां पारमहंस्यां संहितायां षष्ठस्कन्धे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥

॥ समाप्तोऽयं षष्ठः स्कन्धः ॥

यतिश्रीधरनिर्मिता ॥ १ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां एकोनविंशोऽध्यायः ॥ १९ ॥

॥ समाप्तोऽयं षष्ठः स्कन्धः ॥ ६ ॥



॥ इति श्रीमद्भागवते पञ्चमस्कन्धः समाप्तः ॥

# अथ भागवतसप्तमस्कंधप्रारंभः ।



॥ नृसिंहावतार ॥

॥ स्वभक्तपक्षपातेन तद्विपक्षविदारणम् ॥ नृसिंहमद्भुतं वन्दे परमानन्दविग्रहम् ॥ १ ॥ ऊतिः पञ्चदशाध्यायैः ससमे वर्ण्यतेऽधुना ॥
श्रीगणेशाय नमः ॥ ॥ स्वभक्तपक्षपातेन तद्विपक्षविदारणम् ॥ अशुभा महतां कोपाच्छुभा महदनुग्रहात् ॥ ३ ॥ हरेर्द्वारपयोर्थै-
ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ २ ॥ अशुभा च शुभा चेति द्विधा सा हेतुभेदतः ॥ नारदानुग्रहादास विष्णौ सद्भक्तिवासना ॥५॥
द्वैकुण्ठे वसतोरपि ॥ चतुःसनरुषा विष्णुद्वेषाद्यशुभवासना ॥४॥ यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा ॥ इत्येतदर्थमूतीनामत्र लक्ष-
स्वभक्तं च सदा विष्णुर्द्विषन्तमपि रक्षति ॥ तृतीयेऽथ भवे द्वास्थावकरोदात्मसात्पुनः ॥६॥ अतो मनीषिणा यत्नः कार्यो महदनुग्रहे ॥ परस्तु पञ्चभि-
णमुच्यते ॥ ७ ॥ तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः ॥ सद्वासना च युज्येत कर्मभिः शुद्धचेतसः ॥ ८ ॥ महत्कोपानुकम्पोत्थवासना भेद उच्यते ॥
स्तस्मात्क्रियते धर्मनिर्णयः ॥९॥ तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ॥ विष्णुभक्ते विरोधस्तु विप्रशापज ईर्यते ॥१०॥ यदुक्तं पूर्वस्कन्धान्ते 'हतपुत्रा दितिः

॥ श्रीगोपालकृष्णाय नमः ॥ ॥ राजोवाच ॥ समः प्रियः सुहृद्ब्रह्मन्भूतानां भगवान्स्वयम् ॥ इन्द्रस्यार्थे कथं दैत्यान[2]-
वधीद्विषमो[3] यथा ॥१॥ नह्य[illegible]र्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥२॥
इति नः सुमहाभाग नाराय[illegible]गुणान्प्रति ॥ संशयः सुमहान् जातस्तद्भवाञ्छेत्तुमर्हति ॥ ३ ॥ ॥ श्रीशुक उवाच ॥
साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ॥ यत्र[4] भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥४॥ गीयते परमं पुण्यमृषिभिर्ना-
रदादिभिः ॥ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥५॥ (जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत् ॥
लब्ध्वापि मोक्षनिःश्रेणीं स नारोहति दुर्मतिः ॥१॥ तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम् ॥ शृणुयात्कीर्तयेन्नित्यं
स कृतार्थो न संशयः ॥ २ ॥ तस्माद्धीमन्कथां पुण्यां गोविन्दचरिताश्रिताम् ॥ महापुण्यप्रदां यस्माच्छृणुष्व नृपस-
त्तम ॥ ३ ॥) निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान्प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥

शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥' इति तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति—सम इति त्रिभिः । नहि समस्य सुहृदश्च
वैषम्यं नामास्ति । नच प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः ॥ १ ॥ किंच यस्य यैः प्रयोजनं सिध्यति स तत्पक्षपाती भवति, येभ्यो बिभेति तान्द्वेषेण हन्ति
नतु तदत्रास्तीत्याह—नहीति । निःश्रेयसं परमानन्द एव आत्मा स्वरूपं यस्य । असुरेभ्यश्चोद्वेगो भयं नास्ति । अतो विद्वेषोऽपि नास्त्येव । तत्र हेतुः—अगु-
णस्येति । गुणाधीनौ प्रीतिद्वेषावित्यर्थः ॥२॥ श्रीनारायणस्य गुणाननुग्रहनिग्रहादीन् प्रति । तत्तं संशयम् ॥३॥ भागवतस्य प्रह्लादस्य माहात्म्यं गीयत इति संबन्धः
॥४॥ कृष्णाय व्यासाय । कृष्णं मुनिं नत्वेत्यर्थः ॥५॥ यस्मात्प्रकृतेः परः । अतो निर्गुणः । अत एवाजः । अत एवाव्यक्तो रागद्वेषादिनिमित्तभूतदेहेन्द्रियादिरहितः ।
सोऽपि स्वमायागुणं सत्त्वादिकमाविश्याधिष्ठाय बाध्यान्प्रति । यद्वा देवासुराणां परस्परं या बाध्यबाधकता तां गतः प्राप्तः । तत्र हेतुजात इत्यर्थः ॥ ६ ॥

१ 'विष्णोः' इति पाठः । २ 'दैत्यावधीत्' इति पाठः । ३ विषमो यथा विषम इव विषमत्वमुपलक्षणं अप्रिय इवासुहृदिवेति चेति । ४ अत्राक्षराधिक्यमार्षम् । 'यद्भागवतमाहा-
त्म्यं' इति पाठः । ५ एतच्छ्लोकत्रयं व्याख्यारहितमधिकं वीर० पाठे । ६ तत् विष्णोरिन्द्रपक्षपातित्वम् । ७ बाध्यान्प्रति बाधकता गत इत्यर्थः ।

तत्र गुणानां स्वीयत्वे सति प्राकृतपुरुषवद्विषमः स्यात्तत्तु नास्तीत्याह—सत्त्वमिति । ननु स्वेच्छया गुणाधिष्ठानेनापि पक्षपातवैषम्यं स्यादेव, न । तस्य कालकृतत्वादित्याह—न तेषामिति सार्धेन । उल्लासो वृद्धिः ॥७॥ सत्त्वस्य जयकाले देवादीनृषींश्चाभजत् । तत्तद्देहं प्रविश्य वर्धयतीत्यर्थः । रजसो जयकालेऽसुरान् । तमसो जयकाले यक्षरक्षांसि । तस्य कालस्यानुगुणः सन् ॥८॥ समस्यापि निमित्तभेदेन वैषम्ये दृष्टान्तः—ज्योतिरादिरिव । ज्योतिरग्निर्यथा काष्ठादिषु । जलं यथा पात्रेषु । आकाशो यथा घटादिषु । तथा भगवान्नानारूप आभाति । ननु तर्हि तद्वदेव विवेकेन किं न प्रतीयते तत्राह—संघातात्सुरादिदेहान्न विविच्यते न पृथक् प्रतीयते । तर्हि तान्भजतीति कुतो ज्ञायते तत्राह—विदन्तीति । आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिङ्गेन विचार्य जानन्ति । अन्ततः स्वभावकालकर्मादिवादनिषेधेन । विन्दन्तीति पाठे लाभोऽपि ज्ञानमेव । अत्रापि ज्योतिरादिरिवेति द्रष्टव्यम् । यथा सूर्यकान्तादौ दाहदर्शनाज्ज्योतिर्ज्ञायते । यथा च गन्धदर्शनाद्वायुरित्यादि ॥९॥ तदेवं मायागुणवशेनैतद्वैषम्यं न स्वाभाविकमित्युक्तम्, तर्हि गुणपारतन्त्र्यादनीश्वरत्वमाशङ्क्याह—यदा आत्मनो जीवस्य भोगाय

सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ न तेषां युगपद्राजन् ह्रास उल्लास एव वा ॥ ७ ॥ जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ॥ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥ ८ ॥ ज्योतिरादिरिवाभाति संघातान्न विविच्यते ॥ विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥ यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया ॥ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥ कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् ॥ य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः ॥ तत्प्रत्यनीकानसुरान्सुरप्रियो रजस्तमस्कान्प्रमिणोत्युरुश्रवाः ॥ ११ ॥ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ॥ प्रीत्या महाक्रतौ राजन्पृच्छतेऽजातशत्रवे ॥ १२ ॥

पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा साम्येन स्थितं रजः पृथक् सृजति । विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्यदा सत्त्वं तदा पृथक् सृजति । शयिष्यमाणः संहरिष्यन्यदा तदा तमः पृथगीरयति प्रेरयति, आधिक्यं नयतीत्यर्थः ॥ १० ॥ यदा सिसृक्षुरित्यादिनिर्देशात्प्रतीतं कालपारतन्त्र्यं वारयन् प्रधानपुरुषपारतन्त्र्यमपि वारयति—कालमिति । हे नरदेव, प्रधानपुंभ्यां निमित्तभूताभ्यां सत्यकृदमोघकर्ता ईशस्तयोः सहकारित्वेनाश्रयभूतं चरन्तं वर्तमानं कालं स्वयमेव सृजति । स्वचेष्टारूपत्वात्कालस्य न तत्पारतन्त्र्यमित्यर्थः । तथापि प्रस्तुते किमायातं तत्राह—य एष कालः सत्त्वमेधयति वर्धयत्यतो हेतोरीशिताऽपीश्वरोऽपि सत्त्वप्रधानं सुरानीकं देवसमूहमेधयतीव । तत्प्रत्यनीकानसुरान्सुरप्रतिपक्षान् प्रमिणोति हिनस्ति चेत्यन्वयः । उरु प्रभूतं श्रवः कीर्तिर्यस्य सः । कालशक्तिक्षुभितगुणगतवैषम्यमिह सन्निधिमात्रेण तदधिष्ठातरि स्फुरतीति प्रकरणार्थः ॥ ११ ॥ तदानीं तयोर्न सुरपक्षपातेन वधः किंतु ब्रह्मशापेनासुरीं योनिं प्राप्तयोरनुग्रहार्थं एवेति वक्तुमितिहासमुपक्षिपति—अत्रैवेति । अत्र द्वेषादिरहितस्यापि दैत्यवधे नारदेनेतिहासः प्रस्तावितः ॥ १२ ॥ ॥ ॥ 

१ जलं यथा भूमिविशेषतः । उक्त च—'भूभागसयोगभव यथा स्यान्मृष्टं जल क्षारमथाविलं च ॥ मायाप्रसङ्गात्पुरुषस्तथात्मा सत्त्वादिभेदत्रयभावयुक्तः' इत्यधिकं टीकाया क्वचित् । २ ज्योतिःशब्देन घृतं यथा पयोदध्यादिषु इति वीर० । ३ सघातात् भोक्तृभोग्यदेहविलक्षणतया भोक्तृभोग्यनियन्तृपदार्थानभिज्ञैर्न ज्ञायते इति सिद्धां० । ४ 'उन्नाह' इति पाठः । ५ अत्र 'स तत्र तत्रोभयसिद्धिमाप्नुयाल्लिङ्गात्मनो लिङ्गगुणाश्च सन्ति' इति विज० अधिकम् । ६ रिरंसुः शिष्टपालनलक्षणं रमणं चिकीर्षुः ।

चेदिभूभुजः शिशुपालस्य ॥ १३ ॥ १४ ॥ एकान्तभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि ॥ १५ ॥ तस्य तु वेनवन्नरकपात एवोचित इत्याह—भगवन्निन्दयेति । तमसि नरके ॥१६॥ दमघोषस्य सुतः शिशुपालः । कलभाषणाद्बाल्यकोमलभाषणमारभ्य । संप्रत्यधुनाप्यमर्षी क्रोधी मत्सरी वा ॥ १७ ॥ श्वित्रः श्वेतकुष्ठम् ॥१८॥ दुरवग्राहं दुष्प्रापं धाम स्वरूपं यस्य तस्मिन् लयं सायुज्यमीयतुर्जग्मतुः । अभूतस्यापि दन्तवक्रलयस्य तज्ज्ञातकप्रामाण्येन सिद्धवन्निर्देशः ॥१९॥ एतदद्भुततममत एतत्प्रति मे धीर्भ्राम्यति । भगवान् सर्वज्ञस्त्वं ब्रूहि ॥ २० ॥ आभाष्य संबोध्य । सीदन्ति निषीदन्त्यस्यामिति सद् सभा तस्याः सदः सदसः शृण्वत्याः सत्याः कथाः प्राहेत्यन्वयः ॥२१॥ अहो भगवन्निन्दकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः । भगवत्पीडाकरत्वेन वा तदभावेऽपि

दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ॥ वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥१३॥ तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ ॥ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥१४॥ ॥ युधिष्ठिर उवाच ॥ अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि ॥ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥१५॥ एतद्वेदितुमिच्छामः सर्व एव वयं मुने ॥ भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥१६॥ दमघोषसुतः पाप आरभ्य कलभाषणात् ॥ संप्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः ॥१७॥ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ॥ श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥१८॥ कथं तस्मिन्भगवति दुरवग्राहधामनि ॥ पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥१९॥ एतद्भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ॥ ब्रूह्येतदद्भुततमं भगवांस्तत्र कारणम् ॥२०॥ ॥ श्रीशुक उवाच ॥ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः ॥ तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः ॥ २१ ॥ ॥ नारद उवाच ॥ निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ॥ प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥२२॥ हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा ॥ वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २३ ॥ यन्निबद्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः ॥ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ॥ परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २४ ॥

सुरापानादिवन्निषिद्धनिन्द्याचरणाद्वा तत्र तावद्देहाभिमानकृतनिन्दादिनिमित्तत्वात्पीडादीनां भगवतश्च तदभावान्न पीडाशङ्कास्तीत्याह—निन्दनेति सार्धैस्त्रिभिः । निन्दनं दोषकीर्तनम् । न्यक्कारस्तिरस्कारः । निन्दास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोरविवेकेन कलेवरं कल्पितं रचितम् ॥२२॥ तदभिमानेन भूतानां यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्येत्युत्तरेणान्वयः । दण्डस्ताडनं पारुष्यं निन्दा तयोर्हेतुभूतयोर्हिंसा पीडा च भवति ॥२३॥ यस्मिन्निबद्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा तथा यस्याभिमानो नास्ति । अतोऽस्य परमेश्वरस्य हिंसा केन हेतुना कल्प्यते न केनापीति । अभिमानाभावे हेतुः—कैवल्यादद्वितीयत्वेनाभिसन्तव्याभावात् । वैषम्याभावे हेतुः—अखिलात्मनः सर्वात्मन इति । तर्हि किमिति हन्ति दैत्यांस्तत्राह—परस्य दमकर्तुः हितार्थं दण्डं करोतीत्यर्थः ॥२४॥

१ एकान्तिना निष्परिग्रहाणामपि । २ अन्धं तमः नरकम् । ३ 'दुरवग्राह्यधामनि' इति वीर० विज० पाठः । ४ तत्र लये । 'भगवानत्र' इति वीर० पाठः । ५ निन्दास्तवौ वाचिकौ दोषगुणौ, सत्कारन्यक्कारौ कायिकौ मानसौ च तदर्थं इति चक्र० ।

यस्माद्भगवतो निन्दादिकृतवैषम्यं नास्ति तस्माद्येन केनाप्युपायेन ध्यायतस्तेनैव ध्यानेन निन्दादिकृतपापस्यापि नाशात्सायुज्यं युक्तमित्याशयेनाह—तस्मादिति सप्तभिः। निर्वैरेण नास्ति वैरं केनापि यस्मिंस्तेन भक्तियोगेनेत्यर्थः। युञ्ज्यान्मन इति शेषः। यस्मादेतैरुपायैः पृथङ्नेक्षते ॥२५॥ तेष्वपि वैरानुबन्धः श्रेष्ठ इत्याह—यथेति। न तथा भक्तियोगेनापि ॥२६॥ अत्र दृष्टान्तः—कीटः पेशस्कृता भ्रमरेण। संरम्भो द्वेषो भयं च स एव योगस्तेन ॥ २७ ॥ वैरेण यानुचिन्ता चिन्तनं तयैव पूतः पाप्मा येषां ते तं प्रापुः ॥२८॥ तदघं कामादिनिमित्तं पापं हित्वा ॥२९॥ तानाह—गोप्य इति ॥३०॥ तर्हि वेनः किमिति नरके पातितः। तीव्रध्यानाभावात्पापमेव तस्य फलितमित्याह—कतमोऽपीति। पुरुषं श्रीहरिं प्रति। पुरुषे पुरुषस्य कामासंभवाद्भयादिभिश्चिन्तयतां पञ्चानां मध्ये वेनो न कतमोऽपीत्युक्तम्।

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा ॥ स्नेहात्कामेन वा युञ्ज्यात्कथंचिन्नेक्षते पृथक् ॥ २५ ॥ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ॥ न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २६ ॥ कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् ॥ संरम्भभययोगेन विन्दते तैत्सरूपताम् ॥ २७ ॥ एवं कृष्णे भगवति मायामनुज ईश्वरे ॥ वैरेण पूतपाप्मानस्तमापुँरनुचिन्तया ॥ २८ ॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ॥ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २९ ॥ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ॥ संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥ ३० ॥ कतमोऽपि न वेनः स्यात्पञ्चानां पुरुषं प्रति ॥ तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१ ॥ मातृष्वस्रेयो वश्चैद्यो दन्तवक्रश्च पाण्डव ॥ पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्च्युतौ ॥ ३२ ॥ ॥ युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ॥ अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३३ ॥ देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ॥ देहसंबन्धसंबद्धमेतदाख्यातुमर्हसि ॥ ३४ ॥ ॥ नारद उवाच ॥ एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ॥ सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ३५ ॥ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ॥ दिग्वाससः शिशून्मत्वा द्वास्थौ तान्प्रत्यषेधताम् ॥ ३६ ॥ ॥ ॥

॥३१॥ तदेवमितिहासप्रस्तावकथामुक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबन्धे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह—मातृष्वस्रेय इति। पदाद्वैकुण्ठाच्च्युतौ ॥३२॥ हरिदासावभिमृशत्यभिभवतीति तथा। कस्य शापः। कीदृशो वा। अश्रद्धेयोऽनादरणीय इव असंभवात्। भवो जन्म ॥३३॥ असंभवमेवाह—जन्महेतुभूतैः प्राकृतैर्देहेन्द्रियासुभिर्हीनानाम्। शुद्धसत्त्वमयदेहानामित्यर्थः। प्राकृतदेहसंबन्धेन संबद्धमेतदाख्यानमाख्यातुमर्हसि ॥ ३४ ॥ ३५ ॥ कथंभूताः। पञ्च वा षड्वा हायनानि वर्षाणि येषां ते। अर्भा बालास्तद्वदाभा येषां ते। पूर्वेषां मरीच्यादीनामपि पूर्वजास्तेभ्यः प्रथमं जाताः। दिग्वाससो दिगम्बराः अतः शिशून्मत्वा ॥ ३६ ॥ 

१ तथा निन्दकस्य च पापक्षयः संभवेत्। २ वैरानुबन्धेन वैरे वैरभावे अनुबन्धः सातत्यं यद्वा वैरे इव अनुबन्धश्चित्ताभिनिवेशो यत्र वेन। ३ सरूपतां समानाकारतां। 'तत्स्वरूपतां' इति पाठे तस्य स्वं आत्मीयं रूपमाकृतिर्यत्र ताम्। ४ 'तमीयुः' इति पाठः, तत्रापि प्रापुरित्येवार्थः। ५ प्रत्यषेधतां निवारितवन्तौ।

वासमपि नार्हथः, कुतः पुनस्तत्सेवामिति चकारार्थः । हे बालिशौ । अतो हेतोराशु यातम् ॥३७॥ वां युवयोस्त्रिभिर्जन्मभिः । लोकाय स्वस्थानप्राप्तये कल्पतां
तावतायं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः ॥ ३८ ॥ ३९ ॥ धरोद्धारनिमित्ते तत्प्रतिघाती हतः ॥ ४० ॥ हिरण्यकशिपोर्वधे कारणं सूचयति—
हिरण्यकशिपुः पुत्रमिति ॥ ४१ ॥ सर्वभूतानामात्मभूतम् । कुतः । समं ब्रह्मैव पश्यतीति तथा तम् । अतः प्रशान्तं द्वेषादिरहितम् । अत एव भगवत्तेजसा
स्पृष्टं व्याप्तम् । उद्यमैः शस्त्रास्त्रप्रहारादिभिः ॥ ४२ ॥ विश्रवसः सुतौ ॥ ४३ ॥ न्यहनत्, हतवानित्यर्थः । तर्हि तदेव कथनीयमित्युत्सुकं प्रत्याह—

अशपन्कुपिता एवं युवां वासं न चार्हथः ॥ रजस्तमोभ्यां रहिते पादमूले[2] मधुद्विषः ॥ पापिष्ठामासुरीं योनिं बालिशौ
यातमाश्वतः ॥ ३७ ॥ एवं शप्तौ स्वभवनात्पतन्तौ तैः कृपालुभिः ॥ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम्
॥३८॥ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ॥ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥३९॥ हतो हिरण्य-
कशिपुर्हरिणा सिंहरूपिणा ॥ हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४० ॥ हिरण्यकशिपुः पुत्रं प्रह्लादं केशव-
प्रियम् ॥ जिघांसुरकरोन्नाना[3] यातना मृत्युहेतवे ॥ ४१ ॥ सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम् ॥ भगवत्तेजसा स्पृष्टं
नाशक्नोद्धन्तुमुद्यमैः ॥ ४२ ॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ ॥ रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ
॥ ४३ ॥ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ॥ रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात्प्रभो ॥ ४४ ॥ तावेव
क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ॥ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४५ ॥ वैरानुबन्धतीव्रेण ध्यानेना-
च्युतसात्मताम्[4] ॥ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४६ ॥ ॥युधिष्ठिर उवाच ॥ विद्वेषो दयिते पुत्रे कथ-
मासीन्महात्मनि ॥ ब्रूहि मे भगवन्येन प्रह्लादस्याच्युतात्मता ॥४७॥ ॥इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
प्रथमोऽध्यायः ॥१॥ ॥छ॥ ॥नारद उवाच॥ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना[5] ॥ हिरण्यकशिपू राजन्पर्यत-
प्यद्रुषा शुचा ॥१॥ आह चेदं रुषाऽऽघूर्णः संदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन्धूम्रमम्बरम् ॥ २ ॥

रामवीर्यमिति ॥४४॥ कृष्णचक्रेण हतमंहो ययोस्तौ । तयोः पापमेव हतं नतु तावित्यर्थः ॥ ४५ ॥ ४६ ॥ येन कारणेन प्रह्लादस्याच्युतात्मताच्युतैकचित्तत्वं
तदपि ब्रूहीति शेषः ॥ ४७ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ द्वितीये
विष्णुरोपेण लोकं विप्लाव्य दानवैः ॥ तद्धतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ १ ॥ भगवद्द्वेष एव तद्द्वेषेऽपि कारणमित्याशयेनाह—भ्रातरीत्यादिना । ॥ ॥ ॥
एवं देवपक्षपातेन ॥ १ ॥ कोपेन उत् अतिशयेन ज्वलद्भ्याम् कोपाग्निधूमेनैव धूम्रमम्बरं निरीक्षमाणः ॥ २ ॥

१ धरोद्धरणान्तरायकर्ता । २ पादौ मूलमाश्रयो यस्य तस्मिन्वैकुण्ठे । ३ नाना यातना बहुविधतीव्रवेदनाकारणानि । ४ अच्युतेन सह स्थितौ आत्मानावाकारौ यस्य तस्य भावस्तत्ताम् ।
५ क्रोडमूर्तिना वराहरूपेण । 'क्रोडरूपिणा' इति पाठः ।

करालदंष्ट्राभिर्युक्तयोगया दृष्ट्या । दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः ॥ ३ ॥ ४ ॥ ५ ॥ समेनाप्युपधावनैर्भजनैर्निमित्तभूतैः पार्ष्णिग्राहेण सता ॥ ६ ॥ एवं त्यक्तः स्वभावः समत्वं येन तस्य । घृणेः शुद्धतेजोमयस्यापि मायया वनौकसो वराहरूपस्य सतः । अस्थिरात्मनोऽव्यवस्थितचित्तस्य । कुतः । यो यो भजति तं तं भजमानस्यानुसरतः ॥ ७ ॥ तस्य रुधिरेण यावत्तर्पयिष्यामि तावद्यूयं भुवं यातेति तृतीयेनान्वयः ॥ ८ ॥ ननु देवैस्तद्वधः कारितोऽतस्ते किं न हन्यन्ते तत्राह—तस्मिन्हरौ कूटे कपटे । अहिते प्रतिपक्षे । कूटमीहितं यस्येति वा । नष्टेऽदृष्टे सति देवाः शुष्यन्ति स्वयमेव नाशं यास्यन्ति । कुतः । विष्णुरेव प्राणो येषां ते । यथा कृत्तमूले वृक्षे शाखाः स्वयं शुष्यन्ति तद्वत् ॥ ९ ॥ तपोयज्ञादियुक्तान् सूदयध्वं घातयत ॥ १० ॥ ननु तैः किमपराद्धं तत्राह—विष्णुरिति ।

करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥३॥ भो भो दानवदैतेया द्विमूर्धन्त्र्यक्ष शम्बर ॥ शतबाहो हयग्रीव नमुचे पाक इल्वल ॥४॥ विप्रचित्ते मम वचः पुलोमन् शकुनादयः ॥ शृणुताऽनन्तरं सर्वे क्रियतामाशु मा चिरम् ॥ ५ ॥ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ॥ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥ भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ॥ रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥ तस्मिन्कूटेहिते नष्टे कृत्तमूले वनस्पतौ ॥ विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥ तावद्यात भुवं यूयं विप्रक्षत्रसमेधिताम् ॥ सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥ विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ॥ देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ॥ तं तं जनपदं यात संदीपयत वृश्चत ॥ १२ ॥ इति ते भर्तृनिर्देशमादाय शिरसादृताः ॥ तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥ १४ ॥ ॥ ॥

द्विजानां क्रिया अनुष्ठानं मूलं यस्य सः । यतोऽसौ यज्ञो धर्ममयश्च । देवादीनां परायणं परम आश्रयः । अतो यज्ञरूपस्य विष्णोर्मूलत्वान्मामनादृत्य तदाश्रयणाच्च ते वध्या इति भावः ॥ ११ ॥ तस्मात्परमं मन्त्रं शृणुतेत्याह—यत्र यत्रेति । संदीपयत दहत । वृश्चत आजीव्यानां वृक्षाणां छेदं कुरुत ॥ १२ ॥ १३ ॥ पुरं हट्टादिमत् । ग्रामस्तद्रहितः । व्रजो गवां वासः । उद्यानं कृत्रिमं वनम् । क्षेत्रं व्रीह्यादेः । आरामोऽकृत्रिमं वनम् । आश्रमः ऋषीणां स्थानम् । आकरो रत्नादीनाम् । खेटः कृषीवलानां वासः । खर्वटो गिरिद्रोण्याश्रयो ग्रामः । घोष आभीराणां वासः । पत्तनं राजधानी ॥ १४ ॥ ॥ ॥ ॥

१ वस्तुतस्तु तस्य भक्तवात्सल्यादेव समेत्यादि विशेषणपञ्चकं भवति । २ वागर्थस्तु मच्छूलाद्भिन्ना पृथग्भूता ग्रीवा यस्येति प्रा०तस्य मच्छूलस्य तत्राप्रवेशादित्यर्थः । रुधिरेण 'कुङ्कुमं रुधिरं प्रोक्तं' इत्यभिधानात्तदङ्गरागकुङ्कुमेन रुधिरप्रियं तन्निर्माल्यकुङ्कुमप्रियमिति चक्र० । ३ वागर्थे—कूटेहितेत्येकं पदं । कूटेषु कपटिष्वपि मद्विधेषु ईहितं युद्धचेष्टा यस्य इति चक्र० । यद्वा कूटे कूटस्थे एकरूपतया सर्वकालव्यापिनि, हिते भक्तसुहृदि इति क्रम० । ४ तावदिति यदि युष्माकमिच्छा तर्हि यावत्तद्दर्शनं तावद्यातेति योज्यम् । ५ 'ब्रह्मक्षत्र' इत्यपि पाठः । ६ इतीत्यादि नारदवाक्यम् ।

खनित्रैः खननसाधनैः । आजीव्यानुपजीव्यान् जम्ब्वाम्रकपित्थादीन् शरणानि गृहान् ॥ १५ ॥ विप्रकृते उपद्रुते । यज्ञभागानामभावाद्दिवं परित्याल-
क्षिताः सन्तो भुवि चेरुः ॥ १६ ॥ तदेवं प्रजानां कदनं दानवेषु कुर्वत्सु स्वयं स्वर्गराज्यादि साधयितुं तपस्तप्तुकामः प्रथमं यत्कृतवांस्तदाह—हिरण्यकशि-
पुरित्यादिना । कटोदकं प्रेताय प्रदेयमुदकम् । आदिशब्दात्प्रेतश्राद्धादिकम् ॥ १७ ॥ १८ ॥ १९ ॥ हे वधूरिति भ्रातुर्भार्यां संबोधयति ॥ २० ॥ भवतु नाम
तस्य श्लाघ्यो वधस्तथाप्यस्माकं तावद्बन्धुर्गत एवेति चेत्तत्राह—भूतानामिति । दैवेन प्राचीनकर्मणा एकत्र नीतानां संयोजितानां पुनश्च स्वैः स्वैः कर्मभिरु-
न्नीतानां वियोजितानाम् ॥ २१ ॥ एवं लौकिकदृष्ट्या शोकं निवार्य तत्त्वदृष्ट्या वारयति—नित्य इति । आत्मा नित्यो मृत्युशून्यः । अव्ययोऽपक्षयशून्यः ।

प्रादहन् शरणान्यन्ये केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः ॥ प्रादहन् शरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥ एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ॥ दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥१६॥ हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः ॥ कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥ शकुनिं शम्बरं धृष्टं भूतसंतापनं वृकम् ॥ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम् ॥ १८ ॥ तन्मातरं रुषाभानुं दितिं च जननीं गिरा ॥ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर ॥१९॥ ॥ हिरण्यकशिपुरुवाच ॥ अम्बाम्ब हे वधूः पुत्रा वीरं मार्हथ शोचितुम् ॥ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥ भूतानामिह संवासः प्रपायामिव सुव्रते ॥ दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः ॥ २१ ॥ नित्य आत्माव्ययः शुद्धः सर्वगः सर्ववित्परः ॥ धत्तेऽसावात्मनो लिङ्गं मायया विसृजन्गुणान् ॥ २२ ॥ यथाम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥ २३ ॥ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ॥ याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥ एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ॥ एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥ २५ ॥ ॥ ॥

शुद्धो निर्मलः । सर्वगतः सर्ववित्सर्वज्ञश्च । सर्वत्र हेतुः—परो देहादिव्यतिरिक्तः । अतो मृत इति कृश इति मलिन इति वियुक्त इत्यज्ञ इति च मत्वा शोको
न कार्य इत्यर्थः । कथं तर्हि तस्य संसारस्तत्राह—धत्त इति । आत्मनो मायया स्वाविद्यया लिङ्गं मूर्तीर्धत्ते । गुणानुच्चावचान्देहान्सुखदुःखादीन्वा विशेषेण
सृजन्स्वीकुर्वन् । लिङ्गशरीरोपाधिः संसार इत्यर्थः ॥ २२ ॥ एतत्सदृष्टान्तं प्रपञ्चयति—यथेति चतुर्भिः । तरवः प्रतिबिम्बिताः । उपाधिधर्मा उपहिते भव-
न्तीति दृष्टान्तमुक्त्वा ग्राहकधर्मा ग्राह्ये भवन्तीति दृष्टान्तमाह—चक्षुषेति ॥ २३ ॥ अविकलः परिपूर्ण एव । तत्साम्यताम्, मनःसमतामित्यर्थः ॥ २४ ॥
लिङ्गभावना देहाभिमानः । एष आत्मनो विपर्यासोऽन्यथाभावः । तमेवाह—प्रियैर्वियोगोऽप्रियैर्योगश्च । कर्म च संसृतिश्च नानागर्भेषु प्रवेशः ॥ २५ ॥

---

१ 'उत्कटम्' इति 'उत्कलम्' इति च पाठः । २ तेषां शकुन्यादीना मातरं रुषाभानुसंज्ञाम् । 'रुशद्भानु' इति वीर० विज० पाठः । ३ श्लक्ष्णया मृद्व्या निपुणया वा । ४ पानीयशालायामिव । ५ भ्रमिदोषाक्रम्यमाणे । ६ 'एवं प्रियाप्रियैः' इति पाठः । ७ ग्राहकधर्माः ग्राह्ये यथा भूवाविष्टः पुरुषो भूतग्राह्य उच्यते एवं देहाविष्ट आत्मा देहग्राह्यो देहधर्माक्रान्त उच्यत इत्यर्थः इति चक्र० ।

ततश्च संभव उत्पत्तिः । विवेकस्यास्मृतिरननुसंधानम् ॥ २६ ॥ अत्रापि शोकहेतुं विना वृथैवायं शोक इत्यस्मिन्नर्थे । प्रेतस्य मृतस्य कस्यचिद्वे बन्धवस्तेषां च संवादं श्रृणुत ॥ २७ ॥ उपासत तत्समीपे आवृत्य स्थिताः ॥ २८ ॥ विशीर्णं रत्नमयं कवचं यस्य । विभ्रष्टान्याभरणानि स्रजश्च यस्य । शरेण निर्भिन्नं हृदयं यस्य । असृजा रक्तेनाविलं लिप्तम् ॥ २९ ॥ प्रकीर्णाः केशा यस्य । ध्वस्ते अक्षिणी यस्य । रभसा संरम्भेण दष्टो दच्छद ओष्ठो येन । रजसा कुण्ठमावृतं मुखाम्भोजं यस्य । छिन्नमायुधं भुजश्च यस्य ॥ ३० ॥ तस्य पदयोरुप समीपे आसमन्तादपतन् ॥ ३१ ॥ ३२ ॥ विलापमेवाह—अहो इति द्वाभ्याम् । अकरुणत्वमेवाहुः—येन विधात्रा दृशामगोचरां दशां भवान्प्रणीतो गमितस्तेन विधात्रा त्वमधुना शुचां विवर्धनः कृतोऽसीत्यन्वयः ॥ ३३ ॥ हे महीपते,

संभवश्च विनाशश्च शोकश्च विविधः स्मृतः॥ अविवेकश्च चिन्ता च विवेकास्मृतिरेव च॥२६॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्॥ यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥२७॥ उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः॥ सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥२८॥ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम्॥ शरनिर्भिन्नहृदयं शयानमसृगाविलम्॥ २९॥ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम्॥ रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥३०॥ उशीनरेन्द्रं विधिना तथा कृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः॥ हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपापतन् ॥३१॥ रुदन्त्य उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः॥ विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे[1] ॥३२॥ अहो विधात्राऽकरुणेन नः प्रभो भवान्प्रणीतो दृगगोचरां दशाम्॥ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥३३॥ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते॥ तत्रानुयानं तव वीर पादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥३४॥ एवं विलपतीनां वै परिगृह्य मृतं पतिम्॥ अनिच्छन्तीनां निर्हारमर्कोऽस्तं संन्यवर्तत[2] ॥३५॥ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम्॥ आह तान्बालको भूत्वा यमः स्वयमुपागतः ॥३६॥ ॥ यम उवाच ॥ अहो अमीषां वयसाऽधिकानां विपश्यतां लोकविधिं विमोहः[3] ॥ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम्[4] ॥ ३७ ॥ ॥ ॥

त्वया सुहृत्तमेन विना वयं कथं स्याम भवेम । जीवेमेत्यर्थः । अतो हे वीर, यत्र त्वं यास्यसि तत्र तेऽनुयानमनुगमनं तव पादयोः शुश्रूषां कुर्वतीनामस्माकं दिशं देहि ॥ ३४ ॥ निर्हारं दाहार्थं नयनमनिच्छन्तीनाम् । अस्तमस्ताचलं प्रति ॥ ३५ ॥ परिदेवितं रोदनं स्वपुर्यामेव स्थित आश्रुत्य श्रुत्वा तत्र स्वयमेवोपागतो यमो बालको भूत्वा तानाह—अहो इत्यादिना ॥ ३६ ॥ अहो आश्चर्यम् । अस्मत्तो वयसाऽधिकानामपि लोकस्य विधिं जन्ममरणादिप्रकारं विपश्यतामपि विमोहः । मोहमेवाह—यत्र यस्मादव्यक्तादागतस्तत्रैव गतमपार्थं शोचन्ति । तदुक्तं गीतासु—'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना ॥' इति । किंच—स्वयमपि सधर्माः मृतेन सह समानो मृत्युलक्षणो धर्मो येषां तथाभूता अपि ॥ ३७ ॥ ॥ ॥

१ विलेपिरे इत्यार्षम् । २ संन्यवर्तत चलनान्निवृत्तो विश्रान्तवानित्यर्थः । ३ आर्षोऽनिजभावः । ४ वयमपि म्रियामहे इत्यर्थः ।

अवला दुर्वला अपि वृकादिभिरभक्ष्यमाणा वयं न विचिन्तयामः । तत्र हेतुः—यो गर्भे रक्षति स एव सर्वत्र रक्षिता ॥ ३८ ॥ ननु तस्य रक्षणे किं प्रयोजनं
न किंचिदपि, किंतु क्रीडैव केवलमित्याह—य इति। य ईशः इदं विश्वं सृजति रक्षत्यवलुम्पते संहरति च। भो अवलाः, तस्येशितुश्चराचरं क्रीडासाधनमाहुः—
अतः स एव निग्रहे संहारे संग्रहे पालने च प्रभुः ॥ ३९ ॥ प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति—पथीति । दिष्टेन दैवेनेश्वरेण रक्षितं तेनेश्वरेण विहतमुपे-
क्षितम् । अस्य हतस्तेनोपेक्षितः ॥ ४० ॥ तदेवमात्मनो जन्ममरणादिकमङ्गीकृत्येश्वराधीनत्वान्न शोकः कार्य इत्युक्तम्, इदानीं तु देहानामेव जन्मादि न त्वात्मन
इत्याह—भूतानीति त्रिभिः । भूतानि देहाः निजयोनिः स्वकारणभूतं लिङ्गशरीरं तन्निमित्तैः कर्मभिर्भवन्ति जायन्ते, नभवन्ति नश्यन्ति च । सर्वशो देहा-
दिदेहा अपि । तत्र ह तदा प्रकृतौ देहे स्थितोऽप्यात्मा तस्याः प्रकृतेर्गुणैर्देहधर्मैर्जन्मादिभिर्न निवध्यते न युज्यते। यतोऽन्यतमो देहादत्यन्तविलक्षणः ॥४१॥
नन्वहं कृशः स्थूल इत्यादौ वैलक्षण्यं न प्रतीयते तत्राह—इदमिति । इदं शरीरं मोहजमविवेकादात्मत्वेन जातम् । वस्तुतस्तु पृथगेव । यत ईयते दृश्यते

अवला वृकादिभिः स रक्षिता रक्षति यो हि
अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः ॥ अभक्ष्यमाणा
गर्भे ॥ ३८ ॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः ॥ तस्यावलाः क्रीडनमाहुरीशितुश्चराचरं निग्र-
हसंग्रहे प्रभुः ॥३९॥ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ॥ जीवत्यनाथोऽपि तदीक्षितो वने
गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले नभवन्ति सर्वशः ॥ न तत्र
हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥ इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते
गृहम् ॥ यथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥ यथाऽनलो दारुषु भिन्न ईयते
यथाऽनिलो देहगतः पृथक् स्थितः ॥ यथा नभः सर्वगतं न सज्जते तथा पुमान्सर्वगुणाश्रयः परः ॥ ४३ ॥ ॥

भौतिकं च यथा गृहमित्यन्वयः । अत्रैवं प्रयोगः—द्रष्टुरभौतिकाच पुरुषाच्छरीरं भिन्नम् । दृश्यत्वाद्भौतिकत्वाच्च । यथात्यन्ताविवेकिन आत्मत्वेनाभिमतमपि
गृहं ततः पृथक् तद्वदिति । भौतिकत्वानुमानं विवृण्वन्नात्मनो जन्माद्यभावमुपसंहरति । यथा औदकैः परमाणुभिर्जातो बुद्बुदादिर्यथा च पार्थिवैर्जातो
घटादिर्यथा च तैजसैर्जातः कुण्डलादिर्विनश्यति तथा तैरेव त्रिविधैः परमाणुभिर्जातो जनो देह एव विकृतः परिणतः सन्विनश्यति । न त्वात्मेत्यर्थः ॥४२॥
पृथगवस्थानाभावेऽपि भिन्नत्वे दृष्टान्तद्वयमाह—यथेति । यथाऽनलो दारुष्ववस्थितोऽपि दाहकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते । यथा च देहग-
तोऽप्यनिलो मुखनासिकादिषु पृथक् स्थित एव प्रतीयते । देहस्थत्वेऽप्यात्मनस्तद्धर्मयोगाभावे दृष्टान्तमाह—यथा नभो न सज्जते क्वापि सङ्गं न प्राप्नोति
तथा पुमानपि सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयस्तेष्वाश्रितो वा परः पृथगेवेत्यर्थः ॥ ४३ ॥ ॥ ॥ ॥ ॥

१ 'सर्वत्र विश्वं रक्षिता रक्षति' इति पाठः । २ प्रभुः प्रभवनशीलः समर्थः । ३ युष्मत्तोऽत्यन्त धन्या इत्यर्थः । ४ यद्यस्मात् । ५ गृहे स्थितं यत्नतः पाल्यमानमपि । ६ तदी-
क्षितः तेन कृपादृष्टिविषयीकृतः । ७ भौतिकं भित्तिद्वारादिमद्दृढं गृहस्थपुरुषात्पृथगेवेयते ।

किंच हे मूढाः, यमनुशोचथ सोऽयं युष्मद्भर्ता सुयज्ञः शेते। किमिति शोचथ। नन्वेतावन्तं कालमसौ शृणोत्यनन्तरं प्रतिवक्ति च। इदानीं तस्यादर्शनान्मृत इति शोचामेति चेत्स तु शोच्यो न भवति, प्रागपि तस्यादर्शनादित्याह—यः श्रोतेति ॥ ४४ ॥ ननु मुखनासिकासंचारी प्राणः श्रोता वक्ता च दृष्ट एवेति चेन्नासौ श्रोता वक्ता वा अचेतनत्वादित्याह—न श्रोतेति। महान्सर्वेन्द्रियचेष्टाहेतुः—अत एव मुख्यः। 'प्राणो वै मुख्यः' इति श्रुतेः। कस्तर्हि श्रोता वक्ता च तत्राह—यस्त्विह देहेन्द्रियैस्तत्तदर्थद्रष्टा आत्मा स तु प्राणदेहाभ्यामचेतनाभ्यामन्य एव सचेतनः ॥ ४५ ॥ ननु चेतनत्वेऽन्यत्वे च तस्याहं कृशः स्थूलः काणो वधिर इत्यादिदेहधर्मोपलब्धिः कुतस्तत्राह—भूतेन्द्रियमनोभिर्लिङ्ग्यन्ते लक्ष्यन्त इति तथा तान्देहांस्तेभ्योऽन्य एव भजत्यहमिति मन्यते। तर्हि कथं मोक्षस्तत्राह—तच्च भजनं स्वेन तेजसा विवेकबलेनोत्सृजत्यपि। हीत्यनुभवं प्रमाणयति ॥ ४६ ॥ ननु विवेकानन्तरमप्याहारादिकर्मसु प्रवृत्तेर्बन्धः स्यादेवेत्यत आह—यावदिति। यावल्लिङ्गशरीरेणान्वितस्तदभिमानवानात्मा भवति तावदेव तस्य तत्कर्म निबन्धनं बन्धहेतुर्भवति, ततो विपर्ययो

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ॥ यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥ ४४ ॥ न श्रोता नानुवक्तायं मुख्योऽप्यत्र महानसुः ॥ यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥४५॥ भूतेन्द्रियमनोलिङ्गान्देहानुच्चावचान्विभुः ॥ भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥४६॥ यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्म निबन्धनम् ॥ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥ वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ॥ यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥ अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः ॥ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥४९॥ लुब्धको विपिने कश्चित्पक्षिणां निर्मितोऽन्तकः ॥ वितत्य जालं विदधे तत्र तत्र प्रलोभयन् ॥५०॥ कुलिङ्गमिथुनं तत्र विचरत्समदृश्यत ॥ तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥ ॥ ॥

देहधर्मभाक्त्वं, ततः क्लेशश्चानुवर्तते नतु लिङ्गाभिमाने निवृत्तेऽपि। यतोऽयं मायायोगो विपर्ययादिः। मायया युज्यत इति तथा। न परमार्थ इत्यर्थः ॥ ४७ ॥ ननु सुखदुःखादीनां तत्साधनानां च सत्यत्वप्रतीतेः कुतो मायामयत्वम्। तथाच बहवो वादिनः सत्यत्वमेव वदन्ति तत्राह—वितथेति। वितथो मिथ्याभूतोऽयमभिनिवेशः। कोऽसौ। गुणेषु तत्कार्येषु सुखदुःखादिष्वर्थः परमार्थ इति दृक् वचश्चेति यत्। स कुत इत्यत आह—यथेति ॥ ४८ ॥ उपसंहरति—अथेति। अथ तस्मात्। नित्यमात्मानमनित्यं देहं वा तद्विदो नित्यमनित्यं च जानन्तो न शोचन्ति। नन्वेवमुपदेष्टारोऽपि शोचन्तो दृश्यन्ते तत्राह—नान्यथेति। ज्ञानदार्ढ्याभावात्स्वभावो न निवर्तत इत्यर्थः ॥ ४९ ॥ स्वयं स्वधर्मा अपीति यदुक्तं तत्रेतिहासमाह—लुब्धक इत्यादिना। पक्षिणामन्तक ईश्वरेण निर्मितः सन् यत्र यत्र ते तत्र तत्र तान्कणादिभिः प्रलोभयन् जालं विस्तार्य विशेषेण धृतवान्। पाठान्तरे तेषामामिषादिभिः प्रलोभनं कृतवानित्यर्थः ॥ ५० ॥ कुलिङ्गः कन्दभक्षी पक्षिविशेषः। कुलिङ्गयोर्मिथुनम् ॥ ५१ ॥ ॥ ॥ ॥

१ प्रत्युत्तरं ददाति। २ तस्य श्रोतुर्वक्तुश्च। ३ विविधं भवतीति विभुः। ४ ऐन्द्रियकं इन्द्रियग्राह्यम्। ५ 'प्रलोभनं' इति वीर० विज० पाठः। ६ वास्तवः सत्यः। ७ तत्र तत्र 'प्रलोभनम्' इत्येवंरूपे।

शिचस्तन्त्यां जालस्य सूत्रेऽसजत बन्धं प्राप । तामापन्नामापदं प्राप्ताम् (दृष्ट्वा कुलिङ्गः पक्षी तां मोचयितुमकल्पः सन्पर्यदेवयद्वृक्षशाखामाश्रित्य विलापं चकार) ॥ ५२ ॥ आकरुणया सर्वतोऽनुकम्प्यया स्त्रिया किं करिष्यति ॥ ५३ ॥ आत्मनो देहस्यार्धेन । अनेन विधुरायुषा भार्याशून्यजीवितेन दुःखं यथा भवत्येवं जीवता किं मे प्रयोजनम् । अतो मामपि कामं नयत्वित्यन्वयः ॥ ५४ ॥ न जाताः पक्षा येषां तान्बालकान्कथं बिभर्मि पुष्णामि । मन्दभाग्या मे प्रजा मातरं प्रतीक्षन्ते ॥ ५५ ॥ शाकुनिकः पक्षिहन्ता । विलीनः सन् ॥ ५६ ॥ आत्मापायं स्वमृत्युम् ॥ ५७ ॥ अयथोत्थितं मिथ्यैवाविर्भूतम्

साऽसज्जत शिचस्तन्त्यां महिषी कालयन्त्रिता ॥ कुलिङ्गस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥५२॥ अहो अकरुणो देवः स्त्रियाऽऽकरुणया विभुः ॥ कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति ॥ ५३ ॥ कामं नयतु मां देवः किमर्धेनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥ कथं त्वजातपक्षांस्तान्मातृहीनान्बिभर्म्यहम् ॥ मन्दभाग्याः प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५५ ॥ एवं कुलिङ्गं विलपन्तमारात्प्रियावियोगातुरमश्रुकण्ठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥ ५६ ॥ एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥५७॥ ॥ हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ यम एतदुपाख्याय तत्रैवान्तरधीयत ॥ ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत्सांपरायिकम् ॥ ५९ ॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ क आत्मा कः परो वात्र स्वीयः पारक्य एव वा ॥ स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनाम् ॥ ६० ॥ ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात्त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥ ॥ ॥

॥ ५८ ॥ सांपरायिकं परलोककृत्यम् ॥ ५९ ॥ अशोचतेति पाठे अडागम आर्षः । स्वः पर इत्यभिनिवेशे एवाज्ञानं तेन विना ॥ ६० ॥ सस्नुषा स्नुषासहिता ॥ ६१ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ॥ आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ १ ॥ तदेवं साधूनां कदने दानवानादिश्य बन्धूनां शोकं तत्त्वनिरूपणेनापनीय यत्कृतवांस्तदाह—हिरण्यकशिपुरित्यादिना । अप्रतिद्वन्द्वं प्रतिपक्षहीनमेकराजमेकमेव राजानं व्यधित्सत कर्तुमैच्छत् ॥ १ ॥ ॥ ॥

१ धनुश्चिह्नान्तर्गतो व्याख्याभागः सर्वत्र नोपलभ्यते। २ तत्त्वे आत्मस्वरूपे। तत्त्वे 'स रक्षिता रक्षति' इत्यादि यमोपदिष्टार्थे। ३ 'ततोऽशोचत' इत्येवंरूपे। ४ अभिनिवेशोऽभिमान आग्रहो वा।

ऊर्ध्वौ बाहू यस्य । नभसि दृष्टिर्यस्य । पादाङ्गुष्ठेनाश्रिताऽवनिर्येन ॥२॥ जटानां दीधितिभिः कान्तिभिः अंशुभी रश्मिभिः प्रलयकर्ता अर्क इव रेजे । पूर्वं येऽलक्षिताः सन्तो भुवि विचेरुस्ते देवाः पुनः स्वानि स्थानानि भेजिरे ॥३॥ विष्वगीरितः सर्वतः प्रसृतः सन् ॥४॥ द्वीपैरद्रिभिश्च सहिता भूश्चलिता ॥५॥६॥ तव बलिहाराः करप्रदाः पूजाकारिण इति वा । अभितो भवतीत्यभिभूः । हे अभिभूः हे सर्वाधिपते । पाठान्तरे भो इति संबोधनम् । अभितो यावन्न नङ्क्ष्यन्तीति संबन्धः ॥७॥ तपोयोगयोः समाव्राह्मणस्तस्मिन्द्वेषमुत्पादयितुं तत्संकल्पमाहुः—तस्येति चतुर्भिः । तस्य संकल्पस्तव किं न विदितोऽथाप्यस्माभिर्निवेदितस्त्वया श्रूयताम् ॥८॥ तपोयोगयोः समाधिना निष्ठया सर्वधिष्ण्येभ्यः श्रेष्ठं निजासनं सत्यलोकं यथा अध्यास्तेऽधितिष्ठति ॥ ९ ॥ तत्तथैवात्मनः साधयिष्यामि । ननु ब्रह्मणाऽतिदीर्घायुषा तपस्तस्वा

स तेपे मन्दरद्रोण्यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥ जटादीधितिभी रेजे संवर्तार्क इवांशुभिः ॥ तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ॥ तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ॥ ४ ॥ चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥ दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ॥ तस्य चोपशमं भूमन्विधेहि यदि मन्यसे ॥ लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तवाभिभूः[1] ॥ ७ ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां किं न विदितस्तवाथापि निवेदितः[2][3] ॥ ८ ॥ सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः[4] परमेष्ठी निजासनम्[5] ॥ ९ ॥ तदहं वर्धमानेन तपोयोगसमाधिना ॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः ॥ १० ॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥ किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः ॥ ११ ॥ इति शुश्रुम निर्बन्धं तपः परममास्थितः ॥ विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥१२॥ तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते ॥ भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥१३॥

तत्साधितमन्यः कुतस्तत्साधयेत्तत्राहुः—कालात्मनोरिति । यद्यप्यायुषोऽल्पत्वेन देहो वारंवारं म्रियेत तथापि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिस्तपस्तस्वा तत्पदं साधयिष्याम्येवेति ॥१०॥ वर्धमानेनेति यदुक्तं तदभिप्रायमाह—अन्यथेति । अन्यथा सुरासुरादिव्यत्ययेन । अयथापूर्वं पुण्यपापादिव्यत्ययेन । इदं जगद्विधास्यामि । अन्यैर्वैष्णवादिभिर्ध्रुवादिपदैः किं प्रयोजनमतस्तदेव साधयिष्यामि ॥ ११ ॥ इति त्वत्पदापहरणे तस्य निर्बन्धं शुश्रुम । अत एवासौ तपः परममास्थितो वर्तते । यदत्र युक्तं तदनन्तरमेव विधत्स्व ॥ १२ ॥ अन्यथा तव स्थानभ्रंशे सति साधूनामनिष्टं स्यादिति शोचन्त आहुः—तव पारमेष्ठ्यमिदमासनम् । द्विजानां गवां च भवायोद्भवाय । श्रेयसे सुखाय । भूत्यै ऐश्वर्याय । क्षेमाय लब्धपालनाय । विजयायोत्कर्षाय ॥ १३ ॥ ॥ ॥ ॥

१ 'तवाभिभो' इत्येवंरूपे । २ 'तव प्रभो' इति विज० पाठः । ३ 'निवेद्यते' इति कचित्पाठः । 'निवेदितम्' इति वीर० सिद्धां० पाठः । तत्र निवेदितं वाक्यमित्यर्थः ।
४ 'सर्वलोकेभ्यः' इति पाठः । ५ 'अधिशीङ्—' इति सप्तम्यर्थे द्वितीया इति विज० ।

॥ १४ ॥ वल्मीकादिभिः प्रतिच्छन्नं प्रथमं न ददर्श । पश्चात्कथंचिद्विलक्ष्य तं प्राहेति द्वयोरन्वयः । पिपीलिकाभिराचीर्णं समन्ताद्भक्षितं मेदश्च त्वक्च मांसं च शोणितं च यस्य ॥ १५ ॥ अभ्रैरपिहितं छन्नं रविमिव विलक्ष्य विस्मितः प्राह ॥ १६ ॥ १७ ॥ हृत्सारं धैर्यम् । दंशैर्मक्षिकादिविशेषैर्भक्षितो देहो यस्य ॥ १८ ॥ निरम्बुर्निषिद्धमम्बु येन सः । त्यक्तोदक इत्यर्थः ॥ १९ ॥ ते त्वया अनेन व्यवसायेनैव तावज्जितोऽहम् । तपोनिष्ठेन भवता तु सुतरां जितः ॥२०॥ मर्त्यस्य तवामर्त्यस्य मम दर्शनमफलं निष्फलं न भवति ॥ २१ ॥ आदौ भवतीत्यादिभवो ब्रह्मा । औक्षत् प्रोक्षितवान् ॥ २२ ॥ वज्रवत्संहननमङ्गदार्ढ्यं यस्य ।

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ॥ परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४ ॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णमेदस्त्वङ्मांसशोणितम् ॥ १५ ॥ तपन्तं तपसा लोकान्यथाभ्रापिहितं रविम् ॥ विलक्ष्य विस्मितः प्राह प्रहसन्हंसवाहनः ॥ १६ ॥ ॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप ॥ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १७ ॥ अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम् ॥ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १८ ॥ नैतत्पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ॥ निरम्बुर्धारयेत्प्राणान् को वै दिव्यसमाः शतम् ॥ १९ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ॥ तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥ २० ॥ ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ॥ मर्त्यस्य ते अमर्त्यस्य दर्शनं नाफलं मम ॥ २१ ॥ ॥ नारद उवाच ॥ इत्युक्त्वादिभवो देवो भक्षिताङ्गं पिपीलिकैः ॥ कमण्डलुजलेनौक्षद्दिव्येनामोघराधसा ॥ २२ ॥ स तत्कीचकवल्मीकात्सहओजोबलान्वितः ॥ सर्वावयवसंपन्नो वज्रसंहननो युवा ॥ उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २३ ॥ स निरीक्ष्याम्बरे देवं हंसवाहमवस्थितम् ॥ ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥ उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् ॥ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात् ॥ २५ ॥
॥ हिरण्यकशिपुरुवाच ॥ कल्पान्ते कालसृष्टेन योऽन्धेन तमसावृतम् ॥ अभिव्यनक् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ २६ ॥ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ॥ रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २७ ॥ ॥

तप्तस्य हेम्न इवाभा देहकान्तिर्यस्य ॥ २३ ॥ तस्य दर्शनेन महानुत्सवो यस्य ॥ २४ ॥ हर्षेणाश्रूणि पुलकोद्भेदश्च यस्य सः ॥ २५ ॥ अन्धेन निबिडेन । तत्र हेतुः—कालसृष्टेन प्रकृतिगुणरूपेण नतु ध्वान्तेन । तमसावृतमिदं जगद्योऽभिव्यक्तमकरोत् । यश्च त्रिगुणेनात्मना इदं जगत्सृजत्यवति पालयति लुम्पति संहरति च तस्मै रजःसत्त्वतमसां धाम्ने आश्रयाय महते पराय परमेश्वराय नम इति द्वयोरन्वयः ॥ २६ ॥ २७ ॥ ॥ ॥

१ तपःसिद्धः फलपर्यन्ततपःसपन्नः । २ मनस्विना मनस्विभिः । ३ अमोघं सफलं राधः प्रभावो यस्य तेन । ४ मनइन्द्रियदेहशक्तियुक्तः । ५ स उत्थितोऽभूदिति भिन्नवाक्येन योज्यम् । तथा सति अग्रिमेण सनिरीक्ष्येत्यत्रस्य स इति शब्देनापौनरुक्त्यम् । ६ अगृणात् अस्तौत् । ७ त्रिवृता त्रीन्गुणान्वृणोति स्वीकरोतीति त्रिवृदात्मा तेन इति चक्र० ।

अत्र च स्वप्रकाशत्वं, जगत्प्रकाशकत्वं, तत्कारणत्वं, तत्सृष्ट्यादिकर्तृत्वं, महत्त्वं, परमेश्वरत्वं, चेति षड्विधत्वमुक्तं तदेव प्रपञ्चयन्नमस्करोति—नम इति चतुर्भिः। बीजाय कारणाय। तत्र हेतुः—आद्याय। ज्ञानं ज्ञप्तिर्विज्ञानं विषयाकारं ज्ञानं मूर्तिर्यस्य तस्मै। अनेन स्वप्रकाशत्वं जगत्प्रकाशकत्वं च दर्शितम्। बीजायेति निमित्तत्वमुक्तम्। उपादानत्वमाह—प्राणादयो ये विकारास्तैः रूपैर्व्यक्तिं कार्याकारमीयुषे प्राप्तवते ॥ २८ ॥ एवमात्मना त्रिवृता चेत्यनेनोक्तं कारणत्वं द्वेधा दर्शितम्, महत्त्वमीश्वरत्वं चाह—त्वमिति। त्वमेव जगतो जङ्गमस्य तस्थुषः स्थावरस्य च ईशिषे नियन्ता भवसि। केन। मुख्येन प्राणेन सूत्रात्मरूपेण। अतस्त्वं प्रजानां पतिः। तासां चित्तस्य चित्तेश्च तत्परिणामभूतायाश्चेतनाया मनसश्च तन्नियम्यानामिन्द्रियाणां च पतिः। अतस्त्वमेव महान्। भूतानामाकाशादीनां तद्गुणानां शब्दादिविषयाणामाशयानां तद्वासनानामीशश्च। एतेनैव स्रष्टृत्वं दर्शितम् ॥ २९ ॥ इदानीं यज्ञप्रवर्तकत्वेनान्तर्यामित्वेन जगत्पालकत्वमाह। त्वमेव सप्ततन्तूनग्निष्टोमादियज्ञान्वितारयसि। कथम्। त्रय्या तन्वा वेदत्रयरूपेण। कथंभूतया। चत्वारो होतारो यत्र तच्चातुर्होत्रकं कर्म तद्विषयया विद्यया। आत्मवतां प्राणिनामात्मभूतस्त्वमेवान्तरात्मा चान्तर्यामी। कुतः। यतः कविः सर्वज्ञः। तत्कुतः। एकोऽखण्डः। तत्र हेतुः—

नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ॥ प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ॥ चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ २९ ॥ त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च ॥ त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥ ३० ॥ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ॥ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ विद्याः[3] कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ३२ ॥ ॥ ॥ ॥

अनादिरनन्तपारश्चेति। नास्त्यन्तः कालतः पारश्च देशतो यस्य सः ॥ ३० ॥ कालरूपेण संहर्तृत्वमाह—त्वमेवेति। लवाद्यैः कालावयवैः क्षिणोषि क्षपयसि। तदेवं सृष्ट्यादिकर्तृत्वेऽपि निर्विकारत्वमेवाह—कूटस्थ इति। तत्र हेतवः—आत्मा ज्ञानरूपः। परमेष्ठी परमेश्वरः। अजो जन्मशून्यः। महानपरिच्छिन्नः। किंच जीवलोक एव कर्मवशाज्जन्मादिभिर्विक्रियते त्वं तु तस्य जीवो जीवनहेतुः—यतस्तस्यात्मा नियन्ता ॥ ३१ ॥ तत्कुतस्तत्राह—त्वत्त इति। त्वत्तो व्यतिरिक्तं यदि किंचिद्भवेत्तर्हि तस्मात्तव जन्मादिविकारो नियम्यत्वादिकं वा भवेत्तत्तु नास्तीत्याह—परं कारणमपरं कार्यम्। तत्र चैजज्जङ्गमम्, अनेजत्स्थावरं च तद्व्यतिरिक्तं नास्ति। ननु मद्बोधकशास्त्रं व्यतिरिक्तमस्तीति चेन्न, यतो विद्या वेदोपवेदादिविद्यास्थानानि कलाश्च तदङ्गानि तवैव तनवो नतु त्वद्व्यतिरिक्ताः। तत्कुतः। यतस्त्वं बृहद्ब्रह्मैवासि। तदपि कुतस्तत्राह—हिरण्यरूपं ब्रह्माण्डं गर्भे यस्य सः। त्रिपृष्ठस्त्रिगुणात्मकस्य प्रधानस्य पृष्ठे परतः स्थितः। 'अक्षरात्परतः परः' इत्यादिश्रुतेः ॥ ३२ ॥ ॥ ॥ ॥ ॥

१ तन्यन्ते विस्तार्यन्ते इति तन्तवः सप्त अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेय आप्तोर्यामोऽतिरात्र इत्येतान्। अथवा पशुसोमेष्टिस्त्राहीनहोमेष्टकचिदग्निरूपाः इति वीर०। २ होता उद्गाता अध्वर्युः ब्रह्मेति यत्र। ३ विद्याकलाश्चेत्यत्र द्वन्द्वसमासः इति क्रम०। 'विद्याः कलाः' इति पाठः।

ननु ब्रह्माण्डशरीरस्य जीवस्य मम कुतो ब्रह्मत्वं, कुतो वा ब्रह्माण्डगर्भत्वादि तत्राह—व्यक्तं कार्यमिदं तव शरीरम् । व्यक्तं सत्यमिति वा । येन शरीरेण त्वमिन्द्रियप्राणमनसां गुणान्विषयान्भुङ्क्षे । किंच पारमेष्ठ्ये पारमैश्वर्ये धामनि स्वरूपे स्थित एव भुङ्क्षे, न त्वस्मदादिवत्स्वरूपतिरोधानेन । अतस्त्वमव्यक्त आत्मा निरुपाधिर्ब्रह्मैव पुराणः पुरुषश्चेत्यर्थः ॥ ३३ ॥ ननु ब्रह्मत्वं पुराणपुरुषत्वं कथमेकस्य तत्राह—अनन्त इति । हे अनन्त, येन त्वयाऽव्यक्तेन मनोगोचरेण रूपेणेदं विश्वं ततं व्याप्तं तस्मै तुभ्यं भगवतेऽचिन्त्यैश्वर्याय नमः । भगवत्त्वे हेतुः—चिदचिच्छक्तियुक्ताय, चिच्छक्तिर्विद्या, अचिच्छक्तिर्माया, ताभ्यां युक्तायेति ॥ ३४ ॥ ३५ ॥ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि । आयुधैर्मृत्युर्मा भूत् ॥ ३६ ॥ व्यसुभिरप्राणैः । असुमद्भिः सप्राणैः । यथा आत्मनस्तथास्ति

व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् ॥ भुङ्क्षे स्थितो धामनि पारमेष्ठ्य अव्यक्त आत्मा पुरुषः पुराणः ॥३३॥ अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः॥३४॥ यदि दास्यस्यभिमतान्वरान्मे वरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥३५॥ नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः ॥ न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ॥ अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ३७ ॥ सर्वेषां लोकपालानां महिमानं यथात्मनः ॥ तपोयोगप्रभावाणां यन्न रिष्यति कर्हिचित् ॥३८॥ ॥ इति श्रीमद्भागवते म० पु० सप्तमस्कन्धे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः ॥ ३ ॥

॥ नारद उवाच ॥ एवं वृतः शतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात्तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥१॥ ॥ ब्रह्मोवाच ॥ तातेमे दुर्लभाः पुंसां यान्वृणीषे वरान्मम ॥ तथापि वितराम्यङ्ग वरान्यदपि दुर्लभान् ॥ २ ॥ ततो जगाम भगवानमोघानुग्रहो विभुः ॥ पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ॥ भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥ स विजित्य दिशः सर्वा लोकांश्च त्रीन्महासुरः ॥ देवासुरमनुष्येन्द्रान्गन्धर्वगरुडोरगान् ॥ ५ ॥ सिद्धचारणविद्याध्रानृषीन्पितृपतीन्मनून् ॥ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ॥६॥ ॥

देहीत्यर्थः ॥ ३८ ॥ महिमा तथाऽप्रतिद्वन्द्वतादिकं देहीति शेषः ॥ ३७ ॥ तपसा योगेन च प्रभावो येषां तेषाम् । यदणिमाद्यैश्वर्यं न रिष्यति न नश्यति तच्च देहीत्यर्थः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ ४ ॥ ॥ चतुर्थे तु वराँल्लब्ध्वा विजित्याखिललोकपान् ॥ विष्णुद्वेषेण तान्सर्वान्दैत्येन्द्रः समपीडयत् ॥ १ ॥ शतधृतिर्ब्रह्मा ॥ १ ॥ मम मत्तः । यदपि यद्यपीमे दुर्लभाः ॥ २ ॥ अमोघोऽनुग्रहो यस्य । प्रजेश्वरैर्मरीच्यादिभिः ॥ ३ ॥ यदर्थं तपस्तप्तं तदाह—एवमित्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ॥ ॥

१ व्यक्त वैराज स्थूलं इति चक्र० । २ दक्षादिसृष्टादित्यर्थः । ३ यथात्मन इत्युत्तरश्लोकस्थं सर्वत्र सम्बन्धबोधनार्थमत्रोपात्तम् । ४ 'वरदर्षभ' इति पाठः । ५ भवन्निर्मितेभ्यः । ६ गरुडा गरुडजातीयाः पक्षिणः । ६ 'प्रादात्तास्तपसा प्रीतः' इति पाठः। तत्र तान् तेन याचितानित्यर्थः। ७ तस्य वशे । ८ वितरामि वर्तमानसामीप्ये लट् । द सवानसीतर्गः इति चक्र०।

सर्वेषां सत्त्वानां प्राणिजातानां ये ये पतयस्तान् ॥ ७ ॥ त्रिविष्टपं स्वर्गमध्यास्तेऽधिष्ठितवान् । तत्र स्वर्गेऽपि महेन्द्रभवनमध्युवासाधिवसति स्म ॥ ८ ॥ अखिलसमृद्धियुक्तत्वमेवाह—यत्रेति त्रिभिः ॥ ९ ॥ मुक्तादामानि परिच्छदाः परिकरा यासाम् ॥ १० ॥ सुदतीः सुदत्यः ॥ ११ ॥ ऊर्जितमधिकं चण्डं तीव्रं शासनं यस्य ॥ १२ ॥ अङ्ग हे राजन्, उरुगन्धिनोग्रगन्धेन मधुना सुरया मत्तम् । अत एव विवृत्ते विघूर्णिते ताम्रे अक्षिणी यस्य तम् । अशेषधिष्ण्यपाः

सर्वसत्त्वपतीन् जित्वा वशमानीय विश्वजित् ॥ जहार लोकपालानां स्थानानि सह तेजसा[1] ॥ ७ ॥ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ॥ महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ ८ ॥ यत्र विद्रुमसोपाना महामारकता भुवः ॥ यत्र स्फाटिककुड्यानि वैदूर्यस्तम्भपङ्क्तयः ॥ ९ ॥ यत्र चित्रवितानानि पद्मरागासनानि च ॥ पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥ १० ॥ कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ॥ रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥ तस्मिन्महेन्द्रभवने महाबलो महामना निर्जितलोक एकराट् ॥ रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥ १२ ॥ तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥ जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ॥ गन्धर्वसिद्धा ऋषयोऽस्तुवन्मुहुर्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥ स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानो हविर्भागानग्रहीत्स्वेन तेजसा ॥ १५ ॥ अकृष्टपच्या[2] तस्यासीत्सप्तद्वीपवती मही ॥ तथा कामदुघा द्यौस्तु नानाश्चर्यपदं[3] नभः ॥ १६ ॥ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥ शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः ॥ दधार[4] लोकपालानामेक एव पृथग्गुणान् ॥ १८ ॥ स इत्थं निर्जितककुवेकराड्विषयान्प्रियान् ॥ यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ १९ ॥ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ॥ कालो महान्व्यतीयाय[5] ब्रह्मशापमुपेयुषः ॥ २० ॥

सर्वलोकपाला उपायनयुक्तैः पाणिभिरुपासत सेवन्ते । त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना । पदमाश्रयभूतम् ॥ १३ ॥ उपासनप्रकारमाह—जगुरिति ॥ १४ ॥ १५ ॥ १६ ॥ तत्पत्न्यो नद्यः । ऊहुर्वहन्ति स्म । रत्नाकरानेवाह—क्षारेति ॥ १७ ॥ आक्रीडं क्रीडास्थानम् । द्रुमाः सर्वेषु ऋतुषु गुणान्पुष्पफलादीन् । स च लोकपालानां पृथग्विधान्गुणान्वर्षणदहनशोषणादीनेक एव दधार ॥ १८ ॥ निर्जिताः ककुभो येन । यथोपजोषं यथाप्रीति ॥ १९ ॥ महान्कालः एकसप्ततियुगानि किंचिदधिकानि ॥ २० ॥ ॥ ८ ॥

१ तेजसा सह स्थानानीत्यर्थः । २ अकृष्टपच्या कर्षणेन विनापि सपन्नसस्या फलिन्यभूत् । ३ 'आश्चर्यप्रदम्' इति पाठः । ४ वाक्यद्वयेऽपि दधुरिति वचनव्यत्ययेन संबध्यते । ५ सप्ततियुगानीत्यत्र प्रमाणं पुराणान्तरे—'हिरण्यकशिपोर्भीत्या प्रपलाय्य शचीपतिः ॥ स्वर्गराज्यात्परिभ्रष्टो युगानामेकसप्ततिम्' इति ।

॥ २१ ॥ २२ ॥ २३ ॥ अरूपा वक्तृरहिता ॥ २४ ॥ मम दर्शनं श्रवणं सर्वेषां श्रेयसामुपपत्तये भवति ॥ २५ ॥ २६ ॥ २७ ॥ ननु देवादिविद्वेषेऽप्यस्य विनाशो नास्ति, ब्रह्मवरेणोर्जितत्वात्तत्राह—निर्वैरायेति । सर्वमहं सहे न मद्भक्तद्रोहमिति भावः ॥ २८ ॥ असुरं च हतं मेनिरे । तदानीं तद्द्वेषे प्रवृत्तत्वादिति भावः ॥२९॥ तमेव द्वेषं वक्तुमादौ सुतस्य महत्त्वमाह—तस्येति । गुणैर्महानभूत् । गुणानेवाह—महदुपासक इत्यादिना ॥३०॥ सत्या सन्धा प्रतिज्ञा

तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ॥ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥ तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ॥ यद्गत्वा[2] न निवर्तन्ते शान्ताः संन्यासिनोऽमलाः ॥ २२ ॥ इति ते संयतात्मानः समाहितधियोऽमलाः ॥ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३[3] ॥ तेषामाविरभूद्वाणी अरूपा मेघनिःस्वना ॥ संनादयन्ती ककुभः साधूनामभयंकरी ॥ २४ ॥ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ॥ मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये[4] ॥ २५ ॥ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य च ॥ तस्य शान्तिं करिष्यामि कालं तावत्प्रतीक्षत ॥ २६ ॥ यदा[5] देवेषु वेदेषु गोषु विप्रेषु साधुषु ॥ धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २७ ॥ निर्वैराय प्रशान्ताय स्वसुताय महात्मने ॥ प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २८ ॥ ॥ नारद उवाच ॥ इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ॥ न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥ २९ ॥ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ॥ प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ ३० ॥ ब्रह्मण्यः शीलसंपन्नः सत्यसन्धो जितेन्द्रियः ॥ आत्मवत्सर्वभूतानामेकः प्रियसुहृत्तमः ॥ ३१ ॥ दासवत्सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः ॥ भ्रातृवत्सदृशे स्निग्धो गुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्यो[6] मानस्तम्भविवर्जितः ॥ ३२ ॥ नोद्विग्नचित्तो व्यसनेषु निस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ॥ दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥ ३३ ॥ ॥ ॥

यस्य । एक एव प्रियश्च सुहृत्तमश्च ॥३१॥ दासवत्सम्यङ्नता आर्याणामङ्घ्रयो येन । गुरुषु ईश्वर इति भावना यस्य ॥३२॥ व्यसनेषु प्राप्तेष्वपि नोद्विग्नचित्तः । दृष्टेषु श्रुतेषु गुणेषु विषयेषु[7] निस्पृहः । यतस्तेष्ववस्तुदृक् । दान्ता इन्द्रियादयो यस्य । रहित आसुरो भावो मत्सरादिर्यस्य सः । असुरोऽपि सन् प्रशान्तकामः ॥३३॥

१ अरूपवाण्यादर्शनासंभवाद्दर्शनशब्दार्थः श्रवणमिति युक्तम्। मद्दर्शनं मद्विषयज्ञानमिति इति विज०। चक्रवर्ती तु स्तम्भान्मद्दर्शनं यावदिति व्याचख्यौ। २ यत् यां दिशम्। ३ त्रयोविंशतिश्लोकोत्तरं ‘ॐ नमो भगवते तुभ्यं पुरुषाय महात्मने। विशुद्धानुभवानन्दसंदोहाय यतोऽभयम्॥’ इति पद्यमधिकं इति वीर० विज०। ४ अयमार्षः संधिः। ५ यस्येति शेषः। यदा यस्य देवादिषु विद्वेषो भवति तदा स इति योजनीयम्। यद्वा देवादिषु विशिष्टो द्वेषो यस्यैवंभूतः स आशु विनश्यतीत्यन्वयः। ६ विद्याश्चतुर्दश। अर्थो धनम्। प्रशस्ते रूपजन्मनी। ७ विषयेष्वैहिकामुष्मिकेष्वित्यर्थः।

ऽधुनापि ते गुणा नापिधीयन्ते तिरोहिता न भवन्ति ॥ ३४ ॥ साधुगाथासदसि साधुकथाप्रसङ्गवत्यां सभायाम् । यं प्रह्लादम् । प्रतिमानं दृष्टान्तम् । रिपवोऽपि सुराः कुर्वन्ति, किं वक्तव्यं भवादृशा विष्णुभक्ताः ॥ ३५ ॥ सूच्यते मया केवलं द्योत्यते । सुष्टु कथ्यत इति वा ॥ ३६ ॥ नैसर्गिकरतेर्लिङ्गान्याह—न्यस्तक्रीडनक इति पङ्क्तिः । तन्मनस्तया तदेकचित्तत्वेन ॥ ३७ ॥ एतान्यासनादीनि गोविन्देन परिरम्भित आत्मना एकीकृतः ॥ ३८ ॥ रुदति रोदिति रौति । वैकुण्ठस्य चिन्तया शबला व्यामिश्रा क्षुभिता चेतना यस्य । तस्य चिन्तयाह्लादो यस्य ॥ ३९ ॥ क्वचिदुत्कण्ठो मुक्तकण्ठः सन् अनुचकार

यस्मिन्महद्गुणा[1] राजन्गृह्यन्ते कविभिर्मुहुः ॥ न तेऽधुनापि धीयन्ते यथा भगवतीश्वरे ॥ ३४ ॥ यं साधुगाथासदसि रिपवोऽपि सुरा नृप ॥ प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥ ३५ ॥ गुणैरलमसंख्येयैर्[2]माहात्म्यं तस्य सूच्यते ॥ वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३६ ॥ न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया ॥ कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३७ ॥ आसीनः पर्यटन्नश्नन् शयानः प्रपिबन्ब्रुवन् ॥ नानुसंधत्त[3] एतानि गोविन्दपरिरम्भितः ॥ ३८ ॥ क्वचिद्रुदति वैकुण्ठचिन्ताशबलचेतनः ॥ क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ३९ ॥ नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ॥ क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४० ॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ॥ अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४१ ॥ स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिंचनसङ्गलब्धया ॥ तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसङ्गदीनान्यमनः शमं[6] व्यधात् ॥ ४२ ॥ तस्मिन्महाभागवते महाभागे महात्मनि[4] ॥ हिरण्यकशिपू राजन्नकरोदघमात्मजे ॥ ४३ ॥ ॥ युधिष्ठिर उवाच ॥ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ॥ यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥ ४४ ॥ पुत्रान्विप्रतिकूलान्स्वान्पितरः[5] पुत्रवत्सलाः ॥ उपालभन्ते शिक्षार्थं नैवाघमपरो यथा ॥ ४५ ॥ ॥ ॥ ॥

[illegible]रिकं स्वयं कृतवान् ॥ ४० ॥ संस्पर्शस्तद्भावापत्तिस्तेन निर्वृतः । अस्पन्दः स्थिरो यः प्रणयस्तेन य आनन्दस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः ॥ ४१ ॥ आत्मनः परां निर्वृतिं तन्वन् दुःसङ्गेन दीनस्यान्यस्यापि मनः शमं शान्तं व्यधात् ॥ ४२ ॥ अघं द्रोहमकरोत् ॥ ४३ ॥ [illegible]माध्यायान्ते पृष्टमेवार्थमतिविस्मयेन पुनः पृच्छति—देवर्ष इति । तव त्वत्तस्तव वाक्यमिति वा । साधवेऽघमदात् साधोर्द्रोहं कृतवानिति यदेतद्वेदितुं ज्ञातुमिच्छामः ॥ ४४ ॥ उपालभन्ते आक्षिपन्ति । अघं तु नैव कुर्वन्ति । अपरः शत्रुरिव ॥ ४५ ॥ ॥ ॥ ॥

१ महतां गुणाः । २ 'गुणैः परमसंख्येयैः' इति वीर० पाठः । ३ 'नानुसदध एतानि' इति वीर० विज० पाठः । ४ महान्पूज्य आत्मा धैर्यगाम्भीर्यादियुक्तः स्वभावो यस्य । ५ 'पुत्रेषु प्रतिकूलेषु' इति वीर० पाठः । ६ शमशब्दादर्शआद्यच् । 'मनःशम मनःशान्तिं व्यधात्' इति पाठः समीचीनः, दन्त्यान्तपाठे स्वसमं स्वान्तःकरणतुल्यं व्यधात् इति क्रम० ।

अनुवशाननुकूलान् । साधून् अरागरोषान् । गुरुः पितैव देवता येषां तानुद्दिश्यार्घं न कुर्वन्तीति किमु वक्तव्यमित्यर्थः । पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्रा कृतो द्वेषः पुत्रस्य मरणार्थं प्रयोजितः प्रवर्तित इति यदेतत्कौतूहलं विधमापाकुरु । यद्वा यद्यस्मात्पुत्राय यो द्वेषः स पितुर्मरणाय प्रयोजितोऽत एतत्कौतूहलं विधमेत्यर्थः ॥४६॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥४॥ ॥छ॥ ॥ पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् ॥ घातयन्द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत् ॥ १ ॥ भगवद्भक्तिरेव विद्वेषे कारणमिति वक्तुमाह—पौरोहित्यायेत्यादिना । काव्यः शुक्रः । अतस्तस्य सुतौ दैत्यराजगृहान्तिके न्यवसतामिति शेषः ॥ १ ॥ पाठ्यान्दण्डनीत्यादीन् । पाठ्यानसुरबालकानिति वान्वयः ॥ २ ॥ अनु श्रवणानन्तरं तथैव पपाठ

किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ॥ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे प्रह्लादचरिते चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥

॥ नारद उवाच ॥ पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः ॥ शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम्[2] ॥ पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥ यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ॥ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम्[3] ॥ ३ ॥ एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ॥ पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ४ ॥ ॥ प्रह्लाद उवाच ॥ तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातं गृहमन्धकूपं वनं[4] गतो यद्धरिमाश्रयेत ॥५॥ ॥ नारद उवाच ॥ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ॥ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ॥ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥७॥ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ॥ प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥ वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ॥ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ॥ भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ १० ॥ ॥

प किंतु तत्साधु न मेने । तत्र हेतुः—स्वः पर इत्यसद्ग्रहो मिथ्याभिनिवेश एवाश्रयो यस्य तत् ॥ ३ ॥ ४ ॥ हे असुरवर्य, असद्ग्रहादहंममेति मिथ्याभिनिवेशाद्धेतोः सम्यगुद्विग्ना विपण्णा धीर्येषां ते । वनं गतः सन्हरिमाश्रयेतेति यत्तदेवाहं साधु मन्ये । कथंभूतं गृहम् । आत्मपातमात्मनोऽधःपातनिमित्तम् । कुतः । अन्धकूपवन्मोहावहम् ॥ ५ ॥ परपक्षे विष्णौ समाहिताः परिनिष्ठिताः । हासे हेतुः—बुद्धिरिति ॥ ६ ॥ विष्णुपक्षैर्भागवतैर्हेतुभूतैः । ननु त्वद्गृहे कुतस्तेषां प्रवेशः । सत्यम्, तथापि प्रतिच्छन्नैर्वेषान्तरेण छन्नैः ॥ ७ ॥ दैत्यैर्गृहमानीतम् ॥ ८ ॥ बालान्सर्वानति अतिक्रम्य । तुभ्यं तव ॥ ९ ॥ १० ॥ ॥

१ अत्र 'मनो भ्रमति मे विद्वन्नेतस्मिन्सकदे द्विज' इत्यर्धमधिकं क्वचित् । २ नयकोविदमिति क्रियाविशेषणम् । यथा नयकोविदाः नीतिशास्त्रनिपुणा भवन्ति तथा पाठयामासुरिति वीर० । ३ असद्ग्रहं दुरभिनिवेशमेव आ सम्यक श्रयते इति यत् वीर० । ४ वनमिति विविक्तदेशोपलक्षणम् । ५ बालानां बुद्धिमतिक्रम्यैष बुद्धिभेदः कुतः कस्मात्तुभ्यं रोचत इति वा । विज० ।

अहो मायामोहिता भवन्तो मामाक्षिपन्तीत्याशयेन तावदाह—स्वः परश्चेति मिथ्याभिनिवेशो यदीयया माययैव कृतो न तु वास्तवः । अत एव तदीयया मायया विमोहितबुद्धीनां भवतामेव दृष्टो नतु मम । तस्मै अचिन्त्यमायेश्वराय नमः ॥ ११ ॥ अहो किमेतत्प्रलपसि तव बुद्धिभेदो यतो जातस्तं कथये-त्याक्षिप्तः संस्तत्प्रसादादेवेत्युत्तरमाह—स इति त्रिभिः । स भगवान्यदाऽनुव्रतोऽनुकूलो भवति, तदा पशूनामविवेकिनामिव बुद्धिर्भेदगता असती मिथ्या संसारविषया विभिंद्यते अभिन्नात्मनिष्ठा भवति ॥ १२ ॥ भेदस्यासत्त्वं दर्शयन्नाह—स एष परमात्मैव स्वः पर इति चाविवेकिभिर्निरूप्यते । युक्तं चैतत् । यतो यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोऽपि मुह्यन्ति । तत्र हेतुः—दुरत्ययं दुर्घटमनुक्रमणमनुचरितमनुवर्णनं वा यस्य ॥ १३ ॥ ननु निर्विकारस्य कथं मतिभेदकत्वं तत्राह—यथेति । यथा अयो लोहमाकर्षस्यायस्कान्तस्य समीपे स्वयमेव भ्रमति तथा मे चेतश्चक्रपाणेः संनिधौ । तत्र कुतो जातस्तत्संनिधि-

॥ प्रह्लाद उवाच ॥ स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ॥ विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥
स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ॥ अन्य एष तथान्योऽहमिति भेदगताऽसती ॥ १२ ॥ स एष आत्मस्वपरेत्यबु-
द्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ॥ मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥१३॥ यथा
भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसंनिधौ ॥ तथा मे भिंद्यते चेतश्चक्रपाणेर्यदृच्छया ॥१४॥ ॥ नारद उवाच ॥ एतावद्ब्रा-
ह्मणायोक्त्वा विरराम महामतिः ॥ तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥१५॥ आनीयतामरे वेत्रमस्माकम-
यशस्करः ॥ कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥ दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ॥ यन्मूलोन्मू-
लपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥ इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ॥ प्रह्लादं ग्राहयामास त्रिवर्गस्यो-
पपादनम् ॥१८॥ तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ॥ दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥१९॥ ॥

स्तत्राह—यदृच्छयेति । कस्य तपोदानादेः फलमेतदिति न ज्ञायत इत्यर्थः ॥ १४ ॥ राजसेवक उवाचेति शेषः ॥ १५ ॥ अरे वेत्रं कशा आनीयताम् । सामदानभेददण्डानां मध्ये चतुर्थो दमो दण्डोऽस्य दुर्बुद्धेरुदित उक्तः शास्त्रेषु । दुर्बुद्धित्वे हेतुः—कुलाङ्गारस्य कुलस्याङ्गारवन्नाशहेतोः ॥ १६ ॥ तत्कुतस्तत्राह—दैतेया एव चन्दनद्रुमास्तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः । तदेवाह—यस्य दैतेयचन्दनवनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नालमिवाचरत् । यथा परशोश्छेदकत्वे बब्बूलादिद्रुमनिर्मितो दण्डः सहकारी तं विना छेदनासंभवात्तथायं विष्णोर्दैत्यमूलोच्छेदे हेतुर्जात इत्यर्थः ॥ १७ ॥ इति तं प्रह्लादं भीषयन्धर्मार्थकामवर्गस्य प्रतिपादकं शास्त्रमध्यापयामास ॥ १८ ॥ ज्ञातं ज्ञेयमुपायानां चतुष्टयं सामदानादि येन तं दैत्येन्द्रं प्रति । मात्रा मृष्टमुद्वर्त्य स्नापितम् । अलंकृतं भूषणतिलकादिभिः ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥

१ आः पाप किमेतदिति पाठः । २ विशेषेण भिद्यते विदीर्यते । ३ 'चेतसश्चक्रपाणेः सन्निधिरेव कुतस्तत्राह' इति पाठः । ४ 'परः स्वश्च' इति वीर० विज० पाठः । ५ भिद्यते युष्मचेतोभ्यः सकाशाद्भिन्नं भवति इति चक्र० ।

॥ २० ॥ २१ ॥ २२ ॥ पादसेवनं परिचर्या । अर्चनं पूजा । दास्यं कर्मार्पणम् । सख्यं तद्विश्वासादि । आत्मनिवेदनं स्वशरीरसमर्पणम् । यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमित्यर्थः ॥ २३ ॥ इति नवलक्षणानि यस्याः सा अधीतेन चेद्भगवति विष्णौ भक्तिः क्रियते सा चार्पितैव सती यदि क्रियेत नतु कृता सती पश्चादर्प्येत तदुत्तममधीतं मन्ये । नत्वस्माद्गुरोरधीतं शिक्षितं वा तथाविधं किंचिदस्तीति भावः ॥ २४ ॥ २५ ॥ न विद्यते सारं यत्र तदसारम् । न विद्यते सारं यस्मादिति वास्तवोऽर्थः ॥ २६ ॥ मित्रत्वेन प्रवर्तमानस्यापि तव विरोधाचरणं

पादयोः पतितं बालं प्रतिनन्द्याशिषाऽसुरः ॥ परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥ आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ॥ आसिञ्चन्विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ २१ ॥ ॥ हिरण्यकशिपुरुवाच ॥ प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् ॥ कालेनैतावतायुष्मन्यदशिक्षद्गुरोर्भवान् ॥२२॥ ॥ प्रह्लाद उवाच ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥ क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥ निशम्यैतत्सुतवचो हिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥ ब्रह्मबन्धो किमेतत्ते विपक्षं श्रयताऽसता ॥ असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥ सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥ ॥ गुरुपुत्र उवाच ॥ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ॥ नैसर्गिकीयं मतिरस्य राजन्नियच्छ मन्युं कददाः स मा नः ॥ २८ ॥ ॥ नारद उवाच ॥ गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ॥ न चेद्गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ २९ ॥ ॥ ॥ ॥

नासंभावितमित्याह—सन्ति हीति । दुष्टं मैत्रं मित्रत्वं येषां ते दुर्मैत्राः । रोग इति । 'ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः । स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥' इत्यादि स्मृत्युक्तपातकिनां काले नरकभोगानन्तरं रोगो यथोदेति तथा तेषां दुर्जनानां सुजनत्वेन वर्तमानानामप्यघं विद्वेषादिकमुदेतीत्यर्थः ॥ २७ ॥ मत्प्रणीतं मया पाठितम् । नोऽस्मभ्यं कत् कुत्सितं दोषं मा स्म अदाः । अडागम आर्षः । मयि दोषारोपं मा कृथा इत्यर्थः । इन्द्रशत्रो इति नहि ब्राह्मणेषु तव कोप उचित इति भावः ॥ २८ ॥ गुरुमुखी गुरुवाक्यजनिता । हे अभद्र ॥ २९ ॥ ॥ ॥ ॥

१ यद्वा सा यदि विष्णौ अर्पिता क्रियेत न फलाभिलाषेणेति चक्र० । अद्धा साक्षात् विष्णौ अर्पिता तत्प्रीणनैकप्रयोजनकतया सकल्पिता सती इति सिद्धां० । २ अत्र वीरराघवः—ब्रह्मबन्धो इति । हे ब्राह्मणाभास, किमेतत्ते त्वया कृतमिति शेषः । अतीवानुचितमेतत्कृतमित्यर्थः । किं तत् । यन्मामनादृत्य विपक्षं शत्रुपक्षमाश्रयता अत एवाऽसता ममाहितकारिणा त्वया हे दुर्मते, असार ग्राहितो बाल इत्येतदिति व्याचख्यौ । ३ 'कदनात्मनां नः' इति पाठः, तत्र कदनात्मनां दीनात्मना नः अस्मद्विषयकं क्रोधं नियच्छेत्यर्थः इति वीर० । ४ असती विष्णुस्तवनलक्षणा मतिः कुतः प्राप्तेत्यर्थः । वास्तवोऽर्थस्तु भद्रा सती सर्वोत्तमेत्यर्थः इति चक्र० । ५ गुरुरेव मुखं द्वारं यस्याः सा ।

आस्तामियं वार्ता भवादृशानां विषयासक्तानामत्रानधिकारादित्याशयेनाह—मतिरिति । परतो गुरोः स्वतो वा मिथो वाऽन्योन्यतो नाभिपद्येत न संपद्येत । केषाम् । गृहव्रतानां गृह एव व्रतं संकल्प इति कृत्यचिन्ता येषाम्। अत एवादान्तैरनुपरतैर्गोभिरिन्द्रियैर्हेतुभूतैस्तमिस्रं संसारं विशताम् । तत्र चर्वितस्यैव चर्वणं येषाम् ॥३०॥ ननु श्रीकृष्णस्य परमानन्दस्वरूपत्वात्तेऽपि तन्निष्ठा एव किं न स्युरिति चेत्तदज्ञानादित्याह—नेति । ये दुराशया विषयवासितान्तःकरणास्ते हि विष्णुं न विदुः। तत्र हेतुः—स्वस्मिन्नेवार्थः पुरुषार्थो येषां तेषां गतिं गम्यम्। ननु तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति तत्राह—बहिर्विषयेष्वर्थो येषां ते बहिरर्थास्तानेव गुरुत्वेन मन्तुं शीलं येषां ते। अतोऽन्धैरुपनीयमाना अन्धा यथा पन्थानं न विदुः किंतु गर्ते पतन्ति तथा तेऽपीशस्य तन्त्यां दीर्घरज्ज्वां वेदलक्षणायामुरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव भवन्तीत्यर्थः। तदुक्तम् 'विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः ॥ वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात् ॥' इति ॥३१॥ ननु च 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिप्रतिपादितं विष्णुं कथं न विदुः, कुतो वा तेषां तमिस्रप्रवेशस्तत्राह—

॥ प्रह्लाद उवाच ॥ मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम् ॥ अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥ ३० ॥ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः ॥ अन्धा यथाऽन्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः ॥ ३१ ॥ नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः ॥ महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत् ॥३२॥ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ॥ अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले ॥३३॥ आहामर्षरुषाविष्टः कषायीभूतलोचनः ॥ वध्यतामाश्वयं वध्यो निःसारयत[2] नैर्ऋताः ॥३४॥ अयं मे भ्रातृहा सोऽयं हित्वा स्वान्सुहृदोऽधमः ॥ पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५ ॥ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ॥ सौहृदं[3] दुस्त्यजं पित्रोरहाद्यः पञ्चहायनः ॥ ३६ ॥ परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत्सुतोऽहितः ॥ छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ३७ ॥ ॥

नैषामिति । निष्किंचनानां निरस्तविषयाभिमानानां महत्तमानां पादरजसाभिषेकं यावन्न वृणीत तावच्छ्रुतिवाक्यतो जाताप्येषां मतिरुरुक्रमस्याङ्घ्रिं न स्पृशति न प्राप्नोति । असंभावनादिभिर्विहन्यत इत्यर्थः। अनर्थस्य संसारस्यापगमो यदर्थो यस्या अङ्घ्रिस्पर्शिन्या मतेरर्थः प्रयोजनम् । महदनुग्रहाभावान्न तत्त्वनिश्चयो नापि मोक्षस्तेषामित्यर्थः ॥ ३२ ॥ निरस्यत चिक्षेप ॥३३॥ अमर्षोऽसहनं तेन सहितया रुषाविष्टो व्याप्तः । कषायीभूते आताम्रे लोचने यस्य । हे नैर्ऋता राक्षसाः ॥३४॥ वध्यत्वे हेतुः—यतोऽयं मे भ्रातृहा । कुतः । यो विष्णोः पादौ दासवदर्चति। तत्पक्षपातीत्यर्थः। अतः स एवायमित्यन्वयः ॥३५॥ अहो विष्णुरप्यविश्वसनीयं किमिति स्वीकृतवानित्याह—विष्णोर्वेति । अहाज्जहौ ॥ ३६ ॥ ननु तवायमपत्यं कथं वध्यस्तत्राह—परोऽप्यौषधमिव हितकृच्चेत्तर्ह्यपत्यमेव ज्ञेयः । सुतः स्वदेहजोऽप्यहितश्चेदामय इव ज्ञेयः । आस्तां ममतास्पदस्य कथा, अङ्गमपि च यत्करचरणादि तदप्यात्मनोऽहितं चेच्छिन्द्यादेवेत्यर्थः ॥ ३७ ॥ ॥

१ किंतूत्तरग्रन्थदृष्ट्या महच्चरणरजोभिषेकलिप्सारहितानामिति तदीयस्वगतोक्तिरत्र श्लोकेऽपि ज्ञेया इति चक्र० । २ निःसारयत मद्दृष्टेर्बहिर्गमयत । ३ सौहृदं स्नेहम् ।

अतः सर्वैरुपायैर्हन्तव्यः । संभोजो भोजनम् । भोजनादिषु विषादिप्रयोगैरित्यर्थः । यथा दुष्टमिन्द्रियं मुनेः शत्रुः ॥ ३८ ॥ तिग्मास्तीक्ष्णा दंष्ट्रा येषाम् । करालान्यास्यानि भयंकराणि मुखानि येषां ते च ते च । ताम्राणि श्मश्रूणि शिरोरुहाश्च येषाम् ॥ ३९ ॥ ४० ॥ परे ईश्वरे युक्तः समाहित आत्मा मनो यस्य तस्मिन्प्रह्लादे तेषां नैर्ऋतादीनां प्रहारा निष्फला आसन् जाताः । तत्र हेतवः—ब्रह्मणि निर्विकारेऽनिर्देश्येऽविषये भगवति निरतिशयैश्वर्येऽखिलात्मनि शस्त्रादीनामपि नियन्तर्येवंभूते परे । अपुण्यस्य निर्दैवस्य सत्क्रिया महोद्यमा इव ॥ ४१ ॥ ४२ ॥ दन्दशूकैः सर्पैः । अभिचाराः कृत्यादयः । अवपातनानि गिरिशृङ्गादधःपातनानि तैः । मायाभिः शम्बरनिर्मिताभिः अवटादिषु संनिरोधैश्च ॥ ४३ ॥ पर्वताक्रमणैः पर्वतानां तदुपरिक्षेपैः । बहुवचनैरभिचाराद्यावृत्तिं

सर्वैरुपायैर्हन्तव्यः संभोजशयनासनैः ॥ सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८ ॥ नैर्ऋतास्ते समादिष्टा भर्त्रा
वै शूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥ नदन्तो भैरवान्नादांश्छिन्धि भिन्धीति वादिनः ॥
आसीनं चाहनन् शूलैः प्रह्लादं सर्वमर्मसु ॥ ४० ॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ॥ युक्तात्मन्यफला
आसन्नपुण्यस्येव सत्क्रियाः ॥ ४१ ॥ प्रयासेऽपहते तस्मिन्दैत्येन्द्रः परिशङ्कितः ॥ चकार तद्वधोपायान्निर्बन्धेन
युधिष्ठिर ॥ ४२ ॥ दिग्गजैर्दन्दशूकैश्च अभिचारावपातनैः ॥ मायाभिः संनिरोधैश्च गरदानैरभोजनैः ॥ ४३ ॥
हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ॥ न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं
नाभ्यपद्यत ॥ ४४ ॥ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥
वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम् ॥ न विस्मरति मेऽनार्यं शुनः शेप इव प्रभुः ॥ ४६ ॥ अप्रमेयानुभावो-
ऽयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ॥ ४७ ॥ इति तं चिन्तया किंचिन्म्लानश्रियम-
धोमुखम् ॥ शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥ ॥ ॥ ॥

दर्शयति । तद्धननं कर्तुं नाभ्यपद्यत न प्राप । नाशक्नोदित्यर्थः ॥ ४४ ॥ चिन्तामेवाह—एष इति त्रिभिः । मे मया असाधु परुषं यथा भवति तथोक्तः । असद्धर्मैरपकारैरभिचारैर्वा ॥ ४५ ॥ अविदूरे समीपे वर्तमानोऽपि बालोप्ययमजडधीर्निर्भयचित्तो मेऽनार्यमन्याय्यं शत्रुत्वं वा न विस्मरति । अजीगर्तस्य मध्यमपुत्रः शुनःशेपो नाम पितृभ्यां हरिश्चन्द्राय विक्रीतः सन्यथा तयोरपकारमविस्मरंस्तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नस्तद्वत् । यद्वा स्वभावापरित्यागे दृष्टान्तः—शुनः शेपः पुच्छमिवेति ॥ ४६ ॥ अप्रमेयोऽपरिमेयोऽनुभावो यस्य । न कुतश्चिद्भयं यस्य । अमरो मृत्युशून्यश्च । न वा भविता । अन्यथा मृत्युर्नैव भविष्यतीत्यर्थः ॥ ४७ ॥ औशनसौ उशनसः पुत्रौ नीतिज्ञौ । विविक्ते एकान्ते ॥ ४८ ॥ ॥ ॥ ॥

१ नैर्ऋता इत्यादि नारदवाक्यम् । २ 'दन्दशूकेन्द्रैः' इति पाठः । ३ यदा हन्तुं न शशाक उपायान्तरं च नाभ्यपद्यत तदा दीर्घतमां चिन्तां प्राप्त इति योज्यम् । ४ स्वभावापरित्यागे दृष्टान्तः—शुनः शेपः पुच्छमिव इति चक्र० । ५ अन्यथा एतद्विरोधाभावे ।

भ्रुवोर्विजृम्भणेनैव त्रस्ताः समस्ता धिष्ण्यपा लोकपाला यस्मिन् । तस्य तव चिन्त्यं न चक्ष्महे न पश्यामः । पदमालम्बनं नैवास्ति । यद्वा शिशूनां वृत्तं गुणदोषयोः पदं विषयो न भवतीत्यर्थः ॥ ४९ ॥ तथापि तु बन्धनमस्योचितमित्याहतुः—इमं त्विति । यावद्गुरुर्भार्गव आगमिष्यति तावद्बद्ध्वा निधेहि । ततः किमत ऊचतुः—यतः पुंसो बुद्धिश्च वयसा तथा आर्यसेवया समीचीना भवति ॥ ५० ॥ अनुज्ञाय तथेत्यङ्गीकृत्य ॥ ५१ ॥ ततश्च तौ प्रह्लादाय धर्मादिकमूचतुः—प्रश्रितश्चासाववनतश्च तस्मै ॥ ५२ ॥ यथा यथावत्त्रिवर्गमुपशिक्षितमपि न साधु मेने तत्तां शिक्षां च । कुतः । द्वन्द्वैः रागद्वेषादिभिर्विषये-ष्वारमणं येषां तैरुपवर्णिताम् ॥ ५३ ॥ परावृत्तोऽन्यत्र गतः । स उपहूतः । सन्धिः पादपूरणार्थम् । क्रीडार्थं कृतक्षणैः कृतोत्सवैर्लब्धावसरैरिति वा ॥ ५४ ॥

जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ॥ न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥ इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ॥ बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ५० ॥ तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मो ह्यस्योपदेष्टव्यो राज्ञां ये गृहमेधिनाम् ॥५१॥ धर्ममर्थं च कामं च नितरां चानुपूर्वशः ॥ प्रह्लादायोचतू राजन्प्रश्रितावनताय च ॥५२॥ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ॥ न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥ ५३ ॥ यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥५४॥ अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ॥ उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥५५॥ ते तु तद्गौरवात्सर्वे त्यक्तक्रीडापरिच्छदाः ॥ बाला नदूषितधियो द्वन्द्वारामेरितेहितैः ॥५६॥ पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ॥ तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ प्रह्लाद उवाच ॥

कौमार आचरेत्प्राज्ञो धर्मान् भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥ ॥ ॥

तन्निष्ठां तेषां निष्ठां जन्ममरणादिलक्षणां विद्वान् ॥ ५५ ॥ द्वन्द्वारामाणामीरितैरीहितैश्च न दूषिता धीर्येषाम् । यतो बालाः ॥ ५६ ॥ तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यैः ॥ ५७ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥छ॥ ॥ षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ॥ अनुकम्प्य परं तत्त्वं नारदोक्तमुपादिशत् ॥ १ ॥ निरर्थकक्रियालापैरायुर्व्ययमजानताम् ॥ प्रह्लादः सदयं प्राह धर्मं भागवतं कृती ॥ २ ॥ कौमार इत्यादिना । इहैव मानुषजन्मनि धर्मानाचरेत् । यतोऽर्थदमेतत् । तत्र च कौमार एव । यतस्तदप्यध्रुवम् । न चैवंभूतं जन्मान्तरम् यतो दुर्लभम् । तत्र धर्मानेवाचरेन्न सुखार्थं प्रयासान् । तत्र भागवतानेव न काम्यान् ॥ १ ॥ ॥ ॥ ॥

१ चिन्त्यं स्वाभिलषणीयवस्तुनोऽप्राप्त्या चिन्तनीयं इति चक्र० । २ भक्तिशिक्षार्थमयं निभृतः समय इति कृतावसरैः इति चक्र० । ३ नारदवाक्यमिदम् । ४ पर्युपासत प्रह्लादस्य परित उपविविशुः । ५ तन्निष्ठां तेषां बालानां स्वस्मिन्गुरुत्वनिष्ठां विद्वान् जानन् इति चक्र० ।

इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति—यथा हीति चतुर्भिः। इह पुरुषस्य विष्णोः पादोपसर्पणमेव यथानुरूपं योग्यमित्यर्थः। यद्यस्मादेप प्रिय इत्यादि ॥ २ ॥ ननु भोगोद्यमः कथं त्याज्य इति चेत्तत्राह—सुखमिति। सर्वत्र पश्चादावपि। दैवात् पूर्वादृष्टादेव ॥ ३ ॥ अतस्तदर्थं प्रयासो न कर्तव्यः। यतः प्रयासात्परं केवलमायुषो व्यय एव। यतस्तथा तेन प्रकारेण क्षेमं न प्राप्नोति ॥ ४ ॥ भयमाश्रितः संसारं प्राप्तः। पुरुषरूपं शरीरं यावत्पुष्कलमस्ति न विपद्येत अक्षमं न भवेन्न नश्येदिति वा तावच्छीघ्रं क्षेमाय यतेत ॥ ५ ॥ आयुर्व्ययक्रममाह—पुंस इति त्रिभिः। यद्यस्मात् शेते ॥ ६ ॥ विंशतिवर्षाण्यायुर्याति ॥ ७ ॥ दुरापूरेण दुःखैः समन्तादापूर्यमाणेन ॥ ८ ॥ ननु यौवने गृहासक्तोऽपि पश्चाद्विरक्तः सन् क्षेमं यास्यतीत्याशङ्क्य तदसंभवं दर्शयन्कौमार

यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ॥ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥ सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ॥ सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः ॥ ३ ॥ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ॥ न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ४ ॥ ततो यतेत कुशलः क्षेमाय भयमाश्रितः ॥ शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ ५ ॥ पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ॥ निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ६ ॥ मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ॥ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ ७ ॥ दुरापूरेण कामेन मोहेन च बलीयसा ॥ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ८ ॥ को गृहेषु पुमान्सक्तमात्मानमजितेन्द्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ ९ ॥ को न्वर्थतृष्णां विसृजेत्प्राणेभ्योऽपि य ईप्सितः ॥ यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १० ॥ कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ॥ सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥ ॥ ॥

एवाचरेदित्येतदुपपादयति—को गृहेष्विति सप्तभिः ॥ ९ ॥ यमर्थमसुभिः क्रीणाति प्राणहानिमङ्गीकृत्यापि साधयति तस्करादिः। तस्मिन्नर्थे तृष्णां को नु विसृजेत् ॥ १० ॥ किंच कथमित्यादि। प्रियायाः सङ्गादिकं स्मरन्कथं त्यजेतेति तृतीयेनान्वयः। मन्त्रान् हितशिक्षालापान्। सुहृत्सु च सङ्गम्। तेषां स्नेहेन सितो बद्धः। कलानि मधुराण्यक्षराणि येषां तेषां च सङ्गम्। तेष्वनुरक्तं चित्तं यस्य ॥ ११ ॥ ताः श्वशुरगृहे स्थिताः। हृदय्या हृदयङ्गमाः। मनोज्ञा उरवः परिच्छदा येषु तान् गृहान्। वृत्तीर्जीविकाः। कुल्याः कुलपरम्परागताः ॥ १२ ॥ ॥ ॥ ॥ ॥

१ पादयोरुप समीपे सर्पणं प्राप्तिः। २ पुष्कलं जरारोगाद्यभावात्पुष्टम्। ३ यद्यस्मादेप आत्मा आत्मत्वात्सुहृत्प्रियश्चेत्यर्थः। ४ 'यथाऽसुखं' इति वीर० पाठः। ५ मुकुन्दचरणाम्बुजं भजन्निति शेषः। यथाकथंचिद्वैषयिकसुखलाभेऽपि मुकुन्दचरणाम्बुजं भजन् यथा येन प्रकारेण क्षेमं प्राप्नोति तथेति योजनीयम्। ६ तदर्धं पञ्चाशद्वर्षात्मकमायू रात्रौ निष्फलं यातीत्यर्थः। ७ 'कैशोरे' इति पाठः। ८ अकल्पस्य किंचिदपि कर्तुमसमर्थस्य। ९ तस्करो रात्रौ धनिनां गृहं प्रविशति, सेवक आयुधोपजीवी युद्धाभिमुखं चलति, वणिक् नाविकश्च समुद्रादिदुर्गमदेशप्रवेशेन इति चक्र०।

कोशस्कृत् कोशस्कारी कीटः । स यथा आत्मनो हितं गृहं कुर्वाणो निर्गमाय द्वारमपि नावशेषयति तथा कर्माणीहमानः । नन्ववितृप्तकामोऽपि दोषदर्शनेन विरक्तः संस्त्यजेत्तत्राह—औपस्थ्यं शैश्न्यं जैह्व्यं च सुखं बहुमन्यमानस्तदेवाधिकं मन्यमानः । अतो दुरन्तो मोहो यस्य स कथं विरज्येत विरक्तः स्यात् ॥ १३ ॥ दुरन्तमोहत्वं दर्शयन्नाह—कुटुम्बपोषणाय वियत्क्षीयमाणं निजमायुः पुरुषार्थं च विहतं न बुध्यते । अत एव तापत्रयेण दुःखितचित्तोऽपि न निर्विद्यते तत्र दुःखबुद्धिं न करोति । यतः स्वकुटुम्बे रामो रतिर्यस्य ॥ १४ ॥ प्रत्युत चौर्यं करोतीत्याह—वित्तेष्विति । नित्यमभिनिविष्टं चेतो यस्य स परवित्तहर्तुः प्रेत्य नरकलक्षणमिह च दण्डादिरूपं दोषं यद्यपि विद्वान् जानन्नथाप्यशान्ताभिलापस्तत्परवित्तं हरत्येव ॥ १५ ॥ तदेवं को गृहेषु पुमानित्यादिसप्तभिः श्लोकैरुपपादितम्, गृहादिषु प्रसक्तस्य वैराग्याद्यसंभवमुपसंहरति—विद्वानिति । स्वलोकायात्मपरामर्शाय न कल्पते । किंतु विमूढो यथा तथा विद्वानपि तमोऽभिनिवेशमेव प्रपद्यते । तत्र हेतुः—य इति । स्वीयमिदं पारक्यमिदमिति विभिन्नो भावो भावना यस्य सः ॥ १६ ॥ तस्मात्कौमार एव

त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः ॥ औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥१३॥ कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं[2] प्रमत्तः ॥ सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥ १४ ॥ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ॥ प्रेत्येह चाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥१५॥ विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन्स्वलोकाय[1] न कल्पते वै ॥ यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥ १६ ॥ यतो न कश्चित्क्व च कुत्रचिद्वा दीनः स्वमात्मानमलं समर्थः ॥ विमोचितुं कामदृशां विहारक्रीडामृगो[3] यन्निगडो विसर्गः ॥१७॥ ततो विदूरात्परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु ॥ उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः ॥ १८ ॥ नह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ॥ आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः ॥१९॥ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ॥ भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥२०॥

भागवतान्धर्मानाचरेदिति सहेतुकमुपसंहरति—यत इति । यतः कश्चिदपि स्वमात्मानं मोचितुं न समर्थस्ततो नारायणमुपेत शरणं यातेत्युत्तरेणान्वयः । असामर्थ्ये हेतुः—अलं दीनो लम्पटः । अतः कामो दृशि यासां तासां विहारे क्रीडायां निमित्ते क्रीडामृगः । विहारमिति पृथक्पाठे तासां विहारसाधनमात्मानम् । यतस्तासां क्रीडामृगः स इत्यन्वयः । किंच यद्यासु निगडः शृङ्खलातुल्यो विसर्गः पुत्रपौत्रादिरूपो भवति ॥ १७ ॥ विदूराद्दूरतः सङ्गं परिहृत्य । यद्वा अविदूराच्छीघ्रं नारायणमुपेतेत्यन्वयः । यस्मात्स एवापवर्ग इषित इष्टः ॥ १८ ॥ ननु बालानामस्माकं तद्भजनमशक्यमिति चेत्तत्राह—नहीति । बह्वायासोऽतिप्रयासः ॥ १९ ॥ आत्मत्वात्सर्वत्र सिद्धत्वादिति च हेतुद्वयमुपपादयति—परावरेष्विति चतुर्भिः । ब्रह्मा अन्तो येषां स्थावर आदिर्येषां तेषु भूतेषु जीवेषु । भौतिकेष्वजीवेषु घटादिषु । महत्सु च भूतेष्वाकाशादिषु ॥ २० ॥ ॥ ॥ ॥ ॥

१ स्वलोकाय कोऽहं किं करोमीति स्वप्नवल्लोकयितुमित्यर्थः चक्र०। २ 'निहित' इति वीर० पाठः। तत्र विशेषेण हितमनुकूलमर्थं न वेदेत्यर्थः।३ 'विहारं' इति पाठे आत्मानमित्यस्य विशेषणम् चक्र०।

गुणसाम्ये प्रधाने। गुणव्यतिकरे महत्तत्त्वादौ च। परो ब्रह्मस्वरूपः ॥ २१ ॥ कथं तर्हि द्रष्टृदृश्यभोक्तृभोग्यादिभेदो माययेत्याह—प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया निर्देश्यः। दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्यो मायया ईयत इत्युत्तरेणान्वयः। वस्तुतस्तु स्वयमविकल्पितोऽनिर्देश्योऽपि सन्। यद्वा अनिर्देश्योऽप्येवं निर्देश्यः सन् विकल्पित ईयत इत्यन्वयः ॥ २२ ॥ यतः केवलोऽनुभवात्मक आनन्द एव स्वरूपं यस्य। ननु स एव चेत्सर्वत्र तर्हि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत तत्राह—गुणात्मकः सर्गो यस्याः सा गुणसर्गा तया माययान्तर्हितमैश्वर्यं येन सः ॥ २३ ॥ यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचितं दयां सौहृदं च कुरुत। यया दयया। उन्मुच्य संत्यज्य ॥ २४ ॥ ततः किमत आह—तुष्टे च तत्र तस्मिन्किमलभ्यम्। तथापि गुणपरिणामाद्दैवादेव स्वसिद्धा अयत्नतः सिद्धा ये धर्मादयस्तैः किम्। अगुणेन च मोक्षेण काङ्क्षितेन किम्। तमुपगायतां नोऽस्माकमकाङ्क्षितस्यापि तस्य सिद्धेः। यद्वा मा भून्मोक्षस्तस्य चरणयोः सारंजुषां सुधां सेवमानानां तेनापि किमित्यर्थः ॥ २५ ॥ ननु च धर्मादेरपुरुषार्थत्वे किमित्याचार्याभ्यां वेदोक्तत्वेन सत्य

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ॥ एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥२१॥ प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ॥ व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥ केवलानुभवानन्दस्वरूपः परमेश्वरः ॥ माययान्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥ तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् ॥ आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥ तुष्टे च तत्र किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः ॥ धर्मादयः किमगुणेन च काङ्क्षितेन सारंजुषां चरणयोरुपगायतां नः ॥ २५ ॥ धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता ॥ मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥ ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय ॥ एकान्तिनां भगवतस्तदकिंचनानां पादारविन्दरजसाप्लुतदेहिनां स्यात् ॥ २७ ॥ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ॥ धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात् ॥ २८ ॥ ॥

त्वेनाभिहितस्तत्राह—धर्मोऽर्थः कामश्चेति यस्त्रिवर्गस्तदर्थं च य ईक्षाद्या अभिहिताः। ईक्षा आत्मविद्या त्रयी कर्मविद्या। नयदमौ तर्को दण्डनीतिश्च। द्विविधा च वार्ता जीविका। तदेतत्सर्वं निगमस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणः परमस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सर्वं सत्यं मन्ये। सत्यपरत्वात्। अन्यथा तदसत्यमेव, यद्वा तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये। सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेवेत्यर्थः। तदुक्तं भगवता—'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति ॥ २६ ॥ तेषां पुनर्विश्वासार्थं गुरुसंप्रदायमाह—ज्ञानमिति। यत्र नारदः श्रोता तत्र कुतो मादृशानामधिकार इति माशङ्कीत्याह—भगवत एकान्तभक्तानां यत्पादरजस्तेनाप्लुतानां स्नातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यान्न तूत्तमानामेवेति नियमः ॥ २७ ॥ अत एव मयापि पूर्वं नारदाच्छ्रुतम्। विज्ञानसहितमनुभवपर्यन्तं ज्ञानं धर्मं च श्रुतम् ॥ २८ ॥ ॥ ॥ ॥

१ उप मोक्षादप्याधिक्येन गायतामिति चरणयोः कमलत्वं सारस्य सौरभ्यमाधुर्यादित्व तत्सेविना भ्रमरत्वमारोपितम् इति चक्र०। २ चक्रवर्ती तु निगमस्यैव सबन्धि वेदोक्तमेव मन्ये नतु दूषयामि तादृशाधिकारिसंमतत्वादिति भावः। सत्यं सद्भ्यो हितं तु परमस्य पुंसः परमे पुंसि स्वात्मार्पणं स्वस्यात्मनस्तदीयत्वेनार्पणम् इति व्याचख्यौ।

तत्रातिविस्मिताः पृच्छन्ति—प्रह्लादेति । हे प्रह्लाद, त्वं वयमेताभ्यां शण्डामर्काभ्यामृतेऽन्यं गुरुं न विद्मः । एतदागमनात्पूर्वमेवाहं नारदपार्श्वं गत इति चेत्तत्राहुः—बालानामप्यतिशिशूनामस्माकमेतावीश्वरौ नियन्तारावतस्तवान्यत्र गमनं न संभवति ॥ २९ ॥ स एवात्रागत इत्यपि न संभवतीत्याहुः—बालस्येति । दुरन्वयो दुर्घटः । विश्रम्भकारणं विश्वासहेतुः ॥३०॥ ॥ इति श्रीमद्भागवते म० पु० सप्तमस्कन्धे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥
सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् । प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ १ ॥ अत्रापि नारदादेतन्मया गर्भे इतीरितुम् ॥ तत्प्रस्तावकथामाह पद्यैः

॥ दैत्यपुत्रा ऊचुः ॥ प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ॥ एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥ बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ॥ छिन्धि नः संशयं सौम्य स्याच्चेद्विश्रम्भकारणम् ॥ ३० ॥ ॥ इति श्रीमद्भा० म० पु० स० प्रह्लादानुचरिते षष्ठोऽध्यायः ॥ ६ ॥ ॥ नारद उवाच ॥ एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ॥ उवाच स्मयमानांस्तान् स्मरन्मदनुभाषितम् ॥ १ ॥ ॥ प्रह्लाद उवाच ॥ पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ॥ युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति ॥ २ ॥ पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ॥ पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥ तेषामतिबलोद्योगं निशम्यासुरयूथपाः ॥ वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतोदिशम् ॥ ४ ॥ कलत्रपुत्रमित्राप्तान्गृहान्पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥ व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः ॥ इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥ नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ॥ यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥ प्राह नैनां सुरपते नेतुमर्हस्यनागसम् ॥ मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम् ॥ ८ ॥ ॥ इन्द्र उवाच ॥ आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ॥ आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥ ॥ नारद उवाच ॥ अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ॥ त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥ १० ॥ इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन्वचः ॥ अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥

षोडशभिः सुधीः ॥२॥१॥ अस्माकं पितरि हिरण्यकशिपौ । स्वकृतेनैव पापेन पापोऽसावभक्षि भक्षित इति हर्षेण वदन्तो युद्धोद्यमं चक्रुः ॥२॥३॥४॥५॥ राज्ञः शिबिरमावासं व्यलुम्पन्सर्वस्वापहारेण नाशितवन्तः ॥ ६ ॥ ७ ॥ अनागसं निरपराधामेनां नेतुं मार्हसीति प्राह ॥ ८ ॥ अविषह्यं दुःसहम् । अतोऽनया प्रसवपर्यन्तमत्रास्यताम् । ततश्चार्थस्य पदवीं मार्गं गतः प्राप्तः सन् । जातं पुत्रं हत्वा मोक्ष्यामीत्यर्थः ॥९॥ साक्षात्स्वगुणैरेव महान्नतु पित्रादिसंबन्धात् । त्वया हेतुभूतेन संस्थां मृत्युं न यास्यति । तत्र हेतवः—निष्किल्बिष इत्यादयः ॥ १० ॥ अनन्तस्य प्रियो योऽहं, स वा प्रियो यस्य तस्य मम भक्त्या एनां प्रदक्षिणीकृत्य ॥ ११ ॥

१ स्मयमानान् किं कथयतीत्याश्चर्यचकितान् । २ पितरीत्यादि श्लोकद्वयमेकं वाक्यम् । ३ नावेक्षमाणास्तत्प्रतीक्षामकुर्वाणाः इति सिद्धां० । ४ यदृच्छया भाग्यवशात् । ५ परपरिग्रहं परदारान् ।

इहोष्यतामित्याहेति शेषः ॥ १२ ॥ अन्ति समीपे ॥ १३ ॥ अन्तर्वत्नी गर्भिणी । इच्छया भर्तुरागमनानन्तरं प्रसूतये । एवमपि स्वगर्भस्य क्षेमाय ॥ १४ ॥ तस्याः शोकशान्त्यै धर्मस्य तत्त्वं भक्तिलक्षणं, ज्ञानमात्मानात्मविवेकस्तदुभयं प्रादात् । ईश्वरः समर्थः ॥ १५ ॥ १६ ॥ भूयाद्भवेत् । वैशारदी । स्वार्थे तद्धितः । देहाद्यहंकारच्छेदनिपुणेत्यर्थः ॥ १७ ॥ कासौ वैशारदी धीरित्यपेक्षायां नारदोक्तमेव देहात्मविवेकप्रकारमाह—जन्मेति दशभिः । जन्माद्या जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंभूता इमे षड्भावा विकारा वृक्षे सत्येव यथा फलानां दृश्यन्ते तद्वदात्मनि तथैव स्थिते देहस्य दृष्टा इत्यर्थः । ईश्वरी विकारसमर्था मूर्तिर्यस्य तेन ॥ १८ ॥ तदेवं देहधर्मैस्तद्वैलक्षण्येनात्मनो देहाद्भेदो दर्शितः, इदानीमात्मधर्मैरेव भेदं स्फुटयंस्तदहंकारादिकं त्याजयति—आत्मेति । आत्मा नित्यः । 'अविनाशी वारेऽयमात्मा' इति श्रुतेः । अव्ययोऽपक्षयशून्यः । 'ऋचो अक्षरे परमे व्योमन्' इति श्रुतेः । शुद्धः 'निरवद्यं

ततो नो[3] मातरमृषिः समानीय निजाश्रमम् ॥ आश्वास्येहोष्यतां वत्से यावत्ते भर्तुरागमः ॥ १२ ॥ तथेत्यवात्सीद्देवर्षेरन्ति साऽप्यकुतोभया ॥ यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्तत ॥ १३ ॥ ऋषिं पर्यचरत्तत्र भक्त्या परमया सती ॥ अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥ ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ॥ धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम् ॥ १५ ॥ तत्तु कालस्य दीर्घत्वात्स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात्स्मृतिः ॥ १६ ॥ भवतामपि भूयान्मे यदि श्रद्दधते वचः ॥ वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥ जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ॥ फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ॥ अविक्रियः स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥ १९ ॥ एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ॥ अहंममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥ स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ॥ क्षेत्रेषु देहेषु[4] तथात्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत ॥२१॥ ॥ ॥ ॥

निरञ्जनम्' इति श्रुतेः । एकः 'एकमेवाद्वितीयम्' इति श्रुतेः। क्षेत्रज्ञः 'विज्ञातारमरे केन विजानीयात्' इति श्रुतेः । आश्रयः 'यस्मिन्द्यौः पृथिवी चान्तरिक्षम्' इति श्रुतेः । अविक्रियः 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । स्वदृक् 'आत्मज्योतिः सम्राडिति होवाच' इति श्रुतेः। हेतुः 'स इमाँल्लोकानसृजत' इति श्रुतेः । व्यापकः 'सत्यं ज्ञानमनन्तम्' इति श्रुतेः । असङ्गी 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । अनावृतः 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति श्रुतेः ॥ १९ ॥ एतैर्द्वादशभिरात्मनो लक्षणैः परैः श्रेष्ठैर्विवेकसमर्थैर्देहाद्भेदं विद्वानसद्भावं मिथ्याबुद्धिं त्यजेत् ॥ २० ॥ नन्वेवं विविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवेन ब्रह्मताप्राप्तिः कथं स्याद्यतोऽहंकारादिकं त्यजेदित्यपेक्षायां तत्प्राप्तिप्रकारं सदृष्टान्तमाह—स्वर्णाकरक्षेत्रेषु स्फुरत्स्वर्णकणेषु ग्रावसु योगैर्धमनाद्युपायैस्तदभिज्ञ उपायाभिज्ञो हेमकारो यथा स्वर्णं प्राप्नुयात् । आत्मयोगैरात्मप्राप्त्युपायैः । ब्रह्मगतिं ब्रह्मताम् । अध्यात्मवित् आत्माधिकृतकार्यकारणसंघातज्ञाता ॥ २१ ॥ ॥

१ अथवा विशारदो भगवांस्तद्विषया वा इति चक्र० । २ यद्वा ईश्वरस्य मूर्तिः समष्टिव्यष्ट्यात्मकं शरीरं यतो भवति तेन। ३ नः अस्माकमिति स्वत्वभिप्रायेण बहुवचनम्। ४ देहरूपक्षेत्रेषु ।

अध्यात्ममधिविवेकमात्मप्राप्त्युपायमाह—अष्टाविति त्रिभिः। मूलप्रकृतिर्महदहंकारौ पञ्चतन्मात्राणि चेत्यष्टौ। त्रयः सत्त्वादयस्ते च प्रकृतिगुणा एव, नतु भिन्नाः। एकादशेन्द्रियाणि पञ्चमहाभूतानि चेति षोडश। पुमानात्मा एकः प्रोक्तः कपिलादिभिराचार्यैः। एकत्वे हेतुः—एषु साक्षित्वेनान्वयात्। तदुक्तम् 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त॥ षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥' इति ॥२२॥ जगज्जङ्गमम्। तस्थुः स्थावरम्। अत्रैव सर्वसंघातात्मके देह एव पुरुषो मृग्योऽन्वेष्टव्यः। सुशकं चैतदित्याह—नेति नेतीत्यन्यापोहे क्रियमाणे स्वयमेवातत्त्यजन्। अनात्मवर्गात्पृथगुपलभ्यमान इत्यर्थः ॥२३॥ मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनान्वयः। अत एव मणिभ्यः सूत्रस्येवैकैकव्यतिरेकश्च। तयोर्द्वन्द्वैक्यम्। तेन यो विवेकः पूर्वोक्तो वा तेन उशता शुद्धेनात्मना मनसा। सर्गस्थानसमाम्नायैः सृष्टिस्थितिसंहारैः। 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्युक्तसर्गाद्यनुसंधानेनेत्यर्थः। विमृशद्भिर्विचारयद्भिः असत्वरैरव्यग्रैर्मृग्य इति पूर्वेणान्वयः ॥२४॥ विमर्शप्रकारमाह—बुद्धेरिति द्वाभ्याम्। अध्यक्षः साक्षी ॥ २५ ॥ अत एभिर्बुद्धिभेदैः परिणामैः पर्यस्तैः परितः क्षिप्तैरनात्मधर्मत्वेन निरस्तैः। बुद्धिधर्मत्वे

अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः॥ विकाराः षोडशाचार्यैः पुमानेकः समन्वयात्[2]॥ २२ ॥ देहस्तु सर्वसंघातो जगत्तस्थुरिति द्विधा॥ अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन्[1]॥ २३ ॥ अन्वयव्यतिरेकेण विवेकेनोशतात्मना॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः॥ ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः॥ २५ ॥ एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः॥ स्वरूपमात्मनो बुध्येद्गन्धैर्वायुमिवान्वयात्[3] ॥२६॥ एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः॥ अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥२७॥ तस्माद्भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम्॥ बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥२८॥ तत्रोपायसहस्राणामयं भगवतोदितः॥ यदीश्वरे[4] भगवति यथा यैरञ्जसा रतिः॥ २९ ॥ ॥ ॥ ॥

हेतुः—त्रिवर्णैस्त्रिगुणात्मकैः। क्रियोद्भवैः कर्मजन्यैः। बुद्धेरेव त्रिगुणात्मकत्वात्कर्मकर्तृत्वाच्च तस्या एवैता अवस्थाः। आत्मा तु बुद्ध्यन्वयात्तदवस्थावानिवाभाति न तत्त्वत इत्यात्मनः स्वरूपं बुध्येज्जानीयादित्यर्थः। अत्र दृष्टान्तः—कुसुमधर्मैर्गन्धैस्तदाश्रयं वायुमिव ॥२६॥ ननु तर्हि यथा कुसुमोपाधिकोऽपि वायोर्गन्धो विवेकज्ञानेन निवर्तते एवमात्मनः संसारो न निवर्तेत इत्याशङ्क्याह—एतद्द्वारो बुद्धिद्वारकस्तदवस्थाद्वारको वा संसारो न स्वतः। हि यस्माद्बुद्धेर्ये गुणाः कर्माणि च तैर्निबध्यत इति। तथा स चाज्ञानमूलोऽतोऽपार्थो मिथ्याभूतोऽपि स्वप्न इवेष्यते। वायोस्तु गन्धद्रव्यसंबन्धस्य वास्तवत्वाद्विषमो दृष्टान्तः ॥२७॥ यस्मादेवं निवृत्तिर्घटते तस्माद्बीजमज्ञानं तस्य निर्हरणं दहनम्। किं तत्। योगः। कथंभूतः। धियः प्रवाहं जाग्रदादिरूपमुपरमयतीति तथा ॥२८॥ तदेवं ज्ञानप्रकारमुक्त्वा तत्साधनं धर्मस्य तत्त्वं नारदोक्तमेवाह—तत्रेति पञ्चभिः। यैर्धर्मैर्यथा यथावदनुष्ठितैर्वा भगवति श्रीनारायणे रतिरिति यदयमुपायो भगवतोक्तः। तथाच गीतासूक्तम् 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥' इति। 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यादि च ॥२९॥

१ अतत् तद्भिन्नं वस्तु त्यजन् त्यजद्भिरित्यर्थः। २ समन्वयात् एषु सम्यगन्वयं संबन्धं प्राप्य वर्तमानः, यद्वा समन्वयं संबन्धं अतति सततं व्याप्नोतीति 'अत सातत्यगमने' क्विबन्तः इति चक्र०। ३ अन्वयात् संबन्धमात्रादेव गन्धैः पुष्पादिगन्धैर्वायुं गन्धवन्तं जानीयात् इति चक्र०। ४ यत् यस्मात्क्रियायोगाद्रतिर्भवति अयमेवोपाय इत्यन्वयः इति चक्र०।

तत्रैवान्तरङ्गान्धर्मानाह—गुरोः शुश्रूषया भक्त्या प्रेम्णा सर्वेषां लब्धानामर्पणेन च ॥ ३० ॥ तस्य लिङ्गानां मूर्तीनामीक्षणमर्हणमादिर्येषां वन्दनादीनां तैश्च ॥ ३१ ॥ ३२ ॥ निर्जितः षण्णां कामक्रोधलोभमोहमदमत्सराणामिन्द्रियाणां वा वर्गो यैः ॥ ३३ ॥ भगवद्भक्तेर्लिङ्गान्याह—निशम्येति त्रिभिः । गुणान्भक्तवात्सल्यादीन् । अतिहर्षेणोद्गताः पुलका अश्रूणि च तैर्गद्गदं यथा भवत्येवं प्रोत्कण्ठो मुक्तकण्ठ उद्गायति ॥ ३४ ॥ ३५ ॥ तस्य भावश्चेष्टादिस्तस्य भावना तेनानुकृते आशयाकृती मनःशरीरे यस्य । निर्दग्धं बीजमज्ञानमनुशयो वासना च यस्य सः सम्यगेति प्राप्नोति ॥ ३६ ॥ ततः किमत आह—अधोक्षजस्यालम्भं मनसा स्पर्शम् । पाठान्तरे तस्याश्रयणम् । अशुभात्मनः अशुभो रागादियुक्त आत्मा मनो यस्य । संसृतिचक्रशातनं तन्निवर्तकं बुधा विदुस्तदेव

गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च ॥ सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥३०॥ श्रद्धया तत्कथायां च कीर्त-
नैर्गुणकर्मणाम् ॥ तत्पादाम्बुरुहध्यानात्तल्लिङ्गेक्षार्हणादिभिः ॥३१॥ हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ॥ इति भूतानि
मनसा कामैस्तैः साधु मानयेत् ॥३२॥ एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ॥ वासुदेवे भगवति यया सँल्लभते रतिम्
॥३३॥ निशम्य कर्माणि गुणानतुल्यान्वीर्याणि लीलातनुभिः कृतानि ॥ यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति
रौति नृत्यति ॥३४॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ॥ मुहुः श्वसन्वक्ति हरे जगत्पते नारा-
यणेत्यात्ममतिर्गतत्रपः ॥ ३५ ॥ तदा पुमान्मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ॥ निर्दग्धबीजानुशयो मही-
यसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३६ ॥ अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् ॥ तद्ब्रह्म
निर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥ कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्र-
वत्सतः ॥ स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३८ ॥ रायः कलत्रं पशवः सुतादयो
गृहा मही कुञ्जरकोशभूतयः ॥ सर्वेऽथ कामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः ॥ ३९ ॥ ॥

ब्रह्मणि निर्वाणं लयो मोक्षस्तदात्मकं सुखं विदुः । हृदीश्वरमन्तर्यामिणम् ॥ ३७ ॥ भक्तिरशक्येति च न मन्तव्यमित्याह—क इति । छिद्रवदाकाशवद्धृदि तिष्ठतः । विषयाणामुपपादनैरर्जनैः किम् । तत्र हेतुः—सर्वदेहिनां सामान्यतः विषयनिष्ठत्वे सूकरादिसाधारण्यापत्तेरित्यर्थः । नचैवमादौ पौनरुक्त्यदोषः, नारदोक्तानुवादरूपत्वादस्य प्रकरणस्य ॥ ३८ ॥ अनर्थकं विषयार्जनमित्याह—रायोऽर्थाः क्षणभङ्गुरमायुर्यस्य तस्यैते कियत्प्रियं कुर्वन्ति । तदुक्तमितिहासेषु 'धनं हि पुरुषो लोके पुरुषं धनमेव वा ॥ अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया ॥' इति ॥ ३९ ॥ ॥ ॥ ॥

१ 'अधोक्षजालम्बम्' इत्येवंरूपे । २ शातनमिति शीलार्थे ल्युट् इति क्रम० । ३ साधूनां सदाचाराणां भक्तानाम् । ४ 'आत्मगतिः' इति पाठः । ५ स्वे हृदि तु छिद्रवत् छिद्रे इव सतः चोरो यथा महता यत्नेन छिद्रे धनलोभेन धनिकगृहछिद्रे प्रविष्टो भवति तद्वद्भक्तिरसलोभेन स्वभक्तहृदि प्रविष्टस्य इति सिद्धां० । ६ 'कौमार आचरेत्' इत्यादिनोपदिष्टस्यैव पुनरुपदेशात्पौनरुक्त्यं शङ्कते—नचेति ।

'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ॥ अभिलाषोपपन्नं च सुखं स्वर्गपदास्पदम् ॥' इत्येवंभूताः स्वर्गादिभोगा अपि न सेवार्हा इत्याह—एवं हीति । क्षयिष्णुत्वे हेतुः—क्रतुभिः कृता इति । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः । अत एव पुण्यतारतम्येन सातिशयाः नच निर्मलाः, स्पर्धादिमत्त्वात् । न विद्यते दृष्टं श्रुतं च दूषणं यस्मिन् ॥ ४० ॥ किंच यदध्यर्थ्य यत्संकल्प्य । अतः संकल्पिताद्विपर्यासं विपरीतं फलममोघमवश्यं प्राप्नोति ॥ ४१ ॥ तदेव दर्शयति—सुखायेति । ईहया इच्छया क्रियया वा । यः पूर्वमनीहाया हेतोः सुखेनावृतो व्यास आसीत्स ईहया दुःखमाप्नोत्येव ॥ ४२ ॥ किंच कामान्भोगान् । काम्यैर्विषयैः कर्मभिर्वा । पारक्यः श्वादिभोग्यो न त्वात्मीयो भङ्गुरश्च ॥ ४३ ॥ किमु देहाद्व्यवहिता

एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ॥ तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ ४० ॥ यदर्[1]ध्यर्थ्येह कर्माणि विद्वन्मान्यसकृन्नरः ॥ करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४१ ॥ सुखाय दुःखमोक्षाय संकल्प इह कर्मिणः ॥ सदाप्नोतीहया दुःखमनीहायाः सुखावृतः ॥ ४२ ॥ कामान्कामयते काम्यैर्यदर्थमिह पूरुषः ॥ स वै[2] देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥४३॥ किमु व्यवहितापत्यदारागारधनादयः ॥ राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४४॥ किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥ अनर्थैरर्थसंकाशैर्नित्यानन्दमहोदधेः[3] ॥४५॥ निरूप्यतामिह स्वार्थः कियान्देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४६ ॥ कर्माण्यारभते देही देहेनात्मानुवर्तिना ॥ कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७॥ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ॥ भजतानीहयात्मानमनीहं[4] हरिमीश्वरम् ॥४८॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ॥ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ४९ ॥ देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ॥ भजन्मुकुन्दचरणं स्वस्तिमान्स्याद्यथा[5] वयम् ॥ ५० ॥ नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ॥ प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५१ ॥

अपत्यादयो ममताविषयाः पारक्या इति वक्तव्यम् ॥ ४४ ॥ किंच स्वयं पुरुषार्थरूपस्य किमेतैरतितुच्छैरित्याह—किमेतैरिति ॥ ४५ ॥ भोगावसराभावाच्चैतैः क उपयोग इत्याह—निरूप्यतामिति । प्राचीनैः कर्मभिः क्लिश्यमानस्य । कर्मभिः कियान्स्वार्थ इति वाऽन्वयः ॥ ४६ ॥ ननु कर्मसु समाप्तेषु भोगावसरः स्यात्तत्राह—कर्माणीति । नचेदं कर्म तस्य फलं देहादिकं च परमार्थ इत्याह—उभयं कर्म च देहं च । अविवेकतोऽज्ञानेनैव तनुते ॥ ४७ ॥ अर्थादयो यदपाश्रया यदधीनाः ॥ ४८ ॥ भूतानां प्राणिनाम् । जीवसंज्ञितोऽन्तर्यामी ॥ ४९ ॥ असुराणामस्माकमत्राऽनधिकार इत्यपि न वाच्यमित्याह—देव इति पञ्चभिः ॥ ५० ॥ ५१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'यदर्थं इह' इति पाठः । २ अत्र पाठे यत्तच्छब्दयोरध्याहारः । ३ नित्यो भजनरूप आनन्दरसोदधिर्यस्य तस्य भक्तजनस्य चक्र० । ४ अनीहया ऐहिकामुष्मिकपदार्थवासनात्यागेन । अनीहं निरपेक्षम् । ५ अत्र तद्भजने ।

॥१६॥

६८२

अमलया निष्कामया । अन्यद्विडम्बनं नटनमात्रम् ॥ ५२ ॥ ५३ ॥ अच्युततताममृतत्वम् ॥ ५४ ॥ अध्यायद्वयोक्तमुपसंहरति—एतावानिति । तदीक्षणं गोविन्द-दृष्ट्या संमाननम् ॥५५॥ ॥ इति श्रीमद्भा० म० पु० सप्तमस्कन्धे भा० दी० टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमेऽतिरुषा सूनुं निघ्नन् दैत्यो हतः स्वयम् ॥ आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः ॥ १ ॥ अन्तः कृपासुधापूर्णो बहिःक्रोधो नृकेसरी ॥ दैत्येन्द्रमरिभावेन भजन्तं समभावयत् ॥ २ ॥ १ ॥ एकान्तसंस्थितां

न दानं न तपो नेज्या न शौचं न व्रतानि च ॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ५२ ॥ ततो हरौ भगवति
भक्तिं कुरुत दानवाः ॥ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५३ ॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ॥
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५४ ॥ एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः ॥ एकान्तभ-
क्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् ॥ ५५ ॥ ॥ इति श्रीम० म० पु० स० दैत्यपुत्रानुशासनं नाम सप्तमोऽध्यायः ॥७॥
॥ नारद उवाच ॥ ॥ अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ॥ जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥ अथा-
चार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ॥ आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥ २ ॥ श्रुत्वा तदप्रियं दैत्यो दुःसहं
तनयानयम् ॥ कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥ क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ॥ आहेक्षमाणः
पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥ प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ॥ सर्पः पदा हत इव श्वसन्प्रकृतिदारुणः
॥ ५ ॥ हे दुर्विनीत मन्दात्मन्कुलभेदकराधम ॥ स्तब्धं मच्छासनोद्धूतं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥ क्रुद्धस्य यस्य
कम्पन्ते त्रयो लोकाः सहेश्वराः ॥ तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः ॥ ७ ॥ ॥ प्रह्लाद उवाच ॥ न केवलं
मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् ॥ परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥

प्रत्यङ्निष्ठाम् । यथा यथावत् ॥२॥ स च पुत्रं हन्तुं मनो दधे । कथंभूतः । कोपस्यावेशेनोद्रेकेण चलद्गात्रं वपुर्यस्य सः ॥३॥ क्षिप्त्वा तिरस्कृत्य । पापेन सरोषेण । तिरश्चीनेन वक्रेण ॥ ४ ॥ ५ ॥ हे मन्दात्मन्नल्पबुद्धे, मदाज्ञातिलङ्घिनं त्वामद्य यमालयं नेष्यामि ॥ ६ ॥ अभीतवत् । किं बलं यस्य स किंबलः ॥ ७ ॥ ८ ॥

१एको मुख्यश्चासावन्तश्चैकान्तो विष्णुर्भक्तियोगो वा इति चक्र० । एकस्मिन्भगवति अन्तः समावेशो यस्य तेन प्रह्लादवाक्येन संस्थिताम् इति सिद्धां० । २आत्मौपम्येनेत्यत्र सुखदुःखादिदृष्टे-त्यर्थः।३ तनयानयं स्वद्विपत्पक्षाश्रयणं श्रुत्वेत्यर्थः। 'श्रुत्वा स चाप्रियं' इति पाठोऽपेक्षितः, स च पुत्रं इत्यादि व्याख्यानुरोधात् । क्रमसंदर्भकारस्तु श्रुत्वेत्यर्धे स्वाम्यसमतमेव । स चेत्यध्याहारस्य वैयर्थ्यादिति व्याचख्यौ । ४ क्षिप्त्वेति श्लोकद्वयमेकं वाक्यम् । ५ दुर्विनीतेति । वास्तवार्थश्चायं—दुष्टेष्वपि विशिष्टं नीतं कृपालक्षणं यस्य परदुःखासहिष्णुत्वात्, मन्दानामप्यात्मा मनो यत्र सर्वचित्ताकर्षकत्वात्, कुलभेदकराः कुलविशेषस्रष्टारः प्रजापतयोऽप्यधमा यस्मात्, महाविभूतिमत्त्वात्स्तब्धम्, असुरेषु पूज्यबुद्धित्वाभावात् मच्छासनोल्लङ्घिनं, यमक्षयं यमादीनामष्टाङ्गयोगानां क्षयं निवासभूतं त्वां नेष्ये स्वनायकत्वेनाङ्गीकरिष्यामीत्यर्थः इति चक्र० । ६ 'कुलच्छेदकर' इति पाठः । ७ कस्य बलेनेत्यर्थः ।

वशं प्रणीता इत्यत्र हेतुः—स ईश्वर इति । उरवः क्रमाः पादविक्षेपा यस्य । बहुपराक्रम इति वा । ओजआदिरूपः । सत्त्वं धैर्यं बुद्धिर्वा ॥ ९ ॥ ननु मच्छत्रुरसौ कथं ममापि स एव बलं स्यादत आह—जहीति । आत्मनः स्वस्य भावं स्वभावं त्यज । यतोऽजितादात्मनो मनस ऋते विनाऽन्ये विद्विषो न सन्ति । किंच तद्धि तदेव हि साम्येन मनसो धारणमेव समर्हणमाराधनम् ॥ १० ॥ ननु मया दिग्विजये सर्वे रिपवो जिता अतः सांप्रतं विद्विषो न सन्तीति चेत्सत्यं, तत्राह—दस्यूनिति । एके भवादृशा मन्दाः पुरा आदौ लुम्पतः सर्वस्वं हरतः षडिन्द्रियलक्षणान् शत्रूनविजित्याजित्वा दश दिशः स्वयं जिता मन्यन्ते । साधोस्तु जितचित्तस्य । देहिनां समस्य ज्ञस्य विदुषः स्वाज्ञानकल्पिताः परे शत्रवः कुतः स्युः ॥ ११ ॥ व्यक्तं निश्चितम् । विप्लवा

स ईश्वरः काल उरुक्रमोऽसावोजःसहःसत्त्वबलेन्द्रियात्मा ॥ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुण-
त्रयेशः ॥ ९ ॥ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विषः ॥ ऋतेऽजितादात्मन उत्पथस्थि-
तात्तद्धि ह्यनन्तस्य महत्समर्हणम् ॥ १० ॥ दस्यून्पुरा षण्ण विजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश ॥ जिता-
त्मनो ज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥ ॥ हिरण्यकशिपुरुवाच ॥ व्यक्तं त्वं मर्तुकामोऽसि
योऽतिमात्रं विकत्थसे ॥ मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विक्लवा[1] गिरः ॥ १२ ॥ यस्त्वया मन्दभाग्योक्तो मदन्यो जग-
दीश्वरः ॥ क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥ १३ ॥ सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ॥ गोपा-
येत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ॥ १४ ॥ एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः ॥ खड्गं प्रगृ-
ह्योत्पतितो वरासनात्स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १५ ॥ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डक-
टाहमस्फुटत्[2] ॥ यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामात्ययमङ्ग[3] मेनिरे ॥ १६ ॥ स विक्रमन्पुत्रवधेप्सु-
रोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ॥ अन्तःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥ १७ ॥ ॥

अनन्विता इत्यर्थः ॥ १२ ॥ हे मन्दभाग्य, मदन्यो जगदीश्वरो यद्यस्ति तर्ह्यसौ क्वास्ति । प्रह्लाद आह—स सर्वत्रास्ति । हिरण्यकशिपुराह—तर्हि कस्मात्स्तम्भे नास्ति । प्रह्लादस्तु तं स्तम्भं निरीक्षमाणो नमस्यन्नाह—दृश्यत इति ॥ १३ ॥ हिरण्यकशिपुस्तु तत्र तमपश्यन्नाह—सोऽहमिति । विकत्थमानस्य विपरीतं ब्रुवाणस्य ते शिरः कायाद्धरामि पृथक्करोमि ॥ १४ ॥ प्रह्लादेन मूर्ध्नि बद्धाञ्जलिना निरीक्ष्यमाणं स्तम्भं मुष्टिना ताडितवान् ॥ १५ ॥ १६ ॥ तत्पदं तस्य ध्वनेराश्रयम् । येन नादेन ॥ १७ ॥ ॥ ॥ ॥ ॥

१ 'विक्लवाः' इति, 'विप्लुताः' इति च पाठः । तत्रापि स एवार्थः । २ अस्फुटदित्यर्थः । ३ अप्ययं नाशम् ।

भगवांस्तदा स्तम्भं विदार्याऽदृश्यत दृश्यो बभूव । किमर्थम् । निजभृत्येन प्रह्लादेन यद्भाषितं दृश्यत इति तत्सत्यं विधातुं कर्तुम् । तथाऽखिलेषु भूतेष्वात्मनो व्याप्तिं
च सत्यां कर्तुं स्तम्भेऽदृश्यत । तत्किमर्थम् । 'भौतिकेषु च भावेषु भूतेष्वथ महत्सु च ॥ भगवानास्ते' इति तेनैव भृत्येन यद्भाषितं तत्सत्यं कर्तुम् । तथाऽत्यद्भुतं दैत्य-
घातकमतिघोरं रूपमुद्वहन् दधत् । तत्किमर्थम् । निजभृत्यैः सनकादिभिः शापानन्तरमनुतप्तैर्भाषितं यत्, 'त्रिभिर्जन्मभिः शापमोक्षो भवतु' इति तत्सत्यं कर्तुम् ।
तथाऽत्यद्भुतं रूपं ब्रह्मसृष्टावदृष्टमश्रुतं च रूपमुद्वहन् । तच्च न मृगाकारं न च मनुष्याकारमुद्वहन् । सभायां मध्येऽदृश्यत तत्किमर्थम् । निजभृत्येन हिरण्यकशिपुना
ब्रह्माणं प्रति यद्भाषितम्, 'भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो' इति, तथा 'नान्तर्न बहिः' इति, 'न नरैर्न मृगैरपि' इति च । ब्रह्मणा च निजभृत्येन तथास्त्विति
यद्भाषितं तदुभयोर्वाक्यं सत्यं कर्तुम् । नहि तद्ब्रह्मसृष्टं भूतं नच नरो वा मृगो वा नच सभागृहस्यान्तः नच प्राङ्गणवद्बहिः एवं ताभ्यां यद्भाषितं तत्सत्यं कर्तुम् ।
यच्च हिरण्यकशिपुना भाषितम्, 'नूनमेतद्विरोधेन मृत्युर्मे भविता' इति, 'अकुतश्चिद्भयोऽमरः' इति च । यच्च नारदेन निजभृत्येन भाषितमिन्द्रं प्रति 'अयं महांस्त्वया
संस्थां न प्राप्स्यति' 'अनन्तानुचरः' इत्यनेन स्वभक्तपक्षपातित्वं च यद्भाषितं तच्च सत्यं कर्तुं तथा अदृश्यत । चकारान्निजभाषितं च । किं तत् । 'कौन्तेय प्रतिजानीहि

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न
मृगं न मानुषम् ॥ १८॥ स सत्त्वमेवं परितोऽपि[3] पश्यन्स्तम्भस्य मध्यादनु निर्जिहानम् ॥ नायं मृगो नापि नरो
विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् ॥ प्रतप्त-
चामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥ करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखो-
ल्बणम् ॥ स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥ दिविस्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षःस्थलमल्पमध्यमम् ॥ चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ २२ ॥ ॥

न मे भक्तः प्रणश्यति' इति, तथा 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्यादि तच्च सत्यं कर्तुमदृश्यतेति द्रष्टव्यम् । अलमतिविस्तरेण ॥ १८॥ स दैत्य एवमद्भुतं
ध्वनिं श्रुत्वा तदाश्रयं सत्त्वं प्राणिविशेषं सर्वतो विलोकयन्स्तम्भमध्यान्निर्गच्छत् नृमृगेन्द्रयोर्मिश्रं रूपमहो किमेतदिति मीमांसितवानिति शेषः ॥ १९ ॥ तस्यैवमलं
भयानकं तन्नृसिंहरूपं मीमांसमानस्याग्रतो नृसिंहरूपो हरिः समुत्थितः । भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति—प्रतप्तेत्यादिना विद्रावितदैत्यदानवमित्यन्तेन ।
प्रतप्तं चामीकरं सुवर्णं तद्वत्पिङ्गानि चण्डानि लोचनानि यस्मिन् । सटा जटाः, केसराः कण्ठरोमाणि, स्फुरद्भिः सटाकेसरैर्जृम्भितं साटोपमाननं यस्मिन् ॥२०॥
करालास्तुङ्गा दंष्ट्रा यस्मिन् । करवालः खड्गस्तद्वच्चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिन् । भ्रुकुटीयुक्तेन मुखेनोल्बणम् । स्तब्धावुन्नतौ शङ्कुवदूर्ध्वौ कर्णौ यस्मिन् ।
गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् । हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम् । कर्णान्तमुखविस्तारमित्यर्थः ॥ २१ ॥ दिविस्पृशन्
कायो यस्मिन्, अलुक्समासः । अदीर्घा ह्रस्वा पीवरा च स्थूला ग्रीवा यस्मिन्, उरु विशालं वक्षःस्थलं यस्मिंस्तच्च तच्च । अल्पं मध्यममुदरं यस्मिन् । चन्द्रांशु-
वद्गौरैस्तनूरुहैर्लोमभिश्छुरितं व्याप्तम् । विष्वञ्चः सर्वतः प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन् । नखान्येवायुधानि यस्मिन् ॥ २२ ॥ ॥

१ सत्यमेव तल्लोकेऽपि सत्यत्वेन प्रकटीकर्तुमित्यर्थः । २ पूर्वोक्तस्यैव विवरणं—नहीत्यादि । ३ परितः स्तम्भस्य चतुर्दिक्षु । 'परितो विपश्यन्' इति पाठः ।

दुरासदं प्राप्तुमशक्यम् । सर्वाणि च निजानि चक्रादीनीतराणि वज्रादीनि त एवायुधप्रवेकाः शस्त्रोत्तमास्तैर्विद्राविता दैत्यदानवा येन तद्रूपं मीमांसमानस्याग्रतः समुत्थित इति पूर्वेणैवान्वयः । तदाविर्भावप्रयोजनविमर्शपूर्वकं तेन सह दैत्यस्य युद्धमाह सप्तभिः । प्रायेण महामायिना हरिणा मेऽयमेवंभूतो वधो मृत्युहेतुः स्मृतश्चिन्तितस्तथाप्यनेन समुद्यतेन किं न किंचित्स्यादित्येवं ब्रुवन्नभ्यपतदित्यन्वयः ॥ २३ ॥ तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितः सन्नलक्षितोऽदृष्टोऽभूत् ॥ २४ ॥ सत्त्वधामनि सत्त्वप्रकाशे हरौ पतितस्य तमोमयस्यादर्शनं तद्विचित्रं न भवति । तत्र हेतुः—यो हरिः पुरा सृष्ट्यादौ प्रलयकालीनं तमः नु अहो अपिबत्तस्मिन् ॥ २५ ॥ विक्रमन्तं ततस्ततः प्रहरन्तम् । हस्तादुत्कलितो निःसृतः ॥ २६ ॥ तदा अमरा देवाः सर्वे धिष्ण्यपा असाध्वमन्यन्त । हृतान्योकांसि स्थानानि येषां ते । तद्भिया घनच्छदा मेघान्तरिताः सन्तः । यस्य हस्तात्स्वयं मुक्तस्तं नृहरिं स्ववीर्याच्छङ्कितं मन्यमानः

दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ॥ प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम् ॥ २३ ॥ एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुञ्जरः ॥ अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा ॥ २४ ॥ न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा यो नु पुरापिबत्तमः ॥ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥ तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ॥ स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥ २६ ॥ असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः ॥ तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ॥ २७ ॥ तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ कृत्वाट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ॥ २८ ॥ विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम् ॥ द्वार्यूर आपात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ॥ २९ ॥ ॥ ॥

खड्गचर्मणी प्रगृह्य पुनस्तमासज्जताभ्यपद्यतेत्यन्वयः ॥ २७ ॥ श्येनस्येव वेगो यस्य तम् । शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैरच्छिद्रं यथा भवत्येवमुपर्यधश्चरन्तम् । अट्टहासमेवाह—खरं तीव्रम् । उत्स्वनेन महाशब्देनोल्बणं भयंकरम् । तद्भयेन हरेस्तेजसा च निमीलिते अक्षिणी यस्य ॥ २८ ॥ ग्रहणे दृष्टान्तः—व्यालो यथा आखुं मूषकम् । विदारणे दृष्टान्तः—अहिं गरुड इवेति । विष्वक् सर्वतः स्फुरन्तं निःसरन्तम् । ग्रहणेनातुरं विवशम् । इन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन न क्षता त्वगपि यस्य । द्वारि सभायां नान्तर्न बहिः । ऊरे ऊरौ निपात्य, न भूमौ न चाम्बरे । नखैर्न व्यसुभिरसुमद्भिर्वा । एवं दिवानक्तपरिहाराय सन्ध्यायामिति द्रष्टव्यम् ॥ २९ ॥ ॥ ॥ ॥ ॥

१ प्रायेणेत्यादिगरुडो महाविषमित्यन्तैरित्यर्थः । २ अभिपद्य अभिमुखमागत्य । ३ 'चन्द्रवर्मभिः' इति विज० पाठः । ४ 'खरनिस्वनोल्बणं' इति वीर० विज० पाठः । ५ 'द्वार्यूरुमापात्य' इति पाठः ।

दैत्यवधमुक्त्वा तद्भृत्यवधमाह द्वाभ्याम् । संरम्भेण दुष्प्रेक्ष्याणि करालानि लोचनानि यस्य । असृजो रक्तस्य लवैर्बिन्दुभी रक्ताः सिक्ता अत एवारुणाः केसरा आननं च यस्य सः । क इव । द्विपहत्यया गजवधेन हरिः सिंहो यथा एवंभूतस्तस्यानुचरानहन्नित्युत्तरेणान्वयः । अन्त्राणां माला कण्ठे विद्यते यस्य ॥ ३० ॥ नखाङ्कुरैरुत्पाटितं हृत्सरोरुहं यस्य तम् । दोर्दण्डानां यूथानि समूहा यस्य सः । तं दैत्येन्द्रमनु पन्था येषां तान् अन्यानपि तत्पक्षपातिन इत्यर्थः ॥ ३१ ॥ दैत्यवधव्यग्रस्य नृहरेराटोपमाह द्वाभ्याम् । सटाभिरवधूताः प्रकम्पिता जलदा मेघाः परापतन् व्यशीर्यन्त । (अनेन ये मेघान्तरिता देवास्ते स्पष्टं पश्यन्त्विलाज्ञां दत्तवानित्यर्थः) । तस्य दृष्ट्या विमुष्टं रोचिर्येषां ग्रहाणां ते तिरस्कृतप्रभा अभवन्निति शेषः । दिग्गिभा दिग्गजाः ॥ ३२ ॥ तस्य सटाभिरुत्क्षिप्तानि

संरम्भदुष्प्रेक्ष्यकराललोचनो व्यात्ताननान्तं विलिहन्स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननो यथाऽन्त्रमाली द्विपहत्यया हरिः ॥३०॥ नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ॥ अहन्समन्तान्नखशस्त्रपार्ष्णिभिर्दोर्दण्डयूथोऽनुपथान्सहस्रशः ॥३१॥ सटावधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिग्गिभा विचुक्रुशुः ॥३२॥ द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदाऽतिपीडिता ॥ शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ॥ ३३ ॥ ततः सभायामुपविष्टमुत्तमे नृपासने संभृततेजसं विभुम् ॥ अलक्षितद्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३४ ॥ निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ॥ प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३५ ॥ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनाम् ॥ सुरानका दुन्दुभयोऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥ ३६ ॥ तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ॥ ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥३७॥ मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ॥ यक्षाः किंपुरुषास्तात वेतालाः सिद्धकिन्नराः ॥ ३८॥ ते विष्णुपार्षदाः सर्वे सुनन्दकुमुदादयः ॥ मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ॥ ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ ३९ ॥ ॥ ॥

विमानानि तैः संकुला व्याप्ता सती प्रोत्सर्पत स्वस्थानात्प्रकर्षेणोदसर्पच्चलिता ॥ ३३ ॥ स्वभृतैश्वर्यमाश्चर्यमिव मत्वा कौतूहलेन तस्यासने उपविष्टं भयात्कोऽपि न बभाज नासेवत । न लक्षितो द्वैरथः प्रतियोद्धा येन ॥ ३४ ॥ लोकत्रयस्य मस्तकज्वरं शिरोव्यथेव दुःसहम् । प्रहर्षस्य वेगेनोत्कलितानि विकसितान्याननानि यासां ताः सुरस्त्रियः पुष्पवर्षैर्नृहरिं ववृषुः ॥ ३५ ॥ नाकिनां देवानां विमानावलिभिर्नभस्तलं संकीर्णमास । सुराणामानकाः पटहास्तैर्जघ्निरे वादिताः । स्त्रियोऽप्सरसो ननृतुः । गन्धर्वा जगुः ॥ ३६ ॥ ३७ ॥ गन्धर्वाप्सरसश्चारणाश्चेत्यर्थः ॥ ३८ ॥ नरशार्दूलं पुरुषोत्तमम् ॥ ३९ ॥ ॥

१ 'शस्त्रपाणिभि.' इति वीर० पाठः । २ 'दिग्गिभा जहुर्मदम्' इति विज० पाठः । ३ प्रोत्सर्पतेत्यत्र अडाभावतडावार्षौ इति चक्र० । ४ सम्भृततेजसं सपूर्णप्रकाशम्, 'सहृततेजसं' इत्यपि पाठः । ५ 'मनुः प्रजानाम्' इति वीर० पाठः । ६ अप्सरःशब्दस्यादन्तत्वमार्षम् ।

ब्रह्मादयो नृसिंहस्य शङ्कयाकुलचेतसः ॥ आरादेवास्तुवन्सप्तदशश्लोकैः पृथक् पृथक् ॥१॥ अनन्तायानन्तं त्वां प्रसादयितुं नतोऽस्मि । अनन्तत्वे हेतुः—दुरन्ताः शक्तयो यस्य । तत्कुतः । विचित्राणि वीर्याणि प्रभावा यस्य । तत्किमर्थम् । पवित्राणि श्रवणमात्रेण शोधकानि कर्माणि यस्य । विचित्रवीर्यत्वमेवाह— विश्वस्येति । संदधते सम्यक्कुर्वते । एवमप्यव्ययात्मनेऽप्रच्युतस्वरूपाय ॥ ४० ॥ रुद्रस्तु तत्कोपकालाभिज्ञो नायं कोपावसर इति तं प्रार्थयते—कोपेति । सहस्रयुगान्तस्तव कोपस्य कालः, कोपायोग्यश्चायमित्याह—अल्पकोऽत्यल्पः । अतः कोपानिवृत्त्या प्रह्लादं मा हिंसीरित्याह—तत्सुतमिति । यद्वा अकालेऽप्ययं कोपोऽस्य भक्तस्य रक्षणार्थमिति चेत्तर्हीदानीं कोपं त्यक्त्वेमं पाहीत्यर्थः ॥ ४१ ॥ इन्द्रस्तु नास्माकं हविर्भागादिलाभः पुरुषार्थः किंतु त्वत्परिचर्यैव । भवता पुनरनेन संरम्भेण स्वकार्यमेव साधितं तस्य च सिद्धत्वादुपसंहरैनं क्रोधमित्याशयेनाह—हे परम, नोऽस्मांस्त्रायता रक्षता भवता स्वीया एव भागा दैत्यात्प्रत्याहृताः, अन्तर्यामिणस्तवैव यज्ञेषु भोक्तृत्वात् । अस्मदीयं हृदयकमलं त्वद्गृहमेवैतावत्पर्यन्तं भयहेतुत्वेनास्मत्स्मृतिपथे नित्यं स्थितेन दैत्येनाक्रान्तं

॥ ब्रह्मोवाच ॥ नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ॥ विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ ४० ॥ ॥ श्रीरुद्र उवाच ॥ कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः ॥ तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल ॥ ४१ ॥ ॥ इन्द्र उवाच ॥ प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ॥ कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ ४२ ॥ ॥ ऋषय ऊचुः ॥ त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज ॥ तद्विप्रलुप्तममुनाद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥४३॥ ॥ पितर ऊचुः ॥ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु[3] ॥ तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ४४ ॥ ॥

व्यासं सत्प्रत्यबोधि भयापाकरणेन विकासं नीतम् । ननु तव त्रैलोक्यैश्वर्यसाधनार्थमयमुद्यम इति चेत्तत्राह—कालग्रस्तमिति । ते त्वाम् । हे नारसिंह, नरस्य सिंहस्य चाकाराभ्यामाविर्भूत, अपरैः स्वर्गादिभिः किम् ॥ ४२ ॥ ऋषयस्तु तपःप्रवर्तनेनास्माकं महाननुग्रहः कृत इत्याहुः—त्वं नो यदात्थ परमं ध्यानलक्षणं तपः । परमत्वे हेतुः—आत्मनस्तव तेजः प्रभावरूपम् । तदेवाहुः—येन तपसात्मनि लीनमिदं विश्वं ससर्ज सृष्टवानसि तदमुना दैत्येन विप्रलुप्तं कुण्ठितं सत् । हे शरण्यपाल, अद्य रक्षार्थं गृहीतेनानेन वपुषा पुनरपि तपः कुरुतेत्यनुज्ञातवानसि तस्मै ते नम इत्युत्तरश्लोकचतुर्थपादस्यानुषङ्गः ॥ ४३ ॥ पितरस्तु श्राद्धोद्धरणेन परमोपकारिणं श्रीनृसिंहं प्रणमन्ति । श्राद्धानि श्रद्धायुक्तानि पिण्डादीनि नोऽस्मभ्यं पुत्रैर्दत्तानि प्रसभं बलाद्यः स्वयमधिकृत्य बुभुजे । किंच तीर्थस्नानसमये दत्तं तिलोदकमप्यपिबत् । तानि[4] च तस्योदराद्य आर्च्छदाहृतवान् । कथंभूतात् । नखैर्विदीर्णा वपा यस्य तस्मात् । वपाविदारणस्य तद्गतपिण्डोद्धरणमेव फलमिति भावः ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

१ आरादेव दूरादेव । २ उपसृतमनुगतम् । ३ 'समये च तिलाम्ब्वसभ्यः' इति पाठः, स च न व्याख्यानुकूलः । ४ पिण्डतिलोदकानि ।

योगसिद्धां गतिमणिमादिसिद्धिम्। नाना अनेके दर्पा यस्य तम्। तस्मै तुभ्यं तं त्वामुद्दिश्य ॥ ४५ ॥ विद्यामन्तर्धानादिलक्षणाम्। अनुराद्धां संप्राप्ताम्। संख्ये युद्धे ॥ ४६ ॥ रत्नानि फणासु स्थितानि तथा स्त्रीरत्नानि चोत्तमाः स्त्रियः। आसां स्त्रीणां दत्त आनन्दो येन तत्संबोधनम्। पाठान्तरेऽस्माकं दत्त आनन्दो येनेति ॥ ४७ ॥ नृसिंहेनावलोकिताः सन्तो मूर्ध्नि बद्धाञ्जलयो मनवः प्रोचुः—मनवो वयं धर्मपालकाः। परिभूताः सेतवो वर्णाश्रमधर्ममर्यादा येषां ते। अनुशाध्यनुशिक्षय ॥ ४८ ॥ प्रजापतयोऽपि तदवलोकिताः प्रोचुः—हे परेश, ते त्वया अभिसृष्टा वयं प्रजेशा येन निषिद्धाः सन्तः प्रजा न सृजामः स एष भिन्नं वक्षो यस्य नु निश्चितं शेते मृतः। अतःपरं प्रजाः सृजाम इति हृष्यन्तः प्राहुः—हे सत्त्वमूर्ते, तवायमवतारो जगतो मङ्गलम् ॥ ४९ ॥ गन्धर्वा

॥ सिद्धा ऊचुः ॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन ॥ नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ४५ ॥ ॥ विद्याधरा ऊचुः ॥ विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ॥ स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ४६ ॥ ॥ नागा ऊचुः ॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ॥ तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ४७ ॥ ॥ मनव ऊचुः ॥ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः॥ भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान् ॥ ४८ ॥ ॥ प्रजापतय ऊचुः॥ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ॥ स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः ॥ ४९ ॥ ॥ गन्धर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ॥ स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५० ॥ ॥ चारणा ऊचुः ॥ हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः ॥ यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥ ५१ ॥ ॥ यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ॥ स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५२ ॥

अपि तदवलोकिताः प्रोचुः—हे विभो, वयं ते त्वदीया नटा नर्तका नाट्ये नृत्ये गायकाश्च येन स्वाधीनाः कृताः। कथंभूतेन। वीर्यं शौर्यं बलं शक्तिस्ताभ्यामोजः प्रभावो यस्य तेन। स एष भवता इमां दशां मृतिं नीतः। उचितं चैतदित्याहुः—किमिति ॥ ५० ॥ भवापवर्गं संसारनिवर्तकम्। आश्रयणे हेतुः—यद्यस्मात्साधूनां हृदि भयजनकत्वेन शेते तिष्ठतीति तथा स एषोऽसुरस्त्वया समापितोऽन्तं नीतः ॥ ५१ ॥ मनोज्ञैः कर्मभिस्तवानुचरेषु मुख्यास्ते वयं दितिसुतेन शिबिकावाहकत्वं प्रापिताः। पञ्चतां मृत्युम्। हे पञ्चविंश चतुर्विंशतितत्त्वनियामक ॥ ५२ ॥ ॥ ॥

१ 'तद्वक्षःपाटनेनासद्दत्तानन्द' इत्येवंरूपे। अयं पाठश्च सिद्धान्तप्रदीपसमतः। २ वयं तव निदेशकारिण इत्यस्यार्थः। ३ अभिसृष्टाः प्रजासर्जनायोत्पादिताः। ४ मङ्गलं जगन्मङ्गलहेतुः। ५ यद्वा अनुचरा एव मुख्या येषां ते।

किंपुरुषास्तु त्वां स्तोतुं के वयं वराका इत्याहुः—वयमिति । वयं किंपुरुषास्तुच्छप्राणिनस्त्वं तु महानद्भुतप्रभावः पुरुषः । नन्वयं महान्दैत्यो हत इति किं न वर्ण्यते इत्याशङ्क्य कियदेतदित्याहुः—अयमिति । यदा साधुभिर्भगवद्भक्तैस्तिरस्कृतस्तदैव नष्टः ॥ ५३ ॥ सत्रेषु यज्ञेषु । ते त्वया हतः एतद्दिष्ट्या भद्रं कृतम् ॥ ५४ ॥ अमुना दितिजेन विष्टिं निर्मूल्यं कर्मानु निरन्तरं कारिताः, अतः परं नो विभवाय समृद्धये भव ॥ ५५ ॥ नोऽस्माकं भक्तानां हे शरणद आश्रयप्रद, सर्वेषां लोकानां शर्म मङ्गलमेतदद्भुतं रूपमद्यैव दृष्टं, नतु पूर्वम् । विधिकरः किङ्करः ॥ ५६ ॥ ॥ इति श्रीमद्भागवते म० पु० सप्तमस्कन्धे भावार्थदीपिकायां

॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः ॥ अयं कुपुरुषो नष्टो धिकृतः साधुभिर्यदा ॥५३॥ ॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ॥ यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽऽमयः ॥ ५४ ॥ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः ॥ भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥५५॥ ॥ विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ॥ सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥ ५६ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे प्रह्लादानुचरिते दैत्यराजवधे नृसिंहस्तवो नामाष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ एवं सुरादयः सर्वे ब्रह्मरुद्रपुरःसराः ॥ नोपैतुमशकन्मन्युसंरम्भं सुदुरासदम् ॥ १ ॥ साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ॥ अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता ॥ २ ॥ प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके ॥ तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥ तथेति शनकै राजन्महाभागवतोऽर्भकः ॥ उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ४ ॥ स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ॥ उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं कालाहिवित्रस्तधियां कृताभयम् ॥ ५ ॥ ॥

टीकायां अष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः ॥ कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ १ ॥ 'उग्रोऽप्यनुग्र एवायं स्वभक्तानां नृकेसरी ॥ केसरीव स्वपोतानामन्येषामुग्रविग्रहः ॥' इत्याद्यागमोक्तां भक्तानुकम्पितामाह—एवमिति सप्तभिः । एवं दूरत एव स्थित्वा स्तुवन्तः मन्युना संरम्भ आवेशो यस्य तम् । उप समीपे गन्तुं नाशक्नुवन् ॥ १ श्रीर्लक्ष्मीर्देवैः प्रेषितापि महदद्भुतं तद्रूपं दृष्ट्वा शङ्किता सती तं नोपजगाम । अद्भुतत्वे हेतुः—अदृष्टेति ॥ २ ॥ उपेह्युपगच्छ ॥ ३ ॥ ४ ॥ काल एवाहिस्तस्माद्वित्रस्ता धीर्येषां तेषां कृतमभयं येन तत्कराम्बुजम् ॥ ५ ॥ ॥ ॥

१ यदा साधुभिरित्यान्यार्थिकम् । २ महती सपर्यां धनादिसंपत्तिम् । ३ वृजिनो वृजिनवान् । अर्शआद्यच् । ४ अत्रादृष्टाश्रुतपूर्वत्वं संभ्रमादेव जातमित्यूह्यम् इति क्रम० ।
५ शिरसि विधृताञ्जलिः कायेन भुवि ननामेत्यन्वयः ।

निर्वृतः सन् हृदि दधौ । तस्य श्रीनृसिंहस्य करस्पर्शेन धुतं निरस्तमखिलमशुभं यस्य । सपदि तत्क्षणमेवाभिव्यक्तमपरोक्षीभूतं परात्मदर्शनं ब्रह्मज्ञानं यस्य । निर्वृतः सन् हृदि दधौ ।
हृष्यन्ती रोमाञ्चिता तनुर्यस्य । क्लिन्नं प्रेमार्द्रं हृत् यस्य । अश्रूणि लोचनयोर्यस्य । परमपुरुषार्थतया दधौ न साधनत्वेनेत्यर्थः ॥ ६ ॥ सुसमाधिमेवाह—
तस्मिन्नेव न्यस्तं हृदयमीक्षणं च येनेति ॥ ७ ॥ 'स्वस्मिन्निव समस्तेषु तत्कृपामृतदृष्टये ॥ प्रह्लादः स्तौति सत्पद्यैर्द्विचत्वारिंशता हरिम्' ॥ इति । तत्र तावदा-
त्मनो भगवत्स्तुतावनधिकारमिवाशङ्क्याधिकारं संभावयन्नाह—ब्रह्मादय इति पञ्चभिः । मुनयो मननशीलाः । सिद्धा ज्ञानिनोऽपि । कथंभूताः । सत्त्व एवै-
कस्मिंस्तानो विस्तारो यस्याः सा मतिर्येषां तथाविधा अपि वचसां प्रवाहैरपि तथा बहुभिर्वक्ष्यमाणैर्गुणैरपि यमाराधयितुं न पिप्रुर्न पूर्णाः, न शक्ता इत्यर्थः ।
स हरिर्मे मम कथं तोषं प्राप्तुमर्हति । तत्र हेतुः—उग्रजातेः उग्रा घोरा आसुरी जातिर्यस्य ॥ ८ ॥ एवं हरितोषणे स्वस्यायोग्यतामाशङ्क्य योग्यतां संभा-
वयति—मन्य इति द्वाभ्याम् । अभिजनः सत्कुले जन्म । रूपं सौन्दर्यम् । श्रुतं पाण्डित्यम् । ओज इन्द्रियनैपुणम् । तेजः कान्तिः । प्रभावः प्रतापः ।

स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ॥ तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रु-
लोचनः ॥ ६ ॥ अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः ॥ प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥७॥ ॥ प्रह्लाद
उवाच ॥ ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ॥ नाराधितुं पुरुगुणैरधुनापि पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥ मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥
नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान्गजयूथपाय ॥ ९ ॥ विप्राद्द्विषड्गुणयुतादरविन्दनाभपादा-
रविन्दविमुखाच्छ्वपचं वरिष्ठम् ॥ मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं नतु भूरिमानः ॥१०॥ ॥

पौरुषमुद्यमः । बुद्धिः प्रज्ञा । योगोऽष्टाङ्गः । एते धनादयो द्वादशापि गुणाः परस्य पुंस आराधनाय न भवन्ति । हि यतः केवलया भक्त्यैव गजेन्द्राय
तुष्टोऽभवत् ॥ ९ ॥ एवं भक्त्यैव केवलया हरेस्तोषः संभवतीत्युक्तमिदानीं भक्तिं विना नान्यत्किंचित्तत्तोषहेतुरित्याह—विप्रादिति । पूर्वोक्ता धनादयो
द्विषट् द्वादश गुणास्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये । यद्वा सनत्सुजातोक्ता द्वादश धर्मादयो गुणा द्रष्टव्याः । तदुक्तम्—'धर्मश्च सत्यं च दमस्तपश्च
अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ॥ यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य ॥' इति । यद्वा 'शमो दमस्तपः शौचं क्षान्त्यार्जवविरक्तताः ॥
ज्ञानविज्ञानसंतोषाः सत्यास्तिक्ये द्विषड्गुणाः ॥' इति । कथंभूताद्विप्रात् । अरविन्दनाभस्य पादारविन्दाद्विमुखात् । कथंभूतं श्वपचम् । तस्मिन्नरविन्दनाभेऽर्पिता
मनआदयो येन तम् । ईहितं कर्म । वरिष्ठत्वे हेतुः—स एवंभूतः श्वपचः सर्वं कुलं पुनाति । भूरिमानो गर्वो यस्य स तु विप्र आत्मानमपि न पुनाति ।
कुतः कुलम् । यतो भक्तिहीनस्यैते गुणा गर्वायैव भवन्ति नतु शुद्धये । अतो हीन इति भावः ॥ १० ॥ ॥ ॥

१ अथवा सत्त्वेषु धर्मज्ञानतपःस्वेव एकतानाऽनन्यवर्तिनी मतिर्येषाम् । २केवलया पूर्वश्लोकोक्तधनादिद्वादशगुणवर्जितया । ३धर्मो वर्णाश्रमनियतः सन्ध्योपासनादिः । सत्यं हिंसावर्जं यथा-
र्थभाषणम् १,दमो जिह्वोपस्थादिनिग्रहः २,तपः कृच्छ्रचान्द्रायणादि ३,अमात्सर्यं परगुणासहिष्णुत्वाभावः ४,ह्रीः कार्यविषये लज्जा ५, तितिक्षा सत्यपि क्रोधनिमित्ते तदनुत्पादः ६, अनसूया
परगुणेषु दोषाविष्करणाभावः ७, यज्ञो ज्योतिष्टोमादिः ८,दानं बहिर्वेदिसंविभाग. ९,धृतिरत्यन्तापद्यपि व्रतादेरत्यागः१०,श्रुतमर्थग्रहणसहित वेदाध्ययनम्११,ब्राह्मणस्य ब्रह्म प्राप्तुमिच्छोः १२.

तर्हि किं धनाद्यर्पणेन संमानं प्राकृत इव भगवानपेक्षते नेत्याह—नैवेति । अयं प्रभुरीश्वरोऽविदुषोऽल्पकाज्जनान्मानं पूजामात्मनोऽर्थे न वृणीते नेच्छति । यतो निजलाभेनैव पूर्णः । तर्हि पूजां नेच्छत्येव तत्राह—करुणः कृपालुरतो वृणीते च । तत्र हेतुः—यद्यदिति । यं यं मानम् । यद्वा यद्यस्माद्येन धनादिना भगवते मानं विदधीत तदेवात्मने भवति नान्यत् । यथा मुखे कृतैव तिलकादिश्रीः शोभा प्रतिबिम्बस्य भवति नतु साक्षात्तस्यैव कर्तुं शक्यते तद्वत् ॥ ११ ॥ यस्मादेवं भगवान्भक्त्यैव तुष्यति तस्मादहं नीचोऽपि विगतविक्लवो गतशङ्कः सन्नीश्वरस्य महि महिमानं सर्वप्रयत्नेन स्वमनीषानुसारेणानुवर्णयामि । अजानतोऽपि स्तुतिकरणे हेतुमाह—येनैव मयाऽज्ञानुवर्णितेनाविद्यया संसारमनुप्रविष्टः पुमान् पूयेत शुध्येत तन्महि अन्यस्य तथा शोधकत्वाभावादित्यर्थः ॥ १२ ॥ तदेवमात्मनः स्तुतावनधिकारं परिहृत्येदानीं ते स्तुवन्कोपोपसंहारं प्रार्थयते—सर्वे हीति द्वाभ्याम् । भो ईश, अमी उद्विजन्तो बिभ्यतः सर्वे ब्रह्मादयः सत्त्वमूर्तेस्तव विधिकरास्त्वन्नियोगकर्तारो भक्ता एव नान्ये । नच वयमसुरा इव वैरभावेनैते भक्ताः किंतु श्रद्धयैव । तव रुचिरैरवतारैर्विविधं क्रीडनमस्य विश्वस्य क्षेमादिप्रयोजनाय नतु भयोत्पादनाय ॥ १३ ॥ तत्तस्मादेषां भयपरिहाराय मन्युं यच्छोपसंहर । यदर्थमयं मन्युः स चासुरः साधूनां संतोषार्थमद्य हतः ।

नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥ तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् ॥ नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥ सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजन्तः ॥ क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥ तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य मोदेत साधुरपि वृश्चिकसर्पहत्या ॥ लोकाश्च निर्वृतिमिताः प्रतियन्ति सर्वे रूपं नृसिंह विभयाय जनाः स्मरन्ति ॥ १४ ॥ नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ॥ आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥ ॥ ॥

अतःपरं क्रोधेन कार्याभावात्तं नियच्छ । नन्वन्येषां वधेन साधुः किं मोदेत तत्राह—वृश्चिकादेः परोपद्रवकारिणोऽन्यतो जातया हत्या वधेन तस्यैव तद्भद्रं जातमिति साधुरपि मोदेतैव । तर्हि बहूनां सुखावहत्वादमुं क्रोधं न त्यजामीति चेत्तत्राह—लोकाश्च निर्वृतिमिताः प्राप्ताः सन्तः प्रतियन्ति क्रोधोपसंहारं प्रतीक्षन्ते तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत्तत्राह—रूपमिति । विभयाय भयनिवृत्त्यै । एतद्रूपस्मरणादेव भयनिवृत्तेर्न मन्युधारणेन कृत्यमस्तीत्यर्थः ॥ १४ ॥ त्वं चेद्बिभेषि तर्हि त्यजामीति चेत्तत्राह—नाहमिति । भो अजित, तेऽस्माद्रूपादहं न बिभेमि । कथंभूतात् । आस्यं च जिह्वा चार्कसदृशनेत्राणि च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्च एतान्यतिभयानकानि यस्मिंस्तस्मात् । अन्त्रमय्यः स्रजो यस्मिंस्तदान्त्रस्रक् तस्मात् । क्षतजाक्ताः केसरा यस्मिन्, शङ्कुवदुन्नतौ स्तब्धौ कर्णौ यस्मिन्, तच्च तच्च तस्मात् । निर्ह्रादेन भीता दिगिभा यस्मात् । अरीन् भिन्दन्तीत्यरिभिन्दितानि नखाग्राणि यस्मिन् । एवंभूतादपि ते रूपादहं न बिभेमि ॥ १५ ॥ ॥ ॥ ॥ ॥२१॥

महद्भयं त्वन्यदस्तीत्याह—त्रस्तोऽस्मीति । दुःसहं यदुग्रं संसारचक्रे कदनं दुःखं तस्मादहं त्रस्तोऽस्मि । तत्र च ग्रसतां हिंस्राणां मध्ये स्वकर्मभिर्बद्धः सन्प्रणीतो निक्षिप्तोऽस्मि । हे कृपणवत्सल, हे उरुशत्तम, कदा नु त्वं प्रीतः सन्नपवर्गभूतं शरणं तवाङ्घ्रिकमलं प्रति ह्वयसे मामाह्वयसि ॥ १६ ॥ दास्ये सति मत्प्रीतिरिति चेत्तर्हि नानायोनिषु क्लिश्यमानस्य मम दास्यज्ञानाभावात्त्वमेव तदुपदिशेति प्रार्थयते । यस्मात्प्रियैरप्रियैश्च यथासंख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोऽस्मि । दुःखस्य प्रतीकारः कार्य इति चेत्तत्राह—दुःखस्यौषधं प्रतीकारस्तदपि दुःखमेव । एवमप्यतद्धिया देहाद्यभिमानेन मुह्यामि । अतो हे भूमन्विभो, मे तव दास्यरूपं योगं निस्तारोपायं वद ॥ १७ ॥ ननु दास्ययोगेन प्रवृत्तस्यापि तदन्तरायभूतानां पूर्वोक्तनानादुःखानां कुतः परिहारस्तत्राह—सोऽहं त्वद्दासः सन् भो नृसिंह, तव लीलाकथा अनुगृणन्दुर्गाणि महादुःखान्यञ्जसा तितर्मि तरामि । न गणयिष्यामीत्यर्थः । तत्र हेतुः—गुणै रागादिभिर्विशेषेण प्रमुक्तः सन् । तत्कुतः । ते पदयुगमेवालयो येषां भक्तानां त एव हंसा ज्ञानिनस्तैः सङ्गो यस्य मम सोऽहम् ।

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनाद्ग्रसतां प्रणीतः ॥ बद्धस्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥१६॥ यस्मात्प्रियाप्रियवियोगसंयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः ॥ दुःखौषधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥ सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिञ्चगीताः ॥ अञ्जस्तितर्म्यनुगृणन्गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससङ्गः ॥१८॥ बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः ॥ तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥ १९ ॥ ॥ ॥ ॥ ॥

कथंभूतस्य कथास्तत्राह—प्रियस्येत्यादि । कुतो ज्ञाताः । विरिञ्चेन गीतास्तत्संप्रदायप्रवृत्ताः । तथा चाथर्वणी श्रुतिः—'देवा ह वै प्रजापतिमब्रुवन्' इत्यादि । दास्ये प्रवृत्तस्य भवदनुग्रहेण सत्सङ्गस्ततो वीतरागतया भगवद्गुणानुवर्णनं ततश्च न दुःखाभिभवः स्यादिति वाक्यार्थः ॥ १८ ॥ ननु दुःखैस्तप्तस्य तत्प्रतीकारो लोके प्रसिद्ध एव किं मद्दास्यादिना तत्राह—बालस्येति । भो नृसिंह, तप्तस्य तत्प्रतिविधिर्दुःखप्रतीकार इह लोके योऽञ्जसेष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव न त्वात्यन्तिकः । तदेवाह—बालस्य पितरौ शरणं रक्षकाविह न भवतः, ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात्, क्वचिदजीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च । न चार्तस्य रोगिणोऽगदमौषधं शरणम्, कृतेऽप्यौषधे मृत्युदर्शनात् । न चोदन्वति समुद्रे मज्जतः पुंसो नौः शरणम्, तया सह मज्जनदर्शनात् । अतस्त्वमेव शरणमित्यर्थः । अथवैवं काक्वा व्याख्येयम् । तप्तस्य तत्प्रतिविधिर्य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किमञ्जसेष्टोऽपितु नेष्ट एव । यद्वा यस्तावदिह प्रतिविधिरिष्टः स किमञ्जसा नैवाञ्जसेत्यादि योज्यम् । बालस्येत्यादि पूर्ववदेव ॥ १९ ॥ ॥ ॥ ॥

१ अतद्धिया अदुःखबुद्ध्यैव सूकरादियोनावप्यहं सुखीति बुद्ध्यैव भ्रमामीति चक्र० । २ अस्मिन्पाठेऽनुस्वाराभावश्छान्दसः । सानुस्वारपाठष्टीकानुगुणस्तत्रार्षश्छन्दोभङ्गः । ३ कथा इति शेषः ।

ननु क्वचित्कुतश्चित्केनचित्कदाचित्कश्चिद्रक्षकोऽपि दृश्यते एवेत्याशङ्क्य तत्रापि तत्तद्रूपेण त्वमेव रक्षक इत्युररीकृत्य तत्त्वेन सर्वात्मतामाह—यस्मिन्निति । अपरोऽर्वाचीनः पित्रादिः परो ब्रह्मादिर्वा भावः कर्ता तत्तत्कारकैर्यद्यत्करोति तत्सर्वं भवत एव स्वरूपं न तु पृथक् । यस्मिन्नधिकरणे, यतो निमित्तात्, यर्हि यस्मिन्काले, येन करणेन, येन हेतुकर्त्रा संचोदितश्च, यस्य संबन्धि, यस्मादपादानात्, यस्मै संप्रदानाय, यदीप्सिततमं, य: कर्ता, [illegible] विभक्त्यर्थाः । यथा येन प्रकारेणेति क्रियाविशेषणभूतानामव्ययानामर्थः । पृथक्स्वभावः सत्त्वादिप्रकृतिः । करोत्युत्पादयति विकरोति रूपान्तरं नयतीति ॥ २० ॥ अतोऽन्यस्य रक्षकस्याभावादसंसारित्वाय नित्यमुक्तस्त्वमेव मां शरणागतं रक्षेति प्रार्थयते—मायेति द्वाभ्याम् । त्वदंशस्य पुंसोऽनुमतेनेक्षणलक्षणानुग्रहेण मनो मनःप्रधानं लिङ्गं माया सृजति । कथंभूता । कालेन नोदिताः क्षोभिता गुणा यस्याः । कथंभूतं मनः । कर्ममयं [illegible] । [illegible] । [illegible] वेदोक्तकर्मप्रधानं च । अजया जीवस्याविद्यया तद्भोगार्थमर्पिताः षोडश अरा विकारा यस्मिन् । [illegible] ॥ को [illegible]

यस्मिन्यतो यर्हि येन च यस्य यस्माद्यस्मै यथा यदुत यस्त्वपरः परो वा ॥ भावः करोति विकरोति पृथक्स्व-
भावः संचोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥ माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगु-
णानुमतेन पुंसः ॥ छन्दोमयं यदजयार्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥ २१ ॥ स त्वं
हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः ॥ चक्रे विसृष्टमजयेश्वर षोडशारे
निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥ २२ ॥ दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव
इच्छति यां जनोऽयम् ॥ येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुठिताः स तु ते निरस्तः ॥ २३ ॥
तस्मादमूस्तनुभृतामहमाशिषो ज्ञ आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ॥ नेच्छामि ते विलुलितानुरुवि-
क्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥ ॥ ॥ ॥

[illegible] त्वदन्यस्त्वत्तः पृथक् स्थितः [illegible] ॥ २१ ॥ ननु ममापि [illegible] । [illegible] नित्यं विजिता आत्मनो बुद्धेर्गुणा येन स हि [illegible] । मनः [illegible] । [illegible] येन । अत [illegible] नय ॥ २२ ॥ ननु [illegible] तत्राह—दृष्टा इति त्रिभिः । श्रियः संपदः । विभव उत्सवः । [illegible] मात्रेण [illegible] । स च त्वया निरस्तः ॥ २३ ॥ यस्मादेवं तस्मादाशिषो भोगान् । [illegible] किमपि नेच्छामि । ते कालात्मनो [illegible] ॥ २४ ॥ ॥ ॥

१ [illegible] । २ 'भाव' इति पाठः ।

किंच वर्तमानकालेऽपि न भोगार्हा इत्याह—कुत्रेति । श्रुतिः श्रवणं तदेव सुखं यासु ताः । मृगतृष्णिकावन्मिथ्याभूताश्चाशिषः क । अशेषाणां रुजां रोगाणां
विरोह उद्भवस्थानं क चेदं कलेवरम् । एवं चेत्सर्वोऽपि जनः किं न विरज्यते तत्राह—यदपि यद्यपि इति एवं विद्वानयं जनस्तथापि न निर्विद्यते विरक्तो न
भवति । कुतः । काम एवानलस्तम् । मधुतुल्यैः सुखलवैर्दुःसाध्यैरपि शमयन् । कामाग्निशमनव्यग्रस्य निर्वेदावकाशो नास्तीत्यर्थः । यद्वा अचिन्त्यमिदं त्वन्मायाचे-
ष्टितमिति भावः ॥२५॥ तर्हि त्वं कथं निर्विण्णोऽसि । अनर्हेऽपि मयि प्रवृत्तया त्वत्कृपयैवेत्याशयेनाह—केति । रजसैव प्रभवो जन्म यस्य सः । सप्तम्यन्तं वा
कुलविशेषणम् । तमोऽधिकं यस्मिंस्तस्मिन्नसुराणां कुले जातोऽहं क । क च तवानुकम्पा । तामेवाह—ब्रह्मादीनां शिरसि यो नैवार्पितः स पद्मवत्सकलसंतापहरः
करः प्रसादः पुरुषार्थरूपो मे शिरस्यर्पित इति यत् । यद्ययानुकम्पयेति वा ॥ २६ ॥ नच त्वयीदमतिचित्रमित्याह—नैषेति । एते ब्रह्मादय उत्तमा अयमसुरो
नीच इत्येषा परावरमतिर्जन्तोः प्राकृतस्य यथा तथा भवतो नैव स्यात् । अत्र हेतुः—जगत आत्मनः सुहृदश्च । तर्हि सर्वत्र मत्प्रसाद एवंरूपश्च किं न स्यात्तत्राह—
संसेवया तव प्रसादो भवति, तत्र च सेवानुरूपं तत्तदिच्छानुसारेण धर्मादीनामुदयो भवति । एवं सत्यपि वैषम्याभावे दृष्टान्तः—सुरतरुर्यथा सेवकस्यैव संकल्पा-

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः॥ निर्विद्यते न तु जनो यदपीति विद्वान्कामा-
नलं मधुलवैः शमयन्दुरापैः ॥२५॥ क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क तवानुकम्पा ॥
न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ २६ ॥ नैषा परावरमतिर्भवतो ननु
स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथापि ॥ संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वम् ॥२७॥
एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन्प्रसङ्गात् ॥ कृत्वात्मसात्सुरर्षिणा भगवन्गृहीतः सोऽहं
कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥ मत्प्राणरक्षणमनन्त पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम्॥
खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥ ॥ ॥ ॥

नुसारेण फलं ददाति नच विषमस्तद्वत् । न परावरत्वमत्र कारणमिति शेषः ॥ २७ ॥ एतच त्वद्भृत्यकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मां नयेत्या-
शयेनाह—एवमिति । यथा त्वयानुकम्पितोऽस्म्येवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः सोऽहं कथं नु त्वद्भृत्यसेवां विसृजामि । कथंभूतोऽनुगृहीतोऽस्मि ।
प्रभव एवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानं जनं निपतितमनु तत्प्रसङ्गात्प्रपतन्योऽहम् । तदेवं त्वद्भृत्यस्य नारदस्यानुग्रहेण त्वयात्यन्तमनुकम्पि-
तोऽस्म्ययमेव च मम परमोऽनुग्रहो न पुनरिदमतितुच्छं मत्प्राणरक्षणादि ॥ २८ ॥ न चेदं त्वया मदनुग्रहार्थं कृतं किं त्वन्यार्थमित्याह—भो अनन्त, यदे-
तन्मत्प्राणरक्षणं मां हन्तुमुद्यतस्य मत्पितुर्वधश्च तदुभयं स्वभृत्यऋषिवाक्यमृतं सत्यं विधातुमित्यहं मन्ये । कुतः । यद्यस्मादसदयुक्तं विधित्सुः खड्गं प्रगृह्यावो-
चत् । किम् । मदपरो मद्व्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु तव कं शिरोऽहं हरामीति । पाठान्तरेऽप्ययमेवार्थः । यद्यदाऽवोचत्तदा मत्प्राणर-
क्षणमिति वान्वयः । एतच्च 'सत्यं विधातुं निजभृत्यभाषितम्' इत्यत्रैव बहुधा व्याख्यातम् ॥ २९ ॥ ॥ ॥ ॥

१ 'कं निहन्मि' इति 'कं हनामि' इति वा पाठे इत्यर्थः । मूलपाठे तवेत्यध्याहारः । '[illegible] धरोऽवतु शिरस्तव संहरामि' इति 'मदपरस्तव कं हरामि' इति च पाठस्तत्र अवत्वित्यध्याहारः ।

नचेदं पक्षपातेन रक्षणं दैत्यहननं च त्वयि स्वाभाविकं किंतु मायागुणोपाधिकम्, सर्वात्मके त्वयि स्वतस्तदयोगादित्याह—एक इति । एतच्च जगत् त्वमेवैकः । यद्यतः अमुष्यादावन्ते च पृथगवस्यसि विरामं करोषि । सन्मात्रतया कारणत्वेनावधित्वेन च वर्तस इत्यर्थः । अतो मध्यतश्च त्वमेव । कुतस्तर्हि भेदप्रतीतिस्तत्राह—निजमायया गुणपरिणामात्मकमिदं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्गुणैर्हेतुभूतैर्नानेव रक्षक इव हन्तेव चावसितः प्रतीतः । तदुक्तं स्कन्धोपक्रमे—'निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान्प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥' इत्यादिना ॥ ३० ॥ ननु यद्येतज्जगदहमेव तर्हि जगतो वैषम्येण मम वैषम्यमपि किं न स्यादित्यत आह—त्वं वै त्वमेवेदं सदसत्कार्यकारणात्मकं जगन्न तु त्वत्तः पृथक् । भवांस्तु ततोऽन्यः । आद्यन्तयोः पृथगवस्थानात् । यत्त्वसाऽहमतोऽयमात्मीयोऽयं पर इति या बुद्धिः साऽपार्था मायैव । कार्यकारणाभेदं दृष्टान्तेन साधयति । यद्यतो यस्य जन्म ईक्षणं प्रकाशश्च । यस्मिन्निधनं च स्थितिश्च तद्वै तदेव ॥ अष्टिर्बीजं कारणं तरुः कार्यं तयोर्यथा वसुकालमात्रत्वम् । अयमर्थः—कालशब्देन नीलत्वाद्यसाधारणगुणयोगात्पृथ्वी । वसुशब्देन वस्तुमात्रं भूतसूक्ष्मम् । तत्र तरोर्यथा पृथ्वीमयबीजमात्रत्वं तस्य च यथा भूतसूक्ष्ममात्रत्वमेवं सर्वमपि कार्यकारणात्मकं जगत् परमकारणात्मकमेवेति । तथाच पारमर्षं सूत्रम् 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति । श्रुतिश्च—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति ॥ ३१ ॥ तत्र तावदन्ते पृथगवस्थानं दर्शयति—न्यस्येदमिति । इदं जगदात्मनैवात्मनि निक्षिप्य स्वसुखमेवानुभवन्निष्क्रियः सन्प्रलयोदकमध्ये शयनं करोषि । तर्हि किं जीवस्येव ममापि तमोवृत्तिरूपा निद्रास्ति । नहि नहि । योग एव तु बहिर्वृत्त्यभावसाम्यान्निद्रोच्यत इत्याह—योगेन मीलिते दृशौ येन । आत्मनः स्वरूपप्रकाशेन निपीता निद्रा येन । यतस्तुर्येऽवस्थात्रयातीते स्वरूपे स्थितस्त्वं नतु सुप्त इवात्मना तमो युङ्क्षे योजयसि न पश्यसि न जाग्रत्स्वप्नयोरिव गुणान्विषयांश्चेत्यर्थः ॥ ३२ ॥ इदानीं कारणत्वेनादावपि पृथगवस्थानं दर्शयन्मध्यतश्च त्वमेवेत्येतत्प्रपञ्चयति चतुर्भिः । यस्त्वमम्भसि शेषे तस्यैव ते इदं जगद्वपुः स्वरूपं नान्यस्य, यतस्त्वं मध्यतोऽपि तस्य । कथंभूतस्य । निजया कालशक्त्या संचोदिताः प्रकृतेर्धर्माः सत्त्वादयो येन । स्वरूपत्वे हेतुः—अनन्तशयनाच्छेषपर्यङ्काद्विरमत्समाधिर्यस्य तस्य तव नाभेः सकाशात् एकार्णवोदके महाब्जं लोकपद्ममभूत् । कथंभूतम् । आत्मनि त्वय्येव गूढं सत् । स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ॥ ३३ ॥ ॥ ॥ ॥

एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च ॥ सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥ त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था ॥ यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टितर्वोः ॥ ३१ ॥ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेऽऽत्मना निजसुखानुभवो निरीहः ॥ योगेन मीलितदृगात्मनिपीतनिद्रस्तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥ ३२ ॥ तस्यैव ते वपुरिदं निजकालशक्त्या संचोदितप्रकृतिधर्मण आत्मगूढम् ॥ अम्भस्यनन्तशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ॥ ३३ ॥ ॥ ॥ ॥ ॥

१ तत्तस्मात्कारणादनन्यत्वं अभिन्नत्वं कार्यस्य । कुतः । आरम्भणशब्दादिभ्यः । आरम्भणशब्दश्च वाचारम्भणमिति । आदिशब्देनैतदात्म्यमित्यादयश्च तेभ्यः। २ विलयानि विगतलयान्यनश्वराणि अम्बूनि यस्य तस्य कारणार्णवस्य मध्ये इति चक्र० । ३ तेन पार्थिवपदार्थानां काष्ठपाषाणादीना वैषम्येपि तत्परमकारणस्य गन्धस्य यथा न वैषम्यं तथैव जगतो वैषम्येपि न भगवत इति ।

तदेवं कारणत्वेनानुगतः सन्मध्यतश्च त्वमेव वर्तस इत्युक्तमेतदेव शुद्धसत्त्वस्य ब्रह्मणोऽनुभवेन स्फुटयितुं तस्य प्राक्तनीमवस्थामाह—तस्मिन्नब्जे संभवो यस्य । कविर्ब्रह्मा । अतः पश्चादन्यदपश्यन् बीजमुपादानकारणभूतं त्वां स्वस्मिन्न्यासं सन्तमपि नाविन्दत् । युक्तं चैतत् उह अहो । अङ्कुरे जाते सति बीजं तदनुगतं कारणं पृथक्कथं नाम पुमान्पश्येत् ॥ ३४ ॥ भवदुपासनया तु स्वस्मिन्नेव दृष्टवानित्याह—स त्विति । पराब्दत्वाज्जमास्थितः सन् । तीव्रेण तपसा ध्यानेन । अनेन सन्मात्ररूपेणोपादानतया दर्शनमुक्तम् ॥ ३५ ॥ ईश्वरत्वेन च दृष्ट्वा कृतार्थोऽभवदित्याह—एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं समृद्धम् । मायामयं मायाप्रधानम् । सता प्रपञ्चेनोपलक्षितः संनिवेशः पादादिरचना यस्य ॥ ३६ ॥ तदा च भवांस्तस्यानुग्रहं कृतवानित्याह—तस्मा इति । हयग्रीवमूर्तिं बिभ्रत्सन् रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणान्समर्पितवान् । तत्र हेतुः—सत्त्वमिति ॥ ३७ ॥ एकस्त्वमेवेत्यादिभिरष्टभिः

तत्संभवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिन्त्य॥ नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमुहोपलभेत बीजम् ॥ ३४ ॥ स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ॥ त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥ एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयं सदुपलक्षितसंनिवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥ तस्मै भवान्हयशिरस्तनुं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ॥ हत्वाऽनयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥ इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि जगत्प्रतीपान् ॥ धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥ नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रम् ॥ कामातुरं हर्षशोकभयैषणार्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥ जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥

श्लोकैर्यदुक्तं पक्षपातेन रक्षणं तद्विपक्षवधश्च सत्त्वौपाधिको न तु स्वत इति तदुपसंहरति—इत्थमिति । विभावयसि पालयसि । हंसि घातयसि । कलौ तु तन्न करोषि । यतस्तदा त्वं छन्नोऽभवः । अतस्त्रिष्वपि युगेष्वाविर्भावात्स एवंभूतस्त्वं त्रियुग इति प्रसिद्धः ॥ ३८ ॥ तदेवं भगवतस्तत्त्वं निरूप्य स्वस्य च तद्विचारायोग्यतां निवेदयन्प्रार्थयते—नैतदिति त्रिभिः । असाधु बहिर्मुखम् । तीव्रं दुर्धरम् । हर्षशोकभयैरेषणात्रयेण चार्तं दुःखितमपि त्वत्कथासु न संप्रीयते तस्मिन्नेवंभूते मनसि सति कथं तव तत्त्वं विचारयामि ॥ ३९ ॥ किंच जिह्वा अवितृप्ता सती भो अच्युत, मा मां यतो मधुरादिरसस्तत आकर्षति । उदरं तु क्षुधासंतप्तं सत् सद्य एव यत्किंचिदाहारमात्रं प्रति । चपला दृक् चक्षुः । कर्मशक्तिः कर्मेन्द्रियाणि लुनन्ति त्रोटयन्ति ॥ ४० ॥ ॥ ॥

१ अब्दशतं व्याप्यान्विष्यदपि इति चक्र० । २ जाते तत्र स्वांशेन वर्तमानमपि बीजं तत्राङ्कुरेऽधिकरणे कथमुपलभेत इति चक्र० । ३ 'विचिन्वन्' इति विज० पाठः । ४ 'तनुतां' इति वीर० पाठः । ५ युगानुवृत्तं युगे युगे अनु अनुरूपं वृत्तं चरित्रं यस्य इति चक्र० ।

न केवलमहमेक एवैवं कष्टां दशामापन्नः किंतु महाजनोऽप्येवमेव क्लिश्यत्यतः सर्वं जनं पालयेति प्रार्थयते—एवमिति । भवः संसार एव वैतरणी यमद्वारनदी तस्याम् । अन्योन्यतो यानि जन्मादीनि तेभ्योऽतिभीतम् । स्वेषां परेषां च विग्रहेषु यथायथं वैरं मैत्रं च यस्य । एवं मूढं जनं पश्यंस्त्वम् । हे पारचर, तस्याः पारे स्थित नित्यमुक्त । हन्तेति अहो कष्टमित्येवमनुकम्प्याद्य पीपृहि वैतरणीमुत्तार्य पालय ॥ ४१ ॥ एकेन मया कथं सर्वो जनस्तारणीय इति चेत्तत्राह—को न्विति । को नु ते अत्र सर्वजनोत्तारणे प्रयासो न कोऽपि । कुतः । अस्य विश्वस्य भवसंभवलोपानामुत्पत्तिस्थितिसंहाराणां हेतोः ततोऽपि किमेतद्दुष्करमिति भावः । उचितं चैतदित्याह—मूढेष्विति । त्वां च त्वदीयांश्च तारयिष्यामीमं दुराग्रहं मा कृथा इति चेत्तत्राह—तव ये प्रियजना भक्तास्ताननुसेवमानानां नोऽस्माकं तेनोत्तारणेन किम् । '[1]कोऽतिप्रयासोऽसुरबालका हरेः को न्वत्र तेऽखिलगुरो भगवन्प्रयासः ॥ प्रह्लाद इत्थमुपमन्त्र्य मिथो नराणामीशेन सख्यमकरोदपनीय मायाम्' ॥ ४२ ॥ वत्स प्रह्लाद, त्वां तावत्तारयिष्यामि तावतैव कृतार्थः स्याः, किमनेन निर्बन्धेनेत्यत आह—नैवेति । हे पर

एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम् ॥ पश्यन् जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर पीपृहि मूढमद्य ॥ ४१ ॥ को न्वत्र तेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भवसंभवलोपहेतोः ॥ मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवतां नः ॥ ४२ ॥ नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः ॥ शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥ प्रायेण देव मुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः ॥ नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥ यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम् ॥ तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥ ॥ ॥

सर्वोत्तम, त्वद्वीर्यगायनमेव महामृतं[2] तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्याः नैवोद्विजे किंतु विमूढान्शोचामि । तानेवाह—ततो महामृताद्विमुखं चेतो येषाम् । प्रत्युतेन्द्रियार्थनिमित्तं यन्मायासुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः ॥ ४३ ॥ त्वं तावन्मुक्तिं गृहाण तांस्तु तत्त्वज्ञा मुनय उपदेक्ष्यन्तीति चेत्तत्राह—प्रायेणेति । न विमुमुक्षे विमुक्तिं नेच्छामि । तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति । निर्बन्धासीति[3] चेदत आह—त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥ ४४ ॥ नन्वेते स्त्रीसंभोगादिना सुखिन एव न कृपणास्तत्राह—यदिति । करयोः[4] कण्डूयनेन संघर्षणेनेव दुःखमनु दुःखं यस्मिन् । तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरंस्तत्राह—कृपणाः कामुका बहुदुःखभाजोऽपीह गृहमेधिसुखे न तृप्यन्त्यलमिति न मन्यन्ते । कण्डूतिवत्कामस्य दुःसहत्वात् । ननु केचित्कण्डूतिमपि सहन्ते कामं चेत्यत्राह—त्वत्प्रसादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत नतु सर्वे । अत्रापि कण्डूतिवदिति दृष्टान्तः ॥ ४५ ॥ ॥

१ अयं श्रीधरस्य श्लोकः । २ त्वद्वीर्याणां ये गायकास्तत्प्रिया जनास्तत्संबन्धि यन्महामृतं इति क्रम० । ३ तत्र हेतुः—त्वद्वीर्येति । ४ करयोः पामा दूषितयोः ।

ननु मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिस्तत्राह—मौनेति । हे पुरुष अन्तर्यामिन्, ये मौनादयो दश आपवर्ग्या अपवर्गहेतवः प्रसिद्धाः । रहो विविक्तवासः । ते तु प्रायशोऽजितेन्द्रियाणामिन्द्रियभोगायार्थार्थं विक्रीणतां वार्ता जीवनोपाया भवन्ति । दाम्भिकानां तु वार्ता अपि भवन्ति वा न वा । दम्भस्यानियतफलत्वात् ॥ ४६ ॥ त्वज्ज्ञानं भक्तिं विना सकामैर्मौनादिभिर्न भवत्येवेत्याह—रूपे इति त्रिभिः । बीजाङ्कुराविव प्रवाहापन्ने इमे सदसती कार्यकारणे एव ते रूपे उपलक्षणभूते वेदेन सृष्टे प्रकाशिते, नच अन्यत् स्वसमवेतं गौरत्वादिकमिव देवदत्तादेः । कुतः । अरूपकस्य प्राकृतरूपादिशून्यस्य, अतो युक्ताः संयता एव भक्तियोगेन प्रत्यक्षं त्वामुभयत्र कार्ये कारणे चानुगतं पश्यन्ति मथनेन दारुषु वह्निमिव । नान्यतः स्यात्त्वज्ज्ञानमिति शेषः । यद्वा ज्ञानप्रकारमेवाह—एतदुभयमन्यतः प्रधानपरमाण्वादेर्न स्यात् । 'स ऐक्षत' इत्यादिश्रुतेः । अतस्त्वमेव कारणत्वात्सर्वत्रानुस्यूत इति ॥ ४७ ॥ तदेवाह—त्वं वायुरिति । हृदयं मनः । चिच्चित्तम् । अनुग्रहोऽहंकारो देवतावर्गो वा । सगुणः स्थूलः । विगुणः सूक्ष्मः । मनश्च वचश्च मनोवचस्तेन निरुक्तं प्रकाशितं

मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ॥ प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वात्र तु दाम्भिकानाम् ॥ ४६ ॥ रूपे इमे सदसती तव वेदसृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य ॥ युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥ त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ॥ सर्वं त्वमेव सगुणो विगुणश्च भूमन्नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥ नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः ॥ आद्यन्तवन्त उरुगाय विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४९ ॥ तत्तेऽर्हत्तम नमःस्तुतिकर्मपूजाः कर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ॥ संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥ ॥ नारद उवाच ॥ एतावद्वर्णित-गुणो भक्त्या भक्तेन निर्गुणः ॥ प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५१ ॥ ॥ ॥

किमपि त्वत्तोऽन्यन्नास्ति ॥ ४८ ॥ अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानन्तीत्याह—नैत इति । एते गुणाद्यभिमानिनो देवा आद्यन्तवन्तो जडोपाधि-त्वादनाद्यन्तं निरुपाधिं त्वां न विदन्ति । हि यस्मात्सुधियो विद्वांस एवं विचार्य शब्दादध्ययनादिव्यापारादुपरमन्ति । त्वामेव समाधिनोपासत इत्यर्थः । तथाच श्रुतिः—'किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' इति । 'नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तत्' इति । स्मृतिश्च—'यदा ते मोहक-लिलं बुद्धिर्व्यतितरिष्यति ॥ तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥' इत्यादिः ॥ ४९ ॥ उपसंहरति—तदिति । हे अर्हत्तम, नमःस्तुतिकर्मपूजाः प्रणिपातस्तुतिसर्वकर्मार्पणानि, कर्म च परिचर्या, चरणयोः स्मृतिश्च, कथायां श्रवणं चेत्येवं षडङ्गया सम्यक्सेवया विना परमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत । यस्मादेवं भक्तिं विना न मोक्षो नच भक्तिः संसेवया विना, अतः प्राक् प्रार्थितं त्वद्दास्ययोगमेव देहीति प्रकरणार्थः ॥ ५० ॥ एतावन्तो वर्णिता गुणा यस्य । यतमन्युरुपसंहृतकोपः ॥ ५१ ॥ ॥ ॥ ॥ ॥

१ 'तत्त्वज्ञानम्' इति पाठः । २ 'महत्तम' इति वीर० पाठः ।

कामान्पूरयतीति तथा। यद्वा पुरुषार्थप्रवाहोऽस्मीत्यर्थः ॥ ५२ ॥ अप्रीणतः अप्रीणयतः। तप्तुमपूर्णकामत्वेन शोचितुम् ॥ ५३ ॥ प्रीणन्ति तोषयन्ति ॥ ५४ ॥ एकान्ति-
त्वान्निरुपाधिभक्तत्वात् ॥५५॥ ॥ इति श्रीमद्भा० सप्तमस्कन्धे नवमोऽध्यायः ॥ ९ ॥ दशमे त्वनुगृह्यास्मुं भक्तमन्तर्हिते हरौ ॥ प्रसङ्गाद्धरिणा रुद्रे कृतोऽनुग्रह ईर्यते
॥ १ ॥ तत्सर्वं वरजातम् ॥ १ ॥ उत्पत्त्या स्वभावेनैवासक्तं माम्। तेषां कामानां सङ्गाद्भीतः ॥२॥ ननु किमहं भक्तं प्रलोभयामि। नहि किंतु वरं वृणीष्वेति वदतस्त-
वाभिप्रायोऽन्य एवेत्याह—भृत्यलक्षणेति। हृदयस्य ग्रन्थिवद्बन्धकेषु ॥ ३ ॥ अन्यथाऽनर्थसाधने प्रवर्तनं न घटेतेत्यर्थः। कथमेवं भृत्यलक्षणज्ञानं स्यात्तत्राह—

॥श्रीभगवानुवाच॥ प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ॥ वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम्॥ ५२॥
मामप्रीणत आयुष्मन्दर्शनं दुर्लभं हि मे ॥ दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥ प्रीणन्ति ह्यथ मां धीराः
सर्वभावेन साधवः ॥ श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५४ ॥ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलो-
भनैः ॥ एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥ ॥इति श्रीमद्भा० म० पु० स० प्रह्लादचरिते भगवत्स्तवो
नाम नवमोऽध्यायः॥ ९ ॥ ॥नारद उवाच॥ भक्तियोगस्य तत्सर्वमन्तरायतयार्भकः॥ मन्यमानो हृषीकेशं स्मयमान
उवाच ह॥ १ ॥ ॥प्रह्लाद उवाच॥ मा मां प्रलोभयोत्पत्त्यासक्तं कामेषु तैर्वरैः॥ तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामु-
पाश्रितः॥२॥ भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत्॥भवान्संसारबीजेषु हृदयग्रन्थिषु प्रभो॥३॥नान्यथा तेऽखिल-
लगुरो घटेत करुणात्मनः॥यस्त आशिष आशास्ते न स भृत्यः स वै वणिक्॥४॥आशासानो न वै भृत्यः स्वामिन्याशिष
आत्मनः॥न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः॥५॥ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ॥ नान्य-
थेहावयोरर्थो राजसेवकयोरिव॥६॥ यदि रासीश मे कामान्वरांस्त्वं वरदर्षभ ॥ कामानां हृद्यसंरोहं भवतस्तु वृणे वरम्
॥ ७ ॥ इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ॥ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥ ८ ॥

य इति। ते त्वत्तः ॥ ४ ॥ ननु कामनयापि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसिद्धः। सत्यम्। सोपाधिकोऽसौ नतु तात्त्विक इत्याह—स्वामिन्यात्मन आशिषोऽपे-
क्षमाणो नैव भृत्यः। भृत्यहेतुकमात्मनः स्वाम्यमिच्छन्यो भृत्याय ददाति स च नैव स्वामी ॥ ५॥ आवयोस्तु तात्त्विकोऽसावित्याह—अहं त्विति। अनपाश्रयो
निरभिसन्धिः। अन्यथा कामाद्यभिसन्धिनार्थः प्रयोजनं नास्ति ॥ ६ ॥ ननु तथापि परमोदारस्य मम संतोषार्थं किमपि वृणीष्वेति चेदत आह—यदीति। कामा-
ङ्कुराणामसंरोहमनुत्पत्तिम्। भवतः सकाशात् ॥ ७ ॥ ननु कामोत्पत्तौ सत्यां को दोषस्तत्राह—इन्द्रियादीनि यस्य जन्मना नश्यन्ति। आत्मा देहः ॥ ८ ॥



१ काम्यन्त इति कामाश्चतुर्विधपुरुषार्थास्तेषा पूरः प्रवाह इति विग्रहो वोध्यः। २ अथ अत एव अभिमतवरेच्छात एव। ३ मुमुक्षुस्तान्कामान् त्यक्तुमिच्छुः इति क्रम०। ४ भृत्यस्य लक्षणमसाधारणं धर्मं जिज्ञासुर्लोके ज्ञापयितुमिच्छुरित्यर्थः इति क्रम०।

कामाभावे गुणमाह—विमुञ्चतीति । भगवत्त्वाय त्वत्समानैश्वर्याय । तथाच श्रुतिः—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भव-
त्यत्र ब्रह्म समश्नुते ॥' इति ॥ ९ ॥ निर्दोषान्कामान्दातुमिच्छन्तं प्रत्याख्यास्यन्नमस्यति—नम इति ॥ १० ॥ सत्यमेकान्तभक्तस्त्वं तथापि मदाज्ञा करणी-
येत्याह—नेति । मे एकान्तिनः कदाचिदपि इहामुत्र च मय्याशिषो न वाञ्छन्त्येव तथाप्येतन्मन्वन्तरमात्रं भोगान्भुङ्क्ष्व ॥ ११ ॥ ननु तर्हि बन्धः स्यादि-
त्यत आह—कथा इति द्वाभ्याम् । सर्वेषु भूतेषु संतमेकमीशं यज्ञाधिष्ठातारं मामात्मन्यावेश्य यजस्व, तर्ह्येनेनैवापि कर्मणा बन्धः स्यान्नेत्याह—योगेन मय्यर्पणेन
कर्म हिन्वंस्त्यजन् यजस्व ॥ १२ ॥ किंच—भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा मुक्तबन्धः सन् लोकानुग्रहार्थं कीर्तिं च विस्तार्य मां प्राप्स्यसि । कुश-
लेन पुण्याचरणेन पापं हित्वेति विभीषामात्रम् । अन्यथा तस्य राज्येऽप्रवृत्तेः । ननु तस्य प्राचीनं पापमस्ति । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ

विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ॥ तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ॥ ९ ॥ नमो भगवते तुभ्यं
पुरुषाय महात्मने ॥ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥१०॥ ॥ नृसिंह उवाच ॥ नैकान्तिनो मे मयि जात्वि-
हाशिष आशासतेऽमुत्र च ये भवद्विधाः ॥ अथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥ कथा
मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि संतमेकम् ॥ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म
हिन्वन् ॥१२॥ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ॥ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामे-
ष्यसि मुक्तबन्धः ॥१३॥ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ॥ त्वां च मां च स्मरन्काले कर्मबन्धात्प्रमुच्यते
॥ १४ ॥ ॥ प्रह्लाद उवाच ॥ वरं वरय एतत्ते वरदेशान्महेश्वर ॥ यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥
विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम् ॥ भ्रातृहेति[3] मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १६ ॥ तस्मात्पिता मे
पूयेत दुरन्ताद्दुस्तरादघात् ॥ पूतस्तेऽपाङ्गसंदृष्टस्तदा कृपणवत्सल ॥ १७ ॥ ॥ ॥

तद्व्यपदेशात्' इति न्यायात् । 'तत्सुकृतदुष्कृते विधुनुतः' इति श्रुतेश्च । न चेदं प्रारब्धपापाभिप्रायम्, तस्य भोगेनैव क्षयात्, कुशलेन हित्वेति वचनानुपपत्तेः ।
नचासावविद्वानिति वाच्यम्, भगवतैव कृतार्थत्वस्यानन्तरं वक्ष्यमाणत्वात् । अत एव योगेन कर्म हिन्वन्निनीतीदमपि लोकसंग्रहार्थे कर्मणि प्रवर्तितस्यानुद्वे-
गमात्रायेति सर्वमनवद्यम् ॥ १३ ॥ किंच—य इति । त्वां च मां चेदं मच्चरित्रं च स्मरन्नेतत्स्तोत्रं यः कीर्तयेत् सोऽपि कर्मबन्धाद्विमुच्यते कुतस्तव बन्धशङ्के-
त्यर्थः ॥ १४ ॥ ईश्वराज्ञया प्राप्तकर्माधिकारः सन्पितुर्निष्कृतिं प्रार्थयते त्रिभिः । वरं वरणीयमेतदपरं वृणे । ते त्वत्तः ॥ १५ ॥ विद्धोऽमर्षेण क्रोधेनाशयो
यस्य ॥ १६ ॥ तेऽपाङ्गेन संदृष्टोऽतः पूत एव तथापि भो कृपणवत्सल, कार्पण्येन प्रार्थय इत्यर्थः ॥ १७ ॥ ॥ ॥ ॥

१ तदधिगमे तस्य ब्रह्मणोऽधिगमे उत्तरपूर्वाघयोः उत्तराघस्याश्लेषः पूर्वाघस्य विनाशः । कुतः । तद्व्यपदेशात् तयोरश्लेषविनाशयोर्व्यपदेश उपदेशः । अश्लेषस्य 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते' इत्यादिः । विनाशस्य 'तद्यथेषीकातूलमित्यादिः' तस्मात् । २ 'लोके' इति पाठः । ३ भ्रातृहेति यदनिन्ददिति पूर्वस्यानुषङ्गः ।

यद्यपि कश्यपो मरीचिर्ब्रह्मा चेति तत्पितृत्रय एव पूर्वजास्तथापि त्रिःसप्तभिः सहेति आकल्पगतपित्रभिप्रायेणोक्तम् । यद्यस्मात् ॥ १८ ॥ सम्यगुत्तम आचारो येषां ते कीकटा अपि देशास्तत्तुल्यवंशाश्च पूयन्ते शुद्धा भवन्ति ॥ १९ ॥ ननु त्वद्भक्तानामयं महिमेति न चित्रम्, अहं तु तादृशो न भवामीति चेत्तत्राह— सर्वात्मनेति द्वाभ्याम् । मद्भावेन मद्भक्त्या विगता स्पृहा येषाम् ॥ २० ॥ त्वामनुगता ये केचित्पुरुषास्तेऽप्येवंलक्षणाः सन्तो मद्भक्ता भवन्त्यतो भवान्मे भक्तानां सर्वेषां प्रतिरूपधृगुपमानास्पदम् । श्रेष्ठः खल्वित्यर्थः ॥२१॥ मदङ्गस्पर्शनेन सर्वशः पूतस्य ते पितुः पापशङ्कैव नास्ति । केवलं पुत्रकृत्यानि प्रेतकार्याणि कुरु ॥२२॥

॥ श्रीभगवानुवाच ॥ त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ॥ यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः
॥ १८ ॥ यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ॥ साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः[2] ॥ १९ ॥ सर्वा-
त्मना न हिंसन्ति भूतग्रामेषु किंचन ॥ उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ २० ॥ भवन्ति पुरुषा लोके मद्भ-
क्तास्त्वामनुव्रताः ॥ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥२१॥ कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ॥
मदङ्गस्पर्शनेनाङ्ग लोकान्यास्यति सुप्रजाः ॥ २२॥ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्य मन-
स्तात कुरु कर्माणि मत्परः ॥ २३ ॥ ॥ नारद उवाच ॥ प्रह्लादोऽपि तथा चक्रे पितुर्यत्साम्परायिकम् ॥ यथाह
भगवान् राजन्नभिषिक्तो द्विजोत्तमैः[3] ॥ २४ ॥ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ॥ स्तुत्वा वाग्भिः पवित्राभिः
प्राह देवादिभिर्वृतः ॥२५॥ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्ष भूतभावनपूर्वज[4] ॥ दिष्ट्या ते निहतः पापो लोक-
संतापनोऽसुरः ॥ २६ ॥ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ॥ तपोयोगबलोन्नद्धः समस्तनिगमानहन्
॥ २७ ॥ दिष्ट्यास्य तनयः साधुर्महाभागवतोऽर्भकः ॥ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८ ॥
एतद्वपुस्ते भगवन्ध्यायतः प्रयतात्मनः ॥ सर्वतो गोप्तृ संत्रासान्मृत्योरपि[5] जिघांसतः ॥ २९ ॥ ॥ नृसिंह उवाच ॥
मैवं वरोऽसुराणां[6] ते प्रदेयः पद्मसंभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥ ॥ ॥ ॥

ब्रह्मवादिभिर्वेदवादिभिः । उत्क्रमनतिक्रम्य मत्परः सन्कर्माणि कुरु ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ मम सृष्टिभिर्मया सृष्टैर्भूतैः । समस्तान्निगमान्धर्मानित्यर्थः । अहन् हतवान् । स त्वया हतः एतद्दिष्ट्या भद्रम् ॥ २७ ॥ समितः सम्यक् प्राप्तः ॥ २८ ॥ सर्वतः संत्रासात् । गोप्तृ रक्षकम् ॥ २९ ॥ एवं वरस्त्वया न प्रदेयः । क्रूरो निसर्गः स्वभावो येषाम् । अमृतं क्षीरम् ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

१ 'पूयन्तेऽपि' इति पाठः । २ 'कीकटान्' इति पाठस्तत्र कीकटतुल्यानित्यर्थः । ३ एतदग्रे 'महाभागवतः सोऽयं पार्के राजन्यती भुवम्' इत्यर्धमधिकं क्वचित् । ४ भूतभावना ब्रह्म-मरीच्यादयः पूर्वजाः प्रथमजाता यस्मात् इति चक्र० । ५ मृत्योः सकाशादपि गोप्तृ । ६ एवं वरो वरः अविद्यारूपतमो वरः । ७ स त्वया हत इत्यादि व्याख्यानं पूर्वश्लोकेनान्वेति।

॥३१॥३२॥३३॥३४॥ शिशुपालदन्तवक्त्रयोर्द्विषतोः श्रीकृष्णसायुज्यं कथमिति यत्पृष्टं तदेव तयोः पूर्वजन्मकथनादिभिरुपपादितमुपसंहरति—एवमिति सप्तभिः । दितेः पुत्रत्वं प्रापितौ । विप्रशापेनेत्युत्तरस्यानुषङ्गः ॥ ३५ ॥ ३६ ॥ तच्चित्तौ श्रीरामे चित्तं ययोस्तौ ॥ ३७ ॥ करूषजो दन्तवक्त्रः । हरौ सायुज्यं समीयतुः ॥ ३८ ॥ कृष्णनिन्दादिना पूर्वकृतं च यदेनः पापं तद्ध्यानेन तदात्मानः सन्तो जहुः । तदात्मत्वे दृष्टान्तः—कीटः पेशस्कृतो ध्यानेन यथा तदात्मा भवतीति ॥३९॥ अभिदा

॥ नारद उवाच ॥ इत्युक्त्वा भगवान् राजंस्तत्रैवान्तर्दधे हरिः ॥ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥
ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् ॥ भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ॥ ३२ ॥ ततः काव्यादिभिः
सार्धं मुनिभिः कमलासनः ॥ दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम् ॥ ३३ ॥ प्रतिनन्द्य ततो देवाः प्रयुज्य
परमाशिषः ॥ स्वधामानि ययू राजन्ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ॥
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥ पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ॥ कुम्भकर्णदशग्रीवौ हतौ
तौ रामविक्रमैः ॥ ३६ ॥ शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ॥ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥
ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ॥ हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३८ ॥ एनः पूर्वकृतं यत्तद्रा-
जानः कृष्णवैरिणः ॥ जहुस्त्वन्ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥ यथा[2] यथा भगवतो भक्त्या परम[3]-
याऽभिदा ॥ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥ ४० ॥ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान् ॥ दम-
घोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ॥ अवतारकथा पुण्या
वधो यत्रादिदैत्ययोः ॥ ४२ ॥ प्रह्लादस्यानुचरितं महाभागवतस्य च ॥ भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः
॥ ४३ ॥ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ॥ परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४ ॥ ॥

भेददर्शनशून्यया । हरेः सात्म्यं सारूप्यम् ॥४०॥४१॥ प्रह्लादचरितार्थमुपसंहरति—एषेति चतुर्भिः । अवतारः श्रीनृसिंहरूपस्तस्य कथा आख्यातेति शेषः ॥४२॥ प्रह्लादस्यानुचरितमित्यादेः समाम्नातमिति तृतीयेनान्वयः । अस्येत्यनेनोक्तं सर्गस्थित्यप्ययानामीशस्य हरेर्याथात्म्यं तत्त्वम्, अनेन कृतं हरेर्गुणकर्मानुवर्णनं चेत्यर्थः ॥ ४३ ॥ परावरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विपर्यासः ॥ ४४ ॥ ॥ ॥ ॥ ॥

---

१ इदं प्राजापत्यादीनां विशेषणम् । एकवचनान्तपाठे प्रह्लादविशेषणम् । २ भक्त्या यथा यथा अभिदा अभेदेन, यद्वा भेददर्शनशून्यया परमया यथावद्भक्त्या हरेः सात्म्यं ययुः, तथा चैद्यादयो नृपा द्वेषेणापि तच्चिन्तया हरेः सात्म्य ययुरित्यर्थः । ३ परमया ज्ञानवैराग्यादिभ्योऽपि श्रेष्ठया । ४ तस्य कथा आख्यातेति लिङ्गव्यत्ययतः पूर्वेणान्वयः इति चक्र० । ५ अस्येति तृतीयार्थे षष्ठी । अनेन प्रह्लादेन उक्तमित्यध्याहारः ।

आध्यात्मिकमात्मानात्मविवेकादि ॥ ४५ ॥ एतच्छ्रवणादिफलमाह—य इति द्वाभ्याम् । एतच्छ्रुत्वा यः कीर्तयेत् ॥ ४६ ॥ एतदेतां मृगेन्द्रस्य लीलाम् । तामेवाह—दैत्येन्द्रस्य यूथपानां च वधम् । यः शुचिः सन्पठेत । पुण्यमनुभावं प्रभावं मतिनिश्चयं वा । लोकं वैकुण्ठम् ॥ ४७ ॥ अहो प्रह्लादस्य भाग्यं येन देवो दृष्टो वयं तु मन्दभाग्या इति विषीदन्तं प्रत्याह—यूयमिति त्रिभिः । येषां युष्माकं गृहान्मुनयोऽभियन्ति सर्वतः समायान्ति । तत्कस्य हेतोः, येषु गृहेषु नराकारं गूढं सच्छ्रीकृष्णाख्यं परं ब्रह्म साक्षाद्वसतीति ॥ ४८ ॥ ननु कृष्णोऽस्माकं मातुलेयः कथं ब्रह्मेत्युच्यते तत्राह—स वा इति । सोऽयं ब्रह्मैव । कथंभूतः । महद्भिर्विमृग्यं यत्कैवल्यनिर्वाणसुखं निरुपाधिः परमानन्दस्तदनुभूतिरूपो वो युष्माकं खलु प्रियः सुहृदित्यादिरूपो भवति । विधिकृदाज्ञानुवर्ती ॥ ४९ ॥ ननु परं ब्रह्म चेत्कथं षट्सहस्रस्त्रीषु रतिः, कथं वाऽधर्माद्याचरणं तस्येत्यत आह—नेति । यस्य रूपं तत्त्वं भवादिभिरपि धिया स्वबुद्ध्या

धर्मो भागवतानां च भगवान्येन गम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥ य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥ ४६ ॥ एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत ॥ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वाऽनुभावमकुतोभयमेति लोकम् ॥ ४७ ॥ यूयं नृलोके वत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति ॥ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४८ ॥ स वा अयं ब्रह्म महद्विमृग्यकैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥४९॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५० ॥ स एष भगवान् राजन् व्यतनोद्विहतं यशः ॥ पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ ५१ ॥ ॥ राजोवाच ॥ कस्मिन्कर्मणि देवस्य मयोऽहन् जगदीशितुः ॥ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ ५२ ॥ ॥ नारद उवाच ॥ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ॥ मायिनां परमाचार्यं मयं शरणमाययुः ॥५३॥ ॥

वस्तुतयेदमित्थमिति साक्षान्नोपवर्णितं स युष्माकं स्वयमेव प्रसन्नः । अस्माकं तु मौनादिसाधनैस्तत्प्रसादः प्रार्थनीय एवेत्याह—मौनेनेति । स एष सात्वतां पतिर्नः प्रसीदतु । नहि प्रह्लादस्य गृहेषु परं ब्रह्म वसति, नच तद्दर्शनाय मुनयस्तद्गृहानभियन्ति, नच तस्य ब्रह्म मातुलेयादिरूपेण वर्तते, नच स्वयमेव प्रसन्नमतो यूयमेव ततोप्यसत्तोऽपि भूरिभागा इति भावः ॥ ५० ॥ नन्वन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान् स एवंभूत ईश्वरोऽप्यस्य तत्त्वं न जानातीति कथमित्यपेक्षायां तस्याप्येतत्साहाय्यादेवासौ प्रभावो न केवलस्येति वक्तुमाख्यानमुपक्षिपति—स एष इति ॥ ५१ ॥ राजा युधिष्ठिर उवाच । जगदीशितुर्देवस्य कीर्तिं कस्मिन्कर्मणि मयो हतवान् ॥ ५२ ॥ अनेन श्रीकृष्णेनोपबृंहितैः संवर्धितैः ॥ ५३ ॥ ॥ ॥ ॥ ॥

१ मृगेन्द्रलीलां दैत्यात्मजस्यानुभावं च श्रुत्वा यः पठेत स लोकमेतीत्यन्वयः । २ प्रिय इति युष्माकं तेनानन्दनीयत्वं, सुहृदिति हिते प्रवर्तनीयत्वं, मातुलेय इति सम्बन्धविशेषणानुगम्यत्वं, आत्मेति स्वीयशरीरभावेनाभिमन्तव्यत्वं, अर्हणीय इति कृपया परिपाल्यत्वं, विधिकृत् किंकर इति सारथ्यादिनोपास्यत्वं, गुरुरित्यनुशासनीयत्वमिति इति चक्र० ।

हैमी च रौप्या चायसी चेति तिस्रः पुरो निर्माय तेभ्यो ददाविति शेषः । दुर्लक्ष्यावपायसंयोगौ गमनागमने यासाम् । दुर्वितर्क्याः परिच्छदा यासु ॥ ५४ ॥ सेनान्यः सेनापतयः । पूर्ववैरं स्मरन्तः ॥ ५५ ॥ ५६ ॥ अस्त्रमभिमन्त्रितं शरं पुरेषु व्यमुञ्चत ॥ ५७ ॥ ततः शरात् । सूर्यमण्डलान्मयूखसंदोहा रश्मिसमूहा इव ।

स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥ ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन्सेश्वरान्नृप ॥ स्मरन्तो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५५ ॥ ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो ॥ त्राहि नस्तावकान्देव विनष्टांस्त्रिपुरालयैः ॥ ५६ ॥ अथानुगृह्य भगवान्मा भैष्टेति सुरान्विभुः ॥ शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुञ्चत ॥ ५७ ॥ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ॥ यथा मयूखसंदोहा नादृश्यन्त पुरो यतः ॥ ५८ ॥ तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ॥ तानानीय महायोगी मयः कूपरसेऽक्षिपत् ॥ ५९ ॥ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ॥ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ॥ ६० ॥ विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ॥ तदायं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥ ६१ ॥ वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ॥ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६२ ॥ तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन्विमोहिताः ॥ तद्विज्ञाय महायोगी रसपालानिदं जगौ ॥ ६३ ॥ स्वयं विशोकः शोकार्तान्स्मरन्दैवगतिं च ताम् ॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ॥ ६४ ॥ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधानिकं व्यधात् ॥ ६५ ॥ धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ॥ रथं सूतं ध्वजं वाहान्धनुर्वर्म शरादि यत् ॥ ६६ ॥ सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥ शरं धनुषि संधाय मुहूर्तेऽभिजितीश्वरः ॥ ६७ ॥ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ॥ दिवि दुन्दुभयो नेदुर्विमानशतसंकुलाः ॥ ६८ ॥ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ॥ अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ ६९ ॥ ॥

यतो येभ्यः ॥ ५८ ॥ कूपरसे स्वयं निर्मितकूपामृते ॥ ५९ ॥ वज्रसाराः वज्रवद्दृढाङ्गाः । महौजसो महाबलाः । मेघदलना मेघभेदिनो विद्युद्रूपा वह्नय इव ॥ ६० ॥ ॥ ६१ ॥ काले मध्याह्ने ॥ ६२ ॥ ६३ ॥ ६४ ॥ आत्मनो वा अन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितमपोहितुं परिहर्तुमिह कश्चिदपीश्वरः समर्थो नास्ति असौ श्रीकृष्णः । प्रधनं संग्रामस्तत्साधनम् ॥ ६५ ॥ ६६ ॥ अभिजिति मध्याह्ने ॥ ६७ ॥ विमानशतानि संकुलानि संकीर्णानि येषां ते देवादयः ॥ ६८ ॥ ६९ ॥ ॥

---

१ यासां ताः निर्मायाऽसुरेभ्यो ददाविति शेषः इति चक्र० । २ ईश्वरं ऊचुरिति शेषः । ३ 'पुर्योमस्त्रं' इति विज० पाठः । ४ 'अचीकरत्' इति पाठः । ५ महायोगी मयः इति वीर० । ६ तद्व्याधादिति पूर्वस्यानुषङ्गः । ७ यतो येभ्यो बाणेभ्यो हेतुभ्यः पुराणि नादृश्यन्त । ८ काले मध्याह्न इत्यर्थः, अग्रे मुहूर्तेऽभिजितीश्वर इत्युक्तेः । ९ पूर्वश्लोकार्धेन संबन्धादयमन्वयो बोध्यः । १० कुसुमोत्करैरवाकिरन्नित्युत्तरश्लोकेनान्वयः ।

॥७०॥ आदित आरभ्य स्कन्धार्थं निगमयति—एवंविधानीति। नृलोकं नराकारमात्मनो विडम्बमानस्यानुकुर्वतः ॥७१॥ ॥ इति श्रीमद्भा० सप्तमस्कन्धे भा०दी० टीकायां दशमोऽध्यायः ॥१०॥ ॥ तदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ॥ अथ पञ्चभिरध्यायैः कर्मयोगोऽनुवर्ण्यते॥१॥एकादशे नृणां धर्माः साधारण्येन वर्णिताः॥ विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ २ ॥ दैत्यपतेः प्रह्लादस्य । साधूनां सभासु सभाजितं सत्कृतमीहितं चरितं श्रुत्वा पुनर्नारदं पप्रच्छ । कथंभूतस्येहितम् । महत्तमानामग्रण्यो मुख्यस्य। तत्र हेतुः—उरुक्रमे आत्मा मनो यस्य ॥१॥ श्रवणेच्छायां हेतुः—यद्यतो धर्मादनुष्ठितात्परं ज्ञानं भक्तिं च विन्दते ॥२॥ ॥ ३ ॥ ननु स्मृतिकारैर्धर्म उक्त एव तत्राह—नारायणपरा इति ॥ ४ ॥ अजाय श्रीनारायणाय । तस्यैव मुखाच्छ्रुतम् ॥ ५ ॥ तन्मुखादात्मनः श्रवणं संभावय-

एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ॥ ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥७०॥ एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ॥ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥७१॥

॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः ॥ १० ॥

॥ श्रीशुक उवाच ॥ श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ॥ युधिष्ठिरो दैत्यपतेर्मुदा युतः पप्रच्छ भूयस्तनयं स्वयंभुवः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ भगवञ्छ्रोतुमिच्छामि नृणां धर्मं सनातनम् ॥ वर्णाश्रमाचारयुतं यत्पुमान् विन्दते परम् ॥ २ ॥ भवान्प्रजापतेः साक्षादात्मजः परमेष्ठिनः ॥ सुतानां संमतो ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ॥ करुणाः साधवः शान्तास्त्वद्विधा न तथाऽपरे ॥ ४ ॥ ॥ नारद उवाच ॥ नत्वा भगवतेऽजाय लोकानां धर्महेतवे ॥ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥ योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ॥ लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥ धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ॥ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ७ ॥ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ॥ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥ ॥ ॥

न्विशिनष्टि—य इति ॥ ६ ॥ प्रथमं तावद्धर्मे प्रमाणमाह—धर्मेति । धर्मस्य मूलं प्रमाणम् । स्मृतं च स्मृतिः तद्विदां वेदविदाम् । येन चात्मा मनः प्रसीदति तुष्यति च। तथा च याज्ञवल्क्यः—'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥' इति । मनुश्च—'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' इति ॥ ७ ॥ तत्र तावन्नरमात्रसाधारणधर्ममाह—सत्यमिति पञ्चभिः । तप एकादश्युपवासादि । ईक्षा युक्तायुक्तविवेकः । शमो मनसः संयमः । दमो बाह्येन्द्रियाणाम् । त्यागो दानम् । स्वाध्यायो यथोचितजपः ॥ ८ ॥ ॥ ॥२८॥

१ 'महत्तमाग्रण्यं' इति वीर० पाठः । तत्र महत्तमानामग्रण्यं अग्रेगण्यं नारदमित्यर्थः । २ 'धर्मसेतवे' इति, 'हितकाम्यया' इति पाठौ । ३ दाक्षायण्या मूर्तिनाम्न्याम् । ४ 'सर्ववेदमयो हरिः' इति पाठः । ५ 'स्मृतिश्च' इति वीर० पाठः । ६ तत्र सत्याद्या एकत्रिंशतिर्भक्त्युपकरणीभूताः । श्रवणाद्या नव तु साक्षाद्भक्तिरेवेति ज्ञेयम् इति चक्र० ।

संतोषो दैवलब्धेनालंबुद्धिः । समदृशां महतां सेवा । ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः । विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम् । मौनं वृथालापनिवृत्तिः । आत्मविमर्शनं देहादिव्यतिरिक्तात्मानुसंधानम् ॥ ९ ॥ आत्मेति देवतेति च बुद्धिः ॥१०॥ अस्य श्रीकृष्णस्य श्रवणादयो नव । इज्याऽर्चनम् ॥ ११ ॥ एवं त्रिंशल्लक्षणवान् ॥ १२ ॥ इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह—संस्कारा मन्त्रवन्तो गर्भाधानादयो यस्मिन्नविच्छिन्नाः स द्विजः । तर्हि शूद्रस्यापि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राह—अजो ब्रह्मा यमेवंभूतसंस्कारयुक्तं जगाद स द्विजः । शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद नचोपनयनवन्तमतो नासौ द्विजः । तथा च स्मृतिः—'विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ॥ न केनचित्समसृजच्छन्दसा तं प्रजापतिः ॥' इति । श्रुतिश्च—'गायत्र्या ब्राह्मणमसृजत् । त्रिष्टुभा राजन्यम् । जगत्या वैश्यम् । न केनचिच्छूद्रम्' इति । अतो विवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्य तु सर्वथा निषेधान्न तस्य द्विजत्वमित्यर्थः । पाठान्तरे वैदिकादय इति गर्भाधानादय इत्यर्थः । त्रैवर्णिकानामावश्यकान्धर्मानाह—इज्येति । जन्मना विशुद्धेन कुलेन कर्मणा चाचारेणावदातानां शुद्धानाम् । दुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः । ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च । शूद्रस्य तु वर्णधर्मा एव, आश्रमभेदकृतविशेषाभावात् ॥ १३ ॥ ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान्धर्मानाह—विप्रस्येति सार्धैः सप्तभिः । विप्रस्य षट् कर्माणि विहितानीत्यनुषङ्गः । तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका । यथाह मनुः—'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति । अन्यस्य क्षत्रियस्य अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजनमध्यापनं चापद्यनुजानाति । वक्ष्यति चानन्तरमेव—ऋते राजन्यमिति । श्रूयते चाश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि । प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यन्तरमाह—राज्ञ इति । आदिशब्देन दण्डशुल्कादि ॥ १४ ॥ वार्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य । शूद्रस्य द्विजानां शुश्रूषा विहिता । स्वामिनो द्विजस्य तु शुश्रूषा वृत्तिश्च भवेत् ॥ १५ ॥ ॥ ॥

संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ॥ नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥९॥ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ॥ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥१०॥ श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ॥ सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥ नृणामयं परो धर्मः सर्वेषां समुदाहृतः ॥ त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥ १२ ॥ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ॥ इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥ विप्रस्याध्ययनादीनि षडन्यस्याऽप्रतिग्रहः ॥ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥ १४ ॥ वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ॥ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥ ॥ ॥ ॥

१ विपर्ययेहेक्षा विपरीतफलासु चेष्टासु हेयदृष्टिः इति सिद्धां०। २ बुद्धिर्भावना। ३ 'स द्विजो वैदिकादयः' इत्येवंरूपे। ४ अन्नमोदनं, अद्यं मोदकादि। आदिना वस्त्रसक्रन्दनवनितादेर्यथोचितं विभज्यैव ग्रहणम् चक्र०। ५ अविप्राद्वेति वाशब्दात्कचिद्विप्रादपीत्यर्थः। 'वपनं द्रविणादानम्' इत्यादिस्मृतः इति क्रम०।

विप्रस्य मुख्यानुकल्पभेदेन वृत्त्यन्तराण्याह—वार्तेति । वार्ता विचित्रा कृष्यादिरूपा । शालीनं धार्ष्ट्यं विनैव प्राप्तमयाचितम् । यायावरं प्रत्यहं धान्ययाच्ञा । शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम् । उञ्छनमापणादिपतितकणोपादानम् । शिलोञ्छनद्वयमेकीकृत्य चतुर्धेत्युक्तम् । श्रेयसी उत्तमा ॥ १६ ॥ वृत्तिष्वेव व्यवस्थां दर्शयन्नापद्वृत्तीराह—जघन्यो नीचः । उत्तमामध्यापनादिरूपाम् । ऋते राजन्यम् । क्षत्रियस्तु प्रतिग्रहादन्यां भजेत् ॥१७॥ चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह—ऋतामृताभ्यामिति ॥१८॥ श्लोकं व्याचष्टे—ऋतमिति ॥ १९ ॥ तयोस्तद्वर्जने हेतुमाह—सर्ववेदमय इति ॥२०॥ वर्णानामभिव्यञ्जकरूपान्धर्मानाह—शम इति चतुर्भिः । अच्युतात्मत्वं श्रीविष्णुपरत्वम् ॥ २१ ॥ शौर्यं युद्धोत्साहः । वीर्यं प्रभावः । तेजः प्रागल्भ्यम् । त्यागो दानम् ।

वार्ता विचित्रा शालीनयायावरशिलोञ्छनम् ॥ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ॥१६॥ जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥१७॥ ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥१८॥ ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ॥ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम् ॥१९॥ सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ॥ ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥२१॥ शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ॥ ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥२२॥ देवगुर्वच्युते[2] भक्तिस्त्रिवर्गपरिपोषणम् ॥ आस्तिक्यमुद्यमो नित्यं नैपुणं वैश्यलक्षणम् ॥२३॥ शूद्रस्य संनतिः शौचं सेवा स्वामिन्यमायया ॥ अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥ २४ ॥ स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता ॥ तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २५ ॥ संमार्जनोपलेपाभ्यां गृहमण्डलवर्तनैः[3] ॥ स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥२६॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥ वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम् ॥२७॥ संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥२८॥

आत्मनो मनसो जयः ॥२२॥२३॥ अमन्त्रयज्ञो नमस्कारेणैव पञ्चयज्ञानुष्ठानम् । तथा च याज्ञवल्क्यः—'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' इति ॥ २४ ॥ स्त्रीधर्मानाह—स्त्रीणामिति पञ्चभिः । पतिरेव देवो यासाम् । तस्य पत्युरेव शुश्रूषा पादसंवाहनादिभिः । तदनुकूलता च हिताचरणम् । तस्य यद्व्रतं नियमस्तस्य धारणमाचरणम् । एतच्चतुष्टयं पतिव्रतानां लक्षणं धर्मश्च ॥ २५ ॥ किंच संमार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः । परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदा गृहोपकरणानि यया ॥ २६ ॥ २७ ॥ किंच संतुष्टा यथालाभेन । तावन्मात्रभोगेऽप्यलोलुपा । दक्षा अनलसा । प्रिया सत्या च वाग्यस्याः । सर्वत्राप्यप्रमत्ताऽवहिता । अपतितं महापातकशून्यम् । यथाह याज्ञवल्क्यः—'आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः' इति ॥ २८ ॥ ॥२९॥

१ विष्णुमनस्कत्वम् इति सिद्धां० । २ देवगुरुभ्यां सहिते अच्युते इत्यर्थः । 'देवगुर्वार्यगोभक्तिस्त्रिवर्गपरितोषणम्' इति पाठो विजयध्वजीसंमतः । ३ गृहे रङ्गवल्यादिमण्डलरचनैः ।

तत्परा सती भजेत् । श्रीर्हरिमिव । हर्यात्मना पत्या सह ॥ २९ ॥ प्रतिलोमजानुलोमजानां वृत्तिमाह—वृत्तिरिति । तत्तत्कुलकृता कुलपरम्पराप्राप्ता । परम्पराप्राप्तमपि चौर्यं हिंसादिकं च प्रतिषेधति—अचौराणामपापानां चेति । तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह—अन्त्यजेति । 'रजकश्चर्मकारश्च नटो बुरुड एव च ॥ कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥' इति । अन्तेवसायिनस्तु चाण्डालपुल्कसमातङ्गादयः । तेषां परम्पराप्राप्तैव वस्त्रनिर्णेजनादि- वृत्तिरित्यर्थः ॥ ३० ॥ श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एव श्रेयानित्याह—प्राय इति । स्वभावेन सत्त्वादिप्रकृत्या विहितो धर्मः शर्मकृत् सुखहेतुः स्मृतः । कैः । वेद एव दृक् चक्षुर्येषां तैः । भगवता चोक्तम्—'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति ॥ ३१ ॥ ननु स्वाभाविकस्य कर्मणो बन्धहेतुत्वात्कथं सुखहेतुत्वं तत्राह—वृत्त्येति ॥ ३२ ॥ ननु काम्यानि कर्माणि कुर्वतस्तत्फलभोगपरस्य कथं नैर्गुण्यं स्यात् । तदुक्तं प्रह्लादेन—'औपस्थ्यजैह्व्यं बहुमन्यमानः कथं

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ २९ ॥ वृत्तिः संकर- जातीनां तत्तत्कुलकृता भवेत् ॥ अचौराणामपापानामन्त्यजान्तेवसायिनाम् ॥ ३० ॥ प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ॥ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ॥ ३१ ॥ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ॥ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥ उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामि- यात् ॥ न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ ३३ ॥ एवं कामाशयं चित्तं कामानामतिसेवया ॥ विरज्येत यथा राजन्नाग्निवत्कामबिन्दुभिः ॥ ३४ ॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ॥ यदन्य- त्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥३५॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसं- वादे सदाचारनिर्णयो नामैकादशोऽध्यायः ॥ ११ ॥ ॥छ॥ ॥छ॥ ॥छ॥

विरज्येत दुरन्तमोहः' इत्यादि । तत्राधिकारिभेदेन व्यवस्थां सदृष्टान्तामाह—उप्यमानमिति द्वाभ्याम् । पुनः सूत्यै सस्यप्रसवाय ॥ ३३ ॥ कामा आशेरते वासनारूपेण यस्मिंस्तत् । अयं भावः—उत्कटवासनाविष्टस्य सहसैव कामत्यागासंभवाद्वेदोक्तनियमेन बहुशः कामान्भुञ्जानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतस- स्तद्दोषदर्शनेन ययातिसौभरिप्रमुखानामिव शनैर्विरागो भवति, यथा सवीर्यं क्षेत्रं शनैर्निर्वीर्यं भवति, यथा च प्रज्वलितोऽग्निर्न घृतबिन्दुभिः शाम्यति, महता तु घृतपूरेण शाम्यत्येव तद्वत् । प्रह्लादकृतस्तुतौ कौमार एव निवृत्त्युपदेशो मन्दवासनानामधिकारेण । तदुक्तं तत्रैव—'बाला न दूषितधियो द्वन्द्वारामेरितेहितैः' इति । अतः सर्वमनवद्यम् ॥ ३४ ॥ शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याह—यस्येति । यद्यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत् । न तज्जातिनिमित्तेनेत्यर्थः ॥३५॥ इति श्रीमद्भागवते म०पु० सप्तमस्कन्धे भा०दी० टीकायामेकादशोऽध्यायः ॥११॥

१ यथा नापितरजकादीना मुण्डनवस्त्रनिर्णेजनादिका । अपापानामिति कुलपरंपराप्राप्तमदिरापानविधवाविवाहादिपापवता पापाभाव उक्तः । २ प्रायोग्रहणाद्दुर्जातीनां दुराचारत्याग- स्तुनाशर्मकृत् इति चक्र० । ३ शनैर्बहुजन्मान्त एव 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरञ्चितामेति' इत्यादि । ४ 'बहु' इति पाठः । ५ कामानामतिसेवया यथा चित्तं विरज्येत तथा कामबिन्दुभिः कामलेशैरग्निवन्न विरज्येतेत्यन्वयः ।

द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणां च साधारण्येन कथनम् ॥ १ ॥ वर्णादीनां धर्मा उक्ताः, इदानीमाश्रमधर्मा उच्यन्ते । तत्रास्मिन्द्वादशेऽध्याये ब्रह्मचारिवानप्रस्थयोरसाधारणाश्चतुर्णां साधारणाश्चोच्यन्ते । त्रयोदशे यतेर्धर्माः । चतुर्दशे गृहस्थस्य । पञ्चदशे सर्वधर्मसारसंग्रहः । ब्रह्मचारी गुरुकुले वसन्गुर्वादीनुपासीतेत्युत्तरेणान्वयः ॥ १ ॥ तानाह—सायमिति । ब्रह्म गायत्रीं जपन् सन्ध्यात्रयमुपासीत । उभे सन्ध्ये तु यतवाक् सायम्प्रातः सन्ध्याकालनिमित्तं मौनं कुर्यादित्यर्थः ॥ २ ॥ उपक्रमे आदाववसाने अन्ते गुरोश्चरणौ नमेत् ॥ ३ ॥ यथोदितमिति । पालाशो दण्डो ब्राह्मणस्येत्यादिनियममनतिक्रम्य । जटाधारणं तु केशप्रसाधनाभावमात्रम् ॥ ४ ॥ ५ ॥ यावदर्थं यथोपयोगमेव ॥ ६ ॥ बृहद्व्रतो ब्रह्मचर्यवान् गृहस्थव्यतिरिक्तः सर्वोऽपि

॥नारद उवाच॥ ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम् ॥ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥ सायम्प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ॥ उभे सन्ध्ये च यतवाग्जपन्ब्रह्म समाहितः ॥ २ ॥ छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः ॥ उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥ मेखलाजिनवासांसि जटादण्डकमण्डलून् ॥ बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥ सायंप्रातश्चरेद्भैक्षं गुरवे तन्निवेदयेत् ॥ भुञ्जीत यद्यनुज्ञातो नो[3] चेदुपवसेत्क्वचित् ॥५॥ सुशीलो मितभुग्दक्षः श्रद्दधानो जितेन्द्रियः ॥ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥ वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः ॥ इन्द्रियाणि प्रमाथीनि हरन्त्यपि[4] यतेर्मनः ॥७॥ केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥ नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ॥ सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥ कल्पयित्वात्मना[5] यावदाभासमिदमीश्वरः ॥ द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥ एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ॥ गुरुवृत्तिर्विकल्पेन[6] गृहस्थस्यर्तुगामिनः ॥ ११ ॥ ॥ ॥ ॥ ॥

प्रमदागाथां वर्जयेत् । तत्र हेतुः—इन्द्रियाणि बलवन्ति संयतस्यापि मनो हरन्तीति ॥ ७ ॥ ८ ॥ न कारयेदित्यत्र हेतुः—नन्विति । रहः एकान्ते । अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकान्तावसरे वा । यावदर्थं तदुक्तं कुर्यात् ॥ ९ ॥ ननु मिथ्यात्वादतिकश्मलत्वाच्च स्वयं सक्तप्रायं स्यादि जह्यादिति कोऽयमतिनिर्बन्धस्तत्राह—कल्पयित्वेति । आत्मना स्वरूपसाक्षात्कारेणेदं देहेन्द्रियाद्याभासमात्रं कल्पयित्वा निश्चित्य यावदसौ जीव ईश्वरः स्वतन्त्रो न भवेत्तावद्द्वैतं अयं पुमानियं स्त्रीत्यादिभेदो न विरमेत् । ततः किमत आह—ततो हि द्वैतात् विपर्ययो गुणाध्यासेन भोग्यताबुद्धिः । अतो जह्यादेवेत्यर्थः ॥ १० ॥ एतत्सर्वं सुशील इत्याद्युक्तम् । गृहस्थस्य विशेषमाह—गुरुवृत्तिरिति ॥ ११ ॥ ॥ ॥ ॥ ॥

१ त्रिसध्यमिति उभे सन्ध्ये तु यतवाग्भवेदित्युत्तरार्थतत्फलित भवति । २ भिक्षाग्रहणपर्यन्तमित्यर्थः । ३ नो चेदिति गुरोरन्यत्र गमनादौ इति क्रम० । ४ 'हरन्ति प्रसभं मनः' इति पाठः । ५ कल्पयत्यात्मना इति वीर० पाठः । ६ गुरुवृत्तिर्गुर्वनुवृत्तिः इति क्रम० ।

अञ्जनादीनामामिपान्तानां द्वन्द्वैक्यम् । अञ्जनं शरीरस्य । अभ्यञ्जनं शिरसः । स्त्रियं चावलेखां च चित्रकर्म स्त्रीणां कुड्यादौ लेखनं वा तन्निरीक्षणं वा । अत्राभ्यञ्जादि स्वरूपतो निषिध्यते । पूर्वं तु कथंचिदापदि प्रासमपि स्त्रीकर्तृकं निषिद्धमिति भेदः ॥ १२ ॥ अङ्गैः शिक्षादिभिरुपनिषद्भिश्च सहितां वेदत्रयीमधीत्यावबुध्य च तदर्थं च विचार्य । यावदर्थं स्वाधिकारानुसारेण ॥१३॥ यदीश्वरः शक्तस्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाद्याश्रमं स्वीकुर्यात्प्रव्रजेत् वा- तत्रैव वा वसेत् नैष्ठिकः स्यादित्यर्थः ॥१४॥ स्वधामभिः स्वाश्रयैर्भूतैर्जीवैः सह तन्नियन्तृतया ॥१५॥ चरन्नेवमाचरन् । विदितं विज्ञानं विज्ञेयं येन सः ॥ १६ ॥ ऋषिलोकं महर्लोकम् ॥१७॥ अकृष्टमकृष्टपच्यम् । अकालतः पाककालात्पूर्वमेव निष्पन्नमित्यर्थः । अर्कपक्वं फलादि । आहरेदश्नीयात् ॥१८॥ वन्यैर्नीवारादिभि-

अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु ॥ स्रग्गन्धलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥१२॥ उषित्वैवं गुरुकुले द्विजो-ऽधीत्यावबुध्य च ॥ त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ॥ गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥१५॥ एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ॥ चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥ वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा ॥ १७ ॥ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ॥ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥१८॥ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥१९॥ अग्न्यर्थमेव शरणमुटजं वाद्रिकन्दराम् ॥ श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥ केशरोमनखश्मश्रुमलानि जटिलो दधत् ॥ कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥२१॥ चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ॥ द्वावेकं वा यथाबुद्धिर्न विपद्येत कृच्छ्रतः ॥२२॥ यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथ वा ॥ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥ आत्मन्यग्नीन्समारोप्य संन्यस्याहंममात्मताम् ॥ कारणेषु न्यसेत्सम्यक् संघातं तु यथार्हतः ॥ २४ ॥ ॥ ॥

श्चरुपुरोडाशान् । कालचोदितान्नित्यान् । पुराणं पूर्वसंचितम् ॥ १९ ॥ हिमादीन्सहत इति तथा ॥ २० ॥ केशादीन्मलं चाप्रक्षालनेन धारयन् । कमण्डल्वादींश्च दधत् ॥२१॥ कृच्छ्रतस्तपःक्लेशाद्यथा बुद्धिर्न नश्येत्तथा चरेत् ॥ २२ ॥ द्वादशाब्दाद्यनन्तरमपि यदि स्वधर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत् । यदि तु ज्ञानाभ्यासे योग्यस्तर्हि संन्यसेदित्युत्तराध्याये वक्ष्यति । तदुभयरहितस्य तु यत्कृत्यं तदाह यदाऽकल्पोऽसमर्थः । आन्वीक्षिक्यां विद्यायां ज्ञानाभ्यासे ॥ २३ ॥ अनशनादि करिष्यतः पूर्वकृत्यमाह—आत्मनीत्यादि यावत्समाप्ति । यथार्हतो यथायोग्यं स्वकारणेष्वाकाशादिषु सङ्घातं देहं न्यसेत्प्रविलापयेत् ॥ २४ ॥ ॥ ॥

१ अञ्जनेत्यस्य टीकायां स्त्रीकर्तृकं निषिद्धमिति विचार्य अभ्यञ्जनेनेति विशेषात् इति क्रम० । चक्रवर्ती तु अत्राभ्यञ्जादिकं स्वरूपत एव निषिध्यते । पूर्वं तु कथंचिदापदि प्रासमपि स्त्रीकर्तृकं निषिद्धमिति भेदः इति व्याचख्यौ । २ मलानि दन्ताद्यधावनोत्थानि इति चक्र० । ३ अग्निपरिच्छदान् दर्भसमिदादीन् ।

तदेव विभज्य दर्शयति—खे आकाशे खानि देहगतच्छिद्राणि । आत्मवान् धीमान् । शेषमस्थिमांसादिकठिनांशम् ॥ २५ ॥ एवं स्थूलशरीरस्य लयमुक्त्वा लिङ्गशरीररूपस्याध्यात्मादित्रयस्य लयमाह—वाचमित्यादिना । तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहंकारादिषु लयो वाच्यस्तथापीह तेषां लयभावनेयमद्वितीयात्मप्रतिपत्तिपरेति यथाकथंचिल्लये भाव्ये देवतानां प्रवर्तकत्वेन प्राधान्यादिन्द्रियतद्विषययोर्देवतासु लयः कथ्यते । वक्तव्यसहितां वाचमग्नौ न्यसेत् । एवं सर्वत्र । पदानि पादौ । वयसि विष्णौ ॥ २६ ॥ सनादेन शब्देन सह । अध्यात्मनि वायौ । अध्यात्मविदिति पाठे वायाविति ज्ञातव्यम् ॥ २७ ॥ ज्योतिष्यादित्ये । रसगन्धयोस्त्विन्द्रियाद्याकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्येन्द्रियस्य विषये लयमाह—प्रचेतसा सह जिह्वां रसनमप्सु रसरूपासु । घ्राणशब्देनाश्विनोरप्युपलक्षणम् । अश्विभ्यां सह घ्राणं प्रेयैर्गन्धैरुपलक्षितायां क्षिताविलर्थः ॥ २८ ॥ परे कवौ ब्रह्मणि । अध्यात्मनाहंकारेण । अध्यात्मतामिति पाठे कर्माण्यहंकारं चेत्यर्थः । कथंभूते रुद्रे । यद्यस्मादहंममतापूर्विका क्रिया भवति तस्मिन् । सत्त्वेन चेतनया ।

खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥२५॥ वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि ॥ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ॥ दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥२७॥ रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् ॥ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥२८॥ मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ कर्माण्यध्यात्मना रुद्रे यदहंममताक्रिया ॥ सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥ अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ॥ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥३०॥ इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम् ॥ ज्ञात्वाऽद्वयोऽथ विरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥ ॥ इति श्रीमद्भागवते म० पु० स० द्वादशोऽध्यायः ॥ १२ ॥

॥ नारद उवाच ॥ कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ॥ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥ ॥

गुणैर्गुणकार्यैः प्रागवशिष्टैर्देवैः सह । यद्वा सत्त्वादिभिर्गुणैर्हेतुभूतैः । वैकारिकं भोक्तृत्वादिविकारवन्तं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि ॥ २९ ॥ ननु विकारवतः कथं परेऽविकारे लयः स्यात् । विकारहेतूनां सर्वोपाधीनां लयद्वारेणेत्याह—अप्स्विति । अदो ज्योतिः । तच्च नभः कूटस्थेऽहंतत्त्वे । तच्च कूटस्थं महति महत्तत्त्वे । तदव्यक्ते प्रधाने । तच्च अव्यक्तमक्षरे परमात्मनि ॥ ३० ॥ इति सर्वोपाधिलयाद्धेतोरवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वाऽद्वयः सन्विरमेत् । दग्धकाष्ठो यथाऽनलः ॥ ३१ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥

त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् ॥ अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १ ॥ एवं ध्यात्वाऽकल्पोऽनशनादिकं कुर्यात् । आन्वीक्षिक्यां कल्पस्त्वेवं ध्यात्वा परिव्रज्येति संबन्धः । कियदत्र त्याज्यम् । देहव्यतिरिक्तं सर्वमित्याह—देहमात्रेति । तस्य धर्मानाह—ग्रामैकरात्रेति नवभिः ॥ १ ॥ ॥

१ अभिनिवेशयेदित्युत्तरेणैव सर्वेषामन्वयः चक्र० । २ मनोरथैर्मननीयैर्विषयैः बोध्यैर्बुद्धिविषयैः । ३ चकारोऽनुक्तसमुच्चयार्थः । ४ क्षितं विभावयेदिति शेषः ५ अकल्पो वानप्रस्थनियमाचरणे ।

॥ २ ॥ ३ ॥ सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥
कौपीनं गुह्यमाच्छाद्यते यावता तावन्मात्रम् । परं केवलमन्यदिति वा । त्यक्तं प्रेपोच्चारणात्पूर्वमेव ॥ २ ॥ ३ ॥ सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥ नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः । नहि बद्धमुक्तयोरैक्यं संभवति तत्राह—सुप्तेति । सुषुप्तौ हि तमसावृतमात्मतत्त्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते । सन्धौ तु न तमो नापि विक्षेपः । अतस्तदा आत्मदृगात्मानं लक्षीकृत्य स्थितः सन्नात्मनो गतिं तत्त्वं पश्यन् । अत एव बन्धं मोक्षं च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः । तदुक्तं योगग्रन्थे—'निद्रादौ जागरस्यान्ते यो भाव उपजायते ॥ तं भावं भावयन्नित्यं मुच्यते नेतरो यतिः ॥' इति ॥ ५ ॥ अस्य देहस्य । [1]प्रभवोऽप्ययश्च यस्मात्तं कालम् ॥ ६ ॥ असच्छास्त्रेष्वनात्मपरेषु । जीविकां नक्षत्रविद्यादिवृत्तिम् । वादवादान् जल्पवितण्डादिनिष्ठान् । कंच कमपि पक्षं निर्बन्धेन न संश्रयेत् ॥ ७ ॥ शिष्यान्नानुबध्नीत प्रलोभनादिना बलान्नापादयेत् । [2]आरम्भान् मठादिव्यापारान्

विभृयाद्यद्यसौ वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दण्डलिङ्गादेरन्यत्किंचिदना[3]पदि ॥ २ ॥ एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥ पश्येदा[4]त्मन्यदो विश्वं परे सदसतोऽव्यये ॥ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥ सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक् ॥ पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥५॥ नाभिनन्देद्ध्रु[5]वं मृत्युमध्रुवं वाऽस्य जीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥६॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥ वादवादांस्त्यजेत्तर्कान्पक्षं कंच न संश्रयेत् ॥ ७ ॥ न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ॥ न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥ ८ ॥ न यतेराश्रमः प्रायो धर्महेतुर्म[6]हात्मनः ॥ शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥ अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥

॥ ८ ॥ परमहंसस्य विशेषमाह—न यतेराश्रमो धर्मार्थः । कथंभूतस्य यतेः । [6]महात्मनः । तस्य लक्षणम्—शान्तस्येत्यादि । प्राय इत्यस्यायं भावः—ज्ञानोत्पत्तिपर्यन्तं बहूदकादिलिङ्गमाश्रित्य सत्त्वशुद्ध्यर्थं यमान्नियमांश्चाचरन्नेव ज्ञानोत्पत्तौ यतेत । उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति । यमाश्च स्वत एव स्युः । अतस्तदा लिङ्गादिभिः प्रयोजनाभावाल्लोकसंग्रहार्थं धारयेद्वा त्यजेद्वेति ॥ ९ ॥ तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह—न बहिर्व्यक्तं लिङ्गं यस्य व्यक्तोऽर्थः प्रयोजनमात्मानुसंधानं यस्य स मनीष्यप्युन्मत्तवद्बालवच्च कविरपि मूकवदात्मानं नृणां दृष्ट्या दर्शयेत् । ते यथोन्मत्तादिरूपं मन्येरंस्तथा वर्तेत । स्वदृष्ट्येति पाठे बाह्यानुसंधानाभावेनेत्यर्थः ॥ १० ॥ परमहंसधर्ममेवेतिहासेन स्फुटयति—अत्रापीति यावदध्यायसमाप्ति । [7]अजगरव्रतस्य मुनेश्च ॥ ११ ॥

१ प्रभावाप्ययौ जन्ममरणे अर्थआद्यचि फलितार्थकथनम् । २ आरम्भान् जीविकाव्यापारान् इति चक्र० । ३ अनापदीति । आपदि तु देहरक्षणार्थं त्यक्तमपि धारयेत् । ४ अदो विश्वमात्मानं च पश्येत् । ५ ध्रुवमावश्यकम् । ६ महानतिशुद्ध आत्मा चित्तं यस्य । ७ अजगरवृत्तिः । अजगरव्रतं नामैकत्र स्थित्वा प्रारब्धकर्मभोगः ।

धरोपस्थे भूपृष्ठे । सह्याद्रेस्तटे । रजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलं तेजो यस्य तम् ॥ १२ ॥ १३ ॥ कर्मादिभिर्जना यं न विदुस्तं पादयोः शिरसा स्पृशन्नत्वा अप्राक्षीदित्युत्तरेणान्वयः ॥१४॥१५॥ उद्यमसहित इव भोगवानिव पीवानं स्थूलं देहं धारयसि । तत्र हेतुं वदेति तृतीयेनान्वयः । उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राह—वित्तं चेति ॥ १६ ॥ नु इति निश्चये । ह इति प्रसिद्धौ । तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः । यतोऽर्थादेव । यतो हेतोः पीवा । क्षमं योग्यं चेत् ॥ १७ ॥ किंच—वित्तार्जनाद्यसमर्थोऽप्ययं जनस्तदर्थमुद्यमं करोति त्वं तु समर्थोऽपि किमिति न करोपीत्याह—कविर्विद्वान् । कल्पो दक्षः । निपुणदृक् चतुरः । चित्राः प्रिया लोकरञ्जनाः कथा यस्य । तथापि लोकस्य कर्म कुर्वतः सतः शेपे । तद्वीक्षितापि तत्सर्वं पश्यन्नपि । पाठान्तरे न द्वेक्षि तत्कर्म न द्वेक्षि नैपि वा

तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्[2]निगूढामलतेजसम् ॥ १२ ॥ ददर्श लोकान्विचरँल्लोकतत्त्व-
विवित्सया ॥ वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥ कर्मणाकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ॥ न
विदन्ति जना यं वै सोऽसाविति न वेति च ॥ १४ ॥ तं नत्वाभ्यर्च्य विधिवत्पादयोः शिरसा स्पृशन् ॥ विवित्सुरिद-
मप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ॥ वित्तं चैवोद्यमवतां भोगो वित्तव-
तामिह ॥ भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥१६॥ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नु हार्थो यत एव भोगः ॥
अभोगिनोऽयं तव विप्र[3] देहः पीवा यतस्तद्वद नः क्षमं चेत् ॥ १७ ॥ कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ॥
लोकस्य कुर्वतः कर्म शेषे तद्वीक्षि[4]तापि वा ॥ १८ ॥ ॥ नारद उवाच ॥ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥
स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥ ॥ ब्राह्मण उवाच ॥ वेदेदमसुरश्रेष्ठ भवान्नन्वार्यसंमतः ॥ ईहोपर-
मयोर्नृणां पदान्यध्यात्मचक्षुषा ॥ २० ॥ यस्य नारायणो देवो भगवान्हृद्गतः सदा ॥ भक्त्या केवलयाऽज्ञानं धुनोति
ध्वान्तमर्कवत् ॥ २१ ॥ अथापि ब्रूमहे प्रश्नांस्तव राजन्यथाश्रुतम् ॥ संभाव[5]नीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥
॥ २२ ॥ तृष्णया भववाहिन्या योग्यैः कामैरपूरया ॥ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥ ॥

न च स्वपीत्यर्थः ॥१८॥ तस्य वागेवामृतं तेन यन्त्रितो वशीकृतः सन्प्राह ॥१९॥ अध्यात्मचक्षुषाऽन्तर्दृष्ट्या भवान् वेदैव । आर्याणां ज्ञानिनां संमतो ननु भवान् । इदमिति यदुक्तं तदेवाह—नृणामीहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानीत्यर्थः ॥ २० ॥ वेदेत्यत्र हेतुः—यस्येति । हृदि प्रविष्टः सन्नज्ञानं धुनोति । अर्को यथा बहिर्ध्वान्तम् ॥२१॥ यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम् ॥ २२ ॥ लोकः कर्मसु प्रवर्तते त्वं तु निवृत्तः सन्किं शेपे इति यदुक्तं तत्राह—तृष्णयेति चतुर्भिः । भवप्रवाहकारिण्या यथोचितैरपि विषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानोऽहं पूर्वं नानायोनिषु प्रवेशितः ॥ २३ ॥ ॥

१ 'शेपे न द्वेक्षि नैपि वा' इत्येवरूपे । २ 'स्वन्नदेशैः' इति पाठः । ३ विप्र इति ब्रह्मतेजसैव विप्रत्वावगमात् । ४ तद्वीक्षितापीत्यत्र त्वं न द्वेक्षि नैपि चेति पाठः । न द्वेपीति गौडपाठः इति क्रम० । ५ 'सभापणीयः' इति पाठः ।

तयैव तृष्णयेमं लोकं मनुष्यदेहं यदृच्छया प्रापितः । कथंभूतं लोकम् । धर्मेण स्वर्गस्य द्वारं साधनम् । अधर्मेण तिरश्चां श्वसूकरादियोनेर्द्वारं । मिश्राभ्यां ताभ्यां[1] पुनरप्यस्य मनुष्यत्वस्य द्वारं । सर्वतो निवृत्त्यापवर्गस्य द्वारमित्यर्थः ॥ २४ ॥ अत्रापि मनुष्यत्वेऽपि । अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं[2] दृष्ट्वा निवृत्तोऽस्मि ॥ २५ ॥ ननु प्रवृत्त्या कदाचित्सुखं स्यान्निवृत्त्या तु किं स्यादिति चेत्तत्राह—सुखमस्य जीवस्य स्वरूपमेव । तर्हि किं न प्रकाशते तत्राह—सर्वेति । तनोतीति तनुः । सर्वक्रियानिवृत्तौ स्वत एव प्रकाशत इत्यर्थः । भोगांश्च मनःसंस्पर्शजान् मनोरथमात्रजानशाश्वतान् दृष्ट्वा स्वप्स्यामि । निरुद्यमोऽस्मीत्यर्थः । तर्हि कदाचित्कथं भुङ्क्ते तत्राह । संविशन् । प्रारब्धभोगान्भुञ्जान इत्यर्थः ॥ २६ ॥ एवं चेत्कोऽपि संसारं न प्राप्नुयात्तत्राह—इत्येतदात्मनः सुखात्मकं रूपं स्वार्थं स्वस्मिन्नेव सन्तं पुरुषार्थं विस्मृत्य । असत्यपि[3] द्वैते ॥ २७ ॥ एतदेव दृष्टान्तेन स्पष्टयति—जलमिति । तदुद्भवैस्तृणशैवालादिभिः जलकाम्यया

अत्रापि दम्पतीनां[4] ॥ २४ ॥ स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥

यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ॥ सुखमस्यात्मनो रूपं सर्वेहोपरति-[5] ॥ २५ ॥ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥

च सुखायान्यापनुत्तये ॥ इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ॥ २६ ॥ मनःसंस्पर्शजान्दृष्ट्वा भोगान्स्वप्स्यामि संविशन् ॥

स्तनुः ॥ जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ॥ मृगतृष्णामु-

विचित्रामसति द्वैते घोरमाप्नोति संसृतिम् ॥ २७ ॥ दुःखात्ययं चानीशस्य क्रिया मोघाः

पाधावेद्यथाऽन्यत्रार्थदृक्स्वतः ॥ २८ ॥ देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ॥

कृताः कृताः ॥ २९ ॥ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥ मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥ पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणां सर्वतोऽभिविशङ्किनाम् ॥ ३१ ॥

राजतश्चोरतः शत्रोः स्वजनात्पशुपक्षितः ॥ अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम्[6] ॥ ३२ ॥ शोकमोहभ-

यक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाः स्युर्नृणां जह्यात्स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥

जलेच्छया । स्वत आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन् ॥ २८ ॥ एवं स्वस्य निरुद्यमत्वे कारणमुक्त्वा विपर्ययं दृष्ट्वेति यदुक्तं तद्विवृणोति—देहादिभिरिति पञ्चभिः । ईहत इच्छतः । अनीशस्य निर्दैवस्य । पुनःपुनः प्रारब्धाः क्रिया मोघा विफला एव भवन्ति ॥ २९ ॥ क्रियाणां सफलत्वेऽपि फलस्यानुपयोगमाह—आध्यात्मिकादिभिरिति । मर्त्यस्य मरिष्यतः । कृच्छ्रेण दुःखेनोपनतैः प्राप्तैः ॥ ३० ॥ कृच्छ्रं विनैव प्राप्तेऽप्यर्थे दुःखं तदवस्थमित्याह—पश्यामीति ॥ ३१ ॥ भयं प्रपञ्चयति—राजत इति । स्वस्मान्मत्त एव कथंचित्त्यागभोगविस्मरणादिना नाशः स्यादिति प्राणवतामर्थवतां च भयं नित्यम् ॥ ३२ ॥ अतोऽनर्थहेतुत्वात्प्राणेऽर्थे च स्पृहा न कार्येत्याह—शोकेति ॥ ३३ ॥

---

१ ताभ्यां धर्माधर्माभ्याम् । २ विपर्ययं सुखार्थं कृतेभ्यः कर्मभ्यो दुःखप्राप्तिरूपम् । ३ असति देहादौ । यद्वा असति असार्वकालिके इति चक्र० । ४ दाम्पत्यभावापन्नानाम् । ५ सर्वा ईहाः कर्माणि तद्धेतुस्तृष्णा च तासामुपरतिः । ६ प्राणेषु अर्थेषु चासक्तिमतां भयम् । प्राणोऽत्र शारीरबलं संभोगादिप्रयोजकं ज्ञेयम् इति चक्र० ।

नन्वेवमनर्थाननुभवन्तोऽपि न केचिद्विरज्यन्ते, नच यथालाभेन तुष्यन्ति, त्वं तु कथं वैराग्यादिकं प्राप्तोऽसि तत्राह—मधुकारेति। मधुमक्षिकाऽजगरौ। ययोः शिक्षया वृत्तपर्यालोचनया ॥ ३४ ॥ मधुकाराच्छिक्षितमाह—विराग इति। वित्तपतिं हत्वाऽन्यो वित्तं हरेदित्येवम् ॥ ३५ ॥ अजगराच्छिक्षितमाह—अनीह इति। सत्त्वधान् धैर्यवान् ॥ ३६ ॥ पीनत्वे हेतुं वदन् यदृच्छया प्राप्तात्परितोषं प्रपञ्चयति—कचिदल्पमिति पङ्क्तिः ॥ ३७ ॥ ३८ ॥ चीरं जीर्णवस्त्रखण्डम्। वसे परिदधे। दिष्टभुक् प्रारब्धकर्मफलभोगी ॥३९॥ प्रासादमध्ये पर्यङ्के। तत्रापि कशिपौ तूलिकायाम् ॥४०॥ चरे विचरामि। कचिद्ग्रहवद्दिगम्बरो

मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥३४॥ विरागः सर्वकामेभ्यः
शिक्षितो मे मधुव्रतात् ॥ कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिम् ॥ ३५ ॥ अनीहः परितुष्टात्मा यदृच्छोपनता-
दहम् ॥ नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥३६॥ क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा ॥ क्वचिद्भूरि-
गुणोपेतं गुणहीनमुत क्वचित् ॥३७॥ श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम् ॥ भुञ्जे भुक्त्वाथ कस्मिंश्चिद्दिवा नक्तं
यदृच्छया ॥ ३८॥ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ॥ वसेऽन्यदपि संप्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ ३९ ॥
क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥ क्वचित्स्नातोऽनुलिप्ताङ्गः
सुवासाः स्रग्व्यलंकृतः ॥ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥४१॥ नाहं निन्दे न च स्तौमि स्वभावविषमं
जनम् ॥ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥४२॥ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥ मनो वैका-
रिके हुत्वा तं मायायां जुहोत्यनु ॥४३॥ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः ॥ ततो निरीहो विरमेत्स्वानु-
भूत्यात्मनि स्थितः ॥ ४४ ॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ॥ व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्परः
॥४५॥ ॥ नारद उवाच ॥ धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम्
॥४६॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे यतिधर्मे त्रयोदशोऽध्यायः ॥ १३ ॥

विचरामि ॥ ४१ ॥ नच मानापमानकर्तृषु मम वैषम्यमित्याह—नाहमिति। नाहं निन्दामि नच स्तौमि। महात्मनि विष्णौ ॥ ४२ ॥ एवंभूतत्वेन स्थितावुपायमाह—विकल्पमिति द्वाभ्याम्। चित्तौ भेदग्राहकमनोवृत्तौ। अर्थरूपो विभ्रमो यस्मिन्मनसि तन्मनो वैकारिकेऽहंकारे। तमहंकारमन्वनन्तरं महत्तत्त्वद्वारेणेत्यर्थः ॥ ४३ ॥ सत्यमेव पश्यतीति तथा ॥ ४४ ॥ मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं नतु तत्त्वदृष्ट्या। यतो भवान्भगवत्परः ॥ ४५ ॥ ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

१ नो चेदनुपनते अन्नादौ शये स्वपिमीति सिद्धां०। २ 'साध्वसाधु वा' इति पाठः। ३ यदृच्छया क्वापि श्रद्धयोपाहृतं भुक्त्वा कदाचिन्मानवर्जितं भुञ्जे। अथ कस्मिंश्चिद्देशे दिवा नक्तं वा भुञ्जे अथवा यदृच्छया कस्मिंश्चिद्दिवा भुक्त्वा नक्तं भुञ्जे, नक्तं भुक्त्वा वा दिवा वा भुञ्जे इत्यप्यन्वयः। ४ ऐकात्म्यं मोक्षम्। ५ जुहोति जुहुयात्। ६ 'भगवत्परम्', 'भगवत्प्रियः' इति पाठौ।

चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते ॥ देशकालादिभेदेन पुनः श्रेयोविशेषकृत् ॥ १ ॥ गृहस्थमुल्लङ्घ्य मोक्षं प्रत्यन्तरङ्गत्वेन प्रथमं वनस्थयतिधर्मेष्वभिहितेषु, तर्हि गृहस्थस्य मोक्षो न स्यादिति शङ्कितचित्तः पृच्छति—गृहस्थ इति ॥ १ ॥ तस्य मोक्षधर्मानाह—गृहेष्वित्यादि यावदध्यायसमाप्ति । साक्षाद्वासुदेवार्पणं यथा भवत्येवं कुर्वन्नुपासीत ॥ २ ॥ ३ ॥ स्वयमेव मुच्यमानेषु वियुज्यमानेषु । यथा स्वप्नादुत्थितः पुमान् स्वप्नदृष्टेषु पुत्रादिषु सङ्गं विमुञ्चति तद्वत् ॥ ४ ॥ नन्वेवंभूतस्य दुर्जनैरभिभूयमानस्य कुतो गृहोचिताः क्रियाः स्युस्तत्राह—यावदर्थमिति । अन्तस्त्वनासक्तो बहिस्त्वासक्त इव नृलोके जनमध्ये नरतां मनुष्यतां न्यसेत् । पुरुषकारमाविष्कुर्यादित्यर्थः ॥ ५ ॥ आग्रहं तु क्वापि न कुर्यादित्याह—ज्ञातय इति ॥ ६ ॥ नन्वेवं सर्वानुमोदने वित्तक्षयप्रसङ्गात्कुतो जीवनं कुतो वा कर्मकरणं तत्राह—दिव्यं वृष्ट्यादिभिर्जातं धान्यादि । भौमं निधानादि । आन्तरिक्षमकस्मादेव प्राप्तम् । एवं स्वत एवाच्युतनिर्मितैर्देवलब्धं यत्

॥ युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चाञ्जसा ॥ याति देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥

॥ नारद उवाच ॥ गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः ॥ वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥२॥

श्रृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम् ॥ श्रद्दधानोयथाकालमुपशान्तजनावृतः ॥ ३ ॥ सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥४॥ यावदर्थमुपासीनो देहे गेहे च पण्डितः ॥ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् ॥५॥ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ॥ यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः ॥६॥ दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् ॥ तत्सर्वमुपभुञ्जान एतत्कुर्यात्स्वतो बुधः ॥७॥ यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥८॥ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ॥ आत्मनः पुत्रवत्पश्येत्तैरेषामन्तरं कियत् ॥ ९ ॥ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ॥ यथादेशं यथाकालं यावद्दैवोपपादितम् ॥१०॥ आश्वाघान्तेवसायिभ्यः कामान्संविभजेद्यथा ॥ अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः ॥ ११ ॥

एतत्पूर्वोक्तं कर्मादि ॥ ७ ॥ दैवाद्भूरिलाभे जातेऽपि तत्राभिमानो न कार्य इत्याह—यावदिति । भ्रियेत पूर्येत ॥ ८ ॥ अत एव यं कमपि स्वगृहं क्षेत्रं वा प्रविश्य भुञ्जानं न निवारयेदित्याह—मृगेति । मर्को मर्कटः । सरीसृप् सर्पः । मक्षिकाश्च । तैः पुत्रैरेषां मृगादीनां कियदन्तरम् ॥ ९ ॥ अतिकृच्छ्रेणापाद्य न भजेत्किंतु यावद्दैवप्रापितं तावदेव भजेत् ॥ १० ॥ श्वानश्च अघाश्च पतिताः अन्तेवसायिनश्चाण्डालादयस्तानभिव्याप्य यथार्हं कामान्संविभजेत्स्वभोज्याद्विभज्य दद्यात् । यद्यप्येकैवात्मनो दारा भार्या तस्यामतिथिशुश्रूषणे नियुक्तायां स्वस्य शुश्रूषा हीयेत । यस्यां च नृणां स्वत्वग्रहो ममैवेयमित्याग्रहस्तामेकामपि संविभजेत् । अतिथिशुश्रूषणे नियुञ्जीतेत्यर्थः । नत्वन्यथा मन्तव्यम् । यथार्हं विभजेदित्युक्तत्वात् ॥ ११ ॥ ॥ ॥ ॥

१ स्वतः स्व वित्तं तेनेत्यर्थः इति चक्र० । २ 'यायादेवऋषे' इति पाठः । ३ अत्र—'साधु पृष्टं महाराज लोकान्साध्वनुगृह्णता । एतत्तुभ्यं प्रवक्ष्यामि नैष्कर्म्यं कर्मणो यतः ॥' इति वीर० पाठे अधिकम् । ४ 'यथोचिताः' इति पाठः । ५ विमुच्येदित्यार्षम् । क्वचित् 'विमुञ्चेत्' इति पाठः । ६ यावदर्थं यथाप्रयोजनं उपासीनो भोग्यवस्तूनीति शेषः इति चक्र० । ७ निर्ममोऽनासक्त एवानुमोदेत । ८ यावत् यावता । ९ मर्को मर्कटः । १० दारामिति स्त्रीत्वैकत्वे आर्षे ।

एवं चेत्तेनेश्वरो वशीकृतः स्यादित्याह—जह्यादिति । यदर्थे यन्निमित्तम् । अन्यैरजितोऽपीश्वरस्तेन जित एव ॥ १२ ॥ ननु कथमेवं तस्यां स्वत्वाभिमानो हातुं शक्यस्तत्त्वविचारेणेत्याह—कृमिविड्भस्मसु निष्ठा पर्यवसानमन्ते यस्य । तदीया देहार्था रतिर्यस्यां सा स्वमहिम्ना नभोऽपि च्छादयतीति तथा ॥ १३ ॥ किंच—सिद्धैर्दैवलब्धैर्यज्ञावशिष्टार्थैः पञ्चयज्ञशेषैरन्नादिभिः । महतां निवृत्तानाम् ॥ १४ ॥ एतद्विवृण्वन्नाह—देवादीन्पञ्चयज्ञदेवताः आत्मानं च । एवं पृथक् पुरुषमन्तर्यामिणमेव यजेत ॥ १५ ॥ १६ ॥ न पुनरतिनिर्बन्धो यज्ञार्थं कार्य इत्याह—नहीति । विप्रमुखे हुतैरन्नादिभिर्यथा इज्येत पूज्येत न तथाग्निमुखतो हविषा इज्येत ॥ १७ ॥ ब्राह्मणेषु च देवेषु पञ्चयज्ञदेवतासु च मर्त्यादिष्वन्येष्वपि नरेषु पश्वादिषु च । क्षेत्रज्ञमन्तर्यामिणम् । ब्राह्मणाननु मर्त्यादियजने

जह्याद्यदर्थे स्वप्राणान्हन्याद्वा पितरं गुरुम् ॥ तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः ॥ १२ ॥ कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ॥ क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १३ ॥ सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः ॥ शेषे[2] स्वत्वं त्यजन्प्राज्ञः पदवीं महतामियात् ॥ १४ ॥ देवानृषीन्नृभूतानि पितॄनात्मानमन्वहम् ॥ स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ॥ १५ ॥ यर्ह्यात्मनोऽधिकाराद्याः[3] सर्वाः स्युर्यज्ञसंपदः ॥ वैतानिकेन[4] विधिना अग्निहोत्रादिना यजेत् ॥ १६ ॥ नह्यग्निमुखतोऽयं वै भगवान्सर्वयज्ञभुक् ॥ इज्येत हविषा राजन्यथा विप्रमुखे हुतैः ॥ १७ ॥ तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः ॥ तैस्तैः कामैर्भजस्वैनं क्षेत्रज्ञं ब्राह्मणाननु[7] ॥१८॥ कुर्यादापरपक्षीयं मासि प्रौष्ठपदे द्विजः ॥ श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥१९॥ अयने[5] विषुवे कुर्याद्व्यतीपाते दिनक्षये ॥ चन्द्रादित्योपरागे च द्वादशीश्रवणेषु[6] च ॥ २० ॥ तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके ॥ चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २१ ॥ माघे च सितसप्तम्यां मघाराकासमागमे ॥ राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २२ ॥ ॥ ॥ ॥ ॥

ब्राह्मणयजनानन्तरमन्येषु यजस्व । पाठान्तरे ब्राह्मणा आननं यस्य तम् ॥ १८ ॥ प्रौष्ठपदे भाद्रपदे ॥ १९ ॥ २० ॥ शुक्लपक्षे । अक्षय्यतृतीयायामित्यर्थः । हेमन्ते शिशिरे च मार्गशीर्षादिमासचतुष्टयेऽपि याश्चतस्रोऽष्टकास्तासु ॥ २१ ॥ संपूर्णचन्द्रा पौर्णमासी राका । न्यूनचन्द्रा सैवानुमतिः । तथा मासर्क्षाणि तत्तन्मासनामप्रवृत्तिनिमित्तानि नक्षत्राणि युतानि यदा स्युस्तदा । तदुक्तं त्रिकाण्ड्याम्—'पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा ॥ नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥' इति ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥

१ परमहंसानामित्यर्थः । २ शेषे यज्ञाद्यनुपयुक्ते । ३ 'अर्थी समर्थो विद्वांश्च' इत्याद्युक्तोऽधिकारः । ४ वैतानिकेन श्रौतकल्पसूत्रादिरूपग्रन्थोक्तेन । ५ अयने कर्कमकरसंक्रान्ती, विषुवे मेषतुले । ६ द्वादशीयुक्तेषु श्रवणेषु । 'श्रवणद्वादशीषु च' इति पाठः । 'द्वादश्यां श्रवणेषु च' इति विज० पाठस्तत्र श्रवणादिषु त्रिष्विति तदर्थः । ७ 'ब्राह्मणाननम्' इत्येवंरूपे ।

अनुराधा श्रवण उत्तराफाल्गुनी उत्तराषाढा उत्तराभाद्रपदा वा द्वादश्यां यदा स्यात् । आसूत्तरास्वेकादशी वा यदा स्यात्तदा च । जन्मर्क्षश्रोणयोगयुक् जन्मनक्षत्रस्य श्रवणस्य वा योगेन युक्तं दिनं यदा तदा । योगग्रहणं संबन्धबाहुल्यार्थम् ॥ २३ ॥ न केवलं श्राद्धस्यैवैते कालाः किंतु धर्ममात्रस्येत्याह—त एत इति द्वाभ्याम् । तदेवायुषः[3] अमोघं साफल्यमित्यर्थः ॥ २४ ॥ २५ ॥ संस्कारकाल इति । जायायाः पुंसवनादि । अपत्यस्य जातकर्मादि । आत्मनो यज्ञदीक्षादि । प्रेतस्य संस्था दहनादि । मृताहश्च सांवत्सरिकं यदा । अन्यस्मिन्नप्यभ्युदयार्थे कर्मणि[3] श्रेयः कुर्यादित्यनुषङ्गः ॥ २६ ॥ यत्र यस्मिन्नेतच्चराचरमस्ति तस्य

द्वादश्यामनुराधा स्याच्छ्रवणस्तिस्र उत्तराः ॥ तिसृष्वेकादशी वासु जन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥ त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ॥ कुर्यात्सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २४ ॥ एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम्[4] ॥ २५ ॥ संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ॥ प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २६ ॥ अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान् ॥ स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २७ ॥ बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ॥ यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ २८ ॥ यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ॥ यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ २९ ॥ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ॥ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३० ॥ नैमिषं फल्गुनं[5] सेतुः प्रभासोऽथ कुशस्थली ॥ वाराणसी मधुपुरी पम्पाबिन्दुसरस्तथा ॥ ३१ ॥ नारायणाश्रमो नन्दा सीतारामाश्रमादयः ॥ सर्वे कुलाचला राजन्महेन्द्रमलयादयः ॥ ३२ ॥ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ॥ एतान्देशान्निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ॥ ३३ ॥ पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ हरिरेवैक उर्वीश यन्मयं वै चराचरम् ॥ ३४ ॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ॥ राजन्यदग्रपूजायां मतः पात्रतयाऽच्युतः ॥ ३५ ॥ ॥

भगवतो बिम्बं रूपं सत्पात्रं यत्र लभ्यते स वै पुण्यतमो देशः ॥ २७ ॥ २८ ॥ २९ ॥ अर्हैरुत्तमैराश्रितानि ॥ ३० ॥ ३१ ॥ सीताया रामस्य चाश्रम आदिर्येषाम् । द्वयोः पृथग्ग्रहणं वियोगकालाभिप्रायेण ॥ ३२ ॥ अर्चाश्रिताश्च स्थिरप्रतिमाश्रिताः । पूर्वं तु शालग्रामशिलाद्यर्चनदेश उक्त इत्यपौनरुक्त्यम् । अत्र एषु देशेषु ईहितः कृतः । सहस्रगुणमधिकस्य फलस्योदयो यस्मात्स तथा ॥ ३३ ॥ अथ पात्रमाह—हरिरेव पात्रं निरुक्तं निर्णीतम् ॥ ३४ ॥ तदेवाह—देवेषु च ऋषिषु चार्हत्सु च तपोयोगादिसिद्धेषु ब्रह्मात्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीये राजसूये यद्यस्मादच्युत एव पात्रतया संमतः ॥ ३५ ॥ ॥

१ द्वादश्यां श्रवणयोगकथनं पुण्यातिशयसूचनाय । २ तदेव श्रेयआचरणमेव । ३ कर्मणि कृतं यत्किमपि अनश्वरमिति पूर्वेणान्वयः । ४ अनश्वरं अक्षय्यफलसाधनम् । ५ फल्गुनं स्थानं हरपुरं कन्यातीर्थं वा । 'कन्यापुर फल्गुनं स्यात्स्थानं हरपुरं च तत्' इत्यभिधानम्' इति विज० । 'फाल्गुनम्' इति पाठः ।

संमतत्वे हेतुमाह—जीवराशिभिर्व्याप्तो ब्रह्माण्डकोश एव योऽङ्घ्रिपः सर्वजीवानामात्मनश्च तर्पणम् ॥ ३६ ॥ एतदेव पुरुषनामनिरुक्त्या द्रढयति—पुराणीति । नृतिर्यगादिरूपाणि पुराणि शरीराणि तेष्वन्तर्यामिरूपेण प्रत्यगंशेन च यतः शेतेऽतः पुरुष इति प्रसिद्धः ॥ ३७ ॥ तारतम्येन तिर्यगादिभ्यः पुरुषे यस्मादाधिक्येन वर्तते तस्मात्पुरुषः पात्रम् । तत्रापि यावानात्मा ज्ञानांशो यथा यथा ईयते तपआदियोगेन यत्र यत्र प्रतीयते तथा तथासौ पात्रमित्यर्थः । तथा च श्रुतिः—'पुरुषत्वे चाविस्तरामात्मा' इत्यादि ॥३८॥ तर्हि प्रतिमादौ हरेः किमिति पूजां कुर्वन्ति तत्राह—दृष्ट्वेति द्वाभ्याम् । मिथोऽवज्ञानमसन्मानस्तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा । क्रियायै पूजाद्यर्थम् ॥ ३९ ॥ हरिमुपासते । उपासिताप्यर्चा पुरुषद्वेषिणामर्थदा न भवति । पुरुषेषु द्वेषं हित्वाऽर्चिता सती सापि मन्दाधिकारिणां

जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ॥ तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३६ ॥ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ॥ शेते जीवेन[2] रूपेण पुरेषु पुरुषो ह्यसौ ॥३७॥ तेष्वेषु भगवान्राजंस्तारतम्येन वर्तते ॥ तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते ॥३८॥ दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप ॥ त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ३९ ॥ ततोऽर्चायां हरिं केचित्संश्रद्धाय सपर्यया ॥ उपासत उपास्तापि नार्थदा पुरुषद्विषाम् ॥ ४० ॥ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ॥ तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥४१॥ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः ॥ पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे सदाचारनिर्णये चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ नारद उवाच ॥ कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपापरे ॥ स्वाध्यायेऽन्ये प्रवचने[3] ये केचिज्ज्ञानयोगयोः ॥१॥ ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ॥ दैवे च तदभावे स्यादितरेभ्यो यथार्हतः ॥ २ ॥ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ॥ भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम्[4] ॥ ३ ॥ देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च ॥ सम्यग्भवन्ति नैतानि विस्तरात्स्वजनार्पणात् ॥ ४ ॥

पुरुषार्थप्रदा भवत्येवेत्यर्थः ॥४०॥ पुरुषेष्वेव जात्या तपआदिभिश्च पुनर्विशेषान्तरमाह—पुरुषेष्वपीति । यो धत्ते तं सुपात्रं विदुः ॥४१॥ एतदेव कैमुत्यन्यायेन द्रढयति—नन्वस्येति ॥४२॥ ॥ इति श्रीमद्भा० म०पु० सप्तमस्कन्धे भा०दी० टीकायां चतुर्दशोऽध्यायः ॥१४॥ ॥ ततः पञ्चदशे सर्ववर्णाश्रमनिबन्धनम् ॥ सारतः संग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ १ ॥ सर्वेषामपि मोक्षधर्माणां सारसंग्रहार्थमध्यायप्रारम्भः । तत्र श्राद्धगतान्विशेषानाह—कर्मनिष्ठा इति । स्वाध्यायादिषु परिनिष्ठिता इति शेषः ॥ १ ॥ कव्यानि पितॄनुद्दिश्य देयानि । दैवे च हव्यान्यपि तस्मै देयानि । यथार्हत इति सर्वत्र ज्ञानादितारतम्येन ॥ २ ॥ ३ ॥ ननु विस्तरः कुतः प्राप्तो येन निषिध्यते तत्राह—स्वजनानामर्पणात् । जामाता चेन्निमन्त्र्यते तत्पित्रादयः कथं वर्ज्या इत्येवं आसाद्विस्तरादित्यर्थः ॥ ४ ॥ ॥ ॥

१ तर्पणरूपा सैव भवतीत्यर्थः इति क्रम० । २ जीवेन जीवयित्रा जीवान्तर्यामिरूपेणेत्यर्थः । ३ प्रवचनेऽध्यापने । ४ विस्तरं भोक्तृबाहुल्यम् ।

दण्डस्य न्यासो हिंसायास्त्यागो य एतादृशोऽन्यो धर्मो नास्ति ॥८॥ अत एवोत्तमाधिकारिणो बाह्यानि कर्माणि त्यजन्तीत्याह—एक इति । अनीहा निष्कर्माः । ज्ञानदीपिते आत्मस्फूर्तिमत्यात्मसंयमने जुह्वति । मनो नियम्य तदन्तरायतया त्यजन्तीत्यर्थः । तदुक्तं सर्वज्ञसूक्तैः—'प्रत्यक्स्फूर्तिरसत्स्फूर्तिस्तन्निष्ठाविघातकम् ॥ सँल्लक्ष्य संत्यजेत्कर्म त्यजन्विघ्नहतोऽन्यथा ॥' इति ॥ ९ ॥ मा मामेष ध्रुवं हन्यादिति । कुतः, अकरुणः । तत्कुतः, असुतृप् प्राणतर्पकः । तत्किम्, अतज्ज्ञः आत्मतत्त्वानभिज्ञः । तथा च श्रुतिः—'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥' इति ॥ १० ॥ प्रस्तुतमनुवर्तयति—तस्मादिति मुन्यन्नमारण्यं व्रीह्यादि । हरिदैवतं हरये निवेदितं सत् ॥ ५ ॥ पुरुषात्मकमीश्वरस्वरूपम् ॥ ६ ॥ ७ ॥

देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ॥ अन्नं संविभजन्पश्येत्सर्वं तत्पुरुषात्मकम् ॥ ६ ॥ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ॥ न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ ८ ॥ एके कर्ममयान्यज्ञान् ज्ञानिनो यज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥ द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ॥ एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृप्ध्रुवम् ॥१०॥ तस्माद्दैवोपपन्नेन मुन्यन्नेनापि धर्मवित् ॥ संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ॥ ११ ॥ विधर्मः परधर्मश्च आभास उपमा छलः ॥ अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥ १२ ॥ धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ॥ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥ १३ ॥ यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक् ॥ स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥ १४ ॥ धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ॥ अनीहानीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥ संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् ॥ कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥ ॥ ॥

॥ ११ ॥ अधर्मवत्साक्षान्निषिद्धवत् ॥ १२ ॥ क्रममनादृत्य पञ्चापि व्याचष्टे । धर्मबाधो धर्मबुद्ध्यापि यस्मिन् क्रियमाणे स्वधर्मबाधः । अन्यस्य चोदितोऽन्यस्य परधर्मः[2] । उपमेति[3] व्याचष्टे—उपधर्मस्त्विति । शब्दस्य भित् भेदोऽन्यथाव्याख्यानं यस्मिन् । यथा दशावरान्भोजयेदित्युक्ते दशभ्योऽवरानिति शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा । यथा गां दद्यादित्युक्ते मरिष्यन्त्या गोर्दानम् ॥ १३ ॥ स्वधर्मानुष्ठानानन्तरं धर्मभूयस्त्वार्थमपि परधर्मो नानुष्ठेयोऽनुपयोगादित्याह—स्वभावविहित इति ॥ १४ ॥ किंच—अधनो धर्मार्थं धनं नेहेत नापेक्षेत, धनार्थं न व्याप्रियेतेति वा । दैवोपपन्नेनैव स्वधर्मसिद्धेरुक्तत्वात् । यात्रार्थमपि नेहेतेत्येतत्प्रपञ्चयति—अनीहेति सार्धैः पद्भिः ॥ १५ ॥ १६ ॥ ॥ ॥ ॥ ॥

१ क्रियामयान्यज्ञान् हित्वा ज्ञानमयान् 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्येवमात्मकान्यज्ञाननुतिष्ठन्तीत्यर्थः इति वीर० । २ पाखण्ड्याद्यादृतः । ३ उपमा धर्मस्योपमा न तु धर्म इत्यर्थः । ४ अत्र बहुव्रीहिं त्यक्त्वा अवरा नवाष्टौ वेति ।

उपानहौ पादयोर्यस्य स उपानत्पात्तस्य ॥ १७ ॥ गृहपालः श्वा तद्वदाचरति ॥ १८ ॥ १९ ॥ क्षुधा तृषा च जनः कामस्यान्तं याति, अन्नोदकातिरिक्तका-
मान्तराभावात् । क्रोधस्य वाऽन्तं याति । एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयान्निष्पत्तेः । दिशो जित्वाऽपि भुवो भुक्त्वाऽपि लोभस्य नैवान्तं यातीत्यर्थः
॥ २० ॥ २१ ॥ इदानीं कामादिजयोपायानाह—असंकल्पादिति चतुर्भिः । जयेदिति यथापेक्षमन्वेति । अर्थेऽनर्थदर्शनेन । तत्त्वावमर्शनादद्वैतानुसंधानेन
॥ २२ ॥ आन्वीक्षिक्या आत्मानात्मविवेकेन । महतां सात्त्विकानां सेवया । योगस्यान्तरायान् लोकवार्तादीन् ॥ २३ ॥ येभ्यो भूतेभ्यो भयं जायेत
तेष्वेव कृपया हिताचरणेन । दैवं देवोपसर्गनिमित्तं वृथा मनःपीडादि । तदुक्तं याज्ञवल्क्येन—'विमना विफलारम्भः संसीदत्यनिमित्ततः' इति । आत्मजं

शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥ संतुष्टः केन[2]
सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ असंतुष्टस्य विप्रस्य तेजो
वा राजन्न वर्तेतापि वारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः ॥ १८ ॥ असंतुष्टस्य विप्रस्य तेजो
विद्या तपो यशः ॥ स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥ कामस्यान्तं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फ-
लोदयात् ॥ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥ पण्डिता बहवो राजन्बहुज्ञाः संशय-
च्छिदः ॥ सदसस्पतयोऽप्येके असंतोषात्पतन्त्यधः ॥ २१ ॥ असंकल्पाज्जयेत्कामं[3] क्रोधं कामविवर्जनात् ॥
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात्[1] ॥ २२ ॥ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया[4] ॥ योगान्तरा-
यान्मौनेन हिंसां कायाद्यनीहया[5] ॥ २३ ॥ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥ आत्मजं योगवीर्येण निद्रां
सत्त्वनिषेवया ॥ २४ ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥ एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्
॥ २५ ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥ २६ ॥ एष वै
भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ योगेश्वरैर्विमृग्याङ्घ्रिर्लोको[6] वै मन्यते नरम् ॥ २७ ॥ ॥ ॥

देहजम् । योगवीर्येण प्राणायामादिबलेन । सत्त्वनिषेवया सात्त्विकाहारादिना ॥ २४ ॥ २५ ॥ ननु कथं गुरौ भक्त्या सर्वस्य जयः स्यात्तस्यापि मनुष्य-
त्वेन तदवस्थत्वात्तत्राह—यस्येति । मर्त्यासद्धीर्मनुष्य इति दुर्बुद्धिः । तस्य शास्त्रश्रवणं कुञ्जरस्नानवद्व्यर्थम् ॥ २६ ॥ ननु गुरोरपि पुत्रादयस्तं नरमेव मन्य-
न्तेऽत आह—एष गुरुः साक्षाद्भगवानेव भवेत् । लोकस्य नरोऽसाविति बुद्धिर्भ्रान्तिरित्यर्थः । यद्वा नहि तत्पुत्रादेर्मनुष्यबुद्ध्या प्रतीयमानोऽपि गुरुर्भग-
वान्न भवेत् । यथैष श्रीकृष्ण इत्यर्थः ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥

१ तत्त्वावमर्शनात् प्रारब्धफलस्यावश्यभोग्यत्वेन कः कस्य दुःखहेतुरित्यादितत्त्वविचारात् । २ केन वा न वर्तेत अपि तु वारिणापि वर्तेतेत्यर्थ इति चक्रवर्ती । केन वा केनाऽपि दैव-लब्धेन सतुष्टः पुरुषो वारिणाऽपि न वर्तेतेत्यन्वयः । वारिलाभार्थमपि यत्नो न विधेय इत्यर्थः इति विज० । ३ असंकल्पात् स्त्रीसरणादिना कामोत्पत्तावपि नैव भोक्तव्येति संकल्प-सदृशान्निश्रयात् इति चक्र० । ४ 'महदुपाश्रयात्' इति पाठः । ५ 'कामाद्यनीहया' इति विज० पाठः । ६ 'लोकोऽयं मन्यते' इत्यपि क्वचित्पाठः ।

एवं सर्वैरुपायैः कामादिवेगं जित्वा नियतेन्द्रियो भूत्वा ध्यानपरो भवेत्। अन्यथा तं प्रति सर्वशास्त्रवैफल्यं स्यादित्याह—षड्वर्गेति । सर्वापि नियमचोदना इष्टापूर्तादिविधयः षडिन्द्रियवर्गस्य यः संयमस्तस्मिन्नेवैकस्मिन्नन्तो यासाम्। तदेकपरा इत्यर्थः । नच तावतापि चरितार्था इत्याह—तदन्ताः सत्योऽपि यदि योगान्धारणाध्यानसमाधीन्नो आवहेयुर्न साधयेयुस्तर्हि केवलं श्रमावहा एवेत्यर्थः ॥ २८ ॥ एतदेव दृष्टान्तेनाह—यथा वार्तादयः कृष्यादयोऽर्थास्तत्फलानि च योगस्यार्थं मोक्षं न साधयन्ति प्रत्युतानर्थाय संसारायैव। असतो बहिर्मुखस्येष्टापूर्तादयपि तथा ॥ २९ ॥ एवं योगं युञ्जतोऽपि यस्य कुटुम्बादिसङ्गेन चित्तं विक्षिप्येत तस्य कृत्यमाह—यश्चित्तस्य विजये यत्त उद्युक्तः स भिक्षुः स्यात् संन्यसेत्। तथा च स्मृतिः—'द्वन्द्वाहतस्य गार्हस्थ्यं ध्यानभङ्गादि कारणम् ॥ लक्षयित्वा गृही स्पष्टं संन्यसेदविचारयन् ॥' इति। भिक्षया प्राप्तं मितमशनं यस्य सः ॥३०॥ ऋजु सममङ्गं यस्य सः सुखं यथा भवत्येवमासीत।

षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः ॥ तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥ २८ ॥ यथा वार्तादयो ह्यर्था योगस्यार्थं न बिभ्रति ॥ अनर्थाय भवेयुस्ते पूर्तमिष्टं तथाऽसतः ॥ २९ ॥ यश्चित्तविजये यत्तः स्यान्निःसङ्गोऽपरिग्रहः ॥ एको विविक्तशरणो[1] भिक्षुर्भिक्षामिताशनः ॥ ३० ॥ देशे शुचौ समे राजन्संस्थाप्यासनमात्मनः ॥ स्थिरं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥ प्राणापानौ संनिरुन्ध्यात्पूरकुम्भकरेचकैः[2] ॥ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः[3] ॥ ३२ ॥ यतो यतो निःसरति मनः कामहतं भ्रमत् ॥ ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥ एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः ॥ अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत् ॥३४॥ कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ॥ चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥३५॥ यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गावपनात्पुनः ॥ यदि सेवेत तान्भिक्षुः स वै वान्ताश्यपत्रपः ॥३६॥ यैः स्वदेहः स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ॥ त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥ ३७ ॥ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि ॥ तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता ॥ ३८ ॥

ओमित्युच्चारयन्निति शेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवमनिशमभ्यस्यतस्तस्य यतेश्चित्तं निर्वाणं शान्तिं याति ॥ ३४ ॥ नच पुनर्विक्षिप्येतेत्याह—कामादिभिरक्षुभितं यच्चित्तं तन्नोत्तिष्ठेत्। यतः—प्रशान्ता अखिला वृत्तयो यस्य। कुतः। ब्रह्मसुखेन स्पृष्टम् ॥३५॥ यस्तु प्रव्रज्यां कृत्वापि भोगमपि भोगमभिलिप्सुः स्यात्तं निन्दति—य इति। त्रयाणां धर्मादीनां वर्गे आ समन्तादुप्यते यस्मिंस्तस्माद्गृहात् तान्धर्मादीन्। वान्ताशी छर्दितभोजी निर्लज्जश्च ॥ ३६ ॥ न चेदमघटितं दृष्टत्वादित्याह—यैः पूर्वं स्वदेहोऽनात्मादिरूपः स्मृतश्चिन्तितस्त एव पुनरेनमात्मेति मत्वा श्लाघयन्ति स्तावयन्ति हि ॥ ३७ ॥ यतिमुपलक्षणीकृत्यान्यानपि स्वधर्मत्यागिनो निन्दति—गृहस्थस्येति द्वाभ्याम् ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

१ विविक्तशरणो निर्जनदेशेऽवस्थितः। २ प्राणेनापानाभिभवः पूरकः, अपानेन प्राणाभिभवो रेचकः, उभयोः समानः कुम्भकः इति वीर०। ३ निरीक्ष्यत इति निरीक्षणः कर्तरि ल्युः।

॥ ३९ ॥ नन्वात्मतत्त्वज्ञस्य भिक्षोरिन्द्रियलौल्येऽपि को दोषस्तत्राह—आत्मानं परं ब्रह्म चेज्जानीयात् । ज्ञानेन धुता निरस्ता आशया वासना यस्य, तस्य ज्ञानिनो लौल्यमेव न संभवतीत्यर्थः । तथा च श्रुतिः—'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इति ॥ ४० ॥ अज्ञस्य तु लौल्येन नरकपातापत्तेरप्रमत्तेन सदा तत्त्वज्ञाने यतितव्यमितीममर्थं 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादिश्रुत्युक्तरथरूपकद्वारेणाह—आहुरिति षड्भिः । इन्द्रियेशं मनोऽभीषून् रश्मीनाहुः—मात्राः शब्दादीन्वर्त्मानि गन्तव्यदेशानाहुः । सत्त्वं चित्तं बृहद्देहव्यापि वन्धुरं वन्धनम् । चित्तं विना ह्यनिवद्धमिव शरीरं भवति । ईशसृष्टमिति, वन्धनकर्ता त्वीश एवेत्यर्थः ॥ ४१ ॥ प्राणादयः पञ्च 'नागः कूर्मश्च कृकलो देवदत्तो धनंजयः' इत्येवं दशविधं प्राणमक्षम् । अभिमानं साहंकारं जीवं रथिनम् । शुद्धं जीवं शरम् । परं ब्रह्म लक्ष्यम् । यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यत

आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥ आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः ॥ किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून्मन इन्द्रियेशम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ ४१ ॥ अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ॥ धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥ रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ॥ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥ रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ॥ रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥ यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् ॥ ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥ नो चेत्प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति ॥ ते दस्यवः सहयसूतममुं तमोन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥ ४६ ॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ आवर्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥ ॥ ॥

इत्यर्थः ॥ ४२ ॥ रागादयो जेतव्याः शत्रवः ॥ ४३ ॥ तत्र रजोऽभिनिवेशः । क्वचिदारूढसमाधेः सत्त्वप्रकृतयोऽपि परोपकारादिप्रवृत्तयः शत्रवः ॥ ४४ ॥ नृकायरूपं रथमात्मवशः उपकल्प इन्द्रियादिपरिकरो यस्मिंस्तथाभूतं यावद्धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया निशितं ज्ञानखड्गं बिभ्रदच्युताश्रयः सन्निरस्तशत्रुरुपशान्तः स्वानन्देन तुष्टो भूत्वेदं रथादिकमुपेक्षेतेत्यर्थः ॥ ४५ ॥ अच्युताश्रयाभावे बाधकमाह—नो चेदिति । असन्तो वहिर्मुखा ये इन्द्रियवाजिनः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयाख्येषु दस्युषु निक्षिपन्ति । हयैः सूतेन च सह वर्तमानम् । तमोन्धे तमसा व्याप्ते । उरु मृत्युभयं यस्मिन् ॥ ४६ ॥ ननु वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमेवमनर्थप्राप्तिः स्यादित्याशङ्क्य वेदोक्तकर्मणां द्वैविध्यं दर्शयन्फलभेदमाह—प्रवृत्तं चेति दशभिः ॥ ४७ ॥

१ 'ईशधाम' इति पाठः । २ व्याप्ते ससारकूपे क्षिपन्ति ।

हिंस्रं श्येनादिकर्म । अशान्तिदमत्यासक्तियुक्तम् । आदिशब्दार्थविवरणं दर्शश्चेति । पशुः पशुयागः । सुतः सोमयागः ॥ ४८ ॥ हुतं वैश्वदेवम् । प्रहुतं बलिहरणम् । एतत्सर्वमिष्टमुच्यते—एतदेव यदि काम्यमशान्तिदं च तर्हि प्रवृत्ताख्यमपीत्यर्थः । आजीव्यं प्रपादि ॥ ४९ ॥ प्रवृत्तेन कर्मणा आरोहावरोहाभ्यामावृत्तिप्रकारमाह—द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः । परिणामो देहान्तरारम्भको येन संपरिष्वक्तो गच्छति य एव श्रुतौ अप्शब्देनोक्तः । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । पाठान्तरे द्रव्यशब्देन तेजोमात्राशब्दोक्तानीन्द्रियाणि । ऊष्मविपाकशब्देन हृदयाग्रप्रद्योतः । तथा च श्रुतिः—'स इमास्तेजोमात्राः समभ्याददानो हृदयमेवान्वक्रामत्' इति, तथा—'तस्य हैतस्य हृदयाग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति' इति । धूमादिशब्दैस्तत्तदभिमानिन्यो देवताः तत्रापक्षयः कृष्णपक्षः । सोमः सोमलोकः । तत्र भुक्तभोगस्यावरोहणप्रकारमाह—दर्श इत्यादि । विपरीतलक्षणया विशिष्टभोगक्षयशोकाग्निना देहलयेनादर्शनमुच्यते । एतदुक्तं भवति—भूतसूक्ष्मयुक्तो धूमाद्यातिवाहिकदेवताभिः सोमलोकं प्रापितस्तद्भोगावसाने विलीनदेहो वृष्टिद्वारेणौषधिवीरुधादिसाम्यापत्तिक्रमेण जायते । एवं पुनर्भवहेतुः—पितृयानं प्रवृत्तकर्ममार्ग इति ॥ ५० ॥ क्ष्मेश हे भूपते । पुनर्भवमेवाह—एकैकश्येन प्रत्येकं क्रमेण

हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ॥ दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥४८॥ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ॥ पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥४९॥ द्रव्यसूक्ष्मविपाकश्च[1] धूमो रात्रिरपक्षयः ॥ अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥ अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ॥ एकैकश्येनानुपूर्वं[3] भूत्वा भूत्वेह जायते ॥५१॥ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ॥ इन्द्रियेषु क्रियायज्ञाञ्ज्ञानदीपेषु जुह्वति ॥ ५२ ॥ इन्द्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः ॥ वाचं वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ॥ ओङ्कारं बिन्दौ नादे[4] तं तं तु प्राणे महत्यमुम् ॥५३॥ अग्निः सूर्यो दिवा[5] प्राह्णः शुक्लो राकोत्तरं स्वराट् ॥ विश्वश्च तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् ॥ ५४ ॥

भूत्वा तत्तत्सान्निध्यं प्राप्येह भूमौ जायते ॥ ५१ ॥ तत्राधिकारिणमाह—निषेकादीति । अन्यस्त्विष्टादिकार्येष्वेवं जन्म न लभत इत्यर्थः । निवृत्तकर्मनिष्ठस्योपासनादिविशेषमुपदिशन्नर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह—इन्द्रियेष्वित्यादिना । यद्वा द्रव्ययज्ञेषु हिंसाया दुर्निवारत्वादतिमुख्यं निवृत्तं कर्मैव दर्शयन्नाह । ज्ञानेन दीप्यन्त इति तथा तेषु । इन्द्रियव्यापाराणामिष्टापूर्तादीनामिन्द्रियतावन्मात्रतां भावयन्तीत्यर्थः । एवमुत्तरत्रापि ॥ ५२ ॥ ऊर्मौ दर्शनादिसंकल्परूपे मनसि । वैकारिकं विकारयुक्तं मनो वाचि । विध्यादिलक्षणया वाचा हि मनः कर्तृत्वादिविकारं भजति । वर्णानां समाम्नाये समुदाये । तद्विशेषत्वाद्वाचः । स्वरे अकारादिस्वरत्रयात्मके । ओकारं बिन्दौ, तं च नादे । प्राणे सूत्रात्मनि । महति ब्रह्मणि ॥५३॥ अग्निरिति । तत्तदभिमानिन्यो देवतास्ताः । प्राप्नोतीति पूर्ववत् । दिवाऽहः । प्राह्णस्तस्यैवान्तः । राका शुक्लपक्षस्यान्तः । यद्वा प्राह्णो राका इति च पुराणमतम् । उत्तरं त्वयनम् । स्वराट् ब्रह्मा । एवं ब्रह्मलोकं गतस्य भोगावसाने मोक्षप्रकारमाह—विश्व इति । विश्वः स्थूलोपाधिः स स्थूलं सूक्ष्मे विलाप्य सूक्ष्मोपाधिस्तैजसो भवति । सूक्ष्मं कारणे विलाप्य कारणोपाधिः प्राज्ञो भवति । कारणं च सर्वसाक्षित्वेनान्वयात्साक्षिस्वरूपे विलाप्य तुर्यो भवति । तेषां च व्यभिचारिणां साक्ष्याणां लये शुद्ध आत्मा भवति । मुच्यत इत्यर्थः ॥ ५४ ॥

१ 'द्रव्यसूक्ष्मविपाकश्च' इत्येवंरूपे । २ श्रुत्युक्ततेजोमात्राशब्देत्यर्थः । ३ 'एकैकस्यानुपूर्व्याच' इति पाठः । ४ 'बिन्दुनादे तु' इति त्रिज० पाठः । ५ 'दिवा वायुः शुक्लो' इति पाठः ।

यथेतरो भूत्वा निवर्तते तथा न निवर्तत इत्यर्थः ॥ ५५ ॥ वेदेन निर्मिते 'ते धूममभिसंभवन्ति' इत्यादिना, 'ते आर्चिरभिसंभवन्ति' इत्यादिना च निश्चयेन विविच्य ज्ञापिते इत्यर्थः। जनस्थोऽपि देहस्थोऽपि न मुह्यति ॥ ५६ ॥ तत्र हेतुमाह—आदाविति । जनानां देहानामादौ कारणत्वेनान्ते चाऽवधित्वेन यत्सत्तथा बहिर्भोग्यमन्तर्भोक्तृ परमवरं चोच्चनीचम्। तमोऽप्रकाशः। ज्योतिः प्रकाशः । तत्तु सर्वमयं ज्ञानी स्वयमेव न तस्माद्व्यतिरिक्तं वस्तु किंचिदस्ति येन मुह्येदित्यर्थः ॥ ५७ ॥ ननु तर्हि कथं पृथगर्थस्तस्यापि प्रतीयते तत्राह—आबाधितस्तर्कविरोधेन सर्वतो बाधितोऽप्याभासः प्रतिबिम्बादिर्वस्तुतया यथा स्मृतस्तद्वदैन्द्रियकं सर्वमर्थत्वेन विकल्पितं नतु परमार्थतः, दुर्घटत्वात् ॥ ५८ ॥ तदेवाह—क्षित्यादीनां पञ्चभूतानां छाया ऐक्यबुद्ध्यालम्बनरूपं देहादिसङ्घातारम्भपरिणामानां मध्ये कतमाप्यन्यतमापि न भवति। न तावत्तेषां सङ्घातो वृक्षाणामिव वनम् । एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः। नह्येकस्मिन्वृक्ष आकृष्टे सर्वं वनमाकृष्यते। नच विकार आरब्धोऽवयवी। अपिशब्दान्न परिणामोऽपि। कुतः । स किं स्वावयवेभ्यः परिणतेभ्यो वा पृथक् तदन्वितो वा।

देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः ॥ आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ॥ ५५ ॥ य एते पितृदेवानामयने वेदनिर्मिते ॥ शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥ आदावन्ते जनानां सद्बहिरन्तः परावरम् ॥ ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम् ॥ ५७ ॥ आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ॥ दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥ क्षित्यादीनामिहार्थानां छाया न कतमापि हि ॥ न सङ्घातो विकारोऽपि न पृथङ्नान्वितो मृषा ॥ ५९ ॥ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ॥ न स्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः ॥ ६० ॥ स्यात्सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः ॥ जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥ ॥ ॥ ॥

न तावदत्यन्तं पृथक्। तथाऽप्रतीतेः। न चान्वितः । स किं प्रत्यवयवं सर्वोऽप्यन्वेत्यंशेन वा। आद्ये अङ्गुलिमात्रेऽपि देहबुद्धिः स्यात्। द्वितीये तस्याप्यंशाङ्गीकारे सत्यनवस्था स्यादतो मृषैवेत्यर्थः ॥ ५९ ॥ एवं देहादेर्मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्यात्वमाह—धारयन्तीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः। अवयवित्वात्तेषामपि। तर्ह्यवयवः सत्य इति चेत्तत्राह—उक्तप्रकारेणावयविन्यसत्यवयवोऽप्यन्ततोऽसन्नेव स्यात् । अवयविप्रतीत्यन्यथानुपपत्तिं विना तत्सद्भावे प्रमाणाभावादित्यर्थः । तदुक्तं पञ्चमस्कन्धे—'एवं निरुक्तं क्षितिशब्दवृत्तम्' इत्यादि ॥ ६० ॥ नन्ववयविनोऽभावे आगमापायिषु बाल्यादिषु सोऽयं देवदत्त इति प्रत्यभिज्ञानं न स्यात्। तदुक्तं भट्टैः—'आविर्भावतिरोभावधर्मकेष्वनपायि यत् ॥ तद्धर्मि' इति तत्राह—स्यादिति। वस्तुतः परमात्मनो विकल्पे भेदेऽसति। यद्वा वस्तुनोऽविद्यया विकल्पे सति पूर्वपूर्वारोपसादृश्यात्स एवेति भ्रमः स्यात्। स च तावदेव यावदविद्यानिवृत्तिः। ननु सर्वमिथ्यात्वे शास्त्रस्य विधिनिषेधकता कथं तत्राह—स्वप्नमध्ये जाग्रत्स्वापव्यवस्था यथेति ॥ ६१ ॥ ॥ ॥

१ पञ्चभूतानां विकारः पञ्चभूतैरारब्धोऽवयवी इति चक्र०। २ 'जनानां यो' इति वीर० पाठः। 'जनानाशम्' इति विज० पाठः। ३ 'ज्योतिश्च यः स्वयम्' इति वीर० पाठः।

इदानीमुक्तमेवाद्वैतं भावनात्रयोपदेशेन दृढीकरोति—भावाद्वैतमिति चतुर्भिः । वर्तयन्नालोचयन् । स्वानुभूत्या आत्मतत्त्वानुभवेन । त्रीन् जाग्रदादीन् । 'त्रय आवसथास्त्रयः स्वप्नाः' इति श्रुतेः । यद्वा वस्तुभेदबुद्धिरेकः स्वप्नः । ततस्तत्तदधिकारभेदेन कर्मभेदबुद्धिर्द्वितीयः । ततो मत्कर्मसाधितमेतत्फलं ममैव भोग्यमिति तृतीयः । तान्धुनुते निवर्तयति ॥ ६२ ॥ कार्यकारणयोर्वस्त्वैक्यस्य मर्शनमालोचनं तन्तुरेव न पट इति ॥ ६३ ॥ मनोवाक्तनुभिः कृतानां कर्मणां समर्पणं, तैः समर्पणमिति वा । उद्देश्यफलभेदो हि क्रियाभेदे हेतुः—ईश्वरार्पणे च तदभावात्क्रियाणामद्वैतम् ॥ ६४ ॥ आत्मनः स्वस्य जायादीनां च स्वार्थश्च कामश्च तयोः देहादीनां पञ्चभूतात्मकत्वेन भोक्तुश्च परमात्मत्वेनाभेदालोचनेनार्थकामयोर्यदैक्यदर्शनमित्यर्थः ॥ ६५ ॥ उक्तानाश्रमधर्मान्संक्षिप्याह—यदिति ।

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः ॥ वर्तयन्स्वानुभूत्येह त्रीन्स्वप्नान्धुनुते मुनिः ॥ ६२ ॥ कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् ॥ अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥ यद्ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणम् ॥ मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥ आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ॥ यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥ यद्यस्य वाऽनिषिद्धं स्याद्येन यत्र यतो नृप ॥ स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥ एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ॥ गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः ॥ ६७ ॥ यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः ॥ यत्पादपङ्केरुहसेवया भवानहारषीन्निर्जितदिग्गजैः क्रतून् ॥ ६८ ॥ अहं पुराऽभवं कश्चिद्गन्धर्व उपबर्हणः ॥ नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसंमतः ॥ ६९ ॥ रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ॥ स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरुलम्पटः ॥ ७० ॥ एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ॥ उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥ ॥ ॥

यद्द्रव्यम् । येनोपायेन । यतः सकाशात् ॥ ६६ ॥ प्रस्तुतमुपसंहरति—एतैरिति । अस्य श्रीकृष्णस्य गतिम् । तद्भक्तिभाक् तस्य भक्तः ॥ ६७ ॥ एतत्सर्वसाधारणमुक्तम्, भक्तस्य तु भक्तिरेव सर्वपुरुषार्थहेतुरिति पाण्डवानेव लक्षीकृत्याह—यथा हीति । हे नृपदेव, नृपैर्देवैश्च सहायैर्दुस्त्यजादिति वा । आत्मनः श्रीकृष्णादेव प्रभोर्हेतोः । अडभाव आर्षः । उत्कर्षेणातरतेत्यर्थः । यथा यथावत् तमेव भजतेति शेषः । यद्वा यथा आपद्गणादुत्तीर्णस्त्वम् । यथा च क्रतूनहार्षीत्तथा श्रीकृष्णादेव तारकात्संसारादप्युत्तरतेत्यर्थः ॥ ६८ ॥ श्रीकृष्णसेवा महतामवज्ञया भ्रश्यति तत्कृपया च सिध्यतीति दर्शयन्पूर्ववृत्तान्तमाह—अहमिति सार्धैः पञ्चभिः । नाम्ना उपबर्हणः ॥ ६९ ॥ पेशलं सौकुमार्यं रूपादिभिः प्रियं दर्शनं यस्य ॥ ७० ॥ ७१ ॥ ॥ ॥ ॥

१ यस्य कर्तुः । २ यत्र यस्मिन् देशे काले च । ३ दिग्गज इति तत्तद्दिग्गतानां राज्ञामुपलक्षणम् । ४ अत्र—सकाशादनिषिद्धं स्यात् स एव कर्ता तान्येव कर्माणीत्यादि योजनीयम् ।

तदाह्वानं विद्वान्। उन्मत्तः सन् गायन्नेव गतः ॥ ७२ ॥ ७३ ॥ ७४ ॥ त्वं तु कृतार्थ एवेति हर्षेण पुनः पूर्वश्लोकानेव पठति—यूयमिति । शेषं स्पष्टम् ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ सप्तमस्कन्धगूढार्थपदभावार्थदीपिका ॥ संसेव्यतां सदा सद्भिर्यतिश्रीधरनिर्मिता ॥ १ ॥ ॥ इति



अहं च गायंस्तद्विद्वांस्त्रीभिः परिवृतो गतः ॥ ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ॥ ७२ ॥ तावद्दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ॥ शुश्रूषयाऽनुषङ्गेण प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥ धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ॥ गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति ॥ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद्वः खलु मातुलेय आत्मार्हणीयो विधिकृद्गुरुश्च ॥ ७६ ॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥ ॥श्रीशुक उवाच॥ इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ॥ पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥ कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ॥ श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥ इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ॥ देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ॥ ८० ॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां वैयासिक्यां संहितायां सप्तमस्कन्धे प्रह्लादानुचरिते युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तोऽयं सप्तमः स्कन्धः ॥ ७ ॥



श्रीमद्भागवते महापुराणे सप्तमस्कन्धे श्रीधरस्वामिविरचितायां भागवतभावार्थदीपिकायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तोऽयं सप्तमः स्कन्धः ॥ ७ ॥

॥ इति श्रीमद्भागवते सप्तमस्कन्धः समाप्तः ॥

# अथ भागवताष्टमस्कंधप्रारंभः॥



॥ वामनो बलिराजश्च ॥

श्रीगणेशाय नमः ॥ ॥ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥ अथाष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम् ॥ तत्सुतैर्ऋषिदेवेन्द्रैर्मूर्तिभिश्च हरेः सह ॥ १ ॥ प्रतिमन्वन्तरं चैव मन्वाद्याः षट् पृथक्पृथक् ॥ प्रवर्तयन्ति सद्धर्मान्पालयन्त्याचरन्ति च ॥ २ ॥ अतो मन्वन्तरस्योक्तं सद्धर्म इति लक्षणम् ॥ येन वै क्रियमाणेन नरो न निरयं व्रजेत् ॥३॥ तत्र तु प्रथमे स्वायंभुवः स्वारोचिषस्तथा ॥ उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥४॥ स्वायंभुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात् ॥ मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम् ॥ ५ ॥ स्वायंभुवस्येति त्रिभिः—यत्र विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्रपौत्रादिसर्गः ॥ १ ॥ महीयसो हरेः । अत्र कचिद्बहु पाठान्तरमस्ति तदुपेक्षितमस्माभिः ॥ २ ॥ यस्मिन्नतीते यत्कृतवान्, यस्मिन्ननागते यत्कर्ता करिष्यति, अद्य वा वर्तमाने यत्कुरुते तद्वदेत्यन्वयः ॥ ३ ॥ अस्मिन्कल्पे षण्मनवो व्यतीताः ॥ ४ ॥ तस्य मनोर्दुहित्रोः कपिलयज्ञमूर्तिभ्यां पुत्रतां गतः प्राप्तः ॥ ५ ॥ ६ ॥ ७ ॥ घोरं दुश्चरं तपस्तप्यमानः

ॐनमो भगवते वासुदेवाय ॥ ॥ राजोवाच ॥ स्वायंभुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः[1] ॥ यत्र[2] विश्वसृजां सर्गो मनूनन्यान्वदस्व नः ॥ १ ॥ यत्र[3] यत्र हरेर्जन्म कर्माणि च महीयसः ॥ गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥२॥ यद्यस्मिन्नन्तरे ब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥ ॥ ऋषिरुवाच ॥ मनवोऽस्मिन्व्यतीताः षट् कल्पे स्वायंभुवादयः ॥ आद्यस्ते कथितो यत्र देवादीनां च संभवः ॥ ४ ॥ आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ॥ धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ॥५॥ कृतं पुरा भगवतः कपिलस्यानुवर्णितम्[4] ॥ आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह ॥६॥ विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ॥ विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥ सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ॥ तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥ ॥ मनुरुवाच ॥ येन चेतयते विश्वं विश्वं चेतयते न यम् ॥ यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः ॥९॥ आत्मावास्यमिदं विश्वं यत्किंचिज्जगत्यां जगत् ॥ तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १० ॥ ॥

समाधावनुभूतमिदं वक्ष्यमाणं निद्रितोच्छ्वसितवद्विस्मित इवोपदिशन्निवानुवदन्निव चाष्टभिः श्लोकैरन्वाह ॥८॥ येन चिदात्मना विश्वं चेतयते चेतनीभवति । विश्वं तु यं न चेतयते न चेतनीकरोति । स्वत एव चिद्रूपत्वात् । तत्र हेतुः—अस्मिन् शयाने स्वपति यो जागर्ति साक्षितया वर्तते । अहो चित्रं नायं जनस्तं वेद । स तु इमं वेद ॥ ९ ॥ तस्येश्वरत्वं दर्शयन् लोकस्य हितमुपदिशति—आत्मना ईश्वरेणावास्यं सत्ताचैतन्याभ्यां संव्याप्यं विश्वं सर्वं जगत्यां लोके यत्किंचिज्जगद्भूतजातं अतस्तेनैवेश्वरेण यत्किंचित्त्यक्तं दत्तं धनं तेनैव भुञ्जीथाः भोगान्भुङ्क्ष्व । यद्वा तेन हेतुना त्यक्तेनेश्वरार्पणेन भुञ्जीथा न स्वार्थम् । कस्यस्वित्कस्यचिदपि धनं मा गृधो माऽभिकाङ्क्षीः । यद्वा कस्यस्विदिति कस्यान्यस्य धनमस्ति, यतो धनकाङ्क्षा क्रियेतेत्यर्थः । तथा च श्रुतिः—'ईशावास्यम्'[6] इति यथाश्लोकमेव ॥ १० ॥ ॥

१ 'गुरोर्वंशः' इति पाठः। २ अत्र—'यत्र धर्माश्च विविधाश्चातुर्वर्ण्याश्रिताः शुभाः' इत्यर्धं वीर० पाठे। ३ 'अत्र धर्मा हि विविधाश्चतुर्वर्णाश्रिताः शुभाः । मन्वन्तरे हरेर्जन्म कर्माणि च महीयसः' इति विज० पाठः । ४ अनुवर्णितमनुवर्णनमित्यर्थः । 'अनुवर्णनम्' इति पाठः । ५ कर्मकारेभ्यो वेतनमिव दत्तं इति चक्र० । ६ ईशावास्यश्रुतिः पद्यरूपेणाभाणि । अत्र भेदस्तु ईशावास्यमित्यस्य प्रतिपदमात्मावास्यमिति, सर्वमित्यस्य प्रतिपदं विश्वमिति, यत्किंचेत्यस्य प्रतिपदं यत्किंचिदित्याद्यूह्यम् ।

भा.९४

ननु यदि सर्वं व्याप्नोति तर्हि चक्षुरादिभिः किं न प्रतीयते तत्राह—यं पश्यन्तं जनश्चक्षुर्वा न पश्यति, चक्षुराद्यविषयत्वात्। नहि प्रमातारं प्रमाणं विषयीकरोतीति भावः। तथा च श्रुतिः—'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' इत्यादि। ननु तर्हि घटनाशे देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिवेश्वरस्यापि स्वरूपभूतं तद्विषयं ज्ञानं नश्येत्तत्राह—यस्य तु पश्यतश्चक्षुर्ज्ञानं न रिष्यति न नश्यति। तत्तदाकारेणोत्पन्नाया वृत्तेरेव नाशो न स्वतःसिद्धज्ञानस्य। नहि सवितृप्रकाशः प्रकाश्यनाशे नश्यतीति भावः। भूतानि निलयो यस्य तं सर्वान्तर्यामिणं, तथापि सुपर्णं शोभनपतनमसङ्गमुपधावत भजध्वम् ॥ ११ ॥ तस्य स्वरूपस्य नित्यत्वमेवोपपादयन्नाह—न यस्येति। अमून्याद्यन्तादीनि विश्वस्य यस्माद्भवन्ति विश्वं च यत् यद्रूपम्। अत एवाव्यभिचारित्वात्तदृतं सत्यम्। महत् परिपूर्णं ब्रह्म ॥ १२ ॥ ननु विश्वं चेत्तद्रूपं तर्हि तस्य कुतो जन्माद्यभावः स्वप्रकाशत्वं वा, कथं वा जगज्जन्मादिकर्तृत्वेन विकारिणः सत्यत्वं पूर्णत्वं च तत्राह—स ईशोऽजः सत्यश्च स्वप्रकाशश्च पुराणश्च निर्विकारः। विश्वं कायो यस्य। पुरूणि हूतानि नामानि यस्य तथाविधोऽपि यतोऽस्य विश्वस्य जन्मादि स्वशक्त्या

यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति ॥ तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥ न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिः ॥ विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् ॥ १२ ॥ स विश्वकायः पुरुहूत ईशः सत्यः स्वयंज्योतिरजः पुराणः ॥ धत्तेऽस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥ अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे ॥ ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥ ईहते भगवानीशो न हि तत्र विषज्जते ॥ आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥ १५ ॥ तमीहमानं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ॥ नॄञ्छिक्षयन्तं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥ ॥ श्रीशुक उवाच ॥ इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ॥ दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा ॥ १७ ॥ ॥ ॥

मायया धत्ते। तां च नित्यसिद्धया विद्ययोदस्य हित्वा निष्क्रिय एवास्ते ॥ १३ ॥ यस्मादेवमीश्वरः कर्म कृत्वा संत्यज्य नैष्कर्म्येणास्ते, अथास्माद्धेतोः ऋषयोऽप्यग्रे आदौ कर्माणि कुर्वन्ति। किमर्थम्। अकर्महेतवे मोक्षार्थम्। पाठान्तरे कर्मनाशाय। हि यस्मात् ॥ १४ ॥ नन्वीहमानः कर्मभिरवगुण्ठितः कोशकार इव बध्येतैव तत्राह—ईहत इति। अतस्तमनुवर्तमाना ये ते नावसीदन्ति न विपज्जन्ते ॥ १५ ॥ तदेवं लोकानुग्रहाय विश्वसृष्ट्यादि यः करोति श्रीरामकृष्णाद्यवतारैश्च वेदोक्तमप्याचरति तं शरणं व्रजामीत्याह—तमिति। निजं वर्त्म नरावतारानुरूपो मार्गस्तत्र सम्यक् स्थितम्। अत ईहमानं कर्माचरन्तम्। तथापि जीववैलक्षण्यमाह—निरहंकृतं निराशिषमनन्यचोदितमिति च। निरहंकारत्वे हेतुः—बुधम्। निराशीष्ट्वे हेतुः—पूर्णम्। अनन्यनियुक्तत्वे हेतुः—प्रभुम्। तथापि कर्मानुष्ठाने हेतुः—नॄन्स्वाचारेण शिक्षयन्तम्। तत्किमर्थं तत्राह—अखिलान्धर्मान्भावयति प्रवर्तयतीति तथा तम् ॥ १६ ॥ समाहितमपि सन्तं मन्त्रोपनिषदं व्याहरन्तं दृष्ट्वा सुसोच्छ्वसितवद्विवशमिव मन्वाना असुरा यातुधानाश्च क्षुधानिमित्तेन जग्धुमत्तुमभ्यद्रवन्नभिदुद्रुवुः ॥ १७ ॥ ॥



१ सुपर्णं जीवात्मसखं 'द्वा सुपर्णा सयुजा' इति श्रुतेः इति चक्र०। २ 'न यस्याद्यन्तमध्यानि' इति वीर० पाठः। ३ 'स्वान् शिक्षयन्तं' इति वीर० पाठः। 'तच्छिक्षयन्तं निजवर्त्ममूढान्' विज० पाठः। ४ 'हन्तवे' इत्येवंरूपे। हनधातोस्तुमर्थे तवेप्रत्ययः। समाहित समाधिस्थमपि इति चक्र०।

यामैः स्वपुत्रैः । त्रिविष्टपं स्वर्गमपालयत् । स्वयमेवेन्द्रो बभूवेत्यर्थः । तत्र प्रतिमन्वन्तरं मन्वादयः षडन्येऽन्ये भवन्ति । तथाहि सूतो द्वादशे वक्ष्यति—'मन्व-
न्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥' इति । तत्राद्ये स्वायंभुवो मनुः । प्रियव्रतोत्तानपादौ मनुपुत्रौ । यामादयो देवाः ।
मरीचिप्रमुखाः सप्तऋषयः । यज्ञो हरेरवतारः । इन्द्रश्च स एवेति । तन्मन्वन्तरं पञ्चविधमेव तच्चतुर्थस्कन्धोपक्रमे निरूपितम् ॥१८॥ द्वितीयादिषु त्रिषु मन्वन्तरेषु

तांस्तथावसितान्वीक्ष्य यज्ञः सर्वगतो हरिः ॥ यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥ १८ ॥ स्वारोचिषो
द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥ तत्रेन्द्रो रोचनस्त्वासी-
द्देवाश्च तुषितादयः ॥ ऊर्जस्तम्भादयः[1] सप्त ऋषयो ब्रह्मवादिनः ॥२०॥ ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ॥
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ॥ अन्वशिक्षन्व्रतं
तस्य[2] कौमारब्रह्मचारिणः ॥ २२ ॥ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ॥ पवनः[3] सृंजयो यज्ञहोत्राद्यास्तत्सुता
नृप ॥ २३ ॥ वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ॥ सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥ २४ ॥
धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः ॥ सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥ सोऽनृतव्रतदुःशी-
लानसतो यक्षराक्षसान् ॥ भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः ॥ २६ ॥ चतुर्थ उत्तमभ्राता मनुर्नाम्ना च
तामसः ॥ पृथुः[4] ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥ सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ॥ ज्योति-
र्धामादयः सप्त ऋषयस्तामसेऽन्तरे ॥ २८ ॥ देवा[5] वैधृतयो नाम विधृतेस्तनया नृप ॥ नष्टाः कालेन यैर्वेदा विधृताः
स्वेन तेजसा ॥२९॥ तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधसः ॥ हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥३०॥
॥ राजोवाच ॥ बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ॥ हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥ ॥

मन्वादिषट्कमाह—स्वारोचिषो द्वितीयस्त्विति यावद्गजेन्द्रमोक्षप्रश्नम् ॥ १९ ॥ २० ॥ २१ ॥ विभोरसाधारणं चरितमाह—अष्टाशीतिसहस्राणीति ॥ २२ ॥
॥ २३ ॥ २४ ॥ २५ ॥ सत्यजित इन्द्रस्य सखा सन् ॥ २६ ॥ उत्तमस्तृतीयो मनुस्तस्य भ्राता तामसश्चतुर्थो मनुः ॥ २७ ॥ त्रिशिख ईश्वर इन्द्रः ॥ २८ ॥
अन्यानपि विशिष्टपराक्रमान्देवानाह—देवा वैधृतय इति ॥ २९ ॥ हरिरित्याहृतो व्याहृतः । ग्रहात् ग्राहात् ॥ ३० ॥ अमूमुचत् मोचयामास ॥ ३१ ॥

१ 'और्जस्तम्भा' इति वीर० पाठः । २ तस्यावतीर्णस्य जगदीशितुः । ३ 'सवनः' इति पाठः । ४ 'वृषाख्यातिः' इति पाठः । ५ देवा वैधृतय इत्यनेन मन्वन्तरे द्विविधा देवा अभवन्निति दर्शितम् इति चक्र० ।

श्रवणेच्छायां हेतुः—तत्कथासु तासु कथासु । सा कथैव वा सुमहत्पुण्यम् । पुण्यस्य विशेषणं धन्यमित्यादि ॥ ३२ ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम् ॥ द्वितीयादित्रिभिस्तत्तु दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥ २ ॥ आसीदस्ति ॥ १ ॥ तावता योजनाविस्तरेणोपवर्ण्यते ॥ १ ॥ द्वितीये तु गजेन्द्रस्य गजीभिः क्रीडतो जले । युतेन । पर्यक् परितः । त्रिकूटसमाख्याबीजमाह—त्रिभिः शृङ्गैर्मुख्यैः ॥ २ ॥ अन्यैश्च शृङ्गैर्निर्झराम्भसां निर्घोषैश्च ककुभः सर्वा रोचयन्नास्त इति पूर्वेणैवान्वयः । कथंभूतैः शृङ्गैः । रत्नैर्धातुभिश्च विचित्रितैः । नानाविधानां द्रुमलतानां गुल्मा येषु तैः ॥ ३ ॥ पयस ऊर्मिभिः समन्तादवनिज्यमाना अङ्घ्रयो

तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ॥ यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥३२॥ ॥ सूत उवाच ॥
परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ॥ उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि
स शृण्वताम् ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे मन्वन्तरानुचरिते प्रथमोऽध्यायः ॥ १ ॥
॥श्रीशुक उवाच॥ आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः ॥ क्षीरोदेनावृतः श्रीमान्योजनायुतमुच्छ्रितः ॥ १ ॥
तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ॥ दिशः[1] खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥ अन्यैश्च
ककुभः सर्वा रत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥ स चावनिज्यमानाङ्घ्रिः सम-
न्तात्पयऊर्मिभिः ॥ करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ॥ ४ ॥ सिद्धचारणगन्धर्वविद्याधरमहोरगैः ॥
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥ ५ ॥ यत्र संगीतसंनादैर्नदद्गुहममर्षया ॥ अभिगर्जन्ति हरयः श्लाघिनः[2]
परशङ्कया[3] ॥ ६ ॥ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुमसरोद्यानकलकण्ठविहङ्गमः ॥ ७ ॥ सरित्स-
रोभिरच्छोदैः पुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभाम्ब्वनिलैर्युतः[4] ॥ ८ ॥ तस्य द्रोण्यां भगवतो वरुणस्य
महात्मनः ॥ उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥ ॥ ॥ ॥

मूलप्रान्ता यस्य । हरिद्भिः पलाशवर्णैः ॥ ४ ॥ ५ ॥ किन्नरादीनां संगीतसंनादैर्नदन्त्यो गुहा यस्मिन्प्रदेशे तमभिगर्जन्ति । हरयः सिंहाः । अमर्षया असहनेन ॥ ६ ॥ नाना ये आरण्याः पशवस्तेषां व्रातैः संकुलाभिर्द्रोणीभिरलंकृत आस्ते । किंच चित्रा द्रुमा येषु तेषु सुरोद्यानेषु कलकण्ठा मधुरस्वना विहङ्गमा यस्मिन् ॥ ७ ॥ किंच स्वच्छोदकैः सरित्सरोभिर्युतः । मणय इव वालुका येषु तैः पुलिनैश्च युतः । देवस्त्रीणां मज्जनेन य आमोदस्तेन सौरभयुक्तान्यम्बून्यनिलाश्च तैश्च युत आस्ते ॥ ८ ॥ तस्य द्रोण्यां वरुणस्योद्यानमास्ते ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥

१ दिशो रोचयन्नास्त इत्यत्र दिशां रोचनं तासु प्रतिध्वनिसमर्पणेनेति ज्ञेयम् इति चक्र० । २ श्लाघिनः स्तुत्याः । कत्थमाना इति चक्र० । ३ परशङ्कया सिंहान्तरशङ्कया । ४ 'सौरभाम्भोऽनिलैः' इति पाठः ।

गिरिवनादि सर्वं ध्येयमिति वक्ष्यत्यतो गिरिमुपवर्ण्य वनं वर्णयति—सर्वतोऽलंकृतमिति । पुनर्गिरिं वर्णयति—मन्दारैरिति चतुर्भिः । मन्दारादिभिर्वृत इत्यन्वयः ॥१०॥११॥१२॥१३॥ तस्मिन् गिरौ सर आस्ते । तद्वर्णयति—सुविपुलमित्यादि सार्धैः पञ्चभिः । लसन्ति काञ्चनपङ्कजानि यस्मिन् ॥१४॥ कुमुदादीनां श्रिया ऊर्जितम् । कलः स्वनो येषां तैः शकुन्तैश्च निर्घुष्टम् ॥१५॥ चक्राह्वैः सारसैरप्याकीर्णम् । जलकुक्कुटादीनां कुलैः कूजितम् ॥ १६ ॥ मत्स्यानां कच्छपानां च संचारेण चलतां पद्मानां रजसा शुक्लं पयो यस्मिंस्तत् ॥ १७ ॥ १८ ॥ नित्यमृतवः फलपुष्पादिसंपत्तिहेतवो येषां तैरलं शोभितम् ॥ १९ ॥ तत्रैवं सत्येकदा

सर्वतोऽलंकृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः ॥ मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ १० ॥ चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥ क्रमुकैर्नालिकेरैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥ मधूकैः सालतालैश्च तमालैरसनार्जुनैः ॥ अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥१२॥ पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ॥ द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥ बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ॥ तस्मिन्सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥ १४ ॥ कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥ १५ ॥ हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १६ ॥ मत्स्यकच्छपसंचारचलत्पद्मरजःपयः ॥ कदम्बवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥ कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ॥ कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥१८॥ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ॥ शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥ १९ ॥ तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ॥ सकण्टकान्कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन्वनस्पतीन् ॥ २० ॥ यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ॥ महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥ वृका वराहा महिषर्क्षशल्या गोपुच्छसालावृकमर्कटाश्च ॥ अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥ स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः ॥ गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥

तद्गिरिकाननाश्रयो वारणयूथपः करेणुभिश्चरंस्तृपार्दितेन स्वयूथेन वृतः सरोवरस्याभ्याशं समीपमगमदिति पञ्चमेनान्वयः । किं कुर्वन् । कीचकवेणुवेत्रवन्तं विशालं गुल्मं लतादिसंदर्भं वनस्पतींश्च प्ररुजन्प्रभञ्जन् ॥ २० ॥ कथंभूतः । यस्य गन्धमात्राद्धरयः सिंहा गजेन्द्रादयश्च भयाद्द्रवन्ति पलायन्ते ॥ २१ ॥ वृकादयः क्षुद्रा अल्पाः प्राणिनोऽन्यत्र तद्दृष्टिपथं त्यक्त्वा चरन्ति ॥ २२ ॥ पुनः कीदृशः घर्मतप्तः । मदच्युन्मदस्रावी । मदमश्नन्तीति तथा तैः ॥ २३ ॥ ॥

१ पिचुमन्दो ह्रस्वपत्रो निंब इति प्रसिद्धः । २ सरलो जीरवृक्षो गुग्गुलुर्वा । ३ 'कलकूजितं' इति पाठे कलं मधुरम् । ४ 'सकटकं' इति वीर० पाठः । ५ 'मृगाश्च खड्गाः' इति पाठः । ६ यस्य गजेन्द्रस्यानुग्रहेणाभीताः वृकादयः । सिंहादिभयरहिताः सन्त इत्यर्थः । ७ अन्यत्र गजप्रातिकूल्यासंपादके देशे इति सिद्धां० ।

॥ २४ ॥ निजेन पुष्करेण कराग्रेणोद्धृतम् । गतक्लमः सन्निकामं पपौ ॥ २५ ॥ २६ ॥ २७ ॥ दीनधियः करेणवस्तं केवलं विचुक्रुशुः ॥२८॥२९॥ मन उत्साहशक्तिः, बलं शारीरम्, ओजः ऐन्द्रियं तेषाम् । सकलं बलादि । विपर्ययो विपरीतमधिकम् । जलौकसो ग्राहस्य ॥ ३० ॥ स इत्थं यदा प्राणस्य संकटमाप । यतो देही ॥ ३१ ॥ बुद्धिमेवाह—न मामिति । अहं नच प्रभवामि । यतो ग्राहरूपेण केवलं विधातुः पाशेनावृतः । तथापि तं परं परमेश्वरं परेषां

सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः ॥ वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद्द्रुतम् ॥ २४ ॥ विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुवासितम् ॥ पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥ स्वपुष्करेणोद्धृतसीकराम्बुभिर्निपाययन्संस्नपयन्यथा गृही ॥ घृणी करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥ तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ॥ यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥ तथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥ नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ॥ समाः सहस्रं व्यगमन्महीपते सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥ ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः ॥ विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः ॥ ३० ॥ इत्थं गजेन्द्रः स यदाप संकटं प्राणस्य देही विवशो यदृच्छया ॥ अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥ न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ॥ ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३२ ॥ यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् ॥ भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धे मन्वन्तरानुवर्णने गजेन्द्रोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥

ब्रह्मादीनामयनमाश्रयभूतं शरणं यामि ॥ ३२ ॥ कोऽसौ यं शरणं यासि तत्राह—यः कश्चनेति । अन्तक एवोरगस्तस्मात् । तं शरणमीमहि व्रजेम । यद्भयादित्यत्र श्रुतिः—'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' इति ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥

१ 'जिघ्रन्नदूरात्' इति पाठः । २ अभ्याशं निकटम् । ३ 'गृणन्करेणूः' इति पाठः । ४ अहं चेति यद्यप्यहं पशुत्वादज्ञस्तथापीत्यर्थः ।

तृतीये तु गजेन्द्रेण स्तुतो हरिरुपेत्य तम् ॥ समुद्धार तं ग्राहाद्ग्राहं देवलशापतः ॥ १ ॥ जाप्यं जप्यं स्तोत्रम् । प्राग्जन्मनि इन्द्रद्युम्नसंज्ञे ॥ १ ॥ तस्मै नमो नमनमभिधीमह्यभिध्यायेम केवलम् । ग्राहगृहीतत्वेन कायप्रणतेरशक्यत्वात् । स्वस्य तज्ज्ञानं भावयितुं विशिनष्टि । यतश्चिद्रूपादेतद्देहादिचिदात्मकं चेतनं भवति । तदुक्तम्—'येन चेतयते विश्वम्' इति । तत्र हेतुः—पुरुषाय पूर्षु कारणत्वेन प्रविष्टाय । ननु प्रकृतिपुरुषौ कारणमिति प्रसिद्धं तत्राह—आदिः प्रकृतिर्बीजं पुरुषस्तद्रूपाय । प्रविष्टत्वेऽपि जीववत्पारतन्त्र्यं वारयति—परेशायेति ॥ २ ॥ परमैश्वर्यं विवृण्वन्नाह यावत्समाप्ति । यस्मिन्नधिष्ठाने, यत उपादानात्, येन कर्त्रा, यश्च स्वयमेवेदं विश्वं भवति । अस्मात्कार्यात्परस्मात्कारणाच्च यः परस्तं स्वयंभुवं स्वतःसिद्धं प्रपद्ये शरणं व्रजामि ॥ ३ ॥ विश्वहेतुत्वं स्वतःसिद्धत्वं चोक्तम्, इदानीं विश्वप्रकाशकत्वं स्वप्रकाशत्वं च वर्णयन्प्रार्थयते—यः स्वात्मनीति । विभातमभिव्यक्तं सत्, कचित्प्रलये तिरोहितं लीनं सत्, तदुभयं

॥ श्रीशुक उवाच ॥ एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ॥ जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम्
॥ १ ॥ ॥ गजेन्द्र उवाच ॥ ॐनमो भगवते तस्मै यत एतच्चिदात्मकम् ॥ पुरुषायादिबीजाय परेशायाभिधीमहि
॥ २ ॥ यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ॥ योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम् ॥ ३ ॥ यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम् ॥ अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥ कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ॥ तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥ न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ॥ यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥ दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः ॥ चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥ ७ ॥ ॥ ॥

कार्यं कारणं च साक्षी सन्नीक्षते । साक्षित्वे हेतुः—अविद्धदृगलुप्तदृष्टिः । आत्ममूलः स्वयंप्रकाशः । कुतः । परात्प्रकाशकाच्चक्षुरादेरपि परः । तस्यापि प्रकाशक इत्यर्थः । 'चक्षुषश्चक्षुः' इत्यादिश्रुतेः ॥ ४ ॥ तिरोहितमीक्षत इत्येतत्प्रपञ्चपूर्वकं दुर्ज्ञेयत्वं वदन्प्रार्थयते—कालेनेति द्वाभ्याम् । पञ्चत्वमितेषु नाशं प्राप्तेषु गहनं दुरवगाहम् । गभीरमनन्तम् । तस्य तमसः । 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतेः ॥ ५ ॥ अत एव देवादयो यस्य स्वरूपं न विदुः । जन्तुरर्वाचीनः कोऽपि गन्तुं ज्ञातुमीरितुं वक्तुं वा । दुरत्ययं दुर्गममनुक्रमणं चरितं कथनं वा यस्य सः । मा माम् ॥ ६ ॥ कथं तर्हि—'तमेव विदित्वातिमृत्युमेति' इत्यादिश्रुतिरित्याशङ्क्य तज्ज्ञानोपायं कथयन्नाह—दिदृक्षव इति । अलोकव्रतं ब्रह्मचर्यादि । अव्रणमच्छिद्रम् । भूतानामात्मभूता भूतेष्वात्मदृष्टयः सन्तः । स मे गतिरस्तु ॥ ७ ॥

१ तं गजेन्द्रमुपेत्य ग्राहात्समुद्धार । तं ग्राहं देवलशापतः समुद्धारेत्यन्वयः । २ यस्मिन् इदं जगत् गृहे घटादिकमिव, यतश्च कुम्भकारादिव, येन चक्रदण्डादिनेव, यः मृत्पिण्ड इव, एवं योऽस्य विश्वस्य स्वयमेव सर्वाणि कारणानि भवतीत्यर्थः इति चक्र० । ३ आत्मा स्वयमेव मूलं यस्य ।

दुरत्ययानुक्रमणतरं प्रपञ्चयन्प्रणमति—न विद्यत इत्यादिना । लोकानामप्ययः प्रलयः, संभवो जन्म, तयोर्द्वन्द्वैक्यम् । तदर्थं यस्तानि जन्मादीनि स्वीकरोति तस्मै नम इत्युत्तरेणान्वयः ॥ ८ ॥ ब्रह्मणे अरूपाय । अनन्तशक्तये उरुरूपाय । अत आश्चर्याणि कर्माणि यस्य तस्मै परेशाय नमः ॥ ९ ॥ आत्मप्रदीपाय प्रकाशान्तरस्याविषयाय । कुतः । साक्षिणे प्रकाशकाय । परमात्मने जीवनियन्त्रे । अत एव गिरां विदूरायाप्राप्याय । चेतसां चित्तवृत्तीनाम् । तथा च श्रुतिः—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति ॥१०॥ एवमपि विपश्चिता निपुणेन । नैष्कर्म्येण संन्यासेन । सत्त्वेन शुद्धेन । 'संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इति श्रुतेः। प्रतिलभ्याय प्रत्यक्त्वेन प्राप्याय। निर्वाणसुखसंविदे मोक्षानन्दानुभूतये ॥ ११ ॥ गुणधर्मिणे सत्त्वादिधर्मानुकारिणे । ज्ञानघनाय चेति निर्विशेषत्वेऽपि प्रधानवैलक्षण्यमुक्तम् ॥१२॥ साक्षिण इति सर्वाध्यक्षत्वेऽपि निर्विकारत्वमुक्तम्। आत्मनां क्षेत्रज्ञानां मूलाय। मूलस्य प्रधानस्यापि प्रकृतये उद्भवहेतवे। तत्र हेतुः—पुरुषाय पूर्वमेव सते। तथा च श्रुतिः—'पूर्वमेवाहमिहासम्' इति 'तत्पुरुषस्य पुरुषत्वम्' इति 'पूर्णाय' इति वा ॥१३॥ सर्वेन्द्रियाणां ये गुणा विषयास्तेषां द्रष्ट्रे। सर्वे

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष[1] एव वा ॥ तथापि लोकाप्ययसंभवाय यः स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥ तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ॥ अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥ नम आत्मप्रदीपाय साक्षिणे परमात्मने ॥ नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥ सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ॥ नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥ नमः शान्ताय घोराय मूढाय गुणधर्मिणे ॥ निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥ क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ॥ पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ॥ असता[2] छाययोक्ताय सदाभासाय ते नमः ॥ १४ ॥ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय[3] ॥ सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥ गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेन विवर्जितागम[4]स्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥ ॥ ॥

प्रत्यया इन्द्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै । तदेवाह—असताहंकारादिप्रपञ्चेन । छाययाऽसद्रूपाय उक्ताय प्रतिबिम्बेन बिम्बमिव सूचिताय । तत्र हेतुः—सद्रूपो विषयेष्वाभासो यस्य तस्मै । तदुक्तं तृतीये—'यथा जलस्य आभासः' इत्यादिना। पाठान्तरे असत्यस्य छायया(ऽ)ध्यासेनाक्ताय युक्ताय, तदधिष्ठानायेत्यर्थः ॥१४॥ अखिलकारणाय सर्वकारणरूपाय। अत एव स्वयं निष्कारणाय। कारणत्वेऽपि मृदादिवद्विकारं वारयति—अद्भुतकारणायेति। एवंभूतत्वे प्रमाणमाह—सर्वे आगमाः पञ्चरात्रादय आम्नायाश्च वेदास्तेषां महार्णवाय स्रोतसामिव पर्यवसानस्थानाय । अपवर्गाय मोक्षरूपाय । अतः परायणायोत्तमानामाश्रयाय ॥ १५ ॥ गुणा एवारणिस्तयाच्छन्नश्चिदूष्मपो ज्ञानाग्निस्तस्मै । तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं बहिर्वृत्तिकं मानसं यस्य । 'सोऽकामयत बहु स्याम्' इति श्रुतेः । नैष्कर्म्यमात्मतत्त्वं तस्य भावेन भावनया विवर्जिता आगमा विधिनिषेधलक्षणा यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै ॥ १६ ॥ ॥

१ गुणसहितो दोषो गुणदोष इत्यर्थः । सर्वो द्वन्द्वो विभाषैकवद्भवतीतीतरेतरयोगेऽप्येकत्वम् । समाहारद्वन्द्वे पुंस्त्वमार्षमिति वा । 'गुणदोषमेव' वा इति चक्र० पाठः। २ 'असत्याच्च विमुक्ताय' इति विज० पाठः । ३ 'नारायणायार्तिविनाशनाय' इति विज० पाठः । ४ 'विवर्तितागम' इति वीर० पाठः । ५ 'असत्यच्छायया(ऽ)ऽक्ताय' इत्येवंरूपे ।

माहक् मद्विधश्चासौ प्रपन्नः पशुस्तस्य पाशोऽविद्या तस्य विशेषेण मोक्षणं येन। तत्र योग्यतामाह—मुक्ताय। मोचने हेतुः—भूरिः करुणा यस्य। अतस्तत्रार्थे-ऽलयायानलसाय। स्वांशेनान्तर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीता प्रख्याता या प्रत्यग्दृक्तस्मै। तथा च श्रुतिः—'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति। भगवते सर्वेषां तनुभृतां नियमने समर्थाय। तेषां मनःस्थितत्वेऽपि बृहतेऽपरिच्छिन्नाय ॥ १७ ॥ अन्तःस्थत्वेऽपि देहादिष्वासक्तैर्दुष्प्रापणायासुमशक्याय। तत्र हेतुः—गुणसङ्गेन विवर्जिताय। अत एव मुक्तात्मभिर्देहादिष्वनासक्तैश्चिन्तिताय। तैः परिभावितं रूपमाह—ज्ञानात्मन इत्यादि ॥ १८ ॥ इष्टां गतिं कामितं धर्मादिफलं प्राप्नुवन्त्येव, नतु तावदेव, किंतु यास्तैरकामिता अन्या अप्याशिषो राति। देहमप्यव्ययं राति। एवं योऽदभ्रदयः स मे विमोक्षणमेव केवलं करोतु नाधिकं प्रार्थये ॥ १९ ॥ एतावदप्यहं भक्तिसुखानभिज्ञत्वेन वाञ्छामि। यस्यैकान्तभक्ता न कंचिदर्थं वाञ्छन्ति तं परेशं परमेश्वरमीडे

माद्दक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय[1] ॥ स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते॥१७॥ आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय॥ मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय॥१८॥ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ॥ किंत्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १९॥ एकान्तिनो यस्य न कंचनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः॥ अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ २० ॥ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ २१ ॥ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ॥ नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २२ ॥ यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ॥ तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥ २३ ॥ स वै न देवासुरमर्त्यतिर्यङ्न स्त्री न षण्ढो न पुमान्न जन्तुः ॥ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥ २४ ॥ ॥

स्तौमीत्युत्तरेणान्वयः। तेषां निष्कामत्वे हेतुः—ये वै भगवतः सर्वज्ञान्मुक्तान्प्रपन्नाः सेवितवन्तः ॥ २० ॥ अत्यद्भुतसुमङ्गलत्वप्रदर्शनार्थमक्षरत्वादीनि विशेषणानि ॥ २१ ॥ परिपूर्णत्वं प्रदर्शयन्नाह त्रिभिः—यस्य फल्ग्व्या च स्वल्पयैव कलयांशेन कृताः स जयतादिति तृतीयेनान्वयः ॥ २२ ॥ कथं कृता इत्यपेक्षायां दृष्टान्तौ। यथार्चिषोऽग्नेरिति प्रवाहे दृष्टान्तः—सवितुर्गभस्तय इत्यानन्त्ये। निर्यान्त्युद्गच्छन्ति। संयान्ति लीयन्ते। गुणसंप्रवाहमेवाह—बुद्धिर्मन इति। खानि करणानि शरीरसर्गाः कार्यदेहप्रवाहाश्च यतो भवन्ति सः ॥ २३ ॥ अत एव देवादीनां मध्ये कोऽपि न भवति। न जन्तुर्लिङ्गत्रयशून्यं प्राणिमात्रमपि। किंतु सर्वस्य निषेधेऽवधित्वेनावशिष्यत इति निषेधशेषो मायया अशेषोऽशेषात्मकश्च जयतान्मद्विमोक्षणायाविर्भवतु ॥ २४ ॥ ॥ ॥

१ तत्रार्थे करुणायां विषये अलयाय न विद्यते लयः स्वाप आलस्यं यस्य तस्मै इति चक्रवर्ती। २ तस्मै तद्रूपायेत्यर्थः। ३ मनोलयाय इति वीर० पाठः। ४ सूक्ष्मं परमाणुमिवेन्द्रियागोचरमित्यर्थः। 'सूक्ष्ममतीव दूरम्' इति पाठः। ५ स्वरोचिषः स्वप्रकाशस्याग्नेः सवितुश्च। ६ सर्गाः सर्गहेतवः।

न च ग्राहाच्छरीरस्य मोक्षणेनाहं जीवितुमिच्छामि। तत्र हेतुः—अमुया अन्तर्बहिश्चाविवेकव्याप्तया गजजात्या किं प्रयोजनम्। आत्मलोकस्यात्मप्रकाशस्य यदावरणमज्ञानं तस्यैव तु मोक्षमिच्छामि। यस्य मोक्षस्य कालेन नाशो नास्ति। यद्वा देहस्य बन्धो देहनाशे नश्येदेव किं तन्मोक्षप्रार्थनेन। आत्मलोकावरणस्य तु कालेन विप्लवो नास्ति, ज्ञानैकनिवर्त्यत्वात्। अतस्तस्यैव मोक्षमिच्छामीत्यर्थः ॥२५॥ सोऽहं मुमुक्षुः। विश्वं विश्वरूपम्। अविश्वं विश्वव्यतिरिक्तं च। विश्वं वेदो धनमुपकरणं यस्य तम्। विश्वस्यात्मानं च केवलं प्रणतोऽस्मि नतु तं जानामि ॥ २६ ॥ योगं विना दुर्ज्ञेयत्वादित्याह—योगेन भगवद्धर्मेण रन्धितानि दग्धानि कर्माणि येषां ते यं प्रपश्यन्ति ॥२७॥ तर्हि सर्वेऽपि योगमेव किं नाश्रितास्तत्राह—नम इति द्वाभ्याम्। असह्यो वेगो रागादिलक्षणो यस्य तथाभूतं शक्तित्रयं[2] यस्य तस्मै। बहि-

जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ॥ इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥२५॥ सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ॥ विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥२६॥ योगरन्धितकर्माणो हृदि योगविभाविते ॥ योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥२७॥ नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ॥ प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥२८॥ नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम् ॥ तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥२९॥ ॥श्रीशुक उवाच॥ एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः ॥ नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥ ३० ॥ तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ॥ छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥३१॥ सोऽन्तःसरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ॥ उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रा[3]न्नारायणाखिलगुरो भगवन्नमस्ते ॥३२॥ तं वीक्ष्य पीडितमजः सहसावतीर्य सग्राहमाशु सरसः कृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं संपश्यतां हरिरमूमुचदुस्रियाणाम्[4] ॥३३॥ ॥इति श्रीम० म० पु० अ० गजेन्द्रमोक्षणे तृतीयोऽध्यायः ॥३॥

श्चाखिलधियां सर्वेन्द्रियाणां गुणाय शब्दादिरूपेण प्रतीयमानाय। अतः कदिन्द्रियाणां कुत्सितानीन्द्रियाणि येषां तेषामनवाप्यं वर्त्म यस्य ॥ २८ ॥ यच्छक्त्या यस्य मायया या अहंधीस्तया हतमावृतमयं जनो न वेद। दुरत्ययं माहात्म्यं यस्य तमित आश्रितोऽस्मि ॥ २९ ॥ उपवर्णितं निर्विशेषं मूर्तिभेदं विना परं तत्त्वं येन तम्। विविधा चासौ लिङ्गभिदा मूर्तिभेदस्तस्यामभिमानो येषां ते। अत एते यदा नोपजग्मुः। तत्र तदा। अखिलामरमयः सर्वदेवमयमूर्तिः ॥३०॥ दिविजैर्देवैः सह। छन्दोमयेनेति शैघ्र्यायोक्तम् ॥ ३१ ॥ खे दृष्ट्वा। उपात्तमुद्यतं चक्रं येन ॥ ३२ ॥ गरुडोऽपि मन्दगतिरिति ततः सहसाऽवतीर्यारिणा चक्रेण विपाटितं मुखं यस्य। उस्रियाणां देवानाम् ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥

१ यद्वा आत्मनस्तव लोको वैकुण्ठस्तदावरणस्य तद्द्वारकपाटस्य मोक्षं मोचनं मन्निष्ठायास्तत्प्राप्त्ययोग्यताया नाशमित्यर्थः इति चक्र०। २ शक्तित्रयं गुणत्रयरूपम्। ३ कृच्छ्रात्प्रेमवैवश्यात्। ४ 'उस्रिया विजया देवा आदित्या अमराः सुराः' इत्यभिधानात् विज०। 'उच्छ्रियाणाम्' इति चक्र० सिद्धां० पाठः। तत्र उद्धता ईश्वरत्वाभिमानद्योतका श्रीर्येषां देवानामित्यर्थः।

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः ॥ गजं सपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ १ ॥ १ ॥ २ ॥ हूहूसंज्ञो गन्धर्वसत्तमः असौ देवलस्य शापेन ग्राहो जातः । स वै स तु ततः सद्यो मुक्तः सन्नुत्तमश्लोकमगायतेत्यन्वयः । एवं हीतिहासोत्तमे कथा । सरसि स्त्रीभिः क्रीडन्नसौ स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष । स च प्रकुपितो ग्राहो भवेति शशाप, तेन च प्रसादितः सन्नुवाच, एवमेव गजेन्द्रं गृह्णीष्व, ततश्च गजेन्द्रमुद्धरन्हरिस्त्वामपि मोचयिष्यतीति ॥ ३ ॥ कथंभूतम् । यशसो धाम आश्रयम् । अतः कीर्तन्याः कीर्तनीया गुणाः सती कथा च यस्य तम् ॥ ४ ॥ स्वं लोकं गन्धर्वलोकम् ॥ ५ ॥ ६ ॥ ७ ॥

॥ श्रीशुक उवाच ॥ तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ॥ मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥ नेदुर्दु-
न्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ॥ ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥ योऽसौ ग्राहः स वै सद्यः
परमाश्चर्यरूपधृक् ॥ मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥ प्रणम्य शिरसाधीशमुत्तमश्लोकमव्ययम् ॥ अगा-
यत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥ सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ॥ लोकस्य पश्यतो लोकं
स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥ गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबन्धनात् ॥ प्राप्तो भगवतो रूपं पीतवासाश्चतु-
र्भुजः ॥ ६ ॥ स वै पूर्वमभूद्राजा पाण्ड्यो[1] द्रविडसत्तमः ॥ इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥ स एक-
दाराधनकाल आत्मवान्गृहीतमौनव्रत ईश्वरं हरिम् ॥ जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः
॥ ८ ॥ यदृच्छया तत्र महायशा मुनिः[2] समागमच्छिष्यगणैः परिश्रितः ॥ तं वीक्ष्य तूष्णीमकृताऽर्हणादिकं रहस्यु-
पासीनमृषिश्चुकोप[3] ह ॥ ९ ॥ तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ॥ विप्रावमन्ता विशतां तमोऽन्धं
यथा गजः स्तब्धमतिः स एव ॥ १० ॥ ॥ श्रीशुक उवाच ॥ एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ॥ इन्द्र-
द्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥ आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशनीम् ॥ हर्यर्चनानुभावेन यद्ग-
जत्वेऽप्यनुस्मृतिः ॥ १२ ॥ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं[4] गमितेन युक्तः ॥ गन्धर्वसिद्धविबुधै-
रुपगीयमानकर्माऽद्भुतं स्वभवनं गरुडासनोऽगात् । १३ ॥ ॥ ॥ ॥

कुलाचले मलयाद्रावाश्रमो यस्य ॥ ८ ॥ तूष्णीं रहस्युपासीनं वीक्ष्य ॥ ९ ॥ शापमेवाह—असाधुरित्यादि । अकृताऽशिक्षिता बुद्धिर्यस्य । गजो यथा स्तब्धमतिस्तथैवायम् । अतः स एव गज एव, भवत्विति शेषः ॥ १० ॥ दिष्टं दैवप्रापितं तदुपधारयन्नालोचयन् ॥ ११ ॥ कौञ्जरीं योनिमापन्नः । तर्हि पश्चात्कथं स्मृतिर्जाता तत्राह—हरेरर्चनस्यानुभावेनेति ॥ १२ ॥ अद्भुतं स्वभवनमगात् ॥ १३ ॥ ॥ ॥ ॥ ॥

१ पाण्ड्यदेशो द्रविडेषु प्रसिद्धः । २ मुनिरगस्त्यः । ३ चुकोप न स्वावमानेन किंतु विप्रातिक्रमेण । अत एव विप्रावमन्तेत्यग्रिमश्लोके वक्ष्यति । ४ 'पारिषदतां गमितेन' इति पाठः ।

एतद्गजराजमोक्षणं नाम कृष्णानुभावस्तवेरितः । कथंभूतं तत्राह—स्वर्ग्यमित्यादि । दुःस्वप्नं नाशयतीति तथा ॥ १४ ॥ अतः श्रेयस्कामा ये एतद्यथावदनुकीर्तयन्ति ॥ १५ ॥ अनेन श्रेयो भवतीति कुतो ज्ञातम्, साक्षाद्भगवद्वचनादेवेत्याह—इदमाहेत्यादि यावत्समाप्ति ॥ १६ ॥ प्रसङ्गादन्यस्यापि स्मरणे फलमुच्यते । सर्वेषां द्वितीयान्तानां स्मरन्तीत्यष्टमेनान्वयः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ अव्यक्तं मायाम् । अव्ययं धर्मं भक्तिलक्षणम् । सोमकश्यपयोरपि

एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ॥ स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥ यथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ॥ शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥ १५ ॥ इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ॥ शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥ ॥ श्रीभगवानुवाच ॥ ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ॥ वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥ शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ॥ क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥ श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ॥ सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥ शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ॥ ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥ मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ॥ कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥ २१ ॥ प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययम् ॥ दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥ गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ॥ ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च[1] मानवान् ॥ २३ ॥ उत्थायापररात्रान्ते[2] प्रयताः सुसमाहिताः ॥ स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसोऽखिलात्[3] ॥ २४ ॥ ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये ॥ तेषां प्राणात्यये[4] चाहं ददामि विमलां मतिम् ॥ २५ ॥ ॥ श्रीशुक उवाच ॥ इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ॥ हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥ ॥ इति श्रीमद्भा० म० पु० अष्टमस्कन्धे गजेन्द्रमोक्षणं नाम चतुर्थोऽध्यायः ॥ ४ ॥
॥ श्रीशुक उवाच ॥ राजन्नुदितमेतत्ते हरेः कर्माऽघनाशनम् ॥ गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥ ॥

पत्नीर्दाक्षायणीः ॥ २२ ॥ सितवारणमैरावतम् ॥ २३ ॥ सुसमाहिता एकाग्रचित्ताः । मम रूपाणि मद्विभूतीः ॥ २४ ॥ २५ ॥ जलजोत्तमं शङ्खवरं प्रध्माय वादयित्वा ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ॥ स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः ॥ १ ॥ पञ्चमे पञ्चमं चाथ षष्ठं चाकथयन्मनुम् ॥ विप्रशापाच्च निःश्रीकैः कृतां देवैर्हरेः स्तुतिम् ॥ २ ॥ १ ॥ ॥

१ पुण्येन श्लोक्यन्ते कथ्यन्ते इति पुण्यश्लोकास्तान् । २ अपररात्रान्ते अरुणोदयआरम्भे । ३ दुःस्वप्नादिनिमित्तात्सर्वस्मात्पापात् । ४ प्राणात्यये देहोत्क्रमणे ।

तामसश्चतुर्थो मनुस्तस्य सोदरो भ्राता ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ तस्य वैकुण्ठसंज्ञस्य हरेरनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां स्वपार्षदाभ्यां वराहादि-
रूपेण युद्धादिलक्षणः, गुणाश्च ब्रह्मण्यतादयः, परमोदयाश्च महर्द्धयः कथिताः तृतीयस्कन्धादिषु ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ यतो हेतोः । अम्बुचरात्मना
कूर्मरूपेण ॥ ११ ॥ 'सुराणां साधिता सुधा' इत्युक्त्या युद्धाद्यपि सूचितम्, अतः पृच्छति—किं चान्यदिति ॥ १२ ॥ १३ ॥ १४ ॥ नोत्तिष्ठेरन्न

पञ्चमो रैवतो नाम मनुस्तामससोदरः ॥ बलिविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥ विभुरिन्द्रः सुरगणा राजन्भू[1]-
तरयादयः ॥ हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥ पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ॥ तयोः स्वक-
लया जज्ञे वैकुण्ठो भगवान्स्वयम् ॥ ४ ॥ वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः[2] ॥ रमया प्रार्थ्यमानेन देव्या तत्प्रि-
यकाम्यया ॥ ५ ॥ तस्यानुभावः कथितो गुणाश्च परमोदयाः ॥ भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ॥ ६ ॥ षष्ठश्च
चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ॥ पूरुपूरुषसुद्युम्नप्रमुखाश्चक्षुषात्मजाः[3] ॥ ७ ॥ इन्द्रो मन्त्रद्रुमस्तत्र देवा आप्यादयो
गणाः ॥ मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः[4] ॥ ८ ॥ तत्रापि देवः संभूत्यां वैराजस्याभवत्सुतः ॥ अजितो नाम भगवा-
नंशेन जगतः पतिः ॥ ९ ॥ पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ॥ भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥
॥ राजोवाच ॥ यथा भगवता ब्रह्मन्मथितः क्षीरसागरः ॥ यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥ यथाऽमृतं सुरैः
प्राप्तं किं चान्यदभवत्ततः ॥ एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥ त्वया संकथ्यमानेन महिम्ना सात्वतां पतेः ॥
नातितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥ ॥ सूत उवाच ॥ संपृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ॥ अभिनन्द्य
हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥ ॥ श्रीशुक उवाच ॥ यदा युद्धे सुरैर्देवा बाध्यमानाः शितायुधैः ॥ गतासवो निपतिता
नोत्तिष्ठेरन्स्म भूयशः ॥ १५ ॥ यदा दुर्वाससः शापात्सेन्द्रा लोकास्त्रयो नृप ॥ निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः[5]
क्रियाः ॥ १६ ॥ निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः ॥ नाध्यगच्छन्स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥
ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ॥ सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥ ॥ ॥

पुनर्जीवन्ति सेत्यर्थः ॥ १५ ॥ दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिन्द्रं दृष्ट्वा स्वकण्ठस्था माला तस्मै दत्ता, तेन च श्रीमदेनानादृत्यैरावतस्य कुम्भयोर्निक्षिप्ता,
स च गजो मत्तः पद्भ्यां तां मालां चूर्णीचकार, ततः कुपितो दुर्वासास्तं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति । तदेतदाह—यदा दुर्वाससः शापा-
दिति । इज्यादयो यागाद्याः ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥ ॥ ॥

१ 'भूतदयादयः' इति वीर० पाठः । २ 'लोकालोकनमस्कृतः' इति पाठः । ३ 'पुत्राः पूरुष' इति विज० पाठः । ४ 'हरिमद्वीरकादयः' इति कचित्पाठः । ५ नेशुः श्रियं वर्धयितुं नाशक्नुवन् ।

अनुरान् अयथा देववैलक्षण्येन । बलपुष्ट्यादियुक्तान्विलोक्येत्यर्थः ॥ १९ ॥ हरिं शरणं गताः सन्तो यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य ॥ २० ॥ मनुष्यादयो जरायुजाण्डजोद्भिज्जस्वेदजाः । यस्यावतारः पुरुषस्तस्यांशो ब्रह्मा तस्य कला मरीच्यादयस्ताभिर्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः ॥ २१ ॥ ननु तर्हि सर्वेष्वसौ समः स्यात्किं तच्छरणाश्रयेण, सत्यम्, यद्यप्येवं तथाप्यसत्पक्षपाती भविष्यतीत्याशयेनाह—न यस्येति द्वाभ्याम् ॥२२॥ स्थितिपालनस्य क्षणः कालः । अतः सुरप्रियः सन्स्वीयानां नः शं सुखं करिष्यति ॥२३॥ यत्र क्षीराब्धौ हरेर्वासस्तदेव तमसः परं स्थानम् । यद्वा लोकालोकात्परतो यत्तमस्ततः परं स्थानं जगाम ॥२४॥ दैवीभिर्लोकेऽप्रसिद्धाभिर्वैदिकीभिर्गीर्भिः स्तुतिमकरोत् ॥२५॥ देववरं त्वां नमामहे नमाम । हे देव, वरं त्वां नमामेति वा । वरत्वे हेतुः—सत्यम् । कुतः अविक्रियम् । तत्कुतः अनन्तमाद्यं चानादिम् । आद्यन्तवन्तो हि वृद्ध्यादिविक्रियायुक्ता भवन्ति । किंच—गुहाशयं सर्वान्तरम् । कुतः निष्कलं निरुपाधिम् । तत्कुतः

स विलोक्येन्द्रवाय्वादीन्निःसत्त्वान्विगतप्रभान् ॥ लोकानमङ्गलप्रायानसुरानयथा विभुः ॥ १९ ॥ समाहितेन मनसा संस्मरन्पुरुषं परम् ॥ उवाचोत्फुल्लवदनो देवान्स भगवान्परः ॥ २० ॥ अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः ॥ तस्यावतारांशकला विसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥२१॥ न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ॥ अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्त्वतमांसि काले ॥ २२ ॥ अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम् ॥ तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥ ॥ श्रीशुक उवाच ॥ इत्याभाष्य सुरान्वेधाः सह देवैररिन्दम ॥ अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै विभो ॥ स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥ २५ ॥ ॥ ब्रह्मोवाच ॥ अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ॥ मनोग्रयानं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥ विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ॥ छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजाम हे ॥ २७ ॥ ॥

अप्रतर्क्यम् । तत्कुतः । मनोग्रयानं मनसोऽपि जविष्ठम्, मनःप्राप्ये स्थाने ततः प्रागेव विद्यमानत्वात् । तथा च श्रुतिः—'अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्' इति । वचसा अनिरुक्तम्, अविषयत्वात् 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इति श्रुतेः । मनोवचसोरगोचरत्वादप्रतर्क्यम् । यथेष्टं वा सर्वेषां हेतुहेतुमद्भावः ॥२६॥ किंच—प्राणादीनां विपश्चितं ज्ञातारम् । आत्माहंकारो देहो वा । ननु तद्व्यतिरिक्तं ज्ञेयमस्तीत्याह—अर्थो विषयः । इन्द्रियाणि तद्ग्राहकाणि तदुभयरूपेणाभासत इति तथा तम् । तथाप्यनिद्रं स्वप्नद्रष्टृवदज्ञानरहितम् । कुतः । अव्रणमदेहम् । अत एवाक्षरं खमिव व्यापिनं च । सर्वत्र हेतुः—यत्र यस्मिन्गृध्रपक्षौ जीवपक्षपातिनौ छायातपावविद्या च तन्निवर्तिका विद्या च नास्ति तं त्रियुगं त्रिषु युगेष्वाविर्भवन्तं शरणं व्रजाम ॥ २७ ॥ ॥

१ गुणानामेव विकारधर्मत्वादिति भावः । २ अनन्तं देशकालपरिच्छेदरहितम् । ३ उत्फुल्लवदन इति समाधौ हरेः प्रसादानुभवात् । ४ घर्मजातयः स्वेदजाः । ५ अदृष्टस्वरूपं श्रुतपूर्वं च भगवन्तमुद्दिश्येत्यर्थः । ६ 'चाभिभोः' इति पाठः । ७ 'स्तवहिते' इति पाठः । ८ गृध्यति भुक्तिमुक्ती अभिकाङ्क्षतीति व्युत्पत्त्या गृध्रशब्देन जीवः । आवरणस्वभावत्वाच्छायाशब्देनाविद्या । प्रकाशस्वभावत्वादातपशब्देन विद्या च गृह्यते ।

तदेवमविक्रियत्वादिभिः सर्वज्ञत्वादिभिश्च सत्यत्वं वरेण्यत्वं चोक्तम्, संसारचक्राधारत्वेनापि तदेव दर्शयन्नाह—अजस्य जीवस्य चक्रं चक्रवदावर्तमानं देहा-
द्यजया मायया प्रेर्यमाणम् । योऽक्षो यस्य यदधिष्ठानमाहुस्तमृतं सत्यं प्रपद्ये । कथंभूतं चक्रम् । मनोमयं मनःप्रधानम् । दशेन्द्रियाणि पञ्चप्राणाश्चेत्येवं पञ्च-
दश अरा यस्य । आशु शीघ्रगम् । त्रयो गुणा नाभिरिव मध्ये यस्य । विद्युदिव चलम् । अष्टौ प्रकृतयो नेमय इवावरणानि यस्य ॥ २८ ॥ सर्वजीवनियन्तृ-
त्वादिना च वरिष्ठत्वमाह—य इति । य उपसुपर्णं जीवसमीपे तन्नियन्तृत्वेनासांचकारास्ते स्म । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इति
श्रुतेः । यद्वा भक्तरक्षणार्थं गरुडस्योपरि य उपविष्ट इत्यर्थः । तर्हि देहस्थत्वाद्भक्तरक्षणादिक्रियावेशाज्जीवसाम्यं स्यात्तत्राह—एकवर्णं ज्ञानैकस्वरूपं, तमसः
प्रकृतेः परम्, अलोकमदृश्यमव्यक्तं निर्विकल्पम्, अनन्तपारं कालतो देशतश्चापरिच्छिन्नं तद्ब्रह्मैव यः । अप्रच्युतस्वरूपत्वान्न जीवसाम्यम् । 'तयोरन्यः पिप्पलं
स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति विशेषश्रवणादित्यर्थः । अत एव यमेनं धीरा योगेन रथेन प्राप्तिसाधनेनोपासते भजन्ते तं नमामेत्युत्तरेणान्वयः

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ॥ त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥
य एकवर्णं तमसः परं तदलोकमव्यक्तमनन्तपारम् ॥ आसांचकारोपसुपर्णमेनमुपासते योगरथेन धीराः ॥ २९ ॥
न यस्य कश्चातितितर्ति मायां यया जनो मुह्यति वेद नार्थम् ॥ तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं
चरन्तम् ॥ ३० ॥ इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्तराविः ॥ गतिं न सूक्ष्मामृषयश्च विद्महे कुतो-
ऽसुराद्या इतरप्रधानाः ॥३१॥ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ॥ स वै महापूरुष आत्म-
तन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥ अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः ॥ लोका-
स्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥ ॥ ॥

॥ २९ ॥ मायानियन्तृत्वेनापि जीवसाम्यं परिहरन्वरिष्ठत्वमाह—यस्य मायां कश्च कश्चिदपि नातितितर्ति नातिक्रामति । कथंभूताम् । जनो यया मुह्यति ।
अर्थमात्मस्वरूपं नतु वेद । निर्जितै आत्मात्मशक्तिर्माया च तद्गुणाश्च येन तम् ॥ ३० ॥ 'अर्थं न वेद' इति यदुक्तं तत्प्रपञ्चयन्नाह—इमे वयं देवा ऋषयश्च यस्य
प्रियया तन्वा सत्त्वेनैव सृष्टा अपि बहिरन्तश्च सत्ताप्रकाशाभ्यामाविः प्रकटामपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्मः । इतरप्रधाना रजस्तमोमयाः कुतो
विदुः । तं नमामेति पूर्वेणान्वयः ॥ ३१ ॥ इदानीं वैराजरूपेण स्तुवन्प्रार्थयते । पादौ महीति द्वादशभिः । यत्र महां जरायुजादिभूतसर्गः सा मही यस्य
पादौ स नः प्रसीदतु । आत्मतन्त्रः पादादिमत्त्वेऽपि न तत्परतन्त्रः । कुतः । ब्रह्म अप्रच्युतरूपः । तत्कुतः । महती विभूतिरैश्वर्यं यस्य सः ॥३२॥ उदारं वीर्यं
शक्तिर्यस्य तदम्भो यस्य रेतः स नः प्रसीदतु । उदारवीर्यतामाह—यतोऽम्भसो लोकादयः सिध्यन्ति जायन्ते ॥ ३३ ॥ ॥ ॥ ॥

१ यः परमात्मा । २ 'लोका यतो' इति पाठः । ३ निर्जिता वशीकृता आत्मानो जीवा आत्मशक्तिर्माया तद्गुणाश्च येनेति चक्र० । ४ बहिः कालस्वरूपेण अनन्तरन्तर्यामिस्वरूपेण इति चक्र० ।
५ वर्धमाना भवन्ति ।

यः सोमो देवानामन्धोऽन्नम् । अत एव बलमायुश्च । नगानां वृक्षाणाम् । प्रकर्षेण जनयति वर्धयतीति प्रजनः । तं यस्य मनः समामनन्ति स नः प्रसीदतु ॥ ३४ ॥ अग्निर्यस्य तु मुखं जातः । कथंभूतः । जातं वेदो धनं यस्मात् । क्रियाकाण्डं तत्प्रतिपाद्यं कर्म तन्निमित्तं जन्म यस्य । अन्तःसमुद्रे उदरमध्ये स्वधातूनपःकाष्ठानेवान्नादीननुपचन् । प्रसिद्धसमुद्रेऽपि वाडवरूपेणोदकान्येवानुपचन्नग्निः ॥ ३५ ॥ एष तरणिर्यस्य चक्षुरासीत् । कथंभूतः । देवयानमर्चिरादिमार्गदेवता । त्रयीमयः 'सैषा त्रय्येव विद्या तपति' इति श्रुतेः । ब्रह्मणो धिष्ण्यमुपासनास्थानम् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेः । मुक्तेर्द्वारं देवयानत्वात् । अमृतं च पुण्यलोकत्वात् । मृत्युश्च कालात्मकत्वात् । एवंभूतस्तरणिर्यस्य चक्षुः स प्रसीदतु ॥ ३६ ॥ कथंभूतो वायुः ।

सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः ॥ ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा ॥ अन्तःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥ यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ॥ द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥ प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः ॥ अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः ॥ प्राणेन्द्रियात्मासुशरीरकेतं प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥ बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशो धिषणाद्विरिञ्चः[1] ॥ खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥ श्रीर्वक्षसः पितरश्छायया ऽऽसन्धर्मः स्तनादितरः पृष्ठतोऽभूत् ॥ द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्रसीदतां नः स महाविभूतिः ॥ ४० ॥ विप्रो[3] मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ॥ ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ[4] प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥ लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ॥ भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥

चराचराणां सहआदिधर्मवान्प्राणः, यं प्राणं वयं बुद्ध्याद्यधिष्ठातारो देवाः सम्राजं भृत्या इवास्मानुसृत्य स्थिताः । एवंभूतो वायुर्यस्य प्राणादभूत्सः ॥ ३७ ॥ खानि देहगतानि छिद्राणि, प्राणः पञ्चवृत्तिः, इन्द्रियाणि च, आत्मा मनश्च, असवो नागकूर्मादयः, शरीरं च, तेषां केतमाश्रयभूतं खं यस्य पुरुषस्य नाभ्याः प्रजज्ञे सः ॥ ३८ ॥ यस्य बलान्महेन्द्रो जज्ञे । छन्दांसि ऋषयश्च खेभ्यः । कः प्रजापतिः ॥ ३९ ॥ इतरोऽधर्मः ॥ ४० ॥ विड्वैश्यः । ओजो नैपुणं तस्य वृत्तिः अङ्घ्रिः । अङ्घ्रिजावित्यर्थः । अवेदशूद्रौ अवेदो वेदव्यतिरिक्ता शुश्रूषा तद्वृत्तिमान् शूद्रश्च । पाठान्तरं सुगमम् ॥ ४१ ॥ उपर्युत्तरोष्ठात् । नस्तो नासिकातः । द्युतिः कान्तिः । पशव्यः पशूनां हितः कामः स्पर्शनाभूत् ॥ ४२ ॥ ॥ ॥ ॥ ॥

१ शुक्रस्य सोमात्मकत्वात् । २ धिषणादिति पुंस्त्वं छान्दसम् । धिषणाया बुद्धेर्विरिञ्च इत्यर्थः । 'धिषणाद्विरिञ्चः' इति पाठः । ३ 'विप्रो मुखाद्ब्रह्म च' इति पाठः । ४ 'ऊर्वोर्विशोऽङ्घ्रेरभवन्स्म शूद्राः' इत्येवंरूपम् ।

प्रबुधापवाधं विद्वद्भिरपोह्यमानम् । पाठान्तरे प्रबुधानां मायेत्यवबोधो
द्रव्यं भूतानि । वयः कालम् । विशेषं भौतिकप्रपञ्चम् । यद्यस्माद्दुर्विभाव्यम् । कुतः । नभस्वान्वायुस्तस्येव ऊतिर्लीला यस्य तस्मै ॥४४॥
यस्मिन्नित्यर्थः ॥४३॥ तदेवं सप्रपञ्चमुपवर्ण्य निष्प्रपञ्चमनुवर्णयन्प्रणमति—नमोऽस्त्विति । वृत्तिभिर्दर्शनादिभिः । ते मुखाम्बुजं यन्नो
सस्मितं मुखाम्बुजं दिदृक्षूणां नोऽस्मच्चक्षुरादिकरणगोचरं यथा भवत्येवं चात्मानं दर्शय ॥४५॥ भक्तेच्छानुवर्तित्वं च तव बहुशो दृष्टमेवेत्याह—तैस्तैरिति । यन्नो
दुर्विषहमशक्यं कर्म तद्भगवान्स्वयमेव करोति हि ॥ ४६ ॥ नच बहिर्मुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पूर्वपुण्यानि विपरीतफलानि भवितुमर्हन्ती-
त्याह—क्लेशो भूरिर्येषु । अल्पं सारं फलं येषु । यद्वा विफलान्येव सकामानां कर्माणि । त्वय्यर्पितं तु नैव तथा ॥४७॥ तत्रावैफल्यमुपपादयति—अवमोऽल्पोऽपि

द्रव्यं वयः कर्मगुणान्विशेषं यद्योगमायाविहितान्वदन्ति ॥ यद्दुर्विभाव्यं प्रबुधापबाधं प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥ नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने ॥ गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नभस्वदूतये ॥ ४४ ॥ स त्वं नो दर्शयात्मानमस्मत्करणगोचरम् ॥ प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥ तैस्तैः स्वेच्छाधृतै रूपैः काले काले स्वयं विभो ॥ कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ॥ ४६ ॥ क्लेशभूर्यल्पसाराणि कर्माणि विफलानि वा ॥ देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥४७॥ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ॥ कल्पते पुरुषस्यैष स ह्यात्मा दयितो हितः ॥ ४८ ॥ यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ॥ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥ नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ॥ निर्गुणाय गुणेशाय सत्त्वस्थाय च सांप्रतम् ॥५०॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कन्धेऽमृतमथने पञ्चमोऽध्यायः ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः ॥ तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः ॥ १ ॥ तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ॥ नापश्यन्खं दिशः क्षोणिमात्मानं च कुतो विभुम् ॥ २ ॥ ॥ ॥

कर्मकल्पः कर्माभासोऽपीश्वरार्पितश्चेद्विफलायायासाय न कल्पते । हि यस्मात्स एव ईश्वरः पुरुषस्यात्मा । अत एव दयितो हितश्च । न ह्यात्मनि दयिते हिते
चार्पितं निष्फलं स्यात् ॥ ४८ ॥ अनन्तफलत्वमाह—यथा हि मूलावसेचनं स्कन्धानां शाखानां च भवति ॥ ४९ ॥ एवं सत्यपि त्वदर्पितकर्मणां त्वद्भक्ताना-
मस्माकं किंनिमित्तमिदं दुःखमिति त्वमेव वेत्सीत्याशयेनाह—नम इति । दुर्वितर्क्याण्यात्मकर्माणि स्वभावचेष्टितानि यस्य तस्मै ॥ ५० ॥ ॥ इति श्रीमद्भा-
गवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ षष्ठे पुनः स्तुतिर्विष्णावाविर्भूते सुरैः कृता ॥ तन्मन्त्राच्चासुरैः
साकममृतार्थं महोद्यमः ॥ १ ॥ सहस्रार्काणामुदये द्युतिरिव द्युतिर्यस्य ॥ १ ॥ महसा तेजसा प्रतिहतानीक्षणानि चक्षूंषि येषाम् ॥ २ ॥ ॥ ॥

१ 'प्रबुधावबोधम्' इत्येवंरूपे । २ स्वराज्ञो भावः स्वाराज्यं तेनैव लाभेन प्रतिपूरित आत्मा मनो यस्य । यद्वा आत्मानः स्वांशा येन । ३ 'नमः स्वभूत्ये' इति वीर० पाठः; स्वाभाविकैश्वर्यायेति तदर्थः । ४ 'भृतैः' इति पाठः । ५ 'भवान्वै तत्करोति' इति पाठः ।

तामाविर्भूतां तनुं विरिञ्चो दृष्ट्वा तुष्टावेति पञ्चमेनान्वयः । कञ्जगर्भवदरुणे ईक्षणे यस्य ॥ ३ ॥ तप्तहेमवदवदातेन पीतेन लसता कौशेयवाससा युक्ताम् । प्रसन्नानि चारूणि सर्वाण्यङ्गानि यस्याः । शोभनं मुखं यस्याः । सुन्दरे भ्रुवौ यस्याः ॥ ४ ॥ महान्तो मणयो यस्मिंस्तेन किरीटेन । कर्णाभरणे कुण्डले ताभ्यां निर्भातौ यौ कपोलौ ताभ्यां श्रीमुखाम्बुजे यस्याः ॥ ५ ॥ कौस्तुभ आभरणं कण्ठे यस्याः । लक्ष्मीं वक्षसि बिभ्रतीम् ॥ ६ ॥ देवप्रवरो ब्रह्मा । सर्वाङ्गैरवनिं गतैः साष्टाङ्गं प्रणतैः ॥७॥ 'अनाविराविरासेयं नाभूताभूदिति ब्रुवन् ॥ ब्रह्माऽभिप्रैति नित्यत्वविभुत्वे भगवत्तनोः॥' इति । श्रीमूर्तेरयमाविर्भाव एव न त्वस्मदादिवज्जन्मादि तवास्तीत्याह—न जाता जन्मादयो यस्य । कुतः । अगुणाय अतो निर्वाणसुखस्यार्णवाय । अपारमोक्षसुखरूपायेत्यर्थः । तथाप्यणोरप्यणिम्नेऽतिसूक्ष्माय, दुर्ज्ञानत्वात् । वस्तुतस्त्वपरिगण्यमियत्तातीतं धाम मूर्तिर्यस्य तस्मै । न चैतदसंभावितम् । यतो महानचिन्त्योऽनुभावो यस्य तस्मै ॥ ८ ॥ तन्मूर्तेः

विरिञ्चो भगवान्दृष्ट्वा सहशर्वेण तां तनुम् ॥ स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम् ॥३॥ तप्तहेमावदातेन लसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वाङ्गीं सुमुखीं सुन्दरभ्रुवम् ॥४॥ महामणिकिरीटेन केयूराभ्यां च भूषिताम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम् ॥५॥ काञ्चीकलापवलयहारनूपुरशोभिताम् ॥ कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ॥६॥ सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ॥ तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ॥ सर्वामरगणैः साकं सर्वाङ्गैरवनिं गतैः ॥७॥ ॥ब्रह्मोवाच॥ अजातजन्मस्थितिसंयमायागुणाय निर्वाणसुखार्णवाय ॥ अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥८॥ रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोर्थिभिर्वैदिकतान्त्रिकेण ॥ योगेन धातः सह नस्त्रिलोकान्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥९॥ त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे ॥ त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥ त्वं माययात्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः ॥ पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चितः ॥ ११ ॥

सनातनत्वमपरिमेयत्वं चोपपादयति—रूपमिति । हे पुरुषर्षभ, हे धातः, एतत्तव रूपं वैदिकेन तान्त्रिकेण च योगेनोपायेन श्रेयोर्थिभिः सदेज्यं पूज्यम् । अतो नेदमिदानीमपूर्वं जातमिति भावः । ननु यूयं देवाः पूज्यत्वेन प्रसिद्धाः, सत्यम्, सर्वेऽप्यत्रैवान्तर्भूता इत्याह—उ अहो । ह स्फुटम् । अमुष्मिंस्त्वयि नोऽस्मांस्त्रीन् लोकांश्च सह पश्यामि । तत्र हेतुः—विश्वं मूर्तौ यस्य । अतस्तवैतद्रूपं परिच्छिन्नमपि न भवतीति भावः ॥ ९ ॥ विश्वमूर्तित्वमेवाह—त्वयीति । घटस्य मृत्तिका यथा आदिरन्तश्च मध्यं च तथा त्वमस्य जगतः । तत्र हेतुः—परस्मात्प्रधानादपि परः ॥ १० ॥ मृत्तिकादृष्टान्तेन परिणामं प्राप्तं वारयति—त्वमिति । स्वया स्वाधीनया । अत एव गुणानां व्यवाये परिणामेऽप्यगुणमेव त्वां युक्ताः पश्यन्ति । मनीषिणो विवेकिनः । विपश्चितः शास्त्रज्ञाः ॥ ११ ॥

१ कपोलौ यत्र तादृशं श्रीमुखमेवाम्बुजं यत्र इति चक्र० । २ श्रीधरीयमेवेदं पद्यं स्तुत्यवतरणभूतमिति ज्ञेयम् । ३ 'व्यपाये' इति वीर० पाठः, तत्र व्यपायोऽन्यथाभावः परिणाम इति यावत् । ४ त्वा मनसा युक्ताः समनस्काः जनाः पश्यन्ति, ये च पश्यन्ति त एव मनीषिणो विपश्चितश्चेति योजना । युक्ता योगिनो मनसा पश्यन्तीति वा इति चक्र० ।

एतदेव सदृष्टान्तमाह—यथाग्निं काष्ठे मथनेन, अमृतमाज्यं गोषु दोहनादिना, भुव्यन्नं व्रीह्यादि कर्षणादिना, अम्बु च खननेन, उद्यमने पुरुषकारे वाणिज्यादिना । वृत्तिं जीविकाम् । यद्वा अम्बु उद्यमने घटीयन्त्रादिनोद्धरणे । योगैरुपायैर्मनुष्या अधियन्ति प्राप्नुवन्ति, तथा कवयस्त्वां बुद्ध्या गुणेष्वधियन्ति वदन्ति च ॥ १२ ॥ हे नाथ सरोजनाभ, अतिचिरादीप्सितमर्थं तं योगैकप्राप्यं त्वां सम्यगुज्जिहानमाविर्भवन्तं प्रत्यक्षतो दृष्ट्वाऽद्य वयं निर्वृतिं गताः । दवार्ता दावाग्निपीडिताः ॥१३॥ यद्विधेयं तत्कथयेति चेत्तत्राह—हे अन्तरात्मन्, अशेषसाक्षिणस्ते बहिः किं वान्यैर्विज्ञाप्यमस्ति ॥१४॥ यूयमेव किंचित्कुरुतेति चेत्तत्राह—अहमिति । अग्नेः केतवो विस्फुलिङ्गा इव ते त्वत्तो वयं पृथग्विभाताः सन्तः आत्मनः शं श्रेयः किं वा विद्मः । अतस्त्वमेव द्विजानां देवानां च मन्त्रं

यथाग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बूद्यमने च वृत्तिम् ॥ योगैर्मनुष्या अधियन्ति[2] हि त्वां गुणेषु बुद्ध्या कवयो वदन्ति ॥ १२ ॥ तं त्वां वयं नाथ समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम् ॥ दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः ॥ १३ ॥ स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम् ॥ समागतास्ते बहिरन्तरात्मन्किं वान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥ अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ॥ किं वा विदामेश पृथग्विभाता विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥ ॥ श्रीशुक उवाच ॥ एवं विरिञ्चादिभिरीडितस्तद्विज्ञाय तेषां हृदयं तथैव ॥ जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन्संवृतसर्वकारकान् ॥ १६ ॥ एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः ॥ विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ हन्त ब्रह्मन्नहो शंभो हे देवा मम भाषितम् ॥ शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १८ ॥ यात दानवदैतेयैस्तावत्संधिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वो भव[3] आत्मनः ॥ १९ ॥ अरयोऽपि हि संधेयाः सति कार्यार्थगौरवे ॥ अहिमूषकवद्देवा ह्यर्थस्य पदवीं गतैः ॥ २० ॥ अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ॥ यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥ ॥

विधत्स्व । इदं कुरुतेत्युपायमुपदिशेत्यर्थः ॥ १५ ॥ हृदयं मन्त्र उपदेष्टव्य इत्यभिप्रेतं यथा तथैव विज्ञाय जगाद—संवृतानि नियमितानि सर्वाणि कारकाणीन्द्रियाणि यैस्तान् ॥ १६ ॥ ईश्वरस्यापि तथैवाभिप्रेतमित्याह—एक एवेश्वरः समर्थोऽपि ॥ १७ ॥ हे सुराः, हे देवाः, अन्ये च गन्धर्वादयः ॥ १८ ॥ वः आत्मनः स्वतो यावद्भवो वृद्धिर्भवति ॥ १९ ॥ अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तैः पश्चादहिमूषकवद्वध्यघातकभावेन वर्तितव्यमिति शेषः । यद्वा पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण संधिं विधत्ते पश्चात्तमेव कदाचिद्भक्षयति तथाऽर्थमार्गप्रवृत्तैः प्रथमं संधेया इत्यर्थः ॥ २० ॥ ततस्तैः सह यत्कार्यं तदाह—अमृतोत्पादन इति । यस्यामृतस्य पीतस्य सतः ॥ २१ ॥ ॥ ॥ ॥

१ अमृतं दुग्धम् इति चक्र० । २ अधियन्ति 'इकुस्मरण' इत्यस्य रूपमिदम् । ३ चक्रवर्ती तु अभव इति छित्त्वा सपत्नभावो यावत्, सपत्नौ तु जाताया विग्रह एव विधेय इति भावः इति व्याचख्यौ । ४ यस्येति यस्मिन्पीते सतीत्यर्थः ।

नेत्रं रज्जुम् ॥ २२ ॥ ननु तर्हि तेऽप्यमृतपानेनामराः स्युस्तत्राह—क्लेशभाज इति ॥ २३ ॥ बलिभिः सहकारिभिः साध्या अर्थास्तदनुसरणं विना न सिध्यन्तीति कृत्वा सामादिकमुपदिशति—यूयमिति द्वाभ्याम् । हे सुराः, संरम्भेण संभ्रमेण सान्त्वया साममार्गेण यथा सिध्यन्ति ॥ २४ ॥ वस्तुषु मथनादुत्पन्नेषु

क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ॥ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥ सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः ॥ क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥ यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ॥ न संरम्भेण सिध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥ न भेतव्यं कालकूटाद्विषाज्जलधिसंभवात् ॥ लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥ ॥ श्रीशुक उवाच ॥ इति देवान्समादिश्य भगवान्पुरुषोत्तमः ॥ तेषामन्तर्दधे राजन्स्वच्छन्दगतिरीश्वरः ॥ २६ ॥ अथ तस्मै भगवते नमस्कृत्य पितामहः ॥ भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः ॥ २७ ॥ दृष्ट्वाऽरीनप्यसंयत्तान् जातक्षोभान् स्वनायकान् ॥ न्यषेधद्दैत्यराट् श्लोक्यः संधिविग्रहकालवित् ॥ २८ ॥ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ॥ श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥ महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ॥ अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥ तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ॥ शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥ ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ॥ उद्यमं परमं चक्रुरमृतार्थे परंतप ॥ ३२ ॥ ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदाः ॥ नदन्त उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥ दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ॥ अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥ निपतन्स गिरिस्तत्र बहूनमरदानवान् ॥ चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥ तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ॥ विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ॥ ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ॥ ३७ ॥ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ॥ आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥ ॥

॥ २५ ॥ सुरास्तु बलिमुपेयुरुपजग्मुः ॥ २६ ॥ २७ ॥ असंयत्तानपि दृष्ट्वा । श्लोक्यः कीर्त्यर्हः ॥ २८ ॥ वैरोचनिं बलिम् । जितमशेषं त्रैलोक्यं येन तम् ॥ २९ ॥ तत्सर्वममृतोन्मथनादि ॥ ३० ॥ तत्र ये अन्ये चासुराधिपाः पौलोमकालेयादयः शम्बरादयश्च तेभ्यश्चारोचत ॥ ३१ ॥ संविदं समयम् ॥ ३२ ॥ परिघा इव बाहवो येषाम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ॥

१ क्षिप्त्वेति दुग्धयोगेन मथितवीरुदादिकाथपरिणाम एवामृतं भवतीति भावः इति चक्र०। २ फलग्रहा अमृतपायिनः। ३ वो युष्माभिः। ४ तेषां देवानामीश्वरं इति संबन्धः। ५ 'तेऽन्वरोचन्त' इति पाठः। ६ दैत्यस्य दैत्याय। 'दैत्याय' इत्येव पाठः क्वचित्। ७ बभूव आविर्बभूव। ८ निर्व्रणान्कृत्वेति शेषः।

विसर्जितः प्रस्थापितः । सुपर्णे तत्र स्थिते वासुकेरागमनायोगादिति भावः ॥३९॥ ॥ इति श्रीमद्भा० म०पु०अष्टमस्कन्धे भा०दी०टीकायां षष्ठोऽध्यायः ॥६॥
सप्तमे मथनोद्भूतविषभीताखिलैर्जनैः ॥ स्तुतः सन्कृपया रुद्रः पपौ विषमितीर्यते ॥१॥ फलभागेन तवाप्यमृते भागो भविष्यतीत्यामन्त्र्य संमन्त्र्य वासुकिं नेत्रं गिरौ

अवरोप्य गिरिं स्कन्धात्सुपर्णः पततां वरः ॥ ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥ ॥ इति
श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अमृतमथने मन्दराचलानयनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ श्रीशुक
उवाच ॥ ते नागराजमामन्त्र्य फलभागेन वासुकिम् ॥ परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः ॥ १ ॥ आरेभिरे
सुसंयत्ता अमृतार्थं कुरूद्वह ॥ हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥२॥ तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टि-
तम् ॥ न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥ स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः ॥ इति तूष्णीं
स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ॥ ४ ॥ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ॥ कृतस्थानविभागास्त एवं
कश्यपनन्दनाः ॥ ५ ॥ ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ॥ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्
॥ ६ ॥ ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन ॥ ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ॥ आसन्स्वपौरुषे नष्टे
दैवेनातिबलीयसा ॥ ७ ॥ विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसंधिः ॥ कृत्वा वपुः काच्छमपद्भुतं
महत्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥ तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ॥ दधार पृष्ठेन
स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥९॥ सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ॥ बिभ्र-
त्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥ तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ॥
उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः ॥११॥ उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ॥
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोऽभिवृष्टः ॥ १२ ॥ ॥ ॥ ॥

परिवीय संवेष्ट्याब्धिं मथितुमारेभिरे ॥ १ ॥ वासुकेर्मुखं तीव्रं दैत्यान् ग्राहयितुमेव पूर्वं हरिः पुरस्तान्मुखे जगृहे । ततोऽभवन्मुखं जगृहुः ॥२॥३॥४॥ कृतो धारणे स्थानविभागो यैः ॥५॥६॥ दैवेन हेतुना स्वपौरुषे नष्टे सति ॥७॥ विघ्नेशस्य विधिं तेन रचितं विघ्नम् । अवितथः सत्योऽभिसंधिः संकल्पो यस्य ॥८॥ लक्षयोजनः प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन ॥९॥ यस्य गिरेरावर्तनं भ्रमणमङ्गकण्डूयनं मेने ॥१०॥ आसुरेणासुराकारेण दैवेन देवाकारेण रूपेणाविशत् ॥११॥१२॥

१ मानं गृहीत्वा विषज्वालया यूयमेव म्रियध्वमित्यभिप्रायेण विस्मयः इति चक्र० । २ परमं यथा भवति तथा यत्ताः कृतयत्नाः इति क्रम० । ३ तं कुलाचलम् । ४ स कूर्मरूपो भगवान् । ५ अबोधरूपः सन्नागेन्द्र वासुकिमाविशत् । मोहेन तस्य पर्वतघर्षणजन्यपीडाबोधो मा भूदित्यभिप्रायेणेति भावः इति चक्र० । ६ मथितुमित्याद्यध्याहारलब्धम् ।

आत्मनि देवदैत्यमध्ये। गोत्रे दार्ढ्यरूपेण, नेत्रे अभेद्यावबोधरूपेण, परेण हरिणा क्षोभितं नक्राणां चक्रं समूहो यस्मिन् ॥ १३ ॥ दृशश्च मुखानि च श्वासाश्च। अहीन्द्रस्य साहस्रमपरिमिताः कठोरा ये दृगादयस्तेभ्यो निर्गताभ्यामग्निधूमाभ्यामाहतं वर्चो येषां ते सरला द्रुमविशेषाः ॥ १४ ॥ देवांस्तु भगवद्दृशा घनाः समभ्यवर्षन्। समुद्रोर्मिभिरुपगूढा वायवश्च शीतला ववुर्वान्तिस्म। कथंभूतान्। तस्याहीन्द्रस्य श्वासशिखाभिर्हता प्रभा येषाम्। धूम्राण्यम्बरादीनि येषाम् ॥ १५ ॥ १६ ॥ धृतोऽद्रिर्येन स धृताद्रिर्भगवान्परमपुरुषोऽनन्तरमशोभतेत्यन्वयः। कथंभूतः। कनकपरिधिः पीतवासाः। कर्णयोर्विद्योतमाना विद्युत्कुण्डललक्षणा यस्य। तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स तथा। जैत्रैर्जिष्णुभिः। दन्दशूकं सर्पम्। प्रतिगिरिः प्रतिद्वन्द्वी

उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ॥ ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥ अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥ देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान् ॥ समभ्यवर्षन्भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥१५॥ मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः ॥ यदा सुधा न जायेत निर्ममन्थाऽजितः स्वयम् ॥ १६ ॥ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताऽथो धृताद्रिः ॥ १७ ॥ निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः ॥ संभ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥१८॥ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति ॥ भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं मुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥२०॥ ॥ प्रजापतय ऊचुः ॥ देवदेव महादेव भूतात्मन्भूतभावन ॥ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ॥ तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥

पर्वतः ॥ १७ ॥ हालाहलमित्याह्वा नाम यस्य। संभ्रान्ता मीना उद्गता मकरादयश्च यस्मिंस्तस्मात् तिम्यादिभिराकुलाच्च ॥ १८ ॥ तद्विषं अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा। कुतः। उग्रो वेगो यस्य। तदेवाह—दिशि दिशीति। यद्वा उग्रा वेगा रोमाञ्चस्वेदादयो यस्मात्। अत एवासह्यं विलोक्य भीता अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुर्जग्मुः ॥ १९ ॥ त्रिलोक्या उद्भवाय देव्या सहाद्रौ कैलासे आसीनं, तथापि मुनीनामभिमतं तेषामेवापवर्गाय तपोजुषाणम् ॥ २० ॥ "निर्गुणं सगुणं चैव शिवं हरिपराक्रमैः ॥ स्तुवन्तस्तु प्रजेशाना नामन्यन्ताऽन्तरं तयोः" इति ॥ २१ ॥ २२ ॥ ॥



१ 'भगवद्वशा घनाः' इति पाठः। २ 'मथ्यमाने तथा सिन्धौ' इति पाठः। ३ कण्ठविद्योतविद्युन्मूर्ध्नाक्रामन् वियति चलितः स्रग्धरो रक्तनेत्रः इति वीर० पाठः। ४ 'हालाहलं हालहलं तथैव च हलाहलम्' इति द्विरूपकोशाद्धालहलशब्दोऽपि।

नन्वेवंभूतो विष्णुरिति प्रसिद्धं तत्राहुः—गुणमय्येति । अस्य जगतो यदा सर्गादीन्धत्से तदा हे भूमन्, स्वदृक् स्वतःसिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से ॥ २३ ॥
तत्र हेतुः—त्वं ब्रह्मेति । सदसतो भावान्देवतिर्यगादिरूपान्भावयतीति तथा । सृज्यं तु त्वद्व्यतिरिक्तं नास्तीत्याहुः—आत्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाभातस्तस्मा-
दीश्वरः ॥ २४ ॥ स्वतःसिद्धज्ञानत्वमुपपादयन्तो जगदात्मना आभानप्रकारमाहुः—त्वं शब्दस्य वेदस्य योनिः । अतः स्वतःसिद्धज्ञानः । त्वं जगदादिर्महत्तत्त्वम् ।
आत्मा चाहंकारः । कथंभूतः । प्राणेन्द्रियद्रव्याणां कारणभूता गुणा यस्य । राजसादित्रिविध इत्यर्थः । स्वभावादयश्च त्वमेव । क्रतुः संकल्पः सत्यमृतं चेति यो धर्मः स
त्वम् । महदादिस्वरूपत्वे हेतुः—त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वयि त्वदाश्रयं तदामनन्ति । यद्वा एवंभूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः ॥२५॥

गुणमय्या स्वशक्त्यास्य सर्गस्थित्यप्ययान्विभो ॥ धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः[1] ॥ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः ॥ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम्[2] ॥ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥ नाभिर्नभस्ते श्वसनं नभस्वान्सूर्यश्च चक्षूंषि जलं स्म रेतः ॥ परावरात्माश्रयणं[3] तवात्मा सोमो मनो द्यौर्भगवन्शिरस्ते ॥२७॥ कुक्षिः समुद्रा गिरयोऽस्थिसंघा रोमाणि सर्वौषधिवीरुधस्ते ॥ छन्दांसि साक्षात्तव सप्तधातवस्त्रयीमयात्मन्हृदयं सर्वधर्मः[4] ॥ २८ ॥ मुखानि पञ्चोपनिषदस्तवेश[5] यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ॥ यत्तच्छिवाख्यं परमार्थतत्त्वं[6] देव स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥ छाया त्वधर्मोर्मिषु[7] यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ॥ सांख्यात्मनः[8] शास्त्रकृतस्तवेक्षा छन्दोमयो देव ऋषिः पुराणः ॥३०॥ न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥ ॥ ॥ ॥

अखिलदेवतात्मा, 'अग्निः सर्वा देवताः' इति श्रुतेः । सोऽग्निस्ते मुखम् । हे लोकभव । द्वितीयान्तेषु विदुरित्यस्य संबन्धः ॥२६॥ परे अवरे च ये आत्मानो जीवास्ते-
षामाश्रयस्तवात्माऽहंकारः ॥ २७ ॥ त्रयीमयात्मन्वेदत्रयमूर्ते ॥ २८ ॥ पञ्चोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा मन्त्राः । यैर्मुखैरष्टोत्तरत्रिंशन्मन्त्राणां वर्गः
तेषामेव मन्त्राणां पदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मन्त्रा इत्यर्थः । अवस्थितिरुपरतावस्था ॥ २९ ॥ अधर्मस्योर्मिषु दम्भलोभादिषु यैरूर्मिभिर्विसर्गः प्रतिसर्गः
संहारः । यद्वा यैः सत्त्वादिभिर्विविधः सर्गस्तानि नेत्रत्रयम् । हे देव छन्दोमय, ऋषिर्वेदः स तवेक्षा ईक्षणम् । साक्षान्मनुरिति पाठे मनुर्वेदः । तमेवाह—छन्दोमय
इति ॥ ३० ॥ हे गिरित्र, ते परं ज्योतिरखिलानां लोकपालादीनां गम्यं न भवति । कुतः । यत्र रजआदि नास्ति । किं तज्ज्योतिः । यन्निरस्तभेदं ब्रह्म ॥ ३१ ॥ ॥

१ सदसद्भावानुत्कृष्टनिकृष्टस्वभावान्भावयतीति । २ 'लोकनता' इति पाठः । ३ 'परावरात्मा॰यणः' इति पाठः । 'द्रुहिणः' इति विज० पाठः । ४ 'स धर्मः' इति वीर० विज० पाठः । ५ 'पनिपत्तवेश' इति विज० पाठः । ६ 'परमात्मवत्त्वम्' इति वीर० पाठः । ७ ऊर्मयो दम्भाद्याः छायेत्यर्थः । ८ सांख्यात्मन इत्यत्र ।

आत्मनि देवदैत्यमध्ये । गोत्रे दार्ढ्यरूपेण, नेत्रे अभेद्यावबोधरूपेण, परेण हरिणा क्षोभितं नक्राणां चक्रं समूहो यस्मिन् ॥ १३ ॥ दशश्च मुखानि च श्वासाश्च । अहीन्द्रस्य साहस्रमपरिमिताः कठोरा ये दृगादयस्तेभ्यो निर्गताभ्यामग्निधूमाभ्यामाहतं वर्चो येषां ते सरला द्रुमविशेषाः ॥ १४ ॥ देवांस्तु भगवद्वशा घनाः समभ्यवर्षन् । समुद्रोर्मिभिरुपगूढा वायवश्च शीतला ववुर्वान्तिस्म । कथंभूतान् । तस्याहीन्द्रस्य श्वासशिखाभिर्हता प्रभा येषाम् । धूम्राण्यम्बराणि येषाम् ॥ १५ ॥ १६ ॥ धृतोऽद्रिर्येन स धृताद्रिर्भगवान्परमपुरुषोऽनन्तरमशोभतेत्यन्वयः । कथंभूतः । कनकपरिधिः पीतवासाः । कर्णयोर्विद्योतमाना विद्युत्कुण्डललक्षणा यस्य । तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स तथा । जैत्रैर्जिष्णुभिः । दन्दशूकं सर्पम् । प्रतिगिरिः प्रतिद्वन्द्वी

उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ॥ ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥ अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥ देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान् ॥ समभ्यवर्षन्भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥१५॥ मथ्यमानात्तथा सिन्धोर्देवासुरवरूथपैः ॥ यदा सुधा न जायेत निर्ममन्थाऽजितः स्वयम् ॥ १६ ॥ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताऽथो धृताद्रिः ॥ १७ ॥ निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः ॥ संभ्रान्तमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥१८॥ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति ॥ भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं मुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥२०॥ ॥ प्रजापतय ऊचुः ॥ देवदेव महादेव भूतात्मन्भूतभावन ॥ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ॥ तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥

पर्वतः ॥ १७ ॥ हालाहलमित्याह्वा नाम यस्य । संभ्रान्ता मीना उद्गता मकरादयश्च यस्मिंस्तस्मात् तिम्यादिभिराकुलाच ॥ १८ ॥ तद्विषं अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा । कुतः । उग्रो वेगो यस्य । तदेवाह—दिशि दिशीति । यद्वा उग्रा वेगा रोमाञ्चस्वेदादयो यस्मात् । अत एवासह्यं विलोक्य भीता अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुर्जग्मुः ॥ १९ ॥ त्रिलोक्या उद्भवाय देव्या सहाद्रौ कैलासे आसीनं, तथापि मुनीनामभिमतं तेषामेवापवर्गाय तपोजुषाणम् ॥ २० ॥ "निर्गुणं सगुणं चैव शिवं हरिपराक्रमैः ॥ स्तुवन्तस्तु प्रजेशाना नामन्यन्ताऽन्तरं तयोः" इति ॥ २१ ॥ २२ ॥ ॥

१ 'मघवद्वशा घनाः' इति पाठः । २ 'मथ्यमाने तथा सिन्धौ' इति पाठः । ३ कण्ठविद्योतविद्युन्मूर्ध्नाक्रामन् वियति चलितः स्रग्धरो रक्तनेत्रः इति वीर० पाठः । ४ 'हालाहलं हालहलं तथैव च हलाहलम्' इति द्विरूपकोशाद्धालहलशब्दोऽपि ।

नन्वेवंभूतो विष्णुरिति प्रसिद्धं तत्राहुः—गुणमय्येति । अस्य जगतो यदा सर्गादीन्धत्से तदा हे भूमन्, स्वदृक् स्वतःसिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से ॥ २३ ॥ तत्र हेतुः—त्वं ब्रह्मेति । सदसतो भावान्देवतिर्यगादिरूपान्भावयतीति तथा । सृज्यं तु त्वद्व्यतिरिक्तं नास्तीत्याहुः—आत्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाभातस्तस्मा-दीश्वरः ॥ २४ ॥ स्वतःसिद्धज्ञानत्वमुपपादयन्तो जगदात्मना आभानप्रकारमाहुः—त्वं शब्दस्य वेदस्य योनिः । अतः स्वतःसिद्धज्ञानः । त्वं जगदादिर्महत्तत्त्वम् । आत्मा चाहंकारः । कथंभूतः । प्राणेन्द्रियद्रव्याणां कारणभूता गुणा यस्य । राजसादित्रिविध इत्यर्थः । स्वभावादयश्च त्वमेव । क्रतुः संकल्पः सत्यमृतं चेति यो धर्मः स त्वम् । महदादिस्वरूपत्वे हेतुः—त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वयि त्वदाश्रयं तदामनन्ति । यद्वा एवंभूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः ॥२५॥

गुणमय्या स्वशक्त्यास्य सर्गस्थित्यप्ययान्विभो ॥ धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः ॥ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ॥ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥ नाभिर्नभस्ते श्वसनं नभस्वान्सूर्यश्च चक्षूंषि जलं स्म रेतः ॥ परावरात्माश्रयणं तवात्मा सोमो मनो द्यौर्भगवन् शिरस्ते ॥२७॥ कुक्षिः समुद्रा गिरयोऽस्थिसंघा रोमाणि सर्वौषधिवीरुधस्ते ॥ छन्दांसि साक्षात्तव सप्तधातवस्त्रयीमयात्मन्हृदयं सर्वधर्मः ॥ २८ ॥ मुखानि पञ्चोपनिषदस्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ॥ यत्तच्छिवाख्यं परमार्थतत्त्वं देव स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥ छाया त्वधर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ॥ सांख्यात्मनः शास्त्रकृतस्तवेक्षा छन्दोमयो देव ऋषिः पुराणः ॥३०॥ न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥ ॥ ॥ ॥

अखिलदेवतात्मा, 'अग्निः सर्वा देवताः' इति श्रुतेः । सोऽग्निस्ते मुखम् । हे लोकभव । द्वितीयान्तेषु विदुरित्यस्य संबन्धः ॥२६॥ परे अवरे च ये आत्मानो जीवास्तेषामाश्रयस्तवात्माऽहंकारः ॥ २७ ॥ त्रयीमयात्मन्वेदत्रयमूर्ते ॥ २८ ॥ पञ्चोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा मन्त्राः । यैर्मुखैरष्टोत्तरत्रिंशन्मन्त्राणां वर्गः तेषामेव मन्त्राणां पदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मन्त्रा इत्यर्थः । अवस्थितिरुपरतावस्था ॥ २९ ॥ अधर्मस्योर्मिषु दम्भलोभादिषु यैरूर्मिभिर्विसर्गः प्रतिसर्गः संहारः । यद्वा यैः सत्त्वादिभिर्विविधः सर्गस्तानि नेत्रत्रयम् । हे देव छन्दोमय, ऋषिर्वेदः स तवेक्षा ईक्षणम् । साक्षान्मनुरिति पाठे मनुर्वेदः । तमेवाह—छन्दोमय इति ॥ ३० ॥ हे गिरित्र, ते परं ज्योतिरखिलानां लोकपालादीनां गम्यं न भवति । कुतः । यत्र रजआदि नास्ति । किं तज्ज्योतिः । यन्निरस्तभेदं ब्रह्म ॥ ३१ ॥ ॥

१ सदसद्भावानुत्कृष्टनिकृष्टस्वभावान्भावयतीति । २ 'लोकनता' इति पाठः । ३ 'परावरात्मा॰यणः' इति पाठः । 'द्रुहिण' इति विज॰ पाठः । ४ 'स धर्मः' इति वीर॰ विज॰ पाठः । ५ 'पनिषत्तवेश' इति विज॰ पाठः । ६ 'परमात्मतत्त्वम्' इति वीर॰ पाठः । ७ ऊर्मयो दम्भाद्याः छायेत्यर्थः । ८ सांख्यात्मन इत्यत्र ।

कामश्चाध्वरश्च दक्षयज्ञस्त्रिपुरादयश्च ये अनेकभूतद्रुहस्तान् क्षपयतः संहरतस्ते तत्कर्म स्तुतये न भवति । अत्यल्पमेतदित्यर्थः । गरक्षपणस्याप्यवश्यंभावित्वेन सिद्धवन्निर्देशः । स्तुतयेऽलं न भवतीत्यत्र हेतुः—यस्तु भवान्स्वनेत्रवह्निविस्फुलिङ्गस्य शिखयेदं जगद्भसितं भस्मसाज्जातं न वेद नालोचयत्यपि ॥३२॥ तदेवं नित्यं परानुग्रहव्यग्रं त्वां ये निन्दन्ति तेऽतिमूर्खा इत्याहुः—ये तु उमया सह चरन्तं तस्यां नितरां रतं कामिनं कत्थन्ते प्रलपन्ति । तथा श्मशाने चरन्तमुग्रं क्रूरं पुरुषं च हिंस्रं कत्थन्ते । कथंभूतम् । आत्मारामाश्च ते गुरवो विश्वहितोपदेष्टारस्तैर्हृदि चिन्तितमङ्घ्रिद्वन्द्वं यस्य तथाभूतमपि तपसाभितप्तमपि । ते नूनं तवोतिमविदन्निति काकुः । त्वल्लीलां नैव विदुरित्यर्थः । अतो हातलज्जास्त्यक्तत्रपाः । कथमात्मारामैः सेवितचरणयुगलस्य ते कामित्वं संभवति, कथं वा तपसाभितप्तस्य शान्तस्योग्रत्वं परुषत्वं वा संभवतीत्यविचार्यैव प्रलापादित्यर्थः ॥३३॥ आस्तां तावन्निन्दकानां वार्ता, महान्तोऽपि तव तत्त्वं न जानन्तीत्याहुः—तत्तस्मात्तव स्वरूपस्य गमने ज्ञाने

कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते ॥ यस्त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं न वेद ॥ ३२ ॥ ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसाभितप्तम् ॥ कत्थन्त उग्रपरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥ तत्तस्य ते सदसतोः परतः परस्य नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ॥ ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि शक्तिमात्रम् ॥ ३४ ॥ एतत्परं प्रपश्यामो न परं ते महेश्वर ॥ मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥ ॥ श्रीशुक उवाच ॥ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ॥ सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ ३६ ॥ ॥ शिव उवाच ॥ अहो बत भवान्येतत्प्रजानां पश्य वैशसम् ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ ३७ ॥ आसां प्राणपरीप्सूनां विधेयमभयं हि मे ॥ एतावान्हि प्रभोरर्थो यद्दीनपरिपालनम् ॥ ३८ ॥ प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ॥ बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ॥ प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥ तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥ ॥ ॥

ब्रह्मादयोऽपि न समर्थाः, संस्तवने तु कुतः शक्ताः स्युः, तत्र वयं कथं प्रभवेम । यतस्तेषां सर्गेऽत्यन्तावाचीनाः । तथापि यदेतत्तव स्तवनमेतदात्मशक्तिपरिमितमात्रमित्यर्थः ॥ ३४ ॥ तदेवाहुः—एतत्परमिति । न परं रूपं तथापि त्वद्दर्शनादेव कृतार्था वयमित्याहुः—मृडनाय हीति ॥ ३५ ॥ ३६ ॥ मत्प्रभावमविचार्य विषपाने प्रवृत्तं मां कथंचिदियं प्रिया वारयेदिति शङ्कया तामनुज्ञापयन्नाह—अहो बतेति सार्धैश्चतुर्भिः । वैशसं दुःखम् ॥ ३७ ॥ प्राणपरीप्सूनां प्राणरक्षणेच्छूनाम् । मे मया । प्रभोः समर्थस्य । अर्थः कार्यम् ॥ ३८ ॥ किंच बद्धवैरेषु भूतेषु परस्परं जिघांसत्सु ॥ ३९ ॥ कृपयतः कृपां कुर्वतः पुंसः । मे मत्तः । स्वस्तिः शोभना सत्ता, सुखेन जीवितमस्त्वित्यर्थः ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥

१ 'हराद्यनेक' इति पाठः। २ 'तवेश' इति पाठः। ३ विषं संहृत्य शीघ्रं लोकसुखं निष्पादयेति ध्वनिः इति चक्र०। ४ वासां प्रजानाम्। अग्रे भवान्येतत्प्रजानामीत्युक्तेः। ५ भृशमीडितः इति पाठः।

जग्धुमत्तुम् ॥ ४१ ॥ करतलीकृत्य करतलपरिमितमात्रं कृत्वा ॥ ४२ ॥ जलकल्मषो जलदोषो विषम् । यस्मात्तं गलेनीलं चकार । साधोः कृपालोः ॥ ४३ ॥ ॥४४॥४५॥ प्रस्कन्नं गलितम् । अपरे ये सविषास्तेऽपि जगृहुः । अनेन विषस्य तीव्रतोक्ता ॥४६॥ ॥ इति श्रीमद्भा० म० पु० अष्टमस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥७॥ ॥ अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ॥ धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥१॥ हविर्धानी सुरभिः ॥१॥ देवयानस्य

॥ श्रीशुक उवाच ॥ एवमामन्त्र्य भगवान्भवानीं विश्वभावनः ॥ तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥ ततः करतलीकृत्य व्यापि[1] हालाहलं विषम् ॥ अभक्षयन्महादेवः कृपया भूतभावनः ॥४२॥ तस्यापि[2] दर्शयामास स्ववीर्यं जलकल्मषः[3] ॥ यच्चकार गलेनीलं[4] तच्च साधोर्विभूषणम् ॥ ४३ ॥ तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ॥ परमाराधनं तद्धि[5] पुरुषस्याखिलात्मनः ॥ ४४ ॥ निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः ॥ प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥४५॥ प्रस्कन्नं पिबतः पाणेर्यत्किंचिज्जगृहुः स्म तत् ॥ वृश्चिकाहिविषौषध्यो दन्दशूकाश्च येऽपरे ॥ ४६ ॥ इति श्रीमद्भा० म० पु० अ० अमृतमथने सप्तमोऽध्यायः ॥७॥ ॥ श्रीशुक उवाच ॥ पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ॥ ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १ ॥ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ॥ यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २ ॥ तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ॥ तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥३॥ तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ॥ दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम् ॥४॥ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ॥ तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलंकरणे मणौ ॥ ५ ॥ ततोऽभवत्पारिजातः सुरलोकविभूषणम् ॥ पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥६॥ ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ॥ रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥७॥ ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा ॥ रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी यथा ॥ ८ ॥ ॥

ब्रह्मलोकमार्गप्रापकस्य । यज्ञस्य संबन्धिने हविषे ॥ २ ॥ ईश्वरशिक्षया प्रागेव कृतया ॥ ३ ॥ भगवतो यः श्वेताद्रिः कैलासस्तस्य महिं महिमानम् । दन्तैः शिखरकल्पैर्हरंश्चन्द्रवत्पाण्डुर इत्यनुषङ्गः ॥४॥५॥६॥ वल्गुभिर्गत्यादिभिः स्वर्गिणां रमण्यो रतिकर्त्र्यः ॥७॥ सुदामा पर्वतस्तत्रैकस्यां दिशि जाता सौदामनी । स्फटिकादिमयगिरिशृङ्गेष्वधिकं स्फुरन्ती विद्युदिव कान्त्या दिशो[10] रञ्जयन्ती श्रीः संपत् साक्षान्मूर्तिधारिणी सती सैव भगवत्परा रमा आविरभूदित्यर्थः ॥ ८ ॥ ॥

१ व्यापि व्याप्तिशीलम् । २ तस्यापि तत्रापीत्यर्थः । ३ 'गलकल्मषः' इति पाठः । ४ गलेनीलमित्यलुक्समासः । ५ 'विद्धि' इत्यपि पाठः । ६ ह्रस्वत्वमार्षम् । आलोच्येत्यर्थः । ७ 'महि' इति पाठः । ८ भगवति चासौ परा चेति पूर्वस्याः सकाशाच्छ्रेष्ठेति पूर्वस्या एतद्विभूतिरूपत्वमिति भावः इति चक्र० । अस्याः च जगज्जननीत्वादग्रिमं स्पृहां चक्रुरित्यादि पूर्वस्यामेव नापरस्यामिति योजनीयम् । ९ ईश्वरशिक्षया 'लोभः कार्यो न वो जातु' इत्येवं रूपया । १० दिशस्तस्या दिग्वर्तिनो जनान् ।

तस्या रूपादिमहिम्ना आक्षिप्तं चेतो येषाम् ॥ ९ ॥ भगवद्वक्षसि स्थितया श्रिया विलोकितानां सुराणां यथापूर्वं संपत्प्राप्तिमसुराणां च तद्विपर्ययं वक्तुमभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह—तस्या आसनमित्यादिना अथासीद्वारुणीत्यतः प्राक्तनेन ग्रन्थेन ॥ १० ॥ आभिषेचनिका अभिषेकोचिताः । पञ्चपवित्राणि पञ्चगव्यानि । मधुमाधवौ चैत्रवैशाखभवं फलपुष्पादि । पाठान्तरेऽपि द्वन्द्वैक्ये स एवार्थः । मधुमासे भवं मध्विति वा ॥ ११ ॥ अभिषेकं अभिषेकोचितं विधिम् । नट्यो नटानां स्त्रियः ॥ १२ ॥ शङ्खवेणुवीणाश्च व्यनादयन् । तुमुलो निःस्वनो येषां तान् मृदङ्गादीन् ॥१३॥१४॥

तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥९॥ तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ॥ मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ १० ॥ आभिषेचनिका भूमिराहरत्सकलौषधीः ॥ गावः पञ्चपवित्राणि वसन्तो मधुमाधवौ[1] ॥ ११ ॥ ऋषयः कल्पयांचक्रुरभिषेकं यथाविधि ॥ जगुर्भद्राणि गन्धर्वा नट्यश्च ननृतुर्जगुः ॥ १२ ॥ मेघा मृदङ्गपणवमुरजानकगोमुखान् ॥ व्यनादयन् शङ्खवेणुवीणास्तुमुलनिःस्वनान् ॥ १३ ॥ ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ॥ दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥१४॥ समुद्रः पीतकौशेयवाससी समुपाहरत् ॥ वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥१५॥ भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ॥ हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥१६॥ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ॥ चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम् ॥ १७ ॥ स्तनद्वयं चातिकृशोदरीसमं निरन्तरं चन्दनकुङ्कुमोक्षितम् ॥ ततस्ततो नूपुरवल्गुसिञ्जितैर्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥ विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ॥ गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत ॥१९॥ नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् ॥ कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥२०॥ धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् ॥ वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं नहि द्वितीयो गुणसङ्गवर्जितः ॥ २१ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ पदमाश्रयम् । ध्रुवं नित्यम् । अव्यभिचारिणो नित्याः सन्तो गुणा यस्मिंस्तं नान्वविन्दत । क्वचित्कस्यचिद्दोषस्य सद्भावात् ॥ १९ ॥ तदेवाह—नूनमिति त्रिभिः—मन्युनिर्जयो नास्ति दुर्वासःप्रभृतिषु । गुरुशुक्रादिषु सङ्गवर्जितं ज्ञानं नास्ति । महत्त्वेऽपि ब्रह्मसोमादौ न कामनिर्जयः । परतो व्यपाश्रयः परापेक्ष इन्द्रादिः स किमीश्वरः ॥ २० ॥ न भूतसौहृदं परशुरामादिषु । न मुक्तिकारणं त्यागः शिबिप्रभृतिषु । पुंसः कार्तवीर्यादेर्वीर्यमस्ति । अजवेगनिष्कृतं कालवेगेन परिहृतं तु न भवति । गुणसङ्गवर्जितः सनकादिर्द्वितीयो मम वरो नहि, समाधिनिष्ठत्वात् ॥ २१ ॥ ॥ ॥

१ 'मधुमाधवम्' इत्येवंरूपे ।

चिरायुष्यपि मार्कण्डेयादौ शीलमङ्गलं नास्ति, इन्द्रियदमनशीलत्वात् । क्वचित्तदप्यस्ति हिरण्यकशिपुप्रभृतौ, आयुषः स्थैर्यं न वेद्यं दुर्ज्ञातम्, भगवद्द्वेषेणाकस्मा-
देव मृत्युसंभवात् । यत्र कुत्र च श्रीरुद्रे मार्कण्डेयादिवदिन्द्रियदमनाद्यभावाच्छीलमङ्गलं चायुर्निश्चयश्चेत्युभयमस्ति न चान्यः पूर्वोक्तः कश्चिद्दोषः । तथापि सोऽप्य-
मङ्गलः श्मशानवासाद्यमङ्गलचेष्टितः । श्रीमुकुन्दं लक्षीकृत्याह—कश्चेति । कश्चित्सुमङ्गलो निरवद्यश्च स तु मां न हि काङ्क्षते, आत्मारामत्वात् ॥२२॥ एवं विमृश्य
रमा निरपेक्षमपि मुकुन्दमेव वरं वव्रे । तत्किम् । अव्यभिचारिभिः सद्भिर्धर्मज्ञानादिभिर्गुणैर्निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमम् । तत्र हेतुः—अगुणाश्रयं
प्रकृतिगुणातीतम् । पाठान्तरेऽप्ययमेवार्थः । अत एव स्वस्य ईप्सितम् । किंच सर्वैर्गुणैरणिमादिभिरपेक्षितं वृतम् । अयं भावः—यद्यपि स्वयमात्मारामत्वेनान्यनिर-

क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः ॥ यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते
हि माम् ॥२२॥ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयताऽगुणाश्रयम् ॥ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं
निरपेक्षमीप्सितम् ॥ २३ ॥ तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौ निधाय निकटे
तदुरःस्वधाम सव्रीडहासविकसन्नयनेन याता ॥ २४ ॥ तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षो निवासमकरो-
त्परमं विभूतेः ॥ श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥ शङ्खतूर्यमृ-
दङ्गानां वादित्राणां पृथुः स्वनः ॥ देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥२६॥ ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्व-
सृजो विभुम् ॥ ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २७ ॥ श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ॥
शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥ २८ ॥ निःसत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः ॥ यदा चोपेक्षिता
लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २९ ॥ अथासीद्वारुणी देवी कन्या कमललोचना ॥ असुरा जगृहुस्तां वै हरेरनुमतेन ते
॥ ३० ॥ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३१ ॥ ॥ ॥

पेक्षस्तथाप्याश्रिता अणिमादिसिद्धीर्यथा नोपेक्षते तद्वन्मामपि नोपेक्षेत । तावतैव तत्सेवयाऽहं कृतार्था स्यां किमन्यैः प्राकृतैरिति तमेव वृतवतीति ॥ २३ ॥
तदेवाह—तस्यांसदेशे कमनीयां नवकञ्जमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ । कथंभूतां मालाम् । माद्यन्तो ये मधुव्रतास्तेषां
वरूथस्य गिरा उपघुष्टां नादिताम् । कथंभूता श्रीः । सव्रीडहासेन विकसन्नयनं तेन तस्योरःस्वधाम याता सती । वक्षःप्रतीक्षमाणा तस्थावित्यर्थः ॥ २४ ॥
भगवानपि त्रैलोक्याभिवृद्धये स्ववक्षस्तस्याः स्थानं ददावित्याह—तस्या इति । विशिष्टा भूतयो विभवा यस्याः तस्यास्त्रिजगतो जनन्याः श्रियः । परमं सुस्थि-
रम् । ऐधयतावर्धयत् ॥२५॥२६॥ तल्लिङ्गैर्विष्णुप्रतिपादकैः । अवितथैर्यथार्थैः ॥२७॥२८॥२९॥ वारुणी वरुणदैवत्यं यदन्नं तन्मयी सुरा ॥ ३० ॥ ३१ ॥

१ 'निजैकाश्रयताऽगुणाश्रयम्' इत्येवंरूपे । निजैकाश्रयतेत्यत्रार्षस्तृतीयाया लुक् । निजैकाश्रयतयेति भावः । २ 'सद्गुणं पदं निजैकाश्रयि सद्गुणाश्रयं' इति विज० पाठः ।
३ 'निजैकाश्रयतो गुणाश्रयं' इति वीर० पाठः । ४ निवीय इति पाठः । ५ 'भीता' इति पाठः । ६ यदा लक्ष्म्योपेक्षितास्तदा निःसत्त्वादयो बभूवुरित्यन्वयः ।

दीर्घौ पीवरौ दोर्दण्डौ यस्य । कम्बुग्रीवः शङ्खनाभिरिव त्रिरेखा सुवृत्ता ग्रीवा यस्य ॥ ३२ ॥ स्निग्धः कुञ्चितः केशानामन्तो यस्य ॥ ३३ ॥ ३४ ॥ इज्यभाक् यज्ञभागभोक्ता । अमृतेन आभृतं परिपूर्णम् ॥ ३५ ॥ ३६ ॥ मिथो दैत्यानां परस्परं कलहोत्पादनेन, योगमायया च मोहिन्या वोऽर्थं साधयिष्यामि । अतो मा खिद्यतेत्याहेति शेषः ॥३७॥ तदेवाह—मिथ इति । तर्षः कामस्तद्युक्तानि चेतांसि येषाम् । इत्येवं समबलानां कलिरभूत् ॥ ३८ ॥ दुर्बलानां त्वाक्रोशप्रकारमाह—देवा इति द्वाभ्याम् । ये देवास्तुल्येनायासेन हेतवः साधकाः । तुल्य आयासो हेतुश्च धनादिर्येषामिति वा । सत्रयागे यथा सर्वेषां समं फलं

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ॥ श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३२ ॥ पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ॥ स्निग्धकुञ्चितकेशान्तः[1] सुभगः सिंहविक्रमः ॥ ३३ ॥ अमृतापूर्णकलशं बिभ्रद्वलयभूषितः ॥ स वै भगवतः साक्षाद्विष्णोरंशांशसंभवः ॥ ३४ ॥ धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ॥ तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥ ३५ ॥ लिप्सन्तः[2] सर्ववस्तूनि कलशं तरसाऽहरन् ॥ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ ३६ ॥ विषण्णमनसो देवा हरिं शरणमाययुः ॥ इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत् ॥ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३७ ॥ मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ॥ अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३८ ॥ देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः ॥ सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥ इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः ॥ दुर्बलाः प्रबलान् राजन्गृहीतकलशान्मुहुः ॥ ४० ॥ एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥ प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ॥ समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४२ ॥ नवयौवननिर्वृत्त[3]स्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४३ ॥ बिभ्रत्स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् ॥ सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥ ४४ ॥ विरजाम्बर[4]संवीतनितम्बद्वीपशोभया ॥ काञ्च्या प्रविलसद्वल्गुचलच्चरण[5]नूपुरम् ॥ ४५ ॥ ॥ ॥

तद्वत् । तथा च श्रुतिः—'ऋद्धिकामाः सत्रमासीरन्' इति, ये 'यजमानास्ते ऋत्विजः' इति च ॥३९॥४०॥४१॥ तद्रूपं वर्णयति पञ्चभिः—प्रेक्षणीयमुत्पलमिव श्यामम् । सर्वेष्ववयवेषु सुन्दरम् । समानयोः कर्णयोराभरणे यस्मिन् । सुकपोलं च तदुत्कृष्टनासिकं चाननं यस्मिन् ॥४२॥ नवयौवननिर्वृत्तयोः स्तनयोर्भारेण च कृशमुदरं यस्मिन् ॥४३॥ सुष्ठु ग्रीवा यस्मिन्, कण्ठे आभरणं यस्मिंस्तच्च तच्च । शोभना ग्रीवा येन तत्कण्ठाभरणं यस्मिन्निति वा । सुभुजयोरङ्गदाभ्यां भूषितम् ॥४४॥ विरजाम्बरेण संवीतो नितम्ब एव द्वीपो विशालत्वात्तत्र शोभा यस्यास्तया काञ्च्या प्रकर्षेण विलसत् । वल्गु यथा भवत्येवं चलतोश्चरणयोर्नूपुरे यस्मिन् ॥४५॥

१ 'नीलकुञ्चित' इति पाठः । २ सर्ववस्तूनि लिप्सन्त इति । अमृते पीते बलादिप्राप्त्या सर्वाण्येव वस्तूनि प्राप्तानि स्युरित्यभिप्रायात् इति क्रम० । ३ 'यौवननिष्पन्द' इति पाठः ।
४ 'विरजोम्बर' इति पाठः । ५ 'स्फुटच्चरण' इति पाठः ।

सव्रीडेन स्मितेन सह विक्षिप्ता कम्पिता या भ्रूस्तस्या विलासेन सह यान्यवलोकितानि तैर्दैत्ययूथपानां चेतस्सु मुहुः काममुद्दीपयत् ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायामष्टमोऽध्यायः ॥ ८ ॥ ॥ नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने ॥ तद्व्यजनेन देवेभ्योऽमृतं दत्तं तयेर्यते ॥ १ ॥ १ ॥ अहो रूपं सौन्दर्यं धाम द्युतिरिति वदन्तः का त्वमित्यादि पप्रच्छुः ॥ २ ॥ मथ्नन्तीव क्षोभयन्तीव ॥ ३ ॥ कस्यासीत्ययुक्तमुक्तमस्माभिः, यतस्त्वं न केनचिद्भुक्तपूर्वेत्याहुः—नेति द्वाभ्याम् । त्वा त्याममरादिभिरस्पृष्टपूर्वां न जानीम इति न, अपितु जानीम एव ॥ ४ ॥ आस्तामिदं,

सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ॥ दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ तेऽन्योन्यतोऽसुराः[1] पात्रं हरन्तस्त्यक्तसौहृदाः ॥ क्षिपन्तो दस्युधर्माण आयान्तीं ददृशुः स्त्रियम् ॥ १ ॥ अहो रूपमहो धाम अहो अस्या नवं वयः ॥ इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥२॥ का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि ॥ कस्यासि वद वामोरु मथ्नन्तीव मनांसि नः ॥ ३ ॥ न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ॥ नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ॥ ४ ॥ नूनं त्वं विधिना[2] सुभ्रूः प्रेषितासि शरीरिणाम् ॥ सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५ ॥ सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ॥ ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ६ ॥ वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ॥ विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ७ ॥ इत्युपामन्त्रितो[3] दैत्यैर्मायायोषिद्वपुर्हरिः ॥ प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः ॥ विश्वासं पण्डितो जातु कामिनीषु न याति हि ॥ ९ ॥ सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ॥ सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥ १० ॥ ॥ श्रीशुक उवाच ॥ इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ॥ जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ११ ॥ ॥ ॥

त्वद्दर्शनं त्वीश्वरेणैव संपादितमित्याहुः—नूनमिति । सर्वेन्द्रियाणां च मनसश्च प्रीतिं विधातुं सघृणेन प्रेषितासि किम्, वा यदृच्छयागतासि । नैवम्, नूनं प्रेषितैवेत्यर्थः ॥ ५ ॥ ६ ॥ भेदो विग्रहो यथा न भवेत्तथा ॥ ७ ॥ ८ ॥ सङ्गता अनुसृताः ॥ ९ ॥ हे सुरद्विषः ॥ १० ॥ भावेन केनाप्यभिप्रायेण गम्भीरं यथा भवत्येवं जहसुः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

१ 'अन्योन्यमसुराः' इति पाठः । अमृतलोभेन त्यक्तसौहृदा अत एवान्योन्यतः पात्रं हरन्तः क्षिपन्तश्च सन्त इत्यन्वयः । २ 'विधिना' ईश्वरेण । ३ इतीति शुकोक्तिः । ४ स्वसकल्पेनाविष्कृतस्त्रीदेहः । ५ नूनमिति तैस्तत्र किंपदस्य संदेहवाचित्वेनोभयकोटिस्पर्शित्वादुभयत्र संबन्धः ।

ईषत्स्मितेन शोभा यस्यास्तया । मया कृतं साधु वा असाधु यद्यभ्युपेताङ्गीकुरुत तर्हि विभजे ॥ १२ ॥ असुरपुङ्गवा दैत्यश्रेष्ठाः । प्रमाणमियत्तामजानन्तः ॥ १३ ॥ १४ ॥ यथोपजोषं यथाप्रीति । अहतस्य लक्षणम्—'अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा ॥ शस्तं तन्माङ्गलिकेषु तावन्मात्रे न सर्वदा' इति । प्रागग्रेषु कुशेषु विविशुः ॥१५॥ धूपैरामोदितायां सुरभीकृतायां शालायाम् ॥१६॥ अथ तस्यां शालायां हे नरेन्द्र सा कलशपाणिराविवेश । कथंभूता । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इति । करभसदृशौ सुवृत्तावूरू यस्याः सा । उशत् कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन विशालया श्रोण्या अलसा मन्दा गतिर्यस्याः । पाठान्तरे करभसदृशयोरूर्वोर्लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेनालसगतिश्च । मदेन विह्वले अक्षिणी यस्याः ॥ १७ ॥ तां श्रियः सखीं संवीक्ष्य

ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ॥ यद्यभ्युपेत[3] क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥ इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥ १३ ॥ अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ॥ दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥ १४ ॥ यथोपजोषं वासांसि परिधायाहतानि ते ॥ कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः ॥ १५ ॥ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ॥ धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ १६ ॥ तस्यां नरेन्द्र करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ॥ सा कूजती कनकनूपुरसिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश ॥ १७ ॥ तां श्रीसखीं कनककुण्डलचारुकर्णनासाकपोलवदनां परदेवताख्याम् ॥ संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन[4] देवासुरा विगलितस्तनपट्टिकान्ताम् ॥ १८ ॥ असुराणां सुधादानं सर्पाणामिव दुर्नयम् ॥ मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥ १९ ॥ कल्पयित्वा पृथक्पङ्क्तीरुभयेषां जगत्पतिः ॥ तांश्चोपवेशयामास स्वेषु स्वेषु च पङ्क्तिषु ॥ २० ॥ दैत्यान्गृहीतकलशो वञ्चयन्[5]नुपसंचरैः ॥ दूरस्थान्पाययामास जरामृत्युहरां सुधाम् ॥ २१ ॥ ॥ ॥

देवासुराः संमुमुहुः । कथंभूताम् । कनकमये कुण्डले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च ताम् । विगलितः स्रस्तः स्तनपट्टिकाया अन्तो यस्याः ॥ १८ ॥ एवं तान् मोहयित्वा यत्कृतवांस्तदाह त्रिभिः—असुराणां सुधादानं सर्पाणां क्षीरदानमिव दुर्नयमन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभजत् । अयं भावः—दैत्यैर्मदीयं साध्वसाधु वा सर्वमनुमतमेव, अतो मद्भक्तान् देवानेव सुधां पाययिष्यामि, किंच तैर्यथान्यायं विभजस्वेत्युक्तम्, न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यम्, अतस्तेभ्यः सुधां न दद्यामिति ॥ १९ ॥ पङ्क्तीः पृथग्विविक्ताः कल्पयित्वा[6] विधाय । तासु पङ्क्तिषु स्वेषु स्वेषु तत्समजातीयेषु तांश्चासुरानपि प्रतारणार्थमेवोपवेशयामास ॥ २० ॥ उपसंचरैर्बहुमानप्रियवाक्यादिना तानतिक्रम्यातिक्रम्य गमनैः दूरस्थानपि देवान् ॥ २१ ॥ ॥ ॥ ॥ ॥१५॥

१ 'तावत्कालं न सर्वदा' इति पाठः । २ 'करभोरुलसद्दुकूल' इत्येवंरूपे । ३ 'अभ्युपेतं' इति वीर० पाठः । युष्माभिरङ्गीकृतमित्यर्थः । ४ उत्तमस्मितयुक्तेनेक्षणेनोपलक्षिताम् । ५ वञ्चयन् तलस्थं सारभागं भवद्भ्यः सर्वतः श्रेष्ठेभ्यो दास्यामीति प्रतारयन् इति क्रम० । ६ कल्पयित्वेति परस्परमभिमुखीकृत्येति ज्ञेयम् इति क्रम० ।

तया कृतः स्नेहो येषु । स्त्रिया सह विवादस्य जुगुप्सया ॥ २२ ॥ कृतोऽतिप्रणयः स्नेहो यैः । प्रणयापायेन कातरा भीताः । एते तावत्कृपणाः पूर्वं किंचि-
त्पिबन्तु, यूयं तु धीराः क्षणं प्रतीक्षध्वमित्यादिबहुमानेनाबद्धा नियन्त्रिताः समयपालनादिभिः षड्भिरेतैः कारणैरप्रियं किंचिदपि नोचुः, किंतु तूष्णीमासन्
॥ २३ ॥ देवपङ्क्तौ चन्द्रार्कयोर्मध्ये प्रविष्टः सोमममृतमपिबत् ॥ २४ ॥ हरिस्तस्य शिरो जहार । अप्लावितोऽसंस्पृष्टः ॥ २५ ॥ ग्रहं सूर्यादिवद्ग्रहत्वाधिका-
रिणम् ॥ २६ ॥ २७ ॥ हरिभक्तानामेवोद्यमः फलति, नान्येषामित्येवमाख्यानतात्पर्यमाह—एवमिति । समा देशादयो येषाम् । हेतुर्मन्दराद्रिः । अर्थः
समुद्रे क्षिप्तं वीरुदादि । विविधः कल्पः फलं केषांचिज्जातं केषांचिन्नेति वैचित्र्यं येषां ते । फलवैषम्यवन्तो बभूवुरित्यर्थः । तदेवाह—तत्र तेषु यस्य

ते पालयन्तः समयं[1] असुराः स्वकृतं नृप ॥ तूष्णीमासन्कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ २२ ॥ तस्यां कृताति-
प्रणयाः प्रणयापायकातराः ॥ बहुमानेन चाबद्धा नोचुः किंचन विप्रियम् ॥ २३ ॥ देवलिङ्गप्रतिच्छन्नः स्वर्भा-
नुर्देवसंसदि ॥ प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ २४ ॥ चक्रेण क्षुरधारेण जहार पिबतः शिरः ॥
हरिस्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत्[2] ॥ २५ ॥ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ॥ यस्तु पर्वणि
चन्द्रार्कावभिधावति वैरधीः ॥ २६ ॥ पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ॥ पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे
हरिः ॥ २७ ॥ एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि[3] फले विकल्पाः ॥ तत्रामृतं सुरगणाः फलम-
ञ्जसाऽऽपुर्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ २८ ॥ यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदस-
त्पृथक्त्वात् ॥ तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत् ॥ २९ ॥ ॥ इति
श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अमृतमथने नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ छ ॥

पादपङ्कजरजःश्रयणाद्देवा अमृतं फलमापुः स एव सेव्य इत्यर्थः । यत्तदोर्नित्यसंबन्धात् ॥ २८ ॥ एतदेवोपपादयति—यदिति । असुः प्राणः । वसु धनम् ।
प्राणादिभिर्देहात्मजादिषु नृभिर्यद्युज्यते प्रयुज्यते । देहाद्यर्थं यत्क्रियत इत्यर्थः, तदसद्व्यर्थं भवति । कुतः । पृथक्त्वाद्भेदाश्रयत्वात् । शाखानिषेचनवत् । तैरेव
प्राणादिभिरीश्वरोद्देशेन यत्क्रियते तत्तु सत् महाफलं भवति । अपृथक्त्वादीश्वरस्य सर्वत्रानुगतत्वात् । तत्र दृष्टान्तः—यत्तरोर्मूलनिषेचनं तद्यथा सर्वस्य स्कन्ध-
शाखादेरपि भवतीति । यद्वा ल्यब्लोपे पञ्चम्यौ । पृथक्त्वं पर्यालोच्य भेददृष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् । अपृथक्त्वं पर्यालोच्येश्वरदृष्ट्या तैरेव तेष्वेव च
यत्क्रियते तत्सद्भवतीति । शेषं समानम् ॥ २९ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥

१ समयं प्रतिज्ञाम् । २ कबन्धोऽपतत् कण्ठाधः सुधाया अप्रवेशात् इति चक्र० । ३ 'विफलैर्विकल्पाः' विफलैः विनष्टफलैः विकल्पाः विकल्पयोग्याः इति विज० । ४ मूलात् शाखा भिन्ना इति बुद्ध्या यथा मूलं विहाय शाखा निषिच्यते इति चक्र० ।

दशमे मत्सरादैत्यैरारब्धे तु मृधे सुरैः ॥ दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरिः ॥ १ ॥ तदेवममृतावाप्तिर्नाभक्तानामितीरितम् ॥ भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥ २ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ रणः संग्रामः । उदन्वतः समुद्रस्य रोधसि तीरे बभूव ॥ ५ ॥ अन्योन्यं समासाद्य निजघ्नुः ॥ ६ ॥ ७ ॥ ८ ॥

॥ श्रीशुक उवाच ॥ इति दानवदैतेया नाविन्दन्नमृतं नृप ॥ युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ॥ १ ॥ साधयित्वामृतं राजन् पाययित्वा स्वकान्सुरान् ॥ पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनन्दनाः ॥ अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥ ततः सुरगणाः सर्वे सुधया पीतयैधिताः ॥ प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ॥ ४ ॥ तत्र दैवासुरो नाम रणः परमदारुणः ॥ रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ॥ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥६॥ शङ्खतूर्यमृदङ्गानां भेरीडमरिणां महान् ॥ हस्त्यश्वरथपत्तीनां नदतां निःस्वनोऽभवत् ॥७॥ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ॥ हया हयैरिभाश्चेभैः समसज्जन्त संयुगे ॥ ८ ॥ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ॥ केचिद्गौरमृगैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥९॥ गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः ॥ शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥ शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः ॥ बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥ अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ॥ सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ॥ महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥१४॥ देवदानववीराणां ध्वजिन्यौ पाण्डुनन्दन ॥ रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥ वैरोचनो बलिः संख्ये सोऽसुराणां चमूपतिः ॥ यानं वैहायसं नाम कामगं मयनिर्मितम् ॥ १६ ॥ सर्वसांग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ॥ अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥ ॥ ॥ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ चित्रध्वजपटादिभिश्च वीराणां मालाभिश्च राजिभिर्देवदानववीराणां ध्वजिन्यौ यादसां मालाभिः सागराविव रेजतुरिति त्रयाणामन्वयः । यादोभिरिति वा । सितैरमलैरातपत्रैश्च । बार्हैश्चामरैश्च व्यजनैश्च ॥ १३ ॥ वातेनोद्धूतैरुत्तरीयैरुष्णीषैश्च सूर्यरश्मिभिः सुतरां स्फुरद्भिः ॥ १४ ॥ १५ ॥ असुराणां या चमूस्तस्याः पतिः स बलिर्यानमाश्रितः ॥ १६ ॥ १७ ॥ ॥ ॥ ॥

१ यत्ताः कृतयत्नाः, 'दत्ताश्च' इति पाठः । २ ययौ अन्तर्दधे । ३ 'परा सिद्धिं' इति पाठः । ४ गोभिर्वृषैश्च । अत्र गोबलीवर्दन्यायः प्रदर्शितः । ५ अरुणैरारण्यपशुविशेषैः । ६ यादसामिति षष्ठी तृतीयार्थे । ७ बार्हचामरैः पिच्छविरचितचामरैरिति वा ।

उदये उदयगिरिशिखरे स्थितश्चन्द्र इव रेजे इति त्रयाणामन्वयः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ स्रवन्ति प्रस्रवणानि यस्मिन्निति
मदधारासादृश्यम् ॥ २५ ॥ नाना वाहनादीनि येषां ते देवा असुराश्च मिथो युयुधुः ॥ २६ ॥ २७ ॥ द्वन्द्वान्येवाह—युयोधेति सप्तभिः । अस्यत आस्यत्,

आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये ॥ १८ ॥ तस्यासन्सर्वतो यानै-
र्यूथानां पतयोऽसुराः ॥ नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरि-
ल्वलः ॥ शकुनिर्भूतसंतापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥ हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः ॥ तारकश्च-
क्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः ॥२१॥ अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ॥ अन्ये पौलोमकालेया निवा-
तकवचादयः ॥२२॥ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः ॥ सर्व एते रणमुखे बहुशो निर्जितामराः ॥२३॥
सिंहनादान्विमुञ्चन्तः शङ्खान्दध्मुर्महारवान् ॥ दृष्ट्वा सपत्नानुत्सिक्तान्बलभित्कुपितो भृशम् ॥२४॥ ऐरावतं दिक्करि-
णमारूढः शुशुभे स्वराट् ॥ यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५॥ तस्यासन्सर्वतो देवा नानावाहध्वजायुधाः ॥
लोकपालाः सह गणैर्वाय्वग्निवरुणादयः ॥२६॥ तेऽन्योन्यमभिसंसृत्य क्षिपन्तो मर्मभिर्मिथः ॥ आह्वयन्तो विशन्तोऽग्रे
युयुधुर्द्वन्द्वयोधिनः ॥२७॥ युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत ॥ वरुणो हेतिनाऽयुध्यन्मित्रो राजन्प्रहेतिना ॥२८॥
यमस्तु कालनाभेन विश्वकर्मा मयेन वै ॥ शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥२९॥ अपराजितेन नमुचिरश्विनौ
वृषपर्वणा ॥ सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च ॥३०॥ राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ॥ निशुम्भ-
शुम्भयोर्देवी भद्रकाली तरस्विनी ॥३१॥ वृषाकपिस्तु जम्भेन महिषेण विभावसुः ॥ इल्वलः सह वातापिर्ब्रह्मपुत्रैररिन्दम
॥३२॥ कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ॥ बृहस्पतिश्चोशनसा नरकेण शनैश्चरः ॥३३॥ मरुतो निवातकवचैः
कालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४॥ त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य
च युध्यमानाः ॥ अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥ भुशुण्डिभिश्चक्रगदर्ष्टि-
पट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि ॥ निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिन्दिपालैश्च शिरांसि चिच्छिदुः ॥३६॥

अयुध्यतेत्यर्थः ॥२८॥२९॥ सूर्यो देव एक एव शतेन बलिसुतैः बाणो ज्येष्ठो येषां तैः ॥३०॥ निशुम्भशुम्भाभ्यां देवी ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

१ सोमस्य अमृतस्य । २ उत्सिक्तान् बलगर्वितान् । ३ 'आरूढो जयति' इति, 'आरूढो वियति स्थितः' इति च पाठौ । ४ 'नामभिर्मिथः' इति पाठः । ५ ब्रह्मपुत्रैर्वसिष्ठाद्यैः इति चक्र० ।

आरोहन्तीत्यारोहास्तैः सहिता अन्ये च वाहाः । पूर्वं तु केवलं गजादय उक्ताः । कथंभूताः । निकृत्ता बाह्वादयो येषाम् । छिन्नानि ध्वजादीनि येषां ते ॥३७॥ तेषां देवादीनां पदाघातैः रथाङ्गैश्च चूर्णितादायोधनाद्रणभूमेरुत्थितो रेणुर्दिशः खं द्युमणिं च सूर्यं छादयंस्तदेव खादेर्न्यवर्तत । कथंभूतात् । असृक्स्रुतिभिः रक्तक्षरणैः परिप्लुतात्सिक्तात् । यद्वा परिप्लवनाद्धेतोर्न्यवर्तत । भावे क्तः । रक्तधाराणां तत्पर्यन्तमुच्छलनादित्यर्थः । प्रथमान्तपाठे रेणोर्विशेषणम् ॥३८॥ शिरोभिर्महाभुजैश्च करभसदृशैरूरुभिश्च सा रणभूः प्रकर्षेणास्तृता सती बभौ । कथंभूतैः शिरोभिः । उद्धूतान्युत्पतितानि किरीटानि कुण्डलानि

गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ॥ निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥३७॥ तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा ॥ रेणुर्दिशः खं द्युमणिं च छादयन्न्यवर्ततासृक्स्रुतिभिः परिप्लुतात् ॥३८॥ शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ॥ महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूः करभोरुभिर्बभौ ॥३९॥ कबन्धास्तत्र चोत्पेतुः पतितस्वशिरोक्षिभिः ॥ उद्यतायुधदोर्दण्डैराधावन्तो भटान्मृधे ॥४०॥ बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ॥ चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥४१॥ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ॥ चिच्छेद निशितैर्भल्लैरसंप्राप्तान्हसन्निव ॥ ४२ ॥ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ॥ तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥४३॥ ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ॥४४॥ ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः ॥ ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥४५॥ ततो निपेतुस्तरवो दह्यमाना दवाग्निना ॥ शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम् ॥ ४६ ॥ महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजान् ॥४७॥ यातुधान्यश्च शतशः शूलहस्ता विवाससः ॥ छिन्धिभिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो ॥४८॥ ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ॥ अङ्गारान्मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥ ॥ ॥

च येभ्यस्तैः । संरम्भयुक्ता दृशो येषु तैः । परिदष्टा दच्छदा ओष्ठा येषु तैः ॥ ३९ ॥ पतितानि यानि स्वशिरांसि तत्रत्यैरक्षिभिस्तैः पश्यन्त इत्यर्थः । उद्यतान्यायुधानि यैस्तैर्दोर्दण्डैर्युक्ताः ॥ ४० ॥ वाहानैरावतपादरक्षकान् । आरोहं गजयन्तारमार्च्छयद्विव्याध ॥ ४१ ॥ ४२ ॥ दुर्मर्षोऽसहनो बलिः ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ टङ्कवत्तीक्ष्णाग्रैः शिखरैः सहिताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ स्तनयित्नवश्चाङ्गारान्मुमुचुरित्यनुषङ्गः ॥ ४९ ॥ ॥ ॥ ॥

१ 'परिप्लुतः' इत्येवंरूपे । २ 'पश्यन्तः' इति पाठः । ३ हरिः इन्द्रः । ४ ऋष्टयः ऋष्टीः ५ विटङ्कशिखराः उत्तुङ्गशृङ्गा विस्तृतप्रान्ता वा । ६ महोरगा अजगराः । ७ दंदशूका दंशनशीलाः सर्पाः ।

अघाक् आर्षः । अधाक्षीदित्यर्थः ॥ ५० ॥ उद्धूतैस्तरङ्गैरावर्तैश्च भीषणः ॥ ५१ ॥ एवमन्यैश्च दैत्यैः सृज्यमानासु ॥ ५२ ॥ यत्र यदा । तत्र तदा । तैर्ध्यातः सन् ॥ ५३ ॥ अष्टावायुधयुक्ता बाहवो यस्य । श्रीश्च कौस्तुभश्च अनर्घ्यं किरीटं च कुण्डले च उल्लसन्ति श्रीकौस्तुभादीनि यस्मिन् ॥ ५४ ॥ असुराणां कूटकर्म मन्त्रादिप्रयोगस्तस्माज्जाताः । महिना महिम्ना । हरेः स्मृतिरेव सर्वासां विपदां मोक्षणरूपा किमुत हरेः प्रवेश इत्यर्थः ॥ ५५ ॥ इभारिवाहः सिंहवाहः । अहिनोच्चिक्षेप । लीलयैव तद्गृहीत्वा अहनदहन् । हे नृप ॥ ५६ ॥ यस्य चक्रेण कृत्तशिरसौ पेततुस्तं तथाभूतमप्याहत्य संघस्य अण्डजेन्द्रं गरुडमहनत्,

सृष्टो दैत्येन सुमहान्वह्निः श्वसनसारथिः[1] ॥ सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥ ततः समुद्र उद्वेलैः[2] सर्वतः प्रत्यदृश्यत ॥ प्रचण्डवातैरुद्धूततरङ्गावर्तभीषणः ॥ ५१ ॥ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥ सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥ न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप ॥ ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः ॥ ५३ ॥ ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः ॥ ५४ ॥ तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः ॥ स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥ ५५ ॥ दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य[3] शूलमहिनोदथ कालनेमिः ॥ तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ॥ आहत्य तिग्मगदयाऽहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः ॥ ५७ ॥ ॥ इति श्रीमद्भागवते महापु० अष्टमस्कन्धे देवासुरसंग्रामे दशमोऽध्यायः ॥ १० ॥

॥ श्रीशुक उवाच ॥ अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयानुकम्पया ॥ जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसंहताः पुरा ॥ १ ॥ वैरोचनाय संरब्धो भगवान्पाकशासनः ॥ उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितम् ॥ मनस्विनं सुसंपन्नं विचरन्तं महामृधे ॥ ३ ॥ नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसि ॥ जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम् ॥ ४ ॥ ॥ ॥ ॥

तं हन्तुं गदामुन्निन्य इत्यर्थः । आद्यो हरिः ॥ ५७ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशे तु देवेषु दैत्यघातिषु नारदः ॥ देवानवारयच्छुक्रो मृतान्दैत्यानजीवयत् ॥ १ ॥ १ ॥ उदयच्छदुन्निन्ये ॥ २ ॥ ३ ॥ निबद्धान्यक्षीणि येषां तान्बालाञ्जित्वा नटः कपटवृत्तिर्यथा तेषां धनं हरति तथा हे मूढ, मायेशानस्माञ्जेतुमिच्छसि ॥ ४ ॥ ॥ ॥ ॥

1 श्वसनसारथिर्वायुसनाथः । 2 उद्वेलो मर्यादातिगः । 3 आविध्य कम्पयित्वा ।

मत्प्रभावं श्रुत्वित्याह—आरुरुक्षन्त्यारोढुमिच्छन्ति । ये चोत्सिसृप्सन्त्युल्लङ्घयितुमिच्छन्ति । मोक्षमिच्छन्तीत्यर्थः । अधो विधुनोमि पातयामि ॥ ५ ॥ ६ ॥ ७ ॥ कालरशनं कालयन्त्रितम् । अतो न हृष्यन्ति । तत्र एवं विवेके यूयमपण्डिता अनिपुणाः ॥ ८ ॥ तत्र कीर्तिजयादावात्मानं साधनं मन्यमानानां वो गिरो न गृह्णीमः ।

आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् ॥ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्च पदादधः ॥ ५ ॥ सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ॥ शिरो हरिष्ये मन्दात्मन्घटस्व ज्ञातिभिः सह ॥ ६ ॥ ॥ बलिरुवाच ॥ संग्रामे वर्तमानानां कालचोदितकर्मणाम् ॥ कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥ तदिदं कालरशनं जनाः पश्यन्ति सूरयः ॥ न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥८॥ न वयं मन्यमानानामात्मानं तत्र साधनम् ॥ गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥९॥ ॥ श्रीशुक उवाच ॥ इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥ एवं निराकृतो देवो वैरिणा तथ्यवादिना ॥ नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥ प्राहरत्कुलिशं तस्मा अमोघं परमर्दनः ॥ सयानो न्यपतद्भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥ सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ॥ अभ्ययात्सौहृदं सख्युर्हतस्यापि समाचरन् ॥ १३ ॥ स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ॥ जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥ गदाप्रहारव्यथितो भृशं विह्वलितो गजः ॥ जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः ॥ आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥ तस्य तत्पूजयन्कर्म यन्तुर्दानवसत्तमः ॥ शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥ सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः ॥ इन्द्रो जम्भस्य संक्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥ जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ॥ नमुचिश्च बलः पाकस्तत्रापेतुस्त्वरान्विताः ॥ १९ ॥ वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य मर्मसु ॥ शरैरवाकिरन्मेघा धाराभिरिव पर्वतम् ॥ २० ॥ हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः ॥ तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥ ॥

मर्मसु ताडनं याभिस्ताः ॥ ९ ॥ विभुमिन्द्रम् । वीरो बलिः ॥१०॥ तोत्रमङ्कुशस्तेनाहत इव ॥११॥ सयानो विमानसहितः ॥१२॥१३॥१४॥१५॥१६॥१७॥१८॥ नमुचिर्बलः पाकश्चेति त्रय आजग्मुः ॥ १९ ॥ २० ॥ त्रयाणां पृथग्विक्रमानाह—हरीनिति त्रिभिः । हर्यश्वस्येन्द्रस्य । तावद्भिर्दशभिः शतैः ॥ २१ ॥ ॥

१ पूर्वस्माद्स्वातलरूपात्पदादधः पातयामि इति चक्र० । २ जयात्कीर्तिरजयान्मृत्युरित्यर्थः । ३ इदं कीर्त्यादिकम् । 'तमिमं' इति पाठः । ४ आकर्णपूर्णैः कर्णपर्यन्तं पूर्णतयाकृष्टैः । ५ जत्रौ कण्ठस्य मूलदेशे । ६ हरिभिरश्वैः । हरिर्दशशतैः इति विज० पाठः । ७ यन्तुर्मातलेः । 'शत्रो' इति वीर० पाठः । दानवसत्तमो जम्भः । ८ तं मातलिम् ।

॥ २२ ॥ आहत्येन्द्रं विद्ध्वा ॥ २३ ॥ प्रावृट्कालीनं सूर्यम् ॥ २४ ॥ वणिक्पथा वणिजः । भिन्ना नौर्येषां ते । भिन्ननाव इत्यर्थः ॥ २५ ॥ तुराषाडिन्द्रः । अश्वादिसहितो विनिर्गतः । अग्रणीः सारथिः ॥ २६ ॥ २७ ॥ २८ ॥ शोकामर्षाभ्यां युक्तया रुषा क्रोधेनान्वित इन्द्रं हन्तुं परमोद्योगं चकार ॥ २९ ॥

शताभ्यां मातलिं पाको रथं सावयवं पृथक् ॥ सकृत्सन्धानमोक्षेण तदद्भुतमभूद्रणे ॥ २२ ॥ नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ॥ आहत्य व्यनदत्संख्ये सतोय इव तोयदः ॥ २३ ॥ सर्वतः शरकूटेन शक्रं सरथसारथिम् ॥ छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥ अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः ॥ अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो यथाऽर्णवे ॥ २५ ॥ ततस्तुराषाडिषुबद्धपञ्जराद्विनिर्गतः साश्वरथध्वजाग्रणीः ॥ बभौ दिशः खं पृथिवीं च रोचयन्स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥ निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे ॥ उदयच्छद्रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥ स तेनैवाष्टधारेण शिरसी बलपाकयोः ॥ ज्ञातीनां पश्यतां राजञ्जहार जनयन्भयम् ॥ २८ ॥ नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ॥ जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥ अश्मसारमयं शूलं घण्टावद्धेमभूषणम् ॥ प्रगृह्याभ्यद्रवत्क्रुद्धो हतोऽसीति वितर्जयन् ॥ प्राहिणोद्देवराजाय निनदन्मृगराडिव ॥ ३० ॥ तदापतद्गगनतले महाजवं विचिच्छिदे हरिरिषुभिः सहस्रधा ॥ तमाहनन्नृप कुलिशेन कन्धरे रुषान्वितस्त्रिदशपतिः शिरो हरन् ॥ ३१ ॥ न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ॥ तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा ॥३२॥ तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ॥ किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३३ ॥ येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ॥ कृतो निविशतां भारैः पतत्रैः पततां भुवि ॥३४॥ तपःसारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ॥ अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३५ ॥ सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ॥ नाहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम् ॥ ३६ ॥ इति शक्रं विषीदन्तमाह वागशरीरिणी ॥ नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३७ ॥

घण्टावद्घण्टाभिर्युक्तम् ॥ ३० ॥ ३१ ॥ अतिवीर्यं वृत्रमभिनदिति तथा ॥ ३२ ॥ ३३ ॥ तथा पतत्रैः पक्षैः ॥ ३४ ॥ सारमयं वीर्याधिकं त्वाष्ट्रं तप एव वृत्रः स येन वज्रेण मया विपाटितः ॥ ३५ ॥ दण्डं लगुडतुल्यं कुलिशम् । ब्रह्मतेजो दधीचेः सामर्थ्यम् ॥ ३६ ॥ ३७ ॥ ॥ ॥

---

१ शिरो हरन्सन्कुलिशेन कन्धरे आहनदित्यन्वयः। २ भूते क्विप्। ३ विमोहनार्थं जातमित्यर्थः, 'लोकं विमोहयत्' इति पाठः। ४ पतत्रैः पततामुत्पततां भारैर्भुवि निविशमानानाम् इति क्रम०। ५ नाददे नादासे। ६ अकारणं निष्प्रयोजनम्।

आर्द्रशुष्काभ्यां मृत्युर्नैवेति ॥ ३८ ॥ ३९ ॥ उभयात्मकत्वमेवाह—न शुष्केण न चार्द्रेण फेनेन । तथा च श्रुतिः—'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयत्' इति ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अनुचरैरनुगीयमाना इत्यर्थः । उपगीयमानैरनुचरैः सहेति वा ॥ ४५ ॥ ४६ ॥ अविनष्टा अवयवा येषाम् । विद्यमाना शिरोधरा येषां तान् ॥ ४७ ॥ प्रत्यापन्नानि पुनः प्राप्तानीन्द्रियाणि स्मृतिश्च येन सः ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे

मयाऽस्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ॥ अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन् रिपोः ॥ ३८ ॥ तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः ॥ ध्यायन्फेनमथापश्यदुपायमुभयात्मकम् ॥ ३९ ॥ न शुष्केण न चार्द्रेण जहार नमुचेः शिरः ॥ तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुम् ॥ ४० ॥ गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ॥ देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४१ ॥ अन्येऽप्येवं प्रतिद्वन्द्वान्वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान्केसरिणो यथा ॥ ४२ ॥ ब्रह्मणा प्रेषितो देवान्देवर्षिर्नारदो नृप ॥ वारयामास विबुधान् दृष्ट्वा दानवसंक्षयम् ॥ ४३ ॥ ॥ नारद उवाच ॥ भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ॥ श्रिया समेधिताः सर्व उपारमत विग्रहात् ॥ ४४ ॥ ॥ श्रीशुक उवाच ॥ संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ॥ उपगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४५ ॥ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते ॥ बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ॥ ४६ ॥ तत्राविनष्टावयवान्विद्यमानशिरोधरान् ॥ उशना जीवयामास संजीविन्या स्वविद्यया ॥ ४७ ॥ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ॥ पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे देवासुरसंग्रामे एकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीबादरायणिरुवाच ॥ वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ॥ मोहयित्वा सुरगणान्हरिः सोममपाययत् ॥ १ ॥ वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ॥ सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥ सभाजितो भगवता सादरं सोमया भवः ॥ सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन्हरिम् ॥ ३ ॥ ॥ ॥

भावार्थदीपिकायां टीकायां एकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् ॥ भवं संमोहयामास हरिः पुनरसान्त्वयत् ॥ १ ॥ असुह्यन्नसुरा विष्णुमायया न तदद्भुतम् ॥ इति वक्तुं महादेवमोहोऽयमुपवर्ण्यते ॥ २ ॥ हरिः सोममपाययदितीदं निशम्य स यत्रास्ते तत्र तद्रूपं द्रष्टुं ययावित्युत्तरेणान्वयः ॥ १ ॥ २ ॥ सोमया उमया सह ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

१ ते उपाय इति पदच्छेदः। वे त्वया । २ सरम्भं द्वेपोद्रेकम् । ३ उपगीयमाना अनुचरैरिति च्छेदः। सन्धिरार्षः इति चक्र० । 'गीयमाना अनुचरैः' इत्यपि कचित्पाठः । ४ सोमयेति पादपूरणार्थ आर्षः सन्धिः । स उमयेति च्छेदः । उमया सह सभाजितः स भव इत्यन्वयः ।

'त्वयि किंचित्र चाश्चर्यं वयं त्वाश्चर्यमानसाः ॥ इति वक्ष्यन्महादेवस्तुष्टाव हरिमष्टभिः' इति ॥ त्वयि महामायाविनि परमेश्वरे नहि किंचिदघटितमिव, वयं तु परमकौतूहलेन द्रष्टुमागता इति वहुधा संवोधयन्स्तौति । हे देवदेव । कुतोऽहं देव इत्यत आह—हे जगद्व्यापिन् । तत्कुतः । हे जगन्मय । तर्हि किं प्रधानम्, न हे जगदीश । तच कुतस्तत्राह—सर्वेषामपि त्वं हेतुः अत ईश्वरः । आत्मत्वाच न जडं प्रधानं त्वमित्यर्थः ॥ ४ ॥ ननु जगन्मयत्वोक्त्या जगत उत्पत्त्यादिनाऽसत्यत्वेन जाड्येन च ममापि किं तथात्वं ब्रूषे—नहि नहीत्याह—आद्यन्तौ मध्यं चास्य जगतो यतो ब्रह्मणो भवन्ति । यस्य चाव्ययस्यैता-न्याद्यन्तमध्यानि न सन्ति । यच ब्रह्म, इदंकारास्पदं दृश्यम्, अहंकारास्पदं द्रष्टृ च, वहिर्भोग्यमन्यद्भोक्तृ च, तत्सत्यं च चिद्रूपं च ब्रह्मैव भवान् । अतो न तव विकारादिशङ्केत्यर्थः ॥ ५ ॥ तवैवंभूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह—तवैवेति । उभयत इहामुत्र च सङ्गं त्यक्त्वा ॥ ६ ॥ ननु ब्रह्मैव चेदहं तर्ह्यस-ङ्गोदासीनस्य मम चरणाम्भोजोपासनया किं तेषां तत्राह—त्वमिति । ब्रह्मत्वेऽपि त्वं नात्यन्तमुदासीनः किंतु विश्वस्य प्रपञ्चस्योदयादीनां हेतुः—तदुपाधी-नामात्मनां जीवानामीश्वरश्च तत्तत्फलदाता । तर्हि किं राजादिवत्कयाप्यपेक्षया सेवकेभ्यः फलं ददामि, नहि नहि, अनपेक्ष एव त्वम् । तर्हि किमीश्वरत्वेन

॥ श्रीमहादेव उवाच ॥ देवदेव जगद्व्यापिन् जगदीश जगन्मय॥ सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः॥४॥आद्यन्तावस्य यन्मध्यमिदमन्यदहं वहिः॥ यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान्॥५॥ तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः॥ विसृज्योभयतः सङ्गं मुनयः समुपासते ॥६॥ त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत्॥ विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ७ ॥ एकस्त्वमेव सदसद्द्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः ॥ अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणव्यतिकरो निरुपाधिकस्य ॥८॥ त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम् ॥ अन्येऽवयन्ति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥९॥

तत्राह—तैरात्मभिस्तत्फलदानार्थमपेक्ष्यत इति तदपेक्षस्तस्य भावस्तदपेक्षता तया। अनपेक्षत्वमेव दर्शयितुं तदीयं ब्रह्मत्वं विशिनष्टि—पूर्णममृतं च सुखरूपम् । विषयसुखवैलक्षण्यार्थमाह—अविकारं नित्यमानन्दमात्रं च। कुतः। विशोकम् । तत्कुतः। विगुणम्। किंच अनन्यत्। न विद्यतेऽन्यद्यस्मात्, ब्रह्मव्यतिरिक्ताभावा-दपि निरपेक्षस्त्वमित्यर्थः । तर्हि सर्वात्मकत्वे तत्तद्विकारप्रसङ्गो दुर्वारस्तत्राह—अन्यत्सर्वतो व्यतिरिक्तं च, कारणत्वात् । नह्येवंभूतसुखात्मकब्रह्मस्वरूपस्य तवान्यापेक्षास्ति । अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमित्यर्थः ॥ ७ ॥ अन्यत्वमनन्यत्वं चैकस्य कुत इत्याशङ्क्य दृष्टान्तेनोपपादयति—सदस-त्कारणरूपं द्वयमद्वयं च परमकारणं त्वमेवैकः । कृतं कुण्डलादिरूपं द्वयमकृतं च केवलमद्वयं स्वर्णं यथैकमेव तद्वदेवेह त्वयि वस्तुतो भेदो नास्ति । कथं तर्हि भेदप्रतीतिस्तत्राह—अज्ञानत इति । कुतः। यस्मान्निरुपाधिकस्यैव तवायं गुणैर्व्यतिकरो भेदो न स्वतः ॥ ८ ॥ अत एव त्वां वहुधा वर्णयन्ति तत्त्वतस्तु केऽपि न जानन्तीत्याह द्वाभ्याम् । त्वां ब्रह्म वेदान्तिनोऽवयन्ति मन्यन्ते । त्वामेव धर्मं मीमांसका मन्यन्ते । प्रकृतिपुरुषयोः परं पुमांसं सांख्याः । विमलो-त्कर्षणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशाना अनुग्रहा चेत्येवं नवशक्तियुतं परं पाञ्चरात्राः । महापुरुषं पातञ्जलाः ॥ ९ ॥ ॥ ॥

१ चित् ज्ञानं—'सत्यं ज्ञानमनन्तम्' इति श्रुतिप्रोक्तम् । २ 'कर्म चैके' इति पाठः ।

परायुर्ब्रह्मा । सत्त्वसर्गाः सत्त्वगुणेन स्रष्टा अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानन्ति, किं पुनस्त्वाम् । हे ईश, अभद्रं राजसं तामसं च वृत्तमुत्पत्तिर्येषां ते न जानन्तीति किमु वक्तव्यम् ॥ १० ॥ किंतु त्वं तत्सर्वं जानासीत्याह—स त्वं सर्वमवरुन्त्से व्याप्नोषि जानासि । किं तत्सर्वम् । समीहितं स्वकृतमदः स्थितिजन्मनाशममुष्य जगतो जन्मादि भूतानामीहितं च जगतो भवबन्धमोक्षौ च । व्याप्तौ दृष्टान्तः—चराचराख्यं देहजातं खं च यथा वायुराविशति तथा । कथमवरुन्त्से । तदात्मकतया तस्य सर्वस्यात्मतयेत्यर्थः । आत्मत्वे हेतुः—अवगमो ज्ञानरूप इति ॥११॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति—अवतारा इति द्वाभ्याम् ॥ १२ ॥ १३ ॥ १४ ॥ सुरकार्याणि योषिद्वेषेण भविष्यन्तीति पश्यता । अयं भावः—अवश्यं तावदुन्मत्तान्दैत्यान्वञ्चयित्वा

नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः ॥ यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ १० ॥ स त्वं समीहितमदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबन्धमोक्षौ ॥ वायुर्यथाविशति खं च चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुन्त्से ॥ ११ ॥ अवतारा मया दृष्टा रममाणस्य ते गुणैः ॥ सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम् ॥१२॥ येन संमोहिता दैत्याः पायिताश्चामृतं सुराः ॥ तद्दिदृक्षव आयाताः परं कौतूहलं हि नः ॥१३॥ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितो विष्णुर्भगवान् शूलपाणिना ॥ प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥१४॥ ॥ श्रीभगवानुवाच ॥ कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ॥ पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १५ ॥ तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ॥ कामिनां बहु मन्तव्यं संकल्पप्रभवोदयम् ॥ १६ ॥ ॥ श्रीशुकउवाच ॥ इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥१७॥ ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥ १८ ॥ आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदे पदे ॥ प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥१९॥

देवेभ्योऽमृतं देयम्, न चैवं वैषम्य रूपान्तरेण कर्तुमुचितम्, अतो वञ्चनमोहनादिसारं कामिनीरूपं मया धृतमिति ॥ १५ ॥ तद्रूपं दर्शयिष्यामि । संकल्पप्रभवैः कामस्तस्योदयो यस्मात् ॥ १६ ॥ १७ ॥ विचित्राणि पुष्पाण्यरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् । लसद्दुकूलेन पर्यस्ते परिवृत्ते नितम्बे मेखला यस्यास्ताम् ॥ १८ ॥ उत्पतत्पतत्कन्दुकलीलावशेन ये आवर्तनोद्वर्तने नमनोन्नमने ताभ्यां कम्पितयोः स्तनयोः प्रकृष्टहाराणां चोरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव । चलत्पदमेव प्रवालवत्कोमलं ततस्ततो नयन्तीम् ॥ १९ ॥ ॥ ॥ ॥



१ जानासि चेत्यर्थः । २ कौतूहलाय तद्वारवञ्चनाय । ३ 'मया धृतः' इति वीर० पाठः । धृत उपात्तः । ४ उपासनया वरयोषित्प्रदमित्यर्थः इति क्रम० । ५ पर्यस्ते परिसर्वतोभावेन अस्ते अदर्शनं प्राप्ते इति चक्र० ।

दिक्षु भ्रमतः कन्दुकस्य चापलैश्चाञ्चल्यैर्भृशं प्रोद्विग्नतारे आयते लोले चञ्चले लोचने यस्याः । स्वकर्णाभ्यां विभ्राजिते ये कुण्डले ताभ्यामुल्लसन्तौ कपोलौ ताभ्यां नीलालकैश्च मण्डितमाननं यस्याः ॥ २० ॥ संनह्यन्तीं वध्नन्तीम् । जगद्विमोहयन्तीम् ॥ २१ ॥ तां वीक्ष्य देवः श्रीरुद्र आत्मानमन्तिके स्थितामुमां स्वगणांश्च न वेद । कथंभूतः । इति एवंभूतया कन्दुकलीलया या ईषद्व्रीडा तयाऽस्फुटं स्मितं तेन सह विसृष्टो यः कटाक्षस्तेन मुष्टो वञ्चितः, अत एव स्वयं

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितकुण्डलोल्लसत्कपोलनीलालकम-
ण्डिताननाम् ॥ २० ॥ श्लथद्दुकूलं कबरीं च विच्युतां संनह्यतीं वामकरेण वल्गुना ॥ विनिघ्नतीमन्यकरेण कन्दुकं
विमोहयन्तीं जगदात्ममायया[1] ॥ २१ ॥ तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ॥
स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २२ ॥ तस्याः कराग्रात्स तु कन्दुको यदा
गतो विदूरं तमनुव्रजत्स्त्रियाः ॥ वासः ससूत्रं लघु मारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः ॥२३॥ एवं तां रुचिरापाङ्गीं
दर्शनीयां मनोरमाम् ॥ दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां[2] भवः किल ॥ २४ ॥ तयापहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥
भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥२५॥ सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम् ॥ निलीयमाना
वृक्षेषु हसन्ती नान्वतिष्ठत[3] ॥२६॥ तामन्वगच्छद्भगवान्भवः प्रमुषितेन्द्रियः ॥ कामस्य च वशं नीतः करेणुमिव
यूथपः ॥ २७॥ सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ॥ केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २८ ॥
सोपगूढा भगवता करिणा करिणी यथा ॥ इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २९ ॥ आत्मानं मोचयित्वाऽङ्ग
सुरर्षभभुजान्तरात् ॥ प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता ॥ ३० ॥ तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ॥
प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः ॥३१॥ तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः ॥ शुष्मिणो यूथपस्येव वासि-
तामनुधावतः ॥३२॥ यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः ॥ तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते ॥ ३३ ॥

यत् स्त्रियाः प्रेक्षणं तथा च प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य ॥ २२ ॥ तं कन्दुकमनुव्रजन्त्याः स्त्रियाः । लघु सूक्ष्मं वासः । ससूत्रं काञ्चीसहितम् ॥ २३ ॥ विषज्जन्त्यां कुञ्चितकटाक्षैरात्मानं निरीक्षमाणायाम् ॥ २४ ॥ तत्पदं तस्याः समीपं ययौ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ अङ्ग हे राजन् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥

१ आत्मनो मायया बहिरङ्गशक्त्यैव इति चक्र० । २ विलज्जन्त्यां लज्जाभावं कुर्वन्त्याम् इति विज० । ३ भवमनुलक्षीकृत्य न स्थितवती किंतु दुद्रावैव इति चक्र० ।

एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च संनिहितो बभूव ॥ ३४ ॥ ३५ ॥ तदुह देवमायया जडीकरणम् ॥ ३६ ॥ ३७ ॥ स्वां निष्ठां प्रकृतिम् ॥ ३८ ॥ ॥ ३९ ॥ कालेन सृष्ट्यादिनिमित्तेन । मया कालरूपेण । भागशो रजआद्यंशेन समेता मदधीना सती ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अष्टाध्यायार्थ-

सरित्सरस्सु शैलेषु वनेषूपवनेषु च ॥ यत्र क्वचासन्नृषयस्तत्र संनिहितो हरः ॥ ३४ ॥ स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ॥ जडीकृतं नृपश्रेष्ठ संन्यवर्तत कश्मलात् ॥ ३५ ॥ अथावगतमाहात्म्य आत्मनो जगदात्मनः ॥ अपरिज्ञे-यवीर्यस्य न मेने तदुहाद्भुतम् ॥ ३६ ॥ तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ॥ उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम् ॥ ३७ ॥ ॥ श्रीभगवानुवाच ॥ दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ॥ यन्मे स्त्रीरूपया स्वैरं मोहितोऽप्यङ्ग[1] मायया ॥ ३८ ॥ को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ॥ तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः ॥ ३९ ॥ सेयं गुणमयी माया न त्वामभिभविष्यति ॥ मया समेता कालेन कालरूपेण भागशः ॥४०॥ ॥ श्रीशुक उवाच ॥ एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ॥ आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४१ ॥ आत्मांशभूतां तां मायां भवानीं भगवान्भवः ॥ शंसतामृषिमुख्यानां[2] प्रीत्याचष्टाथ भारत ॥ ४२ ॥ अपि[3] व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ॥ अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुतास्वतन्त्राः ॥ ४३ ॥ यं मामपृच्छस्त्वमुपेत्य योगात्स-मासहस्रान्त उपारतं वै ॥ स एव साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥४४॥ ॥ श्रीशुक उवाच ॥ इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः ॥ सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥ ४५ ॥ एतन्मुहुः कीर्तयतोऽनुशृ-ण्वतो न रिष्यते[4] जातु समुद्यमः क्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम्[5] ॥ ४६ ॥ असदविष-यमङ्घ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयत्सिन्धुमथ्यम् ॥ कपटयुवतिवेषो मोहयन्यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥ ४७ ॥ ॥ इति श्रीमद्भा० म० पु० अष्टमस्कन्धे शंकरमायामोहनं नाम द्वादशोऽध्यायः ॥ १२ ॥

निगमनम्—इतीति ॥ ४५ ॥ एतत्कीर्तनादौ फलमाह—एतदिति ॥ ४६ ॥ भगवता कृतं भक्तपक्षपातं स्मरन्नमस्करोति—असतामविषयम् । भावो भजनं तेन गम्यमङ्घ्रिं प्रपन्नान् शरणागतान्सिन्धुमध्यं सिन्धोर्मथनेन जातममृतं य आशयदभोजयत् ॥ ४७ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ ॥ ॥ ॥

१ 'मोहितोऽस्यङ्ग मायया' इति, 'मोहितो नाङ्ग मायया' इति च पाठौ । २ शंसता प्रशंसतां सताम् । ऋषिमुख्यानामादलेति चक्र०। 'शृण्वताम्' इति पाठः। ३ 'अयि' इति पाठः । ४ न रिष्यते न नश्यति 'रीङ् क्षये' । ५ 'परिभ्रमापहम्' इति पाठः ।

त्रयोदशे तु वर्ण्यन्ते सप्तमादीन्यनुक्रमात् ॥ मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक् ॥ १ ॥ सप्तमादिमन्वन्तराण्याह—मनुरित्यादिना यावदध्याय-
समाप्ति ॥ १ ॥ २ ॥ ३ ॥ आदित्यादयो देवा इत्यन्वयः ॥ ४ ॥ ५ ॥ भगवतो जन्म अवतारः । तमेवाह—आदित्यानां विवस्वानर्यमा पूषेत्याद्युक्तानां
मध्ये अवरं जन्म यस्य सः ॥ ६ ॥ शक्त्याऽवतारेणान्वितानि ॥ ७ ॥ अष्टमं मनुं वक्तुं कथामाह—विवस्वत इति त्रिभिः ॥ ८ ॥ एके वडवां तृतीयामाहुः—

॥ श्रीशुक उवाच ॥ मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ॥ सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥१॥ इक्ष्वाकुर्न-
भगश्चैव धृष्टः शर्यातिरेव च ॥ नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते॥२॥करूषश्च पृषध्रश्च दशमो वसुमान्स्मृतः ॥
मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ॥३॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ अश्विनावृभवो राजन्निन्द्रस्तेषां
पुरन्दरः ॥ ४ ॥ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥ अत्रापि
भगवज्जन्म कश्यपाददितेरभूत् ॥ आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥ संक्षेपतो मयोक्तानि सप्त मन्वन्त-
राणि ते ॥ भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्यान्वितानि च ॥ ७ ॥ विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे ॥ संज्ञा
छाया च राजेन्द्र ये प्रागभिहिते तव ॥८॥ तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ॥ यमो यमी श्राद्धदेवश्छायायाश्च
सुतान् शृणु ॥९॥ सावर्णिस्तपती कन्या भार्या संवरणस्य या ॥ शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥१०॥ अष्ट-
मेऽन्तर आयाते सावर्णिर्भविता मनुः ॥ निर्मोकविरजस्काद्याः सावर्णितनया नृप ॥ ११ ॥ तत्र देवाः सुतपसो विरजा
अमृतप्रभाः ॥ तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥ राद्ध-
मिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ॥ निवेशितोऽधिके स्वर्गाद-
धुनास्ते स्वराडिव ॥ १४ ॥ गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा ॥ ऋष्यशृङ्गः पितास्माकं भगवान्बादरायणः
॥ १५ ॥ इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ॥ इदानीमासते राजन्स्वे स्वे आश्रममण्डले ॥ १६ ॥

मम तु संज्ञैव वडवेति मतम् । तदुक्तं षष्ठे—'सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि' इति । यमश्च यमी च यमुना श्राद्धदेवश्चेति त्रयः सुताः ॥ ९ ॥ सावर्णिः
पुत्रः ॥ १० ॥ ११ ॥ १२ ॥ पदत्रयं याचमानायेमां सर्वां महीं सप्तमे मन्वन्तरे दत्त्वाऽष्टमे मन्वन्तरे विष्णोः प्रसादेन च राद्धं लब्धमिन्द्रपदं हित्वेत्यर्थः ।
॥ १३ ॥ १४ ॥ रामः परशुरामः । द्रोणपुत्रोऽश्वत्थामा ॥ १५ ॥ इदानीं तु स्वयोगत आसते ॥ १६ ॥

१ इदं फलितार्थकथनम् । अवरं यथा स्यात्तथा जायत इत्यवरज इति विग्रहः । २ 'शक्त्यन्वितानि' इति पाठः । ३ सुतौ च सुता चेत्येकशेषः । एवमग्रेऽपि । ४ स्वराडिव इन्द्र इव ।

॥ १७ ॥ १८ ॥ अद्भुत इन्द्रः ॥ १९ ॥ २० ॥ २१ ॥ हविष्मत्प्रमुखा इत्युक्तानामेव केषांचिन्नामान्याह—हविष्मानिति ॥ २२ ॥ विपूच्यां जातः सन्

देवगुह्यात्सरस्वत्यां सार्वभौम इति प्रभुः ॥ स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वरः ॥ १७ ॥ नवमो दक्षसाव-
र्णिर्मनुर्वरुणसंभवः ॥ भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥ पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः
स्मृतः ॥ द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥ आयुष्मतोऽम्बुधारायामृषभो भगवत्कला ॥ भविता
येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥ दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ॥ तत्सुता भूरिषेणाद्या
हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥ हविष्मान्सुकृतिः सत्यो जयो मूर्तिस्तदा द्विजाः ॥ सुवासनविरुद्धाद्या देवाः शंभुः
सुरेश्वरः ॥ २२ ॥ विष्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति ॥ जातः स्वांशेन भगवान्गृहे विश्वसृजो
विभुः ॥ २३ ॥ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ॥ अनागतास्तत्सुताश्च सत्यधर्मादयो दश ॥ २४ ॥
विहङ्गमाः कामगमा निर्वाणरुचयः सुराः ॥ इन्द्रश्च वैधृतस्तेषामृषयश्चारुणादयः ॥ २५ ॥ आर्यकस्य सुतस्तत्र
धर्मसेतुरिति स्मृतः ॥ वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥ २६ ॥ भविता रुद्रसावर्णी राजन्द्वादशमो मनुः ॥
देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २७ ॥ ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ॥ ऋषयश्च तपोमूर्ति-
स्तपस्व्याग्नीध्रकादयः ॥ २८ ॥ स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ॥ अन्तरं सत्यसहसः सूनृतायाः
सुतो विभुः ॥ २९ ॥ मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥३०॥
देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः॥ निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥३१॥ देवहोत्रस्य तनय उपहर्ता
दिवस्पतेः ॥ योगेश्वरो हरेरंशो बृहत्यां संभविष्यति ॥३२॥ मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति ॥ उरुगम्भीरबु-
द्धाद्या इन्द्रसावर्णिवीर्यजाः ॥३३॥ पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ॥ अग्निर्बाहुः शुचिः शुद्धो मागधा-
द्यास्तपस्विनः ॥३४॥ सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ॥ वितानायां महाराज क्रियातन्तूंन्वितायिता ॥३५॥

॥ २३ ॥ एकादशम इत्यादिरार्षः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तस्य मनोरन्तरं साधयिष्यति—सत्यसहसः सूनृतायाश्च सुतः सन् ॥ २९ ॥ ३० ॥
॥ ३१ ॥ दिवस्पतेरिन्द्रस्योपहर्ता संपादकः संभविष्यति ॥ ३२ ॥ ३३ ॥ ३४ ॥ क्रियातन्तून् कर्मसंततीः । वितायिता विस्तारयिष्यति ॥ ३५ ॥ ॥



१ 'देवगुह्या सरस्वत्याम्' इति पाठः । २ 'धृष्टकेतुः' इति 'धृतकेतुः' इति च पाठौ । ३ 'इन्द्रः श्रुतः स्मृतः' इति पाठः । एवमुत्तरश्लोकेऽपि 'भोक्ष्यते श्रुत' इति च पाठः । ४ 'भवित्री' इति पाठः । ५ अनागता भविष्याः । ६ विहंगमाद्या देवगणाः इति वीर० । ७ तपस्विनो ऋषयः । ८ उपहर्ता उपकर्ता ।

युगसाहस्रेण पर्ययः परिवर्तो यस्य । युगसहस्रप्रमाण इत्यर्थः ॥ ३६ ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ॥ पृथक्कर्माणि वर्ण्यन्ते भगवद्वशवर्तिनाम् ॥ १ ॥ १ ॥ पुरुषेणेश्वरेण यज्ञाद्यवतारैः शास्यन्ते नियुज्यन्ते इति तथा ॥ २ ॥ तदेवाह—यज्ञादय इति ॥ ३ ॥ ऋष्यादीनां कर्माण्याह—चतुर्युगान्त इति चतुर्भिः—यतो येभ्यः श्रुतिगणेभ्यः ॥ ४ ॥ उदिता उक्ताः युक्ताः संयताः सन्तो महीं धर्मं संचारयन्ति । मह्यां धर्मं प्रवर्तयन्तीत्यर्थः ॥ ५ ॥ प्रजापाला मनुपुत्रास्तं धर्मं पालयन्ति

राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते ॥ प्रोक्तान्येभिर्मितः कल्पोयुगसाहस्रपर्ययः ॥३६॥ (चतुर्दशमनूनां च कथां यः कीर्तयेन्नरः ॥ शृणुयाद्वापि राजेन्द्र तस्य विष्णुः प्रसीदति ॥३७॥) ॥ इति श्रीमद्भा० म० पु० अ० मन्वन्तरानुवर्णनं नाम त्रयोदशोऽध्यायः ॥१३॥ ॥ राजोवाच ॥ मन्वन्तरेषु भगवन्यथा मन्वादयस्त्विमे ॥ यस्मिन्कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥१॥ ॥ ऋषिरुवाच ॥ मनवो मनुपुत्राश्च मुनयश्च महीपते ॥ इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥२॥ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ॥ मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥३॥ चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान्यथा ॥ तपसा ऋषयोऽपश्यन्यतो धर्मः सनातनः ॥४॥ ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ॥ युक्ताः संचारयन्त्यद्धा स्वे स्वे काले महीं नृप ॥ ५ ॥ पालयन्ति प्रजापाला यावदन्तं विभागशः ॥ यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः ॥ ६ ॥ इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ॥ भुञ्जानः पाति लोकांस्त्रीन्कामं लोके प्रवर्षति ॥ ७ ॥ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ॥ ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ॥ ८ ॥ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः ॥ कालरूपेण सर्वेषामभावाय पृथग्गुणः ॥ ९ ॥ स्तूयमानो जनैरेभिर्मायया नामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥ ॥ ॥ ॥

यावदन्तं यावन्मन्वन्तरावसानम् । विभागशः पुत्रपौत्रादिक्रमेण । ये चान्ये द्यावापृथिव्यादयो यत्र कर्मणि भोक्तृत्वेनान्वितास्तैश्च सह ॥ ६ ॥ ७ ॥ प्रसङ्गाद्रूपान्तरैरपि जगद्यात्राप्रवर्तनमाह—ज्ञानमिति द्वाभ्याम् । सिद्धाः सनकादयः । ऋषयो याज्ञवल्क्यादयः । योगेशा दत्तात्रेयादयः । तत्तद्रूपः सन् ज्ञानं कर्म च योगं च ब्रूते ॥ ८ ॥ प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोतीति शेषः । स्वराड्वपू राजमूर्तिः । सर्वेषामभावाय भवति । पृथग्विधा गुणाः शीतोष्णादयो यस्य ॥ ९ ॥ नामरूपात्मिकया मायया विमोहितात्मभिर्जनैर्नानादर्शनैः शास्त्रैः स्तूयमानो निरूप्यमाणोऽपि नैव दृश्यत इत्यर्थः ॥ १० ॥ ॥

१ यथा यथावत् व्यासः श्रुतिगणान्व्यवस्यतीति भावः इति क्रम० । २ 'यत्रानुकीर्तिताः' इति पाठः ।

प्रासङ्गिकं निरूप्य प्रस्तुतमेवोपसंहरति—एतत्कल्पविकल्पस्यावान्तरकल्पस्य ॥११॥ इति श्रीमद्भा० म० पु० अ० भा० दी० टीकायां चतुर्दशोऽध्यायः ॥१४॥ वलिं पञ्चदशे विश्वजिताचार्या अयाजयन् ॥ ततोऽसौ स्वर्गमजयद्भयाद्देवा निलिलियिरे ॥ १ ॥ अत्रैयंते नवाध्याय्या वामं वामनचेष्टितम् ॥ निग्रहच्छलतो यत्र वलेर्भूयाननुग्रहः ॥ २ ॥ ईश्वरः स्वयं कृपणवत्कस्माद्धेतोरयाचत । लब्धार्थो[1] भूत्वापि तं कस्माद्बबन्ध ॥१॥२॥ तत्र तावद्बलेस्त्रिलोकीमपहर्तुं याञ्चादिच्छलनं कृतवानिति वक्तुं ब्राह्मणाराधनेन वलेरकाण्ड एव स्वर्गविजयक्रममाह—पराजितश्रीरित्यादिना यावदध्यायसमाप्ति । युद्धे पराजिता श्रीर्येन सः । इन्द्रेणासुभिश्च त्याजितः सन् । भृगून् भृगोर्वंश्यान् शुक्रादीन् । महात्मा उदारचित्तः । अर्थानां निवेदनेनार्पणेन ॥३॥ त्रिणाकं स्वर्गं जेतुमिच्छन्तं विश्वजिता यागेनायाजयन्

एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ॥ यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥११॥ ॥ इति श्रीमद्भा० म० पु० अ० चतुर्दशोऽध्यायः ॥ १४॥ ॥ राजोवाच ॥ वलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ॥ भूत्वेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः ॥ यज्ञेश्वरस्य पूर्णस्य बन्धनं चाप्यनागसः ॥ २ ॥ ॥ श्रीशुक उवाच ॥ पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् भृगुभिः स जीवितः ॥ सर्वात्मना तानभजद्भृगून्बलिः शिष्यो महात्मार्थनिवेदनेन ॥३॥ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्वजिता त्रिणाकम् ॥ जिगीषमाणं विधिनाभिषिच्य महाभिषेकेण महानुभावाः ॥४॥ ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ॥ ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥५॥ धनुश्च[2] दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ॥ पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥ ६ ॥ एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ॥ प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥ अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ॥ सुस्रग्धरोऽथ संनह्य धन्वी खड्गी धृतेषुधिः ॥८॥ हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः ॥ रराज रथमारूढो धिष्ण्यस्थ[3] इव हव्यवाट् ॥ ९ ॥ तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव ॥ १० ॥ ॥

महाभिषेकेणैन्द्रेण बह्वृचब्राह्मणप्रसिद्धेन ॥४॥ हर्यश्वस्येन्द्रस्य ये तुरङ्गास्तेषामिव वर्णो हरितो येषाम् ॥ ५ ॥ पुरटं सुवर्णम् । तूणाविषुधी अरिक्तावक्षय्यशरौ । पितामहः प्रह्लादः । जलजं शङ्खम् ॥ ६ ॥ विप्रैरर्जितः संपादितो योधनार्थो युद्धपरिकरो यस्य तैरेव कल्पितं कृतं स्वस्त्ययनं मङ्गलवाचनादि यस्य । आमन्त्र्य पृष्ट्वा ॥ ७ ॥ अथारुह्य रराजेति द्वयोरन्वयः । सुस्रग्धरः शोभनमालाधरः ॥ ८ ॥ हेमाङ्गदाभ्यां लसन्तौ बाहू यस्य । धिष्ण्यस्थो वने प्रज्वलितः, कुण्डस्थ आहवनीय इवेति वा ॥ ९ ॥ तुल्यमैश्वर्यं बलं च श्रीश्च येषां तैर्दैत्ययूथपैर्वृतो ययाविति द्वयोरन्वयः । परिधीन्दिशः ॥ १० ॥ ॥ ॥

१ लब्धार्थः स्वीकृतत्रैलोक्यः । २ धनुः हुताशनादासेति पूर्वेणान्वयः । ३ धिष्ण्यस्थो हव्यवाडिव रथमारूढः सन्निन्द्रपुरीं ययाविति तृतीयेनान्वयः ।

स्वृद्धामतिसमृद्धाम् ॥ ११ ॥ धिक् ग्राम्यसुखं तथा तथाविधां पुरीमकस्मादेव परित्यज्येन्द्रादयः पलायिता इति वैराग्यार्थमिन्द्रपुरीमनुवर्णयति—रम्यामिति सार्धैरेकादशभिः—उपवनानि फलप्रधानानि निकटानि वा, उद्यानानि पुष्पप्रधानानि दूरस्थानि वा तैः रम्याम् । कूजन्ति विहङ्गमिथुनानि येषु । गायन्तो मत्ता मधुव्रता येषु ॥ १२ ॥ प्रवालादीनामुरुर्भारो यासु ताः शाखा येषां तेऽमरद्रुमा येषु तैः । यत्र यासु सुरसेविताः प्रमदाः क्रीडन्ति ता हंसादिकुलैराकुला व्याप्ता नलिन्यः सरांसि यत्र येषु सन्ति तैरुपवनोद्यानै रम्यामिति पूर्वेणैवान्वयः ॥१३॥ किंच परिखाभूतया आकाशगङ्गया वृताम् । प्राकारेण सौवर्णेन चावृताम् । अट्टालाः प्राकारोपरि रचितान्युन्नतानि युद्धस्थानानि तत्सहितेन ॥ १४ ॥ रुक्मपट्टानि कपाटानि येषु तैर्द्वारैरवान्तरैः स्फटिकमयैः

वृतो विकर्षन्महतीमासुरीं ध्वजिनीं विभुः ॥ ययाविन्द्रपुरीं स्वृद्धां कम्पयन्निव रोदसी ॥११॥ रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ॥ कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥१२॥ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ हंससारसचक्राह्वकारण्डवकुलाकुलाः ॥ नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ॥१३॥ आकाशगङ्गया देव्या वृतां परिखभूतया ॥ प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ॥१४॥ रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ॥१५॥ सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥१६॥ यत्र नित्यवयोरूपाः श्यामा विरजवाससः ॥ भ्राजन्ते रूपवन्नार्य अर्चिर्भिरिव वह्नयः ॥१७॥ सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ॥ यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥१८॥ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना ॥ पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरप्रियाः ॥ १९ ॥ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम् ॥ २० ॥ ॥ ॥

गोपुरैश्च पुरद्वारैर्जुष्टाम् । विभक्ताः प्रपथा राजमार्गा यस्याम् ॥ १५ ॥ सभा उपवेशस्थानानि, चत्वराण्यङ्गनानि, रथ्या उपमार्गास्तैराढ्यां संपन्नाम् । न्यर्बुदं दशकोटयस्तैर्गणनीयैरनन्तैर्विमानैर्युताम् । वज्रविद्रुममय्यो वेदयो येषु तैः । शृङ्गाटकैश्चतुष्पथैर्युताम् ॥ १६ ॥ नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः रूपवन्नार्यः स्वलंकृताः स्त्रियः यत्र यस्यां भ्राजन्ते ॥ १७ ॥ सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगन्धिकस्रजामामोदम् ॥ १८ ॥ हेमगवाक्षेभ्यो निर्गच्छता धूमेन । सुरप्रिया अप्सरसः ॥ १९ ॥ मुक्तामयैर्वितानैर्मणिहेममयैः केतुभिश्च ध्वजैर्नानापताकायुक्ताभिर्वलभीभिश्च विमानानां पुरोभागैरावृतां व्याप्ताम् । वैमानिकस्त्रीणां कलगीतैर्मङ्गलाम् ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ परिखभूतया दीर्घिकावद्वर्तमानया । अत्र ह्रस्वत्वमार्षम् । २ श्यामाः षोडशवार्षिक्यः । श्यामालक्षणं चक्रवर्तिव्याख्यायाम्—'शीतकाले भवन्त्युष्णा उष्णकाले तु शीतलाः ॥ स्तनौ सुकठिनौ यासां ताः श्यामाः परिकीर्तिताः ॥' इति । ३ नार्य अर्चिर्भिरिति सन्धिरार्षः । ४ सौगन्धिकैः स्थलचम्पकैः इति विज० । ५ न्यर्बुदैरित्युपलक्षणम् । अनेकैरित्यर्थः इति विज० ।

उपदेवानां गन्धर्वादीनां गीतकैश्च मनोरमाम् । जिता प्रभा साक्षादीत्यधिष्ठात्री देवता यया ताम् । अन्यैरजितप्रभामिति वा । पाठान्तरे जिता ग्रहाः सूर्यादयो यया ॥ २१ ॥ यत् याम् ॥ २२ ॥ पृतन्यया सेनया ॥ २३ ॥ २४ ॥ केन हेतुनैवं तेजसोर्जित आसीत् ॥ २५ ॥ प्रतिव्योढुमपाकर्तुम् ॥ २६ ॥ यतः

मृदङ्गशङ्खानकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभाम् ॥ २१ ॥ यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः ॥ मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्ति यत् ॥२२॥ तां देवधानीं स वरूथिनीपतिर्बहिः समन्ताद्रुरुधे पृतन्यया ॥ आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन्भयमिन्द्रयोषिताम् ॥२३॥ मघवांस्तमभिप्रेत्य बलेः परममुद्यमम् ॥ सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥२४॥ भगवन्नुद्यमो भूयान्बलेर्नः पूर्ववैरिणः ॥ अविषह्यमिमं मन्ये केनासीत्तेजसोर्जितः ॥ २५ ॥ नैनं कश्चित्कुतो वापि प्रतिव्योढुमधीश्वरः ॥ पिबन्निव मुखेनेदं लिहन्निव दिशो दश ॥ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः ॥२६॥ ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः ॥ ओजः सहो बलं तेजो यत एतत्समुद्यमः ॥२७॥ ॥ गुरुरुवाच ॥ जानामि मघवञ्छत्रोरुन्नतेरस्य कारणम् ॥ शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः ॥२८॥ भवद्विधो भवान्वाऽपि वर्जयित्वेश्वरं हरिम् ॥ नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः ॥ २९ ॥ तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् ॥ यात कालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः ॥ ३० ॥ एष विप्रबलोदर्कः संप्रत्यूर्जितविक्रमः ॥ तेषामेवापमानेन सानुबन्धो विनङ्क्ष्यति ॥३१॥ एवं सुमन्त्रितार्थास्ते गुरुणाऽर्थानुदर्शिना ॥ हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥३२॥ देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीम् ॥ देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम् ॥३३॥ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः ॥ शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥ ॥ ॥

कारणादेतस्य ओजआदि । यत ओजआदेः एतस्य समुद्यमः ॥ २७ ॥ उपभृतं संचितम् ॥२८॥२९॥ तत्रोचितं मन्त्रमाह—तस्माद्यूयं त्रिविष्टपमुत्सृज्य निलयमदर्शनं यात । यतः कालात् ॥ ३० ॥ केनास्य विपर्ययः स्यादित्यत आह—एष इति । विप्राणां बलेनोदर्कः उत्तरोत्तरमधिकं फलं यस्य सः ॥३१॥ सुमन्त्रितोऽर्थः कार्यं येषां ते । निलयं जग्मुः ॥ ३२ ॥ ३३ ॥ एवं प्राप्तमिन्द्रपदं स्थिरीकर्तुमयाजयन् । अनुव्रतमनुवर्तिनम् ॥ ३४ ॥ ॥ ॥

१ 'जितग्रहाम्' इत्येवंरूपे । २ एभिरगमनहेतुभिरधर्मादिभिर्हीनाः । ३ शिष्याय शिष्यं वर्धयितुं स्वीयं तेज एव तस्मिन्निहितमित्यर्थः । चक्रवर्ती तु शिष्याय श्रद्धाभक्त्यतिशयेन स्वसर्वस्वोपहारकाय बलये तेजः स्वीयमेवोपभृतं प्रत्युपहारत्वेन दत्तमित्यर्थः । इति व्याचख्यौ । ४ 'ष्टपाम्' इति क्वचित्पाठः ५ अयमेव बहुषु पुस्तकेषु पाठः । क्वचित् 'वैरोचनिः' इत्यपि पाठः, स च युक्त इति भाति ।

॥ ३५ ॥ द्विजदेवैर्ब्राह्मणैरुपलम्भितां प्रापिताम् ॥३६॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां पञ्चदशोऽध्यायः ॥१५॥ पोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः ॥ प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥ १ ॥ इदानीं श्रीवामनावतारप्रसङ्गमाह—एवमित्यादि यावत्समाप्ति । नष्टेष्वदृष्टेषु सत्सु ॥ १ ॥ २ ॥ स कश्यपः पत्नीमिदमाह ॥ ३ ॥ दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन्पृच्छति—अप्यभद्रमिति सप्तभिः—हे भद्रे, मृत्योश्छन्दमिच्छामनुवर्तत इति तथा, मृत्युवशवर्तिनो जनस्येत्यर्थः ॥ ४ ॥ हे गृहमेधिनि, अपि वा किंवा गृहेषु धर्मादेः किंचिदकुशलमिति काक्वा

ततस्तदनुभावेन भुवनत्रयविश्रुताम् ॥ कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३५ ॥ बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम् ॥ कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ॥ हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात् ॥ निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥ स पत्नीं दीनवदनां कृतासनपरिग्रहः ॥ सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥ अप्यभद्रं न विप्राणां भद्रे लोकेऽधुना गतम् ॥ न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥४॥ अपि वाऽकुशलं किंचिद्गृहेषु गृहमेधिनि ॥ धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥ अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ॥ गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ॥ यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥ ७ ॥ अप्यग्नयस्तु वेलायां न हुता हविषा सति ॥ त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥ यत्पूजया कामदुघान्याति लोकान्गृहान्वितः ॥ ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥ ९ ॥ अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि ॥ लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥ ॥ अदितिरुवाच ॥ भद्रं द्विजगवां ब्रह्मन्धर्मस्यास्य जनस्य च ॥ त्रिवर्गस्य परं क्षेत्रं गृहमेधिन्गृहा इमे ॥ ११ ॥ ॥ ॥

प्रश्नः । यत्र येषु गृहेषु । अयोगिनामपि योगः स्वधर्मादिना योगफलं भवति ॥ ५ ॥ किंवा त्वया अपूजिता एवाभ्येत्य गृहाद्याताः ॥ ६ ॥ नार्चिता अनर्चिताः सन्तो यदि निर्गच्छन्ति ते गृहाः फेरुराजः शृगालराजस्तदीयविवरतुल्याः ॥ ७ ॥ वेलायां होमकाले कर्हिचिन्न हुताः किम् ॥ ८ ॥ ९ ॥ भवत्या आत्मानं मनः अस्वस्थमप्रकृतिस्थं लक्षणैर्मुखम्लान्यादिभिर्लक्षयामि ॥ १० ॥ अस्वास्थ्यकारणमन्यदस्तीति वक्तुं त्वत्पृष्टमभद्रादिकं नास्तीत्याह—भद्रमिति द्वाभ्याम् । इमे गृहास्त्रिवर्गस्य परं क्षेत्रमुद्भवस्थानम् । त्रिवर्गोऽपि यथावद्वर्तत इत्यर्थः ॥ ११ ॥ ॥ ॥ ॥

१ वा अप्यर्थे । प्रत्युत्थानेनाप्यपूजिता इत्यर्थः ।

भगवतस्तवानुध्यानं यन्मया क्रियते तस्मादग्नयोऽतिथय इत्यादि सर्वं न रिष्यति न हीयते ॥ १२ ॥ प्रस्तुतं विज्ञापयितुमाह—को न्विति ॥ १३ ॥ संपाद्यं काममाह—तवैवेति चतुर्भिः ॥ १४ ॥ सपत्नैर्दैत्यैर्हृता श्रीर्येषाम् । हृतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनम् ॥ १५ ॥ १६ ॥ १७ ॥ कः कश्यपः । प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेनैव तत्त्वमुपदिशति—अहो इति सार्धेन ॥ १८ ॥ १९ ॥ अत्रापरितुष्यन्तीं प्रत्याह—उपतिष्ठस्वेति द्वाभ्याम्

अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः ॥ सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥ को नु मे भगवन्कामो न संपद्येत मानसः ॥ यस्या भवान्प्रजाध्यक्ष एवं धर्मान्प्रभाषते ॥ १३ ॥ तवैव मारीच[1] मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः ॥ समो भवांस्तास्वसुरादिषु प्रभो तथापि भक्तं भजते महेश्वरः ॥१४॥ तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत ॥ हृतश्रियो हृतस्थानान्सपत्नैः पाहि नः प्रभो ॥ १५ ॥ परैर्विवासिता साहं मग्ना व्यसनसागरे ॥ ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥१६॥ यथा तानि पुनः साधो प्रपद्येरन्ममात्मजाः ॥ तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥१७॥ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ॥ अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥१८॥ क्व देहो भौतिकोऽनात्मा[2] क्व चात्मा प्रकृतेः परः ॥ कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥१९॥ उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ॥ सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥२०॥ स विधास्यति ते कामान्हरिर्दीनानुकम्पनः ॥ अमोघा भगवद्भक्तिर्नेतरेति[3] मतिर्मम ॥ २१ ॥ ॥ अदितिरुवाच ॥ केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ॥ यथा मे सत्यसंकल्पो विदध्यात्स मनोरथम् ॥२२॥ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ॥ आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥२३॥ ॥ कश्यप उवाच ॥ एतन्मे[4] भगवान्पृष्टः प्रजाकामस्य पद्मजः ॥ यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥२४॥ फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ॥ अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥२५॥ सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया ॥ यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥ २६ ॥

॥ २० ॥ नन्वेवंभूतकामप्राप्तिहेतुर्देवान्तरसेवा प्रसिद्धा तत्राह—अमोघेति ॥ २१ ॥ यथा च मे मनोरथं विदध्यात् ॥ २२ ॥ यथा च मे आशु तुष्यति तथा तत्सेवाप्रकारमादिश ॥ २३ ॥ मे मया पृष्टः पद्मजो मे तद्व्रतमाह एतत्ते तव प्रवक्ष्यामीत्यन्वयः ॥ २४ ॥ अमले शुक्ले ॥२५॥ तत्रादौ पूर्वेद्युः कृत्यमाह—सिनीवाल्यामित्यादिना ब्रह्मचार्यथ तत्राप्त्यामित्यन्तेन ग्रन्थेन । यदि लभ्येत तर्हि क्रोडविदीर्णया वन्यवराहोत्खाततया आलिप्य ॥ २६ ॥ ॥ ॥

१ मारीचेति पितृक्रमागतप्रभावं सूचयति इति क्रम० । २ अनात्मा जडः । ३ इतरा इतरदेवादिविषया इति विज० । ४ मे इति प्रजाकामस्येति पष्ठ्यौ तृतीयार्थे ।

तत्र मन्त्रः—त्वं देवीति । हे देवि, त्वं रसाया उद्धृतासि ॥ २७ ॥ निर्वर्तित आत्मनियमो नित्यनैमित्तिको येन ॥ २८ ॥ तत्रावाहनादौ नवमन्त्रानाह—नमस्तुभ्यमिति । पाद्यादौ विशेषतस्तु द्वादशाक्षरं वक्ष्यति ॥ २९ ॥ चतुर्विंशतिगुणास्तत्त्वानि जानातीति तथा तस्मै । गुणसंख्यानस्य हेतवे सांख्यप्रवर्तकाय ॥ ३० ॥ एवं सामान्यतो नत्वा गुणावतारान्प्रणमति त्रिभिः—तत्रादौ मन्त्रोक्तयज्ञरूपेण विष्णोः प्रणामो नम इति । द्वे शीर्षे यस्य । त्रयः पादा यस्य । तन्तवे फलविस्तारकाय । त्रय्यां विद्यायामात्मा यस्येति 'त्रिधा बद्धः' इत्यस्यार्थ उक्तः । तथा च मन्त्रः—'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ॥ त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश' इति । '[1]मार्गमुद्रवदालूनः सोऽयं प्राज्ञैर्यथायथम् ॥ विष्णुस्तु यज्ञरूपेण स्तूयतेऽनेन तत्त्वतः' इति । तथा च

त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥ निर्वर्तितात्मनियमो देवमर्चेत्समाहितः ॥ अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥ नमस्तुभ्यं भगवते पुरुषाय महीयसे ॥ सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥ नमो व्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ॥ चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥ ३० ॥ नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे ॥ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३१ ॥ नमः शिवाय रुद्राय नमः शक्तिधराय च ॥ सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥ नमो हिरण्यगर्भाय प्राणाय जगदात्मने ॥ योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥ नमस्ते आदिदेवाय साक्षिभूताय ते नमः ॥ नारायणाय ऋषये नराय हरये नमः ॥ ३४ ॥ नमो मरकतश्यामवपुषेऽधिगतश्रिये ॥ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३५ ॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ॥ अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥ ३६ ॥ अन्ववर्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः ॥ स्पृहयन्त इवामोदं भगवान्मे प्रसीदताम् ॥ ३७ ॥ एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥ ॥ ॥

यास्कः—'चत्वारि शृङ्गेति वेदा वा एत उक्तास्त्रयोऽस्य पादाः सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्तासः सप्तच्छन्दांसि त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान्देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनाय' इति ॥३१॥३२॥ प्राणाय सूत्रात्मने । योगैश्वर्यं शरीरं यस्य ॥ ३३ ॥ ३४ ॥ अधिगता प्राप्ता श्रीर्यं तस्मै ॥३५॥३६॥ तत्पादपद्मयोरामोदं स्पृहयन्त इव देवाश्च श्रीश्च यमन्ववर्तन्त स मे प्रसीदतु ॥ ३७ ॥ आवाहने पुरस्कृतं संमानितम् ॥३८॥

१ मार्गेति । निवृत्तिमार्गलभ्यमजानन्तस्तत्प्रापकप्रवृत्तिमार्गे मुदं गच्छन्तीति मार्गमुद्रास्तत्प्रवर्तकाचार्या विद्यन्ते येऽत्रर्वाचीनेषु ते मार्गमुद्रवन्तस्तैरालूनो व्यवच्छिन्नः । पृथक्त्वेनोपासित इत्यर्थः । २ अनेनोक्तमन्त्रेण । ३ हिनोति दुःखं राति सुखमिति हिरण्यं रेतोलक्षणं गर्भे यस्य स तदा तस्मै इति विज० । श्लोकोऽयं श्रीधरप्रणीत इति प्रतीयते । ४ उपस्पर्शनम् आचमनम् ।

॥ ३९ ॥ पयसि श्रृतं पक्कं पायसम् । मूलविद्यया द्वादशाक्षरेणैव ॥ ४० ॥ ४१ ॥ पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः ॥ ४२ ॥ तस्य शेषां निर्माल्यम् । द्वाववरौ येषां तान् । असंभवे द्वावपि भोजयेदित्यर्थः ॥ ४३ ॥ सभाजितैस्तैरनुज्ञातः सन् । सेष्टो बन्धुभिः सहितः तस्यां रात्र्यां ब्रह्मचारी सन् । श्वोभूते प्रभाते सति

अर्चित्वा गन्धमाल्याद्यैः पयसा स्नपयेद्विभुम् ॥ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ गन्धधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥ श्रृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ ४० ॥ निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ॥ दत्त्वाचमनमर्चित्वा ताम्बूलं च निवेदयेत् ॥ ४१ ॥ जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा ॥ ४२ ॥ कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः ॥ द्व्यवरान्भोजयेद्विप्रान्पायसेन यथोचितम् ॥ ४३ ॥ भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ॥ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ॥ ४४ ॥ स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनम् ॥ ४५ ॥ पयोभक्षो व्रतमिदं चरेद्विष्ण्वर्चनादृतः ॥ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥ ४६ ॥ एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ॥ हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ ४७ ॥ प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् ॥ ४८ ॥ वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ अहिंस्रः सर्वभूतानां वासुदेवपरायणः ॥ ४९ ॥ त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥ ५० ॥ पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥ ५१ ॥ श्रृतेन तेन पुरुषं यजेत सुसमाहितः ॥ नैवेद्यं चातिगुणवद्दद्यात्पुरुषतुष्टिदम् ॥ ५२ ॥ आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥ ५३ ॥ भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते ॥ अन्यांश्च ब्राह्मणाञ्छक्त्या ये च तत्र समागताः ॥ ५४ ॥ दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः ॥ अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान् ॥ ५५ ॥ भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु च ॥ विष्णोस्तत्प्रीणनं विद्वान्भुञ्जीत सह बन्धुभिः ॥ ५६ ॥ ॥ ॥

॥४४॥४५॥ पय एव भक्ष आहारो यस्य ॥ ४६ ॥ ४७ ॥ अधः स्वप्नं शयनम् ॥ ४८ ॥ ४९ ॥ पञ्चकैः पञ्चामृतैः ॥५०॥५१॥५२॥५३॥५४॥५५ ॥ ५६ ॥

१ चक्रवर्ती तु—प्रथम पाद्यादिभिरर्चित्वा स्नापयेत् । स्नापयित्वा वस्त्रोपवीताभरणपरिधापनानन्तरं पुनरपि पाद्यादिभिरित्यर्थः । पाद्यादौ सर्वत्र द्वादशाक्षरो मन्त्रः । २ शिपिषु रश्मिषु विष्टः शिपिविष्टः, शिपौ गरुडे वा विष्टः आविष्टः इति विज० । ३ 'कृपणादिषु' इति पाठः ।

॥५७॥ मया च ते समुदाहृतम् ॥५८॥५९॥ सर्वयज्ञाख्योऽयं यज्ञः। सर्वव्रतमिति च स्मृतमतद्व्रतम् ॥६०॥६१॥६२॥ ॥ इति श्रीमद्भा. म. पु. अ. मा. दी. टीकायां षोडशोऽध्यायः ॥१६॥ततः ससदशेऽदिला कृते तस्मिन्व्रते हरिः॥तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते॥१॥१॥२॥३॥४॥५॥प्रीतिविह्वलत्वादेव सा बद्धाञ्जलिः सती स्थिता केवलमीडितुं पुनर्नोत्सेहे न शशाक, अपितु तूष्णीं बभूव। कथंभूता। आनन्दजलैराकुले ईक्षणे यस्याः। पुलकैराकुला आकृतिर्देहो यस्याः। तस्य दर्शनेन

नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ॥ कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥५७॥ एतत्पयोव्रतं नाम पुरुषाराधनं परम् ॥ पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ५८ ॥ त्वं चानेन महाभागे सम्यक्चीर्णेन केशवम् ॥ आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥ ५९ ॥ अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् ॥ तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् ॥ ६० ॥ त एव नियमाः साक्षात्त एव च यमोत्तमाः ॥ तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥६१॥ तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर ॥ भगवान्परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे अदितिपयोव्रतं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्ता साऽदिती राजन्स्वभर्त्रा कश्यपेन वै ॥ अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥ चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम् ॥ प्रगृह्येन्द्रियदुष्टाश्वान्मनसा बुद्धिसारथिः ॥ २ ॥ मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ॥ वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥ तस्याः प्रादुरभूत्तात भगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥ तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ॥ ननाम भुवि कायेन दण्डवत्प्रीतिविह्वला ॥५॥ सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा ॥ बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥६॥ प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ॥ उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥ ॥ अदितिरुवाच ॥ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ ८ ॥ ॥ ॥

योऽत्युत्सवस्तेन गात्रे वेपथुः कम्पो यस्याः॥६॥ तुष्टाव पिबतीवोद्वीक्ष्यमाणेति च क्रियाभेदात्संलग्नस्य पदस्य द्विरुक्तिरदोषः ॥७॥ 'अयनतो विनिर्जित्य दैत्यानत्यूर्जितानपि ॥ भक्तान्रक्षितुमीशस्त्वमित्यस्तौददितिस्त्रिभिः' इति। यज्ञेशेत्यादिदशभिः संबोधनैस्तवाशक्यं किमपि नास्तीति वदन्ती प्रार्थयते—शं नः कृधि। यतो दीनानां नाथोऽसि त्वम्। तीर्थं श्रवः कीर्तिर्यस्य। श्रवणमेव मङ्गलं यस्य तन्नामधेयं यस्य। आपन्नानां शरणागतानां वृजिनोपशमायोदयो यस्य ॥ ८ ॥ ॥

१पुण्याहवाचकैर्गन्धैः।'स्वस्तिवाचनैः' इति पाठः।२येनेति'नपुंसकमनपुंसकेन' इत्यादिनैकत्वम् चक्र०।३मनसा प्रगृह्य प्रग्रहरूपेण मनसा वशीकृत्येत्यर्थः चक्र०।४'भगवन्नवसन्ननाथ' इति विज०।

भूम्ने महते नमः । महत्त्वे हेतवः—विश्वाय विश्वस्य भवनस्थितिसंयमार्थं स्वैरं गृहीताः पुरुशक्तेर्मायाया गुणा येन तस्मै । तथापि स्वस्थायाप्रच्युतस्वरूपाय । कुतः । शश्वदुपबृंहितो नित्योर्जितो यः पूर्णबोधस्तेन व्यापादितं नित्यनिरस्तमात्मनि तमो मायालक्षणं येन तस्मै ॥ ९ ॥ अस्मदीयमनोरथपूरणमीषत्करमेव तवेति कैमुत्यन्यायेनाह—आयुः परं ब्रह्मायुः । पुनरपि द्यौश्च भूश्च रसातलं च द्योभूरसाः । द्यौरिति पृथक्पाठे भूश्च रसाश्च त्रिलस्वर्गा इति विग्रहः । रसेति पाठे त्रीणि पदानि । सकला योगगुणा अणिमादयः ॥ १० ॥ क्षेत्रज्ञोऽन्तर्यामी ॥ ११ ॥ सपत्नैर्हृता श्रीर्येषां स्वधामतश्च्यावितानां च पुत्राणां संबन्धि

विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ॥ स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥९॥ आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्योभूरसाः सकलयोगगुणास्त्रिवर्गः ॥ ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥१०॥ ॥ श्रीशुक उवाच ॥ अदित्यैवं स्तुतो राजन्भगवान्पुष्करेक्षणः ॥ क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥११॥ ॥ श्रीभगवानुवाच ॥ देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् ॥ यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः ॥१२॥ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान् ॥ प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥१३॥ इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ॥ स्त्रियो रुदन्तीरासाद्य[3] द्रष्टुमिच्छसि दुःखिताः ॥१४॥ आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः ॥ नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥१५॥ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ॥ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥ अथाप्युपायो मम देवि चिन्त्यः संतोषितस्य व्रतचर्यया ते ॥ ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥१७॥ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ॥ स्वांशेन पुत्रत्वमुपेत्य ते सुतान्गोप्तास्मि मारीचतपस्यधिष्ठितः ॥१८॥ उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ॥ मां च भावयती पत्यावेवंरूपमवस्थितम् ॥१९॥

यत्तद्भवत्याश्चिरमाकाङ्क्षितं मया विज्ञातम् ॥ १२ ॥ काङ्क्षितमेवाह—तानिति त्रिभिः—प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सहोपासितुमेकत्र स्थातुमिच्छसि ॥ १३ ॥ १४ ॥ प्रत्याहृतं यशश्च श्रीश्च यैस्तान् ॥ १५ ॥ अपारणीया अनतिक्रमणीयाः । यद्यस्मात् अनुकूल ईश्वरः कालो येषां तैर्विप्रैर्गुप्ता रक्षिताः । अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा ॥ १६ ॥ मम मया चिन्त्य एव । तत्र हेतुः—संतोषितस्येत्यादि । श्रद्धानुरूपमिच्छानुसारेण फलहेतुत्वात् ॥ १७ ॥ मारीचस्य तपस्यधिष्ठाय स्थितः सन् गोप्तास्मि पालयिष्यामि ॥ १८ ॥ अतः पतिमुपधाव भजस्व ॥ १९ ॥ ॥ ॥ ॥

१ स्वेषु भक्तेषु तिष्ठतीति स्वस्थस्तस्मै । २ 'गौर्भूः रमा' इति निर्विसर्गपाठे इत्यर्थः । ३ आसाद्य स्वं स्थानं प्राप्य इति चक्र० । ४ यत् चिरकाङ्क्षितं तदेव इति चक्र० । ५ 'फलहेतुकत्वात्' इति पाठे फलहेतुं करोतीति फलहेतुकृत्तस्य भावस्तत्त्वं तस्मात् इति चक्र० ।

देवानां गुह्यं रहस्यं सर्वं सुसंवृतं सुगुप्तं सत्संपद्यते सिध्यति ॥ २० ॥ प्रभोर्हरेरात्मनि जन्म लब्ध्वा ॥ २१ ॥ २२ ॥ अवितथमीक्षणं दृष्टिर्यस्य सः । अनिलो यथा सर्वत्र समोऽपि दारुणि संघर्षेण वनदाहकमग्निमाधत्ते, एवं स्वयं पुत्रेषु समोऽपि दैत्यक्षपणं वीर्यमाधत्तेत्यर्थः ॥ २३ ॥ धिष्ठितमधिष्ठाय स्थितम् । समीडे तुष्टावेत्यर्थः ॥ २४ ॥ २५ ॥ अदितेरेव पूर्वस्मिञ्जन्मनि पृश्निरिति नाम तस्या गर्भायार्भकाय । वेदा गर्भे यस्य । यद्वा वेदानां गर्भाय । वेदेषु प्रकाशमानायेत्यर्थः । त्रयो लोका नाभौ यस्य स त्रिनाभस्तस्मै । त्रयाणां लोकानां पृष्ठे उपरि स्थिताय । शिपिशब्देन पशवो जीवास्तेष्वन्तर्यामितया प्रविष्टाय

नैतत्परस्मा आख्येयं पृष्टयापि कथंचन ॥ सर्वं संपद्यते देवि देवगुह्यं सुसंवृतम् ॥२०॥ (अदितिरुवाच ॥ नाहं वोढुं क्षमा देव त्वामाद्यं पुरुषं परम् ॥ ब्रह्माण्डकोटिसाहस्रं रोमकूपे तवाव्यय ॥१॥ महापातकयुक्तोऽपि यन्नामस्मृतिमात्रतः ॥ प्रयाति मुक्तिं देवेश तं कथं धारयाम्यहम् ॥२॥ ॥ श्रीभगवानुवाच ॥ सत्यमुक्तं महाभागे त्वया नास्त्यत्र संशयः ॥ पतिव्रताः पतिप्राणाः पतिभक्तिपरायणाः ॥३॥ वहन्ति सततं बाले स्त्रियोऽपि त्यक्तमत्सराः ॥) ॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् ॥ स वै समाधियोगेन कश्यपस्तदबुध्यत ॥ २२ ॥ प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः ॥ सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम् ॥ समाहितमना राजन् दारुण्यग्निं यथानिलः ॥२३॥ अदितेर्धिष्ठितं गर्भं भगवन्तं सनातनम् ॥ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः[3] ॥२४॥ ॥ ब्रह्मोवाच ॥ जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ॥ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः ॥ २५ ॥ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे ॥ त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥ त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ॥ कालो भवानाक्षिपतीश विश्वं स्रोतो यथान्तः पतितं गभीरम् ॥ २७ ॥ त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि संभविष्णुः ॥ दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥

'यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति' इति श्रुतेः । यद्वा शिपयो रश्मयस्तैर्वेष्टितायेत्यर्थः । तथापि विष्णवे व्यापिने ॥ २६ ॥ अन्तः पतितं तृणादि यथा गभीरं स्रोत आक्षिपत्याकर्षति, तथा कालात्मा भवान्विश्वमाक्षिपति ॥ २७ ॥ प्रजापतीनां च त्वमेव संभविष्णुरुत्पादनशीलोऽसि । अयं भावः । नह्येवंभूतस्य तव जन्मादिसंभवः, किंतु देवानां प्रजापतीनां प्रजानां च परमाश्रयत्वेन तत्कार्यसाधनायावतारोऽयम् । अतस्तान्स्वर्गच्युतान्पुनः स्वर्गे स्थापयेति ॥ २८ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ७ ॥

१ वीर्यं भगवद्रूपं तेजः । २ अयमंशो धनुश्चिह्नान्तर्गतो भागः क्वचिन्मुद्रितपुस्तकधृत एवास्ति न सार्वत्रिकः । ३ गुह्येति नाममात्रस्य रहस्यतोक्तिः सूचिता इति क्रम० ।

ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः ॥ यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वरान्वृणु ॥१॥ इत्थं विरिञ्चेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं च प्रभावो यस्य सः । हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः । अमृतभूर्मृत्युजन्मशून्यः । शङ्खगदाब्जचक्राण्यस्य सन्तीति तथा । अर्शआदित्वेन मत्वर्थीयोऽच्प्रत्ययः । अविसर्गपाठे स चासौ पिशङ्गवासाश्च ॥ १ ॥ झषराजो मकरस्तदाकारयोः कुण्डलयोस्त्विषा उल्लसन्ती श्रीर्वदनाम्बुजे यस्य । श्रीवत्सो वक्षसि यस्य वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य ॥ २ ॥ श्रीमत्या वनमालया विराजितः । वेश्मगतं तमः ॥ ३ ॥ अग्निजिह्वा देवाः । नगाः पर्वताः ॥ ४ ॥ तत्प्रादुर्भावसमयमाह—श्रोणायामिति । भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्याम् । तत्रापि श्रोणायां श्रवणस्थे चन्द्र इत्यर्थः । तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे । तच्च

॥ श्रीशुक उवाच ॥ इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः ॥ १ ॥ श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ॥ श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः ॥ प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कण्ठनिविष्टकौस्तुभः ॥३॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ॥ द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ॥४॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ॥ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥ द्वादश्यां सविताऽतिष्ठन्मध्यन्दिनंगतो[1] नृप ॥ विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः ॥ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन्गन्धर्वप्रवरा जगुः ॥ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥ सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः ॥ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥ गायन्तोऽतिप्रशंसन्तो[2] नृत्यन्तो विबुधानुगाः ॥ अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥ दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता ॥ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥ ॥

श्रुत्या दर्शितम्—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाः' इति । एवंविशिष्टे मुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः । किंच नक्षत्राण्यश्विन्यादीनि ताराशब्देन ग्रहा गुरुशुक्रादयस्ते आद्या येषां ते सूर्यादयोऽपि सर्वे तस्य जन्म दक्षिणमुदारं चक्रुः । जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः ॥५॥ विशेषान्तरमाह—यस्यां द्वादश्यां हरेर्जन्म तत्तस्यामहन्येव विदुः । तदा च मध्यन्दिनगतः सवितातिष्ठत् । सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः ॥ ६ ॥ शङ्खादयो ये तेषामन्येषां च चित्रतूर्याणां निर्घोषोऽभवत् ॥ ७ ॥ देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ॥

१ 'मध्यन्दिनगतोऽहनि' इति पाठः साधुः, चक्रवर्त्यपि अहनीत्येवोरीकृत्य मध्यन्दिनगतः सविता यदाभूत्तदा जन्मेति शेष इति योजितवान् । २ 'अभिप्रशंसन्तः' 'अतिप्रमुदिताः' इति च पाठौ ।

विस्मयान्तरमाह—यत्तदिति । यत्तद्वपुर्हरिरधारयत्प्रकटितवांस्तेनैव वपुषा मातापित्रोः संपश्यतोरेव वामनो वटुर्बभूव । दिव्यगतिरद्भुतचेष्टितः । स्वयं कथंभूतः । अव्यक्तचिद्रूपः । कथमधारयत् । भातिर्दीप्तिर्विभूषणानि चायुधानि च तैर्व्यक्तं यथा भवति तथा ॥ १२ ॥ कर्माणि जातकर्मादीनि ॥ १३ ॥ १४ ॥ वनस्पतिर्वनानां पतिः सोमः ॥ १५ ॥ १६ ॥ पात्रिकां भिक्षापात्रीम् ॥ १७ ॥ स एवं संभावितो मारिष: श्रेष्ठो वटुर्ब्रह्मवर्चसेन ब्रह्मर्षिगणसंजुष्टां तां सभामतिक्रम्यारोचत ॥ १८ ॥ १९ ॥ यदर्थं वटुर्बभूव तदाह—श्रुत्वेत्यादि यावत्समाप्ति । यजमानं यजन्तम् । भृगूणां भृगुभिः । उपकल्पितैः प्रवर्तितैः ।

यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूव तेनैव स वामनो वटुः संपश्यतोर्दिव्यगतिर्यथा नटः ॥१२॥ तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः ॥ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥१३॥ तस्योपनीयमानस्य सावित्रीं सविताब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥१४॥ ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ॥ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥१५॥ कमण्डलुं वेदगर्भः कुशान्सप्तर्षयो ददुः ॥ अक्षमालां महाराज सरस्वत्यव्ययात्मनः ॥ १६ ॥ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥ भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥१७॥ स ब्रह्मवर्चसेनैवं सभां संभावितो वटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचत मारिषः ॥१८॥ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ॥ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥१९॥ श्रुत्वाश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ॥ जगाम तत्राखिलसारसंभृतो भारेण गां सन्नमयन्पदे पदे ॥२०॥ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके ॥ प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षताराढुदितं यथा रविम् ॥२१॥ त ऋत्विजो यजमानः सदस्या हतत्विषो वामनतेजसा नृप ॥ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः ॥ छत्रं सदण्डं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम् ॥२३॥ मौञ्ज्या मेखलया वीतमुपवीताजिनोत्तरम् ॥ जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥ ॥ ॥

अखिलेन सारेण बलेन संभृतः संपूर्णः ॥ २० ॥ नर्मदाया उत्तरे तटे भृगुकच्छसंज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयन्तो ये बलेर्ऋत्विजो भृगवस्ते तं व्यचक्षतापश्यन् । आरात्समीप एवोदितं रविमिव ॥ २१ ॥ त ऋत्विगादयः सूर्यः किलेत्येवमादि व्यतर्कयन्निति शेषः ॥ २२ ॥ हयमेधवाटमश्वमेधमण्डपं विवेश ॥ २३ ॥ उपवीताजिनमुपवीतवत्कृतमजिनमेवोत्तरमुत्तरीयं यस्य तम् ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥

१ सभावितो ब्रह्मचारित्वेन श्लाघित इत्यर्थः । २ उमेत्यस्य विशेषण्याद्गत्यर्थमम्बिकाग्रहणम् इति विज० । ३ 'भृगुत्रसञ्ज्ञके' इति पाठः । ४ सशिष्यैर्भृगुभिरित्यर्थः ।

ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः ॥ यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वरान्वृणु ॥१॥ इत्थं विरिञ्चेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं च प्रभावो यस्य सः । हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः । अमृतभूर्मृत्युजन्मशून्यः । शङ्खगदाब्जचक्राण्यस्य सन्तीति तथा । अर्शआदित्वेन मत्वर्थीयोऽच्प्रत्ययः । अविसर्गपाठे स चासौ पिशङ्गवासाश्च ॥ १ ॥ झषराजो मकरस्तदाकारयोः कुण्डलयोस्त्विषा उल्लसन्ती श्रीर्वदनाम्बुजे यस्य । श्रीवत्सो वक्षसि यस्य वलयैरङ्गदैश्च सहोल्लसन्ति किरीटादीनि यस्य ॥ २ ॥ श्रीमत्या वनमालया विराजितः । वेश्मगतं तमः ॥ ३ ॥ अग्निजिह्वा देवाः । नगाः पर्वताः ॥ ४ ॥ तत्प्रादुर्भावसमयमाह—श्रोणायामिति । भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्याम् । तत्रापि श्रोणायां श्रवणस्थे चन्द्र इत्यर्थः । तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे । तच्च

॥ श्रीशुक उवाच ॥ इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः ॥ १ ॥ श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ॥ श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः ॥ प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कण्ठनिविष्टकौस्तुभः ॥३॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ॥ द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ॥ ४ ॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ॥ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥ द्वादश्यां सविताऽतिष्ठन्मध्यन्दिनंगतो नृप ॥ विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः ॥ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन्गन्धर्वप्रवरा जगुः ॥ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥ सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः ॥ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥ गायन्तोऽतिप्रशंसन्तो नृत्यन्तो विबुधानुगाः ॥ अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥ दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता ॥ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥ ॥

श्रुत्या दर्शितम्—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाः' इति । एवंविशिष्टे मुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः । किंच नक्षत्राण्यश्विन्यादीनि ताराशब्देन ग्रहा गुरुशुक्रादयस्ते आद्या येषां ते सूर्यादयोऽपि सर्वे तस्य जन्म दक्षिणमुदारं चक्रुः । जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः ॥५॥ विशेषान्तरमाह—यस्यां द्वादश्यां हरेर्जन्म तत्तस्यामहन्येव विदुः । तदा च मध्यन्दिनगतः सवितातिष्ठत् । सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः ॥ ६ ॥ शङ्खादयो ये तेषामन्येषां च चित्रतूर्याणां निर्घोषोऽभवत् ॥ ७ ॥ देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ॥

१ 'मध्यन्दिनगतोऽह्नि' इति पाठः साधुः, चक्रवर्त्यपि अह्नीत्येवोरीकृत्य मध्यन्दिनगतः सविता यदाभूत्तदा जन्मेति शेष इति योजितवान् । २ 'अभिप्रशंसन्तः' 'अतिप्रमुदिताः' इति च पाठौ ।

विस्मयान्तरमाह—यत्तदिति । यत्तद्वपुर्हरिरधारयत्प्रकटितवांस्तेनैव वपुषा मातापित्रोः संपश्यतोरेव वामनो वटुर्बभूव । दिव्यगतिरद्भुतचेष्टितः । स्वयं कथंभूतः । अव्यक्तचिद्रूपः । कथमधारयत् । भातिर्दीप्तिर्विभूषणानि चायुधानि च तैर्व्यक्तं यथा भवति तथा ॥ १२ ॥ कर्माणि जातकर्मादीनि ॥ १३ ॥ १४ ॥ वनस्पतिर्वनानां पतिः सोमः ॥ १५ ॥ १६ ॥ पात्रिकां भिक्षापात्रीम् ॥ १७ ॥ स एवं संभावितो मारिषः श्रेष्ठो वटुर्ब्रह्मवर्चसेन ब्रह्मर्षिगणसंजुष्टां तां सभामतिक्रम्यारोचत ॥ १८ ॥ १९ ॥ यदर्थं वटुर्बभूव तदाह—श्रुत्वेत्यादि यावत्समाप्ति । यजमानं यजन्तम् । भृगूणां भृगुभिः । उपकल्पितैः प्रवर्तितैः ।

यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूव तेनैव स वामनो बटुः संपश्यतोर्दिव्यगतिर्यथा नटः ॥१२॥ तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः ॥ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥१३॥ तस्योपनीयमानस्य सावित्रीं सविताब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥१४॥ ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ॥ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥१५॥ कमण्डलुं वेदगर्भः कुशान्सप्तर्षयो ददुः ॥ अक्षमालां महाराज सरस्वत्यव्ययात्मनः ॥ १६ ॥ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥ भिक्षां भगवती साक्षादुमाऽदादम्बिका[2] सती ॥१७॥ स ब्रह्मवर्चसेनैवं सभां संभावितो[1] बटुः ॥ब्रह्मर्षिगणसंजुष्टामत्यरोचत मारिषः ॥१८॥ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ॥ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥१९॥ श्रुत्वाश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ॥जगाम तत्राखिलसारसंभृतो भारेण गां सन्नमयन्पदे पदे ॥२०॥ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके[3] ॥ प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षताराढुदितं यथा रविम् ॥२१॥ त ऋत्विजो यजमानः सदस्या हतत्विषो वामनतेजसा नृप ॥ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥ इत्थं सशिष्येषु[4] भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः ॥ छत्रं सदण्डं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम् ॥२३॥ मौञ्ज्या मेखलया वीतमुपवीताजिनोत्तरम् ॥ जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥ ॥ ॥

अखिलेन सारेण बलेन संभृतः संपूर्णः ॥ २० ॥ नर्मदाया उत्तरे तटे भृगुकच्छसंज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयन्तो ये बलेर्ऋत्विजो भृगवस्ते तं व्यचक्षतापश्यन् । आरात्समीप एवोदितं रविमिव ॥ २१ ॥ त ऋत्विगादयः सूर्यः किलेत्येवमादि व्यतर्कयन्निति शेषः ॥ २२ ॥ हयमेधवाटमश्वमेधमण्डपं विवेश ॥ २३ ॥ उपवीताजिनमुपवीतवद्धृतमजिनमेवोत्तरमुत्तरीयं यस्य तम् ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥

१ सभावितो ब्रह्मचारित्वेन श्लाघित इत्यर्थः । २ उमेत्यस्य विशेषव्यावृत्त्यर्थमम्बिकाग्रहणम् इति विज० । ३ 'भृगुवत्ससंज्ञके' इति पाठः । ४ सशिष्यैर्भृगुभिरित्यर्थः ।

संक्षिप्ता अभिभूताः सन्तः ॥ २५ ॥ रूपस्यानुरूपा अवयवा यस्य तम् । दत्त्वेति शेषः ॥ २६ ॥ २७ ॥ चन्द्रमौलिश्चेत्यन्वयः । अप्यर्थे चकारः । चन्द्रमौलिरपि गङ्गारूपं यन्मूर्ध्ना दधारेत्यर्थः ॥ २८ ॥ हे आर्य, त्वा त्वां साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तप एव मन्ये । कथंभूतं तपः । वपुर्धरं मूर्तिधारि ॥ २९ ॥ ३० ॥ त्वच्चरणावनेजनैर्वार्भिर्हतमंहो यस्य तस्य मे पुनीता पवित्रीकृता ॥ ३१ ॥ मे मत्तः प्रतीच्छ गृहाण । हे अर्हत्तम पूज्यतम ॥ ३२ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां अष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशे तु हरिणा याचिते च पदत्रये ॥ प्रतिश्रुते च बलिना

प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ॥ प्रत्यगृह्णन्समुत्थाय संक्षिप्तास्तस्य तेजसा ॥२५॥ यजमानः प्रमुदितो दर्शनीयं मनोरमम् ॥ रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥ स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ॥ अवनिज्यार्चयामास मुक्तसङ्गमनोरमम् ॥२७॥ तत्पादशौचं जनकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्सुमङ्गलम् ॥ यद्देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥२८॥ ॥ बलिरुवाच ॥ स्वागतं ते नमस्तुभ्यं ब्रह्मन्किं करवाम ते ॥ ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्धरम् ॥ २९ ॥ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ॥ अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ॥३०॥ अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ॥ हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ॥३१॥ यद्यद्वटो वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ॥ गां काञ्चनं गुणवद्धाम मृष्टं तथाऽन्नपेयमुत वा विप्र कन्याम् ॥ ग्रामान्समृद्धांस्तुरगान्गजान्वा रथांस्तथाऽर्हत्तम संप्रतीच्छ ॥ ३२ ॥

॥ इति श्रीमद्भा० म० पु० अष्टमस्कन्धे बलिवामनसंवादेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीशुक उवाच ॥ इति वैरोचनेर्वाक्यं धर्मयुक्तंससूनृतम् ॥ निशम्य भगवान्प्रीतः प्रतिनन्द्येदमब्रवीत् ॥१॥ श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ॥ यस्य प्रमाणं भृगवः सांपराये पितामहः कुलवृद्धः प्रशान्तः ॥२॥ न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान् ॥ प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥ ३ ॥ ॥

जानन्भृगुरवारयत् ॥ १ ॥ दातुः स्तुतिः स्वयंतुष्टिरित्यादि प्रस्तुतोचितम् ॥ वक्तव्यमिति भिक्षुस्तु शिक्षयन्नाह वामनः ॥ २ ॥ १ ॥ वचस्तवैतदिति षोडशभिः । हे जनदेव, सांपराये पारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणम् ॥ २ ॥ निःसत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्ता । कृपणस्य लक्षणं प्रथमं प्रतिश्रुत्य यो वा न दातेति ॥ ३ ॥ ॥ ॥ ॥ ॥

१ प्रत्यगृह्णन्पाद्यार्घ्यादिदानेन समानयामासुः । २ मुक्तसङ्गानामात्मारामाणां मनो रमयतीति तथा तम् । ३ साक्षान्मत्प्रत्यक्षीभूतम् । ४ पुनीता पवित्रीकृतासीत् । आर्षः प्रयोगः । ५ 'गां काञ्चनं गुणवद्धाऽथ वस्त्रं मृष्टं तथाऽन्नमुत वा विप्र कन्याम्' इति पाठः । ६ यः पुमानिति प्रत्येकमभिसंबध्यते ।

तीर्थे दानावसरे । यद्यस्मिन्युष्मत्कुले ॥ ४ ॥ यतो यस्मिञ्जातः ॥ ५ ॥ क्ष्मोद्धारे भूम्या उद्धरणे ॥ ६ ॥ ७ ॥ ८ ॥ पराग्दृशो बहिर्दृष्टेः ॥ ९ ॥ अतो हृदये स्थितं मां न ज्ञास्यतीत्येवं निश्चित्य श्वासानिलेऽन्तर्हितः सूक्ष्मो देहो यस्य । विविग्नमतिकम्पितं चेतो यस्य । अकम्पितचित्त इति वास्तवोऽर्थः ॥१०॥ न ददर्श, अन्तः प्रविष्टत्वात् ॥११॥ पुमान्यतः सकाशान्नावर्तते तद्ब्रह्मैव नूनं गतो नित्यमुक्तत्वादिति वास्तवोऽर्थः ॥१२॥ एवं मृत्युपर्यन्तमखण्डं त्रिष्णौ वैरं यत्कृतवांस्तदुचितमेव तैस्याप्रतिद्वन्द्वमहाबलपराक्रमस्य शूराहंमानविजृम्भितक्रोधानुबन्धस्य कथं नामासौ शूरशिरोमणिर्जीवन्नेव कातरवद्वैरमुपेक्षितवानित्याशङ्क्याह—

न सन्ति तीर्थे युधि चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः ॥ युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ॥ प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ॥ नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ॥ हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥ तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ॥ चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥ यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ॥ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र ॥ श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः ॥ १० ॥ स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद ॥ क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः ॥११॥ अपश्यन्निति होवाच मयान्विष्टमिदं जगत् ॥ भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥१२॥ वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ॥ अज्ञानप्रभवो मन्युरहंमानोपबृंहितः ॥ १३ ॥ पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः ॥ स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात्स याचितः ॥१४॥ भवानाचरितान्धर्मानास्थितो गृहमेधिभिः ॥ ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥ तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात् ॥ पदानि त्रीणि दैत्येन्द्र संमितानि पदा मम ॥ १६ ॥ ॥ ॥

वैरानुबन्ध एतावानामृत्योर्भवति । देहिनां देहे निगूढाभिमानवतां शूराणां तथाऽहंमानेनोपबृंहितो मन्युश्च भवत्येव । यतोऽज्ञानप्रभवः, अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मान्द्यमेवेत्यर्थः ॥ १३ ॥ तदेवं पूर्वजान्स्तुत्वा तत्पितरं स्तौति—पितेति । द्विजवेषधारिणो मद्वैरिणो देवा एते ननु द्विजा इति तद्विद्वानपि स याचितः सन्स्वीयमायुर्देवेभ्यो ददौ ॥ १४ ॥ १५ ॥ मम पदा संमितानीति त्रिविक्रमपदाभिप्रायेण न चानृतवादः, तत्रापि स्वपदत्वानपगमात् ॥ १६ ॥ ॥

---

१ यद्वा परं दूरमञ्चतीति पराग्दूरस्थं वस्तु पश्यतीति पराग्दृक् तस्य, दूरस्थवस्तुदर्शिन इति वा इति विज० । २ विशन्दस्य निषेधार्थत्वादुपपद्यते । ३ हिरण्याक्षस्य । ४ असौ हिरण्यकशिपुः । ५ दानावसरेऽर्थिना ब्राह्मणेन । युद्धेऽर्थिना क्षत्रियेन । ६ अमनस्विनो दानावसरे युद्धावसरे चानुदारचित्ता अनुत्साहचित्ताश्च । ७ वलिसंबोधनम् । ८ तस्य निकेतं स्वर्गसं स्थानविशेषम् इति क्रम० ।

यावदर्थमेव प्रतिग्रहो यस्य सः ॥ १७ ॥ ईश्वरस्यापि याच्ञाप्रकारं चोक्त्वा बलेर्बन्धनप्रश्नोत्तरत्वेन तस्य गर्वातिरेकेणाधिक्षेपप्रकारमाह—अहो इति त्रिभिः— ते वाचो वृद्धानां संमतास्त्वं तु बालो बालिशमतिश्च बालिशानामज्ञानामिव मतिर्यस्य । अत एव स्वार्थं प्रति यथावदबुधः । वस्तुतस्तु बाल इवाबालिशमतिश्चेति च्छेदः । स्वार्थं प्रत्यबुधः इति च भक्तानामेवार्थं बुध्यसे न स्वार्थम् । परिपूर्णस्य तव तद्व्यतिरेकेण स्वार्थाभावादित्यर्थः ॥ १८ ॥ अबुधत्वमेवाह—मामिति । द्वीपस्य दाशुषं दातारम् । अबुद्धिमान् वस्तुतस्तु बुद्धिमानित्येव छेदः ॥१९॥ कामं यथेच्छं सम्यक् पादप्रसारणेनेत्यर्थः । अत एव तथा करिष्यति ॥२०॥ पुनरपि

नान्यत्ते कामये राजन्वदान्याज्जगदीश्वरात् ॥ नैनः प्राप्नोति वै विद्वान्यावदर्थ[1]प्रतिग्रहः[2] ॥ १७[3] ॥ ॥ बलिरुवाच ॥ अहो ब्राह्मणदायाद वाचस्ते वृद्धसंमताः ॥ त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥१८॥ मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ॥ पदत्रयं वृणीते योऽबुद्धिमान्द्वीपदाशुषम् ॥ १९ ॥ न पुमान्मामुपव्रज्य भूयो याचितुमर्हति ॥ तस्माद्वृत्तिकरीं भूमिं बटो कामं प्रतीच्छ मे ॥ २० ॥ ॥ श्रीभगवानुवाच ॥ यावन्तो विषयाः प्रेष्ठा[4]स्त्रिलोक्यामजितेन्द्रियम् ॥ न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥ त्रिभिः क्रमैरसंतुष्टो द्वीपेनापि न पूर्यते ॥ नववर्षसमेतेन सप्तद्वीपवरेच्छया[5] ॥ २२ ॥ सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः ॥ अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥ २३ ॥ यदृच्छयोपपन्नेन संतुष्टो वर्तते सुखम् ॥ नासंतुष्टस्त्रिभिर्लोकैरजितात्मो[6]पसादितैः ॥२४॥ पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः ॥ यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५ ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ॥ तत्प्रशाम्यत्यसंतोषादम्भसेवाशुशुक्षणिः ॥२६॥ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् ॥ एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्तः स हसन्नाह वाञ्छातः प्रतिगृह्यताम् ॥ वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥ विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ॥ जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदांवरः[7] ॥ २९ ॥ ॥ ॥ ॥

निस्पृहत्वमेवाविष्कुर्वन्नाह—यावन्त इति सप्तभिः ॥ २१ ॥ नववर्षसमेतेन द्वीपेनापि सप्तानां द्वीपवराणामिच्छया ॥२२॥ तृष्णाया अन्तं न गता इत्यस्माभिः श्रुतम् ॥ २३ ॥ असंतुष्टप्रासैस्त्रिभिर्लोकैरपि न सुखं वर्तते ॥ २४ ॥ २५ ॥ आशुशुक्षणिरग्निः ॥ २६ ॥ सिद्धोऽहं कृतार्थः । एतावतैव सर्वस्वापहारसिद्धेरिति गूढोऽभिप्रायः । तदेवाह—वित्तं हि यावत्प्रयोजनमेव सुखम् । अधिकस्य क्लेशावहत्वादित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ॥

१ यावदर्थं यावत्प्रयोजनम् । पक्षे यावन्तस्तावार्थास्तेपा सर्वेपामेव प्रतिग्रहो यस्य स महक्षणोऽयं विद्वान् न एनः कष्टं प्राप्नोति इति चक्र० । २ 'परिग्रहः' इति पाठः । ३ एतदुत्तरम्— 'अधिकं योऽभिकाङ्क्षेत स स्तेनो दण्डमर्हति' इत्यर्धमधिकं क्वचित् । ४ 'श्रेष्ठाः' इति पाठः । ५ सप्तद्वीपवरेच्छया हेतुना । ६ अजितात्मा अजितेन्द्रियः । उपसादितैः प्राप्तैः इति चक्र० । ७ विदांवरः इति वामनमपरोक्षं प्राहेत्यर्थः ।

॥ ३० ॥ अनयोऽन्यायः ॥३१॥ अन्यायमेवाह—एष इति ॥३२॥ ननु मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह—त्रिभिरिति । क्रमतामिति चेत्तत्राह—सर्वस्वमिति ॥ ३३ ॥ तथापि प्रतिश्रुतं संपादनीयमेवेति चेत्तत्राह—क्रमत इति द्वाभ्याम् । एकेन पदा पादन्यासेन भूमिं क्रममाणस्येत्यर्थः । तार्तीयस्य तृतीयपादन्यासस्य ॥३४॥ ॥ ३५ ॥ तथापि सर्वस्वदानात्कीर्तिस्तावद्भविष्यतीति चेत्तत्राह—न तद्दानमिति । तपश्चित्तैकाग्र्यम् । कर्मपूर्तम् ॥ ३६ ॥ ३७ ॥ ननु तर्हि प्रतिश्रुत्य नेति कथमनृतं वाच्यं तत्राह—अत्रापीति सार्धैः पङ्क्तिः । अत्रापि सत्यानृतव्यवस्थायाम् । बह्वृचश्रुत्या हि प्रथमम्—'ओमिति सत्यं नेत्यनृतम्' इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिन्दाभ्यां सत्यं विहितमनृतं च निषिद्धम् । अनन्तरं च—'पराग्वा एतद्रिक्तमक्षरम्' इत्यादिना सत्ये दोषाननृते

॥ शुक्र उवाच ॥ एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥३०॥ प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ॥ न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम्[2] ॥ दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥ त्रिविक्रमैरिमाँल्लोकान्विश्वकायः क्रमिष्यति ॥ सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥३३॥ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ॥ खं च कायेन महता तार्तीयस्य कुतो गतिः ॥३४॥ निष्ठां[3] ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ॥ प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥३५॥ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ॥ दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥३६॥ धर्माय[4] यशसेऽर्थाय कामाय स्वजनाय च ॥ पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥३७॥ अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम ॥ सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत् ॥३८॥ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते ॥ वृक्षेऽजीवति[5] तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥ ॥ ॥ ॥

च गुणानुक्त्वा—'तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति' इत्युपसंहारेण वृत्तिसंकटादिष्वनृतमप्यनुज्ञातम्, तमिमं श्रुत्यर्थं दर्शयन्नाह—ओमित्यङ्गीकारेण यत्प्रोक्तं तत्सत्यम् । नेति यदाह तदेवानृतम् ॥ ३८ ॥ तत्तु सत्यमीषदनृतं विना न सिध्यतीत्याशयेनाह—सत्यं पुष्पफलं विद्याज्जानीयात् । आत्मवृक्षस्य देहरूपस्य वृक्षस्य । कुतः । गीयते श्रुत्योच्यते इत्यर्थः । पाठान्तरं तु सुगमम् । यद्यपि श्रुत्या वाचः सत्यं पुष्पफलं चेत्युक्तं तथापि वाचो देहनिर्वाहाधीनत्वादात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तम् । भवतु पुष्पफलस्थानीयं सत्यं, ततः किमत आह—वृक्षे देहे अजीवति तत् पुष्पफलं न स्यात् । 'मा न स्यात्' इति पाठे श्रुत्युक्ताया वाचः परामर्शः । देहश्चानृतेन रक्षणीय इत्याह—अनृतं त्वात्मनो देहस्य मूलम् ॥ ३९ ॥ ॥ ॥

१ उपगतः प्राप्तः । २ श्रुतं प्रख्यातम् । 'यशस्ततम्' इति पाठः । ३ नितरां स्थितिं । प्रतिपादयितुं प्रतिपादने इत्यर्थः इति चक्र० । ४ दानादावपि शास्त्रीया व्यवस्थामाह—धर्मायेति चक्र० । ५ 'आत्मवृक्षस्य जीवतः' इत्येतद्रूपम् ।

एतदेव दृष्टान्तेन स्पष्टयति—तद्यथा वृक्ष उत्पाटितमूलः शुष्यत्यचिरादेवोद्वर्तते पतति च, एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत्। यद्यपि च श्रुत्या—'एवमेवानृतं वदन्नात्मानमाविर्मूलं करोति' इत्येवं निन्दयाऽनृतं निषिद्धं तथाप्युपसंहारानुसारेण तत्केवलानृतविषयमित्यभिप्रेत्यैवं व्याख्यातम्। 'दयेत त्वेतेन' इति च तयैवोक्तेः। तथा च श्रुतिः—'ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो[1] यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः[2] शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्येत त्वेतेन' इति। एतेनानेन त्वनृतेन दयेत संकटेष्वात्मानं रक्षेदिति श्रुत्यर्थः ॥ ४० ॥ सर्वथा सत्यवचनेन देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषानृतस्य गुणानाह—परागिति द्वाभ्याम्। यदोमित्यक्षरं तत्पराक् दूरेऽर्थं गृहीत्वाऽञ्चतीति पराक् रिक्तमिति श्रुतिपदस्य व्याख्यानमपूर्णं वै इति। तत्तस्मादर्थिने यत्किंचिदोमिति दास्यामीति ब्रूयात्तेन रिच्येत न्यूनो भवेत्। किंच भिक्षवे सर्वमोंकुर्वन्दास्यामीत्यङ्गीकुर्वन्नात्मने कामेन नालं पर्याप्तो न भवति। तस्य भोगो न सिध्यतीत्यर्थः। तथा च श्रुतिः—'परागवा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किंचोमित्याहात्रैवास्मै तद्रिच्यते स यत्स सर्वमोंकुर्यात् रिञ्च्यादात्मानं[3] स कामेभ्यो

तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् ॥ एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥ पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति ॥ यत्किंचिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ॥ भिक्षवे सर्वमोंकुर्वन्नालं कामेन चात्मने ॥ ४१ ॥ अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः ॥ ४२ ॥ स्त्रीषु नर्म विवाहे च वृत्त्यर्थे प्राणसंकटे ॥ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे वामनप्रादुर्भावे एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ श्रीशुक उवाच ॥ बलिरेवं गृहपतिः कुलाचार्येण भाषितः ॥ तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो[6] गुरुम् ॥ १ ॥ ॥ ॥

नालं स्यात्' इति ॥ ४१ ॥ नेति यदनृतं वच एतत्पूर्णमर्थव्ययाभावात्। अभ्यात्मं चेति चकारान्वयः। आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मम्। यो हि नित्यं मम किंचिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धम्। ननु तर्हीदमनृतमेव सर्वदा सेव्यं स्यान्नेत्याह—सर्वमिति। तथा च श्रुतिः—'अथैतत्पूर्णमभ्यात्मं यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्' इति ॥ ४२ ॥ अतो वृत्तिसंकटादिष्वनृतं न दोषायेत्युपसंहरति—स्त्रीषु प्रोत्साहनेन वशीकरणे, नर्मणि[5] परिहासे, विवाहे च वरादिस्तुतौ, गवां ब्राह्मणानां च हितार्थम्, हिंसायां च कस्यचित्प्राप्तायाम्। तथा च याज्ञवल्क्यः—'वर्णिनां हि वधो यत्र तत्र साक्ष्येऽनृतं वदेत्' इति। तथा च श्रुतिः—'तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति' इति ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ विंशे त्वनृतभीतोऽसौ ज्ञात्वापि कपटं हरेः ॥ ददावेव ततो विष्णुः सहसाऽवर्धताद्भुतम् ॥ १ ॥ १ ॥ ॥ ॥ ॥

१ वाच इति वागुपलक्षितस्य देहस्येत्यर्थः। २ आविर्मूल आविष्कृतमूलः इति चक्र०। ३ रिच्यात् शून्यं कुर्यात्। ४ 'तद्यत्किंचोमिति' चक्र० क्रम० पाठः। ५ नर्मेत्यविभक्तिक नर्मणीत्यर्थः। ६ अवहितः प्रकृतमध्यवस्यन् इति वीर०। ७ इदमनृतमेवामृतमिव इति टीकापाठः ८ तथा चान्यदपि—'न स्त्रीषु राजन्न विवाहकाले प्राणात्यये सर्वधनापहारे' इति। अत्रानृतं न दोषावहमित्यर्थः।

भगवता त्वया प्रोक्तं सत्यम् । किं तत् । योऽर्थकामादिकं न बाधेत स हि गृहमेधिनां धर्म इति ॥ २ ॥ कथं प्रत्याचक्षे निराकरोमि ॥ ३ ॥ ४ ॥ नन्व-प्रत्याख्याने दोषा उक्तास्तत्राह—नाहमिति । अधन्याद्दारिद्र्यान्मृत्योरपि ॥ ५ ॥ यद्यद्धनादिकं तत्सर्वं संपरेतं मृतं पुरुषं हास्यति त्यक्ष्यत्येव । तत्किमिति जीवतैव स्वयं न देयमिति भावः । तथापि तावद्वृत्तिसंकटपरिहारार्थमर्धं दीयतामिति चेत्तत्राह—तस्येति । विप्रश्चेत्तेनार्धेन दत्तेनापि न तुष्येत्तर्हि तस्यार्धस्य त्यागे दाने किं निमित्तम्, न किंचित् । याचितादल्पस्य दाने विप्रस्यासंतोषेण दानं व्यर्थमेव स्यात्, अतस्तद्याचितं सर्वं देयं न किंचिदिति भावः ॥ ६ ॥ तर्हि न देयमेवेति चेत्तत्राह—श्रेय इति । दुस्त्यजैरसुभिरपि । को विकल्पो विचारः ॥ ७ ॥ यैर्दैत्येन्द्रैर्युद्धेऽनिवर्तिभिरियं भूर्बुभुजे उपभुक्ता । तेषामिह

॥ बलिरुवाच ॥ सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ॥ अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥ २ ॥
स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ॥ प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥ न ह्यसत्यात्परोऽधर्म
इति होवाच भूरियम् ॥ सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ॥
न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात् ॥ ५ ॥ यद्यद्धास्यति लोकेऽस्मिन्संपरेतं धनादिकम् ॥ तस्य त्यागे निमित्तं
किं विप्रस्तुष्येन्न तेन चेत् ॥ ६ ॥ श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ॥ दध्यङ्शिबिप्रभृतयः को विकल्पो
धरादिषु ॥ ७ ॥ यैरियं बुभुजे ब्रह्मन्दैत्येन्द्रैरनिवर्तिभिः ॥ तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि ॥ ८ ॥ सुलभा
युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ॥ न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥ मनस्विनः कारुणिकस्य शोभनं
यदर्थिकामोपनयेन दुर्गतिः ॥ कुतः पुनर्ब्रह्मविदां भवादृशां ततो बटोरस्य ददामि वाञ्छितम् ॥ १० ॥ यजन्ति यज्ञ-
क्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ॥ स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां
मुने ॥ ११ ॥ यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ॥ तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥ ॥

लोकान्परलोकांश्च भोगानिति वा । कालोऽग्रसीत्संहृतवान्न तु भुवि तैरधिगतं प्राप्तं यशोऽग्रसीत् । अतः कीर्तिरेव साध्या नान्यदिति भावः ॥ ८ ॥ देहत्यागादपि धनत्यागे कीर्तिर्भवतीत्याह—सुलभा इति । तनुं त्यजन्तीति तनुत्यजः । तीर्थे पात्रे । अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः ॥ ९ ॥ तर्हि निर्धनत्वेन दैन्यं स्यादिति चेत्तत्राह—मनस्विन इति । यादृशतादृशानामप्यर्थिनां कामोपनयेन कामपूरणेन दुर्गतिर्दैन्यमिति यत् तच्छोभनं भद्रमेव । भवादृशानां तु कामोपनयेन दुर्गतिः शोभनमिति किं पुनर्वक्तव्यमित्यर्थः ॥ १० ॥ ननु नायं वटुः किंतु विष्णुस्तव शत्रुरित्युक्तं, तर्हि सुतरामेव दास्यामीत्याह—यजन्तीति । परः शत्रुर्वास्तु ॥ ११ ॥ १२ ॥ ॥ ॥ ॥

१ प्राह्लादिरिति प्रह्लादपौत्रस्य मम भगवदानुकूल्यमेव स्वधर्म इति गूढोऽभिप्रायः इति चक्र० । २ भगवत्स्वरूपज्ञानेऽप्यत्र विप्रशब्दप्रयोगो भावगोपनार्थः शुक्रस्यासुराणां च दुःखा-भावाय इति चक्र० । ३ असुभिरहंतास्पदैः । धरादिषु ममतास्पदेषु । ४ यज्ञैरसोमकैः, क्रतुभिः ससोमकैर्यागैः इति सिद्धां० ।

यद्यदि यशो न जिहासति तर्हि युद्धेऽयं मां हत्वैनां भूमिं हरेच्छयीत वा । सम्यग्ज्ञातः सन्मम चित्ते शयीतेति वास्तवोऽर्थः ॥ १३ ॥ अश्रद्धितमजातश्रद्धम् ॥१४॥१५॥१६॥ जालकं मुक्ताभरणविशेषस्तन्मालावती । अवनेजनीनामपां कलशम् । भृतं पूर्णम् ॥१७॥१८॥१९॥२०॥ अवर्धत 'वाञ्छातः प्रतिगृह्यताम्' इति बलिना पूर्वमुक्तत्वात् । गुणत्रयमात्मनि यस्य तत् । अत एव भूः खमित्यादयो यस्मिन्नासत स्थितवन्तः ॥ २१ ॥ ऋत्विगादिसहितो बलिस्तस्य हरेः काये

एष वा उत्तमश्लोको न जिहासति यद्यशः ॥ हत्वा मैनां हरेद्युद्धे शयीत निहतो मया ॥ १३ ॥ ॥ श्रीशुक उवाच ॥ एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ॥ शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥ दृढं पण्डितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया ॥ मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः ॥ १५ ॥ एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ॥ वामनाय ददावेनामर्चित्वोदकपूर्वकम् ॥ १६ ॥ विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ॥ आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥ यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा ॥ अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥ तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ॥ तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदान्विताः ॥ १९ ॥ नेदुर्मुहुर्दुन्दुभयः सहस्रशो गन्धर्वकिंपूरुषकिन्नरा जगुः ॥ मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम् ॥ २० ॥ तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् ॥ भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत ॥ २१ ॥ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ॥ ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥ रसामचष्टाङ्घ्रितलेऽथ पादयोर्महीं महीध्रान्पुरुषस्य जङ्घयोः ॥ पतत्त्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्रसेनः ॥ २३ ॥ सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान् ॥ नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि चर्क्षमालाम् ॥ २४ ॥ हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेन्दुम् ॥ श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान् ॥ २५ ॥ इन्द्रप्रधानानमरान्भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि ॥ केशेषु मेघाञ्छ्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥ २६ ॥ ॥ ॥ ७ ॥

एतद्विश्वं ददर्श ॥ २२ ॥ तदेव प्रपञ्चयति—रसामिति पादोनैः सप्तभिः—मारुतं गणं वायुसप्तकम् । इन्द्रस्य सेनेव सेना यस्य सः । इन्द्रपदे स्थितत्वात् । अचष्ट ऐक्षत ॥२३॥ आत्मा स्वयं बलिर्मुख्यो येषां तानसुरान् । ऋक्षमालां नक्षत्रपङ्क्तिम् ॥२४॥ अङ्ग हे राजन् । समस्तान् रेफांश्च शब्दान् ॥२५॥ द्यौश्च द्यां च ॥ २६ ॥

१ अवनेजनीनां पादप्रक्षालनार्थानामपां अद्भिरित्यर्थः । २ अवनिज्य प्रक्षाल्य । ३ गृणन्तः स्तुवन्तः । ४ आर्जवमकौटिल्यं च । ५ अर्थाः शब्दादयो विषयाः । आशयश्चतुर्विधमन्तःकरणम् । ६ रसां रसातलम् । ७ रेफशब्दोपलक्षितवर्णमयान् शब्दान् इति वीर० । रेफोपलक्षितानकारादिसर्ववर्णानिति चक्र० ।

रसे रसने ॥ २७ ॥ रेतसो रेतसि । क्रमणेषु पादन्यासेषु । ओषधिजातय ओषधिजातीः ॥ २८ ॥ प्राणेष्विन्द्रियेषु ॥ २९ ॥ सर्वात्मनीत्यादिवाक्यान्तरम् । सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणान्वयः ॥ ३० ॥ विद्याधरसंज्ञोऽसिः ॥ ३१ ॥ मीनकुण्डले मकरकुण्डले । स्फुरन्ति किरीटादीनि यस्य सः ॥ ३२ ॥ मधुव्रतानां स्रजो यस्यां तया वनमालया श्रीवत्सादिभिश्चावृतो व्याप्तः । उरुक्रमत्वमेवाह—क्षितिमिति ॥ ३३ ॥ द्वितीयं पदं क्रमतो विक्षिपतस्त्रिविष्टपं तदीयं किंचिन्मात्रं जातम् । तृतीयाय तु न किंचिदपि । तत्र हेतुः—उरुक्रमस्याङ्घ्रिस्त्रिविष्टपादुपर्युपरि गच्छन् महर्जनाभ्यां तपसश्च परं गतः सत्यलोकं

वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ॥ अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥ स्पर्शे च कामं नृप रेतसोऽम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ॥ छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च ॥ २८ ॥ नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ॥ प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि ददर्श वीरः ॥ २९ ॥ सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ॥ सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥ पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ॥ विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥ ३१ ॥ सुनन्दमुख्या उपतस्थुरीशं पार्षदमुख्याः सहलोकपालाः ॥ स्फुरत्किरीटाङ्गदमीनकुण्डलश्रीवत्सरत्नोत्तममेखलाम्बरैः ॥ ३२ ॥ मधुव्रतस्रग्वनमालयावृतो रराज राजन्भगवानुरुक्रमः ॥ क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ॥ ३३ ॥ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि ॥ उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥ ३४ ॥ ॥ इति श्रीमद्भा० म० पु० अ० विश्वरूपदर्शनं नाम विंशतितमोऽध्यायः ॥ २० ॥ ॥ श्रीशुक उवाच ॥ सत्यं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ॥ मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः ॥ १ ॥ ॥ ॥

गत इति ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ एकविंशे पदापूर्तिमिषेण बलिबन्धनम् ॥ विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने ॥ १ ॥ उरुक्रमस्याङ्घ्रिस्तपसः परं गत इत्युक्तं, ततः किं वृत्तं तदाह—सत्यं सत्यलोकं प्राप्तं तमङ्घ्रिं समीक्ष्याजभवोऽभ्यगात् । तथा मरीचिमिश्रादयश्चेति द्वयोरन्वयः । कथंभूतोऽजभवः । हरेरङ्घ्रेर्नखा एवेन्दवस्तैर्हता स्वधाम्नो द्युतिर्यस्य सः । स्वयं च तैरावृतश्छन्नः । हे नरदेव, बृहद्व्रता योगिनश्च ॥ १ ॥ ॥ ॥ ॥ ॥

१ रसे रसनाया इति विज० । २ पक्ष्मसु पक्ष्मोन्मीलननिमीलनयोः । ३ विद्याधराभिधो वा विद्याया आधारः तस्यैव नन्दक इति नामान्तरम् । ४ पार्षदेषु मुख्याः सुनन्दादय इत्यर्थः । ५अत्र निपदमात्रभूमेः प्रतिगृहीतत्वेऽपि भुजाग्रैर्नभआदिव्याप्तिश्च नान्याप्त्या । तावद्भूमावूर्ध्वावस्थितेरप्यपेक्षितत्वादिति क्रमसंदर्भः । नभआदीनामपि पदद्वयान्तर्भूतत्वात्पदद्वयेनैव व्याप्तिरुच्यत इत्यपरे इति चक्र० । ६ अभ्यगुरिति वचनव्यत्ययेनेत्यर्थः ।

अङ्गानि शिक्षादीनि । पुराणानि तत्संहिताश्च । योग एव समीरस्तेन दीपितं ज्ञानमेवाग्निस्तेन रन्धितं दग्धं कर्मकल्मषं कर्ममलं येषाम् ॥२॥ ते च सर्वे तमङ्घ्रिं ववन्दिरे । यस्याङ्घ्रेः स्मरणानुभावतः । अकर्मकं कर्मभिरप्राप्यम् । विष्णोरङ्घ्रये स्वयं यस्य नाभिपङ्केरुहसंभवस्तस्य विष्णोरङ्घ्रिं समर्च्य ॥ ३ ॥ लोकत्रयं निमार्ष्टि पवित्रयति ॥४॥ संक्षिप्ता उपसंहृतात्मविभूतिः स्वविस्तारो येन तस्मै । यथापूर्वं वामनरूपेण स्थितायेत्यर्थः ॥५॥ ६ ॥ ७ ॥ ८ ॥ त्रिपदविषया या व्याजयाच्ञा कपटयाच्ञा तया स्वभर्तुर्बलेर्महीं हृतां दृष्ट्वा अत्यमर्षिताः सन्त ऊचुः ॥९॥ किमूचुस्तदाह—न वै इति सार्धैस्त्रिभिः ॥१०॥११॥१२॥ अनुचराश्च ते असुराश्च ॥ १३॥ १४॥ १५॥ १६॥

वेदोपवेदा नियमा॑न्विता यमास्तर्केतिहासाङ्गपुराणसंहिताः ॥ ये चापरे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ २ ॥ ववन्दिरे यत्स्मरणानुभावतः स्वायंभुवं धाम गता अकर्मकम् ॥ अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोऽर्हणोदकम् ॥ समर्च्य भक्त्याभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसंभवः स्वयम् ॥ ३ ॥ धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र ॥ स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ४ ॥ ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ॥ सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये ॥ ५ ॥ तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ॥ धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ६ ॥ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः ॥ नृत्यवादित्रगीतैश्च शङ्खदुन्दुभिनिःस्वनैः ॥ ७ ॥ जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः ॥ विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ८ ॥ महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया ॥ ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ ९ ॥ न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः ॥ द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ १० ॥ अनेन याचमानेन शत्रुणा बटुरूपिणा ॥ सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि ॥ ११ ॥ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ॥ नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १२ ॥ तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ॥ इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १३ ॥ ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः ॥ अनिच्छतो बले राजन्प्राद्रवञ्जातमन्यवः ॥ १४ ॥ तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप ॥ प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १५ ॥ नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ॥ कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १६ ॥ ॥ ॥

१ 'नियमा नयान्विता' इति वीर० पाठः । २ अकर्मकं न विद्यन्ते कर्माणि निकृष्टकर्माणि साधनत्वेन यस्य तं इति चक्र० । ३ पतती पतन्ती । ४ बर्हिषि यज्ञे इति चक्र० । ५ 'वधे' इति पाठः । ६ शुकोक्तिरियम् । ७ 'अनिच्छन्तो बले राज्ञां' इति वीर० पाठः । ८ जयविजययोः शापवशादधःपातादत्र तयोः कथं संभव इत्याशङ्कायां एषामकस्मादाविर्भावेन नित्यभगवत्पार्श्ववर्तित्वं बोधयति इति क्रम० । चक्रवर्ती तु भगवतो ब्रह्मण्यत्वस्य भक्तानामपराधविभीषिकायाश्च प्रदर्शनार्थमेवानयोः प्रकाशावेव वैकुण्ठादधः पेततुर्न साक्षादिति समादधौ ।

॥ १७ ॥ १८ ॥ अर्थकृदनुकूलः ॥ १९ ॥ पौरुषैस्तं कालमतिवर्तितुं पुमानीश्वरः समर्थो न भवति ॥ २० ॥ २१ ॥ २२ ॥ हरेरनुचरा देवाः । दैवेन ऋद्धैः समृद्धैर्भवद्भिः ॥ २३ ॥ अर्थत्वायानुकूल्याय ॥ २४ ॥ २५ ॥ विषु पक्षिषु राजत इति विराट् । प्रभोश्चिकीर्षितं ज्ञात्वा । अयमर्थः—अस्य सर्वस्वापहारेण ममेत्यभिमानं संत्याज्येदानीं देहस्वीकारेणाहंकारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति, न चानेन तुल्योऽन्यः कोऽपि सत्यसंधो धीरो वास्तीति तद्यशः-

जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ॥ सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीम् ॥ १७ ॥ हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः ॥ वारयामास संरब्धान्काव्यशापमनुस्मरन् ॥ १८ ॥ हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः ॥ मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ १९ ॥ यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ॥ तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २० ॥ यो नो भवाय प्रागासीदभवाय दिवौकसाम् ॥ स एव भगवानद्य वर्तते तद्विपर्ययम् ॥ २१ ॥ बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभिः ॥ सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २२ ॥ भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ॥ दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः ॥ २३ ॥ एतान्वयं विजेष्यामो यदि दैवं प्रसीदति ॥ तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २४ ॥ ॥ श्रीशुक उवाच ॥ पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ॥ रसां निर्विविशू राजन्विष्णुपार्षदताडिताः ॥ २५ ॥ अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् ॥ बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतौ ॥ २६ ॥ हाहाकारो महानासीद्रोदस्योः सर्वतोदिशम् ॥ निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २७ ॥ तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ॥ नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २८ ॥ पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ॥ द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ २९ ॥ यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ॥ यावद्वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३० ॥ पदैकेन मया क्रान्तो भूर्लोकः खं दिशस्तनोः ॥ स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ॥ ३१ ॥ ॥ ॥

प्रख्यापनार्थं किंचित्पातयितुमपीच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबन्धेति । सौत्येऽहनि सोमाभिषवदिने ॥ २६ ॥ रोदस्योर्द्यावापृथिव्योः ॥ २७ ॥ २८ ॥ ॥ २९ ॥ असौ सूर्यः ॥ ३० ॥ मया आत्मनेत्यन्वयः । व्यापिनेत्यर्थः । खं च दिशश्च तनोः तन्वा । ते स्वं त्वदीयं सर्वस्वम् ॥ ३१ ॥ ॥

१ पौरुषैः पुरुषकारैः । २ तद्विपर्ययं यथा स्यात्तथा । ३ दैवेन दैवात्मकेन कालेन इति क्रम० । ४ 'निगृह्यमाणे' इति पाठस्तत्रार्षमक्षराधिक्यम् । 'बध्यमाने' इति पाठः । ५ 'यावद्वृष्टिः सपर्जन्यः' इति वीर० पाठः । ६ पातयितुमधः पातयितुमित्यर्थः । 'यातयितुम्' इति पाठे यातनाः प्रदातुमित्यर्थः । 'याचयितुम्' इति पाठे अवशिष्टं तृतीयं पादमित्यर्थः ।

गुरुणा शुक्रेणानुमोदितः सन् ॥ ३२ ॥ एवमुक्तेऽपि निरयपरिहारार्थं स्वर्गभ्रंशपरिहारार्थं च मनोरथं कुर्वन्तं प्रत्याह—वृथेति । यः प्रतिश्रुतस्यादानेन याचकं विप्रलम्भते तस्य मनोरथो वृथैव स्वर्गश्च तस्य दूर एव, स चाधः पतत्येव ॥३३॥ त्वया चाहं विप्रलब्धस्तस्माद्व्यलीकस्यानृतस्य फलं निरयं भुङ्क्ष्वेत्यर्थः ॥३४॥ इति श्रीमद्भा० म० पु० अष्टमस्कन्धे भा० दी० टीकायामेकविंशोऽध्यायः ॥ २१ ॥ ॥ द्वाविंशे तु प्रसन्नः सन् प्रस्थाप्य सुतलं बलिम् ॥ दत्त्वा वरान्हरिर्न्यूनं मत्वा तद्द्वारपोऽभवत् ॥ १ ॥ समर्पिततनूवित्तनिर्मलाचलभक्तितः ॥ छलितो बलिना चित्रं स्वमेवार्पयदच्युतः ॥ २ ॥ विप्रकृतोऽपकृतः भिद्यमानः सत्त्वाच्चाल्यमानः ॥१॥ हे उत्तमश्लोकेति कटाक्षः । मम वच ईरितं प्रतिश्रुतं न तावद्व्यलीकम् । त्वया कपटेन वामनतया भिक्षित्वा रूपान्तरस्याविष्कृतत्वात् ।

प्रतिश्रुतमदातुस्ते निरये वास इष्यते ॥ विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ॥ ३२ ॥ वृथा मनोरथस्तस्य[2] दूरे स्वर्गः पतत्यधः ॥ प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते ॥ ३३ ॥ विप्रलब्धो[3] ददामीति त्वयाहं चाढ्यमानिना ॥ तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समाः ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे बलिनिग्रहो नामैकविंशोऽध्यायः ॥ २१ ॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ एवं विप्रकृतो राजन् बलिर्भगवताऽसुरः ॥ भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १ ॥ ॥ बलिरुवाच ॥ यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते ॥ करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ २ ॥ बिभेमि नाहं निरयात्पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा ॥ ३ ॥ पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ॥ यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ४ ॥ ॥ ॥

एवमपि यदि भवान्व्यलीकं मन्यते तथापि ऋतमेवाहं करोमि । मदुक्तं विप्रलम्भनं न भवतु । मे शीर्ष्णि निजं तृतीयं पदं कुरु । नच द्वाभ्यां विश्वं क्रान्तवतो मे तव शिरः पादपर्याप्तं न भवतीति मन्येथाः । वित्तेन चेत्पदद्वयं जातं तर्हीदमधिकमेव स्यात् । वित्तादपि वित्तवतोऽधिकत्वादिति भावः ॥ २ ॥ ननु च—'आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥' इत्यादिवचनादात्मभयपरिहाराय सर्वस्वं त्यज्यते, त्वं तु कुतो भीतः सन्नात्मानमर्पयसत आह—बिभेमीति । असाधुवादादपकीर्तेर्यथाऽहं भृशमुद्विजे, निरयादिभ्यो न तथा बिभेमि ॥३॥ ननु मया निगृहीतत्वात्तवापकीर्तिर्जातैव, नैवेत्याह—पुंसामिति । अर्हत्तमैरर्पितम् । यं दण्डं मात्रादयोऽपि न ह्यादिशन्ति नैवार्पयन्ति । हितैषिणा त्वया निगृहीतोऽहं श्लाघ्य एवासीति भावः ॥ ४ ॥

[1] गर्भितार्थस्तु निरये रलयोरैक्यात् निलये मदीये वैकुण्ठे वास इष्यते उचितो भवति । [2] भगवद्गर्भितोऽर्थस्तु—तस्य मद्भक्तस्य भवतः स्वर्गमनोरथो वृथैव । यतस्त्वत्तो वैकुण्ठस्थात् स्वर्गो दूरे अधःपतति । यो भवान् प्रतिश्रुतस्य आ सम्यक् दानेन मामर्थिनं विप्रलम्भसे विशेषतः प्रकर्षेण लम्भसे सर्वस्वसमर्पणेन । अतस्त्वदीयो द्वारपालो भूत्वा स्थास्यामीति भावः इति चक्र० । [3] गर्भितार्थे विप्रलब्ध इति । आढ्येभ्यः शक्रादिभ्योऽपि मानिना लोकैर्दीयमानसमानवता त्वयाऽहं यतो विशेषतः प्रकर्षेण लब्धः तत्तस्मात् ददामि इति व्यलीकं विगतालीकं मया दीयमानत्वात्परमफलं यत्र तत् निलयं सुतलसंबन्धि संपदं भुङ्क्ष्व ततो वैकुण्ठं गन्तेति ।

नन्वहं देवानां हितैषी नासुराणां तत्राह—त्वं नूनमिति । पारोक्ष्यः शत्रुच्छलेन वर्तमानः ॥ ५ ॥ शत्रुत्वं पुनर्भक्तानिवास्माननुग्रहीतुमेवेत्याह—यस्मिन्निति । उ अहो । ह प्रसिद्धम् ॥६॥ अतो नात्र मम लज्जा नापि दुःखमित्याह—तेन गुरुणा भवता ॥७॥ किंच योऽयं दण्डरूपो ममानुग्रहस्त्वया कृतः स तु त्वद्भक्तपौत्रत्वेन, न त्वहमनुग्रहस्य पात्रमित्याशयेनाह—पितामह इति । भवदीयानां संमतः । यत आविष्कृतः साधुवादो यस्य । त्वमेव परम आश्रयो यस्य सः । अतो भवतो विपक्षेण विद्विषा हिरण्यकशिपुना विचित्रं वैशसं हिंसां संप्रापितोऽपि देहादीनामसारतां निश्चित्य, अकुतोभयं ध्रुवं च भवतः पादपद्ममेव प्रपेदे । अथ तस्मादह-

त्वं नूनमसुराणां नः पारोक्ष्यः[1] परमो गुरुः ॥ यो नोऽनेकमदान्धानां विभ्रंशं[2] चक्षुरादिशत् ॥ ५ ॥ यस्मिन्वैरानुबन्धेन रूढेन विबुधेतराः ॥ बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः ॥ ६ ॥ तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ॥ बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ॥ ७ ॥ पितामहो मे भवदीयसंमतः प्रह्लाद आविष्कृतसाधुवादः ॥ भवद्विपक्षेण विचित्रवैशसं संप्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥ किमात्मना[3]ऽनेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः ॥ किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥९॥ इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ॥ ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तमः ॥१०॥ अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ॥ इदं कृतान्तान्तिकवर्ति जीवितं ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥११॥ ॥ श्रीशुक उवाच ॥ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ॥ आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥ तमिन्द्रसेनः[4] स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ॥ प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं[5] समैक्षत ॥१३॥ तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ॥ ननाम मूर्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥ स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम्[6] ॥ उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविक्लवः[7] ॥ १५ ॥ ॥ ॥ ॥

मपि दैवेन तस्यैव भाग्येन तवान्तिकं नीत इति चतुर्णामन्वयः ॥८॥ अन्तत आयुषोऽन्ते । रिक्थहारैः पुत्रैः । इह गेहेषु केवलमायुषो व्यय एव नतु सुखं किंचित् ॥९॥ स प्रसिद्धो महान् । स्वपक्षं दैत्यकुलं क्षपयतीति तस्मापि ॥ १० ॥ प्रसभं बलात्त्याजिता श्रीर्यस्य । यया श्रिया स्तब्धमतिः सन्पुमानिदं जीवितमध्रुवं न बुध्यते । कथंभूतम् । कृतान्तस्यान्तिकवर्ति मृत्योः संनिहितम् ॥ ११ ॥ राकापतिः पूर्णेन्दुः ॥१२॥ अञ्जनत्विषं श्यामम् ॥१३॥ स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः ॥ १४ ॥ शिरसा नमन्नेवोपेत्य मूर्ध्ना ननाम । बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विक्लवो विह्वलः ॥ १५ ॥ ॥

१ 'परोक्षः' इति पाठः । २ ऐश्वर्यभ्रंशरूपं चक्षुः । ३ आत्मना देहेन । ४ इन्द्रसेनो बलेः । ५ सुभगं सर्वलोकप्रियम् । ६ 'हरिं सुनन्दाद्यनुगैः' इति पाठः । ७ 'विह्वलः' इति पाठः ।

त्वयैवेति । नह्यैन्द्रं पदमेतदीयं त्वयापहृतं, किंतु स्वीयमेव पुनः स्वीकृतं, तच्च शोभनमेव कृतम् । तत्र हेतुः—मन्य इति । यद्यस्माच्छ्रीरेव यदात्ममोहनं तस्माद्विभ्रंशितः ॥ १६ ॥ मोहनत्वमेवाह—यया श्रिया विद्वानपि यतः संयतोऽपि मुह्यति तत्तस्यां सत्यां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति । तस्मै महाकारुणिकाय ॥१७॥ तस्य प्रह्लादस्यानुशृण्वत उवाचेति । किंचिद्वक्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥ तदैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता, तां च संमानयन् हिरण्यगर्भः क्षणं तूर्ष्णीं स्थितः, अतस्तस्या एव वाक्यं प्रथममवतारयति—बद्धं वीक्ष्येति ॥१९॥ त्रिजगतः कर्तुः प्रभोः पालकस्यास्ततः संहर्तुश्चेश्वरस्य तवान्ये किमावहन्ति किं समर्पयन्ति । त्वयावरोपितः कर्तृवादः कर्तारः स्वतन्त्रा वयमिति वादमात्रमपि येषां ते । अयं भावः—लोकत्रयं मयार्पितं तृतीयपादाय

॥ प्रह्लाद उवाच ॥ त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् ॥ मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा ॥ तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे ॥१७॥ ॥ श्रीशुक उवाच ॥ तस्यानुशृण्वतो राजन्प्रह्लादस्य कृताञ्जलेः ॥ हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥१८॥ बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ॥ प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ॥१९॥ ॥ विन्ध्यावलिरुवाच ॥ क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ॥ कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥२०॥ ॥ ब्रह्मोवाच ॥ भूतभावन भूतेश देवदेव जगन्मय ॥ मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ॥ निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥२२॥ यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ॥ अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहम् ॥ यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥२४॥

देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण भुवनत्रयं कुबुद्धिर्निर्लज्जश्च, यतस्त्वमेव सर्वस्यापि स्वामी, अतो मन्दबुद्धिमेनं केवलं कृपया विमुच्य पालयेति ॥ २० ॥ तदेवं प्रह्लादस्य विन्ध्यावलेश्च परमार्थोक्त्या प्रसन्नो हरिः, ब्रह्मा तु लोकदृष्ट्यैव विज्ञापयति—भूतभावनेति त्रिभिः ॥ २१ ॥ निग्रहानर्हत्वे हेतुः—कृत्स्नेति । सर्वस्वमेवाह—आत्मेति ॥ २२ ॥ तदेव कैमुत्यन्यायेनाह—यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन उत्तमां गतिं प्राप्नोति, तस्मै तुभ्यमसौ बलिस्त्रिलोकीं दाश्वान्दत्तवान्स आर्तिं कथं प्राप्नुयात् ॥ २३ तस्य विशोऽर्थान् । नन्वर्थापहारः कोऽयमनुग्रहस्तत्राह— यन्मदः यैरर्थैर्मदो यस्य सः । अत एव स्तब्धोऽनम्रः सन् । मदस्तम्भहेतूनामर्थानामपहार एवानुग्रह इत्यर्थः ॥ २४ ॥

१ न चात्र तव दत्तापहारलक्षणो दोषः यतः स्नेहेन पुत्रहस्ते दत्तस्यापि मोदकादेरहिताशङ्कया पुनराच्छिद्य नीतवतः पितुर्यथा तथेत्यर्थः । २ निग्रहं बन्धनम् । ३ आत्मा देहस्तद्रूपं सर्वस्वम् ।

दुर्लभं पुरुषजन्म कथंचिल्लब्धवतो जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरः, तस्य च नाशो मदनुग्रहादेवेत्याह—यदेति द्वाभ्याम् । अनीशः परतन्त्रः सन्निजैः
कर्मभिर्नानायोनिषु कृमिकीटकादिषु संसरन् ॥२५॥ तत्र पौरुष्यां गतौ जन्मादिभिरपि यस्य यदि स्तम्भो न भवेत्तर्ह्ययं मदनुग्रह एव ॥२६॥ कथं तर्हि ध्रुवादि-
भ्योऽर्थसंपदो ददासीति चेत्तत्राह—मान एव स्तम्भोऽनम्रता तस्य निमित्तभूतानां समन्ततः सर्वशः सर्वश्रेयःप्रतिकूलानां जन्मादीनां सत्त्वेऽपि जन्मादिभिरिति
वा । हन्तेति खेदे । हे ब्रह्मन्, मत्परो न मुह्येत् । अतो भक्तस्येच्छया संपदोऽपि ददामि । अभक्तस्तु मुह्येदिति तदपहाररूपमेव तस्यानुग्रहं करोमीति भावः ॥२७॥
अस्य चेदानीं मत्परत्वादन्यैर्दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह—एष इति त्रिभिः ॥ २८॥२९ ॥ 'न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान्'

यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥२५॥ जन्मकर्मवयोरूप-
विद्यैश्वर्यधनादिभिः ॥ यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥२६॥ मानस्तम्भनिमित्तानां जन्मादीनां[1] समन्ततः ॥
सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥२७॥ एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ॥ अजैषीदजयां मायां सीद-
न्नपि न मुह्यति ॥२८॥ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ॥ ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः
॥२९॥ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ॥ छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥३०॥ एष मे
प्रापितः स्थानं दुष्प्रापममरैरपि ॥ सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥३१॥ तावत्सुतलमध्यास्तां विश्वकर्मवि-
निर्मितम् ॥ यन्नाधयो[2] व्याधयश्च क्लमस्तन्द्रा पराभवः ॥ नोपसर्गा निवसतां संभवन्ति ममेक्षया ॥३२॥ इन्द्रसेन महा-
राज याहि भो भद्रमस्तु ते ॥ सुतलं स्वर्गिभिः प्रार्थ्यं[3] ज्ञातिभिः परिवारितः ॥३३॥ न त्वामभिभविष्यन्ति लोकेशाः
किमुतापरे ॥ त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति[4] ॥३४॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ॥ सदा
संनिहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥ तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः ॥ दृष्ट्वा मदनुभावं वै सद्यः
कुण्ठो विनङ्क्ष्यति ॥ ३६॥ ॥ इति श्रीमद्भा० म० पु० अ० बलिवामनसंवादो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

इत्यादिना छलैरेव मया धर्म उक्तस्तथापि तं धर्ममयं न त्यजति, अतः सत्यवाक् ॥३०॥ मे मया । अहमेवाश्रयः पालको यस्य सः ॥३१॥ 'स्थानं प्रापितः' इति यदुक्तं
तदेव स्थानमाह—तावत्सावर्णिमन्वन्तरपर्यन्तं सुतलमध्यास्ताम् । अधिवसत्वित्यर्थः । यद्यस्मिन्वसतामाध्यादयो ममेक्षया न संभवन्ति ॥३२॥ एवं ब्रह्माणं प्रत्युक्त्वा
करुणापरवशः साक्षाद्बलिं प्रत्याह—इन्द्रसेनेति चतुर्भिः ॥३३॥ त्वच्छासनमतिगच्छन्त्यतिवर्तन्त इति तथा तान् ॥ ३४ ॥ तथापि भगवद्वियोगात्तदनिच्छन्तं
प्रत्याह—सदेति ॥ ३५ ॥ सङ्गात् य आसुरो भावः स विनङ्क्ष्यति ॥ ३६ ॥ इति श्रीमद्भा० म० पु० अष्टमस्कंधे भा० दी० टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥

१ जन्मादीनामित्यत्र 'नामिस्तृप्यति काष्ठानाम्' इतिवत् षष्ठी । वैरित्यर्थः । २ यत् यत्र सुतले । ३ स्वर्गिभिः प्रार्थ्यमेव ननु लभ्यम् । ४ सूदयिष्यति खण्डयिष्यति ।
५ वधेयान्ते—'विप्रलब्धो ददामीति' इत्यादिना धर्मोऽप्ययमे उक्तः इति चक्र० ।


१०१

त्रयोविंशे बलौ याते सुतलं सपितामहे ॥ उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदते हरिः ॥ १ ॥ वाष्पस्य कलाभिर्बिन्दुभिराकुले ईक्षणे यस्य । भक्त्या उद्गल उत्कण्ठः ॥ १ ॥ अहो त्वत्प्रणाममहिमा, यदर्थं कृतः ससुद्यम एव प्रपन्नानां भक्तानां योऽर्थस्तस्य विधावभक्तेऽपि तस्य संपादने समाहितोऽप्रमत्तः स्थितः । कुतः । यद्येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वस्त्वदनुग्रहोपसदे नीचे राजसे मय्यर्पितः । अयं भावः—परमेश्वराय तुभ्यमहं वराकस्त्रिलोकीं दत्तवानित्येतदास्ताम्, प्रणामोऽपि न सम्यक्कृतः । किंतु तदर्थमुद्यममात्रं कृतं, तेन च कर्मतपोदानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः संपादितः अहो त्वत्प्रणामप्रभावाश्चर्यमिति ॥ २ ॥ ३ ॥ अशासदुपेन्द्रः सन् पालयामास ॥ ४ ॥ ५ ॥ दुर्गपालोऽसि, 'रक्षिष्ये सर्वतोऽहं त्वाम्' इत्युक्तत्वात् ॥ ६ ॥ हे शरण-

॥ श्रीशुक उवाच ॥ इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसंमतः ॥ बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युद्गलो गद्गदया गिराऽब्रवीत् ॥१॥ ॥ बलिरुवाच ॥ अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥ ॥श्रीशुक उवाच ॥ इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ॥ विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥३॥ एवमिन्द्राय भगवान्प्रत्यानीय त्रिविष्टपम् ॥ पूरयित्वाऽदितेः काममशासत्सकलं जगत् ॥४॥ लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ॥ निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥ ॥ प्रह्लाद उवाच ॥ नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ॥ यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः ॥६॥ यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः ॥ कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥ चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य ॥ सर्वात्मनः समदृशो विषमस्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् ॥ मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥ ॥

दाश्रयप्रद, ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयश्च ते वयं तस्य भवतो दाक्षिण्यदृष्टेः पदवीं कस्माद्धेतोः प्रणीताः । बहुमानेन चित्तानुवर्तनं दाक्षिण्यं तेन या दृष्टिस्तद्विषयतां प्रापिताः ॥ ७ ॥ भक्तप्रियत्वादिति चेत्तर्ह्येवं तवेहितम् । अहो चित्रम् । किं तत् । सर्वात्मनः समदृशश्च स्वभावो विषम इति यत् । सर्वात्मत्वे चित्रचरितत्वे हेतुः—अमिताचिन्त्या योगमाया तस्या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य । अहो इत्यत्र सन्धिरार्षः । समदृक्त्वे हेतुः—विशारदस्य सर्वज्ञस्य । अथवा भक्तप्रियत्वेऽपि तव वैषम्यं नास्त्येव । यतः कल्पतरुस्वभावः सन् भक्तप्रियोऽसि । नहि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः ॥ ८ ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ सुतलं गन्तुमुद्यतोऽभूदित्यर्थः । अत एवाग्रे बलिसाहित्येन प्रह्लादस्य सुतलप्रवेशकथनं सङ्गच्छते । २ मुक्तो नागपाशात् । ३ हे असितयोग अपरिमितयोगैश्वर्य इति चक्र० ।

मद्दर्शनेन यो महाह्लादस्तेन ध्वस्तं कर्मनिबन्धनमज्ञानं यस्य ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ कर्म वितन्वतः शिष्यस्य यच्छिद्रमन्तरं न्यूनं जातं तत्संतनु विस्तारय संधत्स्व । यजमानं विना कथं संधातव्यमिति न वाच्यमित्याह—यत्तदिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् । किं पुनरनुष्ठितमित्यर्थः ॥ १४ ॥ भवान्यस्य सर्वेणापि भावेन वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यम् । कथंभूतः । कर्मणामीश्वरः प्रवर्तकः । यज्ञेशो यज्ञफलदः यज्ञमयश्च पुरुषः ॥ १५ ॥ आस्तां तावत्पूजा । यस्मान्मन्त्रतः स्वरादिभ्रंशेन, तन्त्रतो व्युत्क्रमादिना, देशतः कालतश्च, अर्हतः पात्रतः, वस्तुतश्च दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव

नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ॥ मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥ ॥ श्रीशुक उवाच ॥ आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ॥ बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥ अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ॥ आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥ ब्रह्मन्संतनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ॥ यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥१४॥ ॥ शुक्र उवाच ॥ कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ॥ यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥१५॥ मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रं नामसंकीर्तनं[2] तव ॥ १६ ॥ तथापि वदतो[3] भूमन् करिष्याम्यनुशासनम्[4] ॥ एतच्छ्रेयः परं पुंसां यत्तवाज्ञानुपालनम् ॥१७॥ ॥ श्रीशुक उवाच ॥ अभिनन्द्य हरेराज्ञामुशना भगवानिति ॥ यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥ एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः ॥ ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥ प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ॥ दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥ कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ॥ लोकानां लोकपाला- नामकरोद्वामनं पतिम् ॥ २१ ॥ वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ॥ मङ्गलानां व्रतानां च कल्पं[5] स्वर्गापव- र्गयोः ॥ २२ ॥ उपेन्द्रं कल्पयांचक्रे पतिं सर्वविभूतये[6] ॥ तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥ ॥

नामानुकीर्तनमात्रमेव निश्छिद्रं करोतीति ॥ १६ ॥ १७ ॥ हरेराज्ञां प्रतिनन्द्य बलेर्यज्ञच्छिद्रं समाधत्त संदधे । पाठान्तरे समाधाय तदाज्ञां संपादितवा- निति शेषः ॥ १८ ॥ १९ ॥ देवाश्च ऋषयश्च भूमिपाश्च मनवस्तैः सहितः ॥ २० ॥ २१ ॥ ननु लोकादीनां पतिरिन्द्रोऽस्त्येव, सत्यम्, तथापि वेदादीनां कल्पं पालने दक्षं वामनमुपेन्द्रं कल्पयांचक्रे ॥ २२ ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ बलिबन्धनेन तस्यापराधं हरतीति हरिः । २ 'अनुसंकीर्तनं' इति पाठः । ३ 'भवतः' इति पाठः । ४ अनुशासनमाज्ञापालनम् । ५ कल्प पालने समर्थम् । ६ सर्वविभूतये सर्वेषां कल्याणाय । ७ 'समाधाय' इत्येवंरूपे । ८ मनवो मनुपुत्राश्चेति सिद्धां० । ९ पतिमित्यस्यैवार्थो वामनमिति । 'वामनं कल्पयांचक्रे' इति पाठे पतिमित्यस्यार्थ उपेन्द्रमिति ।

देवयानेन मार्गेण । विमानेनेति वा ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ एतच्चरितमाख्यातमिति विशेषोक्त्याऽन्यान्यपि सन्तीत्युक्तम् ॥ २८ ॥ तानि तर्हि निःशेषाणि वर्णनीयानीत्यपेक्षायामाह—पारमिति । उरु बहुधा विक्रमतो विष्णोर्महिम्नः पारं यो गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् । यथा पार्थिवपरमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्यमित्यर्थः । तथा च मन्त्रः—'विष्णोर्नु कं वीर्याणि' इति । एतदेव मन्त्रान्तरार्थं सूचयन्नाह—यस्य पुरुषस्य पूर्णमहिम्नः पारं मन्त्रदृगृषिर्वसिष्ठ इति एवमाह—कथम् । किं जायमानो जातो वा उपैति न कोऽपीति वदन्ननन्तत्वेनैवाहेत्यर्थः । तथा च मन्त्रः—'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इति ॥ २९ ॥ य इदं शृण्वन्भवति स परां गतिं याति ॥ ३० ॥

ततस्त्विन्द्रः पुरस्कृत्य[1] देवयानेन वामनम् ॥ लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥ प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः ॥ श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥ ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ॥ पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥ सुमहत्कर्म तद्विष्णोर्गायन्तः परमाद्भुतम् ॥ धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥ सर्वमेतन्मयाख्यातं भवतः कुलनन्दन ॥ उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥ पारं महिम्न उरु विक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ॥ किं जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥ य इदं देवदेवस्य हरेरद्भुतकर्मणः ॥ अवतारानुचरितं शृण्वन् याति परां गतिम् ॥ ३० ॥ क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ॥ यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥ ॥ इति श्रीम० म० पु० अ० वामनावतारचरिते त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ॥ अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥ यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ॥ तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥ एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥ ॥ सूत उवाच ॥ इत्युक्तो विष्णुरातेन भगवान्बादरायणिः ॥ उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ ॥ ॥

सुकृतं यथावत्कृतं विदुः ॥ ३१ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे भावार्थदीपिकायां टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ चतुर्विंशे प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः ॥ लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥ १ ॥ तनुं तनुं विदर्शयादौ निजैश्वर्यनिदर्शनात् ॥ मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥ २ ॥ मायया मत्स्यविडम्बनं मत्स्यरूपानुकरणं यस्यां निरूप्यते ताम् ॥ १ ॥ ननु कस्मादकस्मादेव मत्स्यावतारश्रवणेच्छा, श्रीवामनसादृश्यादित्याह—तदर्थमिति द्वाभ्याम् । दुर्मर्षं दुःसहम् ॥ २ ॥ बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं धृतवानिति युक्तमुक्तम् । यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयदेतन्नो यथावद्वक्तुमर्हसीत्यर्थः ॥ ३ ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

[1] पुरस्कृत्य अनर्घवस्त्रालंकारादिभिः सन्मान्येति भावः ।

सामान्येनावतारप्रयोजनमाह—गोविप्रेति ॥ ५ ॥ जुगुप्सितत्वं परिहरति—धियो गुणैर्यान्युचावचानि भूतानि तेषु नियन्तृत्वेन चरन्नपीश्वरो नोचावचत्वं भजते, निर्गुणत्वात् । कुतः पुनः शुद्धसत्त्वमयैर्मत्स्याद्याकारैरुचावचत्वशङ्केति भावः ॥ ६ ॥ विशेषतो मत्स्यावतारप्रयोजनमाह—आसीदिति त्रिभिः—ब्रह्मणो निद्रायां भवो ब्राह्मस्तेनैव निमित्तेन जातो नैमित्तिकः । समुद्रे उपप्लुता निमग्नाः ॥ ७ ॥ अन्तिके निःसृतान् ॥८॥ शफरीरूपं मत्स्यरूपम् ॥९॥ प्रयोजनान्तरं

॥ श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥५॥ उच्चावचेषु
भूतेषु चरन्वायुरिवेश्वरः ॥ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥ आसीदतीव कल्पान्ते ब्राह्मो नैमित्तिको
लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥७॥ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ॥ मुखतो निःसृतान्वेदान्
हयग्रीवोऽन्तिकेऽहरत् ॥८॥ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ॥ दधार शफरीरूपं भगवान्हरिरीश्वरः ॥९॥ तत्र
राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ॥ नारायणपरोऽतप्यत्तपः स सलिलाशनः ॥ १० ॥ योऽसावस्मिन्महाकल्पे
तनयः स विवस्वतः ॥ श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥११॥ एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥
तस्याञ्जल्युदके काचिच्छफर्येकाभ्यपद्यत ॥१२॥ सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ॥ उत्ससर्ज नदीतोये शफरीं
द्रविडेश्वरः ॥१३॥ तमाह सातिकरुणं महाकारुणिकं नृपम् ॥ यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ॥ कथं
विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥१४॥ तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ॥ अजानन्रक्षणार्थाय शफर्याः
स मनो दधे ॥१५॥ तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः ॥ कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥१६॥
सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ ॥ अलब्ध्वात्मावकाशं वा इदमाह महीपतिम् ॥१७॥ नाहं कमण्डलावस्मि-
न्कृच्छ्रं वस्तुमिहोत्सहे ॥ कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥१८॥ स एनां तत आदाय न्यधादौदञ्चनोदके ॥
तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥१९॥ न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् ॥ पृथु देहि पदं मह्यं यत्त्वाहं शरणं
गता ॥ २० ॥ तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ॥ तदावृत्यात्मना सोयं महामीनोऽन्ववर्धत ॥२१॥

लीलाप्रकारं चाह—तत्र राजऋषिरित्यादि यावत्समाप्ति ॥ १० ॥ स एव श्राद्धदेव इति ख्यातः ॥ ११ ॥ कृतमालायां नद्याम् ॥ १२ ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥ यत्राहं सुखं निवसामि तदोकः स्थानं कल्पय ॥ १८ ॥ औदञ्चनोदके मणिकस्थे जले ॥ १९ ॥ २० ॥ २१ ॥

१ तोयेन अञ्जलितोयेन । २ 'अलब्धात्मावकाशम्' इति पाठे क्रियाविशेषणम् । ३ वा इदमित्यत्र वै इति च्छेदः । ४ स एनामित्यादि शुकवाक्यम् । ५ यद्यस्मात् । त्वा त्वाम् । ६ तत् सरोवरम् । ७ आत्मना देहेन । ८ 'तोयम्' इति पाठः । तत्सरःसम्बन्धि तोयमित्यर्थः ।

रक्षायोगेन रक्षाया योगेनोपायेन । यथा महाह्रदप्राप्तेरर्वाक् जलं विना न शुष्येयं तेनोपायेन निधेहि । अविंदासिनि अनुपक्षये ॥ २२ ॥ संमितं तत्तज्जलाशयपरिमितम् ॥ २३ ॥ २४ ॥ २५ ॥ अभिव्यानशेऽभितो व्यासवान् ॥ २६ ॥ २७ ॥ मुख्यः सत्य आत्मा च गतिश्चाश्रयः ॥ २८ ॥ २९ ॥ हे अरविन्दाक्ष, पृथगात्मनां देहाद्यभिमानिनां सतामितरेषां पदोपसर्पणं यथा मृषा भवेत्तथा सर्वसुहृत्प्रियात्मनस्तव पदोपसर्पणं मृषा न भवेत् । यद्यस्मान्नो भक्तानामद्भुतं

नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ॥ निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥२२॥ इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ॥ जलाशये संमितं तं समुद्रे प्राक्षिपज्झषम् ॥२३॥ क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ॥ अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४॥ एवं विमोहितस्तेन वदता वल्गुभारतीम् ॥ तमाह को भवानस्मान्मत्स्यरूपेण मोहयन् ॥२५॥ नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि च ॥ यो भवान् योजनशतमह्नाऽभिव्यानशे सरः ॥२६॥ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥२७॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥२८॥ सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ॥ ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥२९॥ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ३० ॥ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ॥ विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकान्तजनप्रियः प्रियम् ॥३१॥ ॥ श्रीभगवानुवाच ॥ सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम ॥ निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥ त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ॥ उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥ ३३ ॥ त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ॥ सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥३४॥ आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ॥ एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥३५॥ दोधूयमानां तां नावं समीरेण बलीयसा ॥ उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥३६॥

वपुरदीदृशो दर्शितवानसि । पाठान्तरे पृथगात्मनो भेददर्शिनः पुंसः । असतां परिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः ॥ ३० ॥ एकान्तजना भक्ताः प्रिया यस्य ॥ ३१ ॥ अप्ययाम्भोधौ प्रलयार्णवे । भूर्भुवआदिकमित्यर्थः ॥ ३२ ॥ संवर्ताम्भसि प्रलयोदके । त्वामुपस्थास्यति प्राप्स्यति ॥ ३३ ॥ ओषधीः आदायेति शेषः ॥ ३४ ॥ ऋषीणामेवालोकेन विचरिष्यसि ॥ ३५ ॥ महाहिना वासुकिना ॥ ३६ ॥ ॥ ॥ ॥

१ अविदासिनीति विपूर्वकस्य 'दसु उपक्षये' इत्यस्य रूपम् । विदास उपक्षयस्तदभावोऽनुपक्षयस्तद्वतीत्यर्थः । २ 'चिकीर्षितं कान्तजनप्रियः प्रभुः' इति वीर०पाठः। ३ सत्वैः सूक्ष्मपेक्षितैः प्राणिभिरुपबृंहितः पूरितः । ४ 'पृथगात्मनोऽसताम्' इत्येवंरूपे । ५ मूलस्थवर्चसेत्यस्यायमर्थः ।

॥ ३७ ॥ मे मयाऽनुगृहीतं प्रसादीकृतं हृदि अपरोक्षं वेत्स्यसि । त्वया कृतैः संप्रश्नैर्मया विवृतं प्रकाशितं सन्तम् ॥३८॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥
॥४४॥ वरत्रेण दोरकरूपेण ॥४५॥ 'सागरं तारयिष्यन्तं तरिष्यन्निव सागरम् ॥ सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टभिः' ॥ अत्रेदं चिन्त्यम्—किमयं महाप्रलयो दैनन्दिनो वेति । तत्र तावत् ब्राह्मो लय इति 'योऽसावस्मिन्महाकल्पे' इति चोक्तेर्महाप्रलय इति प्राप्तम् । नेति ब्रूमः, महाप्रलये पृथिव्यादीनामवशेषासंभवात्, 'यावद्ब्राह्मी निशा' इत्याद्युक्तिविरोधाच्च । अतो दैनन्दिन इति युक्तम् । न चैतदपि सङ्गच्छते, सांवर्तकैरनावृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः । यच्चोक्तं प्रथमस्कन्धे—'रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ॥ नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥' इति । तदपि तदा दुर्घटम्, नहि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः संभवति, नच चाक्षुषमन्वन्तरे प्रलयोऽस्ति, तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् ।

मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ॥ वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥३८॥ इत्थमादिश्य राजानं हरिरन्तरधीयत ॥ सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥३९॥ आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः ॥ निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः ॥४०॥ ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् ॥ वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥ ध्यायन्भगवदादेशं ददृशे नावमागताम् ॥ तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥४२॥ तमूचुर्मुनयः प्रीता राजन्ध्यायस्व केशवम् ॥ स वै नः संकटादस्मादविता शं विधास्यति ॥४३॥ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ॥ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥४४॥ निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ॥ वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥

नैवायं वास्तवः कोऽपि प्रलयः, किंतु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास । यथास्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान् । तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते । तथा च—'ततः समुद्र उद्वेलः सर्वतः समदृश्यत' इति तस्यैव तथा दर्शनमुक्तमित्येषा दिक् । प्रस्तुतं स्तोत्रं व्याख्यास्यामः । तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते—अनादिर्याऽविद्या तयोपहता आवृतात्मनः संविद्येषां ते, अत एवाविद्यामूलैः संसारपरिश्रमैरातुरा इह संसारे यदृच्छया यदनुग्रहादेवोपसृता आश्रिताः सन्तो यमाप्नुयुः प्राप्नुयुः प्राप्नुवन्ति स भवानेव साक्षान्नो गुरुः सन् ग्रन्थिं भिन्द्यादित्युत्तरेणान्वयः ॥४६॥
'त्वं तावदोषधीः सर्वाः' इत्यादिनिर्देशोऽपि न सङ्गच्छते । नहि तदा ओषध्यादीनां सत्त्वानां चावशेषः संभवति । तस्मादन्यथा वर्ण्यते ।

१ ब्राह्मी निशेति । यद्यप्ययं ब्रह्मदिनगतचाक्षुषमन्वन्तरमध्य एव भगवदिच्छयैवाकस्मिकप्रलयोऽभूत् तदपि त्रैलोक्यमज्जनात् दैनंदिनप्रलयसाम्यदृष्ट्या भगवत्क्रीडेच्छामनुसृत्य निर्व्याकुलो ब्रह्मापि कंचित्कालं सुष्वाप तदनुसारेणैव गौण्या वृत्त्या ब्राह्मी निशेत्युक्तमिति भागवतामृतव्याख्यानुसारी संदर्भः इति चक्र० । २ प्राक्कूलान् प्रागग्रान् । ३ प्रागुत्तरयोरन्तराले मुखं यस्य सः । ४ श्लोकस्य-परमपदस्योत्तरत्रान्वयः । तेन गुरुरूपत्वमुक्तमत्र श्लोके ।

ननु वैराग्यं विना कुतो मुक्तिस्तर्हि तस्य त्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह—जन इति । अबुधोऽयं जनः असुखं यथा भवति तथा कर्म समीहते । तां सुखेच्छाम् । नो हृदयरूपं ग्रन्थिं स भिन्द्यात् । यतः स एव परमो गुरुः ॥ ४७ ॥ ननु यज्ञदानादिभिः सत्त्वशुद्धिं विना कथ ग्रन्थिभेदः स्यात्तत्राह—यत्सेवयेति । यस्य सेवयैव पुमानात्मनो मनसो मलं तमो विजह्यात् । एष हीनमलो निजं वर्णं च स्वरूपं भजेत् । स ईशो नो गुरुर्भूयात् । यतः स एव गुरोरपि परमो गुरुः । मलहाने दृष्टान्तः—रुद्ररोदनं रुद्रस्य रोदनं रजतम् । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वं, यदश्रवशीर्यत तद्रजतं हिरण्यमभवत्' इति श्रुतेः । तद्यथाग्नेः संपर्कान्मलं जहाति स्वं वर्णं भजते न तु क्षालनादिभिस्तथा न यज्ञादिभिर्मलत्यागः, किंतु त्वत्सेवयैव । तेषां तु सेवाङ्गत्वमिति भावः ॥ ४८ ॥ परमेश्वरत्वं परमगुरुत्वं च प्रपञ्चयन्नाह—नेति । यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमप्यन्ये देवादयः सर्वे समेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न

जनोऽबुधो यं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ॥ यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्या-
द्धृदयं स नो गुरुः ॥ ४७ ॥ यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेत वर्णं निजमेष
सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥४८॥ न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ॥
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥४९॥ अचक्षुरन्धस्य यथाग्रणीः कृतस्तथा जनस्याविदु-
षोऽबुधो गुरुः ॥ त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥५०॥ जनो जनस्यादिशतेऽसतीं
मतिं यया प्रपद्येत दुरत्ययं तमः ॥ त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥ त्वं सर्वलोकस्य
सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥
तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ॥ छिन्ध्यर्थदीपैर्भगवन्वचोभिर्ग्रन्थीन्हृदय्यान्विवृणु स्वमोकः ॥५३॥

प्रभवन्ति ॥ ४९ ॥ तदेव दृष्टान्तेन स्पष्टयन्नाह—अचक्षुरिति । अविदुषो जनस्याबुधोऽविद्वान् गुरुस्तथैव । अर्कप्रकाशवत्स्वत एव दृग्ज्ञानं यस्य सोऽर्कदृक् । अतः सर्वदृशां सर्वेन्द्रियाणां समीक्षणः प्रकाशकः । अत एव सुगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिर्गुरुर्वृतोऽसि ॥ ५० ॥ किंच प्राकृतो गुरुरनर्थहेतुरित्याह—जन इति । आदिशते उपदिशति । असतीं मतिमर्थकामादिमतिम् । तमः संसारम् ॥ ५१ ॥ ननु तर्हि सर्वोऽपि लोको मामेव किं नोपसरति, अज्ञानादित्याह—त्वमिति । प्रियश्चासावीश्वरश्च ॥ ५२ ॥ अहं तु त्वामेव शरणं यामीत्याह—तं त्वामिति । प्रतिबोधनायोपदेशाय । अर्थदीपैः परमार्थप्रकाशकैः । हृदये भवान् ग्रन्थीनहंकारादीन् । स्वमोकः स्वं रूपं विवृणु प्रकाशय ॥ ५३ ॥ ॥ ॥ ॥ ॥

१ पूर्वश्लोकस्थपरमपदान्वयादत्र श्लोके परमगुरुरूपत्वमुक्तम् । २ आत्मनस्तमः—'अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥' इति [illegible]

नृपतिं प्रति ॥ ५४ ॥ पुराणसंहितां मत्स्यपुराणमशेषतोऽब्रवीदित्यनुषङ्गः ॥ ५५ ॥ ५६ ॥ अतीतः पूर्वो यः प्रलयस्तस्यापायेऽवसाने ॥ ५७ ॥ ५८ ॥ ॥ ५९ ॥ योऽयं हरेरवतारस्तं यः प्रकीर्तयेत् ॥ ६० ॥ सत्यव्रतानां सत्यव्रतस्य ऋषीणां च छत्रिणो गच्छन्तीतिवल्लिङ्गसमवायाद्बहुवचनम् । जिह्ममीनं

॥ श्रीशुक उवाच ॥ इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः ॥ मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥ ५४ ॥
पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ॥ सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥५५॥ अश्रौषीदृषिभिः साक-
मात्मतत्त्वमसंशयम् ॥ नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥५६॥ अतीतप्रलयापाय उत्थिताय सवेधसे ॥
हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ५७ ॥ स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ॥ विष्णोः प्रसादात्क-
ल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥५८॥ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ॥ संवादं महदाख्यानं श्रुत्वा मुच्येत
किल्बिषात् ॥५९॥ अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः ॥ संकल्पास्तस्य सिध्यन्ति स याति परमां गतिम् ॥६०॥
प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ॥ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां[2]
तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां
संहितायां वैयासक्यामष्टमस्कन्धे मत्स्यावतारचरितानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥छ॥ ॥छ॥

॥ समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

मायामत्स्यम् ॥ ६१ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥

॥ समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

१ ज्ञानं शास्त्रीयम् । विज्ञानमनुभवः । २ 'सत्यव्रताय' इति पाठः ।

॥ इति श्रीमद्भागवते अष्टमस्कन्धः समाप्तः ॥

# अथ भागवतनवमस्कंधप्रारंभः ॥

श्रीगणेशाय नमः ॥ ॥ गुणा यं गुणतावास्यै वृणते करुणानिधिम् ॥ तमहं शरणं यामि परमानन्दमाधवम् ॥ १ ॥ त्रिगुणाष्टभिरध्यायैर्वैवस्वतसुतान्वयः ॥ नवमे कृष्णसत्कीर्तिप्रसङ्गाय वितन्यते ॥ २ ॥ एवमुक्तोऽष्टमस्कन्धे सद्धर्मः सत्त्वशोधकः ॥ कर्तृपालकवक्त्रादिमन्वादीनां निरूपणैः ॥ ३ ॥ सद्धर्मशुद्धसत्त्वानामन्तरङ्गेशसत्कथा ॥ सूर्यसोमान्वयाख्यानैरधुना सङ्गतोच्यते ॥ ४ ॥ तत्र च—त्रयोदशभिरध्यायैः सूर्यवंशोऽनुवर्ण्यते ॥ एकादशभिरध्यायैः सोमवंशस्ततः परैः ॥५॥ तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ॥ सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥६॥ उक्तानुवादपूर्वकं वैवस्वतमनोर्वंशं पृच्छति—मन्वन्तराणीति

॥ श्रीगणेशाय नमः ॥ ॥ राजोवाच ॥ मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे ॥ वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥ योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ॥ ज्ञानं योऽतीतकल्पान्ते[1] लेभे पुरुषसेवया ॥ २ ॥ स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ॥ त्वत्तस्तस्य सुताश्चोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥ तेषां वंशं पृथग्ब्रह्मन्वंश्यानुचरितानि च ॥ कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥ ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ॥ तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥ ॥ सूत उवाच ॥ एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ॥ पृष्टः प्रोवाच भगवाञ्छुकः परमधर्मवित् ॥ ६ ॥ ॥ श्रीशुक उवाच ॥ श्रूयतां मानवो वंशः प्राचुर्येण[2] परंतप ॥ न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥७॥ परावरेषां[3] भूतानामात्मा यः पुरुषः परः ॥ स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किंचन ॥८॥ तस्य[4] नाभेः समभवत्पद्मकोशो हिरण्मयः ॥ तस्मिञ्जज्ञे महाराज स्वयंभूश्चतुराननः ॥ ९ ॥ मरीचिर्मनसस्तस्य जज्ञे तस्यापि कश्यपः ॥ दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः ॥ १० ॥ ततो मनुः श्राद्धदेवः संज्ञायामास भारत ॥ श्रद्धायां जनयामास दश पुत्रान्स आत्मवान् ॥ ११ ॥ इक्ष्वाकुं[5]नृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरिष्यन्तं पृषध्रं च नभगं च कविं विभुः[6] ॥ १२ ॥ अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान्किल ॥ मित्रावरुणयोरिष्टिं प्रजार्थमकरोत्प्रभुः ॥ १३ ॥ ॥ ॥ ॥

पञ्चभिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अनुक्तं वंशं वक्तुं पूर्वोक्तमेव तावद्वंशं तत्प्रवर्तकं श्रीनारायणमारभ्यानुस्मारयति—परावरेषामिति पञ्चभिः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ नाभागं चेति पाठेऽपि नभग एव नाभागः ॥ १२ ॥ सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात्पुरूरवःप्रभृतिसोमवंशसंचारं वक्तुं सप्रस्तावमिलोपाख्यानमाह—अप्रजस्य मनोः पूर्वमित्यादिना यावदध्यायसमाप्ति । पूर्वमिक्ष्वाकुप्रभृतीनामुत्पत्तेः प्राक् ॥ १३ ॥ ॥ ॥

१ अतीतकल्पान्ते अतीतमन्वन्तरान्ते इति चक्र० । २ प्राचुर्येणेति साकल्येन वक्तुमशक्यत्वादुक्तम् । ३ परावरेषामुच्चावचानाम् । ४ तस्य प्रलयदशाया सूक्ष्मचिदचिच्छरीरकत्वेनावस्थितस्य कारणभूतस्य पुरुषस्य इति वीर० । ५ इक्ष्वाकादीन्दशपुत्रानुत्पादयामासेति पूर्वेणान्वयः । अत्र नृगकव्योरुपादानेन दशसंख्या, पूर्वं त्वष्टमस्कन्धीयत्रयोदशनाभागवसुमत्यामिति पूर्वापरविसंवादो विचारणीयः । ६ 'विदुः' इति, 'विभुम्' इति च पाठौ । प्रथमान्तपाठे मनोर्विशेषणम् । द्वितीयान्तपाठे कविमित्यस्येति भावः ।

दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति होतारं सम्यगयाचत । पय एव व्रतमाहारो नियतो यस्याः ॥ १४ ॥ अध्वर्युणा होतर्यजेति प्रेपितो होता तेन गृहीते हविषि सति तत्तया प्रार्थितं ध्यायन्व्यचरदयजत् । पाठान्तरे तत् आध्यायत् वाचा वषट्कारं गृणन्वौपडित्युच्चारयन् ॥ १५ ॥ १६ ॥ ब्रह्मविक्रिया

तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ॥ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥ प्रेषितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः ॥ हविषि व्यचरत्तेन वषट्कारं गृणन्द्विजः ॥ १५ ॥ होतुस्तद्व्यभिचारेण कन्येला नाम साभवत् ॥ तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥ १६ ॥ भगवन्किमिदं जातं कर्म वो ब्रह्मवादिनाम् ॥ विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया ॥१७॥ यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ॥ कुतः संकल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥ तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥ एतत्संकल्पवैषम्यं होतुस्ते व्यभिचारतः ॥ तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा ॥ २० ॥ एवं व्यवसितो राजन्भगवान्स महायशाः ॥ अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥२१॥ तस्मै कामवरं तुष्टो भगवान्हरिरीश्वरः ॥ ददाविलाभवत्तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥ स एकदा महाराज विचरन्मृगयां वने ॥ वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥२३॥ प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ॥ दंशितोऽनु मृगं वीरो जगाम दिशमुत्तराम् ॥२४॥ सकुमारो वनं मेरोरधस्तात्प्रविवेश ह ॥ यत्रास्ते भगवाञ्छर्वो रममाणः सहोमया ॥ २५ ॥ तस्मिन्प्रविष्ट एवासौ सुद्युम्नः परवीरहा ॥ अपश्यत्स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥ तथा तदनुगाः सर्वे आत्मलिङ्गविपर्ययम् ॥ दृष्ट्वा विमनसोऽभूवन्वीक्षमाणाः परस्परम् ॥ २७ ॥ ॥ राजोवाच ॥ कथमेवंगुणो देशः केन वा भगवन्कृतः ॥ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ २८ ॥ ॥ श्रीशुक उवाच ॥ एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ॥ दिशो वितिमिराभासाः कुर्वन्तः समुपागमन् ॥ २९ ॥ तान्विलोक्याम्बिका देवी विवासा व्रीडिता भृशम् ॥ भर्तुरङ्कात्समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३० ॥

मन्त्रान्यथात्वम् ॥ १७ ॥ १८ ॥ प्रपितामहो वसिष्ठः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ विगतं तिमिरमाभासः प्रकाशश्चान्यस्य यासु तथाभूता दिशः कुर्वन्तः ॥ २९ ॥ ३० ॥



१ 'होताऽध्यायत्तत्' इत्येवंरूपे । २ विपर्ययवद्विपरीतमित्यर्थः । 'विपरीतम्' इति पाठः । ३ यथा विबुधेष्वनृतं भवितुं नार्हति तथा भवत्सु भवितुमनर्हं संकल्पवैषम्यं कस्माद्धेतोर्वभूवेत्यर्थः । ४ स वसिष्ठः । 'सुमहायशाः' इत्यपि पाठः । ५ नाम्ना सुकुमारवनं अधस्तात्स्थितमिति विजयध्वजीव्याख्या । ६ नीवीं नीव्युपलक्षितं वस्त्रम् ।

प्रसङ्गं रत्यभिनिवेशम् । स्त्रीप्रसङ्गदर्शनकलुषितमनसः सन्तस्तत्प्रसङ्गशून्यं नरनारायणाश्रमं ययुः ॥ ३१ ॥ ३२ ॥ प्रासङ्गिकमुक्त्वा प्रस्तुतमनुवर्णयति—अनुच-
रीसंयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ आशयन्निच्छन् ॥ ३७ ॥ ३८ ॥ ३९ ॥ नाभ्यनन्दन्, स्त्रीत्वे लज्जया मासं
मासं निलीयावस्थानात् ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ ७ ॥

ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ॥ निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ३१ ॥ तदिदं भगवानाह
प्रियायाः प्रियकाम्यया ॥ स्थानं यः प्रविशेदेतत्स वै योषिद्भवेदिति ॥३२॥ तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्ति हि ॥
सा चानुचरसंयुक्ता विचचार वनाद्वनम् ॥३३॥ अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ॥ स्त्रीभिः परिवृतां वीक्ष्य
चकमे भगवान्बुधः ॥३४॥ सापि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ॥ स तस्यां जनयामास पुरूरवसमात्मजम् ॥३५॥
एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ॥ सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥३६॥ स तस्य तां दशां दृष्ट्वा
कृपया भृशपीडितः ॥ सुद्युम्नस्याशयन्पुंस्त्वमुपाधावत शंकरम् ॥ ३७ ॥ तुष्टस्तस्मै स भगवानृषये प्रियमावहन् ॥ स्वां च
वाचमृतां कुर्वन्निदमाह विशांपते ॥३८॥ मासं पुमान्स भविता मासं स्त्री तव गोत्रजः ॥ इत्थं व्यवस्थया कामं सुद्यु-
म्नोऽवतु मेदिनीम् ॥ ३९ ॥ आचार्यानुग्रहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया ॥ पालयामास जगतीं नाभ्यनन्दन्स्म तं
प्रजाः ॥४०॥ तस्योत्कलो गयो राजन्विमलश्च सुतास्त्रयः ॥ दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥४१॥ ततः परि-
णते काले प्रतिष्ठानपतिः प्रभुः ॥ पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥ ॥ इति श्रीमद्भा० म० पु०
नवमस्कन्धे इलोपाख्याने प्रथमोऽध्यायः ॥१॥ ॥ श्रीशुक उवाच ॥ एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ॥ पुत्रका-
मस्तपस्तेपे यमुनायां शतं समाः ॥१॥ ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ॥ इक्ष्वाकुपूर्वजान्पुत्राँल्लेभे स्वसदृशा-
न्दश ॥२॥ पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ॥ पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥३॥ ॥

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः ॥ करूपकादिपञ्चानां वंशानाह लघुक्रमात् ॥ १ ॥ वैवस्वतो मनुः श्राद्धदेवः ॥ १ ॥ इक्ष्वाकुः पूर्वजो येषां तान्दश
पुत्रान् लेभे ॥ २ ॥ तत्र पृषध्रस्य वंशो नाभवदिति सहेतुकमाह—पृषध्रस्त्वित्यादिना कविः कनीयानित्यतः प्राक्तनेन ग्रन्थेन । खड्गपाणेः सततस्तिष्ठतो जागरणं
वीरासनं तदेव व्रतं यस्य । यत्तोऽवहितः सन् । गाः पालयामास ॥ ३ ॥ ॥ ॥ ॥ ॥

१ तत्तदा। २ प्रियमावहन्प्रीतिं ददानः इति चक्र०। ३ 'तपसा तव' इति पाठः। ४ आचार्यस्त्वित्यादिशुकोक्तिः। ५ तस्य सुद्युम्नस्य। ६ गामुत्सृज्य पृथ्वीं दत्त्वा। ७ यत्तः सावधानः।

शार्दूलो व्याघ्रः ॥४॥५॥ प्रलीना उडुगणा यस्मिंस्तस्मिन्समये । बभ्रोः कपिलाया गोः ॥६॥ गां कामतो न जघानेति ख्यापयितुं वृक्णश्रवण इत्याद्युक्तम् ॥७॥ व्युष्टायां प्रभातायाम् ॥ ८ ॥ क्षत्रबन्धुरपि त्वं न भविता, अपि तु शूद्रो भवितेति ॥९॥१०॥११॥१२॥१३॥ उपयुक्तकरणो दग्धदेहः ॥ १४ ॥ कवेरपि वंशो नाभवदित्याह—कविरिति । बन्धुभिः सह राज्यं विसृज्य ॥१५॥१६॥ ब्रह्मभूयं ब्राह्मणत्वम् । नृगस्य वंशः पुत्रः सुमतिस्ततो भूतज्योतिस्ततो वसुः ॥ १७ ॥

एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति ॥ शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥४॥ एकां जग्राह बलवान्सा चुक्रोश भयातुरा ॥ तस्यास्तत्क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥ खड्गमादाय तरसा प्रलीनोडुगणे निशि ॥ अजानन्नहनद्बभ्रोः शिरः शार्दूलशङ्कया ॥६॥ व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ॥ निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥७॥ मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ॥ अद्राक्षीत्स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥८॥ तं शशाप कुलाचार्यः कृतागसमकामतः[2] ॥ न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भवितामुना ॥९॥ एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृताञ्जलिः ॥ अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम्[3] ॥१०॥ वासुदेवे भगवति सर्वात्मनि परेऽमले ॥ एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः ॥ ११ ॥ विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः[4] ॥ यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः ॥१२॥ आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ॥ विचचार महीमेतां जडान्धबधिराकृतिः ॥१३॥ एवंवृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ॥ तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥१४॥ कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यं सहबन्धुभिर्वनम् ॥ निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥१५॥ करूषान्मानवादासन्कारूषाः क्षत्रजातयः ॥ उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥१६॥ धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ ॥ नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः ॥१७॥ वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता ॥ कन्या चोघवती नाम सुदर्शन उवाह ताम् ॥१८॥ चित्रसेनो नरिष्यन्तादृक्षस्तस्य[5] सुतोऽभवत् ॥ तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥१९॥ वीतिहोत्रस्त्विन्द्रसेनात्तस्य सत्यश्रवा अभूत् ॥ उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥ ॥

ओघवतः पिता, तत्पुत्रोऽप्योघवानेवेत्यर्थः ॥१८॥ तदेवं त्रिभिः श्लोकैः करूषधृष्टनृगाणां वंशा उक्ताः, नरिष्यन्तस्य वंशमाह—चित्रसेन इति सार्धैस्त्रिभिः—तत इत्यादेर्यत्राधिक्यं स्यात्तत्रानन्तर्ये तत इत्यादिपदं व्याख्येयम् । यत्र तु न्यूनत्वं तत्र पूर्वस्य परस्य वानुषङ्गादिभिर्व्याख्येयम् ॥ १९ ॥ २० ॥ ॥

१ मेघे वर्षति सतीत्यर्थः । २ अकामतः अनिच्छतोऽपि कृतापराधं तं शशाप । यतः कुलाचार्यः कुलपौरोहित्यस्य तमोबहुलत्वात् इति चक्र० । ३ मुनिप्रियं व्रतं ब्रह्मचर्यम् । ४ अपरिग्रहः न विद्यते परिग्रहो देहातिरिक्ततदनुबन्धी यस्य । ५ 'नरिष्यन्ताद्दक्षः' इति पाठः ।

अग्निवेश्य एव कानीन इति जातूकर्ण्य इति च विख्यातः ॥ २१ ॥ २२ ॥ दिष्टस्य पुत्रो नाभागो वक्ष्यमाणनाभागादन्य इति भ्रान्तिव्युदासार्थमनुवादमात्रम् ॥२३॥२४॥२५॥ अङ्गिरसः सुतो महायोगी संवर्तो यमयाजयत्स मरुत्तः ॥ २६ ॥ अस्य यत्किंचित्पात्रादिकमस्ति तत्तु सर्वं हिरण्मयं शोभनमासीत् ॥ २७ ॥

ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः ॥ कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥ ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ॥ नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥ नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ॥ भलन्दनः[3] सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥२३॥ वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः ॥ खनित्रः[4] प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥२४॥ विविंशतिसुतो रम्भः[5] खनिनेत्रोऽस्य धार्मिकः ॥ करन्धमो महाराज तस्यासीदात्मजो नृप ॥ २५ ॥ तस्यावीक्षित्सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ॥ संवर्तोऽयाजयद्यं वै महायोग्यङ्गिरःसुतः ॥ २६ ॥ मरुत्तस्य यथा यज्ञो न तथान्यस्य कश्चन ॥ सर्वं हिरण्मयं त्वासीद्यत्किंचिच्चास्य शोभनम् ॥ २७ ॥ अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥२८॥ मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्धनः ॥ सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥ तत्सुतः केवलस्तस्माद्बन्धुमान्वेगवांस्ततः ॥ बन्धुस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥ तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ॥ वराप्सरा यतः पुत्राः कन्या चेडविडाभवत् ॥ ३१ ॥ तस्यामुत्पादयामास[6] विश्रवा धनदं सुतम् ॥ प्रादाय विद्यां[7] परमामृषिर्योगेश्वरात्पितुः ॥ ३२ ॥ विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ॥ विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥३३॥ हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ॥ तत्पुत्रात्संयमादासीत्कृशाश्वः सहदेवजः[8] ॥३४॥ कृशाश्वात्सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम् ॥ इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितः ॥ ३५ ॥ ॥ ॥

अमाद्यदहृष्यत् ॥ २८ ॥ २९ ॥ ३० ॥ यतो यस्यां तृणबिन्दोः पुत्रा अभवन् ॥ ३१ ॥ ३२ ॥ तानेवाह—विशाल इति । तस्य तृणबिन्दोः सुताः ॥ ३३ ॥ सहदेवजः देवजेन सहितः । पाठान्तरे नामान्यत्वमात्रम्, अर्थस्तु स एव ॥ ३४ ॥ ३५ ॥ ॥ ॥ ॥ ॥

१ भ्रान्तिव्युदासार्थमिति वक्ष्यमाणो नाभागोऽयं च नाभाग एक इत्येवंरूपभ्रान्तिनिरासाय। २ अनुवादो नाभागो नभगापत्यमित्युक्त्या सिद्धस्यैव भेदस्य स्पष्टीकृतत्वात्। ३ 'हलंदनः' इति वीर० पाठः । ४ 'खमित्रः' इति वीर० पाठः । ५ 'दम्भः' इति पाठः । ६ ऋषिर्विश्रवा योगेश्वरात्पितुः सकाशात्परमां विद्यामादाय प्राप्य तस्यामिडविडायां धनदसुतमुत्पादयामासेत्यन्वयः । ७ विद्यां अन्तर्धानविद्या ब्रह्मविद्यां वा इति वीर० । ८ 'सहदेवकः' इति 'सहदेवनः' इत्येवंरूपे वा ।

वैशालभूपाला विशालस्यान्वये जाताः ॥३६॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥
तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः ॥ यत्र सौकन्यमाख्यानं रैवतं च महाद्भुतम् ॥ १ ॥ ब्रह्मिष्ठो वेदार्थतत्त्वज्ञः । तदेवाह—यो वा इति । द्वितीयमहो द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवानुवाच । तस्य वंशं—'उत्तानबर्हिरानर्तः' इत्यादिना वक्ष्यति ॥ १ ॥ आदौ तावत्तत्कन्यावृत्तान्तमाह—सुकन्या नामेत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ भार्गवस्य च्यवनस्य । अभद्रमपराधः ॥ ६ ॥ ७ ॥ ८ ॥ मुग्धेयं मम कन्या क्षन्तव्यं त्वयेत्युच्यमाने कति वर्षाण्यस्या विवाहः

सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ॥ एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ॥ यो वा अङ्गिरसां सत्रे द्वितीयमह ऊचिवान् ॥ १ ॥ सुकन्या नाम तस्यासीत्कन्या कमललोचना ॥ तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥ सा सखीभिः परिवृता विचिन्वन्त्यङ्घ्रिपान्वने ॥ वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥ ते दैवचोदिता बाला ज्योतिषी कण्टकेन वै ॥ अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥ शकृन्मूत्रनिरोधो[1]ऽभूत्सैनिकानां च तत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्य पुरुषान्विस्मितोऽब्रवीत् ॥ ५ ॥ अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम्[2] ॥ व्यक्तं केनापि नस्[3]तस्य कृतमाश्रमदूषणम् ॥ ६ ॥ सुकन्या प्राह पितरं भीता किंचित्कृतं मया ॥ द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै ॥ ७ ॥ दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः[4] ॥ मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥ तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः ॥ कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात्समाहितः ॥ ९ ॥ सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ॥ प्रीणयामास चित्तज्ञा अप्रमत्तानुवृत्तिभिः ॥ १० ॥ कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ॥ तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥ ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः ॥ क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥ बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ॥ निमज्जतां भवानस्मिन्ह्रदे सिद्धविनिर्मिते ॥ १३ ॥ ॥ ॥ ॥

कृतो न वेत्यादिवाक्यैस्तदभिप्रायं ज्ञात्वा तस्मै तां दुहितरं प्रादात् ॥ ९ ॥ १० ॥ हे ईश्वरौ सद्वैद्यौ, युवां मह्यं वयस्तारुण्यं दत्तं संपादयतम् ॥ ११ ॥ असोमपोः सोमपानरहितयोरपि वां युवयोः सोमस्य ग्रहं सोमपूर्णं पात्रं ग्रहीष्ये दास्यामीति । युवां सोमेन यक्ष्य इत्यर्थः । 'ऐन्द्रवायवं गृह्णाति' इत्यादिषु द्रव्यदेवतासंबन्धानुपपत्त्या गृह्णातेर्यागपर्यवसायित्वात् ॥ १२ ॥ बाढमित्यभिनन्द्य भवानस्मिन्निमज्जतामित्यूचतुः ॥ १३ ॥ ॥ ॥

१ तं शकृन्मूत्रनिरोधनम् । २ विचेष्टितमपराधः । ३ नः अस्माकं मध्ये । ४ जातसाध्वस उत्पन्नभयः ।

ह्रदं प्रवेशितः । तावपि तमपि वृद्धं गृहीत्वा प्रविष्टावित्यर्थः ॥ १४ ॥ १५ ॥ अश्विनौ शरणं ययौ । युवां पृथक्स्थित्वा मत्पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ प्रलम्भितो वञ्चितः । हे असति । असंमतमनभीष्टम् ॥ २० ॥ हे सतां कुलप्रसूते, तव मतिरन्यथा तद्विपर्ययेण

इत्युक्त्वा[1] जरया ग्रस्तदेहो धमनिसन्ततः ॥ ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविप्रियः ॥१४॥ पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥१५॥ तान्निरीक्ष्य वरारोहा सरूपान्सूर्यवर्चसः ॥ अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥ दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥ यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ॥ ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥ राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ॥ आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥ चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ॥ यत्त्वं जराग्रस्तमसत्यसंमतं विहाय जारं भजसेऽमुमध्वगम् ॥२०॥ कथं मतिस्तेऽवगतान्यथा[2][3] सतां कुलप्रसूते कुलदूषणं त्विदम् ॥ बिभर्षि जारं यदपत्रपाकुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥२१॥ एवं ब्रुवाणं पितरं स्मयमाना[4] शुचिस्मिता ॥ उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥ शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ॥ विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥ सोमेन[5] याजयन्वीरं ग्रहं सोमस्य चाग्रहीत् ॥ असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥ हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ॥ सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥ अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ॥ भिषजाविति यत्पूर्वं सोमाहुत्या बहिष्कृतौ ॥२६॥ उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ॥ शर्यातेरभवन्पुत्रा आनर्ताद्रेवतोऽभवत् ॥२७॥ सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम्[6] ॥ आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम ॥ २८ ॥ तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ॥ ककुद्मी रेवतीं[7] कन्यां स्वामादाय विभुं गतः ॥ २९ ॥ ॥ ॥

कथमवगताऽवसन्नाऽध्यवसितेति वा । तदेवाह—कुलदूषणं त्विदमित्यादि ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सद्यस्तत्क्षणमेव मन्युर्यस्य स इन्द्रः ॥ २५ ॥ ॥ २६ ॥ २७ ॥ विषयान्देशानानर्तादीन् अभुङ्क्त अपालयत् ॥ २८ ॥ ककुद्मी ज्येष्ठो यस्मिंस्तत् । विभुं ब्रह्माणम् ॥ २९ ॥ ॥ ॥

१ 'इत्युक्तः' इत्यपि पाठः । २ 'मतिस्तेऽस्व गता' इति विज० पाठः । ३ 'मार्गन्त्वियं मत्कुलदूषणं त्विद' इति पाठः । ४ स्मयेन साध्वीःस्वगर्वेण मानश्चित्तसमुन्नतिर्यस्याः सा इति चक्र० । ५ सोमेन सोमसंज्ञकेन यज्ञेन । वीरं शर्यातिम् इति चक्र० । ६ कुशस्थलीं द्वारवतीम् । ७ 'रैवतो रेवतीम्' इति पाठः । अस्मिन्पाठेऽपि रैवतः ककुद्मी ।

न लब्धः क्षणोऽवसरो येन ॥ ३० ॥ आद्यं ब्रह्माणम् ॥ ३१ ॥ ते त्वया हृदये ये कृतास्ते सर्वे कालेन निरुद्धाः संहृताः ॥ ३२ ॥ त्रिणव सप्तविंशतिचतुर्युगानि तैर्विकल्पितो विभक्तः । यो देवदेवस्यांशोऽस्ति तस्मै नररत्नाय देहि ॥३३॥ तदेवाह—भुव इति ॥ ३४ ॥ ३५ ॥ पुण्यजनत्रासाद्यक्षभयात्पूर्वमेव चिरं पुरं तद्भ्रातृभिस्त्यक्तम् ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते ॥ तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः ॥ १ ॥ नभगस्य वंशमाह—नभगस्यापत्यं नाभागः । नाभागादम्बरीषो महाभागवतोऽभूदिति वक्ष्यंस्तद्धेतुत्वेन वंशप्रवर्तकस्य नभगस्य निष्कपटं चरितं तेन तु श्रीरुद्रप्रसादमाह—यं ततमित्यादिना । ब्रह्मचारिणं बहुकालं गुरुकुले वसन्तं

कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ॥ आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥ तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ॥ तच्छ्रुत्वा भगवान्ब्रह्मा प्रहस्य तमुवाच ह ॥३१॥ अहो राजन्निरुद्धास्ते कालेन हृदि ये कृताः ॥ तत्पुत्रपौत्रनप्तृणां गोत्राणि च न शृण्महे ॥ ३२ ॥ कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ॥ तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥३३॥ कन्यारत्नमिदं राजन्नररत्नाय देहि भो ॥ भुवो भारावताराय भगवान्भूतभावनः ॥ ३४ ॥ अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ॥ ३५ ॥ त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ सुतां दत्त्वानवद्याङ्गीं बलाय बलशालिने ॥ बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥

॥ श्रीशुक उवाच ॥ नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ॥ यविष्ठं व्यभजन्दायं ब्रह्मचारिणमागतम् ॥ १ ॥
भ्रातरोऽभाक्त किं मह्यं भजाम पितरं तव ॥ त्वां ममार्यास्तताऽभाक्षुर्मा पुत्रक तदादृथाः ॥ २ ॥ ॥ ॥

नैष्ठिकोऽसाविति मत्वा विभागसमये तस्मै भागमप्रकल्प्यैव भ्रातरः सर्वं दायं विभज्य गृहीत्वा पश्चाद्गुरुकुलादागतं यं भागार्थिनं कार्वं विद्वांसं यविष्ठं प्रति ततं तातं पितरं दायं व्यभजन्नित्यर्थः ॥ १ ॥ एतदेव प्रश्नोत्तराभ्यां दर्शयति—तत्र नभगः पृच्छति, हे भ्रातरः, मह्यं किमभाक्त व्यभजन्त कं भागं मदर्थं यूयं प्रकल्पितवन्तः । भ्रातर आहुः—तदा विस्मृतमस्माभिरिदानीं तु तव पितरं विभजाम, त्वं पितरं गृहाणेत्यर्थः । स च पितरं गत्वाह—तत हे तात, आर्याः श्रेष्ठाः मे मम त्वामभाक्षुर्भागं चक्रुः । मदीयो भागस्त्वमित्यर्थः । पाठान्तरे हे तात, किमिदं ममाभाक्षुः भजाम पितरं तवेत्युक्तवन्तः आर्यास्त्वां मह्यं किमर्थं ददुरित्यर्थः । पिताह—हे पुत्रक, तत्तैरुक्तं मादृथाः प्रतारणमात्रं तैः कृतं तस्मिन्नादरं मा कार्षीः, नह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥ ॥

१ अयमुत्तरश्लोकपूर्वार्धेन सहान्वयः । २ मनुपुत्रस्य, नभगस्य, तत्सूनोर्नाभागस्य, यत. कृत्या प्रतिहता तस्याम्बरीषस्य, नाभागपुत्रस्य च कथोच्यत इत्यन्वयः । ३ अपावृतं रजस्तमोगुणावरणशून्यम । ४ भजान इति विज० पाठः । तत्र तव पितर भज अन गच्छ अनचेष्टायामित्यायर्थो दर्शितः । ५ वीर० पाठे—'नाभागस्तु पितापुत्रं प्राह तं ब्रह्मचारिणम्' इति पद्यार्धमधिकम् । ६ 'ममत्वार्याः' इति पाठः । ७ 'यं मनुपुत्रं नभगम्' । यं गुरुकुलादधीत्य आगतं इति चक्रवर्ती । ८ किं ममार्यास्तवाभाक्षुः' इत्येवंरूपे ।

तथापि तैर्भागत्वेन दत्तोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह—इमे इति सपादाभ्यां द्वाभ्याम् । 'अभिप्लवः पडहो भवति' 'पृष्ठ्यः पडहो भवति' इति विहितेषु पडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसोऽपि ते सूक्तविशेषाज्ञानेन मुह्यन्ति । कवे हे विद्वन् ॥ ३ ॥ तान्महात्मनोऽपि त्वं 'इदमित्था रौद्रम्' इति च, 'ये यज्ञेन दक्षिणया' इति च वैश्वदेवे द्वे सूक्ते शंसय पाठय । ततः कर्मणि समाप्ते सति ते स्वर्यन्तः स्वर्गं गच्छन्तः स्वसत्रे परिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यन्ति । अथ तस्मात्तान्गच्छेति । तथेत्यादि शुकवाक्यम् । यथावत्कृतवान् । सत्रपरिशेषितं सत्रावशिष्टं धनम् ॥ ४ ॥ ॥ ५ ॥ पुरुषः श्रीरुद्रः । दृश्यत इति दर्शनं शरीरम्, कृष्णं दर्शनं यस्य सः । वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥ ६ ॥ तर्हि स्म तदैव ममेदमिति

इमे अङ्गिरसः सत्रमासतेऽद्य सुमेधसः ॥ षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥३॥ तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ॥ ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥ दास्यन्त्यथ ततो गच्छ तथा स कृतवान्यथा ॥ तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥५॥ तं कश्चित्स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ॥ उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥ ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः ॥ स्यान्नौ ते पितरि प्रश्नः पृष्टवान्पितरं तथा ॥७॥ यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ॥ चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥८॥ नभगस्तं प्रणम्याह तवेश किल वास्तुकम् ॥ इत्याह मे पिता ब्रह्मञ्छिरसा त्वां प्रसादये ॥ ९ ॥ यत्ते पितावदद्धर्मं त्वं तु सत्यं प्रभाषसे ॥ ददामि ते मन्त्रदृशे ज्ञानं ब्रह्म सनातनम् ॥१०॥ गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ॥ इत्युक्त्वान्तर्हितो रुद्रो भगवान्सत्यवत्सलः ॥११॥ य एतत्संस्मरेत्प्रातः सायं च सुसमाहितः ॥ कविर्भवति मन्त्रज्ञो गतिं चैव तथात्मनः ॥ १२ ॥ नाभागादम्बरीषोऽभून्महाभागवतः कृती ॥ नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥ ॥

मानवो नभग उवाच । पुनश्च रुद्र उवाच । नौ आवयोरस्मिन्विवादे ते पितरि प्रश्नः स्यादिति । पृष्टवानिति शुकोक्तिः ॥ ७ ॥ पृष्टस्य मनोर्वाक्यं यज्ञवास्तुगतमिति । उच्छिष्टमुर्वरितम् । क्वचिदिति दक्षाध्वरे । 'उच्छेषणभागो वै रुद्रः' इति श्रुतेश्च । किंच स देव ईश्वरः सर्वमप्यर्हति, किं पुनर्यज्ञावशिष्टमित्यर्थः ॥ ८ ॥ ९ ॥ श्रीरुद्र आह—यत्ते इति ॥ १० ॥ इदमाख्यानं श्रुतिप्रसिद्धम् । तथा हि बह्वृचब्राह्मणम्—'नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्त्सोऽब्रवीत्' इत्यादि ॥ ११ ॥ अस्याख्यानस्य स्मरणे फलमाह—य एतदिति । आत्मनो गतिं च प्राप्नोतीति शेषः ॥ १२ ॥ क्वचिदपि न प्रतिहतो ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मितः कृत्यानलोऽपि यं नास्पृशत् । अतोऽसौ महाभागवतोऽत एव कृती पुण्यवान् ॥ १३ ॥ ॥

१ षष्ठं षष्ठमिति द्विर्वचनेन पडहस्य पुनःपुनः प्रयोगोऽपि वैध इति प्रतीयते। अत एव हि पूर्वतन्त्रे—'अभ्यासे च तदभ्यासः कर्मणः पुनःपुनः प्रयोगात् आवृत्तिस्तु व्यवाये कालभेदात्स्यात्' इत्यधिकरणद्वये पडहस्य पुनःपुनः प्रयोगमाश्रित्य मध्वशनस्यावृत्तिः कर्तव्या न वेत्याशङ्क्य कर्मान्तराव्यवहितपडहावृत्तौ न कर्तव्या गवामयनादावभिप्लवादिभिर्व्यवेतावृत्तौ तु कर्तव्येत्युक्तं तत्र इति वीर० । २ मनुपुत्रो नभगः । ३ अत्र—'तस्मादसत्यं न ब्रूयात्परस्वं चापदि क्वचित् । सत्येन परिसतुष्टो भवामीष्टः स मे भवेत् ॥' इति वीर० पाठेऽधिकं पद्यम् । ४ नाभानेदिष्ठ इति नभगस्यैव नामान्तरम् ।

तस्य श्रोतुमिच्छामि । चरितमिति शेषः । ब्रह्मदण्डः कृत्यानलो न प्राभून्न समर्थो बभूव ॥ १४ ॥ श्रियं संपदम् । विभवमैश्वर्यम् । अतुलं निरुपमम् ॥ १५ ॥ पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवत्संस्तुतं निरूपितमनुपादेयं मेने । तत्र हेतुः—विभवस्य निर्वाणं नाशं विद्वान्। यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति मोहे निमज्जति ॥ १६ ॥ नन्वेवं जानन्तोऽपि विभवैषिणो दृश्यन्ते तत्राह—वासुदेव इति । भावं भक्तिं प्राप्तः । येन भावेनेदं विश्वं लोष्टवदतितुच्छं स्मृतम् ॥ १७ ॥ भक्तिमेव सर्वेन्द्रियाणां भगवत्परत्वकथनेन प्रपञ्चयति—स वा इति त्रिभिः—श्रुतिं श्रोत्रमच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वयः ॥ १८ ॥ मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शने दृशौ नेत्रे । श्रीमत्यास्तुलस्यास्तत्पादसरोजेन यत्सौरभं तस्मिन् । तदर्पिते तस्मै निवेदितान्नादौ

॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ॥ न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥
॥ श्रीशुक उवाच ॥ अम्बरीषो[3] महाभागः सप्तद्वीपवतीं महीम् ॥ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि
॥ १५ ॥ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् ॥ विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥ वासु-
देवे भगवति तद्भक्तेषु च साधुषु ॥ प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम् ॥ १७ ॥ स वै मनः कृष्णपदार-
विन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ॥ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥ मुकु-
न्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ॥ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते
॥ १९ ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ॥ कामं च दास्ये न तु कामकाम्यया यथोत्त-
मश्लोकजनाश्रया रतिः ॥ २० ॥ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विद-
धन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥ ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ॥
ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥ ॥ ॥

॥ १९ ॥ कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय नतु कामकाम्यया विषयेच्छया । कथं चकार । उत्तमश्लोकजनाश्रया रतिर्यथा भवेत्तथा । अनेन तद्भक्तेषु च परं भावं प्राप्त इत्येतत्स्फुटीकृतम् ॥ २० ॥ सर्वत्रात्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति विदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितः सन् महीं शशास पालयामास । अनेनाधिकृतो धर्मोऽपि यथावद्दर्शितः ॥ २१ ॥ किंच यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास । महाविभूत्योपचितान्यङ्गानि दक्षिणाश्च येषु तैः । वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः । धन्वनि धन्वदेशे निरुदके सरस्वतीमभिस्रोतम् । तस्याः प्रतिलोममित्यर्थः ॥ २२ ॥ ॥ ॥ ॥ ॥

१ उदये उत्कर्षे लक्षणया तच्छ्रवणे । २ भगवच्चरणार्पिततुलसीगन्धे इत्यर्थः । ३ अम्बरीषः अम्वादिकं रीषं नश्वरमिति ज्ञानमस्यास्तीत्यम्बरीषः 'रुषरिष हिंसायाम्' मत्वर्थे अच्प्रत्ययः । अम्बरवदीषा इच्छा यस्य स तथा । आकाशवद्बहुलज्ञान इत्यर्थः । व्यत्यासश्छान्दसः । अं ब्रह्म तस्य वरिर्वरणं तत्रेच्छा यस्य स तथा इति विज० ।

किंच यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूषणादिभिस्तुल्यरूपा व्यदृश्यन्त स इत्थमिति चतुर्थेनान्वयः। न च देवानां निमेषाभावाद्वैलक्षण्यम्। यतोऽनिमिषाश्च व्यदृश्यन्त। न निमिषन्तीति तथा। आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमादिति भावः॥२३॥ यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का वार्ता ॥२४॥ आस्तां स्वर्गप्रार्थनशङ्कापि। यद्यतः मुकुन्दं हृदि पश्यतस्ताञ्जनान्कामा विषया न समर्धयन्ति न हर्षयन्ति। कथंभूताः। स्वाराज्येन सरूपसुखेन परिभाविता अतिशायिताः। अत एव सिद्धानामपि दुर्लभाः। यानिति पाठे यान्मनुजान्। स्वाराज्येत्यत्रापि द्वितीयान्तपाठे मनुजानां विशेषणम्। यमिति पाठे यमम्बरीषम्। पश्यतामिति

यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः॥ तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः॥ २३ ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम्॥२४॥ समर्धयन्ति[2] तान्कामाः स्वाराज्यपरिभाविताः[1] ॥ दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः॥ २५ ॥ स इत्थं भक्तियोगेन तपोयुक्तेन[3] पार्थिवः॥ स्वधर्मेण हरिं प्रीणन्सङ्गान्सर्वाञ्छनैर्जहौ ॥ २६ ॥ गृहेषु[4] दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु[5] ॥ अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ २७ ॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ॥ एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम्॥२८॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया॥ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥ व्रतान्ते कार्तिके मासि त्रिरात्रं[6] समुपोषितः॥ स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥ महाभिषेकविधिना सर्वोपस्करसंपदा ॥ अभिषिच्याम्बराकल्पै[7]र्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥ तद्गतान्तरभावेन[8] पूजयामास केशवम् ॥ ब्राह्मणांश्च महाभागान्सिद्धार्थानपि भक्तितः॥ ३२ ॥ गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ॥ पयःशीलवयोरूपवत्सोपस्करसंपदाम् ॥ ३३ ॥ प्राहिणोत्साधु विप्रेभ्यो गृहेषु न्यर्बुदानि षट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥ लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ ३५॥ ॥

पाठे सिद्धानां विशेषणम्॥२५॥ एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति—स इत्थमिति द्वाभ्याम्॥२६॥२७॥ नन्वेवंभूतोऽसौ कथं प्रतिपक्षान् जयेत्तत्राह—तस्मा इति॥२८॥ तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदण्डो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह—आरिराधयिषुरित्यादिना यावदध्यायसमाप्ति॥२९॥ अर्चयत्। अडागमाभाव आर्षः॥३०॥३१॥ ब्राह्मणांश्च पूजयामास। सिद्धार्थानाप्तकामान् पूजानपेक्षानपि॥३२॥ रूप्याङ्घ्रीणां रूप्यखुराणाम्। पयःशीलादिसंपदो यासां तासाम् ॥ ३३ ॥ न्यर्बुदानि षट् षष्टिकोटीः ॥ ३४ ॥ तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥

१ स्वाराज्यमिन्द्रपदतुल्यतेति चक्रवर्ती व्याचख्यौ। २ 'न वर्धयन्ति यान्कामाः' इति वीर० पाठः। ३ तपोऽत्र द्वादशीव्रतादि इति क्रम०। ४ गृहादिषु भगवत्सेवानुपयोगिष्विति ज्ञेयम् इति क्रम०। ५ 'वाजिवस्तुषु' इति पाठः। ६ दशमीद्वादश्योर्विहितेतरभोजनाभावेन एकादश्यां निराहारत्वेन त्रिरात्रत्वम् इति चक्र०। ७ अम्बरैर्वस्त्रैः। आकल्पैरलंकारैश्च। 'अभिषिच्य वराकल्पैः' इति पाठः। ८ तद्गतान्तरभावेन तदेकमनस्त्वेन।

तस्य श्रोतुमिच्छामि । चरितमिति शेषः । ब्रह्मदण्डः कृत्यानलो न प्राभून्न समर्थो बभूव ॥ १४ ॥ श्रियं संपदम् । विभवमैश्वर्यम् । अतुलं निरुपमम् ॥ १५ ॥
पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवत्संस्तुतं निरूपितमनुपादेयं मेने । तत्र हेतुः—विभवस्य निर्वाणं नाशं विद्वान् । यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति
मोहे निमज्जति ॥ १६ ॥ नन्वेवं जानन्तोऽपि विभवैषिणो दृश्यन्ते तत्राह—वासुदेव इति । भावं भक्तिं प्राप्तः । येन भावेनेदं विश्वं लोष्टवदतितुच्छं स्मृतम्
॥ १७ ॥ भक्तिमेव सर्वेन्द्रियाणां भगवत्परत्वकथनेन प्रपञ्चयति—स वा इति त्रिभिः—श्रुतिं श्रोत्रमच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वयः
॥ १८ ॥ मुकुन्दस्य लिङ्गानामालयानि स्थानानि तेषां दर्शने दृशौ नेत्रे । श्रीमत्यास्तुलस्यास्तत्पादसरोजेन यत्सौरभं तस्मिन् । तदर्पिते तस्मै निवेदितान्नादौ

॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ॥ न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥
॥ श्रीशुक उवाच ॥ अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ॥ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि
॥ १५ ॥ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् ॥ विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥ वासु-
देवे भगवति तद्भक्तेषु च साधुषु ॥ प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम् ॥ १७ ॥ स वै मनः कृष्णपदार-
विन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ॥ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥ मुकु-
न्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ॥ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते
॥ १९ ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ॥ कामं च दास्ये न तु कामकाम्यया यथोत्त-
मश्लोकजनाश्रया रतिः ॥ २० ॥ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विद-
धन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥ ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ॥
ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥

कथं चकार । उत्तमश्लोकजनाश्रया रतिर्यथा भवे-
॥ १९ ॥ कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय नतु कामकाम्यया विषयेच्छया । कथं चकार । उत्तमश्लोकजनाश्रया रतिर्यथा भवे-
त्तथा । अनेन तद्भक्तेषु च परं भावं प्राप्त इत्येतत्स्फुटीकृतम् ॥ २० ॥ सर्वत्रात्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति
विदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितः सन् महीं शशास पालयामास । अनेनाधिकृतो धर्मोऽपि यथावद्दर्शितः ॥ २१ ॥ किंच यज्ञाधिष्ठाता-
रमीश्वरमश्वमेधैरीजे आराधयामास । महाविभूत्योपचितान्यङ्गानि दक्षिणाश्च येषु तैः । वसिष्ठादिभिर्हेतुभूतैस्ततैर्विस्तृतैः । धन्वनि धन्वदेशे निरुदके सरस्व- ॥ ५ ॥
तीमभिस्रोतम् । तस्याः प्रतिलोममित्यर्थः ॥ २२ ॥

१ उदये उत्कर्षे लक्षणया तच्छ्रवणे । २ भगवच्चरणार्पिततुलसीगन्धे इत्यर्थः । ३ अम्बरीषः अम्बादिकं रीषं नश्वरमिति ज्ञानमस्यास्तीत्यम्बरीषः 'रुषरिष हिंसायाम्' मत्वर्थे अच्प्रत्ययः । अम्बरवदीषा इच्छा यस्य स तथा । आकाशवद्बहुलज्ञान इत्यर्थः । व्यत्यासश्छान्दसः । अं ब्रह्म तस्य वरिर्वरणं तत्रेच्छा यस्य स तथा इति विज० ।

किंच यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूपणादिभिस्तुल्यरूपा व्यदृश्यन्त स इत्थमिति चतुर्थेनान्वयः । न च देवानां निमेषाभावाद्वैलक्षण्यम् । यतोऽनिमिषाश्च व्यदृश्यन्त । न निमिषन्तीति तथा । आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमादिति भावः ॥२३॥ यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का वार्ता ॥२४॥ आस्तां स्वर्गप्रार्थनशङ्कापि । यद्यतः मुकुन्दं हृदि पश्यतस्ताञ्जनान्कामा विषया न समर्धयन्ति न हर्षयन्ति । कथंभूताः । स्वाराज्येन स्वरूपसुखेन परिभाविता अतिशायिताः । अत एव सिद्धानामपि दुर्लभाः । यानिति पाठे यान्मनुजान् । स्वाराज्येत्यत्रापि द्वितीयान्तपाठे मनुजानां विशेषणम् । यमिति पाठे यमम्बरीषम् । पश्यतामिति

यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ॥ तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥२४॥ [1]समर्धयन्ति तान्कामाः स्वाराज्यपरिभाविताः ॥ दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ २५ ॥ स इत्थं भक्तियोगेन [2]तपोयुक्तेन पार्थिवः ॥ स्वधर्मेण हरिं प्रीणन्सङ्गान्सर्वाञ्छनैर्जहौ ॥ २६ ॥ [3]गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ २७ ॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ॥ एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥२८॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ॥ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥ व्रतान्ते कार्तिके मासि त्रि[4]रात्रं समुपोषितः ॥ स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ ३० ॥ महाभिषेकविधिना सर्वोपस्करसंपदा ॥ अभिषिच्याम्बराकँल्पैर्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥ तद्गतान्तरभावेन पूजयामास केशवम् ॥ ब्राह्मणांश्च महाभागान्सिद्धार्थानपि भक्तितः ॥ ३२ ॥ गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ॥ पयःशीलवयोरूपवत्सोपस्करसंपदाम् ॥ ३३ ॥ प्राहिणोत्साधु विप्रेभ्यो गृहेषु न्यर्बुदानि षट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥ लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥ ३५॥ ॥

पाठे सिद्धानां विशेषणम् ॥२५॥ एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति—स इत्थमिति द्वाभ्याम् ॥२६॥२७॥ नन्वेवंभूतोऽसौ कथं प्रतिपक्षान् जयेत्तत्राह—तस्मा इति ॥२८॥ तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदण्डो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह—आरिराधयिषुरित्यादिना यावदध्यायसमाप्ति ॥२९॥ अर्चयत् । अडागमाभाव आर्षः ॥३०॥३१॥ ब्राह्मणांश्च पूजयामास । सिद्धार्थानाप्तकामान् पूजानपेक्षानपि ॥३२॥ रूप्याङ्घ्रीणां रूप्यखुराणाम् । पयःशीलादिसंपदो यासां तासाम् ॥ ३३ ॥ न्यर्बुदानि षट् षष्टिकोटीः ॥ ३४ ॥ तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥

१ स्वाराज्यमिन्द्रपदतुल्यतेति चक्रवर्ती व्याचख्यौ । २ 'न वर्धयन्ति यान्कामाः' इति वीर० पाठः । ३ तपोऽत्र द्वादशीव्रतादि इति क्रम० । ४ गृहादिषु भगवत्सेवानुपयोगिष्विति ज्ञेयम् इति क्रम० । ५ 'वाजिवस्तुषु' इति पाठः । ६ दशमीद्वादश्योर्विहितेतरभोजनाभावेन एकादश्यां निराहारत्वेन त्रिरात्रत्वम् इति चक्र० । ७ अम्बरैर्वस्त्रैः । आकल्पैरलंकारैश्च । 'अभिषिच्य वराकल्पैः' इति पाठः । ८ तद्गतान्तरभावेन तदेकमनस्त्वेन ।

आनर्चाचिंतवान् । अभ्यवहाराय भोजनाय ॥ ३६ ॥ आवश्यकं नैयमिकं माध्याह्निकं कर्म कर्तुं गतः । बृहद्ब्रह्म ॥ ३७ ॥ ३८ ॥ धर्मसंकटमेवाह—यद्यतो
ब्राह्मणातिक्रमे दोषोऽधर्मः । द्वादश्यामपारणेऽपि दोषो व्रतवैगुण्यम् । यत्कृत्वा यस्मिन्कृते ॥ ३९ ॥ एवं द्विजैः सह विचार्य निश्चिनोति—अम्भसेति ।
व्रतस्य पारणं समाप्तिम् । तदशितमाहुरशितं नेति चाहुः—श्रुतिश्च 'अपोऽश्नाति तन्नैवाशितं नैवानशितम्' इति ॥ ४० ॥ प्रत्यचष्ट प्रत्यैक्षत ॥ ४१ ॥ ४२ ॥

तमानर्चातिथिं [1]भूपः प्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥३६॥ प्रतिनन्द्य स तद्याच्ञां
कर्तुमावश्यकं गतः ॥ निममज्ज बृहद्ध्यायन्कालिन्दीसलिले शुभे ॥३७॥ मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ॥
चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसंकटे ॥३८॥ ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ॥ यत्कृत्वा साधु मे भूया-
दधर्मो वा न मां स्पृशेत् ॥ ३९ ॥ अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ॥ प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं
च तत् ॥ ४० ॥ इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाच्युतम् ॥ प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ ४१ ॥
दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ॥ राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥ मन्युना प्रचलद्गात्रो
भ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥४३॥ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ॥
धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥४४॥ यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ॥ अदत्त्वा भुक्तवां-
स्तस्य सद्यस्ते दर्शये फलम् ॥४५॥ एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ॥ तया स निर्ममे तस्मै कृत्यां काला-
नलोपमाम् ॥४६॥ तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ॥ वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥४७॥
प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ॥ ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥ [2]तदभिद्रवदुद्वीक्ष्य
स्वप्रयासं च निष्फलम् ॥ दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ४९ ॥ तमन्वधावद्भगवद्रथाङ्गं दावाग्निरुद्धू-
तशिखो यथाहिम् ॥ तथानुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥५०॥ दिशो नभः क्ष्मां विवरान्स-
मुद्राँल्लोकान्सपालांस्त्रिदिवं गतः सः ॥ यतो यतो [3]धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ५१ ॥ ॥

प्रचलत्कम्पमानं गात्रं यस्य । भ्रुकुटीभ्यां कुटिलमाननं यस्य ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ क्रुद्धमहिं पावको दावाग्निरिव ॥ ४८ ॥ निष्फलमुद्वीक्ष्य
॥ ४९ ॥ अनुषक्तं पृष्ठतः संसक्तम् । मेरोर्गुहां विविक्षुरधावत् ॥ ५० ॥ ५१ ॥ ॥ ॥ ॥

१ अत्र—'भूयः' 'सम्यक्' इति पाठौ । २ तच्चक्रं कृत्यां दग्ध्वापि अभि अभिमुखं समपि दग्धुं द्रवत् धावत् वीक्ष्य । ३ धावति अधावत् ।

अरणमेषमाणः शरणमिच्छन् । अजिततेजसो हरेश्चक्रात् ॥ ५२ ॥ एतत्सर्वं यस्य भ्रूभङ्गमात्रेण तिरोभविष्यति । कदा । क्रीडाया अवसाने । तदपि कदा ।
द्विपरार्धसंज्ञे काले ॥ ५३ ॥ अतो वयं सर्वे यस्य नियममाज्ञां प्रपन्नाः प्राप्ताः सन्तो लोकहितं यथा भवत्येवं तन्नियमं मूर्ध्न्यर्पितं वहामः । अतस्तद्भक्तद्रोहिणं
त्वां रक्षितुं न समर्थोऽहमिति शेषः । यत्तदोर्नित्यसंबन्धात् ॥५४॥५५॥ श्रीरुद्रोऽपि प्रत्याचष्टे—वयमिति चतुर्भिः—भूम्नि महति । महत्त्वमेवाह—यस्मिन्प-
रमेश्वरे । अजा ब्रह्माणस्त एव जीवास्तेषां कोशा उपाधिभूता ब्रह्माण्डविग्रहा ईदृशा दृश्यमानब्रह्माण्डप्रमाणा अन्येऽपि भवन्ति जायन्ते नश्यन्ति च । यत्र येषु

अलब्धनाथः स यदा कुतश्चित्संत्रस्तचित्तोऽरणमेषमाणः ॥ देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम्
॥ ५२ ॥ ॥ब्रह्मोवाच॥ स्थानं मदीयं सहविश्वमेतत्क्रीडावसाने द्विपरार्धसंज्ञे ॥ भ्रूभङ्गमात्रेण हि संदिधक्षोः काला-
त्मनो यस्य तिरोभविष्यति ॥५३॥ अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ॥ सर्वे वयं यन्नियमं प्रपन्ना
मूर्ध्न्यर्पितं लोकहितं वहामः ॥ ५४ ॥ प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ॥ दुर्वासाः शरणं यातः शर्वं कैलास-
वासिनम् ॥५५॥ ॥श्रीरुद्र उवाच॥ वयं न तात प्रभवाम भूम्नि यस्मिन्परेऽन्येऽप्यजजीवकोशाः ॥ भवन्ति काले
न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥५६॥ अहं सनत्कुमारश्च नारदो भगवानजः ॥ कपिलोऽपान्तरतमो
देवलो धर्म आसुरिः ॥५७॥ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः ॥ विदाम न वयं सर्वे यन्मायां माययावृताः
॥५८॥ तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ॥ तमेव शरणं याहि हरिस्ते शं विधास्यति ॥५९॥ ततो निराशो दुर्वासाः
पदं भगवतो ययौ ॥ विकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥६०॥ संदह्यमानोऽजितशस्त्रवह्निना तत्पाद-
मूले पतितः सवेपथुः ॥ आहाच्युतानन्त सदीप्सित प्रभो कृतागसं माऽव हि विश्वभावन ॥ ६१ ॥ अजानता ते
परमानुभावं कृतं मयाघं भवतः प्रियाणाम् ॥ विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ६२ ॥
॥श्रीभगवानुवाच॥ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥६३॥ ॥

ब्रह्माण्डेषु लोकेशाभिमानिनो वयं भ्रमामः ॥५६॥ ननु सर्वज्ञस्य तव भ्रमः कुतस्तत्राह—अहमिति ॥५७॥ पारदर्शिनः सर्वज्ञा अपि यस्य मायां न विद्मः ॥५८॥
॥ ५९ ॥ ६० ॥ हे सतामीप्सित, मा मां अव पाहि ॥ ६१ ॥ अपराधं निवेदयन्प्रार्थयते—अजानतेति । अघं दुःखम् । अपचितिं निष्कृतिम् । मद्भक्तद्रोहे
निष्कृतिं न पश्यामीति चेत्तत्राह—यस्य तव नाम्नि कीर्तिते नरकस्थोऽपि मुच्यते, तस्य तव किमशक्यमिति भावः ॥ ६२ ॥ ६३ ॥ ॥ ॥

१ 'दन्दह्यमानः' इति 'स दह्यमानः' इति पाठौ । २ विश्वं शरणागतवर्गमपराधानवेक्षणेन भावयति सुखयतीति तथाभूतः । यद्वा विश्वं चिदचिदात्मकं भावयत्युत्पादयतीति तथा ।

न आशासे न स्पृहयामि ॥ ६४ ॥ इमं परं च लोकं हित्वा ॥ ६५ ॥ ६६ ॥ प्रतीतं प्राप्तमपि ॥ ६७ ॥ ६८ ॥ आत्मनस्तवैवाभिचारो हिंसा यतोऽभूत्तमेव यातु । अशिवमनर्थम् ॥ ६९ ॥ तपोविद्यासंपन्नस्य मम कथमनर्थः समजनीति मा स्म विस्मयं कार्षीरित्याह—तप इति ॥ ७० ॥ ७१ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ पञ्चमे विष्णुचक्रं तु प्रसाद्य प्राणसंकटात् ॥ दुर्वासा रक्षितस्तेन तथा तद्वृत्तमीर्यते ॥ १ ॥ १ ॥ स उद्यमनमिति छेदः । सुलोपः पादपूरणार्थः ॥ २ ॥ ज्योतिषां नक्षत्राणां पतिः सोमस्त्वम् । मात्राणीन्द्रियाणि च ।

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥ श्रियं चात्यन्तिकीं ब्रह्मन्येषां गतिरहं परा ॥ ६४ ॥ ये दारागारपुत्राप्तान्प्राणान्वित्तमिमं परम् ॥ हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ६५ ॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः ॥ वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ६६ ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥ नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥ ६७ ॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ६८ ॥ उपायं कथयिष्यामि तव विप्र शृणुष्व तत् ॥ अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥ ६९ ॥ तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ ते एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ७० ॥ ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम् ॥ क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ७१ ॥ ॥ इति श्रीमद्भा० म० पु० न० अम्बरीषचरिते चतुर्थोऽध्यायः ॥ ४ ॥ ॥ श्रीशुक उवाच ॥ एवं भगवतादिष्टो दुर्वासाश्चक्रतापितः ॥ अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥ तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ २ ॥ ॥ अम्बरीष उवाच ॥ त्वमग्निर्भगवान्सूर्यस्त्वं सोमो ज्योतिषां पतिः ॥ त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ३ ॥ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन्विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ॥ त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥

त्वच्छक्त्यैवाग्न्यादयः स्वं स्वं कार्यं कुर्वन्तीत्यर्थः ॥ ३ ॥ सहस्रमरा यस्य हे सहस्रार । स्वस्ति शरणं भूयाः । इडस्पते पृथ्वीपते ॥ ४ ॥ ब्राह्मणरक्षणं तव युक्तमेवेत्याह—त्वं धर्म इति । नच तवेयमतिस्तुतिरित्याह—पौरुषं पुरुषस्येश्वरस्य परं तेजः सामर्थ्यं त्वम् । अयं भावः—'स ऐक्षत' इत्यादिश्रुतिप्रसिद्धं भगवतः शोभनं दर्शनं सुदर्शनं तत एव सर्वं जातम् । अतस्त्वमेव सर्वात्मेति ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥

१ कुतोऽन्यदिति सालोक्यादीना कालेनाविप्लुतत्वं दर्शयति इति चक्र० । २ मह्यं मम । ३ सोऽम्बरीषस्तस्य दुर्वाससः उद्यमनं स्ववाचर्यमुद्यमं वीक्ष्य । सोद्यमनमित्यत्र 'सोऽचि लोपे चेत्पादपूरणं' इति सलोपे संधिः ।

हे सुनाभ, अद्भुतकर्माणं त्वां कः स्तोतुं समर्थः । अतस्तुभ्यं केवलं नमो गृण इत्यन्वयः । अद्भुतकर्मत्वमेवाह—अखिलानां धर्माणां सेतवे मर्यादारूपाय । अत एवाधर्मशीलानामसुराणां धूमकेतवे दाहकाय । त्रैलोक्यं गोपायतीति तथा । विशुद्धमत्युज्ज्वलं वर्चस्तेजो यस्य तस्मै ॥ ६ ॥ तदेव प्रपञ्चयति—त्वत्तेजसेति द्वाभ्याम् । सूर्यादीनां प्रकाशश्च । त्वयैव रूप्यते प्रकाश्यत इति त्वद्रूपम् ॥ ७ ॥ हे अजित, अनञ्जनेन श्रीहरिणा यदा विसृष्टस्त्वं तदा दैत्यदानवानां बलं प्रविष्टः संस्तेषां बाह्वादीन्भिन्दन्विराजसे । पाठान्तरे ऊर्जिता दैत्यदानवा यस्मिंस्तद्बलम् । पूर्वपदेन सन्धिरार्षः ॥ ८ ॥ किंच त्वया भगवन्नियुक्तेन

नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे ॥ त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥ त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् ॥ दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सद्-सत्परावरम् ॥७॥ यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् ॥ बाहूदरोर्वङ्घ्रिशिरोधराणि वृश्चणन्नजस्रं प्रधने विराजसे ॥८॥ स त्वं जगत्त्राण खलप्रहाणये निरूपितः सर्वसहो गदाभृता ॥ विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥९॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ॥ कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥१०॥ यदि नो भगवान्प्रीत एकः सर्वगुणाश्रयः ॥ सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥११॥ ॥ श्रीशुक उवाच ॥ इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ॥ अशाम्यत्सर्वतो विप्रं प्रदहद्राजयाच्ञया ॥१२॥ स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ॥ प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥१३॥ ॥ दुर्वासा उवाच ॥ अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे ॥ कृतागसोऽपि यद्राजन्मङ्गलानि समीहसे ॥१४॥ दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ॥ यैः संगृहीतो भगवान्सात्वतामृषभो हरिः ॥ १५ ॥ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ॥ तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ १६ ॥ राजन्ननुगृहीतोऽहं त्वयातिकरुणात्मना ॥ मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ १७॥ राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ॥ चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥१८॥

खलानामेव दण्डः कार्यः, साधवस्तु रक्षणीयाः, अतो विप्रस्य रक्षणेनास्माननुगृहाणेत्याह—स त्वमिति । हे जगत्त्राण, स एवंभूतस्त्वं खलानामेव प्रहारार्थं निरूपितो नियुक्तः । अतोऽस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि तदेव नोऽनुग्रहः ॥ ९ ॥ सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते—यद्यस्तीति द्वाभ्याम् । विप्रो दैवं देवता यस्मिंस्तत् ॥ १० ॥ ११ ॥ राज्ञस्तस्यैव याच्ञया ॥१२॥१३॥१४॥१५॥१६॥१७॥ राजेत्यादिश्लोकद्वयं शुकोक्तिः ॥ १८ ॥ ॥

१ महात्मनामित्यस्यार्थः—सूर्यादीना प्रकाशश्च त्वत्तेजसैव धृतो निहितः । त्वत्तेजोधीनस्थितिकतेजसः सूर्यादय इत्यर्थः । 'दृशो महात्मनाम्' इति पाठः । २ 'प्रविष्टोर्जितदैत्यदानवम्' इत्येवंरूपे । ३ 'अजहात्' इति वीर० पाठः । ४ दुष्करोऽनुग्रहः दुस्त्यजोऽपराधः । 'दुष्करं किं नु' इत्यपि वीर० पाठः ।

॥ १९ ॥ प्रीतोऽस्मीति श्लोकद्वयं पुनश्च विप्रोक्तिः । आत्मनि मेधा येन तेनातिथ्येन ॥ २० ॥ भूरियं तत्रस्थो जनः कीर्तयिष्यति ॥ २१ ॥ २२ ॥
तस्य धैर्यातिशयमाह—गतो मुनिर्यावता नागतस्तावत्संवत्सरोऽतिक्रान्त इति ॥ २३ ॥ द्विजस्योपयोगेन भोजनेनातिपवित्रमाहरद्बुभुजे । स्ववीर्यं च धैर्या-
दिलक्षणं परानुभावं भगवतः प्रभावं मेने ॥ २४ ॥ एवंविधा अनेके गुणा यस्य सः । आविरिञ्चाद्विरिञ्चिपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः ॥ २५ ॥
॥ २६ ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ षष्ठारम्भेऽम्बरीषस्य

सोऽशित्वादृतमानीतमातिथ्यं सार्वकामिकम् ॥ तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ १९ ॥ प्रीतोऽस्म्य-
नुगृहीतोऽस्मि तव भागवतस्य वै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ २० ॥ कर्मावदातमेतत्ते गायन्ति
स्वःस्त्रियो मुहुः ॥ कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ २१ ॥ ॥ श्रीशुक उवाच ॥ एवं संकीर्त्य राजानं
दुर्वासाः परितोषितः ॥ ययौ विहायसामन्त्र्य ब्रह्मलोकमहैतुकम्[1] ॥२२॥ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः ॥
मुनिस्तद्दर्शनाकाङ्क्षो राजाऽब्भक्षो[2] बभूव ह ॥२३॥ गते च दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरत् ॥
ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च परानुभावम्[3] ॥ २४ ॥ एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि
वासुदेवे ॥ क्रियाकलापैः समुवाह भक्तिं ययाऽऽविरिञ्चान्निरयांश्चकार ॥२५॥ अथाम्बरीषस्तनयेषु राज्यं समानशी-
लेषु विसृज्य धीरः ॥ वनं विवेशात्मनि वासुदेवे मनो दधद्[4]ध्वस्तगुणप्रवाहः ॥ २६ ॥ इत्येतत्पुण्यमाख्यानमम्बरी-
षस्य भूपतेः ॥ संकीर्तयन्ननुध्यायन्भक्तो भगवतो भवेत् ॥ २७ ॥[5] ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे
अम्बरीषचरितं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः ॥ विरूपा-
त्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥ रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ॥ अङ्गिरा जनयामास ब्रह्मवर्चस्विनः
सुतान् ॥ २ ॥ एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः ॥ रथीतराणां प्रवराः क्षत्रोपेता[6] द्विजातयः ॥ ३ ॥

वंशमुक्त्वा ततः परम् ॥ पष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ १ ॥ तत्र षष्ठे शशादादिर्मान्धात्रन्तो निरूप्यते ॥ प्रसङ्गात्सौभरेराख्या मान्धातृतनयापतेः
॥ २ ॥ १ ॥ तन्तवे सन्तानार्थम् ॥ २ ॥ ये अङ्गिरसा जनिता एते रथीतरस्य क्षेत्रे प्रसूतत्वेन रथीतरगोत्राः सन्तोऽङ्गिरसो वीर्येण प्रसूतत्वादाङ्गिरसाश्च ।
पुनरपि रथीतराणामन्येषां जातानां प्रवरा मुख्याः स्मृताः । यतः क्षत्रोपेता ब्राह्मणा इत्यर्थः ॥ ३ ॥ ॥ ॥ ॥

१ न विद्यन्ते हैतुकाः शुष्कतर्कनिष्ठवेदबहिर्मुखा यत्र इति क्रम० । २ अब्भक्षः पूर्वमप्मात्रं यद्भक्षितवान् न तु पुनः । ३ शुकवाक्यमेतत् । ४ मनोदधत् मनो धातुं । ५ 'अम्बरीषस्य चरितं ये शृण्वन्ति महात्मनः । मुक्तिं प्रयान्ति ते सर्वे भक्त्या विष्णोः प्रसादतः ॥' इति चक्रवर्तिपाठे पद्यमधिकम् । ६ क्षत्रब्रह्मोभयगोत्रान्विता बभूवुरित्यर्थः ।

तदेवं मनोर्दशसु पुत्रेषु पृषध्रश्च कविश्च विरक्तत्वान्न वंशप्रवर्तकौ । करूषादीनां च सप्तानां वंशास्तारतम्यक्रमेणोक्ताः । इदानीमतिविततमिक्ष्वाकोर्वंशमाह— क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावः । क्षुतं कुर्वतो मनोर्घ्राणतो जज्ञे । श्रद्धायां जनयामास दशपुत्रानिति पूर्वोक्तं बाहुल्याभिप्रायेणेति द्रष्टव्यम् । पुत्राणां शते ज्येष्ठाः ॥ ४ ॥ 'आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः' तस्मिन्पुरस्तात्समुद्रपर्यन्तं मण्डलविभागेन पञ्चविंशतिर्नृपा अभवन् । हे नृप, तथैव पश्चाच्च पञ्चविंशतिः । मध्ये तु ज्येष्ठास्त्रयः । अपरे त्वन्यतो दक्षिणोत्तरादिषु ॥ ५ ॥ विकुक्षिरेव शशाद इति विश्रुत इति वक्ष्यति तत्र हेतुमाह—स एकदेति चतुर्भिः ॥ ६ ॥ क्रियार्हणान् श्राद्धार्हान् । आददभक्षयत् ॥ ७ ॥ तद्गुरुर्वसिष्ठः । प्रोक्षणाय श्राद्धोचितसंस्काराय ॥ ८ ॥ त्यक्तो विधिः सदाचारो यन तम् ॥ ९ ॥

क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ॥ तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥ तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप ॥ पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥ स एकदाष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ॥ मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥ तथेति स वनं गत्वा मृगान्हत्वा क्रियार्हणाम् ॥ श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥ शेषं निवेदयामास पित्रे तेन च तद्गुरुः ॥ चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाभिहितं नृपः ॥ देशान्निःसारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥ स तु विप्रेण संवादं जापकेन समाचरन् ॥ त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ॥ १० ॥ पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ॥ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥ पुरंजयस्तस्य सुत इन्द्रवाह इतीरितः ॥ ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥ कृतान्त आसीत्समरो देवानां सह दानवैः ॥ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ॥ वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥ स सन्नद्धो धनुर्दिव्यमादाय विशिखान् सितान् ॥ स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥ तेजसाऽऽप्यायितो विष्णोः पुरुषस्य परात्मनः ॥ प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् ॥ १६ ॥

स त्विक्ष्वाकुः । जापकेन वसिष्ठेन । राज्यभोगेन विरक्तो योगी संस्तेन कलेवरं त्यक्त्वा स यत्परं तत्त्वं तदवाप ॥ १० ॥ शासत्पालयन्हरिमीजे ॥ ११ ॥ दैत्यपुरस्य जयात्पुरंजयः, इन्द्रो वाहो यस्येतीन्द्रवाहः, ककुदि स्थितत्वात्ककुत्स्थ इति च, शशादसुतस्य त्रीणि नामानि तत्तत्कर्मनिमित्तानि ॥ १२ ॥ तान्येव व्याचक्षाण आह—कृतान्त इति सप्तभिः—कृतं विश्वमन्तयतीति तथा पार्ष्णिग्राहः सहायः ॥ १३ ॥ इन्द्रो यदि मम वाहनं स्यात्तर्हि दैत्यान्हनिष्यामीति तेन वाहनत्वेन वृतः सन्निन्द्रो लज्जया तदनङ्गीकुर्वन्विष्णोर्वचनात्तस्य वाहनत्वाय महान्वृषो बभूवेत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ ॥ ॥

१ घ्राणतः घ्राणोदीर्णशब्दात् । २ 'आसमुद्रात्पुरस्तात्तु आसमुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते ॥' इति विज० । ३ अकर्मकं श्राद्धकर्मायोग्यम् । ४ चक्रवर्ती तु जापकेनेत्यत्र ज्ञापकेन ज्ञानदायिना वसिष्ठेनेति व्याचख्यौ । ५ समाचरन्नभूदिति शेषः । तथा च वाक्यभेदात्स इत्यस्य न पौनरुक्त्यम् । ६ 'महात्मनः' इति पाठः । ७ त्रिदशैः सहितः ।

T.१०६

येऽभिमुखं ययुस्तान् यमं दर्शयितुं सदेहानेव भल्लैरनयदित्यर्थः ॥ १७ ॥ तच्च दृष्ट्वाऽन्ये दुद्रुवुः । स्वमालयं पातालम् ॥ १८ ॥ इति एतैः कर्मभिः । पुरञ्जयादिनामभिः । आह्वतो व्याहृतः । पाठान्तरे आहूत इत्यर्थः ॥ १९ ॥ २० ॥ शावस्तिः शावस्तस्य पुत्रः । कुवलयाश्वक एव धुन्धुमार इति ख्यातः ॥ २१ ॥ तत्र कारणमाह—य इति । सुतानामेकविंशत्या सहस्रैर्वृतः सन् हतवान् ॥ २२ ॥ धुन्धुमार इति चेति चकारस्यान्वयः ॥ २३ ॥ २४ ॥ अथ तस्मान्निकुम्भात्कृशाश्वः ॥ २५ ॥ भार्याणां शतेन सह । अस्य पुत्रार्थमिन्द्रदेवत्यामिष्टिं वर्तयामासुः । सेत्याश्चर्ये ॥ २६ ॥ तदेवाह—राजेति पङ्क्तिः । तर्षितस्तृषितः

तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् ॥ यमाय भल्लैरनयद्दैत्यान्येऽभिययुर्मृधे ॥१७॥ तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ॥ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ॥ प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥ १९ ॥ पुरंजयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ॥ विश्वरन्धिस्ततश्चन्द्रो युवनाश्वश्च तत्सुतः ॥ २० ॥ शावस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ॥ बृहदश्वस्तु शावस्तिस्ततः कुवलयाश्वकः ॥ २१ ॥ यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥२२॥ धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥२३॥ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ॥ दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥२४॥ बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ॥ युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥२५॥ भार्याशतेन निर्विण्णऋषयोऽस्य कृपालवः ॥ इष्टिं स्म वर्तयांचक्रुरैन्द्रीं ते सुसमाहिताः ॥२६॥ राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ॥ दृष्ट्वा शयानान्विप्रांस्तान्पपौ मन्त्रजलं स्वयम् ॥२७॥ उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ॥ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥२८॥ राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ॥ ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥२९॥ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ॥ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥ कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ॥ मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥ ३१ ॥ ॥ ॥

सन् जलार्थं प्रविष्टो मन्त्राभिमन्त्रितं जलं पत्न्यै देयं स्वयं पपौ ॥ २७ ॥ व्युदकं निरुदकम् । पुंसवनं पुत्रोत्पत्तिकारणम् ॥ २८ ॥ अहो दैवबलमेव मुख्यं बलं पुरुषबलं तु न किंचिदिति वदन्त ईश्वराय नमस्कारं चक्रुः ॥ २९ ॥ ३० ॥ अयं कं धास्यति पास्यतीति दुःखितैर्विप्रैरुक्ते सति तस्यामिथ्यामाराधित इन्द्रो मां धाता पाता हे वत्स, मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमदादित्यर्थः ॥ ३१ ॥ ॥ ॥ ॥

१ 'आहुतः' इत्येवंरूपे । २ निकुम्भात्कृशाश्व इत्यत्र बर्हणाश्वादिति युक्तमिति प्रतीयते, बालबोधिनीकारैर्वीरराघवकारैश्च तथा व्याख्यातत्वात् । ३ इषुपातसामुख्ये विसृज्येत्यन्वयः । ४ निर्विण्णः सन्भार्याशतेन सह वनं गत इति पूर्वेण संबन्धः । ५ उद्दिश्येति शेषः । स्तन्यमुद्दिश्य रोरूयते भृशं रोदिति । 'स्तन्ये रोरूयते' इति पाठे स्तन्ये स्तन्यनिमित्तमित्यर्थो ज्ञेयः ।

तस्य पिता युवनाश्वो भिन्नकुक्षिरपि न ममार किंतु कालान्तरे तपसा सिद्धिमन्वगात् ॥ ३२ ॥ मान्धातुर्महिमानमाह—त्रसदस्युरिति पङ्क्तिः । अङ्ग हे राजन्, यस्मान्मान्धातुर्दस्यव उद्विग्नाः कम्पिताः सन्तस्त्रसन्त्यत इन्द्रो यस्य त्रसदस्युरिति नाम विदधे । स मान्धाताऽवनीमेकः शशासेत्युत्तरेणान्वयः ॥ ३३ ॥ अच्युतस्य तेजसा । अप्रच्युततेजसेति वा ॥ ३४ ॥ आत्मविदपि स यज्ञं विष्णुमीजे । तमेव विशिनष्टि—सर्वदेवमयमिति सार्धेन ॥ ३५ ॥ ३६ ॥ प्रतितिष्ठत्यस्तं गच्छति ॥ ३७ ॥ प्रसङ्गात्सौभरेश्चरितमाह—तेषामिति यावत्समाप्ति । तेषां स्वसारो मान्धातुः कन्याः ॥ ३८ ॥ ननु महातापसस्य कुतो विवाहप्रसङ्गः, कथं वा जराजर्जरं तं राजकन्या वव्रिरे तदाह—यमुनान्तर्जल इति पङ्क्तिः ॥ ३९ ॥ नृपं मान्धातारम् । सोऽपि मान्धाता स्वयंवरे कामं

न ममार पिता तस्य विप्रदेवप्रसादतः ॥ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥ त्रसदस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ॥ यस्मात्त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३३ ॥ यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ॥ सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥ ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३५ ॥ द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ॥ धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥ ३६ ॥ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३७ ॥ शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ॥ पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥ तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम् ॥ ३८ ॥ यमुनान्तर्जले मग्नस्तप्यमानः परंतपः ॥ निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ ३९ ॥ जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ॥ सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्या स्वयंवरे ॥४०॥ स विचिन्त्याप्रियं स्त्रीणां जरठोऽयमसंमतः ॥ वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥ साधयिष्ये तथात्मानं सुरस्त्रीणामपीप्सितम् ॥ किं पुनर्मनुजेन्द्राणामिति व्यवसितः प्रभुः ॥ ४२ ॥ मुनिः प्रवेशितः क्षत्रा कन्यान्तःपुरमृद्धिमत् ॥ वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥४३॥ तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ॥ ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥ ॥ ७ ॥ ॥ ७ ॥

गृह्यतामित्याह ॥ ४० ॥ स विप्रः स्त्रीणामप्रियं मां विचिन्त्यानेनाहं प्रत्युक्तः, अत आत्मानं तथा साधयिष्यामीति व्यवसितो निश्चितवानिति द्वयोरन्वयः । अप्रियत्वे हेतुः—जरठो वृद्धः । वलीभिर्युक्तः पलितश्च । एजत्कः कम्पमानशिराः । तापसत्वादिना चाऽसंमतोऽहमिति कृत्वा ॥ ४१ ॥ तथेत्यस्य प्रपञ्चः—सुरस्त्रीणामपीप्सितं, किं पुनर्मनुजेन्द्राणां याः स्त्रियस्तासामिति ॥ ४२ ॥ ततः किं वृत्तं तदाह—मुनिरिति द्वाभ्याम् । क्षत्रा प्रतीहारेण । पञ्चाशतापि राजकन्याभिः स एक एव वरो वृतः ॥ ४३ ॥ ४४ ॥ ॥ ॥ ॥ ॥

तस्य गार्हस्थ्यं वर्णयति—स इति चतुर्भिः—बह्वृच इति मन्त्रसामर्थ्यमुक्तम् । ताभिः सह रेमे इत्युत्तरेणान्वयः । क रेमे । अपारणीयं दुरन्तं यत्तपस्तस्य श्रिया समृद्ध्याऽनर्घ्याः परिच्छदा येषु तेषु गृहेषु तथा नानाविधेषूपवनेषु च । अमलान्यम्भांसि येषां तेषु सरस्सु च । कथंभूतेषु । सौगन्धिकानां कह्लाराणां च काननानि स्तोमा येषु ॥ ४५ ॥ कथंभूतेषु गृहादिषु । स्वलंकृताः स्त्रियः पुरुषाश्च येषु । अनु गायन्तो द्विजाश्च पक्षिणो भृङ्गाश्च वन्दिनश्च येषु । कथंभूतः । महार्हशय्यादिभिरुपलक्षितः सन् ॥ ४६ ॥ स्तम्भं गर्वम् ॥ ४७ ॥ आज्यस्तोकैर्घृतबिन्दुभिः ॥ ४८ ॥ इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह—स कदाचिदिति सप्तभिः । आत्मनो मनसो हेतोरात्मनोऽपह्नवं तपोहानिं ददर्श ॥ ४९ ॥ संश्चासौ चरितव्रतश्च योऽहं तस्य । ब्रह्म तपः ॥ ५० ॥ मिथुनव्रतिनां

स बह्वृचस्ताभिरपारणीयतपःश्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषु नानोपवनामलाम्भःसरस्सु सौगन्धिककाननेषु ॥४५॥
महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलंकृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गवन्दिषु
॥ ४६ ॥ यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ॥ विस्मितः स्तम्भमजहात्सार्वभौमश्रियान्वितम् ॥४७॥ एवं गृहेष्व-
भिरतो विषयान्विविधैः सुखैः ॥ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥ स कदाचिदुपासीन आत्मापह्नव-
मात्मनः ॥ ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥४९॥ अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ॥
अन्तर्जले वारिचरप्रसङ्गात्प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥५०॥ सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजे-
द्बहिरिन्द्रियाणि ॥ एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥५१॥ एकस्तपस्व्यहमथाम्भसि
मत्स्यसङ्गात्पञ्चाशतासमुत पञ्चसहस्रसर्गः ॥ नान्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥५२॥
एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः ॥ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥५३॥ तत्र तप्त्वा तपस्तीक्ष्ण-
मात्मकर्षणमात्मवान् ॥ सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥ ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं
गतिम् ॥ अन्वीयुस्तत्प्रभावेन अग्निं शान्तमिवार्चिषः ॥५५॥ ॥ इति श्रीम०म०पु०न० सौभर्याख्याने षष्ठोऽध्यायः ॥६॥

दाम्पत्यधर्मवतां चेद्यदि प्रसङ्गस्तर्हि तद्व्रतिषु ईश्वरार्थधर्मपरेष्वेव कार्य इति शेषः ॥५१॥ सङ्गाज्जातं दोषं प्रपञ्चयति—एक इति । पञ्चाशता भार्याभिः संबन्धात्पञ्चाशदासम् । अभूवमित्यर्थः । ततश्च सुतैः पञ्चसहस्रसर्ग आसम् । प्रत्येकं तासु पुत्रशतरूपेणोत्पत्तेः । उभयकृत्यान्यैहिकपारत्रिकाणि कर्माणि तद्विषयाणां मनोरथानाम् । अर्थभावः पुरुषार्थबुद्धिमान् ॥ ५२ ॥ न्यासोऽत्र सङ्गत्याग एव । वानप्रस्थधर्म इत्यर्थः ॥ ५३ ॥ ५४ ॥ आध्यात्मिकीं गतिं ब्रह्मणि लयम् ॥ ५५ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

१ एतादृशसपत्तिसृष्टौ मन्त्रसामर्थ्यमेव कारणमिति भावः । २ सार्वभौमश्रिया अन्वितमनुप्राप्तमिति स्तम्भविशेषणम् । ३ शुकोक्तिरियम् । ४ कालमेतावत्कालम् । ५ सहैवाग्निभिरिति आत्मात्मीयं सर्वमेव तदनुगतत्वेन विभाव्योत्क्रान्तवानित्यर्थः इति क्रम० । ६ अन्वीयुरनुसृताः । 'अन्वयुः' इति पाठः ।

मान्धातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ॥ पुरुकुत्सस्य चाख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥ १ ॥ पुत्रप्रवरः पुत्रश्रेष्ठः । स पितामहेन युवनाश्वेन प्रवृतः पुत्रत्वेन स्वीकृतः । अत एव तस्य मान्धातृप्रवर्गत्वम् । तत्सुतोऽम्बरीपस्य सुतः । इमे यौवनाश्वाम्बरीपहारीता मान्धातृगोत्रस्य प्रवरा अवान्तरविशेषप्रवर्तकाः । यद्वा यौवनाश्वविशेषणम् । पितामहेन मान्धात्रा सह आर्षेयवरणे प्रवृतः । मान्धाता प्रवरो येषां ते इमे अम्बरीपयौवनाश्वहारीताः । यथाहाश्वलायनः 'हरितकुत्सपिङ्गदर्भभैमगवानामाङ्गिरसाम्बरीपयौवनाश्वेति मान्धातारं हैके ब्रुवते ॥ अतीत्याङ्गिरसं मान्धात्रम्वरीपयौवनाश्वेति' इति ॥ १ ॥ पुरुकुत्सस्य वंशं कथयिष्यन्नादौ तावत्तस्य विवाहं प्रभावं चाह—उरगैर्भ्रातृभिर्या दत्ता नर्मदा तया ॥ २ ॥ वध्यान् वधार्हान् । स च पुरुकुत्सो नागाल्लब्धवरोऽभूत् । वरमाह—इदं नर्मदया रसातलानयनादिकं स्मरतां सर्पादभयमिति ॥ ३ ॥ देहकृत्पिता । त्रसद्दस्योः सुतोऽनरण्य इत्यर्थः ॥ ४ ॥ त्रयः शङ्कव इव दुःखहेतवो

॥ श्रीशुक उवाच ॥ मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ॥ पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ॥ हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ॥ १ ॥ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ॥ तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ २ ॥ गन्धर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक् ॥ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ ३ ॥ त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ त्रिबन्धनः ॥ ४ ॥ तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥ प्राप्तश्चाण्डालतां शापाद्गुरोः कौशिकतेजसा ॥ ५ ॥ सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ॥ ६ ॥ त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥ सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ८ ॥ यदि वीरो महाराज तेनैव त्वां यजे इति ॥ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥ ॥

दोषा यस्यासौ त्रिशङ्कुः । तदुक्तं हरिवंशे—'पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ॥ अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥' इति । परिणीयमानविप्रकन्यापहरणात्क्रुद्धस्य गुरोः पितुः शापात् । कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेण ॥ ५ ॥ तेनैव कौशिकेन ॥ ६ ॥ पक्षिणोराडीबकयोः । विश्वामित्रो राजसूयदक्षिणाच्छलेन हरिश्चन्द्रसर्वस्वमपहृत्य यातयामास, तच्छ्रुत्वा कुपितो वसिष्ठोऽपि विश्वामित्रं त्वमाडी भवेति शशाप, सोऽपि त्वं बको भवेति वसिष्ठं शशाप, तयोश्च युद्धमभूदिति प्रसिद्धम् ॥ ७ ॥ 'हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा पुत्र आस' इत्यादिश्रुतिप्रसिद्धं हरिश्चन्द्रस्य चरितमाह—सोऽनपत्य इत्यादि यावत्समाप्ति । कथं शरणं यातस्तदाह—पुत्रो मे जायताम् ॥ ८ ॥ यदि वीरः पुत्रो मे जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजामीति भाषया तथेत्युक्तवता वरुणेन निमित्तेनास्य रोहितो नाम पुत्रो जातः ॥ ९ ॥ ॥ ॥ ॥

१ अम्बरीपस्य मध्यमपुत्रत्वेऽपि पितामहेन प्रवृतत्वादेव प्रवरत्वम् । २ 'अथ त्रिबन्धुरः' इति वीर० विज० पाठः । अथ तस्मादरुणात् त्रिबन्धन इति बालबोधिनीकाराः । ३ गुरोः शापादिति । 'येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै । बाल्यात्कामाच्च मोहाच्च प्रहर्षा चापलेन च । जहार कन्यां कामात्स कस्यचित्पुरवासिनः' । इत्येवं कृतापराधः पिता त्वेनमथोवाच श्वपाकैर्वर्तयेति सिद्धां० । ४ तेजसेत्यस्योत्तरत्र सबन्धः । ५ स हरिश्च॰द्रः ।

जाते पुत्रे स वरुणो जातः सुतो मामनेन यजस्वेत्यब्रवीत्। यदा पशुर्निर्दशो निर्गतदशदिवसः स्यादित्यत्र स राजाऽब्रवीदित्यनुषङ्गः ॥ १० ॥ ११ ॥ ॥ १२ ॥ १३ ॥ राजन् हे वरुण, राजन्यः पशुर्यदा सान्नाहिकः कवचसंबन्धार्हः संग्रामसमर्थः। अथ तदा शुचिः ॥ १४ ॥ इत्येवं तं तं कालं वञ्चयता राज्ञोक्तः प्रार्थितो देवो वरुणस्तं तं कालं प्रत्यैक्षतेत्यर्थः ॥ १५ ॥ चिकीर्षितमात्मना पशुना वरुणयजनम् ॥ १६ ॥ ततश्च कुपितेन वरुणेन ग्रस्तम्, अत एव

जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ॥ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ १० ॥ निर्दशे च स
आगत्य यजस्वेत्याह सोऽब्रवीत् ॥ दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥ ११ ॥ जाता दन्ता यजस्वेति स प्रत्या-
हाथ सोऽब्रवीत् ॥ यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥ १२ ॥ पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्र-
वीत् ॥ यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥ १३ ॥ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥
सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः ॥ १४ ॥ इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ॥ कालं वञ्चयता तं
तमुक्तो देवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥
पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ॥ रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ १७ ॥ भूमेः पर्यटनं पुण्यं तीर्थ-
क्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत्समाम् ॥ १८ ॥ एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ॥
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाह वृत्रहा ॥ १९ ॥ षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ॥ उपव्रजन्नजीग-
र्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥ शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ॥ ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः[2]
॥ २१ ॥ मुक्तोदरोऽयजद्देवान्वरुणादीन्महत्कथः ॥ विश्वामित्रोऽभवत्तस्मिन्होता चाध्वर्युरात्मवान् ॥ २२ ॥ जमद-
ग्निरभूद्ब्रह्मा वसिष्ठोऽयास्य[3]सामगः ॥ तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् ॥ २३ ॥ शुनःशेपस्य माहात्म्यमु-
परिष्टात्प्रचक्ष्यते ॥ सत्यसारां[4] धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ २४ ॥ ॥ ॥ ॥

जातं महदुदरं यस्य तं पितरं श्रुत्वा ॥ १७ ॥ समां वर्षम् ॥ १८ ॥ द्वितीये च वर्षे वृत्रहा अभ्येत्याभ्येत्य तथैव तं प्रतिषेधन्किंचित्किंचिदाह ॥ १९ ॥ ॥ २० ॥ २१ ॥ वरुणेन मुक्तमुदरं यस्य। महत्तु कथा यस्य सः। आत्मवान् जमदग्निरध्वर्युरभूत् ॥ २२ ॥ अयास्यो मुनिः सामग उद्गाता अभूदित्यर्थः ॥ २३ ॥ उपरिष्टाद्विश्वामित्रसुताख्यानप्रसङ्गेन ॥ २४ ॥ ॥ ॥ ॥

१ यद्यदा। २ 'महायशाः' इति पाठः। ३ अयास्य एव सामग इति विग्रहः। यद्वा अयास्येत्यत्र छान्दसो विभक्तिलोपः। ४ सत्यसारामिति। दक्षिणाछलेनापहृतसर्वस्वस्यापीत्यर्थः।

अविहतां गतिं ज्ञानम् । तामेव गतिमाह सार्धाभ्याम् । मनः पृथिव्यां धारयन्ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहंस्तां च हित्वा मुक्त्वा मुक्तबन्धनस्तस्थावित्यन्वयः । मनोमूलो हि संसारः । मनश्चान्नमयम्—'अन्नमयं हि सोम्य मनः' इति श्रुतेः । अतोऽन्नशब्दवाच्यायां पृथिव्यां मनो धारयन्नेकीकुर्वन्, तां पृथिवीमद्भिरेकीकुर्वन्, अपस्तेजसा, तत्तेजोऽनिलेन ॥ २५ ॥ तं च खे आकाशे, तच्च भूतादावहंकारे, तं च भूतादिमहंकारं महात्मनि महत्तत्त्वे तस्मिन्विषयाकारं व्यावर्त्य ज्ञानकलां ज्ञानांशमात्मत्वेन ध्यात्वा तया ध्यानवृत्तिरूपयात्मावरकमज्ञानं विनिर्दहन् ॥ २६ ॥ निर्वाणसुखसंविदा तां च हित्वा मुक्तबन्धः सन्ननिर्देश्येनाप्रतर्क्येण स्वेन भावेन स्वस्वरूपेण तस्थौ ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥

विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ॥ मनः[2] पृथिव्यां तामद्भिस्तेजसाऽपोऽनिलेन तत् ॥ २५ ॥ खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ॥ तस्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥ २६ ॥ हित्वा तां स्वेन भावेन निर्वाणसुख[3]संविदा ॥ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥२७॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे हरिश्चन्द्रोपाख्यानं नाम सप्तमोऽध्यायः ॥७॥ ॥ श्रीशुक उवाच ॥ हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्मिता ॥ चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥ भरुक[4]स्तत्सुतस्तस्माद्वृकस्तस्यापि बाहुकः ॥ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥२॥ वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ॥ और्वेण जानतात्मानं प्रजावन्तं निवारिता ॥३॥ आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह ॥ सह तेनैव संजातः सगराख्यो महायशाः ॥ ४ ॥ सगरश्चक्रवर्त्यासीत्सागरो यत्सुतैः कृतः ॥ यस्तालजङ्घान्यवनाञ्छकान्हैहयबर्बरान् ॥ ५ ॥ नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ॥ मुण्डान् श्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुण्डितान् ॥ ६ ॥ अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ॥ सोऽश्वमेधैरयजत[5] सर्ववेदसुरात्मकम् ॥७॥ और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ॥ हयमन्वेषमाणास्ते समन्तान्न्यखनन्महीम् ॥ ९ ॥ ॥ ॥

अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ॥ सगरः कपिलाक्षेपान्निर्दग्धा यस्य सूनवः ॥१॥ चम्पस्तस्मादभूत् । येन चम्पापुरी निर्मिता । अतश्चम्पात्सुदेवः ॥१॥ हृता भूर्यस्य ॥ २ ॥ और्वेण ऋषिणा । आत्मानं देहम् । प्रजावन्तं सगर्भम् ॥ ३ ॥ गरो विषम् । तेन गरेण सहैव जातः ॥ ४ ॥ ५ ॥ गुरुवाक्येनौर्ववचनेन । कांश्चिदहत्वैव विकृतवेषिणश्चक्रे । तदेवाह—मुण्डानिति । मुक्तकेशानर्धमुण्डितांश्च ॥ ६ ॥ ७ ॥ और्वेणोपदिष्टो योग उपायस्तेन ॥८॥ तस्य द्वे भार्ये सुमतिः केशिनी च । तत्र सुमत्याः पुत्राणां प्रभावं मृत्युं चाह—सुमत्या इति षड्भिः ॥ ९ ॥ ॥ ॥ ॥

१ निर्वाणसुखसंविदा निर्दुःखसुखरूपज्ञानाख्येन । २ मनः पृथिव्यामिति । पृथिवीविकारभूतान्नभोजने मनोऽतिचपलं भवतीत्यतो मनसोऽन्नमयत्वं । तच्चापल्यविघातार्थं पृथिव्या मनो धारयन् मनश्चापल्यसंयुतं अन्नमयं देहं पृथिव्यां कारणभूतायामभिन्नतया ध्यायन्नित्यर्थः इति सिद्धां० । ३ 'सुखसंपदा' इति चक्र० पाठः । ४ 'भेरुक' इति वीर० पाठः । ५ अस्याऽयजतेति पूर्वेण संबन्धः ।

॥ १० ॥ एष वाजिहर इति ब्रुवन्तोऽभिययुः । पष्टिसहस्राणि परिच्छेदकतया सन्ति येषाम् । उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥ १२ ॥ केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयन्ति तन्निराकरोति—नेति । कुत इत्यत आह—सत्त्वधामनि शुद्धसत्त्वमूर्तौ । जगतः पवित्रः शुद्धिकर आत्मा यस्य तस्मिन्कथं विभाव्यते संभाव्यते । असंभावनायां दृष्टान्तः—भुवो रजः खे कथं संभाव्यते इति ॥ १३ ॥ किंच यस्य येनेरिता प्रवर्तिता तस्य विपश्चितः सर्वज्ञस्य कथं पृथग्मतिररिमित्रादिभेददृष्टिः ॥ १४ ॥ तदेवं सुमत्याः पुत्रेषु मृतेषु केशिन्याः पौत्रेणाश्वः समानीतः पितृव्योद्धरणप्रयत्नश्च कृत इति

प्रागुदीच्यां[1] दिशि हयं ददृशुः कपिलान्तिके ॥ एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥१०॥ हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ॥ उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥ स्वशरीराग्निना तावन्महेन्द्र[2]हृतचेतसः ॥ महद्व्यतिक्रमहता भस्मसादभवन्क्षणात् ॥ १२ ॥ न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्त्वधामनि ॥ कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥१३॥ यस्येरिता सांख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ॥ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥१४॥ योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः ॥ तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥ असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ॥ जातिस्मरः[4] पुरा सङ्गाद्योगी योगाद्विचालितः ॥१६॥ आचरन्गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ॥ सरय्वां क्रीडतो बालान्प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥ एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ॥ योगैश्वर्येण बालांस्तान्दर्शयित्वा ततो ययौ ॥ १८ ॥ अयोध्यावासिनः सर्वे बालकान्पुनरागतान् ॥ दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ॥ पितृव्यखातानुपथं भस्मान्ति ददृशे हयम् ॥ २० ॥ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम्[3] ॥ अस्तौत्समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥ ॥

दर्शयितुमाह—योऽसमञ्जस इत्युक्तः केवलमज्ञैः, वस्तुतस्तु समञ्जस एव । स तु केशिन्याः सुतः । क्षेत्रजत्वमिव प्रतीतं वारयति—तस्यैव नृपस्यात्मनो देहाज्जातः ॥ १५ ॥ तस्य कथामाह चतुर्भिः—असमञ्जसः पुरा पूर्वजन्मनि योगी सन्सङ्गाद्धेतोर्योगाद्विचालितोऽत इदानीं जातिस्मरः सन्सङ्गपरिहाराय जनमुद्वेजयन् । लोकगर्हितं ज्ञातीनां च विप्रियं कर्माचरन् क्रीडतो बालान्सरय्वां प्रास्यत्प्राक्षिपदिति द्वयोरन्वयः ॥ १६ ॥ १७ ॥ एवंविधं वृत्तं कर्म यस्य सः ॥ १८ ॥ १९ ॥ पितृव्यखातमनु यः पन्थास्तं ययौ । भस्मान्ति भस्मसमीपे ॥ २० ॥ २१ ॥ ॥ ॥ ॥ ॥

१ प्रागुदीच्या ईशान्याम् । २ महेन्द्रेति इन्द्रेणैव एष चौर इति विज्ञापनात् । ३ अधोक्षजमधोक्षजावतारभूतम् । ४ जातिस्मरः पूर्वजन्मस्मृतिमान् ।

'अजानन्तोऽवजानन्वोऽप्यनुकम्प्या वयं त्विति ॥ तुष्टाव पड्विरीशानमंशुमानेवमाशयः' ॥ इति। अजनोऽजो ब्रह्मापि त्वामद्यापि न पश्यति न च बुध्यते। कथंभूतम्। आत्मनः स्वस्मात्परं परमेश्वरम्। कैर्हेतुभिः। समाधियुक्तिभिः। समाधिनाऽप्यपरोक्षं न पश्यति। युक्तिभिः परोक्षमपि सम्यङ्ग बुध्यत इत्यर्थः। अपरेऽर्वाचीनास्तु कुतस्त्वां पश्येयुः। अर्वाचीनत्वे हेतुः—तस्य ब्रह्मणो मनश्च शरीरं च धीश्च सत्त्वतमोरजःकार्याणि ताभिर्ये विविधा देवतिर्यङ्नराणां सर्गास्तेषु सृष्टास्तत्रापि वयमप्रकाशा अज्ञाः कुतः पश्यामेत्यर्थः ॥ २२ ॥ अपरे तर्हि किं पश्यन्ति तदाह—ये देहभाजस्ते स्वस्मिन्सम्यक् स्थितमपि त्वां न विदुः, किंतु गुणानेव विपश्यन्ति। अथवा न गुणानपि तु तम एव पश्यन्ति। यतस्त्रिगुणा बुद्धिरेव प्रधानं येषाम्, अतो बहिरेव प्रकाशो ज्ञानं येषाम्। बुद्धिपरतन्त्रतया जाग्रत्स्वप्नयोर्विषयान्पश्यन्ति, सुषुप्तौ तम एव केवलं नतु निर्गुणं त्वाम्। सर्वत्र हेतुः—यद्यतः, यस्य तव माययेति वा मोहितं चेतो येषां ते ॥२३॥ तथाप्यहं विचारेण ज्ञास्यामीति चेत्तत्राह—तं त्वामहं विमूढः कथं परिभावयामि विचारयामि। कथंभूतम्। ज्ञानघनं शुद्धज्ञानमूर्तिम्। स्वत एव प्रध्वस्तौ मायागुण-

॥ अंशुमानुवाच ॥ न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः ॥ कुतोऽपरे तस्य मनःशरीरधीविसर्गसृष्टा वयमप्रकाशाः ॥२२॥ ये देहभाजस्त्रिगुणप्रधाना गुणान्विपश्यन्त्युत वा तमश्च ॥ यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥ तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं हि मूढः परिभावयामि॥२४॥ प्रशान्त मायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ॥ ज्ञानोपदेशाय गृहीतदेहं नमाम हे त्वां पुरुषं पुराणम्॥२५॥ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ॥ भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः॥२६॥ अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः॥ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥२७॥ ॥ श्रीशुक उवाच॥ इत्थं गीतानुभावस्तं भगवान्कपिलो मुनिः ॥ अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥२८॥ ॥ श्रीभगवानुवाच॥ अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ॥ इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९॥

निमित्तौ भेदमोहौ येषां तैर्विभाव्यं विचिन्त्यम्। अयं भावः—ज्ञानघनत्वान्न तावज्ज्ञानविषयत्वं विचारविषयत्वेऽपि मायागुणैरभिभूतोऽहं न विचारे समर्थ इति ॥ २४ ॥ हे प्रशान्त, तस्मात्त्वां पुरुषं पुराणं केवलं नमामेत्यन्वयः। पुराणपुरुषत्वे हेतुः—मायायाः गुणाः, कर्माणि च विश्वसृष्ट्यादीनि, लिङ्गानि च ब्रह्मादिरूपाणि यस्य तम्। प्रशान्तत्वे हेतुः—सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां वा विमुक्तम्। अतोऽनामरूपं तत्तत्कृतनामरूपशून्यं, किंतु ज्ञानोपदेशाय गृहीतः प्रकटितो देहः शुद्धसत्त्वमूर्तिर्येन तम्। यद्वा हे प्रशान्तमायेति हे अगुणेति च संबोध्य कर्मभिः सृष्ट्यादिकार्यैर्लिङ्गानि यस्येति योज्यम्। यद्वा प्रशान्ता मायागुणादयो यस्मिन्नित्येकमेव पदम् ॥ २५ ॥ स्वभाग्यं श्लाघते—त्वन्मायेति द्वाभ्याम्। कामादिभिर्विभ्रान्तानि चेतांसि येषां ते इमे सर्वे गृहादिषु भ्रमन्ति ॥२६॥ हे सर्वभूतात्मन्, नोऽस्माकं त्वत्कृपयैव घटितात्त्वद्दर्शनादतिदृढोऽपि मोहमयः पाशश्छिन्नः। कथंभूतः—कामादीनामाशय आश्रयः। त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः ॥ २७ ॥ २८ ॥ अथ लब्ध्वापि साकाङ्क्षं प्रत्याह—इमे चेति ॥ २९ ॥ ॥ ॥ ॥ ॥

१ स्वभावतः स्वत एव साधनान्तरनैरपेक्ष्येणेत्यर्थः। २ भगवान्कपिलः। ३ नेतरत् नान्यथा निस्तार इत्यर्थः। ४ तत्कृतेति मायाकृतनामरूपरहितम्। ५ कामो वासनात्मकः सङ्कल्पः।

तं परिक्रम्येति शुकोक्तिः ॥ ३० ॥ ३१ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥
नवमेंऽशुमतो वंशः खट्वाङ्गावधि वर्ण्यते ॥ गङ्गां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १ ॥ यथा सगरः पौत्राय राज्यं दत्त्वा तपस्तेपे तथांऽशुमांश्च स्वपुत्राय राज्यं दत्त्वा महान्तं कालं तपस्तेपे इति चकारस्यार्थः । नाशक्नोत्, गङ्गामानेतुमिति शेषः । संस्थितो मृतः ॥१॥ कालं मृत्युमेयिवान्प्राप्तः ॥२॥ तं प्रत्यात्मानं दर्शयामास। ते वरदास्मीति गङ्गयोक्तः स्वमभिप्रायं पूर्वजोद्धरणं शशंस कथयामास ॥३॥ आह गङ्गा । कोऽपि गगनात्पतन्त्या मे वेगं धारयिता धारयिष्यति

तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ॥ सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥ राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबन्धनः ॥ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥३१॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सगरोपाख्याने अष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीशुक उवाच ॥ अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया ॥ कालं महान्तं नाशक्नोत्ततः कालेन संस्थितः ॥१॥ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ॥ भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥२॥ दर्शयामास तं देवी प्रसन्ना वरदास्मि ते ॥ इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥३॥ कोऽपि धारयिता वेगं पतन्त्या मे महीतले ॥ अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥४॥ किंचाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम् ॥ मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यताम् ॥ ५ ॥ ॥ भगीरथ उवाच ॥ साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ॥ हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥ धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ॥ यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥७॥ इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम् ॥ कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥८॥ तथेति राज्ञाभिहितं सर्वलोकहितः शिवः ॥ दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ९ ॥ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ॥ यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥१०॥ रथेन वायुवेगेन प्रयान्तमनुधावती ॥ देशान्पुनन्ती निर्दग्धानासिञ्चत्सगरात्मजान् ॥११॥ ॥

॥ ४ ॥ किंच आमृजन्ति क्षालयिष्यन्ति तत्रोपायो विचिन्त्यताम् ॥ ५ ॥ अघं हरन्ति हरिष्यन्ति । अघं भिनत्तीत्यघभित् ॥ ६ ॥ आत्मा कथंभूतः । यस्मिन्निदं विश्वमोतं ग्रथितमूर्ध्वतन्तुषु शाटीव पट इव । प्रोतं न तिर्यक् तन्तुषु पट इव । असौ सर्वाधारस्त्वद्वेगं धारयिष्यतीत्यर्थः ॥ ७ ॥ इत्येवं गङ्गामुक्त्वा । तन्त्कुत्वेति पाठे श्रावयित्वेत्यर्थः ॥ ८ ॥ राज्ञाभिहितं तथेत्यङ्गीकृत्य । हरेः पादेन पूतं जलं यस्याः ॥ ९ ॥ १० ॥ ११ ॥ ॥ ॥ ॥

१ धारयिष्यतीति काकुः । २ शिरसा प्रसाद्य, नमस्कृत्येत्यर्थः । ३ तदघं तत्सङ्गानभिरुचेर्जातं मनसो दुःखमित्यर्थः इति क्रम० । ४ साधवः स्वाधिकारप्राप्तशास्त्रीयाचारनिरताः; न्यासिनः कर्मतत्फलानासक्ताः, शान्ताः शुद्धान्तःकरणाः, ब्रह्मिष्ठा वेदविचारदक्षाः इति क्रम० । ५ एतदग्रे—'इति तस्य वचः श्रुत्वा गङ्गा तं पुनरब्रवीत् ॥ प्रसादय महेशानं धारणार्थं मदम्भसाम् ॥' इति श्लोको वीरराघवपाठेऽधिकः । परन्त्वयं श्रीधरस्वामिसंमत इति न भाति, अग्रिमश्लोकस्य इत्येवमित्यादिव्याख्यानात् ।

प्रसङ्गाद्गङ्गामाहात्म्यमाह चतुर्भिः—यस्या जलस्पर्शमात्रेण तच्च केवलं देहभस्मभिरेव न साक्षात् । ब्रह्मणि स्वकृतेन दण्डेन हता अपि । तां श्रद्धया ये सेवन्ते इति शेषः ॥ १२ ॥ तत्प्रपञ्चयति—भस्मीभूतेनाङ्गेन यः सङ्गस्तेन ॥ १३ ॥ १४ ॥ अनन्तस्य विशेषणं संनिवेश्येति । त्रैगुण्यं देहसंबन्धम् ॥१५॥१६॥ नलस्य सखा अयात्प्राप्तः । तत्सुतः ऋतुपर्णस्य सुतः ॥१७॥ तत्पुत्रः सौदासः ॥१८॥ न रहो न रहस्यम् ॥१९॥ मृगयां चरन्कंचिद्राक्षसं जघान, तस्य भ्रातरं मुमोच, स भ्राता पलाय्य गतः ॥ २० ॥ अघमनिष्टम् । सूदः पाचकस्तद्रूपधरः सन् राज्ञो गृहे वर्तमानः ॥ २१ ॥ अभक्ष्यमञ्जसा विलोक्य । एवं नरमांसव्यवहारेण

यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ॥ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥१२॥ भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः ॥ किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥१३॥ न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ॥ अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ १४ ॥ संनिवेश्य मनो यस्मिन् श्रद्धया मुनयोऽमलाः ॥ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ १५ ॥ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ॥ सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥ ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ॥ दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥ १७ ॥ ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृप ॥ आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ॥ वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥१८॥ ॥ राजोवाच ॥ किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः ॥ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥ ॥श्रीशुक उवाच ॥ सौदासो मृगयां कंचिच्चरन् रक्षो जघान ह ॥ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥२०॥ स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे ॥ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥२१॥ परिवेक्ष्यमाणं भगवान्विलोक्याभक्ष्यमञ्जसा ॥ राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ २२ ॥ रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् ॥ सोऽप्यपोऽञ्जलिनादाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥ वारितो मदयन्त्याऽपो रुशतीः पादयोर्जहौ ॥ दिशः खमवनीं सर्वं पश्यन् जीवमयं नृपः ॥२४॥ राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौकोदम्पती द्विजौ ॥२५॥

॥ २२ ॥ वसिष्ठ एव तं शापं द्वादशवार्षिकं चक्रे ॥ २३ ॥ रुशतीस्तीक्ष्णा अपः स्वपादयोर्जहौ नान्यत्र । तत्र हेतुः—दिश इति । एवमनेन मित्रसहत्वमपि दर्शितम् । मित्रस्य कलत्रस्य वाचःसहनात् ॥२४॥ तदेवं राक्षसत्वे कल्माषाङ्घ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपञ्चयति—व्यवायकाल इत्यादिना कर्मणा अप्रजा इत्यन्तेन । वनमोको निवासो ययोस्तौ वनौकसौ च तौ दम्पती च । पृथक्पदत्वे सकारलोप आर्षः ॥ २५ ॥ ॥ ॥

१ ब्रह्मणि 'एष वाजिहरश्चौरः' इत्याद्यवज्ञारूपः स्वकृतो यो दण्डस्तेन । २ यस्मिन् अनन्ते । ३ अयात् 'या प्रापणे' इत्यस्य रूपम् । ४ अक्षहृदयं द्यूतविहारहस्यम् । ५ 'वनौकौ दम्पती' इति पृथक्पदपाठे इत्यर्थः ।

अकृतार्थवद्दीनवत् ॥ २६ ॥ अकृतार्थमसमासरतिम् ॥ २७ ॥ २८ ॥ सर्वभूतानामात्मेति भावनयाराधयितुमिच्छुः । यद्वा सर्वभूतानामात्मभावेन भूतेषु स्थितमपि गुणैरन्तर्हितं ब्रह्मेति संबन्धः । पाठान्तरे अन्तर्हितः सोऽयमित्युत्तरेणान्वयः ॥ २९ ॥ ३० ॥ भ्रूणस्य श्रोत्रियस्य गर्भस्य[3] सत इति वा । बभ्रोर्गोः । सतां मतो भवान्वधं कथं साधु मन्यत इत्यर्थः ॥ ३१ ॥ क्षणमपि येन विना न जीविष्यामि सोऽयं यदि भक्षः क्रियते तर्हि मृतकं यथा मृतप्रायां मां

क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ॥ न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥२६॥ मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥२७॥ देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥२८॥ एष हि ब्राह्मणो विद्वांस्तपःशीलगुणान्वितः ॥ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ॥२९॥ सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ॥३०॥ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥३१॥ यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥ एवं करुणभाषिण्या विलपन्त्या अनाथवत् ॥ व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः ॥३३॥ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचन्त्यात्मानमुर्वीशमशपत्कुपिता सती ॥ ३४ ॥ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ॥३५॥ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥ ३६ ॥ विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ॥ विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥३७॥ तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ॥ वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥३८॥ सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥ ३९ ॥ अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥ ॥ ॥

पूर्वं भक्षय ॥ ३२ ॥ ३३ ॥ दिधिषुं गर्भाधानकर्तारम् ॥ ३४ ॥ आधानान्मैथुनात् । हे अकृतप्रज्ञ, मृत्युर्मया दर्शितः ॥ ३५ ॥ ३६ ॥ ३७ ॥ तदेवं कर्मणा अप्रजाः ॥ ३८ ॥ अबिभ्रद्धारेत्यर्थः । न व्यजायत न प्रासूत । अतो वसिष्ठ एव तस्या उदरमश्मना जघान । स उत्पन्नः सुतोऽश्मकः ॥ ३९ ॥ स्त्रीभिः संवेष्ट्य परशुरामात्परिरक्षितः, अतो नारीकवच इत्युक्तः । निःक्षत्रे सति क्षत्रवंशस्य मूलमभवदतो मूलक इति चोक्तः ॥ ४० ॥ ॥ ॥

१ 'अन्तर्हितो गुणैः' इत्येवंरूपे । २ भ्रूणस्य सूत्रप्रवचनाध्यायिनः 'वेदानां किंचिदधीत्य ब्राह्मण एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषिः कल्पसूत्रप्रवचनाध्यायी भ्रूणः' इत्यादिप्रयोगात् वीर० । 'अथ भ्रूणो गर्भिण्यां श्रोत्रियद्विजे' इति हैमात् भ्रूणशब्देन श्रोत्रियो वा । ३ इदानीमेव मयि गर्भरूपेणोत्पत्स्यमानत्वाद्गर्भरूपस्य सत इत्यर्थः । ४ अखादत् तमिति शेषः ।

॥४१॥ प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वाङ्गेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति, देवैश्चोक्तं मुहूर्तमात्रमिति, तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे संदधे ॥ ४२ ॥ एतदेव स्वसाधुवृत्तानुसरणपूर्वकं तत्कृतेन निश्चयेन दर्शयति—नेति सप्तभिः—कुलदैवाद्ब्रह्मकुलात्सकाशान्मे प्राणादयो नातिवल्लभा नातिप्रियाः ॥ ४३ ॥ मह्यं मम ॥ ४४ ॥ भूतभावनो हरिस्तस्मिन्नेव भावना यस्य सोऽहं तं कामं न वृणे ॥ ४५ ॥ तत्र हेतुः—य इति । विक्षिप्तानीन्द्रियाणि धीश्च येषां ते देवा अपि ॥४६॥ अथ तस्मात्प्रकृत्या स्वभावेनात्मनि रूढं गुणेषु सङ्गं विश्वकर्तुर्भावेन हित्वा तमेवाहं प्रपद्ये ॥४७॥ अन्यभावं देहाद्यभिमानरूप-

ततो दशरथस्तस्मात्पुत्र ऐडविडस्ततः ॥ राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ॥ ४१ ॥ यो देवैरर्थितो दैत्यान-
वधीद्युधि दुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं संदधे मनः ॥४२॥ न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः ॥
न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥ ४३ ॥ न बाल्येऽपि मतिर्मह्यमधर्मे रमते[1] क्वचित् ॥ नापश्यमुत्तम-[2]
श्लोकादन्यत्किंचन वस्त्वहम् ॥४४॥ देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ न वृणे तमहं कामं भूतभावनभावनः
॥४५॥ ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ॥ न विदन्ति प्रियं शश्वदात्मानं किमुतापरे ॥४६॥ अथेश-
मायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ॥ रूढं प्रकृत्यात्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥ इति व्यव-
सितो बुद्ध्या नारायणगृहीतया ॥ हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ४८ ॥ यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्य-[3]
कल्पितम् ॥ भगवान्वासुदेवेति[4] यं गृणन्ति[5] हि सात्वताः ॥ ४९ ॥ ॥ इति श्रीमद्भा० म०पु० नवमस्कन्धे सूर्यवंशानु-
वर्णने नवमोऽध्यायः ॥९॥ ॥ श्रीशुक उवाच ॥ खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततो महाराजस्तस्मा-
द्दशरथोऽभवत् ॥१॥ तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ॥ अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः ॥२॥ रामल-
क्ष्मणभरतशत्रुघ्ना इति संज्ञया॥तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः॥श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः॥३॥

मज्ञानं हित्वा ॥ ४८ ॥ स्वं भावमेवाह—यत्तदिति । शून्यवत्कल्पितं वागाद्यविषयत्वात् । वासुदेव इति यं गृणन्ति । ब्रह्मण एव भक्तानुग्रहार्थमाविष्कृत-तनोर्वासुदेवत्वात् ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ दशमे प्राह खट्वाङ्गवंशे श्रीरामसंभवम् ॥ तच्चरित्रं च लंकेशं हत्वाऽयोध्यागमावधि ॥ १ ॥ खट्वाङ्गाच्च दीर्घबाहुः ॥ १ ॥ २ ॥ ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं त्वया मुहुः श्रुतं तथापि संक्षेपतः कथ्यमानं शृणु ॥ ३ ॥ ॥ ॥ ॥ ॥

१ न रमते नारमतेत्यर्थः । २ 'नावश्य', 'न पश्यामि' इति पाठौ । तत्रोत्तमश्लोकादन्यत्किंचिदपि वस्तु नोपादेयमित्यर्थः । ३ शून्यकल्पितं शून्ये रागद्वेषादिरहिते हृदि भजनकाले कल्पितं समर्थितं ध्यातमित्यर्थः । ४ वासुदेवेतीति सन्धिरार्षः । ५ यं गृणन्ति तं प्रापेति ज्ञेयम् ।

'ग्रन्थकोटिभिराकीर्णमद्भुतं रामविक्रमम् ॥ अध्यायद्वयतो वक्ष्यन्नेकश्लोके समस्यति ॥' इति । स कोशलेन्द्रः श्रीरामो नोऽस्मानवतात्पातु । कथंभूतः । यो गुर्वर्थे पितुः सत्यस्य पालनार्थं त्यक्तराज्यः सन् पद्मवदतिसुकुमाराभ्यां पद्भ्याम् । तदेवाह—प्रियायाः पाणिनापि स्पर्शे नास्ति क्षमा ययोस्ताभ्यां प्रतिवनं व्यचरत् । हरीन्द्रो हनुमान्सुग्रीवो वाऽनुजो लक्ष्मणस्ताभ्यां मृजितापनीता पथरुजा मार्गश्रमो यस्य । शूर्पणख्या वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहारात्प्रियेण कलत्रेण विरहस्तेन रुट् तयारोपितयोर्भ्रुवोर्विजृम्भेणैव त्रस्तोऽब्धिर्यस्मात् । ततस्तद्विज्ञापनेन बद्धः सेतुर्येन । ततः खला रावणादय एव दवो वनं तस्य दहनः ॥ ४ ॥ संक्षेपतो वर्णितं रामचरितमादित आरभ्य विस्तरेणाह—विश्वामित्राध्वर इत्यादिना यावदुत्तराध्यायसमाप्ति । पश्यत एव लक्ष्मणस्य । तमप्यनपेक्ष्यैव हता इत्यर्थः । यच्छब्दानां स कोशलेन्द्रोऽवतादित्यनेनैवान्वयः ॥ ५ ॥ लोके ये वीरास्तेषां समितौ समाजे ऐशं त्रैयम्बकं धनुरिक्षुयष्टिमिव लीलयैवादाय सज्जीकृतमारोपितं विकृष्य मध्ये बभञ्ज । हे नृप, उग्रं कठिनं गरिष्ठम् । तदाह—वाहकानां त्रिभिः शतैरुपनीतम् । बालगजस्य

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ॥
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषारोपितभ्रूविजृम्भत्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेन्द्रोऽवतान्नः ॥४॥ विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ॥ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥५॥ यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ॥ आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ६ ॥ जित्वाऽनुरूपगुणशीलवयोऽङ्गरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम् ॥ मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं दर्पं महीमकृत यस्त्रिरराजबीजाम् ॥ ७ ॥ यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ॥ राज्यं श्रियं प्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ८ ॥ रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ॥ जघ्ने चतुर्दशसहस्रमपारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥ ॥

लीलेव लीला यस्य सः ॥ ६ ॥ अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासंज्ञां पूर्वमुरस्यभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भङ्गमहानादश्रवणक्षुभितस्य भृगुपतेर्दर्पं व्यनयदपनीतवान् । कथंभूतस्य । त्रिःसप्तकृत्वो राजबीजशून्यां महीं योऽकरोत्तस्य ॥ ७ ॥ इदानीं गुर्वर्थ इति श्लोकं विवृण्वन्नाह—य इति । कदाचित्कैकेय्यास्तुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतम्, ततः श्रीरामस्य युवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य च वने वासः प्रार्थितः, तदा सत्यपाशेन परिवीतस्य पितुर्निदेशमाज्ञां शिरसा जगृहे । ततो राज्यादिकं त्यक्त्वा सभार्यो वनं ययौ । दुस्त्यजस्यापि सहर्षत्यागे दृष्टान्तः—मुक्तसङ्गो योगी असून् प्राणानिवेति ॥ ८ ॥ रक्षसो रावणस्य स्वसुः शूर्पणखाया अशुद्धबुद्धेः सीतां जिघृक्षोः कामातुराया इति वा रूपं व्यकृत विकारमनयत् । तस्याः खरत्रिशिरदूषणमुख्या बन्धवो येषु तांश्चतुर्दशसहस्रं जघान । अपारणीयमलङ्घ्यमसह्यं कोदण्डं पाणौ यस्य सः ॥ ९ ॥ ॥ ॥

१ पथरुज इत्यनेन पथशब्दोऽकारान्तोऽप्यस्तीति लक्ष्यते इति क्रम० । २ निशा माययैव चरन्ति ते । ३ 'सुहृदोऽधिवास' इति तत्राधिवास अयोध्याम् । ४ भृगुपतेः परशुरामस्य । ५ मूले त्रिरित्युपलक्षणम् ।

सीतायाः कथाश्रवणेन दीपितो हृच्छयो यस्य तेन सीतां हरिष्यता स्वस्माद्भीतेन स्वस्याश्रमादपकर्षणार्थं सृष्टं निसृष्टं मारीचं विलोक्य जघान। कथंभूतम्। अद्भुतैणवपुषा स्वर्णहरिणदेहेनोपलक्षितम्। अत एव प्रलोभनेनाश्रमतस्तेनापकृष्टः सन्। कं दक्षं यथा उग्रः श्रीरुद्रः ॥ १० ॥ ततश्च रक्षोधमेन रावणेनासमक्ष-मपनीतायाम्। प्रियया वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवद्वने चचार। किमभिप्रायः सन्। इत्यनेन प्रकारेण स्त्रीसङ्गिनां दुःखोदर्कां गतिं प्रख्यापयन् ॥११॥ आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतं कृत्यं शास्त्रीयं दहनादिकं यस्य तं जटायुषं पुत्र इव दग्ध्वा कबन्धं स्वग्रहणाय प्रसारितबाहुं राक्ष-समहन्। अथ वालिनि हते तैः कपिभिर्दयिताया गतिं बुद्ध्वा अजभवाभ्यामर्चिताङ्घ्री यस्य समनुजो वेलां समुद्रतीरमगात् ॥ १२ ॥ तत्र त्रिरात्रमुपवासेन प्रतीक्षितोऽपि सिन्धुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो यः कटाक्षस्तस्य पातेन संभ्रान्ता नक्रा मकराश्च यस्मिन्। भयेन गीर्णो

सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकन्धरेण ॥ जघ्नेऽद्भुतैणवपुषाश्रमतोपकृष्टो मारीचमाशु
विशिखेन यथा कमुग्रः ॥१०॥ रक्षोधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम्॥ भ्रात्रा वने कृपणव-
त्प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥११॥ दग्ध्वात्मकृत्यहतकृत्यमहन्कबन्धं सख्यं विधाय कपि-
भिर्दयितागतिं तैः ॥ बुद्ध्वाथ वालिनि हते प्लवगेन्द्रसैन्यैर्वेलामगात्समनुजोऽजभवार्चिताङ्घ्रिः ॥१२॥ यद्रोषविभ्रम-
विवृत्तकटाक्षपातसंभ्रान्तनक्रमकरो भयगीर्णघोषः ॥ सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष
एतत् ॥१३॥ न त्वां वयं जडधियो नु विदाम भूमन्कूटस्थमादिपुरुषं जगतामधीशम् ॥ यत्सत्त्वतः सुरगणा रजसः
प्रजेशा मन्योश्च भूतपतयः स भवान्गुणेशः ॥१४॥ कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीर
पत्नीम् ॥ बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥१५॥ बद्ध्वोदधौ रघुपतिर्विविधा-
द्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां विभीषणदृशाऽविशदग्रदग्धाम्॥१६॥

ग्रस्तः स्तम्भितो घोषो येन स सिन्धुरेतद्वक्ष्यमाणं बभाषे। अर्हणमर्घादिकम्। रूपी मूर्तिमान् ॥ १३ ॥ भाषणमेवाह—न त्वामिति द्वाभ्याम्। एतावत्पर्यन्तं नु निश्चितं त्वां न विदाम। न जानीम इत्यर्थः। इदानीं तु ज्ञातोऽसीत्याह—यदिति पृथक्पदम्। यस्येत्यर्थः। यदंशेभ्यः सत्त्वादिभ्यः सुरगणादयो भवन्ति स भवानिति ॥ १४ ॥ कामं यथेच्छं जलमाक्रम्यापि प्रयाहि। अवमेहं पुरीषप्रायम्। त्रैलोक्यं रावयत्याक्रन्दयतीति तथा तं जहि। हे वीर, यद्यपि तव जलं प्रतिबन्धकं न भवति तथापीह सेतुं बध्नीहि। तर्हि किमर्थम्। ते यशसो विस्ताराय। तदेवाह—यं सेतुमुपेत्य दुष्करं कर्मावेक्ष्य त्वद्यशो गास्यन्ति भूपा-स्तम् ॥१५॥ तद्वाक्यमभिनन्द्य यत्कृतं तदाह—बद्ध्वेति। विविधैरद्रीणां कूटैः शृङ्गैः सेतुं बद्ध्वाऽग्रे सीतान्वेषणे हनुमतैव दग्धां लङ्कामाविशत्। कथंभूतैः शृङ्गैः। कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तैः। विभीषणस्य दृशा बुद्ध्या। कैः सहाविशत्। सुग्रीवादयः प्रमुखा येषां तैरनीकैः ॥१६॥

१ परमभक्तानुकम्पोद्दीपनप्रकारेण। २ नित्यं विलापादिचेष्टाम्। ३ मनुजः मनुवंशे आविर्भूतः सिद्धां०, मनुजावतारी रामः चक्र०, क्रमसंदर्भस्तु समनुजः सङ्गतोऽनुजो लक्ष्मणो यस्य तादृश इति व्याचख्यौ। ४ यथा अवमेहो विष्ठा शरीरान्निर्गता शुनामुपभोगाय भवति तथायमपि विश्रवसो देहान्निर्गतत्वेनावमेहस्थानीयस्त्वच्छरनिर्भिन्नहृदयः शुनामशनाय स्यादित्यर्थः।

ततश्च सा लङ्का घूर्णा प्रचलिता बभूव । कथंभूता । वानरेन्द्राणां बलैरुद्धा विहारादयो यस्याम् । निर्भज्यमाना धिषणादयो यस्यां सा । तत्र विहारः क्रीडास्थानम्, कोष्ठं धान्यागारादि, श्रीः कोशः, द्वारं गृहादीनाम्, गोपुरं पुरद्वारम्, सदः सभा, वलभी प्रासादादिपुरोभागच्छादिनी, विटङ्कः कपोतपालिका । धिषणं वेदिकादि, शृङ्गाटकं चतुष्पथम् ॥ १७ ॥ रक्षःपती रावणः पुत्रमिन्द्रजितं प्रहस्तादींश्च समहिनोत्प्रायुङ्क्त ॥ १८ ॥ असिशूलादिभिर्दुर्गमां तां यातुधानपृतनां सुग्रीवादिभिरन्वितः श्रीरामोऽभ्यगात् । मरुत्सुतो हनुमान् । ऋक्षो जाम्बवान् ॥ १९ ॥ ते रघुपतेरनीकपा अङ्गदाद्याः सर्वे रावणस्येभादिभिर्युरूथं सैन्यं तत्र द्वन्द्वं यथा भवति तथाभिपत्य सङ्गम्य द्रुमादिभिर्जघ्नुः । कान् । सीताया अभिमर्शेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् ॥ २० ॥

सा वानरेन्द्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटङ्का ॥ निर्भज्यमानधिषणध्वजहेमकुम्भशृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥१७॥ रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ॥ पुत्रं प्रहस्तमतिकायविकम्पनादीन्सर्वानुगान्समहिनोदथ कुम्भकर्णम् ॥१८॥ तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात् ॥१९॥ तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः सीताभिमर्शहतमङ्गलरावणेशान् ॥२०॥ रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ॥ स्वःस्यन्दने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥ रामस्तमाह पुरुषादपुरीष यन्नः कान्ताऽसमक्षमसतापहृता श्ववत्ते ॥ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः ॥ २२ ॥ एवं क्षिपन्धनुषि संधितमुत्ससर्ज बाणं सवज्रमिव तद्धृदयं बिभेद ॥ सोऽसृग्वमन्दशमुखैर्न्यपतद्विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥ ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ॥ मन्दोदर्या समं तस्मिन्प्ररुदत्य उपाद्रवन् ॥ २४ ॥ स्वान्स्वान्बन्धून्परिष्वज्य लक्ष्मणेषुभिरर्दितान् ॥ रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥ २५ ॥ ॥

स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः क्रुद्धः सन् यानकं पुष्पकं विमानं रथं वारुह्य श्रीराममभिससार । अथ तं स्वःस्यन्दने स्वर्गस्थे इन्द्रस्य रथे मातलिनेन्द्रसारथिनोपनीते द्युमति दीप्तियुक्ते विभ्राजमानमहनदहन् ॥२१॥ हे पुरुषादपुरीष राक्षसपुरीषप्राय, यद्यस्मादपहृता । श्ववत् श्वा यथा असमक्षं गृहं प्रविश्य किमपि हरति तद्वत् । तस्माज्जुगुप्सितस्य कर्मणः कर्तुस्तेऽद्य काल इवालङ्घ्यवीर्योऽहं फलं यच्छामि । अधर्मकर्तुः पुंसः कालो यथा यच्छतीति वा ॥२२॥ रिक्तः क्षीणपुण्यः सुकृती विमानादिव विमानात्पुष्पकान्न्यपतदिति वा ॥२३॥ राक्षसस्त्रीणां विलापमाह—तत इति पञ्चभिः । मन्दं स्वल्पमुदरं यस्यास्तया रावणभार्यया सह ॥२४॥२५॥

परैरर्दिता पीडिता ॥२६॥२७॥ गृध्राणामन्नं भक्ष्यः । नरकहेतवे नरकभोगाय ॥२८॥ सांपरायिकमौर्ध्वदेहिकम् ॥ २९ ॥ ३० ॥ आत्मनः स्वस्य संदर्शनेन य आह्लादस्तेन विकसन्मुखपङ्कजं यस्यास्ताम् ॥३१॥ यानं पुष्पकम् । भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्याम् ॥३२॥ आयुश्च दत्त्वा तेनापि सहैव ययौ ॥ ३३ ॥ गोमूत्रपक्वयवान्नभोजनम् । भ्रातरं भरतम् ॥ ३४ ॥ ३५ ॥ स्वशिविराद्रामं विनायोध्यामप्रविशन् । स्वस्य वासं यत्र निर्मितवांस्तस्मात्सकाशाद्गीतादिभिर्युक्तो रामं

हा हताः स्म वयं नाथ लोकरावण रावण ॥ कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ २६ ॥ नैवं वेद महाभाग भवान्कामवशं गतः ॥ तेजोनुभावं सीताया येन नीतो दशामिमाम् ॥२७॥ कृतैषा विधवा लङ्का वयं च कुलनन्दन ॥ देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ २८ ॥ ॥ श्रीशुक उवाच ॥ स्वानां विभीषणश्चक्रे कोशलेन्द्रानुमोदितः ॥ पितृमेधविधानेन यदुक्तं सांपरायिकम् ॥२९॥ ततो ददर्श भगवानशोकवनिकाश्रमे ॥ क्षामां स्वविरहव्याधिं शिंशपामूलमास्थिताम् ॥ ३० ॥ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ३१ ॥ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ॥ विभीषणाय भगवान्दत्त्वा रक्षोगणेशताम् ॥ ३२ ॥ लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ॥ अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥३३॥ उपगीयमानचरितः शतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ ३४ ॥ महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् ॥ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥३५॥ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ॥ नन्दिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः ॥ ३६ ॥ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ॥ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥३७॥ सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ ३८ ॥ पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ॥ पादयोर्न्यपतत्प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥३९॥ पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ॥ तमाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥४०॥ ॥ ॥

प्रत्युद्यतोऽभिमुखं ययौ ॥ ३६ ॥ ब्रह्मघोषेण महता घोषेण पठद्भिः । स्वर्णरसाक्ताः कक्षाः प्रान्ता यासां ताभिः पताकाभिः । हैमैरिति चत्वारि रथविशेषणानि ॥ ३७ ॥ ३८ ॥ पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि । प्रेम्णा प्रक्लिन्ने हृदयमीक्षणे च नेत्रे यस्य ॥ ३९ ॥ नेत्रजैर्जलैः स्नापयन्नाश्लिष्य ॥ ४० ॥

---

१ शिविरं सैन्यनिवेशस्थानम् । २ नीतो येन तं नैव वेद । ३ शवदाहादिविधिना । ४ ददर्श । सीतामिति शेषः । ५ क्षामामित्यादिकमसुरविमोहनार्थम् इति विज० । ६ हनुमद्युतः हनुमता सह युत् साहित्यं प्राप्य 'यु मिश्रणे' भावक्विबन्ताल्ल्यब्लोपे पञ्चमी इति चक्र० । ७ गोमूत्रयावकं गोमूत्रपक्वं यावकं यवान्नं भोज्यत्वेनास्यास्तीति गोमूत्रयावकस्तमित्यर्शआद्यच् । ८ पुरटवर्मभिः स्वर्णकवचयुक्तैः । ९ श्रेणीभिः सजातीयशिल्पिसङ्घैः । १० पादयोर्न्यपतदिति पूर्वेण सबन्धः । ११ रामस्तमाश्लिष्य विप्रादिभ्यो नमश्चक्रे इत्युत्तरेण सबन्धः ।

येऽर्हसत्तमाः कुलवृद्धास्तेभ्योऽपि नमनं चक्रे ॥ ४१ ॥ ४२ ॥ अयोध्याप्रवेशप्रकारमाह—पादुके इति सार्धैस्त्रिभिः ॥ ४३ ॥ धनुश्च निषङ्गौ च तान् । ऋक्षराट् जाम्बवान् ॥ ४४ ॥ ४५ ॥ गुरुपत्नीः कैकेय्याद्याः ॥ ४६ ॥ वयस्यानवरजांश्च । यथावदनुक्रमेण समुपेयतुः ॥ ४७ ॥ बाष्पौघैरभिषिञ्चन्त्यः शुचः

रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ॥ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥४१॥ धुन्वन्त उत्त-
रासङ्गान्पतिं वीक्ष्य चिरागतम् ॥ उत्तराः कोशला माल्यैः किरन्तो ननृतुर्मुदा ॥४२॥ पादुके भरतोऽगृह्णाच्चामर-
व्यजनोत्तमे ॥ विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ ४३ ॥ धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ॥
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ॥४४॥ पुष्पकस्थोऽन्वितः स्त्रीभिः स्तूयमानश्च वन्दिभिः ॥ विरेजे भगवा-
न्राजन्ग्रहैश्चन्द्र इवोदितः ॥४५॥ भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत्पुरीम् ॥ प्रविश्य राजभवनं गुरुपत्नीः
स्वमातरम्[2] ॥ ४६ ॥ गुरून्वयस्यावरजान्पूजितः प्रत्यपूजयत् ॥ वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ ४७ ॥
पुत्रान्स्वमातरस्तास्तु[3] प्राणांस्तन्व इवोत्थिताः ॥ आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥४८॥ जटा निर्मुच्य
विधिवत्कुलवृद्धैः समं गुरुः ॥ अभ्यषिञ्चद्यथैवेन्द्रं चतुःसिन्धुजलादिभिः ॥४९॥ एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलं-
कृतः ॥ स्वलंकृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥५०॥ अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ॥ प्रजाः स्वधर्म-
निरता वर्णाश्रमगुणान्विताः ॥ जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥५१॥ त्रेतायां वर्तमानायां कालः कृत-
समोऽभवत् ॥ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥५२॥ वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ॥ सर्वे काम-
दुघा आसन्प्रजानां भरतर्षभ ॥ ५३ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ मृत्युश्चानिच्छतां नासीद्रामे
राजन्यधोक्षजे ॥५४॥ एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ स्वधर्मं गृहमेधीयं शिक्षयन्स्वयमाचरत् ॥ ५५ ॥
प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ॥ धिया ह्रिया च भावज्ञा भर्तुः सीताहरन्मनः ॥ ५६ ॥ ॥ इति श्रीम-
द्भागवते महापुराणे नवमस्कन्धे श्रीरामचरिते दशमोऽध्यायः ॥ १० ॥ ॥छ॥ ॥छ॥

शोकान्विजहुः । शेषं स्पष्टम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ उत्तरासङ्गानुत्तरीयाणि । २ स्वमातरं कौसल्याम् । ३ स्वमातरस्तान्व इवोत्थिताः सत्यः प्राणानिव पुत्रान् स्वाङ्क आरोप्येत्यन्वयः ।

ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह ॥ यज्ञादि यत्रकारेशो रामस्तदनुवर्ण्यते ॥१॥१॥२॥ तदन्तरा तासां दिशां मध्ये यावती भूस्तां ब्राह्मण एवार्हतीति मन्य-
मानः ॥ ३ ॥ अयं श्रीरामः । तत्तदा । सौमङ्गल्यमाभरणादिकं तावन्मात्रमवशेषितं यस्याः । तद्व्यतिरिक्तं हिरण्यादि सर्वं ददावित्यर्थः ॥ ४ ॥ ५ ॥ किमप्रत्तं किमदत्तम् ।

सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥ होत्रेऽद-
॥ श्रीशुक उवाच ॥ भगवानात्मनात्मानं राम उत्तमकल्पकैः ॥ सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥ होत्रेऽद-
दाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ॥ अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥ आचार्याय ददौ शेषां
यावती भूस्तदन्तरा ॥ मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥३॥ इत्ययं तदलंकारवासोभ्यामवशेषितः ॥
तथा राज्ञ्यपि वैदेहि सौमङ्गल्यावशेषिता ॥ ४ ॥ ते तु ब्रह्मण्यदेवस्य वात्सल्यं वीक्ष्य संस्तुतम् ॥ प्रीताः क्लिन्नधि-
यस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥५॥ अप्रत्तं नस्त्वया किं नु भगवन्भुवनेश्वर ॥ यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरो-
चिषा ॥ ६ ॥ नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ॥ उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥७॥ कदाचिल्लो-
कजिज्ञासुर्गूढो रात्र्यामलक्षितः ॥ चरन्वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ॥८॥ नाहं बिभर्मि त्वां दुष्टाम-
सतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात्सीतां रामो नाहं भजे पुनः ॥ ९ ॥ इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥
पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥१०॥ अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति
ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥११॥ अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य
महीपते ॥ १२ ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ गन्धर्वान्कोटिशो जघ्ने भरतो विजये दिशाम् ॥ १३ ॥
तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ हत्वा मधुवने चक्रे मथुरां
नाम वै पुरीम् ॥ १४ ॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ॥ ध्यायन्ती रामचरणौ विवरं प्रविवेश ह
॥ १५ ॥ तच्छ्रुत्वा भगवान्रामो रुन्धन्नपि धिया शुचः ॥ स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥१६॥ ॥

सर्वं दत्तमित्यर्थः । विश्य प्रविश्य ॥ ६ ॥ न्यस्तदण्डैर्मुनिभिरर्पितौ चित्ते न्यस्तावङ्घ्री यस्य तस्मै । तेष्वर्पितावङ्घ्री येनेति वा ॥७॥८॥९॥ असंविदोऽज्ञात् । प्राचेतसो
वाल्मीकिस्तस्याश्रमं प्राप्ता ॥ १० ॥ अन्तर्वत्नी गर्भिणी क्रिया जातकर्माद्याः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥ १६ ॥

१ आत्मनात्मानमिति यज्ञसाधनयजनीयस्य स्वभिन्नत्वाभावात् इति चक्र० । २ आचार्यवानित्यनेन गुरुकुलवासित्वं शिक्षितत्वं च सूचयति इति विज० । ३ ब्रह्मणि ब्राह्मणे साधुर्ब्रह्मण्यः
स चासौ देवश्च तस्य । 'ब्राह्मणदेवस्य' इति पाठः । ४ तमोऽज्ञानम् । ५ शुकोक्तिरियम् । ६ स्त्रीसङ्गिनां गतिमित्यादि पूर्वमुक्तं यथार्थत्वेन द्रढयंस्तदीयमन्तःकरणं दर्शयति—तच्छ्रुत्वेति ।

न चातिचित्रमेतत् । स्त्रीपुंसोः प्रसङ्ग आसक्तिः त्रासमावहतीति तथा । विभक्तेरलुगार्षः । पाठा[illegible]रं सुगमम् । किमुतेति प्रासङ्गिकोक्तिः ॥ १७ ॥ अग्निहोत्रम-
जुहोत् । प्रभुः रामः ॥ १८ ॥ आत्मज्योतिर्निजं धाम ॥ १९ ॥ जलधिबन्धनमस्त्रपूगैश्च रक्षसां वध इतीदं कविभिराश्चर्यमिव वर्णितमपि यशः स्तुतिर्न भवति ।
तत्र हेतुः—अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य तस्य किं कपयः सहायाः । अतः सुग्रीवाद्याश्रयणं यथा लीलामात्रं तथैवेदमपि । युक्तं चैतदित्याह—
सुराणां याञ्च्या आत्ता स्वीकृता लीलार्था तनुर्येन तस्य ॥२०॥ एवंविधलीलाप्रयोजनं दर्शयन्प्रणमति—यस्य यशो नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कण्डे-
यादयो गायन्ति । दिगिभेन्द्राणां पट्टवदाभरणरूपम् । तत्पर्यन्तं व्याप्तमित्यर्थः । नाकपाला देवाः । वसुपाला वसुधापालाश्च तेषां किरीटैर्जुष्टं पादाम्बुजं यस्य

स्त्रीपुंप्रसङ्ग एतादृक्सर्वत्र त्रासमावहः ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः ॥१७॥ तत ऊर्ध्वं ब्रह्मचर्यं धार-
यन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दण्डककण्टकैः ॥
स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्त-
धाम्नः ॥ रक्षोवधो जलधिबन्धनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥ यस्यामलं नृपसदस्सु यशो-
ऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ॥ तन्नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥२१॥
स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ॥ कोशलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥ पुरुषो
रामचरितं श्रवणैरुपधारयन् ॥ आनृशंस्यपरो राजन्कर्मबन्धैर्विमुच्यते ॥ २३ ॥ ॥राजोवाच॥ कथं स भगवा-
न्रामो भ्रातॄन्वा स्वयमात्मनः ॥ तस्मिन्वा तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे ॥२४॥ ॥श्रीशुक उवाच॥ अथा-
दिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः ॥ आत्मानं दर्शयन्स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥ आसिक्तमार्गां गन्धोदैः
करिणां मदसीकरैः ॥ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥ ॥ ॥

तं रघुपतिम् । पाठान्तरे तत्तस्य रघुपतेर्नाकपालादिभिर्जुष्टं पादाम्बुजं प्रपद्य इत्यर्थः ॥ २१ ॥ स रामः संविष्ट उपवेशितोऽनुगतो वा यैस्ते कोशलदेशवासिनः
सर्वेऽपि यत्र योगिनो गच्छन्ति तत्स्थानं ययुः ॥२२॥ आनृशंस्यपर उपशमनिष्ठः सन्विमुच्यते ॥२३॥ स रामः [illegible] कथमवर्तत । भ्रातॄन्प्रति वा कथमवर्तत ।
कथंभूतान् । आत्मन आत्मांशभूतान् । तस्मिन्वा ईश्वरे ते भ्रात्रादयोऽनु अनन्तरं कथमवर्तन्तेति प्रश्नत्रयम् ॥ २४ ॥ तत्र श्रीरामस्य भ्रात्रादिषु प्रवृत्तिप्रकार-
माह—अथेति । अनेनैव भ्रातॄणामपि तदाज्ञानुसारितया प्रवृत्तिरुक्ता । अथ सिंहासनस्वीकारानन्तरम् ॥ २५ ॥ पुरीं वर्णयति त्रिभिः—गन्धोदकैर्मदबि-
न्दुभिश्चासिक्ता मार्गा यस्याम् । सुतरां मत्तामिव समृद्धाम् । वा इति वितर्के । पाठान्तरे वासितगां वासितां [illegible]मोन्मत्तां गामित्यर्थः ॥ २६ ॥ ॥

१ 'सर्वत्रैव भयावहः' इत्येवंरूपम् । २ प्रभुः कर्मसाध्यानन्दनिरपेक्षः लोकसंग्रहार्थं तथा कृतवानित्यर्थः । ३ अधिकेति [illegible] निर्देशः । [illegible]धिक्यसाम्याभ्यामित्यर्थः । ४ राजान् इत्यर्थः । मूले धालोप आर्षः । ५ पुरीमैक्षतेति स्वयं कथमवर्ततेत्यस्योत्तरम् इति [illegible]० । ६ 'जुष्टं पादाम्बुजं रघुपतेः' इत्येवंरूपे । ७ 'मत्तां वासितगाम्' इत्येवंरूपे । अत्र समासान्ताभाव आर्षः ।

॥ २७ ॥ २८ ॥ पौराणां तस्मिन्वृत्तिमाह—तमुपेयुरिति । वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति ॥ २९ ॥ प्रजानां तस्मिन्वृत्तिमाह—ततः प्रजा इति
॥ ३० ॥ स्वयं कथमवर्ततेत्यस्योत्तरमाह—अथेति यावत्समाप्ति । स्वगृहं प्रविष्टः संस्तस्मिन् रेम इति पञ्चमेनान्वयः । गृहं वर्णयति सार्धैस्त्रिभिः—अनन्ता
येऽखिलानां रत्नादीनां कोशास्तैराढ्यम् । अनर्घ्या उरवः परिच्छदा यस्मिन् ॥ ३१ ॥ विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैः । स्वच्छैः स्थलैः । तृतीया-
न्तानां मण्डितमिति तृतीयेनान्वयः ॥ ३२ ॥ वाससां मणिगणानां चांशुकैर्दीप्तिभिः चित् चैतन्यं तदुल्लासैरुज्ज्वलैः । यद्वा चिदिति कचित् । वैदूर्यस्तम्भादिषु

पूगैः सवृन्तैः[1] रम्भाभिः पट्टिकाभिः सुवाससाम् ॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २७ ॥ तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ॥ आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम् ॥ २८ ॥ ततः प्रजा वीक्ष्य पतिं चिरागतं[2] दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥ आरुह्य हर्म्याण्यरविन्दलोचनमतृप्तनेत्राः कुसुमैरवाकिरन् ॥ २९ ॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥ अनन्ताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३० ॥ विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ॥ स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः[3] ॥ ३१ ॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः ॥ ३२ ॥ धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डनैः ॥ स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः[4] ॥ ३३ ॥ तस्मिन्स भगवान्रामः स्निग्धया प्रिययेष्टया ॥ रेमे स्वारामधीराणामृषभः[5] सीतया किल ॥ ३४ ॥ बुभुजे च यथाकालं कामान्धर्ममपीडयन् ॥ वर्षपूगान्बहून्नृणामभिध्याताङ्घ्रिपल्लवः[6] ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीरामोपाख्याने एकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥ पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलस्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥

यथाशोभनमुज्ज्वलैर्मुक्ताफलैर्मण्डितमित्यर्थः । कान्ताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभिः ॥ ३३ ॥ भूषणानां भूषणभूतैः ॥ ३४ ॥ ३५ ॥
नृणां मध्ये । यद्वा नृणां नृभिरभिध्यातमङ्घ्रिपल्लवं यस्येति ॥ ३६ ॥ ॥ इति श्रीमद्भा० म० पु० नवमस्कन्धे भा० दी० टीकायां एकादशोऽध्यायः ॥ ११ ॥
द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते । एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १ ॥ कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत् ॥ १ ॥ अर्कसंभवोऽर्कस्यां-
शात्संभूतः ॥ २ ॥ ततो विधृतेर्हिरण्यनाभः । कथंभूतः—जैमिनेः शिष्यो योगाचार्यः ॥ ३ ॥

१ वृन्तसहितैः पूगैः क्रमुकफलगुच्छैरित्यर्थः । 'सवृन्दैः' इति 'सुवृन्दैः' इति वा पाठः । २ चिरागतमिति वनवासादागमनसमयभवं दर्शनमिदं ज्ञेयम् इति चक्र० । ३ 'भ्राजत्स्फटिकभित्तिभिः' इत्यपि पाठः । ४ समासान्ताभावस्तस्यानित्यत्वादार्षत्वाद्वा । ५ 'स्वारामचारणां' [illegible] पाठः । तत्र शोभनोद्यानेषु चारः संचारो येषामित्यर्थः । ६ 'शङ्घ्रणः' इति पाठः ।

तदाह—यतः सकाशात् कौशल्यो याज्ञवल्क्यऋपिराध्यात्मं योगमध्यगात् । महान्त उदया सिद्धयो यस्मिंस्तम् । हृदयग्रन्थेर्भेदकं च ॥ ४ ॥ ५ ॥ मरुं विशिनष्टि—योऽसाविति । पुनर्भावयिता भावयिष्यति ॥ ६ ॥ ७ ॥ पित्राऽभिमन्युना ॥८॥९॥१०॥११॥ तत्तस्मादमित्रजित् ॥१२॥१३॥१४॥ निष्ठा वंशस्य स्थितिस्तस्या अन्तः ॥१५॥ तदेवाह—इक्ष्वाकूणामिति ॥१६॥ ॥ इति श्रीमद्भा० म० पु० नवमस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥१२॥

शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रन्थिभेदकम् ॥ ४ ॥ पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ॥ सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥ कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥६॥ तस्मात्प्रसुश्रुतस्तस्य सन्धिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ॥७॥ ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥ एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ ९ ॥ उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥१०॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ॥११॥ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥ १२ ॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतंजयः ॥ रणंजयस्तस्य सुतः संजयो भविता ततः ॥ १३ ॥ तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥ १४ ॥ रणको भविता तस्मात्सुरथस्तनयस्ततः ॥ सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्वयाः ॥१५॥ इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे इक्ष्वाकुवंशवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः ॥ १ ॥ तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ॥ तूष्णीमासीद्गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥ ॥ ॥

इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ॥ वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १ ॥ निमेरौरसः पुत्रो नाभूदिति दर्शयन्कथामाह—निमिरित्येकादशभिः । सत्रमारभ्य वसिष्ठमृत्विजमवृत यत्रे ॥ १ ॥ तं शक्रस्य मखं निर्वर्त्य । प्रतिपालय प्रतीक्षस्वेति गृहपतिर्निमिः ॥ २ ॥ ॥ ॥ ॥१९॥

१ 'सुदतोऽथाग्निवर्णश्च' इति पाठः । ध्रुवसन्धेः सुदर्शनस्तस्याग्निवर्णस्तस्य शीघ्रस्तस्य मरुरित्यर्थः । २ तस्मान्मरोः । ३ 'उरुक्षतः' इति वीर० पाठः । ४ 'देवाकः' इति वीर० पाठः ।

इदं जीवितं चलमस्थिरं विद्वान् ॥ ३ ॥ इन्द्रस्य मखं निर्वर्त्यागतो गुरुः शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देहः पतत्वित्यशपत् ॥ ४ ॥ ५ ॥ उर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुम्भे निषिक्तं तस्मात्प्रपितामहो वसिष्ठो जज्ञे । तदाह—मित्रावरुणयोरिति । तथा च श्रुतिः—'कुम्भे रेतः सिषिचतुः समानम्' इति ॥ ६ ॥ ७ ॥ यदि प्रसन्नाः प्रभवः समर्थाश्चेत्तर्हि जीवत्वित्यूचुः ॥ ८ ॥ यस्य देहस्य योगं न वाञ्छन्त्यपि तु मोक्षायैव भजन्ति ॥ ९ ॥ १० ॥ निमिर्विदेह एव सन्नुष्यतां वसतु । कामं यथेच्छम् । एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबन्ध इति भावः । स चाध्यात्मसंस्थितो लोचनयोः

निमिश्चलमिदं विद्वान्सत्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः ॥ ३ ॥ शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ॥ अशपत्पततादेहो निमेः पण्डितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥५॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥ गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥८॥ यस्य योगं न वाञ्छन्ति वियोगभयकातराः ॥ भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥९॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥ ॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥ अराजकभयं नृणां मन्यमाना महर्षयः ॥ देहं ममन्थुः स्म निमेः कुमारः समजायत ॥ १२ ॥ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ॥ मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥ तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥१४॥ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृतिपिता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥१५॥ मरोः प्रतीपकस्तस्माज्जातः कृतिरथो यतः ॥ देवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥ १६ ॥ ॥ ॥ ॥

स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तत इति शेषः ॥ ११ ॥ तदेव मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति—अराजकभयमिति ॥ १२ ॥ तस्यान्वर्थानि त्रीणि नामान्याह—जन्मनाऽसाधारणेन । जन एव जनकः । यद्वा स्वदेहद्वारा जनकत्वात्स निमिर्जनकोऽभूदित्यर्थः । मिथिला येन निर्मिता इत्यनेन व्युत्पत्त्यन्तरमर्थादुक्तम् ॥ १३ ॥ १४ ॥ सुधृत्सुधृतिस्तस्य पिता ॥ १५ ॥ १६ ॥ ॥ ॥ ॥ ॥

१ 'निमिः सत्रविदां' इति पाठः । २ 'यावत्तन्नागमद्गुरुः' इति विज० पाठः । ३ उर्वशीदर्शनस्कन्नमित्रावरुणरेतःसेकाधिकरणे कुम्भे इत्यर्थः । ४ तस्य निमेर्देहम् । ५ हरिमेधसः भगवतः । ६ नावरुरुत्से न धर्तुमिच्छामि । ७ 'मोहभयाश्रयम्' इति पाठः । ८ उदकेऽन्यस्माज्जलचरादन्यत्र स्थले स्वभावाच्च मृत्युसत्त्वाद्यथा सर्वत्र मृत्युर्मत्स्यानां तथेत्यर्थः । ९ जीवसंबन्धरहितो देहो यस्य स विदेहः तज्जोऽप्युपचाराद्विदेह इति वैदेह इति चोच्यते इति सिद्धां० । १० 'कृतरथः', 'कृतरथः' इति च पाठौ ।

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्य केशिध्वजस्य भानुमान् ॥ २१ ॥ २२ ॥ तत्तस्मात्सुपार्श्वकः ॥ २३ ॥ अग्निसंभवोऽग्नेरंशात्संभूतः ॥ २४ ॥ यद्यस्मात्सु-भाषणः ॥ २५ ॥ २६ ॥ योगेश्वरा याज्ञवल्क्यादयस्तेषां प्रसादेन ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ चतुर्दशादिभिः सोमवंशमाहासमासितः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥१॥ चतुर्दशे गुरोः पत्न्यां

कृतिरातस्ततस्तस्मान्महारोमाथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे यथार्थं कर्षतो महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥ १८ ॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ॥ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥ कृतध्वजात्केशिध्वजः खाण्डिक्यस्तु मितध्व-जात् ॥ कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥ खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्द्रुतः ॥ भानु-मांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुः सनद्वाजा-दजोऽथ पुरुजित्सुतः ॥२२॥ अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथो यस्य क्षेमाधिर्मिथिलाधिपः ॥ २३ ॥ तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः ॥ आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥ वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः ॥ २५ ॥ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ॥ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥ २६ ॥ एते वै मैथिला राजन्नात्मविद्याविशारदाः ॥ योगे-श्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे निमिवंशानुवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥श्रीशुक उवाच॥ अथातः श्रूयतां राजन्वंशः सोमस्य पावनः ॥ यस्मि-न्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १ ॥ सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥ सोऽयजद्राजसूयेन विजित्य भुवनत्रयम् ॥ पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात् ॥ ४ ॥ ॥ ॥

तारायां सोमजाद्बुधात् ॥ जातश्चैलः षड्वर्ष्यामायुर्मुख्यानजीजनत् ॥ २ ॥ १ ॥ २ ॥ दृग्भ्य आनन्दाश्रुभ्यः । अत एवामृतमयः । किलेत्याश्चर्यं । पाठान्तरे दृशो नेत्रात् । वक्ष्यमाणदर्पकारणमाह—विप्रेति ॥ ३ ॥ सोमस्य पुत्रो बुध इति कथाद्वारेणाह—पत्नीमिति सार्धैर्नवभिः ॥ ४ ॥ ॥ ॥ ॥



१ आसमाप्तितः स्कन्धसमाप्तिपर्यन्तम् । २ सीर एव ध्वजः कीर्तिप्रकाशको यस्य सः । ३ द्रुतः पलायितः इति चक्र० । 'गतः' इति पाठः । ४ तत् तस्मात् । ५ 'धृतः' 'व्रतः' इति पाठौ । ६ 'विप्रौषध्यम्बुगर्भाणां' इति वीर० पाठः । ७ 'तस्य दृशः' इत्येवंरूपे ।

तत्कृते तन्निमित्तम् ॥ ५ ॥ सुराणां दानवानां च विग्रहे कारणमाह—शुक्र इति । असुरैः सहितः । उडुपंमग्रहीदित्यर्थः । सन्धिरार्पैः । गुरोः सुतं बृहस्पतिमग्रहीत् । अङ्गिरसः सकाशात्प्राप्तविद्यो हर इति प्रसिद्धिः ॥ ६ ॥ ७ ॥ निवेदितो विज्ञापितः । विश्वकृद्ब्रह्मा । अवैदबुध्यत ॥ ८ ॥ बृहस्पतिराह—त्यज त्यजेति । परैराहितं गर्भम् । गर्भे त्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह—नाहमिति । सान्तानिकः संतानार्थी । सांतानिके इति पाठे हे सैत्पुत्रे इत्यर्थः ॥ ९ ॥

यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ॥ नात्यजत्तत्कृते जज्ञे सुरदानवविग्रहः ॥५॥ शुक्रो बृहस्पतेर्द्वेषाद-ग्रहीत्सासुरोडुपम् ॥ हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः ॥ ६ ॥ सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ॥ सुरासुर-विनाशोऽभूत्समरस्तारकामयः ॥ ७ ॥ निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ॥ तारां स्वभर्त्रे प्रायच्छदन्तर्व-त्नीमवैत्पतिः ॥ ८ ॥ त्यजं त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ॥ नाहं त्वां भस्मसात्कुर्यां स्त्रियं सान्तानिकः सति ॥ ९ ॥ तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ॥ स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ॥ १० ॥ ममायं न तवेत्युच्चैस्तस्मिन्विवदमानयोः ॥ पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा ॥ ११ ॥ कुमारो मातरं प्राह कुपितो-ऽलीकलज्जया ॥ किं न वोचस्यसद्वृत्ते आत्मावद्यं वदाशु मे ॥ १२ ॥ ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन् ॥ सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥ १३ ॥ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण्मुदम् ॥ १४ ॥ ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥ श्रुत्वोर्वशीन्द्रभवने गीयमानान्सुरर्षिणा ॥ तदन्तिकमुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥ मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ निशम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ॥ १७ ॥ धृतिं विष्टभ्य ललना उपतस्थे तद-न्तिके ॥ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ १८ ॥ ॥ राजो-वाच ॥ स्वागतं ते वरारोहे आस्यतां करवाम किम् ॥ संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ १९ ॥ ॥

॥ १० ॥ ११ ॥ १२ ॥ रहः एकान्ते ॥ १३ ॥ पुरूरवस उर्वश्यामायुप्रमुखाः षट् पुत्रा जाता इति वक्तुं कथामाह—तस्येत्यादिना यावत्समाप्ति ॥ १४ ॥ १५ ॥ १६ ॥ ननु देवी कुतो मनुष्यस्यान्तिकमुपागच्छेत्तत्राह—मित्रावरुणयोः शापान्नरलोकतां मनुष्यभावमापन्ना सती ॥ १७ ॥ १८ ॥ नौ आवयोः रतिरस्त्विति ॥ १९ ॥

१ गुरोरङ्गिरसः । २ 'सपुत्रः' इति पाठः । ३ तारका तारा एव आमयः नाशहेतुर्यस्मिन् इति चक्र० । यद्वा तारैव तारका तस्या हेतोरागतः आमस्तारकामयः । मयट् चेति हेतुवाचकादागत इत्यर्थे मयट् । ४ 'गर्भं त्यजाशु' इति वीर० पाठः । ५ 'सांतानिकेऽसति' इति वीर० पाठः । ६ आत्मनोऽवद्यं दोषं किं न वोचसि न वदसि । ७ धृतिं विष्टभ्य तद्दर्शनेन जातस्तम्भादिविकारस्तम्भनाय धैर्यमवलम्ब्य इति क्रम० ।

यस्य तवाङ्गान्तरं वक्ष आसाद्य रिरंसया रन्तुमिच्छया ह स्फुटं न च्यवते नार्पयाति । यद्यस्मादिति वा ॥ २० ॥ शापावसाने भाषाभङ्गमिषेण जिगमिषो- स्तस्या भाषाबन्धमाह—एताविति द्वाभ्याम् । उरणकौ मेषौ न्यासौ निक्षेपरूपौ रक्षस्व । यः श्लाघ्यः स एव स्त्रीणां वरः स्मृतः । अतो विजातीयत्वं न दोष इति भावः ॥ २१ ॥ हे वीर, घृतं मे भक्ष्यं स्यात् । 'अमृतं वा आज्यम्' इति श्रुतेः । देवानां चामृताशित्वात् । मैथुनादन्यत्र विवासस्सं त्वां नेक्षिष्ये । इति प्रतिपेदेऽङ्गीकृतवान् ॥ २२ ॥ तदेवाह—अहो इति ॥ २३ ॥ २४ ॥ पद्मकिंजल्कस्य गन्ध इव गन्धो यस्यास्तस्या मुखामोदेन मुषितः प्रलोभितः सन्

॥ उर्वश्युवाच ॥ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ॥ यदङ्गान्तरमासाद्य च्यवते ह रिरंसया ॥ २० ॥ एतावु- रणकौ राजन्न्यासौ रक्षस्व मानद ॥ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २१ ॥ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ॥ विवाससं तत्तथेति प्रतिपेदे महामनाः ॥२२॥ अहो रूपमहो भावो नरलोकविमोहनम् ॥ को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २३ ॥ तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः ॥ रेमे सुरविहारेषु कामं चैत्रर- थादिषु ॥ २४ ॥ रममाणस्तया देव्या पद्मकिंजल्कगन्धया ॥ तन्मुखामोदमुषितो मुमुदे[3]ऽहर्गणान्बहून् ॥ २५ ॥ अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान्समनोदयत् ॥ उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २६ ॥ त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ॥ उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २७ ॥ निशम्याक्रन्दितं [4]देवी पुत्रयोर्नीयमानयोः ॥ हतास्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ २८ ॥ यद्विश्रम्भादहं नष्टा हतापत्या च दस्युभिः ॥ यः[6] शेते निशि संत्रस्तो यथा नारी दिवा पुँमान् ॥ २९ ॥ इति वाक्सायकैर्विद्धः प्रतोत्त्रैरिव कुञ्जरः ॥ निशि निस्त्रिंशमादाय विव- स्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥ ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः ॥ आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३१ ॥ ऐलोऽपि शयने जायामपश्यन्विमना इव ॥ तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम् ॥ ३२ ॥ ॥

॥ २५ ॥ मह्यं मम ॥ २६ ॥ महारात्रे मध्यरात्रे । 'महानिशा द्वे घटिके रात्रौ मध्यमयामयोः' इति स्मृतेः ॥ २७ ॥ जिगमिषोस्तस्याः परुषोक्तिमाह— हतास्मीति सार्धेन । नपुंसा नपुंसकेन ॥ २८ ॥ यथा नारी तथा संत्रस्तः शेते ॥ २९ ॥ ३० ॥ विद्युतो विशिष्टद्युतिमन्तो व्यद्योतन्त दीप्तिमकुर्वत । यद्वा तदैव तडितः प्राकाशन्तेत्यर्थः । नग्नमैक्षत । अतो भाषाभङ्गान्निर्जगामेति ज्ञेयम् ॥ ३१ ॥ ३२ ॥ ॥ ॥ ॥

१ नापयाति मनो दृष्टिश्चेति शेषः । पूर्वार्धगतनञो देहलीदीपन्यायेनात्रापि संबन्धः । २ मनो दृष्टिश्च न च्यवत इति पूर्वेणैवान्वयः । ३ 'मुमुहे' इति पाठः । ४ देवीत्यत्र छान्दसस्तृतीयाया लुक्, तेन देव्या इति वाक्सायकैर्विद्ध इति तृतीयेनान्वयः । ५ वीरोऽयमिति विश्वासात् । ६ यः पुमान्सन्नपि यथा नारी तथा निशि दिवा च संत्रस्तः सन् शेते । चक्रवर्ती तु यो निशि यथा नारी तथा संत्रस्तः सन् निशि शेते । तस्माद्दिवैव यः पुमान्नतु रात्राविति व्याचख्यौ । ७ दिवा पुमान् पुरुषशक्तिमती । एतदुत्तरं—'मुञ्च मुञ्चाश्वपसर बाहू मद्गात्रवेष्टितौ ॥ अतीव कातरो ह्या त्वं मायया योऽतिलम्पटः ॥' इति पद्यमधिकं वृन्दावनमुद्रितपुस्तके । ८ अस्मिन्पक्षे ते गन्धर्वा उरणौ विसृज्य गता इति शेषः ।

तस्याः सखीश्च पञ्च वीक्ष्य । सूक्तं शोभनं वचनम् 'हये जाये' इत्यादि ॥ ३३ ॥ तदेवार्थेत आह—अहो इति द्वाभ्याम् । अनिर्वृत्य मत्कृतां निर्वृतिमप्राप्य । पाठान्तरे मां निर्वृतिमगमयित्वा मन्त्रानुक्त्वेति वा । वचांसि कृणवावहै गोष्टीः करवावहै ॥ ३४ ॥ सुदेहोऽतिकमनीयोऽयं मम देहः ॥ ३५ ॥ 'पुरूरवो मामृथा' इत्यादि तस्याः सूक्तं तदप्यर्थेत आह—मा मृथा इति चतुर्भिः—मा म्रियस्व । पुरुषोऽसि । अतो धैर्यमावहेति भावः । इमे वृकाः प्रसिद्धा इन्द्रियाणि वा त्वा इति त्वां मा स्म अद्युर्भक्षयेयुः । इन्द्रियवशो मा भवेत्यर्थः ॥३६॥ प्रिये निमित्ते साहसं यासाम् ॥३७॥३८॥ तं सान्त्वयति—संवत्सरान्त इति

स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ॥ पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥३३॥ अहो जाये तिष्ठ तिष्ठ
घोरे न त्यक्तुमर्हसि ॥ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥३४॥ सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ॥
खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३५ ॥ ॥ उर्वश्युवाच ॥ मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाऽद्यु-
र्वृका इमे ॥ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥३६॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ॥
घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ ३७ ॥ विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः ॥ नवं नवमभी-
प्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥ संवत्सरान्ते हि भवानेकरात्रं मयेश्वर ॥ वत्स्यत्यपत्यानि च ते भविष्यन्त्य-
पराणि भोः ॥३९॥ अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरम् ॥ पुनस्तत्र गतोऽब्दान्त उर्वशीं वीरमातरम् ॥४०॥
उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥४१॥ गन्धर्वानुपधावेमां-
स्तुभ्यं दास्यन्ति मामिति ॥ तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ॥ उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन्वने
॥ ४२ ॥ स्थालीं न्यस्य वने गत्वा गृहानाध्यायतो निशि ॥ त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत ॥४३॥ स्थाली-
स्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ॥ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४४ ॥ ॥ ॥

॥ ३९ ॥ अपराणीति वचनादन्तर्वत्नीमुपालक्ष्य ज्ञात्वा ॥ ४० ॥ ४१ ॥ अनेनाग्निना कर्म कृत्वा तद्वशादुर्वशीं प्राप्स्यतीत्यभिप्रायेणाग्निस्थालीं ददुः । स तु तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन्नेयमुर्वशी किंत्वग्निस्थालीत्यबुध्यत ॥ ४२ ॥ ततश्च तां स्थालीं वने स्थापयित्वा गृहान्गत्वा निशि नित्यं तामेवाध्यायतस्तस्य मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत् ॥ ४३ ॥ ततः स्थालीस्थानं गतः सन् शम्या गर्भे जातमश्वत्थं विलक्ष्य अस्मिन्नसावग्निरस्तीति विशेषेण लक्षयित्वा तेनाश्वत्थेन द्वे अरणी कृत्वाऽग्निं ममन्थेति शेषः । 'शमीगर्भादग्निं ममन्थ' इति श्रुतिः ॥ ४४ ॥ ॥ ॥

१ 'अनिर्वर्त्य' इत्येवंरूपे । २ 'सालावृकाणा हृदयान्येता' इति श्रुतिः । एता एताः स्त्रियः । वृकाणां यथा हृदयं तथा स्त्रीणा हृदयमित्यर्थः । ३ प्रिये इन्द्रियार्थसाहस चापल्यं यासां, प्रियं साहसं हठाचरणं यासा इति सिद्धां० । प्रिये धर्मादावपि साहसं यासां इति चक्र० ।

मथनप्रकारमाह—अधरारणिमुर्वशीं ध्यायन्नुत्तरारणिं आत्मानं ध्यायन्नुभयोर्मध्ये यत्काष्ठं तत्प्रजननं पुत्रं ध्यायन्। तथा च मन्त्रः—'उर्वश्यस्यायुरसि पुरूरवाः' इति ॥४५॥ तस्य तेन कृतान्निर्मन्थनाद्विभावसुरग्निर्जातः। कथंभूतः। जातं वेदो धनं भोग्यं यस्मात्। स च त्रय्या विद्यया विहितेनाधानसंस्कारेण त्रिवृदाहवनीयादिरूपः, सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः। पुण्यलोकप्रापकत्वात् ॥४६॥ तदाह—तेनेति ॥४७॥ नन्वनादिर्वेदत्रयबोधितो ब्राह्मणादीनामिन्द्राद्यनेकदेवयजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथं सादिरिव वर्ण्यते तत्राह—एक एवेति द्वाभ्याम्। पुरा कृतयुगे सर्ववाङ्मयः सर्वासां वाचां बीजभूतः प्रणव एक एव वेदः। देवश्च नारायण एक एव। अग्निश्चैक एव लौकिकः। वर्णश्चैक एव हंसो नाम ॥४८॥ वेदत्रयी तु पुरूरवसः सकाशादासीत्। एयिवान् प्राप।

उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः ॥ ४५ ॥ तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः ॥ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥४६॥ तेनाऽयजत यज्ञेशं भगवन्तमधोक्षजम् ॥ उर्वशीलोकमन्विच्छन्सर्वदेवमयं हरिम् ॥४७॥ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ॥ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥ पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप ॥ अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे ऐलोपाख्याने चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥

॥ श्रीशुक उवाच ॥ ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥१॥ श्रुतायोर्वसुमान्पुत्रः सत्यायोश्च श्रुतंजयः ॥ रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥ २ ॥ भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ॥ तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ॥ जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ३ ॥ ततः कुशः कुशस्यापि कुशाम्बुर्मूर्तयो वसुः ॥ कुशनाभश्च चत्वारो गाधिरासीत्कुशाम्बुजः ॥४॥ तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥ ॥ ॥

अयं भावः—कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽपि ध्याननिष्ठाः। रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गः प्रकटो बभूवेति ॥ ४९ ॥ ॥ इति श्रीमद्भागवते म०पु०न० स्कं० भावार्थदीपिकायां टीकायां चतुर्दशोऽध्यायः ॥१४॥ ततः पञ्चदशे गाधिरैलपुत्रान्वयोऽजनि ॥ यद्दौहित्रसुतो रामः कार्तवीर्यमहन्रुषा ॥१॥१॥ सुग्रहत्वायाल्पादिक्रमेण श्रुतायुप्रभृतिपण्णां वंशानाह—श्रुतायोरित्यादिना। एक एकसंज्ञः अमितस्ततसंज्ञः ॥ २ ॥ जह्नोः पूरुस्तस्य बलाकस्तस्याजकः ॥ ३ ॥ ४ ॥ गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभूदित्युत्तराध्यायान्ते वक्ष्यति—'गाधेरभून्महातेजाः' इत्यादिना, तत्र तावत्तदुपोद्घातत्वेन भृगुवंशसंभवस्य ऋचीकस्य चरित्रं प्रसक्तानुप्रसक्तेन च परशुरामावतारचरितमाह—तस्य सत्यवतीमित्यादिना। विसदृशमननुरूपम्। भार्गवमृचीकम् ॥ ५ ॥

१ पुरा ब्राह्मकल्पस्य प्रथमसत्ययुगे इत्येवार्थः साधुः। स्वायंभुवमारभ्य वेदोदितवर्णानां भेदव्यवहारश्रवणात् इति क्रम०। २ प्रजया पुत्रभूतेन। ३ 'पुरुस्तस्याथ बालकः' इत्येव पाठः। टीका तु निर्गलितार्थत्वेन संगच्छते इति क्रम०। ४ मूर्तयो मूर्तयसंज्ञः। कचित् 'मूर्तयः,' 'मूर्तजः,' 'तनयः' इति च पाठाः, अन्ते तनयसंज्ञः। ५ प्रसक्तमनु यत्प्रसक्तं प्रसक्तस्तेनेत्यर्थः।

। न चेदमपि पर्याप्तमस्तकन्यायाः । यतः कुशिकाः कौशिका वयम् ॥ ६ ॥
दक्षिणवामयोरेकतः श्यामः कर्णो येषाम् । सर्वस्मिन्नङ्गे चन्द्रस्येव वर्चो येषाम् । न चेदमपि पर्याप्तमस्तकन्यायाः । यतः कुशिकाः कौशिका वयम् ॥ ६ ॥
॥ ७ ॥ उभयैर्मन्त्रैः, पत्न्यै ब्राह्मैर्मन्त्रैः, श्वश्र्वे तु क्षात्रैरित्यर्थः ॥ ८ ॥ यावत्स्नात्वा मुनिर्नागतस्तावद्भार्यायां भर्तृस्नेहाधिक्यात्पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मत्वा तया
मात्रा सत्यवती याचिता सती ब्राह्ममन्त्राभिमन्त्रितं स्वचरुं मात्रे अयच्छत्प्रादात् । मातुश्चरुं क्षात्रमन्त्राभिमन्त्रितं स्वयमददादत् ॥ ९ ॥ कष्टं जुगुप्सितम् । तदे-
वाह—ते पुत्रो घोरो भविष्यति । भ्राता तु ब्रह्मवित्तमो भविष्यतीति ॥ १० ॥ एवं मा भूदिति प्रसादितो भार्गव आह—अथ तर्हि पौत्रो घोरो भविष्यति ।

कुशिका वयम् ॥ ६ ॥ इत्युक्तस्तन्मतं
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ॥ सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम् ॥ ६ ॥ इत्युक्तस्तन्मतं
ज्ञात्वा गतः स वरुणान्तिकम् ॥ आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥ स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा
चापत्यकाम्यया ॥ श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥ तावत्सत्यवती मात्रा स्वचरुं याचिता सती ॥
श्रेष्ठं मत्वा[2] तयाऽयच्छन्मात्रे मातुरदत्स्वयम् ॥ ९ ॥ तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ॥ घोरो दण्डधरः पुत्रो
भ्राता ते ब्रह्मवित्तमः ॥ १० ॥ प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ॥ अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽ-
भवत् ॥ ११ ॥ सा चाभूत्सुमहापुण्या कौशिकी लोकपावनी ॥ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥
तस्यां वै भार्गवऋषेः सुता वसुमदादयः ॥ यवीयाञ्जज्ञ एतेषां राम इत्यभिविश्रुतः ॥१३॥ यमाहुर्वासुदेवांशं हैह-
यानां कुलान्तकम् ॥ त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥१४॥ दुष्टं क्षत्रं[3] भुवो भारमब्रह्मण्यमनीनशत्[4] ॥
रजस्तमोवृतमहन्फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥ ॥ राजोवाच ॥ किं तदंहो भगवतो राजन्यैरजितात्मभिः ॥ कृतं
येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः[5] ॥१६॥ ॥ श्रीशुक उवाच ॥ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ॥ दत्तं नारा-
यणस्यांशमाराध्य[6] परिकर्मभिः ॥१७॥ बाहून्दशशतं लेभे दुर्धर्षत्वमरातिषु ॥ अव्याहतेन्द्रियौजःश्रीतेजोवीर्ययशो-
बलम् ॥ १८ ॥ योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥ ॥

जमदग्निः पुत्रोऽभवदित्यर्थः ॥ ११ ॥ सा च सत्यवती कौशिकी नद्यभूत् ॥ १२ ॥ भार्गवऋषेर्जमदग्नेः सुताः ॥ १३ ॥ १४ ॥ अनीनशन्नाशयामास तदेवाह—
रजस्तमोवृतमिति । पाठान्तरे सुगमम् ॥ १५ ॥ १६ ॥ कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह—हैहयानामिति षड्भिः—परिकर्मभिः
परिचर्याभिर्दत्तं दत्तात्रेयमाराध्य ॥ १७ ॥ अव्याहतमिन्द्रियादिकं च लेभे ॥ १८ ॥ यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः ॥ १९ ॥ ॥ ॥

१ अनेन सर्वापेक्षया स्वस्य कुलीनत्वमिति द्योतितम् । २ 'मन्वानया' इति पाठः । ३ 'दृप्तं क्षत्रम्' इति पाठः । ४ 'अनीनशद्भुवो भार' इति पाठः । ५ अभीक्ष्णशः पुनः पुनः ।
६ 'नारायणांशांशम्' इति वीर० पाठः । ७ 'अब्रह्मण्यमधार्मिकम्' इत्येवंरूपे । स च पाठः क्वचिद्दृश्यते ।

रेवाम्भसि नर्मदाजले । सरितं नर्मदाम् ॥ २० ॥ रावणो दिग्विजये माहिष्मत्याः समीपे नर्मदायां देवपूजां कुर्वंस्तेन प्रवाहस्यावरोधात्प्रतिस्रोतसः सत्यास्तस्याः सरितो जलैर्विप्लावितं स्वशिबिरमालक्ष्य तस्य तद्वीर्यं न सेहे ॥ २१ ॥ ततश्च कृतकिल्बिषः क्रीडन्तमभिभवितुं प्रवृत्तः सन्गृहीतो माहिष्मत्यां स्वपुर्यां कपिरिव संनिरुद्धश्च पुनश्चावज्ञया येन मुक्तः ॥ २२ ॥ इदानीं तत्कृतमपराधं दर्शयन्नाह—स एकदेत्यादिना ॥ २३ ॥ अर्हणमातिथ्यादि । हविष्मत्या कामधेन्वा ॥ २४ ॥ तदर्हणं नाद्रियत तस्मिन्नातुष्यत् । यतोऽग्निहोत्र्यां होमधेनौ साभिलाषः । सहैहयो हैहयैः सह वर्तमानः ॥२५॥ दर्पाद्धेतोः ऋषेर्हविर्धानी-

स्त्रीरत्नैरावृतः क्रीडन्नेवाम्भसि मदोत्कटः ॥ वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥ विप्लावितं स्वशिबिरं
प्रतिस्रोतःसरिज्जलैः ॥ नामृष्यत्तस्य तद्वीर्यं वीरमानी दशाननः ॥२१॥ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ॥
माहिष्मत्यां संनिरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥ स एकदा तु मृगयां विचरन्विपिने वने ॥ यदृच्छयाश्रमपदं
जमदग्नेरुपाविशत् ॥२३॥ तस्मै स नरदेवाय मुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहाय हविष्मत्या तपोधनः ॥ २४ ॥
स वीरस्तत्र तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ॥ तन्नाद्रियताग्निहोत्र्यां साभिलाषः सहैहयः ॥ २५ ॥ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥ अथ राजनि निर्याते राम आश्रम
आगतः ॥ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥ घोरमादाय परशुं सतूणं चर्म कार्मुकम् ॥ अन्वधावत दुर्धर्षो मृगेन्द्र इव यूथपम् ॥२८॥ तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ॥ ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥ यतो यतोऽसौ प्रहरत्परश्वधो
मनोनिलौजाः परचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥ दृष्ट्वा स्वसैन्यं
रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ॥ विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा ॥ ३२ ॥

मग्निहोत्रधेनुं हर्तुं नरानचोदयत्प्रेरितवान् ॥ २६ ॥ २७ ॥ सतूणं कार्मुकं चर्म चादाय ॥ २८ ॥ ऐणेयं चर्म कृष्णाजिनमम्बरं यस्य ॥ २९ ॥ ३० ॥ प्रहरन्परश्वधो यस्य । मनश्चानिलश्च तयोरिवौजो वीर्यं यस्य । परेषां चक्रं सैन्यं सूदयतीति तथा । छिन्ना भुजा ऊरवः कन्धराश्च येषाम् । हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥ विवृक्णाश्चर्मादयो यस्य ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥

१ तेन साकं योद्धुमगमदित्यर्थः । २ वेपन्ते प्रवेष्टुमपि कम्पन्ते जना अस्मिन्निति व्युत्पत्त्या वनविशेषणम् । 'विजने वने' इति पाठः । ३ तद्दौरात्म्यं हविष्मतीहरणरूपम् । ४ 'परशुं योजयामास' इति पाठः इति विज० । ५ 'दुर्मर्षः' इति पाठः । ६ पुरीं विशन्नेवार्जुनो ददर्श इति चक्र० । ७ हस्त्यादिभिः सहिता अक्षौहिणीः । ८ हैहयोऽर्जुनः ।

पञ्चशतेषु धनुःषु सोऽर्जुनो रामाय संदधे । एकमेव धनुर्यस्य सः । पाठान्तरे एक एव वन्धः संधानं येषां तैरिषुभिः । तानि धनूंपि समं सह तत्क्षणमेवा-
च्छिनत् ॥ ३३ ॥ मृधे साधनभूतानचलानङ्घ्रिपांश्चोत्क्षिप्याभिधावतस्तस्य भुजांश्चिच्छेद । अहेः फणा इवेत्यर्थः ॥ ३४ ॥ ३५ ॥ समर्पयत् समार्पयत् ॥ ३६ ॥
॥ ३७ ॥ ३८ ॥ अर्हणतां पूज्यताम् ॥ ३९ ॥ सौरी सूर्यस्य प्रभेव ॥ ४० ॥ तीर्थसंसेवया । चकाराद्यमनियमैश्च । अच्युते चेतना चित्तं यस्य सः ॥ ४१ ॥

अथार्जुनः पञ्चशतेषु बाहुभिर्धनुःषु बाणान्युगपत्स संदधे ॥ रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिरा-
च्छिनत्समम् ॥३३॥ पुनः स्वहस्तैरचलान्मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान्कुठारेण कठोरनेमिना
चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥ कृत्तबाहोः शिरस्तस्य गिरेः श्रृङ्गमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं
दुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥
स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥ राम राम महाबाहो
भवान्पापमकारषीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥३८॥ वयं हि ब्राह्मणास्तात क्षमयार्हणतां गताः ॥ यया
लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् ॥ ३९ ॥ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तु-
ष्यते हरिरीश्वरः ॥४०॥ राज्ञो मूर्धावसिक्तस्य वधो ब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥४१॥
॥ इति श्रीमद्भा० म० पु० नवमस्कन्धे पञ्चदशोऽध्यायः ॥१५॥ ॥ श्रीशुक उवाच ॥ पित्रोपशिक्षितो रामस्त-
थेति कुरुनन्दन ॥ संवत्सरं तीर्थयात्रां चरित्वाश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुका याता गङ्गायां पद्ममालिनम् ॥
गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥ विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किंचि-
च्चित्ररथस्पृहा ॥ ३ ॥ कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ॥ आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः
॥ ४ ॥ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥ ॥

॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ षोडशेऽथार्जुनसुतैर्जमदग्नौ हते मुहुः ॥
रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ १ ॥ १ ॥ २ ॥ किंचिदीषच्चित्ररथे गन्धर्वराजे स्पृहा यस्याः सा । किंचिन्न सस्मारेति वा ॥ ३ ॥ कलशं
पुरोधायाग्रे निधाय ॥ ४ ॥ व्यभिचारं मानसं ज्ञात्वा ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'एकधन्वेषुभिः' इत्येवंरूपे । २ श्लेषेण न च्युता चेतना चिच्छक्तिर्यस्य तथाभूत ईश्वरोऽपि लोकसंग्रहार्थमित्यर्थः । ३ पलायनं चक्रुः । ४ यया क्षमया । ५ देवो ब्रह्मा । ६ 'तीर्थचर्याम्' इति पाठः । ७ कदाचिदिति कार्तवीर्यवधात्पूर्वमेवेत्यर्थः । ८ किंचित् काचित् कौतुकमय्येव नतु काममयी इति अत्र ब्रह्माण्डपुराणं द्रष्टव्यम् इति क्रम० । ९ पतिचरणव्यत्यय एवात्र व्यभिचारः

आज्ञातिलङ्घिनां भ्रातॄणां मातुश्च वधे संचोदितः सन्। मुनेर्यः समाधिस्तपश्च तयोः प्रभावज्ञः। यदि न हन्यां तर्हि मामपि शप्तुं समर्थः, यदि तु हन्यां तर्हि मयि संतुष्टः संस्तानपि जीवयितुं समर्थ इति जानन्नित्यर्थः ॥ ६ ॥ ७ ॥ नन्वतिनिन्दितं तत्कथं कृतवांस्तत्राह—पितुर्विद्वानिति। पूर्वोक्त एवाभिप्रायः ॥ ८ ॥ सर्वक्षत्रियवधे कारणं वक्तुमाह—येऽर्जुनस्य सुता इत्यादिना ॥ ९ ॥ १० ॥ भगवत्यावेशिता धीर्येन तम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

रामः संचोदितः पित्रा भ्रातॄन्मात्रा सहावधीत् ॥ प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥ वरेण छन्दया-
मास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥७॥ उत्तस्थुस्ते कुशलिनो निद्रापाय इवा-
ञ्जसा ॥ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥८॥ येऽर्जुनस्य सुता राजन्स्मरन्तः स्वपितुर्वधम् ॥ रामवीर्यपराभूता
लेभिरे शर्म न क्वचित् ॥ ९ ॥ एकदाश्रमतो रामे सभ्रातरि वनं गते ॥ वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन्
॥ १० ॥ दृष्ट्वाग्न्यगार आसीनमावेशितधियं मुनिम् ॥ भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥११॥ याच्यमानाः
कृपणया राममात्रातिदारुणाः ॥ प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबन्धवः ॥१२॥ रेणुका दुःखशोकार्ता निघ्नन्त्यात्मा-
नमात्मना ॥ राम रामेहि तातेति विचुक्रोशोच्चकैः सती ॥१३॥ तदुपश्रुत्य दूरस्थो हा रामेत्यार्तवत्स्वनम् ॥ त्वरयाश्रम-
मासाद्य ददृशे पितरं हतम् ॥१४॥ तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हा तात साधो धर्मिष्ठ त्यक्त्वास्मान्स्व-
र्गतो भवान् ॥१५॥ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ॥ प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥
गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ॥ तेषां स शीर्षभी राजन्मध्ये चक्रे महागिरिम् ॥१७॥ तद्रक्तेन नदीं घोरा-
मब्रह्मण्यभयावहाम् ॥ हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥१८॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ॥
स्यमन्तपञ्चके चक्रे शोणितोदान्ह्रदान्नव ॥१९॥ पितुः कायेन सन्धाय शिर आदाय बर्हिषि ॥ सर्वदेवमयं देवमात्मा-
नमयजन्मखैः ॥२०॥ ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ॥ अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥२१॥

दुःखादीनां वेगेन विमोहितः ॥१५॥१६॥ ब्रह्मघ्नैर्विहता श्रीर्यस्यास्ताम्। हे राजन्, स रामस्तेषां शीर्षभिर्माहिष्मत्या मध्ये महान्तं गिरिं चक्रे ॥१७॥ तेषां रक्तेनाब्रह्मण्यानां भयावहां घोरां नदीं चक्रे। तथापि सर्वक्षत्रियवधे किं कारणं तदाह—हेतुं कृत्वेति सार्धेन। अमङ्गलकारिण्यन्यायवर्तिनि सति ॥ १८ ॥ त्रिःसप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतम्, ततो रामस्तावत्कृत्वः क्षत्रमुत्सादितवानिति प्रसिद्धिः ॥ १९ ॥ २० ॥ २१ ॥ ॥ ॥

१ वरेण छन्दयामास वरं वृणिवत्युक्तवानित्यर्थः। छन्दयामास वशीचकारेति वा 'वशाभिप्राययोश्छन्दः' इति कोशः। २ तच्चदा। ३ 'ह्रदान्नृप' इति पाठः।

॥२२॥२३॥ संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं स्वदेहं लब्ध्वा स ऋषीणां मण्डले सप्तम ऋषिरभूत् ॥२४॥ बृहद्ब्रह्म वेदम् । वेदप्रवर्तकेषु सप्तर्षिष्वेकतमो
भविष्यतीत्यर्थः ॥२५॥२६॥ भुवो भारमहन् । भारमेवाह—नृपानिति ॥२७॥ तदेवं प्रसक्तानुप्रसक्तं समाप्य प्रस्तुतमाह—गाधेरिति । महातेजा विश्वामित्रः
॥२८॥ ते सर्वे लिङ्गसमवायन्यायेन 'प्राणभृत उपदधाति' इतिवन्मधुच्छन्दस एवोच्यन्ते। तथा च श्रुतिः—'तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव
ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः' इत्यादि । तत्र च विश्वामित्रपुत्रेषु भार्गवस्याजीगर्तस्य देवरातस्य ज्येष्ठत्वमवगम्यते । तथा आश्वलायनबौधायनादिभिः
कौशिकानां देवरातप्रवरत्वमुक्तम् । प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेदो नतु वंशान्तरम् । तथा च स्मृतिः—'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समान-

अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः ॥ आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥२२॥ ततश्चावभृथस्नानवि-
धूताशेषकिल्बिषः ॥ सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥२३॥ स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ॥
ऋषीणां मण्डले सोऽभूत्सप्तमो रामपूजितः ॥ २४ ॥ जामदग्न्योऽपि भगवान् रामः कमललोचनः ॥ आगामिन्यन्तरे
राजन्वर्तयिष्यति वै बृहत् ॥२५॥ आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ॥ उपगीयमानचरितः सिद्धग-
न्धर्वचारणैः ॥२६॥ एवं भृगुषु विश्वात्मा भगवान्हरिरीश्वरः ॥ अवतीर्य परं भारं भुवोऽहन्बहुशो नृपान् ॥२७॥
गाधेरभून्महातेजाः समिद्ध इव पावकः ॥ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥२८॥ विश्वामित्रस्य चैवासन्पुत्रा
एकशतं नृप ॥ मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥ २९ ॥ पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ॥ आजी-
गर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥३०॥ यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान्प्रजेशादीन्मुमुचे
पाशबन्धनात् ॥ ३१ ॥ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातः शुनःशेपः स भार्गवः ॥ ३२ ॥
ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥३३॥ ॥

गोत्रत्वं विना भृग्वङ्गिरोगणात् ॥' इति ॥२९॥ तत्कुतो भृगुवंशसंभवस्य देवरातस्य कौशिकप्रवरत्वमित्याशङ्क्य तदुपपादयन्नाह—पुत्रं कृत्वेत्यादि यावत्समाप्ति—
पूर्वमजीगर्तसुतत्वे मध्यमत्वेन पितृभ्यां ममतां विहाय विक्रीतत्वात्तस्य कृपया सुतानाह—ज्येष्ठ एष प्रकल्प्यतामिति ॥ ३० ॥ एतदेव स्पष्टयितुं विशि-
नष्टि—य इति द्वाभ्याम् । मुमुचे अमुच्यत ॥३१॥ भार्गवोऽपि गाधिषु गाधेर्वंशजेषु देवरात इति ख्यातः ॥ ३२ ॥ तत्तस्य ज्येष्ठत्वं कुशलं न मेनिरे मध्यम-
स्यानर्थावहत्वं दृष्ट्वा नाङ्गीकृतवन्तः । मुनिर्विश्वामित्रः ॥ ३३ ॥ ॥ ॥ ॥ ॥

१ चयनयागे प्राणभृच्छन्दप्रसिद्धमन्त्रेण सस्कृता एकैवेष्टका भवति । तत्र तस्याः प्राधान्येनान्या अपीष्टका यथा प्राणभृत उच्यन्ते तथा मधुच्छन्दसः प्राधान्यात्सर्वे मधुच्छन्दस इत्यर्थः । २ मध्यत इत्यत्र सार्वविभक्तिकस्तसिः । मध्यमं भागमित्यर्थः । 'मध्यमां' इति पाठः । ३ परं अवशिष्टं भागम् । ४ एकाधिकं शतमेकशतम् । ५ 'शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते' इति यत्पूर्वमुक्तं तदेव कथयति—पुत्रमिति ।

पञ्चाशता कनिष्ठैः साकं स मध्यमो मधुच्छन्दा उवाच । नोऽस्माकं यज्ज्येष्ठत्वं कनिष्ठत्वं वा भवान्पिता संजानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥ ३४ ॥ एवमुक्त्वा मन्त्रदर्शं 'कस्य नूनं कतमस्यामृतानाम्' इत्यादिमन्त्राणां द्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः । तदाह—वयं सर्वे त्वामन्वञ्चः स्म हि अनुगन्तारः । कनिष्ठाः स्म इत्यर्थः । ततः प्रसन्नो विश्वामित्रस्तान्सुतानाह—वीरवन्तः पुत्रवन्तो भविष्यथ । ये यूयं मे मानं पूज्यत्वमनुगृह्णन्तोऽनुवर्तमानाः सन्तो मां वीरवन्तं पुत्रवन्तमकर्त । कृतवन्त इत्यर्थः ॥ ३५ ॥ हे कुशिकाः, एष देवरातो वो युष्मदीयः कौशिक एव । यतो वीरो मत्पुत्रस्तमेनमन्वितानुगच्छत । अन्ये चाष्टकादयस्तस्य सुता आसन् ॥ ३६ ॥ उपसंहरति—एवमिति । एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं

स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ॥ यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥ ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ॥ विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ॥ ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ॥३५॥ एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥३६॥ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम् ॥ प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम् ॥३७॥ ॥ इति श्रीम० न० षोडशोऽध्यायः ॥१६॥

॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्यवान् ॥१॥ अनेना इति राजेन्द्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः ॥२॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥३॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता ॥ धन्वन्तरिर्दैर्घतम आयुर्वेदप्रवर्तकः ॥४॥ यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥५॥ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन्मेदिनीं बुभुजे युवा ॥ ७ ॥

जातं, तच्च प्रवरान्तरमापन्नं प्राप्तम् । हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पञ्चसु ॥ सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥ १ ॥ इह श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमणमैलादिक्रमेण प्रक्रान्तमिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽतिविततत्वादन्ते निरूप्यते । अतः पुरूरवसः पुत्राणां पञ्चानां कनिष्ठानां वंशानुक्त्वेदानीं प्रथमस्य वंशमाह—य इति । एवं नहुषययातियदुप्रभृतिष्वपि द्रष्टव्यम् ॥ १ ॥ क्षत्रवृधः क्षत्रवृद्धस्य ॥ २ ॥ ३ ॥ दीर्घतमसः पिता ॥ ४ ॥ स्मृतमात्र एवार्तिं रोगदुःखं नाशयतीति तथा ॥ ५ ॥ ततः प्रतर्दनादिशब्दवाच्याद्द्युमतः सकाशादलर्कादयः ॥ ६ ॥ ७ ॥ ॥ ॥



१ दैर्घतम इत्यत्र सकारलोप आर्षः । 'दीर्घतमसः' इति पाठेऽक्षराधिक्यमार्षम् । अयं धन्वन्तरिः समुद्रमथनजातादन्य इत्यनुमीयते । 'दैर्घ्यतम' इति पाठः ।

अलर्कात्सन्ततिसंज्ञः ॥ ८ ॥ सत्यकेतोर्धृष्टकेतुस्तस्मात्सुकुमारस्तस्माद्वीतिहोत्रस्तस्य भर्गः । अतो भर्गाद्भार्गभूमिः ॥ ९ ॥ काशयः काशेर्वंश्याः । काशेः प्रपितामहस्य क्षत्रवृद्धस्यान्वयमयन्ते यान्तीति तथा ॥ १० ॥ ततोऽनेनसः शुद्धो जज्ञे ॥ ११ ॥ कृतकृत्यः सः । यत आत्मवान् ज्ञानी । अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ तेषां मतिभ्रंशाय गुरुणा बृहस्पतिनाऽभिचारविधानेनाग्नौ हूयमाने सति ॥ १५ ॥ सिंहावलोकनेनाह—क्षात्रवृद्धात्क्षत्र-

अलर्कात्सन्ततिस्तस्मात्सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥८॥ धृष्टकेतुः सुतस्तस्मात्सुकुमारः क्षितीश्वरः ॥ वीतिहोत्रस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥९॥ इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ॥ रम्भस्य रभसः पुत्रो गम्भीरश्चाक्रियस्ततः ॥ १० ॥ तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ॥ शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः [1] ॥ ११ ॥ ततः शान्तरयो जज्ञे कृतकृत्यः स आत्मवान् ॥ रजेः पञ्चशतान्यासन्पुत्राणाममितौजसाम् [2] ॥ १२ ॥ देवैरभ्यर्थितो दैत्यान्हत्वेन्द्रायाददाद्दिवम् ॥ इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥ १३ ॥ आत्मानमर्पयामास प्रह्लादाद्यरिशङ्कितः ॥ पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ १४ ॥ त्रिविष्टपं महेन्द्राय यज्ञभागान्समाददुः ॥ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ १५ ॥ अवधीद्भ्रंशितान्मार्गान्न [3] कश्चिदवशेषितः ॥ कुशात्प्रतिः क्षात्रवृद्धात्संजयस्तत्सुतो जयः ॥ १६ ॥ ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ॥ सहदेवस्ततोऽहीनो जयसेनस्तु तत्सुतः ॥ १७ ॥ संकृतिस्तस्य च जयः क्षत्रधर्मा महारथः ॥ क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् [4] ॥ १८ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे चन्द्रवंशानुवर्णने सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीशुक उवाच ॥ यतिर्ययातिः [5] संयातिरायतिर्वियतिः कृतिः ॥ षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनः ॥ १ ॥ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ॥ यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥ पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद्द्विजैः ॥ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥ चतसृष्वादिशद्दिक्षु भ्रातॄन्भ्राता यवीयसः ॥ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥४॥

वृद्धपौत्रात्कुशात्प्रतिः । प्रतेः संजयः ॥ १६ ॥ १७ ॥ १८ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥१७॥
अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ॥ यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ १ ॥ १ ॥ तस्य राज्यस्य परिणाममनर्थावहत्वं वेत्तीति तथा । तत्र हेतुः—यत्रेति ॥ २ ॥ स्थानात्स्वर्गात् । द्विजैरगस्त्यादिभिः ॥ ३ ॥ यवीयसो भ्रातॄनादिशत् । काव्यस्य शुक्रस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् ॥ ४ ॥ ॥

१ त्रिककुदेव धर्मसारथ्यपरनामधेय इति वीरराघवकारः । २ अनवधिकतेजसः पञ्चशतसंख्याका रजेः पुत्रा आसन्नित्यर्थः । ३ मार्गात् इन्द्राधिपत्यानुकूलबुद्धिरूपात् । ४ नाहुषाद्ययातेरारभ्य । 'नाहुषम्' इति पाठः । ५ नहुषतत्पुत्रान्तरवृत्तान्तकथनपूर्वकं नहुषपुत्रस्य ययातेश्चरितमाह—यतिरित्यध्यायद्वयेन ।

॥५॥ नात्र प्रतिलोमतादोष ईश्वरघटनादिति दर्शयन्कथामाह—एकदेत्यादिना प्रतिजग्राह तद्वच इत्यन्तेन । गुरोः शुक्रस्य पुत्र्या देवयान्या च व्यचरदिति द्वयोरन्वयः ॥६॥ कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिंस्तस्मिन्पुरोद्याने । अबला शर्मिष्ठा ॥७॥ सिंचतीः सिंचन्त्यः ॥८॥९॥ अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समव्ययतपर्यधात् ॥ १० ॥ असांप्रतमन्याय्यम् ॥११॥ अन्यायमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति—यैरिति त्रिभिः—ये ब्राह्मणाः परस्य पुंसो मुखम्,

॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबन्धुश्च नाहुषः ॥ राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥५॥ ॥ श्रीशुक
उवाच ॥ एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ॥ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥ देवयान्या
पुरोद्याने पुष्पितद्रुमसंकुले ॥ व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥७॥ ता जलाशयमासाद्य कन्याः कमललो-
चनाः ॥ तीरे न्यस्य दुकूलानि विजह्रुः सिंचतीर्मिथः ॥८॥ वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम् ॥ सरसो-
त्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ॥ स्वीयं मत्वा प्रकुपिता
देवयानीदमब्रवीत्॥१०॥अहो निरीक्षतामस्या दास्याः कर्म ह्यसांप्रतम् ॥ अस्मद्धार्यं धृतवती शुनीव हविरध्वरे॥११॥
यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये॥धार्यते यैरिह ज्योतिः शिवः पन्थाश्च दर्शितः॥१२॥यान्वन्दन्त्युपतिष्ठन्ते लोक-
नाथाः सुरेश्वराः ॥ भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥१३॥ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः ॥
अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥१४॥ एवं शपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत ॥ रुषा श्वसन्त्युरङ्गीव धर्षिता
दष्टदच्छदा॥१५॥ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि ॥ किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा ॥१६॥ एवं-
विधैः सुपरुषैः क्षिप्त्वाचार्यसुतां सतीम् ॥ शर्मिष्ठा प्राक्षिपत्कूपे वास आदाय मन्युना ॥१७॥ तस्यां गतायां स्वगृहं यया-
तिर्मृगयां चरन् ॥प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह॥१८॥दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ॥ गृहीत्वा
पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा॥ राजंस्त्वया गृहीतो मे पाणिः पर-
पुरंजय ॥ २० ॥ हस्तग्राहो परो मा भूद्गृहीतायास्त्वया हि मे ॥ एष ईशकृतो वीर संबन्धो नौ न पौरुषः ॥२१॥

मुखादुत्पन्नत्वेन तृप्तिद्वारत्वेन श्रेष्ठा इत्यर्थः ।ज्योतिर्ब्रह्म । पन्था वेदमार्गः ॥१२॥१३॥ तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं तत्रापि भृगवः । अस्याश्च पिता नः शिष्यः । एवं सत्यप्यस्माभिर्धार्यं वास इयमसती धृतवती ॥ १४ ॥ १५ ॥१६॥१७॥१८॥१९॥२०॥ निषिद्धोऽयं प्रतिलोमसंबन्ध इति चेत्तत्राह—एष इति ॥ २१ ॥

१ 'यान्नमन्ति' इति पाठः । २ बलिभुजो यथा वायसा इव । ३ उत्तरं वासः प्रावरणवस्त्रम् । ४ परेषां पुराणि जयतीति तथा । ५ असती अकल्याणी ।

किमनेनाग्रहेणेति चेत्तत्राह—न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात्, तदा च देवयानी तं पतिं
ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह—न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात्, तदा च देवयानी तं पतिं ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह

ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह—न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात्, तदा च देवयानी तं पतिं चकमे, स च गुरुपुत्री मम पूज्येति न तामुदवहत्, ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति तं शशाप, स च तव ब्राह्मणः पतिर्न भवेदिति तां शशाप। तदेतदाह—यमहमशपं तस्य शापात् ॥ २२ ॥ अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्गतं तस्यां सकामं स्वं मनश्च बुद्ध्वा नह्यधर्मे मदीयं मनः प्रविशेदिति तस्या वचः प्रतिजग्राहाङ्गीकृतवान् ॥२३॥ शर्मिष्ठासंबन्धोऽपि दैववशादेवाभवदिति दर्शयन्नाह—गते राजनीति नवभिः उक्तं भिक्षुकीत्यादि । कृतं कूपे

यदिदं कूपलग्नाया भवतो दर्शनं मम ॥ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज॥ कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥२२॥ ययातिरनभिप्रेतं दैवोपहृतमात्मनः ॥ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥ दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ॥ गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥ क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥२७॥ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥ स्वानां तत्संकटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत् ॥२९॥ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ॥ तमाह राजन् शर्मिष्ठामाधास्तल्पे न कर्हिचित् ॥३०॥ विलोक्यौशनसीं राजञ्शर्मिष्ठा सप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥ ३१ ॥ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरन् शुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥ गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥ प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् ॥ न प्रसादयितुं शेके पादसंवाहनादिभिः ॥३५॥ ॥

प्रक्षेपादि ॥२४॥ कापोतीमुञ्छवृत्तिम् ॥२५॥ प्रत्यनीका देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्य तथाभूतं ज्ञात्वा । प्रत्यनीकानां विवक्षितमिति वा ॥२६॥२७॥ सानुगा सखीसहिता शर्मिष्ठा मामनु यात्विति ॥ २८ ॥ तत्तस्मान्निर्गताच्छुक्रात्संकटं वीक्ष्य । तत्तस्मादवस्थितादर्थस्य प्रयोजनस्य गौरवं च वीक्ष्य ॥ २९ ॥ तल्पे नाधाः । नोपगच्छेरित्यर्थः ॥३०॥३१॥ अपत्यार्थमृतुकाले प्रार्थनात्तस्याः कामपूरणं धर्ममवेक्ष्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्सङ्गमभ्यपद्यत नतु कामत इत्यर्थः ॥ ३२ ॥ ३३ ॥ आसुर्याः शर्मिष्ठायाः । भर्तुः सकाशात् ॥ ३४ ॥ उपमन्त्रयन्प्रसादयन् ॥ ३५ ॥ ॥ ॥ ॥

१ शुक्रोक्तिरियम् । २ अष्टाविंशश्लोकोत्तर—'पित्रा दत्ता देवयान्यै शर्मिष्ठा सानुगा तद.' इत्यर्धमधिकं चक्रवर्तिपाठे । ३ त्यक्तदैत्यस्त्वमस्माकं जयमाशास्वेति वक्तुमिष्टम् ।

विकृतं रूपं करोतीति तथा ॥३६॥ ते दुहितरि कामैरद्याप्यतृप्तोऽस्मि, कामानां भोगैरिति वा । शुक्र आह—तर्हि योऽभिधास्यत्यभितो धारयिष्यति तस्य वयसा यथाकामं व्यत्यस्यतां यथेच्छं जरा व्यत्ययं यातु । व्यत्ययं नीयतामिति वा । यद्वा व्यत्यस्येति छेदः । तां जरां व्यत्यस्य व्यत्यासं गमयेत्यर्थः ॥ ३७ ॥ इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ॥ ३८ ॥ ३९ ॥ ४० ॥ यतो न धर्मज्ञाः । अनित्ये च यौवने नित्यबुद्धयः ॥ ४१ ॥ त्वं जरां किं ग्रहीष्यसी-

शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ॥ त्वां जरा विशतां मन्द विरूपकरणी नृणाम् ॥३६॥ ॥ययातिरुवाच॥ अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्दुहितरि स्म ते ॥ व्यत्यस्यतां यथाकामं वयसा योऽभिधास्यति ॥ ३७॥ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ॥ यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८॥ मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ॥ वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥३९॥ ॥यदुरुवाच॥ नोत्सहे जरसा स्थातुमन्तरा प्राप्तया तव ॥ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥ तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत॥ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥४१॥ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ॥ न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥४२॥ ॥पूरुरुवाच॥ को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ॥ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥४३॥ उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः ॥ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥४४॥ इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ॥ सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप ॥४५॥ सप्तद्वीपपतिः सम्यक् पितृवत्पालयन्प्रजाः ॥ यथोपजोषं विषयाञ्जुजुषेऽव्याहतेन्द्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ॥ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥ यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ॥ नानेव भाति नाभाति स्वप्नमायामनोरथः[3] ॥४९॥ तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ॥ नारायणमणीयांसं निराशीरयजत्प्रभुम् ॥ ५० ॥ ॥ ॥

त्यपृच्छत् । प्रत्याख्यानं मा कृथा इत्याह—न त्वमिति ॥ ४२ ॥ आत्मकृतः स्वदेहकर्तुः प्रत्युपकारं कर्तुं को नु क्षमः ॥ ४३ ॥ तथापि पितुर्यच्चिन्तितं कुर्यात्स उत्तमः । यस्तु प्रोक्तकारी स मध्यमः । यस्त्वश्रद्धया कुर्यात्सोऽधमः । अकर्ता पितुरुच्चरितं पुरीषप्रायः ॥४४॥ जुजुषे सेवितवान् ॥४५॥ यथोपजोषं यथाप्रीति जुजुषे ॥ ४६ ॥ ४७ ॥ ४८ ॥ नानेव भाति यावदिन्द्रियप्रवृत्तिः । तदुपरमे नाभाति । स्वप्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ॥ ४९ ॥ ५० ॥ ॥

१ व्यतिपूर्वस्यास्यतेर्लोण्मध्यमपुरुषैकवचनम् । २ कामानामिति नाम्रिस्तृप्यति काष्ठानामितिवत्षष्ठी । ३ स्वप्नेत्यत्र सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकवचन समाहारत्वेनाविवक्षितत्वान्न क्लीबत्वं च । ४ निराशीः कामाभिलापरहितः ।

मनःसुखं कामभोगम् । कदिन्द्रियैः कुत्सितैः पराङ्मुखैरिन्द्रियैः ॥ ५१ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां अष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम् ॥ देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ १ ॥ भुक्तभोगामजां हास्य-त्रजवद्वृत्तमात्मनः ॥ विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ २ ॥ कामानाचरन्नुपभुञ्जानः । गाथामितिहासम् ॥ १ ॥ मद्विधेन मत्सदृशेनाचरितामनु-ष्ठिताम् । मद्विधस्याचरितं यस्यामिति वा । यस्य ग्रामनिवासिनः कामिनो मद्विधस्याचरितं वने स्थिता धीराः शोचन्ति तस्य गाथां शृणु ॥ २ ॥ आत्मान-मनुलक्ष्याह—वस्त इति । प्रियामनुलक्ष्याह—अजामिति । वने संसारे । प्रियं विषयम् ॥ ३ ॥ रोधसी तटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थं निर्गमाय

एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ॥ विदधानोऽपि नातृप्यत्सार्वभौमः कदिन्द्रियैः ॥५१॥ ॥ इति श्रीमद्भा० म० पु० नवमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीशुक उवाच ॥ स इत्थमाचरन्कामांस्त्रैणोऽपह्नवमात्मनः ॥ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥१॥ शृणु भार्गव्यमुं गाथां मद्विधाचरितां भुवि ॥ धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥२॥ बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥३॥ तस्या उद्धरणोपायं बस्तः कामी विचिन्तयत् ॥ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसी ॥४॥ सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल ॥ तया वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ॥५॥ पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ॥ स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ॥ रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥ तमेव प्रेष्ठतमया रममाणमजान्यया ॥ विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥७॥ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ॥ इन्द्रियारामसुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ॥ कुर्वन्निडविडाकारं नाशक्नोत्पथि संधितुम् ॥ ९ ॥ तस्यास्तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ॥ लम्बन्तं वृषणं भूयः संदधेऽर्थाय योगवित् ॥ ॥ १० ॥ संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया ॥ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥ ॥

मार्गं व्यधत्त ॥ ४ ॥ बह्व्य इति शर्मिष्ठाप्रमुखाः कामयामासुः । कान्तं प्रति कामिनीः कामवत्यः ॥ ५ ॥ पीवानं पुष्टम् । श्मश्रुलं श्मश्रुबहुलम्, रतिसमर्थमित्यर्थः । मीढ्वांसं रेतःसेक्तारम् । याभे कोविदमभिज्ञम् । अत एव प्रेष्ठम् । नावबुध्यत नान्वबुध्यत ॥ ६ ॥ ७ ॥ स्वामिनमिति शुक्राभिप्रायेणाह ॥ ८ ॥ इडविडाकारं वस्तजातिशब्दम् । संधितुं प्रसादयितुम् ॥ ९ ॥ वृषणमच्छिनज्जरया संभोगासमर्थमकरोत् । अर्थाय स्वपुत्र्याः कामोपभोगाय । योगविदुपायज्ञः । जराव्यत्ययेन रतिशक्तिं ददावित्यर्थः ॥ १० ॥ कूपलब्धया सह कामैः सेव्यमानैर्न तुष्यति ॥ ११ ॥ ॥ ॥ ॥

१ शृण्वित्यादि ययातेरुक्तिः । २ याभो मैथुनम् । ३ अन्ययेति शर्मिष्ठाभिप्रायेण । ४ 'कूपसंज्ञमा' इति पाठः । इदं देवयान्यभिप्रायेण । 'रूपसविम्ना' इति वीर० पाठः । ५ या अजा तस्याः स्वामी कश्चिद्द्विज इत्यन्वयः । 'तस्य तत्र द्विजः' इति क्वचित्पाठः, स च सुगमः ।

१०९

॥ १२ ॥ ननु तर्हि पुनरपि वहवो विपयाः सेव्यन्ताम्, ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेति चेत्तत्राह—यदिति द्वाभ्याम् । न दुह्यन्ति न पूरयन्ति ॥ १३ ॥ हविपा घृतेन कृष्णवर्त्माऽग्निरिव ॥ १४ ॥ तर्हि कदा केनोपायेन वा मनसः संपूर्णा प्रीतिः स्यादयया कामोपशमः स्यादित्यत आह—यदेति पङ्क्तिः—अमङ्गलं भावं रागद्वेपादिवैपम्यम् ॥ १५ ॥ दुःखानि नितरां वहतीति तथा ताम् ॥ १६ ॥ स्त्रीसंनिधानं तु सर्वथा त्याज्यमित्याह—मात्रेति । अविविक्तं संकीर्णमासनं यस्य सः । कर्पत्याकर्पति ॥ १७ ॥ १८ ॥ १९ ॥ ननु तृष्णात्यागस्यातिदुष्करत्वात्कथं ब्रह्मणि मनस आधानं स्यात्तत्राह—दृष्टमिति ।

तथाहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः ॥ आत्मानं नाभिजानामि मोहितस्तव मायया[2] ॥१२॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते[3] ॥१३॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥१४॥ यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ॥ समदृष्टेस्तदा पुंसः सर्वाः सुखमय्या[4] दिशः ॥१५॥ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ॥ तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं[5] त्यजेत् ॥१६॥ मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् ॥ बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥१७॥ पूर्णं वर्षसहस्रं मे विषयान्सेवतोऽसकृत् ॥ तथापि चानुसवनं[6] तृष्णा तेषूपजायते ॥ १८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वन्द्वो निरहंकारश्चरिष्यामि मृगैः सह ॥ १९ ॥ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् ॥ संसृतिं चात्मनाशं च तत्र विद्वान्स आत्मदृक् ॥ २० ॥ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ॥ दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥२१॥ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ॥ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥२२॥ भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं[7] विशाम्[8] ॥ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥ आसेवितं वर्षपूगान्[9] षड्वर्गं विषयेपु सः ॥ क्षणेन मुमुचे नीडं[10] जातपक्ष इव द्विजः ॥ २४ ॥ स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ॥ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥ ॥ ॥

यो नानुध्यायेन्न संविशेन्न चोपभुञ्जीत । तत्र दृष्टश्रुतयोरनुध्यानादौ स आत्मदृक् भवति ॥ २० ॥ २१ ॥ २२ ॥ तस्य पूरोर्वंशे स्थापयित्वा ॥ २३ ॥ विपयेपु शब्दादिष्वासेवितं पड्वर्गं पडिन्द्रियसुखं मुमुचे तत्याज । यद्वा विपयेष्वासेवितं सेवां कारितं पण्णामिन्द्रियाणां वर्गं मुमुचे उपैक्षतेत्यर्थः ॥ २४ ॥ विधुतं निरस्तं त्रिगुणात्मकं लिङ्गं येन । प्रतीतः प्रख्यातः ॥ २५ ॥ ॥ ॥ ॥ ॥



१ वहत्यावहति प्रापयति । २ मायया मोहनशक्त्या । ३ ते व्रीहियवादयः । ४ सुखमयाः सुखमय्यः । ५ 'ध्रुव' इति पाठः । ६ अनुसवनमनुकालम् । ७ सर्वस्य भूमण्डलस्य सवन्धिनां विशां प्रजानामर्हत्तमं अतिशयेन पूज्यतममभिषिच्य चक्रवर्तिनं कृत्वेत्यर्थः । ८ 'विभुम्' इति पाठः । ९ वर्षपूगान् वर्षगणान् । १० नीडं निवासस्थानं कोटरम् ।

प्रस्तोभमेवाह—परिहासमिवेति । यद्वा प्रस्तोभं निवृत्तिमार्गे प्रोत्साहनं मेने ॥ २६ ॥ २७ ॥ २८ ॥ कथं समावेश्य तदाह—नम इति । नमनादिभिः समावेश्येत्यर्थः । शुको वा नमस्करोति ॥ २९ ॥ ॥ इति श्रीमद्भा० म० पु० नवमस्कन्धे भा० दी० टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ ॥ विंशे पितृप्रसादाद्सराजासनमहोन्नतेः ॥ पूरोर्वंशे हि दौष्यन्तेर्भरतस्येर्यते यशः ॥ १ ॥ १ ॥ २ ॥ तत्सुतः अहंयातेः सुतः ॥ ३ ॥ धर्मेयुश्च सत्येयुश्च व्रतेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥

श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ॥ स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम् ॥ २६ ॥ सा संनिवासं सुहृदां प्रपायामिव गच्छताम् ॥ विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥ २७॥ सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ॥ कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८॥ नमस्तुभ्यं भगवते वासुदेवाय वेधसे ॥ सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥ इति श्रीमद्भा० म० पु० न० एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ श्रीशुक उवाच ॥ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ॥ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥ जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥ तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥ ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ॥ जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ॥ घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥ ऋतेयो रन्तिभारोऽभूत्त्रयस्तस्यात्मजा नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥ तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ॥ पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥ दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ॥ तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ ८ ॥ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ॥ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥ तद्दर्शनप्रमुदितः संनिवृत्तपरिश्रमः ॥ पप्रच्छ कामसंतप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥ का त्वं कमलपत्राक्षि कस्यासि हृदयंगमे ॥ किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ११ ॥ ॥

वनेयुश्चावमः स्मृतः । एवं दशैते ऋतेयुप्रमुखास्तस्य रौद्राश्वस्य घृताच्यामप्सरसि पुत्रा जाताः । अप्सरस इति षष्ठी सप्तम्यर्थे । वशवर्तित्वे दृष्टान्तः—जगदात्मनो जगत आत्मभूतस्य मुख्यस्य प्राणस्येन्द्रियाणीव ॥ ५ ॥ ६ ॥ ७ ॥ दुष्यन्तस्य शकुन्तलायां भरतः पुत्रोऽभवदिति कथाद्वारेणाह—दुष्यन्तो मृगयामिति पञ्चदशभिः—तमाश्रमं मण्डयन्तीम् ॥ ८ ॥ स्त्रियं विलोक्य मुमुहेऽमुह्यत् ॥ ९ ॥ तस्या दर्शनेन प्रमुदितोऽत एव संनिवृत्तः परिश्रमो यस्य ॥ १० ॥ ११ ॥ ॥

१ प्रस्तोभं वञ्चनमुपालम्भम् । २ लिङ्गं शरीरम् । ३ यत्र पूरोर्वंशे वंश्या राजर्षयस्तथा ब्रह्मवंश्या ब्राह्मणाश्च जज्ञिरे इत्यर्थः । ४ 'जन्मेजयोऽभवत्' इति पाठः । ५ 'दुष्कन्तः' इत्यपि पाठः । ६ पदं स्थानम् ।

पौरवाणां चेतो नह्यधर्मे रमते । अतो मच्चेतसस्त्वयि रमणादेवाहं त्वां राजन्यतनयां वेद्मि ॥ १२ ॥ विश्वामित्रस्यात्मजाऽहं मेनकायां जाता तया च स्वर्गं गच्छन्त्यात्र त्यक्ता । अतो राजकन्यैवाहमित्यर्थः ॥ १३ ॥ १४ ॥ किं करवामेत्यादिवाक्यात्तदभिप्रायं ज्ञात्वाह—उपपन्नमिति ॥ १५ ॥ गान्धर्वविधिना मिथः समयपूर्वकेण ॥ १६ ॥ १७ ॥ १८ ॥ दुरत्ययं विक्रान्तं विक्रमणं यस्य ॥ १९ ॥ २० ॥ भस्त्रा चर्मपात्रं तद्वन्माता आधारमात्रम् । पितुरेव तु पुत्रः । तत्र हेतुः—येनेति । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । भरस्व पुषाण । अनेन भरतनाम निरुक्तम् ॥ २१ ॥ किंच रेतोधा रेतःसेक्ता वंशकृत्पुत्रो यमक्षयात्

व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ॥ नहि चेतः पौरवाणामधर्मे रमते क्वचित् ॥१२॥ ॥ शकुन्तलोवाच ॥ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ॥ वेदैतद्भगवान्कण्वो वीर किं करवाम ते ॥१३॥ आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः ॥ भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥१४॥ ॥ दुष्यन्त उवाच ॥ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ॥ स्वयं हि वृणते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥ ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ॥ गान्धर्वविधिना राजा देशकालविधानवित् ॥ १६ ॥ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ॥ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७॥ कण्वः कुमारस्य वने चक्रे समुचिताः क्रियाः ॥ बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥१८॥ तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ॥ हरेरंशांशसंभूतं भर्तुरन्तिकमागमत् ॥१९॥ यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ॥ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यन्त माऽवमंस्थाः शकुन्तलाम् ॥२१॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥२२॥ पितर्युपरते सोऽपि चक्रवर्ती महायशाः ॥ महिमा गीयते तस्य हरेरंशभुवो भुवि ॥२३॥ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड्विभुः ॥२४॥

पितरं नयति तारयति। तथा च श्रुतिः—'पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥' इति । पाठान्तरे मातापित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशाद्रेतोधा रेतःसेक्ता पितैव धर्मेण विजित्य पुत्रं नयति न तु मातेत्यर्थः । ततश्च भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥२२॥ चक्रवर्ती बभूवेति शेषः । तस्य महिमा गीयते—'तदप्येते श्लोका अभिगीताः' इत्यादि बह्वृचश्रुत्या हरेरंशभुवोंऽशाज्जातस्य ॥ २३ ॥ तत्र लिङ्गमाह—चक्रमिति ॥ २४ ॥ ॥ ॥ ॥ ॥

१ विश्वामित्रस्य क्षत्रियावस्थायामात्मजेत्यर्थः इति क्रम० । २ वरवध्वोः परस्परेण वियादरुचिर्गान्धर्वः । ३ [illegible] सत्यभिप्रायेण। ४ ओमिति शकुन्तलया मौनेनैवोक्ते सतीत्यर्थः इति चक्र० । ५ 'विभागवित्' इति पाठः। ६ 'समुदिताः' इति क्वचित् पाठस्तत्र विधियुक्ता इत्यर्थः । ७ 'पितरं पुत्रो नयत्येव यमक्षयात्' इति वीर० पाठः । ८ 'पुत्रं नयति' इत्येवंरूपे ।

गङ्गायामनुलोमं पञ्चपञ्चाशता वाजिभिरीजे । पुरोधाय पुरोहितं कृत्वा । यमुनायामनु च यमुनायाश्चानुलोमम् ॥ २५ ॥ अष्टाधिकसप्ततिमेध्यानश्वान्बबन्ध ।
किं कुर्वन् । वसु धनं प्रकर्षेण ददत् । साचीगुणे प्रकृष्टगुणवति देशेऽग्निश्चितोऽभूत् । यस्मिन्नग्निचयने देशे वा सहस्रं ब्राह्मणा भरतेन भूरिदानेन दत्ता गाः बद्वशः
प्रत्येकं बद्वं बद्वं विभेजिरे विभज्य जगृहुः । चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकं बद्वं भवति । तथाहि—'हिरण्येन परीवृतान्कृष्णाञ्छुक्लदतो मृगान् ॥ मष्णारे भरतो-
ऽददाच्छतं बद्वानि सप्त च ॥' इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन संगृहीतानि—'अदात्कर्मणि मष्णारे नियुतानि चतुर्दश'
इति । एवं चतुर्दशलक्षणां सप्ताधिकशतभागो बद्वमित्युक्तम् । इयं च बद्वसंख्या श्लोकेन संगृह्यते—'चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्र-
सहस्राणि त्रयोदश ॥' ॥ २६ ॥ देवानामपि मायां वैभवमत्यगादत्यशेत । यतः गुरुं पूज्यं हरिमाययौ प्रापः, तदंशभवत्वात् । मायावत्तर इति पाठे ह्रस्वः

पञ्चपञ्चशता मेध्यैर्गङ्गायामनु वाजिभिः ॥ मामतेयं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥ अष्टसप्ततिमेध्याश्वान्ब-
बन्ध प्रददद्वसु ॥ भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ॥ सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे ॥२६॥
त्रयस्त्रिंशच्छतं ह्यश्वान्बध्वा विस्मापयन्नृपान् ॥ दौष्यन्तिरत्यगान्मायां देवानां गुरुमाययौ ॥ २७ ॥ मृगान् शुक्लदतः
कृष्णान्हिरण्येन परीवृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश ॥२८॥ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ॥
नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥२९॥ किरातहूणान्यवनानन्ध्रान्कङ्कान्खशान् शकान् ॥ अब्रह्मण्यान्नृपां-
श्चाहन्म्लेच्छान्दिग्विजयेऽखिलान् ॥ ३० ॥ जित्वा पुराऽसुरा देवान्ये रसौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः
प्राणिभिः पुनराहरत् ॥३१॥ सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥३२॥
स सम्राड् लोकपालाख्यमैश्वर्यमधिराट्श्रियम् ॥ चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह ॥ ३३ ॥ तस्यासन्नृप
वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ॥ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥ ॥ ॥

श्रुत्यनुसारेण । मायावतां श्रेष्ठो हरिरेवासावित्यर्थः ॥२७॥ मृगान् श्रेष्ठगजान् । भद्रमन्द्रमृगादयो गजजातिभेदाः । मष्णारे इत्यस्य श्रुतिपदस्य व्याख्यानं—कर्म-
णीति । कस्मिंश्चित्कर्मविशेषे । केचित्तु मष्णारे तीर्थं इति व्याचक्षते ॥ २८ ॥ २९ ॥ ३० ॥ पुरा देवान् जित्वा येऽसुरा रसौकांसि रसातलादिस्थानानि
भेजिरे तैः प्राणिभिर्बलिभिर्देवस्त्रियो रसातलं नीताः सतीः पुनराहरदानिन्ये । प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता इति वा । 'पणिभिः' इति पाठे पणयोऽ-
सुरास्तैर्नीताः सतीः । यद्वा पणयो दूतास्तैर्दूतान्प्रस्थाप्याहरदित्यर्थः ॥ ३१ ॥ त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रं वत्सरान् । चक्रं सेना आज्ञा वा ॥३२॥
तस्य वैराग्येण मोक्षप्रकारमाह—स इति । मृषेति विचार्येति शेषः ॥ ३३ ॥ नानुरूपा मत्सदृशा न भवन्तीति भर्त्रा ईरिते सति व्यभिचारशङ्कयासांस्त्य-
क्ष्यतीति भयात्पुत्रान् जघ्नुः । पुनः पुत्राणां दर्शने वैसादृश्यानुसन्धानेन त्यजेन्नान्यथेत्याशयेन हतवत्यः ॥ ३४ ॥ ॥ ॥

१ बबन्ध यज्ञार्थमित्यर्थः । २ 'गुरुमाययौ' इत्यत्र । ३ मामतेयं ममतायाः पुत्रं दीर्घतमसम् । 'सामन्तेयं' इति पाठः । ४ 'गुरुमायिना' इति वीर० पाठः । ५ लोकपालेभ्योऽप्या
सम्यक् ख्यातिर्यत्र इति चक्र० । ६ प्राणात् बलहेतुकाच्छौर्यात् ।

वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नाः सन्तो मरुतो भरद्वाजं नाम पुत्रमुपाददुः समर्पयामासुः ॥ ३५ ॥ मरुतां भरद्वाजागमप्रकारं प्रदर्शयन्नाह—अन्तर्वत्न्यामिति चतुर्भिः—अन्तर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां चौर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिस्तदा द्वितीयगर्भस्यावकाशाभावादाक्रोशपूर्वकं गर्भस्थेन वारितस्ततः क्रुद्धो बृहस्पतिरन्धो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिञ्चत्ततो बृहस्पतेः शापाद्गर्भस्थो दीर्घतमा अन्धो बभूव तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निःसारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥ ३६ ॥ तं च परवीर्यजं भर्तुस्त्यागाद्विशङ्कितां सती त्यक्तुकामां ममतां प्रति सुरा एनं बृहस्पतेर्ममतायाश्च विवादरूपं श्लोकं जगुः । किमर्थं जगुरत आह—तस्य नाम निरुच्यते येन तत् । तन्नामनिर्वचनेनैव भर्तुस्त्यागशङ्कामपाकर्तुमित्यर्थः ॥ ३७ ॥ तत्र पुत्रं त्यक्त्वा यान्ती ममतां बृहस्पतिराह—हे मूढे, इमं पुत्रं भर पुषाण । भर्तुर्बिभेमीति चेत्तत्राह—द्वाजमेकस्य क्षेत्रेऽन्यस्य बीजादित्येवं द्वाभ्यां जातम्, अतस्तस्याप्ययं पुत्र इति न तस्माद्भयशङ्केत्यर्थः। एवमुक्ता सती तं प्रत्याह—हे बृहस्पते, त्वमिमं भर । यतो

तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥ अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥ तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् ॥ नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥ ३७ ॥ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे विंशोऽध्यायः ॥ २० ॥

॥ श्रीशुक उवाच ॥ वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ॥ महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥ १ ॥ गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ॥ रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥ ॥ ॥

द्वाभ्यामावाभ्यामन्यायतो जातम् । अतो नाहमेकाकिनी भरामीत्यर्थः । यद्यस्मादेवमुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाज इति । पाठान्तरे[2] यस्य त्यागदुःखात्पितरौ यातावित्यर्थः ॥ ३८ ॥ वितथं व्यभिचारसंभवात्तमात्मजं वितथं निरर्थकं मत्वा ममता व्यसृजत्तत्याज । पाठान्तरे[3] आदिजं प्रथमजं भर्तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः । एवं तया त्यक्तं मरुतोऽबिभ्रन्नबिभरुः । तदेवं मरुद्भिः प्राप्तोऽयं भरतस्यान्वये वितथे सति दत्तः ॥ ३९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां विंशोऽध्यायः ॥ २० ॥

एकविंशे तु दौष्यन्तेः सुतस्यान्वय उच्यते ॥ रन्तिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ १ ॥ भरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञो भरद्वाजः । स च ब्राह्मणोपि भरतस्य दत्तः पुत्रो जात इति तद्वंशोऽनुक्रम्यते । वितथस्य सुतो मन्युस्तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाः पञ्च पुत्रा बभूवुः ॥ १ ॥ २ ॥ ॥

१ 'सुतान्मन्योः' इति पाठस्तत्र तत इत्यनन्वितम् । २ 'यातौ यद्दुःखात्पितरौ' इत्येवरूपे । ३ पाठान्तरे आदितर प्रथमजमिति टीकापाठस्तत्र 'मत्वादितरमात्मजम्' । इति वीरराघवीयः पाठो बोध्यः । 'आदिजम्' इति पाठे तु 'मत्वा चादिजमात्मजम्' इति सिद्धां० पाठो ग्राह्यः ।

वियद्वित्तस्य वियतो गगनादिवोद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य । यद्वा वियद्व्ययं प्राप्नुवद्वित्तं भोग्यं यस्य । तदेवाह—बुभुक्षतोऽपि सतो लब्धं लब्धं ददतः । तत्प्रपञ्चयति—निष्किंचनस्येत्यादिसार्धैः पञ्चदशभिः ॥ ३ ॥ अपिबतो जलपानमप्यकुर्वतः । घृतादित्रयाणां द्वन्द्वैक्यम् । तोयं च ॥ ४ ॥ ५ ॥ ॥ ६ ॥ अथान्यो वृषलोऽतिथिरागमत् । विभक्तस्य कुटुम्बार्थमन्नादिकं विभक्तवतः ॥ ७ ॥ सगणाय श्वयूथसहिताय ॥ ८ ॥ ९ ॥ उच्छेषमुर्वरितम् । एकमेव तर्पयतीति तथा ॥ १० ॥ ११ ॥ परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयं भोक्तुमाशास्ते—नेति । अणिमाद्यष्टसमृद्धियुक्तां गतिमपि मोक्षमपि चाहं

वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ॥ निष्किंचनस्य धीरस्य सकुटुम्बस्य सीदतः ॥३॥ व्यतीयुरष्टचत्वारिंशद्-
हान्यपिबतः किल ॥ घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥४॥ कृच्छ्र[1]प्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ॥ अतिथि-
र्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥५॥ तस्मै संव्यभजत्सोऽन्नमादृत्य श्रद्धयान्वितः ॥ हरिं सर्वत्र संपश्यन्स भुक्त्वा
प्रययौ द्विजः ॥ ६ ॥ अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ॥ विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥ याते
शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ॥ राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥ स आदृत्याव[2]शिष्टं यद्बहुमान-
पुरस्कृतम् ॥ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ॥ पास्यतः
पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥ तस्य तां करुणां वाचं निशम्य विपुलश्रमाम् ॥ कृपया भृशसंतप्त इद-
माहामृतं वचः ॥ ११ ॥ न कामयेऽहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा ॥ आर्तिं प्रपद्येऽखिलदेहभाजाम-
न्तःस्थितो येन भवन्त्यदुःखाः ॥१२॥ क्षुत्तृट्[3]श्रमो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः ॥ सर्वे निवृत्ताः कृप-
णस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे[4] ॥ १३ ॥ इति प्रभाष्य[5] पानीयं म्रियमाणः पिपासया ॥ पुल्कसायाददाद्धीरो[6]
निसर्गकरुणो नृपः ॥ १४ ॥ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ॥ आत्मानं दर्शयांचक्रुर्माया[7] विष्णुवि-
निर्मिताः ॥ १५ ॥ स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः ॥ वासुदेवे भगवति भक्त्या चक्रे नमः परम् ॥ १६ ॥

न कामये । तर्हि किं कामयसे तदाह—अखिलदेहभाजामार्तिं दुःखं तत्तद्भोक्तृरूपेणान्तःस्थितः सन्नहं प्रपद्ये प्राप्नुयामित्येवं कामये । येन तद्दुःखभोक्त्रा मया हेतुभूतेन ते सर्वेऽदुःखा भवन्ति ॥ १२ ॥ ननु दुःखं किमिति प्रार्थयसे । परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तिरित्याह—क्षुत्तृडिति । कृपणस्य जन्तोर्जीवनहेतोर्जलस्यार्पणान्मे सर्वे क्षुत्तृडादयो निवृत्ताः ॥ १३ ॥ इत्येवं प्रभाष्य ॥ १४ ॥ त्रिभुवनाधीशा ब्रह्मादयः । मायास्तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीताः सन्त इत्यर्थः ॥ १५ ॥ परं केवलं वासुदेवे भक्त्या नमश्चक्रे नतु तान्किमपि याचितवान् ॥ १६ ॥ ॥ ॥

१ कृच्छ्रं क्लेशं प्राप्तं कुटुम्बं यस्य । २ 'आतिथ्यावशिष्टं' इति वीर० पाठः । ३ श्रमो मानस आयासः । गात्रपरिश्रमः शारीर आयासः । क्लमो ग्लानिः । ४ 'जीवकलार्पणेन' इति पाठे प्राणदानेनेत्यर्थः । ५ 'एवं सभाष्य' इति पाठः । ६ 'अददाद्वीरः' इति पाठः । ७ 'माया विष्णुविनिर्मिताम्' इति वीर० पाठः ।

अनन्यराधस ईश्वरातिरिक्तफलान्तरानपेक्षस्य । प्रत्यलीयतात्मन्येव लीना बभूव ॥ १७ ॥ १८ ॥ मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्यैव गर्गस्य वंशमाह— गर्गादिति । महावीर्यस्य वंशमाह—दुरितक्षयस्तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः ॥ १९ ॥ कथंभूताः—ये अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गतास्ते । मन्युपुत्राणां पञ्चानां ज्येष्ठस्य वंशमाह—बृहत्क्षत्रस्येति । यद्येन हस्तिनापुरं कृतमित्यर्थः ॥ २० ॥ अजमीढादयस्त्रयो हस्तिनः पुत्राः ॥२१॥ अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाभवत् ॥ २२ ॥ २३ ॥ पारस्य तनयो नीपः । नीपस्य पुत्रशतम् ॥ २४ ॥ स एव कृत्व्यां कृत्वीसंज्ञायां शुककन्यायां ब्रह्मदत्तं च जनयामास । तदुक्तं हरिवंशादिषु—'पराशरकुलोत्पन्नः शुको नाम महायशाः ॥ व्यासादरण्यां संभूतो विधूमोऽग्निरिवोज्ज्वलन् ॥ स तस्यां

ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः ॥ माया गुणमयी राजन्स्वप्नवत्प्रत्यलीयत ॥१७॥ तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ॥ अभवन्योगिनः सर्वे नारायणपरायणाः ॥१८॥ गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत ॥ दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः ॥१९॥ पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ बृहत्क्षत्रस्य[2] पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम् ॥२०॥ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥ अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ॥ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥२२॥ तत्सुतो विशदस्तस्य सेनजित्समजायत ॥ रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥ रुचिराश्वसुतः[3] पारः पृथुसेनस्तदात्मजः ॥ पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥२४॥ स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ स योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् ॥ २५ ॥ जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ उदक्स्वनस्ततस्तस्माद्भल्लादो बार्हदीषवाः ॥२६॥ यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ॥ नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥२७॥ सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः ॥ कृतिर्हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥ २८ ॥ संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ॥ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुंजयः ॥ २९ ॥ ॥ ॥

पितृकन्यायां वीरिण्यां जनयिष्यति ॥ कृष्णं गौरप्रभं शंभुं तथा भूरिश्रुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च ॥' इति । यद्यपि शुक उत्पत्त्यैव विमुक्तसङ्गो निर्गतस्तथापि विरहातुरं व्यासमनुयान्तं दृष्ट्वा छायाशुकं निर्माय गतवांस्तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्यविरोधः । स ब्रह्मदत्तो योगी । गवि वाचि सरस्वत्याम् ॥ २५ ॥ स एव योगतन्त्रं चकार । बार्हदीषवा बृहदिषोर्वंश्या इमे, दीर्घत्वमार्षम् ॥ २६ ॥ सुपार्श्वकृत्सुपार्श्वस्य पिता ॥ २७ ॥ प्राच्यसाम्नां षट्संहिता जगौ विभज्याध्यापितवान् ॥ २८ ॥ २९ ॥ ॥ ॥ ॥

१ अत्र स एवेत्यनेन नीपस्य पुत्रो ब्रह्मदत्तः सिद्धः । अत्र अणुहस्य महिषीत्युक्त । हरिवंशे तु अणुहो नीपात्सप्तमस्तत्पुत्रो ब्रह्मदत्त इति विरोधः । २ 'बृहत्क्षत्रात्सुहोत्रोऽभूत्' इति पाठः । ३ रुचिराश्वसुतः पृथुसेनस्तदात्मजः पार इति केचित् । अन्ये च पारस्यैकः पुत्रः पृथुसेनः, अपरो नीप इति व्याचक्षते । तत्राद्ये पारस्य तनयो नीपः इत्यनुपयुक्तं व्याख्यानं, द्वितीये च पारस्यैवान्यस्तनय इति वक्तव्ये पारस्य तनय इत्ययुक्तं । 'रुचिराश्वसुतः प्राज्ञः पृथुसेनस्तदात्मजः ॥ पारस्तत्तनयो नीपः' इति पाठ एव युक्तः श्रीधरसम्मतश्च ।

अजमीढस्य वंश्याः प्रियमेधादयः केचिद्ब्राह्मणा बभूवुर्बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम् । तस्यैव वंशान्तरमाह—नलिन्यामिति यावत्समाप्ति ॥ ३० ॥ ॥ ३१ ॥ मुद्गल एको यवीनरादयश्चत्वार इत्येवं पञ्च ॥ ३२ ॥ ३३ ॥ भार्म्याद्भर्म्याश्वपुत्रात् मिथुनं चाभूत् । तदेवाह—दिवोदासः पुमानहल्या च कन्यकेति ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां एकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥

ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्य नीलः शान्तिः सुतस्ततः ॥ ३० ॥ शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्य पञ्चासन्मुद्गलादयः ॥ ३१ ॥ यवीनरो बृहदिषुः[1] काम्पिल्यः संजयः सुताः ॥ भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥ ३२ ॥ विषयाणामलमिमे इति पञ्चालसंज्ञिताः ॥ मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥ ३३ ॥ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ॥ अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥ ३४ ॥ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतो[2] यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥ शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् ॥ तद्दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ॥ कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे एकविंशतितमोऽध्यायः ॥ २१ ॥

॥ श्रीशुक उवाच ॥ मित्रेयुश्च[3] दिवोदासाच्च्यवनस्तत्सुतो नृप ॥ सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥ तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः ॥ द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥ धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पञ्चालका इमे ॥ योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥ ४ ॥ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती ॥ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥ कुशाम्बमत्स्यप्रत्यग्रचेदिपाद्याश्च[4] चेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥ जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ॥ अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥ ॥ ॥ ॥

द्वाविंशे तु दिवोदासवंशमुक्त्वाथ वर्णिताः ॥ ऋक्षवंशे जरासन्धपार्थदुर्योधनादयः ॥ १ ॥ १ ॥ तस्य सोमकस्य पुत्राणां शतं बभूव । तेषां जन्तुर्ज्येष्ठो यवीयान्पृषतः ॥ २ ॥ अजमीढस्यैव वंशान्तरमाह—य इति । ततः संवरणात्कुरुः ॥ ३ ॥ ४ ॥ तस्य कृतिनः उपरिचरो वसुः । ततो वसोः बृहद्रथो मुखमादिर्येषाम् ॥ ५ ॥ तानेवाह—कुशाम्बेति । तत्सुतः पुष्पवान् जज्ञे । तस्यापत्यं सत्यहित इति योज्यम् ॥ ६ ॥ ७ ॥ ॥ ॥

१ 'बृहद्धनुः' इति पाठः । २ उर्वश्या दर्शनात् हेतोर्यस्माच्छरद्वतो रेतः शरस्तम्बे अश्ववालस्तम्बे न्यपतत् अतः स शरद्वान्नामा बभूवेत्यर्थः इति वीर० । ३ 'मित्रायुः' इति प्रचुरः पाठः । ४ 'कुसुम्भमत्स्य' इति वीर० पाठः ।

जरया राक्षस्या ॥ ८ ॥ यद्यस्मात्सोमापेः श्रुतश्रवाः कुरोः पुत्रः परीक्षिदनपत्यः । जाह्नवो जह्नोः पुत्रः ॥ ९ ॥ अतो राधिकादयुतोऽभूदित्यर्थः ॥ १० ॥ ॥ ११ ॥ तस्य प्रतीपस्य देवापिशन्तनुबाह्लीकाः ॥ १२ ॥ प्राक् पूर्वजन्मनि महाभिष इति संज्ञा यस्य सः ॥ १३ ॥ यदा देवो न ववर्ष तदा शन्तनुस्तत्र कारणं ब्राह्मणान्पप्रच्छ ॥ १४ ॥ ब्राह्मणैश्चैवमुक्तः—'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥ परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥' इति स्मृतेर्योऽग्रभुक् सुत्वमग्रतो भुनक्ति अयं त्वादृशोऽपि परिवेत्तैव भवति । अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्येवमुक्तः शन्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास



ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥ जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत्सुतः ॥८॥ ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥९॥ ततो विदूरथस्तस्मात्सार्वभौमस्ततोऽभवत् ॥ जयसेनस्तत्तनयो राधिकोऽतोऽयुतो ह्यभूत् ॥ १० ॥ ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ॥ ऋष्यस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः ॥११॥ देवापिः शन्तनुस्तस्य बाह्लीक इति चात्मजाः ॥ पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥ १२ ॥ अभवच्छन्तनू राजा प्राङ्महाभिषसंज्ञितः ॥ यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥ शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ॥ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥१४॥ शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक्[2] ॥ राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥१५॥ एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ॥ तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो[3] गिरा ॥ १६ ॥ वेदवादातिवादान्वै तदा देवो ववर्ष ह ॥ देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥ शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् ॥ सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ १९ ॥ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः ॥ २० ॥ ॥ ॥

राज्ञः प्रजापालनादिः परो धर्मोऽतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततः पूर्वमेव तस्य मन्त्रिणा अश्मरावसंज्ञेन देवापिं पाखण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाखण्डमताश्रयया गिरा वेदाद्विभ्रंशितः सन्, वेदवादस्यातिवादान्निन्दावचनानि सोऽब्रवीत्, ततस्तस्य पतितत्वेन राज्यानर्हत्वे जाते शन्तनोर्दोषाभावाद्देवो ववर्षेत्यर्थः ॥१५॥१६॥१७॥ ततः सोमदत्ताद्भूरिर्भूरिश्रवाः शलश्चेति त्रयः ॥१८॥१९॥ रामो जामदग्न्यः । दाशकन्यायामिति । उपरिचरस्य वसोर्वीर्येण मत्स्यगर्भादुत्पन्ना दाशैः कैवर्तैः पालिताऽतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥ २० ॥ ॥ ॥ ॥ ॥



१ परिवेत्तैवेति राज्ञः भुवोऽपि दारत्वादग्रजे स्थिते दारसयोगकर्तृत्वादिति भावः । २ 'त्वमग्रभुक्' इति वीर० पाठः । ३ तन्मन्त्रिभिरित्यत्र ततो निह्नुत्येति ज्ञेयम् इति क्रम० ।

नाम्ना तत्समाननाम्ना चित्राङ्गदेन गन्धर्वेण युद्धे हतः । यस्यां सत्यवत्यां शन्तनुपरिग्रहात्पूर्वमेव ॥ २१ ॥ वेदा गुप्ता येन । यतोऽहं जात इदं भागवतं चाध्यगाममधिगतवानस्मि ॥ २२ ॥ २३ ॥ स्वयंवराद्भीष्मेण बलादुपानीते ॥ २४ ॥ मात्रा सत्यवत्योक्त इति निषेधाभावमाह—'अपतिरपत्यलिप्सुर्देवराद्गुरुप्रयुक्ता ऋतुमतीयात्' इत्यादिवचनात् ॥ २५ ॥ दुःशला नाम कन्या च जज्ञे ॥ २६ ॥ अरण्ये मृगशापान्मैथुनेन रुद्धस्य प्रतिबद्धस्य ॥ २७ ॥ नासत्यदस्राभ्या-

विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः ॥ यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥ २१ ॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः ॥ २२ ॥ मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ विचित्रवीर्योऽथोवाह काशिराजसुते बलात् ॥२३॥ स्वयंवरादुपानीते अम्बिकाम्बालिके उभे ॥ तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ॥ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥२५॥ गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ॥ तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥ शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ॥ जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥ नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ॥ द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥ युधिष्ठिरात्प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥ सहदेवसुतो राजन् श्रुतकर्मा तथापरे ॥ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥ भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः ॥ सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती[2] ॥ ३१ ॥ करेणुमत्यां नकुलो निरमित्रं तथार्जुनः ॥ इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ मणि[3]पूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥ तव तातः सुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥ ३४ ॥ तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥ ३५ ॥ ॥

मश्विनीकुमाराभ्याम् । पञ्चभ्यो युधिष्ठिरादिभ्यः पञ्चाभवन् ॥ २८ ॥ २९ ॥ तथापरे भार्यान्तरेषु ॥ ३० ॥ काली चान्या भीमस्य भार्या तस्यां ततो भीमसेनात्सर्वगतो नाम पुत्रोऽभवदित्यर्थः ॥ ३१ ॥ उलूप्यां नागकन्यायाम् । मणिपूरपतेः सुतायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनमसूत । अतस्तत्पुत्रः सन्नपि स पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ॥ ॥

१ समासान्तविधेरनित्यत्वान्नासिच् । २ पार्वती पर्वतकन्या । ३ 'मणलूरपतेः' इति वीर० पाठः । ४ 'अभ्रातृका प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्या यो जायते पुत्रः स मे पुत्रो भविष्यति ॥' इति भाषाबन्धेन कन्यादानं पुत्रिकाधर्मः ।

॥ ३६ ॥ तुरसंज्ञं पुरोहितं कृत्वा ॥३७॥ भविष्यानाह—तस्य पुत्र इति यावत्समाप्ति । याज्ञवल्क्यात्क्रियाज्ञानं परं चात्मानं शौनकात्प्राप्स्यत्यस्त्रज्ञानं च कृपाचार्यादिति द्रष्टव्यम् । याज्ञवल्क्यात्त्रयीमधीत्य कृपादस्त्राण्यवाप्येति वैष्णवोक्तेः । क्वचित्तु—'अस्त्रज्ञानं कृपाचार्यात्' इत्येव पाठः ॥३८॥३९॥४०॥ यद्यस्मात्सुखीनलः पुत्रः ॥ ४१ ॥ तस्मात्परिप्लवात्सुनयस्तस्यात्मजो मेधावीत्यर्थः ॥ ४२ ॥ तस्मात्सुदासस्ततः शतानीक इत्यर्थः ॥४३॥४४॥४५॥ बृहद्रथस्य जरासन्धस्तस्य

जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ सर्पान्वै सर्पयागाग्नौ स होष्यति रुषान्वितः ॥ ३६ ॥ कावषेयं पुरोधाय तुरं तुरगमेधयाट् ॥ समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥ तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन् ॥ अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ॥ ३९ ॥ गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात्कविरथः सुतः ॥ ४० ॥ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥ ४१ ॥ परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ नृपंजयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति[1] ॥ ४२ ॥ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ शतानीकाद्दुर्दमनस्तस्यापत्यं वहीनरः ॥ ४३ ॥ दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥ क्षेमकं प्राप्य राजानं संस्थां[2] प्राप्स्यति वै कलौ ॥ अथ मागधराजानो भवितारो वदामि ते ॥ ४५ ॥ भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ॥ ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥ सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित् ॥ ततः सृतंजयाद्विप्रः शुचिस्तस्य भविष्यति ॥ ४७ ॥ क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः[3] शमस्ततः ॥ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ४८ ॥ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुंजयः ॥ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥४९॥ ॥ इति श्रीम० म० पु० न० द्वाविंशोऽध्यायः ॥२२॥

॥ श्रीशुक उवाच ॥ अनोः सभानरश्चक्षुः परोक्षश्च त्रयः सुताः ॥ सभानरात्कालनरः सृंजयस्तत्सुतस्ततः ॥ १ ॥

सहदेवस्तस्य मार्जारिः । यस्मान्मार्जारेः श्रुतश्रवाः ॥४६॥४७॥४८॥ सहस्रसंवत्सरमेते भाव्या भूपालास्ततः परं भाव्यान् द्वादशस्कन्धे वक्ष्यति ॥४९॥ ॥ इति श्रीमद्भा० म० पु० नवमस्कन्धे भावार्थदीपिकायां टीकायां द्वाविंशोऽध्यायः ॥२२॥ ॥ त्रयोविंशे त्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ॥ यदोश्च वंशोऽनुक्रान्तो यावज्ज्यामघसंभवः ॥ १ ॥ तदेवं ययातेः पुत्राणां पञ्चमस्य पूरोर्वंशोऽनुक्रान्तः, इदानीं चतुर्थस्य वंशमनुक्रामति—अनोरिति कर्णस्य जगतीपतेरित्यन्तेन ॥१॥

१ 'दूर्वो निमिस्तस्मात्' इति पाठः । २ सस्थामवसानम् । ३ 'धर्मनेत्रः' इति पाठः ।

तस्य जनमेजयस्य महाशीलस्तस्य महामनाः ॥ २ ॥ चत्वार उशीनरात्मजाः । सन्धिरार्षः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ॥ उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥२॥ शिबिर्वनः शमिर्दक्ष-श्चत्वारोशीनरात्मजाः ॥ वृषादर्भः सुवीरश्च मद्रः कैकेय[1] आत्मजाः ॥३॥ शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ॥ ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥४॥ अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसंज्ञिताः ॥ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे[2] महीक्षितः ॥५॥ चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्य[3]कांश्च ते ॥ खनपानोऽङ्गतो जज्ञे तस्माद्दिविरथ-स्ततः ॥६॥ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ॥ रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥७॥ शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग[4] उवाह ताम् ॥ देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम्[5] ॥८॥ नाट्यसङ्गीतवादित्रैर्विभ्र-मालिङ्गनार्हणैः॥स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः॥९॥ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ॥ चतुरङ्गो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥ १० ॥ बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ॥ आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥११॥ विजयस्तस्य संभूत्यां ततो धृतिरजायत ॥ ततो धृतव्रतस्तस्य सत्कर्माधिरथस्ततः ॥१२॥ योऽसौ गङ्गातटे क्रीडन्मञ्जूषान्तर्गतं शिशुम् ॥ कुन्त्यापविद्धं कानीनमनपत्योऽकरोत्सुतम् ॥ १३ ॥ वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः ॥ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ १४ ॥ आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः ॥ धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम् ॥१५॥ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ तुर्व-सोश्च सुतो वह्निर्वह्नेर्भर्गो[9]ऽथ भानुमान् ॥ १६ ॥ त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ॥ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरव[10]मन्वभूत् ॥१७॥ दुष्यन्तः स पुनर्भेजे स्वं वंशं राज्य[11]कामुकः ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥१८॥ वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥ ॥ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ स दुष्यन्तः स्वं वंशं पौरवं वंशम् ॥ १८ ॥ १९ ॥ ॥ ॥ ॥

१ 'कैकयः' 'केकयः' इति पाठौ । २ क्षेत्रे भार्यायाम् । महीक्षित इत्यनेन ब्राह्मणकुलं व्यावर्तयति । ३ प्राच्यकान् भरतवर्षस्य पूर्वदिग्वर्तिनः इति चक्र० । ४ ऋष्यस्य सारङ्गस्य शृङ्गमिव शृङ्गं यस्य । ५ हरिणीसुतं विभाण्डकाद्धरिण्यामुत्पन्नम् । ६ आद्याद्बृहद्रथात् । ७ अपविद्धं लज्जया त्यक्तम् । ८ द्रुह्योर्ययातिपुत्रस्य । ९ 'भार्गः' इति क्वचित्पाठः । १० पुरुवंशे जातं दुष्यन्तमेव पुत्रमन्वभूदमन्यत स्वीकृतवान् । ११ राज्यकामुक इति पुरुवंश्यानामेव नृपासनाधिकारात् ।

॥ २० ॥ प्रथमस्य सहस्रजित आत्मजः ॥ २१ ॥ कुन्तेः सोहञ्जिः, सोहञ्जेर्महिष्मान्, महिष्मतो भद्रसेनकः ॥२२॥ भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ । कृतवीर्यस्य जनकः । कृतवीर्यादयश्चत्वारो धनकस्यात्मजा इत्यर्थः ॥२३॥२४॥२५॥ अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य सः । अक्षय्यं षड्सु षडिन्द्रियविषयं बुभुजे ॥२६॥२७॥ और्वस्य तेजसा सगरेणोपसंहृतमित्यर्थः ॥२८॥ तेषां तालजङ्घपुत्राणां ज्येष्ठः । तस्य मधोः पुत्रशतम् । वृष्णिर्ज्येष्ठो यस्मिन् । यतो मधो-

यत्रावतीर्णो भगवान्परमात्मा नराकृतिः ॥ यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः ॥ २० ॥ चत्वारः सूनव-
स्तत्र शतजित्प्रथमात्मजः ॥ महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥२१॥ धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता
ततः ॥ सोहञ्जिरभवत्कुन्तेर्महिष्मान्भद्रसेनकः ॥२२॥ दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ॥ कृताग्निः कृतवर्मा
च कृतौजा धनकात्मजाः ॥२३॥ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः
॥२४॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २५ ॥ पञ्चाशीति-
सहस्राणि ह्यव्याहतबलः समाः ॥ अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २६ ॥ तस्य पुत्रसहस्रेषु पञ्चैवोर्व-
रिता मृधे ॥ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥ जयध्वजात्तालजङ्घस्तस्य पुत्रशतं त्वभूत् ॥ क्षत्रं
यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् ॥ २८ ॥ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ तस्य पुत्रशतं
त्वासीद्वृष्णिज्येष्ठं यतः कुलम् ॥ २९ ॥ माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः ॥ यदुपुत्रस्य च क्रोष्टोः पुत्रो
वृजिनवांस्ततः ॥३०॥ श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः ॥ शशबिन्दुर्महायोगी महाभोजो महानभूत् ॥३१॥
चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥३२॥ दशलक्षसहस्राणि पुत्राणां
तास्वजीजनत् ॥ तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥३३॥ धर्मो नामोशना तस्य हयमेधशतस्य याट् ॥
तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ॥ ३४ ॥ ॥ ॥ ॥

वृष्णेर्यदोश्च हेतोरिदं कुलम् ॥२९॥३०॥३१॥ चतुर्दशमहारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः । तानि च मार्कण्डेयपुराणे वर्णितानि—'गजवाजिरथस्त्रीषु निधिमाल्याम्बरद्रुमाः ॥ शक्तिपाशमणिच्छत्रविमानानि चतुर्दश ॥' इति । दशानां पत्नीसहस्राणां भार्यायुतस्य प्रत्येकं लक्षं लक्षमित्येवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास ॥ ३२ ॥ पृथुश्रवाः पृथुकीर्तिः पृथुयशा इत्यादयः षट्प्रधानाः श्रेष्ठा येषां तेषां मध्ये ॥ ३३ ॥ पञ्च आत्मजा आसंस्तान् शृणु ॥ ३४ ॥ ॥ ॥३४॥

१ और्वतेजसा रक्षितत्वात्तच्छिष्यत्वादौर्वतेजःशब्देन सगरो गृहीतः । सर्वमिदमेतत्स्कन्धस्याष्टमेऽध्याये सगरोत्पत्तिप्रकरणेऽनुसन्धेयम् । २ अनष्टं नष्टमपि पुनर्लब्धं वित्तं येन तथाविधं स्मरणं यस्य । तथोक्तम्—'हैहयानां महाराजः कार्तवीर्येति विश्रुतः । यस्य स्मरणमात्रेण हृतं नष्टं च लभ्यते ॥' इति सिद्धां० ॥

तानेवाह—पुरुजिदिति । भार्याभयादेनैकभार्यस्य वन्ध्यापतेर्ज्यामघस्यापुत्रस्य तद्भयमेव पुत्रप्रदमभवदिति दर्शयन्नाह—ज्यामघस्त्विति ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ यदि मे सपत्नी स्यात्तर्हि स्नुषेयं युज्येतापि, न त्वेतदस्तीत्याह—असपत्नी चेति । अतिभयव्याकुल आह—जनयिष्यतीति ॥ ३८ ॥ भार्याभयप्रकम्पमानखिन्नसर्वाङ्गस्य राज्ञः प्राणसंकटमालोक्यानुकम्पितास्तेन पूर्वं बहुकालमाराधिताश्च विश्वेदेवाः पितरश्च तथेत्यन्वमोदन्त । ततश्च देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तगुणेन च निवृत्तरजस्कापि शैव्या गर्भमधात् । तस्य च महिमा पराशरादिभिरुक्तः । यथोक्तम्—'भार्यावश्यास्तु ये केचि-

पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ॥ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैव्यापतिर्भयात् ॥ ३५ ॥ नाविन्दच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ॥ रथस्थां तां निरीक्ष्याह शैव्या पतिममर्षिता ॥ ३६ ॥ केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥ ३७ ॥ अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ॥ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ ३८ ॥ अन्वमोदन्त तद्विश्वेदेवाः पितर एव च ॥ शैव्या गर्भमधात्काले कुमारं सुषुवे शुभम् ॥ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे यदुवंशानुवर्णने त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥श्रीशुक उवाच॥ तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ ॥ तृतीयं रोमपादं च विदर्भकुलनन्दनम् ॥ १ ॥ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ॥ उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृप ॥ २ ॥ क्रथस्य कुन्तिः पुत्रोऽभूद्वृष्टिस्तस्याथ निर्वृतिः ॥ ततो दशार्हो नाम्नाभूत्तस्य व्योमः सुतस्ततः ॥ ३ ॥ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ॥ ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥ करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥ पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ॥ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ ६ ॥ सात्वतस्य सुताः सप्त महाभोजश्च मारिष ॥ भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च ॥ ७ ॥ ॥ ॥

द्भविष्यन्त्यथ वा मृताः ॥ तेषां तु ज्यामघः श्रेष्ठः शैव्यापतिरभून्नृपः ॥' इति ॥ ३९ ॥ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे भावार्थदीपिकायां टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ॥ वंशा नानामुखाः प्रोक्ता रामकृष्णोद्भवावधि ॥ १ ॥ १ ॥ चैद्यादयो दमघोषादयः ॥ २ ॥ ३ ॥ ततो दशरथाच्छकुनिः पुराणान्तरादेवमादिविशेषो द्रष्टव्यः ॥ ४ ॥ ततः कुरुवशादनुः । अनोः पुत्रः पुरुहोत्रः ॥ ५ ॥ ॥ ६ ॥ महाभोजश्चेत्येवं सप्त । मारिष हे आर्य ॥ ७ ॥ ॥ ॥ ॥ ॥

१ 'मखसञ्ज्ञितः' इति पाठः । २ 'क्रतुः' इति पाठः । ३ क्रथस्य विदर्भपुत्रस्य । ४ 'धृष्णिः' इति पाठः । ५ 'ककुरकस्ततः' इति पाठः ।

॥ ८ ॥ ९ ॥ ततस्तदुपदेशेन ये पञ्चपष्ट्यादिसंख्याः पुरुषास्तेऽमृतत्वं मोक्षं प्राप्ताः ॥ १० ॥ ११ ॥ तस्य युधाजितः शिनिरनमित्रश्च ॥ १२ ॥ १३ ॥ सत्यकस्य पुत्रो युयुधानस्तस्य जयस्तस्य कुणिस्ततः कुणेर्युगन्धरः । अनमित्रस्यैवापरो वृष्णिर्नाम पुत्रः ॥ १४ ॥ अक्रूरः प्रमुखो येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ १५ ॥ अतोऽक्रूरातिरिक्तान् द्वादश दर्शयति—आसङ्ग इति ॥ १६ ॥ १७ ॥ पृथुरेकः । विदूरथाद्या अन्ये च बहवः । विपृथुधामाद्या इति पाठे

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ॥ शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥८॥ बभ्रुर्देवावृधसुतस्तयोः[1] श्लोकौ पठन्त्यमू ॥ यथैव शृणुमो दूरात्सम्पश्यामस्तथान्तिकात् ॥९॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः[2] समः ॥ पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च ॥१०॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि[3] ॥ महाभोजोऽपि धर्मात्मा भोजा आसंस्तदन्वये ॥११॥ वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप ॥ शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥१२॥ सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ॥ अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः ॥१३॥ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥ युगन्धरोऽनमित्रस्य वृष्णिः[4] पुत्रोऽपरस्ततः ॥१४॥ श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः ॥ अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः ॥१५॥ आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥१६॥ शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश ॥ तेषां स्वसा सुचीराख्या[5] द्वावक्रूरसुतावपि ॥१७॥ देववानुपदेवश्च तथा चित्ररथात्मजाः ॥ पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः[6] ॥१८॥ कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ॥ कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥१९॥ कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ॥ अन्धको दुन्दुभिस्तस्य दरिद्योतः पुनर्वसुः ॥२०॥ तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ॥ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥ देववानुपदेवश्च सुदेवो देववर्धनः ॥ तेषां स्वसारः सप्तासन्धृतदेवादयो नृप ॥ २२ ॥ शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ॥ सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥ ॥

आद्यशब्देन विदूरथोऽप्युक्तस्ततश्च—'शूरो विदूरथादासीत्' इति वक्ष्यमाणनिर्देशोपपत्तिः ॥ १८ ॥ कुकुरादयश्चत्वारोऽन्धकस्य सुता इति ज्ञेयम् । तथा च पराशरः—'कुकुरभजमानशुचिकम्बलबर्हिषाख्यास्तथान्धकस्य पुत्राः' इति ॥ १९ ॥ अनोरन्धकोऽन्धकाद्दुन्दुभिरित्यपि तद्वचनादेव ज्ञेयम् ॥ २० ॥ २१ ॥ धृतदेवा आदिर्यासां शान्तिदेवादीनां षण्णां ताः सप्त ॥ २२ ॥ ताः सप्त ॥ २३ ॥ ॥ ॥ ॥ ॥

१ तयोः पितापुत्रयोः । २ 'देवापृथः' इति वीर० पाठः । ३ बभ्रोरिति बभ्रुदेवावृधयोः प्रभावादित्यर्थः । ४ 'पृश्निः' इति वीर० पाठः । ५ 'सुचाराख्या', 'सुवीराख्या' इति पाठौ । ६ वृष्णेरनमित्रपुत्रस्य नन्दनाः । वृष्णिवंशजा एते बहवः । विष्णुपुराणे त्वन्धकपुत्राः कुकुरादयो दृष्टाः ।

औग्रसेनय उग्रसेनस्य सुताः ॥ २४ ॥ वसुदेवस्य येऽनुजा देवभागादयस्तेषां स्त्रियो भार्याः ॥२५॥ अन्धकसुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तः, द्वितीयस्य भजमानस्य वंशमाह—शूरो विदूरथादिति । 'भजमानाच्च विदूरथः पुत्रोऽभूद्विदूरथाच्च शूरः' इति पराशरादिवचनात् । यद्वा पृथुर्विदूरथाद्याश्चेति पूर्वोक्तचित्ररथात्मजाद्विदूरथात् ॥ २६ ॥ देवमीढस्य यः शूरो नाम पुत्रस्तस्य । देवमीढो हृदीकस्यैव सुतः । यथाह पराशरः—'तस्यापि कृतवर्मशतधनुर्देवमीढुषाद्या बभूवुः । देवमीढुषस्य शूरस्यापि मारिषा नाम पत्न्यभवत्तस्यां चासौ दश पुत्रानजनयद्वसुदेवपूर्वान्' इति ॥ २७ ॥ २८ ॥ आनकाश्च नेदुः ॥ २९ ॥ हरेः

कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा ॥ राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका ॥ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥२५॥ शूरो विदूरथादासीद्भजमानः सुतस्ततः ॥ शिनिस्तस्मात्स्वयम्भोजो हृदीकस्तत्सुतो मतः ॥२६॥ देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ॥ देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥ तस्यां स जनयामास दश पुत्रानकल्मषान् ॥ वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥ सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम् ॥ देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥२९॥ वसुदेवं[1] हरेः स्थानं वदन्त्यानकदुन्दुभिम् ॥ पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥ राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः ॥ कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥ साऽऽप दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ॥ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिम्[2] ॥ ३२ ॥ तदैवोपागतं देवं वीक्ष्य विस्मितमानसा[3] ॥ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥३३॥ अमोघं दर्शनं देवि आधत्से त्वयि चात्मजम् ॥ योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥ इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ॥ सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥३५॥ तं सात्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ॥ प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥ ॥ ॥

प्रादुर्भावस्य स्थानम् ॥ ३० ॥ पृथायाः कन्यकावस्थायां कर्णोत्पत्तिप्रकारमाह—कुन्तेरिति[4] पञ्चभिः ॥ ३१ ॥ कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास, ततश्च सा तस्माद्देवहूतीं देवाह्वानहेतुं विद्यामवाप, तदाह—सापेति ॥ ३२ ॥ देवमुपागतं वीक्ष्य सा प्राह—प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता, नतु त्वया किंचित्कार्यमित्यभिसंधिना—अतो याहीति ॥ ३३ ॥ एवमुक्तो रविरुवाच—अमोघं दर्शनमिति । कन्याहमिति चेत्तत्राह—यथा योनिर्न दुष्येत तथाहं कर्ता करिष्यामि ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ॥ ॥ ॥

---

१ वसुदेवमिति 'सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः' इति शुद्धसत्त्वं वसुदेवाख्यम् । २ 'शुचिः' इति विज० पाठः । ३ 'विसयमानसा' इति पाठः । ४ कुन्तेरित्यर्धसहितैः पञ्चभिरित्यर्थः ।

श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ॥ यस्यामभूद्दन्तवक्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥ कैकेयो धृष्टकेतुश्च
श्रुतकीर्तिमविन्दत ॥ सन्तर्दनादयस्तस्यां पञ्चासन्कैकयाः सुताः ॥३८॥ राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह ॥
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥ शिशुपालः सुतस्तस्याः कथितस्तस्य संभवः ॥ देवभागस्य कंसायां
चित्रकेतुबृहद्बलौ ॥ ४० ॥ कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ॥ कङ्कायामानकाज्जातः सत्यजित्पुरुजित्तथा
॥४१॥ सृंजयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥ ४२ ॥ मिश्रकेश्या-
मप्सरसि वृकादीन्वत्सकस्तथा ॥ तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे ॥४३॥ सुमित्रार्जुनपालादीन् शमीकात्तु
सुदामिनी ॥ कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला ॥ देवकी-
प्रमुखा आसन्पत्न्य आनकदुन्दुभेः ॥ ४५ ॥ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृता-
दीनुदपादयत् ॥ ४६ ॥ सुभद्रो भद्रवाहश्च दुर्मदो भद्र एव च ॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥४७॥
नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ॥ कौशल्या केशिनं त्वेकमसूत कुलनन्दनम् ॥४८॥ रोचनायामतो जाता
हस्तहेमाङ्गदादयः ॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः ॥
शान्तिदेवात्मजा राजन् श्रमप्रतिश्रुतादयः ॥ ५० ॥ राजानः कल्पवर्षाद्या उपदेवासुता दश ॥ वसुहंससुवंशाद्याः
श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावादधे सहदेवया
॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ॥ ॥

नवभिः श्लोकार्धैः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ वसुदेवस्य पत्नीः पुत्रांश्चाह—पौरवीत्येकादशभिः ॥ ४५ ॥ ४६ ॥ ४७ ॥ कौशल्या भद्रा ॥ ४८ ॥
॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥ ॥३६॥

१ वैकुण्ठे ऋषिशप्तो जयो दितेः सुतः प्राक् हिरण्यकशिपुः सन्निदानीं दन्तवक्त्रोऽभूदित्यर्थः । २ 'जयत्सेनः' इति पाठः । ३ 'यरुकद्धात्तु कङ्कायाम्' इति पाठः । ४ 'वकादीन्' इति पाठः । ५ 'साल्वादीन्' इति पाठः । ६ 'आनकः' इति पाठः ।

॥ ५४ ॥ अष्टमस्तु स्वयमेवासीन्नतु कर्मादिना हेतुना ताभ्यां जनितो वा, यतोऽसौ हरिः ॥ ५५ ॥ तदेवोपपादयति—यदेति त्रिभिः ॥ ५६ ॥ ईशस्य मायानियन्तुः । परस्यासङ्गस्य । द्रष्टुः साक्षिणः । आत्मनः सर्वगस्य । नह्येवंभूतस्य मायाविनोदं विना जन्मनः कर्मणो वा हेतुः संभवतीत्यर्थः ॥ ५७ ॥ किंच यस्य मायाचेष्टितं पुंसो जीवस्यानुग्रहस्तस्य जीवानुग्राहकस्य कुतः कर्मादिपारतन्त्र्येण जन्मादिसंभवः । अनुग्रहमेवाह—हि यस्मात्तदेव स्थित्यादये इष्यते । प्रलये लीनोपाधेर्जीवस्य धर्माद्यसंभवात्कृपाधिसृष्ट्यादिना धर्मादिसंपादनेनानुग्रहः । तथात्मलाभाय मोक्षाय चेष्यते । तत्र हेतुः—तेनैव श्रूयमाणेन तस्य स्थित्यादेर्निवृत्तेः ॥ ५८ ॥ तस्य चेष्टितं भूमेरनुग्रह इत्याह—अक्षौहिणीनामिति द्वाभ्याम् । अभाराय भारपरिहाराय ॥ ५९ ॥ सुरेश्वरैरपि मनसाप्यप-

कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं संमर्दनं भद्रं संकर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत्स्वयमेव[1] हरिः[2] किल ॥ सुभद्रा च महाभागा तव राजन्पितामही ॥५५॥ यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥५६॥ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥ अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ॥ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥ कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ॥ सहसंकर्षणश्चक्रे भगवान्मधुसूदनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं[3] व्यतनोद्यशः ॥ ६१ ॥ यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितः शश्वत्कुरुसृंजयपाण्डुभिः ॥ ६३ ॥ स्निग्धसितेक्षितोदारैर्वाक्यैर्विक्रमलीलया[4] ॥ नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥ ॥ ॥ ॥ ॥

रिमेयाण्यवितर्क्याणि । संकर्षणसहितश्चक्रे ॥ ६० ॥ संकल्पमात्रेण भूभारहरणसमर्थस्यापि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह—कलाविति द्वाभ्याम् । दुःखशोकतमांसि नुदतीति तथा तद्यशो व्यतनोत् ॥ ६१ ॥ यस्मिन्सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवाञ्जलिः पानसाधनं यस्य स पुरुषः । सकृदप्युपस्पृश्याचमनमात्रं कृत्वा तत्सौन्दर्याकृष्टचित्तः कर्मवासनां धुनुते ॥ ६२ ॥ तदेवाह द्वाभ्याम् । भोजादिभिः श्लाघनीयमीहितं यस्य ॥ ६३ ॥ सर्वैरङ्गैः रम्यया मूर्त्या च ॥ ६४ ॥ ॥ ॥ ॥ ॥

१ स्वयमित्यनेन 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयं' इति प्रसिद्धं निश्चिनोति । २ हरत्याकर्षति वशीकरोति सर्वमिति हरिः पूर्णभगवान् । ३ 'स्वं पुण्यं' इति वीर० पाठः । ४ 'स्निग्धसितेक्षणोदारैर्वाक्यैर्विभ्रमलीलया' इति वीर० पाठः ।

तत्प्रदर्शनार्थं मुखशोभामाह[1] यस्याननं दशिभिर्नेत्रैः पिबन्त्यो नार्यो नराश्च न ततृपुर्न तृप्ताः । निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिताश्च बभूवुः । कथंभूतमाननम् । मकरकुण्डलाभ्यां चारू कर्णौ भ्राजन्तौ कपोलौ च तैः सुभगम् । सविलासो हासो यस्मिन् । नित्यमुत्सवो यस्मिन् ॥ ६५ ॥ श्रीकृष्णस्य चरितं समासतो वर्णयति—जात इति द्वाभ्याम् । जातो निजेन रूपेण पश्चात्पुरुषो मनुष्याकारः सन् व्रजं गतः । व्रजवासिनामेधिता अर्था

यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ॥ नित्योत्सवं न ततृपुर्दशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥६५॥ जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥६६॥ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामन्तःसमुत्थकलिना युधि भूपचम्वः ॥ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥६७॥ ॥ इति श्रीमद्भागवते महापुराणे वैयासिक्यां पारमहंस्यां संहितायामष्टादशसाहस्र्यां नवमस्कन्धे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥छ॥ ॥छ॥

॥ समाप्तश्चायं नवमः स्कन्धः ॥

येन तेषु दारेषु सुतानां शतान्युत्पाद्य । आत्मनिगमं स्वकीयं वेदमार्गम् ॥ ६६ ॥ अन्तःसमुत्थेन कलिना निमित्तेन गुरुभारं क्षपयन् दृष्ट्यैव भूपचमूर्विधूय विजये जयमर्जुनेन जितमित्येवमुद्घोषं कृत्वा परं तत्त्वमुद्धवायोपदिश्य स्वधाम सम्यक्स्वेनैव रूपेण जगामेति ॥ ६७ ॥ ॥ इति श्रीधरस्वामिविरचितायां श्रीमद्भागवतभावार्थदीपिकायां नवमस्कन्धटीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तश्चायं नवमः स्कन्धः ॥ ९ ॥

१ निमेषोन्मेषणकर्तृत्वेन तत्र स्थितं निमिराजं प्रतीत्यर्थः ।

॥ इति श्रीमद्भागवते नवमस्कन्धः समाप्तः ॥

अथ भागवतदशमस्कंधपूर्वार्धारंभः ॥

॥ श्रीगणेशाय नमः ॥ ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तत् ॥ १ ॥ दशमे दशमं लक्ष्यमाश्रिताश्रयवि-ग्रहम् ॥ क्रीडद्यदुकुलाम्भोधौ परानन्दमुदीर्यते ॥ २ ॥ दशमे कृष्णसत्कीर्तिवितानायानुवर्ण्यते ॥ धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥ ३ ॥ प्राक्कृ-तादिश्चतुर्धा यो निरोधः स तु वर्णितः ॥ तत्तत्प्रसङ्गतः सृष्टिसंहारादिनिरूपणैः ॥ ४ ॥ कृता नवतिरध्याया दशमे कृष्णकीर्तये ॥ आद्यैश्चतुर्भिरध्यायैर्ब्रह्मप्रा-र्थनयाऽवनेः ॥ भारं हर्तुं हरेर्जन्म सप्रसङ्गं निरूप्यते ॥ ५ ॥ गोकुले मथुरायां च द्वारवत्यां ततः क्रमात् ॥ कृष्णलीला त्रिधा प्रोक्ता तत्तद्भेदैस्त्वनेकधा ॥ ६ ॥ सपञ्चत्रिंशताऽध्यायैर्बृहद्वृन्दावनादिषु ॥ गोकुले वसतो लीला वर्ण्यते सुरदुष्करा ॥ ७ ॥ एकेन यमुनावारिण्यक्रूरेण कृता स्तुतिः ॥ एकादशभिरा-ख्याता लीला मधुवने कृता ॥ ८ ॥ शेषैर्द्वारवतीलीला तन्निर्माणादि वर्ण्यते ॥ एवं नवतिरध्याया दशमे विशदार्थकाः ॥ ९ ॥ तत्र तु प्रथमे कंसः स्वमृत्युं देवकीसुतात् ॥ श्रुत्वा भीतोऽवधीत्तस्याः षड्गर्भानिति वर्ण्यते ॥ १० ॥ कृष्णावतारचरितश्रवणामृतनिर्वृतः ॥ उक्तानुवादेनौत्सुक्याद्राजा पृच्छति तत्पुनः ॥

ॐनमो भगवते वासुदेवाय ॥ ॥ राजोवाच ॥ कथितो वंशविस्तारो भवता सोमसूर्ययोः ॥ राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥ यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ॥ तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥२॥ अवतीर्य यदोर्वंशे भगवान्भूतभावनः ॥ कृतवान्यानि विश्वात्मा तानि नो वद विस्तरात् ॥ ३ ॥ निवृत्ततर्षै-रुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् ॥ क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ॥४॥ पिता-महा मे समरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिङ्गिलैः ॥ दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन्वत्सपदं स यत्प्लवाः ॥५॥

॥ ११ ॥ कथितो वंशविस्तार इति ॥ १ ॥ अंशेनेति प्रतीत्यभिप्रायेणोक्तम् ॥ २ ॥ ननूक्तानि 'जातो गतः पितृगृहाद्व्रजमेधितार्थः' इत्यादिना, सत्यम्, पुनर्विस्तरेण वदेत्याह—अवतीर्येति ॥ ३ ॥ अत्र लोके त्रिविधा जनाः मुक्ता मुमुक्षवो विषयिणश्च, तेषां मध्येऽत्र न कस्याप्यलंप्रत्यय इत्याह—निवृत्ततर्षै-रिति । गततृष्णैर्मुक्तैरित्यर्थः । मुमुक्षूणामयमेवोपाय इत्याह—भवौषधादिति । विषयिणां परमो विषयोऽयमेवेत्याह—श्रोत्रमनोभिरामादिति । अपगता शुग्यस्मात्तमात्मानं हन्तीत्यपशुघ्नस्तस्मात्, पशुघातिन इति वा ॥ ४ ॥ किंचास्मत्कुलदैवतं कृष्णः, अतस्तत्कथैव नित्यं श्रोतव्येत्याशयेनाह—पितामहा इति । अमरान् जयन्ति ये तैर्देवव्रतो भीष्मस्तदाद्यैरतिरथैस्तिमिङ्गिलैस्तिमिङ्गिलतुल्यैर्दुरत्ययं वत्सपदमिवाल्पं कृत्वा तुच्छीकृत्यातरन्स । यः श्रीकृष्ण एव प्लवो येषां ते । तस्य वीर्याणि वदस्वेति तृतीयश्लोकगतेनान्वयः ॥ ५ ॥

१ विश्वसर्गेति । 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥' इति दश लक्षणानि लक्ष्यन्ते । तानि च यो विश्वसर्गविसर्गादिकर्ता स परमात्मा श्रीकृष्ण इत्येवंप्रकारेण दशमस्य आश्रयस्य सर्वाधारस्य परमेश्वरस्य लक्षणानि संपद्यन्ते । तथाच मुक्तिपर्यन्तैर्नवभिर्लक्षणैर्बोधितं श्रीकृष्णं ब्रह्म नमामेत्यर्थः । नमामेति प्रार्थनाया प्राप्तकाले लोट् । बहु-वचनं तु 'अस्मदो द्वयोश्च' इत्येकत्वेपि साधु । २ चतुर्धा निरोधो यथा—प्राकृतो नैमित्तिको नित्य आत्यन्तिकश्चेति । तत्र प्राकृतिकः प्रकृतौ तत्कार्यब्रह्माण्डस्य लयः । नैमित्तिको ब्रह्मणो निद्रां निमित्तीकृत्य जायमानो लोकत्रयप्रलयः । नित्यो देहस्य प्रतिक्षणमवस्थाभेदेन वर्तमानः । आत्यन्तिकस्तु ज्ञानेनाविद्यां सकार्यां छित्त्वा स्वरूपेणावस्थानमिति । ३ 'विशदाः कथाः' इति 'विश-दीकृताः' इति पाठौ । ४ अत्र सोमशब्दस्य पूर्वनिपातो ब्रह्मप्रपौत्रात्सूर्यात् ब्रह्मपौत्रत्वेन, ब्रह्मांशत्वेन, मनोधिष्ठातृत्वेन, स्वयं भगवदङ्गीकृतवंश्यताकत्वेन चाभ्यर्हितत्वादिति चक्रवर्ती। ५ 'विना-तिमुग्धात्' इति विज० पाठः । ६ प्रतीतिः साधारणजनानामेव ज्ञेया । 'कृष्णस्तु भगवान्स्वयम्' इत्युक्तेः वस्तुतोंऽशावतारत्वाभावात् । सामस्त्येन वक्तुमशक्यत्वादंशेन शंसेति चक्र० । ७ यद्वा यत्प्लवाः येन सहायेन प्लव उत्प्लुतिर्येषां तादृशा वेति क्रम०।'पदपल्लवप्लव' इति प्रयोगचातुरी । प्लवस्तरणनौः तत्त्वं च तस्य न वहित्रतुल्यत्वेन वोढृलक्षणत्वं किंतु प्रभावविशेषेणेति ज्ञेयम् इति तोष० ।

न केवलं पाण्डवानेवारक्षदिदं मम शरीरमपि यो रक्षितवानित्याह—द्रौण्यस्त्रविप्लुष्टमिति । द्रौणेरश्वत्थाम्नो ब्रह्मास्त्रेण दग्धमिदं मच्छरीरं च कुरूणां पाण्डवानां च सन्तानस्य निदानं मम मातुः कुक्षौ प्रविष्टो धृतचक्रो यो जुगोपेति ॥६॥ अखिलदेहभाजां सर्वप्राणिनामन्तश्च बहिश्च पुरुषरूपेण कालरूपैश्च । अंशाभिप्रायेण बहुवचनम् । मृत्युं संसारमुत अपि अमृतमपि प्रयच्छतो वीर्याणि वदस्व ब्रूहि । अयं भावः—अन्तर्यामिरूपेणान्तर्दृष्टीनां मुक्तिं बहिर्दृष्टीनां च कालरूपेण मृत्युं ददाति यतः, अतोऽन्तर्दृष्ट्या तद्वीर्याण्येव श्रोतव्यानीति ॥७॥ ननु 'बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम्॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥' इति रोहिण्या-

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ॥ जुगोप कुक्षिंगत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥ ६ ॥ वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ॥ प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥ रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ॥ देवक्या गर्भसंबन्धः कुतो देहान्तरं विना ॥ ८ ॥ क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतांपतिः ॥ ९ ॥ व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः ॥ भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम् ॥ १० ॥ देहं मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः ॥ यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभोः ॥ ११ ॥ एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् । वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥१२॥ नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ॥ पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥१३॥ ॥ सूत उवाच ॥ एवं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ॥ प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥ १४ ॥ ॥ ॥

स्तनयो रामः प्रोक्तः, 'वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ मृदुं संतर्दनं भद्रं संकर्षणमहीश्वरम् ॥ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल' इति पुनर्देवक्या गर्भसंबन्धस्तस्यैवोक्तः स कुतो घटत इत्याक्षेपः ॥ ८ ॥ कस्मादिति । भगवतः कंसभयशङ्काया असंभवादित्यर्थः ॥ ९ ॥ मातुर्भ्रातरं कंसं तस्मादवधानर्हमद्धा साक्षात्कस्मादवधीत् ॥१०॥११॥१२॥ ननु क्षुत्तृड्भ्यां पीडितस्य तव कुतः श्रवणावकाशस्तत्राह—नैषेति । त्यक्तोदकस्यापि मम जीवनं हरिकथामृतपाननिमित्तं तदुपरमे सद्य एव जीवितं न स्यादित्यर्थः ॥१३॥ एवं साधुवादं समीचीनं प्रश्नम् । भागवतप्रधानो भागवतेषु श्रेष्ठः ॥ १४ ॥

१ पाण्डवाना कुरुत्वेपि पृथगुक्तिस्तेषां तत्र विशेषापेक्षया ब्राह्मणपरिव्राजकवत् इति तोष० । अत्र पाण्डवानां सन्तानबीजं कुरु इति शरणं गतायाः इति श्लेषेण केचिद्व्याचक्षते । २ 'अस्त्रतेजः स्वगदया' इति प्रथमोक्तेरात्तगदयैव जुगोपेति । ३ चकारान्मातुरङ्गं चेति चक्र० । ४ भीष्मादीनां दुर्घटमृतीनां मृत्युं, कंसपूतनादीनां दुर्घटमोक्षाणां अमृतं मोक्षं च प्रयच्छतः । 'मृत्युमनामयं च' इति विज० पाठः । ५ मायया अघटितघटनात्मकया स्वशक्त्या, मायया दयया, यद्वा मायया ज्ञानेन 'माया तु वयुनं ज्ञानं' इति कोशात् मनुष्याकारं प्रकटयत इत्याद्यर्थान्तराणि तोषण्यामालोचनीयानि । ६ वदस्वेत्यत्र 'भासनोपसंभाषा' इति वदेर्लोट् । यद्वा हे स्व मदेकबन्धो मदेकधनेति वा वद ब्रूहि इति तोष० । ७ '[illegible]' इत्यपि पाठः । ८ 'मधुपुर्याम्' इति पाठः । ९ अन्यत् अपृष्टमपि सर्वम् । १० अम्भोजं कमलमम्भोजश्चन्द्रो वा । तत्राद्ये अमृतपदेन मधु सौरभ्यं च, चन्द्रपदेन आह्लादकत्वं स्वचकोरत्वं व्यंजितम् । ११ 'एतम्' इति सुबोधिनीपाठः । १२ हे शौनक । १३ परीक्षितोपीदं विशेषणम् । १४ प्रधानशब्दस्य पुंस्त्वमार्षम् । भागवतं प्रधानं भागवता वा प्रधानानि यस्य इति तोष० । १ - त्यक्तोदमपि उदकमपि त्यक्तवन्तमित्यर्थः सम्यक् क्रम० ।

ह्येकैः । दृप्तनृपव्याजा ये दैत्यास्त-
व्यवसिता कृतनिश्चया । यथतो वुद्धेः ॥ १५ ॥ १६ ॥ तत्र तावत्प्रथमं भगवदवतारकारणमाह—भूमिरित्यादिनवभिः श्लोकैः ।
पामनीकशतानामयुतैर्यो भूरिभारस्तेनाक्रान्ता ॥ १७ ॥ विभोरन्तिके उपस्थिता सती ॥ १८ ॥ १९ ॥ २० ॥ पौरुषीं पुरुषस्य भगवत इयं पौरुषी तां गां
वाचं मे मत्त आशु शृणुत । मा चिरमविलम्बितं तथैव विधीयतां चेति ॥ २१ ॥ विज्ञापनात्पुरैव पुंसा ईश्वरेण ज्वरस्तापोऽवधृतोऽवधारितः ॥ २२ ॥

॥ श्रीशुक उवाच ॥ सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ॥ वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥ वासु-
देवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ॥ वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥ १६ ॥ भूमिर्दृप्तनृपव्याजदैत्यानीकश-
तायुतैः ॥ आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १७ ॥ गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः ॥ उपस्थिता-
न्तिके तस्मै व्यसनं स्वमवोचत ॥ १८ ॥ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ॥ जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः
॥ १९ ॥ तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ॥ पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥ गिरं समाधौ गगने
समीरितां निशम्य वेधास्त्रिदशानुवाच ह ॥ गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥ २१ ॥
पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ॥ स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि
॥ २२ ॥ वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः ॥ जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः ॥ २३ ॥ वासुदेवकलाऽनन्तः
सहस्रवदनः स्वराट् ॥ अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥ विष्णोर्माया भगवती यया संमोहितं जगत् ॥
आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति ॥ २५ ॥ ॥ श्रीशुक उवाच ॥ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ॥
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥ शूरसेनो यदुपतिर्मथुरामावसन्पुरीम् ॥ माथुराञ्छूरसेनांश्च
विषयान्बुभुजे पुरा ॥ २७ ॥ राजधानी ततः साभूत्सर्वयादवभूभुजाम् ॥ मथुरा भगवान्यत्र नित्यं संनिहितो हरिः
॥ २८ ॥ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ॥ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥ ॥

॥ २३ ॥ २४ ॥ देवकीगर्भसंकर्षणयशोदामोहनादिकार्यार्थे यशोदायां संभविष्यति ॥ २५ ॥ २६ ॥ भोजेन्द्रबन्धनागारेऽवताराय प्रस्तावकथामाह—शूर-
सेन इत्यादिना यावदध्यायसमाप्ति । मथुरामावसन्मथुरायां वसन् । विषयान् देशान् ॥ २७ ॥ २८ ॥ सूर्यया नवोढया । प्रयाणे प्रयाणार्थम् ॥ २९ ॥ ॥

१ 'मतिः' इति वीर० पाठः । २ त्रींस्त्रिविधान् । ३ गङ्गा, सा यथा द्रष्टारं स्नावार पातॄन्वा, ऊर्ध्वाधोमध्यलोकान्वा, स्वमाहात्म्यवक्त्रादीन्वा पुनाति तथेत्यर्थः । यथापूर्वं श्रैष्ठ्यम् । ७ एतदग्रे वीर० पाठे
४ 'रुदती' इति पाठः । ५ गृह इति जीववत्पितुः सकाशादुत्पत्तिर्निरस्ता । ६ तत्प्रियार्थं प्रीत्युत्पादनाय, यद्वा तस्य प्रियाः श्रीरुक्मिण्याद्यास्तासां दास्यार्थम् । ७ एतदग्रे वीर० पाठे
'क्षपयोऽपि तदादेशात्कल्पन्तां पशुरूपिणः ॥ पयोदानमुखेनापि कृष्णं तर्पयितुं सुराः ॥' इति श्लोकोऽधिको दृश्यते । ८ अग्रतः ज्येष्ठत्वेन । ९ पुरीमिति सप्तम्यर्थे द्वितीया ।

आभाष्य रे रे कंसेति संबोध्य । हन्ता हनिष्यति ॥ ३४ ॥ कुलपांसनः कुलदूषणः
रश्मीन् प्रग्रहान् ॥ ३० ॥ पारिबर्हमुपस्करम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ महाभाग इति । अयं भावः—स्वजन्मनि हर्षेण देवैरानकदुन्दुभिघोषणाद्भाविभगवदवतारेण
आरब्ध उद्युक्तः । कचे केशबन्धे ॥ ३५ ॥ नृशंसं क्रूरम् । महाभाग इति । अयं भावः सामभेदाभ्यां संबोधयन् । तत्र साम पञ्चविधम् ।
शक्यप्रतीकारता संभवतीति सान्त्वयन्स्तुला कृपाविषयत्वेनोपपत्तिभिश्च साममार्गेण संबोधयन् । ( किंच । सामभेदाभ्यां संबोधयन् । तत्र साम पञ्चविधम् ।
तदुक्तम् 'संबन्धलाभोपकृतिर्हि भेदो गुणकीर्तनम् ॥ साम पञ्चविधं भेदो दृष्टादृष्टभयं वचः ॥' तत्र श्लाघनीयगुण इति गुणकीर्तनम् । भगि-
भेदो द्विविधः । तदुक्तम् 'संबन्धलाभोपकृतिर्हि भेदो गुणकीर्तनम् ॥ साम पञ्चविधं भेदो दृष्टादृष्टभयं वचः ॥' उद्वाहपर्वणीति संतानवृद्ध्योपकारं दर्शयति ) ॥ ३६ ॥
नीमिति संबन्धकथनम् । पुत्रिकोपमेत्यभेदं वक्ष्यति । हन्यादिति स्त्रीवधनिवृत्त्या यशोलाभं दर्शयति । भोगप्रेमास्पदत्वादीनामविशेषात्तद्वयेन पापाचरणमयुक्त-
॥ ३७ ॥ मरणभयेन हन्मीति चेत्तथापि मरणस्यापरिहरणीयत्वाद्देहान्तरस्यावश्यंभावित्वात्तत्रापि च

रथशतैर्वृतः ॥ ३० ॥ चतुःशतं पारिबर्हं
उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥ रश्मीन्हयानां जग्राह रौक्मैः रथशतैर्वृतः ॥ ३० ॥ चतुःशतं पारिबर्हं
गजानां हेममालिनाम् ॥ अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥३१॥ दासीनां सुकुमारीणां द्वे शते समलं-
कृते ॥ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥३२॥ शङ्खतूर्यमृदङ्गाश्च नेदुर्दुन्दुभयः समम् ॥ प्रयाणप्रक्रमे तावद्व-
रवध्वोः सुमङ्गलम् ॥३३॥ पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध
॥३४॥ इत्युक्तः स खलः पापो भोजानां कुलपांसनः ॥ भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥३५॥ तं जु-
गुप्सितकर्माणं नृशंसं निरपत्रपम् ॥ वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥३६॥ ॥ वसुदेव उवाच ॥ श्लाघ-
नीयगुणः शूरैर्भवान्भोजयशस्करः ॥ स कथं भगिनीं हन्यात्स्त्रियमुद्वाहपर्वणि ॥३७॥ मृत्युर्जन्मवतां वीर देहेन सह
जायते ॥ अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥३८॥ देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ॥ देहान्तरमनु-
प्राप्य प्राक्तनं त्यजते वपुः ॥३९॥ व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः॥४०॥

अद्य वेति । अव-
मित्यभिप्रेत्याह—मृत्युर्जन्मवतामित्यादि । देहेन सहेति विधात्रा ललाटे लिखितत्वादिति । तथापि कालविलम्बार्थं हन्मीति चेत्तत्राह—अद्य वेति । अव-
श्यंभाविनि मरणे विलम्बमात्राय न पापाचरणं युक्तमिति भावः ॥ ३८ ॥ किंच अस्मिन्देहे गते यदि देहान्तरं न स्यात्तदा युज्येत पापेनापि तत्पालनम्, नतु
तदस्तीत्याह—पञ्चत्वमापन्न इति । आपन्ने आपन्नप्राये । कर्मवशादयत्नत एव प्रथमं देहान्तरं प्राप्य पश्चात्पूर्वं वपुस्त्यजति ॥३९॥ अत्र दृष्टान्तः—व्रजन्निति ।
एकेनाग्रतो निहितेन पदा तिष्ठन्भुवमवष्टभ्य देहं बिभ्रत्पश्चादन्येन पूर्वप्रदेशादुत्थाप्य पुरो निहितेन गच्छति तद्वत् । अत्र च स्वीकारपरित्यागौ नारान्तभि-
न्नविषयाविति स्पष्टं दृष्टान्तान्तरमाह—यथा तृणजलूकेति । सा हि यथा तृणान्तरमवष्टभ्य पूर्वं तृणं त्यजति, एवं कर्मपथे वर्तमानोऽन्यो जीवोऽपि ॥ ४० ॥

१ विवाहकाले दुहित्रे दीयमानं धनादिपारिबर्हम् । २ अत्रत्यो धनुश्चिह्नान्तर्गतो भागो न श्रीधरीय इति विवृतं ग० क्रु० पुस्तकटिप्पण्याम् । याने प्रयाणसमये । ४ प्रग्रहिणं गृहीताश्वपाशम् । ५निर्गता अपत्रपा लज्जा यस्य । ६ वास्तवार्थस्तु विपरीतलक्षणया श्लाघनीयेषु मध्ये गुणः न्यूनः । भोजाः कलहवत्त्वेन प्रसिद्धास्तेषां यशः कलहाधिक्यं करोतीति । स कथमेका भगिनीं हन्यात् अपि तु सर्वमेव कुलम् चक्र० । ७ 'उद्वाहकर्मणि' इति वीर० । पाठः । ८ 'कर्मवशानुगः' इति पाठः । ९व्रजन् गन्ता पुरुषः कर्ता । १० 'जलौकेयम्' इति पाठः । ११ स्वीकारपरित्यागौ पृथिव्या एकस्या एवेत्यपरितुष्यन् ।

देहविषयावेव स्वीकारपरित्यागौ दर्शयितुं दृष्टान्तान्तरमाह—स्वप्न इति । दृष्टं राजादिदर्शनम्, श्रुतमिन्द्रादिश्रवणम्, ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिन्तयन्नीदृशं जाग्रद्दृष्टश्रुतसदृशं देहं राजादिरूपं किमप्यनिरुक्तं पश्यति । क्षणान्तरे च तदेवाहमिति प्रपद्यते मन्यते । ततश्च जाग्रद्देहादपगतस्मृतिर्भवति पुरुषो यथेति । जाग्रत्येव दर्शयितुं दृष्टान्तान्तरमाह—मनोरथेनेति । अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यम् । तथाच वक्ष्यति 'जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः । जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥' इत्यादि । तद्वदत्रापि कर्मवशाद्देहान्तरं प्राप्य प्राक्तनं त्यजतीति ॥ ४१ ॥ ननु विचित्रदेहहेतूनां कर्मणां कृतत्वाद्देहविशेषप्राप्तौ किं कारणमत आह—यतो यत इति । देहस्य पञ्चत्वसमये पञ्चसु गुणेषु भूतेषु मायारचितेषु मायया नानादेहरूपेण रचितेषु दैवेन फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनो यं यं देहं देवतिर्यगादिरूपं प्रति धावति । धावच्च सद्यं यमापाऽभिनिवेशेन प्राप्तं तत्र तत्रासौ देही जायते । ननु मनसः कर्तृत्वात्तदेव जायतां न त्वकर्तात्मेत्यत आह—

स्वप्ने यथा पश्यति देहमीदृशं [1]मनोरथेनाभिनिविष्टचेतनः ॥ दृष्टश्रुताभ्यां मनसानुचिन्तयन्प्रपद्यते तत्किमपि ह्यप[2]स्मृतिः ॥ ४१ ॥ यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु ॥ गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥४२॥ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ॥ एवं स्वमायारचितेष्वसौ पुमान्गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥ तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः ॥ आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम् ॥४४॥ एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥ हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल[3]॥४५॥ ॥ श्रीशुक उवाच ॥ एवं स सामभिर्भेदैर्बोध्यमानो[4]ऽपि दारुणः ॥ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥ ४६ ॥ ॥

प्रपद्यमान[5] इति । तदेवाहमिति मन्यमानस्तेन सह जायत इति ॥ ४२ ॥ ननु सत्यं, भविष्यत्येव किमपि देहमात्रं, तथाप्यस्यातिप्रियस्य राजदेहस्य रक्षणायाकृत्यमपि क्रियत इति चेत्तत्राह—ज्योतिरिति । अदश्चन्द्रादिज्योतिः उदकयुक्तेषु पार्थिवेषु घटादिषु । यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु च प्रतिबिम्बेन स्थितं समीरस्य वायोर्वेगमनुगतं [6]कम्पादियुक्तं प्रतीयते यथा, एवं स्वाविद्यारचितेषु गुणेषु देहेष्वसौ रागेणानुगतः प्रविष्टो मुह्यत्यभिनिवेशं प्राप्नोति । अयं भावः—आत्मनस्तावद्देहाद्यध्यासाज्जन्मोक्तं सह तेन जायत इति । ततश्चान्योन्यधर्माध्यासाद्यथा देहादिधर्माः कार्श्यादय आत्मनि प्रतीयन्ते, एवमात्मधर्माः प्रेमास्पदत्वादयोऽपि देहादिष्विति राजसूकरदेहयोर्विशेषाभावाद्व्यर्थो मृत्युप्रतीकार इति ॥ ४३ ॥ एवमुक्तं सामोपायमुपसंहरन्भेदमाह—तस्मादिति । परत इति । अभिद्रुह्यमाणात्तत्संबन्धिनश्च यमादपीहामुत्र च भयमिति भेदो दर्शितः ॥ ४४ ॥ पुनः [7]सामैवाह—एषेति । पुत्रिकोपमा दारुमयीव अचेतनप्राया ॥ ४५ ॥ बोध्यमान उपदिश्यमानः स्वयं दारुणः । पुनः पुरुषादान् दैत्याननुव्रतोऽनुसृत इति ॥ ४६ ॥ ॥ ॥ ॥

१ मनोरथेन मनोरथे चेत्यर्थः । अभिनिविष्टा अभिनिवेशवती चेतना यस्य । यद्वा मनोरथेन विषयवाञ्छया चित्ताभिनिवेशाधिक्यवान् पुरुषः इति चक्र० । २ अपस्मृतिः वास्तवदेहस्मरणशून्यः । ३ 'वत्सल' इति संबुद्ध्यन्तौ वीर० विज० पाठौ । ४ 'चोद्यमानोऽपि' इति पाठः । ५ अपद्यमानो जायते मुञ्जानो भवतीत्यर्थः इति चक्र० । ६ अनुगतं विभाव्यते विविधं कम्पवशाद्दीर्घह्रस्वादिरूपं भाव्यते । ७ साम्नैवेति 'अत्युग्रं स्तुतिभिः' इति न्यायेनेत्यर्थः इति चक्र० ।

आनकदुन्दुभिरिति पदं महाभाग इत्यत्रोक्ताभिप्रायम्। प्रतिव्योढुं प्रतिकर्तुम्। वञ्चयितुमित्यर्थः। इदं वक्ष्यमाणमपत्यार्पणमन्वपद्यत ज्ञातवान् ॥ ४७ ॥ ननु खलोऽयमेतन्न मन्येतेत्याशङ्क्याह स्वयमेव—मृत्युरिति ॥ ४८ ॥ तस्मादुपेक्षादोषपरिहारायैवं करिष्यामीत्याह—प्रदायेति। मृत्यवे कंसाय। नन्विदमपि नैव न्याय्यमित्याशङ्क्याह—सुता इति। अस्यां यदि मे जायेरंस्तदा यद्भावि तद्भवतु, जीवितं तु तावद्भवेदेव। तदन्तरा यद्ययमेव म्रियेत तदा न किंचिदन्याय्यम् ॥ ४९ ॥ यदि च सुता भविष्यन्ति नचायं म्रियेत तदा मत्पुत्रादेवास्य मरणमिति विपर्ययो वा किं न स्यात्। ननु प्रौढस्य कंसस्य तव बालकात्कथं मृत्युः स्यात्तत्राह—गतिरिति। धातुः 'अस्यास्त्वामष्टमो गर्भो हन्ता' इत्युक्तवतः। अत इदानीमपत्यार्पणप्रतिज्ञैव मन्त्रः। तथा सति उपस्थितो मृत्युरयं तावन्निवर्तेत। निवृत्तः पुनः कालान्तरे आपतेच्चेत्तदा नापराधो ममेत्यर्थः। अथवास्य मत्पुत्रादुपस्थितो मृत्युरस्या वधाद्यो निवर्तेत स पुनरनेन सन्मन्त्रेण भवेदेवेति।

निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः ॥ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥ ४७ ॥ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥ प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् ॥ सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया ॥ उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥५०॥ अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ॥ एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥ ५१ ॥ एवं विमृश्य तं पापं यावदात्मनिदर्शनम् ॥ पूजयामास वै शौरिर्बहुमानपुरःसरम् ॥ ५२ ॥ प्रसन्नवदनाम्भोजो नृशंसं निरपत्रपम् ॥ मनसा दूयमानेन विहँसन्निदमब्रवीत् ॥५३॥ ॥ वसुदेव उवाच ॥ न ह्यस्यास्ते भयं सौम्य यद्वै साहाशरीरवाक् ॥ पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥ ॥ श्रीशुक उवाच ॥ स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् ॥ वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम् ॥ ५५ ॥ अथ काल उपावृत्ते देवकी सर्वदेवता ॥ पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥ ॥ ॥

यद्वा गतिर्धातुर्दुरत्ययेत्येतस्य प्रपञ्चः—उपस्थित इति ॥५०॥ प्राणिनामदृष्टं च दुर्वितर्क्यमिति सदृष्टान्तमाह—अग्नेरिति। वने वृक्षान्प्रदहन्नग्निः संनिहितानपि वृक्षान्परित्यज्य कदाचिद्दूरस्थानपि दहति ग्रामे गृहान्वा, नह्यस्य प्राण्यदृष्टव्यतिरेकेण किंचिन्नियामकमस्ति यथा, एवं जन्तोर्जन्ममरणयोरपि हेतुर्दुर्विभाव्योऽचिन्त्यः ॥ ५१ ॥ यावदात्मनिदर्शनं स्वप्रज्ञावधि विचार्य ॥५२॥ तस्य विश्वासाय विकसितमुखाम्भोजो विहसन्नब्रवीत् ॥५३॥ यद्यथा अशरीरिणी वागाह तथा हि निश्चितमस्याः सकाशात्ते भयं नास्ति। यतो येभ्यः पुत्रेभ्यस्ते भयमुत्थितम्। अष्टमो हन्तेत्युक्तेऽन्योन्यापेक्षया सर्वेऽप्यष्टमा भवेयुरित्युक्तं तेनास्याः पुत्रान्समर्पयिष्ये ॥५४॥ निववृते निवृत्तः। तद्वाक्ये सार उपपत्तिस्तद्वित् ॥५५॥ प्रसूतिकाले प्राप्ते। सर्वः सर्वात्मा भगवानेव देवता यस्याः सा, तथा सर्वदेवतामयीति वा भगवदाश्रयत्वात् ॥५६॥

१ अन्वपद्यत उपायत्वेन मनसा विचारितवानित्यर्थ इति क्रम०। २ 'भन्मन्त्रेण' इति पाठः। ३ अपोह्यः प्रतिकार्यः। ४ यावान् बुद्धिबलयोरुदय उत्कर्षः तदवधि। यथामति यथाशक्ति चेत्यर्थः। ५ प्रदाय अर्पयित्वा। ६ 'प्रत्यग्' इति तोषणी० विज० पाठौ। 'प्रदृष्टः' इति वीर० पाठः। 'प्रसार्य' इत्यपि पाठः। ७ प्रहसन्निति मूलटीकयोः क्वचित्पाठः। ८ 'यद्वागाहाऽशरीरिणी' इति 'यद्वि साह्यशरीरिणी' इति पाठौ। ९ अनुवत्सरं अष्टसु वत्सरेष्वित्यर्थः। विभक्त्यर्थेऽव्ययीभावः। १० यतो येभ्यो भयं तान्, नतु यस्मादुत्थितं तमिति गूढोऽभिप्रायः इति क्रम०।

॥ ५७ ॥ मृत्यवे पुत्रं कथमर्पितवानित्यपेक्षायामाह—किं दुःसहमिति । साधूनां सत्यसन्धानाम् । पुत्रलालनसुखापेक्षा कथं त्यक्तेत्यत आह—विदुषामिति । भगवानेव तत्त्वं नान्यदिति जानतामित्यर्थः । ननु स्वयं नीते सति कंसो बालं न हन्यादिति मत्वा नीतवानिति किं न स्यादिति नेत्याह—किमकार्यमिति । ननु देवकी कथं पुत्रं तत्याजेत्यत आह—दुस्त्यजमिति । चित्ते धृत आत्मा हरिर्यैस्तेषाम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ कंसस्य शान्तिर्देवकार्यानुगुणा न भवतीति नारदस्य प्रत्यवस्थानं तदाह—नन्दाद्या इत्यादित्रयेण ॥ ६२ ॥ उभयोर्वसुदेवनन्दकुलयोः ॥ ६३ ॥ वधोद्यमं देवकृतमिति शेषः ॥ ६४ ॥ ६५ ॥

कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ॥ अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ५७ ॥ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् ॥ किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम्[1] ॥ ५८ ॥ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ॥ कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत् ॥ ५९ ॥ प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ॥ अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥ ६० ॥ तथेति सुतमादाय ययावानकदुन्दुभिः ॥ नाभ्यनन्दत तद्वाक्यमसंतोऽविजितात्मनः ॥ ६१ ॥ नन्दाद्या[2] ये व्रजे गोपा याश्चामीषां च योषितः ॥ वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥ सर्वे वै देवताप्राया[3] उभयोरपि भारत[4] ॥ ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥ ६३ ॥ एतत्कंसाय भगवान् शशंसाभ्येत्य नारदः ॥ भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ ६४ ॥ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति ॥ देवक्या गर्भसंभूतं[6] विष्णुं च स्ववधं प्रति[7] ॥ ६५ ॥ देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ॥ जातं जातमहन्पुत्रं[8] तयोरजनशङ्कया ॥ ६६ ॥ मातरं पितरं भ्रातॄन्सर्वांश्च सुहृदस्तथा ॥ घ्नन्ति ह्यसुतृपो[9] लुब्धा राजानः प्रायशो भुवि ॥ ६७ ॥ आत्मानमिह संजातं जानन्प्राग्विष्णुना हतम् ॥ महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥ ६८ ॥ उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ॥ स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥ ६९ ॥ इति श्रीम० म० द० श्रीकृष्णावतारोपक्रमे प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ प्रलम्बबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥

निगडैः शृङ्खलैः । अजनो विष्णुस्तच्छङ्कया ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे भा० दी० टीकायां प्रथमोऽध्यायः ॥ १ ॥

द्वितीये कंसघाताय देवक्या गर्भगो हरिः ॥ ब्रह्मादिभिः स्तुतः सा च सान्त्वितेति निरूप्यते ॥ १ ॥

'यदुभिः स व्यरुध्यत' इत्युक्तं तमेव विरोधं प्रपञ्चयति त्वरया देवकीगर्भस्यान्यत्र संचारेण भगवतः प्रवेशं वक्तुम् प्रलम्बेत्यादिसार्धश्लोकत्रयेण । महाशनोऽघासुरः ॥ १ ॥

१ 'किमृतात्मना' इति विज० पाठः । २ अयं नारदवाक्यानुवादः शुककर्तृकः । अत एवाग्रिमश्लोके भारतेति सबोधनं युज्यते । ३ प्रायशब्दो यदुषु केषांचिद्दैत्यत्वात् । ४ भा तामसी कान्तिस्तस्यां रत इति कंससबोधनं वा इति चक्र० । ५ 'शंसयामास' इति तोष० चक्र० पाठः । ६ संभूतमिति भविष्यत्यपि भूतनिर्देशः सामीप्यात्तन्निर्धारणाद्वा, यद्वा सभूतं संभूतिर्यस्य तं मत्वेत्यर्थः । ७ प्रति उद्दिश्येत्यर्थः । ८ जातं जातमुत्पन्नमुत्पन्नं हतवान्न तु जन्मकाल एव ; अन्यथा कीर्तिमन्तमित्यादिनामोल्लेखासगतेः इति चक्र० । ९ 'ह्यसुतृपो' इति पाठः ।

॥ २ ॥ ३ ॥ अनुरुन्धाना अनुवर्तमानाः ॥ ४ ॥ धाम कला तदेव सप्तमो गर्भो बभूव । किं तद्धामेत्यत आह—यमनन्तमिति । हर्षशोकविवर्धनः । आनन्दरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्या शोक इति ॥ ५ ॥ ६ ॥ ननु सा गोकुले किमित्यास्तेऽत आह—अन्याश्चेति । न केवलं सैवान्या अपीति । विवरेष्वलक्ष्यस्थानेषु ॥ ७ ॥ जठरे सन्तम् । ननु गर्भं आकृष्यमाणः कथं जीवेदित्यत आह—मामकं धामेति । तत्ततः ॥ ८ ॥ किमर्थमेवं कार्यमित्यत आह—अथेति । अनन्तरमेवेत्यर्थः । अंशभागेनेति अंशैः शक्तिभिर्भजतेऽधितिष्ठति सर्वान्ब्रह्मादिस्तम्बपर्यन्तानित्यंशभागस्तेन । परिपूर्णेन रूपेणेत्यर्थः । यद्वा अंशैर्ज्ञानैश्वर्यबलादिभिर्भाजयति योजयति स्वीयानिति तथा तेनेति । यद्वा अंशेन पुरुषरूपेण मायाया भागो भजनमीक्षणं यस्य तेन । यद्वा अंशेन मायया गुणावतारादिरूपा भागा भेदा

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ॥ यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥ ते पीडिता निविविशुः कुरुपञ्चालकेकयान् ॥ शाल्वान्विदर्भान्निषधान्विदेहान्कोसलानपि ॥ ३ ॥ एके तमनुरुन्धाना ज्ञातयः पर्युपासते ॥ हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥ सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते ॥ गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥ ५ ॥ भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥ यदूनां निजनाथानां योगमायां समादिशत् ॥ ६ ॥ गच्छ देवि व्रजं भद्रे गोपगोभिरलंकृतम् ॥ रोहिणी वसुदेवस्य भार्यास्ते नन्दगोकुले ॥ अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ॥ ७ ॥ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ तत्संनिकृष्य रोहिण्या उदरे संनिवेशय ॥ ८ ॥ अथाहमंशभागेन देवक्याः पुत्रतां शुभे ॥ प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ॥ ९ ॥ अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥ धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ १० ॥ नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥ दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥ ११ ॥ कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ॥ माया नारायणीशानी शारदेत्यम्बिकेति च ॥ १२ ॥ गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि ॥ रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥ १३ ॥ संदिष्टैवं भगवता तथेत्योमिति तद्वचः ॥ प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत् ॥ १४ ॥ ॥

यस्य तेन । यद्वा अंशा एव मत्स्यकूर्मादिरूपा भजनीया नतु साक्षात्स्वरूपं यस्य तेन । यद्वा अंशैर्ज्ञानबलादिभिर्भजनमनुवर्तनं भक्तेषु यस्य तेन । सर्वथा परिपूर्णेन रूपेणेति विवक्षितम् । 'कृष्णस्तु भगवान्स्वयम्' इत्युक्तत्वादिति । तां प्रोत्साहयति—त्वं यशोदायामिति त्र्यक्षरोनसार्धचतुष्टयेन ॥ ९ ॥ सर्वान्पुत्रादीन्कामयते ये तेषां वरामीश्वरीं श्रेष्ठां नियन्त्रीम् । अर्चकानां सर्वान्कामवरान्प्रददाति या ताम् ॥ १० ॥ ११ ॥ १२ ॥ त्वद्विक्रमेण च तस्य व्यपदेशा भविष्यन्तीत्याह—गर्भसंकर्षणादित्यादिना । रामेति च संबोधनं करिष्यन्ति । त्वया संकृष्टेन तेन लोकस्य रमणाद्रत्युत्पादनात् ॥ १३ ॥ तथेति पुनरप्योमित्यादरेण प्रतिगृह्य । गां पृथ्वीम् ॥ १४ ॥ ॥ ४ ॥

१ निविविशुः नितरा हालिकगोपादिवेषेण गुप्ताः सन्तः । २ एके अक्रूरादयः । ३ सम्यक् अलक्षित नितरा कृष्टा । ४ 'नानोपहार' इति पाठः । ५ कुर्वन्ति करिष्यन्ति । वर्तमानसामीप्ये प्रयोगो ज्ञेयः इति सिद्धां० । ६ रामेति 'सहसुपा' इति सुपमात्रेण समासः । ७ शुकवाक्यमेतत् ।

इति विचुक्रुशुर्नेतु तद्विदुरित्यर्थः ॥ १५ ॥ मन आविवेश मनस्याविर्बभूव । जीवानामिव न धातुसंबन्ध इत्यर्थः ॥ १६ ॥
विस्रंसितो विभ्रष्टो विस्रस्त इत्यर्थः । इति विचुक्रुशुर्नेतु तद्विदुरित्यर्थः । अच्युतांशमच्युताश्च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तम् । यद्वा अच्युतस्यांश इनांशः ।
धाम श्रीमूर्तिम् ॥ १७ ॥ जगन्मङ्गलं जगतो मूर्तिमन्मङ्गलम् । सम्यग्भूतमेवाहितं वेधदीक्षयार्पितम् । देवी द्योतमाना शुद्धसत्त्वेत्यर्थः । सर्वात्मकं सर्वस्यात्मानम्, अत एवात्मभूतं
भक्तानामनुग्रहार्थं परिच्छिन्नवपुरित्यर्थः । सम्यग्भूतमेवाहितं वेधदीक्षयार्पितम् । देवी द्योतमाना शुद्धसत्त्वेत्यर्थः । सर्वात्मकं सर्वस्यात्मानम्, यथा काष्ठा प्राची दिगानन्दकरं चन्द्रमिति ॥ १८ ॥ सर्वजग-
सन्निनादावेव सन्तम् । मनस्तो मनसैव दधार धारणया धृतवती । अत्रानुरूपं दृष्टान्तमाह—यथा काष्ठा प्राची दिगानन्दकरं चन्द्रमिति ॥ यतः कंसस्य गृहे रुद्धाऽन्यैर्न दृश्यते । घटादिषु रुद्धा-
न्निवासस्य श्रीहरेर्निवासभूता सत्यपि नितरां सर्वजनाह्लादकतया न रेजे, किंतु स्वयमेवानन्दमन्वभवत् । यतः कंसस्य गृहे रुद्धाऽन्यैर्न दृश्यते । घटादिषु रुद्धा ॥ १९ ॥ प्रभया भवनं विरो-
ग्निशिखा दीपकलिकेव । तथा सती शोभमाना सरस्वती ज्ञानखले ज्ञानवञ्चके रुद्धा यथाऽन्येषामनुपकारिणी न राजते तद्वत् ॥ १९ ॥ प्रभया भवनं विरो-

गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ॥ अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥१५॥ भगवानपि विश्वात्मा भक्तानामभयंकरः ॥ आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १६ ॥ स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः ॥ दुरासदोऽतिदुर्धर्षो भूतानां संबभूव ह ॥ १७ ॥ ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ॥ दधार सर्वा-त्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः ॥१८॥ सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे ॥ भोजेन्द्र-गेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥ १९ ॥ तां वीक्ष्य कंसः प्रभयाऽजितान्तरां विरोचयन्तीं भवनं शुचिस्मिताम् ॥ आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ २० ॥ किमद्य तस्मिन्करणीयमाशु मे यदर्थतन्त्रो न विहन्ति विक्रमम् ॥ स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकालमायुः ॥२१॥ स एष जीवन्खलु संपरेतो वर्तेत योऽत्यन्तनृशंसितेन ॥ देहे मृते तं मनुजाः शपन्ति गन्ता तमोऽन्धं तनुमानिनो ध्रुवम् ॥ २२ ॥

॥ २० ॥ ननु सन्ति सामादय उपायाः, यद्यस्मादीदृशीयं पुरा पूर्वं नासीत्
चयन्तीम् । अजितोऽन्तरा कुक्षिमध्ये यस्यास्ताम् । एष विरोचमानो ध्रुवं हरिरेव । यद्यस्मादीदृशीयं पुरा पूर्वं नासीत् ॥ यद्वा तर्हीदानीमेवेयं हन्यतामिति विचिन्त्याह—
नेति स्वयमेवाह । अयमर्थतन्त्रो देवकार्यप्रधानो विक्रमं न विहन्ति । मद्वधे पराक्रमं करिष्यत्येवेत्यर्थः । यद्वा तर्हीदानीमेवेयं हन्यतामिति ॥ २१ ॥ किंच स
अर्थतन्त्रोऽपि पुमान्स्वं विक्रमं न विहन्ति न नाशयति । स्त्रीवधे तन्नाशः स्यादिति भावः । तदेवाह—स्त्रिया इति । गुरुमत्या गुर्विण्याः ॥ २१ ॥ किंच स
एष जीवन्नपि मृतः स्यात् । नृशंसितेन क्रौर्येण यो वर्तेत तं जीवन्तमेव मनुजाः शपन्ति दुर्वाक्यैर्धिक्कुर्वन्ति । सं च देहे मृते तनुमानिनः पापिनो नरकं
गच्छन्ति । अथवा शापप्रकारमेवाह—तनुमानिनोऽस्य देहे मृतेऽयं ध्रुवमन्धंतमो गमिष्यतीति ॥ २२ ॥

१ वेधदीक्षेति यथा काश्चिद्गुरुर्द्वादशाक्षरादिदीक्षाकाले ध्येयां मूर्तिमुपदिश्य छात्रस्य मनसि समादधाति स चाधिकारी तदैव तत्र समाहितो भवति तथेति तोष०। तथाच कुलार्णवे 'यथा कूर्मः स्वतनयान्ध्यानमात्रेण तोषयेत्॥ वेधदीक्षोपदेशस्तु मानसः स्यात्तथाविधः'। २ विस्रंसितः पातितः, कंसेनेति भयात्कर्तृपदगुप्तिः क्रम०। ३ अंशेन पुरुषाद्यवतारवृन्देन भागेन भगसमूहेन षडैश्वर्येण सहितः। ४ स वसुदेवः। ५ सर्वात्मकं सर्वेषामात्मनां कं सुखं यस्मात्तम्। तोष०। ६ 'घनस्तं' वीर० 'नभस्तः' विज०। ७ यथाग्निशिखा प्रवला गृहं दहति, सरस्वती च परवञ्चनपापेन स्वाधार तथे-यमपि कंसमित्युपमाद्वयं व्यङ्ग्यम्। ८ स्त्रिया इत्यादेर्यथोत्तरमवध्यत्वातिशयार्थेन कैमुत्यं एवं कीर्त्यादावपि हान्यतिशयश्च व्यञ्जितः तोष०। ९ 'अनुकार्यं' इति पाठे प्रतिशरीरमित्यर्थः। १० अयं हरिः।

॥ २३ ॥ संविशन् शयानः ॥ २४ ॥ रम्याभिर्गीर्भिर्वृषणं कामवर्षिणमैडयंस्तुष्टुवुः ॥ २५ ॥ प्रतिश्रुतं सत्यं कृतमिति हृष्टाः सन्तः सत्यत्वेनैव प्रथमं स्तुवन्ति—सत्यव्रतमिति । सत्यं व्रतं संकल्पो यस्य तम् । सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिंस्तम् । त्रिसत्यम् त्रिष्वपि कालेषु सृष्टेः पूर्वं प्रलयानन्तरं च स्थितिसमये च सत्यमव्यभिचारेण वर्तमानम् ।" तदेवाहुः—सत्यस्य योनिमिति । सच्छब्देन पृथिव्यप्तेजांसि, त्यच्छब्देन वाय्वाकाशौ, एवं सच्च त्यच्च सत्यं भूतपञ्चकम् । 'तत्सत्यमित्याचक्षते' इति श्रुतेः । तस्य योनिं कारणम् । अनेन पूर्वं वर्तमानतोक्ता । तथा सत्ये तस्मिन्नेव निहितमन्तर्यामितया स्थितम् । अनेन स्थितिसमयेऽपि सत्यत्वमुक्तम् । तथा सत्यस्य सत्यं तस्यैव सत्यस्य सत्यं पारमार्थिकं तन्नाशेऽप्यवशिष्यमाणरूपम् । अनेन प्रलयेऽप्यवधित्वेन सत्यत्वं दर्शितम् । एवं त्रिसत्यत्वमुपपादितम् । तथा ऋतसत्यनेत्रं ऋतं सूनृतावाणी, सत्यं समदर्शनम् । तथा भगवता व्याख्यास्यमानत्वात् । 'सत्यं च समदर्शनम् ॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता' इति । तयोर्नेत्रं नयनसाधनं नेतारम्, प्रवर्तकमिति यावत् । एवं सर्वप्रकारेण सत्यात्मकं त्वां हे भगवन्, वयं शरणं प्रपन्नाः प्राप्ता इति

इति घोरतमाद्भावात्संनिवृत्तः[1] स्वयं प्रभुः ॥ आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत्[2] ॥ २३ ॥ आसीनः संविशंस्तिष्ठन्भुञ्जानः पर्यटन्महीम् ॥ चिन्तयानो[3] हृषीकेशमपश्यत्तन्मयं जगत् ॥ २४ ॥ ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः ॥ देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन्[4] ॥२५॥ सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ॥ सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २६ ॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा[5] ॥ सप्तत्वगष्टविटपो[6] नवाक्षो दशच्छदी[7] द्विखगो[8] ह्यादिवृक्षः[9] ॥ २७ ॥ ॥ ॥

॥ २६ ॥ ननु भवन्तोऽपि लोकेश्वरा मत्तुल्या एव किमिति मां शरणं प्रपद्यन्ते, नैवं वाच्यम्, त्वमेवैकः सर्वेश्वरः, सर्वसृष्ट्यादिकारणत्वात्, वयं तु त्वदेकशरणा एव, लोकादिरूपं द्वैतं च सर्वं त्वद्व्यतिरेकेण नास्तीति वक्तुं द्वैतप्रपञ्चं वृक्षरूपकेण निरूपयन्ति—एकायन इति । असौ प्रपञ्च आदिवृक्षः वृश्च्यत इति वृक्षः समष्टिव्यष्टिदेहरूपः । कथंभूतः । एकायनः एका प्रकृतिरयनमाश्रयो यस्य सः । द्वे सुखदुःखे फले यस्य सः । त्रयो गुणा मूलानि यस्य सः । चतूरसो धर्मार्थकाममोक्षाश्चत्वारो रसा यस्य सः । पञ्चेन्द्रियाणि विधा ज्ञानप्रकारा यस्य सः । षड्ऊर्मयः कोशा वा आत्मनः स्वभावा यस्य सः । सप्त धातवस्त्वचो यस्य । पञ्च भूतानि मनो बुद्ध्यहंकाराश्चेत्यष्टौ विटपाः शाखाविस्तारा यस्य सः । नव द्वाराण्यक्षाश्छिद्राणि यस्य सः । दश प्राणाश्छदाः पत्राणि विद्यन्ते यस्य स दशच्छदी । द्वौ जीवेश्वरौ खगौ यस्मिन्स द्विखगः ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ स्वयमेव संनिवृत्तः सम्यक्कृतवाक्यगर्भपातयत्नं निवृत्तः यतः प्रभुः स्वप्राणरक्षणसमर्थः । 'स निवृत्तः' इति क्वचित्पाठः । २ हरेः वैराग्यशेषपदोपहरत्वेन सर्वमनोहरत्वेन वा प्रसिद्धस्य यद्वैरं द्वेषस्तस्यानुबन्धोऽनुवर्तनं तं करोतीति तथाभूतः सन् इति तोष० । ३ चिन्तयानः अयमधुनैवाविर्भूय मां हनिष्यतीति भावयन् हृषीकेशं सर्वेन्द्रियवृत्तौ स्फूर्त्या हृषीकेशत्वव्यक्तेः । ४ ऐडयन् स्वार्थे णिच् ऐडत । द्वित्वे वाच्ये बहुत्वमार्षम् । यद्वा आगमने मुन्यादीनामप्राधान्यादकर्तृत्वेऽपि स्तुतौ समप्राधान्यविवक्षया कर्तृत्वं । तौ तैः सहागत्य ततस्तौ च ते च तं तुष्टुवुरित्यर्थः इति तोष० । ५ षड्ऊर्मयश्च—'बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ जरामृत्यू देहस्येति षडूर्मयः' इति । ६ कोशास्तु—'स्नाय्वस्थिमज्जानः शुक्रात् त्वङ्मांसास्राणि शोणितात्' इति । ७ सप्तधातवश्च—'रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः' इति । ८ प्राणास्तु—प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जयाः इति । ९ अधिष्ठातृत्वमात्रेण जीवेशसाम्यनिर्देशः । विशेषस्तु 'एकस्तयोः खादति पिप्पलान्नं' इत्यादौ ज्ञेयः इति तोष० ।

एवंरूपस्य संसारवृक्षस्य सतः कार्यस्य त्वमेक एव प्रसूतिः प्रकर्षेण सूतिर्जन्म यस्मात्स त्वम् । कारणमित्यर्थः । त्वमेव सन्निधानं सम्यङ्निधीयतेऽस्मिन्निति
लयस्थानम् । त्वमेवानुग्रहश्च अनुगृह्णातीति पालकः । ननु ब्रह्मविष्णुरुद्रा एवंभूताः प्रसिद्धाः कथमहमेवेति चेत्तत्राहुः—त्वन्माययेति । संवृतं पिहितं चेतो
ज्ञानं येषां ते त्वामेव नाना पश्यन्ति । ये तु विपश्चितो विद्वांसस्ते तथा न पश्यन्ति ॥ २८ ॥ ननु देवकीपुत्रं मां कथमेवं वर्णयथेति चेत्तत्राहुः—बिभर्षीति ।
अवबोधैकस्वरूप आत्मा त्वमेव रूपाणि मूर्तीर्बिभर्षि धत्से । ननु त्वं कस्यापि पुत्र इत्यर्थः । क्षेमाय पालनाय । सतां धर्मवर्तिनां सुखकराणि । खलानामभ-
द्राणि नाशकानि ॥ २९ ॥ न केवलमेतावद्भक्तानां मोक्षार्थमपीत्याहुः—त्वयीति । त्वयि समाधिना आवेशितचेतसा निमित्तेन त्वत्पादपोतेनाश्रितेन । एके
मुख्या विवेकिनः । महद्भिः कृतेन सेव्यतया संपादितेन । यद्वा इदमपि मायामयमित्यनादरं परित्यज्येदमेव महत्सर्वोत्कृष्टमिति मनसि कृतेन । बहुमतेने-
त्यर्थः । भवाब्धिं तुच्छीकुर्वन्ति । अनायासेनैव भजनानुनिष्पादिनी तेषां मुक्तिरित्यर्थः ॥ ३० ॥ ननु तेन पोतेन पूर्वे चेत्पारं गतास्तर्हीदानीन्तनानां का

**त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च ॥ त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो**
**ये ॥ २८ ॥ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ॥ सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि**
**मुहुः खलानाम् ॥२९॥ त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनावेशितचेतसैके ॥ त्वत्पादपोतेन महत्कृतेन कुर्वन्ति**
**गोवत्सपदं भवाब्धिम् ॥ ३० ॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ॥ भवत्पदाम्भोरुहनावमत्र**
**ते निधाय याताः सदनुग्रहो भवान् ॥ ३१ ॥ येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ॥ आरुह्य**
**कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ३२ ॥ तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि**
**बद्धसौहृदाः ॥ त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ३३ ॥ ॥ ॥**

गतिस्तत्राहुः—स्वयमिति । अयमर्थः—हे द्युमन्स्वप्रकाश, त्वत्पादपोतसामीप्यमात्रेण भवाम्बुधौ वत्सपदमात्रे जाते, अतस्तन्निरपेक्षं स्वयमेवान्येषां भीमं दुस्त-
रमपि भवार्णवं समुत्तीर्य भवत्पदाम्भोरुहरूपां नावमत्रैव निधाय । भक्तिमार्गसंप्रदायं प्रवर्त्येत्यर्थः । पारं याताः । तत्किम् । यतोऽदभ्रसौहृदाः सर्वभूतेष्वति-
प्रीतियुक्ताः । अतस्तेऽन्येषां तरणाय निधायेति । कथं मत्पादपोतश्रवणमात्रेण तीर्णा अत उक्तम्—भवान्सदनुग्रहः सतो भक्ताननुगृह्णातीति ॥ ३१ ॥
ननु विवेकिनां किं मज्जनेन मुक्ता एव हि ते तत्राहुः—येऽन्य इति । विमुक्तमानिनो विमुक्ता वयमिति मन्यमानाः । त्वयि अस्तो निरस्तोऽत एवासन्
यो भावस्तस्मात् । भक्तेरभावादित्यर्थः । न विशुद्धा बुद्धिर्येषां ते तथा । यद्वा त्वयि अस्तभाः इति च्छेदः । अस्तमतयो वादेष्वेव विशुद्धबुद्धयः । कृच्छ्रेण
बहुजन्मतपसा परं पदं मोक्षसंनिहितं सत्कुलतपःश्रुतादि । पतन्ति विघ्नैरभिभूयन्ते । न आदृतौ युष्मदङ्घ्री यैस्ते ॥ ३२ ॥ त्वदीयास्तु न कदाचिदपि पतन्ती-
त्याहुः—तथा नेति । विनायका विघ्नहेतवस्तेषामनीकानि स्तोमास्तानि पान्ति ये तेषां मूर्धसु विचरन्ति । विघ्नान् जयन्तीत्यर्थः ॥ ३३ ॥ ॥ ॥

१ यद्वा संवृतचेतसः मायया त्वा नानामूर्तिं पश्यन्ति विपश्चितस्तु माययेति न पश्यन्ति किंतु तच्छक्त्येति योजना इति तोष० । २ सत्त्वेन सच्चिदानन्दघनत्वेन उपपन्नानि श्रुतियुक्ति-
सिद्धानि । ३ 'अनलसत्त्वधाम्नि' इति वीर० । ४ त्वदङ्घ्रय इति वक्तव्ये बहुत्वं भक्तग्रहणाय । ५ तथेत्युपमार्थे अभक्तवदित्यर्थः । ६ तन्निरपेक्षं तरणसाधननिरपेक्षमेव । ७ यद्वा
सत्सु वैष्णवेष्वेव अनुग्रहो यस्य सः । ८ असन्नविद्यमानः । ९ त्वयि अस्तभाः लुप्तप्रज्ञाः केवलं वादे एव विशुद्धा विगतशुद्धिका बुद्धिर्येषामिति भङ्ग्यन्तरम् ।

सतां सुखावहानि रूपाणि धारयसीत्युक्तं विभर्षि रूपाणीति, तत्केन प्रकारेण सुखावहत्वमित्यपेक्षायामाहुः—सत्वं विशुद्धमिति । सत्वं वपु श्रयत इत्यन्वयः । श्रेयउपायनं कर्मफलदातृ । कथम् । येन वपुषा जनस्तवार्हणं पूजामीहते करोति । कैः । वेदाश्च क्रियायोगाश्च तपश्च समाधिश्च तैश्चतुराश्रमधर्मैरित्यर्थः । वपुषोऽनाश्रयणेऽर्हणासंभवान्न कर्मफलसिद्धिः स्यादिति ॥ ३४ ॥ त्वय्यम्बुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्तानामेव मोक्षो नान्येषामित्युक्तम्, तत्र कर्मफलं भक्तिं विना मा भून्मोक्षस्य तु ज्ञानैकसाध्यत्वात्किं भक्त्येति सानुशयान्प्रत्याहुः—सत्त्वं न चेदिति । हे धातः, इदं सत्त्वं निजं तव वपुर्न भवेच्चेत्तर्हि विज्ञानं विशिष्टमपरोक्षं ज्ञानं न भवेदित्यनुषङ्गः । कथंभूतम् । अज्ञानभिदापमार्जनम्, अज्ञानं च तत्कृता भिदा च तयोरपमार्जनं निवर्तकम् । यद्वा अज्ञानं भिनत्तीत्यज्ञानभिद्विज्ञानं मार्जनं नाशमपि प्राप्तमेवेति । ननु जडानां बुद्ध्यादीनां यतः प्रकाशस्तद्ब्रह्मेति ज्ञानं भवेदेवेति चेन्न । गुणप्रकाशैर्गुणावच्छिन्नैः प्रकाशैर्भवान्सर्वसाक्षी परिपूर्णः केवलमनुमीयते कल्प्यते नतु साक्षात्क्रियत इत्यर्थः । अनुमानप्रकारमाहुः । प्रकाशते यस्य च येन वा गुण इति । यस्य संबन्धी अयं बुद्ध्यादिगुणः प्रकाशते यो गुणसाक्षीत्येवं, येन वा बुद्ध्यारूढेन प्रमात्रा बुद्ध्यधिष्ठात्रा बाह्यो गुणः प्रकाशते इत्यनुमीयते इत्यर्थः । शुद्धसत्त्ववपुषि त्वयि सेव्यमाने तु तदाकारेऽन्तःकरणे त्वत्प्रसादेन साक्षात्कारो भवेदिति भावः ॥३५॥ एवं तावद्भक्तानामभ्युदयापवर्गार्थं रूपाणि त्रिभर्षीत्युक्तं तान्यपि भजनीयानि केवलं नतु ज्ञातुं शक्यन्ते अनन्तत्वादतर्क्यत्वाच्च मनोवचसोरगोचरत्वादित्याहुः—न नामरूपे इति । गुणाश्च जन्मानि च कर्माणि च तैर्निरूपितव्ये निरूपणार्हे न भवतः । कुतः । अनुमेयं वर्त्म मार्गो यस्य तवेति तत्रापि हेतुः—तस्य साक्षिण इति । नहि साक्षिणस्तत्त्वं मनोवचोगोचरमित्यर्थः । हे देव बहुधा द्योतमान, अथापि क्रियायामुपासनादिलक्षणायां त्वां प्रतियन्त्युपासकाः साक्षात्पश्यन्ति । हि प्रसिद्धम् ॥ ३६ ॥ तस्माद्भक्त्यैव मोक्ष इत्युपसंहरन्ति—शृण्वन्निति । अन्यानपि संस्मारयन् । क्रियासु देवार्चनादिकर्मसु ॥ ३७ ॥ विशेषतः श्रीकृष्णावतारमभिनन्दन्ति—दिष्ट्येति । दिष्ट्या भद्रम् । तव पदैः पादभूतायाः । ईश्वरस्य तव जन्ममात्रेणापनीत एव । किंच त्वत्पदकैः कोमलैः पदैः सुशोभनैर्वज्राङ्कुशादिशुभलक्षणैः गां पृथ्वीं द्यां स्वर्गं च तव त्वयानुकम्पिताम् ॥ ३८ ॥ ॥

सत्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ॥ वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥ ३४ ॥ सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् ॥ गुणप्रकाशैरनुमीयते भवान्प्रकाशते यस्य च येन वा गुणः ॥ ३५ ॥ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ॥ मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥ ३६ ॥ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते ॥ क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥ ३७ ॥ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ॥ दिष्ट्याङ्किता त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥ ३८ ॥ ॥ ७ ॥

---

१ श्रेयसा कर्मफलादिपुरुषार्थानां उपायनमिव सादरं दानं येन । यद्वोक्तश्रेयसः उपायनमाभिव्यक्त्येनाश्रयरूप इति तोप० । २ गुणप्रकाशैः गुणस्य श्रीइन्द्रियादिप्रभादेः प्रकाशैः इति तोप० । ३ 'निजं वपुः' इति पाठः । ४ मनसा तर्केण, वचसा आप्तवाक्येन अनुमेयं नत्वनुभाव्यं वर्त्म यस्य । ५ शृण्वन्निति श्रवणादीनां विकल्पो ज्ञेयः न समुच्चयः । ६ 'दिष्ट्या हरे नो भवतः' इति पाठः । ७ 'अङ्किता' इति पाठः । ८ बाह्यो गुणो घटादिः । ९ स ईश्वर इत्यनुमीयते इत्यर्थः । नित्यसंबन्धयोर्येन सूर्योदयस्येवानुमानं, यद्वा येन प्रकाशेन प्रकाशित एव गुणः प्रकाशित इति तत्प्रकाशेन स्फुलिङ्गादिप्रकाशेन वह्न्यादेरिवानुमानं इति तोप० । १० तस्य मनआदेः । ११ पद इति पादोत्पन्नत्वात्तद्भेदः ।

तव जन्मना भारोऽपनीत इत्युक्त्या ममापि किं जीववत्संसार उक्तो नहि नहीत्याहुः—नेति । बत हे ईश, असंसारिणस्ते जन्मनः कारणं क्रीडां विना न तर्कयामः । किंच हे अभयाश्रय, न भयमाश्रयत, इति तथा तत्संबोधनम् । हे नित्यमुक्तेत्यर्थः । तव जन्मकारणं नास्तीति किं वक्तव्यम्, यतो जीवात्मन्यपि भवादयस्त्वयि विषये या अविद्या तया कृता न परमार्थतः सन्तीति ॥३९॥ प्रस्तुतं प्रार्थयन्ते—मत्स्याश्वेति । नोऽस्मांस्त्रिभुवनं चान्यदा यथा पासि तथाऽधुना पाहीति वन्दनं ते इति च वदन्तः सर्वे शिरोभिः प्रणमन्ति ॥४०॥ देवकीं प्रत्याहुः—दिष्ट्येति । नोऽस्माकं भवायोद्भवाय साक्षात्परः पुमांस्ते कुक्षिं गतः अतो भयं मा भूदिति ॥४१॥ यस्य रूपमनिदं सर्वप्रत्यग्भूतम् । यथा यथावत् । अस्मान्वञ्चयित्वा एताविह स्यासेते इति मन्यमाना ब्रह्मेशानौ पुरोधाय पुरतः

न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ॥ भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥३९॥ मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ॥ त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥४०॥ दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान्भवाय नः ॥ मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥४१॥ ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ॥ ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥४२॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥२॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ अथ सर्वगुणोपेतः कालः परमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ॥ मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥२॥ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ॥ द्विजालिकुलसन्नादस्तबका वनराजयः ॥३॥ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ॥ अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥ ॥

कृत्वा ययुरिति ॥४२॥ ॥ इति श्रीमद्भा० म० पु० द० पूर्वार्धे भा० दी० टीकायां द्वितीयोऽध्यायः ॥२॥ ॥ तृतीये निजरूपेण संभूतस्तु हरिः स्वयम् ॥ पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥१॥ अथेति मङ्गलार्थम् । यर्हि सर्वगुणोपेतः कालो बभूव तदा देवक्यां विष्णुराविरासीदित्यष्टमश्लोकगतेनान्वयः । परमशोभनत्वमेवाह—यर्हीत्यादिना । अजनान्नारायणाज्जन्म यस्य प्रजापतेस्तस्य ऋक्षं रोहिणीनक्षत्रं । कथंभूतम्—शान्तानि ऋक्षाण्यश्विन्यादीनि ग्रहाश्च तारकाश्च यस्मिंस्तत् । यर्हीति सर्वत्रानुषज्यते ॥ १ ॥ निर्मलानामुडुगणानामुदयो यस्मिंस्तत्तथा । मङ्गलभूयिष्ठाः पुरादयो यस्यां सा ॥ २ ॥ जलरुहैः श्रीः शोभा येषां ते । द्विजालिकुलानां सन्नादो येषु ते स्तवका यासु ताः ॥३॥ समिन्धत । आडागमोऽत्र द्रष्टव्यः । समैन्धतेति । सम्यग्दीप्ता बभूवुरित्यर्थः ॥४॥

१ काष्ठा यथानन्दकरं मनस्त इत्युक्त्या मनसो धारणेऽपि कुक्षिगतत्वाद्युक्तिस्तस्यास्तोपार्थम् । २ अंशेन बलदेवेन सह, अथवा अंशेन मत्स्याश्वेत्यादिना इति तोप० । ३ अनिदं इदं दृश्यं तद्रहितम् । ब्रह्मात्मकं स्तुतेरविषयमपीत्यर्थः । ४ व्रजा गोष्ठानि, आकरा रत्नाद्युत्पत्तिस्थानानि । ५ शान्ताः निर्वाणप्राया अपि दीप्ता आसन्, शान्ताः प्रदक्षिणाः सन्त इति वेति तोप० । ६ 'समेधिताः' इति पाठः । ७ चक्रवर्ती तु यर्ह्येवाजनस्य प्राकृतजन्मरहितस्य भगवतो जन्मनक्षत्रमभूत् अथ तदैव सर्वगुणोपेतः कालोऽभूदित्यन्वयः इति व्याचख्यौ । ८ छान्दसत्वाद्विहितोऽप्यत्राडागमो द्रष्टव्य इत्यर्थः ।

सतां सुखावहानि रूपाणि धारयसीत्युक्तं विभर्षि रूपाणीति, तत्केन प्रकारेण सुखावहत्वमित्यपेक्षायामाहुः—सत्वं विशुद्धमिति । सत्त्वं वपु श्रयत इत्यन्वयः । श्रेयउपायनं कर्मफलदातृ । कथम् । येन वपुषा जनस्तवार्हणं पूजामीहते करोति । कैः । वेदाश्च क्रियायोगाश्च तपश्च समाधिश्च तैश्चतुराश्रमधर्मैरित्यर्थः । वपुषोऽनाश्रयणेऽर्हणासंभवान्न कर्मफलसिद्धिः स्यादिति ॥ ३४ ॥ त्वय्यम्बुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्तानामेव मोक्षो नान्येषामित्युक्तम्, तत्र कर्मफलं भक्तिं विना मा भून्मोक्षस्य तु ज्ञानैकसाध्यत्वात्किं भक्त्येति सानुशयान्प्रत्याहुः—सत्त्वं न चेदिति । हे धातः, इदं सत्त्वं निजं तव वपुर्न भवेच्चेत्तर्हि विज्ञानं विशिष्टमपरोक्षं ज्ञानं न भवेदित्यनुषङ्गः । कथंभूतम् । अज्ञानभिदापमार्जनम्, अज्ञानं च तत्कृता भिदा च तयोरपमार्जनं निवर्तकम् । यद्वा अज्ञानं भिनत्तीत्यज्ञानभिद्विज्ञानं मार्जनं नाशमाप प्राप्तमेवेति । ननु जडानां बुद्ध्यादीनां यतः प्रकाशस्तद्ब्रह्मेति ज्ञानं भवेदेवेति चेन्न । गुणप्रकाशैर्गुणावच्छिन्नैः प्रकाशैर्भवान्सर्वसाक्षी परिपूर्णः केवलमनुमीयते कल्प्यते नतु साक्षात्क्रियत इत्यर्थः । अनुमानप्रकारमाहुः । प्रकाशते यस्य च येन वा गुण इति । यस्य संबन्धी अयं बुद्ध्या

सत्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ॥ वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥ ३४ ॥ सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् ॥ गुणप्रकाशैरनुमीयते भवान्प्रकाशते यस्य च येन वा गुणः ॥ ३५ ॥ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ॥ मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥ ३६ ॥ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते ॥ क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥ ३७ ॥ दिष्ट्या हरेऽस्या भवतः पदोभुवो भारोऽपनीतस्तव जन्मनेशितुः ॥ दिष्ट्याङ्किता त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥ ३८ ॥ ॥ ७ ॥

दिगुणः प्रकाशते यो गुणसाक्षीत्येवं, येन वा बुद्ध्यारूढेन प्रमात्रा बुद्ध्यधिष्ठात्रा बाह्यो गुणः प्रकाशते इत्यनुमीयते इत्यर्थः । शुद्धसत्त्ववपुषि त्वयि सेव्यमाने तु तदाकारेऽन्तःकरणे त्वत्प्रसादेन साक्षात्कारो भवेदिति भावः ॥३५॥ एवं तावद्भक्तानामभ्युदयापवर्गार्थं रूपाणि बिभर्षीत्युक्तं तान्यपि भजनीयानि केवलं नतु ज्ञातुं शक्यन्ते अनन्तत्वादतर्क्यत्वाच्च मनोवचसोरगोचरत्वादित्याहुः—न नामरूपे इति । गुणाश्च जन्मानि च कर्माणि च तैर्निरूपितव्ये निरूपणार्हे न भवतः । कुतः । अनुमेयं वर्त्म मार्गो यस्य तवेति तत्रापि हेतुः—तस्य साक्षिण इति । नहि साक्षिणस्तत्त्वं मनोवचोगोचरमित्यर्थः । हे देव बहुधा द्योतमान, अथापि क्रियायामुपासनादिलक्षणायां त्वां प्रतियन्त्युपासकाः साक्षात्पश्यन्ति । हि प्रसिद्धम् ॥ ३६ ॥ तस्माद्भक्तस्यैव मोक्ष इत्युपसंहरन्ति—शृण्वन्निति । अन्यानपि संस्मारयन् । क्रियासु देवार्चनादिकर्मसु ॥ ३७ ॥ विशेषतः श्रीकृष्णावतारमभिनन्दन्ति—दिष्ट्येति । दिष्ट्या भद्रम् । तत्र पदः पादभूतायाः । ईश्वरस्य तव जन्ममात्रेणापनीत एव । किंच त्वत्पदकैः कोमलैः पदैः सुशोभनैर्वज्राङ्कुशादिशुभलक्षणैः गां पृथ्वीं द्यां स्वर्गं च तत्र त्वयानुकम्पिताम् ॥ ३८ ॥ ॥

१ श्रेयसा कर्मफलादिपुरुषार्थाना उपायनमिव सादरं दानं येन । यद्वोक्तश्रेयसः उपायनमाधिक्येनाश्रयरूप इति तोष० । २ गुणप्रकाशैः गुणस्य श्रीदेवक्यादिप्रभावैः प्रकाशैः इति तोष० । ३ 'निजं वपुः' इति पाठः । ४ मनसा तर्केण, वचसा आप्तवाक्येन अनुमेयं नत्वनुभाव्यं वर्त्म यस्य । ५ शृण्वन्निति श्रवणादीनां विकल्पो ज्ञेयः न समुच्चयः । ६ 'दिष्ट्या हरे नो भवतः' इति पाठः । ७ 'अङ्किता' इति पाठः । ८ बाह्यो गुणो घटादिः । ९ स ईश्वर इत्यनुमीयते इत्यर्थः । नित्यसंबन्ध्यरुणोदयेन सूर्योदयस्येवानुमानं, यद्वा येन प्रकाशेन प्रकाशित एव गुणः प्रकाशित इति तत्प्रकाशेन स्फुलिङ्गादिप्रकाशेन वह्न्यादेरिवानुमानं इति तोष० । १० तस्य मनआदेः । ११ पद इति पादोत्पन्नत्वात्तद्भेदः ।

तव जन्मना भारोऽपनीत इत्युक्त्या ममापि किं जीववत्संसार उक्तो नहि नहीत्याहुः—नेति । बत हे ईश, असंसारिणस्ते जन्मनः कारणं क्रीडां विना न तर्कयामः । किंच हे अभयाश्रय, न भयमाश्रयत, इति तथा तत्संबोधनम् । हे नित्यमुक्तेत्यर्थः । तव जन्मकारणं नास्तीति किं वक्तव्यम्, यतो जीवात्मन्यपि भवादयस्त्वयि विषये या अविद्या तया कृता न परमार्थतः सन्तीति ॥३९॥ प्रस्तुतं प्रार्थयन्ते—मत्स्याश्वेति । नोऽस्मांस्त्रिभुवनं चान्यदा यथा पासि तथाऽधुनापि पाहीति वन्दनं ते इति च वदन्तः सर्वे शिरोभिः प्रणमन्ति ॥४०॥ देवकीं प्रत्याहुः—दिष्ट्येति । नोऽस्माकं भवायोद्भवाय साक्षात्परः पुमांस्ते कुक्षिं गतः अतो भयं मा भूदिति ॥४१॥ यस्य रूपमनिदं सर्वप्रत्यग्भूतम् । यथा यथावत् । अस्मान्वञ्चयित्वा एताविह स्थास्येते इति मन्यमाना ब्रह्मेशानौ पुरोधाय पुरतः

न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ॥ भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥३९॥ मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ॥ त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥४०॥ दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान्भवाय नः ॥ मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥४१॥ ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ॥ ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥२॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ अथ सर्वगुणोपेतः कालः परमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ॥ मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥२॥ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ॥ द्विजालिकुलसन्नादस्तवका वनराजयः ॥३॥ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ॥ अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥ ॥

कृत्वा ययुरिति ॥४२॥ ॥ इति श्रीमद्भा० म० पु० द० पूर्वार्धे भा० दी० टीकायां द्वितीयोऽध्यायः ॥२॥ ॥ तृतीये निजरूपेण संभूतस्तु हरिः स्वयम् ॥ पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥१॥ अथेति मङ्गलार्थम् । यर्हि सर्वगुणोपेतः कालो बभूव तदा देवक्यां विष्णुराविरासीदित्यष्टमश्लोकगतेनान्वयः । परमशोभनत्वमेवाह—यर्हीत्यादिना । अजनान्नारायणाज्जन्म यस्य प्रजापतेस्तस्य ऋक्षं रोहिणीनक्षत्रं । कथंभूतम्—शान्तानि ऋक्षाण्यश्विन्यादीनि ग्रहाश्च तारकाश्च यस्मिंस्तत् । यर्हीति सर्वत्रानुषज्यते ॥ १ ॥ निर्मलानामुडुगणानामुदयो यस्मिंस्तत्तथा । मङ्गलभूयिष्ठाः पुरादयो यस्यां सा ॥ २ ॥ जलरुहैः श्रीः शोभा येषां ते । द्विजालिकुलानां सन्नादो येषु ते स्तवका यासु ताः ॥३॥ समिन्धत । आडागमोऽत्र द्रष्टव्यः । समैन्धतेति । सम्यग्दीप्ता बभूवुरित्यर्थः ॥४॥

१ काष्ठा यथानन्दकर मनस्त इत्युक्त्या मनसो धारणेऽपि कुक्षिगतत्वायुक्तिस्तस्यास्तोपार्थम् । २ अंशेन बलदेवेन सह, अथवा अंशेन मत्स्याश्वेत्यादिना इति तोष० । ३ अनिदं इदं दृश्यं तद्रहितम् । ब्रह्मात्मकं स्तुतेरविषयमपीत्यर्थः । ४ व्रजा गोष्ठानि, आकरा रत्नाद्युत्पत्तिस्थानानि । ५ शान्ताः निर्वाणप्राया अपि दीप्ता आसन्, शान्ताः प्रदक्षिणाः सन्त इति वेति तोष० । ६ 'समेधिताः' इति पाठः । ७ चक्रवर्ती तु यर्ह्येवाजनस्य प्राकृतजन्मरहितस्य भगवतो जन्मनक्षत्रमभूत् अथ तदैव सर्वगुणोपेतः कालोऽभूदित्यन्वयः इति व्याचख्यौ । ८ छान्दसत्वादविहितोऽप्यत्राडागमो द्रष्टव्य इत्यर्थः ।

असुरद्रुहां कंसादिव्यतिरिक्तानां सर्वप्राणिनां देवानां चेति । स्वर्गे तु विशेषमाह—जायमान इति । अजने जायमाने ॥ ५ ॥ तदा आसन्नः प्रसवो यस्मिंस्तस्मिन्समये ॥ ६ ॥ ७ ॥ तमसोद्भूते घनतमसि निशीथे यथा यथावदैश्वरेणैव रूपेण ॥ ८ ॥ तमद्भुतं बालकं वसुदेव ऐक्षतेति द्वितीयश्लोकेनान्वयः । अद्भुतत्वे हेतुगर्भाणि विशेषणान्यम्बुजेक्षणमित्यादीनि । श्रीवत्सलक्ष्मं श्रीवत्सलक्ष्माणम् । गलेन शोभत इति गलशोभी स कौस्तुभो यस्मिन् ॥ ९ ॥ परिष्वक्तसहस्रकुन्तलं किरीटकुण्डलादीनां त्विषा स्फुरदपरिमितकेशमित्यर्थः ॥ १० ॥ विस्मयेनोत्फुल्ले विकसिते लोचने यस्य सः । गवामयुतमस्पृशन्मनसा

मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम् ॥ जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयो दिवि ॥५॥ जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः ॥ विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ॥६॥ मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः ॥ मन्दं मन्दं जलधरा जगर्जुरनु सागरम् ॥७॥ निशीथे तम उद्भूते जायमाने जनार्दने ॥ देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ॥ आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥८॥ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुदायुधम् ॥ श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥९॥ महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् ॥ उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥१०॥ स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा ॥ कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥११॥ अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ॥ स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् ॥१२॥ ॥ वसुदेव उवाच ॥ विदितोऽसि भवान्साक्षात्पुरुषः प्रकृतेः परः ॥ केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥१३॥

दत्तवान्, कंसनिगृहीतस्य दानासंभवात् । स्पृष्टौ हेतुः—कृष्णावतारेति । मुदा आप्लुतो व्याप्तः, स्नात इति वा ॥ ११ ॥ कृतधीः शुद्धबुद्धिः ॥ १२ ॥ वसुदेवः प्रथमं पुत्रबुद्ध्या पश्यंस्तां परित्यज्याह—विदितोऽसीति । कथं विदितोऽसि, भवान् प्रकृतेः परः पुरुष इति । ननु किमाश्चर्यं, पुरुषस्य प्रकृतेरन्यत्वादेवेत्यत आह—साक्षादिति । प्रत्यक्षत इत्यर्थः । नन्वक्षिसंनिकृष्टं प्रत्यक्षत उपलभ्यते किं चित्रमित्यत आह—केवलेति । केवलश्चासावनुभवश्चानन्दश्च तावेव स्वरूपं यस्य सः । किंच सर्वबुद्धिदृक् । नह्येवंभूतो दृश्यो भवतीत्यर्थः ॥ १३ ॥ ॥ ॥ ॥

१ जायमाने आसन्नप्रादुर्भावे अजने श्रीकृष्णे इत्यर्थः । २ अन्विता अन्योन्यं मिलिताः सन्तः । ३ गर्जनं सागरमन्वित्यर्थः । ४ जनानर्दयतीत्येवंभूते निशीथे इत्यर्थः क्वचित् । चक्रवर्ती तु जनाना सर्वभक्तमुनिदेवानामर्दने भगवन्नाविर्भवाविर्भव ममयोऽयमिति याचने जायमाने सतीति व्याचष्ट । ५ पुष्कलः पूर्णिमावत्परिपूर्णकलः । ६ बालकं स्वल्पाकारं, बालानां कं यस्मात्, बालः को यस्मात्, बालैर्गोपैः कं यस्य । ७ अम्बुजेक्षणं अम्बुजाया लक्ष्म्यामीक्षणं यस्य, अम्बुजौ चन्द्रसूर्यौ ईक्षणे यस्य, अम्बुजे शते ईक्षणे यस्य तोष० । ८ उद्यतान्युत्कृष्टानि वा आयुधान्यस्य । ९ श्लेषेण भाः श्रीकृष्णकान्तिस्तस्यां गर्भेत एव रतेति । १० साक्षात् अक्षिजन्यवृत्त्येत्यर्थः । मुनयस्तु वाक्यजन्यवृत्त्या जानन्ति एवंभूतोऽपि त्वं साक्षाद्दृशा विदितोऽसीत्यहो मुन्यादितोऽपि मम भाग्यमिति भावः इति तोष० ।

नतु देवकीजठरे प्रविष्टस्य किमियमतिस्तुतिः क्रियतेऽत आह—स एवेति । स एव उक्तस्वरूप एव त्वं न देवकीजठरे प्रविष्ट इत्यर्थः । ननु विश्वं सृष्ट्वा तदनु प्रविष्टस्य किमेतद्वदत आह—स्वप्रकृत्येति । स्वमायया सृष्ट्वा वा तदनु त्वमप्रविष्ट एवेति । ननु तर्हि कथं श्रुत्योच्यते—'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यत आह—प्रविष्ट इवेति । भाव्यसे निरूप्यसे । प्रत्यक्षतो वा सद्रूपेण वा प्रविष्ट इव लक्ष्यसे ॥१४॥ अत्र दृष्टान्तः—यथेति । इमेऽविकृता भावा महदादयो यथा तथेति । दृष्टान्तं विवृणोति—ते विकृतैरिति । ते विकृतैः षोडशविकारैः सह संनिपत्य विराजं ब्रह्माण्डं जनयन्ति । संनिपतने हेतुः—यतः पृथग्भूताः सन्तो नानावीर्या विशिष्टकार्यसमर्था न भवन्ति—अतः, संनिपत्येति । एवं समुत्पाद्यानुगताः प्रविष्टा इव दृश्यन्ते न पुनः प्रविष्टाः । कुतः । उत्पत्तेः प्रागेव कारणतया विद्यमानत्वान्न तेषामिह सृष्टे कार्ये पश्चात्संभवः प्रवेश इति ॥ १५ ॥ १६ ॥ दार्ष्टान्तिकेऽतिदिशति—एवं भवानिति । ननु यद्यहमप्रच्युतस्वरूप एव कारणतया कार्येषु वर्ते तर्हि तेष्विन्द्रियैर्गृह्यमाणेषु मम ग्रहणं किं नास्ति तत्राह—बुद्ध्यनुमेयलक्षणैरिति । बुद्ध्या रूपादिज्ञानेनानुमेयं लक्षणं स्वरूपं येषां तैर्गुणैरिन्द्रियैर्ग्राह्यैर्गुणैः[3] सह सन्नपि वर्तमानोऽपि तद्गुणाग्रहस्तैर्गुणैः सह न गृह्यते । अयं भावः—नहि ग्राह्यैः सह भावमात्रं ग्रहणे कारणं किंत्विन्द्रियाणां शक्तिः । सा च कार्यैकसमधिगम्या

**स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् ॥ तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ १४ ॥ यथेमेऽविकृता भावास्तथा ते विकृतैः सह ॥ नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥१५॥ संनिपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ॥ प्रागेव विद्यमानत्वान्न तेषामिह संभवः ॥ १६ ॥ एवं भवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ॥ अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १७ ॥ य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः ॥ विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् ॥ १८ ॥ ॥ ॥**

यथाकार्यमेव कल्प्यते । अतो यथा चक्षुषां रूपग्रहणे रसादिग्रहणं नास्ति तथैव विषयग्रहणे त्वद्ग्रहणमपीति । अविषयत्वेन च ग्रहणानर्हत्वमुक्तमेव सर्वबुद्धिदृगित्यत्र । एवं तावत्प्रागेव विद्यमानत्वात्प्रवेशो नास्तीत्युक्तम् । किंच परिच्छिन्नस्य नीडे पक्ष्यादेरिव प्रवेशो भवेत्तव त्वनावृतत्वादपरिच्छिन्नत्वेन बहिरन्तर्भेदो नास्ति, कुतः प्रवेश इत्याह—अनावृतत्वादिति । अनावृतत्वे हेतूनाह—सर्वस्येति । नहि सर्वरूपस्यान्यदावरकमस्ति सर्वात्मनः, नह्येकेनावृतोऽन्यस्यात्मा भवेत् । आत्मवस्तुन इत्यात्मनो वस्तुनश्चेति हेतुद्वयम् । अत सातत्यगमन इत्यस्मादतति व्याप्नोतीत्यात्मा, नहि व्यापकस्यावरणं घटते । तथा वस्तुनः परमार्थवस्तुन आवरणं न घटत इत्यर्थः । तस्मात्तवान्तर्यामितया प्रवेशो न मुख्योऽस्ति कुतस्तरां गर्भे प्रवेशः । अतः केवलानुभवानन्दस्वरूप एव त्वं विदितोऽसीत्याश्चर्यं मम भाग्यमित्यर्थः ॥ १७ ॥ नन्वेतद्धेतुचतुष्टयं प्रपञ्चस्यावस्तुत्वे घटेत, तत्तु न संभवति, सत्यत्वेन प्रतीतेरित्याशङ्क्याह—य इति । आत्मनो दृश्येषु गुणेषु देहादिषु स्वव्यतिरेकत आत्मव्यतिरेकेण पृथक् सन्नयं देहादिरिति व्यवस्यते निश्चिनोति यः पुमान्सोऽबुधोऽविद्वान् । व्यतिरेकदर्शनात् । किंच मनीषितं विचारितं तद्देहादि सर्वं यतो विनाऽनुवादं वाचारम्भणमात्रं विना न सम्यग्भवति । अतोऽवस्तुत्वेन त्यक्तं बाधितमेव वस्तुबुद्ध्या उपाददत्स्वीकुर्वन्नबुध इत्यर्थः ॥ १८ ॥

१ महदादयो विराजादिकार्येषु यथेति योज्यम् । २ सनिपत्य मिलिता भूत्वेत्यर्थः । ३ ग्राह्यैरुपादेयैः प्रार्थ्यैरिति यावत् । गुणैर्विषयैः । ४ तद्गुणाग्रहः तेषु गुणेषु आग्रहः पुनःपुनरासक्तिर्यस्य तथाभूतो भवान्भवतीति तोष० । ५ अग्रे सृष्ट्यादौ । ६ यथा आम्रफले दृष्टे तद्वर्णविशिष्टाकारमात्रं चक्षुषा गृह्यते न तदन्तर्विद्यमानोऽपि रसस्तद्वदित्यर्थः । ७ 'परमार्थस्यावस्तुना' इति पाठः । ८ यद्वा दृश्या दर्शनीया ये गुणास्तेषु मध्ये स्वव्यतिरेकतः स्वरूपभूताधिष्ठानं त्वां विनान्यत्र देवादिषु अयं गुणः सन्निति यो निश्चिनोति सोऽबुध इत्यादि तोष० । ९ ददेः लङ् पदस्यैपदमार्षम् ।

एवं परमेश्वरदृश्यस्य तद्व्यतिरेकेणासत्त्वमुक्तम्, परमेश्वरोपादानत्वादपि तद्व्यतिरेकेणासत्त्वमित्याह—त्वत्तोऽस्येति । नचैवं सत्यपि विकारित्वमित्याह—अनीहादिति । अगुणत्वादनीहत्वं ततोऽविकारित्वमित्यर्थः । नन्वनीहत्वे कथं कर्तृत्वं, कर्तृत्वे वा कुतोऽविक्रियत्वं तत्राह—त्वयीश्वर इति । ब्रह्मत्वादविकारित्वमीश्वरत्वात्कर्तृत्वमिति । नन्वेतदपि विरुद्धमेव नेत्याह—त्वदाश्रयत्वादिति । गुणैः कुर्वद्भिस्त्वयि सृष्ट्यादिकर्तृत्वमुपचर्यते गुणाश्रयत्वात् यथा भृत्यकृतं राजनीतिः ॥ १९ ॥ एवंभूतस्यैव तव यथा विश्वस्थितिसर्गप्रलयार्थं त्रिवर्णा गुणावताराः एवमयं भूभारापनयनार्थमिति ज्ञातमित्याह—स त्वमिति श्लोकद्वयेन ॥२०॥ रिरक्षिपु रक्षितुमिच्छुरवतीर्णोऽसि कृष्णेन वर्णेन । अतः साधूनां रक्षणार्थं राजन्यसंज्ञा येऽसुरकोटियूथपास्तैर्निर्व्यूह्यमाना इतस्ततश्चाल्यमानाश्चमूः सेना निहनिष्यसे संहरिष्यसि ॥२१॥ किंतु तथाप्यप्रमत्तेन त्वया भाव्यमित्याह—अयं त्विति । असभ्यः खलः । समर्पितं कथितम् । अभिसरत्यागमिष्यति ॥२२॥ उपाधावदस्तौत् ॥२३॥ त्वयि भयशङ्कैव तावन्नास्तीति श्लोकचतुष्टयेनाह देवकी किंचिद्विज्ञापयितुम्—रूपमिति । यत्तत्किमपि रूपं वस्तु प्राहुर्वेदाः । किं तद्वस्तु तदाह—अव्यक्तम् । अत्र

त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदन्त्यनीहादगुणादविक्रियात् ॥ त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥१९॥ स त्वं त्रिलोकस्थितये स्वमायया[1] बिभर्षि शुक्लं[2] खलु वर्णमात्मनः ॥ सर्गाय रक्तं रजसोपबृंहितं[3] कृष्णं च वर्णं तमसा[4] जनात्यये ॥२०॥ त्वमस्य[5] लोकस्य विभो रिरक्षिपुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ॥ राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ २१ ॥ अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाऽग्रजांस्ते न्यवधीत्सुरेश्वर ॥ स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः ॥ २२ ॥ ॥ श्रीशुक उवाच ॥ अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ॥ देवकी तमुपाधावत्कंसाद्भीता[6] शुचिस्मिता ॥ २३ ॥ ॥ देवक्युवाच ॥ रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम् ॥ सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः[7] ॥ २४ ॥ ॥ ॥

हेतुः—आद्यं कारणम् । किं परमाणवः, न, ब्रह्म बृहत् । किं प्रधानम्, न, ज्योतिश्चेतनम् । किं वैशेपिकाणामिव ज्ञानगुणम्, न, निर्गुणम् । किं मीमांसकानामिव ज्ञानपरिणामि, न, निर्विकारम् । किं पुष्कराक्षादीनामिव शक्तिविक्षेपपरिणामि, न, सत्तामात्रम् । तर्हि किं सामान्यम्, न निर्विशेषम् । तर्हि किं कारणत्वात्सक्रियम्, न, निरीहम् । संनिधिमात्रेण कारणम् । एवंभूतं किमपि कार्यकल्प्यं यद्वस्तु स एव साक्षात्त्वं विष्णुरिति । अपरोक्षश्चेत्याह—अध्यात्मदीप इति । बुद्ध्यादिकरणसंघातप्रकाशक इत्यर्थः । अथवा अव्यक्तं, न केनापि प्रकारेण व्यज्यत इत्यव्यक्तम् । कथम् । उत्पत्त्या तावन्न व्यज्यत इत्याह—आद्यं सर्वस्य कार्यसाध्यम् । अनादीत्यर्थः । तथा ब्रह्म ज्योतिर्निर्गुणं निर्विकारमिति चतुर्भिः पदैर्देशेन प्रकाशेन च गुणेन च विकारेण च व्यक्तिं निराकरोति—तथा सत्तामात्रमिति विशेषेण, निर्विशेषमिति सामान्येन, निरीहमिति क्रियया च व्यक्तिं निराकरोति—अन्यत् समानम् । एवंभूतस्य तव न भयशङ्केति भावः ॥ २४ ॥

१ स्वमायया भक्तकृपया । २ शुक्लं शुद्धं मायातत्कार्यास्पृष्टं वर्णं । ३ रजोमयत्वेन रक्तं सृष्ट्यादिरागवहुलं ब्रह्मात्मना । ४ तमोमयत्वेन कृष्णमनभिव्यञ्जितस्वरूपप्रकाशं रुद्रात्मना पुष्णासि । ५ अस्येति नलोकेति कर्मणि षष्ठी । 'विश्वस्य' इति पाठः । ६ भीतेति महापुरुषत्वदर्शनेऽपि भयस्थितिः पुत्रस्नेहस्य प्राबल्यज्ञापनाय । ७ यद्वा अधिकृत आत्मा येस्ते अध्यात्मानः शुकादयस्तानपि दीपयसि इति ।

किंच महाप्रलयेऽप्यवशिष्यमाणस्य कुतो भयमित्याह—नष्टे लोके इति । चराचरे लोके । महाभूतेषु लीनेष्वप्यादिभूतं भूतसूक्ष्मं प्रविष्टेषु तस्मिन्नपि व्यक्तेऽव्यक्तं प्रधानं प्राप्ते । अशेषात्मके प्रधाने संज्ञा प्रज्ञा यस्य । एवं मयि लीनमिदमस्ति पश्चादेवमुद्बोधनीयमिति सोऽशेषसंज्ञः । शेषसंज्ञ इति वा ॥ २५ ॥ किंच एवं प्रलयहेतुर्योऽयं काल एनम् । हे अव्यक्तबन्धो प्रकृतिप्रवर्तक, तस्य प्रलयावधिभूतस्य ते तव चेष्टां लीलाम् । चेष्टते विपरिवर्तते पुनः पुनर्वत्सरावृत्त्या । महीयान् द्विपरार्धरूपः । यस्य चेष्टामाहुस्तं त्वा त्वां क्षेमधामाभयस्थानं प्रपद्ये शरणं व्रजामि ॥ २६ ॥ क्षेमधामत्वमेवाह—मर्त्य इति । लोकान्प्रति यदृच्छया केनापि भाग्योदयेन । हे आद्य ॥ २७ ॥ प्रस्तुतं विज्ञापयति—स त्वमिति । भृत्यानां वित्रासं हन्तीति भृत्यवित्रासहा । भृत्यविदिति वा छेदः ।

नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ॥ व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यतेऽशेषसंज्ञः ॥२५॥ योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् ॥ निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २६ ॥ मर्त्यो मृत्युव्यालभीतः पलायँल्लोकान्सर्वान्निर्भयं नाध्यगच्छत् ॥ त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहासि ॥ रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ २८ ॥ जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ॥ समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ २९ ॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ॥ शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३० ॥ विश्वं यदेतत्स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ॥ बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ॥ ३१ ॥ ॥श्रीभगवानुवाच॥ ॥ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायंभुवे सति ॥ तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥ युवां वै ब्रह्मणादिष्टौ प्रजासर्गे यदा ततः ॥ संनियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥ वर्षवातातपहिमघर्मकालगुणाननु ॥ सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३४ ॥ ॥ ॥ ॥

पौरुषमैश्वरम् । ध्यानधिष्ण्यं ध्यानास्पदम् । मांसदृशां मांसचक्षुषां प्रत्यक्षं मा कृथाः ॥ २८ ॥ भवत एव हेतोर्निमित्तात्कंसात्समुद्विजे बिभेमि, यतोऽधीरचित्ता ॥ २९ ॥ ३० ॥ किमित्युपसंहर्तव्यमेवंभूतेन मया पुत्रेण तव महती श्लाघा स्यादिति तत्राह—विश्वमिति । निशान्ते प्रलयावसाने । यथावकाशमसंकोचतः । असंभावितत्वादुपहास्यतैव स्यादित्यर्थः ॥ ३१ ॥ चतुर्भुजेन रूपेणाविर्भावे कारणं तावदाह—त्वमेवेत्यादिचतुर्दशभिः । पूर्वसर्गे प्रथमजन्मनि । अभूः आसीः । पृश्निर्नाम स्वायंभुवे मन्वन्तरे तदा अयं वसुदेवः ॥ ३२ ॥ तेपाथे तपः कृतवन्तौ ॥ ३३ ॥ ३४ ॥ ॥ ॥

१ यद्वा अशेषा वैकुण्ठादयस्तत्तत्पदार्थास्तेऽपि संज्ञा यस्य, यद्वा शिष्यन्ते प्रलयेऽपि वैकुण्ठादयस्ते संज्ञायन्ते येनेति तोष० । २ कालो निमेषादिर्वत्सरान्तः । ३ यद्वा अद्य अधुना त्वयि प्रादुर्भूते सर्वोऽपि स्वस्थः शेते शयिष्यतीति तोष० । ४ अस्मात् पादाब्जात् मर्त्याद्वा । ५ उग्रेति पिता नोग्रः सेना च नोग्रा किंत्वात्मज एवोग्र इति भयेनैव साक्षात्तन्नामाग्रहणमिति चक्र० । ६ उपसंहर गोपय । ७ 'विडम्बनं महत्' इति पाठः । ८ सति मन्वन्तरे वर्तमाने, यद्वा हे सति इति सम्बोधनं श्रैष्ठ्यात् । ९ आतपो रविरश्मिजः । घर्म ऊष्मा । १० विनिर्धूतौ वासनोच्छेदोऽपि व्यञ्जितः । ११ नानार्थस्य तपेस्तपःशब्दः । दत्ते च तपःशब्दे पुनरुक्तिः स्यादिति तेपाथे इत्यस्य कृतवन्तावित्यर्थः पर्यवस्यतीति तोष० ।

॥ ३५ ॥ तप्यतोराचरतोः ईयुर्गतानि । मदात्मनोर्मच्चित्तयोः ॥ ३६ ॥ अमुना वपुषा प्रादुर्भूतोऽस्मि ॥३७॥ वरदराट् वरदेषु श्रेष्ठ इत्यर्थः । तेन सकृद्वरेण च वारंवारमाविर्भावे कारणमुक्तम् । कामस्य दित्सया दातुमिच्छया । मादृशो मया सदृशः ॥ ३८ ॥ मे मत्तोऽपि युवामपवर्गं न वव्राथे न वृतवन्तौ ॥ ३९ ॥ वरं दत्त्वा मयि गते ॥ ४० ॥ ४१ ॥ अदित्यां कश्यपाद्वामन आसेति यत्तदपि तद्रूपयोर्युवयोरहमेव पुनरासमित्यर्थः ॥ ४२ ॥ ४३ ॥ प्राक्प्रथमं तावदेतद्रूपं मे

शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ॥ मत्तः[1] कामानभीप्सन्तौ मदाराधनमीहतुः[2] ॥३५॥ एवं वां तप्यतोस्तीव्रं[3] तपः परमदुष्करम् ॥ दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥३६॥ तदा वां परितुष्टोऽहममुना[4] वपुषानघे ॥ तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥३७॥ प्रादुरासं वरदराड् युवयोः कामदित्सया ॥ व्रियतां वर इत्युक्ते मादृशो वां[5] वृतः सुतः ॥ ३८ ॥ अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ॥ न वव्राथेऽपवर्गं मे मोहितौ देवमायया[6] ॥ ३९ ॥ गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ॥ ग्राम्यान्भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥४०॥ अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ॥ अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥४१॥ तयोर्वा पुनरेवाहमदित्यामास कश्यपात् ॥ उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥४२॥ तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाथ[7] वाम् ॥ जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ४३ ॥ एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ॥ नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४४ ॥ युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ॥ चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५॥ (यदि[9] कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय ॥ मन्मायामानयाशु त्वं यशोदागर्भसंभवाम् ॥ १ ॥) ॥ श्रीशुक उवाच ॥ इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया[10] ॥ पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४६ ॥ ततश्च शौरिर्भगवत्प्रचोदितः[11] सुतं समादाय स सूतिकागृहात् ॥ यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया ॥ ४७ ॥ ॥ ॥

जन्मेति स्मरणाय ज्ञानाय दर्शितम् । मद्भवं मद्विषयम् । अनन्तरं त्वदिच्छया बालोऽपि भविष्यामीति भावः ॥ ४४ ॥ ननु त्वयि प्रसन्नेऽपि कथमावयोः पुनःपुनर्जन्मेत्यतः परं न भविष्यतीत्याह—युवामिति ॥ ४५ ॥ ४६ ॥ यदि कंसाद्बिभेषि तर्हि मां गोकुलं नय यशोदायाश्च तां कन्यां मन्मायामानयेति प्रथममेव भगवता[12] प्रचोदितो वसुदेवो यदा गन्तुमैच्छत्तदैव अजापि या योगमाया सा नन्दजायया निमित्तमात्रभूतया अजनि जाता ॥ ४७ ॥ ॥ ॥

१ मत्तः पुत्रभूतात् कामान्पितृभावोचितानि सुखानि । २ ईहतुः ईहाचक्राते कृतवन्तावित्यर्थः । आर्षत्वादिजादेरित्यामभावस्तदभावश्चेति वीर० । ३ 'तप्यतोर्भद्रे' इति पाठः । ४ अमुना चतुर्भुजेन वपुषा । अस्य प्रादुरासमित्युत्तरेणान्वयः । ५ वां युवाभ्यामित्यर्थः । कर्तरि शेषे षष्ठी । ६ देवस्य मम माययेति मयि पुत्रस्नेहसंपादिन्या मम कृपया, यद्वा भवत्कर्तृकमद्विषयकपुत्रोचितलालनेच्छारूपयेति तोष० । ७ अत्र 'युवाम्' इति पाठस्तत्र युवामित्यस्य युवयोरित्यर्थः । ८ 'वा' इति पाठः । ९ प्रक्षिप्तोऽयं श्लोक इति केषाञ्चिन्मतम् । १० आत्ममायया स्वबुद्धिसौष्ठवेन, स्वेच्छया, आत्मकृपया वेति तोष० । ११ पूर्वप्रचोदनमसादेवानुमेयम् । १२ भगवता प्रचोदित इत्यादिविशेषो हरिवंशादावालोचनीयः ।

हृताः प्रत्ययार्थाः सर्वा वृत्तयो येषाम् । अथवा हृताः प्रत्यया अन्याश्च सर्वा वृत्तयो येषां जाग्रतामपि तथाभूतेषु द्वारपालेषु सत्सु । बृहत्सु कपाटेषु लोहकीलकयुक्तशृङ्खलैर्बृहद्भिः कपाटादिभिर्दुरत्यया इति वा ॥४८॥ स्वयमेव व्यवर्यन्त विवृता इत्यर्थः । व्यव्रियन्तेन्ति वक्तव्ये गुणश्छान्दसः । रवेर्निमित्तात् ॥४९॥ गम्भीरो यस्तोयौघस्तस्य जवेन य ऊर्मयस्तैः फेनिला फेनव्याप्ता । भयानकैरावर्तशतैर्व्याप्तापि । श्रियःपतेः सीतापतेः ॥ ५० ॥ निद्रया अजया ॥ ५१ ॥ प्रतिमुच्य बद्ध्वा । पदोः पादयोः । लोहं निगडम् । आस्ते स्म ॥ ५२ ॥ जातं किंचिदिति केवलमबुध्यत नतु तल्लिङ्गं पुत्रः कन्या वेति । योगनिद्रया च मोहि-

तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ॥ द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकील-शृङ्खलैः ॥४८॥ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यन्त यथा तमो रवेः ॥ ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद्वारि निवारयन्फणैः ॥ ४९ ॥ मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला ॥ भयानका-वर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियःपतेः ॥५०॥ नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान्प्रसुप्तानुपलभ्य निद्रया ॥ सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥५१॥ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ॥ प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥५२॥ यशोदा नन्दपत्नी च जातं परमबुध्यत ॥ न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥५३॥ ॥ इति श्रीमद्भागवते दशमस्कन्धे पू० कृष्णजन्मनि तृतीयोऽध्यायः ॥ ३ ॥

॥ श्रीशुक उवाच ॥ बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ॥ ततो बालध्वनिं श्रुत्वा गृहपाला[२]: समुत्थिताः ॥१॥ ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ॥ आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥२॥ स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ॥ सूतीगृहमगात्तूर्णं प्रस्खलन्मुक्तमूर्धजः ॥३॥ तमाह भ्रातरं देवी कृपणा करुणं सती ॥ स्नुषे[३]यं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥ बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ॥ त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥ नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ॥ दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥ ॥ श्रीशुक उवाच ॥ उपगुह्यात्मजामेवं रुदत्या दीनदीनवत् ॥ याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥७॥

तेति ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥छ॥ ॥ चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलः ॥ दुर्मन्त्रिभिर्हितं मेने कंसो बालादिहिंसनम् ॥१॥१॥ तदष्टमं जन्म ॥२॥ कालो मृत्युः ॥३॥४॥५॥ अङ्ग हे भ्रातः ॥६॥ दीनदीनवत् दीनादपि दीनवन्नतु तथा, पुत्रस्यान्यत्र नीतत्वात्सा च योगमायेति ज्ञातत्वात् । याचितोऽप्याचिच्छिदे हस्तादाकृष्य जग्राह ॥७॥ ॥ ॥ ॥

१ हृताः प्रत्ययो ज्ञानं तज्जनिकाश्चाक्षुपादिवृत्तयो येषां । २ गृहपाला रक्षानियुक्ताः । श्लेषेण श्वान इवेति तोप० । ३ भाविनस्तव पुत्रस्येयं वधूर्भविष्यतीति बुद्ध्या हन्तुं नार्हसीत्यर्थ इति चक्रवर्ती ।

अन्यान् शिशून्हनिष्यतीति ज्ञात्वा वारयति । पाठान्तरे मा मां
अपोथयद्बलेन चिक्षेप ॥ ८ ॥ सद्य एव देवी भूत्वा ॥ ९ ॥ १० ॥ ११ ॥ कृपणानिति । परमविस्मितः कथं दैवी वागनृता जातेति ॥ १४ ॥ भाम हे
कृपणां वृथाऽहिंसीर्हिंसितवानसीति ॥ १२ ॥ बहुनामनिकेतेषु वाराणस्यादिस्थानेषु ॥ १३ ॥ हे महाभागौ, स्वकृतंभुजः स्वारब्धकर्मभोक्तॄन् स्वात्मजान् मा शोचतम्।
भगिनीभर्तः, पुरुषादो राक्षसो यथा स्वापत्यमेव हिनस्ति तद्वत् ॥ १५ ॥ १६ ॥ १७ ॥ सदा नासत इत्यनेन यदुक्तं जन्म-
किंच जन्तवः प्राणिनः सदा नासते किंत्वल्पकालमेव । तदाप्येकत्र नासते किंतु वियुज्यन्ते । यतो दैवाधीनाः ॥ १८ ॥ यथा भुवि भौमानि घटादीनि तद्वत्।
मरणादि तदपि देहानामेव नात्मन इत्याह—भुवीति । भूतानि देहा एव यान्त्यपयान्ति च भवन्ति न भवन्ति चेत्यर्थः ।

सा तद्धस्तात्स-मुत्पत्य सद्यो देव्यम्बरं गता ॥ अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥ दिव्यस्रगम्बरालेपरत्नाभरणभू-षिता ॥ धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥ सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ॥ उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥ किं मया हतया मन्द जातः खलु तवान्तकृत् ॥ यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणा-न्वृथा ॥१२॥ इति प्रभाष्य तं देवी माया भगवती भुवि ॥ बहुनामनिकेतेषु बहुनामा बभूव ह ॥१३॥ तयाभि-हितमाकर्ण्य कंसः परमविस्मितः ॥ देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥१४॥ अहो भगिन्यहो भाम मया वां बत पाप्मना ॥ पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥१५॥ स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः ॥ काँल्लो-कान्वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ १६ ॥ दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ॥ यद्विश्रम्भादहं पापः स्वसुर्निहतवान् शिशून् ॥१७॥ मा शोचतं महाभागावात्मजान्स्वकृतंभुजः ॥ जन्तवो न सदैकत्र दैवाधीनास्तदा-सते ॥ १८ ॥ भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च ॥ नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥ यथाऽनेवंविदो भेदो यत आत्मविपर्ययः ॥ देहयोगवियोगौ च संसृतिर्न निवर्तते ॥ २० ॥

भौमेषु विक्रियमाणेषु
एतेषु भूतेषु जन्मादिभिर्विक्रियमाणेष्वयमपरोक्षतया प्रत्यभिज्ञायमानो न विपर्येति विपर्ययं न प्राप्नोति । एकरूप एव वर्तत इत्यर्थः । यथा भूस्तथेति । एवं विचार्यमाणे सति न शोकाद्यवकाशः ॥ १९ ॥ अज्ञानतस्तु न निवर्तत इत्याह—यथेति । यथा यथावत् अनेवंविद एवमजानत आत्म-विपर्ययो देहात्मबुद्धिर्भवति यतो विपर्ययाद्भेदो भवति । देहाहंकारेण ह्यात्मनि परिच्छिन्ने सतीदंकारास्पदं भिन्नं भवति यतो भेदात्पुत्रादिदेहैर्योगो वियो-गश्च ततः संसृतिः सुखदुःखे इति यावदज्ञानं न निवर्तते इत्यर्थः ॥ २० ॥

१ 'कृपणा वृथा' इत्येवरूपे । २ तदाप्यल्पकालस्थितावपि । ३ वसुदेवस्य पुत्रादानपूर्वकं बहिर्निर्गमनसमये जातत्वादेतस्या अनुजात्वम् । ४ अहो शब्दद्वयमत्यार्त्यां । ५ श्वसन् जीवन्मृतः । 'स्वसुः' इति पाठः । ६ दैवं देवसमूहः । ७ 'सहासते' इति पाठः ।

एवमुक्तप्रकारेण नैते तव तनया अहं तु तावन्न घातितवांस्तथाऽप्यज्ञानदृष्ट्या स्वतनयान्मया व्यापादितानपि माऽनुशोचेति सान्त्वयति—तस्मादिति । अज्ञानाश्रयमेव कर्मवादमाह—यत इति ॥ २१ ॥ कथं तर्हि ब्राह्मणादिहन्तुस्तद्वध्यस्य च प्रायश्चित्तश्रवणम्, अज्ञानमूलमेवेत्याह—यावदिति । अस्वदृक् देहाभिमानी । तावत्तदभिमानी तस्य देहस्य हननमात्मन्यभिमन्यमान इत्यर्थः ॥ २२ ॥ श्यालः कंसः । स्वस्रोरिति स्वसृशब्देन द्विवचनानुपपत्त्या मिथुनगणद्वारा मिथुनिलक्षणया स्वसृतत्पत्योरभिधानं लिङ्गसमवायन्यायेन 'प्राणभृत उपदधाति' इतिवत् देवकीवसुदेवयोः प्रत्येकं पादमग्रहीदित्यर्थः । श्यालशब्देन वा

तस्माद्भद्रे स्वतनयान्मया व्यापादितानपि ॥ माऽनुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥ यावद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक् ॥ तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥ २२ ॥ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ॥ इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥ २३ ॥ मोचयामास निगडाद्विश्रब्धः कन्यकागिरा ॥ देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥ भ्रातुः समनुतप्तस्य क्षान्तरोषा च देवकी ॥ व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥ एवमेतन्महाभाग यथा वदसि देहिनाम् ॥ अज्ञानप्रभवाऽहंधीः स्वपरेति भिदा यतः ॥ २६ ॥ शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥ मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥ ॥ श्रीशुक उवाच ॥ कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः ॥ देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् ॥ २८ ॥ तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ॥ तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ॥ देवान्प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥ एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु ॥ अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥ किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ॥ नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥ ॥

कथंचिद्वसुदेवाभिधानम् ॥ २३ ॥ आत्मसौहृदं प्रियवादादिना दर्शयन् ॥ २४ ॥ २५ ॥ २६ ॥ स्वपरभेददर्शने किं भवति तदाह—शोकहर्षेति । भावैरेव निमित्तभूतैर्मिथो भावान् घ्नन्तं भावमीश्वरम् । पृथग्दृशस्ते न पश्यन्ति किंत्वहमेव हन्ता हतश्चेति मन्यन्त इत्यर्थः ॥ २७ ॥ विशुद्धं यथा भवति ॥ २८ ॥ ॥ २९ ॥ नातिकोविदा दृष्टमात्रमतयो न दीर्घदर्शनाः ॥ ३० ॥ न निर्गतानि दश दिनानि येषां तानन्यांश्च ॥ ३१ ॥ ३२ ॥ ॥ ॥

---

१ मिथुनगणो मातृपितृप्रभृतिकः । लक्षणा चात्राजहती । २ प्राणभृच्छब्देन तन्मात्रसंस्कृतेष्टकोच्यते, पर च बहुत्वानुपपत्त्या तद्गणपातिन्योऽपि गृह्यन्त इति लिङ्गसमवायन्यायः । ३ 'माऽनुशोचयतं सर्वः' इति पाठः । ४ भ्रातुरिति षष्ठी द्वितीयार्थे । क्षान्तरोषा सती देवकी समनुतप्तं भ्रातरं व्यसृजद्गन्तुमनुजज्ञे । यद्वा भ्रातुः समनुतप्तस्य सतः क्षान्तरोषा देवकी तं व्यसृजत् । 'क्षान्त्वा रोषं च देवकी' इति चक्रवर्तिनः पाठः । तत्र च भ्रातुरपराधं क्षान्त्वा रोषं शोकं च व्यसृजदिति व्याख्या । ५ क्षान्तरोषा व्यसृजत् शोकमित्यध्याहारः । यद्वा पारितोषिकं वसु व्यसृजत् । देवश्चेति भामेतिवत्पूर्वपदलोपः इति तोप० । ६ महा अभाग दुर्भगेत्यर्थः इति तोप० । 'महाराज' इति पाठः । ७ यतः अहंधियः स्वः पर इति भेदः । सदसुपेति समासः इति तोप० । ८ 'विस्रब्धं' इति पाठः । ९ अद्य वै अद्यैव । १० अत्रपक्षे श्यालस्स्वस्रोरित्येकं पदं 'अनचि च' इति सद्वित्वं च । ११ विशुद्धमकपटम् ।



११६

अस्यतो विध्यतः सतः । उत्सृज्य रणं त्यक्त्वा ॥ ३३ ॥ ३४ ॥ अन्यासक्तान्विमुखांश्चेति न हंसि न हिनस्ति ॥ ३५ ॥ क्षेमे निर्भये देशे शूरैः । संयुगादन्यत्र विकत्थनं प्रौढिवादो येषां तैः । ननु हरेर्बिभेमि शंभोश्चेति चेत्तत्राहुः—रहोजुषेति । सर्वस्याप्यन्तःप्रविष्टेन क्वचिदपि बहिरदृष्टेनेत्यर्थः । पुरुषप्रवृत्तिरहितमिलावृतवनमोको यस्य तेन शंभुना वा ॥ ३६ ॥ यद्यप्युद्यमैर्देवा न किंचिदपि कर्तुं समर्थास्तथापि नीतिरनुसर्तव्येत्याहुः—तथापीति ॥ ३७ ॥ रूढपदो बद्धमूलः

अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः ॥ जिजीविषव उत्सृज्य पलायनपरा ययुः ॥३३॥ केचित्प्राञ्जलयो दीना न्यस्तशस्त्रा दिवौकसः ॥ मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः ॥३४॥ न त्वं विस्मृतशस्त्रास्त्रान्विरथान्भयसंवृतान् ॥ हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः ॥३५॥ किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥ रहोजुषा किं हरिणा शम्भुना वा वनौकसा ॥ किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥३६॥ तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥ ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥ यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ॥ यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान्बद्धबलो न चाल्यते ॥३८॥ मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ॥ तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥ ३९ ॥ तस्मात्सर्वात्मना राजन्ब्राह्मणान्ब्रह्मवादिनः ॥ तपस्विनो यज्ञशीलान्गाश्च हन्मो हविर्दुघाः ॥४०॥ विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ॥ श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥४१॥ स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ॥ तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥ ४२ ॥ ॥ श्रीशुक उवाच ॥ एवं दुर्मन्त्रिभिः कंसः सह संमन्त्र्य दुर्मतिः ॥ ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥४३॥ संदिश्य साधु लोकस्य कदने कदनप्रियान् ॥ कामरूपधरान्दिक्षु दानवान् गृहमाविशत् ॥४४॥ ते वै रजःप्रकृतयस्तमसा मूढचेतसः ॥ सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ४५ ॥ आयुः श्रियं यशो धर्मं लोकानाशिष एव च ॥ हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥ इति श्रीम० द० पू० चतुर्थोऽध्यायः ॥४॥

॥ ३८ ॥ देवानां मूलं विष्णुः स च यत्र धर्मस्तत्रास्ते । धर्मस्य मूलं वेदादय इति ॥ ३९ ॥ ४० ॥ ४१ ॥ किंच विप्रादयो हरेरेव तनवो यस्मात्तस्मादयमेवोपाय इत्याहुः—अयमिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ आरात्समीपमागतो मृत्युर्येषां ते ॥ ४५ ॥ सतां विद्वेषो न मृत्युमात्रहेतुः किंतु बह्वनर्थकारीत्याह—आयुः श्रियमिति ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥

१ अन्येन सह युद्धादौ आसक्ताः । २ 'भीताः' इति पाठः । ३ असयुगे युद्धादन्यत्र स्त्रीपार्श्वादौ प्रौढिवादो येषां इति चक्र० । ४ तनूस्तन्वः । 'तनुः' इति पाठः । तनुरित्येकत्वं समाहाराभिप्रायम् इति तोष० । ५ अतिक्रमो वाचिकाचनादरोऽपि । ६ मूले ब्रह्मपदेन वेदा ज्ञेयाः ।

पञ्चमे जातकं नन्दः सूनोः कृत्वा महोत्सवम् ॥ गत्वाथ मथुरां प्राप वसुदेवागमोत्सवम् ॥१॥ महामना उदारचित्तः ॥१॥२॥ नियुते द्वे लक्षे । सप्ततिलपर्वतांश्च प्रादात् । कथंभूतान् । रत्नौघैः रत्नसमूहैः । शातकौम्भाम्बरैः सुवर्णरसाक्तैरम्बरैश्चावृतान् ॥ ३ ॥ द्रव्याणां गोहिरण्यादीनां मध्ये केषांचिद्दानैरेव शुद्धिर्यथा तथान्नदानादियुक्तजातकर्मादिसंस्कारैरेव गर्भाणां शुद्धिरिति दर्शयितुं प्रतिनियतानि शोधकानि दृष्टान्तत्वेनोदाहरति—कालेनेति । कालेन भूम्यादि, स्नानेन देहादि, शौचेनामेध्यलिप्तादि, संस्कारैर्गर्भादि, तपसा इन्द्रियादि, इज्यया ब्राह्मणादि, दानैर्द्रव्यादि, संतुष्ट्या मनः, आत्मा आत्मविद्यया इति ॥ ४ ॥ सौमङ्गल्यगिरः स्वस्तिवाचका विप्रादयो बभूवुः । तत्र—'सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः ॥ वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥' ॥ ५ ॥

॥ श्रीशुक उवाच ॥ नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ॥ आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥ १ ॥ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ॥ कारयामास विधिवत्पितृदेवार्चनं तथा ॥ २ ॥ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते ॥ तिलाद्रीन्सप्त रत्नौघशातकौम्भाम्बरावृतान् ॥३॥ कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ॥ शुध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्मात्मविद्यया ॥ ४ ॥ सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः ॥ गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ ५ ॥ व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥ ६ ॥ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ॥ विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ ७ ॥ महार्हवस्त्राभरणकञ्चुकोष्णीषभूषिताः ॥ गोपाः समाययू राजन्नानोपायनपाणयः ॥८॥ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ॥ आत्मानं भूषयांचक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ ९ ॥ नवकुङ्कुमकिंजल्कमुखपङ्कजभूतयः ॥ बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १० ॥ गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ॥ नन्दालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुण्डलपयोधरहारशोभाः ॥ ११ ॥ ॥ ॥

संमृष्टानि संसिक्तानि च द्वाराण्यजिराण्यङ्गनानि गृहान्तराणि गृहमध्यानि च यस्मिन्स तथा । चित्रध्वजेषु पताकानां स्रजश्च चैलपल्लवतोरणानि च तैर्भूषिताः ॥ ६ ॥ हरिद्रातैलैः रूषिता लिप्ताः । विचित्रधातवश्च बर्हस्रजश्च वस्त्राणि च काञ्चनमालाश्चालंकारतया विद्यन्ते येषां ते । तथाभूता गवादयो बभूवुरित्यर्थः ॥ ७ ॥ ८ ॥ आकल्पा अलंकाराः ॥९॥ नवकुङ्कुमकिंजल्कैर्मुखपङ्कजेषु भूतिः श्रीर्यासां ताः ॥१०॥ सुमृष्टान्युज्ज्वलितानि मणिमयानि कुण्डलानि यासाम् । निष्कानि पदकानि कण्ठेषु यासां ताश्च । शिखाभ्यश्च्युतानि माल्यवर्षाणि यासां ताः । नन्दालयं व्रजतीर्व्रजन्त्यः । पथि विरेजुः । सवलयाः कङ्कणभूषिताः व्यालोलैः कुण्डलादिभिः शोभा यासां ताः ॥ ११ ॥ ॥ ॥ ॥ ॥

१ महत् विभोः श्रीकृष्णस्य संग्राहकं मनो यस्य । २ आत्मा जीवः आत्मनः श्रीकृष्णस्य विद्या ज्ञानं तेन, उपासनयेति वा । ३ 'वेदज्ञान' इति पाठः । ४ मुहुरिति सर्वत्रान्वेति हर्षभरेण तत्र तत्रावृत्तेः ।५ राजन्ति नानोपायनानि येषु ते पाणयो येषां । सम्यक्स्वगृहे ध्वजादिमङ्गलं प्रवर्तयायुरिति तोष० ।६ बलिभिः रत्नाक्षतपात्रादिभिः सह ।७ शिखा धम्मिल्लाग्राणि ।८ भूषिता इत्यध्याहारः ।

जनं सिंचन्त्यः । अजनमुञ्जगुरिति वा ॥ १२ ॥ १३ ॥ १४ ॥ तेभ्यः प्रादात् ॥ १५ ॥ यथोचितमन्यानप्यपूजयत् ॥ १६ ॥ १७ ॥ हरेर्निवासेन ये आत्मनि गुणाः सर्वप्रियत्वादयस्तैः । रमाया आक्रीडं विहारस्थानम् ॥ १८ ॥ वार्षिक्यं प्रतिवर्षं देयम् ॥ १९ ॥ भ्रातरं सखायम् । तदवमोचनं तस्य नन्दस्य वसतिस्थानम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पुनर्भवः पुनर्जात इव । तत्र हेतुगर्भं विशेषणं संसारचक्रे वर्तमान इति ॥ २४ ॥ दुर्लभत्वमेवाह—नैकत्रेति । प्रियश्चासौ

ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके ॥ हरिद्राचूर्णतैलाद्भिः सिंचन्त्योऽजनमुञ्जगुः ॥ १२ ॥ अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ॥ कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमागते ॥ १३ ॥ गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः ॥ आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः ॥ १४ ॥ नन्दो महामनास्तेभ्यो वासोऽलंकारगोधनम् ॥ सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५ ॥ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥ विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥ रोहिणी च महाभागा नन्दगोपाभिनन्दिता ॥ व्यचरद्दिव्यवासस्रक्कण्ठाभरणभूषिता ॥ १७ ॥ तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥ १८ ॥ गोपान् गोकुलरक्षायां निरूप्य मथुरां गतः ॥ नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥ १९ ॥ वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् ॥ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥ २० ॥ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ॥ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ २१ ॥ पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः ॥ प्रसक्तधीः स्वात्मजयोरिदमाह विशांपते ॥ २२ ॥ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ॥ प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत ॥ २३ ॥ दिष्ट्या संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः ॥ उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ॥ ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥ कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ॥ बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥ ॥ ॥ ॥

संवासश्च प्रियसंवासः । हे प्रियेति वा । स्रोतस ओघेन नीयमानानां प्लवन्तीति प्लवास्तृणकाष्ठादयस्तेषां यथैकत्र स्थितिर्नास्ति तद्वत् ॥ २५ ॥ कच्चिदिति । पशव्यादिरूपे तस्मिन्वने निर्दोषगोपयोदध्यादिप्रभूतगोपिकास्तन्यादिना पुत्रक्षेमविवक्षया पृच्छति, प्रसक्तधीः स्वात्मजयोरित्युक्तत्वात् ॥ २६ ॥ ॥

१ शकटोत्तारभूमिमित्यर्थः । २ राजपुत्रत्वेन राजा भूत्वा चिरं पाहीत्याशिषः प्रयुञ्जाना इत्यर्थः । ३ 'विश्वेश्वरेंऽशेन नन्दव्रजमुपेयुषि' इति क्वचित्पाठः । ४ क्षीराद्भिभिरासिंचन्तो नवनीतैश्च विलिम्पन्तो दधि चिक्षिपुरित्यन्वयं केचिदाहुः । प्रक्षामार्थं बलेन प्रच्छन्नतया त्रा पिच्छिलपङ्के परस्परं स्खालयामासुरिति च क्र० । अत्रासेचनं दध्यादिभिः । ५ जातिवयोविद्यासनुरूपं । ६ नन्दाख्यो गोपो व्रजराजत्वेन, यद्वा नन्देन गोपैश्चाभिनन्दिता । ७ भ्रातरं वैश्यकन्यायां शूद्रवैमात्रेयभ्रातुर्जातत्वात्। अत एवाग्रे भ्रातरिति पुनरुक्तिः । गोपानां वैश्यकन्योद्भवत्वाद्वैश्यत्वं परं च ते यादवा एव । 'रक्षिता यादवाः सर्वे इन्द्रवृष्टिनिवारणात्' इति स्कान्दे इति तोप० । ८ नन्द इत्यध्याहारः । ९ रुग्णीरुक्छरो टावन्तो । निरुजशब्दे हस्वत्वमार्षम् ।

भवद्भ्यामुपलालितः सन्कच्चिद्वर्तत इति शेषः ॥ २७ ॥ पुत्रादर्शनक्लेशानाह—पुंस इति । सुहृदो बन्धून्प्रत्यनुभावितः संपादितो यस्त्रिवर्गः स हि पुंसो विहितो युक्तः शास्त्रेण वा प्रोक्तो न स्वमात्रपर्यवसितः । अतस्तेषु क्लिश्यमानेषु सुखाय न भवतीत्यर्थः ॥ २८ ॥ नन्दो वसुदेवं सान्त्वयन्नाह—अहो इति ॥ २९ ॥ अदृष्टे एव निष्ठा समाप्तिर्यस्य सः । यदैव पुत्रादिसुखप्रदमदृष्टं हीयते तदैव ते पुत्रादयो न भवन्तीत्यर्थः । अदृष्टपरमः तथा अदृष्टमेव परमं यस्य सः । यद्यपि पुत्रादयो वियुक्तास्तथापि तानदृष्टमेव पुनः सङ्गमयतीत्यर्थः । एवमदृष्टमात्मनस्तत्त्वमव्यभिचारिकारणं सुखदुःखयोर्यो वेद स न मुह्यति । तस्मादिदानीं त्वया न दुःखं भावनीयम् । मृतानामपि वियुक्तानामपि च कालान्तरे दर्शनयोगयोः संभवात् । अस्मदादिभिरपि कालान्तरे तद्वियोगे सत्यपीति

भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ॥ तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ २७ ॥ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ॥ न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥२८॥ ॥ नन्द उवाच ॥ अहो ते देवकीपुत्राः कंसेन बहवो हताः ॥ एकावशिष्टाऽवरजा कन्या सापि दिवं गता ॥ २९ ॥ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः ॥ अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ ३० ॥ ॥ वसुदेव उवाच ॥ करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ॥ नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले ॥३१॥ ॥ श्रीशुक उवाच ॥ इति नन्दादयो गोपाः प्रोक्तास्ते[2] शौरिणा ययुः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे नन्दवसुदेवसङ्गमो नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन् ॥ हरिं[3] जगाम शरणमुत्पातागमशङ्कितः ॥ १ ॥ कंसेन प्रहिता घोरा पूतना बालघातिनी ॥ शिशूंश्चचार निघ्नन्ती[4] पुरग्राममव्रजादिषु ॥ २ ॥ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ॥ कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥ ३ ॥ सा खेचर्येकदोपेत्य पूतना नन्दगोकुलम् ॥ योषित्त्वा[5] माययात्मानं प्राविशत्कामचारिणी ॥ ४ ॥ ॥ ॥

नन्दस्य दैवी वागेषा भाविसूचिका ॥ ३० ॥ तां बुद्ध्वा वसुदेवो दुःखं त्यक्त्वा नन्दमाह—करो वै इति । वो युष्माभिः ॥ ३१ ॥ ३२ ॥ इति श्रीमद्भागवते म० पु० दशमस्कन्धे पू० भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे सख्युर्गिरा नन्दो व्रजं गच्छन्मृतां पथि ॥ दृष्ट्वा तु राक्षसीं तस्या मृत्युं श्रुत्वाथ विस्मितः ॥ १ ॥ १ ॥ २ ॥ कृष्णविषये शङ्कमानं राजानं प्रत्यविषये प्रवृत्ता सैव मरिष्यतीति सूचयन्नाह—न यत्रेति । यत्र श्रीकृष्णस्य श्रवणादीनि न सन्ति तत्रैव तासां शक्तिः, साक्षात्तस्मिन्नेव सति का शङ्केति भावः ॥ ३ ॥ योषित्त्वा वेषतो वरां नारीमिवात्मानं विधाय । ननु निर्लज्जा निर्विशङ्का च सती कथं परसद्मनि प्रविष्टाऽत आह—कामचारिणीति । नहि कामचारिणीष्विदं चित्रमित्यर्थः ॥ ४ ॥ ॥ ॥ ॥

१ सुतो रौहिणेयः । २ प्रोक्ताः प्रकर्षेण न्यायदर्शनादिनोक्ताः । ३ हरिं दुःखहरं शरणं जगाम । यद्वा स्वसुतं हरिं चिन्तयन् न जाने तत्र किं वृत्तमस्तीति चिन्तां कुर्वन् शरणं निजगृहं जगाम इति तोष० । ४ निघ्नन्ती निघ्नतीति प्राप्ते नुमार्षः । ५ योषित्त्वा योषितं करोतीति णिचि क्त्वा । णिलोप आर्षः । 'गोपित्वा' इति पाठः ।

तां वनितां पतिं द्रष्टुमागतामतिरूपवतीं श्रियमिव गोप्योऽमंसतेत्युत्तरश्लोकेनान्वयः । श्रीसाम्यार्थानि विशेषणानि । केशबन्धव्यतिषक्तमल्लिकां धम्मिल्लसंसक्तमल्लिकाकुसुमाम् । बृहता नितम्बेन स्तनाभ्यां चोभयत आक्रान्तमिव कृच्छ्रं कृशं मध्यमुदरं यस्यास्ताम् । सुवाससं शोभने रमणीये वाससी यस्यास्ताम् । कम्पितयोः कर्णभूषणयोस्त्विषोल्लसद्भिः कुन्तलैर्मण्डितमाननं यस्यास्ताम् ॥ ५ ॥ वल्गुस्मितापाङ्गविसर्गवीक्षितैः वल्गु रम्यं स्मितं येषु ते तथाभूता अपाङ्गविसर्गा येषु तैर्वीक्षितैर्व्रजौकसां मनो हरन्तीम् । अतो गोपा हृतमनस्त्वेन तां न निवारितवन्त इत्युक्तं भवति । गोप्यश्च श्रियमिव मत्वा तूष्णीमासन् । अतः केनाप्यनिवारिता सती प्रविवेशेति भावः ॥ ६ ॥ बालग्रहः पूतना असदन्तकं बालं ददर्श । असतामन्तकं दृष्ट्वा कथं न बिभेति तत्राह । प्रतिच्छन्ननिजोरुतेजसम्, बालनाट्येन प्रतिच्छन्नं तिरोहितं निजमुरु तेजो येन तम् । कमिव । भसि भस्मन्याहितमग्निमिवेति ॥ ७ ॥ चराचरात्मत्वादेव तां विबुध्य

तां केशबन्धव्यतिषक्तमल्लिकां बृहन्नितम्बस्तनकृच्छ्रमध्यमाम् ॥ सुवाससं कम्पितकर्णभूषणत्विषोल्लसत्कुन्तलमण्डिताननाम् ॥५॥ वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनो हरन्तीं वनितां व्रजौकसाम् ॥ अमंसताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥ ६ ॥ बालग्रहस्तत्र विचिन्वती शिशून्यदृच्छया नन्दगृहेऽसदन्तकम् ॥ बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि ॥७॥ विबुध्य तां बालकमारिकाग्रहं चराचरात्माऽऽस निमीलितेक्षणः ॥ अनन्तमारोपयदङ्कमन्तकं यथोरगं सुप्तमबुद्धिरज्जुधीः ॥ ८ ॥ तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तरा कोशपरिच्छदासिवत् ॥ वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् ॥९॥ तस्मिन्स्तनं दुर्जरवीर्यमुल्बणं घोराङ्कमादाय शिशोर्ददावथ ॥ गाढं कराभ्यां भगवान्प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबत् ॥१०॥ सा मुञ्च मुञ्चालमिति प्रभाषिणी निष्पीड्यमानाखिलजीवमर्मणि ॥ विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्रा क्षिपती रुरोद ह ॥ ११ ॥

निमीलितेक्षण आस । स्वयमनन्तं दुष्टानामन्तकं बालं मत्वा सा अङ्कमारोपयत् । यथोरगं सुप्तमबुद्धिश्चासौ रज्जुधीश्च सोऽज्ञानतो रज्जुबुद्ध्या गृह्णाति तद्वत् ॥ ८ ॥ ननु यशोदारोहिण्यौ तां कथं न न्यवारयेतां तत्राह—तामिति । वामं वल्गु जनन्या इव चेष्टितं यस्यास्तां वरस्त्रियं च सहसैवान्तरा गृहमध्ये वीक्ष्य । अन्तस्तैक्ष्ण्ये बहिर्मार्दवे च दृष्टान्तः—कोशपरिच्छदासिवत् । मृदुचित्रचर्ममयः कोशः परिच्छद आवरणं यस्यासेः खड्गस्य तद्वत् । तत्प्रभया च धर्षितेऽभिभूते । अहमस्य जननी इयं वेति मोहिते च सत्यौ जननी जनन्यौ निरीक्षमाणे एव केवलमतिष्ठतां, नतु निवारितवत्यौ ॥ ९ ॥ तस्मिन्स्थाने दुर्जरं वीर्यं विषं यस्मिंस्तं स्तनं श्रीकृष्णमङ्कमादाय तस्मै शिशवे ददौ । अथानन्तरमेव प्रपीड्य केवलं विषमपथ्यमिति मत्वेव तस्याः प्राणैः सहापिबत् ॥ १० ॥ चरणौ भुजौ च मुहुर्मुहुः क्षिपन्ती । प्रस्विन्नानि स्वेदयुक्तानि गात्राणि यस्याः सा ॥ ११ ॥ ॥ ॥ ॥

१ 'भूषिताननाम्' इति पाठः । २ सेति प्रकरणाद्वर्तते । बालग्रह इति तद्विशेषणमजहल्लिङ्गमिति तोप० । ३ बाल्यलीलया मुदितनेत्र आस । यद्वा गर्हितोऽपि स्त्रीवध आवश्यकत्वान्नेत्रे निमील्यैव कार्य इति वा हेतुः इति तोप० । ४ वीर० पाठे—'महीसुरत्वेऽपि च बालभावं विभावयन्किंचिदुवाच न प्रभुः । अजानमानाथ निशाचरी हरिं निसर्गविज्ञातजगद्विचेष्टितम् ॥' इत्यधिकम् । ५ 'अथ वामचेष्टिता' इति पाठः । ६ 'निःस्विन्नगात्रा' इति पाठे नितरां स्विन्नानि गात्राणि यस्या इत्यर्थः । 'सुपां सुलुक्' इति पूर्वसवर्णः ।

रसाः रसातलानि च ॥ १२ ॥ व्यादाय मुखं विवृत्य । निजरूपमास्थिता मरणसमये कपटमयुक्तमितीव ॥ १३ ॥ पतन्नपि तस्या देहः पद्कोशमध्यवर्तिनो द्रुमांश्चूर्णीचकार ॥१४॥ ईषामात्रोग्रदंष्ट्रास्यम्, ईषा लाङ्गलदण्डस्तत्प्रमाणोग्रा दंष्ट्रा यस्मिंस्तत्तथाभूतमास्यं यस्मिंस्तत्तस्याः कलेवरं वीक्ष्य गोपा गोप्यश्च संतत्रसुः । संत्रासहेतुत्वेन पुनरष्टभिः पदैर्विशिनष्टि । गिरिकन्दरवन्नासिके यस्मिंस्तत् । गिरेश्च्युतौ स्थूलोपलौ ताविव स्तनौ यस्मिंस्तत् । रौद्रं घोरम् । प्रकीर्णा अरुणा मूर्धजा यस्मिंस्तत् ॥ १५ ॥ अन्धकूपाविव गभीरे अक्षिणी यस्मिंस्तत् । पुलिनवदारोहौ जघने ताभ्यां भीषणम् । बद्धाः सेतव इव भुजौ ऊरू अङ्घ्री च यस्मिंस्तत् । शून्यतोयह्रद इवोदरं यस्मिंस्तत् ॥ १६ ॥ पूर्वमेव तस्याः शब्देन भीताः पुनर्दर्शनेनातितत्रसुरित्याह—पूर्वं त्विति । तस्याः निःस्वनितं शब्दस्तेन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते ॥ १७ ॥ १८ ॥ १९ ॥ द्वादशाङ्गेषु ललाटादिषु केशवादिद्वादशनामभिः ॥ २० ॥ अनाचान्ता एव प्रथममतिसंभ्रमेणैवं रक्षां कृत्वा किंचिल्लब्धश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वतेत्याह—गोप्य इति । संस्पृष्टसलिला आचान्ताः आत्मनि प्रथममङ्गेषु करयोश्च पृथक् । अजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि, करयोः सन्धिषु चत्वारि चत्वारि, तथा अङ्घ्र्यादावेकैकस्मिन्नङ्गे अजाद्येकैकं बीजं न्यस्य बालस्याप्यङ्गेषु तथैवाकुर्वत ॥ २१ ॥

तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ॥ रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपातशङ्कया ॥ १२ ॥ निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय केशांश्चरणौ भुजावपि ॥ प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥ १३ ॥ पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् ॥ चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम् ॥ १४ ॥ ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ॥ गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १५ ॥ अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ॥ बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥ १६ ॥ संतत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ॥ पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥ १७ ॥ बालं च तस्या उरसि क्रीडन्तमकुतोभयम्[3] ॥ गोप्य[4]स्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥ १८ ॥ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः[5] ॥ रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः[6] ॥ १९ ॥ गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ॥ रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥ २० ॥ गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ॥ न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत[7] ॥ २१ ॥ ॥ ॥ ॥ ॥

१ निजरूप उलूकपक्षिणीस्वरूपम् । २ केशस्तनादिमत्त्व उलूकपक्षिणः प्रायो नरसाम्यात्स्यादिति भाति इति तोप० । ३ न कुतोऽपि भयमन्येषामपि यस्मात् । ४ गोप्यो मातृवद्गोपायन्त्यः । ५ 'सर्वशः' इति पाठः । ६ 'भ्रामणादिभिः' इति पाठः । आदिना शूर्पकोणस्पर्शादि ज्ञेयम् । ७ चक्रु० तु बीजस्याजादिनामाद्यैकैकाक्षरस्य सानुस्वारस्य नमःशब्दान्तस्य न्यासं व्याचख्यौ । तथा चेति तोप० प्रयोगः—अंनमो दक्षिणकरतलशुद्धौ । मंनमो वामतले । यंनम उभयोः करपृष्ठयोः । अंनमो दक्षिणाङ्गुलिसंधौ । हंनमो दक्षिणमणिबन्धे । कंनमः कूर्परे । ईंनमो वामबाहौ । तथा अंनमः पादयोः । मंनमो जानुनोः । यंनम ऊर्वोः । अंनमः कट्योः । हंनम उदरे । कंनमः हृदये । ईंनमः अंसे । ईंनमः कण्ठे । विंनमो भुजयोः । ऊंनमो मुखे । ईंनमो मूर्ध्नीति बीजन्यासः ।

अङ्घ्रि अङ्घ्री । जानु जानुनी । भुजं भुजौ । कं शिरः ॥ २२ ॥ तथा दिक्षु रक्षामकुर्वन्नित्याह—चक्र्यग्रत इति । चक्रसहितो हरिस्तवाग्रतोऽस्तु । सहगदो गदासहितो हरिस्तव पश्चादस्तु । त्वत्पार्श्वयोर्धनुर्धरो मधुहाऽसिधरोऽजनश्चैतावास्ताम् । शङ्खधर उरुगायश्चतुष्कोणेषु । क्षितावधस्तात् ॥ २३ ॥ एवं बही रक्षां कृत्वाऽन्तरङ्गामकुर्वन्नित्याह—इन्द्रियाणीति ॥ २४ ॥ आत्मानमहंकारम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ संन्यवेशयच्छादयामास ॥ ३० ॥ ३१ ॥

अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः ॥ हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ २२ ॥ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ॥ कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २३ ॥ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २४ ॥ पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः ॥ क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ २५ ॥ व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियःपतिः ॥ भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयंकरः ॥ २६ ॥ डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः ॥ भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥२७॥ कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ॥ उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥ २८ ॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ॥ सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ २९ ॥ ॥ श्रीशुक उवाच ॥ इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ॥ पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥३०॥ तावन्नन्दादयो गोपा मथुराया व्रजं गताः ॥ विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥३१॥ नूनं बतर्षिः संजातो योगेशो वा समास सः ॥ स एव दृष्टो ह्युत्पातो यदाहानकदुन्दुभिः ॥३२॥ कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः ॥ दूरे क्षिप्त्वाऽवयवशो न्यदहन्काष्ठधिष्ठितम् ॥ ३३ ॥ दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ॥ उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३४ ॥ पूतना लोकबालघ्नी राक्षसी रुधिराशना ॥ जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम् ॥३५॥ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ॥ यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥३६॥

विस्मयमेवाह—नूनमिति । बत विस्मये । सांप्रतं स ऋषिस्तपःप्रभाववान् योगेशो ज्ञानी वा सम्यगास । यतः स एव दृष्ट इति ॥ ३२ ॥ ३३ ॥ विस्मयान्तरमाह—दह्यमानस्येति । कृष्णेन निर्भुक्तोऽत एव सपद्याहतः पाप्मा यस्य ॥ ३४ ॥ प्रसङ्गात्कैमुत्यन्यायेन भक्तिवैभवमाह—पूतनेति ॥ ३५ ॥ श्रद्धया आस्तिक्येन भक्त्या प्रेम्णा । रक्ताः स्निग्धाः । तन्मातर इति वत्साहरणलीलाभिप्रायेण बहुवचनम् । गोगोपिकास्तदा मातरोऽभवन्निति ॥ ३६ ॥ ॥

१ भुजमित्यत्र सुपां सुलुक् इति औङ अम् । २ मूले धनुरसिशब्दौ लक्षणया तद्धरपरौ यथासंख्यमन्वयश्च बोध्यः शङ्खशब्दे त्वर्शआद्यच् । ३ अङ्घ्रि जान्वित्यत्र सुपो लुक् । ४ 'प्रवयसो निर्देहुः काष्ठवेष्टितम्' इति चक्र० पाठः । ५ इदं कैमुत्यं करणविषये संप्रदानविषये च । ६ 'वेष्टितम्' इति पाठः । ७ इदं कैमुत्यं कर्तृकर्मविषये । रक्तास्तन्मातरो यथेति दृष्टान्तः ।

॥३७॥३८॥३९॥४०॥४१॥४२॥४३॥ एतदार्भकमर्भकचरितम् । किं तत् । पूतनामोक्षमिति ॥४४॥ अत्तुं दैत्यकुलानीशः पूतनायाः शिशुच्छलात् ॥ स्तन्यापोशनतः प्राणैः प्राणाहुतिमकल्पयत् ॥१॥ ॥ इति श्रीम० म० पु० द० पू० भा० दी० टीकायां षष्ठोऽध्यायः ॥६॥ ॥ उत्क्षिपन्शकटं व्योम्नि तृणावर्तमधः क्षिपन् ॥ दर्शयन्विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥ १ ॥ कृष्णार्भकसुधासिन्धुसंप्लवानन्दनिर्भरः ॥ भूयस्तदेव संप्रष्टुं राजाऽन्यदभिनन्दति ॥ २ ॥ येन येनेति । येन येन मत्स्याद्यवतारेणापि यानि यानि कर्माणि करोति तानि नः कर्णसुखावहानि मनःप्रीतिकराणि च भवन्त्येव ॥१॥ तथापि तच्छृण्वतः पुंसः पुरुषमात्रस्यारतिर्मनोग्ला-

पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः ॥ अङ्गं यस्याः समाक्रम्य भगवानपिबत्स्तनम् ॥३७॥ यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ॥ कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥ ३८॥ पयांसि यासामपिबत्पुत्रस्नेहस्नुतान्यलम् ॥ भगवान् देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥ ३९ ॥ तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ॥ न पुनः कल्पते राजन्संसारोऽज्ञानसंभवः ॥ ४० ॥ कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ॥ किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥ ४१ ॥ ते तत्र वर्णितं गोपैः पूतनागमनादिकम् ॥ श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मिताः ॥ ४२ ॥ नन्दः स्वपुत्रमादाय प्रेत्यागतमुदारधीः ॥ मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४३ ॥ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् ॥ शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४४ ॥ इति श्रीमद्भागवते म० पु० द० पू० षष्ठोऽध्यायः ॥ ६ ॥ ॥ राजोवाच ॥ येन येनावतारेण भगवान्हरिरीश्वरः ॥ करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥ १ ॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः ॥ भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् ॥ २ ॥ अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् ॥ मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ॥ ३ ॥ ॥ श्रीशुक उवाच ॥ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ॥ वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥ ४ ॥ ॥ ॥

निरुन्मूलभूता विविधा तृष्णा चापगच्छति तथा सत्त्वशुद्धिहरिभक्तिहरिदाससख्यानि च भवन्ति। तदेव हारं हरेश्चरितं, मनोहरं वा वद मन्यसे चेत् अनुग्रहं यदि करोषीति ॥२॥ अत्यौत्सुक्येन पुनर्विशिनष्टि—अथेति । अनुरुन्धतोऽनुकुर्वतः ॥ ३ ॥ उत्थानं शिशोरङ्गपरिवर्तनं तत्र करणीये कौतुकाप्लवे उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षस्यापि योगेऽतिमहोत्सवे समवेतयोषितां मिलितपुरन्ध्रीणां मध्ये वादित्रादिभिः शोभितमभिषेचनं सती यशोदा चकार ॥ ४ ॥ ॥

१ भगवतो निष्कारणकृपाप्रापितं पूतनासौभाग्यमाह—पद्भ्यामिति द्वाभ्यामिति चक्र०। २ जननीगतिसदृशगतिरूपं स्वर्गम् । ३ पूतनापेक्षयापि मातृश्रैष्ठ्यं वर्णयति—पयासीति द्वाभ्याम् । ४ सुतत्वेनेक्षणमित्यर्थः। ५ प्रासङ्गिकं समाप्य प्रस्तुतमाह—कटेति । पूतना लोकबालघ्नीत्यारभ्य षट्श्लोकाः प्रक्षिप्ता इति श्रीवल्लभाचार्याः। ६ 'प्रोष्यागत उदारधीः' इति पाठः। ७ अत्र वीर० पाठे—'एवं बहूनि कर्माणि गोपानां शं सयोषिताम् । नन्दस्य गेहे ववृधे कुर्वन्विष्णुर्जनार्दनः ॥' इति पद्यमधिकम् । ८ 'लोकाचरितम्' वीर० पाठः। ९ श्लेषेण हारमिव हृदये धार्यमिति चक्र०।

अन्नादिभिः सुपूजितैर्विप्रैः कृतमङ्गलम् । संजातनिद्रे अक्षिणी यस्य तमशीशयच्छायितवती, शकटस्याधस्तात्प्रेङ्खे ॥ ५ ॥ उदक्षिपदूर्ध्वं चालितवान् ॥ ६ ॥ तदधःशयानस्य शिशोरल्पकश्चासौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतमनः शकटं व्यवर्तत विपरीतमपतत् । कथम् । विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजतातिरिक्तकांस्यादिमयानि यथा भवन्ति तथा । चक्रे च अक्षश्च चक्राक्षाः व्यत्यस्ताश्चक्राक्षा यस्मिन्, विभिन्नः कूबरो युगन्धरो यस्य तच्च तच्च यथा भवति तथा व्यवर्ततेति ॥ ७ ॥ अद्भुतदर्शनेनाकुला बभूवुः तदेवाह—कथमिति । विपर्यगाद्विपरीतमपतदिति ॥ ८ ॥ ९ ॥ न श्रद्दधिरे विश्वासं न जग्मुः,

नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ॥ अन्नाद्यवासःस्रगभीष्टधेनुभिः संजातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः ॥ नैवाश्रृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ॥ ६ ॥ अधःशयानस्य शिशोरनोऽल्पकं प्रवालमृद्वङ्घ्रिहतं व्यवर्तत ॥ विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥ ७ ॥ दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ॥ नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥ ८ ॥ (इति ब्रुवन्तोऽतिविवादमोहिता जनाः समन्तात्परिवव्रुरार्तवत्) ॥ ऊचुरव्यवसितमतीन्गोपान्गोपीश्च बालकाः ॥ रुदतानेन पादेन क्षिप्तमेतन्न संशयः ॥ ९ ॥ न ते श्रद्दधिरे गोपा बालभाषितमित्युत ॥ अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥ १० ॥ रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता ॥ कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ ११ ॥ पूर्ववत्स्थापितं गोपैर्बलिभिः सपरिच्छदम् ॥ विप्रा हुत्वाऽर्चयांचक्रुर्दध्यक्षतकुशाम्बुभिः ॥ १२ ॥ येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ॥ न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥ १३ ॥ इति बालकमादाय सामर्ग्यजुरुपाकृतैः ॥ जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥ १४ ॥ वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः ॥ हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥ १५ ॥ ॥ ७ ॥

उत अपि बालस्यैतन्न संभवति एते च बालाः किं जानन्तीति ॥ १० ॥ रक्षोघ्नैः सूक्तैः कृत्वा ॥ ११ ॥ भगवत्प्रभावानभिज्ञविप्रचेष्टितं विडम्बयन्नाह—पूर्ववदित्यादिना । बलिभिः शक्तैः । यद्वा अष्टदिक्षु बलिभिः सहितं सपरिकरं यथापूर्वं स्थापितं विप्रा दध्यादिभिरर्चयामासुः । हुत्वा ग्रहादिहोमं विधाय ॥ १२ ॥ असूया गुणे दोषाविष्करणम् । ईर्ष्या अक्षान्तिः । तेषामाशिषः कृतास्तैः प्रयुक्ताः ॥ १३ ॥ इत्येवमभिप्रेत्य सामर्ग्यजुर्भिरुपाकृतैः संस्कृतैः । पवित्रा ओषधयो येषु जलेषु तैः कृत्वा द्विजोत्तमैः कर्तृभिरभिषिच्याभिषेकं कारयित्वा ॥ १४ ॥ हुत्वा हावयित्वा ॥ १५ ॥ ॥ ॥

१ 'शकटासुरभञ्जनः' इति ब्रह्माण्डपुराणादसुरावेशेन भूमौ प्रविशच्छकत्वादुपस्यापि शकटस्याल्पकेन चरणेन स्पर्शो ज्ञेय इति श्रीवैष्णवतोषणीति चक्र० । २ इदमर्धं काचित्कमिव प्रतीयते । ३ किं दैत्यैर्ग्रहादिना वेत्यनिश्चितमतीन् बालकास्तन्माधुर्याकृष्टमनस्तनाद्दृकदृष्ट्य ऊचुः—अनेनेति । ४ अप्रमेयं तर्कागोचरं । ५ अत्र पुनस्ते इति द्वेत्यन्वयम् । पुत्रभावमयतत्प्रेमानन्दसक्ता इत्यर्थः । ६ विप्रैः कर्तृभिः, सूक्तैः करणैः । ७ स्थापितं शकटं । ८ हुत्वा ग्रहहोमं विधाय । ९ महान्तो गुणा रसा मोक्षादयो यस्मिन् । १० अपीति शङ्कायाम् । शङ्कामेवाह—बालस्येति । ११ तेषामिति कर्तरि शेषे षष्ठी ।

गावो गाश्च प्रादात् । अन्वयुञ्जत आशिषो युयुजुः ॥ १६ ॥ तास्तथैव बभूवुरित्यर्थः ॥ १७ ॥ 'उत्क्षिप्य मृदुपादेन शकटं व्योम्नि लीलया ॥ तृणावर्तं पदा- पीड्य मुव्यपातयदर्भकः' ॥ १ ॥ आरोहमुत्सङ्गम् ॥ १८ ॥ तृणावर्तोत्थमृत्युपरिहाराय कृष्णेनैवात्मन उत्सङ्गादुत्ताराय कृतं भारमजानत्युत्पातशङ्कया महा- पुरुषमादध्यौ । श्रीकृष्णोदरवर्तिनां जगतां भारेण पीडिता विस्मिता च सती । यद्वा जगतां मध्ये कर्मसु आस बभूव ननु जगदुदरं तं वेदेत्यर्थः ॥ १९ ॥ ॥ २० ॥ ईरयन्निनादयन्नित्यर्थः ॥ २१ ॥ यतो यत्र न्यस्तवती तस्मिन्स्थाने नापश्यत् ॥ २२ ॥ २३ ॥ खरपवनचक्रात्पांसुवर्षे सति ॥ २४ ॥ उपारतः

गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः ॥ आत्मजाभ्युदयार्थाय प्रादात्ते चान्वयुञ्जत ॥१६॥ विप्रा मन्त्रविदो युक्ता- स्तैर्याः प्रोक्तास्तथाशिषः ॥ ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥ १७ ॥ एकदारोहमारूढं लालयन्ती सुतं सती ॥ गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥ १८ ॥ भूमौ निधाय तं गोपी विस्मिता भारपीडिता ॥ महापुरुषमादध्यौ जगतामास कर्मसु ॥१९॥ दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः ॥ चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥२०॥ गोकुलं सर्वमावृण्वन्मुष्णंश्चक्षूंषि रेणुभिः ॥ ईरयन्सुमहाघोरशब्देन प्रदिशो दिशः ॥२१॥ मुहूर्तमभवद्गोष्ठं रजसा तम- सा वृतम् ॥ सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः ॥२२॥ नापश्यत्कश्चनात्मानं परं चापि विमोहितः ॥ तृणावर्त- निसृष्टाभिः शर्कराभिरुपद्रुतः ॥ २३ ॥ इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविलक्ष्य माता ॥ अतिकरुणमनुस्मर- न्त्यशोचद्भुवि पतिता मृतवत्सका यथा गौः ॥ २४ ॥ रुदितमनु निशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ॥ रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥ २५ ॥ तृणावर्तः शान्तरयो वात्यारूपधरो हरन् ॥ कृष्णं नभोगतो गन्तुं नाशक्नोद्भूरिभारभृत् ॥ २६ ॥ तमश्मानं मन्यमान आत्मनो गुरुमत्तया ॥ गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥२७॥ गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ॥ अव्यक्तरावो न्यपतत्सहबालो व्यसुर्व्रजे ॥ २८ ॥ तमन्तरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम् ॥ पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः ॥ २९ ॥ ॥

पांसुवर्षस्य वेगो यस्मिंस्तथाभूते पवने सति । तत्र तस्या रुदितमनु निशम्य गोप्यो रुरुदुः ॥ २५ ॥ वात्या चक्रवातस्तद्रूपधरः कृष्णं हरन् शान्तरयः कथंचि- न्नभोगतस्ततः परं गन्तुं नाशक्नोदित्यर्थः ॥ २६ ॥ गुरुमत्तयाऽतिगौरवेण तं तथा अश्मानमश्मवन्तं पर्वतप्रायं मन्यमानस्तेनैवात्मनो गले गृहीतत्वात्तं त्यक्तु- मिच्छन्नपि नाशक्नोदित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ आशिष इत्युत्तरश्लोकस्थम् । २ कर्मसु तदर्थस्वस्त्ययनादिषु । ३ स्वेच्छयैव लाघवं वहन्तमित्यर्थः । ४ 'स्वयं न्यस्तवती' इति पाठः । तत्र तस्मिन्नित्यस्याध्याहारः । ५ 'अनुरक्त- धियः' इति पाठः । ६ अश्मानमित्यत्र वतुब्लोपश्छान्दसः ।

तस्योरसि लम्बमानं कृष्णमादाय मात्रे प्रतिहृत्य समर्प्य विस्मिताश्च बभूवुरिति । विहायसा गगनमार्गेण पुरुषादेन नीतं तथापि मृत्युमुखात्प्रमुक्तं पुनर्लं-
ब्ध्वा मोदं प्रापुरिति ॥३०॥ परस्परं हर्षकथामाहुः—अहो बतेति । निवृत्तिं गमितो मृत्युं प्रापितः कोऽत्र विस्मयो युज्यत एवैतदिति तेष्वेव केचिदाहुः—
हिंस्र इति ॥ ३१ ॥ नोऽस्माभिः चीर्णं कृतम् । पूर्तं वापीकूपादिनिर्माणम्, इष्टं पञ्चयज्ञाग्निहोत्रादि, दत्तं दानम्, यद्यस्मात्तपआदेः । प्रणयन्हर्षयन् ॥ ३२ ॥
॥ ३३ ॥ ३४ ॥ 'तृणावर्तागमे दृष्टगौरवाशङ्किनीं प्रसूम् ॥ बोधयन् दर्शयामास जृम्भमाणो मुखे जगत्' ॥ १ ॥ पीतप्रायस्य पीतः प्रायः स्तनो येन तस्य

प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम् ॥ तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमु-
खात्प्रमुक्तम् ॥ गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥ ३० ॥ अहो बतात्यद्भुतमेष रक्षसा
बालो निवृत्तिं गमितोऽभ्यगात्पुनः ॥ हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते ॥ ३१ ॥ किं
नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ॥ यत्संपरेतः पुनरेव बालको दिष्ट्या स्वबन्धून्प्रणयन्नुपस्थितः
॥३२॥ दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने ॥ वसुदेववचो भूयो मानयामास विस्मितः ॥३३॥ एकदार्भकमादाय
स्वाङ्कमारोप्य भामिनी ॥ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३४ ॥ पीतप्रायस्य जननी सा तस्य रुचिरस्मि-
तम् ॥ मुखं लालयती राजन् जृम्भतो ददृशे इदम् ॥३५॥ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च ॥
द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥३६॥ सा वीक्ष्य विश्वं सहसा राजन्संजातवेपथुः ॥ संमील्य
मृगशावाक्षी नेत्रे आसीत्सुविस्मिता ॥ ३७ ॥ इति श्रीमद्भागवते म० द० पू० तृणावर्तमोक्षो नाम सप्तमोऽध्यायः
॥७॥ ॥छ॥ ॥श्रीशुक उवाच॥ गर्गः पुरोहितो राजन्यदूनां सुमहातपाः ॥ व्रजं जगाम नन्दस्य वसुदेवप्र-
चोदितः ॥ १ ॥ तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः ॥ आनर्चाधोक्षजधिया प्रणिपातपुरःसरम् ॥ २ ॥ सूपविष्टं
कृतातिथ्यं गिरा सूनृतया मुनिम् ॥ नन्दयित्वाऽब्रवीद्ब्रह्मन्पूर्णस्य करवाम किम् ॥ ३ ॥ ॥ ॥ ॥

॥ ३५ ॥ नगान्गिरीन् तद्दुहितॄर्नदीः ॥ ३६ ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पू० भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥
अष्टमे नामकर्मास्य बालक्रीडाकुतूहले ॥ मृद्भक्षणाभियोगे च विश्वरूपं निरूप्यते ॥ १ ॥ विश्वरूपादि बालस्य निगम्याशङ्किनः पितुः ॥ नामकृद्गर्गवाक्येन
निजं तत्त्वमसूसुचत् ॥ २ ॥ १ ॥ २ ॥ ३ ॥ ॥ ॥ ॥ ॥

१ पुरुषादो नृभक्षकस्तेन। २ स्तन इत्यार्थिकम् । आहिताग्न्यादित्वात्पीत इत्यस्य पूर्वनिपातः । यद्वा पीतं पानं प्रायमीपन्न्यूनं यस्य। ३ 'लब्धाशिषः' इति पाठः । ४ अभ्यगादभिमुखं प्राप्तः, अभि भयरहितं यथा स्यात्तथेति वा । ५ तपस्तप्तमिति पाठः । ६ इदंपदार्थं विवृणोति—खमिति ।

पूर्णश्चेत्कथं धनिनां गृहमागतस्तत्राह—महद्विचलनमिति । महतां स्वाश्रमादन्यत्र विचलनं न स्वार्थं, किंतु गृहिणां मङ्गलाय । ननु तर्हि त एव महद्दर्शनार्थं किमिति नागच्छन्ति तत्राह—दीनचेतसां कृपणानां क्षणमपि गृहं त्यक्तुमशक्नुवतामित्यर्थः ॥ ४ ॥ त्वया बालयोर्नामकरणादि करणीयमिति वक्तुं तस्य ज्ञानातिशयमाह—ज्योतिषामयनमिति । यदतीन्द्रियज्ञानसाधनं ज्योतिषामयनं तत्प्रतिपादकं ज्योतिःशास्त्रमित्यर्थः । तत्साक्षाद्भवता प्रणीतम् । येनान्योऽपि पुमान्परावरं परं कारणं पूर्वजन्मकृतं कर्म, अवरं कार्यं तस्मिन् जन्मनि भाविफलं तद्वेद । उक्तं च जातके—'यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम् ॥ व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥' इति ॥५॥ विवक्षितमाह—त्वं हीति । दैवज्ञो मन्त्रविच्च त्वम्, अतो नामकरणादिसंस्कारान्कर्तुमर्हसीत्यर्थः । नन्वेतद्गुरुणा करणीयमिति चेत्तत्राह—नृणामिति ॥ ६ ॥ अत्युत्साहिनं नन्दं प्रति गुप्तमेतत्कार्यमित्यभिप्रायेण प्रत्याचक्षाण इवाह—यदूनामिति । भवतु तथापि त्वमत्रागत इति को विद्यादिति चेदत आह—ख्यातश्चेति । ततः किमत आह—सुतमिति । कंसो मन्यते मन्येत । कल्पयेदित्यर्थः ॥७॥ ननु यदुकुमार इति कथंचिज्जानातु । तत्र वसुदेवस्य सुतस्तत्रापि देवक्यां जात इति कुतो जानीयात्तत्राह—पापमतिरित्यादि ॥८॥ 'किं मया हतया मन्द' इत्यादि देवकीकन्यावचः श्रुत्वा 'देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति' इति नित्यं संचिन्तयन्सामान्येन क्वचिदस्तीति ज्ञात्वा युवयोश्च सख्यं संचिन्तयंस्त्वद्गृहे भवेदिति संभाव्य मत्संस्कारलिङ्गेन चागताशङ्कः आगता आशङ्का यस्य सः अपि यदि हन्ता हनिष्यति तर्हि तत्तदा नो महाननयः स्यादिति ॥९॥ द्विजातिसंस्कारं द्विजातीनामवश्यं कर्तव्यं संस्कारमात्रं केवलं स्वस्तिवाचनपूर्वकं कुर्विति ॥ १० ॥ ११ ॥ यदूनामपृथग्भावात्कुतश्चिद्धेतोर्विप्रतिपद्यमानानां यदूनामपृथग्भावात् । भावो भावनं तस्मात् । अन्योन्यशिक्षया सर्वैकमत्यकरणादित्यर्थः । सम्यक्कर्षत्यैकीकरोतीति संकर्षणमप्युशन्ति मन्यन्ते, वक्ष्यन्तीत्यर्थः । गर्भसंकर्षणं तु न प्रकाशयति ॥ १२ ॥ ॥

महद्विचलनं नृणां गृहिणां दीनचेतसाम् ॥ निःश्रेयसाय भगवन्कल्पते नान्यथा क्वचित्[1] ॥ ४ ॥ ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम् ॥ प्रणीतं भवता येन पुमान्वेद परावरम् ॥ ५ ॥ त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि ॥ बालयोरनयोर्नॄणां जन्मना ब्राह्मणो गुरुः ॥ ६ ॥ ॥ गर्ग उवाच ॥ यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा ॥ सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥ कंसः पापमतिः सख्यं तव चानकदुन्दुभेः ॥ देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ ८ ॥ इति संचिन्तयन् श्रुत्वा देवक्या दारिकावचः ॥ अपि हन्तागताशङ्कस्तर्हि तन्नोऽनयो भवेत् ॥ ९ ॥ ॥ नन्द उवाच ॥ अलक्षितोऽस्मिन्रहसि[2] मामकैरपि गोव्रजे ॥ कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥ ॥ श्रीशुक उवाच ॥ एवं संप्रार्थितो विप्रः स्वचिकीर्षितमेव तत्[3] ॥ चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥ ॥ गर्ग उवाच ॥ अयं हि रोहिणीपुत्रो रमयन्सुहृदो[4] गुणैः ॥ आख्यास्यते राम इति बलाधिक्याद्बलं विदुः ॥ यदूनामपृथग्भावात्[5]संकर्षणमुशन्त्युत १२

१ अन्यथा निःश्रेयसव्यतिरेकेण । २ रहसि इति दिने सपालाना गवां वने गमनात् । ३ तत् रहसि संस्कारकरणम् । ४ सुहृदो वसुदेवादीन् भवदादींश्च । आख्यास्यते स्वयमेव । मत्कर्तृकं तु व्याजमात्रम् । वास्तवार्थस्तु सुहृदो भक्तानात्मारामादींश्चेति तोप० । ५ भावनं कारणम् ।

अस्य तव पुत्रस्य । अतः कृष्ण इत्येकं नाम भविष्यति ॥ १३ ॥ प्रागयमिति सामान्योक्त्या ऋषिरयं जन्मान्तरगतं नाम कथयतीति नन्दो मन्यते स्म । अत एवं वासुदेव इति संप्रचक्षत इति ॥ १४ ॥ गुणानुरूपाणि ईश्वरः सर्वज्ञ इत्यादीनि, कर्मानुरूपाणि गोपतिर्गोवर्धनोद्धरण इत्यादीनि तानि सर्वाण्यहमपि नो वेद, जना अपि नो विदुरिति ॥ १५ ॥ जातकफलमाह—एष इति आधास्यदाधास्यति ॥ १६ ॥ अनेन रक्ष्यमाणाः समेधिताश्च दस्यूनिजिग्युरिति ॥ १७ ॥ १८ ॥ १९ ॥ इति चात्मानं प्रति समादिश्य । आत्मानं कृष्णं वा । आशिषामाशीर्भिः ॥ २० ॥ 'बालक्रीडाचमत्कारैः कृष्णो रामेण संयुतः ॥ परमानन्दमाधत्त व्रजे नन्दयशोदयोः' ॥ १ ॥ पूर्णत्वमेव दर्शयन्नाह—कालेनेति ॥ २१ ॥ अनुकृष्य पुनःपुनराकृष्य । सरीसृपन्तावतिशयेन चलन्तौ ।

आसन्वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १४ ॥ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१५॥ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ॥ अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥१६॥ पुरानेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥१७॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वन्ति मानवाः ॥ नारयोऽभिभवन्त्येतान्विष्णुपक्षानिवासुराः ॥१८॥ तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः ॥ श्रिया कीर्त्यानुभावेन गोपायस्व समाहितः ॥१९॥ इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ॥ नन्दः प्रमुदितो मेन आत्मानं पूर्णमाशिषाम् ॥२०॥ कालेन व्रजताल्पेन गोकुले रामकेशवौ ॥ जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजह्रतुः ॥२१॥ तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु ॥ तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः ॥ २२ ॥ तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ पङ्काङ्गरागरुचिरावुपगुह्य दोर्भ्याम् ॥ दत्त्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥

कथम् । घोषाः कटिपादभूषणकिङ्किण्यस्तेषां प्रघोषेण रुचिरं यथा तथा । तेषां घोषाणां नादेन हृष्टं मनो ययोस्तौ । लोकमितस्ततो गच्छन्तं जनमनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत्प्रभीतवन्मात्रोरन्ति समीपे उपेयतुरुपजग्मतुः ॥ २२ ॥ तदा च तन्मातरौ निजसुतौ दोर्भ्यामुपगुह्य प्रमोदं ययतुः । कथंभूते । घृणया कृपया स्नुवन्त्यौ पयःपूर्णपयोधरे सत्यौ । पङ्केनाङ्गरागेण च रुचिरौ । कथंभूतं मुखं निरीक्ष्य । मुग्धं मन्दं स्मितं यस्मिन्, अल्पा दशनाश्च यस्मिंस्तच्च तच्च ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

१ कृष्णतामेतद्रूपतामस्मिन्नन्वर्भूतता प्राप्तः सर्वांशत्वात् । २ आधास्यदित्यत्र छान्दसो आर्मः । ३ अमरकोशे तु माधवो देवाः, दस्यवो दैत्याः, अराजके इन्द्रस्य पदच्युतौ इति तोष० । ४ 'महाभागे' इति पाठे सप्तम्यन्तं यशोदासम्बोधनं वा । ५ नारायण एव समो यस्य । ६ 'गोपाय सुसमाहितः' इति पाठः । तत्र समाहितो गोपाय, यद्वा गीर्लीलादिभिर्गोपाना रासां गोपाना भवतां वा अये शुभविनी सुसमाहितलतारः इति तोष० । ७ मुकोधितरियम् । अत्र 'शुक्ल उपास' इति कचित् ।

यर्ह्यङ्गनानां दर्शनीया कुमारलीला ययोस्तथाभूतौ जातौ तदान्तर्व्रजे व्रजस्य मध्ये तदबला व्रजाङ्गनास्तौ प्रेक्षन्त्यः प्रेक्षमाणा विस्मृतगृहकृत्या हसन्त्यो जहृषुर्हृष्टा बभूवुः । कथंभूतौ । ताभ्यां प्रगृहीतानि पुच्छानि येषां तैर्वत्सैरितस्ततोनुकृष्यमाणौ ॥ २४ ॥ अतिचपलौ तौ शृङ्ग्यादिभ्यो निषेद्धुं गृहोचितानि कर्माणि च कर्तुं यत्र यदा तज्जनन्यौ न शेकाते तदाऽलं मनसोऽनवस्थामापतुरिति गृहसौख्यस्य पराकाष्ठा दर्शिता ॥२५॥२६॥२७॥२८॥ 'कृष्णचापलचौर्याणि सहैवाखिलसद्मतः ॥ प्रजल्पन्त्यः समागत्य गोप्यो गोप्यै मुदं ददुः' ॥१॥ असमयेऽदोहकाले । क्रोशे संजातहासः । स्तेयं चौर्यार्जितम्, नतु दत्तम् । तत्रापि स्वादु नेतरत् । दधि च पयश्चात्ति । किंच भोक्ष्यंन्मर्कान्मर्कटान्प्रति विभज्य ददाति । तेषां मध्ये तृप्तत्वेन कोपि नात्ति चेत्तर्हि भाण्डं भिनत्ति । कचिद्द्रव्यस्यालाभे सति सः गृहाय धक्ष्यामीति कुपितो याति । यद्वा सगृहा गृहिणस्तेभ्यः कुपितस्तेषां तोकान्पर्यङ्कादिषु सुप्तानुपक्रोश्य रोदयित्वा यातीति ॥२९॥ कल्पितैः स्तेययोगैरित्युक्तं तत्प्र-

यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः ॥ वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः ॥ २४ ॥ शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ॥ गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥२५॥ कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले ॥ अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥२६॥ ततस्तु भगवान्कृष्णो वयस्यैर्व्रजबालकैः ॥ सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदम् ॥२७॥ कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम् ॥ शृण्वत्याः किल तन्मातुरिति होचुः समागताः ॥२८॥ वत्सान्मुञ्चन्क्वचिदसमये क्रोशसंजातहासः स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ॥ मर्कान्भोक्ष्यन्विभजति स चेन्नात्ति भाण्डं भिनत्ति द्रव्यालाभे स गृहकुपितो यात्युपक्रोश्य तोकान् ॥ २९ ॥ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् ॥ ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥ ३० ॥ एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथास्ते ॥ इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी नह्युपालब्धुमैच्छत् ॥ ३१ ॥

पश्यति—हस्ताग्राह्य इति । तुङ्गशिक्यस्थभाण्डेष्वन्तर्हिते दध्यादौ वयुनं ज्ञानं यस्य स छिद्रं रचयति । तद्विच्छिद्ररचनादिवित् । ध्वान्तयुक्ते गृहे स्वाङ्गमेवार्थप्रदीपं रचयति । विशेषतो धृतमणिगणम् । यर्हि यस्मिन्काले ॥३०॥ रेरे चोरेत्याक्षिप्तः सन्नुशति जल्पति त्वमेव चोरोऽहं गृहस्वामीत्यादीनि धार्ष्ट्यानि प्रागल्भ्यानि । अथवा उशति हे कमनीये यशोदे । यद्वा उशति वास्तौ स्वर्चिते गृहे मेहनादीनि पुरीषोत्सर्गादीनि कुरुते । एवं स्तेयोपायैर्विरचिता कृतिः कर्म येन सः । त्वत्समीपे सुप्रतीकः साधुरिवास्ते । सभये नयने यस्मिंस्तच्च तच्छ्रीयुक्तं मुखं च तदालोकिनीभिर्व्याख्यातार्था प्रख्यापितजन्मफला तत्तत्कर्मफला वा उपालब्धुमाक्षेप्तुं नैच्छत् ॥३१॥

१ ताड्यतां वध्यतामित्याक्रोशे सति । २ भोक्ष्यन्स्वभोजनात्पूर्वमेव । ३ शेकाते इति प्रकृतिभावाभाव आर्षः । ४ 'ओजसा' इति पाठः । ५ यद्वा न च मन्तव्यं ममायं बाल इति । यतोऽन्तरेव निहितं सवृत्य धृतं ज्ञानं येन स इत्यादि योज्यम् । ६ उशति कमनीये इति वशेरत्र रोचमानतार्थप्राधान्यादिति क्रम० । ७ भगवति न मेहनादिसंभवस्तथापि बाललीलासंप्रत्ययार्थं मृषैव दर्शितमिति ज्ञेयमिति तोष० ।

कदाचिदपराधान्तरे उपालभत तदा तु महदाश्चर्यमभूदिति कथयन्नाह—एकदेति ॥ ३२ ॥ उपालभ्य निर्भर्त्स्य । भयेन संभ्रान्तप्रेक्षणे चपलनिरीक्षणे अक्षिणी यस्य तम् ॥३३॥ अदान्तात्मन् चपलगात्र । रह एकान्ते ॥३४॥ नाहं भक्षितवानिति । नहि बाह्यं किंचिन्मया भक्ष्यते मत्कुक्षावादावेव सर्वमस्तीति भावः । समक्षं प्रत्यक्षम् ॥३५॥ व्यादेहि मुखं प्रसारयेति । व्यादत्त प्रसारितवान् ॥ ३६ ॥ तत्र तस्मिन्मुखे विश्वं ददृशे ददर्श । तत्प्रपञ्चयति—जगज्जङ्गमम् । स्थास्नु स्थावरम् । खमन्तरिक्षलोकम् । साद्रिद्वीपाब्धिभूगोलं पर्वतद्वीपसमुद्रसहितं भूगोलं भूर्लोकम् । वायुः प्रवहः अग्निर्वैद्युतः, इन्दुश्च तारकाश्च तत्सहितम् ॥३७॥ ज्योतिश्चक्रं स्वर्लोकम् । वैकारिकाणि देवाः । मन इति वैकारिकशब्देन गृहीतमपि देववैलक्षण्यात्पुनरुक्तम् । इन्द्रियाणि च तैजसानि । मात्रास्तामसाः शब्दादयः ॥३८॥ एवमेतद्विचित्रं विश्वं सहैकदैव वीक्ष्य विचित्रमाह—जीवश्च गुणक्षोभकः, कालश्च परिणामहेतुः, स्वभावश्च जन्महेतुः, कर्म च तत्संस्कारः, आश-

एकदा क्रीडमानास्ते रामाद्या गोपदारकाः ॥ कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२ ॥ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ॥ यशोदा भयसंभ्रान्तप्रेक्षणाक्षमभाषत ॥ ३३ ॥ कस्मान्मृदमदान्तात्मन् भवान्भक्षितवान् रहः ॥ वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥ ३४ ॥ नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः ॥ यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥३५॥ यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान्हरिः ॥ व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥३६॥ सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः ॥ साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम् ॥३७॥ ज्योतिश्चक्रं जलं तेजो नभस्वान्वियदेव च ॥ वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ॥३८॥ एतद्विचित्रं सह जीवकालस्वभावकर्माशयलिङ्गभेदम् ॥ सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥ ३९ ॥ किं स्वप्न एतदुत देवमाया किंवा मदीयो बत बुद्धिमोहः ॥ अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ॥ ४० ॥ अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा ॥ यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदम् ॥ ४१ ॥

यश्च, एतैर्लिङ्गानां चराचरशरीराणां भेदो यस्मिंस्तत् । तत्र व्रजं च सहात्मानं स्वसहितं क्वचिद्वीक्ष्य । सूनोस्तनावल्पे विदारिते आस्ये शङ्कामवाप ॥३९॥ तामेवाह—किं स्वप्न इति । परितो विलोक्याह—नायं स्वप्नः । तर्हि किं देवस्य हरेर्माया । तथा चेदन्ये किं न पश्यन्ति तर्हि, किंवा मदीय एव कश्चिद्बुद्धिमोहो विपर्यासो दर्पणे मुखवत् । एवं तर्ह्ययं कृष्णोऽपि कथमन्तः प्रतीयते । अन्तर्बहिश्चैकरूपेण च कथं जगत्प्रतीयते । तथा सति विम्बप्रतिविम्बयोरिव परस्परं वैपरीत्येन प्रतीतिः स्यादित्याशङ्क्यान्यथा वितर्कयति—अथो इति । अथवा ममामुष्यार्भकस्यापि सतो यः कश्चनाचिन्त्य आत्मयोगः स्वीयमैश्वर्यम् । औत्पत्तिकः स्वाभाविकः ॥४०॥ चरमं पक्षमाश्रित्यायमीश्वर इति निश्चित्याह—अथो इति । चेतश्चित्तम् । चित्तादिभिर्न वितर्कगोचरम् । जगद्यदाश्रयं यदधिष्ठानम् । येन करणाधिष्ठात्रा । यतो बुद्धिवृत्त्यभिव्यक्तात् । नन्विदमवितर्क्यं भवतु, तत्पदं कीदृगत आह—सुदुर्विभाव्यमिति । इदमत्यन्तमचिन्त्यमित्यर्थः ॥ ४१ ॥ ॥

१ 'करे पुत्रं' इति पाठः । २ सहात्मानं आत्मभ्या श्रीकृष्णयशोदाभ्या सहितं वीक्ष्य । ३ अभिव्यक्ताभ्नारायणादञ्जसा साक्षात्प्रतीयते तस्य पदं प्रणतास्मि ।

एवं प्रपञ्चप्रतीत्योन्नीतं तत्त्वं पुनर्जीवसंसृतिहेतुमायाश्रयत्वेनोन्नयन्त्याह—अहमिति । यशोदा नामाहमसौ मम पतिः । अमुष्य व्रजेश्वरस्याखिलवित्ताधिष्ठात्र्यहं सती जाया, एष कृष्णो मे सुतः, गोप्यादयश्च मदीयाः, इतीत्थं कुमतिर्यन्मायया स एव मे शरणमिति ॥ ४२ ॥ वैष्णवीं स्वीयाम् ॥ ४३ ॥ प्रवृद्धेन स्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा पुरेवासीत् ॥४४॥ मायाबलोद्रेकमाह—त्रय्येति । त्रय्या कर्मकाण्डरूपया इन्द्रादिरूपेण, उपनिषद्भिर्ब्रह्मेति, सांख्यैः पुरुष इति, योगैः परमात्मेति, सात्वतैर्भगवानित्युपगीयमानं माहात्म्यं यस्य तम् ॥ ४५ ॥ अतिविस्मयेन पृच्छति—नन्द इति । महोदयं महानुदय उद्भवो

अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ॥ गोप्यश्च गोपाः सहगोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः ॥४२॥ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ॥ वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥ ४३ ॥ सद्योनष्टस्मृतिर्गोपी साऽरोप्यारोहमात्मजम् ॥ प्रवृद्धस्नेहकलिलहृदयासीद्यथा पुरा ॥ ४४ ॥ त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ॥ उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥४५॥ ॥ राजोवाच ॥ नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम् ॥ यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥ पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम् ॥ गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥ ४७ ॥ ॥ श्रीशुक उवाच ॥ द्रोणो वसूनां प्रवरो धरया सह भार्यया ॥ करिष्यमाण आदेशान्ब्रह्मणस्तमुवाच ह ॥ ४८ ॥ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ॥ भक्तिः स्यात्परमा लोके ययाऽञ्जो दुर्गतिं तरेत् ॥४९॥ अस्त्वित्युक्तः स भगवान् व्रजे द्रोणो महायशाः ॥ जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् ॥५०॥ ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ॥ दम्पत्योर्नितरामासीद्गोपगोपीषु भारत ॥५१॥ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ॥ सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे विश्वरूपदर्शनेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥

यस्य तत् ॥ ४६ ॥ ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि यं नान्वविन्देतां न प्राप्नुताम् । कृष्णस्योदारं महदर्भकेहितं बाललीलाम् । यच्च कवयो गायन्ति तद्योऽविन्दत्स किं श्रेयोऽकरोदिति ॥ ४७ ॥ ब्रह्मण आदेशान्गोपालनादिलक्षणान् ॥ ४८ ॥ ४९ ॥ स एवेह द्रोणो जज्ञे । स च नन्द इति ख्यातः सा च धरा यशोदाऽभवत् ॥ ५० ॥ गोपगोपीनामपि वस्तुस्वभावादस्त्येव भक्तिस्तयोः पुनर्नितरामिति ॥ ५१ ॥ स्वलीलया पुत्रभावानुकारिण्या ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां अष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥

१ आरोहमुत्सङ्गम् । २ 'गायन्ते' इति पाठे आत्मनेपदमार्षम् । ३ तं प्रसन्नं ब्रह्माणम् । ४ भक्तिः स्यात् । प्रार्थनायां लिङ् । ५ 'ययान्यो' इति पाठः । ६ भगवानैश्वर्यादिमान् । 'स एवेह' इति पाठः । ७ गोपगोपीषु मध्ये । ८ कवयो ब्रह्मादयः, यद्वा कवय आत्मारामशिरोमणयोऽपि भवादृशाः । ९ आदेशान् मथुरामण्डलवासगोपालनवसुदेवसख्यादीनिति तोष० ।

नवमे पेयउत्सिक्ते गत्वा गोप्यथ तत्कृतम् ॥ विलोक्य भाण्डभङ्गादि कृष्णं दाम्ना बबन्ध तम् ॥ १ ॥ तनूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतसः ॥ बन्धनद्य- ङ्गुलापूर्त्या पूर्णतामन्वदर्शयत् ॥ २ ॥ स्वयं दधि निर्ममन्थ ॥ १ ॥ तदा चागायतेति चकारान्वयः ॥ २ ॥ सूत्रनद्धं काञ्चीबद्धम् । रज्ज्वाकर्षेण श्रमो ययोस्तयो- र्भुजयोश्चलन्तौ कङ्कणौ च । कबराद्विगलन्त्यो मालत्यो यस्याः सा ॥ ३ ॥ ४ ॥ अधिश्रिते चुल्लीमारोपिते । उत्सिच्यमाने अतितापेनोद्रिच्यमाने ॥ ५ ॥ दृषदश्मना शिलापुत्रेण । अन्तरं गृहमध्यं गतः । रह एकान्ते नवनीतमभक्षयत् ॥ ६ ॥ सुश्रितं सुतप्तम् । दधिमन्थनस्थानं प्रविश्य भिन्नं संदृश्य दृष्ट्वा ॥ ७ ॥

॥ श्रीशुक उवाच ॥ एकदा गृहदासीषु यशोदा नन्दगेहिनी ॥ कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥ १ ॥ यानि यानीह गीतानि तद्बालचरितानि च ॥ दधिनिर्मन्थने काले स्मरन्ती तान्यगायत ॥ २ ॥ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ ॥ ३ ॥ तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः ॥ गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन् ॥ ४ ॥ तमङ्कमारूढमपाययत्स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ॥ अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥ संजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमन्थभाजनम् ॥ भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ॥ ६ ॥ उत्तार्य गोपी सुश्रृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् ॥ भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥ उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ॥ हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः ॥ ८ ॥ तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ॥ गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥ ९ ॥ अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिः सुमध्यमा ॥ जवेन विस्रंसितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥ ॥

उलूखलाङ्घ्रेः परिवर्तितस्योलूखलस्योपरि । शिचि शिक्ये । चौर्येण विशङ्कितं चञ्चलमीक्षणं यस्य तं सुतम् ॥ ८ ॥ तपसा ऐकाग्र्येणेरितं तदाकारतां नीतमत एव क्षमं प्रवेष्टुं योगिनां मनोऽपि यं नाप तम् । अथवा अन्वधावत्केवलं नत्वाप, यतो योगिनां मनोऽपि यं प्रवेष्टुं न क्षममिति ॥ ९ ॥ अन्वञ्चमाना एवं कृष्णमनुगच्छन्ती । बृहत्योश्चलन्त्योः श्रोण्योर्भारेणाक्रान्ता लब्धा गतिर्यस्याः सा, विस्रंसितात्केशबन्धाच्च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा । यद्वा जवेन कम्पितात्केशबन्धात्पुरः पतितानि प्रसूनान्यनु पश्चाद्गतिर्यस्याः सा । परामृशद्धृतवती ॥ १० ॥ ॥ ॥ ॥

१ उत्सिक्तमुत्सेकः । पयस उत्सेके सतीत्यर्थः । २ क्षौमं वाल्कं अतसीतन्तूत्थम् । ३ अत्र केचन—'जातकं पञ्च' इति छित्त्वा क्षौमादि पञ्च बिभ्रती, जातं कं सुखं यस्मिन्कर्मणि यथा तथेति व्याचख्युस्तदुपेक्ष्यं तोप० । ४ विगलन्मालतीत्यत्र कबभावः समासान्तानित्यत्वात् । ५ 'दधिमण्ड' इति पाठः । ६ मृषा व्यर्थं बालस्वभावकृतमेवाश्रु यस्य यद्वा अमृषाश्रुः नरवन्यदा इव कैतवाश्रुरतृप्तत्वात् तोप० । ७ अन्तर्गृहे मर्कटप्रवेशासंभवाद्बहिर्निर्गत्योलूखलोपरि स्थित्वा मर्कटेभ्यो नवनीतं ददतमित्यभिप्रायमाहतुश्चक्रवर्तिबालबोधिनीकारौ । ८ तत उलूखलात् ।

अञ्जन्मषिणी अञ्जन्ती सर्वतः प्रसरन्ती मषी ययोस्ते अक्षिणी स्वपाणिना कषन्तं संमर्दयन्तम् । भिषयन्ती ह्रस्वश्छान्दसः । भीषयन्ती भयमुत्पादयन्ती । अवागुरदभर्त्सयत् ॥ ११ ॥ इयेष ऐच्छत् । अतद्वीर्यकोविदा तत्प्रभावानभिज्ञा ॥ १२ ॥ अकोविदत्वमाह—न चान्तरिति पञ्चभिः । बन्धनं हि बहिःप-रिवृतेन दाम्ना अन्तरावृतस्य भवति । तथा च पूर्वापरविभागवतो वस्तुनः पूर्वतो दाम धृत्वा परितः परिवेष्टनेन भवति न त्वेतदस्तीत्याह—न चान्तरिति । किंच व्यापकेन व्याप्यस्य बन्धो भवति तच्च विपरीतमित्याह—पूर्वापरमिति । किंच तद्व्यतिरिक्तस्य चाभावान्न बन्ध इत्याह—जगच्च य इति ॥ १३ ॥

कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ॥ उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिष-यन्त्यवागुरत् ॥ ११ ॥ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ॥ इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥१२॥ न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ॥ पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥१३॥ तं मत्वा-त्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ॥ गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥१४॥ तद्दाम बध्यमानस्य स्वार्भ-कस्य कृतागसः ॥ द्व्यङ्गुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥ १५ ॥ यदासीत्तदपि न्यूनं तेनान्यदपि संदधे ॥ तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥ एवं स्वगेहदामानि यशोदा संदधत्यपि ॥ गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताभवत् ॥ १७ ॥ स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ॥ दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने ॥ १८ ॥ एवं संदर्शिता ह्यङ्ग हरिणा भृत्यवश्यता ॥ स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥ नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया ॥ प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ २० ॥ नायं सुखापो भगवान्देहिनां गोपिकासुतः ॥ ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥ २१ ॥ ॥ ॥

तं मर्त्यलिङ्गमधोक्षजमात्मजं मत्वा बबन्धेति ॥ १४ ॥ द्व्यङ्गुलोनं द्वाभ्यामङ्गुलाभ्यामूनमपूर्णम् ॥ १५ ॥ १६ ॥ स्मितं कुर्वतीनां मध्ये स्वयमपि हसन्ती विस्मयमाप ॥ १७ ॥ १८ ॥ न चैवं स्वातन्त्र्यभङ्ग इत्याह—एवं संदर्शितेति । सेश्वरमिदं विश्वं यस्य वशे यदधीनमित्यर्थः ॥ १९ ॥ भगवत्प्रसादमन्येऽपि भक्ता लभन्ते, इदं त्वतिचित्रमिति सरोमाञ्चितमाह—नेममिति । विरिञ्चः पुत्रोऽपि, भवः स्वात्माऽपि श्रीर्जायापि ॥ २० ॥ फलितमाह—नायमिति । देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानानामपि ॥ २१ ॥ ॥ ॥ ॥ ॥

१ यद्वा तद्वीर्यकोविदा तच्चापलदुर्वारतायभिज्ञा । २ सर्वत्र नञ् तदभावदार्ढ्याय, अत एव चकारादपिशब्दश्च । ३ अधोक्षजमिन्द्रियज्ञानातीतरूपम् । ४ द्व्यङ्गुलोनमिति प्रथमाया रज्ज्वा दैवाद्व्यङ्गुलन्यूनत्वादुत्तरासां च बाल्योचितदृढवत्तादर्शनेन तद्विमुताशक्त्या तथैव रक्षणात् । किंच स्थितेऽपि प्रेमणि वैयग्र्यविशेषतदुत्पन्नमत्कृपाविशेषाभ्यां द्वाभ्यामूनत्वेन मद्वशीकरणं न स्यादिति सूचयितुं इति तोष० । ५ स्मयन्तीनामित्यनादरे षष्ठी । 'उत्स्मयन्तीनाम्' इति पाठः । ६ स्वयमेव बद्धोऽभूदित्यर्थः । ७ विरिञ्चो भवः श्रीश्च प्रसादं न लेभिरे इति न, किंतु गोपी यशोदा यत्तं प्रसादं प्राप तत्तं प्रसादं न लेभिरे इत्यन्वयः । केचन 'लेभिरं स्यादुलूखलं' इति कोशकल्पनेन लेभिर उलूखले गोपी यं प्रसादं प्रापेति व्याख्यास्यन्ति । ८ 'देवकीसुतः' इति पाठः ।

भक्तैर्बद्धस्याप्यन्यमोचकत्वमाह—कृष्णस्त्विति ॥२२॥२३॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥९॥ दशमेऽपातयद्रिङ्गन्नन्तरा यमलार्जुनौ ॥ तत्रत्याभ्यां च देवाभ्यां कृष्णः स्तुत इतीर्यते ॥ १ ॥ यद्विगर्हितं कर्म येन वा देवर्षेर्भागवतोत्तमस्यापि तमः क्रोधस्तदेतत्कथ्यतामिति ॥ १ ॥ २ ॥ ३ ॥ गङ्गायामन्तर्मध्ये । कथंभूते । अम्भोजानां वनानि तेषां राजयस्ता विद्यन्ते यस्मिंस्तस्मिन् ॥ ४ ॥ अपश्यत्, दृष्ट्वा च क्षीवाणौ मत्तौ समबुध्यत ॥ ५ ॥ कुत इत्यत आह—तं दृष्ट्वेति ॥ ६ ॥ अनुग्रहार्थाय अनुग्रहश्च मदनाशोऽर्थश्च श्रीकृष्णदर्शनं तदर्थम् । इदं वक्ष्यमाणं

कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः ॥ अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥२२॥ पुरा नारदशापेन वृक्षतां प्रापितौ मदात् ॥ नलकूबरमणिग्रीवाविति ख्यातौ श्रियान्वितौ ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गोपीप्रसादो नाम नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ राजोवाच ॥ कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ॥ यत्तद्विगर्हितं कर्म येन वा देवर्षेस्तमः ॥ १ ॥ ॥ श्रीशुक उवाच ॥ रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ॥ कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥२॥ वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥ अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥ यदृच्छया च देवर्षिर्भगवांस्तत्र कौरव ॥ अपश्यन्नारदो देवौ क्षीवाणौ समबुध्यत ॥५॥ तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः ॥ वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥ ६ ॥ तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ ॥ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥ ॥ नारद उवाच ॥ नह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवः ॥ ८ ॥ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः ॥ मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ॥ ९ ॥ देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ १० ॥ ॥

नह्यन्य इत्यादि ॥ ७ ॥ जोष्यान्प्रियान्विषयान् जुषतः सेवमानस्य पुंसः श्रीमदादन्य आभिजात्यादिः सत्कुलविद्यादिजनितो मदः । अन्यो वा रजोगुणो रजःकार्यहासहर्षादिरूपो नहि । तथा बुद्धिभ्रंशो बुद्धिं भ्रंशयतीति तथा किंतु श्रीमद एवेति । तदाह—यत्रेत्यादिचतुर्भिः । यत्र श्रीमदे ॥८॥ इमं नश्वरं देहमजरामृत्यु अजरश्च अमृत्युश्च यथा तथा मन्यमानैः ॥ ९ ॥ नरदेवभूदेवसंज्ञितमपि श्वादिभिर्भक्षितं विड्संज्ञितं दग्धं भस्मसंज्ञितमन्यदा कृमिसंज्ञितम् । तत्कृते तदर्थं यो भूतध्रुक् भूतद्रोग्धा । यतो भूतद्रोहान्निरयो भवति स किं स्वार्थं वेद । नैव वेदेत्यर्थः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥

१ तमः कोपहेतुरज्ञानं यदभूत् । २ अम्भोजवनाना राजयो यत्रेत्यव्ययविशेषणत्वादव्ययत्वं । राजिनीत्यत्र व्रीह्यादित्वादिनिः । ३ यत्र श्रीमदे कामानृतक्रोधादयो भवन्तीति शेषः । ४ शरीरमित्यध्याहारः । देवसंज्ञितमपि शरीरमन्ते कृमिविड्भस्मसंज्ञितं भवति तत्कृते इत्यन्वयः ।

इदानीं देहेऽहंभावोपि न घटत इत्याह—देह इति । निषेक्तुः पितुः । मातुःपितुर्वा मातामहस्य पुत्रिकाकरणे ॥ ११ ॥ अव्यक्तप्रभवाप्ययमव्यक्तात्प्रभवस्तस्मिन्नेवाप्ययो यस्य तमात्मसात्कृत्वा आत्मेति मत्वा । असतो मूढाद्दते ॥ १२ ॥ एवं श्रीमदविचेष्टितमुक्त्वा तत्प्रतीकारं निश्चिनोति—असत इति । परं श्रेष्ठं, दारिद्र्यमेव केवलमिति वा । कुत इत्यत आह—आत्मौपम्येनेति । ततो न द्रुह्यतीति भावः ॥ १३ ॥ सदृष्टान्तमाह—यथेति । मुखम्लान्यादिलिङ्गैः सर्वेषां जीवानां सुखदुःखे समे इति ज्ञातवानित्यर्थः ॥ १४ ॥ किंच दारिद्र्यं मोक्षमपि साधयतीत्याह—दरिद्र इति श्लोकचतुष्टयेन । निरहंस्तम्भो

देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव च ॥ मातुःपितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥११॥ एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ॥ को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसतः ॥१२॥ असतः श्रीमदान्धस्य दारिद्र्यं परमञ्जनम् ॥ आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥१३॥ यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ॥ जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः ॥१४॥ दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह ॥ कृच्छ्रं यदृच्छयाप्नोति तद्धि तस्य परं तपः ॥१५॥ नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकाङ्क्षिणः ॥ इन्द्रियाण्यनुशुष्यन्ति हिंसापि विनिवर्तते ॥१६॥ दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः ॥ सद्भिः क्षिणोति तं तर्षं तत आराद्विशुध्यति ॥१७॥ साधूनां समचित्तानां मुकुन्दचरणैषिणाम् ॥ उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः ॥ १८ ॥ तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः ॥ तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥१९॥ यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ॥ न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥ २० ॥ अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ॥ स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥ २१ ॥ वासुदेवस्य सांनिध्यं लब्ध्वा दिव्यशरच्छते ॥ वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥२२॥ ॥ श्रीशुक उवाच ॥ एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥ २३ ॥ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ॥ जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥ २४ ॥ ॥ ॥ ॥ ॥

निर्गतोऽहंकाररूपः स्तम्भो यस्मात्सः ॥ १५ ॥ १६ ॥ युज्यन्ते स्वत एव सङ्गच्छन्ते । तर्षं तृष्णाम् ॥ १७ ॥ ननु साधूनामपि धनिकः प्रियः स्यान्न दरिद्र इति तत्राह—साधूनामिति । धनेन स्तम्भो गर्वो येषां तैः ॥ १८ ॥ तमोमदमज्ञानकृतं मदम् ॥ १९ ॥ तमःप्लुतौ तमोव्याप्तौ ॥ २० ॥ शपति—अतोऽर्हत इति । अनुगृह्णाति—स्यातां नैवमित्यादिना । मत्प्रसादेन स्मृतिः स्यात् ॥ २१ ॥ स्वर्लोकतां देवत्वं पुनर्लब्ध्वा मदनुग्रहाल्लब्धभक्ती भविष्यत इति ॥ २२ ॥ २३ ॥ प्रस्तुतमाह—ऋषेरिति ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥

१ स्वं वस्त्विति शेषः । २ बलिनः बलाद्विष्टयर्थं गृह्णतः । ३ 'परमाञ्जनम्' इति पाठः । ४ लिङ्गैर्मुखम्लान्यादिदुःखचेष्टाभिः । ५ शुष्यन्ति विषयरसाद्उपरमन्ति । ६ सद्भिर्हेतुभिः । ७ माध्व्या मदिरया । ८ वृत्ते अतीते । ९ 'ऋषेर्भगवततस्य' इति पाठः ।

किमिति सत्यं कर्तव्यं तत्राह—देवर्षिरिति। यद्यतः। तत्ततः ॥२५॥ यमयोर्यमलयोः सहजातयोः। आत्मनः कृष्णस्य तन्मध्यप्रवेशमात्रेण ॥२६॥ अनु अश्व-तीत्यन्वक्। तत्र हेतुः—दामोदरेणेति। उत्कलितः उत्पाटितोऽङ्घ्रिबन्धो मूलबन्धो ययोस्तौ। परमस्य श्रीकृष्णस्य विक्रमितं विक्रमस्तेनातिवेपः कम्पो येषु ते स्कन्धप्रवालविटपा ययोस्तौ ॥ २७ ॥ ककुभः प्रति सर्वतः स्फुरन्तावित्यर्थः । यद्वा दिशः प्रकाशयन्ताविति। कुजयोर्वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमानुपैति तथोपेत्य। विरजसौ निर्मदौ निरहंकारिणौ नष्टगर्वाविति यावत् ॥२८॥ गोपालं मां युवां देवौ किमिति प्रणताविति चेत्तत्राहतुः—हे कृष्णकृष्ण महायोगिन्, अचिन्त्यप्रभावस्त्वं न गोपालः, किंतु परः पुरुषः। यत आद्यः कारणभूतः। तत्रापि न निमित्तमात्रं किंतूपादानमपि त्वमेवेत्याशयेन तुष्टुवतुः—व्यक्ताव्यक्त-मिति। स्थूलसूक्ष्ममिदं ते रूपं विदुः ॥ २९ ॥ नियन्तापि त्वमेवेत्यूचतुः—त्वमेक इति। देहः, असवः प्राणाः, आत्माऽहंकारः, इन्द्रियाणि च तेषामीश्वरः।

देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ॥ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥ २५ ॥ इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ॥ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥२६॥ बालेन निष्कर्षयताऽन्वगुलूखलं तद्दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ॥ निष्पेततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥ २७ ॥ तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ॥ कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म ॥२८॥ कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ॥ व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥२९॥ त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः ॥ त्वमेव कालो भगवान्विष्णुरव्यय ईश्वरः ॥३०॥ त्वं महान्प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी ॥ त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥३१॥ गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ॥ को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥३२॥ तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ॥ आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥३३॥

नन्वस्य कालो निमित्तं प्रकृतिरुपादानं प्रकृतेर्जातो महान्विश्वात्मतया परिणमते पुरुषः कर्ता नियन्ता च किमत्राहमत आहतुः—त्वमेव काल इत्यादिना सार्धेन। यतो भगवानीश्वरो विष्णुस्त्वमतः कालो नाम तव लीला ॥३०॥ प्रकृतिः शक्तिः, पुरुषोंऽशः, महान्कार्यम्, अतस्त्वमेव सर्वमित्यर्थः ॥३१॥ नन्वहमेव चेत्सर्वं तर्हि घटादिज्ञाने मज्ज्ञानं किं न भवति, भवतीति चेत्सर्वोऽपि ब्रह्मवित्स्यादत आहतुः—गृह्यमाणैरिति। दृश्यत्वेन वर्तमानैर्बुद्ध्यहंकारेन्द्रियादिभिर्द्रष्टा त्वं न गृह्यसे इति भावः। ननु तर्हि जीवो जानातु नैवेत्याहतुः—को न्विहेति। जीवाद्युत्पत्तेः प्रागेव स्वप्रकाशतया सिद्धं त्वां को वा जानाति। गुणसंवृतो देहाद्यावृतः ॥ ३२ ॥ अतो दुर्ज्ञेयत्वात्केवलं प्रणमतः—तस्मै तुभ्यमिति। आत्मनः स्वस्मात् द्योतः प्रकाशो येषां तैर्गुणैश्छन्नो महिमा यस्य। अभ्रैरिव रवेस्तस्मै ॥ ३३ ॥

१ मात्रपदेन यत्नाभावः सूचितः। २ परमं विक्रमं प्रापितौ परमविक्रमितौ तयोरिव योऽतिवेपः इति चक्र०। पर यत् अविक्रमितं विक्रमसदृशीकृतं तेनातिवेपो येषु०। 'पवनविक्रमिता' इति पाठे पवनतुल्यपराक्रमवशादिति योज्यम्। ३ प्राप्तपूर्वस्वरूपौ। ४ ब्राह्मणा ब्रह्मविदः। 'ब्रह्मणः' इति पाठः। ५ 'भगवन्' इति वीर० पाठः। ६ 'साक्षात्' इति पाठः। ७ अध्यक्षोऽन्तर्यामी 'पुरुषोऽव्यक्तः' इति पाठः। ८ सर्वेषु क्षेत्रेषु देहेषु विकारान्मनआदीन्वेत्तीति तथा सः, यद्वा क्षेत्रस्य विकारान्बाल्याद्यवस्थास्तदनुसंधाता जीवः। ९। प्राकृतैर्गुणैः प्रकृतिगुणकार्यैः, यद्वा गुणैर्दामभिरग्राह्योऽपि गुणसंवृतो बद्धः।

अहोऽहमीश्वर इति कुतो ज्ञानं तत्राहतुः—यस्येति ॥ ३४ ॥ भवायोद्भवाय । विभवाय विगतो भवो यस्मिंस्तस्मै । कैवल्यायेत्यर्थः ॥ ३५ ॥ ३६ ॥ नौ आवाम् । अनुचरः कुबेरो नारदो वा तस्य किंकरौ । भगवतस्तव दर्शनम् ॥ ३७ ॥ तत्र गतयोरावयोः पूर्वस्वभावो मा भूत् किंतु वाणी गुणानुकथन इत्यादि । नः 'अस्मदो द्वयोश्च' इति द्विवचनस्थाने बहुवचनम्, अस्मत्सङ्गिनां सर्वेषामपीति बहुवचनं वा । तव निवासभूतं यज्जगत्तस्य प्रणामे । त्वन्निवासभूतमिति बहुमानेन जगतः प्रणामे शिरोऽस्त्वित्यर्थः । भवत्तनूनां भवतो मूर्तीनाम् ॥ ३८ ॥ संकीर्तितः संस्तुतः ॥ ३९ ॥ वाग्भिः—'न ह्यन्यो जुषतो

यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः[1] ॥ तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः[3] ॥ ३४ ॥ स भवान्सर्वलोकस्य भवाय विभवाय च ॥ अवतीर्णोऽशभागेन सांप्रतं पतिराशिषाम् ॥ ३५ ॥ नमः पर[4]मकल्याण न[5]मः परममङ्गल ॥ वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३६ ॥ अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ[1] ॥ दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥ ३७ ॥ वाणी गु[6]णानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः ॥ स्मृत्यां शिरस्तव[7]निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥ ३८ ॥ ॥ श्रीशुक उवाच ॥ इत्थं संकीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः ॥ दाम्ना चोलूखले बद्धः प्रह[8]सन्नाह गुह्यकौ ॥ ३९ ॥ ॥ श्रीभगवानुवाच ॥ ज्ञातं मम पुरैवैतदृषिणा करुणात्मना ॥ यच्छ्रीमदान्धयोर्वाग्भिर्वि[9]भ्रंशोऽनुग्रहः कृतः ॥ ४० ॥ साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ॥ दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४१ ॥ तद्गच्छतं मत्परमौ नलकूबर सादनम् ॥ संजातो मयि भावो वामीप्सितः परमोऽभवः ॥ ४२ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ॥ बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे नारदशापो नाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥

जोष्यान्' इत्यादिभिः । श्रीविभ्रंशरूपोऽनुग्रहः कृत इति ॥ ४० ॥ युक्तमेवैतदित्याह—साधूनां स्वधर्मवर्तिनां समचित्तानामात्मविदां सुतरां मत्कृतात्मनां मय्यर्पितचित्तानाम् । तेषां कृपातिरेकात्सुतरामित्युक्तम् । सवितुर्दर्शनादक्ष्णोर्यथा बन्धो न भवेत्तद्वत् ॥ ४१ ॥ प्राधान्यादेकस्य संबोधनम् । हे नलकूबर, युवां तत्तस्मात्सादनं स्वनिकेतं मत्परमौ सन्तौ गच्छतम् । वां युवयोरपेक्षितो मयि प्रेमा जात एव । अभवः न भवो यस्मिन्सः ॥ ४२ ॥ बद्धोलूखलं बद्धमुलूखलं यस्मिंस्तम् ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥

१ यद्वा अनुचराणां भक्तानां किंकराविति अनु निरन्तरं जानीहीति तोष० । यद्वा तवानुचराणां गोपालानां किंकरानत्रजानीहि । किंकरौ कृत्वात्रैव स्थापयेत्यर्थः । २ अर्शआद्यच्, शरीरेषु मत्स्यादिषु । 'शरीरिषु' इत्येव पाठः क्वचित् । ३ देहिष्वसङ्गतैरघटमानैर्वीर्यैर्हेतुभिः । 'तिर्यग्योनिष्वसङ्गतैः' इति पाठः । ४ परमं कल्याणं यस्मात्, परमाणां शिवादीनामपि मङ्गल इति वेति तोष० । ५ 'नमस्ते विश्वमङ्गल' इति पाठः । ६ गुणानां वात्सल्यसौन्दर्यादीनां अनु निरन्तरं कथने नतु योगादिनिरूपणे । ७ तव निवासो व्रजः तत्रत्यजगतः सर्वस्य प्रणामे इति तोष० । ८ प्रहसन्निति स्वयं भगवानथ च बद्धस्तत्र च दाम्ना तत्राप्युलूखले इति हासे हेतुः । ९ विगतो भ्रंशोऽधःपातोऽप्राकृतनररूपो यस्मात् ।

एकादशे समागत्य वृन्दावनमथार्भकैः ॥ वत्सान्पालयताऽनेन हतौ वत्सवकासुरौ ॥ १ ॥ निर्घातो वज्रपात इति भयेन शङ्किताः ॥ १ ॥ तल्लक्ष्यं प्रत्यक्षतः पुरतो दृश्यमपि पतनकारणमविज्ञाय बभ्रमुः ॥ २ ॥ लक्ष्यं कारणं दर्शयति—उलूखलमिति । भ्रमकारणमाह—कस्येदं राक्षसादेः कर्म कुतो वा कारणादाश्चर्यमुत्पात इति कातरा भीताः सन्तो बभ्रमुरित्यर्थः ॥ ३ ॥ मध्यगेन वृक्षयोर्मध्यगतेन । न केवलमेतावत् । वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावप्यचक्ष्महि दृष्टवन्तो वयमिति ॥ ४ ॥ केवलं तार्किका न जगृहुरेव । अन्ये तु संदेहयुक्तचित्ता बभूवुरिति ॥ ५ ॥ भगवन्मायाविमोहितस्य नन्दस्याचरितमाह—उलूखलमिति ॥ ६ ॥ ज्ञास्यन्ते मामिति शङ्कमानोऽतीव बाल्यमनुकरोति स तदाह—गोपीभिरिति । स्तोभितः करतालादिना प्रोत्साहितः ॥ ७ ॥ इदमानये-

॥ श्रीशुक उवाच ॥ गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ॥ तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥ १ ॥ भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ॥ बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ २ ॥ उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् ॥ कस्येदं कुत आश्चर्यमुत्पात इति कातराः ॥ ३ ॥ बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम् ॥ विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥४॥ न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ॥ बालस्योत्पाटनं तर्वोः केचित्संदिग्धचेतसः ॥ ५ ॥ उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् ॥ विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ ६ ॥ गोपीभिः स्तोभितोऽनृत्यद्भगवान्बालवत्क्वचित् ॥ उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥ ७ ॥ बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ॥ बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥ ८ ॥ दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् ॥ व्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः ॥९॥ (क्रीणीहि भो फलानीति श्रुत्वा सत्वरमच्युतः ॥ फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥ १० ॥) ॥ ॥ ॥

त्याज्ञप्त आनेतुमसमर्थ इव बिभर्ति केवलं पीठादि । बाहुक्षेपं करचालनं च । तद्विदां चेति चकारान्वयः ॥ ८ ॥ तदैश्वर्यं विदन्ति ये तेषाम् । एवं व्रजस्य हर्षं सुखाहेति ॥ ९ ॥ ( तोषणी । इत आरभ्यैकादशश्लोकी श्रीधरस्वाम्यनादृतापि पुस्तकेषु दृश्यमानत्वाच्चित्सुखाचार्यैर्व्याख्यातत्वाच्च व्याख्यायते । तत्र क्रीणीहीति पद्यद्वयं क्वाचित्कं । किं वाच्यं व्रजस्य हर्षदातृत्वं पुलिन्दजातीनामपीत्याह—क्रीणीहीति द्वाभ्याम् । सर्वफलप्रदः सर्वपुरुषार्थदोऽपि धान्यमेवादाय ययावेव । नतु स्वल्पहस्तधृतमत्यल्पमिदमिति विचारितवान् बाललीलत्वात् ॥ १० ॥ ) ॥ ॥ ॥

१ निर्घातो निरभ्रगर्जितरूपोत्पातः भय दैत्येभ्यस्ताभ्याम् । २ दाम्ना बद्धमत एवोलूखलं विकर्षन्तं बालकं पतनकारणं लक्ष्यं लक्षयितुं शक्यमप्यविज्ञाय बभ्रमुरिति पूर्वश्लोकेनान्वयः । ३ बालाः संभ्रान्तत्वादनेनेत्यपूर्णं वाक्यमेवोचुर्न वृक्षावुत्पाटिताविति अविश्वस्तत्वात् चक्र० । ४ पूतनादिनाशाल्लब्धव्याप्तिना तर्केण संदिग्धमेतत्स्वम् । ५ एतदारभ्याथोद्दयमित्यन्ता एकादश श्लोकाश्चक्रवर्तिना चित्सुखाचार्यैश्च व्याख्याताः । अत्र श्लोकक्रमः पाठक्रमश्च नानाविधो दृश्यते विजयध्वज्यां० भवतां यदि रोचत इत्येतदग्रे सरित्तीरेत्यारभ्य लिखिताः । केषुचिच्छ्रीधरीयटीकापुस्तकेषु च नैव सन्ति, यत्र सन्ति तत्र क्रीणीहीत्यादिश्लोकद्वयं समं चेत्यर्धं धूलीत्यार्धं च विनाऽष्टौ श्लोकाः, क्वचित् व्यस्तस्वानुपूर्विकाः, क्वचिच्च प्रक्षिप्तत्वेन पुरिताः सन्ति । तत्र सदसत्सद्भिर्विचारणीयम् । 'गृहीहि' इति च पाठः क्वचित् ।

सत्वरगत्या पथ्येव च्युतानि धान्यान्यपि यस्मात् । तदपि अच्युतस्य करद्वयं विक्रयिण्यद्भुतलेहफलैर्नानावर्णत्वाद्रत्नाकारैः अपूरयत् । च्युतधान्यकरेणापि अच्युतेन सा संपन्ना कृतेत्याह—स्वयमुद्भूतैः सर्वैरत्नैस्तस्याः फलभाण्डं पूर्णमिति ॥ ११ ॥ अथ दामोदरलीलानन्तरैकदिनकृत्यमाह—सरिदित्यष्टभिः । कृष्णं क्रीडाकृष्टचित्तम् । अथेति कार्त्स्न्ये । सर्वैरेव नामभिरित्यर्थः । अत्र रोहिणीति कर्त्रध्याहारो यशोदां प्रेषयामासेत्युत्तरात् । अत्र रामाह्वानमप्यूह्यम् ॥ १२ ॥ ततश्च नोपेति यशोदामिति द्वयोरपि तस्या वात्सल्याधिक्यात्तदाकर्षणसामर्थ्याच्च । तदाह—पुत्रयोर्वात्सल्यमिति ॥ १३ ॥ सातिवत्सला सरामं कृष्णमजोहवीत् पुनःपुनरुच्चैराजुहाव । सरित्तीरे नानोपद्रवशङ्कया स्नपनभोजनाय चेति भावः । तत्र हेत्वन्तरं—स्नुतस्तनीति । अत एवाग्रे स्तनं पिबेति ॥ १४ ॥ श्रीकृष्ण एव रामादीनाकृष्य क्रीडति तदागमने रामोऽप्यायास्यतीति धिया प्रथमं श्रीकृष्णमाह्वयति—कृष्णेति । वीप्सा प्रेम्णा । यद्वा हे क्रीडया सर्वबालाकर्षक । किंच

फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् ॥ फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥११॥ सरित्तीरंगतं कृष्णं भग्नार्जुनमथाह्वयत् ॥ रामं च रोहिणी देवी क्रीडन्तं बालकैर्भृशम् ॥१२॥ नोपेयातां यदाहूतौ क्रीडासङ्गेन पुत्रकौ ॥ यशोदां प्रेषयामास रोहिणी पुत्रवत्सलाम् ॥ १३ ॥ क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम् ॥ यशोदाऽजोहवीत्कृष्णं पुत्रस्नेहस्नुतस्तनी ॥ १४॥ कृष्ण कृष्णारविन्दाक्ष तात एहि स्तनं पिब ॥ अलं विहारैः क्षुत्क्षान्तः क्रीडाश्रान्तोऽसि पुत्रक ॥१५॥ हे रामागच्छ ताताशु सानुजः कुलनन्दन ॥ प्रातरेव कृताहारस्तद्भवान् भोक्तुमर्हति ॥ १६ ॥ प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः ॥ एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः ॥१७॥ धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह ॥ जन्मर्क्षं तेऽद्य भवति विप्रेभ्यो देहि गाः शुचिः ॥ १८ ॥ पश्य पश्य वयस्यांस्ते मातृमृष्टान्स्वलंकृतान् ॥ त्वं च स्नातः कृताहारो विहरस्व स्वलंकृतः ॥ १९ ॥ इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ॥ हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥ २० ॥ ॥ ॥ ॥

सौन्दर्येणापीत्याह—अरविन्दाक्षेति । कृष्णारविन्दाक्ष नीलोत्पलनेत्रेति वा । स्तनं पिबेति स्तनपाने तत्प्रेमातिशयस्य पिबतस्त्यागे क्रोधातिशयदर्शनेन अनुभूतत्वात् स्नुतस्तनीत्वाच्च ॥ १५ ॥ आह्वानमशृण्वन्तमिव दृष्ट्वा राम एव नूनमेनं रमयतीत्याशयेन द्वाभ्यां राममाह्वयति—हे रामेति । सानुज इति च । अनुजत्वात्त्वदधीन एव स इति भावः ॥ १६ ॥ उपविष्टपात्रो व्रजनाथस्त्वां विना न भुङ्क्ते इत्याह—प्रतीक्षत इति । आवयोः पित्रोर्मात्रोर्वा ॥ १७ ॥ उभौ प्रत्यपि साधारण्येनाह—पश्येति । पदावृत्तिरुभयं प्रत्युक्तेः सर्वेषाम्प्यावृत्तिसूचनाय । वीप्सा वा खेदेन । मातृमृष्टान् स्नपनादिना निर्मलीकृतान् ॥ १८ ॥ उपसंहरति—इत्थमिति । अशेषशेखरमपि सुतत्वेनानुभूय अत एव क्रीडन्तमपि हस्ते गृहीत्वा स्ववाटं स्वगृहस्थानं । स्नपनभोजनालंकारादिमङ्गलं जन्मर्क्षमद्येत्युक्तिसत्यापनाय तद्योग्याभ्युदयमेव वा । अथ कार्त्स्न्ये ॥ १९ ] ॥ २० ॥ ॥ ॥ ॥ ॥

१ कृष्णेनेति शेषः । २ अर्जुनौ भङ्क्त्वा सरित्तीरगतमित्यर्थः । ३ स्नापनादिना निर्मलीकृतान । ४ अशेषाणां ब्रह्मादीनां शेखरं चूडामणिमपि सुतं मत्वा । ५ उदयं स्नपनं भोजनालंकारादिमङ्गलम् ।

रन्तुं वृन्दावनं गन्तुमन्तः कृष्णेन यन्त्रिताः ॥ स्वतन्त्रा इव नन्दाद्या मन्त्रमेतममन्त्रयन् ॥ व्रजकार्यं गोकुलस्य हितकृत्यम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ विपदं वीनां पक्षिणां पदं विहारस्थानम् । वियन्नभः । विगतप्रतिष्ठं वा ॥ २५ ॥ अन्यतमो वा कश्चिद्वालः अच्युतेनैव रक्षणमासीत् ॥२६॥ अरिष्टोऽनर्थः । इतः स्थानात् ॥ २७ ॥ पशव्यं पशुभ्यो हितम् । नवानि काननान्यवान्तराणि विद्यन्ते यस्मिंस्तत् ॥ २८ ॥ २९ ॥ एकधियो विप्रतिपत्तिरहिताः । व्रजान्

गोपवृद्धा महोत्पातानननुभूय बृहद्वने ॥ नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ २१ ॥ तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः ॥ देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः ॥ २२ ॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ॥ आयान्त्यत्र महोत्पाता बालानां नाशहेतवः ॥ २३ ॥ मुक्तः कथंचिद्राक्षस्या बालघ्न्या बालको ह्यसौ ॥ हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ २४ ॥ चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ॥ शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥ २५ ॥ यन्न म्रियेत[2] द्रुमयोरन्तरं प्राप्य बालकः ॥ असावन्यतमो वापि तदप्यच्युतरक्षणम् ॥ २६ ॥ यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः ॥ तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ २७ ॥ वनं[3] वृन्दावनं नाम पशव्यं नवकाननम् ॥ गोपगोपीगवां सेव्य पुण्याद्रितृणवीरुधम् ॥ २८ ॥ तत्तत्राद्यैव यास्यामः शकटान्युङ्क्त मा चिरम् ॥ गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ २९ ॥ नच्छुत्वैकधियो गोपाः साधु साध्विति वादिनः ॥ व्रजान्स्वान्स्वान्समायुज्य ययू रूढपरिच्छदाः ॥ ३० ॥ वृद्धान्बालान् स्त्रियो राजन्सर्वोपकरणानि च ॥ अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ ३१ ॥ गोधनानि पुरस्कृत्य श्रृङ्गाण्यापूर्य सर्वतः ॥ तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ ३२ ॥ गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः ॥ कृष्णलीला जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥ ३३ ॥ तथा यशोदारोहिण्यावेकं शकटमास्थिते ॥ रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके[4] ॥ ३४ ॥ वृन्दावनं संप्रविश्य सर्वकालसुखावहम् ॥ तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ ३५ ॥ वृन्दावनं गोवर्धनं यमुनापुलिनानि च ॥ वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥ ३६ ॥ एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ॥ कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥ ३७ ॥

शकटव्यूहान् । रूढाः शकटादिष्वारोपिताः परिच्छदा यैस्ते ॥ ३० ॥ यत्ताः कृतप्रयत्नाः ॥ ३१ ॥ ३२ ॥ नूत्नैः कुचगतैः कुङ्कुमैः कान्तिर्यासां ताः । नूत्नेषु कुचेषु यत्कुङ्कुमं तेन कान्तिर्यासामिति वा ॥ ३३ ॥ ३४ ॥ व्रजावासं गोकुलवसतिस्थानम् ॥ ३५ ॥ ३६ ॥ स्वकालेन तद्योग्यकालेन ॥ ३७ ॥



१ 'प्रजानां' इति पाठः । २ म्रियेत मृतः । ३ वनं आस्ते इति शेषः । ४.'श्रवणोन्मुखे' इति पाठः ।

कौमारलीलां निरूपयति—अविदूर इत्यादिना ॥ ३८ ॥ क्षेपणैर्बिल्वामलकादि क्षिपतो दूरे चालयतः । किङ्किणीयुक्तैः पादैः क्षिपतस्ताडयतः । वत्सपाला एव द्वित्राः कम्बलादिपिहिता वृषरूपमनुकुर्वन्ति तैः सह स्वयमपि तथैव वृषायमाणौ नर्दन्तौ तदनुकारिशब्दान्कुर्वन्तौ युयुधाते इत्यर्थः ॥ ३९ ॥ रुतैः शब्दैः । जन्तून् हंसमयूरादीन् ॥ ४० ॥ ४१ ॥ मुग्ध इवाजानन्निव । आसदत् समीपमागमत् ॥ ४२ ॥ अपरपादाभ्यां सह लाङ्गूलं यथा भवति तथा गृहीत्वा ॥४३॥

अविदूरे व्रजभुवः सह गोपालदारकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥ ३८ ॥ क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ॥ क्वचित्पादैः किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः ॥ वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ॥ ३९ ॥ अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥ ४० ॥ कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ॥ वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥४१॥ तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ॥ दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत् ॥४२॥ गृहीत्वाऽपरपादाभ्यां सहलाङ्गूलमच्युतः ॥ भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ॥ स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥ ४३ ॥ तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ॥ देवाश्च परिसंतुष्टा बभूवुः पुष्पवर्षिणः ॥ ४४ ॥ तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ॥ सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः ॥ ४५ ॥ स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ॥ गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥ ४६ ॥ ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ॥ तत्रसुर्वज्रनिर्भिन्नं गिरेः शृङ्गमिव च्युतम् ॥४७॥ स वै बको नाम महानसुरो बकरूपधृक् ॥ आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥ ४८ ॥ कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ॥ बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥ ४९ ॥ तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः ॥ चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ५० ॥ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां पतिः ॥ पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥५१॥ तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः ॥ समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५२ ॥ ॥ ॥

॥ ४४ ॥ सर्वेषां लोकानामेकौ मुख्यौ पालकौ । प्रातराशः प्रातर्भोज्यमन्नं तत्सहितौ ॥ ४५ ॥ अभ्याशं समीपम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ राम आदिर्येषां ते न तु रामः ॥ ४९ ॥ ५० ॥ तुण्डयोश्चञ्च्वोः । वीरणवदग्रन्थितृणविशेषवत् ॥ ५१ ॥ समीडिरे तुष्टुवुः । आनकैः शङ्खैरन्यैश्च संस्तवैः सह ॥ ५२ ॥ ॥

१ क्षेपणै रज्जुनिर्मितयन्त्रविशेषैः । क्षिपत इत्यस्योभयत्र सबन्धः । पादैर्नृत्यत इति शेष इति वाल० । २ प्राकृतौ मानुषबालाविव । ३ दर्शयन् सकेतेन । ४ महाकायभ्रामणेऽपि स्थानादच्यवनादच्युतः । ५ अत्र—'वत्सासुरं हतं श्रुत्वा व्रजे गोप्यश्च विस्मिताः' इत्यर्धमधिकं बालबोधिन्याम् । ६ एकदा अन्यस्मिन्दिने । ७ ईडिरे आमभाव आर्षः । ८ अन्यैश्च प्राचीनैः ।

स्वस्थानमागतं प्राणमिव कृष्णम् । प्रणीय एकीकृत्य ॥ ५३ ॥ अतिप्रियेण प्रीत्या आदृताः सादराः प्रेत्यागतमिव लोकान्तरादागतमिव । तृषितान्यतृप्तान्यमृतं पिबन्तीवेक्षणानि येषां ते ॥५४॥ अहो बतेत्यादिश्लोकत्रयस्य इति नन्दादय इत्यनेनान्वयः । अपि एवमपि तेषामेवानिष्टमासीत् । यतस्तैः पूर्वमन्येषां भयं कृतम् ॥५५॥ अथ घोरदर्शना अपि नाभिभवन्ति न धर्षयन्ति ॥५६॥ गर्गो यदाह—'तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः' इत्यादि ॥५७॥५८॥५९॥ वत्सयूथगतं हत्वा वत्सदम्भासुरं हरिः ॥ मुनियूथगतं चाहन्नग्रण्यं दम्भिनां बकम् ॥ १ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पू० भावार्थदीपिकायां

मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवैन्द्रियो गणः ॥ स्थानागतं तं परिरभ्य निर्वृताः प्रणीय[1] वत्सान् व्रजमेत्य तज्जगुः ॥५३॥ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः ॥ प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः ॥५४॥ अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् ॥ अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥५५॥ अथाप्यभिभवन्त्येनं नैवं ते[2] घोरदर्शनाः ॥ जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥५६॥ अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ॥ गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ५७॥ इति नन्दादयो गोपाः कृष्णरामकथां मुदा ॥ कुर्वन्तो रममाणाश्च नाविन्दन्भववेदनाम् ॥५८॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः[3] सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥५९॥ इति श्रीम० म० पु० दशमस्कन्धे पूर्वार्धे वत्सबकवधो नामैकादशोऽध्यायः ॥ ११ ॥ ॥ श्रीशुक उवाच ॥

क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् ॥ प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥ १ ॥ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः ॥ स्वान्स्वान्[4]सहस्रोपरिसंख्ययान्वितान्पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥ कृष्णवत्सैरसंख्यातैर्[5]यूथीकृत्य स्ववत्सकान्[6] ॥ चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥ फलप्रवालस्तवकसुमनःपिच्छधातुभिः ॥ काचगुञ्जामणि[7]स्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥ ॥

टीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ ॐ ॥ ॥ द्वादशे तु महासर्पवपुर्धरमघासुरम् ॥ वत्सपालगिलं क्रुद्धो गलेऽहन्निति वर्ण्यते ॥ १ ॥ महाबकगलक्रीडा केवलस्य न कौतुकम् ॥ इतीवाघासुरमुखे ससखः प्राविशद्धरिः ॥ २ ॥ क्वचित्कदाचिद्वनाशाय वने एव प्रथमं भोजनं कर्तुम् ॥ १ ॥ तेनैव शृङ्गरवेण श्रीकृष्णेन वा सह । पृथुका बालाः स्निग्धाः स्नेहयुक्ताः । शिक् शिक्यम् । रम्याः शिग्वेत्रादयो येषां ते । सहस्राधिकसंख्यायुक्तान्वत्सान् ॥ २ ॥ ३ ॥ काचादिभिः पूर्वं मातृभिर्भूषिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः ॥ ४ ॥ ॥ ॥ ॥ ॥

१ प्रणीय अपराह्णे एव परावृत्य, यद्वा बालानां मूर्च्छां दृष्ट्वा दुःखेन गतानेकीकृत्येति तोष० । २ 'नैवं ते' 'नैवैते' इति पाठौ । ३ निलीय स्थितस्यान्येन तच्छोधनं निलायनम् । ४ 'स्वकान्' इति पाठः । ५ असंख्यातैः असंख्यसंज्ञसंख्यैरित्यर्थः । असंख्यं सख्या परार्धोदप्यधिकेति चक्र० विस्तरः । ६ 'स्वकान्स्वकान्' इति पाठः । ७ 'गुञ्जामणि' इति पाठः ।

मुष्णन्तश्चोरयन्तः ॥ ५ ॥ यदि दूरं गतः कृष्णो भवति तर्हि ॥ ६ ॥ ध्मान्तो वादयन्तः । शृङ्गैः सह ॥ ७ ॥ विच्छायाभिः पक्षिच्छायाभिः । कलापिभिर्मयूरैः ॥ ८ ॥ कीशबालान् वृक्षशाखासु लम्बमानानि वानरलाङ्गूलान्याकर्षन्तो लाङ्गूलममुञ्चन्तस्तैः सह द्रुमानारोहन्तः । विकुर्वन्तो दन्तदर्शनभ्रूविजृम्भादिभिस्तैः सह विकारान्कुर्वन्तः । पलाशिषु वृक्षेषु प्लवन्तः शाखायाः शाखान्तरमुद्गच्छन्तः ॥ ९ ॥ प्रतिच्छायाः प्रतिबिम्बानि ॥ १० ॥ताननतिविस्मितः श्लोकद्वयेनाभिनन्दति—इत्थमिति । सतां विदुषां ब्रह्म च तत्सुखं चानुभूतिश्च तया । स्वप्रकाशपरमसुखेनेत्यर्थः । भक्तानां परदैवतेनात्मप्रदेन नाथेन मायाश्रितानां तु नरदारकतया प्रतीयमानेन सह विजह्रुः । कृतानां पुण्यानां पुञ्जा राशयो येषां ते । ब्रह्मविदां तदनुभव एव भक्तानामतिगौरवेणैव भजनम् ।

मुष्णन्तोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपुः ॥ तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः ॥५॥ यदि दूरं गतः कृष्णो
वनशोभेक्षणाय तम् ॥ अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥६॥ केचिद्वेणून्वादयन्तो ध्मान्तः शृङ्गाणि केचन ॥ केचि-
द्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे ॥ ७ ॥ विच्छायाभिः प्रधावन्तो गच्छन्तः साधुहंसकैः ॥ बकैरुपविशन्तश्च नृत्य-
न्तश्च कलापिभिः ॥८॥ विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान् ॥ विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥९॥ साकं
भेकैर्विलङ्घन्तः सरित्प्रस्रवसंप्लुताः ॥ विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान् ॥ १० ॥ इत्थं सतां ब्रह्मसुखानुभूत्या
दास्यं गतानां परदैवतेन ॥ मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः ॥ ११ ॥ यत्पादपांसुर्बहुजन्मकृच्छ्रतो
धृतात्मभिर्योगिभिरप्यगम्यः ॥ स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥१२॥ अथाघनामा-
भ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ॥ नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥
दृष्ट्वार्भकान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ॥ अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये॥१४॥

एते तु तेन सह सख्येन विजह्रुः । अहो भाग्यमिति भावः ॥११॥ बहुजन्मभिः कृच्छ्रेण धृत आत्मा मनो यैस्तैरपि ॥१२॥ सुखक्रीडनवीक्षणेन क्षमा यस्य सः। कथंभूतः। यस्यान्तरन्तरं छिद्रं पीतामृतैरपि ततो मृत्युभीतैरमरैः प्रतीक्ष्यते कथं मरिष्यति कदा वेति । यद्वा कथंभूतं सुखक्रीडनम् । यदन्तर्हृदये अमरैः प्रतीक्ष्यते विचिन्त्यते पीतामृतैरपि पुनर्निजजीवितेप्सुभिः। अयं भावः—नामृतपानमात्रेण जीवनं सफलं भवति किंतु भगवल्लीलानुस्मरणेनेति तदेव नित्यमन्तश्चिन्त्यत इति ॥ १३ ॥ कृष्णप्रमुखानर्भकान् दृष्ट्वा स इति व्यवस्य निश्चित्याजगरं वपुर्धृत्वा तेषां ग्रसनाशया पथि व्यशेतेति तृतीयेनान्वयः । कंसेनानुशिष्टः प्रहितः । बकी पूतना । कथं व्यवस्य तदाह—अयं त्विति सार्धेन । मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं ससैन्यं वत्सतत्पालसहितं हनिष्यामि ॥ १४ ॥ ॥

१ तत्रत्या यत्र क्षिप्ताः शिक्यादयस्तत्र स्थिताः । २ शपन्तः स्वप्रतिध्वनिं श्रुत्वा रे रे कस्त्वं ब्रूषे इत्याद्याक्रोशन्तः । ३ इयं लौकिकोक्तिः। वस्तुतस्तु कृतानां सुकृतानां पुण्याश्चारवः पुञ्जा एवैते इत्यर्थः । 'पुण्यं तु चार्वपि' इत्यमरः इति तोष० । ४ यस्य पादसंबन्धी पतितः पांसुरेकोऽपि, यद्वा यस्य पादपः क्रीडावृक्षः कदम्बभाण्डीरादिस्तस्य अंशुः किरणः छदादिः तोष० । ५ 'स एषः' इति पाठः । ६ 'अहो' इति पाठः । तेषां दिष्टं भाग्यम्, यद्वा दिष्टस्य महस्तेजोविशेषो भाग्योत्सवो वा । ७ अत्र भिन्नवाक्यस्थत्वान्मे ममेत्यनयोर्न पौनरुक्त्यम् । 'द्वयोरथैनम्' इति चक्रवर्तिसंमतः पाठः । यद्वा द्वयोरिति निमित्तसप्तमी । तद्वैरग्रहणार्थमित्यर्थः इति तोष० ।

ननु तथापि व्रजस्थास्त्वच्छिष्येरन्नेत्याह—एत इति । तिलापः कृतास्तिलोदकतया कल्पिताः । वर्ष्मसु देहेषु । प्रजा एवासवो येषां ते तथा ॥ १५ ॥ सयोजनायामं योजनप्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिवत्पीवरं च । व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिंस्तत् ॥ १६ ॥ अद्भुतमिति यदुक्तं तद्दर्शयितुं विशिनष्टि । धरायामधरोष्ठो यस्य सः । जलदेपूत्तरोष्ठो यस्य सः । दर्यांविवाननस्यान्तौ सृक्किणी यस्य सः । गिरेः शृङ्गाणीव दंष्ट्रा यस्य सः । ध्वान्तवदन्तरास्यं यस्य सः । विततार्ध्ववज्जिह्वा यस्य सः । परुषानिलवच्छ्वासो यस्य सः । दववदीक्षणयोरुष्णः, दावत्तृष्टिरित्यर्थः । परुषानिलश्वासश्चासौ दवेक्षणोष्णश्च तथा ॥ १७ ॥ वस्तुतोऽजगरमेव व्यात्ततुण्डं दृष्ट्वा वृन्दावनस्य श्रीः संपदेवेति भ्रान्त्या मत्वा विपरीतं व्यात्ताजगरतुण्डसादृश्येनोत्प्रेक्षितवन्तः ॥ १८ ॥ उत्प्रेक्षामेव प्रश्नोत्तराभ्यामाहुः—

एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ॥ प्राणे गते वर्ष्मसु का नु चिन्ता प्रजासवः प्राणभृतो हि ये ते ॥ १५ ॥ इति व्यवस्याजगरं बृहद्वपुः सयोजनायाममहाद्रिपीवरम् ॥ धृत्वाद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥ धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः ॥ ध्वान्तान्तरास्यो विततार्ध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥ १७ ॥ दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम् ॥ व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया ॥ १८ ॥ अहो मित्राणि गदत सत्त्वकूटं पुरः स्थितम् ॥ अस्मत्संग्रसनव्यात्तव्यालतुण्डायते न वा ॥ १९ ॥ सत्यमर्ककरारक्तमुत्तराहनुवद्घनम् ॥ अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम् ॥ २० ॥ प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे ॥ तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत ॥ २१ ॥ आस्तृतायाममार्गोऽयं रसनां प्रति गर्जति ॥ एषामन्तर्गतं ध्वान्तमेतदप्यन्तराननम् ॥ २२ ॥ ॥ छ ॥ ॥ छ ॥

अहो इति । सत्त्वकूटं सत्त्वाभासमिदं वा न वा । तत्राप्यस्मत्संग्रसनाय व्यात्तं यद्व्यालतुण्डं तद्वदाचरति वा न वा ॥ १९ ॥ निश्चितं तथैवेत्याहुः—सत्यमिति । अर्ककरैरारक्तं घनमुत्तरोष्ठवत्पश्यत । तस्य घनस्य प्रतिच्छाययाऽरुणं रोधः स्थलमधरोष्ठवत्पश्यत । पश्यतेति सर्वत्रान्वेति ॥ २० ॥ सृक्किभ्यामोष्ठप्रान्ताभ्यां प्रतिस्पर्धेते तुल्यतया वर्तेते । नगोदरे गिरिदर्यौ । एतास्तुङ्गशृङ्गालयस्तस्य दंष्ट्राभिः स्पर्धमानाः ॥ २१ ॥ आस्तृतायाममार्गो विस्तृतो दैर्घ्यवान्मार्गः । प्रतिगर्जति प्रतिस्पर्धते । एषां शृङ्गाणामन्तर्गतं मध्यगतं ध्वान्तमेतदन्तराननमाननस्य मध्यं प्रति गर्जति ॥ २२ ॥ ॥ ॥

१ दाहकदृष्टिरिति क्वचित्पाठः । २ बालवत्साद्यपेक्षया बहुवचनम् । ३ वाग्देवीगर्भितार्थस्तु—कंसानुशिष्टोऽघासुरोऽपि कृष्णमुखान्दृष्ट्वा इति असुरभावविरुद्धं व्यवस्य स्वीयसंसृतेर्ग्रसनं नाशस्तदाशया भगवन्मार्गे दण्डवत्प्रणाममुद्रया तस्थौ । यतः अखलः तद्दर्शनेन खलत्वनाशात् । व्यवसायमाह—अयं तु बाल एव प्रबलयोरपि मे सोदरयोर्नाशकृत् अतः सबलमेनमीश्वर । इदम एनादेशः । यद्वा इमं प्रभुं तमेवैनं । स्वार्थेऽण् । मम तयोः प्राप्तिस्थानमहमपि हनिष्ये प्राप्स्यामि । गत्यर्थस्य हन्तेः प्राप्त्यर्थत्वात् । तदा चैते व्रजौकसः तत्सुहृदत्वात्तत्सायुज्यं प्राप्तस्य ममापि सुहृदः कृताः स्युः । कथंभूता व्रजौकसः । (श्लो० १५) अयदाः शुभावहविधिप्रदाः । अस्तिलापः अस्ति तत्त्वं भगवान् इत्यादिः लापो भाषणं तत्कुर्वन्तीति णिजन्तात्क्विप् । आस्तिकप्रवरा ननु मादृशा असुरा इव शून्यवादिनः । नष्टसमाः नष्टाः अदृष्टाः समाना अपि किमुताधिका येषां ते इति तोषणी । ४ लीलयेति तथोत्प्रेक्षणमपि तेषामेका लीलेत्यर्थः । ५ हनोरौत्तराधर्यासंभवाद्धनुशब्देन लक्षणयौष्ठावुच्येते । उभयत्र पुंवद्भावाभाव आर्षः ।

दावेनोष्णः खरो वातोऽयम् । तेन दावाग्निना दग्धानां सत्त्वानां यो दुर्गन्धः स एव सर्पान्तर्गतामिषगन्धवद्भाति ॥ २३ ॥ एवं सन्तमेवाजगरमन्यथोत्प्रेक्ष्य निर्भया ययुः । किं ग्रसिता ग्रसिष्यति । अनेन श्रीकृष्णेन हन्त्रा । वकारेरुशत्कमनीयं मुखम् ॥ २४ ॥ अमृषा वस्तुतः सर्पवपुरसुर एव मृषायते स्वानां सर्पसादृश्यगोचरत्वेन प्रतीयते इति तान्निरोद्धुं वारयितुं यावन्मनो दधे तावत्प्रविष्टा इत्युत्तरेणान्वयः ॥ २५ ॥ तावत्प्रविष्टा एव केवलं, नतु तेन गीर्णा गिलिताः । 'जीर्णाः' इति पाठेऽपि स एवार्थः । कथंभूतेन । हतयोः स्वकयोरन्तं स्मरत्यनुध्यायतीति तथा तेन । अत एव वकारेः श्रीकृष्णस्य प्रवेशं प्रतीक्षमाणेन ॥ २६ ॥

दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत[1] ॥ तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् ॥२३॥ अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति ॥ क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः ॥२४॥ इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं श्रुत्वा विचिन्त्येत्यमृषा मृषायते ॥ रक्षो विदित्वाऽखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान्मनो दधे ॥२५॥ तावत्प्रविष्टास्त्वसुरोदरान्तरं परं न गीर्णाः शिशवः सवत्साः ॥ प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा ॥ २६ ॥ तान्वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान्स्वकरादवच्युतान् ॥ दीनांश्च मृत्योर्जठराग्निघासान्घृणार्दितो दिष्टकृतेन विस्मितः ॥ २७ ॥ कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥२८॥ तदा घनच्छदा देवा भयाद्धा हेति चुक्रुशुः ॥ जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः ॥२९॥ तच्छ्रुत्वा भगवान्कृष्णस्त्वव्ययः सार्भवत्सकम् ॥ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे[2] गले ॥३०॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ॥ पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन्विनिष्पाट्य विनिर्गतो बहिः ॥ ३१ ॥ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान्सुहृदः परेतान् ॥ दृष्ट्वा[3] स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान्विनिर्ययौ ॥ ३२ ॥ ॥ ॥

स्वकरादवच्युतान्विनिःसृतान् । विस्मितः सन्कृत्यं किमत्रेत्यादि विचिन्त्य तत्रोपायं ज्ञात्वा स्वयमप्यविशदित्यन्वयः ॥ २७ ॥ कथं विचिन्त्य । अस्य जीवनममीषां च विहिंसनमिति द्वयं वै निश्चितं कथं न स्यादिति ॥२८॥ घनच्छदा मेघान्तरिताः । कौणपाः कुणपाशिनो राक्षसाः, कोणपो निर्ऋतिस्तदीया इति वा ॥ २९ ॥ चूर्णीकर्तुमिच्छोस्तस्य गले आदावेव तरसा ववृधे अवर्धत ॥ ३० ॥ निरुद्धो मुखादीनां मार्गभूतः कण्ठो यस्यास्ति तस्योद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्यान्तरङ्गे देहमध्ये पूर्णः परिभृतो मूर्धन् मूर्धनि ब्रह्मरन्ध्रं निर्भिद्य बहिर्विनिर्गतः ॥३१॥ प्राणेष्विन्द्रियेषु । स्वयाऽमृतवर्षिण्या दृष्ट्यैव ॥ ३२ ॥ ॥ ॥

१ मध्ये मध्ये पश्यतेति विस्मयाय । २ गलबिलमावृण्वन् कीलतया स्थूलो बभूव । यतोऽव्ययः । ३ दृष्ट्वा मृततुल्यानुत्थाप्य चेष्टयित्वा मुकुन्दः मुक्तिं अघासुरस्य ससारात्, सुहृदां च अघान्मुक्तिं ददत् । तदन्वितः तदनु तेषां पश्चात् इतः वक्त्रात् विनोदेन ययौ इति तोष० ।

अहिदेहे स्थितं शुद्धसत्त्वमयं ज्योतिर्निर्गत्य खेऽवस्थितम् । तस्मिन्नीशे विवेश ॥ ३३ ॥ स्वकृतः स्वकार्यकृतः श्रीकृष्णस्यार्हणमकृताकुर्वत पूजामकुर्वन् । सुगाः सुष्ठु गायन्तीति गन्धर्वादयः ॥ ३४ ॥ किंच तेषां यान्यद्भुतस्तोत्रादीनि तेषां नैकोत्सवा ये मङ्गलस्वनास्तान्स्वधाम्नोऽन्ति समीपे श्रुत्वाऽजो ब्रह्माऽचिरादागत ईशस्य श्रीकृष्णस्य महि महिमानं दृष्ट्वा विस्मयं प्रापेति ॥ ३५ ॥ वहुतिथं वहुकालम् । आक्रीडगह्वरं क्रीडार्थं महाविलम् ॥ ३६ ॥ अन्यच्चातिचित्रं वृत्तमित्याह—एतदिति । 'कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ॥ कैशोरमापञ्चदशाद्यौवनं तु ततः परम् ॥' हरेः कौमारजं पञ्चमाब्दकृतं कर्म तदेव दृष्ट्वा पौगण्डके षष्ठेऽब्दे वाला अद्यैतद्वृत्तमित्यूचुः । किं तत्कर्म । मृत्योः सकाशादात्मनामहेश्च मोक्षणम् । आत्मनां प्रसिद्धान्मृत्योरहेस्तु संसारलक्षणात् । अघासु-

पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश ॥ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन्मिषतां दिवौकसाम् ॥ ३३ ॥ ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः ॥ गीतैः सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिःस्वनैर्गणाः ॥३४॥ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमङ्गलस्वनान् ॥ श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम् ॥३५॥ राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतम् ॥ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥३६॥ एतत्कौमारजं कर्म हरेरात्माहिमोक्षणम् ॥ मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७॥ नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ॥ अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥ सकृद्यदङ्गप्रतिमाऽन्तराहिता मनोमयी भागवतीं ददौ गतिम् ॥ स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतो हि किं पुनः ॥ ३९ ॥ ॥ सूत उवाच ॥ इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम् ॥ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥ ४० ॥ ॥ राजोवाच ॥ ब्रह्मन्कालान्तरकृतं तत्कालीनं कथं भवेत् ॥ यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ॥ ४१ ॥ ॥

रस्य ज्योतिषः श्रीकृष्णे प्रवेशमपि तदा दृष्टं कथितवन्त इत्यर्थः ॥ ३७ ॥ नैतद्विचित्रमिति । किं तदित्यपेक्षायामाह—अघोऽपीति । आत्मसाम्यं स्वसमानरूपताम् ॥ ३८ ॥ यस्याङ्गं मूर्तिस्तस्य प्रतिमा प्रतिकृतिस्तत्रापि केवलं मनोमयी साऽपि वलादन्तराहिता सती भागवतीं गतिं ददौ प्रह्लादादिभ्यः स एव साक्षात्स्वयमन्तर्गतः किं पुनः नित्या चासावात्मसुखानुभूतिश्च तयाभितो व्युदस्ता माया येन सः ॥ ३९ ॥ येन श्रवणेन निगृहीतं वशीकृतं चेतो यस्य सः ॥ ४० ॥ कालान्तरे कौमारे कृतं पौगण्डके कथं ज्ञात्वोचुरित्यर्थः ॥ ४१ ॥ ॥ ॥ ॥

१ 'हिभोगस्थित' इति पाठः । २ दिवौकसामित्यनादरे षष्ठी । तेषु प्रवेशमनादृत्य तस्मिन्नेव विवेश । ३ 'चासाद्धेरात्ममोक्षणं' इति पाठः । ४ मनुजार्भमायिनः मायया स्वीकृतमनुष्यबालभावस्येत्यर्थः । ५ परावराणां वेधसः स्रष्टुः । ६ यादवदेवेन श्रीकृष्णेनोत्तरायै युधिष्ठिराय वा दत्तः परीक्षित् । ७ स्वरातुः स्वरक्षकस्य श्रीकृष्णस्य । ८ यद्वा नित्यं आत्मनां जीवानां सुखानुभूतिर्यस्मात्स चासावभितो व्युदस्तमायश्च । अन्तेति सयुक्तिदर्पे संशोधनम् इति तोष० ।

॥४२॥४३॥ तेन यः स्मारितोऽनन्तस्तेन हृतान्यखिलेन्द्रियाणि यस्य सः । तथाभूतोऽपि कथंचिल्लब्धबहिर्दृष्टिः हे भागवतोत्तमोत्तम हे शौनक ॥ ४४ ॥ इति श्रीमद्भा० म० पु० द० पू० भा० दी० टीकायां द्वादशोऽध्यायः ॥१२॥ ॥ त्रयोदशेऽहरद्ब्रह्मा वत्सान्पालांश्च मायया ॥ तदा तत्सर्वरूपोऽब्दं कृष्णः पूर्ववदाचरत् ॥१॥ नूतनयसि नव्यवत्करोषि ॥१॥ तथा हि सारभृतां सारग्राहिणामयं निसर्गः स्वभावः । कोऽसौ । अच्युतस्य वार्तां प्रतिक्षणं साधु नव्यवद्भवतीति यत्सः । विटानां स्त्रैणानां स्त्रियाः कामिन्या वार्तेव । कथंभूतानामपि सताम् । या अच्युतवार्तैव अर्थो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि ॥२॥३॥४॥

तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो ॥ नूनमेतद्धरेरेव माया भवति नान्यथा ॥ ४२ ॥ वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः ॥ यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥४३॥ ॥ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेन्द्रियः ॥ कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥४४॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धेऽघासुरवधो नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम ॥ यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥ सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि ॥ प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधु वार्ता ॥ २ ॥ शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ३ ॥ तथाऽघवदनान्मृत्यो रक्षित्वा वत्सपालकान् ॥ सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ ४ ॥ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छवालुकम् ॥ स्फुटत्सरोगन्धहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥ ५ ॥ अत्र भोक्तव्यमस्माभिर्दिवारूढं[2] क्षुधार्दिताः[3] ॥ वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥ ६ ॥ तथेति पाययित्वाऽर्भा वत्सानारुध्य शाद्वले ॥ मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ ७ ॥ कृष्णस्य विष्वक् पुरुराजिमण्डलैरभ्याननाः[4] फुल्लदृशो व्रजार्भकाः ॥ सहोपविष्टा विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः ॥ ८ ॥ ॥ ॥

भोजनविधानाय पुलिनं स्तौति—अहो इति । स्वीयानां केलीनां संपदो विद्यन्ते यस्मिंस्तत् । मृदुला अच्छा वालुका यस्मिंस्तत् । किंच स्फुटद्विकसत् सरः । सरोजबाहुल्येनोपचारतः सर एव विकसदित्युक्तम् । तस्य गन्धस्तेन हृता आकृष्टा अलयः पत्रिणश्च ये तेषां के उदके ध्वनयस्तेषां प्रतिध्वानास्तैर्लसन्तो द्रुमास्तैराकुलं व्याप्तम् ॥ ५ ॥ दिवारूढं वेलातीतेत्यर्थः ॥ ६ ॥ आरुध्य संरुध्य । शाद्वले हरिततृणे देशे ॥ ७ ॥ तदा ते विरेजुः कृष्णस्य विष्वक् परितः पुरुराजिमण्डलैर्बहुभिः पङ्क्तिमण्डलैः सह नैरन्तर्येणोपविष्टाः । श्रीकृष्णाभिमुखान्याननानि येषां ते । फुल्लदृशो विकसितनयनाः । कमलकर्णिकायाः परितः पत्राणि यथेति ॥८॥

१ तेन प्रश्नेन, श्रीकृष्णेन वा । 'सस्मारितानन्त' इति मूले चित्सुखपाठः । २ दिवा दिनमारूढमिति तोप० । ३ गोपसंबोधनं वत्ससंबोधनं वा । 'क्षुधार्दितैः' इति पाठः । ४ अभ्यानना इति सर्वाभिमुख्यं त्वचिन्त्यशक्त्यैवेति ज्ञेयम् ।

पुष्पैस्तद्दलैः अन्यैश्च पत्रैः कृतानि भाजनानि यैस्ते ॥ ९ ॥ रुचिं स्वादविशेषम् । अभ्यवजह्रुर्बुभुजिरे । सहेश्वराः श्रीकृष्णसहिताः ॥ १० ॥ यज्ञभुगपि तेषु
बुभुजे । बालानामिव केलिर्यस्य सः । तदाह—उदरवस्त्रयोर्मध्ये वेणुं बिभ्रद्दधदिति सर्वत्र संबध्यते । वाम इति कक्षपाण्योर्विशेषणम् । मसृणं स्निग्धं दध्यो-
दनकवलम् । तदुचितानि बिल्वादिफलान्यङ्गुलिसन्धिषु । कर्णिकेव सर्वाभिमुखो मध्ये तिष्ठन् । स्वस्य परित उपविष्टान् सुहृदः स्वैर्नर्मभिः परिहासवाक्यैः
स्वर्गे स्वर्गवासिनि जने मिषत्याश्चर्येण पश्यति सति लोके जनानां मध्ये बुभुजे ॥ ११ ॥ १२ ॥ भीभयं भयहेतुभ्यो भयमस्यापास्य । यद्वा अस्य विश्वस्य
भियोऽपि भयं यः श्रीकृष्णः । आशाद्भोजनात् । अस्मिन्पादे अक्षराधिक्यमार्षम् ॥ १३ ॥ अद्रिषु तद्दरीषु, कुञ्जेषु लतादिपिहितोदरविवरेषु । गह्वरेषु संकट-

केचित्पुष्पैर्दलैः केचित्पल्लवैरङ्कुरैः फलैः ॥ शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ ९ ॥ सर्वे मिथो दर्शयन्तः
स्वस्वभोज्यरुचिं पृथक् ॥ हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ १० ॥ बिभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ॥ तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञ-
भुग्बालकेलिः ॥ ११ ॥ भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु ॥ वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥ १२ ॥
तान्दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् ॥ मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् ॥ १३ ॥ इत्युक्त्वाद्रिदरी-
कुञ्जगह्वरेष्वात्मवत्सकान् ॥ विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ ॥ १४ ॥ अम्भोजन्मजनिस्तदन्तरगतो माया-
र्भकस्येशितुर्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ॥ नीत्वान्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा दृष्ट्वा-
घासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥ १५ ॥ ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ॥ उभावपि वने कृष्णो
विचिकाय समन्ततः ॥ १६ ॥ क्वाप्यदृष्ट्वान्तर्विपिने वत्सान्पालांश्च विश्ववित् ॥ सर्वं विधिकृतं कृष्णः सहसावजगाम
ह ॥ १७ ॥ ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ॥ उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ १८ ॥ ॥

स्थानेषु ॥ १४ ॥ अम्भोजन्मनः पद्माज्जनिर्यस्य स ब्रह्मा । तदन्तरे तस्मिन्नवसरे गत आगतस्तच्छिद्रं प्राप्तो वा मञ्जु मनोहरमन्यदपि महित्वं महिमानं द्रष्टुं
तस्य वत्सानितः स्थानाद्वत्सपांश्चान्यत्र नीत्वा स्वयं तिरोबभूव । प्रभवतः श्रीकृष्णस्य ॥ १५ ॥ उभावपि वत्सान्वत्सपांश्च । विचिकायान्वीक्षितवान् ॥ १६ ॥
विधिकृतं ब्रह्मणा कृतम् ॥ १७ ॥ उभयायितं वत्सतत्पालरूपेण वर्तमानमित्यर्थः । अयं भावः—यदि तूष्णीमासे तर्हि तन्मातॄणां विषादः स्याद्यदि च ताने-
वानयिष्यामि तर्हि ब्रह्मणो मोहो न स्यादिति तदुभयप्रीतये तथा चक्रे इति ॥ १८ ॥ ॥ ॥ ॥

१ यद्वा अयज्ञभुक् विविधयज्ञैर्यज्ञभागमपि न भुङ्क्ते स तैर्भोजनमध्ये परीक्ष्य दत्तभोज्यैर्भुनक्तीति मिषति सतीति तोष० । २ पूर्वस्मिन्नर्थे ल्यपश्छान्दसत्वस्वीकारारुच्या अर्थान्तरमेतत् । ३ केचि-
दिति पुनरुक्त्या प्रत्येकान्वयेन समुच्चयाभावः । ४ मा विरमत वत्सान् इहानेष्ये, यद्वा वृथा मा विरमत लाभासंभवात् । यतो ब्रह्मप्रेरकोऽहमेव नेष्ये । हा विस्मये, इ संबोधने । यद्वा
ईहा ममेच्छैवेयमिति वास्तवोऽर्थो भातीति तोष० । ५ आत्मवत्सकानित्युक्तिर्व्रजराजत्वेनान्येषामपि तदीयत्वात् । ६ प्रभवतः प्रभुकर्तृकम् । ७ अवजगाम ज्ञातवान् । ८ विश्वकृद्ब्रह्मा-
वीश्वरश्च, विश्वकृतामपीश्वर इति वा ।

तदेव दर्शयति—यावदिति । वत्सपानां वत्सकानां चाल्पकं वपुः प्रमाणमनतिक्रम्य । एवमुपर्यपि योज्यम् । यद्वा यावद्वत्सपादिवपुस्तावत्सर्वस्वरूपोऽजः कृष्णो बभावित्यर्थः । उत्तरत्राप्येवम् । 'सर्वं विष्णुमयं जगत्' इति प्रसिद्धा या गीस्तस्या अङ्गवत् सा गीरेवार्थस्वरूपेण प्रत्यक्षा यथा तथा बभूवेत्यर्थः ॥१९॥ एवं सर्वात्मा सन्व्रजं प्राविशत् । कथं स्वयमात्मैव प्रयोजकः । आत्मरूपान् गोवत्सानिति कर्मापि स्वयमेवेत्युक्तम् । आत्मरूपैर्वत्सपैः प्रतिवार्य । प्रयोज्यकर्तापि स्वयमेव । आत्मविहारैः क्रीडन्निति क्रियापि कारकाण्यपि स्वयमेवेत्यर्थः ॥ २० ॥ तत्तदात्मा तत्तद्गोपबालरूपोऽभवत् । ततस्तत्तत्सद्म प्रविष्टः ॥२१॥ गोपिकामोहमाह—तन्मातर इति । तन्मातरो वेणुरवेण त्वरयोत्थिता :सत्यः सुतान्मत्वा परं ब्रह्मैव दोर्भिरुत्थाप्योद्धुष्य । पयःसुधासवं पयः एव सुधावत्स्वादु आसववन्मादकं पाययामासुरित्यर्थः ॥ २२ ॥ एवं यामयमेन तत्तत्कालक्रीडानियमेन सायं गतः प्राप्तः स्वाचरितैः स्वस्याचरितैः, शोभनैराचरितैर्वा

यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम् ॥ यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥१९॥ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ॥ क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद्व्रजम् ॥ २० ॥ तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः ॥ तत्तदात्माभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥२१॥ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम् ॥ स्नेहस्नुतस्तन्यपयः सुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥ ततो नृपोन्मर्दनमज्जलेपनालंकाररक्षातिलकाशनादिभिः ॥ संलालितः स्वाचरितैः प्रहर्षयन्सायं गतो यामयमेन माधवः ॥२३॥ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् ॥ स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥ २४ ॥ गोगोपीनां मातृतास्मिन्सर्वा स्नेहर्धिकां विना ॥ पुरोवदास्वपि हरेस्तोकता मायया विना ॥२५॥ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ॥ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥ २६ ॥ ॥ ॥

मातृः प्रहर्षयंस्ततस्ताभिरुन्मर्दनादिभिरुपलालित इति ॥ २३ ॥ गवां मोहनमाह—गाव इति । परिहूता आहूताश्च ते सङ्गताश्च तान् ॥ २४ ॥ एतावत्तु वैषम्यं कृष्णस्यापि दुर्निवारमासीदित्याह—गोगोपीनामिति । गवां गोपीनां चास्मिन्कृष्णे मातृता उपलालनादिरूपा पुरोवदेवासीत्किंतु स्नेहर्धिकां विना । स्नेहाधिक्यं त्विदानीं विशेष इत्यर्थः । आसु गोगोपीषु हरेस्तोकता च बालभावनादि पूर्ववदेवासीत्किंतु मायया विना, ममेयं माता अहमस्याः पुत्र इति मोहं विनेत्यर्थः ॥ २५ ॥ स्नेहर्धिमेव दर्शयति—व्रजौकसामिति । यथा कृष्णे यशोदानन्दने स्वपुत्रेभ्योऽपि स्नेहाधिक्यं पूर्वमासीत् । इदानीं स्वतोकेष्वपि तथैवावर्धतेत्यर्थः । आ अब्दं यावत्संवत्सरम् । निःसीम यथा भवति ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

१ यामोऽन्त्यप्रहरः, तत्र यो यमो गृहागमननियमस्तेनेति तोष० । २ स्वकानिति स्वेषामेव निकटे गमनम् । ३ अपूर्ववन्नित्यनवीभूता पूर्वतो विलक्षणा वा स्नेहवल्ली सुतरां ववृधे इत्यर्थः । ४ हरेरित्यत्र हरेरपीत्युचितम् ।

एवमात्म। श्रीकृष्णो वत्सपो भूत्वा तत्रापि वत्सानां पालानां च मिषेणात्मानमात्मना पालयन् क्रीडितवानित्यर्थः ॥२७॥ एतावत्पर्यन्तं रामस्यापि मोह एवा-
सीत्संवत्सरान्ते तु कथंचिज्ज्ञातवानिति दर्शयन्नाह—एकदेति । पञ्चषासु पञ्चसु वा षट्सु वा रात्रिषु हायनस्याऽपूरणीषु पूरकतयाऽवशिष्टास्वित्यर्थः ॥ २८ ॥
ततो दूरत एव गोवर्धनशिखरे चरन्त्यो गावो [1]व्रजसमीपे चरतो वत्सान् ददृशुः ॥ २९ ॥ तदैव स गोव्रजो गवां कलापस्तत्स्नेहवशस्तेषां वत्सानां स्नेहेनाकृष्टोऽत
एव न स्मृत आत्मा येन स जवेनोपव्रजमगात् । कथंभूतः । अत्यात्मपदुर्गमार्गः अतिक्रान्त आत्मपान् गोपालान्यः सोऽत्यात्मपः, तथा दुर्गो दुर्गमो मार्गो
यस्य सः स च स च । तथा युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः । ककुद्याकुञ्चिता ग्रीवा यस्य सः । उदास्यपुच्छः उन्नमितान्यास्यानि पुच्छानि च
येन सः । आस्नुपयाः सर्वतः स्रवन्ति पयांसि यस्य सः । 'आस्नुपयाः' इत्यपि पाठे स एवार्थः । गोव्रज इत्यनेन वृषभादयोऽप्यगुरित्युक्तम् ॥३०॥ तत्र विशेषतो

इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः ॥ पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥२७॥ एकदा चारयन्वत्सा-
न्सरामो वनमाविशत् ॥ पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥२८॥ ततो विदूराच्चरतो गावो वत्सानुपव्रजम् ॥
गोवर्धनाद्रिशिरसि [2]चरन्त्यो ददृशुस्तृणम् ॥२९॥ [3]दृष्ट्वाथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः ॥ द्विपा-
त्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुंकृतैरास्नुपया जवेन ॥३०॥ समेत्य गावोऽधोवत्सान्वत्सवत्योऽप्यपाययन् ॥ गिलन्त्य
इव चाङ्गानि लिहन्त्यः [4]स्वौधसं पयः ॥३१॥ गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना ॥ दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोव-
त्सैर्ददृशुः सुतान् ॥३२॥ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान् ॥ उदुह्य दोर्भिः परिरभ्य
मूर्धनि घ्राणैरवापुः परमां मुदं ते ॥३३॥ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः ॥ कृच्छ्राच्छनैरपगतास्तदनुस्मृत्यु-
दश्रवः ॥ ३४ ॥ व्रजस्य रामः प्रेमर्धेर्वीक्ष्यौत्कण्ठ्यमनुक्षणम् ॥ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिन्तयत् ॥ ३५ ॥
किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि ॥ व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेम वर्धते ॥ ३६ ॥ ॥ ॥

धेनूनां चेष्टितमाह—समेत्येति । गोवर्धनस्याधः । वत्सवत्यः पुनः प्रसूता अपि ॥ ३१ ॥ रामेण दृष्टं वत्सेषु गवां स्नेहातिशयमुक्त्वा गोपानामपि दर्शयितु-
माह—गोपा इति । तासां गवां रोधने य आयासस्तस्य मौघ्येन मोघत्वेन लज्जया सहोरुमन्युना दुर्गमार्गजनितक्लेशेन चाभ्येत्य गोवत्सैः सह सुतान् ददृशुः
॥ ३२ ॥ ततश्च तेषामीक्षणेनोद्गतो यः प्रेमरसस्तस्मिन्नाप्लुता निमग्ना आशया येषां ते । लज्जामन्युकृच्छ्रैस्तानपि ताडयितुमागताः सन्तोऽपि गतमन्यवः प्रत्युत
जातोऽनुरागो येषां ते मूर्धनि घ्राणैरवघ्राणैः परमां मुदमवापुः ॥ ३३ ॥ कृच्छ्रात्ततोऽपगता निवृत्ताः । तेषां सुतानामनुस्मृत्योद्गच्छन्त्यश्रूणि येषां ते ॥ ३४ ॥
प्रेमर्धैरौत्कण्ठ्यमतिशयं मुक्तस्तनेष्वपत्येषु वीक्ष्य हेतुमजानन्नचिन्तयत् ॥ ३५ ॥ चिन्तामेवाह—किमेतदिति द्वाभ्याम् । वासुदेवे यथा पुरा प्रेम तथा स्वतो-
केष्वपि व्रजस्य प्रेम वर्धते किमेतदद्भुतमिति । किंच सात्मनो मत्सहितस्य व्रजस्य । मम तेषु प्रेमकारणं किमिति भावः ॥ ३६ ॥ ॥ ॥

१ व्रजसमीपे गोवर्धनेशानकोणस्थादिष्टासुरमर्दनकुण्डसमीपे इति तोष० । २ चरन्त्य इत्यनेनैव तृणमिति लब्धे पुनस्तृणमित्युक्तिस्तत्प्राशस्त्यविवक्षयेति बोध्यम् । ३ 'दृष्ट्वेति' इति पाठः । ४ स्वीयं सुष्ठु वा औधसं ऊधसि भवम् ।

केयं माया देवानां वा नराणां वा असुराणां कुतो वा कस्मात्प्रयुक्ता । तत्रान्यमाया न संभवति । यतो ममापि मोहो वर्तते, अतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव मायेयमस्त्विति संभावयति ॥३७॥ सवयसान्सखीनपि वयुनेन ज्ञानमयेन चक्षुषा वैकुण्ठं श्रीकृष्णमेवापश्यत् ॥३८॥ एवं कृष्णरूपान्सामान्यतो ज्ञात्वा कृष्णं पृष्ट्वा कृष्णोपदेशेन विशेषतो ज्ञातवानित्याह—नैत इति । अयमर्थः—पाल्यमानास्तावद्वत्सा ऋषीणामंशाः पालाश्च देवानामंशा इति तावदहं वेद्मि, इदानीं तु न तथा, किंत्वस्मिन् भिदाश्रयेऽपि त्वमेव भासि, अतस्त्वं सर्वं पृथक् विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा वक्त्रा निगमात्संक्षेपत एवोक्तं वृत्तं वलोऽवैद्विदितवानित्यर्थः ॥ ३९ ॥ ततः किं वृत्तमित्यपेक्षायामाह—तावदिति । वर्षे जाते आत्मनो मानेन त्रुट्यनेहसा त्रुटिमात्रेण कालेन सकलं सानुचरं हरिं ददर्श ॥ ४० ॥ दृष्ट्वा च व्यतर्कयदित्याह—यावन्त इति द्वाभ्याम् । मे मायाशये मायातल्पे ॥ ४१ ॥ मन्मायामोहितेभ्य इतरे कुत्रत्याः

केयं वा कुत आयाता दैवी वा नार्युतासुरी ॥ प्रायो मायाऽस्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ॥३७॥ इति संचिन्त्य दाशार्हो वत्सान्सवयसानपि ॥ सर्वानाचष्ट वैकुण्ठं चक्षुषा वयुनेन सः ॥ ३८ ॥ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि ॥ सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा वलोऽवैत् ॥ ३९ ॥ तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा ॥ पुरोवदब्दं क्रीडन्तं ददृशे सकलं हरिम् ॥ ४० ॥ यावन्तो गोकुले बालाः सवत्साः सर्व एव हि ॥ मायाशये शयाना मे नाद्यापि पुनरुत्थिताः ॥ ४१ ॥ इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे ॥ तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समम् ॥ ४२ ॥ एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः ॥ सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ॥४३॥ एवं संमोहयन्विष्णुं विमोहं विश्वमोहनम् ॥ स्वयैव माययाऽजोऽपि स्वयमेव विमोहितः ॥४४॥ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि ॥ महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः ॥४५॥ तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् ॥ व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ॥ ४६ ॥ ॥

॥ ४२ ॥ इति वितर्कयन्नमुह्यदित्याह—एवमिति द्वाभ्याम् । (एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः इति पाठः) ॥ ४३ ॥ ४४ ॥ ननु मायाश्रयस्य तस्य कुतो मोह इत्यत आह—तम्यामिति । महामायाविनि भगवत्यन्यमायाया आवरणविक्षेपकत्वाभावे दृष्टान्तद्वयम्—तम्यां तमिस्रायां रात्र्यां नैहारं हिमकणप्रभवं तम इव । तद्धितार्थोपसर्जनस्यापि तमसो नैहारमिति विशेषणं छान्दसम् । तत्तमो यथा पृथगावरणं न करोति किंतु तत्रैव लीयते । यथा च खद्योतार्चिरहनि पृथक् प्रकाशं न करोति । एवं महति पुरुषे मायां युञ्जतः पुंस इतरा नीचा माया तत्र न किंचित्करोति किंत्वात्मनि स्वस्मिन्नेव ऐश्यं सामर्थ्यं निहन्तीति ॥ ४५ ॥ अन्यदप्याश्चर्यमाह—तावदिति । वत्सपालाः वत्साः पालाश्च । सर्वे यष्टिविषाणादयश्च ॥ ४६ ॥ ॥ ॥

१ सवयसानित्यत्र अदन्तत्वमार्षम् । २ 'ब्रह्मापि स्वासनस्थेन चतुरास्येन शौरिणा । मोहितैर्द्वारपालैश्च परिभूतो न्यवर्तत ॥' इति वीर० पाठेऽधिकम् । ३ अव्ययमपिवच्छन्दोऽस्ति । 'ववायथातथैवैवम्—'इत्यमरात् । एतेन 'प्रातिपदिकेषु तद्धितस्य वतेः पाठो नोचित' इत्यादि मनोरमोक्तं प्रत्युक्तं । ४ व्यदृश्यन्त स्वयमेव तद्दृष्टौ व्यक्तीभूताः । कर्मकर्तरि लङ् । ५ अत्रायं धनुश्चिह्नान्तर्गतो ग्रन्थो यद्यपि बहुत्र दृश्यते, तथाप्येतद्विलक्षणं पाठान्तरं नोपलभ्यते, अतोऽयमनुपयुक्तो भाति । मूलटीकयोः समानानुपूर्विकत्वात् । ६ 'स आत्मनि' इति पाठः ।

॥ ४७ ॥ श्रीवत्सप्रभायुक्तान्यदङ्गानि दोष्षु येषाम्, रत्नमयानि कम्बुवत्त्रिधाराणि कङ्कणानि पाणिषु येषां, ते च ते च ॥ ४८ ॥ तथा भूरि बहुजन्मार्जितं
पुण्यं तद्युक्तैर्जनैरर्पितैः ॥ ४९ ॥ चन्द्रिकाविशदस्मितयुक्तैः सहारुणगुणेन च वर्तमाना येऽपाङ्गास्तैर्वीक्षितैः । स्वकार्थानां स्वभक्तमनोरथानां रजःसत्त्वाभ्यां
स्रष्टृपालका इव व्यदृश्यन्त । सत्त्ववद्विशदस्मितेन पालका इव, रजोवदरुणगुणेन च स्रष्टार इव तादृक्कटाक्षैर्द्योतमाना इत्यर्थः ॥ ५० ॥ आत्मा ब्रह्मा तदादि-
स्तम्बपर्यन्तैः अनेकार्हैरनेकार्हणैः ॥ ५१ ॥ अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिः शक्तिभिः । महदादिभिरिति महत्सूत्रयोः पृथक्त्वविवक्षया चतुर्विंशति-
तत्त्वैर्जगत्कारणैः ॥ ५२ ॥ कालादिभिश्च तत्सहकारिभिः । तत्र कालः क्षोभकः । स्वभावः परिणामहेतुः । संस्कारो वासनाया उद्बोधकः । स्वमहिध्वस्तम-
हिभिर्भगवन्महिम्ना तिरस्कृतस्वातन्त्र्यैरुक्तैः सर्वैरणिमाद्यैः ॥ ५३ ॥ सर्वेषां मूर्तिमत्त्वेऽपि विशेषमाह—सत्यज्ञानेति । सत्याश्च ज्ञानरूपाश्चानन्ताश्चानन्दरूपाश्च

चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः ॥ किरीटिनः कुण्डलिनो हारिणो वनमालिनः ॥ ४७ ॥ श्रीवत्साङ्गददोर-
त्नकम्बुकङ्कणपाणयः ॥ नूपुरैः कटकैर्भाताः कटिसूत्राङ्गुलीयकैः ॥ ४८ ॥ आङ्घ्रिमस्तकमापूर्णास्तुलसीनवदा-
मभिः ॥ कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥४९॥ चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः ॥ स्वकार्थाना-
मिव रजःसत्त्वाभ्यां स्रष्टृपालकाः ॥५०॥ आत्मादिस्तम्बपर्यन्तैर्मूर्तिमद्भिश्चराचरैः ॥ नृत्यगीताद्यनेकार्हैः पृथ-
क्पृथगुपासिताः ॥५१॥ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः ॥ चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः
॥ ५२ ॥ कालस्वभावसंस्कारकामकर्मगुणादिभिः ॥ स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ॥५३॥ सत्यज्ञा-
नानन्तानन्दमात्रैकरसमूर्तयः ॥ अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥५४॥ एवं सकृद्ददर्शाजः परब्रह्मा-
त्मनोऽखिलान् ॥ यस्य भासा सर्वमिदं विभाति सचराचरम् ॥ ५५ ॥ ततोऽतिकुतुकोद्वृत्य स्तिमितैकादशे-
न्द्रियः ॥ तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्रिका ॥ ५६ ॥ ॥ ॥ ॥

तत्रापि तदेकमात्रा विजातीयसंभेदरहितास्तत्रापि चैकरसाः सदैकरूपा मूर्तयो येषां ते । यद्वा सत्यज्ञानादिमात्रैकरसं यद्ब्रह्म तदेव मूर्तयो येषामिति । अत एवोप-
निषदात्मज्ञानं सैव दृक् चक्षुर्येषां तेषामपि हि निश्चितमस्पृष्टभूरिमाहात्म्या न स्पृष्टं स्पर्शयोग्यं भूरि माहात्म्यं येषां ते तथाभूताः सन्तो व्यदृश्यन्तेति ॥ ५४ ॥
एवं सकृदेकदैव ददर्श । परब्रह्मणो विशेषणं यस्येति ॥५५॥ अतिकुतुकेनाश्चर्येणोद्वृत्य दृष्टीः परावृत्य हंसपृष्ठे निपत्येति वा । कुतुकशब्दे तृतीयायाश्छान्दसो लुक् ।
यद्वा उद्वृत्यः इति छेदः । अतिकुतुकेन उद्वृत्यो विलोड्यो विपर्यस्तः स्वस्मिन्निति यावत् । पाठान्तरे त्वतिकुतुकेनोद्वृत्तः क्षुभितः । तेषां धाम्ना तेजसा स्तब्ध-
सर्वेन्द्रियो ब्रह्मा तूष्णीं निश्चलोऽभूत् । अत्र दृष्टान्तः—पूर्देवी व्रजाधिष्ठात्री काचिद्देवता तस्या अन्ति समीपे पुत्रिका चतुर्मुखीकृतकप्रतिमेव ॥ ५६ ॥ ॥

१ आङ्घ्रीति अङ्घ्रिमारभ्य मस्तकपर्यन्तमापूर्णाः । २ 'उद्धृत्तः' इत्येवरूपे । ३ तेषां भगवद्रूपाणाम् ।

एवं मोहमभ्रमजमुज्जहारेत्याह—इतीति । इरेशे इरा सरस्वती तस्या ईशे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात्तद्द्रष्टुमप्यनीशे सति परमोऽजः श्रीकृष्णः सपद्यजाजवनिकां मायारूपां तिरस्करिणीं यथाद्भुतं दर्शितं तां चच्छाद तिरोधत्त । अपसारितवानित्यर्थः । अथवा अयं लोकाभिमानी ममैश्वर्यं द्रष्टुमयोग्य इति तस्योपरि मायां प्रसारितवानिति । क्व मुह्यति सति । अतर्क्ये तर्कागोचरे । निजोऽसाधारणो महिमा यस्य तस्मिन्निति मोहे हेतुरुक्तः । दर्शनायोग्यत्वाय त्रीणि विशेषणानि स्वप्रमितिके स्वप्रमिति स्वप्रकाशं च तत्कं सुखं च यस्मिन् । अत एवाजातः प्रकृतेः परत्र परस्मिन् । अतन्निरसनमुखेन ब्रह्मकैः श्रुतिशिरोभिर्मितिर्ज्ञानं यस्मिंस्तस्मिन्स्वरूपे ॥ ५७ ॥ अर्वाक् वहिः प्रतिलब्धान्यक्षीणि येन सः । परेतवन्मृतो यदि कथंचित्पुनरुत्तिष्ठति तथा । दृष्टीर्नेत्राणि ॥ ५८ ॥ जनानामाजीव्यैर्द्रुमैराकीर्णम् । समाप्रियं संततान्यासमन्तात्प्रियाणि यस्मिंस्तत् ॥ ५९ ॥ तदाह—यत्रेति । नैसर्गदुर्वैराः स्वाभाविकाप्रतिकार्यवैरवन्तोऽपि नराः सिंहादयश्च मित्राणीव यत्र सहैवासन् । अजितस्यावासेन द्रुताः पलायिताः रुट्तर्षादयः क्रोधलोभादयो यस्मात्तथाभूतं वृन्दावनमपश्यदिति ॥ ६० ॥ तत्र च परमेष्ठी ब्रह्मा इव पुरा पूर्ववदेव ब्रह्म अचष्टापश्यत् । कथंभूतम् । पशुपवंशशिशुत्वं नाट्यमुद्वहत् । नाट्यमित्यत्र हेतुः—अद्वयमित्यादि । अद्वयं च वत्सान्विचिन्वत्, एकं च सखीन्, अगाधबोधं च विचिन्वत्, अनन्तं च परितो विचिन्वत्, परं च शिशुत्वमुद्वहत्, ब्रह्म च सपाणिकवलमिति नाट्यमेवोद्वहदित्यर्थः ॥ ६१ ॥ निजधोरणतः स्ववाहनात्त्वरेण वेगेनावतीर्य दण्डवन्नत्वा चतुर्णां मुकुटानामग्रैरङ्घ्रियुग्मं स्पृष्ट्वा मुदश्रुसुजलैरानन्दाश्रुरूपैः सुजलैरभिषेकमकरोदिति ॥ ६२ ॥ चिरस्य चिरं पादयोः पतन्नास्ते ॥ ६३ ॥ सवेपथुः सकम्पः । अत एव गद्गदया । अनुकरणमेतत् । इलया वाचा । ऐलत अस्तौत् ॥ ६४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥ ५७ ॥ ततोऽर्वाक् प्रतिलब्धाक्षः कः परेतवदुत्थितः ॥ कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥ ५८ ॥ सपद्येवाभितः पश्यन्दिशोऽपश्यत्पुरः स्थितम् ॥ वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥ ५९ ॥ यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः ॥ मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥ ६० ॥ तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम् ॥ वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥ ६१ ॥ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदण्डमिवाभिपात्य ॥ स्पृष्ट्वा चतुर्मुकुटकोटिभिरङ्घ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥ ६२ ॥ उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ॥ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ६३ ॥ शनैरथोत्थाय विमृज्य लोचने मुकुन्दमुद्वीक्ष्य विनम्रकन्धरः ॥ कृताञ्जलिः प्रश्रयवान्समाहितः सवेपथुर्गद्गदयैलतेलया ॥ ६४ ॥ ॥ इति श्रीम० म० दशमस्कन्धे पूर्वार्धे त्रयोदशोऽध्यायः ॥ १३ ॥

१ आचष्ट अपश्यत् । २ इदं विश्वम् । ३ स्वार्थे कप्रत्ययः । ४ 'अभिपात्य' इति कचित्पाठः ।

चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागन्तुकनिश्चयम् ॥ अनीशः कर्तुमस्तौपीत्कृष्णं ब्रह्मा विमोहितः ॥ १ ॥ स्वकृतापराधेन भिया सकम्पतया भगवन्महिमानमनवगाहमानो यथादृष्टस्वरूपमेव कीर्तयन्नाह—नौमीति । हे ईड्य स्तुत्य, [1]ते तुभ्यं नौमि । द्वितीयार्थे चतुर्थ्यः, अथवा नौमीत्युक्त्वा प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते प्रयोजनापेक्षायामेवंभूतो भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी । यद्वा, तुभ्यं त्वामेव प्रसादयितुं त्वामेव स्तौमीत्यर्थः । अभ्रवद्वपुर्यस्य तस्मै । तडिद्वदम्बरं यस्य तस्मै । गुञ्जाभिरवतंसौ कर्णभूषणे [2]परिपिच्छं च बर्हापीडं तैर्लसन्मुखं यस्य तस्मै । वन्याः स्रजो यस्य तस्मै । कवलादिभिर्लक्ष्मभिः[3] श्रीः शोभा यस्य तस्मै । मृदू पादौ यस्य तस्मै पशुप[4]स्याङ्गजाय ॥१॥ ननु नौमीति प्रतिज्ञाय किं स्वरूपानुवादमात्रं क्रियते अत आह—अस्यापीति । भो देव, अस्यापि सुलभत्वेन प्रकाशितस्यापि तव वपुषोऽवतारस्य महि महिमानमवसितुं ज्ञातुं कोऽपि को ब्रह्मा अहमपि नेशे न शक्नोमि । यद्वा कश्चिदपि नेशे न समर्थ आसीत् । सुलभत्वाय विशेषणद्वयम् । मदनुग्रहस्य ममानु[6]ग्रहो यस्मात्तन्मदनुग्रहं तस्य । किंच स्वेच्छामयस्य स्वीयानां भक्तानां यथा यथेच्छा तथा तथा भवतः । तर्हि किमिति ज्ञातुं न शक्यतेऽत आह—ननु भूतमयस्याचिन्त्यशुद्धसत्त्वात्मकस्य । यदाऽस्यैवं तदा कथं पुनः साक्षात्तव केवलस्यात्मसुखानुभूतेरेव स्वसुखानुभवमात्रस्यावतारिणो गुणातीतस्य महिमानमान्तरेण

॥ ब्रह्मोवाच ॥ नौमीड्य तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय ॥ वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥१॥ अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य नतु भूतमयस्य कोऽपि ॥ नेशे महि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २ ॥ ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम् ॥ स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥३॥ श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥४॥

निरुद्धेनापि मनसा को वा ज्ञातुं समर्थो भवेत् । अथवा भूतमयस्यापि तु विराड्रूपस्य तव त्वन्नियम्यस्य वपुषो महिमानमेवावसितुं कोऽपि नेशे तदा साक्षात्तवैवासाधारणस्य नियम्यनियन्तृभेदरहितस्योक्तलक्षणस्यास्य महिमानमवसितुं कोऽपि नेश इति किमु वक्तव्यमित्यर्थः ॥ २ ॥ तर्ह्यज्ञाः कथं संसारं तरेयुरत आह—ज्ञान इति । उदपास्य ईषदप्यकृत्वा सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयवार्तां स्वस्वस्थान एव स्थितास्तत्सन्निधिमात्रेण स्वत एव श्रुतिगतां श्रवणं प्राप्तां तनुवाङ्मनोभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति केवलं यद्यपि नान्यत्कुर्वन्ति तैः प्रायशस्त्रिलोक्यामन्यैरजितोऽपि त्वं जितः प्राप्तोऽसीति किं ज्ञानश्रमेणेत्यर्थः ॥ ३ ॥ भक्तिं विना ज्ञानं तु नैव सिध्येदित्याह—श्रेयःस्रुतिमिति । श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः स्रवणं यस्याः सरस इव निर्झराणाम् । तां ते तव भक्तिमुदस्य[13] त्यक्त्वा । श्रेयसां मार्गभूतामिति वा । तेषां क्लेशलः क्लेश एवावशिष्यते । अयं भावः—यथा अल्पप्रमाणं धान्यं परित्यज्य अन्तःकणहीनान् स्थूलधान्याभासांस्तुषानेवावघ्नन्ति तेषां न किंचित्फलम्, एवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतन्ते तेषामपीति ॥ ४ ॥ ॥ ॥

१ ते तुभ्य त्वां प्राप्तुं । त्वां स्तौमीति प्रकृतस्य भगवतः कर्मतयान्वयः । 'क्रियार्थोपपदस्य च कर्मणि' इति चतुर्थी । २ परितः पिच्छानि यस्य । ३ वामे पाणौ दध्योदनकवलः, वामकक्षे वेत्रविषाणे, जठरपटसधो वेणुरेतान्येव लक्ष्माणि । ४ पशुपस्य नन्दस्य अङ्गजाय पुत्रायेति तोष० । ५ अत्र पद्ये पुरुषकत्वयरछान्दसः । ६ मम सृष्टेः पालनादिनाऽनुग्रहो यस्मात् । ७ 'तनुभूत' इति चित्सुखपाठे तनु सूक्ष्मं यद्भूतं शुद्धसत्त्वात्मकं तत्त्वं तत्स्वरूपस्येत्यर्थः । ८ हे अजितेति संबोधनम् । ९ 'श्रेयःस्रुतिं' इति पाठः । १० यद्वा अनृतोक्तीन्द्रियक्षोभादिभिया मौनशीला अपि सन्तः शुकाद्या मुखरिता अतिवाचालाः कृता यया । आहिताग्न्यादित्वात्परनिपातः । ११ यद्वा तन्वादिभिः सहितो जितः । तव तन्वादीन्यपि तैर्वशीकृतानीत्यर्थः । १२ श्रेयसां स्रुतिः स्रवणं यस्यामिति अवान्तरफलत्वेन ज्ञानमपि स्वत एव भवितैवेति सूचितम् । १३ उदस्य उपेक्ष्य हेलयात्यन्तमनादृत्य ।

भक्त्यैव ज्ञानं नान्यथेत्यत्र सदाचारं प्रमाणयति—पुरेति। हे भूमन्नपरिच्छिन्न, इह लोके पूर्वं योगिनोऽपि सन्तो योगैर्ज्ञानमप्राप्य पश्चात्त्वदर्पितेहास्त्वय्यर्पिता लौकिक्यपीहा चेष्टा यैस्ते निजकर्मलब्धया, त्वदर्पितैर्निजैः कर्मभिर्लब्धया। त्वय्यर्पिता ईहा निजानि कर्माणि च तैर्लब्धयेत्येकं पदं वा। कथोपनीतया कथया त्वत्समीपं प्रापितया भक्त्यैव विबुध्यात्मानं ज्ञात्वा अज्ञः सुखेनैव ते परां गतिं प्राप्ताः ॥५॥ एवं तावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत्कथाश्रवणादिनैव त्वत्प्राप्तिर्नान्यथेत्युक्तम्, इदानीं यद्यप्युभयोरविशेषेण दुर्ज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथंचिद्भवेन्नतु सगुणस्य तव अचिन्त्यानन्तगुणत्वादिति श्लोकद्वयेन स्तौति—तथापीति। हे भूमन्, अपरिच्छिन्नगुणस्य ते महिमा अमलैरन्तरात्मभिः प्रत्याहृतेन्द्रियैर्विबोद्धुं बोधगोचरीभवितुमर्हति योग्यो भवति। अथवा विबोद्धुं ज्ञातुमर्हति अर्ह्यते शक्यत इत्यर्थः। यद्वा महिमेति महिमानं कश्चिद्बोद्धुमर्हतीत्यर्थः। कथम्। स्वानुभवादात्माकारान्तःकरणसाक्षात्कारात्। नन्वन्तःकरणमपि सविकारमेव विषयीकरोतीति कथमात्माकारता तस्येत्यत आह—अविक्रियादिति। विक्रिया विशेषाकारस्तद्रहितात्। विशेषपरित्याग एवात्माकारतेत्यर्थः। नन्वन्तःकरणसाक्षात्कारविषयत्वेऽनात्मत्वप्रसङ्गः स्यादत आह—अरूपत इति। रूपं विषयः। अविषयात्। वृत्तिविषयत्वमेवात्मनो न फलविषयत्वम्।

## पुरेह भूमन्बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ॥ विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥ ५ ॥ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः ॥ अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ॥ ६ ॥ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ॥ कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥ ७ ॥ तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ॥ हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥ ॥ ॥ ॥

अतो नायं दोष इति भावः। कथं तर्हि स्फूर्तिः। अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव, नत्वन्यथा इदं तदिति विषयत्वेनेत्यर्थः। अथवा मा सर्वतोऽन्तरङ्गा लक्ष्मीरप्यगुणस्य ते महि महिमानममलैरन्तर्वृत्तिभिरिन्द्रियैरपि तथा यादृग्वस्तुतस्तेन रूपेण विबोद्धुं किमर्हति, नार्हत्येवेत्यर्थः। कथं तर्ह्यर्हति तदाह—स्वानुभवादित्यादिना। उक्तार्थमेवैतत् ॥६॥ गुणात्मनो गुणानामात्मनो गुणाधिष्ठातुस्ते तव पुनर्गुणान्विमातुमेतावन्त इति गणयितुमपि के ईशिरे समर्था बभूवुः दूरतस्तद्विशेषवार्ता। कथंभूतस्य तव। अस्य विश्वस्य हिताय पालनाय बहुगुणाविष्कारेणावतीर्णस्य। ननु कालेन निपुणैः किमशक्यमत आह—कालेनेति। वाशब्दो वितर्के। सुकल्पैरतिनिपुणैर्बहुजन्मना कालेन भूपरमाणवो विमिता विशेषेण गणिता भवेयुः। तथा खे मिहिका हिमकणा अपि। तथा द्युभासो दिवि नक्षत्रादिकिरणपरमाणवोऽपि ॥७॥ तस्माद्भक्तिरेव सङ्गच्छत इत्याह—तत्तेऽनुकम्पामिति। सुसमीक्षमाणस्तव कृपा कदा भविष्यतीति बहुमन्यमानः स्वार्जितं च कर्मफलमनासक्तः सन् भुञ्जान एव नातीव तप आदिना क्लिश्यन्नेवं यो जीवेत स मुक्तौ दायभाग्भवति। भक्तस्य जीवनव्यतिरेकेण दायप्राप्ताविव मुक्तौ नान्यदुपयुज्यत इति भावः ॥ ८॥

१ स्वानुभवात् स्वीयानुभवानुसारेण यो यथाऽनुभवस्तथैव न सर्वथेत्यर्थः। २ अरूपतः रूप्यत इति रूपः। अनिरूपादित्यर्थः। ३ 'बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् ॥ तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥' इत्यनात्मविषये। ब्रह्मणि तु—'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते ॥ स्वयंस्फुरणरूपत्वान्नाभासस्तत्र युज्यते ॥' इति। ४ नमो विदधदित्युपलक्षणं यत्किंचिद्भक्त्यन्तरस्य। ५ मुक्तिपदे मुक्तिनासके त्वच्चरणे। 'येनापवर्गाख्यमदभ्रबुद्धिर्भेजे खगेन्द्रध्वजपादमूलम्'। इत्युक्तेः। यद्वा मुक्तेः पदे आश्रये दशमे लक्ष्ये त्वयीत्यर्थ इति तोष०। ६ गुणा आत्मानः स्वरूपभूता यस्येति गुणानामप्रकृतिकार्यत्वम्, यद्वा गुणानामात्मनश्चेतयितुः गुणान्प्रकटयतस्ते इत्यपीति तोष०। ७ भूपरमाण्वादीनामानन्त्येऽपि ब्रह्माण्डपरिच्छिन्नत्वात्कदाचिच्छेषादिर्गणयेत्। अनन्तब्रह्माण्डाश्रितरोमकूपस्य तु ते गुणगणनं कथं स्यादिति भावः।

तदेवं स्तुत्वा भगवन्तं क्षमापयितुं स्वापराधं निवेदयति—पश्येति । हे ईश, मेऽनार्यं दौर्जन्यं पश्य । यदहं मायिनामपि मायिनि विमोहके त्वय्यपि स्वमायां प्रसार्यात्मैश्वर्यमीक्षितुमैच्छमभिलषितवान् । अहो एवं कर्तुं त्वय्यहं कियान् न किंचित् । यथाऽग्नेरुद्भूता ज्वाला अग्नौ न किंचित्तद्वदिति ॥ ९ ॥ रजोभुवो रजसो जातस्य, अतोऽजानतः, अत एवाजावलेपान्धतमोन्धचक्षुषः अजो जगत्कर्ताहमिति मदेन गाढतमोरूपेणान्धीभूते नेत्रे यस्मात्तस्त्वत्तः पृथगीशमानिनः । अन्यत्र प्रभुत्वेन वर्तमानोऽपि मयि नाथे सति नाथवान्मद्भृत्य एवात एषोऽनुकम्प्य इति मत्वा क्षमस्वेत्यर्थः ॥ १० ॥ ननु ब्रह्माण्डविग्रहस्त्वमपीश्वर एवेति चेत्तत्राह—क्वाहमिति । तमः प्रकृतिः, महान् महत्तत्त्वम्, अहंकारः, खमाकाशः चरो वायुः, अग्निः, वार्जलं, भूश्च । प्रकृत्यादिपृथिव्यन्तैरेतैः संवेष्टितो योऽण्डघटः स एव तस्मिन्वा स्वमानेन सप्तवितस्तिः कायो यस्य सोऽहं क क च ते महित्वम् । कथंभूतस्य । ईदृग्विधानि यान्यविगणितान्यण्डानि त एव परमाणवस्तेषां चर्या परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यत्र तस्य तव । अतोऽतितुच्छत्वात्त्वयाऽनुकम्प्योऽहमिति

पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि ॥ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ ॥ ९ ॥ अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः ॥ अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति ॥ १० ॥ क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः ॥ क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥ ११ ॥ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे ॥ किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः ॥ १२ ॥ जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् ॥ विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किंत्वीश्वर त्वन्न विनिर्गतोऽस्मि ॥ १३ ॥ नारायणस्त्वं नहि सर्वदेहिनामात्माऽस्यधीशाऽखिललोकसाक्षी ॥ नारायणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ॥ १४ ॥ ॥

॥ ११ ॥ अपि च गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति लोके । अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषितमभिहितम् । एतेषां शब्दानां भुवि विषये उषितं स्थितमिति वा । सर्वं वस्त्वित्यर्थः । हे अधोक्षज, तव कुक्षेरनन्तर्बहिः कियदपि किंचिन्मात्रमपि किमस्ति । न किंचिदस्तीत्यर्थः । अतः सर्वस्य तव कुक्षिगतत्वेन ममापि तथात्वान्मातृवदपराधः सोढव्य इति भावः ॥ १२ ॥ किंच विशेषतोऽपि त्वत्तो मम जन्म प्रसिद्धमित्याह—जगत्त्रयेत्यादि । जगत्त्रयस्यान्ते प्रलये य उदधीनां संप्लवः संश्लेषस्तस्मिन्नुदे उदके नारायणस्योदरे नाभिस्तस्य नालादजो विनिर्गत इति या वाक्सा तावन्मृषा न भवति । वै निश्चितम् । तथापि तु हे ईश्वर, त्वत्तोऽहं किं न विनिर्गतो नोत्पन्नोऽस्मि । अपि तु त्वत्त एवोत्पन्न इत्यर्थः ॥ १३ ॥ तर्हि नारायणस्य पुत्रः स्यास्त्वं, मम किमायातं तत्राह—नारायणस्त्वमिति । नहीति । काका त्वमेव नारायण इत्यापादयति । कुतोऽहं नारायण इति चेदत आह—सर्वदेहिनामात्माऽसीति । एवमपि किं नारायणो न भवसि । नारं जीवसमूहोऽयनमाश्रयो यस्य स तथेति । त्वमेव सर्वदेहिना-

१ अपराधमिति शेषः । २ पितरित्यादिवाक्ये ईश्वरेत्युक्तिर्भगवति पुत्रदृष्टिमयोग्या स्वस्य सत्पुत्रत्वायोग्यतां वा मत्वा । ३ अधोक्षजेति अधः कृतं स्वनियम्येभ्योऽक्षेभ्यो जातं ज्ञानं येन तादृश ।

मात्मत्वान्नारायण इति भावः। हे अधीश, त्वं नारायणो नहीति पुनः काकुः। अधीशः प्रवर्तकः। ततश्च नारस्यायनं प्रवृत्तिर्यस्मात्स तथेति पुनस्त्वमेवासाविति। किंच त्वमखिललोकसाक्षी अखिलं लोकं साक्षात्पश्यसि। अतो नारमयसे जानासीति त्वमेव नारायण इत्यर्थः। नन्वेवं नारायणपदव्युत्पत्तौ भवेदेवं तत्त्वन्यथाप्रसिद्धमित्याशङ्क्याह—नारायणोऽङ्गमिति। नरादुद्भूता येऽर्थास्तथा नराज्जातं यज्जलं तदयनाद्यो नारायणः प्रसिद्धः सोऽपि तवैवाङ्गं मूर्तिः। तथा च स्मर्यते—'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः॥ तस्य तान्ययनं पूर्वं तेन नारायणः स्मृतः॥' इति, तथा—'आपो नारा इति प्रोक्ता आपो वै नरसूनवः॥ अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥' इति च। ननु मन्मूर्तेरपरिच्छिन्नायाः कथं जलाश्रयत्वमत आह—तच्चापि सत्यं नेति॥ १४॥ अपरिच्छेदमेवोपपादयति—तच्चेदिति। जगदाश्रयभूतं तव तद्वपुर्जलस्थमित्येवं यदि सत्सत्यं स्यात्तर्हि तदैव कमलनालमार्गेणान्तःप्रविश्य संवत्सरशतं विचिन्वतापि मया हे भगवन्नचिन्त्यैश्वर्य, तत्र किमिति न दृष्टम्। हृद्यपि किमिति नो व्यदर्शि न दृष्टम्। तदैव तपःकरणानन्तरं सपद्येव सुदृष्टम्, अतो मायैव। अतस्त्वन्मूर्तेर्देशविशेषपरिच्छेदः सत्यो न भवतीत्यर्थः॥ १५॥ अपि च यदि जलादिप्रपञ्चः सत्यः स्यात्तर्हि तेन तव परिच्छेदो भवेत्। स तु मायाविलसित

तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव॥ किं वा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि॥१५॥

अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य॥ कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते॥१६॥

यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा॥ तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना॥१७॥ अद्यैव त्वदृतेऽस्य

किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि॥ तावन्तोऽसि चतुर्भुजास्तदखिलैः

साकं मयोपासितास्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते॥ १८॥ अजानतां त्वत्पदवीमनात्मन्यात्मात्मना

भासि वितत्य मायाम्॥ सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः॥ १९॥ ॥ ॥

इति त्वयैव दर्शितमित्याह श्लोकत्रयेण—हे मायाधमन मायोपशमन, अत्रैवावतारे बहिः स्फुटस्यापि स्वजठरमध्ये जनन्याः प्रदर्शनेन॥ १६॥ ननु बहिः सत एवान्तर्जठरे प्रतिविम्बोऽस्तु, कुतः सर्वथा मायात्वं तत्राह—यस्येति। यस्य तव कुक्षौ सर्वमिदं यथा भाति तत्सर्वमिहापि बहिरपि तथैव भाति। किंच सात्मं त्वत्सहितं तदिदं सर्वं त्वयि मायया विना किं घटते। अयं भावः—त्वयि प्रतिविम्बश्चेद्बाह्याद्विलोमतया प्रतीयेत नतु तदस्ति, तव चादर्शस्थानीयस्य त्वयि प्रतीतिर्न स्यात् अतः सर्वथा मिथ्यात्वमेवेति॥१७॥ अपि च न केवलं जनन्या ममापि तथैव दर्शितमित्याह—अद्यैवेति। त्वदृते त्वां विना अस्य विश्वस्य मायात्वं त्वया ममैव च, तदप्यद्यैव किं न दर्शितं, किंतु दर्शितमेव। तथा हि—एकोऽसीत्यादि। तत्ततो मया सहाखिलैस्तत्त्वादिभिरुपासितास्तावन्तश्चतुर्भुजा असि, जगन्ति ब्रह्माण्डानीति प्रागनुक्तमपि दृष्टमिति ज्ञातव्यम्॥१८॥ ननु ब्रह्मंस्तव मया दर्शितं शुद्धमेव चैतन्यं कथं प्रपञ्चवन्मायेत्युच्यते, सत्यम्, किंत्वद्वितीये त्वयि नानात्वं गुणावतारमत्स्याद्यवतारेष्विव कार्यवशेन स्वतन्त्रमायानिबन्धनमित्याह श्लोकद्वयेन—अजानतामिति। त्वत्पदवीं तव स्वरूपमजानतामनात्मनि प्रकृतौ स्थित आत्मैव त्वमात्मनैव स्वातन्त्र्येण मायां वितत्य भासि। कथम्। जगतः सृष्टावहमिव ब्रह्मेव विधाने पालने च एष त्वमिव। अन्ते त्रिनेत्र इवेति॥१९॥

१ सुदृष्टं—'नातः परं परम यद्भवतः स्वरूपं' इत्यादि तृतीयोक्तानुसारेण सच्चिदानन्दघनत्वेन दृष्टमिति तोप०। २ तत् प्रसिद्धं तव वपुः सत् सत्यं। कीदृशं। चेतयति सर्वमिति चेत्। पुनः कीदृशं। सज्जगत् सन्ति जगन्ति यत्र तथेति क्रम०। ३ अमितमपरिमितं ब्रह्म परिपूर्णमद्वयमेव त्वत्स्वरूपमवशिष्यते। ब्रह्माण्डदर्शनं पूर्वमनुक्तमप्यत्रत्योक्त्यैव ज्ञेयमिति वीर०।

॥ २० ॥ ननु च स्वातन्त्र्ये कथं कुत्सितेषु मत्स्यादिषु जन्म, कथं वा वामनाद्यवतारे याञ्चादि कार्पण्यं, कथं वास्मिन्नेव कदाचिद्भयपलायनादि, अत आह—
को वेत्तीति । अन्वर्थैः संबोधनैर्दुर्ज्ञेयत्वमेवाह—भूमन्नित्यादिभिः । भवत ऊतीर्लीलास्त्रिलोक्यां को वेत्ति क्व वा, कथं वा, कदा वा, कति वेति । अचिन्त्यं
तव योगमायावैभवमिति भावः ॥ २१ ॥ ननु भवत्ववताराणामचिन्त्यो महिमा, प्रपञ्चस्य ह्यसत्त्वे कथं सत्त्वप्रतीतिरितीमामाशङ्कां सपरिकरमुपसंहरन्परिह-
रति—तस्मादिति अस्तधिषणं निरस्तप्रतिभासम् । त्वय्येवोद्यदुद्भवदपि यन्नश्यत । सदिवेत्युपलक्षणमेतत् । नित्यमिव, सुखमिव, चेतनमिव, चाधिष्ठानभू-
तस्य तव गुणैस्तथा तथा भातीत्यर्थः ॥२२॥ त्वमेव तु सत्य इत्याह—एकस्त्वं सत्यः । कुतः । आत्मा । दृश्यमसत्यं दृष्टं न चात्मा दृश्यः, अतः सत्यः । किंच
यद्विकारवत्तदसत्यं, नच त्वयि जन्मादयो विकाराः सन्तीत्याह—आद्यः कारणम्, अतो न जन्म । आद्यत्वे हेतुः—पुराणः पुरापि नवः । कार्यात्पूर्वमपि वर्त-
मान इत्यर्थः । अत्र हेतुः—पुरुष इति । तथा च श्रुतिः—'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्' इति । जन्मानन्तरास्तित्वलक्षणं विकारं वारयति—नित्य

सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ॥ जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय
च ॥२०॥ को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम् ॥ क्व वा कथं वा कति वा कदेति विस्तारयन्
क्रीडसि योगमायाम् ॥ २१ ॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ॥ त्वय्येव नित्य-
सुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति ॥२२॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त
आद्यः ॥ नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥ २३ ॥ एवंविधं त्वां सकलात्मनामपि
स्वात्मानमात्मात्मतया विचक्षते ॥ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥ २४ ॥ ॥

इति । सनातन इत्यर्थः । पूर्णोऽजस्रसुखोऽक्षरोऽमृत इति चतुर्भिः पदैः क्रमेण वृद्धिविपरिणामापक्षयविनाशान्वारयति । पूर्णत्वे हेतुः—अनन्तोऽद्वय इति च ।
देशकालपरिच्छेदरहितो वस्तुपरिच्छेदरहितोऽपि अमृतत्वोपपादनाय चतुर्विधक्रियाफलत्वं वारयति । स्वयंज्योतिर्निरञ्जन उपाधितो मुक्त इति पदत्रयेण ।
अयं भावः—तत्रोत्पत्तिराद्य इत्यनेनैव निराकृता, प्राप्तिरपि क्रियया ज्ञानेन वा भवेत्, क्रियया प्राप्तिरात्मपदेनैव निराकृता, ज्ञानतः प्राप्तिं वारयति स्वयं-
ज्योतिरिति । विकृतिरपि तुषापाकरणेनावघातेन व्रीहीणामिवोपाध्यपाकरणेन भवेत्, तत्त्वसङ्गत्वान्न संभवतीत्याह—मुक्त उपाधित । इति । संस्कारोऽपि
किमप्यतिशयाधानेन मलापाकरणेन वा । तत्रातिशयाधानं पूर्णत्वेनैव निराकृतम् । मलापाकरणं निवारयति—निरञ्जन इति । निर्मल इत्यर्थः ॥ २३ ॥
तस्मादेवंभूतज्ञानान्मुच्यन्त इत्याह—एवंविधमिति । त्वां ये विचक्षते सम्यक् पश्यन्ति । कथम् । आत्मात्मतया आत्मा प्रत्यक् तस्य स्वरूपेण । न चैतत्पुत्रा-
दिष्विव गौणमित्याह । सकलात्मनामपि स्वात्मानम् । केन । गुरुरेवार्कस्तस्माल्लब्धा उपनिषज्ज्ञानं तदेव सुचक्षुस्तेन । भव एवानृताम्बुधिस्तं ते तरन्तीव ॥२४॥

१ सुरेषूपेन्द्ररूपेण यज्ञादिरूपेण वा, ऋषिषु परशुरामरूपेण नारदादिरूपेण वा, नृषु रामरूपेण पृथ्वादिरूपेण वा, तिर्यक्षु वराहादिरूपेण, यादस्सु मत्स्यकूर्मादिरूपेण । २ 'क्वाहो' इति पाठः । तत्र आहो इति विकल्पार्थकम् । ३ चतुर्विधेति विशेषणं उत्पाद्याप्यविकार्यसंस्कार्यभेदेन क्रियाफलस्य चतुर्विधत्वबोधनाय । तत्राद्यपदेनोत्पत्तेर्निराकृतत्वादवशिष्टं त्रयं पदत्रयेण वारयतीत्यर्थः । ४ तरन्तीवेतीवशब्दो भवाब्धेरनृतत्वात् त्वय्यम्बुजाक्षेत्यादिरीत्या वत्सपदायमानत्वाच्च ।

तत्र च ज्ञानेन तरन्तीति, तच्च तरन्तीवेति, तच्चात्मात्मतया ज्ञानेन, इत्यर्थत्रयं प्रतिज्ञातं क्रमेणोपपाद्यते । तत्रात्मानमेवात्मतयेत्यनेन श्लोकेन ज्ञानेन तरन्तीत्युपपाद्यते । अज्ञानसंज्ञावित्यनेन तरन्तीवेत्येतत् । त्वामित्यादिश्लोकद्वयेन त्वात्मात्मतयेत्येतदुपपाद्यते । ननु ज्ञानेन कथं भवं तरन्तीति तस्याज्ञानमूलत्वादित्याह—आत्मानमेवेति । तेनैवाज्ञानेनैव प्रपञ्चितं प्रपञ्चः । रज्ज्वामहेर्भोगभवाभवौ सर्पशरीरस्याध्यासापवादौ यथेति ॥ २५ ॥ ननु ज्ञानेन तरन्त्येव किमिदमुच्यते तरन्तीवेति तत्राह—अज्ञानसंज्ञाविति । अज्ञानेन संज्ञा ययोस्तौ भवबन्धमोक्षौ भवेन बन्धस्तन्मोक्षश्च तौ द्वौ नाम प्रसिद्धौ ऋतज्ज्ञभावात् ऋतश्चासौ ज्ञश्च यो भावस्तस्मादन्यौ न स्तः । ननु कथं महानपलापः क्रियते, परमार्थविचारादित्याह—अजस्रेति । अखण्डानुभवरूपे परे शुद्धे आत्मन्यज्ञानं नच बन्धः । अत एव न ज्ञानं न च मोक्षः । तरणौ सूर्ये रात्र्यहनी इवेति ॥ २६ ॥ ननु परमार्थज्ञानादज्ञानकृतो बन्धो निवर्तताम्, आत्मात्मतयैव ज्ञानादिति कोऽयमाग्रह इत्याशङ्क्य, यदध्यासादात्मनः पररूपास्फूर्तिस्तदपवादेन तत्रैव ज्ञानं युक्तमितीममर्थं विस्मयेनाक्रोशन्निवाह—त्वामिति । त्वामात्मानं परं देहादिं मत्वा

**आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम्॥ ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा॥२५॥अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात्॥अजस्रचिन्त्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी॥२६॥त्वामात्मानं परं मत्वा परमात्मानमेव च॥ आत्मा पुनर्बहिर्मृग्यं अहोऽज्ञजनताऽज्ञता॥२७॥ अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः॥असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यँन्ति सन्तः ॥२८॥ अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि॥जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन्॥२९॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चाम्॥ येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्॥**

आत्मनि देहादिमध्यस्य तथा परं देहादिमात्मानं मत्वा देहादावात्मानमध्यस्यात्र नष्ट आत्मा वहिर्मृग्य इति चित्रम् । नहि गृहे नष्टं वने मृग्यत इत्यर्थः ॥ २७ ॥ विवेकिनस्तु प्रत्यक्स्वरूपे एव परमात्मानं विचिन्वन्तीत्याह—अन्तर्भव इति । भवतीति भवश्चिज्जडात्मकं शरीरं तन्मध्य एव त्वां मृगयन्ति । अतज्जडं त्यजन्तोऽपवदन्तः । ननु सतो ज्ञानेनालं, किमसतोऽपवादेनेत्याशङ्क्य अध्यस्तापवादं विना अधिष्ठानतत्त्वं न ज्ञायत इति सतां व्यवहारेणाह—असन्तमिति । अन्ति समीपे असन्तमप्यहिमन्तरेण तन्निषेधं विनेत्यर्थः । सन्तं गुणं रज्जुं सन्तः किमु यन्ति जानन्ति । अन्ति सन्तमपि गुणमिति वा । न जानन्तीत्यर्थः । तस्मादात्मात्मतयैव ज्ञानान्मुक्तिरिति भावः ॥ २८ ॥ नन्वेवं ज्ञानैकसाध्ये मोक्षे किमिति भक्तिरुद्बोधिताऽत आह—अथापीति । यद्यपि हस्तप्राप्यमिव ज्ञानमुक्तं तथापि हे देव, तव पादाम्बुजद्वयमध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेनानुगृहीत एव भगवतस्तव महिम्नस्तत्त्वं जानाति । हे भगवन्, ते महिम्नस्तत्त्वमिति वा । एकोऽपि, कश्चिदपि, चिरमपि, विचिन्वन्नपि, अतदंशापवादेन विचारयन्नपीत्यर्थः ॥ २९ ॥ तत्तस्मात् भूरिभागो महद्भा-

१ अयमर्थ एकादशे—'भयं द्वितीयाभिनिवेशतः स्यात्' इति श्लोकटीकयोः स्पष्ट इति तोष० । २ सञ्ज्ञा प्रतीतिः । ३ ऋतोऽबाधितश्चासौ ज्ञश्चिदात्मकश्च साक्षी भावयति चेतयतीति भावः । परमार्थभूत आत्मा तस्मादन्यौ । ४ अहनीत्यस्य रात्र्यहनीत्यर्थो लिङ्गसमवायन्यायेनेति ज्ञेयम् । ५ मृग्य इत्यत्र ओत्वाभाव आर्षः । अहो इत्याश्चर्ये अज्ञजनतायाः अज्ञता, यद्वा ज्ञंमन्यजनतायाः ज्ञता इति वा केचन कल्पयन्ति । ६ अन्तर्भवे अस्य जगतो मध्ये सन्तो भवन्तमेव मृगयन्ति दोषहीनं गुणैः पूर्णं प्राप्तुं तेषां लालसा तादृशश्च भवानेवेत्यर्थ इति तोष० । ७ 'किमयन्ति' इति सुबोधिनीपाठः । ८ तिरश्चां मध्ये यज्जन्म तस्मिन्नन्यस्मिन्नित्यर्थः । ९ अतदंशस्य अपवादस्त्यागः ।

ग्यम् । अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन्वा येन भाग्येन भवदीयानां जनानामेकोऽपि यः कश्चिदपि भूत्वा निषेवेऽलर्थं सेवेयेति ॥३०॥ देवादिजन्मनोऽपि यत्र कुत्रचित्त्वद्भक्तिमज्जन्मैव श्रेष्ठमित्यौत्सुक्येन सप्तभिः श्लोकैरभिनन्दति—अहोऽतिधन्या इत्यादिभिः । व्रजगोरमण्यः व्रजस्था गावो रमण्यो गोप्यश्च । ते त्वया वत्सतरात्मजात्मना वत्सानामात्मजानां च रूपेण । यस्य तव तृप्तये सर्वेऽपि यज्ञा अद्यापि न शक्तास्तेन त्वया प्रतिक्षणं तृप्यता यासां स्तन्यममृतरूपं पीतमिति ॥३१॥ अहो इति पुनरुक्त्या भाग्यस्य सर्वथाऽपरिच्छिन्नत्वमुक्तम् ॥३२॥ किंच एषां भाग्यस्य तावन्महिमा आस्तां, कस्तं वक्तुं शक्नोति । शर्वादयः शर्वोऽहंकाराधिष्ठाता आदिर्येषां चन्द्रादीनामेकादशानां ते तथा वयं च । वयमित्यात्मानमेव बहुमन्यमान आह—एवं मनोबुद्ध्यहंकारचक्षुराद्यधिष्ठातारस्त्रयोदशदेवा एव तावद्वताऽहो भूरिभागाः । यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पानपात्राणि तैस्ते चतुर्दशस्य चित्ताधिष्ठातुरङ्घ्री एव उदजे वारिजे तयोर्मधु मकरन्दस्तदेवामृतं स्वाद्वासवं मादकं पिबामः । एतदुक्तं भवति—यदा प्रत्येकमिन्द्रियाभिमानिनो वयं कीर्तिसौन्दर्यसौगन्ध्याद्येकदेशसेविनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेविनामेतेषां किं वर्ण्यते भाग्यमिति ॥३३॥ अतो मया प्रार्थितं—'तदस्तु मे नाथ स भूरिभागः'(१४।२९)इति यत्तदेवेत्याह—तद्भूरिभा-

अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ॥ यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥३१॥ अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ॥ यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥३२॥ एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः ॥ एतद्धृषीकचषकैरसकृत्पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥३३॥ तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोभिषेकम् ॥ यज्जीवितं तु निखिलं भगवान्मुकुन्दस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥३४॥ एषां घोषनिवासिनामुत भवान् किं देव रातेति नश्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ॥ सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥३५॥

ग्यमिति । किं तत् इह मनुष्यलोके यत्किमपि जन्म, तत्राप्यटव्यां यत्, तत्रापि गोकुले यत् । अहो सत्यलोकं विहायात्र जन्मनि जाते को लाभोऽत आह—अपि कतमाङ्घ्रिरजोभिषेकमिति । गोकुलवासिनां मध्येऽपि कतमस्य यस्य कस्याप्यङ्घ्रिरजसाऽभिषेको यस्मिंस्तत् । ननु कुतो गोकुलवासिन एव धन्यास्तत्राह—यदिति । येषां जीवितं निखिलं भगवान्मुकुन्दः । मुकुन्दपरमेव जीवनमित्यर्थः । दुर्लभतामाह—अद्यापीति । श्रुतिमृग्यं वेदैरपि मृग्यत एव नतु दृश्यत इत्यर्थः ॥ ३४ ॥ अपि च किं वर्ण्यते कृतार्थत्वमेतेषां भक्त्या भवानपि ऋणीवास्ते । ननु किं दातुमसमर्थोऽहं येन ऋणी स्यामत आह—उत अपि भवानपि एषां कुत्रापि किं विश्वफलात्सर्वफलात्मकात्त्वत्त्वत्तः परं फलं राता दास्यतीति नश्चेतः अयत्सर्वत्र गच्छद्विचारयत् मुह्यति । ननु मामेव दत्त्वाऽनृणः स्यामिति चेन्नहि नहि । सद्वेषादिव सतां भक्तानां यो वेषस्तदनुकरणमात्रेण पापिष्ठा पूतनापि त्वामेवापिता प्रापिता तर्हि तत्संबन्धिनामपि दास्यामीति चेत्तत्राह—सकुलेति बकाघासुरसहिता । एषामपि तावदेव चेदपर्याप्तमित्याह—यदिति । येषां धामादयस्त्वत्कृते त्वदर्थमेवेत्यर्थः ॥ ३५ ॥

१ अतद्गुणसंविज्ञानो बहुव्रीहिः । २—अहङ्कारस्याधिष्ठाता शिवः १बुद्धेर्ब्रह्मा २मनसश्चन्द्रः ३श्रोत्रयोर्दिशः ४त्वचो वातः ५ चक्षुषोरर्कः ६ रसनाया वरुणः ७नासयोरेकत्वेन विवक्षितावश्विनौ ८ वाचो वह्निः ९हस्तयोरिन्द्रः १०पादयोरुपेन्द्रः ११ पायोर्मित्रः १२उपस्थस्य प्रजापतिः १३इति त्रयोदश।३एतेषां व्रजवासिनाम्। ४'उताप्यय नालमध्वराः' इति पाठः। ५आनन्दस्य छान्दसदीर्घत्वेन आनन्दं ब्रह्मेति श्रुतिवाच्यं सूच्यते।६'भाग्यमहिता'इति तोषणीपाठः। ७ एते च ते हृषीकचषकाश्चेत्येकं पदं वा। ८अमृता मृत्युहीना मुक्तानामपि मादकमिति वा। ९ अयत् गच्छत् गाधिणः शता।

नतु वीतरागादिदोषाणां संन्यासिनामपि न मत्तः परं किंचिदस्ति कथमेषामपर्याप्तमित्यत आह—तावदिति । हे कृष्ण, रागादयस्तावदेव स्तेनाश्चोरा भवन्ति । तथा तावद्गृहमपि कारागृहं बन्धनागारम् । मोहोऽपि तावदेवाङ्घ्रिनिगडः पादशृङ्खला । यावत्ते त्वदीया जना न भवन्ति । त्वदीयानां तु रागादयोऽपि त्वन्निष्ठा मोचका एवेति न यतिभ्यो विशेषो भजनं त्वधिकमिति भावः ॥ ३६ ॥ नन्वत एवाहमेषां पुत्रादिरूपेण वर्त इति चेत्तत्राह—प्रपञ्चमिति । प्रपन्ना या जनता जनसमूहस्तस्या आनन्दानां संदोहं समूहं प्रथयितुमिति । नहि कपटपुत्रत्वादिना तादृग्भक्तेरानृण्यं संपद्यत इत्यर्थः ॥ ३७ ॥ तदेवमादित आरभ्याचिन्त्यानन्तगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्तम्, केचित्तु जानीम इति स्थितास्तानुपहसन्निवाह—जानन्त इति । ननु मे मनआदीनां तव वैभवं विषय इति ॥ ३८ ॥ जगदीशत्वाद्यभिमानं परित्यज्याह—अनुजानीहीति । स्वमहिमानमस्मदादीनां च ज्ञानबलादि सर्वं त्वमेव वेत्सि । यतः सर्वदृक् जगतां

तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥ तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जनाः ॥३६॥ प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले ॥ प्रपन्नजनतानन्दसंदोहं प्रथितुं प्रभो ॥ ३७ ॥ जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ॥ मनसो वपुषो वाचो वैभवं तव गोचरः ॥ ३८ ॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् ॥ त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥ ३९ ॥ श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ॥ उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ॥ ४० ॥ ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः ॥ नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥ ४१ ॥ ततोऽनुज्ञाप्य भगवान्स्वभुवं प्रागवस्थितान् ॥ वत्सान्पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥ ४२ ॥ ॥ ॥ ॥

नाथस्तु त्वमेवेत्येतावज्ज्ञातम्, अतो ममतास्पदं जगदेतच्छरीरं च तवार्पितम् ॥ ३९ ॥ तदेवं किङ्करं प्रस्थापयेत्यत्यादरेण नमस्करोति—श्रीकृष्णेति । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन हे सूर्योपम । क्ष्मा चावनिर्निर्जरा देवाश्च द्विजाश्च पशवश्च त एवोदधयस्तेषां वृद्धिकारित्वेन हे चन्द्रोपम । उद्धर्मः पाखण्डधर्मस्तदेव शार्वरं तमस्तद्धरतीति तथा, अनेन द्वयोपम । हे क्षितिराक्षसध्रुक् क्षितौ राक्षसाः कंसादयः उद्यन्नेव तेभ्यो द्रुह्यतीति पुनः सूर्योपम । सूर्याद्युपमापि न्यूनेति मत्वाह—आर्कमर्कमभिव्याप्य सर्वेषामर्हन् पूज्य भगवन्, आकल्पं कल्पपर्यन्तं ते तुभ्यं नम इति ॥ ४० ॥ ससखिवत्सकमोक्षणकौतुकद्रुतविलम्बितपुत्रमुदेऽद्भुतम् ॥ निखिलरूपमतो दधदच्युतोऽवतु स वः कलयन् व्रजमङ्गलम् ॥ १ ॥ पादयोर्नत्वा । अभीष्टं सर्वतः पूजितमभिप्रेतं वा ॥ ४१ ॥ अनुज्ञाप्यानुज्ञां प्रदाप्य, पृष्ट्वेत्यर्थः । स्वभुवं ब्रह्माणम् । यथापूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनम् ॥ ४२ ॥ ॥ ॥ ॥ ॥

१ रागादयः स्वाभाविकभोजनेच्छादयः । २ प्रत्यक्षे दृष्टादिरूपमपि तव वैभवं मे मनसो न गोचरः, वपुषश्चक्षुरादिगोलकस्य न, अत एव न वाचः । तस्मान्नौमीत्यादौ प्रार्थितमेव प्रार्थये इति भावः । ३ अनुजानीहि सत्यलोकं गन्तुमनुज्ञां देहि । ४ यद्वा आ आकल्पं त्वदीयगुञ्जावतंसबर्हापीडादिभूषणमभिव्याप्येति तोष० । ५ अत्र समासान्त आर्षः । यद्वा यथावदेव स्थिताः पूर्वसखाः स्वरूपभूतसखेभ्यः पूर्वे सखायो यत्र तत् । 'यथापूर्वसखि' इति पाठः ।

नन्वेतावन्तं कालं कथं तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमत आह—एकस्मिन्निति श्लोकद्वयेन । अब्देऽपि याते प्राणेशं कृष्णमन्तरा च विनापि । प्रियविरहे क्षणोऽपि वर्षाधिको भवति, तथापि मायाहताः क्षणार्धं मेनिरे ॥४३॥ यद्वया मायया मोहितं जगदभीक्ष्णं पुनःपुनर्विस्मृतात्मकं विस्मृत आत्मैव येन तत्तथा ॥४४॥ अत एवमूचुश्च—ते त्वयाऽतिवेगेन स्वागतं सम्यगागतम् । एकोऽपि ग्रासस्त्वां विनास्माभिर्नाभोजि न भुक्तः । इत एहि, साधु अविक्षेपेण भुज्यतामिति ॥ ४५ ॥ अभ्यवहृत्य भुक्त्वा ॥ ४६ ॥ प्रोद्दामो वेण्वादिस्तस्य रवैरुत्सवस्तेनाढ्यः संपन्नः । गृणन्नुपलालनैराह्वयन् । गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ॥ ४७ ॥ यशोदानन्दसूनुनेति बहूनामुक्तिः सहैव दर्शिता, केचिदाहुर्यशोदासूनुना अपरे नन्दसूनुनेति । यद्वा यशोदां नन्दयतीति यशोदानन्दः स चासौ सूनुश्चेति तथा तेन । अस्मान्महाव्यालाद्वयं चाविता रक्षिताः ॥४८॥ 'व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम् ॥ शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥' इत्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं तत्र पृच्छति—ब्रह्मन्निति ॥ ४९ ॥ श्रीकृष्णस्य साक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमं तावदात्मनः स्वतः प्रेष्ठत्वमन्येषां तु तदुपाधिकमिति दर्शयति पञ्चभिः—सर्वेषामपीति ॥ ५० ॥ कुतः । तथादर्शनादित्याह—तदिति । तस्मादेव कारणात्स्वस्वकात्मन्यहंकारास्पदे देहे ॥ ५१ ॥ आत्माध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानं तन्निबन्धनमेवेति दर्शयितुं मूढामूढभेदेन विशेषमाह—देहात्मवादिनामिति द्वाभ्याम् । तं देहमनु भवन्ति ये पुत्रादयस्ते तु न तथा प्रियतमा इत्यर्थः ॥ ५२ ॥ ॥ ॥

एकस्मिन्नपि यातेऽब्दे प्राणेशं[1] चान्तरात्मनः ॥ कृष्णमायाहता राजन् क्षणार्धं मेनिरेऽर्भकाः ॥ ४३ ॥ किं किं न विस्मरन्तीह मायामोहितचेतसः ॥ यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥ ४४ ॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा ॥ नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥ ४५ ॥ ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥ दर्शयंश्चर्माजगरं न्यवर्तत[2] वनाद्व्रजम् ॥ ४६ ॥ बर्हप्रसूननवधातुविचित्रिताङ्गः प्रोद्दामवेणुदल[3]शृङ्गरवोत्सवाढ्यः ॥ वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥ ४७ ॥ अद्यानेन महाव्यालो यशोदानन्दसूनुना ॥ हतोऽविता वयं चास्मादिति बाला व्रजे जगुः ॥ ४८ ॥ ॥ राजोवाच ॥ ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् ॥ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥४९॥ ॥ श्रीशुक उवाच ॥ सर्वेषामपि भूतानां नृप स्वात्मैव[4] वल्लभः ॥ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ ५० ॥ तद्राजेन्द्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् ॥ न तथा ममताल[5]म्बि पुत्रवित्तगृहादिषु ॥ ५१ ॥ देहात्मवादिनां पुंसामपि राजन्यसत्तम ॥ यथा देहः प्रियतमस्तथा नह्यनु ये च तम् ॥ ५२ ॥ ॥ ॥ ॥

१ आत्मनः प्राणेशमित्यन्वयः । २ 'निववर्त' इति पाठः । ३ 'आध्मातवेणु' इति वीर० पाठः । ४ स्वात्मेति देहदेह्यविवेकेन अहन्तास्पदमुच्यते । 'स्वात्मैकवल्लभः' इति पाठः ।
५ ममतालम्बीति पद्यवर्थेन व्यवधानान्न्यूनतौचित्यमिति तोष० ।

यद्यस्माज्जीर्यत्यप्यासन्नमरणेऽपि जीविताशा भवति । अयं भावः । न जीविष्यतीति निश्चितेऽपि देहे यत्प्रेमास्पदत्वं तदात्मगतमेव सङ्क्रान्तमिति । अथवा यद्यस्मिन्देहे जीर्यत्यपि जीविताशा अविवेकदशायामासीत्सापि विवेकिनो यदा ममताभाग्भवति तदात्मवत्प्रियो न भवति, अतस्तत्र नातीवास्थेति ॥५३॥ तदर्थमेव सकलं प्रियमित्यर्थः ॥५४॥ प्रस्तुतमाह—कृष्णमेनमिति ॥५५॥ न केवलमात्मनामात्मा, अपि तु जडानामपीत्याह—वस्तुत इति । सर्वजगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जङ्गमं च सर्वं भगवद्रूपं भगवानेव स्वरूपं यस्य तन्नान्यत् ॥ ५६ ॥ कुत इति तदाह—सर्वेषामिति । भावार्थः परमार्थः । भवतीति भवत्परिणामं प्राप्नुवत्कारणं तस्मिन् । तस्यापि भवतः कारणस्यापि भवान्कृष्णो भवत्कारणम् । अतः किमतत् श्रीकृष्णव्यतिरिक्तं वस्तु रूप्यताम् ॥ ५७ ॥ तस्माच्छ्रीकृष्णस्यैव परमार्थत्वात्तदेकशरणानामयत्नसिद्धो मोक्ष इति प्रकरणार्थमुपसंहरति—समाश्रिता इति। पुण्यं यशो यस्य स पुण्ययशाः स चासौ मुरारिश्च

देहोऽपि ममताभाक्चेत्तर्ह्यसौ नात्मवत्प्रियः ॥ यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ॥५३॥ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ॥ तदर्थमेव सकलं जगदेतच्चराचरम्[2] ॥ ५४ ॥ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ॥ जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥ ५५ ॥ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ॥ भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ॥५६॥ सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ॥ तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ॥५७॥ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः ॥ भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम् ॥५८॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ यत्कौमारे[3] हरिकृतं पौगण्डे परिकीर्तितम् ॥५९॥ एतत्सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च ॥ व्यक्तेतरद्रूपमजोर्वभिष्टवं शृण्वन् गृणन्नेति नरोऽखिलार्थान् ॥६०॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥६१॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥

तस्य पदपल्लव एव प्लवस्तं ये सम्यगाश्रिताः । महत्पदं महतां पदमाश्रयम् । यद्वा महच्च तत्पदं चेति तथा । तेषां भवाम्बुधिर्वत्सपदमात्रं भवति । किंच परं पदं श्रीवैकुण्ठाख्यं पदं स्थानं भवति। विपदां यत्पदं विपयस्तत्पुनः कदाचिदपि तेषां न भवति । न ततः पुनरावर्तन्त इत्यर्थः ॥५८॥५९॥ सुहृद्भिश्चरितं 'मुष्णन्तोऽन्योन्यशिक्यादीन्' इत्यादिनोक्तम् । अघार्दनं च शाद्वले जेमनं भोजनं च । व्यक्तेतरत् व्यक्ताज्जडप्रपञ्चादितरच्छुद्धसत्त्वात्मकं वत्सवत्सपालरूपम्। यद्वा व्यक्तेतरच्चिद्विलासस्तद्रूप्यत इति रूपम् । अजस्य उरुर्महानभिष्टवः स्तवस्तं ब्रह्मकृतां स्तुतिम् । एतच्छृण्वन्गृणन्गायन्नरः सर्वपुरुषार्थान्प्राप्नोति ॥ ६० ॥ ६१ ॥ इति श्रीपरमानन्दनृसिंहपदपद्मपदः ॥ व्याकरोच्छ्रीधरस्वामी यथामति विधिस्तुतिम् ॥१॥ इति श्रीमद्भा०म०पु० दशमस्कन्धे पू०भा०दी०टीकायां चतुर्दशोऽध्यायः ॥१४॥

१ तदैवैकं पारमार्थिकं नान्यत्किमपीत्यर्थः । २ चरं देहापत्यादि, अचरं गृहादि । 'जगच्चैतत्' इति पाठः । ३ कौमारे कृतं पौगण्डे कीर्तितमिति यत्तत् यत्पृष्टोहं तदेतदाख्यातम् ।
४ अस्मिन्पक्षे 'आन्महतः' इत्यात्वाकरणाच्छान्दसत्वं पूर्वोक्तार्थेनैव प्रयोगसामञ्जस्ये छान्दसत्वकल्पनमन्याय्यमिव प्रतीयते इति तोप० ।

ततः पञ्चदशे धेनुपालनं धेनुकार्दनम् ॥ कालियक्ष्वेडतो गोपरक्षणं च निरूप्यते ॥ १ ॥ अहिवक्त्रप्रवेशेन वृथा खिन्नान्सखीनतः ॥ कृष्णः प्रावेशयत्पक्कफलं तालालिकाननम् ॥ २ ॥ पशुपालसंमतौ पशुपालने संमतौ, पशुपालानां वा संमतौ । ईषद्वयोवलातिरेकमनुक्तवन्तावित्यर्थः । अतीव चक्रतुः सर्वतः प्रसर्पणेन ॥ १ ॥ स्वयशोगृणद्भिर्गोपैर्वृतस्तद्वनं प्राविशत् ॥ २ ॥ तद्वनं निरीक्ष्य रन्तुं मनो दधे । कथंभूतम् । मञ्जुघोषा येऽलिमृगद्विजा भ्रमरमृगपक्षिणस्तैराकुलं व्याप्तं महन्मनःप्रख्यपयःसरस्वता महतां मनसा प्रख्यं तुल्यं स्वच्छं पयो यस्मिंस्तत्सर आश्रयत्वेनास्ति यस्य तेन वातेनेति शैत्यमुक्तम् । शतपत्रगन्धिनेति परिमलवत्त्वम् । जुष्टं वनमिति मान्द्यं सूचितम् ॥ ३ ॥ अरुणपल्लवश्रिया सह । स्पृशन्त्यः शिखाः शाखाग्राणि येषां तान् ॥ ४ ॥ तरुजन्म येन तमसा

॥ श्रीशुक उवाच ॥ ततश्च पौगण्डवयःश्रितौ व्रजे बभूवतुस्तौ पशुपालसंमतौ ॥ गाश्चारयन्तौ सखिभिः समं पदैर्वृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥ तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ॥ पशून्पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥ तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनःप्रख्यपयः सरस्वता ॥ वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान्मनो दधे ॥ ३ ॥ स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ॥ स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥ ४ ॥ ॥ श्रीभगवानुवाच ॥ अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ॥ नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥ एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते ॥ प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६ ॥ नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ॥ सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ॥ नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ ८ ॥ ॥ ॥ ॥

कृतं तस्य तमसः पापस्यापहत्यै नाशाय । अथवा येन त्वयेश्वरेण सर्वोपकारकं तरुजन्म कृतं तं त्वां नमन्ति । एवं श्लाघ्येऽपि जन्मनि यदज्ञानरूपं तमोऽस्ति तस्यापहत्यै ॥ ५ ॥ हेऽनघ, वने गूढमपि त्वां न त्यजन्ति । त्वयि मनुष्यवेषेण निगूढे सति मुनयोऽप्यलिवेषेण निगूढास्त्वां भजन्तीत्यर्थः ॥ ६ ॥ इयान् हि सतां निसर्ग इति । यदस्ति स्वस्मिंस्तद्गृहमागताय महते महापुरुषाय समर्पयन्तीति ॥ ७ ॥ तृणवीरुधश्च तव पादौ स्पृशन्तीति तथा । करजाभिमृष्टा नखैः स्पृष्टाः । सदयैरवलोकनैः । श्रीरपि यस्मै स्पृहयति केवलं तेन भुजयोरन्तरेण वक्षसा गोप्यो धन्या इति ॥ ८ ॥ ॥ ॥

१ 'पोगण्डः पञ्चमादब्दादर्वाक् च दशमाब्दतः ।' ( मनु० ८ । १४८ ), 'बाल आषोडशाद्वर्षात्पोगण्डश्चापि सज्ञितः ।' ( नारद० ) । २ स्वच्छपय ' इति पाठ. । ३ तत्र तत्रेति सर्वत्रैवेत्यर्थः । ४ सुमनःफलरूपमर्हणमुपायनमुपादायेत्यन्वयः । ५ प्रायो अमीत्यत्र पूर्वरूपाकरणमार्षम् । ६ प्रियं कुर्वन्तीत्यन्वयः । ७ गृहागत त्वा समानयितुम् । ८ यद्वा आत्मनः स्वस्य यत्तमः त्वदप्राप्तिदुःखं तन्नाशाय यैस्तरुजन्म प्राप्तमिति तोष० ।

एवं श्रीमद्वृन्दावनं प्रति प्रीतः सन्नद्रेः समीपवर्तिसरित्तटेषु पशून्संचारयन्सानुगो गोपैः सह वर्तमानः प्रीतमना रेमे ॥ ९ ॥ तामेव रतिमाह—क्वचिदित्यादि-
दशभिः ॥ १० ॥ बर्हिणं नृत्यन्तमनु अभिनृत्यति । बर्हिणमभिमुखो नृत्यतीति वा । सखीन्हासयन् ॥ ११ ॥ १२ ॥ चकोरादीननुकृत्य रौति । कदाचिच्च
सत्त्वानां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्द्रवति । सत्त्वेषु पलायमानेषु पलायत इत्यर्थः । तयोः सत्त्वानां बलोद्रेकाणां भीतवद्द्रवतीति वा ॥ १३ ॥

॥ श्रीशुक उवाच ॥ एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥ रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥९॥ क्वचि-
द्गायति गायत्सु मदान्धालिष्वनुव्रतैः[2] ॥ उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥ १० ॥ क्वचिच्च[3] कलहंसानामनुकू-
जति कूजितम् ॥ अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥ ११ ॥ मेघ[4]गम्भीरया वाचा[5] नामभिर्दूरगान्पशून् ॥
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ १२ ॥ चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥ अनुरौति स्म सत्त्वानां[1]
भीतवद्व्याघ्रसिंहयोः ॥ १३ ॥ क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् ॥ स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः
॥ १४ ॥ नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ॥ गृहीतहस्तौ गोपालान्हसंतौ प्रशशंसतुः ॥ १५ ॥ क्वचित्प-
ल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ १६ ॥ पादसंवाहनं चक्रुः केचित्तस्य महा-
त्मनः ॥ अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १७ ॥ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ॥ गायन्ति स्म
महाराज स्नेहक्लिन्नधियः शनैः ॥ १८ ॥ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ॥ रेमे रमा-
लालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥ १९ ॥ श्रीदामा नाम गोपालो रामकेशवयोः सखा ॥ सुबल-
स्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ २० ॥ राम राम महाबाहो कृष्ण दुष्टनिबर्हण ॥ इतोऽविदूरे सुमहद्वनं ताला-
लिसंकुलम् ॥ २१ ॥ फलानि तत्र भूरीणि पतन्ति पतितानि च ॥ सन्ति किंत्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥
सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् ॥ आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥ ॥

आर्यमग्रजम् । विश्रमयति विगतश्रमं करोति ॥ १४ ॥ मिथो नृत्यादीन्कुर्वतो गोपान्प्रशशंसतुः ॥ १५ ॥ १६ ॥ व्यजनैः पल्लवादिनिर्मितैः ॥ १७ ॥ १८ ॥
ईशचेष्टित इति निगूढस्वभावत्वेऽप्यन्तरान्तरा[6] ईशस्यैव चेष्टितानि दृश्यन्तेऽस्मिन्सः ॥ १९ ॥ ईशचेष्टितत्वमेव दर्शयितुमाह—श्रीदामेति । स्तोककृष्णः क्वचित्
॥ २० ॥ तालालिसंकुलं तालपङ्क्तिभिर्व्याप्तम् ॥ २१ ॥ २२ ॥ २३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ सत्त्वानामिति तृतीयार्थे षष्ठी । २ अनुव्रतैः प्रीतिपरैर्गोपैः । ३ अत्र—'अनुजल्पति जल्पन्तं कलवाक्यैः शुकं क्वचित् । क्वचित्सवल्गु कूजन्तमनुकूजितकोकिलम्' । इति श्लोकः तोषण्यामधिकः । ४ मेघेति तद्गर्जितं लक्ष्यते । ५ वाचो विशेषणम् । ६ असुरहननादिसमये ।

॥ २४ ॥ विपूचीनः सर्वतः प्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ सनगं सवृक्षम् ॥ २९ ॥ प्रत्यग्द्वाभ्यां पश्चिमाभ्याम् । काशब्दमिति गर्दभजातिशब्दानुकरणम् । पर्यसरत्परितोऽधावदित्यर्थः ॥ ३० ॥ उपक्रोष्टा गर्दभः । पराक् प्रतिमुखः । अपरौ पश्चिमौ । बलाय बलं हन्तुम् ॥ ३१ ॥ तृणराजस्तालः ॥ ३२ ॥ ॥ ३३ ॥ उत्सृष्टेन खरदेहेन हतैराहताः । चकम्पिरे अकम्पन्त ॥ ३४ ॥ यस्मिन्निदं विश्वमोतमूर्ध्वतन्तुषु पट इव ग्रथितम्, प्रोतं तिर्यक्तन्तुषु पटवदेव

तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ॥ न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥ विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ॥ एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥ प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् ॥ वाञ्छास्ति महती राम गम्यतां यदि रोचते ॥२६॥ एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ॥ प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥ बलः प्रविश्य बाहुभ्यां तालान्संपरिकम्पयन् ॥ फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥ फलानां पततां शब्दं निशम्यासुररासभः ॥ अभ्यधावत्क्षितितलं सनगं परिकम्पयन् ॥ २९ ॥ समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली ॥ निहत्योरसि काशब्दं मुञ्चन्पर्यसरत्खलः ॥३०॥ पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ॥ चरणावपरौ राजन्बलाय प्राक्षिपद्रुषा ॥ ३१ ॥ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ॥ चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥ तेनाहतो महातालो वेपमानो बृहच्छिराः ॥ पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥३३॥ बलस्य लीलयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥ नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ॥ ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ॥ क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥ तांस्तानापततः कृष्णो रामश्च नृप लीलया ॥ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ॥ ३७ ॥ फलप्रकरसंकीर्णं दैत्यदेहैर्गतासुभिः ॥ रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥ तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ॥ मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥ ॥ ॥

संग्रथितम् । सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ घनैर्नभ इव भुवस्तलं रराज । तत्र फलप्रकरसंकीर्णमिति दैत्यदेहैश्च सतालाग्रैः संकीर्णमित्यरुणश्वेतनीलघनसादृश्यसंपादनम् ॥ ३८ ॥ ३९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ काशब्दं कुत्सितशब्दं । आर्षः कादेशः । २ नृभिरित्यस्य अभुक्तपूर्वाणीत्यनेनान्वयः । ३ चतुर्थ्यर्थेयं षष्ठी । ४ उपक्रोष्टा निकटे काशब्दं कुर्वन् । ५ 'महाशिराः' इति पाठः । ६ 'सकीर्णा' इति पाठः । ७ भूरित्यव्ययम् । छान्दसः पष्ठ्या लुग्वा । यद्वा सुपां सुलुगिति छान्दसः सुः । किं वा सतालाग्रैर्दैत्यदेहैरुपलक्षिता भूः फलप्रकरसंकीर्णे यथा तथा रराजेति तोप० । ८ नभस्तलमित्यत्र नभः तलमिति पदद्वयम् । ९ 'तयोस्तु सुमहत्' इति पाठः । १० वाद्यं गीतनृत्योपलक्षकम् ।

रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च । दिदृक्षि-
आदन्नभक्षयन् ॥ ४० ॥ ४१ ॥ गोरजोभिश्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य । रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च । दिदृक्षि-
तदृशो दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः ॥ ४२ ॥ मुकुन्दस्य मुखपद्मगतं सारघं मधु । अह्नि यो विरहस्तस्माज्जातं तापम् । स च तासां सत्कृतिं
पूजाम् । कां सत्कृतिं कथं वा कृतां तामाह—सव्रीडेति । सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यदेतत् । किं तत् । अपाङ्गमोक्षं कटाक्षदर्शनम् ।

अथ तालफलान्यादन्मनुष्या[1] गतसाध्वसाः ॥ तृणं च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥ कृष्णः कमलपत्राक्षः
पुण्यश्रवणकीर्तनः ॥ स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥ तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्र-
सूनरुचिरेक्षणचारुहासम् ॥ वेणुं क्वणन्तमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः ॥४२॥ पीत्वा
मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ॥ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहास-
विनयं यदपाङ्गमोक्षम् ॥ ४३ ॥ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ॥ यथाकामं यथाकालं व्यधत्तां परमा-
शिषः ॥४४॥ गताध्वानश्रमौ[2] तत्र मज्जनोन्मर्दनादिभिः ॥ नीवीं[3] वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ॥ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥ एवं स भगवान्कृष्णो
वृन्दावनचरः क्वचित् ॥ ययौ राममृते राजन्कालिन्दीं सखिभिर्वृतः ॥४७॥ अथ गावश्च गोपाश्च निदाघातपपी-
डिताः ॥ दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥ विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः[4] ॥ निपेतुर्व्य-
सवः सर्वे सलिलान्ते कुरूद्वह ॥४९॥ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः ॥ ईक्षयाऽमृतवर्षिण्या स्वना-
थान्समजीवयत् ॥ ५० ॥ ते संप्रतीतस्मृतयः समुत्थाय जलान्तिकात् ॥ आसन्सुविस्मिताः सर्वे वीक्षमाणाः पर-
स्परम् ॥ ५१ ॥ अन्वमंसत[5] तद्राजन् गोविन्दानुग्रहेक्षितम् ॥ पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥
॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे धेनुकवधो नाम पञ्चदशोऽध्यायः ॥ १५ ॥ ॥छ॥ ॥

तथा तां सत्कृतिं प्राप्येति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ संप्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते संप्रतीतस्मृतयः ।
यद्वा सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथेति ॥ ५१ ॥ ५२ ॥ ॥ इति श्रीमद्भा०म०पु० दशमस्कन्धे पू० भा० दी० टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

१ मनुष्या इत्यन्येऽपि नरा इत्यर्थः । २ अध्वानेत्यार्षम् । यद्वा न श्रमोऽश्रमः, स न भवतीत्यनश्रमः । श्रम इत्यर्थः । द्वयोर्नञोः अकृतार्थबोधकत्वात् गताध्वश्रमावित्यर्थ इति चक्रवर्ती व्याचख्यौ । ३ नीवीं लक्षणया वस्त्रम् । ४ दैवो भगवान् तस्येदं दैवं लीलाशक्तिवैभवं तेन हृतज्ञाना इति तोष० । ५ अन्वमंसत अनुमितवन्तः ।

पोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे ॥ तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥ १ ॥ हत्वा रासभदैतेयान् जग्ध्वा तालफलान्यलम् ॥ प्रीतोऽनृत्यत्फणारङ्गे कालियस्य कलानिधिः ॥ २ ॥ उदवासयन्निःसारितवान् ॥ १ ॥ वहूनि युगान्यावासो यस्य तमहिम् । स वै अहिरजलचरोऽपि तस्मिन्नन्तर्जले यथा येन प्रकारेणासीत् । अथवा वहूनि युगान्यावासो यथा भवति तथा येन प्रकारेण स वै तत्रासीदिति कथ्यतामिति ॥ २ ॥ गोपालेन यदुदारं चरितमाचरितं तदेवामृतम् । अतः कथ्यतामिति ॥ ३ ॥ श्रप्यमाणं पच्यमानं पयो यस्य सः । अत उपरि गच्छन्तः खगा यस्मिन्पतन्ति ॥ ४ ॥ किंच विप्रुष्मता अम्बुकणयुक्तेन विपोदतरङ्गस्पर्शिमारुतेन स्पृष्टा यस्य तीरगा म्रियन्ते स ह्रद आसीदिति ॥ ५ ॥ तं कालियम् । चण्डो वेगो यस्य तद्विपमेव वीर्यं यस्य तम् ।

॥ श्रीशुक उवाच ॥ विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ॥ तस्या विशुद्धिमन्विच्छन्सर्पं तमुदवासयत्
॥ १ ॥ राजोवाच ॥ कथमन्तर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ॥ स वै वहुयुगावासं यथासीद्विप्र कथ्यताम् ॥२॥
ब्रह्मन्भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः ॥ गोपालोदारचरितं कस्तृप्येतामृतं जुषन् ॥ ३ ॥ ॥ श्रीशुक उवाच ॥
कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ॥ श्रप्यमाणपया यस्मिन्पतन्त्युपरिगाः खगाः ॥४॥ विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ॥ म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥५॥ तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां
नदीं च खलसंयमनावतारः ॥ कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥६॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बुराशिः ॥ पर्यक् प्लुतो विषकषायविभीषणोर्मिर्धावन्धनुःशतमनन्तवलस्य किं तत् ॥७॥ तस्य ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य ॥ आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥८॥ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् ॥ क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं संदश्य मर्मसु रुषा भुजया चछाद ॥ ९ ॥ ॥ ॥

कदम्बमिति । भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकस्तत्तीरे न शुष्कः । अमृतमाहरता गरुत्मता क्रान्तत्वादिति च पुराणान्तरम् । आस्फोट्य वाहुं करतलेनाहत्य । गाढा दृढं वद्धा रशना कटिवन्धनवस्त्रं येन सः ॥ ६ ॥ तदा सर्पस्य ह्रदः । पुरुषश्रेष्ठस्य पतनभारेण संक्षोभितानामुरगाणां विषैरुन्नतोऽम्बुराशिर्यस्य सः । विषेण कषायीकृता भयंकरा ऊर्मयो यस्य सः । पर्यक् परितो धावन् धनुःशतं प्लुतः प्रसृतः । नैतच्चित्रमित्याह—अनन्तवलस्येति ॥ ७ ॥ ह्रदे विहरतो भुजदण्डाहतोदकघोषं श्रुत्वा ततः स्वसदनाभिभवं निरीक्ष्य तदसहमानः सर्पः समसरत् समाजगाम ॥ ८ ॥ प्रेक्षणीयश्च सुकुमारश्च घनवदुज्ज्वलश्च तम् । श्रीवत्सपीतवसनं ह्रदे विहरतः श्रीवत्सेन संयुक्तमुच्चलत्पीतं वस्त्रं यस्य तम् । भुजया भोगेन चछादावेष्टयत् ॥ ९ ॥ ॥ ॥

१ गोपालरूपेणेत्यर्थः । २ कृष्णा वर्णतो नामतश्च । ३ 'रशनोऽभ्यपतत्' इति पाठः । ४ चतुर्हस्तं धनुर्मतमिति तोष० । ५ अनन्तं वलं वस्य । यद्वा अनन्तस्य शेषस्य विषादिवलं यस्मात् । ६ प्रथमतच्छन्दस्यायमर्थः । ७ तद्घोषाभिभवरूपमुभयम् । तत्तमिति चक्रवर्ती । ८ ह्रदयस्थश्रीवत्ससंयोगस्योज्वलनमन्तराऽसंभवादुच्चलदित्युक्तम् ।

स प्रियो येषां ते तत्प्रियास्ते च ते सखायश्चेति तथा ॥ १० ॥ ११ ॥ भुवि भूकम्पादयः । दिवि उल्कापाताद्यः । आत्मनि वामनेत्रस्फुरणाद्यः । आसन्नं भयं शंसितुं शीलं येषां ते ॥ १२ ॥ तानालक्ष्य गोकुलान्निर्जग्मुरिति तृतीयेनान्वयः । भयोद्विग्ना भयहेतुभ्यो भीताः । भयेन कम्पमाना इति वा ॥ १३ ॥ न तं विदन्तीत्यतद्विदः ॥ १४ ॥ पशुवृत्तयोऽतिवत्सलाः ॥ १५ ॥ कातरान् भीतान् ॥ १६ ॥ भगवन्तं लक्षयन्ति यानि पदानि तैः पदैः सूचितया पदव्या

तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ॥ कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥ १० ॥ गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः ॥ कृष्णे न्यस्तेक्षणा भीता रुदत्य इव तस्थिरे ॥ ११ ॥ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः ॥ उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥ १२ ॥ तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः ॥ विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ १३ ॥ तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ॥ १४ ॥ आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥ १५ ॥ तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः ॥ प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ १६ ॥ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ॥ भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥ १७ ॥ ते तत्र तत्राब्जयवाङ्कुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ॥ मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः ॥ १८ ॥ अन्तर्ह्रदे भुजगभोगपरीतमारात्कृष्णं निरीहमुपलभ्य जलाशयान्ते ॥ गोपांश्च मूढधिषणान्परितः पशूंश्च संक्रन्दतः परमकश्मलमापुरार्ताः ॥ १९ ॥ गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ॥ ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥ २० ॥ ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ॥ तास्ता व्रजप्रियकथाः कथयन्त्य आसन्कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥ २१ ॥ कृष्णप्राणान्निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम् ॥ प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् ॥ २२ ॥ ॥

मार्गेण ॥ १७ ॥ पदैर्मार्गज्ञानप्रकारमाह—त इति । विश्पतेः श्रीकृष्णस्यान्येषां पदानामन्तरान्तरे मध्ये मध्ये तत्तदपोहेन । गवां श्रुतीनां मार्गे सत्वरा अप्रमत्ता योगिनस्तत्तदुपाध्यपवादेन यथा परं तत्त्वं मृगयन्ते तद्वदिति भावः ॥ १८ ॥ ततश्च सर्पशरीरवेष्टितं कृष्णं दूरान्निरीक्ष्य गोपांश्च पशूंश्च तथा निरीक्ष्य, आर्ताः परमकश्मलं परं मोहं आपुः ॥ १९ ॥ प्रियेण श्रीकृष्णेन व्यतिहृतं विरहितं त्रैलोक्यं शून्यं ददृशुः ॥ २० ॥ २१ ॥ २२ ॥ ॥ ॥

१ पशुवृत्तित्वेन पशुस्वभावभाविताः । २ अन्वेषमाणा अन्विच्छन्तः । ३ अनुप्रविष्टां तदेकचित्तां विस्मृतस्वरूपामित्यर्थः । ४ समनुगृह्य करे धृत्वा । ५ शुचोऽश्रूणि । ६ विशो वैश्या गोपास्तत्पतेः कृष्णस्य ।

अनन्यगतिमात्मानमित्थं निरीक्ष्यात एवात्महेतोः खगोकुलमतिदुःखितमाज्ञायोरङ्गबन्धादुदतिष्ठदित्यन्वयः ॥ २३ ॥ तस्य प्रथ्यमानेन वपुषा व्यथितात्मशरीरो भुजङ्गः कुण्डलीमुन्मुच्य तं त्यक्त्वा कुपितः स्वफणानुन्नमय्य श्वसन्केवलमीक्षमाणस्तस्थौ । कथंभूतः । श्वसनरन्ध्रेषु नासाविवरेषु विषं यस्य स तथा, अम्बरीषो मण्डकपाकभाजनं तद्वत्संतप्तानि स्तब्धानीक्षणानि यस्य स तथा, उल्मुकानि मुखेषु यस्य सच सच सच ॥ २४ ॥ हरिश्च क्रीडंस्तममुं सर्वं परिससार परितो बभ्राम । अतिकरालविषाग्नियुक्ता दृष्टिर्यस्य तम् । जिह्वया द्विशिखयेति प्रतिमुखम् ॥ २५ ॥ एवं परिभ्रमेणैव हतमोजो यस्य तम् । उन्नतांवंसौ यस्य तम् । तस्य मूर्धसु ये रत्ननिकरास्तेषां स्पर्शेनातरुणं पादाम्बुजं यस्य सः । ननु कथं चञ्चलेषु शिरस्सु ननर्त तत्राह—अखिलकलानामादिगुरुः ॥ २६ ॥

इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात् ॥ २३ ॥ तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः ॥ तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥ २४ ॥ तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥२५॥ एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्वधिरूढ आद्यः ॥ तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त ॥ २६ ॥ तं नर्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥ २७ ॥ यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द खरदण्डधरोऽङ्घ्रिपातैः ॥ क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो वमन्परमकश्मलमाप नागः ॥ २८ ॥ तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः ॥ नृत्यन्पदानुनमयन्दमयाम्बभूव पुष्पैः प्रपूजित इवेह पुमान्पुराणः ॥ २९ ॥ तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन्नृप भग्नगात्रः ॥ स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ३०

उपसेदुः प्रापाः ॥ २७ ॥ शतैकशीर्ष्णः शतमेकानि मुख्यानि शीर्षाणि यस्य तस्य क्षीणायुषोऽपि पुनर्भ्रमतो यद्यच्छिरो न नमते स्तब्धतां न जहाति । नृत्यच्छलेनाङ्घ्रिपातैस्तत्तन्ममर्द तदा चास्यतो मुखेभ्यो नस्तो नासाविवरेभ्यश्चासृग्वमन् ॥ २८ ॥ पुनरपि रुषा उच्चैर्निःश्वसतो यद्यत्समुन्नमति तत्तत्पदाघाते नानुनमयन्निहास्मिन्नवसरे हृष्टैर्गन्धर्वादिभिः शेषासनः पुराणः पुरुष इव यशोदानन्दनः पुष्पैः प्रपूजितः । यद्वा तदा गन्धर्वादिभिः पुष्पैः प्रपूजितो गोपैः पुराणः पुमानिव दृष्ट इति । यद्वा पुष्पैः प्रपूजित इव प्रसन्नः सन्दमयाम्बभूव । हितं कृतवानित्यर्थः ॥ २९ ॥ अरणं शरणम् ॥ ३० ॥ ॥ ॥

१ प्रथ्यमानेन वर्धमानेन । २ फणायाः पार्श्वभागावंसौ । ३ मर्त्यपदवीं य प्रति दण्डो विधेयस्तस्य दोषो लोके प्रदर्श्यत इति लोकनीतिमनुसरन् । ४ अवसर दशावसरम् । ५ आगः सर्वकारणभूतः । ६ 'अवेत्य' इति पाठः । ७ तदीयाः पार्षदाः । ८ क्षीणायुषो निर्बलस्य । ९ 'तत्तत्पद' इति पाठः । १० तस्य तत् चागविपर्यं वा चित्रं भ्रमणादिगतिभेदं ताण्डवं तेन विरुग्णं जातव्रणं भग्नं वेति तोष० । ११ अत्र मुख्येत्युक्तेरमुख्यान्यन्यान्यपि सन्ति । अग्रे फणासहस्रोक्तेः ।

गर्भे जगन्ति यस्य तस्यातिभारेणावसन्नमाक्रान्तम् । पार्ष्णिः पादपृष्ठम् । आद्यं श्रीकृष्णम् । श्लथन्तो विस्रंसमाना वसनादयो यासां ताः ॥ ३१ ॥ ताः शरणं प्रपन्नाः सत्यस्तं प्रणेमुः । सुविग्नमनसोऽतिविह्वलचित्ताः । भुवीति तस्मिन्स्थाने जलावस्ताद्वा तीरे वा । शमलस्य पापात्मनोऽपि भर्तुर्मोक्षेप्सवः । भर्तुर्यच्छमलं तस्य वा । भूतपतिं प्राणिमात्रस्य पतिम् । शरणदमाश्रयप्रदम् ॥३२॥ प्रथमं तावत्कुपितं भगवन्तं दण्डानुमोदनेनोपशमयन्त्यः स्तुवन्ति—न्याय्यो हीति । तत्र 'दण्डानुमोदनं पड्भिर्दशभिश्च हरेर्नतिः ॥ प्रार्थनं पञ्चभिः श्लोकैस्ततः पन्नगयोपिताम्' ॥ १ ॥ नच निग्रहानुग्रहलक्षणं वैषम्यं तवास्तीत्याहुः—धत्से दममिति । अनुशंसन्नालोचयन् ॥३३॥ 'निग्रहोऽप्यनुग्रहाय'इत्युक्तम्, इदानीमनुग्रह एवायं न निग्रह इत्याहुः—अनुग्रह इति । नोऽस्माकम् । यस्मादमुष्य सर्पत्वं दृश्यते,

कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥ दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबन्धाः ॥ ३१ ॥ तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः ॥ साध्व्यः कृताञ्जलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥ ३२ ॥ ॥ नागपत्न्य ऊचुः ॥ न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ॥ रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ॥ ३३ ॥ अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः ॥ यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ॥३४॥ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ॥ धर्मोऽथवा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥ ३५ ॥ कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः ॥ यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान्सुचिरं धृतव्रता ॥ ३६ ॥ न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥ ३७ ॥ तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः ॥ संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः ॥ ३८ ॥ ॥ ॥

अतस्तन्मूलपापनिवर्तको दण्डोऽनुग्रह एव क्रोधत्वेन प्रतीयमानोऽपीत्यर्थः ॥३४॥ महांश्चायमनुग्रह इति तस्य पूर्वपुण्यमभिनन्दन्ति—तप इति । स्वयं मानरहितेनान्येभ्यो मानदेन च । सर्वं जीवयतीति सर्वजीवः ॥३५॥ न तप आदिनिमित्त एष भाग्योदयः, किंत्वचिन्त्यं तव कृपावैभवमित्याहुः श्लोकत्रयेण—कस्यानुभाव इति । तपआदिना ब्रह्मादयोऽपि यस्याः श्रियः प्रसादमिच्छन्ति सा श्रीर्ललना उत्तमा स्त्री यस्य त्वदङ्घ्रिस्पर्शाधिकारस्य वाञ्छया तप आचरत् । अस्य सर्पस्य । स किंकृत इति को वेत्तीत्यर्थः ॥ ३६ ॥ यत्तव पादरजः प्रपन्नाः प्राप्ताः पारमेष्ठ्याद्यपि तुच्छं मन्यन्ते ॥ ३७ ॥ अहो तदेषः अयत्नत एव प्राप । अन्यैः श्र्यादिभिरपि । कथंभूतं पादरजः । यदिच्छतः सेव्यं मे भवत्विति प्रार्थयमानस्यैव समक्षः प्रत्यक्ष एव विभवोऽपेक्षिता संपद्भवति ॥ ३८ ॥ ॥ ७ ॥

१ उपसेदुः समीपमाजग्मुः । २ फलं पुरुषार्थप्रतिबन्धकपापनिवृत्त्यादिरूपम् । 'खलमेव' इति पाठः । तत्र दुष्टमेवेत्यर्थः । ३ ते त्वया । ४ ते तव । ५ सुष्ठु तप्तमनुष्ठितम् । ६ एवं कर्मफलं कैमुत्येनोक्त्वा योगज्ञानफलं समुच्चयेनाहुः—न योगेति । ७ तत्पादरजः । ८ तपोऽत्र पत्याराधनम् । ९ सः रेणुस्पर्शाधिकारः ।

नमस्तुभ्यं भगवतेऽचिन्त्यैश्वर्यादिगुणाय । तदुपपादनाय दशभिः श्लोकैर्विशेषणानि । पुरुषाय पूर्ष्वन्तर्यामिरूपेण वर्तमानाय । महात्मने एवमपि नातिपरिच्छिन्नाय । कुतः । भूतावासायाकाशाद्याश्रयाय । एतदपि कुतः । भूताय पूर्वमपि सते । कुतः । पराय कारणाय । किंच परमात्मने कारणातीताय ॥ ३९ ॥ कारणत्वं कारणातीतत्वं च समर्थयितुमाहुः—ज्ञानविज्ञाननिधये । ज्ञानं ज्ञप्तिः, विज्ञानं चिच्छक्तिः, उभयोर्निधये ताभ्यां पूर्णाय । कथं तथात्वमत उक्तं ब्रह्मणेऽनन्तशक्तये । कथंभूताय ब्रह्मणे । अगुणायाविकाराय । कथंभूताय । अनन्तशक्तये । प्राकृताय प्रकृतिप्रवर्तकाय, अप्राकृतायेति वा । अप्राकृतानन्तशक्तियुक्ताय । अयमर्थः—अगुणत्वादविकारं ब्रह्मज्ञप्तिमात्रत्वात्कारणातीतं प्रकृतिप्रवर्तकोऽनन्तशक्तिर्विज्ञाननिधित्वादीश्वरः कारणं तदुभयात्मने नम इति ॥ ४० ॥ अनन्तशक्तित्वात्कालशक्त्या विश्वस्रष्टृत्वादिरूपेण नमस्यन्ति । कालाय कालस्वरूपाय । कालनाभाय कालशक्त्याश्रयाय । कालावयवानां सृष्ट्यादिसमयानां साक्षिणे । ततश्च विश्वाय विश्वरूपाय । तर्हि किं जडोऽहम् । नहि, तदुपद्रष्टे । नच द्रष्टृमात्राय, किंतु तत्कर्त्रे । नच कर्तृमात्राय, विश्वहेतवे सर्वकारकरूपाय ॥ ४१ ॥ तदेवाहुः—भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने, आशयश्चित्तम्, भूतादिरूपाय । अतः सर्वकारकरूपायेति । अहंकारात्मतया नमस्यन्ति—त्रिगुणेनेति ।

नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ भूतावासाय भूताय पराय परमात्मने ॥३९॥ ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये ॥ अगुणायाविकाराय नमस्ते प्राकृताय च ॥ ४० ॥ कालाय कालनाभाय कालावयवसाक्षिणे ॥ विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥ भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने ॥ त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥ ४२ ॥ नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते ॥ नानावादानुरोधाय वाच्यवाचकशक्तये ॥४३॥ नमः प्रमाणमूलाय कवये शास्त्रयोनये ॥ प्रवृत्ताय[1] निवृत्ताय[2] निगमाय नमो नमः ॥४४॥ नमः कृष्णाय रामाय वसुदेवसुताय च ॥ प्रद्युम्नायानिरुद्धाय[3] सात्वतां पतये नमः ॥ ४५ ॥ ॥ ॥

एवं सृष्टे कार्ये यस्त्रिगुणोऽभिमानस्तेन गूढा स्वांशभूतानामात्मनां जीवानामनुभूतिर्येन तस्मै ॥४२॥ त्वं त्वहंकारानावृत इति स्तुवन्ति । नमोऽनन्ताय, अहंकारापरिच्छेदात् । अतः सूक्ष्माय, अदृश्यत्वात् । अत एव कूटस्थाय, उपाधिकृतविकाराभावात् । अत एव विपश्चिते सर्वज्ञाय । एवं वस्तुतः स्तुत्वाऽचिन्त्यमायात्वेन स्तुवन्ति—नानावादानुरोधाय । अस्ति नास्ति सर्वज्ञः किंचिज्ज्ञो बद्धो मुक्त एकोऽनेक इत्यादिनानावादाननुरुणद्धि माययाऽनुवर्तते यस्तस्मै । किंच वाच्यवाचकशक्तये[4] । अभिधानाभिधेयशक्तिभेदादपि नानात्वेन प्रतीयमानायेत्यर्थः ॥ ४३ ॥ अनावृतत्वमेव हेत्वन्तरेणापि सूचयन्त्यः स्तुवन्ति—नमः प्रमाणमूलाय चक्षुरादीनां चक्षुरादिरूपाय । अत एव कवये स्वयं तन्निरपेक्षज्ञानाय । कुतः । शास्त्रयोनये वेदात्मकनिःश्वासाय । किंच प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥ किंच अनावृतैश्वर्यत्वादेव चतुर्मूर्तिरूपेण सर्वोपास्यत्वेन नमन्ति—नमः कृष्णायेति श्लोकेन । रामाय संकर्षणाय । वसुदेवसुताय च । वसुदेवशब्दितं शुद्धं सत्त्वं तत्र प्रकाशमानाय वासुदेवायेत्यर्थः । सात्वतामुपासकानां पतये सालोक्यादिपालकाय । एवं चतुर्मूर्तये कृष्णाय तुभ्यं नम इति ॥ ४५ ॥ ॥

१ प्रवृत्ताय विधिरूपाय । २ निवृत्ताय निषेधरूपाय । ३ भाविप्रादुर्भावं ज्ञात्वाहुः—प्रद्युम्नायेति । ४ वाच्यवाचकयोः अर्थशब्दयोः शक्तिर्यस्मात् ।

त्वाधधिष्ठातृत्वेन चतुर्मूर्तितेत्यर्थः ।
कथं चतुर्मूर्तितेति तदाहुः—नमो गुणप्रदीपायेति । गुणा अन्तःकरणानि तानि प्रदीपयति प्रकाशयतीति तथा तस्मै । चित्ताधधिष्ठातृत्वेन चतुर्मूर्तितेत्यर्थः । ननु तर्हि
ननु तथाप्येकस्यैव कथं चतुष्ट्वमत आहुः—गुणात्मच्छादनाय तैरेव गुणैरुपासकानां फलवैचित्र्यायात्मानमाच्छाद्य नानात्वेन प्रकाशमानायेत्यर्थः । ननु तर्हि
कथं प्रतीतिरत उक्तम्—गुणवृत्त्युपलक्ष्याय चित्तादीनां चेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय । उपलक्षणमेवाहुः—गुणद्रष्ट्रे तत्साक्षिणे । कथंचिदुपलक्ष्य एव
न ज्ञेय इत्याहुः—स्वसंविदे, अगोचरायेत्यर्थः ॥४६॥ अगोचरत्वमुपलक्ष्यत्वं च दर्शयन्तो नमन्ति—अव्याकृतविहाराय, अतर्क्यमहिम्न इत्यर्थः । सर्वव्याकृत-
सिद्धये सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः । उपलक्षणान्तरमाहुः—हे हृषीकेश करणप्रवर्तक । किं विषयलिप्सया, न, मुनये आत्मारामाय ।
किं साधनवशेन वा, नहि, मौनशीलिने मौनमात्मारामता तत्स्वभावाय ॥ ४७ ॥ कुतः । परावरगतिज्ञाय । स्थूलसूक्ष्माणां गतिज्ञत्वेन क्वापि सज्जमानाये-
त्यर्थः । अपि च सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे । कुत एतत् । अविश्वाय न विश्वं यस्मिंस्तन्निषेधावधये । विश्वाय च तद्विवर्ताधिष्ठानायेत्यर्थः । किंच तद्द्रष्ट्रे

नमो गुणप्रदीपाय गुणात्मच्छादनाय च ॥ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥ ४६ ॥ अव्याकृतविहाराय सर्वव्याकृतसिद्धये ॥ हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥ ४७ ॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ॥ अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥ ४८ ॥ त्वं ह्यस्य जन्मस्थितिसंयमान्प्रभो गुणैरनीहोऽकृतकालशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयाऽमोघविहार ईहसे ॥ ४९ ॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ॥ शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥ ५० ॥ ॥

अध्यासापवादसाक्षिणे । अपि च अस्य विश्वाध्यासस्य तदपवादस्य चाविद्याविद्याभ्यां हेतवे । यद्वा अविश्वाय विश्वतैजसाद्यवस्थारहिताय । विश्वाय च मायया
स्वांशैस्तत्तदवस्थाय तद्द्रष्ट्रे तासामवस्थानां भावाभावसाक्षिणे । अन्यत्समानम् । तस्मात्सर्वगतिज्ञत्वसर्वाधिष्ठातृत्वात्मारामत्वादिभिर्निरतिशयैश्वर्याय तुभ्यं
नम इति । 'विशेषणैरसंकीर्णैः पञ्चपञ्चाशतानतः ॥ अहिस्त्रीभिः प्रसन्नो वस्तासामिव भवेद्धरिः' ॥४८॥ एवं तावद्दण्डानुमोदनेन नमस्कारैश्च भगवन्तं प्रसाद्ये-
दानीं त्वदधीनानां प्राणिनां कोऽपराध इत्याशयवत्यः प्रार्थयन्ते—त्वं हीति । अस्य लोकस्य जन्मादि त्वमेव अकृताऽकरोः, ततश्च तांस्तान्संस्काररूपेण सतः
स्वभावान्घोरत्वादीन्प्रतिबोधयन्नीहसे क्रीडसि । यद्वा अस्य जन्मादींस्त्वमीहस इत्यन्वयः । कथंभूतः । अकृताऽनादिर्या कालशक्तिस्तां धारयतीति तथा ।
अन्यत्समानम् ॥४९॥ अतस्तस्य तवैवामूस्तनवस्तन्यन्त इति क्रीडोपस्कराः । तथापि तवाधुना शान्ताः प्रियाः । कुतः । सतां धर्मपरिपालनेच्छया ईहतः
प्रवर्तमानस्य, अतस्तानवितुं स्थातुः स्थितस्य ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥

१ मनोबुद्धिचित्ताहंकाररूपाणि । २ यद्वा एवं यादवसवन्धेऽपि गोपसवन्ध एव श्रेष्ठ इत्याहुः—गुणाना प्रेमवश्यत्वादीनां प्रकाशकाय । यतो गुणैर्दामभिरात्मानं छादयसि मात्रा वहुदामभिर्वन्धनात् । तथा गुणानां वृक्षोन्मूलनादिलक्षिताना अपर्याप्तानां दाम्नां वा वृत्त्या वर्तनेन ज्ञेयाय । गुणाना वन्धनदाम्ना द्रष्ट्रे भीत्या विस्मयेन वा मुहुर्दर्शनपरायेति तोप० । ३ यद्वा न व्याकृतोऽव्यक्तश्चौर्यादिविहारो यस्य । तथापि सर्वगोपीभिर्व्याकृता व्याख्याता सिद्धिश्चौर्यफलं दध्यादिलक्षणमपि यस्य तथापि हृषीकेश तासा सर्वेन्द्रियवशीकारिन् । किंच मात्रा गोपीभिर्वा कृतेष्वुपालम्भादौ मुनये उपालम्भश्रात्रेऽथापि मौनशीलिने । 'सुप्रतीको यथाक्षे' इत्युक्तेरिति तोप० । ४ गुणैः रजआदिभिः । अस्य अकृतेत्यनेनान्वयः । ५ समीक्षया सम्यगीक्षणमात्रेण । अस्य प्रतिबोधयन्नित्यनेनान्वयः । ६ ते याः शान्तास्तनवस्ता अधुना सतां धर्मपालनेच्छया ईहतः प्रवर्तमानस्यावितुं स्थितस्य ते प्रिया इति तेपदाना संगतिरिति तोप० ।
७ 'अहिस्त्रीभिः स्तुतस्तासां प्रसन्नोऽभूद्धरिः स्वयम्' इति पाठः । ८ तन्यन्त इति तनुशब्दस्य व्युत्पत्तिकथनम् ।

एवं तवाप्रियाचरणाद्यपराधस्तर्हि सोढव्य इति ॥ ५१ ॥ ५२ ॥ युष्मदनुग्रहेऽन्येषां मृत्युरेवेति चेत्तत्रेत्याहुः—विधेहीति । त्वदाज्ञया प्राणिनो नाद्यामेति भावः ॥ ५३ ॥ ५४ ॥ ५५ ॥ यदसद्ग्रह इति । यतः स्वभावोऽसद्ग्रहरूपः । यद्वा यतः स्वभावादसति देहादौ ग्रहः स दुस्त्यज इति ॥ ५६ ॥ गुणैर्विविध-तया सृज्यत इति गुणविसर्जनम् । तत्रापि नानास्वभावादयो यस्य तत् ॥ ५७ ॥ जात्या जन्मनैवोरुर्मन्युर्येषां ते वयं स्वयं कथं त्यजामः ॥५८॥ हि यस्मात्तत्र

अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः ॥ क्षन्तुमर्हसि शान्तात्मन्मूढस्य त्वामजानतः ॥ ५१ ॥ अनुगृह्णीष्व भग-वन्प्राणांस्त्यजति पन्नगः ॥ स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥५२॥ विधेहि ते किङ्करीणामनुष्ठेयं तवाज्ञया ॥ यच्छ्रद्धयाऽनुतिष्ठन्वै मुच्यते सर्वतो भयात् ॥ ५३ ॥ ॥ श्रीशुक उवाच ॥ इत्थं स नागपत्नीभिर्भगवा-न्समभिष्टुतः ॥ मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः ॥५४॥ प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम् ॥ कृच्छ्रा-त्समुच्छ्वसन्दीनः कृष्णं प्राह कृताञ्जलिः ॥ ५५ ॥ वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः ॥ स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥ ५६ ॥ त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम् ॥ नानास्वभाववीर्यौजोयोनिबीजाशया-कृति ॥ ५७ ॥ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः ॥ कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥५८॥ भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः ॥ अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः ॥ ५९ ॥ ॥ श्रीशुक उवाच ॥ इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः ॥ नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ॥ स्वज्ञात्यपत्यदाराढ्यो गोनृ-भिर्भुज्यते नदी ॥६०॥ य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ॥ कीर्तयन्नुभयोः सन्ध्योर्न युष्मद्भयमाप्नुयात् ॥६१॥ योऽस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥६२॥ द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ॥ यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥ ६३ ॥ ॥ श्रीशुक उवाच ॥ एवमुक्तो भग-वता कृष्णेनाद्भुतकर्मणा ॥ तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ६४ ॥ ॥ ॥ ॥

त्वन्मायात्यागे भवानेव कारणमित्यनुग्रहं विधेहि ममाज्ञया खादन्तीति । ईश्वरत्वान्निग्रहं वा विधेहीति ॥ ५९ ॥ यतो गोभिर्नृभिश्च नदी भुज्यत इति ॥ ६० ॥ न युष्मत्तो भयमाप्नुयात् । तस्य युष्माभिर्भयं नोत्पादनीयमित्याज्ञा ॥ ६१ ॥ इतोऽपि त्वया निर्गन्तव्यमित्याह—योऽस्मिन्निति । त्वयि स्थिते तत्र संभवतीति भावः ॥ ६२ ॥ नच तव गरुडभयं भवेदित्याह—द्वीपमिति ॥ ६३ ॥ ६४ ॥ ॥ ॥ ॥ ॥

१ अस्यापराधमिति शेषः । २ साधुभिः शोच्याना, यद्वा साधु यथा स्यात् खलत्वं संत्याज्येत्यर्थः । ३ विधेहि आज्ञापय । ४ अस्यानुतिष्ठन्नित्यनेनान्वयः । ५ सर्वदुःखहारकम् । ६ 'भुज्यता' इति पाठः । ७ 'राजन्नद्भुतकर्मणा' इति पाठः ।

॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ ॥
नागं ससदशे नागालयं तं निरयापयत् । बन्धून्स्वदुःखतः श्रान्तान् सुसांस्तत्र ददादपात् ॥ १ ॥ असमञ्जसमप्रियम् ॥ १ ॥ उपहार्यैर्भक्ष्यैः । सर्पजनैः सर्पा-
यत्तैर्जनैः । वानस्पत्यो वनस्पतेर्मूले देयो नागानां तद्बाधापरिहाराय यो बलिर्निरूपित उपकल्पितः ॥२॥ ते च नागाः स्वं स्वं भागं जनैर्दत्तं सुपर्णाय प्रयच्छन्ति
ततो भीताः । गोपीथाय रक्षणाय ॥३॥ विषवीर्याभ्यां यो मदस्तेनाविष्टः । काद्रवेयः कद्रूपुत्रः । गरुडं कदर्थीकृत्य अविगणय्य । यद्वा उपहार्यैः सुपर्णभक्ष्यैः सर्पा

दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥ दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ॥६५॥ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् ॥६६॥ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव साऽमृतजला[१] यमुना निर्विषाभवत् ॥ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥६७॥ इति श्रीम० म०पु० द० पूर्वार्धे कालियनिर्यापणं नाम षोडशोऽध्यायः ॥१६॥ ॥ राजोवाच ॥ नागालयं रमणकं कस्मात्तत्याज कालियः ॥ कृतं किं वा सुपर्णस्य तेनैकेनासमञ्जसम् ॥ १ ॥ ॥ श्रीशुक उवाच ॥ उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः ॥ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः ॥ २ ॥ स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि ॥ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥ विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ॥ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥ ४ ॥ तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः[२] ॥ विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥ ५ ॥ तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः ॥ दद्भिः सुपर्णं व्यदशद्ददायुधः करालजिह्वोच्छ्वसितोऽग्रलोचनः ॥ ६ ॥ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्प्रचण्डवेगो मधुसूदनासनः ॥ पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ॥ ७ ॥ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ॥ ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ॥ ८ ॥ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ॥ निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥ ९ ॥ ॥ ॥ ॥ ॥

एव जनास्तैर्नागानां संबन्धी यस्मिन्नेकैको नागो दीयते तथाभूतो यो बलिः सुपर्णाय निरूपितस्तत्र स्वं स्वं भागं सर्वे नागाः प्रयच्छन्ति, कालियस्तु न प्रयच्छति, किंत्वन्यैर्दत्तमपि तं बलिं स्वयमेव बुभुजे ॥ ४ ॥ ५ ॥ विषमेवायुधं यस्य सः । प्रत्यभ्ययाद्योद्धुं प्रतिजगाम । उच्छ्रितनैकमस्तक उन्नमितानेकफणः । ददायुधो दन्तायुधः । करालजिह्वश्वासायुच्छ्वसितोग्रलोचनश्च उच्छ्वसितान्युज्जृम्भितान्युग्राणि लोचनानि यस्य सः ॥ ६ ॥ तार्क्ष्यपुत्रो गरुडः । मधुसूदनस्यासनं यस्मिन्सः ॥ ७ ॥ तस्य गरुडस्यागम्यमगाधतया च दुरासदम् ॥ ८ ॥ तदगम्यत्वे कारणमाह—तत्रेति । निवारितोऽपि ॥ ९ ॥ ॥ ॥

१ 'मृष्टजला' इति पाठः । २ भगवत्प्रियः अत एव भगवान्वीर्यवान् गरुडः ।

॥ १० ॥ ११ ॥ लेलिहः सर्पः । अतस्तत्रावात्सीत् ॥ १२ ॥ जाम्बूनदं सुवर्णं तेनालंकृतम् ॥ १३ ॥ असव इन्द्रियाणि । प्रमोदनिभृतात्मान आनन्दपूर्ण-
मनसः ॥ १४ ॥ लब्धेहा लब्धचेष्टाः ॥ १५ ॥ नगा वृक्षा अपि पूर्वं शुष्काः सन्तः सद्य एव विरूढा इत्यर्थः ॥ १६ ॥ ते विप्रा ऊचुः ॥ १७ ॥ १८ ॥ नष्टलब्धप्रजा
नष्टप्राया पुनर्लब्धा प्रजा यया सा ॥ १९ ॥ श्रमेण च कर्पिताः उपकूलतः कूलप्रान्ते ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ कालाग्नेर्मृत्युरूपादग्नेः । न मृत्योर्विभीमः

मीनान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते ॥ कृपया सौभरिः प्राह तत्रत्य[1]क्षेममाचरन् ॥१०॥ अत्र प्रविश्य गरुडो यदि
मत्स्यान्[2]स खादति ॥ सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम् ॥११॥ तं कालियः परं वेद नान्यः कश्चन लेलिहः ॥ अवा-
त्सीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥ १२ ॥ कृष्णं ह्रदाद्विनि[3]ष्क्रान्तं दिव्यस्रग्गन्धवाससम् ॥ महामणिगणाकीर्णं
जाम्बूनदपरिष्कृतम् ॥ १३ ॥ उप[4]लभ्योत्थिताः सर्वे लब्धप्राणा इवासवः ॥ प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे
॥१४॥ यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौर[5]व ॥ कृष्णं समेत्य लब्धेहा आस[6]ँल्लब्धमनोरथाः ॥१५॥ रामश्चाच्युतमा-
लिङ्ग्य जहासास्यानुभाववित् ॥ [7]नगा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥ १६ ॥ नन्दं विप्राः समागत्य गुरवः सकल-
त्रकाः ॥ ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥ १७ ॥ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ॥ नन्दः प्रीतमना
राजन् गाः सुवर्णं तदादिशत् ॥ १८ ॥ यशोदापि महाभागा नष्टलब्धप्रजा सती ॥ परिष्वज्याङ्कमारोप्य मुमोचाश्रुकलां
मुहुः ॥ १९ ॥ तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्षिताः ॥ ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ॥ २० ॥ तदा
[8]शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम् ॥ सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥ २१ ॥ तत उत्थाय संभ्रान्ता दह्यमाना
व्रजौकसः ॥ कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ २२ ॥ कृष्ण कृष्ण महाभाग हे रामामितविक्रम ॥ एष घोरतमो
वह्निस्तावकान् ग्रसते हि नः ॥ २३ ॥ सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो ॥ न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतो-
भयम् ॥ २४ ॥ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः ॥ तमग्निमपिबत्तीव्रमनन्तोऽनन्तशक्तिधृक् ॥ २५ ॥ ॥ इति
श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे [9][10]दावाग्निमोचनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥

किंतु त्वच्चरणवियोगादित्याहुः—न शक्नुम इति ॥ २४ ॥ २५ ॥ विमोहानहिदण्डेन ततः सं शरणागतान् ॥ गोपानपादनन्तोऽसावनन्तवनवह्नितः ॥ १ ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥

१ तत्रत्याना प्राणिना क्षेममाचरन् । २ मत्स्यानित्युपलक्षणं प्राणिमात्रस्य प्राण्यन्तरग्रहणाप्रतिबन्धने कालियस्य निर्भयत्वानुपपत्तेः । ३ 'नद्धिःक्रान्ताम्' इति पाठः । ४ उपलभ्य दृष्ट्वा । ५ कौरवेति हे कुरुतन्तो । ६ 'आमन्त्शुष्का नगा अपि' इति पाठः । ७ 'गावो वृषा वत्सतराः' इति पाठः । ८ एतदग्रे विजयध्वज्यां—'तत्रास्तंगते भानौ कृष्णो वासम कल्पयत् ॥ सरामः सहगोपालैर्मात्रा पित्रा सगोधनैः ॥' इत्यधिकः श्लोकः । ९ शुचिर्ग्रीष्मः । १० 'कालियदमनो नाम' इति पाठः ।

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ॥ अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥ १ ॥ कृत्वा नृत्यं फणाग्रेषु कालियस्य सकौतुकम् ॥ बलं प्रलम्बतुङ्गांसमारोहयदरातिहा ॥ २ ॥ १ ॥ गोपालच्छद्ममायया गोपालनमेव च्छद्म यस्यां तया मायया ॥ २ ॥ ३ ॥ वसन्तसाम्यमाह चतुर्भिः—यत्र ग्रीष्मेऽपि निर्झराणां निर्ह्रादेन घोषेण निवृत्तस्वनाच्छन्नध्वनयो झिल्लिकाः कठोरध्वनिसूक्ष्मकीटा यस्मिंस्तथाभूतं वृन्दावनं भवति । किंच शश्वत्तेषां निर्झराणां शीकरैरम्बुकणैर्ऋजीषाः स्निग्धा ये द्रुमास्तेषां मण्डलैर्मण्डितम् ॥ ४ ॥ यत्र ग्रीष्मे वने वा । निदाघो ग्रीष्मस्तेन तत्कालीनवह्न्यर्काभ्यां च भवति यो दवस्तापः । अतिशाद्वलेऽतिहरिततृणाकीर्णे । यद्वा अतिक्रान्तशाद्वलेऽपि स्थाने ॥ ५ ॥ ननु शाद्वलमेव कुतस्त्यं तत्राह—अगाधेति । अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिभिरूर्मिभिः पुलिनैः सह द्रवत्पुरीषं पङ्को यस्यास्तस्या भुवः रसं शाद्वलितं शाद्वलरूपतां च विषवदुल्वणा अपि सूर्यरश्मयो न गृह्णते न हरन्ति ॥ ६ ॥ तद्वनम् । नदन्तश्चित्रा मृगा द्विजाश्च यस्मिन् । गायन्तो मयूरा भ्रमराश्च यस्मिन् । कूजन्तः कोकिलाः सारसाश्च यस्मिंस्तदविशत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ काकपक्षाश्चूडाकरणात्प्राक्तनकेशाः । भ्रामणादिप्रकारैर्नियुद्धेन बाहुयुद्धेन चिक्रीडतुः ॥ १२ ॥ १३ ॥ ॥ ॥ ॥

॥ श्रीशुक उवाच ॥ अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः ॥ अनुगीयमानो न्यविशद्व्रजं गोकुलमण्डितम्[1] ॥ १ ॥
व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया[2] ॥ ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्छरीरिणाम् ॥ २ ॥ स च वृन्दावनगुणैर्वसन्त इव लक्षितः ॥ यत्रास्ते[3] भगवान्साक्षाद्रामेण सह केशवः ॥ ३ ॥ यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम् ॥ ४ ॥ सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा ॥ न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥ ५ ॥ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः[4] पुलिनैः समन्ततः ॥ न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं[5] च गृह्णते ॥ ६ ॥ वनं[6] कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् ॥ गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥ ७ ॥ क्रीडिष्यमाणस्तत्कृष्णो भगवान्बलसंयुतः[7] ॥ वेणुं विरणयन् गोपैर्गोधनैः संवृतोऽविशत् ॥ ८ ॥ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः ॥ रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥ ९ ॥ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् ॥ वेणुपाणितलैः[8] शृङ्गैः प्रशशंसुरथापरे ॥ १० ॥ गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः[9] ॥ ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥ ११ ॥ भ्रामणैर्लङ्घनैः[10] क्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडतुर्नियुद्धेन काकपक्षधरौ[11] क्वचित् ॥ १२ ॥ क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ॥ शशंसतुर्महाराज साधु साध्विति वादिनौ ॥ १३ ॥ ॥

१ गोकुलेति प्राग्गोप्रवेशात् । क्रियाविशेषणं वा । २ गोपालनं छद्ममात्रं, वस्तुतस्तु तया मायया दीनजनकृपयैवेति तोष० । ३ आस्ते इति वर्तमानप्रयोगो मुनेः स्कान्दोक्तनित्यविहरणस्फूर्त्यनुसारेणेति तोष० । ४ द्रवत्पुरीषीत्यत्र गौरादित्वान्ङीष् । ५ शाद्वलितमित्याचारक्विपि भावे क्तः । ६ वनं अविशदित्युत्तरश्लोकस्थेनान्वयः । ७ बलेन बलरामेण युतः । ८ पाणितलैः शृङ्गैरिति तृतीया द्वितीयार्थे । ९ गोपालरूपिण इति नित्ययोगे इनिः । १० भ्रामणैरन्योन्यं हस्तग्रहादिना, लङ्घनैरधो निपात्यारोहैः, क्षेपैर्दूरतः प्रक्षेपैः, आस्फोटनैर्भुजाघातैः, आकर्षणैर्बाहुयुद्धादिनेति तोष० । ११ केचन्न केशगुम्फितवेणीत्रयमित्याहुः ।

कुम्भैः कुम्भवृक्षफलैः अस्पृश्यत्वं नेत्रबन्धश्च तदाद्यैः । मृगाणां खगाणां च चेष्टया ॥ १४ ॥ दर्दुरप्लावैर्मण्डूकप्लुतिभिः । स्पन्दोलिकया दोलालम्बनेन । नृपाणामिव लीलया ॥ १५ ॥ नद्योऽद्रिद्रोण्यः कुञ्जानि च एतेषु ॥ १६ ॥ चारयतोः सतोः तद्वने तस्मिन्वने । तयोर्जिहीर्षया ॥ १७ ॥ १८ ॥ यथायथं वयोवलाद्यनुरूपं द्वन्द्वीभूय ॥ १९ ॥ परिवृढौ नायकौ । तत्र केचन कृष्णसंघट्टिनः कृष्णपक्षीयाः ॥ २० ॥ २१ ॥ वाह्यमानाः पृष्ठेनोह्यमानाः ॥ २२ ॥ २३ ॥ ॥ २४ ॥ कृष्णदृष्टिवञ्चनाय अवरुह्यतेऽस्मिन्नित्यवरोहणं मर्यादा ततः परं दूरमगात् ॥ २५ ॥ धरणिधरेन्द्रवद्गौरवं यस्य तन्निजमासुरं वपुरास्थितः । पुरट-

क्वचिद्बिल्वैः[2] क्वचित्कुम्भैः क्व चामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया ॥१४॥ क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः ॥ कदाचित्स्पन्दोलिकया कर्हिचिन्नृपचेष्टया[3] ॥ १५ ॥ एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरस्सु च ॥ १६ ॥ पशूंश्चारयतो गोपैस्तद्वने रामकृष्णयोः ॥ गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया ॥१७॥ तं विद्वानपि दाशार्हो भगवान्सर्वदर्शनः ॥ अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥ १८ ॥ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित् ॥ हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥ १९ ॥ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ ॥ कृष्णसंघट्टिनः केचिदासन्रामस्य चापरे ॥ २० ॥ आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः ॥ यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥ २१ ॥ वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् ॥ भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ २२ ॥ रामसंघट्टिनो यर्हि श्रीदामवृषभादयः ॥ क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ॥ २३ ॥ उवाह कृष्णो भगवान् श्रीदामानं पराजितः ॥ वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥ २४ ॥ अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः ॥ वहन्द्रुततरं प्रागादवरोहणतः परम् ॥२५॥ तमुद्वहन्धरणिधरेन्द्रगौरवं महासुरो विगतरयो निजं वपुः ॥ स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवाम्बुदः ॥ २६ ॥ निरीक्ष्य तद्वपुरलमम्बरे चरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम् ॥ ज्वलच्छिखं कटककिरीटकुण्डलत्विषाद्भुतं हलधर ईषदत्रसत् ॥ २७ ॥

परिच्छदः सुवर्णालंकारः । तडिद्द्युमान्विद्युद्दीप्तिमानित्यलंकारोपमा । उडुपतिवाडिति रामोपमा । उडुपतिं वहतीत्युडुपतिवाट् । यदि यथोचितस्थानेषु स्थिता विद्युतो भवन्त्युपरि चोडुपतिस्तदा सोऽम्बुदो यथा भाति तद्वद्बभावित्यर्थः ॥ २६ ॥ अलमतिवेगेन । प्रदीप्ते दृशौ यस्मिन्वपुषि तत् । भ्रुकुटितटसँल्लग्ना उग्रा दंष्ट्रा यस्मिंस्तत् । प्रदीप्तदृक् भ्रुकुटितटं यस्मिन्, उग्रा दंष्ट्रा यस्मिंस्तच्च तच्चेति वा । ज्वलन्त्यः शिखाः केशा यस्मिंस्तत् ॥ २७ ॥ ॥

१ द्रोण्योऽद्रिसंधयः । २ बिल्वैर्बिल्वादिभिर्याः क्रीडास्ताभिः । एवमन्याभिश्च चेरतुरित्यग्रिमेणान्वयः । ३ नृपचेष्टा उच्चशिलासिंहासन कौसुम्भछत्रचामरादिमयीति तोष० । ४ रोहिणीसुतं वहन्दानवपुङ्गवः प्रलम्बः कृष्णमविषह्यं मन्यमानः सन्नयं चाद्दृष्टिवञ्चनार्थमवरोहणतः परं दूरतरमगादित्यन्वयः ।

आगतस्मृतिरभय इवात्मनः सार्थं गोपसमूहं विहाय हरन्तं रिपुमहनत् । यद्वा विहायसाऽऽकाशमार्गेणात्मनः प्रासमर्थमिव हरन्तमिति । वज्ररंहसा वज्रवेगेन मुष्टिना ॥२८॥ अपस्मृतो गतस्मृतिः । महारवं समीरयन् ॥ २९ ॥ ३० ॥ तदर्हणं प्रशंसार्हम् ॥ ३१ ॥ ३२ ॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ॥ मुञ्जारण्यमरण्याग्ने ररक्ष तन्निपानतः ॥ १ ॥

अथागतस्मृतिरभयो रिपुं बलो विहाय सार्थमिव हरन्तमात्मनः ॥ रुषाहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥२८॥ स आहतः सपदि विशीर्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽसुरः ॥ महारवं व्यसुरपतत्समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥ २९ ॥ दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना ॥ गोपाः सुविस्मिता आसन्साधु साध्विति वादिनः ॥ ३० ॥ आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तदर्हणम् ॥ प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥ ३१ ॥ पापे प्रलम्बे निहते देवाः परमनिर्वृताः ॥ अभ्यवर्षन्बलं माल्यैः शशंसुः साधु साध्विति ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे प्रलम्बवधो नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीशुक उवाच ॥ क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः ॥ स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् ॥१॥ अजा गावो महिष्यश्च निर्विशन्त्यो वनाद्वनम् ॥ इषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः ॥ २ ॥ तेऽपश्यन्तः पशून्गोपाः कृष्णरामादयस्तदा ॥ जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ॥ ३ ॥ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम् ॥ मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः ॥४॥ मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम् ॥ संप्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तयन् ॥ ५ ॥ ता आहूता भगवता मेघगम्भीरया गिरा ॥ स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ॥ ६ ॥ ततः समन्ताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम् ॥ समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान्महान् ॥ ७ ॥ ॥ ॥

दूरचारिणीः दूरचारिण्यः ॥ १ ॥ वनाद्वनान्तरं निर्विशन्त्यो दावेन तर्पितास्तृपिताः क्रन्दन्त्य इषीकाटवीमत्युच्छ्रितघनतृणविशेषारण्यं निर्विविशुः ॥ २ ॥ कृष्णरामावादी येषां ते न तु तौ ॥ ३ ॥ तासां गवां खुरैर्दद्भिश्च च्छिन्नैस्तृणैर्गोष्पदैरङ्कितैश्च भूप्रदेशैस्तृणैर्वा गवां मार्गमन्वगमन् । नष्टाजीव्या गतजीविकासाधनाः ॥ ४ ॥ मुञ्जाटव्यपि सैव इषीकाटवी ॥ ५ ॥ ६ ॥ गोगोपानां नाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत् । सारथिना वायुना ॥ ७ ॥ ॥ ॥

---

१ अपस्मृतोऽपस्मारव्याधिग्रस्त इवेति तोष० । २ विस्मयस्तत्कपटवेपादिना । ३ आशिषः—इत्थं चिरं सानुजः सुखं विहरन् नः पाहीत्यादिकाः । ४ तद्गावः तेषां, ताः असंख्या वा गावः । अनित्यत्वात्समासान्ताभावः । ५ अक्षराधिक्यमार्षम् । ६ 'अप्राप्य' इति विज० पाठः । ७ निवर्तयामासुः । ८ एतदग्रे—'कृष्णस्तुङ्ग समारुह्य वृक्षं मेघनिभच्छविः ॥ आत्मानमाह्वयामास दर्शयन् गाः स्वनामतः ॥' इत्ययमधिकः श्लोकश्चक्रवर्तिसंमतः । ९ उल्मुकैरुल्कासदृशस्फुलिङ्गैः । १० अतद्गुणसंविज्ञानो बहुव्रीहिसमासोऽत्र । तद्गुणसंविज्ञानपक्षे तु—'उभावपि वने कृष्णो विचिकाय समंततः' इतिवद्द्रवादिस्लेहन्यञ्जिका लीलेति ज्ञेयमिति तोष० ।

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ कृच्छ्राद्दहरप्रवेशक्षुत्तृड्श्रमादिजनितात् ॥ १२ ॥ क्षणेनैव भाण्डीरं प्रापिताः । ततोऽक्षीण्युन्मील्य विस्मिताः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ 'श्रीदामादिस्वगोपानां स्वाङ्गमारुह्य हृष्यताम् ॥ स्वैश्वर्यमाविरकरोद्वनवह्निनिपानतः' ॥ १ ॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ विंशे प्रावृट्शरच्छोभावर्णनेन वनोचिताः ॥ प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजो हरेः

तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः ॥ ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ॥ ८ ॥ कृष्ण कृष्ण महावीर हे रामामितविक्रम ॥ दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः ॥ ९ ॥ नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम् ॥ वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥१०॥ ॥ श्रीशुक उवाच ॥ वचो निशम्य कृपणं बन्धूनां भगवान्हरिः ॥ निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥ ११ ॥ तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् ॥ पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत् ॥ १२ ॥ ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः ॥ निशम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥ १३ ॥ कृष्णस्य योगवीर्यं तद्योगमायाऽनुभावितम् ॥ दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥१४॥ गाः संनिवर्त्य सायाह्ने सहरामो जनार्दनः ॥ वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः ॥ १५ ॥ गोपीनां परमानन्द आसीद्गोविन्ददर्शने ॥ क्षणं युगशतमिव यासां येन विनाभवत् ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे दावाग्निपानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

॥ श्रीशुक उवाच ॥ तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः ॥ गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च ॥ १ ॥ गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ॥ मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥ २ ॥ ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥ ३ ॥ ॥ ॥ ॥ ॥

॥ १ ॥ हेयादेयोपमानेन प्रावृट्शरदृतुश्रियोः ॥ वर्णनं त्वद्भुतैश्वर्यकृष्णलीलाविवक्षया ॥ २ ॥ १ ॥ २ ॥ तत्र प्रावृड्वर्णनं—तत इत्यादि द्वाविंशत्या । सर्वेषां प्राणिनां समुद्भव उत्पत्तितो जीवनतश्च यस्यां सा प्रावृट् । विद्योतमानाः परिधयः परिवेषादिशोभा यस्यां सा । विस्फूर्जितं संक्षुभितं नभस्तलं यस्यां सा ॥३॥

१ 'रामामोघविक्रम' इति पाठः । २ दुःखमनुभवितुम् । छान्दसोऽयं प्रयोगः । 'अवसादितुम्' इति पाठश्चक्रवर्तितोषण्योः सम्मतः । अव समन्तात् सा?े येषा तेऽवसादास्तद्वदाचरितुमपि नार्हन्तीत्याचारक्विबन्तात्तुमुनिति तट्टीका । ३ बन्धूनां स्वैकमित्राणाम् । ४ निशाम्य दृष्ट्वा । ५ क्षेमं क्षेमशब्दात्तत्करोतीति णिजन्तात्पचाद्यचि ज्ञेयं । ६ 'तं मेनिरे' इति पाठः । ७ नास्ति मरो मरणं यस्मात्तम् । ८ क्षणमिति द्वितीयत्वमार्षम् । ९ स्त्रीभ्यः स्वमात्रादिभ्यः । ताः श्रावयितुमित्यर्थः । तुमुनः कर्मणि चतुर्थी । १० तत इत्यारभ्यैवाध्यायारम्भः, तयोरित्यादिश्लोकद्वयं तु पूर्वाध्यायान्तेऽपेक्षितमिति भाति । हेयादेयोपमानेनेत्यादिश्लोकेनाध्यायार्थं निरूप्यामे तत्र प्रावृड्वर्णनमिति श्रीधरस्वामिकृतव्याख्यानस्वरसात् । तोषण्यां च क्रमप्राप्तां वर्षाशरत्क्रीडां वक्तुं ग्रीष्मवत्ततोऽपि श्रियं वर्णयन् तत्रालंकाराय हेयोपादेयोपमां दर्शयतीत्यवतरणाच ।

सान्द्रानंविडैर्नीलाम्बुदैर्विद्युद्गर्जितसहितैराच्छन्नम् । सगुणं गुणैराच्छन्नं जीवाख्यम् । विद्युद्गर्जिताम्बुदानां सत्त्वरजस्तमोभिरुपमा ॥ ४ ॥ पर्जन्यः सूर्यः । स्वगोभिर्निजरश्मिभिः । काले यथोचितसमये । अत्र राजोपमा करादानतः समये पुनर्दानतश्च सूचिता ॥ ५ ॥ अस्य विश्वस्य प्रीणनमाप्यायनकरं जीवनमुदकं मुमुचुः । कृपालवो यथा तप्तं जनं निरीक्ष्यानुकम्पमानास्तदाप्यायनाय स्वजीवनमपि त्यजन्ति तद्वन्महान्तो मेघास्तडिन्नेत्रैर्विश्वं तप्तं निरीक्ष्य वायुभिर्वेपिता जीवनं मुमुचुरिति ॥६॥ तपसा ग्रीष्मेण कृशा । देवमीढा पर्जन्यसिक्ता । वर्षीयसी उच्छूना पुष्टा । काम्यं तपो यस्य तस्य तनुः कामान्संप्राप्य यथेति ॥ ७ ॥ ॥८॥ नित्यकर्मावसाने आचार्यनिनदं श्रुत्वा तच्छिष्या यथाऽधीयते तद्वदिति ॥ ९ ॥ अनुशुष्यतीरनुशुष्यन्त्यः । अस्वतन्त्रस्येन्द्रियपरतन्त्रस्य । स्वतन्त्रस्य

सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ ४ ॥ अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु ॥ स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥५॥ तडित्वन्तो महामेघाश्चण्डश्वसनवेपिताः ॥ प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥ ६ ॥ तपःकृशा देवमीढा आसीद्वर्षीयसी मही ॥ यथैवं काम्यतपसस्तनुः संप्राप्य तत्फलम् ॥७॥ निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः ॥ यथा पापेन पाखण्डा नहि वेदाः कलौ युगे ॥८॥ श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन्गिरः ॥ तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ॥ ९ ॥ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ॥ पुंसो यथाऽस्वतन्त्रस्य देहद्रविणसम्पदः ॥१०॥ हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता ॥ उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥ ११ ॥ क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः ॥ धनिनामुपतापं च दैवाधीनमजानताम् ॥१२॥ जलस्थलौकसः सर्वे नववारिनिषेवया ॥ अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया ॥१३॥ सरिद्भिः सङ्गतः सिन्धुश्चुक्षुभे श्वसनोर्मिमान् ॥ अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा ॥ १४ ॥ ॥ ॥

निरङ्कुशस्येति वा ॥ १० ॥ हरिभिर्नीलैः शष्पैर्बालतृणैर्नीलवर्णा । क्वचिदिन्द्रगोपैः कीटविशेषैर्लोहिता । तत्र तत्रोच्छिलीन्ध्रैश्छत्राकारैरुद्भिदैः कृतच्छाया नृणां राज्ञां श्रीः सेनासम्पदिव ॥ ११ ॥ क्षेत्राणीति । तदा हि वृष्टेरविच्छेदे लसन्तः प्रियंग्वादयो मुदं ददति, विच्छेदे शुष्यन्तोऽनुतापं चेति ॥ १२ ॥ अबिभ्रदबिभरुः यथा हरिनिषेवयेति । हरिसेवायां प्रवृत्ता हि सद्य एव सर्वे रुचिरा भवन्ति । तस्याः परमधर्मत्वात्परमसुखत्वाच्च तद्वदिति ॥ १३ ॥ कामाक्तं कामवासनायुक्तमिति श्वसनोर्मिसाम्यम् । गुणैर्विपर्ययैर्युज्यत इति सरित्सङ्गतिसाम्यम् ॥ १४ ॥ ॥ ॥ ॥

१ जीवाख्यमिति नभोवल्लेपशून्यं ब्रह्मोपास्यमित्यादेयोपमा । २ राजोपमेति स हि वसु आदत्ते काले ददाति च । ३ इयं दानशूरैरादेयोपमा । ४ 'प्राणनम्' इति पाठः तत्रापि स एवार्थः । ५ भोगार्थं तपसा वृथाऽऽयुर्व्ययो न कार्य इति हेयोपमा । ६ पाखण्डशास्त्रं नादेयमिति हेयोपमा । ७ नित्यकर्मसमाप्त्यनन्तरमध्येतव्यमित्यादेयोपमा । एवमग्रेऽपि हेयोपादेयत्वं विभावनीयं टीकान्तरतो वा ज्ञेयम् । ८ 'मानिनामुपतापं वै' इति पाठः । तत्र वै समुच्चये । यतो मानिना तदभिमानवतामिति तोप० । श्लेषेण यथा क्षेत्राणि दे[illegible]ः अन्नादिसंपद्भिः । ९ 'अविभ्रन् रुचिरम्' इत्यपि पाठः । उभयत्राप्यार्षत्वं समानम् । १० श्वसनेन वायुनोर्मिमान् । ११ साधनावस्थाया तस्याः सुखावहपरमधर्मत्वात् साध्यावस्थायां परमसुखरूपत्वाच्च ।

अधोक्षज एव चेतो येषां ते ॥१५॥ असंस्कृता अक्षुण्णा नाभ्यसमाना इत्यसंस्कृतसाम्यम् । कालेन चाहता इति तृणाच्छादनसाम्यम् ॥ १६ ॥ यथा कामिन्यः पुंश्चल्यः ॥१७॥ निर्गुणं ज्यारहितमपि गुणिनि गर्जितशब्दवति अभादशोभत । गुणव्यतिकरात्मके व्यक्ते प्रपञ्चेऽगुणवान्निर्गुणः पुरुषो यथेति ॥१८॥ स्वभासा भासितयाऽहंमत्येति स्वचैतन्येनैव प्रकाशितेनाहंकारेण च्छन्नो जीवो यथा । यद्वा अहं विद्वान् दाता वेत्ता शूर इति स्वप्रतीत्यैवारोपितया इति ॥ १९ ॥ मेघागमेनोत्सवो येषामतो हृष्टाः ॥ २० ॥ नानात्ममूर्तयः अनेकरूपदेहाः ॥ २१ ॥ अशान्तानि पङ्ककण्टकादियुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूपुर्नितरामवसन् । सारसाश्चक्रवाकाः । अशान्तानि घोराण्यनुपरतानि वा कृत्यानि येषु तेष्वपि गृहेषु ॥ २२ ॥ ईश्वरे इन्द्रे ॥ २३ ॥ नुन्नाः प्रेरिताः । आशिषः कामान् । विश्पतयो राजानः, वणिजां पतयो वा । द्विजेरिताः पुरोहितैरुक्ताः ॥ २४ ॥ प्रावृषि कृतां क्रीडां वर्णयति—एवं वनमिति सप्तभिः । वर्षिष्ठं समृद्धम् ॥ २५ ॥ २६ ॥ वनौकसः पुलिन्दीः प्रमुदिता भगवान्ददर्श । तथा वनराजीर्मधुच्युतो मधुस्रवा ददर्श । गिरेः सकाशाज्जलधाराश्च तासां नादानासन्ना निकटवर्तिनीर्गुहाश्च । यद्वा वनौकसः प्रमुदिता आसन् । तथा वनराजीर्वनराजयो वनपरम्परा मधुच्युत आसन् । गिरेर्जलधारा आसन् । तानेवंभूतानाददर्श सर्वतो ददर्श भगवान् । तथा धाराणां नादान्गुहाश्चेति ॥ २७ ॥ ॥ ॥ ॥

गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः ॥ अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥ १५ ॥ मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः ॥ नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥ १६ ॥ लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः ॥ स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥ १७ ॥ धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् ॥ व्यक्ते गुणव्यतिकरेऽगुणवान्पुरुषो यथा ॥ १८ ॥ न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः ॥ अहंमत्या भासितया स्वभासा पुरुषो यथा ॥१९॥ मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखण्डिनः ॥ गृहेषु तप्ता निर्विण्णा यथाच्युतजनागमे ॥२०॥ पीत्वापः पादपाः पद्भिरासन्नानात्ममूर्तयः ॥ प्राक्क्षामास्तपसा श्रान्ता यथा कामानुसेवया ॥ २१ ॥ सरस्स्वशान्तरोधस्सु न्यूपुरङ्गापि सारसाः ॥ गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः ॥ २२ ॥ जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे ॥ पाखण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा ॥२३॥ व्यमुञ्चन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः ॥ यथाशिषो विश्पतयः काले काले द्विजेरिताः ॥ २४ ॥ एवं वनं तद्वर्षिष्ठं पक्वखर्जूरजम्बुमत् ॥ गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः ॥ २५ ॥ धेनवो मन्दगामिन्य ऊधोभारेण भूयसा ॥ ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥ २६ ॥ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ॥ जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥ २७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ स्थूलवामनादिप्रकारकदेहा इत्यर्थः । २ व्यसनै रोगादिविविधैर्दैवादिकृतैर्नानान्तरायैश्च । ३ गुणिषु वेदाध्यायियुक्तेष्वपि । ४ पूर्वपक्षे—तपसा ग्रीष्मतापेन, पुरुषपक्षे सुदादिदुःखेन । ५ पुण्यवशात्प्राप्तानां कामानामनुसेवया । ६ ईश्वरे देवेन्द्रे इति स्वैरतयातिवृष्ट्या सेतुभङ्गाद्धर्ममर्यादाभङ्गरूपात्पाखण्डिसाम्यम् । ७ रानीः स्तन्यः । 'स्नुतस्तनाः' इति तोषणीपाठः ।

॥२८॥२९॥३०॥३१॥ शरदं वर्णयति—एवं निवसतोरित्यष्टादशभिः । विगतान्यभ्राणि यस्यां सा, स्वच्छान्यम्बूनि यस्यां सा, अपरुपः शान्तोऽनिलो यस्यां सा च सा च ॥३२॥ नीरजानामुत्पत्तिर्यया तया शरदा कृत्वा । नीरजानामुत्पत्त्या वा ॥३३॥ व्योम्नोऽब्दमिति व्योमादीनां चतुर्णां चतुरो मलान् शरदहरत्, आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभमसुखं हरति । तथा हि—ब्रह्मचारि.गो गुर्वर्थोदकाहरणादिकष्टं यथा भक्तिर्हरति । तथा पूर्णस्य तेनानुपयोगात् । गुरुभिरपि कृतार्थस्य तस्यानियोगात् । एवं व्योम्नोऽब्दं शरज्जहार । यथा च गृहिणोऽपत्यादिसांकर्यं भक्तिर्हरति, विविक्तवासरुच्युत्पत्तेः । तथा भूतानां शावल्यं सांकर्यं शरत् । वर्षासु वृष्टिभिया संकुलानि वसन्ति । यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पङ्कं शरत् । यथाच यतीनां कामादि-

क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ॥ निर्विश्य भगवान्रेमे कन्दमूलफलाशनः ॥ २८ ॥ दध्योदनं समानीतं शिलायां सलिलान्तिके ॥ संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥ २९ ॥ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् ॥ तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ॥ ३० ॥ प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् ॥ भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥ एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे ॥ शरत्समभवद्व्यभ्रा स्वच्छाम्ब्वपरुषानिला ॥ ३२ ॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ॥ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥ व्योम्नोऽब्दं भूतशावल्यं भुवः पङ्कमपां मलम् ॥ शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ॥ ३४ ॥ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः ॥ यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः ॥ ३५ ॥ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् ॥ यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥३६॥ नैवाविन्दन्क्षीयमाणं जलं गाधजलेचराः ॥ यथायुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः ॥ ३७ ॥ गाधवारिचरास्तापमविन्दन् शरदर्कजम् ॥ यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः ॥३८॥ शनैः शनैर्जहुः पङ्कं स्थलान्यामं च वीरुधः ॥ यथाहंममतां धीराः शरीरादिष्वनात्मसु ॥ ३९ ॥ निश्चलाम्बुरभूत्तूष्णीं समुद्रः शरदागमे ॥ आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ॥ ४० ॥ ॥ ॥

वासनामलं श्रीकृष्णभक्तिर्हरति एवमपां मलं शरदिति ॥ ३४ ॥ त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणा यैस्ते ॥ ३५ ॥ गिरय इति । अयं भावः—नह्युपाध्यायाः कर्मविद्यामिव ज्ञानिनो ज्ञानामृतं सर्वतो वितरन्ति, अपितु कृपया क्वचिदेव । एवं गिरयः शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न । न पुनः प्रावृषीव सर्वत इति ॥ ३६ ॥ गाधे क्षुद्रे जले चरन्तीति तथा ते मीनादयः ॥ ३७ ॥ अविन्दन् लेभिरे ॥ ३८ ॥ शनैः शनैरिति । तत्र ममतामिव पङ्कमहन्तामिव आमतामपक्वतां जहुरिति ॥ ३९ ॥ आत्मन्युपरते त्यक्तक्रिये मुनिरिव निश्चलाम्बुः स एव व्युपरतागमो निवृत्तवेदघोष इव तूष्णीमभूदिति ॥ ४० ॥ ॥

१ मेघे वर्षति सति । २ 'निर्विशन्' इति पाठः । ३ चर्वतः रोमन्थायमानान् । ४ पूजयाचक्रे-साधु अमन्यत । ५ मुक्तं किल्बिषं संसारहेतुः कर्म यैः । ६ ममताया बाह्यत्वात्पङ्केन साम्यं अहंतायाश्चान्तरत्वात् आमेन अपक्वतयेति ज्ञेयम् । ७ आत्मनि मनसि ।

केदारेभ्यो वद्धे सेतुशालिक्षेत्रेभ्यो दृढैः सेतुभिरपोऽगृह्णन् । ततः परं वृष्ट्यभावात् । प्राणैरिन्द्रियैः । तन्निरोधेनेन्द्रियप्रत्याहारेण ॥४१॥ देहाभिमानजं बोध इव व्रजयोषितां मुकुन्द इव चेत्यर्थः ॥ ४२ ॥ शरदा विमलास्तारका यस्मिंस्तत् । शब्दब्रह्मणो वेदस्यार्थान् पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीति तथा तद्वत् ॥४३॥ ॥ ४४ ॥ समोऽन्यूनाधिकः शीतश्चोष्णश्च तम्, नतु गोप्यः । कृष्णापहृतचेतस्त्वेन तासां संतापो दुःसह इति । यद्वा नकार उपमार्थः । तदा कृष्णहृतचेतस इति चेतसा कृष्णमाश्लिष्य यथेत्यर्थः ॥ ४५ ॥ पुष्पिण्यो गर्भिण्यः । अन्वीयमानाः स्ववृषैः स्वपतिभिरनिच्छन्त्योऽपि बलादनुगम्यमानाः । ईश्वराराधनार्थाः क्रियाः वलात्फलैरनुगम्यमानाः समस्तभोगगर्भा यथेति ॥ ४६॥ कुमुत् कुमुदम् । कुत्सितां मुत् यस्येति दस्युसाम्यम् ॥४७॥ आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैरै-

केदारेभ्यस्त्वपोऽगृह्णन्कर्षका दृढसेतुभिः ॥ यथा प्राणैः स्ववज्ज्ञानं तन्निरोधेन योगिनः ॥४१॥ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत् ॥ देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥ ४२ ॥ खमशोभत निर्मेघं शरद्विमलतारकम् ॥ सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥ ४३ ॥ अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी ॥ यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥ ४४ ॥ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् ॥ जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥४५॥ गावो मृगाः[2] खगा नार्यः पुष्पिण्यः शरदाभवन् ॥ अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ॥४६॥ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना ॥ राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप ॥ ४७ ॥ पुरग्रामेष्वाग्रयणैरैन्द्रियैश्च महोत्सवैः ॥ बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ॥४८॥ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे ॥ वर्षरुद्धा यथा सिद्धाः स्वपिण्डान्काल आगते ॥४९॥ ॥ इति श्रीमद्भा० म० पु० द० पूर्वार्धे शरद्वर्णनं नाम विंशतितमोऽध्यायः ॥ २० ॥

॥ श्रीशुक उवाच ॥ इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना ॥ न्यविशद्वायुना वातं स गोगोपालकोऽच्युतः[3] ॥१॥ कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरःसरिन्महीध्रम् ॥ मधुपतिरवगाह्य[4] चारयन्गाः सहपशुपालबलश्चुकूजे वेणुम् ॥२॥

न्द्रियैरिन्द्रियार्थैर्लौकिकैश्च महोत्सवैः । कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्याम् ॥४८॥ वणिजो यतयो नृपाः स्नातकाश्च दृष्टादृष्टाभ्यां[6] वर्षरुद्धाः सन्तो निर्गम्यार्थान्वाणिज्यस्वाच्छन्द्यदिग्विजयविद्यादीन्प्रपेदिरे प्राप्यन्त । यथा मन्त्रयोगादिसिद्धाः आयुषा रुद्धाः काले आगते स्वपिण्डान्योगादिप्राप्यान्देवादिदेहानिति ॥४९॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे भा० दी० टीकायां विंशतितमोऽध्यायः ॥२०॥ ॥ एकविंशे शरद्रम्यवृन्दावनगते हरौ ॥ तद्वेणुस्वनमाकर्ण्य गोपीभिर्गीतमीर्यते ॥ १ ॥ इत्थमेवंभूतं वनम् । तदेवाह—शरदा स्वच्छानि जलानि यस्मिंस्तत् । वायुना वातमनुगतं तदेकव्याप्तमित्यर्थः ॥१॥ ततश्च कुसुमितवनराजिषु शुष्मिणो मत्ता भृङ्गा द्विजाः खगाश्च तेषां कुलानि तैर्घुष्टाः सरांसि सरितो महीध्राश्च यस्मिंस्तद्वनं कृष्णोऽवगाह्य प्रविश्य वेणुमवादयत् ॥ २ ॥

१ 'कुत्सिते मुदस्य'इत्यपि पाठः । २ मृगाः स्वगा इत्यार्षम् । मृग्यः खग्यः इत्यर्थः । ३ 'न्यविशत्पालको वनं' इति पाठः। 'अच्युत' इति पाठे वनमिति शेषः। ४ मधुपतिर्गोपपतिः श्लेषेण मधोर्वसन्तस्यापि पतिरिति वनशोभातिशयः । ५ चुकूजेत्यन्तर्भूतण्यर्थः, वादयांचक्र इत्यर्थः । ६ दृष्टं पद्धादिना मार्गरोधादि, अदृष्टं प्राणिहिंसादि ।

तत्कृष्णवेणुगीतं स्मरस्योदयो यस्मात्तदाश्रुत्य श्रुत्वा परोक्षं यथा भवति तथा, व्रजे स्थितत्वात् ॥ ३ ॥ विक्षिप्तमनसो व्याकुलचित्ताः ॥ ४ ॥ यादृशं कृष्णस्मरणं तासां मनसः क्षोभकं जातं तदाह—बर्हापीडमिति । नटवद्वरं वपुर्बिभ्रद्वृन्दावनं प्राविशत् । कथंभूतं वनम् । स्वपदैरङ्कितैः रमणं रतिजनकम् । गोपवृन्दैर्गीतकीर्तिः । तथा बर्हमयमापीडं शिरोभूषणं बिभ्रत् । बर्हमापीडो यस्मिन्निति वपुषो विशेषणं वा । वेणुवादनमुत्प्रेक्षते—रन्ध्रान्वेणोरिति । अतो नूनमधरसुधैव पूर्णाद्वेणोरुच्चलन्ती गीतवत्प्रसर्पितुमर्हतीति भावः ॥ ५ ॥ अभिरेभिरे वर्णयन्त्यः पदे पदे परमानन्दमूर्तिं कृष्णं परिरब्धवत्यः ॥ ६ ॥ अनुवर्णनमेवाह—अक्षण्वतामिति त्रयोदशभिः । अक्षण्वतां चक्षुष्मतां तावदिदमेव फलं प्रियदर्शनं परमन्यन्न विदामः, न विद्म इत्यर्थः । तच्च फलं सखिभिः सह

तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ॥ काश्चित्परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥ ३ ॥ तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् ॥ नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप ॥४॥ बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ॥ रन्ध्रान्वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः ॥५॥ इति वेणुरवं राजन्सर्वभूतमनोहरम् ॥ श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥६॥ ॥ गोप्य ऊचुः ॥ अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः ॥ वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७ ॥ चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ॥ मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्वच गायमानौ ॥ ८॥ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ॥ भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्याः ॥ ९ ॥ ॥ ॥

पशून्वनं प्रवेशयतो रामकृष्णयोर्वक्त्रं यैर्निपीतं तैरेव जुष्टं सेवितं, नान्यैरित्यर्थः । कथंभूतं वक्त्रम् । अनुवेणु वेणुमनुवर्तमानं तं वादयत् । तथाऽनुरक्तकटाक्षमोक्षं स्निग्धकटाक्षविसर्गम् । अथवा यैर्निपीतं तयोर्वक्त्रं तैर्यज्जुष्टमिदमेवाक्षण्वतामक्ष्णोः फलमिति ॥ ७ ॥ अन्या आहुः—चूतेति । चूतप्रवालादीनां चित्राभिर्मालाभिरनुपृक्ते ईषदन्तरान्तरतः संयुक्ते परिधाने नीलपीताम्बरे ताभ्यां विचित्रो वेषो ययोस्तौ क्वच कदाचित्पशुपालगोष्ठ्यां गोपालसभायां मध्ये अलमत्यर्थं विरेजतुः । अहो गोपानां पुण्यमि[ति] भावः ॥ ८ ॥ अन्या ऊचुः—हे गोप्यः, अयं वेणुः किं स्म पुण्यमाचरत्कृतवान् । कथम् । यद्यस्माद्गोपिकानामेव भोग्यां सतीमपि दामोदराधरसुधां स्वयं स्वातन्त्र्येण यथेष्टं भुङ्क्ते । कथम् । अवशिष्टरसं केवलमवशिष्टं रसमात्रं यथा भवति तथा । यतो यासां ह्रदि-

१ यद्वा तन्मयतयान्योन्य कृष्णं मत्वालिङ्गितवत्यः । २ नटवरेति बहुव्रीहिरभेदेऽपि भेदोपचारात्, यद्वा तद्वपुः बिभ्रत् शोभाभिः पुष्णन् । ३ स्वपदैः सर्वत्राङ्कितैः सर्वेषां सुखकरं, यद्वा स्वपदयो रमणं परागपत्रादिसमयत्वेन रञ्जकम् । ४ गायेन गानेन मानः पूजा ययोरितिवार्थः, यद्वा गाने मानः गर्वः असत्समो युष्मासु को गायकोऽस्ति सोऽत्रागत्य गायत्वित्यादिरूपो ययोस्तौ । ५ यत एतादृशो वेणुः अतोऽयं गोप्यः क्वापि संगोप्य रक्षणीयः । अत्र—'स्ववेणुः' इति पाठः, स च श्रीधरीटीकाननुगुणत्वान्नादृतः । ६ अनु ज्येष्ठभ्रातुः पश्चात् स्थितं वेणुजुष्टं । ७ अनुरक्तजनानां कटाक्षमोक्षो यत्र, अनुरक्तजनेषु वा कटाक्षमोक्षो यस्य । तेषामिन्द्रियवतां इदं निदानं सर्वेन्द्रियसाफल्यं विद्मः नान्यत् । यद्वा प्रीत्या जुष्टं दृष्टं यत् इदमेव पर केवलं फलं न विद्मः किं तर्हि अधरामृतपानद्वारा यैर्निपीत तेषा यन्निपानरूपं फलं इदमेवेति । यद्वा दृष्टं यत् इदमेव चक्षुःफलं इत्येतावद्विद्मः यत्तु निपीतं तेषां फलं वक्तुं न पार्यते इति शेष इति तोष० । ८ यद्वाऽवशिष्टो रसो रागो यत्र । सुधा भुक्तैव द्रवमात्रमवशिष्टमित्यर्थः । चक्रवर्ती तु न वशिष्टः अवशिष्टो रसः किंचिन्मात्रोपि यत्र तद्यथा भवति तथेति व्याचख्यौ । यद्वा यदवशिष्टरसं यस्य वेणोरवशिष्ट उच्छिष्टो यो रसो नादरूपस्तं ह्रदिन्योऽपि भुञ्जते । यतो हृष्यत्त्वचः ।

नीनां पयसा पुष्टस्ता मातृतुल्या ह्रदिन्यो हृष्यत्त्वचो विकसितकमलवनमिषेण रोमाञ्चिता लक्ष्यन्ते । येषां वंशे जातास्ते तरवो मधुधारामिषेणानन्दाश्रु मुमुचुः । यथा आर्याः कुलवृद्धाः स्ववंशे भगवत्सेवकं दृष्ट्वा हृष्यत्त्वचोऽश्रु मुञ्चन्ति तद्वदिति ॥ ९ ॥ काश्चिदाहुः—हे सखि, वृन्दावनं भुवः कीर्तिं स्वर्गादपि विशेषेण वितनोति । कथंभूतम् । यद्देवकीसुतस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः शोभासंपद्येन तत् । किंच गोविन्दस्य वेणुमनु वेणुनिनादं श्रुत्वाऽनन्तरं मन्दगर्जितं नीलमेघं तं मत्वा मत्ता ये मयूरास्तेषां नृत्यं प्रेक्ष्य सह्यशस्तत्र तत्राद्रिसानुष्वपरतान्युपरतक्रियाण्यन्यानि समस्तानि सत्त्वानि यस्मिंस्तत् । नैतदन्येषु लोकेषु विद्यते । अतो भुवः कीर्तिं वितनोतीत्यर्थः ॥ १० ॥ अपरा आहुः—हे सखि, मूढमतयस्तिर्यग्जातयोऽप्येता हरिण्यो धन्याः कृतार्थाः । या वेणुरणितं वेणुनादमाकर्ण्य नन्दनन्दनं प्रति प्रणयसहितैरवलोकनैर्विरचितां पूजां संमानं दधुः कृतवत्यः । किंच कृष्णसारैः स्वपतिभिः सहिता एव दधुः । असत्पतयस्तु गोपाः क्षुद्राः समक्षं तन्न सहन्त इति भावः ॥११॥ अन्या ऊचुः—हे गोप्यः, आश्चर्यं शृणुत । वनितानामुत्सवो यस्मात्तद्रूपं शीलं च यस्य तं कृष्णं निरीक्ष्य

वृन्दावनं सखि भुवो वितनोति कीर्तिं यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि ॥ गोविन्दवेणुमनुमत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥१०॥ धन्याः स्म मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम् ॥ आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥ ११ ॥ कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ॥ देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ १२ ॥ गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ॥ शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः ॥१३॥ प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन्कृष्णेक्षितं तदुदितं कलवेणुगीतम् ॥ आरुह्य ये द्रुमभुजान्रुचिरप्रवालान् शृण्वन्त्यमीलितदृशो विगतान्यवाचः ॥ १४ ॥ ॥

तेन वादितवेणोरसंकीर्णं गीतं च श्रुत्वा विमानैर्गच्छन्त्यो देव्यो देवानामङ्केषु स्थिता अपि स्मरेण नुन्नसाराः परिक्षिप्तधैर्या मुमुहुः । मोहे लिङ्गमाहुः—भ्रश्यत्प्रसूनाः कबराश्चूडा यासां ताः । विगता नीव्यो यासां ताः । अत्र सर्वत्र वक्तृभेदान्नातीव सङ्गतिर्वक्तव्या ॥ १२ ॥ क्षरणशङ्कयैवोत्तम्भितैरुन्नमितैः कर्णपुटैः पिबन्त्यः सत्यः । तथा शावाश्च वत्साश्च स्तनपाने प्रवृत्ताः । समनन्तरमेव गीतं श्रुत्वा तदेव पीयूषमुत्तम्भितकर्णपुटैः पिबन्तः स्नुतस्तनपयःकवलाः केवलं स्तनेभ्यः क्षरितक्षीरग्रासा मुखेषु येषां ते तस्थुः, विस्मृतक्रिया बभूवुरित्यर्थः । तत्र हेतुः—गोविन्दं दृशा मार्गेणात्मनि मनसि स्पृशन्त्य आलिङ्गन्त्यः । अत एवाश्रूणां कला लेशा लोचनयोर्यासां ता गावस्ते च शावाः ॥ १३ ॥ भो अम्ब मातः, अस्मिन्वने ये विहगाः पक्षिणस्ते प्रायेण मुनयो भवितुमर्हन्ति । कुतः । कृष्णेक्षितं कृष्णदर्शनं पुष्पफलाद्यन्तरं विना यथा भवति तथा रुचिराः प्रवाला येषां तान्द्रुमभुजान् वृक्षाणां शाखा आरुह्य तेन श्रीकृष्णेनोदितं प्रकटितं कल-

१ यद्वा गोविन्दस्य वेणोर्मनुर्नादात्मको मोहनमन्त्रस्तेन मत्तानामित्यादि । यद्वा मयूराणां नृत्यं यस्मिन् तत्प्रेक्ष्या दर्शनीया ये सानव इत्यादि । यद्वा स्वदर्शनहृष्टमयूरनृत्यं प्रेक्ष्य हर्षेण यो गोविन्दवेणुस्तद्वादनं तमनु सानुषु अवरतानि अन्यानि तद्दर्शनातिरिक्तप्रयोजनानि येषामिति तोष० । २ तेन कृष्ण एव सार उपादेयो येषामिति श्लेषेण च स्वपतिन्यूनता, तेन स्वभाग्यन्यूनत्वमिति तोष० । ३ 'अवरतान्य' इति पाठः । ४ 'वेणुरिफितं' इति पाठः । ५ 'रूपवेषम्' इति पाठः । ६ दृशा नेत्रेणाश्रूणि कलयन्ति वर्षन्ति ताः । ७ स्नुताः गलिताः स्तनपयांसि तृणकवलाश्च मुखेभ्यो येषामिति वा । ८ अश्रुभिर्दृष्ट्याच्छादनान्मनसा पश्यन्त्य इत्यर्थः । ९ कृष्णेक्षितं कृष्णकर्तृकं कृष्णकर्मकं वा दर्शनम् ।

वेणुगीतं केनापि सुखेनाऽमीलितदृशस्त्यक्तान्यवाचश्च सन्तो ये शृण्वन्तीति । तथा हि—मुनयः श्रीकृष्णदर्शनं यथा भवति तथा वेदोक्तकर्मफलपरित्यागेन
वेदद्रुमशाखारूढा रुचिरप्रवालस्थानीयानि कर्माण्येवोपाददानाः सुखिनः सन्तः श्रीकृष्णगीतमेव शृण्वन्ति । अतस्त एवैते भवितुमर्हन्तीति भावः ॥ १४ ॥
आस्तां चेतनानां कथा, नद्योऽप्यावर्तैः परिभ्रमैर्लक्षितेन सूचितेन मनोभवेन कामेन भग्नो वेगो यासां ता आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा
ऊर्मय एव भुजास्तैः कमलोपहारा कमलान्युपहरन्त्यो मुरारेः पादयुगलं गृह्णन्ति धारयन्ति ॥ १५ ॥ लोकार्तिहरणशीलत्वादिसाम्यात्सख्युः श्रीकृष्णस्याम्बुदस्त-
दुपर्युदितः पुनः प्रेम्णा प्रवृद्धः सन् कुसुमावलीभिः पुष्पसमूहैस्तत्तुल्यैस्तुषारैर्वा सह स्ववपुषा छत्रं विहितवान् ॥१६॥ साहंकारमाहुः—पूर्णाः कृतार्थाः । पुलिन्द्यः
शबराङ्गनाः । कथमित्यत आहुः—प्रथमं दयितानां स्तनेषु मण्डितेनानुलिप्तेन पुनश्च रतिसमये उरुगायस्य श्रीकृष्णस्य पदाब्जयो रागेणारुण्येन श्रीः कान्तिर्यस्य
तेन कुङ्कुमेन पुनस्तस्य वनस्थलीषु चंक्रमणेन तृणेषु रूषितेन लग्नेन तद्दर्शनेन तथाभूतस्य कुङ्कुमस्य दर्शनेन स्मरकृता रुक् तापो यासां तास्तेन कुङ्कुमेनाननेषु कुचेषु

नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः ॥ आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादयु-
गलं कमलोपहाराः ॥ १५ ॥ दृष्ट्वाऽऽतपे व्रजपशून्सह रामगोपैः संचारयन्तमनुवेणुमुदीरयन्तम् ॥ प्रेमप्रवृद्ध
उदितः कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषाम्बुद आतपत्रम् ॥ १६ ॥ पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्री-
कुङ्कुमेन दयितास्तनमण्डितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥ १७ ॥
हन्तायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसू-
यवसकन्दरकन्दमूलैः ॥ १८ ॥ गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ॥ अस्पन्दनं
गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥ १९ ॥ ॥ ॥

च कामतप्तेषु लिम्पन्त्यस्तदाधिं कामव्यथां जहुः । अतस्ताः कृतार्थाः, धिगन्या मादृश्यो या एवंभूतमप्याधिशमनं न लभन्त इति भावः ॥ १७ ॥ हन्तेति हर्षे ।
हे सख्यः, अयमद्रिर्गोवर्धनो ध्रुवं हरिदासेषु श्रेष्ठः । कुत इत्यत आहुः—यस्माद्रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः । तृणाद्युद्गमनिभेन रोमहर्षदर्शनात् ।
किंच यद्यस्मान्मानं तनोति सह गोभिर्गणेन सखिसमूहेन च वर्तमानयोस्तयोः । कैः । पानीयैः सूयवसैः शोभनतृणैः कन्दरैश्च कन्दमूलैश्च यथोचितम् । अतोऽय-
मतिधन्य इत्यर्थः ॥ १८ ॥ हे सख्यः, इदं त्वतिचित्रम् । गोपैः सह वने वने गाः संचारयतोस्तयो रामकृष्णयोर्मधुरपदैर्महावेणुनादैः । शरीरिषु ये गतिम-
न्तस्तेषामस्पन्दनं स्थावरधर्मः, तरूणां पुलको जङ्गमधर्म इति । नियुज्यन्ते गाव आभिरिति निर्योगाः पादबन्धरज्जवोऽधृष्यगवां कर्षणार्थाः पाशाश्च तैः कृतं
लक्षणं चिह्नं ययोः । शिरसि निर्योगवेष्टनेन स्कन्धस्थपाशेन च गोपपरिवृढश्रिया विराजमानयोरित्यर्थः ॥ १९ ॥ ॥ ॥ ॥

१ कृष्णदर्शनार्थं निर्निमेषदृश इत्यर्थः । 'शृण्वन्ति मीलितदृशः' इति पाठः । २ दृष्ट्वेति मेघकर्तृकं दर्शनं तु विद्युच्चक्षुषेति ज्ञेयम् । ३ सूयवस इत्यत्र छन्दोनुरोधाद्दीर्घ आर्षः । यद्वा पानीयं सुवते क्षरतीति तत्सुवः निर्झरः । 'पानीयभू' इति पाठे उपवेशस्थानम् । ४ गोपकैरिति तत्परिवारत्वेनानुकम्प्याविषयत्वात्कन् । ५ प्रमोदो रोमाञ्चस्वेदाश्रुस्थानीयतृणोद्गमार्द्रताजलस्रावलक्षणः । ६ निभेन मिषेण । 'निभस्तु कथितो व्याजे' इति मेदिनी । क्वचिच्च 'मिषेण' इत्येव पाठः ।

॥ २० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां एकविंशोऽध्यायः ॥ २१ ॥ ॥ गोपीनां कामतः कृष्णे निःसीमप्रेमसङ्गमः ॥ कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥ १ ॥ द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ॥ वरं दत्त्वा गतः कृष्णो यज्ञशालामितीर्यते ॥ २ ॥ प्रथमे मासि मार्गशीर्षे ॥१॥२॥३॥ महामाये इत्यादिसंबोधनैस्तव न किंचिदशक्यमिति सूचयन्त्यः प्रत्येकं प्रार्थयन्ते ॥४॥ कृष्णचेतस्त्वमाह—भूयान्नन्दसुतः

एवंविधा भगवतो या वृन्दावनचारिणः ॥ वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥२०॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे एकविंशतितमोऽध्यायः ॥२१॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥ १ ॥ आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे ॥ कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥ २ ॥ गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपहारैः प्रवालफलतण्डुलैः ॥ ३ ॥ कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥ इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥४॥ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥ भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः ॥५॥ उपस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः ॥ कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥६॥ नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् ॥ वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा ॥७॥ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ॥ वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥८॥ तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह ॥ ९ ॥ अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् ॥ सत्यं ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः ॥ १० ॥ न मयोदितपूर्वं वा अनृतं तदिमे विदुः ॥ एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ॥११॥ तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ॥ व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥ १२ ॥ ॥

पतिरित्यानर्चुरिति ॥५॥ व्रतस्य पूर्वाङ्गमाह—उपसीति । गोत्रैर्नामभिः । अन्योन्याबद्धबाहवः परस्परं गृहीतपाणयः ॥६॥७॥ योगेश्वराणामीश्वर इति प्रत्येकं तादृङ्मनोरथपूरणसामर्थ्यं दर्शयति—तासां कर्मणः सिद्धये फलदानायेति ॥८॥ नीपं कदम्बम् । बालैः सह ॥ ९ ॥ हे अबलाः, नो नर्म न परिहासः । यस्माद्यूयं व्रतश्रान्ताः ॥१०॥ एकैकशो वा आगत्य स्वीकुरुत सहैव वा, न तत्रास्माकमाग्रह इत्यर्थः ॥११॥ क्ष्वेलितं परिहासः । प्रेमपरिप्लुताः प्रेमरसनिमग्नाः ॥१२॥ ॥

१ तन्मयतां क्रीडाविष्टतां ययुः । २ नन्दस्य व्रजे याः कुमारिकाः । वाच्यविवक्षया अल्पार्थे कन् । 'नन्दगोपकुमारिकाः' इति पाठः । ३ अर्चनरूपमेव व्रतम् । ४ वालुकामयीम् । ५ भूयादिति श्रीकृष्णपतिप्राप्त्यर्थं व्रतं करिष्य इत्येवं पूजायां संकल्प्य देवीमानर्चुरित्यर्थः । ६ 'वयस्यैरागतस्तत्र गुरुः' इति पाठः । ७ तस्येत्यादि शुकवाक्यम् । अत शुक उवाचेति क्वचित् ।

॥ १३ ॥ तत्र मुग्धा ऊचुः—अङ्ग भोः कृष्ण, अनयमन्याय्यं मा कृथाः ॥१४॥ प्रौढा ऊचुः—नो चेद्राज्ञे नन्दाय कंसाय वा ब्रुवाम ब्रवाम । हे कृष्णेति ॥१५॥ ॥ १६ ॥ प्रोत्तेरुर्निर्गताः ॥ १७ ॥ आहताः ईषदक्षतयोनीर्वीक्ष्य ॥ १८ ॥ धृतव्रताः सत्यो विवस्त्रा अपो व्यगाहताप्सु स्नाता इति यत्तदेतत् उ एव देवहेलनं, अपराध एवेत्यर्थः । व्रतवैगुण्यभीतानां प्रायश्चित्तमिवाह—अस्यांहसः पापस्य निवृत्तये मूर्ध्न्यञ्जलिं बद्ध्वाऽधो नमः प्रणामं कृत्वेति ॥ १९ ॥ इति दोषत्वेनाच्युतेनाभिहितं विवस्त्राप्लवनं व्रतस्य च्युतिहेतुं मत्वा तस्य पूर्तिकामास्तदशेषकर्मणां तस्य व्रतस्यान्येषामशेषकर्मणां च साक्षात्कृतं फलभूतं तमेव नेमुः । स एवावद्यमृक् पापमार्जकः

एवं ब्रुवति गोविन्दे नर्मणा क्षिप्तचेतसः ॥ आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥१३॥ माऽनयं भोः कृथास्त्वां तु नन्दगोपसुतं प्रियम् ॥ जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥१४॥ श्यामसुन्दर ते दास्यः करवाम तवोदितम् ॥ देहि वासांसि धर्मज्ञ नो चेद्राज्ञे ब्रुवाम हे ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ ॥ अत्रागत्य स्ववासांसि प्रतीच्छन्तु शुचिस्मिताः ॥१६॥ ततो जलाशयात्सर्वा दारिकाः शीतवेपिताः ॥ पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥ १७ ॥ भगवानाहता वीक्ष्य शुद्धभावप्रसादितः ॥ स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥ १८ ॥ यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम् ॥ बद्ध्वाञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥ १९ ॥ इत्यच्युतेनाभिहितं व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ॥ तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग्यतः ॥ २० ॥ तास्तथाऽवनता दृष्ट्वा भगवान्देवकीसुतः ॥ वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः ॥ २१ ॥ दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ॥ वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन्प्रियसङ्गनिर्वृताः ॥२२॥ परिधाय स्ववासांसि प्रेष्ठसंगमसज्जिताः ॥ गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणाः ॥ २३ ॥

॥२०॥२१॥ दृढमत्यर्थं प्रलब्धा वञ्चिताः 'यूयं विवस्त्राः' इत्यादिना, त्रपया लज्जया हापितास्त्याजिताः 'अत्रागत्य स्ववासांसि' इत्याग्रहेण प्रस्तोभिता उपहसिताः 'सत्यं ब्रवाणि नो नर्म' इत्यादिना, क्रीडनवत्कारिताश्च 'बद्ध्वाञ्जलिं' इत्यादिप्रायश्चित्तच्छलेन । ता नाभ्यसूयन् दोषदृष्ट्या नापश्यन् ॥ २२ ॥ प्रेष्ठसङ्गमेन सज्जिता वशीकृता अतो गृहीतचित्ताः सत्यो नो चेलुः । गृहीतचित्तत्वमाह—तस्मिन्कृष्णे लज्जायितेक्षणाः—लज्जाविलसितमीक्षणं यासां ता इत्यर्थः ॥ २३ ॥

१ हन्तेर्गत्यर्थत्वात्समीपमागता इत्यर्थमाहुर्बालबोधिनीकाराः । चक्रवर्ती तु कुलवधूना लज्जात्यागस्य मरणतुल्यत्वान्मृततुल्या इत्यर्थमाह । २ व्रजे व्रजेन वा श्लाघ्यं जानीम 'इति निन्द्यमेतन्न युक्तं । यद्वा अङ्गव्रजश्लाघ्यमित्येकपदम् । अङ्गैरेव व्रजे श्लाघ्यं नतु गुणैरित्यर्थः । ३ यतः वेपिताः, वेपिताः प्रतीति वा । ४ 'स्याम सुन्दर' इति चित्सुखपाठस्तत्र दास्यः स्याम भवामेत्यर्थः । ५ एतदग्रे—''नो चेन्नाहं प्रदास्ये किं वृद्धो राजा करिष्यति' विजयध्वजचक्रवर्तिनोः पाठेऽर्धमधिकम् । ६ 'व्रतकर्शिताः' इति पाठः । ७ बद्ध्वाञ्जलिं मूर्ध्नीत्यनेनैकहस्तनमस्कारस्य निषिद्धत्वात्केवलेन शिरसा नमनस्य गौणत्वादधोऽञ्जलिकरणस्यापि तथात्वान्मूर्ध्न्यञ्जलिविधानपूर्वकनमस्करणमेवांहोनिवर्तकमिति बोधितमिति चक्रवर्ती । ८ अधोवसनं परिधानीयवस्त्रमिति वा । ९ क्रीडनं काष्ठपुत्रिका तद्वत् कारिताः ।

दामोदर इति भक्तवात्सल्यं दर्शयति—अवलाः प्रति ॥ २४ ॥ भोः साध्व्यः, भवतीनां मदर्चनमेव संकल्पो मनोरथः, स च लज्जया युष्माभिरकथितोऽपि मया विदितः, स मयानुमोदितः । अतः सत्यो भवितुमर्हति। अर्हतीति संभावनोक्त्या आत्यन्तिको न भविष्यतीति सूचितम् ॥ २५ ॥ तत्कुत इत्यत आह—न मयीति । कामाय पुनः कामभोगाय । विषयमहिम्ना कामस्यापि शान्तिहेतुत्वादिति भावः । कामाप्ररोहे दृष्टान्तः—भर्जिता दग्धा क्वथिता पक्वा धाना यवादिवीजायाङ्कुरोद्गमाय । प्राय इति स्वेच्छया पुनः प्ररोहमपि सूचयति—ध्रुवादीनां तथा दर्शनात् ॥२६॥ सिद्धाः पूर्णमनोरथाः । तदाह—इमा आगामिनी

तासां विज्ञाय भगवान्स्वपादस्पर्शकाम्यया[1] ॥ धृतव्रतानां संकल्पमाह दामोदरोऽवलाः ॥ २४ ॥ संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम् ॥ मयानुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥ २५ ॥ न मय्यावेशितधियां कामः कामाय कल्पते ॥ भर्जिता[2] क्वथिता धाना प्रायो बीजाय नेशते[3] ॥ २६ ॥ यातावला व्रजं सिद्धा मयेमा[4] रंस्यथ क्षपाः ॥ यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥ २७ ॥ ॥ श्रीशुक उवाच ॥ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ॥ ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥ २८ ॥ अथ गोपैः परिवृतो भगवान्देवकीसुतः ॥ वृन्दावनाद्गतो दूरं चारयन्गाः सहाग्रजः ॥ २९ ॥ निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ॥ आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥ ३० ॥ हे स्तोककृष्ण[5] हे अंशो श्रीदामन्सुबलार्जुन ॥ विशालर्षभ तेजस्विन्देवप्रस्थ वरूथप ॥ ३१ ॥ पश्यतैतान्महाभागान्परार्थैकान्तजीवितान् ॥ वातवर्षातपहिमान्सहन्तो वारयन्ति नः ॥ ३२ ॥ अहो एषां वरं जन्म सर्वप्राण्युपजीवनम्[6] ॥ सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥ ३३ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥ गन्धनिर्यासभस्मास्थि[7]तोक्मैः कामान्वितन्वते ॥ ३४ ॥ एतावज्जन्मसाफल्यं देहिनामिह देहिषु ॥ प्राणैरर्थै[8]र्धिया वाचा श्रेयं एवाचरेत्सदा[9] ॥ ३५ ॥ इति प्रवालस्तवकफलपुष्पदलोत्करैः ॥ तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥ ३६ ॥ ॥ ॥

रात्रीर्मया रंस्यथेति । आर्या कात्यायनी । सतीः सत्यः ॥२७॥२८॥२९॥३०॥३१॥ 'भक्त्यानुकम्प्य कन्यास्तास्तद्विवर्जितयज्वनाम् ॥ पत्न्यनुग्रहतस्तेपामहन्कर्ममहामदम्' ॥१॥ विप्रभार्यानुग्रहाय यज्ञवाटं गच्छन्विप्राणां काठिन्यमभिप्रेत्य तेभ्योऽपि द्रुमाः श्रेष्ठा इति तानभिनन्दति चतुर्भिः—पश्यतेति। हे स्तोककृष्णादयो गोपाः, एतान् द्रुमान्पश्यत । परार्थमेवैकान्तेन जीवितं येषां तान् । तदाह—वातवर्षादीन्स्वयं सहन्तः सहमाना अस्माकं वारयन्ति ॥३२॥ सुजनस्य कृपालोरर्थिन इव ॥ ३३ ॥ निर्यासो घनरसः । तोक्माः पल्लवाद्यङ्कुराः ॥ ३४ ॥ ३५ ॥ इत्यभिनन्दन् प्रवालादिसमूहैर्नतशाखानां तरूणां मध्येन यमुनां प्राप्तः ॥ ३६ ॥

१ स्वपादस्पर्शः पत्नीत्वेन स्वसांनिध्यं तदिच्छया । २ 'भर्जिताः क्वथिता धानाः प्रायो बीजाय नेशते' इति चक्र० पाठः । ३ 'नेष्यते' इति चित्सुखपाठः । ४ अयेति लीलान्तरारम्भे नरवानन्तर्ये । ५ स्तोककृष्ण एकः अंश्वादयश्च नव । ६ 'प्राण्युपजीविनां' इति पाठस्तत्र ण्यन्ताण्णिनिः । ७ अस्थि साराशः । ८ प्राणैः प्राणानादरेणोपकारैः धिया सदुपायचिन्तनादिना, वाचा परोपदेशैः । ९ 'श्रेय आचरणं सदा' इति पाठः ।

॥ ३७ ॥ कुमारिकाभ्यः पूर्वमेव तन्नर्माकुलतया अगृहीतभोज्यानामेव निर्गमात्क्षुधार्तौ इत्युक्तम् ॥३८॥ ॥ इति श्रीमद्भागवते म० पु० दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ॥ तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥ १ ॥ १ ॥ भक्ताया इत्येकवचनं सद्यः सायुज्याभिप्रायेण ॥ २ ॥ ३ ॥ अस्मद्विसर्जिता आवाभ्यां प्रहिताः सन्तो याचध्वम् । युष्माकं का तत्र लज्जा । ननु तथाप्यपात्रत्वादस्मभ्यं किमिति दास्यन्तीति चेत्तत्राह—कीर्तयन्त इति ॥ ४ ॥ ५ ॥ ६ ॥ अविदूरे वर्तमानौ सन्तौ वो यदन्नं तल्लपतोऽभिलषतः । वः ओदनं श्रद्धा

तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतलाः शिवाः ॥ ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥ ३७ ॥ तस्या उपवने कामं चारयन्तः पशून्नृप ॥ कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे द्वाविंशोऽध्यायः ॥२२॥ ॥ गोपा ऊचुः ॥ राम राम महावीर्य कृष्ण दुष्टनिबर्हण ॥ एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः ॥१॥ ॥ श्रीशुक उवाच ॥ इति विज्ञापितो गोपैर्भगवान्देवकीसुतः ॥ भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥ २ ॥ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ॥ सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥ तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः ॥ कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥ इत्यादिष्टा भगवता गत्वाऽयाचन्त ते तथा ॥ कृताञ्जलिपुटा विप्रान्दण्डवत्पतिता भुवि ॥ ५ ॥ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः ॥ प्राप्तान् जानीत भद्रं वो गोपान्नो रामचोदितान् ॥ ६ ॥ गाश्चारयन्तावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ॥ तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥ ७ ॥ दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः ॥ अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति ॥ ८ ॥ इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः ॥ क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥ ९ ॥ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ १० ॥ ॥ ॥ ॥

च यद्यस्ति तर्हि यच्छतेति ॥७॥ दीक्षिता वयमभोज्यान्ना इति वदिष्यन्तीति स्वयमेवाशङ्क्याहुः—दीक्षाया आरभ्याग्नीषोमीयपश्वालम्भनात्पूर्वं दोषः । न ततोऽन्यत्र। तथा सौत्रामण्याश्चान्यत्रान्यदा ॥८॥ क्षुद्रे स्वर्गादावाशामात्रं येषाम् । भूरीणि क्लेशाधिकानि कर्माणि येषाम्। अतोऽज्ञा वृथा ज्ञानवृद्धा इति मानवन्तः ॥९॥ ननु कर्मक्रममुल्लङ्घ्य आदेशकालेऽन्यार्थमन्नमन्यस्मै कथं देयं तत्राह—देश इति । पृथक् चरुपुरोडाशादिद्रव्यम् । तन्त्रं प्रयोगः । धर्मोऽपूर्वम् ॥ १० ॥ ॥

---

१ अथवा जातावेकवचनं। ताः प्रति प्रसीदन्नित्यर्थः। २ मृष्टाः स्वच्छाः। ३ अत्रानवसरेऽध्यायसमाप्तिः उत्तरलीलां स्मृत्वा क्षणं शुकाचार्याणां स्तब्धीभावेन कथाविच्छेदादिति तोष० । ४ 'कृष्णयमुनागमनं नाम' इति पाठः । ५ ब्रह्मवादिन इति वेदवादिन एव नतु वेदविद इति व्यङ्ग्यम् । ६ अङ्गिरसा कथितं बृहस्पतिसवमित्यर्थ इति विज० ।

मनुष्योऽयमिति दृष्ट्वा मर्त्यात्मानो ब्राह्मणा वयं महान्त इति मन्यमानाः ॥ ११ ॥ १२ ॥ लौकिकीं गतिं नहि कार्यार्थिनो निर्विद्यन्ते को वा याचको न पराभूयत इत्यादि लोकस्थितिं दर्शयन् ॥ १३ ॥ केवलं देहेन गृहे वसन्ति धिया च मय्येवोषिताः । यतो मयि स्निग्धा अतो दास्यन्तीति ॥ १४ ॥ १५ ॥ ईषिताः प्रेषिताः ॥ १६ ॥ स कृष्णो गोपालैः सह ॥ १७ ॥ तत्कथाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाः । अत एव तमुपागतं श्रुत्वा जातसंभ्रमा बभूवुः ॥ १८ ॥ भक्ष्यभोज्यलेह्यचोष्यभेदैश्चतुर्विधम् । बहुगुणं संस्कारविशेषैर्बहवो गुणा रससौरभ्यादयो यस्मिंस्तत् । भाजनैरमत्रैर्भाण्डैर्वा । पत्यादिभिर्वार्यमाणा अपि प्रियं

तं ब्रह्म परमं साक्षाद्भगवन्तमधोक्षजम् ॥ मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥ ११ ॥ न ते यदोमिति प्रोचुर्न नेति च परन्तप ॥ गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥ १२ ॥ तदुपाकर्ण्य भगवान्प्रहस्य जगदीश्वरः ॥ व्याजहार पुनर्गोपान्दर्शयँल्लौकिकीं गतिम् ॥ १३ ॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् ॥ दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया ॥ १४ ॥ गत्वाथ पत्नीशालायां दृष्ट्वासीनाः स्वलंकृताः ॥ नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ १५ ॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः ॥ इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥ १६ ॥ गाश्चारयन्स गोपालैः सरामो दूरमागतः ॥ बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥ १७ ॥ श्रुत्वाच्युतमुपायान्तं नित्यं तद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्रमाः ॥ १८ ॥ चतुर्विधं बहुगुणमन्नमादाय भाजनैः ॥ अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः सुतैः ॥ भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥ २० ॥ यमुनोपवनेऽशोकनवपल्लवमण्डिते ॥ विचरन्तं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥ २१ ॥ श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥ २२ ॥ ॥ ॥

श्रीकृष्णमभिसस्रुरभिजग्मुः । अप्रतिबन्धे दृष्टान्तः—समुद्रं निम्नगा नद्य इवेति ॥ १९ ॥ अत्र हेतुः—भगवतीति । दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो याभिस्ताः ॥ २० ॥ तथागताः सत्यो ददृशुः ॥ २१ ॥ हिरण्यवत्परिधिः परिधानं यस्य तं पीताम्बरमित्यर्थः । वनमाल्यैर्बर्हैर्धातुभिः प्रवालैश्च नटवद्वेषो यस्य तम् । अनुव्रतस्य सख्युरंसे विन्यस्तो निहितो हस्तो येन तम् । इतरेण हस्तेन लीलयाऽब्जं धुनानं भ्रामयन्तम् । कर्णयोरुत्पले यस्य, अलकाः कपोलयोर्यस्य, मुखाब्जे हासो यस्य, तं च तं च तं च ॥ २२ ॥ ॥ ॥ ॥ ॥

१ अमत्रैः पत्रादिनिर्मितैः, यद्वा सभ्रमेण पाकपात्रैरेव पत्यादिभिर्वार्यमाणा अपि । २ प्रकर्षेण पात्रादिषु निधाय दीयताम् । ३ तत्कथया बुभुक्षावार्तया क्षिप्तं मनो यासाम् । ४ अभिसस्रुरभिजग्मुः । तासां तदानीं कृष्णं प्रति नायिकात्वाभिमानमालक्ष्याभिसस्रुरित्युक्तमिति चक्र० ।

वृत्तेरपि लयेन सामरस्यमाह—प्राय इति । बहुशः श्रुता ये प्रियतमस्योदया उत्कर्षास्त एव कर्णपूराः कर्णौ पूरयन्ति कृतार्थौ कुर्वन्तीति तथा तैः, कर्णाभरणैरिति वा । यस्मिन्कृष्णे निमग्नमनस आविष्टचेतसस्तं लोचनद्वारैरन्तः प्रवेश्य सुचिरमुपगुह्य तापं जहुः । अभिमतयोऽहंवृत्तयः प्राज्ञं सुषुप्तिसाक्षिणं परिरभ्य तस्मिन् लयं प्राप्य यथेति ॥ २३ ॥ अखिलदृग्द्रष्टा सर्वबुद्धिसाक्षी । तास्तथा प्राप्ता विज्ञायापि । तथेत्येतद्विवृणोति—त्यक्तसर्वाशास्त्यक्ताः सर्वा आशा याभिस्ताः । केवलमात्मनः स्वस्यैव दिदृक्षयेति ॥ २४ ॥ हे महाभागाः, वः स्वागतं शुभमागमनम् । तदेवाह—यद्यस्मात्प्रतिबन्धतिरस्कारेणास्माकं दिदृक्षया प्राप्ता इति । इदं च उपपन्नं संपन्नं युक्तमिति वा ॥२५॥ युक्तत्वमाह—नन्विति । आत्मप्रिये आत्मा च प्रियश्च तस्मिन्मयि कुशला विवेकिनोऽत एव स्वस्यात्मनोऽर्थं पुरुषार्थं पश्यन्ति ये ते यथा यथावद्भक्तिं कुर्वन्ति । यथावत्त्वमाह—अद्धा साक्षात् । अत्र हेतुः—अहैतुक्यव्यवहितां फलाभिसंधिरहितामत एवाव्यवहितां निरन्तराम् ॥ २६ ॥ आत्मनः सर्वतः प्रेष्ठत्वमुपपादयति—प्राणेति । स्वा ज्ञातयः आत्मा देहः । एते सर्वे यत्संपर्काद्यस्याध्यासेनोपकरणत्वेन वा ॥ २७ ॥ तत्तस्मात्कृतार्था यूयं देवयजनं यज्ञवाटं यात गच्छत । ननु कृतार्थाः किमिति यास्याम इति चेदत आह—पतय इति । पारयिष्यन्ति समापयिष्यन्ति । पतीनामनुग्रहायेत्यर्थः ॥ २८॥ नृशंसं परुषम् । निगमं प्रतिज्ञां—'न मे भक्तः प्रणश्यति' इति । वेदं वा—'न स पुनरावर्तते' इति । पदावसृष्टमवज्ञयापि दत्तम् । बहुमानेन केशैर्निवोढुं दासीभवितुम् ॥ २९ ॥ किंच न गृह्णन्ति नोऽस्मान् । हे अरिन्दम कामलोभपापादिदमन, भवतः प्रपदयोः पादाग्रयोः पतितदेहानामन्या स्वर्गादिगतिरपि न भवेन्मा भूत् । तत्तस्माद्दास्यमेव विधेहीति ॥ ३० ॥ ॥ ॥

प्रायः श्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरन्ध्रैः ॥ अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाभिमतयो विजहुर्नरेन्द्र ॥ २३ ॥ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया ॥ विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥ २४ ॥ स्वागतं वो महाभागा आस्यतां करवाम किम् ॥ यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः ॥ २५ ॥ नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शिनाः ॥ अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥ २६ ॥ प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ॥ यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः ॥ २७ ॥ तद्यात देवयजनं पतयो वो द्विजातयः ॥ स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः ॥२८॥ ॥ पत्न्य ऊचुः ॥ मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम् ॥ प्राप्ता वयं तुलसिदाम पदावसृष्टं केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून् ॥ २९ ॥ गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबन्धुसुहृदः कुत एव चान्ये ॥ तस्माद्भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद्गतिररिन्दम तद्विधेहि ॥ ३० ॥ ॥ ॥

१ यद्वा उदयानां कर्णेषु पूराः प्रवाहास्तैरिति वा । २ अभिमतयः अभि परिरम्भणायाभिमुखी मतिर्येषां ते प्राज्ञं भागवतमालिङ्ग्य यथेति तोष० । ३ आत्मनः सकाशादपि प्रिये इति वा । ४अहैतुकी चासावव्यवहिता चेति समासः।'न कोपधायाः' इति पुंवद्भावनिषेधः।'इयमेवाव्यभिचारिणी भक्ति'रुच्यते।५'भयात साध्व्यो यजनं' इति पाठः।६ अथवा करवाम किं इति वा प्रतिज्ञा।

मयोपेता अनुज्ञाताः । प्रत्यक्षं देवान् प्रदर्शयाह—देवा अपीति ॥ ३१ ॥ तथापि त्वां त्यक्तुं न शक्नुम इति चेत्तत्राह—नेति । प्रीतये सुखाय अनुरागाय स्नेहवृद्धये । अङ्गसङ्गोऽङ्गाभ्यां सङ्गः ॥३२॥ अनसूयवः अदोषदृष्टयः ॥३३॥ देहमिति । तदीयं देहं तत्र विहाय चैतन्येन भगवन्तं प्रापेत्यर्थः ॥३४॥३५॥ अनुशीलयन्ननुकुर्वन् । गोगोपगोपीनामिति कर्मणि षष्ठी । रूपवाकृतैः रूपेण वाचा कृतैश्चरित्रैश्च रमयन् । ता रमयितुं रेम इत्यर्थः ॥३६॥ अनुस्मृतिप्रकारमाह—नरानुकरणवतोर्विश्वेश्वरयोर्याच्ञां यदहन्म हतवन्तस्तत्कृतागसो वयमित्यनुस्मृत्येति ॥ ३७ ॥ तदा च भार्यां गुरूनिव मानयन्तो भगवद्भक्तिरहितमात्मानं

॥ श्रीभगवानुवाच ॥ पतयो नाभ्यसूयेरन्[1] पितृभ्रातृसुतादयः ॥ लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥ ३१ ॥ न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह ॥ तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ ॥३२॥[2] ॥ श्रीशुक उवाच ॥ इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ॥ ते चानसूयवः स्वाभिः[3] स्त्रीभिः सत्रमपारयन् ॥३३॥ तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् ॥ हृदोपगुह्य वि[4]जहौ देहं कर्मानुबन्धनम् ॥३४॥ भगवानपि गोविन्दस्तेनैवान्नेन गोपकान् ॥ चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥३५॥ एवं लीलानरवपुर्नृलोकमनुशीलयन् ॥ रेमे गोगोपगोपीनां रमयन् रूपवाकृतैः ॥ ३६ ॥ अथानुस्मृत्य विप्रास्ते अन्वतप्यन्कृतागसः ॥ यद्विश्वेश्वरयोर्याच्ञामहन्म नृविडम्बयोः ॥ ३७ ॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ॥ आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥३८॥ धिग्[5]जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम् ॥ धिक्कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥३९॥ नूनं भगवतो माया योगि[6]नामपि मोहिनी ॥ यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ॥ दुरन्तभावं योऽविध्यन्मृत्युपाशान्गृहाभिधान् ॥ ४१ ॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि ॥ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥४२॥ अथापि ह्युत्तमश्लोके कृष्णे योगे[7]श्वरेश्वरे ॥ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया ॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥४४॥

व्यनिन्दन्नित्याह—दृष्ट्वेति । अलौकिकीं लोकातीताम् ॥३८॥ त्रिवृत् शौक्रं सावित्रं दैक्षमिति त्रिगुणितं जन्म । व्रतं ब्रह्मचर्यम् । क्रियाः कर्माणि दाक्ष्यं च । क्रियादाक्ष्यमित्येकं वा पदम् । धिगित्यधिक्षेपे । ये वयं त्वधोक्षजे विमुखास्तेषां जन्मादि तत्सर्वं धिगिति व्यगर्हन्नित्यर्थः ॥ ३९ ॥ ४० ॥ योऽविध्यदच्छिनत्तं दुरन्तं भावं भक्तिं पश्यतेति ॥ ४१ ॥ द्विजातिसंस्कार उपनयनम् । क्रियाः सन्ध्योपासनादयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ॥



१ नाभ्यसूयेरन् दोषदृष्टिमपि न कुर्युः । २ एतदग्रे—'श्रवणान्मदनुध्यानान्मयि भावोऽनुकीर्तनात् । न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥' इत्येकः श्लोकोऽधिकः क्वचित् । ३ 'ताभिः' इति पाठः । ४ विशब्दः पुनरावृत्तिनिषेधार्थः । ५ 'धिग्जन्म नस्त्रिवृतम्' इति पाठः । ६ योगिनां कर्मयोगिना अष्टाङ्गयोगिना च । ७ योगेश्वरा भक्तियोगवन्तस्तेषामीश्वरे सेव्ये ।

॥ ४५ ॥ आत्मनो दोषापवर्गेण चाञ्चल्यगर्वादित्यागेन ॥ ४६ ॥ ४७ ॥ इत्थंभूतम एवं सर्वत्र श्रुतवन्तो वयं हि तथाऽपीति ॥ ४८ ॥ ४९ ॥ ५० ॥५१॥
न चाचलन् तयोर्दर्शनाय न जग्मुः ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥
चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ॥ कृष्णः प्रवर्तयामास गोवर्धनमखोत्सवम् ॥१॥ भूसुराणां क्रियागर्वं निरस्य स्वःसुरेषु च ॥ मघवन्मदभङ्गाय तन्मखं

अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः ॥ ईशितव्यैः किमस्माभिरीशस्यैतद्विडम्बनम् ॥४५॥ हित्वान्यान्भजते यं श्रीः पादस्पर्शाशयासकृत् ॥ आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥४६॥ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ ४७ ॥ स एष भगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः ॥ जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ॥ ४८ ॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ॥ भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥ ४९ ॥ नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ॥ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥ ५० ॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ॥ अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥५१॥ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ॥ दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाचलन् ॥५२॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे यज्ञपत्न्युद्धरणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ भगवानपि तत्रैव बलदेवेन संयुतः अपश्यन्निवसन्गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥ तदभिज्ञोऽपि भगवान्सर्वात्मा सर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छद्वृद्धान्नन्दपुरोगमान् ॥२॥ कथ्यतां मे पितः कोऽयं संभ्रमो व उपागतः ॥ किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥ एतद्ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः ॥ नहि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥ ४ ॥ ॥

समवारयत् ॥२॥ ब्राह्मणाः कंसाद्भीताः स्वाश्रमस्था एव भगवन्तमभजन् । भगवानपि तत्रैव निवसन्निन्द्रयागकृतोद्यमान्गोपानपश्यदिति संबन्धः ॥ १ ॥ २ ॥ वृथासंभ्रमो न भवति । मखोऽयमित्येवं चेत् किमत्र फलं, का देवता, केनाधिकारिणा, केन वा साधनेन साध्यते ॥ ३ ॥ एतद्ब्रूहि महान्कामो मम श्रवणे वर्तते । यद्वा तव महान्कामो दृश्यत इति । तूष्णीं स्थितं प्रत्याह—नेति । सर्वात्मनां सर्वत्रात्मदृष्टीनाम् ॥ ४ ॥ ॥ ॥

१ 'महोत्सवम्' इति पाठः । २ ईशस्य समर्थस्याप्येतदन्नयाचनादिकं विडम्बनमसदनुग्रहार्थमनुकरणमात्रमेवेत्यर्थः । ३ 'स्वात्मदोषापवर्गेण' इति पाठः । ४ तस्य याच्ञा असद्विधानां विदुषां जनानामपि मोहिनी । 'यद्याच्ञा' इत्यपि पाठः । ५ 'स एव' इति पाठः । ६ अघं अपराधम् । ७ वः युष्माकं संभ्रमो वैयग्र्यम् । श्लेषेण सम्यक् भ्रम एव दूरे स्थातुं योग्योऽपि उप समीप आगतः । ८ मह्यं मां प्रीणयितुम् । ९ तत्रैव वृन्दावन एव ।

अत एव न विद्यते स्वः पर इति दृष्टिर्येषामिति । स्वपरदृष्ट्यभावादेव तत्तद्भेदा अमित्रादयोऽपि तेषां न सन्तीत्याह—अमित्रेति । न मित्रमुदास्त उदासीनो विद्विड्वेषां तेषां कृत्यं सर्वं कर्म न गोपनीयं किंचिदस्तीत्यर्थः । सत्यपि भेददर्शने उदासीनः शत्रुवद्वर्ज्यं आत्मतुल्यत्वात्सुहृन्मन्त्रेषु न वर्जनीय इत्याह—उदासीन इति ॥ ५ ॥ किंच सुहृद्भिः सह विचार्य ज्ञात्वैव कर्म कर्तव्यं, नतु गतानुगतिकत्वमात्रेणेत्याह—ज्ञात्वेति । अज्ञात्वा च । तत्र विदुषो यथा तत्कर्मफलं स्यात्तथा नाविदुषः ॥६॥ भवतामयं क्रियायोगः शास्त्रतोऽपि किंविचारितः प्रवृत्तो लौकिकाचारप्राप्तो वेति साधु सोपपत्तिकं भण्यतां कथ्यतामिति ॥ ७ ॥ आचारप्राप्त एवेति सहेतुकमाह—पर्जन्य इति । आत्ममूर्तयः प्रियमूर्तयः ॥ ८ ॥ ततः किमित्यत आह—तमिति । तमिन्द्रं वार्मुचां मेघानां पतिं स्वामिनमीश्वरं नियन्तारम् । तद्रेतसा तद्वृष्टिपयसा ॥ ९ ॥ उपजीवन्त्युपजीविकां कल्पयन्ति । धर्मार्थकामसिद्धये । ननु कृष्यादिभिर्जीवन्ति, किमिन्द्रेण तत्राह—

अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम् ॥ उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ॥ ५ ॥ ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति ॥ विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ॥ ६ ॥ तत्र तावत्क्रियायोगो भवतां किंविचारितः ॥ अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥७॥ ॥ नन्द उवाच ॥ पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः ॥ तेऽभिवर्षन्ति भूतानां प्रीणनं[2] जीवनं पयः ॥ ८ ॥ तं तात[3] वयमन्ये च वार्मुचां पतिमीश्वरम् ॥ द्रव्यै[4]स्तद्रेतसा सिद्धैर्यजन्ते[5] क्रतुभिर्नराः ॥ ९ ॥ तच्छेषे[6]णोपजीवन्ति त्रिवर्गफलहेतवे ॥ पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥ १० ॥ य एवं विसृजेद्धर्मं पारम्पर्यागतं नरः ॥ कामा[7]ल्लोभाद्भयाद्द्वेषात्स वै नाप्नोति शोभनम् ॥ ११ ॥ ॥ श्रीशुक उवाच ॥ वचो निशम्य नन्दस्य तथान्येषां व्रजौकसाम् ॥ इन्द्राय मन्युं जनयन्पितरं प्राह केशवः ॥१२॥ ॥ श्रीभगवानुवाच ॥ कर्मणा जायते जन्तुः कर्मणैव[8] विलीयते ॥ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥१३॥ अस्ति चेदीश्वरः कश्चित्फलरूप्य[10]न्यकर्मणाम् ॥ कर्तारं भजते सोऽपि नह्यकर्तुः[9] प्रभुर्हि सः ॥ १४ ॥ ॥

पुंसामिति । फलभावनः फलसाधकः । पर्जन्यं विना कृष्यादिवैफल्यादित्यर्थः ॥ १० ॥ ११ ॥ इन्द्राय मन्युं जनयन्निति । कोपजननद्वारा गर्वपर्वतादिन्द्रमवतारयितुं देवतानिराकरणं न त्वयमेवाभिप्राय इत्यर्थः ॥ १२ ॥ प्रथमं तावत्कर्मवादेन देवान्निराकरोति—कर्मणेति । ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यादिति चेत्, अहो अशीलितमीमांसानां स्वमतिविलसिता श्रद्धा । कर्मणां फलकारणत्वे वचनतोऽवगते किं ततोऽनुपपन्नं नाम ॥ १३ ॥ केचित्पुनरतिसाहसभीताः कर्मपरतन्त्रमीश्वरं मन्यन्ते तन्मतमनूद्य निराकरोति—अस्ति चेदिति । स्वयं कर्मभिरलिप्तोऽन्येषां जीवानां कर्मणां फलरूपी फलदाता कर्तारं भजते तत्तत्कर्मफलदानेन ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ अस्य गोप्यं नास्तीति पूर्वेणान्वयः । २ 'प्राणनम्' इति पाठः । ३ तातेति सप्रीणनं स्वोक्तौ श्रद्धार्थं । ४ सपादितैरिति शेषः । ५ यजन्त इति प्रथमपुरुष आर्षः । यजाम इत्यर्थः । यद्वा निजाग्रहपरिहारायान्येषां प्राधान्यविवक्षया प्रथमपुरुषः । ६ यज्ञशिष्टेन । ७ कामाददृष्टविषयात्, लोभाद्दृष्टविषयात्, भयाद्विरोधिजनहेतुकात्, द्वेषाद्देवतादिविषयात्, वाशब्दोऽत्राध्याहार्य इति तोष॰ । ८ 'हि लीयते' 'प्रमीयते' इति पाठौ । ९ व्यतिरेकेणाह—नहीति । १० फलं रूपयति ददातीति फलरूपी ।

अतः कर्मण एव फलसिद्धेस्तत्पारतन्त्र्ये चाजागलस्तनतुल्यत्वान्न देवतया कृत्यमित्याह—किमिन्द्रेणेति । ननु कर्मणोऽपि प्रवृत्तिरन्तर्याम्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशङ्क्याह—स्वभावविहितमिति । स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथाकर्तुमनीशेन ॥ १५ ॥ एतद्विवृणोति—स्वभावतन्त्र इति । प्रवृत्तेः संस्काराधीनत्वात्किमन्तर्यामिणेत्यर्थः ॥१६॥ तस्मात्स्वभावतो निष्पन्नस्य कर्मण एव सर्वकारणत्वात्कर्मैव पूज्यमित्याह—देहानिति सार्धेन ॥ १७ ॥ संपूजयेत्संमानयेत् । ननु देवतोद्देशेन द्रव्यत्यागात्मकत्वात्कर्मणः कथं देवतां विना सिद्धिरित्याशङ्क्य कर्माङ्गमात्रं देवतेति पक्षमुपसंहरन्निव हेतुवादमाश्रित्यान्यामेव देवतां समर्थयते—अञ्जसेति ॥ १८ ॥ हेतुबलेनैव विपक्षे दोषमाह—आजीव्येति । उपजीवति सेवते ॥ १९ ॥ स्ववृत्तिं वक्तुं दृष्टान्तत्वेन

किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ॥ अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥१५॥ स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते ॥ स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥१६॥ देहानुच्चावचान् जन्तुः प्राप्योत्सृजति कर्मणा ॥ शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥१७॥ तस्मात्संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ॥ अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥ १८ ॥ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ॥ न तस्माद्विन्दते क्षेमं जारं नार्यसती यथा ॥१९॥ वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ॥ वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥२०॥ कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते ॥ वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥२१॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥ २२ ॥ रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ॥ प्रजास्तैरेव सिध्यन्ति महेन्द्रः किं करिष्यति ॥ २३ ॥ न नः पुरो जनपदा न ग्रामा न गृहा वयम् ॥ वनौकसस्तात नित्यं वनशैलनिवासिनः ॥ २४ ॥ तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ॥ य इन्द्रयागसंभारास्तैरयं साध्यतां मखः ॥ २५ ॥ ॥

वर्णानां वृत्तिभेदमाह—वर्तेतेति । ब्रह्मणा वेदाध्यापनादिना ॥ २० ॥ वैश्यवृत्तेश्चातुर्विध्यमाह—कृषीति । कृषिवाणिज्यसहिता गोरक्षा एवं त्रयम् । कुसीदं वृद्धिजीवनं चतुर्थम् ॥ २१ ॥ ननु गवामपि वृत्तिर्महेन्द्राधीनैवेत्याशङ्क्य निरीश्वरसांख्यमताश्रयेण निराकरोति—सत्त्वमिति श्लोकद्वयेन । अन्योन्यं स्त्रीपुरुषयोगेन ॥ २२ ॥ सर्वत इति । समुद्रशिलोपरादिष्वपि वृष्टिदर्शनान्न प्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः । तैरेव मेघैरेव । सिध्यन्ति जीवन्ति ॥ २३ ॥ तथापि योगक्षेमार्थं देवतापेक्षेति चेदत आह—न नः पुर इति । पुरः पत्तनानि । जनपदा देशाः । अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः ॥ २४ ॥ ब्राह्मणानपि संगृह्णन्निगमयति—तस्मादिति । स्वयमुत्प्रेक्षितयागप्रयोगकल्पनामाह—य इन्द्रयागसंभारा इति सार्धपञ्चभिः संभाराः साधनानि ॥ २५ ॥ ॥

१ अन्यामेव वक्ष्यमाणशैलगवादिरूपाम् । २ शत्रुमित्रादिरूपोपि कर्मैकः एकस्यैव शत्रुमित्रादिरूपतादर्शनात् । कर्मज्ञानार्थं गुरुरावश्यकत्वात्पूज्यस्तत्राह गुरुरिति । अदृष्टं विनोपदेशाद्यप्राप्तेः । ३ स्वभावस्थः संस्कारत एव कर्मोत्पद्यते इत्येव तद्दृष्टिः सन् स्वकर्मानुतिष्ठंश्च सन् कर्मैव पूजयेद्बहु मानयेत् । यद्वा कर्म आजीव्यमेव पूजयेत् न बहिरङ्गं दैवादीत्यर्थः । ४ अञ्जसा सुखेन । वर्तेत आजीव्येद्व । ५ एकतरं भावं देवताविशेषमाजीव्य जीवनोपायत्वेनोपसेव्य जीवनोपायं कृत्वेत्यर्थः । ६ कृषिवाणिज्यसहिता गोरक्षेति मध्यमपदलोपी समासः । ७ 'य इन्द्रमखसंभाराः' इति पाठः ।

सूपं मौद्गम्। पायसं केवले पयसि पक्वम्। संयावादयो गोधूमादिविक्रियाः। क्रमश्च सूपपायसयोः श्रुत्या दोहस्यार्थतोऽन्येषां पाठतः ॥ २६ ॥ यागशोभार्थं श्रद्धोत्पादनार्थं चाह—हूयन्तामिति। धेनुदक्षिणाः धेनुसहिता दक्षिणाः, ता एव वा दक्षिणाः। वो युष्माभिः ॥ २७ ॥ यवसं तृणम् ॥ २८ ॥ २९ ॥ सर्वान् शिरःकम्पेनानुमोदयन्नाह—गोब्राह्मणाद्रीणामिति। मह्यं मम च ॥ ३० ॥ ३१ ॥ तद्द्रव्येण तेन महेन्द्रमखद्रव्येण गिरिं द्विजान्प्रति यथायथम् ॥३२॥ वलीनुपहृत्य दत्त्वा। आदृताः सादराः ॥ ३३ ॥ अनडुद्युक्तान्युत्तमानडुद्भिर्युक्तानि। सद्विजाशिषो द्विजाशीर्भिः सहिताः ॥ ३४ ॥ गोपविश्रम्भणं गोपानां

पच्यन्तां विविधाः पाका सूपान्ताः पायसादयः ॥ संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥ हूयन्तामग्नयः[1] सम्यक् ब्राह्मणैर्ब्रह्मवादिभिः॥ अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः॥२७॥ अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः[3] ॥ यवसं च गवां[4] दत्त्वा गिरये दीयतां वलिः॥२८॥ स्वलंकृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः ॥ प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान्॥२९॥ एतन्मम मतं तात क्रियतां यदि रोचते ॥ अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः॥३०॥ ॥ श्रीशुक उवाच॥ कालात्मना[5] भगवता शक्रदर्पं जिघांसता ॥ प्रोक्तं निशम्य नन्दाद्या साध्वगृह्णन्त तद्वचः॥३१॥ तथा च व्यदधुः सर्वं यथाह मधुसूदनः ॥ वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥ ३२ ॥ उपहृत्य वलीन्सर्वानादृता यवसं गवाम् ॥ गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥३३॥ अनांस्यनडुद्युक्तानि ते चारुह्य स्वलंकृताः ॥ गोप्यश्च कृष्णवीर्याणि गायन्त्यः सद्विजाशिषः॥३४॥ कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः ॥ शैलोऽस्मीति ब्रुवन्भूरि वलिमादद्बृहद्वपुः ॥३५॥ तस्मै नमो व्रजजनैः[7] सह चक्रेऽऽत्मनात्मने ॥ अहो पश्यत शैलोऽसौ रूपी[8] नोऽनुग्रहं व्यधात् ॥३६॥ एषोऽवजानतो[9] मर्त्यान्कामरूपी वनौकसः[10] ॥ हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम् ॥३७॥ इत्यद्रिगोद्विजमखं वासुदेवप्रणोदिताः ॥ यथा विधाय ते गोपाः सहकृष्णा व्रजं ययुः[11] ॥३८॥ इति श्रीमद्भा० महापुराणे दशमस्कन्धे पूर्वार्धे चतुर्विंशतितमोऽध्यायः॥२४॥

विश्वासजनकं रूपं गतः प्रांशुः सन् वलिमुपहारमाददभक्षयत् ॥ ३५ ॥ तस्मै आत्मने आत्मना स्वयं व्रजजनैः सह नमश्चक्रे। अहो इति सार्धश्लोकं पठन् ॥ ३६ ॥ कामरूपी सर्पादिरूपः। अस्मै अद्रये। शर्मणे क्षेमाय ॥ ३७ ॥ ३८ ॥ 'कर्मैवालं प्राक् स्वभावो गुणो वा कर्माङ्गं वा तद्वशो वा महेशः ॥ वार्ताकर्त्री देवतेतीयमुक्ता देवक्षोभे पणमती नत्वमीष्टा' ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

१ अग्नय इति बहुत्वं गार्हपत्यादित्रयापेक्षं। सम्यगिति ब्राह्मणानां होमस्य वा विशेषणं'। २ 'बहुगुणं' इति पाठः। ३ द्वैगमिलानुपद्मः। अन्येभ्य कल्पितिगितरेभ्यः श्वादीनभिव्याप्य यथा योग्यमन्नादि देयम्, केवलमिन्द्रो वर्ज्य इति भावः। ४ गवां गोभ्यः। वलिः गन्धादि पूजाम्रकूटञ्च। ५ कालस्याप्यात्मना प्रवर्तकेन, यद्वा कालयति नितमाकर्षति स आत्मा स्वभावो यस्येति अनेन इन्द्रदर्पहानिः सुकरेति सूचितम्। ६ 'शक्रदर्पजिघांसया' इति पाठः। ७ सह चक्रेऽऽत्मनेत्यत्र सन्धिरार्षः। 'स चक्रे आत्मनात्मने' इति पाठः। ८ रूपी प्रत्यक्षः। अनुग्रहं वस्यदनादिना। ९ अवजानतः एतद्यागमकुर्वत इत्यर्थः। १० वनौकस इति मर्त्यविशेषणं संबुद्धिर्वा। ११ 'गताः' इति क्वचित्पाठः।

पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ॥ उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥ १॥ कृष्णो नाथो येषां तेभ्यः ॥ १ ॥ क्रुद्धः सन्निन्द्रः सांवर्तकं नाम संवर्तः प्रलयस्तत्कर्तारं मेघानां प्रसिद्धं गणं प्राचोदयत्प्रेषयामास । ननु कृष्णनाथानां घाते कथं प्रवृत्त इत्याशङ्क्य आत्मसंभावनया निरस्तविवेकत्वादित्याशयेनाह—वाक्यं चाहेत्यादिपञ्चभिः—ईशमानी अहमेवेश्वर इति गर्ववान् ॥ २ ॥ देवहेलनं देवस्य ममावज्ञाम् ॥ ३ ॥ अदृढैरसमर्थैः कर्ममयैः क्रियानिर्वर्त्यैरत एव नामनौनिभैर्नामामात्रेण या नौरिति व्यवह्रियते तत्सदृशैः । आन्वीक्षिकीमात्मानुस्मृतिरूपाम् ॥४॥ तथा वाचालं बहुभाषिणं बालिशं शिशुं, पण्डितमानिनं पण्डितंमन्यम्, अतः स्तब्धमविनीतमिति निन्दायां योजितापीन्द्रस्य भारती कृष्णं स्तौति । तथा हि—वाचालं शास्त्रयोनिम् । बालिशमेवमपि शिशुवन्निरभिमानिनम् । स्तब्धमन्यस्य

॥ श्रीशुक उवाच ॥ ॥ इन्द्रस्तदात्मनः पूजां विज्ञाय विहतां नृप ॥ गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप सः ॥ १ ॥ गणं सांवर्तकं नाम मेघानां चान्तकारिणाम् ॥ इन्द्रः प्राचोदयत्क्रुद्धो वाक्यं चाहेशमान्युत ॥ २ ॥ अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ॥ कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥ ३ ॥ यथाऽदृढैः कर्ममयैः क्रतुभिर्नामनौनिभैः ॥ विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥ ४ ॥ वाचालं बालिशं स्तब्धमज्ञं पण्डितमानिनम् ॥ कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥ ५ ॥ एषां श्रियाऽवलिप्तानां कृष्णेनाध्मायितात्मनाम् ॥ धुनुत श्रीमदस्तम्भं पशून्नयत संक्षयम् ॥६॥ अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् ॥ मरुद्गणैर्महावीर्यैर्नन्दगोष्ठजिघांसया ॥७॥ ॥ श्रीशुक उवाच ॥ इत्थं मघवताज्ञप्ता मेघा निर्मुक्तबन्धनाः ॥ नन्दगोकुलमासारैः पीडयामासुरोजसा ॥ ८ ॥ विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥ ९ ॥ स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतम् ॥ १० ॥ ॥

वन्धस्याभावादनम्रम् । अज्ञं नास्ति ज्ञो यस्मात्तं । सर्वज्ञमित्यर्थः । पण्डितमानिनं ब्रह्मविदां बहुमाननीयम् । कृष्णं सदानन्दरूपं परं ब्रह्म । मर्त्यं तथापि भक्तवात्सल्येन मनुष्यतया प्रतीयमानमिति ॥ ५ ॥ अवलिप्तानां मत्तानाम् । आध्मायितात्मनां बृंहितदेहानाम् । धुनुतापनयत । श्रीमदेन यः स्तम्भो गर्वस्तम् ॥६॥ बिभ्यतस्तान्प्रत्याह—अहं चेति । अनुव्रजे अन्वनन्तरमेवागमिष्यामि । मरुद्गणैर्देवगणैः सह ॥ ७ ॥ मघवता इन्द्रेण निर्मुक्तं बन्धनं येषां ते । प्रलयाभिप्रायेण बद्धा आसन् । तदा निर्मुक्तबन्धनाः सन्त आसारैर्धारासंपातैः पीडयामासुः ॥ ८ ॥ स्तनयित्नुभिरशनिभिः । स्तनन्तो गर्जन्तः । मरुद्गणैरावहप्रवहादिवायुसमूहैर्नुन्नाः प्रेरिताः । जलशर्करा जलोपलान् ॥ ९ ॥ स्थूणावत्स्थूलाः । अभ्रेषु मुञ्चत्सु सत्सु । नतोन्नतं निम्नमुन्नतं तद्विपरीतं यथा भवति तथा भूर्नादृश्यत ॥१०॥

१ 'चुकोप ह' इति पाठः । २ उतेति पादपूरणे । ३ अन्वीक्षा=अनुस्मृतिः प्रयोजनं अस्या अस्तीति तथोक्ता । तथा चोक्तं कामन्दकीयनीतिसारे—'आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः । ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति" । ४ अस्य वास्तवोऽर्थस्तु—भक्तिलक्ष्म्यावलिप्ताना समृद्धानां 'लिप उपदेहे' धातुः । उज्ज्वलचित्तानामित्यर्थः । भक्तिलक्ष्म्या मदः मुक्तिमुत्त्यनादरहेतुर्गर्वः स एव स्तम्भो निश्चलत्वात् । तं धुनुत वृक्षादिद्वारा सस्यादिसंपत्त्या चालयत, तृणादिवृद्ध्या पशूंस्स्वास्थ्यं नयत इति तोष० । ५ वास्तवेऽर्थे जिघांसया जिगमिषयेति ज्ञेयम् । ६ पण्डितानां मानः पण्डितमानः पण्डितकर्तृकः समानः सोऽस्यास्तीति तथा तमिति विग्रहः । ७ तदा स्वावमानसमये । ८ अशब्दा विद्युतः, सशब्दाः स्तनयित्नवः ।

जातवेपना जातकम्पाः ॥ ११ ॥ तत्र पशूनां यानं विशिनष्टि—शिर इति ॥ १२ ॥ गोपगोपीनां प्रार्थनामाह—कृष्ण कृष्णेति । त्वमेव नाथो यस्य तद्गोकुलं गवां कुलं वंशं नोऽस्मांश्च देवादिन्द्रात्त्रातुं रक्षितुमर्हसि ॥ १३ ॥ विज्ञापनात्पूर्वमेव कुपितेनेन्द्रेण कृतं तद्वर्षं मेने ॥ १४ ॥ कथं मेने तदाह—अपर्त्विति । अपगत ऋतुर्यस्य तद्वर्षमतिशयितो वातो यस्मिंस्तदतिवातम् । शिलामयं शिलाप्रचुरम् ॥ १५ ॥ तत्र प्रतिज्ञापूर्वं गोवर्धनोद्धरणमाह—तत्रेति । तत्र प्रतिविधिं प्रतीकारं स्वसामर्थ्येन साधयिष्यामि । तेन च मौढ्याल्लोकेशमानिनां श्रीमदलक्षणं तमो हरिष्यामि । बहुवचनेन वरुणादीनभिप्रैति ॥ १६ ॥

अत्यासारातिवातेन पशवो जातवेपनाः ॥ गोपा गोप्यश्च शीतार्ता गोविन्दं शरणं ययुः ॥ ११ ॥ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः ॥ वेपमाना भगवतः पादमूलमुपाययुः ॥ १२ ॥ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो ॥ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ॥ १३ ॥ शिलावर्षनिपातेन हन्यमानमचेतनम् ॥ निरीक्ष्य भगवान्मेने कुपितेन्द्रकृतं हरिः ॥ १४ ॥ अपर्त्वत्युल्बणं वर्षमतिवातं शिलामयम् ॥ स्वयागे निहतेऽस्माभिरिन्द्रो नाशाय वर्षति ॥ १५ ॥ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये ॥ लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः ॥ १६ ॥ न हि सद्भावयुक्तानां सुराणामीशविस्मयः ॥ मत्तोऽसतां मानभङ्गः प्रशमायोपकल्पते ॥ १७ ॥ तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम्[2] ॥ गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥ १८ ॥ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ॥ दधार लीलया कृष्ण[3]श्छत्राकमिव बालकः ॥ १९ ॥ अथाह भगवान्गोपान् हेऽम्ब तात व्रजौकसः ॥ यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥ २० ॥ न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने ॥ वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥ २१ ॥ तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः ॥ यथावकाशं सधनाः सव्रजाः सोपजीविनः ॥ २२ ॥ क्षुत्तृड्व्यथां सुखापेक्षां[4] हित्वा तैर्व्रजवासिभिः ॥ वीक्ष्यमाणो दधावद्रिं सप्ताहं नाचलत्पदात् ॥ २३ ॥ कृष्णयोगानुभावं तं निशाम्येन्द्रोऽतिविस्मितः ॥ निस्तम्भो भ्रष्टसंकल्पः स्वान्मेघान्संन्यवारयत् ॥ २४ ॥ ॥ ॥

ननु देवाः सात्विकास्त्वद्भक्ताश्च कुतस्तेषां तमस्तत्राह—न हीति । सद्भावः सत्त्वं मद्भक्तिर्वा तद्युक्तानां सुराणामीशा वयमिति विस्मयो गर्वो हि यस्मान्न घटतेऽतोऽसन्तस्ते । किंच तेषां मानभङ्गोऽनुग्रह एवेत्याह—मत्त इति ॥ १७ ॥ गोपाये रक्षिष्यामि । किंच सोऽयं मे मया व्रतो नियमः संकल्पो वा आहितो धृत इत्यर्थः ॥ १८ ॥ कृत्वा उत्कृत्य । छत्राकमुच्छिलीन्ध्रम् ॥ १९ ॥ यथोपजोषं यथासुखम् ॥ २० ॥ २१ ॥ सव्रजाः शकटमण्डलसहिताः सोपजीविनो भृत्यपुरोहितादिसहिताः ॥ २२ ॥ पदात्स्थानात् ॥ २३ ॥ २४ ॥ ॥ ॥ ॥

१. 'शिलावर्षातिवातेन' इति पाठः । तत्र शिलावर्षयुक्तेन अतिवातेनेत्यर्थः । २ मत्परिग्रहं मम कुटुंबं, यद्वा अहमेव परिग्रहः पुत्रधनादि सर्वं यस्य । ३ 'विष्णुः' इति पाठः । ४ सुखापेक्षां निद्रादिसुखेच्छाम् ।

॥ २५ ॥ व्युदप्राया विगतोदकप्रायाः । स्वल्पजला इत्यर्थः ॥ २६ ॥ शकटोढोपकरणं शकटैरूढमुपकरणं यथा भवति तथा ॥ २७ ॥ २८ ॥ निभृताः पूर्णाः । यथा यथोचितं परिरम्भणादिभिः समीयुरुपजग्मुः । सदाशिषः श्रेष्ठानाशीर्वादान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ततो गोवर्धनस्थानात् । अस्य श्रीकृष्णस्य तथाविधानि गोवर्धनोद्धरणादिरूपाणि कृतानि कर्माणि गायन्त्य ईयुर्ययुः । कथंभूताः । एवं प्रेम्णा हृदि स्पृशन्तीति हृदिस्पृशस्ताः । यद्वा कथंभूतस्य । श्रेष्ठत्वेन तासां हृदि स्पृशतीति हृदिस्पृक् तस्य ॥ ३३ ॥ ॥ इति श्रीमद्भा०म०पु० दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां पञ्चविंशोऽध्यायः ॥ २५ ॥

खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ॥ निशाम्योपरतं गोपान्गोवर्धनधरोऽब्रवीत् ॥ २५ ॥ निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ॥ उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥ २६ ॥ ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ॥ शकटोढोपकरणं स्त्रीबालस्थविराः शनैः ॥२७॥ भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः ॥ पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ २८ ॥ तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरम्भणादिभिः ॥ गोप्यश्च सस्नेहमपूजयन्मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥ २९ ॥ यशोदा रोहिणी नन्दो रामश्च बलिनां वरः ॥ कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ॥ ३० ॥ दिवि देवगणाः साध्याः सिद्धगन्धर्वचारणाः ॥ तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ॥३१॥ शङ्खदुन्दुभयो नेदुर्दिवि देवप्रणोदिताः ॥ जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप ॥ ३२ ॥ ततोऽनुरक्तैः पशुपैः परिश्रितो राजन्स्वगोष्ठं सबलोऽव्रजद्धरिः ॥ तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदिस्पृशः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे पञ्चविंशोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते ॥ अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ॥१॥ बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै ॥ कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥ यः सप्तहायनो बालः करेणैकेन लीलया ॥ कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव ॥ ३ ॥ तोकेनामीलिताक्षेण पूतनाया महौजसः ॥ पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ॥ ४ ॥

षड्विंशे विस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः । नन्दो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत् ॥ १ ॥ समभ्येत्य नन्दमभिगम्य ॥ १ ॥ यदूचुस्तदाह—बालकस्येति । यद्यस्मादद्भुतानि कर्माणि तस्माद्ग्राम्येषु गोपालेषु कथं जन्मार्हति । आत्मजुगुप्सितमात्मानर्हम् ॥२॥ अद्भुतानि कर्माण्याहुः—यः सप्तहायन इति । कथं बिभ्रत्स्थित इति । पुष्करं पद्मं गजराण्महागज इव ॥ ३ ॥ महौजसो महाबलायाः तनोर्वय आयुर्यौवनं वा कालेन यथा पीयते तद्वत् । कथमित्यनुवर्तते ॥ ४ ॥

१ निशाम्य स्वयमेव दृष्ट्वा । २ पश्यतां सप्तम्यर्थे षष्ठी । सर्वभूतेषु पश्यत्स्वित्यर्थः । ३ सस्नेहं वं, सस्नेहं यथा तथेति वा । ४ कातरा व्याकुलमनसः । ५ 'स्वगोष्ठं' इति पाठः । ६ 'अद्भुतानि च' इति पाठस्तत्र अप्यर्थे चकारः ।

अनसोऽधः शयानस्य । मास्यस्य मासास्त्रयः परिच्छेदका यस्य । उदगूर्ध्वं चरणौ हिन्वतश्चालयतः । प्रपदेन पादाग्रेण हतं विपर्यस्तमनः कथमपतत् ॥५॥ यः कृष्णो दैत्येन ह्रियमाणः संस्तं तृणावर्तं दैत्यं कथमहन्नित्यर्थः ॥ ६ ॥ हैयंगवस्तैन्ये नवनीतचौर्ये । बाहुभ्यां गच्छन् रिङ्गन्नित्यर्थः ॥ ७ ॥ मुखतो हन्तुं कामो यस्य तं वकवेषमरिं बाहुभ्यां मुखतः कथमपाटयत् ॥८॥९॥१०॥११॥ आशीविषतमोऽतिक्रूरविषश्वासावहीन्द्रश्च तम् ॥ १२ ॥ औत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामा-

हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् ॥ अनोऽपतद्विपर्यस्तं रुदतः प्रपदाहतम् ॥ ५ ॥ एकहायन आसीनो ह्रियमाणो विहायसा ॥ दैत्येन यस्तृणावर्तमहन्कण्ठग्रहातुरम् ॥ ६ ॥ क्वचिद्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले ॥ गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥७॥ वने संचारयन्वत्सान्सरामो बालकैर्वृतः ॥ हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥८॥ वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया ॥ हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥९॥ हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः ॥ चक्रे तालवनं क्षेमं परिपक्कफलान्वितम् ॥ १० ॥ प्रलम्बं घातयित्वोग्रं बलेन बलशालिना ॥ अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः ॥ ११ ॥ आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात् ॥ प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम् ॥ नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥१३॥ क्व सप्तहायनो बालः क्व महाद्रिविधारणम् ॥ ततो नो जायते शङ्का व्रजनाथ तवात्मजे ॥१४॥

॥ नन्द उवाच ॥

श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके ॥ एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥ वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १७ ॥ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १८ ॥ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ॥ अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १९ ॥ पुरानेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥ २० ॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वन्ति मानवाः ॥ नारयोऽभिभवन्त्येतान्विष्णुपक्षानिवासुराः ॥ २१ ॥

त्मायं स्यादिति शङ्का ॥१३॥ उक्तमप्यतिविस्मयेनाभिनयेन वदन्ति—क्व सप्तहायन इति ॥ १४ ॥ प्राक्श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्तासंभावनस्य नन्दस्य कृष्णतत्त्वावबोधकं जातं स इदानीं तेनैव वाक्येन गोपाननुपदिशति—श्रूयतामिति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

१ मास्यस्येति कृतैकशेषान्मासशब्दात्तमधीष्ट इत्यधिकारे 'मासाद्वयसि यत्खञौ' इति यत्। मासत्रयवयस्कस्येत्यर्थः । 'त्रैमासिकस्य च पदा' इति द्वितीयोक्तेः । २ बाहुभ्यां तदग्राभ्यां कराभ्यामित्यर्थः । ३ क्षेमं सर्वोपभोग्यम् । ४ 'मिथः' इति पाठः । ५ गर्गोक्तिमेवाह वर्णा इत्यादिना न विस्मय इत्यन्तेन । ६ आधास्यत् करिष्यति ।

तस्मात्तस्य कर्मसु विस्मयो नास्तीति नन्दस्योक्तिः ॥ २२ ॥ इत्यद्धा साक्षान्मां प्रति समादिश्य गर्गे च स्वगृहं गते सति तदानीं तथा मन्यमानोऽपि इदानीं कृष्णं नारा-
यणस्यांशं मन्ये। अत्र हेतुः—अक्लिष्टकारिणमिति ॥२३॥२४॥ गोवर्धनोद्धरणं सपरिकरमनुस्मरन् प्रकटितैश्वर्यस्य श्रीकृष्णस्य प्रीतिं प्रार्थयते—देव इति । यज्ञविप्लवेन
या रुट् तया देवे इन्द्रे वर्षति सति । वज्राश्मपर्षानिलैरशनिजलशर्करातीव्रवायुभिः सीदत्पालपशुस्त्रि आत्मशरणं सीदन्तः पालाः पशवः स्त्रियश्च यस्मिंस्तत्तथा,
आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वा अनुकम्पी उत्स्मयन् हसन्प्रौढिमाविष्कुर्वन् शैलमुत्पाट्याबलो बालो लीलार्थमुच्छिलीन्ध्रं यथा तथैकेन करेण बिभ्रद्धद्गोष्ठ-
मपात्पालितवान्। एवं महेन्द्रमदभित् गवामिन्द्र इत्युत्तराध्यायार्थं च स्मरति। स एवंभूतः श्रीकृष्णो नः प्रीयात् प्रीयतामिति । 'षड्विंशे दशमे व्यक्तः षड्विंशो दशमो
हरिः ॥ व्यनक्तु पञ्चविंशं मां चतुर्विंशतितः पृथक्' ॥२५॥ ॥ इति श्रीमद्भा० म० पु० द० पू० भा० दी० टीकायां षड्विंशोऽध्यायः ॥२६॥ ॥ सप्तविंशे तदालक्ष्य

तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥२२॥ इत्यद्धा मां समा-
दिश्य गर्गे च स्वगृहं गते ॥ मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥२३॥ इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौ-
कसः ॥ (दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ॥) मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ॥२४॥ देवे वर्षति
यज्ञविप्लवरुषा वज्राश्मपर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्प्युत्स्मयन् ॥ उत्पाट्यैककरेण शैलमबलो
लीलोच्छिलीन्ध्रं यथा बिभ्रद्गोष्ठमपान्महेन्द्रमदभित्प्रीयान्न इन्द्रो गवाम् ॥ २५ ॥ ॥ इति श्रीमद्भागवते महापुराणे
दशमस्कन्धे पूर्वार्धे षड्विंशतितमोऽध्यायः ॥२६॥ ॥ श्रीशुक उवाच ॥ गोवर्धने धृते शैल आसाराद्रक्षिते व्रजे ॥
गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च ॥१॥ विविक्त उपसंगम्य व्रीडितः कृतहेलनः ॥ पस्पर्श पादयोरेनं किरीटेना-
र्कवर्चसा ॥२॥ दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः ॥ नष्टत्रिलोकेशमद इन्द्र आह कृताञ्जलिः ॥३॥ इन्द्र उवाच ॥
विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ॥ मायामयोऽयं गुणसंप्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥४॥

कृष्णस्य प्राभवं परम् ॥ वर्ण्यते सुरभीन्द्राभ्यामभिषेकमहोत्सवः ॥१॥ गोवर्धने धृते शैल इति शक्रस्य भयेनागमने हेतुः—आसाराद्रक्षिते व्रज इति सुरभेर्हर्षेणागमने
॥१॥ तत्रेन्द्र आगत्य किं कृतवांस्तदाह—विविक्त उपसंगम्येत्यादिना अथाह सुरभिरित्यतः प्राक्तनेन ग्रन्थेन । विविक्ते एकान्ते । पादयोः पस्पर्श नमश्चकार ॥२॥
अस्य श्रीकृष्णस्य श्रुतश्चासावनुभावश्च श्रुतानुभावः दृष्टः श्रुतानुभावो येन स इन्द्रः । नष्टस्त्रिलोकेशोऽहमिति मदो यस्य सः ॥ ३ ॥ तत्र ममापराधं क्षमस्वेति
वक्तुं तव तावदपराधो नास्त्येव त्वयानुग्रह एव कृत इत्याह चतुर्भिः—विशुद्धसत्त्वमिति । धाम स्वरूपं शान्तमेकरूपमतश्च तपोमयं प्रचुरज्ञानं सर्वज्ञमित्यर्थः ।
कुतः । ध्वस्तरजस्तमस्कं ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् । अत एवायमस्मदादिषु दृश्यमानो मायाकार्यरूपो गुणसंप्रवाहः गुणैः संप्रोह्यत इति तथा,
संसार इत्यर्थः । स ते तव न विद्यते । यतः अग्रहणेनाज्ञानेनानुबध्यत इति तथा स सर्वज्ञस्य ते नास्तीत्यर्थः । अज्ञानसंबन्धो वा ॥ ४ ॥ ॥ ॥

१ मन्ये तर्कयामि । २ पस्पर्शेति वक्तव्ये पर्षेत्युक्तिश्छन्दोनुरोधात् । मूले 'वज्राश्मवर्षानिलैः' इति पाठः । ३ 'तस्मान्नन्दात्मजोऽयं ते' इति पाठः । ४ इदमर्धमधिकं क्वाचित्कम् ।
५ 'इदमाह' इति पाठः । ६ यद्वा ध्वस्तानि अविद्यमानानि रजस्तमसी कं सुखहेतुप्राकृतसत्त्वं च यत्र, 'कं सुखाम्बुनोः' इति तत्र कोशः । कस्कादित्वात्सः । ७ संप्रवाहः परंपरा ।

यदा अज्ञानतत्कृतदेहसंबन्धौ न स्तस्तदा तत्कृतानां लोभादीनां का वार्तेत्याह—कुतो नु इति। तत्कृता देहसंबन्धकृताः तद्धेतवः पुनरन्यस्य देहस्य हेतवः। ननु ज्ञानिनामपि ते दृश्यन्तेऽत आह—अबुधलिङ्गभावा अज्ञानिनां गमकाः। यावद्रागादिमत्त्वं तावज्ज्ञानित्वमेव न सिद्धमित्यर्थः। लोभाद्यभावेऽपि मन्मानभङ्गो दण्डार्थमित्याह—तथापीति ॥ ५ ॥ ननु त्वद्दण्डे च मम गोपपुत्रस्य का शक्तिः, किं वा कारणं, को वा दण्डो मया कृत इत्यत आह—पितेति। त्वं पिता जगतां जनकः, गुरुरुपदेष्टा, अधीशो नियन्ता, इति दण्डधारणे हेतुत्रयम्। कालत्वात्समर्थः, तस्मादुपात्तदण्डो हिताय कल्याणाय स्वेच्छातनुभिर्लीलावतारैः समीहसे। तव समीहा लीलैव जगदीशमानिनामस्माकं मानविधूननमित्यर्थः ॥ ६ ॥ कथमेतदित्यत आह—य इति। मद्विधाश्च ते अज्ञाश्च ते, अतो जगदीशमानिनः काले भयकालेऽपि यथाधुनैवातिवृष्टौ त्वामभयं भयमगणयन्तं वीक्ष्याशु तन्मदं जगदीशा इति मदं हित्वा विगतगर्वाः सन्तः आर्यमार्गं त्वद्भक्तिलक्षणं भजन्ति। अतस्तवेहैव खलानामनुशासनं दण्ड इत्यर्थः ॥ ७ ॥ एवं भगवत्स्वरूपमभिप्रायं चानुवर्ण्य क्षमापयति—स त्वमिति।

कुतो नु तद्धेतव ईश[3] तत्कृता लोभादयो येऽबुधलिङ्गभावाः ॥ [4]तथापि दण्डं भगवान्बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ ५ ॥ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ॥ हिताय [6]स्वेच्छातनुभिः समीहसे मानं विधुन्वञ्जगदीशमानिनाम् ॥ ६ ॥ ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ॥ हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥ ७ ॥ स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ॥ क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥ ८ ॥ तवावतारोऽयमधोक्षजेह स्वयंभराणामुरुभारजन्मनाम् ॥ चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥ ९ ॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥१०॥ स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ॥ सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ११ ॥ मयेदं भगवन्गोष्ठनाशायासारवायुभिः ॥ चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ १२ ॥ ॥

एवंभूता असती मतिर्मे पुनर्मा भूदिति प्रार्थनान्तरम् ॥ ८ ॥ महानयमपराधः कथं क्षन्तव्य इति चेदत आह—तवेति। स्वयंभराणां पुनश्चोरुभारजन्मनां बहूनां भाराणां जन्म येभ्यस्तेषामभवाय नाशाय, युष्मच्चरणसेविनां तु भवाय। अतो मम त्वत्सेवकत्वादत्यन्तापराधिनोऽपि क्षन्तव्यमिति भावः ॥ ९ ॥ क्षमापयन्नमस्करोति—नम इति। तुभ्यं भगवते कृष्णाय नमः। पुरुषाय सर्वान्तर्यामिणे। महात्मनेऽन्तस्थत्वेऽप्यपरिच्छिन्नाय। कुतः। वासुदेवाय सर्वनिवासाय। सात्वतां यादवानां पतये ॥ १० ॥ तर्हि किमहं यादवः, न, स्वच्छन्दोपात्तदेहाय स्वेषां भक्तानां छन्देनेच्छया स्वीकृतदेहाय। तत्रापि विशुद्धं ज्ञानमेव मूर्तिर्यस्य तस्मै। मायया सर्वस्मै सर्वरूपाय। कुतः। सर्वस्य बीजाय कारणाय। अत एव सर्वभूतात्मने नम इति ॥ ११ ॥ कृतागस इत्यनेनोक्तमपराधं निवेदयति—मयेदमिति। आसारवायुभिर्गोष्ठनाशाय मयेदमकृत्यं चेष्टितं कृतम् ॥ १२ ॥ ॥ ॥ ॥ ॥

१ अत्र बुधलिङ्गभावाः भक्तानां माहात्म्यव्यापकाः भक्तदत्तभोजनाद्यात्मका लोभादय इति तोष०। २ उपात्तदण्डो लीलावतारैः समीहसे इति पाठः। ३ 'ईश मन्युलोभादयः' इति चित्सुखपाठः। ४ 'अथापि' इति पाठः। ५ बिभर्तीति परोक्षोक्तिर्भयगौरवादिना। ६ 'हिताय चेच्छातनुभिः' इति पाठः।

तथापि भो ईश, त्वयानुगृहीतोऽस्मि । अनुग्रहं दर्शयति—ध्वस्तस्तम्भ इति, वृथोद्यम इति च ॥ १३ ॥ १४ ॥ इन्द्रेण स्वाभिप्राये निवेदिते भगवानपि तथैवाह—मयेति । इन्द्रश्रिया देवराज्येन ॥ १५ ॥ १६ ॥ वो युष्माभिः । बहुवचनं वरुणाद्यभिप्रायेण । क गन्तव्यं स्वर्गेऽपि तवैवेश्वरत्वादिति चेत्तत्राह—क्रियतामिति । मदनुशासनेन यथापूर्वं तत्र स्थीयतामित्यर्थः । युक्तैरप्रमत्तैः । स्तम्भवर्जितैर्निरहंकारैः ॥ १७ ॥ स्वसन्तानैर्गोभिः सहोपामन्त्र्य कृष्णकृष्णेत्यादिसंबोध्य ॥ १८ ॥ इन्द्रेण हता अपि भवता सनाथा वयं कृताः । रक्षिता इत्यर्थः ॥ १९ ॥ त्वं नः परमं दैवं देवता । अतो हे जगत्पते, गोविप्रदेवानां

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः[1] ॥ ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १३ ॥ ॥ श्रीशुक उवाच ॥
एवं संकीर्तितः[2] कृष्णो मघोना भगवानमुम् ॥ मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥१४॥ ॥ श्रीभगवानुवाच ॥
मया तेऽकारि मघवन् मखभङ्गोऽनुगृह्णता ॥ मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥१५॥ मामैश्वर्यश्रीमदान्धो दण्डपाणिं[3] न पश्यति ॥ तं भ्रंशयामि संपद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥ १६ ॥ गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम् ॥ स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ॥ १७ ॥ अथाह सुरभिः कृष्णम[4]भिवन्द्य मनस्विनी ॥ स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥१८॥ ॥ सुरभिरुवाच ॥ कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसंभव[5] ॥ भवता लोकनाथेन सनाथा वयमच्युत ॥१९॥ त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ॥ भवाय भव गोविप्रदेवानां ये च साधवः ॥२०॥ इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा[6] नोदिता वयम्[7] ॥ अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये ॥२१॥ ॥ श्रीशुक उवाच ॥ एवं कृष्णमुपामन्त्र्य[8] सुरभिः पयसात्मनः ॥ जलैराकाशगङ्गाया ऐरावतकरोद्धृतैः ॥ २२ ॥ इन्द्रः सुरर्षिभिः साकं नोदितो देवमातृभिः ॥ अभ्यषिञ्चत दाशार्हं गोविन्द[9] इति चाभ्यधात् ॥२३॥ तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः ॥ जगुर्यशो लोकमलापहं हरेः सुराङ्गनाः संननृतुर्मुदान्विताः ॥२४॥ तं तुष्टुवुर्देवनिकायकेतवो ह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ॥ लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन्पयोद्रुताम् ॥ २५ ॥

येऽन्ये च साधवस्तेषां भवायाभ्युदयायाद्य त्वमेव नोऽस्माकमिन्द्रो भव ॥ २० ॥ ननु भवतामिन्द्रोऽस्तीति चेदत आह—इन्द्रमिति । अलं पुरन्दरस्येन्द्रतयेत्यर्थः । ननु देव एवेन्द्रो भवति, कथमहं भवेयमिति चेदत आह—अवतीर्णोऽसीति ॥ २१ ॥ सुरभिरात्मनः पयसाभ्यषिञ्चदिन्द्रश्चाकाशगङ्गाया जलैरभ्यषिञ्चत् ॥ २२ ॥ देवमातृभिरदित्यादिभिः, देवैर्मातृभिश्चेति वा । गाः पशून्, गां स्वर्गं वा इन्द्रत्वेन विन्दतीति कृत्वा गोविन्द इत्यभ्यधात्, नाम कृतवानित्यर्थः ॥ २३ ॥ २४ ॥ देवनिकायेषु केतव इव दर्शनीया मुख्या इत्यर्थः । गावो गां पृथ्वीं पयोभिर्द्रुतामार्द्रामनयन् । अकुर्वन्नित्यर्थः ॥ २५ ॥ ॥ ॥

---

१ 'हतोद्यमः' इति पाठः । २ संकीर्तितः संस्तुतः । ३ दण्डपाणिं भक्तान्प्रति गोपोचितयष्टिपाणिं त्वादृशान्प्रति तु तथैव यम्या दण्डपाणिमिति तोष० । ४ 'अभिनन्द्य' इति पाठः । ५ 'विश्वभावन' इति पाठः । ६ ब्रह्माज्ञयैव त्वामभिषेक्तुमागता इत्यर्थः । ७ वयमिति बहुत्वमपराधिनमिन्द्रं तदीयांश्च संगृह्णाति । ८ उपामन्त्र्य स्वीयेन्द्रत्वाभिषेकाय प्रार्थ्य । ९ गवामिन्द्रो गोविन्द इति व्युत्पत्तिः, पृषोदरादित्वात्साधुः ।

नानारसौघाः क्षीरादिवाहिन्यः । अकृष्टपच्याः कर्षणं विनैव पक्का ओषधयो व्रीह्यादय आसन् । यद्वा अकृष्टपच्या ओषधयो येषु ते गिरय उन्मणीन्गर्भगतान्मणीन् उत् उद्गतान्वहिः प्रकटानविभ्रदविभरुः ॥२६॥२७॥२८॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पू० भा० दी० टीकायां सप्तविंशोऽध्यायः ॥२७॥ अष्टाविंशे ततो नन्दानयनं वरुणालयात् ॥ वैकुण्ठदर्शनं चाथ गोपानामनुवर्ण्यते ॥ १ ॥ गोवर्धनं समुद्धृत्य वशे कृत्वाऽमरेश्वरम् ॥ नन्दानयनतः कृष्णो वरुणं च वशेऽनयत् ॥ २ ॥ १ ॥ कलामात्रायां द्वादश्यां पारणादराभिनिवेशेनासुरीं वेलामविज्ञायारुणोदयात्पूर्वमेव शास्त्रबलेन निश्युदकं प्रविष्टं तदनभिज्ञो वरुणस्य भृत्योऽनयदिति । तथा च शास्त्रम्—'कलार्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि ॥ आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शम्भुशासनात् ॥' इत्यादि ।

नानारसौघाः सरितो वृक्षा आसन्मधुस्रवाः ॥ अकृष्टपच्यौषधयो गिरयो विभ्रदुन्मणीन् ॥ २६ ॥ कृष्णेऽभिषिक्त एतानि सत्त्वानि कुरुनन्दन ॥ निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥ २७ ॥ इति गोगोकुलपतिं गोविन्दमभिषिच्य सः ॥ अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥२८॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे इन्द्रस्तुतिर्नाम सप्तविंशोऽध्यायः ॥ २७॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥ स्नातुं नन्दस्तु कालिन्द्या द्वादश्यां जलमाविशत् ॥ १ ॥ तं गृहीत्वाऽनयद्भृत्यो वरुणस्यासुरोऽन्तिकम् ॥ अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥ २ ॥ चुक्रुशुस्तमपश्यन्तः कृष्ण रामेति गोपकाः ॥ भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ॥ तदन्तिकं गतो राजन् स्वानामभयदो विभुः ॥३॥ प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया ॥ महत्या पूजयित्वाह तद्दर्शनमहोत्सवः ॥ ४ ॥ ॥ वरुण उवाच ॥ अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगतः प्रभो ॥ त्वत्पादभाजो भगवन्नवापुः पारमध्वनः ॥ ५ ॥ नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ॥ न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥६॥ अजानता मामकेन मूढेनाकार्यवेदिना ॥ आनीतोऽयं तव पिता तद्भवान्क्षन्तुमर्हति ॥७॥

वक्ष्यति च वरुणः 'अजानता मामकेन' इति, भगवद्धर्ममजानतेत्यर्थः ॥ २ ॥ स्वानां भगवद्धर्मपराणामभयदो मा भैष्टेत्यभयं ददत् ॥ ३ ॥ सपर्ययाऽर्हणेन ॥४॥ अद्येदानीं मे मया देहो निभृतो धृतः । यदा त्वद्दर्शनं जातं तदैव देहसाफल्यं प्राप्तमित्यर्थः । यद्वा निभृतः पूर्णमनोरथ इत्यर्थः । किंच अद्यैवार्थोऽधिगतः । सर्वरत्नाकरपतिना पीतः पूर्वं नैवंविधोऽर्थः प्राप्त इत्यर्थः । किंच संसारोऽपि निवृत्त एवेत्याशयेनाह—त्वत्पादभाज इति । अध्वनः पारं मोक्षम् ॥ ५ ॥ भगवते निरतिशयैश्वर्याय । ब्रह्मणे पूर्णाय । परमात्मने सर्वजीवनियन्त्रे इति । तत्र हेतुः—न यत्रेति । लोकसृष्टिं विकल्पयति या माया सा यत्र न श्रूयते । अविद्यमानेव तिष्ठतीत्यर्थः ॥ ६ ॥ अजानता मद्भृत्येन त्वत्पित्राहरणं यत्कृतं तदिति ॥ ७ ॥ ॥ ॥ ॥ ॥

१ अकृष्टपच्या ओषधय इत्यत्र सुब्लुक् संधिर्वा आर्षः । २ कर्मधारये विधेयाविमर्शो दर्थान्तरमाह—यद्वेति । ३ इतः पूर्वं टीकायां—'अहमिन्द्रो हि देवानां त्वं गवामिन्द्रतां गतः ॥ गोविन्द इति लोके त्वा [illegible]

नन्दं विमुच्य समर्पयति—गोविन्देति ॥८॥९॥ अतीन्द्रियमदृष्टपूर्वं लोकपालस्य महोदयमैश्वर्यम् ॥१०॥ औत्सुक्ययुक्ता धीर्येषां ते । अपि किं स्वगतिं स्वस्थानं सूक्ष्मां ब्रह्माख्यां चोपाधास्यदुपाधास्यति । नोऽस्मान्प्रापयिष्यतीति संकल्पितवन्त इत्यर्थः ॥ ११ ॥ इत्येवंभूतं स्वानां तेषां संकल्पमखिलदृक् सर्वज्ञः स्वयमेव विज्ञाय तेषां संकल्पसिद्धये कृपयैतद्वक्ष्यमाणमचिन्तयत् ॥ १२ ॥ अविद्या देहाद्यहंबुद्धिस्ततः कामस्ततः कर्म तैरुच्चावचासु देवतिर्यगादिषु भ्रमन् स्वीयां गतिं न वेद ॥ १३ ॥ स्वं ब्रह्मस्वरूपं लोकं वैकुण्ठाख्यं च । तमसः प्रकृतेः परम् ॥ १४ ॥ देहादिपिहितानां दर्शनमशक्यमिति प्रथमं देहादिव्यतिरिक्तं ब्रह्मस्वरूपं दर्शयामास । तदाह—सत्यमिति । सत्यमबाध्यं ज्ञानमजडमनन्तमपरिच्छिन्नं ज्योतिः स्वप्रकाशं सनातनं शश्वत्सिद्धं ब्रह्म गुणापाये गुणापोहे ज्ञानिनो यत्पश्यन्ति

(ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् ॥) गोविन्द नीयतामेष पिता ते पितृवत्सल ॥८॥ ॥ श्रीशुक उवाच ॥
एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः ॥ आदायागात्स्वपितरं बन्धूनां चावहन्मुदम् ॥९॥ नन्दस्त्वतीन्द्रियं दृष्ट्वा
लोकपालमहोदयम् ॥ कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥ १० ॥ ते त्वौत्सुक्यधियो राजन् मत्वा
गोपास्तमीश्वरम् ॥ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥११॥ इति स्वानां[3] स भगवान् विज्ञायाखिलदृक्
स्वयम् ॥ संकल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥ १२ ॥ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचासु
गतिषु न वेद स्वां गतिं भ्रमन् ॥१३॥ इति संचिन्त्य भगवान् महाकारुणिको हरिः ॥ दर्शयामास लोकं स्वं गोपानां
तमसः परम् ॥ १४ ॥ सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् ॥ यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः
॥ १५ ॥ ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ॥ ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽ[4]ध्यगात्पुरा ॥ १६ ॥ नन्दाद्-
यस्तु तं[5] दृष्ट्वा परमानन्दनिर्वृताः ॥ कृष्णं च तत्र च्छन्दोभिः[6] स्तूयमानं सुविस्मिताः ॥ १७ ॥ इति श्रीमद्भागवते
महापुराणे दशमस्कन्धे पूर्वार्धेऽष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ छ ॥

दर्शयामास ॥१५॥ एवं ब्रह्महृदं ब्रह्मैव हृदवद्धृदः । तत्र निमग्नस्य विशेषविज्ञानाभावात्तं ब्रह्महृदं ते तु नीताः प्रापितास्तस्मिन्मग्नाश्च । तुशब्दोक्तं विशेषमाह—पुनः कृष्णेनोद्धृताः समाधेरिवोत्थापिताः सन्तो ब्रह्मणस्तस्यैव लोकं वैकुण्ठाख्यं ददृशुरिति । ननु ब्रह्मनिमग्नानां पुनर्लोकदर्शनमघटितमेवेत्याशङ्क्याह—तत्कृपयैव यत्रेति । यत्र यस्मिन्कृष्णे निमित्ते सति पूर्वमक्रूरोऽध्यगाद्दृष्टवान् । शुकपरीक्षित्संवादात्प्राक्तनत्वाद्भूतनिर्देशः । नह्येतत्कैश्वर्यं भगवति किंचिदप्यसंभावितमिति भावः । अथवा अक्रूरो यत्र दृष्टवांस्तस्य यमुनाहृदस्य ब्रह्महृद इति नाम । तं हृदं नीताः सन्तो ब्रह्मणो लोकं ददृशुः । पुनश्च कृष्णेनोद्धृताः पूर्ववत्तं दृष्ट्वा विस्मिता बभूवुः । व्यवहितान्वयोऽप्रसिद्धकल्पना च सोढव्येति ॥१६॥१७॥ ॥ इति श्रीमद्भा० म० पु० द० पू० भा० दी० टीकायामष्टाविंशतितमोऽध्यायः ॥ २८॥

१ इदमर्धं केषुचित्पुस्तकेषु वर्तते, कचिन्नास्ति । २ तेषा वरुणस्य तल्लोकवासिनां च । ३ स्वाना ज्ञातीनां । 'स्वमज्ञातिधनाख्यायाः' इति पर्युदासान्न सर्वनामता । ४ अक्रूरोऽप्येवमेव दृष्टवानिति शुकपरीक्षित्संवादात्पूर्वभावित्वेन भूतनिर्देश इति तोष० । ५ 'तद्दृष्ट्वा' इति पाठः । ६ छन्दोभिः कर्तृभिः करणैर्वा ।

ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः ॥ गोपीभी राससंरम्भे तस्य चान्तर्धिकौतुकम् ॥ १ ॥ ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा ॥ जयति श्रीपतिर्गोपीरासमण्डलमण्डनः ॥ २ ॥ ननु विपरीतमिदम्, परदारविनोदेन कन्दर्पविजेतृत्वप्रतीतेः। मैवम्, 'योगमायामुपाश्रितः', 'आत्मारामोऽप्यरीरमत्', 'साक्षान्मन्मथमन्मथः', 'आत्मन्यवरुद्धसौरतः' इत्यादिषु स्वातन्त्र्याभिधानात्। तस्माद्रासक्रीडाविडम्बनं कामविजयख्यापनायेत्येव तत्त्वम्। किंच शृङ्गारकथापदेशेन विशेषतो निवृत्तिपरेयं पञ्चाध्यायीति व्यक्तीकरिष्यामः। ता रात्रीः 'यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः' इति प्रतिश्रुता इत्यर्थः ॥ १ ॥ तदा तस्मिन्नेव क्षणे तत्प्रीतये उडुराजश्चन्द्र उदगादुदितः। किं कुर्वन्। दीर्घकालेन दर्शनं यस्य स प्रियः स्वप्रियाया मुखमरुणेन कुङ्कुमेन यथा विलिम्पति तथा प्राच्याः ककुभो दिशो मुखं शन्तमैः सुखतमैः करै रश्मिभिररुणेनोदयरागेण विलिम्पन्नरुणीकुर्वन्नित्यर्थः। स प्रसिद्ध उडुराजः। तथा चर्षणीनां जनानां शुचस्तापग्लानीर्मृजन्नपनयन् ॥ २ ॥ कुमुत्कुमुदं विकसनीयं विद्यते यस्य तं कुमुद्वन्तम्। न खण्डं मण्डलं यस्य तम्। रमाया आननस्येव आभा यस्य तम्। नव-

॥ श्रीशुक उवाच ॥ भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ॥ वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥१॥ तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ॥ स चर्षणीनामुदगाच्छुचो मृजन्प्रियः प्रियाया इव दीर्घदर्शनः ॥ २ ॥ दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम् ॥ वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥ निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ॥ आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥ ४ ॥ दुहन्त्योऽभिययु. काश्चिद्दोहं हित्वा समुत्सुकाः ॥ पयोऽधिश्रित्य संयावमनुद्वास्यांपरा ययुः ॥५॥ परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून्पयः ॥ शुश्रूषन्त्यः पतीन्काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ६ ॥ लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ॥ व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ७ ॥

कुङ्कुममिवारुणमेवंविधं चन्द्रं दृष्ट्वा। तथा वनं च तस्य कोमलैर्गोभी रश्मिभी रञ्जितं दृष्ट्वा कलं मधुरं जगौ अगायत। कथम्। वामदृशां वामा मनोहरा दृशो यासां तासां मनोहरं यथा ॥ ३ ॥ असापत्न्यायान्योन्यमलक्षितो न ज्ञापित उद्यमो याभिस्ताः। स कान्तो यत्र तत्र गीतध्वनिमार्गेण आजग्मुः। जवेन वेगेन लोलानि चञ्चलानि कुण्डलानि यासां ताः ॥ ४ ॥ श्रीकृष्णसूचकशब्दश्रवणेन तत्प्रवणचित्तानां तत्क्षणमेव त्रैवर्गिककर्मनिवृत्तिं द्योतयन्त्य इवार्धावसितं कर्म विहाय ययुः। तदाह—दुहन्त्य इति। पयः स्थालीस्थं चुल्ल्यामधिश्रित्यैतत्क्वाथमप्रतीक्षमाणाः काश्चिद्ययुः। संयावं गोधूमकणान्नं पक्वमनुद्वास्यानुत्तार्य ॥ ५ ॥ ॥ ६ ॥ अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादि कुर्वत्यः। काश्च काश्चित् कृष्णतुष्ट्यर्थं कर्म तदासक्तमनसामन्यथा कृतमपि फलत्येवेति द्योतयन्नाह—व्यत्यस्तेति। स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्रासानि वस्त्राभरणानि यासां ताः ॥ ७ ॥ ॥ ॥ ॥ ॥

१ रमात्र राधा। राधा वृन्दावने मतेत्युक्तेरिति तोप०। २ शरदो मल्लिकाविकसद्धेतुत्वाभावेऽपि हेतुत्वोक्त्याऽभिनवत्वं तेन च सर्वपुष्पविकासो व्यज्यते। ३ योगमाया पराख्या अचिन्त्या चिच्छक्तिस्तामाश्रित इति, श्लेषेण योगो गोपीसंयोगस्तदर्थं माया कृपा तामाधिक्येनाश्रित इति तोप०। ४ अपरा इति पूर्वेण परेणाप्यन्वेति। ५ हित्वा ययुरिति पूर्वेणान्वयः। ६ लिम्पन्त्यः अङ्गरागं कुर्वत्यः। ७ जग्मुरिति वक्तव्ये आजग्मुरित्युक्तिः शुकस्य कृष्णान्तिके स्वावस्थानस्फूर्तेः।

नच कृष्णाकृष्टमनसां विघ्नाः प्रभवन्तीत्याह—ता वार्यमाणा इति ॥ ८ ॥ न लब्धो निर्गमो याभिस्ताः । प्रागपि तद्भावनायुक्तास्तदा नितरां दध्युरित्यर्थः ॥ ९ ॥ किंच तदानीमेवं तं परमात्मानं कृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरित्याह श्लोकद्वयेन—दुःसहेति । ननु कथं जहुः परमात्मेति ज्ञानाभावादित्याशङ्क्याह—जारबुद्ध्यापीति । नहि वस्तुशक्तिर्बुद्धिमपेक्षते । अन्यथा मत्यापि पीतामृतवदिति भावः । ननु तदपि प्रारब्धकर्मबन्धने सति कथं जहुस्तत्राह—सद्यःप्रक्षीणबन्धना इति । ननु कथं भोगमन्तरेण प्रारब्धं कर्म क्षीणं भोगेनैव सद्यः क्षीणमित्याह—दुःसहेति । दुःसहो यः प्रेष्ठविरहस्तेन तीव्रस्तापस्तेन धुतानि गतान्यशुभानि यासाम् । तदप्राप्तिपरमदुःखभोगेन पापं क्षीणमित्यर्थः । तथा ध्यानेन प्राप्ता अच्युतस्य आश्लेषेण या निर्वृतिः परमसुखभोगस्तया क्षीणं मङ्गलं पुण्यबन्धनं यासां ताः । अतो ध्यानेन परमात्मप्राप्तेस्तत्कालसुखदुःखाभ्यां निःशेषकर्मक्षयाद्गुणमयं देहं जहुरिति ॥ १० ॥ ११ ॥

ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ॥ गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥८॥ अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ॥ कृष्णं तद्भावनायुक्ता दध्युर्मीलित[1]लोचनाः ॥ ९ ॥ दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥ तमेव परमात्मानं जारबुद्ध्या[2]पि संगताः ॥ जहुर्[3]गुणमयं देहं सद्यःप्रक्षीणबन्धनाः ॥ ११ ॥ ॥ राजोवाच ॥ कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने ॥ गुणप्रवाहोपरमस्तासां गुणधियां[4] कथम् ॥१२॥ ॥ श्रीशुक उवाच ॥ उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ॥ द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥ नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्ययस्या[5]प्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥ कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ॥ नित्यं हरौ विद[6]धतो यान्ति तन्म[7]यतां हि ते ॥ १५ ॥ न चैवं विस्मयः कार्यो भवता भगवत्यजे ॥ योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥ ॥

ननु यथा पतिपुत्रादीनां वस्तुतो ब्रह्मत्वेऽपि न तद्भजनान्मोक्षस्तथा बुद्ध्यभावादेवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्सङ्गतिः कथं मोक्षहेतुरिति शङ्कते—कृष्णं विदुरिति । परं केवलं कान्तं कमनीयम् ॥ १२ ॥ परिहरति—उक्तमिति । अयं भावः—जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतमतो न तत्र बुद्ध्यपेक्षेति ॥ १३ ॥ ननु देही कथमनावृतः स्यादत आह—नृणामिति । गुणात्मनो गुणनियन्तुः । भगवत एवंरूपा अभिव्यक्तिरतो न देहिसादृश्यमत्र वक्तुं युज्यत इति भावः ॥ १४ ॥ अतो यथाकथंचित्तदासक्तिर्मुक्तिकारणमित्याह—काममिति । ऐक्यं संबन्धम् । सौहृदं भक्तिम् ॥ १५ ॥ नच भगवतोऽयमतिभार इत्याह—न चैवमिति । यतः श्रीकृष्णादेतत्स्थावरादिकमपि विमुच्यते ॥ १६ ॥ ॥ ॥ ॥

१ मुद्रितनेत्राः, यद्वा मीलितं लोचनमन्याशेषज्ञानं यासां ताः । २ अत्र 'जिघांसयापि हरये' इत्यत्रेव जारबुद्ध्यापीत्यपिना तादृशबुद्धेर्निन्द्यत्वं व्यज्य वस्तुमहिम्नातिप्राशस्त्यं व्यंजितम् । ३ गुणमयं देहं जहुरित्युक्त्या चिन्मयदेहेन गोलोकादौ तत्प्राप्तिर्ध्वन्यते । ४ अतो गुणधियां श्रीकृष्णगुणैकानुबद्धप्रेममयीनां तासां गुणप्रवाहोपरमः चिन्मयगुणपरम्पराश्रयस्य चिद्विग्रहस्योपरमः सायुज्यमुक्तिः ब्रह्मोपासकानामिव कथमिति । ५ अप्रमेयस्यापरिच्छिन्नस्य । ६ 'विदधते' इति पाठः । ७ तन्मयतां तत्सायुज्यसारूप्यादिमुक्तिं तदेकस्फूर्तिं च ।

प्रस्तुतमाह—ता दृष्ट्वेति । वाचःपेशैर्वाग्विलासैः ॥ १७॥ सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह—व्रजस्येति ॥ १८ ॥ लज्जया मन्दहसितमालक्ष्याह—रजन्येषेति ॥१९॥ किंच मातर इति । विचिन्वन्ति मृगयन्ते । बन्धूनां साध्वसं कृच्छ्रं मा कृध्वं मा कुरुतेत्यर्थः ॥ २० ॥ ईषत्प्रणयकोपेनान्यतो विलोकयन्ती प्रत्याह—दृष्टमिति । राकेशस्य पूर्णचन्द्रस्य करै रञ्जितम् । यमुनास्पर्शिनोऽनिलस्य लीला मन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितम् ॥२१॥ सतीः हे सत्यः ॥२२॥ संरम्भक्षुभितदृष्टीः प्रत्याह—अथवेति । यन्त्रिताशया वशीकृतचित्ताः । उपपन्नं युक्तम् । प्रीयन्ते प्रीता भवन्ति ॥ २३ ॥ दृष्टादृष्टभय-

ता दृष्ट्वान्तिकमायाता भगवान् व्रजयोषितः॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन्॥१७॥ ॥श्रीभगवानुवाच ॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः॥ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम्॥ १८ ॥ रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥१९॥ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः॥ विचिन्वन्ति ह्यपश्यन्तो मा कृध्वं बन्धुसाध्वसम्॥ २० ॥ दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥२१॥ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः॥ क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत ॥ २२॥ अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः॥ आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः॥ २३ ॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया॥ तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम्॥२४॥दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी॥२५॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः॥२६॥ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्॥ न तथा संनिकर्षेण प्रतियात ततो गृहान्॥ २७॥ ॥श्रीशुक उवाच॥ इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम्॥विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम्॥२८॥कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः॥ अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम्२९

प्रदर्शनेन निवर्तयति—भर्तुरित्यादिश्लोकत्रयेण ॥२४॥२५॥ फल्गु तुच्छम् । कृच्छ्रं दुःसंपाद्यम् । औपपत्यं जारसौख्यम् ॥ २६ ॥ किंच श्रवणादिति ॥ २७ ॥ ॥२८॥ चिन्तां प्राप्तानां स्थितिमाह—कृत्वेति । शुचः शोकादुद्गतेन श्वसनेन शुष्यन्तो बिम्बफलसदृशा अधरा येषु मुखेषु तानि अव अवाञ्चि कृत्वा तथाऽङ्गुष्ठेन महीं लिखन्त्यः । तथा गृहीतकज्जलैरश्रुभिः कुचकुङ्कुमानि क्षालयन्त्यस्तूष्णीं स्थिताः । यत उरुदुःखस्य भरो भारो यासां ताः ॥ २९ ॥ ॥ ॥

१ रसमयरासलीलाप्रसङ्गे ईदृशस्ते प्रश्नः समाधानप्रपञ्चश्च रसविघातकत्वादनुचित इति व्यञ्जयन् स्वयमेवोत्कण्ठया प्रस्तौति। २ वाचःपेशैः वाग्विलासैरित्युक्त ते च द्विविधाः शाब्दिका आर्थिकाश्च । आद्याः स्मितावलोकादिपूर्वकसुललितवर्णविन्यासादयः। द्वितीयाः सरसभावगर्भिताः सन्तो वास्तवार्थ-उपेक्षा-प्रार्थनामयत्वेन त्रिविधाः स्वागतमित्यादिश्लोकेषु तोषणीकारैः सविस्तरं विवृता अपि विस्तरभिया नात्र संगृहीताः। ३ यद्वा अघोररूपा चन्द्रोदयेन तमोहानात्, अतो ज्योत्स्नया दिनप्रायत्वादघोरैः सत्त्वैर्भृङ्गकोकिलाद्यैर्निषेविता, अथवा घोरं दुष्टानां भयजनकं सत्त्वं बलं यस्य तेन मया निषेविता । अतः सर्वथा व्रजं न यात । प्रार्थनाया लोट् । इत्थमेवाग्रे मा विचिन्वन्ति, मा यात इत्यादि योज्यम् ।

किंच प्रेष्ठमिति । किंचित्संरम्भेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म । संरम्भे कारणं—प्रेष्ठमित्यादि । प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणम्
॥ ३० ॥ नृशंसं क्रूरम् । हे दुरवग्रह स्वच्छन्द, तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व मा त्यजेति ॥३१॥ अपि च यदुक्तं 'पत्यपत्य—'इत्यादि त्वया धर्म-
विदेति सोपहासमेवम्, एतदुपदेशानां पदे विषये त्वय्येवास्तु । उपदेशपदत्वे हेतुः—ईश इति। विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः ।
ईशत्वे हेतुः—आत्मा किल भवानिति । भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवास्त्वित्यर्थः ।
अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु । ननु त्वं धर्मोपदेष्टा किंतु
भवानामेति । अथवा यदुक्तमेतदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सत्येवम् । काक्वा नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ॥ नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरम्भगद्गद-
गिरोऽब्रुवतानुरक्ताः ॥ ३० ॥ ॥ गोप्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमू-
लम् ॥ भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा[1] ॥३२॥
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्[2]नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥ तन्नः प्रसीद परमेश्वर[3] मा स्म छिन्द्या[4]
आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ॥३४॥ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासा-
वलोककलगीतजहृच्छयाग्निम् ॥ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥ ॥

इति । यद्वा यदुक्तं 'पत्यादिशुश्रूषणं धर्मं' इति एवमेतत्त्वय्येवास्तु । कुतः । उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने । कुतः ईशे ।
नहीश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामेति । अन्यत्समानम् । अलमतिविस्तरेण ॥ ३२ ॥ एतत्सदाचारेण द्रढयन्त्यः प्रार्थयन्ते—कुर्वन्तीति । कुशलाः
शास्त्रनिपुणाः। तथा च शास्त्रम्—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं च लोकः' इति ॥३३॥ किंच 'प्रतियात'इति यदुक्तं तदशक्यं, त्वयैव चित्तादीनामप-
हृतत्वादित्याहुः—चित्तमिति । यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु निर्विशति तत्त्वयापहृतम् । करावपि यौ गृहकृत्ये निर्विशतस्तावपि । सुखात्मना
त्वयेति वा ॥ ३४ ॥ अतोऽङ्ग हे कृष्ण, नोऽस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिञ्च ।
नो चेद्वयं तावदेकोऽग्निस्तथा विरहाज्जनिष्यते योऽग्निस्तेन चोपयुक्तदेहा दग्धशरीरा योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयामः ॥ ३५ ॥

१ बन्धुरो मनोहर आत्मा यस्येति वा । २ आत्मन् आत्मनि । ३ 'वरदेश्वर' इति पाठः । ४ 'छिन्द्याद्याशाम्' इति पाठः । तत्र भवानित्यध्याहारः, छान्दसः पुरुषव्यत्ययो वा ।

प्रस्तुतमाह—ता दृष्ट्वेति । वाचःपेशैर्वाग्विलासैः ॥ १७ ॥ सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह—व्रजस्येति ॥ १८ ॥ लज्जया मन्दहसितमालक्ष्याह—रजन्येपेति ॥१९॥ किंच मातर इति । विचिन्वन्ति मृगयन्ते । बन्धूनां साध्वसं कृच्छ्रं मा कृध्वं मा कुरुतेत्यर्थः ॥ २० ॥ ईषत्प्रणयकोपेनान्यतो विलोकयन्ती प्रत्याह—दृष्टमिति । राकेशस्य पूर्णचन्द्रस्य करैः रञ्जितम् । यमुनास्पर्शिनोऽनिलस्य लीला मन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितम् ॥२१॥ सतीः हे सत्यः ॥२२॥ संरम्भक्षुभितदृष्टीः प्रत्याह—अथवेति । यन्त्रिताशया वशीकृतचित्ताः । उपपन्नं युक्तम् । प्रीयन्ते प्रीता भवन्ति ॥ २३ ॥ दृष्टादृष्टभय-

ता दृष्ट्वान्तिकमायाता भगवान् व्रजयोषितः॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥१७॥ ॥श्रीभगवानुवाच ॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम् ॥ १८ ॥ रजन्येषा घोर[3]रूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥१९॥ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ॥ विचिन्वन्ति ह्यपश्यन्तो मा कृध्वं बन्धुसाध्वसम् ॥ २० ॥ दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥२१॥ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः ॥ क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत ॥ २२ ॥ अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः ॥ आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः ॥ २३ ॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ॥ तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥२४॥ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥२५॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥२६॥ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् ॥ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥ ॥श्रीशुक उवाच ॥ इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ॥ विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम् ॥२८॥ कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ॥ अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् २९

प्रदर्शनेन निवर्तयति—भर्तुरित्यादिश्लोकत्रयेण ॥२४॥२५॥ फल्गु तुच्छम् । कृच्छ्रं दुःसंपाद्यम् । औपपत्यं जारसौख्यम् ॥ २६ ॥ किंच श्रवणादिति ॥ २७ ॥ ॥२८॥ चिन्तां प्रासानां स्थितिमाह—कृत्वेति । शुचः शोकादुद्गतेन श्वसनेन शुष्यन्तो बिम्बफलसदृशा अधरा येषु मुखेषु तानि अव अवाञ्चि कृत्वा तथाऽङ्गुष्ठेन महीं लिखन्त्यः । तथा गृहीतकज्जलैरश्रुभिः कुचकुङ्कुमानि क्षालयन्त्यस्तूर्ष्णीं स्थिताः । यत उरुदुःखस्य भरो भारो यासां ताः ॥ २९ ॥ ॥ ॥

१ रसमयरासलीलाप्रसङ्गे ईदृशस्ते प्रश्नः समाधानप्रपञ्चश्च रसविघातकत्वादनुचित इति व्यञ्जयन् स्वयमेवोत्कण्ठया प्रस्तौति । २ वाचःपेशैः वाग्विलासैरित्युक्त ते च द्विविधाः शाब्दिका आर्थिकाश्च । आद्याः स्मितावलोकादिपूर्वकसुललितवर्णविन्यासादयः । द्वितीयाः सरसभावगर्भिताः सन्तो वास्तवार्थ-उपेक्षा-प्रार्थनामयत्वेन त्रिविधाः स्वागतमित्यादिश्लोकेषु तोषणीकारैः सविस्तरं विवृता अपि विस्तरभिया नात्र सगृहीताः । ३ यद्वा अघोररूपा चन्द्रोदयेन तमोहानात्, अतो ज्योत्स्नया दिनप्रायत्वादघोरैः सत्त्वैर्भृङ्गकोकिलाद्यैर्निषेविता, अथवा घोरं दुष्टानां भयजनकं सत्त्वं बलं यस्य तेन मया निषेविता । अतः सर्वथा व्रजं न यात । प्रार्थनाया लोट् । इत्थमेवाग्रे मा विचिन्वन्ति, मा यात इत्यादि योज्यम् ।

किंच प्रेष्ठमिति । किंचित्संरम्भेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म । संरम्भे कारणं—प्रेष्ठमित्यादि । प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणम् ॥ ३० ॥ नृशंसं क्रूरम् । हे दुरवग्रह स्वच्छन्द, तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व मा त्यजेति ॥३१॥ अपि च यदुक्तं 'पत्यपत्य—'इत्यादि त्वया धर्मविदेति सोपहासमेवम्, एतदुपदेशानां पदे विषये त्वय्येवास्तु । उपदेशपदत्वे हेतुः—ईश इति। विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । ईशत्वे हेतुः—आत्मा किल भवानिति । भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवास्त्वित्यर्थः । अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु । ननु त्वं धर्मोपदेष्टा किंतु भवानामेति । अथवा यदुक्तमेतदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सत्येवम् । काक्वा नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ॥ नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरम्भगद्गद-
गिरोऽब्रुवतानुरक्ताः ॥ ३० ॥ ॥ गोप्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमू-
लम् ॥ भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥३२॥
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥ तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या
आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ॥३४॥ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासा-
वलोककलगीतजहृच्छयाग्निम् ॥ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥ ॥

इति । यद्वा यदुक्तं 'पत्यादिशुश्रूषणं धर्मं' इति एवमेतत्त्वय्येवास्तु । कुतः । उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने । कुतः ईशे । नहीश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामेति । अन्यत्समानम् । अलमतिविस्तरेण ॥ ३२ ॥ एतत्सदाचारेण द्रढयन्त्यः प्रार्थयन्ते—कुर्वन्तीति । कुशलाः शास्त्रनिपुणाः। तथा च शास्त्रम्—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं च लोकः' इति॥३३॥ किंच 'प्रतियात'इति यदुक्तं तदशक्यं, त्वयैव चित्तादीनामपहृतत्वादित्याहुः—चित्तमिति । यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु निर्विशति तत्त्वयापहृतम् । करावपि यौ गृहकृत्ये निर्विशतस्तावपि । सुखात्मना त्वयेति वा ॥ ३४ ॥ अतोऽङ्ग हे कृष्ण, नोऽस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिञ्च । नो चेद्वयं तावदेकोऽग्निस्तथा विरहाज्जनिष्यते योऽग्निस्तेन चोपयुक्तदेहा दग्धशरीरा योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयामः ॥ ३५ ॥

१ बन्धुरो मनोहर आत्मा यस्येति वा । २ आत्मन् आत्मनि । ३ 'वरदेश्वर' इति पाठः । ४ 'छिन्ध्याद्याशाम्' इति पाठः । तत्र भवानित्यध्याहारः, छान्दसः पुरुषव्यत्ययो वा ।

प्रस्तुतमाह—ता दृष्ट्वेति । वाचःपेशैर्वाग्विलासैः ॥ १७ ॥ सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह—व्रजस्येति ॥ १८ ॥ लज्जया मन्दहसितमालक्ष्याह—रजन्येषेति ॥१९॥ किंच मातर इति । विचिन्वन्ति मृगयन्ते । बन्धूनां साध्वसं कृच्छ्रं मा कृध्वं मा कुरुतेत्यर्थः ॥ २० ॥ ईषत्प्रणयकोपेनान्यतो विलोकयन्ती प्रत्याह—दृष्टमिति । राकेशस्य पूर्णचन्द्रस्य करै रञ्जितम् । यमुनास्पर्शिनोऽनिलस्य लीला मन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितम् ॥२१॥ सतीः हे सत्यः ॥२२॥ संरम्भक्षुभितदृष्टीः प्रत्याह—अथवेति । यन्त्रिताशया वशीकृतचित्ताः । उपपन्नं युक्तम् । प्रीयन्ते प्रीता भवन्ति ॥ २३ ॥ दृष्टादृष्टभय-

ता दृष्ट्वान्तिकमायाता भगवान् व्रजयोषितः॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन्॥१७॥ ॥श्रीभगवानुवाच॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः॥ व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम्॥ १८ ॥ रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥१९॥ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः॥ विचिन्वन्ति ह्यपश्यन्तो मा कृध्वं बन्धुसाध्वसम्॥ २० ॥ दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥२१॥ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः॥ क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत॥ २२॥ अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः॥ आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः॥ २३ ॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया॥ तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम्॥२४॥दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी॥२५॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः॥२६॥ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्॥ न तथा संनिकर्षेण प्रतियात ततो गृहान्॥ २७॥ ॥श्रीशुक उवाच॥ इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम्॥विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम्॥२८॥कृत्वा मुखान्यव शुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः॥ अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम्॥२९

प्रदर्शनेन निवर्तयति—भर्तुरित्यादिश्लोकत्रयेण ॥२४॥२५॥ फल्गु तुच्छम् । कृच्छ्रं दुःसंपाद्यम् । औपपत्यं जारसौख्यम् ॥ २६ ॥ किंच श्रवणादिति ॥ २७ ॥ ॥२८॥ चिन्तां प्राप्तानां स्थितिमाह—कृत्वेति । शुचः शोकादुद्गतेन श्वसनेन शुष्यन्तो बिम्बफलसदृशा अधरा येषु मुखेषु तानि अव अवाञ्चि कृत्वा तथाऽङ्गुष्ठेन महीं लिखन्त्यः । तथा गृहीतकज्जलैरश्रुभिः कुचकुङ्कुमानि क्षालयन्त्यस्तूष्णीं स्थिताः । यत उरुदुःखस्य भरो भारो यासां ताः ॥ २९ ॥ ॥ ॥

१ रसमयरासलीलाप्रसङ्गे ईदृशस्ते प्रश्नः समाधानप्रपञ्चश्च रसविघातकत्वादनुचित इति व्यञ्जयन् स्वयमेवोत्कण्ठया प्रस्तौति । २ वाचःपेशैः वाग्विलासैरित्युक्तं ते च द्विविधाः शाब्दिका आर्थिकाश्च । आद्याः स्मितावलोकादिपूर्वकमुललितवर्णविन्यासादयः । द्वितीयाः सरसभावगर्भिताः सन्तो वात्सल्यार्थ-उपेक्षा-प्रार्थनामयत्वेन त्रिविधाः स्वागतमित्यादिश्लोकेषु तोषणीकारैः सविस्तरं विवृता अपि विस्तरभिया नात्र सगृहीताः । ३ यद्वा अघोररूपा चन्द्रोदयेन तमोहानात्, अतो ज्योत्स्नया दिनप्रायत्वाद्घोरैः सत्त्वैर्भृङ्गकोकिलादिभिर्निषेविता, अथवा घोरं दुष्टानां भयजनकं सत्त्वं बलं यस्य तेन मया निषेविता । अतः सर्वथा व्रजं न यात । प्रार्थनाया लोट् । इत्थमेवाग्रे मा विचिन्वन्ति, मा यात इत्यादि योज्यम् ।

किंच प्रेष्ठमिति । किंचित्संरम्भेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म । संरम्भे कारणं—प्रेष्ठमित्यादि । प्रियेतरमिव प्रतिभापमाणं प्रत्याचक्षाणम्
॥ ३० ॥ नृशंसं क्रूरम् । हे दुरवग्रह स्वच्छन्द, तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व मा त्यजेति ॥३१॥ अपि च यदुक्तं 'पत्यपत्य—'इत्यादि त्वया धर्म-
विदेति सोपहासमेवम्, एतदुपदेशानां पदे विषये त्वय्येवास्तु । उपदेशपदत्वे हेतुः—ईश इति। विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः ।
ईशत्वे हेतुः—आत्मा किल भवानिति । भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवास्त्वित्यर्थः ।
अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु । ननु त्वं धर्मोपदेष्टा किंतु
भवानामेति । अथवा यदुक्तमेतदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सत्येवम् । काक्वा नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ॥ नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरम्भगद्गद-
गिरोऽब्रुवतानुरक्ताः ॥ ३० ॥ ॥ गोप्य ऊचुः ॥ मैवं विभोऽर्हति भवान्गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमू-
लम् ॥ भक्ता भजस्व दुरवग्रह मा त्यजास्मान्देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा[1] ॥३२॥
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्[2]नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥ तन्नः प्रसीद परमेश्वर[3] मा स्म छिन्द्या[4]
आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं वा ॥३४॥ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासा-
वलोककलगीतजहृच्छयाग्निम् ॥ नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥ ॥

इति । यद्वा यदुक्तं 'पत्यादिशुश्रूषणं धर्मं' इति एवमेतत्त्वय्येवास्तु । कुतः । उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने । कुतः ईशे ।
नहीश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामेति । अन्यत्समानम् । अलमतिविस्तरेण ॥ ३२ ॥ एततसदाचारेण द्रढयन्त्यः प्रार्थयन्ते—कुर्वन्तीति । कुशलाः
शास्त्रनिपुणाः। तथा च शास्त्रम्—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं च लोकः' इति॥३३॥ किंच 'प्रतियात'इति यदुक्तं तदशक्यं, त्वयैव चित्तादीनामप-
हृतत्वादित्याहुः—चित्तमिति । यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु निर्विशति तत्त्वयापहृतम् । करावपि यौ गृहकृत्ये निर्विशतस्तावपि । सुखात्मना
त्वयेति वा ॥ ३४ ॥ अतोऽङ्ग हे कृष्ण, नोऽस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिञ्च ।
नो चेद्वयं तावदेकोऽग्निस्तथा विरहाजनिष्यते योऽग्निस्तेन चोपयुक्तदेहा दग्धशरीरा योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयामः ॥ ३५ ॥

१ बन्धुरो मनोहर आत्मा यस्येति वा । २ आत्मन् आत्मनि । ३ 'वरदेश्वर' इति पाठः । ४ 'छिन्द्याद्याशाम्' इति पाठः । तत्र भवानित्यध्याहारः, छान्दसः पुरुषव्यत्ययो वा ।

ननु स्वपतीनेवोपगच्छत त एनमग्निं सिञ्चेयुरिति चेत्तत्राहुः—यर्हीति । रमाया लक्ष्म्या दत्तक्षणं दत्तोत्सवं दत्तावसरं वा । तदपि क्वचिदेव न सर्वदा । अरण्य-
जनाः प्रिया यस्य तस्य तव । अरण्यजनप्रियत्वादरण्ये क्वचिद्यर्ह्यस्प्राक्ष्म स्पृष्टवत्यो वयं तत्र च त्वयाभिरमिता आनन्दिताः सत्यस्तदारभ्यान्यसमक्षं स्थातुमपि
न पारयामः । तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥ त्वत्पादसौभाग्यं त्वतिचित्रमित्याहुः—श्रीरिति । वक्षस्यसापत्न्यं स्थानं लब्ध्वापि तुलस्या सपत्न्या सह
तव पादाम्बुजरजः कामयते स्म । भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः । यस्याः स्ववीक्षणकृते श्रीरात्मानं विलोकयत्वित्येतदर्थमन्येषां ब्रह्मादीनां तपोभिः
प्रयासः सा तद्रजस्तद्वद्वयमपि प्रपन्ना इति ॥ ३७ ॥ हे वृजिनार्दन दुःखहन्तः, त्वदुपासने त्वद्भजन एवाशा यासां ता वयं वसतीर्गृहान्विसृज्य हित्वा योगिन
इव प्राप्ताः । तव सुन्दरस्मितविलसितनिरीक्षणेन यस्तीव्रः कामस्तेन तप्तचित्तानाम् । हे पुरुषरत्न, दास्यं देहि ॥ ३८ ॥ ननु गृहस्वाम्यं विहाय दास्यं किमिति

यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं
त्वयाभिरमिता बत पारयामः ॥ ३६ ॥ श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्य-
जुष्टम् ॥ यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥ तन्नः प्रसीद वृजिनार्दन
तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ॥ त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि
दास्यम् ॥ ३८ ॥ वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ॥ दत्ताभयं च भुजद-
ण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥ का स्त्र्यङ्ग ते कलपदायतमूर्च्छितेन संमोहितार्य-
चरितान्न चलेत्त्रिलोक्याम् ॥ त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ४० ॥
व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता ॥ तन्नो निधेहि करपङ्कजमार्तबन्धो
तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ ४१ ॥ ॥ ॥ ॥ ॥

प्रार्थ्यतेऽत आहुः—वीक्ष्येति । अलकावृतमुखं केशान्तरैरावृतमुखम् । तथा कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन्, अधरे सुधा यस्मिंस्तच्च तच्च तव मुखं
वीक्ष्य दत्ताभयं भुजदण्डयुग्मं वक्षश्च श्रिया एकमेव रमणं रतिजनकं वीक्ष्य दास्य एव भवामेति ॥ ३९ ॥ ननु जुगुप्सितमौपपत्यमित्युक्तम्, तत्राहुः—का
स्त्रीति । अङ्ग हे कृष्ण, कलानि पदानि यस्मिंस्तदायतं दीर्घं मूर्च्छितं स्वरालापभेदस्तेन । पाठान्तरे कलपदामृतमयं वेणुगीतं तेन संमोहिता का वा स्त्री आर्य-
चरितान्निजधर्मान्न चलेत् । यन्मोहिताः पुरुषा अपि चलिताः, किंच त्रैलोक्यसौभगमिति यद्यतः अबिभ्रन्नबिभरुः । त्वद्द्योतकशब्दश्रवणमात्रेणापि तावन्नि-
जधर्मत्यागो युक्तः, किं पुनस्त्वदनुभवेनेति भावः ॥ ४० ॥ व्यक्तं निश्चितम् ॥ ४१ ॥ ॥ ॥ ॥

१ निषेधपक्षे वृजिनार्द न इति च्छेदः, गृहादि त्यक्त्वा न प्राप्ता वयमिति योजना । २ श्रियाः एकरमणमिति च्छेदः । सन्धिरार्षः । ३ निषेधपक्षे किं दास्यो भवामेति काका नैवे-
त्यर्थः । ४ 'पदायतवेणुगीतसमोहिता' इति पाठः । ५ निषेधपक्षे आर्यचरितभङ्गभिया का स्त्री नापययादिति योजना । ६ 'व्रजजनार्तिहरः' इति पाठः । ७ निषेधपक्षे किंकरीणामपि
शिरस्सु करं नो निधेहि मा स्थापयेति । ८ कलपदामृतवेणुगीतसमोहितेत्येवंरूपे ।

विक्लवितं पारवश्यप्रलपितम् । गोपीः अरीरमद्रमयामास ॥ ४२ ॥ प्रियस्येक्षणेनोत्फुल्लानि मुखानि यासां ताभिः उदारहासश्च द्विजाश्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य सः । एणाङ्कश्चन्द्रः ॥४३॥४४॥४५॥ बाहुप्रसारश्च परिरम्भश्च करादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः । क्ष्वेलया क्रीडया । अवलोकैश्च हसितैश्च कामं तासामुद्दीपयंस्ता रमयामास ॥४६॥ महात्मनो विमुक्तचित्तात् ॥४७॥ तत्सौभगेन मदमस्वाधीनताम् । मानं गर्वम् । केशवः कश्च ईशश्च तौ वशयतीति तथा सः ॥४८॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पू० भा० दी० टीकायामेकोनत्रिंशोऽध्यायः ॥२९॥ ॥ त्रिंशे विरहसंतप्तगोपीभिः

॥श्रीशुक उवाच॥ इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ॥ प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥ उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥ उपगीयमान उद्गायन्वनिताशतयूथपः ॥ मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन्वनम् ॥ ४४ ॥ नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥ रेमे तत्तरलानन्दकुमुदामोदवायुना ॥ ४५ ॥ बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ॥ क्ष्वेल्याऽवलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन्रतिपतिं रमयांचकार ॥ ४६ ॥ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥ आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥ तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥ प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भगवतो रासक्रीडावर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ श्रीशुक उवाच ॥ अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ॥ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥ गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥ गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ॥ असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥

कृष्णमार्गणम् ॥ उन्मत्तवन्नियतं भ्रमन्तीभिर्वनेवने ॥ १ ॥ अचक्षाणा अपश्यन्त्यः ॥ १ ॥ गत्या चानुरागस्मिताभ्यां विभ्रमेक्षितानि सविलासनिरीक्षणानि तैश्च मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासास्तैश्च रमापतेर्गत्यादिभिरेतैराक्षिप्तान्याकृष्टानि चित्तानि यासां ताः, अतस्तस्मिन्नेवात्मा यासां तास्तस्य विविधाश्चेष्टा जगृहुस्तदनुकरणेनाक्रीडन् ॥ २ ॥ अपिच गतिस्मितेति । प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मूर्तयो यासां ताः । अतः कृष्णविहारविभ्रमाः कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासां ताः । अहमेव कृष्ण इति परस्परं निवेदितवत्यः ॥ ३ ॥ ॥ ॥

१ विमुक्तमनासक्तं चित्तं यस्य तस्मादपीत्यर्थः। महात्मनोऽत्युदारचित्तात् इति बालबोधिनीकाराः। २ तस्या यमुनायास्तरङ्गैरानन्दयतीत्यानन्दः शैत्येनानन्ददायकश्चासौ कुमुदामोदयुक्तो वायुस्तेन हिमवालुकं पुलिनमित्यन्वयः। 'जुष्टं तत्' इति पाठे वायुना जुष्टं पुलिनमाविश्य ता रमयामासेत्युत्तरेणान्वयः। ३ 'बालचरित्रवर्णनं' इति पाठः।

किंच गायन्त्य इति । वनाद्वनान्तरं गच्छन्त्यो विचिक्युरमृगयन् । उन्मत्ततुल्यत्वमाह—वनस्पतीन्पप्रच्छुः । भूतेष्वन्तरं मध्ये सन्तं पुरुषं वहिश्च सन्तमिति ॥ ४ ॥ तत्प्रपञ्चयति नवभिः—तत्र महत्त्वादेते पश्येयुरित्याशयाऽश्वत्थादीन्पृच्छन्ति—दृष्ट इति । प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोर इव गतो वो युष्माभिः किं दृष्ट इति ॥ ५ ॥ महान्तः स्वपुष्पैर्बहूपकारिणश्चेति कुरवकादीन्पृच्छन्ति—कच्चिदिति । हे कुरवकादयः, दर्पहरं स्मितं यस्य स इतो गतः कच्चिद्दृष्ट इति ॥ ६ ॥ अलिकुलैः सह त्वा त्वां विभ्रत्तवातिप्रियस्त्वया किं दृष्ट इति ॥ ७ ॥ गुणातिरेकेऽपि नम्रत्वादिमाः पश्येयुरिति पृच्छन्ति—मालतीति । हे मालति मल्लिके, जाति, यूथिके, वो युष्माभिः किमदर्शि दृष्टः । करस्पर्शेन वः प्रीतिं जनयन् किं यात इति । अत्र मालतीजात्योरवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥ फलादिभिः सर्वप्राणिनां संतर्पका एते पश्येयुरिति पृच्छन्ति—चूतेति । चूताम्रयोरवान्तरजातिभेदः कदम्बनीपयोश्च । हे चूतादयः, येऽन्ये च

गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥ पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥ नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥ कच्चित्कुरबकाशोकनागपुन्नागचम्पकाः ॥ रामानुजो मानिनीनामितो दर्पहरस्मितः ॥६॥ कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये ॥ सह त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥७॥ मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ॥ प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ॥ ८ ॥ चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ॥ येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥ किं ते कृतं क्षिति तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥ अप्यङ्घ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन ॥१०॥ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ॥ कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥ ॥ ॥

परार्थभवकाः परार्थमेव भवो जन्म येषां ते । यमुनोपकूलास्तस्याः कूलसमीपे वर्तमानाः । तीर्थवासिन इत्यर्थः । ते भवन्तो रहितात्मनां शून्यचेतसां नः कृष्णपदवीं कृष्णस्य मार्गं शंसन्तु कथयन्तु ॥९॥ हे क्षिति क्षिते, त्वया किं तपः कृतं या त्वं केशवाङ्घ्रिस्पर्शोत्सवा केशवस्याङ्घ्रिस्पर्शेनोत्सवो यस्याः सा। कुतः। अङ्गरुहैरुत्पुलकिता रोमाञ्चिता विभासि शोभसे । तत्र विशेषं पृच्छन्ति—अपि किमयमुत्सवोऽङ्घ्रिसंभवोऽधुना तवैकदेशाङ्घ्रिस्पर्शसंभूतः । यद्वा नैतावत्किंतु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात्। अहो अथवा । नैतावदेव, अपि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरम्भणेनेति। अतस्त्वया नूनं दृष्टस्तं दर्शयेति ॥१०॥ हरिण्या दृष्टिप्रत्यासत्त्या कृष्णदर्शनं संभाव्याहुः—अपीति । हे सखि एणपत्नि, अपि किमुपगतः समीपं गतः । गात्रैः सुन्दरैर्भुजबाह्वादिभिः । प्रियया सहेति यदुक्तं तत्र द्योतकम् । कान्ताया अङ्गसङ्गस्तेन तत्कुचकुङ्कुमेन रञ्जितायाः कुन्दकुसुमस्रजो गन्धः । कुलपतेः श्रीकृष्णस्य । वाताग्गच्छति ॥ ११ ॥

१ 'गतः' इति पाठः । २ एणपत्नीति 'पत्युर्नो यज्ञसंयोगे' इति सूत्रादेणाना भवान्तरयज्ञैर्याज्ञिकत्वं । एण्या यज्ञपत्नीत्वमिति दृष्टप्रशंसा ।

फलभारेण नतांसरूक्ष्णं दृष्ट्वा प्रणता इति मत्वा प्रियया सह तस्य गतिविलासं संभावयन्त्यः पृच्छन्ति—बाहुमिति । तुलसिकाया अलिकुलैरतत्तदामोदमदान्धैरन्वीयमानोऽनुगम्यमान इह चरन्निति ॥ १२ ॥ काश्चिदाहुः—हे सख्यः, इमा लताः कृष्णेन सङ्गता नूनम्, अत इमाः पृच्छत । ननु स्वपतिसङ्गतौ तत्सङ्गतिर्दुर्घटा, न । वनस्पतेः पत्युर्बाहुनाश्लिष्टा अपि अहो भाग्यं नूनं तन्नखैः स्पृष्टा यत उत्पुलकानि बिभ्रति । नहि स्वपतिसङ्गतावीदृक्पुलकसंभव इति भावः ॥१३॥ उन्मत्तवत्पप्रच्छुरित्येतत्प्रपञ्चितमिदानीं—'रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः' इति यदुक्तं तत्प्रपञ्चयति—इतीति । उन्मत्तवचो गोप्यः उन्मत्तवचसश्च ता गोप्यश्च । कृष्णान्वेषणेन कातरा अतिविह्वलाः । अनुचक्रुरनुकृतवत्यः ॥ १४ ॥ कस्याश्चिदित्यादिभिश्चतुर्भिरनुकरणं प्रपञ्च्यते, ततश्चतुर्भि-

बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः ॥ अन्वीयमान इह वस्तरवः प्रणामं किं वाभिनन्दति चरन्प्रणयावलोकैः ॥१२॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥१४॥ कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् ॥ तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ॥ १५॥ दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिङ्गयामास काप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः ॥ १६ ॥ कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ॥ वत्सायन्तीं हन्ति चान्या तत्रैका तु बकायतीम् ॥१७॥ आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम् ॥ वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति ॥ १८ ॥ कस्यांचित्स्वभुजं न्यस्य चलन्त्याह परानु ॥ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥ १९ ॥ मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ॥ इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥ २० ॥ आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप ॥ दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥ २१ ॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ॥ चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥ २२ ॥ बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले ॥ भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ॥ २३ ॥ ॥

स्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः । पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदाचरन्ती स्तनमपिबत् । तोकायित्वा तोकवदात्मानं कृत्वा ॥ १५ ॥ दैत्यायित्वा दैत्यवत्तृणावर्तवदात्मानं कृत्वा एका कृष्णार्भभावनां कृष्णस्यार्भं बाल्यं भावयति या तामन्यां जहार ॥१६॥१७॥ दूरगाः दूरे वर्तमाना गाः । यद्वद्यथा कृष्णस्तथाहूय तं कृष्णमनुवर्तमानाम् । अनुकुर्वतीमिति वा पाठः ॥ १८ ॥ १९ ॥ यतन्ती प्रयत्नं कुर्वती अम्बरमुत्तरीयं वस्त्रमुन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥ ॥ २१ ॥ अपिदध्वं निमीलयत ॥ २२ ॥ सुदृक् सुनयनमास्यं पिधाय । सुदृक् वराक्षीति वा । भीतिविडम्बनं भयानुकरणम् ॥ २३ ॥ ॥

१ प्रियायाः स्निग्धाया अंसे स्कन्धे । २ घोषाः किङ्किण्यस्तासां निःस्वनैः सहितावङ्घ्री कर्षन्ती सती रिङ्गयामास, । णिजर्थोऽविवक्षितः । ३ 'वत्सायिताम्', 'बकायिताम्' इति पाठौ । ४ एतदुत्तरं चक्रवर्तिपाठे—'बध्नामि भाण्डभेत्तारं हैयङ्गवमुषं त्विति' इत्यधिकम् । तद्व्याख्या च—भाण्डभेत्तारं हैयङ्गवमुषं त्वां बध्नामीत्युक्त्वाऽन्यया स्रजा बद्धा काचिद्भीतिविडम्बनं भेजे इति ।

एवं पुनरपि वृन्दावने लतास्तरूंश्च कृष्णं पृच्छन्त्यो वनोद्देशे वनप्रदेशे। व्यचक्षतापश्यन् ॥ २४ ॥ २५ ॥ सुपृक्तानि संमिश्राणि ॥ २६ ॥ तेनांसे न्यस्तः प्रकोष्ठो यस्याः । करेणोर्हस्तिन्याः ॥ २७ ॥ रह एकान्तस्थानम् ॥ २८ ॥ हे आल्यः सख्यः, अहो धन्या अतिपुण्या गोविन्दाङ्घ्र्यब्जरेणवः । तत्र हेतुः—यानिति । अस्माभिरप्येतद्रेण्वभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥ अन्या आहुः—तस्या इति । गोपीनां सर्वस्वम् । अयं भावः—भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुस्तानि तु नो दुःखं कुर्वन्तीति ॥ ३० ॥ तदसंपृक्तान्केवलं कृष्णपादरेणूनेव विचिन्वत्यस्तान्दृष्ट्वा पुनरत्यन्तं समतपन् ।

एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ॥ व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥२४॥ पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ॥ लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः ॥ २५ ॥ तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ॥ वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥२६॥ कस्याः पदानि चैतानि याताया नन्दसूनुना ॥ अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥२७॥ अनयाराधितो नूनं भगवान्हरिरीश्वरः ॥ यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥२८॥ धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ॥ यान्ब्रह्मेशो रमादेवी दधुर्मूर्ध्न्यघनुत्तये ॥२९॥ तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ॥ यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥ ३० ॥ न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः ॥ खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥ (इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥ गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥१॥) अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥ प्रपदाक्रमणे एते पश्यतासकले पदे ॥३२॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ३३ ॥ रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥ कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ ३४ ॥ इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ॥ ३५ ॥

तदाह श्लोकत्रयेण—न लक्ष्यन्त इति । खिद्यती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तामुन्निन्ये स्कन्धमारोपितवान् ॥ ३१ ॥ प्रपदाभ्यामाक्रमणं क्षोणीमर्दनं ययोः । अत एवासकले पदे पश्यतेति ॥ ३२ ॥ तस्याः कृष्णजान्वन्तरुपविष्टायाश्चिह्नं दृष्ट्वाहुः—केशप्रसाधनमिति । कान्तामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकारेण बध्नता ध्रुवमुपविष्टम् ॥ ३३ ॥ रेमे इत्यादिशुकोक्तिः । आत्मरतः स्वतस्तुष्टः । आत्मारामः स्वक्रीडः । अखण्डितः स्त्रीविभ्रमैरनाकृष्टोऽपि तथा चेत्किमिति रेमेऽत आह—कामिनामिति ॥ ३४ ॥ ३५ ॥

१ यदि तस्याः पदानि सपृक्तानि न भवेयुस्तर्हि एवं कृष्णप्राप्तिसाधन तत्पदरजःसेवनं भवेत् । तानि तु सपृक्तानि तत्पदानि नो दुःखं कुर्वन्ति । तस्याः पादरजसा मिश्रितत्वात्कृष्णपादरजस इति भावः । २ अघं अपराधो विरहदुःखं वा । ३ उच्चैः अधिकं क्षोभं दुःखम् । ४ 'धनं भुङ्क्ते' इति पाठः । ५ इमानीत्यादिसार्धश्लोकः काचित्कः, तोषणीसारे टीकान्तरपुस्तकेषु च दृष्टत्वान्मूले निवेशितः । ६ 'स्वात्मरतः' इति पाठः ।

स्त्रीणां दुरात्मतामाह—सा चेति द्वाभ्याम् । कामो यानमागमनसाधनं यासां ता गोपीर्हित्वा मां भजत इति हेतोरात्मानं वरिष्ठं मेने इति ॥ ३६ ॥ ३७ ॥ कामिनां दैन्यं दर्शयति—एवमुक्त इति । अखण्डितत्वमाह—ततश्चेति । तस्यां स्कन्धारोहोद्यतायामन्तर्हित इत्यर्थः ॥ ३८ ॥ अनुतापमाह—हा नाथेति ॥ ३९ ॥ अन्विच्छन्त्यो मृगयमाणाः । अविदूरतः समीपे ॥४०॥४१॥ ततस्तयापि सहिताः कृष्णान्वेषणाय वनमविशन् । ततो हरेरन्वेषणान्निवृत्ताः ॥ ४२ ॥ एवं तमप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः । तदात्मिकाः स एवात्मा यासां ताः । तन्मय्य इत्यर्थः ॥ ४३ ॥ किंतु पूर्वं यत्र श्रीकृष्णेन सङ्गतिरासीत्तदेव कालिन्द्याः पुलिनमागत्य कृष्णं भावयन्ति ध्यायन्तीति तथा ताः कृष्णस्यागमनं काङ्क्षितं यासां ताः मिलिताः सत्यः कृष्णमेव जगुरिति ॥ ४४ ॥ ॥ इति

सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥३६॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत्[1] ॥ न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ३७ ॥ एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ३८ ॥ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय संनिधिम् ॥ ३९ ॥ अन्विच्छन्त्यो भगवतो मार्गं गोप्यो विदूरतः ॥ ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥ ४० ॥ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४१ ॥ ततोऽविशन्वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ॥ तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥ ४२ ॥ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥४३॥ पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ॥ समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासक्रीडायां कृष्णान्वेषणं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ गोप्य ऊचुः ॥ जयति[2] तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ॥ दयित दृश्यतां[3] दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥

श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां त्रिंशत्तमोऽध्यायः ॥ ३० ॥ ॥ एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः ॥ कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम् ॥ १ ॥ जयतीति । हे दयित, ते जन्मना व्रजोऽधिकं यथा भवति तथा जयत्युत्कर्षेण वर्तते । यस्मात्त्वमत्र जातस्तस्मादिन्दिरा लक्ष्मीरत्र हि श्रयते व्रजमलंकृत्य वर्तते । एवं व्रजे सर्वस्मिन्मोदमानेऽत्र तु तावकास्त्वदीया गोपीजनास्त्वयि त्वदर्थमेव कथंचिद्धृता असवो यैस्ते त्वां विचिन्वते । अतस्त्वया दृश्यतां प्रत्यक्षीभूयतामिति । यद्वा अस्माभिर्भवान् दृश्यताम् । यद्वा एवं त्वया दृश्यतामेते विचिन्वत इति ॥ १ ॥ ॥

१ केशवं स्वस्याः केशान्वयते प्रभातीति तम् । २ जयतीत्यादिश्लोकेषु प्रायश्चतुर्णां पादानां द्वितीयाक्षरहलैक्यं केषुचित्पादेषु प्रथमसप्तमाक्षरहलैक्यं तत्र क्वचित् शसववादीनामालंकारिकादिसमयसिद्धसावर्ण्यादैक्यमिति ज्ञेयम् । ३ त्वया दृश्यतां प्रत्यक्षीभूयतामिति प्रेरणात्यागेनाकर्मकत्वाद्भावे लोट् । यद्वा अस्माभिर्भवान् दृश्यतामिति कर्मणि लोट् ।

अत्र स्वतन्त्राणां बहूनां वक्तृत्वादपरा आहुरिति सर्वश्लोकेष्ववतारणा, अथापि सङ्गतिरुच्यते । तत्र विचिन्वन्तु मम किमिति चेत्तत्राहुः—शरदिति । शरदुदा-
शये शरत्कालीने सरसि साधु जातं सम्यक् जातं यत्सरसिजं विकसितं पद्मं तस्योदरे गर्भे या श्रीस्तां मुष्णाति हरतीति तथा तया दृशा नेत्रेण हे सुरतनाथ
संभोगपते वरदाभीष्टप्रद, अशुल्कदासिका अमूल्यदासीर्नो निघ्नतो मारयतस्ते तव त्वया क्रियमाण इह लोकेऽयं वधो न भवति किम् । शस्त्रेणैव वधो वधः किं
दृशा वधो न भवति, किंतु भवत्येव। अतस्तव दृशाऽपहृतप्राणप्रत्यर्पणाय त्वया दृश्यतामिति भावः । त्वया दृश्यतामिति यथासंभवं सर्वत्र वाक्यशेषः ॥ २ ॥
किंच बहुभ्यो मृत्युभ्यः कृपया रक्षित्वा किमितीदानीं दृशा मन्मथं प्रेष्य घातयसीत्याहुः—विषेति । हे ऋषभ श्रेष्ठ, विषमयाज्जलाद्योऽप्ययो नाशस्तस्मात्तथा
व्यालराक्षसादघासुराद्वर्षान्मारुताद्वैद्युतानलादशनिपातात् वृषोऽरिष्टस्तस्मान्मयात्मजाद्व्योमाद्विश्वतोऽन्यस्मादपि सर्वतो भयाच्च कालियदमनादिना रक्षिताः कि-
मिदानीमुपेक्षस इति भावः ॥३॥ अपि च विश्वपालनायावतीर्णस्य तव भक्तोपेक्षाऽत्यन्तमनुचितेत्याशयेनाहुः—न खल्विति । हे सखे, भवान्खलु निश्चितं यशो-

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा[1] ॥ सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥
विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥ न खलु
गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ॥ विखनसाऽर्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥४॥ विर-
चिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ॥ करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥ व्रज-
जनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित ॥ भज सखे भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥ प्रण-
तदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ॥ फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥

दासुतो न भवति, किंतु सर्वप्राणिनां बुद्धिसाक्षी । ननु स किं दृश्यो भवति तत्राहुः—विखनसा ब्रह्मणा विश्वपालनाय प्रार्थितः सन्सात्वतां कुले उदेयिवा-
नुदित इति ॥४॥ तस्मात्त्वद्भक्तानामस्माकमेतत्प्रार्थनाचतुष्टयं संपादयेत्याहुः—विरचिताभयमित्यादिचतुर्भिः । हे वृष्णिधुर्य, संसृतेर्भयात्ते चरणमीयुषां शरणं
प्राप्तानां प्राणिनां विरचितं दत्तमभयं येन तत्तथा हे कान्त, कामदं वरदं तथा श्रियः करं गृह्णातीति तथा तद्भवत्करसरोरुहं न शिरसि धेहि ॥ ५ ॥ हे व्रज-
जनार्तिहन् हे वीर, निजजनानां यः स्मयो गर्वस्तस्य ध्वंसनं नाशकं स्मितं यस्य तथाभूत हे सखे, भवत्किङ्करीर्नोऽस्मान् भज आश्रय । स्मेति निश्चितम् । प्रथमं
तावज्जलरुहाननं चारु योषितां नो दर्शय ॥ ६ ॥ अविशेषेण प्रणतानां देहिनां पापकर्शनं पापहन्तृ तृणचरान्पशूनप्यनु गच्छति कृपयेति तथा सौभाग्येन
श्रियो निकेतनं वीर्यातिरेकेण फणिनः फणास्वर्पितं ते पदाम्बुजं नः कुचेषु कृणु कुरु । किमर्थम् । हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥ ॥ ॥

१ अरिष्टव्योमासुरयोर्वधस्य भावित्वेऽपि गर्गादिमुखाच्छ्रुतत्वेन विप्रलम्भपोषकत्वेन वा भूतवन्निर्देशः । २ अथवा दृशैव शुल्कदासिकाः दृग्रूपशुल्केनैव दासीरपि त्यागेन मारयतः इति
योजना । ३ वृषात्मजो वत्सासुरः 'वराहतोकोनिरगादितिवत्'। मयात्मजो व्योमासुरः । तच्चरित्रं अग्रे वक्ष्यमाणमपि रासात्पूर्वभावीति ज्ञेयम् । ४ यद्वा खलु निषेधे । अन्तरात्मदृगपि गोपि-
कानन्दनो न भवतीति नेत्यर्थ इति वा । अथवा नञः प्राङ्निर्देशात्सर्वपादैरन्वयः । हे असखे, प्रतिकूलो भवान् यशोदासुतो न । तथात्वेऽस्मदुपेक्षानुपपत्तेरित्यादियोजनापि तोषण्याम् । ५ 'शरण-
मीयुषाम्' इति पाठः । ६ यद्वा कान्तं च तत्कामदं चेति स्वतः सुखरूपं अभीष्टद चेति केचित् । ७ अथवा अभवत्किंकरीः अन्या एव भज । मुखपद्मं च नो प्रदर्शय । मरणस्यैव निश्चित-
त्वादिति प्रणयकोपे योजना । ८ 'फणिनः फणास्वर्पणमात्रेण तद्विषदर्पस्येव हृदि स्पर्शमात्रेण कंदर्पस्य नाशो न दुष्कर इति भावः ।

मुह्यतीरिमा नो विधिकरीः किङ्करीरधरसीधुना हे पुष्करेक्षण, तवैव मधुरया गिरा वल्गूनि वाक्यानि यस्यां तया बुधानां मनोज्ञया हृद्यया गम्भीरयेत्यर्थः । आप्याययस्व संजीवयेति ॥ ८ ॥ किंच अस्माकं त्वद्विरहे प्रासमेव मरणं किंतु त्वत्कथामृतं पाययद्भिः सुकृतिभिर्वञ्चितमित्याहुः—तवेति । कथैवामृतम् । अत्र हेतुः—तप्तजीवनम् । प्रसिद्धामृतादुत्कर्षमाहुः—कविभिर्ब्रह्मविद्भिरपीडितं स्तुतम् । देवभोग्यं त्वमृतं तैस्तुच्छीकृतम् । किंच कल्मषापहं कामकर्मनिरसनम् । तत्त्वमृतं नैवंभूतम् । किंच श्रवणमङ्गलं श्रवणमात्रेण मङ्गलप्रदम् । तत्त्वनुष्ठानापेक्षम् । किंच श्रीमत्सुशान्तम् । तत्तु मादकम् । एवंभूतं त्वत्कथामृतमाततं यथा भवति तथा ये भुवि गृणन्ति निरूपयन्ति ते जना भूरिदा बहुदातारः । जीवितं ददतीत्यर्थः । यद्वा एवंभूतं त्वत्कथामृतं ये भुवि गृणन्ति ते भूरिदाः पूर्वजन्मसु बहु दत्तवन्तः सुकृतिन इत्यर्थः । एतदुक्तं भवति—ये केवलं कथामृतं गृणन्ति तेऽपि तावदतिधन्याः किं पुनर्ये त्वां पश्यन्ति, अतः प्रार्थयामहे त्वया दृश्यतामिति ॥९॥ ननु मत्कथाश्रवणेनैव निर्वृता भवत किं मद्दर्शनेन, न, त्वद्विलासक्षुभितचित्ता वयं तत्रापि शान्तिं न विन्दाम इत्याहुः—प्रहसितमिति ।

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमा वीर मुह्यतीरधरसीधुनाप्याययस्व नः ॥८॥ तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥ श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९ ॥ प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ॥ रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥ चलसि यद्व्रजाच्चारयन्पशून्नलिनसुन्दरं नाथ ते पदम् ॥ शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥ दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ॥ घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥ प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ॥ चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥ ॥ ॥

हे प्रिय, कुहक कपट, संविदः संकेतनर्माणि ॥१०॥ किंच त्वयि वयमातप्रेमार्द्रचित्तास्त्वं पुनरस्मासु केन हेतुना कपटमाचरसीत्याहुः श्लोकद्वयेन—चलसीति । हे नाथ हे कान्त, यत् यदा व्रजाच्चलसि पशूंश्चारयंस्तदा तन्नलिनसुन्दरं कोमलं ते पदं शिलैः कणिशैस्तृणैरङ्कुरैश्च सीदति क्लिश्येदिति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति । एवंभूतास्त्वद्दुःखशङ्कितचित्ता वयम् ॥ ११ ॥ त्वं तु दिनपरिक्षये सायंकाले नीलकुन्तलैरावृतं घनरजस्वलं गोरजश्छुरितं वनरुहाननमलिमालाकुलपरागच्छुरितपद्मतुल्यमाननं बिभ्रत्तच्च मुहुर्मुहुर्दर्शयन्नो मनसि केवलं स्मरं यच्छस्यर्पयसि । नतु सङ्गं ददासीति कपटस्त्वमिति भावः ॥ १२ ॥ अतोऽधुना कपटं विहायैवं कुर्विति प्रार्थयन्ति श्लोकद्वयेन—प्रणतकामदमिति । हे आधिहन् हे रमण, पद्मजेन ब्रह्मणार्चितमापदि ध्येयं ध्यानमात्रेणापन्निवर्तकं शन्तमं च सेवासमयेऽपि सुखतमं ते चरणपङ्कजं कामतापशान्तये नः स्तनेष्वर्पयेति ॥ १३ ॥ ॥ ॥

१ यद्वा गिरैव विधिकरीरधुना विरहात्समुह्यतीः इमाः प्रत्यक्षाः । २ यद्वा सतमा आहुः—तव कथा एव मृतं मृतिः सैवोद्दीपनविधयास्मान्मारयति । तथा तप्तजीवनं तप्ते तैले जीवनमिवेत्यर्थः । तथा च येऽसत्पुरतो गृणन्ति ते भूरिदा महाघातकाः । 'दो अवखण्डने' इति धातुः । अतः कथामृतेनालमिति योजना । ३ ध्यानमात्रेण मङ्गलप्रदम् । इदं प्रहसितादीनां विशेषणम् । ४ धरणिं ध्वजादिचिह्नैर्मण्डयतीति । ५ स्मरं स्मरणमात्रेणापि क्षोभकम् ।

अपि च हे वीर, तेऽधरामृतं नो वितर देहि । स्वरितेन नादितेन वेणुना सुष्ठु चुम्बितमिति नादामृतवासितमिति भावः । इतररागविस्मारणं नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति विलापयतीति तथा तत् ॥ १४ ॥ किंच क्षणमपि त्वददर्शने दुःखं दर्शने च सुखं दृष्ट्वा सर्वसङ्गपरित्यागेन यतय इव वयं त्वामुपागतास्त्वं तु कथमस्मांस्त्यक्तुमुत्सहसे इति सकरुणमूचुः—अटतीति द्वयेन । यद्यदा भवान् काननं वृन्दावनं प्रत्यटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवति । एवमदर्शने दुःखमुक्तम् । पुनश्च कथंचिद्दिनान्ते ते तव श्रीमन्मुखमुच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा जडो मन्द एव । निमेषमात्रमप्यन्तरमसह्यमिति दर्शने सुखमुक्तम् ॥ १५ ॥ तस्मात् हे अच्युत, पतीन्सुतानन्वयांस्तत्संबन्धिनो भ्रातॄन्बान्धवांश्चातिविलङ्घ्य तव समीपमागता वयम् । कथंभूतस्य । गतिविदोऽस्मदागमनं जानतः, गीतगतीर्वा जानतः, गतिविदो वयं वा । तवोद्गीतेनोच्चैर्गीतेन मोहिताः हे कितव शठ, एवंभूता योषितो निशि स्वयमागतास्त्वामृते कस्त्यजेत् । न कोऽपीत्यर्थः ॥ १६ ॥ अतस्त्वया त्यक्तानामस्माकं प्राक्तनत्वद्दर्शननिदानहृद्रोगस्य त्वत्सङ्गस्यैव चिकित्सां कुर्वित्याशयेनाहु-

**सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ॥ इतररागविस्मारणं नृणां[1] वितर वीर नस्तेऽधरामृतम् ॥१४॥ अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् ॥ कुटिलकुन्तलं श्रीमुखं च ते जड[2] उदीक्षतां पक्ष्मकृद्दृशाम् ॥१५॥ पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥ रहसि[3] संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ॥ बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा[4] मुह्यते मनः ॥१७॥ व्रजवनौकसां[5] व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ॥ त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥१८॥ यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि[6] कर्कशेषु ॥ तेनाटवीमटसि तद्व्यथते न किंस्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां[7] नः ॥१९॥ इति श्रीमद्भा० म०पु० द० पू० रासक्रीडायां गोपीगीतं नामैकत्रिंशोऽध्यायः ॥३१॥**

द्वयेन—रहसीति । श्रियो धाम ते बृहद्विशालमुरश्च वीक्ष्यातिस्पृहा भवति । तथा च मुहुर्मुहुर्मनो मुह्यति ॥१७॥ तव च व्यक्तिरभिव्यक्तिर्व्रजवनौकसां सर्वेषामहीत्यर्थः । किं तत् । स्वजनहृद्रोगाणां यदतिगोप्यं निषूदनं निवर्तकमौषधं तत्त्वमेव वेत्सीति गूढाभिप्रायम् ॥ १८ ॥ अतिप्रेमधर्षिता रुदत्य आहुः—यदिति । हे प्रिय, यत्ते तव सुकुमारं पदाब्जं कठिनेषु कुचेषु संमर्दनशङ्किताः शनैर्दधीमहि धारयेम वयम् । त्वं तु तेनाटवीमटसि । 'नयसि' इति पाठे पशून्वा कांचिदन्यां वा आत्मानमेव वा नयसि प्रापयसि । तत्ततः तत्पदाम्बुजं वा कूर्पादिभिः सूक्ष्मपाषाणादिभिः किंस्विन्न व्यथते कथं नु नाम न व्यथेतेति भवानेवायुर्जीवनं यासां तासां नो धीर्भ्रमति मुह्यतीति ॥ १९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

१ नृणामिति पुंसामपि, किमुत नारीणाम् । २ यद्वा अजड इति छेदः । यः पक्ष्माणि कृन्तति स निमीलनाभावसंपादक एव अजडो रसज्ञः । किंवा स्वदृशां पक्ष्मच्छिदेव अजडः उदीक्षतां उच्चैः पश्यतु । वयं तु पक्ष्मपिहितदृशो जडाः किं पश्यामेति दर्शनेऽपि विघानदुःखमिति भावः । ३ रहसि संविदो यत्र तम् । अलुगार्षः । प्रहसितमाननं यत्र । प्रेम्णा वीक्षणं यत्र । ४ अतिस्पृहा भवति । यद्वा स्पृहेति संपदादित्वाद्भावे क्विपि तृतीया । मनो वीक्ष्य अतिस्पृहया मुह्यतीत्यर्थः । 'अतिस्पृहं' इति चित्सुखपाठः । ५ व्रजौकसां वनौकसां च । ६ दधीमहि धर्तुं योग्यम् । 'अर्हे कृत्यतृचश्च' इति लिङ् । ७ भवदायुषामिति । इत्थमेव च 'त्वयि धृतासवः' इत्युपक्रमोऽपि ।

द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ॥ तत्राविर्भूय गोपीस्ताः सान्त्वयामास मानयन् ॥ १ ॥ स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ॥ सदयं नन्दयन् गोपी-रुद्गतो नन्दनन्दनः ॥ २ ॥ इति गोप्य इति । इत्येवंप्रभृति । चित्रधा अनेकधा सुस्वरमुच्चैः कृष्णदर्शने लालसातिस्पृहा यासां ताः ॥ १ ॥ साक्षान्मन्मथ-मन्मथो जगन्मोहनस्य कामस्यापि मनस्युद्भूतः कामः साक्षात्तस्यापि मोहक इत्यर्थः ॥ २ ॥ तन्वः करचरणादयः ॥३॥४॥ अञ्जलिना संहतहस्तद्वयेन ॥ ५ ॥ भ्रुकुटिं भ्रुवमाबध्य कुटिलीकृत्य प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठा कटाः कटाक्षास्तैर्ये आक्षेपाः परिभवास्तैस्ताडयन्तीवैक्षत ॥ ६ ॥ अनिमिषन्तीभ्यामनिमीलन्तीभ्यां दृग्भ्यामापीतमपि सम्यग्दृष्टमपि पुनः पुनर्जुषाणा नातृप्यत् ॥ ७ ॥ हृदिकृत्य हृदयं नीत्वेत्यर्थः ॥ ८ ॥ प्राज्ञमीश्वरं प्राप्य

॥ श्रीशुक उवाच ॥ इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ॥ रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥ तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ॥ पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ॥ उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥ काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ॥ काचिद्दधार तद्बाहुमंसे चन्दनभूषितम् ॥ ४ ॥ काचिदञ्जलिनाऽगृह्णात्तन्वी ताम्बूल-चर्वितम् ॥ एका तदङ्घ्रिकमलं संतप्ता स्तनयोरधात् ॥ ५ ॥ एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ॥ घ्नन्तीवै-क्षत्कटाक्षेपैः संदष्टदशनच्छदा ॥ ६ ॥ अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ॥ आपीतमपि नातृप्यत्सं-न्तस्तच्चरणं यथा ॥ ७ ॥ तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ॥ पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता ॥ ८ ॥ सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥ ताभिर्विधू-तशोकाभिर्भगवानच्युतो वृतः ॥ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥ ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ॥ विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥ शरच्चन्द्रांशुसंदोहध्वस्तदोषातमः शिवम् ॥ कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥ ॥ ॥ ॥

यथा मुमुक्षवो जनाः । यद्वा प्राज्ञं ब्रह्मज्ञं प्राप्य यथा संसारिणः । यद्वा प्राज्ञं सौषुप्तं प्राप्य यथा विश्वतैजसावस्था जीवाः ॥९॥ पुरुषः परमात्मा शक्तिभिः सत्त्वा-दिभिर्यथा । यद्वा उपासकः पुरुषो ज्ञानबलवीर्यादिभिः । यद्वा पुरुषोऽनुशायी प्रकृत्याद्युपाधिभिर्वृतो यथाऽधिकं विरोचते तद्वत् ॥ १० ॥ विकसत्कुन्दमन्दारैः सुरभिर्योऽनिलस्तस्मात्षट्पदा यस्मिंस्तत् ॥ ११ ॥ शरच्चन्द्रांशूनां संदोहैः समूहैर्ध्वस्तं दोषातमो रात्रिगतं तमो यस्मिंस्तत् । अतः शिवं सुखकरम् । हस्तरूपै-स्तरलैस्तरङ्गैराचिता आस्तृता कोमला वालुका यस्मिन् । एवंभूतं पुलिनं ताः समादाय निर्विश्य ताभिर्वृतोऽधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १२ ॥ ॥

१ सन्तो दास्यभक्तिनिष्ठा इति दृष्टान्तः । २ योगीवेत्यन्तःस्फूर्तौ दृष्टान्तः । ३ निर्विश्य अधिष्ठाय । ४ सौषुप्तं सुषुप्तिसाक्षिणमित्यर्थः ।

ताश्च मनोरथानामन्तं ययुः पूर्णकामा बभूवुः । श्रुतयो यथेति । अयमर्थः—यथा कर्मकाण्डे श्रुतयः परमेश्वरमपश्यन्त्यस्तत्तत्कामानुबन्धैरपूर्णा इव भवन्ति, ज्ञानकाण्डे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामानुबन्धं जहति तद्वदिति । आप्तकामा अपि प्रेम्णा तमभजन्नित्याह—स्वैरिति । अचीक्लृपन् रचयामासुः । आत्मबन्धवेऽन्तर्यामिणे ॥१३॥ गोपीसभागतस्ताभिः संमानितः सन् चकास शुशुभे । त्रैलोक्ये या लक्ष्मीः शोभा तस्या एकमेव पदं स्थानं तद्वपुर्दधद्दर्शयन् ॥१४॥ सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवोपलक्षिताः । संस्पर्शनेन संमर्दनेन ॥१५॥ तत्र भगवतोऽकृतज्ञतां तद्वचनेनैवापादयितुकामा गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति—भजत इति । भजतः प्राणिनः । अनु अनन्तरं । केचित्तद्भजनानुसारेण भजन्ति । केचिदेतद्विपर्ययं यथा भवति तथा । तद्भजनानपेक्षमभजतोऽपि भजन्ति । अन्ये तु नोभयानिति ॥१६॥ विदिताभिप्राय उत्तरमाह—मिथ इति । हे सख्यः, उपकारप्रत्युपकारतया ये मिथो भजन्ति तेऽन्यं न भजन्ति किंत्वात्मानमेव । कुतः ।

तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ॥ स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥१३॥ तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदिकल्पितासनः[2] ॥ चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥१४॥ सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ॥ संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥१५॥ ॥ गोप्य ऊचुः ॥ भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् ॥ नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ॥१६॥ ॥ श्रीभगवानुवाच ॥ मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ॥ न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥१७॥ भजन्त्यभजतो ये वै करुणाः पितरो यथा ॥ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥ भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः ॥ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥१९॥ नाहं तु सख्यो भजतोऽपि जन्तून्भजाम्यमीषामनुवृत्तिवृत्तये ॥ यथाऽधनो लब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद ॥ २० ॥ ॥

हि यस्मात्स्वार्थ एवैकान्त उद्यमो येषां ते । तत्र च न सौहृदमतो न सुखं, न च धर्मो दृष्टोद्देशाद्रोमहिष्यादिभजनवदित्यर्थः ॥१७॥ ये त्वभजतो भजन्ति ते द्विविधाः । करुणाः स्निग्धाश्च । तत्र तु यथाक्रमं धर्मकामौ भवत इत्याह—भजन्त्यभजत इति ॥ १८ ॥ तृतीयप्रश्नोत्तरं भजतोऽपीति । अयमर्थः—ते तु चतुर्विधाः । एके आत्मारामा अपराग्दृशः, केचिदाप्तकामा विषयदर्शिनोऽपि पूर्णकामत्वेन भोगेच्छारहिताः, अन्येऽकृतज्ञा मूढाः, अन्ये तु गुरुद्रुहोऽतिकठिनाः 'स पिता यस्तु पोषकः' इति न्यायादुपकर्ता गुरुतुल्यस्तस्मै द्रुह्यन्तीति तथा ते ॥१९॥ अत्र चरमकोटिगतमात्मानं मत्वा, अक्षिसंकोचैः परस्परं गूढस्मितमुखीस्ता दृष्ट्वा आह—नाहं त्विति । हे सख्यः, अहं तेषां मध्ये न कोऽपि, किंतु परमकारुणिकः परमसुहृच्च । कथम् । अमीषां भजतामनुवृत्तिवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान्न भजामि । एतत्सदृष्टान्तमाह—यथेति । तस्य धनस्यैव चिन्तया निभृतः पूर्णः । व्याप्त इति यावत् । अन्यत् क्षुत्पिपासाद्यपि न वेद ॥ २० ॥ ॥



१ उभयान् भजतः अभजतश्च । २ हृदिकल्पितासनः इत्यलुक्समासः । ३ अर्चितस्ताम्बूलनर्मस्मितादिना सत्कृतः । ४ बभाषिरे वक्ष्यमाणं पप्रच्छुरिति शेषः । ५ 'नोभयांश्च भजन्त्यन्ये' इति पाठः । ६ नान्यथा परार्थमित्यर्थः । ७ निरपवादो निर्बाधः । इदं सौहृदस्यापि विशेषणम् । ८ स्वार्थे स्वीये दृष्टफले । ९ न सौहृदं कैतवमयत्वात् ।

एवं मदर्थोज्झितलोकवेदस्वानां मदर्थे उज्झितो लोको युक्तायुक्ताप्रतीक्षणात्, वेदश्च धर्माधर्माप्रतीक्षणात्, स्वा ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वो युष्माकं परोक्षमदर्शनं यथा भवति तथा भजता युष्मत्प्रेमालापान् शृण्वतैव तिरोहितमन्तर्धानेन स्थितम्। तत्तस्मात् हे अवला हे प्रियाः, मा मामसूयितुं दोषारोपेण द्रष्टुं यूयं मार्हथ न योग्याः स्थ ॥२१॥ आस्तामिदं, परमार्थं तु शृणुतेत्याह—नेति। निरवद्या संयुक् संयोगो यासां तासां वो विबुधानामायुषापि चिरकालेऽपि स्वीयं साधु कृत्यं प्रत्युपकारं कर्तुं न पारये न शक्नोमि। कथंभूतानाम्। या भवत्यो दुर्जरा अजरा या गेहशृङ्खलास्ताः संवृश्च्य निःशेषं छित्त्वा मा मामभजं-स्तासाम्। मच्चित्तं तु बहुषु प्रेमयुक्ततया नैकनिष्ठम्। तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तत् युष्मत्साधु कृत्यं प्रतियातु प्रतिकृतं भवतु। युष्मत्सौशील्येनैव ममानृण्यं, नतु मत्कृतप्रत्युपकारेणेत्यर्थः ॥२२॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां द्वात्रिंशोऽध्यायः ॥३२॥

एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥ मया परोक्षं भजता तिरोहितं माऽसूयितुं माऽर्हथ तत्प्रियं प्रियाः ॥ २१ ॥ न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ॥ या माऽभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥ २२ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासक्रीडायां गोपीसान्त्वनं नाम द्वात्रिंशोऽध्यायः ॥३२॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ॥ जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥१॥ तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥२॥ रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥ ३ ॥ यं मन्येरन्नभस्तावद्विमानशतसंकुलम् ॥ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥४॥ ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥ जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥ ॥

त्रयस्त्रिंशे ततो गोपीमण्डलीमध्यगो हरिः ॥ प्रियास्ता रमयामास ह्रदिनीवनकेलिभिः ॥१॥ तत्तदा अङ्ग हे राजन्, यद्वा तस्य भगवतोऽङ्गेन वपुषा करचरणाद्यवयवैर्वोपचिताः समृद्धा आशिषो यासां ताः ॥ १ ॥ रासक्रीडां रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषस्तां क्रीडाम्। अन्योन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह ॥२॥ तत्साहित्यमभिनयेन दर्शयति—रासोत्सव इत्यक्षरचतुष्टयाधिकेन सार्धेन। तासां मण्डलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन तेनैव कण्ठे गृहीतानामुभयत आलिङ्गितानाम्। कथंभूतेन। यं सर्वाः स्त्रियः स्वनिकटं मामेवाश्लिष्टवानिति मन्येरंस्तेन एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः। नन्वेकस्य कथं तथा प्रवेशः, सर्वसन्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तं—योगेश्वरेणेति। अचिन्त्यशक्तिनेत्यर्थः ॥ ३ ॥ तावत्तत्क्षणमेवौत्सुक्यव्यास्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकुलं संकीर्णं नभो बभूव ॥ ४ ॥ तत्तस्य भगवतः श्रीकृष्णस्यामलं निर्मलं यशो जगुरिति ॥ ५ ॥ ॥ ॥

१ यद्वा माद्वयं निषेधे। तथापि प्रियं मल्लक्षणमसूयितुं मार्हथेति मा। अपितु मया दत्तदुःखत्वादर्थैवेति। २ यद्वा विगतो बुधो गणनाभिज्ञो यस्मात्तेनानन्तेनायुषापि। ३ 'शृङ्खलां' इति वा पाठः। ४ सुपेशला मनोहराः। ५ कृष्णेन निमित्तेन सप्रवृत्तः। यद्वान्तर्भावितण्यर्थः। कृष्णेन सम्यक्प्रवृत्त इत्यर्थः। ६ यद्वा तासां गोपीनामङ्गैरुपचिता आशिषो यस्य। ७ 'नटैर्गृहीतकण्ठानामन्योन्यात्तकरश्रियम्। नर्तकीना भवेद्रासो मण्डलीभूय नर्तनम् ॥' इति रासलक्षणम्।

सप्रियाणां कृष्णसहितानाम् । तुमुलः संकीर्णः ॥ ६ ॥ महामरकतो नीलमणिरिव हैमानां मणीनां मध्ये मध्ये ताभिः स्वर्णवर्णाभिराश्लिष्टाभिः शुशुभे । गोपीद्वयाभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनम् ॥ ७ ॥ स यथा ताभिः शुशुभे, तथा ता अपि तेन विरेजुरित्याह—पादन्यासैरिति । भुजविधुतिभिः करचालनैर्भज्यमानैर्मध्यैश्चलद्भिः कुचैश्च पटैश्च । गण्डलोलैर्गण्डेषु चञ्चलैः । स्विद्यन्मुख्यः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासां ताः । कबरेषु रशनासु च ग्रन्थयो दृढा यासाम् । यद्वा तेषु तासु चाग्रन्थयः, शिथिलग्रन्थय इत्यर्थः । तत्र नानामूर्तिः कृष्णो मेघचक्रमिव, तासु बहुविधासु तडित इव स्वेदस्तुषार इव, गीतं गर्जितमिवेति यथासंभवमूह्यम् ॥ ८ ॥ नृत्यमाना नृत्यन्त्यः । रक्तकण्ठ्यो नानारागैरनुरञ्जितकण्ठ्यः । कृष्णस्याभिमर्शेन संस्पर्शेन मुदिताः ।

वलयानां नूपुराणां किङ्किणीनां च योषिताम् ॥ सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥६॥ तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ॥ मध्ये मणीनां हैमानां महामरकतो यथा ॥७॥ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ॥ स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥ उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥९॥ काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः ॥ उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ १० ॥ काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका ॥ ११ ॥ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥ चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥ कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ॥ गण्डं गण्डे संदधत्या अदात्ताम्बूलचर्वितम् ॥१३॥ नृत्यन्ती गायती काचित्कूजन्नूपुरमेखला ॥ पार्श्वस्थाऽच्युतहस्ताब्जं श्रान्ताऽधात्स्तनयोः शिवम् ॥ १४ ॥ गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम् ॥ गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥ ॥ ॥

इदं विश्वम् ॥ ९ ॥ मुकुन्देन सह स्वरजातीः षड्जादिस्वरालापगतीः । अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः । प्रीयमाणेन संमानिता तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती ॥ १० ॥ एवं नृत्यगीतादिना श्रीकृष्णसंमानितानां तासामतिप्रीतिविलसितं वृत्तमाह—काचिदिति । श्लथन्ति वलयानि मल्लिकाश्च यस्याः सा ॥ ११ ॥ उत्पलस्य सौरभं यस्य तं बाहुम् ॥ १२ ॥ नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विट्रूपेण त्विषा मण्डितं गण्डं कपोलं तथाभूते स्वगण्डे संदधत्याः संयोजयन्त्याः ॥ १३ ॥ कूजती नूपुरे मेखला च यस्याः सा ॥ १४ ॥ एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजह्रुरित्याह—गोप्य इति ॥ १५ ॥ ॥ ॥ ॥ ॥

१ पादाना न्यासैः नृत्यगतिविशेषैः । २ नृत्यमाना इति नृत्यकालेऽपि गान [illegible] । [illegible] । [illegible] । ३ गदा [illegible]पत्युचितां गदाकारां बिभर्तीति यद्वा गदति वर्णानिति गदा वंशी ता बिभर्तीति नेति तोष० । ४ नृत्येन विक्षिप्ते चञ्चले कुण्डले च [illegible] गण्डस्थिद् च तत्समाहारस्त्विषं तेन मण्डितमिति भाति । 'द्वन्द्वाच्चुदषहान्तात्' इति टच् ।

तत्र वादकेषु गायकेषु गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु चान्यामेव वाद्यादिसम्पत्तिं दर्शयन् रासंसंभ्रममाह—कर्णोत्पलैरिति। कर्णोत्पलैश्चालकविटङ्कैरलकालंकृतैः कपोलैश्च घर्मैश्च वक्त्रेषु श्रीः शोभा यासां ताः। घोषाः किङ्किण्यः। वलयनूपुरघोषैर्वाद्यैर्वादित्रैः स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः। एतेन तालगतिसंतुष्टाः केशाः सशिरःकम्पं पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम्। भगवता सह ननृतुः। क। भ्रमरा एव गायका यस्यां राससभायाम् ॥१६॥ यथा गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुरेवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह—एवमिति। तद्विलासानभिभूतस्यैव रतौ दृष्टान्तः—यथार्भक इति। स्वप्रतिबिम्बैर्विभ्रमः क्रीडा यस्य स इव। अनेनैतद्दर्शितम्—स्वीयमेव सर्वकलाकौशलं सौगन्ध्यलावण्यमाधुर्यादि च तासु संचार्य ताभिः सह रेमे यथार्भकः स्वप्रतिबिम्बैरिति ॥ १७ ॥ तास्तु भगवद्विलासैराकुला बभूवुरित्याह—तदङ्गेति। तस्याङ्गसङ्गेन प्रकृष्टा मुत्प्रीतिस्तया आकुलान्यवशानीन्द्रियाणि यासां ताः विश्लथबन्धान्केशादीनञ्जसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं न समर्था बभूवुः। विस्रस्ता माला आभरणानि च यासां ताः ॥ १८ ॥ न केवलं ता एवाकुलेन्द्रियाः किंतु देव्योऽपीत्याह—कृष्णविक्रीडितमिति। किंच शशाङ्कश्चेति। अनेनैतत्सूचितम्—शशाङ्केन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्र तत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ॥ १९ ॥ किंच कृत्वेति। अयं भावः—'कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥' इति प्रत्येकं ताभिः प्रार्थनाद्भगवतापि—'यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः' इति तथैव प्रतिश्रुतत्वात्तावन्तमात्मानं कृत्वा रेमे इति। यावतीर्यावत्यः ॥ २० ॥ कृपातिशयमाह—तासामिति ॥२१॥ ततोऽतिहृष्टानां गोपीनां चरितमाह—गोप्य इति। स्फुरतां स्वर्णकुण्डलानां कुन्तलानां च त्विषा गण्डेषु या श्रीस्तया सुधितेनामृतायितेन हाससहितेन निरीक्षणेन च ऋषभस्य पत्युः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यस्तत्कर्माणि जगुः। तस्य कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥ ॥ ॥ ॥

कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥ गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥ एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥ तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान्दुकूलं कुचपट्टिकां वा ॥ नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥ १८ ॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥ कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥ कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥ [2]तासामतिविहारेण श्रान्तानां वदनानि सः ॥ प्रामृजत्करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना ॥ २१ ॥ गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन ॥ मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥ ॥

१अञ्जसा अनुसधानपूर्वकम्। २'तासां रतिविहारेण' इति पाठः। ३ग्रहास्तस्थुरिति तल्लीलामाधुर्येण — प्रवाहस्यैव सवायुकस्य शिशुमारचक्रप्रवाहस्यैव स्तब्धत्वं प्रतिपादितमिति ज्ञेयमिति तोष०।

अथ जलकेलिमाह—ताभिरिति। तासामङ्गसङ्गेन घृष्टा संमर्दिता या स्रक् तस्याः अत एव तासां कुचकुङ्कुमेन रञ्जितायाः संबन्धिभिर्गन्धर्वपालिभिर्गन्धर्वपा गन्धर्वपतय इव गायन्तो येऽलयस्तैरनुद्रुतोऽनुगतः स कृष्णो वाः उदकमाविशत्। भिन्नसेतुर्विदारितवप्रः स्वयं चातिक्रान्तलोकवेदमर्यादः ॥२३॥ स्वरतिरात्मारामोऽपि अत्र गोपीमण्डलेऽम्भसि वा ॥ २४ ॥ स्थलजलक्रीडे दर्शिते वनक्रीडां दर्शयति—ततश्चेति। यमुनाया उपवने जलस्थलप्रसूनानां गन्धो यस्मिंस्तेनानिलेन जुष्टानि दिशां तटान्यन्ता यस्मिन्। यद्वा दिशश्च तटं स्थलं च यस्मिन्नुपवने। भृङ्गाणां प्रमदानां च गणैरावृतः ॥ २५ ॥ रासक्रीडां निगमयति—एवमिति। स कृष्णः सत्यसंकल्पोऽनुरागिस्त्रीकदम्बस्थ एवं सर्वा निशाः सेवितवान्। शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूता निशाः। यद्वा निशा इति द्विती-

ताभिर्युतः श्रममपोहितुमङ्गसङ्गघृष्टस्रजः संकुचकुङ्कुमरञ्जितायाः ॥ गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभीरिभराडिव भिन्नसेतुः ॥ २३ ॥ सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ॥ वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥ ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ॥ चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः ॥ २५ ॥ एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ॥ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः ॥ २६ ॥ ॥ राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥ स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता ॥ प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥ २८ ॥ आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ॥ किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥२९॥ ॥ श्रीशुक उवाच ॥ ॥ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥ नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ॥ विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥ ३१ ॥ ॥ ॥ ॥

याऽत्यन्तसंयोगे। शृङ्गाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेवे इति । एवमप्यात्मन्येवावरुद्धः सौरतश्चरमधातुर्नतु स्खलितो यस्येति कामजयोक्तिः ॥२६॥२७॥ प्रतीपं प्रतिकूलाधर्ममित्यर्थः । आचरत् कृतवान् । न चेदमधर्ममात्रं कलञ्जभक्षणादिवत्किंतु महासाहसमित्याह—परदाराभिमर्शनमिति ॥ २८ ॥ आप्तकामस्य नायमधर्म इति चेद्यद्येवं कामाभावान्निन्दितं केनाभिप्रायेण कृतवानिति पृच्छति—आप्तकाम इति ॥ २९ ॥ परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह—धर्मव्यतिक्रम इति । साहसं च दृष्टं प्रजापतीन्द्रसोमविश्वामित्रादीनाम् । तच्च तेषां तेजस्विनां दोषाय न भवतीति ॥ ३० ॥ तर्हि 'यद्यदाचरति श्रेष्ठः' इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याह—नैतदिति । अनीश्वरो देहादिपरतन्त्रः यथा रुद्रव्यतिरिक्तो विषमाचरन्भक्षयन् ॥ ३१ ॥

१ 'स्वकुचकुङ्कुम' इति पाठः । २ 'प्रेम्णोक्षितः' इत्यपि पाठः । ३ स्वरतिः आत्मारामोऽपि, यद्वा स्वासु तासु रतिर्यस्य, किंवा स्वा असाधारणी रतिर्जलक्रीडा यस्य । ४ ईश्वराणा कर्मादिपारतन्त्र्यहीनानाम् । ५ वह्नेः सर्वभुक्त्वं यथा नापावित्र्यायेति । ६ शरत्काव्यकथाः शरदि सर्वदेशकालकविभिर्यावत्यो वर्णयितुं शक्यन्ते तावतीः कथाः सिषेवे आचचार ।

कथं तर्हि सदाचारस्य प्रामाण्यमत आह—ईश्वराणामिति। तेषां वचः सत्यम्, अतस्तदुक्तमाचरेदेव। आचरितं तु क्वचित्सत्यम्। अतः स्ववचोयुक्तं तेषां वचसा यद्युक्तमविरुद्धं तत्तदेवाचरेत् ॥ ३२ ॥ ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति तत्राह—कुशलेति। प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नान्यदित्यर्थः ॥ ३३ ॥ प्रस्तुतमाह—किमुतेति। कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थः ॥३४॥ एतदेव स्फुटीकरोति—यस्य पादपङ्कजपरागस्य निषेवणेन तृप्ताः, यद्वा यस्य पादपङ्कजपरागे निषेवा येषां ते च ते तृप्ताश्चेति भक्ता इत्यर्थः। तथा ज्ञानिनश्च न नह्यमाना बन्धनमप्राप्तवन्तः ॥३५॥ परदारत्वं गोपीनामङ्गीकृत्य परिहृतम्, इदानीं भगवतः सर्वान्तर्यामिणः परदारसेवा नाम न काचिदित्याह—गोपीनामिति। योऽन्तश्चरत्यध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडनेन देहभाक्, नत्वस्मदादितुल्यो येन दोषः स्यादिति ॥३६॥ नन्वेवं चेदाप्तकामस्य निन्दिते कुतः प्रवृत्तिरित्यत आह—अनुग्रहायेति। शृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान्कर्तुमिति भावः ॥३७॥ नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवमेवेति वदन्ति तत्राह—नासूयन्निति। एवंभूतैश्वर्याभावे तथा कुर्वन्तः पापा ज्ञेया इति भावः ॥३८॥ ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते ॥३९॥ भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह—विक्रीडितमिति। अचिरेण धीरः सन् हृद्रोगं काममाशु अपहिनोति परित्यजतीति ॥ ४० ॥ 'सेयं श्रीपरमानन्दसेविश्रीधरनिर्मिता ॥ श्रीभागवतभावार्थदीपिका दशमाश्रया' ॥ १ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥ तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥ कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥ विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥ ३३ ॥ किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥ यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः ॥ स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ ३५ ॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥३६॥ अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥ भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥३७॥ नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमानाः स्वपार्श्वस्थान् स्वान्स्वान्दारान्व्रजौकसः ॥३८॥ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ॥ अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ३९ ॥ विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ छ ॥

१ यदा ईशितव्यानां नियम्यानां निरहंकारिणां जीवानां कुशलाकुशलान्वयो न विद्यते तदा तिर्यगादिरूपाणामखिलसत्त्वानामीशितुर्नियन्तुः कुशलाकुशलान्वयो न विद्यत इति किमु वक्तव्यमिति पूर्वश्लोकस्थेन 'न विद्यते' इति पदसंबन्धेनान्वयः। २ 'भक्तानां' इति पाठः। ३ 'स्मृत्वा' इति पाठः। ४ भगवान् प्रियो यासां, भगवतो वा प्रियाः। ५ यद्वा कामं यथेष्टं आशु भक्तिं लब्ध्वा कामादिसर्वहृद्रोगमचिरेण हिनोतीत्यर्थः।

चतुर्स्त्रिंशेऽहिना ग्रस्तं नन्दं हरिरमूमुचत् ॥ विद्याध्रं चाङ्गिरःशापाच्छङ्खचूडं तथाऽवधीत् ॥१॥ रासोपदेशतः कामं किङ्करीकृत्य कामतः ॥ अनुगृह्णन्वशं निन्ये तथा विद्याधराधिपम् ॥२॥ तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसङ्गं दर्शयति—एकदेति ॥१॥२॥ गावो गाः । मधु मधुरम् । मध्वन्नं मधुना सहितमन्नम् ॥३॥ जलमात्रं प्राश्योपोपितास्तां निशां तत्र ऊषुर्न्यवसन् ॥४॥ महानहिरजगरः । उरगः उरसा गच्छन्नित्यलक्षिततत्व-

॥ श्रीशुक उवाच ॥ एकदा देवयात्रायां गोपाला जातकौतुकाः ॥ अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ १ ॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥२॥ गावो हिरण्यं वासांसि मधुमध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥ रजनीं तां महाभागा नन्दसुनन्दकादयः ॥ ४ ॥ कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः ॥ यदृच्छयागतो नन्दं शयानमुरगोऽग्रसीत् ॥ ५ ॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥ तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः ॥ ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः ॥७॥ अलातैर्दह्यमानोऽपि नामुञ्चत्तमुरङ्गमः ॥ तमस्पृशत्पदाऽभ्येत्य भगवान्सात्वतांपतिः ॥ ८ ॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ॥ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥९॥ तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् ॥ दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥ को भवान्परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ ११ ॥ ॥ सर्प उवाच ॥ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः ॥ श्रिया स्वरूपसंपत्त्या विमानेनाचरं दिशः ॥ १२ ॥ ऋषीन्विरूपानङ्गिरसः प्राहसं रूपदर्पितः ॥ तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना ॥१३॥ शापो मेऽनुग्रहायैवं कृतस्तैः करुणात्मभिः ॥ यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥१४॥ तं त्वाहं भवभीतानां प्रपन्नानां भयापहम् ॥ आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥ ॥

मुक्तम् । अग्रसीत् जग्रास ॥५॥६॥ विव्यधुस्ताडयामासुः । उल्मुकैर्ज्वलत्काष्ठैः ॥७॥ अलातैरेवोल्मुकैः ॥८॥ विद्याधरैरर्चितं पूजितम् ॥९॥ गोपेष्वात्मन ऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छत् । दीप्यमानेन वपुषा समवस्थितम् ॥१०॥ यः परया शोभया प्रकाशते भवान् क इति ॥११॥१२॥ प्राहसम् उपहसितवानस्मि । प्रलब्धैरुपहसितैः । मदीयेनैव पापेन निमित्तेन ॥ १३ ॥ यद्यतः शापात् ॥ १४ ॥ आपृच्छे स्वं लोकं गन्तुमनुज्ञां याचे । हे अमीवहन् दुःखनाशन ॥ १५ ॥

१ अम्बिकावनमिति गुर्जरदेशे प्रसिद्धं शिवक्षेत्रम् । २ 'प्रभुम्' इति पाठः । ३ सुनन्दो नन्दानुजः । स्वार्थे कः । 'सन्नन्दकादयः' इति पाठः, तत्राप्ययमेवार्थः । ४ वीप्सा त्रासात् । ५ 'हन्यमानोऽपि' इति पाठः । ६ अचरं भ्रमन्नासम् । 'विमानेनाचरन्' इति पाठः । ७ 'पादस्पृष्टो' इति पाठः ।

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ 'अहिदेहं निहत्यैवं प्रागुन्मत्तं सुदर्शनम् ॥ तद्वदुन्मादिनं कृष्णः शङ्खचूडमताडयत्' ॥ १ ॥ तत्प्रसङ्गमाह—कदाचिदिति । ॥ २० ॥ विरजोम्बराविति । विरजसी निर्मले अम्बरे ययोस्तौ ॥ २१ ॥ किंच निशाप्रवेशं सत्कुर्वन्तौ । उदित उडुपस्तारकाश्च यस्मिंस्तत् । मल्लिकागन्धेन मत्ता अलयो यस्मिंस्तत् ॥ २२ ॥ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि तौ स्वरमण्डलस्य मूर्च्छितं युगपत्कल्पयन्तौ । मनःश्रवणयोर्मङ्गलं यथा भवति

प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते ॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर ॥१६॥ ब्रह्मदण्डाद्विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ॥ यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥१७॥ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च ॥ सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥ १८ ॥ निशाम्य कृष्णस्य तदात्मवैभवं[2] व्रजौकसो विस्मितचेतसस्ततः ॥ समाप्य तस्मिन्नियमं[3] पुनर्व्रजं नृपाययुस्तत्कथयन्त आदृताः ॥ १९ ॥ कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥२०॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ॥ स्वलंकृतानुलिप्ताङ्गौ स्रग्विणौ विरजोम्बरौ ॥ २१ ॥ निशामुखं मानयन्तावुदितोडुपतारकम् ॥ मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥ जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् ॥ तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छितम्[1] ॥२३॥ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप ॥ स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥ एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् ॥ शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात्[4] ॥२५॥ तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् ॥ क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥२६॥ क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम् ॥ यथा गा दस्युना[6] ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥ मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्तं[5] तरसा त्वरितं गुह्यकाधमम् ॥२८॥ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥२९॥ तमन्वधावद्गोविन्दो यत्र यत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥ ३० ॥ ॥

तथा जगतुरगायतामिति ॥ २३ ॥ मूर्च्छितास्तद्गीतलीनचित्ताः । स्रंसद्भ्रश्यद्दुकूलं यस्मात्तमात्मानं देहम् । स्रस्ताः केशेभ्यः स्रजो यस्य तं च । ततो नाविदन् ॥ २४ ॥ २५ ॥ निरीक्षतोर्निरीक्षमाणयोः तौ नाथौ यस्य तं प्रमदाजनं कालयामास हठात्प्रेरयामास ॥ २६ ॥ दस्युना व्याघ्रेण ॥ २७ ॥ मा भैष्ट भयं न प्राप्नुतेत्यभयवाचौ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ मूर्च्छितमारोहावरोहणक्रमम् । २ आत्मवैभवं स्वरूपवैभवम् । ३ नियमं त्रिरात्रतीर्थवासात्मकम् । ४ 'अभ्ययात्' इति पाठः । ५ आसेदतुः निकटे गतौ । ६ दस्युना चौरेण ग्रस्ता विद्राव्यात्मसात्कृता इति तोष० ।

शिरसा सह चूडामणिं जहारेत्यर्थः ॥३१॥३२॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः ॥ युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥ १ ॥ एवं रात्रिषु कृष्णेन स्वैरमभिरमितानां दिवा तद्विरहितानामनुगीतेन दिननिस्तारप्रकारमाह—गोप्य इति । दुःखेन कृच्छ्रेण ॥ १ ॥ वामबाहुकृतवामकपोल इत्यादीनि द्वादशयुगलानि । हे गोप्यः, वामे बाहौ तन्मूले कृतोऽर्पितो वामकपोलो येन सः । वल्गिते नर्तिते भ्रुवौ येन स वल्गितभ्रूर्मुकुन्दः । अधरे अर्पितं वेणुं कोमलाभिरङ्गुलिभिराश्रिता मार्गाः सप्तस्वरच्छिद्राणि यस्य तं यत्र यदा ईरयति वादयति ॥ २ ॥ तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेण्वीरणमुपधार्याकर्ण्य प्रथमं विस्मितास्ततः काममार्गणेभ्यः समर्पितानि चित्तानि याभिस्तास्तत्परवशा इत्यर्थः । सलज्जाः सत्यः कश्मलं मोहं ययुः । अत्र लिङ्गम्—अपस्मृता विस्मृता नीव्यो

अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः ॥ जहार मुष्टिनैवाङ्ग सहचूडामणिं विभुः ॥ ३१ ॥ शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम् ॥ अग्रजायाददत्प्रीत्या पश्यन्तीनां च योषिताम् ॥ ३२ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे शङ्खचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥ कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥१॥ ॥ गोप्य ऊचुः ॥ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ॥ कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ॥ काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥ हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ॥ नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥ वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥ ॥

याभिरिति । अत एवंभूतस्य कृष्णस्य विरहं कथं सहाम इति सर्वत्र वाक्यशेषः ॥ ३ ॥ हन्त हे अबलाः, इदं चित्रं शृणुत । हारहासो हारवद्विशदो हासो यस्य सः । यद्वा वेणुवादनेनाधोवदनेन हसतो हारेषु स्फुरन् हासो यस्य सः । यद्वा हारा इवाच्छसि शोभमानो हासो यस्य सः । यद्वा हाराणां हास एव विशदा स्फूर्तिर्यस्मिन्नुरसीति । उरसि स्थिरा विद्युदिव लक्ष्मीर्यस्य सः यर्हि यदा कूजितवेणुर्नादितवेणुर्भवति ॥ ४ ॥ तदा व्रजे वृषा मृगा गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते । आराद्दूरादेव दन्तैर्दष्टाः कवला ग्रासा यैस्ते । धृता उत्तम्भिताः कर्णा यैस्ते । निद्रिता इव लिखितचित्रमिव चासन् । अविदुषां तिरश्चामिदमतिचित्रमित्यर्थः ॥ ५ ॥ ॥ ॥ ॥ ॥

१ शिरसेति मूले तृतीयालुगार्षः । यद्वा शिरः चूडामणिं च सह एकदैव जहार । २ तत्र पूर्वस्मिन्पद्ये तत्पोला अपरस्मिन्नपरोऽप्यवर्णं इलेत नियमः । ३ यद्वा अधरोऽर्पितो दत्तो यस्मै तं वेणुम् । ४ तमनु तेन सह द्रुतं वेगेन गतं चेतो यासां, तद्वशीकृत्य द्रवीभूतचित्ता इति वा । ५ हसत्वं आर्षम् । ६ 'रामनिरतचित्ताः' इति पाठः । ७ अनिलत्वात्स्मासान्तकवभावः । ८ यद्वा स्थिरा विद्युत्प्रभा कौस्तुभरूपा यस्य स इति विशेषः कश्चित् ।

किंच अचेतनासु सरित्सु तदतीव चित्रमित्याहुः—हे आलि सखि, बर्हिणो मयूरस्तस्य स्तवका मयूरपिच्छा धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिबर्हः परिकरस्तं विडम्बयत्यनुकरोतीति तथा स मुकुन्दो गोपैः सह वेणुनेत्युपरितनमत्रापि ज्ञातव्यम्। यत्र यदा गाः सम्यगाह्वयति ॥ ६ ॥ तर्हि तदा तद्ध्वनिश्रवणात्। अनिलेनानीतं तस्य पदाम्बुजरजः स्पृहयन्त्य इव भग्नगतयः सरितो वै निश्चितं वयमिव ता अप्यबहुपुण्या यतो न प्राप्नुवन्ति। केवलं प्रेम्णा वेपिता भुजास्तरङ्गा यासां ताः। स्तिमिता निश्चला आपो यासां ताः। गोप्योऽपि लोचनयोस्तिमितजला भवन्तीति ॥ ७ ॥ स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः—अनुचरैर्गोपैर्देवादिभिर्वा। मुग्धानां वाक्यमादिपुरुष इवेति। अचलभूतिर्निश्चलश्रीः। वेणुना तत्तन्नाम्ना गानेन ॥ ८ ॥ तदा प्रणता भारेण विटपाः शाखा यासां ता वनगता लताः स्वस्मिन्विष्णुं प्रकाशमानं सूचयन्त्य इव मधुधारा[3] ववृषुः, स्मेति विस्मये। तरवश्च तथा तत्पतीनामपि तथैवानन्द

बर्हिणस्तवकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ॥ कर्हिचित्सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥ तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः[4] ॥ ७ ॥ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ॥ वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि ॥ ८ ॥ वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः संसृजुः[5] स्म ॥ ९ ॥ दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः ॥ अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हि सन्धितवेणुः ॥ १० ॥ सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥ सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥ ॥ ॥

इति भावः। एतानि विष्णुव्यक्तिलक्षणानि ॥ ९ ॥ किंच सरसि कमलवनेषु विहरतां पक्षिणामपि मनआकर्षणं तद्गीतं किं पुनरन्येषामित्याहुः—दर्शनीयतिलक इति। दर्शनीयस्तिलको यस्य। दर्शनीयानां सुन्दराणां मध्ये मुख्य इति वा। वनमालासु या दिव्यगन्धा तुलसी तस्या मधुना मत्तैरलिकुलैरलघु उच्चैरभीष्टमनुकूलं गीतमाद्रियन्नादरेण गृह्णन् यर्ह्यधरे सन्धितवेणुर्भवति ॥ १० ॥ तर्हि ये सरसि सारसा हंसा अन्ये च विहङ्गास्ते चारुणा गीतेन हृतचेतस एत्य तत आगत्य हरिमुपासताभजन्त। तत्समीपे उपविविशुर्वा। हन्तेति विषादे ॥ ११ ॥ मेघोऽपि हरिं सेवत इत्याहुः—सहबल इति। भो व्रजदेव्यो गोप्यः, सहबलः सरामः कृष्णः स्रग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य। यद्वा मुक्ताफलस्रगापीडेन विलासो यस्येति। क्षितिभृतः सानुषु गिरेस्तटेषु वर्तमानः। स्वयं जातहर्षो विश्वं हर्षयन्यदा वेणुरवेणोपरम्भति निनादयति। नादेन पूरयतीत्यर्थः ॥ १२ ॥ ॥

१ उपरितनमष्टमश्लोकस्थम्। २ लब्धसर्वचेष्टाश्च लक्ष्यन्त इत्यर्थः। ३ यद्वा मधुनो धारा यत्र तादृश्यः सत्यः प्रेम ससृजुः स्ववृत्तान्तेन प्रेक्षकजने विस्तारयामासुः। ४ अनित्यत्वादृक्पूरिति समासान्तो न। 'स्तिमितापाः' इति पाठः। ५ 'ववृषुः' इति पाठः।

तदा मेघो महतः कृष्णस्यातिक्रमणे शङ्कितं चेतो यस्य स न पुरतो याति, न चोच्चैर्गर्जति, किंतु तत्रैव स्थितः सन् वेणुरवमनु मन्दं मन्दं गर्जति । किंच सुहृदं विश्वार्तिहरणादिसाम्यात्सुहृत्कृष्णस्तं सुमनोभिरभ्यवर्षत् । अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तम् । तुषारो वा कुसुमतया कल्पितः । स एव वा देवतारूपोऽभ्यवर्षदिति । प्रतपादातपात्त्रायत इति प्रतपत्रं छत्रं तच्छायया कुर्वन्निति ॥ १३ ॥ अपि च महदेतदाश्चर्यमित्याहुः—विविधेति । हे सति यशोदे, तव सुतो नानागोपक्रीडासु विदग्धो निपुणो वेणुवाद्ये विषये निजैव शिक्षा यासु ताः । स्वोत्प्रेक्षिता न त्वन्यतः श्रुता इत्यर्थः । स्वरजातीर्निषादऋषभादिस्वरालापभेदाननयदुन्नीतवान् ॥१४॥ तत् ताः स्वरजातीः सवनशो मन्द्रमध्यमतारभेदेन यतो गीतध्वनिरागतस्ततश्चानता कन्धरा चित्तं च येषां ते । उपधार्य समाकर्ण्य । कवयः कोविदा अपि न निश्चितं तत्त्वं तद्भेदो यैस्ते कश्मलं मोहं ययुरिति ॥ १५ ॥ अस्माकं तु मोहं किं ब्रूम इत्याहुः—निजपदाब्ज-

महदतिक्रमणशङ्कितचेता मन्दमन्दमनु गर्जति मेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥ विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ॥ तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥ सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ॥ कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥ निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ॥ व्रजभुवः शमयन्खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥ व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥ कुजगतिं गमिता न विदामः कश्मलेन कवरं वसनं वा ॥१७॥ मणिधरः क्वचिदागणयन्गा मालया दयितगन्धतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन्भुजमगायत यत्र ॥ १८ ॥ क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥ गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥ ॥ ॥

दलैरिति । ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैर्निजानि पदान्येवाब्जदलानि तैर्व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन्वर्ष्मणा देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो वादितवेणुः सन् यद्व्रजति ॥ १६ ॥ तेन निमित्तेन सविलासवीक्षणेनार्पितो मनोभववेगो यासु ता वयम् । कुजा वृक्षास्तेषां गतिं गमिताः सत्यो मोहेन न विदामः कवरं वा वसनं वेति ॥ १७ ॥ किंच मणिधरो मणीन् ग्रथितान् गोगणनार्थं धरतीति मणिधरः । क्वचिद्देशे एतैर्मणिभिर्गा आसमन्ताद्गणयन् । तथा दयितगन्धा या तुलसी तस्या मालया सह वर्तमानः । प्रणयिनः प्रियस्यानुचरस्यांसे भुजं प्रक्षिपन् । यत्र यदा कदाचिदगायत ॥ १८ ॥ तदा क्वणितवेणुरवेण वञ्चितान्यपहृतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य गृहिण्यो भार्याः गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसतान्वासत । न न्यवर्तन्तेत्यर्थः । कुतः । यतो विमुक्ता गृहाशा याभिस्ता गोपिका इव ता अपि गेयमेवान्वासतेति ॥ १९ ॥ ॥

१ वेणुरवमनु अनुकूलं तद्गानपोषकं यथा तथा । २ यद्वा सवनशः प्रातरादिकाले वारंवारमित्यर्थः । ३ चित्तं च आनतं तन्मयमभूदिति शेषः । ४ सुमनोभिरित्यत्र श्लेषेण शोभनमनोवृत्तिभिः, छायया देहेन, गर्जनाद्यावेति त्रिधा सेवोक्तेति तोष० । ५ उरुधा नानाप्रकाराः । ६ कुजगतिं वृक्षस्थितिं जाड्यमित्यर्थः । ७ यद्वा भ्रमरगानं मालाया परित्यज्य स्वेनैव मालया सहागायतेति सापत्न्येन तस्या धार्ष्ट्योक्तिः । ८ यद्वा विमुक्ता त्यक्ताः गृहाः पत्यादिपरिकराः आशोऽशनं च याभिस्ताः ।

तदेवं वृन्दावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि परावर्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयन्ति—कुन्ददामकृतकौतुकवेष इति । गोपीनामुत्सवाय कुन्ददामभिः कृतः कौतुकेनोत्सवेन वेषोऽलंकारो येन सः । हे अनघे यशोदे, तव वत्सः पुत्रो नन्दसूनुः कृष्णः । यद्वा सहैव बह्व्यः कथयन्त्यः काश्चित्तव वत्स इति काश्चिन्नन्दसूनुरिति चाहुः—नर्मदो हर्षदः सन्यदा विजहार क्रीडति स्म ॥ २० ॥ तदा मलयजस्पर्शेन मलयजस्य चन्दनस्येव सुरभिः शीतश्च यः स्पर्शस्तेन तं कृष्णं मानयन्ननुकूलं यथा तथोपवाति वीजयति । यद्वा मलयजो दक्षिणो वायुः । यद्वा मलयजस्य कृष्णेन स्वाङ्गेऽनुलिप्तस्य स्पर्शेन मानयन्निति । किंच वन्दिन इव स्तावकाः सन्तो गन्धर्वादिगणा वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत ॥ २१ ॥ आयान्तमालोक्य हृष्यन्त्यः परस्परमूचुः—वत्सल इति । व्रजस्य गवां च । यद्वा व्रजे निबद्धानां गवामनुकम्प्यानामस्माकमित्यर्थः । वत्सलो हितकृत् । कुतः । यद्यस्मादगध्रः अगं धरतीति गोवर्धनोद्धरणः । बहुशो रक्षणस्योपलक्षणमेतत् । वृद्धैर्ब्रह्मादिभिः । पथि वन्द्यमानचरण इति ते सेर्ष्यं सायं शीघ्रमागन्तुं न ददतीत्यर्थः । उपोह्य एकीकृत्य

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ॥ नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥
मन्दवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन ॥ बन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥ वत्सलो
व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ॥ कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥ उत्सवं
श्रमरुचापि दृशीनामुन्नयन्खुररजश्छुरितस्रक् ॥ दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥ मदविघूर्णि-
तलोचन ईषन्मानदः स्वसुहृदां वनमाली ॥ बदरपाण्डुवदनो मृदुगण्डं मण्डयन्कनककुण्डललक्ष्म्या ॥ २४ ॥ यदुपति-
र्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ॥ मुदितवक्त्र उपयाति दुरन्तं मोचयन्व्रजगवां दिनतापम् ॥ २५ ॥

गीतयुक्तो वेणुर्यस्य सः ॥ २२ ॥ श्रमयुक्तयापि कान्त्या नेत्राणां हर्षमुन्नयन् उच्चैः प्रापयन् । खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य । सुहृदामस्माकमाशिषो मनोरथस्य दित्सया दातुमिच्छया देवक्या जठरे भवतीति तथा स एवोडुराजश्चन्द्रो निर्वृतिहेतुत्वेन स एष एतीति ॥ २३ ॥ अतिसंभ्रमेण काश्चित्समीपमायान्तं कथयन्ति । ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य सः । बदरपाण्डुरवदनः ईषत्पक्वबदरवत् पाण्डुरं वदनं यस्य सः । अत्र हेतुः—कनककुण्डलयोर्लक्ष्म्या कान्त्या मृदू कोमलौ गण्डौ यस्मिंस्तद्वदनं मण्डयन्निति कोमलगण्डस्थलं वा शोभयन्निति ॥ २४ ॥ यदुपतिरिति देवकीजठरभूरिति च—'प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः' इत्यादि गर्गवाक्यप्रसिद्ध्योक्तम् । यद्वा—'सख उदेयिवान्सात्वतां कुले' इतिवत् ज्ञात्वा काश्चिद्वदन्तीति । गजेन्द्रगतिश्चन्द्र इव प्रसन्नवक्त्रो व्रजगवामस्माकमनन्तं दिनतापं च शमयन्नुपयाति एष समीपमायातीति ॥ २५ ॥ ॥ ॥ ॥

१ अत्र पक्षे मलयजः स्पर्शेन इति पदद्वयम् । २ पथीति । 'वन्द्यमानचरण' इति च क्वचित्पाठः । ३ गवां वत्स इव परमस्नेहविषयः सुत इति वत्सशब्दप्रयोगः । ४ प्रणयिना सखीनाम् । ५ देवक्यत्र यशोदैव । सांत्वने प्रवृत्ताभिर्मात्रन्तरसूचनस्य विरुद्धत्वात् । व्रजराजत्वादेव एव देवको नन्दः तत्पत्नी देवकीति योगसंभवात् । द्वे नाम्नी नन्दभार्याया यशोदा देवकीति चेत्युक्त्या रूढिसत्त्वाच्च । ६ आपादं कुन्दादिमालावान् । ७ यदुपतिः गोपानां पतिः—'यादवेष्वपि सर्वेषु' इति हरिवंशे निर्णयात् । ८ व्रजे निबद्धानां गोतुल्यानामस्माकमित्यर्थः । यद्वा वजस्य सर्वस्य गवां नेत्राणां अनन्तं दिनतापमिति । ९ श्रमजनितस्वेदादियुक्तयेति ज्ञेयम् । १० उडुस्थानीया अत्र सखायो ज्ञेयाः । ११ एष इत्यङ्गुल्या निर्दिशन्ति ।

एवं विरहदुःखेनापि नु अहो कृष्णलीला एव गायन्त्यस्तस्मिंश्चित्तं चेतना जीवितं यासां तास्तस्मिन्नेव मनः संकल्परूपं यासां ताः, अतो महानुदय उत्सवो यासां ता अहःस्वपि रेमिरे ॥ २६ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ छ ॥ षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ ॥ वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ १ ॥ गोपीरासान्तरायान्तं शङ्खचूडं निहत्य सः ॥ अहन् गोपीमहानन्दासहं दुष्टमरिष्टकम् ॥ २ ॥ एवं देवगन्धर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्तमाने तद्विरुद्धार्थान्तराधिकारार्थमथशब्दः । तर्हि तदा । वृषभाकृतिरसुरः । तं वर्णयति सार्धत्रयेण—महान्तौ ककुत्कायौ यस्य । खुरैर्विदारितां महीं कम्पयन् ॥ १ ॥ रम्भमाणो

॥ श्रीशुक उवाच ॥ एवं व्रजस्त्रियो राजन्कृष्णलीला नु गायतीः ॥ रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥२६॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे वृन्दावनक्रीडायां गोपिकायुगलगीतं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ श्रीशुक उवाच ॥ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ महीं महाककुत्कायः कम्पयन्खुरविक्षताम् ॥ १ ॥ रम्भमाणः खरतरं पदा च विलिखन्महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥ किंचित्किंचिच्छकृन्मुञ्चन्मूत्रयंस्तब्धलोचनः ॥ यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥ ३ ॥ पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै ॥ निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥ ४ ॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलम् ॥ ५ ॥ कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः ॥ ६ ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम ॥ ७ ॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोपयन् ॥ ८ ॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥

वृषभजातिशब्दं कुर्वन् । विलिखन् विदारयन् । उद्यम्योर्ध्वं कृत्वा । वप्राणि तटान्युत्क्षिपन् ॥ २ ॥ किंचित्किंचिच्छकृन्मध्ये मध्ये ईषदीषत्पुरीषं मुञ्चन् तथा मूत्रयन्मूत्रमुत्सृजन् । स्तब्धलोचनोऽनिमिषलोचनः । यस्य ध्वनिना गवां नारीणां च ॥ ३ ॥ तत्र—'आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ॥ अत ऊर्ध्वं प्रसूतिः स्यात्' इति विभागः । ककुदि गलपृष्ठशृङ्गे ॥ ४ ॥ ५ ॥ कृष्ण कृष्ण रक्षेति ॥ ६ ॥ ७ ॥ इत्येवं वदन् । आस्फोट्य करतले बाहुमाहत्य । तेन तलशब्देन कोपयन् ॥ ८ ॥ भुजाभोगं भुजा भुजः स एव भोगः सर्पदेहस्तम् । सर्पदेहाकारं भुजमित्यर्थः । स्वयमच्युतः अन्यान्दुष्टान्हरतीति हरिः । उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्मिन् ॥ ९ ॥ ॥ ॥ ॥ ॥

१ अङ्गेति सभयमिव सबोधनम् । २ 'भगवानथ' इति पाठेऽनन्तरमेव । ३ 'सपालैः' इति पाठः । ४ उप समीपमगात् ।

अग्रे न्यस्ते विषाणाग्रे येन सः । स्तब्धे असृक्तुल्ये लोचने यस्य सः । कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्य ॥ १० ॥ प्रत्यपोवाह प्रतिलोमं न्यनुदत् ॥ ११ ॥ अपविद्धोऽपक्षिप्तः । आपतदाद्रवत् । खिन्नानि खेदयुक्तानि सर्वाङ्गानि यस्य सः । क्रोधमूर्च्छितः क्रोधेन व्याप्तः ॥ १२ ॥ कृत्वा विषाणमुत्पाट्य तेनैव जघान स चापतत् ॥ १३ ॥ मूत्रं च शकृच्च मूत्रशकृत् । एकवद्भावः । तदुभयं समुत्सृजन्नित्यर्थः । पादांश्च क्षिपन्नितस्ततश्चालयन् । अनवस्थितेक्षणः प्रचलितनेत्रः कृच्छ्रं कष्टं जगाम । अथ निर्ऋतेर्मृत्योः क्षयं निवासं जगाम । कृच्छ्रं यथा भवति तथा मृत इति वा ॥ १४ ॥ नयनोत्सवो नयनानां मूर्तिमानुत्सवः ॥ १५ ॥ 'कामं व्रजे वसन्तं तं कृष्णं तेन तु विस्मृतम् ॥ नारदः स्मारयामास कंसं दूतगिरेव तु' ॥ १ ॥ तदाह—अरिष्ट इति । देवदर्शनो देवर्षिः । यद्वा

अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥ गृहीत्वा शृङ्गयोस्तं वा अष्टादश पदानि सः ॥ प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥ ११ ॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ॥ आपतत्स्विन्नसर्वाङ्गो निःश्वसन्क्रोधमूर्च्छितः ॥ १२ ॥ तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथार्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥ असृग्वमन्मूत्रशकृत् समुत्सृजन् क्षिपंश्च पादाननवस्थितेक्षणः ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १४ ॥ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥ १५ ॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कंसायाथाह भगवान्नारदो देवदर्शनः ॥ १६ ॥ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥ १७ ॥ न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः ॥ निशम्य तद्भोजपतिः कोपात् प्रचलितेन्द्रियः ॥ १८ ॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥ १९ ॥ ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया ॥ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥ २० ॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥ २१ ॥ ॥ ॥

एवं कथिते एवं भविष्यतीति साक्षाद्देववद्दर्शनं ज्ञानं यस्य सः ॥ १६ ॥ आसेनैव नारदेनोक्तमाह—यशोदाया इति । देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह—यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह—रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाह—यद्वा नन्दसुतत्वेन प्रसिद्धं रामं च वसुदेवभार्याया रोहिण्याः पुत्रमाह—तौ वसुदेवसुतौ चेत्कथं व्रजं गतौ तत्राह—वसुदेवेनेति ॥ १७ ॥ १८ ॥ निवारित इति । हते वसुदेवे तौ पलायेतामतो वध्यतामिति मन्त्रं वदता नारदेन निवारित इति ॥ १९ ॥ २० ॥ २१ ॥ ॥ ॥ ॥ ॥

१ न्यनुदद्विक्षेप । २ अपक्षिप्तः पातित इत्यर्थः । ३ 'कामं व्रजे वसन्तं तं कंसान्तेऽनन्तमस्मृतिम्' इति पाठः । तत्र कंसान्तनिमित्तं व्रजे वसन्तमनन्तमस्मृतिं स्मृतिरहितं कंसं प्रति स्मारयामासेत्यन्वयः । ४ वै इति छेदः । ५ 'सत्वरं' इति पाठः । ६ स्वमित्रे स्वो ज्ञातिश्चासौ मित्रं च । ७ हन्येतामित्यत्र प्राप्येतामिति वाग्देवीमतेऽर्थः । ८ अतो न वध्यतामिति पाठः ।

॥ २२ ॥ मह्यं मम निदर्शितो विधात्रा नारदेन वा ॥ २३ ॥ व्रजं गन्तुमुद्यतौ तावाह—भवद्भ्यामिति । मञ्चा उत्तुङ्गस्तम्भाभिरचितस्थानानि ॥ २४ ॥ अहितौ शत्रू ॥ २५ ॥ मीढुषे वरदाय ॥ २६ ॥ अर्थतत्त्वज्ञोऽर्थसिद्धान्तमेव जानातीति ॥ २७ ॥ हे दानपते अक्रूर, मैत्रं मित्रकृत्यं त्वया क्रियताम् ।

अमात्यान्हरितपांश्चैव समाहूयाह भोजराट् ॥ भो भो निशाम्यतामेतद्वीरचाणूरमुष्टिकौ ॥ २२ ॥ नन्दव्रजे किलासाते सुतावानकदुन्दुभेः ॥ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ॥ २३ ॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ॥ पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २४ ॥ महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम् ॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ २५ ॥ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसन्तु पशून्मेध्यान् भूतराजाय मीढुषे ॥ २६ ॥ इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ २७ ॥ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८ ॥ अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् ॥ यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥२९॥ गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः ॥ आसाते ताविहानेन रथेनानय मा चिरम् ॥ ३० ॥ निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः ॥ तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥ ३१ ॥ घातयिष्य इहानीतौ कालकल्पेन हस्तिना ॥ यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ३२ ॥ तयोर्निहतयोस्तप्तान् वसुदेवपुरोगमान् ॥ तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ३३ ॥ उग्रसेनं च पितरं स्थविरं राज्यकामुकम् ॥ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ३४ ॥ ॥ ॥

त्वत्तोऽन्य आदृतः सादरो हिततमश्च न विद्यत इति ॥ २८ ॥ २९ ॥ ३० ॥ तौ मे मृत्युर्नितरां सृष्टः । वैकुण्ठसंश्रयैर्विष्णुसंश्रयैर्देवैः ॥ ३१ ॥ किं ततस्तत्राह—घातयिष्य इति । कालकल्पेन मृत्युतुल्येन वैद्युतोपमैरशनितुल्यैः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ॥ ॥ ॥

१ कचित्—'वीर चाणूर मुष्टिक' इत्येकवचनान्तपाठः। वीरेति प्रोत्साहनार्थं द्वयोर्विशेषणं। बहुत्वे तु वीरश्च चाणूरश्चेत्यादि कृतद्वन्द्वात् सबोधने जस्। २ मल्लयुद्धभूमौ परितः श्रिताः। ३ स्वैरसंयुगमित्यनन्तरम् महामात्र निबोधेत्यारभ्य पश्यन्तु मम पौरुषमित्यन्ताः सार्धद्वात्रिंशच्छ्लोकाः विजयध्वज्यामधिका दृश्यन्ते। ४भद्र हे चतुर हस्तिपक। ५ धनुषि च रुद्र आवाह्य पूज्यत इति धनुर्यागत्वम्। ६ भूतराजाय भूतेश्वरनाम्ने मथुराक्षेत्रपालाय रुद्रायेत्यर्थः। ७ कार्यं गौरवेण गुरुतया साधयतीति तथाविधं त्वाम्। कचित्—'साधने' इत्यपि पाठः। तत्र साधननिमित्तमित्यर्थः। ८ वाग्देवीमते तु यदि पुर्यामानीतौ भवतस्तदा हस्तिनैव हेतुभूतेन घातयिष्ये रङ्गान्तः प्रापयिष्यामि। तदनन्तरं च मुक्तौ स्वस्य मुक्तिनिमित्तं मल्लैरेव घातयिष्ये स्वसमीपं प्रापयिष्ये इति पूर्ववत्। अतो मुक्तिहेतुत्वाद्वैद्युतोपमैः क्रममुक्तिमार्गस्थिततेजोमयनेतृदेवतुल्यैरित्यादि। ९ देवीमते तु मुक्तौ तयोः प्राप्तयोस्तद्बन्धूनपि प्राप्स्यामि तदविनाभूतत्वादिति भावः। तस्मान् मम वधं दृष्ट्वा स्वसौशील्येन मद्विषयकानुतापयुक्तान्। १० देवीपक्षे स्थविरं सर्वतो ज्येष्ठं तेन न्यायत एव राज्यकामुकं। अविद्विषः ये मां न द्विषन्ति अहमेव यान्द्वेष्मि तानपीत्यर्थः।

नष्टकण्टका नष्टशत्रुः । ननु कतिपयाऽसुहृद्वधेन नष्टकण्टका कथं स्यादिति तत्राह—जरासन्ध इति ॥३५॥३६॥ यदुपुरश्रियं द्रष्टुं चेति ॥ ३७ ॥ तत्र त्वमनीषितं विचारितं सम्यक् सम्यक् स्वावद्यं मरणं तन्मार्जनम् । तथाऽप्येतावानभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह—सिद्ध्यसिद्ध्योरिति ॥ ३८ ॥ पुरुषकारस्य व्यभिचारमाह—मनोरथानिति ॥३९॥४०॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां षट्त्रिंशोऽध्यायः॥३६॥ सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ॥ नारदेन स्तुतः क्रीडन् व्योमासुरमथावधीत् ॥ १ ॥ वृषवेषासुरं यद्वत् केशिनं हयवेषिणम् ॥ कंसप्राणसखं हत्वा

तलश्चैषा मही मित्र भवित्री नष्टकण्टका[३] ॥ जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥३५॥ शम्बरो नरको बाणो मय्येव कृतसौहृदाः ॥ तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥ एतज्ज्ञात्वानय क्षिप्रं रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥३७॥ ॥ अक्रूर उवाच ॥ राजन्मनीषितं सध्र्यक्[४] तव स्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः समं[५] कुर्याद्दैवं हि फलसाधनम्[६] ॥ ३८ ॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ३९ ॥ ॥ श्रीशुक उवाच ॥ एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः ॥ प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धेऽक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥३६॥ ॥ श्रीशुक उवाच ॥ केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनोजवः ॥ सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः ॥१॥ (विशालनेत्रो[७] विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ॥ दुराशयः कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन् ॥ १ ॥) तं त्रासयन्तं भगवान्स्वगोकुलं तद्धेषितैर्वालविघूर्णिताम्बुदम् ॥ आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत् स व्यनदन्मृगेन्द्रवत् ॥ २ ॥ ॥

कंसं व्यसुमिवाकरोत् ॥ २ ॥ केशी त्विति । प्रथमश्लोकेन य एवंभूतः केशीत्यनूद्य तं भगवानुपाह्वयदिति द्वितीयेनान्वयः । महाहयः सन् महीं निर्जरयन् श्लथयन्विदारयन्नित्यर्थः । सटाभिः केसरैरवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः संकीर्णं नभः कुर्वन् । हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन सः ॥ १ ॥ तद्धेषितैस्तैरतिनिष्ठुरैर्हेषितैः । वालैः पुच्छलोमभिर्विघूर्णिताः परिभ्रामिता अम्बुदा येन तम् । आजौ संग्रामार्थम् । आत्मानं कृष्णम् । अग्रणीः पुरतो निर्गतः सन्नुपाह्वयत् स्वसमीपमाजुहाव । स च केशी तन्निशम्य मृगेन्द्रवन्नादमकरोत् ॥ २ ॥ ॥ ॥ ॥

१ 'वृषवेषायितं यद्वत्' इति पाठः । २ 'प्राणसमम्' इति पाठः । ३ देवीपक्षे नष्टा मत्प्रमुखाः सन्मार्गपीडका यस्या । यतस्तैर्जरासधादिभिः सहैव सुरपक्षीयान् हत्वा प्राप्य महीं भोक्ष्ये । मुक्तौ सर्वानन्दान्तर्भावात्सार्वभौमाद्यानन्दान् प्राप्स्यामीत्यर्थः । ४ 'सम्यक्' इति पाठः । ५ समं भावमिति चित्तमिति वा शेषः । ६ 'फलभावनम्' इति पाठः । ७ अयं श्लोकः श्रीधरस्वाम्यनभिप्रेतः । तैः प्रथमश्लोकेनेत्यादिना द्वितीयेनान्वयलेखनात् ।

ततः केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्याभिमुखः सन्नभिजगाम । किंच अत्यमर्षणोऽतिकुपितोऽत्यन्तमसहमानो वा । प्रत्यक्पद्भ्यां जघान । दुरासदोऽन्यैरभिभवितुमशक्यः । दुरत्ययः उद्यतः सन् दुरतिक्रमः । अत्र हेतुः—चण्डजवश्चण्डस्तीव्रो जवो वेगो धावनं यस्य ॥ ३ ॥ तद्धननं वञ्चयित्वा तं च हननाय प्रसारितयोः पादयोर्हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा व्यवस्थितस्तथैव स्थितो बभूव ॥ ४ ॥ व्यादाय मुखं प्रसार्य वेगेन हरिं प्रत्याद्रवत् । सोऽपि हरिर्हसन्नुत्तरं सव्यं भुजम् । निर्भयत्वे दृष्टान्तः—यथोरगं बिल इति ॥ ५ ॥ ततः किं तदाह—दन्ता इति । चर्वणाय भगवद्भुजं स्पृशन्तीति तथा ते व्यादानेन ये विवृताः । अयो लोहं स्पृशन्तीति स्पृशः । यद्वा तप्तमयमतितप्तं लोहादि स्पृशन्तो यथेति । आमयो जलोदरम् ॥ ६ ॥ लेण्डं पुरीषं

स तं निशम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ॥ जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥ ३ ॥ तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ॥ सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ४ ॥ स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ॥ ५ ॥ दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथामयः संववृधे उपेक्षितः ॥ ६ ॥ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेण्डं विसृजन्क्षितौ व्यसुः ॥ ७ ॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः ॥ अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ८ ॥ देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप ॥ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ ९ ॥ कृष्ण कृष्णाप्रमेयात्मन् योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ १० ॥ ॥ ॥

उत्सृजन् ॥७॥ कर्कटिकाफलं हि पक्वं साद्यन्तं विदीर्णं भवति तद्वद्विदीर्णाच्चस्य देहात् । व्यसोर्विगतप्राणात् । अविस्मितो गर्वरहितः । अयत्नेन हतोऽरिर्येन सः ॥ ८ ॥ 'कंसाय कृष्णमादिश्य तद्रहस्यादिपैशुनैः ॥ कंसघातादि कृष्णस्य कार्यमावेदयन्मुनिः' ॥ १ ॥ तदाह—देवर्षिरित्यादिना । न चायं सूचकः किन्तु सर्वसुहृदित्याह—भागवतप्रवर इति ॥ ९ ॥ अस्मद्रहस्यं वैरिणि कंसे सूचितवानिति मा शङ्कीरित्याह—कृष्ण कृष्णेत्यादिना । अयं भावः—त्वमीश्वरो भूभारदैत्यसंहारायावतीर्णोऽसि, अतस्तदनुरूपाचरणेन विश्वं परिपालयेति । तत्र त्वयि तावद्भयशङ्कैव नास्तीत्याह—अप्रमेयात्मन्नपरिच्छिन्नरूप । योगेशाचिन्त्यप्रभाव । जगदीश्वर विश्वनियन्तः । वासुदेव सर्वभूतेषु वर्तमान । अखिलावास सर्वस्याश्रय । संप्रति सात्वतां प्रवर श्रेष्ठ । प्रभो सर्वशक्ते ॥ १० ॥ ॥ ॥

१ अत्र पक्षे सर्पेरे शरीति विसर्गलोपः । २ तप्तमयमित्यत्र प्राचुर्ये मयट् । मूले 'तप्तमयःस्पृशः' इति पाठः । ३ जघान हन्तुं प्रवृत्त इत्यर्थः । अग्रे तद्वञ्चयित्वेत्यत्र तद्धननं वञ्चयित्वेति व्याख्यानात् । ४ 'दिविजैरभिष्टुतः' इति पाठो बालबोधिन्याम् । 'हतारिरुत्स्मियैः प्रसूनवर्षैर्वपुपद्भिरीडितः' इति विज० पाठः । तत्र उत्स्मियैर्देवैः । वपुपद्भिरवर्षद्भिरित्यादि । 'हतारिकः सुरैःप्रसूनवर्षैर्वर्षद्भिरीडितः' इति चक्र० । तत्र प्रसूनानि वर्षद्भिः, श्रमापनोदार्थं जलकणानपि वर्षद्भिरिति व्याख्या ।

कथमेवंरूपोऽहमिति चेदत आह—त्वमात्मेति । नहि त्वं जीववत्परिच्छिन्नः किंतु सर्वभूतानामान्तर एकोऽनुस्यूत आत्मा । अन्तरनुस्यूतत्वे दृष्टान्तः—एधसां काष्ठानामन्तर्ज्योतिरिवेति । भूतेषु स्थितोऽपि तैर्न दृश्यस इत्याह—गूढ इति । अत्र हेतवः—गुहाशयो बुद्धेरप्यान्तरः । किंच साक्षी । नहि साक्षी दृश्यत इत्यर्थः । अपि च महापुरुषः । अतः परिच्छिन्नमतिभिर्न ज्ञायस इत्यर्थः । तर्हि सर्वान्तरत्वे किं प्रमाणमत आह—ईश्वर इति । नहीश्वरं विना परतन्त्राणां जीवानां प्रवृत्तिर्घटत इत्यर्थः ॥ ११ ॥ अहमीश्वरोऽन्यत्सर्वमीशितव्यमित्येतदेव कुत इत्यत आह—आत्मनेति । साधनान्तरनिरपेक्ष एवात्माश्रयः स्वतन्त्रः मायया शक्त्या भवान् गुणान् ससृजे सृष्टवान् । तैः सृष्टैर्गुणैरिदं विश्वं सृजसि अत्सि संहरसि अवसि पालयसि । ननु सृष्ट्यादिक्रिया षट्कारकसाध्यैव

त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ ११ ॥ आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् ॥ तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥ १२ ॥ स त्वं भूधरभूतानां दैत्य[1]प्रमथरक्षसाम् ॥ अवतीर्णो विनाशाय सेतूनां[2] रक्षणाय च ॥ १३ ॥ दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ॥ यस्य हेषितसंत्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥ १४ ॥ चाणूरं मुष्टिकं चैव[3] मल्लानन्यांश्च हस्तिनम् ॥ कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १५ ॥ तस्यानु शङ्खयवनमुराणां नरकस्य च ॥ पारिजातापहरणमिन्द्रस्य च पराजयम् ॥ १६ ॥ उद्वाहं वीरकन्यानां[4] वीर्यशुल्कादिलक्षणम्[5] ॥ नृगस्य मोक्षणं पापाद्द्वारकायां जगत्पते ॥ १७ ॥ स्यमन्तकस्य च मणेरादानं सह भार्यया ॥ मृतपुत्रप्रदानं[6] च ब्राह्मणस्य स्वधामतः ॥ १८ ॥ पौण्ड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम् ॥ दन्तवक्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ १९ ॥ यानि चान्यानि[7] वीर्याणि द्वारकामावसन्भवान् ॥ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥ २० ॥ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २१ ॥ ॥ ॥

दृष्टेत्याह—सत्यसंकल्प इति । नहि संकल्पैकसाध्ये बहिःसाधनापेक्षेति भावः । अतस्त्वमीश्वर इत्युपसंहारः ॥ १२ ॥ प्रस्तुतमाह—स त्वमिति । भूधरभूतानां भुवं धरन्तीति भूधरा राजानस्तद्रूपाणाम् ॥ १३ ॥ १४ ॥ परश्वोऽहनीति । अद्यैवाक्रूर एष्यति, श्वो मथुरां गन्तासि, परश्वश्चाणूरादींश्च त्वया निहतान् द्रक्ष्यामीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १५ ॥ तस्यानु तदनन्तरम् । शङ्खादीनां । शङ्खः पञ्चजनः । वधं द्रक्ष्यामीति शेषः । भाविनिर्देशमात्रमेतत्, नत्वानन्तर्यं विवक्षितम् ॥ १६ ॥ १७ ॥ भार्यया जाम्बवत्या सह । स्वधामतो महाकालपुरात् ॥ १८ ॥ १९ ॥ द्वारकामावसन् द्वारकायां वसन् । कर्ता करिष्यति ॥ २० ॥ अमुष्य विश्वस्य भूभारस्य वा ॥ २१ ॥ ॥ ॥ ॥

१ दैत्यादीना राजरूपाः प्रमथाः काशिराजादयः । २ 'साधूनां' इति पाठः । ३ अप्यर्थे चकारात्तैस्तेषा सर्वेषामवश्यवध्यत्वं निपात्यते । ४ वीराणा राज्ञा कन्याः, हे वीरेति संबुद्धिर्वा । ५ वीर्यमेव शुल्कं तदादिर्यस्य कन्याभक्त्यादेस्तदेव प्रकारो यत्र तम् । ६ 'पुत्रोपदानं च' इति पाठः । ७ अन्यानि एकेन युगपन्नानागृहेषु बह्वीभिः सह गार्हस्थ्यादीनि ।

एवं विज्ञाप्य कृताभिनन्दनं भगवन्तं नमस्यति द्वयेन—विशुद्धविज्ञानघनमिति । केवलं ज्ञानैकमूर्तिम् । अत एव स्वसंस्थया स्वरूपसम्यक्स्थित्यैव परमानन्दरूपया सम्यगासाः सर्वेऽर्था येन तम् । आप्तकामतोक्ता सत्यसंकल्पतामाह—अमोघवाञ्छितमिति । ननु वाञ्छा चेदस्ति तर्हि दुर्निवारा संसृतिरत आह—स्वतेजसेति । चिच्छक्त्या नित्यनिवृत्तो मायाकार्यरूपो गुणप्रवाहो यस्मात्तम् । अतो भगवन्तं निरतिशयैश्वर्यमीमहि शरणं व्रजेमेति ॥ २२ ॥ ननु त्रिकालज्ञस्त्वं कथं मत्प्रपञ्चं न जानासि । जानासि चेत्कथमगुणप्रवाहं ब्रवीषि तत्राह—त्वामिति । ईश्वरमन्यस्य वशयितारं स्वाश्रयमन्यस्यावशमत आत्ममायया आत्माधीनया मायया विनिर्मिता अशेषविशेषा महदाद्या यादवादिरूपा वा कल्पना येन तं धुर्यं श्रेष्ठं नतोऽस्मीति ॥ २३ ॥ २४ ॥ २५ ॥ ननु नारदेन

विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् ॥ स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवन्तमीमहि ॥ २२ ॥ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २३ ॥ ॥ श्रीशुक उवाच ॥ एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २४ ॥ भगवानपि गोविन्दो हत्वा केशिनमाहवे ॥ पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः ॥ २५ ॥ एकदा ते पशून्पालाश्चारयन्तोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥ २६ ॥ तत्रासन् कतिचिच्चोराः पालाश्च कतिचिन्नृप ॥ मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २७ ॥ मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २८ ॥ गिरिदर्यां विनिक्षिप्य नीतं नीतं महासुरः ॥ शिलया पिदधे द्वारं चतुःपञ्चा वशेषिताः ॥ २९ ॥ तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् ॥ गोपान्नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३० ॥ स निजं रूपमास्थाय गिरीन्द्रसदृशं बली ॥ इच्छन्विमोक्तुमात्मानं नाशक्नोद्ग्रहणातुरः ॥ ३१ ॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३२ ॥ ॥

व्योमवधो न दृष्टः, तत्कथं व्योमवधप्रसक्तिरिति तत्रोच्यते—प्रातरेव केशिवधानन्तरं नारदेनोक्तमङ्गीकृत्य पुनस्तथैव पशून् पालयता व्योमो हतः । यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि वेषधारिवधप्रसङ्गादत्रोच्यत इति द्रष्टव्यम् । केचित्पुनः शङ्खचूडवधात्पूर्वमेव पठन्ति च । तमाह—एकदेति ॥ २६ ॥ २७ ॥ मेषायितान् मेषवदाचरितान् स्वयं चोरवदाचरितः सन्नपोवाहापकृष्य निनाय ॥ २८ ॥ पिदधे छादितवान् ॥ २९ ॥ शरणद आश्रयप्रदः । हरिः सिंह इव ॥ ३० ॥ ॥ ३१ ॥ पशुमारं पशुमारो यथा भवति तथा । अनिःश्वासमित्यर्थः ॥ ३२ ॥ ॥ ॥ ॥

१ 'अभ्यात्तमनुष्य' इति पाठः । २ निलायन चारितस्य तिरोधापनम् । चोराः केऽपि रक्षकाः केचन मेषायिता इत्यभिनयेनेत्यर्थः । ३ चत्वारः पञ्च वा चतुःपञ्चाः वशेषिताः अवाप्योरुपसर्गयोरित्यल्लोपः । ४ कृष्णकर्तृकग्रहणेनातुरः । ५ उपमाने कर्मणि चेति णमुल्, म्रियतेर्ण्यन्तस्यानुप्रयोगश्च ।

भुवि गोपैः स्तूयमानः, उपरि वैमानिकैर्देवैरिति ॥ ३३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ ॥ अष्टात्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः ॥ तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥ १ ॥ प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ॥ ततो व्योमे हतेऽक्रूरः सायं गोकुलमागमत् ॥ २ ॥ तदेवं नारदेन कंसवधादिकार्ये विज्ञापिते श्रीकृष्णो मथुरां गन्तुमुद्यतो वर्तते । तदाऽक्रूरोपि गोकुलमागमदित्याह—अक्रूरोऽपीति ॥ १ ॥ २ ॥ अपिः संभावनायाम् । अर्हते योग्याय ॥ ३ ॥ स्वस्य कृष्णस्य दर्शनेऽसंभवमाशङ्क्य पुनः संभावयति—ममैतदिति द्वयेन । विषयात्मनो विषयाविष्टचित्तस्य । शूद्राजन्म यस्य तस्य ब्रह्मकीर्तनं वेदोच्चारणं यथेति ॥ ४ ॥ यद्वा मैवं, किंत्वधमस्य नीचस्यापि मम स्यादेव । कुत इत्यत आह—ह्रियमाणः कालनद्येति । अयं भावः—यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किंचित्कदाचित्तरति कूलं प्राप्नोति

गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः ॥ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥३३॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे व्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥३७॥ ॥ श्रीशुक उवाच ॥ अक्रूरोऽपि[1] च तां रात्रिं मधुपुर्यां महामतिः ॥ उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥ गच्छन्पथि महाभागो[4] भगवत्यम्बुजेक्षणे ॥ भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ २ ॥ किं मयाचरितं भद्रं किं तप्तं परमं तपः ॥ किं वाऽथाप्यर्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥३॥ ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥ मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ॥ ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥ ५ ॥ ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ॥ यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥ कंसो बताद्याऽकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ॥ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन्यन्नखमण्डलत्विषा ॥ ७ ॥ यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ॥ गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥ ॥

तथा कर्मवशेन कालेन ह्रियमाणानां जीवानामपि मध्ये कश्चित्तरेदिति संभवतीति ॥ ५ ॥ अतोऽनया प्रवृत्त्यैव ममामङ्गलं ध्रुवं नष्टमेवेति ज्ञायते । भवो जन्म च सफलं जातमिति । यद्यतो नमस्करिष्यामि ॥ ६ ॥ अमङ्गलनाशे सूचकान्तरमाह—कंस इति । बतेत्याश्चर्ये । अतिखलः कंसोऽपि ममात्यन्तमनुग्रहं कृतवान् । यतोऽमुना कंसेन प्रहितो हरेरङ्घ्रिपद्मं द्रक्ष्ये द्रक्ष्यामीति । पूर्वेऽम्बरीषादयस्तमः संसारमतरंस्तीर्णाः ॥ ७ ॥ अङ्घ्रिपद्मं विभावयति—यदिति । ब्रह्मादिभिरर्चितमिति परमैश्वर्यमाह—श्रिया चेति सौभाग्यातिशयम् । मुनिभिर्भक्तसहितैरिति परमपुरुषार्थत्वम् । गोचारणायेति कृपालुत्वम् । यद्गोपिकानामिति प्रेममात्रसुलभत्वम् ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'तावदक्रूरोऽपि' इति पाठः । २ दिवि सुरैर्भुवि गोपैश्च, गोपैः सहेति वा । ३ कंसादिष्टः केशी प्रातरागतस्ततोऽक्रूरोऽपि प्रययाविलपेरर्थः। ४ महत् कृष्णकृपारूपं भाग्यं यस्य । ५ मयापीत्यन्वयः अनर्हेणापीत्यर्थः। भद्रं भगवत्पूजादि। ६ यत् यस्माद्धेतोः। ७ ध्यानगोचरीकृत्येत्यर्थः। ८ आर्चितं अर्च्यमानं मतिबुद्धीतिवर्तमाने क्तः पष्ठभाव आर्षः। ९ 'कुंकुमाचितं' इति पाठः। तत्राचितं व्याप्तम्।

मनोरथान्तरं करोति—द्रक्ष्यामीति । शोभमानौ कपोलौ नासिका च यस्मिंस्तत् । स्मितसहितोऽवलोको यस्मिन्, अरुणकञ्जवल्लोचने यस्मिन्, तच्च तच्च मुखम् । गुडालकावृतं वक्रकेशावृतम् । तदानीमेव शुभसूचकं दृष्ट्वातिहृष्यन्नाह—प्रदक्षिणमिति ॥ ९ ॥ पुनरप्यन्यच्चिन्तयति—अप्यद्येति । ईयुषः प्रापवतः लावण्यस्य धामाश्रयस्तस्य विष्णोः यद्वा विष्णोर्लावण्ययुक्तं यद्धाम वपुस्तस्य । उपलम्भनं दर्शनं भविता भविष्यति । अपि यद्येवं स्यात्तर्हि मह्यं मम दृशो लोचनस्य फलं न स्यादिति न, अपि तु स्यादेवेत्यर्थः ॥ १० ॥ य ईक्षितेत्यादिचतुर्भिः कलापकम् । तत्रैवं शङ्का—नन्वसदादिवदेव भोक्तृत्वकर्तृत्वादिधर्मैस्तत्र तत्र प्रतीयमानस्य कथं विष्णुत्वमितीमां शङ्कां श्लोकत्रयेणापाकुर्वंश्चतुर्थेन तमहं द्रक्ष्यामीति मनोरथं करोति । तथा हि—य ईक्षितेति । असत्सतोः कार्यकारणयोरीक्षिता-पीक्षणमात्रकर्ताप्यहंरहितोऽहंकारहीनः । तथा अपास्ततमोभिदाभ्रमः, तमः स्वाज्ञानं ततो भिदा भेदस्ततो भ्रमोऽभिनिवेशादिः, अपास्ता अपाकृतास्तम आदयो यस्मिन्सः । कुत एतत्तत्राह—स्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेण । तथापि स्वमायया स्वाधीनया मायया तदीक्षया तस्यैवेक्षया प्राणाक्ष-

द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम् ॥ मुखं मुकुन्दस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ९ ॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥ लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात्फलमञ्जसा दृशः ॥ १० ॥ य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ॥ स्वमाययात्मन्रचितै-स्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥ ११ ॥ यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ॥ प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥ स चावतीर्णः किल सात्वतान्वये स्वसेतु-पालामरवर्यशर्मकृत् ॥ यशो वितन्वन्व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम् ॥ १३ ॥ तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ॥ रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ १४ ॥

धीभिः सहितैरात्मन्नात्मनि स्वस्मिन्नेव रचितैः जीवैः सदनेषु वृन्दावनतरुषु गोपीगृहेषु च लीलया कर्माणि कुर्वन् सत्त्वदभीयते आभिमुख्येन प्रतीयते ॥ ११ ॥ ननु सर्वथाहंकारादिरहितस्यात्मारामस्य लीलापि कुत इत्याशङ्क्य परानुग्रहार्थत्वाशयेनाह—यस्येति । अखिलान्यखिलस्य या अमीवानि पापानि घ्नन्तीत्य-खिलामीवहानि तैः । तथा सुमङ्गलैः शोभनानि मङ्गलानि येभ्यस्तैः । गुणाः करुणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचो जगत्प्राणन्ति जीव-यन्ति, शुम्भन्ति शोभयन्ति, पुनन्ति पवित्रयन्ति । व्यतिरेकमाह—या इति । तैर्विरक्ता रहितास्तास्तु स्वलंकृता अपि शवाद्यलंकृतशववच्छोभमाना मताः सतां संमताः ॥ १२ ॥ स्वयं रचितान्सेतून् वर्णाश्रमधर्मान् पालयताममरवर्याणां सुखकर्ता सन्नवतीर्णः । यद्यशः ॥ १३ ॥ त्रैलोक्ये एकमेव कान्तम् । दृशिर्दृ-ष्टिस्तद्वतां महानुत्सवो यस्मात् । यद्वा महानुत्सव एव । अत एव श्रिय ईप्सितमास्पदमेवंभूतं रूपं श्रीमूर्तिं दधानं तमीश्वरं द्रक्ष्यामीति । अत्र लिङ्गम् ।

१ 'प्रदक्षिणं गौरमृगाश्चरन्तः कृष्णैर्युता मङ्गलदा अयुग्माः' इत्यर्थकशाकुनतन्त्रादितार्थः । २ तोषण्यां तु इति त्रि० । स चावतीर्ण इति तृतीयेनान्वयादित्युक्तम् । ३ तस्यैव जीवस्येव । ४ कर्मेन्द्रियज्ञानेन्द्रियान्तःकरणैः सह । ५ भविता अद्यतने लुडर्थः । ६ अञ्जसा अनायासेन । ७ 'तद्विरिक्ताः' इति पाठः । ८ एकेनैव सुप्रभातेनेदृश फलं न स्यादिति उपसां बहुत्वम-नेकदिनाभिप्रायम् । ९ यद्वा स्वयं रचितैर्जीवैः प्राणाक्षधीभिस्तत्प्रवृत्तिलिङ्गेन सदनेषु सर्वभूतहृदयेषु अनुमीयते मां न तु दृश्यत इति तोष० । 'भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः । दृश्यै-र्बुद्ध्यादिभिर्द्रष्टा' इत्यादिद्वितीयोक्तेः । १० जगत् श्रोतृवक्त्रादिरूपं सर्वमेव । ११ यद्वा श्रिय ईप्सितमीप्सा तस्यास्पदम् ।

उषसः प्रभातसमयाः सुदर्शनाः शुभदर्शनाः । सुखं प्रभाता रजन्यः शुभसूचिका बभूवुरित्यर्थः ॥ १४ ॥ किंच—अथ दर्शनानन्तरं सपदि तत्क्षणमेव रथादवतीर्णः सन् प्रधानयोः पुरुषयो रामकृष्णयोश्चरणं योगिभिरप्यात्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि । आभ्यां सहानयोः सखीन् गोपांश्च नमस्यामीति ॥ १५ ॥ किंच—अपीति । अधास्यत् धास्यति । तद्विभावयति—दत्ताभयमिति सार्धेन ॥ १६ ॥ बलिना तावत्पदत्रयपरिमितभूदानसमये तस्य हस्ते उदकं निहितम् । कौशिक इन्द्रस्तेनापि कदाचित्किंचिन्निहितमिति ज्ञातव्यम् । मुमुक्षूणां संसारभयनिवर्तकं सकामानामभ्युदयप्रदं चेत्युक्तम्, अनुरक्तानां परमसुखदं चेत्याह—यद्वा वाशब्दो वितर्के । विहारे रासक्रीडायाम् । सौगन्धिकस्य गन्ध इव गन्धो यस्य तत् सौगन्धिकगन्धि ॥ १७ ॥ एवं परमानुग्रहं संभाव्य पुनरप्यसम्भवमाशङ्क्य परिहरति—न मयीति । यद्यप्यहं कंसेन प्रहितोऽतस्तस्य दूतः, तथापि मयि अरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः ।

अथावरूढः सपदीशयो रथात् प्रधानपुंसोश्चरणं स्वलब्धये ॥ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन् वनौकसः ॥ १५ ॥ अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपङ्कजम् ॥ दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ १७ ॥ न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ॥ योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥ अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ १९ ॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यतः ॥ २० ॥ लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥ ॥ ॥ ७ ॥

यतो विश्वदृक् सर्वज्ञः, अतो मम चेतसोऽन्तश्च बहिश्च यदीहितं चेष्टितमेतद्यः क्षेत्रज्ञोऽन्तर्यामी नित्यज्ञानेनेक्षते । अयं भावः—चेतसो बहिरेव कंसमनुवर्ते, अन्तस्तु कृष्णमेव तदेतदसौ हृदि स्थितो जानातीति । यद्वा एतस्य जगत ईहितमिति ॥ १८ ॥ अपि यद्यङ्घ्रिमूले चरणोपान्तेऽवहितं संयतं कृपामृतेनार्द्रया दृशा मामीक्षिता द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः परां मुदं वोढा प्राप्स्यामीति ॥ १९ ॥ अथ मां परिरप्स्यते आलिङ्गिष्यति यदा तदैव मे आत्मा देहस्तीर्थीक्रियतेऽतिपवित्रीकरिष्यते । उच्छ्वसिति श्लथो भविष्यति । अतो देहात् ॥ २० ॥ तत भोस्ताततेति । तदा जन्मभृतः सफलजन्मानः । अन्यथा तज्जन्मैव न भवतीत्याह—महीयसेति । महीयसा श्रीकृष्णेन योऽनादृतोऽमुष्य तस्य जन्तोस्तज्जन्म धिक् ॥ २१ ॥ ॥ ॥

१ प्रोद्वेजितानामित्याद्याश्चतुर्थ्यर्थे षष्ठ्यः । तेभ्यो दत्ताभयमित्यर्थः । २ वोढा वहेस्तृन् । ३ तीर्थीक्रियते अन्येषामपि पावनहेतुरित्यर्थः । ४ यद्वा महीयसा गुणैर्महत्तमेन तद्भक्तेनापि ।

ननु सुहृदादिषु परिष्वङ्गसंप्रश्नादयो जीवधर्माः कथमीश्वरे सङ्गच्छन्तेऽत आह—न तस्येति । दयितः प्रियस्तद्विपरीतोऽप्रियः सुहृत्तमो हिततमस्तद्विपरीतो द्वेष्य एतत्सर्वव्यतिरिक्त उपेक्ष्य इति । दयितादयो न सन्तीति सत्यं, तथापि भक्तान् भजते, तत्र यथा ये भक्तास्तांस्तथा भजते—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति भगवद्वचनात् । अविषमत्वेऽपि भक्तेभ्य एव फलं ददातीत्यत्र दृष्टान्तः—यद्वत्सुरद्रुम इति ॥ २२ ॥ यो मयाञ्जलिः करिष्यते तस्मिन्नेवाञ्जलौ गृहीतं माम् । आप्तानि समस्तान्यर्घादिसत्कृतानि येन तं माम् ॥ २३ ॥ स तु मार्गमपि न वेद तथापि रथेन प्राप्त इति ॥ २४ ॥ अखिलैर्लोकपालैः किरीटेषु जुष्टा अमलाः पादरेणवो यस्य तस्य । क्षितिकौतुकानि क्षितेरलंकाररूपाणि ॥ २५ ॥ तद्दर्शनेन य आह्लादस्तेन विवृद्धः संभ्रमो यस्य सः ।

न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ॥ तथापि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ २२ ॥ किंचाग्रजो माऽवनतं यदूत्तमः स्मयन् परिष्वज्य गृहीतमञ्जलौ ॥ गृहं प्रवेश्याप्तसमस्तसत्कृतं संप्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ २३ ॥ ॥ श्रीशुक उवाच ॥ इति संचिन्तयन् कृष्णं श्वफल्कतनयोऽध्वनि ॥ रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥ २४ ॥ पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ॥ ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ २५ ॥ तद्दर्शनाह्लादविवृद्धसंभ्रमः प्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः ॥ रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥ २६ ॥ देहंभृतामियानर्थो हित्वा दम्भं भियं शुचम् ॥ संदेशाद्यो हरेर्लिङ्गदर्शनश्रवणादिभिः ॥ २७ ॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥ २८ ॥ किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ॥ सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २९ ॥ ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ॥ शोभयन्तौ महात्मानावनुक्रोशस्मितेक्षणौ ॥ ३० ॥ उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ॥ पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥

प्रेम्णा ऊर्ध्वानि रोमाणि यस्य सः । अश्रूणां कलाभिर्लेशैराकुले ईक्षणे यस्य सः । अवस्कन्द्यावप्लुत्य तेषु पदेषु सोऽक्रूरः अचेष्टत व्यलुठत् । अहो इति दुर्लभतां भावयन् ॥ २६ ॥ ननु किमर्थमेवं व्यलुठत्, नास्ति प्रेमसंभ्रमे फलोद्देश इत्याह—देहंभृतामिति । देहभाजामेतावानेव पुरुषार्थः, कंसस्य संदेशादारभ्य हरेर्लिङ्गदर्शनश्रवणादिभिर्योऽयमक्रूरस्य वर्णित इति । संदेश आद्यो यस्यार्थस्य स यावानक्रूरस्य जात इति वा ॥ २७ ॥ ततः कृष्णं रामं च ददर्श । गावो दुह्यन्तेऽस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ ॥ २८ ॥ २९ ॥ अनुक्रोशोऽनुकम्पा तद्विलसितस्मितयुक्तमीक्षणं ययोस्तौ ॥ ३० ॥ उदारा रुचिरा क्रीडा ययोस्तौ स्रग्विणौ रत्नस्रग्भिरलंकृतौ ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ संभ्रमः कर्तव्यतानुसंधानाभावकरी मानसी त्वरा । २ अग्रजो बलरामः । 'किंवाग्रजः' इति पाठः । ३ 'महात्मानौ सानुक्रोश' इति तोप० पाठः । ४ विरजेति अदन्तोऽपि रजःशब्दोऽस्ति । ५ प्रेम्णेति यथापेक्षं सर्वैरन्वेति ।

प्रधानभूतौ पुरुषौ प्रकृतिपुरुषात्मकौ वा । कुतः । आद्यौ । तदपि कुतः । जगद्धेतू । अत एव जगत्पती । विपरीतो वा चतुर्णां पदानां हेतुहेतुमद्भावः । जगत्यर्थे पृथिव्या भारापनयनाय स्वांशेन मूर्तिभेदेन बलकेशवौ सन्तावावतीर्णौ ॥ ३२ ॥ स्वप्रभया विगततिमिरा दिशः कुर्वाणौ कनकाचितौ सुवर्णव्याप्ताविति सालंकारयोः शैलसादृश्यार्थमुक्तम् ॥ ३३ ॥ ३४ ॥ भगवद्दर्शनाह्लादेन यद्बाष्पं तेन पर्याकुले ईक्षणे यस्य सः पुलकैराचितं व्याप्तमङ्गं यस्य सः । स्वाख्यानेऽक्रूरोऽहं नमस्करोमीति कथने नाशक्नोत् ॥ ३५ ॥ अभिप्रेत्याक्रूरोऽयमेतदर्थमागत इति ज्ञात्वा कंसहननसामर्थ्यं द्योतयन्निव रथाङ्गेन चक्रेणाङ्कितो यः पाणिस्तेनाभ्युपाकृष्य तमालिङ्गितवान् ॥ ३६ ॥ पाणी अञ्जलिरूपेण संहिताविव गृहीत्वा ॥ ३७ ॥ मधुपर्कं एवार्हणं तस्मिन् वा यदुचितमर्हणमाहरत् । आनीय समर्पितवानित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ सत्कृतं संमानितम् । निरनुग्रहे क्रूरे । कथं केन प्रकारेण स्थ जीवथेत्यर्थः । सौनः पशुघाती स एव पालको येषामवीनां मेषाणां त इव तत्तुल्या इत्यर्थः ॥४१॥ निरनुग्रहतामाह—योऽवधीदिति । तोकान् तोकानि । असुतृप् असूनेव तर्पयति यः । अतः खलः । तस्य कंसस्य प्रजानाम् । हे अक्रूर, येषां जीवनमात्रमपि दुर्लभं तेषां वः किं नु कुशलं विचारयाम इति ॥ ४२ ॥ मधुरया वाचा इत्थं सत्कृतः । तथैव वाचा परिपृष्टेन प्रश्नेन । अध्वपरिश्रमं संसारश्रमम् ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ॥ अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३२ ॥ दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया ॥ यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥ ३३ ॥ रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ॥ पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥ ३४ ॥ भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ॥ पुलकाचिताङ्ग औत्कण्ठ्यात् स्वाख्याने नाशकन्नृप ॥ ३५ ॥ भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ॥ परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥३६॥ संकर्षणश्च प्रणतमुपगुह्य महामनाः ॥ गृहीत्वा पाणिना पाणी अनयत् सानुजो गृहम् ॥३७॥ पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम् ॥ प्रक्षाल्य विधिवत् पादौ मधुपर्कार्हणमाहरत् ॥ ३८ ॥ निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः ॥ अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥ ३९ ॥ तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ॥ मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥४०॥ पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे ॥ कंसे जीवति दाशार्ह सौनपाला इवावयः ॥ ४१ ॥ योऽवधीत्स्वस्वसुस्तोकान् क्रोशन्त्या असुतृप् खलः ॥ किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥४२॥ इत्थं सूनृतया वाचा नन्देन सुसभाजितः ॥ अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धेऽक्रूरागमनं नामाऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥

१ रथाङ्गेत्युपलक्षणं, चक्रध्वजवज्राब्जचिह्नितहस्तेनेत्यर्थः । २ 'प्रवरासनं' इति पाठः, प्रवरं रत्नादिमयम् । ३ तस्मै षष्ठ्यर्थे चतुर्थी । ४ मुखवासलक्षणं तु—'नागवल्लीदलं चूर्णं क्रमुकाणां फलानि च ॥ एलालवङ्गकङ्कोलैर्मुखवासं प्रचक्षते' इति ।

नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः ॥ अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥ १ ॥ भक्तानां मनोरथाः सत्या भवन्तीति द्योतयन्नाह—सुखोपविष्ट इति । रामकृष्णाभ्यामुरु अधिकं मानितः ॥ १ ॥ २ ॥ ३ ॥ हे तात हे सौम्य, स्वागतं यथा तथा आगतः । स्वज्ञातिबन्धूनाम्, स्वे सुहृदः, ज्ञातयः सपिण्डाः, वन्धवोऽसपिण्डाः संवन्धिनः, तेषामपि किमनमीवमपापमदुःखं सुखमिति यावत् । अनामयमारोग्यम् ॥ ४ ॥ एवं प्रश्नोऽपि मम नातिसङ्गत इत्याह—किं न्विति । अङ्ग हे अक्रूर, पृच्छे पृच्छामि । नोऽस्माकं कुलस्यामये रोगे नो मातुल इति नाम यस्य तस्मिन् । नः स्वानां ज्ञातीनाम् । तस्य प्रजासु च ॥ ५ ॥ अस्मदस्मन्निमित्तम् । वृजिनं दुःखम् । आर्ययोर्निरपराधयोः । यद्धेतोर्योऽहमेव हेतुस्तस्मात् ॥ ६ ॥ हे सौम्य, स्वानां वो दर्शनमद्य मम

॥ श्रीशुक उवाच ॥ सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः ॥ लेभे मनोरथान् सर्वान् पथि यान्स चकार ह ॥१॥
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ॥ तथापि तत्परा राजन्न हि वाञ्छन्ति किंचन ॥ २ ॥ सायन्तनाशनं
कृत्वा भगवान् देवकीसुतः ॥ सुहृत्सु[1] वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम्[2] ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ तात
सौम्यागतः कच्चित् स्वागतं भद्रमस्तु[3] वः ॥ अपि स्वज्ञातिबन्धूनामनमीवमनामयम् ॥ ४ ॥ किं नु नः कुशलं पृच्छे
एधमाने कुलामये ॥ कंसे मातुलनाम्न्यङ्ग स्वानां नस्तत्प्रजासु च ॥५॥ अहो अस्मद[4]भूद्भूरि पित्रोर्वृजिनमार्ययोः ॥
यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः ॥६॥ दिष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य काङ्क्षितम् ॥ संजातं वर्ण्यतां
तात तवागमनकारणम् ॥७॥ ॥ श्रीशुक उवाच ॥ पृष्टो भगवता सर्वं वर्णयामास माधवः ॥ वैरानुबन्धं यदुषु
वसुदेववधोद्यमम् ॥८॥ यत्संदेशो[5] यदर्थं वा दूतः संप्रेषितः स्वयम् ॥ यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥९॥
श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ॥ प्रहस्य नन्दं पितरं राज्ञादिष्टं विजज्ञतुः ॥१०॥ गोपान् समादिशत्सोऽपि
गृह्यतां सर्वगोरसः ॥ उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥११॥ यास्यामः श्वो मधुपुरीं दास्यामो नृपते
रसान् ॥ द्रक्ष्यामः सुमहत्पर्व यान्ति जानपदाः किल ॥ एवमाघोषयत् क्षत्रा नन्दगोपः स्वगोकुले ॥ १२ ॥

संजातं तद्दिष्ट्या भद्रम् ॥ ७ ॥ माधवो मधोर्वंशजः ॥ ८ ॥ यो धनुर्मखच्छद्मा संदेशो यस्य । तदर्थं चाणूरादिभिर्घातनार्थम् । अस्य कृष्णस्य पुरतो वर्णयामास । स्वजन्म कृष्णजन्म । आनकदुन्दुभेः सकाशात् ॥ ९ ॥ विजज्ञतुर्विशेषेण ज्ञापयामासतुः ॥१०॥ सोऽपि नन्दो गोपान् समादिशत् । तदेव दर्शयति—गृह्यतामित्यादिना । गोरसः क्षीरादिः । उपायनान्युत्तमवस्तूनि ॥ ११ ॥ रसान् घृतादीन् । शब्दच्छलेनेदं सूचयति—अचिकित्स्यस्य रोगस्य चिकित्सार्थं रसान् दास्याम इति । क्षत्रा व्रजरक्षाधिकृतेन । आघोषयत् सर्वतो घोषितवान् ॥ १२ ॥ ॥ ॥ ॥ ॥

१ सुहृत्सु वसुदेवादिषु विषये वृत्तं वर्तनप्रकारम् । २ चिकीर्षितं भाविनीं चेष्टां, यद्वा तन्मरणाय स्वयं कर्तुमिष्टम् । ३ 'अस्तु ते' इत्येकवचनान्तः पाठः क्वचित् । ४ अस्मत् मद्धेतोः अस्मदोद्वयोश्चेत्येकत्वे बहुवचनम् । ५ स्वयं यत्संदेशो यदर्थं वा दूतः संप्रेषितः, यच्च नारदेन कथितमानकदुन्दुभेः सकाशात् स्वजन्म, तदेतत्सर्वं कृष्णस्य पुरतो वर्णयामासेत्यन्वयः ।

ताः कृष्णैकजीवना गोप्यस्तत्तदाक्रूरमागतमुपश्रुत्येति ॥ १३ ॥ व्यथालिङ्गान्याह पञ्चभिः—काश्चिदिति । तेन श्रवणेन कृतो यो हृत्तापस्तेन यः श्वासस्तेन म्लाना मुखश्रीर्यासां ता बभूवुरिति । दुकूलानि च वलयानि च केशग्रन्थयश्च, स्रंसन्तो दुकूलादयो यासां तथाभूताः काश्चन बभूवुरिति ॥ १४ ॥ तस्य श्रीकृष्णस्यानुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ता इमं लोकं देहमपि न जानन्ति स मुक्ता इवेति ॥ १५ ॥ अपराः स्त्रियः शौरेर्गिरः स्मरन्त्यः संसुसुहुः । कथंभूताः । अनुरागेण यत्स्मितं तेनेरिताः । हृदि स्पृशन्तीति हृदिस्पृशो मनोज्ञाः । चित्राणि पदानि यासु ताः ॥ १६ ॥ १७ ॥ विरहेण कातरा विह्वलाः । अच्युते आशयश्चित्तं यासां ताः ॥ १८ ॥ कृष्णसङ्गतिं विधाय विघट्टयतीति विधातारं प्रत्येकमाक्रोशन्त्य आहुः—अहो इति । मैत्र्या हिताचरणेन । प्रणयेन स्नेहेन च अकृतार्थानप्राप्तभोगानपि तान्वियुनङ्क्षि वियोजयसि । तस्मान्न तव दया । बालिशोऽपि त्वमित्याहुः—अपार्थकमिति ॥ १९ ॥

गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ॥ रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ १३ ॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन॥१४॥अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ १५ ॥ स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ १६ ॥ गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १७ ॥ चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः ॥ समेताः सङ्घशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥ १८ ॥

॥ गोप्य ऊचुः ॥ अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः ॥ तांश्चाकृतार्थान्वियुनङ्क्ष्यपार्थकं[1] विक्रीडितं तेऽर्भकचेष्टितं यथा ॥ १९ ॥ यस्त्वं प्रदर्श्यासितकुन्तलावृतं मुकुन्दवक्त्रं सुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुन्दरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥ २० ॥ क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत्[2] ॥ येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः[3] ॥ २१ ॥ ॥ ॥

विगर्हितं तवेदं कर्मेत्याहुः—यस्त्वमिति । शोकमपनुदतीति शोकापनोदः, स चासौ स्मितलेशश्च गूढहासस्तेन सुन्दरं मुकुन्दस्य वक्त्रं सकृत् प्रदर्श्य पुनस्तस्य पारोक्ष्यमदृश्यतां करोषि, अतस्तव कृतं कर्माऽसाधु निन्द्यमित्यर्थः ॥ २० ॥ किंच दत्तापहारित्वेनातिक्रूरस्त्वमित्याहुः—क्रूरस्त्वमिति । नन्वक्रूरो हरति, नाहमिति चेदत आहुः—अक्रूरसमाख्ययेति । नह्येवं कर्तुमन्यः प्रभवति, अतो नामान्तरेण स ध्रुवं त्वमेवागतोऽसि । कृष्णं हरामि, न युष्मच्चक्षुरिति चेत्, न । येन त्वद्दत्तेन चक्षुषा मधुद्विष एकदेशे नेत्रवक्त्रादौ त्वदीयं समग्रं सृष्टिनैपुणमद्राक्ष्म दृष्टवत्यो वयं, तच्चक्षुः । अयं भावः—मम सर्वं रहस्यमाभिर्ज्ञातमित्यमर्षेणैव कृष्णं वियोजयन्नस्मानन्धीकरोषीति ॥ २१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ अपार्थकं अपगतौ अर्थौ हेतुप्रयोजने यस्मात् । २ अज्ञवत् दत्तापहारदोषमजानन्यथा । ३ मधुद्विषः मधूनि मधुराणि द्वेष्टि अन्तर्भूतण्यर्थः । स्वदृष्टजनैः प्रीत्यविषयाणि कारयतीत्यर्थ इति तोष० । ४ पारोक्ष्यं स्वार्थे ष्यञ् । परोक्षमदृश्यं करोषि ।

विधातारं विहाय परस्परमूचुः—न नन्दसूनुरिति। बतेति खेदे। क्षणभङ्गमस्थिरं सौहृदं यस्य सः। गृहादीन् विहायाद्धा साक्षात्तस्यैव दास्यमुपगताः स्वकृतातुरा-स्तत्कृतेनैव स्मितादिना परवशा अपि नोऽस्मान्न समीक्षते। नवं नवं प्रियं यस्य सः। अत एनं निवारयाम इति भावः ॥ २२ ॥ सेर्ष्यमूचुः—सुखं प्रभातेति। व्रजस्पतेः श्रीकृष्णस्य मुखं पास्यन्त्यादरेण द्रक्ष्यन्ति। कथंभूतम्—अपाङ्गेन नेत्रप्रान्तेनोत्कलितमुज्जृम्भितं स्मितमेवासवो रसो यस्मिंस्तत्। यद्वा अपाङ्गोत्कलितस्मितेनासवरूपं यन्मुखम्। नतश्च पानं मुख्यमेव संभावयन्ति ॥ २३ ॥ ननु द्वित्राणि दिनानि तथा भवतु नाम, तथाप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तित आगमिष्यतीत्याशङ्क्याहुः—हे अवलाः, तासां मधुवन्मञ्जुभिर्भाषितैर्वशीकृतचित्तस्तथा तासां सलज्जस्मितैर्विभ्रमैर्भ्रमन् परवान्पित्रादिपरतन्त्रोऽपि। यद्वा व्रजे परेऽन्ये बन्धवः सन्ति यस्य। तथा मनस्वी धीरोऽपि ग्राम्या अविदग्धा नः कथं प्रतियास्यते प्रत्येष्यति, न कथंचिदित्यर्थः ॥ २४ ॥ किंच अस्मदुत्सवभाजोऽन्य एवाद्य भविष्यन्तीत्याहुः—अद्येति। तत्र पुरे दाशार्हादीनां दृशो दृष्टेर्महानुत्सवो भविष्यते भविष्यति। ये देवकीसुतं द्रक्ष्यन्ति। तथा ये चाध्वनि

न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षसे नः स्वकृतातुरा बत ॥ विहाय गेहान्स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगता नवप्रियः॥२२॥सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम्॥ याः संप्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम्॥ २३ ॥ तासां मुकुन्दो मधुमञ्जुभाषितैर्गृहीतचित्तः परवान्मनस्व्यपि॥ कथं पुनर्नः प्रतियास्यतेऽवला ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन्॥२४॥अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम्॥ महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम्॥२५॥ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव दारुणः॥ योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः॥ २६ ॥ अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः॥ गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥ २७ ॥ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबान्धवाः॥ मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम् ॥२८॥

गच्छन्तं द्रक्ष्यन्ति तेषामपि दृशो भविष्यतीति। यद्वा दृश इति द्वितीया। तेषां दृशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यति। प्राप्त्यर्थस्य भवतेरात्मनेपदित्वात् ॥ २५ ॥ अक्रूरं शपन्त्य आहुः—मैतद्विधस्येति। एषा विधा विधानं कर्म यस्य। अत एव निष्कृपस्याक्रूर इति शोभनं नाम मा भूत्। तत्र हेतुः—अतीव दारुण इत्यादि। प्रियात् प्राणादपि प्रियतरं कृष्णमध्वनः पारमस्मद्दृग्गोचरत्वादतिदूरं देशं नेष्यति ॥ २६ ॥ अहो धिगस्मज्जीवितमित्याहुः—अनार्द्रधीरिति। अनार्द्रा कठिना धीर्यस्य स तावदेष कृष्णो रथमधिरूढः अस्याविनयमालक्ष्य स्थविरैश्चोपेक्षितम्। ते न निवारितवन्त इत्यर्थः। किंच—दैवं चेति। अयं भावः—यदि दैवमस्माकमनुकूलं भवेत्तर्हि विघ्नैः कश्चिदेषां मध्ये प्रतिहन्येत। अकस्माद्वज्रपातो वा भवेत्। अन्यद्वा किंचिदनिष्टं स्यात्र तु तत्किंचिदस्तीति ॥ २७ ॥ परस्परं संमन्त्र्य साहसमधिरुह्याहुः—निवारयाम इति। अकरिष्यन् करिष्यन्ति। निमिषार्धदुस्त्यजान् मुकुन्दसङ्गाद्विध्वंसितानि वियोजितान्यत एव दीनानि चेतांसि

१ माध्वरीणा रजनीयं सुखप्रभाताभूत्। २ व्रजस्पतेरित्यत्र सुडार्षः।

यासाम् । एवंभूतानामस्माकं न मृत्योरपि भयमित्यर्थः ॥ २८ ॥ इतोऽपि कारणादवश्यं साहसमेवावलम्बनीयमित्याहुः—हे गोप्यः, यस्य ललितं स्मितं च, वल्गु मन्त्रश्च, लीलावलोकश्च, परिरम्भणं चानुरागेणैतानि यस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीतास्तममुं कृष्णं विना दुरन्तं तमो विरहदुःखं कथं नु अतितरेम । न कथंचिदित्यर्थः ॥ २९ ॥ किंच आस्तां तावत्तमोऽतितरणं जीवनमेव कथं स्यादित्याहुः—य इति । अह्नःक्षये दिनावसाने खुररजोभिश्छुरिता धूसरा अलकाः स्रजश्च यस्य स व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नश्चित्तं क्षिणोति हरति । अमुं कृष्णं विना कथं

यस्यानुरागललितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम् ॥ नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ २९ ॥ योऽह्नःक्षये व्रजमनन्तसखः परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ॥ वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥३०॥ ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ॥ विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति ॥ ३१ ॥ स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथा ॥ अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ३२ ॥ गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः ॥ आदायोपायनं भूरि कुम्भान् गोरससंभृतान् ॥ ३३ ॥ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ॥ प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ३४ ॥ तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ॥ सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥ ३५ ॥ यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ॥ अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ॥३६॥ ता निराशा निववृतुर्गोविन्दविनिवर्तने ॥ विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥३७॥ भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ॥ रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३८ ॥ ॥ ॥

भवेम जीवेम ॥ ३० ॥ कृष्णे विपक्तानि मानसानि यासाम् । सुस्वरमुच्चैः ॥ ३१ ॥ 'क्रूरमक्रूरतः श्रुत्वा कंसं कंसनिषूदनः ॥ गोपीमनोरथारामः सरामः स्वपुरं ययौ' ॥ १ ॥ स्त्रीणामिति । ता अनादृत्य कृतमैत्रादिको मैत्रं मित्रदैवतं सन्ध्योपासनं तदादिकर्म कृतं येन सः ॥ ३२ ॥ अन्वसज्जन्तान्वगच्छन् ॥ ३३ ॥ अनुरञ्जिताः परावृत्य निरीक्षणादिभिः किंचिदानन्दिताः । प्रत्यादेशं प्रत्याख्यानम् ॥ ३४ ॥ तप्यतीः संतप्यमानाः । आयास्ये शीघ्रमागमिष्यामीति दूतवाक्यैः ॥ ३५ ॥ कृष्णमनुप्रस्थापिता आत्मानश्चित्तानि याभिस्ताः लेख्यमयपुत्रिका इव निश्चलाः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ॥

१ अनन्तस्य अनन्तबलतया सङ्कर्षणपर्यायसया वा तन्नाम्ना प्रसिद्धस्य रामस्य सखा तत्सहित इत्यर्थः । २ मां लक्ष्मीमपि धुनोति वियोगे कम्पयतीति श्लेषेण वियोगे मरणसम्भवात् । ३ रुदन्तीना स्त्रीणामित्यनादरे षष्ठी । ४ प्रत्यादेशं दूतद्वारावधिविज्ञप्तेः प्रतिवचनमिति तोप० । ५ अदन्तत्वमार्षम् । ६ दौत्यकैरिति ब्राह्मणादित्वात्कर्मणि ष्यञि स्वार्थे कप्रत्यये साधु । ७ उपसमीपे लक्षिता लोकैर्दृष्टाः आसन्निति शेषः । 'उपतस्थिरे' इति पाठे तत्र स्थिता इत्यर्थः । ८ विगतशोकाः । ९ अहनी इति द्विवचनमार्षम् । अहानीत्यर्थः । केचित्तु—त्रासरद्वयं निन्युरिति व्याचक्षते । तोषण्यां तु—अहनी इति स्वस्रोरितिवत् । यद्वाशयनराहित्यादिदिनधर्मयोगाद्रात्रेरपि अहस्त्वविवक्षयेति व्याख्या ।

वृक्षाणां पण्डं समूहमुपव्रज्य ॥ ३९ ॥ शत्रुभ्यः शङ्कितः सन् रथोपरि निवेश्य ॥ ४० ॥ ब्रह्म वेदं जपन् । 'केमौ वालौ क तौ मल्लाविति शङ्कितचेतसे ॥ अक्रूराय जले रूपमत्याश्चर्यं व्यदर्शयत्' ॥ ४१ ॥ ४२ ॥ ४३ ॥ सिद्धादिभिः स्तूयमानम् ॥ ४४ ॥ सहस्रं शिरांसि यस्य तम् । सहस्रफणेषु मौलयो यस्य सन्तीति तथा तम् । नीले अम्बरे यस्य तम् । विसवत्कमलनालवत् श्वेतम् । शृङ्गैः शिखरैः श्वेतं कैलासमिव स्थितम् ॥ ४५ ॥ तस्योत्सङ्गे कुण्डलीकृतदेहार्धे । विलोक्येत्येकादशेन श्लोकेनान्वयः ॥४६॥ शोभने भ्रुवौ यस्य, उन्नता नासिका यस्य तं च तं च । शोभनौ कपोलौ यस्य, अरुणावधरौ यस्य तं च तं च ॥४७॥

तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ॥ वृक्षषण्डमुपव्रज्य सरामो रथमाविशत् ॥३९॥ अक्रूरस्तावुपामन्त्र्य[2] निवेश्य च रथोपरि ॥ कालिन्द्या ह्रदमागत्य[3] स्नानं विधिवदाचरत् ॥४०॥ निमज्ज्य तस्मिन् सलिले जपन्ब्रह्म सनातनम् ॥ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥४१॥ तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ॥ तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥४२॥ तत्रापि च यथापूर्वमासीनौ पुनरेव सः ॥ न्यमज्जद्दर्शनं तन्मे मृषा किं सलिले तयोः ॥४३॥ भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् ॥ सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः ॥४४॥ सहस्रशिरसं देवं सहस्रफणमौलिनम्[1] ॥ नीलाम्बरं बिसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥ ४५ ॥ तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् ॥ पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४६ ॥ चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ॥ सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥ प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ॥ कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ४८ ॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ॥ चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥ ४९ ॥ तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् ॥ नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥ ५० ॥ सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ५१ ॥ भ्राजमानं पद्मकरं[4] शङ्खचक्रगदाधरम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ५२ ॥

तुङ्गावंसौ यस्य, उरःस्थले श्रीर्यस्य तं च तं च । वलिमत्पल्लवोदरं वलयस्तिर्यङ्निम्नरेखा यस्य सन्ति तद्वलिमत् तच्च तत् पल्लववदश्वत्थदलसदृशमुदरं यस्य तम् ॥४८॥ कटितटं च श्रोणिश्च करभसदृशमूरुद्वयं च, बृहच्च तत्कटितटश्रोणिकरभोरुद्वयं च तेनान्वितम् । यद्वा बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्वयेन चान्वितम् ॥ ४९ ॥ तुङ्गावीषदुन्नतौ गुल्फावरुणनखव्राताश्च तेषां दीधितिभिः । तथा नवाः कोमला अङ्गुल्योऽङ्गुष्ठौ च तान्येव दलानि तैश्च विलसच्छोभमानं पादपङ्कजं यस्य तम् ॥ ५० ॥ सुमहार्हा मणिव्राता येषु तैः किरीटादिभिः ॥ ५१ ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥७८॥

१ मौलयः किरीटानि । २ उपामन्त्र्यानुज्ञाप्य । ३ 'तीरमागत्य' इति पाठः । ४ पद्मस्य पृथगुक्तिरनायुधत्वात् ।

पृथक् पृथक् भावोऽभिप्रायो येषां तैः । तत्र पार्षदैः स्वामीति स्तूयमानम् । सनकादिभिर्ब्रह्मेति । ब्रह्माद्यैर्महेश्वर इति । मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापतिरिति । वसुरुपरिचरः । प्रह्लादनारदवसवः प्रमुखा मुख्या येषां तैः । परं दैवतमिति च । श्रेष्ठैर्वचोभिः । पृथग्भावैर्वचोभिरिति वा ॥५३॥५४॥ विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू । माया तयोः कारणम् । शक्तिर्ह्लादिनी संविज्ज्ञानम् । आभिरन्याभिश्च निषेवितम् ॥५५॥ विलोक्य सुभृशं प्रीतोऽस्मत्कृष्णोऽसावेवंभूतः परमेश्वर इति ज्ञात्वेति॥५६॥५७॥इति श्रीमद्भा०म०पु०द०पू०भा०दी०टी०एकोनचत्वारिंशोऽध्यायः॥३९॥ ॥ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् ॥ प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥१॥ श्रीकृष्णं प्रणमति—नतोऽस्मीति॥हे कृष्ण, त्वा त्वां नतोऽस्मि । त्वमस्मत्पितृव्यः कुतो मां बालं नतोऽसि तत्राह—आद्यं पुरुषमव्ययं च । अनादिनिधनमित्यर्थः । कुत एतत् । अखिलहेतूनां हेतुम् । स तु नारायणो नाहमिति चेत्तत्राह—नारायणं त्वाम् । किं नारायण इति मां स्तौषि कोऽत्र स्तुतिः सत्य-

सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ५३ ॥ प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥५४॥ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्यया शक्त्या मायया च निषेवितम्॥५५॥ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ॥ हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥ गिरा गद्गदयाऽस्तौषीत् सत्त्वमालम्ब्य सात्वतः॥ प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटः शनैः ॥५७॥ इति श्रीमद्भा० म०पु० द० पूर्वार्धेऽक्रूरप्रतियान एकोनचत्वारिंशोऽध्यायः ॥३९॥ ॥ अक्रूर उवाच ॥ नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम्॥ यन्नाभिजातादरविन्दकोशाद्ब्रह्माऽऽविरासीद्यत एष लोकः ॥ १ ॥ भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि ॥ सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ २॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः॥ अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम् ॥ ३ ॥

मेवेत्याह—यन्नाभिजातादिति । यतो ब्रह्मणः ॥१॥ अखिलहेतुहेतुत्वं प्रपञ्चयति—भूरिति । खस्यादिरहंकारः,अजा माया तस्या आदिः पुरुषः । एते ये जगतो हेतवस्ते सर्वे तवाङ्गभूता अङ्गाच्छ्रीमूर्तेर्भूताः उपसर्जनभूता वा॥२॥नन्वतिस्तुतिः कथं क्रियते, अहमेवान्यत उत्पन्नस्तत्परतन्त्रश्चेत्याशङ्क्य, तवैषा माया, त्वत्पारमार्थ्यं तु न कोऽपि वेदेत्याह—नैत इति । एते अज आदिर्येषां ते आत्मनस्ते स्वरूपं न विदुः। अनात्मतया जडत्वेन कारणेन । जडत्वे हेतुः—गृहीताः प्रत्यक्षादिभिर्दृष्टाः । नह्यजडो दृग्गोचर इति भावः । ननु जडा मां मा जानन्तु जीवस्तु ज्ञास्यतीत्यत आह—अज इति । सोऽजो ब्रह्माऽप्यजाया गुणैरनुबद्ध आवृतो गुणातीतं ते तव स्वरूपं न वेद, अन्यः कुतो ज्ञास्यतीति । यद्वा प्रकृत्यादय आत्मनः स्वरूपं तव स्वरूपं च न विदुः, जडत्वादेव । जीवस्तु तानात्मानं च वेत्ति न पुनस्त्वत्स्वरूपमिति । यथोक्तं हंसगुह्ये—'देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ॥ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥' इति ॥ ३ ॥

१ सुनन्दनन्देत्यादिश्लोकद्वयमेकं वाक्यम् । २ 'शक्तिर्ह्लादिनी सविज्ज्ञानम्' इति श्रीधरी न सम्यगवबुध्यते । तोषण्यां तु—शक्तिर्ह्लादिनी संवित् या मायातोऽन्तरङ्गा चिच्छक्तिरिति व्यवह्रियते, इयमेव महालक्ष्मीरिष्यते इति व्याख्या । ३ अखिलहेतूनां प्रकृत्यादीनाम् । ४ अमलात्मभिरिति सर्वपरिवारविशेषणं सर्वाभिप्रायाणां युक्तत्वव्यञ्जनाय । ५ सत्त्वं धैर्यम् । ६ अजोऽपि न वेदेति । अत एव वत्सादिहृतवान् ।

नतु यदि केऽपि न जानन्ति कथं तर्हि संसारनिवृत्तिर्जीवानामित्याशङ्क्य साक्षादगोचरत्वेऽपि येन केनापि मार्गेण भजतां त्वं गम्योऽसीत्याह—त्वां योगिन इति । हैरण्यगर्भादयोऽध्यात्माधिभूताधिदैवसाक्षिणं महापुरुषं तदन्तर्यामिस्वरूपमीश्वरं नियन्तारं च यजन्ति ॥४॥ तदेवं सांख्ययोगावेकीकृत्योक्तौ, त्रयीमार्गं कर्मज्ञानभेदेन दर्शयति—त्रय्या चेति श्लोकद्वयेन । वैतानिकाः कर्मयोगिनस्त्वां वै त्वामेव यजन्ते । ननु ते इन्द्रवरुणवाय्वादीन् यजन्ते, ननु मामित्यत आह—नाना वज्रहस्तादीनि रूपाणि येषां ते येऽमरास्तेषामाख्यया नाम्ना त्वामेव यजन्त इति । अयं भावः—ऐन्द्रवारुणादिसूक्तैरिन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते न च सर्वेश्वरा बहवः संभवन्ति, अतो नामभेदेन त्वामेव यजन्त इति । तथा च श्रुतिः—'स प्रथमः स प्रकृतिर्विश्वकर्मा स प्रथमो मित्रावरुणोऽग्निः स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय हविराजुहोति' इति ॥ ५ ॥ ज्ञानयज्ञेन समाधिना ॥ ६ ॥ सांख्ययोगत्रयीमार्गा उक्ताः, वैष्णवशैवमार्गावाह द्वयेन—अन्ये चेति । संस्कृतात्मानो वैष्णवशैवदीक्षया दीक्षिताः सन्तः ते त्वयाभिहितेन पञ्चरात्रादिविधिना त्वन्मयास्त्वन्मयत्वेनात्मानं चिन्तयन्तस्त्वदेकप्रधाना इति वा । वासुदेव-

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ॥ साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ४ ॥ त्रय्या[1] च विद्यया केचित्त्वां वै वैतानिका द्विजाः ॥ यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥५॥ एके त्वाऽखिलकर्माणि संन्यस्योपशमं गताः ॥ ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञान[2]विग्रहम् ॥ ६ ॥ अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ॥ यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥ ७ ॥ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥ बह्वाचार्यविभेदेन भगवन्समुपासते[3] ॥ ८ ॥ सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ॥ येऽप्यन्यदेवताभक्ता[4] यद्यप्यन्यधियः प्रभो ॥ ९ ॥ यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ॥ विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः[5] ॥ १० ॥ सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ॥ तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥ ११ ॥ ॥

संकर्षणप्रद्युम्नानिरुद्धभेदेन बहुमूर्तिं नारायणरूपेणैकमूर्तिकं च त्वामेव यजन्ति ॥ ७ ॥ बह्वाचार्यविभेदेनेति नानाभेदशैवपाशुपतादिमार्गेण ॥ ८ ॥ येऽपि क्षुद्रदेवताभक्तास्तेऽपि त्वामेव यजन्तीत्याह—सर्व एवेति । हे सर्वदेवमय । नन्वेते परस्परदेवताऽधिक्षेपकलहव्याकुलचित्ताः कथमेकमेव यजन्तीत्युच्यते तत्राह—यद्यप्यन्यधिय इति । बुद्धिमात्रभेदो न वस्तुभेद इत्यर्थः ॥ ९ ॥ तस्मात्सर्वे मार्गास्त्वय्येव पर्यवस्यन्तीति सदृष्टान्तमाह—यथेति । अद्रेः सकाशात्सर्वतः प्रभवन्ति या नद्यस्ताः पुनः पर्जन्येनापूरिता बहुस्रोतसः सत्यः सर्वतः सिन्धुमेव विशन्ति यथा, तद्वदेता गतयो मार्गा अन्ततस्त्वामेव विशन्तीति ॥ १० ॥ अत्र हेतुमाह—सत्त्वमिति । भवतः शक्तिर्या प्रकृतिस्तस्याः सत्त्वादयो गुणा अतः प्राकृताः प्रकृतिकार्योपाधयो ब्रह्मपर्यन्ताः स्थावरादयो जीवाः सोपाधिद्वारा तेषु गुणेषु प्रोताः प्रविष्टास्ते च प्रकृतौ सा च त्वयीति । अतः क्रमेणोपाधिलयात्सर्वेऽपि त्वामेव विशन्तीति । यद्वा भवतः प्रकृतेर्गुणेषु प्रोता ब्रह्मादयो भवद्व्यतिरिक्ता न सन्ति, अतस्त्वमेव सर्वदेवमय इति ॥ ११ ॥ ॥ ॥ ॥ ॥

१ त्रय्या विद्यया कर्मकाण्डमय्या । २ ज्ञानविग्रहं चिन्मात्राकारं ब्रह्मरूपं, भिन्नमूर्तिं भगवद्रूपं वा । ३ 'भगवन्तमुपासते' इति पाठः । ४ 'ये नानादेवता' इति पाठः । ५ अन्ततः विचारावसाने ।

ननु भवतः प्रकृतेरिति वदन्ममापि प्रकृतिसंबन्धं ब्रवीषि । ततश्च तेषां मम च को विशेषः स्यादित्याशङ्क्य विशेषमाह—तुभ्यमिति । अविभक्तदृष्टयेऽलिप्तबुद्धये । कुतः । सर्वात्मने स्वव्यतिरिक्ताभावादविपक्तदृष्टित्वमित्यर्थः । किंच सर्वधियां साक्षिणे । सर्वबुद्धिसाक्षित्वान्न क्वापि बुद्धिलेप इत्यर्थः । इतरे तु संसरन्तीत्याह—गुणप्रवाह इति । देवनृतिर्यञ्च आत्मानो येषां तेषु देवादिशरीराभिमानिष्वित्यर्थः । त्वदविद्यया कृतोऽयं गुणप्रवाहः प्रवर्तते, अतो महान्विशेष इत्यर्थः ॥१२॥ सर्वात्मन इत्यनेनोक्तं सगुणं स्तौति—अग्निर्मुखमिति द्वाभ्याम् । अग्न्यादीननूद्येश्वरावयवता विधीयते । योऽयमग्निः स तु तव मुखमित्यादिवचनव्यक्त्या । ईक्षणं चक्षुः । श्रुतिः श्रवणेन्द्रियम् । कं मूर्धा । प्राणश्च बलं च तत् ॥ १३ ॥ अद्रयः परस्य तेऽस्थिनखानि ॥१४॥ न केवलमेतावत्, किंतु सर्वोऽप्ययं प्रपञ्चस्त्वदवयवभूत एवेति वदन्नेवं सत्यपि प्रपञ्चस्य षट् जन्मादयो विकारास्त्वयि न प्रसज्जन्ते, तस्य त्वयि कल्पितत्वादित्याह—त्वयीति । अव्ययात्मनि पुरुषे

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे ॥ गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥ १२ ॥ अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ॥ द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥ १३ ॥ रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ॥ निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥ त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसंकुलाः ॥ यथा जले संजिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १५ ॥ [1]यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ॥ तैर[2]मृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १६ ॥ नमः कारणमत्स्याय प्रलयाब्धिचराय च ॥ हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १७ ॥ अकूपाराय बृहते नमो मन्दरधारिणे ॥ क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥ १८ ॥ नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ॥ वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ १९ ॥ नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे ॥ नमस्ते रघुवर्याय रावणान्तकराय च ॥ २० ॥ नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतांपतये नमः ॥ २१ ॥ ॥ ॥

पूर्णे लोकादयः संजिहते प्रचरन्ति हे अव्ययात्मन्निति वा । कथंभूते त्वयि । मनोमये मनःप्रधाने मनोवृत्तिव्यङ्ग्ये—'दृश्यते त्वग्र्यया बुद्ध्या', 'मनसैवानुद्रष्टव्यः' इत्यादिश्रुतेः । जले यथा जलौकसः सूक्ष्मप्राण्यण्डराशयो यथा चोदुम्बरान्तःकेसरेषु मशकाः परस्परवार्तानभिज्ञाः, एवमनन्तानि ब्रह्माण्डानि त्वयि संचरन्तीत्यर्थः ॥ १५ ॥ तस्मादेवंभूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथामृतमेव सन्तः सेवन्त इत्याह—यानि यानीति । आमृष्टा परिमार्जिता शुक् येषां ते ॥ १६ ॥ अतः स्वयमप्यवतारान्नमस्यति—नम इति । हयशीर्ष्णे हयग्रीवाय । मधुकैटभयोर्मृत्यवे हन्त्रे ॥ १७ ॥ अकूपाराय कूर्माय । क्षित्युद्धारो विहारो यस्य तस्मै ॥ १८ ॥ १९ ॥ भृगूणां पतये परशुरामाय ॥ २० ॥ चतुर्व्यूहरूपेण प्रणमति—नमस्ते वासुदेवायेति ॥ २१ ॥ ॥ ॥

१ यानि यानीति सर्वरूपाणां शोकमार्जकत्वं, लोकाः सर्वे जना इत्यधिकानपेक्षिता, मुदेति तद्गानस्य स्वतःपुरुषार्थत्वं चाभिप्रेतम् । २ तैरनुचिन्तितैरित्यर्थः ।

नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ॥ [1]म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २२ ॥ भगवन् [2]जीवलोकोऽयं मोहितस्तव मायया ॥ अहंममेत्यसद्ग्राहो [3]भ्राम्यते कर्मवर्त्मसु ॥ २३ ॥ अहं चात्मात्मजागारदारार्थस्वजनादिषु ॥ भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ॥ २४ ॥ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ॥ द्वन्द्वारामस्तमोविष्टो न जाने [4]त्वात्मनः प्रियम् ॥ २५ ॥ यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ॥ अभ्येति मृगतृष्णां वै तद्वत्त्वाऽहं पराङ्मुखः ॥ २६ ॥ नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ॥ रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥ २७ ॥ सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये ॥ पुंसो भवेद्यर्हि संसरणापवर्गस्त्वय्यब्जनाभ [5]सदुपासनया मतिः स्यात् ॥ २८ ॥ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ॥ पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ २९ ॥

॥२२॥ एवं स्तुत्वा बन्धमोक्षं प्रार्थयितुमाह—भगवन्निति । असति देहादौ ग्राह आग्रहो यस्य सः, असन् ग्राहो यस्येति वा ॥ २३ ॥ न केवलमयं लोकोऽहमपि तथैवेत्याह—अहं चेति ॥ २४ ॥ मूढत्वमेव प्रकटयति—विपर्ययमतिरिति । अनित्ये कर्मफले नित्यमिति, अनात्मनि देहे आत्मेति, दुःखरूपे गृहादौ सुखमिति विपरीतमतिरित्यर्थः । द्वन्द्वेषु सुखदुःखादिष्वारमति क्रीडतीति तथा सः । ननु दुःखे कुतो रतिस्तत्राह—तमोविष्टस्तमसा व्याप्तोऽत आत्मनः प्रियं प्रेमास्पदं त्वा त्वां न जान इत्यर्थः ॥ २५ ॥ तदेव सदृष्टान्तमाह—यथेति । तस्माज्जलादुद्भवन्तीति तदुद्भवानि तृणादीनि तैः । तथा मायाच्छन्नं त्वा त्वामहं हित्वा पराङ्मुखो देहाभिमुखो वर्त इति ॥ २६ ॥ नन्वेवं जानतः कुतो विषयाभिमुखता तत्राह—नोत्सह इति । कृपणा विषयवासनायुक्ता धीर्यस्य सः । अत एव कामकर्मभ्यां हतं क्षुभितमिन्द्रियैश्च बलिभिर्विषयसंयुक्तैरितस्तत आकृष्यमाणं मनो रोद्धुं नियन्तुं न शक्नोमीति ॥ २७ ॥ तदेवमस्वतन्त्रो यः सोऽहं तवाङ्घ्रिमुपगतः शरणं प्राप्तः । नन्विन्द्रियपरतन्त्रस्यैतदपि कुतस्तत्राह—तच्चापीति । हे ईश अन्तर्यामिन्, त्वदङ्घ्र्युपगमनं चासतां दुरापम्, अतो भवतोऽनुग्रह एवेत्यहं मन्ये । अनुग्रहे सतीति वा । ननु सतां सेवयेदं भवतीति किं मदनुग्रहेणेत्यत आह—पुंस इति । जीवस्य संसारस्यापवर्गः समाप्तिर्यदा त्वत्कृपया भवेत् संभावनास्पदं भवति, हे अब्जनाभ, तदा सदुपासना संपद्यते, तयैव त्वयि मतिर्भवेत् त्वत्कृपां विना न सत्सेवा, नतरां त्वन्मतिः, नतमां मुक्तिरित्यर्थः ॥२८॥ [6]पादयोः पतन्प्रार्थयते—नम इति द्वयेन । विज्ञानमेव मात्रा मूर्तिर्यस्य तस्मै । अत एव सर्वप्रत्ययहेतवे समस्तज्ञानकारणाय । किंच पुरुषस्य ये ईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयस्तेषां प्रधानाय नियन्त्रे । कुतः । ब्रह्मणे परिपूर्णाय । किंच अनन्तशक्तये अनन्ताः शक्तयो यस्य । यद्वा अनन्ता मायाख्या शक्तिर्यस्य तस्मै । अथवा प्रधानं प्रकृतिः पुरुषस्तत्प्रवर्तकः, ईशः काल एतत्त्रितयात्मने ब्रह्मणे । वक्ष्यति च भगवान्—'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥' इति ॥ २९ ॥ ॥ ॥ ॥

१ म्लेच्छा एव प्रायेण राज्यकारित्वसादृश्येन क्षत्रियास्तद्धन्त्रे । कल्की दम्भः म्लेच्छवेषः सोऽस्मिन्नस्ति तद्रूपाय । २ 'सर्वलोकोऽयम्' इत्यपि पाठः । ३ भ्राम्यते मुहुर्मुहुरावृत्त्या प्रवर्तते । ४ आत्मन एव साक्षात्प्रियं न तु पुत्रादिवद्देहव्यवधानेन । ५ सती श्रेष्ठा त्वदुपासना तया, यद्वा सतामुपासनया वा । ६ अर्थक्रमेणेयं योजना बोध्या ।

सर्वप्रत्ययहेतुत्वमभिव्यञ्जयंस्तौति—नमस्त इति । वासुदेवाय चित्ताधिष्ठात्रे । सर्वभूतक्षयाय । क्षय आश्रयः । अहंकारश्च प्राणिनामाश्रयः । ततश्चाहंकाराधिष्ठात्रे संकर्षणायेत्यर्थः । हृषीकेशेति बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्य ग्रहणम्[1]। शरणागतं मां पाहीति प्रार्थना ॥ ३० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां चत्वारिंशोऽध्यायः ॥४०॥ ॥छ॥ ॥ एकचत्वारिंशकेऽहन् रजकं प्राविशन्पुरीम् ॥ ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च ॥ १ ॥ सशङ्कमक्रूरमनः प्रबोध्य स्वधाम संदर्शनसत्कृपातः ॥ स्वराजधानीं मथुरामपश्यदलंकृतानन्तमहोत्सवाढ्याम् ॥ २ ॥ ॥ १ ॥ २ ॥ ३ ॥ भूमौ वियति जले वा यावन्त्यद्भुतानि तानि त्वय्येव सन्ति तं च त्वां पश्यतो मे किमद्भुतमदृष्टम् । अपि तु सर्वं दृष्टमित्यर्थः ॥ ४ ॥

नमस्ते वासुदेवाय सर्वभूतक्षयाय च ॥ हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ३० ॥ ॥ इति श्रीमद्भा० म० पु० द० पूर्वार्धेऽक्रूरस्तुतिर्नाम चत्वारिंशत्तमोऽध्यायः ॥४०॥ ॥ श्रीशुक उवाच ॥ ॥ स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः ॥ भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः ॥ १ ॥ सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्य सत्वरः ॥ कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ॥ २ ॥ तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतम् ॥ भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥३॥ ॥ अक्रूर उवाच ॥ अद्भुतानीह यावन्ति भूमौ वियति वा जले ॥ त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ४ ॥ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ॥ तं त्वाऽनुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ॥ ५ ॥ इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः ॥ मथुरामनयद्रामं कृष्णं चैव दिनात्यये[2] ॥ ६ ॥ मार्गे ग्रामजना राजंस्तत्रतत्रोपसङ्गताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥ ७ ॥ तावद्व्रजौकसस्तत्र[3] नन्दगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥ तान् समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥ भवान्प्रविशतामग्रे सहयानः पुरीं गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥ ॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ११ ॥

ननु मत्प्रासेः पूर्वमेव त्वं विस्मितमुखो लक्षितोऽसि, अतो भूमौ वियति जले वा किमप्यद्भुतं दृष्टमेवेति चेदत आह—यत्राद्भुतानीति । यत्र त्वयि सर्वाण्यद्भुतानि सन्ति तं त्वामिह पश्यतो मेऽन्यत्र भूम्यादौ किमद्भुतं दृष्टं, त्वां विना न तत्र किंचिदद्भुतमित्यर्थः । ब्रह्मन् हे परमेश्वरेत्यर्थः । ब्रह्मेति वा पाठः ॥ ५ ॥ गान्दिनीसुतोऽक्रूरः ॥ ६ ॥ दृष्टिं नाददुः । पश्यन्त एव स्थिता इत्यर्थः ॥ ७ ॥ रामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥ प्रश्रितं विनीतम् ॥ ९ ॥ स्वगृहं च प्रविशताम् । अवमुच्योत्तार्य विश्राम्येत्यर्थः ॥ १० ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

१ 'इवाद्भुतम्' इति पाठ । २ दिनात्यये अवतरति दिवसे अपराह्णात्पूर्वमित्यर्थः । अत एवाग्रे अथापराह्ण इत्यनेनापराह्णे मथुराप्रवेश उक्तः । तोषण्यां तु—अपराह्णः सायाह्नापरपर्यायस्त्रेधाविभक्तदिनान्त्यभाग इति व्याख्यातम् । ३ तत्र पुरोपवने ।

साग्रजः सहं गोपालैरित्यर्थः ॥ १२ ॥ यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहाङ्गणस्थितेन ॥१३॥ श्लोक्यः पुण्यकीर्त्यर्हः । एकान्तभक्तानां या गतिस्तां च लेभे ॥१४॥ अपुनन्पवित्रितवत्यः । याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥१५॥ प्रार्थयमानो नमस्करोति—देवदेवेति । अतः परमन्यच्छ्रेयो नास्तीति मत्वा बहुधा संबोधयति ॥१६॥ आदौ तावद्यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये दास्यामि ॥१७॥ रामकृष्णावानीताविति स्वकृतं कर्मावेद्य समर्प्येति ॥ १८ ॥ गोपैः परिवारितः प्राविशत् ॥१९॥ श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः—ददर्श तामिति । स्फाटिकानि तुङ्गानि गोपुराणि पुरद्वाराणि गृहद्वाराणि च यस्यां ताम् । बृहन्ति हेममयानि कपाटानि तोरणानि च यस्यां ताम् । ताम्रं च आरः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्वशालादयो यस्यां

आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥१२॥ पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ॥ यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥ १३ ॥ अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥ १४ ॥ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान् शुचयोऽपुनन् ॥ शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥१५॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ १६ ॥ ॥श्रीभगवानुवाच ॥ आयास्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥१७॥ ॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥ अथापराह्णे भगवान् कृष्णः संकर्षणान्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥ ददर्श तां स्फाटिकतुङ्ग-गोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्यो पवनोपशोभिताम् ॥२०॥ सौवर्णशृङ्गाट-कहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥ जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् २२

ताम् । परिखाः परितः खातगर्तास्ताभिर्दुरासदां दुर्गमाम् । उद्यानानि दूरस्थानि वनानि रम्याण्युपवनानि च निकटानि तैरुपशोभिताम् ॥२०॥ सौवर्णाः शृङ्गाटकाश्चतुष्पथा हर्म्याणि धनिनां गृहाणि च निष्कुटा गृहोचिता आरामाश्च तैः । श्रेणीनामेकशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैर्गृहैरुपस्कृतामलंकृताम् । अमलाः स्फटिकाः । हरितो मरकताः । वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिष्वाविष्टैरुपविष्टैः पारावतैर्बर्हिभिश्च नादिताम् । तत्र वलभ्यो गृहपुरोभागेषु वक्रदारुच्छादनानि । वेदयो वलभीनामधोदेशे विरचिता अवष्टम्भवेदिकाः । जालामुखरन्ध्राणि गवाक्षच्छिद्राणि । कुट्टिमानि मणिबद्धा भूप्रदेशा इति । रथ्या राजमार्गाः, आपणाः पण्यवीथयः, मार्गा अन्ये च, चत्वराण्यङ्गनानि, संसिक्तानि रथ्यादीनि यस्यां ताम् । प्रकीर्णा माल्यादयो यस्यां ताम् ॥ २१ ॥ २२ ॥ ॥ ॥

१ मूले सगोपालैरित्यत्रासमस्तस्य सहशब्दस्य मा.....न्दसः । २ आरः पित्तलम् । ३ कोष्ठा दुर्गप्राकाराः । ४ नः अस्मान् सनाथान्कुरु, यद्वा नः अस्माकं गेहान्सनाथान्कुरु । बहुत्वं बन्ध्वादीनपेक्ष्य । ५ यद्वा उद्यानैः फलप्रधानवनैः रम्या चासावुपवनैः पुष्पप्रधानवनैः शोभिता च ताम् । ६ 'एकरूपशिल्पोपजीविनां' इत्यपि प्रचुरः पाठः ।

तथा स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां ताम्। कैः। आपूर्णैः कुम्भैर्दध्ना चन्दनेन चोक्षितैः सिक्तैः प्रसूनानां दीपानां चावलयो येषु तैः । वृन्दैः फलगुच्छैरुपलक्षिता रम्भाः क्रमुकाश्च तत्सहितैः । सकेतुभिः केतवो ध्वजास्तत्सहितैः । पट्टिका वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैः । तत्रेयं रीतिः—द्वारेपूभयतस्तण्डुलानामुपरि कुम्भास्तत्परितः प्रसूनावलयः कण्ठे पट्टिका मुखे चूतादिपल्लवास्तदुपरि पात्रान्तरे दीपावलयस्तत्संनिधौ रम्भाः क्रमुकाः केतवस्तोरणानि चेति ॥२३॥ नरदेववर्त्मना राजमार्गेण तां पुरीं संप्रविष्टाविति द्वितीयान्तम् ॥२४॥ औत्सुक्यमेवाह द्वयेन—काश्चिदिति । विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः । युगलेषु युग्मधार्येषु कुण्डलकङ्कणादिष्वेकं विस्मृत्य समीयुः । कृतमेकमेव पत्रं ययोस्ते श्रवणे यासाम्, एकमेव नूपुरं चरणाभरणं

आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृन्दरम्भाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥ २३ ॥ तां संप्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम् ॥ २५ ॥ अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः ॥ २६ ॥ मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकैः ॥ जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥ २७ ॥ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ॥ आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिंदमाधिम् ॥२८॥ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ॥ अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥२९॥ दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ॥ तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥३०॥ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् ॥ या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ३१ ॥ ॥ ॥

यासां ताश्च ताश्च । नाङ्क्त्वा अनङ्क्त्वा । एकस्मिन्नेव लोचने अञ्जनं निधायैव ॥ २५ ॥ तद्भोजनं त्यक्त्वा अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यङ्गाः अकृतोपमज्जना अकृतस्नानाः । अर्भं बालकम् । अपोह्य निरस्य ॥ २६ ॥ प्रगल्भा या लीलास्ताभिर्हसितानि निरीक्षणानि च तैः श्रियं रमयतीति श्रीरमणस्तेनात्मना वपुषा तासां दृशामुत्सवं ददन्मनांसि जहार ॥ २७ ॥ मुहुः श्रुतत्वात्तद्गतचेतसः सद्यस्तं दृष्ट्वा तस्य प्रेक्षणं चोत्स्मितं च तदेव सुधा तयोक्षणं सेचनं तेन लब्धो मानो याभिस्ताः । दृशोद्घाटितेन नेत्रद्वारेणात्मनि मनसि लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनितमनन्तमाधिं मानसीं व्यथां जहुः—हे अरिंदम निर्जितकामेति संबोधनं शृङ्गाररसे निमग्नो मा भूरिति ॥ २८ ॥ सौमनस्यैः कुसुमसमूहैः शोभनमनोभावैर्वा ॥ २९ ॥ ३० ॥ पौराः पुरस्त्रियः ॥ ३१ ॥ ॥

१ निःस्वनं निशम्येति द्वितीयपद्यस्थस्य सर्ववाक्येष्वन्वयः । २ पत्रं ताटङ्कम् । ३ 'सवृन्त' इति पाठः । तत्र वृन्तैः प्रसववन्धनैः सहिता रम्भादय इत्यर्थः । ४ 'भोजनम्' इति पाठः । ५ अनुद्रुतं प्रेम्णा निरन्तरं द्रवीभूतं चेतो यासाम् । ६ यतः प्रमदाः श्रीकृष्णप्रेम्णा प्रकृष्टमदाः । ७ उपायनैः फलादिभिः । ८ डीबभाव आर्षः । यद्वा पुरौकसः पौरा एव सर्वे ।

रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रङ्गमपि कुर्वन् रङ्गकारः ॥ ३२ ॥ ३३ ॥ रुषितः कुपितः ॥ ३४ ॥ हे उद्वृत्ताः, गिरौ वने चरथ ये नित्यं ते यूयं पूर्वं परिधत्तेति संभावनायां लोट् । अभीप्सथ प्रार्थयध्वम् ॥ ३५ ॥ राजकुलानि राजकीयाः लुम्पन्ति निःस्वं कुर्वन्ति ॥ ३६ ॥ ३७ ॥ वासःकोशान् वस्त्रपुट-

रजकं कंचिदायान्तं रङ्गकारं गदाग्रजः ॥ दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥३२॥ देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः ॥ भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३३ ॥ स याचितो भगवता परिपूर्णेन सर्वतः ॥ साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३४ ॥ ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ॥ परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥३५॥ यातात्रु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ॥ बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै ॥३६॥ एवं विकत्थमानस्य कुपितो देवकीसुतः ॥ रजकस्य कराग्रेण शिरः कायादपातयत् ॥ ३७ ॥ तस्यानुजीविनः सर्वे वासः कोशान् विसृज्य वै ॥ दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥ ३८ ॥ वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा ॥ शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३९ ॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ॥ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥ ४० ॥ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ॥ स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४१ ॥ तस्य प्रसन्नो भगवान् प्रादात्सारूप्यमात्मनः ॥ श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥ ४२ ॥ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ॥ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥४३॥ तयोरासनमानीय पाद्यं चार्थार्हणादिभिः ॥ पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥४४॥ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ॥ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४५ ॥ भवन्तौ किल विश्वस्य जगतः कारणं परम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४६ ॥ ॥

कान् ॥ ३८ ॥ ३९ ॥ वायकस्तन्तुवायविशेषः । वेषमलंकारम् । चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैः ॥ ४० ॥ पर्वण्युत्सवे ॥ ४१ ॥ इह लोके परमां श्रियं च बलं चैश्वर्यं च स्मृतिं चेन्द्रियं तत्पाटवं च प्रादात् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ क्षेमायाभयाय । भवायोद्भवाय ॥ ४६ ॥ ॥ ॥

१ श्लेपादकारप्रश्लेपे अदातुस्ते इह श्रेयो न, अत्र च जीवने संशयः इति तोष० । २ वाग्देव्यर्थस्तु—हे उत्कृष्टचरिताः नित्यमेव गोवर्धनवनविहारिणः किमीदृशानेव परिधत्त, अपि तु परमदिव्यानि राजद्रव्याणि चाभीप्सथ किम् । नैव व्याजमात्रं याचनमिति भावः । ३ वाग्देवी तु—यातः प्राप्त आशुश्रपलो बालिशो मादृशमूर्खो यैस्ते । यदि जिजीविषा बलधारणेच्छा तत्प्रकटनेच्छा तदा मैवं प्रार्थ्यं । राजकुलानि भवद्विधाः मादृशं दृप्तं घ्नन्त्येवेति । ४ सितेतरौ शुक्लकृष्णौ । ५ तस्य तस्मै । ६ अर्हणं पूजोपकरणं धूपदीपनैवेद्यादि । ७ 'विभो' इति पाठः । ८ अंशेन अंशैर्गोपयादवैः सह, यद्वांशेन जगतः कारणमित्यन्वयः ।

रजकवधेन वायकानुग्रहेण च युवयोर्विषमदृष्टितयाऽनीश्वरता नाशङ्कनीयेत्याह—नहि वामिति। अत्र हेतुः—समयोरिति। अत्रापि हेतुद्वयम्—सुहृदोरिति जगदात्मनोरिति च ॥४७॥४८॥ इत्यभिप्रेत्य इत्येवं विज्ञापयन्नभिप्रेत्य तन्मतं ज्ञात्वा ॥४९॥५०॥५१॥ अन्वयवर्धिनीं वंशे वृद्धिमतीमित्यर्थः। अप्रार्थितं श्रीप्रभृतिकं च दत्त्वा ततो निर्जगामेति ॥५२॥ 'स्वैरं चरन्मधुपुरे रजकं निकृत्य कृष्णः प्रदाय च वरानथ वायकाय ॥ मालाकृतं समनुकम्प्य चकार कुब्जामृज्वीं धनुश्च सहसा नमयन्वभञ्ज' ॥१॥ ॥ इति श्रीमद्भा०म०पु०द०पू०भा०दी०टी० एकचत्वारिंशोऽध्यायः॥४१॥ ॥ द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा॥वधस्तद्रक्षिणां कंसारिष्टं रङ्गोत्सवादि च ॥१॥ अङ्गविलेपाश्चन्दनादयः। गृहीतान्यङ्गविलेपानां भाजनानि यया ताम्। रसप्रदः सुखप्रदः ॥१॥ हे अङ्गने हे वरोरु, इति सोपहासं संवो-

नहि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ॥ समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥ ४७॥ तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ॥ पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४८ ॥ इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः ॥ शस्तैः सुगन्धैः कुसुमैर्मालां विरचिता ददौ ॥ ४९ ॥ ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ५० ॥ सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५१ ॥ इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम् ॥ बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे पुरप्रवेशो नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ श्रीशुक उवाच ॥ अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन्रसप्रदः ॥ १ ॥ का त्वं वरोर्वेतदु हानुलेपनं कस्याङ्गने वा कथयस्व साधु नः ॥ देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते नचिराद्भविष्यति ॥ २ ॥ ॥ सैरन्ध्र्युवाच ॥ दास्यस्म्यहं सुन्दर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि ॥ मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥ ततस्तावङ्गरागेण स्ववर्णेतरशोभिना ॥ संप्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ५ ॥

धयाऽऽपृच्छति—त्वं का, एतदनुलेपनं कस्य वा, उ ह इति निपातौ भ्रूविक्षेपयुक्ते वितर्के। असतसेवा सद्यः फलत्येवेत्याह—नचिरादिति ॥२॥ तिस्रो ग्रीवोरःकट्यो वक्रा इति त्रिवक्रेति नाम यस्याः सा। अनुलेपसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ॥ ३ ॥ रूपं चाङ्गसौष्ठवं पेशलं च सौकुमार्यं माधुर्यं च रसिकता हसितं चालापाश्च वीक्षितं च तैर्धर्षितात्मा मोहितचित्ता। सान्द्रं घनम् ॥ ४ ॥ स्ववर्णेतरशोभिना रामकृष्णयोर्वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितुं शीलं यस्य तेन। संप्राप्तपरभागेन संप्राप्तः परो नाभेरुपरितनो भागो येन सः। संप्राप्तः परभागः शोभातिशयो येनेति वा, तेनानुरञ्जितौ ॥ ५ ॥ ॥

१ 'पुंसस्त्वनुग्रहो' इति पाठः। २ 'मालां विरचितां' इति पाठः। ३ 'सुन्दरवर्यसमता' इति पाठः। अत्र हे सुन्दरवर्य। अर्थात्कंसस्य समतेत्यर्थः। ४ त्रिवक्रनामा इत्यत्र पुंवद्भाव आर्षः।

स्वदर्शनं सद्यः फलं दर्शयन् ॥ ६ ॥ तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे अङ्गुल्यावुत्ताने उन्नते यस्मिन्पाणौ तेन चुबुके मुखस्याधोभागे धृत्वाऽध्यात्मं देहमुन्नमयामास ॥ ७ ॥ तदैव ऋजु समानमङ्गं यस्याः । बृहत्यौ श्रोणी पयोधरौ च यस्याः सा । मुकुन्दस्पर्शनादिति मुख्यं कारणम् ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ आधिविकर्शनं मनःपीडाशमनम् । कंसवधेन स्वयं साधितोऽर्थः सुहृदां प्रयोजनं येन सः । अगृहाणामकृतदाराणां पान्थानां प्रवासिनां परमयनमा-

प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम् ॥ ऋज्वीं[1] कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥ ६ ॥ पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना ॥ प्रगृह्य चुबुकेऽध्यात्ममुदनीनमदच्युतः ॥७॥ सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ॥ मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥८॥ ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् ॥ उत्तरीयान्तमाकृष्य स्मयन्ती[2] जातहृच्छया ॥९॥ एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥१०॥ एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ॥ मुखं वीक्ष्यानुगोपानां[3] प्रहसंस्तामुवाच ह ॥११॥ एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् ॥ साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ १२ ॥ विसृज्य माध्व्या वाण्या तां व्रजन्मार्गे वणिक्पथैः[7] ॥ नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः ॥ १३ ॥ तद्दर्शनस्मरक्षोभादात्मानं नाविदन् स्त्रियः ॥ विस्रस्तवासः कबरवलया लेख्यमूर्तयः ॥ १४ ॥ ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः ॥ तस्मिन्प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १५ ॥ पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धितम् ॥ वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ १६ ॥ करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ॥ नृणां[4] विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥ १७ ॥ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत्[5] ॥ १८ ॥ तद्रक्षिणः सानुचराः कुपिता आततायिनः ॥ ग्रहीतुकामा आववुर्गृह्यतां बध्यतामिति ॥ १९ ॥ अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ ॥ क्रुद्धौ धन्वन आदाय शकले तांश्च[6] जघ्नतुः ॥ २० ॥ ॥

श्रयस्त्वम् ॥ १२ ॥ मधुरया गिरा तां प्रस्थाप्य व्रजन् वणिक्पथैर्वणिग्भिरर्चितः ॥ १३ ॥ लेख्याश्चित्रन्यस्ता इव मूर्तयो यासां ताः ॥ १४ ॥ धनुर्मखशालां पृच्छन् ॥ १५ ॥ प्रसह्य बलात् ॥ १६ ॥ निमिषेणातिशीघ्रम् । मदकरी मत्तहस्ती ॥१७॥१८॥ गृह्यतां बध्यतामिति वदन्तो जिघृक्षव आवृतवन्तः ॥ १९ ॥ न केवलं क्रुद्धौ, किंतु भग्नस्य धनुषः शकले गृहीत्वा जघ्नतुश्चेति ॥ २० ॥ ॥ ७ ॥ ॥ ७ ॥

१ ऋज्वीकर्तुमिति च्व्यन्तः पाठः । २ 'सस्मय' इति पाठः । ३ अनुगता ये गोपास्तेषाम् । 'अनुगानां च' इति पाठः । ४ नृणामित्यनादरे षष्ठी । ५ उप आधिक्येन प्राप्तः । ६ तान्विलोक्य क्रुद्धौ चुक्रुधतुः, ततस्तान् जघ्नतुश्चेति वाक्यभेदात्तानित्यपुनरुक्तम् । ७ वणिजा पन्था वाणिज्यरूपो येषां ते इति विग्रहः ।

परतः प्रातर्गन्तव्यमिति शालामुखादेव पुनर्निष्क्रम्य ॥ २१ ॥ तेजः प्रभावम् । प्रागल्भ्यं धृष्टताम् ॥ २२ ॥ शकटं शकटावमोचनस्थानम् ॥ २३ ॥ मुकुन्दस्य विगमे व्रजान्निर्गमनसमये या आशिष आशासत—'सुखं प्रभाता रजनीयम्', 'अद्य ध्रुवं तत्र दृशो भविष्यते' इत्यादि यदुक्तवत्यस्ता ऋताः सत्या बभूवुः । पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मीं शोभाम् । कथंभूतस्य गात्रस्य । नु अहो इतरान्ब्रह्मादीन् हित्वा यदयनमाश्रयं श्रीः कामयामास । यां गात्रलक्ष्मीमिति वा ॥ २४ ॥ अवनिक्तं क्षालितमङ्घ्रियुगलं ययोस्तौ । क्षीरमिश्रमन्नं भुक्त्वा सुखं न्यवसताम् ॥ २५ ॥ परं केवलं गोविन्दरामयोर्विक्रीडितं तत्, नतु पराक्रमः कश्चित् ॥ २६ ॥ उभयथा स्वप्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च । तथा च मन्त्रः—'इत्थादुलूकश्चापद्मन् हिरण्याक्षो अयो-

बलं च कंसप्रहितं हत्वा शालामुखात्ततः ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः ॥२१॥ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ॥ तेजः[1]प्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ ॥ २२ ॥ तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ॥ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥२३॥ गोप्यो मुकुन्दविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्यभूवन् ॥ संपश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः ॥ २४ ॥ अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ॥ ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥२५॥ कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ॥ वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ २६ ॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ॥ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥२७॥ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा[2] ॥२८॥ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥२९॥ स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥३०॥ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ॥ पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिन्तया ॥ ३१ ॥ ॥ ॥

मुखः ॥ रक्षसां दूत आगतः' इत्यादिः । तथा—'यदेतद्भुतान्यन्वाविश्य दैवीं वाचं वदसि' इत्यादिश्च ॥ २७ ॥ तानि दर्शयति श्लोकत्रयेण—जलादौ प्रतिरूपे दृश्यमानेऽपि स्वशिरसस्तत्रादर्शनम् । असत्यपि द्वितीये चक्षुषोऽन्तर्धानेऽङ्गुल्यादौ ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥ छायायां प्रतिबिम्बे छिद्रप्रतीतिः । पिहितकर्णपुटस्य योऽन्तः श्रूयमाणो ध्वनिः स प्राणघोषस्तस्याऽश्रवणम् । वृक्षेषु स्वर्णवर्णप्रतीतिः । रजःकर्दमादिषु स्वपदानामदर्शनम् । एतानि जागरितानि दुर्निमित्तानि ॥ २९ ॥ स्वप्नान्याह—स्वप्न इति । प्रेतैर्मृतैः परिष्वङ्गः खरमारुह्य यानम् । विषभक्षणम् । नलदमाली जपाकुसुममाली यायादिति यत्तदप्येकं दुर्निमित्तमिति ॥ ३० ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ तेजः सर्वाभिभवसामर्थ्यं च धार्ष्ट्यं च सौन्दर्यं चेति द्वन्द्वैक्यम् । २ तथेति परेणान्वेति ।

कष्टेन कथंचित्प्रभातायां पुनः सूर्ये चाभ्युः समुत्थित इति । तथा च श्रुतिः—'अब्धो वा' इति—'य उदगान्महतोऽर्णवात् विभ्राजमानः सलिलस्य मध्यात् ॥ स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु' इति च ॥ ३२ ॥ ३३ ॥ यथोपजोषं यथासुखम् ॥३४॥३५॥ मल्लताल उत्तर उपरि उच्चैः श्रूयते येषु तेषु तूर्येषु । उपाध्याया मल्लाचार्याः ॥ ३६ ॥ उपस्थानं मल्लरङ्गम् ॥ ३७ ॥ समाहुताः समाहूताः । निवेदितान्युपायनानि यैस्ते ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ त्रिचत्वारिंशके हत्वा गजेन्द्रं रामकृष्णयोः ॥ रङ्गप्रवेशसौभाग्यं

[1]व्युष्टायां निशि कौरव्य सूर्ये चाभ्युः समुत्थिते ॥ कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥३२॥ आनर्चुः पुरुषा [2]रङ्गं तूर्यभेर्यश्च जघ्निरे ॥ मञ्चाश्चालंकृताः स्रग्भिः पता[4]काचैलतोरणैः ॥३३॥ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३४ ॥ कं[5]सः परिवृतोऽमात्यै राजमञ्च उपाविशत् ॥ मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥३५॥ वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ॥ मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः स[6]मासत ॥३६॥ चाणूरो मुष्टिकः कूटः शलस्तोशल एव च ॥ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥३७॥ नन्दगोपादयो गोपा भोजराजसमाहुताः ॥[7] निवेदितोपायनास्ते एकस्मिन्मञ्च आविशन् ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे मल्लरङ्गोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ श्रीशुक उवाच ॥ अथ कृष्णश्च रामश्च कृतशौचौ परंतप ॥ मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १ ॥ रङ्गद्वारं समासाद्य तस्मिन्नागमवस्थितम् ॥ अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥ २ ॥ बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ॥ उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥ अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नो चेत्सकुञ्जरं त्वाऽद्य नयामि [8]यमसादनम् ॥ ४ ॥ एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ॥ चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ५ ॥ ॥

चाणूरेण च भाषणम् ॥१॥ पूर्वेद्युरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ । एतदुक्तं भवति—धनुर्भङ्गादिनाऽऽवाभ्यां निजैश्वर्ये सूचितेऽपि पितरौ न मुञ्चत्यावां च पुनर्जिघांसति । अतोऽस्य मातुलस्यापि वधे नावयोर्दोष इत्येवं कृतापराधपरिहाराविति । मल्लानां दुन्दुभीनां च निर्घोषं मल्लतालदुन्दुभिनिर्घोषं वा ॥ १ ॥ अम्बष्ठो हस्तिपकस्तेन चोदितम् ॥ २ ॥ परिकरं युद्धोचितपरिधानं कृत्वा । समुह्य निबध्य ॥ ३ ॥ ४ ॥ अन्तको मृत्युः, कालस्तन्निमित्तं, यमस्तन्नियन्ता तैरुपमा यस्य तम् ॥ ५ ॥ ॥ ॥ ॥ ॥

१ 'अब्धो वा एष प्रातरुदेत्यपः सायं प्रविशति' इति श्रुतिशेषः । २ व्युष्टायां गतप्रायायाम् । ३ रङ्गं मल्लक्रीडास्थानम् । ४ पताकाभिर्वस्त्रनिर्मिततोरणैश्च । ५ 'कंसस्तु सवृतः' इति पाठः । ६ 'समागताः' इति, 'समाविशन्' इति च पाठः । ७ वस्तुतस्तु—यमेन मनोनिरोधेन साध्यते प्राप्यते तत् मोक्षवस्त्वित्यर्थः । ८ कृष्णाकृष्णं महीतुम् ।

विगलितो विच्युतः । मुष्टिना निहत्य अलीयताऽदृश्यो बभूव ॥ ६ ॥ अचक्षाणोऽपश्यन् । घ्राणमवघ्राणं तेन दृष्टिर्दर्शनं यस्य सः । लोचनागोचरमपि हि पशवो घ्राणेन जानन्तीति प्रसिद्धम् । परामृशद्धृतवान् । पुष्करेण शुण्डाग्रेण । स कृष्णः । प्रसह्य बलेन ॥ ७ ॥ धनुषो धनुषां पञ्चविंशतिर्यावत्तावन्तं देशं विचकर्ष आकृष्य नीतवान् । कं क इव विचकर्ष । यथा नागं सर्पवद्वर्तमानं गजं सुपर्णवत्स्वयमिति—'आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः' इतिवत् ॥ ८ ॥ स पर्यावर्तमानेनेति । पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं यदि दक्षिणतः परिवर्तते गजस्तर्हि सव्यतो भ्रामयति । यदा सव्यतः परिवर्तते तदा दक्षिणतो भ्रामयंस्तेन सह बभ्राम । गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णो यथाऽन्यो वा बालक इवेति ॥ ९ ॥ वारणं गजं प्राद्रवन् प्रकर्षेणासमन्ततो धावन्

करीन्द्रस्तमभिद्रुत्य करेण तरसाग्रहीत् ॥ कराद्विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥ ६ ॥ संक्रुद्धस्तमचक्षाणो घ्राण-दृष्टिः स केशवम् ॥ परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥७॥ पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ॥ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥९॥ ततोऽभिमुखमभ्येत्य पाणिनाहत्य वारणम् ॥ प्राद्रवन्पातयामास स्पृश्यमानः पदे पदे ॥१०॥ स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत्क्षितिम् ॥११॥ स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः ॥ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥ १२ ॥ तमापतन्तमासाद्य भगवान्मधुसूदनः ॥ निगृह्य पाणिना हस्तं[3] पातयामास भूतले ॥१३॥ पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया ॥ दन्तमुत्पाट्य तेनेभं हस्ति-पांश्चाहनद्धरिः[4] ॥ १४ ॥ मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत् ॥ अंसन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कितः ॥ विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥ १५ ॥ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ॥ रङ्गं विविशतू राजन् गजदन्त-वरायुधौ ॥१६॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥ १७ ॥

पातयामास । यथा पतति तथा तं वञ्चयन्प्राद्रवदित्यर्थः ॥ १० ॥ किंच स धावन्निति । अहनदहन् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ रङ्गं समाविशत्तदा वीरश्रिया बभौ । कथंभूतः—अंसे न्यस्तं विषाणं गजदन्तो येन सः । असृजो रक्तस्य मदस्य च बिन्दुभिः परितोऽङ्कितः । विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनाम्बुरुहं यस्य सः ॥१५॥ न केवलं स एकः समाविशत्, किंतु वृतौ गोपैरिति ॥ १६ ॥ तत्र शृङ्गारादिसर्वरसकदम्बमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेण बभौ, न साकल्येन सर्वेषामित्याह—मल्लानामिति । मल्लादीनामज्ञानां द्रष्टॄणामशन्यादिरूपेण दशधा विदितः सन्साग्रजो रङ्गं गत इत्यन्वयः । मल्लादिष्वभिव्यक्ता

१ यथेत्यस्य यथावत्त्वेन रूपेणाविरासीदित्यर्थकरणेन पौनरुक्त्यपरिहारवदत्रापि यथानागं सर्पवद्वर्तमानं गजमित्याद्यर्थकरणेन तत्परिहार इत्यर्थः । २ पुष्करेणेत्यत्र श्लेषाद्भगवदङ्गे कमलकोमलीभूतेनेत्यपि । ३ हस्तं शुण्डाग्रम् । ४ हरिरिति सिंहवत्प्राणहरणात् ।

रसाः क्रमेण श्लोकेन निवध्यन्ते—'रौद्रोऽद्भुतश्च श्रृङ्गारो हास्यं वीरो दया तथा ॥ भयानकश्च वीभत्सः शान्तः सप्रेम भक्तिकः ॥' अविदुषां विराट् पिकलः अपर्याप्तो राजत इति तथा अनेन वीभत्सरस उक्तः। विकलत्वं च 'क्व वज्रसारसर्वाङ्गौ' इत्यादिना वक्ष्यते ॥१७॥ उद्विविजे भीतो वभूव ॥१८॥ यथा नटाविति निर्भयत्वं दर्शितम् ॥१९॥ प्रहर्षवेगेनोत्कलितान्युज्जृम्भितानीक्षणान्याननानि च येषाम्। तयोराननं पपुः परं न तृप्ताः। निराकाङ्क्षा न वभूवुरित्यर्थः ॥ २० ॥

हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥१८॥ तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ॥ यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥ १९ ॥ निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥२०॥ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ २१ ॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥२२॥ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन[2] वसुदेवस्य वेश्मनि ॥ २३ ॥ एषः[3] वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन्गूढो ववृधे नन्दवेश्मनि ॥ २४ ॥ पूतनाऽनेन नीताऽन्तं चक्रवातश्च दानवः ॥ अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ॥ २५ ॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः ॥ कालियो दमितः सर्प इन्द्रश्च विमदः कृतः ॥ २६ ॥ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥ ॥ ॥

तदेवाह—पिबन्त इवेति । श्लिष्यन्तः परिष्वङ्गं कुर्वन्त इव लक्षिता इत्यर्थः ॥ २१ ॥ यथादृष्टं धनुर्भङ्गादि, यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य, तदनुरूपमित्यर्थः । प्रत्यक्षं च तयो रूपं गजदन्तादियुक्तं, गुणाः शौर्यादयो, माधुर्यं हसितालापादि, प्रागल्भ्यं धार्ष्ट्यं तैः स्मारिता इव स्मरणं प्रापिता इव ॥ २२ ॥ विस्मितानां वाक्यान्याह अष्टभिरेतावित्यादिभिः ॥ २३ ॥ किलेति सर्वत्रान्वयः ॥ २४ ॥ गुह्यकः शङ्खचूडः । अन्ये चाघासुरादयः ॥ २५ ॥ २६ ॥ २७ ॥

१ तत्र शूरमन्याना स्वस्मात्तत्पराभवं भावयता मल्लानामशनितुल्याङ्गत्वेन हरेः स्फुरणात्क्रोधस्थायिभावमयो रौद्रो व्यज्यते। नृणा पौरादीनां नरवरविलासादिदर्शनेन विस्मयस्थाय्यद्भुतः । पूज्यादिभिन्नस्त्रीणां स्मरः मदनहेतुमाधुरीविशेषप्रकाशनेन प्रियभावमयरतिजनकस्तेन तत्स्थायी श्रृङ्गारः । श्रीदामादिगोपाना स्वजनो वयस्यः तेनासंकुचिततयारक्तमदद्न्तादिविशेषदर्शनजन्यहासस्थायी हास्यः । असतां साधूनेव शासतां क्षितिभुजा राज्ञां श्लेषेण क्षितिमेव भक्षयतां दण्डकर्तेति तद्वीर्यातिशयं पश्यता युद्धोत्साहस्थायी वीररसः । पित्रोर्मातापित्रोर्नन्दवसुदेवयोर्वा शिशुत्वस्फूर्त्या तन्मार्दवस्फूर्तेर्मल्लादिशङ्कया शोकस्थायी करुणः । भोजपतेः कंसस्य साधुषु देवक्यादौ श्रीकृष्णे च मृत्युचिन्तनपरतया प्रसिद्धस्य श्लेषेण भोजाना सर्वगिलाना श्रेष्ठस्य मृत्युस्तद्धेतुर्यम इवेति भयस्थायी भयानकः । अविदुषां विराट्विकलः अपर्याप्तो राजत इति सच्चिदानन्दत्वेन विद्वत्समते तस्मिन्विकलत्वम् । अनेन भौतिकत्वाज्ञानाज्जुगुप्सास्थायी वीभत्सः । योगिनां ज्ञानिभक्तानां परं तत्त्वं परब्रह्मविग्रहः । तेन शान्तिस्थायी शान्तः । यादवाना श्रेष्ठा देवता निजाराध्येति प्रेमात्मकभक्तिस्थायी सप्रेमभक्तिकः इति तोषणी ।
२ बलरामस्यांशावतारत्वेन छत्रिन्यायेनोभयविषयेऽपि तथा प्रयोग इति बालबोधिनी । तेषा तथैव प्रतीतेरंशेनेत्युक्तमिति चक्रवर्ती । वाग्देवी त्वाह—'अंशेनोपलक्षितः नारायणांशभूतो यो वसुदेवस्तस्य गृह इत्यर्थः इति तोषणी । ३ 'स एष किल देवक्याम्' इति पाठः ।

आश्रममीषच्छ्रमयुक्तं सुखम् । अश्रमं सुखमिति वा । यद्वा अश्रमं यथा भवति तथा तरन्ति स्मेति ॥ २८ ॥ अनेन परिरक्षितो यदोर्वंशः सुबहुविश्रुतः सन् श्र्यादि लप्स्यत इति वदन्तीति ॥ २९ ॥ धेनुकबकवत्सासुरेषु विपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥ ३० ॥ जनेष्वेवं ब्रुवाणेषु सत्सु तदसहमानश्चाणूरोऽब्रवीदिति ॥३१॥३२॥३३॥३४॥ हे कृष्ण, प्रियं करवामेति । राज्ञि प्रीते भूतानि च प्रसीदेयुः ॥३५॥३६॥३७॥ यथोचितं नियुद्धं बाहुयुद्धं भवेत् । मल्लसभासदो

गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ॥ पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा ॥ २८ ॥ वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ॥ श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥२९॥ अयं चास्याग्रजः श्रीमान्रामः कमललोचनः ॥ प्रलम्बो निहतो येन वत्सको ये बकादयः ॥३०॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥ हे नन्दसूनो हे राम भवन्तौ वीरसंमतौ ॥ नियुद्धकुशलौ[1] श्रुत्वा राज्ञाहूतौ दिदृक्षुणा ॥ ३२ ॥ प्रियं राज्ञः प्रकुर्वत्यः श्रेयो विन्दन्ति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥ नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥ ३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवाम हे ॥ भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥३५॥ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ॥ नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ॥ ३६ ॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः ॥ करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥३७॥ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः ॥३८॥ ॥ चाणूर उवाच ॥ न बालो न किशोरस्त्वं बलश्च बलिनां वरः ॥ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥३९॥ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ॥ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥ ॥ इति श्रीमद्भा० म० पु० दशमस्कन्धे पूर्वार्धे कुवलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥

॥ श्रीशुक उवाच ॥ एवं चर्चितसंकल्पो भगवान्मधुसूदनः ॥ आससादाथ[2] चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥ हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ॥ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥[3] ॥ ॥

मल्लसभाधिकृतान् जनानधर्मो मा स्पृशेन्न स्पृशेदित्यर्थः । हे मल्लेति वा ॥३८॥ सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा ॥३९॥ बलिभिर्मादृशैः सह । अनयोऽधर्मः विक्रम पराक्रमं कुरु । मुष्टिको विक्रमतादित्यनुषङ्गः ॥४०॥ ॥ इति श्रीमद्भा०म०पु० दशमस्कन्धे पूर्वार्धे भा०दी० टीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ॥ कंसयोपित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥ १ ॥ चर्चितो निश्चित एव संकल्पो यस्य सः ॥ १ ॥ २ ॥ ॥

१ 'कुशलौ ज्ञात्वा' इति पाठः । २ 'आससाद ह' इति पाठः । ३ एतदग्रे—'आस्फोट्य हस्तौ हस्ताभ्यामूरू चैव पुनः पुनः ॥ विसृज्य भूयः संगृह्य परिक्रम्य परस्परम् ॥ इत्यधिकः श्लोकः कचित् ।

बाहुमध्यात्कनिष्ठाङ्गुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः ॥३॥ परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनम् । विक्षेपो नोदनम् । परिरम्भो बाहुभ्यां निष्पीडनम् । अवपातनमधःक्षेपः । उत्सर्पणमुत्सृज्य पुरतो गमनम् । अपसर्पणं पृष्ठतो गमनम् । एतैः प्रत्यरुन्धतां प्रत्यावृतवन्तौ ॥४॥ उत्थापनं जानुनी पादौ च पिण्डीकृत्य पतितस्योच्चाटनम् । उन्नयनं हस्ताभ्यामुद्धृत्य नयनम् । चालनं कण्ठादिलग्नस्य निःसारणम् । स्थापनं पादादिपिण्डीकरणम् । एवं परस्परमात्मनो देहस्यापचक्रतुरपकारं कृतवन्तौ ॥५॥ तद्युद्धं बलाबलवदेकतो बलमन्यतोऽबलम् । तद्युद्धं विषममित्यूचुरित्यर्थः ॥६॥ तदेव दर्शयति—महानिति । यद्वा बलाबलवतोर्युद्धं दृष्ट्वा महानयमधर्म इत्यूचुरित्यन्वयः । बालयोर्बलवतोश्च युद्धं राजा चेत्पश्येत्तर्ह्ययं वारणीयः । एते तु राज्ञः पश्यतः स्वयमन्विच्छन्त्यनुमन्यन्त इति महानधर्म इत्यर्थः

अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ॥ शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥३॥ परिभ्रामणविक्षेपपरिरम्भावपातनैः ॥ उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुन्धताम् ॥४॥ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्परं जिगीषन्तावुपचक्रतुरात्मनः ॥ ५ ॥ तद्बलाबलवद्युद्धं समेताः सर्वयोषितः ॥ ऊचुः परस्परं राजन्सानुकम्पा वरूथशः ॥ ६ ॥ महानयं बताधर्म एषां राजसभासदाम् ॥ ये बलाबलवद्युद्धं[2] राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥ क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसंनिभौ[3] ॥ क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ॥ यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥९॥ न सभां प्रविशेत् प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥ १० ॥ वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् ॥ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः ॥११॥ किं न पश्यत रामस्य मुखमाताम्रलोचनम् ॥ मुष्टिकं प्रति सामर्षं हाससंरम्भशोभितम् ॥ १२ ॥ पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो[4] वनचित्रमाल्यः ॥ गाः पालयन् सहबलः क्वणयंश्च वेणुं विक्रीडयाञ्चति[5] गिरित्ररमार्चिताङ्घ्रिः ॥ १३ ॥

॥७॥ बलाबलवद्युद्धतां प्रपञ्चयति पञ्चभिः—क्वेति । वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यङ्गानि ययोस्तौ ॥८॥ समाजस्य सभायाः ॥ ९ ॥ अपरा ऊचुः—न सभामिति । अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन्, विब्रुवन्विपरीतं ब्रुवन्, अज्ञो न जानामीति ब्रुवन् । अतः प्राज्ञो न सभां प्रविशेदिति ॥१०॥ वल्गतः शत्रुमभित इति । शत्रोः सर्वतो धावतः कृष्णस्य श्रमवारिणा उप्तं व्याप्तं मुखाम्बुजं दृश्यताम् ॥११॥ अन्या ऊचुः—किं न पश्यतेति । सामर्षं सक्रोधम् । हासेन संरम्भ आवेशस्तेन शोभितम् ॥१२॥ अन्या ऊचुः—पुण्या बतेति । नृलिङ्गेन मनुष्यदेहेन गूढः । वनस्थानि चित्राणि माल्यानि यस्य सः । गिरित्रः शिवो रमा च ताभ्यामर्चितावङ्घ्री यस्य सः । अयं भावः—धिगिमां सभां यस्यामयं पराभूयते । तास्तु व्रजभुवो धन्याः । यद्याः स्वयं कृष्णो विविधक्रीडयाऽञ्चति गच्छतीति ॥ १३ ॥

१ लुङि अम् आर्षः । २ 'ये बालबलवद्युद्धम्' इति पाठः । ३ 'शैलेन्द्रसमितौ' इति पाठः । ४ पुराणपुरुषः पुरापि नित्यनवः । ५ अञ्चति वर्तमानसामीप्ये लट् ।

अहो कष्टमल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयम् । गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः—गोप्य इति । अमुष्य श्रीकृष्णस्य रूपमङ्गलावण्येन सारं श्रेष्ठम् । किंच असमोर्ध्वं न विद्यते सममूर्ध्वं अधिकं च यस्य तत् । तदपि नान्येनाभरणादिना सिद्धं किंतु स्वत इव । ऐश्वरस्यैश्वर्यस्य चैकान्तधाम अव्यभिचारिस्थानम् । पाठान्तरे अमुष्य ईश्वरस्येत्यन्वयः । एवंभूतं नित्यं नवीनं रूपं या नेत्रैः पश्यन्तीति ॥ १४ ॥ किंच या दोहनादिष्वेनं गायन्ति ता व्रजस्त्रियो धन्याः । प्रेङ्खेङ्खनं दोलान्दोलनम् । उक्षणं सेचनम् । कथंभूताः । उरुक्रमे चित्तमुरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः । पाठान्तरे उरुक्रमं चिन्तयन्त्य इत्यर्थः । कुतः । अनुरक्तधियः । तत्र लिङ्गम्—अश्रुकण्ठ्यः ॥१५॥ प्रातरिति । या अबला अस्य वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यन्ति ता भूरिपुण्या इति

गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥१४॥ या दोहनेऽवहनने मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ॥ गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥१५॥ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ॥ शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभ ॥ १७ ॥ सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ १८ ॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ ॥ १९ ॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥ २० ॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥ २१ ॥ नाचलत्तत्प्रहारेण मालाहत इव द्विपः ॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ॥२२॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ २३ ॥ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ २४ ॥ ॥ ॥ ॥

॥ १६ ॥ एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये कृष्णः शत्रुं हन्तुं मनश्चक्रे ॥ १७ ॥ सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आतुरौ विह्वलौ पुत्रयोर्बलमजानन्तौ पितरावनुतापं प्रापताविति ॥ १८ ॥ १९ ॥ तदा भगवतो गात्राणामरत्निजान्वादीनां निष्पातैः प्रहारैः वज्रस्य निष्पेषस्तीव्रप्रपातस्तद्वन्निष्ठुरैः भज्यमानाङ्गः श्लथगात्रः ॥२०॥ श्येनस्येव वेगो यस्य स चाणूरः । अबाधताताडयत् ॥२१॥२२॥ भूपृष्ठे भुव उपरि । पोथयामासास्फालयत् । इन्द्रध्वजो वज्रम् । यद्वा इन्द्रध्वजो गौडेषु प्रसिद्धः । कस्मिंश्चिदुत्सवे महान्स्तम्भो ध्वजपताकाद्यलंकृतः पुरुषाकृतिरुच्छ्रीयते स यथा पतति तद्वदपतदिति ॥ २३ ॥ २४ ॥

१ 'श्रिय ईश्वरस्य' इत्येवंरूपे । २ 'उरुक्रमचिन्तयानाः' इत्येवंरूपे । ३ 'अवहनन' इत्यन्तर्भूतण्यर्थो ज्ञेयः । ४ भाषमाणास्विति अर्हानर्हयोश्चेत्यनेनानार्होर्थे सप्तमी । ५ पितरौ देवकीवसुदेवौ वसुदेवनन्दौ वा । ६ बलमित्यत्र कर्मणि षष्ठ्यभावस्तदर्हमिति निर्देशेन तस्यानित्यत्वात् । ७ 'यथान्यायं' इति पाठः ।

अर्दितः पीडितः । उर्व्युपस्थे भूतले ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ वल्गन्तौ नृत्यादि कुर्वन्तौ ॥ २९ ॥ साधु साधु इति वदन्तः ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ अन्ययोऽश्रमः । लघिम्ना लाघवेन ॥ ३४ ॥ ३५ ॥ दुर्विषहमविषह्यमुग्रं तेजो यस्य स श्रीकृष्णः ॥३६॥ गरिष्ठत्वाय विश्वाश्रयत्वमुक्तम् । तत्र हेतुः—

प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥२५॥ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः ॥ अवधील्लीलया राजन्सावज्ञं वाममुष्टिना ॥ २६ ॥ तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः ॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥ २७ ॥ चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥२८॥ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ॥ वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥२९॥ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ॥ ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥३०॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥३१॥ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३२ ॥ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ॥ उग्रसेनः पिता चापि सानुगः परपक्षगः ॥३३॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥३४॥ तमाविशन्तमालोक्य मृत्युमात्मन आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३५ ॥ तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे ॥ समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३६॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ॥ तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥३७॥ तं संपरेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥ हाहेति शब्दः सुमहांस्तदाभूदुदीरितः सर्वजनैर्नरेन्द्र ॥३८॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपन् श्वसन् ॥ ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥ ३९ ॥ तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥ ॥

अब्जनाभः । कुतस्तस्योपर्येव पपात । यत आत्मतन्त्रः स्वतन्त्रः ॥ ३७ ॥ ३८ ॥ ३९ ॥ निर्वेशो निष्कृतिरानृण्यमित्यर्थः । तत्कारिणः सन्तस्तेऽभ्यधावन् ॥ ४० ॥

१ वाग्देवी त्वाह—दुर्गमं वृत्तं चरितं ययोः । आदिभ्यो धातुजसेत्युत्तरपदलोपः । पुरात् ल्यब्लोपे पञ्चमी । पुरमधिकृत्य निःसारयत ज्ञापयत । गत्यर्थानां ज्ञानार्थत्वात् । गोपानां धन श्रीकृष्णं हरत अत्रैव रक्षत । दुःखेन दुःखितमतिं नन्दं कृष्णमुखेनैव समयबन्धादिना प्रतिष्ठत्वं कुरुत । दुर्गमबुद्धिर्वसुदेवो गम्यतामाश्रीयतां । नास्ति सत्तमो यस्मात् । तथोग्रसेनोऽप्याश्रीयतां परमेश्वरपक्षगत्वादिति तोषणी । २ 'वसुदेवः सुदुर्मेधाः' इति पाठः । ३ 'तस्यानुगा' इति पाठः ।

तथा तादृगतिरभसो वेगो येषां तान्। संयत्तानुद्युक्तान् ॥ ४१ ॥ ४२ ॥ ४३ ॥ शोचन्त्यो विलापांश्चक्रुः। शुचः अश्रूणि ॥ ४४ ॥ धर्मज्ञ इत्यादीनि विलापे प्रेमसंबोधनानि। ते त्वदीया वयम् ॥४५॥ त्वया पत्या विरहिता पुरीयं न शोभत इति खेदप्रख्याभिधानम् ॥४६॥ अनागसामिति तु परमार्थाभिधानम् ॥४७॥ एष कृष्णः। प्रभवन्त्यस्मादिति प्रभवः, अपियन्ति अस्मिन्नित्यप्ययः स च स च। तदवध्यानं तदवज्ञा तत्कर्तुं शीलं यस्य सः ॥ ४८ ॥ ४९ ॥ आस्पृश्य ईषत्स्पृष्ट्वा ॥ ५० ॥ पुत्रभ्रान्तिं विहाय जगदीश्वराविति ज्ञात्वा शङ्कितौ न सस्वजाते नालिङ्गितवन्तौ, किंतु बद्धाञ्जली तस्थतुरित्यर्थः ॥ ५१ ॥ 'प्रसह्य हत्वा हस्तीन्द्रं

तथातिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥ नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या[1] विभूतयः[2] ॥ पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥ शयानान्वीरशय्यायां पतीनालिङ्ग्य शोचतीः ॥ विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥४४॥ हा[3] नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल ॥ त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥४६॥ अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुक् को लभेत शम् ॥ ४७ ॥ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोप्ता च तदवध्यायी न क्वचित्सुखमेधते ॥ ४८ ॥ ॥ श्रीशुक उवाच ॥ राजयोषित आश्वास्य भगवाँल्लोकभावनः ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥ मातरं पितरं चैव मोचयित्वाथ बन्धनात् ॥ कृष्णरामौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः ॥ ५० ॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ॥ मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥ ॥ ॥ ॥

मल्लेन्द्रान्मल्ललीलया ॥ बीभत्सचरितं कंसं सबीभत्समभारयत्' ॥१॥ ॥ इति श्रीमद्भा० म० पु० द० पू० भा० दी० टीकायां चतुश्चत्वारिंशोऽध्यायः ॥४४॥ पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम् ॥ उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ १ ॥ उपलब्धार्थौ विदित्वेति। अयमर्थः—उप समीपे आवयोः पुत्रबुद्ध्या सांसारिकपरमसुखभोगात्पूर्वमेव लब्धार्थौ आवामीश्वराविति लब्धः प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तौ तथाभूतौ ज्ञात्वा मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं स्यात्। दुर्लभं तु मयि पुत्रतया प्रेम। अत इदानीमेव तज्ज्ञानं मा भूदिति निजां स्वाधीनां मायां तयोः प्रसारितवानिति ॥ १ ॥ ॥

१ विभूतिरूपा ब्रह्मेशाद्याः। २ विभूतयस्तदैश्वर्यास्तत्सेवका इत्यर्थः। ३ गीर्देवी त्वाह—अनाथेत्यकारप्रश्लेषेणैकपद्येन च नाथत्वधर्मज्ञत्वाद्यभावः। काका न शोभते किमित्यर्थः। हे पुरुषबलीवर्देत्यादि।

तदेव दर्शयति—उवाचेत्यादिभिरष्टभिः । प्रीणन्प्रीणयन् सादरं ब्रुवन् ॥ २ ॥ अस्मत्तोऽस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगण्डकैशोरास्तत्तदवस्थानुभवसुखानीत्यर्थः । नाभवन्निति । अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा ॥ ३ ॥ किंच आवामेव दैवहीनाविन्त्याह—न लब्ध इति । पितृगेहस्था बाला यां मुदं विन्दन्ते सा च न लब्धेति ॥ ४ ॥ एवं तावच्छ्लोकद्वयेन युवयोरावयोश्च कामहानिर्जातेत्युक्तमावयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह—सर्वार्थसंभव इति । सर्वेषां धर्माद्यर्थानां संभवो यस्मिन्स देहो यतो याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ॥ ५ ॥ तन्मध्येऽपि[1] तु यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं

उवाच पितरावेत्य साग्रजः सात्वतर्षभः ॥ प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ॥ बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचित् ॥ ३ ॥ न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ॥ यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥ ४ ॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः ॥ न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ६ ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ॥ गुरुं विप्रं प्रपन्नं च कल्पोऽविभ्रच्छ्वसन्मृतः ॥ ७ ॥ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८ ॥ तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः[3] ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥ ॥ श्रीशुक उवाच ॥ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥ सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ ॥ न किंचिदूचतू राजन्बाष्पकण्ठौ[4] विमोहितौ ॥११॥ एवमाश्वास्य पितरौ भगवान्देवकीसुतः ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥ आह चास्मान्[5]महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥ १३ ॥ मयि भृत्य उपासीने भवतो विबुधादयः ॥ बलिं हरन्त्यवनताः[6] किमुतान्ये नराधिपाः ॥ १४ ॥

जीविकां न संपादयेत्, तं प्रेत्य लोकान्तरे यमदूताः स्वस्यैव मांसं खादयन्तीति ॥६॥ किंच मात्रादिशुश्रूषामकुर्वन्विफलजीवितश्च भवतीत्याह—मातरमिति । अविभ्रदपुष्णन् श्वसन्नपि मृततुल्य एवेति ॥ ७ ॥ तत्तस्मान्नौ आवयोः । मोघं व्यर्थम् । अनर्चतोरपूजयतोः ॥ ८ ॥ दुर्हृदा कंसेन कृत्वा ॥ ९ ॥ १० ॥ ११ ॥ आश्वास्य सान्त्वयित्वा ॥ १२ ॥ त्वमेवाज्ञापयेति मा वदेत्याह—ययातिशापादिति । तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः ॥ १३ ॥ मम तादृशी शक्तिर्नास्तीति चेत्तत्राह—मयीति । मत्प्रसादेन सर्वं भविष्यतीत्यर्थः ॥ १४ ॥ ॥ ॥ ॥

१ तन्मध्ये शतवत्सरमितायुषो मध्ये । २ तृतीयार्थे षष्ठ्यः । ३ परतन्त्रयोरित्यादि किंचिदनृतोक्तिः पितृत्वेन स्वीकृतयोरनयोः पुत्रभावदार्ढ्यद्वारा जीवनहेतुत्वान्न विरुद्धा । ४ बाष्पेण निरुद्धकण्ठाविति बालबोधिन्याम् । ५ अस्मान् प्रजाः यादवान् । ६ हरन्ति हरिष्यन्ति । 'हरन्त्ववनताः' इति पाठः ।

स्वान्ज्ञातीन् संबन्धांश्च दिग्भ्य आनाय्येति ॥ १५ ॥ १६ ॥ सिद्धाः पूर्णाः । कृष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो येषां ते ॥ १७ ॥ सदयस्मितं वीक्षणं यस्मिंस्तत् ॥ १८ ॥ प्रवयसो वृद्धा अप्यतिशयितं बलमोजश्च येषां ते ॥ १९ ॥ २० ॥ भृशमात्मनोऽप्याधिक्येन पोषितौ । न चाश्चर्यमेतदित्याह—पित्रोरिति । आत्मनो देहादप्यात्मजेष्वभ्यधिका हि प्रीतिरिरिति ॥ २१ ॥ देवकीवसुदेवयोः पुत्रौ युवां नास्तपुत्राविव्यपि न वाच्यमित्याह—स पितेति ॥ २२ ॥

सर्वान्स्वान् ज्ञातिसंबन्धान् दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥ १५ ॥ सभाजि-
तान्समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥ १६ ॥ कृष्णसंकर्षणभुजै-
र्गुप्ता लब्धमनोरथाः ॥ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥ वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बु-
जम् ॥ नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ १८ ॥ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः ॥ पिबन्तो-
ऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥ १९ ॥ अथ नन्दं समासाद्य भगवान्देवकीसुतः ॥ संकर्षणश्च राजेन्द्र परिष्व-
ज्येदमूचतुः ॥ २० ॥ पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि
हि ॥ २१ ॥ स पिता सा च जननी यौ पुष्णीतां[1] स्वपुत्रवत् ॥ शिशून्बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥
यात यूयं व्रजं तात वयं[2] च स्नेहदुःखितान् ॥ ज्ञातीन्[3]वो द्रष्टुमेष्यामो विधाय[4] सुहृदां सुखम् ॥ २३ ॥ एवं सान्त्वय्य
भगवान्नन्दं सव्रजमच्युतः ॥ वासोलंकारकुप्याद्यैरर्हयामास[5] सादरम् ॥ २४ ॥ इत्युक्तस्तौ[6] परिष्वज्य नन्दः प्रणय-
विह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ २५ ॥ अथ शूरसुतो राजन्पुत्रयोः समकारयत् ॥ पुरोधसा ब्राह्म-
णैश्च यथावद्विजसंस्कृतिम् ॥ २६ ॥ तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः[7] स्वलंकृताः ॥ स्वलंकृतेभ्यः संपूज्य सवत्साः
क्षौममालिनीः ॥ २७ ॥ याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥
ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रं[8] व्रतमास्थितौ ॥ २९ ॥ ॥

॥ २३ ॥ सव्रजं व्रजवासिभिः सहितम् । कुप्यानि स्वर्णरजतादिव्यतिरिक्तकांस्यपात्रादीनि तत्प्रभृतिभिः ॥ २४ ॥ २५ ॥ पुरोधसा गर्गाचार्येण द्विजसंस्कृतिमुपनयनम् ॥ २६ ॥ गावो गाः रुक्मस्य माला विद्यन्ते यासां ताः क्षौमवस्त्रमालावतीः ॥ २७ ॥ याः पूर्वं मनोदत्ता आसंस्ता एवाददात् । ननु ताः कंसेनापहृताः, सत्यम्, राजगोष्ठादाच्छिद्य दत्ता इत्याह—कंसेनाधर्मत इति ॥ २८ ॥ गायत्रं व्रतं ब्रह्मचर्यम् ॥ २९ ॥ ॥ ॥

१ 'पुष्णीत' इति पाठः । २ वयमिति 'अस्मदो द्वयोश्चेति' बहुवचनम् । ३ ज्ञातीन्स्वजनान् वो युष्मान् । ४ 'विहाय' इति पाठः । सुहृदां वसुदेवादीनाम् । ५ अर्हयामास वसुदेवोग्रसेनाद्यैः प्रयोज्यैरित्यर्थः । ६ इत्युक्त इत्यस्य पितरित्यादिपद्यत्रयेण व्यवहितेनान्वयः । ७ 'रुक्ममाल्यः' इति पाठः । ८ गायत्रमिति प्राजापत्यब्राह्मयोरुपलक्षणम् । व्रतं ब्रह्मचर्यादि । तत्र गायत्रं गायत्रीमध्येतुं त्रिरात्रं, ततः प्राजापत्यं वेदारम्भपर्यन्तं, ततो ब्राह्मं तत्समाप्तिपर्यन्तम् ।

प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ । अत एव सर्वज्ञौ स्वतःसिद्धममलं ज्ञानं प्रच्छादयन्तौ नरचेष्टितैः ॥ ३० ॥ ३१ ॥ यथा यथावत् । उपसाद्य प्राप्य । गुरौ वृत्तिमन्यान् ग्राहयन्तौ शिक्षयन्तौ । गुरुमुपेतावुपगतौ, सेवितवन्तावित्यर्थः ॥ ३२ ॥ शुद्धो भावो यासु ताभिरनुवृत्तिभिः । साङ्गोपनिषदः अङ्गानि षडङ्गानि शिक्षादीनि तैरुपनिषद्भिश्च सहितान् ॥ ३३ ॥ सरहस्यं मन्त्रदेवताज्ञानसहितम् । धर्मान्मन्वादिधर्मशास्त्राणि । न्यायपथान्मीमांसादीन् । आन्वीक्षिकीं तर्कविद्याम् । षड्विधां—'सन्धिश्च विग्रहो यानमासनं द्वैधमाश्रयः' इत्येवं षड्विधां राजनीतिम् ॥ ३४ ॥ सकृन्निगदमात्रेणैकवारं गुरोरुच्चारणमात्रेण ॥ ३५ ॥ तावतीश्चतुःषष्टिकलाः । ताश्च शैवतन्त्रोक्ता लिख्यन्ते । यथा—गीतम् १ वाद्यम् २ नृत्यम् ३ नाट्यम् ४ आलेख्यम् ५ विशेषकच्छेद्यम् ६ तण्डुलकुसुमबलिविकाराः ७ पुष्पास्तरणम् ८ दशनवसनाङ्गरागाः ९ मणिभूमिकाकर्म १० शयनरचनम् ११ उदकवाद्यमुदकघातः १२ चित्रयोगाः १३ माल्यग्रथनविकल्पाः १४ शेखरापीडयोजनम् १५ नेपथ्ययोगाः १६ कर्णपत्रभङ्गाः १७ सुगन्धयुक्तिः १८ भूषणयोजनम् १९ ऐन्द्रजालम् २० कौचुमारयोगाः २१ हस्तलाघवम् २२ चित्र-

प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥ अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ॥ काश्यं[1] सान्दीपनिं नाम ह्यवन्तिपुरवासिनम् ॥ ३१ ॥ यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ॥ ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ प्रोवाच वेदानखिलान्साङ्गोपनिषदो गुरुः ॥ ३३ ॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥ सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ॥ ३५ ॥ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ॥ गुरुदक्षिणयाचार्यं छन्दयामासतुर्नृप ॥ ३६ ॥ द्विजस्तयोस्तं महिमानमद्भुतं सँल्लक्ष्य राजन्नतिमानुषीं मतिम् ॥ संमन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयांबभूव ह ॥ ३७ ॥ ॥

शाकापूपभक्ष्यविकारक्रियाः २३ पानकरसरागासवयोजनम् २४ सूचीवायकर्म २५ सूत्रक्रीडा २६ वीणाडमरुकवाद्यानि २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वाचकयोगाः ३० पुस्तकवाचनम् ३१ नाटकाख्यायिकादर्शनम् ३२ काव्यसमस्यापूरणम् ३३ पट्टिकावेत्रबाणविकल्पाः ३४ तर्ककर्माणि ३५ तक्षणम् ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानम् ४० आकरज्ञानम् ४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनम् ४४ उत्सादनम् ४५ केशमार्जनकौशलम् ४६ अक्षरमुष्टिकाकथनम् ४७ म्लेच्छितकुतर्कविकल्पाः ४८ देशभाषाज्ञानम् ४९ पुष्पशकटिकानिर्मितिज्ञानम् ५० यन्त्रमातृकाधारणमातृका ५१ संवाच्यम् ५२ मानसीकाव्यक्रिया ५३ अभिधानकोशः ५४ छन्दोज्ञानम् ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ वस्त्रगोपनानि ५८ द्यूतविशेषः ५९ आकर्षक्रीडा ६० बालक्रीडनकानि ६१ वैनायिकीनाम् ६२ वैजयिकीनाम् ६३ वैतालिकीनां च विद्यानां ज्ञानम् ६४ इति चतुःषष्टिकलाः । छन्दयामासतुरुपलोभितवन्तौ ॥ ३६ ॥ प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयामास ॥ ३७ ॥ ॥ ॥

१ काश्यं काशगोत्रजमिति बालबोधिनी । कश्यपगोत्रजातमिति विज० । काश्य काश्या जातमिति तोषणी ।

ईश्वराविति विदित्वा समुद्रस्तयोरर्हणमाजहार ॥ ३८ ॥ ३९ ॥ पञ्चजनस्त्वसुरोऽहार्षीत् । स च महान्ममासाध्य इत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सपर्यां पूजाम् । सर्वेषां भूतानामाशया अन्तःकरणानि तान्यालयो निवासो यस्य तम् ॥ ४४ ॥ निजं कर्मैव निबन्धनं यस्य तथाभूतमपि मदाज्ञापुरस्कारेणानयतस्ते न दोष इत्यर्थः ॥ ४५ ॥ ४६ ॥ वत्सेति प्राधान्येनैकस्य संबोधनम् । गुरोर्निष्क्रयो गुरुदक्षिणा । युष्मद्विधयोर्गुरोर्मम कामानां मध्ये को नु

तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ॥वेलामुपव्रज्य निषीदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत्तयोः
॥ ३८ ॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥
॥ समुद्र उवाच ॥ नैवाहार्षमहं[2] देव दैत्यः पञ्चजनो महान् ॥ अन्तर्जलचरः[3] कृष्ण शङ्खरूपधरोऽसुरः ॥४०॥ (आस्ते[4]
तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥) जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥ तदङ्गप्रभवं शङ्खमादाय रथमागमत् ॥ ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४२ ॥ गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः ॥ शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥ ४३ ॥ तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ॥ उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ लीलामनुष्य[5] हे विष्णो युवयोः करवाम किम् ॥ ४४ ॥ ॥ श्रीभगवानुवाच ॥
गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४५ ॥ तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ ॥ दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४६ ॥ ॥ गुरुरुवाच ॥ सम्यक् संपादितो वत्स भवद्भ्यां
गुरुनिष्क्रयः ॥ को नु युष्मद्विधगुरोः कामानामवशिष्यते[6] ॥ ४७ ॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥
छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४८ ॥ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा ॥ आयातौ स्वपुरं तात पर्जन्यनिनदेन वै ॥ ४९ ॥ समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ॥ अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥५०॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे गुरुपुत्रानयनं नाम पञ्चचत्वारिंशोऽध्यायः ॥४५॥ ॥छ॥ ॥

कामोऽवशिष्यते, न कोऽपीति ॥ ४७ ॥ हे वीरौ ॥ ४८ ॥ अनिलवद्रंहो वेगो यस्य तेन ॥ ४९ ॥ पर्जन्यो मेघस्तद्वन्निनदो यस्य तेन नष्टमदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥छ॥

१ निबन्धनमत्रागमने कारणत्वादवश्यभोग्यम् । २ 'न चाहार्षं' इति पाठः । ३ अन्तरिति आस्ते इति शेषः । ४ आस्ते इत्याद्यर्धमधिकं क्वचिदिति तोषणी । अत एवोत्तरत्रापि प्रभुरित्यध्याहार इति व्याख्यातवान् । ५ अस्मिन्पाठे युवयोरिति द्विवचनं रामाभिप्रायेण । क्वचित्—'लीलामनुष्ययोर्विष्णो' इति पाठः । ६ 'कामो नामावशिष्यते' इति पाठः ।

षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ॥ यशोदानन्दयोश्चक्रे कृष्णः शोकापनोदनम् ॥ १ ॥ कामचारं द्विजातिः सन्परित्यज्यातिसंयतः ॥ गुरोर्ज्ञानमनुप्राप्य सख्यां गोपीरुपादिशत् ॥ २ ॥ गोपीनां सान्त्वनमतिरहस्यं सन्मन्त्रिसाध्यमिति तदर्थमुद्धवं विशिनष्टि—वृष्णीनामिति । बुद्धिसत्तमो बुद्ध्यातिश्रेष्ठः ॥ १ ॥ २ ॥ ॥ ३ ॥ गोपीनां विशेषतः संदेशे कारणमाह—ता इति । मय्येव संकल्पात्मकं मनो यासां ताः । अहमेव प्राणो यासां ताः । मदर्थे त्यक्ता दैहिकाः पतिपुत्रादयो याभिस्ताः । ततः किमत आह—ये त्यक्तलोकधर्मा इति । मन्निमित्तं त्यक्तौ लोकधर्मौ विहामुत्र सुखे तत्साधनानि च यैस्तान् बिभर्मि पोषयामि संवर्धयामि सुखयामीत्यर्थः ॥४॥ तासां वियोगाधिं दर्शयति द्वयेन—मयि ता इति । विरहेणौत्कण्ठ्यं तेन विह्वलाः परवशाः ॥५॥ गोकुलान्निर्गमनसमये शीघ्रमा-

॥ श्रीशुक उवाच ॥ वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ॥ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥
तमाह भगवान्प्रेष्ठं भक्तमेकान्तिनं क्वचित् ॥ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ॥ गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥ ३ ॥ ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ॥ ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥ ४ ॥ मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥ ५ ॥ धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ॥ प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्त उद्धवो राजन्संदेशं भर्तुरादृतः ॥ आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥ प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥ वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥ इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ॥ गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च ॥ १० ॥ गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥ ॥ ॥

गमिष्यामीति ये प्रत्यागमनसंदेशास्तैः । मे मदीया वल्लव्यो गोप्यः । मदात्मिका इति । तासामात्मा यदि स्वदेहे स्यात्तर्हि विरहतापेन दह्येतैव तस्य मयि वर्तमानत्वात्कथंचिज्जीवन्तीति भावः ॥ ६ ॥ संदेशं—'भवतीनां वियोगो मे नहि सर्वात्मना क्वचित्' इत्यादिकम् ॥ ७ ॥ निम्लोचत्यस्तं गच्छति सति । छन्नं यानं यस्येति । तदा गोपीभिरज्ञातत्वेन नन्दसङ्गं लब्धवानिति सूचयति ॥८॥ व्रजं वर्णयति पञ्चभिः—वासितार्थे इत्यादिना । वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युध्यद्भिः शुष्मिभिर्मत्तैर्वृषैर्नादितम् । वास्राभिर्धेनुभिः । स्ववत्सकान्प्रति ॥ ९ ॥ विलङ्घद्भिः उत्पतद्भिः गोदोहशब्दैः सहाभितो रवाः मुञ्च, मा मुञ्च, नय, आनय, देहि, गृहाणेत्यादयो यस्मिंस्तम् । वेणूनां निःस्वनेन च मण्डितम् ॥ १० ॥ गायन्तीभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥ ॥

१ सख्या उद्धवेन । २ दैहिका इत्येतदग्रे—'मामेव दयितं प्रेष्ठमात्मानं मनसा गताः' इत्यर्धमधिकं क्वचित् । ३ उपलक्षिता इति शेषः ।

अर्घ्याद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्च मनोरमम् ॥ १२ ॥ षण्डैः समूहैः ॥ १३ ॥ आर्चयत् पूजयामास ॥ १४ ॥ कशिपौ शय्यायां संविष्टम् ॥ १५ ॥ १६ ॥ साधूनामिति कर्मणि षष्ठ्यः ॥ १७ ॥ गावो गाः । गिरिं गोवर्धनम् ॥ १८ ॥ अप्यायास्यत्यागमिष्यति किम् ॥ १९ ॥ श्रीकृष्णोपकारस्मरणादिभिरनुपमानन्देनाभिभूयमान आह—दावाग्नेरित्यादिना । वाताद्वर्षाच्चेति वृषात्सर्पाच्चेति अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्मः ॥ २० ॥ किंच स्मर-

अर्घ्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥ सर्वतः पुष्पितवनं द्विजालिकुलनादितम् ॥ हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम् ॥ १३ ॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ॥ नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत् ॥ १४ ॥ भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥ १५ ॥ कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १६ ॥ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ॥ गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ १८ ॥ अप्यायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम् ॥ तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ॥ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥ स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम् ॥ हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥ २१ ॥ सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥ कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ॥ अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥ तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ॥ बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ २५ ॥ प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया ॥ २६ ॥ ॥ ॥

तामिति । लीलयापाङ्गेन निरीक्षितम् । अङ्ग हे उद्धव ॥ २१ ॥ न केवलं शिथिला एव, किंतु शनैरुपरमन्तीत्याह—सरिच्छैलेति । सरितश्च शैलाश्च वनोद्देशाश्च तान् । आक्रीडान् क्रीडास्थानानि ॥ २२ ॥ सुराणामर्थाय । महद्गम्भीरं गर्गस्य वचनं यथा ॥ २३ ॥ न केवलं तद्वचनानुसारेणैव व्यवहारसंवादादपीत्याह—कंसमिति ॥ २४ ॥ इभराड्यष्टिमिव तालत्रयप्रमाणं धनुर्बभञ्ज ॥ २५ ॥ २६ ॥ ॥ ॥ ॥ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अखिलगुरुत्वमेव जनकत्वेन नियन्तृत्वेन चाह—एताविति । रामो मुकुन्दश्चेत्येतौ विश्वस्य वीजयोनी निमित्तोपादाने । ननु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह—पुरुषः प्रधानमिति । पुरुषोंऽशः । प्रधानं शक्तिः । अतः प्रधानपुरुषावप्येतावेवेत्यर्थः । एवं जनकत्वमुक्तम् । किंच अन्वीय भूतेषु भूतेष्वनुप्रविश्य भूतानां तदुपहितस्य विलक्षणस्य नानाभेदस्य ज्ञानस्य जीवस्य चेशाते ईश्वरौ नियन्तारौ भवतः । कुतः । पुराणावनादी । अनादित्वात्कारणत्वं ततश्च नियन्तृत्वमित्यर्थः ॥ ३१ ॥ ननु सृष्ट्यादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच्च तस्यान्येभ्यः को विशेष इत्याशङ्क्याह—यस्मिन्निति द्वाभ्याम् । कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवानर्कवर्णः शुद्धसत्त्वमूर्तिः सन् परां गतिं तत्पदं याति ॥ ३२ ॥ अखिलस्यात्मा च हेतुश्च

॥ श्रीशुक उवाच ॥ इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ॥ अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥ २७ ॥ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥२८॥ तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ॥ वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥ ॥ उद्धव उवाच ॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥३०॥ एतौ हि विश्वस्य च वीजयोनी रामो मुकुन्दः पुरुषः प्रधानम् ॥ अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥ यस्मिञ्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥ तस्मिन्भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भावं विधत्तां नितरां महात्मन्किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ॥ ३४ ॥ हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥ मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके ॥ अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥ ॥ ॥

तस्मिन्कारणेन मनुष्याकृतौ महात्मन्महात्मनि परिपूर्णे भवन्तौ भक्तिं कुरुतः । अतः कृतकृत्यावित्यर्थः ॥ ३३ ॥ प्रस्तुतमाह—आगमिष्यतीति । पित्रोर्युवयोः ॥३४॥ 'यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ॥ ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥' इति यदाह कृष्णस्तत्सत्यं करिष्यतीति ॥ ३५ ॥ कालविलम्बनमसहमानौ प्रत्याह—मा खिद्यतमिति । हे महाभागौ । अन्तिके इदानीमेव समीपे वा । कुत इत्यत आह—अन्तर्हृदीति । तर्हि सर्वैः किमिति न दृश्यते तत्राह—ज्योतिरिवैधसीति । तद्यथा मथनं विना न दृश्यते तथा भक्तिं विना कृष्णोऽपीति भावः ॥ ३६ ॥ ॥ ॥

१ चैतन्यात्मकस्य । २ भूतेष्वन्तर्यामितया प्रविश्य विलक्षणस्याप्राकृतज्ञानस्य ईशाते । भक्तेभ्यो भगवज्ज्ञानस्य ज्ञानिभ्यो महाज्ञानस्य चकारात्कर्मिभ्यः स्वर्गादिसाधनभूतस्य प्राकृतज्ञानस्य कृपया दातारौ स्यातां इति चक्र० । ३ 'युवयोस्तु कृत्यं', 'युवयोः स्वकृत्यम्' इति च पाठः । ४ 'प्रतीतं' इति पाठः ।

अहो आस्तामेतत्तस्य त्विहागमनं स्वस्यातिप्रियान्पित्रादीन्विहाय न सङ्गच्छत इति मन्येत तत्राह—न ह्यस्येति । अस्य प्रियादयो नहि सन्ति । तत्र हेतू—अमानिनः समानस्येति च ॥ ३७ ॥ ३८ ॥ सोऽपि जन्मकर्मादिरहितोऽपि क्रीडाप्रयोजनः सन् स साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्त्विकराजसतामसयोनिषु, यद्वा देवादिमत्स्यादिनृसिंहादियोनिषु कल्पते आविर्भवतीत्यर्थः ॥ ३९ ॥ ननु जन्मकर्मादिरहितस्य कुत एतदित्यत आह—सत्त्वमिति । क्रीडामतीतोऽपि क्रीडन् । तथापि मायागुणैर्घटत इत्यर्थः ॥ ४० ॥ अत्राविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टान्तीकुर्वंस्तस्याविद्ययैव कर्तृत्वमिति सदृष्टान्तमाह—यथेति । भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यतीति यथा प्रतीयते एवं चित्ते कर्तरि सति तत्र चित्तेऽहंधिया आत्माध्यासेनात्मा कर्ता

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः ॥ नोत्तमो नाधमो वापि समानस्यासमोऽपि वा ॥३७॥ न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव[3] च ॥ ३८ ॥ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थः[4] सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥ सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ॥ ४० ॥ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥ ४१ ॥ युवयोरेव नैवायमात्मजो भगवान्हरिः ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥ दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाऽच्युताद्वस्तु तरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥ एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन् ॥ गोप्यः समुत्थाय निरूप्य दीपान्वास्तून्समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः ॥ चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥ उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः ॥ दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥४६॥ ॥

स्मृतो यथा तद्वदिति ॥ ४१ ॥ किंच युवयोरेव नायमात्मजः किंतु सर्वेषामपि, तत्रापि नात्मज एव किंतु शत्रुमित्रादिरूपोऽपीति सर्वात्मत्वनिरूपणेन मोहनिवृत्तये संबन्धमनैकान्तिकीकरोति—युवयोरेवेति द्वाभ्याम् ॥ ४२ ॥ अच्युताद्विना तरां नितरां तत्त्वतो वाच्यं निर्वचनार्हं वस्तु नास्तीति ॥ ४३ ॥ दीपान्निरूप्य प्रज्वाल्य । वास्तून् देहल्यादीन् ॥ ४४ ॥ मणिभिः काञ्च्यादिषु स्थितैः रज्जूर्विकर्षत्सु भुजेषु कङ्कणानां स्रजो यासां ताः । चलन्तो नितम्बाः स्तना हाराश्च यासां ताः, कुण्डलैस्त्विषन्तः स्फुरन्तः कपोला यासां ताः, अरुणानि कुङ्कुमानि येषु तान्याननानि यासां ता एव ताश्च ताश्च ॥ ४५ ॥ ४६ ॥

१ नन्द इति शेषः । 'इति मन्ये तत्राह' इत्यपि पाठः । २ चित्तेऽहंधिया चित्तमेवाहमिति बुद्ध्या आत्मा कर्तेव स्मृतः जीवैः स्मर्यते प्रतीयत इत्यर्थ इति तोप० । ३ अत्र सन्ध्यभाववस्त्वविवक्षया । ४ क्रीडार्थः 'लोकवत्तु लीलाकैवल्यं' इति न्यायेन क्रीडाप्रयोजनः 'क्रीडार्थे' इत्यपि पाठः । ५ स्थास्नुः इति पुंस्त्वमार्षम् । 'स्थास्नु चरिष्णु महत्' इति पाठो निर्विवाद एव । ६ 'परमात्मभूतः' इति पाठः । ७ दीपदीप्तैरतिप्रकाशैः, यद्वा दीपादपि दीप्तैरधिकप्रकाशैर्विरेजुः । ८ 'त्विष्यत्कपोलारुण' इति पाठः ।

तदा व्रजौकसो गोप्यः ॥ ४७ ॥ सक्रोधमाहुः—अक्रूर इति । अर्थं साधितवानित्यर्थसाधकः । तदाहुः—येन नीत इति ॥४८॥ कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्य स्वयमेव कारणं संभावयन्ति—किमिति । तदा साधितेन कार्येण प्रीतस्य तुष्टस्य भर्तुः । पाठान्तरे प्रेतस्य मृतस्य कंसस्य निष्कृतिमौर्ध्वदेहिकमस्माभिः कृत्वा साधयिष्यते किम् । अस्मन्मांसैः पिण्डान्कृत्वा दास्यतीत्यर्थः । इत्येवं वदन्तीनां स्त्रीणां ततस्तस्मिन्नवसरे कृताह्निकः कृतस्नानादिनियम उद्धव आगत इति ॥४९॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां षट्चत्वारिंशोऽध्यायः ॥४६॥ ॥ सप्तचत्वारिंशकेऽथ

भगवत्युदिते सूर्ये नन्द[2]द्वारि व्रजौकसः ॥ दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥ ४७ ॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ॥ येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥ किं साधयिष्यत्यस्माभिर्भर्तुः [1]प्रीतस्य निष्कृतिम् ॥ इति स्त्रीणां वदन्तीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे नन्दशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ [3]तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् ॥ पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं [4]मणिमृष्टकुण्डलम् ॥ १ ॥ [5]शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥ तं [6]प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥ भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ॥ स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥५॥ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥ पुम्भिः स्त्रीषु कृता यद्वत्[7]सुमनस्स्विव षट्पदैः ॥ ६ ॥ [8]निःस्वं त्यजन्ति गणिका [9]अकल्पं नृपतिं प्रजाः ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥

कृष्णादेशेन गोपिकाः ॥ बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्पुरीम् ॥ १ ॥ १ ॥ अपीच्यं सुन्दरं दर्शनं यस्य सः । अच्युतस्येव वेषो भूषणानि च यस्य सः । कोऽयं कुतो वा कस्य चेति वदन्त्यस्तं परिवव्रुः ॥ २ ॥ ३ ॥ पार्षदं सेवकम् ॥ ४ ॥ पित्रोः प्रियचिकीर्षयेत्यत्र हेतुः—स्नेहानुबन्ध इति ॥ ५ ॥ अन्यथा गोव्रजे तस्येत्यत्र हेतुः—अन्येष्विति । अर्थकृता कार्यनिमित्ता । विडम्बनमनुकरणमात्रं न तु तात्त्विकी मैत्री । पुम्भिरिति दृष्टान्तौ ॥ ६ ॥ अस्यैवान्यार्थनिदर्शनैः प्रपञ्चः—निःस्वमित्यादिना । दत्ता दक्षिणा येन तं याज्यम् ॥ ७ ॥ ॥ ॥ ॥

१ 'प्रेतस्य निष्कृतिम्' इत्येवरूपे । २ 'व्रजद्वारि' इति पाठः, तत्रापि व्रजपतेर्द्वारीत्येवार्थः । ३ तमिति । रहसीत्यस्य तृतीयपद्यस्थस्याप्यत्रान्वयः । ४ मणियुक्ते मृष्टे उज्ज्वले कुण्डले यस्य तम् । 'परिमृष्टकुण्डलम्' इत्यपि पाठः । ५ 'सुविस्मिताः' इति तोषणीपाठः । ६ प्रश्रयेण प्रेम्णा । ७ सुमनस्सु श्लेषेण शोभनमनस्सु । ८ निःस्वं निर्द्रव्यमित्यर्थः । ९ अकल्पं पालनाद्यसमर्थम् ।

पक्षिणो विगतफलं वृक्षम् । रतामनुरक्तामतृप्तामित्यर्थः ॥ ८ ॥ त्यक्तलौकिकास्त्यक्तलोकव्यवहाराः ॥ ९ ॥ प्रियस्य कर्माणि गायन्त्यस्तथा तस्य बाल्यकैशोरयोर्यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियः सत्यो रुदत्यश्च तमपृच्छन्निति पूर्वक्रिययैव संबन्धः ॥ १० ॥ प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाब्रवीत् । यद्वा तस्मिन्नप्युद्धवे प्रियप्रस्थापितं दूतमिति दूतदृष्टिं कृत्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः ॥ ११ ॥ हे मधुप, कितवस्य धूर्तस्य बन्धो नोऽस्माकमङ्घ्रिं मा स्पृश । मा मां नमस्कारेण प्रार्थयस्वेत्यर्थः । तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाह—सपत्न्याः कुचाभ्यां लुलिता संमर्दिता या कृष्णस्य वनमाला अत एव तस्याः कुङ्कुमं येषु तैः श्मश्रुभिरुपलक्षितः । किंतु तासामेव मानिनीनां प्रसादं मधुपतिर्वहतु, किमस्मत्प्रसादनेन तस्य यदुसदसि विडम्ब्यमुपहासास्पदम् । कुतः । यस्य दूतस्त्वमीदृगीदृशः ॥ १२ ॥ ननु किमित्येवं तमव-

खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ॥ दग्धं मृगास्तथारण्यं जारो भुक्त्वा रतां स्त्रियम् ॥८॥ इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ॥ कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥ गायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥ काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ॥ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥११॥ ॥गोप्युवाच॥ मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ॥ वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥ सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् ॥ परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥ किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥ विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥ ॥

जानीथ, किं यस्तेनापकृतमत आह—सकृदिति । भवादृक् त्वादृशो दुर्मनाः सुमनसः कुसुमानि यथा त्यजति तद्वत् । अहो बताविज्ञस्य तस्य पादपद्मं श्रीः कथं सेवते, चिदितं मयेत्याह—अपीति । बतेति खेदे । उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलपैः प्रायो हृतचेताः, वयं तु न लक्ष्मीवदविचक्षणा इति भावः ॥ १३ ॥ झङ्कारान्बहुधा कुर्वन्तमस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाह—किमिहेति । पुराणं पुरातनं बहुशोऽनुभूतम् । विजयसखस्य श्रीकृष्णस्य सांप्रतं याः सख्यस्तासामग्रतस्तत्प्रसङ्गो गीयताम् । इष्टाः कृष्णस्य प्रियाः । तेन पूजिता इति वा । तेनालिङ्गितेन क्षपिता कुचरुग्यासां तास्तवेष्टमपेक्षितं दास्यन्तीति ॥ १४ ॥ ॥ ॥ ॥ ॥

१ यद्वा तस्मिन्प्रियप्रस्थापितोद्धवदृष्टिं कृत्वेत्यादिः पाठो बहुत्र । २ मधुपेति श्लेषेण हे मद्यप । मद्यपः प्रायोऽन्यं वञ्चयति । ३ इदं प्रसादविशेषणम् । ४ सपत्नीकुचकुङ्कुमलिप्तश्मश्रुः । ५ याते प्राप्ते । ६ लोकवेदमर्यादाविस्मारिकाम् । ७ त्यागमात्रेऽयं दृष्टान्तः । ८ अगृहाणां गृहरहितानां वनचरीणां, तेनैव त्याजितगृहाणां वा, गृहरहितत्वादेव त्वदिष्टं दातुमसमर्थानामित्यर्थः । ९ अविज्ञस्येति श्रीधरी न सम्यगवगता । १० उत्तमश्लोकस्येव ये तस्य जल्पाः प्रलोभनभाषितानि तैः, यद्वोत्तमश्लोकानामुक्तिभिर्हृतचेताः सतीत्यर्थः ।

भो मातः, मैवं वोचस्त्वामनुस्मृत्यानङ्गविक्लवस्त्वां प्रसादयितुं मामादिष्टवानित्यत आह—दिवीति । दिवि भुवि रसातले च याः स्त्रियः स्युः ताः का नाम दुरापाः, न काश्चन । तदित्यव्ययम्, तस्येत्यर्थः । कपटेन रुचिरेण हासेन भ्रूविजृम्भो यस्य तस्य । हे कपट, इति वा । किंच यस्य चरणरजः श्रीः सेवते तत्र वयं काः । अपि च यद्यप्येवं तथापि कृपणपक्षे कृपणानुकम्पिनि पुंस्युत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥ १५ ॥ पादमूले प्रविशन्तं क्षमापयिष्यन्तमिव मत्वाह—विसृजेति । शिरसि न्यस्तं पादं विसृज । तथाप्यमुञ्चन्तमाह—वेद्मीति । मुकुन्दादभ्येत्य ततः शिक्षित्वेत्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयविदुषः प्रार्थनाचतुरस्य ते तव सर्वमहं वेद्मि । मुकुन्दवत्त्वमप्यविश्वसनीय इति भावः । ननु तेन किमपराद्धं तत्राह—स्वकृत इति । स्वकृते तदर्थमेव विसृष्टा अपत्यपत्यन्यलोकाः अपत्यानि पतयश्चेतीह लोकोऽन्यलोको धर्मसाध्यश्च याभिस्ता नः अकृतचेता असंयतचित्तो यो व्यसृजदस्मिन्किं नु संधातव्यमिति ॥ १६ ॥ किंच कृष्णस्य पूर्वाणि कर्माण्यनुसंदधाना बिभेम्यहमस्मादित्याह—मृगयुरिवेति । मृगयुर्लुब्धक इव यः कपीन्द्रं वालिनं विव्यधे अविध्यत् । लुब्धधर्मा क्रौर्यवान् वा । अलुब्धधर्मेति वा । लुब्धको हि तन्मांसमत्तुकामो विध्यति, अयं तु न तथा, अतो वृथा । कठिन इत्यर्थः ।

दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ॥ चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ॥ स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥१६॥ मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ॥ बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ॥ सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥ ॥ ॥

तथा स्त्रियं शूर्पणखां स्त्रीजितः सीतापरतन्त्रः काम एव यानं प्राप्तिसाधनं यस्यास्तां विरूपां छिन्नकर्णनासिकामकरोद्दाशरथिरूपेण । तथा बलिमपि तद्दत्तं बलिमत्त्वा भक्षयित्वा ध्वाङ्क्षवत्काकवदवेष्टयद्बबन्ध वामनरूपेण । 'बलिमत्त्वाऽधोऽक्षिपद्विष्टपाद्य' इति पाठे बलिं पूजां गृहीत्वा विष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः । तत्तस्मादसितस्य कृष्णस्य सख्यैरलम् । एवं चेत्किमिति तं नित्यं गायथ तत्राह—दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति ॥ १७ ॥ अपि च जानीम एव तत्कथाऽपि त्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुं शक्नुमः, किं कुर्म इत्याह—यदनुचरितेति । यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वन्द्वधर्मा रागादयो येषां तेऽत एव विनष्टा असत्तुल्या दीनं दुःखितं गृहकुटुम्बं विहाय दीना भोगहीना विहङ्गा अपि भिक्षुचर्यां प्राणवृत्तिमात्रं चरन्त्यतस्त्याज्याः, तथापि त्यक्तुं न शक्नुम इति निन्दापरत्वेऽयं तावच्छ्रौतोऽर्थः । दुस्त्यजत्वेऽपि पारमार्थिकोऽयमर्थः । विधूतद्वन्द्वधर्मा इत्यन्तः समासः पूर्ववत् । ततस्ते च ते अविनष्टाश्चेति समासः । इतरे पुनर्द्वन्द्वधर्माणो विनष्टा एव । सपदि तत्क्षणमेव दीनं तुच्छं गृहसहितं



१ किंच तस्योत्तमश्लोकशब्दोऽपि कृपणपक्षे । कृपणा एव तस्योत्तमश्लोकत्वं जल्पन्ति, नतु मादृश्य इत्यर्थः । इति आक्षेप इति तोष० । २ 'दूत्यैः' इति पाठः । ३ इह वृन्दावने । 'इव विहङ्गाः' इति पाठे बहवो जना विहङ्गा इव भिक्षुचर्यां चरन्तीत्यन्वयः ।

कुटुम्बं विहाय दीना इवाकिंचनाः । 'धीराः' इति वा पाठः । बहवो विहङ्गा हंसा इव सारासारविवेकचतुरा भिक्षुचर्यां पारमहंस्यं चरन्ति । तस्मादेवं परमपुरुषार्थरूपत्वाद्दुस्त्यज एव तत्कथार्थ इति ॥ १८ ॥ ननु किमेवं ब्रूषे, पूर्वं त्वयैव साकं रहसि किमेवं नावोचदित्यत आह—वयमिति । हे उपमन्त्रिन् दूत, आस्तामियं वार्ता । यतः कुलिकस्य मृगयोः रुतं गीतमज्ञा यथा ऋतं सत्यमिति श्रद्दधानाः कृष्णस्य हरिणस्य वध्वो भार्या हरिण्यः शरैः क्षताः सत्यो रुजो दद्दशुः । एवं जिह्मस्य कुटिलस्य तस्य व्याहृतं ऋतमिव श्रद्दधानाः स्पृहयन्त्यो वयमसकृदेतद्ददृशिम । किं तत् । तस्य नखैः स्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः । तस्मादन्या वार्ता भण्यतां कथ्यतामिति ॥ १९ ॥ परावृत्य गत्वा पुनरागतं प्रत्याह—प्रियसखेति । हे प्रियस्य सखे, प्रेयसा कृष्णेन पुनः प्रेपितः किं त्वमागतोऽसि । अङ्ग हे दूत, मे माननीयः पूज्योऽसि । अतो भवान् किमनुरुन्धे प्राप्तुमिच्छतीत्यर्थः । तद्वरय वृणीष्व । संमानितं प्रत्याह—नयसीति । इह सती

वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ॥ ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन्भण्यतामन्यवार्ता ॥ १९ ॥ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ॥ नयसि कथमिहास्मान्दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥ २० ॥ अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते स्मरति स पितृगेहान्सौम्य[1] बन्धूंश्च गोपान् ॥ क्वचिदपि स कथा[2] नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदा नु ॥ २१ ॥ ॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥ सान्त्वयन्प्रियसंदेशैर्गोपीरिदमभाषत ॥ २२ ॥ ॥ उद्धव उवाच ॥ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥ वासुदेवे भगवति यासा[3]मित्यर्पितं मनः ॥ २३ ॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥ २४ ॥ भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥ दिष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च ॥ हित्वाऽवृणीत यूयं यत्कृष्णाख्यं पुरुषं परम् ॥ २६ ॥ सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥ २७॥

अस्मान् दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य पार्श्वं समीपं कथं नयसि नेष्यसि । तथा हि—हे सौम्य, श्रीर्नाम वधूः । साकं सहैव सततमास्ते । तत्राप्युरसि वक्षस्येव ॥ २० ॥ तेन संमन्त्रिता सती ब्रूते । अपि बतेति । बत हर्षे । हे सौम्य, गुरुकुलादागत्यार्यपुत्रः कृष्णोऽधुना किं मधुपुर्यां वर्तते । कदाचिदपि नोऽस्माकं वार्ताः किं ब्रूते । अगुरुवत्सुगन्धं भुजं नो मूर्ध्नि कदा नु धास्यतीति ॥ २१ ॥ श्रीकृष्णदर्शनोत्सुका गोपीः प्रियस्य संदेशैः सान्त्वयन् प्रथमं तावदिदमभाषत ॥ २२ ॥ तदाह षड्भिः—अहो इति । स्म नूनं यूयं पूर्णार्थाः कृतार्थाः ॥ २३ ॥ श्रेयोभिः श्रेयःसाधनैः ॥ २४ ॥ अनुत्तमा अतिश्रेष्ठा ॥ २५ ॥ अवृणीत वृतवत्यः ॥ २६ ॥ सर्वात्मभाव एकान्तभक्तिः । अधिकृतः प्राप्तः । भगवत्प्रेमसुखप्रदर्शनेन ममैव महाननुग्रहः कृत इति ॥ २७ ॥ ॥ ॥

१ एकस्मिन्पदे सौम्याश्च ते बन्धवश्चेति स्मृतियोग्यता । २ 'कथां नः' इति पाठः । ३ यासां याभिरित्यर्थः ।

भर्तुः कृष्णस्य रहस्करो रहस्यकार्यकर्ता ॥२८॥ भवतीनां मे मया सह वियोगो नास्ति । कुतः । सर्वात्मना सर्वस्योपादानकारणेन । अत एव सर्वेषु मनआदिकार्येष्वहमनुगतत्वेन स्थित इति सदृष्टान्तमाह—यथेति । भूतेषु चराचरेषु महाभूतानि । वाय्वग्निर्वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः । यथा तथाऽहं चेति । मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ॥ २९ ॥ ननु कारणत्वे सर्वानुगतत्वे च कार्यकारणभेदः स्यादत आह—आत्मन्येवेति । ननु नित्यसिद्धस्य कुतः सृष्ट्यादिरूपता अत आह—भूतेन्द्रियगुणात्मना । बुद्धीन्द्रियेति वा पाठः । तद्रूपेणेति । ननु निर्विकारस्य कुतस्तद्रूपतेति तत्राह—आत्ममायानुभावेनेति ॥ ३० ॥ नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसङ्गः स्यात्तत्राह—आत्मेति । आत्मा तु शुद्धः । कुतः । अगुणान्वयः न गुणेष्वन्वेतीति तथा । तत्कुतः । व्यतिरिक्तः । तदपि कुतः । ज्ञानमयो ज्ञानस्वरूपः । नन्वहंप्रत्यये स्वसंवेद्यमेवात्मनो नानावस्थावत्त्वमिति कुतः शुद्धतेति तत्राह—सुषुप्तीति । मायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते, न स्वत इत्यर्थः ॥३१॥ कुतः । मनोनिरोधे तदभावात्, इति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते—येनेति । उत्थितः पुमान्

श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥ यमादायागतो भद्रा अहं भर्तू रहस्करः ॥२८॥ ॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ तथाहं च मनःप्राणभूतेन्द्रियगुणाश्रयः ॥२९॥ आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ॥ आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥३०॥ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥३१॥ येनेन्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः ॥ तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥३२॥ एतदन्तः समाम्नायो योगः सांख्यं मनीषिणाम् ॥ त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ॥३३॥ यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनसः संनिकर्षार्थं मदनुध्यानकाम्यया ॥३४॥ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेतः संनिकृष्टेऽक्षगोचरे ॥३५॥ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥३६॥ या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ॥ अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तया ॥३७॥ ॥

यथा मिथ्याभूतमेव स्वप्नं ध्यायति, एवं बाधितानपीन्द्रियार्थान् शब्दादीन्येन मनसा ध्यायेच्चिन्तयेत् । ध्यायंश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप । तन्मनो विनिद्रोऽनलसः संनिरुन्ध्यान्नियच्छेदिति ॥ ३२ ॥ तावता च कृतार्थो भवतीत्याह—एतदन्त इति । एष मनोनिरोधः अन्तः समाप्तिः फलं यस्य सः । समाम्नायो वेदः । स तत्र पर्यवस्यतीत्यर्थः । योगोऽष्टाङ्गः । सांख्यमात्मानात्मविवेकः । त्यागः संन्यासः । तपः स्वधर्मः । दम इन्द्रियदमनम् । मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टान्तः—समुद्रान्ता आपगा नद्य इवेति ॥ ३३ ॥ ननु किमन्यानिवास्मानात्मविद्यया प्रलोभयसि, वयं तु सर्वसुन्दरसकलगुणगणालंकृतेन त्वया विरहं नैव सहाम इति चेदत आह—यत्त्वहमिति । दृशां दूरे यद्वर्ते तन्मदनुध्यानार्थम् । तच्च ध्यानं मनसः संनिकर्षार्थमिति ॥ ३४ ॥ एतदुपपादयति त्रयेण—यथा दूरचर इति ॥ ३५ ॥ ३६ ॥ उपैष्यथेति माधुर्यमात्रमिति चेदत आह—या इति । हे कल्याण्यः, स्वभर्तृभिः प्रतिबद्धा या वने क्रीडता मया सहालब्धक्रीडास्तास्तदैव मामापुः प्रापुः ॥३७॥

तस्य संदेशेनागता स्मृतिर्यासां ताः । प्रथमार्थे द्वितीया ॥ ३८ ॥ यदूनामहितः शत्रुः । अघकृद्दुःखदः । दिष्ट्येत्यानन्दे । आप्तैः प्राप्तैर्हितैर्वा सह ॥ ३९ ॥ अन्या ऊचुः—कच्चिदिति । नोऽस्माकं करणीयां प्रीतिं कच्चित्पुरयोषितां करोति । स्निग्धं च तत्सव्रीडहासेनोदारमीक्षणं तेनार्चितस्ताभिरस्माभिर्वा ॥ ४० ॥ अन्या ऊचुः—कथमिति । तासां वाक्यैर्विभ्रमैश्चानुभाजितः पूजितः ॥ ४१ ॥ पुनरन्या ऊचुः—किमनया चिन्तया, अस्मान् क्वचित्प्रस्तुते प्रसङ्गे स्मरति किम् । ग्राम्या अविदग्धाः ॥ ४२ ॥ अन्या ऊचुः—ताः किमिति । कुमुदैः कुन्दैः शशाङ्केन च रम्ये वृन्दावने क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यामस्माभिः प्रियाभिरीडिता मनोज्ञाः कथा यस्य स तदा यासु निशासु रेमे ताः कदाचित्किं नु स्मरति वा, न वेति ॥ ४३ ॥ स्वनिमित्तेन शोकेन तप्ता नोऽस्मान्गात्रैः

॥ श्रीशुक उवाच ॥ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः ॥ ३८ ॥
॥ गोप्य ऊचुः ॥ दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना
॥ ३९ ॥ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम्[1] ॥ प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥ कथं
रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥ अपि स्मरति नः साधो
गोविन्दः प्रस्तुते[2] क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४२ ॥ ताः किं निशाः स्मरति यासु तदा
प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ॥ रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित्
॥ ४३ ॥ अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥ संजीवयन्नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४४ ॥ कस्मा-
त्कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥ नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥ किमस्माभिर्वनौकोभिरन्या-
भिर्वा महात्मनः[3] ॥ श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४६ ॥ परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ॥
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥ क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम्[5] ॥ अनिच्छतोऽपि
यस्य श्रीरङ्गान्न[4] च्यवते क्वचित् ॥ ४८ ॥ ॥ ॥ ॥ ॥

करस्पर्शादिभिः संजीवयन्किं नु इहैष्यतीति ॥ ४४ ॥ अन्या ऊचुः—कस्मादिति । अनन्यगतित्वेन पूर्वमत्रावसत्, संप्रति महदैश्वर्यं प्राप्तः कस्मादिहागमिष्यतीति ॥ ४५ ॥ अन्यास्तु परमार्थमूचुः—किमस्माभिरिति । वनचरीभिरस्माभिरन्याभिर्वा राजकन्याभिर्महात्मनो धीरस्य । किंच श्रीपतेः । तदपि आस्ताम् । स्वत एवाप्तकामस्तात एव कृतात्मनः पूर्णस्य किं कोऽप्यर्थः क्रियेत, न कश्चिदिति ॥ ४६ ॥ यतोऽघटमाना या कृष्णस्य सङ्गतिः सैवास्मान्व्याकुलयति, अतो नैराश्यमेव परमं सुखं तच्चातिदुष्करमित्याहुः—परं सौख्यमिति । स्वैरिणी कामचारिणी ॥ ४७ ॥ संविदमेकान्तवार्ताम् ॥ ४८ ॥ ॥

१ 'प्रियः स पुरयोषिताम्' इति पाठः । वरयोषितां नः इति षष्ठ्यौ सप्तम्यर्थे । नोऽस्मासु करणीयां प्रीतिं कच्चित्पुरयोषित्सु करोतीति तोष० । २ प्रस्तुते प्रस्तावे । ३ महात्मनः महान् भूवर्तिसर्वस्त्रियोऽतिक्रम्य स्थित आत्मा चित्तं यस्य । ४ अङ्गाद्वक्षसः श्रीः रेखारूपा । ५ एकान्तवार्ता—'न पारयेऽहं' इत्यादिकाम् ।

किंच तद्विस्मृतौ न तावद्दुःखमस्ति, सापि नास्माकं संभवतीत्याहुः—सरिच्छैलेति त्रिभिः । आचरिताः सेविताः ॥ ४९ ॥ ५० ॥ हे उद्धव, तं कथं विस्मरामेति ॥ ५१ ॥ ५२ ॥ श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ॥ ५३ ॥ विनुदन् अपनयन् ॥ ५४ ॥ ५५ ॥ सरिद्वनगिरिदर्यादिषु प्रत्येकं श्रीकृष्णं लीलासंप्रश्नादिभिः संस्मारयन्नेमे ॥ ५६ ॥ कृष्णावेशेनात्मनो मनसो विक्लवं वैक्लव्यम् । ता गोपीर्नमस्यन् नमस्करिष्यन् । उत्तमस्यात्मनो गोपस्त्रीनमस्कृतिरन्याय्या न भवतीति दर्शयितुं तासां महत्त्वं पञ्चभिर्जगौ उवाच ॥ ५७ ॥ एता इति । एताः परं केवलं तनुभृतः सफलजन्मानः । रूढभावाः परमप्रेमवत्यः ।

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥ ४९ ॥ पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥ गत्या ललितयोदारहासलीलावलोकनैः ॥ माध्व्या गिरा हृतधियः कथं तं विस्मराम हे ॥५१॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥ ५२ ॥ ॥श्रीशुक उवाच॥ ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥ ५३ ॥ उवास कतिचिन्मासान्गोपीनां विनुदन् शुचः ॥ कृष्णलीलाकथां गायन्नमयामास गोकुलम् ॥ ५४ ॥ यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥ ५५ ॥ सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् ॥ कृष्णं संस्मारयन्नेमे हरिदासो व्रजौकसाम् ॥ ५६ ॥ दृष्ट्वैवमादिगोपीनां कृष्णावेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥ एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः ॥ वाञ्छन्ति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ५८ ॥ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥ नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥ ॥ ॥

यदिति यं रूढं भावं भवभियो मुमुक्षवो मुनयो मुक्ता अपि वाञ्छन्ति, वयं च भक्ता अपि । अतोऽनन्तस्य कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसंबन्धिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किं कोऽतिशयः । यत्र तत्र जातः स एव सर्वोत्तम इत्यर्थः । यद्वा अनन्तकथासु रसो यस्य तस्य ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपि किमित्यर्थः ॥ ५८ ॥ किंच ईश्वरप्रसादो महत्त्वे कारणम्, तस्य च न जातिराचारो ज्ञानं वा कारणं किंतु केवलं भजनमेवेत्याह—क्वेमा इति । साक्षाद्भजतः पुंसः ननु अहो उपयुक्तः सेवितः अगदराजोऽमृतं यथेति ॥ ५९ ॥ ॥ ॥ ॥

१ तत्पदकैस्तत्तद्देशे चिह्नतया स्थितैर्हेतुभिः । २ 'वृजिनार्णवे' इति पाठः । ३ अर्थान्तरं—यद्वा मुमुक्ष्वादयो यूयं महान्त एव कथं तं भावं वाञ्छत तत्राहुः—क्वेमा इति । वृन्दावनविहारिण्य इमाः स्त्रियः क्व अव्यभिचारिभक्तितया कस्यामूर्ध्वभूमिकायां स्थिताः, व्यभिचारदुष्टा व्यभिचारितभक्तयस्ते वयं मुन्यादयः क्व कस्यामधोभूमौ स्थिताः । महदेवान्तरमित्यर्थः । यतः परमात्मनि तस्मिन्नेव आसु दृश्यमानो रूढभावः । अस्मासु तु न तल्लेशोऽपीत्यर्थः । ४ नन्विति निश्चये ।

अत्यन्तापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह—नायमिति । अङ्गे वक्षसि उ अहो नितान्तरतेः एकान्तरतिमत्याः श्रियोऽपि नायं प्रसादोऽनुग्रहोऽस्ति । नलिनस्येव गन्धो रुक् कान्तिश्च यासां तासां स्वर्गाङ्गनानामप्सरसामपि नास्ति । अन्याः पुनर्दूरतो निरस्ताः । रासोत्सवे कृष्णभुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगादाविर्बभूव ॥ ६० ॥ किंच आस्तां तावद्गोपीनां भाग्यं, मम त्वेतावत्प्रार्थ्यमित्याह—आसामिति । गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्किमप्यहं स्यामित्याशंसा । कथंभूतानाम् । या इत्यादि । आर्याणां मार्गं धर्मं च हित्वा ॥ ६१ ॥

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ॥ रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजबल्लवीनाम् ॥ ६० ॥ आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् ॥ या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥ या वै श्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि[1] रासगोष्ठ्याम् ॥ कृष्णस्य तद्भगवतश्चरणारविन्दं[2] न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥ ६२ ॥ वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥ यासां[3] हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥ ॥ श्रीशुक उवाच ॥ अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ॥ गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६४ ॥ तं निर्गतं समासाद्य नानोपायनपाणयः ॥ नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ६५ ॥ मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु[4] ॥ ६६ ॥ कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥ मङ्गलाचरितैर्दानै रतिर्नः[5] कृष्ण ईश्वरे ॥ ६७ ॥ एवं सभाजितो गोपैः कृष्णभक्त्या[6] नराधिप ॥ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे उद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ ॥ ॥

पुनस्ता एव विशिनष्टि—या वा इति । योगेश्वरैरप्यात्मन्येवार्चितं स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ॥ ६२ ॥ एवं महत्त्वं प्रतिपाद्य नमस्करोति—वन्द इति ॥ ६३ ॥ अनुज्ञाप्य अनुज्ञां याचित्वा । आमन्त्र्य पृष्ट्वा ॥ ६४ ॥ ६५ ॥ नोऽस्माकं मनसो वृत्तयः कृष्णपादाम्बुजाश्रयाः स्युः । अभिधायिनीरभिधायिन्यः ॥ ६६ ॥ कृष्णे रतिः स्यादिति ॥ ६७ ॥ ६८ ॥ कृष्णादिभ्यो भक्त्युद्रेकमाह—उपायनानि चाददादिति ॥ ६९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायां सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ ॥ ॥ ॥

१ 'सदात्मनि' इति पाठः । २ 'प्रपदारविन्दं' इति कचित्पाठः । ३ यासां याभिः हरिकथाया उद्गानं, यद्वा यासां सबन्धि हरिकथाया महानुभावकर्तृकमुद्गानम् । ४ प्रह्वणं प्रह्वाणां नतिः । ५ 'मतिर्नः' इति पाठः । ६ कृष्णे यादृशी भक्तिस्तादृश्या भक्त्येत्यर्थः ।

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ॥ अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥ १ ॥ सैरन्ध्रीकाममापूर्य पूरयित्वा मनोरथान् ॥ अक्रूरस्य ततः कृष्णस्तेन पार्थानसान्त्वयत् ॥२॥१॥ महार्हैरनर्घ्यैरुपस्करैर्गृहोपकरणैरन्वितम् । कामोपायैस्तदुद्दीपकैः सुरतवन्धादिलेख्यैरुपबृंहितम् ॥२॥ यथा यथोचितम् ॥३॥४॥ प्रसाधितो योग्यतामापादित आत्मा देहो यया सा । सव्रीडं यल्लीलयोद्गतं स्मितं तद्येषु विभ्रमेषु तद्युक्तैरीक्षितैरुपलक्षिता ॥५॥ अनुलेपार्पणादन्यत्तस्याः पुण्यं

॥ श्रीशुक उवाच ॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ॥ सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ ॥ १ ॥
महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥ गृहं तमायान्तमवेक्ष्य सासनात्सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥ ३ ॥ तथोद्धवः साधु तयाभिपूजितो न्यषीदर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥ सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥ आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥ सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ॥ दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥ ९ ॥ तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥ १० ॥ दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥ ११ ॥ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥

नास्तीति दर्शयितुं पुण्यलेशयेत्युक्तं नतु पुण्यस्याल्पत्वविवक्षया ॥ ६ ॥ कुचादीनां रुजो मृजन्ती । जिघ्रन्ती च चरणम् ॥ ७ ॥ काममेव प्राकृतदृष्ट्या अयाचत । नच गोप्य इव सा तन्निष्ठेति दुर्भगेत्युक्तम् । कृतार्थत्वे तु तस्या न संदेहः ॥ ८ ॥ ९ ॥ काम एव वरस्तं दत्त्वा । मानयित्वा चालंकारादिदानैः ॥ १० ॥ मनोग्राह्यं विषयसुखम् । असत्त्वात्तुच्छत्वात् ॥ ११ ॥ किंचिच्चिकीर्षयन् । हस्तिनापुरप्रस्थापनं कारयितुमिच्छन्निरर्थः । अक्रूरप्रियकाम्यया च ॥ १२ ॥ ॥

१ 'महार्होपस्कराढ्यं वै' इति पाठः । २ अभिमृश्य स्पृष्ट्वा । ३ अनुलेपनार्पणलक्षणं पुण्य लान्ति गृह्णन्ति तेषामीशया श्रेष्ठया । ४ केवलः शुद्धभक्तस्तद्रायः कैवल्यमेकान्तभक्तिस्तत्प्रदानसमर्थम् । ५ 'साहोष्यतां' इति पाठः । ६ अत्र 'अर्चितः', 'ऋद्धिमत्' इति पाठौ । ७ 'सर्वपरेश्वरम्' इति पाठः ।

आराद्दूरादेव ॥ १३ ॥ १४ ॥ आ अप इति च्छेदः । अप आ सर्वतो धारयन्नित्यन्वयः ॥ १५ ॥ १६ ॥ वां युवयोरिदं कुलमुद्धृतं समेधितं च ॥ १७ ॥ वामिदं कुलमित्यादिव्यवहारदृष्ट्योक्त्वा परमार्थमाह—युवामिति । जगन्मयौ युवाम् । कुतः । जगद्धेतू । तदपि कुतः । प्रधानपुरुषौ तदात्मकौ अतो भवद्भ्यां विना परं कारणमपरं कार्यं च नास्तीति ॥१८॥ ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यतेऽत आह—आत्मसृष्टमिति । हे ब्रह्मन्परमेश्वर । 'ब्रह्म' इति वा पाठः । रजआदिस्वशक्तिभिरात्मनैव सृष्टमिदं विश्वमन्वाविश्य कारणत्वादननुप्रविष्टोऽप्यनुप्रविश्येव स्थितः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवानेव प्रतीयते ॥ १९ ॥ एकस्यैव बहुधा प्रतीतिं सदृष्टान्तामाह—यथा हीति । योनिषु स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेषु चराचरेषु यथा महीप्रमुखानि कारणान्येव नाना भान्ति । आत्मयोनिषु स्वकारणेषु भूतभौतिकेषु । जीवोऽपि नरमृगादिशरीरेषु बाल्ययुवाद्यवस्थासु च तथा तथा प्रतीयते इति तद्व्यवच्छेदार्थमात्म-

स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनन्द्य च[1] ॥ १३ ॥ ननाम कृष्णं रामं च स तैरप्यभिवादितः ॥ पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४ ॥ पादावनेजनीरापो धारयन् शिरसा नृप ॥ अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥१५॥ अर्चित्वा शिरसानम्य पादावङ्कगतौ मृजन्[2] ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥ दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १७ ॥ युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित्परमस्ति न चापरम् ॥ १८ ॥ आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ॥ ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम्[3] ॥ १९ ॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ॥ एवं भवान्केवल आत्मयोनिष्वात्मात्मतन्त्रो बहुधा विभाति ॥ २० ॥ सृजस्यथो लुम्पसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ॥ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २१ ॥ देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात् ॥ अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥

तन्त्रग्रहणम् ॥ २० ॥ ननु सृष्ट्यादिकर्तृत्वेन च मम किं जीववद्बन्ध उक्तो नहि नहीत्याह—सृजसीति । तद्गुणकर्मभिर्वा तैर्गुणैः कर्मभिर्वेत्यर्थः । यतः क्व च कदाचिदपि बन्धहेतुरविद्या तव नैवास्ति । कुत इत्यत आह—ज्ञानात्मन इति । मायाया आश्रयानावरकत्वादिति भावः ॥ २१ ॥ किंच आस्तां तावद्बन्धशङ्का, यतो विद्योपाधेर्जीवात्मनोऽपि न वस्तुतो बन्धोऽस्तीत्याह—देहाद्युपाधेरिति । भवो जन्म तन्मूला भिदा च साक्षात्स्वरूपतो न स्यादिति । ननु मम बन्धाभावं वदता त्वया किं मोक्षोऽङ्गीक्रियते, ओमिति चेत्तर्हि बन्धाभावे मोक्षासंभवादापन्नो बन्धोऽपीत्याशङ्क्याह—अत इति । यतो नाविद्या अतो न बन्धो मोक्षश्च । एवमुभौ न स्यातामित्यर्थः । ननु उलूखले मां बद्धं श्रुतवान्, यमुनाह्रदे मुक्तं च दृष्टवानसि, अतः कथमुभयं नास्त्यत आह—निकाम इति । स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव परमेवंभूत इति । यद्वा नोऽविवेक एव तवोभौ स्यातामिति ॥ २२ ॥ ॥ ॥

१ 'अभ्यनन्दत' इति पाठः । २ मृजन् संवाहयन् । ३ 'श्रुतप्रत्ययगोचरम्' इति पाठे प्रत्ययशब्देन प्रत्यक्षमेवेति ज्ञेयम् ।

ननु तर्हि ममावतारास्तच्चरित्राणि च शुक्तिरजतवदविद्याकल्पितान्येव किं, नहि नहि, इयं तु तव लीलेत्याह द्वयेन—त्वयोदित इति ॥ २३ ॥ सुरेतरांशा ये राजानस्तेषामक्षौहिणीशतानां वधेन भूमेर्भारमपनेतुं स्वांशेन रामेण सहावतीर्णोऽसि ॥ २४ ॥ अत एवंभूतस्य तवागमनेन कृतार्थोऽस्मीत्याह त्रयेण—अद्येति । हे ईश, अद्य नो वसतयो गृहास्तपोवनादपि बहुपुण्याः। कुतः। या वसतीस्त्वं साक्षात्प्रविष्टः । कथंभूतः। यस्य तव पादसलिलमेव गङ्गा त्रिजगत्पुनाति, यश्च त्वं पञ्चयज्ञदेवतामूर्तिः स त्वं जगद्गुरुरिति ॥२५॥ स्वमनोरथः परिपूरित इति तुष्यन्नाह—कः पण्डित इति । ऋतगिरः सत्यवाचः । त्वत्तोऽपरं शरणं कः समीयाद्गच्छेत् । यतो भवान् भजतः सर्वानभितः कामांश्च ददात्यात्मानमपीति ॥२६॥ नोऽविवेकिनाम् । तत्रापीह गृह एव ॥२७॥२८॥ वो युष्माकं प्रजाः पुत्रा

त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ॥ बाध्येत पाखण्डपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति ॥ २३ ॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः[1] स्वांशेन भारमपनेतुमिहासि भूमेः ॥ अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥२४॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २५ ॥ कः पण्डितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः[2] सुहृदः कृतज्ञात् ॥ सर्वान्ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥ दिष्ट्या जनार्दन भवानिह नः प्रतीतो[3] योगेश्वरैरपि दुरापगतिः सुरेशैः ॥ छिन्ध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥२७॥ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्हरिः ॥ अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव ॥ २८ ॥ ॥श्रीभगवानुवाच॥ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥२९॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः[4] ॥ श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः ॥ ३० ॥ नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते[5] पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३१ ॥ स भवान्सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम्[6] ॥ ३२ ॥

हि वयमिति ॥२९॥ ननु नृभिर्देवाः सेव्या इति प्रसिद्धं तत्राह—देवा इति । स्वार्थाः स्वकार्यसाधनपराः, साधवस्तु केवलं परानुग्रहपराः, परमार्थतस्तु साधव एव देवा इति त एव सेव्या इत्यर्थः ॥ ३० ॥ तर्हि मृच्छिलादिमयाः किं देवादयो नैवेत्यत आह—नहीति । अम्मयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा न भवन्तीति न, अपितु भवन्त्येव । तथापि साधूनां तेषां च महदन्तरमित्याह—ते पुनन्तीति ॥ ३१ ॥ 'किंचिच्चिकीर्षयन्प्रागात्' इति यदुक्तं तत्कार्यमादिशति—स इति । नः सुहृदां मध्ये भवान् श्रेष्ठोऽतः पाण्डवानां श्रेयश्चिकीर्षया गजाह्वयं गच्छस्व गच्छेति । यद्वा स्वेति पृथक् पदम् । हे स्व आत्मीयेत्यर्थः ॥३२॥



१ वसु धनं तच्चेह सर्वथा संग्राह्यत्वलक्षणेन भक्तिरूपं तेन दीव्यति द्योतते तस्य गृहे । स्वांशेन रामेण सह । २ भक्तप्रियात् ऋतगिरः भक्तपालनादिसत्यसंकल्पात् । यद्वा भक्तानां ये प्रियास्तेषामप्याहृता गिरो येन । ३ चाक्षुषप्रतीतिविषयो जातः । ४ 'अर्हमहत्तमाः' इति पाठः । ५ ते इति तानि च ते च ते इत्येकशेषे क्लीबत्वाभाव आर्षः । ६ 'गच्छस्व गजसाह्वयम्' इति पाठः ।

राज्ञा धृतराष्ट्रेण । वसन्ते निवसन्ति । शुश्रुम श्रुतवन्तो वयम् ॥३३॥ दुष्टा ये स्वपुत्रा दुर्योधनादयस्तद्वशेन गच्छतीति तथा । यतोऽन्धदृगन्धनेत्रः ॥३४॥३५॥ ॥३६॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायामष्टचत्वारिंशोऽध्यायः ॥४८॥ ॥ ऊनपञ्चाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम् ॥ राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥ १ ॥ पौरवेन्द्राणां यशोभिस्तत्कृतदेवब्राह्मणायतनादिभिरङ्कितम् ॥ १ ॥ बाह्लीकपुत्रः सोमदत्तः । भारद्वाजो द्रोणः । गौतमः कृपः ॥ २ ॥ अव्ययं कुशलम् ॥ ३ ॥ दुष्प्रजस्यासत्पुत्रस्य अल्पसारस्य मन्दधृतेः खलानां कर्णादीनां छन्दमिच्छामनुवर्तितुं शीलं

पितर्युपरते बालाः सह मात्रा सुदुःखिताः ॥ आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३३ ॥ तेषु राजाम्बिका-
पुत्रो भ्रातृपुत्रेषु दीनधीः ॥ समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥ गच्छ जानीहि तद्वृत्तमधुना साध्व-
साधु वा ॥ विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥३५॥ इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः ॥ संकर्षणो-
द्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धेऽष्टचत्वारिंशो-
ऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ स गत्वा हास्तिनपुरं पौरवेन्द्रयशोङ्कितम् ॥ ददर्श तत्राम्बिकेयं
सभीष्मं विदुरं पृथाम् ॥ १ ॥ सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ॥ कर्णं सुयोधनं द्रौणिं पाण्डवान्सुहृदोऽप-
रान् ॥ २ ॥ यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः ॥ संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥ उवास
कतिचिन्मासान्राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४ ॥ तेज ओजो बलं वीर्यं प्रश्रया-
दींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु नसहद्भिश्चिकीर्षितम् ॥ ५ ॥ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ
सर्वमेवास्मै पृथा विदुर एव च ॥ ६ ॥ पृथा तु भ्रातरं प्राप्तमक्रूरमपसृत्य तम् ॥ उवाच जन्मनिलयं स्मरन्त्यश्रुकले-
क्षणा ॥ ७ ॥ अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे ॥ भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥
भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ॥ पैतृष्वस्रेयान्स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥ ॥

यस्येति तथा तस्य ॥४॥ तेजः प्रभावः । ओजः शस्त्रादिनैपुणम् । वीर्यं शौर्यम् । नसहद्भिरसहमानैः । चिकीर्षितमित उपरि कर्तुमिष्टम् ॥ ५ ॥ गरस्य विषस्य दानादि । अपेशलमन्याय्यम् । तेज ओज इत्यादि सर्वं कथयामास ॥ ६ ॥ तत्कथनात्पूर्वतनं पृथाया वृत्तमाह—पृथा त्विति । अश्रूणां कला लेशा ययोस्ते ईक्षणे यस्याः सा ॥ ७ ॥ अपि किम् । जामयः कुलस्त्रियः ॥ ८ ॥ पैतृष्वस्रेयान् मत्पुत्रान् ॥ ९ ॥ ॥ ॥ ॥

१ अम्बिकापुत्रो धृतराष्ट्रः । २ अनुदारबुद्धिः, विवेकशून्यबुद्धिरिति बालबोधिनी । ३ 'च गौतमम्' इति पाठः । ४ अपरान् शकुन्यादीन् । ५ आदिना जलनिक्षेपादि । ६ अश्रूणि कलयतो मुञ्चतः ते ईक्षणे यस्याः ।

शोचन्तीं मां वाक्यैः सान्त्वयिष्यति किम् ॥ १० ॥ हे महायोगिन् महान्योग उपायो मायाख्योऽस्यास्तीति । हे विश्वात्मन्सर्वान्तर्यामिन् । हे विश्वभावन विश्वपालक । प्रपन्नां शरणागताम् । अवसीदतीं क्लिश्यन्तीम् ॥ ११ ॥ आपवर्गिकान्मोक्षप्रदात् ॥ १२ ॥ शुद्धाय धर्मात्मने । ब्रह्मणेऽपरिच्छिन्नाय । परमात्मने जीवसखाय । योगेश्वरायाणिमादियुक्ताय । योगाय ज्ञानात्मने ॥१३॥ प्रपितामही पितामहः पाण्डुस्तस्य भार्या रुरोद ॥१४॥ पृथया सह समं दुःखं सुखं च यस्य सः । तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेन्द्रादिभिस्तत्कथनैरित्यर्थः ॥ १५ ॥ बन्धुभिः रामकृष्णादिभिः सौहृदेनोदितमुक्तं यत्तदवददिति ॥ १६ ॥ भ्रातर्युपरत इति । पाण्डोः पुत्रेषु सत्सु राजासनं त्वमास्थित इति कटाक्षः ॥१७॥ भवतु तथाप्येवं वर्तमानः श्रेयोऽवाप्स्यसीत्याह—धर्मेणेति

सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ॥ सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥१०॥ कृष्णकृष्ण महा-
योगिन्विश्वात्मन्विश्वभावन ॥ प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ ११ ॥ नान्यत्तव पदाम्भोजात्पश्यामि
शरणं नृणाम् ॥ बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥१२॥ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ॥ योगेश्व-
राय योगाय त्वामहं शरणं गता ॥१३॥ ॥ श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ॥ प्रारुदद्दुःखिता
राजन्भवतां प्रपितामही ॥ १४ ॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्ति-
हेतुभिः ॥१५॥ यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ॥ अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥१६॥ ॥ अक्रूर
उवाच ॥ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पाण्डावधुनाऽऽसनमास्थितः ॥१७॥ धर्मेण पाल-
यन्नुर्वीं प्रजाः शीलेन रञ्जयन् ॥ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १८ ॥ अन्यथा त्वाचरँल्लोके गर्हितो
यास्यसे तमः ॥ तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥१९॥ नेह चात्यन्तसंवासः कर्हिचित्केनचित्सह ॥ राज-
न्स्वेनापि देहेन किमु जायात्मजादिभिः ॥२०॥ एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥ एकोऽनुभुङ्क्ते सुकृतमेक एव
च दुष्कृतम् ॥ २१ ॥ अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ॥ संभोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥

॥ १८ ॥ तमो नरकमिहैव महद्दुःखमिति भावः ॥ १९ ॥ नन्वात्मजानात्मजादिषु कथं समत्वं स्यात्तत्राह—नेह चेति । अत्यन्तं नित्यं संवासः सम्यक् स्थितिः ॥ २० ॥ तत्र तावदुत्पत्तिमरणयोः सुखदुःखयोश्च केनापि साहित्यं नास्तीत्याह—एक इति ॥ २१ ॥ किंच यदा च सह संवसन्ति तदापि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह—अधर्मेति । संभोजनीयाः पोष्याः । पुत्रादय इति व्यपदेशैरल्पमेधसो मूढस्य वित्तं हरन्ति । जलौकसो मत्स्यजीवनभूतानि जलानि यथा तत्पुत्रा हरन्ति तद्वदिति ॥ २२ ॥ ॥ ॥ ॥

१ इदं पदाम्भोजविशेषणम् । २ 'प्रमीयते' इति पाठः, तत्र हिंस्यत इत्यर्थः ।

किंच यानेवं पुष्णाति ते धनमादाय मृता जीवन्तोऽपि वा तं परित्यजन्तीत्याह—पुष्णातीति । स्वबुद्ध्या स्वीया इत्यभिमानेन रायोऽर्थाः अकृतार्थमप्राप्तभोगम् ॥ २३ ॥ स पुनः पापैकपाथेयो नरकं विशतीत्याह—स्वयमिति । असिद्धार्थोऽपूर्णमनोरथः ॥ २४ ॥ स्वप्नश्च माया च मनोरथश्च तत्तेन तुल्यम् । आयम्य नियम्य । शान्तः सन्समो भवेति ॥ २५ ॥ हे दानपते अक्रूर । न तृप्याम्यलमिति न मन्ये ॥ २६ ॥ सूनृता प्रिया वाक् चलेऽस्थिरे हृदि न स्थीयते न तिष्ठतीत्यर्थः । सुदामा पर्वतस्तत्र भवा विद्युदिव । तस्मिन्स्फटिकशिलामये सहसैवातिस्फुरिता विद्युद्यथा लीयते तद्वदित्यर्थः । यद्वा सुदामा माला तस्या इयं सौदामनी । मालाकारेत्यर्थः ॥ २७ ॥ नन्वेवं जानतोऽपि कथमयं मोह इति चेदत आह—ईश्वरस्येति । विधिं विधानं । मायामिति यावत् ॥ २८ ॥

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ॥ तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥ २३ ॥ स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ २४ ॥ तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ॥ वीक्ष्यायम्यात्मनात्मानं समः शान्तो भव प्रभो ॥ २५ ॥ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथानया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥ २६ ॥ तथापि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत्सौदामनी यथा ॥ २७ ॥ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥ यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनु प्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतन्त्रसंसारचक्रगतये परमेश्वराय ॥ २९ ॥ ॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पाण्डवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां दशमस्कन्धे पूर्वार्धे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

अतस्तमेव नमस्यति—य इति । दुर्विमर्शपथया अवितर्क्यमार्गया । गुणान्कर्माणि तत्फलानि च विभजतेति विविच्य ददाति । दुरवबोधो यो विहारस्तस्य क्रीडा स एव तन्त्रं प्रधानं मुख्यं कारणं यस्य संसारचक्रस्यात एव तस्य गतिर्यस्मात्तस्मै नम इति ॥ २९ ॥ अभिप्रेत्य ज्ञात्वा ॥ ३० ॥ ३१ ॥[3] ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे भावार्थदीपिकायां टीकायामेकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

## ॥ इति पूर्वार्धः समाप्तः ॥

---

१ दानपते इति सदुपदेशदानाभिप्रायेण। २ 'आत्मन्यात्मना' इति च पाठः। ३ एतदग्रे श्रीधर्याम्—'दशमस्कन्धपूर्वार्धभावार्थस्य प्रदीपिका ॥ यस्येयं पुरतो भाति न भात्यन्तरतस्तमः' ॥ इत्यधिकः श्लोकः क्वचित् ।

॥ इति श्रीमद्भागवते दशमस्कन्धपूर्वार्धः समाप्तः ॥

अथ भागवतदशमस्कंधोत्तरार्धारंभः ॥

श्रीगणेशाय नमः ॥ ॥ ततः पञ्चाशत्तमे तु जरासन्धभयादिव ॥ कारयित्वाम्बुधौ दुर्गं तन्निनाय निजं जनम् ॥ १ ॥ कपटान्कपटैरेव हत्वा दैत्यानयत्नतः ॥ अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥ २ ॥ अस्तिप्राप्तिसंज्ञिके । ईयतुर्जग्मतुः ॥१॥२॥ कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥३॥ न्यरुणद्रुरोध ॥ ४ ॥ तस्य बलं सैन्यमुद्वेलं लङ्घितमर्यादं सागरमिव । तेन तस्य बलेन संरुद्धम् ॥ ५ ॥ किं बलमेव हन्मि न मागधम्, मागधं वा हत्वा बलं गृह्णामि, यद्वा समागधं सर्वं हन्मीति चिन्तयामास । ननु प्रथमं कथं जेष्यामीत्येवं चिन्तयितुं युक्तं तत्राह—कारणमानुष इति । भूभारावतारकारणेन मानुषो नतु तत्त्वत इति

॥श्रीशुक उवाच॥ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ॥ मृते भर्तरि दुःखार्ते ईयतुः स्वं पितुर्गृहान्॥ १॥ पित्रे मगधराजाय जरासन्धाय दुःखिते ॥ वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २॥ स तदप्रियमाकर्ण्य शोका-मर्षयुतो नृप ॥ अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥ अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संवृतः ॥ यदु-राजधानीं मथुरां न्यरुणत्सर्वतोदिशम् ॥ ४ ॥ निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ॥ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥ चिन्तयामास भगवान्हरिः कारणमानुषः ॥ तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥ हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ॥ मागधेन समानीतं वंश्यानां सर्वभूभुजाम् ॥ ७ ॥ अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः ॥ मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥ एतदर्थोऽवतारोऽयं भूभारहर-णाय मे ॥ संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥ अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया ॥ विरामाया-प्यधर्मस्य काले प्रभवतः क्वचित् ॥१०॥ एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ ॥ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥११॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया ॥ दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥ १२ ॥ पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ॥ एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥ ॥

॥ ६ ॥ एवं त्रिधा विचिन्त्य प्रथमं पक्षं निर्धारितवांस्तदाह चतुर्भिः—हनिष्यामीति ॥ ७ ॥ बलोद्यमं कर्ता करिष्यतीति ॥ ८ ॥ नन्वत एव हन्तव्यस्त-त्राह—एतदर्थ इति । एतच्छब्दार्थं स्पष्टयति—भूभारहरणायेति ॥ ९ ॥ अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह—अन्योऽपीति । प्रभवत उद्भवतः ॥१०॥ ससूतौ सारथिसहितौ । परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११ ॥ १२ ॥ त्वमेवावन् रक्षको नाथो विद्यते येषां ते त्वावन्तस्तेषाम् ॥ १३ ॥ ॥

१ 'स्वपितुः' इति पाठः । २ दुःखिते तद्व्यञ्जकरोदनादियुक्ते । ३ 'नृपः' इति पाठः । ४ वाग्देवी तु—अयादवीमित्यत्र अयः शुभं दैवं तेन अदवीं दुष्टभारतापशून्यामर्हतीत्याह— ५ वंश्यानां वंशे स्थितानाम् । 'वश्यानां' इति पाठः । ६ भटादिभिः सहितं त्रयोविंशत्यक्षौहिणीभिः संख्यातं बलं हनिष्यामीति पूर्वेणान्वयः । ७ अन्योऽपि वराहादिर्देहः । ८ यदृच्छया आनयनादिप्रयत्नं विनैव । ९ आत्वमार्षम् । यद्वा तत्सदृशानां, युष्मदस्मदोः सादृश्ये वतुबिति छान्दसवार्तिकात् आसर्वनाम्न इत्यात्वम् ।

॥ १४ ॥ दंशितौ बद्धकवचौ ॥ १५ ॥ स्वायुधाढ्यौ शोभनायुधसंपन्नौ ॥ १६ ॥ पुरुषा अधमा यस्मादिति वास्तवोऽर्थः । हे पुरुषोत्तमेति ॥ १७ ॥ गुप्तेन सर्वान्तरत्वाद्दर्शनानर्हेण । हेऽमन्द । बध्नातीति बन्धुरविद्या तां हन्तीति तथा, हे अविद्यानिरसनेति । याहि प्राप्नुहि ॥ १८ ॥ अच्छेद्यदेहोऽसाविति स्वयमेव मत्वाऽपरितोषात्पक्षान्तरमाह—यद्वा मां जहीति ॥ १९ ॥ यथाश्रुतार्थग्रहणेन भगवत उत्तरम्—न वै शूरा इति । विकत्थन्ते श्लाघन्ते ॥ २० ॥ माधवौ मधुवंशभवौ । महता सैन्यसमूहेनावृतवान् । वायुरभ्रैः सूर्यं रेणुभिश्चाग्निं यथेत्यदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१ ॥ २२ ॥ परस्यानीकानि

यानमास्थाय जह्येतद्व्यसनात्स्वान्समुद्धर ॥ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥ १४ ॥ त्रयोविंशत्यनीकाख्यं
भूमेर्भारमपाकुरु ॥ एवं संमन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥ १५ ॥ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसा वृतौ ॥
शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥ ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ॥ तावाह मागधो वीक्ष्य
हे कृष्ण पुरुषाधम ॥ १७ ॥ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ॥ गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन् ॥ १८ ॥ तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह ॥ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥ ॥ श्रीभगवानुवाच ॥ न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् ॥ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥ ॥ श्रीशुक उवाच ॥ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसावृणोत् ॥ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ
वायुरिवाभ्ररेणुभिः ॥ २१ ॥ सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिरामयोर्मृधे ॥ स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः ॥ २२ ॥ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ॥ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥ गृह्णन्निषङ्गादथ संदधच्छरान्विकृष्य मुञ्चञ्छितबाणपूगान् ॥ निघ्नन्रथान्कुञ्जरवाजिपत्तीन्निरन्तरं यद्वदलातचक्रम् ॥ २४ ॥ ॥ ॥

सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणं वर्षं तेन पीडितम् । व्यस्फूर्जयदुज्जृम्भितवान् ॥ २३ ॥ तदाह—गृह्णन्निति । निषङ्गादिषुधेः शरान् गृह्णन् । अथ तान्गुणे संदधत् । गुणमाकृष्य निशितबाणसमूहान्मुञ्चन् । निघ्नन्प्रहरन् । पत्तिः पदातिः । निरन्तरमिति ग्रहणादिक्रियाविशेषणम् । ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वद्व्यस्फूर्जयदिति ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥

१ 'बालकेनैव' इति पाठः । २ गुप्तेन स्वजनै रक्षितेन । गुप्तेनेत्यनेन नन्दादिभिर्वैश्यैः पालितत्वाद्वैश्येन त्वया न योत्स्य इति सूचितमिति चक्रवर्ती । ३ 'त्वं च राम' इति पाठः । ४ वास्तवार्थस्तु—यदि श्रद्धेति सा क्षुद्रेण मया सह न स्यादेव, मद्भाग्येन यदि स्यात्तर्हि धैर्यमुद्वह मा प्रति प्रापय, त्वदग्रे ममाधीरत्वात् । चार्थे वा । ईश्वरोऽपि मच्छरैश्छिन्नं देहं धृत्वा मत्पौरुषं प्रदर्श्य मां जहि स्वर्गं प्रापय च । त्वदग्रे छेदकरणान्नरको मा भूत् । यद्वा स्वर्गेऽपि मां प्राप्नुहि, तत्रापि त्वामेव प्राप्तुमिच्छामि न विषयानित्यर्थो भातीति तोष० । ५ 'स्वैर्यं' इति पाठः ।

हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥ संछिद्यमाना द्विपदा इभा वाजिनश्च तेषामङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं प्रवर्तिता इति तृतीयेनान्वयः । प्रसिद्धनदीरूपकमाह—भुजा एवाहयो यासु ताः । पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः । हता द्विपा एव द्वीपा अन्तर्वर्तितटानि । हया एव ग्रहा ग्राहास्तैश्चाकुला व्याप्ताः ॥२६॥ करा ऊरवश्च मीना यासु ताः । नराणां केशा एव शैवलं यासु ताः । धनूंष्येव तरङ्गा आयुधान्येव गुल्मास्तैश्च तैश्च संकुलाः । अच्छूरिकाश्चर्माणि चक्राणि वा तान्येवावर्तास्तैर्भयानकाः । महामणीनां प्रवेका उत्तमा आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥२७॥ भीरूणां भयावहाः । मनस्विनां धीराणां हर्षकर्यः ॥२८॥ किंच संकर्षणेनापि तद्बलं क्षयं प्रणीतम् । अङ्ग हे राजन्, अर्णववद्दुर्गं दुर्गमं भैरवं भयंकरं च । यतो दुरन्तपारम्, अन्तोऽत्र

निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः ॥ रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥ २५ ॥ संछिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ॥ भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥ २६ ॥ करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसंकुलाः ॥ अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥ प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ॥ विनिघ्नताऽरीन्मुसलेन दुर्मदान्संकर्षणेनापरिमेयतेजसा ॥ २८ ॥ बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ॥ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥ स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया ॥ न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥ जग्राह विरथं रामो जरासन्धं महाबलम् ॥ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ३१ ॥ बध्यमानं हतारातिं पाशैर्वारुणमानुषैः ॥ वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ३२ ॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ॥ तपसे कृतसंकल्पो वारितः पथि राजभिः ॥ ३३ ॥ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ॥ स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः ॥ ३४ ॥ ॥

तलम्, पारमवधिः, दुःशब्दो निषेधे, विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः । किंच मगधेन्द्रेण च पालितं बलम् । यदेवंभूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं नतु पराक्रमः ॥ २९ ॥ न चैतदाश्चर्यमित्याह—स्थित्युद्भवान्तमिति । तर्हि किमित्याश्चर्यमिव वर्णितं तत्राह—तथापीति । मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥३०॥ किंच जग्राहेति । हतान्यनीकानि यस्य, अवशिष्टा असव एव यस्य तं च तं च ॥३१॥ हता बहुशोऽरातयो येन तथाभूतमपि जरासन्धं वध्यमानं वारयामासेति ॥ ३२ ॥ ३३ ॥ पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः । नयनैर्नीतिभिः । प्राकृतैर्लौकिकैः । तत्र लौकिकन्यायमाहुः—स्वकर्मेति । यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबन्धेन प्राप्तोऽतस्त्वया न लज्जितव्यमिति ॥ ३४ ॥ ॥ ७ ॥

१ गुल्मा अप्रकाण्डवृक्षाः । २ स्थितेः प्रथमोक्तिस्तत्साक्षाल्लीलात्वात् । य इति द्वयोरैक्याभिप्रायेण । ३ 'स्वलीलया' इति पाठः । तत्र स्वपदेन तस्या स्वाच्छन्द्यम् । ४ 'महाबलः' इति पाठः । ५ 'बन्धतश्चाप्तः' इति पाठः ।

बार्हद्रथो जरासन्धः ॥ ३५ ॥ मुकुन्दोऽपि ययाविल्यनुषङ्गः । न क्षतं बलं यस्य सः । तस्यैवामृतदृष्ट्या क्षतप्रतिसन्धानादिति भावः । निस्तीर्णोऽनायासेनैव तीर्णोऽखिलार्णवो येन । साधु साधु इत्यनुमोदितश्च ॥ ३६ ॥ प्रत्युद्यातैर्मथुरावासिभिः जनैः । उपसंगम्य मिलित्वा ॥ ३७ ॥ तदा प्रभौ पुरं प्रविशति सति शङ्खादयो नेदुः ॥ ३८ ॥ कथंभूतां पुरं तदाह—सिक्तमार्गामिति । ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादिताम् । कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ निचीयमानो विकीर्यमाणः । प्रविवेशेति विपरिणताऽनुषङ्गः ॥ ४० ॥ आयोधनं रणभूमिस्तत्रस्थं वित्तम् । वीराणां भूषणम् ।

हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥३५॥ मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥३६॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधबन्दिभिः ॥ ३७॥ शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥३८॥ सिक्तमार्गां हृष्टजनां पताकाभिरलंकृताम् ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥ निचीयमानो नारीभिर्माल्यदध्यक्षताङ्कुरैः ॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ४० ॥ आयोधनगतं वित्तमनन्तं वीरभूषणम् ॥ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥४१॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥ अष्टादशमसंग्राम आगामिनि तदन्तरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥ ४४ ॥ रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ नृलोके चाप्रतिद्वन्द्वो वृष्णीन् श्रुत्वात्मसंमितान् ॥ ४५ ॥ तं दृष्ट्वाऽचिन्तयत्कृष्णः संकर्षणसहायवान् ॥ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥ यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो वा परश्वो वागमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः ॥ बन्धून्वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥४८॥ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन्समाधाय यवनं घातयामहे ॥४९॥

॥ ४१ ॥ तावतीति च्छेदः । तावति पराजये वर्तमानेऽप्यक्षौहिण्यो बलं यस्य सः । सप्तदशकृत्वः सप्तदशवारान्युयुधे ॥४२॥ अक्षिण्वन् क्षयं निन्युः ॥४३॥ अष्टादशमेऽष्टादशे संग्रामे भाव्ये तन्मध्येऽकस्मात्कालयवनः प्राप्तः ॥ ४४ ॥ आत्मसंमितान्स्वतुल्यान् ॥ ४५ ॥ वृजिनं दुःखम् । उभयतो यवनाज्जरासन्धाच्च ॥ ४६ ॥ तदाह द्वयेन—निरुन्धे निरुणद्धि ॥ ४७ ॥ जन्य जनेन ॥ ४८ ॥ ४९ ॥ ॥ ॥ ॥

१ विपरिणामेनानुषङ्गः, परेण युग्मकं नेति तोष०। २ मुकुन्दोऽपि प्रत्युद्यातैर्माथुरैरभिसंगम्य ययाविति पूर्वेणान्वयः। मथुरामिलनेनैवम्। ३ अनेकश इति तूर्याणामनु०। ४ 'वेणु' इति पाठः। ५ अरिभिर्मुक्तः यद्वाऽरिभिर्हतेषु भगवता मुक्तो याति स्म। ६ नृपो जरासन्धः। 'नृप' इति पाठे परीक्षित्संबोधनम्। ७ 'नारदेरिता' इति पाठः। ८ '[illegible]' इति पाठः। ९ '[illegible]त्मसम्मितान्' इति पाठः। १० 'घातयामहे' इत्यन्यकर्तृकापेक्षया [illegible]। ११ [illegible]

समुद्रमध्ये दुर्गं तन्मध्ये नगरम्। कृत्स्नाद्भुतं सर्वाश्चर्यमयम्। अचीकरत् कारयामास ॥ ५० ॥ त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रियाकौशलम्। तदाह सार्धैस्त्रिभिः—रथ्येति। रथ्या राजमार्गाः पुरतः, वीथ्य उपमार्गाः पश्चिमतः। उभयतोऽपि चत्वराण्यङ्गनानि, तन्मध्ये कोष्ठाः, ततोऽप्यन्तः सुवर्णभवनानि, तदुपरि स्फाटिकाट्टालिकाः, तदुपरि हेमकुम्भा इति बहुभूमिकम्। यथावास्तु वास्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितम् ॥ ५१ ॥ सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितम्। हेममयानि शृङ्गाणि येषु तैः दिविस्पृग्भिरत्युच्चैः। स्फाटिका अट्टाला उपरिभूमिका गोपुराणि च द्वाराणि तैर्निर्मितमित्युत्तरेणान्वयः ॥५२॥ राजतारकुटैः रजतं च आरकुटं च पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालान्नशालादिभिः। कथंभूतैः। हेमकुम्भैरलंकृतैः। तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः। महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥ ५३ ॥ किंच नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिका-

इति संमन्त्र्य भगवान् दुर्गं द्वादशयोजनम्[2] ॥ अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥ ५२ ॥ राजतारकुटैः[3] कोष्ठैर्हेमकुम्भैरलंकृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥ वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ५४ ॥ सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः[4] ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥ ५५ ॥ श्यामैककर्णान्वरुणो हयान् शुक्लान्मनोजवान् ॥ अष्टौ निधिपतिः कोशाँल्लोकपालो निजोदयान् ॥ ५६ ॥ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥ तत्र योगप्रभावेन नीत्वा सर्वजनं हरिः[5] ॥ प्रजापालेन रामेण[6] कृष्णः समनुमन्त्रितः ॥ निर्जगाम पुरद्वारात्पद्ममाली निरायुधः ॥ ५८ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे दुर्गनिवेशनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ छ ॥ ॥

भिश्च निर्मितम्। यदुदेवगृहै राजगृहैरुल्लसच्छोभमानम् ॥ ५४ ॥ पारिजातं च प्राहिणोत्प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वंभावित्वाद्भूतनिर्देशः। मर्त्यधर्मैः क्षुत्पिपासादिषडूर्मिभिः ॥ ५५ ॥ निधिपतिः कुबेरः। अष्टौ कोशान्निधीन् 'पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथोदकः ॥ नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः' इति प्रसिद्धान्। निजोदयान्निजविभूतीः ॥ ५६ ॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासीत्तत्सर्वं प्रत्यर्पयामासुरिति ॥ ५७ ॥ यथा कालयवनो न वेत्ति, न चासौ जनः तथा योगप्रभावेन नीत्वा त्वमत्र स्थित्वा प्रजाः पालय, अहं पलायिष्य इति समनुमन्त्रितः कृतानुमन्त्र इत्यर्थः ॥ ५८ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥

१ राजतं आरकूटं पित्तलं लोहं चेति तोप०। २ 'चतुर्हस्तं धनुः प्रोक्तं धनुषां द्विसहस्रकं। क्रोशः क्रोशौ तु गव्यूतिर्गव्यूती द्वे तु योजनं'॥ ३ 'राजतारकूटकोटैः' इति पाठः। भिन्नपदपाठे कूटेत्यत्र ह्रस्वत्वं छन्दोऽनुरोधात्। ४ हरेरिति ल्यब्लोपे पञ्चमी। हरिमुद्दिश्येत्यर्थः। हरये इति चतुर्थी वेति तोष०। ५ 'स्वान्भगवान्हरिः' इति पाठः। ६ 'मधुरामेत्य रामेण' इति पाठः।

एकपञ्चाशत्तमेऽहन्मुचुकुन्दद्दशा हरिः ॥ यवनं मुचुकुन्देन स्तुतः सन्नन्वकम्पत ॥ १ ॥ यवनेन्द्रसुतात्कालयवनाद्यदुभीषणात् ॥ हरिर्हरगिरः स्वैरं पालनायापलायत ॥२॥ यदा गार्ग्यः श्यालेन षण्ढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान्, ततश्च यवनेन्द्रेणापुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनदिति पुराणप्रसिद्धम् । पुरद्वारान्निष्क्रान्तम् । उज्जिहानमुद्गच्छन्तम् ॥ १ ॥ २ ॥ नित्यप्रमुदितमित्यादिमुखारविन्दविशेषणम् ॥ ३ ॥ ४ ॥ नारदोक्तैरेतैर्लक्षणैरयं पुमान्वासुदेव एव नान्यो भवितुमर्हति। अयं च निरायुधः, अतोऽनेन पद्भ्यामेव चलन्निरायुधोऽहं योत्स्यामीति

॥ श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥
श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ॥ मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥ वासुदेवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः ॥
चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ॥ निरायुधश्चलन्पद्भ्यां योत्स्येऽनेन निरायुधः ॥५॥ इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥
हस्तप्राप्तमिवात्मानं हरिणा स पदे पदे ॥ नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७॥ पलायनं यदुकुले जातस्य
तव नोचितम् ॥ इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥ एवं क्षिप्तोऽपि भगवान्प्राविशद्गिरिकन्दरम् ॥ सोऽपि
प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥ नन्वसौ दूरमानीय शेते मामिह साधुवत् ॥ इति मत्वाऽच्युतं मूढस्तं
पदा समताडयत् ॥ १० ॥ स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ॥ दिशो विलोकयन्पार्श्वे तमद्राक्षीदवस्थितम्
॥ ११ ॥ स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ॥ देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥ १२ ॥ ॥ राजोवाच ॥
को नाम स पुमान्ब्रह्मन् कस्य किंवीर्य एव च ॥ कस्माद्गुहां गतः शिश्ये किंतेजो यवनार्दनः ॥१३॥ ॥ श्रीशुक उवाच ॥
स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ॥ मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥ १४ ॥ ॥

निश्चित्य तं पराङ्मुखं प्राद्रवन्तमन्वधावदित्यन्वयः ॥ ५ ॥ ६ ॥ आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः ॥ ७ ॥ अहताशुभोऽक्षीणकर्मा ॥८॥९॥ तं शयानमच्युतं मत्वाऽताडयदिति ॥ १० ॥ ११ ॥ तस्य क्रुद्धस्य दृष्टिपातेन संदीप्तो यः स्वदेहजोऽग्निस्तेन ॥ १२ ॥ यवनमर्दयति हिनस्तीति तथा स कस्य वंश्यः किंवीर्यः कीदृक्प्रभाववान् किंतेजः कस्य वीर्यं पुत्र इत्यर्थः । शिश्ये अशयिष्ट ॥ १३ ॥ सत्यः सङ्गरो युद्धं प्रतिज्ञा वा यस्य सः ॥ १४ ॥ ॥

१ क्षिपन्नुपालम्भं कुर्वन् । वस्तुतस्तु—इदं तव पलायनं न भवति किंतु यदुकुले जातस्य यादवावध्यत्वरूपं महेशवरं पालयतो विधान्तरेण शत्रुपराभवं चिकीर्षतस्तवोचितं संप्रति योग्यमेवेदमिति क्षिपन्द्रुतं गन्तुं प्रेरयन् इति तोष० ।

॥१५॥ गुहं कार्तिकेयम् । स्वःपालं स्वर्गपालकं सेनान्यम् ॥१६॥ उज्झितास्त्यक्ता गता इत्यर्थः ॥१७॥ किंच सुता इति तुल्यकालीयास्त्वत्समानकालीनाः । कालिता विचालिताः ॥ १८ ॥ मत्प्रजाः कोऽन्यः कालयेदिति चेदत आहुः—काल इति । कालयते इतस्ततश्चालयति ॥ १९ ॥ तस्य कैवल्यस्य ॥ २० ॥

स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे ॥ असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥ लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् ॥ राजन्विरमतां कृच्छ्रा[1]द्भवान्नः परिपालनात् ॥ १६ ॥ नरलोके परित्यज्य राज्यं निहतकण्टकम् ॥ अस्मान्पालयतो वीर कामास्ते सर्व उज्झिताः ॥ १७ ॥ सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः ॥ प्रजाश्च तुल्यका[2]लीया नाऽधुना सन्ति कालिताः ॥ १८ ॥ कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः ॥ प्रजाः कालयते क्रीडन्पशु[3]पालो यथा पशून् ॥१९॥ वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ॥ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः[4] ॥ २० ॥ एवमुक्तः[6] स वै देवानभिवन्द्य महायशाः ॥ (निद्रामेव ततो वव्रे स राजा श्रमकर्षितः ॥ यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः ॥ १ ॥ स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा) ॥ अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २१ ॥ स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः ॥ स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥ २२ ॥ यवने भस्मसान्नीते भगवान्सात्वतर्षभः ॥ आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २३ ॥ तमालोक्य घनश्यामं पीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २४ ॥ चतुर्भुजं रोचमानं वैजयन्त्या[8] च मालया ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २५ ॥ प्रेक्षणीयं नृलोकस्य सानुरागस्मितेक्षणम् ॥ अपीच्यवयसं[9] मत्तमृगेन्द्रोदारविक्रमम् ॥ २६ ॥ पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः ॥ शङ्कितः[10] शनकै राजा दुर्धर्षमिव तेजसा ॥ २७ ॥ मुचुकुन्द उवाच ॥ को भवानिह संप्राप्तो विपिने गिरिगह्वरे ॥ पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥ २८ ॥

गुहायां प्रविष्टः शेते स्म ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ धर्षितोऽभिभूतः । दुर्धर्षमप्रधृष्यम् ॥ २७ ॥ विपिनेऽरण्ये, तत्रापि गिरेर्गह्वरे दुष्प्रवेशस्थाने, तत्राप्युरुकण्टके पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसीति ॥ २८ ॥

१ कृच्छ्राद्दुःखरूपात् । २ 'तुल्यकलिना' इति पाठः । ३ पशुपाल इति स्वाच्छन्द्ये दृष्टान्तः । ४ असंख्येभ्यः स्वस्वरूपमोक्षदानेऽपि न व्ययो यस्य । ५ अत्र 'स्वपन्तं यो गुहामध्ये बोधयेत्त्वामचेतनः । स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात्' इति पद्यमधिकमस्ति । तच्च विगीतमसंलग्नं चेति, तथापि निद्रया देवदत्तयेति वक्ष्यमाणस्वरसादेव संयोज्यमिति भातीति तोष० । ६ एवमुक्तः स मुचुकुन्दो देवानभिवन्द्यातिश्रान्तत्वान्निद्रां वव्रे । ततः 'स्वापं यातम्' इत्याद्यग्रिमश्लोकोक्तप्रकारेण निर्बन्धपूर्वकं देवैर्दत्तया निद्रया हेतुभूतया गुहाविष्टः सन्नशयिष्टेति निद्रया देवदत्तयेति पदस्वारस्यात् शेषपूरणेनोभयोः श्लोकयोरन्वयः । ७ स्वापं यातमित्यादिः श्लोकोऽपि क्वचिन्नास्ति । ८ 'तुलसीकुन्दमन्दारपारिजाताम्बुजैस्तु या ॥ पञ्चभिर्ग्रथिता माला वैजयन्तीति कथ्यते' ॥ ९ अपीच्यं सुन्दरं वयो यस्य । १० शङ्कितः नानावितर्कवान् ।

तेजोमूर्तिः प्रभावो दीप्तिर्वा ॥ २९ ॥ सर्वत्रापरितोषादाह—मन्य इति । पुरुषर्षभं श्रीविष्णुम् । गुहाध्वान्तमन्तस्तमः ॥ ३० ॥ ३१ ॥ वयं त्विति वंशयाभिप्रायेण बहुवचनम् । तेऽप्यहं मुचुकुन्द इति प्रोक्त इति । युवनाश्वो मान्धातुः पिता अतो मान्धाता यौवनाश्वः ॥३२॥३३॥३४॥३५॥३६॥३७॥ क्वचित्कदाचित्कश्चित् यद्यपि रजांस्यपि विममे गणितवांस्तथापि जन्मानि कर्माणि न विमिमीते ॥३८॥३९॥४०॥४१॥ ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥४२॥ ॥ ४३ ॥ अपूर्णोऽहमिति शोचितुम् । यद्वा अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु यथा शोचति नैवं मां प्रपन्नः । मद्दत्तवराणामक्षय्यत्वादिति भावः ॥ ४४ ॥ ॥

किंस्वित्तेजस्विनां तेजो भगवान्वा विभावसुः ॥ सूर्यः सोमो महेन्द्रो वा लोकपालो परोऽपि वा ॥२९॥ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ॥ यद्बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥३०॥ शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ॥ स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ॥ ३१ ॥ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः ॥ मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥ ३२ ॥ चिरप्रजागरश्रान्तो निद्रयापहतेन्द्रियः ॥ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ॥ ३३ ॥ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ॥ अनन्तरं भवान् श्रीमाँल्लक्षितोऽमित्रशातनः ॥ ३४ ॥ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः ॥ हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥ ३५ ॥ एवं संभाषितो राज्ञा भगवान्भूतभावनः ॥ प्रत्याह प्रहसन्वाण्या मेघनादगभीरया ॥ ३६ ॥ ॥ श्रीभगवानुवाच ॥ जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ॥ न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि ॥३७॥ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः ॥ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥ ३८ ॥ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ॥ अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥ ३९ ॥ तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ॥ विज्ञापितो विरिञ्चेन पुराहं धर्मगुप्तये ॥ भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ ४० ॥ अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ॥ वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥ ४१ ॥ कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्विषः ॥ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥ ४२ ॥ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ प्रार्थितः प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः ॥ ४३ ॥ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते ॥ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४४ ॥ ॥

१ गिरिगुहाहृद्गुहयोर्ध्वान्तं तमो दुःखं चेति तोष० । २ 'श्रीमल्लक्षितोऽमित्रशासनः' इति पाठः । ३ 'द्रष्टुं' इति पाठः । ४ गुणैः कर्मभिश्चाभिधानानि नामानि यत्र । ५ उपपन्नानि सिद्धानि । ६ परमा ऋषयो वेदाः वेदान्ता अपीत्यर्थः । ७ प्रचुरं यथावद्गृहम् । ८ विममे विमिमीत ।

अष्टाविंशतिमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः ॥४५॥ त्वद्भक्तिरेव केवलं दुर्लभा, कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाभक्तानां संसारसक्तिभिः प्रपञ्चयन्स्तौति—विमोहित इति। हे ईश, योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थदृक् अनर्थे संसारे दृक् दृष्टिर्यस्यासौ। यद्वा अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा। अतस्त्वां न भजति किंतु परस्परं वञ्चितः सन्सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जत इति ॥ ४६ ॥ किंच कामसुखं सूकरादिष्वपि संभवति, भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्नतिमूढ इत्याह—लब्ध्वेति। अत्र कर्मभूमौ अव्यङ्गमविकलाङ्गम्। किंच असति विषयसुखे मतिर्यस्य सः। गृहमेवान्धकूपस्तस्मिन्निपतितः। यथा पशुस्तृणलुब्धोऽन्धकूपे पततीति ॥४७॥ न केवलमस्य जनस्येयं गतिः किंतु ममापि तथैवेत्याह—ममैष इति। मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममात एव सुतादिष्वासज्जमानस्य ॥४८॥ उन्नद्ध-

॥ श्रीशुक उवाच ॥ इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः ॥ ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४५ ॥ ॥ मुचुकुन्द उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः[1] ॥ ४६ ॥ लब्ध्वा जनो दुर्लभमत्र[2] मानुषं कथंचिद्[3]व्यङ्गमयत्नतोऽनघ ॥ पादारविन्दं[4] न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥४७॥ ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः ॥ मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्त[5]चिन्तया ॥४८॥ कलेवरेऽस्मिन्घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहम् ॥ वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वाऽगणयन्[6]सुदुर्मदः ॥ ४९ ॥ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः[7] ॥ ५० ॥ पुरा रथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वा नरदेवसंज्ञितः ॥ स एव कालेन दुरत्ययेन ते कलेवरो[8] विट्कृमिभस्मसंज्ञितः ॥ ५१ ॥ ॥

मदत्वं प्रपञ्चयति—कलेवर इति। घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभवमतो ममैष कालो निष्फलो गत इति ॥४९॥ त्वामगणयन्तं त्वमाक्रमसीत्याह—प्रमत्तमिति। प्रमत्तमनवहितम्। त्वामन्तकमविगणय्य देहादिष्वासक्तमिति यावत्। कुतः प्रमत्तम्। इतिकृत्यचिन्तया एवमेवं करणीयमिति मनोरथपरम्परया। मनोरथे भग्नेऽपि विषयेषु लालसमुत्सुकम्। प्राप्तेऽपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमन्तकस्त्वमभिपद्यसेऽभिभवसीत्यर्थः। क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकमिवेति ॥ ५० ॥ किंच कालात्मना त्वयाभिपन्नो देह एवं भवतीत्याह—पुरेति। श्वसृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसंज्ञितो दग्धो भस्मसंज्ञितो भवति। इति बुद्ध्वा विचार्यैवंभूतशरीरे ममतां कुर्वन्तो जना हरिं नाराधयन्ति ते आत्मनि शत्रुभूता ज्ञेयाः सततम्। यतः—'योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वम् ॥ सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूताः ॥' इति ॥ ५१ ॥ ॥

१ वञ्चितः प्रतारितः। २ दुर्लभमुद्यमकोटिभिरपि दुष्प्रापम्। ३ कथंचित् पूर्वादृष्टेनैव लब्ध्वा। ४ पादारविन्दं त्वदीयमिति विपरिणामेन पूर्वानुषङ्गः। ५ दुरन्ता अपारा 'इदमद्य मया लब्धं' इत्यादिका चिन्ता, यद्वा दुःखमन्ते यस्मात्तया। ६ अगणयन् अनाद्रियमाणः। ७ अन्तयति कालरूपेणेत्यन्तकस्त्वमिति कालशक्त्यभेदोक्तिः। ८ कलेवर इति पुंस्त्वमार्षम्। ९ अभिपन्नोऽभिभूतः।

किंच अन्तकग्रासैः प्रागपि दिग्विजयिनो राज्ञोऽपि पारतन्त्र्यदुःखं तदवस्थमेवेत्याह—निर्जित्येति । अभूतविग्रहोऽविद्यमानसंग्रामः । पूर्वं ये समाना राजानस्तै राजभिर्वन्दितोऽपि मिथुनीभावः सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ॥ ५२ ॥ किंच तत्रातितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह—करोतीति । तपस्यधःशयनब्रह्मचर्यादौ सुनिष्ठितः । पुनश्च स्वराडिन्द्रः स्यामिति । यद्वा जन्मान्तरेष्वेवमेव चक्रवर्ती स्यामिति ॥ ५३ ॥ तदेवमष्टभिः श्लोकैरीशवहिर्मुखानां संसारं प्रपञ्च्य भक्त्या तन्निवृत्तिक्रममाह—भवापवर्ग इति । भो अच्युत, भ्रमतः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य बन्धस्यापवर्गोऽन्तो भवेत्प्राप्तकालः स्यात्तदा सतां सङ्गमो भवेत् । यदा च सत्सङ्गमो भवेत्तदा सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्तिर्भवति ततो मुच्यत इत्यर्थः ॥ ५४ ॥ मम तु सत्सङ्गात्पूर्वमेव यो राज्यादिसङ्गविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह—मन्य इति । ते त्वया । साधुभिर्विवेकिभिस्तपसे वनं प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥ ५५ ॥ तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान् वृणीष्वेति

निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ॥ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते[1] ॥ ५२ ॥ करोति कर्माणि तपःसुनिष्ठितो निवृत्तभोगस्तदपेक्षयाददत्[2] ॥ पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५३ ॥ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ॥ सत्सङ्गमो यर्हि तदैव सद्गतौ[3] परावरेशे त्वयि जायते मतिः[4] ॥५४॥ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ॥ यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥५५॥ न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद्[5] वरं विभो ॥ आराध्य[6] कस्त्वां ह्यपवर्गदं[7] हरे वृणीत आर्यो वरमात्मबन्धनम् ॥५६॥ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः ॥ निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥५७॥ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृष[8]षडमित्रोऽलब्धशान्तिः कथंचित् ॥ शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश ॥५८॥

यदुक्तं तत्रोत्तरमाह—न कामय इति । अकिंचना निवृत्ताभिमानाः । आर्यो विवेकी ॥ ५६ ॥ रजस्तमःसत्त्वगुणैरनुबध्यन्त इति तथा ता आशिष ऐश्वर्यादिशत्रुमारणादिधर्मादिरूपा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनम् । कुतः । निरञ्जनम् । तत्कुतः । निर्गुणम् । तदपि कुतः । अद्वयम् । अत एव अक्षरं त्वां शरणं व्रजामीति ॥ ५७ ॥ भुङ्क्ष्व तावद्भोगान्, कैवल्यं तु करस्थमेवेति पुनर्वरैः प्रलोभयन्तं श्रीकृष्णं पादोपग्रहणेन प्रार्थयते—चिरमिति । वृजिनैः कर्मफलैरार्तः पुनस्तद्वासनाभिस्तप्यमानस्तथाप्यवितृषषडमित्रः, तृडेव तृषा तृष्णा, न विगततृषाः षडमित्राः शत्रव इन्द्रियलक्षणा यस्य सः । अत एवालब्धशान्तिः, कथंचिद्दैववशेन लब्धशान्तिरिति वा । शरणं स्वज्ञानं तद्ददातीति तथा हे शरणद, समुपेतः प्राप्तोऽहम् । अशोकत्वे हेतुः—अभयम् । तत्रापि हेतुः—ऋतं सत्यम् । आपन्नमापदा व्याप्तं पाहीति ॥ ५८ ॥ ॥ ॥ ॥ ॥

१ नीयते योषिद्भिस्तद्दासीभिरपि । २ आददत् राजादिशरीरं गृह्णन्नपि, यद्वा धनादि ददद्वितरन् । ३ सद्गतौ सन्त एव गतिराश्रयो यस्य । ४ 'रतिः' इति पाठः । ५ नास्ति किंचन मुक्तिपर्यन्तमपि प्रार्थ्यं येषां तैरपि प्रार्थ्यतमात् । ६ आराध्य प्राप्य । ७ अपवर्गो भक्तिः 'अपवर्गश्च भवति योऽसौ भगवति' इति पञ्चमोक्तेः । ८ फलितार्थकथनमिदम् ।

॥५९॥ अप्रमादाय प्रमादाय न भवत्येव । कुत इत्यत आह—न धीरिति । एकान्तभक्तानां धीराशीर्भिः प्रासाभिरपि न भिद्यते नासज्जत इत्यर्थः ॥६०॥ व्यतिरेकमाह—युञ्जानानामिति । उत्थितं विपयाभिमुखम् ॥६१॥ तुभ्यं तव ॥६२॥ शुक्त्याभासेन भीषयंस्तपसि लोकसंग्रहे प्रवर्तयति—क्षात्रधर्मेति ॥६३॥६४॥ इति श्रीमद्भा०म०पु०द०उत्तरार्धे भा०दी०टीकायां एकपञ्चाशत्तमोऽध्यायः ॥५१॥ ॥ द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम् ॥ अन्वमोदत संदेशं रुक्मिण्या द्विजवर्णितम् ॥ १ ॥

॥ श्रीभगवानुवाच ॥ सार्वभौम महाराज मतिस्ते विमलोर्जिता[1] ॥ वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥५९॥ प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत्[2] ॥ न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥६०॥ युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ॥ अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम् ॥ ६१ ॥ विचरस्व महीं कामं मय्यावेशितमानसः ॥ अस्त्वेव[3] नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥६२॥ क्षात्रधर्मस्थितो जन्तून्न्यवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसा[4] जह्यघं मदुपाश्रितः ॥ ६३ ॥ जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः ॥ भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥६४॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उ० मुचुकुन्दस्तुतिर्नामैकपञ्चाशत्तमोऽध्यायः॥५१॥

॥ श्रीशुक उवाच ॥ इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः ॥ तं परिक्रम्य संनम्य[5] निश्चक्राम गुहामुखात् ॥१॥ स वीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम्[6] ॥ २ ॥ तपःश्रद्धायुतो धीरो निःसङ्गो मुक्तसंशयः ॥ समाधाय मनः कृष्णे प्राविशद्गन्धमादनम् ॥ ३ ॥ बदर्याश्रममासाद्य नरनारायणालयम् ॥ सर्वद्वन्द्वसहः शान्तस्तपसाराधयद्धरिम् ॥ ४ ॥ भगवान्पुनराव्रज्य पुरीं[7] यवनवेष्टिताम् ॥ हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥५॥ नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥ विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ मनुष्यचेष्टामापन्नौ राजन्दुद्रुवतुर्द्रुतम् ॥ ७ ॥ विहाय वित्तं[8] प्रचुरमभीतौ भीरुभीतवत् ॥ पद्भ्यां पद्मपलाशाभ्यां चेलतुर्बहुयोजनम् ॥ ८॥ पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ॥ अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥ ॥ ॥ ॥

॥ १ ॥ क्षुल्लकानल्पप्रमाणान् ॥ २ ॥ तपसि श्रद्धायुतः ॥ ३ ॥ तत्र च बदर्याश्रमम् ॥ ४ ॥ निन्ये नयन्मार्गे चलति स्म ॥ ५ ॥ ६ ॥ वेगरभसं वेगोद्रेकम् ॥७॥ भीरुभीतवद्भीरोरपि भीतवत् । अतिभीतवदित्यर्थः । चेलतुः पलायेताम् । बहुयोजनं देशम् ॥ ८ ॥ अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा ॥ ९ ॥

१ विमला ससारवासनाशून्या, ऊर्जिता रसविभावने प्रवला। २ तत्प्रलोभनम्। ३ 'अस्त्येव' इति पाठः। ४ तपसा चित्तैकाग्र्येण। अघं पापवासनाम्। ५ सनम्य साष्टाङ्गं मुहुर्नत्वा। ६ उत्तरामिति नरनारायणाश्रमम्। ७ 'मथुरां यवने हते' इति पाठः। ८ प्रचुरवित्तत्यागः शत्रोर्लोभनायेत्यर्थः ।

तुङ्गमेकादशयोजनोन्नतम् । प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्या यस्य तम् । तदाह—भगवानिति । भगवानिन्द्रः ॥ १० ॥ तत्र विचिन्वन्नपि तयोः पदं निलयस्थानमनधिगम्य ॥ ११ ॥ ततो गिरेः दश चैकं च योजनानि तावदुत्तुङ्गान्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥१२॥१३॥१४॥ श्रीकृष्णस्य विवाहान्निरूपयितुं बलदेवविवाहं नवमस्कन्धोक्तमनुस्मारयति—आनर्तेति ॥ १५ ॥ मात्रां कलाम् ॥१६॥ गरुडो यथा देवान्प्रमथ्य सुधामहरत्तथेति ॥१७॥

प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् ॥ प्रवर्षणाख्यं भगवान्नित्यदा यत्र वर्षति ॥१०॥ गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥ ११ ॥ तत उत्पत्य तरसा दह्यमानतटादुभौ ॥ दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥ १२ ॥ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥ १३ ॥ सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ बलमाकृष्य सुमहन्मगधान्मागधो ययौ ॥१४॥ आनर्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम् ॥ ब्रह्मणा चोदितः प्रादाद्बलायेति पुरोदितम् ॥ १५ ॥ भगवानपि गोविन्द[2] उपयेमे कुरूद्वह ॥ वैदर्भीं भीष्मकसुतां श्रियो मात्रां[3] स्वयंवरे ॥१६॥ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ॥ पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥१७॥ ॥ राजोवाच ॥ भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम्[5] ॥ राक्षसेन विधानेन उपयेम इति श्रुतम् ॥१८॥ भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः ॥ यथा मागधशाल्वादीञ्जित्वा कन्यामुपाहरत् ॥१९॥ ब्रह्मन्कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः ॥ को नु तृप्येत शृण्वानः[4] श्रुतज्ञो नित्यनूतनाः ॥२०॥ ॥श्रीशुक उवाच॥ राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान् ॥ तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना ॥ २१ ॥ रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ॥ रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ २२ ॥ सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः ॥ गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥२३॥ तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ॥ कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २४ ॥ ॥

'राक्षसो युद्धहरणात्' इति स्मृतेः राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेनोपयेमे परिणीतवानिति श्रुतम् । पूर्वमेव वा ॥ १८ ॥ सामान्यत एव श्रुतम् । विशेषं[6] तु श्रोतुमिच्छामि ॥ १९ ॥ श्रवणौत्सुक्यमाविष्करोति—ब्रह्मन्निति । पुण्या महाफलाः, माध्वीः श्रुतिसुखाः, लोकस्य मलापहाश्च, शृण्वानः शृण्वन्नित्यर्थः । श्रुतज्ञः श्रुतसारवित् । नित्यनूतनाः प्रतिक्षणमाश्चर्यवत्प्रतीयमानाः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ ॥

१ दह्यमानं प्रान्तभागमात्रं यस्य । २ गोविन्दः गां पृथ्वीं विन्दति क्रीडार्थमिति । ३ श्रियो मात्रा मात्यस्या सर्वमिति महालक्ष्म्यवतारभूतामित्यर्थः । यद्वा श्रियः राधिकायाः मात्रां मूर्तिविशेषमिति तोप० । ४ 'शृण्वन्' इति पाठः । ५ 'रुचिरानना' इति पाठः । ६ विवाहसंबन्धिनं विशेषमित्यर्थः ।

चैद्यममन्यत तस्या वरमित्यर्थः ॥२५॥ अवेत्य ज्ञात्वा । असितापाङ्गी सुनीलकटाक्षा । कृष्णाय कृष्णमानेतुं प्रेषयामास ॥२६॥ प्रतीहारैर्द्वारपालैः ॥२७॥ आत्मानं श्रीकृष्णम् ॥२८॥ अभिमृशन् शनैः संमर्दयन् ॥२९॥३०॥ स धर्मोऽस्य ब्राह्मणस्याखिलकामदोग्धा भवति । यद्वा स ब्राह्मणोऽस्य विश्वस्याखिलकामधुगिति ॥३१॥ लोकानाप्नोति लोकाल्लोकान्तरं पर्यटति नैकत्र निर्वृतस्तिष्ठतीत्यर्थः । नाप्नोतीति पाठे सुरेश्वरोऽपि भूत्वा लोकान्नाप्नोत्युत्तमलोकान्प्राप्तोऽप्यप्राप्त इव क्लिश्यतीत्यर्थः । शेते सुखमास्ते इत्यर्थः । तदेवाह—सर्वेष्वङ्गेषु वाक्पाण्यादिषु विज्वरस्तापरहितः ॥३२॥ स्वलाभः स्वत एव प्राप्तो लाभ आत्मलाभो वा तेन संतुष्टान्पूर्णान् साधून्स्वधर्मनिष्ठान् ॥३३॥ यस्य राज्ञो विषये देशे ॥३४॥ यतः स्थानात् । यदिच्छया यत्कार्येच्छया दुर्गं समुद्रम् ॥ ३५ ॥ संपृष्टः संप्रश्नः प्रष्टव्योऽर्थो यं सः ।

बन्धूनामिच्छतां[1] दातुं कृष्णाय भगिनीं नृप ॥ ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत॥ २५॥ तदवेत्यासितापाङ्गी[2] वैदर्भी दुर्मना भृशम् ॥ विचिन्त्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद्द्रुतम् ॥ २६ ॥ द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ॥ अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २७॥ दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ॥ उपवेश्यार्हयांचक्रे यथात्मानं दिवौकसः ॥ २८ ॥ तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः ॥ पाणिनाभिमृशन्पादावव्यग्रस्तमपृच्छत ॥२९॥ कच्चिद्द्विजवरश्रेष्ठ धर्मस्ते वृद्धसंमतः ॥ वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥ ३० ॥ संतुष्टो यर्हि[3] वर्तेत ब्राह्मणो येनकेनचित् ॥ अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥ ३१ ॥ असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ॥ अकिंचनोऽपि संतुष्टः शेते सर्वाङ्गविज्वरः ॥ ३२ ॥ विप्रान्[4]स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान् ॥ निरहंकारिणः शान्तान्नमस्ये शिरसाऽसकृत् ॥ ३३ ॥ कच्चिद्वः कुशलं[5] ब्रह्मन्राजतो यस्य हि प्रजाः ॥ सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥३४॥ यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ॥ सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥ ३५॥ एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना ॥ लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ ३६॥ ॥ रुक्मिण्युवाच[6] ॥ श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ॥ रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ ३७॥

परमेष्ठिना परमेश्वरेण । बन्धूनामनभिप्रेतं रुक्मिणश्चेष्टितमित्यादि सर्वम् ॥ ३६ ॥ 'रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम् ॥ मुद्रामुन्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत्' ॥ १ ॥ ब्राह्मणः श्रीकृष्णानुज्ञया वाचयति—श्रुत्वेति । अयमर्थः—हे अच्युत हे भुवनसुन्दरेत्यौत्सुक्यं द्योतयति—क्व तव महिमा क्व चाहं रूपकुलशीलादियुक्तापि । तथाऽप्यपगता त्रपा यस्मात्तन्मे चित्तं त्वय्याविशत्यासज्जते । तत्कुतस्तत्राह—शृण्वतां कर्णविवरैरन्तः प्रविश्याङ्गतापम्, अङ्गेति पृथक् संबोधनं वा, हरतस्तव गुणान् श्रुत्वा तथा दृशिमतां चक्षुष्मतां दृशामखिलार्थलाभात्मकं रूपं च श्रुत्वेति ॥ ३७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ बन्धूनामित्यनादरे षष्ठी । २ असितापाङ्गी कार्त्स्न्येन तन्मालिन्यातिशयात्, यद्वा असिते कृष्णे तन्मार्गे अपाङ्गो यस्याः । ३ 'यदि' इति पाठः । ४ विप्रानित्यारभ्य नमने कैमुत्यं योज्यम् । ५ कुशलं उपद्रवनाशः साहाय्यं च । ६ रुक्मिण्युवाचेतीदमपि ब्राह्मण आहेत्यर्थः ।

अहो कुलकन्यानामिदमतिधार्ष्ट्यमिति मा शङ्कीरित्याह—का त्वेति । हे मुकुन्द, हे नृसिंह नरश्रेष्ठ, का नाम कन्या कुलवती तथा महती गुरुगुणोदारा तथा धीरा धृतिमती त्वा त्वां पतिं न वृणीत । मय्येव केयं दोषशङ्केति भावः । कथंभूतम् । कुलशीलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः । द्रविणं द्रव्यसंपत्, धाम प्रभावः, तथा नरलोकस्य मनसामभिरामोऽभिरमणं यस्मात्तम् । किंच काले विवाहावसरे ॥३८॥ हे विभो, तस्मान्मे मया भवान्खलु पतिर्वृतः, आत्मा च भवतोऽर्पितः, अतस्त्वमत्रागत्य मां भवतो जायां विधेहि । विपक्षे बाधकं द्योतयन्नाह—मा वीरभागमिति । वीरस्य तव भागं मामाराच्छीघ्रमेवागत्य चैद्यो माऽभिमर्शतु मा स्पृशतु । मृगपतेर्बलिं गोमायुवत् गोमायुः सृगाल इवेति ॥ ३९ ॥ अनेकजन्मकृतैः सुकृतैरिदमेव भूयादिति प्रार्थयते—पूर्तेति । पूर्तं कूपादि । इष्टमग्निहोत्रादि । दत्तं हिरण्यादिदानम् । नियमस्तीर्थाटनादिः । व्रतं कृच्छ्रादि ॥ ४० ॥ ननु चैद्याय बन्धुभिरर्पितायां त्वयि किमधुना करणीयमि-

का त्वा मुकुन्द महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ॥ धीरा पतिं कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोभिरामम् ॥३८॥ तन्मे भवान्खलु वृतः पतिरङ्ग जायामात्माऽर्पितश्च भवतोऽत्र विभो विधेहि ॥ मा वीरभागमभिमर्शतु चैद्य आराद्गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥३९॥ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान्परेशः ॥ आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥४०॥ श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य पृतनापतिभिः परीतः ॥ निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ ४१ ॥ अन्तःपुरान्तरचरीमनिहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ॥ पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥४२॥ यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ॥ यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिः स्यात् ॥ ४३ ॥ ॥

त्यपेक्षायामाह—श्वोभाविनीति । हे अजित, श्वोभाविनि उद्वहने विवाहे प्रथमं गुप्तोऽलक्षित एवागत्य पश्चात्पृतनापतिभिः परिवृतः संश्चैद्यादिबलं निर्मथ्य प्रसह्य बलाद्वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां माम् । अनेन राक्षसविधिनोद्वहेत्युपदेशरहस्यम् ॥ ४१ ॥ ननु भवतु शिशुपालादिबलप्रमथनम् । अन्तःपुरमध्यगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्जेतेत्यत आह—अन्तःपुरेति । पुराद्बहिर्वर्तमानां गिरिजामम्बिकाम् । अम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४२ ॥ ननु किमनेनानर्थकारिणा निर्बन्धेन चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इति तत्राह—यस्येति । हे अम्बुजाक्ष, यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनमात्मनस्तमसोऽपहत्यै उमापतिरिव महान्तो वाञ्छन्ति तस्य भवतः प्रसादं यर्ह्यहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः

१ कुलं सद्वंशावतीर्णत्वम्, शीलं दयादानादि, वयो नित्यं नवनवयौवनोद्भेदः । यद्वा महतीत्यादिका का नाम न वृणीत या महत्त्वाद्यभिमानेन न वृणीत मा महत्यादिरेव नेत्यर्थ इति तोष० । २ भवत इति शेषे षष्ठी । भवते आत्मा देहस्वाम्येवार्पितः किमुत देहः । ३ भगवान्गदाग्रजो यद्याराधितस्तर्हि गदाग्रजो भगवानेत्येत्युभयत्रान्वयः । ४ निर्मथ्येति बलस्याब्धित्वं तेन यथा क्षीराब्धिमथनेन पूर्वं मामुद्धृतवानसि तथाधुनापि चैद्यादिबलार्णवं निर्मथ्योद्वहेति भावः । ५ महती वाद्याद्युत्सवयुता । ६ ह्रस्वश्छान्दसः । 'कुलदेवयात्रा' इति पाठः । ७ भवदित्यत्र षष्ठ्या लुक् छान्दसः । ८ जह्यां हेतुहेतुमतोर्लिङ् संभावनायां वा । ९ 'व्रतकृशा' इति पाठः ।

कृशानसूत्प्राणान् जह्यां त्यजेयम् । ततः किमित्यत आह—शतजन्मभिरिति । एवमेव वारंवारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति ॥ ४३ ॥ अत्र यत्कर्तुं करणीयं तद्विमृश्य क्रियतां तच्चानन्तरमेव क्रियतामिति ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ त्रिपञ्चाशत्तमे गत्वा विदर्भानच्युतेहितः ॥ रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥ १ ॥ १ ॥ निद्राया अलाभे कारणान्तरम्—वेदेति । तया अकथितमप्यहं जानामीति ॥ २ ॥ आनयिष्ये आनेष्यामि । राजन्यापसदान् राजसु हीनान् । उन्मथ्यानयने दृष्टान्तः—एधस इति ॥ ३ ॥ उद्वाहर्क्षमिति परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमत् । श्वोभाविनि त्वमजितोद्वहने विद-

॥ ब्राह्मण उवाच ॥ इत्येते गुह्यसंदेशा यदुदेव मयाहृताः ॥ विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥४४॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे रुक्मिण्युद्वाहे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ श्रीशुक उवाच ॥ वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः ॥ प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥ १ ॥ श्रीभगवानुवाच ॥ तथाहमपि तच्चित्तो निद्रां च न लभे निशि ॥ वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥ तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ॥ मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥ ३ ॥ ॥ श्रीशुक उवाच ॥ उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ॥ रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥ स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥ आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ॥ आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥ राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ॥ शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ॥ ७ ॥ पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ॥ चित्रध्वजपताकाभिस्तोरणैः समलंकृतम् ॥ ८ ॥ स्रग्गन्धमाल्याभरणैर्विरजोम्बरभूषितैः ॥ जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥ पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ॥ भोजयित्वा यथान्यायं वाचयामास मङ्गलम्[1] ॥ १० ॥ सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ॥ अहतांशुकयुग्मेन[2] भूषितां भूषणोत्तमैः ॥ ११ ॥ ॥

र्भान् गुप्तः समेत्येति रुक्मिणीसंदेशात् ॥ ४ ॥ शैब्येत्यादीनि चत्वार्यश्वनामानि ॥ ५ ॥ ६ ॥ पुत्रस्य रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा । अनेन शिशुपालेऽनभिरुचिं द्योतयति । कर्माणि पुरालङ्कारपितृदेवार्चनादीनि ॥ ७ ॥ तान्येवाह—पुरमित्यादिचतुर्भिः । संमृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तत् । चित्रा ध्वजेषु पताकास्ताभिः समलंकृतमकारयत् ॥ ८ ॥ स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः । यद्वा स्रग्गन्धमाल्यान्याबिभ्रतीति तथा तैः तथा विरजोम्बरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टम् । तथा श्रीमद्भिर्गृहैश्च जुष्टम् ॥ ९ ॥ यथान्यायमन्यांश्च । कन्यां प्रति मङ्गलं वाचयामास ॥ १० ॥ कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् । अहतं नवीनम् । भूषणोत्तमैश्च भूषितास् ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

१ कन्यां प्रति मङ्गलं वाचयामासेत्युत्तरेणान्वयः । २. 'आहतांशुक' इति पाठः ।

वध्वास्तस्याः कन्यायाः । अथर्वविदथर्वणमन्त्रवित् ॥ १२ ॥ १३ ॥ अभ्युदये उचितम् ॥ १४ ॥ ततश्चतुरङ्गसैन्यैः परीतः परिवृतः कुण्डिनं भीष्मकस्य पुरं ययौ । मदं च्यवन्ते इति मदच्युतस्तैः । स्यन्दनै रथैः । हेमरचिता माला विद्यन्ते येषु तैः ॥ १५ ॥ कल्पितं निर्मितं यदन्यनिवेशनं तस्मिन् ॥ १६ ॥ १७ ॥ यदि श्रीकृष्णो हरेदिति शङ्किताः । कन्यां साधयितुमित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सूर्योदयात्पूर्वमेवौत्सुक्येन रुक्मिण्यचिन्तयदित्याह—भीष्मकन्येति । प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥ त्रियामा रात्रिस्तावन्मात्रेणान्तरितः । अल्पराधसो मन्दभाग्यायाः ॥ २३ ॥ जुगुप्सितं धार्ष्ट्यादि । अपीति

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ॥ पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ॥ १२ ॥ हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ॥ प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १३ ॥ एवं चेदिपती राजा दमघोषः सुताय वै ॥ कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥ मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १५ ॥ तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ॥ निवेशयामास मुदा कल्पितान्यनिवेशने ॥ १६ ॥ तत्र शाल्वो जरासन्धो दन्तवक्रो विदूरथः ॥ आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥ १७॥ कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ॥ यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥ योत्स्यामः संहतास्तेन इति निश्चितमानसाः ॥ आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥ श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम् ॥ कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ २० ॥ बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ॥ त्वरितः कुण्डिनं प्रागाद्गजाश्वरथपत्तिभिः ॥ २१ ॥ भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ॥ प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥ २२ ॥ अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ॥ नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ॥ सोऽपि नावर्ततेऽद्यापि मत्संदेशहरो द्विजः ॥ २३ ॥ अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम् ॥ मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ २४ ॥ दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥ २५ ॥ एवं चिन्तयती बाला गोविन्दहृतमानसा ॥ न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥ २६ ॥ ॥

शङ्कायाम् । नायाति हि कृतोद्यम इति । अयमर्थः—आदौ कृतोद्यमत्वात्तं न प्रस्थापितवान्, प्रस्थानावसरे च किंचिन्मयि जुगुप्सितं मत्वा प्रत्याचष्ट, अतः सोऽपि द्विजो नूनं नायातीति ॥ २४ ॥ यद्वा ततो निर्गतोऽपि श्रीकृष्णो मद्दैववैमुख्यात्क्वचित्प्रतिबद्धो भवेदित्याह—दुर्भगाया इति ॥ २५ ॥ कालज्ञा नाधुनापि गोविन्दागमनकाल इति मन्वाना किंचिदाश्वस्तचित्ता सती चिन्तास्तब्धे लोचने निमीलितवतीत्यर्थः ॥ २६ ॥ ॥ ॥

१ 'वध्वा' इति पाठः । २ परीतो दमघोष इति पूर्वानुषङ्गः । ३ यत्ता उद्युक्ताः । ४ एतत् एतम् । ५ वरः श्रेष्ठ आरोहः श्रीकृष्णप्राप्तिलक्षणोर्ध्वभूमिकारोहणं यस्याः ।

प्रियभाषिणः प्रियसूचकाः ॥२७॥ पुरोपवनं प्राप्तेन श्रीकृष्णेन विनिर्दिष्टः प्राप्तं मां कथयेत्यादिष्टः ॥२८॥ न व्यग्रा आत्मनो देहस्य गतिर्यस्य तम् । लक्षणाभिज्ञा दूतस्य लक्षणं तत्तत्कार्यसूचकमभिजानातीति तथा ॥ २९ ॥ तस्यै प्राप्तं यदुनन्दनमावेदितवान् । तं[1] च शशंस । आत्मोपनयनं प्रति आत्मना स्वयं श्रीकृष्णस्यानयनं प्रति तेन द्विजेन सत्यवचनं प्रोक्तमिति । आत्मनः प्राणेश्वरस्येति वा । यद्वा आत्मनस्तस्या उपनयनं प्रति श्रीकृष्णेन यदुक्तं सत्यवचनं तामानयिष्य इत्यादि तच्च शशंस श्रावयदित्यर्थः ॥३०॥ तं श्रीकृष्णम् । अस्मिन्कार्ये सर्वस्वार्पणमप्यपर्याप्तमिति तदुचितं प्रियमपश्यन्ती तदा केवलं ननाम । पश्चाद्बहु ददावित्यर्थः । यद्वा मां

एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप ॥ वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः[2] ॥ २७ ॥ अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ॥ अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥ सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ॥ आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥ २९ ॥ तस्या आवेदयत्प्राप्तं शशंस यदुनन्दनम् ॥ उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥३०॥ तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ॥ नपश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥३१॥ प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः[3] ॥३२॥ मधुपर्कमुपानीय वासांसि विरजांसि सः[4] ॥ उपायनान्यभीष्टानि विधिवत्समपूजयत् ॥३३॥ तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ॥ ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥३४॥ एवं राज्ञां[5] समेतानां यथावीर्यं यथावयः ॥ यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ॥ ३५ ॥ कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ॥ आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥३६॥ अस्यैव[6] भार्या भवितुं रुक्मिण्यर्हति नापरा ॥ असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३७ ॥ ॥

श्रियं ये नमन्ति ते तावत्सर्वसम्पदामास्पदं भवन्ति किं पुनर्मयि प्रणतायामिति ततोऽधिकमन्यत्प्रियमपश्यन्ती ननामेति ॥३१॥३२॥३३॥ महामतिरित्यनेन श्रीकृष्णो वाढं कन्यामुद्वोढुमेवागतः स्यादिति वरोचितेन विधिना समपूजयदिति सूचितम् । यथा यथावत् ॥३४॥ समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हितवानित्यर्थः ॥ ३५ ॥ श्रीकृष्णे भाविकर्मसूचकं जनानुरागं दर्शयति—कृष्णमागतमिति त्रिभिः ॥ ३६ ॥ अस्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि । तत्रैकस्मिन्व्यतिरेकप्रदर्शनमुपलक्षणार्थं नापरेति । नच वाक्यभेददोषः । अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सह

१ तं च ब्राह्मणं सा शशंस स्तुतवती । तदाकारमाह—आत्मेत्यादि । एतस्यातिक्लिष्टत्वादरुच्या प्रकारान्तरमाह—यद्वेति। २ भाषिण इति एकशेषे पुंस्त्वमार्षम्। ३ भीष्मक इति शेषः। ४ 'विरजानि सः' इति पाठेऽदन्तत्वमार्षम् । ५ राज्ञामिति कर्मणि शेषे षष्ठी। ६ अस्यैवेति संग्रहवाक्यमिदम्। षडवधारणघटितषड्वाक्यानां तन्त्रेण द्विरुच्चारणात्। नापरेत्येवमेकत्रैवान्यव्यावृत्तिप्रदर्शनमुपलक्षणार्थं। तथा च—रुक्मिणी यदि भार्या भवितुमर्हति तर्ह्यस्यैव नापरस्य १, अस्य भार्या भवितुमर्हा रुक्मिण्येव नापरा २, अस्य रुक्मिणी भार्या भवितुमर्हत्येव नान्यार्हतीति ३, अपिरेवार्थे। भैष्म्याः समुचितः पतिरसावेव नापरः ४, असौ समुचितः पतिर्भैष्म्या एव नापरस्याः ५, भैष्म्या असौ पतिरुचित एव नान्य उचितः ६ इत्येवं षड्वाक्यानि संपद्यन्ते। उद्देश्यविधेयभेदात्। प्रथमे वाक्ये हि रुक्मिणीनिष्ठं भार्याभवनार्हत्वमुद्दिश्यास्यैवेतीदमीयत्वं विधीयतेऽन्यदीयत्वव्यावर्तनाय। द्वितीये इदमीयभार्याभवनार्हामुद्दिश्य रुक्मिण्येवेति विधिः । तृतीय इदमीयं रुक्मिणीनिष्ठभार्याभवनमुद्दिश्यार्हत्वविधिरित्यादूह्यं। नचैवं व्याख्याने वाक्यभेदो दोषः शङ्क्यः । ग्रहं संमार्ष्टीतिवददोषात्। तत्र हि ग्रहमुद्दिश्य संमार्गसंस्कारो विधीयते इति ग्रहः

प्रयोगात् । श्रेष्ठं संमार्ग्यैत्यादिवदिति ॥ ३७ ॥ अयमेवानुग्रह इति निर्दिशन्ति—गृह्णात्विति ॥ ३८ ॥ प्रेम्णः कला लेशस्तेन बद्धा वदन्ति स्म । संपूर्णं प्रेम तेषां हृद्येवावर्तत इत्यर्थः ॥ ३९ ॥ गमनं विशिनष्टि द्वयेन—पद्भ्यामिति ॥ ४० ॥ अपि च—मृदङ्गेत्यादि । जघ्निरे आहताः । वादिता इत्यर्थः ॥ ४१ ॥ वारमुख्या गणिकोत्तमाः ॥ ४२ ॥ ४३ ॥ उपस्पृश्याचम्य ॥ ४४ ॥ प्रवयसो वृद्धाः । भवान्वितामिति भवस्योपसर्जनत्वं स्त्रीकर्मोचितमुक्तम् ॥ ४५ ॥

किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ॥ अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३८ ॥ एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ॥ कन्या चान्तःपुरात्प्रागाद्भटैर्गुप्ताम्बिकालयम् ॥ ३९ ॥ पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ॥ सा चानुध्यायती सम्यङ्मुकुन्दचरणाम्बुजम् ॥ ४० ॥ यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता ॥ गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ॥ मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥ ४१ ॥ नानोपहारबलिभिर्वारमुख्याः सहस्रशः ॥ स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ॥ ४२ ॥ गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ॥ परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥ ४३ ॥ आसाद्य देवीसदनं धौतपादकराम्बुजा ॥ उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥ ४४ ॥ तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ॥ भवानीं वन्दयांचक्रुर्भवपत्नीं भवान्विताम् ॥ ४५ ॥ नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसंतानयुतां शिवाम् ॥ भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम् ॥ ४६ ॥ अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ॥ नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४७ ॥ विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ॥ लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥ तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ॥ ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥ ४९ ॥ मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ॥ प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥ ५० ॥ ॥ ॥ ॥

नमस्य इति । रुक्मिण्या तदैव दृष्टोऽयं मन्त्रः । स्वसन्तानयुतां गणेशादिसहिताम् । आत्मारामोऽसौ कथं त्वत्पतिर्भवेदिति चेदत आह—तदनुमोदतामिति । भवती श्रीकृष्ण एव वा ॥ ४६ ॥ वासःस्रग्गन्धादिभिरम्बिकां समपूजयत् ॥४७॥ तथा विप्रस्त्रियोऽपि तैर्लवणादिभिश्च समपूजयदिति ॥४८॥ शेषां निर्माल्यम् ॥ ४९ ॥ मुनिव्रतं मौनम् । भृत्यां सखीम् ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥

प्रधानं । समार्गो गुणः । अतः प्रतिप्रधानं गुणावृत्तिरिति न्यायेन सर्वग्रहं प्रति संमार्ग आवृत्त्यानुष्ठेय इत्येकत्वमविवक्षित [illegible] । [illegible] पतिग्रहं समार्गमनुष्ठापयद्वाक्यमावर्तते । नच न्यायसिद्धो वाक्यभेदो दोषाय । [illegible] तोषणी । १ मद्शब्देन सोमपानानि । अत्र ग्रहगतैकत्वाविवक्षया सर्वग्रहसमार्जनबोधकमेकमेव वाक्यं तथेत्यर्थः । २ मातृभिरिति मात्रा तत्तुल्याभिश्च । ३ 'देवमदनं' इति पाठे देव्याः सदनं [illegible] पुंवत् । यद्वा भवान्वितामित्यादेर्वक्ष्यमाणाद्देव्याः देवाना च सदनं । ४ स्वः स्वार्थाङ्गभूतः शिवः सतानो गणेशादिश्च तद्युतानिति [illegible] तोप० । ५ 'सती मतं' इति पाठः अर्थः स एव ।

तां विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः । श्यामामजातरजस्काम् । कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्यास्ताम् ॥ ५१ ॥ द्विजा एव कुन्दानां कुड्मलानि मुकुलानि बिम्बफलवद्योऽधरस्तस्य द्युतिभिः शोणायमानानि तानि यस्यास्ताम् । कला शोभा तद्युक्तं नूपुरं सिञ्च तत्कलानूपुरं च तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्य तेन पदा चलन्तीम् ॥५२॥ न केवलं मुमुहुः पेतुश्चेत्याह—यामिति । यात्रामिषेण हरये स्वलावण्यं समर्पयन्तीं यां वीक्ष्य क्षितौ पेतुः सा तान्प्राप्तान् ह्रिया ऐक्षत तदैवाच्युतं च ददर्शेत्युत्तरेणान्वयः ॥५३॥ चलत्पद्मकोशतुल्यौ चरणौ चालयन्ती ॥५४॥५५॥ सुपर्णलक्षणं गरुडध्वजम् ।

तां देवमायामिव वीर[2]मोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ॥ श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ५१ ॥ शुचिस्मितां बिम्बफलाधरद्युतिशोणायमानद्विजकुन्दकुड्मलाम् ॥ पदा चलन्तीं कलहंसगामिनीं सिञ्जत्कलानूपुरधामशोभिना ॥ ५२ ॥ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ॥ ५३ ॥ पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ सैवं शनैश्चलयती [4]चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥ ५४ ॥ उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपान्ददृशे[5]ऽच्युतं सा ॥ तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां [6]समीक्षताम् ॥ ५५ ॥ रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ॥ ततो ययौ रामपुरोगमैः शनैः सृगालमध्यादिव भागहृद्धरिः ॥ ५६ ॥ तं मानिनः स्वाभिभवं यशःक्षयं [7]परे जरासन्धवशा न सेहिरे ॥ अहो धिगस्मान्यश आत्तधन्वनां [8]गोपैर्हृतं केसरिणां मृगैरिव ॥ ५७ ॥

॥ इति श्रीमद्भागवते महापुराणे द० उ० रुक्मिणीहरणं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ श्रीशुक उवाच ॥ इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ॥ स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ १ ॥ तानापतत आलोक्य यादवानीकयूथपाः ॥ तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य स्वधनूंषि ते[9] ॥ २ ॥ ॥

हरिः सिंहः ॥५६॥ असहमानानां तेषामाक्रोशमाह । अहो धिगस्मान् । यतोऽस्माकं यशो गोपैर्हृतमिति ॥५७॥ ॥ इति दशमे त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥ चतुष्पञ्चाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् ॥ रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरेऽग्रहीत् ॥ १ ॥ इतीति । अहो धिगस्मानित्येवं वदन्तः सुसंरब्धाः क्रोधाविष्टाः । दंशिताः कृतसन्नाहाः । परिक्रान्ताः परिवृताः । अन्वीयुरन्वधावन् ॥ १ ॥ विस्फूर्ज्य टङ्कारयित्वा ॥ २ ॥ ॥ ॥

---

१ इतस्तृतीयश्लोकस्थेनेत्यर्थः । २ 'धीरमोहिनीं' इति पाठः । ३ सेत्यस्य पौनरुक्त्यादत्रैवमिति पाठोऽपेक्षितः । ४ 'चरणाब्जकोशौ' इति पाठः । ५ 'अच्युतं च' इति पाठः । ६ समीक्षतामित्यनादरे षष्ठी । ७ 'परैः', 'मुखा' इति पाठौ । ८ वस्तुतस्तु गोपैर्भूपैरित्यर्थः । ९ ते जरासन्धादयोऽश्वपृष्ठादौ शरवर्षाणि मुमुचुरित्यन्वयः ।

परेषां शराणां बाहुल्ये यादवानामचलत्वे दृष्टान्तः—मेघा इति ॥ ३ ॥ ऐक्षदैक्षत ॥ ४ ॥ मा स्म भैः मा भयं कुरु। हे वामलोचने वराक्षि। तावकैस्त्वदीयैः कृत्वा ॥ ५ ॥ स चासौ विक्रमश्च तम् ॥ ६ ॥ उष्णीषाणि शिरोवतंसवस्त्राणि तत्सहितानि शिरांसि ॥ ७ ॥ करभाः प्रकोष्ठा ऊरुविशेषणं वा ॥ ८ ॥ ९ ॥ अप्राप्तदारमेव तं हृतदारमिवातुरम् ॥ १० ॥ निष्ठा स्थैर्यम् ॥ ११ ॥ कुहको नर्तयिता तस्येच्छया। दुःखेऽपीहमानत्वेन पारवश्यं व्यक्तं दर्शितम् ॥ १२ ॥

अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः ॥ मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥३॥ पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ॥ सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥४॥ प्रहस्य भगवानाह मा स्म भैर्वामलोचने ॥ विनङ्क्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ५ ॥ तेषां तद्विक्रमं वीरा गदसंकर्षणादयः ॥ अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ॥ ६ ॥ पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ॥ सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥ ७ ॥ हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ८ ॥ हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः ॥ राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ ९ ॥ शिशुपालं समभ्येत्य हृतदारमिवातुरम् ॥ नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥१०॥ भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज ॥ न प्रियाप्रिययो राजन्निष्ठा देहिषु दृश्यते ॥ ११ ॥ यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ॥ एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १२ ॥ शौरेः सप्तदशाहं वै संयुगानि पराजितः ॥ त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥१३॥ तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ॥ कालेन दैवयुक्तेन जानन्विद्रावितं जगत् ॥ १४ ॥ अधुनापि वयं सर्वे वीरयूथपयूथपाः ॥ पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥ १५ ॥ रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥ तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥ १६ ॥ एवं प्रबोधितो मित्रैश्चैद्योऽगात्सानुगः पुरम् ॥ हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥ १७ ॥ रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः ॥ पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्या वृतो बली ॥१८॥ ॥

अत्र चाहमेव दृष्टान्त इत्याह जरासन्धः—शौरेरिति। कृष्णात्सकाशात्। एकं संयुगम्। परं केवलमन्तिमं वा जिग्ये जितवानहम् ॥ १३ ॥ दैवमदृष्टं तद्युक्तेन ॥ १४ ॥ फल्गुतन्त्रैः स्वल्पसैन्यैः ॥ १५ ॥ प्रदक्षिणोऽनुकूलः स्यात् ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥

१ करभसदृशा इत्यर्थः। करभा मणिबन्धप्रभृत्यधोभागा इति तोष०। २ प्रवर्तमानत्वेनेत्यर्थः। ३ 'रथोपस्थेऽस्त्रकोविदाः' इति पाठः। ४ तेषां शरवर्षाणि यादवेष्वकिंचित्कराणिभूवन्निति भावः। ५ कोटिश इति परत्रापि सर्वैर्योज्यम्। ६ 'जयकाङ्क्षिभिः' इति पाठः। ७ नष्टत्विषमिति कायवाङ्मनोवाचा क्रमेण शक्त्यपगमः। ८ ईहते चेष्टते। प्रवर्तत इति यावत्। ९ 'यदा दैवं प्रदक्षिणम्' इति पाठः। १० यद्वा शौरेरिति कर्तरि शेषे षष्ठी। शौरिणेत्यर्थः।

॥ १९ ॥ २० ॥ २१ ॥ गोपालस्य वेदपालकस्येति वास्तवोऽर्थः । तथा सुदुर्मतेरिति शोभनाऽनुग्रहवती दुष्टेष्वपि मतिर्यस्य तस्येति ॥ २२ ॥ २३ ॥ यदूनां कुलपांसन कुलदूषण । वस्तुतस्तु यदूनां कुलस्य पते । हे अंसन स्वयं च रिपुहननचतुर । 'अंस समाघाते' इत्यस्माद्धातोः कर्तरि ल्युट्प्रत्ययो नन्द्या-

रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुंजाम् ॥ प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥१९॥ अहत्वा समरे कृष्ण-
मप्रत्यूह्य च रुक्मिणीम् ॥ कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः ॥ २० ॥ इत्युक्त्वा रथमारुह्य सारथिं प्राह
सत्वरः ॥ चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥२१॥ अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ॥ नेष्ये
वीर्यमदं येन स्वसा मे प्रसभं हृता ॥२२॥ विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेन गोविन्दं तिष्ठ तिष्ठे-
त्यथाह्वयत् ॥ २३ ॥ धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥ आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥ २४ ॥
कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः ॥ हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥ २५ ॥ यावन्न मे हतो
बाणैः शयीथा मुञ्च दारिकाम् ॥ स्मयन्कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥२६॥ अष्टभिश्चतुरो वाहान्
द्वाभ्यां सूतं ध्वजं त्रिभिः ॥ स चान्यद्धनुरादाय कृष्णं विव्याध पञ्चभिः ॥ २७ ॥ तैस्ताडितः शरौघैस्तु चिच्छेद
धनुरच्युतः ॥ पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ २८ ॥ परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥ यद्य-
दायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥२९॥ ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ॥ कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग
इव पावकम् ॥ ३० ॥ तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ छित्त्वाऽसिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः
॥ ३१ ॥ दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ॥ पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥ ३२ ॥ योगेश्वराप्र-
मेयात्मन् देवदेव जगत्पते ॥ हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ३३ ॥ ॥ ॥

दिविहितः ॥ २४ ॥ ध्वाङ्क्षः काकः स यथा हविर्मुष्णाति तद्वत् । वस्तुतस्तु अध्वाङ्क्षवदिति च्छेदः । सहस्राक्षवदित्यर्थः । हे मन्द स्थिरेत्यर्थः ॥२५ ॥ २६ ॥
॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ॥ ॥ ॥

१ सर्वभूभुक्षु शृण्वत्स्वित्यर्थः । २ अप्रत्यूह्य अनिवर्त्य । ३ यतः यत्र । भवेदिति कामप्रवेदने लिङ् । ४ बाणैर्मे मदीयमेव वीर्यमदं नेष्ये हरिष्ये । ५ 'चारे क्षणं तिष्ठ' इति तोषणी-पाठः,—तत्र अरे शत्रो इति, वास्तवार्थे तु अरेक्षणं शीघ्रदर्शनं यथा स्यात्तथा तिष्ठ । अरं द्रुतम् । ६ वास्तवेऽर्थे अमुषित्वा स्वभागत्वान्न्यायेनैव लब्ध्वा किंच हे मन्द स्थिरमहाशक्तित्वात् । कूटयोधिनः कूटान् खलानस्मान् योधयसि पलायनेनास्मत्प्रोत्साहनात् तस्य तव त्वां प्रति मदं हर्षं स्वपराजयेन प्रापयिष्यामि । यत् हविरिव शुद्धां मे स्वसारममुषित्वेति ध्वाङ्क्षवत्क्षुद्रोऽहं हरिष्य इति चान्वयः । ७ वास्तवेऽर्थे मे बाणैर्न हतो न प्राप्तो यावच्छयीथाः स्वस्थो वर्तेथास्तावद्दारिकां बाणैर्मद्विदारणं मुञ्च त्यज मा कुरु । मद्बाणप्राप्त्या ते व्याकुलीभावश्चा-संभवीति मैव मां जहीति भावः । ८ 'आददात्' इति पाठः । ९ तिग्मं आसिं रुक्मिणं का । १० ध्वाङ्क्षशब्देन हविरुपघातक एकाक्षः काकस्तद्भिन्नवदित्यर्थः ।

परित्रासेन विकम्पितान्यङ्गानि यस्यास्तया । शुचा शोकेनावशुष्यन्मुखं यस्याः, रुद्धः कण्ठो यस्याः सा च सा च । तथा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया । गृहीतौ पादौ यस्य सः ॥ ३४ ॥ सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा । तेनैवासिना प्रवपन्मुण्डयन् व्यरूपयद्विरूपमकरोत् ॥ ३५ ॥ तथाभूतं हतप्रायमित्युत्तरवाक्येऽप्यनुषङ्गः ॥ ३६ ॥ ३७ ॥ रुक्मिणी सान्त्वयति—मैवास्मानिति ॥३८॥ पुनः कृष्णमाक्षिपति बन्धुरिति ॥३९॥ पुनर्देवीं प्रत्याह—क्षत्रियाणामिति । येन धर्मेण भ्रातापि भ्रातरं हन्यात् । ततस्तस्माद्घोरतरोऽतिदारुणो धर्मश्च । अतः कोऽस्माकमपराध इति भावः ॥ ४० ॥ पुनः श्रीकृष्णं प्रत्याह—राज्यस्येति । तथाप्यस्माकमेतदनुचितमिति भावः ॥ ४१ ॥ पुनर्देवीं प्रत्याह—

॥ श्रीशुक उवाच ॥ तया परित्रासविकम्पिताङ्ग्या शुचावशुष्यन्मुखरुद्धकण्ठया ॥ कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत ॥३४॥ चैलेन बद्ध्वा तमसाधुकारिणं [1]सश्मश्रुकेशं प्रवपन्व्यरूपयत् ॥ तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥३५॥ कृष्णान्तिकमुपव्रज्य ददृशु[2]स्तत्र रुक्मिणम् ॥ तथाभूतं हतप्रायं दृष्ट्वा संकर्षणो विभुः ॥ विमुच्य बद्धं करुणो भगवान्कृष्णमब्रवीत् ॥ ३६ ॥ असाध्विदं त्वया कृष्ण कृतमस्म[3]ज्जुगुप्सितम् ॥ वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥ ३७ ॥ मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया ॥ सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥ ३८ ॥ बन्धुर्वधार्हदोषोऽपि न बन्धोर्वधमर्हति ॥ त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥३९॥ क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ॥ भ्रातापि भ्रातरं हन्याद्येन घोरतरस्ततः ॥ ४० ॥ राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ॥ [4]मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥ ४१ ॥ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ॥ यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत् ॥४२॥ आत्ममोहो नृणामेष कल्प्यते देवमायया ॥ सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ॥ ४३ ॥ एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥ नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ४४ ॥ ॥ ॥ ॥

तवेयमिति । सर्वभूतेषु दुर्हृदामहितानां भ्रातॄणामज्ञवदभद्रं मन्यसे इच्छसि इयं तव विषमा असमीचीना बुद्धिः । कुतः । यतस्तदेव सुहृदामभद्रमिति । यद्वा सर्वभूतेषु दुर्हृदामपि स्वसुहृदां भद्रमेव दण्डरूपं मुण्डनमभद्रं यन्मन्यसे तवेयं विषमा बुद्धिरिति । अथवा सर्वभूतेषु मध्ये दुर्हृदां शिशुपालादीनामभद्रं सुहृदां भद्रं च यन्मन्यसे तवेयं विषमा बुद्धिः समा न भवति । अज्ञवदज्ञानामिव ॥ ४२ ॥ कुत इत्यत आह—आत्ममोह इति ॥ ४३ ॥ परमार्थमाह—एक एवेति । परः शुद्धः ज्योतिश्चन्द्रादिर्यथोदकेषु । नभो यथा घटादिष्विति ॥ ४४ ॥ ॥ ॥ ॥

१ तमित्यध्याहारः । यद्वा स श्रीकृष्णः श्मश्रुकेशमिति द्वन्द्वैक्यम् । २ ददृशुः यदुप्रवीरा इत्यनुषङ्गः । ३ अस्माकं जुगुप्सितं निन्दितम् । 'कृतमस्य जुगुप्सितम्' इत्यपि पाठः ।
४ मानिनो देहाद्यात्माभिमानिनः श्रीमदान्धाः ।

कुतस्तर्हि न चन्द्रादिवदात्मानमेकं शुद्धं प्रतीमस्तत्राह—देह इति । द्रव्यमधिभूतम्, प्राणा इन्द्रियाण्यध्यात्मम्, गुणशब्देनाधिदैवं, तत्रितयात्मकः । देहोपाधिना शुद्धो न प्रतीयत इत्यर्थः ॥४५॥ ननु देहसंबन्धेनापि संसारे सति शुद्धत्वं गतमेव तत्राह—नात्मन इति । हे सति, अन्येनाधिभूतादिना आत्मनः संयोगवियोगौ न स्तः । कुतः । असतः असत्त्वादन्यस्येत्यर्थः । कुतोऽसत्त्वं तत्राह—तद्धेतुत्वादिति । तस्यान्यस्य भूतेन्द्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वादात्महेतुत्वात् । ननु देवैरधिष्ठितेभ्य इन्द्रियेभ्यो भूतानां प्रतीतिः प्रसिद्धा । भूतप्रतीत्या च तत्प्रसिद्धिर्नात्मन इत्यत आह—दग्रूपाभ्यां यथा रवेः। यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात्प्रसिद्धिर्द्वयोरपि तैजसत्वात्तदभेदश्च तथा भूतेन्द्रियादीनां परस्परं सिद्धानामपि चैतन्याधीन एव प्रकाशस्तत्कार्यत्वाच्च तद्व्यतिरेकेणासत्त्वं चेत्यर्थः । तथा च द्वादशे वक्ष्यति—'दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथक् भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥' इति । यद्वा रवेः प्रसिद्धाभ्यामेव दग्रूपाभ्यां परस्परं प्रसिद्धिर्यथा भवति तद्वदिति ॥ ४६ ॥ देहसंबन्धाभावादेव नात्मनो जन्मादयोऽपीति

देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः ॥ आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥४५॥ नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ॥ तद्धेतुत्वात्तत्प्रसिद्धेर्दग्रूपाभ्यां यथा रवेः ॥४६॥ जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ॥ कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥४७॥ यथा शयान आत्मानं विषयान्फलमेव च ॥ अनुभुङ्क्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवम् ॥४८॥ तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ॥ तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥४९॥ ॥ श्रीशुक उवाच ॥ एवं भगवता तन्वी रामेण प्रतिबोधिता ॥ वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥५०॥ प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ॥ स्मरन्विरूपकरणं वितथात्ममनोरथः ॥ ५१ ॥ (चक्रे[2] भोजकटं नाम निवासाय महत्पुरम् ॥) अहत्वा[3] दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ॥ कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ॥ ५२ ॥ ॥

वक्तुं जन्मादीनां देहधर्मत्वमाह—जन्मादयस्त्विति । कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽहमित्यात्मनि जन्मादिप्रतीतिः । देहजन्मादिनैवेति सदृष्टान्तमाह—कलानामिवेति । इन्दोः कलानामेव जन्मादयो नैवेन्दोर्यथा तद्वत् । यथा च कलानाशादेव कुहूरमावास्या इन्दुक्षय उच्यते तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहार इत्यर्थः ॥४७॥ नन्वात्मनो देहादिसंबन्धाभावे कथं भोक्तृभोग्यभोगप्रतीतिरित्याशङ्क्य स्वप्नदृष्टान्तेन समर्थयति—यथा शयान इति । आत्मानं भोक्तारं[4] विषयान् भोग्यान् फलं भोगमसत्यप्यर्थेऽनुभुङ्क्ते तथा अबुधः संसारं प्राप्नोति ॥४८॥ आत्मानं शोषयति[5] विमोहयति चेति तथा तम् । निर्हृत्यापाकृत्य ॥४९॥ समादधे समाहितमकरोत् ॥ ५० ॥ रुक्मिणस्त्वेवं श्रुतवतो नाज्ञानं निवृत्तमिति दर्शयन्नाह—प्राणावशेष इति ॥ ५१ ॥ अहत्वा अज्ञात्वाऽदुर्मतिमिति[6] च सत्योऽर्थः । अप्रत्यूह्यानावर्त्य । अप्रतिबुध्येति तु सत्यम् । यवीयसीं स्वसारम् । यत्र विरूपितस्तत्रैवावसत् । तत्र[7] च भोजकटं नाम पुरमभवत् ॥ ५२ ॥ ॥

१ आत्माभास्यत्वलक्षणदृश्यत्वादिति यावत् । २ विरूपकरणं स्मरन् भोजस्य विदर्भराजस्य कटः शपथो हेतुर्यत्र तन्नामकं पुरं चक्रे । वस्तुतस्तु चक्रे इत्याद्यर्धं काचित्कं, नेदं श्रीधरस्वामिसमतम्, यत्र विरूपित इत्यादिव्याख्यानात् । ३ वास्तवार्थस्तु—अहत्वा अज्ञात्वा अदुर्मतिं इति च्छेदः, दुःखेन मतिर्ज्ञानं यस्येति वा । अप्रत्यूह्य विघ्नितामकृत्वेति । ४ भोक्तारं राजादिरूपेण । ५ शोषो नीरसता । ६ लक्ष्म्यवतारत्वेनाज्ञात्वेत्यर्थः । ७ वक्ष्यमाणभोजकटनगरस्यापि विरूपकरणदेश एव देश इत्यर्थः ।

॥ ५३ ॥ ५४ ॥ वरयोर्वरवध्वोः पारिबर्हं देयमुपस्करम् ॥ ५५ ॥ उत्तभितैरिन्द्रकेतुभिर्ध्वजविशेषैः । उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पप्रकरादीनि तैः ॥ ५६ ॥ आहूताः प्रेष्ठाः भूभुजस्तेषां गजैः परामृष्टा उच्छ्रिता रम्भाश्च पूगाश्च तैरुपशोभिता । यद्वा तैरेव गजैः परामृष्टाः संस्पृष्टाः रम्भाश्च पूगाश्च तैरुपशोभिता ॥ ५७ ॥ संभ्रमादौत्सुक्यात्परिधावतां बन्धूनां मध्ये मिथः समेत्य मुदं प्रापुः ॥ ५८ ॥ ५९ ॥ ६० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः ॥ शम्बरेण हृतः सोऽथ हत्वा

भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ॥ पुरमानीय विधिवदुपयेमे कुरूद्वह ॥५३॥ तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ॥ अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥५४॥ नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ॥ पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥५५॥ सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमाल्याम्बररत्नतोरणैः ॥ बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधूपदीपकैः ॥ ५६ ॥ सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ॥ गजैर्द्वाःसु परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥ कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ॥ मिथो मुमुदिरे तस्मिन्संभ्रमात्परिधावताम् ॥५८॥ रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः ॥ राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ५९ ॥ द्वारकायामभूद्राजन्महामोदः पुरौकसाम् ॥ रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियःपतिम् ॥ ६० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे रुक्मिण्युद्वाहोत्सवे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना ॥ देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥ स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ॥ प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥ तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम् ॥ स विदित्वात्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ॥ ३ ॥ ॥ ॥

तं कान्तयागमत् ॥ १ ॥ प्रद्युम्नहानिलाभाद्यैः शम्बराहरणादिना ॥ कुटुम्बिनामपत्यादिसुखदुःखमसूसुचत् ॥ २ ॥ जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहास्ततः शम्बरागारात्प्रद्युम्नप्रत्यागमनम्, अतः पुत्रकथनप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शम्बरेण हरणं निरूप्यते, प्रत्यागमनं तूत्तरकालीनमपि कथापर्यवसानायात्रोक्तमिति । वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः सृष्टिहेतुत्वाच्च । देहोपपत्तये देहप्राप्तये ॥ १ ॥ अनवमोऽन्यूनः ॥ २ ॥ स प्रसिद्धः कामशत्रुः शम्बरस्तमात्मनः शत्रुं विदित्वा हृत्वा समुद्रे प्रास्य प्रक्षिप्य गृहमगादिति ॥ ३ ॥ ॥ ॥ ॥

१ वरयोरित्यस्य वरवध्वोरित्यर्थः, श्यालः स्वस्रोरितिवत् । २ उत्तस्तम्भे उच्छ्रितैरित्यर्थः । ३ नास्ति कृष्णादन्यत्र प्रेमा येषाम् । ४ कुरवो भीष्मपाण्डवाद्याः 'कुरुसञ्जयकैकेय' इति च पाठः । ५ तस्मिन्पुरे । ६ 'जगत्पतिम्' इति पाठः । ७ त वासुदेवम् । भूयःपदेन पूर्वमपि कामाख्यजीवस्तस्मादेवाविरासीदिति व्यज्यते इति तोष० । ८ सर्वतः सर्वैः प्रकारैः । ९ कामरूपीति धात्र्यादिरूपः सन्निति भावः । १० विष्णुपुराणात् षष्ठेऽहनीति चक्रवर्ती ।

निर्जगार गिलितवान् ॥ ४ ॥ स्वधितिना शस्त्रिकया अवद्यन्नवाद्यन्खण्डितवन्तः ॥ ५ ॥ तत्त्वं कामोऽयं तव भर्तेति । उत्पत्तिं श्रीकृष्णाद्रुक्मिण्यामुत्पन्न इति ॥ ६ ॥ यशस्विनी पतिव्रता भर्तृदेहप्राप्तिं प्रतीक्षमाणा ॥ ७ ॥ तं शिशुं कामदेवं बुद्ध्वा विज्ञाय ॥ ८ ॥ विभ्रमं संमोहम् ॥ ९ ॥ अङ्ग हे राजन्, सौरतैर्मो-

तं निर्जगार बलवान्मीनः सोऽप्यपरैः सह ॥ वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥४॥ तं शम्बराय कैवर्ता उपाजह्रुरुपायनम् ॥ सूदा महानसं नीत्वाऽवाद्यन्स्वधितिनाद्भुतम् ॥५॥ दृष्ट्वा तदुदरे बालं मायावत्यै[1] न्यवेदयन् ॥ नार-दोऽकथयत्सर्वं तस्याः शङ्कितचेतसः ॥ बालस्य तत्त्वमुत्पत्तिं[2] मत्स्योदरनिवेशनम् ॥६॥ सा[3] च कामस्य वै पत्नी रति-र्नाम यशस्विनी ॥ पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥७॥ निरूपिता शम्बरेण सा सूपौदनसाधने ॥ कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदार्भके[4] ॥८॥ नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ॥ जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥ ९ ॥ सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम् ॥ सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग सौरतैः ॥१०॥ तामाह भगवान्कार्ष्णिर्मातस्ते[5] मतिरन्यथा ॥ मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥ ११ ॥ ॥ रतिरुवाच ॥ भवान्नारायणसुतः शम्बरेणाहृतो गृहात् ॥ अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो ॥ १२ ॥ एष त्वाऽनिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः ॥ मत्स्योऽग्रसीत्तदुदरादितः[6] प्राप्तो भवान्प्रभो ॥ १३ ॥ तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ॥ मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १४ ॥ परिशोचति ते माता कुररीव गतप्रजा ॥ पुत्रस्नेहा-कुला दीना विवत्सा गौरिवातुरा ॥ १५ ॥ प्रभाष्यैवं ददौ विद्यां[7] प्रद्युम्नाय महात्मने ॥ मायावती महामायां सर्वमाया-विनाशिनीम् ॥ १६ ॥ स च शम्बरमभ्येत्य संयुगाय समाह्वयत् ॥ अविषह्यैस्तमाक्षेपैः क्षिपन्संजनयन्कलिम् ॥१७॥ सोऽधिक्षिप्तो[8] दुर्वचोभिः पदा हत इवोरगः ॥ निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥ १८ ॥ ॥

वैरुपतस्थेऽभजत् ॥ १० ॥ ११ ॥ अधिकृता पत्नीत्यत्र हेतुः—रतिरहं भवान्काम इति ॥ १२ ॥ १३ ॥ दुर्जयत्वे हेतुः—मायाशतविदमिति । कथं तर्हि हन्तव्यस्तत्राह—मायाभिरिति ॥ १४ ॥ न चात्र विलम्बः कार्य इत्याह—परिशोचतीति । रोदितीत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥

१ तत्तन्मायाप्रदर्शनेन मायावती इति नाम्ना ख्यातायै रत्यै अर्पयामासुः तस्याः सूदाधिपत्यात् । २ तत्त्वं कामोऽयं तव भर्तेति प्रद्युम्नमेव तद्भर्त्रभेदेनाकथयत् । ३ कामदहनानन्तरं पुनस्तद्देहप्राप्तये शिवमाराधयन्ती रतिः मायावत्यभिधाना शिवाज्ञया शम्बरगृहे तस्थाविति मत्स्यपुराणोक्ता कथाऽत्रानुसंधेया । ४ 'सदार्भके' इति पाठः । ५ वास्तवार्थस्तु मातरित्यत्र मा अतः अतोऽस्माद्भावात्तवान्यथा मतिर्मा भवत्विति शेषः । यतः कामिनी मत्कान्तैव त्वं मातृभावमतिक्रम्य यद्वर्तसे तद्यथावदेवेति तोष० । ६ 'इह' इति पाठः । ७ महामायाख्यां विद्याम् । ८ 'सोऽपि', 'सोऽभि' इति पाठौ ।

वज्रस्य निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदत्। सामान्यविशेषतया व्याप्यव्यापकत्वमोदनपाकं पचतीतिवत् अतिनिष्ठुरं नादमकरोदित्यर्थः ॥१९॥२०॥ वैहायस आकाशे स्थितः ॥२१॥ सत्त्वात्मिकां सत्त्वगुणमयीं प्रायुङ्क्तेत्युत्तरस्यानुषङ्गः ॥२२॥ ता मायाः। व्यधमयद्व्यनाशयत् ॥२३॥ ताम्राणि श्मश्रूणि यस्मिंस्तत्। ओजसा बलेन ॥२४॥२५॥ विद्युता सह बलाहको मेघ इव ॥२६॥ २७॥ नीलाश्च वक्राश्च येऽलकास्त एवालयस्तैः।

गदामाविध्य तरसा प्रद्युम्नाय महात्मने॥ प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम्॥ १९॥ तामापतन्तीं भगवान्प्रद्युम्नो गदया गदाम्॥ अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप ॥२०॥ स च मायां समाश्रित्य दैतेयीं मयदर्शिताम्॥ मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः॥ २१॥ बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः॥ सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥२२॥ ततो गौह्यकगान्धर्वपैशाचोरगराक्षसीः॥ प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः ॥ २३॥ निशातमसिमुद्यम्य सकिरीटं सकुण्डलम्॥ शम्बरस्य शिरः कायात्ताम्रश्मश्र्वोजसाऽहरत्॥ २४॥ आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः॥ भार्ययाऽम्बरचारिण्या पुरं नीतो विहायसा ॥ २५॥ अन्तःपुरवरं राजँल्ललनाशतसंकुलम्॥ विवेश पत्न्या गगनाद्विद्युतेव बलाहकः॥ २६॥ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्॥ प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥२७॥ स्वलंकृतमुखाम्भोजं नीलवक्रालकालिभिः॥ कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र ह ॥२८॥ अवधार्य शनैरीषद्वैलक्षण्येन योषितः॥ उपजग्मुः प्रमुदिताः सस्त्रीरत्नं सुविस्मिताः॥ २९॥ अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी॥ अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥३०॥ को न्वयं नरवैदूर्यः कस्य वा कमलेक्षणः॥ धृतः कया वा जठरे केयं लब्धा त्वनेन वा॥ ३१॥ मम चाप्यात्मजो नष्टो नीतो यः सूतिकागृहात्॥ एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित्॥ ३२॥ कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः॥ आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥ ३३॥ स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः॥ अमुष्मिन्प्रीतिरधिका वामः स्फुरति मे भुजः॥ ३४॥ ॥

ह्रीता लज्जिताः ॥२८॥ श्रीकृष्णो न भवतीत्यवधार्य स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितम्॥ २९॥ ३०॥ सुतं स्मरन्त्याह—को न्वयमिति। नरवैदूर्यः पुरुषश्रेष्ठः। ॥ ३१॥ एतेन तुल्यं वयो रूपं च यस्य स भवेदिति ॥३२॥ तस्य स्वपुत्रत्वं संभावयन्त्याह—कथं त्विति ॥३३॥ तदेवाधिकं संभावयति—स एवेति ॥३४॥

१ व्यनददित्यस्य अकरोदित्यर्थः। उक्तार्थानामप्रयोग इति न्यायेन नदतेः कृत्रर्थमात्रे पर्यवसानात्। २ आविध्य भ्रामयित्वा। ३ 'नदन्' इति पाठः। ४ गौह्यकेत्यादौ सामान्यतो नपुंसकानां द्वन्द्वः, पश्चान्मायाविशेषणत्वेन समस्तान्ङीप्। ५ ताम्रो वर्णोऽक्ष्णि तत्प्रान्ते यस्य। ६ यदि जीवति जीवेदिति भाव.।

देवक्यानकदुन्दुभ्यां देवक्यानकदुन्दुभिभ्यामित्यर्थः ॥३५॥३६॥३७॥३८॥३९॥ अतिसौन्दर्येण प्रद्युम्नं वर्णयति—यमिति । पिता श्रीकृष्णस्तत्सरूपे तत्सदृशे प्रद्युम्ने निज आत्मीय ईशो भर्तेति भावो भावना यासां तास्तन्मातरः कृष्णपत्न्योऽपि रहसि निरूढभावाः सत्यो यमभजन्निति यत्तन्न खलु चित्रम् । कथं सति । स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति । किंच रमास्पदं श्रीकृष्णस्तस्य बिम्बं श्रीमूर्तिस्तस्य बिम्बे प्रतिबिम्बे पुत्रे । तदा किं नु वक्तव्यमन्यनार्यो भेजुरिति ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥ ॥

एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ॥ देवक्यानकदुन्दुभ्यामुत्तमश्लोक[1] आगमत् ॥ ३५ ॥ विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ नारदोऽकथयत्सर्वं शम्बराहरणादिकम् ॥ ३६ ॥ तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ॥ अभ्यनन्दन्बहूनब्दान्नष्टं मृतमिवागतम् ॥ ३७ ॥ देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ॥ दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥ ३८ ॥ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ॥ अहो मृत इवायातो बालो दिष्ट्येति हा[2]ब्रुवन् ॥ ३९ ॥ यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो यदभजन् रह[3]रूढभावाः ॥ चित्रं न तत्खलु रमास्पदबिम्बबिम्बे कामे स्मरेऽक्षिवि[4]षये किमुतान्यनार्यः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे प्रद्युम्नोत्पत्तिनिरूपणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ॥ स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥ ॥ राजोवाच ॥ सत्राजितः किमकरोद्ब्रह्मन्कृष्णस्य किल्बिषम् ॥ स्यमन्तकः कु[5]तस्तस्य कस्माद्दत्ता सुता हरेः ॥ २ ॥ ॥ श्रीशुक उवाच ॥ आसीत्सत्राजितः सूर्यो भक्तस्य परमः सखा ॥ प्रीतस्तस्मै मणिं प्रादात्सू[6]र्यस्तुष्टः स्यमन्तकम् ॥ ३ ॥ स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ॥ प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥ ॥ ॥

षट्पञ्चाशत्तमे मिथ्याभियोगे मणिमाहरत् ॥ कन्यां जाम्बवतः प्राप कृष्णः सत्राजितस्ततः ॥ १ ॥ पुत्रादिकामसौख्यस्य निष्ठामुक्त्वातिचञ्चलाम् ॥ अर्थस्यानर्थतामाह स्यमन्तहरणादिना ॥ २ ॥ सत्यभामाजाम्बवत्योर्विवाहप्रस्तावाय स्यमन्तकाख्यानमाह—सत्राजित इति । सत्राजित इत्यकारान्तः क्वचिच्च तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः । कृतापराधस्तच्छान्तये स्वयमेवोद्यमं कृत्वा मणिना सह प्रादादिति ॥ १ ॥ २ ॥ भक्तस्य सत्राजितः सूर्यः स्वाम्यपि सखेवासीदित्यर्थः । स च तुष्टस्तस्मै स्यमन्तकं नाम मणिं प्रादात् । प्रीतः स्निग्धः ॥ ३ ॥ नोपलक्षितः सत्राजितोऽसावित्यविज्ञातः ॥ ४ ॥ ॥ ॥

---

१ उत्तमस्तमोनिवर्तकः श्लोको यस्येति देव्याः संदेहतमोनाशकत्वं व्यंग्यम् । २ इति हेति पुरातनकथापरामर्शार्थकम् । ३ रहरूढेत्यत्र रेफलोपाद्यार्षम् । 'रह ऊढ' इति पाठान्तरम् । ४ 'अक्षविपये' इति पाठः । 'अक्षाणामिन्द्रियाणां विषये' इति टीका च क्वचित् । ५ कुतः सकाशाद्बभूवेत्यर्थः । ६ स च तुष्टः इत्यादिपाठश्चेट्टीकानुगुणः स्यात् ।

दीव्यते क्रीडते । सूर्योऽयमिति शङ्किताः सन्तः कथयामासुरिति ॥ ५ ॥ सूर्यं नमस्कारार्थमागतं कल्पयित्वोद्रिक्तभक्तीनां संबोधनानि नारायणेत्यादीनि ॥ ६ ॥ गभस्तिचक्रेण रश्मिजालेन । मुष्णन्प्रतिघ्नन् । तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः ॥ ७ ॥ न चेदमघटमानमित्याहुः—नन्विति । अन्विच्छन्ति मृगयन्ते । अजः सूर्यः ॥ ८ ॥ बालानामज्ञानां वचनम् । ज्वलन् विद्योतमानः ॥ ९ ॥ कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिंस्तत् । विप्रैः कृत्वा ॥ १० ॥ भारप्रमाणं च—'चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान्पञ्च पणं पणान् ॥ अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् ॥ तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः' इति ।

तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः ॥ दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥५॥ नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥ एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ॥ मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥ ७ ॥ नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः ॥ ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥ ८ ॥ ॥श्रीशुक उवाच॥ निशम्य बालवचनं प्रहस्याम्बुजलोचनः ॥ प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ९ ॥ सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ॥ प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत्[1] ॥ १० ॥ दिने दिने स्वर्णभारानष्टौ[2] स सृजति प्रभो ॥ दुर्भिक्षमार्यरिष्टानि[3] सर्पाधिव्याधयोऽशुभाः ॥ न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ११ ॥ स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ नैवार्थकामुकः प्रादाद्याच्ञाभङ्गमतर्कयन् ॥१२॥ तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ॥ प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥ १३ ॥ प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता ॥ १४ ॥ सोऽपि चक्रे कुमारस्य[4] मणिं क्रीडनकं बिले ॥ अपश्यन्भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥ १५ ॥ प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः ॥ १६ ॥ भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ मार्ष्टुं प्रसेनपदवीमन्वपद्यत[5] नागरैः ॥ १७ ॥ हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ १८ ॥ ॥

मारीनामा कालमृत्युः । अरिष्टमभद्रम् । अशुभा दुःखहेतवः ॥ ११ ॥ क्वापि कदाचित् । अनेन भगवत्समर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिवर्तकमप्यनिष्टहेतुरेव भवतीति सूचितम् ॥ १२ ॥ तदेव दर्शयितुमाह—तमेकदेति । प्रतिमुच्य बद्ध्वा । प्रसेनः सत्राजिद्भ्राता ॥ १३ ॥ आच्छिद्य आकृष्य गृहीत्वा ॥ १४ ॥ १५ ॥ अजपन्नुपांशु अवोचन् ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥ ॥ ॥

१ विप्रैः प्रयोज्यकर्तृभिः पीठे स्थापितवान् । २ तोषणीस्थभारप्रमाणं तु अष्टगुञ्जो माषो द्वादशमाषस्तोलश्चतुर्विंशतितोलः शेटकश्चत्वारिंशच्छेटको मणक इति महाराष्ट्रदेशीगस्वर्णरूप्यादिसंबन्धिप्राकृतमानप्रसिद्ध्यामरसिंहमतेन पणमणकाः । सप्तत्रिंशच्छेटका अष्टादशतोली अष्टौ माषाश्चेति । ३ मारीनामा जनमारको ग्रह इति तोषणी । ४ कुमारस्य कुमाराख्यस्य । ५ पदवीमनु अगमत् ।

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ क्रव्यार्थे आमिषार्थे ॥ २३ ॥ अष्टाविंशाहं अष्ट च विंशतिश्चाहानि दिनानि यस्मिंस्तदष्टाविंशाहम् । विंशतिशब्दे तिलोप आर्षः । वज्रस्य निष्पेषो निर्घातस्तद्वत्परुषैर्निष्ठुरैः ॥ २४ ॥ श्रीकृष्णस्य मुष्टीनां विनिष्पातैराघातैर्निष्पिष्टानि श्लथान्यङ्गानामुरूणि बन्धनानि संधिस्थानानि यस्य सः ॥ २५ ॥ लोके को वाऽयं मत्तो बलीयानिति विस्मितः सन्विमृश्याह—जाने इति । सर्वभूतानां यः प्राणस्तत्र यदोजः सहो बलं च इन्द्रियहृदयदेहबलानि तत्सर्वं त्वमित्यहं जाने । कथं तथात्वमत आह—विष्णुमित्यादि ॥ २६ ॥ पुराणत्वे हेतुः—त्वं हीति । स्रष्टा निमित्तम् । यच्च सदुपादानम् । अतः पुराणम् । प्रभविष्णुत्वे हेतुः—काल इति । अधीश्वरस्त्वमप्यत एवेत्याह—ईशः पर इति । न च तटस्थ इत्याह—आत्मनोमात्मेति ॥ २७ ॥ यत एवं-

ऋक्षराजबिलं भीममन्धेन तमसा वृतम् ॥ एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९ ॥ तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ॥ हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥ तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ॥ तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धो जाम्बवान्बलिनां वरः ॥ २१ ॥ स वै भगवता तेन युयुधे स्वामिनात्मनः ॥ पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥ द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ॥ आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥ आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ॥ वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥ कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः ॥ क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥ २५ ॥ जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ॥ विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥ त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ॥ कालः कलयतामीशः पर आत्मा तथात्मनाम् ॥ २७ ॥ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिङ्गिलोऽब्धिः ॥ सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥ इति विज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहार महाराज भगवान्देवकीसुतः ॥ २९ ॥ अभिमृश्यारविन्दाक्षः पाणिना शंकरेण तम् ॥ कृपया परया भक्तं प्रेमगम्भीरया गिरा ॥ ३० ॥ ॥ ॥

भूतोऽतो ममेष्टदैवतं रघुनाथ एव त्वमित्याह—यस्येति । ईषदुत्कलित उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तैः क्षुभिता नक्रा ग्राहास्तिमिङ्गिला महामत्स्याश्च यस्मिन् सोऽब्धिर्वर्त्म मार्गमादिशद्दत्तवांस्तथापि तस्मिन् येन त्वया स्वयश एव सेतुः कृतः । उज्ज्वलिता च दग्धा । यस्येषुभिः क्षतानि छिन्नानि रक्षसो दशग्रीवस्य शिरांसि भुवि पेतुः । स एव त्वमिति जाने ॥ २८ ॥ इति विज्ञातं विज्ञानं येन तम् । विज्ञानशब्दः करणसाधनः कर्मसाधनो वा । ऋक्षराजं प्रत्युक्तवान् ॥ २९ ॥ ३० ॥ ॥ ॥ ॥ ॥ ॥

१ तत्र सर्वभूतेषु । २ आत्मनां व्यष्टिसमष्टिरूपाणां सर्वेषां जीवानामात्मान्तर्यामीत्यर्थः । ३ तस्मिन्बिले । ४ दोर्भिरिति प्रत्येकं भुजद्वयात् । ५ अस्य व्याजहारेति पूर्वेण संबन्धः । 'मेघगम्भीरया गिरा' इति पाठः ।

वंयं वहवों विलद्वारं प्राप्तास्तत्र मिथ्याभिशापममुना मणिना प्रमृजन् प्रमार्ष्टुमहमन्तर्विलमिह प्राप्त इत्यर्थः ॥ ३१ ॥ सह मणिना । समर्पयामास ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ श्रीकृष्णप्राप्तये चन्द्रभागां नाम दुर्गामभजन् ॥३५॥ स च कृष्णस्तेषां प्रादुर्बभूव । 'आसव' इति पाठे आसँव इन्द्रियाणि तेषां प्रेष्ठ इत्यर्थः । कदा देव्या उपस्थानात् । तया तान्प्रति आदिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सहैव ॥ ३६ ॥ लोके जनाः कथंचिन्मृतं वन्धुं पुनरागतमुपलभन्ते

मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ॥ मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥ ३१ ॥ इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा ॥ अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥ ३२॥ अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः ॥ प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥ ३३ ॥ निशम्य देवकीदेवी रुक्मिण्यानकदुन्दुभिः ॥ सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ॥ ३४ ॥ सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः ॥ उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥ तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषा स च ॥ प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥ ३६ ॥ उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ॥ सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥ सत्राजितं समाहूय सभायां राजसंनिधौ ॥ प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥ ३८ ॥ स चातिव्रीडितो रत्नं गृहीत्वावाङ्मुखस्ततः ॥ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥ ३९ ॥ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ॥ कथं मृजाम्यात्मरजः प्रसीदेद्वाच्युतः कथम् ॥ ४० ॥ किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ॥ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ४१ ॥ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ॥ उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४२ ॥ एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ॥ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥ ४३ ॥ तां सत्यभामां भगवानुपयेमे यथाविधि ॥ बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ४४ ॥ ॥ ॥

तद्वदुपलभ्य सर्वे जातमहोत्सवा आसन्निति ॥ ३७ ॥ ३८ ॥ पाप्मनाऽपराधेनानुतप्यमानः ॥ ३९ ॥ अघं दोषम् । आत्मनो रजो मलमपराधमिति ॥ ४० ॥ किं कृत्वा कस्मिन्कृते इत्यर्थः । साधु भद्रम् । अदीर्घदर्शनमविचारकं माम् । क्षुद्रं कृपणम् । मूढं मन्दमतिम् ॥ ४१ ॥ एवं ध्यायन्नुपायं निश्चिनोति—दास्य इति । स्त्रीरत्नं दुहितरं तावद्दास्यामि तदनन्तरं पारिबर्हत्वेन रत्नमपीति ॥ ४२ ॥ ४३ ॥ बहुभिः कृतवर्मादिभिः ॥ ४४ ॥ ॥ ॥ ॥

१ मणिहेतोः सर्वे वयं विलद्वारं प्राप्तास्तत्राहमिहान्तः प्राप्त इति मूलयोजना । इदं च वृत्तं भगवता सविस्तरमुक्तमपि मुनिना पुनरुक्तिभिया संक्षेपितमिति तोप० । २ मूले सः मणिनेति छेदः । सहार्थे तृतीया । ३ एतद्व्याख्यानुरोधान्मूले—'उपतस्थुश्चन्द्रभागां दुर्गाम्' इति पाठोऽपेक्षितः । ४ स चेत्तत्र असूना प्रेष्ठ आसव इति शैपिकोऽण् । ५ उपलब्धये अचिरादेव प्राप्त्यै । ६ 'मृत्वा' इति पाठः । ७ 'उपजहार सः' इति पाठः ।

मणिं न प्रतीच्छामो न स्वीकुर्मः । देवः सूर्यस्तद्भक्तस्येति कटाक्षः । फलभागिन इति । तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढोऽभिप्रायः ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ध ॥ ॥ सप्तपञ्चाशत्तमे तु पुनः शतधनोर्वधे ॥ प्राप्तं स दुर्यशो मार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥ १ ॥ अक्रूरसुरीकृत्य मणेः पात्रमथाच्युतः ॥ उपामन्त्र्य तमेकान्ते सरामोऽगाद्गजाह्वयम् ॥ २ ॥ सत्राजितः श्रीकृष्णाज्ञाभङ्गफलं व्यक्तीकर्तुमाह—विज्ञातार्थोऽपीति । पाण्डवा बिलद्वारेण जतुगृहान्निर्गता इत्येवं विज्ञातोऽर्थो येन सः । कुन्तीं च दग्धा-

भगवानाह न मणिं प्रतीच्छामो वयं नृप ॥ तवास्तां देवभक्तस्य वयं च फलभागिनः ॥ ४५ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे स्यमन्तकोपाख्याने षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ श्रीशुक उवाच ॥ विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् ॥ कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ॥ १ ॥ भीष्मं कृपं सविदुरं गान्धारीं द्रोणमेव च ॥ तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥ २ ॥ लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥ योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ॥ कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात् ॥ ४ ॥ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः ॥ शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥ ५ ॥ स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत् ॥ हत्वा पशून्सौनिकवन्मणिमादाय जग्मिवान् ॥ ६ ॥ सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता ॥ व्यलपत्तात तातेति हा हतास्मीति मुह्यती ॥ ७ ॥ तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ॥ कृष्णाय विदितार्थाय तप्ताचख्यौ पितुर्वधम् ॥ ८ ॥ तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् ॥ अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥ आगत्य भगवांस्तस्मात्सभार्यः साग्रजः पुरम् ॥ शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः ॥ १० ॥ सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ॥ साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥ ११ ॥ नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ॥ को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥ १२ ॥ ॥

माकर्ण्य । कुल्यकरणे कुलोचितसंव्यवहारार्थम् ॥ १ ॥ अन्येषां तद्वाहदुःखाभावाद्भीष्मादीन्सङ्गम्येत्युक्तम् ॥ २ ॥ ३ ॥ ननु जीवन्सत्राजित्कथं मणिं दास्यति तत्रोचतुः—योऽस्मभ्यमिति । भ्रातरं प्रसेनं मृतं कस्मान्नान्वियान्नानुगच्छेत् । म्रियतामित्यर्थः ॥ ४ ॥ ५ ॥ जग्मिवान् जगाम ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ हेलनं प्रतिकूलम् । वृजिनमपराधम् ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

१ फलेति मणिना दृष्टमदृष्टं वा यत्फलं तदस्माकमपि त्वदन्तरङ्गत्वात्स्यादिति वाच्योऽर्थः । २ परीक्षित्संबोधनम् । ३ भीष्मादिभिः समानदुःखौ । ४ गृह्यते त्वयेति शेषः । ५ अर्पिता व्याप्ता । ६ नृलोकशब्दादर्शआद्यजन्तात्तल् । मनुष्यलोकमनुसृत्येत्यर्थः । ७ तस्माद्धस्तिनापुरात् । ८ आरेभे तस्य कृतवर्मादिसाहाय्यं ज्ञात्वा स्वबन्धुमेलनाद्युद्यमं कृतवान् ।

अपीतो मृतः। सप्तदशसंख्याकान् संयुगान् ॥ १३ ॥ १४ ॥ तौ रामकृष्णावेकमेव तत्त्वमित्यभिप्रेत्याह—य इदमिति। अजया मायया। मोहिताऽजयेति सन्धिरार्षः ॥ १५ ॥ १६ ॥ १७ ॥ अन्तर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरे मणिं न्यस्य ययावपलायत ॥ १८ ॥ गुरुः श्वशुरस्तद्धन्तारम् ॥१९॥ शतयोजनमात्रगामित्वात्ततः परं गन्तुमशक्तस्तत्र पतितः। तं हयं विसृज्य ॥ २० ॥ व्यचिनोन्मृगयामास। अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवञ्चनाय तया कृतवा-

कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया ॥ जरासन्धः सप्तदश संयुगान्विरथो गतः ॥ १३ ॥ प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ॥ सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् ॥ १४ ॥ य इदं लीलया विश्वं सृजत्यवति हन्ति च ॥ चेष्टां विश्वसृजो यस्य न विदुर्मोहिताऽजया ॥ १५ ॥ यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना ॥ दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥ १६ ॥ नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ॥ अनन्तायादिभूताय कूटस्थायात्मने नमः ॥ १७ ॥ प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ॥ तस्मिन्न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ १८ ॥ गरुडध्वजमारुह्य रथं रामजनार्दनौ ॥ अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ॥ १९ ॥ मिथिलायामुपवने विसृज्य पतितं हयम् ॥ पद्भ्यामधावत्संत्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥ २० ॥ पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ॥ चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥ २१ ॥ अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ॥ वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ २२ ॥ तत आह बलो नूनं स मणिः शतधन्वना ॥ कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज ॥ २३ ॥ अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम ॥ इत्युक्त्वा मिथिलां राजन्विवेश यदुनन्दनः ॥२४॥ तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ॥ अर्हयामास विधिवदर्हणीयं समर्हणैः ॥ २५ ॥ उवास तस्यां कतिचिन्मिथिलायां समा विभुः ॥ मानितः प्रीतियुक्तेन जनकेन महात्मना ॥ ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः ॥ २६ ॥ केशवो द्वारकामेत्य निधनं शतधन्वनः ॥ अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः ॥ २७ ॥ ततः स कारयामास क्रिया बन्धोर्हतस्य वै ॥ साकं सुहृद्भिर्भगवान्या याः स्युः सांपरायिकाः ॥ २८ ॥ ॥ ॥

निति भावः ॥२१॥२२॥ अन्वेषान्विच्छ ॥२३॥ सर्वज्ञस्यैवं विचेष्टितं मद्वञ्चनायेति मत्वा गूढमन्युराह—अहमिति ॥२४॥२५॥ कतिचित्समाः संवत्सरान्। प्रासङ्गिकमाह—तत इति ॥ २६ ॥ सत्यभामामप्यवञ्चयदिति सूचयन्नाह—केशव इति ॥ २७ ॥ बन्धोः सत्राजितः। सांपरायिकाः पारलौकिक्यः ॥ २८ ॥

१ तद्वञ्चनं स्वस्माद्वियुक्तस्य तस्य स्वप्रिये बहुलाश्वे नृपे कृपाभरप्रापणार्थमिति चक्र०। २ पार्ष्णिग्राहं सहायम्। ३ नूनमित्यादि कोपवाक्यम्। कस्मिंश्चिदक्रूर एवेति भावः। ४ 'प्रियतरम्' इति पाठः। ५ 'अर्हण्यं वै' इति पाठः।

न्यूषतुर्द्वारकायाः सकाशात्क्वापि पलायितौ । प्रयोजकौ मणिहरणे शतधन्वनः प्रवर्तकौ । तत्राक्रूरः कृष्णानुमतेनैव गतः । कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादिवोपेक्षित इति गम्यते । कथमन्यथा सर्वज्ञेश्वरवञ्चनं तयोः संभवतीति ॥ २९ ॥ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति पुनः श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे जनसंग्रहायाक्रूरं समाहूय साक्षेपं श्रीकृष्णः प्राह । इदं च भगवन्मतं संगोप्य केचन ऋषयोऽन्यत्कारणमक्रूरानयने वर्णयन्ति तद्यथाश्रुतं दूषयितुमनुवदति—अक्रूरे प्रोषित इति ॥ ३० ॥ दूषयति—इतीति । अङ्ग हे राजन् । श्रीकृष्णमाहात्म्यं विस्मृत्येति । तदेवाह—मुनिवासनिवास इति । मुनीनां वासो यस्मिन्स श्रीकृष्णस्तस्य निवासे सत्यक्रूरापगममात्रेणारिष्टदर्शनं किं घटेत । तदिच्छां विना न घटेतेत्यर्थः ॥ ३१ ॥ पुनस्तन्मतमेवानुवर्णयति—देव इति । काशिषु देशेषु देवे मघवत्यवर्षति

अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् ॥ व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥२९॥ अक्रूरे प्रोषितेऽरिष्टान्यासन्वै[1] द्वारकौकसाम् ॥ शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥ ३० ॥ इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम् ॥ मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥ ३१ ॥ देवेऽवर्षति काशीशः श्वफल्कायागताय वै ॥ स्वसुतां गान्दिनीं प्रादात्ततोऽवर्षत्स्म काशिषु ॥ ३२ ॥ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ॥ देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥ ३३ ॥ इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ॥ इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥ ३४ ॥ पूजयित्वाऽभिभाष्यैनं कथयित्वा प्रियाः कथाः ॥ विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह ॥ ३५ ॥ ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ॥ स्यमन्तको मणिः श्रीमान्विदितः पूर्वमेव नः ॥ ३६ ॥ सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः[2] ॥ दायं निनीयापः पिण्डान्विमुच्यर्णं च शेषितम् ॥ ३७ ॥ तथापि दुर्धरस्त्वन्यैस्त्वय्यास्तां सुव्रते मणिः ॥ किंतु मामग्रजः सम्यङ्न प्रत्येति मणिं प्रति ॥ ३८ ॥ ॥ ॥

सति ॥ ३२ ॥ ३३ ॥ इत्येवंभूतमक्रूरमहिमप्रतिपादनपरं वृद्धानां वाक्यं श्रुत्वा, सत्यमेवं तथाप्येतावदेव कारणं न भवति किंतु मणेरप्यपगम इति मत्वेत्येतदन्तं परमतम् ॥ ३४ ॥ विज्ञातमखिलं येन स चासावत एव चित्तज्ञश्च । अयं भावः—महाभागवतस्यास्य मया दत्तेऽपि मणावपेक्षा नास्त्येव, यस्मादाहूतो मणिना सहैवागत इति ज्ञात्वेति ॥ ३५ ॥ ३६ ॥ ततः किमत आह—सत्राजित इति । अपः पिण्डांश्च निनीय दत्त्वा ऋणं च विमुच्यापाकृत्य शेषितमवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुरिति शास्त्रम् । तथा च स्मरन्ति—'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ॥ तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः' इति ॥ ३७ ॥ अग्रजोऽपि न प्रत्येति न विश्वसितीति ॥ ३८ ॥ ॥ ॥ ॥

१ 'अरिष्टा आसन्' इति पाठस्तत्र पुंस्त्वमार्षम् । २ पत्नीदुहितरश्चैवेति स्मरणेऽपि तत्पत्नीनां सहमरणात्सुता इत्युक्तम् ।

नास्तीति न वक्तव्यम् । यतोऽव्युच्छिन्नाः संतता मखा वर्तन्त इति ॥३९॥ आलब्ध उक्तो हृदि स्पृष्ट इति वा ॥४०॥ रजो मिथ्याभिशापं संमृज्य । अन्यैर्दुर्धर इत्यादिमिषेण प्रीत्या भूयस्तस्मै प्रत्यर्पितवानिति॥४१॥दुष्कीर्तिं तन्मूलं दुरितं चेति॥४२॥ ॥ इति श्रीमद्भा०म०पु०द०उ०भा०दी०टीकायां सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ अष्टपञ्चाशत्तमे तु कृष्णः पञ्च करेऽग्रहीत् ॥ कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥ १ ॥ कालिन्दीं निजलाभाय तपः परमुपेयुषीम् ॥ परिणेष्यन्प्रियावासमिन्द्रप्रस्थमथागमत् ॥२॥ प्रतीतान्नष्टानपि द्रुपदगृहे पुनः सर्वैर्दृष्टान् । युयुधानः सात्यकिः ॥१॥ प्राणा इन्द्रियाणि मुख्यं पञ्चवृत्ति प्राणमिव

दर्शयस्व महाभाग बन्धूनां शान्तिमावह ॥ अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ॥ ३९ ॥ एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ॥ आदाय वाससाच्छन्नं ददौ सूर्यसमप्रभम् ॥ ४० ॥ स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ॥ विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥ ४१ ॥ यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमङ्गलं च ॥ आख्यानं पठति शृणोत्यनुस्मरेद्वा दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥४२॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे स्यमन्तकोपाख्याने सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ एकदा पाण्डवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः ॥ इन्द्रप्रस्थं गतः श्रीमान्युयुधानादिभिर्वृतः ॥ १ ॥ दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम् ॥ उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवागतम् ॥ २ ॥ परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः ॥ सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥ युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् ॥ फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवन्दितः ॥ ४ ॥ परमासन आसीनं कृष्णा कृष्णमनिन्दिता ॥ नवोढा व्रीडिता किंचिच्छनैरेत्याभ्यवन्दत ॥५॥ तथैव सात्यकिः पार्थैः पूजितश्चाभिवन्दितः ॥ निषसादासनेऽन्ये च पूजिताः पर्युपासत ॥ ६ ॥ पृथां समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाभिरम्भितः ॥ आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥ ७ ॥ तमाह प्रेमवैक्लव्यरुद्धकण्ठाश्रुलोचना ॥ स्मरन्ती तान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ॥ ८ ॥ ॥

॥ २ ॥ ३ ॥ ज्येष्ठयोः प्रणामं कृत्वा समेनालिङ्गितः कनिष्ठाभ्यामभिवन्दितो बभूव ॥ ४ ॥ कृष्णा द्रौपदी । बहुभार्या सत्यपि निन्दारहिता । पार्थैर्नवमचिरमूढा परिणीता ॥ ५ ॥ ६ ॥ अतिहार्देन स्नेहेनार्द्रे सजले दृशौ यस्यास्तया परिष्वक्तः । तया परिपृष्टा बान्धवा यस्य सः ॥ ७ ॥ प्रेम्णा वैक्लव्यं तेन रुद्धः कण्ठो यस्याः क्लेशापाये आत्मनिदर्शनं यस्य तम् । भजतां क्लेशापायाय आत्मानं दर्शयतीति वा ॥ ८ ॥ ॥ ॥

१ लाक्षागृहे इत्यर्थः । २ शान्तिं अन्यफलदोपरतिम् । ३ एनः किल्बिषं तदप्राप्तिदुःखं वा । ४ 'चाभिवादितः' इति पाठः । ५ 'चाभिनन्दितः' इति पाठः । ६ अविद्यादिक्लेशानामपायो नाशो यस्मिन्नेवंविधे आत्मनि मनसि दर्शनं साक्षात्कारो यस्य तमिति भावः ।

ज्ञातीन्बन्धून् नोऽस्मान् । यदा भ्राताऽक्रूरः प्रेषितः ॥ ९ ॥ ज्ञातीनिति वचनात्रासं मोहं वारयन्ती स्तौति—न तेऽस्तीति । तत्र हेतुः—विश्वस्येति । सुहृच्च आत्मा च तस्य । हंसि नाशयसि ॥ १० ॥ कुमेधसां विषयासक्तचित्तानां दृष्टोऽसि ॥ ११ ॥ सुखमवसदिति शेषः । सुखमभ्यर्थित इति वा क्रियासमाप्तिः

तदैव कुशलं नोऽभूत्सनाथास्ते कृता वयम् ॥ ज्ञातीन्नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥ ९ ॥ न तेऽस्ति स्वपरभ्रान्तिर्विश्वस्य सुहृदात्मनः ॥ तथापि स्मरतां शश्वत्क्लेशान्हंसि हृदि स्थितः ॥ १० ॥ ॥ युधिष्ठिर उवाच ॥ किं न आचरितं श्रेयो न वेदाहमधीश्वर ॥ योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥ ११ ॥ इति वै वार्षिकान्मासान् राज्ञा सोऽभ्यर्थितः सुखम् ॥ जनयन्नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥ १२ ॥ एकदा रथमारुह्य विजयो वानरध्वजम् ॥ गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १३ ॥ साकं कृष्णेन संनद्धो विहर्तुं विपिनं वनम् ॥ बहुव्यालमृगाकीर्णं प्राविशत्परवीरहा ॥ १४ ॥ तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून् ॥ शरभान् गवयान् खड्गान् हरिणान् शशशल्लकान् ॥ १५ ॥ तान्निन्युः किङ्करा राज्ञे मेध्यान्पर्वण्युपागते ॥ तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥ १६ ॥ तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ॥ कृष्णौ ददर्शतुः कन्यां चरन्तीं चारुदर्शनाम् ॥ १७ ॥ तामासाद्य वरारोहां सुद्विजां रुचिराननाम् ॥ पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम् ॥ १८ ॥ का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि ॥ मन्ये त्वां पतिमिच्छन्तीं सर्वं कथय शोभने ॥ १९ ॥ ॥ कालिन्द्युवाच ॥ अहं देवस्य सवितुर्दुहिता पतिमिच्छती ॥ विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥ २० ॥ नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ॥ तुष्यतां मे स भगवान्मुकुन्दोऽनाथसंश्रयः ॥ २१ ॥ कालिन्दीति समाख्याता वसामि यमुनाजले ॥ निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २२ ॥ तथाऽवदद्गुडाकेशो वासुदेवाय सोऽपि ताम् ॥ रथमारोप्य तद्विद्वान्धर्मराजमुपागमत् ॥ २३ ॥

॥ १२ ॥ कालिन्दीदर्शनप्रसङ्गमाह—एकदेति । अक्षयाः सायका ययोस्तौ तूणौ इषुधी ॥ १३ ॥ १४ ॥ १५ ॥ राज्ञे युधिष्ठिराय । मेध्यान्कर्मार्हान् । बीभत्सुरर्जुनः ॥ १६ ॥ १७ ॥ सख्या श्रीकृष्णेन ॥ १८ ॥ १९ ॥ २० ॥ अयं मा कामयेदित्याशङ्कायामाह—नान्यमिति ॥ २१ ॥ २२ ॥ आदावेव तद्विद्वान् ॥ २३ ॥

१ दृष्टो दृग्गोचरोऽसि दृश्यस इत्यर्थः । २ सुखं सहवाससुखं प्रति । अथवा सुखमवसदिति शेषः । ३ 'प्रभुः' इति पाठः । ४ खाण्डवदाहोत्तरकाले । ५ वेपन्ते कम्पन्ते जना अस्मिन्निति व्युत्पत्त्या गहनमित्यर्थकं वनविशेषणम् । 'विपिनं महत्', 'विपिनं बृहत्' इति पाठौ । ६ शरभा अष्टापदाः । ७ खड्गा गण्डकाः । ८ आर्षो गुणः । 'ददृशतुः' इत्यपि पाठः । ९ चरन्तीं रथघोषं श्रुत्वा स्वगोपनायान्यत्र प्रसर्पन्तीं, यद्वा चरन्तीं तप इति शेषः । १० 'कुतो वा' इति पाठः । ११ 'सर्वं' इत्यत्र 'कन्या' इति पाठः । १२ श्रियः सर्वसंपदो निकेतनं स्थानम् ।

प्रसङ्गात्तत्कालीनं चरित्रान्तरमाह—यदैवेति । पार्थैर्यदैव संदिष्टो विज्ञापितः श्रीकृष्णस्तदैव तेषां विश्वकर्मणा देवशिल्पिना नगरं कारयामास ॥ २४ ॥ किंच भगवान्निरतिशयैश्वर्यगुणवानप्यर्जुनस्य धनुरादिलाभाय सारथिरास । खाण्डवं नामेन्द्रस्य वनम् ॥ २५ ॥ अक्षयावक्षयसायकौ ॥ २६ ॥ खाण्डवदाहकाद्वह्नेः । सख्ये अर्जुनाय । यस्मिन्निति सामान्यतो निर्देशः यस्यामित्यर्थः । जलस्थलयोर्दृशेर्दृष्टेर्भ्रमः । यद्वा जले स्थलवत् दृक् दृष्टिर्यस्मिंस्तज्जलस्थलदृक् तस्मिन् भ्रम आसीदिति ॥ २७ ॥ २८ ॥ सुपुण्य ऋतुः ऋक्षं च यस्मिन् ॥ २९ ॥ पञ्चमं मित्रविन्दाविवाहमाह—विन्दानुविन्दाविति द्वाभ्याम् । आवन्त्यावन्त्यौ राजानौ ॥ ३० ॥ ३१ ॥ षष्ठमाह—नग्नजिदिति । कौशल्योऽयोध्यापतिस्तस्य सत्यानाम कन्याऽभवदासीत् देवी कान्तिमती नाग्नजितीति पितृनाम्ना प्रसिद्धेत्यर्थः ॥ ३२ ॥ वीरस्य गन्धमपि न सहन्त इति तथा तान् । खलान् दुर्वृत्तान् ॥ ३३ ॥ वृषान् जयति यस्तेन लभ्याम् ॥ ३४ ॥ प्रतिनन्दितस्तं प्रतिनन्दितवान्, श्रीकृष्णेन वा स प्रतिनन्दितः ॥ ३५ ॥ ३६ ॥

यदैवं कृष्णः संदिष्टः पार्थानां परमाद्भुतम् ॥ कारयामास नगरं विचित्रं विश्वकर्मणा ॥ २४ ॥ भगवांस्तत्र निवसन्स्वानां प्रियचिकीर्षया ॥ अग्नये खाण्डवं दातुमर्जुनस्यास सारथिः ॥ २५ ॥ सोऽग्निस्तुष्टो धनुरदाद्धयान् श्वेतान् रथं नृप ॥ अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः ॥ २६ ॥ मयश्च मोचितो वह्नेः सभां सख्य उपाहरत् ॥ यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः ॥ २७ ॥ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः ॥ आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥ २८ ॥ अथोपयेमे कालिन्दीं सुपुण्यर्त्वृक्ष[2] ऊर्जिते ॥ वितन्वन्परमानन्दं स्वानां परममङ्गलम् ॥ २९ ॥ विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ ॥ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥ ३० ॥ राजाधिदेव्या[3]स्तनयां मित्रविन्दां पितृष्वसुः[4] ॥ प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम् ॥ ३१ ॥ नग्नजिन्नाम कौशल्य आसीद्राजातिधार्मिकः ॥ तस्य सत्याऽभवत्कन्या देवी नाग्नजिती नृप ॥ ३२ ॥ न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् ॥ तीक्ष्णशृङ्गान्सुदुर्धर्षान्वीरगन्धासहान्खलान् ॥ ३३ ॥ तां श्रुत्वा वृषजिल्लभ्यां भगवान्सात्वतांपतिः ॥ जगाम कौशल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥ स कोशलपतिः प्रीतः प्रत्युत्थानासनादिभिः ॥ अर्हणेनापि गुरुणा पूजयन्प्रतिनन्दितः ॥ ३५ ॥ वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमापतिम् ॥ भूयादयं[5] मे पतिराशिषोऽमलाः[6] करोतु सत्या यदि मे धृतो वृतैः ॥ ३६ ॥

१ अत्रायं क्रमः—पूर्वं नगररचनं, ततः खाण्डवदाहः, ततः सभाकरणं, ततः कालिन्दीलाभ इति तोषणी चक्रवर्ती च । अत एव पूर्वं मृगयानिर्गमनसमये गाण्डीवं धनुरादायेत्यादिसङ्गतिः । २ ऋतौ ऋक्षे नक्षत्रे इति द्वन्द्वैक्यम् । ऊर्जिते ग्रहबलवति मुहूर्ते इति शेषः । ३ राजाधिदेवीनाम्न्याः । ४ पितृष्वसुः सुतामिति यदुवंशे तत्कन्योद्वाहस्याचारप्राप्तत्वान्न दोष इति तोषणी । ५ यदि मे मया व्रतैरेतत्संतोषहेतुभिर्नियमैर्धृतो हृदि चिन्तितस्तर्ह्ययं मे पतिर्भूयादमला आशिषो मनोरथानयं पतिरेव सत्याः करोत्वित्यन्वयः । ६ 'अनलः' इति पाठे इष्टदेवतात्वेनाग्निर्वैतोग्निरितियोजना ।

॥ ३७ ॥ ३८ ॥ ३९ ॥ हे नरेन्द्र । राजन्यबन्धोः क्षत्रियस्य । शुल्कदाः द्रव्यादिप्रदाः ॥४०॥ गुणानामेकमेव धाम स्थानं तथाभूतस्य यस्य तवाङ्के ॥ ४१ ॥ ॥ ४२ ॥ दुर्दान्ता अशिक्षिताः । दुरवग्रहा अपरायत्ताः । कुतस्तदाह—एतैरिति । भग्ना भङ्गं प्रापिताः ॥ ४३ ॥ यद्यदीमे गोवृषा निगृहीता दमिता नाथिता

यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सह लोकपालैः ॥ लीलातनूः स्वकृतसेतुपरीप्सयेशः काले दधत्स भगवान्मम केन तुष्येत् ॥ ३७ ॥ अर्चितं[1] पुनरित्याह नारायण जगत्पते ॥ आत्मानन्देन पूर्णस्य करवाणि किमल्पकः[2] ॥ ३८ ॥ ॥ श्रीशुक उवाच ॥ तमाह भगवान् हृष्टः कृतासनपरिग्रहः ॥ मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ३९ ॥ ॥ श्रीभगवानुवाच ॥ नरेन्द्र याच्ञा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः[3] ॥ तथापि याचे तव सौहृदेच्छया[4] कन्यां त्वदीयां नहि शुल्कदा वयम् ॥ ४० ॥ ॥ राजोवाच ॥ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ॥ गुणैकधाम्नो यस्याङ्के श्रीर्वसत्यनपायिनी ॥ ४१ ॥ किं त्वस्माभिः[5] कृतः पूर्वं समयः सात्वतर्षभ ॥ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया[6] ॥४२॥ सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः ॥ एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥४३॥ यदिमे निगृहीताः स्युस्त्वयैव यदुनन्दन ॥ वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥४४॥ एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ॥ आत्मानं सप्तधा[7] कृत्वा न्यगृह्णाल्लीलयैव तान् ॥४५॥ बद्ध्वा तान्दामभिः शौरिर्भग्नदर्पान् हतौजसः ॥ व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा ॥ ४६ ॥ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ॥ तां प्रत्यगृह्णाद्भगवान्विधिवत्सदृशीं प्रभुः ॥ ४७ ॥ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ॥ लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ४८ ॥ शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः[8] ॥ नरा नार्यः प्रमुदिताः सुवासःस्रगलंकृताः ॥४९॥ दशधेनुसहस्राणि पारिबर्हमदाद्विभुः ॥ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥५०॥

इति यावत् ॥ ४४ ॥ एतान्यो निगृह्णाति तस्य कन्येति समयः कृतस्तम् । सप्तधा कृत्वेति । बह्वीनां योषितां संपूर्ण एवाहं संभोगयोग्यः स्वामिति सत्यां प्रत्यसापत्न्यप्रदर्शनार्थमात्मनः सप्तधाकरणम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ निष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनां च दासीनाम् ॥ ५० ॥ ॥

---

१ वरमित्यादिश्लोकद्वयेन नाग्नजित्युत्साहं निरूप्य राजप्रार्थनामाह—अर्चितमिति । २ अल्पकः अल्पतोऽप्यल्पः । ३ निजधर्मः क्षात्रो बलाद्धरणरूपः । ४ सौहृदेच्छया सुखसंबन्धार्थं, यद्वा तव यत् मयि सौहृदं प्रेम तेन या मदिच्छा तया । ५ अस्माभिरिति बहुत्वं ज्ञात्यपेक्षम् । ६ कन्यावरतायोग्यस्य तव प्राप्तीच्छया या पुंसां बलपरीक्षा तया । 'वरपरीक्षया' इति पाठे वरपरीक्षार्थं या बलपरीक्षा तदर्थमित्यर्थः । ७ सप्तधा अकृत्वेति वा च्छेदः । ८ शङ्खादिनादसंमर्दव्रशाद्गीतादयो नेदुरव्यक्तध्वनिरूपा बभूवुरित्यर्थः ।

नागान्नागेभ्यः शतगुणान्नवलक्षाणि । रथाद्रथेभ्यः शतगुणान्नवकोटीः । अश्वादश्वेभ्यः शतगुणान्नवपद्मानि ॥ ५१ ॥ ५२ ॥ यदुभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा असहनशीला रुरुधुः ॥ ५३ ॥ अस्यतः क्षिपतः । प्रयुञ्जानानिति यावत् ॥ ५४ ॥ ५५ ॥ सप्तमं विवाहमाह—श्रुतकीर्तेरिति । श्रुतकीर्तिर्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम । कैकेयीं तद्देशजाम् ॥५६॥ अष्टमं विवाहमाह—सुतां चेति । एक एव स श्रीकृष्णो लक्ष्मणां जहार ॥ ५७ ॥ तस्य निरोधोऽन्तःपुरं तस्मात् ॥ ५८ ॥ 'भैष्मी जाम्बवती भामा सत्या भद्रा च लक्ष्मणा ॥ कालिन्दी मित्रविन्दा चेत्यष्टौ पट्टमहास्त्रियः' ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ॥ कन्याः

नवनागसहस्राणि नागाच्छतगुणान्रथान् ॥ रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान् ॥ ५१ ॥ दम्पती रथमारोप्य महत्या सेनयावृतौ ॥ स्नेहप्रक्लिन्नहृदयो यापयामास कोशलः ॥ ५२ ॥ श्रुत्वैतद्रुरुधुर्भूपा नयन्तं पथि कन्यकाम् ॥ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥५३॥ तानस्यतः शरव्रातान्बन्धुप्रियकृदर्जुनः ॥ गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव ॥ ५४ ॥ पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया ॥ रेमे यदूनामृषभो भगवान्देवकीसुतः ॥ ५५ ॥ श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥ कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥५६॥ सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥ स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥५७॥ अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्रशः ॥ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ५८ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धेऽष्टमहिष्युद्वाहो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ छ ॥ ॥ राजोवाच ॥ यथा हतो भगवता भौमो येन च ताः स्त्रियः ॥ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥ ॥ श्रीशुक उवाच ॥ इन्द्रेण हृतछत्रेण हृतकुण्डलबन्धुना ॥ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ २ ॥ ॥ ॥

सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥ १ ॥ परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥ आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥ २ ॥ येन ताः स्त्रियो निरुद्धाः स भौमः । चकाराद्येन कारणेन हतस्तदाचक्ष्वेति ॥ १ ॥ इन्द्रेण भौमविचेष्टितं ज्ञापितः सन्प्राग्ज्योतिषपुरं भौमनगरं ययावित्यन्वयः । किंभूतेन । हृतं छत्रं यस्य तेन । लोकपालप्रधानत्वादिन्द्रस्य वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम् । हृते कुण्डले यस्याः सा अदितिर्बन्धुर्माता यस्य तेन । हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेन । सत्यभामाया गृहे भगवन्तमिन्द्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया भार्यया सह ययाविति । ॥१९॥ यद्वा नारदानीतपारिजातैककुसुमे यद्वा त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति इतिहासोक्तं भूम्यै वरं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ । अत एवाग्रे त्र्यशीतितमेऽध्याये भ्रातॄंश्च मेऽपकारं कुर्वतो जित्वेत्युल्लेखः ।

१ आवृतौ कृत्वा । २ कालयामास व्यद्रावयत् । ३ भ्रातृभिरन्यसौ दत्तामपि तान् जित्वोपयेमे इत्यर्थः । अत एवाग्रे त्र्यशीतितमेऽध्याये भ्रातॄंश्च मेऽपकारं कुर्वतो जित्वेत्युल्लेखः । ४ भौमं श्रीवराहतो भूम्या जातम् । 'यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वत्स्पर्शसंभवः पुत्रस्तदायमप्यजायत ॥' इति विष्णुपुराणम् । ५ अत्र स्मृतिमात्रेण गरुडागमनं ज्ञेयम् ।

रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशे प्रसिद्धं तदर्थं तां नीतवानिति ॥ २ ॥ गरुडेन याने कारणम्—गिरिदुर्गैरित्यादि । तैरुपलक्षितम् । जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् ॥ ३ ॥ ४ ॥ ५॥ युगान्ताशनेर्वज्रनिवद्भीषणम् । परिखाया

गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥३॥ गदया निर्बिभेदाद्रीन् शस्त्रदुर्गाणि सायकैः ॥ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथासिना ॥ ४ ॥ शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम् ॥ प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥ ५॥ पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् ॥ मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥ ६ ॥ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगान्तसूर्यानलरोचिरुल्बणः ॥ ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः ॥७॥ आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत्स पञ्चभिः ॥ सरोदसी सर्वदिशोऽन्तरं महानापूरयन्नण्डकटाहमावृणोत् ॥ ८ ॥ तदापतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा ॥ मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ९ ॥ तामापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा ॥ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया ॥१०॥ व्यसुः पपाताम्भसि कृत्तशीर्षो निकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा ॥ तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः ॥११॥ ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः ॥ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगन्धृतायुधाः ॥१२॥ प्रायुञ्जतासाद्य शरानसीन्गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ॥ तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यैस्तिलशश्चकर्त ह ॥ १३ ॥ तान्पीठमुख्याननयद्यमक्षयं निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः ॥ स्वानीकपानच्युतचक्रसायकैस्तथा निरस्तान्नरको धरासुतः ॥ १४ ॥ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ॥ दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात्सतडिद्घनं यथा ॥ कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म विव्यधुः ॥ १५ ॥ ॥

जलात् ॥ ६ ॥ ७ ॥ आविध्य आतोल्य स महान्नाद इत्यन्वयः ॥ ८ ॥ तस्मै श्रीकृष्णाय गदां व्यमुञ्चत व्यक्षिपत् ॥ ९ ॥ १० ॥ इन्द्रतेजसा वज्रेण । प्रतिक्रियया हेतुभूतया अमर्षजुषः ॥११॥ पीठं पीठनामानम् । निरगन्निरगमन् ॥१२॥१३॥ कृत्तानि शीर्षादीनि येषां तान् ॥१४॥ शतघ्नीं शक्तिविशेषम् ॥१५॥

१ यन्त्राणि प्राकारन्यस्तानि । २ उल्बणो भीषणः । ३ अन्तर पातालम् । 'अम्बरं' इति पाठः । ४ 'पञ्चापि' इति 'चक्रेण' इति पाठौ । ५ 'कृत्तशीर्षा' इति पाठः । ६ आसाद्य अजितमिति शेषः । ७ ऋष्टिः खड्गभेदः । ८ कूटं समूहम् । ९ 'यमालयम्' इति पाठः । १० जातमात्रेण नरशिरसो मुखेन महणान्नरकनामा । ११ अप्यर्थे चः ।

विचित्रा वाजाः पत्राणि येषां तैर्बाणैर्निकृत्ता बाहव ऊरवः शिरोग्राः कन्धरा विग्रहा देहाश्च यस्मिंस्तत् । तत्रैव तं यदा विव्यधुस्तस्मिन्नेव क्षणे ॥ १६ ॥ अत्याश्चर्ये कुरूद्वहेति संबोधनम् । तथाहि—तैर्यानि प्रयुक्तानि शस्त्रास्त्राणि तत्प्रासेः पूर्वमेव तत्सर्वं सैन्यं हत्वा पश्चात्तानि शस्त्राण्यस्त्राणि च चिच्छेद । तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिः शरैरित्याश्चर्यम् ॥ १७ ॥ किंच गरुत्मतेति ॥ १८ ॥ १९ ॥ यतो यया शक्त्या वज्रः प्रतिहत आस । गरुडस्तु नाकम्पत ॥ २० ॥ गरुडे वितथोद्यमः सन् शूलं त्रिशूलमाददे धृतवान् ॥ २१ ॥ २२ ॥ प्रतप्ते जाम्बूनदे यानि रत्नानि तैर्भास्वरे । मेरुवंशभूतं मन्दरशिखरं महामणिं चार्पयदिति ॥ २३ ॥ २४ ॥ ऐश्वर्यं ज्ञात्वा भूमिः स्तौति—नमस्त इति । परमात्मन् देवाद्यन्तर्यामिन् ॥ २५ ॥ येन मन्त्रेण कुन्त्याः प्रसन्नः पूर्वमासीत्तेन मन्त्रेण नमस्यति—

तद्भौमसैन्यं भगवान्गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ॥ निकृत्तबाहूरुशिरोध्रविग्रहं चकार तत्रैव हताश्वकुञ्जरम् ॥ १६ ॥ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ॥ हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १७ ॥ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ॥ गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः ॥ १८ ॥ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत ॥ दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥ १९ ॥ तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः ॥ नाकम्पत तया विद्धो मालाहत इव द्विपः ॥ २० ॥ शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः ॥ तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः ॥ अपाहरद्गजस्थस्य चक्रेण क्षुरनेमिना ॥ २१ ॥ सकुण्डलं चारुकिरीटभूषणं बभौ पृथिव्यां पतितं समुज्ज्वलत्[1] ॥ हाहेति[2] साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥ २२ ॥ ततश्च भूः कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ॥ स वैजयन्त्या वनमालयार्पयत्प्राचेतसं छत्रमथो महामणिम् ॥ २३ ॥ अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ॥ प्राञ्जलिः प्रणता राजन्भक्तिप्रवणया धिया ॥ २४ ॥ ॥ भूमिरुवाच ॥ नमस्ते देवदेवेश शङ्खचक्रगदाधर ॥ भक्तेच्छोपात्तरूपाय परमात्मन्नमोऽस्तु ते ॥ २५ ॥ नमः पङ्कजनाभाय नमः पङ्कजमालिने ॥ नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २६ ॥ नमो भगवते तुभ्यं वासुदेवाय विष्णवे ॥ पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २७ ॥ ॥

नम इति । पङ्कजं नाभौ यस्य तस्मै जगत्कारणायेत्यर्थः । अत एव सत्कीर्तिमयी पङ्कजमाला विद्यते यस्य तस्मै । एवंभूतं ध्यायतां पङ्कजवत्सुप्रसन्ने तापोपशमने नेत्रे यस्य तस्मै । पङ्कजवत्सुसेव्यौ पङ्कजाङ्कितौ चाङ्घ्री यस्य तस्मै नम इति ॥ २६ ॥ किंच भगवते निरतिशयैश्वर्याय वासुदेवाय सर्वभूताश्रयायात एव विष्णवे व्यापिने । नहि सर्वभूताश्रयत्वं परिच्छिन्नस्य संभवतीति कुतः सर्वाश्रयत्वं तत्राह—पुरुषाय सर्वस्मात्कार्यात्पूर्वमेव सते—'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वं' इति श्रुतेः । एतदपि कुतः । आदिबीजाय । आदेर्जगत्कारणस्यापि कारणाय । एवमपि न मृदादिवज्जाड्यमित्याह—पूर्णबोधायेति ॥ २७ ॥ ॥ ॥२०॥

१ 'समुज्ज्वलम्' इति क्वचित् ।  २ हाहेति निन्दायाम् । पापिष्ठोऽयमासीदित्यर्थः ।

नन्वेवमपि स्वस्य कारणात्पूर्वं सत्त्वं न स्यादत आह—अजायेति । स्वयमजाय । अस्य च जगतो जनयित्रे । उभयत्रापि क्रमेण हेतुद्वयम्—ब्रह्मणे बृहते, अनन्तशक्तय इति च । बृहत्त्वादजत्वम्, अनन्तशक्तित्वात्तज्जनयितृत्वमित्यर्थः । ननु पित्रादयः पुत्रादीनां जनकास्तेषां च तत्पूर्वं तेषां च भूतानि तेषां च स्वकर्मद्वारेण जीवाः किमत्राहं तत्राह—परावरात्मन्नित्यादि । पित्राद्यात्मकत्वात्त्वमेव जनक इत्यर्थः ॥ २८ ॥ ननु गुणा विश्वोत्पत्त्यादिहेतवस्ते च प्रधानस्यैव तस्य च पुरुषः क्षोभकस्तत्र च कालो निमित्तमिति प्रसिद्धं किमत्राहं तत्राह—त्वं वा इति । तमसो धारणेऽप्यसंवृत एव । स्थानाय पालनाय । जगतः सृष्ट्याद्यर्थमुत्कटं रजआदि त्वमेव विभर्षि सृजसीत्यर्थः । कालप्रधानपुरुषाश्च त्वद्व्यतिरिक्ता न सन्ति त्वं तु परः सर्वव्यतिरिक्तः । अतस्त्वमेव जनयितेत्यर्थः ॥२९॥ कार्यकारणप्रपञ्चस्य तद्-

अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये ॥ परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तु ते ॥ २८ ॥ त्वं वै सिसृक्षू रज उत्कटं प्रभो तमोनिरोधाय बिभर्ष्यसंवृतः ॥ स्थानाय सत्त्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान्परः ॥२९॥ अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि ॥ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ ३० ॥ तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरोपसादितः ॥ तत्पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥ ३१ ॥ ॥ श्रीशुक उवाच ॥ इति भूम्यार्थितो वाग्भिर्भगवान्भक्तिनम्रया ॥ दत्त्वाऽभयं भौमगृहं प्राविशत्सकलर्द्धिमत् ॥ ३२ ॥ तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ॥ भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥ ३३ ॥ तं प्रविष्टं स्त्रियो वीक्ष्य नरवीरं विमोहिताः ॥ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम् ॥ ३४ ॥ भूयात्पतिरयं मह्यं धाता तदनुमोदताम् ॥ इति सर्वाः पृथक् कृष्णे भावेन हृदयं दधुः ॥ ३५ ॥ ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोम्बराः ॥ नरयानैर्महाकोशान्रथाश्वान्द्रविणं महत् ॥ ३६ ॥ ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः ॥ पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः ॥ ३७ ॥ ॥ ॥ ॥

व्यतिरेकं तस्य च सर्वव्यतिरेकमुपपादयति—अहमिति । अहं भूमिः । मात्राणीति देवा मन इन्द्रियाणीति च त्रिविधाहंकारकार्याणि । कर्ताऽहंकारः ॥३०॥ एवं स्तुत्वा प्रार्थयते—तस्येति । हे प्रपन्नार्तिहर । तस्य नरकस्य अयं भगदत्तो नाम भीतोऽत एव मया तव पादपङ्कजमुपसादितः ॥३१॥ अभयं दत्त्वा ॥३२॥ शताधिकमित्यपि ज्ञातव्यम् । यथाह श्रीपराशरः—'कन्यापुरे स कन्यानां षोडशातुलविक्रमः ॥ शताधिकानि ददृशे सहस्राणि महामते ॥' इति । राजभ्य इत्युपलक्षणं सिद्धादिभ्यश्चेति । तथा च तेनैवोक्तम्—'देवसिद्धासुरादीनां नृपाणां च जनार्दन ॥ हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥' इति ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ प्राहिणोत्प्रस्थापयामास । सुमृष्टाः कमनीयाश्च ता विरजोम्बराश्च ताः । नरयानैः शिबिकाभिः । अपि च महाकोशानिति ॥ ३६ ॥ ३७ ॥

१ असंवृतः सृष्ट्यादिकर्मभिरव्याप्तः । २ भ्रम इति । भ्रमे यथा रूप्यादि शुक्त्यादितो नातिरिक्तं शुक्त्यादयस्तु ततोऽतिरिक्ताः अन्यथा रूप्यादिबाधे तद्बाधापत्तेस्तद्वदिति भावः । ३ त्रिंशच्छ्लोकोत्तरं—'यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना ॥ त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मेऽभ्यजायत॥सोऽयं त्वयैव दत्तो मे त्वया च विनिपातितः ॥' इति सार्धश्लोकः क्वचिदधिकः । ४ सुमृष्टाः सुस्नाताः ।

सप्रियः सत्यभामासहितः ॥३८॥ ३९॥ गृहोद्यानं निष्कुटं तदुपशोभयति यः ॥४०॥ सेन्द्रान्विबुधान्निर्जित्येतीन्द्रकृष्णयोः संग्राम उक्तस्तत्र ननु कथं प्रसाधि-
तस्वमनोरथेन श्रीकृष्णेन महेन्द्रस्य संग्राम इत्याह—ययाच इति। अच्युतमर्थसाधनमिति च कर्मद्वयं याचतिधातोः। विगृह्यते विग्रहं करोति महानपि।
तमः क्रोधः। आढ्यतां धनिकतां धिगिति ॥४१॥ यथा यथावत्। अनेन देवक्यादिबन्धुजनसमागमोऽपि प्रतिगृहं यौगपद्येन सूचितः। अव्ययः सर्वत्रापि
संपूर्ण एव ॥४२॥ अहो भाग्यं नारीणामित्याह त्रिभिः—गृहेष्विति। अतर्क्याणि कर्माणि करोति तथा सः। निरस्तं साम्यमतिशयश्च यैरन्येषां तेषु गृहेष्व-
नपाय्यवस्थितः। रमाभिर्लक्ष्म्या अंशभूताभिः। निजकामसंप्लुतः स्वानन्दपरिपूर्णः। गार्हकमेधिकान् गृहस्थधर्मान् ॥४३॥ अनुरागहाससहितमवलोकं च

गत्वा सुरेन्द्रभवनं दत्त्वाऽदित्यै च कुण्डले ॥ पूजितस्त्रिदशेन्द्रेण [1]सहेन्द्राण्या च सप्रियः ॥ ३८ ॥ चोदितो भार्ययो-
त्पाट्य पारिजातं गरुत्मति ॥ आरोप्य सेन्द्रान्विबुधान्निर्जित्योपानयत्पुरम् ॥ ३९ ॥ स्थापितः सत्यभामाया गृहोद्यानोप-
शोभनः ॥ अन्वगुर्भ्रमराः स्वर्गात्तद्गन्धासवलम्पटाः ॥ ४० ॥ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थ-[2]
साधनम् ॥ सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम् ॥ ४१ ॥ अथो मुहूर्त एकस्मिन्नानागारेषु
ताः स्त्रियः ॥ यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥ ४२ ॥ गृहेषु तासामनपाय्य[3]तर्क्यकृन्निरस्तसाम्यातिशयेष्वव-
स्थितः ॥ रेमे रमाभिर्निजकामसंप्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ ४३ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्माद-
योऽपि न विदुः पदवीं [4]यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसङ्गमजल्पलज्जाः ॥ ४४ ॥ प्रत्यु-
द्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभो-
र्विदधुः स्म दास्यम् ॥ ४५ ॥ ॥ इति श्रीमद्भागवते म० पु० दशमस्कन्धे उत्तरार्धे पारिजातहरणनरकवधो नामैकोन-
षष्टितमोऽध्यायः ॥ ५९ ॥ ॥ श्रीशुक उवाच ॥ कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ॥ पतिं पर्यचरद्भैष्मी व्यज-
नेन सखीजनैः ॥ १ ॥ यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः[5] ॥ स हि जातः [6]स्वसेतूनां गोपीथाय यदुष्वजः ॥ २ ॥

तत्पूर्वकं नवसङ्गमं च तद्गतं जल्पं च तस्मिन् लज्जां च भेजुः ॥ ४४ ॥ विश्रमणं पादसंवाहनम्। केशप्रसारः केशप्रसाधनम्। दासीनां शतानि विद्यन्ते यासां
तथाभूता अपि स्वयं विभोर्दास्यं विदधुः ॥४५॥ ॥ इति श्रीमद्भागवते म०पु० दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामेकोनषष्टितमोऽध्यायः ॥५९॥
अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् ॥ कोपयित्वा ततः प्रेमकलहे तामसान्त्वयत् ॥१॥ [7]रामारामजनानन्दमहोदयविडम्बनैः ॥ रुक्मिण्या प्रेमकलहच्छ-
द्मनैश्वर्यमीर्यते ॥२॥ स्वतल्पस्थं स्वपर्यङ्कस्थम् ॥ १ ॥ वक्ष्यमाणं रुक्मिण्याः श्रीकृष्णे परमं प्रेम संभावयितुं तस्योत्कमेव तत्त्वमनुस्मारयति—यस्त्वेति ॥ २ ॥

१ 'महेन्द्राण्या' इति पाठे महती चासाविन्द्राणी च तयेत्यर्थः। २ अच्युतं अर्थसाधनं ययाच इति द्विकर्मकत्वम्। ३ अनपायी विश्लेषरहितः। ४ यदीया भगवत्संबन्धिनीं, यास्मा वा पदवीं ब्रह्मादयोऽपि न विदुस्ताः। ५ ईश्वरः प्रकृत्यादिनियन्ता पुरुषावतारः सन्। ६ स्वकृतधर्मसेतूनां गोपीथाय रक्षणाय। ७ रामाभिरारमन्तीति रामारामा ये जनास्तेषा य आनन्दमहोदयस्तदनुकरणैः।

आदौ तावत्त्रिभिः श्लोकैर्मन्दिरमनुवर्णयति—तस्मिन्निति । तच्छब्देनातिप्रसिद्धमाह—भ्राजन्ति मुक्तादामानि तेषां विलम्बाः सन्ति यस्मिंस्तेन वितानेन विराजिते । तृतीयान्तानां विराजितपदेनान्वयः ॥३॥ सुगन्धितया द्विरेफकुलैर्नादिते । प्रविशद्भिश्चन्द्ररश्मिभिः ॥ ४ ॥ निर्गच्छद्भिरगुरुसंभवैर्धूपैश्चातिमनोहरत्वं दर्शितम् ॥५॥ पयसः क्षीरस्य फेन इव मृदुनि पर्यङ्कस्थे । कशिपूत्तमे हंसतूलिकायाम् । उपतस्थे असेवत ॥६॥ तदेवाभिनयति—वालव्यजनमिति ॥७॥ उपाच्युतमच्युतस्य समीपे सा मणिनूपुराभ्यां रेजे । क्वणयती मणिमयौ नूपुरौ कूजयन्ती । तथा अङ्गुलीयवलयव्यजनान्यग्रहस्ते हस्ताग्रे यस्याः सा । वस्त्रान्तेन गूढौ स्थगितौ कुचौ तयोः कुङ्कुमं तेन शोणो हारस्तस्य भासा, तथा नितम्बे धृता या परार्ध्या अमूल्या काञ्ची तया च रेजे ॥८॥ तां निरीक्ष्य प्रीतः सन्स्मयमानो हरिराबभाषे। कथं-

तस्मिन्नन्तर्गृहे भ्राजन्मुक्तादामविलम्बिना ॥ विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३ ॥ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ॥ जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽमलैः ॥ ४ ॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगुरुजै राजञ्जालरन्ध्रविनिर्गतैः ॥ ५ ॥ पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे ॥ उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥ ६ ॥ वालव्यजनमादाय रत्नदण्डं सखीकरात् ॥ तेन वीजयती देवी उपासांचक्र ईश्वरम् ॥ ७ ॥ सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासा नितम्बधृतया च परार्ध्यकाञ्च्या ॥ ८ ॥ तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ॥ प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः ॥ महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥ १० ॥ तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ॥ दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान् ॥ ११ ॥ राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् ॥ बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥ १२ ॥ ॥ ॥

भूताम् । या लीलया धृतनरतनोस्तस्यानुरूपरूपा अनुरूपं रूपं यस्यास्ताम् । यथोक्तं श्रीपराशरेण—'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ॥ विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥' इति । किंच अलकैः कुण्डलाभ्यां निष्केण पदकेनालंकृतकण्ठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितसुधा यस्यास्ताम् ॥९॥ सर्वगुणयुक्तापि तव बुद्धिर्मन्देत्याशयेनाह—राजपुत्रीत्याद्येकादशभिः । हे राजपुत्रि, लोकपालानामिव विभूतिरैश्वर्यं येषां तैस्तथा महाप्रभावैराढ्यै रूपादिभिरूर्जितैश्च पूर्वमीप्सितासि ॥ १० ॥ तान्हित्वा नोऽस्मानसमानान्कस्माद्ववृषे वृतवती त्वम् ॥ ११ ॥ किंच प्रायशो राजभ्यो जरासन्धादिभ्यो बिभ्यतो भयं प्राप्नुवतः ॥ १२ ॥

१ अङ्गुलीयवलयादीनि व्यजनं च हस्ताग्रे यस्याः । २ 'राजन्मुक्ता' इति पाठे राजतां मुक्तादाम्नामित्येवार्थः । ३ 'चन्द्रमसोऽरुणैः' इति पाठः । अत्र चन्द्रमसोऽरुणैर्गोभिरिति उद्यन्मात्रता व्यज्यते इति तोप० ।४ व्यजनं चामरम् । ५ आ खेदे । तादृग्वक्तुमयोग्यामपि बभाषे इत्यर्थः । ६ भ्रात्रा स्वपित्रा च चैद्यादिभ्यो दत्तापि वाग्दत्तापि गृहागतान् तान्हित्वेत्यादिरन्वयः । ७ संबन्ध्यभिप्रायेण बहुवचनम् । ववृषे इति परोक्षार्थलिङुक्तिस्तथैव वृत्तत्वात् । ८ 'सुभ्रु' इति पाठे ह्रस्वत्वमार्षम् । ९ उग्रसेनसहस्रार्जुनादीनां तदङ्गीकारात् प्रायःपदम् ।

अस्पष्टवर्त्मनामविज्ञाताचाराणाम् । अलोकपथमस्त्रीपारतन्त्र्यम् । पदवीं मार्गं आस्थिता अनुसृताः ॥ १३ ॥ किंच निष्किञ्चना इति ॥ १४ ॥ आत्मसमं परस्परमनुरूपम् । जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जातिर्वा समा । भव आयतिः ॥ १५ ॥ न दीर्घा समीक्षा विचारो यस्यास्तया ॥ १६ ॥ अथ इदानीमपि ॥ १७ ॥ तर्हि किमित्यानीताहमिति चेत्तत्राह—चैद्यशाल्वजरासन्धेति । मम मां द्विषन्ति ॥ १८ ॥ स्मयनुत्तये गर्वापनयनाय ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामत्वं चाह—उदासीना इति । गेहयोर्देहगेहयोरुदासीना अत एव ज्योतिरक्रियाः ज्योतिः प्रदीपादि तद्वत्साक्षिमात्रतया क्रियार-

अस्पष्टवर्त्मनां[2] पुंसामलोकपथमीयुषाम्[3] ॥ आस्थिताः पदवीं सुभ्रूः प्रायः[4] सीदन्ति योषितः ॥ १३ ॥ निष्किंचना वयं शश्व-
न्निष्किंचनजनप्रियाः[5] ॥ तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे ॥ १४ ॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ॥
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥१५॥ वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ॥ वृता वयं गुणैर्हीना भिक्षुभिः
श्लाघिता मुधा ॥ १६ ॥ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ॥ येन त्वमाशिषः[6] सत्या इहामुत्र च लप्स्यसे ॥ १७ ॥
चैद्यशाल्वजरासन्धदन्तवक्रादयो नृपाः ॥ मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः ॥ १८ ॥ तेषां वीर्यमदान्धानां
दृप्तानां स्मयनुत्तये ॥ आनीतासि मया भद्रे तेजोऽपहरताऽसताम् ॥ १९ ॥ उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः ॥
आत्मलब्ध्याऽऽस्महे पूर्णा गेहयोर्ज्योतिरक्रियाः[7] ॥२०॥ ॥श्रीशुक उवाच॥ एतावदुक्त्वा भगवानात्मानं वल्लभामिव ॥
मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत् ॥ २१ ॥ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम् ॥ आश्रुत्य
भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह ॥ २२॥ पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभिरञ्जना-
सितैः ॥ आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३ ॥ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्ह-
स्ताच्छ्लथद्वलयतो व्यजनं पपात ॥ देहश्च विक्लवधियः सहसैव मुह्यन्रम्भेव वायुविहता प्रविकीर्य केशान् ॥ २४॥ तद्दृष्ट्वा
भगवान्कृष्णः प्रियायाः प्रेमबन्धनम् ॥ हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत ॥ २५ ॥

हिता आस्महे वर्तामहे इति ॥ २० ॥ अविश्लेषाद्धेतोः आत्मानमेव वल्लभामित्येवार्थे इवशब्दः ॥ २१ ॥ २२ ॥ चिन्तालक्षणमाह—पदेति । नखैररुणा श्रीः कान्तिर्यस्य तेन सुजातेन सुकोमलेन पदा ॥ २३ ॥ सुदुःखमप्रियश्रवणात्, भयं त्यागशङ्कया, शोकोऽनुतापः, तैर्विनष्टा बुद्धिर्यस्यास्तस्याः । श्लथन्ति पतन्ति वलयानि यस्माद्धस्तात् । देहश्च पपात । विक्लवा अवशा धीर्यस्यास्तस्याः ॥ २४ ॥ हास्यस्य प्रौढिं गाम्भीर्यम् ॥ २५ ॥

१ वस्तुतस्त्विदमन्तर्याम्यपेक्षया जीवसम्बन्धिदेहान्प्रत्यभिप्रेत्योक्तमिति तोष०। २ वैरिकानारे न स्पष्टं प्रवृत्तेर्निवृत्तेर्वा वर्त्म येषाम् । ३ अलोकपथं स्त्रीषु पालनपेत्यम् । ४ प्रायो बाहुल्ये, ऋष्यादिपत्नीनां क्लेशाभावात्प्रायःपदम् । ५ निष्किंचनजनानां प्रियास्ते वा प्रिया येषाम् । ६ आशिषो मनोरथान् । ७ गेहयोरिति देहगेहसाम्याद्देहशब्दः प्रयुक्तैकशेषः ।

चतुर्भुज इति उत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुज इत्यर्थः । समुह्य निवध्य ॥ २६ ॥ अश्रुकले अश्रुभिः शोभिते । शुचा शोकाश्रुभिः ॥ २७ ॥ सान्त्वयामासानुनीतवान् ॥ २८ ॥ मा माम् । त्वद्वचः किं नु वदिष्यसीति श्रोतुकामेन श्रोतुमिच्छता क्ष्वेल्या नर्मणा एवमाचरितमुक्तं न तत्त्वतः । हे अङ्गने सुन्दरि ॥ २९ ॥ प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कम्पितोऽधरो यस्मिंस्तत् । कटाशब्देन कटाक्षास्तैराक्षेपैररुणावपाङ्गौ यस्मिंस्तत् । अत एव सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिंस्तत् ॥ ३० ॥ ननु कलहे किं कौतुकं सुखं वाऽत आह—अयं हीति । नर्मैर्नर्मभिः । यामः कालः ॥ ३१ ॥ ३२ ॥ भगवतस्तस्य ऐश्वर्ययुक्तं मुखं सव्रीडेन हासेन रुचिरेण स्निग्धेनापाङ्गेन वीक्षमाणा ॥ ३३ ॥ 'असमत्वं भयं दुर्गाश्रयणं प्रबलैः कलिः ॥ अराजत्वमविज्ञाता लौकि-

पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः ॥ केशान्समुह्य तद्वक्त्रं प्रामृजत्पद्मपाणिना ॥ २६ ॥ प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा ॥ आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥ २७ ॥ सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः ॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥ २८ ॥ ॥ श्रीभगवानुवाच ॥ मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ॥ त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने ॥ २९ ॥ मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् ॥ ३० ॥ अयं हि परमो लाभो गृहेषु गृहमेधिनाम् ॥ यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि ॥ ३१ ॥ ॥ श्रीशुक उवाच ॥ सैवं भगवता राजन्वैदर्भी परिसान्त्विता ॥ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३२ ॥ बभाष ऋषभं पुंसां वीक्षन्ती भगवन्मुखम् ॥ सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत ॥ ३३ ॥ ॥ रुक्मिण्युवाच ॥ नन्वेवमेतदरविन्दविलोचनाहं यद्वै भवान् भगवतोऽसदृशी विभूम्नः ॥ क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरज्ञगृहीतपादा ॥ ३४ ॥ ॥ ॥ ॥

केहावसादनम् ॥ १ ॥ निष्किंचनत्वं तत्प्रीतिराढ्यानादरणीयता ॥ अनौचित्यं निर्गुणत्वं वृथाश्लाघा च भिक्षुभिः ॥ २ ॥ औदासीन्यमकामत्वं स्वदोषान्योऽडशाऽसतः ॥ अज्ञत्वादीर्घदर्शित्वे भैम्या राज्ञां बहून्गुणान् ॥ कृष्णनर्मोदितान् भैष्मी न्यषेधत्तद्गुणस्तवैः' ॥ ३ ॥ भगवता स्वनिन्दापराणीव यानि वचनान्युक्तानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते स्म, तत्र यदुक्तं—'कस्मान्नो ववृषेऽसमान्' इति तत्रासाम्यं सत्यमेवेत्याह—नन्वेवमिति । हे अरविन्दविलोचन, त्र्यधीशस्त्रयाणां ब्रह्मादीनामप्यधीशो नियन्ता त्वं क्व । क्व चाहं गुणप्रकृतिस्त्रिगुणस्वभावा प्राकृता गुणमयी प्रकृतिर्वा । ननु त्वमेवाधीश्वरी श्रीः सर्वैरुपास्यत्वादिति चेदत आह—अज्ञैः सकामैर्गृहीतौ पादौ यस्याः सा ॥ ३४ ॥ ॥ ॥ ॥ ॥

१ नर्मभिः परिहासवचनैः । २ अश्रूणि कलयतः क्षरतस्ते । ३ शुचा अश्रुभिः । ४ आश्लिष्य सान्त्वयामासेत्यन्वयः । 'आश्लिषत्' इति पाठः । ५ असूयेशा दोषदृष्ट्या मा पश्य । ६ प्रेमसंरम्भेत्यत्रार्षस्तृतीयालोपस्तेन कटेत्यादिकयोरप्यन्वयः । प्रेमकोपेन कम्पितः अधरो यत्र, कटैः कटाक्षैराक्षेपाद्रक्तौ नेत्रान्तौ यत्र । ७ तोषणी—अथ दैन्यं विनापि यास्तवार्थे एवमुत्तरं—न नु इति पृथक्पदम् । एवमेतन्नेत्यन्वयः । यत एवंभूतो भवान् क्व कुत्रान्यत्र वर्तते, किंतु सर्वदा ममाश्रयत्वेनैव । अहं च कुत्रान्यत्र, किंतु सर्वदा भवदाश्रितत्वेनैव वर्ते । गुणा भावत्का ऐश्वर्यादय एव प्रकृतिः स्वरूपं यस्याः । अतो नास्ति ज्ञः पण्डितो येभ्यस्तैः श्रितचरणेति । एवं च कथमसमत्वं घटत इति भावः ।

यदुक्तं 'राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान्' इति तत्राह—सत्यमिति । हे उरुक्रमेति भयाभावं दर्शयति—गुणाः शब्दादय एव राजन्त इति राजानस्तेभ्यो भयादिवेति । अन्तर्हृदये समुद्रे तद्वदगाधे विषयाकारैरपरिच्छिन्न इत्यर्थः । शेते निश्चलतया प्रकाशते । उपलम्भनमात्रश्चैतन्यघन आत्मा भवानिति । 'बलवद्भिः कृतद्वेषान्' इति यदुक्तं तदपि सत्यमित्याह—नित्यमिति । कदिन्द्रियगणैः कुत्सितैर्बहिर्मुखैरिन्द्रियगणैः । वृत्त्यभिप्रायेण बहुवचनम् । कुत्सित इन्द्रियगणो येषामिति वा । तैस्त्वं नित्यं कृतविग्रहः, तेषु तवाप्रतीतेः । यदुक्तं—'त्यक्तनृपासनान्' इति तदपि युक्तमेवेत्याह—त्वत्सेवकैरिति । नृपाणां पदमासनमन्धं गाढं तम एव तत् । अविवेकबहुलत्वात् । त्वत्सेवकैरेव तत्त्यक्तं किं पुनर्वक्तव्यं त्वया त्यक्तमिति ॥ ३५ ॥ 'अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्' इति यदुक्तं तदपि तथैवेत्याह—त्वत्पादेति । नृपशुभिर्नराकारैः पशुभिः । किं पुनर्वक्तव्यं तव वर्त्मास्फुटमिति । किंच यस्माद्भवन्तमनुवर्तन्ते तेषामपीहितमलौकिकमिव । अथो अतः किमु वक्तव्यं तवेश्वरस्येहितमलौकिकमित्यर्थः । 'आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः'

**सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा ॥ नित्यं कदिन्द्रियगणैः[1] कृतविग्रहस्त्वं**
**त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम् ॥ ३५ ॥ त्वत्पादपद्ममकरन्दजुषां मुनीनां वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ॥**
**यस्मादलौकिकमिवेहितमीश्वरस्य भूमं[2]स्तवेहितमथो अनु ये भवन्तम् ॥ ३६ ॥ निष्किंचनो[3] ननु भवान्न यतोऽस्ति**
**किंचिद्यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ॥ न त्वा विदन्त्यसुतृपोऽन्तकमाढ्यतान्धाः प्रेष्ठो भवान्बलिभुजामपि**
**तेऽपि तुभ्यम् ॥ ३७ ॥ त्वं वै स[4]मस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नं[5] ॥ तेषां विभो**
**समुचितो भवतः समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८ ॥**

इत्यस्य परिहारं वक्ष्यति—'यद्वाञ्छया' इति पञ्चमश्लोके ॥ ३६ ॥ 'निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे ॥' इत्येतच्छ्लोकोक्तं दोषत्रयं परिहरति—निष्किंचन इति । दरिद्रतालक्षणं निष्किंचनत्वं तु तव न घटत इत्याह—यस्मा इति । अन्यतो बलिभुजः पूज्या अपि ब्रह्मादयो यस्मै भवते बलिं हरन्ति तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः । 'निष्किंचनजनप्रियाः' इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निन्दा स्यादिति स्वयमप्युभयथा स्तौति—प्रेष्ठो भवानिति । बलिभुजां ब्रह्मादीनां लोकेश्वराणां त्वं प्रेष्ठस्तेऽपि तुभ्यं तवेति । 'तस्मात्प्रायेण न ह्याढ्या मां भजन्ति' इति तस्योत्तरं न त्वा विदन्तीति । आढ्यतयाऽन्धास्त्वा त्वामन्तकं न विदन्ति । अतस्ते असुतृपः असूनेव तर्पयन्ति न त्वां भजन्तीत्यर्थः ॥ ३७ ॥ बलिभुजामपि भवान्प्रेष्ठ इत्यत्र हेतुं वदन्ती 'ययोरेव समं वित्तं' इत्यनेनोक्तमनौचित्यं परिहरति—त्वं वा इति । फलात्मा परमानन्दरूपः—'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । समाजः सेव्यसेवकलक्षणसंबन्धो ननु पुंसः स्त्रियाश्च मिथो रतयोः । अत एव तत्कृतसुखदुःखिनोः, तदाकुलयोरित्यर्थः ॥ ३८ ॥

---

१ 'कदिन्द्रियगुणैः' इति क्वचित् पाठः, तत्र कुत्सितेन्द्रियगुणयुक्तैर्जीवैरित्येवार्थः । २ 'भूम्नः' इति पाठः । ३ यतो यदपेक्षयाऽधिकं किंचिदपि नास्त्यतो ननु निश्चितं निष्किंचन । यद्वा सार्वविभक्तिकस्तसिः । यस्यैश्वर्यादिकं किंचित्स्वल्पं नास्ति किंतु पूर्णमेवेत्यतो निष्किंचन इति प्रथमपादार्थः । ४ समस्ताः पुमर्था धर्माद्यास्तद्भक्तिभेदाश्च तत्प्राचुर्यवान् । ५ कृत्स्नं दैहिकं व्यवहारमित्यर्थः । 'कृत्स्नम्' इति पाठस्तत्रापि स एवार्थः ।

'भिक्षुभिः श्लाघिता मुधा' इत्यस्य परिहारः—त्वमिति । भिक्षुपदव्याख्यानं न्यस्तदण्डैर्मुनिभिरिति । मुधेत्यस्य परिहारः—आत्मेति । यदर्थं सर्वं प्रियं भवति तस्य जगतामात्मनस्तव वरणं न वृथेत्यर्थः । किंच आत्मद इति । 'वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया' इति स्वस्मिन्नुक्तं दोषद्वयं परिहरति—इतीति । इति ज्ञात्वैव मे मया वृतोऽसीत्यज्ञानपरिहारः । हित्वेत्यदीर्घसमीक्षापरिहारः । भगवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगस्तेन ध्वस्ता आशिषो येषां तान्ब्रह्मादीनपि विहाय । कुतोऽन्ये वराका इत्यर्थः ॥३९॥ स्वाज्ञानं परिहृत्य पुरुषान्तरगुणवर्णनप्रदीप्तकोपसंरम्भेण तस्मिन्नेवाज्ञानमापादयति—जाड्यमिति । सिंहो यथा पशून्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनादेनैव जरासन्धादीन्विद्राव्य मां स्वभागं श्रियं यस्त्वं हृतवानसि तस्य तव राजभ्यो भयादुदधिं प्रपन्न इति यद्वचो भाषणं तज्जाड्यं मान्द्यं न घटत इत्यर्थः ॥ ४० ॥ यच्चान्यत् 'अस्पष्टवर्त्मनाम्' इत्यादिना अर्थात्त्वां भजन्तः सीदन्तीत्यवसादनं श्रमावहत्वमुक्तं तदपि मन्दमेवेत्याह—यद्वाञ्छयेति । यस्य तव भजनवाञ्छया नृपोत्तमाः । अङ्गो वेनस्य पिता, वैन्यः पृथुः, जायन्तो भरतः, नाहुषो ययातिः,

त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्मात्मदश्च जगतामिति मे वृतोऽसि ॥ हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥ ३९ ॥ जाड्यं वचस्तव गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ॥ सिंहो यथा स्वबलिमीश पशून्स्वभागं तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥ ४० ॥ यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादय ऐकपत्यम् ॥ राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष सीदन्ति तेऽनुपदवीं त इहास्थिताः किम् ॥ ४१ ॥ काऽन्यं श्रयेत तव पादसरोजगन्धमाघ्राय सन्मुखरितं जनतापवर्गम् ॥ लक्ष्म्यालयं त्वविगणय्य गुणालयस्य मर्त्या सदोरुभयमर्थविविक्तदृष्टिः ॥ ४२ ॥ तं त्वाऽनुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामपूरम् ॥ स्यान्मे तवाङ्घ्रिररणं सृतिभिर्भ्रमन्त्या यो वै भजन्तमुपयात्यनृतापवर्गः ॥ ४३ ॥ ॥

गयश्चादिर्येषां ते । य एते तव पदवीं मार्गमाश्रितास्ते किं सीदन्ति, न सीदन्त्येव । अपि तु त्वत्पदं प्राप्ता इत्यर्थः । एवं कोपावेशेनावसादनस्य परिहारादस्पष्टवर्त्मनामित्येतदानन्तर्यं विहायात्रोत्कर्षः ॥ ४१ ॥ यच्चोक्तं 'अथात्मनोऽनुरूपम्' तत्राह—काऽन्यमिति श्लोकद्वयेन । गुणानामालयस्य तव पादसरोजगन्धं जनताया अपवर्गं मोक्षरूपं लक्ष्म्या आलयं तत्सेव्यं सद्भिर्मुखरितं वर्णितमाघ्राय तमविगणय्य मर्त्या मरणधर्मिका सदा उरुभयं यस्य तमन्यं का स्त्री श्रयेत सेवेत । अर्थे विविक्ता दृष्टिर्यस्याः सा गुणालयस्येत्यनेन गुणैर्हीना इति यदुक्तं तदपास्तम् ॥ ४२ ॥ अतस्त्वामेवाहमभजमित्याह—तं त्वेति । किंच प्रार्थयते—स्यादिति । अरणं शरणम् । सृतिभिर्देवतिर्यगादिभिर्जन्मभिः । पाठान्तरे त्वर्थवादबहुलकर्मश्रवणैरित्यर्थः । कथंभूतस्य तव । यस्त्वमनृतस्य संसारस्यापवर्गो नाशो यस्मात्स भजन्तमुपयात्यात्मसात्करोति तस्य तवाङ्घ्रिरिति । भीतस्य हि शरणमेवानुरूपं भजनयोग्यं अतस्त्वामहमभजमित्यर्थः ॥ ४३ ॥ ॥

१ जाड्यं जडकर्म मन्दोचितम् । २ यद्वा जनानां तापस्य वर्गो वर्जनं यस्मात्तम् । ३ स्वहिताहितविवेकवती । ४ यद्वा सृतिभिर्गतिभिस्तव नानाचेष्टाभिः । ५ 'श्रुतिभिः' इत्येवंरूपे । अत्र श्रुतिभिर्लक्ष्मीप्रियत्वबोधकैस्त्वत्सामर्थ्यनास्तत्वाद्याख्यापकैश्चागमैः, यद्वा रामाद्यवतारे सीतात्यागादिश्रवणैरत्र गोपीत्यागादिश्रवणैरीदृशोक्तिश्रवणैर्वा भ्रमन्त्याः । ६ शरणं रक्षितृ त्वेव ।

ये चोक्ता राज्ञां बहवो गुणा 'राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः' इत्यादिना तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गं चाह द्वाभ्याम्—तस्याः स्युरिति । खरा इव
केवलं भारवाहा गावो बलिवर्दा इव नित्यं व्यापारक्लिष्टाः, श्वान इवावमताः, बिडाला इव कृपणा हिंस्राश्च, भृत्या इव किंकरा नृपास्तस्या दुर्भगायाः पतयः
स्युः । यस्याः कर्णपथं त्वत्कथा न प्राप्नुयादिति ॥ ४४ ॥ तथा हि—ते पदाब्जमकरन्दमजिघ्रती सती या स्त्री विमूढा सा कान्तोऽयमिति मतिर्यस्याः सा
कान्तमतिर्जीवच्छवं भजति । त्वगादिभिर्बहिः पिनद्धं छन्नमन्तर्मांसादिमयमिति ॥ ४५ ॥ यदुक्तं 'उदासीना वयम्' इत्यादिना तत्राह—अस्त्विति । यद्यपि
त्वं निरपेक्षस्तथापि मम ते चरणानुरागोऽस्तु । मयि च मय्यपि नातिरिक्ता अतिशयवती दृष्टिर्यस्य तस्य ते । आत्मन् आत्मन्येव रतस्य । तर्हि तव तेन को

तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः ॥ यत्कर्णमूलमरिकर्षण नोपयायाद्युष्म-
त्कथा मृडविरिञ्चसभासु गीता ॥ ४४ ॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् ॥
जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४५ ॥ अस्त्वम्बुजाक्ष मम ते चरणानुराग
आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः ॥ यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पा ॥ ४६ ॥
नैवालीकमहं मन्ये वचस्ते मधुसूदन ॥ अम्बाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित् ॥ ४७ ॥ व्यूढायाश्चापि
पुंश्चल्या मनोऽभ्येति नवं नवम् ॥ बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ॥ ४८ ॥ ॥ श्रीभगवानुवाच ॥ साध्व्ये-
तच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलम्भिता ॥ मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ॥ ४९ ॥ यान्यान्कामयसे कामा-
न्मय्यकामाय भामिनि ॥ सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ॥ ५० ॥ ॥ ॥

लाभः । त्वच्चरणानुराग एव महान् लाभः । किंच यर्ह्यस्य विश्वस्य वृद्धये उपात्ता रजसोऽतिमात्रा औत्कट्यं येन स तथाभूतः सन्मामीक्षसे । उ एवार्थे । ह हर्षे ।
तदेव नः परमानुकम्पा अत्यनुग्रह इति ॥ ४६ ॥ तदेवं सर्वं तदुक्तं प्रतिव्याख्याय प्रसन्नचित्ता मन्त्रमुपदिशन्त्याह द्वाभ्याम्—नैवेति । 'अथात्मनोऽनुरूपम्'
इत्यादि ते वचोऽलीकं मिथ्येति नैव मन्ये । यतो लोके कन्याया एव क्वचिद्रतिर्भवति । यथा काशिराजकन्यानामम्बाम्बालिकाम्बिकानां तिसृणां मध्ये
अम्बायाः कन्याया एव शाल्वे रतिर्जाता तद्वत् ॥ ४७ ॥ व्यूढायाः परिणीताया अपीति, उभयस्मादिहपरलोकद्वयाच्च्युतो भ्रष्ट इति ॥ ४८ ॥ प्रलम्भिता उप-
हसिता । अन्वात्थ अन्वाख्यातवती ॥ ४९ ॥ मयि एकान्तभक्तायास्ते कामाः सन्त्येव । अकामाय कामनिवृत्तये मोक्षपर्यवसायिन इत्यर्थः ॥ ५० ॥ ॥

१ तोषणी तु खरा इव पादताडिता अपि स्त्रियमनुगन्तारः, वृषा इव तद्भारवाहकाः, श्वान इव तदाज्ञावशाः, मार्जारा इव तदुच्छिष्टभोजिनः, भृत्या इव तदाज्ञाप्रतीक्षका इति व्याचख्यौ ।
२ अवान्तरसख्यभिप्रायेण बहुवचनम् । 'श्रोतुकामेन' इति पाठः । ३ कामाय प्रेममात्रविलासाय । 'कामिनि' इति पाठे त्वद्विषयकामवति मयीत्यर्थः । ४ मां प्रकृतिरूपामीक्षसे इति स्वरूप-
शक्तित्वेऽपि द्वैत्येन प्रकृत्यभेदोक्तिः । यद्वा मयि च रतस्य, यतोऽमतिरिक्तदृष्टेः स्वरूपशक्तित्वान्मय्यभेददृष्टेः । अस्य रजसोऽनुरागस्य वृद्धये स्वयमुपात्तरागातिमात्रः सन् यन्मामीक्षसे इति
तोष० । ५ तदीक्षणमेव । ६ मम रतिस्त्वय्येव जातेत्यर्थः । ७ अनेन 'आत्मनोऽनुरूपं' इत्यादि प्रत्युक्तम् । ८ मदुक्तिमेव भङ्ग्यन्तरेण व्याख्यातवती ।

अनुवादेन वरान् दत्त्वा तामभिनन्दति—उपलब्धमिति । यद्यस्मान्मयि वर्तमाना धीर्नापकर्षिता नान्यविषया जाता ॥ ५१ ॥ एकान्तभक्तिमभिनन्द्य तामेव दृढीकर्तुं सकामान् भक्तान्निन्दति—ये मामिति । दाम्पत्ये दम्पत्युपभोग्यसुखार्थम् ॥ ५२ ॥ मायामोहितत्वमेवोपपादयति—मां प्राप्येति । अपवर्गेण सह संपदो यस्मिंस्तं मां प्राप्य प्रसाद्य ये केवलं संपद एव विषयान्वाञ्छन्ति नतु माम् । तत्पतिं तासां संपदामपि योऽहमेव पतिस्तम् । तथा ये विषया निरयेऽप्यतिनिकृष्टयोनावपि स्युस्तान् । किंच तेषां पुंसां मात्रात्मकत्वाद्विषयात्मकत्वान्निरयः सुसङ्गमः शोभनसङ्गम एव स्यादतो मन्दभाग्या एव ते इत्यर्थः ॥ ५३ ॥ तस्मात् हे गृहेश्वरि, त्वया मयि भवमोचनी निष्कामाऽनुवृत्तिः कृता एतद्दिष्ट्या भद्रम् । कथंभूता । खलैः सुदुष्करा । दुराशिषो दुरभिप्रायाया अत एव असुंभरायाः प्राणतर्पणपराया निकृतिंजुषो वञ्चनपरायाः स्त्रियाः सुतरामसावनुवृत्तिर्दुष्करेति ॥ ५४ ॥ किंच सन्ति निष्कामाः प्रेम्णैव मय्यनुवर्त-

उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ॥ यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ ५१ ॥ ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया ॥ कामात्मानोऽपवर्गेशं मोहिता[1] मम मायया ॥ ५२ ॥ मां प्राप्य मानिन्यपवर्गसंपदं[3] वाञ्छन्ति ये संपद एव तत्पतिम् ॥ ते मन्दभाग्या निरयेऽपि ये नृणां मात्रात्मकत्वान्निरयः सुसङ्गमः ॥ ५३ ॥ दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृताऽनुवृत्तिर्भवमोचनी खलैः ॥ सुदुष्करासौ सुतरां दुराशिषो ह्यसुंभराया निकृतिंजुषः स्त्रियाः ॥ ५४ ॥ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ॥ प्राप्तान्नृपानवगणय्य रहोहरो[4] मे[5] प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥ ५५ ॥ भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ॥ दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं[6] जितास्ते ॥ ५६ ॥ दूतस्त्वयात्मलभने सुविविक्तमन्त्रः[7] प्रस्थापितो मयि चिरायति शून्यमेतत् ॥ मत्वा जिहास इदमङ्गमनन्ययोग्यं तिष्ठेत तत्त्वयि वयं प्रतिनन्दयामः ॥ ५७ ॥ ॥

माना बह्व्यः किंतु त्वया सदृशीं क्वापि न पश्यामीति तस्या भक्तिं बहुमानेनाभिनन्दति—न त्वादृशीमिति त्रिभिः । उपश्रुताः सत्यः कथा यस्य मे ॥ ५५ ॥ प्रोद्वाहपर्वण्यनिरुद्धविवाहे । अक्षगोष्ठ्यां द्यूतसभायाम् । तस्य भ्रातुर्वधम् । तस्मिन्काले कालान्तरे वा तदनुस्मरणतः पुनः पुनः समुत्थं दुःखमस्माभिरयोगो वियोगस्तद्भीत्या असहः सोढवत्यसि । अनेनैवानिरुद्धविवाहानन्तर्यमस्य ज्ञातव्यम् ॥ ५६ ॥ अपि च दूत इति । आत्मलभने मत्प्राप्त्यर्थम् । मयि चिरायति श्वोभाविनि विवाहे आगन्तव्यमिति कृते समये कथंचिदप्राप्तवति सत्येतद्विश्वं शून्यं मत्वेदमनन्ययोग्यमङ्गं जिहासे त्यक्तुमिच्छामि त्यक्ष्यामीत्येवं[8] दूतः प्रस्थापितः । तथा ह्युक्तं त्वया—'यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्यात्' इति । यद्वा अजिहास इति च्छेदः । त्यक्तुमैच्छ इत्यर्थः । तत्तव कर्म त्वय्येव तिष्ठेत्, न तत्प्रतिकर्तुं शक्यमित्यर्थः । किंतु केवलं त्वां प्रतिनन्दयामो हर्षयाम इति ॥ ५७ ॥ ॥ ॥

१ एवकारव्यावर्त्यमाह—नतु मामिति । २ एवमेव पञ्चमस्कन्धे—'स्त्रियो व्रतैस्त्वां हृषिकेश्वर स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यं' इत्यादिश्लोकत्रयेण । ३ अपवर्गसंपदमिति मध्यमपदलोपी समासः । ४ रहस्यं हरति प्रापयतीति रहोहरो गुह्यसंदेशप्रापकः । 'रहोवहो मे' इत्यपि पाठः । ५ मे मां प्रति । ६ वयमिति वसुदेवरामाद्यभिप्रायेण बहुवचनम् । ७ विविक्तः पार्थक्येन ज्ञापितो मन्त्रो गुह्यवादो यस्य तथाविधः । ८ एवं निश्चित्येति शेषः ।

सौरतसँल्लापैः सुरतनर्मगोष्ठीभिः ॥५८॥५९॥ ॥इति श्रीमद्भा०म०पु०दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां षष्टितमोऽध्यायः॥ ६०॥ ॥ एकषष्टितमे शौरेः पुत्रपौत्रादिसन्ततिः ॥ अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥ १ ॥ अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् ॥ कोटिशः पुत्रपौत्रादीन्हरिर्दारैरयोजयत् ॥२॥ तदेतद्वक्तुमाह—एकैकश इति । कृष्णस्यावला भार्याः । सर्वा या आत्मनि संपत्तया । पितुः । सकाशादनवमानन्यूनान् ॥१॥ प्रेष्ठं न्यमंसत अच्युतस्य प्रियतमं प्रत्येकं स्वं स्वं मेनिरे । न तस्य तत्त्वमात्मारामत्वं विदन्ति ताः ॥ २ ॥ आत्मारामत्वं व्यनक्ति द्वयेन—चार्विति । चार्वब्जकोशवद्वदनं च आयतानि वाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च वल्गुजल्पाश्च भगवतः एतैः संमोहिता वनिताः स्वैः स्वैरनेकैर्विभ्रमैस्तस्य श्रीकृष्णस्य मनो विजेतुं हर्तुं न समशकन्न शक्ता बभूवुः ।

॥श्रीशुक उवाच॥ एवं सौरतसँल्लापैर्भगवान् जगदीश्वरः ॥ स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ ५८ ॥ तथान्यासामपि विभुर्गृहेषु गृहवानिव ॥ आस्थितो गृहमेधीयान्धर्माँल्लोकगुरुर्हरिः ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे कृष्णरुक्मिणीसंवादो नाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥ श्रीशुक उवाच ॥ एकैकशस्ताः कृष्णस्य पुत्रान्दश दशावलाः ॥ अजीजनन्ननवमान्पितुः सर्वात्मसंपदा ॥ १ ॥ गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ॥ प्रेष्ठं न्यमंसत स्वं स्वं न तत्त्वविदः स्त्रियः ॥ २ ॥ चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन्वनिता विभूम्नः ॥ ३ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ॥ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसङ्गमलालसाद्यम् ॥ ५ ॥ प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ६ ॥ ॥

विभूम्नः परिपूर्णस्य ॥ ३ ॥ तासां विभ्रमान्वर्णयन्नेतद्विवृणोति—स्मायेति । स्मायो गूढहसितं तद्युक्तोऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरता मन्त्रास्तेषु शौण्डैः प्रगल्भैरनङ्गस्य बाणैः शरैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्येन्द्रियं मनो विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यो न शेकुरिति ॥ ४ ॥ अनुरागेण हासोऽवलोकश्च नवसङ्गमे लालसमौत्सुक्यं च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः । अनुरागहासावलोकनवसङ्गमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥ किंतु प्रत्युद्गमादिभिर्विभोस्तस्य दास्यं नित्यं विदधुरिति । प्रौढभावेऽपि नवसङ्गमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः । तेषामेव श्लोकानां प्रस्तावान्तरे पुनः पुनरावृत्तिरतिसौन्दर्यात् ॥ ६ ॥ ॥

१ नरलोकं विडम्बयन् क्रीडालोभेनैश्वर्यं गौणं कृत्वा नरलोकानुकरणं कुर्वन्, यद्वा स्वलीलाभिर्विडम्बितं तिरस्कृतं कुर्वन् । २ लोकगुरुस्तद्धर्मप्रवर्तकः । ३ 'न्यमंसतात्मानं' इति पाठः । ४ 'केशप्रसाध' इति पाठः । ५ सौरताः सुरतवर्धका मन्त्राः साधनानि तेषु शौण्डैः सुरतसंबन्धिरहस्याचेजितैरनङ्गस्य बाणैः शरैः समोहनादिभिः कोशप्रसिद्धैः ।

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तासामिति । दश दश पुत्रा यासां तासां मध्येऽष्टौ महिष्यो याः प्रागुक्तास्तत्पुत्रानिति ॥७॥८॥९॥१०॥११॥१२॥ श्रीमानिति वसोः कुन्तेर्वा विशेषणम् ॥१३॥ भद्रो नाम एकल एकः । सोमकोऽवरः कनीयान् । एते कालिन्द्याः सुता इति ॥१४॥ माद्र्या लक्ष्मणायाः ॥१५॥ क्षुधिश्च दशमः । एते मित्रविन्दात्मजाः ॥ १६ ॥ संग्रामजित्प्रमुखाः सत्यकान्ता भद्रायाः सुताः । शैव्यांनामपि सैव ॥ १७ ॥ रोहिण्याः सुतानामुक्तिरन्यासामुपलक्ष-

तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ॥ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते ॥ ७ ॥ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ॥ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथा परः ॥ ८ ॥ चारुचन्द्रो विचारुश्च चारुश्च दशमो हरेः ॥ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥ ९ ॥ भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ॥ चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाऽष्टमः ॥ १० ॥ श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ॥ साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥ ११ ॥ विजयश्चित्रकेतुश्च वसुमान् द्रविडः क्रतुः ॥ जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसंमताः ॥ १२ ॥ वीरश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ॥ आमः शङ्कुर्वसुः श्रीमान्कुन्तिर्नाग्नजितेः सुताः ॥ १३ ॥ श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ॥ शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमकोऽवरः ॥ १४ ॥ प्रघोषो गात्रवान्सिंहो बलः प्रबल ऊर्ध्वगः ॥ माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥ १५ ॥ वृको हर्षोऽनिलो गृध्रो वर्धनोन्नाद एव च ॥ महांशः पावनो वह्निर्मित्रविन्दात्मजाः क्षुधिः ॥ १६ ॥ संग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ॥ जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥ १७ ॥ दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः ॥ १८ ॥ पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ॥ एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप ॥ मातरः कृष्णजातानां सहस्राणि च षोडश ॥ १९ ॥ ॥ राजोवाच ॥ कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि ॥ कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ॥ एतदाख्याहि मे विद्वन् द्विषोर्वैवाहिकं मिथः ॥ २० ॥ ॥ ॥ ॥

णार्थम् ॥१८॥ एतेषामपि अन्येषामपि श्रीकृष्णपुत्राणां शतसंख्यस्त्रीषु पुत्राः पौत्राश्च कोटिशो बभूवुः । तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति—मातरः कृष्णजातानामिति । चशब्देनाधिकाश्चेत्युक्तम् ॥ १९ ॥ यः कृष्णं हन्तुं रन्ध्रं प्रतीक्षते स कथं प्रादादिति । वैवाहिकं विवाहनिमित्तम् ॥ २० ॥ ॥

१ त्र्यशीतितमाध्यायस्यषष्ठश्लोके द्रौपदीप्रश्ने हे शैव्ये मित्रविन्दे इति पर्यायलेखनादियं टीका षोडशश्लोकव्याख्यायां 'एते मित्रविन्दात्मजाः' इत्यस्याग्रे अपेक्षिता । २ इयं च षोडशसहस्रस्त्रीमध्यपातिनी । ३ परः चारुगुप्तस्यानुजः । ४ 'द्रविणः' इति पाठः । ५ 'माद्याः सुताः' इति पाठः । ६ 'वह्नभः' इति पाठः । ७ 'महीशः', 'महासिः' इति पाठौ । ८ भोजकटे पुरे वसतः प्रद्युम्नात् ।

रुक्मिणोऽभिप्रायं कथं जानीम इति चेदत आह—अनागतमिति । अतीन्द्रियमस्मदादीन्द्रियागोचरम् । विप्रकृष्टं दूरस्थम् । व्यवहितं कुड्याद्यन्तरितम् ॥२१॥ तत्रोत्तरम्—स्वयंवरे रुक्मवत्या वृतः सन् राज्ञो निर्जित्य जहारेति ॥ २२ ॥ यद्यपि श्रीकृष्णावमानितस्तथापि वैरमनुस्मरन्नपि व्यतरत्प्रादात् । अन्वमोदतेत्यर्थः ॥ २३ ॥ सर्वासामपि एकैका कन्या तत्सर्वविवाहोपलक्षणार्थं ज्येष्ठकन्याविवाहमाह—रुक्मिण्या इति ॥ २४ ॥ यौनं विवाहः । तद्यौनमधर्मं जान-

अनागतमतीतं च वर्तमानमतीन्द्रियम् ॥ विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥२१॥ ॥ श्रीशुक उवाच ॥ वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ॥ राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥२२॥ यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ॥ व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥ २३ ॥ रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली ॥ उपयेमे विशालाक्षीं कन्यां चारुमतीं किल ॥ २४ ॥ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ॥ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥ जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः ॥ २५ ॥ तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ ॥ पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः ॥२६॥ तस्मिन्निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः ॥ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥२७॥ अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत् ॥ इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ॥ २८ ॥ शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ तं तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बलम् ॥ दन्तान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥ २९ ॥ ततो लक्षं रुक्म्यगृह्णाद्ग्लहं तत्राजयद्बलः ॥ जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥ ३० ॥ मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि ॥ जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥ ३१ ॥ तं चापि जितवान्रामो धर्मेण च्छलमाश्रितः ॥ रुक्मी जितं मयाऽत्रेमे वदन्तु प्राश्निका इति ॥ ३२ ॥ तदाऽब्रवीन्नभोवाणी बलेनैव जितो ग्लहः ॥ धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥ ३३ ॥ तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः ॥ संकर्षणं परिहसन्बभाषे कालचोदितः ॥ ३४ ॥ ॥

न्निति—'द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्' इति लोकविरोधात् । 'असग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' इति निषेधाच्चेत्यर्थः ॥ २५ ॥ २६ ॥ लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्निति ॥ २७ ॥ अदीव्यत क्रीडितवान् ॥ २८ ॥ २९ ॥ निष्काणां लक्षं ग्लहं पणं कृतवान् । कैतवं कपटम् ॥ ३० ॥ न्यर्बुदं दशकोटीर्ग्लहं क्षुभितो राम आददे ॥ ३१ ॥ छलमाश्रितो रुक्मी मया जितमित्याह ॥ ३२ ॥ ३३ ॥ ३४ ॥ ॥ ॥

१ बली इत्यन्वर्थं नाम सर्वगुणोपलक्षणार्थम् । २ कन्यावस्थापन्नां चारुमतीनाम्नीम् । ३ हरेः पौत्रायेति शेषपूरणेन व्याख्यातमिति बाल० । ४ अभ्युदये उत्सवे । ५ अनक्षज्ञ इत्यादौ निन्दार्थः स्पष्टः । वाग्देवीमते तु—अनक्षः अतीन्द्रियः स चासौ ज्ञः सर्वज्ञश्चेति । 'पश्यत्यचक्षुः' इत्यादिश्रुतेः । एवमपि तद्व्यसनं तेषामिन्द्रियाणां व्यसनं विस्तारणं प्रकाशनं । सेन्द्रिय एव जात इत्यर्थः । अत एवमक्षैः सर्वेन्द्रियैर्विपर्यीकुर्विति । ६ अस्येति शेषः ।

॥ ३५ ॥ नृम्णसंसदि मङ्गलसभायाम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ सूर्यया नवोढया । सिद्धा अखिला अर्था अभ्युदयशत्रुवधादयो येषां ते ॥ ४० ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां एकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य

नैवाक्षकोविदा यूयं गोपाला वनगोचराः ॥ अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ३५ ॥ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ॥ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥ ३६ ॥ कलिङ्गराजं तरसा गृहीत्वा दशमे पदे ॥ दन्तानपातयत्क्रुद्धो योऽहसद्विवृतैर्द्विजैः ॥३७॥ अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः ॥ राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥३८॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ॥ रुक्मिणीबलयो राजन्स्नेहभङ्गभयाद्धरिः ॥३९॥ ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम्॥ रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे अनिरुद्धविवाहे रुक्मिवधो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ध ॥ ॥ (॥ राजोवाच[3] ॥ बाणस्य तनयामूषामुपयेमे यदूत्तमः ॥ तत्र युद्धमभूद्धोरं हरिशङ्करयोर्महत् ॥ एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि ॥ १ ॥) ॥ श्रीशुक उवाच ॥ बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ॥ (येन[4] वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥ तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ॥ मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः ॥३॥ शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ॥ तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः ॥) सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम्[5] ॥ ४ ॥ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः ॥ वरेण[6] छन्दयामास स तं वव्रे पुराधिपम् ॥ ५ ॥ स एकदाह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ॥ किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥६॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ॥ पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥७॥ दोस्सहस्रं त्वया दत्तं परं भाराय मेऽभवत् ॥ त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ८ ॥ ॥

रोधनम् ॥ कन्यया रममाणस्य बाणेन बहुनाहुना ॥ १ ॥ अनिरुद्धोद्वहेऽन्यस्मिन् बाणयादवसंयुगे ॥ श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥ २ ॥
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पुराधिपं पुरपालकम् ॥ ५ ॥ ६ ॥ कामान्पूरयतीति कामपूरः स चासावमराङ्घ्रिपः कल्पतरुस्तं त्वाम् ॥ ७ ॥ ८ ॥ ॥

१ वाग्देवीमते तु—गावां वेदादीनां पालका यूयं सात्विके वने एव निवसतां ध्यानादिविषया भवथ। अकोविदाः द्यूतसभासु ये कोविदाः तेषां ध्यानादिविषया नतु भवथ । यतोऽक्षादिभिः श्रीमत्ता एव दीव्यन्ति नतु भवत्तुल्या भगवद्भक्ता अपीत्यर्थः। तस्मादेवं क्रीडंल्लीलातत्त्वं न वयं जानीम इति भावः। २ राजभिः प्रयोज्यकर्तृभिः। ३ अत्र राजोवाच बाणस्येत्यादिसार्धकं येन वामनरूपायेत्यादि सार्धपद्यद्वयं च न सर्वसमतमिति न व्याख्यातमिति तोषणी। ४ बाणः पुत्रशतेत्यनेन सामान्यत उक्त्वा बलेर्माहात्म्यकथनपूर्वकं बाणस्य वृत्तं विशेषतो वर्णयितुमाह—येनेति। येन बलिना। औरस इत्यनेन दत्तादिव्यावृत्तिः। ५ मृडयति भक्तिमयताण्डवादिना सुखयति तम्। ६ वरेण करणेन वशयामासेत्यर्थः।

हे आद्य, निभृतैर्भरितैर्दोर्भिरद्रींश्चूर्णयन् अयामगच्छम् ॥ ९ ॥ १० ॥ स्ववीर्यस्य नशनं केतुभङ्गं प्रतीक्षमाणः ॥ ११ ॥ श्रीमहेशादिष्टसंग्रामस्य प्रसङ्गमाह— तस्योषेति । प्राद्युम्निनाऽनिरुद्धेन । तत्रापि स्वप्ने ॥ १२ ॥ तं कान्तमपश्यन्ती सा उत्तस्थौ ॥ १३ ॥ ततः किं वृत्तं तत्राह—बाणस्येति ॥ १४ ॥ हस्तग्राहं

कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ॥ आद्याऽयां चूर्णयन्नद्रीन्भीतास्तेऽपि प्रदुद्रुवुः ॥९॥ तच्छ्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा ॥ त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥ १० ॥ इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ॥ प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः ॥ ११ ॥ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ॥ कन्याऽलभत कान्तेन प्रागदृष्टश्रुतेन सा ॥ १२ ॥ सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी ॥ सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १३ ॥ बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता ॥ सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता ॥ १४ ॥ कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः ॥ हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥ ॥ ऊषोवाच ॥ दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ॥ पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः ॥ १६ ॥ तमहं मृगये कान्तं पाययित्वाऽधरं मधु ॥ क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १७॥ ॥ चित्रलेखोवाच ॥ व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ॥ तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ १८ ॥ इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान् ॥ दैत्यविद्याधरान्यक्षान्मनुजांश्च यथालिखत् ॥ १९ ॥ मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् ॥ व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥ २० ॥ अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया ॥ सोऽसावसाविति प्राह स्मयमाना महीपते ॥ २१ ॥ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ॥ ययौ विहायसा राजन्द्वारकां कृष्णपालिताम् ॥ २२ ॥ तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता ॥ गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥ २३ ॥ सा च तं सुन्दरवरं विलोक्य मुदिताननना ॥ दुष्प्रेक्ष्ये स्वगृहे पुम्भी रेमे प्राद्युम्निना समम् ॥ २४ ॥ ॥ ॥ ॥

भर्तारम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ स्वप्ने त्वया दृष्ट एषां मध्ये को वा भवेदिति देवादीन् यथावत्पटेऽलिखत् ॥ १९ ॥ प्रद्युम्नं लिखितं वीक्ष्य श्वशुरोऽयमिति लज्जिता ॥ २० ॥ २१ ॥ २२ ॥ शोणितपुरं नीत्वा ॥ २३ ॥ पुम्भिर्दुष्प्रेक्ष्ये प्रेक्षितुमशक्ये ॥ २४ ॥ ॥ ॥ ॥ ॥२७॥

१ क्रुद्धः सन्नाहेति शेषः । २ मत् मदीयेन समेन मया लक्ष्म्या सह वर्तत इति समः श्रीकृष्णस्तेन । यद्वा मम समं सर्वं सर्वस्वं यः कृष्णस्तेनेति तोष० । ३ आसीदिति शेषः । ४ सा च कन्या अविवाहितैव सती प्राद्युम्निना रतिं लेभे इत्यन्वयः । ५ विह्वला रतिश्रान्ता अतो व्रीडिता । ६ अधरं अधरसंबन्धि । ७ भाव्यते सोऽयमिति त्वयानुसंधीयते चेत् ।

स च परार्ध्यैरमूल्यैर्वासःस्रगादिभिः शुश्रूषणपूर्वकमर्चितः सन् ॥ २५ ॥ तया ऊषयापहृतेन्द्रियोऽहर्गणान् दिनसमूहान्न बुबुधे ॥ २६ ॥ आप्रीतामतिहृष्टाम् । दुरवच्छदैश्छादयितुमशक्यैः ॥ २७ ॥ विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥ अनपायिभिः अपायोऽपसर्पणं प्रमादो वा तद्रहितैः । पाठान्तरे दुष्टा प्रेष्या सखी यस्यास्तस्याः पुम्भिर्दूषणं कुतो वेति न जानीम इत्यर्थः ॥ २९ ॥ ३० ॥ कामस्यात्मनो देहाज्जातम् ॥ ३१ ॥ अभिनृम्णया सर्वमङ्गलया । तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां स्रजि तां बाह्वोर्मध्ये वक्षसि दधानम् । मधुमल्लिका वसन्तभवा मल्लिकास्तदाश्रिताम् । तस्याग्र इत्यार्षः सन्धिः । तस्या अग्र इत्यर्थः ॥ ३२ ॥

परार्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः ॥ पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्चितः ॥ २५ ॥ गूढः कन्यापुरे शश्वत्प्रवृद्धस्नेहया तया ॥ नाहर्गणान्स बुबुधे ऊषयापहृतेन्द्रियः ॥ २६ ॥ तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ॥ हेतुभिर्लक्षयांचक्रुराप्रीतां दुरवच्छदैः ॥ २७ ॥ भटा आवेदयांचक्रू राजंस्ते दुहितुर्वयम् ॥ विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ २८ ॥ अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ॥ कन्याया दूषणं पुंभिर्दुष्प्रेक्षाया न विद्महे ॥ २९ ॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥ ३० ॥ कामात्मजं तं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बरमम्बुजेक्षणम् ॥ बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम् ॥ ३१ ॥ दीव्यन्तमक्षैः प्रिययाभिनृम्णया तदङ्गसङ्गस्तनकुङ्कुमस्रजम् ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया ॥ ३३ ॥ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥ तं नागपाशैर्बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह ॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धेऽनिरुद्धबन्धो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ श्रीशुक उवाच ॥ अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥ ॥

आततायिभिरुद्यतशस्त्रैः । माधवोऽनिरुद्धः । मौर्वं मुरुर्लोहविशेषस्तन्निर्मितम् ॥ ३३ ॥ ३४ ॥ शोकविषादाभ्यां विह्वलाऽवशा । अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥
त्रिशुक्षष्टितमे चाथ बाणयादवसङ्गरे । स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥ १ ॥ १ ॥ ॥ ॥ ॥

१ 'दुष्प्रेष्यायाः' इत्येवंरूपे। २ तत्सौन्दर्यनिर्भयत्वादिना विस्मितः। ३ भवनात् उषाया इत्यर्थः। ४ 'निशम्य' इति पाठः। ५ इदमार्षम्। अरोदीदित्यर्थः। 'अरौत्सीत्' इति पाठोऽप्यार्षः।

कर्म च युद्धादिकम् ॥ २ ॥ रामकृष्णानुवर्तिन इति। तौ पुरतो निर्गतावित्यर्थः ॥ ३ ॥ सर्वतोदिशमित्यस्योत्तरेणान्वयः ॥ ४ ॥ भज्यमानानि पुरोद्याना-
दीनि। द्वन्द्वैकवद्भावः। अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि। अभिनिर्ययौ वाणः ॥ ५ ॥ सुतः स्कन्दस्तत्सहितैः प्रमथैर्गणैः। रामकृष्णाभ्यां युयुधे

नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥ प्रद्युम्नो युयुधानश्च गदः
साम्बोऽथ सारणः ॥ नन्दोपनन्दभद्राद्या रामकृष्णानुवर्तिनः ॥३॥ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतोदिशम् ॥
रुरुधुर्बाणनगरं समन्तात्सात्वतर्षभाः ॥ ४ ॥ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ॥ प्रेक्षमाणो रुषाविष्टस्तुल्यसै-
न्योऽभिनिर्ययौ ॥ ५ ॥ वाणार्थे भगवान् रुद्रः ससुतैः प्रमथैर्वृतः ॥ आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ ६ ॥
आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ॥ कृष्णशंकरयो राजन्प्रद्युम्नगुहयोरपि ॥ ७ ॥ कुम्भाण्डकूपकर्णाभ्यां वलेन
सह संयुगः ॥ साम्बस्य वाणपुत्रेण वाणेन सह सात्यकेः ॥८॥ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ॥ गन्ध-
र्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ ९ ॥ शंकरानुचरान् शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानांश्च वेताला-
न्सविनायकान् ॥ १० ॥ प्रेतमातृपिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ॥ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः
॥ ११ ॥ पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे ॥ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ १२ ॥ ब्रह्मास्त्रस्य
च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ॥ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १३ ॥ मोहयित्वा तु गिरिशं जृम्भ-
णास्त्रेण जृम्भितम् ॥ वाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥ १४ ॥ स्कन्दः प्रद्युम्नवाणौघैरर्द्यमानः समन्ततः ॥
असृग्विमुञ्चन्गात्रेभ्यः शिखिनापाक्रमद्रणात् ॥ १५ ॥ कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानि
हतनाथानि सर्वतः ॥ १६ ॥ विशीर्यमाणं स्वबलं दृष्ट्वा वाणोऽत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्य-
किम् ॥ १७ ॥ धनूंष्याकृष्य युगपद्बाणः पञ्चशतानि वै ॥ एकैकस्मिञ्छरौ द्वौ द्वौ संदधे रणदुर्मदः ॥ १८ ॥ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ प्रत्यस्त्राण्येवाह—ब्रह्मास्त्रस्येति। नैजं नारायणास्त्रम् ॥ १३ ॥ १४ ॥ शिखिना मयूरेण वाहनेन ॥ १५ ॥ ॥
तयोरनीकानि। हतौ नाथौ येषां तानि ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥



१ बद्धस्य वार्तां तत्कर्म चोपाकर्ण्येत्यन्वयः। बद्धस्य तद्बन्धनम्। वार्तां चित्रलेखाकृतहरणोपारमणादिरूपामिति बालबोधिनी। २ रामकृष्णाभ्यां युयुधे। ३ बलस्येत्यर्थः। ४ 'भूत-
मातृ—' इति पाठे गौर्यादिमातृतो भिन्ना भूतमातर इत्यर्थः। ५ ब्रह्मास्त्रस्य कृते ब्रह्मास्त्रं प्रायुङ्क्तेति पूर्वानुषङ्गः।

॥ १९ ॥ २० ॥ अनिरीक्षमाणस्तिर्यङ्मुखो बभूवेति ॥२१॥ ज्वरस्तु योद्धुमभ्यधावदिति ॥२२॥ श्रीनारायणः शीतज्वरमसृजत् ॥२३॥ माहेश्वरः समाक्रन्दन्युधे ॥ २४ ॥ आत्मानं परमशक्तिमन्तं मन्यमानः श्रीकृष्णं तापयितुं प्रवृत्तः स्वयमेव तप्तः सन् तं परमेश्वरं ज्ञात्वा स्तुवन्नमस्करोति—नमामीति। त्वा त्वामनन्तशक्तिं नमामि। कुतः। परेषां ब्रह्मादीनामीशम्। तत्र हेतुः—सर्वात्मानं सर्वस्यात्मानं चेतयितारम्। तत्कुतः। केवलं शुद्धम्। ज्ञप्तिमात्रं चैतन्यघनम्। तदेवं सर्वचेतयितृत्वेन परमेश्वरत्वमुक्तम्, किंच विश्वसृष्ट्यादिहेतुत्वादपीत्याह—विश्वोत्पत्तीति। नन्वेवंभूतं ब्रह्म प्रसिद्धं, नाहमिति तत्राह—यत्तद्ब्रह्मेति। यद्ब्रह्म तदेव त्वमित्यर्थः। किं तद्ब्रह्मेत्यत आह—ब्रह्मलिङ्गं ब्रह्मणा वेदेन लिङ्ग्यते द्योत्यत इति। तत्कुतः। प्रशान्तम्। सर्वविक्रियारहितत्वान्न साक्षाद्वाच्यमिति भावः ॥२५॥ किंच यत्सविशेषं वस्तु तत्र वयं प्रभवामः, त्वयि तु सर्वविशेषातीते न कस्यापि प्रभुत्वं किंतु त्वमेव सर्वप्रभुरिति ज्ञप्तिमात्रत्वं विवृण्वन्स्तौति—काल इति। कालः

तानि चिच्छेद भगवान्धनूंषि युगपद्धरिः ॥ सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत् ॥ १९ ॥ तन्माता कोटरा नाम
नग्ना मुक्तशिरोरुहा ॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥२०॥ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः ॥ बाणश्च
तावद्विरथश्छिन्नधन्वाऽविशत्पुरम् ॥ २१ ॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ॥ अभ्यधावत दाशार्हं दह-
न्निव दिशो दश ॥२२॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥२३॥
माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दितः ॥ अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ शरणार्थी हृषीकेशं तुष्टाव
प्रयताञ्जलिः ॥२४॥ ॥ ज्वर उवाच ॥ नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ॥ विश्वोत्पत्तिस्था-
नसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ २५ ॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥
तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ २६ ॥ नानाभावैर्लीलयैवोपपन्नैर्देवान्साधूँल्लोकसेतून्बिभर्षि ॥
हंस्युन्मार्गान्हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः ॥ २७ ॥ ॥ ॥ ॥

क्षोभकः। कर्म निमित्तम्। तदेव फलाभिमुखमभिव्यक्तं दैवम्। स्वभावस्तत्संस्कारः। जीवस्तद्वान्। द्रव्यं भूतसूक्ष्माणि। क्षेत्रं शरीरम्। प्राणः सूत्रम्। आत्मा अहंकारः। विकार एकादशेन्द्रियाणि महाभूतानि चेति षोडशकः तत्संघातो लिङ्गदेहः। एतस्य च बीजरोहवत्प्रवाहः, रोहोऽङ्कुरो देहाद्बीजरूपं कर्म ततोऽङ्कुररूपो देहस्ततः पुनरेवमिति प्रवाहः। एषा त्वन्माया। तस्या निषेधः अपोहो यस्मिंस्तं त्वां निषेधावधिभूतं प्रपद्ये भज इति ॥२६॥ ननु देवकीतनयस्य मे कथमेवंभूतत्वं तत्राह—नानाभावैरिति। सर्वोपाधिविनिर्मुक्त एव त्वं यथा लीलया स्वीकृतैर्मत्स्याद्यवतारैर्देवान् बिभर्षि पालयसि। तदर्थं लोकसेतून्वर्णाश्रमधर्मान्। तदर्थं तदनुष्ठातॄन्साधून् तदज्ञत्वेनोन्मार्गान् दैत्यादीन् हंसि संहरसि। एवमेतदपि तव जन्म भूमेर्भारहरणाय। लीलावतारोऽयं न कस्यापि त्वं तनय इत्यर्थः ॥२७॥

१ समाक्रन्दत् रुरोदेति बालबोधिनी। समाक्रन्दन् रुदन्बभूवेति चक्रवर्ती। २ ब्रह्मैव लिङ्गं विग्रहो यस्य तमिति तोष०। ३ कोटरा पार्वत्या एव मूर्तिर्दैत्योपास्या न तज्जननी। षष्ठस्कन्धे तज्जनन्या अशनाया उक्तत्वादिति चक्रवर्ती। ४ पुत्रवत्स्वोपासकस्य प्राणरिरक्षिषया। ५ 'अभ्यपद्यत', 'अन्वपद्यत' इति पाठौ। ६ अर्दितः अतोऽत्युच्चं शब्दं कुर्वन्युयुध इति शेषः। ७ तद्वान्कर्मसंस्कारवान्।

अतोऽज्ञानतस्त्वदभिभवे प्रवृत्तं मां तप्तं रक्षेत्याशयेनाह—तप्तोहमिति । ते तेजसा त्वत्सृष्टेन ज्वरेण शान्तोग्रेण शीतज्वरेण । परसंतापकस्य युक्त एव ताप इति चेदत आह—तावदिति । सेवायां प्रवृत्तानामनुचित इति भावः ॥ २८ ॥ हे त्रिशिरः, व्येतु अपयातु । मदाज्ञापालकः सन्सुखं विचर । कासावाज्ञा तामाह—य इति । नौ आवयोरिमं संवादं यः स्मरेत्तस्य त्वत् त्वत्तो न भयं भवेत् । त्वया भयं नोत्पादनीयमित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ भक्तरक्षणार्थं श्रीरुद्रो भगवन्तं स्तौति—त्वं हीति । अयमर्थः—त्वामज्ञात्वाऽयं युध्यत इति न चित्रम् । यतस्त्वं वाङ्मये ब्रह्मण्यपि गूढं ब्रह्म अभिधाऽविषयत्वात् । कुतः । परं ज्योतिः । ज्योतिषामपि प्रकाशकत्वादविषय इत्यर्थः । कथं तर्हि प्रतीतिरत आह—यमिति । अमलात्मनां स्वतः प्रकाशसे इत्यर्थः ॥३४॥

तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण ॥ तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥ २८ ॥ ॥श्रीभगवानुवाच॥ त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद्भयम् ॥ यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥२९॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥ बाणस्तु रथमारूढः प्रागाद्योत्स्यञ्जनार्दनम्[2] ॥३०॥ ततो बाहुसहस्रेण नानायुधधरोऽसुरः ॥ मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृपे[3] ॥ ३१ ॥ तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना ॥ चिच्छेद भगवान्बाहूञ्छाखा इव वनस्पतेः ॥ ३२ ॥ बाहुषु च्छिद्यमानेषु बाणस्य भगवान्भवः ॥ भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥ ३३ ॥ ॥श्रीरुद्र उवाच॥ त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ॥ यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥ ३४ ॥ नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशा श्रुतिरङ्घ्रिरुर्वी ॥ चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः ॥ ३५ ॥ रोमाणि यस्यौषधयोऽम्बुवाहाः केशा विरिञ्चो धिषणा विसर्गः ॥ प्रजापतिर्हृदयं यस्य धर्मः स वै भवान्पुरुषो लोककल्पः ॥ ३६ ॥ तवावतारोऽयमकुण्ठधामन्धर्मस्य[5] गुप्त्यै जगतो भवाय ॥ वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥ ३७ ॥

आस्तां तावन्निर्गुणस्य तव ज्ञानं लीलयाधिष्ठितस्त्वया यो विराड्विग्रहः सोऽपि न ज्ञायते उदुम्बरफलान्तर्वर्तिमशकैरिवोदुम्बरफलमित्याशयेन विराड्रूपेण स्तौति द्वाभ्याम्—नाभिरिति । यस्य नभआदयो नाभ्याद्यवयवाः स भवान् लोककल्पः पुरुष इत्युत्तरेणान्वयः । नभो यस्य नाभिः । अग्निर्मुखम् अम्बु रेतः । द्यौः शीर्षम् । आशा दिशः श्रुतिः श्रवणेन्द्रियम् । उर्वी अङ्घ्रिः । चन्द्रो मनः । अर्को दृक् । अहं शिव आत्माऽहंकारः । समुद्रो जठरम् । इन्द्रो भुजा बाहुः । इन्द्रादयो लोकपाला बाहव इत्यर्थः ॥ ३५ ॥ ओषधयो रोमाणि । यच्छन्दावृत्तिः स्पष्टतार्था । अम्बुवाहाः केशाः । विरिञ्चो धिषणा बुद्धिः । प्रजापतिर्विसर्गो मेढ्रम् । धर्मो हृदयम् । लोकैः कल्प्यतेऽवकल्प्यत इति लोककल्पः ॥ ३६ ॥ ननु तत्त्वतः प्रादेशिकशरीरस्य कथं नभोनाभित्वादीत्यत आह—तवेति ।

१ शीतत्वेन शान्तत्वं तापकत्वेनोग्रत्वमिति ज्ञेयम् । २ जनार्दनं दुर्जनपीडकम् । ३ 'नृपः' इति पाठेऽसुरराजः । ४ असौविति वाच्येऽभापतेत्युक्तिः स्वरूपवर्णनेऽप्यशक्तया स्तुतावल्पशक्तिव्यञ्जनाय । ५ अवतारः अपूर्ववत्प्रपञ्चे प्राकट्यम् ।

हे अकुण्ठधामन्नप्रच्युतस्वरूप, भवायाभ्युदयाय । न केवलमेतावत्किंत्वस्मदनुग्रहार्थमपीत्याह—वयं चेति । सर्वे लोकपालास्त्वया पालिताः सन्तोऽपि भुवनानि पालयाम इति ॥ ३७ ॥ ननु यदि विभावयितारो यूयं विभाव्यानि च भुवनानि सन्ति तर्हि कथमुक्तं त्वं हि ब्रह्मेति । नहि ब्रह्मत्वे मम सजातीयविजातीयभेदः संभवतीत्यत आह—त्वमिति । एकः सजातीयभेदरहितः । कुतः । आद्यः पुरुषः पुरुषाणामवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः । कुतः । तुरीयः । शुद्ध इत्यर्थः । तदपि कुतः । स्वदृक् स्वप्रकाशज्ञानरूपः । शुद्धादेव ह्युपाधियोगाज्जीवा जायन्ते । 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे एव आत्मानो व्युच्चरन्ति' इति श्रुतेः । अतः सजातीयरहितः । किंच अद्वितीयो विजातीयरहितोऽपि । कुतः । हेतुः सर्वस्य । तथा स्वयं हेतुरहितश्चेति । कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयतेऽत आह—प्रतीयस इति । सर्वगुणप्रसिद्ध्यै सर्वविषयप्रकाशनाय ॥३८॥ तर्हि किमहमेवं संसारीत्युच्यते, नहि नहीति सदृष्टान्तमाह—यथैवेति । हे भूमन्, स्वया छायया मेघलक्षणया परदृष्ट्या पिहितश्छादितोऽपि सूर्यश्छायां मेघं च रूपाणि च मेघान्तरितान्घटादीनपि

त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः ॥ प्रतीयसेऽथापि[1] यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥ ३८ ॥ यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च संचकास्ति ॥ एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥ ३९ ॥ यन्मायामोहितधियः पुत्रदारगृहादिषु ॥ उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥ ४० ॥ देवदत्तमिमं[6] लब्ध्वा नृलोकमजितेन्द्रियः ॥ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ ४१ ॥ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम्[2] ॥ विपर्ययेन्द्रियार्थार्थं[7] विषमत्त्यमृतं त्यजन्[3] ॥ ४२ ॥ अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः[4] ॥ सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥ ४३ ॥ तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम् ॥ अनन्यमेकं जगदात्मकेतं भवापवर्गाय[5] भजाम देवम् ॥ ४४ ॥ ॥

संचकास्ति प्रकाशयति । एवं गुणेनाहंकारेण सकार्येण जीवावरकेण तद्दृष्ट्या पिहितोऽपि गुणान्सत्त्वादीनुपाधीन् गुणिनश्चोपहितान् जीवानपि चकास्ति । आत्मप्रदीपः स्वप्रकाशः । अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥ ३९ ॥ किंच मायाश्रयस्यान्यान्मोहयतस्तव कुतः संसृतिरित्याशयेनाह—यन्मायेति । पुत्रादिषु प्रसक्ताः । वृजिनार्णवे दुःखसागरे । उन्मज्जन्ति देवादियोनिषु, निमज्जन्ति स्थावरादिषु । तदुक्तं वायवीये—'विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोः' इति ॥४०॥ एवं जीवेश्वरव्यवस्थां निरूप्येदानीमभजन्तं निन्दति द्वाभ्याम्—देवेति । देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वापीति ॥४१॥ शोच्यत्वे हेतुः—यस्त्वामिति । विपर्यया विपरीता अनात्माऽप्रियाऽनीश्वरा ये इन्द्रियार्थाः पुत्रादयस्तदर्थम् ॥४२॥ अहमन्ये च शुद्धमनसस्त्वामेव प्राप्ता इत्याह—अहमिति ॥४३॥ भगवतो भजनीयत्वे हेतून्वदंस्तद्भक्तिं प्रार्थयते—तं त्वेति । समत्वे हेतुः—प्रशान्तमिति । सुसेव्यत्वमाह—सुहृदात्मदैवं सुहृद्बुद्धिप्रवर्तकत्वात्, आत्मा च सर्वात्मकत्वात्, एवंभूतं दैवमीश्वरं त्वाम् । न चान्यो भजनीयोऽस्तीत्याह—अनन्यमेकं समानासमानजातीयरहितम् । तत्कुतः । जगतामात्मनां च केतमधिष्ठानम् ॥४४॥

१ अथापि स्वदृक्त्वेऽपि । स्वप्रकाशत्वानुपमर्देनैवेत्यर्थः । २ 'प्रियदर्शनम्' इति पाठः । ३ 'त्यजेत्' इति पाठः । ४ अमले ब्रह्मणि आशयो येषां ते । ५ भवेषु जन्मसु अपवर्गाय भक्तियोगप्राप्तये इति तोष० । ६ यद्वा इमं त्वदाविर्भाववृतं नृलोकं भूलोकं इति तोष० । ७ विपरीताः आत्म-प्रिये-श्वररूपात् भवतो विपरीता इत्यर्थः ।

स्वयं भक्तिमाशास्य स्वभक्तस्यामीष्टमाशास्ते—अयमिति । दैत्यपतौ प्रह्लादे ॥ ४५ ॥ ४६ ॥ वैरोचनिर्बलिर्मद्भक्तस्तत्सुतत्वादवध्यस्तावत् । किंच प्रह्लादायेति । अन्वयो वंशः ॥ ४७ ॥ तर्हि किमित्येवं कृतं तत्राह—दर्पोपशमनायेति ॥ ४८ ॥ अनुगृह्णाति—चत्वार इति ॥ ४९ ॥ सह वध्वा उषया ॥ ५० ॥ रुद्रानुमोदित इति तदभिप्रेतस्यैव वाणभुजभङ्गस्य कृतत्वात् ॥ ५१ ॥ पौरादिभिरभ्युद्यतोऽभिमुखमागत्य सत्कृतः ॥ ५२ ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महा-

अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ॥ संपाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः
॥ ४५ ॥ ॥ श्रीभगवानुवाच ॥ यदात्थ भगवंस्त्वं नः करवाम प्रियं तव ॥ भवतो यद्व्यवसितं तन्मे साध्वनुमोदि-
तम् ॥ ४६ ॥ अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः ॥ प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ ४७ ॥ दर्पोपश-
मनायास्य प्रवृक्णा बाहवो मया ॥ सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ ४८ ॥ चत्वारोऽस्य भुजाः शिष्टा
भविष्यन्त्यजरामराः ॥ पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥ ४९ ॥ इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिर-
साऽसुरः ॥ प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥ ५० ॥ अक्षौहिण्या परिवृतं सुवासःसमलंकृतम् ॥ सपत्नीकं
पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ ५१ ॥ स्वराजधानीं समलंकृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम् ॥ विवेश शङ्खा-
नकदुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ ५२ ॥ य एवं कृष्णविजयं शंकरेण च संयुगम् ॥ संस्मरेत्प्रातरु-
त्थाय न तस्य स्यात्पराजयः ॥ ५३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे अनिरुद्धानयनं
नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ श्रीशुक उवाच ॥ एकदोपवनं राजञ्जग्मुर्यदुकुमारकाः ॥ विहर्तुं साम्बप्रद्युम्न-
चारुभानुगदादयः ॥ १ ॥ क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ॥ जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम्
॥ २ ॥ कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः ॥ तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥ ३ ॥ ॥

पुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ चतुःषष्टितमे कृष्णो नृगं पापादमोचयत् ॥ ब्रह्मस्वहारिदोषोक्त्या राज्ञो दृष्टानशिक्षयत् ॥ १ ॥ विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् ॥ अन्वशासद्यदून्कृष्णो नृगोद्धारप्रसङ्गतः ॥ २ ॥ १ ॥ पिपासितास्तृपिता जलं विचिन्वन्तः । सत्त्वं जीवम् ॥ २ ॥ तं च कृकलासं वीक्ष्य ॥ ३ ॥ ॥ ॥ ॥

१ तत्तस्माद्भवता प्रसादः संपाद्यताम् । २ 'भविष्यत्यजरामरः' इति पाठः । ३ समुपानयत्सम्यङ् वधूपस्कारयुतत्वेन उप कृष्णसमीपमनयत् । ४ कृष्ण इति शेषः । ५ रुद्रेण वाणादिदुःखरुतद्रावकेणानुव्रजनादिनानन्दितः । ६ 'भूपितमार्गं' इति पाठः । ७ अत्र कुमारशब्दप्रयोगस्तेषां क्रीडासक्तत्वात्, परतु इयं लीला प्रद्युम्नादीनां यौवनारम्भ एवानिरुद्धजन्मतः प्रागूह्येति तोष० । ८ 'चेतसः' इति पाठः ।

चर्मजैश्चर्ममयैः पाशैस्तान्तवैस्तन्तुमयैश्च ॥ ४ ॥ ५ ॥ संतप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः । अद्भुता अलंकाराम्बरस्रजो यस्य सः स्वर्गी देवो बभूवेति ॥ ६ ॥ ७ ॥ यद्यदि । क्षमं योग्यम् ॥ ८ ॥ ९ ॥ यदि ते कर्णमस्पृशमित्यसंदेहे संदेहवचनं यदि वेदाः प्रमाणं स्युरितिवत् । कर्णपथं नूनं प्राप्तः स्वामि-

चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः ॥ नाशक्नुवन्संमुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ ४ ॥ तत्रागत्यारविन्दाक्षो भगवान्विश्वभावनः ॥ वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ ५ ॥ स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ॥ संतप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणाम्बरस्रक् ॥ ६ ॥ पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः ॥ कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥ ७ ॥ दशामिमां वा कतमेन कर्मणा संप्रापितोऽस्यतदर्हः सुभद्र ॥ आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम् ॥ ८ ॥ ॥ श्रीशुक उवाच ॥ इति स्म राजा संपृष्टः कृष्णेनानन्तमूर्तिना ॥ माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥ ९ ॥ ॥ नृग उवाच ॥ नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ॥ दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ १० ॥ किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ ११ ॥ यावन्त्यः सिकता भूमेर्यावन्त्यो दिवि तारकाः ॥ यावन्त्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ १२ ॥ पयस्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृङ्गीः ॥ न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥ १३ ॥ स्वलंकृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥ १४ ॥ गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ॥ वासांसि रत्नानि परिच्छदान्रथानिष्टं च यज्ञैश्चरितं च पूर्तम् ॥ १५ ॥ ॥ ॥ ॥

त्यर्थः ॥ १० ॥ किंच किं न्विति । सर्वेषां भूतानामात्मनो बुद्धेः साक्षिणस्तेऽविदितं किं नु, न किंचित् ॥ ११ ॥ १२ ॥ १३ ॥ ऋतव्रतेभ्योऽदम्भाचारेभ्यः । तपसा श्रुताः प्रख्याताश्च ते ब्रह्मणि वदान्या अत्युदारा अध्यापनशीलाश्च ते सन्तश्च तेभ्यः ॥ १४ ॥ पूर्तं वापीकूपादि । चरितं कृतम् ॥ १५ ॥ ॥

१ 'तमुद्धर्तुं' इति पाठः । २ 'चामीकरतुल्यवर्णः' इति पाठः । ३ त्वत्तत्त्वं विवित्सता नः इति कर्मणि षष्ठी । ४ 'आनन्दमूर्तिना' इति पाठः । ५ नवमस्कन्धोक्तश्राद्धदेवपुत्रादिक्ष्वाकुभ्रातुर्नृगादन्योऽयं नृग इक्ष्वाकुतनयो ज्ञेयः । ६ अहं ददाविति अपरोक्षेऽपि लिडुक्तिर्दानसमये हर्षभरेणेदृशी दृत्तीनि नाज्ञासिषमिति भावः । ७ व्रतानि भारते—'धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य ॥' इति । ८ स [illegible] प्रादां इति पूर्वानुषङ्गः ।

एवं वर्तमानस्य मम संकटं किंचिदापन्नं शृण्वित्याह—कस्यचिदिति । द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य । संपृक्ता मिलिता । अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६ ॥ १७ ॥ प्रतिग्राहिणोक्तं—दातेति । स्वामिनोक्तमपहर्तेति । अभवद्भ्रमः, व्याकुलोऽभवमित्यर्थः ॥ १८ ॥ तदोभावपि प्रत्येकमनुनीतौ प्रार्थितौ । कथं तदाह—गवामिति सार्धेन ॥ १९ ॥ २० ॥ अपरः प्रतिग्राही । दुराग्रहो यल्लक्षं त्वयोक्तमन्यदपि गवामयुतं यदि तदपीमां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययावित्यर्थः ॥ २१ ॥ एतस्मिन्नन्तर इति । इतः पूर्वं पापाभावान्नेतुमसमर्था इति भावः ॥ २२ ॥ उताहो इत्येकं पदम् । अथवा पूर्वं शुभमिति । नान्तमिति यमस्य स्वस्य वा वाक्यम् । पश्ये पश्यामि ॥ २३ ॥ हे देव यम, पूर्वमशुभं भुञ्ज इति मयोक्ते स यमः पतेति प्राह ॥ २४ ॥ २५ ॥

कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ॥ संपृक्ताऽविदुषा सा च मया दत्ता द्विजातये ॥ १६ ॥ तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् ॥ ममेति प्रतिग्राह्याह नृगो मे दत्तवानिति ॥ १७ ॥ विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ ॥ भवान्दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः ॥ १८ ॥ अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै[1] ॥ गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥ १९ ॥ भवन्तावनुगृह्णीतां किङ्करस्याविजानतः ॥ समुद्धरतं मां कृच्छ्रात्पतन्तं[2] निरयेऽशुचौ ॥ २० ॥ नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥ २१ ॥ एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमक्षयम्[3] ॥ यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥ २२ ॥ पूर्वं त्वमशुभं भुङ्क्षे उताहो नृपते शुभम् ॥ नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ॥ २३ ॥ पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः ॥ तावदद्राक्षमात्मानं कृकलासं[4] पतन्प्रभो ॥ २४ ॥ ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ॥ स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः ॥ २५ ॥ स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ॥ साक्षादधोक्षज उरुव्यसनान्धबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥ २६ ॥ देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ॥ नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥ २७ ॥ अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो ॥ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ २८ ॥ ॥

दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभिनन्दति—स त्वमिति । हे विभो, स त्वं ममाक्षिपथो लोचनगोचरः सन्कथं साक्षात्प्रत्यक्षोऽभूरित्यर्थः । किमत्राश्चर्यं तदाह—पर आत्मा । अत एव योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषाऽमले हृदि विभाव्यश्चिन्त्यः । यतोऽधोक्षजः । अक्षजमैन्द्रियकज्ञानं तदधोऽर्वागेव यस्मात्सः । यस्येह भवापवर्गो भवेत्तस्य भवाननुदृश्यः स्यात् । उरुव्यसनेन कृकलासभवदुःखेनान्धबुद्धेस्तु ममैतच्चित्रमित्यर्थः ॥ २६ ॥ उद्रिक्तभक्तिर्बहुधा संबोधयन्नाह—देवदेवेति ॥ २७ ॥ अनुज्ञापयति—अनुजानीहीति । देवलोकेऽपि सतो वर्तमानस्यात्मनो मनसः संनिधिं प्रार्थयते । यत्र क्वापीति । त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयादिति ॥ २८ ॥ ॥ ॥ ॥ ॥



१ 'कृच्छ्र उपागते' इति पाठः । २ कृच्छ्रात्पापाद्धेतोः । ३ क्षयो निवासः । ४ रामायणादौ तु—विप्रयोस्तथा शापउक्तिः ।

यास्यन्नमस्यति—नम इति । सर्वभावाय सर्वस्य भावो जन्म येन तस्मै । ब्रह्मणे कर्तृत्वेऽप्यविकाराय । कुतः । अनन्तशक्तये, अनन्ता मायाख्या शक्तिर्यस्य तस्मै । वासुदेवाय सर्वभूताश्रयायेत्युपादानत्वमुक्तम् । श्रीकृष्णाय सदानन्दरूपायेति पुरुषार्थत्वमुक्तम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥' इति स्मृतेः । किंच योगानामिष्टापूर्तादिकर्मणां पतये फलदात्रे । अयं भावः—एवंभूतं त्वां विहाय गन्तुमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति ॥ २९ ॥ ३० ॥ ३१ ॥ मनागीषदपि भुक्तं सदग्नेरग्निसदृशस्य तेजीयसोऽतितेजस्विनोऽपि दुर्जरम् ॥ ३२ ॥ ३३ ॥ किंच विषादपि

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ॥ कृष्णाय वासुदेवाय योगानां पतये नमः ॥२९॥ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ॥ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥३०॥ कृष्णः परिजनं प्राह भगवान्देवकीसुतः ॥ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥३१॥ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ॥ तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥३२॥ नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ॥ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥३३॥ हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३४ ॥ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ॥ प्रसह्य तु बलाद्भुक्तं दश पूर्वान्दशापरान् ॥ ३५ ॥ राजानो राजलक्ष्म्यान्धा[1] नात्मपातं विचक्षते[2] ॥ निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधुबालिशाः[3] ॥ ३६ ॥ गृह्णन्ति यावतः पांसून् क्रन्दतामश्रुबिन्दवः ॥ विप्राणां हृतवृत्तीनां वदान्यानां कुटुम्बिनाम् ॥ ३७ ॥ राजानो राजकुल्याश्च तावतोऽब्दान्निरङ्कुशाः ॥ कुम्भीपाकेषु पच्यन्ते ब्रह्मदायापहारिणः ॥ ३८ ॥ स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः ॥ षष्टिर्वर्षसहस्राणि विष्ठायां जायते[4] कृमिः ॥ ३९ ॥ न मे ब्रह्मधनं भूयाद्यद्गृध्वाऽल्पायुषो नराः[5] ॥ पराजिताश्च्युता राज्याद्भवन्त्युद्वेजिनो[6]ऽहयः ॥ ४० ॥ विप्रं कृतागसमपि नैव द्रुह्यत मामकाः[7] ॥ घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥ ४१ ॥ ॥ ॥

घोरमित्याह—हिनस्तीति । संसर्गि संसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह—वह्निरिति । अपि च समूलमिति । वह्निर्मूलान्यवशेषयति, ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ॥ ३४ ॥ दुरनुज्ञातं यथावदननुज्ञातम् । त्रिपूरुषं कुलं स्वयं पुत्रं पौत्रं च । प्रसह्य हठात् । बलाद्राजाद्याश्रयतः ॥ ३५ ॥ ये ब्रह्मस्वमभिमन्यन्ते इच्छन्ति ते निरयमेवाभिमन्यन्ते । अतो बालिशा अज्ञा आत्मपातं न विचक्षत इति ॥ ३६ ॥ अपि च गृह्णन्तीति ॥ ३७ ॥ ३८ ॥ ३९ ॥ गृद्ध्वा अभिकाङ्क्ष्य ॥ ४० ॥ ४१ ॥ ॥ ॥ ॥ ॥

१ 'लक्ष्म्या च' इति पाठः । २ न विचक्षते न पश्यन्ति । ३ साधुबालिशा अतिमूर्खाः । ४ जायते पुनःपुनर्मृत्वा तत्रैव भवतीत्यर्थः । ५ 'नृपाः' इति पाठः । ६ परोद्वेगजनका अहयः सर्पाश्च भवन्ति । ७ हे मामका इति ये द्रुह्यन्ति ते मदीया नेति भावः । ८ आत्मानं पितृपुत्रौ चेति तोषणी ।

प्रणमे नमामि ॥ ४२ ॥ न केवलमर्थवादविभीपिकेयं किंतु प्रत्यक्षमित्याह—ब्राह्मणार्थ इति ॥ ४३ ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ छ ॥ ॥ पञ्चषष्टितमे रामश्चक्रे गोकुलमागतः ॥ रममाणस्तु गोपीभिः कालिन्द्याः कर्षणं मदात् ॥ १ ॥ रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत् ॥ पौण्ड्रकान्तादि कृष्णस्य पृथगुक्तमतः परम् ॥ २ ॥ १ ॥ आशीर्भिरभि-

यथाहं प्रणमे विप्राननुकालं समाहितः ॥ तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥ ४२ ॥ ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ॥ अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ४३ ॥ एवं विश्राव्य भगवान्मुकुन्दो द्वारकौकसः ॥ पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे नृगोपाख्यानं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः ॥ सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥ परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च ॥ रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥ चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः ॥ इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥ गोपवृद्धांश्च विधिवद्यविष्ठैरभिवन्दितः ॥ यथावयो यथासख्यं यथासंबन्धमात्मनः ॥ ४ ॥ समुपेत्याथ गोपालान्हास्यहस्तग्रहादिभिः ॥ विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः ॥ ५ ॥ पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा ॥ कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ॥ ६ ॥ कच्चिन्नो बान्धवा राम सर्वे कुशलमासते ॥ कच्चित्स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥ दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ॥ निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः ॥ ८ ॥ गोप्यो हसन्त्यः पप्रच्छू रामसंदर्शनादृताः ॥ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥ कच्चित्स्मरति वा बन्धून्पितरं मातरं च सः ॥ ( अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ ) अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥ १० ॥ मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄरपि ॥ यदर्थे जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो ॥ ११ ॥ ॥

नन्दितो बभूव ॥ २ ॥ तदाह—चिरमिति ॥ ३ ॥ गोपवृद्धांश्च विधिवदभिवन्द्य यविष्ठैरभिवन्दितो बभूवेत्यर्थः । अपि च यथावय इति ॥ ४ ॥ ते सर्वे स्वेषु यादवेषु तं राममनामयमारोग्यं पप्रच्छुः । ते च तेन पृष्टा इति ॥ ५ ॥ कृष्णे कृष्णप्राप्त्यर्थं संन्यस्ताखिलराधसस्त्यक्तसर्वविषयाः ॥ ६ ॥ ७ ॥ ८ ॥ रामस्य संदर्शनेनादृताः सादराः ॥ ९ ॥ १० ॥ ११ ॥ ॥ ॥ ॥ ॥

१ अन्यथा यो न नमेत् । २ सर्वलोकानां पावनः सर्वान्पावयितुमित्यर्थः । अतो द्वारकौकस इति गीतोपदेशेऽर्जुनवदुपलक्षणमात्रम् । ३ संजुहन्तोऽपि पाठः । ४ नेत्रैर्नेत्रजैर्जलैरानन्दाश्रुभिः । ५ जह्मिमेत्यनेन सर्वासां वन एव प्रायो वासो गम्यते इति तोष० । ६ उत्तरश्लोकपूर्वार्धेन सहान्वयः ।

तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतः, तद्वाक्यविश्वासादिति चेत्,—ननु विश्वासः किमिति कृतस्तत्राहुः—कथं न्विति । वक्तृबहुत्वान्नानाविधानि वाक्यानि ॥१२॥ तत्रान्या ऊचुः—कथं नु गृह्णन्तीति । अन्या ऊचुः—गृह्णन्ति वा इति । चित्रकथस्य चित्रकथाकथनकोविदस्य। किंच सुन्दरं स्मितं यस्मिंस्तेनावलोकनेनोच्छ्वसितः क्षुभितो यः स्मरस्तेनातुराः ॥१३॥ अन्या ऊचुः—किं न इति। कालस्तावत्तस्य चास्माकं च यात्येव, किंतु तस्य सुखेन, अस्माकं तु दुःखेनेत्येतावानेव विशेष इति ध्वनितम् ॥१४॥१५॥ नानाविधेष्वनुनयेषु कोविदः ॥१६॥ मधुं चैत्रम् । माधवं वैशाखम् । गोपीनां रतिमिति श्रीकृष्णक्रीडासमयेऽनु-

ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः ॥ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥ १२ ॥ कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः ॥ गृह्णन्ति वै चित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥१३॥ किं नस्तत्कथया गोप्यः कथाः कथयतापराः ॥ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥ १४ ॥ इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् ॥ गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः ॥१५॥ संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयंगमैः ॥ सान्त्वयामास भगवान्नानानुनैयकोविदः ॥१६॥ द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ॥ रामः क्षपासु भगवान्गोपीनां रतिमावहन् ॥१७॥ पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना ॥ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥१८॥ वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् ॥ पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत् ॥ १९ ॥ तं गन्धं मधुधाराया वायुनोपहृतं बलः ॥ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ ॥२०॥ उपगीयमानचरितो वनिताभिर्हलायुधः ॥ वनेषु व्यचरत्क्षीबो मदविह्वललोचनः ॥ २१ ॥ स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया ॥ बिभ्रत्स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥ २२ ॥ स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ॥ निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ॥ अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥२३॥ पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥२४॥

त्पन्नानामतिवालानामन्याँसामित्यभियुक्तप्रसिद्धिः ॥ १७ ॥ पूर्णचन्द्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले । कौमुदीगन्धवायुना कुमुद्वतीनां गन्धवातेन सेविते । यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते । कुमुदगन्धवातेनेत्यर्थः ॥१८॥ वारुणी सुधया सहोत्पन्ना मदिरा ॥१९॥२०॥ क्षीबो मत्तः ॥२१॥ स्वेद एव प्रालेयं हिमं तेन भूषितम् ॥२२॥ मत्तोऽयमित्यनादृत्यानागतामापगां नदीम् ॥२३॥ आहुता आहूता यद्यस्मान्नागच्छसि तस्मात् । नेष्ये गमयिष्यामि ॥ २४ ॥

---

१ गृह्णन्ति श्रद्दधते। २ तादृशं शपथादियुतं 'न पारयेऽहं निरवद्यसंयुजां' इत्यादिरूपम्। ३ अनुनयः युष्माकमीदृशं रोदनादि श्रुत्वा स बहुतर दुःखं प्राप्स्यति, अतः शीघ्रमागन्तेत्यादिरूपः । ४ अलंकृत इति शेषः । ५ 'नेति' इति पाठे एषा नैतीति कुपित इत्यध्याहारेण योज्यम्। ६ वस्तुतस्तु—पापे निमित्ते लोकानां पापनाशार्थं स्वेच्छया बहुधागामिनीमित्यर्थः । ७ अन्यासां श्रीरामसङ्गार्थमेव रक्षितकौमाराणाम् । ८ शङ्खचूडबन्धनसमये क्रीडायां निर्दिष्टाभी रामप्रेयसीभिरिति चक्रवर्ती । बालबोधिनीकाराः श्रीमदाचार्यास्तु बलभद्रद्वारा भगवानेव तासां मनोरथं पूरितवानिति न कश्चिद्दोष इत्याहुः । ९ अनेन निषिद्धवारुणीभिन्नत्वमस्या व्यज्यते ।

चकिता कम्पिता ॥ २५ ॥ एकांशेन शेषाख्येन ॥ २६ ॥ २७ ॥ विजगाह अवगाहनं कृतवान् ॥ २८ ॥ उत्तीर्णाय निर्गतायासिताम्बरादीनि कान्तिर्ददौ । कान्तिर्लक्ष्मीः । यथोक्तं वैष्णवे—'वरुणप्रहिता चास्मै मालामम्लानपङ्कजाम् ॥ समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत ॥' इति। हरिवंशे च बलं प्रति लक्ष्मीवाक्यम्—'जातरूपमयं चैकं कुण्डलं वज्रभूषणम् ॥ आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम् ॥ देवेरा प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् ॥' इत्यादि ॥२९॥

एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ॥ उवाच चकिता वाचं पतिता पादयोर्नृप ॥२५॥ राम राम महाबाहो न जाने तव विक्रमम् ॥ यस्यैकांशेन विधृता जगती जगतः पते॥२६॥परं भावं भगवतो भगवन्मामजानतीम्॥मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सल॥२७॥ततो व्यमुञ्चद्यमुनां याचितो भगवान्बलः ॥ विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट्॥२८॥ कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे ॥ भूषणानि महार्हाणि ददौ कान्तिः शुभां स्रजम् ॥२९॥ वसित्वा वाससी नीले मालामामुच्य काञ्चनीम्॥ रेजे स्वलंकृतो लिप्तो माहेन्द्र इव वारणः॥३०॥अद्यापि दृश्यते राजन् यमुनाकृष्टवर्त्मना ॥ बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥३१॥ एवं सर्वा निशा याता एकेव रमतो व्रजे ॥ रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥३२॥ ॥ इति श्रीमद्भा० म० पु० द० उ० बलदेवविजये यमुनाकर्षणं नाम पञ्चषष्टितमोऽध्यायः ॥६५॥

॥ श्रीशुक उवाच ॥ नन्दव्रजं गते रामे करूषाधिपतिर्नृप ॥ वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १ ॥ त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः ॥ इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥ २ ॥ दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने ॥ द्वारकायां यथा बालो नृपो बालकृतोऽबुधः ॥ ३ ॥ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ॥ कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥४॥ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः॥ भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥५॥

वसित्वा परिधाय । आमुच्य कण्ठे निधाय । चन्दनादिभिरालिप्तः ॥३०॥३१॥ एकेव एकैव निशा यथा तथा । माधुर्यैर्विलासैः ॥ ३२ ॥ ॥ इति श्रीमद्भा० म०पु० दशमस्कन्धे उत्तरार्धे भा०दी० टीकायां पञ्चषष्टितमोऽध्यायः ॥६५॥ ॥ षड्युक्षष्टितमे काशीं गत्वाऽहन् पौण्ड्रकं हरिः ॥ तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥ १ ॥ १ ॥ प्रस्तोभितः प्रोत्साहितः स्तुत्या । बालैरज्ञैः ॥ २ ॥ बालकृतो नृपो बालैर्नृपत्वेन क्रीडायां परिकल्पितः ॥ ३ ॥ ४ ॥ ५ ॥ ॥

१इय समुद्रपत्नी छायारूपा कालिन्दी ज्ञेया । भगवत्पत्नीत्वेन पूर्वमुक्ता तु देवतारूपा मुख्या कालिन्दीति तोष० । २उपलक्षितेति शेषः । ३ करूषाधिपतिः पौण्ड्रकः । ४ न केवलं मेने किंतु दूतं च प्राहिणोदित्यतिमन्दत्वकौतुकात्पुनरुक्तिरिति तोष० । तस्य दुर्बुद्धित्वेऽतिविस्मयात्पुनरुक्तिरिति चक्रवर्ती । ५गत्यर्थकर्मत्वाच्चतुर्थी । कृष्णं गतीत्यर्थः । ६अधिक्षेपार्थः स्पष्टः । वास्तवार्थस्तु—न चाहं भूतानामनुकम्पार्थं वासुदेवोऽवतीर्णः । यस्मादपरः श्रेष्ठः । किंत्वेकस्त्वमेवावतीर्णः । अतस्तव या मयि मिथ्याऽभिधा तां त्यज त्याजयेत्यर्थः । 'त्याजयिष्येऽभिधानं मे' इत्यादिप्रतिवचनात् । तथा मौढ्याद्धेतोर्यान्यसच्चिह्नानि अस्माभिः स्वास्मिँल्लक्षणतया कल्पितानि चक्रादीनि तद्रूपाणि त्वं नित्यमेव धरसि अतस्तानि त्यक्त्वा मयि प्रक्षिप्य शरणं मुक्तिदत्वादाश्रयः सन् मामेहि स्वीकुर्वित्यर्थः । ७ स च भूतानामनुकम्पार्थमवतीर्णोऽहमेव न त्वं । ससैन्यं राजादिवहुत्वात् । यद्वा भूतानुकम्पार्थं त्यज । अन्यथा आवयोर्युद्धे बहुवधः स्यादिति भावः ।

॥ ६ ॥ ७ ॥ हे मूढ, उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि । यैः सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः । यद्वा यैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवं श्लाघसे तान्युत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः ॥ ८ ॥ मां शरणमेहीत्यस्योत्तरम्—मुखमिति । वटाः कङ्कादिवत्पक्षिविशेषाः । तत्र तदा शुनां शरणमाश्रयो भवितासि ॥९॥ काशीमिति पौण्ड्रकस्यापि तदा मित्रपुरेऽवस्थानात् ॥ १० ॥ ११ ॥ पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२ ॥ १३ ॥ गरुडः कृत्रिमो ध्वजे यस्य तम् । अमूल्योऽनर्घ्यो

यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत ॥ त्यक्त्वैहि मां त्वं शरणं नो चेद्देहि ममाहवम् ॥६॥ ॥ श्रीशुक उवाच ॥ कत्थनं[1] तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः ॥ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥ ७ ॥ उवाच दूतं भगवान्परिहासकथामनु ॥ उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥ मुखं तदपिधायाज्ञ कङ्कगृध्रवटैर्वृतः ॥ शयिष्यसे हतस्तत्र भविता[2] शरणं शुनाम् ॥ ९ ॥ इति दूतस्तदाक्षेपं[3] स्वामिने सर्वमाहरत् ॥ कृष्णोऽपि रथमास्थाय काशीमुप[4] जगाम ह ॥ १० ॥ पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः ॥ अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥ ११ ॥ तस्य काशिपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप ॥ अक्षौहिणीभिस्तिसृभिरपश्यत्पौण्ड्रकं हरिः ॥ १२ ॥ शङ्खार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम्[5] ॥ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३ ॥ कौशेयवाससी पीते वसानं गरुडध्वजम् ॥ अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम् ॥ १४ ॥ दृष्ट्वा तमात्मनस्तुल्यवेषं[6] कृत्रिममास्थितम् ॥ यथा नटं रङ्गगतं विजहास भृशं हरिः ॥ १५ ॥ शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ॥ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥ १६ ॥ कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ॥ गदासिचक्रेषुभिरार्दयद्भृशं यथा युगान्ते हुतभुक् पृथक्प्रजाः ॥ १७ ॥ आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणावखण्डितैः ॥ बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८ ॥ अथाह पौण्ड्रकं शौरिर्भो भो पौण्ड्रक यद्भवान्[7] ॥ दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते[8] ॥ १९ ॥ त्याजयिष्ये[9]ऽभिधानं मे यत्त्वयाऽज्ञ[10] मृषा धृतम् ॥ व्रजामि शरणं तेऽद्य[11] यदि नेच्छामि संयुगम् ॥ २० ॥ ॥ ॥

मौलिराभरणं च यस्य तम् ॥ १४ ॥ १५ ॥ १६ ॥ गजस्यन्दनादिचतुरङ्गबलमर्दितवान् । पृथक्प्रजाश्चतुर्विधं भूतग्रामं यथा युगान्ताग्निरिति ॥ १७ ॥ आयोधनं रणस्थानम् । अरिणा चक्रेण । चितमाकीर्णम् । आक्रीडनमिव कल्पान्तरुद्रस्य क्रीडास्थानमिव ॥ १८ ॥ १९ ॥ २० ॥ ॥ ॥

१ कत्थनमात्मश्लाघनम् । २ भवितेति तृजन्तं त्वं भविष्यसीत्यर्थः । ३ 'तमाक्षेपं' इति पाठः । ४ काशीमुप काशीसमीपे जगाम । ५ शङ्खादिभिश्चतुर्भुजेषु कक्षालम्बिखड्गशार्ङ्गाभ्या वक्षसि श्रीवत्सेन चोपलक्षितं । आदिपदात्पद्मं चतुर्भुजत्वादिकं तु महादेववरेणेति पाद्मे । ६ 'आत्मना तुल्य' इति पाठः । ७ यत् यान्यस्त्राणि त्याज्यत्वेनाह भवांस्तानीत्यर्थः । ८ ते तुभ्यं त्वद्वधार्थमित्यर्थः । ९ त्याजयिष्य इति धातूनामन्तर्भूतण्यर्थानामपि प्रयोगसत्त्वात्त्यजेत्स्य तथा प्रयोगसंभवाद्भूतत्वात्क्यानुसारेणैव करिष्यामीति भावः इति तोप० । १० 'त्वयाद्य' इति पाठः । ११ ते त्वया सह ।

गिरेः शृङ्गं यथेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ प्रथमं किमिदमिति पश्चाद्वक्त्रमिति विभाव्य कस्य चेति संशयिरे संशयं कृतवन्त इति ॥२५॥२६॥ संस्थाविधिमुत्तरक्रियाम् । अपचितिं निष्कृतिम् ॥ २७ ॥ आत्मनाभिसंधाय बुद्ध्या व्यवस्य । सुदक्षिणोऽत्युदारः ॥ २८ ॥ वरमदात् । वृणीष्वेत्युक्तवानित्यर्थः ॥ २९ ॥ ऋत्विजमृत्विजमिव स्वनियोगकारिणम् । 'यज्ञस्य देवमृत्विजम्' इति श्रुतेः ॥३०॥ अब्रह्मण्ये प्रयोजित इति कृष्णे प्रयोजिते विपरीतो भविष्यतीति सूचितम् ।

इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् ॥ शिरोऽवृश्चद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ २१ ॥ तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः ॥ न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥ २२ ॥ एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः ॥ द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥ २३ ॥ स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः ॥ बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवत् ॥ २४ ॥ शिरः पतितमालोक्य राजद्वारे सकुण्डलम् ॥ किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥ २५ ॥ राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः ॥ पौराश्च हा हता राजन्नाथ नाथेति प्रारुदन् ॥ २६ ॥ सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ॥ निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७ ॥ इत्यात्मनाऽभिसंधाय सोपाध्यायो महेश्वरम् ॥ सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥ प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद्भवः ॥ पितृहन्तृवधोपायं स वव्रे वरमीप्सितम् ॥ २९ ॥ दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् ॥ अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ३० ॥ साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः ॥ इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन्व्रती ॥ ३१ ॥ ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः ॥ तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ३२ ॥ दंष्ट्रोग्रभ्रुकुटीदण्डकठोरास्यः स्वजिह्वया ॥ आलिहन्सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलत् ॥ ३३ ॥ पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम् ॥ सोऽभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥ ३४ ॥ तमाभिचारदहनमायान्तं द्वारकौकसः ॥ विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥ ३५ ॥ अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः ॥ त्राहि त्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥ ३६ ॥ ॥

अभिचरन्नभिचारं कुर्वन् । व्रती गृहीतनियमः ॥ ३१ ॥ तप्तं ताम्रमिव शिखा श्मश्रूणि च यस्य सः । अङ्गारोद्गारीणि लोचनानि यस्य सः ॥ ३२ ॥ दंष्ट्राभिश्चोग्रैर्भ्रुकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः । त्रिशिखं त्रिशूलम् ॥ ३३ ॥ दिशः प्रदहन् ॥ ३४ ॥ ३५ ॥ त्राहि त्राहीत्याहुरिति शेषः ॥ ३६ ॥ ॥ 

१ गिरेः शिरो यथा । २ तन्मयः पेशस्कारीहृतकीटवदिति भावः । ३ हा हताः स्मेति शेषः । ४ संस्थाविधिं और्ध्वदेहिकीं क्रियामित्यर्थः । ५ समाधिना एकाग्रमनसा । ६ अविमुक्ते काश्याम् । 'अविमुक्तः' इति पाठे अविमुक्तक्षेत्राधीशः । ७ प्रमथैर्भूतगणैः । ८ अभिचारभवं वह्निम । ९ वह्नेस्त्राहीत्यार्पे, यद्वा त्राहि त्रातेवाचर । रक्षकवदाचरणेऽप्यग्निः शाम्येदिति भावः ।

अहमवितास्मि रक्षिष्यामीति ॥ ३७ ॥ ३८ ॥ रोदसी च प्रकाशयदिति शेषः । यद्वा स्वतेजसा खादीन्प्रति जाज्वल्यमानमत्यर्थं प्रकाशमानमित्यर्थः । आर्दयद् पीडयत् ॥ ३९ ॥ अर्दितोऽग्निर्यत्कृतवांस्तदाह—कृत्यानल इति । सहर्त्विग्भिर्जनैश्च वर्तमानम् । अभिचर्यते मार्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥ अट्टादिसहिताम् । अट्टा मञ्चाः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥
सप्तषष्टितमे रामो गिरौ रैवतके मदात् ॥ स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं खलम् ॥ १ ॥ कालिन्दीविदारणानन्तरं रामचरितं द्विविदवधादिसङ्गतमप्य-

श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम् ॥ शरण्यः संप्रहस्याह मा भैष्टेत्यवितास्म्यहम् ॥३७॥ सर्वस्यान्तर्बहिः-
साक्षी कृत्यां माहेश्वरीं विभुः ॥ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥३८॥ तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्य-
मानं प्रलयानलप्रभम् ॥ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रमथाग्निमार्दयत् ॥३९॥ कृत्यानलः प्रतिहतः
[1]सरथाङ्गपाणेरस्त्रौजसा नृप स भग्नमुखो निवृत्तः ॥ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभि-
चारः ॥४०॥ चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम् ॥ सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्य-
श्वरथान्न[2]शालाम् ॥४१॥ दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् ॥ भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः
॥४२॥ य एनं श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम् ॥ समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते ॥४३॥ इति श्रीमद्भा०
म०पु०द०उ० पौण्ड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥६६॥ ॥ राजोवाच ॥ भूयोऽहं श्रोतुमिच्छामि [3]रामस्या-
द्भुतकर्मणः ॥ अनन्तस्याप्रमेयस्य यद[4]न्यत्कृतवान्प्रभुः ॥१॥ ॥ श्रीशुक उवाच ॥ नरकस्य सखा कश्चिद्द्विविदो नाम
वानरः ॥ सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥२॥ सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम् ॥ पुरग्रा-
माकरान्घोषानदहद्वह्निमुत्सृजन् ॥३॥ क्वचित्स शैलानुत्पाट्य तैर्देशान्समचूर्णयत् ॥ आनर्तान्सुतरामेव यत्रास्ते मित्रहा
हरिः ॥ ४ ॥ क्वचित्समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ॥ देशान्नागायुतप्राणो [5]वेलाकूलानमज्जयत् ॥ ५ ॥ ॥

नुक्त्वा तत्पूर्वभावित्वेन पौण्ड्रकवधादि निरूप्येदानीं तदेव प्रस्तौति—भूयोऽहमित्यादिना । रामचरितश्रवणेच्छायामद्भुतकर्मत्वं हेतुस्तत्र चानन्तत्वं तत्राप्यप्रमेयत्वमिति ॥ १ ॥ नरकस्य सखेति हरिणा वैरे कारणम् । सुग्रीवसचिव इति तस्य मन्त्रबलम् । मैन्दस्य भ्रातेति रामायणेऽतिप्रसिद्धत्वेन वीर्याधिक्यमुक्तमिति ॥ २ ॥ सख्युर्नरकस्यापचितिमानृण्यम् । राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहदिति ॥ ३ ॥ किंच क्वचिदिति । कदाचित्स द्विविदः मित्रहा सखिहन्ता ॥ ४ ॥ तस्य समुद्रस्य जलं बाहुभ्यामुत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् प्लावयामासेति ॥ ५ ॥ ॥ ॥

१ सरथाङ्गः पाणिर्यस्य । २ 'शालिनीम्' इति पाठः । ३ चरितमिति शेषः । ४ अन्यत्कालिन्दीविदारणादन्यत् तद्ब्रूहीति शेषः । ५ वेलाकूलानित्यस्य लाक्षणिकोऽयमर्थः । पुंस्त्वमार्षमिति चक्र० । 'वेलाकूले न्यमज्जयत् ।' इति पाठे तत्र वर्तमानानिति शेषः ।

आश्रमस्थान्वनस्पतीन् भङ्क्त्वा आहवनीयाद्यग्निषु मूत्रादि कृतवान् ॥ ६ ॥ अप्यधात्पिदधे । पेशस्कारी भ्रमरः ॥ ७ ॥ ८ ॥ ९ ॥ प्रभिन्नं मत्तम् ॥ १० ॥ ॥ ११ ॥ जात्या स्वभावेनैव चापलं यासां ताः ॥ १२ ॥ हेलयामासावजज्ञे । निरीक्षतो निरीक्षमाणस्य तमनादृत्येत्यर्थः ॥ १३ ॥ १४ ॥ आस्फालयद्यो-

आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान् खलः ॥६॥ पुरुषान् योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ॥ निक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीटकम् ॥७॥ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः ॥ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥८॥ तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम् ॥ सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥९॥ गायन्तं वारुणीं पीत्वा मदविह्वललोचनम् ॥ विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥१०॥ दुष्टः शाखामृगः शाखामारूढः कम्पयन्द्रुमान् ॥ चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ॥११॥ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः ॥ हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥१२॥ ता हेलयामास कपिर्भ्रूक्षेपैः संमुखादिभिः ॥ दर्शयन्स्वगुदं तासां रामस्य च निरीक्षतः ॥१३॥ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ॥ स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ॥१४॥ गृहीत्वा हेलयामास धूर्तस्तं कोपयन्हसन् ॥ निर्भिद्य कलशं दुष्टो वासांस्यास्फालयद्बलम् ॥ १५ ॥ कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः ॥ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ १६ ॥ क्रुद्धो मुसलमादत्त हलं चारिजिघांसया ॥ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ १७ ॥ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥ तं तु संकर्षणो मूर्ध्नि पतन्तमचलो यथा ॥१८॥ प्रतिजग्राह बलवान्सुनन्देनाहनच्च तम् ॥ मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ १९ ॥ गिरिर्यथा गैरिकया प्रहारं नानुचिन्तयन् ॥ पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ २० ॥ तेनाहनत्सुसंक्रुद्धस्तं बलः शतधाच्छिनत् ॥ ततोऽन्येन रुषा जघ्ने तं चापि शतधाच्छिनत् ॥ २१ ॥ एवं युध्यन्भगवता भग्ने भग्ने पुनः पुनः ॥ आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम् ॥ २२ ॥ ॥

षितां वासांस्याकृष्य पाटितवान् ॥ १५ ॥ विप्रचक्रे एवमपकृतवान् ॥ १६ ॥ शालं वृक्षम् ॥ १७ ॥ १८ ॥ सुनन्देन मुसलेनाहनत् । अहन्नित्यर्थः । तं वानरम् । मस्तिष्कं मस्तकावयवविशेषः ॥ १९ ॥ गैरिकया लोहितधातुना । नानुचिन्तयन्नगणयन् ॥ २० ॥ २१ ॥ २२ ॥ ॥ ॥

१ विप्रकुर्वन् पीडयन् । २ आत्मानं बृहत्तया पराक्रमितया च दर्शयन् । ३ सम्मुखस्थितिगतिमूत्रणादिभिरिति चक्र० । ४ कोपयन् कोपयितुम् । ५ "धृष्टो वासांसि' इति पाठः । योषितां वासांस्याकृष्य पाटितवानित्यर्थः । कदर्थीकृत्य खेदयित्वा । ६ विप्रचक्रेऽपकृतवान् । ७ तं वृक्षम् ।

॥२३॥ अरूरुजत् ताडयामास॥ २४॥यादवेन्द्रः संकर्षणः क्रुद्धः सन् । जत्रौ कण्ठबाहुमूले ॥२५॥ टङ्काः सतोयविवराणि तत्सहितः ॥२६॥२७॥ जगतो व्यतिकरं नाशमावहतीति तथा तम् ॥२८॥ ॥इति श्रीमद्भा०म०पु०द० उत्तरार्धे भा०दी० टीकायां सप्तषष्टितमोऽध्यायः ॥६७॥ ॥ अष्टषष्टितमे साम्बे निरुद्धे कौरवैर्युधि । तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥१॥ रामचरित्रान्तरं निरूपयितुमाह—दुर्योधनसुतामिति। समितिंजयः संग्रामजित् ॥१॥२॥ नोऽस्माकं महीमस्माभिर्दे-

ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः ॥ तत्सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥ स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः ॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥ २४ ॥ यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले ॥ जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन् ॥ २५ ॥ चकम्पे तेन पतता सटङ्कः सवनस्पतिः ॥ पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि ॥ २६ ॥ जयशब्दो नमःशब्दः साधु साध्विति चाम्बरे ॥ सुरसिद्धमुनीन्द्राणामासीत्कुसुमवर्षिणाम् ॥ २७ ॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ॥ संस्तूयमानो भगवाञ्जनैः स्वपुरमाविशत् ॥ २८ ॥

॥इति श्रीमद्भा० म० पु० द० उत्तरार्धे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

॥ श्रीशुक उवाच ॥ दुर्योधनसुतां राजँल्लक्ष्मणां समितिंजयः ॥ स्वयंवरस्थामहरत्साम्बो जाम्बवतीसुतः ॥ १ ॥ कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ॥ कदर्थीकृत्य नः कन्यामकामामहरद्बलात् ॥ २ ॥ बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः ॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥३॥ निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः ॥ भग्नदर्पाः शमं यान्ति प्राणा इव सुसंयताः ॥ ४ ॥ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ॥ साम्बमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः ॥ ५ ॥ दृष्ट्वानुधावतः साम्बो धार्तराष्ट्रान्महारथः ॥ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः ॥ आसाद्य धन्विनो बाणैः कर्णाग्रण्यः समाकिरन् ॥ ७ ॥ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः ॥ नामृष्यत्तदचिन्त्यार्भः सिंहः क्षुद्रमृगैरिव ॥ ८ ॥ विस्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः ॥ कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक् ॥ ९ ॥ ॥ ॥

त्ताम् । न ते भूपतय इति भावः ॥३॥ यान्ति यास्यन्ति। प्राणा इन्द्रियाणीव । सुसंयताः प्राणायामादिभिर्दमिताः ॥४॥ कुरुवृद्धो भीष्मस्तेनानुमोदितास्तत्सहिताः षडेते इत्यर्थः ॥ ५ ॥ ६ ॥ कर्णोऽग्रणीर्येषां ते ॥ ७ ॥ नामृष्यत् असहत् । अचिन्त्यस्य भगवतोऽर्भोऽर्भकः । अचिन्त्यश्चासावर्भश्चेति वा ॥ ८ ॥ ९ ॥ ॥

१ 'हृतो यदैव प्रद्युम्नः शंबरेणात्मघातिना। मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यामजायत ॥' इति हरिवंशात् प्रद्युम्नसमवयस्कत्वात्साम्बविवाहं पूर्ववृत्तमपि रामविक्रमप्रसङ्गादत्राह— २ ततो वृक्षाभावे सति । ३ मुष्टीकृत्य दृढबद्धकराग्रौ कृत्वा । मुष्टिमन्तौ कृत्वेति चक्र० । ४ अभ्यर्दयदित्याडभाव आर्षः । ५ टङ्काः सतोयाः पाषाणमया जलाधारास्तत्सहितः । ६ नोऽस्माकं महीं दत्तां अस्माभिरित्यर्थोऽज्ञेयम् । ७ शलादयस्त्रयः सोमदत्तपुत्राः । यज्ञकेतुर्भूरिश्रवाः । ८ 'सोऽतिविद्धः' इति पाठः ।

तत्प्रपञ्चयति—चतुर्भिरिति। चतुर्भिश्चतुर इत्यत्र वीप्सानुसन्धेया। तत्कर्म ते संमानितवन्तः ॥ १० ॥ ११ ॥ स्वस्य दुर्योधनस्य कन्यां च नीत्वेति शेषः ॥१२॥१३॥ यतः कलिं नैच्छदतः सान्त्वयित्वा जगामेति ॥१४॥१५॥ धृतराष्ट्रं प्रति बुभुत्सयेति। अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥ विधिवदभिवन्द्य ॥१७॥ तमुद्धवमर्चयित्वा सत्कृत्य। मङ्गलपाणय उपायनहस्ताः ॥१८॥ वृद्धा अपि प्रणेमुः ॥१९॥२०॥२१॥ यद्यूयमित्युग्रसेनवाक्यम्। मृष्ये सहे। अथाशु तमानीय

चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् ॥ रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् ॥ १० ॥ तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ॥ एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ ११ ॥ तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि ॥ कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ १२ ॥ तच्छ्रुत्वा नारदोक्तेन राजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः[1] ॥ १३ ॥ सान्त्वयित्वा तु तान्रामः संनद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणां वृष्णीनां कलिं कलिमलापहः ॥ १४ ॥ जगाम हास्तिनपुरं रथेनादित्यवर्चसा ॥ ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥ १५ ॥ गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः ॥ उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया ॥ १६ ॥ सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् ॥ दुर्योधनं च विधिवद्राममागतमब्रवीत् ॥ १७ ॥ तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् ॥ तमर्चयित्वाऽभिययुः सर्वे मङ्गलपाणयः ॥ १८ ॥ तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन् ॥ तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ १९ ॥ बन्धून्कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ॥ परस्परमथो रामो बभाषेऽविक्लवं[2] वचः ॥ २० ॥ उग्रसेनः क्षितीशेशो यद्व आज्ञापयत्प्रभुः ॥ तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलम्बितम् ॥ २१ ॥ यद्यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ॥ अबध्नीताथ तन्मृष्ये बन्धूनामैक्यकाम्यया ॥ २२ ॥ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः ॥ कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः[3] ॥ २३ ॥ अहो महच्चित्रमिदं कालगत्या[4] दुरत्यया ॥ आरुरुक्षत्युपानद्वै शिरो मुकुटसेवितम् ॥ २४ ॥ एते यौनेन संबद्धाः[5] सहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २५ ॥ ॥ ॥

समर्पयतेति शेषः ॥२२॥ वीर्यं प्रभावः शौर्यमुत्साहो बलं सत्त्वं तैरुन्नद्धमुच्छृङ्खलम्। कथम्। आत्मनः शक्तेः सममनुरूपम् ॥ २३ ॥ उपानत्पादरक्षा शिर आरोढुमिच्छतीति हीना अस्मानाज्ञापयन्तीत्यर्थः ॥ २४ ॥ अस्यैव प्रपञ्चः—एत इति चतुर्भिः। यौनेन पृथाया विवाहेन ॥ २५ ॥ ॥ ॥

१ उग्रसेनप्रेरिता नतु भगवता। ज्येष्ठसन्निधौ स्वपुत्रार्थे स्वयमुद्यमानौचित्यात् अग्रजाशयज्ञानाच। २ अविक्लवं निर्भयम्। ३ शुक्रोक्तिरियम्। ४ कालगत्या कालगतिः। छान्दसस्तृतीयाया डादेशो लुग्वा। दुरत्यया दुर्लङ्घ्या दुरतिक्रमणीयेत्यर्थः। यद्वा कालगत्या हेतुना दुरत्ययोपानत् पादरक्षेति योज्यम्। ५ संनद्धाः सबन्धं प्रापिताः।

किंच चामरव्यजने इति । भुञ्जन्त्युपभुञ्जत इत्यर्थः । अस्मदुपेक्षयाऽस्माकमनाग्रहेण ॥ २६ ॥ अलमिति । अतःपरं तान्यपहरिष्याम इत्यर्थः ॥ २७ ॥ अवरु-
न्धीत स्वीकुर्यात् । उरणो मेषः ॥२८॥ जन्मना बन्धुभिश्चोपलक्षितया श्रिया उन्नद्ध उत्कटो मदो येषां ते । दुर्वाच्यं परुषं वाक्यम् । असभ्या दुर्जनाः ॥२९॥
॥ ३० ॥ नानाधनाभिजनादिमदैरुन्नद्धास्तेषां दण्ड एव प्रथमः प्रकर्षेण शमयतीति तथा । यथा लगुडो दण्डः ॥३१॥३२॥ दुर्भाषान् अवाच्यशब्दान् ॥ ३३ ॥

[1]चामरव्यजने शङ्खमातपत्रं च पाण्डुरम् ॥ किरीटमासनं शय्यां भुञ्जन्त्यस्मदुपेक्षया ॥ २६ ॥ अलं यदूनां नरदेव-
लाञ्छनैर्दातुः प्रतीपैः [2]फणिनामिवामृतम् ॥ [3]येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥ २७ ॥
कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणा[4]र्जुनादिभिः ॥ अदत्तमवरुन्धीत सिंहग्रस्तमिवोरणः ॥ २८ ॥ ॥ श्रीशुक
उवाच ॥ जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ ॥ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥ २९ ॥ दृष्ट्वा
कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि [5]चाच्युतः ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः [6]प्रहसन्मुहुः ॥ ३० ॥ नूनं नाना-
मदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः ॥ तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ॥ ३१ ॥ अहो यदून्सुसंर-
ब्धान्कृष्णं च कुपितं शनैः ॥ सान्त्वयित्वाहमेतेषां शममिच्छन्निहागतः ॥ ३२ ॥ त इमे मन्दमतयः कलहाभि-
रताः खलाः ॥ [7]तं मामवज्ञाय [8]मुहुर्दुर्भाषान्मानिनोऽब्रुवन् ॥ ३३ ॥ नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः ॥
शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३४ ॥ सुधर्माक्रम्यते येन पारिजातोऽमराङ्घ्रिपः ॥ आनीय भुज्यते
सोऽसौ न किलाध्यासनार्हणः ॥ ३५ ॥ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ स नार्हति किल श्रीशो
नरदेवपरिच्छदान् ॥ ३६ ॥ यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्मा भवो-
ऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य [9]नृपासनं क्व ॥ ३७ ॥ भुञ्जते कुरुभिर्दत्तं भूखण्डं वृष्णयः
किल ॥ उपानहः किल वयं स्वयं तु कुरवः शिरः ॥ ३८ ॥ ॥ ॥

दुर्भाषणमनुसरति पङ्क्तिः—नोग्रसेन इति । विभुराज्ञापयितुं समर्थः ॥ ३४ ॥ अहो धृष्टा श्रीकृष्णमप्यधिक्षिपन्तीति कुपित आह—सुधर्मेत्यादिभिस्त्रिभिः
॥ ३५ ॥ ३६ ॥ मौल्युत्तमैर्मौलियुक्तैरुत्तमाङ्गैः, उत्तमैर्मौलिभिरिति वा । उपासितानि तीर्थानि यैर्योगिभिस्तेषामपि तीर्थम् । यद्वा उपासितं सर्वैः सेवितं
तीर्थं गङ्गा तस्यास्तीर्थं तीर्थत्वनिमित्तम् । किंच ब्रह्मा भवः श्रीश्चाहमपि उद्वहेम । कथंभूता वयम् । यस्य कलाया अंशस्य कला अंशाः ॥ ३७ ॥ ३८ ॥

१ चामररूपे व्यजने । २ फणिनां दत्तममृतं यथा दातुः प्रतीपं तथा प्रतीपैरित्यर्थः । ३ 'ये नः प्रसाद' इति पाठः । ४ अर्जुनस्य स्वपक्षत्वाभावेऽप्युक्तिः स्वगौरवार्थम् । ५ अच्युतो
रामः । ६ 'स्म हसन्' इति पाठः । ७ 'ये माम्' इति पाठः । ८ 'दुर्मर्षान्' इति पाठे दुर्वाच्यशब्दान् । ९ नृपासनं क्व । कुत्रापि नास्तीति क्रोधोपहासः । यद्वा क्व अतिनिकृष्टमेवेत्यर्थः ।

मत्तानामिव मद्यादिना । रूक्षाः परुषाः । अनुशासिता स्वयं दण्डधरः सन् ॥ ३९ ॥ ४० ॥ लाङ्गलाग्रेण दक्षिणतः प्राकारमूले निखातेन । उद्विदार्य उत्पाट्य ॥४१॥४२॥ जिजीविषव इत्यक्षराधिक्यं सोढव्यम् ॥४३॥ मूढानां प्रभावानभिज्ञानाम् । अतिक्रममपराधम् ॥४४॥४५॥ शेषे शयनं करोषि । शेषपर्यङ्के परिशिष्यमाणो यः स च त्वमेवेति वा ॥४६॥ अस्मासु कोपश्च तवायमुचित एवेत्याहुः—कोपस्त इति। स्थितिपालने तत्परस्तात्पर्यवान्कोपः । पाठान्तरे संबोधनम्

अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ॥ असंबद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥ ३९ ॥ अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥४०॥ लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥ ४१ ॥ जलयानमिवाघूर्णं गङ्गायां नगरं पतत् ॥ आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥४२॥ तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः ॥ सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम् ॥४३॥ राम रामाखिलाधार प्रभावं न विदाम ते ॥ मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम् ॥ ४४ ॥ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ॥ लोकान्क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥ ४५ ॥ त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ॥ अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६ ॥ कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ॥ बिभ्रतो भगवन्सत्त्वं स्थितिपालनतत्परः ॥ ४७ ॥ नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः ॥४८॥ ॥ श्रीशुक उवाच ॥ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥ ४९ ॥ दुर्योधनः पारिबर्हं कुञ्जरान्षष्टिहायनान् ॥ ददौ च द्वादशशतान्ययुतानि तुरङ्गमान् ॥ ५० ॥ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ॥ दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥५१॥ प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ॥ ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनन्दितः ॥ ५२ ॥ ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बन्धूननुरक्तचेतसः ॥ शशंस सर्वं यदुपुङ्गवानां मध्येसभायां कुरुषु स्वचेष्टितम् ॥ ५३ ॥ अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गङ्गायामनु दृश्यते ॥५४॥ इति श्रीम०म०उ० हास्तिनपुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥६८॥

॥४७॥ विश्वं कर्म कृत्यं यस्य स त्वमिति संबोधनम् ॥४८॥ वेपमानमयनं पुरं येषां तैः ॥४९॥ तुरङ्गमांश्च द्वादशायुतानि ॥५०॥५१॥ सुहृद्भिः कौरवैः ॥५२॥ मध्येसभायां सभामध्ये ॥ ५३ ॥ ५४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥

१ सोढव्यमार्षत्वात् । २ तत्परेति विसर्गरहिते । ३ इति एवं वदन् । ४ विचकर्ष पातयितुमारभत । ५ 'निजाश्रयः' इति पाठः । ६ 'ते खलु' इति पाठः । ७ 'तत्पर' इति पाठे संबोधनम् । ८ अनु निरन्तरम् ।

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम् ॥ कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥ १ ॥ १ ॥ दिदृक्षामभिनयेनाह—चित्रमिति । द्व्यष्टसहस्रस्त्री- रुदावहत्परिणीतवान् ॥ २ ॥ तां द्वारवतीमनुवर्णयति—पुष्पितेति सार्धत्रयेण । पुष्पितेषूपवनेष्वारामेषूद्यानेषु च द्विजानामलीनां च कुलानि तैर्नादिताम् ॥ ३ ॥ छुरितेषु व्याप्तेषु ॥ ४ ॥ महामरकतैः प्रख्यायन्ते प्रकाशन्त इति तथा तैः । स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥ ५ ॥ पतन्त्यः प्रचलन्त्यः पताका येषु तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥ ६ ॥ तस्यां द्वारकायाम् । सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम् । षोडशभिः सद्मसहस्रैः समलंकृतं हरेरन्तःपुरं

॥ श्रीशुक उवाच ॥ नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ॥ कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ १ ॥
चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ॥ गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥ २ ॥ इत्युत्सुको द्वारवतीं देव-
र्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३ ॥ उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः ॥ छुरि-
तेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ४ ॥ प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ॥ महामरकतप्रख्यैः स्वर्ण-
रत्नपरिच्छदैः ॥ ५ ॥ विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ॥ संसिक्तमार्गाङ्गणवीथिदेहलीं
पतत्पताकाध्वजवारितातपाम् ॥ ६ ॥ तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ॥ हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन
दर्शितम् ॥ ७ ॥ तत्र षोडशभिः सद्मसहस्रैः समलंकृतम् ॥ विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥
विष्टब्धं विद्रुमस्तम्भैर्वैदूर्यफलकोत्तमैः ॥ इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥ ९ ॥ वितानैर्निर्मितैस्त्वष्ट्रा
मुक्तादामविलम्बिभिः ॥ दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥ दासीभिर्निष्ककण्ठीभिः सुवासोभिरलंकृतम् ॥
पुम्भिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ ११ ॥ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिख-
ण्डिनोऽङ्ग ॥ नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्निर्यातमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १२ ॥ ॥ ॥

विवेश । तत्र च तस्य शौरेः पत्नीनां भवनेष्वेकतमं विवेशेत्यन्वयः । यत्र च स्वकौशलं त्वष्ट्रा दर्शितमित्यन्तःपुरभवनयोर्विशेषणम् ॥ ७ ॥ ८ ॥ तदनुवर्णयति चतुर्भिः—विष्टब्धमिति । विद्रुमस्तम्भैर्विष्टब्धं विधृतम् । वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयणानि छादनानि तैरिन्द्रनीलमयैः कुड्यादिभिश्चोपलक्षितम् जगत्या भूमिकया चेन्द्रनीलमय्या । न हता त्विड् यस्यास्तया ॥ ९ ॥ मुक्तादाम्नां विलम्बा विविधानि लम्बनानि विद्यन्ते येषु तैः । मण्युत्तमैः परिष्कृतै- र्भूषितैः ॥ १० ॥ ११ ॥ ईक्ष्य समीक्ष्य । घनो मेघोऽयमिति बुद्धिर्येषां ते ॥ १२ ॥ ॥ ॥ ॥

१ नरकवधसमनन्तरमेव षोडशसहस्रान्विवाहाञ्श्रुत्वा नारदागमन प्रसक्तानुपक्तचरितवर्णनासक्ततया तत्रानुक्तं तदिदानीं प्रस्तौति नरकमिति तोष० । २ तत्तस्य वैभवं दिदृक्षुर- भूदिति शेषः । ३ इन्दीवर नीलं, अम्भोजं विविधवर्णं, कह्लार सौगन्धिकं, कुमुदं श्वेतं, उत्पलं रक्तं इति कमलजातयः ४ कूजिता कारितकूजनाम् । ५ रथ्या राजमार्गाः, पन्थानो- ऽन्यमार्गाः । ६ वीथयो गृहान्तश्चत्वराणि । ७ पुंभिर्दासैः । ८ अक्षैर्गवाक्षमार्गैः ।

अनुसवं सर्वकालम् । आत्मना समानानि गुणरूपवयांसि सुवेषोऽलंकाराश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह ॥१३॥ श्रियो रुक्मिण्याः पर्यङ्कतः । अवीविशदुपवेशयामास ॥ १४ ॥ अविभ्रदबिभः दधारेत्यर्थः । बिभ्रदिति शत्रन्तं वा । तदा संपूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः । कथंभूतः । यस्य चरणशौचं गङ्गा अशेषतीर्थं सः । अत एव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः । सतां पतित्वे हेतुः—ब्रह्मण्यदेव इति यद्गुणकृतं नाम तस्यैव यतो युक्तं समञ्जसमतस्तद्धर्मप्रवर्तनायैवमाचरणमित्यर्थः ॥ १५ ॥ अभिभाष्य दिष्ट्यात्र त्वदागमनमित्यादि प्रियमुक्त्वा ॥१६॥ भगवता स्वस्यार्हणमनर्हं मन्यमानस्तत्संभावयन्नाह—नैवेति । सर्वमित्रत्वादेवमर्हणं नतु मम गौरवात् । तर्हि कथं कंसादिष्वमैत्री तत्राह—खलानां दमश्च नैवाद्भुतमिति । कुतः । जगतः

तस्मिन्समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ॥ विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३ ॥ तं सन्निरीक्ष्य भगवान्सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ॥ आनम्य[3] पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥१४॥ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्नाऽबिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ॥ ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥१५॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवाम हे किम् ॥ १६ ॥ ॥ नारद उवाच ॥ नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥ दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥१८॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ॥ योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ १९ ॥ दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥ पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ॥ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥ ॥ ॥

स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः । अतः खलदमः साधुसंमाननं च युक्तमिति भावः ॥ १७ ॥ यदुक्तं प्रभो किं करवामेति तत्राह—दृष्टमिति । भक्तजनताया अपवर्गरूपम् । किंच अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिन्त्यम् । किंच संसारकूपे पतितानामुत्तरणायावलम्बमाश्रयम् । एवंभूतं तवाङ्घ्रियुगलं मया दृष्टमतः कृतकृत्योऽस्मि । तथापि त्वत्स्मृतिर्यथा स्यात्तथानुगृहाण । ततस्तद्ध्यायन्नेव नित्यं चरामीति ॥ १८ ॥ १९ ॥ अक्षैर्दीव्यन्तमित्यादौ ददर्शेति ज्ञातव्यम् ॥ २० ॥ २१ ॥ ॥ ॥

१ नैवाद्भुतमसभावितम् । सामान्ये नपुंसकमेकत्वं च । २ आनम्य पादस्पर्शादिना नत्वा । ३ 'तव विभोऽखिललोकनाथ' इति पाठः । ४ शुद्धोक्तिरियम् । अन्यत् भामागृहम् ।
५ इतिशब्दस्योत्तरपद्यस्थक्रियेत्यन्तेनान्वयः । ६ यद्वा सर्वजनानां तापस्य वर्गो वर्जनं यस्मात् ।

॥ २२ ॥ २३ ॥ वितानाग्नीनाहवनीयादीनग्निहोत्रेण पञ्चभिर्मखैर्महायज्ञैर्यजन्तम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ काले तत्तत्समये विधिना उपयापनं प्रापणं विवाहमित्यर्थः । कल्पयन्तं घटयन्तम् । विभूतिभिर्विभवैः ॥ ३२ ॥ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तत्तद्गृहं प्रति नयनम् । उपानयनं तत्तद्गृहात्पुनरानयनम् । तैर्महोत्सवान्कल्पयन्तम् । योगेश्वरेशस्य तेषामपत्यानां महोत्सवान्वीक्ष्य लोकाः सर्वे विसिस्मिरे विस्मयं चक्रुः ।

अथापि ब्रूहि नो ब्रह्मञ्जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥ २२ ॥ तत्राप्यचष्ट[1] गोविन्दं
लालयन्तं सुतान् शिशून्[2] ॥ ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥२३॥ जुह्वन्तं च वितानाग्नीन्यजन्तं पञ्चभि-
र्मखैः ॥ भोजयन्तं द्विजान्क्वापि भुञ्जानमवशेषितम् ॥२४॥ क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्[3] ॥ एकत्र चासिच-
र्मभ्यां चरन्तमसिवर्त्मसु ॥ २५ ॥ अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् ॥ क्वचिच्छयानं पर्यङ्के स्तूयमानं च बन्दिभिः
॥२६॥ मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः ॥ जलक्रीडारतं क्वापि वारमुख्याऽबलावृतम् ॥२७॥ कुत्रचिद्द्वि-
जमुख्येभ्यो ददतं गाः स्वलंकृताः ॥ इतिहासपुराणानि शृण्वन्तं मङ्गलानि च ॥२८॥ हसन्तं हास्यकथया कदाचित्प्रि-
यया गृहे ॥ क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥२९॥ ध्यायन्तमेकमासीनं[4] पुरुषं प्रकृतेः परम् ॥ शुश्रूषन्तं गुरू-
न्क्वापि कामैर्भोगैः सपर्यया ॥ ३० ॥ कुर्वन्तं विग्रहं कैश्चित्सन्धिं चान्यत्र[5] केशवम् ॥ कुत्रापि सह रामेण चिन्तयन्तं सतां[6]
शिवम् ॥३१॥ पुत्राणां दुहितॄणां च काले विध्युपयापनम् ॥ दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥३२॥ प्रस्थापनो-
पानयनैरपत्यानां महोत्सवान् ॥ वीक्ष्य योगेश्वरेशस्य येषाँ[7] लोका विसिस्मिरे ॥३३॥ यजन्तं सकलान्देवान्क्वापि क्रतुभि-
रूर्जितैः ॥ पूर्तयन्तं[8] क्वचिद्धर्मं कूपाराममठादिभिः ॥ ३४ ॥ चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् ॥ घ्नन्तं ततः पशू-
न्मेध्यान्परीतं यदुपुङ्गवैः ॥ ३५ ॥ अव्यक्तलिङ्गं प्रकृतिष्वन्तःपुरगृहादिषु ॥ क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया
॥ ३६ ॥ अथोवाच हृषीकेशं नारदः प्रहसन्निव ॥ योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥ ३७ ॥ विदाम
योगमायास्ते दुर्दर्शा अपि मायिनाम् ॥ योगेश्वरात्मन्निर्भाता भवत्पादनिषेवया ॥ ३८ ॥ ॥ ॥

तथाभूतान् कल्पयन्तम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ अव्यक्तलिङ्गं वेषान्तरेण च्छन्नम् ॥ ३६ ॥ ३७ ॥ हे योगेश्वर, आत्मन् आत्मनि मम मनसि तव स्वरूपे वा निर्भाताः प्रतीतास्तव योगमायाः केवलं विदाम विद्मः नतु तत्परमार्थमिति भावः ॥ ३८ ॥ ॥ ॥ ॥

१ अचष्ट अपश्यत् । २ 'शिशून्सुतान्' इति पाठः । ३ वाचो यत यमनं यत्र यथा तथा । ब्रह्म गायत्रीम् । ४ 'एकमात्मानम्' इति पाठः । ५ 'चान्येश्च' इति पाठः । ६ सतां पाण्डवादीनाम् । ७ येषा यान् । ८ पूर्ततया सपादयन्तमिति तोषणी चक्रवर्ती च ।

त्वन्मानुष्यनाट्येन मुह्याम्यतो मां प्रस्थापयेत्याह—अनुजानीहीति ॥३९॥ तत्तल्लोकं शिक्षयन्निमं धर्ममास्थितो न तु तत्त्वतः । हे पुत्र, मा खिदः मोहं मा प्राप्नुहीति ॥४०॥ इत्येवमनुगृहीतस्तमेकमेवं सन्तं ददर्शेति ॥४१॥ मुहुर्मुहुर्दृष्ट्वा जातकौतुको मुनिर्विस्मितोऽभूदिति ॥४२॥ श्रद्धितः श्रद्धया युक्त आत्मा यस्य तेन ॥४३॥ नारदद्दष्टां श्रीकृष्णलीलां निगमयति—एवमिति । अखिलस्य भवायोद्भवाय गृहीताः शक्तयो नानामूर्तयो येन सः। सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥ अनन्यविषयाण्यसाधारणानि । अपवर्गमार्गे मोक्षप्रदे ॥ ४५ ॥ ॥ इति श्रीमद्भा०म०पु०दशमस्कन्धे उ० भावार्थदीपिकायां

अनुजानीहि मां देव लोकांस्ते यशसाप्लुतान् ॥ पर्यटामि तवोद्गायँल्लीलां भुवनपावनीम् ॥३९॥ ॥श्रीभगवानुवाच ॥ ब्रह्मन्धर्मस्य वक्ताहं कर्ता तदनुमोदिता ॥ तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥ ४० ॥ ॥श्रीशुक उवाच ॥ इत्याचरन्तं सद्धर्मान्पावनान्गृहमेधिनाम् ॥ तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४१ ॥ कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ॥ मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः ॥ ४२ ॥ इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ॥ सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ ४३ ॥ एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ॥ रेमेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४४ ॥ यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ॥ यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे कृष्णगार्हस्थ्यदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

॥श्रीशुक उवाच॥ अथोषस्युपवृत्तायां कुक्कुटान्कूजतोऽशपन् ॥ गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥ वयांस्यरूरुवन्कृष्णं बोधयन्तीव बन्दिनः ॥ गायत्स्वलिष्वनिद्राणि मन्दारवनवायुभिः ॥ २ ॥ मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् ॥ परिरम्भणविश्लेषात्प्रियबाह्वन्तरं गता ॥ ३ ॥ ॥ ॥

टीकायामेकोनसप्ततितमोऽध्यायः ॥६९॥ ॥ ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ॥ दूतनारदयोः कार्ये कार्यमन्त्रविचारणम् ॥१॥ जगन्मङ्गलचारित्रमाह्निकं जगदीशितुः ॥ नारदेन क्वचित्किंचिद्दृष्टमाह यथाक्रमम् ॥२॥ अथेति—'इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना' इति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारेऽथशब्दः। उपवृत्तायामासन्नायाम् । पतिभिः श्रीकृष्णैः माधव्यो माधवस्य भार्याः ॥१॥ बन्दिन इव श्रीकृष्णं बोधयन्ति सन्ति वयांसि पक्षिणोऽरूरुवन् अतिशयेनाकूजन् । मन्दारवनवायुभिर्गायत्स्वलिष्वनिद्राणि निद्रारहितानि वयांसि ॥ २ ॥ वैदर्भीत्युपलक्षणम् । परिरम्भणविश्लेषात्तं पर्यालोच्य ॥ ३ ॥ ॥ ॥

१ गृहीताः स्वस्मिन्नाकृष्टास्तत्तत्स्थाशानां शक्तयो येन । २ न अन्यस्य कृतिविषयाणि । यद्वा अनन्या भक्ता एव विषया उद्देश्या येषां तानि । ३ अर्थादिषु सेव्यमानेषु । ४ अपवर्गो मोक्षः प्राप्त्युपायो यस्य, यद्वा अपवर्गो भक्तियोगश्च मार्गो यस्य, अथवा अपगता उपेक्षिताश्चतुर्वर्गा यैस्तैर्भक्तैर्मृग्यते तस्मिन्निति तोषणी । ५ प्रभातज्ञापककूजनकृतः कुक्कुटान् 'म्रियन्तां मूका वा भवन्तु' इत्याद्यशपन्निति तोष० । ६ परिरम्भणे विश्लेषो विघ्नस्तमालोच्येति ल्यब्लोपे पञ्चमी ।

॥ ४ ॥ एकमखण्डम् । तत्र हेतुः—अनन्यं निरुपाधिम्। अत एवाव्ययं नित्यम् । स्वयंज्योतिष्ट्वे हेतुः—नित्यनिरस्तं, नित्यनिवृत्तं कल्मषमविद्या यस्मात्तम् । उपलक्षणमाह—अस्येति । अस्य विश्वस्य । लक्षितभावश्चासौ निर्वृतिश्च । भावः सत्ता । निर्वृतिरानन्दः । तथा हि—गुणक्षोभात्पूर्वं सत्तामात्रं यः—'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतेः । स एवानन्दश्च—'विज्ञानमानन्दम्' इत्यादिश्रुतेः । तं सदानन्दमित्यर्थः ॥ ५ ॥ आप्लुतः स्नातः सन्ध्याया उपगम उपासनमादिर्यथा भवति तथा क्रियाकलापं चकार । काण्वत्वादुदयात्पूर्वमेव हुतानलः । ब्रह्म गायत्रीं जजाप ॥ ६ ॥ कला अंशान्देवान् ऋषीन्पितॄंश्च तर्पयित्वा ॥ ७ ॥ गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥ बद्धमिति । 'हिरण्येन परीवृतान्कृष्णान् शुक्लदतो मृगान् ॥ मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च ॥' इति श्रुत्युक्तानि

ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ॥ दध्यौ प्रसन्नकरण आत्मानं तमसः[1] परम् ॥ ४ ॥ एकं स्वयंज्योतिरनन्यमव्ययं[2] स्वसंस्थया[3] नित्यनिरस्तकल्मषम् ॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम्[4] ॥ ५ ॥ अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ॥ चकार सन्ध्योपगमादि सत्तमो[5] हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥ उपस्थायार्कमुद्यन्तं तर्पयित्वात्मनः कलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥ ७ ॥ धेनूनां रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम् ॥ पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥ ८ ॥ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह ॥ अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ॥ ९ ॥ गोविप्रदेवतावृद्धगुरून् भूतानि सर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मङ्गलानि समस्पृशत् ॥ १० ॥ आत्मानं भूषयामास नरलोकविभूषणम् ॥ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११ ॥ अवेक्ष्याज्यं तथादर्शं गोवृषद्विजदेवताः ॥ कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणाम् ॥ प्रदाप्य[6] प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥ संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः ॥ सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततः स्वयम् ॥ १३ ॥ ॥ ॥ ॥

सप्तोत्तरशतं बद्धानेकीकृत्य पुराणे चतुर्दशलक्षत्वेन गणितानि। यथोक्तं भरतमेवाधिकृत्य नवमस्कन्धे—'मृगान् शुक्लदतः कृष्णान्सुवर्णेन परिष्कृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश ॥' इति । ततश्चेयं बद्वसंख्या श्लोकेन संगृह्यते—'चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश॥' इति । दिने दिने च प्रतिगृहं चेति ॥ ९ ॥ आत्मसंभूतीः सविभूतीः । मङ्गलानि कपिलादीनि ॥१०॥ नरलोकस्य विभूषणरूपमात्मानम् । स्वीयैः पीताम्बरकौस्तुभादिभिः ॥ ११ ॥ कामानभिलषितानर्थान् ॥ १२ ॥ विप्रादीन्स्रगादिभिः संविभज्य । तेभ्यस्तानि दत्त्वेत्यर्थः । उपायुङ्क्त भोगार्थमग्रहीत् ॥ १३ ॥

१ तमसः प्रकृतेः । २ अव्ययं सर्वप्रभवत्वेऽप्यपक्षयशून्यम् । ३ स्वसंस्थया स्वभावेनैव । ४ सृष्ट्यादिहेतुभिः स्वाश्रितामी रजःसत्त्वादिगुणाख्याभिः शक्तिभिः लक्षितो भावरूपः सद्रूपः स चासौ निर्वृतिरानन्दरूपश्च तम्। ५ एकपदपक्षे संध्योपासनादिषु सत्तमः कुशल इति वा। ६ प्रदाप्य दातुमाज्ञाप्य। ७ तोषण्यामपि बद्वसंख्या १३०८४ 'बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश' इति निर्णीतास्ति ।

॥ १४ ॥ पाणी कृतेञ्जलौ गृहीत्वा ॥ १५ ॥ सव्रीडप्रेमवीक्षितैरीक्षितः क्षणं स्थितस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादिति ॥ १६ ॥ एवं सर्वगृहेभ्यः पृथक्पृ-
थङ्निर्गत्यानन्तरमेक एव सन्सुधर्मां प्राविशत् । यन्निविष्टानां यत्र प्रविष्टानाम् ॥ १७ ॥ नृसिंहैर्नृपश्रेष्ठैः ॥ १८ ॥ उपमन्त्रिणः परिहासकाः । पृथक्पृथक् स्वस्वसमु-
दायैः ॥ १९ ॥ मृदङ्गादयः प्रसिद्धाः । दरः शङ्खः । सूतादयस्तुष्टुवुः ॥२०॥ ब्राह्मणा ब्रह्म वेदमाहुर्मन्त्रान्व्याचक्षतेत्यर्थः । वादिनो वादनचतुराः ॥ २१ ॥ २२ ॥ २३ ॥
गिरिव्रजे तत्संज्ञके दुर्गे रुद्धा आसन् । तेषां च दुःखमावेदयदित्यन्वयः ॥२४॥ कृष्ण कृष्णेति षट्श्लोकी राज्ञां विज्ञप्तिः,—तत्र प्रथमेन शरणाश्रयणं, त्रिभिः,

गृहीत्वा पाणिना पाणी
तावत्सूत उपानीय स्यन्दनं परमाद्भुतम् ॥ सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥
सारथेस्तमथारुहत् ॥ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥ ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवी-
क्षितैः ॥ कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः ॥ १६ ॥ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ॥ प्राविश-
द्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः[1] ॥ १७ ॥ तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ वृतो
नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १८ ॥ तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम् ॥ उपतस्थु-
र्नटाचार्या नर्तक्यस्ताण्डवैः पृथक् ॥ १९ ॥ मृदङ्गवीणामुरजवेणुतालदरस्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्च सूतमागधव-
न्दिनः ॥ २० ॥ तत्राहुर्ब्राह्मणाः[2] केचिदासीना ब्रह्मवादिनः ॥ पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः ॥ २१ ॥ तत्रैकः
पुरुषो राजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥ स नमस्कृत्य कृष्णाय परेशाय
कृताञ्जलिः ॥ राज्ञामावेदयद्दुःखं[3] जरासन्धनिरोधजम् ॥ २३ ॥ ये च दिग्विजये तस्य संनतिं न ययुर्नृपाः ॥ प्रसह्य
रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥ कृष्ण कृष्णाप्रमेयात्मन्[4]प्रपन्नभयभञ्जन ॥ वयं त्वां शरणं यामो भवभीताः
पृथग्धियः[5] ॥ २५ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह
जीविताशां सद्यश्छिनत्त्यनिमिषाय[6] नमोऽस्तु तस्मै ॥ २६ ॥ ॥ ॥ ॥

भयानुवादः, द्वाभ्यां प्रार्थनमिति ॥ २५ ॥ पृथग्दर्शिनो लोकस्य भवभयं विवृण्वन्तो नमन्ति—लोक इति। विकर्म निषिद्धं काम्यं च तस्मिन्नितरां रतः । स्वे
कुशले धर्मे। भवतोऽर्चने त्वयोदिते पञ्चरात्रे। सामान्यतश्च गीतासु—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥'
इति । प्रमत्तोऽनवहितो यावदयं लोकस्तावदेवास्य लोकस्य यः सद्यो जीविताशां छिनत्ति तस्मै तुभ्यमनिमिषाय कालात्मने नम इति ॥ २६ ॥ ॥ 

१ ऊर्मयः अशनायापिपासे शोकमोहौ जरामृत्यू चेति षट्। २ 'तत्रस्था ब्राह्मणाः केचिदाहुर्वै ब्रह्मवादिनः' इति पाठः। ३ दुःखं दुःखशोकप्रधानं वच इत्यर्थः। ४ अप्रमेयोऽतर्क्य आत्मा षड्गुणैश्वर्यरूपं यस्य। ५ पृथग्धियो भेदबुद्धयः अतो भवभीताः। ६ अनिमिषायेति निर्निमेषत्वेन तस्यावहितत्वं व्यज्यते। ७ कर्मणीत्यस्यायमर्थः—स्वे सार्ववर्णिकस्वधर्मे इति तोष०।

सेयं लोकस्य गतिर्वयं तु त्वद्भक्ताः, अतोऽस्माकं कुत एतद्दुःखमापन्नमित्याश्चर्येणाहुः—लोक इति । भो ईश, जगत इन ईश्वरः । त्वयि सद्रक्षणार्थमवतीर्णेऽपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चिज्जरासन्धादिस्त्वदाज्ञामपि लङ्घयति । किंच त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः । नचैतदुभयमपि युक्तमिति भावः ॥ २७ ॥ किं दुःखं तदाहुः—स्वप्नायितमिति । स्वप्नवज्जातं नृपसुखं नृपोचितं सुखम् । यतः परतन्त्रं विषयसाध्यम् । किंच संप्रति शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण धुरं पुत्रदारादिचिन्तां केवलं वहामः । अहो कष्टं नः, ये वयमितः पूर्वमेव निष्कामाः सन्तस्त्वां नाश्रिता इत्याहुः—हित्वेति । त्वत् त्वत्तो यदनीहैर्निष्कामैर्लभ्यमात्मनि स्वतःसिद्धं सुखं तद्धित्वा क्लिश्याम इति ॥ २८ ॥ त्वन्मायाकृतं कर्मबन्धं त्वमेव निवर्तयेति

लोके भवाञ्जगदिनः कलयावतीर्णः[1] सद्रक्षणाय खलनिग्रहणाय चान्यः ॥ कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥ २७ ॥ स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ॥ हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव[2] मायेह ॥ २८ ॥ तन्नो[3] भवान्प्रणतशोकहराङ्घ्रियुग्मो बद्धान्वियुङ्क्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतङ्गजवीर्यमेको बिभ्रद्रुरोध भवने मृगराडिवावीः ॥ २९ ॥ यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि ॥ ३० ॥ ॥ दूत उवाच ॥ इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥ ॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ॥ बिभ्रत्पिङ्गजटाभारं प्रादुरासीद्यथा रविः ॥ ३२ ॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववन्द उत्थितः[4] शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३३ ॥ सभाजयित्वा विधिवत्कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥ ३४ ॥ अपिस्विदद्य लोकानां त्रयाणामकुतोभयम् ॥ ननु भूयान्भगवतो[5] लोकान्पर्यटतो गुणः ॥ ३५ ॥ ॥

प्रार्थयन्ते—तन्न इति । वियुङ्क्ष्व मोचय । मगधो जरासन्धस्तत्संज्ञकात्कर्मपाशात् भवद्भिरेव विक्रम्य ततो निर्गम्यतामिति चेदत आहुः—य इति । एक एवायुतमतंगजानां वीर्यं बिभ्रत्सन्स्वभवने भूभुजोऽस्मान् रुरोध । सिंहो मेषीरिव ॥ २९ ॥ किंच युष्मदीया वयमित्यस्मानधिकं बाधत इत्याहुः—यो वा इति । हे उदात्तचक्र उद्यतसुदर्शन, यो वै द्विनवकृत्वोऽष्टादशवारांस्त्वया सह मृधे वर्तमाने तत्र सप्तदशकृत्वस्त्वया खलु भग्नः पराजितः पश्चादनन्तवीर्यमपि नृलोके निरतं नरशरीरविनोदं भवन्तं सकृज्जित्वा ऊढदर्पः प्राप्तगर्वो युष्मत्प्रजा नो रुजति पीडयति । तत्तत्र यद्युक्तं तद्विधेहीत्यर्थः ॥ ३० ॥ दूत आह—इतीति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भूयान्महान्गुणो लाभोऽयमस्माकं यत्सर्वलोकवृत्तान्तज्ञानमिति ॥ ३५ ॥ ॥ ॥

१ कलया रामेण सहावतीर्णः, यद्वा भो ईश, इदं कलय अवधेहि । २ कृपणा विषयासक्ताः । ३ तत्तस्मात् त्वन्मायाकृतकार्पण्येन क्लेशपरम्परामग्नत्वाद्धेतोः नः अस्मान्, यद्वा अभवान् श्रेयोहीनानार्तान् नः । ४ आसनादुत्थितः शीर्ष्णा ववन्दे । ५ भगवतः सकाशात् ।

ईश्वरः कर्ता येषां तेषु ॥३६॥ एवमविदुषेव सर्वज्ञेन जरासन्धवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदो मायेयमिति ज्ञात्वाह—दृष्टा इति त्रिभिः। विश्वसृजश्च ब्रह्मणोऽपि मायिनो मोहकस्य ते स्वशक्तिभिर्विद्यादिभिर्भूतेष्वन्तर्यामितया चरतो वर्तमानस्य। यद्यहं भूतेषु वर्ते तर्हि भूतानि मां किं न पश्यन्ति तत्राह—वह्नेरिव च्छन्नरुच इति। स्वशक्तिभिरेव च्छन्ना रुक् प्रकाशो यस्य तस्य। अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३७ ॥ इदं जगत्। कथंभूतम्। असदेव यत्तव मायया विद्यमानात्मतयाऽवभासते तज्जगत्सृजतः। किंतु केवलं तुभ्यं नमनमेव शक्यमित्याह—तस्मै नम इति। कुतः। स्वेन रूपेण सर्वतो विलक्षणात्मने अचिन्त्यायेत्यर्थः ॥३८॥ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह—जीवस्येति। अविद्यातमसा वृतत्वेनानर्थप्रापकाच्छरीरात्संसरतः। तेनैव तपसा तस्माच्छरीराद्विमोक्षोपायमजानतः। प्राज्वालयत्प्रदीपितवान्। तं त्वा त्वाम्। यशःश्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥ ३९ ॥ आश्रावये श्रावयिष्यामि।

न हि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पाण्डवानां चिकीर्षितम् ॥३६॥ ॥ श्रीनारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम् ॥३७॥ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ॥ यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥ जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशः प्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥३९॥ अथाप्याश्रावये ब्रह्म नरलोकविडम्बनम् ॥ राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥४०॥ यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः ॥ पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम् ॥४१॥ तस्मिन्देव क्रतुवरे भवन्तं वै सुरादयः ॥ दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥ ४२ ॥ श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेऽन्तेवसायिनः ॥ तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥ ४३ ॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गल दिग्वितानम् ॥ मन्दाकिनीति दिवि भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम् ॥ ४४ ॥

नरलोकविडम्बनं ब्रह्म त्वाम्। ब्रह्मन्निति पाठेऽपि हे ब्रह्मन्परमात्मन्, नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥ ४० ॥ ४१ ॥ न चात्रैवानुमोदनं कार्यं किंतु तत्रागन्तव्यमित्याशयेनाह—तस्मिन्निति ॥ ४२ ॥ तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यन्तीत्याह—श्रवणादिति। अन्तेवसायिनः श्वपचा अपि। ब्रह्ममयस्य ब्रह्मघनमूर्तेः। ईक्षा च अभिमर्शः स्पर्शनं च तौ विद्येते येषाम् ॥ ४३ ॥ कैमुत्यमतिशयेनाह—यस्येति। हे भुवनानां मङ्गलरूप, दिवि पाताले भूमौ च प्रथितं यस्य यशो विश्वं पुनाति। कथम्। प्रथितं दिग्वितानं दिग्भवनानां वितानवदलंकरणम्। तथा चरणाम्बु च प्रथितं पुनाति। कथं तत्प्रथितम्। दिवि मन्दाकिनीति, अधश्च भोगवतीति, इह च भूमौ गङ्गेति। तस्य तवागमनात्सर्वं मङ्गलं पवित्रं च भविष्यतीति भावः ॥ ४४ ॥ ॥ ॥४१॥

१ समासान्तविधेरनित्यत्वान्न कप्। २ अथ अतः हे पूज्यवर्याः, पृच्छाम प्रार्थनया पृच्छामः। ३ 'अवसीयते' इति पाठः। ४ जीवस्य हेतोः प्राज्वालयदित्यन्वयः। ५ पारमेष्ठ्यकामस्त्वत्पूजनोचितपरमसंपत्तिं कामयमानः। मुहुर्गृहागतं तया संपत्त्या सिषेविषत इत्यर्थः।

तंत्रैवं नारदोक्तं तेषु वर्तमानेष्वात्मीयपक्षेषु यादवेषु जरासन्धस्य विजिगीषया अगृह्णत्स्वमन्यमानेषु । वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥ चक्षुष्ट्वे हेतुः— मन्त्रार्थानां मन्त्रसाध्यानां तत्त्ववित्परिपाकवेदिता ॥ ४६ ॥ ४७ ॥ ॥ इति श्रीमद्भा०म०पु०दशमस्कन्धे उत्तरार्धे भा०दी० टीकायां सप्ततितमोऽध्यायः ॥७०॥ अथैकसप्ततितम उद्धवस्य तु मन्त्रतः ॥ इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥ १ ॥ राजसूयमिषं कृत्वा भीमदुर्योधनादिषु ॥ कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥ २ ॥ देवर्षेर्मतं राजसूयगमनम् । सभ्यानां मतं राजरक्षा । कृष्णस्य तूभयम् ॥ १ ॥ यक्ष्यतो यागं करिष्यतः, पैतृष्वस्रेयस्य पितृष्वसुः पुत्रस्य, साचिव्यं साहाय्यं तच्च कार्यम् । तथा शरणार्थिनां राज्ञां रक्षा च कार्या ॥ २ ॥ तत्र प्रथमं राजसूयार्थं गन्तव्यं, ततो राजरक्षा कर्तव्येत्याह—यष्टव्यमित्यष्टभिः ।

॥ श्रीशुक उवाच ॥ ॥ तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया ॥ वाचःपेशैः स्मयन् भृत्यमुद्धवं प्राह केशवः ॥४५॥ ॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित् ॥ तथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥ इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥ ॥ इति श्रीमद्भागवते महापुराणे द० उ० भगवद्याने सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ श्रीशुक उवाच ॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥ ॥ उद्धव उवाच ॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविन्द राज्ञो बद्धान्विमुञ्चतः ॥ ४ ॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥ द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ६ ॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥ हनिष्यति न संदेहो द्वैरथे तव संनिधौ ॥ ७ ॥ ॥ ॥

अतो दिग्विजयहेतोः । उभयार्थो राजसूयार्थः शरणागतरक्षार्थश्च ॥३॥४॥ अत्युत्सुकतया सद्य एव जरासन्धं हन्तुमिच्छतो यादवानालक्ष्याह—स वा इति । अन्येषां ततो बलिनामपि यद्यपि समबल एव भीमस्तथापि तं विना । भीमादेव तस्य मृत्युर्विहित इति भावः ॥ ५ ॥ ननु स्वबलसाम्येऽपि सेनाबलं तस्याधिकमिति चेदत आह—द्वैरथ इति । द्वन्द्वयुद्धे । शतेनाक्षौहिणीभिर्युतो मागधो मा, न जेतव्य इत्यर्थः । नन्वसौ स्वसैन्यमेव युद्धाय नियुञ्जीत कुतस्तेन द्वैरथमिति तत्राह—ब्रह्मण्य इति । न प्रत्याख्याति न निराकरोति ॥६॥ भिक्षेत द्वन्द्वयुद्धं याचताम् । तथापि समबलत्वात्साम्यमेव स्यादत आह—तव संनिधाविति ॥७॥

१ तत्र सभायाम् । २ अगृह्णत्सु विसंवादिष्विति तोष० । ३ त्वयेति शेषः । ४ शिरसाधाय शिरोबद्धाञ्जलितयादृत्येत्यर्थः । ५ अत्र—'पूर्वं गन्तव्यमस्माभिरिन्द्रप्रस्थमितः प्रभो ॥ तत्रैव तदनुज्ञातस्तदर्थं जहि मागधम् ॥' इति पद्यमधिकं क्वचित् । ६ एतेनैव राजसूयगमनेनैवास्माकं महानर्थः प्रबलशत्रुजरासन्धवधरूपो भविष्यति इति भावः । ७ 'बन्धाद्विमुञ्चतः' इति पाठः । ८ न प्रत्याख्यायादित्यर्थः । ९ वृकस्येव कृशमुदरं यस्य बलिष्ठत्वात् ।

नन्वकिंचित्कुर्वतो मम संनिधानात्किं स्यादत आह—निमित्तमिति । अयमर्थः—यथा तवारूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भस्तथा शर्वश्च तन्निरोधे तथात्र त्वमेव संनिधिमात्रेण हन्ता भीमो निमित्तमात्रमिति ॥ ८ ॥ अतोऽनेनोपायेन त्वया स शीघ्रं हन्तव्य इत्याशयेनाह—गायन्तीति जरासन्धधृतानां राज्ञां देव्यः पत्न्यस्ते विशदं कर्म स्वगृहेषु बालकलालनादौ गायन्ति । किं तत्कर्म । स्वशत्रोर्जरासन्धस्य वधमात्मनां पतीनां विमोक्षणं च । वत्स, मारोदीः श्रीकृष्ण एवं करिष्यतीति । अत्र दृष्टान्ताः गोप्यश्चेत्यादयः । यथा गोप्यः शङ्खचूडवधं स्वमोक्षं च गायन्ति । अवतारान्तरगतं कुञ्जरपतेर्नक्रात् । जनकात्मजायाश्च रावणात् । पित्रोश्च कंसगृहान्मोक्षम् । अत एवंभूतानां तासां कृपया त्वया तथैव कर्तव्यमिति भावः ॥ ९ ॥ किंच जरासन्धवध इति । भूर्यर्थायेति । ततः शिशुपालवधादयोऽपि सुखसाध्या भविष्यन्तीति भावः । एतच्च सर्वं भविष्यत्येवेति संभावयन्नाह—प्राय इति । पच्यत इति पाकः

गायन्ति ते विशद-
निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥ गायन्ति ते विशद-
कर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ॥ गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा
मुनयो वयं च ॥ ९ ॥ जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते ॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः
॥ १० ॥ ॥ श्रीशुक उवाच ॥ इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम् ॥ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूज-
यन् ॥ ११ ॥ अथादिशत्प्रयाणाय भगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥ १२ ॥ निर्ग-
मय्यावरोधान्स्वान्ससुतान्सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुह-
द्गरुडध्वजम् ॥ १३ ॥ ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदङ्गभेर्यानकशङ्खगो-
मुखैः प्रघोषघोषितककुभो निराक्रमत् ॥ १४ ॥ नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता
ययुः ॥ वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥ ॥ ॥

कर्म तस्य विपाकः फलं तेन राज्ञां पुण्यविपाकेन जरासन्धादीनां पापविपाकेनेति । पाठान्तरे जरासन्धस्य पापविपाकेनेति । तेनायं क्रतुस्तवाभिप्रेतस्तत्र गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ १० ॥ अच्युतमुपपत्त्या दृढम् । यदुवृद्धा इति वदता अनिरुद्धादयस्तथा नापूजयन्निति सूचितम् ॥ ११ ॥ अनुज्ञाप्यानुज्ञां प्रार्थ्य । गुरून्वसुदेवादीन् ॥ १२ ॥ अवरोधान्स्वान्दारान् निर्गमय्य प्रयाणं कारयित्वा ॥ १३ ॥ भटाः पदातयः । सादिनोऽश्वारोहाः । रथादिनायकैः करालया तीव्रयात्मसेनया परिवृतो निराक्रमन्निरगात् । कुतः सकाशात् । मृदङ्गादिभिर्वाद्यैः प्रघोषेण घोषितायाः ककुभः ॥ १४ ॥ नृवाजीति । नृवाजिभिर्नरयानैरश्वैश्च काञ्चनशिबिकाभिश्चाच्युतं पतिमनुययुः । सुव्रताः पतिव्रताः वराण्यम्बरादीनि यासां ताः ॥ १५ ॥ ॥ ॥

१ वयं च गायाम इति क्रियाविपरिणामेन योज्यम् । २ 'प्रायः पापविपाकेन' इत्येवंरूपे पाठे । पापाना शिशुपालदुर्योधनादीना विपाकेन नाशरूपेणेत्यर्थः । ३ प्रतिपदमश्लाघन्त । ४ 'गरुडध्वजः' इति पाठः । ५ घोषिदित्यत्राचारक्विबन्तात्कर्तरि क्विप् । 'प्रघोषघोषत्' इत्यपि क्वचित्पाठः । ६ 'युक्तम्', 'दृढम्' इति पाठौ । ७ यद्वा नरा एव वाजिवच्छीघ्रगा यत्र ताभिः ।

नरोष्ट्रादिभिर्यानैः । अश्वतरी गर्दभ्यामश्वाज्जाता । अनः शकटम् । करेणुर्गजी । परिजनयोषितो वारयोषितश्च । कटकुटय उशीरादितृणनिर्मितगृहाः कम्बलाम्बरादयश्चोपस्कराः कुड्यादिरूपा यासां ताः । अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं संनह्य ॥ १६ ॥ रवेरंशुभिश्च तद्बलं दिवा बभौ । कथंभूतम् । तुमुलरवमाकुलस्वनम् । क्षुभितैस्तिमिङ्गिलैरूर्मिभिश्च ॥ १७॥ मुनिर्नारदो विहायसा ययाविति शेषः ॥१८॥ मा भैष्टेति बहुत्वं राजाभिप्रायेण ॥१९॥ प्रत्यैक्षन्

नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ॥ स्वलंकृताः कटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वतः ॥१६॥ बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥१७॥ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ॥ निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥१८॥ राजदूतमुवाचेदं भगवान्प्रीणयन् गिरा ॥ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥१९॥ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि संदर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥२०॥ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ॥ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥ ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ॥ पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥२२॥ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥२३॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ अभ्ययात्स हृषीकेशं प्राणाः प्राणमिवादृतः ॥ २४ ॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ॥ चिराद्दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः ॥ २५ ॥ दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजवाकुलेन्द्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥ २८ ॥ ॥

प्रत्यैक्षन्त । यद्यस्मान्मुमुक्षवः ॥ २० ॥ आनर्तादयो मार्गस्थदेशास्तांस्तीर्त्वाऽतिक्रम्य । विनशनं कुरुक्षेत्रम् । अतीयायातिक्रम्य ययौ ॥ २१ ॥ शक्रप्रस्थमिन्द्रप्रस्थम् ॥२२॥२३॥ प्राणा इन्द्रियाणि प्राणं मुख्यं प्राणमिव ॥२४॥ सस्वजे परिरेभे ॥२५॥ रमाया अमलं निर्दोषमालयम् । विस्मृतो लोकव्यवहारो येन सः ॥२६॥ ॥ २७ ॥ अर्जुनेन समत्वात्परिष्वक्त एव केवलं पादौ नमस्कुर्वन्नर्जुनः कृष्णेन भुजाभ्यां धृत इति भावः । यमाभ्यां त्वभिवादितश्चेति ॥ २८ ॥ ॥

१ यद्वा तत्सैन्य अंशुभिः स्वतेजोभिर्दिवापि रवेः रविमतिक्रम्य बभौ । २ गावो वृषभाः । ३ ध्वजादीनां तिमिङ्गिलादिभिः साम्यं अंशूनां चोर्मिभिः । ४ कुरुक्षेत्रपाञ्चालादीनाममार्गवर्तित्वेऽपि तत्रत्यभक्तानुग्रहार्थं गमनम् । ५ न जातो शत्रुभावो मनसि यस्येति धर्मस्य सरलचित्तत्वम् । ६ निर्वृतः अभूदिति शेषः । ७ स्मयन्नुत्फुल्लमुखः । ८ 'युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्, तं' इति पूर्वोक्तमत्रापि ज्ञेयम् ।

॥ २९ ॥ ३० ॥ ३१ ॥ चित्रध्वजादिभिर्विराजमानम् ॥ ३२ ॥ प्रतिसद्म उद्दीप्तैर्दीपैर्बलिभिः, पुष्पादिप्रकरैश्च जुष्टम् । जालेभ्यो गवाक्षेभ्यो निर्गतैर्धूपै रुचिरम् । विलसन्त्यः पताका यस्मिंस्तत् । मूर्धन्या मूर्ध्नि भवा हेमकलशा येषां तैः । रजतमयानि रूप्यमयान्युरूणि स्थूलानि शृङ्गाणि कलशाधस्तनभूमिका येषां तैर्भवनैर्जुष्टं कुरुराजस्य धाम पुरं ददर्श ॥ ३३ ॥ नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयम् । किं पुनर्नारीणामित्यर्थः ॥ ३४ ॥

मानितो मानयामास कुरुसृंजयकैकयान् ॥ सूतमागधगन्धर्वा बन्दिनश्चोपमन्त्रिणः ॥ २९ ॥ मृदङ्गशङ्खपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूयमानो भगवान्विवेशालंकृतं पुरम् ॥ ३१ ॥ संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥ उद्दीप्तदीपबलिभिः प्रतिसद्म जालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३५ ॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥ तत्र तत्रोपसङ्गम्य पौरा मङ्गलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३७ ॥ अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥३९॥ गोविन्दं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥४०॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः ॥ ४१ ॥ ॥

सुष्ठु स्वागतं तत्प्रश्नादिकं प्रियमुत्स्मयवीक्षितेनैव विदधुः ॥ ३५ ॥ उडुपसहाः, चन्द्रसहचरा इत्यर्थः । अमूभिः किं पुण्यमकारि ॥ ३६ ॥ श्रेण्य एकशिल्पोपजीविनां सङ्घास्तेषु मुख्याश्च ॥ ३७ ॥ अभ्युपेतोऽभिगमनेन सत्कृतः ॥ ३८ ॥ सस्नुषा द्रौपदीसहिता ॥ ३९ ॥ कृत्यं प्रकारविशेषम् । प्रमोदेनोपहतोऽभिभूतः ॥ ४० ॥ गुरुस्त्रीणां च । कृष्णया द्रौपद्या । भगिन्या सुभद्रया ॥ ४१ ॥ ॥ ॥ ॥



१ 'मानिनः' इति पाठः । तत्र कुर्वादिषु मान्यानित्यर्थः । २ पर्यस्तः परिवृतः । ३ तल्प इति मध्याह्नभोजनोत्तर विषयासक्ताना शय्याया निवेशात् । ४ तस्मिन्मार्गे । ५ कृष्णायेति चतुर्थी तादर्थ्ये । ६ सस्नुषा द्रौपद्या सह स्थित्वा पृथैव सस्वजे । द्रौपदी तु पश्चादेव स्थिता वन्दनादिनादृतवतीत्यग्रे वक्ष्यते । एवं चाध्याहृतायां स्थितिक्रियायामन्वितत्वात्समासः ।

आनर्चे अर्चितवती ॥ ४२ ॥ अन्याश्च याः कृष्णपत्न्योऽभ्यागतास्ता अपि ॥ ४३ ॥ प्रत्यहं नवं यथा भवति तथा सुखं निवासयामास ॥ ४४ ॥ कथंभूतम् । यः प्रेम्णा नित्यं फाल्गुनेन संयुतः । अत एव तस्य सहायेन सता येन खाण्डवेन वह्निं तर्पयित्वा तत्र च मयं मोचयित्वा तं मयं प्रयुज्य युधिष्ठिराय दिव्या सभा कृता तं जनार्दनम् । अनेन राज्ञः कृष्णोपकारानुस्मरणं दिव्यत्वात्सभाया यथामनोरथं सर्वावकाशसंपादनं च दर्शितम् ॥ ४५ ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ॥

श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४२ ॥ कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ॥ अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः ॥ ४३ ॥ सुखं निवासयामास धर्मराजो जनार्दनम् ॥ ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥ तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे कृष्णस्येन्द्रप्रस्थगमनं नामैकसप्ततितमोऽध्यायः ॥७१॥ ॥छ॥ ॥श्रीशुक उवाच॥ एकदा तु सभामध्य आस्थितो मुनिभिर्वृतः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥ आचार्यैः कुलवृद्धैश्च ज्ञातिसंबन्धिबान्धवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥ ॥युधिष्ठिर उवाच॥ क्रतुराजेन गोविन्द राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो ॥ ३ ॥ त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ॥ विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥ ॥ ॥

दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥ १ ॥ आस्थितः, आसनमिति शेषः ॥ १ ॥ शृण्वतामेवेति । यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेवताननादृत्य कृष्णमुवाचेत्यर्थः । आभाष्य भो भो कृष्ण भक्तवत्सलेत्येवं संबोध्य ॥ २ ॥ विभूतीरंशान् ॥ ३ ॥ एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेदत आह—त्वत्पादुके इति । परि ये चरन्तीति यच्छब्दव्यवधानमार्षम् । ये परिचरन्ति देहेन । ध्यायन्ति मनसा । अभद्रस्य नशने नाशके । गृणन्ति वाचा । ते भवस्यापवर्गं मोक्षं विन्दन्ति । यद्याशासते तर्ह्याशिषोऽपि त एव विन्दन्ति नान्ये चक्रवर्तिनोऽपि ॥ ४ ॥ ॥

१ सत्यभामाम् । २ शैब्यामिति मित्रविन्दाया विशेषणम् । त्र्यशीतितमाध्यायस्थपद्यश्लोकव्याख्यानुरोधात् । सतीमिति नाग्नजित्याः । न चात्राष्टाना कथने तात्पर्यम् । अतो लक्ष्मणाया अनुपादानम् । ३ तोषण्यां तु—'सतीम्' इत्यत्र 'तथा' इति पाठमूरीकृत्य तथापदेन लक्ष्मणा गृहीतेति हि टीका वरीवर्ति । ४ 'सभार्पिता' इति पाठः । तादृशं जनार्दनमित्यन्वयः । ५ शृण्वतां शृण्वत्सु सत्स्वेवैतेषु । ६ यद्वा आ सम्यक् बद्धाञ्जलित्वादिना भूमौ स्थितः इति तोष० ।

भगवतो भक्तपक्षपातमाविष्कारयन्नाह—तद्देवदेवेति । तत्तस्मात्पश्यतु साक्षात् । एवं निश्चितेऽपि ये कर्मादिप्रधानाः । केचित्कुरुसृंजया भगवद्भक्तिं न बहु
मन्यन्ते तेषां मोहनिवृत्तये ये त्वां भजन्ति यदि वा न भजन्ति तेषामुभयेषां निष्ठां स्थितिं प्रदर्शय ॥ ५ ॥ ननु रागादिरहिते मयि कथमिदं वैषम्यं स्यात्तत्राह—
नेति । स्वः पर इति भेदमतिस्तव न स्यादेव । कुतः । ब्रह्मणो निरुपाधेः । किंच सर्वस्यात्मनोऽतः समदृशः । किंच स्वसुखानुभूतेः । अतो रागाद्यभावादिति भावः ।
तथापि संसेवमानानामेव त्वत्प्रसादो नान्येषाम् । तत्रापि सेवाऽनुरूपमुदयः फलं न त्वत्र विपर्ययोऽन्यथाभावः । यथा कल्पद्रुमस्य रागादिराहित्येऽपि सेवकेष्वेव
फलजनकत्वं नान्येषु ॥६॥ सत्यं मद्भक्तानामेव कैवल्यादि नान्येषामित्यनुमोदमान आह—सम्यगिति । शत्रुकर्शनेति संबोधयन्सर्वराजविजयशक्तिं संचारयति ।

तद्देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः ॥ ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय
विभो कुरुसृंजयानाम् ॥५॥ न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरो-
रिव ते प्रसादः सेवाऽनुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥ ॥ श्रीभगवानुवाच ॥ सम्यग्व्यवसितं राजन् भवता
शत्रुकर्शन ॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ॥ सर्वेषा-
मपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ॥ संभृत्य सर्वसंभारानाहरस्व
महाक्रतुम् ॥९॥ एते ते भ्रातरो राजँल्लोकपालांशसंभवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥
न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाभिभवेद्देवोऽपि किमु पार्थिवः ॥ ११ ॥ ॥ श्रीशुक उवाच ॥
निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः ॥ भ्रातॄन्दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥ १२ ॥ सहदेवं दक्षिणस्या-
मादिशत्सहसृंजयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः
॥ १३ ॥ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा ॥ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥ ॥

अनुभविष्यति द्रक्ष्यति । सर्वलोकव्याप्ता भविष्यतीत्यर्थः ॥७॥८॥ किमत्र मयान्येन वा संपादनीयं, तव तु सुकर एव राजसूय इत्याह—विजित्येति । जगतीं सर्वां
पृथ्वीम् । संभारान्यज्ञोपस्करान्संभृत्य संपाद्य आहरस्वानुतिष्ठेत्यर्थः ॥ ९ ॥ ननु नृपतिविजयादि कथं शक्यं स्यादत आह—एत इति । किंच आत्मवता जिते-
न्द्रियेण ते त्वयाहं च जितोऽस्मि वशीकृतोऽस्मि । अकृतात्मभिरजितेन्द्रियैः ॥ १० ॥ आस्तां तावदेवंभूतस्य तव परैरभिभवशङ्का अकिंचनमपि मत्परं कोऽपि
नाभिभवितुं प्रभवतीत्याह—न कश्चिदिति । तेजसा प्रभावेण । विभूतिभिः सैन्यादिसामग्रीभिः ॥ ११ ॥ अयुङ्क्त नियुक्तवान् । विष्णोस्तेजसोपबृंहितान्सं-
वर्धितान् । तेजोपबृंहितानिति सन्धिरार्षः ॥१२॥ नकुलादीनां मत्स्यादिभिः सहायैर्यथासंख्येन संबन्धः ॥१३॥ कथंभूताय । यक्ष्यते यागं करिष्यते ॥ १४ ॥

१ एष बहिःसपत्तिमात्रदर्शनचमत्कारी लोकः । २ अत्र भजने कल्पद्रुमवत्सेवानुरूपमेवोदयः फलं न, अधिकमपि स्यादित्यर्थः । सेवाविपर्ययेऽपि फलविपर्ययो नेति । धावन्निमील्य नेत्रे वा न स्खलेन्न पतेदिहेति एकादशोक्तेः । ३ स्वमहाक्रतुं स्वाधीनमेव महाक्रतुं आहर अनुतिष्ठेति तोष० । ४ 'आजग्मुः' इति पाठः । ५ लोकाननु लोकान्व्याप्य भविष्यति । ६ सहदेवं सृंजयैः सह, भीमं मत्स्यैः, नकुलं केकयैः, सव्यसाचिनं मद्रकैरिति ।

आद्यो हरिः श्रीकृष्णः ॥ १५ ॥ ब्रह्मलिङ्गधरा ब्राह्मणलिङ्गधारिणः । यतो यत्र बृहद्रथसुतो जरासन्धः ॥ १६ ॥ गृहेषु वर्तमानं समयाचेरन् । सम्यगयाचन्तेत्यर्थः ॥१७॥१८॥ नन्विदं कामयामह इति विशेषो निर्दिश्यताम्, अन्यथा यस्य स्वयंकल्पः पुत्रादेर्वियोगो दुःसहः स कथं देयः, तथा राजमण्डनं किरीटाद्यदेयं यत्तद्भिक्षुभ्यः कथं देयम्, तथातिरम्यं रत्नाभरणादि पुत्रादियोग्यं कथं परस्मै देयमिति चेदत आहुः—किं दुर्मर्षमित्यादि । अथ दृष्टान्तत्वेनार्थान्तरमाहुः—किमकार्यमिति । यथाऽसाधूनामकार्यं नास्ति तथा तितिक्षूणां दुर्मर्षं दुःसहं नास्ति । वदान्यानामत्युदाराणामदेयं नास्ति । समदर्शिनां परश्च नास्ति । अतः किं विशेषनिर्देशेनेत्यर्थः ॥१९॥ किंच अर्थिने धीरेण मुद्गलादिवत्प्राणा अपि न वञ्चनीया इत्याशयेनाहुः—योऽनित्येनेति । नाचिनोति न संपादयति स वाच्यः स निन्द्यः ॥२०॥ विश्वामित्रार्थानृण्याय हरिश्चन्द्रो भार्यात्मजादिसर्वं विक्रीय स्वयं चाण्डालतां प्राप्तोऽप्यनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं

श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः[1] ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥ ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम्[2] ॥ ब्रह्मण्यं समयाचेरन्[3] राजन्या ब्रह्मलिङ्गिनः ॥ १७ ॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं[4] ते यद्वयं कामयामहे ॥१८॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥ योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाचिनोति स्वयंकल्पः स वाच्यः शोच्य एव सः ॥ २० ॥ हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥ ॥ ॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ २२ ॥ राजन्यबन्धवो ह्येते[5] ब्रह्मलिङ्गानि बिभ्रति ॥ ददामि[6] भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥ बलेर्नु श्रूयते कीर्तिर्विंतता दिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥ ॥ ॥

गतः । रन्तिदेवः सकुटुम्बोऽष्टचत्वारिंशदहान्यलब्धोदकोऽपि कथंचिल्लब्धान्नोदकाद्यर्थिभ्यो दत्त्वा ब्रह्मलोकं गतः । उञ्छवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुम्बोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः । शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्त्वा दिवं गतः । बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्त्वा तमेव आत्मसाचकार । कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्त्वा विमानेन दिवं गतः । व्याधस्तयोः सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह । एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥ २१ ॥ ज्याहतैर्ज्याघातकिणाङ्कितैः दृष्टपूर्वान्द्रौपदीस्वयंवरादिषु ॥ २२ ॥ २३ ॥ इन्द्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेः । नु अहो । नेति पाठे न श्रूयते किं, अपितु श्रूयत इति ॥ २४ ॥ ॥

१ 'धरास्ततः' इति पाठः । २ 'गृहमेधिनां' इति षष्ठ्यन्तपाठे आतिथ्यवेलायामित्यत्रान्वयः । ३ अयाचेरन् अयाचन्त रन् आर्षः । ४ भद्रं ते इति याचकौचित्यैवाशीः । 'ते तथाभूता वयं नोऽस्माकं भद्रं यत्तदेवेच्छामः' इत्यादियोजना । 'वस्तुतो मोक्षप्राप्तेस्तवापि भद्रमेवेति तोष० । ५ 'बन्धवोऽप्येते' इति पाठः । ६ 'ददानि' इति पाठः ।

तं श्लाघते—विष्णव इति । शुक्रेण वार्यमाणोऽपि । अत एव विष्णुरिति जानन्नपि ॥ २५ ॥ पतमानेन पतता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता नेहमानेनासंपादयता को नु अर्थः । न कोऽपीत्यर्थः ॥ २६ ॥ एवं निश्चित्याह—हे विप्रा इति ॥ २७ ॥ २८ ॥ राजन्यतामेव प्रपञ्चयति—असाविति ॥ २९ ॥ ३० ॥ यतो मद्भिया समुद्रं शरणं गतः ॥ ३१ ॥ वयसाप्यतुल्यो नातिसत्त्वो नातिबलश्च न च देहेन मया समोऽतोऽर्जुनो योद्धा न भवेत् । भीमस्तु

श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबन्धुना[1] ॥ देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥ ॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः[2] ॥ २८ ॥ असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥२९॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मन्दा[3] युद्धं तर्हि ददामि वः ॥ ३० ॥ न त्वया भीरुणा[4] योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥ अयं तु वयसाऽतुल्यो नातिसत्त्वो[5] न मे समः ॥ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ॥ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥ ततः समे खले वीरौ संयुक्ताावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥ मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥ ३५ ॥ ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ॥ गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः ॥ ३६ ॥ ते वै गदे भुजजवेन निपात्यमाने अन्योन्यतोंसकटिपादकरोरुजत्रून्[6] ॥ चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्व्योः ॥ ३७ ॥ ॥

भवेत् । यतो मम तुल्यबलः ॥३२॥ प्रादाय दत्त्वेत्यर्थः ॥३३॥ समे खले युद्धाङ्गणे ॥३४॥ मण्डलानि गदायुद्धगतिभेदान् । सव्यं दक्षिणं च यथा भवति तथा । रङ्गिणो रङ्गगतयोर्नटयोरिवेति निर्भयत्वेनोपमा ॥३५॥ चटचटेति गदयोः परस्पराघातशब्दानुकरणम् । वज्रस्य निष्पेषः पातस्तत्सदृशः । युध्यतोर्दन्तिनोर्दन्ताघातशब्द इव शुशुभे ॥ ३६ ॥ अंसकट्यादीनुपेत्य । दीप्तो मन्युर्ययोस्तयोर्द्विरदयोर्गजयोरर्कशाखाभ्यां ...सं युध्यतोस्ते यथा चूर्णीभवतस्तद्वत् ॥ ३७ ॥

१ अत्र क्षत्रबन्धुशब्दः क्षत्रियाधमपरः । २ 'नान्यकाङ्क्षिणः' इति पाठः । ३ तत्त्वतस्तु मन्दाः स्थिरबुद्धयः । अमन्दा इति वा पदच्छेदः । ४ वास्तवार्थे तु अभीरुणेति च्छेदः । तथा विक्लवं कृपाविह्वलं चेतो यस्य । सप्तदशकृत्वो मोचनात् । क्रीडार्थं स्वपुरीमपि हित्वा समुद्रमेव शरणं गृहं कृतवानिति । ५ वास्तवार्थे तु अतिसत्त्वोऽपि वयसा तुल्यो न भवतीति न मे समः मत्तोऽप्यधिक इत्यर्थः । ६ जत्रूनित्येकवत्त्वाभाव आर्षः ।

अपिष्टां चूर्णीचक्रतुः ॥ ३८ ॥ शिक्षा अभ्यासः, बलं सत्त्वम्, ओजः प्रभावः, समानि तानि ययोस्तयोः ॥ ३९ ॥ ४० ॥ ४१ ॥ जन्म शकलरूपं, मृतिः पुनः शकलीभावस्ते विद्वान् जानन् । जरानाम राक्षसी तत्कृतम् । अचिन्तयत्कथमसौ शकलीभवेदिति ॥ ४२ ॥ विटपं शाखाम् । करेण विटपं गृहीत्वा हरिर्भीमस्य यथाहं विटपं पाटयामि तथा त्वमेनं विपाटयेति संज्ञया संकेतेनारिवधोपायं दर्शयामासेत्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ एकैकः पादादिर्ययोस्ते शकले ॥ ४६ ॥ ४७ ॥ दुर्वृत्तत्वादसौ हतो नतु राज्याभिलाषेणेति दर्शयन्नाह—सहदेवमिति ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे

इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातव-
ज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥३९॥
एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥ एकदा मातुलेयं वै प्राह
राजन्वृकोदरः ॥ न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव ॥ ४१ ॥ शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ॥
पार्थमाप्याययन्स्वेन तेजसाऽचिन्तयद्धरिः ॥ ४२ ॥ संचिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं
पाटयन्निव संज्ञया ॥ ४३ ॥ तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले
॥ ४४ ॥ एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः पाटयामास शाखामिव महागजः ॥ ४५ ॥ एकपा-
दोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥ हाहाकारो महानासीन्निहते मग-
धेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥ सहदेवं तत्तनयं भगवान्भूतभावनः ॥ अभ्यषिञ्चदमे-
यात्मा मगधानां पतिं प्रभुः ॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे
दशमस्कन्धे उत्तरार्धे जरासन्धवधो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ अयुते द्वे
शतान्यष्टौ लीलया युधि निर्जिताः ॥ ते निर्गता गिरिद्रोण्यां मलिना मलवाससः ॥ १ ॥ ॥ ॥

उत्तरार्धे भावार्थदीपिकायां टीकायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥ ॥ ततस्त्रिसप्ततितमे मोचयित्वा नृपान्हरिः ॥ राजार्हभोगैः स्वान्देशान्प्र-स्थाप्य पुनरागमत् ॥ १ ॥ अत्युन्नद्धजरासन्धवधात्तद्रुद्धभूपतीन् ॥ विमोक्ष्य कृपया कृष्णो निजरूपमदर्शयत् ॥ २ ॥ ये निर्जिता जरासन्धेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गताः सन्तो घनश्यामं ददृशुरित्युत्तरेणान्वयः ॥ १ ॥ ॥ ॥

१ निर्घातो निरभ्रगर्जितं । वज्रं वज्रपातः । २ एवं तयोरिति पद्यद्वयं प्रक्षिप्तमिति भातीति तोषणी । ३ एकं पादं शत्रोः । ४ पूजयामासतुः साधु साध्वित्येवं वीजनादिना च संमानितवन्तौ । ५ भूतभावनो दयालुः, अमेयात्माऽपरिच्छिन्नबुद्धिः । ६ मलिना इतीन्नन्तम् ।

क्षुधा क्षामा कृशाः । संरोधेन परिकर्शिताः क्लेशिताः ॥२॥३॥४॥ भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्य तम् । निवीतं कण्ठलम्बिततया व्याप्तम् । पिबन्त इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः ॥ ५ ॥ रम्भन्तः परिरम्भमाणा इव ॥ ६ ॥ कृष्णदर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते ॥ ७ ॥ संरोधाद्रक्षितानस्मान् घोरायाः संसृतेरपि पाहि मोचय ॥ ८ ॥ ननु भवन्तो जरासन्धासूयाविष्टा इहामुत्र भोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशङ्क्य संप्रति न वयं तथाभूता इत्याहुः—नैनमित्यष्टभिः । हे नाथ, वयमेनं नान्वसूयामः अन्वनु दोषदृष्ट्या न पश्यामः । कुत इत्यत आहुः—अनुग्रह इति । यद्यस्मात् ॥ ९ ॥ एतदेव व्यतिरेकेणोपपादयन्ति—राज्यैश्वर्येति । राज्यैश्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृङ्खलो नित्या अचलाश्च संपदो मन्यते । यद्वा अनित्याः सतीरचलाः

क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥ श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥ पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ॥ किरीटहारकटककटिसूत्राङ्गदाञ्चितम् ॥४॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥ जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः ॥ प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥६॥ कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥ ॥ राजान ऊचुः ॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः ॥ ८ ॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ९ ॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः ॥ त्वन्मायामोहितो नित्या मन्यते संपदोऽचलाः ॥ १० ॥ मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ॥ घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥ १२ ॥ त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ॥ कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥ ॥ ॥

शाश्वतीर्मन्यते ॥ १० ॥ किंच अवस्तु सद्वस्तुतया पश्यन्तीत्याहुः—मृगतृष्णामिति । वैकारिकीं सृष्ट्यादिविकारापन्नाम् । अयुक्ता अविवेकिनः ॥ ११ ॥ राज्यस्य योगवियोगयोरनर्थावहत्वमस्माभिरेव दृष्टमित्याहुः—वयमिति द्वाभ्याम् । श्रीमदेन नष्टा दृष्टिर्येषां ते । अस्याः पृथिव्याः । इतरेतरस्पृधः परस्परं स्पर्धमानाः । पुरः पुरतः । त्वा त्वां मृत्युमविगणय्य । पुरा ये दुर्मदा वयम् ॥ १२ ॥ हे कृष्ण, त एव वयमद्य विनष्टदर्पास्ते चरणौ स्मरामः स्मर्तुमाशास्महे । कथंभूताः । भवतस्तन्वा मूर्त्या कालेन श्रियो विचालिताः विभ्रंशिताः । अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥ १३ ॥ ॥ ॥



१ पद्मेति दक्षिणाधः करमारभ्य प्रदक्षिणावर्तक्रमेण योज्यम् । २ अव्यय कालापरिच्छिन्नशक्ते । ३ 'नाथानुसूयामः' इति पाठस्तत्राकारलोप आर्ष इति चक्रवर्ती । एवमेनादेशोऽप्यार्षः । ४ बाला निर्बुद्धयो हरिणादयः । ५ अन्योन्यं स्पर्धमानाः । स्पर्धतेः क्विपि संप्रसारणावर्णलोपाभ्यां स्पृध इति छान्दसम् । ६ विकारा रूपादिविषयास्तद्रूपेण परिणताम् ।

अत एवाथो अनन्तरं मृगतृष्णिसदृशं राज्यं शश्वत्पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेनोपासितव्यं सेव्यं न स्पृहयामहे । प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं न स्पृहयामहे । कथंभूतम् । कर्णयो रोचनं रुचिजनकमात्रम् । तत्र गतस्य स्पर्धाद्यनपगमेन सुखाभावादित्यर्थः ॥१४॥ यद्येवंभूता यूयं तर्हि मम चरणौ स्मरत, ततोऽनायासेन मुक्तिर्भविष्यतीति किं मदपेक्षयेति चेदत आहुः—तं न इति । त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥१५॥१६॥ श्लक्ष्णया मञ्जुलया ॥१७॥ यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिर्जायते जायतामित्यर्थः ॥१८॥ हे भूपाः, मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं संकल्पितं दिष्ट्या भद्रम् । भवद्भिरुक्तं च सत्यमेवेत्याह—भवन्त इति । श्रीश्च ऐश्वर्यं च ताभ्यां मदस्तेनोन्नाहमुद्बन्धनं स्वैराचारमि-

अथो न राज्यं मृगतृष्णिरूपितं[1] देहेन शश्वत्पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा[3] न विरमेदपि संसरतामिह ॥ १५ ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविन्दाय नमोनमः ॥ १६ ॥ ॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते[2] भक्तिर्बाढमाशंसितं तथा[4] ॥ १८ ॥ दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं[5] पश्य उन्मादकं नृणाम् ॥ १९ ॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ २० ॥ भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ॥ मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ[6] ॥ २१ ॥ संतन्वन्तः प्रजातन्तून्सुखं दुःखं भवाभवौ[7] ॥ प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ[8] ॥ २२ ॥ उदासीनाश्च देहादावात्मारामा[9] धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ्मामन्ते ब्रह्म यास्यथ ॥ २३ ॥ ॥ ॥ ॥

त्यर्थः । पश्ये पश्यामि ॥ १९ ॥ तदेवाह—हैहय इति । हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः । नहुषो देवेन्द्रतां प्राप्य उन्मत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयंस्तैरेव ततो भ्रंशितोऽजगरत्वमवाप । वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपंस्तैरेव हुंकृतैर्हतः । रावणो राक्षसेश्वरः सीतामभिलषन्राघवेण हतः । नरको दैत्येश्वरोऽदितिकुण्डलाद्याहरणान्मयैव हतः । अपरेऽपि श्रीमदात्स्थानाद्भ्रंशिताः ॥ २० ॥ यदुत्पाद्यं देहादि तदन्तवत् । एवं विज्ञाय युक्ता अप्रमत्ता रक्षथ रक्षतेत्यर्थः ॥ २१ ॥ प्रजातन्तून् पुत्रादिसन्ततीः । प्राप्तं प्राप्तं समत्वेन सेवमानाः ॥ २२ ॥ मां ब्रह्म यास्यथ ॥ २३ ॥ ॥

१ मृगतृष्णिर्मृगतृष्णा । 'मृगतृष्णिरूपितं' इति बोपदेवसंमतः पाठः । 'मृगतृष्णरूपितं' इत्यपि पाठः । २ जायते । वर्तमानसामीप्ये लट् । ३ यथा यथावदस्मदभिलाषानुरूपा स्मृतिः । ४ 'यथा' इति पाठः । ५ श्रियैश्वर्येत्यत्र यडार्षः । ६ रक्षथ रक्षिष्यथ रक्षत । अत्र हे भवत इति सबोध्य यूयमित्यध्याहृत्य मध्यमपुरुषो ज्ञेयः । ७ भवाभवौ संपद्विपदौ । ८ विचरिष्यथ यूयमिति शेषः । एवमुत्तरत्रापि । ९ आत्मा मन एवारामो मत्क्रीडावनं येषां, यद्वा आत्मनो ममारामरूपाः व्रतपूजादिनियमा एवंभूता भवन्तः ।

स्त्रियश्च तेषां मज्जनकर्मण्यभ्यङ्गस्नानादौ न्ययुङ्क्त ॥ २४ ॥ २५ ॥ सुस्नातान्सम्यगलंकृतान् भोगैश्च युक्तान् वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सहदेवेन कार-
यामास ॥२६॥ ग्रहाश्चन्द्रादयो यथा ॥२७॥ प्रीणय्य नन्दयित्वा ॥२८॥२९॥ जगदुः ऊचुः ॥३०॥३१॥ खाण्डवप्रस्थं इन्द्रप्रस्थम् ॥३२॥ शान्तं मृतम् ।
आसमनोरथो बभूव ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्धे भावार्थदीपिकायां टीकायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ॥ तेषां न्ययुङ्क्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥ २४ ॥
सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥२५॥ भोजयित्वा वरान्नेन सुस्नातान्सम-
लंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥२६॥ ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ॥ विरेजुर्मो-
चिताः क्लेशात्प्रावृडन्ते यथा ग्रहाः ॥२७॥ रथान्सदश्वानारोप्य मणिकाञ्चनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशा-
न्प्रत्ययापयत् ॥२८॥ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥२९॥
जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥३०॥ जरासन्धं घातयित्वा भीम-
सेनेन केशवः ॥ पार्थाभ्यां संयुतं प्रायात्सहदेवेन पूजितः ॥ ३१ ॥ गत्वा ते खाण्डवप्रस्थं शङ्खान्दध्मुर्जितारयः ॥ हर्ष-
यन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३२ ॥ तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शान्तं राजा
चाप्तमनोरथः ॥ ३३ ॥ अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥
निशम्य धर्मराजस्तत्केशवेनानुकम्पितम् ॥ आनन्दाश्रुकलां मुञ्चन्प्रेम्णा नोवाच किंचन ॥ ३५ ॥ इति श्रीमद्भागवते
महापुराणे दशमस्कन्धे उत्तरार्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ६ ॥ ॥ श्रीशुक उवाच ॥
एवं युधिष्ठिरो राजा जरासन्धवधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥ युधिष्ठिर उवाच ॥
ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ॥ वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥ ॥

चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ॥ अग्रपूजाप्रसङ्गेन चैद्यघातादि वर्ण्यते ॥ १ ॥ राजसूयमुखे हत्वा जरासन्धं तदन्तरे ॥ चैद्यं तदन्तं कुर्वन्तं बीजं
कलिमिवावपत् ॥ २ ॥ कृष्णस्य चानुभावमिति चकारात्तस्य स्वाज्ञानुविधायित्वं चालक्ष्येत्यर्थः ॥ १ ॥ तदाह—ये स्युरिति । ये त्रैलोक्यस्यापि गुरवः स्युः
सनकादयः सर्वे च लोका लोकपालाश्च ते शिरसैव तवानुशासनं वहन्ति । दुर्लभं लब्ध्वेति । भाग्येनैतल्लब्धमिति बहुमानेनेत्यर्थः ॥ २ ॥ ॥ ॥ ॥४७॥

१ कृतानि मागधवधादीनि स्वक्षपनादीनि च कर्माणि । २ वत् शङ्खाध्मानम् । ३ अनुकम्पितं अनुकम्पया संपादितम् । ४ 'विभो' इति संबुद्ध्यन्तः पाठः । ५ कुरूणामन्तं कुर्वन्तं कलिं बीजमिवावपत् ।

स भवान्परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यन्तविडम्बनमननुरूपमनुकरणम् । स्वतेजोहानिप्रसङ्गादित्यर्थः ॥३॥ अथवा तव परिपूर्णस्याज्ञापनाज्ञाधारणाभ्यां न तेजसो हानिवृद्धी, अतः कृपया सर्वं सङ्गच्छत इत्याह—न ह्येकस्याद्वितीयस्येति । समानासमानरहितस्य ब्रह्मणस्तवोभयं माया । परमात्मन इति सर्वजीवनियन्तुस्तव नियम्यत्वं सुतरां न वास्तवम् । अतः परानुग्रहार्थैरेतैः कर्मभिस्तव तेजो न वर्धते न च ह्रसति । रवेरिवोदयास्तमयादिकर्मभिरित्यर्थः । तथा च श्रुतिः—'न कर्मणा वर्धते नो कनीयान्' इति ॥४॥ नन्वेवमप्यहं परमेश्वरो ममेदं नीचं कर्मायोग्यमिति मनसि कथं न भवेदत आह—न वै त इति । हे अजित, तव भक्तानामेव तावदियं नानाधीर्भेदमतिर्नास्ति । यथा पशूनामज्ञानां वैकृता शरीरविषया । तव तु नास्तीति किं पुनर्वक्तव्यमित्यर्थः ॥५॥ यज्ञिये यज्ञोचिते वसन्तादिकाले ।

स भवानरविन्दाक्षो दीनानामीशमानिनाम्[2] ॥ धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम्[3] ॥ ३ ॥ न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥ न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नानाधीः पशूनामिव वैकृता[4] ॥ ५ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः ॥ ६ ॥ द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः[5] ॥ ९ ॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो[6] नृप ॥ ११ ॥ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ॥ कृष्ट्वा तत्र यथाम्नायं दीक्षयांचक्रिरे नृपम् ॥ १२ ॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ इन्द्रादयो लोकपाला विरिञ्चभवसंयुताः ॥ १३ ॥ सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥ राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥ ॥ ॥

युक्तानभियुक्तान् । स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् । वव्रे वृतवान् ॥६॥ तानाह—द्वैपायन इति त्रिभिः ॥७॥८॥ अकृतव्रणान्तानेतानृत्विगुपद्रष्टृादिभेदेन वव्रे ॥९॥ अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥१०॥११॥ देवयजनं यज्ञभूमिम् । कृष्ट्वा कर्षणादिभिः संशोध्य । दीक्षयांचक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥१२॥ उपकरणा उपस्कराः वरुणस्य राजसूये यथा आसन्निति शेषः । किंच इन्द्रादयो देवगणाः ॥१३॥१४॥ ये च राजादयः समाहूतास्तत्र समीयुः स्म ते सर्वे कृष्णभक्तस्य पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयमविस्मिताः सन्तः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः ॥ १५ ॥ ॥

१ आज्ञापनाज्ञाधारणरूपम् । २ ईशमानिनामस्माकम् । ३ विडम्बनमुपहासास्पदं मन्यामहे । ४ 'वैकृती' इति पाठः । तत्र विकारवती कुत्सितेत्यर्थः । ५ अकृतव्रणान्ता एते वृता इति शेषः । तत्र व्यासाद्या ब्रह्महोत्रादिभेदेन, शेषाः सदस्यादिरूपेण । ६ प्रकृतयः प्रधानादयः ।

याजका ऋत्विजः ॥ १६ ॥ सुत्येहनि सोमाभिषवदिने ॥ १७ ॥ अग्र्यार्हणमग्रपूजा तस्यार्हं योग्यम् । अनैकान्त्याद्योग्यानां बहुत्वेनैकस्यानिश्चयात् ॥ १८ ॥ ॥ १९ ॥ सांख्यं ज्ञानम् । योग उपासना ॥ २० ॥ ननु सांख्यं केवलपरं, योगः सविशेषणपरः, कथमुभयोरेकपरत्वं तत्राह—एक एवाद्वितीयोऽसावतः सांख्यस्यैतत्परत्वं युक्तम् । विशेषणभूतस्य सर्वप्रपञ्चस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह—ऐतदात्म्यमिति । एष श्रीकृष्ण आत्मा यस्य तदेतदात्म तस्य भाव ऐतदात्म्यम् । भवितर्येव भावनिर्देशः । 'ऐतदात्म्यमिदं सर्वम्' इति श्रुतेः । अत्र हेतुः—आत्मनेति । हे सभ्याः, आत्मा-

मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥ अयाजयन्महाराजं याजका देववर्चसः ॥ राजसूयेन विधिवत्प्राचेत-
समिवामराः ॥ १६ ॥ सुत्येहन्यवनीपालो याजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान्यथावत्सुसमाहितः ॥ १७ ॥
सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ॥ नाध्यगच्छन्ननैकान्त्यात्सहदेवस्तदाब्रवीत् ॥ १८ ॥ अर्हति ह्यच्युतः
श्रैष्ठ्यं भगवान्सात्वतां पतिः ॥ एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥ यदात्मकमिदं विश्वं क्रतवश्च
यदात्मकाः ॥ अग्निराहुतयो मन्त्राः सांख्यं योगश्च यत्परः ॥ २० ॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥
आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २१ ॥ विविधानीह कर्माणि जनयन्यदवेक्षया ॥ ईहते यदयं
सर्वः श्रेयो धर्मादिलक्षणम् ॥ २२ ॥ तस्मात्कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत्सर्वभूतानामात्मनश्चार्हणं
भवेत् ॥ २३ ॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २४ ॥
इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ २५ ॥ श्रुत्वा
द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥ तत्पादाववनिज्यापः
शिरसा लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २७ ॥ वासोभिः पीतकौशेयैर्भूषणैश्च
महाधनैः ॥ अर्हयित्वाश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥ २८ ॥ इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ॥
नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥ ॥ ॥ ॥

श्रयोऽन्यनिरपेक्षः स्वयमज इदं जगत् सृजत्यवति हन्ति चेति ॥ २१ ॥ किंच विविधानीति । यस्यावेक्षयाऽनुग्रहेण विविधानि कर्माणि तपोयोगादीनि जनयन्कुर्वन् यत्प्रसादादयं सर्वोऽपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति । कर्माणि तत्फलानि च यदधीनानीत्यर्थः ॥ २२ ॥ २३ ॥ नन्वात्मना क्रियमाणमर्हणमात्मनः कथं स्यात्तत्राह—सर्वभूतानामात्मभूताय । अनन्यदर्शिने निरस्तभेदमतये ॥ २४ ॥ श्रीकृष्णानुभाववित्सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥ द्विजेरितं साधु साध्विति घोषं श्रुत्वा । हार्दमभिप्रायम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ॥ ॥ ॥

१ 'सौत्येऽहनि' इति पाठः, सोमवल्लीपानदिने इति च तदर्थः । २ सदसस्पतीन् सभागेहान् । ३ सदस्येषु मध्येऽग्र्यार्हणार्हम् । ४ सात्वतां व्यासनारदादिभक्तानां पतिः ।

॥ ३० ॥ ३१ ॥ हे सदसस्पतयः, सर्वे बालस्य भाषितं मा मन्यध्वं मा जानीत मा गृह्णीतम् । किं तत् । यद्यतः कृष्णोऽर्हणे अग्रपूजायां संमतस्तत् ॥ ३२ ॥ ॥ ३३ ॥ अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः । गोपाल इति । वेदपृथिव्यादिपालक इत्यर्थः । कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाखण्डास्तान् अंसते समाघातयतीति तथा सः । अकाकः कं च अकं च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः, आप्तकाम इत्यर्थः । स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हति, अपितु सर्वस्वमपि, तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किंत्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥ वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् । 'अनामगोत्रम्' इति श्रुतेः । अत एवानधिकारित्वात्सर्वैर्धर्मैर्बहिष्कृतः । स्वैरवर्ती परमेश्वरत्वात् । अत एव निर्गुणस्तम-आदिरहितः । एवंभूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३५ ॥ अपि च कथं वर्णनीयो मादृशैरेषां यदूनां महिमा यस्मादेषां कुलं यया-

इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावय-न्भगवते परुषाण्यभीतः ॥ ३० ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥ यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ ३२ ॥ तपोविद्याव्र-तधरान् ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३३ ॥ सदस्पतीनतिक्रम्य गोपालः कुलं-पांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथापानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥ ब्रह्मर्षिसेवितान्देशान् हित्वैतेऽब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३७ ॥ ॥

तिना शप्तमपि किं सद्भिर्बहिष्कृतम्, अपि तु शिरसा धृतम् । किंचासदादिकुलवत्किं वृथापानरतं अपित्वतिनियताचारमित्यर्थः । अहो यदूनामेव ताव-दीदृशं माहात्म्यम् । यदुकुलवृद्धस्य ययातेः शापो न प्राभूदित्यादि । अयं तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥ किंच ये राजानो दुष्टा-नुच्चाटयन्ति तदर्थं कीकटादिदेशानप्याश्रयन्ति । एते तु ब्रह्मर्षिसेवितानेव देशानाश्रित्याब्रह्मवर्चसं समुद्रं दुर्गमपि हित्वा । हापयित्वेत्यर्थः । बाधन्ते तथा या दस्यवः प्रजास्ताश्च । अयमर्थः—वेदतदर्थाभियोगो ब्रह्मवर्चसं तद्विरुद्धमब्रह्मवर्चसं समुद्रं मुद्राऽत्र लिङ्गं तत्सहितं समुद्रम् । वेदविरुद्धलिङ्गधारिणं पाख-ण्डमित्यर्थः । तल्लिङ्गं त्याजयित्वा बाधन्ते दण्डयन्ति । कथंभूतम् । दुर्गम्, धर्मवत्प्रतीतेरधर्मतया दुर्ज्ञेयमित्यर्थः । तथाऽदस्यवो दस्यूनपि प्रजावेषेण वर्तमा-नान् दण्डयन्ति, अतो यदुभ्योऽन्यः को नाम धार्मिकोऽस्तीति । पारुष्यं तूक्तार्थमेव ॥ ३७ ॥ ॥ ॥ ॥

१ मूलस्थमन्ध्वमित्यत्र विकरणलोप आर्ष इति बोधयितुं मन्यध्वमिति व्याख्यातम् । २ यतो बालभाषणात् । ३ अमर्षी मत्सरी क्रुद्धो वा । ४ वास्तवार्थे तु—सा श्रुतिः सत्यैव । विभिद्यते सनिश्चयीक्रियते । अतो बालभाषितमिति मा मन्ध्वं मा मन्यध्वं । यतो हेतोः कृष्णोऽर्हणे समत एव । ५ यत् यस्मात्कालात् । ६ मातुलवधादिना स्वकुलदूषकः । ७ वास्त-वार्थे तु—ब्रह्मर्षिसेवितान्देशान् हित्वा क्षुधाद्युपोपणे पोषयित्वेत्यर्थः । तेन ब्रह्मवर्चसं ब्राह्मं तेजश्च संपोष्य । अदस्यवः प्रबलशत्रुरहिता अपि लीलया समुद्रं दुर्गमाश्रित्य स्थिता एते यादवाः प्रजा बाधंते किम्, काका नैवेत्यर्थः । यद्वा पूर्वपद्यस्थकथंपदानुषंगः । कथं बाधन्ते, न कथमपीत्यर्थः इति तोष० ।

५२

शिवा फेरुस्तस्या रुतं श्रुत्वा यथा सिंहो न किंचिद्भूते तद्वत् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ तावदुत्थायेत्यस्यायमभिप्रायः—एष मत्पार्षदो मत्तुल्यबलः सर्वानेतान्हन्यादतो मयैव शीघ्रं हन्तव्य इति तत्क्षणमेवोत्थाय शिरो जहारेति ॥ ४३ ॥ ४४ ॥ ४५ ॥ नन्वेवं निन्दकस्य कथं वासुदेवे प्रवेशस्तत्राह—जन्मत्रयेति । जन्मत्रयेऽनुगुणितमनुवर्तितं यद्वैरं तेन संरब्धयाविष्टया । तन्मयतां तत्स्वरूपतां यातः । पुनः पार्षदो बभूवेत्यर्थः । अत्र हेतुः—भावो हीति ।

एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः[1] ॥ नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम्[2] ॥३८॥ भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥३९॥ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः[3] सुकृताच्च्युतः ॥४०॥ ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृंजयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥४१॥ ततश्चैद्यस्त्वसंभ्रान्तो जगृहे खड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान् राज्ञः सदसि भारत ॥ ४२ ॥ तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ॥ शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥ ४३ ॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले[4] हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥४४॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥४५॥ जन्मत्रयानुगुणितवैरसंरब्धया धिया ॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम्[5] ॥४६॥ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ॥ सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥ ४८ ॥ ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥ वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥ ५० ॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः[6] ॥ कृष्णं क्रतुं च शंसन्तः स्वधामानि ययुर्मुदा ॥ ५२ ॥ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ॥ यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥ ५३ ॥ ॥ ॥ ॥

भावो भावना अनुध्यानं भवस्य ध्येयाकारजन्मनः कारणम् । पेशस्कारिध्यानेन कीटादौ तथा दृष्टत्वादित्यर्थः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ सुरा मानवाः खेचराः प्रमथाश्च ॥ ५२ ॥ पापं धर्मद्विषम् । अत्र हेतुः—कलिं कलेरंशम् । अत एव कुरुकुलस्यामयं व्याधिवन्नाशकम् ॥ ५३ ॥ ॥

१ वास्तवार्थस्तु—नष्टं गूढतया स्थितं मङ्गलं पार्षदत्वाख्यं यस्य सः । न विद्यन्ते भद्राणि येभ्यस्तानि बभाषे । २ भगवान् सिंहो नृसिंहः शिवारुतं शिवस्यासम्यक्स्तुतिमिव । ३ अधः दुरन्तं नरकम् । ४ 'कोलाहलोऽथासीत्' इति पाठः । ५ तत् त्वया सप्तमे पृष्टं प्रसिद्धं वा । ६ सुरा ब्रह्मेन्द्रादयः । मानवा मुनिपार्थिवादयः, खेचराः सिद्धादयः ।

वितानं यज्ञं च ॥ ५४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ छ ॥

पञ्चयुक्सप्ततितमे यज्ञावभृथसंभ्रमः ॥ सुयोधनस्य चाक्षान्त्या मानभङ्गो दृशिभ्रमात् ॥ १ ॥ दुर्योधनस्यैकस्यैव दुःखे कारणं प्रष्टुमुक्तमनुवदति—अजातशत्रोरिति ॥ १ ॥ इति श्रुतम् । त्वन्मुखादेवेत्यर्थः ॥ २ ॥ दुर्योधनस्यासहनकारणत्वेन यागमहोत्सवमेव पुनः सिंहावलोकनेन निरूपयति—पितामहस्येत्यादिना । 'एकदान्तःपुरे तस्य' इत्यतः प्राक्तनेन ग्रन्थेन । प्रेमबन्धनाः प्रेमयन्त्रिताः ॥ ३ ॥ पूजायां संमानने । द्रव्यसाधने नानावस्तुसंपादने ॥ ४ ॥ गुरूणां

य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ॥ राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥५४॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥ ॥ ऋषिरुवाच ॥ पितामहस्य ते यज्ञे राजसूये महात्मनः ॥ बान्धवाः परिचर्यायां तस्यासन्प्रेमबन्धनाः ॥ ३ ॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥५॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ॥ बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥६॥ निरूपिता महायज्ञे नानाकर्मसु ते तदा ॥ प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥७॥ ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥८॥ मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥ नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ॥ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥ चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥ यदुसृंजयकाम्बोजकुरुकेकयकोसलाः ॥ कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥ ॥

शुश्रूषणे चन्दनालेपनादौ ॥ ५ ॥ ६ ॥ निरूपिता नियुक्ताः सन्तो नानाकर्मसु प्रवर्तन्ते स्म ॥ ७ ॥ ऋत्विजश्च सदस्याश्च सभासदो बहुविदश्च तेषु स्विष्टेषु सम्यक्पूजितेषु । सूनृतं प्रियवाक्, समर्हणमलंकारादि, दक्षिणाश्च प्रसिद्धास्ताभिः । द्युनद्यां गङ्गायाम् ॥ ८ ॥ ९ ॥ १० ॥ चित्राणि ध्वजपताकाग्राणि येषु तैरिभेन्द्रैः सन्दनैरर्वभिरश्वैर्भटैश्च । एवं चतुरङ्गैः सैन्यैर्निर्ययुः ॥ ११ ॥ यजमानो युधिष्ठिरः पुरःसरो येषां ते ॥ १२ ॥ ॥ ॥

१ अध्यक्षो नियोक्ता कचित् कर्ता च सन् प्रवर्तते स्मेति विपरिणामेन श्लोकद्वयेनान्वयः । २ 'सतां शुश्रूषणे' इति पाठः । ३ महामना इति जिष्णवादिसर्वेषां विशेषणम् । 'महात्मनः' इति पाठे सप्तमे राज्ञ इत्यस्य विशेषणम् । ४ विकर्णो दुर्योधनभ्राता । 'विराटश्च' इति पाठः । ५ हार्दिक्यः कृतवर्मा । ६ बाह्लीकपौत्रो भूरिः आदिर्या भूरिश्रवःप्रमुखाः । पुत्रा इति तु पुत्रपौत्रयोरभेदात् । ७ संतर्दनः पृथाभागिनेयः । ८ 'चिकीर्षया' इति पाठः । ९ धुंधुरी आनद्धभेदः । १० तलं करतालः ।

सदस्या ऋत्विजोऽन्ये च द्विजश्रेष्ठा निर्ययुः ॥ १३ ॥ किञ्च गन्धादिभिः स्वलङ्कृता नरा नार्यश्च मिथो विजह्रुः ॥ १४ ॥ रसानेवाह—तैलेति । किंच सान्द्र-कुङ्कुमादिभिः पुम्भिर्लिप्तास्तान्प्रलिम्पन्त्यो वारयोषितश्च विजह्रुः ॥ १५ ॥ नृभिर्गुप्ता रथादियानैर्नृदेव्यो राजपत्न्यो निरगमन्निरगुः । एतदुपलब्धुं विमानवरैर्देव्यो यथा तद्वत् । मातुलेयैः सखिभिश्च परितः सिच्यमानाः । सव्रीडेन हासेन विकसन्ति वदनानि यासां ताः ॥ १६ ॥ देवरान्पतिभ्रातॄन् उत सखीन्

सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥ स्वलंकृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ॥ विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥ तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ॥ पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥ ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥ स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ॥ आचान्तं स्नापयांचक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥ देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ॥ २२ ॥ बन्धुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥ सर्वे जनाः सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुण्डलयुगालकवृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥ अथर्त्विजो महाशालाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥

सखीनपि । दृतीभिरुदकनोदनचर्मयन्त्रैः सेचनपात्रैश्च । मलधियां कामिनाम् ॥ १७ ॥ क्रियाभिरङ्गक्रियाभिः क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥ पत्नीसंयाजो यागविशेषः । अवभृथसंबन्धि आवभृथ्यं च । तैश्चरित्वाताननुष्ठायेत्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ अहते नूतने । आनर्च अर्चितवान् ॥ २२ ॥ २३ ॥ सुराणामिव रुक् कान्तिर्येषाम् । मणिकुण्डलैः सहिताः स्रगुष्णीषादयो येषां ते । कुण्डलयुगेनालकवृन्देन च जुष्टा वक्त्रश्रीर्यासां ताः ॥ २४ ॥ २५ ॥ ॥

१ परिहासौचित्यात्पत्युर्मातुलेयैः कृष्णगदादिभिः सखिभिर्भीमार्जुनादिभिश्च परिषिच्यमाना इति चक्र० । २ 'कबरात्पतमान' इति पाठः । ३ 'ब्रह्मादीन्' इति पाठः । तत्र ब्रह्मशब्देन ब्राह्मणा एव । ४ बन्धून् श्रीकृष्णादीन्, ज्ञातीन्भीष्मादीन्, मित्राणि विराटादीनि, सुहृदो द्रुपदादीन् । ५ महाशालाः परमकुलीनाः । ६ मलधियां दुर्योधनादीनामेवेति तोष० चक्र० ।

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ गतज्वरो निश्चिन्त आसीत् ॥ ३० ॥ अच्युते आत्मा यस्य तस्य ॥ ३१ ॥ नरेन्द्रादीनां लक्ष्मीर्लक्ष्म्यो विभूतयो विश्वसृजा मयेनोपक्लृप्ता विरचिताः । ताभिः सह । कुरुराड् दुर्योधनोऽतप्यत् ॥ ३२ ॥ महिषीसहस्रमिति बहुत्वोपलक्षणम् । क्वणद्भिरङ्घ्रिभिः शोभा यस्य । मध्ये सुचारु सुचारुमध्यमित्यर्थः । कुचकुङ्कुमैः शोणा हारा यस्य तत् । श्रीमन्ति मुखानि यस्य तत् । चलैः कुण्डलैः कुन्तलैश्चाढ्यं संपन्नमशोभतेति शेषः

देवर्षिपितृभूतानि लोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा ॥२७॥ ततो युधिष्ठिरो राजा सुहृत्संबन्धिबान्धवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥२८॥ भगवानपि तत्राङ्ग न्यवात्सीत्तत्प्रियङ्करः ॥ प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥२९॥ इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥ एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥ यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ॥ ताभिः पतीन्द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥ यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ॥ मध्ये सुचारु कुचकुङ्कुमशोणहारं श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम् ॥ ३३ ॥ सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ॥ वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥ आसीनः काञ्चने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥३५॥ तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ॥३६॥ स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ॥ जले च स्थलवद्भ्रान्त्या मयमायाविमोहितः ॥ ३७ ॥ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ३८ ॥

॥ ३३ ॥ क्वापि कदाचित्स विरेज इति शेषः । स्वस्य चक्षुषा हिताहितज्ञापकेन ॥ ३४ ॥ ३५ ॥ मानी साहंकारः । किरीटं च माला च विद्येते यस्य सः । न्यविशत् विवेश । क्षिपन् द्वाःस्थादीनधिक्षिपन् ॥ ३६ ॥ तत्र स्थले वस्त्रान्तमभ्यगृह्णादाकुञ्चितवान् । कुतः । तस्मिन्स्थले एव भ्रान्त्या जलं मत्वा जले चापतत् । कुतः । स्थलवद्भ्रान्त्या ॥ ३७ ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

१ लोकपाला ब्रह्मेन्द्रादयः । २ नैवातृप्यन् अविरतं प्रशशंसुरित्यर्थः । ३ सुहृदो भीष्माद्याः, सबन्धिनो द्रुपदादयः, बान्धवा मित्राणि विराटादयः । ४ कृष्णेन हेतुना । ५ एवं दुर्योधनस्य तापे बीजत्वेन यज्ञोत्सवं वर्णयित्वा हेत्वन्तरं चाह—एकदेति । ६ महित्वं महाप्रतिष्ठाम् । ७ 'पर्ति' इति पाठः । ८ यस्यां यासु लक्ष्मीषु । ९ यस्मिन्नन्तःपुरे । १० शनकैर्मन्दं गच्छदिति शेषः । ११ ईर्ष्याहेतुकताफलं तस्य मानभङ्गेन पद्भिर्विवृणोति—सभायामिति । १२ यद्वा स्वे स्वीये चक्षुषी यस्मिन्, अथवा स्वस्मिन् भक्ते एव चक्षुषी यस्य ।

सुवो भरं भारं जिहीर्षुरिति । जय संपादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वेति । किंच यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स भ्रान्तिं प्राप । मयभागा तु निमित्तमात्रम् । स भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादिहासेन च तस्य पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ३९ ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे ॥ द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥ १ ॥ संपाद्य धर्मराजस्य राजसूयमहोदयम् ॥ निहत्य सौभराजादीनथोपारमदच्युतः ॥२॥१॥२॥३॥ प्रत्यहं सकृत्पांसुमुष्टिमेकां ग्रसन्

स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ॥ बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे दुर्योधनमानभङ्गो नाम पञ्चसप्ततितमोऽध्यायः ॥७५॥ ॥छ॥ ॥ श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्निर्जितः संख्ये जरासन्धादयस्तथा ॥२॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥ संवत्सरान्ते भगवानाशुतोष उमापतिः ॥ वरेण छन्दयामास शाल्वं शरणमागतम् ॥ ५ ॥ देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥ तथेति गिरिशादिष्टो मयः परपुरंजयः ॥ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥ स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥ ८ ॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥ पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ॥ विहारान्स विमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥ ॥

भक्षयन् ॥ ४ ॥ संवत्सरान्त इति । आशुतोषोऽपि भगवानुमापतिः श्रीकृष्णविद्विषि शाल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत् । तस्यातिनिर्बन्धमालक्ष्य संवत्सरान्ते च वरेण छन्दयामासेच्छां कारितवान् वरं वृणीष्वेत्युवाचेत्यर्थः ॥ ५ ॥ ६ ॥ तथेति प्रतिज्ञाय गिरिशेनादिष्टोऽयस्मयं लोहमयं पुरं सौभसंज्ञं निर्माय रचयित्वा प्रादात् ॥ ७ ॥ तमसोऽन्धकारस्य धाम आश्रयम् । अन्यैर्दुरासदं दुष्प्राप्यम् ॥ ८ ॥ ९ ॥ प्रासादा गृहाः, अट्टालास्तदुपरिगृहाः, तोलिकास्तत्पर्यन्तकुड्यानि ताः । विहारान् क्रीडास्थानानि च स बभञ्ज । किंच विमानाग्र्यात्तस्माच्छस्त्रवृष्ट्यादयः पेतुः ॥ १० ॥ ॥ ॥

१ अयेन शुभदैवेन अदवीं तापरहितामिति वाग्देवीन्यजितोऽर्थः । २ देवत्वनरत्वादिजात्यवच्छिन्नशरीराणामभेद्यं भगवतस्तु तादृशशरीरत्वाभावाद्भेद्यमिति भावः । ३ भीषणमेव नतु घातकम् । ४ अयस्मयादीनि छन्दसीति साधु । ५ 'कृष्णकृतं' इति पाठः । ६ उपवनादिविहारान्तं बभञ्ज भंकुमुद्यतवानित्यन्तमेकं वाक्यम् । ततो दिश इत्यन्तमपरम् ।

आसारशर्करा धारासंपातवज्जलोपलाः ॥११॥ शं सुखं नाभ्यपद्यत ॥१२॥१३॥१४॥१५॥ तुमुलं व्याकुलम् । लोमहर्षणं रौद्रम् ॥१६॥ नैशं निशि भवं तम उष्णगुः सूर्य इव ॥ १७ ॥ किंच विव्याधेति । स्वर्णमयानि पुङ्खानि पृष्ठप्रान्ता येषां तैः । अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः । ध्वजिनीपालं सेनान्यम् । संनतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥ सैनिकान् भटान् । नेतॄन् सारथीन् ॥ १९ ॥ स्वपरसेनयोर्वर्तमानाः सर्वे पूजयामासुः संमानितवन्तः ॥ २० ॥ कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते एवं दुर्विभाव्यं दुर्वितर्क्यमभूत् ॥ २१ ॥ किंच क्वचिदिति । एवं तद्दुरवस्थितमनवस्थितं चाभूत् ॥ २२ ॥ २३ ॥ अग्निवद्दाहकोऽर्कवद्युगपत्सर्वतः संस्पर्शो येषां तैः । आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैर्दुःसहैः पीड्यमानं पुरमनीकानि च यस्य सः । परैर्यदुभिरीरितैर्मुक्तैः ॥ २४ ॥ भृशार्दिता अपि स्वं स्वं रणं स्वां स्वां युद्धभूमिम् ॥ २५ ॥ ॥ ॥

शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥ प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादिता दिशः ॥ ११ ॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण[1] यथा मही ॥ १२ ॥ प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना[2] निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥ सात्यकिश्चारुदेष्णश्च[3] साम्बोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविन्दश्च[4] गदश्च शुकसारणौ[5] ॥ १४ ॥ अपरे च महेष्वासा रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः[6] ॥ १५ ॥ ततः प्रववृते युद्धं शाल्वानां[7] यदुभिः सह ॥ यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥ विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः संनतपर्वभिः ॥ १८ ॥ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥ २० ॥ बहुरूपैकरूपं तद्दृश्यते[8] न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥ यत्र यत्रोपलक्ष्येत[9] ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुञ्चञ्छरान्सात्वतयूथपाः ॥ २३ ॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकः[10] शाल्वोऽमुह्यत्परेरितैः ॥ २४ ॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥ ॥ ॥

१ त्रिपुरेणासुरेण पीड्यमाना मही यथा सुखं नाप तथा । २ बाध्यमाना बाधितुमारभ्यमाणाः । ३ चारुदेष्णः प्रद्युम्नानुजः । ४ भानुविन्दो भानुः सत्यभामाज्येष्ठसुतः । ५ शुकनामा यादवः। सारणो रौहिणेयः । ६ रथेभादीनां यथापूर्वं श्रैष्ठ्यम् । ७ शाल्वानां शाल्वस्य तदीयानां चेत्यर्थः । ८ तत्सौभं पुरम् । ९ उप हीने किंचिदपि लक्ष्येत । १० 'पाट्यमानपुरानीकः' इति पाठः ।

मौर्व्या कार्ष्णायसमय्या । व्याहत्य प्रहृत्य ॥ २६ ॥ अपोवाह अन्यतो निनाय ॥ २७ ॥ २८ ॥ मत् मत्तो विना । क्लीबं चित्तं यस्य तेन । त्वया सूतेन ॥२९॥ पितरौ रामकृष्णावभिसङ्गम्य तत्पार्श्वं गत्वा ताभ्यां पृष्टः स्वयोग्यं किं नु वक्ष्यामीति ॥ ३० ॥ भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितं मत्क्लैब्यं कथयिष्यन्ति । तत्कथनमनुकरोति—कथं कथमिति ॥ ३१ ॥ विभो हे समर्थ । एतदपसर्पणम् । धर्ममाह—सूत इति ॥ ३२ ॥ अपोवाहितोऽपनीतः । उपसृष्ट उपसर्गं पीडां प्राप्त इति कृत्वा । यतः परेण शत्रुणा गदया हतः सन्मूर्च्छितो निःसंज्ञतां गतो भवानिति ॥३३॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे

शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक् प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥२६॥ प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिंदमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥२७॥ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥ न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥ किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥३०॥ व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥३१॥ ॥सारथिरुवाच॥ धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी॥३२॥ एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ॥ उपसृष्टः परेणेति मूर्च्छितो गदया हतः ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे शाल्वयुद्धे षट्सप्ततितमोऽध्यायः ॥७६॥ ॥श्रीशुक उवाच॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥ विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥ गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकन्धराः ॥ ४ ॥ एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥

उत्तरार्धे भावार्थदीपिकायां टीकायां षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ सप्तयुक्सप्ततितमे नानामायाविचक्षणः ॥ कृष्णेनागत्य शाल्वस्तु हतः सौभं च चूर्णितम् ॥ १ ॥ दंशितः सन्नद्धः ॥ १ ॥ विधमन्तं क्षपयन्तम् । प्रतिहत्य प्रतिरुध्य ॥ २ ॥ अष्टानां विनियोगमाह—चतुर्भिरिति ॥ ३ ॥ सौभेयाः सौभस्थाः ॥ ४ ॥ नवानां रात्रीणां समाहारो नवरात्रम्, त्रयाणां नवरात्राणां समाहारस्त्रिणवरात्रम् । सप्तविंशतिमहोरात्राणीत्यर्थः । तुमुलमाकुलम् । उल्बणं घोरम् ॥ ५ ॥

१ अशीर्णवक्षस्थलमपि तोप० । २ 'युद्धात्क्रम्यांत' इति पाठः । ३ दंशित इति मध्ये सूतेन कथनोच्चारणात् । ४ 'शरम्' इति पाठः ।

परमतमुपन्यस्यति—इन्द्रप्रस्थं गत इत्यादिना ॥ ६ ॥ ७ ॥ आह चेति स्वगतमेव पथि चिन्ताविजृम्भितभाषणम् । आर्यमिश्राभिसङ्गतो बलभद्रसहितः ॥ ८ ॥ दुर्निमित्तदर्शनाकुलचित्त एवं चिन्तयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य सौभं च शाल्वराजं च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥९॥ ते त्वया ॥१०॥ आस्थाय सम्यगधिष्ठाय अरुणानुजं ध्वजे वर्तमानं गरुडम् ॥ ११ ॥ हतप्रायस्य बलस्य सैन्यस्येश्वरः ॥१२॥१३॥ तं च शाल्वम् ।

इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥६॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ ७ ॥ आह चाहमिहायात आर्यमिश्राभिसङ्गतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥९॥ रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥ इत्युक्तश्चोदयामास रथमास्थाय दारुकः ॥ विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥ तामापतन्तीं नभसि महोल्कामिव रंहसा ॥ भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १३ ॥ तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ॥ अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥ १४॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ॥ बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ निनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥ यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥१७॥ तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥ ॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ॥ पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १९ ॥ इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ॥ तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ २० ॥ ॥ ॥

शरसंदोहैः शरजालैः । खं सूर्य इव रश्मिभिरिति सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य । अचिन्त्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् । अयत्नेनैव रश्मिवच्छरजालप्रसारणात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १४ ॥ दोर्बाहुम् ॥ १५ ॥ १६ ॥ सख्युः शिशुपालस्य । ईक्षतामस्माकम् । प्रमत्तोऽनवहितः । व्यापादितो निहतः ॥ १७ ॥ अपराजितोऽहमिति मानिनं मानवन्तम् । अपुनरावृत्तिं मृत्युम् । तिष्ठेः स्थास्यसि ॥ १८ ॥ १९ ॥ २० ॥ ॥

१ राममित्यध्याहारः ।२ 'च' इति पाठः । ३ निमित्तेति 'मुनिवासनिवासे किं घटेतारिष्टदर्शनम्' इति राद्धान्तेऽपि तल्लीलयैव निमित्तोद्भवस्य सुवचत्वान्न विरुद्धम्। ४ आर्यः श्रीरामः स एव मिश्रः पूज्यस्तेन । ५ सभ्रमो भयानुभावावेगः । ६ दोः सव्यं दोःशब्दस्य क्लीबत्वमपि ककुद्दोषणीत्यादिभाष्यप्रयोगात् । ७ शार्ङ्गपातस्तद्वीर्यख्यापनाय लीलाकृत इति न विरुद्धम् । ८ भ्रातुः स्वपैतृष्वसेयस्य ।

॥ २१ ॥ २२ ॥ घृणी दयावान् ॥ २३ ॥ २४ ॥ २५ ॥ जनिता जनयिता । ईशश्चेच्छक्तश्चेत् ॥ २६ ॥ २७ ॥ स्वबोधः स्वतःसिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्यस्वभावे उपप्लुतो निमग्न आस्ते अतिष्ठत् । ततस्तत्सर्वमासुरीं मायामबुध्यत् मायेयमिति ज्ञातवान् ॥ २८ ॥ स्वाप्नं स्वप्नप्रपञ्चं यथा ॥ २९ ॥

गदायां संनिवृत्तायां शाल्वस्त्वन्तरधीयत ॥ ततो मुहूर्ते आगत्य पुरुषः शिरसाच्युतम् ॥ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥ कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ॥ बद्ध्वापनीतः शाल्वेन सौनिकेन यथा पशुः ॥ २२ ॥ निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ॥ विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २३ ॥ कथं राममसम्भ्रान्तं जित्वाऽजेयं सुरासुरैः ॥ शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥ २४ ॥ इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ॥ वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥ एष ते जनिता तातो यदर्थमिह जीवसि ॥ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥ एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः ॥ उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥ ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषङ्गतः ॥ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ॥ स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ २९ ॥ एवं वदन्ति राजर्षे ऋषयः केच नान्विताः ॥ यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत ॥ ३० ॥ ॥ ॥ ॥

एवं परमतमुपन्यस्तं निराकरोति—एवमिति । केच केचन । नान्विता अनन्विताः पूर्वापरानुसन्धानरहिताः । तदाह—यत्स्ववाच इति । तत्रानुस्मरन्तीत्यर्थः । अयमभिप्रायः—न तावद्राजसूयार्थं रामेण सह गतः श्रीकृष्णः, संकर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ॥ ३० ॥ ॥ ॥

१ कृष्णसंनिधावागतायाम् । २ मुहूर्तेऽतीते इति शेषः । 'मुहूर्तात्' इति पाठः । ३ गीर्देवीमते—अप्रहित इति च्छेदः । ४ बालत्वार्थे—अपिना पितृसदृशो [illegible] इत्यर्थः । ५ गीर्देवी तु तत्रापि वास्तवमेव भापयति—[illegible] विप्रियं निशम्य अमानुषीमैश्वरीं प्रकृतिं शोकादिराहित्यमेव गतः । [illegible] भगवान् । [illegible] पित्रादिस्नेहं च विद्वानिति भावः । किंच विशिष्टं सर्वज्ञं मनो यस्येदृशः को प्राज्ञो येन सः [illegible] स्वजनान्वित [illegible] । ६ [illegible]—कथं नीतोऽपि तु नैव नीतः । किंच मे पिताऽतोऽपि न नीत इत्यर्थः । विधिरपि अबलवान् अग्रतस्तोऽकिंचित्कर इत्यर्थः । ७ बालवाचे तु—[illegible] जीवसि बलं प्रकटयसि [illegible] मायामयः पुरुषः स तवाऽजनिता जनको न । अ इति नञर्थकं पृथक्पदं । किंतु अतातस्तातसदृशमात्रं । तस्मादिन्द्रजालमिव कौतुकेन त्वयि पश्यति अहं हनिष्यामि । किमु तदाह—ईश इति । चेदिति निश्चये । यदि वेदाः प्रमाणमितिवत् । तथा च [illegible] संसारादुद्धरेत्यर्थ इति तोप० । ८ 'उत्पाट्य' इति पाठः । ९ मयासुरेणोदिताम् । १० विरुध्येतेति वचनव्यत्यय आर्षः । विरुध्येरन्नित्यर्थः । 'विरुध्येरन्' इति पाठः क्वचित् । ११ 'तत्र स्मरन्त्युत' इति पाठः । १२ पूर्वं एकसप्ततितमेऽध्याये त्रयोदशे श्लोके उक्तत्वात् । [illegible] सप्तसप्ततितमेऽध्यायेऽष्टमश्लोके आर्यमिश्राभिसंवृत इति [illegible] विरुध्येतेत्यर्थः ।

असंभावितं चेत्याह—क शोकमोहाविति । भयं वा दुर्निमित्तदर्शनकृतं नूनं हन्युः पुरीं ममेति यदुक्तं यच्च हस्ताच्छार्ङ्गं न्यपतदित्युक्तं तद्वयं वा केति । अज्ञेषु संभवो येषां ते । अखण्डितानि विज्ञानज्ञानैश्वर्याणि यस्य सः । तत्र विज्ञानं स्वरूपविषयम् । ज्ञानं बाह्यविषयम् ॥ ३१ ॥ किंच यस्य पादसेवया ऊर्जिता पुष्कला या आत्मविद्या तया अनादिश्चासावात्मविपर्ययग्रहश्च अहं कृशः सुखी दुःखीत्यादिलक्षणस्तं हिन्वन्ति नाशयन्ति सन्तः । ऐश्वरं पदं च । तस्य सतां गतेः कुतो नु मोह इति । अतो नैतद्वचनं सत्यमित्यर्थः ॥ ३२ ॥ किं तर्हि सत्यं तदाह—तं शस्त्रपूगैरिति । वर्म कवचम् । रुरोज बभञ्ज ॥ ३३ ॥ ३४ ॥

क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ॥ क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखण्डितः ॥ ३१ ॥ यत्पादसेवोर्जितयात्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ॥ लभन्त आत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥ तं शस्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ॥ विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ॥ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाथ रथाङ्गमद्भुतम् ॥ वधाय शाल्वस्य लयार्कसंनिभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥ जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ॥ वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥ तस्मिन्निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुन्दुभयो राजन्दिवि देवगणेरिताः ॥ सखीनामपचितिं कुर्वन्दन्तवक्रो रुषाभ्यगात् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे सौभवधो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ छ ॥ ॥

॥ श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन्पारोक्ष्यसौहृदम् ॥ १ ॥ एकः पदातिः संक्रुद्धो गदापाणिः प्रकम्पयन् ॥ पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥ तं तथायान्तमालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥ ३ ॥ ॥ ॥

लयार्कसंनिभं प्रलयकालीनसूर्यसदृशम् ॥ ३५ ॥ ३६ ॥ देवगणैरीरिता वादिताः । किंच सखीनामिति ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ ततोऽष्टसप्ततितमे दन्तवक्त्रविदूरथौ ॥ हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥ १ ॥ सखीनामपचितिं कुर्वन्नित्युक्तं तदेवाह—शिशुपालस्येति । पारोक्ष्यसौहृदं परोक्षे करणीयं सुहृत्कृत्यम् ॥ १ ॥ २ ॥ प्रत्यधात् प्रतिरुरोध ॥ ३ ॥ ॥

१ 'आत्मानं' इति पाठः । २ तोये समुद्रे । ३ नितरां पतिते मृते इत्यर्थः । ४ हते नाशिते । ५ अपचितिं प्रत्युपकारम् । ६ महासत्त्वो महाकायो भगवता व्यदृश्यत ।

'मुकुन्दं प्राह दुर्मद' इत्यादेरधिक्षेपपरता स्फुटैव । परमार्थस्तु दुर्मदो गतमदः प्राह—मुकुन्दं तृतीये जन्मनि मुक्तिदानार्थमागतम् । अद्येति । जन्मत्रयेऽन्विष्यमाणोऽद्य ब्रह्मशापावसाने भवान्मम स्वामी दृष्टिपथं गतः प्राप्तः । एतद्दिष्ट्या दिष्ट्या भद्रं भद्रम् । अतिहर्षे वीप्सा ॥ ४ ॥ किंच हे कृष्ण, त्वमस्माकं मातुलेयो बन्धुः । एवमपि मित्रध्रुक् मित्राणि घातितवान्, मां च जिघांससि तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः । अतस्त्वामेतावन्मात्रमहं याचे । किं तदाह—अमन्द सर्वसहनसमर्थ । क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि तामेकवारं सहस्वेति । ननु वज्रतुल्यां त्वद्गदां को वा सहेत नैवमित्याह—अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः ॥५॥ नन्वेवं हनने कस्तव पुरुषार्थस्तमाह—तर्हीति । अज्ञ न विद्यते ज्ञो यस्मात्, हे सर्वज्ञेत्यर्थः ।

गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः ॥ दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ॥ अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥ एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपम् ॥ गदयाऽताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥ गदयाभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनान्तरे ॥ ८ ॥ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ॥ प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥ ११ ॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ १२ ॥ एवं सौभं च शाल्वं च दन्तवक्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥ १३ ॥ मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥ १४ ॥ उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥ १५ ॥ एवं योगेश्वरः कृष्णो भगवान् जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १६ ॥ ॥ ॥

परमार्थतः स्वामिनमेतद्देहसंबन्धेन बन्धुरूपमरिं ब्रह्मशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्यमुपैष्यामि । विशेषेणाधीयते मनसि चिन्त्यत इति व्याधिः । देहेऽन्तर्यामितया चरतीति तथा तमीश्वरं हत्वा क्षात्रधर्मेणाराध्य । हन्तेर्गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञात्वेति वा । तेन यथा पित्रादीनामानृण्यमुपयन्ति तद्वदिति ॥६॥ रूक्षैरित्यादिप्रतीत्यभिप्रायेण । तोत्रैरङ्कुशादिभिः ॥७॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥ एवं श्रीकृष्णो महाबलानपि लीलया जयत्येवेति कृत्वा स कदाचिज्जरासन्धादिभिर्निर्जित इति पशुदृष्टीनामीर्यते । नित्यजये हेतवः—योगेश्वरो भगवान् जगदीश्वर इति ॥ १६ ॥ ॥ ॥

१ केशबाह्वङ्घ्रीनित्येकत्वाभाव आर्षः । २ सूक्ष्मतरमिन्द्रियाग्राह्यम् । ३ तज्जिघांसया तत्प्राप्तीच्छया । ४ ईयते प्रतीयते ।

'विदूरथान्तमामथ्य पूतनादि दनोः कुलम् ॥ कृष्णस्तूपारमन्नाराद्रामोऽहन्सूतवल्वलौ' ॥ १ ॥ तत्रसङ्गमाह—श्रुत्वेति ॥१७॥ प्रतिस्रोतं प्रतिलोमम् ॥ १८ ॥ सुदर्शनं तीर्थम् । चक्रं चक्रतीर्थम् ॥ १९ ॥ यमुनामनु यानि तीर्थानि गङ्गामनु च यानि तानि सर्वाणि गत्वा नैमिषमरण्यं जगाम ॥ २० ॥ अभिप्रेत्य श्रीराम इति ज्ञात्वा ॥ २१ ॥ महर्षेर्व्यासस्य ॥ २२ ॥ सूतं प्रतिलोमजम् । न कृतं प्रह्वणमञ्जलिश्च येन तम् । अध्यासीनं च तान् । तेभ्योऽप्युच्चैरासीनमित्यर्थः ॥ २३ ॥ २४ ॥ अजानन्नध्यास्त इति चेन्नैवमित्याह—ऋषेरिति ॥ २५ ॥ ननु बहुज्ञः कथमेवं कुर्यात्तत्राह—अदान्तस्येति । गुणाय यथोचितानुष्ठानाय

श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः ॥ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥ पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥ यमुनामनु यान्येव गङ्गामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ २१ ॥ सोऽर्चितः सपरीवारकृतासनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ २२ ॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥ यस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४ ॥ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥ अदान्तस्याविनीतस्य वृथापण्डितमानिनः ॥ न गुणाय भवन्ति स्म नटस्येवाजितात्मनः ॥ २६ ॥ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ २७ ॥ एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ २८ ॥ हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ॥ आयुश्चात्माक्लमं तावद्यावत्सत्रं समाप्यते ॥ ३० ॥ ॥ ॥

॥ २६ ॥ विप्रानध्यास्तामन्यद्वा किंचित्करोतु किं तवेति चेत्तत्राह—एतदर्थ इति । धर्मध्वजिन उत्तमलिङ्गधारिणः ॥ २७ ॥ भावित्वादिति । नहि भवितव्यं केनापि परिहर्तुं शक्यत इत्यर्थः । अहनत् अहन् ॥ २८ ॥ ते त्वया ॥ २९ ॥ अधार्मिकप्रतिलोमजवधः कोऽयमधर्म इति चेत्तत्राहुः—अस्येति । पुराणप्रवचनायात्मनः शरीरस्य नास्ति क्लमो यस्मिंस्तदायुश्च दत्तमिति ॥ ३० ॥ ॥ ॥ ॥

१ प्रतिलोमं सम्मुखमित्यर्थः । २ व्यासस्य शिष्यमित्यविनयायोग्यत्वम् । ३ ब्राह्मण्यां क्षत्रियाज्जातम् । ४ मध्यस्थ उभयपक्षाग्रहरहितः । प्रययौ द्वारकातः प्रतस्थे । ५ पृथूदकं पृथुनाश्वमेधशतेन यत्रेष्टं तत्कुरुक्षेत्रवर्ति, बिन्दुसरः कर्दमाश्रमं गुर्जरदेशे, त्रितकूपं सरस्वत्यन्तर्वर्ति त्रितकूपेत्तीर्थं, सुदर्शनं नाम तत्रैव तीर्थं, विशालं सरस्वत्यन्तर्वर्ति, 'विशालाम्' इति पाठे अवन्तीं, ब्रह्मचक्रतीर्थे सरस्वत्यामेव, प्राची सरस्वती कुरुक्षेत्रवर्तिनीति तोष० । ६ अर्थादितिहासादिसहितानि धर्मशास्त्राणीत्यनुषङ्गः । ७ वस्तुतो नास्ति धर्मो यस्मात्तस्य परमधर्म इत्यर्थः ।

ब्रह्मवधेऽपि किं ममेश्वरस्येति चेत्सत्यमेव, तथापि प्रायश्चित्तं कर्तव्यमित्याशयेनाहुः—योगेश्वरस्येति सार्धेन। आम्नायो 'ब्राह्मणो न हन्तव्य' इत्यादिलक्षणः ॥ ३१ ॥ तथाप्येतस्या ब्रह्महत्यायाः पावनं प्रायश्चित्तं हे लोकपावन, अनन्यचोदितः स्वयमेव भवान् यदि करिष्यति तर्हि लोकसंग्रहो भविष्यति नान्यथेति ॥ ३२ ॥ वधस्य निर्वेशं प्रायश्चित्तम्। प्रथमे कल्पे मुख्यकल्पे। विधीयतामुपदिश्यताम् ॥ ३३ ॥ किंच वत हे मुनयः, एतस्य दीर्घमायुः सत्त्वं बलमिन्द्रियं तत्पाटवं च। अन्यच्च यद्भवद्भिराशासितमपेक्षितं तद्बूत सर्वम् ॥३४॥ अस्त्रादीनां यथा सत्यता भवेदस्माकं च वचः सत्यं यथा भवेत्तथा विधीयतामित्यर्थः ॥३५॥ तथा संपादयन्नाह—आत्मा वा इति। 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥' इत्यादिवेदानुशासनं वेदव-

अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः ॥ ३१ ॥ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन ॥ चरिष्यति भवाँल्लोकसंग्रहोऽनन्यचोदितः ॥ ३२ ॥ ॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥ ३३ ॥ दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च ॥ आशासितं यत्तद्बूत साधये योगमायया ॥ ३४ ॥ ॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ ३५ ॥ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान् ॥ ३६ ॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥३७॥ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥ ३८ ॥ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥३९॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादश मासांस्तीर्थस्नायी विशुध्यसे ॥४०॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥

चनम्। तस्मादस्य रोमहर्षणस्य पुत्र उग्रश्रवा भवतां पुराणप्रवक्ता भवेत्स चायुरादिमांश्च भवेत्। अतः साक्षादजीवनादस्य मृ(तोऽ)स्य सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥ प्रथमं तावदपेक्षितं कथयत तदहं करिष्यामीत्याह—किं वः काम इति। किंविषयो वः कामो वर्तते तद्बूतेति। अथानन्तरं ब्रह्मदण्डं गृहीत्वाऽपचितिं निष्कृतिमजानतो मे हे बुधाः, यथावच्चिन्त्यतामपचितिरिति ॥ ३७ ॥ प्रथमं तावदपेक्षितं कर्तव्यं कथयन्ति—इल्वलस्येति द्वाभ्याम् ॥ ३८ ॥ ३९ ॥ प्रायश्चित्तमाहुः—ततश्चेति। परीत्य प्रदक्षिणीकृत्य। सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमित्यविरोधः। सुसमाहितः कामक्रोधादिरहितः। चरित्वा कृच्छ्राणि ॥४०॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ ॥ ॥ ॥

१ अपचितिं प्रायश्चित्तम्। २ पर्वणीति वीप्सया सर्वपर्वस्वागमनम्। ३ हे दाशार्ह धर्मपालनार्थं तद्वंशावतीर्ण। ४ 'द्वादशान्' इति चित्सुखपाठः। ५ 'दीर्घतायीति गुप्यसे' इति पाठः।

ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये ॥ निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥ १ ॥ उपावृत्ते प्राप्ते ॥ १ ॥ २ ॥ भिन्नो विदीर्णोऽञ्जनचय उपमा यस्य तमतिकृष्णमित्यर्थः । तप्तताम्रवच्छिखा श्मश्रूणि च यस्य तम् । दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तम् ॥ ३ ॥ ४ ॥ ५ ॥ अरुणो रुधिरेण दैत्यः । शैलो धातुभिर्यथेति ॥ ६ ॥ ७ ॥ श्रियो धामान्यम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥ किं तत्सरः । यत इति । आस्रवदुदगात् ॥ ९ ॥ अनुस्रोतेनानुलोमतः ।

॥ श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगन्धस्तु सर्वशः ॥ १ ॥ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥ २ ॥ तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥ सस्मार मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ॥ मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥ सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतो[1]ऽरुणः ॥ ६ ॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिञ्चन्महाभागा वृत्रघ्नं[2] विबुधा यथा ॥ ७ ॥ वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ॥ रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीन् जगाम पुलहाश्रमम् ॥ १० ॥ गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄन्[3]निष्ट्वा गङ्गासागरसङ्गमे ॥ ११ ॥ उपस्पृश्य[4] महेन्द्राद्रौ रामं[5] दृष्ट्वाभिवाद्य च ॥ सप्तगोदावरं[6] वेणां पम्पां[7] भीमरथीं ततः ॥ १२ ॥ स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः ॥ १३ ॥ कामकोष्णीं पुरीं कांचीं कावेरीं च सरिद्वराम् ॥ श्रीरङ्गाख्यं महापुण्यं यत्र संनिहितो हरिः ॥ १४ ॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५ ॥ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥ ॥ ॥

पुलहाश्रमं हरिक्षेत्रम् ॥ १० ॥ गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणे च आप्लुतः । इष्ट्वा संपूज्य ॥ ११ ॥ १२ ॥ श्रीशैलं श्रीपर्वतम् ॥ १३ ॥ काञ्चीं पुरीम् ॥ १४ ॥ १५ ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

१ 'वज्राहतः' इति पाठः । २ वृत्रघ्नमिति वृत्रवधान्ते देवा यथेत्यर्थः । ३ पितॄनिति पितृपितामहयोः सत्त्वात्प्रपितामहादिपितृश्राद्धानि कृत्वेत्यर्थः । 'धृद्धो तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥' इति स्मृतेः । ४ उपस्पृश्य स्नात्वा । ५ रामं जामदग्न्यम् । ६ 'सप्तगोदावरीं' इति क्वचन्तपाठस्त्वार्षः । ७ पंपाख्यं सरः ।

दक्षिणमर्णवम् ॥ १७ ॥ फाल्गुनमनन्तपुरम् । पञ्चाप्सरसं सरः । अस्पर्शदस्पृशत् ॥ १८ ॥ केरलादीन्देशान् ॥ १९ ॥ द्वीपमयनं यस्यास्ताम् ॥ २० ॥ ॥ २१ ॥ २२ ॥ विनशनं कुरुक्षेत्रम् ॥ २३ ॥ विवक्षुर्वक्तुमिच्छुः । किं वदिष्यतीति भिया तूष्णीमासन्निति ॥ २४ ॥ २५ ॥ २६ ॥ अन्यः पराजयो वा ।

तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ॥ योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ १७ ॥ ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् ॥ विष्णुः संनिहितो यत्र स्नात्वाऽस्पर्शद्द्वायुतम् ॥ १८ ॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ॥ गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥ २० ॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥ श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे ॥ सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ २२ ॥ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ॥ वारयिष्यन्विनशनं जगाम यदुनन्दनः ॥ २३ ॥ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किंविवक्षुरिहागतः ॥ २४ ॥ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २५ ॥ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर ॥ एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम् ॥ २६ ॥ तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥२७॥ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥२८॥ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥२९॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥३०॥ तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥ स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठलंकृतः ॥ ३२ ॥ ॥ ॥

रणः संग्रामः ॥ २७ ॥ अर्थवद्वाक्यम् ॥ २८ ॥ दिष्टं प्राचीनं कर्म । समुपागतः सङ्गतः ॥ २९ ॥ क्रत्वङ्गं यज्ञमूर्तिम् ॥ ३० ॥ आत्मन्यधिष्ठाने विश्वगं सर्वानुस्यूतं येनैव विदुः पश्यन्ति तद्विशुद्धं विज्ञानं व्यतरददात् ॥ ३१ ॥ ३२ ॥ ॥ ॥ ॥

१ अस्पृशद्दर्शो । २ 'दण्डकान्' इति पाठः । ३ इदं श्रीकृष्णेनेति शेषः । ४ द्वारकामागम्य गुरून्हर्षयित्वा जगामेति भावः । ५ वीर्यज्ञानादिभिर्निवृत्तोऽखिलो विग्रहः कलहस्तत्प्रयुक्तो दोषो यस्येति वाल० । ६ ज्ञातयः संबन्धिनः, बन्धवः कोशलराजादयः, सुहृदो मैथिलाद्याः ।

॥ ३३ ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ छ ॥
अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् ॥ संपूज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥ १ ॥ सुरारिमारको हरिः पुरा चकार शं सताम् ॥ अतः परं विनैव तन्निजोपकारमाचरत् ॥ २ ॥ रामचरितानि श्रुत्वा पुनर्मुकुन्दवीर्याणि पृच्छति—हे भगवन्, श्रोतुमिच्छामीत्यन्वयः ॥ १ ॥ उत्तमश्लोकस्य श्रीकृष्णस्य सत्यो मनोहरा विषयवैतृष्ण्यजनिकाः कथाः । विशेषज्ञः सारवित् । विषण्णो विषादं प्राप्तः ॥ २ ॥ कथाश्रवणं स्तुवन् दृष्टान्ततयाऽन्यार्थानाह—सा वागिति ।

ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ॥ अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥३३॥ योऽनुस्मरेत रामस्य कर्मा-
ण्यद्भुतकर्मणः ॥ सायंप्रातरनन्तस्य विष्णोः स दयितो भवेत् ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ राजोवाच ॥ भगवन्यानि चान्यानि मुकुन्दस्य महा-
त्मनः ॥ वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामि हे प्रभो ॥ १ ॥ को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशे-
षज्ञो विषण्णः काममार्गणैः ॥ २ ॥ सा वाग्यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसन्तं स्थिरजङ्ग-
मेषु शृणोति तत्पुण्यकथाः स कर्णः ॥३॥ शिरस्तु तस्योभयलिङ्गमानमेत् तदेव यत्पश्यति तद्धि चक्षुः ॥ अङ्गानि विष्णो-
रथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥४॥ ॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे
भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥ ॥श्रीशुक उवाच॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त
इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ ६ ॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा
च तथाविधा ॥ ७ ॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ दरिद्रा सीदमाना सा वेपमानाभिगम्य च ॥ ८ ॥ ननु
ब्रह्मन्भगवतः सखा साक्षाच्छ्रियःपतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ ९ ॥ तमुपैहि महाभाग साधूनां
च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ १० ॥ ॥ ॥

तावेव करौ यौ तत्कर्मकर्तारौ । तदेव मनो यत्स्थिरजङ्गमेषु वसन्तं स्मरेत् । यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः ॥ ३ ॥ उभयलिङ्गं स्थिरं जङ्गमं च तस्यैव लिङ्गमिति मत्वा आनमेत्तदेव शिरः । तदेव तस्य लिङ्गमित्येव यत्पश्यति तदेव चक्षुः । तान्येवाङ्गानि यानि पादोदकं भजन्तीति ॥ ४ ॥ ५ ॥ ॥ ६ ॥ तथाविधा कुचैला । किंच क्षुत्क्षामा यत्किंचित्संपन्नमन्नं तस्मै परिविष्य स्वयं क्षुधा जीर्णा ॥ ७ ॥ पतिव्रता सती । म्लायता शुष्यता वदनेन । सीदमाना भर्तुर्भोगसंपादनाशक्त्याऽवसीदन्ती । वेपमाना भयेन कम्पमाना ॥ ८ ॥ ९ ॥ १० ॥ ॥ ॥ ॥

१ स्मरेत स्मरेत् । २ कामस्य विषयभोगस्य मार्गणैरन्वेषणैः श्लेषेण कामबाणैर्विषादं प्राप्तः । ३ उभयलिङ्गं तत्प्रतिमारूपं वक्ष्यकल्पं चेति तोप० । ४ प्रयत्नं विना समीपलब्धेनार्थेन वृत्तिं कल्पयन् । ५ 'दरिद्रम्' इति पाठे पत्युर्विशेषणम् । ६ भगवतः पूज्यस्य तव । ७ उपैहि समीपे गच्छ । 'उपेहि' इति पाठः । ८ लिङ्गमनुमापकं मूर्तिर्वा । ९ वदनेनोपलक्षितेति शेषः ।

१५३

भोजवृष्ण्यन्धकेश्वर इति तत्स्वीकारमात्रेण सर्वे ते दास्यन्तीति भावः। नात्यभीष्टान्परिपाकविरसत्वात् ॥ ११ ॥ १२ ॥ अप्यस्ति किमस्तीति प्रश्नः ॥ १३ ॥ ॥ १४ ॥ मह्यं मम ॥ १५ ॥ गुल्मानि रक्षार्थं सैन्यस्थानानि। कक्षाः प्रतोलीः। अतीयायातिक्रम्य जगाम। सद्विजो द्विजैः सहितः। ततश्च अगम्या दुर्गमा येऽन्धका वृष्णयश्च तेषां गृहेषु ॥१६॥ तथा हरेर्ब्यष्टसहस्राणां महिषीणां च ये गृहास्तेषु मध्ये श्रीमदेकतमं गृहं विवेश। तदा च स द्विजो ब्रह्मानन्दं गतो

आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ॥ स्मरतः पादकमलमात्मानमपि यच्छति ॥ किं न्वर्थकामान्भजतो नात्यभीष्टान् जगद्गुरुः ॥ ११ ॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ १२ ॥ इति संचिन्त्य मनसा गमनाय मतिं दधे ॥ अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥ १३ ॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् ॥ चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥ कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५ ॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः ॥ विप्रोऽगम्यान्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १६ ॥ गृहं ब्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ १७ ॥ तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥ सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ॥ प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः ॥ १९ ॥ अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥ २० ॥ अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ॥ व्यलिम्पद्दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ॥ २१ ॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥ अर्चित्वावेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥ २२ ॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ॥ देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै ॥ २३ ॥ अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ २४ ॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन च ॥ २५ ॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ २६ ॥ ॥ ॥

यथा तथा बभूवेति शेषः ॥ १७ ॥ पर्यग्रहीत्पर्यरम्भत ॥ १८ ॥ अब्बिन्दूनानन्दाश्रूणि ॥ १९ ॥ समर्हणमुपायनमुपहृत्य समर्प्य। पादावनेजनीरपः ॥ २० ॥ २१ ॥ ॥ २२ ॥ धमनिभिः शिराभिः सन्ततं व्याप्तम् ॥ २३ ॥ अवधूतं मलिनम् ॥ २४ ॥ विस्मयमाह—किमनेनेति द्वाभ्याम् ॥ २५ ॥ संभृतः संमानितः ॥ २६ ॥

१ भोजादय ईश्वरा यस्मात्। २ स्मरतो भजत इति चतुर्थ्यर्थे षष्ठ्यौ तोष०। ३ 'मुहुः' इति पाठः। ४ दीयतामित्युवाचेति शेषः। ५ अच्युतोऽविच्छिन्नो धर्मोऽस्त्येषाम्, अच्युतस्य धर्म आराधनं येषामस्तीति वा। ६ निर्वृत आनन्दितः। ७ चन्दनादिभिः सहैव घृष्टेन गन्धेन। ८ 'शैव्या' इति पाठे तस्या रुक्मिणीगृहागतत्वं कल्प्यम्। ९ 'संमतः' इति पाठः। १० 'प्रिया' इति पाठः।

सतोर्वसतोः । गृह्य गृहीत्वा ॥२७॥ भार्या ऊढा परिणीता न वेति गृहस्थलिङ्गदर्शनाद्भोगादर्शनाच्च संशयादिव प्रश्नः ॥२८॥ अप्रतिषेधादुद्वाहमनुमतं मत्वाह—प्राय इति । तर्हि ते चित्तं नूनमकामविहतं कामैर्विहतं न भवतीति मे विदितम् । तथा हि—धनेषु वस्त्रादिषु नैवातिप्रीयसे । हे विद्वन्निति । विदुषस्तवैतद्युक्तमिति भावः ॥ २९ ॥ कामहतत्वाभावे किं गृहधर्मक्लेशेनेत्याशङ्क्याह—केचिदिति । दैवीरीश्वरमायारचिताः प्रकृतीर्विषयवासनास्त्यजन्तः । कामैरनाकृष्टचेतसामपि कर्मकरणे दृष्टान्तः—यथाऽहमिति । लोकसंग्रहं लोकस्य संग्रहो ग्रहणं यथा भवति तथाहमीश्वरोऽपि कर्माणि यथा करोमि तद्वत् ॥३०॥ नौ आवयोः यतो गुरोः विज्ञेयं परमात्मतत्त्वम् । तमसः संसारस्य ॥ ३१ ॥ तत्रात्मज्ञानप्रदस्य गुरोरत्यन्तं पूज्यत्वं वक्तुं पुरुषस्य त्रीन् गुरूनाह—स वा इति । इह संसारे यत्र सम्भवो जन्ममात्रं स पिता तावदाद्यः प्रथमो गुरुः पूज्यः । कर्मविद्याप्रदं गुरुमाह—द्विजातेः सतः पुंसः सत्कर्मणां यत्र संभवः । उपनीय वेदाध्यापक इत्यर्थः । स द्वितीयो गुरुः, यथाऽहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः । ब्रह्मविद्याप्रदं गुरुमाह—आश्रमिणां सर्वेषामपि ज्ञानदो यः स तु साक्षादहमेवेति

कथयांचक्रतुर्गाथाः पूर्वा गुरुकुले सतोः॥आत्मनो ललिता राजन्करौ गृह्य परस्परम् ॥२७॥ ॥ श्रीभगवानुवाच॥अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥२८॥ प्रायो गृहेषु ते चित्तमकामविहतं तथा ॥ नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥ २९ ॥ केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ॥ त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसंग्रहम् ॥३०॥ कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥३१॥ स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ॥ आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुः॥३२॥नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥३३॥ नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा॥३४॥अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ[2] ॥ गुरुदारैश्चोदितानामिन्धनानयने क्वचित्[1] ॥३५॥ प्रविष्टानां[3] महारण्यमपर्तौ सुमहद्द्विज ॥ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥३६॥

॥ ३२ ॥ अतो ज्ञानप्रदं गुरुरूपं मामाश्रित्य ये संसारं तरन्ति ते बुद्धिमन्त इत्याह—नन्विति। हे ब्रह्मन्, ते ननु वर्णाश्रमवतां मध्येऽर्थकोविदाः । इह मनुष्यजन्मनि, तत्रापि वर्णाश्रमवत्त्वे सति ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेणाञ्जः सुखेनैव भवार्णवं तरन्तीति ज्ञानप्रदाद्गुरोरधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥ अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह—नाहमिति । इज्या गृहस्थधर्मः, प्रजातिः प्रकृष्टं जन्म उपनयनं तेन ब्रह्मचारिधर्म उपलक्ष्यते ताभ्याम्, तथा तपसा वनस्थधर्मेण, उपशमेन यतिधर्मेण वा अहं परमेश्वरस्तथा न तुष्येयं यथा सर्वभूतात्माऽपि गुरुशुश्रूषयेति ॥ ३४ ॥ किंच अस्माकं गुरुशुश्रूषणं किमपि दैवादेव संपन्नं तत्किं त्वया स्मर्यत इति पृच्छति—अपि न इति । गुरौ निवसतामस्माकं यत्किमपि वृत्तं तत् । क्वचित्कदाचित् ॥ ३५ ॥ अपर्तौ अपगते ऋतौ, अकाल इत्यर्थः । वातश्च वर्षं च तयोः समाहारः । स्तनयित्नवो गर्जितानि चाभवन् ॥ ३६ ॥ ॥ ॥

१ 'कचित्' इति पाठः । २ गुरौ गुरुसमीपे । ३ प्रविष्टेष्वस्मासु सत्सु ।

निम्नं कूलं नतमुन्नतं च स्थानम् ॥ ३७ ॥ अम्बूनां संप्लवो व्यामिश्रणं यस्मिन्नेकोदके तस्मिन्वन इत्यर्थः । परिवभ्रिम । 'भ्रस्ज् भरणे' इति धातो रूपम् । परि परितो वभ्रिम । इडागमश्छान्दसः । भारान् धृतवन्त इत्यर्थः ॥ ३८ ॥ ३९ ॥ उवाच कृपया श्लोकत्रयीम् । यया वयं कृतार्था इत्याह—अहो इति । आत्मा देहः ॥ ४० ॥ गुरोर्निष्कृतं प्रत्युपकारः । सर्वे अर्था यस्मात्स आत्मा देहस्तस्यार्पणं विनियोगः ॥ ४१ ॥ अयातयामानि यातो यामो यस्य पक्वस्यान्नस्य तद्गतसारं भवति तद्वदन्यदपि गतसारं गौण्या वृत्त्या यातयाममित्युच्यते । अगतसाराणि छन्दांसि मत्तोऽधीयमानानि भवन्त्वित्यर्थः ॥४२॥ इत्थंविधान्येवंप्रकाराण्यनेकानि वृत्तानि किं त्वया स्मर्यन्त इति शेषः । फलितमुपसंहरति—गुरोरिति ॥ ४३ ॥ अस्माभिः किमनिर्वृत्तमसंपन्नं येषामस्माकं भवता

सूर्यश्चास्तं गतस्तावत्तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥ ३७ ॥ वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसंप्लवे ॥ दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिवभ्रिमातुराः ॥ ३८ ॥ एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ३९ ॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ॥ छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४२ ॥ इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ॥ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशान्तये ॥ ४३ ॥ ॥ ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥ यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४५ ॥ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रीदामचरितेऽशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥

॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन्हरिः ॥ सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ॥ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥ २ ॥ ॥

सहवासोऽभूत् ॥ ४४ ॥ भवतस्तु सर्वमेतद्विडम्बनमात्रमित्याह—यस्येति । छन्दोमयं वेदाख्यं ब्रह्म । तथा श्रेयसामावपनं तदुद्भवस्थानं देहो मूर्तिर्यस्य तस्य तव ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥

एकाशीतितमे सख्युर्जग्ध्वा पृथुकतण्डुलान् ॥ श्रियं निर्मितवानिन्द्रदुर्लभां तु तदाश्रमे ॥ १ ॥ संकथयन् सुखगोष्ठीः कुर्वन् । सर्वभूतानां मनसोऽभिज्ञः । मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः ॥ १ ॥ प्रहसन् क्ष्वेलीं कुर्वन् ॥ २ ॥ ॥ ॥ ॥

१ वभ्रिम वभ्रमिम । भ्राम्यतेष्टिलोप आर्ष इति तोष० । २ 'जीर्णं च परिभुक्तं च यातयामम्' इत्यमरः । ३ एतदस्मद्दुःखम् । ४ 'श्रेष्ठः' इति पाठः । ५ प्रशान्तये संसारदुःखनिवृत्तये योग्यो भवतीति शेषः । ६ गुरौ गुरुसमीपे । ७ पृथुकग्रन्थिनिरीक्षणेनोपलक्षितः प्रहसन् मम प्रजावता दत्तं तद्वान्कथं गोपायतीत्याविना परिहसन्नुवाच ।

लज्जया त्वकथयतस्तामपनुदन्नाह—अण्वपीति द्वाभ्याम् ॥ ३ ॥ ४ ॥ ५ ॥ सर्वभूतानामात्मदृगन्तःकरणसाक्षी ॥ ६ ॥ अमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥ अतिजीर्णत्वाद्वसनस्य पुनस्तन्मध्ये चीरेण बद्धान् ॥ ८ ॥ अङ्ग हे सखे । मां विश्वं विश्वात्मानं माम् ॥ ९ ॥ इति वदन्नेकां मुष्टिं जग्ध्वा । तत्परेति । अयं भावः—एतावता पुंस इहामुत्र च मत्कटाक्षविलासभूतानां सर्वसंपदां समृद्धयेऽलम् । अतःपरं द्वितीयमुष्ट्यदनेन मा मामेतदधीनां कुर्विति ॥ १० ॥ त्वत्तोषकारणं तव तोषस्य कारणं यथा भवेत्तथा सर्वसंपत्समृद्धये । यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ॥ ११ ॥ स्वर्गतं स्वर्गवासिनम् ॥ १२ ॥

॥ श्रीभगवानुवाच ॥ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्य-
भक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयता-
त्मनः ॥ ४ ॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥ सर्वभूतात्म-
दृक्साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिन्तयन्नायं श्रीकामो माभजत्पुरा ॥६॥ पत्न्याः पतिव्रतायास्तु सखा प्रियचि-
कीर्षया ॥ प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥ ७ ॥ इत्थं विचिन्त्य वसनाच्चीरबद्धान्द्विजन्मनः ॥ स्वयं जहार
किमिदमिति पृथुकतण्डुलान् ॥८॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे ॥ तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥९॥
इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ॥ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥ एतावताऽलं विश्वात्म-
न्सर्वसंपत्समृद्धये ॥ अस्मिँल्लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥ ११ ॥ ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतम-
न्दिरे ॥ भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥ १२ ॥ श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः ॥ जगाम
स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥ १३ ॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम् ॥ स्वगृहान्व्रीडितोऽग-
च्छन्महद्दर्शननिर्वृतः ॥ १४ ॥ अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतो-
रसि ॥ १५ ॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः ॥ ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १६ ॥

श्वोभूते उदिते रवौ । विश्वं भावयतीति विश्वभावस्तेनेति पुरतो भाविनमिन्द्रदुर्लभं विभवं सूचयति—स्वसुखेन स्वानन्दपूर्णेनेति दानेऽदीनतां दर्शयति—नन्दितो विनयोक्तिभिः ॥ १३ ॥ व्रीडितः स्ववित्तकार्पण्येन लज्जितः । महतः श्रीकृष्णस्य दर्शनेन निर्वृतः सुखं प्राप्तः ॥ १४ ॥ निर्वृतिमेवाह—अहो इति चतुर्भिः । यद्यतः लक्ष्मीमुरसि बिभ्रता आश्लिष्टोऽहम् ॥ १५ ॥ पापीयान्नीचः ॥ १६ ॥ ॥ ॥ ॥ ॥

१ किं तत्कथय देहीति वा शेषः । २ अत्र तोयस्य पेयत्वेऽप्यशनोक्तिस्तदेकाहारत्वविवक्षया अब्भक्ष इतिवत् । ३ अस्य असै । यद्वा तत्पत्नीप्रीत्यर्थमेव दानेन तत्संबन्धमात्रविवक्षणेन तत्संप्रदानत्वाविवक्षणादस्येति तोष० । ४ इदं अनन्तविश्वकुक्षिं मां तर्पयति किं पुनर्विश्वम् । ५ अथ श्रीदेवी सखीभिः सह तान् पृथुकान् विभज्य जघासेति ज्ञेयम् । ६ स्वसुखेन स्वेषां भक्तानां सुखं यस्मात्तेन । ७ 'पथानुव्रज्य' इति पाठः । ८ विप्रकुले जात इत्येव हेतोः ।

॥ १७ ॥ पूजितश्चन्दनलेपनादिभिः ॥ १८ ॥ एवं संपूज्यापि धनस्यादाने कारणं कल्पयति—स्वर्गापवर्गयोरिति द्वाभ्याम् ॥ १९ ॥ स्वर्गादीनां यद्यपि तस्य चरणार्चनमेव कारणं तथापि कारुणिकत्वादभूर्यपि स्वल्पमपि धनं मह्यं नाददात् ॥ २० ॥ इत्येवं चिन्तयन्निजगृहस्यान्तिकं तत्प्रान्तम् । तस्य विशेषणं सूर्येति ॥ २१ ॥ विचित्रोपवनादिभिर्वृतम् । कथंभूतैः । कूजद्भिर्द्विजकुलैः पक्षिसमूहैराकुलैर्व्याप्तैः । तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि तथा तैः ॥ २२ ॥ किंच जुष्टमिति । हरिणीनामिवाक्षीणि यासां ताभिः । तदैश्वर्यं दृष्ट्वा वितर्कितवांस्तदाह—किमिदमिति । प्रथमं तेजःपुञ्जं दृष्ट्वा किमिद-

निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ॥ महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥ १७॥ शुश्रूषया पर-
मया पादसंवाहनादिभिः॥ पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ॥
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको
नूनं धनं मेऽभूरि नाददात् ॥ २० ॥ इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् ॥ सूर्यानलेन्दुसङ्काशैर्विमानैः
सर्वतो वृतम् ॥२१॥ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥२२॥
जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ॥ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥ एवं मीमांसमानं
तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥२४॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसंभ्रमा ॥
निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥२५॥ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना ॥ मीलिताक्ष्यनम-
द्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥ पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककण्ठीनां मध्ये भान्तीं
स विस्मितः ॥ २७ ॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ॥ मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २८॥
पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥ पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥ ॥

मिति पश्चाद्विमानानि दृष्ट्वा कस्य चेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमित्येवंरूपमभूदिति ॥ २३ ॥ अमरप्रभास्तत्तुल्यकान्तयः । प्रत्यगृह्णन्नुपायनादिभिरादृतवन्तः ॥ २४ ॥ उद्भूतो हर्षो यस्याः सा । अतिसंभ्रम आदरो यस्याः । आलयात्कमलवनाद्रूपधारिणी श्रीरिव । स्वर्गस्य तत्र भगवता आनीतत्वात्स्वर्गिणामिव तयो रूपं च बभूवेति भावः ॥ २५ ॥ बुद्ध्या अयमेव वन्द्य इति निश्चयेन । मनसा संकल्पेन ॥ २६ ॥ २७ ॥ २८ ॥ यत्र मन्दिरे पयःफेननिभाः शय्या आस्तरणानीत्यादिसंपदस्तत्र सर्वसंपदां समृद्धीर्विलोक्य तर्कयामासेति चतुर्थेनान्वयः । यत्र च दान्ता गजदन्तमयाः पर्यङ्काः ॥ २९ ॥ ॥ ॥ ॥५९॥

१ 'श्रिया जुष्टे' इति पाठः । २ विमानैस्तत्सदृशगृहविशेषैः । ३ हरिणाक्षिभिरित्युभयविशेषणत्वान्न समासान्तः । अत्रैवं ज्ञेयम्—सुदाम्नो द्वारकावासरात्रौ स्वगृहे सुप्ताया तत्पत्न्यां च सर्वं स्थानं तद्रूपादिकं च दिव्यमभूत्। प्रातर्दिव्यदास्यादेरुच्या स्वभर्तृसंगतश्रीकृष्णदत्तं ज्ञात्वा विस्मितया पत्न्या गमनज्ञापका जनास्तन्मार्गे नियुक्ता इति ।

यत्रासनानि च मृदून्युपस्तरणानि तूलादिमयानि येषु तानि। यत्र मुक्तादामविलम्बवन्ति द्युमन्ति च वितानानि ॥ ३० ॥ ३१ ॥ स ब्राह्मणो निर्व्यग्रः सन् स्थिरः सन् अहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास कुत एषा समृद्धिरागतेति ॥ ३२ ॥ निश्चिनोति—नूनमिति। एतन्ममेति। एष चासावहं च तस्यैतन्मम। महती विभूतिर्यस्य तस्यावलोकादन्यः ॥ ३३ ॥ ननु स चेदवलोकनमात्रेण महदैश्वर्यं दत्तवांस्तर्हीदं तुभ्यं मया दत्तमिति किं नावोचदत आह—नन्विति। ननु मे सखा समक्षमब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशते ददाति। अत्र हेतुः—भूरिभोजः स्वयं तद्देयं पर्जन्यवदीक्षमाण इति। अयमर्थः—स्वयं तावद्भूरिभोजो बहुभोज आप्तकामत्वाल्लक्ष्मीपतित्वाच्च। अतो यथा पारावारपरिपूरकोऽतिवदान्यः पर्जन्यः कदाचिद्बह्वपि वर्षमल्पमेव च मन्यमानो लज्जयेव समक्षमवर्षन्रात्रौ निद्राणे कर्षके तत्क्षेत्रमाप्लावयति, एवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिन्द्रादिपदमप्यतितुच्छं मन्वानस्तस्य

आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥ नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥ ३४ ॥ किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ॥ मयोपनीतं पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥ तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥ भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्थयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥ ॥ ॥ ॥

च भजनं बहु मन्यमानः समक्षमब्रुवाण एव ददातीति ॥ ३४ ॥ तदेवाह—किंचिदिति। उरु बह्वपि स्वदत्तं यत्किंचित्करोऽत्यल्पं मन्यते। सुहृत्कृतं फल्ग्वतितुच्छमपि भूरिकारी बहुमन्यत इत्यर्थः। अत एव मयोपनीतं समीपं नीतम्। प्रीतियुतः स्वयमेव प्रतिगृहीतवान् ॥ ३५ ॥ श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते—तस्येति। सौहृदं प्रेम। सख्यं हिताशंसनं च। मैत्री उपकारकत्वं च। दास्यं सेवकत्वम्। तत्समाहारैकवचनम्। तस्य तत्संबन्धिनो मे मम स्यान्न तु विभूतिः। किंच महानुभावेन तेनैव विषज्जतो विशेषेण सङ्गं प्राप्नुवतस्तद्भक्तेषु प्रकृष्टः सङ्गः स्यादिति ॥ ३६ ॥ ननु भक्तेः फलं संपदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयसेऽत आह—भक्तायेति। संपदः कोशादीन्राज्यमैश्वर्यं विभूतीः कलत्रपुत्रादीन्न समर्थयति न ददाति, अपि तु दृढां भक्तिमेव। कुतः। अदीर्घबोधाय। अविवेकिनो मम तु भक्त्यभावादेवं जातम्, अतस्तद्भक्तिरेव स्यादिति भावः ॥ ३७ ॥ ॥ ॥

१ 'रत्नदीपैः' इति पाठे तैः सह भ्राजमाना रत्नहारयुता ललनाः सन्ति। २ 'अवलोकतोऽन्यत्' इति पाठः।

त्यक्ष्यन् शनैः शनैस्त्यागमभ्यस्यन् । जायया सह बुभुजे ॥ ३८ ॥ श्रीकृष्णस्यैवं ब्रह्मण्यता नातिचित्रमित्याह—तस्येति ॥ ३९ ॥ अन्यैरजितमपि स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानं तस्य वेगस्तेनोद्ग्रथितमात्मबन्धनमहंकारो यस्य सः । गतिमित्याविष्टलिङ्गं धामविशेषणम् । सतां ब्रह्मविदां प्राप्यमित्यर्थः ॥ ४० ॥ एतत्पृथुकोपाख्यानं श्रुत्वा तत्र ब्रह्मण्यतां विशेषतः श्रुत्वेति ॥ ४१ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां एकाशीतितमोऽध्यायः ॥८१॥ ॥ द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे ॥ वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥१॥ श्रीदामसुहृदे कृष्णः प्रकल्प्यैन्द्रं

इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयाञ्जायया त्यक्ष्यन्बुभुजे नातिलम्पटः ॥ ३८ ॥ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ४० ॥ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ४१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे पृथुकोपाख्यानं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥ तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः ॥ स्यमन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥ निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥ महत्यां तीर्थयात्रायां तत्राऽऽगन्भारतीः प्रजाः ॥ वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणैः ॥ ६ ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ ७ ॥ ॥ ॥

पदं भुवि ॥ नन्दादिसुहृदानन्दी कुरुक्षेत्रं जगाम सः ॥ २ ॥ कल्पक्षये यथा । सर्वग्रास इत्यर्थः ॥ १ ॥ ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा । समन्तपञ्चकं क्षेत्रं कुरुक्षेत्रम् ॥ २ ॥ अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह—निःक्षत्रियामिति द्वाभ्याम् ॥ ३ ॥ अन्यो विद्वान् यथा ॥ ४ ॥ आगन्नाजग्मुः भारतीर्भारत्यः ॥ ५ ॥ ६ ॥ सुचन्द्रशुकसारणैः सहानिरुद्धो द्वारकारक्षायामास्ते । तथा कृतवर्मा च यूथपतिः सेनानीः । देवधिष्ण्याभैर्विमानसंकाशैः । तरलास्तरङ्गास्तद्वत् प्लवो गतिर्येषां तैः ॥ ७ ॥ ॥ ॥ ॥ ॥

१ उद्ग्रथित ग्रन्थिरहितमुच्छिन्नमिति यावत् । २ 'सुदामसुहृदे' इति पाठः । ३ जने भक्ते स्वसिन्नर्दनमुपायनयाचनं यस्य तस्मिन् जातप्रेमा । ४ जायया हेतुना तत्प्रीत्यर्थमेव । ५ दैवं देवता । ६ एतत्पृथुकोपाख्यानम्, यद्वा एष उक्तो ब्रह्मण्यदेवस्य । ७ एकदा राजसूयात्पूर्वं श्रीरामव्रजागमनात्पूर्वं । ८ लोकस्य ग्राहयन् लोकं ग्राहयन्नित्यर्थः । ९ सुचन्द्रो रुक्मिणीपुत्रश्चारुचन्द्रनामा, शुकसारणौ यादवौ तैः सह । इदमुत्तरान्वयि ।

विद्याधरद्युभिर्विद्याधराणामिव द्युतिर्येषां तैः । महातेजा महातेजसः ॥८॥ दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषाम् ॥९॥ पुनरन्येद्युराप्लुत्य । यद्वा तस्मिन्नेवाहनि मुक्तिस्नानं कृत्वा ॥ १० ॥ ११ ॥ स्निग्धा शीतला छाया येषामङ्घ्रिपानामङ्घ्रिषु मूलेषु ॥ १२ ॥ १३ ॥ १४ ॥ प्रोत्फुल्लैर्हृदब्जसरोरुहैः श्रीः शोभा येषां ते ॥ १५ ॥ अतिसौहृदेन यत्स्मितं तेनामला अपाङ्गैर्दृशो दृष्टयो यासां ताः । मिथः परस्परं संवीक्ष्य दोर्भिरभिरेभिरे आलिङ्गनं कृतवत्यः ॥ १६ ॥ १७ ॥ संकथया मिथः

गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ व्यरोचन्त महातेजाः पथि काञ्चनमालिनः ॥८॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः
खेचरा इव ॥ तत्र स्नात्वा महाभागा उपोष्य[1] सुसमाहिताः ॥ ९ ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥ राम-
हृदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १० ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥ स्वयं च तदनुज्ञाता
वृष्णयः कृष्णदेवताः ॥ ११ ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ॥ तत्रागतांस्ते ददृशुः सुहृत्संब-
न्धिनो नृपान् ॥ १२ ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ॥ काम्बोजकैकयान्मद्रान्कुन्तीनानर्तकेरलान्[2] ॥ १३ ॥
अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृप ॥ नन्दादीन्सुहृदो गोपान्गोपीश्चोत्कण्ठिताश्चिरम् ॥ १४ ॥ अन्योन्यसं-
दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १५ ॥
स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे ॥ स्तनैः स्तनान्कुङ्कुमपङ्करूषितान्निहत्य दोर्भिः
प्रणयाश्रुलोचनाः ॥ १६ ॥ ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवादिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः
॥ १७ ॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुन्दं च जहौ संकथया शुचः ॥ १८ ॥ ॥
कुन्त्युवाच ॥ आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद्वा[3] आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १९ ॥
सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ २० ॥ ॥ वसुदेव उवाच ॥
अम्ब मास्मानसूयेथा दैवक्रीडनकान्नरान्[4] ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥ २१ ॥ ॥ ॥

सप्रेमगोष्ठ्या ॥ १८ ॥ तामेव वसुदेवपृथयोः संकथामाह—आर्येत्यादिचतुर्भिः । अकृताशिषमपूर्णमनोरथम् ॥ १९ ॥ यस्य दैवमदक्षिणमननुकूलं तं स्वजनमपि सन्तं सुहृदादयो नानुस्मरन्ति । अतो मम दैवं प्रतिकूलं, युष्माकं कोऽपराध इति भावः ॥ २० ॥ २१ ॥ ॥ ॥

---

१ उपोष्येति सूर्योपरागनिमित्तं, तीर्थोपवासस्य तत्र निषिद्धत्वात् । २ 'कुन्तीनारट्टकेरलान्' इति पाठः । तत्र आरट्टान् सिंधुपारीणान् । ३ यत् यतः अनु सर्वतः पश्चादपि न स्मरथ मद्वार्तां पुत्राद्यपेक्षया । ४ 'ईशक्रीडनकातरान्' इति पाठे ईशक्रीडया कातरान् विवशान् ।

ईशवशत्वमेवाह—कंसप्रतापिता इति । हे स्वसः । एतर्ह्येव संप्रत्येव ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ युधिष्ठिरं येऽनुव्रतास्ते, राजसूये जितत्वात् ॥ २७ ॥ २८ ॥ जन्मभाजो नृणां मध्ये सफलजन्मानः ॥ २९ ॥ किंच न केवलं तस्य दर्शनमेव, अपितु अत्यन्तदुर्लभं बहु युष्माकं स्वतः संपन्नमित्याहुः—यद्विश्रुतिरिति द्वाभ्याम् । यदिति पृथक् पदम् । यस्येत्यर्थः । विश्रुतिः कीर्तिः श्रुतिभिर्नुता वेदैः स्तुता इदं विश्वमलमत्यर्थं पुनाति । 'यद्विश्रुतिश्रुतिरमीवमलम्' इति पाठे श्रुतिः श्रवणममीवं पापमिति । यस्य पादावनेजनपयो गङ्गा च यस्य वचो वाक्यरूपं शास्त्रं च वेदाख्यं विश्वं पुनाति । किंच कालेन भर्जितं दग्धं भगं माहात्म्यं यस्याः सा तथाविधापि भूर्यस्याङ्घ्रिपद्मस्पर्शेनोत्था आविर्भूता शक्तिर्यस्याः सा नोऽस्माकमखिलानर्थानभितो वर्षति ॥ ३० ॥

कंसप्रतापिताः सर्वे वयं याता दिशंदिशम् ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ २२ ॥ ॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः ॥ २३ ॥ भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा ॥ सदाराः पाण्डवाः कुन्ती सृञ्जयो विदुरः कृपः ॥ २४ ॥ कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥ २५ ॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥ २६ ॥ राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः ॥ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥ २७ ॥ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान् ॥ २८ ॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २९ ॥ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ॥ भूः कालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३० ॥ तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३१ ॥ ॥ श्रीशुक उवाच ॥ नन्दस्तत्र यदून्प्राप्तान्ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद्वृतो गोपैरनस्यार्थैर्दिदृक्षया ॥ ३२ ॥ ॥ ॥

दर्शनं च स्पर्शनं चानुपथोऽनुगतिश्च प्रजल्पो गोष्ठी च शय्या शयनं चासनं चाशनं भोजनं च यौनं विवाहसंबन्धस्तेन सह वर्तमानः सपिण्डबन्धो दैहिकसंबन्धः तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः सयौनः सपिण्डबन्धो येषां वोऽस्ति । किंच येषां वो गृहे विष्णुः स्वयमास आविरभूत् । निरयवर्त्मनि प्रवृत्तिमार्गे वर्तमानानां स्वर्गापवर्गाभ्यां विरमयति वितृष्णान्करोतीति तथा सः । ते यूयं जन्मभाज इति । यद्वा तदिति सामान्यनिर्देशः । स इत्यर्थः । स विष्णुः स्वयं येषां वो निरयवर्त्मनि संसारकारणे गृहे वर्तमानानामपि बध्यते संबध्यत इति बन्धो दर्शनादिभिः संबद्धः सन्स्वर्गापवर्गविरम आस । परमसुखप्रदो बभूवेत्यर्थः ॥ ३१ ॥ अनस्यार्थैरिति । तत्रैव वासचिकीर्षया शकटेषु स्थापितैरर्थैः सहागत इत्यर्थः ॥ ३२ ॥ ॥ ॥

१ 'दिशो दश', 'दिशो दिशः' इति पाठौ । २ यत् यस्य । षष्ठ्या लुगार्षः । ३ तत् स इत्यर्थः । प्रथमायाश्छान्दसो लुक् ।

॥ ३३ ॥ वसुदेवस्तं परिष्वज्य प्रेमविह्वलो बभूवेति शेषः ॥ ३४ ॥ ३५ ॥ तौ सुतौ परिरभ्य नन्दो यशोदा च विरहशोकान्विजहतुस्तत्यजतुः । यद्वा शुचोऽश्रूणि विजहतुर्मुमुचतुरित्यर्थः ॥ ३६ ॥ व्रजेश्वरीं यशोदाम् ॥ ३७ ॥ अनिवृत्तां निवृत्तिकारणे सत्यप्यनुवर्तमानाम् । ऐन्द्रमैश्वर्यं प्राप्यापि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३८ ॥ तत्कृतां मैत्रीमाहतुः—एताविति । न दृष्टौ पितरौ याभ्यां तौ । वस्तुतस्तु अजन्मत्वादेवादृष्टपितरौ । हे भवति, युवयोः पित्रोर्न्यस्तावेतौ संप्रीणनादीनि प्राप्याकुत्र च भयौ क्वचिदपि भयरहितौ भूत्वोपतुर्वासं चक्रतुः । कथंभूतयोः । अक्ष्णोर्नेत्रयो रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः युक्तं

तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढं चिरदर्शनकातराः ॥३३॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥३४॥ कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ३५ ॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ३६ ॥ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकंठ्यौ समूचतुः ॥ ३७ ॥ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३८ ॥ एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्र च भयौ न सतां परः स्वः ॥३९॥ ॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ॥ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४० ॥ भगवांस्तास्तथाभूता विविक्त उपसङ्गतः ॥ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१ ॥ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः ॥ ४२ ॥ अप्यवध्यायथास्मान् स्विदकृतज्ञाविशङ्कया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ ४३ ॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ४४ ॥ ॥

युवयोरेतत् । यतः सतां परः स्व इति नास्ति वैषम्यम् ॥ ३९ ॥ अभीष्टत्वे लिङ्गम्—यद्यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकं पक्ष्मकृतं विधातारं शपन्ति । दृग्भिर्नेत्रद्वारैर्हृदि कृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः । अपि नित्ययुजामारूढयोगिनामपि ॥ ४० ॥ ४१ ॥ चिरायितान्विलम्बितान् । अत्र हेतुः—शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥ ४२ ॥ अपिस्वित् अस्मानवध्यायथावजानीथ । अकृतज्ञा एत इत्याविशङ्कया ईषच्छङ्कया न शङ्कामात्रं, निश्चितमेवैतत्परित्यज्य गतत्वादित्यत आह—नूनमिति ॥ ४३ ॥ एतत्सदृष्टान्तमाह—वायुरिति । आक्षिपते पृथक्करोतीत्यर्थः ॥ ४४ ॥ ॥

१ कातरा व्याकुलाः अत्युत्सुका वा । २ पितराविति तत्र तयोर्मातापितृत्वबुद्ध्यविच्छिदो व्यज्यते । ३ मैत्रीं हिताचरणम् । ४ दूरागमनेन त्यक्तयोरप्यनुवर्तमानाम् । ५ संप्रीणनं प्रियदानादिना, अभ्युदयो जातकर्मादि, पोषणं स्तन्यादिना, लालनं विमिश्रणम् । ६ 'लालनानि' इति पाठः । ७ यद्वा सदा हृदिकृतं अधुना दृग्भिः परिरभ्य तस्मिन्भावं प्रेमातिशयं तेन चानन्दं मूर्च्छां प्रापुः नित्ययुजां रुक्मिण्यादीनामपि दुरापं । दीर्घत्वं छन्दोनुरोधादार्षम् । क्वचित् 'हृदि कृतम्' इति पाठः ।

अपि च अतिभद्रमिदं यदुत भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह—मयीति । मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पत इति । यदुत भवतीनां मत्स्नेह आसीत्तद्दिष्ट्यातिभद्रम् । कुतः । मदापनो मत्प्रापण इति ॥ ४५ ॥ कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह—अहं हीति । हे अङ्गनाः, भौतिकानां शरावसैन्धवादीनां यथाकाशादीनि पञ्चमहाभूतान्याद्यन्तादिरूपाणि एवं सर्वभूतानां जरायुजादीनामहम् । अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥४६॥ ननु चतुर्विधभूतग्रामाणां तद्वोक्ता आत्मैवाद्यन्तादिरूपः, तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तन्त इति कुतस्त्वत्प्राप्तिरस्माकमित्यत आह—एवं हीति । अयमर्थः—शरावादीनां यथा भौतिकानां महाभूतान्याद्यन्तादिरूपाण्येवमेवैतानि चतुर्विधानि भूतान्यपि भौतिकत्वाविशेषात्स्वकारणेषु भूतेष्वेव वर्तन्ते, नतु भोक्तर्यात्मनि । आत्मा तु तेषु भूतेष्वात्मना भोक्तृरूपेण ततो व्याप्तो न कारणत्वेन । अथैतदुभयं भूतभौतिकरूपं भोग्यं च भोक्तारं चात्मानं मय्यक्षरे परिपूर्णे

मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥४५॥ अहं हि सर्वभूताना-
मादिरन्तोऽन्तरं बहिः ॥ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः ॥ ४६ ॥ एवं ह्येतानि भूतानि भूतेष्वात्मा-
त्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥ ४७ ॥ ॥ श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन
शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४८ ॥ आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचि-
न्त्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलम्बं गेहंजुषामपि मनस्युदियात्सदा नः ॥ ४९ ॥ इति श्रीमद्भागवते
महापुराणे दशमस्कन्धे उत्तरार्धे वृष्णिगोपसंगमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ श्रीशुक उवाच ॥
तथानुगृह्य भगवान्गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥ त एवं लोकनाथेन
परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥ कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो
मुखनिःसृतं क्वचित् ॥ पिबन्ति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥ ॥ ॥

आभातं पश्यतेति ॥ ४७ ॥ अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिता बोधितास्तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिङ्गं यासां तास्तमेवाध्यगन् प्रापुः ॥ ४८ ॥ एवं प्राप्तोऽपि कृष्णः पुनर्गृहव्यासङ्गेन माप्यापयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह—आहुश्चेति । हे नलिननाभ, ते पदारविन्दं गेहंजुषां गृहसेविनी-नामपि नो मनसि सदा उदियादाविर्भवेत् ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ॥ द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥ १ ॥ अव्ययं कुशलम् ॥ १ ॥ तत्पादेक्षया हतमंहो येषां ते ॥ २ ॥ महतां मनस्वः सकाशान्मुखद्वारतो निःसृतं क्वचित्कदाचिद्देहंभृतां देहधारिणां देहकृच्चासावस्मृतिश्चाविद्या तां छिनत्तीति तथा तम् । देहकृदीश्वरस्तद्विषयाज्ञानच्छिदं वा ॥ ३ ॥ ॥

१ यद्वा एतदुभयं परे द्वारकादौ वर्तमाने, अक्षरे नित्यमेव युष्मत्सङ्गिनि मयि आभातं विराजमानं पश्यत । २ अर्थान्तरे तु तस्याावियोगस्यानुस्मरणेन प्रेमातिशयादेव तथानुभवेन ध्वस्तो जीवनस्य कोश आच्छादनं विरहान्न जीविष्याम इति भावना यासां ता इति ।

हि त्वेति पदद्वयम् । त्वा त्वां हि एव त्वामेव नताः स्मेत्यर्थः । कथंभूतम् । आत्मधाम्ना स्वरूपप्रकाशेन विधुता निरस्ता आत्मकृता बुद्धिनिमित्तास्तिस्रोऽवस्था यस्मिंस्तम् । अत एवानन्दसंप्लवं सर्वानन्दकदम्बरूपम् । अखण्डं चापरिच्छिन्नम् । यतो न कुण्ठः कुण्ठितो बोधश्चिच्छक्तिर्यस्य तम् । नन्वेवंरूपता श्रीकृष्णस्य कुतः । अस्मदादिवत्प्रतीतेरत आहुः—कालोपसृष्टेति । कालेनोपसृष्टा विप्लुताश्च ते निगमाश्च तेषामवने रक्षार्थमात्ता उपात्ता योगमायया आकृतिर्नराकारमूर्तिर्येन तम् । परमहंसानां गतिं त्वाम् । अतस्तवैवंरूपत्वादस्माकं च त्वन्माययैतत्सर्ववैपरीत्यात्त्वामेव नताः स्मेति । यद्वा त्वामिति प्रकरणाज्ज्ञातव्यम् । त्वां नताः स्म । किं कृत्वा । हित्वा । किम् । आत्मधाम आत्मा शरीरं धाम गृहं तच्च तच्च । देहदैहिकसङ्गं परित्यज्येत्यर्थः । समानमन्यत् ॥ ४ ॥ त्रिषु लोकेषु गीताः ॥ ५ ॥ कौसले हे सत्ये । शैब्ये हे मित्रविन्दे । रोहिणीनाम काचित्पट्टमहिषीतुल्या ॥ ६ ॥ हे अन्याः श्रीकृष्णस्य पत्नयः ॥ ७ ॥ मा मामर्पयितुं संपा-

हित्वात्मधाम विधुतात्मकृतत्र्यवस्थमानन्दसंप्लवमखण्डमकुण्ठबोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ॥४॥ ॥ ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः ॥ समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥ ५ ॥ द्रौपद्युवाच ॥ ॥ हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले ॥ हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥ ७ ॥ ॥ रुक्मिण्युवाच ॥ चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः ॥ निन्ये मृगेन्द्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ ॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥ ॥ जाम्बवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदैवं सीतापतिं त्रिणवहान्यमुनाभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥ ॥

दयितुं राजसु जरासन्धादिषूद्यतकार्मुकेषु सत्स्वजेया ये भटास्तेषां शेखरिता मुकुटवत्कृता अङ्घ्रिरेणवो येन । तेषां मूर्ध्नि पदं दधदित्यर्थः । तस्य श्रीनिकेतस्य चरणो ममार्चनायास्तु ॥ ८ ॥ सनाभेर्भ्रातुर्वधेन सिंहकृतेन तप्तं हृदयस्य तेन मे ततेन तातेन लिप्तमभिशापं दुर्यशोऽपमार्ष्टुं परिहर्तुमृक्षराजं जित्वा रत्नं स्यमन्तकमुपाजहारानीतवान् । अथानन्तरं मत्पित्रे रत्नमदात्, तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामदिशत ददौ । दत्तामक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ॥ ९ ॥ देहकृत्पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं देवमीश्वरं सीतापतिं प्राज्ञायाविज्ञाय त्रिणवहानि त्रिनवाहानि, ह्रस्वश्छन्दोऽनुरोधेन । सप्तविंशतिदिनान्यमुनाभ्ययुध्यत् । परीक्षितः संजाता परीक्षा यस्य स परीक्षितस्तं साक्षात्सीतापतिरेवासावितिं ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरदर्हणतया समर्पितवान् । अहो तर्हि त्वमतिश्रेष्ठासि, नेत्याह—अमुष्याहं दासीति ॥ १० ॥ ॥ ॥ ॥

१ समाहारद्वन्द्वः । २ भौमाहृतशताधिकषोडशसहस्रस्त्रीषु मुख्या । ३ अत्रोपवेशनक्रमापेक्षया संबोधनक्रमः । प्रत्युत्तरं तु विवाहक्रमेणैव । ४ अष्टाविंशाहमिति तु समाप्तिदिनं गृहीत्वा ।

सख्या अर्जुनेन। तस्य गृहमार्जनी गृहसंमार्जनकर्त्री ॥ ११ ॥ शुनां यूथगतं स्वबलिं द्विपारिः सिंह इवेति। मे भ्रातृंश्चापकुरुतोऽपकारं कुर्वतो विजित्य। श्रियैौको लक्ष्मीनिवासः। तस्याङ्घ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वमनुभवं प्रतिजन्म मेऽस्तु ॥१२॥ सप्तोक्ष्णो वृषभान्। बलं च वीर्यं च सुतीक्ष्णशृङ्गाणि चातिशयितानि येषां तान्मे पित्रा कृतान्संपादितान् बलीयसे मां दातुं क्षितिपानां वीर्यस्य बलस्य परीक्षणायताननतिप्रसिद्धान्वीराणां दुर्मदं घ्नन्ति ये तांस्तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडन्ननायासेनैव बबन्ध। अजतोकान् अजापत्यानि ॥१३॥ वीर्यमेव शुल्कं देयं यस्यास्ताम्। दासीभिः सह चतुरङ्गिणीं गजाश्वादिसेनायुक्तां पुरं निन्ये ॥१४॥ हे कृष्णे हे द्रौपदि। तस्मिन्नेव चित्तं यस्यास्तां मां अक्षौहिण्या सेनया सह। सखीजनैश्च सह ॥१५॥ येन पादसंस्पर्शेनात्मनो मे तत्कैवल्याख्यं

॥ कालिन्द्युवाच ॥ तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाशया ॥ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ॥ ११ ॥
॥ भद्रोवाच ॥ यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄंश्च[1] मेऽपकुरुतः स्वपुरं
श्रियैौकस्[2]तस्याऽस्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम् ॥१२॥ ॥ सत्योवाच ॥ सप्तोक्ष्णो[3]ऽतिबलवीर्यसुतीक्ष्णशृङ्गान्पित्रा
कृतान् क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥
य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ॥ पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥१४॥ ॥ मित्रविन्दो[4]-
वाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे कृष्णाय[5] तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥ अस्य मे
पादसंस्पर्शो भवेज्जन्मनि जन्मनि ॥ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥१६॥ ॥ लक्ष्मणोवाच ॥ ममापि
राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान्
॥ १७॥ ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥१८॥ यथा स्वयं-
वरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥ ॥ ॥

श्रेयो भवेत्सः। यद्वा येन कारणेनात्मनो जीवस्य तच्छ्रेयः स एव पुरुषार्थ इति ॥१६॥ राज्ञि हे द्रौपदि, यथा मित्रविन्दायास्तथैव ममापि चित्तं मुकुन्दविषयमासीत्। सुसंमृश्य सुविचार्य पद्महस्तया श्रिया वृतः किल, अतोऽपि मम चित्तं श्रीमुकुन्दे आसेति ॥१७॥ तत्र श्रीकृष्णप्राप्त्युपायमचीकरत्कारयामास ॥१८॥ यथा राज्ञि तव स्वयंवरे पार्थस्येप्सया आप्तुमिच्छया कृतस्तथा मत्स्यं कारितवान्। पाठान्तरे पार्थस्येषुणापाकृतः। तर्हीममप्यर्जुन एव किं नाविध्यत्तत्राह—अयं त्विति। स मत्स्यो बहिरेवाच्छन्नो नान्तरतः स्तम्भलग्नयोर्ध्वदृष्ट्या सँल्लक्ष्यते, अयं तु न तथा, किंतु स्तम्भमूले निहितकलशजले केवलं दृश्यतेऽतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः ॥ १९ ॥ ॥ ॥ ॥ ॥



१ भ्रातॄन्सतर्दनादीनन्यस्मै दत्तवतः। विन्दानुविन्दाविति भ्रातृद्वये प्रागुक्तेऽप्यत्र बहुत्वं तदुपलक्षितान्यबोधनार्थमिति तोष०। २ श्रियैौक इत्यत्र श्रिय इति षष्ठ्यन्तं पृथक्पदं पुरविशेषणं सधिरार्षः। ३ उक्षणः उक्ष्णः। ४ अत्र 'भद्रोवाच' इति पाठः। ५ कृष्णायेति साक्षात्पत्युर्नामग्रहणं हर्षेणानवधानात्। ६ पार्थेष्वपाकृत इत्येवंरूपे।

॥२०॥ मत्स्यं वेद्धुम् । पर्षदि संसदि । मद्धियो मय्येव धीर्येषामिति अन्यचित्ता न वेद्धुं शक्ता इति भावः ॥२१॥ तदेवाह—आदायेति । अमुना चापेन ॥२२॥ नाविन्दंस्तदवस्थितिमिति मागधादीनां क्रियाशक्तिरेव न लक्ष्याभिज्ञतेत्यर्थः ॥२३॥ यत्तो यत्नवान् । असृजन्मुमोच । स बाणो मत्स्यं नाच्छिनत्, परं केवलं पस्पर्श । ज्ञानवानप्यर्जुनो बलेनापूर्ण इत्यर्थः ॥ २४ ॥ २५ ॥ अभिजिति सर्वार्थसाधके मुहूर्ते ॥ २६ ॥ २७ ॥ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवानुवर्णयन्त्याह द्वाभ्याम्—तद्रङ्गमिति । तत्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गं प्राविशम् । कनकेनोज्ज्वलां रत्नमालाम् । निवीय प्रावृत्य परिधाय च नीवीबन्धेन च। कौशि-

श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥ पित्रा संपूजिताः सर्वे यथावीर्यं यथावयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥ आदाय व्यसृजन्केचित्सज्यं कर्तुमनीश्वराः ॥ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥ सज्यं कृत्वाऽपरे वीरा मागधाम्बष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३ ॥ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥ २४ ॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाथ लीलया ॥ २५ ॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणापातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥ दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७ ॥ तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥ २८ ॥ उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विङ्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ २९ ॥ तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥ एवं वृत्ते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः ॥ ३१ ॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य संनद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥ ॥

काग्र्ये उत्तमकौशेयवस्त्रे । सव्रीडो हासो यस्मिंस्तद्वदनं यस्याः सा । कबर्यां धृताः स्रजो यया सा ॥ २८ ॥ उरवः कुन्तला यस्मिन्, कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिंस्तच्च तच्च । शिशिरः संतापहरो हासो येषु तैः कटाक्षमोक्षैरपाङ्गमोक्षणविलासैः । अनुरक्तं हृदयं यस्याः साऽहम् ॥ २९ ॥ ३० ॥ याज्ञसेनि हे द्रौपदि, ईशे श्रीकृष्णे मया वृते सति स्पर्धन्तः स्पर्धमानाः । नन्वेवं परमैश्वर्यं दृष्टवतां कुतः स्पर्धावसरस्तत्राह—हृच्छयातुरा इति । हृच्छयेन कामेनातुरा विवशाः । कामविजृम्भिता स्पर्धेति भावः ॥ ३१ ॥ हयरत्नानां चतुष्टयं यस्मिंस्तं रथम् । द्वाभ्यां मामालिङ्ग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा चतुर्भुजस्तस्थौ ॥ ३२ ॥ ॥

१ अभिजिति जयादिप्रदेऽष्टमे मुहूर्ते मध्याह्न इत्यर्थः । २ तावत्तत्क्षण एव ।

मृगाणां मिषतां मृगराडिव । तदा हरिर्जगामेति शेषो ज्ञातव्यः । दारुकस्यैव वा मृगराजोपमा ॥ ३३ ॥ अन्वसज्जन्त पृष्ठतः सक्ता बभूवुः । निषेद्धुं प्रतिबन्धं कर्तुं केचन पुरतो गत्वा पथि संयत्ता बभूवुरित्यर्थः । उद्धृतेष्वासा ऊर्ध्वकृतचापाः । ग्रामसिंहाः श्वानो हरिं सिंहं यथेति ॥ ३४ ॥ ३५ ॥ रविं छादयन्ति ते रविच्छदा ध्वजेषु पटा यस्यां, चित्राणि तोरणानि यस्यां सा च सा च । तां कुशस्थलीं पुरीं यदुपतिः समाविशत् । स्वकेतनं मण्डलमस्ताचलं वा ॥३६॥ महार्हवासःप्रभृतिभिः सुहृदादीन्पूजयामास ॥३७॥ दास्यादिभिः सहायुधानि पूर्णायापि ददौ ॥ ३८ ॥ इमा अष्टौ वयं सर्वसङ्गनिवृत्त्या तपसा स्वधर्मेणाद्धा साक्षात्तस्य गृहदासिका बभूविम ॥ ३९ ॥ क्षितिजये दिग्विजये जितानां राज्ञां कन्या नोऽस्मांस्तेन रुद्धा ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत्पादाम्बुज-

दारुकश्चोदयामास काञ्चनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥३३॥ तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥३४॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥ ३५ ॥ ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥३६॥ पिता मे पूजयामास सुहृत्संबन्धिबान्धवान् ॥ महार्हवासोलंकारैः शय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥३८॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसङ्गनिवृत्त्याद्धा तपसा च बभूविम ॥ ३९ ॥ ॥ महिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः ॥ ४० ॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ॥ ४१ ॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥ ॥ ॥

मनुस्मरन्तीर्नः परिणिनायोदवहत् । आप्तकामोऽपि यः ॥४०॥ न वयमिति । साम्राज्यादि न कामयामहे, किंतु एतस्य श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामह इति । ननु तस्य गृहिण्यो यूयं सर्वसंपद्भाजः किमेवं कामयध्वमत आहुः—हे साध्वि, साम्राज्यं सार्वभौमपदम् । स्वाराज्यमैन्द्रं पदम् । भौज्यं तदुभयभोगभाक्त्वम् । विविधं राजत इति विराट् तस्य भावो वैराज्यमणिमादिसिद्धिभाक्त्वमित्यर्थः । पारमेष्ठ्यं ब्रह्मपदम् । आनन्त्यं मोक्षम् । हरेः पदं तत्सालोक्यादि । नतु कामयामह इति । यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यभौज्यस्वाराज्यवैराज्यानि व्याख्येयानि ॥ ४१ ॥ तत्किं तत्पादरज एव काम्यतेऽत आहुः—श्रियः कुचकुङ्कुमगन्धाढ्यमिति ब्रह्मादिसेव्यया लक्ष्म्यापि सेवितत्वादिति भावः ॥ ४२ ॥ ॥ ॥

१ मिषतां पश्यतामित्यनादरे षष्ठी । २ श्वानोऽपि चापवद्वक्रोर्ध्वपुच्छाः । ३ पूर्णस्येति चतुर्थ्यर्थे षष्ठी । 'पूर्णाय' इत्येव पाठः क्वचित् । ४ साम्राज्यादीनां यथोत्तरं श्रैष्ठ्यम् ।

ननु तर्ह्येतिदुर्लभत्वात्किं तद्वाञ्छयात आहुः—व्रजस्त्रिय इति । यद्यथा गावो गाः । महात्मनोऽपि गाश्चारयतः पादस्पर्शं च गोपा यथा वाञ्छन्ति तद्वत् । तत्पराणां सुलभ इति भावः ॥४३॥ ॥ इति श्रीमद्भागवते म०पु० दशमस्कन्धे उत्तरार्धे भा०दी० टीकायां त्र्यशीतितमोऽध्यायः ॥८३॥ ॥ चतुर्भिरधिकाशीतितमे मुनिसमागमे ॥ वसुदेवमखोत्साहवन्धुप्रस्थापनादिकम् ॥ १ ॥ सुबलपुत्री गान्धारी । माधवी सुभद्रा । क्षितिपानां राज्ञां पत्न्यः स्वगोप्यः कृष्णभक्ता गोप्यः । विसिस्म्युर्विस्मयं चक्रुः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ आनर्चुरर्चितवन्तः ॥ ७ ॥ धर्मगोप्त्री तनुर्यस्य स धर्मगुप्तनुः । यता नियता

व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥ इति संभाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानन्दो भरद्वाजोऽथ गौतमः ॥ ३ ॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥ ४ ॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथाङ्गिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान् ॥ ६ ॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥७॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥ नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥ ॥

वाग्यस्य तस्य सदसः ॥ ८ ॥ जन्मभृतः सफलजन्मानः । तत्फलं जन्मफलम् । किं तत् । यद्योगेश्वरदर्शनम् ॥ ९ ॥ किंच युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापम्, अस्माकं तु स्पर्शनादिकमपि कथं नु घटितमिति विस्मयेनाह—किमिति । स्वल्पतपसां तीर्थस्नानादिमात्रे तपोवुद्धिर्येषां तथाऽर्चायां प्रतिमायां देव इति चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शनादिकमिदं किमसंभावितमित्यर्थः ॥ १० ॥ एतत्प्रपञ्चयति—नह्यम्मयानीति त्रिभिः ॥ ११ ॥ ॥ ॥

१ यद्वा स्वगोप्यो द्रौपद्यादिपालयित्र्यस्तत्सख्यादयः । २ 'आजग्मुः' इति पाठः । ३ 'पुलस्त्यः पुलहोऽत्रिश्च' इति पाठः । ४ ब्रह्मपुत्राः सनकादयः । 'ब्रह्मपुत्रः' इत्यपि क्वचित्पाठः । ५ अम्मयानि नद्यादीनि तीर्थानि पावनानि नहि किं । काका भवन्त्येवेत्यर्थः । प्रतिमादि देवा अपि पावना न किम्, किंतु पुनन्त्येवेति भावः ।

वाङ्मनसयोरप्युपासनाविषयत्वम्, 'यो वाचं ब्रह्मेत्युपास्ते मनो ब्रह्मेत्युपास्ते' इति श्रुतेः। अघं तन्मूलमज्ञानं न हरन्ति। अत्र हेतुः—भेदकृतो भेदकर्तारः। यद्वा भेदबुद्धिं कुर्वतः पुंसः। विपश्चितो निरस्तभेदाः। ते तु मुहूर्तमात्रसेवयैवाघं घ्नन्तीति ॥ १२ ॥ अतः साधून्विहायान्यत्रात्मादिबुद्ध्या सज्जमानोऽतिमन्द इत्याह—यस्येति। आत्मबुद्धिरहमिति बुद्धिः। त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन्कुणपे शरीरे स्वधीः स्वीया इति बुद्धिः। भौमे भूविकारे इज्यधीर्देवताबुद्धिः। यद्यस्य तीर्थबुद्धिस्तीर्थमिति बुद्धिः। अभिज्ञेषु तत्त्ववित्सु यस्य ता बुद्धयो न सन्ति स एव गोष्वपि खरो दारुणोऽत्यविवेकी। यद्वा गवां तृणादिभारवाहः खरो गर्दभ इति ॥ १३ ॥ दुरन्वयमननुरूपम्। भ्रमन्त्यनवस्थिता बुद्धिर्येषां ते ॥ १४ ॥ ईशितव्यतामनीश्वरतां कर्माधिकारितां जनसंग्रहमात्रमेतदित्यूचुः। स्मयन्तो हसन्तः ॥ १५ ॥ अनन्वयं विवृण्वन्त आहुर्द्वाभ्याम्—यन्माययेति। तत्त्ववित्सूत्तमा अपि वयम्। कासौ माया यया

नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ॥ उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२ ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥ ॥ श्रीशुक उवाच ॥ निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः ॥ १४ ॥ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसंग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥ ॥ मुनय ऊचुः ॥ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥१६॥ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥१७॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥

विमोहिता इति तामाहुः—यदिति। यद्यस्मादीहया नरचेष्टितेन गूढः सन्नीशितव्यायत्यनीश्वरवदाचरति भवान्। नन्वहमीश्वरश्चेत्किमित्येवमाचरेयं तत्राहुः—अहो इति। भगवतस्तव विचेष्टितं विचित्रमतर्क्यम् ॥ १६ ॥ भगवत्त्वमेवाहुः—अनीह इति। अनीहोऽक्रिय एव। आत्मना स्वरूपमात्रेण। बहुधेत्यत्र दृष्टान्तः—यथा भौमैरिति। भौमैर्घटादिविकारैरुपलक्षिता—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः। ननु कथमहं जगत्सृष्ट्यादिकर्ता वसुदेवपुत्रत्वादिति तत्राहुः—अहो इति। विभूम्नः परिपूर्णस्य तदेवं जन्मादि चरितं विडम्बनमनुकरणमात्रं नतु तत्त्वमिति ॥ १७ ॥ जनसंग्रहमाहुः—अथापीति त्रिभिः। सत्त्वं शुद्धसत्त्वात्मकं रूपं बिभर्षि। स्वलीलया आचारेण वेदपथं च बिभर्षि ॥ १८ ॥ ॥ ॥ ॥

१ 'जीवञ्छवो भागवताङ्घ्रिरेणुं' इत्युक्तेः। २ 'दुरन्वयम्' इति पाठः। ३ उपासितोऽग्निर्न हरति न सूर्यो हरति इत्येवं वचनविपरिणामेनान्वयः। उपासिताश्चन्द्रतारका न हरन्ति। भूरादिमनःपर्यन्ता एते उपासिता न हरन्तीत्यन्वयः। ४ अकुण्ठमपरिच्छिन्नं ज्ञानं यस्य। ५ परस्मैपदमार्षम्। ६ 'न तत्र बध्यते', 'न बुध्यते यथा' इति पाठौ। ७ अथापि अतर्क्यशक्तिरपि। ८ बहुधा तत्तद्ब्रह्माण्डादिभेदेन नानाविधतया।

अत एव ब्राह्मणेषु बहुमानमपि करोषीति सहेतुकमाहुः—ब्रह्मेति। ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयमन्तरङ्गं रूपम्। कुत इत्यत आहुः—यत्रेति। यत्र ब्रह्मणि व्यक्तं कार्यम्, अव्यक्तं कारणं ततः परं सत्सन्मात्रं ब्रह्म च तपआदिभिरुपलब्धं तद्ब्रह्म ॥ १९ ॥ तस्माद्वेदहृदयत्वाद्वेदप्रवर्तकं ब्राह्मणकुलं शास्त्रयोनेर्वेदप्रमाणकस्य तव सद्धाम श्रेष्ठमुपलब्धिस्थानं सभाजयसि संपूजयसि तत्तस्मादेव कारणात्त्वं ब्रह्मण्यानामग्रणीर्मुख्यस्तत्प्रवर्तकः सन्कर्माचरसीत्यर्थः ॥ २० ॥ तस्मादीश्वरस्य तवेदं जनसंग्रहमात्रं, वयं तु तव सङ्गत्या कृतार्था इत्याहुः—अद्येति षड्भिः। सतां गत्या त्वया सङ्गम्य सङ्गं प्राप्य। यद्यस्मात्त्वं श्रेयसां परोऽवधिः ॥ २१ ॥ २२ ॥ एकस्मिन्नेव स्थाने आरामो येषां तेऽपि। कालं सृष्ट्यादिकारणम्। ईश्वरं नियन्तारम् ॥ २३ ॥ एतत्सदृष्टान्तमाहुः—यथेति। शयानः स्वप्नान्पश्यन्। गुणतत्त्व-

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥ तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥ त्वया सङ्गम्य सद्गत्या यदन्तः श्रेयसां परः ॥ २१ ॥ नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ॥ स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥ २२ ॥ न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ ॥ २३ ॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥ २४ ॥ एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया ॥ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥ तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥ ॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान् गन्तुं मुनयो दधिरे मनः ॥ २७ ॥ ॥ ॥

दृक् स्वप्नविषयेषु तत्त्वदृष्टिः। नाममात्रमिन्द्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥ २४ ॥ एवं त्वा त्वां नाममात्रेषु स्वप्नादितुल्येषु विषयेष्विन्द्रियैर्या ईहा प्रवृत्तिः सैव माया तया विभ्रमच्चित्तो न वेद। स्मृतेर्विवेकस्योपप्लवान्नाशात् ॥ २५ ॥ अघौघस्य मर्षं नाशं करोति यद्गङ्गाख्यं तीर्थं तस्यास्पदमाश्रयं तेऽङ्घ्रिं सुविपक्वयोगैरपि हृदि कृतं केवलं नतु दृष्टं तस्य तेऽङ्घ्रिं ददृशिम दृष्टवन्तो वयं बहुभिः पुण्यैरतोऽस्मान् भक्ताननुगृहाण। भक्तान् कृत्वानुग्रहं कुर्वित्यर्थः। ननु किं भक्त्या यथापूर्वं तप एव तप्यतामिति नेत्याहुः—उत्सिक्ता उद्रिक्ता या भक्तिस्तयोपहत आशयलक्षणो जीवकोशो येषां त एव पूर्वं भवद्गतिमापुर्नान्य इति ॥ २६ ॥ २७ ॥ ॥ ॥ ॥

१ अन्तशब्दस्यार्थोऽवधिरिति। २ आरामो विहारभोजनशयनादिः। ३ स्वयोगमाययापि न छन्नो महिमा यस्य तस्मै। ४ यद्वा भूपादयोऽतिधन्याः यं त्वामनु एते मायाजवनिकाच्छन्नं न विदन्ति, किंत्वनावृतब्रह्मस्वरूपमेव। अच्छन्नत्वेऽपि आत्मानं निर्विशेषमात्रं न पश्यन्ति किंतु सगुणरूपमपि कालमीश्वरमपि नैव, किंतु स्निग्धबान्धवकुलपतित्वादिरूपमपीति तोष०। ५ 'एवं त्वा यं जनो ब्रह्मन्नाममात्रेन्द्रियेहया' इति पाठः। ६ गमनानुज्ञां प्रार्थ्य। ७ अनेन मर्षतीति मर्षपदव्युत्पत्तिर्दर्शिता। कचित् 'अघौघमर्षं' इति पाठः।

उपसंगृह्य चरणौ पाणिभ्यां धृत्वा । बभाषे इदमिति संधिरार्षः ॥ २८ ॥ सर्वे देवा येषु तेभ्यः—'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' इति श्रुतेः । येन कर्मणा यथाकृतेन वा कर्मणां निर्हारो निरासो भवति तदुच्यताम् ॥ २९ ॥ श्रीकृष्णं हित्वास्मान्पृच्छतीति विस्मितान्प्रत्याह—नातीति । बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥ तत्रत्यो गङ्गातीरवासी ॥ ३१ ॥ श्रीकृष्णेऽर्भकत्वमानोऽविद्याविजृम्भित इत्याह—यस्येति द्वाभ्याम् । अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति । तदेवाह—कालेन कर्कटिकाफलवत् । अस्य विश्वस्य लयोत्पत्त्यादिनापि । स्वतश्च विद्युदादिवत् । अन्यस्माच्च मुद्गरादेर्घटादिवत् । गुणतो रूपाद्यन्तरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥ तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरम् । किंच अद्वितीयं कृष्णमन्यः प्राकृत उपगूढमाच्छन्नं मनुष्यं मन्येत ।

तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयन्त्रितः ॥२८॥ ॥ वसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥२९॥ ॥ नारद उवाच ॥ नातिचि-[2]त्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥ संनिकर्षोऽत्र[3] मर्त्यानामनादरणकारणम् ॥ गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥३१॥ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥३४॥ कर्मणा कर्मनिर्हार एष साधुनिरूपितः ॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥३५॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥३६॥ अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥३७॥

कैः । क्लेशकर्मादिभिः । तत्र क्लेशा रागादयश्च तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्त्वादीनां गुणानां पुनः प्रवाहश्च तैः प्राणादिभिश्च स्वैर्विभवैः स्वकार्यैः । अत्र दृष्टान्तः—मेघहिमोपरागैरभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ चित्तस्योपशम उपशमहेतुः । योगो मोक्षोपायश्च । शनैरात्ममुदमावहतीति तथा । सुगमः प्रवृत्त्याश्रयत्वात् । धर्मश्चावश्यकः । अन्यथा विहिताकरणेन मालिन्यप्रसङ्गात् ॥ ३६ ॥ ननु 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिना त्यागस्यैव विहितत्वात्कथं कर्म मोक्षोपाय इत्याशङ्क्यादावेव त्यागस्याशक्यत्वादित्याशयेनाहुः—अयमिति सार्धचतुर्भिः । स्वस्त्ययनः स्वस्ति क्षेममीयतेऽनेनेति तथा । श्रद्धया निष्कामतया शुक्लेन शुद्धेनाप्तेन वित्तेन पुरुष ईश्वर इज्येतेति यदेष पन्थाः ॥ ३७ ॥ ॥ ॥

१ बभाषेत्यात्मनेपदाभावस्तदनित्यत्वादार्षत्वाद्वेति तोष० । २ 'नापि चित्रं' इति पाठः । ३ 'सन्निकर्षो हि' इति पाठः । ४ आभाष्य सबोध्य । ५ राज्ञां राजसु शृण्वत्स्विति तेषामुपदेशार्थम् । ६ याजनाध्यापनप्रतिग्रहलब्धं विप्रस्य शुक्लं वित्तं, युद्धात्प्रजापालनाद्दण्डाच्च लब्धं क्षत्रियस्य, कृषिगोरक्षवाणिज्यलब्धं विशः, द्विजशुश्रूषालब्धं शूद्रस्य । दायलब्धं प्रीतिदत्तं पित्राविक्रमागतं श्वशुरलब्धं च सर्वेषामिति विष्णुधर्मोत्तरे ।

स्वस्त्ययनमाहुः—वित्तैषणामिति । वित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् । गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां विसृजेत् । तदनुभवेनैव तदौत्सुक्यनिवृत्तेः । देहे मृते आत्मनः स्वर्गादिलोकैषणां कालेन क्षयानुसंधानेन विसृजेत् । देव हे वसुदेव । यद्वा देवकालेन देवानामपि मृत्युना । मृत्युंहेतुभूतेनेत्यर्थः । अत्राचारं प्रमाणयति—ग्राम इति ॥ ३८ ॥ किंच ऋणैरिति । तथा च श्रुतिः—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इत्यादि । तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य । तथा च मनुः—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ अनपाकृत्य

वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३८ ॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥४०॥ वसुदेव[2] भवान्नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥ ॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च ॥४२॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥४३॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ॥४४॥ तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥४५॥ नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकण्ठ्यो गन्धर्व्यः[3] संगीतं सहभर्तृकाः ॥ ४६ ॥ तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥ ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥ तस्यर्त्विजो महाराज रत्नकौशेयवाससः[4] ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥ ॥

मोक्षं तु सेवमानो व्रजत्यधः' ॥ इति ॥ ३९ ॥ निर्ऋणो निर्मुक्तऋणः । अशरणो भव गृहात्प्रव्रज ॥ ४० ॥ किंच अविशुद्धचित्तानामयं क्रमः, त्वं तु कृतार्थ एवेत्याहुः—वसुदेवेति । भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिम् । प्रार्चोऽर्चितवान् । यद्यस्मात् । वां युवयोः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ आलिप्ताः कुङ्कुमादिभिः । वस्तुपाणयो गृहीतार्हणहस्ताः ॥ ४५ ॥ ४६ ॥ अक्तं नेत्रयोरञ्जनेन । अभ्यक्तं सर्वाङ्गेषु नवनीतेन ॥ ४७ ॥ ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥ ४८ ॥ ४९ ॥ जीवेशौ सर्वजीवानामीशौ ॥ ५० ॥ ॥ ॥ ॥ ॥

१ अस्यापि विशेष्यं काल एव । २ वसुना भक्तिलक्षणेन दीव्यतीति तथाभूत । ३ गन्धर्व्यो गायकानां स्त्रियः । ४ रत्नवदुज्ज्वलपरिधानाः । पीतकौशेयेति कचित् ।

अनुयज्ञं प्रतियज्ञम् । आम्नातसर्वाङ्गाः प्राकृता ज्योतिष्टोमदर्शपूर्णमासादयस्तेभ्यश्चोदनालिङ्गादिभिरतिदेशप्राप्ताङ्गा वैकृताः सौरसत्रादयस्तैः सर्वैः । द्रव्यं पुरो-
डाशादि, ज्ञानं मन्त्रः, क्रिया कर्म, तेषामीश्वरम् ॥ ५१ ॥ ५२ ॥ सस्नुः स्नानं चक्रुः ॥ ५३ ॥ आ श्वभ्यः शुनोऽभिव्याप्य । अन्नेन पूजयदपूजयत् ॥ ५४ ॥
बन्ध्वादिचारणान्तान्पारिबर्हेण प्रीतिदानेन चापूजयत्, ते च सर्वे प्रययुः ॥५५॥५६॥ प्रयाणे केषांचिद्विशेषमाह—धृतराष्ट्र इति द्वाभ्याम् । अनुजो विदुरः ।
पार्था युधिष्ठिरभीमार्जुनाः । यमौ नकुलसहदेवौ ॥ ५७ ॥ सौहृदेनाक्लिन्नानि चेतांसि येषां ते ॥ ५८ ॥ ५९ ॥ मनोरथो यज्ञविषयस्तमेव महार्णवम् ॥ ६० ॥

ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥ अथर्त्विग्भ्योऽददात्काले
यथाम्नातं स दक्षिणाः ॥ स्वलंकृतेभ्योऽलंकृत्य गोभूकन्या महाधनाः ॥५२॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥
सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥५३॥ स्नातोऽलंकारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णा-
नाश्वभ्योऽन्नेन पूजयत् ॥ ५४ ॥ बन्धून्सदारान्ससुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृंज-
यान् ॥५५॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥५६॥ धृतरा-
ष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्व्यासः सुहृत्संबन्धिबान्धवाः ॥५७॥ बन्धून्परिष्वज्य यदू-
न्सौहृदाक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥५८॥ नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः ॥
कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥५९॥ वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नन्द-
माह करे स्पृशन् ॥६०॥ ॥ वसुदेव उवाच ॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये
शूराणामपि योगिनाम् ॥६१॥ अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हि-
चित् ॥ ६२ ॥ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि ॥ अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥

शूराणां बलेन योगिनां ज्ञानेनापीत्यर्थः ॥६१॥ तत्कुतस्तत्राह—अस्मास्विति । कृताज्ञेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिरप्रतिकल्पा अनुपमा मैत्रीयमर्पिता
अफलापि प्रत्युपकारशून्यापि कर्हिचिदप्यस्मान्न निवर्तेत । तस्मादीश्वरकृतः पाशोऽयं भवतामिति गम्यत इत्यर्थः ॥ ६२ ॥ अफलत्वमेवाह—प्रागिति ।
हे भ्रातः, अकल्पादसामर्थ्याद्वः कुशलं प्रियं न ह्याचराम न कृतवन्तो वयम् । श्रीमदेनान्धान्यक्षीणि येषां ते ॥ ६३ ॥ ॥ ॥

१ अनुयज्ञं यज्ञानुक्रमेण यो विधिस्तेन । तदाह—अग्नीत्यादिना । अग्निहोत्रं, ततः प्राकृता उपदिष्टाङ्गा दर्शादीष्टयः, ततो वैकृता अतिदिष्टाङ्गाः सौर्यादयः, ततः प्राकृता यज्ञा ज्योतिष्टोमा-
दयः, वैकृताः सत्रादय इत्येवं सर्वैर्यज्ञैः इति तोष० । २ गोभूकन्या अप्यलंकृत्याददादित्यन्वयः । 'स्वलंकृतेभ्यो विप्रेभ्यः' इति क्वचित्पाठः । ३ चरित्वा ताननुष्ठायेत्यर्थः ।
४ 'नानालंकार' इति पाठः । ५ स्त्रियस्तस्य महिष्योऽप्यदुः । ६ 'महत्या' इति पाठः । ७ भावप्रधानो निर्देशः, अकल्पत्वात् ।

राज्यश्रीर्मा भूत् । छान्दसोऽडागमः ॥ ६४ ॥ ६५ ॥ अद्य श्व इति । प्रातर्निर्गमेऽद्यैवापराह्णे गम्यतामित्यपराह्णे निर्गमे श्वो गम्यतामिति पुनःपुनरेवं मानितः ॥ ६६ ॥ ६७ ॥ यापितो महासैन्येन प्रस्थापितः ॥ ६८ ॥ ६९ ॥ ७० ॥ यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञादिलक्षणं सुहृत्संदर्शनादिकं चेति ॥ ७१ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ पञ्चाशीतितमे रामकृष्णौ संप्रार्थितौ सुतौ ॥ पित्रे ज्ञानमथो मात्रे मृतान्पुत्रानयच्छताम् ॥ १ ॥ नन्दयित्वा कुरुक्षेत्रयात्रायां सुहृदो बहून् ॥ तत्त्वज्ञानं ततः पित्रोरादिशन्मृतसूनुभिः

मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वजनानुत बन्धून्वा न पश्यति ययान्धदृक् ॥ ६४ ॥ ॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥६५॥ नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ॥ अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥६६॥ ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः॥परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥६७॥वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो[2] यदुभिर्ययौ[3] ॥ ६८ ॥ नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां[4] ययुः॥६९॥ बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥७०॥ जनेभ्यः कथयांचक्रुर्यदुदेवमहोत्सवम्॥यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम्॥७१॥ ॥इति श्रीमद्भागवते महापुराणे द० उ० तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ श्रीबादरायणिरुवाच ॥ अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ ॥ वसुदेवोऽभिनन्द्याह प्रीत्या संकर्षणाच्युतौ ॥१॥ मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम्॥तद्वीर्यैर्जातविश्रम्भः परिभाष्याभ्यभाषत ॥२॥ कृष्ण कृष्ण महायोगिन्संकर्षण सनातन ॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥ ॥

॥ २ ॥ १ ॥ धाम प्रभावस्तत्सूचकम् । जातविश्रम्भ उत्पन्नविश्वासः । परिभाष्य संबोध्य ॥ २ ॥ अस्य विश्वस्य यत्साक्षात्स्वरूपभूतं कारणं प्रधानपुरुषौ नाम परौ तयोरपि कारणत्वेनेश्वरौ च साक्षाद्वां युवामिति जाने ॥ ३ ॥ नन्विदं विश्वमनेकैः कारकैर्जायमानं कुतः प्रधानपुरुषात्मकं, कुतस्तरामावयोस्तत्कारणत्वेनेश्वरत्वं तत्राह—यत्रेति । यत्राधिकरणे । येन कर्त्रा करणेन च । यतः अपादानात् । यस्य[5] संबन्धेन । षष्ठ्यर्थस्याकारकत्वेऽपि निमित्ततोक्ता । यस्मै संप्रदानाय । यद्यदिति[6] प्रयोज्यकर्तृकर्मकारके दर्शिते । ननु तयोर्नास्ति[7] भेदः, यथोक्तम्—'करोति क्रियमाणेन न कश्चित्कर्मणा विना ॥ भवत्यर्थस्य कर्ता च

१ सौहृदेन शैथिल्यं यत्र तच्चित्तं यस्य । २ यापितो वसुदेवाद्यैरनुव्रजितः। ३ ययौ मथुरां प्रति नन्द इति शेषः । ४ 'माथुरान्' इति पाठः । ५ यस्य संबन्धीति दण्डादिकारणातिरिक्तचीवरादिवत् दृष्टादृष्टहेतुवर्ग उक्तः । ६ यद्यदिति देवान् अमृतं आशयतीत्यादिकयोः प्रयोज्यकर्मशुद्धकर्मणोः संग्रहः । ७ ननु प्रयोज्यकर्मभिन्नं शुद्धं कर्म नास्त्येव । तण्डुलं पचतीत्यादौ तण्डुलः पक्को भवति तं पक्कं करोतीत्यादेरर्थात् ।

करोतेः कर्म जायते ॥' तथा—'करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ॥ भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥' इति च, सत्यम्, तथाप्यवस्थाभेदेन
भेदो विवक्षितः । दृश्यते चावस्थाभेदः । तण्डुलानोदनं पचति, मृदं घटं करोतीति । तदेवं सप्तविभक्त्यर्था दर्शिताः । यथेति यदेति च क्रियाविशेषणभू-
तानामन्येषां चाव्ययानामर्थाः । स्यादिति क्रियापदार्थोपलक्षणम् । एवं सर्वं प्रपञ्चमनूद्य तत्कारणस्य भगवद्रूपतां विधत्ते—इदं साक्षादिति । प्रधानं भोग्यं
पुरुषो भोक्ता तयोरीश्वरो भगवांस्त्वमेव साक्षादिति तयोरैक्यमभिप्रेत्यैकवचनम् ॥ ४ ॥ किंच धारणपोषणकर्ताऽपि त्वमेवेत्याह—एतदिति । हे आत्मन्,
प्राणः क्रियाशक्तिर्जीवो ज्ञानशक्तिश्च संस्त्वमेव विभर्षि ॥ ५ ॥ ननु प्राणादीनां विचित्रशक्तीनां कारणत्वावगमात्कथं परमेश्वरस्यैव कारणत्वेन सर्वात्मक-
त्वमुच्यत इत्याशङ्क्य प्राणादिशक्तयोऽपि तस्यैवेत्याह—प्राणादीनामिति । प्राणः सूत्रं तदादीनां विश्वसृजां विश्वकारणानां याः शक्तयस्ताः परस्य परमका-
रणस्येश्वरस्यैव । कुतः । पारतन्त्र्यात् । यथा वेधशक्तिर्न बाणस्य, अपि तु पुरुषस्य तद्वदित्यर्थः । ननु भगवतः प्राणादिवर्गस्य च स्वातन्त्र्यमेव किं न स्यादत आह—
वैसादृश्याद्द्वयोरिति । चेतनाचेतनत्वेन विसदृशत्वाद्द्वयोः । अचेतनप्राणादिवर्गस्य चेतनपारतन्त्र्यमेव युक्तमित्यर्थः । यद्वा प्राणादिषु द्वयोर्द्वयोरेव तावद्विस-

एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ॥ आत्मनानुप्रविश्यात्मन्प्राणो जीवो विभर्ष्यज: ॥ ५ ॥ प्राणादीनां विश्व-
सृजां शक्तयो याः परस्य ताः ॥ पारतन्त्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम् ॥ ६ ॥ कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्य-
र्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥ तर्पणं प्राणनमपां देव त्वं ताश्च तद्रसः ॥
ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥ ॥ ॥ ॥ ॥

दृष्टत्वं विरुद्धक्रियाकारित्वात्किं पुनर्बहूनाम् । तस्मादेकेन सर्वज्ञेन सर्वशक्तिनाऽधिष्ठितानामेव विशिष्टकार्यारम्भकत्वं युक्तं न स्वतन्त्राणामिति । तथा चोक्तम्—
'यदैते संहता भावा भूतेन्द्रियमनोगुणाः ॥ यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादाय चोभयं ससृ-
जुर्ह्यदः ॥' इति । तथा—'नानात्वात्स्वक्रियाऽनीशाः प्रोचुः प्राञ्जलयो विभुम्' इत्यादि । ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कुतः स्यादत आह—चेष्टैव
चेष्टतामिति । चेष्टमानानामेषां चेष्टैव, न तु शक्तिः । यथा वायोः शक्त्या तृणादीनां चलनम् । यथा वा पुरुषस्य शक्त्या शराणां वेग इति ॥ ६ ॥ पारत-
न्त्र्यमेव प्रपञ्चयति—कान्तिरिति पञ्चभिः । चन्द्रस्य कान्तिः । अग्नेस्तेजः । अर्कस्य प्रभा । ऋक्षविद्युतां सत्ता स्फुरणमात्रेण सत्त्वम् । अर्थतो वस्तुतो भवान् ।
तथा च श्रुतिः—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥ तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । स्मृतिश्च—
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति । भूमेर्वृत्तिः प्राणिनामाधारत्वेन वर्तनं गन्धश्च भवान् । तवैव शक्ति-
रित्यर्थः ॥७॥ किंच हे देव, अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव । किंच वायोरोजःसहआदि तवैव शक्तिः ॥ ८ ॥

१ तण्डुलः पक्वो भवतीत्यादौ हि तण्डुल ओदनो भवति तं तण्डुलं ओदनं करोतीत्यर्थेन पूर्वावस्थस्य तण्डुलादेः प्रयोज्यकर्मत्वात् उत्तरावस्थौदनादेः शुद्धकर्मत्वादिति तोष० । २ श्रीकृष्ण-
बलरामयोः । ३ तोषणी तु तत्र सृष्टिधारणपोषणक्रिया उदाहरति—एतदिति । आत्मन् आत्मनि अधिकरणे, आत्मना कारणेन, आत्मसृष्टमित्यवशिष्ट कारकसंग्रहः । आत्मना कर्त्रा, आत्मने
संप्रदानाय, आत्मन अपादानात्, आत्मनः सधन्वेन सृष्टं आत्मरूपं सृष्टमिति पञ्चविधसमासात् । एवमनुप्रविश्यात्मन्येव विभर्षि धारयसि पुष्णासि च आत्मनैव विभर्षि इत्यादि । ४ ओज
इन्द्रियसामर्थ्यम्, सहोऽन्तःकरणसामर्थ्यम्, बलं शारीरम्, चेष्टा शरीरव्यापारः, गतिश्चेतनाचेतनसाधारणं गमनम् । ५ 'तवेश्वर' इति पाठः ।

दिशामुपाधिकृताकाशप्रदेशानामवकाशो दिशश्च त्वम् । खं सामान्याकाशस्तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः । नादः पश्यन्ती । ओंकारो मध्यमा । वर्णश्चाकृतीनां पदार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदम् । वर्णपदाद्यात्मिका वैखरी च त्वमित्यर्थः ॥ ९ ॥ इन्द्रियाणामिन्द्रियं विषयप्रकाशनशक्तिर्देवाश्चेन्द्रियाधिष्ठातारस्तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वम् । अवबोधोऽध्यवसायशक्तिः[1] । अनुस्मृतिः[2] प्रतिसंधानशक्तिः ॥ १० ॥ भूतानां कारणं भूतादिस्तामसोऽहंकारस्त्वमसि । इन्द्रियाणां कारणं तैजसो राजसोऽहंकारस्त्वम् । विविधमधिदैवाध्यात्माधिभूतभेदेन विकल्प्यन्त इति विकल्पा देवास्तेषां कारणं वैकारिकः सात्त्विकोऽहंकारश्च त्वम् । अनुशायिनां जीवानां संसारकारणं प्रधानं त्वम् ॥ ११ ॥ अपि च नश्वरेषु नाशशीलेष्विहैतेषु भावेषु यदनश्वरमवशिष्यमाणं रूपं तत्त्वमसि । द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुण्डलादिषु नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्रमनश्वरं यथा तद्वत् ॥ १२ ॥ ननु त्रिगुणात्मककार्यरूपोऽपि त्वमित्युक्तत्वात्कथमनश्वरत्वं तत्राह—सत्त्वमिति । तद्वृत्तयस्तत्परिणामाश्च महदादयः । अद्धा साक्षात् त्वयि परे ब्रह्मणि कल्पिताः

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥९॥ इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥ भूतानामसि भूतादिरिन्द्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥ तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदा व्यावहारिकः ॥ १४ ॥ गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः[3] ॥ गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ॥ १७ ॥ युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह ॥ १८ ॥ ॥

॥ १३ ॥ तस्मान्न सन्तीति । नन्वसतां कथं प्रतीतिरत आह—यर्हीति । यर्हि[4] विकल्पितास्तदैव प्रतीतिमात्रेण त्वयि सन्ति, त्वं चामीषु तदैव कारणतयानुगतः । अन्यदा त्वव्यावहारिको[5] विकल्पकस्त्वमेवावशिष्यस इत्यर्थः ॥ १४ ॥ एवंरूपत्वादज्ञाननिबन्धनश्च संसार इत्याह—गुणप्रवाह इति । सूक्ष्मां निष्प्रपञ्चां गतिमबुधा अविद्वांसः । अबुद्धेति वा पाठः । अतोऽबोधेन देहाभिमानेन कृतैः कर्मभिः संसरन्तीति ॥ १५ ॥ एवं तयोस्तत्त्वं निरूप्य तदप्राप्त्या शोचति—यदृच्छयेति । नृतां मनुष्यताम् । सुकल्पां पटुतरेन्द्रियाम् ॥ १६ ॥ अहो किमिति प्रमत्तोऽसि, त्वया बहुभिः पाशैर्निबद्धत्वादित्याह—असावहमिति । देहे[6] अस्य देहस्यान्वयादिषु पुत्रादिषु च ममैवैत इति ॥ १७ ॥ अहो त्वत्पुत्रयोरावयोः किमिदमारोप्यते अत आह—युवामिति । भूभारक्षत्रक्षपणार्थमवतीर्णौ तथा ह निश्चितमात्थ कथयसि ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'व्यवसायशक्तिः' इति पाठः । २ जीवोपाधेश्चित्तस्यानुस्मृतिर्धारणा सती भगवन्निष्ठानुकूला । ३ 'अबुध्य' इति पाठः । ४ यदा सुप्तिप्रलयादौ न सन्ति कल्पकाभावात्तदा त्वमप्येषु नासि सत्त्वेन नानुवर्तसे । ५ अन्यदा सृष्टिस्थित्यादौ तु व्यावहारिकः व्यावहारिकसत्तासाधकतयेति तोष० । ६ देहे अहमिति ।

तत्त्वसादरणं शरणमापन्नानां संसृतिभयमपहन्तीति तथा तत्। ननु त्वमतिसुखी, वृथा किं निर्विद्यसेऽत आह—एतावतेति। इन्द्रियलालसेनेन्द्रियार्थतृष्णया। यद्येनेन्द्रियलालसेन मर्त्ये शरीरे आत्मदृगात्मबुद्धिरहं त्वयि च परे परमेश्वरेऽपत्यबुद्धिरस्मि तेनालमलं पर्याप्तमिति ॥ १९ ॥ ननु कुत एतदहं परमेश्वर इति तत्राह—सूतीगृहे इति। नौ आवयोः। अनुयुगं प्रतियुग्मम्। यदा सुतपाः पृश्निरिति युग्मम्। यदा कश्यपोऽदितिश्चेति युग्मम्। अधुना वसुदेवो देवकीति युग्मम्। एवं हि प्रतियुग्ममज एवाहं संजज्ञेऽवतीर्ण इति भवान्नूनं जगाद। नन्वन्योऽसौ चतुर्भुजो देव इति तत्राह—नाना तनूरिति। गगनवदसङ्ग एव त्वम्। भूम्नः सर्वगतस्य विभूतिरूपां मायां को वेदेति ॥ २० ॥ २१ ॥ उपमन्महे उपमन्यामहे। समुद्दिश्य विषयीकृत्य। तत्त्वग्राम-

तत्ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ॥ एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥ सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै[1] ॥ नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥ ॥ श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ॥ प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥ ॥ श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥ अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः[2] सचराचरम् ॥ २३ ॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥ खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ॥ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥ २५ ॥ ॥ श्रीशुक उवाच ॥ एवं भगवता राजन्वसुदेव उदाहृतः ॥ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वानीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥ कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ॥ स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥

स्तत्त्वसमूहः। उदाहृतः सम्यङ्निरूपितः ॥ २२ ॥ इमामेव दृष्टिं सर्वत्र विधत्स्वेत्याह—अहमिति। एवं विमृश्याः ब्रह्मत्वेनैवान्वेषणीयाः। किंच सचराचरं जगदपि ॥ २३ ॥ ननु नानाविकारवतां कुतो ब्रह्मत्वमिति चेत्, न, ब्रह्मण एवोपाधिधर्मैर्बहुधा प्रतीतेरिति सदृष्टान्तमाह द्वाभ्याम्—आत्मा हीति। यथा खादिभूतानि तत्कृतेषु घटादिष्वाविस्तिरोभावादि यान्त्येवमसावात्माप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा ईयते पुनश्च यथाशयं यथोपाध्याविर्भावतिरोभावादिरूपेण प्रतीयते न वस्तुतः। कुतः। एको बहुधा स्वयंज्योतिर्दृश्यत्वेन नित्योऽनित्यत्वेनानन्योऽन्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वं प्रपञ्चनीयम् ॥ २४ ॥ २५ ॥ २६ ॥ सुविस्मिता सती ॥ २७ ॥ समाश्राव्य संबोध्य ॥ २८ ॥ ॥ ॥ ॥

[1] निजाना भक्तानां धर्मो भक्तिलक्षणस्तत्पालनाय, यद्वा निजस्त्वदीयो धर्मः स्वभावो भक्तमनोरथपूरणलक्षणस्तस्य गुप्त्यै। [2] 'विमृग्याः' इति पाठः।

॥ २९ ॥ भूमेर्भारायमाणानां राज्ञामर्थे तेषां निधनार्थं मे मयि किलावतीर्णौ ॥ ३० ॥ हे आद्य, यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणास्तेषां भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति तं त्वा त्वां गतिं शरणं गतास्मि ॥ ३१ ॥ आनिन्यथुरानीतवन्तौ। पितृस्थानाद्यमसदनात् ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ दैत्यराड् बलिः । कथंभूतौ । विश्वस्यात्मभूतं दैवम् । सान्वयः सपरिवारः ॥ ३५ ॥ सवृन्दः सपरिजनः । कथंभूतौ पादाववनिज्य । यदम्बु ययोरवनेजनोदकम् आ ब्रह्म ब्रह्माणमभिव्याप्य जगत्पुनत्पवित्रयद्वर्तते तौ ॥ ३६ ॥ ३७ ॥ इन्द्रसेनो बलिः । प्रेमविभिन्नया प्रेमार्द्रया धिया । विभ्रद्धारयन्

॥ देवक्युवाच ॥ राम रामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥२९॥ कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥ ३० ॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवन्ति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥३१॥ चिरान्मृतसुतादाने गुरुणा कालचोदितौ ॥ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥३२॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान् ॥३३॥ ॥ ऋषिरुवाच ॥ एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद्यदम्बु ह ॥ ३६ ॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥३७॥ स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवास हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥३८॥ ॥ बलिरुवाच ॥ नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे ॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥ ॥ ॥

॥ ३८ ॥ अनन्ताय शेषाय । बृहते फणैकदेशे विश्वधारणाद्बृहत्तस्मै । कृष्णाय सदानन्दरूपाय च । वेधसे जगद्विधात्रे । सांख्ययोगवितानायेत्यादिपदत्रयमैक्यविवक्षया ॥ ३९ ॥ योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्याह—दर्शनमिति । दुष्प्रापमपि युष्मत्कृपया केषांचिददुर्लभं सुलभमपि भवति तदाह—रजस्तमःस्वभावानामिति । नो दर्शनं प्राप्तौ ॥ ४० ॥ ॥ ॥ ॥ ॥ ॥

१ गुरुदक्षिणारूपं तत्सुतम्। २ 'सचोदितः' इति पाठः। ३ अत्र तयोः पदावृत्तिर्भक्तिभरेण । ४ 'महाविभूतिभिः' इति पाठः । ५ तोषण्यां तु सांख्ययोगयोर्ज्ञानाष्टाङ्गशास्त्रयोर्वितानो यस्मिन् । यद्वैकनिष्ठस्तयोर्विस्तर इत्यर्थः ।

अहो विद्विषो वयं सात्त्विकभक्तेभ्योऽपि सभाग्या इत्याह—दैत्येत्यादित्रिभिः ॥ ४१ ॥ ४२ ॥ उद्बद्धवैरेण या भक्तिस्तया । केचनेति चैद्यादयः । कामतो भक्त्या गोप्यादयो यथा संनिकृष्टास्त्वदात्मतां प्राप्ताः । तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न संनिकृष्टा इति ॥ ४३ ॥ ननु सात्त्विकेभ्योऽपि राजसादयः संनिकृष्टा इति चित्रं तदाह—इदमित्थमिति । इदमिति स्वरूपतः इत्थमिति विशेषतश्च ॥ ४४ ॥ तदेवं यद्यपि वैरभावेन त्वत्प्राप्तिर्भवेत्तथापि मां सात्त्विकं कुर्विति प्रार्थयते—तदिति । तत्तथा नः प्रसीद । यथा निरपेक्षैरासकामैरपि विमृग्यं युष्मत्पादारविन्दं तदेव धिषणमाश्रयस्तस्मादन्यद्गृहं तदेवान्धकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामङ्घ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शान्तः सन्नेक एव चरामि । उत अथवा सर्वेषां सखायो महान्तस्तैः सह यथा चरामीति ॥४५॥ कथमल्पपुण्यानामेवं भावः संभवतीति चेत्तर्हि यथैतद्भवेत्तथास्मा-

दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥४१॥ विशुद्धसत्त्वधाम्न्यद्धा[2] त्वयि शास्त्रशरीरिणि॥नित्यं निबद्धवैरास्ते वयं चान्ये[3] च तादृशाः॥४२॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्त्वसंरब्धाः संनिकृष्टाः सुरादयः ॥४३॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥४४॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकूपात् ॥ निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वसखैश्चरामि ॥४५॥ शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो ॥ पुमान् यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥४६॥ ॥ श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम्॥४७॥तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा॥हिरण्यकशिपोर्जाता नीतास्ते योगमायया॥४८॥देवक्या उदरे जाता राजन्कंसविहिंसिताः॥ सा तान् शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽन्तिके ॥ ४९ ॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद्विनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५० ॥ ॥

ननुशिक्षयेत्याह—शाधीति । हे प्रभो, ईशितव्याः सर्वे जीवास्तेषामीश यत्तवानुशासनमातिष्ठन्नाश्रयंश्चोदनाया विधिनिषेधलक्षणायाः सकाशाद्विमुच्यते । न खलु त्वद्भक्तो विधिकिङ्करः स्यादिति भावः ॥ ४६ ॥ तदुक्तं सर्वमनुमोद्य स्वागमनकारणं सप्रपञ्चं कथयति—आसन्निति पञ्चभिः । ऊर्णायां भार्यायाम् । प्रथमेऽन्तरे स्वायंभुवमन्वन्तरे देवाः सुतां वाचं यभितुं यब्धुं मैथुनेन रमयितुमुद्यतमुद्युक्तं कं प्रजापतिं जहसुरुपहसितवन्तः ॥ ४७ ॥ तेनावद्यकर्मणा पापेनासुरीं योनिमगन्नगमन् । अधुना तत्क्षणमेव । हिरण्यकशिपोर्जाता इत्यर्थः ॥ ४८ ॥ ते च योगमायया ततो नीताः सन्तो देवक्या उदरे जाताः । हे राजन् वले, ते च कंसेन विहिंसिताः । सा च तानात्मजान् मत्वा शोचति । ते चेमे तवान्तिकेऽध्यासते ॥ ४९ ॥ लोकं देवलोकम् ॥ ५० ॥ ॥

१ सर्वसखत्वात्ते मज्जुगुप्सां न करिष्यन्तीति भावः । २ सत्त्वधाम्नि विशुद्धसत्त्वाधिष्ठातरि। ३ अन्ये पौण्ड्रकाद्यास्तादृशा दैत्यादितुल्या एव। ४ धिषणं धिष्ण्यम्। ५ अस्योत्तरश्लोकेनान्वयः, सार्धकं वैतत्पद्यं कल्पनीयम् ।

स्वरोद्गीथः स्वरसहित उद्गीथः । सद्गतिं मोक्षम् । स्वरस्यैव पूर्वं कीर्तिमानिति नाम । अतः 'कीर्तिमन्तं प्रथमजं कंसायाऽऽनकदुन्दुभिः ॥ अर्पयामास' इत्युक्तम् ॥ ५१ ॥ अयच्छतामर्पयामासतुः ॥ ५२ ॥ ५३ ॥ ५४ ॥ अमृतत्वे हेतुः—गदाभृतः पीतशेषमिति । नारायणाङ्गसंस्पर्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैस्ते ॥ ५५ ॥ धाम देवलोकम् ॥ ५६ ॥ मृतानामागमनं निर्गमनं च श्रीकृष्णस्य मायां मेने । तेनैवापत्यादिरूपेण रचिताम् ॥ ५७ ॥ ५८ ॥ अमृतं कीर्तिर्यस्य तस्य । व्यासपुत्रैरिति बहुवचनं पूजार्थम् । जगतामघं भिनत्तीति तथा तत् । अलं निःशेषं यथा भवति तथा न कृच्छ्रादिवदिति । तदेवं मोक्षहेतुत्वं पापक्षयहेतुत्वं चोक्तम् । तद्भक्तानां तु सत्कर्णपूरं परमसुखावहं कर्णाभरणमिति स्वयं सुखरूपतामाह । किंच भगवति कृतमावेशितं चित्तं येन

स्वरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद्घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥ ५१ ॥ इत्युक्त्वा तान्समादाय इन्द्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥ पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥ ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥५६॥ तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ ५७ ॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८ ॥ ॥ सूत उवाच ॥ य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्धे मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ छ ॥ ॥ राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥ ॥

स तथा भूत्वा तस्य क्षेमधाम कालादिभयरहितं लोकं यातीति ॥ ५९ ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ छ ॥ ॥ षडशीतितमे दम्भात्सुभद्रामर्जुनोऽहरत् ॥ गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् ॥ १ ॥ पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च ॥ जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥ २ ॥ देवक्या मृतपुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसङ्गात्पृच्छति—ब्रह्मन्निति ॥ १ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'पित्रोः सपश्यतोः सद्यो बभूव प्राकृतः शिशुः' इत्युक्तेर्नन्दगृहगमनसमये देवकी स्तनमपाययदिति तत्रानुक्तमपीह पीतशेषमित्युक्तेरवगन्तव्यमिति चक्र० बाल० । २अमृतं परानन्दरूपा । ३स्वरस्यैव पूर्वं कीर्तिमदिति नामेति तोष०।स्वरादीनि नामानि मरीचिपुत्रत्वदशायामिति चक्र० बाल०।४'परिस्रुतं इति पाठः, तत्र स्तनविशेषणम्।५'धाम विहायसा' इति पाठे धाम देवलोकम्।

॥ २ ॥ कथमशृणोत्—दुर्योधनायेति । अपरे वसुदेवादयो न दास्यन्तीति । तल्लिप्सुस्तस्या मातुलेय्या लिप्सुः । रामं वञ्चयितुं पूज्यतमं त्रिदण्डिवेषं विधाय गत इत्याह—स यतिरिति ॥ ३ ॥ स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥ तमातिथ्येन निमन्त्र्य गृहमानीय वलेन यच्छ्रद्धयोपहृतं परिविष्टं तद्भैक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥ भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ॥ ६ ॥ व्रीडितापाङ्गी सव्रीडकटाक्षा । तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यया सा ॥ ७ ॥

॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥ २ ॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥ ३ ॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥ ४ ॥ एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् ॥ श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥ सापि तं चकमे वीक्ष्य नारीणां हृदयंगमम् ॥ हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत्पारिवर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥ १३ ॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥ ॥

अन्तरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः । कामेन भ्रमच्चित्तं यस्य सः । शं रामादिसन्माननिमित्तं सुखम् ॥ ८ ॥ ९ ॥ आसमन्ताद्रुन्धत आवरणं कुर्वतः ॥ १० ॥ ॥ ११ ॥ पारिवर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२ ॥ १३ ॥ अनीहयाऽनुद्यमेनैवागतं यदाहार्यं भोज्यं तेन निर्वर्तिता निजाः क्रिया येन सः ॥ १४ ॥

---

१ तल्लिप्सुरिति शेषपष्ठ्या समासः । तां लिप्सुरित्यर्थः । २ एकदा चातुर्मास्यान्ते । ३ 'धीरमनोहरां' इति पाठः । ४ पित्रोः कृष्णस्येति पष्ठ्यौ तृतीयार्थे । यद्वाऽनुमतः प्राप्तानुमतिः । ५ क्रोशतां स्वानामित्यनादरे पष्ठ्यौ । क्रोशतः स्वाननादृत्येत्यर्थः । ६ 'चानुसान्त्वितः' इति पाठः । ७ उपस्कराः पर्यङ्कादयः । ८ अत्र 'अभवन्प्रीतिसहृष्टा बान्धवा यदुपाण्डवाः ॥ अथान्यदपि कृष्णस्य वात्सल्यं भक्तयोः शृणु ॥' इत्येकं पद्यमधिकं क्वचित् । 'बभूवुः प्रतिसहृष्टा यदवः पाण्डवास्तदा' इत्यर्धमेवाधिकमिति वाल० । ९ अत्र शुक उवाचेति मध्ये पुनरुक्तिः कथान्तरापेक्षया । १० कृष्णस्य सबन्धी तत्स्वामिकस्तद्भक्त इत्यर्थः ।

यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यमुपनमति तं प्रत्यागच्छति ॥ १५ ॥ मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥ प्रभुरेव स्वयं विदेहान्देशान् प्रययौ ॥ १७ ॥ कृष्णो व्यासः । रामो भार्गवः । अहं शुकः । एवमादिभिः सह ॥ १८ ॥ १९ ॥ आनर्ताद्यर्णान्तास्तद्देशवर्तिनो नृनार्यः । उदारहासं स्निग्धमीक्षणं यस्मिंस्तत् । दृशिभिर्नेत्रैः ॥ २० ॥ स्ववीक्षणेनैव विनष्टतमिस्रा दृश्येषां तेभ्यः । क्षेममभयमर्थदृशं तत्त्वज्ञानं च ॥ २१ ॥ अभीयुः प्रत्युज्जग्मुः ॥२२॥

यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥ १५ ॥ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १७ ॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्र तत्र तमायान्तं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥ आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥ तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥ २३ ॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ २४ ॥ न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली ॥ २५ ॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ॥ उभयोराविशद्गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥ श्रोतुमप्यसतां दूरान् जनकः स्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥ २७ ॥ ॥ ॥

प्रीत्योत्फुल्लान्याननान्याशया अन्तःकरणानि च येषां ते । कैः शिरोभिः ॥ २३ ॥ २४ ॥ २५ ॥ तदभिप्रेत्याङ्गीकृत्य तत्तदोभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं यातीत्यलक्षितोऽविदितः । यद्वा उभाभ्यां रूपाभ्यां तदलक्षितस्ताभ्यामलक्षित इति ॥ २६ ॥ २७ ॥ ॥ ॥

१ 'नृपाः' इति पाठे तद्देशपतयः । २ तेभ्यो नृनारीभ्यः । 'पुमान्स्त्रिया' इत्येकशेषात् । ३ तस्मै तदर्थम् । ४ 'कं शिरोऽम्बुनोः' इत्यत्र कोशः ।

उद्धर्षमुद्गतहर्षं हृदयं यस्य, अस्रैराविले क्लिन्ने ईक्षणे यस्य सः, स च स च ॥ २८ ॥ ईश्वरान् । ईश्वरं तत्तुल्यांश्चेत्यर्थः ॥ २९ ॥ प्रीणन्प्रीणयन् । संस्पृशन्सं-मर्दयन् ॥ ३० ॥ आत्मा चेतयिता । साक्षी प्रकाशकः । स्वदृक् स्वप्रकाशः । अथातः कारणात् ॥ ३१ ॥ अनन्तो बन्धुरपि, श्रीर्भार्याऽपि, अजः पुत्रोऽपि ॥ ३२ ॥ ३३ ॥ तच्छान्त्यै संसारोपशमाय ॥ ३४ ॥ ३५ ॥ गृहान् । गृहेष्वित्यर्थः ॥ ३६ ॥ ३७ ॥ धुन्वन् परिभ्रमयन् ॥ ३८ ॥ अवनिजे अवनिनिजे

प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ नत्वा तदङ्घ्रीन्प्रक्षाल्य तदपो लोकपावनीः ॥ २८ ॥ सकुटुम्बो वहन्मूर्ध्ना पूजयांचक्र ईश्वरान् ॥ गन्धमाल्याम्बराकल्पधूपदीपार्घगोवृषैः[1] ॥ २९ ॥ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावङ्कगतौ विष्णोः संस्पृशन् शनकैर्मुदा ॥ ३० ॥ ॥ राजोवाच ॥ भवान्हि सर्वभूतानामात्मा[2] साक्षी स्वदृग्विभो ॥ अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ ३१ ॥ स्ववचस्तदृतं कर्तुमस्मदृग्गोचरो भवान् ॥ यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥ ३२ ॥ को नु त्वच्चरणाम्भोजमेवंविद्विसृजेत्पुमान् ॥ निष्किंचनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ ३३ ॥ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥ ३४ ॥ नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे[3] ॥ नारायणाय ऋषये सुशान्तं[4] तप ईयुषे ॥ ३५ ॥ दिनानि कतिचिद्भूमन्गृहान्नो निवसद्भिर्द्विजैः[5] ॥ समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥ ३६ ॥ इत्युपामन्त्रितो राज्ञा भगवाँल्लोकभावनः ॥ उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥ ३७ ॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान् जनको यथा ॥ नत्वा मुनीन्[6]सुसंहृष्टो धुन्वन्वासो ननर्त ह ॥ ३८ ॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनन्द्याङ्घ्रीन्सभार्योऽवनिजे मुदा ॥ ३९ ॥ तदम्भसा महाभाग आत्मानं सगृहान्वयम् ॥ स्नापयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृताम्बुभिर्मृदा[7] सुरभ्या तुलसीकुशाम्बुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा ॥ ४१ ॥ ॥ ॥

प्रक्षालितवान् ॥ ३९ ॥ ४० ॥ फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैरमृतवत्स्वादुभिरम्बुभिः । सुरभ्या मृदा कस्तूरीप्रमुखया । सपर्यया पूजया । यथोपपन्नया अनायासेन संपन्नया । भूतानुपद्रवलब्धत्वात् । सत्त्वविवर्धनं यदन्धोऽन्नं तेन च ॥ ४१ ॥ ॥ ॥

---

१ गोवृषा बलीवर्दाः । २ 'जीवाना' इति पाठः । ३ अकुण्ठा मेधा ज्ञानं यस्य । ४ 'शान्ताय तप' इति पाठः । ५ 'निवसन् द्विजैः' इति पाठः । ६ 'मुनींश्च' इति पाठः । ७ 'अमृताम्बुना मुदा' इति पाठः ।

अस्य श्रीकृष्णस्यात्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः संगमः स मम कुतोऽन्वभूदिति । अनु इति विस्मये । यद्वा आ इति वितर्के । नु इति विस्मये ॥ ४२ ॥ उपस्थितः समीप उपविष्टः । भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः । श्रीकृष्णस्याङ्घ्रिमभिमृशति संमर्दयतीत्यङ्घ्र्यभिमर्शनः ॥ ४३ ॥ यर्हीदं प्रविष्टस्तदैव दर्शनं प्राप्त इति स एव सन्मात्रो नाद्यतनीभूतस्त्वमित्यर्थः । यद्वा नोऽस्मानद्यैव प्राप्त इति न, किंतु तदैव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयानुप्रविष्टस्त्वम् । त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तम् ॥ ४४ ॥ मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टान्ततयाह—यथेति । आत्ममायया स्वाविद्यया । यद्वा आत्मनस्तव माययेति ॥ ४५ ॥ किंच शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि, मम तु लोचनगोचरस्त्वमहो भाग्यमिति भावः ॥ ४६ ॥ ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भासि,

स तर्कयामास कुतो ममान्वभूद्गृहान्धकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥ सूपविष्टान्कृतातिथ्यान् श्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥ ४३ ॥ ॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् ॥ नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिङ्गमीयुषे स्वमायया संवृतरुद्धदृष्टये ॥ ४८ ॥ ॥ ॥ ॥ ॥

मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह—हृदिस्थोऽपीति । कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यो व्यवहितोऽप्युपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा अन्तःकरणं येषां तेषामन्ति समीपे । अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥ एतदेव प्रपञ्चयन्नमस्यति—नमोऽस्त्विति । ते तुभ्यं नमोऽस्तु । अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परात्मने परमात्मत्वेन प्रकाशमानाय । मोक्षप्रदायेत्यर्थः । अनात्मने देहाद्यभिमानिने जीवाय, परत्वेनाप्रकाशमानत्वात् । स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन तस्मै । कुत एतत्तत्राह—सकारणं महदादिकार्यम्, अकारणं प्रकृतिः, तदुभयलिङ्गमुपाधिं नियम्यतया ईयुषे प्राप्तवते । अत उभयनियन्तुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यव इत्यर्थः । नियन्तृनियम्यत्वे कारणं वदन्नाह—हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियन्त्रे तुभ्यं नमः । किंच रुद्धदृष्टये मायावित्वादेवान्येषां रुद्धा आवृता दृष्टिर्येन

१ 'स्वाप्नं' इति पाठः क्वचित् । २ संवदतां परस्परं संवादं कुर्वताम् ।

तस्मै । यद्वा स्वमायया स्वस्यासंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥ स एवंभूतः परमेश्वरस्त्वं नोऽस्मान्स्वभृत्यान् शाध्यनुशिक्षय ॥ ४९ ॥ ॥ ५० ॥ स्वस्मिन्नादरमत्यधिकं ब्राह्मणेषु मन्दमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति—ब्रह्मन्निति सप्तभिः । मया हृदि स्थितेन ॥ ५१ ॥ देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह—देवा इति । ते शनैः पुनन्ति, एते तु सद्यः । किंच देवादीनि यत्पुनन्ति तदप्यर्हत्तमानामीक्षया ॥ ५२ ॥ मम कलापरिकलनमुपास्तिस्तया युतः ॥ ५३ ॥ किंच ब्राह्मणाराधनमेव मम प्रेष्ठमित्याह—नेति । हेतुमाह—सर्ववेदमयो

स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे[1] ॥ एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः[2] ॥ ४९ ॥ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥ ॥ श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरन्ति मया लोकान्पुनन्तः पादरेणुभिः ॥ ५१ ॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥ ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा[3] विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥ दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥ ५६ ॥ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयार्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥ ॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणादिष्टः सहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ ॥ ॥

विप्र इति । प्रमाणाधीनत्वात्प्रमेयस्य वेदमयो विप्रो देवमयादस्माद्रूपात्प्रेष्ठ इत्यर्थः[4] ॥ ५४ ॥ असूयवो दोषदृष्टयः । इज्यदृष्टयः पूज्यबुद्धयः ॥ ५५ ॥ अस्य विश्वस्य हेतवो भावा महदादयः । मदीक्षया ममैव सर्वत्रेक्षया ॥ ५६ ॥ ५७ ॥ ५८ ॥ सतां वेदानां त्रिकाण्डविषयाणां प्रवृत्तिप्रकारमादिश्य ॥ ५९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां षडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

१ 'करवाम ते' इति पाठः । २ 'अक्षिगोचरः' इति पाठः । ३ तपः स्वधर्मः, विद्या शास्त्रज्ञानम् । ४ ज्ञानाधीना हि प्रमेयसिद्धिरिति प्रमेयरूपान्मत्तो वेदमयो विप्रः श्रेष्ठ इत्यर्थः ।

# ॥ अथ श्रीवेदस्तुतिप्रारंभः ॥

सप्ताशीतितमे नारायणनारदवादतः ॥ वेदैः स्तुतिर्गुणालम्बा[1] निर्गुणावधि वर्ण्यते ॥ १ ॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ॥ यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥ संप्रदायविशुद्ध्यर्थं स्वीयनिर्बन्धयन्त्रितः[2] । श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥ ३ ॥ श्रीमद्भागवतं पूर्वैः सारतः संनिपेवितम्[3] ॥ मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते[4] ॥ ४ ॥ पूर्वाध्यायान्ते—'एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥' इत्यत्र सन्मार्गं सतां स्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानां[5] वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं, तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति—ब्रह्मन्निति । तत्र तावन्मुख्या-लक्षणा-गुणभेदेन त्रिधा शब्दप्रवृत्तिः[6] । मुख्यापि रूढि-योगभेदेन द्विधा । रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेतेन[7] प्रवर्तते, यथा—डित्थो[8] गौः शुक्ल इति । लक्षणा च तेनैव संकेतेनाभिहितार्थसंबन्धिनि[9], यथा—गङ्गायां घोष इति । गौणी

## ॥ परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥
## कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे, यथा—सिंहो देवदत्त इति । यथाहुः—'अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते[10] ॥ लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता[11] ॥' इति । योगवृत्तिस्तु[12] एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः[13] प्रकृतिप्रत्ययार्थयोर्वा योगेन । यथा[14] पङ्कजमौपगवः पाचक इत्यादि । तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न संभवतीत्याह—साक्षात्कथं चरन्तीति । तत्र हेतुः—अनिर्देश्ये । अनिर्देश्यत्वेऽपि हेतुं वदन्गुणवृत्तिं निराकरोति—निर्गुणे गुणवृत्तय इति । गुणैर्वर्तमाना अपि निर्गुणे कथं चरन्तीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति—सदसतः पर इति । कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि संबन्धाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥ ॥

---

१ गुणालम्बेति गुणानामालम्ब आश्रयणं यस्या सा, निर्गुणमवधिः पर्यवसानं बोध्यं यत्र यथा स्यात्तथेति । २ स्वीयानां छात्राणा निर्बन्धेन वशीकृतः । ३ सनिपेवितं व्याख्यातम् । ४ तैरुपस्पृष्टं किंचिद्व्याख्यातं विशेषतस्त्ववशिष्टं विस्तार्यत इत्यर्थः । ५ स्वत इति । पौरुषवाक्येष्वप्रामाण्यकारणं भ्रमप्रमादादि पुरुषदोषाः, अपौरुषेये वेदे तदसंभवात्स्वतःप्रामाण्यम् । ६ शब्दस्य प्रवृत्तिर्बोधनानुकूलव्यापारः । ७ सञ्ज्ञासंज्ञिनोः शब्दार्थयोः सकेतः अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपस्तेन । ८ डित्थो मृत्पिण्डः । ९ त्रिविधसंकेतेनोक्तो यः सिंहादिपशुविशेषरूपोऽर्थस्तत्र लक्षिता ये शौर्यक्रौर्यादिगुणास्तद्युक्ते देवदत्तादौ तत्सदृशे सिंहादिसदृशे प्रवृत्तिर्गौणीत्यर्थः । १० अभिधेयं गङ्गादिपदवाच्यं प्रवाहादि तेन अविनाभूते नित्यसंबद्धे तीरादौ गङ्गादिपदस्य या प्रवृत्तिः सा लक्षणेष्यते इष्टेत्यर्थः । ११ वाच्ये सिंहादिरूपे अभिधेये लक्ष्यमाणा ये गुणाः शौर्यादयस्तैर्योगात्संबन्धात् या सिंहादिपदवृत्तिस्तत्र वृत्तेर्गौणता, सा गौणीत्यर्थः । १२ मुख्याया द्वितीयं भेदं योगमाह—योगेति । १३ त्रिविधेति रूढि-लक्षणा—गौणीति त्रितयान्यतमवृत्तिप्रतिपादितयोः पदार्थयोर्योगेन योगः, अथवा प्रकृतिप्रत्ययार्थयोर्योगेन योगः इत्थं चातुर्विध्यम् । तत्र पङ्कजमित्यत्र रूढिवृत्त्या पङ्केति—जेतिपदाभ्यां प्रतिपादितयोः कर्दमजनितपदार्थयोः कर्दमोपादानकजनिकर्तृत्वरूपेण योगात्पङ्कजपदं तामरसे यौगिकम् । १४ रूढिवृत्त्या प्रतिपादितयोरर्थयोर्योगस्योदाहरणं पङ्कजमिति । औपगवः पाचक इति द्वयं प्रकृतिप्रत्ययार्थयोर्योगस्य । आदिपदेन लक्षणाबोधितार्थयोगस्य खड्गशूलो हन्तीति । गौणीप्रतिपादितार्थयोर्योगस्य तु सिंहोऽग्निर्माणवक इत्युदाहरणद्वयम् । आद्ये खड्गशूलपदयोस्तद्धारके लक्षणा । द्वितीये सिंहाग्निपदयोस्तत्सदृशे गौणी ।

उत्तरमाह—बुद्धीन्द्रियेति । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत् । मीयन्त इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म, तत्प्रभृति कर्मकरणार्थमित्यर्थः । आत्मने लोकान्तरगामिने, आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय कल्पनानिवृत्तये, मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति । अयमभिप्रायः—सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति 'यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः', 'सर्वस्य वशी सर्वस्येशानः', 'यः पृथिव्यां तिष्ठन्पृथिव्या आन्तरः', 'सोऽकामयत बहु स्याम्', 'स ऐक्षत, तत्तेजोऽसृजत', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्याः । तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयन्ति । तत्रच तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । तच्च प्रकारान्तरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति । तथा हि—न तावद्वैश्वदेव्यामिक्षेति-

## ॥ श्रीशुक उवाच ॥ बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ॥
## मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

वदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् । यथोक्तम्—'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ॥ आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् ॥' इति । कुतः । भिन्नार्थत्वात् । न चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् । यथोक्तम्—'स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्' इत्यादि । कुतः । विरुद्धार्थत्वेन तदयोगात् । न च जहत्स्वार्थत्वेन संबन्धिलक्षणया कुसुमितद्रुमा गङ्गेतिवत् । कुतः । एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचिदंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम् । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधने उपयोगान्निर्गुण एव पर्यवसानम् । तथा चात्रैवोपक्रमे 'स्वसृष्टमिदमापीय' इत्यादिना विशिष्टमालम्बनं वक्ष्यति, अन्ते च श्रुतयः—'त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः' इत्युपसंहरिष्यन्ति । उपासनादिवाक्यानां तु क्रियार्थप्रवृत्तसृष्ट्याद्यवलम्बनेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥ २ ॥

---

१ बुद्ध्यादीति । मात्रार्थं मीयन्ते गुणकार्याणि गुणातीतं च याभिरिति मात्राः श्रुतयस्तदर्थं तद्धारणार्थं बुद्धिं तद्धारणयोग्यामसृजत् । ततश्च भवार्थं पूर्वकाण्डस्य श्रुत्युक्तत्रिवर्गरूपाभ्युदयप्राप्त्यर्थं तत्साधनस्य यज्ञादिकर्मोत्पादनयोग्यतावन्तीन्द्रियाणि श्रोत्रवागादीन्यसृजत् । ततश्च आत्मने लोकान्तरगामिने आत्मनस्तल्लोकगमनपूर्वकं तत्तत्फलभोगाय मनः सर्वविकारात्मकं तत्संपादकमसृजत् । अकल्पनाय कल्पनातीतं यन्निराकारं साकारं च ब्रह्म तद्धापयितुम् । 'क्रियार्थोपपदस्य—' इति चतुर्थी इति तोष० । २ लक्षणश्रुतीनां तात्पर्यमाह—सगुणमेवेति । ३ समस्ता ये कल्याणगुणाः सर्जनादिसकल्पनजगत्स्रष्टृत्वदयालुत्वादयस्तन्निलयम् । ४ सामान्यतः सर्वं जानातीति सर्वज्ञः । तत्तद्विशेषधर्मपुरस्कारेण सर्वं वेत्तीति सर्ववित् । ५ 'स ईक्षत' इत्यैतरेयपाठः । 'ऐक्षत' इति छान्दोग्ये पाठः । ६ ऐक्यपरश्रुतीनां लक्षणया निर्गुणपर्यवसानमाह—तथाभूतेति । ७ अपर्यायपदानामेकविभक्त्यन्तत्वे सत्येकार्थनिष्ठत्वं सामानाधिकरण्यम् । ८ भागत्यागलक्षणेतरप्रकारेण । ९ विश्वेदेवा देवता यस्याः सा वैश्वदेवीति देवतार्थे विहित एष तद्धितोऽण्प्रत्ययः, सामान्यतो ऋगादिवाचकत्वसंभवेऽप्यामिक्षापदसानिध्यादामिक्षामेव वदति, अतस्तस्यैव तद्धितकर्तृकमेव विषयार्पणमामिक्षारूपविषयबोधनमित्यर्थः । चातुर्मास्यान्तर्गतवैश्वदेवपर्वप्रकरणस्था 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुतिः । अस्या अर्थः—तप्ते पयसि दधिमिश्रणे कृते यत्कठिनं द्रव्यं संपद्यते तदामिक्षापदवाच्यं तेन विश्वेदेवदेवताको यागो विधेयः, यद्द्रवद्रव्यं तद्वाजिनं तेन च वाजिदेवताको यागो विधेय इति । १० परोक्षापरोक्षादिरूपार्थभेदादित्यर्थः । ११ नीलमुत्पलमित्यत्र येन नीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेष्यमुत्पलादि रज्यते भासते इतरस्माद्व्यावर्त्यते तद्विशेषणमित्यर्थः ।

अत्र चानादिशिष्टपरम्परागतत्वान्न संदेहो युक्त इत्याह—सैषेति । सैषा यथोक्तालम्बना ब्राह्मी ब्रह्मपरा । श्रद्धया आदरेण वैतण्डिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत्स अकिंचनो निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥ ३ ॥ एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति—अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम् । गाथामितिहासम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत्कर्मसत्रं प्रसिद्धम् । तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तद्ब्रह्मसत्रम् ॥ ९ ॥ अहो तर्हि

सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥ अत्र ते वर्णयिष्यामि
गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपे-
तमाकल्पादास्थितस्तपः ॥ ६ ॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह
॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥ ॥ श्रीभग-
वानुवाच ॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥९॥ श्वेतद्वीपं गत-
वति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र हाऽयमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥१०॥
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥११॥ ॥ सनन्दन उवाच ॥
स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥ तदन्ते बोधयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १२ ॥ यथा शयानं सम्राजं
बन्दिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥ ॥ ॥

मया कथं तन्न ज्ञातमित्यत आह—श्वेतद्वीपमिति । तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥ १० ॥ ननु सर्वज्ञास्ते, कस्तत्र वक्ता प्रष्टा वा तत्राह—तुल्यश्रुतेति । श्रुतादिभिरविशेषा अरिमित्रोदासीनहीनत्वेन निरुपमकरुणाः, अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११ ॥ स्वसृष्टमिति । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैस्तत्प्रतिपादकैर्वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिःश्वासंभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥ सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः ॥ १३ ॥ ॥ ॥

१ सा प्रसिद्धा एषा बुद्धीन्द्रियेति श्लोकरूपा, यद्वा एषा जयजयेत्यादिवक्ष्यमाणा । २ धर्मज्ञानशमोपेतं तप इत्यन्वयः । ३ आकल्पाद्ब्रह्मदिनारम्भप्रभृति । ४ इदं ब्रह्मन्ब्रह्मणीत्यादि त्वत्पृष्टमेव । ५ जनेति अकारान्तोऽपि जनशब्दः कचिदस्ति । ६ इदं नारदसंबोधनम् । ७ 'तत्र चायं' इति पाठः । ८ एकं सनन्दनं प्रवचनं प्रवक्तारम् । ९ तुल्यन्यायत्वादेकं द्वयोरुत्तरमित्यालोच्य उभयविधब्रह्मविषयकप्रश्नेऽपि प्रायशः साकारब्रह्मविषयकश्रुत्यर्थोदाहरणेनैवोत्तरं ब्रवीमीत्याशयेन श्रीसनन्दन उवाच—स्वसृष्टमिति । १० 'निःश्वासम्भूता' इति पाठः ।

जय जयेति। भो अजित, जय जय उत्कर्षमाविष्कुरु। आदरे वीप्सा। केन व्यापारेण। अगजगदोकसां, अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय। किमिति गुणवती हन्तव्येत्यत आह—दोषगृभीतगुणाम्। दोषाय आनन्दाद्यावरणाय गृहीता गुणा यया ताम्। 'हृग्रहोर्भश्छन्दसि' इति भकारः। इयं हि स्वैरिणीव परप्रतारणाय गुणान् गृह्णात्यतो हन्तव्येति। तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह—त्वमिति। यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि। वशीकृतमायत्वादिति भावः। ननु स्वयमेव ते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह—अखिलशक्त्यवबोधकेति। तेषां त्वमेवान्तर्यामी सर्वशक्त्युद्बोधकः। अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः। नन्वहमकुण्ठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहन्तेत्यत्र किं प्रमाणमिति चेत्, अहमेव प्रमाणमित्याह—निगमो वेदः। नन्वेवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह—क्वचिदिति। कदाचित्सृष्ट्यादिसमयेऽजया मायया चरतः क्रीडतो नित्यं चालुप्तभगतया सत्यज्ञानानन्तानन्दैकरसेनात्मना च चरतो वर्तमानस्य निगमोऽनुचरेत्प्रतिपादयेत्। कर्मणि षष्ठ्यौ। 'यतो वा इमानि भूतानि जायन्ते', 'यो ब्रह्माणं विदधाति पूर्वं यो वै

॥श्रुतय ऊचुः॥ जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः॥ १४॥ बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात्॥ अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम्॥ १५॥

वेदांश्च प्रहिणोति तस्मै॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये', 'य आत्मनि तिष्ठन्', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यः सर्वज्ञः स सर्ववित्' इत्यादिनिगमकदम्बस्त्वामेवंभूतं प्रतिपादयतीत्यर्थः॥ जय जयाजित जह्यगजङ्गमावृतिमजामुपनीतमृषागुणाम्॥ न हि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता तव॥ १॥ १४॥ ननु कथं मामेवं प्रतिपादयन्ति, यत 'इन्द्रो यातोऽवसितस्य राजा' इत्यादिभिरिन्द्रो यातो जङ्गमस्यावसितस्य स्थावरस्य च राजेति प्रतिपाद्यते, तथा 'अग्निर्मूर्धा दिवः' इत्यादिभिश्चैवंभूतत्वेनाग्न्यादयः प्रतिपाद्यन्ते, तत्राह—बृहदुपलब्धमेतदिति। अयमर्थः—एतदुपलब्धं दृष्टमिन्द्रादिमत्रं बृहद्ब्रह्मत्वमित्येवावयन्ति जानन्ति। कथम्। बृहत एवावशेषतयाऽवशिष्यमाणत्वेन। कुतः। यतो बृहतः सर्वस्योदयास्तमयावुत्पत्तिलयौ, सर्वोपादानत्वात्। तर्हि किं विकारित्वं बृहतः। न, अविकृतात्। विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः। वाशब्द उपमार्थः। यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'सर्वं खल्विदं ब्रह्म' इत्यादिभिस्तथा प्रतिपादनादित्यर्थः। अतः कारणादृषयो मन्त्रास्तद्द्रष्टारो वा त्वय्येव

१ कर्मणि षष्ठ्यौ ते क्वचिदिति। तथा च सृष्टिलीलायामजया माययेश्वररूपेण चरन्तं, क्वचिद्विशुद्धानन्दलीलायामात्मना निराकारब्रह्मरूपेण स्वरूपचिच्छक्त्या स्वयं भगवदाकृतिरूपेण च चरन्तं तं त्वामिति योजना। २ यः आत्मनि जीवे तिष्ठन्नात्मानं जीवं नियमयतीति सोऽन्तर्यामी सर्वस्य। ३ 'या प्रापणे' इत्यस्मात्क्तप्रत्यये षष्ठ्येकवचनम्। तथा च यातो जंगमस्य अवसितस्य स्थावरस्येन्द्रो राजा ईश्वर इति। ४ 'ककुत्पतिः पृथिव्या अयम्' इति वाक्यशेषः। अयमग्निर्दिवो मूर्धा सूर्यरूपेण द्युलोकस्य मूर्धा भवति ककुत्स्थः पृथिव्याः पतिः जाठरादिरूपेण पृथिव्याः पालक इत्यर्थः। ५ वाचेति। वाचा आरभ्यमाणमुच्चार्यमाणं नामधेयं नामैव विकारो न तु घटशरावादिनामातिरिक्तो मृदि विकारो वस्तुतोऽस्ति। परमार्थतो मृत्तिकैव तु सत्यं वस्त्वस्तीति दृष्टान्तः। ६ अस्य तज्जलानिति शान्त उपासीतेति वाक्यशेषः। सर्वमिदं जगत् ब्रह्मैव खलु। तज्जलान् तस्माद्ब्रह्मणो जायत इति तज्जम्। तस्मिन् लीयत इति तल्लम्। स्थितिकाले तस्मिन्नेव अनिति प्राणितीति तदनम्। तज्जत्वात्तल्लत्वात्तदनत्वाच्चेत्यर्थः। ७ द्रष्टारो वेति वाशब्दः समुच्चये। ऋषिपदे एकशेषेणोभयविवक्षणात्। तेन मन्त्रद्रष्टारो मनसाचरितं दधुः, मन्त्रास्तु वचनाचरितमभिधानं दधुरिति यथायथं सम्बन्धः।

मनोवचनाचरितं दधुः, मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च धृतवन्तः । न पृथग्विकारेष्वित्यर्थः । अत्र निदर्शनम्—कथमयथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवन्त्यदत्तानि भवन्ति । अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरन्ति तथा यत्किमपि विकारजातं वदन्तो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयन्तीत्यर्थः ॥ द्रुहिणवह्निरवीन्द्रमुखामरा जगदिदं न भवेत्पृथगुत्थितम् ॥ बहुमुखैरपि मन्त्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥ १५ ॥ त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति—इति तवेति । त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भोस्त्र्यधिपते त्रिगुणमायामृगीनर्तक, सूरयो विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिन्धुमवगाह्य निषेव्य तपांसि तपन्तीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवन्तः । त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं, ये पुनः स्वधामविधुताशयकालगुणाः स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते, तथा हे परम, तवाजस्रसुखानुभवमखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते तथाभूता दुःखानि त्यजन्तीति । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म

इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ॥ किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ १६ ॥ दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥ ॥ ॥ ॥ ॥

न श्लिष्यते', 'न कर्मणा लिप्यते पापकेन', 'तत्सुकृतदुष्कृते विधुनुते', 'एतꣳह वाव न तपति', 'किमहꣳसाधु नाकरवम्', 'किमहं पापमकरवम्' इत्यादिश्रुतेरित्यर्थः ॥ सकलवेदगणेरितसद्गुणस्त्वमिति सर्वमनीषिजना रताः ॥ त्वयि सुभद्रगुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥ ३ ॥ १६ ॥ 'असुर्या नाम ते लोका अन्धेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' ॥ तथा 'न चेदवेदीन्महती विनष्टिः', 'ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति' इत्याद्याः श्रुतयः । पूर्वश्लोकोक्तोभयविधभजनहीनान्निन्दन्ति—दृतय इवेति । असुभृतो नरा यदि ते अनुविधा अनुविदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् । तर्हि । श्वसन्ति जीवन्ति सफलजीवना भवन्ति । इतरथा दृतय इव भस्त्रा इव । वृथाश्वासा इत्यर्थः । नन्वभक्तानामपि कामादिफलमस्त्येव । न कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह—महदहमादय इति । महानहंकारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः सन्तोऽण्डं देहं समष्टिव्यष्टिरूपं सृष्टवन्तः । तत्र च पश्चापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन् यश्चेतयते स त्वं

१ तथाभूता दुःखानि त्यजन्तीति किमु वक्तव्यमित्यन्वयः । २ एवंविदि ब्रह्मज्ञानवति । ३ तत्तदा ब्रह्मलोकमार्गे विरजानदीतरणकाले साक्षात्कारकाले वा पुण्यपापे विधुनुते त्यजतीत्यर्थः । ४ यथोक्तात्मविदं प्रति न तपति न संतापयति । ह्वावेत्यवधारणे । सतापमेवाह—किमिति । ५ असुर्या इति ह्रस्वमध्यं पदम् । असुराणामिमे असुर्यास्ते प्रसिद्धा लोका अन्धेन गाढेन तमसा आत्माज्ञानेन प्रसिद्धान्धकारेण वा वृता व्याप्ताः । प्रेत्य मृत्वा तान् लोकास्तेऽभिगच्छन्ति । ये केचन आत्महनः अविद्यादोषेणात्मापलापकर्तारः, ब्रह्मज्ञानशून्या दुर्योनीः प्राप्नुवन्तीत्यर्थः । ६ चेद्यदि नावेदीद्ब्रह्म न ज्ञातवांस्तदा महती विनष्टिर्हानिः । दुष्परिहरा जन्ममरणादिरूपा संसृतिरित्यर्थः । तथा च मुण्डकोपनिषत्—'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति । ७ उभयविधेति कथामृताब्धीत्युक्तश्रवणकीर्तनरूपं भजनमेकं, भजन्ति ये पदमजस्रेत्याद्युक्तसत्सुखस्वरूपभजनमपरम् ।

तदाह—पुरुषविध इति । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । ननु चिदेकरसस्य कथं तत्तदाकारतात आह—अन्वयोऽत्रेति । अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः । अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसङ्गत्वं च कथं तत्राह—चरमोऽन्नमयादिषु य इति । अन्नमयादिषूपदिश्यमानेषु यश्चरमो 'ब्रह्मपुच्छं प्रतिष्ठा' इति पुच्छत्वेनोक्तः स त्वमिति संबन्धः । ननु तथाप्यन्नमयादिष्वन्वितत्वेऽसङ्गत्वव्याहतिरेव, तत्राह—सदसतः परं त्वमथ यदेष्ववशेषमृतमिति । सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् । अवशेषमवशिष्यत इत्यवशेषमबाध्यम् । अथात एव ऋतं सत्यम् । तर्हि किमर्थं तेष्वन्वय उक्तः, शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थम् । तथा हि—'स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः' इत्यादिना स्थूलसूक्ष्मक्रमेण पञ्चकोशानुपदिश्य 'तस्य पुरुषविधतामन्वयं पुरुषविधः' इति पुनःपुनस्तदन्वितत्वेनालक्ष्य 'ब्रह्मपुच्छं प्रतिष्ठा' इति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम् ॥ नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः ॥ नरहरे न भजन्ति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः ॥ ४ ॥ १७ ॥ एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सङ्गजनीयत्वमुक्त्वा अभक्तनिन्दया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालम्बनमुपासनं 'उदरं ब्रह्मेति शार्कराक्षा उपासते

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसर्पद्धतिं हृदयमारुणयो दहरम् ॥
तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥

हृदयं ब्रह्मेत्यारुणयो ब्रह्म हैवैता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत' इत्याद्याः श्रुतयो विदधतीत्याह—उदरमुपासत इति । ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालम्बनं मणिपूरकस्थं ब्रह्मोपासते ध्यायन्ति । शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति । कूर्पं शर्करारजो विद्यते दृक्षु अक्षिषु येषां ते तथा रजःपिहितदृष्टयः, स्थूलदृष्टय इति यावत् । उदरस्य हृदयापेक्षया स्थूलत्वात् । यद्वा कूर्पं सूक्ष्मम् । सूक्ष्मदृश इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः । आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते । हृदयविशेषणं परिसरपद्धतिमिति । परितः सरन्ति प्रसर्पन्तीति परिसरा नाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः । विशेषणस्य फलमाह—तत इति । हृदयात् भो अनन्त, तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्धानं प्रत्युदगादुदसर्पत् । मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरन्ध्रं प्रत्युद्गतमित्यर्थः । कथंभूतं धाम । यत्समेत्य प्राप्य पुनरिह कृतान्तमुखे संसारे न पतन्ति । तथा च श्रुतिः—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति ॥ उदरादिषु यः पुंसां चिन्तितो मुनिवर्त्मभिः ॥ हन्ति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥ ५ ॥ १८ ॥ ॥ ॥

१ तर्हि सत्यत्वमिति । पुरुषविधस्य साकारत्वेन सावयवत्वान्नाशावश्यंभावात् कोशेष्वन्वये कोशसंबन्धध्रौव्यात् सत्यत्वासङ्गत्वाव्याहतिरिति भावः । २ अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु पुच्छत्वेन सर्वाधारत्वेनोक्त इति । ३ ननु कोशेष्वन्वयेऽसङ्गत्वक्षतिरनन्वये व्यापकत्वक्षतिरिति गूढाशयः शङ्कते—नन्विति । ४ परं व्यतिरिक्तमिति असङ्गमित्यर्थः । अन्नमयादेः कल्पितत्वेन मिथ्यात्वात् । उभयोः सबन्धिनोः सत्यत्व एकसबन्धस्य सत्यत्वनियमात् कल्पितसबन्धेन न वास्तविकासङ्गत्वक्षतिरिति भावः । ५ अबाध्यमिति । कोशैकसङ्गे तद्बाधेन बाधापत्त्या सर्वबाधे शून्यवादापत्तेर्निरवधिकबाधानुपपत्तेश्च सर्वबाधावधिभूतावशेषसिद्ध्याप्यसङ्गत्वसिद्धिरिति भावः । ६ शाखेति । सूक्ष्मचन्द्रकलाप्रदर्शनायात्यन्तं चन्द्रसबन्धशून्यापि वृक्षशाखा मुख्यं प्रति चन्द्रत्वेन प्रथमं प्रदर्श्यते । ततः शाखाग्रे चन्द्र इत्यादि प्रदर्श्यते तद्वत् शुद्धस्वरूपबोधार्थं कोशपञ्चकेऽन्वयोऽसङ्गस्याप्यात्मन उच्यत इत्यर्थः । ७ तस्यान्नमयादेः पुरुषविधता पुरुषाकारतामनु अनुसृत्य अयं पुरुषः पुरुषाकारो भवतीत्यर्थः । ८ परिसरा नाड्यः परिसरापद्धतिमिति वक्तव्ये ङ्यापोः सञ्ज्ञाछन्दसोरिति छान्दसो ह्रस्वः । ९ शतं चैकेति एकोत्तरशतमित्यर्थः । हृद्गोलकस्य एका सुषुम्नाख्या मूर्धानं गता विष्वक् नानागतयस्तिर्यगूर्ध्वगा अन्या नाड्यः उत्क्रमणे प्राणोत्क्रमणद्वारभूता भवन्तीत्यर्थः ।

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसंबन्धे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमामाशङ्कां[1] परिहरन्त्यः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता[2] केवलो निर्गुणश्च' इत्याद्याः श्रुतयः स्तुवन्तीत्याह—स्वकृतविचित्रयोनिष्विति । स्वयं कृतासूच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंभवाद्विशन्निव[3] वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे स्वकृता योनिरनुकरोतीति स्वकृतानुकृतिरनलवत् । अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत् । अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः सममविशेषमतः सत्यं[4] तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयन्ति जानन्ति । नु इति पृथक् पदं वा । अत्र हेतुः—अभिविपण्यव इति । अभितो विगतव्यवहाराः । पण व्यवहार इत्यस्य रूपं पण्युरिति, ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मात्रमतस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः ॥ स्वनिर्मितेषु कार्येषु तारतम्यविव-

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ॥
अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥ १९ ॥
स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ॥
इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ २० ॥

र्जितम् ॥ सर्वानुस्यूतसन्मात्रं भगवन्तं भजामहे ॥ ६ ॥ १९ ॥ अपि च[5] कुतो नियमाशङ्का स्याद्भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयन्त्यस्तं दोषं निषेधयन्ति 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । तत्त्वमसि' इत्याद्याः श्रुतयः । ननु कृतवर्थस्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते, न तु तस्येश्वरत्वं बोध्यते, नैतद्युज्यते, यतस्तत्र 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते[6] कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥' इत्याद्याः श्रुतयः कृतावतारस्य[7] भगवतश्चरणभजनमुपायं वदन्तीत्याह—स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदन्ति । अंश इवांशः, कृत इव कृतः । त्वद्रूपं वदन्तीत्यर्थः । ननु कार्यकारणसंवृतस्य कुत एवंभूतत्वं तत्राह—अबहिरन्तरसंवरणमिति । बहिः कार्यम्, अन्तरं कारणम् । वस्तुतस्तदावरणशून्यम् । तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयोऽन्यथेदं[8] न प्राप्यत इति जानन्तो निगमावपनं निगमोक्तकर्मणामावपनं आ-

१ उदरस्थं हृदयस्थं च भगवन्तमुपासते इत्युक्त भगवतो हृदयाद्युपाधिप्रवेशेनोपाधितारतम्यकृताल्पत्वमहत्त्वभावप्राप्त्या जीवसाम्यमाशङ्क्य जीवोऽविद्यान्तःकरणप्रतिबिम्बितः परिच्छिन्नः प्रतिशरीरं भिन्न उदरादिषु वर्तते। ईश्वरस्तूपाधिपरिच्छेदशून्य एकः सर्वव्यापित्वादिरूपेणेति प्रतिबिम्बेन जीवेन बिम्बभूतः स्वनियन्तोपास्य इत्याशयेन समाधत्ते—नन्वित्यादिना । २ चेता ज्ञानस्वरूप इत्यर्थः । ३ विशन्निव वर्तमान इति । अन्तःकरणादिषु प्रतिबिम्बिततया जीवरूपेण वर्तमानोऽत एव न्यूनाधिकभावेनाजगवादिषु उपाधितारम्यकृतप्रतिबिम्बाद्यल्पत्वमहत्त्वादिना चकास्सीत्यर्थः । ४ सत्यं तवेति । य आत्मनि तिष्ठन्नित्याद्यन्तर्यामिब्राह्मणोक्तं नियन्तृरूपं बिम्बात्मकमित्यर्थः। ५ इदानीं भारतीतीर्थादिसंमतं प्रतिबिम्बमिथ्यात्वपक्षमनादृत्य प्रतिबिम्बो बिम्बादभिन्नत्वाद्बिम्बात्मना सत्यः बिम्बभेदादिधर्मा एवाध्यस्ताः, न त्वत्र धर्मध्यास इति विवरणादिसिद्धान्तेन जीवे एवोपाधिकृता दोषा वस्तुतो न सन्ति, किमुत बिम्बभूतेश्वर इति दर्शयितुमाह—अपीति । ६ एते श्वेताश्वतरोपनिषदि कथिता अर्था जीवब्रह्मैक्यादयः प्रकाशन्ते । ७ कृता मत्स्याद्यवतारा येनेति तद्गुणसविज्ञानो बहुव्रीहिः । अवतारस्यावतारिणश्च भगवतश्चरणभजनं ब्रह्मात्मैक्यज्ञानोपायं वदन्तीत्यर्थः । ८ अन्यथा चरणभक्तिं विनेदं साक्षात्काररूपं ब्रह्मज्ञानं न प्राप्यते ।

समन्तादुप्यतेऽस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलन्ति तं भवतोऽङ्घ्रिमभवं भवनिवर्तकं विश्वसिताः कृतवि- श्वासा उपासतेऽर्चनवन्दनादिभिः सेवन्ते । भुवीति मर्त्यलोके । इदमेवोचितमिति दर्शयन्ति—त्वदंशस्य ममेशान त्वन्मायाकृतबन्धनम् ॥ त्वदङ्घ्रिसेवामादिश्य परानन्द निवर्तय ॥ ७ ॥ २० ॥ भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति—दुरवगमेति । भो ईश्वर, दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः, चरितमेव महानमृताब्धिस्तस्मिन्परिवर्तो विगाहस्तेन परिश्रमणाः । परि- वर्जनार्थः । श्रमणं श्रमः । गतश्रमा इत्यर्थः । अपवर्गमपि केचिन्न परिलषन्ति नेच्छन्ति, कुतोऽन्यदिन्द्रपदादि । केचिदित्येवंभूता भक्तिरसिका विरला इति दर्शयन्ति । न केवलमन्यन्नेच्छन्ति किंतु तेनैव सुखेन पूर्णाः सन्तः पूर्वसिद्धं गृहादिसुखमप्युपेक्षन्त इत्याह—तव चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति । तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन सङ्गस्तेन विसृष्टा गृहा यैस्ते तथा । अनेन श्रवणकीर्तने दर्शिते । श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्श-

दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥
न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥
त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥
न बत रमन्त्यहो असदुपासनयात्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥

यति । यथाह—'यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च' इति । व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः, मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ति इति ॥ त्वत्क- थामृतपाथोधौ विहरन्तो महामुदः ॥ कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥८॥२१॥'आराममस्य पश्यन्ति न तं पश्यति कश्चन', 'न तं विदाथ य इमा जजा- नान्यद्युष्माकमन्तरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति' इत्याद्याः श्रुतयोऽनुक्रोशन्त्यो जगदात्मनीश्वरे रतिमुपदिशन्तीत्याह— त्वदनुपथमिति । त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदं कुलायं कौ पृथिव्यां लीयत इति कुलायं शरीरमात्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति । स्वाधी- नतया वर्तत इत्यर्थः । तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि च । अप्यर्थे चकारः । एवंभूते सुसेव्येऽपि त्वयि बताहो कष्टं न रमन्ति न सख्यादिना भजन्ति । असदुपासनया देहाद्युपलालनेनात्महनः प्रमादिनः । कुतः । यदनुशयाः यस्यामसदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः सन्त उरुभये संसारे भ्रमन्ति परिवर्तन्ते । अत आत्महन इति भावः ॥ त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ॥ कदा ममेदृशं जन्म मानुषं संभविष्यति ॥ ९ ॥ २२ ॥ ॥ ॥

१ अल्पस्य तत्त्वज्ञानमात्रस्य साधनमेवेति वचनस्यानौचित्यं मत्वा भक्तिं गुरूकरोति । पुरुषार्थचतुष्टयसाधनत्वं मोक्षाधिकपञ्चमपुरुषार्थरूपत्वं च स्थापयतीत्यर्थः । 'अन्यसाधनम्' इति पाठे अन्यस्य तत्त्वज्ञानादेः साधनमेव, नतु परमफलरूपेति वचनमनुचितं मत्वा भक्तिं गुरूकरोति । मोक्षोपरि विराजमानं पञ्चमपुरुषार्थरूपत्वं स्थापयतीत्यर्थः । २ श्लेषेणामृतानां सायुज्यादिमोक्षाणां समुद्रतुल्ये । ३ इन्द्रपदादीति । इन्द्रपदशब्देन अर्थकामौ आदिपदाद्धर्मश्च । तथा च चतुर्वर्गमपि भक्तिवशादेव बलात्प्राप्तमपि नेच्छन्ति । ४ रमन्तीति परस्मैपद- मार्षम् । ५ देवा विपश्चितः, ब्रह्मवादिनो मुक्ताः । ६ विग्रहं कृत्वेति । भगवतश्चतुर्भुजपीताम्बरधारिमूर्तिमन्तर्मनोमयीं बहिर्वा धात्वादिमयीं कृत्वेति साकारभजनमुक्तम् । ७ आराम- मिति । अस्य परमात्मनः आराममुपवनं क्रीडास्थानं ग्रामनगरादि विश्वं सर्वे पश्यन्ति । तं आरामनिर्मातारं परमात्मानं कश्चन कोऽपि न पश्यति । ८ न तमिति । यूयं तं न विदाथ न जानीथ य इमाः प्रजा जजान जनयति स्म । अतो युष्माकं तस्य चान्यन्महद्व्यवधानं बभूव । यतो भवन्तो नीहारेणाविद्यया प्रावृता अवगुण्ठिता जल्प्याः प्रजल्पनपरास्तार्किका इत्यर्थः । अत एवासुतृपः प्राणतर्पणपरायणाः उक्थाना शासितारो यज्वानस्ते चरन्ति ससरन्तीत्यर्थः । ९ अनुक्रोशन्त्यः कृपयोपदिशन्त्य इत्यर्थः ।

॥७७॥

इदानीं 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्याद्याः श्रुतयो ध्यानमङ्गत्वेनोपदिशन्तीत्याह—निभृतमरुन्मनोक्षदृढयोगयुज इति । मरुत्प्राणो मनश्चाक्षाणीन्द्रियाणि च निभृतानि संयमितानि यैस्ते च ते दृढं योगं युञ्जन्ति ते दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः । स्त्रियोऽपि कामत उरगेन्द्रभोगभुजदण्डविषक्तधियः अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया । अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु धारयन्त्यः । अयं भावः—इत्थंभूतस्तव स्मरणानुभावो ये योगिनस्त्वां हृद्यालम्बनमुपासते, याश्च वयं त्वां समं पश्यामो, याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति, ये च द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति ॥ चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम् ॥ यथा कथंचिन्नृहरे मम भूयादहर्निशम् ॥ १० ॥ २३ ॥ 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' ॥ 'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः ॥ अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव'

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २३ ॥
क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ॥
तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥

'अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति' इत्याद्याः श्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदन्त्यो भक्तिमेवोरीकृत्य स्तुवन्तीत्याह—क इह नु वेदेति । बत अहो भगवन्निह जगत्यग्रसरं पूर्वसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान्को नु पुमान्वेद जानाति । ईश्वरस्य पूर्वसिद्धावन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह—यत उदगादिति । यतस्त्वत्त ऋषिर्ब्रह्मा उत्पन्नो यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाः सर्वे । यदा तु भवान्सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति, यतस्तदा न सत्स्थूलमाकाशादि । न चासत्सूक्ष्मं महदादि । न चोभयं सदसद्भ्यामारब्धं शरीरम् । न च कालजवस्तन्निमित्तभूतं कालवैषम्यम् । एवं सति तत्र तदा न किमपीन्द्रियप्राणाद्यपि । न च ज्ञापकं शास्त्रमपि । अयमभिप्रायः—अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतान्तराणां कालवशेन च मलिन-

१ द्रष्टव्यः साक्षात्कर्तव्यः । श्रोतव्यः उपक्रमादितात्पर्यलिङ्गविचार एव धारयितव्यः । मन्तव्यः अनुकूलतर्कैरसंभावनाविपरीतभावनानिवृत्तये स्वयं मुहुर्विचारणीय इति । २ ध्यानमङ्गत्वेनेति साकारध्यानमपि ध्यातृकामनानुसारेण साकारस्य वा निराकारस्य वा ब्रह्मणो दर्शनसाधनत्वेनोपदिशन्तीत्यर्थः । ३ यत्तत्त्वरूपं त्वामुपासते इति । ४ अङ्घ्रिसरोजमिति चरणधारणायामपि श्रुतीनामपरिच्छिन्नत्वानुसंधानमिति भावः । ५ यस्मान्निर्विकल्पाद्ब्रह्मानन्दात्मनो वाचोऽभिधायकशब्दास्तादृशब्रह्मबोधनाय प्रयुज्यमाना अपि अप्राप्य शक्तिवृत्त्या तमप्रकाश्यैव निवर्तन्ते । ६ को अद्धेति । इयं विसृष्टिराकाशादिसृष्टिः कुतः कस्माज्जाता, कुतः कस्माद्धेतोः स्थितिं प्राप्ता, एतदद्धा प्रत्यक्षतः को वेद । न कोऽपीत्यर्थः । इह संसारमण्डले कः प्रवोचत्प्रावोचत् । कोऽपि प्रवक्ता न बभूवेत्यर्थः । ननु ब्रह्मादिदेवा ज्ञास्यन्ति तत्राह—अर्वागिति । अस्य विसर्जनेन एतत्सृष्टत्वेन ब्रह्मादिदेवा अप्यर्वाचीना एवेत्यर्थः । "यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुतेः । अथ तस्मादियं विसृष्टिर्यत आबभूव तं को वेद । न कोऽपीत्यर्थः । ७ अनेजदिति । एकमद्वितीयम् । एजनं कम्पनं स्वस्थानाच्यवनं तद्रहितमपि मनसो जवीयो वेगवत्तरम् । विभुत्वादित्यर्थः । एतदात्मतत्त्वं देवा इन्द्रियाणि नाप्नुवन् । यतः पूर्वमर्शत् पूर्वमेव गतं सर्वान्तरतया स्थितं, न तु पराग्भूतमित्यर्थः । इन्द्रियाणि पराग्वस्तुविषयाणि न प्रत्यग्विषयाणीति भावः । तिष्ठत्स्थिरमपि तच्छीघ्रगतिमतोऽन्यानत्येत्यतिक्रम्य वर्तते । तस्मिन्परमात्मचैतन्ये सति तदाश्रयत्वेन वर्तमानो मातरिश्वा वायुः । अपः उदकप्रवाहवत्सततं वर्तमानाः सर्वेषां सर्वत्र चेष्टा दधाति संपादयति ।

सत्त्वानां न तावद्भगवज्ज्ञानसामर्थ्यम् । तथा च श्रुतिः—'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव' इत्याद्या । यदा तु प्रलयसमये न वह्नन्तरमस्ति तदापि साधनाभावान्न भगवज्ज्ञानसामर्थ्यम् । अतस्त्वदेकशरणतया श्रवणकीर्तनादि भक्तिरेव सुकरेति ॥ काहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव ॥ दीनबन्धो दयासिन्धो भक्तिं मे नृहरे दिश ॥ ११ ॥ २४ ॥ इतोऽपि ज्ञानं न सुशकम्, उपदिशतामपि भ्रमबाहुल्यादित्याह—जनिमसत इति । असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदन्ति । असत एव ब्रह्मत्वस्योत्पत्तिं ये च पातञ्जलादयः । सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदन्ति ये नैयायिकाः । उतापि ये च सांख्यादय आत्मनि भिदां भेदं च, ये मीमांसका विपणं कर्मफलव्यवहारमृतं सत्यं स्मरन्ति वदन्ति ते सर्वे आरुपितैरारोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या । 'सदेव सोम्येदमग्र आसीत्', 'ब्रह्मैव सन्ब्रह्माप्येति', 'अनीशया शोचति मुह्यमानः', 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥', 'एकमेवाद्वितीयं ब्रह्म', 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इत्यादिश्रुतिविरोधात्, किंच वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं सङ्गच्छेत, नतु तदस्तीत्याह—त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति । त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा । उपलक्षणमेतद्भिदादि । सा यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृम्भिता । तर्हि किमज्ञानमस्ति, वस्तुतः पुंसि नैवेत्याह—ततः अबोधात्परत्र परेऽसङ्गेऽवबोधरसे ज्ञानघने स अबोधो न भवेन्न संभवतीत्यर्थः ॥ मिथ्यातर्ककर्कशेरितमहावादान्धकारान्तरभ्राम्यन्मन्दमतेरमन्दमहिमंस्त्वज्ज्ञानवर्त्मास्फुटम् ॥ श्रीमन्माधव वामन त्रिनयन श्रीशंकर श्रीपते गोविन्देति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥ १२ ॥ २५ ॥ ननु यद्यसन्नोत्पद्यते, यदि च त्रिगुणमयः पुरुषो न भवति, तर्हीदं प्रपञ्चजातं पुरुषश्च पृथङ्नास्तीत्युक्त

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ॥
त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २५ ॥
सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः ॥
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ २६ ॥

१ असत उत्पत्तेः प्रागविद्यमानस्य जगतः । २ वैशेषिकाः काणादाः सप्तमपदार्थवादिनो नवीनास्तार्किकाः । एते ह्येवमाहुः—उत्पत्तेः पूर्वं कार्यमात्रस्य प्रागभावोऽस्ति स च तत्तत्प्रागभावस्तत्तत्कार्ये निमित्तकारणं, उत्पन्ने कार्ये प्रागभावनाशः तस्यानादित्वे सति सान्तत्वादिति ॥ सांख्यवेदान्तिनौ तु सत्कार्यवादिनौ । उत्पत्तेः पूर्वं कारणे सूक्ष्मरूपेण सदेव कार्यं कुलालादिकारकव्यापारेण व्यक्तीक्रियते । प्रागभावस्य तु न कारणता । अभावाद्भावोत्पत्तेरसंभवात् 'नासतो विद्यते भावः' इत्यादिवचनयोराशयः । ३ पातञ्जला योगशास्त्रप्रणेतारः जीवरूपं सत्यं नत्वौपाधिकं यथा ताम्रादिरसुवर्णरूप एव सन्नौषधिपुटपाकादिप्रभावात्सुवर्णं भवति एवमब्रह्मभूतो जीवो योगप्रभावाद्ब्रह्म भवतीति योगशास्त्राशयः । वेदान्तिनस्तु जीवः सर्वदा ब्रह्मरूपएवास्ति अज्ञानेन स्वस्याब्रह्मरूपत्वं मत्वा संसरति । यथा कश्चन राजपुत्रो राज्ञा वने त्यक्तो व्याधैः संवर्धितो व्याध एवाहमिति राजत्वाज्ञानान्मन्यतेऽस्य स च केनचित्त्वं राष्ट्राधिपो राजा त्वमसीत्यादिनोपदिष्टोऽज्ञानकृतव्याधत्वं विहाय राजत्वं ज्ञात्वा राजा भवति तद्वदिति वदन्ति । ४ एकविंशतिप्रकारस्येति । षडिन्द्रियाणि, षड्विषयाः, षडिन्द्रियजन्यज्ञानषट्कं, शरीरं सुखं दुःखं चेत्येकविंशतिविधं दुःखम् । ५ अनीशया मायया मुह्यमानः शोचतीति गौतमीयमतनिरासः । ६ धीरा धीमन्तोऽपि स्वयमात्मानमेव पण्डितंमन्यमानाः । ७ जंघन्यमानाः भृशं पीड्यमानाः परियन्ति परिभ्रमन्ति इति मीमांसकमतपरिहारः । ८ एकपदैवकाराद्वितीयपदैः स्वगतसजातीयविजातीयभेदनिरासः । ९ यथा जलबिम्बितश्चन्द्र एकस्मिञ्जले एकः बहुजलेषु बहुधा दृश्यते तद्वदित्यर्थः । १० पृथक् प्रथाभिन्नम् ।

स्यात्, कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह—सदिव मन इति । मनो मनोमात्रविलसितमिदं त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातमसदेव सदिव विभाति । कथमिति चेत्तत्राह—त्वयीति । त्वय्यधिष्ठाने । अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः । न केवलमिदंकारास्पदं किंत्वामनुजात् । मनुजः पुरुषः । अभिविधावाकारः । पुरुषमभिव्याप्येति । पुरुषस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः । तथा च श्रुतिः—'असंतोऽधिमनोऽसृजत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंच' इति । नन्वात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्त्वादत आह—सदभिमृशन्तीति । आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशन्ति सदिति जानन्ति । आत्मकार्यत्वान्न पृथगित्यर्थः । तथाहि—यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति । लोकाचारेण दर्शयति—न हि विकृतिमिति । कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति । अत्र हेतुः—तदात्मतया, कनकरूपत्वेनेत्यर्थः । अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम् ॥ यत्सत्त्वतः सदा भाति जगदेतदसत्स्वतः ॥ सदाभासमसत्यस्मिन्भगवन्तं भजाम तम् ॥ १३ ॥ २६ ॥ ननु 'सत्यं ज्ञानमनन्तं ब्रह्म', 'नेह नानास्ति किंचन', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादि श्रुतिभिरेवंभूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह—तव परि ये चरन्तीति । तवेति कर्मणि

तव परि ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥
परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ २७ ॥

षष्ठी । त्वां ये परिचरन्ति । छन्दसि व्यवहिताश्चेति यच्छब्देन व्यवधानमदोषः । केन रूपेण । अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया । सर्वभूतावासतयेत्यर्थः । उत एव अविगणय्य तिरस्कृत्य त एव निर्ऋतेर्मृत्योः शिरो मूर्धानं पदा पादेनाक्रमन्ति मृत्योर्मूर्ध्नि पदं दधति । ते तरन्ति मुच्यन्त इत्यर्थः । ये पुनर्विमुखा अभक्तास्तान् गिरा वाचा पशूनिव विबुधान्विदुषोऽपि परिवयसे बध्नासि । कुतः । त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति पवित्रयन्ति । आत्मानमन्यानपीति शेषः । नेतरे । तथा च श्रुतिः—'तस्य वाक्तन्तिर्नामानि दामानि । तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्' इति । अयमभिप्रायः—सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयन्ति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते । तथाप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भवतीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थम् । भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानामयत्नत एव करकलितो मोक्ष इति । तथा च श्रुतयः—'देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे', 'यमेवैष वृणुते तेन लभ्यः', 'यस्य देवे परा भक्तिः' इत्यादयः ॥ तपन्तु तापैः प्रपतन्तु पर्वतादटन्तु तीर्थानि पठन्तु चागमान् ॥ यजन्तु यागैर्विवदन्तु वादैर्हरिं विना नैव मृतिं तरन्ति ॥ १४ ॥ २७ ॥

१ असतोऽधीति । असतो नामरूपव्याकृतिरहितत्वेन शून्यतुल्याद्ब्रह्मणो निमित्तभूतात् । न विद्यते धीर्यस्मात्तदधि मूलाज्ञानम् । मनो महत्तत्त्वाख्या समष्टिबुद्धिरसृजत अजायत । अज्ञानमेव समष्टिमनोरूपेण विवर्तितमभूदित्यर्थः । तच्च मनः प्रजापतिं सत्यलोकवासिनं ब्रह्माणमसृजत । तस्माद्यदिदं परिदृश्यमानं किंच किंचन तदिदं मनस्येव समष्टिबुद्धावेव परमं यथा स्यात्तथा प्रतिष्ठितं प्रकर्षेण स्थितमित्यर्थः । २ नाना सजातीयादिभेदयुतम् । ३ मृत्योरिति । इह ब्रह्मणि यो नानेव कल्पितभेदशालिचेतनाचेतनात्मकं विश्वं पश्यति स मृत्योरनन्तरं मृत्युं जन्ममरणादिपरम्परारूपं संसार प्राप्नोतीत्यर्थः । ४ तस्य वागिति । वेदरूपा वाक्तन्तिर्महारज्जुः ब्राह्मणादिनामानि तन्तिसयुक्तदामानीव । यथा तन्त्यां दामभिर्वृषा बध्यन्ते, एवमीश्वरस्य विधिनिषेधलक्षणया वेदवाण्या तन्तिरूपया दामरूपैर्नामभिरिदं सर्वं जगत्सितं बद्धम् । ब्राह्मणस्त्वं षट् कर्माणि कुरु । क्षत्रियादिस्त्वं यजनादित्रयम् । ब्रह्मचारी वेदपाठमित्येवमादिना संयतमित्यर्थः । ५ तत्रापरोक्षवस्तुविषयकप्रमाणानामपरोक्षज्ञानजनकत्वनियमं वाद्यभिप्रेतमङ्गीकरोति यद्यपीति । ६ एष परमात्मा यं वृणुतेऽनुगृह्णाति ।

नन्नु यद्यखिलसत्त्वे निकेतत्वेन भवतः सेव्यत्वमुच्यते तर्हि तत्करणसंबन्धात्कर्तृभोक्तृत्वे प्रसज्येयाताम्, न वस्तुतस्तथात्वमिति चेत्तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशङ्कां परिहरन्त्यः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ॥ स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' इत्याद्याः श्रुतयः स्तुवन्तीत्याह—त्वमकरण इति । करणसंबन्धरहित एवाखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणीन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा । कुतः । स्वराट् यतः स्वेनैव राजसे दीप्यसे । न हि स्वतःसिद्धज्ञानशक्तेरिन्द्रियापेक्षेत्यर्थः । अतस्तव वलिमुद्वहन्ति पूजां कुर्वन्ति । अजयाऽविद्यया सहितास्तया वृता इत्यर्थः । अनिमिषा देवा इन्द्रादयस्तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि । यथा सस्त्रीका एव किङ्कराः स्वामिनं सेवन्ते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः । समदन्ति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं वलिं भक्षयन्ति । अत्र दृष्टान्तः—वर्षभुजोऽखिलक्षितिपतेरिवेति । यथा वर्षभुजः खण्डमण्डलपतयोऽखिलक्षितिपतेर्महामण्डलेश्वरस्य स्वप्रजादत्तवलिभुजो वलिमुद्वहन्ति तद्वदिति । कथं वलिं वहन्ति तदाह—विदधति यत्र ये त्वधिकृता भवतश्चकिता इति । त्वत्तो भीताः सन्तो यस्मिन्कर्मणि नियुक्तास्ते तत्कुर्वन्तीति । त्वदाज्ञापालनमेव

त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव वलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ॥
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ २८ ॥
स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥
न हि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवाऽपदस्य तव शून्यतुलां दधतः ॥ २९ ॥

वल्युद्वहनमित्यर्थः । तथा च श्रुतिः—'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' इति ॥ अनिन्द्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ॥ सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमामि तम् ॥ १५ ॥ २८ ॥ तदेवं करणप्रवर्तकमीश्वरं करणपरतन्त्रा नरा भजन्तीत्युक्तम्, न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वादिति वदन्ति 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति' इत्याद्याः श्रुतय इत्याह—स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त, यदि तवाजया मायया विहरो विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयो जात्यालिङ्गिता देहा येषां ते जीवाः स्युर्भवेयुः । कथंभूतस्य । ततोऽजातः परस्य दूरे वर्तमानस्यासङ्गस्येत्यर्थः । कथं विहारः । उदीक्षया ईक्षणलेशेन । ननु मयि लीनानां जीवानां कथं जन्म स्यात्तत्राह—उत्थनिमित्तयुज इति । ईक्षयैवोत्थान्युत्थितान्याविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिङ्गशरीराणि वा तैर्युज्यन्त इति तथा । ननु किंनिमित्तोत्थानेन मदिच्छयैव भवन्तु, न, त्वयि वैषम्याभावाद्विषमसृष्टेरयोगादित्याह—परमस्येति । तव परमस्योत्तमस्य परमकारुणिकस्य वियत इवाकाशसदृशस्य, समस्येत्यर्थः । कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत् । 

१ विशेषेणेति । केनोत्कर्षेणेश्वरः सेव्यः, केनापकर्षेण जीवः सेवक इत्यर्थः । २ अपाणीति । अत्र क्रमोऽविवक्षितः । तथा च अपाणिरपि ग्रहीता अपादोऽपि जवन इति योज्यम् । ३ भीषा भीत्या । पञ्चानां ग्रहणं ब्रह्मादिस्तम्बान्तचराचरोपलक्षणम् । ४ अग्नेरेकरूपाद्द्वितीयाश्च क्षुद्रा अणिका विविधमुच्चरन्ति यथा । प्राणा इन्द्रियाणि, लोका भूरादयो विषयाः, देवा इन्द्रियाणां लोकानां चाधिष्ठातारः, भूतानि ब्रह्मादिस्थावरान्तशरीराणि आत्मानोऽन्तःकरणोपाधयो जीवाः । ५ ईक्षणलेशेनेति । सर्जनेच्छादिरूपेणेत्यर्थः ।

न संभवतीत्यर्थः । 'असद्वा इदमग्र आसीत् । ततो वै सदजायत' इत्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते तदर्थं[1] पुनर्विशिनष्टि । शून्यतुलां दधतः शून्यसाम्यं भजतः । तदेव दर्शयितुं पुनर्विशिनष्टि—अपदस्येति । न पद्यत इत्यपदस्तस्य, वाङ्मनसयोरगोचरस्येत्यर्थः ॥ त्वदीक्षणवशक्षोभमायावोधितकर्मभिः ॥ जातान्संसरतः खिन्नान्नृहरे पाहि नः पितः ॥ १६ ॥ २९ ॥ एवं तावत्परमात्मनः सकाशादविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः संसरन्तो[2] भजन्तीत्युक्तम्, तत्र यद्येकाऽविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसङ्गः, अथ नानाविद्यास्तर्हि तस्यैवांशान्तरेण[3] संसारानपगमादनिर्मोक्ष इत्यादितर्कवलेन वस्तुत एव नानात्मानस्तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात्, देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात्, अतः सर्वगता नित्याश्चेति केचन मन्यन्ते, तत्र न तावदुक्तदोषप्रसङ्गः, अविद्याभेदेन[4] तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात्, ईश्वरस्य तु न केनाप्यंशेन संसारशङ्केत्युक्तमेव, प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु, किंच इमं पक्षमन्तर्यामिब्राह्मणमपि न सहत इत्याह—अपरिमिता इति । वस्तुत एवानन्ता ध्रुवास्तेनैव रूपेण

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥
न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ॥
त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ ३१ ॥

नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युस्तर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव, नियमो नियमनं त्वया न स्यादित्तरथा तु घटेत । कथम् । यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियन्तृ नियामकं भवेत् । अविमुच्य कारणतयाऽपरित्यज्य । किं तत् । सममनुस्यूतम् । ननु किं यत्तच्छब्दैर्ज्ञायते चेदुच्यतामिदं तदित्यत आह—अनुजानतां यदमतमिति । जानीम इति वदतां यदमतमविज्ञातप्रायम्, अविषयत्वात् । तथा च श्रुतिः—'यस्यामतं[5] तस्य मतं मतं यस्य न वेद सः ॥ अविज्ञातं विजानतां विज्ञातमविजानताम्', 'अवचनेनैव[6] प्रोवाच', 'सह तूष्णीं बभूव' इत्यादिः । किंच मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् । तथा च श्रुतिः—'यदि[7] मन्यसे सुवेदेति दहमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु' इत्यादि । तस्माद्यत्तच्छब्दावद्योत्यमतर्क्यं किमपि सर्वानुस्यूतत्वेन समं नियन्तृ भवेदित्यर्थः ॥ अन्तर्यन्ता सर्वलोकस्य गीतः श्रुत्या युक्त्या चैवमेवावसेयः ॥ यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमन्तं तं चेतसैवावलम्बे ॥ १७ ॥ ३० ॥ ननु यदि च परमात्मनो जीवा जायन्त इति नियन्तृनियम्यभाव उच्यते तथा

१ असद्वा इति । अग्रे शून्यमासीत् शून्यादेव जगद्भूदिति पूर्वपक्षार्थः । सिद्धान्ते तु, इदं जगदग्रे सृष्टेः प्रागसदव्याकृतनामरूपत्वादसत्तुल्यमतिसूक्ष्मं ब्रह्मैवासीत् । ततो ब्रह्मणः सत् व्याकृतनामरूपं जगदजायतेति । २ संसरन्तो भजन्तीति ससारान्मोक्षाय भजन्तीत्यर्थः । ३ तस्यैवेति । अवच्छेदवादाभिप्रायेण पूर्वपक्षः । ४ अविद्येति । अनेकाविद्यासु एकस्येश्वरस्य बिम्बरूपस्यानेके प्रतिबिम्बाः । ५ यस्येति । यस्य ब्रह्मविदो ब्रह्म अमतमविदितमिति निश्चयस्तस्य ब्रह्म मतं स ब्रह्मवेत्तेत्यर्थः । यस्य तु मतं ज्ञातं ब्रह्मेति निश्चयः स ब्रह्म नैव वेदेत्यर्थः । यस्माद्विजानतां सम्यग्ज्ञानिनां ब्रह्म अविज्ञातं ज्ञानाविषय इति पक्षः, अविजानतामज्ञानिनां विज्ञातं ज्ञानविषयो ब्रह्मेति पक्ष इति । ६ अवचनेनेति । वक्ता अवचनेन वचनाभावेनैव प्रोवाच ब्रह्म वाङ्मनसागोचरमिति लक्षणया कथयामास । स श्रोता तेनैव लक्षणेन सर्वप्रमाणाविषयं ब्रह्मेति बुद्ध्वा तूष्णीं बभूव न किंचिदपि प्रश्नादि कृतवानित्यर्थः । ७ यदिति । यदि कदाचिन्मन्यसे सुष्ठु वेदाहं ब्रह्मेति तर्हि त्वं यदस्य ब्रह्मणो रूपं तदभ्रमल्पमेव वेत्थ । यदस्य ब्रह्मणो देवेष्वधिदैवतं रूपं तदल्पमेव त्वं वेत्थेत्यर्थः ।

सति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसङ्गः स्यात्, किंच तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात्, नचैतद्युक्तम्, स्वप्रकाशानन्दात्मनोऽविद्याकृतार्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशङ्क्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह—न घटत इति । तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात्पुरुषस्य वा उभयोर्वा । आद्ये जीवानां जडत्वापत्तिः । द्वितीये पुरुषस्य विकारित्वप्रसङ्गः । अत एव तृतीय इत्याशयेनोक्तं प्रकृतिपूरुषयोरुद्भवो न घटत इति श्रुत्याऽजत्वप्रतिपादनादपीत्याह—अजयोरिति । तथा च श्रुतिः—'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति । उभययुजा तु भवन्ति उभयं च तद्युज्यत इति युक् संबद्धम् । परस्पराध्यस्तमिति यावत् । तेनासुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्यर्थः । जलबुद्बुदवदिति । यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवन्ति किंतु मिलिताभ्यां तद्वत् । तत्र यथाऽनिलो निमित्तं जलमुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' । 'सोऽकामयत बहु स्यां प्रजायेय' इति । 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ति' इत्यादिश्रुतिषु चेतनाचेतनप्रपञ्चस्य परमात्मोपादानत्वश्रवणात् । न च विकारित्वम्, परिणामानङ्गीकारात् । केचित्पुनः परिणाममङ्गीकृत्यात्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छन्ति । सर्वथा तावत्प्रकृतिपुरुषैक्याद्भवतीति सिद्धम् । तत् 'एकमेवाद्वितीयं ब्रह्म', 'अजामेकाम्', । 'अविनाशी वारेऽयमात्मा' इत्यादिश्रुतिबलादुत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म, न वस्तुत इत्युक्तम् । उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह—त्वयि त इति । त्वयि कारणात्मनि त इमे जीवाः । तत इति । यतो न वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह लिल्युर्लीना बभूवुः । तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयन्ते । यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते, एवं स्वापादौ विशेषमात्रलयात्कारणस्य विद्यमानत्वात्सामान्यतो वर्तन्ते । मुक्तौ तु कारणस्यापि लयात्त्वयि परमे निरुपाधौ सरित इवार्णवे लीयन्त इति विवेकः । तथा च श्रुतयः—'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां संगमयन्ति' । 'ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे' इति । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्याद्याः ॥ यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवलात्मावबोधे ॥ अत्यन्तान्तं व्रजति सहसा सिन्धुवत्सिन्धुमध्ये मध्ये चित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥ ३१ ॥ ॥

१ उपाधीति । अन्तःकरणोपाधिजन्मना जीवानां बुद्धिप्रतिबिम्बितप्रमातृसंज्ञकानां जन्मोच्यत इत्यर्थः । २ अजयोरिति अनाद्योरित्यर्थः । ३ अजामिति । न जायत इत्यजा तां मूलप्रकृतिं लोहितशुक्लकृष्णां रजः सत्त्वतमोगुणां सरूपां त्रिगुणात्मिकां प्रजां जनयन्तीं एकोऽजो जीवस्तां शब्दादिविषयरूपतापन्नां जुषमाणः सन्ननुशेते निरन्तरं मुह्यति । जीवेन भुक्तो भोगो यस्यां तां जीवेन भुज्यमानामेनामन्यः परमात्मा जहाति । नास्यामासक्तिं करोतीत्यर्थः । ४ परीति । कारणसमसत्ताकोऽन्यथाभावः परिणामः । कारणविषमसत्ताकोऽन्यथाभावो विवर्तः । व्यावहारिकसत्यत्वयुक्तमृद्दुग्धादेर्व्यावहारिकसत्यं घटदध्यादि जायत इति घटादिः परिणामः । व्यावहारिकसत्यत्वयुक्तशुक्त्यादेः प्रातिभासिकसत्यं रजतादिजायत इति रजतादिर्विवर्तः परिणामिन एव कारणस्य विकारित्वं न विवर्तोपादानस्य । प्रकृते पारमार्थिकसत्याद्ब्रह्मणो व्यावहारिकसत्यं जगदुत्पद्यत इति विवर्तोपादानत्वं ब्रह्मण इति न विकारित्वप्रसङ्ग इत्यर्थः । ५ हे सोम्य, मधुकृतो मधुमक्षिकाः मधु निस्तिष्ठन्ति निष्पादयन्ति । नानात्ययानां नानागतीनां नानाजातीनां वृक्षाणां पुष्परसान्समवहारमाहृत्यैकतां मधुरूपतामापादयन्ति । ते रसा यथाऽमुष्य वृक्षस्याहं रस इति भेदं न लभन्ते न विदुः । पुरुषैर्ज्ञायमानभेदवन्तो न भवन्तीत्यर्थः । पुरुषज्ञानानां रसेषूपचारात् । एवमिमाः प्रजाः स्वापप्रलयादौ सति ब्रह्मणि संपद्यैकीभूय ब्रह्मैक्यं प्राप्ता वयमिति न विदुरित्यर्थः । ६ प्रलयस्वापकाले जीवसहितं विश्वं विलयं यदपि प्राप्नुवदपि भाति संस्काररूपेण सूक्ष्मतयाऽस्मिन् तिष्ठति । तत्र हेतुः—उद्यदिति । सृष्टिकाले जागरणकाले चोत्पन्नं भवदित्यर्थः । निरवशेषलये पुनरुत्पन्नं न स्यादिति भावः । गुरूपदेशेनात्मसाक्षात्कारे सति । अत्यन्तान्तं निरवशेषलयं समुद्रमध्ये नदीवद्यस्मिन्व्रजति तं त्रिभुवनगुरुं नृसिंहं चित्तस्य मध्ये भावये इत्यर्थः ।

नन्वेवं तावत्परमेश्वराज्जीवा जायन्ते तद्वशेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयन्त इति संसारचक्रे परिभ्रमणमुक्तमिदानीं तन्निवृत्तये 'परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च'[1] । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश' इत्याद्याः भगवदनुवृत्तिं विदधतीत्याह—नृषु तव माययेति । नृषु जीवेष्वमीषु तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियो भृशं त्वय्यभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वन्ति । कीदृशं भ्रमम् । अनुप्रभवं अन्वनु प्रभवो यस्मिंस्तं भ्रमम् । ततः किमत आह—कथमिति । अनुवर्ततामनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत् । न कथंचिदपी-त्यर्थः । कुतः । यद्यस्मात्तव भ्रुकुटिर्भ्रूभङ्गरूपस्त्रिणेमिस्त्रिसो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः । अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति, अत एवंभूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति ॥ संसारचक्रक्रकचैर्वि-दीर्णमुदीर्णनानाभवतापतप्तम् ॥ कथंचिदापन्नमिह प्रपन्नं त्वमुद्धर श्रीनृहरे नृलोकम् ॥१९॥३२॥ स च भगवति भावो मनोनियमे सति भवति, सोऽपि गुरूपसदना-दिति गुरूपसदनं विदधति 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्', 'आचार्यवान्पुरुषो वेद', 'नैषा[2] तर्केण मतिरापनेया प्रोक्ता-

नृषु तव मायया भ्रममभीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ॥ कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३२ ॥ विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ ३३ ॥ स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ॥ इति सदजानतां मिथु-नतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ ३४ ॥ ॥ ॥

ऽन्येनैव सुज्ञानाय प्रेष्ठे'त्याद्याः श्रुतय इत्याह—विजितहृषीकवायुभिरिति । विजितानि हृषीकाणीन्द्रियाणि वायुश्च प्राणो यैस्तैरप्यदान्तमनस्तुरगमदान्तमद-मितं मन एव तुरगो दुर्दमत्वसाम्यात्तं ये यन्तुं नियन्तुं यतन्ति प्रयतन्ते । अतिलोलमतिचञ्चलम् । गुरोश्चरणं समवहायाऽनाश्रित्य ते उपायेषु खिद्यन्ते क्लिश्य-न्तीत्युपायखिदः सन्तो व्यसनशतान्विता बहुव्यसनाकुला इह संसारसमुद्रे सन्ति तिष्ठन्ति । दुःखमेव प्राप्नुवन्तीत्यर्थः । हे अज, अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा तद्वत् । उक्तं च—'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा' ॥ इति । 'प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा ॥ देशभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः ॥' गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः ॥ यदा परानन्दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ॥ तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः ॥ २० ॥ ३३ ॥ 'परीक्ष्य[3] लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' तथा, 'यदा[4] सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म

१ परीत्येति । भूतानि परीत्य सर्वभूतेष्वात्मैक एवेति ज्ञात्वा लोकान्स्वर्गादीन् कर्मचितत्वेनानित्यान् ज्ञात्वा सर्वा दिशः प्रदिशश्चैहिकविषयानप्यनित्यान् ज्ञात्वा प्रथमजां त्रयीलक्षणां वाच-मुपस्थाय ससेव्य आत्मना मनसा ऋतस्य परमेश्वरस्यात्मानं स्वरूपमभिसविवेश आश्रितवान्कश्चन मुमुक्षुरित्यर्थः । २ नैषेति । वेदान्तशास्त्रजन्या मतिस्तर्केण स्वमत्यूहमात्रेणापनेया बाधार्हा न, यद्वा तर्केण प्राप्तव्या नेत्यर्थः । किंत्वन्येन निपुणेनाचार्येण प्रोक्ता प्रबोधिता सती सुज्ञानाय साक्षात्काराय भवति । प्रेष्ठ हे प्रियतमेति नाचिकेतसं प्रति यमसंबोधनम् । ३ परी-क्ष्येति । लोकान्भूरादीन् भोग्यान्परीक्ष्य विचारेणानित्यतया निश्चित्य निर्वेदं वैराग्यमायात्प्राप्नुयात् । अकृतो नित्यो मोक्षः कृतेन कर्मणा नेत्यर्थः । ४ यदा यस्मिन्काले कामा विषया येऽस्य विदुषो हृदि बुद्धौ वासनारूपेण प्रविष्टाः ।

समश्नुते' इत्याद्या वैराग्यमङ्गं विदधतीत्याह—स्वजनसुतेति । आत्मा देहः । धाम गृहम् । असुः प्राणः । स्वजनादिभिः किम् । सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिंस्तस्मिंस्त्वयि परमानन्दे 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । अयतस्त्वां सेवमानस्य पुंस आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोग इति सत् सत्यं परमार्थसुखमजानतामत एव मिथुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् । कर्मणि पथ्यौ । अजानतश्चरतः पुरुषान् को न्वर्थः सुखयत्यानन्दयति । न कोऽपीत्यर्थः । इह संसारे । कथंभूते । स्वविहते स्वत एव नश्वरे । स्वनिरस्तभगे स्वत एव गतसारे । पाठान्तरे तु को न्वित्यस्यैतद्विशेषणद्वयम् । अतस्त्वद्भजनमेवोचितमित्यर्थः ॥ भजतो हि भवान्साक्षात्परमानन्दचिद्घनः ॥ आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१ ॥ ३४ ॥ एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्सङ्गेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटन्तीति 'श्रोतव्यो मन्तव्यः' इत्यादिश्रुत्यर्थमाह—भुवि पुरुपुण्यतीर्थसदनानीति । ते उक्तलक्षणा ऋषयो विमदा निरहंकारा यतो भवत्पदाम्बुजहृदः भवतः पदाम्बुजं हृदि येषां ते । अतः स्वयमेवाघभिदङ्घ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि बहूनि पुण्यानि तीर्थानि सद-

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ॥
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ ३५ ॥
सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ॥
व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥

नानि च क्षेत्राणि तान्येवोपासते सेवन्ते प्रायस्तत्रैव महत्सङ्गो भवतीति । अथवा पुरु अधिकं भगवद्भजनलक्षणं पुण्यं येषां तानि च तानि तीर्थानि च गुरवो महान्त इत्यर्थः । तेषां सदनान्याश्रमान् । यथाहामरसिंहः—'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इति । न पुनः पुरुषसारहरावसथानुपासते । पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशान्तिप्रमुखं हरन्तीति तथा ते च ते आवसथा गृहास्तान् । न च तेषां गृहादिभवकुत्सितसुखापेक्षेत्याह—दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे इति । सकृदपि त्वयि ये मनो दधतीति तेऽपि गृहाद्यासक्ता न भवन्ति, किं पुनरेवंभूता इत्यर्थः ॥ मुञ्चन्नङ्गतदङ्गसङ्गमनिशं त्वामेव संचिन्तयन्सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन् ॥ नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथामृतस्रोतःसंप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥ २२ ॥ ॥ ३५ ॥ ननु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्', 'तद्भूतानां क्रियार्थेन समन्वयः' इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिपदामपि तदेव युक्तम्, यथोक्तं तन्त्रवार्तिककृता—'एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यं व्याख्यातं' इति न, 'एकमेवाद्वितीयं ब्रह्म', 'विज्ञान-

१ 'को न्विह स्वविहतः स्वनिरस्तभगे' इति प्रथमान्तपाठे । २ मुञ्चन्निति । अङ्ग भो नरहरे, यद्वा अङ्गं शरीरं तदङ्गानि च सुतदारगृहधनादीनि तेषु सङ्गमासक्तिं मुञ्चन्नित्यर्थः । ३ 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति एतावत्पूर्वपक्षसूत्रम् । अस्यार्थः—आम्नायस्य वेदस्य यज्ञादिक्रियाप्रतिपादनपरत्वादतदर्थानामक्रियार्थानां 'सोऽरोदीत्', 'प्रजापतिरात्मनो वपामुदक्खिदत्', 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिवाक्यानामानर्थक्यं निरर्थकत्वं तस्मादनित्यमनित्यं वेदानां प्रामाण्यमुच्यत इति। ४ तत्तेषु वेदवाक्येषु भूताना सिद्धार्थप्रतिपादकवाक्यानां क्रियार्थेन क्रियाप्रतिपादकवाक्येन 'बर्हिषि रजतं न देयं', 'पशुना यजेत' इत्यादिना सहान्वयः । तथा च विधिप्रत्ययरहितवाक्यानां विधिवाक्यैः संनिहितैर्दूरस्थैर्वा सह विधिवाक्याकाङ्क्षितनिन्द्यत्वाद्यर्थपूरणेनान्वये कृते क्रियापरत्वसिद्ध्या प्रामाण्यं सिद्धम् ।

मानन्दं ब्रह्म', 'अचक्षुरश्रोत्रम्' इत्येवं तद्विपरीतात्मप्रतिपादनात्। न ह्यद्वितीयपरमानन्दरूपस्य कर्माङ्गत्वं युज्यते। अननुमतं चैतद्वार्तिककृतः। कथम्। '[1]सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ॥ पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥' इति तेनैवोक्तत्वात्। एतदर्थमेव मननाय मुनयः पर्यटन्तीत्युक्तम्। तत्र तावदद्वैतस्य सत्यत्वे भवेदप्येवं तदेव तु न संभवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह—सत इदमुत्थितं सदिति चेदिति। इदं विश्वं [2]धर्मि। सदिति साध्यो धर्मः। सत उत्पन्नत्वाद्धेतुः। यद्यत उत्पन्नं तत्तदात्मकमेव दृष्टम्। यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं तद्वदिति। तत्र यदि सदभेदः साध्यते तदाऽपादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह—ननु तर्कहतमिति। ननु नाभेदं साधयामः, किंतु तदुत्पन्नत्वेन कुण्डलादिवद्भेदं प्रतिषेधयामः। तत्राभेद एव स्यादित्याशङ्क्यानैकान्तिकत्वेन दूषयति—व्यभिचरति क्व चेति। पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथा दर्शनादिति भावः। ननु तदुत्पन्नत्वं नाम तदुपादानत्वं, न तु तन्निमित्तत्वमतो नानैकान्तिकत्वमित्याशङ्क्य दूषयति—क्व च मृषेति। गुणोपादानस्यापि फणिनो न गुणत्वं, किंतु मिथ्यात्वम्; अन्यथा कुण्डलादिवदबाधप्रसङ्गात्। अतः पुनरप्यनैकान्तिकत्वमेवेति भावः। ननु न तत्र केवलं गुणमात्रं फणिन उपादानं, किंत्वविद्यायुक्तम्। तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्यात्वमित्याशङ्क्य तत्तुल्यमत्रापीति दूषयति—न तथोभययुगिति। अयमर्थः—अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम्। एवंभूतस्य च न वस्तुसत्त्वम्। अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपञ्चस्येति। ननु मा भूदनेन हेतुना प्रपञ्चस्य सत्त्वं, हेत्वन्तरेण तु साधयामः। तथा हि—सदिदम[3]र्थक्रियाकारित्वात्। न यदेवं न तदेवं, यथा शुक्तिरजतमिति तत्राह—व्यवहृतये विकल्प इषित इति। व्यवहारायार्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव, कूटकार्षापणादिनापि क्वचिद्व्यवहारदर्शनात्। नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धोऽत्यन्तासत्त्वे कथं प्रपञ्चो भ्रमः स्यात्, सत्त्वे वा नाद्वैतसिद्धिः। उक्तं च भट्टैः—'अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ॥ प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा ॥' इति। नेत्याह—अन्धपरम्परयेति। अन्धपरम्परया यो विकल्प इत्यन्वयः। अयं भावः—संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते, न वस्तुसत्त्वम्। [4]प्रतीतौ सत्यां वस्तुसत्त्वाभावेन ब्रह्मव्यतिरेकादर्शनात्। अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यति। [5]अन्धपरम्परान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति। ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'अपाम सोमममृता अभूम' इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते, न हि नित्यं वस्त्वसद्भवति, तस्माद्वेदप्रतिपादितत्वाद्द्वैतं सदेवेत्याशङ्क्याह—भ्रमयतीति। हे भगवन्, ते भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान्कर्मश्रद्धाभराक्रान्तमन्दमतीन् भ्रमयति मोहयति। अयं भावः—न हि वेदः कर्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यमात्रम्, विध्येकवाक्यत्वात्। अन्यथा वाक्यभेदप्रसङ्गात्। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च। अतः कर्मजडानामिदं भ्रममात्रमिति। एतेनैव 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादीनामप्यन्यपरत्वं दर्शितं भवति ॥ उद्भूतं भवतः सतोऽपि भुवनं सन्नैव [6]सर्पः स्रजः कुर्वत्[7]कार्यमपीह कूटकनकं वेदोऽपि नैवंपरः[8] ॥ अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा वन्दे सुन्दरमिन्दिरानुत हरे मा मुञ्च मामानतम् ॥ २३ ॥ ३६ ॥ ॥

१ सर्वत्र वेदे विज्ञानं तत्तद्वाक्यजन्यं देवताकर्मादिविषय ज्ञानं सस्कारत्वेन गम्यते सस्काररूपं भवति। अत एव व्रीह्यादिष्ववघातप्रोक्षणादिसस्कारवत्परस्य यागादेरङ्गं च गम्यते, आत्मविज्ञानादन्यत्र तद्विना उपनिषज्जन्यात्मज्ञानं सस्काररूपं कर्माङ्गं च नेत्यर्थः। अतः कर्मकर्त्रा तद्विचारो न कार्य इति भावः। २ पक्षः। ३ अर्थः प्रयोजनं जलाहरणादि तस्य क्रिया निर्वाहस्तत्कारित्वात्। ४ प्रतीतौ सत्यामिति। वस्तुसत्त्वाभावेन विषयसत्यत्वाभावेन व्यतिरेकस्य भ्रमाभावस्यादर्शनात् गुञ्जापुञ्जे वह्निभ्रमाहितसस्कारेणापि पुनस्तत्रैव गुञ्जापुञ्जादौ भ्रमपरम्परादर्शनादित्यर्थः। ५ अन्धेति। इह वटे यक्षो दृष्ट इति केनचिदन्धेनान्ध उपदिष्टस्तेनान्यस्तेनान्य इति परंपरायां यक्षभ्रमः पूर्वपूर्वभ्रमजन्य एव, न कस्यचिद्यक्षप्रमा, तेन च मूर्च्छामरणाद्यर्थक्रियापि दृश्यते तद्वदित्यर्थः। ६ सत्यायाः स्रजः सकाशादुत्पन्नः सर्पः सत्यो न। ७ कूटकनकं कार्यमर्थक्रियां कुर्वदपि भवति। ८ वेदोऽपि एवंपरो विश्वसत्यत्वपरो न।

तदेवं प्रपञ्चस्य सत्त्वे साधकं नास्तीत्युक्तम्, इदानीमसत्त्वे सृष्टिप्रलयश्रुतयो 'यतो वा इमानि भूतानि जायन्ते' इत्याद्यास्तन्मूलं चानुमानं प्रमाणमित्याह—न यदिदमिति । यद्यस्मादिदं विश्वमग्रे सृष्टेः पूर्वं न आस नासीत् 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतेः । न च निधनात्प्रलयादनु अनन्तरं भविष्यत् भविष्यति । 'नासदासीन्नो सदासीत्तदानीम्' इत्यादिश्रुतेः । अतः कारणादन्तरा मध्येऽप्येकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मितं निश्चितम् । यत एवमतः श्रुत्वा द्रविणजातिविकल्पपथैर्द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पा भेदा घटकुण्डलादयस्तेषां पन्थानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते । यथा तत्र कार्यकाराणां नामधेयमात्रता कारणं मृदाद्येव तु सत्यं तथात्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यम् । तथा च श्रुतिः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति', 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्', 'यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम्' इत्यादि । तस्मादस्य सत्त्वे प्रमाणाभावादसत्त्वे प्रमाणस्य विद्यमानत्वाद्वितथमनोविलासमृतं सत्यमिति ये अवयन्ति जानन्ति तेऽबुधाः । अज्ञा इत्यर्थः । अत्रैवं प्रयोगः—विवा-

न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे ॥
अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ ३७ ॥
स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः ॥
त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥

दाध्यासितं न सत् । आद्यन्तयोरविद्यमानत्वाद्विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् इत्यन्वये दृष्टान्तः । आत्मवच्चेति व्यतिरेके दृष्टान्तः ॥ मुकुटकुण्डलकङ्कणकिङ्किणीपरिणतं कनकं परमार्थतः ॥ महदहंकृतिखप्रमुखं तथा नरहरेर्न परं परमार्थतः ॥२४॥३७॥ ननु यदि प्रपञ्चो नाम नास्त्येव तदाऽसतातेन न चैतन्यस्य संबन्धगन्धोऽपि तर्हि किमपराद्धं जीवेन यतोऽयं संसरति किं वा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किंविषयं च तदा कर्मकाण्डमित्यपेक्षायां जीवेश्वरविशेषं 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति', 'अजामेकां लोहितशुक्लकृष्णाम्' इत्याद्या वदन्तीत्याह—स यदजयेति । स तु जीवो यद्यस्मादजया मायया अजामविद्यामनुशयीतालिङ्गेत्ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमान आत्मतयाध्यस्यंस्तदनु तदनन्तरं सरूपतां तद्धर्मयोगं च जुषन्नपेतभगः पिहितानन्दादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति । तद्विषयमेव च कर्मकाण्डमिति भावः । त्वमुत त्वं तु जहासि तामजां मायाम् । ननु सा मय्येवास्ति, कथं त्यागस्तत्राह—अहिरिव त्वचमिति । अयं भावः—यथा भुजङ्गः

१ लोहं सुवर्णम् । २ एकेन कारणभूतेन मृत्पिण्डेन विज्ञातेन सर्वं तत्कार्यं घटशरावादि विज्ञातं स्यात् । ३ घटादिविकारः केवलं नामधेयं नामैव अतस्तद्वाचारम्भणं वाचैव केवलं व्यवह्रियते, न तु सत्यो मृदेव सत्या । ४ लोहमणिना सुवर्णपिण्डेन । ५ नखनिकृन्तनेन कार्ष्णायसपिण्डेन । ६ कार्ष्णायसविकारभूतं छुरिकादि । ७ द्वा द्वौ जीवेश्वरौ सुपर्णौ शोभनगमनवन्तौ सयुजौ बिम्बप्रतिबिम्बभावेन नित्यसयुक्तौ सखायौ उपकार्योपकारकभावेन वर्तमानौ समानमेकं वृक्षं वृश्च्यते छिद्यत इति नाशवत्त्वेन वा प्रियाप्रियादिबहुफलवत्त्वपुण्यापुण्यादिबहुबीजवत्त्वादिना वा वृक्षसदृशं शरीरं परिषस्वजाते भोक्तृत्वेन नियामकत्वेन चैकं शरीरं श्रितवन्तावित्यर्थः । तयोर्मध्येऽन्य एको देहत्रयतादात्म्याभिमानी अन्तःकरणप्रतिबिम्बो जीवः पिप्पलं कर्मफलं सुखादि स्वादु यथा तथा भुंक्ते, अन्य ईश्वरः कर्मफलमभुञ्जानोऽपि अभिचाकशीति स्वप्रकाशचिद्रूपेण विराजत इत्यर्थः ।

स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभिमन्यते तथा त्वमजाम् । न हि निरन्तराह्लादि संवित्कामधेनुवृन्दपतेरजया कृत्यमिति तामुपेक्षस इति । कुत एतत्तदाह—आत्तभगो नित्यप्राप्तैश्वर्यः । महसि परमैश्वर्येऽष्टगुणितेऽणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे । कथंभूतः । अपरिमेयभगोऽपरिमितैश्वर्यः । न ह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यमपि तु परिपूर्णस्वरूपानुबन्धित्वादपरिमितमित्यर्थः ॥ नृत्यन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभिर्भावान्सत्त्वरजस्तमोगुणमयानुन्मीलयन्ती बहून् ॥ मामाक्रम्य पदा शिरस्यतिभरं संमर्दयन्त्यातुरं माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥ २५ ॥ ॥ ३८ ॥ एवं तावदुक्तसाधनकदम्बेन ये भगवन्तं भजन्ति ते मृत्युं तरन्ति इतरे संसरन्तीत्युक्तम्, इदानीं ये बहिःसङ्गं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथंचिदन्तर्वान्ताशिनः कामान्न मुञ्चन्ति न भगवन्तं प्राप्नुवन्ति न चेह सुखं लभन्ते केवलं कुयोनीरेव प्राप्नुवन्ति तान् शोचन् 'कामान् यः कामयते मन्यमानः[1] सः कर्मभिर्जायते तत्र तत्र' इत्यादिश्रुत्यर्थमाह—यदि न समुद्धरन्तीति । हे भगवन्, ये यतयो हृदि स्थिताः कामजटाः कामस्य मूलानि वासना यदि न समुद्धरन्ति नोत्पाटयन्ति तेषामसतां भवान् हृदि गतोऽपि दुरधिगमो दुष्प्रापः । कथम् । अस्मृतकण्ठमणिर्विस्मृतो यः कण्ठमणिस्तत्तुल्यः । स यथा कण्ठे वर्तमानोऽप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति । न केवलमेतावत्किंत्वसुतृपयोगिनामिन्द्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च

यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ॥
असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥
त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ॥
अनुयुगमन्वहं सगुण गीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥

दुःखमेव, तदाह—अनपगतान्तकादनिवृत्तान्मृत्योः । लोकाराधनधनार्जनादिक्लेशाद्योगवैभवप्राकट्यभयाच्चेह तावद्दुःखम् । भवत ईश्वरादपि दुःखम् । कथंभूतात् । अनधिरूढपदात् अनधिरूढं पदं स्वरूपं यस्य तस्मात् । त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनत्वद्दण्डरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ॥ दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं संमुह्यन्तमहर्निशं विरचितोद्योगक्लमैराकुलम् ॥ आज्ञालङ्घिनमज्ञमज्ञजनतासंमाननासन्मदं दीनानाथ दयानिधान परमानन्द प्रभो पाहि माम् ॥ २६ ॥ ३९ ॥ ननु यतेर्न किमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेनापक्षय्यते अतः किमिति वृथा शप्यते उभयतोऽप्यसुखमिति, श्रूयते च 'एष नित्यो महिमा ब्राह्मणस्य[2] न कर्मणा वर्धते नो कनीयान्[3]' इत्यादि तत्राह—त्वदवगमीति । हे सगुण षड्गुणैश्वर्ययुक्त, त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोर्भवतः कर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्मणोः फलभूतान् गुणविगुणान्वयान्सुखदुःखसंबन्धान्न वेत्ति नानुसंधत्ते तर्हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरो विधिनिषेधलक्षणा न वेत्ति । विगतदेहाभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः । युक्तं चैतत् । यतः कारणान्मनुजैरन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिः अपवर्गरूपा गतिर्भवसि । कथम् । श्रवणभृतः अनुयुगं प्रतियुगं या गीतपरम्परा उपदेशसन्ततिस्तया, सत्संप्रदायानुसारेणेत्यर्थः । एतदुक्तं भवति—ये ताव-

१ मन्यमानो दोषाननादृत्य विषयगुणानेव चिन्तयन् । २ ब्राह्मणस्य ब्रह्मविदः । ३ नो कनीयान् कर्मणा न क्षीयत इत्यर्थः ।

तत्त्वज्ञानिनो न तेषां कर्माधिकारशङ्कापि ये चानवरतं त्वत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवत्पदानां विधिनिषेधबाधः, इतरेषां तु योगच्छन्नेन्द्रियला-
लसानामुभयतोऽप्यसुखमिति ॥ अवगमं तव मे दिश माधव स्फुरति यन्न सुखासुखसङ्गमः ॥ श्रवणवर्णनभावमथापि वा न हि भवामि यथा विधिकिङ्करः
॥ २७ ॥ ४० ॥ त्वदवगमी न वेत्ति सुखदुःखे न च विधिनिषेधावित्युक्तं तत्र ननु कथमवगन्तुं शक्यते दुरधिगमत्वस्योक्तत्वादित्येवमाशङ्क्य सत्यमेवमन-
वगाह्यमहिम्नो वाङ्मनसागोचरत्वादविषयत्वेनैव ज्ञानमिति दर्शयन् 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्च'
इत्यादिश्रुतिप्रतिपादितमपरिमितं महिमानमाह—द्युपतय एवेति । हे भगवन्, ते अन्तं द्युपतयः स्वर्गादिलोकपतयो ब्रह्मादयो न ययुर्न प्रापुः । तत्कुतः ।
यदन्तवद्वस्तु तत्किमपि त्वं न भवसि । आस्तां द्युपतयो न ययुरिति । यद्यस्मात्त्वमप्यात्मनोऽन्तं न यासि । कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वाऽत आह—
अनन्ततया अन्ताभावेन । न हि शशविषाणाज्ञानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहन्ति । अनन्तत्वमेवाह—यदन्तरेति । यस्य तवान्तरा मध्ये ननु अहो
सावरणा उत्तरोत्तरं दशगुणसप्तावरणयुक्ता अण्डनिचया ब्रह्माण्डसमूहा वान्ति परिभ्रमन्ति । वयसा कालचक्रेण खे रजांसीव सह एकदैव नतु पर्यायेण ।

द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः ॥ ख इव रजांसि वान्ति
वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥४१॥ ॥ श्रीभगवानुवाच ॥ इत्येतद्ब्रह्मणः
पुत्रा आश्रुत्यात्मानुशासनम् ॥ सनन्दनमथानर्चुः सिद्धा ज्ञात्वात्मनो गतिम् ॥ ४२ ॥ इत्यशेषसमाम्ना-
यपुराणोपनिषद्रसः ॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥ त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानु-
शासनम् ॥ धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ४४ ॥ ॥ ॥

हि यस्मादेवमतः श्रुतयस्त्वयि फलन्ति तात्पर्यवृत्त्या पर्यवसन्ति । ननु साक्षाद्यदन्त्यमेतावानिति । सगुणस्य गुणानन्त्यान्निर्गुणस्य चागोचरत्वात् । कथं
तर्ह्येपदार्थे तात्पर्यमिति । तत्र विधिमुखवाक्ये भवेदयं नियमः पदार्थस्यैव वाक्यार्थत्वमिति । निषेधमुखे तु नायं नियम इत्याह—अतन्निरसनेनेति । 'अन्यदेव
तद्विदितादथो अविदितादधि', 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्', 'अस्थूलमनणु' इत्यादिप्रकारेण लक्षणया च तत्त्वमसीत्यादयः पर्यवसन्ति ।
नच वाच्यं निषेधैः शून्यमेव ज्ञाप्यत इति । यतो भवन्निधनाः भवति त्वयि निधनं समाप्तिर्यासां तास्तथा । न हि निरवधिनिषेधः संभवत्यतोऽवधिभूते त्वयि
फलन्तीत्यर्थः ॥ द्युपतयो विदुरन्तमनन्त ते न च भवान्न गिरः श्रुतिमौलयः ॥ त्वयि फलन्ति यतो नम इत्यतो जय जयेति भजे तव तत्पदम् ॥ २८ ॥
॥ ४१ ॥ ४२ ॥ इत्यशेषसमाम्नायपुराणोपनिषद्रस इति, सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४३ ॥ ब्रह्मदायादेति ब्रह्मैव दायमिवायत्नप्राप्यमस्ति सेवत
इति तथा । ब्रह्मपुत्रेति वा ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥

१ अवगमं ज्ञानम् । २ स होवाच यदूर्ध्वमिति । स याज्ञवल्क्यः । ३ आत्मानुशासनं आत्मनो भगवतः सर्वन्ध्युपदेशम् । ४ समुद्धृतः प्रकटितः । ५ ब्रह्मन्ब्रह्मण्यनिर्देश्ये इत्यत्र पूर्वपक्षोक्तं पदार्थस्यैव वाक्यार्थत्वमिति नियम शङ्कते—कथं तर्हीति । पदस्य लक्षणया वृत्त्या शक्त्या वा योऽर्थः स वाक्येन बोधयितुं शक्यते । यः कयापि वृत्त्या पदेन न बोध्यः स कथं वाक्येन बोधनीय इत्यर्थः । ६ विदितात् ज्ञानविषयादन्यद्भिन्नम् । अथो अपि अविदितादज्ञानविषयादपि अधि अन्यदित्यर्थः । ७ धर्माधर्मास्पृष्टम् । कृताकृतात्कार्यकारणाद्भिन्नं यदित्यर्थः । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदेति श्रुतिशेषः ।

पूर्णः कृतकृत्यः । श्रुतधरः श्रुतमर्थं मनसि धारयन् । वीरव्रतो नैष्ठिकः ॥ ४५ ॥ नम इति श्रीकृष्णावतारतया नारायणं नमस्यति । उक्तं हि—'एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' इति ॥ ४६ ॥ साक्षात्पितुरिति । योनिव्यवधानं विना जनकस्य अग्निमन्थनावसरे कथंचिदरणौ रेतः पतितं ममन्थ व्यासस्तदैव तत उत्पन्नः शुक इति हि वदन्ति ॥४७॥४८॥४९॥ समस्तवेदस्तुत्यर्थं संगृह्यानुस्मारयति—योऽस्योत्प्रेक्षक इति । योऽस्य विश्वस्योत्प्रेक्षकः । एवमनुशायिनां समस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादि प्रापणीयमित्यालोचक इत्यर्थः । अनेन निमित्तत्वमुक्तम् । एवमालोच्यास्यादिमध्यनिधने आदिर्जन्म मध्यः पालनं निधनमन्तः एतेषु कर्मसु यो वर्तते । अनेनोपादानत्वमुक्तम् । ननु प्रकृतिपुरुषयोरुपादाननिमित्तत्वे प्रसिद्धे, सत्यम्, तयोरपि तत एवोद्भूतत्वान्मूलकारणं स एवेत्याह—योऽव्यक्तजीवेश्वर इति । प्रवेशनियमने दर्शयति—य इति । पूर्वोक्तप्रकारेणेदं सृष्ट्वा यदर्थमेतत्सृष्टं तेन ऋषिणा सृष्टे कार्येऽहमिति दर्शनात् ऋषिर्जीवस्तेन सहा-

॥ श्रीशुक उवाच ॥ एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ४५ ॥
॥ नारद उवाच ॥ नमस्तस्मै भगवते कृष्णायामलकीर्तये ॥ यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥४६॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७ ॥ सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥ इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया ॥ यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥४९॥ योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनु प्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ॥ यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥५०॥ इति श्रीम०म०पु०द०उ० नारदनारायणसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ॥८७॥

नुप्रविष्टः पुरः शरीराणि तस्य भोगायतनानि चक्रे ताः पुरः शास्ति तस्य भोगं ददत्परिपालयति । उपासकस्य च कैवल्यरूपो भवतीत्याह—यं संपद्येति । यं संपद्य प्राप्यानुशयी अन्वनु दण्डवत्प्रणामैश्चरणमूले शेते इति तथा स जीवोऽजां कार्यकारणरूपामविद्यां त्यजति । ननु ब्रह्मसंपन्नस्यापि जीवस्य तत्संबन्धो दृश्यतेऽत आह—सुप्तः कुलायं यथेति । अयं भावः—यथा सुप्तं शरीरवन्तमन्ये पश्यन्ति स तु नात्मानं तथा पश्यति एवं जीवन्मुक्तमप्यन्ये देहवन्तं पश्यन्ति स तु न किंचित्पश्यतीति तं हरिमजस्रमनवरतं ध्यायेत् । किमित्यत आह—अभयं न भयं यस्माद्भयनिवर्तकमित्यर्थः । कुत एतत् । कैवल्यनिरस्तयोनिं कैवल्येनाप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिर्मूलकारणं माया येन तम् ॥ सर्वश्रुतिशिरोरत्ननीराजितपदाम्बुजम् ॥ भोगयोगप्रदं वन्दे माधवं कर्मिनम्रयोः ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायां सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ॥

---

१ अनुशायिना जीवानाम् । २ अव्यक्तजीवयोः प्रकृतिपुरुषयोरीश्वरो नियन्ता । ३ अभवाय मोक्षाय । ४ हे राजन्, नोऽस्मान्प्रति यद्यथा त्वया प्रश्नः 'अनिर्देश्ये निर्गुणे ब्रह्मणि श्रुतयः कथं चरन्तीत्येवंरूपः' कृतस्तथा तदुत्तरतया इति पूर्वोक्तप्रकारेणैतच्छ्रुतिगीतं वर्णितम्, यथा येन वर्णितप्रकारेणानिर्देश्ये निर्गुणेऽपि ब्रह्मणि मनश्चरेदित्यन्वयः । यः प्रश्नः कृतस्तदुत्तरतया यथा अनिर्देश्ये निर्गुणे ब्रह्मणि मनश्चरेत्तथेत्येतच्छ्रुतिगतं मया वर्णितमिति योजनां विधाय श्रुतयः कथं चरन्तीति प्रश्नेऽपि मनश्चरेदित्युत्तरं तु 'मन्नः पूर्वरूपं वागुत्तररूपम्' इति श्रुतेरभेदाभिप्रायेणेति व्याचख्युर्बाल० ।

अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ॥ ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥१॥ हरिर्भजतां मुक्तिद इत्युक्तमभयं ध्यायेदजस्रं हरिमिति तत्र शङ्कते—देवासुरेति । अशिवमवधीरितभोगम् । भोगा भोगिनः । लक्ष्म्याः पतिं सर्वभोगयुक्तम् ॥१॥२॥ अन्योन्योपमर्देन तमसस्त्रैविध्यात्त्रिलिङ्गः । त्रिलिङ्गत्वमाह—वैकारिक इति । अहमहंकार इति ॥३॥ विकारा मनइन्द्रियभूतरूपाः । षोडशेतीन्द्रियदेवानामभेदविवक्षया । कंचन यत्किंचिद्विकारोपाधिकं भजन्नुपाध्यनुरूपाणां विभूतीनां स्वरूपं प्राप्नोतीति ॥४॥ उपद्रष्टा साक्षी सन् । यतः सर्वदृक् सर्वं पश्यति । अतः प्रकृतेः पर इति । अत्रेदं तत्त्वम्—"वस्तुनो गुणसंबन्धे रूपद्वयमिहेष्यते ॥ तद्धर्मायोगयोगाभ्यां विम्बवत्प्रतिविम्बवत् ॥ गुणाः सत्त्वादयः शान्तघोरमूढाः स्वभावतः । विष्णुब्रह्मशिवानां च गुणयन्तृस्वरूपिणाम् ॥ नातिभेदो भवेद्भेदो गुणधर्मैरिहांशतः ॥ सत्त्वस्य शान्त्या नो जातु विष्णोर्विक्षेपमूढते ॥ रजस्तमोगुणाभ्यां तु भवेतां ब्रह्मरुद्रयोः ॥ गुणोपमर्दतो भूयस्तदंशानां च भिन्नता ॥ अतः समग्रसत्त्वस्य विष्णोर्मोक्षकरी मतिः । अंशतो भूतिहेतुश्च तथानन्दमयी स्वतः ॥ अंशतस्तारतम्येन ब्रह्मरुद्रादिसेविनाम् ॥ विभूतयो भवन्त्येव

॥ राजोवाच ॥ देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ॥ प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥ १ ॥
एतद्वेदितुमिच्छामः संदेहोऽत्र महान्हि नः ॥ विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥२॥ ॥ श्रीशुक उवाच ॥
शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥ ततो विकारा अभवन्
षोडशामीषु कंचन ॥ उपधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ॥
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ५ ॥ निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ॥ शृण्वन्भगवतो धर्मान-
पृच्छदिदमच्युतम् ॥ ६ ॥ स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ॥ नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः
कुले ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ॥ ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुः-
खितम् ॥ ८ ॥ स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ॥ मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥ ॥

शनैर्मोक्षोऽप्यनंशतः ॥" इदमेवाभिप्रेत्य तत्र तत्रोच्यते 'श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इति । तथा 'सत्त्वं यस्य प्रिया मूर्तिः' इति । तथा 'सत्त्वं तत्तीर्थसाधनम्' इति तथा 'त्रयाणामेकभावानां यो न पश्यति वै भिदाम्' इति । तथा 'न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते' इत्यादि । एवं च सति न किंचिदसमञ्जसम् । तत्तद्भक्तानां तु कलहो मोहमात्रमिति ॥५॥६॥७॥ यस्याहमनुगृह्णामीति । अयमर्थः—यो विषयान्परिजिहीर्षुरपि कथंचिद्विद्यमानेषु विषयेषु सज्जते क्लिश्यति च तस्य विषयापहार एवानुग्रह इति । यथाश्रुतत्वे ध्रुवादीनामैश्वर्यविरोधात् अथवा प्रथमं विभूतीः कामानुरूपा दत्त्वा शनैर्विषयभोगावसाने तस्य निर्वेदमुत्पाद्य हरिष्यामि परमानुग्रहं कर्तुमिति । तदुक्तं भगवतैव—'न मय्यावेशितधियां कामः कामाय कल्पते' इति । दुःखदुःखितमिति । दुःखादनु पुनर्दुःखितमिव प्रतीयमानमित्यर्थः ॥८॥ स पुनर्बन्धूनामाग्रहेण धनेहया प्रवृत्तोऽपि मदनुग्रहेण यदा निष्फलोद्यमो निर्विण्णः स्यात्तदा मदनुग्रहमिति ममासाधारणमनुग्रहम् ॥९॥

१ प्रभ्वोरिति कर्मणि षष्ठी ।

तमेवाह—तद्ब्रह्मेति । अतः पश्चादपि मोक्षमरोचयन् । अत्यासक्तो जन इत्यर्थः ॥ १० ॥ ११ ॥ एतदेवेतिहासेन स्फुटयितुमाह—शापप्रसादयोरिति । ब्रह्मा चेत्यन्वयः ॥ १२ ॥ १३ ॥ शकुनेः पुत्रः ॥ १४ ॥ १५ ॥ सुसंकटमाप कैलासोत्पाटनं पुरपालनं च ॥ १६ ॥ स्वगात्रत उपाधावत् । कथम् । आत्मक्रव्येण स्वमांसेन जुह्वान इति ॥ १७ ॥ अवृश्चत् छेत्तुमुद्यतः ॥ १८ ॥ मूर्तिमानग्निरिव देदीप्यमानः वयमधुनातना यथा किंचिद्दुःखेन मर्तुकामं वारयाम-

तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ॥ अतो मां सुदुराराध्यं हित्वाऽन्यान्भजते जनः ॥ १० ॥ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ॥ मत्ताः प्रमत्ता वरदान्विस्मरन्त्यवजानते ॥११॥ ॥ श्रीशुक उवाच ॥ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ॥ सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ १२॥ अत्र चोदाहरन्तीममितिहासं पुरातनम् ॥ वृकासुराय गिरिशो वरं दत्त्वाप संकटम् ॥ १३ ॥ वृको नामासुरः पुत्रः शकुनेः पथि नारदम् ॥ दृष्ट्वाशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥ स आह देवं गिरिशमुपाधावाशु सिध्यसि ॥ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥ दशास्यबाणयोस्तुष्टः स्तुवतोर्बन्दिनोरिव ॥ ऐश्वर्यमतुलं दत्त्वा तत आप सुसंकटम् ॥ १६ ॥ इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः ॥ केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥ १७ ॥ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ॥ शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥१८॥ तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात् ॥ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९ ॥ तमाह चाङ्गालमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम् ॥ प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयात्मा भृशमर्द्यते वृथा ॥ २० ॥ देवं स वव्रे पापीयान्वरं भूतभयावहम् ॥ यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥२१॥ तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत ॥ ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥२२॥ (इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः) ॥ स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥ २३ ॥ ॥

स्तद्वदिति । स च उपस्कृताकृतिः परिपूर्णदेहोऽभवत् । तं न्यवारयदेवमाह च ॥ १९ ॥ तोयेनापि भजतां प्रीतः स्याम्, त्वया तु देहो वृथा पीड्यत इति ॥ २० ॥ २१ ॥ दातुमनर्हमपि दत्तवान् । सर्पाय क्षीरमिव ॥ २२ ॥ २३ ॥ ॥ ॥ ॥ ॥

१ स्वगात्रत उपाधावत् स्वाङ्गैराराधितवानिति भावः । २ उपाधाव सम्यगाराधय । ३ केदाराख्ये शिवक्षेत्रे । ४ देवोपलब्धिर्देवदर्शनम् । ५ 'निकामं' इति पाठः । तत्र यथेष्टमित्यर्थः । ६ 'देवात्स वव्रे' इति पाठे सद्वरदादपि । ७ इत्युक्त इत्यर्धं क्वाचित्कम् । ८ 'सोऽबिभेत्' इति पाठः साधुः । अबिभ्यदिति पाठस्त्वार्षः ।

उपसृष्टोऽनुगतः सन् । उदगादधावत् । उदगुत्तरः ॥ २४ ॥ वैकुण्ठं श्वेतद्वीपम् ॥ २५ ॥ २६ ॥ तं वृकासुरम् । तथाव्यसनं तादृग्व्यसनं यस्य तम् । वृजिनार्दनो दुःखहन्ता । दूरत एव दृष्ट्वा मेखलादिभिरुपलक्षितः प्रत्युदियात् संमुखमागतः ॥ २७ ॥ २८ ॥ व्यक्तं निश्चितम् । किं किमर्थम् । आत्मा देहः सर्वपुरुषार्थहेतुः । अतो मा पीडयेति ॥ २९ ॥ प्रायशः पुम्भिर्धूर्तैर्भवान् स्वार्थान्समीहते साधयितुमिच्छति । अथवा जनः पुम्भिः सहायैः स्वकार्याणि

तेनोपसृष्टः संत्रस्तः पराधावत्सवेपथुः ॥ यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥ २४ ॥ अजानन्तः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ॥ ततो वैकुण्ठमगमद्भास्वरं तमसः परम् ॥२५॥ यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ॥ शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥ २६ ॥ तं तथाव्यसनं दृष्ट्वा भगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया ॥ २७ ॥ मेखलाजिनदण्डाक्षैस्तेजसाग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥ ॥ श्रीभगवानुवाच ॥ शाकुनेय भवान्व्यक्तं श्रान्तः किं दूरमागतः ॥ क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥ २९ ॥ यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ॥ भण्यतां प्रायशः पुंम्भिर्धूर्तैः स्वार्थान्समीहते ॥ ३० ॥ ॥श्रीशुक उवाच ॥ एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम् ॥३१॥ ॥श्रीभगवानुवाच॥ एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ॥ यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥३२॥ यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ ॥ तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥३३॥ यद्यसत्यं वचः शम्भोः कथंचिद्दानवर्षभ ॥ तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥ ३४ ॥ इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः ॥ भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्न्यधात् ॥३५॥ अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ॥ जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ॥३६॥ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ॥ देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥३७॥ मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः ॥ अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३८ ॥ ॥

साधयन्त्यतो नः कथ्यतामिति ॥ ३० ॥ ३१ ॥ पैशाच्यं पिशाचानामिव वृत्तिम् ॥ ३२ ॥ ३३ ॥ यद्यथा । वक्ता वदिष्यति ॥ ३४ ॥ चित्रैर्भ्रामकैः सुपेशलैरतिरम्यैः । भिन्नधीर्भ्रंशितमतिः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ॥ ॥

१ व्यसनं शिवहननार्थं निष्फल उद्योगः पापं वा। तथा व्यसनं विपत्तिर्यस्य तं रुद्रं दूराद्दृष्ट्वेत्यादि बालबोधिनी। २ प्रथमं शिवाराधने नारदोपदेशग्रहणादिति भावः। ३ धूर्तैरित्यस्यायमर्थः। ४ 'पराधावन्' इति पाठः। ५ आशिषं ब्रुवन् स्वं नमस्कारयामास। यद्वा ब्रह्मदर्शिनामस्माकं सर्वभूतान्यभिवाद्यान्येव। भवांस्तु शकुनेः पुत्रो ज्ञानी तपस्वी मम बटोरभिवाद्य एवेति द्योतयामासेति चक्रवर्ती। ६ 'पुम्भिर्भवान्' इति पाठः। ७ 'अङ्गापि' इति पाठः।

किमु वक्तव्यं विश्वेशे त्वयि कृतागस्कः कृतापराध इति ॥ ३९ ॥ अव्याकृतशक्त्युदन्वतो वाङ्मनसागोचरशक्तिसमुद्रस्य । गिरित्रमोक्षं शिवमोचनरूपं चरितम् । संसृतिभिर्नानायोनिसंचारैः ॥ ४० ॥ भक्तसंकटमालोक्य कृपापूर्णहृदम्बुजः ॥ गिरित्रं चित्रवाक्यात्तु मोक्षयामास केशवः ॥ १ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे भावार्थदीपिकायां टीकायामष्टाशीतितमोऽध्यायः ॥८८॥ ॥ नवाशीतितमे देवः को महानिति संशये ॥ परीक्ष्य विष्णोरुत्कर्षं

हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ॥ क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ ॥ ३९ ॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ॥ गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे रुद्रमोक्षणं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ श्रीशुक उवाच ॥ सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ॥ वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥ तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ॥ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥ २ ॥ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया ॥ तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥ ३ ॥ स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ॥ अशीशमद्यथा वह्निं स्वयोन्या वारिणात्मभूः ॥ ४ ॥ ततः कैलासमगमत्स तं देवो महेश्वरः ॥ परिरब्धुं समारेभ उत्थाय भ्रातरं मुदा ॥ ५ ॥ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ॥ शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥ पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ॥ अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ ७ ॥ शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ॥ तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ॥ ८ ॥ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ॥ आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ॥ अजानतामागतान्वः क्षन्तुमर्हथ नः प्रभो ॥ ९ ॥ अतीव कोमलौ तात चरणौ ते महामुने ॥ इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना ॥ १० ॥ पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ॥ पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥ ११ ॥ ॥ ॥

मुनिभ्योऽवर्णयद्भृगुः ॥ १ ॥ इतिहासान्तरमाह—सरस्वत्या इति ॥ १ ॥ २ ॥ ३ ॥ स्वयोन्या स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेन स्वकार्येणेत्यर्थः । तेन यथा कश्चिद्वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ तीर्थकारिणा तीर्थत्वनिमित्तेन ॥ ११ ॥

---

१ 'अभि' अभयं यथा स्यात्तथा । २ सत्त्वं महत्त्वाख्यमुत्कृष्टत्वं तस्य परीक्षया यतो न चक्रे ततस्तस्मै चुक्रोध । ३ आत्मजायात्मजं हन्तुमुत्थितं मन्युमित्यन्वयः । ४ 'आत्मनः' इति पाठः । ५ भ्रातरं भ्रातृत्वेनाङ्गीकृतम् । ६ स च भृगुस्त्वमुत्पथगः स्मशानवासास्थ्याविधारणेन पाषण्डमार्गं प्राप्तोऽसीति वदंस्तत्परिरम्भणं नैच्छत् । ७ मद्धृदयं त्वतीव कर्कशमित्यर्थतोऽवगन्तव्यम् । 'वज्रकर्कशमद्वक्षःस्पर्शेन परिपीडितौ' इत्यर्धमधिकं क्वचित् । ८ मर्दयन्नाहेति शेषः । ९ पुत्रोऽयमिति भावेनेत्यर्थः ।

॥ १२ ॥ तस्य मन्द्रया गम्भीरया गिरा निर्वृतस्तूष्णीं बभूवेति शेषः ॥ १३ ॥ १४ ॥ विस्मिता अपराधातिरेकेऽपि निर्विकारित्वेन भूयांसं श्रद्दधुः महत्तमं निश्चितवन्तः । यतो यस्मिन् ॥ १५ ॥ वैराग्यं च चतुर्विधमिति पाठे तच्चातुर्विध्यमेवं द्रष्टव्यम् । विषयांस्त्यक्तुमशक्नुवतोऽपि संमानेच्छात्याग आद्यं वैराग्यम् । विषयाणां मध्ये लवणादिव्यतिरेकेणापि वृत्तिर्द्वितीयम् । तथावृत्तावपि मनसि रागशैथिल्येन बाह्येन्द्रियैरेव विषयसेवनं तृतीयम् । तत्राप्यौदासीन्यं चतुर्थम् । यथाहुः—'वैराग्यमाद्यं यतमानसंज्ञं क्वचिद्विरागो व्यतिरेकसंज्ञम् ॥ एकेन्द्रियाख्यं हृदि रागसौक्ष्म्यं तस्याप्यभावस्तु वशीकृताख्यम् ॥' इति

अद्याहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम्[1] ॥ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १२ ॥ ॥श्रीशुक उवाच ॥ एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ॥ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १३ ॥ पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १४ ॥ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ॥ भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥१५॥ धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम् ॥ ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥ मुनीनां न्यस्तदण्डानां[2] शान्तानां समचेतसाम् ॥ अकिंचनानां[3] साधूनां यमाहुः परमां गतिम् ॥१७॥ सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥१८॥ त्रिविधाऽऽकृतयस्तस्य राक्षसा असुराः सुराः ॥ गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥१९॥ ॥श्रीशुक उवाच ॥ एवं सारस्वता विप्रा नृणां संशयनुत्तये ॥ पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २० ॥ ॥ सूत उवाच ॥ इत्येतन्मुनितनयास्यपद्मगन्धपीयूषं भवभयभित्परस्य पुंसः ॥ सुश्लोकं[4] श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्व[5]भ्रमणपरिश्रमं[6] जहाति ॥२१॥ ॥श्रीशुक उवाच ॥ ॥एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ॥ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥२२॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ॥ इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥२३॥ ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ॥ क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः ॥ २४ ॥ ॥

॥ १६ ॥ १७ ॥ १८ ॥ तस्य भगवत एव यद्यपि विविधा आकृतयः । तत्तासु सत्त्वमेव तीर्थसाधनं पुरुषार्थहेतुः ॥ १९ ॥ इत्थं निश्चित्य सरस्वतीतीरवासिनो विप्रा हरिसेवया मुक्तिं प्रापुरिति ॥ २० ॥ व्यासनन्दनस्य मुखपङ्कजादुद्गतं गन्धयुक्तपीयूषतुल्यं हरेः प्रशस्तं यशो यः संसारी सेवते स मुक्तो भवतीति ॥ २१ ॥ स चोक्तलक्षणो भगवान् कृष्ण एवेति दर्शयितुमाख्यानान्तरमाह—एकदेति ॥ २२ ॥ २३ ॥ २४ ॥ ॥ ॥



१ एकान्तभाजनं नियत आश्रयः । तत्र हेतुः—वत्स्यतीति । भूतिर्लक्ष्मीः । २ न्यस्तदण्डानां त्यक्तप्राणिद्रोहाणाम् । ३ अकिञ्चनानां सर्वतो विरक्तानाम् । ४ 'सुश्लोक्यम्' इति पाठस्तत्र यश इति शेषः । ५ पान्थः संसारमार्गे वर्तमानः । ६ जन्ममरणादिसंसारपरिभ्रमणजनितं श्रमम् ।

॥ २५ ॥ 'ब्रह्मद्विप' इत्यादिकां तां गाथां वाक्यम्। मयि न कश्चिद्दोषोऽतो राजदोषेणैव मत्पुत्रा म्रियन्त इति वारंवारं चुक्रोशेत्यर्थः ॥ २६ ॥ २७ ॥ ब्रह्मन् किंस्विदिति। किमर्थं वृथा रोदिषि। यतस्त्वन्निवासे धनुर्धरमात्रोऽपि राजन्यबन्धुरपि नास्ति, ब्रह्मण्यस्य तु का वार्ता। एते तु सत्रे यागे इव ब्राह्मणा मिलिता भवितुमर्हन्तीत्यर्थः ॥ २८ ॥ तदेवाह—धनदारात्मजापृक्ता यत्रेति। धनादिभिर्वियुक्ताः सन्तो यत्र येषु जीवत्सु राजन्येषु शोचन्ति ते जीवन्ति

हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् ॥ प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च। विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥ तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके ॥ परेते नवमे बाले ब्राह्मणं समभाषत ॥२७॥ किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ॥ राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते ॥२८॥ धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः॥ ते वै राजन्यवेषेण नटा जीवन्त्यसुंभराः ॥२९॥ अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥३०॥ ॥ ब्राह्मण उवाच ॥ ॥ संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ॥ अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥ तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ॥ चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥ ॥ अर्जुन उवाच ॥ नाहं संकर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च ॥ अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥ ३३ ॥ माऽवमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् ॥ मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥ ३४ ॥ एवं विश्रम्भितो[1] विप्रः फाल्गुनेन परंतप ॥ जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन्[2] ॥ ३५ ॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ॥ पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ॥ दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे ॥ ३७ ॥ न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः[3] ॥ तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ॥ सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥ ॥

केवलं जीविकां संपादयन्ति ॥ २९ ॥ हतकल्मष इति। अग्निप्रवेशेन ब्राह्मणविलापश्रवणपातकात्पूतो भवेयमित्यर्थः। अहतकल्मष इति वा ॥ ३० ॥ ॥ ३१ ॥ न श्रद्दध्महे न संप्रतीमः ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवं प्रौढिवादैर्विश्रम्भितो विश्वासं प्रापितः। निशामयन् शृण्वन् ॥ ३५ ॥ ३६ ॥ ब्राह्मणोपेक्षकत्वेन कृष्णावज्ञया महेश्वरं नमस्कृत्य ॥ ३७ ॥ न्यरुणदावृतवान्। तदेवाह—तिर्यगूर्ध्वमिति ॥३८॥ अदर्शनमापेदे देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९ ॥

[1] विश्रम्भितो विश्वासं प्रापितः। [2] निशामयन्पश्यन्, शृण्वन्निति यावत्। [3] ब्रह्मास्त्राद्यभिमन्त्रितैः शरैः।

॥ ४० ॥ यस्य प्रजाः । तत्तत्र ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रत्युक्तो वारितः । उपपत्तिभिः प्रतिषेधं कुर्वता ॥४५॥ मावज्ञ मावजानीहि । ये निन्दन्ति त एव मनुष्या नः कीर्तिं स्थापयिष्यन्ति निश्चलां करिष्यन्ति । पाठान्तरं तु छन्दोभङ्गभयादागन्तुकमिति ॥ ४६ ॥ ४७ ॥ सप्त सप्तसंख्या गिरयो येषु द्वीपेषु तान् ॥ ४८ ॥ ४९ ॥ ५० ॥ कृतमिति प्रकृतिपरिणामरूपं नालोकाभावमात्रम् ॥ ५१ ॥ चक्रानुपथेन चक्रमनुगतेन द्वारेण । तत्तमःपरं तस्मात्त-

तदाह विप्रो विजयं विनिन्दन्कृष्णसंनिधौ ॥ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ४० ॥ न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ॥ यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ ४१ ॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ॥ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ॥ ययौ संयमनीमाशु यत्रास्ते भगवान्यमः ॥ ४३ ॥ विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् ॥ आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना ॥ ये ते नः कीर्तिं विमलां मनुष्याः स्थापयिष्यन्ति ॥ ४६ ॥ इति संभाष्य भगवानर्जुनेन सहेश्वरः ॥ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥ सप्तद्वीपान्सप्तसिन्धून्सप्तसप्तगिरीनथ ॥ लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥ तत्राश्वाः शैब्यसुग्रीवमेघपुष्पवलाहकाः ॥ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥ तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥ ५० ॥ तमः सुघोरं गहनं कृतं महद्विदारयद्भूरितरेण रोचिषा ॥ मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥ द्वारेण चक्रानुपथेन तत्तमःपरं परं ज्योतिरनन्तपारम् ॥ समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षो पिदधेऽक्षिणी उभे ॥ ५२ ॥ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभूषणम् ॥ तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ५३ ॥

मसः परं दूरे वर्तमानं परं श्रेष्ठं भागवतं ज्योतिः समश्नुवानं व्याप्नुवत्प्रसमीक्ष्य प्रताडिताक्षो नेत्रे न्यमीलयदिति ॥ ५२ ॥ एजन्त उच्चलन्तो बृहन्तो महान्त ऊर्मयो भूषणं यस्य तत् । तत्र सलिले भवनं महाकालपुरम् । द्युमत्तमं द्युतिमत्सु श्रेष्ठम् ॥ ५३ ॥ ॥ ॥ ॥

१ एतदध्याहारलभ्यम्। २ 'ये ते हि कीर्तिं विमलां मनुष्याः स्थापयन्ति नः' इत्येवंरूपम् । 'एतेन कीर्तिं विमलां मनुष्याः स्थापयन्ति ते' इति तोप० । ३ तदा ततः । ४ यस्य यम् । ५ दैवेनेश्वरेच्छयोपसृष्टं कृतम् । ६ अचक्षाणः अपश्यन् । ७ 'अनिस्तीर्णं प्रतिश्रुतम्' इति पाठः । ८ सप्तावरणभेदेन तमसः प्रकृतेः परं परपारभूतं तत् वेदान्तादिप्रसिद्धं पर ज्योतिः । ९ 'भीषणम्' इति पाठः ।

सहस्रं मूर्ध्नि भवाः फणास्तासु मणयस्तेषां द्युतिभिः। द्विसहस्रनेत्रैरूर्जितं स्फटिकगिरिसंकाशम्। शितिकण्ठजिह्वम्, कण्ठाश्च जिह्वाश्च कण्ठजिह्वाः शितयो नीलाः
कण्ठजिह्वा यस्य तम् ॥५४॥ तद्भोगसुखासनं तस्यानन्तस्य भोगो देहः सुखकरमासनं यस्य तम् ॥५५॥ महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां प्रभा
तया परिक्षिप्ताः सर्वतः स्फुरन्तः सहस्रमपरिमिताः कुन्तला यस्य तम् ॥५६॥ कीर्त्यजया कीर्तिसहितया अजया। अखिलर्द्धिभिरणिमादिविभूतिभिर्मूर्तिधराभिः

तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ॥ विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिक-
ण्ठजिह्वम् ॥ ५४ ॥ ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ॥ सान्द्राम्बुदाभं सुपिशङ्गवाससं
प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५५ ॥ महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ॥ प्रलम्बचार्वष्टभुजं
सकौस्तुभं श्रीवत्सलक्ष्मं[1] वनमालया वृतम् ॥ ५६ ॥ सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ॥
पुष्ट्या श्रिया कीर्त्यजयाखिलर्द्धिभिर्निषेव्यमानं परमेष्ठिनां[2] पतिम् ॥ ५७ ॥ ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च
तद्दर्शनजातसाध्वसः ॥ तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥५८॥ द्विजात्मजा मे युवयोर्दिदृ-
क्षुणा मयोपनीता भुवि धर्मगुप्तये ॥ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमन्ति मे ॥ ५९ ॥ पूर्णकामावपि
युवां नरनारायणावृषी ॥ धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम्[3] ॥ ६० ॥ इत्यादिष्टौ भगवता तौ कृष्णौ[4] परमे-
ष्ठिना ॥ ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥ न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम् ॥ विप्राय
ददतुः पुत्रान् यथारूपं यथावयः[5] ॥ ६२ ॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ॥ यत्किंचित्पौरुषं पुंसां मेने
कृष्णानुकम्पितम् ॥ ६३ ॥ इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ॥ बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः
॥६४॥ प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ॥ यथाकालं यथैवेन्द्रो भगवान् श्रैष्ठ्यमास्थितः ॥६५॥ हत्वा नृपा-
नधर्मिष्ठान् घातयित्वार्जुनादिभिः ॥ अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः[6] ॥ ६६ ॥ ॥ इति श्रीमद्भागवते
महापुराणे दशमस्कन्धे उत्तरार्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ छ ॥ ॥ छ ॥

॥५७॥ ऊर्जया ऊर्जितया गिरा ॥५८॥ मे कलावतीर्णाविति संबोधनम्। शीघ्रं मे अन्ति सकाशमितमागच्छतम् ॥५९॥ आचरतामाचरतम्। इदं भारतयुद्धा-
त्पूर्वमेव कृतमपि श्रैष्ठ्यकथनप्रस्तावेनात्रोक्तम् ॥६०॥६१॥६२॥६३॥६४॥६५॥६६॥ इति श्रीमद्भा०म०पु०द०उ०भा०दी०टी० एकोननवतितमोऽध्यायः॥८९॥

१ 'लक्ष्म्या' इति पाठे श्रीवत्सस्य लक्ष्म्या शोभया वनमालया चावृतम्। २ परमेष्ठिना द्विपरार्धान्ते मुक्तानां ब्रह्मणा तत्रागतानां पतिम्। ३ लोकाः संगृह्यन्ते धर्मे प्रवर्त्यन्ते यस्मिन्कर्मणि तथेति
क्रियाविशेषणम्। कचित्तु 'लोकसग्रहात्' इति पाठः। ४ अत्रार्जुनस्य कृष्णस्यान्येनोक्तिः प्रायश्छत्रिन्यायेन साहचर्याज्ज्ञेया। ५ 'तथा प्रभू' इति पाठः। ६ युधिष्ठिरादिभिः।
७ इदं त्वर्जुनवञ्चनार्थमुक्तम्। कृष्णस्य पूर्णावतारत्वात्।

चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः ॥ यदुवंशप्रसूतानामानन्त्यं च सकारणम् ॥ १ ॥ श्रीकृष्णविभूतिं समासेन दर्शयति—सुखं स्वपुर्यामिति । सर्वसं-
पदादिविशिष्टायाम् । श्रियःपतिः षोडशसहस्रपत्नीनामेकवल्लभः संस्तासां गेहेषु रेमे इत्यन्वयः ॥१॥२॥३॥४॥५॥ गेहविशेषणं प्रोत्फुल्लेत्यादिश्लोकेन ॥ ६ ॥
तथा ह्रदिनीषु चाम्भो विगाह्य विजहार । महानुदयो वैभवं यस्य सः । योषितां कुचकुङ्कुमैर्लिप्ताङ्गः यतस्ताभिः परिरब्धः ॥७॥ सूतमागधवन्दिभिश्चोपगीयमानः

॥ श्रीशुक उवाच ॥ सुखं स्वपुर्यां निवसन्द्वारकायां श्रियःपतिः ॥ सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥
स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ॥ कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥ नित्यं संकुलमा-
र्गायां मदच्युद्भिर्मतङ्गजैः ॥ स्वलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ॥
निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥ रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौ तद्गेहेषु
महर्द्धिषु ॥ ५ ॥ प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ॥ वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥ विजहार
विगाह्याम्भो ह्रदिनीषु महोदयः ॥ कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥ ७ ॥ उपगीयमानो गन्धर्वैर्मृदङ्गप-
णवानकान् ॥ वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः ॥ ८ ॥ सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स रेचकैः ॥
प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतबृहत्कबरप्र-
सूनाः ॥ कान्तं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥ कृष्णस्तु तत्स्तनविषज्जितकु-
ङ्कुमस्रक् क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ॥ सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः
॥ ११ ॥ नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ॥ क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२ ॥ कृष्ण-
स्यैवं विहरतो गत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १३ ॥ ऊचुर्मुकुन्दैकधियो-
ऽगिर उन्मत्तवज्जडम् ॥ चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु ॥ १४ ॥ ॥ ॥

॥८॥९॥ ताः क्लिन्नवस्त्राः अत एव विवृतोरुकुचप्रदेशाः । उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः । जातेन स्मरेण य उत्सवस्तेन लसन्ति वदनानि
यासां ताः ॥१०॥ तासां स्तनेभ्यो विषज्जितकुङ्कुमा स्रग्यस्य । क्रीडाया अभिषङ्गेणाभिनिवेशेन धुतः कम्पितः कुन्तलवृन्दबन्धो यस्य सः ॥ ११ ॥ १२ ॥ १३ ॥
मुकुन्दैकधियः समाहिता इव क्षणमगिरः सत्यः पुनस्तमेवेशं चिन्तयन्त्यो जडं यथा भवति तथा यानि वाक्यानि ऊचुस्तानि मे मत्तो गदतः शृण्वित्यर्थः ॥१४॥



१ अलङ्कृतैरिति गजादिभिरप्यन्वेति । २ वासितान्यमलतोयानि गृहारामगतवाप्यादिसंबन्धीनि येषु । ३ महानुदयो वैभवं यस्य । ४ रेचकैश्चर्मादिमयजलक्षेपणयन्त्रैः । ५ तत्र कदाचिदु-
न्मत्तवद्भूतबुद्धित्वाद्धत्तूरादिविक्षिप्तचित्ता इवापरोक्षमप्यरविन्दाक्षं परोक्षतया चिन्तयन्त इति चक्र० । तत्सांनिध्याभावदशायां तमेव चिन्तयन्त्य इति वाल० ।

ईश्वरः श्रीकृष्णः स्वपिति । त्वं तु निद्राभङ्गं कुर्वती विलपसि न शेषे न स्वपिषि तदनुचितमित्यर्थः । अथवा नापराधस्तवापीत्याशयेनाहुः—नलिननयनस्य भगवतो हासेन सहितमुदारं यल्लीलेक्षितं तेन कच्चिद्गाढं निर्विद्धचेतास्त्वमिति ॥ १५ ॥ नक्तं रात्रावदृष्टबन्धुः सती रोरवीषि । किं वा नैतावदपि तु वयमिव स्पृहयसे ॥ १६ ॥ अलब्धनिद्रः सदा निष्टनसे क्रोशसि । किं वा अस्माभिः प्राप्तां दशां त्वमपि गतोऽसि । अहो कष्टं यथा वयं संभोगेन मुकुन्दापहृतकुचकुङ्कुमादिलाञ्छनास्तथा त्वमपि यतोऽपहृतश्रीकौस्तुभादिलाञ्छनो लक्ष्यसे ॥ १७ ॥ मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचिन्तया कच्चित्त्वं क्षीणोऽसि वयमिव स्थगितगीस्तनुवाक्[2] । हे इन्दो, नस्तथैवोपलक्ष्यसे ॥ १८ ॥ अप्रियाचरणं विना स्मरोदीरणेन व्यथाजननं मलयानिल, तवानुचितमित्यर्थः

॥ महिष्य ऊचुः ॥ कुररि विपलसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः[3] ॥ वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ॥ दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥ भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ॥ किं वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥ १७ ॥ त्वं यक्ष्मणा बलवतासि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ॥ कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १८ ॥ किं त्वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ॥ गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥ मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः ॥ अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ २० ॥ प्रियरावपदानि भाषसेऽमृतसंजीविकयाऽनया गिरा ॥ करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ २१ ॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ॥ अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥

॥ १९ ॥ मेघेति । आतपार्तिहरणादिसाम्यात्त्वं यादवेन्द्रस्य नूनं दयितः सखासि, अतो भवांस्तं ध्यायति । ध्याने लिङ्गान्याहुः—अत्युत्कण्ठ इत्यादि । अहो किमिति त्वया तेन सख्यं कृतं यतो दुःखदस्तत्प्रसङ्ग इति ॥ २० ॥ हे कोकिल, मे प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दांस्त्वं भाषसे । मृतान्संजीवयतीति तथा तयाऽनया कोमलया गिरा वल्गितकण्ठ रमणीयकण्ठ मे कथय किं तव प्रियं करवाणीति ॥ २१ ॥ हे क्षितिधर, त्वं न वदसि न चलसि । अतो नूनं महान्तमर्थं चिन्तयसे । बत तर्हि अपि किं यथा स्तनैर्विधर्तुं वयं कामयामहे तथा त्वं स्तनतुल्यैः शृङ्गैर्वोढुं कामयसे । ओमिति चेत्तर्हि तवाप्यस्मदवस्था भविष्यतीति भावः ॥ २२ ॥ ॥ ॥ ॥ ॥

१ अदृष्टबन्धुरदृष्टप्रियतमा । २ 'स्तब्धवाक्' इति पाठः । ३ गुप्तो बोधो बाह्यविषयज्ञानं यस्य सः काप्याच्छन्नः शेते ।

भोः सिन्धुपत्न्यो नद्यः, संप्रति ग्रीष्मे सिन्धुर्मेघद्वारा अमृतवृष्ट्या युष्मान्नानन्दयति । बत अहो कष्टम् । अतः शुष्यन्तो ह्रदा यासां ताः अपगतकमलशोभाः कृशाश्च वयं यथा प्रियतमस्य भर्तुर्मधुपतेः । स प्रसिद्धम् ॥ २३ ॥ तदैव दैवादागतं हंसं दूतं कल्पयित्वाहुः—हंसेति । नोऽस्मान्प्रति पुरा रहस्युक्तं किं वा चलसौहृदः स्मरति । स्मृत्वैव मां प्रस्थापितवानिति चेदत आहुः—हे क्षौद्र क्षुद्रस्य दूत, कस्मात्त्वं वयं भजामः । कामार्थमाह्वयति युष्मानिति चेदत आहुः—अहो तर्हि तमालापयाकारय । ओमिति गच्छन्तमिव तं पुनराहुः—याऽस्मान्वञ्चयित्वा एकाकिनी सेवते तां श्रियमृते तमेवालापय । सा तदेकनिष्ठा कथं परिहर्तुं शक्यत इति चेदत आहुः—स्त्रियाम्, जातावेकवचनम् । अस्मासु स्त्रीषु मध्ये किं सैवैकनिष्ठा ननु वयमित्यर्थः । पाठान्तरे तु क्षौद्रं मधु

शुष्यद्ध्रदाः कॆरशिता बत सिन्धुपत्न्यः संप्रत्यपास्तकमलश्रिय इष्टभर्तुः ॥ यद्वद्वयं मधुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥ २३ ॥ हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥ किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ २४ ॥ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ॥ क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥ २५ ॥ श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ॥ उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः ॥ २६ ॥ याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः ॥ जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७ ॥ एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ॥ गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ २८ ॥ आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ॥ आसन्षोडशसाहस्रं मॅहिष्यश्च शताधिकम् ॥ २९ ॥ तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ॥ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥ ३० ॥ एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ॥ यावन्त्य आत्मनो भार्या अमोघगतिरीश्वरः ॥ ३१ ॥ तेषामुद्दामवीर्याणामष्टादश महारथाः ॥ आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥ ॥

तद्वन्मधुरालापमात्रं यस्य तमकामदमरतिप्रदं श्रियमृते वयं कस्माद्भजामः । किंत्वनादृतापि सती पुनः पुनः सैव भजतु यतोऽस्मादृश्यो मानिन्यः स्त्रिय एकनिष्ठा एकत्रैव स्वसंमानसिद्धौ निष्ठा यासामिति ॥ २४ ॥ २५ ॥ तासां कृष्णे एवंभूतो भावो नातिचित्रमित्याह—श्रुतमात्रोऽपीति । उरुभिर्गायैर्गातैरुरुधा गीतो वा यैः कैश्चिदपि गीतैः कथाभिः कथंचिदपि गीतो वेत्यर्थः ॥ २६ ॥ २७ ॥ पदं स्थानम् ॥ २८ ॥ २९ ॥ या रुक्मिणीप्रमुखा अष्टावुदाहृताः प्राक् ॥ ३० ॥ एवमष्टोत्तरशताधिकषोडशसहस्रमहिषीणां पुत्रा लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि च भवन्ति ॥ ३१ ॥ ३२ ॥ ॥ ॥ ॥८९॥

१ 'क्षौद्रालापमकामदं श्रियमृते सैवैकनिष्ठाः श्रियः' इत्येवंरूपे । २ 'कर्षिता' इति पाठः । 'कृशतरा' इति च क्वचित्पाठः । ३ पर मुख्यकल्पेनानुष्ठेयम् । ४ 'महिष्योऽष्टशताधिकम्' इति पाठः ।

अनिरुद्धश्चेति । अतः पुत्राणां मध्ये सप्तदशैव महारथा ज्ञेयाः । अथवा अनिरुद्धनामापि कश्चित्पुत्र एवेति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ सहस्राणामपरिमितानां कुमाराणामित्यन्वयः ॥ ४१ ॥ यदा प्रत्येकं बहूनध्यापयतामाचार्याणामियं संख्या तदपि श्रुतमात्रं नतु सम्यग् ज्ञायते तदा कुमाराणामेवं संख्यानं कर्तुं न शक्यते, कुतः पुनः सर्वयादवानामिति ॥ ४२ ॥ ते चोत्पन्ना इति । प्रत्येकं बहुभी रूपैरिति ज्ञेयम् ॥ ४३ ॥

प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च॥साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥३३॥ पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ॥ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥ ३४ ॥ एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ॥ प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः॥ ३५ ॥ स रुक्मिणो दुहितरमुपयेमे महारथः ॥ तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥३६॥ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥ वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ ३७॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः॥ सुबाहोः शान्तसेनोऽभूच्छतसेनस्तु तत्सुतः ॥३८॥ न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ॥ संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥ तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ॥ आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥ ४१ ॥ संख्यानं यादवानां कः करिष्यति महात्मनाम् ॥ यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥४२॥ देवासुराहवहता दैतेया ये सुदारुणाः॥ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥४३॥ तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ॥ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४४ ॥ तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ॥ ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥४५॥ शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥ तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ४७ ॥ ॥ ॥ ॥

एवमेव यदुकुलेऽपि देवा इति । तथा चोक्तम्—'सहस्रशः समुद्भूता देवा यदुकुले पृथक्' इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ तस्मात्कृष्णकीर्तेः सर्वतीर्थोत्तमत्वं कृष्णस्य च सर्वदेवोत्तमत्वं न चित्रमित्याह—तीर्थं चक्र इति । इतः पूर्वं स्वःसरिदेव सर्वतोऽधिकं तीर्थमित्यासीत् । इदानीं तु यदुषु यदजनि जातं तीर्थं श्रीकृष्णकीर्तिरूपमेतत्स्वःसरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे, स्वयमेव सर्वतीर्थोपरि विराजत इत्यर्थः । श्रीकृष्णस्य विद्विषः स्निग्धाश्च तत्सारूप्यं ययुरित्यपि

१ विरूप इति प्रथमं वरूथनाम्नोक्तः । २ 'भद्रसेनः' इति पाठः । ३ 'श्रुतिः' इति पाठः । ४ 'सदाहुकः आहुकः' इति पाठः । उग्रसेनः ।

नातिचित्रम्, तस्य परमकारुणिकत्वात् । तथेदं च न चित्रम् । किं तत् । अजितपरा अजिता कैश्चिदप्यप्राप्ता परा सर्वतः परिपूर्णा श्रीः कृष्णस्यैव, नान्यस्येति । तदेवाह—यदर्थेऽन्येषां ब्रह्मादीनां यत्न इति । ननु निरपेक्षं तमेव लक्ष्मीः श्रयत इति चित्रमेवेति चेत्, नहि, परममङ्गलनामधेयत्वात्तस्येत्याह—यन्नामेति । तदपि नार्थस्मरणापेक्षमित्याह—श्रुतमथ गदितमिति । सर्वधर्माश्रयत्वादपीत्याह—यत्कृतो गोत्रधर्म इति । गोत्रेषु तत्तदृषिवंशेषु धर्मो यत्कृतो येन प्रवर्तितः । तस्य क्षितिभरहरणं नैव चित्रमित्याह—कृष्णस्यैतदिति । कालचक्रायुधस्येति । सर्वसंहारककालमूर्तेर्विशेषतो दुरन्तप्रभावचक्रायुधस्य कियदेतदित्यर्थः ॥ ४७ ॥ यत एवंभूतः श्रीकृष्णस्ततः स एव सर्वोत्तम इत्याह—जयतीति । जनानां जीवानां यो निवास आश्रयस्तेषु वा निवसत्यन्तर्यामितया तथा स कृष्णो जयति, देवक्यां जन्मेति वादमात्रं यस्य सः । वस्तुतोऽजन्मा । यदुवराः पर्षत्सभासेवकरूपा यस्य । इच्छामात्रेण निरसनसमर्थोऽपि क्रीडार्थं

जयति जननिवासो देवकीजन्मवादो यदुवरपर्षत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवम् ॥४८॥ इत्थं परस्य निजवर्त्मरिरक्षयात्तलीलातनोस्तदनुरूपविडम्बनानि ॥ कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥ मर्त्यस्तयाऽनुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तयैति ॥ तद्धाम दुस्तरकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ ५० ॥[2]
इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां दशमस्कन्धे उत्तरार्धे श्रीकृष्णचरितानुवर्णनं नाम नवतितमोऽध्यायः ॥ ९० ॥ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

॥ समाप्तोऽयं दशमस्कन्धः ॥ १० ॥

दोर्भिरधर्ममस्यन् क्षिपन् स्थिरचरवृजिनघ्नोऽधिकारिविशेषानपेक्षमेव वृन्दावनगततरुतृणलतादीनां संसारदुःखहन्ता । तथा विलासवैदग्ध्यानपेक्षं व्रजवनितानां पुरवनितानां च सुस्मितेन शोभनहास्ययुतेन श्रीमता मुखेनैव कामदेवं वर्धयन् । कामश्चासौ दीव्यति विजिगीषति संसारमिति देवस्तम् । भोगद्वारा मोक्षप्रदमित्यर्थः ॥ ४८ ॥ तत्तत्कार्यविशेषैः स्वीकृतमत्स्यकूर्मादिनानामूर्तेर्विशेषतो यदूत्तमस्य सतः परस्य तदनुरूपानुकारीणि कर्मकषणानि कर्माणि चरितानि श्रूयात्, शृणुयादित्यर्थः ॥ ४९ ॥ अनुवृत्तेः फलमाह—मर्त्य इति । श्रीमत्याः कथायाः श्रवणकीर्तनयुक्तया चिन्तया संवर्धितयानुवृत्त्या तथा तन्निष्ठत्वेन तस्य धाम लोकमेति । लोकत्वेऽपि कालानाकलितत्वमित्याह—दुस्तरेति । दुर्लभपुरुषार्थतामाह—ग्रामादिति ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां नवतितमोऽध्यायः ॥ ९० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

१ 'परिषत्' इति पाठः । २ अत्र—'चित्रं न चैतदुरुगायविचित्रलीलाविध्वस्तकल्मषकदम्बकमुक्तिरूपम् ॥ स्त्रीणां सुदुस्त्यजकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥' इति श्लोकोऽधिकः क्वचित् ।

॥ इति श्रीमद्भागवते दशमस्कन्धोत्तरार्धः समाप्तः ॥

अथ भागवतैकादशस्कंधप्रारंभः ॥

श्रीगणेशाय नमः ॥ ॥ श्रीकृष्णाय नमः ॥ ॐ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीरामचन्द्राय ॥ विजयन्ते परानन्दकृष्णपादरजःस्रजः ॥ या धृता मूर्ध्नि जायन्ते महेन्द्रादिमहःस्रजः ॥ १ ॥ उक्तैकत्रिंशताध्यायैर्मुक्तिरेकादशे ततः ॥ जायन्तेयेतिहासाद्यैः समासव्यासरूपतः ॥ २ ॥ नारदो वसुदेवाय समासेन न्यवर्णयत् ॥ भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥ ३ ॥ तत्र तु प्रथमेऽध्याये यदुवंशस्य संक्षयः ॥ उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥ ४ ॥ प्रवृत्तितः परानन्दकृष्णक्रीडानुवर्णिता ॥ तन्निवृत्त्या परानन्दपदारोहोऽनुवर्ण्यते ॥ ५ ॥ एवं तावद्दशमस्कन्धे भूभारावतारणाय निजविभूतिनिभूपितयदुवंशस्य यदुवंशावतारितसकलसुरांशस्य भगवतः श्रीकृष्णस्य तदुचितप्रवृत्तिविडम्बनेन तच्छ्रवणस्मरणादिपराणां परेषामानन्दकारणं क्रीडा निरूपिता, अथेदानीमपरिमितयोगमायावैभवस्य भक्तानामात्मतत्त्वोपदेशपूर्वकं क्रीडार्थं भूतलेऽवतारितानां चाधिकारिणां सुरांशानां मौसलापदेशेन तत्तदधिकारपदप्रापणपूर्वकं च ब्रह्माद्यनुग्रहाय निजपदारोहो निरूप्यते। तत्र कुरुक्षेत्रयात्रायामविरक्तस्य वसुदेवस्य 'कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम्' इत्येवं कर्मयोगं पृष्टवतो नारदादिभिः कर्मयोगो निरूपितः 'कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धयासवित्तेन शुक्लेनेज्येत पूरुषः ॥' इत्यादिना। तेन च विशुद्धसत्त्वस्य श्रीकृष्णरामौ परमेश्वरत्वेन ज्ञातवतः षड्गर्भानयनाध्याये श्रीकृष्णेनात्मतत्त्वमुपदिष्टम् 'वचो वः सम-

ॐ नमो भगवते वासुदेवाय ॥ ॥ श्रीबादरायणिरुवाच ॥ कृत्वा दैत्यवधं
कृष्णः सरामो यदुभिर्वृतः ॥ भुवोऽवतारयद्भारं जविष्ठं जनयन्कलिम् ॥ १ ॥
ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥
कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥

वेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥' इत्यादिना। तच्च विपयभोगातिशयेन पुनस्तिरोहितमासीत्तदेवेदानीं नारदमुखेन प्रथमं पञ्चाध्याय्या निरूप्यते। तत्र प्रथमेऽध्याये वैराग्योत्पादनाय यदुकुलस्य ब्रह्मशापापदेशेनात्युन्नतविपयसुखानामप्यनित्यता प्रतिपाद्यते। ततश्चतुर्भिर्निमिजायन्तेयसंवादेन सपरिकरं परमतत्त्वनिरूपणम्। ततः षष्ठे भगवदुद्धवसंवादप्रस्तावः। ततस्त्रयोविंशत्या उद्धवं प्रति भगवतस्तत्त्वनिरूपणम्। ततो द्वाभ्यां मौसलक्रीडेत्येवमेकत्रिंशताऽध्यायैरेकादशस्कन्धस्य प्रवृत्तिः। तस्य च यथामति व्याख्यानमारभ्यते। तत्र मौसलप्रसङ्गार्थं पूर्वस्कन्धार्थमनुवदति श्लोकद्वयेन—कृत्वेति। अवतारयत्। अवतारय दित्यडागमो द्रष्टव्यः। जविष्ठं वेगवत्तरमतिशीघ्रम्। हिंसापर्यवसायिनमित्यर्थः। कलिं कलहम् ॥ १ ॥ एतद्विवृणोति—ये कोपिता इति। सपत्नैर्दुर्योधनादिभिः कोपिताः कोपं कारिताः। सुबहु यथा भवति तथा बहुवारानित्यर्थः। तदेवाह—दुर्द्यूतहेलनकचग्रहणादिभिरिति। दुर्द्यूतं कपटद्यूतम्, हेलनमवज्ञा, कचग्रहणं दुःशासनेन द्रौपद्याः केशाकर्षणम्, एतान्यादिर्येषां गरदानजतुगृहदाहादीनां तैः कृत्वा ये कोपितास्तान्पाण्डुसुतान्निमित्तं कृत्वा इतरेतरत उभयोः पक्षयोः समेतान्मिलितान्नृपान्हत्वा क्षितेर्भारं निरहरज्जहार। यद्वा ये कोपिता यैश्च कोपितास्तानितरे-

१ सरामो भुवो भारमवतारयत् इत्यनेन भुवो भार भूधरप्रीत्यर्थं निरहरत्। यदुभिर्वृत इत्यनेन च दैत्यवधं दैत्यशत्रुभूतदेवांशरूपयादवप्रीत्यर्थं कृतवान्न तु स्वप्रयोजनार्थमिति भक्तवश्यत्वं भगवतः सूचितमिति। शुक०। २ 'यविष्ठम्' इति पाठः। ३ 'परान्निरहरत्' इति पाठः। ४ 'देहादौ प्रथमेऽध्याये विरागोत्पादनाय तु ॥ सर्यते यदुसंहारः कृष्णभक्तिविवृद्धये' ॥ इति शुक०। ५ मूले अवतारयदित्यत्राडागमाभाव आर्षः।

तरतः परस्परं निमित्तं कृत्वेत्यन्वयः । ये तावत्प्रकटदैत्याः पूतनादयस्तान्स्वयमेव हतवान् । ये तु दैत्या बान्धवच्छद्मना स्थितास्तान्परस्परं निमित्तं विधाय हत्वा भूभारमपाकृतवानित्यर्थः ॥ २ ॥ अपि च—भूभारेत्यादि । अन्याश्च भुवो भारभूता राजपृतना राज्ञां पृतनाः सेनाः राजस्तेषां पृतनाश्चेति वा । स्वबाहुभिर्गुप्तैः परिरक्षितैर्यदुभिर्विवाहादिच्छलेन निरस्य हत्वा । बाहुभिरिति बहुवचनं वस्तुतश्चतुर्भुजाभिप्रायेण । नन्वेवं कृष्णश्चिकीर्षतीति ज्ञात्वा कथं तस्मै यादवा न द्रुह्यन्ति स्म तत्राह—अप्रमेयः प्रमातुमशक्यः । चिन्तामाह—मन्य इति । नन्विति वितर्के । अवनेर्भूमेर्भारो यद्यपि लोकप्रतीत्या गतस्तथाप्यहमगतमेव मन्ये । हि निश्चितम् । यद्यस्मादविषह्यं सोढुमशक्यम् । यादवं कुलमित्यनेनैव स्ववंशत्वात्स्वयं हननमनुचितमिति सूचितम् ॥ ३ ॥ तर्हीदमप्यन्यैर्घात्यतां तत्राह—नैवेति । अन्यतो देवादिभ्योऽपि यादवकुलस्य परिभवस्तिरस्कारो न भवेत् । कुतः मत्संश्रयस्य मां संश्रयत इति मत्संश्रयं कुलं तस्य । किंच नित्यं विभवोन्नहनस्य विभवैर्गजतुरगादिभिरुच्छृङ्खलस्य । यद्वा तर्हीदं किमिति संहर्तव्यं तत्राह—विभवोन्नहनस्येति । तस्मादेवं करिष्यामीत्याह—अन्तः कलिमिति । शान्तिमुपशममुपैमि 'वर्तमानसामीप्ये वर्तमानवद्वा' उपैष्यामि । तदनन्तरं धाम च वैकुण्ठाख्यमुपैष्यामीत्यर्थः ॥ ४ ॥ व्यवसितः

भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ॥ मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते ॥३॥ नैवान्यतः परिभवोऽस्य भवेत्कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ॥ अन्तः कलिं यदुकुलस्य विधाय वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥ एवं व्यवसितो राजन्सत्यसंकल्प ईश्वरः ॥ शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥५॥ स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् ॥ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥६॥ आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ ॥ तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥७॥ ॥ राजोवाच ॥ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ॥ विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥ ॥

कृतनिश्चयः । संजह्रे उपसंहृतवान् ॥ ५ ॥ तदेवमवतारप्रयोजनं सर्वं संपाद्य स्वं लोकं जगामेत्याह श्लोकद्वयेन—स्वमूर्त्येति । लोकानां लावण्यस्य निर्मुक्तिस्त्यागो यया । यामपेक्ष्य लोकेषु लावण्यं नास्तीत्यर्थः । यद्वा लोकेभ्यो लावण्यस्य निर्मुक्तिर्दानं यतः । यत्संपर्केण लोका लावण्यवन्तो भवन्तीत्यर्थः । तया स्वमूर्त्या नृणां लोचनमाच्छिद्याकृष्य ततोऽन्यस्यावलोकने लोचनस्याप्रवृत्तेः । तथा स्वगीर्भिस्ता गिरः स्मरतां चित्तं चाच्छिद्य । तथा पदैस्तत्र तत्राङ्कितैस्तानि पदानीक्षतामीक्षमाणानामन्यतो गमनादिकाः क्रियाश्चाच्छिद्य । तदानीन्तनानां सर्वेषां चक्षुरादिप्रवृत्तीः स्वैकनिष्ठाः कृत्वेत्यर्थः ॥ ६ ॥ किंच इत उपरि जनिष्यमाणानां संसारतरणाय कौ पृथिव्यां शोभनाः श्लोकाः सुश्लोकाः कवीनां यस्यां तां स्वकीर्तिं वितत्य विस्तार्यानया कीर्त्या अञ्जसा सुखेनैव नु निश्चितं तमस्तरिष्यन्तीत्यभिप्रेत्येश्वरः स्वं पदं स्थानमगादिति ॥ ७ ॥ अब्रह्मण्येभ्योऽदातृभ्यो वाऽसेवकेभ्यो वा विप्राः कुप्यन्ति, वृष्णयस्तु न तथेत्याह—ब्रह्मण्यानामित्यादिना । किंच कोपे जातेऽपि कृष्णचेतसां कथमभूत् कथं प्रादुरभूदित्यर्थः ॥ ८ ॥ ॥ ॥ ॥

१ हतवानित्यस्याग्रे ये तु प्रलम्बादयस्तान्बलेन घातितवानित्यधिकं क्वचित् । २ विभवोन्नहनस्य निरवधिवैभवस्य । ३ 'गतोऽप्यगतोऽपि भारः' इति पाठः । ४ 'वेणुसघस्य' इति पाठः । ५ 'शान्तम्' इति वीर० पाठः । तत्र शान्तं ऊर्मिषट्करहितं धामेति योज्यम । ६ 'सुश्लोक्या' इति पाठः । ७ 'वितत्यात्र यशः' इति विज० पाठः ।

अतः स्पष्टस्य निमित्तस्याभावान्निमित्तान्तरं पृच्छति—यन्निमित्त इति । एकात्मनामेकचित्तानां कथं भेदः कलहः ॥ ९ ॥ ईश्वरेच्छैवात्र निमित्तमिति परिहरति—विभ्रदिति । सकलानां सुन्दरवस्तूनां संनिवेशो विन्यासविशेषो यस्मिंस्तद्वपुर्बिभ्रत् । तर्हि किमतिसौन्दर्याद्विषयपरः, न, सुमङ्गलं कर्माचरन् । तत्किं कयापि कामनया, न, आप्तकामः । तर्हि किमिति कर्माचरति । धाम द्वारवत्याख्यं गृहमास्थाय रममाणः गृहे रममाणान्कर्म ग्राहयितुमित्यर्थः । ननु किमाप्तकामस्य गृहरत्या कर्मभिर्वा तत्राह—उदारकीर्तिः उदारा बहुफलप्रदा कीर्तिर्यस्य सः । कीर्तिवितानार्थमित्यर्थः । एवं परमैश्वर्येण वर्तमान एव कुलं संहर्तुमैच्छत् । तत्कस्य हेतोः । स्थितः कृत्ये भूभारहरणे शेषो यस्य सः ॥ १० ॥ ईश्वरेच्छयोत्थितं ब्रह्मशापनिमित्तं वक्तुमाह—कर्माणीति । कर्मार्थमाहूताः कर्माणि कृत्वा विसृष्टा मुनयः पिण्डारकं समगमन्नित्यन्वयः । निसृष्टाः प्रस्थापिताः पूर्वोक्तामुदारकीर्तितां विवृण्वन्कर्माणि विशिनष्टि—पुण्यनि-

[1]यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ॥ कथमेकात्मनां भेद एतत्सर्व वदस्व मे ॥ ९ ॥ ॥ श्रीशुक उवाच ॥ बिभ्रद्वपुः सकलसुन्दरसंनिवेशं कर्माचरन्भुवि सुमङ्गलमाप्तकामः ॥ आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेषः ॥ १० ॥ कर्माणि पुण्यनिवहानि सुमङ्गलानि गायज्जगत्कलिमलापहराणि कृत्वा ॥ कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन्मुनयो निसृष्टाः ॥ ११ ॥ विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ॥ कश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥ क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ॥ उपसंगृह्य पप्रच्छुर[2]विनीता विनीतवत् ॥ १३ ॥ ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ॥ एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥१४॥ प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यन्ती पुत्रकामा किंस्वित्संजनयिष्यति ॥१५॥ एवं प्र[3]लब्धा मुनयस्तानूचुः कुपिता नृप ॥ जनयिष्यति वो मन्दा मुसलं कुलनाशनम् ॥ १६ ॥ ॥

वहानीत्यादित्रिभिः पदैः । कानिचिदश्वमेधादिकर्माणि पुण्यमेव जनयन्ति । पुत्रोपलालनादीनि तु तत्काले सुखमेव कुर्वन्ति । प्रायश्चित्तादीनि तु पापमेव हरन्ति । एतानि तु सर्वतोमुखानीत्याह—पुण्यनिवहानि । कीर्तनादिना पुण्यानि निवहन्ति प्रापयन्तीति । तथा सुमङ्गलान्यतिसुखात्मकानि । गायतो जगतः कलिमलापहराणि कृत्वा । मुनिप्रस्थापने हेतुः—[4]कालात्मना संहाररूपेण यदुदेवगेहे वसुदेवगृहे निवसता स्वकुलं संजिहीर्षतेत्यर्थः । पिंडारकं ततो नातिदूरं तीर्थविशेषम् ॥ ११ ॥ १२ ॥ उपसंगृह्य पादग्रहणं कृत्वा ॥ १३ ॥ प्रश्नप्रकारमाह—ते वेषयित्वेति द्वयेन । हे अमोघदर्शना विप्राः । एषा अन्तर्वत्नी गर्भिणी ॥ १४ ॥ वो युष्मान् साक्षात्प्रष्टुं विलज्जती लज्जमानाऽस्मन्मुखेन पृच्छति । प्रसोष्यन्ती आसन्नप्रसवा । किंस्वित्संजनयिष्यति कन्यां वा पुत्रं वा तत्प्रब्रूत ॥ १५ ॥ प्रलब्धा वञ्चिताः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ 'यन्निमित्तो यदोः शापः' इति पाठः । २ अविनीता इति तदिच्छयैव तदानीं तथाभूता इत्यर्थ इति क्रम० । ३ प्रलब्धा ज्ञानपरीक्षया उपहसिताः । ४ कालोऽन्तर्यामी आत्मा रूपं यस्येति सर्वस्य तदिच्छाधीनत्वं दर्शितम् ।

तस्मिन्नुदरे । अयस्मयं लोहमयम् ॥ १७ ॥ मन्दभाग्यैर्नोऽस्माभिः किमेतत्कृतम् । नोऽस्मान् किं वदिष्यतीति विह्वलिताः सन्तो मुसलमादाय गेहान् ययुः ॥ १८ ॥ राज्ञे उग्रसेनाय, नतु श्रीकृष्णाय ॥ १९ ॥ २० ॥ आहुक उग्रसेनः । सोऽपि श्रीकृष्णमपृष्ट्वैव प्रास्यत्प्रक्षिप्तवान् । अस्य मुसलस्य चूर्णीक्रियमाणस्यावशेषितं लोहं च प्रास्यत् ॥ २१ ॥ तरलैस्तरङ्गैः ॥ २२ ॥ अन्यैर्मत्स्यैः सह शल्ये शराग्रे ॥ २३ ॥ ज्ञाताः सर्वेऽर्था येन स ईश्वरोऽपि समर्थोऽपि सन्नन्यथाकर्तुं नैच्छत्, किंत्वन्वमोदत । यतः कालरूपी ॥ २४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥१॥
द्वितीये निमिजायन्तसंवादेनाह नारदः ॥ धर्मान्भागवतान्भक्त्या वसुदेवाय पृच्छते ॥ १ ॥ अभीक्ष्णं प्रस्थापितोऽपि पुनःपुनरवात्सीदित्यर्थः । ननु नारदस्य

तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरम् ॥ साम्बस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥ १७ ॥ किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः ॥ इति विह्वलिता गेहानादाय मुसलं ययुः ॥ १८ ॥ तच्चोपनीय सदसि परिम्लानमुखश्रियः ॥ राज्ञ आवेदयांचक्रुः सर्वयादवसन्निधौ ॥ १९ ॥ श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ॥ विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥२०॥ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ॥ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥२१॥ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ॥ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥ २२ ॥ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ॥ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥ २३ ॥ भगवान् ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ॥ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे विप्रशापो नाम प्रथमोऽध्यायः ॥१॥ ॥छ॥ ॥श्रीशुक उवाच॥ ॥गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥ को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् ॥ न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ २ ॥ तमेकदा तु देवर्षिं वसुदेवो गृहागतम् ॥ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥३॥ ॥ वसुदेव उवाच॥ भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् ॥ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥ ॥

दक्षादिशापान्नैकत्रवासः संभवतीत्याशङ्क्याह—गोविन्दभुजगुप्तायामिति । न तस्यां शापादेः प्रभाव इत्यर्थः । कृष्णोपासने लालसा औत्कण्ठ्यं यस्य सः ॥ १ ॥ यद्भजने मुक्तानामपीदृशमौत्सुक्यं तं को नाम न भजेदित्याह—को न्विति । इन्द्रियवानिति । इन्द्रियवत्त्वमात्रमेव यत्राधिकारिविशेषणमित्यर्थः । सर्वतः सर्वेष्वपि लोकेषु मृत्युर्यस्य सः ॥ २ ॥ ३ ॥ यथा पित्रोर्यात्रा आगमनमपत्यानां स्वस्तये मङ्गलाय । यथा चोत्तमश्लोकस्य वर्त्मभूतानां महतां यात्रा कृपणानां स्वस्तये तथा भगवद्रूपस्य भवतो यात्रा सर्वदेहिनां स्वस्तय इति ॥ ४ ॥ ॥ ॥ ॥ ॥

१ एरका दीर्घाः स्थूलाश्च दीर्घसूचीमुखा धारात्रयोपेतास्तृणविशेषा इति वीर० । २ 'शल्येषु' इति पाठः । ३ तत्तम् शापमन्यथाकर्तुमीश्वरोऽपि तदन्यथाकरणं नैच्छदिति वाल० । ४ 'वर्त्मणा' इति पाठः । ५ यद्वा कृष्णस्य उप समीपे आसने स्थितौ लालसा यस्य । ६ उत्तमश्लोको हरिर्वा उत्तमाः श्लोकाः प्रतिपादका यस्य भक्तियोगस्य स वा वर्त्म येषाम् ।

देवैरपि महतामुपमानमनुचितमित्याह—भूतानामिति । देवानां चरितमतिवृष्ट्यादिना भूतानां दुःखायापि भवति । त्वादृशां त्वया सदृशानाम् । अच्युते आत्मा येषां तेषाम् ॥ ५ ॥ किंच सुखं कुर्वन्तोऽपि देवा भजनानुसारेण कुर्वन्ति, न तथा साधव इत्याह—भजन्तीति । छायेव यथा पुरुषो यावत्करोति तावदेव तस्य छायापि तथा । कर्मसचिवाः कर्मसहायाः ॥ ६ ॥ तदेवं यद्यपि भवत आगमनमात्रेणैव वयं कृतार्थास्तथापि पृच्छामः । तवेति, तव यैर्धर्मैः प्रसन्नो भगवांस्तानित्यर्थः ॥ ७ ॥ ननु त्वत्तोऽपि किमन्यो भगवत्प्रसादपात्रमस्ति, तत्राह—अहं किलेति । भुवि प्रजार्थोऽपूजयं पुत्रलाभप्रयोजनः सन् पूजितवान् । किलेति सूतीगृहे भगवदुक्तमनुस्मरति ॥ ८ ॥ अतो यथा मुच्येमहि तथा नोऽस्मान् शाधि शिक्षय । विचित्राणि व्यसनानि यस्मिन्संसारे

भूतानां देवचरितं दुःखाय च सुखाय च ॥ सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥ भजन्ति ये यथा देवान्देवा अपि तथैव तान् ॥ छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव ॥ यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते सर्वतोभयात् ॥ ७ ॥ अहं किल पुराऽनन्तं प्रजार्थो भुवि मुक्तिदम् ॥ अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥ यथा विचित्रव्यसनाद्भवद्भिर्विश्वतोभयात् ॥ मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥ ॥ श्रीशुक उवाच ॥ राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ॥ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥ ॥ नारद उवाच ॥ सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ॥ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥ श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः ॥ सद्यः पुनाति सद्धर्मो देव विश्वद्रुहोऽपि हि ॥ १२ ॥ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ॥ स्मारितो भगवानद्य देवो नारायणो मम ॥ १३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ १४ ॥ प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ॥ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥ ॥

तस्मात्संसारात् । तथा विश्वतः सर्वतो भयं यस्मिंस्तस्मात् । भवद्भिर्हेतुभूतैः । अञ्जसाऽनायासेन । अद्धा साक्षात् ॥ ९ ॥ हरेर्गुणैर्वर्णनीयत्वेन प्रस्तुतैर्हरिः संस्मारित इत्यर्थः ॥ १० ॥ प्रीतिमाविष्करोति—सम्यगिति त्रिभिः । पृच्छसे पृच्छसि । विश्वभावनान्सर्वशोधकान् ॥ ११ ॥ आदृत आस्तिक्येन गृहीतः । अनुमोदितः परैः क्रियमाणः संस्तुतः । सद्धर्मो भागवतो धर्मः । देव हे वसुदेवेत्यर्थः । यद्वा देवेभ्यो विश्वस्मै च द्रुह्यन्ति ये तानपि ॥ १२ ॥ किंच त्वया महानुपकारः कृत इत्याह—त्वयेति । पुण्ये श्रवणकीर्तने यस्य सः ॥ १३ ॥ अत्रापि भगवद्धर्मनिर्णयेऽपि । विदेहस्य जनकस्य ॥ १४ ॥ आर्षभाणामुत्पत्तिं सान्वयां विविच्य कथयति—प्रियव्रत इति सप्तभिः ॥ १५ ॥ ॥ ॥ ॥ ॥

१ तव त्वत्सम्बन्धिनो धर्मानित्यन्वये सति फलितमिदम् । तवेति द्वितीयार्थे षष्ठीमङ्गीकृत्य त्वा पृच्छाम इति वाल० । २ यथा येन सात्त्विकेन राजसेन तामसेन वा प्रकारेण । ३ सर्वतः भयं यस्मात्ससारात् जन्ममरणप्रवाहादित्यर्थः । कचित्तु 'विश्वतोभयात्' इत्यपि पाठः । ४ मोहित' प्रतारितः । ५ हरेरिति । 'अधीगर्थदयेषां कर्मणि' इति षष्ठी । गुणैः सहितं हरिं सस्मारित इत्यर्थ इति चक्र० । ६ ऋषभस्यापत्यान्यार्षभास्तेषाम् ।

मोक्षधर्मविवक्षया मोक्षधर्माणां प्रवर्तनेच्छया अवतीर्णं वासुदेवांशमाहुः—तस्य च वेदपारगं सुतशतमासीत् ॥ १६ ॥ तेषामृषभसुतानां मध्ये नवयोगीश्वराणां चरितं वक्तुमितरेषां चरितं ततो विविच्याह—तेषामिति । एतदजनाभं नाम वर्षं यस्य नाम्ना भारतमित्यद्भुतं विख्यातमासीत् । एतेन तस्य धर्मातिरेको निरूपितः ॥ १७ ॥ इमां पृथ्वीम् । गृहान्निर्गतः । हरिमुपासीनः सेवमानः सन् ॥ १८ ॥ नव सुताः नवद्वीपपतयो नवानां ब्रह्मावर्तादिभूखण्डानां पतयः । अस्य भारतस्य वर्षस्य । एकाशीतिः सुताः कर्ममार्गप्रवर्तका ब्राह्मणा अभूवन् ॥ १९ ॥ अर्थशंसिनः परमार्थनिरूपकाः । श्रमणाः श्रमवन्तः, आत्मा-

तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ॥ अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम् ॥ १६ ॥ तेषां वै भरतो ज्येष्ठो नारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥ स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥ तेषां नव नवद्वीपपतयोऽस्य समन्ततः ॥ कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥ १९ ॥ नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः ॥ श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥ कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥ त एते भगवद्रूपं विश्वं सदसदात्मकम् ॥ आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम् ॥ २२ ॥ अव्याहतेष्टगतयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि कामम् ॥ २३ ॥ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभे महात्मनः ॥ २४ ॥ तान्दृष्ट्वा सूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥ २५ ॥ विदेहस्तानभिप्रेत्य नारायणपरायणान् ॥ प्रीतः संपूजयांचक्र आसनस्थान्यथार्हतः ॥ २६ ॥ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव ॥ पप्रच्छ परमप्रीतः प्रश्रयावनतो नृपः ॥ २७ ॥ ॥ ॥

भ्यासे कृतश्रमा इत्यर्थः । वातरशना दिगम्बराः । आत्मविद्यायां विशारदा निष्णाताः ॥ २० ॥ २१ ॥ तेषां पारमहंसचरितमाह—त एत इति द्वाभ्याम् । भगवद्रूपं विश्वं पश्यन्तः । सदसदात्मकं स्थूलसूक्ष्मरूपम् । तच्च स्वाव्यतिरेकेण पश्यन्तः ॥ २२ ॥ अव्याहता अप्रतिहता इष्टाऽभिप्रेता गतिर्येषां ते । मुक्ता अनासक्ताः ॥ २३ ॥ महात्मनो निमेः । वितायमानमनुष्ठीयमानम् । अजनाभे भारतवर्षे ॥ २४ ॥ यजमानो निमिः । अग्नय आहवनीयादयः । विप्रा ऋत्विगादयः ॥ २५ ॥ अभिप्रेत्य ज्ञात्वा ॥ २६ ॥ स्वरुचैव रोचमानान्न त्वाभरणादिप्रकाशैः । ब्रह्मपुत्रोपमान्सनत्कुमारादिसदृशान् ॥ २७ ॥ ॥

१ 'वेदपारगम्' इति पाठः । २ तेषा एकोत्तरनवतितमाना मध्ये तेभ्यो नवयोगेश्वरेभ्यः । ३ तपसा ध्यानलक्षणेन मनइन्द्रियैकाग्र्येण वा 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति स्मृतेः । ४ 'ध्रूर्ध्वमन्थिन.' इति पाठः । ५ 'नातन्मनाः' इति गौडपाठः । ६ 'द्रविड' इति पाठः । ७ 'राजनाभा' इति विज० पाठः । ८ आसनस्थान्कृत्वा । ९ प्रश्रयेणान्तस्थविनयेनावनतः कायेनापि नम्रः ।

परमप्रीत्या तद्दर्शनमभिनन्दति द्वाभ्याम्—मन्य इति । ननु भगवतः पार्षदानां कथमत्रोपलब्धिस्तत्राह—विष्णोरिति । विष्णुभक्ता लोकपावनार्थं सर्वत्र पर्यटन्तीत्यर्थः ॥ २८ ॥ मया दुर्लभं लब्धमहो भाग्यमित्याह—दुर्लभ इति । बहवो देहा भवन्ति येषां ते देहिनो जीवास्तेषां क्षणभङ्गुरोऽपि मानुषो देहो दुर्लभः, परमपुरुषार्थसाधनत्वात् । वैकुण्ठः प्रियो येषां, वैकुण्ठस्य वा प्रियास्तेषां दर्शनम् ॥२९॥ हे अनघा निरवद्याः, भवतो युष्मानात्यन्तिकं क्षेमं पृच्छामः । यतः क्षणार्धकालभवोऽपि सत्सङ्गः शेवधिर्निधिः । निधिलाभे यथानन्दो भवति तथाऽत्र परमानन्द इत्यर्थः ॥ ३० ॥ तदर्थं च भागवतान्धर्मान्ब्रूत यदि नोऽस्माकं श्रुतये श्रवणाय क्षमं योग्यं भवति । कथंभूतान् । यैर्धर्मैः प्रपन्नाय भक्तायाऽजो हरिरात्मानमपि दास्यति तान् ॥ ३१ ॥ सह सदस्यैर्ऋत्विग्भिश्च वर्तमानम् । तेऽपि भगवद्धर्मश्रवणपरा बभूवुरित्यर्थः ॥ 'भगवद्धर्म-तद्भक्त-मायां-तत्तरणानि च ॥ ब्रह्म-कर्मा-वतारेहाँ-भक्तप्राप्य-युगक्रमान् ॥ १ ॥ ज्ञातुं क्रमेण

॥ विदेह उवाच ॥ मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ॥ विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ २८ ॥ दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ॥ तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥ अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः ॥ संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥ धर्मान्भागवतान्ब्रूत यदि नः श्रुतये क्षमम् ॥ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥ ॥ नारद उवाच ॥ एवं ते निमिना पृष्टा वसुदेव महत्तमाः ॥ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥ ॥ कविरुवाच ॥ मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ॥ उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ॥ अञ्जः पुंसामविदुषां विद्धि भागवतान्हि तान् ॥ ३४ ॥ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् ॥ धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥ ॥

कृतवान्नव प्रश्नान्निमिर्नवं ॥ एकैकस्योत्तरं प्रोचुः कविमुख्या मुनीश्वराः' ॥ २ ॥ ३२ ॥ प्रथममात्यन्तिकं क्षेमं कथयति—मन्य इति । न कुतश्चिद्भयं यस्मात्तदकुतश्चिद्भयम् । अत्र संसारेऽसदात्मभावादसति देहादावात्मभावनातो नित्यं सर्वदोद्विग्नबुद्धेः । विश्वात्मना सर्वथा निःशेषं यत्र पादाम्बुजोपासने भीर्निवर्तते तत् ॥ ३३ ॥ भागवतधर्मलक्षणमाह—ये वै इति । मन्त्रादिमुखेन वर्णाश्रमादिधर्मानुक्त्वाऽतिरहस्यत्वात्स्वमुखेनैव भगवताऽविदुषामपि पुंसामञ्जः सुखेनैवात्मलब्धये ये वै उपायाः प्रोक्तास्तान्भागवतान्धर्मान्विद्धि ॥ ३४ ॥ अञ्जःपदेनोक्तं सुकरत्वं विवृणोति—यानिति । यानास्थायाश्रित्य योगादिष्विव न प्रमाद्येत विघ्नैर्न विहन्येत । किंच निमील्य नेत्रे धावन्नपि । इह एषु भागवतधर्मेषु न स्खलेत् । निमीलनं नामाज्ञानम् । यथाहुः—'श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ॥ एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥' इति अज्ञात्वाऽपीत्यर्थः । यथा पदन्यासस्थानमतिक्रम्य शीघ्रं परतः पदन्यासेन

१ 'पावनानि' इति पाठः । २ निमिर्नृप ' इति पाठः । ३ देहादौ आदिशब्देन गृहकुटुम्बादौ च आत्मा इति आत्मीय इति यो भावो भ्रान्त इति ज्ञेयम् । ४ यद्वा विश्वात्मनेति भावप्रधानो निर्देशः । विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगत आत्मत्वेनान्तरात्मतया यत्रोपासने कृते सतीत्यर्थः । ५ स्वमुखेन भगवद्गीतापञ्चरात्रागमादिषु । ६ योगादिष्वित्यादिशब्देन कर्मतपःसांख्यज्ञानवैराग्यादिपरिग्रहः ।

गतिर्धावनं तद्वदत्रापि किंचित्किंचिदतिक्रम्यातिशीघ्रानुष्ठानं धावनम् । तथाऽनुतिष्ठन्नपि न स्खलेन्न प्रत्यवायी स्यात् । तथा न पतेत्फलान्न भ्रश्येत् । [ब्राह्मणादीनामुक्तानपि धर्मान्कांश्चिदकुर्वाणो भागवतान्धर्मान् श्रवणकीर्तनादीन्कुर्वाणस्तत्फलं प्राप्नुयादित्यर्थः] ॥ ३५ ॥ ननु के ते भागवता धर्माः । ईश्वरार्पितानि सर्वकर्माण्यपीत्याह—कायेनेति । आत्मना चित्तेनाहंकारेण वा । अनुसृतो यः स्वभावस्तस्मात् । अयमर्थः—न केवलं विधितः कृतमेवेति नियमः, स्वभावानुसारिलौकिकमपीति । तथा च भगवद्गीतासु—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥' इति । यद्वा ननु कायादीनामेव कर्म नात्मन इत्याशङ्क्याह—अध्यासेनानुसृताद्ब्राह्मणत्वादिस्वभावाद्यद्यत्करोतीत्यर्थः । तत्सकलं परस्मै परमेश्वराय नारायणायेति समर्पयेत् । तथा सति सकलमपि कर्म भागवतो धर्मो भवतीति भावः ॥ ३६ ॥ ननु किमेवं परमेश्वरभजनेन, अज्ञानकल्पितभयस्य ज्ञानैकनिवर्त्यत्वादित्याशङ्क्याह—भयमिति । यतो भयं तन्मायया भवेदतो बुधो बुद्धिमांस्तमेवाऽऽभजेत् । ननु भयं देहाद्यभिनिवेशतो भवति, स च देहाहंकारतः, स न स्वरूपास्मरणात्किंमत्र तस्य माया करोत्यत आह—ईशादपेतस्येति । ईशविमुखस्य तन्माययाऽस्मृतिर्भगवतः स्वरूपास्फूर्तिस्ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभि-

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् ॥ करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः ॥ तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ ३७ ॥ अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा ॥ तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥ शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ॥ गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥ ३९ ॥ ॥ ॥

निवेशाद्भयं भवति । एवं हि प्रसिद्धं लौकिकीष्वपि मायासु । उक्तं च भगवता—'दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति । एकयाऽव्यभिचारिण्या भक्त्या भजेत् । किंच गुरुदेवतात्मा गुरुरेव देवता ईश्वर आत्मा प्रेष्ठश्च यस्य । तथादृष्टिः सन्नित्यर्थः ॥ ३७ ॥ ननु विषयविक्षिप्तचित्तस्य कुतोऽव्यभिचारिणी भक्तिः संभवति, कुतस्तरामभयम् । तत्र न तावद्विषयो नाम वास्तवोऽस्ति, किंतु मनोविलासमात्रमतो मनोनियमनेन भजनादभयं स्यादित्याह—अविद्यमानोऽपीति । द्वयः द्वैतप्रपञ्चः ध्यातुः पुंसो धिया मनसा स्वप्नश्च मनोरथश्च यथेत्यर्थः । तत्तस्मात्कर्माणि संकल्पयति विकल्पयति च यन्मनस्तन्निरुन्ध्यान्नियच्छेत् । ततश्चैकया भक्त्या भजनादभयं स्यादित्यर्थः ॥ ३८ ॥ एतदत्यन्ताशक्यमित्याशङ्क्य सुगमं मार्गमाह—शृण्वन्निति । तदर्थकानि तान्येव जन्मानि कर्माणि चार्थो येषां तानि । एतान्यपि साकल्येन ज्ञातुमशक्यानीत्याशङ्क्याह—यानि लोके गीतानि प्रसिद्धानि तानि शृण्वन्गायंश्च विचरेत् । असङ्गो निःस्पृहः ॥ ३९ ॥ ॥ ॥ ॥ ॥ ॥

१ अतिक्रम्येति पूजात्रयपाठागौ व्युत्क्रमाद्गिनानुष्ठानमेव धावनम् । २ कोष्ठकस्थितोऽशः प्रक्षिप्त इति प्रतीयते । ३ ज्ञानैकेति रज्ज्वा भुजंगबुद्ध्या जातस्य भयस्य यथा रज्जुस्वरूपज्ञानेन निवृत्तिर्भवति तथा स्वरूपाज्ञानकल्पितभयस्य स्वरूपज्ञानमात्रेण निरास्यत्वात् । ४ अत्र भयादिषु । ५ नारायणायेति समर्पयेत ताद‍र्थ्यचतुर्थ्यन्तनारायणपदोच्चारणेन तदर्थतामनुसदधीतेत्यर्थः । ६ 'द्वयोः' इति पाठः । ७ 'स्वप्नमनोरथः इत्येकवचनान्तपाठे सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकत्वं पुस्त्वं च ज्ञेयम । ८ तस्मात् द्वैतप्रपञ्चस्य मनोविलासमात्रत्वात् । ९ तत् मनोनिरोधेन भजनम् । १० तदर्थकानि जन्मकर्मार्थकानि तत्र जन्मार्थकानि यशोदानन्दन इत्यादीनि कर्मार्थकानि, कंसरिपुरित्यादीनि ।

एवं च भजतः संप्राप्तप्रेमलक्षणभक्तियोगस्य संसारधर्मातीतां गतिमाह—एवमिति । एवं व्रतं वृत्तं यस्य सः । स्वप्रियस्य हरेर्नामकीर्त्या जातोऽनुरागः प्रेम यस्य सः । अत एव द्रुतचित्तः श्लथद्धृदयः । कदाचिद्भक्तपराजितं भगवन्तमाकलय्योच्चैर्हसति । एतावन्तं कालमुपेक्षितोऽस्मीति रोदिति । अत्यौत्सुक्याद्रौति क्रोशति । हे हरे, मामनुगृहाणेति अतिहर्षेण गायति । जितं जितमिति नृत्यति । किं दाम्भिकवत्परान्प्रति प्रकाशयितुम्, न, उन्मादवद्ग्रहगृहीतवत् । लोकबाह्यो विवशः ॥ ४० ॥ किंच खमिति । सत्त्वानि भूतानि । आकाशादि यत्किंचिद्भूतमात्रं हरेः शरीरमिति मत्वा प्रणमेत् । संभावनायां लिङ् ॥ ४१ ॥ नन्वियमारूढयोगानामपि बहुभिर्जन्मभिर्दुर्लभा गतिः कथं नाम कीर्तनमात्रेणैकस्मिन्नेव जन्मनि भवेदित्याशङ्क्य सदृष्टान्तमाह—भक्तिरिति । प्रपद्यमानस्य हरिं भजतः पुंसो भक्तिः प्रेमलक्षणा । परेशानुभवः प्रेमास्पदभगवद्रूपस्फूर्तिः तथा निर्वृतस्य ततोऽन्यत्र गृहादिषु विरक्तिरित्येष त्रिक एककालो भजनसमकाल एव स्यात् । यथाऽश्नतो भुञ्जानस्य तुष्टिः सुखं पुष्टिरुदरभरणं क्षुन्निवृत्तिश्च प्रतिग्रासं स्युः । उपलक्षणमेतत् । प्रतिसिक्थमपि यथा स्युस्तद्वत् । एवमेकैकस्मिन् भजने किंचित्प्रेमादि-

एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ॥ हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः[1] ॥ ४१ ॥ भक्तिः[2] परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ॥ प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥ इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥[3] ॥ राजोवाच ॥ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ॥ यथा चरति यद्ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥ ॥ हरिरुवाच ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥ ॥ ॥

त्रिके जायमानेऽनुवृत्त्या भजतः परमप्रेमादि जायते । बहुग्रासभोजिन इव परमतुष्ट्यादि ॥४२॥ ततश्च भगवत्प्रसादेन कृतार्थो भवतीत्याह—इत्यच्युताङ्घ्रिमिति ॥४३॥ भागवतस्य भवन्तीत्युक्ते तस्य लक्षणं पृच्छति—अथेति । यद्धर्मा यस्मिन्धर्मे परिनिष्ठितः । यादृशो यत्स्वभावः । यथा चरति वर्तते ब्रूते वा । यैश्च लिङ्गैर्भगवतः प्रियो भवति ॥४४॥ यद्धर्म इत्यस्योत्तरमाह त्रयेण—सर्वभूतेष्विति । आत्मनः स्वस्य सर्वभूतेषु ब्रह्मभावेन समन्वयं पश्येत् । तथा ब्रह्मरूपे आत्मन्यधिष्ठाने भूतानि च यः पश्येत् । यद्वा—'आततत्वात् प्रमातृत्वादात्मा हि परमो हरिः' इति तन्त्रोक्तेरात्मनो हरेः सर्वभूतेषु मशकादिष्वपि नियन्तृत्वेन वर्तमानस्य भगवद्भावं निरतिशयैश्वर्यमेव यः पश्येन्न तु तस्य तारतम्यम् । तथात्मनि हरावेव भूतानि च यः पश्येत् । कथंभूते । भगवति अप्रच्युतैश्वर्यादिरूपे । न पुनर्जडमलिनभूताश्रयत्वेन जाड्यादिप्रसक्त्या ऐश्वर्यादिच्युतिं पश्येत् । स सर्वत्र परिपूर्णं भगवत्तत्त्वं पश्यन् भागवतोत्तम इत्यर्थः ॥ ४५ ॥ ॥ ॥

---

१ अनन्योऽपृथक्सिद्धः । स्वात्मन्यपि भगवच्छरीरत्वं भावयन् स्फूर्त्यन्तरशून्य इत्यर्थः । २ भक्तितुष्ट्योः सुखरूपत्वात्, परेशानुभवपुष्ट्योरात्मभरणरूपत्वात्, विरक्तिक्षुदपाययोरन्यत्र वैतृष्ण्यरूपत्वात्साम्यम् । ३ अत्र—'सन्यस्तदण्डः कृतभूतभद्रो विगाढचेता भगवत्यधोक्षजे ॥ पुनाति लोकत्रयमङ्घ्रिरेणुभि[illegible] स्वभावस्तरणिर्यथोदितः ॥' इति पद्यमधिकं वीर० पाठे । ४ न पुनर्जीववज्जडमलिनेत्यादिः पाठः क्वचित् ।

प्रेम च मैत्री च कृपा च उपेक्षा च ता ईश्वरादिषु चतुर्षु यः करोति स मध्यमो भागवतः । एवंभूतस्य भेदस्य दर्शनात् ॥ ४६ ॥ अर्चायां प्रतिमायां पूजामीहते करोति न तद्भक्तेष्वन्येषु च सुतरां न करोति । प्राकृतः प्रकृतप्रारम्भः । अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्यर्थः ॥ ४७ ॥ पुनरष्टभिः श्लोकैरभ्यर्हितत्वादुत्तमभागवतस्यैव लक्षणान्याह—गृहीत्वापीति । श्रीवासुदेवाविष्टचेता न गृह्णाति तावदिन्द्रियैरर्थान्गृहीत्वापीत्यपिशब्दार्थः । इदं विश्वम् ॥ ४८ ॥ किंच देहादीनां संसारधर्मैर्जन्माप्ययादिभिर्यो हरेः स्मृत्याऽविमुह्यमानः स भागवतप्रधानः । तत्र देहस्य जन्माप्ययौ । प्राणस्य क्षुत्पिपासे । मनसो भयम् । बुद्धेस्तर्षस्तृष्णा । इन्द्रियाणां कृच्छ्रं श्रमस्तैः ॥ ४९ ॥ कामश्च कर्माणि च बीजानि च वासनास्तेषाम् । वासुदेव एवैकनिलय आश्रयो यस्य सः । एतेन गृहीत्वाऽपीत्यादिश्लोकत्रयेण द्वेषहर्षमोहकामादिरहितश्चरतीति यथा चरतीत्येतस्योत्तरमुक्तम् ॥ ५० ॥ यैर्लिङ्गैर्भगवत्प्रिय इत्यस्योत्तरमाह—न यस्येति ।

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ॥ प्रेम मैत्री कृपोपेक्षा यः करोति स मध्यमः ॥ ४६ ॥ अर्चायामेव हरये
पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥ गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न
हृष्यति ॥ विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ॥ ४८ ॥ देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्ष-
कृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥ न कामकर्मबीजानां यस्य चेतसि संभवः ॥
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥ न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहं-
भावो देहे वै स हरेः प्रियः ॥ ५१ ॥ न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ॥ सर्वभूतसमः शान्तः स वै
भागवतोत्तमः ॥ ५२ ॥ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ न चलति भगवत्प-
दारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ५३ ॥ भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्त-
तापे ॥ हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥ ॥ ॥

जन्म सत्कुलम् । कर्म तपआदि । जातयोऽनुलोमप्रतिलोमजा मूर्धावसिक्तादयः । अस्मिन्देहे । अहंकाररहितैः सत्कुलकर्मादिलिङ्गैर्हरेः प्रियो भवतीत्यर्थः ॥ ५१ ॥ वित्तेषु स्वीयं परकीयमिति । आत्मनि स्वः पर इति ॥ ५२ ॥ किंच त्रिभुवनविभवहेतवेऽपि त्रैलोक्यराज्यार्थमपि लवार्धमपि निमिषार्धमपि भगवत्पदारविन्दभजनाद्यो न चलति स वैष्णवाग्र्यः । ननु लवार्धमात्रभजनोपरमे चेत्तावॉल्लाभो भवेत्तत्कुतो न चलेत्तत्राह—अकुण्ठस्मृतिः भगवत्पदतोऽन्यत्सारं नास्तीत्येवंरूपाऽकुण्ठाऽनपगता स्मृतिर्यस्य सः । भगवत्पदारविन्दादन्यत्सारं नास्तीति कुतोऽत आह—अजिते हरावेवात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् । किंतु केवलं विमृग्यात् । तदपेक्षया सर्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थः ॥ ५३ ॥ अपि च विषयाभिसंधिना चलनं कामेनातिसंतापे सति भवेत्, स तु भगवत्सेवानिर्वृतौ न संभवतीत्याह—भगवत इति । उरुविक्रमौ च तावङ्घ्री च तयोः शाखा अङ्गुलयस्तासु नखानि च तानि

१ हरये हरिं प्रीणयितुमिति चक्रवर्ती । २ तदपेक्षया भगवदपेक्षया । ३ विषयेच्छया ।

मणयश्च तेषां चन्द्रिका शीतला दीप्तिस्तया निरस्तः कामादितापो यस्मिंस्तस्मिन्नुपसीदतां भजतां हृदि कथं पुनः संतापः प्रभवति । चन्द्रे उदिते सत्यर्कस्य ताप इव । न यस्य स्वः पर इत्यादिना श्लोकत्रयेण यादृश इत्यस्योत्तरमुक्तं वेदितव्यम् । यद्भूते इत्यस्य च हरिनामानीति ज्ञातव्यम् ॥ ५४ ॥ उक्तसमस्तलक्षणसारमाह—विसृजतीति । हरिरेव स्वयं साक्षाद्यस्य हृदयं न विसृजति न मुञ्चति । कथंभूतः । अवशेनाप्यभिहितमात्रोऽप्यघौघं नाशयति यः सः । तत्किं न विसृजति । यतः प्रणयरशनया धृतं हृदये निबद्धमङ्घ्रिपद्मं यस्य स भागवतप्रधान उक्तो भवति ॥ ५५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ॥ तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥ १ ॥ विष्णोर्मायामिदं पश्यन्नित्युक्तमतो मायां पृच्छति—परस्येति । हे भगवन्तः ॥ १ ॥ ननूक्तलक्षणो भागवतो भूत्वा कृतार्थः स्याः, किं बहुप्रश्नैरत आह—नानुतृप्य इति । संसारतापैर्नितरां तप्तोऽहं तस्य तापस्य भेषजं हरिकथामृतरूपं युष्मद्वचो जुषमाणो नानुतृप्यामि ॥ २ ॥ मायायाः स्वरूपतो निरूपणासंभवात्सृष्ट्यादि-

विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥५५॥ इति श्रीमद्भागवते म० पु० एकादशस्कन्धे नारदवसुदेवसंवादे द्वितीयोऽध्यायः ॥ २ ॥
॥ राजोवाच ॥ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ॥ मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥ नानुतृप्ये जुषन्युष्मद्वचो हरिकथामृतम् ॥ संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥ ॥ अन्तरिक्ष उवाच ॥ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥ एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ॥ एकधा दशधात्मानं विभजन् जुषते गुणान् ॥ ४ ॥ गुणैर्गुणान्स भुञ्जान आत्मप्रद्योतितैः प्रभुः ॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥ ५ ॥ ॥ ॥ ॥

कार्यद्वारेण निरूपयितुमाह—एभिरिति । आद्यः पुरुषो यया शक्त्या भूतानामात्मा कारणभूत एभिः स्वसृष्टैर्महाभूतैरुच्चावचानि भूतानि ससर्ज । एषा माया भगवत इति चरमश्लोकपादस्य प्रतिश्लोकमनुषङ्गः । किमर्थं ससर्ज । स्वमात्रात्मप्रसिद्धये, स्वं मिमीते प्रमिमीते उपास्ते यः स स्वमाता तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धये । यद्वा स्वांशभूतानां जीवानां मात्राप्रसिद्धये विषयभोगाय आत्मप्रसिद्धये मोक्षाय चेत्यर्थः । तदुक्तं वेदस्तुतौ—'बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ॥ मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥' इति ॥ ३ ॥ एवं जीवोपकरणार्थं पञ्चधातुभिर्महाभूतैः सृष्टानि भूतान्यन्तर्यामिरूपेण प्रविष्ट एकधा मनसा दशधा बाह्येन्द्रियरूपेणात्मानं विभजन्गुणांस्तत्तद्विषयान् जुषते जोषयतीत्यर्थः । यद्वा तमात्मानं प्रति गुणान्विभजन् जुषते प्रीयत इत्यर्थः ॥ ४ ॥ स च जीव आत्मनाऽन्तर्यामिणा प्रद्योतितैर्गुणैरिन्द्रियैर्गुणान्विषयान्भुञ्जान इदं सृष्टं शरीरमात्मानं मन्यमान इह शरीरादौ सज्जते । अत एव संसरतीति भावः ॥५॥

१ अवशेनापि किं पुनः सावधानतया । अभिहितमात्रोऽपि किं पुनर्ध्यातः सन् । २ तत् भक्तहृदयम् । ३ 'निष्टप्तः' इति पाठः । ४ अत्र शुकपक्षीये वीरराघवपाठे च—'निर्गुणे केवले साक्षात्' इत्यादिश्लोकचतुष्टयमधिकं विद्यते । ५ 'स्वयमात्मप्रसिद्धये' इति पाठ. । ६ प्रकर्षेण देवतिर्यगादिषु भवतीति प्रभुः स जीवः । ७ आत्मप्रसिद्धिरात्मसाक्षात्कारः । ८ जीवभोगसाधनार्थम् ।

ननु भुञ्जानः कथं सज्जते, भुञ्जानो भोगसमाप्तौ मुच्यत इति चेत्तत्राह—कर्माणीति । कर्मभिः कर्मेन्द्रियैश्च सनिमित्तानि सवासनानि कर्माणि कुर्वंस्तत्तत्पुवैकर्मफलं च गृह्णन्नयं देहभृद्भ्रमतीह संसारे, न तु मुच्यते । कथंभूतं कर्मफलम् । सुखेतरं सुखदुःखात्मकम् ॥ ६ ॥ कियन्तं कालं भ्रमति तदाह—इत्थमिति । वहन्न्यभद्राणि वहन्तीति तथा ताः सर्गप्रलयावुत्पत्तिमरणे ॥ ७ ॥ एवं मायामयीं सृष्टिमुक्त्वा प्रलयं दर्शयितुमारभते । धातूनां महाभूतानामुपप्लवे नाशहेतावासन्ने व्यक्तं कार्यं द्रव्यं स्थूलं गुणः सूक्ष्मं तदात्मकमव्यक्तायाव्यक्तं प्रति नेतुमाकर्षति ॥ ८ ॥ नाशहेतूनाह—शतवर्षेति । तस्मिन्काले उपचितश्चासावुष्णश्चासावर्कश्च । यद्वा तेन कालेनोपचितमुष्णत्वं यस्य सः ॥ ९ ॥ ऊर्ध्वशिख ऊर्ध्वज्वालः । विष्वक्परितः ॥ १० ॥ सांवर्तकः प्रलयकर्ता । धाराभिर्न तु बिन्दुभिः । हस्तिहस्ताभिस्तत्प्रमाणाभिः ॥ ११ ॥ तत उपाधिलयाद्वैराजः पुरुषोऽव्यक्तं कारणं प्रविशति । ननु—'ब्रह्मणा सह ते[3] सर्वे संप्राप्ते प्रतिसंचरे ॥ परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति स्मृतेर्यावदधिकारमवस्थितिरविकारिणामिति न्यायाच्च वैराजशब्दाभिधेयस्य च ब्रह्मणः

कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरम् ॥ ६ ॥ इत्थं कर्मगतीर्गच्छन्वह्वभद्रवहाः पुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ॥ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥ ८ ॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥ ९ ॥ पातालतलमारभ्य संकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥ १० ॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥ ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥ १२ ॥ वायुना हृतगन्धा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ १४ ॥ ॥

परमभागवतत्वान्मोक्ष एव संगच्छते नान्येषामिव कारणमात्रप्रवेशः, सत्यम्, अश्वमेधादिना सत्यलोकं गतानामभक्तानामावृत्तिश्रवणादभक्तत्वे च ब्रह्मणोऽपि प्रकृतौ लयः पुनरुत्पत्तिश्चेति मोक्षदौर्लभ्यसूचनायैवमुक्तमित्यविरोधः । यद्वा केनापि प्रमाणेन न व्यज्यत इत्यव्यक्तं ब्रह्म तत्प्रवेशेन च मोक्ष एवोक्त इति द्रष्टव्यम् ॥ १२ ॥ एवं विराजो लयमुक्त्वा तत्कारणानां महदादिपृथिव्यन्तानां प्रातिलोम्येन लयमाह—वायुनेति । वायोर्हि गन्धरसहारित्वं प्रसिद्धम् । सांवर्तकेन वायुना हृतगन्धा अत एव गन्धस्य व्यावर्तकस्य गतत्वात्सलिलत्वाय कल्पते सलिले लीयत इत्यर्थः । तद्धृतरसं तेन वायुनैव हृतो रसो यस्य तत् ॥ १३ ॥ तमसश्च रूपतिरस्कारित्वं प्रसिद्धम् । सांवर्तकेन तमसा । अवकाशेनाकाशेन स्वकारणेन कालात्मना, शब्दस्य हि कालत एव नाशः प्रसिद्धस्तद्रूपेणात्मना ईश्वरेण । आत्मनि तामसाहंकारे ॥ १४ ॥ ॥ ॥ ॥ ॥

१ वाम्यन्ति शरीराणीति धातवो महाभूतानि । २ वैराजः समष्टिजीव । ३ ते प्रक्षीणमलाः प्रतिसंचरे प्रलये परस्य हिरण्यगर्भस्य । ४ महाप्रलयपर्यन्तमनिर्णयः । 'आभूतसंप्लवात्' इति क्वचित्पाठः । ५ अवशः प्रकृत्यधीनः । ६ ईरितः प्रेरितः ।

इन्द्रियाणि बुद्धिश्च राजसाहंकारम् । मनो वैकारिकैर्देवैः सह सात्त्विकाहंकारम् । एवं त्रिविधैः स्वगुणैः स्वकार्यैः सहितोऽहमहंकार आत्मनि महति स च प्रकृताविति द्रष्टव्यम् ॥ १५ ॥ त्रिवर्णा त्रिगुणा । मायाश्रवणभीतं राजानं तन्निवृत्त्युपायश्रवणे स्वयं छन्दयति—किं भूय इति ॥ १६ ॥ एवमनुकम्पित-स्तन्निवृत्त्युपायमेव पृच्छति—यथैतामिति । यद्यपि 'तन्माययाऽतो बुध आभजेत्तम्' इति भक्तिस्तत्तारकत्वेनोक्तैव तथापि किं भक्तिरेवान्योऽपि वा तत्रो-पायोऽस्तीति ज्ञातुं पुनः प्रश्नः । अकृतात्मभिरवशीकृतान्तःकरणैः । स्थूलधियः स्थूले शरीरे अहंधीर्येषां ते ॥ १७ ॥ भक्तिव्यतिरेकेण नास्त्यन्य उपाय इत्यभिप्रेत्य भक्तिमेव ससाधनां निरूपयति । तत्र प्रथमं वैराग्यद्वारा गुरूपसत्तिमाह चतुर्भिः—कर्माणीति । दुःखहत्यै दुःखप्रतीकाराय । पाकविपर्यासं फलवैपरीत्यम् । मिथुनीचारिणां मिथुनीभूय प्रवर्तमानानाम् ॥ १८ ॥ कर्मभिः साधिता अपि वित्तादयो न सुखहेतव इति च पश्येदित्याह—नित्यार्ति-

इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १५ ॥ [2]एषा माया भगवतः सर्गस्थित्यन्तकारिणी ॥ त्रिवर्णा वर्णितास्माभिः किं भूयः श्रोतुमिच्छसि ॥ १६ ॥ ॥ राजोवाच ॥ यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ॥ तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १७ ॥ ॥ प्रबुद्ध उवाच ॥ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ॥ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्मवृत्तिना ॥ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ १९ ॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ॥ सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ २० ॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २१ ॥ [3]तत्र भागवतान्धर्मान् शिक्षेद्गुर्वात्मदैवतः ॥ अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ २२ ॥ सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

देनेति । आत्मनः स्वस्य मृत्युरूपेण । चलैरनित्यैरपायिभिश्च ॥ १९ ॥ एवं लोकं परमिति । कर्मनिर्मितत्वान्नश्वरम् । तथा च श्रुतिः—'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति । किंच वर्तमानसमयेऽपि दुःखयुक्तं पश्येदित्याह—सतुल्यातिशयध्वंसं सह तुल्येनातिशयेन ध्वंसेन च वर्तमानम् । अतस्तुल्ये स्पर्धातिशयेऽसूयाध्वंसालोचने भयादिकं चापरिहार्यमित्यर्थः । यथाखण्डमण्डलपतीनां मिथः स्पर्धादि तद्वत् ॥ २० ॥ उत्तमं श्रेयो ज्ञातुमिच्छुः शाब्दे ब्रह्मणि वेदाख्ये न्यायतो निष्णातं तत्त्वज्ञम् । अन्यथा संशयनिरासकत्वायोगात् । परे च ब्रह्मण्यपरोक्षानुभवेन निष्णातमन्यथा बोधसंचारायोगात् । परब्रह्मनिष्णातत्वद्योतकमाह—उपशमाश्रयमिति ॥ २१ ॥ गुरुरेवात्मा दैवतं च यस्य सः । अनुवृत्त्या सेवया । यैर्धर्मैः वस्तुत आत्मा, आत्मप्रदश्चोपासकानाम् । यथा बलिप्रभृतीनाम् ॥ २२ ॥ यथोचितमिति हीनेषु दयां समेषु मैत्रीमुत्तमेषु प्रश्रयं च शिक्षेदित्यर्थः ॥ २३ ॥ ॥

१ गुरूपसत्त्यादिसाधनसहिताम् । २अत्र 'यदान्यदात्मनः' इत्यादि श्लोकचतुष्टयमधिकं शुकपक्षीये । ३तत्र गुरूपसत्तौ । ४'आत्मप्रदो हरिः' इति पाठः । ५ आदिशब्दात् चिन्तादैन्यपरिग्रहः ।

शौचं वार्गं मृज्जलादिभिः । आभ्यन्तरं चादम्भामानादि शिक्षेत् । तपः स्वधर्माचरणम् । तितिक्षां क्षमाम् । मौनं वृथावाचामनुच्चारणम् । स्वाध्यायमधिकारानुरूपं वेदपाठादिकम् । आर्जवं स्वच्छताम् । ब्रह्मचर्यं यस्य यादृगुचितमृतुकाले स्वदारनियमादि । अहिंसां भूतेष्वद्रोहम् । द्वन्द्वसंज्ञयोः शीतोष्णसुखदुःखादिरूपयोः । समत्वं हर्षविषादराहित्यम् ॥ २४ ॥ आत्मेश्वरान्वीक्षाम् । सच्चिद्रूपेणात्मान्वीक्षां नियन्तृरूपेणेश्वरान्वीक्षां च । कैवल्यमेकान्तशीलत्वम् । अनिकेततां गृहाद्यभिमानराहित्यम् । विविक्तचीरवसनं विजनपतितानां वस्त्रखण्डानां शुद्धानां वा वल्कलानां परिधानम् ॥ २५ ॥ भागवते भगवत्प्रतिपादके । अन्यत्र शास्त्रादौ या अनिन्दा ताम् । मनसः प्राणायामैर्वाचो मौनेन कर्मणोऽनीहया दण्डम् । सत्यं यथार्थभाषणम् । शमदमावन्तःकरणबाह्येन्द्रियनिग्रहौ ॥ २६ ॥ हरेर्जन्मकर्मगुणानां श्रवणादि तदर्थे । हर्युद्देशेन सर्वं कर्म विशेषतश्च यजनादि यत्तदर्थे शिक्षेत् ॥ २७ ॥ इष्टं दत्तमित्यादयो भावे निष्ठाः ।

शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं संतोषं येनकेनचित् ॥ २५ ॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ॥ मनोवाक्कर्मदण्डं च सत्यं शमदमावपि॥२६॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान् गृहान्प्राणान्यत्परस्मै निवेदनम् ॥ २८ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ॥ परिचर्या चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥ परस्परानुकथनं पावनं भगवद्यशः ॥ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ॥ भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ॥ नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३२ ॥

वृत्तं सदाचारः । आत्मनः प्रियं गन्धपुष्पादि । दारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणं यत्तच्छिक्षेत् ॥ २८ ॥ कृष्ण एवात्मा नाथश्च येषाम् । कृष्ण आत्मनो जीवस्य नाथो येषामिति वा तेषु । उभयत्र स्थावरे जङ्गमे च या परिचर्या ताम् । विशेषतो नृषु तत्रापि साधुषु स्वधर्मशीलेषु । ततोऽपि महत्सु श्रीभागवतेषु ॥ २९ ॥ तैश्च सह सङ्गम्य यत्पावनं भगवद्यशस्तस्य परस्परानुकथनं शिक्षेत् । यद्वा यशः प्रति तत्र संस्पर्धादिपरित्यागेन मिथो या रतिः रमणं, या च तुष्टिः सुखं या च निवृत्तिः समस्तदुःखनिवृत्तिस्तां च शिक्षेत् ॥ ३० ॥ एवं वर्तमानानां परमानन्दप्राप्तिमाह— स्मरन्त इति द्वयेन । भक्त्या साधनभक्त्या संजातया प्रेमलक्षणया भक्त्या ॥ ३१ ॥ अजं हरिमनुशीलयन्ति तल्लीलामभिनयन्ति । एवं परमेत्य प्राप्य निर्वृताः सन्तस्तूष्णीं भवन्ति ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥

१ 'अनिकेतनम्' इति पाठः । २ 'मनोवाकायदण्डं च' इति पाठः । ३ 'तपः पूर्तं' इति पाठः । ४ 'परस्मै तन्निवेदयेत्', 'तन्निवेदनम्' इति पाठौ । ५ 'भक्ताः' इति पाठः । ६ तत्र परस्परानुकथने । ७ एवं साधनभक्त्यनुष्ठानप्रकारेण ।

उपसंहरति—इतीति । भागवतधर्मोत्पन्नया भक्त्या ॥ ३३ ॥ 'नारायणपरो मायां तरती'त्युक्ते पृच्छति—नारायणाभिधानस्येति । निष्ठां स्वरूपम् । अयं भावः—ब्रह्मैव तावन्नारायण इति भगवानिति परमात्मेति चोच्यते । तदुक्तम्—'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥' इति । तथा—'नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥' इत्यादिषु । तत्र किमेभिः शब्दैर्निर्विशेषं तदेव वस्तूच्यते, अस्ति वा कोऽपि विशेषांश इति ॥ ३४ ॥ अत्रोत्तरम्—स्थित्युद्भवेति । अयमर्थः—अस्य विश्वस्य स्थित्युद्भवप्रलयानां हेतुः स्वयं चाहेतुर्हेतुरहितः स नारायण इति परमेव तत्त्वमवेहि स्वप्नजागरसुषुप्तिषु सदनुवर्तमानं यत् । वक्ष्यति च—'तुरीयं त्रिषु संततम्' इति । बहिश्च समाध्यादौ यत्सद्ब्रह्मेति परमेव तत्त्वमवेहि । देहेन्द्रियप्राणमनांसि येन संजीवितानि सन्ति चरन्ति प्रवर्तन्ते तत्परमात्मेति परमेव तत्त्वमवेहि । एवं लक्षणभेदैर्नारायणादिनामभिरुच्यमानमपि परमेकमेव तत्त्वं जानीहि ॥ ३५ ॥ अवेहीत्यनेन विषयत्वं प्राप्तं निषेधति—नैतदिति । एतत्परं तत्त्वं मनो न विशति न विषयीकरोति । वागुत वागपि चक्षुश्चात्मा बुद्धिश्च प्राणश्च क्रियाशक्त्या न प्राप्नोत्यन्यानि चेन्द्रियाणि । यथाऽनलं स्वाः स्वांशभूता अर्चिषो विस्फुलिङ्गादयो न

इति भागवतान्धर्मान् शिक्षन् भक्त्या तदुत्थया ॥ नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३३ ॥ ॥ राजोवाच ॥ नारायणाभिधानस्य ब्रह्मणः परमात्मनः ॥ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३४ ॥ ॥ पिप्पलायन उवाच ॥ स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहेन्द्रियासुहृदयानि चरन्ति येन संजीवितानि तदवेहि[1] परं नरेन्द्र ॥ ३५ ॥ नैतन्मनो[2] विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ॥ शब्दोऽपि[3] बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥ ३६ ॥ ॥

प्रकाशयन्ति न दहन्ति च, तथा जडासु मन आदिवृत्तिष्वभिव्यज्यमानस्यात्मप्रकाशस्य तत्तद्वृत्तिप्रकाशकस्य न तत्प्रकाशविषयत्वम् । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति । तथा—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतेः । ननु—'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । शब्दगोचरत्वं प्रतीयते तत्राह—शब्दोऽपीति । शब्दोऽप्यात्ममूलमात्मनि प्रमाणं सदर्थोक्तमर्थादुक्तं यथा भवति तथा आह, न साक्षात् । कुतः । बोधकनिषेधतया स्वस्यैव बोधकस्य निषेधरूपत्वात् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' । 'यद्वाचानभ्युदितं येन वागभ्युद्यते ॥ तदेव ब्रह्म त्वं विद्धि' । 'यन्मनो न मनुते', 'न चक्षुषा पश्यति कश्चनैनं' इत्यादिश्रुतेः । ननु तर्हि नैवाह श्रुतिः किमिदमुच्यते अर्थोक्तमाहेति तत्राह—यदृत इति । 'अथात आदेशो नेति नेति', 'अस्थूलमनणु', 'यतो वाचो निवर्तन्ते', 'यद्वाचानभ्युदितम्' इत्यादिनिषेधस्य यदवधिभूतं ब्रह्म ऋते विना सिद्धिर्नास्ति[5] । सर्वस्य निषेधस्य सावधित्वात् ॥ ३६ ॥ ॥ ॥ ॥ ॥

१ 'तदवैहि' इति पाठः । २ 'नैनं' इति पाठः । ३ 'शब्दोऽप्यबोधकनिषेधतया' इति पाठः । ४ शब्दोऽपि आत्मनः स्वस्य मूलं बोधकनिषेधतयाह—यस्य बोधकं किमपि नास्ति तद्ब्रह्मेत्येवं रीत्यैवार्थादुक्तमर्थत एवोक्तम्, न तु शब्दत इदं तदिति निर्देशेनाहेत्यर्थ इति चक्र० । ५निषेधसिद्धिः परतत्त्वेयत्ताग्राहकनिराकरणसिद्धिर्न स्यादतस्तदियत्तानवच्छिन्नत्वसिद्ध्यै तदियत्ताग्राहकनिराकरणतया चाहेत्यन्वयः ।

ननु तर्हि प्रमाणाविषयत्वान्नास्ति ब्रह्मेति प्रसज्जेतात आह—सत्त्वमिति । सत्स्थूलं कार्यम्, असत्सूक्ष्मं कारणं तत्सर्वं ब्रह्मैव भाति । कुतः । यद्यस्मात्तयोः सदसतोः परं कारणं कार्यं कारणाद्भिन्नं न भवति—'वाचारम्भणम्' इति श्रुतेः । ननु कथमेकं बहुविधस्य कारणं तत्राह—उरुशक्ति अनेकशक्तिमत् । उरुर्महती मायालक्षणा शक्तिर्यस्य तदिति वा । बहुधा भानमेव दर्शयति—आदौ यदेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत्प्रधानं प्रवदन्ति । ततः क्रियाशक्त्या सूत्रं ज्ञानशक्त्या महानिति तदेव प्रवदन्ति, ततोऽहमिति जीवं जीवोपाधिमहंकारं च तदेव प्रवदन्ति । ततश्च ज्ञानक्रियार्थफलरूपतया ज्ञानशब्देन देवताः, क्रिया इन्द्रियाणि, अर्था विषयाः, फलं तत्प्रकाशः सुखादि वा तद्रूपतया ब्रह्मैव भाति । न हि सर्वस्वरूपेण स्वतो भासमानस्य ब्रह्मणः स्वसिद्धौ प्रमाणापेक्षेति भावः ॥ ३७ ॥ ननु सर्वात्मकं चेद्ब्रह्म तर्हि सर्वस्य कार्यस्य जन्मादिविकारवत्त्वाद्ब्रह्मणोऽपि तत्प्रसङ्गः स्यादत आह—नात्मेति । आत्मा ब्रह्म न जजान न जातः । जन्माभावादेव तदनन्तरास्तितालक्षणोऽपि विकारो नास्ति । नैधते न वर्धते । वृद्ध्यभावादेव विपरिणामोऽपि निरस्तः । कुतः । हि यस्माद्व्यभिचारिणामागमापायिनां बाल्युवादिदेहानां सवनवित्तत्तत्कालद्रष्टा । न ह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः । ननु निरवस्थः कोऽसावात्मा, अत आह—उपलब्धिमात्रमिति । नन्वायातं तर्हि क्षणिकत्वं नेत्याह—सर्वत्रेति । सर्वत्र देशे शश्वत्सर्वदा अनपाय्यनुवर्तमानम् । ननु नीलज्ञानं जातं, पीतज्ञानं

सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥३७॥ नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ॥ सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥ ३८ ॥ अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ॥ सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥३९॥

नष्टमिति प्रतीतेर्न ज्ञानस्यानपायित्वमत आह—इन्द्रियबलेनेति । सदेव ज्ञानमिन्द्रियबलेन विविधं कल्पितम् । नीलाद्याकारवृत्तय एव जायन्ते नश्यन्ति च, न ज्ञानमिति भावः । व्यभिचारिष्वव्यभिचारे दृष्टान्तः—प्राणो यथेति ॥ ३८ ॥ दृष्टान्तं विवृण्वन्निन्द्रियादिलयेन निर्विकारात्मोपलब्धिं दर्शयति—अण्डेष्विति । पेशिषु जरायुजेषु तरुषु उद्भिज्जेष्वविनिश्चितेषु । स्वेदजेषु उपधावत्यनुवर्तते । एवं दृष्टान्ते निर्विकारत्वं प्रदर्श्य दार्ष्टान्तिकेऽपि दर्शयति—कथम् । तदैवात्मा सविकार इव प्रतीयते यद्यदा जागरे इन्द्रियगणो यदा च स्वप्ने तत्संस्कारवानहंकारः, यदा तु प्रसुप्तं तदा तस्मिन्प्रसुप्ते इन्द्रियगणे सन्ने लीने अहम्यहंकारे च सन्ने कूटस्थो निर्विकार एवात्मा । कुतः । आशयमृते लिङ्गशरीरमुपाधिं विना । विकारहेतोरुपाधेरभावादित्यर्थः । नन्वहंकारपर्यन्तस्य सर्वस्य लये शून्यमेवावशिष्येत, तत्कथं तदा कूटस्थ आत्मा अत आह—तदनुस्मृतिर्नः, तस्य दर्शनस्पर्शनादिविशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः स्मृतिर्नोऽस्माकं भवति, एतावन्तं कालं सुखमहं सुप्तो न किंचिदवेदिषमिति । अतोऽननुभूतस्यास्मरणादस्त्येव सुषुप्तावात्मानुभवो विषयसंबन्धाभावात्तु न स्पष्ट इति भावः । तथा च श्रुतिः—'यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति' । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति ॥ ३९ ॥ ॥ ॥

१ प्रमाणाविषयत्वान्निष्प्रमाणकत्वात् । २ तत्कालद्रष्टा बाल्युवाद्यवस्थासाक्षी । ३ अवस्थावता देहाना तदवस्थो बाल्युवाद्यवस्थः । ४ उपलब्धिमात्रं ज्ञानैकरसम् । ५ अनुवर्तमानं नित्यत्वेनानुगतम् । ६ अनपायित्वं नित्यत्वेनानुवर्तमानत्वम् । ७ निर्विशेषात्मानुभवम् ।

ननु यदि सुषुप्तौ कूटस्थात्मानुभवो भवेत्कथं पुनरपि संसारः स्यात्, अविद्यातत्संस्काराणां विद्यमानत्वादिति चेत्कदा तर्हि तन्निवर्तकोऽनुभवो भवेदत आह—यर्हीति। वित्तैषणादि विहाय केवलमब्जनाभस्यैव चरणेच्छया या उरुभक्तिस्तया पुमांश्चेतसो मलानि विधमेन्नाशयेत्। चेत एव वा कर्तृ स्वगतानि मलानि तया भक्त्या क्षालयेत्। तदा तस्मिन्विशुद्धे चेतसि सति साक्षादव्यवधानेनात्मतत्त्वमुपलभ्यते। अमलयोर्दृशोः सत्योर्यथा पूर्वमेव सिद्धः सवितृप्रकाश इति ॥ ४० ॥ भक्तेः कर्मयोगाधीनत्वात्तं पृच्छति—कर्मयोगमिति। नैष्कर्म्यं कर्मनिवृत्तिसाध्यं ज्ञानम् ॥ ४१ ॥ प्रश्नान्तरमाह—एवमिति। प्रश्नं प्रष्टव्यमर्थम्। पितुरिक्ष्वाकोः। ब्रह्मणः पुत्राः सनकादयः सर्वज्ञा अपि नाब्रुवन् ॥४२॥ गहनत्वद्योतनाय प्रथमं द्वितीयप्रश्नस्योत्तरमाह—कर्मेति। कर्म विहितम्। अकर्म तद्विपरीतं निषिद्धम्। विकर्म विगतं कर्म विहिताकरणम्। एतत्त्रयं वेदवादो वेदैकगम्यम्। न लौकिकः। वेदस्येश्वरात्मत्वादीश्वराद्उद्भूतत्वादपौरुषेयत्वादित्यर्थः। पुंवाक्ये हि वक्तुरभिप्रायतोऽर्थज्ञानं शक्यमपौरुषेये तु केवलं वाक्यपौर्वापर्येणैव तात्पर्यावधारणं, तच्च दुष्करमिति तत्र कर्मादौ विद्वांसोऽपि

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः ॥ ४० ॥ ॥ राजोवाच ॥ कर्मयोगं वदत नः पुरुषो येन संस्कृतः ॥ विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४१ ॥ एवं प्रश्नमृषीन्पूर्वमपृच्छं पितुरन्तिके ॥ नाब्रुवन्ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४२ ॥ ॥ आविर्होत्र उवाच ॥ कर्माकर्मविकर्मेति वेदवादो न लौकिकः ॥ वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ॥ ४३ ॥ परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५ ॥ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥ ॥ ॥

मुह्यन्ति किमुतान्ये। अतस्तव तदा बालत्वान्नैवाब्रुवन्निति ॥ ४३ ॥ दुर्ज्ञेयं वेदतात्पर्यमाह—परोक्षवाद इति। यत्रान्यथास्थितोऽर्थः सङ्गोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः। तथा च श्रुतिः—'तं वा एतं चतुर्होतारं सन्तम्। चतुर्होतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः ॥' इति, परोक्षवादत्वमेवाह—कर्ममोक्षायेति। ननु स्वर्गाद्यर्थं कर्माणि विधत्ते, न कर्ममोक्षार्थं तत्राह—बालानामनुशासनं यथा भवति तथा। अत्र दृष्टान्तः—अगदमौषधम्। यथा पिता बालमगदं पाययन्खण्डलड्डुकादिभिः प्रलोभयन्पाययति ददाति च तानि। नैतावताऽगदपानस्य तल्लाभः प्रयोजनम्, अपि त्वारोग्यम्। तथा वेदोऽप्यवान्तरफलैः प्रलोभयन्कर्ममोक्षायैव कर्माणि विधत्ते ॥ ४४ ॥ ननु कर्ममोक्षश्चेत्पुरुषार्थस्तर्हि प्रथममेव कर्म त्यज्यतामत आह—नाचरेदिति। अजितेन्द्रियत्वादज्ञः स्वयं यदि नाचरेत्तर्हि विकर्मणा कर्मानाचरणलक्षणेनाधर्मेण मृत्योरनन्तरं मृत्युमेव प्राप्नोति। तथा च श्रुतिः—'मृत्वा पुनर्मृत्युमापद्यन्ते अर्द्यमानाः स्वकर्मभिः' इति ॥ ४५ ॥ तस्माद्वेदोक्तमेव कुर्वाणो न तु निषिद्धम्। ननु कर्मणि क्रियमाणे तस्मिन्नासक्तिस्तत्फलं च स्यान्नतु नैष्कर्म्यरूपा सिद्धिरत

१ अव्यवधानेन सुषुप्तिवत् अविद्यादिव्यवधानाभावेन। २ चित्तशुद्धेः पूर्वमेव। ३ स्वकर्मभिर्वेदोदितैरकृतैः सद्भिः अर्द्यमानः पीड्यमानः अकृतानां तेषां पापजनकत्वात्।

आह—निःसङ्गोऽनभिनिवेशवान्। ईश्वरेऽर्पितं न तु फलोद्देशेन। ननु फलस्य श्रुतत्वात्कर्मणि कृते फलं भवेदेव, न, रोचनार्थेति। कर्मणि रुच्युत्पादनार्थं मगदपाने खण्डलड्डुकादिवत्। ततश्च कर्माभिरुच्या वेदार्थं सम्यग्विचारयति। तदा च 'यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणः' इत्यनात्मज्ञस्यैव कृपणताम्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन' इति यज्ञादीनां ज्ञानशेषतां चावधार्य निष्कामेषु कर्मसु प्रवर्तते। ततश्च 'स्वर्गकामो यजेत' इत्यादिभिः कामितस्यैव स्वर्गादेः फलत्वेनावगमादकामितोऽसौ न भवतीति नैष्कर्म्यसिद्धिर्भवतीति भावः ॥ ४६ ॥ वैदिकं कर्मयोगमुक्त्वा तान्त्रिकमाह—य आश्विति। परात्मनः परस्यैव सत आत्मनो जीवस्य हृदयग्रन्थिमहंकारबन्धं निर्हर्तुमिच्छुः सन् तन्त्रोक्तेन च विधिना प्रकारेण भजेत्। तन्त्रमागमः। चकाराद्वैदिकेन सह समुच्चयमाह ॥ ४७ ॥ तमेव विधिमाह—लब्धानुग्रह इत्यादिना। तेनाचार्येण संदर्शित आगमोऽर्चनप्रकारो यस्य सः ॥४८॥ मूर्तेः संमुखमासीनः। आदिशब्देन भूतशुद्ध्यादिभिः। पिण्डं देहं विशोध्य संन्यासैः सद्भिर्न्यासैः कृता रक्षा

य आशु हृदयग्रन्थिं निर्जिहीर्षुः परात्मनः ॥ विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥४७॥ लब्धानुग्रह आचार्यात्तेन संदर्शितागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः ॥ ४८ ॥ शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिण्डं विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥ अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५० ॥ पाद्यादीनुपकल्प्याथ संनिधाप्य समाहितः ॥ हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५१ ॥ साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ५२ ॥ गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ साङ्गं संपूज्य विधिवत्स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥ आत्मानं तन्मयं ध्यायन्मूर्तिं संपूजयेद्धरेः ॥ शेषामाधाय शिरसा[2] स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥ एवमग्न्यर्कतोयादावतिथौ हृदये च यः ॥ यजतीश्वरमात्मानमचिरान्मुच्यते हि सः ॥ ५५ ॥ ॥ इति श्रीमद्भा० म० पु० एकादशस्कन्धे तृतीयोऽध्यायः ॥३॥

येन सः ॥ ४९ ॥ आदावेव द्रव्याणि पुष्पादीनि जन्त्वादिशोधनेन, क्षितिं संमार्जनादिना, आत्मानमव्यग्रतया, लिङ्गं मूर्तिमनुलेपक्षालनादिना, निष्पाद्य योग्यानि कृत्वा ॥ ५० ॥ पाद्यादिपात्राण्युपकल्प्य संनिधाप्य हृदि संपूजितं श्रीमूर्तौ ध्यात्वा हृदादिभिः हृदयशिरःशिखाकवचनेत्रास्त्रमन्त्रैर्मूलमन्त्रेण च देवे कृतन्यासो मूलमन्त्रेणार्चयेत् ॥ ५१ ॥ अङ्गानि हृदयादीन्युपाङ्गानि सुदर्शनादीनि तत्सहितां सपार्षदां सपरिवाराम्। कैरुपचारैरर्चयेत्तदाह—पाद्येति। आदिशब्देन मधुपर्कमाचमनं च ॥ ५२ ॥ अक्षतास्तिलकालङ्कारे, न तु पूजायाम्। 'नाक्षतैरर्चयेद्विष्णुं न केतक्या महेश्वरम्' इति निषेधात्। उपहारो नैवेद्यम्। ॥ ५३ ॥ शेषां निर्माल्यम्। स्वधाम्नि स्वस्थाने। देवं हृदि मूर्तिं करण्डके उद्वास्य स्थापयित्वा पूजाविधिं समापयेदिति शेषः ॥ ५४ ॥ तान्त्रिकं कर्मयोगमुपसंहरति—एवमिति ॥ ५५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥

१ अह कर्तृत्वाभिनिवेशशून्यः। २ शिरसा आधाय धृत्वा। कचित् 'शिरसि' इत्यपि पाठः।

चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ॥ जयन्तीनन्दनो नाम्ना द्रुमिलो नवसत्तमः ॥ १ ॥ 'मूर्त्याभिमतयात्मानः' इत्यनेनात्मनः प्रियमवतारं पूजयेदित्युक्तेऽवतारज्ञानमपेक्षितं तथा 'स्तवैः स्तुत्वा नमेद्धरिम्' इत्युक्ते गुणकर्मज्ञानं चापेक्षितमतः पृच्छति—यानि यानीति । कर्ता करिष्यति ॥ १ ॥ त्वया पृष्टानि कालत्रयसंबन्धिसकलावतारगुणकर्माणि कथयितुमशक्यानि सङ्क्षेपतस्तु कानिचित्कथयिष्यामीत्याह—यो वा इत्यादिना । अनुक्रमिष्यन्गणयितुमिच्छति यः स तु बालानामिव बुद्धिर्यस्य स मन्दमतिः । कालेन महता कोऽपि महामतिः रजांसि गणयेदपि । अखिलशक्तिधाम्नः सर्वशक्त्याश्रयस्य भगवतो गुणांस्तु नैव गणयेत् । तथा च श्रुतिः—'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' इत्यादि ॥ २ ॥ तत्रादौ पुरुषावतारमाह—भूतैरिति । यदा स्वसृष्टैर्भूतैर्विराजं ब्रह्माण्डं पुरं निर्माय तस्मिन् लीलया प्रविष्टो न तु भोक्तृत्वेन । प्रभूतपुण्यस्य जीवस्य तत्र भोक्तृत्वात् ॥ ३ ॥ अस्य गुणकर्माण्याह द्वयेन—यत्काय इति । यस्याधिष्ठेयः काय एषः । काय इति सप्तमी वा । तनुभृतां समष्टिव्यष्टिजीवानां ज्ञानकर्मेन्द्रियाणि यस्य स्वतःस्वरूपभूतात्सत्त्वात्तनुभृतां

॥ राजोवाच ॥ यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ॥ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥१॥ ॥ द्रुमिल उवाच ॥ यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन्स तु बालबुद्धिः ॥ रजांसि भूमेर्गणयेत्कथंचित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥ भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥ यत्काय एष भुवनत्रयसंनिवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ॥ ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भवआदिकर्ता ॥ ४ ॥ आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिप्रवरः प्रशान्तः ॥ नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ६ ॥ ॥ ॥

ज्ञानम्, यस्य स्वतःसिद्धं ज्ञानमिति वा । यस्य श्वसनतः प्राणाद्बलं देहशक्तिः । ओज इन्द्रियशक्तिः । ईहा क्रिया । यश्च सत्त्वादिभिर्विश्वस्य स्थितिलयोद्भवे आदिकर्ता ॥ ४ ॥ आदिकर्तेत्यनेन तत्पूर्वकं कर्त्रन्तरमपि सूचितम्, तद्दर्शयितुं गुणावतारद्वारा चराचरसृष्ट्यादिकर्तृत्वमाह—आदाविति । यस्येत्यनुषङ्गः । यस्य रजसाऽस्य जगतः सर्गे कार्ये शतधृतिर्ब्रह्माभूत् । स्थितौ च विष्णुर्यस्य सत्त्वेनेति शेषः । क्रतुपतिस्तत्फलदाता । द्विजातीनां तद्धर्माणां च सेतुः पालक इत्यर्थः । यस्य तमसाऽस्याऽप्ययाय रुद्रोऽभूत् । इत्येतैर्ब्रह्मादिभिर्निमित्तभूतैः प्रजासूद्भवादयो यतो भवन्ति स आद्यः पुरुष इत्यन्वयः ॥ ५ ॥ नरनारायणावतारमाह—धर्मस्येति । धर्मस्य भार्यायां दक्षदुहितरि मूर्तिसंज्ञायां नारायणो नर इति मूर्तिद्वयेनाजनिष्ट जातः । तच्चरितमाह—नैष्कर्म्यमात्मस्वरूपं लक्ष्यते येन तत्कर्म कर्मनिर्हाररूपं वा उवाच नारदादिभ्यः स्वयं चचार च । योऽद्यापि कर्माचरन्नास्ते । ऋषिवर्यैर्निषेवितावङ्घ्री यस्य सः ॥ ६ ॥ ॥ ॥

भगवदवतारत्वद्योतकं परमोपशमं दर्शयितुमितिहासमाह—इन्द्र इति दशभिः। धाम स्थानं तपसा ग्रहीतुमिच्छतीति विशङ्क्य तपोनाशाय कामं सपरिवारं प्रेषयामास। स कामो बदरीभिरुपाख्यायते यस्तं तस्याश्रममप्सरोगणादिभिः सह गत्वा स्त्रीणां प्रेक्षणान्येव इषवो बाणास्तैः। न तस्य महि महिमानं जानातीत्यतन्महिज्ञः॥ ७॥ अक्रममपराधम्। अहो, अहं धीर इति विस्मयो गर्वस्तद्रहितः। एजमानान् शापभिया कम्पमानान्। भो विभो समर्थ, देववध्वः मा भैष्ट। बलिमातिथ्यं तान्प्रार्थयते। इममस्माकमाश्रमम्। आतिथ्याभावे शून्यप्रायः स्यादित्यर्थः॥ ८॥ हे नरदेव, अभयदे श्रीनारायणे इत्थं ब्रुवति सति देवाः कामादयः सव्रीडानि नम्राणि शिरांसि येषां ते। लज्जाभरेणैवावनतशिरस्का इत्यर्थः। सघृणं यथा भवति तथा कृपां जनयन्त इत्यर्थः। कृपायुक्तं तमिति वा मायातः परे अतोऽविकृते स्वारामाश्च ते धीराश्च ते तेषां निकरैरानतं पादपद्मं यस्य तस्मिन्। त्वय्येतदक्षोभानुकम्पादि न विचित्रम्॥ ९॥ अस्माकं चापराधाचरणं स्वभावत्वान्न चित्रमित्याहुः—त्वामिति। त्वां सेवतां सेवमानानां सुरैरिन्द्रादिभिः कृता अन्तराया विघ्ना भवन्ति।

इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम्॥ गत्वाऽप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः॥ ७॥ विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान्॥ मा भैर्विभो[1] मदन मारुत देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम्[2]॥ ८॥ इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः॥ नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे॥ ९॥ त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते॥ नान्यस्य बर्हिषि बलीन्ददतः स्वभागान्धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि॥ १०॥ क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित्॥ क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति॥ ११॥ ॥ ॥

कस्मादित्यत आहुः—स्वौक इति। स्वस्थानं स्वर्गमतिक्रम्य परमं तव स्थानं व्रजताम्। नान्यस्य त्वामसेवमानस्य। कुतः। बर्हिषि यज्ञे स्वभागान्पुरोडाशादीन्बलीन्करान् कृषिक इव राज्ञे इन्द्रादिभ्यो ददतः प्रयच्छतः। तर्हि किं मद्भक्तो विघ्नैर्भ्रश्यति, नेत्याहुः—धत्ते इति। यदीति निश्चये। यतस्त्वं सर्वसुराधीश्वरोऽविता रक्षकोऽतोऽसौ विघ्नानां मूर्ध्नि पदमङ्घ्रिं धत्ते। कुतः पुनस्त्वयि विघ्नशङ्केति भावः॥ १०॥ त्वदभक्तानां तु केवलं तपश्चरतां द्वयी गतिः। अस्माकं वा वशं यान्ति क्रोधस्य वा। तत्रास्मद्वशाः कामोपभोगमपि तावदनुभवन्ति। क्रोधस्य वशाः पुनरतिमन्दा इत्याहुः—क्षुत्तृडिति। क्षुच तृट् च त्रिकालगुणाश्च शीतोष्णवर्षाणि च मारुतश्च प्राणो बाह्यो वा जैह्व्या जिह्वाभोगाश्च शैश्न्या गुह्योपभोगाश्च एतानस्मानपारजलधिरूपानतितीर्य विलङ्घ्य गोष्पदे मज्जन्ति। कुतः। यतः क्रोधस्य विफलस्य वशं यान्ति गच्छन्ति। किंच जले मज्जन्तो यथा विवशाः सन्तो मस्तकारोपितं भारमुत्सृजन्ति तथा वृथैव न मोक्षाय न च भोगाय शापादिना दुश्चरं तप उत्सृजन्ति॥ ११॥ ॥ ॥ ॥

[1] मा भैरित्यस्यैव वचनव्यत्ययो मा भैष्टेति। [2] टीकान्तरसमतश्च पाठो 'मा भैष्ट भो' इति।

स्त्रियो योगनिर्मिताः स्त्रीः शुश्रूषां कुर्वतीः स्वर्चिताः सुष्ठ्वलंकृतास्तेषां स्वलावण्यादिदर्पोपशमाय दर्शयामास ॥ १२ ॥ रूपिणी मूर्तिमती श्रीरिव ताः स्त्रियः स्त्रीर्दृष्ट्वा । तासां तु रूपसौदार्येण महत्त्वेन हता श्रीः कान्तिर्येषां ते ॥ १३ ॥ वृङ्ध्वं वृणीध्वम् । क वयं वराकाः, क चेमा इति चेत्तत्राह—सवर्णां समानरूपाम् । नैकाऽप्यस्मदनुरूपेति चेन्मा भवतु, तथापि स्वर्गस्य भूषणरूपाम् ॥ १४ ॥ सुरवन्दिनो देवभृत्याः ॥ १५ ॥ इन्द्राय इन्द्रं प्रति नारायणवलमूचुः । शक्रस्तत्रास त्रासं प्राप्तो विस्मितश्च । तत्र विस्मित आसेति वा ॥ १६ ॥ अन्यानप्यवतारांस्तच्चरितानि चाह—हंसस्वरूपीति । दत्तो दत्तात्रेयः । कुमारः सनकादिः । नः पिता ऋषभश्च । विष्णुरेव कलयावतीर्णः सन्नात्मयोगमवदत् । तेन विष्णुना हयास्ये हयग्रीवावतारे मधुभिदा सता ततः श्रुतय आहृताः

इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥१२॥ ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणी ॥ गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥ तानाह देवदेवेशः प्रणतान्प्रहसन्निव ॥ आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥ ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ॥ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥ इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ॥ ऊचुर्नारायणवलं शक्रस्तत्रास विस्मितः ॥ १६ ॥ हंसस्वरूप्यवदद्च्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान्पिता नः ॥ विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७॥ गुप्तोऽप्यये मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताम्भसः क्ष्माम्॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥ संस्तुन्वतोऽब्धिपतितान् श्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥१९॥ देवासुरे युधि च दैत्यपतीन्सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात्कलाभिः ॥ भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याच्ञाछलेन समदाददितेः सुतेभ्यः॥ २० ॥ ॥

॥ १७ ॥ इला पृथ्वी ओषधयश्च गुप्ताः । क्रौडे च वाराहावतारे । ग्राहाद्गजेन्द्रममुञ्चन्मोचयामास । एवमादौ यत्रावतारनाम नास्ति तत्र विष्णुः शिवाय जगतां कलयावतीर्ण इत्यनुवर्तनीयम् ॥ १८ ॥ संस्तुन्वतः स्तुतिं कुर्वाणान् ऋषीन्वालखिल्यान् कश्यपार्थं समिदाहरणे गोष्पदे निमग्नानिन्द्रेणोपहसितानुद्धृत्यापदोऽमोचयत् । तमसि ब्रह्महत्यायां प्रविष्टं मोचयामास । असुरगृहे पिहिता निरुद्धा या देवस्त्रियस्ताश्चामुञ्चदनेकावतारैः ॥ १९ ॥ अन्तरेषु सर्वमन्वन्तरेषु कलाभिर्मूर्तिभिर्भुवनान्यदधादपालयत् । इमां क्ष्मां समदाद्ददौ ॥ २० ॥ ॥ ॥ ॥

१ 'पातालतलत' इति पाठः । २ युधृशब्दस्य पुंस्त्वमार्षम् ।

हैहयानां कुलस्याप्ययाय भार्गवरूपोऽग्निः । स रामो दाशरथिः सन्सलङ्कं लङ्कायां स्थितम् । स च जयति । वर्तमानकालीनोऽवतार इत्यर्थः ॥ २१ ॥ भाविनं रामकृष्णावतारमाह—भूमेरिति । बुद्धावतारमाह—वादैरिति । अतदर्हान्यज्ञानर्हान्दैत्यान्विमोहयिष्यति । कल्क्यवतारमाह—शूद्रानिति । न्यहनिष्यन्निहनिष्यति ॥२२॥२३॥ ॥ इति श्रीमद्भा०म०पु०एकादशस्कन्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥४॥ ॥ पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे । पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥१॥ 'त्वां सेवतां सुरकृता बहवोऽन्तरायाः' इत्यनेन श्रीहरिभक्ता विघ्नमूर्ध्नि पदं दत्त्वा परां गतिं यान्ति, अभक्तानां तु विघ्ना भवन्तीत्युक्ते तर्हि तेषां का गतिर्भवतीति पृच्छति—भगवन्तमिति । हे आत्मवित्तमाः, अविजितात्मनां अत एवाशान्तकामानां का निष्ठा । किं प्राप्यमित्यर्थः ॥१॥ स्वजनकस्य गुरोर्भगवतोऽनादराद्गुरुद्रोहेण दुर्गतिं यान्तीति वक्तुं भगवतः सकाशाद्वर्णाश्रमाणामुत्पत्तिमाह—मुखेति । गुणैः सत्त्वेन विप्रः, सत्त्व-

निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ॥ सोऽब्धिं बबन्ध दशवक्त्रमहन्सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥ २१ ॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान्कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥२२॥ ॥ एवंविधानि कर्माणि जन्मानि च जगत्पतेः ॥ भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ राजोवाच ॥ भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ॥ तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥ ॥ चमस उवाच ॥ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ॥ न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ ३ ॥ दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥ ४ ॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ॥ श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥ ॥

रजोभ्यां क्षत्रियः, रजस्तमोभ्यां वैश्यः, तमसा शूद्र इति ॥ २ ॥ एषां मध्ये येऽज्ञात्वा न भजन्ति, ये च ज्ञात्वाप्यवजानन्ति । आत्मनः प्रभवो जन्म यस्मात्तम् । तद्भजने कृतघ्नतामप्याह—ईश्वरमिति । स्थानाद्वर्णाश्रमाद्भ्रष्टाः ॥ ३ ॥ तत्र येऽज्ञास्ते भवद्विधानामनुग्राह्या इत्याह—दूर इति । दूरे हरिकथाश्रवणं येषां ते । अत एव दूरे चाच्युतकीर्तनं येषां ते । दूरे अच्युतकीर्तनाश्चेति वा ॥ ४ ॥ ज्ञानलवदुर्विदग्धास्त्वचिकित्स्यत्वादुपेक्ष्या इत्याशयेनाह—विप्र इति । श्रौतेनोपनयनाख्येन । उपलक्षणमेतत् । अध्ययनादिनापि हरेः पदान्तिकं तद्भजनोत्तमाधिकारं प्राप्ता अपि मुह्यन्ति कर्मफलेषु सज्जन्ते । कुतः । आम्नायेषु ये वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते । तदुक्तं गीतासु—'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥ वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥' इत्यादिना ॥५॥ ॥११॥

१ एतेनास्याः कथाया रामावतारकालिकत्वं सूचितम् । जयतीति कथाया अस्यास्तत्कालभवत्वात्तस्मिन्नारदविशेषो वक्तुरिति चक्र० । २ आद्येऽर्थे उभयोर्विशेष्यविशेषणभावादेका कोटिः । द्वितीये कोटिद्वयम् ।

भक्तिमार्गदार्ढ्याय तेषां मोहं प्रपञ्चयन्निन्दन्ति—कर्मणीत्यादिना । अकोविदा यथा बन्धकं न भवति तथा कर्तुमज्ञाः । न चाभिज्ञान्पृच्छन्ति । यतः स्तब्धा अनम्राः । स्तब्धत्वे हेतुः—यतो मूर्खा अपि पण्डिता वयमिति मानवन्तः । अतः 'अपाम सोमममृता अभूम', 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'यत्र नोष्णं न शीतं स्यान्न ग्लानिर्नाप्यरातयः' इत्यादिकया यया माध्व्या गिरोत्सुकाः सन्तो मूढास्तया चाटुकानप्सरोभिः सह विहरिष्याम इत्यादिप्रियान् शब्दान्वदन्ति ॥ ६ ॥ किंच तेषां कर्माभिनिवेशात्कामक्रोधदम्भादयो वर्धन्त इत्याह त्रयेण—रजसेति । घोरोऽभिचारादिः संकल्पो येषां ते । अहिवन्मन्युर्येषां ते ॥ ७ ॥ कामुकत्वं प्रपञ्चयति—वदन्तीति । उपासिताः स्त्रियो यैर्न तु वृद्धास्ते मैथुन्यं मिथुनसुखमेव परं नत्वातिथ्यादि येषु गृहेषु तेष्वाशिषो वदन्ति—'इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥ इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥' इत्याकाराः । दाम्भिकतां प्रपञ्चयति—यजन्तीति । असृष्टान्नविधानदक्षिणं न सृष्टा न संपादिताऽन्नविधानदक्षिणा यथा तथा यजन्ति । तदा च वृत्त्यै जीविकार्थं परं केवलं पशून् घ्नन्ति । अत-

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ॥ वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥ रजसा घोरसंकल्पाः कामुका अहिमन्यवः ॥ दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥ वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः ॥ यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥ श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनान्धधियः सहेश्वरान्सतोऽवमन्यन्ति हरिप्रियान्खलाः ॥ ९ ॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतं च न शृण्वतेऽबुधा मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥ लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥ ॥ ॥

द्विदो हिंसादोषानभिज्ञाः ॥८॥ मानिता प्रपञ्चयति—श्रियेति । श्रिया धनादिसंपदा । विभूत्या ऐश्वर्येण । श्र्यादिना जातो यः स्मयो गर्वस्तेनान्धा धीर्येषां ते ईश्वरसहितान्सतोऽवमन्यन्ते ॥ ९ ॥ किंच एवं वर्तमानास्ते वेदतत्त्वार्थं स्फुटमपि न जानन्तीत्याह—सर्वेष्विति । केन रूपेणावस्थितं तदाह—आत्मानमीश्वरमात्मतया ईश्वरतया चावस्थितम् । एवमप्यसङ्गतामाह—यथा खम् । पुरुषार्थतामाह—अभीष्टम् । स्फुटत्वमाह—वेदोपगीतं चेति । तत्कुतः । यतो मनोरथानां व्यवायामिषमद्यसेवाविषयाणां वार्तया प्रवदन्ति । निवृत्तिपरं सन्तं वेदं प्रवृत्तिपरं वर्णयन्ति ॥ १० ॥ ननु व्यवायादीनामपि 'ऋतौ भार्यामुपेयात्', 'हुतशेषं भक्षयेत्' इत्यादिना विहितत्वात्कथमेवं निन्द्यतेऽत आह—लोक इति । व्यवायः स्त्रीसङ्गः । नित्या रागत एव नित्यं प्राप्ताः । जन्तोः प्राणिमात्रस्य अतस्तत्र तासु चोदना विधिर्नास्ति । ननु । 'ऋतावुपेयात्' इत्यादिना विधिर्दर्शितः, सत्यम्, नत्वयमपूर्वविधिः, रागतः प्राप्तत्वात्किंतु नियमविधिरूपेण रागिणामभ्यनुज्ञामात्रं क्रियते तदाह—व्यवस्थितिरिति । तेषु व्यवायादिषु । कैः । विवाह-यज्ञ-सुराग्रहैः । विवाहविषय एव व्यवायः कार्यः । यज्ञ

१ 'मैथुन्यसुखेषु' इति पाठः कचिदुपलभ्यमानोऽपि न श्रीधरसमतः । २ विधिरिति । 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । उभयोर्नित्यतः प्राप्ते परिसख्येति गीयते ॥' इति ।

एवामिपसेवा । 'सौत्रामण्यां सुराग्रहान् गृह्णाति' इति श्रुतेस्तत्रैव मद्यसेवेति नियमः क्रियते । ननु च नियमपक्षेऽप्यावश्यकत्वान्न निन्दा युक्ताऽत आह— आसु निवृत्तिरिति । आसु व्यवायामिपमद्यसेवासु निवृत्तिरिष्टा । अयं भावः—नायं नियमविधिरपि नित्यप्राप्तत्वादतो निवृत्तिः परिसंख्यैव, कथं तर्हि व्यवस्थितिरित्युक्तम् । उच्यते,—न तावत्परिसंख्याविधिना श्रुत्या निवृत्तिरुच्यते । तथा सति स्वार्थत्यागः, परार्थकल्पना, प्राप्तबाधश्चेति दोषत्रयं स्यात्, अतः क्वचित्प्राप्स्यतोऽप्यर्थस्य प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिः फलतो भवति, तद्यथा—'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र रशनालिङ्गतो गर्दभाश्वाभिधानी रशनाद्वये प्राप्स्यतो मन्त्रस्यापूर्वविधिद्वारा परिसंख्योच्यते । यथोक्तं तन्त्रवार्तिके—'अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः ॥ परिसंख्या फलेनोक्ता न विशेषः पुनः श्रुतेः ॥' इति । क्वचित्तु रागतो नित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्य नियमफलस्याप्यभावान्नियमविधिद्वारा फलतः परिसंख्या भवति, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । तथा रागतो नित्यवत्प्राप्तस्य व्यवायादेर्विवाहादिनियमनाभ्यनुज्ञाद्वारा परिसंख्यैवेति । ननु यद्यभ्यनुज्ञामात्रमेतद्भवेत्तर्हि 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ॥ घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः ॥' इत्यादिदोषश्रवणं न स्यात् । नैष दोषः । मनसि कामे सत्यपि तस्यामरुच्या द्वेषादिना वा तामनुपगच्छतो दोषश्रवणोपपत्तेरिति सर्वमनवद्यम् ॥ ११ ॥ तदेवं व्यवायादिमनोरथाकुलितत्वादभीष्टमात्मानं न शृण्वन्तीत्युक्तम्, इदानीं धनस्यापि धर्मद्वारा परमात्मप्रापकस्य दृष्टोपभोगार्थं विनियोगादात्मज्ञानगन्धोऽपीत्याह—धनं चेति । धर्म एवैकं

धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति ॥ गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥ यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥ ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ १४ ॥ ॥ ॥ ॥

फलं यस्य तत् । कुतः । यतो यस्माद्धर्मात्सविज्ञानमपरोक्षज्ञानसहितं दृढं परोक्षज्ञानं भवति । कथंभूतम् । अनुप्रशान्ति अन्वनन्तरमेव प्रकृष्टा शान्तिर्निर्वाणलक्षणा यस्य तत् । एवंभूतं धनं गृहेषु देहाद्यर्थं युञ्जन्ति ॥ १२ ॥ किंच व्यवस्थयापि व्यवायाद्यभ्यनुज्ञानं न यथेष्टम्, अपि त्वन्यथैवेत्याह—यदिति । यद्यस्मात्सुराया घ्राणभक्षोऽवघ्राणं स एव विहितः, न पानम् । तथा पशोरप्यालभनमेव विहितं, न तु हिंसा । अयमर्थः—देवतोद्देशेन यत्पशुहननं तदालभनं 'वायव्यं श्वेतमालभेत' इत्यादिश्रुतेर्न तु हिंसा, 'या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते' इति वचनात् । भक्षणोद्देशेन तु क्रियमाणं हननं लौकिकत्वाद्धिंसैव । अत्र ह्यालभनमेव विहितं, न तु हिंसा । अतो न यथेष्टभक्षणाभ्यनुज्ञेत्यर्थः । व्यवायोऽपि प्रजया निमित्तभूतया, न तु रत्यै । अतो मनोरथवादिन इमं विशुद्धं स्वधर्मं न विदुरिति ॥ १३ ॥ एवं भगवत्पराङ्मुखानां बहुदोषतां प्रपञ्च्य तन्निष्ठां प्रपञ्चयति—ये त्विति पञ्चभिः । अनेवंविदः न एवं धर्मं विदन्ति ये ते । विस्रब्धा निःशङ्काः । अनेन मनोरथो भविष्यतीति विश्वस्ता वा । तदानीन्तनपोषणेन वा तैः पशुभिर्विश्वस्ताः । ते च पशवः प्रेत्य अमुत्र तान् खादन्ति 'मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ॥ एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥' इति वचनात् ॥ १४ ॥ ॥ ॥ ॥

१ आसु व्यवायामिपमद्यसेवासु निवृत्तिरिष्टेत्यस्य आसु निवृत्तिरिति प्रतीकानन्तर पाठः प्राचीनसमतः । पाठान्तर तु लेखकप्रमादादिति वेदस्तुतिटीकायां सुबोधिन्यां काशीनाथोपाध्यायाः

अभिचारादिना द्विषन्तः । मृतके देहे । सानुबन्धे पुत्रादिसहिते ॥ १५ ॥ अज्ञास्तत्त्वज्ञैरननुकम्पितास्तरन्ति, तत्त्वज्ञास्तु स्वतः । ये तु नात्यन्तमज्ञा न च तत्त्वज्ञास्तेऽन्तरालवर्तिनः पतन्तीत्याह—य इति । कैवल्यं तत्त्वज्ञानमसंप्राप्ताः । मूढतामत्यन्तजडताम् । अत्र हेतुः—त्रिवर्गप्रधानाः । अक्षणिका उपशान्तिक्षणरहिता देहादिस्थैर्यबुद्धयो वा स्वयमेवात्मानं घातयन्ति ॥ १६ ॥ तदाह—एत इति । आत्महनः आत्मापह्नवकर्तारः । अज्ञाने कर्मणि । तथा च श्रुतिः—'असुर्या नाम ते लोका अन्धेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥' इति ॥ १७ ॥ या गृहापत्यसुहृच्छ्रियस्ता हित्वा ॥ १८ ॥ तदेवं भगवद्भक्तिरेव कर्तव्येति स्थिते तत्र विशेषं पृच्छति—कस्मिन्काल इति । किंवर्णः कीदृग्वर्णवान् । कीदृशः कीदृगाकारः । केन वा नाम्ना ।

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबन्धेऽस्मिन्बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥ ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् ॥ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥ १६ ॥ एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ॥ सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥ हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥ १८ ॥ ॥ राजोवाच ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥ ॥ करभाजन उवाच ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्डकमण्डलू ॥ २१ ॥ मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ॥ यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥ हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥ तं तदा मनुजा देवं सर्वदेवमयं हरिम् ॥ यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ॥ वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥ ॥

केन वा विधिना ॥ १९ ॥ एषु कृतादिकालेषु । नानाप्रकारा वर्णाभिधाकारा यस्य सः । नानैव विधिना विधिधेनैव मार्गेण ॥ २० ॥ तदेव वर्णादिचतुष्टयमाह—कृत इत्यादिना । कृष्णाजिनादीन्बिभ्रदिति ब्रह्मचारिवेषो दर्शितः ॥ २१ ॥ तपसा ध्यानेन ॥ २२ ॥ २३ ॥ त्रिगुणा दीक्षाङ्गभूता मेखला यस्य स यज्ञमूर्तिः । हिरण्यकेशः पिशङ्गकेशः ॥ २४ ॥ त्रय्या विद्यया वेदत्रयोक्तकर्मभिः ॥ २५ ॥ पृश्निगर्भः पृश्निः सुतपसः प्रजापतेः पत्नी तस्याः पुत्रः । वृषाकपिः स्मृतः सन्वर्षति कामानाकम्पयति क्लेशानिति तथा । जयत्येव सर्वदा जयन्तः ॥ २६ ॥ ॥ ॥

१ 'हित्वात्मायास' इति पाठः । 'हित्वा प्रयास' इति च पाठः । २ 'विशन्त्यनुच्छ्वासम्' इति पाठः । ३ 'मनुः' इति पाठः । ४ पृश्निगर्भस्तस्याः पुत्र इत्येव सर्वत्र पाठः ।

श्यामोऽतसीपुष्पसङ्काशः । निजानि चक्रादीन्यायुधानि च यस्य सः । श्रीवत्सो नाम वक्षसो दक्षिणभागे रोम्णां प्रदक्षिणावर्तः स आदिर्येषां करचरणादिगतपद्मादीनां तैरङ्कैराङ्गिकैश्चिह्नैर्लक्षणैर्वाह्यैः कौस्तुभादिभिः ॥२७॥ महाराजोपलक्षणं छत्रचामरादियुक्तम् । वेदतन्त्राभ्यां वैदिकेनागमिकेन च मार्गेण । यजन्ति पूजयन्ति । परमीश्वरं ज्ञातुमिच्छवः ॥२८॥ नामान्याह—नमस्त इति ॥२९॥३०॥ नानातन्त्रविधानेनेति कलौ तन्त्रमार्गस्य प्राधान्यं दर्शयति ॥३१॥ रूक्षतां व्यावर्तयति—त्विषा कान्त्याऽकृष्णमिन्द्रनीलमणिवदुज्वलम् । यद्वा त्विषा कृष्णं कृष्णावतारम् । अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति । अङ्गानि हृदयादीनि । उपाङ्गानि कौस्तुभादीनि । अस्त्राणि सुदर्शनादीनि । पार्षदाः सुनन्दादयः तत्सहितम् । यज्ञैरर्चनैः । संकीर्तनं नामोच्चारणं स्तुतिश्च तत्प्रधानैः । सुमेधसो विवेकिनः ॥३२॥ स्तुतिमाह—ध्येयमिति । हे प्रणतपाल हे महापुरुष, ते चरणारविन्दं वन्दे । कथंभूतम् । ध्येयं ध्यातुं योग्यम् । सदेति सर्वत्र संबध्यते । ध्येयत्वे हेतवः—इन्द्रियकुटुम्बादिभिर्यः परिभवस्तिरस्कारस्तं हन्तीति तथा तत् । किंच, अभीष्टदोहं मनोरथपूरकम् । किंच तीर्थास्पदं गङ्गाद्याश्रयत्वेन परमपावनम् । शिवविरि-

द्वापरे भगवान् श्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ॥ यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥ नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥ नारायणाय ऋषये पुरुषाय महात्मने ॥ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥३०॥ इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ॥ नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥ कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥ ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ॥ भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ ३३ ॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम् ॥ ३४ ॥ ॥ ॥

ञ्चिभ्यां नुतं स्तुतं महत्तमम् । ननु तौ कृतार्थावेव, किमर्थं ताभ्यां नुतं तत्राह—शरण्यमाश्रययोग्यं सुखात्मकमित्यर्थः । तर्हि ब्रह्मादिस्तुत्यं प्राकृतस्य कथं गोचरः स्यात्, न, भृत्यार्तिहं यस्य कस्यापि भृत्यमात्रस्यार्तिहन्तृ । न केवलमागन्तुकार्तिमात्रं हन्ति किंतु भवाब्धिपोतं संसारार्णवतारकं च ॥ ३३ ॥ इदानीं स्वयमासकामत्वान्नैरपेक्ष्यं भक्तार्थं च सापेक्षतां दर्शयन् श्रीरामचन्द्रं स्तौति—त्यक्त्वेति । अन्यैः सुदुस्त्यजा या सुरेप्सिता राज्यलक्ष्मीस्तां त्यक्त्वा । यदिति, य इत्यर्थः । योऽरण्यमगात् । किं राज्यवैकल्यदर्शनेन, न, धर्मिष्ठः । कुतः । आर्यस्य गुरोर्दशरथस्य वचसा । किंच एवं राज्यं त्यक्त्वापि भक्तवात्सल्येन दयितया सीतयेप्सितं मायामृगं स्वर्णाकारं योऽन्वधावत् । तस्य भगवतश्चरणारविन्दं वन्दे । यद्वा हे धर्मिष्ठेति संबोधनम् । तथाप्यविवक्षितत्वादार्यपदेन सन्धिर्न भवति । तथा यदगादिति चरणारविन्दमेवोच्यते । यन्मायामृगमन्वधावत्तत्ते चरणारविन्दं वन्द इत्यन्वयः । अन्यत्समानम् ॥ ३४ ॥ ॥ ॥ ॥

१ 'तरङ्कैरङ्कितश्चिह्नैः' इति प्रचुरः पाठः ।

युगानुरूपाभ्यां नामरूपाभ्याम् ॥ ३५ ॥ एतेषु चतुर्युगेषु कलिरेव श्रेष्ठ इत्याह—कलिमिति । गुणज्ञाः कलेर्गुणं जानन्ति ये ते । ननु दोषाणां बहुत्वात्कथं सभाजयन्ति तत्राह—सारभागिनो गुणांशग्राहिणः । कोऽसौ गुणस्तमाह—यत्रेति । तदुक्तम्—'ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥' इति ॥३६॥ तस्मात्कलावतोऽस्मात्संकीर्तनात्परमो लाभो नास्ति । यतः संकीर्तनात् ॥३७॥ किंच, कृतादिष्विति ॥ ३८ ॥ ॥३९॥ अमलाशयाः सन्तः प्रायः प्रायशो भगवति भक्ता भवन्ति ॥ ४० ॥ भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह—देवर्षीति । आप्ताः पोष्याः कुटुम्बिन इतरे देवादयः पञ्चयज्ञदेवता एतेषां यथाऽभक्तः ऋणी अत एव तेषां किङ्करस्तदर्थं नित्यं पञ्चयज्ञादिकर्ता । तथा च स्मृतिः—'हीनजातिं परिक्षीणमृणार्थं कर्म

एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः ॥ मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ ३५ ॥ कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥३६॥ न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ३७ ॥ कृतादिषु प्रजा राजन्कलाविच्छन्ति संभवम् ॥ कलौ खलु भविष्यन्ति[1] नारायणपरायणाः ॥ ३८ ॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४० ॥ देवर्षिभूताप्तनृणां पितॄणां[2] न किङ्करो नायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥ ४१ ॥ स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः ॥४२॥ ॥ नारद उवाच ॥ धर्मान्भागवतानित्थं[3] श्रुत्वाथ मिथिलेश्वरः ॥ जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥ ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ॥ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥ ॥ ॥

कारयेत्' इति । अयं तु न तथा । कोऽसौ । यः सर्वभावेन श्रीमुकुन्दं शरणं गतः । कर्तं कृत्यं परित्यज्य । यद्वा कर्तं भेदं परिहृत्य । 'कृती छेदने' इत्यस्मात् वासुदेवः सर्वमिति बुद्ध्येत्यर्थः ॥ ४१ ॥ विहितकर्मनिवृत्तिमुक्त्वा निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह—स्वपादमूलमिति । त्यक्तोऽन्यस्मिन्देहादौ देवतान्तरे वा भावो येन । अत एव तस्य विकर्मणि प्रवृत्तिर्न संभवति । यच्च कथंचित्प्रमादादिना उत्पतितं भवेत्तदपि हरिर्धुनोति । ननु यमस्तन्न मन्येत तत्राह—परेशः[3] । ननु 'श्रुतिस्मृती ममैवाज्ञे' इति भगवद्वचनात्स्वाज्ञाभङ्गं कथं सहेत तत्राह—प्रियस्य । ननु नायं पापक्षयार्थं भजते तत्राह—हृदि संनिविष्टः । न हि वस्तुशक्तिरर्थितामपेक्षत इत्यर्थः ॥ ४२ ॥ जायन्तेयान् जयन्त्याः पुत्रान् ॥ ४३ ॥ उपातिष्ठन्ननुतिष्ठन् ॥ ४४ ॥ ॥ ॥

१ 'भविष्यन्ति' इति क्वाचित्कः पाठ. प्राचीनपुस्तकेषु न दृश्यते । २ 'नित्थ' इति पाठः । ३ परेषां यमादीनामीशः ।'

निःसङ्गो भूत्वा ॥ ४५ ॥ शास्त्रप्रक्रियेयमुक्ता, युवां तु सङ्गत एव कृतार्थाविल्याह—युवयोरिति । वां युवयोः ॥ ४६ ॥ न च सर्वकर्मार्पणादिभागवतधर्मैरन्येषामिव युवयोः सत्त्वशुद्धिरापादनीया, पुत्रोपलालनेनैव भागवतधर्मसर्वस्वनिष्पत्तेरित्याह—दर्शनेति । कृष्णे पुत्र इति स्नेहं प्रकुर्वतोर्वां तस्य दर्शनादिभिरात्मा पावितः शोधितः ॥ ४७ ॥ एतदेव कैमुतन्यायेन स्फुटयति—वैरेणेति । यं शयनासनादौ वैरेणापि ध्यायन्तस्तस्य गतिविलासाद्यैराकृतधियस्तत्तदाकारा धीर्येषां ते तत्सारूप्यमापुः किं पुनर्वक्तव्यमनुरक्तधियां तत्साम्यं भवतीति ॥ ४८ ॥ ननु पुत्रस्नेहश्चेन्मोक्षहेतुस्तर्हि सर्वे मुच्येरंस्तत्राह—माऽपत्यबुद्धिमिति । अपत्यमिति बुद्धिं मा कृथाः । अडागमश्छान्दसः ॥ ४९ ॥ ननु कथमीश्वरो मानुषः स्यात्कथं वा नरः विश्वसृष्ट्यादिकर्तुः पूतना-

त्वमप्येतान्महाभाग धर्मान्भागवतान् श्रुतान् ॥ आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४५ ॥ युवयोः
खलु दम्पत्योर्यशसा पूरितं जगत् ॥ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥४६॥ दर्शनालिङ्गनालापैः शयनासन-
भोजनैः ॥ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥४७॥ वैरेण यं नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिवि-
लासविलोकनाद्यैः ॥ ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥४८॥ माऽपत्य-
बुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ॥ मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ४९ ॥ भूभारासुरराजन्यहन्तवे गुप्तये
सताम् ॥ अवतीर्णस्य निर्वृत्यै यशो लोके वितन्यते ॥ ५० ॥ ॥ श्रीशुक उवाच ॥ एतच्छ्रुत्वा महाभागो वसुदेवो-
ऽतिविस्मितः ॥ देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५१ ॥ इतिहासमिमं पुण्यं धारयेद्यः समाहितः ॥ स
विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५२ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥
॥ श्रीशुक उवाच ॥ अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ॥ भवश्च भूतभव्येशो ययौ भूतगणैर्वृतः ॥ १ ॥
इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ॥ ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥ गन्धर्वाप्सरसो
नागाः सिद्धचारणगुह्यकाः ॥ ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥ ॥ ॥

शोषणादिकर्माश्चर्यमिव निरूप्यते तत्राह—भूभाररूपा असुरा एव राजन्यास्तेषां हन्तवे तान्हन्तुम् । निर्वृत्यै मोक्षाय ॥ ५० ॥ ५१ ॥ इहास्मिन्नेव देहे शमलं मोहं विधूय ब्रह्मत्वाय कल्पते ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ ६ ॥
षष्ठे ब्रह्मादिभिः स्तुत्वा गन्तुं विज्ञापितं हरिम् ॥ उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥ १ ॥ अतःपरमतिविस्तरेणात्मविद्यां निरूपयितुं तत्प्रस्ताव-माह—अथेति । आत्मजैः सनकादिभिः । अभ्यगात् द्वारकामिति चतुर्थेनान्वयः ॥ १ ॥ २ ॥ ३ ॥ ॥ ॥ ॥



१२९८

ननु तेषामुपेन्द्रादिरूपं भगवन्तं नित्यं पश्यतां केयमतिदिदृक्षा अत आह—वपुषेति । येन वपुषा नरलोकमनोरमः सन्सर्वलोकेषु यशो वितेने तदतिसुन्दरं वपुर्दिदृक्षवः ॥ ४ ॥ व्यचक्षतापश्यन् ॥ ५ ॥ स्वर्गोद्यानस्थैर्माल्यैः । चित्राणि श्लिष्टावन्धप्रायाणि पदान्यर्थाश्च यासु ताभिर्गीर्भिः ॥ ६ ॥ बुद्धीन्द्रियादिभिर्दर्शनादिना प्राणेन च वलहेतुना दण्डवत्प्रणिपातेन नता वयं नमस्कृतवन्तः । स्मेति विस्मये । यथाहुः—'दोर्भ्यां पदाभ्यां जानुभ्यामुरसा शिरसा दृशा ॥ मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥' इति । स्मशब्दोक्तविस्मयाय विशेषणम् । कर्ममयादुरुपाशान्मुमुक्षुभिर्भावयुक्तैरपि यत्केवलमन्तर्हृदि चिन्त्यते न तु दृश्यते तद्वयं नताः । अहो भाग्यमित्यर्थः ॥ ७ ॥ ननु ममापि दृष्टादृष्टकर्मकरणात्कुतो मत्पदारविन्दचिन्तनं कर्मपाशान्मुमुक्षुभिः क्रियते तत्राहुः—त्वमिति । हे अजित, आस्तामिदानीन्तनमिदमल्पं कर्म, त्वं व्यक्तं महदादिप्रपञ्चं सृजसि पालयसि संहरसि च, तदप्यात्मन्येव न पृथक् । दुर्विभाव्यं मनसाप्यवितर्क्यम् । तद्गुणस्थस्तस्या मायाया गुणेषु नियन्तृत्वेन स्थितः । अत एव तैः कर्मभिर्भवान्नाज्यते न लिप्यते । कुतः । यो भवाननवद्यो

द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ॥ वपुषा येन भगवान्नरलोकमनोरमः ॥ यशो वितेने लोकेषु सर्वलोकमलापहम् ॥ ४ ॥ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः ॥ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥५॥ स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥ ॥ देवा ऊचुः ॥ नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ॥ यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥ त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः॥ नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः॥८॥शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्त्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥ स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ॥ यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥ १० ॥

रागादिरहितः । यतः स्वे आत्मरूपे सुखेऽव्यवहितेऽनावृते अभिरतः । अतस्त्वं कर्म कुर्वन्नप्यात्मारामः परमेश्वर इति मुमुक्षुभिश्चिन्त्यस इति भावः ॥ ८ ॥ नन्वात्मारामस्य किं कर्मकरणेनात आहुः—शुद्धिरिति । हे ईड्य हे ऋषभ, दुराशयानां रागिणाम् । विद्या उपासना । विद्यादिभिस्तथा शुद्धिर्न भवति । सत्त्वात्मनां सतां ते यशसि श्रवणेन संभृतया परिपुष्टयाऽभिवृद्धया सच्छ्रद्धया यथा स्यात् । परमपावनस्य यशसो वितानाय तव कर्माचरणमिति भावः ॥ ९ ॥ तदेवं त्वद्यशःश्रद्धैव शुद्धिहेतुः, अस्माभिस्तु तवाङ्घ्रिर्दृष्टोऽतस्तवाङ्घ्रिर्नोऽस्माकमशुभाशयानां विषयवासनानां धूमकेतुस्तद्दाहकः स्यात् । कथंभूतः । यः क्षेमाय मोक्षाय मुनिभिर्मुमुक्षुभिः प्रेमार्द्रहृदा उह्यमानश्चिन्त्यमानः । यश्च सात्वतैर्भक्तैः समविभूतये समानैश्वर्याय वासुदेवादिव्यूहेऽर्चितः । तेषु च कैश्चिदात्मवद्भिर्धीरैः स्वरतिक्रमाय स्वर्गमतिक्रम्य वैकुण्ठप्राप्तये सवनशस्त्रिकालमर्चितः ॥ १० ॥ ॥ ॥ ॥ ॥

१ अत्र 'प्रभूतमोदसयुक्ता नृत्यगीतकृतश्रमाः' इत्यर्धमधिकं क्वचित् । २ 'स्वर्गोद्यानोद्भवे.' इति पाठः ।

किंच प्रयतपाणिभिः संयतहस्तैर्हविर्गृहीत्वाऽध्वराग्नौ आहवनीयादौ याज्ञिकैर्यश्चिन्त्यते । ननु 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति वचनात्तत्तद्देवताश्चिन्त्यन्ते अत आहुः—त्रय्या निरुक्तेन विधिनेन्द्रादिरूपेणैव यज्ञपुरुषश्चिन्त्यत इत्यर्थः । उत किंच । अध्यात्मयोगे आत्माधिकारे योगे योगिभिरप्यात्मनस्तव माया अणिमादिस्तां जिज्ञासुभिस्तत्तत्कामैर्यश्चिन्त्यते । परमभागवतैस्तु मुक्तैर्यः परीष्टः सर्वतः पूजितः स तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुः स्यादिति पूर्वेणान्वयः ॥ ११ ॥ एतेषां च मुनिसात्वतादीनां षण्णां सेवकानां मध्ये परमभागवतेषु लक्ष्म्या अपि तव प्रीतिरधिकेति संस्तुवन्ति—पर्युष्टयेति । इडभावश्छान्दसः । अहं यत्र वसामि तत्रैव वक्षसि पर्युषितापीयं वसतीति प्रतिपत्निवत् सपत्नीवच्छ्रीः संस्पर्धमाना भवति, तथापि स्पर्धमानां श्रियमनादृत्य यो भवान्पर्युषितयापि अमुया वनमालया भक्तैरर्पितेयमिति प्रीत्या सुप्रणीतं सुष्ठु संपादितं यथा भवति तथार्हणं पूजामाददत्स्वीकृतवान् । सुप्रणीतमित्यर्हणविशेषणं वा । तस्य तवाङ्घ्रिर्नोऽशुभाशयधूमकेतुर्भूयात् । यद्वा योऽङ्घ्रिरमुया सुप्रणीतमर्हणमाददत्स नोऽशुभाशयधूमकेतुर्भूयादित्यन्वयः । अथवैवं संबन्धः,—एतेभ्यो ध्यानार्चनादिनिष्ठेभ्योऽपि त्वद्यशसि प्रवृद्धसच्छ्रद्धावन्त एव कृतार्था भगवतो यशःप्रियत्वादित्याहुः—पर्युष्टया, 'वश कान्तौ'

यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ॥
अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभागवतैः परीष्टः ॥ ११ ॥
पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ॥
यः सुप्रणीतममुयार्हणमाददन्नो भूयात्सदाङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥
केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ॥
स्वर्गाय साधुषु खलेष्वितराय भूमन्पादः पुनातु भगवन्भजतामघं नः ॥ १३ ॥

इत्यस्मात्परिः‍ः सर्वाङ्गे उष्टया कान्तया शोभितया वनमालया वक्षस्येकदेशे वर्तमाना श्रीः संस्पर्धमाना भवति तथाप्याम्नायमधुव्रतैर्बहुधा वर्णितया कीर्तिमय्या वैजयन्त्या वनमालयैव यो भवान्सुप्रणीतमर्हणमाददन्नित्यादि पूर्ववत् ॥ १२ ॥ त्वच्चरणस्य भक्तपक्षपातः प्रसिद्ध एवेति स्तुवन्तः प्रार्थयन्ते—केतुरिति । बलिबन्धने त्रिभिर्विक्रमैर्युतः । तत्र द्वितीयविक्रमे सत्यलोकं गतस्तव पादः केतुरत्युच्छ्रितो विजयध्वज इव । तत्संपादयन्ति । त्रिपतत्पताकः त्रिधा पतन्ती, त्रिषु लोकेषु वा पतन्ती गङ्गा पताका यस्य । तथाऽसुरदेवचम्वोस्तत्सेनयोरुभयोर्भयाभयकरः । साधुषु सुरेषु स्वर्गाय खलेष्वसुरेष्वितरायेतरस्मै अधोगमनाय । य एवं केतुरूपस्ते पादः स भजतां नोऽघं पुनातु शोधयतु। 'अघात्' इति पाठे भजतां नः इति कर्मणि षष्ठी । अघाद्भजतोऽस्मान्पुनात्विति। तथा च श्रुतिः—'चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ॥ तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम ॥ लोकस्य द्वारमर्चिमत्पवित्रम् ॥ ज्योतिष्मद्भ्राजमानं महस्वत् ॥ अमृतस्य धारा बहुधा दोहमानम् ॥ चरणं नो लोके सुधितां दधातु' इति ॥ १३ ॥ ॥ ॥

१ आदिशब्देनात्मनयादिक्रियोगिपरमभागवता ज्ञेयाः । २ त्रिषु लोकेष्विति स्वर्गे मन्दाकिनीति, पाताले भोगवतीति, भुवि गङ्गेति ज्ञेयम् । ३ सुधितां सुधितता सुधामादरणीयताम् ।

ननु युद्धे देवासुरादयः परस्परं जयन्ति, जीयन्ते च किमहं तत्रेत्यत आहुः—नसीति । मिथुर्मिथोऽर्द्यमाना युद्धादिभिः पीड्यमाना ब्रह्मादयोऽपि यस्य तव वशे भवन्ति, न तु जये पराजये वा स्वतन्त्राः । के इव । नसि नासिकायामोता नासिकामाविध्य बद्धा गावो वलीवर्दा इव । कुतः । कालस्य कलयितुः प्रवर्तकस्य । तदेव कुतः । प्रकृतिपुरुषयोरपि परस्य । तस्य ते पुरुषोत्तमस्य पादो नः शं तनोतु ॥ १४ ॥ प्रकृतिपुरुषाभ्यां परत्वमुपपादयन्तः कालत्वेन पुरुषोत्तमत्वमाहुः—अस्येति । अस्य जगत उदयादीनां हेतुरसि । कुतः । अव्यक्तं प्रकृतिर्जीवः पुरुषो महान्महत्तत्त्वं तेषां कालं नियन्तारं त्वामाहुः—'अक्षरात्परतः परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्याद्याः श्रुतयः । किंच अयं संवत्सरात्मको यः कालस्त्रिणाभिस्त्रीणि चातुर्मास्यानि नाभयो यस्य सोऽपि त्वमेव । अतस्त्वमुत्तमपुरुष इति । तथा च गीतासु—'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति ॥ १५ ॥ त्वमेव प्रकृत्यादिद्वारा जगत्सृष्ट्यादिद्वारा जगत्सृष्ट्यादिहेतुरित्युक्तं तत्केन प्रकारेण तदाहुः—त्वत्त इति ।

नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ॥ कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥ अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥ त्वत्तः पुमान्समधिगम्य ययाऽस्य वीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ॥ सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज वहिरावरणैरुपेतम् ॥ १६ ॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थान् जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ १७ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ॥ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥ ॥ ॥

त्वत्तः पुरुषो वीर्यं शक्तिं समधिगम्य प्राप्य यया मायया सह महान्तं धत्ते । कमिव । अस्य विश्वस्य गर्भमिव । सोऽयं महांस्तयैव माययाऽनुगतः सन्नात्मनः सकाशादाण्डकोशं ससर्ज । त्वयाऽनुगत इति पाठेऽपि तया मायया त्वयाधिष्ठितः सन्निति ॥ १६ ॥ नन्वेवंभूतमीश्वरत्वं मम कुतोऽवगतं तदाहुः—तदिति । तत्तस्मात्तस्थुषः स्थावरस्य जगतो जङ्गमस्य च भवानधीशः । यद्यस्मान्माययोत्था उज्जृम्भिता या गुणविक्रिया इन्द्रियवृत्तिस्तयोपनीतानर्थान्विषयान् जुषन् जुषमाणोऽपि हे हृषीकपते, न लिप्तस्त्वम् । ये त्वन्ये जीवाः योगिनो वा स्वतः परिहृतादप्यविद्यमानात्त्यक्ताद्वा विषयजोषणाद्बिभ्यति । वासनामात्रेण बध्यन्त इत्यर्थः ॥ १७ ॥ अलिप्तत्वमाहुः—स्मायेति । स्मायावलोको मन्दस्मितविलसितोऽवलोकस्तस्य लवः कटाक्षस्तेन दर्शितो यो भावोऽभिप्रायस्तेन मनोहारि भ्रूमण्डलं तेन प्रहिता ये सौरता मन्त्रास्तैः शौण्डैः प्रगल्भैरनङ्गबाणैः कामस्य बाणैः संमोहनैः करणैः कामकलादिभिः षोडशसहस्रं पत्न्यो यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न विभ्व्यो न समर्थाः स भवान्न लिप्त इति पूर्वेणान्वयः ॥ १८ ॥ ॥ ॥ ॥

१ परस्य कारणस्य । २ अनुगतो व्याप्तः सन् । ३ जुषन् लीलारसास्वादकतयाऽनुभवन्नपि ।

तस्माँत्तवामृतरूपा या कथा तदेव उदकं वहन्तीति तथा कीर्तिनद्यः । तथा पादावनेजसरितो गङ्गाद्याश्च त्रिलोक्याः शमलानि हन्तुं विभ्व्यः । केन प्रकारेण आनुश्रवं गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तत्र भवं कीर्तिरूपं तीर्थं श्रुतिभिः श्रवणेन्द्रियैरङ्घ्रिजं चाङ्गसङ्गैरेवं शुचिषदः स्वाश्रमधर्मस्थितास्तव तीर्थद्वयमुप-

विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ॥ आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति ॥१९॥ ॥ बादरायणिरुवाच ॥ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ॥ अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः[2] ॥२०॥ ॥ ब्रह्मोवाच ॥ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ॥ त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥ धर्मश्च स्थापितः सत्सु सत्यसंधेषु वै त्वया ॥ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥ यानि ते चरितानीश मनुष्याः साधवः कलौ ॥ शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ॥ शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥ नाधुना तेऽखिलाधार देवकार्यावशेषितम् ॥ कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥ ततः स्वधाम परमं विशस्व यदि मन्यसे ॥ सलोकाँल्लोकपालान्नः पाहि वैकुण्ठ किङ्करान् ॥ २७ ॥[3] ॥ श्रीभगवानुवाच ॥ अवधारितमेतन्मे यदात्थ विबुधेश्वर ॥ कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥ तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ॥ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ २९ ॥ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ॥ गन्ताऽस्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥ इदानीं नाश आरब्धः कुलस्य द्विजशापतः[4] ॥ यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ॥ ३१ ॥ ॥ श्रीशुक उवाच ॥ इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ॥ सह देवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥ अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ॥ विलोक्य भगवानाह यदुवृद्धान्समागतान् ॥ ३३ ॥ ॥

स्पृशन्ति सेवन्त इति ॥१९॥ विबुधैः सह ॥२०॥२१॥ विक्षिप्ता विस्तारिता ॥२२ उद्दामानि वृत्तानि विक्रमा येषु तानि कर्माणि ॥२३॥२४॥२५॥॥२६॥ ॥ २७ ॥ २८ ॥ वीर्यशौर्ययुक्तया श्रिया ॥ २९ ॥ उद्वेलेन लङ्घितमर्यादेन ॥ ३० ॥ वैकुण्ठं यास्यंस्तव भवनं यास्यामि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥

१ तस्मादलिप्तत्वेनेश्वरत्वात् । २ न हि देवा भुवं स्पृशन्तीति मर्यादापालनायाम्बराश्रितत्वम् । ३ अत्र 'शुक उवाच ॥ संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ॥ प्रतिनन्द्याह तान् राजन्मायामनुज ईश्वरः ॥' इत्येकः श्लोकोऽधिकः क्वचित्, वीर॰ विज॰ समतश्च । ४ 'शापजः' इत्यपि पाठः ।

॥ ३४ ॥ प्रभासं यास्याम इति वदतोऽयमभिप्रायः। एते देवांशाः स्वाधिकारानेवार्हन्ति, न तु सद्यो मोक्षम्। द्वारवत्यां मृता मुच्येरंस्तस्मादभ्युदयफलं प्रभासं नेष्यामीति ॥ ३५ ॥ दक्षशापाद्यक्ष्मणा गृहीत उडुराट् चन्द्रो यत्र स्नानमात्रं कृत्वा किल्बिषात्तस्माद्रोगदुःखात्सद्यो विमुक्तः सन् भूयः कलावृद्धिं भेजे ॥ ३६ ॥ उशिजः कमनीयान्। अन्धसा अन्नेन ॥ ३७ ॥ उप्त्वेति यथा सुक्षेत्रे बीजमुप्तं बहुफलं भवति तथा दानं सत्पात्रे इति द्योतयति ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ श्रीभगवानुवाच ॥ एते वै सुमहोत्पाता व्युत्तिष्ठन्तीह सर्वतः[1] ॥ शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥
न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव मा चिरम् ॥ ३५ ॥ यत्र स्नात्वा दक्ष-
शापाद्गृहीतो यक्ष्मणोडुराट् ॥ विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ ३६ ॥ वयं च तस्मिन्नाप्लुत्य तर्प-
यित्वा पितॄन्सुरान् ॥ भोजयित्वोशिजो विप्रान्नानागुणवताऽन्धसा ॥ ३७ ॥ तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति
वै ॥ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३८ ॥ ॥ श्रीशुक उवाच ॥ एवं भगवतादिष्टा यादवाः कुल-
नन्दन ॥ गन्तुं कृतधियस्तीर्थं स्यन्दनान्समयूयुजन् ॥ ३९ ॥ तन्निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम् ॥ दृष्ट्वा-
ऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४० ॥ विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम् ॥ प्रणम्य शिरसा पादौ प्राञ्ज-
लिस्तमभाषत ॥ ४१ ॥ ॥ उद्धव उवाच ॥ देवदेवेश योगेश पुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलं नूनं लोकं संत्य-
क्ष्यते भवान् ॥ विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥ नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ॥ त्यक्तुं
समुत्सहे नाथ स्वधाम नय मामपि ॥ ४३ ॥ तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ॥ कर्णपीयूषमास्वाद्य त्यजत्य-
न्यस्पृहां जनः ॥ ४४ ॥ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ ४५ ॥
त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ॥ उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४६ ॥ वातरशना[2] य ऋषयः
श्रमणा ऊर्ध्वमन्थिनः ॥ ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥ ॥ ॥

॥ ४१ ॥ लोकं मर्त्यलोकम्। न प्रत्यहन्प्रतिहतवान् ॥ ४२ ॥ ४३ ॥ ४४ ॥ शय्यादिषु त्वां भक्ता नित्यं सेवितवन्तो वयं कथं त्यजेम ॥ ४५ ॥ त्यक्तुमशक्नुवन्प्रार्थयते, न मायाभयादित्याह—त्वयेति। चर्चिता अलंकृताः। हि निश्चितं जयेम ॥ ४६ ॥ संन्यासिनो हि ब्रह्मचर्यादिक्लेशैः कथंचित्तरन्ति, वयं त्वनायासेनैव तरिष्याम इत्याह—वातरशना इति। ऊर्ध्वमन्थिन ऊर्ध्वरेतसः ॥ ४७ ॥ ॥ ॥ ॥

१ सर्वतो दिव्यभौमदैहिकभेदेन। २ रशनाशब्देन वस्त्रं लक्ष्यते। 'वाताशनाः' इति पाठः।

तावकैर्भक्तैः सह त्वद्वार्तया दुस्तरं तमः संसारम् ॥ ४८ ॥ क्ष्वेली परिहासः । द्वन्द्वैकत्वम् ॥ ४९ ॥ एकान्तिनमित्यादिस्वाभिप्रायावञ्चने हेतुः ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ सप्तमे तूद्धवस्यात्मज्ञानसिद्धै हरिः स्वयम् ॥ अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १ ॥ यदात्थ संहृत्यैतत्कुलमिति । स्ववांसं वैकुण्ठवासं प्रति ॥ १ ॥ २ ॥ त्वं च सर्वत्यागेनात्मनिष्ठो भवेति वक्तु-माह—कुलमिति त्रयेण ॥ ३ ॥ तदैवायं नष्टमङ्गलो भविष्यति । निराकृतो नितरामाक्रान्तः ॥ ४ ॥ न वस्तव्यमेव त्वया ॥ ५ ॥ ६ ॥ ननु गुणदोषाभ्यां

वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ॥ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥ स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ॥ गत्युत्स्मितेक्षणक्ष्वेलि यन्नृलोकविडम्बनम् ॥ ४९ ॥ ॥ श्रीशुक उवाच ॥ एवं विज्ञापितो राजन् भगवान्देवकीसुतः ॥ एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ श्रीभगवानुवाच ॥ ॥ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ॥ ब्रह्मा भवो लोकपालाः स्ववासं मेऽभिकाङ्क्षिणः ॥ १ ॥ मया निष्पादितं ह्यत्र देवकार्यमशेषतः ॥ यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ २ ॥ कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् ॥ समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥ यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ॥ भविष्यत्यचिरात्साधो कलिनापि निराकृतः ॥ ४ ॥ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ॥ जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ ५ ॥ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ॥ मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम् ॥ ६ ॥ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥ पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ॥ कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥ तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ॥ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥

विषमे लोके कुतः समदृष्टिः स्यामत आह—यदिदमिति । मनआदिभिर्गृह्यमाणं मनोमयत्वान्मायेति विद्धि । तदपि न स्थिरं, किंतु नश्वरं विद्धि ॥ ७ ॥ मनोमयत्वे हेतुः—पुंस इति । अयुक्तस्य विक्षिप्तमनसः । नानार्थो भेदविषयो भ्रमः । स भ्रम एव गुणदोषभाक् । ननु वेदेनैव विधिनिषेधाभ्यां भेदस्य सत्यतोक्ता, न, भ्रमविजृम्भितगुणदोषबुद्धेः पुंसः कर्म विहितम् । अकर्म तल्लोपः, विकर्म निषिद्धमिति भेदः । अविद्यावद्विषय एव वेद इत्यर्थः ॥ ८ ॥ कथमात्मनि परिच्छिन्ने विततं जगदीक्षणीयं तत्राह—आत्मानमिति । मयि ब्रह्मणि तद्रूपेणेक्षस्व ॥ ९ ॥ ॥ ॥ ॥

१ 'निराकृतोऽभिभूतः' इति वाल० । २ शापनिर्दग्धमित्यनुकरणमात्रं, वस्तुतस्तु शापेऽपि निर्गतं दग्धं दाहो यस्मात्तादृशं सदिति ज्ञेयम् । ३ 'कलिनापि निरीक्षितः' इति क्वचित्पाठः । ४ 'अधर्मरुचिः सद्यः' इति क्वचित्पाठः । ५ आत्मनि भोक्तरि जीवे । ६ वेदस्वरूपमेवमेव गीतायां—'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति भगवदुक्तेः ।

नन्वेवं युक्तचित्तत्वेन कर्माकरणे देवादयो विघ्नान् करिष्यन्ति तत्राह—ज्ञानेति । ज्ञानं वेदतात्पर्यनिश्चयो विज्ञानं तदर्थानुभवस्ताभ्यां सम्यग्युक्तस्तत आत्मानुभवेनैव तुष्टचित्तोऽतः शरीरिणां देवादीनामात्मभूतोऽन्तरायैर्न प्रतिहन्यसे । अयं भावः—यावदनुभवं यथाश्रमं कर्माणि कुर्यादेव । तदनन्तरं सर्वेषामात्मभूतत्वान्न कोऽपि विघ्नानाचरति । तथा च श्रुतिः—'तस्य ह न देवाश्च नाभूत्या ईशते ॥ आत्मा ह्येषां स भवति' इति ॥ १० ॥ न चोत्पन्नज्ञानस्यापि यथेष्टाचरणप्रसङ्ग इत्याह—दोषबुद्ध्येति । गुणदोषबुद्ध्यतीतोऽपि प्राक्तनसंस्कारान्निषेधान्निवर्तत एव किंतु न दोषबुद्ध्या विहितं च प्रायशः करोति, न गुणबुद्ध्या । यथाऽर्भकः संकल्पविकल्परहितः किंचित्करोति कुतश्चिन्निवर्तते तद्वत् ॥ ११ ॥ एवंभूतस्य न पुनः संसार इत्याह—सर्वभूतेति । न विपद्येत न पुनः संसरेत् ॥१२॥१३॥ त्वं तु सर्वं परित्यज्येत्याद्युपदेशमात्मनोऽयोग्यं मन्वानः पृच्छति—योगेशेति । योगफलदायिन् । योगविदां न्यासो नामातिगोप्यो

ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ॥ आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ॥ गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥११॥ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ॥ पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥ ॥श्रीशुक उवाच ॥ इत्यादिष्टो भगवता महाभागवतो नृप ॥ उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥१३॥ ॥उद्धव उवाच ॥ योगेश योगविन्यास योगात्मन्योगसंभव ॥ निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥१४॥ त्यागोऽयं दुष्करो भूमन्कामानां विषयात्मभिः ॥ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥१५॥ सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ॥ तत्त्वञ्जसा निगदितं भवता यथाहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥१६॥ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥[2] ॥

निक्षेपविशेषः । यद्वा योगो विन्यस्यते क्रियते यस्मिन् । योगात्मन्योगे आत्मा प्रकटो भवति यस्य । योगस्वरूपेति वा । योगस्य संभवो यस्मात् । चतुर्भिरेतैः संबोधनैः स्वमहिम्ना केवलं त्वयोपदिष्टं न तु मदधिकारं पर्यालोच्येति द्योतितम् । तदाह—निःश्रेयसायेति । न चारोग्याद्यर्थं सर्वस्वदानादिवदयं त्यागः किंतु संन्यासलक्षणोऽप्रत्यापत्तिरूपः ॥ १४ ॥ १५ ॥ यं प्रति त्यागाद्युपदिष्टं सोऽहं मूढमतिः । कुतः । ममेत्यहमिति च सानुबन्धे पुत्रादिसहिते त्वन्मायया विरचिते । आत्मनि देहे विगाढो निमग्नोऽतस्तत्तु भवता निगदितं यथाहमञ्जसा संसाधयामि तथा भृत्यं मामनुशाधि शनैः शिक्षय ॥१६॥ मया संक्षेपत उक्तं विस्तरतस्त्वन्यान्पृच्छेति चेदत आह—सत्यस्येति । स्वदृशः स्वप्रकाशस्य सत्यस्यात्मन आत्मनो मां प्रति वक्तारं ते त्वत्तोऽन्यं नानुचक्षे न पश्यामि । स्वदृशः स्वतःसिद्धज्ञानात्त्वत्तोऽन्यमिति वा कुत इत्यत आह—सर्व इति । बहिरर्थभावा विषयेष्वर्थबुद्धयः ॥ १७ ॥ ॥ ॥

१ अभूत्यै ब्रह्मधीप्रतिबन्धाय नेशते शक्ता न भवन्ति स ज्ञानी एषां देवादीनाम् । २ सप्तदशश्लोकोत्तर—'यावत्पदाब्जरसिकैर्नहि सगता ये तद्युक्तिभिर्विमृशतामपि नापयाति ॥ सत्संगमो गृहजुषामपि दंपतीनां तत्रात्मना खलु नृणां हतरहसां स्यात् ॥' इति पद्यमधिकं क्वचित् ।

केचिद्दुःशीला भवन्ति केचित्सेविताः फलकाले विनश्यन्ति केचिदज्ञाः केचिद्रक्षणेऽसमर्थाः केचित्तु स्थानाद्भ्रष्टास्तद्व्यावृत्त्यर्थमनवद्यमित्यादीनि पञ्च विशेषणानि । न अन्तः कालतः पारं देशतश्च यस्य तम् । कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं स्थानं यस्य तम् । उ हे भगवन्, ह स्फुटम् । निर्वेदे हेतुः—वृजिनैर्दुःखैरभितप्तः । ह्कारगौरवाय वृकारो युक्त इव पठनीयः । नन्वनवद्यत्वादीनि कुतो मम तदाह—नारायणमिति । अनुकम्पितामाह (नरसखं नीयते विक्षिप्यते दुःखैरिति) नरो जीवस्तस्य सखायं भवन्तं शरणं प्रपद्ये ॥ १८ ॥ तदेवमसंभावनाविपरीतभावनाभ्यामुपदिष्टं तत्त्वमनवगाहमानं प्रति तन्निवृत्तये गुरूपदेशं विनापि स्वान्वयव्यतिरेकाभ्यामेव तत्त्वप्रतिपत्तिर्भवतीति दर्शयितुमाह—प्रायेणेति । लोकतत्त्वस्य विचक्षणाः परीक्षकाः अशुभाशयाद्विषयवासनातः ॥१९॥ तदुपपादयति—आत्मनः पश्वादिशरीरेऽप्यात्मैव हिताहितज्ञाने गुरुः ॥२०॥ तत्र प्रत्यक्षं दर्शयति—पुरुषत्वे चेति । तथा च श्रुतिः—

तस्माद्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ॥ निर्विण्णधीरहमु ह वृजिनाभितप्तो नारायणं
नरसखं शरणं प्रपद्ये ॥ १८ ॥ ॥श्रीभगवानुवाच॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ॥ समुद्धरन्ति
ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥ आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ॥ यत्प्रत्यक्षानुमानाभ्यां श्रेयो-
ऽसावनुविन्दते ॥ २० ॥ पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ॥ आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहि-
तम् ॥ २१ ॥ एकद्वित्रिचतुष्पादो बहुपादस्तथापदः ॥ बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥
अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥ २३ ॥ अत्राप्युदाहरन्ती-
ममितिहासं पुरातनम् ॥ अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥ अवधूतं द्विजं कंचिच्चरन्तमकुतोभ-
यम् ॥ कविं निरीक्ष्य तरुणं यदुः प्रपच्छ धर्मवित् ॥ २५ ॥ ॥ ॥ ॥

'पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम्' इति ॥२१॥ अतः पुरुषत्वं स्तौति—एकेति ॥२२॥ अनुमानमाह—अत्र पौरुष्यां पुरि । युक्ता अप्रमत्ता अग्राह्यं ग्राह्येभ्योऽहंकारादिभ्यो व्यतिरिक्तं मामद्धा साक्षान्मृगयन्ति । मार्गणे प्रकारद्वयमाह—गृह्यमाणैर्बुद्ध्यादिभिर्गुणैर्हेतुभिः । जडानां प्रकाशः स्वप्रकाशमेकं विना न घटत इत्यनुपपत्तिमुखेन लक्षकैः । तथा तैरेव लिङ्गैर्व्याप्तिमुखेनानुमानत ईश्वरं प्रवर्तकं मृगयन्ते—बुद्ध्यादिकरणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति । तदुक्तम्—'भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥' इति । न चैतावता आनुमानिक आत्मेति मन्तव्यम् । देहादिव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षितत्वात् ॥ २३ ॥ भूयोऽन्वयव्यतिरेकाभ्यामसंभावनादिनिवृत्तावितिहासमाह—अत्रापीति ॥ २४ ॥ २५ ॥

१ इयं नरशब्दव्युत्पत्तिः केनचिट्टीकायां प्रक्षिप्तेत्यनुमीयते । २ अनवगाहमानं अनिश्चिन्वन्तम् । ३ हिते कर्मणि प्रवृत्तिरन्वयः । अहितान्निवृत्तिर्व्यतिरेकस्ताभ्याम् । ४ 'मुनयः' इति पाठः । ५ आविस्तरां अतिप्रकटम् ।

सुविशारदा अतिनिपुणा सर्वलोकविलक्षणा ॥ २६ ॥ सर्वलोकवैलक्षण्यमेवाह—प्राय इति । धर्मादिषु त्रिविधित्सायामात्मविचारे च मानवाः समीहन्ते प्रवर्तन्ते । तत्राप्यायुरादेर्हेतुना कामनयैव ॥ २७ ॥ त्वं तु न कस्यचित्कर्मणः कर्ता भवसि, न किंचिदीहसे इच्छसि । नन्वशक्त्याऽज्ञानेन वाऽनैपुण्येन वा विरूपत्वेन वाऽवाग्मितया वा औदासीन्यं घटत एव, नेत्याह—कल्प इत्यादिना ॥ २८ ॥ महानानन्दश्च तव कुत इति पृच्छति—जनेष्विति ॥ २९ ॥ स्पर्शविहीनस्य विषयभोगरहितस्य । अत्र हेतुः—केवलात्मनः कलत्रादिशून्यस्य ॥ ३० ॥ ३१ ॥ बुद्ध्यैवोपाश्रिताः स्वीकृता न तूपदेशेन । अटामि पर्यटामि ॥ ३२ ॥ गुरूनाह—पृथिवीति ॥ ३३ ॥ शोभनं रूपं कीटस्य करोतीति सुपेशकृत् ॥ ३४ ॥ मे मयाश्रिताः । तदाह—एतेषां वृत्तिभिरात्मनः शिक्षाः

॥ यदुरुवाच ॥ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ॥ यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २६ ॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ॥ हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥२७॥ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ॥ न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥२८॥ जनेषु दह्यमानेषु कामलोभदवाग्निना ॥ न तप्यसेऽग्निना मुक्तो गङ्गाम्भस्थ इव द्विपः ॥ २९ ॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ॥ ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥३०॥ ॥ श्रीभगवानुवाच ॥ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्र[1]यावनतं द्विजः ॥ ३१ ॥ ॥ ब्राह्मण उवाच ॥ सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ॥ यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥३२॥ पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ॥ कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥३३॥ मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ॥ कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥ एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः॥शिक्षावृत्तिभिरे[2]तेषामन्वशिक्षमिहात्मनः॥३५॥ यतो यद[3]नुशिक्षामि यथा वा नाहुषात्मज ॥ तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ॥३६॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ॥ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम्[4]॥३७॥ शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः ॥ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥३८॥

शिक्षणीयानर्थान् हेयोपादेयादीनन्वशिक्षमनुशिक्षितवानस्मि ॥३५॥ नाहुषो ययातिः ॥ ३६ ॥ क्षितेः क्षमां शिक्षितवानित्याह—भूतैरिति । आक्रम्यमाणः पीड्यमानः । तद्विद्वान्भूतानां दैववशवर्तित्वं विद्वान् । व्रतं नियमम् ॥३७॥ पर्वतरूपा वृक्षरूपा च या पृथिवी तस्याः शिक्षितमाह—शश्वदिति । सर्वदा परार्थाः परोपकारार्थाः सर्वा ईहा यस्य सः । परार्थ एव एकान्ततः संभवो यस्य सः । भूभृत्तः पर्वतात् । तस्य हि वृक्षतृणनिर्झरप्रसवक्रियाः परार्था एव यथा तद्वत् । तथा नगशिष्यो वृक्षशिष्यः सन्परात्मतां पराधीनात्मताम् । वृक्षो यथा परैरवखण्ड्योत्पाट्य वा नयनमप्यनुमन्यते तद्वत् ॥ ३८ ॥ ॥ ॥ ७ ॥

१ 'प्रश्रयावनतो नृपम्' इति पाठः । २ एतेषां पृथ्व्यादीनां वृत्तिभिर्धर्मैः । ३ यत् यं हेयमुपादेयं वार्थम् । ४ नियमं क्षमारूपमित्यर्थः ।

वायुरपि द्विविधः,—प्राणो वाह्यश्च। तत्र प्राणस्य गुरुत्वमाह—प्राणवृत्त्येति। प्राणो ह्याहारादिमात्रेण प्रवर्तते, रूपरसादीनिन्द्रियविषयांस्तु नापेक्षते तथा मुनिरपि भवेदित्यर्थः। प्राणवृत्तेरकरणे मनोवैकल्येन ज्ञाननाशः स्यादतो देहनिर्वाहः कर्तव्यः। गुणलिप्सायां तु वाङ्मनश्च विक्षिप्येत, अतो नाधिकं लिप्सेदित्याह—ज्ञानमिति। नावकीर्येत न विक्षिप्येत ॥ ३९ ॥ विषयान्सेवमानोऽपि तेष्वनासक्तिं वाह्याद्वायोः शिक्षेदित्याह—विषयेष्विति। नानाधर्मेषु शीतोष्णादिधर्मकेषु। न हि वायुर्वने दहने वा सज्जते तद्वत् ॥ ४० ॥ यथा वायुर्गन्धादिधर्मयोगेन प्रतीयमानोऽपि वस्तुतो न तद्योगी, एवं देहादिधर्मयोगेनाहंप्रत्ययेन प्रतीयमानोऽप्यात्मा न तद्धर्मवानिति संभावितमिति वायोरेव शिक्षितमित्याह—पार्थिवेष्विति। तद्गुणाश्रयो देहधर्मान्बाल्यादीनाश्रित्य वर्तमानो गुणैस्तैरेव ॥ ४१ ॥ आकाशाच्छिक्षितं संभावनाद्वयमाह—अन्तर्हितश्चेति द्वयेन। अन्तर्हितश्च देहान्तर्गतोऽपि मुनिरात्मनो देहाद्यसङ्गमत एवाव्यवच्छेदं च भावयेत्। कुतः। स्थिरजङ्गमेषु समन्वयेन या व्याप्तिस्तया। किं मणिषु सूत्रस्येव व्याप्तिः, न, विततस्य सर्वगतस्य। तत्कुतः। ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया। 'तत्त्वमसि' इति श्रुतेः। नन्वेतत्सर्वं कथं संभवति तत्राह—नभस्त्वं तत्तुल्यत्वं भावयेत्। यथा नभसः सर्वगतस्य न घटादिभिः सङ्गः परिच्छेदो वा एवमात्मनोऽपि संभवतीति ॥ ४२ ॥ किंच कूटस्थस्यात्मनो नागमापायिदेहादिसंबन्ध इत्याह—तेजोऽवन्नमयैः तेजश्च आपश्चान्नं पृथिवी च तन्मयैः कालसृष्टैर्गुणैर्देहादिभिः पुमान्न स्पृश्यत इति नभोवत्संभवतीति ॥ ४३ ॥ स्वच्छत्वादिभिर्गुणैरुदकं जगत्पुनातीति तद्गुणा मया शिक्षिता इत्याह—स्वच्छो निर्मलः प्रकृतितः स्वभावतः। स्निग्धो जनेष्वनुरागवान्। माधुर्यो मधुरालापी। तीर्थभूस्तीर्थस्थानम्। अपां मित्रमुदकतुल्यः। अघादिति पाठे सखायं पापात्पुनाति। स्वच्छत्वादिगुणैरर्थादुदकसादृश्यं ज्ञातव्यम् ॥ ४४ ॥ अग्नेः शिक्षितमाह—तेजस्वीति। ज्ञानातिशयात्। विशेषतस्तपसा दीप्तः। दुर्धर्षोऽक्षोभ्यः स चासावुदरभाजनश्चापरिग्रहः। युक्तात्मा मुनिः ॥ ४५ ॥ अग्नेरेव शिक्षान्तरमाह—कचिदिति। यथाग्निः परेच्छयैव हविर्गृह्णाति तथा मुनिरित्याह—दातॄणामिति। प्रागुत्तराशुभं भूतं भविष्यच पापम् ॥ ४६ ॥

प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ॥ ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥ विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः ॥ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥ अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य भावयेत् ॥ ४२ ॥ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ॥ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ॥ सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम् ॥ भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥ ४६ ॥

१ प्राणवृत्तेराहारमात्रस्य। २ गुणलिप्साया श्रेष्ठमधुराम्लादिरसापेक्षायाम्। ३ वने प्रफुल्लद्रुमे। ४ एकस्यैवाद्वितीयस्यात्मनोऽन्तर्बहिर्भावेन वर्तमानत्वमसङ्गत्वं चेत्येवंरूपम्। ५ अव्यवच्छेदमपरिच्छिन्नत्वम्। ६ समन्वयेन अधिष्ठानतयानुगमेन। ७ भक्ष्याभक्ष्यविचारशून्योऽपि। ८ पुनात्यपामित्यत्र। ९ 'ज्ञानातिशयवान्' इति कचित्पाठः।

आत्मनो देहोपाधिकमेवोच्चनीचत्वादि न स्वाभाविकमित्यप्यग्निदृष्टान्तेन संभावितमित्याह—स्वमायया स्वाविद्यया सृष्टं सदसल्लक्षणं देवतिर्यगादिरूपं विप्रशूद्रादिरूपं वा ॥ ४७ ॥ आत्मनो जन्मादिषड्विकाराभावश्चन्द्रदृष्टान्तेन संभावित इत्याह—विसर्गाद्या इति । विसर्गो जन्म । श्मशानं नाशः । तत्रेयं ज्योतिःशास्त्रप्रक्रिया । आप्यमण्डलं चन्द्रस्तेजोमयं मण्डलमादित्यः, तयोरेकनक्षत्रावस्थाने चन्द्रो न दृश्यते, चक्षुष आदित्यमण्डलेन समदेशस्थितेन व्यवधानात्, सा अमावास्या । अथ षष्टिघटिकाभिश्चन्द्रो नक्षत्रान्तरं गच्छति । आदित्यस्तु त्रयोदशभिरहोरात्रैः । अतः प्रतिपदमारभ्य विषमस्थितस्यादित्यमण्डलस्य पञ्चदशः पञ्चदशो भाग आप्यमण्डले प्रतिविम्बितो दृश्यते, सा कलेत्युच्यते । एवं पञ्चदशेऽह्नि त्रयोदशभिर्नक्षत्रैरन्तरमिति राशिचक्रस्य सप्तविंशतिनक्षत्रात्मकस्य मध्ये संमुखौ चन्द्रादित्यौ तिष्ठतः, तदा संपूर्णं प्रतिविम्बं भूच्छायालाञ्छितं दृश्यते, सा पौर्णिमा । तस्याममावास्याप्रतिविम्बेन सह षोडशकलश्चन्द्र उपचर्यते । ततः पुनः प्रतिपदमारभ्य मण्डलयोर्विषमीभावात्कलाह्रासः । तत्र यथा कलानामेवोत्पत्त्यादयो नाप्यमण्डलस्य तथात्मनोऽपीत्याह—

स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ॥ प्रविष्ट ईयते तत्तत्सरूपोऽग्निरिवैधसि ॥ ४७ ॥ विसर्गाद्याः श्मशा-
नान्ता भावा देहस्य नात्मनः ॥ कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥ कालेन ह्योघवेगेन भूतानां
प्रभवाप्ययौ ॥ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ ४९ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ॥
न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥५०॥ बुध्यते स्वे न भेदेन व्यक्तिस्थ इव तद्गतः ॥ लक्ष्यते स्थूल-
मतिभिरात्मा चावस्थितोऽर्कवत् ॥ ५१ ॥ नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ॥ कुर्वन्विन्देत संतापं
कपोत इव दीनधीः ॥ ५२ ॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ॥ कपोत्या भार्यया सार्धमुवास कतिचि-
त्समाः ॥ ५३ ॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ॥ दृष्टिं दृष्ट्याङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥ शय्या-
सनाटनस्थानवार्ताक्रीडाशनादिकम् ॥ मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥ ॥ ॥

कलानामिवेति ॥ ४८ ॥ सिंहावलोकनेनाग्निदृष्टान्तेनैव देहानां क्षणभङ्गुरतया वैराग्यं शिक्षितमित्याह—कालेनेति । ओघवद्वेगो यस्य तेन । आत्मनः संबन्धिनां भूतानां देहानामित्यर्थः । अर्चिषां ज्वालानाम् ॥ ४९ ॥ आदित्याच्छिक्षितमाह द्वयेन—गुणैरिति । गुणैरिन्द्रियैर्गुणान्विषयानुपादत्ते यथाकालमर्थिन्यागते सति विमुञ्चति च, न तेषु युज्यते लब्धमिति दत्तमिति वाऽभिनिवेशं न करोति । गोभी रश्मिभिर्गाः जलानि गोपतिः सूर्यो यथा ॥ ५० ॥ स्वतो भेदशून्यस्याप्यात्मनो भेदप्रतीतिरुपाधिवशादित्यादित्यदृष्टान्तेनैव संभावितमित्याह—बुध्यत इति । स्वे स्वस्वरूपेऽवस्थित आत्मा भेदेन न बुध्यते । अभिव्यनक्तीति व्यक्तिरुपाधिः । व्यक्तिस्थ उपाधौ प्रतिविम्बितस्तु तद्गत इव उपाधिप्रविष्ट इव भेदेन स्थूलमतिभिर्लक्ष्यते । अर्कवदित्यन्वयः ॥ ५१ ॥ कपोताच्छिक्षितमाह—नातिस्नेह इति । स्नेहः प्रीतिः । प्रसङ्गः उपलालनाद्यासक्तिः ॥ ५२ ॥ दृष्टान्तं प्रपञ्चयति—कपोतः कश्चनेति ॥ ५३ ॥ तयोर्मिथः स्नेहप्रसङ्गौ दर्शयति—कपोताविति त्रयेण । स्नेहेन गुणितं बद्धं हृदयं ययोस्तौ ॥ ५४ ॥ विस्रब्धौ निःशङ्कौ ॥ ५५ ॥ ॥ ॥

सा कपोती तर्पयन्ती सहासवीक्षितालापादिभिः प्रीणयन्त्यत एव तेनानुकम्पिता सती यं यं वाञ्छति तं तं कामं समनयत्संपादयामास । राजन्निति त्वं यथेति सूचितम् ॥ ५६ ॥ ५७ ॥ तेषु जलभरितेष्वण्डेषु हरेः स्वभावकर्मादिशक्तिभी रचितावयवाः पक्षिणः । कोमलान्यङ्गानि तनूरुहाश्च येषां ते ॥ ५८ ॥ ॥ ५९ ॥ पतत्रैः पक्षैः । अदीनानां हृष्टानाम् ॥ ६० ॥ शिशून्बालान् । प्रजाः पुत्रान् ॥ ६१ ॥ ६२ ॥ स्वालयान्तिके चरतः क्रीडतः तान्कपोतपुत्रान् ।

यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता ॥ तं तं समनयत्कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥ कपोती प्रथमं गर्भं गृह्णती काल आगते ॥ अण्डानि सुषुवे नीडे स्वपत्युः संनिधौ सती ॥ ५७॥ तेषु काले व्यजायन्त रचितावयवा हरेः ॥ शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥५८॥ प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ॥ शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥ ५९ ॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥ स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया ॥ विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ॥ ६१ ॥ एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ ॥ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥ दृष्ट्वा तांल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ॥ जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ६३ ॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ॥ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥ कपोती स्वात्मजान्वीक्ष्य बालकान् जालसंवृतान् ॥ तानभ्यधावत्क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥ साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ॥ स्वयं चावध्यत शिचा बद्धान्पश्यन्त्यपस्मृतिः ॥ ६६ ॥ कपोतश्चात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान् ॥ भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥६७॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥ ६८ ॥ अनुरूपानुकूला च यस्य मे पतिदेवता ॥ शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥ सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ॥ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ७० ॥ ॥

आतत्य प्रसार्य ॥ ६३ ॥ उत्सुकत्वादेव तत्पोषणार्थं गतौ सन्तौ । पोषणं भक्ष्यम् ॥ ६४ ॥ ६५ ॥ शिना जालेन ॥ ६६ ॥ आत्मानुरूपां भार्यां च विललाप शुशोच ॥ ६७ ॥ विलापमाह त्रयेण—अहो इति । अतृप्तस्य दुर्भुखे अकृतार्थस्याद्यमसंपादयतः ॥ ६८ ॥ ६९ ॥ ७० ॥ ॥ ॥ 

१ स्वीयनीडनिकटे । २ अर्थिनावन्नमार्गमाणौ । ३ 'आतुरा' इति पाठः । ४ हव्यसुखे गेहिकभोगे । अमुष्टं परलोकसुखम् ।

तानावृतान्पश्यन्नपि । शिक्षु जालेषु ॥ ७१ ॥ दार्ष्टान्तिके योजयति—एवमिति ॥ ७२ ॥ ७३ ॥ एवं गृहासक्तिस्तिरश्चामप्यनर्थहेतुर्मनुष्यस्य त्वतिनिन्दितेत्याह—यः प्राप्येति ॥ ७४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः ॥ अवधूतगिरा प्राह विवेकायोद्धवं प्रति ॥ १ ॥ प्रारब्धकर्मभोगस्यावश्यंभावित्वात्तदर्थोद्यमैर्नायुर्व्ययो वृथा कर्तव्य इत्यजगराच्छिक्षितमित्याह—सुखमित्यादिना । यदैन्द्रियकं सुखं तत्स्वर्गे नरके च भवत्येव । यथा दुःखम् । तस्माद्बुधस्तन्नेच्छेत् ॥ १ ॥ शरीरनिर्वाहमात्रं तु यथालब्धेन कर्तव्यमित्याह—ग्रासमिति । आजगरोऽजगरवृत्तिः । अक्रिय उदासीनः ॥ २ ॥ यदा नापतति तदा किं कर्तव्यं तत्राह—शयीतेति । अनुपक्रमो निरुद्यमः । दिष्टभुक् दैवमेव प्रापकमिति धैर्यवान् ॥ ३ ॥ ननु समर्थोऽपि शयीतैव किम्, ओमित्याह—ओज इति । ओज इन्द्रियवलम् । सहो मनोवलम् । वलं

तांस्तथैवावृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ॥ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ॥ पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्[3] ॥ गृहेषु खगवत्सक्तस्तमारूढच्युतं[4] विदुः ॥ ७४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

॥ ब्राह्मण उवाच ॥ सुखमैन्द्रियकं राजन्स्वर्गे नरक एव च ॥ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥ १ ॥ ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ॥ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥ २ ॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः ॥ यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥ ओजः सहोबलयुतं बिभ्रद्देहमकर्मकम् ॥ शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ४ ॥ मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ॥ अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥ समृद्धकामो हीनो वा नारायणपरो मुनिः ॥ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥ ॥

शारीरमेव । तद्युक्तमपि देहमकर्मकमेव बिभ्रच्छयान एव भवेत् । वीतनिद्रः स्वार्थे दत्तदृष्टिश्च भवेन्न पुनरीहेत । इन्द्रियवानपीति दर्शनादिव्यापारमपि निवारयति ॥ ४ ॥ समुद्राच्छिक्षितमाह—मुनिरिति । वहिः प्रसन्नश्चासावन्तर्गम्भीरश्च । दुर्विगाह्य एवंभूत इति परिकलयितुमशक्यः, अलक्ष्याभिप्रायत्वात् । दुरत्ययोऽनतिक्रमणीयः, तेजस्वित्वात् । अनन्तपारः कालतो देशतश्चापरिच्छेद्यः, स्वरूपाविर्भावात् । अक्षोभ्योऽविकार्यः, रागाद्यभावात् । स्तिमितोदो निश्चलोदकोऽर्णवो यथा तद्वदेतैर्गुणैर्भवेदित्यर्थः ॥ ५ ॥ किंच वर्षासु सरिद्भिः समृद्धोऽपि सागरो यथा नोत्सर्पेत, ग्रीष्मे तद्विहीनोऽपि न शुष्येत । तथा समृद्धकामस्तद्विहीनो वा न हृष्येन्न शोचेदित्यर्थः । अत्र हेतुः—नारायणपरो न तु विषयपर इति ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

१ विवेकाय विवेकं जनयितुम् । २ ओमित्यभ्युपगमे । ३ अपावृतं निरावरणम् । ४ श्रेयोमार्गमारुह्य ततश्च्युतम् ।

रूपगन्धस्पर्शशब्दरसैः पञ्चभिर्विषयैर्मोहिताः पतङ्गमधुकरगजहरिणमीना हताः, अतस्तेष्वनासक्तौ पञ्चैते गुरवः। तदुक्तम्—'पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥' इति। तत्र रूपविलासमोहितो नश्यतीति पतङ्गाच्छिक्षितमाह—दृष्ट्वेति। तस्या भावैः प्रलोभितः ॥ ७ ॥ स्त्रियमुपलक्षणीकृत्यैतत्प्रपञ्चयति—योषिदिति ॥ ८ ॥ मधुकराच्छिक्षितमाह—स्तोकमिति। गृहान्गृहस्थानहिंसन्नपीडयन्। अयं भावः—यथा मधुकरो विशिष्टगन्धलोभेनैकस्मिन्नेव पद्मे वसन्नस्तमयसमये मुकुलिते तस्मिन्बध्यते, एवं मुनिरपि गुणलोभेनैकमेव गृहमाश्रितस्तन्मोहेन बध्यत इति ॥ ९ ॥ किंच, अणुभ्यश्चेति ॥ १० ॥ द्विविधो मधुकृत्। मधु कृन्तति पुष्पादाच्छिद्य गृह्णातीति मधुकृद्भ्रमरः। मधु करोत्याहारत्वेन स्वरूपेण चेति मधुमक्षिका च। तत्र प्रथमाच्छिक्षितमुक्तम्, द्वितीयाच्छिक्षितमाह—सायमिदं भोक्ष्यामि, श्व इदं भोक्ष्यामीति भिक्षितमन्नादि न संगृह्णीत, किंतु पाणिपात्रस्तन्मात्रग्राही। यद्वा उदरमेवामत्रं पात्रं यस्य सः। एकभिक्षायामुदरमात्रग्राही भवेत्। संग्रही तु मक्षिकेव न भवति न जीवतीत्यर्थः ॥ ११ ॥

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः॥ प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥ गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः ॥ ९ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः॥ १० ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥ पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥ ११ ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः॥ मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥ १२ ॥ पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि॥ स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥ नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः॥ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा॥ १४॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसंचितम्॥ भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥ सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ॥ मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥

एतद्विवृणोति—पुनः सायंतनमिति ॥ १२ ॥ स्पर्शासक्तिर्नाशहेतुरिति गजाच्छिक्षितमित्याह—पदापीति। पादेनापि दारवीं दारुमयीमपि। गजो हि करिणीं प्रदर्श्य निखाततृणपिहितगर्ते निपात्य बध्यते ॥ १३ ॥ किंच, नाधिगच्छेदिति। नोपगच्छेत् ॥ १४ ॥ त्यागभोगविहीनो धनसंचयः परगामी भवतीत्यत्र मधुहा गुरुरित्याह—न देयमिति। तदन्यो बलवान्भुङ्क्ते तदप्यन्यस्तच्चान्यः। मधुहा मक्षिकाभिः संचितं मधु यथा भुङ्क्ते तद्वत्। ननु सुगुप्तं धनं कथमन्यो ज्ञास्यति हरिष्यति चेति तत्राह—अर्थवित्, लिङ्गैरर्थं तदुपायं च वेत्तीत्यर्थवित्। यथा मधुहा तरुकोटरादिगतं मधु वेत्ति हरति च ॥ १५ ॥ स्वोद्यमं विनापि भोगः संभवतीत्यत्रापि स एव गुरुरित्याह—सुदुःखेति। आशासानानामिति वक्तव्ये वर्णलोप आर्षः। 'यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ। तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥' इति गृहिणामावश्यकत्वेन दानविधानात् ॥ १६ ॥

१ गरुडपुराणस्थं पद्यमिदम्। २ अर्वाग्माधुकरे पाणिपात्र इत्यर्थः। ३ करिणीं दारुमयीम्।

हरिणाच्छिक्षितमाह—ग्राम्येति । भगवद्गीतं तु श्रृणुयादेव । मृगयोर्लुब्धकस्य ॥ १७ ॥ हरिणशब्दादेव हरिणीसुतः ऋष्यश्रृङ्गोऽपि गुरुर्ज्ञातव्य इत्याह—नृत्येति । वश्यो बभूवेति शेषः ॥ १८ ॥ रसासक्तिर्नाशहेतुरिति मीनाच्छिक्षितमित्याह—जिह्वयेति । अतिप्रमाथिन्या अतिक्षोभिकया दुर्जयया । ऋच्छति प्राप्नोति । बडिशैरामिषलिप्तैर्लोहकण्टकैः ॥ १९ ॥ दुर्जयत्वमुपपादयति—इन्द्रियाणीति द्वाभ्याम् । अयं भावः—यद्याहारस्त्यज्यते तर्ह्यन्येन्द्रियजयः केवलं भवति, रसनेन्द्रियं तु वर्धते । यदि तु भुज्यते तर्हि पुनश्च रसासक्त्या सर्वेन्द्रियक्षोभः स्यात् । अतो रसासक्तिं परित्यज्यौषधवद्भुञ्जीतेति, प्राणवृत्त्यैव संतुष्येदित्यत्रोक्तमपि रसनस्यातिदुर्जयत्वज्ञापनायोच्यत इति विशेषः ॥ २० ॥ २१ ॥ पिङ्गलाया नैराश्यं शिक्षितमिति वक्तुं तदाख्यानमाह—पिङ्गलेत्यादिना ।

ग्राम्यगीतं न श्रृणुयाद्यतिर्वनचरः क्वचित् ॥ शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ १७ ॥ नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ॥ आसां क्रीडनको वश्य ऋष्यश्रृङ्गो मृगीसुतः ॥ १८ ॥ जिह्वयातिप्रमाथिन्या जनो रसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥ इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ॥ वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ॥ न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥ पिङ्गला नाम वेश्यासीद्विदेहनगरे पुरा ॥ तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन ॥ २२ ॥ सा स्वैरिण्येकदा कान्तं संकेत उपनेष्यती ॥ अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ॥ तान् शुल्कदान्वित्तवतः कान्तान्मेनेऽर्थकामुका ॥ २४ ॥ आगतेष्वपयातेषु सा संकेतोपजीविनी ॥ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती[1] ॥ निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ॥ निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः[2] ॥ २७ ॥ तस्या[3] निर्विण्णचित्ताया गीतं श्रृणु यथा मम ॥ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥ न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥ यथा[4] विज्ञानरहितो मनुजो ममतां नृप ॥ २९ ॥ ॥

मे मया शिक्षितम् ॥ २२ ॥ स्वैरिणी कामचारिणी । संकेते रतिस्थाने ॥ २३ ॥ तान्वित्तवतः सधनानत एव शुल्कदान्मूल्यदान् । कान्तान्सुरताहान् ॥ २४ ॥ अपिः संभावनायाम् । अन्योऽपि मामुपैष्यत्येवं दुराशयेत्युत्तरेणान्वयः ॥ २५ ॥ द्वार्यवलम्बाना पुनः प्रविशती पुनर्निर्गच्छन्ती एवं कुर्वती । निशीथमर्धरात्रं प्राप ॥ २६ ॥ निर्वेदोऽलंबुद्धिः वित्तचिन्तैव हेतुर्यस्य सः ॥ २७ ॥ यथा यथावत् । मम मत्तः श्रृणु । ननु किं निर्विण्णाया गीतश्रवणेन तत्राह—हि यस्मात्पुरुषस्याशापाशानां निर्वेदोऽसिर्यथा तथा छेत्ता ॥ २८ ॥ तत्र हेतुः—न हीति । अङ्ग हे राजन् ॥ २९ ॥ ॥ ॥

१ 'अवलंबिनी' इति पाठः । २ सुखं श्रीकृष्णविषयकानुरागजानन्दं आवहति प्रापयतीति । ३ तस्या इति सबन्धसामान्यविवक्षया षष्ठी तयेत्यर्थः । ४ यथा ममता न जिहासति तथेत्यन्वयः, कचिन्नेदमर्धं पठ्यते ।

अविजितात्मत्वे हेतुः—याऽहं बालिशा विवेकशून्या तस्याः। कुतः। येन कारणेनासतस्तुच्छान्नरात्कामं कामये ॥ ३० ॥ बालिशत्वं प्रपञ्चयति—सन्तमिति चतुर्भिः। समीपे संतमन्तर्यामित्वात्। इममपरोक्षमीश्वरम् ॥ ३१ ॥ अतिविगर्ह्यातिनिन्द्या या वार्ता जीविका तया। कुतः। सांकेत्येन या वृत्तिस्तया। बहुव्रीहिणा स्वविशेषणं वा। परितापं प्रपञ्चयति—स्त्रैणादिति। स्त्रीलम्पटादथ चार्थतृषो लुब्धादत एवानुशोच्यान्नराद्याहं वित्तं रतिं चेच्छती। मया वृथात्मा परितापितः। केन वित्तमिच्छती, तेन नरेण क्रीतेन स्वयं विक्रीतेनात्मना देहेन ॥ ३२ ॥ अहो धिङ्मां याहमतिवीभत्सितं भजामीत्याह—यदिति। वंशो नाम स्थूणासु निहितस्तिर्यग्वेणुः। वंश्यास्तस्मिन्नुभयतो निहिता वेणवः। अस्थिभिरेव निर्मिता वंशादयो यस्मिंस्तत्। तत्र पृष्ठे दीर्घमस्थि यत्स वंशः। पार्श्वास्थीनि वंश्यानि। स्थूणा हस्तपादास्थीनि। तथा रोमभिर्नखैश्च पिनद्धं छादितम्। तथापि क्षरन्ति नवद्वाराणि यस्मिंस्तत्। एवंभूतागार-

॥ पिङ्गलोवाच ॥ अहो मे मोहविततिं पश्यताऽविजितात्मनः ॥ या कान्तादसतः कामं कामये येन बालिशा ॥ ३० ॥ सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ॥ अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३१ ॥ अहो मयात्मा परितापितो वृथा सांकेत्यवृत्त्यातिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३२ ॥ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ॥ ३३ ॥ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ॥ याऽन्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात्[2] ॥ ३४ ॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ॥ तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥ कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः ॥ आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३६ ॥ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ॥ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३७ ॥ मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ॥ येनानुबन्धं निर्हृत्य पुरुषः शर्ममृच्छति[3] ॥ ३८ ॥ ॥ ॥ ॥

रूपं नृशरीरमेतन्मत् मत्तोऽन्या का वा कान्तबुद्ध्या उपैति सेवते ॥ ३३ ॥ सत्सङ्गतौ सत्यामप्यहो मम मोह इत्याह—विदेहानामिति। याहमसती अच्युतादन्यं कामं भोगमिच्छन्ती सा ॥ ३४ ॥ एवं निर्विण्णा सती अतः परमेवं करिष्यामीत्याह—सुहृदिति। अयमीश्वरः। आत्मनैवात्मानमेव निवेद्य तं विक्रीय विशेषेण क्रीत्वाऽनेनैव सह रमे। रमा लक्ष्मीर्यथा ॥३५॥ अन्यस्यासेव्यत्वं दर्शयति—कियदिति। आद्यन्तवन्तो ये कामा विषयाः कामदा नरा वा देवा वा कालकलिता भार्यायाः कियत्प्रियं कृतवन्तो न किंचित्। अतो नेहामुत्र च तद्व्यतिरिक्तः कोऽपि सेव्योऽस्तीत्यर्थः ॥ ३६ ॥ एवं निश्चित्य स्वभाग्यमभिनन्दति—नूनमिति। दुष्टा आशा यस्यास्तस्या मे ॥ ३७ ॥ ननु धनाप्राप्त्या क्लिश्यसि, कथं विष्णुः प्रीतस्तत्राह—मैवमिति। मन्दभाग्या चेदहं स्यां तर्ह्येव निर्वेदहेतवः क्लेशा न स्युरित्यर्थः। येन निर्वेदेनानुबन्धं गृहादिकं निर्हृत्य परित्यज्य ॥ ३८ ॥ ॥ ॥ ॥



१ संकेतीकृतेन रतिसुखेन वृत्तिर्वर्तनं तया हेतुना। २ अच्युतात् स्वभक्तस्य कालभयनिवारकात्। ३ शर्म भगवत्प्राप्तिम्।

अतस्तेन श्रीविष्णुनोपकृतं कृतमुपकारं निर्वेदलक्षणम् । ग्राम्येषु नरेषु विषयेषु वा सङ्गताः ॥ ३९ ॥ कथं व्रजसि तदाह—संतुष्टेति ॥ ४० ॥ ननु ब्रह्मादीन्हित्वा अमुनैवेति कोऽयं नियमस्तत्राह—संसारेति । मुषितेक्षणमपहृतविवेकम् ॥ ४१ ॥ तर्हि किमात्मत्राणोपाधिना तं भजिष्यसि, न, तत्र सर्वतो निर्विद्य भगवद्भजने प्रवृत्तस्यात्मन एव समर्थत्वादित्याह—आत्मैवेति । यदा एवं जगत्पश्येत्ततश्चाप्रमत्तः सन्निखिलादिहामुत्र च भोगान्निर्विद्येत तदा ह्यात्मनै-वात्मनो गोप्तेत्यन्वयः । अतः केवलं प्रेम्णैव भजामीति भावः ॥४२॥ कान्तस्य तर्षोऽभिलाषस्ततो जातम् ॥४३॥ फलितमाह—आशा हीति ॥४४॥ ॥ इति श्रीमद्भागवते म०पु० एकादशस्कन्धे भावार्थदीपिकायां टीकायामष्टमोऽध्यायः ॥८॥ ॥ नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ॥ श्रुत्वा यदुः कृतार्थोऽभूदिति

तेनोपकृतमादाय शिरसा ग्राम्यसंगताः ॥ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३९ ॥ संतुष्टा श्रद्दध-त्येतद्यथालाभेन जीवती ॥ विहराम्यमुनैवाहमात्मना रमणेन[1] वै ॥ ४० ॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् ॥ ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४१ ॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् ॥ अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४२ ॥ ॥ ब्राह्मण उवाच ॥ एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ॥ छित्त्वो-पशममास्थाय शय्यामुपविवेश सा ॥ ४३ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे पिङ्गलोपाख्यानेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं[2] नृणाम् ॥ अनन्तं सुखमाप्नोति तद्विद्वा-न्यस्त्वकिञ्चनः ॥ १ ॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ॥ तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥ न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥ द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ॥ यो विमुग्धो जडो बालो यो गुणेभ्यः[3] परं गतः ॥ ४ ॥ क्वचित्कुमारी त्वात्मानं वृणा-नान्गृहमागतान् ॥ स्वयं तानर्हयामास क्वापि[4] यातेषु बन्धुषु ॥ ५ ॥ ॥ ॥

कृष्णेन वर्णितम् ॥१॥ कुरराच्छिक्षितमाह—परिग्रहो हीति । यद्यत्प्रियतमं तस्य तस्य परिग्रहः । तद्विद्वान् परिग्रहो दुःखमिति विद्वान्सन्, यस्त्वकिंचनस्त्यक्त-परिग्रहो न तु दरिद्रः ॥१॥ तदाह—सामिषमिति ॥२॥ अर्भकशिक्षामाह—नेति । गेहपुत्रिणां तद्वतां या भवति चिन्ता सा च मे नास्ति । आत्मनैव क्रीडा यस्य । आत्मनि रतिः प्रीतिर्यस्य सः ॥३॥ नन्वज्ञसर्वज्ञयोः किं सादृश्यं नैश्चिन्त्यं परमसुखमित्याह—द्वाविति । विमुग्धोऽज्ञः जडोऽनुद्यमः एवंभूतो यो बालो यश्च प्रकृतेः परमीश्वरं प्राप्तस्तौ द्वौ ॥ ४ ॥ कुमार्याः शिक्षितं वक्तुमाख्यायिकामाह—क्वचिदित्यादिना । वृणानान् स्ववरणायागतान् । बन्धुषु पित्रादिषु ॥ ५ ॥

१ रमणेन प्रेष्ठेन । २ प्रियतमं धनवस्त्रादिकम् । ३ गुणेभ्यः परमिति गुणाना प्रकृतिरूपत्वात् प्रकृतेरिति व्याख्यातम् । ४ क्वापि क्षेत्रादौ ।

शङ्खाः शङ्खवलयाः । महद्यथा भवति तथा स्वनं चक्रुः ॥६॥ सा महती बुद्धिमती । तत्स्वयं शाल्यवहननम् । जुगुप्सितं दरिद्रताद्योतकम् । एकैकशः क्रमे- णैकमेकं वभञ्ज स्वकरादपसारितवती ॥ ७ ॥ निरभिदत् पृथक्कृतवती ॥ ८ ॥ ननु कुमार्यास्तव च कथं सङ्गतिस्तत्राह—लोकानिति ॥ ९ ॥ वास इति प्रथ- मान्तपाठे कलहहेतुः । वार्ता गोष्ठी हेतुर्भवेदित्यर्थः ॥ १० ॥ चित्तैकाग्रता द्वैतास्फूर्तिलक्षणसमाधिहेतुरिति शरकाराच्छिक्षितमित्याह—मन इति । तत्रो- पायमाह—जितेति । आसनजये श्वासजयः, तस्य च जये श्वासाधीनं मनो निश्चलं भवति । ननु क्षणं निश्चलं सदपि मनो विषयवासनया यदि विक्षिप्येत सुषुप्ताविव सर्वथा लीयेत वा तदा किं तत्राह—वैराग्येति । वैराग्येणाविक्षिप्यमाणमभ्यासयोगेन लक्ष्ये ध्रियमाणं स्थिरीक्रियमाणम् ॥ ११ ॥ एकत्रेति कुत्र तदाह—यस्मिन्निति । यल्लयविक्षेपात्मकं मन एतद्यस्मिन्परमानन्दरूपे भगवति लब्धास्पदं सत्कर्मरेणून् कर्मवासना मुञ्चति तस्मिन् । ननु कर्मवासना-

तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव ॥ अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ६ ॥ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥ बभञ्जैकैकशः शङ्खान्द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥ उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः ॥ तत्राप्येकं निरभिंददेकस्मान्नाभवद्ध्वनिः ॥ ८ ॥ अन्वशिक्षमिमं तस्या उपदेशमरिंदम ॥ लोकाननु- चरन्नेताँल्लोकतत्त्वविवित्सया ॥९॥ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ॥ एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥ १० ॥ मन एकत्र संयुज्याज्जितश्वासो जितासनः ॥ वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥ यस्मिन्मनो लब्धपदं यदेतच्छनैःशनैर्मुञ्चति कर्मरेणून् ॥ सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥ तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरन्तरं वा ॥ यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥ एकचार्यऽनिकेतः स्यादप्रमत्तो गुहाशयः ॥ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥१४॥ गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः ॥ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥

ध्येयाकारेणावस्थानमुपैति । कुतः । त्यागेऽपि सुषुप्तिवल्लयो दुर्वारः, न, सत्त्वेनेति । वृद्धेनोपशमात्मकेन रजस्तमसोरभावे विक्षेपलयाभावान्निर्वाणमवृत्तिकं याऽसंप्रज्ञातनामासौ समाधिरभिधी- अनिन्धनम् । इन्धनं गुणास्तत्कार्यं च तद्रहितम् । तदुक्तं योगशास्त्रे—'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ॥ यते ॥' इति ॥ १२ ॥ ततश्च न द्वैतस्फूर्तिरित्याह—तदेति । बहिर्दर्शनादिना । अन्तरं स्मृत्या । इषौ गतात्मा तस्य ऋजूकरणे दत्तचित्तो भेरीघोषैरन्तिके व्रजन्तं नृपतिमपि न वेद तद्वत् ॥ १३ ॥ सर्पाच्छिक्षितमाह—एकचारीति । योगिसंमर्दस्यापि त्यागे कुमारी गुरुः, जनसङ्गत्यागे सर्पः । स यथा जना- च्छङ्कमान एकाकी विचरति नियतनिकेतरहितश्च सदाऽप्रमत्तश्चैकान्तवासी च । आचारैर्गतिभिः सविषो निर्विषो वेति न लक्ष्यते च । असहायश्च मित- भाषी च तद्वन्मुनिर्वर्ततेत्यर्थः ॥ १४ ॥ किंच, गृहारम्भ इति । अध्रुवात्मनो नश्वरदेहस्य । सुखं यथा भवति तथा वर्धते ॥ १५ ॥

१ स्वनशब्दस्य पुंस्त्वेन महदिति न तद्विशेषणमतः क्रियाविशेषणतया व्याख्यातम् । २ बभञ्जेत्यस्यापसारितवतीत्यर्थो धातूनामनेकार्थत्वात् । ३ 'निरभिनत्' इति पाठः । ४ लोकेषु यद्धेयोपादेयवस्तुनस्तत्त्वं तस्य जिज्ञासया । ५ 'कङ्कणम्' इति पाठः ।

कारकसामग्रीनिरपेक्षात्केवलादीश्वराद्विश्वसृष्टिसंहारावूर्णनाभिदृष्टान्तेन मया संभाविताविति वक्तुं प्रथमं संहारप्रकारमाह—एक इति सार्धत्रयेण । एकः कारकनिरपेक्षः । पूर्वसृष्टमिदं जगत्कालकलया कालशक्त्या संहृत्य ॥ १६ ॥ एक एवाद्वितीयः सजातीयविजातीयभेदशून्योऽभूत् । कारणभूतासु सत्त्वादिषु शक्तिष्वपि साम्यं नीतासु सतीषु । गुणसाम्यं प्रधानं तदुपाधिः पुरुषश्च तयोरीश्वरः ॥ १७ ॥ परावराणां परे ब्रह्मादयः अवरेऽन्ये च मुक्ता जीवास्तेषां परमः प्राप्य आस्ते । कुतः । कैवल्यसंज्ञितो मोक्षशब्दाभिधेयः । तत्र हेतुः—केवलेति । केवलो निर्विषयः स्वप्रकाशः आनन्दानां संदोहः समूहः परमानन्द इत्यर्थः । कुतः । निरुपाधिकः ॥ १८ ॥ अतः केवलादेव सृष्टिं दर्शयति । केवलेनात्मानुभावेन कालेन । सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वं सृजति । जीवसंसारहेतुभूते सूत्रे सृष्टेऽपि त्वं मा भैरिति संबोधयति । अरिंदम अरीन् रागादीन्दमयितुं समर्थ ॥ १९ ॥ सूत्रस्यैव व्यक्तिशब्देनोच्यमानस्य तामिति स्त्रीलिङ्गेन परामर्शः ।

एको नारायणो देवः पूर्वसृष्टं स्वमायया ॥ संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥ परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ केवलानुभवानन्दसंदोहो निरुपाधिकः ॥ १८ ॥ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ संक्षोभयन्सृजत्यादौ तया सूत्रमरिंदम ॥ १९ ॥ तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ॥ यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥ यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ॥ तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥२१॥ यत्र यत्र मनो देही धारयेत्सकलं धिया ॥ स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ २२॥ कीटः पेशस्कृतं ध्यायन्कुड्यां[1] तेन प्रवेशितः ॥ याति तत्सात्मतां[2] राजन्पूर्वरूपमसंत्यजन् ॥ २३ ॥ एवं गुरुभ्य एतेभ्य एषा[3] मे शिक्षिता मतिः ॥ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥ ॥ ॥

त्रिगुणव्यक्तिं गुणत्रयकार्यम् । अत एव विश्वतोमुखं नानाविधं त्रिगुणात्मकं विश्वमहंकारद्वारेण सृजन्तीम् । त्रिगुणकार्यस्य सूत्रसंज्ञायां कारणमाह—यस्मिन्निति । कारणभूते समष्टिरूपे यस्मिन्निदं विश्वं प्रोतं ग्रथितम्—'वायुर्वै गौतम सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि' इति श्रुतेः । येन वाय्वात्मना प्राणरूपेण जीवः संसरति ॥२०॥ तदेवं शिक्षितमर्थमुक्त्वा दृष्टान्तमाह—यथेति । हृदयादुद्गताम् । वक्त्रतो वक्त्रेण संतत्य प्रसार्य विहृत्य क्रीडित्वा ॥ २१ ॥ भगवद्ध्यानपराणां तत्सारूप्यं न चित्रमिति पेशस्कृतो भ्रमरविशेषाज्ज्ञातमित्याह—यत्र यत्रेति । सकलमेकाग्रम् ॥ २२ ॥ कुड्यां प्रवेशितो निरुद्धो भयेन ध्यायन्सात्मतां तत्सारूप्यम् । साम्यतामिति पाठे त्वार्षता । पूर्वरूपमसंत्यजन्नित्यस्यायमभिप्रायः । यदा तेनैव देहेनान्यसारूप्यं दृश्यते तदा किं वक्तव्यं देहान्तरेण सारूप्यं घटत इति ॥ २३ ॥ स्वदेहादेव शिक्षितमाह—स्वात्मेति । स्वात्मनो देहाच्छिक्षिताम् ॥ २४ ॥

१ 'कुड्याम्' इति पाठः । २ 'तत्साम्यतां' इति पाठः । ३ एषा मतिरिति जातावेकवचनम् ।

गुरुत्वे हेतुः—विरक्तिविवेकयोर्हेतुः । विरक्तिहेतुत्वमाह—सत्त्वनिधनमुत्पत्तिविनाशौ विभ्रत्स्म । किंच, सततं संततमार्त्युदर्कं दुःखमेवोत्तरफलं विभ्रत् । यद्वा, सततार्तिरेवोदर्क उत्तरफलं यस्य तत्सत्त्वनिधनं विभ्रत् । विवेकहेतुत्वमाह—तत्त्वानीति । यथा यथावत् । एवमत्युपकारित्वेऽपि देहेनैवास्था कर्तव्येत्याह—तथापीति । पारक्यं श्वशृगालादिभक्ष्यमिति निश्चितवान् ॥ २५ ॥ सततार्त्युदर्कतां प्रपञ्चयति—जायेति द्वाभ्याम् । यस्य देहस्य प्रियचिकीर्षया भोगसंपादनेच्छया जायादिवर्गान् वितन्वन्पुष्णाति पुरुषः । कथंभूतः । सकृच्छ्रं यथा भवति तथावरुद्धानि संचितानि धनानि येन सः, देहविशेषणं वा । स देहः स्वान्ते स्वस्यायुषोऽन्तेऽवसीदति नश्यति । किंच, देहनाशेऽपि न दुःखसमाप्तिरित्याह—अस्य गरूपस्य देहान्तरबीजं कर्म सृष्ट्वेति । वृक्षस्येव धर्मो यस्य सः ॥ २६ ॥ किंच जिह्वेति । अमुं देहं तदभिमानिनं पुरुषं वा एकतो रसं प्रति जिह्वा अपकर्षत्याच्छिनत्ति । कर्हिं कदाचित्तर्षा पिपासा जलं प्रति । शिश्नो व्यवायं प्रति । त्वक् स्पर्शं प्रति । उदरमन्नमात्रं प्रति । श्रवणं शब्दं प्रति । घ्राणो गन्धं प्रति । चपलदृक् रूपं प्रति । क्व च क्वचित्स्वस्वविषयं प्रति

देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम् ॥ तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षया वितन्वन् ॥ स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः सृष्ट्वास्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥ सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥ २८ ॥ लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ॥ तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥ ॥ ॥

कर्मशक्तिः । अन्यदपि कर्मेन्द्रियम् । लुनन्ति त्रोटयन्ति ॥ २७ ॥ तदेवं देहो गुरुरित्यादित्रिभिर्विरक्तिविवेकहेतुत्वमुपपाद्येदानीमस्य देहस्यातिदुर्लभत्वं दर्शयन्नीश्वरनिष्ठां विधत्ते—सृष्ट्वेति द्वाभ्याम् । पुराणि शरीराणि । पुरुषं पुरुषदेहम् । ब्रह्मणोऽवलोकायापरोक्षाय धिषणा बुद्धिर्यस्मिंस्तम् । तदुक्तम्—'तासां मे पौरुषी प्रिया' इति, श्रुतिश्च—'पुरुषत्वे चाविस्तरामात्मा' इत्यादिः (ईश्वरो हि करणाधिष्ठात्रीरग्न्यादिदेवता यागादिभिः सह सृष्टवान् । ताश्च तं प्रति भोगार्थं शरीरमयाचन्त । स च ताभ्यो गोशरीरमश्वशरीरं पुरुषशरीरं यथाक्रममानीतवान् । ततस्ता देवताः सोऽब्रवीद्यथायतनं चक्षुरादिस्थानमस्मिन्देहे प्रविशतेति । तदाह—ताभ्य इत्यादि) । तथा—'ताभ्यो गामानयत्ता अब्रुवन्न वैनोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वैनोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बत' इति च ॥ २८ ॥ तस्माद्बहूनां संभवानां जन्मनामन्ते मानुष्यमनित्यमप्यर्थदं पुरुषार्थप्रदं दैवाल्लब्ध्वेदमनुमृत्यु अन्वनु निरन्तरं मृत्यवो यस्य तद्यावन्न पतेत्तावदेव तूर्णं शीघ्रं निःश्रेयसाय यतेत । विषयः पुनः सर्वतः पश्वादियोनिष्वपि स्यादेव ॥ २९ ॥ ॥ ॥



१ 'विद्भस्ससत्त्वनिधनम्' इति शुकपक्षीयपाठः । २ 'चिकीर्षुतया' इति वीर० सिद्धां० सम्मतः पाठः । रेफविश्लेषेण पाठस्तु छन्दोनुरोधात्कैश्चित्कल्पितः । ३ ईश्वरो हीत्यारभ्य ताभ्य इत्यादीत्यन्तो ग्रन्थः पूर्वापरक्रमोक्तसंदर्भसूचकः केनचिदत्र प्रक्षिप्त इत्यनुमीयते ।

तदेवं हेयोपादेयविवेकं बहुधा निरूप्येदानीं यदुक्तं—'त्वं तु कल्पः कविर्दक्षः' इत्यादि तत्रोत्तरमाह—एवमिति । एवं बहुभ्यो गुरुभ्यः शिक्षितेन विशिष्टं ज्ञानमेवालोकः प्रदीपो यस्य सः । ससम्यन्तं वा आत्मविशेषणम् । आत्मनि स्थित एव महीं विचरामि ॥३०॥ ननु किं बहुभिर्गुरुभिर्न हि श्वेतकेतुभृगुप्रमुखैर्बहवो गुरव आश्रितास्तत्राह—न ह्येकस्मादिति । बहुधा सप्रपञ्चनिष्प्रपञ्चभेदादिभिः । अयं भावः—नैते परमार्थोपदेशगुरवः किंत्वन्वयव्यतिरेकाभ्यामात्मन्यसंभावनादिमात्रनिवर्तकास्तेषां बहुत्वं युक्तमेवेति। ज्ञानप्रदं गुरुमेवेति ज्ञानप्रदं। गुरुमेकमेव वक्ष्यति—'मदभिज्ञं गुरुं शान्तमुपासीत' इति। उक्तं च—'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्' इति ॥ ३१ ॥ विप्रो दत्तात्रेयः—'योगर्द्धिमापुरुगर्यी यदुहैहयाद्याः' इत्युक्तत्वात् । यथागतं तथैव । यदृच्छया यथाविलयर्थः ॥ ३२ ॥ भगवान्स्वीयं ब्रह्मवित्कुलमिति श्लाघते—नः पूर्वेषां पूर्वज इति ॥ ३३ ॥ अत्र संग्रहश्लोकाः—'कपोतमीनहरिणकुमारीगजपन्नगाः ॥ पतङ्गः कुररश्चाष्टौ हेयार्थे गुरवो मताः ॥ १ ॥ मधुकृन्मधुहर्ता च पिङ्गला च द्वयोस्त्रयः ॥ उपादेयार्थविज्ञाने शेषाः पृथ्व्यादयो मताः ॥ २ ॥ तदवान्तरभेदश्च तत्र तत्र

एवं संजातवैराग्यो विज्ञानालोक आत्मनि ॥ विचरामि महीमेतां मुक्तसङ्गोऽनहंकृतिः ॥ ३० ॥ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ॥ वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥ अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ॥ सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे नवमोऽध्यायः ॥९॥ ॥ ध ॥ ॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ॥ गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥ २ ॥ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ॥ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥ ॥ ॥ ॥

स्फुटीकृतः ॥ अध्यायत्रितये चाष्टनवाष्टावीरिताः क्रमात् ॥ ३ ॥' ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥९॥

चतुर्विंशतिगुर्वाख्यालब्धसंभावनासुतः ॥ उद्धवस्यात्मतत्त्वाप्त्यै साधनोक्तिरतः परैः ॥ १ ॥ दशमे देहसंबन्धात्संसृतिर्नात्मनः स्वतः ॥ इत्येतद्वर्णयामास मतान्तरनिरासतः ॥ २ ॥ तदेवमन्वयव्यतिरेकाभ्यामुत्पन्नविवेकज्ञानस्य तत्त्वज्ञानायादित आरभ्य साधनान्युपदिशति भगवान्—मयेति । मया पञ्चरात्राद्युक्तवैष्णवधर्मेष्ववहितोऽप्रमत्तः संस्तदविरोधेन वर्णाद्याचारमनुतिष्ठेत् ॥ १ ॥ कथमकामात्मता संभवति तत्राह—अन्वीक्षेतेति । स्वधर्मैर्विशुद्धचित्तः सन्देहिनां विषयेषु सत्यत्वाभिनिवेशेन ये सर्वे आरम्भास्तेषां फलवैपरीत्यं पश्येत् । एवं फलवैपरीत्यादकामः स्यात् ॥ २ ॥ किंच काम्यविषयाणां मिथ्यात्वादपीत्याह—सुप्तस्येति । विफलोऽर्थशून्यः । अत्रैवं प्रयोगः—इन्द्रियैर्या बहिर्नानाबुद्धिः सा विफला, नानात्मकत्वात् ऐन्द्रियकत्वाच्च । मनोजन्यस्वप्नमनोरथवदिति ॥ ३ ॥ ॥ ॥ ॥ ॥

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥' इति स्मृतिरतः प्रवृत्तं काम्यं कर्म त्यजेन्निवृत्तं नित्यनैमित्तिकमेव कुर्यात् । आत्मविचारे तु सम्यक्प्रवृत्तो निवृत्तकर्मचोदनामपि नाद्रियेत ॥ ४ ॥ किंच यमानहिंसादीनभीक्ष्णमादरेण सेवेत । शौचादींस्तु नियमान्क्वचिद्यदा शक्तिस्तदा आत्मज्ञानाविरोधेन । यमान्द्वादश, नियमांश्चैकोनविंशेऽध्याये वक्ष्यति । किंच यमेष्वप्यादरं परित्यज्य गुरुमुपासीतेत्याह—मदभिज्ञमिति । मदात्मकं मद्रूपम् ॥ ५ ॥ गुरुसेवकस्य धर्मानाह—अमानीति । दक्षोऽनलसः । निर्ममो जायादिषु ममताशून्यः । गुरौ तु दृढसौहृदः । असत्वरोऽव्यग्रः । अमोघवाक् व्यर्थालापरहितः । एतान्येव शिष्यस्य लक्षणानि ज्ञेयानि ॥ ६ ॥ ननु स्वजायादिषु कथं निर्ममः स्यात्तत्राह—जायेति । औदासीन्यहेतुं विवेकं दर्शयति—आत्मनोऽर्थं प्रयोजनं सर्वत्र सममिव पश्यन्निति । अयं भावः—सर्वदेहेष्वात्मन एकत्वाज्जायादिदेहेऽस्मिंश्च स्वदेहे आत्मनोऽर्थः सुखादिः सम एव केन विशेषेणैतेष्वेव ममत्वाभिनिवेश इत्येवमुदासीनः सन् गुरुं प्रपद्येतेति ॥ ७ ॥ अहो कोऽसौ देहादिव्यतिरिक्त आत्मा यस्यैक्यादर्थः सर्वेषु समः स्यात्तमाह—विलक्षण इति । स्थूल-

निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ ४॥ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ॥ मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५॥ अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ॥७॥ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ॥ यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ ८॥ [2]निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् ॥ अन्तः प्रविष्ट आधत्त एवं देहगुणान्परः ॥ ९ ॥ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ॥ संसारस्तन्निबन्धोऽयं पुंसो विद्याच्छिदात्मनः ॥ १० ॥ तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परम् ॥ संगम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥

सूक्ष्मदेहद्वयादात्माऽन्यो यतो विलक्षणः । द्वेधा वैलक्षण्यं दर्शयति—ईक्षिता स्वदृगिति । द्रष्टा हि दृश्याद्विलक्षणः । स्वप्रकाशश्च जडाद्विलक्षणः । [3]तयोरन्यत्वे दृष्टान्तः—यथाग्निर्दाहकः प्रकाशकश्च दाह्यात्प्रकाश्याच्च दारुणः काष्ठादन्यस्तद्वदिति ॥ ८ ॥ अनेनैव दृष्टान्तेन नित्यत्वानादित्वविभुत्वैकत्वादयोऽपि सिध्यन्तीत्याह—निरोधेति । यथा दार्वन्तः प्रविष्टोऽग्निस्तत्कृतान्नाशादीन्प्राप्नोति, न तु स्वतो नाशादिमान् । एवं देहगुणाननित्यत्वादीन् देहात्परो नित्यादिस्वरूपोऽप्यात्मानुभवति । ततश्च नित्यत्वादिभिरपि वैलक्षण्यादन्यत्वमिति भावः ॥ ९ ॥ नन्वग्नेर्दारुसंयोगात्तद्धर्मभाक्त्वं घटते, आत्मनस्त्वसङ्गत्वात्कथं देहेन तद्धर्मैर्वा संबन्धः, संबन्धे वा कुतस्तन्निवृत्तिस्तत्राह—योऽसाविति । पुरुषस्येश्वरस्याधीनैर्मायागुणैर्योऽसौ सूक्ष्मोऽयं च स्थूलो देहो निरचितः पुंसो जीवस्यायं संसारस्तन्निबन्धनस्तद[5]ध्यासकृतः । हि यस्मादेवं तस्मादात्मविद्या तन्निवर्तिकेत्याह—आत्मनो विद्या विज्ञानं तस्य छित् छेत्री । आच्छिदिति वा पदच्छेदः ॥ १० ॥ यस्मादेवं तस्माज्जिज्ञासया विचारेण । आत्मस्थमात्मनि कार्यकारणसंघात एव स्थितं सम्यग्ज्ञात्वा एतदेतस्मिन्देहादौ वस्तुबुद्धिं स्थूलसूक्ष्मक्रमेण निरसेत् त्यजेत् ॥ ११ ॥ 

१ सुखादिरित्यादिशब्देन दुःखहान्यादिकं ज्ञेयम् । २ निरोधो नाशः । ३ तयोर्विरुद्धलक्षणयोर्देहात्मनोः अन्यत्वे भिन्नत्वे । ४ अन्यत्वं भिन्नत्वम् । ५ देहद्वयारोपकृतः । ६ तस्याध्यासस्य तत्प्रयुक्तसंसारस्य वा ।

गुरोर्लब्धा विद्या अविद्यातत्कार्यनिरसनक्षमेति स्फुटीकर्तुं विद्योत्पत्तिमग्युत्पत्तिरूपकेण निरूपयति—आचार्य इति । आद्योऽधरः । तत्संधानं तयोर्मध्यमं मन्थनकाष्ठम् । प्रवचनमुपदेशः । विद्या तु संधिः, संधौ भवन्नग्निरिव । तथा च श्रुतिः—'आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनं संधानम्' इति ॥ १२ ॥ अग्निसादृश्यमेवाह—वैशारदीति । विशारदोऽतिनिपुणस्तेन शिष्येण प्राप्ता तेन गुरुणोपदिष्टा वा अतिविशुद्धा बुद्धिर्गुणकार्यरूपां मायां निवर्तयति । यदात्मकमेतद्विश्वं जीवस्य संसृतिनिमित्तं तान् गुणांश्च दग्ध्वा असमिन्निरिन्धनः, तस्मात्कार्येण कारणेन विद्यया च व्यवधानाभावात्साक्षात्परमानन्दरूपो भवतीति ॥ १३ ॥ एवं तावत्स्वप्रकाशज्ञानस्वरूपो नित्य एक एवात्मा, कर्तृत्वादयश्च धर्मास्तस्य देहोपाधिकास्तद्व्यतिरिक्तं सर्वमनित्यं मायामयं चातः सर्वतो विरक्तः सन्नात्मज्ञानेन मुच्यत इत्युक्तं—'विलक्षणः स्थूलसूक्ष्मात्' इत्यादिना, तदेव श्रुतिसमन्वयेन निर्णीतेऽप्यर्थे मतान्तरविरोधेन संदेहो मा भूदिति तन्मतं निराकर्तुमुद्भावयति—अथेति । अथ मन्यसे एषां जीवात्मनां कर्मकर्तॄणां सुखदुःखयोर्भोक्तॄणां च नानात्वमिति । एवं हि जैमिनीया मन्यन्ते । अहंप्रत्ययविज्ञेय एवात्मा स च प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च न तु तत्स्वरूपभूतो निर्विकार एकः परमात्मास्तीति । यथाहुः—'अहंप्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि' इति । तथा वैराग्यं च न संभवति । तथाहि—भोगस्थानानामनित्यत्वाद्वा वैराग्यं भवेत्, भोगकालस्य वा तदुपायकर्मबोधकागमस्य वा भोक्तुरात्मनो वा नन्वेतदस्तीत्याह—अथ नित्यत्वं लोककालागमात्मनां मन्यस इति ॥ १४ ॥ न च सर्वभोग्यानां विच्छेदान्मायामयत्वाद्वा वैराग्यं स्यादित्याह—सर्वभावानां स्रक्चन्दनादीनां संस्था स्थितिरौत्पत्तिकी प्रवाहरूपेण नित्या । तथा च वदन्ति, 'न कदाचिदनीदृशं जगत्' इति । अतस्तत्कर्ता कश्चिदीश्वरो नास्तीति भावः । किंच यथा यथावत् । न तु मायामयीत्यर्थः । न चात्मस्वरूपभूतं नित्यमेकं ज्ञानमस्तीत्याह—तत्तदिति । घटपटाद्याकारभेदेन धीर्जायते अतोऽनित्या भिद्यते च । अयं गूढोऽभिप्रायः । नहि नित्यज्ञानरूप आत्मा, अपि तु ज्ञानपरिणामवान्, न च विकारित्वेनानित्यत्वप्रसङ्गः । यथाहुः—'विक्रियाज्ञानरूपास्य न नित्यत्वे विरोत्स्यते' इति । अतो मुक्ताविन्द्रियादिरहितस्य परिणामासंभवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात्प्रवृत्तिरेव श्रेयसी न निवृत्तिरिति ॥ १५ ॥ तत्र तावदुक्तमङ्गीकृत्य वैराग्योपपादनाय प्रवृत्तिमार्गस्यानर्थहेतुत्वं प्रपञ्चयति—एवमपीत्यादिना लोकानां लोकपालानामित्यतः प्राक्तनेन ग्रन्थेन । अङ्ग हे उद्धव । कालावयवतः संवत्सरादिरूपात् ॥ १६ ॥

आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ॥ तत्संधानं प्रवचनं विद्या संधिः सुखावहः ॥ १२ ॥ वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ॥ गुणांश्च संदह्य यदात्ममेतत्स्वयं च शाम्यत्यसमिद्यथाग्निः ॥ १३ ॥ अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ॥ नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४ ॥ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ॥ तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥ एवमप्यङ्ग सर्वेषां देहिनां देहयोगतः ॥ कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥ ॥ ॥

॥ ॥ ॥ ॥ ॥

१ आचार्यः पूर्वरूपमधःकाष्ठम् । अन्तेवासी उत्तररूपमुपरिकाष्ठं । विद्या ज्ञानं सधिः सधौ जातोऽग्निः । प्रवचनमुपदेशः सधीयते मध्यसधौ स्थाप्यते इति सधानं मध्यवर्तिमन्थनकाष्ठम् । इति । २ कार्येण देहेन्द्रियादिना, कारणेनाज्ञानेन, विद्यया वाक्यजैक्यज्ञानेन । ३ श्रुतिसमन्वयेन श्रुतीनां तात्पर्यवृत्त्या ब्रह्मणि पर्यवसानेन । ४ एवमपि गूढाभिप्रायेण मीमांसकमतस्वीकारेऽपि । ५ भावा विकाराः ।

अत्रापीति । स्वातन्त्र्यपक्षे दुष्कर्मणो दुःखभोगस्य वाऽसंभवादित्यर्थः ॥१७॥ ननु ये सम्यक्कर्म कर्तुं जानन्ति ते सुखिन एव, ये तु न जानन्ति त एव दुःखिन इति चेत्तत्राह—नेति । विदुषामपि क्वचित्सुखं न विद्यते तथा मूढानामपि दुःखं न विद्यते, अतो वयं कर्मकुशलत्वात्सुखिन इति तेषां केवलं वृथैवाहंकार इत्यर्थः ॥ १८ ॥ अङ्गीकृत्याप्याह—यदीति । तं योगमुपायं न विदुर्यथा साक्षान्मृत्युर्न प्रभवेत् ॥१९॥ तथापि यावज्जीवं सुखं भविष्यतीति चेत्तत्राह—को न्विति । यतोऽन्तिके वर्तमानो मृत्युः न तुष्टिदो न तुष्टिं ददाति । आघातं वधस्थानं प्रति नीयमानस्य वध्यस्य स्रक्चन्दनादि यथा न सुखयेत् ॥ २० ॥ एवमस्मिँल्लोके सुखं नास्तीत्युक्तं लोकान्तरेऽपि तथैवेत्याह—श्रुतमिति । श्रुतं स्वर्गादि तदपि दुष्टम् । स्पर्धा परसुखासहनम्, असूया परगुणे दोषाविष्करणम्, अत्ययो नाशः, व्ययोऽपक्षयस्तैर्दुष्टम् । यद्वा व्ययो नाशः, अत्ययोऽन्यस्यातिशयः, तं दृष्ट्वा तदप्राप्त्या दुःखमित्यर्थः । किंच बहवोऽन्तराया वैगुण्यादिरूपा विघ्ना यस्मिन्कामे सुखे तस्य भावस्तत्त्वं तस्मात् । कृषिर्यथा बहुविघ्ना तद्वत् । बहुसुखत्वेन श्रुतमपि निष्फलम् ॥ २१ ॥ विघ्नवैगुण्याद्यभावमङ्गीकृत्यापि नाशदुःखं दुष्परिहरमित्याह—अन्तरायैरिति पञ्चभिः । निर्जितं साधितम् ॥ २२ ॥ यज्ञैर्देवता इन्द्रादिरूपा इष्ट्वा ॥ २३ ॥ स्वपुण्यैरुपचिते सर्वभोगसंपन्ने देवीनां मध्ये विहरन् गन्धर्वैरुपगीयते ॥ २४ ॥ कामगेनेच्छया गच्छता विमानेन । किङ्किणीजालमालिना क्षुद्रघण्टिकासमूहशोभिना । सह स्त्रीभिः सुराक्रीडेषु नन्दनादिषु क्रीडन्नात्मपातं न वेद ॥ २५ ॥ कालेन चालितः पातितः ॥ २६ ॥

अत्रापि[1] कर्मणां कर्तुरस्वातन्त्र्यं[2] च लक्ष्यते ॥ भोक्तुश्च दुःखसुखयोः को न्वर्थो विवशं[3] भजेत् ॥ १७ ॥ न देहिनां सुखं किंचिद्विद्यते विदुषामपि ॥ तथा च दुःखं मूढानां वृथाहंकरणं परम् ॥ १८ ॥ यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ॥ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा ॥ १९ ॥ को न्वर्थः[4] सुखयत्येनं कामो[5] वा मृत्युरन्तिके ॥ आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥ २० ॥ श्रुतं च दृष्टवद्दुष्टं स्पर्धासूयात्ययव्ययैः ॥ बह्वन्तरायकामत्वात्कृषिवच्चापि निष्फलम् ॥ २१ ॥ अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ॥ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥ भुञ्जीत देववत्तत्र भोगान्दिव्यान्निजार्जितान् ॥ २३ ॥ स्वपुण्योपचिते शुभ्रे विमान उपगीयते ॥ गन्धर्वैर्विहरन्मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥ स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ॥ क्रीडन्न वेदात्मपातं[6] सुराक्रीडेषु निर्वृतः ॥ २५ ॥ तावत्प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ॥ क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः[7] ॥ २६ ॥

१ अत्रापि त्वदङ्गीकृतपक्षेऽपि । २ अस्वातन्त्र्यं अनिच्छतोऽपि दुष्कर्मसु प्रवृत्तिदर्शनात् । ३ विवशं कालकर्मगुणाधीनं पुरुषं को न्वर्थो विषयो भजेत्सुखयेत् । ४ अर्थो धनम् । ५ कामः शब्दादिविषयः । ६ आत्मपातं स्वर्गादधःपतनम् । ७ कालेन भोगसमाप्त्यवच्छेदकेन ।

प्रवृत्तिर्द्विविधा । विध्यनुसारेण काम्ये कर्मणि वा तल्लङ्घनेषु तल्लङ्घनेनाधर्मे वा । तत्र काम्यप्रवृत्तेर्गतिरुक्ता अधर्मप्रवृत्तेर्गतिमाह—यदीति । यदि वेत्यन्वयः । अजितेन्द्रियत्वात्कामात्माऽतः कृपणोऽतो लुब्धो भोगतृष्णाकुलोऽतस्त्रैणः स्त्रीलम्पटस्तदर्थं भूतविहिंसकः ॥ २७ ॥ किंच दुष्टजनप्रलोभितो धनाद्यर्थं पशूनविधिना हत्वा । तमः स्थावरतां याति ॥ २८ ॥ एवं कर्मसु प्रवृत्तस्य न सुखं न च दुःखनिवृत्तिरित्युपसंहरति—कर्माणीति ॥ २९ ॥ तथापि लोकानां नित्यत्वादमर्त्यधर्मत्वाच्च लोकपालानां सुखमस्तीति चेत्तत्राह—लोकानामिति । द्वौ परार्धौ परमायुर्यस्य तस्य ब्रह्मणोऽपि । तथा च श्रुतिः—'भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चमः' इति । अतः प्रवृत्तिमार्गस्यैवमनर्थहेतुत्वाद्विरक्तया ततो निवृत्तिरेव युक्तेति तात्पर्यार्थः ॥ ३० ॥ एतेनैव स्वयमीश्वरत्वाविष्कारेणेश्वराभावाङ्गीकारः परित्यक्तः, अन्यदपि प्रौढ्या पूर्वमङ्गीकृतं निराकरोति चतुर्भिः । तत्र यदुक्तं कर्तृभोक्तृरूप एवात्मेति तन्निराकरोति—गुणा इति । गुणा इन्द्रियाणि कर्माणि सृजन्ति न त्वात्मा । आत्मैवेन्द्रियाणि प्रवर्तयन्कर्माणि करोतीति चेन्नेत्याह—गुण इति ।

**यद्यधर्मरतः सङ्गादसतां वाऽजितेन्द्रियः ॥ कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७॥ पशूनविधिनाऽऽलभ्य प्रेतभूतगणान्यजन् ॥ नरकानवशो जन्तुर्गत्वा यात्युल्बणं[१] तमः ॥ २८ ॥ कर्माणि दुःखोदर्काणि कुर्वन्देहेन तैः पुनः ॥ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥२९॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥३०॥ गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान् ॥ जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ॥ नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि ॥ ३२ ॥ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ॥ य एतत्समुपासीरंस्ते[३] मुह्यन्ति शुचार्पिताः ॥ ३३ ॥ काल[२] आत्मागमो लोकः स्वभावो धर्म एव च ॥ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥ ॥**

गुणः सत्त्वादिर्गुणानिन्द्रियाण्यनुसृजते प्रवर्तयति, न त्वात्मा । अत आत्मनः कर्तृत्वं तावन्नास्ति । भोक्तृत्वमप्यौपाधिकमित्याह—जीवस्त्विति । गुणसंयुक्त इन्द्रियादिसंयुक्तः । कुत इत्यत आह—असौ तेष्वहंकारवानित्यर्थः ॥ ३१ ॥ यच्चोक्तमात्मनो नानात्वं तदप्यौपाधिकमित्याह—यावत्स्यादिति । गुणानां वैषम्यमहंकारादिकार्यरूपम् । नन्वात्मन एकत्वे कथं पारतन्त्र्यमुक्तं कथं वा लोकपालादीनामपि मद्भयमित्युक्तं तत्राह—नानात्वमिति ॥ ३२ ॥ यच्च गूढमभिप्रेतं प्रवृत्तिरेव श्रेयसीति तत्राह—य एतदिति । एतद्गुणवैषम्यं तत्कृतं भोगं कर्म चेत्यर्थः । उपासीरन् सेवेरन् । ते लोकादीनामनित्यत्वाच्छुचार्पिताः प्रोताः सन्तो मुह्यन्ति ॥ ३३ ॥ न केवलमनित्यतामात्रं किंतु मायामयत्वमपीत्याह—काल इति । स्वभावो देवत्वादिपरिणामहेतुः । धर्मस्तद्भोगकारणम् । गुणव्यतिकरे मायाक्षोभे सति मामेव प्राहुर्न तु मद्व्यतिरिक्ताः सन्ति ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥

१ उल्बणमज्ञानबहुलत्वाद्घोरम् । २ कालो भोगकालः, आत्मा भोक्ता, आगमो भोगोपायबोधकं शास्त्रं, लोकः स्वर्गादिः, स्वभावः धर्मस्तद्भोगकारणं देवत्वादि । ३ सेवेरन् धर्मधर्म्यध्यासेनेति शेषः ।

ततो निवृत्तिरेव मुक्तिहेतुत्वाच्छ्रेयसीति सिद्धम् । एवं तावदेक एवात्मा, तस्य च गुणकार्यदेहसंवन्धकृतः संसारः, आत्मज्ञानाच्च मुक्तिरित्युक्तं—'विलक्षणः स्थूलसूक्ष्मात्' इत्यादिना । तदेव च मतान्तरनिरासेन दृढीकृतम् 'अथैषाम्' इत्यादिना । तत्र पृच्छति—गुणेष्विति । अयमर्थः—गुणेष्वसत्सु मुक्तिः सत्स्वेव वा ? आद्ये ज्ञानसाधनाभावान्न मुक्तिः । द्वितीये च गुणेषु वर्तमानोऽपि तत्कार्यदेहजेषु कर्मसु सुखादिषु च कथं न वध्येत । तथापि तैराकाशवदनावृतत्वान्न वध्यत इति चेत्तर्हि वन्धो न संभवतीत्याह—अनपावृतः कथं वध्यत इति ॥ ३५ ॥ यदि तु सत्स्वेव तदहंकारेण वध्यते तन्निवृत्त्या च मुच्यत इति मतं तर्हि तत्कथं ज्ञातव्यमिति पृच्छति—वद्धो मुक्तो वा कथं वर्तेतेत्यादि । किं भुञ्जीत कथं भुञ्जीतेत्यर्थः ॥ ३६ ॥ एतत् एतद्विषयं प्रश्नम् । किंच एक एवात्माऽनादिगुणसंवन्धान्नित्यवद्धः । मुक्तेर्जन्यत्वेऽनित्यत्वप्रसङ्गान्नित्यमुक्त इत्यप्यङ्गीकार्यं स्यात् । तत्र मे भ्रमो भवतीत्याह—नित्यवद्ध इति ॥ ३७ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ एकादशे तु वद्धानां मुक्तानां चाथ लक्षणम् ॥ साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥ १ ॥ 'नित्यमुक्तो नित्यवद्ध एक एवेति मे भ्रमः' इति यदुक्तं तत्किं वस्तुतो विरोधः, प्रतीतितो वा । नाद्यः । वन्धमोक्षयोर्वास्तवत्वा-

॥ उद्धव उवाच ॥ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ॥ गुणैर्न वध्यते देही वध्यते वा कथं विभो ॥३५॥ कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ॥ किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥३६॥ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ॥ नित्यमुक्तो नित्यवद्ध एक एवेति मे भ्रमः ॥३७॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे दशमोऽध्यायः ॥ १० ॥ ॥ श्रीभगवानुवाच ॥ वद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न वन्धनम् ॥ १ ॥ शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया ॥ स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥२॥ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥ मोक्षवन्धकरी आद्ये मायया मे विनिर्मिते ॥३॥

भावादित्याह—वद्धो मुक्त इति द्वाभ्याम् । आत्मा वद्धो मुक्तश्च मे गुणतो मदधीनसत्त्वादिगुणोपाधितः, न तु वस्तुतः । नन्वौपाधिकत्वेऽपि तण्डुलपाकादिवद्वास्तवत्वं किं न स्यात्तत्राह—गुणस्य मायामूलत्वाद्वन्धनं नास्ति । अत एव मोक्षश्च नास्ति । ननु कथं सर्वशास्त्रविरुद्धमुच्यते तत्राह—इति मे व्याख्येति । एवं मत्कृतो निर्णयः । अलमतिकुतर्कैरित्यर्थः । अथवैवमन्वयः—आत्मा वद्धो मुक्त इति या व्याख्या उक्तिः सा मे गुणतो मद्गुणपारतन्त्र्यात् । अत्र हेतुत्वेन गुणनियन्तरि स्वस्मिंस्तद्व्यतिरेकमाह—अत एव न मे वन्धनं मोक्षो वेति । अन्यत्समानम् ॥ १ ॥ एवं कारणभूतगुणानां मायामयत्वात्तत्कार्यसंसृतिर्मायेति प्रपञ्चयति—शोकमोहाविति । यथा स्वप्न आत्मनो वुद्धेरेव ख्यातिर्विवर्तस्तद्वत् ॥२॥ अतो वस्तुविरोधस्तावन्नास्ति, प्रतीतिस्त्वौपाधिकी घटत इत्याह—विद्याविद्ये इति । तन्यते मोक्षवन्धावाभ्यामिति तनू शक्ती । कुतः । मे मायया विनिर्मिते, मायावृत्तिरूपत्वात् । मोक्षवन्धकरीत्येकवचनं द्विवचनार्थे । ननु तत्कार्यत्वे वन्धमोक्षयोरनादित्वमित्यत्वे न स्याताम्, न, आद्ये अनादी । अतो यावदविद्यां प्रवर्तयामि तावद्वन्धः, यदा विद्यां ददामि तदा मोक्षः स्फुरतीत्यर्थः । तथा च स्कन्दपुराणे—'वन्धको भवपाशेन भवपाशाच्च मोचकः ॥ कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥' इति ॥ ३ ॥ ॥

१ जन्यत्वे यज्जन्यं तदनित्यमिति व्याप्तेरनित्यत्वप्रसक्तेः । २ औपाधिकत्वेऽपि यथा—'शाल्यग्नितापात्पयसोऽभितापः' इति न्यायेन शाल्याद्युपाधिकत्वेऽपि वह्निसंयोगेन तण्डुलपाको वास्तवो भवति । ३ विवर्तः अतात्त्विकान्यथाभावः यथा रज्जौ भुजंगवुद्धिः ।

तत्र शरीरिणामिति बहुवचननिर्देशाद्विषयभेदेनाविरोध उक्त इति भ्रान्तिं व्यावर्तयन् बन्धमोक्षव्यवस्थामुपपादयति—एकस्यैवेति। तर्हि किमात्माभेदात्तवापि बन्धो नहीत्याह—अस्य जीवस्यैवेति। नन्वात्माभेदे जीवो नाम कोऽन्योऽस्ति पृथक्, कथं च बन्धमोक्षसुखदुःखादिव्यवस्था तत्राह—ममांशस्येति। अयं भावः—यथैकस्यापि चन्द्रादेर्जलाद्युपाधिना विम्बप्रतिविम्बरूपो भेदः, यथा च तत्र जलकृताः कम्पादयः प्रतिविम्बस्यैव। यथा च प्रतिविम्बानामप्युपाधिभेदेन भेदादेकस्मिन्नुदकुम्भे भग्ने तद्गतप्रतिविम्बस्यैव विम्बैक्यं नान्यगतस्य तथाऽविद्यायां प्रतिविम्बस्य मदंशस्य जीवस्यैव तत्कृतो बन्धस्तस्य चोपाधितो भेदान्नाव्यवस्थेति। तथा चाहुः—'यथैकस्मिन्घटाकाशे रजोभूमादिभिर्युते॥ न सर्वे संप्रयुज्यन्ते तथा जीवाः सुखादिभिः॥' इति। एतच्चातिरहस्यं स्वबुद्ध्या निश्चेतव्यमिति संवोधयति। हे महामते। इतरो मोक्षः॥ ४॥ तदेवं व्यवस्थामुपपाद्य कथं वर्ततेत्यादिवैलक्षण्यप्रश्नस्योत्तरमाह—अथेति। तच्च वैलक्षण्यं द्विविधम्। जीवेश्वरयोरेकं जीवानां चैकम्। तत्र जीवेश्वरयोर्वैलक्षण्यमाह—विरुद्धधर्मिणोरिति सार्धद्वयेन। शोकानन्दधर्मवतोरेकस्मिन्धर्मिणि शरीरे नियम्यनियन्तृत्वेन स्थितयोः॥ ५॥ सुपर्णौ वृक्षात्पक्षिणाविव देहात्पृथग्भूतौ। सदृशौ चिद्रूपत्वात्। सखायौ अवियोगादैकमत्याच्च। यदृच्छयाऽनिरुक्तया

एकस्यैव ममांशस्य जीवस्यैव महामते॥ बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः॥ ४॥ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते॥ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि॥ ५॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्॥ ६॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः॥ योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः॥ ७॥ देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद्यथोत्थितः॥ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा॥ ८॥ ॥

मायया। वृश्च्यत इति वृक्षो देहः—'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति' इति श्रुतेः, 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्॥ छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥' इति स्मृतेश्च। तस्मिन्कृतं नीडं निकेतनं हृदयरूपं याभ्यां तौ। तयोर्मध्ये एको जीवः पिप्पलान्नं पिप्पलोऽश्वत्थो देहस्तस्मिन्नदनीयं कर्मफलमित्यर्थः। खादति भक्षयति। अन्य ईश्वरो निरन्नोऽभोक्तापि निजानन्दतृप्तो बलेन ज्ञानादिशक्त्या भूयानधिकः। श्रुतिश्च—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥' इति॥ ६॥ बलाधिक्यमेवाह—आत्मानमिति। अतो योऽविद्यया युग्युक्तः स तु नित्यबद्धोऽनादिबद्धः। यस्तु विद्याप्रधानः स तु नित्यमुक्तः, मायाया अनावरकत्वादाश्रयाव्यामोहकत्वाच्च॥ ७॥ इदानीं बद्धमुक्तजीवानामेव मिथो वैलक्षण्यमाह—देहस्थोऽपीति दशभिः। विद्वान्मुक्तः संस्कारवशेन देहस्थोऽपि देहस्थो न भवति। यथा स्वप्नादुत्थितः स्मर्यमाणे स्वप्नदेहे स्थितोऽपि तत्रस्थो न भवति, तद्गतसुखदुःखाद्यभावात्, तद्वत्। तथा च वस्तुतोऽदेहस्थोऽपि कुमतिरविद्वान्देहस्थस्तन्निमित्तसुखदुःखभाक्। यथा स्वप्नदेहगत इति॥ ८॥

---

१ उपाधिना भेदात् अविद्याकार्यदेहाद्युपाधिनानात्वात्। २ एका समाना हृदयात्रस्थानव्यवसायलक्षणा मतिर्ययोस्तयोर्भावस्तत्त्वं तस्मात्। ३ ऊर्ध्वं सर्वोत्तमः श्रीनारायणो मूलं यस्य अर्वाक् ततोऽर्वाचीनाः कार्योपाधिहिरण्यगर्भादयः शाखा इव शाखा यस्य। ४ अश्वत्थमिति नश्वरत्वात् श्वःप्रभातपर्यन्तमपि स्थास्यतीति विश्वासानर्हत्वात्। ५ सयुजा सयुजौ समानं रूपं चिद्रूपत्वं युञ्जाते भजतः इति। ६ अभिचाकशीति साक्षितया प्रकाशते।

अत्र हेतुत्वेन वैलक्षण्यान्तरमाह द्वाभ्याम् । इन्द्रियैरिन्द्रियार्थेषु गृह्यमाणेष्वपि यस्तु विद्वान्स नाहंकुर्यादहं गृह्णामीति मतिं न कुर्यादित्यर्थः । कुतः । गुणैर्गुणेषु गृह्यमाणेषु । अत एवाविक्रियो रागादिशून्यः । तदुक्तं गीतासु—'तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ॥ गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥' इति ॥ ९ ॥ अबुधस्तु पूर्वकर्माधीनेऽस्मिन् शरीरे वर्तमानो गुणैरिन्द्रियैर्भाव्येन कर्मणा तत्र देहादौ निबध्यते । कुतः । कर्तास्मीत्यहंकारेण । तदुक्तं तत्रैव—'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥ अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥' इति । एतैस्त्रिभिः श्लोकैः कथं वर्ततेत्यस्य प्रश्नस्य सुखदुःखशून्यो निरभिमानश्च देहे वर्तेत इत्युत्तरमुक्तं भवति ॥१०॥ वैलक्षण्यान्तरं वदन् 'किं भुञ्जीत' इत्यादिप्रश्नोत्तरमाह—एवमिति त्रिभिः। अन्यगतमेव कर्म मां बध्नातीत्येवं विरक्तो विद्वान्। तथा अविद्वानिव शयनासनादिषु न बध्यते। कुतः। तत्र तत्र विषयेषु गुणानिन्द्रियाण्यादयन् भोजयंस्तत्साक्षित्वेन वर्तमानो न तु स्वयमदन्। एतदेव कुतस्तत्राह—प्रकृतिस्थोऽपीति सार्धेन। यथा खं सर्वत्र स्थितमपि न सज्जते। यथा सविता जले प्रतिबिम्बितोऽपि । यथानिलः सर्वत्र संचरन्नपि तद्वत्

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ॥ गृह्यमाणेष्वहंकुर्यान्न विद्वान्यस्त्वविक्रियः ॥ ९ ॥ दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ॥ वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥ एवं विरक्तः शयन आसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥ न तथा बध्यते विद्वांस्तत्र तत्रादयन् गुणान् ॥ प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥ १२ ॥ वैशारद्येक्षयाऽसङ्गशितया छिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥ यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥१४॥ यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥ न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥ १६ ॥ न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ १७ ॥ ॥ ॥

॥ ११ ॥ १२ ॥ असङ्गेन वैराग्येण शितया तीक्ष्णया छिन्नाः संशया असंभावनादयो यस्य सः । नानात्वाद्देहादिप्रपञ्चात् ॥१३॥ कथं विहरेदित्यस्योत्तरत्वेन वैलक्षण्यान्तरमाह—यस्य स्युरिति । तद्गुणैर्देहगुणैः संकल्पशून्याभिः प्राणादिवृत्तिभिर्विहरन्मुक्त इत्यर्थः ॥ १४ ॥ एवं तावद्बद्धमुक्तयोः स्वसंवेद्यमेव वैलक्षण्यमुक्तमिदानीं 'कैर्वा ज्ञायेत लक्षणैः' इत्यस्योत्तरतया परैरपि सुज्ञेयं वैलक्षण्यमाह—यस्यात्मेति त्रिभिः । हिंस्रैर्दुर्जनैरन्यैर्वा प्राणिभिर्यस्यात्मा देहः पीड्यते । यदृच्छया येन केनापि क्वचित्किंचिदर्च्यते वा स बुधश्चेत्तत्र न व्यतिक्रियते, नातिविक्रियते इत्यर्थः । तदुक्तं याज्ञवल्क्येन—'यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ॥ अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ॥' इति ॥ १५ ॥ किंच साध्वसाधु वा कुर्वतो वदतो वा जनान्न स्तुवीत न च निन्देत । यो लौकिकव्यवहारे विमुखः स मुक्त इत्यर्थः ॥ १६ ॥ अपि च, न कुर्यादिति । यो दैहिकेऽपि कर्मण्युदासीनः स मुक्तः । इतरो बद्ध इत्यर्थः । एतान्येव सर्वाणि मुमुक्षोः साधनानि ज्ञातव्यानि ॥ १७ ॥



१ भाव्येन कृतेन सृज्येन वा । २ वैशारद्याऽतिनिपुणया ।

यस्तु केवलं शब्दब्रह्मण्यभिज्ञः पाण्डित्यमात्रश्लाघी न तूक्तैः साधनैस्तदर्थनिष्ठो भवेत्तं निन्दति । शब्दब्रह्मणि निष्णातोऽर्थतः पारं गतोऽपि परे ब्रह्मणि न निष्णायाद्ध्यानाद्यभियोगं न कुर्यात्तस्य शास्त्रश्रमः श्रमैकफलः, न तु पुरुषार्थपर्यवसायी । अधेनुं चिरप्रसूताम् ॥ १८ ॥ एतदेवान्यार्थनिदर्शनैः प्रपञ्चयति—गामिति । दुह्यत इति दोहः पयः । दुग्धो दोहो नोत्तरत्र दोह्योऽस्ति यस्यास्तामर्थशून्याम् । असतीं भार्यां कामशून्याम् । देहं पराधीनं प्रतिक्षणं दुःखहेतुम् । असत्प्रजां दृष्टादृष्टसाधनशून्यं पुत्रम् । अतीर्थीकृतमागते पात्रेऽदत्तं वित्तं दुष्कीर्तिदुरितापादकम् । अङ्ग हे उद्धव, दुःखानन्तरं दुःखमेव यस्य स रक्षति ॥ १९ ॥ मया हीनां वाचमित्युक्तं विवृणोति । यस्यां वाचि मे जगतः शोधकं चरित्रं न स्यात् । किं तत् । अस्य विश्वस्य स्थित्यादिरूपम्, तद्धेतुरित्यर्थः । लीलावतारेप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादिजन्म वा न स्यात् । तां निष्फलां गिरं धीरो धीमान्न धारयेत् ॥२०॥ उक्तं ज्ञानमार्गमुपसंहरति—एवं निश्चित्य विचारे-

शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ॥ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥ गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ॥ वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥ १९ ॥ यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य ॥ लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥ एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि ॥ उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥ यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ॥ मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः ॥ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः ॥ २३ ॥ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ॥ लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥ सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता ॥ स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥ २५ ॥ ॥ उद्धव उवाच ॥ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो ॥ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥ २६ ॥ ॥ ॥

णात्मनि नानात्वभ्रमं देहाद्यध्यासं निरस्य निर्मलं मनो मयि सर्वगे परिपूर्णे समर्प्य संधार्य उपारमेत । न शास्त्रपाण्डित्यमात्रेणेत्यर्थः ॥ २१ ॥ यद्यनीशोऽशक्तस्तर्हि तामिदं मद्भक्त्यैव कृतार्थो भविष्यसीत्याह—मयीति ॥ २२ ॥ मदर्पणेन कर्मणा विशुद्धसत्त्वस्यान्तरङ्गां भक्तिमाह—श्रद्धालुरिति द्वाभ्याम् । अभिनयन्स्वयमनुकुर्वन् ॥ २३ ॥ आचरन्सेवमानः ॥ २४ ॥ ततश्चानेन प्रकारेण मयि मत्सङ्गेन लब्धया भक्त्या स भक्तो मामुपासिता ध्याता भवति । स च ध्यानशीलः सद्भिर्दर्शितं वै निश्चितं सुखेनैव मे पदं स्वरूपं प्राप्नोति ॥२५॥ सत्सङ्गलब्धया भक्त्येत्युक्तं तत्र सतां भक्तेश्च विशेषं पृच्छति—साधुरिति । साधवः स्वस्वमतिकल्पिताः सन्ति बहवः, तव तु कीदृशः संमतः । भक्तिरपि बहुविधा लोके, कीदृशी पुनस्त्वय्युपयुज्येत । सद्भिश्च नारदादिभिरादृता ॥ २६ ॥ ॥

१ ध्यानाद्यभिनिवेशम् । २ युक्तिसाधकः । ३ अन्यपदार्थदृष्टान्तैः । ४ दृष्टमैहिकं फलं धनार्जनादि, अदृष्टं श्राद्धादिजन्यं, तच्छून्यम् । ५ मया हीनां मदीयलीलाशून्यां वैदिकीमपि वाचम् । ६ 'साधुस्त्व उत्तमश्लोके मनः कीदृग्विधं प्रभो ॥ भक्तिस्त्वय्युपयुञ्जीत' इति विज० समतः पाठः । ७ निरपेक्षः सन्मयि मन्निमित्तं मत्फलकानीत्यर्थः । मयीत्यस्य मयि ब्रह्मणीति व्याख्यान्यत्र । ८ ध्याताऽनवरतस्फूर्तिमान् ।

एतच्च कथ्यताम् । इदं चातिगुह्यं त्वयैव वक्तव्यमित्यैश्वर्यमाविष्करोति—हे पुरुषाध्यक्षेत्यादिना । ब्रह्मादिनियन्तः ॥ २७ ॥ अत्र हेतुः—त्वमिति । व्योमवदसङ्गः । यतः प्रकृतेः परः । स्वेषां भक्तानामिच्छयोपात्तं पृथक्परिमितं वपुर्येन सः ॥२८॥ तत्र त्रिंशल्लक्षणैः साधुं निरूपयति—कृपालुरिति पञ्चभिः । कृपालुः परदुःखासहिष्णुः । सर्वदेहिनां केषांचिदप्यकृतद्रोहः । तितिक्षुः क्षमावान् । सत्यं सारः स्थिरं बलं वा यस्य सः । अनवद्यात्मासूयादिरहितः । सुखदुःखयोः समो हर्षविषादरहितः । यथाशक्ति सर्वेषामुपकारकः ॥ २९ ॥ कामैर्विषयैरक्षुभितचित्तः । दान्तः संयतबाह्येन्द्रियः । मृदुरकठिनचित्तः । शुचिः सदाचारः । अकिंचनोऽपरिग्रहः । अनीहो दृष्टक्रियाशून्यः । मितभुक् लघ्वाहारः । शान्तो नियतान्तःकरणः । स्थिरः स्वधर्मे । मच्छरणो मदेकाश्रयः । मुनिर्मननशीलः ॥३०॥ अप्रमत्तः सावधानः । गभीरात्मा निर्विकारः । धृतिमान्विपद्यप्यकृपणः । जितषड्गुणः—'क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः' एते जिता येन सः । अमानी न मानाकाङ्क्षी ।

एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो ॥ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ॥ अवतीर्णोऽसि भगवन्स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥ ॥ श्रीभगवानुवाच ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥ कामैरहतधीर्दान्तो मृदुः शुचिरकिंचनः ॥ अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥ अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ॥ अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥ आज्ञायैवं गुणान्दोषान्मया दिष्टानपि स्वकान् ॥ धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ॥ ३२ ॥ ज्ञात्वाज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः ॥ भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥ मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम्[1] ॥ परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम्[2] ॥ ३४ ॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ॥ सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥ ३५ ॥ ॥

अन्येभ्यो मानदः । कल्पः परबोधने दक्षः । मैत्रोऽवञ्चकः । कारुणिकः करुणयैव प्रवर्तमानो न दृष्टलोभेन । कविः सम्यग्ज्ञानी ॥ ३१ ॥ किंच, मया वेदरूपेणादिष्टानपि स्वधर्मान्संत्यज्य यो मां भजेत सोऽप्येवं पूर्वोक्तवत्सत्तमः[3] । किमज्ञानान्नास्तिक्याद्वा, न, धर्माचरणे सत्त्वशुद्ध्यादीन् गुणान्, विपक्षे[4] नरकपातादीन्दोषांश्चाज्ञाय ज्ञात्वापि मद्ध्यानविक्षेपकतया मद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेनैव धर्मान्संत्यज्य । यद्वा भक्तिदार्ढ्येन निवृत्ताधिकारतया संत्यज्य । अथवा विद्धैकादश्युपवासकृष्णैकादश्यनुपवासानिवेद्यश्राद्धादयो ये भक्तिविरुद्धा धर्मास्तान्संत्यज्येत्यर्थः ॥ ३२ ॥ किंच यावान्देशकालापरिच्छिन्नः । यश्च सर्वात्मा । यादृशः सच्चिदानन्दादिरूपः । तं मां ज्ञात्वा अज्ञात्वापि । यद्वा विशेषतः पुनःपुनर्ज्ञात्वा एकान्तभावेन ये भजन्तीति ॥ ३३ ॥ साधुलक्षणमुक्तम्, भक्तेर्लक्षणमाह—मल्लिङ्गेत्यष्टभिः । लिङ्गानि प्रतिमादीनि ॥ ३४ ॥ सर्वलाभोपहरणं सर्वस्य लब्धस्य समर्पणम् ॥ ३५ ॥ ॥ ॥

१ मल्लिङ्गेत्यत्र षष्ठ्या लुक् छान्दसः । उत्तरार्धेऽप्यन्वयात् । २ प्रह्वेति भावप्रधानो निर्देश इति दीपिनी । प्रह्वत्वं प्रणाम इत्यर्थः । ३ सोऽपि कृपालुत्वादिगुणशून्योऽपि । ४ विपक्षे धर्मानाचरणे ।

पर्वाणि जन्माष्टम्यादीनि तदनुमोदनम् ॥ ३६ ॥ बलिविधानं पुष्पोपहारादिसमर्पणम् । सर्ववार्षिकपर्वसु चातुर्मास्यैकादशादिषु विशेषतः ॥ ३७ ॥ उद्यानादिकरणे सामर्थ्ये सति स्वतः । असति चान्यैः संभूयोद्यमः । उद्यानं पुष्पप्रधानम् । उपवनं फलप्रधानं वनम् । आक्रीडं क्रीडास्थानम् ॥ ३८ ॥ संमार्जनं रजसोपाकरणम् । उपलेपो गोमयादिभिरालेपनम् । सेकस्तैरेव प्रोक्षणम् । मण्डलवर्तनं सर्वतोभद्रादिकरणम् । मह्यं मम ॥ ३९ ॥ कृतस्य धर्मस्यापरिकीर्तनम् । स्वयमन्येन वा निवेदितं न स्वीकुर्यात् । एतच्च साधारणं स्थावरविषयं रागप्राप्तविषयं वा । भक्त्या तु ग्राह्यमेव । 'षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ॥ विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ॥ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ॥ पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥' इत्या-

मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ॥ गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥ यात्राबलिविधानं च सर्ववार्षिकपर्वसु ॥ वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥३७॥ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः ॥ उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥ संमार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः ॥ गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥ अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ॥ अपि दीपावलोकं[1] मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥ सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ॥ भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥४२॥ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ॥ आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना ॥४३॥ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥ स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि[3] ॥ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥ धिष्ण्येष्वेष्विति मद्रूपं शङ्खचक्रगदाम्बुजैः ॥ युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥ ॥

दिवचनेभ्यः । यद्वा अन्यस्मै निवेदितं मे नोपयुञ्ज्यात् । मह्यं न निवेदयेदित्यर्थः । 'विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ॥ पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥ पितृशेषं तु यो दद्याद्धरये परमात्मने ॥ रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ॥' इत्यादिवचनेभ्यः ॥ ४० ॥ ४१ ॥ इदानीमेकादश पूजाधिष्ठानान्याह—सूर्यं इति । हे भद्र ॥ ४२ ॥ अधिष्ठानभेदेन पूजासाधनान्याह—सूर्य इति त्रिभिः । त्रय्या विद्यया सूक्तैरुपस्थानादिना । अङ्ग हे उद्धव । यवसादिना तृणादिना ॥ ४३ ॥ बन्धुसत्कृत्या बन्धुवत्संमानेन । हृदि खे हृदयाकाशे । मुख्यधिया प्राणदृष्ट्या । तोये तोयादिभिर्द्रव्यैस्तर्पणादिना ॥ ४४ ॥ स्थण्डिले भुवि । मन्त्रहृदयैः रहस्यमन्त्रन्यासैः ॥ ४५ ॥ सर्वाधिष्ठानेषु ध्येयमाह—धिष्ण्येष्विति । इत्यनेन मन्त्रप्रकारेण । एषु धिष्ण्येषु ॥ ४६ ॥ ॥

१ सभूय मिलित्वा । २ मे मह्यं निवेदिते दीपे तत्प्रकाशे अवलोकनं स्वोपयोगिपदार्थदर्शनादिकं न कुर्यात् । छत्रचामरतालवृन्तपवनादीनामनुपयोज्यत्वप्रदर्शनार्थमिदम् । तद्दोषपरिहारार्थं वर्तिद्वयदीपकं कुर्यादिति केचिदाहुः । मह्यं निवेदितं दीपावलोकमपि नोपयुञ्ज्यात् । मत्प्रदत्तस्यान्नादेर्दीपस्य च स्वव्यवहारमात्रे उपयोगो न कर्तव्य इति चक्र० । ३ आत्मनि देहादिसंघाते भोगैः शास्त्रानिषिद्धैर्विषयैरात्मानं जीवं यजेतेति बाल० । आत्मनि देहे आत्मानं जीवं भोगैरयं ममात्मापि मत्प्रभोरधिष्ठानमिति बुद्ध्यैव दत्तैर्न तु लोभेनेति चक्र० ।

उक्ताया भक्तेः फलमाह—इष्टापूर्तेनेति । सद्भक्तिं दृढां भक्तिम् । अस्या भक्तेरन्तरङ्गसाधनमाह—इत्थं मत्स्मृतिः साधुसेवया भवति । यद्वा स्मृतिर्ज्ञानम् । ततश्च दृढभक्तिमतः पुंसः साधुसेवया मज्ज्ञानं भवतीत्यर्थः ॥ ४७ ॥ ज्ञानभक्तिमार्गावुक्तौ, तत्र ज्ञानमार्गादपि भक्तिमार्गः श्रेष्ठ इत्याह—प्रायेणेति । सत्सङ्गेन यो भक्तियोगस्तेन विनोपायः संसारतरणे न विद्यते । सत्सङ्गेनेत्यत्र हेतुमाह—हि यस्मात् सतामहं प्रायणं प्रकृष्टमयनमाश्रयः । अतः सत्सङ्गो मय्यन्तरङ्ग इत्यर्थः ॥ ४८ ॥ इदानीं सांख्ययोगादीनि साधनान्तरसव्यपेक्षाणि सव्यभिचाराणि च, सत्सङ्गस्तु स्वतन्त्र एव समर्थः फलाव्यभिचारी चेति वर्णयितुमाह—अथेति । एतद्वक्ष्यमाणं परमं गुह्यमतः शृण्वित्यर्थः ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायामेका-

इष्टापूर्तेन[1] मामेवं यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥ प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ॥ नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥ अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन ॥ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा ॥४९॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे एकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥श्रीभगवानुवाच॥ न रोधयति मां योगो न सांख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥१॥ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ॥ यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥ सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ॥ गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥४॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ॥ ६ ॥ ॥

दशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ॥ कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥ १ ॥ न रोधयति न वशीकरोति । योग आसनप्राणायामादिः । सांख्यं तत्त्वानां विवेकः । धर्मः सामान्यतोऽहिंसादिः । स्वाध्यायो वेदजपः । तपः कृच्छ्रादि । त्यागः संन्यासः । इष्टापूर्तमिष्टं च पूर्तं च । तत्रेष्टमग्निहोत्रादि । पूर्तं कूपारामादिनिर्माणम् । दक्षिणाशब्देन सामान्यतो दानं लक्ष्यते ॥ १ ॥ व्रतानि एकादश्युपवासादीनि । यज्ञो देवपूजा । छन्दांसि रहस्यमन्त्राः । अवरुन्धे वशीकरोति ॥ २ ॥ यातुधाना राक्षसाः ॥ ३ ॥ ४ ॥ त्वाष्ट्रो वृत्रः । कायाधवः प्रह्लादः ॥ ५ ॥ ऋक्षो जाम्बवान् । गृध्रो जटायुः । वणिक्पथस्तुलाधारः । व्याधो धर्मव्याधः । यज्ञपत्न्यो दीक्षितभार्याः ॥ ६ ॥ ॥ ॥

१ भक्त्यभावे फलव्यभिचारयन्ति च । २ अत्रेष्टशब्देन मन्वमरकल्पोक्तानि अग्निहोत्रदर्शपौर्णमासचातुर्मास्यपशुयागवैश्वदेवातिथ्यपान्युच्यन्ते । पूर्तशब्देन सुरालयारामकूपवापीतडागप्रपान्नसत्राण्युच्यन्ते । ३ वणिक्पथस्य महाभारते जाजलिमुनिप्रसङ्गे प्रोक्तमहिम्नः श्रीनारदादिसङ्गोऽन्वेषणीयः ।

तेषां सत्सङ्गव्यतिरिक्तसाधनान्तराभावमाह—त इति । न अधीताः श्रुतिगणा यैः, तदर्थं च नोपासिता महत्तमा यैस्ते तथा । किंच अव्रतातप्ततपसः, न व्रतानि येषां, न तप्तानि तपांसि यैस्ते च ते च । तथा सत्सङ्गादिति, सद्भिः सङ्गो नाम मयैव सङ्ग इत्यभिप्रेत्योक्तम् । यद्वा स्वसङ्गस्यापि सत्सङ्गत्वं विवक्ष्यते, स्वस्यापि सत्त्वात् । यद्वा मदीयसङ्गादित्यर्थः ॥ ७ ॥ तत्र वृत्रादीनां भवतु नाम कथंचित्साधनान्तरं, गोपीप्रभृतीनां तु नान्यदस्तीत्याह—केवलेनेति । सत्सङ्गलब्धेन केवलेनैव भावेन प्रीत्या नगा यमलार्जुनादयः । नागाः कालियादयः । यद्वा तदानीन्तनानां सर्वतरुगुल्मादीनामपि भगवति भावोऽस्तीति गम्यते । तदुक्तं भगवतैव—'अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनःफलार्हणम् ॥ नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृतम् ॥' इत्यादि । सिद्धाः कृतार्थाः सन्त ईयुः प्रापुः ॥ ८ ॥ स्वप्राप्तेर्दुर्लभतामाह—यमिति । योगादिभिः कृतप्रयत्नोऽपि यं न प्राप्नुयात्तं मामीयुरिति पूर्वेणान्वयः । अत्र च प्रथमं या गोप्यः पश्चादयो वा श्रीकृष्णेन सह सङ्गतास्ते सन्तस्तत्सङ्गोऽन्येषां सत्सङ्गस्तेन च तेषां भक्तिरिति ज्ञातव्यम् ॥ ९ ॥ गोपीनां

ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः ॥७॥ केवलेन हि भावेन गोप्यो
गावो नगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥ यं न योगेन[1] सांख्येन दानव्रततपोऽध्वरैः ॥
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥१०॥ तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावन-
गोचरेण ॥ क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥ ता नाविदन्मय्यनुषङ्गबद्धधियः
स्वमात्मानमतस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥ मत्कामा रमणं
जारमस्वरूपविदोऽबलाः ॥ ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥ ॥ ॥

भावं प्रपञ्चयति—रामेणेति चतुर्भिः । श्वाफल्किना, अक्रूरेण मयि प्रणीते सति मे मत्तोऽन्यं सुखाय न ददृशुः । कुतः । वियोगेन तीव्रो दुःसह आधिर्यासां ताः । अत्र हेतुः—मयि विगाढेनातिदृढेन भावेन प्रेम्णानुरक्तानि संसक्तानि चित्तानि यासां ताः ॥ १० ॥ तीव्राधित्वं व्यनक्ति—तास्ता इति । मया सह या एव क्षपा रात्रयः क्षणार्धवन्नीतास्ता एव पुनर्मया हीनास्तासां कल्पसमा बभूवुः । कथंभूताः । तास्ताः वाचामगोचरा इत्यर्थः ॥ ११ ॥ किंच एवं तीव्राधयस्ता मोहमिषेण समाधिं प्राप्ता इत्याह—ता इति । मय्यनुषङ्गेणासक्त्या बद्धा धियो याभिस्ताः स्वमात्मानं स्वदेहमदो दूरस्थमिदं संनिहितं च नाविदन् । यद्वा स्वं पतिपुत्रादिममतास्पदम् । आत्मानमहंकारास्पदं देहम् । अदः परं लोकमिदमिमं लोकं च नाविदन्निति । यथा मुनयः समाधौ नामरूपे न विदुस्तद्वत् । किंत्वब्धितोये नद्य इव मयि प्रविष्टा इत्यन्वयः ॥ १२ ॥ एवं ता अबलाः केवलं भक्त्या । अस्वरूपविदः स्वरूपं तु न जानन्ति तथापि, सत्सङ्गाज्जारं ब्रह्म जारबुद्धिवेद्यमपि ब्रह्मस्वरूपमेव मां परमं प्रापुरित्यर्थः ॥ १३ ॥ ॥ ॥ ॥

[1] 'येन्न योगेन' इति पाठः ।



१३२७

यस्मादेवंभूतो मद्भजनप्रभावस्तस्मात्त्वं चोदनां श्रुतिं प्रतिचोदनां स्मृतिं च । यद्वा विधिं च निषेधं चोत्सृज्य मां शरणं याहि ॥ १४ ॥ मयैवाकुतोभयः स्याः भव ॥ १५ ॥ पूर्वं तावत् 'मयोदितेष्ववहितः स्वधर्मेषु' इत्यादिना कर्म कर्तव्यमित्युक्तम्, इदानीं तु सर्वं त्यक्त्वा मां शरणं याहीत्युच्यते, तत्र किमात्मनः कर्तृत्वाद्यस्ति नास्ति वेत्यात्मस्थ आत्मविषयः संशयो न निवर्तते । यद्वा कर्म कार्यं त्याज्यं वेत्यात्मस्थो हृदिस्थः संशयो न निवर्तत इति पृच्छति—संशय इति । येन संशयेन ॥ १६ ॥ उत्तरम्—स एष इत्यष्टभिः । अयं भावः—ईश्वरस्तावत्स्वमायावशात्प्रपञ्चात्मना भाति, तत्प्रपञ्चाध्यासाच्च जीवानामनाद्यविद्यया कर्तृत्वादि, ततो विधिप्रतिषेधाधिकारस्तदानीं सत्त्वशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम् । सत्त्वे च शुद्धे पुनः कर्मजाड्यपरिहाराय भक्तिविक्षेपककर्मादरं परित्यज्य दृढविश्वासेन भजेत्युक्तम् । जातायां तु विद्यायां न किंचित्कर्तव्यमस्तीति । तत्र तावदीश्वराद्वागादीन्द्रियद्वारा जीवसंसृतिकारणभूतं प्रपञ्चोद्गममाह सार्धैश्चतुर्भिः । स एषोऽपरोक्षः । जीवयतीति जीवः परमेश्वरः । अपरोक्षत्वे हेतुः—विवरेष्वाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य सः । तामेवाभिव्यक्तिमाह—घोषेणेति । घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन् मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे विशुद्धि-

तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं[2] च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥ ॥ उद्धव उवाच ॥ संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ॥ न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥ ॥ श्रीभगवानुवाच ॥ स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ॥ मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥ ॥

चक्रे चोपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः, स्वर उदात्तादिः, वर्णः ककारादिरित्येवं वैखर्याख्यः स्थविष्ठोऽतिस्थूलो नानावेदशाखात्मको भवति । तथा च श्रुतिः—'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति । (श्रुतेरर्थः—वाक्परिमितानि वाचः परिमितानि शास्त्रनिर्णीतानि चत्वारि पदानि स्थानानि परा पश्यन्ती मध्यमा वैखरीति, तानि च ये ब्राह्मणा मनीषिणोऽध्यात्मकुशलास्ते विदुः । तेषां मध्ये आदौ त्रीणि पदानि गुहायां शरीरे आधारनाभिहृदयेषु निहितानि नेङ्गयन्ति[3] न जानन्ति । तुरीयं चतुर्थं वैखर्याख्यं मनुष्या वदन्ति । मनुष्याणां वदने वर्तमानोऽर्थबोधकः शब्दो भवतीत्यर्थः ।) अभियुक्तश्लोकश्च—'या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानन्तःप्रकटकरणैः प्राणसङ्गात्प्रसूते ॥ तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये' ॥ (श्लोकार्थश्च[4]—तां त्रिविधां भारतीं प्रपद्ये । या सा भारती मित्रावरुणसदनादग्निसोमस्थानादुच्चरन्ती उद्भवन्ती । मित्रोऽग्निर्वरुणः सोमस्तयोः सदनमावासमास्थानं परमात्मा यतः श्वासस्य शीतोष्णत्वं तस्मादुच्चरन्ती त्रिषष्टिं वर्णान् जनयति । अइउवर्णा ह्रस्व-दीर्घ-प्लुतभेदेन त्रिविधा नव । ऋकारः प्लुतहीनो द्विविधः, ऌकारोऽपि द्विविधो दीर्घहीनः ।

१ प्रतिचोदनाशब्दस्य स्मृतिपरत्वं न कुत्रापि प्रसिद्धमतो यद्वेति । २ प्रवृत्तं दक्षिणमार्गम्, निवृत्तं उत्तरमार्गम् । ३ नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति । ४ प्रकारान्तरेणास्यार्थः—या सा प्रसिद्धा पराख्या मित्रोऽग्निः वरुणः सोमस्तयोः सदनमाधारचक्रं तस्मात्प्राणसङ्गेनोच्चरन्ती स्वयमेवोद्भवन्ती पराख्या अन्तःकरणाभ्यां मनोबुद्धिभ्यां प्रकटकरणेन वागिन्द्रियेण च त्रिषष्टिवर्णान् प्रसूते अतस्तां प्रथममुदितां पराख्या अन्तः पश्यति न तूच्चारयति यां तां मनःस्थां पश्यन्त्याख्यां तथा बुद्धिसस्थामुच्चारयामीति विचारयुक्ता मध्यमा करणविशदा स्थानप्रयत्ननिर्मलां वैखरीमहं प्रपद्ये ।

सन्ध्यक्षराणि ह्रस्वहीनान्यष्ट । एवमेकविंशतिस्वराः । स्पर्शाः पञ्चविंशतिः कादयो मान्ताः । याद्योऽष्टावन्तस्था ऊष्माणश्च । अनुनासिकाः पञ्च । अनुस्वारविसर्गौ जिह्वामूलीयोपध्मानीयौ चेति त्रिषष्टिः । एतान्वर्णान्वायुसञ्जान् । प्रकटकरणैर्वृद्धिं गतैः प्रत्यक्षरूपैरिन्द्रियैरन्तः पश्यति न तूच्चारयति सा पश्यन्त्याख्या तां प्रथममुदितामुत्पन्नाम् । बुद्धिसंस्थामुच्चारयामीति विचारयुक्तां मध्यमाम् । मुखेऽवस्थितां करणविशदां स्थानप्रयत्ननिर्मलां वैखरीं च प्रपद्ये ।) ॥ १७ ॥ अव्यक्तस्य सतः सूक्ष्ममध्यमक्रमेणाभिव्यक्तौ दृष्टान्तः—यथेति । यथाऽग्निः । खे ऊष्मा अव्यक्तोष्मरूपः । दारुण्यधिकं मथ्यमानोऽनिलसहायः सन्नणुः सूक्ष्मविस्फुलिङ्गादिरूपो भवति । पुनः प्रकृष्टो जातो हविषा संवर्धते । तथैवेयं वाणी ममाभिव्यक्तिः ॥ १८ ॥ उक्तां वाग्वृत्तिमुपसंहरन्नितरेन्द्रियवृत्तिष्वतिदिशति । एवं गदिर्गदनं भाषणं मे व्यक्तिरित्युपसंहारः । कर्महस्तयोर्वृत्तिर्गतिः पादयोर्विसर्गः पायूपस्थयोरिति कर्मेन्द्रियाणाम् । घ्राणोऽवघ्राणं रसो रसनं दृक् दर्शनं स्पर्शः स्पर्शनं श्रुतिः श्रवणमिति ज्ञानेन्द्रियाणाम् । संकल्पो मनसो विज्ञानं बुद्धिचित्तयोरभिमानोऽहंकारस्य सूत्रं प्रधानस्य सत्त्व-

यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ॥ अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥ एवं गदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानः सूत्रं रजःसत्त्वतमोविकारः ॥ १९ ॥ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ॥ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः ॥ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥ ॥ ॥ ॥

रजस्तमसां विकारोऽधिदैवादिस्त्रिविधः प्रपञ्चो मे व्यक्तिरिति पूर्वेणान्वयः ॥ १९ ॥ तस्मादीश्वरादिव्यक्तिरूपः प्रपञ्चो नेश्वराद्भिन्नोऽस्तीत्याह—अयमिति । अयं जीवं ईश्वर आदावव्यक्त एक एव । वयसा कालेन विश्लिष्टा विभक्ता वागादीन्द्रियरूपाः शक्तयो यस्य । यद्वा विशेषेण श्लिष्टा आलिङ्गिता माया शक्तिर्येन सः । बहुप्रकार इवाभाति । यतः स एवाद्यः । त्रिवृत् त्रिगुणाश्रयः । अब्जयोनिर्लोकपद्मस्य कारणभूतः । एकस्य बहुधा भाने दृष्टान्तः—योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजानि यद्वदिति ॥ २० ॥ तस्मात्तन्मायाविलसितत्वात्तदाश्रयमिदं जगन्न ततः पृथगिति सदृष्टान्तमाह—यस्मिन्निति । तन्तुवितानं संस्था स्थितिर्यस्य स पटो यथा तथा यस्मिन्निदं विश्वमोतं दीर्घतन्तुषु पट इव, प्रोतं तिर्यक्तन्तुष्विव । एवंभूतं समष्टिव्यष्ट्यात्मकं विश्वमविद्ययात्मन्यध्यस्तं वृक्षरूपं जीवस्य कर्तृत्वादिसंसारहेतुरतस्तद्विवेकज्ञानेन कर्मादि सर्वं त्याज्यमित्युक्तमित्याशयेनाह—य एष इति सार्धैस्त्रिभिः । पुराणोऽनादिः । कर्मात्मकः प्रवृत्तिस्वभावः । पुष्पफले भोगापवर्गौ कर्म तत्फले वा । प्रसूते जनयति ॥ २१ ॥ ॥ ॥ ॥

---

१ सध्यक्षराणां एचाम् । २ कौस्तुभे चतुर्थाह्निके तु—'मुखनासिकावचनोऽनुनासिकः' (१।१।८) इति सूत्रे गणना त्वित्थम् । अइउऋ इति चतुर्णां ह्रस्व-दीर्घ-प्लुतभेदात्त्रैविध्ये द्वादश । ऌकार एकः । एचो दीर्घप्लुतभेदादष्टौ । इत्थं स्वरा एकविंशतिः । स्पर्शाः पञ्चविंशतिः । यरलवशषसहेत्यष्टौ । यमाश्चत्वारः । अनुस्वारविसर्गः । ≍ क ≍ पाश्चत्वारः । दुस्पृष्टश्चेत्येवं त्रिषष्टिरित्युक्तम् । इदमेव युक्तमुत्पश्यामः । ३ अव्यक्तस्य सतः सर्वागोचरस्य ब्रह्मणः । ४ खे दारुगताकाशे । ५ तत्र परा त्वव्यक्तैवेति अव्यक्तोष्मरूपतयैवोपमीयते । पश्यन्ती तु सूक्ष्मविस्फुलिङ्गादिरूपतया । मध्यमा प्रकृष्टजाततया । वैखरी तु समिद्धतयेति ज्ञेयम् । ६ वाणी वेदलक्षणा । ७ अभिव्यक्तिराविर्भावरूपा । ८ 'गतिः' इति पाठः । ९ मे व्यक्तिः ममाभिव्यक्तिरूपः । १० जीवयति चेतयतीति जीव ईश्वरः ।

वृक्षरूपकं प्रपञ्चयति—द्वे इति । द्वे पुण्यपापे अस्य बीजे । स च शतमूलः शतमपरिमिता वासना मूलानि यस्य । त्रयो गुणा नालानि प्रकाण्डा यस्य । पञ्चभूतानि स्कन्धा यस्य । पञ्चरसाः शब्दादिविषयास्तेषां प्रसूतिर्यस्मात् । दश च एका च शाखा इन्द्रियाणि यस्य । द्वयोः सुपर्णयोर्जीवपरमात्मनोर्नीडं यस्मिन् । त्रीणि वल्कलानि त्वचो वातपित्तश्लेष्माणो यस्य । द्वे सुखदुःखे फले यस्य सः । अर्कं प्रविष्टः सूर्यमण्डलपर्यन्तं व्याप्तः, तन्निर्भिद्य गतस्य संसाराभावात् ॥ २२ ॥ तत्फलभोक्तॄनाह—गृध्यन्तीति गृध्राः कामिनो ग्रामेचरा गृहस्था अस्य वृक्षस्यैकं फलं दुःखमदन्ति । परिणामतः स्वर्गादेरपि दुःखरूपत्वात् । हंसा विवेकिनोऽरण्यवासाः संन्यासिन एकं फलं सुखमदन्ति । एकं परमात्मानं मायामयमेव बहुरूपमिज्यैर्गुरुभिः कृत्वा यो वेद स वेदं वेद तत्त्वार्थं वेद ॥ २३ ॥ त्वं चैवं ज्ञात्वा कृतकृत्यः सर्वं साधनं त्यजेत्याह—एवमिति । एकान्तभक्त्या शितेन तीक्ष्णेन ज्ञानकुठारेण । स्वतन्त्रता वा द्वयोर्ज्ञानभक्त्योः जीवोपाधिं त्रिगुणात्मकं लिङ्गशरीरं विवृश्च्य छित्त्वा परमात्मानं च संपद्य प्राप्याथास्त्रं साधनं त्यजेति ॥ २४ ॥ ॥ इति श्रीमद्भागवते महा-

द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ॥ दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः ॥ २२ ॥ अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ॥ हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद स वेद वेदम् ॥२३॥ एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ॥ विवृश्च्य जीवाशयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥२४॥ ॥ इति श्रीमद्भा० म० पु० एका० भगवदुद्धवसंवादे द्वादशोऽध्यायः ॥१२॥

॥ श्रीभगवानुवाच ॥ सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ॥ सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥१॥ सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः ॥ सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते ॥ २ ॥ धर्मो रजस्तमो हन्यात्सत्त्ववृद्धिरनुत्तमः ॥ आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥ ॥ ॥

पुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ त्रयोदशेऽथ सत्त्वस्य वृद्ध्या विद्योदयक्रमः ॥ हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥ १ ॥ विद्याकुठारेण जीवाशयं विवृश्च्य साधनं त्यजेत्युक्तम् । ननु तत्र तमआदिगुणत्रयवृत्तिप्रतिबन्धे सति कथं विद्योत्पत्तिरित्याशङ्क्य तन्निवृत्त्या विद्योत्पत्तिप्रकारमाह—सत्त्वमिति सप्तभिः । तत्र यद्यानन्दादिवदात्मधर्मा गुणाः स्युस्तर्हि तत्स्वरूपत्वात्तेषामनिवृत्त्या विद्योत्पत्तिर्न स्यात्, न त्वेतदस्तीत्याह—बुद्धेः प्रकृतेरेते गुणा न त्वात्मन इति । अतः सत्त्वेन सत्त्ववृद्ध्याऽन्यतमौ हन्यात् । रजस्तमोवृत्तीर्जयेदित्यर्थः । सत्त्वं च सत्यदयादिवृत्तिरूपमुपशमात्मकेन सत्त्वेनैव हन्यात् ॥१॥ ननु गुणत्रयवृत्तीनां परस्परोपमर्दनरूपत्वात्कथं सत्त्ववृत्त्यैवेतरवृत्त्योर्नियमेन हन्तव्यास्तत्राह—सत्त्वादिति । मद्भक्तिं लक्षयति यो धर्मः स मद्भक्तिरूप एव वा । सत्त्वमेव कथं वर्धेत तत्राह—सात्त्विकानां पदार्थानामुपासया सेवया सत्त्वं वृद्धं भवतीत्यर्थः ॥२॥ स च धर्मो रजस्तमश्च हन्यात् । कुतः । न विद्यते उत्तमो यस्मात्स सर्वोत्तमः । यतः सत्त्ववृद्धिः सत्त्वस्य वृद्धिर्यस्मिन्कारणे सः । अत एव तत्कार्यो धर्मप्रतिबन्धोऽपि

१ नीडं निवासकोटरम् । २ 'भवेच्छुद्धात्' इति पाठः । ३ 'ज्ञानं ततः' इति पाठः । ४ 'अनुत्तमा' इति पाठः । ५. तेषां निवृत्तिर्न स्यान्न त्वेतदस्तीत्याहेति पाठः । ६ 'यस्मात्कारणं स' इति पाठः ।

नास्तीत्याह तस्मिन्नुभयस्मिन्हते तन्मूलः । ते रजस्तमसी रागद्वेषादिना प्रमादालस्यादिना च मूलं यस्य सः ॥ ३ ॥ सात्त्विकोपासया सत्त्वं वर्धेत इत्युक्तं तानेव सत्त्ववृद्धिहेतून् दर्शयितुं सामान्यतो गुणत्रयवृद्धिहेतूनाह—आगमः शास्त्रम् । अपः आपः । क्वचिदागमोऽर्थं इति पाठः । (प्रजा सत्पुत्रः । देशः कृष्णमृगसंचारः । कालो वसन्तादिः । कर्म वर्णाश्रमादिविहितम् । जन्म उभयकुलविशुद्धम् । ध्यानं देवताविषयम् । मन्त्रो गायत्र्यादिः । संस्कारो गर्भाधानादिः । एते दश त्रिगुणोत्पत्तिहेतवः ।) ॥४॥ एषु सात्त्विकादिनिर्णयमाह—एषामेव मध्ये यद्यद्वृद्धाः शास्त्रज्ञाः प्रचक्षते प्रशंसन्ति तत्तत्सात्त्विकम् । यच्च निन्दन्ति तत्तामसम् । यत्तु तैर्वृद्धैरुपेक्षितं न स्तुतं न च निन्दितं तद्राजसम् ॥५॥ सात्त्विकान्येवेति । निवृत्तिशास्त्राण्येव सेवेत, न प्रवृत्तिपाखण्डशास्त्राणि । तीर्थाप एव, न गन्धोदकसुराद्याः । प्रजाजनाः निवृत्तान् जनान्, न प्रवृत्तदुराचारान् । विविक्तदेशं, न रथ्याद्यूतदेशान् । कालं ब्राह्ममुहूर्तादिकं ध्यानादौ, न प्रदोषनिशीथादीन् । कर्म च नित्यं, न काम्याभिचारादीनि । जन्म च वैष्णवशैवदीक्षालक्षणं, न शाक्तक्षुद्रदीक्षारूपम् । ध्यानं श्रीविष्णोः, न कामिनीविद्विषाम् । मन्त्रं प्रणवादिकं, न काम्य-

आगमोऽपः[1] प्रजा देशः कालः कर्म च जन्म च ॥ ध्यानं मन्त्रोऽथ संस्कारो दशैते[3] गुणहेतवः ॥ ४ ॥ तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते ॥ निन्दन्ति तामसं तत्तद्राजसं तदुपेक्षितम् ॥ ५ ॥ सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ॥ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥ ६ ॥ वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ॥ एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥ ७ ॥ ॥ उद्धव उवाच ॥ विदन्ति मर्त्याः प्रायेण विषयान्पदमापदाम् ॥ तथापि भुञ्जते कृष्ण तत्कथं श्वखराजवत् ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि ॥ उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥ ॥ ॥

क्षुद्रान् । संस्कारमात्मनः शोधकं, न तु केवलं देहगृहादीनाम् । ननु ज्ञानं महावाक्यश्रवणादेवोत्पद्यते, किं तत्र सत्त्ववृद्ध्या धर्मेण वाऽत आह—यावत्स्मृतिरात्मापरोक्ष्यम् । यावच्च देहद्वयतत्कारणभूतगुणापोहस्तावत्पर्यन्तं ज्ञानं भवतीत्यर्थः ॥ ६ ॥ ननु गुणव्यतिकराज्जातो देहः कथं स्वाश्रयभूतान् गुणान्स्वत एवोत्पन्नया विद्ययाऽपोह्य स्वयमप्युपरमेत्तत्राह—वेणूनां संघर्षाज्जातोऽग्निर्यथा स्वत एवोत्पन्नाभिर्ज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात्स्वयं शाम्यति । एवं देहोऽपि तत्क्रियस्तस्याग्नेरिव क्रिया व्यापारो यस्य सः ॥ ७ ॥ ननु नियतेन्द्रियतया सात्त्विकसेवायामियानस्ति पुरुषार्थस्तथापि राजसादीन्विषयान्दुःखमिति जानन्तोऽपि कथं सेवन्त इति पृच्छति—विदन्तीति । पदं स्थानम् । श्वानो यथा भर्त्स्यमाना अपि[4] । खरा यथा पद्भ्यां ताड्यमाना अपि खरीमनुधावन्तः । अजा यथा निर्लज्जा हन्तुमानीता अपि[5] । तद्वत् ॥ ८ ॥ मिथ्याभिनिवेशेन[6] भुञ्जत इति सहेतुकमाह—अहमिति त्रिभिः । प्रमत्तस्य विवेकशून्यस्य देहादावहमिति मिथ्याबुद्धिर्हृदि यथावदुत्सर्पति ततोऽहंबुद्धेश्च वैकारिकं सत्त्वप्रधानमपि मनःप्रति घोरं दुःखात्मकं रज उत्सर्पति । मनो व्याप्नोतीत्यर्थः ॥ ९ ॥ ॥

१ धनुश्चिह्नान्तर्गतं व्याख्यान्तरं न श्रीधरसमतं, स्वामीप्सितार्थस्य पद्यश्लोकव्याख्याने तैरेव स्फुटीकृतत्वात्प्राचीनपुस्तकेष्वदर्शनाच्चात्र केनचित्प्रक्षिप्तमिति प्रतीयते । २ 'यजनं देशः' इति पाठः । ३ 'नवैते' इति पाठः । ४ शुनीमनुधावन्तो विषयान् भुञ्जते । एवमुत्तरत्रापि । ५ अजामनुधावन्तः । ६ मिथ्याभिनिवेशो नाम ज्ञात्वापि स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम् ।

इदमेवमिदमेवं भोग्यमिति सविकल्पः संकल्पः स्यात्तश्च अहो रूपमहो भाव इति गुणाभिध्यानाद्दुर्धरः कामः स्यात् ॥ १० ॥ ततो विषयान् भोक्तुं कर्माणि करोति ॥ ११ ॥ एवं चेन्न कस्यापि दुःखनिवृत्तिः स्यादित्याशङ्क्याह—यदपि यद्यपि रजस्तमोभ्यां विक्षिप्तधीर्मूढधीश्च तथापि विद्वान्विवेकी पुनर्मनो निरुन्धन्न सज्जते ॥ १२ ॥ विषयदोषदृष्ट्यापि मनोनिरोधाशक्तौ सुखं तन्निरोधोपायमाह—अप्रमत्त इति । अनिर्विण्णोऽनलसः । यथाकालं त्रिषवणम् । मयि परमानन्दरूपेऽर्पयन्समादध्यात् ॥ १३ ॥ विषयैः संग्रथितस्य मनसस्तद्वियोगेनेश्वरनिष्ठत्वमसंभावितं मन्यमानं प्रति तन्निरूपणायेतिहाससुपक्षिपति—एतावानिति । यथा यथावन्मय्यावेश्यते एतावानित्यर्थः ॥ १४ ॥ मच्छिष्यैरित्युक्ते तेषामतिज्यायसामनेन रूपेण निरूपणासंभवात्पृच्छति—यदेति । तं कालं

रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ॥ ततः कामो गुणध्यानाद्दुःसहः स्याद्धि दुर्मतेः ॥ १० ॥ करोति कामवशगः कर्माण्यविजितेन्द्रियः ॥ दुःखोदर्काणि संपश्यन्रजोवेगविमोहितः ॥ ११ ॥ रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः ॥ अतन्द्रितो मनोयुञ्जन्दोषदृष्टिर्न सज्जते ॥ १२ ॥ अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयन् शनैः ॥ अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥ १३ ॥ एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ॥ सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥ १४ ॥ ॥ उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥१६॥ ॥ सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः[1] ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥ स मामचिन्तयद्देवः प्रश्नपारतितीर्षया[3] ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥ दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥

तदेतद्रूपं च वेदितुमिच्छामि तत्कथयेति ॥ १५ ॥ मानसाः पुत्राः । सूक्ष्मां दुर्ज्ञेयाम् । ऐकान्तिकीं गतिं परां काष्ठाम् ॥ १६ ॥ तदेवाह—गुणेष्विति । विषयेषु स्वभावतो रागादिवशाच्चेतः प्रविशति । ते चानुभूता विषया वासनारूपेण चेतसि प्रविशन्ति । अतितितीर्षोर्विषयानतिक्रमितुमिच्छोः ॥ १७ ॥ एवमिति । महान्देवोऽपि स्वयंभूरपि भूतानां स्रष्टापि ध्यायमानो विचारयन्नपि प्रश्नस्य बीजं यदज्ञानादिदं प्रश्नस्तन्नाविन्दत् । यतः कर्मविक्षिप्तधीः ॥ १८ ॥ प्रश्नस्य पारमुत्तरमभिप्रायो वा तस्य तितीर्षया जिज्ञासया । हंसरूपेणेति । यथा हंसो नीरं क्षीरं च पृथक्कर्तुं शक्त एवमहं गुणांश्चेतश्चेति द्योतयितुं हंसरूपेण गतोऽस्मीति ॥ १९ ॥ २० ॥

१ दुःखोदर्काणि दुःखोत्तरफलानि । संपश्यन् जानन्नपि । २ 'अतितीर्षतः' इति पाठः । ३ 'प्रश्नपारविनिश्चयं' इति पाठः । ४ अयं अन्योन्यत्यागरूपः ।

इत्यहं मुनिभिः पृष्ट इति पृथग्वाक्यम् । यदवोचमिति च पृथक् । अतोऽस्वच्छन्दावृत्तिरदोषः । तेभ्यो यदवोचं तन्मे वचनं निबोध ॥ २१ ॥ देहादिविविक्तात्मज्ञाने सति तन्निष्ठस्य रागाद्यसंभवात्स्वयमेव विषयचेतसोर्विश्लेषो भवतीति वक्तुं प्रश्नखण्डनमिषेणैव तावदात्मानात्मविवेकमाह—वस्तुन इति त्रिभिः ।[1] किमात्मनोऽयं प्रश्नस्तदुपाधेर्भूतसङ्घस्य वा । यद्यात्मनस्तर्हि तस्य वस्तुनः परमार्थरूपस्यानानात्वे सति हे विप्राः, वो युष्माभिः कृतः प्रश्न ईदृशो बहुषु निर्धारणरूपः कथं घटेत । वक्तुरुत्तरदातुर्वा मे मम क आश्रयः । अविशेषे आत्मनि कं जातिगुणादिविशेषमाश्रित्योत्तरं वक्ष्यामीत्यर्थः ॥ २२ ॥ भूतसङ्घविषयत्वेऽप्ययं वः प्रश्नो वाचारम्भो वाङ्मात्रेणारब्धः । यतोऽनर्थकः । कुतः । भूतेषु देवमनुष्यादिदेहेषु पञ्चभूतात्मकेष्वतः समानेष्वभिन्नेषु पुनश्च वस्तुतः परमकारणात्मना अभिन्नेषु । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः ॥ २३ ॥ तत्र पञ्चात्मकत्वं प्रत्यक्षादिसिद्धमेवेति परमकारणाभेदमेवोपपादयति—मनसेति । मन आदिभिर्यद्गृह्यते तत्तदहमेवेत्यर्थः । अञ्जसा तत्त्वविचारेण । एतेनैव[2] सर्वात्मकोऽहमित्यञ्जसाप्युत्तरमुक्तं भवति ॥ २४ ॥ एवं प्रश्नखण्डनमिषेणैवात्मस्वरूपं सामान्यतो निरूप्य ब्रह्मणोऽपि दुष्परिहरं यत्पृष्टं तत्रोत्तरमाह—गुणेष्वित्यादिना यावदध्यायसमाप्ति । अयमभि-

इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥ कथं घटेत वो विप्रा वक्तुर्वा[3] मे क आश्रयः ॥ २२ ॥ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः[4] ॥ २३ ॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ॥ अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २४ ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥ गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्च चित्तप्रभवा मद्रूप[5] उभयं त्यजेत् ॥ २६ ॥ जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥ ॥

प्रायः—यदि कर्तृत्वभोक्तृत्वादिरूपतया विषयैः संग्रथितं चित्तं बुद्ध्यादिशब्दवाच्यमेव जीवस्य स्वरूपं भवेत्ततस्तद्वियोगो न घटेत । तस्य तु स्वरूपमहं ब्रह्मैव । चित्ताध्यासेन तु तत्स्वभावतया विषयैः संग्रथितम् । अतः स्वस्य ब्रह्मत्वभावनया विषयाणां च मिथ्यात्वानुसंधानेन सर्वतो निर्विद्य भगवन्तं भजतो भवत्येव परिपूर्णस्वरूपावस्थानमिति । हे प्रजाः पुत्रकाः, सत्यं गुणेषु चेत आविशति गुणाश्च चेतसि एवं गुणाश्चेतश्चोभयं ग्रथितं मदात्मनो ब्रह्मरूपस्य जीवस्य देहोऽध्यस्त उपाधिर्न तु स्वरूपम् ॥ २५ ॥ तस्मादभीक्ष्णं पुनःपुनर्गुणसेवया तत्संस्कारेण गुणेष्वाविशच्चित्तं ते च पुनर्वासनारूपेण चित्ते प्रकर्षेण भवन्तीति तथा ते गुणाश्चेतश्च । एवं यदुभयं तन्मद्रूपः संस्त्यजेत् ॥ २६ ॥ ननु जाग्रदाद्यवस्थावतः कुतः कूटस्थत्वरूपता तत्राह—जाग्रज्जागरः स्वप्नः सुषुप्तं चेति बुद्धेरेता वृत्तयो न तु जीवस्य, ताश्च न स्वाभाविक्यः, किंतु 'सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु संततम् ॥' इति वक्ष्यमाणक्रमेण गुणत एव । जीवस्तु विलक्षणस्तदवस्थारहित एव विनिश्चितः । कुतः । तासां साक्षित्वेन ॥ २७ ॥ ॥ ॥

१ अनानात्वे एकत्वे सति । २ एतेनैव परमकारणाभेदोपपादनेनैव । ३ 'वक्तुं वा' इति पाठः । ४ 'निरर्थकः' इति पाठः । ५ मद्रूपो मदभेदभावनाविष्टः ।

ननु तर्हि कथमहं जागर्मीत्यादिप्रतीतिस्तत्राह—यर्हीति यस्मात्सम्यक् सृतिः सरणमनयेति संसृतिर्बुद्धिस्तया बन्धोऽयमात्मनो गुणवृत्तीर्ददाति। तस्मान्मयि तुर्ये स्थितः सन्निमं संसृतिबन्धं जह्यात्। तत्तदा गुणचेतसां गुणानां चेतसश्चान्योन्यं त्यागो भवति ॥ २८ ॥ कथं संसृत्या बन्धः कथं च तं जह्यात्तदाह—अहंकारेण कृतं बन्धमात्मनोऽर्थविपर्ययमानन्दाद्यावरणेनानर्थहेतुं विद्वान् जानन्सन्निर्विद्य दुःखमेतदिति ज्ञात्वा तुर्ये स्थितो भूत्वा संसारचिन्तां संसारोऽनुद्धिस्तास्मिंश्चिन्तामभिमानं तत्कृतां भोगचिन्तां च त्यजेदिति ॥ २९ ॥ यावदेव न त्यजेत्तावत्तस्य कर्म ज्ञानादि सर्वं व्यर्थमित्याह—यावदिति। यद्यपि जागर्ति कर्मादिषु तथापि स्वपन्स्वप्नान्पश्यन्निव भवति। यतोऽज्ञः असम्यग्दर्शी। अज्ञजागरस्य स्वप्नत्वे दृष्टान्तः—स्वप्न इति ॥ ३० ॥ ननु कथं वेदप्रमितवर्णाश्रमकर्मादिनानाधीर्निवर्तेत तत्राह—असत्त्वादिति। भावानां देहादीनां तत्कृता भिदा वर्णाश्रमादिरूपा। गतयः स्वर्गादिफलानि। हेतवः कर्माणि चास्यात्मनो मृषा। अविद्यावद्विषयो वेद इति भावः ॥ ३१ ॥ युक्तिभिरित्युक्तं ता एव युक्तीराह—य इति। अर्थान्स्थूलान्देहादीन्समस्तकरणैश्चक्षुरादिभिर्भुङ्क्ते। कथं-

यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ॥ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥ २८ ॥ अहंकारकृतं बन्धमात्मनोऽर्थविपर्ययम् ॥ विद्वान्निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥ गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ॥ स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥ एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ॥ संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३ ॥ ॥ ॥ ॥ ॥

भूतान्। अनुक्षणधर्मिणः क्षणिकबाल्यतारुण्यादिधर्मवतो यश्च स्वप्ने हृदि जागरदृष्टसदृशान्वासनामयान्भुङ्क्ते, यश्च सुषुप्ते तान् सर्वानुपसंहरति स एकः। कुतः। त्रिगुणवृत्तिदृग् अवस्थात्रयद्रष्टा। ननु जाग्रदवस्थां सर्वेन्द्रियाणि पश्यन्ति स्वप्नं मनः सुषुप्तिं तत्संस्कारशेषा बुद्धिः कथमात्मा तद्द्रष्टा तत्राह—इन्द्रियेशः। ननु इन्द्रियेशा अपि विश्वतैजसप्राज्ञा भिन्नाः। न, कुतः। स्मृत्या प्रतिसंधानेन सर्वत्रस्यास्यान्वयात्। यः स्वप्नानद्राक्षं यश्च तदनन्तरं न किंचिदवेदिषं स एवैतर्हि जागर्मीत्युपाधिभेदेन विश्वादिव्यवहार इति भावः। एतेन बाल्ययुवाद्यवस्थास्वपि प्रतिसंधानेनात्मैक्यं द्रष्टव्यम् ॥ ३२ ॥ ततः किमत आह—एवमिति। गुणतो या एता मनसस्त्र्यवस्थास्ता मदविद्यया मयि कृता न तत्त्वतः सन्तीति निश्चित आत्मरूपोऽर्थो यैस्ते यूयमखिलसंशयानामाधिं आधीयन्तेऽस्मिन्नित्याधिरहंकारस्तं संछिद्य हार्दं हृदि स्थितं मां भजत। केन छित्त्वा तदाह—अनुमानैः सदुक्तिभिः सतामुपदेशैः श्रुतिभिश्च। तीक्ष्णेन ज्ञानखड्गेन ॥ ३३ ॥

१ गुणवृत्तीर्जाग्रदाद्यवस्थाः ददाति प्रत्यापयति। २ वेदप्रमिता वेदप्रमाणज्ञापिता। ३ अविद्या स्वरूपाज्ञानं तद्वन्त एव विषया अधिकारिणो यस्य एतादृशो वेदः। ४ युक्तिभिर्यो जागरेत्यत्र वक्ष्यमाणाभिः। ५ योऽहं बाल्ये क्रीडासक्तो यश्च तारुण्ये तरुणीसक्तः स एवाहमिदानीं वृद्धोऽस्मीति स्मृतेति भावः। ६ मदविद्यया मम स्वरूपविषयकाज्ञानेन।

अनुमानादि दर्शयति—ईक्षेतेति । इदं जगद्विभ्रममीक्षेत । तत्र हेतवः—मनोविजृम्भितत्वात् दृष्टत्वाद्विनाशित्वाच्च स्वप्नवत् । अतिचञ्चलत्वाच्चालातचक्रवत् । ननु भ्रमोऽपि निर्विषयः कथं स्यात्तत्राह—विज्ञानमिति निगमनम्[1] । तस्मात्त्रिधा योऽयं गुणपरिणामकृतो विकल्पो भेदः स मायेति ॥ ३४ ॥ तस्मात्ततो दृश्याद्दृष्टिं प्रतिनिवर्त्य निजसुखानुभवो भवेत् । तन्नैश्चल्यार्थं च निवृत्ततृष्णस्तूर्ष्णी निरीहश्च भवेत् । मनोवाक्कायव्यापाररहित इत्यर्थः । ननु देहवतः सर्वथा द्वैतदृष्टिप्रतिनिवर्तनायोगात्पुनः संसारः स्यादेव तत्राह—संदृश्यत इति । क्वचिदावश्यकाहारादिषु यद्यपीदं संदृश्यते तथापि पूर्वमवस्तुबुद्ध्या यत्त्यक्तं तत्पुनर्मोहाय न भवेदेव किंतु देहपातपर्यन्तं स्मृतिरिव स्मृतिः संस्कारमात्रेणावभासो भवेदित्यर्थः ॥ ३५ ॥ एतदेवोपपादयति—देहमिति । आसनादुत्थितमुत्थाय तत्रैव स्थितं ततः क्वचिदपेतं निर्गतं पुनस्तत्रैवोपेतं वा देहमपि नानुसंधत्ते, कुतोऽन्यत् । यतो येन देहेन स्वरूपमध्यगमज्ज्ञातवांस्तं देहम् । यतः

ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ ३४ ॥ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ ३५ ॥ देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं[3] प्रति समीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः[2] ॥ ३७ ॥ मयैतदुक्तं वो विप्रा गुह्यं यत्सांख्ययोगयोः ॥ जानीतमागतं यज्ञं युष्मद्धर्मविवक्षया ॥ ३८ ॥ अहं योगस्य सांख्यस्य सत्यस्यर्तस्य तेजसः ॥ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥ ॥

कारणादिति वा । परिकृतं परिहितं वासो गतं स्थितं वा यथा न वेत्ति तद्वत् ॥३६॥ ननु च यः परिपाल्यमानोऽपि मुमूर्षति तं चेन्न पश्यति तर्हि पतेदेव, नेत्याह—देहोऽपीति । देहो दैववशेन गच्छन्स्वारम्भकं कर्म यावदस्ति तावत्पर्यन्तं प्रतिसमीक्षत एव जीवत्येव । सासुः प्राणेन्द्रियसहितः । ननु तर्हि तस्मिन्कदाचिदासज्जेतापि, नेत्याह—तमिति । स्वाप्नं स्वप्नतुल्यम् । अधिरूढः प्राप्तः समाधिपर्यन्तो योगो येनात एव प्रतिबुद्धं ज्ञातं परमार्थवस्तु येन सः । तथा च श्रुतिः—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति ॥३७॥ उक्तार्थं तेषां विश्वासार्थं स्वस्वरूपमाह—मयेति । सांख्यमात्मानात्मविवेको योगोऽष्टाङ्गस्तयोर्गुह्यं रहस्यम् । यज्ञं विष्णुम् 'यज्ञो वै विष्णुः' इति श्रुतेः । युष्मद्धर्मविवक्षयेत्यनेन धर्मो अप्युपदिष्टा इति ज्ञेयम् । अत एव 'यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव' इत्यनुवादो भविष्यति ॥ ३८ ॥ ऋतं प्रमीयमानो धर्मः, सत्यमनुष्ठीयमानो धर्मः । तेजः प्रभावः । एतेषां परमयनम्[6] ॥ ३९ ॥ ॥

१ निगमनमिति । परार्थानुमाने हि पञ्चावयववाक्य–तत्र जगद्विभ्रममीक्षेतेति प्रतिज्ञा (१) दृष्टत्वादिर्हेतुः (२) यद्यद्दृष्टत्वाद्यवच्छिन्नं तत्तद्भ्रममात्रं. यथा स्वप्नादि इत्युदाहरणम् (३) यथा भ्रमत्वव्याप्यदृष्टत्वादिमान् स्वप्नादिस्तथा चेदं जगदित्युपनयः (४) तस्मात् त्रिधा योऽयं गुणपरिणामकृतो विकल्पः स माया मिथ्येति साध्योपसंहारलक्षणं निगमनम् (५)। २ प्रतिबुद्धवस्तुः आप्तजागरः । ३ स्वारम्भकं देहजनकं कर्म प्रारब्धलक्षणम् । ४ तस्मिन्प्रारब्धरक्षिते देहे । ५ सप्तदशाध्याये तृतीयश्लोके–'पुरा किल महाबाहो धर्मं परमकं प्रभो' इति पूर्वार्धसहित उद्धवकृतोऽनुवाद इत्यर्थः । ६ आश्रयः फलभूतश्च ।

किंच मामिति । कथंभूताः । अगुणाः गुणपरिणामरूपा न भवन्ति किंतु नित्या इत्यर्थः ॥ ४० ॥ मे मया । अगृणत मां तुष्टुवुः ॥ ४१ ॥ प्रत्येयाय प्रत्यागतोऽस्मि ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ चतुर्दशे परं श्रेयो भक्तिरेव न चेतरत् ॥ इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥ १ ॥ एवं तावद्भगवतो भक्त्या मोक्ष इत्युक्तमन्ये त्वन्यानि साधनानि वदन्ति, तत्र विशेषनिर्धारणाय पृच्छति—वदन्तीति । श्रेयांसि श्रेयःसाधनानि । किं विकल्पेन प्राधान्यमुताहो किंवा एकस्यैव मुख्यता ॥ १ ॥ एकमुख्यतापक्षोत्थाने कारणम्—भवतेति । न अपेक्षितमपेक्षा यस्मिन्सोऽहैतुकः । अयमर्थः—भवता यो भक्तियोग उक्तोऽन्ये च यानि श्रेयःसाधनानि वदन्ति तेषां किं साक्षात्फलसाधनत्वेन प्राधान्यमेव सर्वेषामुताङ्गाङ्गित्वम् । प्राधान्येऽपि किं विकल्पेन सर्वेषां तुल्यफलत्वम् । यद्वा कश्चिदस्ति विशेष इति ॥ २ ॥ तत्र

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ॥ सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः ॥ ४० ॥ इति मे छिन्नसंदेहा मुनयः सनकादयः ॥ सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥ ४१ ॥ तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः ॥ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ उद्धव उवाच ॥ वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥ भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥ ॥ श्रीभगवानुवाच ॥ कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ॥ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ॥ ४ ॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ॥ मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥ किंदेवाः किंनरा नागा रक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥ ६ ॥ ॥ ॥

भक्तिरेव महाफलत्वेन मुख्या, अन्यानि तु स्वस्वप्रकृत्यनुसारेण पुष्पस्थानीयस्वर्गादिफलबुद्धिभिः प्राणिभिः प्राधान्येन परिकल्पितानि क्षुल्लकफलानीति विवेक्तुं प्रकृत्यनुसारेण बहुधा वेदार्थप्रतिपत्तिमाह—कालेनेति सप्तभिः । मदात्मकः मय्येवात्मा चित्तं येन सः ॥ ३ ॥ भृग्वादयः भृगुश्च—'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः' इत्येते च सप्त ब्रह्माणः प्रजापतयस्ते च ते ब्रह्मर्षयश्च ॥ ४ ॥ ५ ॥ किंदेवाः श्रमस्वेददौर्गन्ध्यादिराहित्येन किं देवा मनुष्या वेति संदेहास्पदभूता द्वीपान्तरमनुष्याः । एवं किंनराः किंचिन्नरा इव मुखतः शरीरतो वा । किंपुरुषाः किंचित्पुरुषा इव वानरादयः । प्रकृतयो वासनावल्ल्यः । कुतः । रजःसत्त्वतमांसि भुवः जन्मस्थानानि यासां ताः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

१ अङ्गाङ्गित्वं यथा दर्शपूर्णमासादीनां परमापूर्वप्रत्यङ्गत्वेऽपि प्रयाजाद्यपेक्षयाङ्गित्वं तथा केषामङ्गित्वं केषां चाङ्गत्वमित्यर्थः। २ यद्वा अथवा कश्चिदस्तिविशेष इति प्राधान्येऽपि—'क्लेशोऽधिकतरस्तेषा', 'कृच्छ्रो महानिव भवार्णव' इत्यादिन्यायेन क्लेशाक्लेशलक्षणो विशेषः कस्यास्ति वेत्यर्थः । ३ आदौ ब्राह्मकल्पादौ ।

भूतानि देवासुरमनुष्यादीनि । चित्रा वाचो वेदार्थव्याख्यानविषयाः ॥ ७ ॥ एवमित्युक्तोपसंहारः केषांचिदध्ययनादिशून्यानामप्युपदेशपारम्पर्येण । अपरे पाखण्डमतयो वेदविरुद्धार्थमतयः ॥ ८ ॥ तत्प्रकृतीनां मायागुणमूलत्वान्मन्मायामोहितधियः । अनेकान्तं नानाविधम् ॥ ९ ॥ तदेवाह—धर्ममिति सार्धेन । धर्मं कर्म मीमांसकाः । यदुक्तम्—'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥' इत्यादि । यशः काव्यालंकारकृतः । यथाहुः—'यावत्कीर्तिर्मनुष्यस्य पुण्यलोकेषु गीयते ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥' इति । कामं वात्स्यायनादयः । सत्यं दमं शमं च योगशास्त्रकृतः । अन्ये दृष्टार्थवादिनो दण्डनीतिकृतो वै प्रसिद्धं ऐश्वर्यमेव स्वार्थं पुरुषार्थं वदन्ति । अतः सामाद्युपाया एव श्रेयःसाधनमिति तेषां मतम् । तथैव त्यागं भोजनं च लोकायतिकाः । यज्ञतपोदानं यज्ञो देवतानां पूजनं तपश्च दानं च ॥ १० ॥ तेषां तुच्छफलत्वमाह—आद्यन्तवन्त इति । एषां लोका एतैः साध्यानि

याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ पारम्पर्येण केषांचित्पाखण्डमतयोऽपरे ॥ ८ ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ॥ श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥ ९ ॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥ अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ केचिद्यज्ञतपोदानं व्रतानि नियमान्यमान् ॥ १० ॥ आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥ ११ ॥ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ॥ मयात्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥ १२ ॥ अकिंचनस्य[1] दान्तस्य शान्तस्य समचेतसः ॥ मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १३ ॥ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १४ ॥ न तथा मे प्रियतम आत्मयोनिर्न शंकरः ॥ न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ॥ अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः[3] ॥ १६ ॥ ॥

फलानि । तमोनिष्ठा मोहावसानाः । भोगकालेऽप्यसूयादिभिः शुचार्पिता व्याप्ताः ॥ ११ ॥ भक्तेर्मुख्यत्वमाह—मयीति यावत्समाप्ति । हे सभ्य, मया परमानन्दरूपेणात्मना स्वरूपत्वेन[4] स्फुरता ॥ १२ ॥ किंच, अन्येषां[5] तत्तल्लोकादि[6]परिच्छिन्नं सुखं भक्तस्य तु परिपूर्णमित्याह—अकिंचनस्येति ॥ १३ ॥ परिपूर्णतामेवाह—न पारमेष्ठ्यमिति । रसाधिपत्यं पातालादिस्वाम्यम् । अपुनर्भवं मोक्षमपि । मद्विना मां हित्वाऽन्यन्नेच्छति । अहमेव तस्य प्रेष्ठ इत्यर्थः ॥ १४ ॥ ममापि स एव प्रेष्ठ इत्याह—न तथेति द्वाभ्याम् । आत्मयोनिर्ब्रह्मा पुत्रोऽपि । शंकरो मत्स्वरूपभूतोऽपि । संकर्षणो भ्रातापि । श्रीर्भार्यापि । आत्मा मूर्तिरपि । यथा भक्त इति वक्तव्येऽतिहर्षेणाह—भवानिति ॥ १५ ॥ पूयेय मदन्तर्वर्तिब्रह्माण्डानि पवित्रीकुर्यामिति भावेनेत्यर्थः ॥ १६ ॥ ॥ ७ ॥

१ धर्मं नित्यनैमित्तिकाचरणरूपम् । २ परिग्रहशून्यस्य । ३ 'पूयेतेति' इति वीर० समतः पाठः । ४ स्वरूपत्वेन रश्मीना रविवन्मूलरूपत्वेन स्फुरता । ५ अन्येषां धर्माद्यधिष्ठातॄणाम् । ६ परिच्छिन्नं परिमितमनित्यं च ।

किंच, मद्भक्तानां सुखमेतावदेवंभूतमिति वा को वक्तुं समर्थो यतस्तत्स्वसंवेद्यं निरुपममित्याह—निष्किंचना इति । महान्तो निरभिमानाः । अनालब्धधियोऽस्पृष्टचित्ताः । निष्किंचनत्वादीनां यथेष्टं हेतुहेतुमद्भावः । एवंभूता मम मदीया यत्सुखं जुषन्ति सेवन्ते तत्सुखं त एव विदुर्लभन्ते नान्ये । कुतः । नैरपेक्ष्यं नास्त्यपेक्षणीयं येषां ते निरपेक्षास्तैरेव लभ्यं न तु मोक्षापेक्षैरपीत्यर्थः । यद्वा, एवंभूताः सन्तो ये मम मामित्यर्थः, जुषन्ति प्रीणन्ति त एव यन्नैरपेक्ष्यं सुखं तद्विदुर्नान्य इत्यन्वयः ॥ १७ ॥ अपि च आस्तां तावदुत्तमभक्तकथा, यतः प्राकृतोऽपि भक्तः कृतार्थ एवेत्याह—बाध्यमान इति द्वाभ्याम् । विषयैराकृष्यमाणोऽपि । प्रगल्भया समर्थया ॥ १८ ॥ पाकाद्यर्थं प्रज्वालितोऽग्निर्यथा काष्ठानि भस्मीकरोति तथा रागादिनापि कथंचिन्मद्विषया सती भक्तिः

निष्किंचना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियो जुषन्ति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १७ ॥ बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ॥ प्रायः[2] प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥ यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ॥ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥ न साधयति[3] मां योगो न सांख्यं धर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि[4] संभवात् ॥ २१ ॥ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ॥ मद्भक्त्यापेतमात्मानं[5] न सम्यक्प्रपुनाति हि ॥ २२ ॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥ २३ ॥ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ॥ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥ ॥ ॥

समस्तपापानीति भगवानपि स्वभक्तिमहिमाश्चर्येण संबोधयति—अहो उद्धव विस्मयं शृण्विति ॥ १९ ॥ अत एवंभूतं श्रेयो नान्यदस्तीत्याह—न साधयतीति द्वाभ्याम् ॥ २० ॥ श्रद्धया या भक्तिस्तया । संभवाज्जातिदोषादपीत्यर्थः ॥ २१ ॥ भक्त्यभावेऽन्यत्साधनं व्यर्थमित्याह द्वाभ्याम्—धर्म इति ॥ २२ ॥ रोमहर्षादिकं विना कथं भक्तिर्गम्यते[6], भक्त्या विना च कथमाशयः शुध्येदिति ॥ २३ ॥ किंच, भक्तिः स्वाश्रयं शोधयतीति किं वक्तव्यं, यतो गद्गदवागादिलक्षणो मद्भक्तियुक्तो लोकं सर्वं पुनातीत्याह—वागिति ॥ २४ ॥ अपि च भक्त्यैवात्मशुद्धिर्नान्यत इति सदृष्टान्तमाह—यथेति । यथाग्निना ध्मातं तापितमेव हेम सुवर्णमन्तर्मलं जहाति न क्षालनादिभिः[7] । स्वं निजं रूपं च भजते । कर्मानुशयं कर्मवासनाम् । मां भजते मद्रूपतामापद्यते ॥ २५ ॥ ॥

१ अन्ये इति पदमध्याहारलभ्यम् । २ प्राय इत्यनेन स्वापराधो व्यावर्त्यते । 'प्रशस्तयापि मद्भक्त्या' इति विज० समतः पाठः । ३ न वशीकरोति अथवा वराय नोन्मुखं करोति । ४ 'सकममपि' इति पाठः । ५ आत्मानमन्तःकरणम् । ६ भक्तिर्गम्यते इति शेषपूरणम् । ७ आदिना तक्षणघर्षणादिग्रहः ।

ननु 'ब्रह्मविदाप्नोति परम्', 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुतिभ्यो ज्ञानादेवाविद्यानिवृत्त्या त्वत्प्राप्तिरवगम्यते, कुतो भक्तियोगेनेत्युच्यते तत्राह—यथा यथेति । आत्मा चित्तं परिमृज्यते शोध्यते मत्पुण्यकथानां श्रवणैरभिधानैश्च भक्तेरेवावान्तरव्यापारो ज्ञानं न पृथगित्यर्थः ॥२६॥ किंच ज्ञानं नाम चित्तस्य मदाकारपरिणामः, स च मां भजतः स्वभावत एव भवति, न च यत्नान्तरमपेक्षत इति सदृष्टान्तमाह—विषयानिति ॥ २७ ॥ यस्मादन्यसाधनं तत्फलं च स्वप्नमनोरथवदसदभिध्यानमात्रं तस्मात्तद्विहाय मय्येव मनः समाहितं कुर्विति प्रकरणार्थमुपसंहरति—तस्मादिति । मद्भावभावितं मद्भावेन भजनेनैव शोधितम् ॥२८॥ विशेषतो वात्स्यायनाद्युक्तकाममार्गाः परित्याज्या इत्याह—स्त्रीणामिति । आत्मवान् धीरः सन् । क्षेमे निर्भये देशे । विविक्ते विजने ॥२९॥ एतदुपपादयति—न तथेति । अस्य पुंसो यथा तत्सङ्गिसङ्गतः क्लेशो भवेत् । यथा च बन्धो योषित्सङ्गतस्तथान्यप्रसङ्गतो न भवेदिति ॥३०॥ मां चिन्तयेदित्युक्तं तत्प्रकारं

यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ॥ तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥ २६ ॥ विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ॥ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ॥ हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥ स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ २९ ॥ न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसङ्गतः ॥ योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३० ॥ ॥ उद्धव उवाच ॥ यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम् ॥ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥ ३१ ॥ ॥ श्रीभगवानुवाच ॥ सम आसन आसीनः समकायो यथासुखम् ॥ हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३३ ॥ ॥ ॥ ॥

पृच्छति—यथेति ध्यानाङ्गप्रश्नः । यादृशमिति ध्येयविशेषणप्रश्नः । यदात्मकमिति यस्य तानि विशेषणानि तत्स्वरूपप्रश्नः । एतन्मे ध्यानं मे वक्तुमर्हसीति पाठः । तत्रायमर्थः—मुमुक्षुस्त्वां यथा ध्यायेत्तन्मे वक्तुमर्हसीति जिज्ञासोः कथनाय । मे पुनरेतत्त्वद्दास्यमेव पुरुषार्थो न तु ध्यानेन कृत्यमस्तीति । तदुक्तम्—'त्वयोपभुक्तस्रग्गन्ध—' इत्यादि । 'त्वं वक्तुमर्हसि' इति पाठः सुगमः ॥ ३१ ॥ तत्र ध्यानाङ्गत्वेनासनप्राणायामप्रकारमाह—सम इति चतुर्भिः । समे नात्युच्छ्रिते नातिनीचे आसने कम्बलादौ समकायः सन् । यथासुखमासीन इति नास्ति स्वस्तिकादिनियम इत्युक्तम् । नासाग्रनिरीक्षणं च चित्तस्थैर्याय—'अन्तर्लक्ष्योऽवहिर्दृष्टिः स्थिरचित्तः सुसंयतः' इति योगशास्त्रोक्तेः ॥ ३२ ॥ विपर्ययेण रेचकपूरककुम्भकक्रमेणापि । यद्वा वामनाड्या पूरितं दक्षिणया त्यजेत्तया वा पूरितं वामयैवेवं विपर्ययेण । यथोक्तं योगे—'इडया पूरयेद्वायुं त्यजेत्पिङ्गलया ततः ॥ पिङ्गलापूरितं वायुमिडया च परित्यजेत् ॥' इति । निर्जितेन्द्रिय इति प्रत्याहार उक्तः ॥ ३३ ॥

१ अवान्तरव्यापार इति यथा चक्षुषः करणत्वेऽपि संयोगादिरवान्तरव्यापारस्तथा ज्ञानमपि । न हि काष्ठैः पचतीत्युक्ते ज्वालानामसाधनत्वं प्रतीयते इति तस्य तत्परिकरत्वमभिप्रेतम् । २ विषयानितीत्येतदग्रे 'तदुक्तम्—जगल्लुब्धा धनमयं कामुकाः कामिनीमयम् ॥ नारायणमयं धीराः पश्यन्ति ज्ञानचक्षुषः' इत्यधिकं क्वचित् । ३ असतां विषयाणामभिध्यानं चिन्तनम् । ४ अन्तर्लक्ष्यो हृदि लक्ष्यैकदृष्टिः, अवहिर्दृष्टिर्बाह्यविषयानुसंधानशून्यः ।

प्राणायामो द्विविधः—सगर्भोऽगर्भश्चेति[1] । तत्र श्रेष्ठत्वात्प्रणवगर्भमाह—हृदीति द्वाभ्याम् । मूलाधारादारभ्याविच्छिन्नं सन्ततं घण्टानादतुल्यमोङ्कारं हृदि संस्थितं प्राणेनोदीर्योर्ध्वं द्वादशान्तपर्यन्तं[2] नीत्वा। कथम् । विसोर्णवत् कमलनालतन्तुवत् । तत्र मात्रातीते स्वरं पञ्चदशं विन्दुं संवेशयेत्। अथ पुनरित्यस्य संस्थितं प्राणेनोदीर्योर्ध्वं द्वादशान्तपर्यन्तं नीत्वा। ... यद्वा, मूलाधारादारभ्य मूर्धान्तपर्यन्तं विसतन्तुवत्सूक्ष्ममविच्छिन्नं सन्ततं हृदि मनसि प्राणेनोदीर्याभिव्यज्याथ पुनस्तत्रोतं च विन्दुशिरस्कं कुर्यादित्यर्थः । ॥ ३४ ॥ मासादर्वाक् जितानिलो भवति ॥ ३५ ॥ एवं ध्यानाङ्गमुक्त्वा यादृशमित्यस्योत्तरं वक्तुं ङ्कारे घण्टानादतुल्यं स्वरमुदात्तं नादं स्थिरीकुर्यादिति ध्येयपीठमाह—हृत्पुण्डरीकमिति सार्धेन । अन्तस्थं देहान्तर्वर्ति ऊर्ध्वनालमधोमुखं मुकुलितं च कदलीपुष्पसंकाशं यदस्ति तद्विपरीतं ध्यात्वेत्यर्थः ॥ ३६ ॥ न्यसेच्चिन्तयेत् । सविशेषणं ध्यानमाह—वह्निमध्य इति पङ्क्तिः । ध्यानमङ्गलं ध्यानस्य शुभं विषयम् ॥ ३७ ॥ सममनुरूपावयवम्[3] । दीर्घाश्चारवश्चत्वारो

हृद्यविच्छिन्नमोङ्कारं घण्टानादं विसोर्णवत् ॥ प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् ॥ ३४ ॥ एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत् ॥ दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥ ३५ ॥ हृत्पुण्डरीकमन्तस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥३६॥ कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम् ॥ ३७ ॥ समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् ॥ सुचारु सुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥ समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ॥ हेमाम्बरं घनश्यामं श्रीवत्सश्रीनिकेतनम् ॥ ३९ ॥ शङ्खचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥ द्युमत्किरीटकटककटिसूत्राङ्गदायुतम् ॥ सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ॥ ४१ ॥ सुकुमारमभिध्यायेत्सर्वाङ्गेषु मनो दधत् ॥ इन्द्रियाणीन्द्रियार्थेभ्यो मनसाकृष्य तन्मनः ॥ बुद्ध्या सारथिना[4] धीरः प्रणयेन्मयि सर्वतः ॥ ४२ ॥ तत्सर्वव्यापकं[5] चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥ ॥ ॥

भुजा यस्मिंस्तत्। सुचारु अतिरम्यम् ॥ ३८ ॥ समानयोः कर्णयोर्विन्यस्ते स्फुरती मकराकारे कुण्डले यस्मिंस्तत् । श्रीवत्सश्रियोर्निकेतनं वक्षसि दक्षिणवामतः । ताभ्यां युक्तमित्यर्थः ॥ ३९ ॥ ४० ॥ द्युमद्भिः किरीटादिभिरासमन्ताद्युतमलंकृतम् । प्रसादेन शोभनं मुखमीक्षणं च यस्मिंस्तत् ॥ ४१ ॥ सुकुमारमतिकोमलम् । सविशेषणं ध्यानमुपसंहरति—इन्द्रियाणीति । प्रकर्षेण नयेत् । सर्वतः सर्वाङ्गयुक्ते ॥ ४२ ॥ यादृशमित्यस्योत्तरत्वेन सविशेषणमुक्त्वा यदात्मकमित्यस्योत्तरतया शनैर्विशेषणत्यागेन ध्यानमेव समाधिपर्यन्तमाह—तदिति त्रिभिः । एकत्राङ्गे । अन्यान्यङ्गानि न चिन्तयेत् । एकत्रेति यदुक्तं तदेवाङ्गं दर्शयति—सुस्मितमिति ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

१ सगर्भो मन्त्रसहितः । अगर्भस्तच्छून्यः । २ द्वादशाङ्गुलपर्यन्तं अनाहतान्तमित्यर्थः इति चक्रवर्ती । ३ अनुरूपा अन्यूनाधिका अवयवा यस्मिन् रूपे । ४ सारथिना सहायरूपया । ५ सर्वव्यापकं सर्वाङ्गाभिनिविष्टम् ।

व्योम्नि सर्वकारणरूपे । तच्च कारणत्वमपि त्यक्त्वा मदारोहो मयि शुद्धे ब्रह्मण्यारूढः सन् किंचिद्ध्यातृध्येयविभागमपि न चिन्तयेत् ॥ ४४ ॥ मामेवात्मनि विचष्टे आत्मानं च सर्वात्मनि मयि संयुतं विचष्टे । ज्योतिर्ज्योतिषि संयुक्तमिवेत्यन्वयः ॥ ४५ ॥ एवंभूतसमाधिपर्यन्तध्यानस्य फलमाह—ध्यानेनेति । मनो युञ्जतः समादधतः । द्रव्यज्ञानक्रियाभ्रमोऽधिभूताधिदैवाध्यात्मरूपो दृश्यद्रष्टृदर्शनरूपो वा भ्रमो निर्वाणं शान्तिं सम्यग्यास्यतीति ॥ ४६ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणानुगाः ॥ श्रीविष्णुपदसंप्राप्त्यवन्तरायतया मताः ॥ १ ॥ एवं मनो युञ्जतो योगिनोऽन्तराविर्भवन्त्यः सिद्धयोऽप्यन्तरायप्राया एव, अतस्ताः परिहृत्य परमेश्वरपर एव भवेदिति वक्तुं सिद्धीराह—जितेन्द्रियस्येति । युक्तस्य स्थिरचित्तस्य ॥ १ ॥ स्विदिति वितर्के । का स्वित्किंनामा, कथं स्वित्कीदृशी वा । धारणाश्च कतीति प्रश्नान्तरे वाशब्दः ।

तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत् ॥ ४४ ॥ एवं समाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥ ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥ ॥ इति श्रीमद्भाग० महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ श्रीभगवानुवाच ॥ जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ॥ मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥ ॥ उद्धव उवाच ॥ कया धारणया का स्वित्कथं स्वित्सिद्धिरच्युत ॥ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥ ॥ श्रीभगवानुवाच ॥ सिद्धयोऽष्टादश प्रोक्ता धारणा योगपारगैः ॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ ३ ॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥ गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥

त्वमेवैतज्जानासि नान्य इत्याशयेनाह—योगिनामिति ॥ २ ॥ धारणाश्चाष्टादशेत्यनुषङ्गः । योगपारगैरिति । त्रिकालज्ञत्वादिक्षुद्रसिद्धीरन्येऽपि जानन्तीति भावः । अहमेव प्रधानं मुख्यः स्वभावत आश्रयो यासां ताः । मत्सारूप्यं प्राप्तेषु किंचिन्न्यूना भवन्तीति भावः । गुणहेतवः सत्त्वोत्कर्षहेतुकाः ॥ ३ ॥ ताः स्वरूपेणोपदिशति—अणिमेति सार्धैः पञ्चभिः । अणिमा महिमा लघिमा च मूर्तेर्देहस्य तिस्रः सिद्धयः । प्राप्तिर्नाम सिद्धिः । सर्वप्राणिनामिन्द्रियैः सह तत्तदधिष्ठातृदेवतारूपेण संबन्ध इत्यर्थः । श्रुतेषु पारलौकिकेषु दृष्टेषु दर्शनयोग्येष्वपि सर्वेषु भूविवरादिपिहितेष्वपि प्राकाश्यं भोगदर्शनसामर्थ्यं सिद्धिः शक्तीनां मायातदंशभूतानां प्रेरणम् । तत्रेश्वरे मायाया अन्येषु तदंशानां प्रेरणमीशिता नाम सिद्धिः ॥ ४ ॥ विषयभोगेष्वसङ्गो वशिता सिद्धिः । यत्कामो यद्यत्सुखं कामयते तत्तदवस्यति तस्य तस्य सीमानं प्राप्नोतीति सिद्धिः । औत्पत्तिकाः स्वाभाविक्यो निरतिशयाश्चेत्यर्थः ॥ ५ ॥ ॥ ॥

१ मा तत्पदार्थमेव चिद्रूपत्वेनानुगत आत्मनि त्वंपदार्थे विचष्टे । आत्मानं त्वपदार्थम् । २ धारणानुगास्तत्तद्धारणानुवर्तिन्यः । ३ योगिदेहस्य शिलादावपि प्रवेशप्रयोजकोऽणुत्वलक्षणो गुणोऽणिमा । तथा तस्यैव सर्वव्यापकलक्षणो महिमा । येन सूर्यमरीचीरवलम्ब्य देहस्य सूर्यलोकप्राप्तिर्भवति स लघुत्वलक्षणो लघिमा । ४ सर्वप्राणिनामिन्द्रियैः सह तत्तद्विषयप्राप्तिरिति फलितम् । ५ इयं सिद्धिः कामावसायितानाम्नीति चक्र० । प्राकाम्याख्येति विज० ।

गुणहेतुसिद्धीराह—अनूर्मिमत्त्वं क्षुत्पिपासादिराहित्यम् । दूरे श्रवणं दर्शनं चेति द्वे सिद्धी । मनोवेगेन देहस्य गतिः । कामितरूपप्राप्तिः । परकाये प्रवेशः ॥ ६ ॥ स्वेच्छामृत्युः । अप्सरोभिः सह देवानां याः क्रीडास्तासामनुदर्शनं प्राप्तिः । संकल्पानुरूपप्राप्तिः । अप्रतिहता आसमन्ताद्गतिर्यस्याः सा आज्ञा चेत्येता दश ॥ ७ ॥ क्षुद्रसिद्धीश्च पश्चाह—त्रिकालज्ञत्वमिति । अद्वन्द्वं शीतोष्णाद्यनभिभवः । अग्न्यादीनां संस्तम्भनम् ॥ ८ ॥ तत्तद्धारणाभिः सह विशेषतो निरूपयति—ययेति यावत्समाप्ति ॥ ९ ॥ भूतसूक्ष्मोपाधौ मयि तन्मात्रं भूतसूक्ष्माकारम् । स तन्मात्रोपासकः । मम मदीयमणिमानम् ॥ १० ॥ ज्ञानशक्तिमहत्तत्त्वोपाधौ मयि यथासंस्थं महत्तत्त्वाकारम् । भूतानां चेति । आकाशादिभूतोपाधौ च मयि मनो धारयंस्तत्तद्भूतमहिमानं प्राप्नोतीत्यर्थः ॥ ११ ॥ वाय्वादिभूतानां ये परमाणवस्तन्मये तदुपाधौ मयि चित्तं रञ्जयन् योगी कालसूक्ष्मार्थतां कालपरमाणूपाधिरूपतामिति लघुत्वविवरणम् । तदुक्तम्—'स कालः

अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥ स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः ॥ ७ ॥ त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ॥ ८ ॥ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः ॥ अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥ महत्यात्मन्मयि परे यथासंस्थं मनो दधत् ॥ महिमानमवाप्नोति भूतानां च पृथक्पृथक् ॥ ११ ॥ परमाणुमये चित्तं भूतानां मयि रञ्जयन् ॥ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥ १२ ॥ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ॥ सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥ महत्यात्मनि यः सूत्रे धारयेन्मयि मानसम् ॥ प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे ॥ स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम् ॥ १५ ॥ ॥

परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इति ॥ १२ ॥ वैकारिकाहंकारोपाधौ मयि । अखिलमेकाग्रम् । आत्मत्वमधिष्ठातृत्वम् । अत्र हेतुः—मन्मनाः । मयि मनोधारणप्रभावादेवं भवति, नात्रान्तीव हेतुरनुसन्धेय इति भावः । एवं मद्धारणानुभावेन मद्योगबलमाश्रय इत्यादिषु द्रष्टव्यम् ॥ १३ ॥ क्रियाशक्तिप्रधानं महत्तत्त्वमेव सूत्रं तदुपाधौ मयि स मे पारमेष्ठ्यं सर्वोत्कृष्टं प्राकाश्यं विन्दते । कथंभूतस्य । अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य । तदुपाधेर्ममेत्यर्थः ॥ १४ ॥ त्र्यधीश्वरे त्रिगुणमायानियन्तरि अत एव कालविग्रहे आकलयितृरूपेऽन्तर्यामिणि । ईशित्वं विशिनष्टि—क्षेत्रज्ञानां जीवानां क्षेत्राणां तदुपाधीनां च चोदनां प्रेरणं, न तु विश्वसृष्ट्यादिकर्तृत्वलक्षणमित्यर्थः ॥ १५ ॥ ॥ ॥ ॥ ॥

१ सस्तम्भनं दाहादिशक्तिप्रतिबन्धनम् । २ इदं महिम्नो विशेषणम् । महति महत्तत्त्वोपाधौ मयि मनो दधत्सन् यथासंस्थं महत्तत्त्वाकारं महिमानमवाप्नोतीति योजना । ३ तथा भूतानामाकाशादीना मध्ये पृथक् पृथक् तत्तद्भूतोपाधौ आकाशादिशरीरके मयि मनो दधत्सन्महिमान तत्तद्भूतमहिमानं परममहदाकारतामवाप्नोतीति योजना । ४ कालस्य यः परमाणुरूपोपाधिः परमसूक्ष्मदेशावच्छिन्नाकाशस्तद्रूपताम् । ५ उद्देशतः लक्षणपूर्वकसंज्ञामात्रतः । ६ वैकारिके सात्त्विके । ७ नात्रान्यो हेतुरनुसधेय इति क्वचित्पाठः ।

तुरीयाख्ये विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुरित्येवंलक्षणे—'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' तद्वति भगवच्छब्दशब्दिते ॥ १६ ॥ यत्र परमानन्दरूपे सर्वोऽपि कामस्तदंशभूतोऽवसीयते समाप्यते तम् ॥ १७ ॥ अतः परं गुणहेतुकाः सिद्धीराह—शुद्धे सत्त्वात्मके । श्वेततां शुद्धरूपताम् ॥ १८ ॥ आकाशात्मा यः प्राणः समष्टिरूपस्तद्रूपे मयि मनसा घोषं नादं चिन्तयन्नसौ हंसो जीवस्तत्राकाशे उपलब्धा ज्ञाता सन् तत्रस्था विचित्रा वाचः शृणोति । यद्वा, तत्राकाशे उपलब्धा अभिव्यक्ता या वाचस्ता दूरतः शृणोतीति ॥ १९ ॥ त्वष्टा आदित्यस्तस्मिन्नपरिच्छिन्ने चक्षुः संयोज्य तं च चक्षुषि संयोज्य तत्रोभयसंयोगे मां ध्यायन् विश्वं दूरतः पश्यति ॥ २० ॥ मनो देहं च तदनुवर्तिना वायुना सह मयि सुसंयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्रात्मा देहो यातीत्यर्थः । यद्वा, मनः कर्तृ आत्मानं वायुना

नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ॥ मनो मय्यादधद्योगी मद्धर्मा[2] वशितामियात्[3] ॥ १६ ॥ निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः ॥ परमानन्दमाप्नोति[4] यत्र कामोऽवसीयते ॥ १७ ॥ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ॥ धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ॥ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ॥ मां तत्र मनसा ध्यायन्विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥ मनो[5] मयि सुसंयोज्य देहं तदनु वायुना ॥ मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥ यदा मन उपादाय यद्यद्रूपं बुभूषति ॥ तत्तद्भवेन्मनोरूपं[6] मद्योगबलमाश्रयः ॥ २२ ॥ परकायं विशन्सिद्ध आत्मानं तत्र भावयेत् ॥ पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥ पार्ष्ण्यापीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ॥ आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥ २४ ॥ विहरिष्यन् सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् ॥ विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः ॥ २५ ॥

सह देहं च मयि सुसंयोज्य यत्र याति तदनु तत्र देहो यातीति ॥ २१ ॥ मन उपादाय उपादानकारणं कृत्वा यद्यद्देवादिरूपं भवितुमिच्छति तत्तन्मनोरूपं मनसोऽभीष्टरूपं योगी भवेत् । कुतः । यतो मद्योगबलम् । योऽहमचिन्त्यशक्तिर्नानाकारस्तस्मिन्मयि मनसो योगो धारणा तस्य बलं प्रभावः स एवाश्रयः कारणम् ॥ २२ ॥ यत्र प्रविविक्षति तत्रात्मानं चिन्तयेत् । ततः पिण्डं स्वदेहं हित्वा प्राणः प्राणप्रधानलिङ्गशरीरोपाधिर्वायुभूतो बाह्यवायौ भूतः प्रविष्टस्तेन मार्गेणेत्यर्थः । षडङ्घ्रिवत् भृङ्गो यथा पुष्पात्पुष्पान्तरमनायासेन प्रविशति तद्वत् ॥ २३ ॥ पिण्डं हित्वेत्युक्तं तत्प्रकारं कथयन्स्वच्छन्दमृत्युमाह—पार्ष्ण्या पार्ष्णिना गुदं निरुध्य प्राणं प्राणोपाधिमात्मानं ब्रह्मरन्ध्रेण मूर्धद्वारेण । ब्रह्मेत्युपलक्षणम् । ब्रह्म वा अन्यद्वा अपेक्षितं स्थानं मनसा नीत्वा ॥ २४ ॥ मत्स्थं मन्मूर्तिरूपं शुद्धं सत्त्वं चिन्तयेत् । तदा सत्त्ववृत्तयः सत्त्वांशभूताः ॥ २५ ॥ ॥ ॥ ॥ ॥

१ 'इतीङ्गना' इत्यपि कचित्पाठः । तत्रेङ्गना सञ्ज्ञा । २ ममेव धर्मो विषयभोगेष्वसङ्गित्वरूपो यस्य सः । ३ वशितां ऐहिकामुष्मिकविषयजिहीर्षा—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञावैराग्यम्' इति पातञ्जले । ४ परमानन्दं कामावसायिताख्यां सिद्धिम् । ५ 'मनो मनसि संयोज्य' इति पाठः । ६ 'तत्तद्भजेत्' इति पाठः ।

यदा वा अकालेऽपि । यथा वेति पाठे यथा वा येन केनापि प्रकारेण बुद्ध्या संकल्पयेत्तत्तथा यथावत्प्राप्नोतीत्यर्थः । यद्वा, यथा संकल्पयेद्यथा वा मत्परो मयि विश्वासवान् भवति तथा तदनुरूपं सर्वमाप्नोतीत्यर्थः । किं कुर्वन् । सत्ये सत्यसंकल्पे मयि मनो युञ्जन् ॥२६॥ मदिति पृथक्पदम्, ममेत्यर्थः । ईशितुः सर्वनियन्तुर्वशितुः स्वतन्त्रस्य मम भावं स्वभावं प्राप्तः । एता गुणहेतवः ॥२७॥ अतः परं क्षुद्राः । धारणाविद इति त्रिकालज्ञेश्वरधारणा सूचिता त्रैकालिकी त्रिकालवस्तुविषया । स्वजन्ममृत्युभ्यामुपबृंहिता तत्सहिता । अनयैव परचित्ताद्यभिज्ञतापि व्याख्याता ॥ २८ ॥ अग्न्यादिसर्वोपघातशून्यो भगवानित्येवंभूतयोगमयम् । तैर्नाभिभूयेत । अत्र हेतुः—मद्योगेति । यादसामुदकं यथाभिघातकं न भवति तथा तस्य वपुषोऽग्न्यादय इत्यर्थः । अनयैवाद्वन्द्वतापि व्याख्याता ॥ २९ ॥ मद्विभूतीर्ममावतारान् । ध्वजादिभिः सह ॥ ३० ॥ उपसंहरति—उपासकस्येति । एवं पृथग्धारणाभिः ॥ ३१ ॥ यद्वा, किं नानाधारणाप्रयासेन एकयैव-सर्वाः

यथा संकल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते ॥ २६ ॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥२७॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ॥ मद्योगश्रान्तचित्तस्य यादसामुदकं यथा ॥ २९ ॥ मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यंजनैः स भवेदपराजितः ॥ ३० ॥ उपासकस्य मामेवं योगधारणया मुनेः ॥ सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥ जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ॥ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥ ३२ ॥ अन्तरायान्वदन्त्येता युञ्जतो योगमुत्तमम् ॥ मया संपद्यमानस्य कालक्षपणहेतवः ॥ ३३ ॥ जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ॥ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥ ॥ ॥ ॥

सिद्धयो भवन्तीत्याह—जितेन्द्रियस्येति । मद्धारणां 'नारायणे तुरीयाख्ये' इत्यत्रोक्ताम् । या सुदुर्लभा स्यात्सा का, न काचिदित्यर्थः ॥ ३२ ॥ यद्यप्येवं तथापि न प्रार्थ्या इत्याह—अन्तरायानिति ॥ ३३ ॥ तस्मादहैतुकीयमेव धारणा कार्या नान्याः काम्या इत्याह—जन्मेति । जन्मनैव काश्चित्सिद्धयो भवन्ति । यथा देवानां यथा च यादसामुदकस्तम्भः पक्ष्यादीनां खेचरत्वादि । तदुक्तं पातञ्जले—'जन्मौषधितपोमन्त्रयोगजाः सिद्धयः' इति । योगेन मद्धारणामित्युक्तेन । योगगतिं मत्सालोक्यादिरूपाम् ॥ ३४ ॥ कुत इत्यत आह—सर्वासामित्यर्धेन । प्रभुत्वोपपादनं हेतुः कारणं पतिः पालयिता चेति । किंच, न केवलं सिद्धीनामेव प्रभुरपितु मोक्षादीनामपीत्याह—अहमिति । योगो मोक्षः, सांख्यं तत्साधनं ज्ञानम् । धर्मस्य तदुपदेष्टॄणां ब्रह्मवादिनां च ॥ ३५ ॥ ॥ ॥

१ यादसां प्रभुरुदकैर्यथा न हन्यते तद्वदित्यर्थः इति शुक० । २ सत्ये सत्यसंकल्पे । ३ अग्न्यादिसर्वोपघातशून्यो योऽहं तद्विषयको योगो धारणा तेन श्रान्तं तदेकनिष्ठं चित्तं यस्य तस्य । 'मद्योगशान्तचित्तस्य' इति पाठः । ४ 'उदकैर्यथा' इति पाठः । ५ 'व्यजनाः' इति पाठः । ६ 'उपासीनस्य' इति पाठः । ७ धारणयेति जातावेकवचनम् । योगात्मिकाभिर्धारणाभिरित्यर्थः । ८ 'पुनः' इति पाठः । ९ 'का नु सिद्धिः' इति पाठः । १० मया सपन्नमानस्य मां प्राप्स्यतो भक्तस्य कालक्षपणहेतवो मत्प्राप्तिविषये विलम्बहेतवः ।

कुतस्तत्राह—अहमिति । सर्वदेहिनां जीवानामात्मा । यत आन्तरोऽन्तर्यामी—'एष त आत्मान्तर्याम्यमृतः' इति श्रुतेः । तर्हि किमन्तर्वर्तित्वात्परिच्छिन्ना, न, वाह्यश्च व्यापक इत्यर्थः । तत्र हेतुः—अनावृतः । एतत्सदृष्टान्तमाह—भूतेषु चतुर्विधेषु महाभूतानि यथा वहिश्चान्तश्च भवन्ति, स्वयमहमपि तथेत्यर्थः ॥ ३६ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥ षोडशे तु हरेराविर्भावयुक्ता विभूतयः ॥ ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥ १ ॥ अन्तश्चित्तेन यद्ध्यानमशक्यमकृतात्मनाम् ॥ अतस्तद्योग्यतापत्त्यै विभूत्यादिनिरूपणम् ॥ २ ॥ एवं तावन्नवाध्याय्यामष्ट प्रश्ना निरूपिताः ॥ ब्रह्मत्वसंभवे तावत्सप्तमादिचतुष्टये ॥ ३ ॥ वन्धमुक्त्योस्तु निर्धारे सद्भक्त्योश्च ततः परे ॥ द्वादशेऽनन्तरं कर्मकृतित्यागव्यवस्थितौ ॥ ४ ॥ हंसेतिहासतो योगनिष्ठायां च त्रयोदशे ॥ श्रेयःसाधननिर्धारे ध्याने चैव चतुर्दशे ॥ ५ ॥ धारणासिद्धिभेदे च प्रसङ्गेन निरन्तरे ॥ उद्धवप्रश्नतो दत्तमुत्तरं हरिणोचितम् ॥ ६ ॥ षोडशे भूतिविस्तारे द्वयोर्वर्णाश्रमव्रते ॥ ज्ञानादिनिर्णये चातो यमादीनां च निर्णये ॥ ७ ॥ योगत्रयाधिकारे तु विंशे च तदनन्तरे ॥ सत्त्वसंख्याविवादे च पुंप्रकृत्योर्विवेचने ॥ ८ ॥ जन्ममृत्युप्रकारे च द्वाविंशे दत्तमुत्तरम् ॥ परापराधसहने चतुर्भिस्तदनन्तरैः ॥ ९ ॥

अहमात्मान्तरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु वहिरन्तः स्वयं तथा ॥ ३६ ॥ ॥
इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥ ॥
॥ उद्धव उवाच ॥ त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ॥ सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः ॥ १ ॥
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ॥ उपासते त्वां भगवन्याथातथ्येन ब्राह्मणाः ॥ २ ॥ येषु येषु च
भावेषु भक्त्या त्वां परमर्षयः ॥ उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ॥ ३ ॥ गूढश्चरसि भूतात्मा
भूतानां भूतभावन ॥ न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥ ॥ ॥

सप्तविंशे क्रियायोगप्रश्ने तदुपवर्णनम् ॥ अष्टाविंशे ततः प्रोक्ता ज्ञानयोगोपसंहृतिः ॥ १० ॥ संसारासंभवप्रश्ने तन्मध्ये दत्तमुत्तरम् ॥ तदशक्त्या पुनः प्रश्ने भक्तियोगोपसंहृतिः ॥ ११ ॥ एवं प्रश्नोत्तराण्यत्र क्रमेणैतानि विंशतिः ॥ १२ ॥ 'अहमात्मान्तरो बाह्योऽनावृतः सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा' इत्युक्तम्, तत्र भूतानि यथा क्वचित्केनचिद्गुणविशेषेणोद्रिक्तानि वर्तन्ते क्वचित्सामान्यरूपेणैव, तथा त्वमपि क्व कथं वर्तस इति विभूतीः प्रष्टुं प्रथमं तावदुक्तमेव सर्वात्मकत्वमनुवदति—त्वं ब्रह्मेति । अपावृतं निरावरणं स्वतन्त्रं वा । अत एव सर्वेषामपि त्राणं रक्षणम् । स्थितिर्जीवनम् । त्राणस्थितिसहिताावप्ययोद्भवौ यस्मात् । सत्त्वमुपादानकारणमित्यर्थः ॥ १ ॥ अत्र सदाचारं प्रमाणमाह—याथातथ्येन यथार्थत्वेन । सर्वभूतकारणं त्वाम् । ब्राह्मणा वेदतात्पर्यविदः ॥ २ ॥ एवं कारणत्वेन सर्वात्मत्वमनूद्य विभूतीः पृच्छति—येष्विति । उपासीनाः सेवमानाः सन्तः ॥ ३ ॥ दुर्ज्ञेयत्वमेवाह—गूढः अस्फुटः । भूतानां प्राणिनां मध्ये । अत्र हेतुः—भूतानामात्मा अन्तर्यामी । अत्रापि हेतुः—हे भूतभावनेति । ते त्वया ॥ ४ ॥ ॥ ॥

१ सप्तमप्रभृतिपञ्चदशपर्यन्तैर्नवभिरध्यायैरित्यर्थः । २ द्वयोः सप्तदशाष्टादशयोः । ३ अतः ऊनविंशे । ४ 'प्राण' इति विज० पाठः । ५ 'चरति' इति पाठः ।

ता एव साकल्येन पृच्छति—हे महाविभूते, याः काश्चिद्भूम्यादिषु ते विभूतयः । रसायां रसातले अनुभावितास्त्वयैव केनचिच्छक्तिविशेषेण संयोजिताः । तीर्थानां पदं च तदङ्घ्रिपद्मं च ॥ ५ ॥ नरावतारभूतार्जुनप्रश्नसंवादित्वात्तवायं प्रश्नः साधीयानिति तावदनुमोदते—एवमिति त्रिभिः । प्रश्नं प्रष्टव्यम् । सपत्नैर्योद्धुमिच्छता । विनशने कुरुक्षेत्रे ॥ ६ ॥ युयुत्सोर्विभूतिप्रश्ने कः प्रसङ्गस्तत्राह—ज्ञात्वेति । लौकिकः प्राकृतमतिः सन् ॥ ७ ॥ स च यदा ततो ज्ञातिवधान्निवृत्तस्तदा मया प्रतिबोधितः सन् यथा त्वमभिभाषसे एवं संग्राममुखे मामभ्यभाषत । तद्वदेव तवापि कथयिष्यामीति भावः ॥ ८ ॥ ता विभूतीः कथयति—अहमिति । अस्मच्छब्दसमानाधिकरणाः प्रथमान्ता द्वितीयान्ताश्च सर्वा विभूतयस्तास्ताश्चोपासनार्थं कथ्यन्ते । षष्ठी च क्वचिन्निर्धारणे संबन्धे

याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ॥ ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥ ॥ श्रीभगवानुवाच ॥ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदांवर ॥ युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥ ६ ॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ॥ ततो निवृत्तो हन्ताहं हतोऽयमिति लौकिकः ॥ ७ ॥ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ॥ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ॥ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥ अहं गतिर्गतिमतां कालः कलयतामहम् ॥ गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥ गुणिनामप्यहं सूत्रं महतां च महानहम् ॥ सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥ हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत् ॥ अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥ १२ ॥ इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ॥ आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥ ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ॥ देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥ १४ ॥ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ॥ प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥ ॥ ॥ ६९ ॥

च क्वचिद्यथायोग्यं द्रष्टव्या । ततश्चामीषां भूतानामात्मेति ते सुहृदिति ईश्वर इति च सामान्येनाहमुपास्य इत्यर्थः । एवं सर्वत्र । तेषां स्थित्युद्भवाप्ययः । तत्तद्धेतुरित्यर्थः ॥ ९ ॥ विशेषतो विभूतीराह—कलयतां वशीकुर्वताम् । गुणानां मध्ये साम्यं सर्वत्र समत्वम् । गुणानां सत्त्वादीनां साम्यमव्याकृतं वा । गुणिनि धर्मिणि औत्पत्तिकः स्वाभाविको यो गुणः सोऽहम् ॥ १० ॥ सूत्रं प्रथमकार्यम् । महत्तत्त्वं महान् । सूक्ष्मोपाधित्वाद्दुर्ज्ञेयत्वाच्च जीवस्य सूक्ष्मत्वम् 'बुद्धेर्गुणेनात्मगुणेन चैव वालाग्रमात्रोऽह्यवरोऽपि दृष्टः' इति श्रुतेः ॥ ११ ॥ वेदानां संबन्धी तेषामध्यापकः । पदानि त्रिपदा गायत्रीत्यर्थः ॥ १२ ॥ ॥ १३ ॥ हविर्धानी कामधेनुः ॥ १४ ॥ १५ ॥ ॥ ॥ ॥ ॥

१ अर्जुनप्रश्नसंवादित्वादर्जुनप्रश्नेन सह तुल्यार्थत्वात्। २ 'महाविभूतेः' इति विज० समतः पाठः। ३ एवं यथा त्वं पृच्छसि तथा एतत्प्रश्नं प्रष्टव्यम्। ४ रणमूर्धन्यभ्यभाषत इत्यन्वयः। ५ उद्भूतगुणत्रयवतामिति वाल०। ६ त्रिवृत् त्रयाणां अकारोकारमकाराणां वृद्धर्तनं यस्मिन्सः। ७ आदित्यानामदितिपुत्राणां मध्ये विष्णुर्वामनोऽस्मि। ८ यथा आकाशे शब्दः। ९ क्रियाप्रधानमिति वाल०।

नक्षत्रौपधीनां प्रभुं सोमम् । यक्षरक्षसां प्रभुम् ॥ १६ ॥ यादसां प्रभुम् । तपतां तापयताम् । द्युमतां दीप्तिमतां च मध्ये ॥ १७ ॥ संयमतां दण्डयतामित्यर्थः ॥ १८ ॥ शृङ्गिणां दंष्ट्रिणां च मध्ये तेषां प्रभुर्वा । तुर्यः संन्यासः । प्रथमो ब्राह्मणः ॥ १९ ॥ स्रोतसां प्रवाहाणां च । सरसां स्थिरोदकाशयानाम् ॥ २० ॥ धिष्ण्यानां निवासस्थानानाम् । गहनानां दुर्गमानाम् ॥२१॥ ब्रह्मिष्ठानां वेदार्थनिष्ठानाम् । सेनान्यां चमूपतीनाम् । अग्रण्यां सन्मार्गप्रवर्तकानाम् । अजो ब्रह्मा ॥ २२ ॥ शुचीनां शोधकानामपि मार्जनतक्षणघर्षणादीनां मध्ये वाय्वादिरूपः शोधकोऽहम् ॥ २३ ॥ योगानां योगाङ्गानामष्टानां मध्ये आत्मसंरोधः समाधिरहम् । मन्त्रो नीतिः । कौशलानां विवेकादिनैपुणानां मध्ये आन्वीक्षिकी आत्मानात्मविवेकविद्या अख्यात्यन्यथाख्यातिशून्यख्यात्यसत्ख्यात्यनिर्वचनीयख्याति-

मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ॥ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥ ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम् ॥ तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥ उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ॥ यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ॥ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥ १९ ॥ तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ॥ आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥ २० ॥ धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ॥ वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥ २१ ॥ पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ॥ स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ॥ वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥ योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ॥ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥ स्त्रीणां तु शतरूपाहं पुंसां स्वायंभुवो मनुः ॥ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥ धर्माणामस्मि संन्यासः[1] क्षेमाणामवहिर्मतिः ॥ गुह्यानां सूनृतं[2] मौनं मिथुनानामजस्त्वहम् ॥ २६ ॥ संवत्सरोऽस्म्यनिमिषां[3]मृतूनां मधुमाधवौ ॥ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभिजित् ॥ २७ ॥ ॥ ॥

वादिनामेवमिदं वेति यो दुरन्तो विकल्पः सोऽहम् ॥ २४ ॥ कुमारः सनत्कुमारः ॥ २५ ॥ संन्यासो भूताभयदानम् । क्षेमाणामभयस्थानानां मध्ये अवहिर्मतिरन्तर्निष्ठा । सूनृतं प्रियवचनं मौनं च । नहि प्रियभाषणे मौने च पुरुषस्याभिप्रायो ज्ञायते । अजः प्रजापतिः । यस्य देहार्धाभ्यां मिथुनमभूत्स एव मुख्यं मिथुनम् । 'अर्धो ह वा एष आत्मनो यत्पत्नी' इति श्रुतेः ॥ २६ ॥ अनिमिषामनिमिषाणामप्रमत्तानाम् । मधुमाधवौ वसन्त इत्यर्थः । अभिजिदुत्तराषाढाचतुर्थपादः श्रवणप्रथमपादश्च । तथा च श्रुतिः—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाः' इत्यादिः ॥ २७ ॥ ॥ ॥

१ 'सत्यागः' इति पाठः । २ 'सततं मौनं मिथुनानां पुमानहं' इति पाठः । ३ अनिमिषां कालानां मध्ये इति चक्र० । अनिमिषां कालावयवानां मध्ये इति विज० ।

कृतं कृतयुगम् । देवलोऽसितश्च । व्यासानां वेदविभागकर्तॄणाम् । कवीनां विदुषां काव्यः शुक्रः ॥ २८ ॥ भगवताम् 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इत्येवंलक्षणानाम् ॥ २९ ॥ सुपेशसां सुन्दराणाम् । दर्भजातीनां काशदूर्वादीनाम् । हविःषु चरुपुरोडाशादिषु घृतेषु वा ॥ ३० ॥ लक्ष्मीर्धनादिसंपत् ॥ ३१ ॥ बलवतामोजश्च सहश्च । सात्त्वतां भागवतानां भक्त्या कृतं कर्माहमित्यर्थः । तेषामेव नवव्यूहार्चने वासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणहयग्रीववराहनृसिंहब्रह्माण इति या नवमूर्तयस्तासां मध्ये वासुदेवाख्या ॥ ३२ ॥ गन्धर्वाणां विश्वावसुः । अप्सरसां पूर्वचित्तिः । गन्धमात्रमविकृतम् ॥ ३३ ॥ परमो मधुरः परः पराख्यः शब्दः ॥ ३४ ॥ अर्जुनः पार्थः । भूतानां प्राणिनां प्रतिसंक्रमः प्रलयः ॥ ३५ ॥ गत्यादयः पञ्च कर्मेन्द्रियव्यापाराः । स्पर्शादयो ज्ञानेन्द्रियव्यापाराः । तत्र लक्षणं दर्शनम् । सर्वेन्द्रियाणामिन्द्रियं तत्तदर्थग्रहणशक्तिरप्यहम्

अहं युगानां च कृतं धीराणां देवलोऽसितः ॥ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८ ॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ॥ किंपुरुषाणां हनुमान्विद्याध्राणां सुदर्शनः ॥ २९ ॥ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम् ॥ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ॥ ३० ॥ व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ॥ तितिक्षास्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥ ३१ ॥ ओजः सहो बलवतां कर्माहं विद्धि सात्त्वताम् ॥ सात्त्वतां नवमूर्तीनामादिमूर्तिरहं परा ॥ ३२ ॥ विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ॥ भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥ अपां रसश्च परमस्तेजिष्ठानां विभावसुः ॥ प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ॥ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥ ३५ ॥ गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ॥ आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥ ३६ ॥ पृथिवी वायुराकाश आपो ज्योतिरहं महान् ॥ विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ॥ अहमेतत्प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः ॥ ३७ ॥ ॥

॥ ३६ ॥ तदेवं तत्र तत्र निर्धारणेन तत्तत्संबन्धेन च विशेषतो विभूतीर्निरूप्येदानीं सामान्यतः सर्वा अपि निरूपयति—पृथ्वीति सार्धद्वयेन । पृथिव्यादिशब्दैस्तन्मात्राणि विवक्षितानि । अहमहंकारः । महान्महत्तत्त्वम् । एताः सप्त प्रकृतिविकृतयः । विकारः पञ्चमहाभूतानि एकादशेन्द्रियाणि चेत्येवं षोडशसंख्याकः । पुरुषो जीवः । अव्यक्तं प्रकृतिः । एवं पञ्चविंशतितत्त्वानि । तदुक्तम्—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ॥ षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥' इति । किंच रजः सत्त्वं तम इति प्रकृतेर्गुणाश्च परं ब्रह्म च । तदेतत्सर्वमहमेव । किंचैतत्प्रसंख्यानमेतेषां परिगणनमेतेषां लक्षणतो ज्ञानं च तत्फलं तत्त्वनिश्चयश्चाहमेव ॥ ३७ ॥ ॥ ॥ ॥ ॥

१ अत्र स्वायंभुवे मन्वन्तरे यथा विष्णुरेवेन्द्रो यज्ञसंज्ञोऽभूत् तथैव कचिन्महाकल्पे विष्णुरेव ब्रह्माऽभवदित्यतो वासुदेवादीनामन्तिमो ब्रह्मा विष्णुरेव ज्ञेयः इति चक्र॰ । 'वामनाः' इति पाठः । २ अविकृतमिति दौर्गन्ध्यं व्यावर्तयति । 'पुण्यो गन्धः पृथिव्यां च' इति गीतोक्तेः । ३ वानराणाम् । ४ 'कोशस्तु पेशसाम्' इति पाठः । ५ छलेनाक्षप्रक्षेपः । ६ सत्त्ववतां सात्त्विकानाम् ।

एतदेव संक्षिप्याह—मयेति । जीवेश्वररूपो द्विविधो यो भावो यश्च गुणिगुणरूपो यश्च क्षेत्रज्ञक्षेत्ररूपः[1] स सर्वोऽपि मया विना मद्व्यतिरेकेण नास्ति, अहमेव[2] सर्वमित्यर्थः ॥ ३८ ॥ ननु सामान्यतः किमेवं संक्षिप्य कथयसि पूर्ववन्निर्धारणसंबन्धाभ्यां विशेषतः सर्वाः कथयेति चेत्तत्राह—संख्यानं पृथिव्यादिपरमाणूनां कालेन महता तदपि मयैव क्रियते कृत्वा च वक्तुं शक्यते, तथा मे विभूतीनां संख्यानं कर्तुं न शक्यते । कुत इत्यत आह—सृजतोऽण्डानीति । यदा मया सृज्यमानानां ब्रह्माण्डानामेव तावत्संख्या नास्ति तदा कुतस्तद्गतानां विभूतीनां संख्येत्यर्थः ॥ ३९ ॥ तथापि विशेषत एव सर्वा अपि संक्षेपतः कथयामीत्याह—तेजः प्रभावः । श्रीः संपत् । सौभगं मनोनयनाह्लादकत्वम् । भगो भाग्यम् । वीर्यं बलम् । अंशको विभूतिः ॥ ४० ॥ उपसंहरति—एता इति । एते च विभूतिभेदा मयि चित्तावताराय[3] कल्पिताः, अतो नात्रातीवाभिनिवेशः कर्तव्य इत्याह—मनोविकारा एव न तु परमार्थाः । यथा किंचित् खपुष्पादि वाङ्मात्रेणाभिधीयते

मयेश्वरेण जीवेन गुणेन गुणिना विना ॥ सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ॥३८॥ संख्यानं परमाणूनां कालेन क्रियते मया ॥ न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ ३९ ॥ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥४०॥ एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ॥ मनोविकारा एवैते यथा वाचाभिधीयते ॥ ४१ ॥ वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥४२॥ यो वै वाङ्मनसी सम्यगसंयच्छन्धिया यतिः ॥ तस्य व्रतं तपो दानं स्रवत्यामघटाम्बुवत् ॥ ४३ ॥ तस्मान्मनोवचःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे षोडशोऽध्यायः ॥ १६ ॥

॥ उद्धव उवाच ॥ यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १ ॥ ॥

तत्तुल्याः ॥ ४१ ॥ तस्माद्वागादीन्नियच्छ । आत्मानं बुद्धिमात्मना सत्त्वसंपन्नया तयैव नियच्छ । अध्वने संसारमार्गाय ॥ ४२ ॥ असंयमने दोषमाह—य इति । असंयच्छन्नसंयच्छति ॥४३॥ परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां षोडशोऽध्यायः ॥ १६ ॥ ॥ ततः सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे ॥ हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः ॥ १ ॥ 'कर्माहं विद्धि सात्त्वताम्' इत्यत्र भक्त्या कृतं कर्म मोक्षसाधनं मद्विभूतिरित्युक्तम्, भक्तिसाधनत्वं च कर्मणां—'मयोदितेष्ववहितः स्वधर्मेषु' इत्यादिना तत्र तत्रोक्तम्, न च कर्मानुष्ठातॄणां नियमेन भक्तिर्दृश्यतेऽतः पृच्छति—यस्त्वयेति सप्तभिः । पूर्वं कल्पादौ त्वद्भक्तिलक्षणस्त्वत्प्रापकस्तत्साधनमित्यर्थः । वर्णाश्रमहीनानामपि द्विपदां नराणाम् ॥ १ ॥ ॥

---

१ क्षेत्रज्ञेति सर्वात्मशब्दार्थः । क्षेत्रेति सर्वशब्दार्थः । २ चक्रवर्ती तु—ईश्वरेण जीवेन च विना चेतनात्मको भावो न विद्यते गुणेन सत्त्वादिना गुणिना महदादिना च विना जडात्मको भावो न सर्वेषामात्मना व्यष्टिसमष्ट्युपहितेन जीवेन सर्वेण व्यष्टिसमष्टिरूपोपाधिना च विना चिज्जडात्मको भावो नास्ति । स सर्वोऽपि मया विना नास्तीत्यहमेव सर्वमित्यर्थः इति व्याचख्यौ । ३ चित्तावताराय यथाकथंचिच्चित्तस्य सलग्नीकरणाय । ४ 'असयच्छेत्' इति पाठः । ५ 'ज्ञानम्' इति पाठः । ६ अहमेव मनोवचआदीनां परं श्रेष्ठमयनमाश्रयो यस्य तथाभूतः सन् । ७ तस्मान्मनोविकारत्वात् वागादीन्नियच्छेति बहिर्दृष्टिवारणम् । ८ बुद्धिं राजसीं तामसीं च । ९ 'तज्ज्ञापक' इति पाठः ।

यथा येन प्रकारेणानुष्ठीयमानेन स्वधर्मेण ॥ २ ॥ ननु संप्रदायादेव ज्ञास्यते किं पुनर्वर्णनेन तत्राह—पुरेति । परमकं परमश्चासौ कं सुखस्वरूपश्च तम् । यत् यम् । हंसरूपेण धर्मोऽप्युक्त एव न तु योगमात्रम्, 'जानीतमागतं यज्ञं युष्मद्धर्मविवक्षया' इत्युक्तत्वात् ॥३॥ प्रागनुशासितोऽपि न भविता न भविष्यति ॥४॥ अत्र हेतुमाह—वक्तेति द्वाभ्याम् । ते त्वत्तोऽन्यः । कला वेदाद्याः ॥५॥६॥ तत्तस्मान्नोऽस्माकं मनुष्याणां मध्ये यस्य यथा विधीयते ॥७॥८॥ धर्म्यो धर्मादनपेतः । कुतः । नैःश्रेयसकरो भक्तिजनकः । अतो मे मत्तस्तं धर्मं निबोध ॥ ९ ॥ तत्रादौ मदुपासनालक्षण एव मुख्यो धर्म आसीत् । आचारलक्षणस्तु पश्चात्प्रवृत्तः । स चैवमनुष्ठितो भक्तिहेतुरिति वर्णयितुमाह—आदाविति । कल्पादौ यत्कृतयुगं तस्मिन् । ते च तदा मामुपासत एव केवलं नान्यत्कुर्वन्तीति वक्तुं

यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ॥ स्वधर्मेणारविन्दाक्ष तत्समाख्यातुमर्हसि ॥ २ ॥ पुरा किल महाबाहो धर्मं परमकं प्रभो ॥ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥ ३ ॥ स इदानीं सुमहता कालेनामित्रकर्शन ॥ न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥ वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ॥ सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥ कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ॥ त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥ तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ॥ यथा यस्य विधीयेत तथा वर्णय मे प्रभो ॥ ७ ॥ ॥ श्रीशुक उवाच ॥ इत्थं स्वभृत्यमुख्येन पृष्टः स भगवान्हरिः ॥ प्रीतः क्षेमाय मर्त्यानां धर्मान्नाह सनातनान् ॥ ८ ॥ ॥ श्रीभगवानुवाच ॥ धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ॥ वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥ आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ॥ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥ १० ॥ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ॥ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥ ११ ॥ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी ॥ विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः ॥ १२ ॥ विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १३ ॥ ॥ ॥

कृतयुगनामनिरुक्तिमाह—कृतकृत्या इति । जात्या जन्मनैव ॥ १० ॥ किंच विधायकाभावादपि तदानीं नान्यत्कर्मास्तीत्याह—वेद इति । धर्मश्च मनोविषयोऽहमेव वृषरूपधृक् चतुष्पात्र क्रियाविशेषो यज्ञादिः । अतस्तपोनिष्ठाः—'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इति वचनादेकाग्रतया हंसं शुद्धं मां ध्यायन्तीत्यर्थः ॥ ११ ॥ पश्चात्त्रेतायुगप्रवेशे मे वैराजरूपस्य प्राणान्निमित्तात् । हृदयात्सकाशात् । तस्यास्त्रय्याः सकाशात् हौत्राध्वर्यवौद्गात्रैस्त्रिवृत्त्रिरूपः 'यज्ञो वै विष्णुः' इति श्रुतेः ॥ १२ ॥ वर्णानामाश्रमाणां च धर्मान्वक्तुं तेषामुत्पत्तिमाह—विप्रेति द्वाभ्याम् । आत्माचारः स्वधर्म एव लक्षणं ज्ञापको येषां ते ॥ १३ ॥

१ ये वदन्ति ब्राह्मणा ये च कर्तारो ये च पालयन्ति नृपास्तेषां मध्ये त्वत्तोऽन्य इति पाठः क्वचित् । २ 'तन्ममाख्यातुमर्हसि' इति पाठः । तच्च धर्मम् । ३ 'भवान्' इति पाठः । ४ 'यमाह त्वयि भक्तेभ्यो ब्राह्मणेभ्यश्च माधव' इति पाठः । ५ 'प्रायोऽन्तर्भविता' इति पाठः । ६ अवित्रा रक्षकेण । ७ 'त्वमतः' इति पाठः ।

मम वैराजरूपस्य हृदो वक्षसोऽधस्तात् । ब्रह्मचर्यमिति नैष्ठिकाभिप्रायम्[1] ॥ १४ ॥ तेषामधिकारिविशेषेण स्वभावानाह—वर्णानामिति पञ्चभिः । जन्मस्थानानुसारिण्यः[2] । नीचैरित्यव्ययम्[3] । अतोऽयमर्थः—मन्दाभिर्जन्मभूमिभिर्मन्दाः । उत्तमाभिरुत्तमाश्चेति ॥ १५ ॥ तप आलोचनम् ॥ १६ ॥ तेजः प्रतापः ॥ १७ ॥ ॥ १८ ॥ एतैरेवाश्रमस्वभावा अपि ज्ञेयाः ॥ १९ ॥ तद्बाह्यानां[4] स्वभावानाह—अशौचमिति । शुष्कविग्रहो निर्मूलकलहः । तर्षस्तृष्णा ॥ २० ॥ तत्र तावत्सर्वसाधारणं धर्ममाह—अहिंसेति । वर्णग्रहणमुपलक्षणार्थम्[5] । वर्णधर्मान् गृहस्थप्रकरणे वक्ष्यति ॥ २१ ॥ प्रथमं तावदाश्रमेषु ब्रह्मचारिणो धर्मा वर्ण्यन्ते ।

गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ॥ वक्षःस्थानाद्वने वासो न्यासः शीर्षणि संस्थितः ॥ १४ ॥ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥ १५ ॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ॥ स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥ आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥ शुश्रूषणं द्विजगवां देवानां चाप्यमायया ॥ तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ॥ कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥ २० ॥ अहिंसा सत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥ द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः ॥ वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः[6] ॥ २२ ॥ मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ॥ जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान् दधत् ॥ २३ ॥ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ॥ न च्छिन्द्यान्नखरोमाणि[7] कक्षोपस्थगतान्यपि[8] ॥ २४ ॥ ॥ ॥

स च द्विविधः—उपकुर्वाणको नैष्ठिकश्च । तत्राद्यस्य धर्मानाह—द्वितीयमिति नवभिः । द्विजस्त्रैवर्णिकः । आनुपूर्व्याद्गर्भाधानादिसंस्कारक्रमेण द्वितीयमुपनयनाख्यं जन्म प्राप्याचार्येणाहूतो ब्रह्म वेदमधीयीत । चकारात्तदर्थं च विचारयेत् ॥ २२ ॥ किंच मेखलादीन्कुशांश्च दधत् । तत्राक्षशब्देनाक्षमाला । कथंभूतः । जटिलः अनभ्यङ्गादिना जातजटः । तथा अधौतदद्वासोऽरक्तपीठः, दन्ताश्च वासश्च दद्वासांसि न धौतानि तानि यस्य सः अधौतदद्वासाः, स चासावरक्तपीठश्च न तु कौतुकादिना रक्तं पीठमासनं यस्य सः ॥ २३ ॥ जपश्चोच्चारो मूत्रपुरीषोत्सर्गो जपोच्चारं तस्मिन्वाग्यतो मौनी भवेत् ॥ २४ ॥ ॥

१ नैष्ठिकाभिप्रायमिति विचारणीयम् । अत्र सिद्धान्तप्रदीपे—ब्रह्मचर्यं हृदः वक्षसः अधस्तात् उपकुर्वाणस्य गृहस्थावरत्व, नैष्ठिकस्य तु सर्वथा ग्राम्यसुखपरित्यागित्वेन सर्वश्रेष्ठत्वम् । अतो ब्रह्मचर्यस्य द्वैविध्यान्मध्यस्थाने तदुत्पत्तिर्युक्तैव । ब्रह्मचर्यस्य द्वैविध्यमग्रे २२ श्लोके प्रतिपादितम् । २ जन्मस्थानानि मुखादीनीति भावः । ३ नीचैः पादादिस्थानैर्नीचाः उत्तमैर्मुखादिस्थानैरुत्तमाः ताश्च ताश्चेति कर्मधारयः । वर्णानामाश्रमाणां च या जन्मभूमयस्तदनुसारिण्यो नृणां प्रकृतय आसन्नित्यन्वयः । ४ तद्बाह्याना वर्णाश्रमधर्मबहिष्कृतानाम् । ५ उपलक्षणार्थमाश्रमधर्मत्वज्ञापनार्थम् । ६ अत्र ह्रस्वत्वमार्षम् । ७ नखेति पृथक्पदं सुपा सुलोपश्चेति द्वितीयालोपः । ८ सौन्दर्यनिमित्तकेशदन्तवस्त्रनैर्मल्यासनवैचित्र्यशून्य इत्यर्थः ।

रेतो बुद्धिपूर्वं नावकिरेन्नोत्सृजेत् । ब्रह्मव्रतधरो गृहस्थः । स्वयमेव कथंचिदवकीर्णे अवगाह्य स्नात्वा यतासुः कृतप्राणायामस्त्रिपदीं गायत्रीं जपेत् ॥ २५ ॥ संध्ये च द्वे यतवाग्जपन्नुपासीत । मध्याह्ने संध्यानिमित्तं मौनं नास्तीति द्विवचनम् ॥ २६ ॥ २७ ॥ अन्यदपि यत्संप्राप्तं तच्च निवेदयेत् । तेनानुज्ञातं तु संयतः सन्नुपयुञ्जीतेत्यर्थः ॥ २८ ॥ यानशय्यासनस्थानैः । यान्तं पृष्ठतो यानेन । निद्रितमप्रमत्ततया समीपशयनेन । विश्रान्तं पादसंवाहनादिभिः समीपासनेन । आसीनं कृताञ्जलिः । नियोगप्रतीक्षया नातिदूरेऽवस्थानेनेत्यर्थः ॥ २९ ॥ एवंभूतं वृत्तं यस्य सः ॥ ३० ॥ एवमुपकुर्वाणकस्य धर्मानुक्त्वा नैष्ठिकस्य विशेषधर्मानाह—यदीति पङ्क्तिः । असौ ब्रह्मचारी यदि छन्दसां लोकं महर्लोकं ततो ब्रह्मलोकं चारोक्ष्यन्नारोढुमिच्छतीत्यर्थः । यद्वा, छन्दसां लोकमिति

रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ॥ अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २५ ॥ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् शुचिः ॥ समाहित उपासीत संध्ये च यतवाग्जपन् ॥ २६ ॥ आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥ २७ ॥ सायंप्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः ॥ २८ ॥ शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ॥ यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः ॥ २९ ॥ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः ॥ विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम् ॥ ३० ॥ यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥ अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥ स्त्रीणां निरीक्षणस्पर्शसंल्लापक्ष्वेलनादिकम् ॥ प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३३ ॥ शौचमाचमनं स्नानं संध्योपासनमार्जवम् ॥ तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३४ ॥ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥ ॥

ब्रह्मलोकविशेषणम्, 'यत्र मूर्तिधराः कलाः' इत्युक्तत्वात् । तर्हि बृहद्व्रतः सन् बृहन्नैष्ठिकं व्रतं यस्य सः । विन्यसेत्समर्पयेदधिकस्वाध्यायार्थमधीतनिष्क्रियार्थं च ॥ ३१ ॥ ब्रह्मवर्चो वेदाभ्यासजं तेजस्तद्वान् ॥ ३२ ॥ तस्यैव वनस्थयतिसाधारणधर्मानाह—स्त्रीणामिति । निरीक्षणं भावगर्भम् । क्ष्वेलनं परिहासः । एवमादिकं त्यजेत् । मिथुनीभूतानग्रतस्त्यजेत्, न पश्येदित्यर्थः ॥ ३३ ॥ तस्यैव सर्वाश्रमसाधारणं धर्ममाह—शौचमिति द्वाभ्याम् ॥ ३४ ॥ ३५ ॥ निष्कामनैष्ठिकस्य तु मोक्षं फलमाह—एवमिति । अमलो निष्कामश्चेद्दग्धः कर्माशयोऽन्तःकरणं यस्य तथाभूतः सन्मद्भक्तो भवति ॥ ३६ ॥ ॥ ॥



१ अवकीर्णे उत्सृष्टे सति । २ आज्ञाप्रतीक्षणेन । ३ फलितार्थकथनमेतत् । ४ आचार्यं मां मदीयं श्रेष्ठं विजानीयात् । ५ अपृथग्धीरन्तर्यामिरूपे भेदबुद्धिशून्यः । ६ 'सन्ध्योपास्तिर्मेमार्चनम्' इति पाठः । ७ निष्क्रियार्थमधीतस्य वेदस्यानृण्यरूपदक्षिणार्थम् ।

उपकुर्वाणस्य समावर्तनप्रकारमाह—अथेति । अनन्तरं द्वितीयाश्रममावेक्ष्यन्प्रवेष्टुमिच्छन् यथा यथावद्विचारितवेदार्थः स्नायात् । अभ्यङ्गादिकं कृत्वा समावर्तेतेत्यर्थः ॥३७॥ तस्याधिकारानुरूपमाश्रमविकल्पसमुच्चयावाह—गृहमिति । सकामश्चेद्गृहमन्तःकरणशुद्ध्यादिकामश्चेद्वनं प्रविशेत् । शुद्धान्तःकरणः स च द्विजोत्तमो ब्राह्मणश्चेत्प्रव्रजेदित्यर्थः । द्विजोत्तम इत्युक्तेः क्षत्रियवैश्ययोर्न प्रव्रज्याधिकार इति सूचयति । यद्वा आश्रमादाश्रमान्तरं गच्छेत् । अन्यथा अनाश्रमी प्रतिलोमं च नाचरेदित्यर्थः । अमत्पर इति वा छेदः । स्वभक्तस्याश्रमनियमाभावस्य वक्ष्यमाणत्वात् ॥ ३८ ॥ विवाहनियमपूर्वकं वर्णधर्मैः सह गृहस्थधर्मानाह—गृहार्थीति । सदृशीं सवर्णाम् । अजुगुप्सितां कुलतो लक्षणतश्चानिन्दिताम् । कामतस्तु यामन्यामुद्वहेत्तां सवर्णामनु तस्या अनन्तरम् । तत्रापि वर्णक्रमेणोद्वहेदित्यर्थः । 'तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥ ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ॥' इति स्मृतेः ॥ ३९ ॥ इज्यादयस्त्रैवर्णिकानामावश्यका धर्माः । प्रति-

अथानन्तरमावेक्ष्यन्यथाजिज्ञासितागमः ॥ गुरवे दक्षिणां दत्त्वा स्नायाद्गुर्वनुमोदितः ॥ ३७ ॥ गृहं वनं वोपविशेत्प्रव्रजेद्वा द्विजोत्तमः ॥ आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥ गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥३९॥ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ॥ प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः ॥ ४१ ॥ ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥ शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः ॥ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शान्तिम् ॥ ४३ ॥ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् ॥ तानुद्धरिष्ये नचिरादापद्भ्यो नौरिवार्णवात् ॥ ४४ ॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥४५॥ एवंविधो नरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४६ ॥ ॥ ॥

ग्रहादित्रयं तु वृत्तिः । सा च ब्राह्मणस्यैव ॥ ४० ॥ तत्रापि मुख्यां मुख्यतमां चान्यां वृत्तिमाह—प्रतिग्रहमिति । तयोर्याजनाध्यापनयोरपि कार्पण्यादिदोषं पश्यन् शिलैः स्वामित्यक्तैः क्षेत्रपतितैः कणिशैः ॥ ४१ ॥ एवं च वृत्तिकार्श्यं ब्राह्मणेन सोढव्यमित्याह—ब्राह्मणस्येति ॥ ४२ ॥ उञ्छवृत्तिर्नाम विपण्यादिपतितकणोपादानं तां शिलवृत्त्यैकीकृत्य तया तुष्टचित्तस्य मोक्षं फलमाह—शिलोञ्छेति । महान्तमातिथ्यादिलक्षणम् । विरजं निष्कामम् । जुषाणः सेवमानः । गृह एव गृहस्थाश्रम एव । नातिप्रसक्तोऽतिशयेन रागमकुर्वन् । शान्तिमुपैति मोक्षाधिकारी भवति ॥ ४३ ॥ एवमधनस्य महत्फलमुक्त्वा सधनानामप्याह त्रिभिः । समुद्धरन्ति दारिद्र्यादुत्तारयन्ति । विप्रमित्युपलक्षणम् । मत्परायणं यं कमपि ॥ ४४ ॥ राज्ञस्त्वावश्यकमेतदित्याह—सर्वा इति ॥ ४५ ॥ ४६ ॥

१ 'अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः' इति स्मृतेः । २ प्रतिलोम गृह वन वेत्याद्युक्तव्युत्क्रमेण । ३ क्षुद्रकामाय तुच्छविषयसुखाय । ४ शान्तिं बुद्धेर्भगवन्निष्ठाम् । ५ विपणिः पण्यवीथिका । ६ सधनाना ब्राह्मणेतरेषाम् ।

सर्वेषामापद्वृत्तीराह—सीदन्निति त्रिभिः। पण्यैर्विक्रयार्हैर्न तु सुरालवणाद्यैः। तत्राप्यापदाक्रान्तश्चेत्खड्गेन क्षत्रियवृत्त्या वा। यद्यपि गौतमोऽनन्तरा पापीयसीं वृत्तिमातिष्ठेदिति स्मरन्खड्गधारणं पण्यविक्रयाच्छ्रेष्ठं मन्यते तथापि हिंसातो वणिग्वृत्तिरेव श्रेष्ठेति भगवतो मतम्। न तु श्ववृत्त्या नीचसेवया ॥ ४७ ॥ तत्राप्यापदि मृगयया। विप्ररूपेण वा अध्यापनादिना ॥ ४८ ॥ कारवः प्रतिलोमजविशेषा बुरुडादयस्तेषां वृत्तिं कटादिक्रियाम्। आपदुत्तीर्णस्तु नानुकल्पेन वर्तेतेत्याह—कृच्छ्रादिति ॥ ४९ ॥ तदेवं वृत्तिव्यवस्थामुक्त्वा पुनर्गृहस्थस्यावश्यकान्पञ्चयज्ञानाह—वेदाध्ययनं ब्रह्मयज्ञस्तेन ऋषीन्स्वधाकारेण पितॄन्स्वाहाकारेण देवान्बलिहरणेन भूतानि अन्नाद्यैरन्नोदकादिभिर्मनुष्यानिति ज्ञातव्यम्। यथोदयं विभवानुसारतः। तेष्वीश्वरदृष्टिं विधत्ते—मद्रूपाणीति ॥ ५० ॥ आवश्यकं धर्ममुक्त्वा शक्त्यनुसारं धर्ममाह—यदृच्छया उद्यमं विना। उपार्जितेन वा शुक्लेन स्ववृत्त्या लब्धेन शुद्धेन वा धनेन भृत्यान्पोष्यान्

सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत्॥ खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथंचन ॥४७॥ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि॥ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥ ४८ ॥ शूद्रवृत्तिं भजेद्वैश्यः शूद्रः कारुकटक्रियाम्॥ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ॥ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥५१॥ कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥ पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः॥ अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥५३॥ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन्॥ न गृहैरनुबध्येत निर्ममो निरहंकृतः॥ ५४ ॥ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान्॥ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत् ॥ ५५ ॥ यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ॥ स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५६ ॥ अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः ॥ अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः॥ ५७ ॥

॥ ५१ ॥ गृहस्थस्यापि निवृत्तिनिष्ठामेवाह—कुटुम्बेष्विति त्रिभिः। न प्रमाद्येदीश्वरनिष्ठायां प्रमत्तो न भवेत्। ननु दृष्टादृष्टार्थकर्मासक्तस्य कथमप्रमादो विचारेणेत्याह—विपश्चिदिति ॥ ५२ ॥ तत्रापि दृष्टेष्वासक्तेरधिकत्वात्तेषां नश्वरतां प्रपञ्चयति—पुत्रादीनामेकत्र सङ्गमः पान्थानां प्रपायां सङ्गम इव। तत्र हेतुः—अनुदेहं प्रतिदेहमेते वियन्ति नश्यन्ति निद्रानुवर्ती स्वप्नो निद्रापाये यथेति ॥ ५३ ॥ अतिथिवदुदासीनः ॥ ५४ ॥ अस्याप्याश्रमविकल्पमाह—कर्मभिरिति। गृहाश्रम एव तिष्ठेत्। यदि प्रजावांस्तर्हि प्रव्रजेद्वा ॥ ५५ ॥ गृहाद्यासक्ते दोषमाह—यस्त्विति त्रिभिः ॥ ५६ ॥ बन्धमेवाभिनयेन दर्शयति—अहो इति। बाला आत्मजा यस्याः सा, आत्मजाश्च मां विना अनाथाः सन्तः कथं जीविष्यन्तीति ॥ ५७ ॥ ॥ ॥

१ विक्रयार्हैः प्रियंग्वादिभिर्न तु निषिद्धैः। २ नानुकल्पेन न गौणेनापद्धर्मेण। ३ 'मा यजेताहन्न् क्रतून्' इति पाठः। ४ मुक्तोऽनासक्त इति चक्रवर्ती। गृहैर्गृहकर्मभिर्नानुबध्यते किंतु मुक्तो जीवन्मुक्त एव भवतीति बाल०। ५ दृष्टार्थं कर्म विवाहादि, अदृष्टार्थं च यज्ञादि। ६ अभिनयेन तद्वाक्यानुकरणेन।

गृहे य आशयो वासना तेन आ सर्वतः क्षिप्तं हृदयं यस्य सः । अन्धं तमोऽतितामसीं योनिम् ॥ ५८ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् ॥ अधिकारविशेषेण विशेषं चापि तद्गतम् ॥१॥ क्रमप्राप्तान्वनस्थधर्मानाह—वनमिति । आयुषस्तृतीयं भागं पञ्चसप्ततिवर्षपर्यन्तम् । ततः परं क्षीणेन्द्रियस्यापद्विरागेऽपि संन्यासाधिकारः स्यादिति भावः ॥ १ ॥ वसीत परिदधीत ॥ २ ॥ दतो दन्तान्न धावेन्न शोधयेत् । त्रिकालमप्सु मज्जेत मुसलवत्स्नायात् । स्थण्डिलेशयो भूमिशायी ॥ ३ ॥ तप्येत पञ्चाग्नीन्सूर्येण सह चतुर्दिशमग्नीन्निधायात्मानं तापयेदित्यर्थः । आसारपाट् आसारं धारासंपातं सहत इति तथा अभ्रावकाशं नाम व्रतं चरेत् । जले आकण्ठ-

एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्मृतोऽन्धं विशते तमः ॥ ५८ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीभगवानुवाच ॥ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ॥ वन एव वसेच्छान्तस्तृतीयं भागमायुषः ॥ १ ॥ कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ॥ वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥ २ ॥ केशरोमनखश्मश्रुमलानि बिभृयाद्दतः ॥ न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥ ग्रीष्मे तप्येत पञ्चाग्नीन्वर्षास्वासारषाड् जले ॥ आकण्ठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ॥ ४ ॥ अग्निपक्वं समश्नीयात्कालपक्वमथापि वा ॥ उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥ ५ ॥ स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणम् ॥ देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥ ६ ॥ वन्यैश्चरुपुरोडाशैर्निर्वपेत्कालचोदितान् ॥ न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥ ७ ॥ अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत् ॥ चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥ ८ ॥ एवं चीर्णेन तपसा मुनिर्धमनिसंततः ॥ मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ॥ कामायाल्पीयसे युञ्ज्याद्बालिशः कोऽपरस्ततः ॥ १० ॥

मग्नः उदकवासं नाम व्रतं चरेत् ॥ ४ ॥ उलूखलेन वाश्मना वा कुट्टयति कण्डयतीति तथा । दन्ता एवोलूखलं यस्य स तथा ॥ ५ ॥ संचिनुयादाहरेत् । अन्यदा कालान्तरे आहृतं कालान्तरे नाददीत । 'लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत्' इति नारदोक्तेः ॥ ६ ॥ कालचोदितानाग्रयणादीन् ॥ ७ ॥ किंच अग्निहोत्रमिति । मुनेश्च । नैगमैर्वेदवादिभिः ॥ ८ ॥ अस्य निष्कामस्य फलमाह—एवमिति । धमनीभिः शिराभिः संततो व्याप्तः । यावज्जीवं कृतेन तपसा शुष्कमांस इत्यर्थः । ऋषिलोकान्महर्लोकादिक्रमेण । अयं भावः—अन्तःकरणशुद्धिभक्तिद्वाराऽत्रैव तावन्मुच्येत । प्रतिबन्धकबाहुल्ये त्वनेन क्रमेण मुच्यत इति ॥ ९ ॥ तं सकामं निन्दति—यस्त्विति । निःश्रेयसं मोक्षफलम् । अल्पीयसे आविरिञ्च्यादत्यल्प एव तस्मै ॥ १० ॥ ॥ ॥

१ क्षिप्तं विक्षिप्तम् । २ 'बिभृयाद्व्रती' इति पाठः । ३ 'पञ्चाग्निः' इति पाठः । ४ 'उलूखलत्यश्म' इति पाठः । ५ पूर्ववत् गृहस्थाश्रमवत् ।

एवं यावज्जीवं वर्तमानस्य मोक्षः । तृतीयभागावसाने तु मन्दविरागेऽपि संन्यासाधिकारः । यदि तु ततोऽर्वागेव स्वधर्माशक्तो भवेत्तदापि सम्यगविरक्तो विरक्तो वा । तत्राविरक्तस्य कृत्यमाह—यदेति । जातो वेपथुः कम्पो देहे यस्य सः ॥११॥ विरक्तं प्रत्याह—यदेति ॥१२॥ तत्रादौ कृत्यमाह—इष्ट्वेति । यथोपदेशं श्राद्धाष्टकपूर्वकं प्राजापत्येष्ट्या मामिष्ट्वा । स्वे प्राणे आत्मनि ॥१३॥ संन्यासे विघ्ना भवन्ति तानविगणय्य संन्यसेदेवेत्याशयेनाह—विप्रस्येति । केनाभिप्रायेण कुर्वन्ति तमाह—अयमिति । परं परंब्रह्म ॥१४॥ एवं प्रव्रजितस्य धर्मानाह—बिभृयाचेदिति । परं कौपीनादन्यद्वासो यदि धारयितुमिच्छति तर्हि कौपीनमाच्छाद्यते यावता तावन्मात्रं धारयेदित्यर्थः । त्यक्तं प्रैषोच्चारात्पूर्वमेव । अतोऽन्यत्किंचिदपि न बिभृयात् । दण्डपात्राभ्यामित्यावश्यकजलपात्रादेरुपलक्षणम् ॥१५॥ परमहंसस्य विधिनिषेधागोचरत्वाद्बहूदकादिधर्मान् भगवानाह—मनःपूतं मनसा सम्यग् विचार्य यच्छुद्धं तदाचरेत् ॥१६॥ मौनं वाचो दण्डः, अनीहा

यदासौ नियमेऽकल्पो जरया जातवेपथुः ॥ आत्मन्यग्नीन्समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥११॥ यदा कर्मविपाकेषु[1] लोकेषु[2] निरयात्मसु[3] ॥ विरागो जायते सम्यक् न्यस्ताग्निः प्रव्रजेत्ततः[4] ॥ १२ ॥ इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥१३॥ विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ॥ विघ्नान्कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम् ॥ १४ ॥ बिभृयाचेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दण्डपात्राभ्यामन्यत्किंचिदनापदि ॥ १५ ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ १६ ॥ मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् ॥ न ह्येते यस्य संत्यङ्ग वेणुभिर्न भवेद्यतिः ॥ १७ ॥ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयंश्चरेत्[5] ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥ १८ ॥ बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ॥ विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम्[6] ॥ १९ ॥ एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ॥ आत्मक्रीड आत्मरत आत्मवान्समदर्शनः ॥ २० ॥ ॥

काम्यकर्मत्यागो देहस्य, प्राणायामश्चेतसः, एते अन्तस्त्रयो दण्डा यस्य न सन्ति । अङ्ग हे उद्धव । अङ्गे धृतैर्वेणुभिरिति वा ॥ १७॥ चतुर्ष्विति । ब्राह्मणेष्वेव वृत्तिभेदेन चतुर्विधेषु । पूर्वपूर्वासंभवे वा विगर्ह्यानभिशस्तपतितान् । असंक्लृप्तान् अत्रायं लाभो भविष्यतीति पूर्वमनुद्दिष्टान् ॥ १८ ॥ बहिर्ग्रामात् । पावितं प्रोक्षणादिभिः शोधितम् । विभज्य विष्णुब्रह्मार्कभूतेभ्यः । अशेषमित्यधिकाहरणं निरस्तम् । याचितमिति पाठे माधुकरेण याचितमन्नं चेत्तर्हि विभज्य भुञ्जीत नत्वयाचितादिभैक्ष्यचतुष्टयमित्यर्थः । 'माधूकरे तु नैवेद्यं भैक्ष्ये नान्येषु विद्यते ॥ नैवेद्यकं क्षिपेदप्सु त्रितयं भौतिकं बहिः ॥' इति स्मृतेः । यद्वा तदानीं केनापि याचितं चेन्मध्ये तस्मै किंचिद्विभज्य दत्त्वेत्यर्थः ॥ १९ ॥ किंच, एकश्चरेदिति । आत्मन्येव क्रीडा कौतुकं यस्य सः । आत्मन्येव च रतस्तुष्टः । आत्मवान् धीरः ॥२०॥ ॥४५॥

१ 'धर्मविपाकेषु' इति पाठः । २ लोकेषु स्वर्गादिषु । ३ निरयात्मसु दुःखबाहुल्यान्नरकतुल्येषु । ४ ततः आश्रमधर्मात् । ५ अभिशस्तपतितान् कलङ्कदूषितान् । ६ 'माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ॥ तात्कालिकोपपन्नं च भैक्ष्यं पञ्चविधं स्मृतम्' इति भिक्षापञ्चकम् ।

विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः । मयि भावेन विमल आशयो यस्य सः ॥२१॥ बन्धं मोक्षं च केन बन्धः केन वा मोक्ष इति । तावाह— बन्ध इति ॥ २२ ॥ २३ ॥ पुराणि हट्टादिमन्ति । ग्रामास्तद्रहिताः । व्रजा गोष्ठानि तान् । सार्थान् यात्रिकजनसमूहान् ॥ २४ ॥ यतः शिलवृत्त्या प्राप्तेन तदीयेनान्धसान्नेन[1] शुद्धसत्त्वः सन्निवृत्तमोहः संसिध्यति मुच्यते ॥ २५ ॥ ननु मिष्टान्नं विहाय कथं शिलान्ने प्रवृत्तिः स्यादत आह—नैतदिति । एतत् दृश्यमानं मिष्टान्नादि वस्तुतया न पश्येत् । यतो विनश्यति । अत इहामुत्र च लोके असक्तचित्तः संश्चिकीर्षितात्तदर्थकृत्यात्[2] विरमेत् ॥ २६ ॥ ननु तथापि यावद्विनाशं सुखहेतुत्वात्तच्चिन्तावतः कुतो विरागः स्यात्तत्राह—यदेतदिति । एतज्जगन्ममतास्पदं मनोवाक्प्राणैः संहतं सहितमहंकारास्पदं शरीरं च सर्वं तज्जन्यं सुखं चात्मनि मायामात्रमिति तर्केण स्वप्नादिदृष्टान्तेन त्यक्त्वा स्वस्थ आत्मनिष्ठः सन् तन्न स्मरेन्न चिन्तयेत् ॥ २७ ॥ एवं वह्वूदकादि-

विविक्तक्षेमशरणो मद्भावविमलाशयः ॥ आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥ अन्वीक्षेतात्मनो[3] बन्धं मोक्षं च ज्ञाननिष्ठया ॥ बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥ विरक्तः क्षुल्लकामेभ्यो[4] लब्ध्वात्मनि सुखं महत् ॥ २३ ॥ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ २४ ॥ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलान्धसा ॥ २५ ॥ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति ॥ असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥ २६ ॥ यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ॥ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ॥ सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥ बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥ २९ ॥ ॥ ॥

धर्मानुक्त्वा परमहंसधर्मानाह—ज्ञाननिष्ठ इति सार्धैर्दशभिः । बहिर्विरक्तो मुमुक्षुः सन् ज्ञाननिष्ठो वा मोक्षेऽप्यनपेक्षो मद्भक्तो वा सलिङ्गांस्त्रिदण्डादिसहितानाश्रमांस्तद्धर्मांस्त्यक्त्वा तदासक्तिं[5] त्यक्त्वा यथोचितं धर्मं चरेदित्यर्थः । न पुनरत्यन्तत्याग एव विवक्षितः । पुनर्धर्मविधानात्, अक्रियत्वस्योत्तराध्याये वक्ष्यमाणत्वाच्च । तर्हि पूर्वस्मात्[6] को विशेषस्तमाह—अविधिगोचरो विधिकिङ्करो न स्यादिति एतदेव स्फुटीकरिष्यति—'शौचमाचमनं स्नानं न तु चोदनया चरेत्' इत्यादिना ॥ २८ ॥ कथं चरेत्तदाह—बुधो विवेकवानपि बालकवन्मानावमानविवेकशून्यः । कुशलो निपुणोऽपि जडवत्फलानुसंधानाभावेन । विद्वान् पण्डितोऽप्युन्मत्तवल्लोकरञ्जनाभावेन नैगमो वेदार्थनिष्ठोऽपि गोचर्यामनियताचारमिव ॥ २९ ॥ ॥ ॥

१ तदीयेन वानप्रस्थसबन्धिना । २ तदर्थकृत्यात् मिष्टान्नाद्यर्थपरिश्रमात् । ३ अन्वीक्षेत विचारयेत् । ४ क्षुल्लकामेभ्यः क्षुद्रकामेभ्यः । ५ तदासक्तिं धर्मासक्तिमिति धर्मशब्दस्य तदासक्तौ लक्षणा । ६ पूर्वस्माद्बह्वूदकादेरिति भावः ।

वेदवादरतः कर्मकाण्डव्याख्यानादिनिष्ठः । पाखण्डी श्रुतिस्मृतिविरुद्धधर्मानुष्ठानवान् । हैतुकः केवलतर्कनिष्ठः । शुष्कवादे निष्प्रयोजनगोष्ठ्यां यो विवादस्तस्मिन् ॥ ३० ॥ अतिवादान् दुरुक्तानि ॥ ३१ ॥ आत्मदृष्ट्या तावद्वैरकारणं नास्तीत्युक्तमेक एवेति—देहदृष्ट्यापि नास्तीत्याह—भूतानि च देहा अपि कारणरूपेणैकात्मकानि ॥ ३२ ॥ दैवतन्त्रितं दैवाधीनं यतः ॥ ३३ ॥ अलं तर्हि भिक्षाप्रयत्नेनापि तत्राह—आहारमात्रार्थं समीहेतैव । यतः तस्य प्राणधारणं युक्तं सम्यक् । कथम् । तेन प्राणधारणेन तत्त्वं विचार्यते । किं तेनापि तदाह—तद्विज्ञायेति ॥ ३४ ॥ तर्हि किं मिष्टान्नादिकमग्राह्यमेव, केनैवमुक्तमित्याह—यदृच्छयेति ॥ ३५ ॥ यथाहमीश्वरो लीलया चरामि तथा ज्ञानी ज्ञाननिष्ठोऽनासक्तः कुर्यान्न तु विधिकिङ्करत्वेन । तस्य ज्ञाननिष्ठाविरोधादि-

वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ॥ शुष्कवादविवादे न कंचित्पक्षं समाश्रयेत् ॥ ३० ॥ नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित् ॥ ३१ ॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ यथेन्दुरुदपात्रेषु भूतान्येकात्मकानि च ॥ ३२ ॥ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ॥ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ ३३ ॥ आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३५ ॥ शौचमाचमनं स्नानं न तु चोदनया चरेत् ॥ अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः ॥ ३६ ॥ नहि तस्य विकल्पाख्या या च मद्वीक्षया हता ॥ आदेहान्तात्क्वचित्ख्यातिस्ततः संपद्यते मया ॥३७॥ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ३९ ॥ यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४० ॥ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४१ ॥

त्यर्थः ॥ ३६ ॥ कुतो विधिकिङ्करत्वाभावस्तस्य तत्राह—न हि तस्य विकल्पाख्या भेदप्रतीतिः । नन्वस्ति सा, सत्यं, या चासीत्सापि मद्वीक्षया ज्ञानेन हता । ननु न हता, पुनर्दृश्यमानत्वात्तत्राह—आदेहान्तात्क्वचित्कदाचिद्बाधितैव ख्यातिर्भवति ॥ ३७ ॥ तदेवं विरक्तस्य परोक्षज्ञानवतः संन्यासं तद्धर्मांश्चोक्त्वा केवलं वैराग्यवन्तं विविदिषुं प्रत्याह—दुःखोदर्केष्विति । न जिज्ञासितो मद्धर्मो मत्प्राप्तिसाधनं येन सः ॥ ३८ ॥ मामेव मद्बुद्ध्यैव गुरुं परिचरेत् । ततः परमेकश्चरेदित्यादि धर्मैर्वर्ततेति भावः ॥ ३९ ॥ अनधिकारिणः संन्यासं निन्दति द्वाभ्याम्—यस्त्विति । प्रचण्डोऽत्यासक्त इन्द्रियसारथिर्बुद्धिर्यस्य सः ॥ ४० ॥ सुरान् यष्टव्यान् देवानात्मानं च स्वात्मानमात्मस्थं मां च निह्नुते प्रतारयति । निह्नवफलमाह—अस्मादिति ॥ ४१ ॥

१ कथमिति प्रश्ने 'कथं प्रश्ने प्रकारार्थे' इति हैमः । सम्यक् कथमित्यर्थः । २ लीलया स्वेच्छया । ३ तस्य विधिकिङ्करत्वस्य । ४ काले काले अलाभकाले लाभकाले च । ५ बाधितैव स्वकार्यं कर्तुमसमर्थैव । ६ ख्यातिर्भेदप्रतीतिः । ७ न जिज्ञासितो न विचारितः । अत्र जिज्ञासापदस्य स्वाश्रयसमवायसंबन्धेन विचारे लक्षणा ।

चतुर्णां प्रधानधर्मानाह—भिक्षोरिति ॥ ४२ ॥ अन्यधर्मान्कांश्चिद्गृहस्थस्याप्यतिदिशति—ब्रह्मचर्यमिति । शौचं रागादिराहित्यं च । तस्य ब्रह्मचर्यप्रकारमाह—ऋतौ गन्तुरिति ॥ ४३ ॥ एवंभूतवर्णाश्रमधर्मफलमाह—इति मामिति । दृढः मद्भक्तिं विन्दते ॥ ४४ ॥ ततः किमत आह—भक्त्येति । महेश्वरत्वे हेतुः—सर्वोत्पत्त्यप्ययं सर्वस्योत्पत्त्यप्ययौ यस्मात् अत एव तत्कारणं मा मां ब्रह्मरूपं वैकुण्ठनिवासिनम् । यद्वा, ब्रह्मणो वेदस्य कारणं मामुपयाति सामीप्येन प्राप्नोति ॥४५॥ ततश्चासौ मुक्त एवेत्याह—इत्येवंभूतेन स्वधर्मेण निर्णिक्तं शुद्धं सत्त्वं यस्य सः । अत एव निर्ज्ञाता मम गतिरैश्वर्यं येन ॥ ४६ ॥ उक्तमर्थं संक्षिप्याह—य एष आचारलक्षणः पितृलोकप्राप्तिफलः स एव मद्भक्तियुतो मदर्पणेन कृतः ॥ ४७ ॥ प्रकरणार्थमुपसंहरति—एतच्च तेऽभिहितम् । यथा भक्तो भूत्वा मां परं संप्राप्नुयादिति ॥ ४८ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥

भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ॥ गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४२ ॥ ब्रह्मचर्यं तपः शौचं संतोषो भूतसौहृदम् ॥ गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४३ ॥ इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावो मद्भक्तिं विन्दतेऽचिरात् ॥ ४४ ॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥ ४५ ॥ इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नो नचिरात्समुपैति माम् ॥ ४६ ॥ वर्णाश्रमवतां धर्म एष आचारलक्षणः ॥ स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४७ ॥ एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम् ॥ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे अष्टादशोऽध्यायः ॥ १८ ॥ ॥ श्रीभगवानुवाच ॥

यो विद्याश्रुतसंपन्न आत्मवान्नानुमानिकः ॥ मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥ १ ॥ ॥

ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः ॥ अत्रोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥ १ ॥ तदेवं तर्कतो बाधितोऽपि देहादिप्रपञ्चो यावदपरोक्षानुभवेन दिङ्मोहादिरिव न लीयते तावज्ज्ञानाभ्यासस्ततो मुक्तिरित्युक्तम्—'आदेहान्तात्क्वचित्ख्यातिस्ततः संपद्यते मया' इत्यादिना । यस्य त्वपरोक्षानुभवेन प्रपञ्चो लीनप्रायस्तस्य न किंचित्कृत्यमस्तीत्याह—य इति । विद्या अनुभवस्तत्पर्यन्तेन श्रुतेन संपन्नोऽत एवात्मवान्प्राप्तात्मतत्त्वो नानुमानिकः केवलपरोक्षज्ञानवान्न भवति । अनकारपाठे प्राक्श्रुत्यनुकूलतर्कतो निर्णीतार्थ इत्यर्थः । स इदं द्वैतं तन्निवृत्तिसाधनं च मयि मायामात्रमिति ज्ञात्वा ज्ञानं च तत्साधनं संन्यसेत् । अयमेव विद्वत्संन्यासो नाम ॥ १ ॥ ॥ ॥ ॥ ॥

१ ऋतौ गन्तुरिति । ऋतुकाले भार्यागमने न ब्रह्मचर्यभङ्ग इति सूचितम् । २ गम्यते ज्ञायते अनया गतिर्भक्तिः । ३ 'कर्मणा पितृलोकः' इति श्रुत्येत्यर्थः । ४ ईक्षा तत्त्वविचारः । क्वचित्तु 'इज्या' इति पाठः । ५ उपनयनेन द्वितीयं जन्म प्राप्तस्य ब्रह्मचारिण इत्यर्थः । ६ निर्ज्ञातमद्गतिः सम्यगधीतमदुपदिष्टज्ञानशास्त्रः । ७ मोक्षफल इत्यर्थः । ८ क्वचिदयमेव श्लोको दृश्यते । क्वचित्तु 'ऊनविंशे विमुक्तस्य कृत्यं नास्तीति गद्यते । गुणदोषव्यवस्थार्थं यमादीनां च निर्णयः ॥' इत्ययमपि दृश्यते । तत्र षोडशाध्यायटीकोक्तानुक्रमणिकानुगुण ऊनविंशे इत्यादिरेवेति प्रतीमः । ९ आनुमानिकः शास्त्राविरुद्धतर्काभिमतः । १० मयि संन्यसेत् मदधीनमनुसंदध्यात् ।

अत्र हेतुमाह—ज्ञानिनस्त्विति । यस्मादहमेव तस्येष्टोऽपेक्षितः, स्वार्थः फलम्, हेतुस्तत्साधनं च संमतः स्वर्गोऽभ्युदयश्च । अपवर्गः संसारनिवृत्तिश्च । अत-
स्तस्य न प्राप्यं कृत्यं वा किंचिदस्तीत्यर्थः ॥२॥ अत्र विद्वदनुभवं प्रमाणयति—ज्ञानेति । यथोक्तं ज्ञानिनमभिनन्दति—ज्ञानीति । यतोऽसौ ज्ञानेन मां धारयति
॥३॥ तस्य ज्ञानं स्तौति—तप इति । अलमत्यर्थम् । ज्ञानस्य कलया लेशेन ॥ ४ ॥ ज्ञानेन सहितं तत्पर्यन्तं यथा भवति तथा ज्ञात्वा तत्संपन्नः सन् मामेव भज ।
अन्यत्सर्वं त्यजेत्यर्थः ॥५॥ तस्य प्रत्ययार्थं पूर्वेषां वृत्तमाह—ज्ञानेति । मामेव संसिद्धिं प्राप्ताः ॥ ६ ॥ तदेव ज्ञानं संक्षेपत उपदिशति—त्वयीति । त्रिविध आध्या-
त्मिकादिर्विकारो देहादिः स माया न तु परमार्थः । यद्यस्मादन्तरा मध्य एवापतति । रज्जौ सर्पमालादिवत् । नाद्यपवर्गयोर्न त्वादावन्ते चास्ति । अतो यद्यदा अस्य
विकारस्यामी जन्मादयः स्युस्तदा तस्य तवाधिष्ठानभूतस्य किं । न किंचिदित्यर्थः । ननु तस्यापि वस्तुतो न सन्ति, तस्यासत्त्वादित्याह—आद्यन्तयोरिति । असतः

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ॥ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥ ज्ञानविज्ञानसंसिद्धाः
पदं श्रेष्ठं विदुर्मम ॥ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥ तपस्तीर्थं जपो दानं पवित्राणीतराणि
च ॥ नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ ४ ॥ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥ ज्ञानविज्ञा-
नसंपन्नो भज मां भक्तिभावतः ॥ ५ ॥ ज्ञानविज्ञानयज्ञेन मामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिं मां वै संसिद्धिं मुन-
योऽगमन् ॥ ६ ॥ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽस्य यदमी
तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥ ॥ उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्य-
विज्ञानयुतं पुराणम् ॥ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ॥ ८ ॥ तापत्रयेणाभिहतस्य
घोरे संतप्यमानस्य भवाध्वनीश ॥ पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् ॥ ९ ॥ दष्टं जनं
संपतितं बिलेऽस्मिन्कालाहिना क्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयापवर्ग्यैर्वचोभिरासिञ्च महानुभाव ॥ १० ॥ ॥

सर्पादेराद्यन्तयोर्यदस्ति रज्ज्वादि तदेव मध्येऽपि न तु सर्पादि, तद्वदयं विकारो नास्तीत्यर्थः । यद्वा, आद्यन्तयोर्यदस्ति तन्मध्येऽप्यस्त्येव । न तस्य जन्मादयः सन्त्य-
तस्त्वं निर्विकारं ब्रह्मेति ॥७॥ ज्ञानादेर्विशेषं जिज्ञासुः पृच्छति—ज्ञानमिति । विशुद्धमेतज्ज्ञानं विपुलं निश्चितं यथा भवति तथा कथयेति । महद्भिर्ब्रह्मादिभि-
र्विमृग्यम् ॥ ८ ॥ महद्विमृग्यत्वमभिनयेनाह—तापत्रयेणेति । तापत्रयेणाभितो हतस्य । अतः संतप्यमानस्य । अङ्घ्रिद्वन्द्वमेवातपत्रं तस्मात् । न केवलमात- ॥४७॥
पात्रातुः किंत्वमृतमप्यभितो वर्षति यत्तस्मात् ॥ ९ ॥ अतिकृपामुत्पादयन्नाह—दष्टमिति । अस्मिन्बिले संसारकूपे पतितं तत्र च कालाहिना दष्टम्, एवमपि ॥
क्षुद्रसुखेष्वेव उरुस्तर्षस्तृष्णा यस्य तम् । दह्यमानः कथं समुद्धरणीय इति चेत्तत्राह—आपवर्ग्यैरपवर्गबोधकैर्वागमृतैरासिञ्चेति ॥ १० ॥

१ सर्वं मोक्षपर्यन्तम् । २ देहेन्द्रियदेवतारूपः । ३ तस्यापि विकारस्यापि । ४ श्रेष्ठं पदं मत्स्वरूपम् । मम पदं चरणारविन्दमेव श्रेष्ठं विदुः जानन्ति न तु अज्ञातत्त्वमिति चक्र० ।
५ अभिनयेनोदाहरणानुकरणेन । ६ आध्यात्मिकादिना । ७ अपवर्गबोधकैः भक्तियोगतात्पर्यकैः ।

तद्विश्वासार्थं विद्वत्सभायां निर्णीतमहं वक्ष्यामीत्याशयेनाह—इत्थमिति ॥ ११ ॥ १२ ॥ ज्ञानादिभिरुपबृंहितान् । तत्सहितानित्यर्थः ॥ १३ ॥ तत्र ज्ञानं कथयति—नवेति । प्रकृतिपुरुषमहदहंकारपञ्चतन्मात्राण्येकादशेन्द्रियाणि पञ्चमहाभूतानि त्रयो गुणाः एतान्भावानष्टाविंशतितत्त्वानि भूतेषु ब्रह्मादिस्थावरान्तेषु कार्येष्वनुगतानि[1] येन ज्ञानेनेक्षेत । अथ एष्वपि भावेष्वेकं परमात्मतत्त्वमनुगतं येनेक्षेत । कार्यंकारणात्मकं जगत्पश्यन् परमकारणात्मकमेवैतन्न तु ततः पृथगिति येन पश्येत्तज्ज्ञानमित्यर्थः ॥ १४ ॥ विज्ञानमाह—एतदेवेति श्लोकार्धेन । यद्यदा येनैकेनानुगतानेकात्मकान्[2] भावान् पूर्वमैक्षत तांस्तथा पूर्ववन्नेक्षेत । किंतु तदेकं परमकारणं ब्रह्मैव । तदा एतदेव विज्ञानमुच्यते । एतदुक्तं भवति—परोक्षज्ञानेनापरोक्षभ्रमस्य दिङ्मोहादिष्विव निवृत्त्यभावात्तदात्मकं जगत्पश्यन्नप्यात्मनः पृथक् सदिति मन्यते, अपरोक्षज्ञाने तु बाधितमेव दग्धपटवज्जीवन्मुक्तः संस्कारशेषं पश्यति, ततः परं न पश्यति चातः परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यामुच्येते इति । एकेन सर्वकार्याणामनुगतिं कार्याणां कारणात् पृथगसत्त्वं चोपपादयति सार्धेन । तत्र यदि न कदाचिद-

॥ श्रीभगवानुवाच ॥ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम् ॥ अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ॥ ११ ॥ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥ श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत ॥ १२ ॥ तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥ नवैकादश पञ्च त्रीन्भावान्भूतेषु येन वै ॥ ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १४ ॥ एतदेव हि विज्ञानं न तथैकेन येन यत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम् ॥ १५ ॥ आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते ॥ १७ ॥

नीदृशं जगदित्यादिमतेनैतेषां भावानामुत्पत्त्यादयो न स्युस्तर्हि कारणस्यैकस्याभावादेकात्मकता मिथ्यात्वं च न स्यादतस्तेषामुत्पत्त्यादीन्साधयति—स्थितीति । त्रिगुणात्मनां सावयवानामित्यर्थः । विमता[3] भावा उत्पत्त्यादिमन्तः, सावयवत्वात्, घटादिवदिति पश्येत् ॥ १५ ॥ तत आदावुत्पत्तौ अन्ते परिणामान्तरापत्तौ च कारणत्वेन मध्ये चाश्रयत्वेन सृज्यात्सृज्यं कार्यात्कार्यान्तरं प्रति यदन्वियादनुगच्छेत्तत्प्रतिसंक्रामे तेषां प्रलये च यदवशिष्यते तदेव सदिति पश्येदित्यर्थः ॥ १६ ॥ वैराग्यमाह—श्रुतिरिति द्वाभ्याम् । श्रुतिः—'नेह नानास्ति किंचन' इत्यादिः । प्रत्यक्षम्—पटादिकार्यं तन्त्वादिव्यतिरेकेण न दृश्यते[4] । ऐतिह्यम्—महाजनप्रसिद्धिः । अनुमानम्—विमतं[5] मिथ्या, दृश्यत्वात्, शुक्तिरजतादिवदित्यादि । एवं प्रमाणचतुष्टयम् । एतेष्वनवस्थानादेतैर्बाधितत्वात्[6] । स एवं सर्वानुगतं सत्यमात्मतत्त्वं पश्यन्विकल्पस्य च मिथ्यात्वात्ततो विरज्यते विरक्तो भवतीत्यर्थः ॥ १७ ॥ ॥ ॥

१ अनुगतानि कारणतया व्याप्तानि । २ येनैकेन परमकारणेनानुगतान्व्याप्तान् । ३ विमताभावास्तत्त्वानि इति पक्षः । उत्पत्त्यादिमन्त इति साध्यं, सावयवत्वादिति हेतुः, यत्सावयवं तदुत्पत्त्यादिमत् यथा घटादिः इत्यन्वयव्याप्तिः । ४ तथा चैतन्यव्यतिरेकेण न किंचिद्दृश्यत इति । ५ अत्र विश्वं पक्षीकृत्य मिथ्यात्वं साध्यते—दृश्यत्वं हेतुः । यद्दृश्यं तन्मिथ्या यथा शुक्तिरजतादीत्यन्वयव्याप्तिः । यन्मिथ्या न भवति तन्न दृश्यं, यथात्मेति व्यतिरेकव्याप्तिः । ६ एतैः श्रुत्यादिप्रमाणैः ।

ननु वेदोक्तस्वर्गादिसुखाशया न विरज्येतेत्याह—कर्मणामिति । आविरिञ्चाद्ब्रह्मलोकपर्यन्तमदृष्टमपि सुखममङ्गलं दुःखरूपं नश्वरं च पश्येत् ॥ १८ ॥ भक्तियोगं सकारणमाह—भक्तियोगः पूर्वमुक्त एव तथापि तस्मिन्प्रीतिं प्राप्नुवते तुभ्यं पुनश्च कथयिष्यामि ॥१९॥ श्रद्धा श्रवणादरः । शश्वदिति सर्वत्रानुषज्यते । मदनुकीर्तनं श्रवणानन्तरं मत्कथाव्याख्यानमित्यर्थः ॥२०॥२१॥ अङ्गचेष्टा लौकिकी क्रिया । वचसा लौकिकेनापि मद्गुणानामीरणं कथनम् ॥२२॥ मदर्थे मद्भजनार्थम् । तद्विरोधिनोऽर्थस्य परित्यागः । भोगस्य तत्साधनस्य चन्दनादेः । सुखस्य पुत्रोपलालनादेः । इष्टादि वैदिकं यत्कर्म तदपि मदर्थं कृतं भक्तेः कारणमित्यर्थः ॥ २३ ॥ भक्तिः प्रेमलक्षणा संजायते । अस्य भक्तस्यान्यः कोऽर्थः साधनरूपः साध्यरूपो वाऽवशिष्यते । सर्वोऽपि स्वत एव भवतीत्यर्थः ॥ २४ ॥ किं बहुना, चित्तमेवान्तर्बहि-

कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८ ॥ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १९ ॥ श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ॥ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥२०॥ आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ॥ मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥ मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ॥ मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥ २२ ॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ॥ इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥ २३ ॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥ यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् ॥ धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २५ ॥ यदर्पितं तद्विकल्पे इन्द्रियैः परिधावति ॥ रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ॥ गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥ ॥ उद्धव उवाच ॥ यमः कतिविधः प्रोक्तो नियमो वारिकर्शन ॥ कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २८ ॥ ॥ ॥ ॥

र्निष्ठमर्थानर्थयोः कारणमित्याह—यदात्मनीति द्वाभ्याम् । यदा आत्मनि मयि ईश्वरे चित्तमर्पितं तदा पुमान् धर्मादीन्प्राप्नोत्येव ॥ २५ ॥ एतदेव व्यतिरेकेण द्रढयति—यद्यदा तच्चित्तं विकल्पे देहगृहादावर्पितं सत् विषयेषु परिधावति तदाधिकं रजस्वलमसन्निष्ठं च भवति । ततश्च विपर्ययमधर्मादिकं विद्धि ॥ २६ ॥ स्वाभिप्रेतान्धर्मादीन्व्याचष्टे—धर्मो मद्भक्तिकृत् । यतः स एव प्रोक्तः प्रकृष्ट उक्तः शास्त्रेषु ॥ २७ ॥ धर्मादीनां महाजनप्रसिद्धानामन्यथा व्याख्यातत्वाद्यमादिष्वपि संख्यातः स्वरूपतो वा किंचिद्वैलक्षण्यं स्यादित्येवं संभावनया तद्विशेषं जिज्ञासुः पृच्छति—यम इति पञ्चभिः ॥ २८ ॥ ॥

१ परिणामित्वाद्विकारित्वात् । कार्यत्वादितियावत् । 'फलरूपत्वात्' इति पाठः । २ परिनिष्ठा आसक्तिः । ३ परिचर्या सेवोपकारणादिपरिष्क्रिया । ४ 'भुक्तं' इति पाठः । ५ 'धर्मो मनुष्याणां' इति पाठः । ६ व्यतिरेकेण ईश्वरार्पणाभावे विपर्ययकथनेन । ७ निषिद्धविषयासक्तम् । ८ शास्त्रेष्विति । 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मन्निमित्तं कृतं पापमपि धर्माय जायते ॥ १ ॥ मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः ॥ यत्करोषि यदश्नासि कुर्वाणा या कर्माणि' ॥ २ ॥ इत्यादिष्विति भावः । ९ अन्यथा वैष्णवशास्त्रानुसारेण ।

इष्टमभ्यर्हितं धनं च किम् ॥ २९ ॥ परेति विद्यादीनां विशेषणम् । श्रीमंण्डनम् ॥ ३० ॥ ३१ ॥ प्रश्नान्पृष्टानर्थान् । विपरीतानशमादीन् ॥ ३२ ॥ यम-नियमानाह—अहिंसेति त्रिभिः । अस्तेयं मनसापि परस्वाग्रहणम् । आस्तिक्यं धर्मे विश्वासः ॥ ३३ ॥ शौचं बाह्यमाभ्यन्तरं चेति द्वयम् । अतो द्वादश नियमाः । श्रद्धा धर्मादरः ॥ ३४ ॥ उभयोः श्लोकयोर्ये स्मृतास्ते यमा नियमाश्च । यद्वा, उभयोः प्रवृत्तनिवृत्तयोः । मुमुक्षोर्यमा मुख्याः सकामस्य नियमा मुख्याः स्मृता इत्यर्थः । अत्र हेतुमाह—हि यस्मादुपासिताः सेविताः सन्तः पुंसां प्रवृत्तानां निवृत्तानां च यथाकामं कामानुसारेण मोक्षमभ्युदयं च दुह-न्तीति ॥ ३५ ॥ मुमुक्षोरुपादेयान् शमादीन्हेयांश्च दुःखादीन्महाजनप्रसिद्धेभ्यो विलक्षणानाह—शम इत्यादिना यावत्समाप्ति । एतेनैव तद्विपरीता अश-मादयोऽप्युन्नेयाः । शमो मन्निष्ठता बुद्धेः, न तु शान्तिमात्रम् । दम इन्द्रियसंयमः, न चौरादिदमनम् । तितिक्षा विहितदुःखस्य संमर्पः सहनं, न भारादेः ।

किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते ॥ कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा ॥२९॥ पुंसः किंस्विद्बलं श्रीमन् भगो[2] लाभश्च केशव ॥ का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ॥ ३० ॥ कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ कः स्वर्गो नरकः कः स्वित्को बन्धुरुत किं गृहम् ॥३१॥ क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः॥ एतान्प्रश्नान्मम ब्रूहि विपरीतांश्च सत्पते ॥३२॥ ॥ श्रीभगवानुवाच ॥ अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ॥ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३३ ॥ शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् ॥ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३४ ॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः॥ पुंसामुपासितास्तात यथाकामं दुहन्ति हि॥३५॥ शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ॥ तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥३६॥ दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ॥ स्वभाव[3]विजयः शौर्यं सत्यं च समदर्शनम्[4] ॥ ३७ ॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ॥ कर्मस्वसंगमः[5] शौचं त्यागः संन्यास उच्यते ॥ ३८ ॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥ दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥ ३९ ॥ ॥

जिह्वोपस्थयोर्जयो वेगधारणं धृतिः, न त्वनुद्वेगमात्रम् ॥ ३६ ॥ दण्डो भूतद्रोहस्तस्य त्यागो दानं, न धनार्पणम् । कामत्यागो भोगोपेक्षा तपः, न कृच्छ्रादिः । स्वभावो वासना तस्य विजयः प्रतिबन्धः शौर्यं, न विक्रान्तिः । समं ब्रह्म तस्य दर्शनमालोचनं सत्यविषयत्वात्सत्यं, न यथार्थभाषणमात्रम् ॥ ३७ ॥ अन्यच्च, ऋतं सूनृता सत्या प्रिया च वाक् । एवं च ऋतसत्ययोः स्फुट एव विवेकः । क्रमप्राप्तं त्यागं व्याख्यातुमादौ ततोऽर्थभेदेन शौचं व्याचष्टे—तस्यापि मल-त्यागरूपत्वे त्यागाभेदप्रतीतेः । कर्मस्वसङ्गमोऽनासक्तिः शौचं, त्यागस्तु संन्यास इति तयोर्भेद इत्यर्थः ॥ ३८ ॥ नृणामिष्टं धनं धर्मः, न पश्वादिसाधारणम् । भगवत्तमः परमेश्वरोऽहमेव यज्ञः, मद्बुद्ध्या यज्ञोऽनुष्ठेयः, न क्रियाबुद्ध्येत्यर्थः । यज्ञार्थं दानं दक्षिणा, सा च ज्ञानोपदेशः, न हिरण्यादिदानम् । तेन हि यज्ञ-रूपो विष्णुः प्राप्यते । दुर्दमदमनं बलम्, तच्च मनोदमनहेतुत्वात्प्राणायाम इति ॥ ३९ ॥ ॥ ॥ ॥ ॥

१ तप आदिप्रयुक्तस्य । २ 'दया' इति पाठः । ३ मनुष्यस्वभावविजयः क्षुत्पिपासानभिभूतत्वम् । ४ समदर्शनं अपक्षपातेन दर्शनम् । ५ कर्मस्वसगमः कर्तृत्वाभिमानाभावः ।

लाभं व्याचिख्यासुः प्रथमं भगं ततो भेदेन व्याचष्टे । लोके तयोरभेदप्रसिद्धेः । भगो भाग्यं तच्च मे ऐश्वरो भावो मदीयमैश्वर्यादिषाड्गुण्यमित्यर्थः । उत्तमो लाभस्तु मद्भक्तिः, न पुत्रादिः । विद्या चात्मनि प्रतीतस्य भेदस्य बाधः, न ज्ञानमात्रम् । अकर्मसु जुगुप्सा हेयत्वदर्शनं ह्रीः, न लज्जामात्रम् ॥ ४० ॥ गुणा एव श्रीमण्डनं, न किरीटादि । दुःखसुखयोरत्ययोऽतिक्रमोऽननुसंधानं सुखं, न भोगः । विषयभोगापेक्षैव दुःखं, नाग्निदाहादि । बन्धान्मोक्षं द्वयं वा यो वेत्ति स पण्डितः, न विद्वन्मात्रम् ॥ ४१ ॥ अहम्बुद्धिरित्युपलक्षणम् । देहगेहादिष्वहम्ममेत्यभिमानवान्मूर्ख इत्यर्थः । मन्निगमो मां नितरां गमयति प्रापयति यो निवृत्तिमार्गः स तु पन्थाः सन्मार्गः, न कण्टकादिशून्यः । चित्तविक्षेपः प्रवृत्तिमार्गः स उत्पथः कुमार्गः, न तु चौराद्याकुलः । सत्त्वगुणस्योदय उद्रेकः स्वर्गः, नेन्द्रादिलोकः ॥ ४२ ॥ तमस उन्नाह उद्रेकः स नरकः, न तामिस्रादिः । गुरुरेव बन्धुः, न भ्रात्रादिः; स चाहमेव यथाहं जगद्गुरुः—'एक एव परो बन्धुर्विषमे समुपस्थिते ॥ गुरुः सकलधर्मात्मा यत्राकिंचनगो हरिः ॥' इति । ससाधनं भोगायतनं गृहं तच्च मानुष्यं मानुषरूपं शरीर-

भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ॥ विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥ ४० ॥ श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः ॥ दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४१ ॥ मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः ॥ उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥ नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ॥ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥ दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ॥ गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः ॥ ४४ ॥ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे एकोनविंशोऽध्यायः ॥१९॥ ॥ छ ॥ ॥ उद्धव उवाच ॥ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ॥ अवेक्षतेऽरविन्दाक्ष गुणं दोषं च कर्मणाम् ॥ १ ॥ ॥ ॥

मेव, न हर्म्यादि । गुणैः संपन्न आढ्य उच्यते, न धनी ॥ ४३ ॥ असंतुष्टो यः स दरिद्रः, न निःस्वः । योऽजितेन्द्रियः स कृपणः शोच्यः, न दीनः । विषयेष्वनासक्तधीर्यः स ईशः स्वतन्त्रः, न राजादिः । गुणसङ्गो गुणेषु सङ्गो यस्य स विपर्ययोऽनीशः । एतच्च शमादिविपर्ययोपलक्षणार्थम् ॥ ४४ ॥ उपसंहरति—एत इति । साधु मोक्षोपयोगितया । एतच्च सर्वं गुणदोषयोर्विवेकायोद्धवेन पृष्टमिति तयोः संक्षेपतो लक्षणमाह—किं बहुना, वर्णितेन गुणदोषयोर्लक्षणमेतावदेव । तदाह—गुणदोषयोर्दृशिर्दर्शनं दोषः, गुणस्तु तदुभयदर्शनविवर्जितः स्वभाव इति ॥ ४५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां एकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ॥ गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ १ ॥ 'गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः' इत्युक्तं तदाक्षिपति—विधिश्चेति पञ्चभिः । विधिश्च प्रतिषेधश्चेश्वरस्य तव निगम आज्ञारूपो वेदः । स च विधेयानां प्रतिषेध्यानां च कर्मणां गुणं दोषं च पुण्यपापफलरूपमवेक्षते ॥ १ ॥ ॥ ॥ ॥

उत्तमाधमभावेन तदधिकारिणां वर्णानामाश्रमाणां विकल्पं भेदं च गुणदोपरूपमवेक्षते । प्रतिलोमानुलोमजं च गुणं दोपं च तथैवावेक्षते । प्रतिलोमजा उत्तमवर्णासु स्त्रीपु हीनवर्णेभ्यः पुरुपेभ्यो जाताः सूतवैदेहकादयः । अनुलोमजास्तूत्तमवर्णेभ्यः पुरुपेभ्यो हीनवर्णासु स्त्रीपु जाता मूर्धावसिक्ताम्बष्ठादयः तेषां च—'असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः' इति गुणदोषौ । द्रव्यादीन्कर्मार्हतानर्हताभ्याम् । स्वर्गं नरकं च तत्फलतया गुणदोपरूपमेवावेक्षते । एतच्चोत्तराध्याये प्रपञ्चयिष्यते ॥ २ ॥ तथापि प्रस्तुते किमायातमत आह—गुणदोपेति । गुणदोपद्दशिर्दोप इति निराकृतत्वाद्गुणदोपभिदादृष्टिमन्तरेण तां विना निपेधविधिलक्षणं कर्मकाण्डगतं तव वचः कथम् । तच्च वचोन्तरेण नृणां निःश्रेयसं कथं स्यात्तत्रापि 'श्रोतव्यो मन्तव्यः' इति साधनविधेः 'नानुध्यायेद्बहून् शब्दान्वाचो विग्लापनं हि तत्' इत्यादिनिपेधस्य चावश्यकत्वादिति भावः । यद्वा, गुणदोपभिदादृष्टिरूपं निपेधविधिलक्षणं तव वचो विनेति सामानाधिकरण्यमेवास्तु । यद्वा, गुणदोपभिदादृष्टिमन्तरेण निपेधविधिलक्षणमपि वचः कथं नु तत्त्वमस्यादिवाक्यवन्निःश्रेयसपरं स्यात् । सर्वस्य वेदस्य तत्परत्वाङ्गीकारादित्यर्थः ॥ ३ ॥ ननु पितरो देवाश्च सर्वज्ञाः प्रत्यक्षतो दृष्ट्वा मनुष्येभ्यः कथयिष्यन्ति नेत्याह—पित्रादीनां सर्वेपां तव त्वद्वाक्यरूपो

**वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान्स्वर्गं नरकमेव च ॥ २ ॥ गुणदोषभिदादृष्टिमन्तरेण वचस्तव ॥ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥ पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥ गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ॥ निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥ ॥श्रीभगवानुवाच॥ योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ॥ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ ७ ॥ ॥ ॥ ॥**

वेद एव तु श्रेयः श्रेष्ठं चक्षुःप्रमापकम् । क्व । अनुपलब्धेऽर्थे मोक्षे स्वर्गादौ च । तथा साध्यसाधनयोरिदमस्य साध्यम्, इदमस्य साधनमित्यत्रापि । तदेवं गुणदोषदृष्ट्यभावे निःश्रेयसं न घटेत ॥ ४ ॥ किंच शास्त्रेणैव विहितां भेददृष्टिं तस्मिन्नेव विपये शास्त्रं कथं निवर्तयेदित्याह—ते निगमात्त्वदाज्ञारूपाद्वेदादेव, न हि स्वतः । यस्मादर्थप्राप्तत्वेन निवर्तेत । ह स्फुटम् । भ्रमो भवति तं निवर्तयेति शेपः ॥ ५ ॥ विपयाभेदेऽप्यधिकारिभेदेनाविरोधं वक्तुं प्रथमं योगत्रयमाह—योगा इति । योगा उपाया ब्रह्मकर्मदेवताकाण्डैः प्रोक्ताः । कर्म च निष्कामम् । श्रेयोविधित्सया मोक्षसाधनेच्छया । अन्य उपायो नास्तीति काम्यकर्मादिकं व्यावर्तयति । तथा चोत्तराध्याये स्फुटीकरिष्यति य एतानित्यादिना ॥ ६ ॥ तेष्वधिकारिभेदमाह—निर्विण्णानामिति द्वाभ्याम् । इह एपां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत्फलेपु विरक्तानामत एव तत्साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिद इत्युत्तरेणान्वयः । अनिर्विण्णचित्तानां दुःखबुद्धिशून्यानाम् । अतः कामिनां तत्फलेष्वविरक्तानामित्यर्थः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

१ गुणं दोपं चावेक्षते इत्यन्वयः । एतच्चाग्रिमाध्याये स्फुटीभविष्यति । तत्र वर्णादयोऽधिकारिणः, द्रव्यादय उपकरणानि, स्वर्गनरकौ फले इति विवेक इति सिद्धां० । २ 'कथं नु स्यात्' इति पाठः । ३ प्रत्यक्षतोऽवगन्तुमशक्येऽर्थे ।

यदृच्छया केनापि भाग्योदयेन । तत्र काम्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति । स च ज्ञानभक्तियोगाधिकारात्प्रागेव । तदधिकृतयोस्तु स्वल्पः । ताभ्यां सिद्धानां तु न किंचिदिति ॥ ८ ॥ सावधिं कर्मयोगमाह—तावदिति नवभिः । कर्माणि नित्यनैमित्तिकानि । यावता यावत् ॥ ९ ॥ कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह—स्वधर्मस्थ इति । अनाशीःकामोऽफलकामः । अन्यन्निषिद्धं काम्यं च । नरकयानं हि द्वेधैव विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । अतः स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति । अफलकामत्वान्न स्वर्गमपीत्यर्थः ॥ १० ॥ किंतु अस्मिँल्लोकेऽस्मिन्नेव देहे । अनघो निषिद्धत्यागी । अतः शुचिर्निवृत्तरागादिमलः । यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ॥ ११ ॥ अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति—स्वर्गिणोऽपीति । निरयिण इति दृष्टान्तत्वेनोक्तम् । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः ।

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥ स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव ॥ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥ अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ॥ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥११॥ स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥ न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः ॥ मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥ १७ ॥ ॥ ॥

तदुभयं स्वर्गिनारकिशरीरम् ॥ १२ ॥ अतो नरः स्वर्गतिं न काङ्क्षेत् । नारकीमिति दृष्टान्तः—यद्वा, स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः । अस्यातिश्रेष्ठत्वात्पुनरपि मनुष्यो भवेयमित्यपि न काङ्क्षेत् । यतो देहावेशाद्देहासक्त्या स्वार्थे प्रमाद्यत्यनवधानशून्यो भवति ॥ १३ ॥ अपि त्वेतद्देहसाधकमिति विद्वांस्तत्त्वार्थसिद्धिदमपि मर्त्यं ज्ञात्वा अप्रमत्तोऽनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् ॥ १४ ॥ अप्रमत्तो मुक्तसङ्गः । सुखं प्राप्नोतीत्यत्र दृष्टान्तः—छिद्यमानमिति । यमैर्यमवन्निर्दयैः पुरुषैः कृतं नीडं यस्मिंस्तम् । स्वकेतं स्वस्याश्रयम् । अलम्पटोऽनासक्तः ॥ १५ ॥ दार्ष्टान्तिकमाह—अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा । भयेन वेपथुः कम्पो यस्य सः ॥ १६ ॥ एवमप्रयतमानं प्रमत्तं निन्दति—नृदेहं प्लवं नावं प्राप्येत्यध्याहारः । यो भवाब्धिं न तरेत्स आत्महा । तत्र हेतवः—आद्यं सर्वफलानां मूलम्, एतदुपार्जितकर्मभिः सर्वप्राप्तेः । किंच सुदुर्लभमुद्यमकोटिभिरपि प्राप्तुमशक्यम् । तथापि तु सुलभम् ।



१ भूमिका अवस्था । २ यदृच्छया भक्तसङ्गतत्कृपालक्षणेन भाग्येन । ३ अनेन निष्कामकर्मानुष्ठाननिषिद्धवर्जनरूपेण । ४ 'नृदेहमासाद्य सुदुर्लभं यः' इति पाठः ।

यदृच्छया लब्धत्वात् । तं च सुकल्पं पटुतरम् । किंच, गुरुः संश्रितमात्र एव कर्णधारो नेता यस्य तम् । मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥ एवं तावदविरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किंचित्कृत्यं वर्जनीयं चाह साधैर्नवभिः—यदा त्वारम्भेषु कर्मसु निर्विण्णो दुःखदर्शनेनोद्विग्नस्तत्फलेषु विरक्तश्च तदा संयतेन्द्रियः सन्नात्मनोऽभ्यासेनात्मविषयवृत्तिसन्तत्या अचलं यथा भवति तथा मनो धारयेत् ॥१८॥ तत्र प्रथममेवात्यन्तधारणासंभवात्तत्स्वभावानुसारेण वशीकरणमाह—यर्हि आशु भ्राम्यत्परिश्रमदनवस्थितं भवति तदाऽनुरोधेन किंचिदपेक्षापूरणद्वारेण ॥ १९॥ ननु तर्हि यथापूर्वमेव स्यात्तत्राह—मनोगतिं तु न विसृजेन्नोपेक्षेत किंतु अप्रमत्तः सन् लक्षयेदित्यर्थः ॥२०॥ अनुरोधमार्गं सदृष्टान्तं स्तौति—एषोऽनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः । तत्साधनत्वादुपचारेण स्तुतिः । यथा अदान्तस्य दमनीयस्यार्वतोऽश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्वधारकः प्रथमं किंचित्तद्गतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति, न तूपेक्षते तद्वदित्यर्थः ॥ २१ ॥ एवमीषद्वशीकृतस्य मनसोऽत्यन्त-

**यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥ मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ॥ सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥ एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥२१॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥ ॥**

नैश्चल्योपायानाह—सांख्येनेति त्रिभिः । सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चान्वनुध्यायेत् । प्रसीदति निश्चलं भवति ॥ २२ ॥ ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति, किं भूयोभूय उपदेशेनेति चेत्तत्राह—निर्विण्णस्येति । ततश्चागमापायिषु तेष्ववधिभूतात्मदर्शनात्तदविवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनःपुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥ किंच, यमादिभिर्योगमार्गैरान्वीक्षिक्या पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा । वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति—एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैरतोऽन्यन्न कुर्यादित्यर्थः ॥ २४ ॥ ननु पापापत्तौ प्रायश्चित्तं कार्यमेव, तत्राह—यदीति । योगेन ज्ञानाभ्यासेनैव, एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम्, नान्यत्कृच्छ्रादि ॥ २५ ॥ ॥ ॥

---

१ मनःस्वभावानुकूल्येन । २ अनवस्थितं द्विगुणितं । कामवेगस्यात्यन्तवारणेन वेगो द्विगुणितो भवेदेवेति भावः । ३ अयमेव पाठो बहुषु प्राचीनपुस्तकेष्वङ्कितपुस्तकेषु च यद्यपि दृश्यते तथापि टीकानुरोधेन 'अदान्तस्यार्वतो यथा' इति पाठो युक्त इति प्रतीयते । दृष्टश्च प्राचीन एकस्मिन्पुस्तके । ४ तत्र पापसभावनायाम् । ५ 'ननूपायसहस्रेण' इत्याद्यवतरणमधिकं षट्सु पुस्तकेषु दृष्टम्, अत एवात्र च निवेशितम् । ६ मनः कर्तृभूतम् ।

यदृच्छया केनापि भाग्योदयेन । तत्र काम्यकर्मसु प्रवर्तमानस्य सर्वात्मना विधिप्रतिषेधाधिकार इत्युत्तराध्याये वक्ष्यति । निष्कामकर्मयोगाधिकारिणस्तु यथाशक्ति । स च ज्ञानभक्तियोगाधिकारात्प्रागेव । तदधिकृतयोस्तु स्वल्पः । ताभ्यां सिद्धानां तु न किंचिदिति ॥ ८ ॥ सावधिं कर्मयोगमाह—तावदिति नवभिः । कर्माणि नित्यनैमित्तिकानि । यावता यावत् ॥ ९ ॥ कर्मयोगिनो ज्ञानभक्तिभूमिकारोहप्रकारमाह—स्वधर्मस्थ इति । अनाशीःकामोऽफलकामः । अन्यन्निषिद्धं काम्यं च । नरकयानं हि द्वेधैव विहितातिक्रमाद्वा निषिद्धाचरणाद्वा । अतः स्वधर्मस्थत्वान्निषिद्धवर्जनाच्च नरकं न याति । अफलकामत्वान्न स्वर्गमपीत्यर्थः ॥ १० ॥ किंतु अस्मिँल्लोकेऽस्मिन्नेव देहे । अनघो निषिद्धत्यागी । अतः शुचिर्निवृत्तरागादिमलः । यदृच्छयेति केवलज्ञानादपि भक्तेर्दुर्लभतां द्योतयति ॥ ११ ॥ अनेन प्रकारेण ज्ञानभक्तिसाधनत्वान्नरदेहं स्तौति—स्वर्गिणोऽपीति । निरयिण इति दृष्टान्तत्वेनोक्तम् । ज्ञानभक्तिभ्यां ज्ञानभक्त्योः ।

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥ तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥ स्वधर्मस्थो यजन्यज्ञैरनाशीःकाम उद्धव ॥ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥ अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ॥ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥११॥ स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥ न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥ एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः ॥ मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥ १७ ॥ ॥ ॥

तदुभयं स्वर्गिनारकिशरीरम् ॥ १२ ॥ अतो नरः स्वर्गतिं न काङ्क्षेत् । नारकीमिति दृष्टान्तः—यद्वा, स्वर्गनरकसाधनकर्माणि न कुर्यादित्यर्थः । अस्यातिश्रेष्ठत्वात्पुनरपि मनुष्यो भवेयमित्यपि न काङ्क्षेत् । यतो देहावेशाद्देहासक्त्या स्वार्थे प्रमाद्यत्यनवधानशून्यो भवति ॥ १३ ॥ अपि त्वेतद्देहसाधकमिति विद्वांस्तत्त्वार्थसिद्धिदमपि मर्त्यं ज्ञात्वा अप्रमत्तोऽनलसः सन् मृत्योः पूर्वमेव मोक्षाय घटेत प्रयत्नं कुर्यात् ॥ १४ ॥ अप्रमत्तो मुक्तसङ्गः । सुखं प्राप्नोतीत्यत्र दृष्टान्तः—छिद्यमानमिति । यमैर्यमवन्निर्दयैः पुरुषैः कृतं नीडं यस्मिंस्तम् । स्वकेतं स्वस्याश्रयम् । अलम्पटोऽनासक्तः ॥ १५ ॥ दार्ष्टान्तिकमाह—अहोरात्रैश्छिद्यमानमायुर्बुद्ध्वा । भयेन वेपथुः कम्पो यस्य सः ॥ १६ ॥ एवमप्रयतमानं प्रमत्तं निन्दति—नृदेहं प्लवं नावं प्राप्येत्यध्याहारः । यो भवाब्धिं न तरेत्स आत्महा । तत्र हेतवः—आद्यं सर्वफलानां मूलम्, एतदुपार्जितकर्मभिः सर्वप्राप्तेः । किंच सुदुर्लभमुद्यमकोटिभिरपि प्राप्तुमशक्यम् । तथापि तु सुलभम् । 

१ भूमिका अवस्था । २ यदृच्छया भक्तसङ्गतत्कृपालक्षणेन भाग्येन । ३ अनेन निष्कामकर्मानुष्ठाननिषिद्धवर्जनरूपेण । ४ 'नृदेहमासाद्य सुदुर्लभं यः' इति पाठः ।

यदृच्छया लब्धत्वात् । तं च सुकल्पं पटुतरम् । किंच, गुरुः संश्रितमात्र एव कर्णधारो नेता यस्य तम् । मया च स्मृतमात्रेणानुकूलमारुतेन प्रेरितम् ॥ १७ ॥ एवं तावदविरक्तस्य वैराग्यद्वारा ज्ञानभक्तिसाधकं कर्मयोगमुक्त्वेदानीं सम्यग्विरक्तस्य ज्ञानयोगं तस्य च ज्ञानप्राप्तेः पूर्वं किंचित्कृत्यं वर्जनीयं चाह सार्धैर्नवभिः—यदा त्वारम्भेषु कर्मसु निर्विण्णो दुःखदर्शनेनोद्विग्नस्तत्फलेषु विरक्तश्च तदा संयतेन्द्रियः सन्नात्मनोऽभ्यासेनात्मविषयवृत्तिसन्तत्या अचलं यथा भवति तथा मनो धारयेत् ॥१८॥ तत्र प्रथममेवात्यन्तधारणासंभवात्तत्स्वभावानुसारेण वशीकरणमाह—यर्हि आशु भ्राम्यत्परिभ्रमदनवस्थितं भवति तदाऽनुरोधेन किंचिदपेक्षापूरणद्वारेण ॥ १९ ॥ ननु तर्हि यथापूर्वमेव स्यात्तत्राह—मनोगतिं तु न विसृजेन्नोपेक्षेत किंतु अप्रमत्तः सन् लक्षयेदित्यर्थः ॥२०॥ अनुरोधमार्गं सदृष्टान्तं स्तौति—एषोऽनुवृत्तिमार्गेण मनसः संग्रहः परमो योगः । तत्साधनत्वादुपचारेण स्तुतिः । यथा अदान्तस्य दमनीयस्यार्वतोऽश्वस्य हृदयज्ञत्वं स्वाभिप्रायेण गतिमन्विच्छन्नपेक्षमाणोऽश्वधारकः प्रथमं किंचित्तद्गतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति, न तूपेक्षते तद्वदित्यर्थः ॥ २१ ॥ एवमीषद्वशीकृतस्य मनसोऽत्यन्त-

यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥ मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ॥ सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥ एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥२१॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥ यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥ २४ ॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ २५ ॥ ॥

नैश्चल्योपायानाह—सांख्येनेति त्रिभिः । सांख्येन तत्त्वविवेकेन सर्वभावानां महदादिदेहान्तानामनुलोमतः प्रकृत्यादिक्रमेण भवं प्रतिलोमतः पृथिव्यादिक्रमेणाप्ययं चान्वनुध्यायेत् । प्रसीदति निश्चलं भवति ॥ २२ ॥ ननूपायसहस्रेणापि मनो विषयाकारतां न त्यजति, किं भूयोभूय उपदेशेनेति चेत्तत्राह—निर्विण्णस्येति । ततश्चागमापायिषु तेष्ववधिभूतात्मदर्शनात्तदविवेकापन्नसंसारे निर्विण्णस्यातो विरक्तस्य ततश्चोक्तवेदिनो गुरूपदिष्टार्थालोचकस्य ततो गुरूपदिष्टस्यैव चिन्तितस्य पुनःपुनरनुचिन्तया दौरात्म्यं देहाद्यभिमानं त्यजति ॥ २३ ॥ किंच, यमादिभिर्योगमार्गैरान्वीक्षिक्या पदार्थद्वयशोधनेन ममार्चनध्यानादिभिर्वा । वाशब्देनास्य पक्षस्य स्वातन्त्र्यं दर्शयति—एतैरुपायैर्योग्यं परमात्मानं मनः स्मरेन्नान्यैरतोऽन्यन्न कुर्यादित्यर्थः ॥ २४ ॥ ननु पापापत्तौ प्रायश्चित्तं कार्यमेव, तत्राह—यदीति । योगेन ज्ञानाभ्यासेनैव, एतच्च भक्तस्यापि नामकीर्तनाद्युपलक्षणार्थम्, नान्यत्कृच्छ्रादि ॥ २५ ॥ ॥ ॥

१ मनःस्वभावानुकूल्येन । २ अनवस्थितं द्विगुणितं । कामवेगस्यात्यन्तवारणेन वेगो द्विगुणितो भवेदेवेति भावः । ३ अयमेव पाठो बहुषु प्राचीनपुस्तकेष्वङ्कितपुस्तकेषु च यद्यपि दृश्यते तथापि टीकानुरोधेन 'अदान्तस्यार्वतो यथा' इति पाठो युक्त इति प्रतीयते । दृष्टश्च प्राचीन एकस्मिन्पुस्तके । ४ तत्र पापसंभावनायाम् । ५ 'ननूपायसहस्रेण' इत्याद्यवतरणमधिकं पद्सु पुस्तकेषु दृष्टम्, अत एवात्र च निवेशितम् । ६ मनः कर्तृभूतम् ।

ननु नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणो हिंसादिकं त्वशुद्धिहेतुत्वाद्दोषः, तत्र च तन्निवर्तकत्वात्कृच्छ्रादिप्रायश्चित्तं गुण इति विधिप्रतिषेधाभ्यामुक्त-त्वात्प्रायश्चित्तं विना योगेनैव कथं पापं दहेत्तत्राह—स्वे स्व इति सार्धेन । स एव गुणो नेतरः । तदुपपादयति—यस्माद्विधिप्रतिषेधाभ्यामनेन गुणदोष-विधानेन कर्मणां नियमः संकोचः कृतः । कुत इत्यत आह—जात्या उत्पत्त्यैवाशुद्धानाम् । स च प्राप्तानां सङ्गानां त्याजनेच्छया । अयं भावः—पुरुषस्य शुद्धिर्नाम न प्रवृत्तेरन्यास्ति, स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात्, न च सहसा सर्वतो निवृत्तिः कर्तुं शक्यते, अत इदं न कर्तव्यम्, इदमेव कर्तव्यम्, इत्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते, यथा च न प्रवृत्तिपरो वेदस्तथोत्तराध्याये वक्ष्यामः—'उत्पत्त्यैव हि कामेषु' इत्यादिना । अतो योगिनः स्वाभा-विकप्रवृत्त्यभावान्न प्रायश्चित्तादिविधिगोचरतेति ॥ २६ ॥ भक्त्यधिकारिणो भक्तियोगमाह—जातश्रद्ध इति नवभिः । मत्कथासु जातश्रद्धोऽत एवान्येषु कर्मसूद्विग्नो न तु तत्फलेषु विरक्तः । तदाह—वेदेति । यद्यपि वेद तथापि तत्परित्यागेऽनीश्वरोऽशक्तः ॥ २७ ॥ एवंभूतो यः श्रद्धालुर्भक्त्यैव सर्वं भविष्य-

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥ गुणदोषविधानेन
सङ्गानां त्याजनेच्छया ॥ २६ ॥ जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ॥ वेद दुःखात्मकान्कामान्परित्यागे-
ऽप्यनीश्वरः ॥ २७ ॥ ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन्
॥ २८ ॥ प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ॥ कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥ २९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३० ॥ तस्मान्म-
द्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥ यत्कर्मभिर्यत्तपसा
ज्ञानवैराग्यतश्च यत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥
स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ ३३ ॥ ॥ ॥ ॥

तीति दृढनिश्चयः संस्ततस्तदनन्तरं मां प्रीत्या भजेत । विषयांस्तु सेवमानोऽपि तेषु प्रीतिं न कुर्यादित्याह—गर्हयन्निति ॥ २८ ॥ कथं भजेत किं वा ततो भवति तदाह—प्रोक्तेनेति द्वाभ्याम् । 'श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम्' इत्यादिना तत्र तत्रोक्तेन मा मामसकृन्नित्यं भजतो हृदय्या हृद्गताः कामा नश्यन्ति ॥ २९ ॥ हृदयमेव ग्रन्थिरहंकारस्तत्पूर्वकाश्च सर्वे संशया असंभावनादयः । कर्माण्यनारब्धफलानि संसारहेतुभूतानि च ॥ ३० ॥ तदेवं व्यवस्थ-याधिकारत्रयमुक्तम् । तत्र च भक्तेरन्यनिरपेक्षत्वादन्यस्य च तत्सापेक्षत्वाद्भक्तियोग एव श्रेष्ठ इत्युपसंहरति—तस्मादिति त्रिभिः । मदात्मनो मय्यात्मा चित्तं यस्य तस्य । श्रेयः श्रेयःसाधनम् ॥ ३१ ॥ तत्र हेतुः—यत्कर्मभिरित्यादि । इतरैरपि तीर्थयात्राव्रतादिभिः । श्रेयःसाधनैर्यद्भाव्यं सत्त्वशुद्ध्यादि तत्सर्व-मञ्जसा अनायासेनैव स्वर्गमपवर्गं मद्धाम वैकुण्ठं लभत एव । वाञ्छा तु नास्तीत्युक्तम्, यदि वाञ्छतीति ॥ ३२ ॥ ३३ ॥ ॥ ॥



१ नित्यं सन्ध्योपासनादि, नैमित्तिकं जातेष्ट्यादि । २ तन्निवर्तकत्वाद्धिंसादिदोषनिवर्तकत्वात् । ३ अत्र नञ्द्वयमत्यन्तनिराकरणार्थम् । ४ आरब्धफलानीत्यर्थः । ५ तत्र ज्ञानवैराग्ययोः श्रेयःसाधनत्वाभावे ।

तत्र हेतुमाह—न किंचिदिति । धीरा धीमन्तो यतो मम एकान्तिनो मय्येव प्रीतियुक्ता अतो मया दत्तमपि न गृह्णन्ति । किं वक्तव्यं न वाञ्छन्तीत्यर्थः । अपुनर्भवमात्यन्तिकमपि कैवल्यम् ॥ ३४ ॥ तदुपपादयति—नैरपेक्ष्यमेव परमुत्कृष्टमनल्पकं महन्निःश्रेयसं फलं तत्साधनं च प्राहुः । मे भक्तिर्निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य पुंसो भवेत् । यद्वा, मे निरपेक्षस्य या भक्तिः सा निराशिषो भवेदित्यर्थः ॥ ३५ ॥ अनेन प्रकारेण सिद्धानां न गुणदोषा इति विरोधपरिहारमुपसंहरति—न मयीति । गुणदोषैर्विहितप्रतिपिद्धैरुद्भवो येषां ते गुणाः पुण्यपापादयः । साधूनां निरस्तरागादीनामतः समचित्तानामत एव बुद्धेः परमीश्वरं प्राप्तानाम् ॥३६॥ काम्यकर्मनिष्ठां निन्दिष्यन्नेतान्मुक्तिमार्गानुपसंहरति—एवमिति । मे पथो मत्प्राप्त्युपायान् येऽनुतिष्ठन्ति ते क्षेमं कालमायादिरहितं मम लोकं विन्दन्ति, यत्परमं ब्रह्म तच विदुः ॥३७॥ ॥ इति श्रीमद्भा०म०पु०एकादशस्कन्धे भा०दी०टीकायां विंशतितमोऽध्यायः ॥२०॥ जयति स्वपरानन्दः परानन्दनृकेसरी ॥ यत्कृपालवलेशेन श्रीधरः सत्कृतिः कृती ॥१॥ ईक्षन्तामिच्छया सन्तः क्षमन्तां मम साहसम् ॥ मया हि स्वीय-

न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम ॥ वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३४ ॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ॥ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥ न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ॥ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥ एवमेतान्मयादिष्टाननुतिष्ठन्ति मे पथः ॥ क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥३७॥ ॥ इति श्रीमद्भागवते म०पु० एकादशस्कन्धे भगवदुद्धवसंवादे विंशतितमोऽध्यायः ॥२०॥ ॥ श्रीभगवानुवाच ॥ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥

बोधाय कृतमेतन्न सर्वतः ॥ २ ॥ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ॥ कामिनां द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥ ३ ॥ तदेवं गुणदोषव्यवस्थार्थं योगत्रयमुक्तं, तत्र ज्ञानभक्तिसिद्धानां न किंचिद्गुणदोषौ, साधकानां तु प्रथमतो निवृत्तिकर्मनिष्ठानां यथाशक्ति नित्यनैमित्तिकं कर्म सत्त्वशोधकत्वाद्गुणः, तदकरणं निपिद्धकरणं च तन्मलीमसकरणत्वाद्दोषः, तन्निवर्तकत्वाच प्रायश्चित्तं गुणः, विशुद्धसत्त्वानां तु ज्ञाननिष्ठानां ज्ञानाभ्यास एव सिद्धिहेतुत्वाद्गुणः, भक्तिनिष्ठानां पुनः श्रवणकीर्तनादिभक्तिरेव गुणः, तद्विरुद्धं सर्वमुभयेषां दोष इत्युक्तम् । इदानीं ये तु न सिद्धा नापि साधकाः किंतु केवलं काम्यकर्मप्रधानास्तेषां सकलगुणदोषान्प्रपञ्चयिष्यन्नादौ तानतिबहिर्मुखान्निन्दति—य एतानिति । मत्पथो मदुक्तमार्गान् क्षुद्रांस्तुच्छांश्चलैरस्थिरैः प्राणैर्देहवायुभिरिन्द्रियैर्वा जुषन्तः सेवमाना भवन्ति ते संसरन्ति । निखिलगुणदोषभाक्त्वेन नानायोनीः प्राप्नुवन्तीत्यर्थः ॥ १ ॥ ननु तैरेव कर्मभिः केचिद्गुणदोषभाजः केचिन्नेति कुतो वैषम्यम्, न ह्यग्निना केचित्तप्यन्ते केचिन्नेति संभवति, तत्राह—स्वे स्व इति । अधिकारभेदेन कल्पितौ गुणदोषौ न वस्तुनिष्ठाविति भावः ॥ २ ॥ ॥

१ विहितप्रतिपिद्धैः संध्यावन्दनकलञ्जभक्षणादिभिः। २ स्वेषां परेषां चानन्दो यस्मात्स्वयं च निरतिशयानन्दरूपो यो नृसिंहः। श्लेषेण परमानन्दसंज्ञकगुरुणा महेश्वरस्याभेदोऽभिप्रेतः। ३ अधिकारभेदेन गुणदोषौ यथा—ऋतुगमने गृहस्थस्य विहितत्वाद्गुणत्वं, विरक्तस्य तु निषिद्धत्वाद्दोषत्वमिति दीपि० ।

तदाह—शुद्ध्यशुद्धी इति । विचिकित्सार्थं योग्यमयोग्यं वेति संदेहद्वारा स्वाभाविकप्रवृत्तिप्रतिबन्धार्थमित्यर्थः । तत्र शुद्ध्यशुद्धी योग्यत्वायोग्यत्वे । गुणदोषौ तन्निमित्तोपादेयत्वानुपादेयत्वे । शुभाशुभौ तन्निमित्तावर्थानर्थौ ॥ ३ ॥ तत्र शुद्ध्यशुद्धी धर्मार्थम् । शुद्धेन धर्मः, अशुद्धेनाधर्म इति । गुणदोषौ व्यवहारार्थम् । अशुद्धावपि राजादीनां व्यवहारदर्शनाद्धुपादेयं नान्यदिति । शुभाशुभौ यात्रार्थं दोषत्वेऽप्यापत्सु शरीरनिर्वाहमात्रोपादाने न पापमधिकोपादाने तु पापमिति मया मन्वादिरूपेण । धर्मरूपां धुरं भारम् । कर्मजडानामित्यर्थः ॥ ४ ॥ शुद्ध्यशुद्धी प्रपञ्चयिष्यन्वेदोक्तत्वेन तदभिनिवेशो मा भूदिति समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपञ्चयति—भूमीति त्रिभिः । भूतानां प्राणिनाम् । धारयन्तीति धातवः कारणानि । शारीराः शरीरारम्भकाः । देहतः साम्यमुक्तं जीवतोऽप्याह—आत्मसंयुता इति ॥ ५ ॥ धातुषु देहेषु । नामरूपाणि वर्णाश्रमादीनि । कल्पनायाः प्रयोजनमाह—एतेषां प्राणिनां स्वार्थसिद्धये प्रवृत्तिनियमद्वारा धर्मादिपुरुषार्थसिद्धये ॥६॥ न केवलं देहेष्वेव, अपि तु देशकालादिभावानामपि । आदिशब्देनानुपादेयानां फलनिमित्ताधिकारिणां ग्रहणम् ।

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ॥ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥ धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ॥ दर्शितोऽयं मयाचारो धर्ममुद्वहतां धुरम् ॥ ४ ॥ भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ॥ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥ वेदेन नामरूपाणि विषमाणि समेष्वपि ॥ धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥ देशकालादिभावानां वस्तूनां मम सत्तम ॥ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥७॥ अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणम् ॥ ८ ॥ कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा ॥ यतो निवर्तते कर्म स दोषोऽकर्मकः स्मृतः ॥ ९ ॥ ॥

वस्तूनामुपादेयानां व्रीह्यादीनामपि । मम मया । नियमार्थं संकोचार्थमित्यर्थः ॥ ७ ॥ एवं गुणदोषविषयं परिशोध्य तयोः शुद्ध्यशुद्धिमूलत्वाच्छुद्ध्यशुद्धी प्रपञ्चयति—अकृष्णसार इत्यष्टभिः । देशानां मध्ये कृष्णहरिणरहितोऽशुचिः । तत्राप्यब्रह्मण्यो ब्राह्मणभक्तिशून्योऽत्यन्तमशुचिः । कृष्णसारोऽपि कृष्णेन मृगेण सारः श्रेष्ठो यः सोऽप्यसौवीरकीकटः सुवीराः सत्पुरुषास्तद्वान्सौवीरः कीकटोऽपि शुचिः । तदुक्तम्—'स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते' इति । तद्वर्जितो यः कीकटोऽङ्गवङ्गकलिङ्गादिः । असंस्कृतः संमार्जनादिशून्यो म्लेच्छबहुलो वा । ईरिणमूषरम् । एकवद्भावः । तदशुचि । तदन्यः शुचिरित्यर्थादुक्तं भवति ॥८॥ कालस्य शुद्ध्यशुद्धी दर्शयति—कर्मण्य इति । द्रव्यतो द्रव्यसंपत्त्या स्वतो वा पूर्वाह्णादिर्यः कर्मण्यः कर्मार्हः स कालस्तस्मिन्कर्मणि गुणवान् । यतो यस्मिन्द्रव्यालाभेन वा राष्ट्रविप्लवादिना वा कर्म निवर्तते । यश्च सूतकादौ दशाहादिलक्षणोऽकर्मकः कर्मानर्हः स्मृतः स कालो दोषः, अशुद्ध इत्यर्थः ॥ ९ ॥

१ कर्मजडानामेवायं भारो न तु भक्तानामिति ज्ञेयम् । २ तदभिनिवेशः शुद्ध्यशुद्ध्यासक्तिः । ३ ब्राह्मणब्रह्मचर्यादिनामानि । द्विपदत्वादीनि रूपाणि । ४ प्रवृत्तिसंकोचक्रमेण । ५ फलनिमित्ताधिकारिणा कामिनां कीदृशां अनुपादेयानां वेदा ब्रह्मात्मविषया इति वक्ष्यमाणत्वाच्चित्तशुद्ध्यर्थमेव कर्माणि विहितानि न काम्यफलार्थम् । ६ परिशोध्य विविच्य । ७ द्रव्यसंपत्त्येति—'पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्' इति द्रव्यसंपदि नाडीच्छेदात्पूर्वः कालो दानकर्मार्हः ।

वस्तुशब्दोपात्तानां द्रव्याणां शुद्ध्यशुद्धी दर्शयति—द्रव्यस्येति चतुर्भिः। द्रव्येण तोयादिना शुद्धिः, मूत्रादिना त्वशुद्धिः। वचनेन शुद्धमशुद्धं वेति संदेहे शुद्ध-मित्येवंरूपेण ब्राह्मणवचनेन शुद्धिर्विपरीतेनाशुद्धिः। संस्कारेण प्रोक्षणादिना पुष्पादेः शुद्धिरवघ्राणादिना त्वशुद्धिः। कालेन दशाहादिना नवोदकादेः शुद्धिः 'काले मेघोदकं ग्राह्यं वर्ज्यं तु त्र्यहमेव हि॥ अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते॥' विपरीतेनाशुद्धिः पर्युषितान्नादेरशुद्धिः। अन्त्यजाद्युपहतानां तडा-गाद्युदकानां महत्त्वाल्पत्वाभ्यां शुद्ध्यशुद्धी॥ १०॥ शक्त्याऽशक्त्या सूर्योपरागादिसूतकान्नादेः शक्तान्प्रत्यशुद्धिः, अशक्तान्प्रति शुद्धिः। बुद्ध्या पुत्रजननादौ दशा-हाद्बहिर्ज्ञानेन शुद्धिरन्तर्ज्ञानेनाशुद्धिः। समृद्ध्या जीर्णमलवद्वस्त्रादेः समृद्धं प्रत्यशुद्धिर्दरिद्रं प्रति शुद्धिः। तत्रापि विशेषमाह—यदिति। एते च द्रव्यवचनादयो द्रव्याशुद्धिद्वारा आत्मने यदघं कुर्वन्ति तद्देशावस्थानुसारत एव यथा यथावत्कुर्वन्ति न सर्वतः। तथा हि—निर्भय एव देशे कुर्वन्ति, न तु चौराद्याकुले। तथा रोगादिव्यक्तिरिक्तयुवाद्यवस्थायामेव कुर्वन्ति, न बाल्यरोगाद्यवस्थायामिति। तथा च स्मृतिः—'देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्[2]॥ उपपत्ति[3]-मवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्॥' इति॥११॥ द्रव्यादिभिर्द्रव्यस्य शुद्धिरित्युक्तं तत्र वचनादिशुद्धिरेकरूपैव, द्रव्यतस्तु शुद्धिर्बहुरूपेति तां प्रपञ्चयति—

द्रव्य[4]स्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाथवा॥ १०॥ शक्त्याऽशक्त्या-थवा बुद्ध्या समृद्ध्या च यदात्मने॥ अघं कुर्वन्ति हि यथा देशावस्थानुसारतः॥ ११॥ धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम्॥ कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः॥१२॥ अमेध्यलिप्तं यद्येन गन्धं लेपं व्यपोहति॥ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते॥ १३॥ स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः॥ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः॥ १४॥ ॥ ॥ ॥ ॥

धान्येति[5]। दारु लौकिकं ग्रहचमसादि च। अस्थि गजदन्तादि। रसास्तैलघृतादयः। तैजसाः सुवर्णादयः। तेषां पार्थिवानां च रथ्याकर्दमघटेष्टकादीनां यथायथं कालादिभिः शुद्धिः। तत्रापि काकान्त्यजाद्युपघाततारतम्येन देशकालावस्थाद्यनुसारेणैव। एतैरन्यैश्च युतायुतैर्मिलितैः केवलैश्च। कालस्य पुनर्ग्र-हणं युतत्व[6]प्रदर्शनार्थम्॥ १२॥ अस्पृश्यस्पर्शे शुद्धिमुक्त्वा लेपविषयेऽप्याह—यत्पीठपात्रवस्त्रादि येन तक्षणक्षाराम्लोदकादिना गन्धं लेपं च व्यपोहति त्यजति, स्वगतं च मलं त्यक्त्वा प्रकृतिं स्वमेव रूपं भजते, तस्य तच्छौचं शोधकम्। यावता च तक्षणादिना व्यपोहति तावत्प्रमाणं स्वरूपत आवृत्तितो वा तत्कर्तव्यमिष्यते॥ १३॥ एवं तावद्द्रव्यशुद्धिरुक्ता, इदानीं कर्तृशुद्धिमाह—स्नानेति। अवस्था कौमारादिः। वीर्यं शक्तिः। संस्कार उपनयनादिः। कर्म सन्ध्योपासनदीक्षादिलक्षणम्। आत्मनः साहंकारस्य कर्तुरेतैः स्नानादिभिर्यथायथं तत्कार्यानुसारिणी शुद्धिः। इयं च शुद्धिर्न व्यवहारार्था किंतु विहित-कर्मार्थेत्याह—शुद्ध इति। द्विज इत्युपलक्षणं शूद्रादेरपि॥ १४॥ ॥ ॥ ॥ ॥

१ अशक्तान्बालवृद्धातुरान्प्रति। २ द्रव्यप्रयोजनमिति। यदि पकान्नादेर्विवाहादौ प्रयोजनमुपस्थितं तर्हि—'तन्मात्रद्रव्यमुद्धृत्य शेषं संस्कारमर्हति' इति। ३ उपपत्तिर्युक्तिः यथा पुस्तका-दिशुद्धिः प्रोक्षणेनैव, प्रक्षालनतापनादिना मूलनाशापत्तेः। ४ द्रव्यस्य वस्त्रादेः। ५ धान्या ना वाय्वातपप्रोक्षणैः। दारूणा लौकिकाना ग्रहचमसादीनां च मृत्सहितेनोष्णोदकेन। गजदन्तादीनां वाय्वातपादिना कालेन च। तन्तूना तोयेन। रसाना तैजसानां चाग्निना। चर्मणा मृत्तोयाभ्याम्। पार्थिवाना कालादिनेति ज्ञेयम्। विशेषविचारो याज्ञवल्क्यादिस्मृतिष्वालोचनीयः। ६ युतत्वेति। जलवाय्वादिशुद्धौ कालस्य व्यापकत्वदर्शनार्थम्। 'जगतामाश्रयो हि सः' इत्युक्तेः।

मन्त्रशुद्धिमाह—सद्गुरुमुखाद्यथावत्परिज्ञानं मन्त्रस्य शुद्धिः। कर्मशुद्धिमाह—ईश्वरार्पणं कर्मणः शुद्धिः। धर्माद्यर्थं शुद्ध्यशुद्धी प्रपञ्चतः प्रदर्श्योपसंहरति—धर्म इति। देशकालद्रव्यकर्तृमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते। एतेषां यो विपर्ययः सोऽधर्मस्तद्धेतुरित्यर्थः ॥ १५ ॥ अयं च गुणदोषविभागो न वास्तव इत्याह—क्वचिदिति। आपदि प्रतिग्रहो गुणोऽप्यनापदि निषिद्धत्वाद्दोषः। परधर्मश्च परस्य गुणोऽपि स्वस्य दोषः। दोषोऽपि कुटुम्बत्यागादिर्विरक्तादेर्न दोषः, अपि तु विधिबलेन गुणः। एवं योऽयं गुणदोषयोरेकस्मिन्नर्थे नियमो, गुणदोषार्थं वा यो नियमो नियामकं शास्त्रं स तयोर्भेदमेव बाधते ॥ १६ ॥ दोषस्य क्वचिद्दोषत्वाभावे गुणत्वे चोदाहरणं दर्शयति—समानस्य तस्यैव कर्मणः सुरापानादेराचरणमपतितानां पतनहेतुरपि जात्या कर्मणा वा पतितानां पुनः पातकमधिकारभ्रंशकं न भवति, पूर्वमेव पतितत्वात्। अतोऽत्र दोषस्यापि दोषता नास्तीत्यर्थः। तथा सङ्गोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः

मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ॥ धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ॥ गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥ समानकर्माचरणं पतितानां न पातकम् ॥ औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥ १७ ॥ यतो यतो निवर्तेत विमुच्येत ततस्ततः ॥ एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥ विषयेषु गुणाध्यासात्पुंसः सङ्गस्ततो भवेत् ॥ सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥ १९ ॥ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते ॥ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥ २० ॥ तया विरहितः साधो जन्तुः शून्याय कल्पते ॥ ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥ २१ ॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् ॥ वृक्षजीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥ ॥

पूर्वस्वीकृतो न दोषः, अपि तु गुणः। 'ऋतौ भार्यामुपेयात्' इत्यादिविधानात्। उभयत्र दृष्टान्तः—पूर्वमेवाधः शयानो यथा न पततीति ॥ १७ ॥ अतो गुणदोषनियमविधीनां प्रवृत्तिसंकोचद्वारा निवृत्तावेव तात्पर्यमित्यभिप्रेत्याह—यतो यत इति ॥ १८ ॥ यथाश्रुतप्रवृत्तिपरतां वेदस्य निराकर्तुं प्रवृत्तिमार्गस्यानर्थहेतुतां दर्शयति—विषयेष्विति चतुर्भिः। सङ्ग आसक्तिः। तत्र तेषु विषयेषु। येन प्रतिहन्यते कामस्तेन सह कामादेव कलिः कलहो विवादः ॥ १९ ॥ दुर्विषहस्तीव्रः। तमः संमोहः। तं क्रोधम्। चेतना कार्याकार्यस्मृतिः। द्रुतं शीघ्रम् ॥ २० ॥ शून्याय कल्पते। असत्तुल्यो भवतीत्यर्थः। स्वार्थविभ्रंशः पुरुषार्थहानिः। मूर्च्छितस्य मृततुल्यस्य ॥ २१ ॥ तत्तुल्यत्वं प्रपञ्चयति—विषयेति। व्यर्थं वृक्षजीविकयैव यो जीवन्वर्तते स मूर्च्छिततुल्यः। अत एव यो भस्त्रेव श्वसन्वर्तते स मृततुल्यः। अतः स्वार्थनाश इत्यर्थः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥

१ क्वचिदित्यस्य व्याख्या आपदीति। २ प्रतिग्रहस्य गुणत्वम् 'आहारार्थं समीहेत' इति प्राणधारणस्यावश्यकत्वात्। निषिद्धत्वं च—'प्रतिग्रहं मन्यमानस्तस्तेजोयशोनुदम्' इति। ३ विधिस्तु—'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुत्युक्तः। ४ गुणदोषौ न वस्तुनिष्ठौ किंतु अधिकारिभेदेन कल्पितावेवेति बोधयतीत्यर्थः। भेदस्य वास्तवत्वे एवं विपर्ययो न स्यादित्याशयः। ५ प्रथमं विषयेषु गुणाध्यासाद्रमणीयताबुद्धिस्ततस्तेष्वासक्तिरित्यर्थः। ६ सर्वत्र प्रसृता। ७ यथाश्रुतेति। वाच्यार्थमनतिक्रम्य या प्रवृत्तिपरता 'स्वर्गकामो यजेत' इत्यादिरूपा ता निराकर्तुं तात्पर्यानुपपत्त्या तिरस्कर्तुम्। ८ इदं मूर्च्छितमृतपदयोर्मिलित्वा व्याख्यानम्। ९ वृक्षो यथा जलमात्रग्रहणेन जीवति तथा पुरुषार्थाननुसंधानपूर्वकमाहारग्रहणमात्रेण जीवन्नित्यर्थः। १० स्वार्थनाशश्चातुर्विधपुरुषार्थहानिः।

ननु प्रवृत्तस्य स्वर्गादिफलश्रवणात्कुतः स्वार्थविभ्रंशस्तत्राह—फलश्रुतिरिति । इयं फलश्रुतिर्न श्रेयः, परमपुरुषार्थपरा न भवतीत्यर्थः । किंतु बहिर्मुखानां नृणां मोक्षविवक्षयाऽवान्तरफलैः कर्मसु रुच्युत्पादनमात्रम् । यथा भैषज्ये औषधे रोचनं रुच्युत्पादनम् । तथा हि—'पिब निम्बं प्रदास्यामि खलु ते खण्डलड्डुकान् ॥ पित्रैवमुक्तः पिबति न फलं तावदेव तु ॥' (तथा मातृवाक्यं च—'शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब' इति । न फलं तावदेव तु किंत्वारोग्यम् )॥ २३ ॥ ननु कर्मकाण्डे मोक्षस्य नामापि न श्रूयते, कुत एवं व्याख्यायते यथाश्रुतस्याघटनादित्याह—उत्पत्त्येति द्वाभ्याम् । उत्पत्त्या स्वभावत एव कामेषु पश्वादिषु प्राणेष्वायुरिन्द्रियबलवीर्यादिषु । स्वजनेषु पुत्रादिषु । अनर्थहेतुषु परिपाकतो दुःखहेतुषु ॥ २४ ॥ अतस्तान्स्वार्थं परमसुखमविदुषः । अतो नतान् प्रह्वीभूतान् । वेदो यद्बोधयिष्यति तदेव श्रेय इति विश्वसितानित्यर्थः । तानेवंभूतान्वृजिनाध्वनि कामवर्त्मनि देवादियोनिषु भ्राम्यतः । ततः पुनस्तमो वृक्षादियोनिं विशतः । पशुकाम इति आयुरिन्द्रियादिकाम इति च पुत्रादिकाम इति च कथं पुनस्तेष्वेव कामेषु स्वयं बुधो वेदो युञ्ज्यात्प्रवर्तयेत्, तथा सति अनाप्तः स्यादिति भावः ॥२५॥ कथं तर्हि कर्म मीमांसकाः फलपरतां वदन्ति, तत्राह—एवमिति । व्यवसितं वेदस्याभिप्रायम् । कुसुमितामवान्तरफलप्ररोचनया रमणीयां परमफलश्रुतिं

फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ॥ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥२४॥ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ॥ कथं युञ्ज्यात्पुनस्तेषु तांस्तमो विशतो बुधः ॥२५॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ॥ फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥२६॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥२७॥ न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ॥ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥ ॥

वदन्ति । कुतस्ते कुबुद्धयस्तदाह—हि यस्माद्वेदज्ञा व्यासादयस्तथा न वदन्तीति ॥ २६ ॥ कुबुद्धितां प्रपञ्चयति—कामिन इत्यष्टभिः । कामित्वात्कृपणास्ततो लुब्धास्तृष्णाकुला अतः पुष्पेष्ववान्तरफलेषु परमफलबुद्धयोऽत एवाग्निमुग्धा अग्निसाध्यकर्माभिनिवेशेन लुप्तविवेकास्ततश्च धूमतान्ता धूमता धूममार्गोऽन्ते येषां ते । स्वं लोकमात्मतत्त्वम् । तथा च श्रुतिः—'कश्चिद्ध वा अस्माल्लोकात् प्रेत्य आत्मानं वेद अयमहमस्मीति ॥ कश्चित्स्वं लोकं न प्रतिजानाति ॥ अग्निमुग्धो हैव धूमतान्तः ॥' इति ॥२७॥ कोऽसौ स्वलोकस्तमाह—हृदिस्थमात्मानं मां स्वलोकम् । ननु हृदिस्थमहंकारास्पदं जानन्त्येव, सत्यम्, परमात्मानं तु न जानन्तीत्याह—य इदं यद्व्यतिरिक्तं जगन्नास्ति । कुतः । यत इदं जगज्जातम् । तं कुतो न जानन्ति । हि यस्मात्, उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं पशुहिंसासाधनं वा येषां ते । अतः केवलमसुतृपः प्राणतर्पणपराः । नीहारं तमस्तेन व्याप्तानि चक्षूंषि येषां ते यथा संनिहितमपि न जानन्ति तद्वत् । तथा च श्रुतिः—'न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥' इति ॥ २८ ॥ ॥ ॥

१ गौणफलैः । २ एवं निवृत्तिपरत्वेन । ३ आदिशब्देन 'पशुकामो यजेत', 'दध्नेन्द्रियकामस्य जुहुयात्', 'खादिरं दीर्घकामस्य यूपं कुर्वन्ति' इत्यादिषु । ४ कश्चित् भगवदनुगृहीतः पुरूरवःसदृशः । ५ अहंकारास्पदं जीवम् । ६ परमात्मभिन्नम् । ७ यूय तमीश्वर न विदाथ वेत्थ । यः इमाः प्रजाः जजान जनयामास । अन्यदेहादि अन्तरं व्यवधायकं नीहारेण तत्तुल्येनाज्ञानेन जल्प्या वादास्तैः प्रावृतास्तार्किका इत्यर्थः । उक्थशासः कर्मोपदेशकाः ।

वेदतात्पर्याज्ञानाचान्यान्यजन्तीत्याह—ते परोक्षमस्फुटं मे मतमविज्ञाय देवतादीन् यजन्त इत्युत्तरेणान्वयः । स्वमतमेवाह—हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागः स्यात्तर्हि यज्ञ एवेत्येभ्यनुज्ञाद्वारा परिसंख्येयं न त्वावश्यकत्वेन चोदनेत्येवंरूपम् । यद्यपि नित्यनैमित्तिकयोः कामविशेषानुबन्धो नास्ति तथापि 'कर्मणा पितृलोकः' इति श्रुतेः सामान्यतः पितृलोककामनास्त्येव । अन्तःकरणशुद्धिकामना चेति भावः । तदुक्तम्—'नाकामस्य क्रिया काचिद्दृश्यते चेह कर्हिचित् ॥ यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥' इति ॥२९॥ अज्ञत्वादेव हिंसया विहारः क्रीडा येषां ते ॥३०॥ किंच, तेऽतिमन्दबुद्धय इत्याह—स्वप्नोपममिति । अमुं परलोकम् । आशिषश्चास्मिन् लोके संकल्प्य न तु निश्चित्य, विघ्नबाहुल्यात् । त्यजन्ति कर्मसु विनियोजयन्ति । यथा कश्चिद्वणिक् दुस्तरसमुद्रादिलङ्घनेन बहुधनार्जनेच्छया सिद्धं धनं त्यजन्नुभयभ्रष्टो भवति तद्वदित्यर्थः ॥ ३१ ॥ अतो रजःसत्त्वतमोजुषः स्वानुरूपानिन्द्रादीनेवोपासते, न तु मां गुणातीतम् । यद्यपीन्द्रादीनामपि मदंशत्वान्मदुपासनमेव तत्तथापि यथावन्नोपासते भेददर्शित्वादित्यर्थः ॥ ३२ ॥ 'हृदि संकल्प्य'इत्युक्तं तमेव संकल्पं

ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ॥ हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ॥ यजन्ते देवता यज्ञैः पितृभूतपतीन्खलाः ॥ ३० ॥ स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम् ॥ आशिषो हृदि संकल्प्य त्यजन्त्यर्थान्यथा वणिक् ॥ ३१ ॥ रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ॥ उपासत इन्द्रमुख्यान्देवादीन्न तथैव माम् ॥ ३२ ॥ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ॥ तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ॥ मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥ वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥ शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ॥ अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥ ॥

दर्शयति—इष्ट्वेति । तस्य भोगस्यान्ते । महाशाला महागृहस्थाः ॥ ३३ ॥ ततः किमत आह—एवमिति । अतो मच्छ्रवणत्वाभावान्नित्यं संसारिणो भवन्तीति भावः ॥ ३४ ॥ तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य प्रकृतं निवृत्तिपरत्वमेवोपसंहरति—वेदा इति । कर्मब्रह्मदेवताकाण्डविषया इमे वेदा ब्रह्मात्मविषयाः ब्रह्मैवात्मा न संसारीत्येतत्पराः, तत्परत्वाप्रतीतौ च । 'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयोविवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥' इत्युक्तमेव कारणमनुस्मारयति—परोक्षेति । ऋषयो मन्त्रास्तद्द्रष्टारो वा । तत्किमिति यतः परोक्षमेव मम च प्रियम् । अयं भावः—शुद्धान्तःकरणैरेवैतद्बोद्धव्यं नान्यैरनधिकारिभिर्वृथा कर्मत्यागेन भ्रंशप्रसङ्गादिति ॥ ३५ ॥ ननु वेदज्ञा अपि जैमिन्यादयः किमिति तथा न वर्णयन्ति, मां विना तत्त्वतो वेदं तदर्थं वा न कोऽपि वेदेत्याशयेनाह—शब्दब्रह्मेति यावत्समाप्ति । स्वरूपतोऽर्थतश्च दुर्विज्ञेयम् । तच्च सूक्ष्मं स्थूलं चेति द्विविधम् । तत्र सूक्ष्मं तावत्स्वरूपतोऽपि

१ 'अग्नीषोमीयं पशुमालभेत' इत्यनुज्ञाद्वारा । २ परिसंख्येति उभयप्राप्ताावितरव्यावर्तको विधिः परिसंख्या । ३ नौभङ्गादिनेत्यर्थः । ४ यथावत् मदंशबुद्ध्या । '' विषयात्मका इत्यनन्तरम् 'वृथा पशून्विहिंसन्ति हिंस्यन्ते प्रेत्य तैस्तु ते' इति वीर० । तथा चोदनेत्यग्रे 'इति वेदध्वनिं श्रुत्वा न ते मुह्यन्ति कर्मसु' इति क्वचित् । अत्र द्वितीयमर्धं तु प्रकृतार्थानुगुणमेव । ६ पुष्पितया पुष्पस्थानीयार्थवादबहुलया । ७ कारणं प्रवृत्तिसंकोचेन कर्मसु रुच्युत्पादनम् । ८ तथा वेदस्य निवृत्तिपरतया ब्रह्मपरत्वम् ।

दुर्ज्ञेयमित्याह—प्राणेन्द्रियमनोमयम् । प्रथमं प्राणमयं पराख्यं, ततो मनोमयं पश्यन्त्याख्यं, तत इन्द्रियमयं मध्यमाख्यम् । तस्य वाग्व्यञ्जकत्वेन वागिन्द्रियप्रधानत्वात् । किंच अनन्तपारम् । समष्टिप्राणादिमयस्य निर्विशेषस्य च तस्य कालतो देशतश्चापरिच्छेदात् । अर्थतोऽपि दुर्ज्ञेयत्वमाह—गम्भीरं निगूढार्थम् । अतो दुर्विगाह्यं मतिप्रवेशानर्हम् । तथा च श्रुतिः—'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।' अयमर्थः—वाचः शब्दब्रह्मणः परिमितानि गणितानि पद्यते ज्ञायते परं तत्त्वमेभिरिति पदानि रूपाणि चत्वारि, तानि चत्वार्यपि ये मनीषिणोऽन्तर्दृष्टयस्त एव विदुर्नान्ये । यतो गुहायां देहमध्ये त्रीणि निहितानि नेङ्गयन्ति स्वरूपं न प्रकाशयन्ति, अतः केवलं वाचस्तुरीयं चतुर्थं भागं वैखरीरूपं मनुष्याः प्राणिनो वदन्ति, तदपि वदन्त्येव, न तत्त्वतो जानन्ति ॥ ३६ ॥ तत्र मनीषिभिरेव ज्ञेयं सूक्ष्मं तत्त्वरूपं दर्शयति—मयेति । मयान्तर्यामिणोपबृंहितमधिष्ठितम् । अन्तस्थत्वेऽप्यपरिच्छेदमाह—भूम्नेति । अधिष्ठातृत्वेऽप्यविकारित्वमाह—ब्रह्मणेति । अविकृतस्यापि नियन्तृत्वं घटयति—अनन्तशक्तिनेति । भूतेषु सर्वप्राणिषु घोषरूपेण नादरूपेण लक्ष्यते मनीषिभिः । अन्तः सूक्ष्मत्वेन दर्शने दृष्टान्तः—बिसेपूर्णातन्तुरिवेति ॥३७॥ ततो वैखर्याख्याया बृहत्या

मयोपबृंहितं भूम्ना ब्रह्मणानन्तशक्तिना ॥ भूतेषु घोषरूपेण बिसेपूर्णेव लक्ष्यते ॥ ३७॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ॥ आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥ ३८॥ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ॥ ओंकाराद्व्यञ्जितस्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥ विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ॥ अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुब् जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥ ॥ ॥ ॥

वाच उत्पत्तिप्रकारं सदृष्टान्तमाह—यथेति त्रिभिः । हृदयात्सकाशात् मुखात् द्वारात् उद्वमते बहिः प्रकटयति । दार्ष्टान्तिके योजयति—आकाशादिति । प्राणस्तदुपाधिर्हिरण्यगर्भरूपः प्रभुर्भगवान् । तेन रूपेण च्छन्दोमयो वेदमूर्तिः । सततस्त्वमृतमयः । घोषवान्नादोपादानवान् । मनसा निमित्तभूतेन । निमित्ततामेव दर्शयति—स्पर्शादीन्वर्णान् रूपयति संकल्पयतीति स्पर्शरूपि तेन । स्पर्शग्रहणमुपलक्षणम् । हृदयाकाशाद्बृहतीं सृजतीति तृतीयश्लोकेनान्वयः । बृहतीशब्दार्थव्याख्यानाय विशेषणानि—सहस्रपदवीं बहुमार्गाम् । तदेवाह—ओंकारादुरःकण्ठादिसङ्गेन व्यञ्जितैः स्पर्शादिभिर्भूषिताम् । ओंकारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतो नत्वकारादिवर्णरूपः, तस्य व्यङ्ग्यकोटित्वात् । तत्र स्पर्शाः कादिपञ्चवर्गाः । स्वरा अकारादयः षोडश । ऊष्माणः शषसहाः । अन्तस्था यरलवाः । एवं विचित्राभिर्वैदिकलौकिकभाषाभिर्वितताम् । यथोत्तरं चत्वारि चत्वार्यक्षराण्युत्तराण्यधिकानि येषां तैश्छन्दोभिरुपलक्षिताम् । एवमनन्तपारां सृजति स्वयमेवाक्षिपते उपसंहरति ॥ ३८ ॥ ३९ ॥ ४० ॥ तेषु कतिचिच्छन्दांसि दर्शयति—गायत्रीति । तत्र चतुर्विंशत्यक्षरा गायत्री । ततश्चतुरक्षरवृद्ध्योष्णिगादिच्छन्दांसि—अत्यष्टिः, अतिजगती, अतिविराट् चेत्यर्थः । एतैश्छन्दोभिरुपलक्षितामिति पूर्वेणान्वयः । अतो बृहत्यपि साकल्येन स्वरूपतो दुर्ज्ञेया इत्युक्तम् ॥ ४१ ॥ ॥

१ वैखर्याख्यवाचः प्रकाशकत्वेन । २ वैखर्यावस्थामापन्नस्य । ३ परापश्यन्तीमध्यमाख्यानि । ४ तदुक्तमाप्ततमैः—'अनन्तोऽनन्तगात्रश्च द्वैतस्योपशमः शिवः ॥ ॐकारो विदितो येन स योगी नेतरो जनः ॥' इति । ५ नादोपादानवान् पराख्यः तेन परा निर्देशः । मनसा निमित्तभूतेनेति पश्यन्त्युद्देशः । ६ आकाशादिति हिरण्यगर्भस्याधारचक्रमवलम्ब्य ॐकारादिति मध्यमोद्देशः । ७ बृहती वेदलक्षणां वाणीम् । ८ तैरुपलक्षितामित्यर्थः । ९ गायत्रीतः पूर्वं उक्ता अत्युक्ता मध्या प्रतिष्ठा सुप्रतिष्ठा इत्येवं पञ्च छन्दांसि विंशत्यक्षरपर्यन्तानि बोध्यानि ।

अर्थतोऽपि दुर्ज्ञेयत्वमाह—किमिति । कर्मकाण्डे विधिवाक्यैः किं विधत्ते । देवताकाण्डे मन्त्रवाक्यैः किमाचष्टे प्रकाशयति । ज्ञानकाण्डे किमनूद्य विकल्पयेन्निषेधार्थमित्येवमस्या हृदयं तात्पर्यं मत् मत्तोऽन्यः कश्चिदपि न वेद ॥ ४२ ॥ ननु तर्हि त्वं मत्कृपया कथय,—ओमिति कथयति । मामेन यज्ञरूपं विधत्ते । मामेव तत्तद्देवतारूपमभिधत्ते, न मत्तः पृथक् । यच्चाकाशादिप्रपञ्चजातं 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिना विकल्प्यापोह्यते निराक्रियते तदप्यहमेव, न मत्तः पृथगस्ति । कुत इत्यपेक्षायां सर्ववेदार्थं संक्षेपतः कथयति—एतावानेव सर्वेषां वेदानामर्थः । तमेवाह—शब्दो वेदो मां परमार्थरूपमाश्रित्य भिदां मायामात्रमित्यनूद्य, 'नेह नानास्ति किंचन' इति प्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति । अयं भावः—यथा ह्यङ्कुरे यो रसः स एव तद्विस्तारभूतनानाकाण्डशाखास्वपि, तथैव प्रणवस्य योऽर्थः परमेश्वरः स एव तद्विस्तारभूतानां सर्ववेदकाण्डशाखानामपि सङ्गच्छते, नान्य इति ॥ ४३ ॥ नित्यमुक्तः स्वतः सर्ववेदकृत्सर्ववेदवित् ॥ स्वपरज्ञानदाता यस्तं वन्दे गुरुमीश्वरम् ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां एकविंशोऽध्यायः ॥ २१ ॥ ॥ ७ ॥

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ॥ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥४२॥ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥ मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ॥४३॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे एकविंशोऽध्यायः ॥ २१ ॥

॥ उद्धव उवाच ॥ कति तत्त्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ॥ नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥ १ ॥ केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ॥ सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ॥ २ ॥ केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ॥ एतावत्त्वं हि संख्यानामृषयो यद्विवक्षया ॥ गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ॥ मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥

॥ द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ॥ पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥ १ ॥ तदेवं वेदानां प्रवृत्तिपरत्वं निराकृत्य मोक्षपरत्वं निर्णीतम्, सन्ति च मोक्षपरत्वेऽपि तदवान्तरविवादाः । तथा हि,—केचित्तत्त्वसंख्यासु विवदन्ते, तत्रापि वाह्यार्थसदसत्त्वे आत्मत्वेऽप्येकत्वनानात्वादिषु तत्र किं सत्यमिति जिज्ञासया पृच्छति—कतीति । ऋषिभिरागमेषु बहुधा संख्यातानि तेषु कति युक्तानीत्यर्थः । भगवन्मतानुवादपूर्वकं बहुधा संख्यानं प्रपञ्चयति—न वेति त्रिभिः । त्वं तावदष्टाविंशतितत्त्वान्यात्थ । तानि च वयं शुश्रुम श्रुतवन्तः ॥ १ ॥ २ ॥ एतावतीनां भाव एतावत्त्वं नानात्वमित्यर्थः । यद्विवक्षया यत्प्रयोजनमभिप्रेत्य च गायन्ति । आयुष्मन्नित्यमूर्ते ॥ ३ ॥ विवक्षाभेदेन सर्वं युक्तमेव । मायया च किं नाम न युक्तमित्याह—युक्तमिति । यथा ब्राह्मणा भाषन्ते तद्युक्तं, न च वस्तुतः । यस्मात्सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्त्वानि । किंच, मायामिति । असत्त्वेऽपि मायाश्रयत्वाद्घटत एवेत्यर्थः । उद्गृह्य स्वीकृत्य । न हि मरीचिजलपरिमाणादिविवादे किंचिदघटितमिव भवति ॥ ४ ॥ ॥ ॥

१ यज्ञरूप 'यज्ञो वै विष्णुः' इति श्रुतेः कर्मकाण्डे । २ देवताकाण्डे 'शास्त्रदृष्ट्या तूपदेशो वामदेववदित्' इति मामेव । ३ विकल्प्य अध्यारोप्य । ४ अनूद्यानुवादेनारोपं कृत्वा । ५ स्वपरेति स्वविषयकं परविषयकं च ज्ञानं ददातीति तथा । ६ अयमेव पाठः साधीयान् । ब्राह्मणभाषणानुसारेणैव युक्तत्वं, न तु परमानतिः । 'युक्तयः' इति वीर० विज० संमतः पाठः ।

ननु यदि सर्वमपि युक्तं तर्हि कुतो विवादः, यदि च मायैवालम्बनं तर्हि कुतो हेतुं प्रति विवादस्तत्राह—नैतदेवमिति । हेतुं प्रति च विवदमानानां मदीया दुरतिक्रमाः शक्तयः सत्त्वाद्या अन्तःकरणवृत्तिविशेषरूपेण परिणता एव हेतुरित्यर्थः ॥ ५ ॥ तासां विवादहेतुत्वमुपपादयति—यासामिति । यासां व्यतिकरात्क्षोभाद्वदतां पदं विषयो विकल्पो भेद आसीदन्तःकरणवृत्तिविकल्पो वा तन्मूलभूतः । एतदेव व्यतिरेकेण द्रढयति—शमदमयोर्द्वन्द्वैक्यम् । तस्मिन्प्राप्ते विकल्पोऽप्येति लीयते । तं च विकल्पनाशमनु वादः शाम्यतीति ॥ ६ ॥ 'सन्ति सर्वत्र' इति यदुक्तं तत्प्रपञ्चयति—परस्परेति द्वाभ्याम् । अन्योन्यस्मिन्ननुप्रवेशाद्वक्तुर्यथा विवक्षितं तथा पूर्वं कारणमपरं कार्यम् । कार्यकारणभावेन प्रसंख्यानं भवति । यद्वा, पूर्वा अल्पसंख्या, अपराधिकसंख्या, तयोर्भावः पौर्वापर्यं तेन प्रसंख्यानं गणनमिति ॥ ७ ॥ अनुप्रवेशं दर्शयति—एकस्मिन्नपीति । पूर्वस्मिन्कारणभूते तत्त्वे कार्यतत्त्वानि सूक्ष्मरूपेण प्रविष्टानि मृदि घटवत् । अपरस्मिन्कार्यतत्त्वे कारणतत्त्वान्यनुगतत्वेन प्रविष्टानि घटे मृद्वत् ॥ ८ ॥ अविरोधमुपसंहरति—अतोऽमीषां तत्त्वानां पौर्वापर्यं तत्तत्कारणकार्यत्वं

नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ॥ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥ ५ ॥ यासां व्यतिकरादासीद्विकल्पो वदतां परम् ॥ प्राप्ते शमदमेऽप्येति वादस्तमनु शाम्यति ॥ ६ ॥ परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥ एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ॥ पूर्वस्मिन्वा परस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥ पौर्वापर्यमतोऽमीषां प्रसंख्यानमभीप्सताम् ॥ यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसंभवात् ॥ ९ ॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ॥ स्वतो न संभवादन्यस्तत्त्वज्ञो ज्ञानदो भवेत् ॥ १० ॥ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥ प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणाः ॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥ ॥ ॥

प्रसंख्यानं च न्यूनाधिकमभीप्सतां वादिनां मध्ये यथा विवक्षया यद्वक्त्रं यस्य मुखं प्रवर्तते तत्सर्वं विविक्तं निश्चितं वयं गृह्णीमः । उक्तन्यायेन सर्वत्र युक्तेः संभवात् ॥ ९ ॥ ननु कार्यकारणतत्त्वानां पृथक्त्वापृथक्त्वविवक्षया भवतु नाम संख्याभेदः, जीवेश्वरयोस्तु कथं भेदाभेदविवक्षा यया षड्विंशतिपञ्चविंशतिपक्षौ प्रवृत्तावत आह—अनादीति । स्वतो न संभवति, अन्यतस्तु संभवात्स्वतः सर्वज्ञः परमेश्वरोऽन्यो भवितव्य इति षड्विंशतिपक्षाभिप्राय इत्यर्थः ॥ १० ॥ कथं तर्हि पञ्चविंशतिपक्षस्तत्राह—पुरुषेति । वैलक्षण्यं विसदृशत्वं नास्ति द्वयोरपि चिद्रूपत्वादतस्तयोरत्यन्तमन्यत्वकल्पना अपार्था व्यर्था । एवं पञ्चविंशतिपक्षः प्रवृत्त इत्यर्थः । नन्वेवमपीश्वरप्रसादलभ्यज्ञानस्य पृथक्त्वात्पक्षद्वयमपि न घटतेऽत आह—ज्ञानं चेति । सत्त्वगुणवृत्तित्वात्तदन्तर्भूतमित्यर्थः ॥ ११ ॥ ननु ज्ञानं जीवधर्मः कथं प्रकृतेर्गुणः स्यादत आह—प्रकृतिरिति । गुणसाम्यं हि प्रकृतिरतस्तद्विशेषरूपा गुणास्तस्या एव, न त्वात्मनो जीवस्य अकर्तृत्वात्तस्य स्थित्यादिहेतुभूतगुणाश्रयत्वानुपपत्तेः ॥ १२ ॥ ॥ ॥ ॥ ॥

१ हेतुरित्यार्षिकम् । जातावेकवचनं समुदितानां हेतुत्वात् । २ हेतुरिति प्रथमान्तोऽपि पाठः । ३ 'स्वतो न सभवेदन्यः' इति पाठः । ४ कथमिति जीवस्य कार्यत्वेऽनित्यत्वापत्तेः प्रवेशासंभवादित्यर्थः । ५ जीवादन्यतः परमात्मनस्तु । ६ सत्त्वगुणकार्यत्वात्तदन्तर्भूतं प्रकृत्यन्तर्गतम् ।

अतः सत्त्वं सत्त्वमयं ज्ञानं प्रकृतेर्गुण इति पूर्वेणैवान्वयः । ननु तन्निवर्त्यं कर्माज्ञानं च तत्त्वान्तरं स्यात्, न, रजःकर्म रजसो वृत्तिः, अज्ञानं च तमसः । अतः कर्माज्ञानयो रजस्तमोद्वारा प्रकृतावेवान्तर्भाव इति भावः । तथापि कालस्वभावयोस्तत्त्वान्तरता स्यात्, न गुणव्यतिकर इति । गुणानां व्यतिकरो यस्मात्स ईश्वर एव कालो नाम । स्वभावो नाम सूत्रं महत्तत्त्वमेव । तस्य सर्वशक्तिमत्त्वात् । तदेवं ज्ञानादीनां यथायथमन्तर्भावान्न पक्षद्वयेऽपि तत्त्ववृद्धिः । एतच्च पक्षान्तरेष्वपि ज्ञेयम् ॥१३॥ (पक्षान्तरमुद्भावयति—के ते गुणाः, किंप्रयोजनाः, किंस्वरूपाः, एतत्सर्वं दर्शयन्नर्थान्नवैकादश पञ्च त्रीणीति स्वमतत्वप्रतिपादनश्लोके त्रीणीति पदं व्याचष्टे—सत्त्वं रजस्तम इति । मतान्तरे,—कालः, सूत्रं, पुरुष इति ) स्वमते तु गुणानामागमापायित्वात्प्रकृतेर्भेदो विवक्षितोऽतो गुणास्त्रीणि तत्त्वान्यपराणि पञ्चविंशतितत्त्वानि पूर्वोक्तपक्षद्वयसाधारणानि दर्शयति—पुरुष इति सार्धद्वाभ्याम् । व्यक्तं महत्तत्त्वम् । नभआदीनि पञ्चतन्मात्राणि । मे मया ॥ १४ ॥ एकादश दर्शयति—श्रोत्रमिति । दर्शनं चक्षुः । ज्ञानशक्तयो ज्ञानेन्द्रियाणि पञ्च । वागादिपाय्वन्तानि द्वन्द्वैक्येनोक्तानि चत्वार्यङ्घ्रिश्चेति कर्माणि कर्मेन्द्रियाणि पञ्च ।

**सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥ पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥ ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्माण्यङ्गोभयं मनः ॥ १५ ॥ शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्ते पुरुषो व्यक्त ईक्षते ॥१७॥ व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ॥ लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥ ॥ ॥ ॥**

उभयात्मकं मनः । उभयेन्द्रियसाधारणमित्यर्थः । अङ्ग हे उद्धव । एवमेतान्येकादश ॥ १५ ॥ पञ्च दर्शयति—शब्द इति । शब्दादीनि विषयतया परिणतानि पञ्चमहाभूतानि । ननु गत्यादिभिस्तत्त्वाधिक्यं पक्षत्रयेऽपि स्यान्नेत्याह—गतीति । गतिश्च उक्तिश्च उत्सर्गो च शिल्पं च तानि कर्मायतनानां कर्मेन्द्रियाणां सिद्धयः, फलानि न तत्त्वान्तराणीत्यर्थः ॥१६॥ तदेवं मतत्रयेऽपि तत्त्वसंख्याभेदं निरूप्य यद्विवक्षया गायन्तीति यत्पृष्टं तत्तन्मततात्पर्यं दर्शयति—सर्गादाविति । कार्याणि षोडश विकाराः, कारणानि महदादीनि सप्त, तद्रूपिणी सती प्रकृतिरस्य विश्वस्य सर्गादौ गुणैः सृज्यत्वाद्यवस्थां धत्ते । उपादानकारणरूपत्वात् । पुरुषस्त्वव्यक्तोऽपरिणामी निमित्तभूतः केवलमीक्षते । अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्न इति ॥१७॥ तत्त्वैरारब्धकार्यस्य तदन्तर्भावमभिप्रेत्याह—व्यक्तादय इति । व्यक्तादयो महदादयः प्रकृतेरुत्पन्ना ये धातवस्ते विकुर्वाणाः पुरुषेक्षणेन लब्धवीर्याः संहता अण्डं सृजन्ति । प्रकृतेर्बलात्तामाश्रित्येत्यर्थः ॥ १८ ॥ ॥

१ तन्निवर्त्यं ज्ञाननिरास्यम् । २ सूत्रं क्रियाशक्त्यात्मकमुख्यप्राणाख्यम् । ३ अत्र धनुश्चिह्नगतो भागो न श्रीधरसमतः पूर्वोत्तरसदर्भविरुद्धत्वादनन्वितार्थत्वात्प्रक्षिप्त इव प्रतीयते । ४ महत्तत्त्वं ज्ञानशक्त्यात्मकम् । ५ उत्पत्तिक्रमे प्रथमं पञ्चतन्मात्राणामुत्पत्तेर्नभआदिशब्दैस्तन्मात्राणीत्यर्थः । अत एवाग्रे षोडशश्लोकटीकायां शब्दः स्पर्श इत्यादेर्विषयतया परिणतानि पञ्चमहाभूतानीति व्याख्यातम् । ६ ज्ञानकर्मात्मकं उभयविधेन्द्रियाणां तदधीनप्रवृत्तिकत्वादित्यर्थः । ७ विषयतयेति अर्थजातय इत्यस्यार्थः । ८ अष्टाविंशतिषड्विंशतिपञ्चविंशतितत्त्वरूपे । ९ सर्गादौ जन्मस्थितिभङ्गे सृज्यत्वाद्यवस्था सृज्यपाल्यसंहार्यत्वावस्था विकाररूपाम् । १० कार्यस्याण्डस्य । ११ धारयन्त्यण्डमिति धातवस्तत्त्वानि ।

एवं स्वमतमुपसंहृत्य मतान्तरेष्वपि सामान्यतो निरूपितां घटनां विशेषतः सतात्पर्यां दर्शयति—सप्तैवेति । ज्ञानं जानातीति द्रष्टा जीवः उभयोर्द्रष्टृदृश्ययोराधार आत्मा चेति सप्त । तत्र प्रकृत्यादीनां कारणत्वेन खादिष्वन्तर्भावः । उत्तरेषामन्तर्भावार्थमाह—ततस्तेभ्यः सप्तभ्यो देहेन्द्रियासवः सर्वकार्याणि जायन्ते ॥ १९ ॥ षडिति मतेऽपि भौतिकस्य भूतान्तर्भावं जीवस्य च परमात्मान्तर्भावमाह—तैर्युक्त इति । (स च परः पुमांस्तैरात्मसंभूतैः पञ्चभूतैर्युत इदं देहादिकं सृष्ट्वा तत्स्वयं समुपाविशत् । पूर्वस्मिन्कारणे पञ्चभूतात्मके भौतिकेन्द्रियादीनामन्तर्भाव उक्तः पूर्वोक्त्या ज्ञातव्यः) ॥ २० ॥ अन्नं पृथ्वी । आत्मनो जातानि आत्मना सह चत्वारि तत्त्वानि । अन्तर्भावार्थमाह—तैरिति । अवयविनः कार्यस्य ॥ २१ ॥ भूतानि च मात्राणि च इन्द्रियाणि च पञ्च पञ्च । एकेन मनसा सह आत्मा सप्तदशः ॥ २२ ॥ आत्मैव संकल्पयन्मन उच्यते । त्रयोदशपक्षे भूतानि तन्मात्रैरेकीकृतानि पञ्चैव । इन्द्रियाणि तत्प्रकाशकानि पञ्चैव । मनश्चैकमिन्द्रियाधिष्ठातृ ।

सप्तैव धातव इति तत्रार्थाः पञ्च खादयः ॥ ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥ १९ ॥ षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ॥ तैर्युक्त आत्मसंभूतैः सृष्ट्वेदं समुपाविशत् ॥२०॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ॥ जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥ संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ॥ पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ॥ भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥ एकादशत्व आत्मासौ महाभूतेन्द्रियाणि च ॥ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥ इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम् ॥ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २५ ॥ ॥ उद्धव उवाच ॥ प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ॥ २६ ॥ एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ॥ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥ २७ ॥

आत्मा च द्विविधः । एवं त्रयोदश ॥२३॥ एकादशत्वपक्षे, पञ्चमहाभूतानि पञ्चेन्द्रियाणि । जीवमनसोश्चात्मान्तर्भावेनैतान्येवैकादश । नवपक्षे, अष्टौ प्रकृतयः पुरुषश्च । विकाराणां तदन्तर्भावः ॥ २४ ॥ उपसंहरति—इतीति । इति एभिः प्रकारैः प्रकृतिपुरुषभेदज्ञापनायेत्यर्थः । (ननु एतेषां कतमः पक्षस्त्याज्य इति चेत्तत्राह—सर्वमिति) ॥२५॥ ननु गुणसाम्यं प्रकृतिस्तस्याः सत्त्वादयो गुणाः, नत्वात्मन इति तयोर्भेदाप्रतीतेः कथं ज्ञातुं शक्यत इत्युद्धवः पृच्छति—प्रकृतिरिति । आत्मना जडाजडस्वभावेन विलक्षणौ । अन्योन्यापाश्रयात्परस्परपरिहारेणाप्रतीतेरित्यर्थः । अन्योन्यापाश्रयत्वमेवाह—प्रकृताविति । प्रकृतौ तत्कार्ये देहे । प्रकृतिश्चात्मनि । तेन विना तस्या अप्रतीतेः । अहमित्यभेदप्रतीतेर्न देहात्मनो भेदो लक्ष्यत इत्यर्थः ॥ २६ ॥ हृदि वर्तमानं संशयम् । नये युक्तौ नैपुणं प्राविण्यं येषां तैः ॥ २७ ॥

१ उत्तरेषां देहादिकार्याणाम् । २ धनुश्चिह्नान्तर्गतो मुद्रितादर्शगतो भागोऽत्रानुपयुक्तत्वात्प्राचीनपुस्तकेष्वनुपलम्भाच्च प्रक्षिप्त इव प्रतीयते । ३ समुपाविशदिति जीवस्याभेदो विवक्षितः, 'अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेः । ४ तत्रापि चतुस्तत्त्वमतेऽपि । ५ तैस्तत्त्वैरवयविनः कार्यस्य देहेन्द्रियादेर्जन्म जातमित्यन्वयः । ६ 'छेत्तुमर्हसि पद्मेश वचोभिस्तत्त्वनैपुणैः' इति पाठः । ७ आत्मा द्विविधः—जीवात्मा परमात्मा च । ८ एतान्येवैकादशेति व्याख्यानमेव दृष्ट्वा केचित् एकादशत्व इति पद्यं क्षेपकमाचक्षते इति दीपि० । ९ विकाराणां कार्याणाम् । १० इदमधिकम् । ११ श्रीधरीयमवतरणं तु—तत्र पृच्छतीत्येतावदेव । तत्र भेदविषये । १२ श्रीधरीयमवतरणम्—तदेव व्यनक्तीति ।

अर्हसीत्युक्तं, तत्र हेतुमाह—त्वत्त इति । हि यस्मात् त्वत्तस्त्वत्प्रसादादेव । अत्र ज्ञाने प्रमोषो भ्रंशश्च ते शक्तितो मायातः । ननु स्वप्रकाशस्यात्मनः कथं ज्ञानप्रमोषः, ज्ञानदाने तत्प्रमोषे वा मम किं प्रयोजनं, तत्राह—त्वमेवेति ॥ २८ ॥ विकाराविकाराभ्यां नानात्वैकत्वाभ्यां सापेक्षनिरपेक्षत्वाभ्यां प्रकाश्यप्रकाशाभ्यां चात्यन्तं भेदं वक्तुमाह—प्रकृतिः पुरुषश्चेति विकल्पोऽत्यन्तभेद एव । कुत इत्यपेक्षायां प्रकृतिशब्दोक्तदेहादिसङ्घातस्य विकारित्वं तावद्दर्शयति—एष इति द्वाभ्याम् । एष सर्गः सृज्यत इति सर्गो देहादिसङ्घातो वैकारिको विकारवान् । अत्र हेतुः—गुणव्यतिकरात्मको गुणक्षोभकृतः ॥ २९ ॥ नानात्वमाह—ममेति । विकल्पं भेदं तद्बुद्धीश्च । अनेकधात्वं प्रपञ्चयति—वैकारिकोऽनेकविकारवानपि स्थूलेन मार्गेण तावत्त्रिविधः । त्रैविध्यमाह—अध्यात्ममिति । एकं रूपम् ॥ ३० ॥ तानि रूपाणि दर्शयति—दृगध्यात्मम् । रूपमधिभूतम् । अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टमार्कं वपुरंशोऽधिदैवमिति । सापेक्षप्रकाशतामाह—परस्परमिति । चक्षुषा रूपं ज्ञायते । तदन्यथानुपपत्त्या चक्षुः तत्प्रवृत्त्यन्यथानुपपत्त्या तदधिष्ठात्री देवता । ततश्च चक्षुषः प्रवृत्तिस्ततो

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ॥ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८ ॥ ॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ॥ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २९ ॥ ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥ दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयाऽनुभूत्याखिलसिद्धसिद्धिः ॥ एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥ योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलान्महतः प्रसूतः ॥ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३२ ॥ ॥

रूपज्ञानमित्येवमेतत्त्रयं परस्परं सिध्यति । अत्र रन्ध्र इति विशेषणव्यावर्त्यमाह दृष्टान्तोपयोगितया—यस्तु खे आकाशे अर्को वर्तते मण्डलात्मा स तु स्वतः सिध्यति । चक्षुर्विषयत्वेऽपि प्रतियोग्यपेक्षाभावमात्रेण स्वत इत्युक्तम् । इदानीमात्मनो विकारित्वाद्यभावेन भेदमाह—यद्यस्मादात्मा एषामध्यात्मादीनामाद्यः कारणमत एकरूपोऽभिन्नश्च । तस्मादेतेभ्योऽपरो भिन्नः । स्वप्रकाशत्वादपीत्याह—स्वयानुभूत्या स्वतःसिद्धप्रकाशेनाखिलानां सिद्धानां परस्परप्रकाशकानामपि प्रकाशकः, सर्वेषामपि सामान्यतश्चित्प्रकाशविषयत्वात् । अत एव स्वप्रकाशत्वं सिद्धम् । चक्षुषि दर्शितं त्रैविध्यमिन्द्रियान्तरेष्वप्यतिदिशति—एवमिति । यथा चक्षुरेवं त्वगाद्यपीत्यर्थः । त्वक्स्पर्शो वायुरिति । श्रवणं शब्दो दिश इति । जिह्वा रसो वरुण इति । नासा गन्धोऽश्विनाविति । चित्तेन युक्तमन्तःकरणान्तरमपि । तत्र चित्तं चेतयितव्यं वासुदेव इति । मनो मन्तव्यं चन्द्र इति । बुद्धिर्बोद्धव्यं ब्रह्मेति । अहंकारोऽहंकर्तव्यं रुद्र इत्येवं त्रिविधमित्यर्थः ॥ ३१ ॥ ननु पुनरपि वैलक्षण्यमात्रमेवोक्तम्, त्रिविधप्रपञ्चव्यतिरिक्तात्मप्राप्तिस्तु कुतः स्यात् । अहंकारनिवृत्त्या । तत्कुतः ।

१ स्वप्रकाशश्च चिदेकात्मरूपस्य जीवस्य । २ यन्महदादिरूपेण परिणमति सा प्रकृतिः, यदपरिणामि स पुरुष इति । ३ वैकारिक इत्यत्र सर्ग इति विशेष्यं पूर्वश्लोकादनुवर्तनीयम् । ४ तद्बुद्धीश्च भेदज्ञानानि । क्वचित्तु मूले 'विकल्पबुद्धिश्च' इत्यपि पाठो लभ्यते । ५ वैकारिकः सात्त्विकः । ऐन्द्रियो राजसः इति अधिदैवाधिभूताध्यात्मादिमय इति चक्र० । ६ आत्मनो निरपेक्षत्वेऽयं दृष्टान्तः,—यथार्को निरपेक्षस्तथात्मेति । ७ अखिलाना सिद्धाना सिद्धिः प्रकाशो यस्मादिति बहुव्रीहिलभ्योऽयमर्थः ।

त्रिविधविकल्पनिवृत्त्यैवेत्याशयेनाह—योऽसावहमहंकारः। तमेवाह—गुणक्षोभं करोतीति। तथा ततः परमेश्वरात्कालाद्वा निमित्तात्प्रधानं मूलमुपादानं यस्य तस्मान्महतः प्रसूतो विकारः स त्रिवृत् त्रिविधो मोहमयस्य विकल्पस्य हेतुः। त्रिवृत्त्वमेवाह—वैकारिक इति ॥ ३२ ॥ स कुतो निवर्तते। आत्माज्ञानविलसितत्वात्तज्ज्ञानेनेत्याशयेनाह—आत्मापरिज्ञानमय इति। ननु कथं मोहमयत्वं विकल्पस्याहंकारस्य वा कैश्चित्सत्यत्वाङ्गीकारात्तत्राह—विवाद इति। अयं भिदा अर्थनिष्ठो विवादोप्यात्माऽपरिज्ञानमय इत्यन्वयः। यद्वा, विवादः सर्वोऽपि भिदाऽर्थनिष्ठ एव, न तु वस्तुमात्रनिष्ठः। अतः परस्परं युक्तिभिरेव भेदस्य निराकृतत्वान्मोहमयत्वं सिद्धमिति। ननु यद्यहंकारो विकल्पश्च नास्ति, अलं तर्हि तन्निवृत्तिप्रयासेन, तत्राह—व्यर्थोऽप्यर्थरहितोऽपि स्वरूपभूतान्मत्तो बहिर्मुखानां नैवोपरमेत्। प्रत्युत तत्कृतैः कर्मभिरुच्चनीचदेहेषु ते संसरन्तीति ॥ ३३ ॥ तत्र पृच्छति—त्वत्त इति। व्यापकस्यात्मनो देहाद्देहान्तरगमनमकर्तुः कर्माणि नित्यस्य च जन्ममरणादीनि कथमिति भावः ॥ ३४ ॥ एतद्विद्वांसो न सन्ति। हि यस्मान्मायया वञ्चिता मोहिताः ॥ ३५ ॥ लिङ्गशरीरा-

आत्मापरिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ॥ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥३३॥ ॥ उद्धव उवाच ॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ॥ उच्चावचान् यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥ तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ॥ न ह्येतत्प्रायशो लोके विद्वांसः सन्ति वञ्चिताः ॥ ३५ ॥ ॥ श्रीभगवानुवाच ॥ मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ॥ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥ ३६ ॥ ध्यायन्मनोऽनुविषयान्दृष्टान्वाऽनुश्रुतानथ ॥ उद्यत्सीदत्कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥ ३७ ॥ विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः ॥ जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥ ॥

ध्यासेन सर्वं घटत इत्युत्तरमाह—मन इति। प्रधानत्वेन पञ्चभिरिति निर्देशोऽन्येषामप्युपलक्षणार्थम्। देहाद्देहान्तरं प्रति याति। ततोऽन्य एवात्मा तन्मनोऽनुवर्तते अहंकारेणानुगच्छति ॥ ३६ ॥ ननु मनसोऽपि पूर्वदेहवियोगो देहान्तरयोगश्च कथं भवतीति चेत्स्मृतिवियोगयोगाभ्यामिति वक्तुं तयोः कारणमाह—ध्यायदिति। कर्मतन्त्रत्वात्कर्मोपस्थापितान् दृष्टान्वा अनुश्रुतान्वेदोक्तान्विषयाननुध्यायत्। अथानन्तरं ध्यायमानेषूद्यदाविर्भवत्पूर्वविषयेषु च सीदल्लीयमानं भवति, तदनन्तरं तस्य स्मृतिः पूर्वापरानुसंधानं नश्यति ॥ ३७ ॥ ततः किमत आह—विषयेति। कर्मोपस्थापितदेवादिदेहात्यन्ताभिनिवेशेनात्मानं पूर्वदेहं पुनर्न स्मरेदिति यत्सैव यातनादेहाभिनिवेशेन भयशोकादेर्देवादिदेहाभिनिवेशेन वा हर्षतर्षादेर्हेतोः पूर्वदेहेऽत्यन्तविस्मृतिरहंकारनिवृत्तिस्तदभिमानिनो जन्तोर्जीवस्य मृत्युरुच्यते, न तु देहवन्नाशः ॥ ३८ ॥ ॥ ॥ ॥ ॥

१ आत्मस्वरूपाज्ञानेन रचितत्वात्। २ आत्माज्ञानविलसितः। ३ युक्तिभिरिति भेदो न वस्तुतः स्वरूप तद्धर्मो वा। आद्ये हस्तः कर इतिवत् पर्यायापत्तिः। द्वितीये भेदस्यापि भेदस्य तद्धर्मत्वात् पुनस्तस्यापीत्यनवस्थेत्यादिभिः। ४ अहंकारकृतैः। ५ अतस्तेषां तत्तद्देहप्राप्तिलक्षणः ससार एव न मोक्ष इति भावः। ६ विभोरकर्तुर्नित्यस्यात्मनः ससरणमेव दुर्घटमित्यभिप्रेत्येत्यर्थः। ७ तत्र स्मृतेः कारणं कर्मवशादागामिदेहानुध्यान, विस्मृतेस्तु भयशोकादि हर्षतर्षादि चेति ज्ञेयम्। ८ कस्यचिद्धेतोरित्यस्य व्याख्या—यातनादेहाद्यभिनिवेशेनेत्यादिः।

जन्म तु विषयस्य देहस्यात्मतया स्वीकृतिमभिमानं प्राहुः, न तु देहवदुत्पत्तिः । न च पुत्रादिदेहवत्प्रीत्यतिशयमात्रेण किंतु सर्वभावेनाभेदेन । अभिमानमात्रेणोत्पत्तिमरणयोर्दृष्टान्तद्वयम्—यथा स्वप्नश्च मनोरथश्चेत्यर्थः ॥ ३९ ॥ दृष्टान्तौ विवृणोति—स्वप्नमिति । तत्र वर्तमाने स्वप्नादौ । पूर्वं चेति अपूर्वमिवेति चान्वयः । पूर्वसिद्धमप्यात्मानमपूर्वमिवाद्य जातमिव पश्यतीत्यर्थः ॥ ४० ॥ उपसंहरति—इन्द्रियाणामयनं मनस्तस्य देहान्तराभिनिवेशेन या सृष्टिरुत्पत्तिस्तया वस्तुन्यात्मनि तदभिमानेनेदं त्रैविध्यमुत्तममध्यमनीचत्वमसदेव भातीत्यन्वयः । एवंभूत आत्मा बाह्याभ्यन्तरभेदहेतुश्च भवति । बाह्यविषयानान्तरान्सुखादींश्च पश्यतीत्यर्थः । यथा जनो जीवः स्वप्ने बहूनसतो जनान् देहान्कुर्वन्पश्यन् बहुरूपो भाति तद्वत् । यद्वा, इदं त्रैविध्यमध्यात्मादिरूपं भाति । असञ्जनकुटुम्बपुत्रोत्पादको जनः पिता स्वयं समोऽपि पुत्राभिमानतस्तदरिमित्रादिषु यथा भेदहेतुर्भवति तद्वदिति । अन्यत्समानम् ॥ ४१ ॥ तदेवं लोकप्रसिद्धौ जन्ममृत्यू निरूप्य सूक्ष्मावप्यावपि तौ वैराग्याय निरूपयति—नित्यदा प्रतिक्षणं भूतानि शरीराणि उत्पद्यन्ते नश्यन्ति च । कालस्यातिसूक्ष्मत्वात्तत्कृतं भवनम-

जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ ३९ ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥ तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४० ॥ इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ॥ बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥ नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ॥ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४२ ॥ यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः ॥ तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥४३॥ सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ॥ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥ ४४ ॥ मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ॥ म्रियते वामरो भ्रान्त्या यथाग्निर्दारुसंयुतः ॥ ४५ ॥

भवनं वाऽविवेकिभिर्न लक्ष्यते ॥४२॥ सतोर्जन्ममरणयोर्ज्ञाने कारणमेतद्भवेत् सत्त्वमेव तयोः कुत इत्याशङ्क्यानुमानेन साधयति—यथेति । अर्चिषां परिणामादिभिः स्रोतसां गत्यादिभिः फलानां रूपादिभिर्यथावस्थाविशेषाः कृताः कालेनेति पूर्वस्यानुषङ्गः । आदिशब्देन तेजोबलक्रामकौशलादीनामुपादानम् । विमतं प्रतिक्षणोत्पत्तिविनाशवत्, अवस्थाभेदवत्त्वात्, दीपज्वालादिवदित्यनुमानम् ॥४३॥ कथं तर्हि प्रत्यभिज्ञा तद्वदेव सादृश्यावलम्बिनीत्याह—सोऽयमिति । सादृश्यादर्चिषामेव यथा सोऽयं दीप इति प्रत्यभिज्ञा, यथा च स्रोतसां प्रवाहजलानामेव तदिदं जलमिति, तथा सोऽयं पुमानिति धीर्गीश्च मृषा नृणां बहूनां शरीरिणां मृषा व्यर्थमायुर्येषामविवेकिनां तेषां भवति ॥४४॥ ननु कथं देहाध्यासवतः पुंसः कर्मजन्ममरणानि सन्ति नान्यस्येति व्यवस्था न हि घटते, घटस्य पुरुषभेदेन सत्त्वमसत्त्वं चेति । न । अज्ञस्यापि वस्तुतस्तदभावादित्याह—मा स्वस्य नैवात्मनः कर्मणा बीजभूतेन । सोऽप्यज्ञोऽपि पुमान् जायते म्रियते वा किंत्वयं भ्रान्त्या अजन्मापि जायत इवामरोऽपि म्रियत इव । यथा महाभूततेजोरूपोऽग्निराकल्पान्तमवस्थितोऽपि दारुयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति तद्वत् ॥ ४५ ॥ ॥

१ स्वप्नादौ स्थित इति शेषः । २ अन्यत् अवशिष्टमिन्द्रियत्वादिपदत्रयम् । ३ भवन जन्म अभवनं मरणम् । ४ सर्वो द्वन्द्वो विभाषैकवद्भवति इति पुंस्त्वेऽप्येकवचनम् । 'स्वप्नमनोरथौ' इति पाठः क्वचित् । ५ 'इन्द्रियार्थौ मनश्चेति' इति पाठः । ६ 'वयोवस्था च तत्कृताः' इति पाठः । ७ 'सोऽप्यये पुमान्' इति पाठः । ८ एवत् कालस्यातिसूक्ष्मत्वम् । ९ यदवस्थाभेदवत् तत् प्रतिक्षणोत्पत्तिविनाशवत्, यथा दीपज्वालादीत्यन्वयव्याप्तिः । यन्नैवं तन्नैवं, यथात्मेति व्यतिरेकव्याप्तिः । १० प्रत्यभिज्ञा ज्ञानोत्तरं ज्ञानम् ।

सिद्धवत्कृत्योक्ता वयोवस्थाः प्रपञ्चयति—निषेको जठरे प्रवेशः । गर्भस्तन्मध्ये वृद्धिः । बाल्यं शिशुत्वमापञ्चमाब्दात् । कौमारमाषोडशाद्वर्षात् । ततो यौवनमापञ्चाशत् । ततो वयोमध्यमाषष्टिवर्षात् ॥ ४६ ॥ देहसंबन्धाज्जन्ममरणादीनीत्युपपादितमर्थमुपसंहरति—एता इति । हि स्फुटम् । अन्यस्य देहस्य । तनूरवस्थाः । गुणसङ्गात् प्रकृत्यविवेकात् । कश्चित्परमेश्वरानुग्रहतः कचित्कथंचिज्जहाति । अवस्थावतो देहस्य द्रष्टा नासाववस्थावानिति विवेकज्ञानेन ॥ ४७ ॥ ननु तदानीं मूर्च्छितत्वेन जन्ममरणवान्देहो न दृश्यते, तत्राह—आत्मन इति । पितृदेहस्यौर्ध्वदेहिकं कुर्वताऽप्ययदर्शनात्पुत्रदेहस्य च जातकर्मणि जन्मदर्शनादात्मनः स्वस्य देहस्यापि भवाप्ययावनुमेयौ । एवं च दृश्यत्वे सति भवाप्ययवतां वस्तूनां देहानामभिज्ञो द्रष्टा द्वयलक्षणो भवाप्ययधर्मको न भवति ॥४८॥ एतदेव दृष्टान्तेन स्पष्टयति—तरोरिति । तरुशब्दो[2] नोद्भिज्जमात्रस्योपलक्षणं किंतु फलपाकान्तस्य व्रीह्यादेरित्यर्थः । यद्वा, तरोरेवान्त्यः परिणामो विपाकः । बीजाज्जन्म विपाकात्[3]संयमं नाशं च विद्वान् । द्रष्टा[4] तरुद्रष्टा । एवं तनोर्द्रष्टा ततः पृथक् । अतस्तत्र वर्तमानोऽपि भवाप्ययाभ्यां न संबध्यते ॥४९॥ अविवेकिनः संसारं प्रपञ्च-

निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ॥ वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥ एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसङ्गादुपादत्ते कचित्कश्चिज्जहाति च ॥ ४७ ॥ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥ ४८ ॥ तरोर्बीज[5]विपाकाभ्यां यो विद्वान् जन्मसंयमौ ॥ तरोर्वि[6]लक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ॥ तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥ ५० ॥ सत्त्वसङ्गादृषीन्देवान्रजसाऽसुरमानुषान् ॥ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥ नृत्यतो गायतः पश्यन्यथैवानुकरोति तान् ॥ एवं बुद्धिगुणान्पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥ यथाम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥ यथा मनोरथधियो विषयानुभवो मृषा ॥ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥ ॥ ॥ ॥

यति—प्रकृतेरिति पञ्चभिः । तत्त्वेन तत्त्वतोऽविविच्य । तत्त्वदृष्ट्या स्पर्शेषु विषयेषु संमूढ इति वा ॥ ५० ॥ गुणभेदेन त्रिविधं, तत्रापि च तत्तारतम्येनैकैकत्र द्विविधं[7] संसारमाह—सत्त्वेति ॥५१॥ नन्वकर्तुरात्मनः कुतः कर्मभिर्भ्रमणं तत्राह—नृत्यतो गायतो जनान्पश्यन्ननुकरोति । तद्गतस्वरतालादिगतिं शृङ्गारकरुणादिरसं च मनस्यनुवर्तयतीत्यर्थः । अनुकार्यते गुणैर्बलादित्यर्थः । अनेन दृष्टान्तेन दृश्यधर्मो द्रष्टरि स्फुरतीति दर्शितम् ॥ ५२ ॥ उपाधिधर्माश्चोपहितेऽवभासन्ते इत्यत्र दृष्टान्तमाह—यथाम्भसेति । तटस्थास्तरवो धावन्त इव दृश्यन्ते जले प्रतिबिम्बिता वा चञ्चला इवेति । विषयग्राहकेण मनसा परिकल्पिता एव तेषु लावण्यादयो गुणा न वस्तुतः सन्ति, अतो मनोनिबन्धन एव संसार इत्यभिप्रेत्य ग्राहकगुणा ग्राह्येऽवभासन्त इत्यत्र दृष्टान्तमाह—चक्षुषेति ॥ ५३ ॥ भोगस्यापि मिथ्यात्वे दृष्टान्तद्वयमाह—यथेति । यथा एताः प्रसिद्धा मनोरथधियः स्वप्नदृष्टाश्च धियो मृषा एवमात्मनो विषयानुभवः संसारो मृषा ॥ ५४ ॥ ॥

१ 'आपञ्चचत्वारिंशतः' इति पाठः प्रायः सर्वत्र। 'आचत्वारिंशतः' इति पाठः कचित्। २ तरुशब्देनोद्भिज्जमात्रस्योपलक्षणम्। 'फलपाकान्तस्य व्रीह्यादेरित्यर्थः' इति पाठः। तत्र व्रीह्यादौ लक्षणा बोध्या। ३ विपाकादन्त्यपरिणामात्। ४ द्रष्टेत्यादिः संबध्यत इत्यन्ता व्याख्या काचित्की। ५ 'बीजविकाराभ्याम्' इति पाठः। ६ 'तयोर्विलक्षणः' इति पाठः। ७ द्विविधं ऋषिदेवादियोन्यात्मकम्।

ननु यदि मृषा तर्हि किं तन्निवृत्तिश्रमेणात आह—अर्थे हीति । अस्यात्मनः ॥ ५५ ॥ अतो भोगोद्यमो न कर्तव्य इत्याह—तस्मादिति ॥ ५६ ॥ दुःखप्रतीकारोद्यममपि परित्यज्य परमेश्वरनिष्ठेनेव भाव्यमित्याह—क्षिप्त इति द्वाभ्याम् । क्षिप्त आक्षिप्तो नुन्न इति वा । प्रलब्ध उपहसितः ॥ ५७ ॥ निष्ठितो निष्ठीवनविषयीकृतः, मूत्रितो मूत्रेणार्द्रीकृतः, प्रकम्पितः परमेश्वरनिष्ठातः प्रच्यावितोऽपि, कृच्छ्रगतः कृच्छ्रं प्राप्तोऽपि ॥ ५८ ॥ एवं तदुक्तं यथा अनुबुध्येयं तथा नोऽस्मान्सर्वान्प्रति वद ॥५९॥ त्वद्धर्मनिरतान् ऋते विदुषामप्यसद्भिः कृतमतिक्रममपराधं सुदुःसहं मन्य इत्यन्वयः । प्रकृतिः स्वभावः ॥६०॥ निरस्य सर्वसंदेहमेकीकृत्य सुदर्शनम् ॥ प्रकाशितरहस्यं तं भजस्व गुरुमीश्वरम् ॥१॥ ॥ इति श्रीमद्भा० महापुराणे एकादशस्कन्धे भा० दी० टीकायां द्वाविंशोऽध्यायः ॥२२॥

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ५५ ॥ तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ॥ आत्माग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ॥ ५६ ॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा ॥ ताडितः संनिबद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥ निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ॥ श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ ५८ ॥ ॥ उद्धव उवाच ॥ यथैवमनुबुध्येयं वद नो वदतां वर ॥ सुदुःसहमिमं मन्य आत्मन्यसदतिक्रमम् ॥ ५९ ॥ विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी ॥ ऋते त्वद्धर्मनिरतान् शान्तास्ते चरणालयान् ॥ ६० ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे द्वाविंशोऽध्यायः ॥२२॥ ॥छ॥ ॥ बादरायणिरुवाच ॥ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ॥ सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥ न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः ॥ यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ३ ॥ ॥ ॥

त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ॥ भिक्षुगीतप्रकारेण मनसः संयमो धिया ॥ १ ॥ दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ॥ अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥ २ ॥ तत्र तावदस्मिन्नध्याये भिक्षुगीतया मनोविजय उत्तरस्मिन्प्रकृतिपुरुषविवेकस्तदुत्तरस्मिन्गुणवृत्तिविजयस्ततः परस्मिन्नैलगीतया विषयसङ्गत्यागेन सत्सङ्ग इति क्रमेणोपाया भगवता वर्ण्यन्ते । आशंसितः प्रार्थितो भृत्यस्य वचः सत्कुर्वंस्तं भृत्यं प्रति आबभाषे ॥ १ ॥ तत्र तावदङ्गीकारतस्तद्वचः संपूजयति द्वाभ्याम्—हे बार्हस्पत्य बृहस्पतेः शिष्य, अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तैर्भिन्नं क्षुभितं मनः शमयितुमीश्वरः स्यात् ॥ २ ॥ कुत इत्यत आह—नेति । यथा मर्मस्था मर्मस्वेव नित्यं स्थिताः परुषोक्तिरूपा इषवस्तुदन्ति व्यथयन्ति तथा इतरे बाणा न तुदन्ति । अतस्तैस्तथा न तप्यत इत्यर्थः ॥ ३ ॥ 

१ शोभनं दर्शनं शास्त्रं वेदादिरूपमेकीकृत्याविरोधेनैकतात्पर्यविषयं कृत्वा प्रकाशितरहस्यम्। २ अर्थे विषयानुभवरूपे संसारे। ३ स्वशिरश्छेदादिः सर्पदंशादिर्वा । ४ असदिन्द्रियैर्बहिर्मुखेन्द्रियैः। ५ स्वरूपाज्ञानविलसितम् । ६ धैर्यमवलम्ब्यात्मना बुद्ध्या आत्मानं स्मरेत्। भगवद्ध्याननिष्ठो भवेदित्यर्थः। ७ 'श्रान्ताः' इति पाठः। ८ 'दशार्हमुख्यः' इति पाठः। ९ 'न सोऽस्त्यत्र' इति पाठः।

तथापि मया वक्ष्यमाणैरुपायैः सर्वं सोढुं शक्यमित्यभिप्रायेणेतिहासं प्रस्तौति—महद्यथा भवति तथा पुण्यमितिहासं गाथां कथयन्ति ॥ ४ ॥ ५ ॥ स भिक्षुः पूर्वं धनाढ्यः कृच्छ्रार्जितस्य धनस्य नाशेन संतप्यमानो निर्विण्णः सन्प्रव्रज्य भिक्षार्थमटन् दुर्जनैरुपद्रुतः प्रस्तुतोपयोगिनीं गाथामगायतेति वक्तुं तस्य पूर्वचरितमाह—अवन्तिष्वित्यादिना । अवन्तिषु मालवेषु वार्ता कृषिवाणिज्यादिरूपा वृत्तिर्यस्य । कदर्यस्तु स्मृतावुक्तः—'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ॥ देवतातिथिभृत्यांश्च स कदर्य इति स्मृतः ॥' इति ॥ ६ ॥ तस्य ये ज्ञातयो बान्धवा अतिथयोऽध्वनीनाश्च तेन नार्चिता इत्यर्थः । शून्यावसथे धर्मकर्महीने गृहे देहे वा ॥ ७ ॥ ८ ॥ यक्षाणां वित्तमिव केवलं रक्षणीयं वित्तं यस्य । पञ्चभागिनः पञ्चयज्ञदेवताः ॥ ९ ॥ तेषामवध्यानमनादरस्तेन

कथयन्ति महत्पुण्यमितिहासमिहोद्धव ॥ तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥ केनचिद्भिक्षुणा गीतं
परिभूतेन दुर्जनैः ॥ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥५॥ अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ॥
वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ॥ शून्यावसथ
आत्मापि काले कामैरनर्चितः ॥ ७ ॥ दुःशीलस्य कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः ॥ दारा दुहितरो भृत्या विषण्णा
नाचरन् प्रियम् ॥ ८ ॥ तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ॥ धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ॥ ९ ॥
तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ॥ अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमः ॥ १० ॥ ज्ञातयो जगृहुः किंचि-
त्किंचिद्दस्यव उद्धव ॥ दैवतः कालतः किंचिद्ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥ स एवं द्रविणे नष्टे धर्मकामविवर्जितः ॥
उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥ तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ॥ खिद्यतो बाष्प-
कण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥ स चाहेदमहो कष्टं वृथात्मा मेऽनुतापितः ॥ न धर्माय न कामाय यस्यार्थायास
ईदृशः ॥ १४ ॥ प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ॥ इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥ यशो
यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥ ॥

विस्रस्तो विशीर्णः पुण्यस्य स्कन्धोऽर्थलाभमात्रहेतुरंशो यस्य । बह्वायासैः कृष्यादिभिः केवलं श्रमो यस्मिन्सः ॥ १० ॥ कुतो निधनमगच्छत्तदाह—ज्ञातय इति । दैवतो गृहदाहादिना । कालतो निखातधान्यादि । नृणां पार्थिवानां च द्वन्द्वैक्यम्, तस्मात् ॥ ११ ॥ १२ ॥ नष्टरायः नष्टो रा अर्थो यस्य तस्य । तपस्विनः संतप्तस्य ॥ १३ ॥ मे मया । आत्मा देहः । वृथा वृथैव । आत्मानुतापं प्रपञ्चयति—न धर्मायेत्यादिना । यस्य ईदृशोऽर्थायासस्तेन मया ॥ १४ ॥ नरकाय सत्यप्यर्थे धर्माननुष्ठानात् ॥ १५ ॥ श्वित्रः श्वेतकुष्ठम् ॥ १६ ॥ ॥ ॥ ॥

१ पञ्चयज्ञदेवता इति । देवर्षिपितृमनुष्यभूतानीति भावः । २ विपाकं फलम् । ३ नराश्च पार्थिवाश्च तेषां समाहारो नृपार्थिवं तस्मात् । ४ निर्वेदः अर्थेऽलबुद्ध्या स्वावज्ञानम् ।

सिद्धेऽप्यर्थे तस्य उत्कर्पे संवर्धने । नाशोपभोगयोर्द्वन्द्वैक्यम् । नाशे उपभोगे चेत्यर्थः । साधनोत्कर्पयोरायासस्तत्स्त्रासश्चिन्ता च नाशे भ्रम इति ॥ १७ ॥ किंच, अर्थप्राप्त्यर्थास्तेयादयः पञ्चनर्थाः, प्राप्तेऽर्थे स्मयादयो व्यसनैः सह नव । व्यसनानि स्त्रीद्यूतमद्यविपयाणि त्रीणि ॥ १८ ॥ १९ ॥ भेदवैरस्पर्धाः प्रपञ्चयति द्वाभ्याम्—भिद्यन्ते स्नेहं त्यजन्ति । कथंभूताः । एकास्निग्धाः एके एकप्राणास्ते च ते आस्निग्धा अतिप्रियाश्चेत्यर्थः । कुतः । काकिणिना । पुंस्त्वमार्पम् । विंशतिवराटिका काकिणी तया ॥ २० ॥ संरब्धाः क्षुभिताः । स्पृधः स्पर्धमानाः ॥ २१ ॥ इह तावदर्थनिष्ठानामेतेऽनर्थाः परलोकेऽप्यनर्था एव तेपामित्याह—लब्ध्वेति त्रिभिः । मानुष्यं जन्म, तत्रापि द्विजाग्र्यतां ब्राह्मण्यम् । स्वार्थं घ्नन्ति आत्महितं न कुर्वन्ति ये ते यान्ति ॥ २२ ॥ अमरप्रार्थ्यतां

अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ॥ नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥ स्तेयं हिंसानृतं दम्भः कामः क्रोधः स्मयो मदः ॥ भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥ एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ॥ तस्मादनर्थमर्थाख्यं श्रेयोर्थी दूरतस्त्यजेत् ॥ १९ ॥ भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ॥ एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः ॥ २० ॥ अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ॥ त्यजन्त्याशु स्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ॥ तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ॥ द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥ देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च भागिनः ॥ असंविभज्य चात्मानं यक्षवित्तः[1] पतत्यधः ॥ २४ ॥ व्यर्थयार्थेहया वित्तं प्रमत्तस्य[2] वयो बलम् ॥ कुशला येन सिध्यन्ति जरठः किं नु साधये ॥ २५ ॥ कस्मात्संक्लिश्यते विद्वान्व्यर्थयार्थेहयाऽसकृत् ॥ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ॥ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥ २७ ॥ ॥ ॥ ॥

दर्शयन्नाह—स्वर्गेति । लोकं देहम् । अनुपज्जेत आसक्तिं कुर्यात् ॥ २३ ॥ ऋपयो मनुष्ययज्ञब्रह्मयज्ञयोर्देवताः । देवपितृभूतानि इतरेपु ज्ञातयः सगोत्राः । बन्धवो विवाहादिना संबद्धास्तान् । अन्यांश्च भागिनो भागार्हान् । आत्मानं चासंविभज्यान्नादिभिरसंतर्प्य ॥ २४ ॥ एवं विमृश्यानुतप्यमान आह—व्यर्थयार्थेहया प्रमत्तस्य मम वित्तादि गतमिति शेपः । येन वित्तादिना कुशला विवेकिनः सिध्यन्ति मुच्यन्ते । जरठो वृद्धः ॥ २५ ॥ अन्यमपि स्वसदृशं शोचति—कस्मादेवमनर्थं विद्वानपि संक्लिश्यत इति । कारणं संभावयति—कस्यचिदिति ॥ २६ ॥ ननु नायं मोहितः क्लिश्यति किंतु धनादिभिर्भोगादिविधित्सयाऽत आह—किं धनैरिति । उत पुनरपि ॥ २७ ॥ ॥ ॥ ॥ ॥

१ यक्षवित्तः यक्षवद्रक्षमदेयमभोग्यं च वित्तं यस्य सः । २ प्रमत्तस्य स्वार्थेऽनवहितस्य ।

इदानीं संपन्नविवेकः संहृष्यन्नाह—नूनमिति त्रिभिः । येन प्रीतेनात्मनः प्लवरूपो निर्वेदश्च भवति स हरिर्मे नून प्रीत इति ॥ २८ ॥ अङ्गं शोषयिष्ये तपसा । तद्वा विद्यया लयं नेष्यामि । यदि स्यात्कालावशेषस्तर्ह्यात्मन्येव सिद्धस्तुष्टः सन् । अखिले स्वार्थे धर्मादिसाधनेऽप्रमत्तः सन् ॥ २९ ॥ अनुमोदेरन्ननुगृह्णन्तु । ननु देवैरनुमोदितोऽपि जरठः स्वल्पेन कालेन किं साधयिष्यसि, तत्राह—मुहूर्तेनेति ॥ ३० ॥ अभिप्रेत्य निश्चित्य । आवन्त्योऽवन्तिदेशभवः । हृदयग्रन्थीनहंकारममकारान् ॥३१॥ असङ्ग आसक्तिशून्यः । अलक्षितः श्रैष्ठ्यमद्योतयन् ॥३२॥ प्रवयसं वृद्धम् । अवधूतं मलिनम् । पर्यभवन्नवमेनिरे । हे भद्र ।

नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ॥ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८॥ सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थे यदि स्यात्सिद्ध आत्मनि ॥ २९ ॥ तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥ ॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ॥ उन्मुच्य हृदयग्रन्थीन् शान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥ स चचार महीमेतां संयतात्मेन्द्रियानिलः ॥ भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वा पर्यभवन् भद्र बह्वीभिः परिभूतिभिः ॥३३॥ केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ॥ पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥ प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ॥ अन्नं च भैक्ष्यसंपन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥ मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि ॥ यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ ३६ ॥ तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ॥ बध्नन्ति रज्ज्वा तं केचिद्बध्यतां बध्यतामिति ॥३७॥ क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ॥ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥ ३८ ॥ अहो एष महासारो धृतिमान् गिरिराडिव ॥ मौनेन साधयत्यर्थं बकवद्दृढनिश्चयः ॥ ३९ ॥ इत्येके विहसन्त्येनमेके दुर्वातयन्ति च ॥ तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥४०॥ एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ॥ भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥ ४१ ॥ ॥

परिभूतिभिस्तिरस्कारैः ॥३३॥ परिभवानेव दर्शयति—केचिदिति सप्तभिः ॥३४॥ भो भगवन्, गृहाणेति दर्शितानि सन्ति प्रदाय पुनश्चाददुः ॥३५॥ अन्ने मूत्रयन्ति । मूर्धनि च ष्ठीवन्ति । फूत्कारेण श्लेष्माणं प्रक्षिपन्ति ॥३६॥३७॥ क्षिपन्ति निन्दन्ति । निन्दामेवाह—एष धर्मध्वजस्त्रिदण्डलिङ्गोपजीवी । शठो लोकवञ्चकः । तदेवाहुः—क्षीणवित्त इति ॥ ३८ ॥ महासारोऽतिबली ॥ ३९ ॥ दुर्वातयन्ति तदुपर्यधोवायुं मुञ्चन्ति । बबन्धुः शृङ्खलैः । निरुरुधुः कारागृहादिषु । द्विजं शुकसारिकादि यथा ॥ ४० ॥ भौतिकं दुर्जनादिकृतम् । दैहिकं ज्वरादिनिमित्तम् । दैविकं शीतोष्णादिप्रभवम् । दिष्टं दैवप्राप्तम् ॥ ४१ ॥ ॥

१ भिक्षुः सन्यासी । २ 'दौर्वादयन्ति' इति पाठः ।

धर्मात्पातयद्भिः परिभूतोऽपि सात्त्विकीं धृतिमास्थाय स्वधर्म एव स्थित इमां वक्ष्यमाणां गाथामगायत। सात्त्विकी धृतिश्च,—'धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः॥ योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी॥' इति॥४२॥ तामेवाष्टादशश्लोकीं[1] गाथामाह—नायमिति। न चात्मा नापि ग्रहादयः। मनः परं केवलं सुखदुःखयोः कारणं वदन्ति—'मनसा ह्येव पश्यति मनसा शृणोति' इत्यादिश्रुतयः॥ ४३॥ परिवर्तनप्रकारमाह—मन इत्यादि। गुणान् गुणवृत्तीः[2] सृजति। ततश्च तेभ्यो गुणेभ्यः शुक्लानि सात्त्विकानि। कृष्णानि तामसानि। लोहितानि राजसानि। सवर्णास्तत्तत्कर्मानुरूपाः सृतयो देवतिर्यङ्नरादिगतयः॥४४॥ तर्हि मनस एव संसारः स्यान्नात्मन इत्याशङ्क्याह—अनीह इति। अयमर्थः—अविद्ययाध्यासेनेयमात्मनः संसृतिर्न तु स्वतः। यतस्तद्रहितस्येश्वरस्य सा नास्ति किंतु तद्वतो जीवस्यैवेति। तदेवाह—मनसा समीहमानेन[3] सहनियन्तृत्वेन वर्तमानोऽपि परमात्मा अनीहस्तत्क्रियासङ्गरहितः[4]। यतो हिरण्मयो विद्याशक्तिप्रधानः। यतो मत्सखः। मम जीवस्य सखा नियन्ता। अत उच्चैर्विचष्टे। अतिरोहितज्ञानेन केवलं पश्यतीत्यर्थः। असौ पुनरहं

परिभूत इमां गाथामगायत नराधमैः॥ पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम्॥४२॥ ॥ द्विज उवाच ॥ नायं जनो मे सुखदुःखहेतुर्न देवतात्मा ग्रहकर्मकालाः॥ मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत्[5] ॥४३॥ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि॥ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति॥४४॥ अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे॥ मनः स्वलिङ्गं परिगृह्य कामान् जुषन्निबद्धो गुणसङ्गतोऽसौ॥ ४५॥ दानं स्वधर्मो नियमो यमश्च श्रुतं[6] च कर्माणि च सद्व्रतानि॥ सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः॥४६॥ समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम्॥ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः[7]॥४७॥ मनोवशेऽन्ये ह्यभवंस्म देवा मनश्च नान्यस्य वशं समेति॥ भीष्मो हि देवः सहसः सहीयान्युञ्ज्याद्वशे तं स हि देवदेवः॥ ४८॥ ॥

जीवः स्वलिङ्गं स्वस्मिन्नात्मनि लिङ्गयति द्योतयति संसारमिति तथा तन्मनः परिगृह्यात्मत्वेन स्वीकृत्य मनसो गुणैः कर्मभिः सङ्गतः संबद्धो गुणसङ्गाद्वा कामान् जुषन्निबद्ध इति॥ ४५॥ अतो मनोनिग्रहे कृते सर्वं कृतं स्यात्, तं विना तु सर्वं व्यर्थमित्याह—दानमिति द्वाभ्याम्। स्वधर्मो नित्यनैमित्तिकः। सद्व्रतान्येकादश्युपवासादीनि। अन्यानि च यावन्ति कर्माणि। एते सर्वे उपाया मनोनिग्रहलक्षणोऽन्तो निष्ठा फलं येषां ते तथा। ननु ज्ञानाङ्गत्वं तेषां प्रसिद्धं तत्राह—मनसः समाधिर्निग्रह एव परो योगो ज्ञानम्॥ ४६॥ अतो यस्य मनः समाहितं भवति तस्य किं कृत्यमस्ति वदेत्यपरं प्रत्युपदिशन्निव स्वयमेवाह—असंयतं विक्षिप्तं चेत्। यद्वा, विनश्यदालस्यादिना लीयमानं चेद्भवेत्तर्ह्येभिर्दानादिभिः किमपरं प्रयोजनं स्यात्। न किंचिदित्यर्थः॥ ४७॥ नन्वितरेन्द्रियजयः प्रयोजनं स्यान्नेत्याह—मनोवश इति। देवा इन्द्रियाणि तदधिष्ठातारो वा। भीष्मो योगिनामपि भयंकरो मनोलक्षणो देवः। कुतः। सहसो

१ अष्टादशेति। यद्यपि गाथाया षोडशैव श्लोकाः सन्ति, न त्वष्टादश तथापि गाथार्थतात्पर्यस्य भगवताग्रे द्वाभ्यां वर्शितत्वादष्टादशश्लोकीमित्युक्तम्। २ गुणवृत्तीः कामाद्याः। ३ समीहमानेन गुणवृत्तीः सृजता। ४ चिच्छक्तिबलेन मनोध्यासाभावान्मनःक्रियासङ्गशून्यः। ५ परिवर्तयेत् पुनः पुनः प्रापयेत्। ६ श्रुतमध्ययनम्। 'श्रुतानि' इति पाठे श्रुतानि शास्त्राणि। ७ तेषां स्वधर्मादीनाम्।

बलादपि बलिनोऽपि वा सहीयान्बलवान् । अतस्तं यो वशवर्तिनं कुर्यात्स एव देवदेवः सर्वेन्द्रियजेता भविता नान्यः । तथा च श्रुतिः—'मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय ॥ भीष्मो हि देवः सहसः सहीयान् ॥' इति ॥ ४८ ॥ अतोऽसह्या रागादयो वेगा यस्य तम्, अत एवारुन्तुदं अरुर्मर्म तत्तुदति व्यथयतीत्यरुन्तुदस्तम् । तत् नेति च्छेदः । तं न विजित्याजित्वा तत् ततो ये केचिन्मर्त्यैः कैश्चिदसद्विग्रहं कुर्वन्ति । तत्र चानुकूलप्रतिकूलादीन-न्यान्मित्रादीन्कुर्वन्ति ते मूढा इत्यर्थः ॥ ४९ ॥ ततश्चानेन प्रकारेण संसारे भ्रमन्तीत्याह—देहमिति । मनोमात्रपरिकल्पितमिमं स्वदेहमहमिति पुत्रादि-देहं च ममेति स्वीकृत्य । तमसि संसारे ॥ ५० ॥ तदेवं मनस एव दुःखकारणत्वमुपपाद्येदानीं जनादीनां षण्णामकारणत्वं प्रपञ्चयति—जनस्त्विति षड्भिः । अत्र चास्मिन्नपि पक्षे आत्मनः किं, न किंचित् । सुखदुःखकर्मत्वं तत्कर्तृत्वं चेत्यर्थः । कुत इत्यत आह—ह निश्चितं भौमयोर्विकारयोर्देहयोस्तत्, न त्वात्मनः । अमूर्तस्याक्रियस्य च हननादिषु कर्मत्वकर्तृत्वानुपपत्तेः । तथापि दुःखमात्मपर्यवसाय्येवेति चेदेवमपि परमात्मन उभयत्राप्येकत्वान्न कोपविषयोऽस्तीति स्वदृष्टान्तेन दर्शयति—जिह्वामिति ॥ ५१ ॥ यदि देवता अस्तु नाम, तत्रापि पक्षे आत्मनः किम् । यतो विकारयोर्विक्रियमाणयोर्देवयोस्तद्धस्तेन मुखेऽभिहते ।

तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ॥ कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून्विमूढाः ॥४९॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ॥ एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥ जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत् ॥ जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् ॥ यदङ्गमङ्गेन निहन्यते क्वचित्क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ॥ न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५३ ॥ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ॥ ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥ ॥ ॥

तेन वा हस्ते दष्टे तदभिमानिनोर्वह्नीन्द्रयोरेव तत्, न त्वविक्रियस्यानहंकारस्य चात्मनः । देवतानां च सर्वदेहेष्वभेदान्न कोपविषयोऽस्तीति स्वदेहदृष्टान्तमाह—यद्यदा अङ्गं देवताधिष्ठानं हस्तमुखादि । अत एव पूर्वत्र देवतानधिष्ठानरूपभूविकारदन्तोदाहरणम् ॥ ५२ ॥ आत्मनः सुखदुःखाद्याकारपरिणामोऽतः स एव यदि हेतुः स्यात्तत्र तस्मिन्पक्षे अन्यतः किम् । न किंचिदन्यतो भवति यस्मै कुप्येदित्यर्थः, यतो निज एव स्वभावः सः । नन्वात्मनस्तथा परिणामोऽन्य-निमित्तो भवत्यतोऽस्ति कोपविषय इति चेत्तत्राह—न हीति । आत्मव्यतिरिक्तं नास्त्येव । यदि स्यादस्तीति प्रतीयेत, तर्हि तन्मृषैवातः कस्माद्धेतोः क्रुध्येत, यतो नास्ति निमित्तं न च सुखं दुःखं चेत्यर्थः ॥ ५३ ॥ ग्रहपक्षेऽप्यजस्यात्मनः किं, यतो जन्यत इति जनो देहस्तस्यैव जन्मलग्नापेक्षया द्वादशाष्टमादिराशि-स्थास्ते सुखदुःखयोर्निमित्तं भवन्ति । किंच, अन्तरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादार्धादिदृष्ट्यादिभेदैः पीडां वदन्ति दैवज्ञाः, न तु ग्रहकोणादिषु स्थितस्य तद्दृष्टिगोचरस्य पुरुषस्य । ग्रहगतैव तु पीडा तल्लग्नोत्पन्ने देहे तस्याभिमानाद्भवति । अतः पुरुषस्ततो ग्रहाद्देहाचान्यः कस्मै क्रुध्येत ॥ ५४ ॥ ॥ ॥

१ उभयत्र स्वदेहे परदेहे च । २ विक्रियमाणयोः हननक्रियाया कर्मत्वं कर्तृत्वं च प्राप्तयोः । ३ अत्र लोके। अत्र जीवसघे केचिदिति विज० । ४ हीति मूले टीकायां च पाठः । ५ पूर्वत्र देहपक्षे ।

कर्म हेतुश्चेदस्तित्वस्यसूयोपगमः कर्मैव नास्ति कुतस्तस्य हेतुत्वमिति, तदाह—हि यस्मात्कर्म एकस्य जडाजडत्वे सति स्यात्, जडत्वाद्विकारित्वोपपत्तेः, अजडत्वाच्च हितानुसंधानतः प्रवृत्तिसंभवात्। अचिज्जडो देहोऽतस्तस्य प्रवृत्तिर्न संभवति। पुरुषस्तु सुपर्णः शुद्धज्ञानस्वरूपोऽतः कस्मै क्रुध्येत, यतः सुखदुःखयोर्मूलभूतं कर्मैव नास्तीति ॥ ५५ ॥ तत्र कालपक्षेऽप्यात्मनः किं, यतोऽसौ कालात्मक एव ब्रह्मांशत्वात्। स्वांशस्य स्वतः पीडा नास्तीत्यत्र दृष्टान्तः—नाग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो दाहतो नाशोऽस्ति। तत्रोपाधिभूतकाष्ठांशदाहान्नाशः स्यादिति दृष्टान्तान्तरमाह—हिमस्य तच्छैत्यं तदंशस्य तुषारकणस्य नाशकं न स्यादित्यर्थः। किंच आस्तामंशत्वं वस्तुतः पर एवायं न च परस्य द्वन्द्वं सुखदुःखादिकमस्तीति ॥ ५६ ॥ तदेवं षडेते हेतवः प्रसिद्धा निरस्ताः, यदि कश्चिद्धेत्वन्तरमुद्भावयेत्तदपि वस्तुमहिमापेक्षायां न संभवतीत्याह—न केनचिदिति। नन्वपरोक्षः कथमपह्नूयते तत्राह—यथेति। संसृतिमविद्यमानामेव

कर्मास्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तद्धि जडाजडत्वे ॥ देहस्त्वचित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५५ ॥ कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मै न परस्य द्वन्द्वम् ॥ ५६ ॥ न केनचित्क्वापि कथंचनास्य द्वन्द्वोपरागः परतः परस्य ॥ यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥ एतां स आस्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ॥ अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥ ॥ श्रीभगवानुवाच ॥ निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ॥ निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽमूं मुनिराह गाथाम् ॥ ५९ ॥ सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥ ६० ॥ तस्मात्सर्वात्मना तात निगृहाण मनो धिया ॥ मय्यावेशितया युक्त एतावान्योगसंग्रहः ॥ ६१ ॥ ॥

रूपयति प्रकाशयतीति तथा तस्य अहमोऽहंकारस्य यथा स्यान्न तथा परतः प्रकृतेः परस्यात्मनो द्वन्द्वसंबन्धः। अहंकारनिमित्तोऽसौ न वास्तव इत्यर्थः। एवं प्रबुद्धो यः स भूतैः कृत्वा न बिभेति ॥ ५७ ॥ अतोऽहमपि तथैव परमात्मनिष्ठतया तरिष्यामीत्याह—एतामिति। सोऽहमित्यन्वयः। नन्वियं निष्ठैव कथं भवेत्तदाह—मुकुन्देति ॥ ५८ ॥ प्रस्तावेन सह गाथार्थं संक्षेपतो दर्शयति द्वाभ्याम्—इत्थं नष्टद्रविणो निर्विद्य गतक्लमः प्रव्रज्य गां पर्यटन्नसद्भिर्निराकृतोऽपि स्वधर्मादकम्पितः सन्मुनिरमूं गाथामगायतेत्यन्वयः ॥ ५९ ॥ मित्रोदासीनरिपवः सर्वोऽपि संसारस्तमसोऽज्ञानत आत्मनो मनसो विभ्रममात्रः कृतो न तात्त्विक इत्यर्थः ॥ ६० ॥ उक्तं द्वन्द्वसहनोपायमुपसंहरति—तस्मादिति ॥ ६१ ॥ ॥ ॥ ॥

१ असूयोपगमः मीमांसकमते दोषदृष्ट्यङ्गीकारः। २ जीवात्मा। ३ जीवात्मनो ब्रह्मांशत्वात्कालब्रह्मणोरैक्यादिति भावः। ४ तदंशस्य अग्न्यंशस्य। ५ आत्मविभ्रम इति पञ्चम्यर्थे प्रथमा। आत्मविभ्रमादन्यो नेत्यर्थः। ६ एतावान्मनोनिग्रहपर्यन्त एव। ७ आहेत्यस्यायमर्थः।

मनोनिग्रहाशक्तोऽप्येतच्छ्रवणादिनिष्ठस्तत्फलं प्राप्नोतीत्याह—य इति । द्वन्द्वैः सुखदुःखादिभिः ॥ ६२ ॥ भिक्षुगीतं मिषं कृत्वा भक्तचित्तगतं हरिः ॥ मोहं निघ्नन्निहाभाति परमानन्दरूपतः ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ॥ आत्मनः सर्वभावानामागमापायचिन्तया ॥ १ ॥ स्वपदद्वन्द्वभक्तानामद्वन्द्वत्वाय संयमम् ॥ चित्तस्योक्त्वा पुनः कृष्णः सांख्यमत्राह तत्कृते ॥ २ ॥ अद्वितीयात्परमात्मनो मायया प्रकृतिपुरुषद्वारा सर्वं द्वैतमुदेति पुनस्तत्रैव लीयत इत्यनुसंदधानस्य द्वन्द्वभ्रमो निवर्तत इति वक्तुं सांख्यं प्रस्तौति—अथेति । पूर्वैः कपिलादिभिर्विनिश्चितम् । वैकल्पिकं भेदनिमित्तम् । भ्रमं सुखदुःखादिरूपम् ॥ १ ॥ अथोशब्दः कार्त्स्न्ये । ज्ञानं द्रष्टा तेन दृश्यः कृत्स्नोऽप्यर्थश्चाविकल्पितं विकल्पशून्यमेकमेव । ब्रह्मण्येव लीनमासीदित्यर्थः । कदेत्यपेक्षायामाह—अयुगे युगेभ्यः पूर्वम्, प्रलय इत्यर्थः । तथा आदौ

य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ॥ धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ६४ ॥
॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ॥ यद्विज्ञाय पुमान्सद्यो जह्याद्वैकल्पिकं भ्रमम् ॥ १ ॥ आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ॥ यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥ तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोगोचरं सत्यं द्विधा समभवद्बृहत् ॥ ३ ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥ ४ ॥ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ॥ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥ ५ ॥ तेभ्यः समभवत्सूत्रं महान्सूत्रेण संयुतः ॥ ततो विकुर्वतो जातो योऽहंकारो विमोहनः ॥ ६ ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥

यत्कृतयुगं तस्मिंश्चान्यदापि यदा विवेकनिपुणा जना भवन्ति तदापि तेषां भेदास्फूर्तेः ॥ २ ॥ तद्बृहद्ब्रह्म वाङ्मनोऽगोचरं यथा भवति तथा माया दृश्यं फलं तत्प्रकाशस्तद्रूपेण मायाविलासरूपेण वा द्विधाभूत् ॥ ३ ॥ तयोर्द्विधाभूतयोरंशयोर्मध्ये उभयात्मिका कार्यकारणरूपिणी ॥ ४ ॥ अभवन्नभिव्यक्ता बभूवुः । मया परमेश्वरेण । जीवादृष्टप्रयुक्तत्वात्सृष्टेः पुरुषानुभूतत्वम् । यद्वा, स्वस्यैव प्रकृतीक्षणरूपा या पुरुषावस्था तदनुमतेन तद्द्वारेणेत्यर्थः ॥ ५ ॥ सूत्रं क्रियाशक्तिमान् प्रथमो विकारः । ततो महान् ज्ञानशक्तिः । नन्वयं महानेव प्रथमो विकारः प्रसिद्धस्तत्राह—स च ज्ञानक्रियागर्भत्वात्सूत्रेण संयुतो न पृथक् । एकमेव तत्त्वं क्रियाज्ञानशक्तिभ्यां द्विधोच्यत इत्यर्थः । विमोहनो जीवस्य भ्रमहेतुः स जातः ॥ ६ ॥ यतस्तन्मात्रादीनां कारणम् । मनःशब्देन देवानामप्युपलक्षणम् । चिदचिन्मयः, चिदाभासव्याप्तत्वादुभयग्रन्थिरूप इति जीवोपाधित्वं दर्शितम् । यद्यपि—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिश्रुतेः,

१ सर्वभावानां प्रकृत्यादिभूपर्यन्ततत्त्वानाम् । २ केवलमेकं गुणवैषम्यरहितम् । ३ जात्यादिभेदशून्यम् । ४ ज्ञानं द्रष्टा । ५ भावोऽर्थः । ६ पुरुषो जीवस्तदनुज्ञया । ७ 'मत्सूत्रेण च सयुतः' इति पाठः । ८ 'जातोऽहङ्कारो यो विमोहनः', 'विमोहकः' इति पाठौ । ९ वैकारिकः विगतः कारो त्रिपक्षो यस्मात् स विकारः । १० त्रिवृत्त्रिविधः ।

'अन्नमयं हि सौम्य मनः' इत्यादिश्रुतेश्च प्रथमं भूतानि जायन्ते, तेभ्यश्चापञ्चीकृतेभ्यः प्राणादिक्रमेण समष्ट्यात्मकं लिङ्गशरीरं, पञ्चीकृतेभ्यश्च ब्रह्माण्डं, तस्मिन्वैराजस्तदन्तर्यामी लीलाविग्रहः क्षीराब्धिशायी श्रीनारायणस्तन्नाभिपद्मे च वैराजस्य भोगविग्रहश्चतुराननस्ततो यथावसरमन्येषां जीवानामाविर्भाव इति प्रक्रिया तथापि चित्ताभिव्यक्तिपूर्वकोऽहंकारस्ततो भूतेन्द्रियादिव्यवहार इत्येतावता महदादिक्रमेण सृष्टिरुच्यते। तथा चोक्तम्—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ॥ उपायः सोऽवताराय नास्ति भेदः कथंचन ॥' इति ॥ ७ ॥ तस्मात्त्रिविधात्त्रिविधप्रपञ्चोत्पत्तिं दर्शयति—अर्थ इति। तन्मात्रिकाच्छब्दादितन्मात्रकारणात्तामसात्तद्द्वारा अर्थो महाभूतरूपो जज्ञे बभूव, भूतानामावरणस्वभावत्वात् । इन्द्रियाणि दश तैजसाद्राजसात् । तेषां प्रवृत्तिस्वभावत्वात् । वैकृतात्सात्त्विकाद्देवताः 'दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः' । चन्द्रश्चेत्येकादश । चशब्दान्मनश्च । तेषां प्रकाशस्वभावत्वात् ॥ ८ ॥ मम वैराजान्तर्यामिणः ॥९॥ सलिले संस्थितिर्यस्य तत्सलिलसंस्थिति तस्मिन् सलिलसंस्थितावण्डे श्रीनारायणरूपो लीलाविग्रहेण समभवं स्थित इत्यर्थः । विश्वाख्यं लोककारणभूतम् । तत्र चात्मभूश्चतुराननरूपभोगविग्रहेण पुनर्वैराज एव तस्मिन्नाविर्भूत इत्यर्थः ॥ १० ॥ रजसा युक्तो मदनुग्रहात्तपसासृजत् । भूरतलादिसहिता । भुवः अन्तरिक्षलोकः । स्वः स्वर्लोकः । महर्लोकादेरप्युपलक्षणम् ॥ ११ ॥ लोकसृष्टिप्रयोजनमाह—देवानामिति सार्धेन । ओको निवासः । पदं स्थानम् । त्रितयात्परं महर्लोकादि ॥ १२ ॥ भूमेरधः अतलादि । एवं व्यवस्थायां कारणमाह सार्धेन—त्रिलोक्यां पातालादिसहितायाम् ॥ १३ ॥ योगादितारतम्येन यथोत्तरं महर्लोकादयः । मद्गतिर्वैकुण्ठलोकः ॥ १४ ॥ तत्र तु मद्गतिव्यतिरेकेणेतरा गतयश्चञ्चला इत्याह वैराग्यार्थम् । मया कालशक्तिना धात्रा परमेश्वरेण कर्मफलप्रदेन हेतुभूतेन गुणप्रवाहे संसारे उन्मज्जत्यासत्यलोकमुत्तमा गतीः प्राप्नोति पुनर्निमज्जत्यास्थावरं नीचा गतीः प्राप्नोति ॥ १५ ॥ सृष्टिनिरूपणस्याद्वितीयात्मप्रतिपत्त्यर्थत्वात्तत्प्रतिपादनाय कारणेन कार्यस्य व्याप्तिमाह—अणुरिति । उभयेन संयुक्तो व्याप्तः । तदेवाह—प्रकृत्येति ॥ १६ ॥

अर्थस्तन्मात्रिकाज्जज्ञे[2] तामसादिन्द्रियाणि च ॥ तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥ मया संचोदिता
भावाः सर्वे संहत्यैककारिणः[3] ॥ अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥९॥ तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ ॥
मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः[1] ॥ १० ॥ सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ॥ लोकान्स-
पालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥ देवानामोक आसीत्स्वर्भूतानां च भुवः पदम् ॥ मर्त्यादीनां च
भूर्लोकः सिद्धानां त्रितयात्परम् ॥ १२ ॥ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ॥ त्रिलोक्यां गतयः सर्वाः
कर्मणां[4] त्रिगुणात्मनाम् ॥१३॥ योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः
॥ १४ ॥ मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ॥ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥ अणु-
र्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति ॥ सर्वोऽप्युभयसंयुक्तः[5] प्रकृत्या पुरुषेण च ॥ १६ ॥ ॥

१ कः प्रजापतिः । २ 'तन्मात्रको जज्ञे' इति पाठः । ३ संहत्य मिलित्वा कार्यकरणसमर्थाः । ४ कर्मणां गार्हस्थ्यधर्माणाम् । ५ 'सर्वं ह्युभयसंयुक्तं' इति पाठः ।

इदानीं कार्यस्य कारणात्मतां दर्शयति—यस्य कार्यस्य आदिः कारणमन्तो लयस्थानं च तस्य मध्यं मध्यावस्थापि स एव । वै प्रसिद्धं मृत्सुवर्णादिषु । अत एवाव्यभिचारित्वात्स एव सन्नेतरः । अलं तर्हि मिथ्याभूतकार्यसृष्ट्या, तत्राह—विकार इति । तैजसाः कटककुण्डलादयः, पार्थिवा घटशरावादयश्च यथेति ॥ १७ ॥ नन्वेवं तर्हि स्वकार्यं प्रति महदादीनामप्याद्यन्तरूपत्वात्सत्यत्वं स्यात्तत्राह—यदिति । यद्रूपमुपादायोपादानकारणतया स्वीकृत्य पूर्वः कारणरूपो महदादिर्भावः अपरमहंकारादिकं भावं विकुरुते सृजति । यथा पिण्डो मृदमुपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत् । स एव सन्निति पूर्वस्यानुषङ्गः । कथं तर्हि 'मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिस्तत्राह—आदिरिति । यद्यदा यस्यादिरन्तश्च विवक्ष्यते तदा तत्सत्यमित्यभिधीयते श्रुत्या । परमकारणात्मनः सत्यत्वविवक्षयेत्यर्थः ॥ १८ ॥ ननु तथापि प्रकृतिपुरुषकालानामकार्यभूतानां भिन्नत्वात्कथमद्वितीयता तत्राह—प्रकृतिरिति । अस्य सतः कार्यस्योपादानं या प्रकृतिः प्रसिद्धा यश्च तस्या आधारोऽधिष्ठाता परः पुरुषो यश्च गुणक्षोभेणाभिव्यञ्जकः कालस्तत्त्रितयं ब्रह्मरूपोऽहमेव न तु पृथक्, प्रकृतेः शक्तित्वात्पुरुषकालयोरवस्थारूपत्वात् ॥ १९ ॥ एवं तावत्कालत्रयेऽप्यव्यभिचारित्वाद्ब्रह्मैव सत्यमिति वक्तुं तस्य सृष्टिकारणत्वेनादौ सत्त्वमुक्त्वा मध्येऽपि तस्यैव सत्त्व-

यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ॥ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥ यदुपादाय पूर्वस्तु भावो विकुरुते परम् ॥ आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ १८ ॥ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १९ ॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ॥ महान् गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥ विराण्मयासाद्यमानो लोककल्पविकल्पकः ॥ पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २१ ॥ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ॥ धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥ ॥ ॥ ॥

मुपपाद्यान्तेऽप्यवधित्वेन सत्त्वं दर्शयिष्यन्सर्गप्रवाहरूपायाः स्थितेरवधिमाह—सर्ग इति । महान्बहुलः । पौर्वापर्येण पितृपुत्रादिरूपेण । नित्यशः अविच्छेदेन । किमर्थं प्रवर्तते तदाह—गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवस्तदर्थस्तद्भोगप्रयोजनः । किंपर्यन्तं प्रवर्तते । यावत्स्थितेरन्तः । सोऽपि किमवधिस्तत्राह—यावदीक्षणं परमेश्वरस्य तावत् ॥ २० ॥ प्रलयं निरूपयति—विराट् ब्रह्माण्डं मया कालात्मना आसाद्यमानो व्याप्यमानो लोकानामहरहःकल्पाः सृष्टिप्रलया विविधाः कल्पन्ते यस्मिंस्तान्वा स्वस्मिन्विकल्पयतीति स तथाभूतोऽपि पञ्चत्वरूपाय विशेषाय विभागाय कल्पते योग्यो भवति । पञ्चानां भूतानामैक्यरूपस्तेषां पृथग्भावापत्त्या नश्यतीत्यर्थः ॥ २१ ॥ तत्र 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः' इति श्रुत्युक्तसृष्टिक्रमप्रातिलोम्येन लयमाह—अन्न इति । मर्त्यं शरीरं येनोपचितं तस्मिन्नन्ने शतवर्षायामनावृष्टौ क्षीणे सति तत्रैव लीयत इत्यर्थः । अन्नं धानासु बीजमात्रावशेषं भजतीत्यर्थः । धाना भूमौ उप्ता न प्ररोहन्तीत्यर्थः । भूमिर्गन्धे संवर्तकादित्यशोषिता संकर्षणमुखाग्निना दग्धा च सती भूतसूक्ष्मरूपगन्धमात्रावशेषा भवति ॥ २२ ॥ ॥ ॥

१ सर्वविकाराणां मिथ्यात्वेऽपि । २ केषांचिन्मते अधिष्ठानकारणम् । ३ कालो निमित्तम् ।

गन्धः शतवार्षिक्या वृष्ट्या प्लाव्यमानोऽप्सु लीयते । एवमेवापो ज्योतिषा शोष्यमाणा रसमात्रावशेषा भवन्ति । ततो रसोऽपि तस्मिन् लीयते । ज्योतिश्च वायुनाभिभूयमानं रूपमात्रं सत्तस्मिन् लीयते ॥२३॥ वायुश्च कालप्रेरितेनाम्बरेण ग्रस्तः स्पर्शमात्रः संस्तस्मिन् । अम्बरं च भूतादिनाहंकारेण ग्रसमानं शब्दतन्मात्रे । तदेवं तामसाहंकारकार्यस्य शब्दपर्यन्तं लयमुक्त्वा राजसाहंकारकार्यस्याप्याह—इन्द्रियाणि स्वयोनिष्विति । स्वप्रवर्तकदेवतासु । तेषां प्रवृत्तिस्वभावत्वात्प्रवृत्तेश्च देवताधीनत्वात्तासु लय इति वाचोयुक्तिः । वस्तुतस्तु स्वकारणे राजसाहंकारे लयोऽभिप्रेतः ॥ २४ ॥ योनिरित्युद्देश्यगतत्वादेकत्वमविवक्षितम् । योनयो देवतास्तु मनसि । कुतः । ईश्वरे नियन्तरि, 'मनो वशेऽन्ये ह्यभवं स्म देवाः' इत्युक्तत्वात् । इन्द्रियलयोक्त एवात्राप्यभिप्रायः । मनश्च देवताभिः सह वैकारिकेऽहंकार इत्यर्थः । तामसाहंकारकार्यावशेषितस्य शब्दस्य लयमाह—शब्दो भूतादिं तामसाहंकारमप्येति, तस्मिन् लीयत इत्यर्थः । भूतादिरित्युपलक्षणम् । त्रिविधोऽप्यहंकारो महति जडांशं विहाय ज्ञानक्रियाशक्तिमात्ररूपो भवति । कथंभूतः । प्रभुः समर्थः । सर्वजगन्मोहकत्वात् ॥ २५ ॥ स च महान्स्वकारणेषु गुणेषु । ज्ञानक्रियाशक्तिमत्त्वाद्गुणवत्तमस्तादृग्भावं विहाय गुणमात्ररूपो भवति । तेऽव्यक्ते प्रकृतौ । साम्यावस्थां गच्छन्तीत्यर्थः । तदव्यक्तं काले

अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ॥ लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २३ ॥ रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ॥ अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥२४॥ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ॥ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥ स लीयते महान्स्वेषु गुणेषु गुणवत्तमः ॥ तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २६ ॥ कालो मायामये जीवे जीव आत्मनि मय्यजे ॥ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ॥ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥ एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥

कालाधीनत्वात्तेनैकीभूयावतिष्ठते । अव्यये उपरतवृत्तौ ॥२६॥ मायामये मायाप्रवर्तके ज्ञानमये वा । अत एव जीवयतीति जीवस्तस्मिन्महापुरुषे । अयं भावः—विश्वस्रष्टुर्महापुरुषस्योपकरणरूपः कालो वृत्त्यंशेन सृज्यश्चातस्तदात्मनावतिष्ठत इति । तदुक्तं सप्तमे—'कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत्' इति । दशमे च,—'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् ॥ निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥' इति । जीव आत्मनि । प्रकृतेर्लीनत्वेन प्रतियोग्यभावात्परिपूर्णत्वेन सद्रूपेणावतिष्ठते । आत्मा चात्मस्थ एव नान्यत्र लीयते । यतः केवलो निरुपाधिः । तत्र हेतुः—विकल्पापायाभ्यां विश्वोत्पत्तिप्रलयाभ्यां लक्ष्यतेऽधिष्ठानत्वेनावधित्वेन वेति तथा सः ॥ २७ ॥ अस्य कथनस्य प्रस्तुतोपयोगमाह—एवमिति । मनसः कथं भेदनिमित्तो भ्रमः स्यात् । जातो वा कथं हृदि तिष्ठेत् ॥ २८ ॥ उपसंहरति—एष इति ॥ २९ ॥ प्रत्यक्षमिव येनेदं दर्शितं तत्त्वमात्मनः ॥ सांख्यप्रख्यानतस्तस्मै हरये गुरवे नमः ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥

१ तस्मिन् ज्योतिषि । २ तस्मिन्वायौ रूपतन्मात्रे । ३ आकाशे । ४ तेषामिन्द्रियाणाम् । ५ स्वयोनिषु राजसाहंकारवृत्तिषु । ६ 'अप्यये' इति पाठः । ७ अन्वीक्षमाणस्य विचारयतः । ८ प्रस्तुते द्वन्द्वसहने उपयोगमुपकारताम् ।



१३९४

पञ्चविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ॥ चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥ १ ॥ प्रकृतिपुरुषविवेकज्ञानवतोऽपि यावत्प्रयत्नविशेषेण गुणत्रयवृत्तिजयो न स्यान्न तावद्द्वन्द्वोपरमोऽतस्तज्जयोपायगुणवृत्तिनिरूपणार्थमाह—गुणानामिति । सह मिश्रीभूय वर्तमानाः समिश्राः न समिश्रा असमिश्रास्तेषां विभक्तानां गुणानां मध्ये येन गुणेन यथा यादृशो भवेत्तदिदं कथयतो मत्तो निबोधेत्यर्थः ॥ १ ॥ तत्र सत्त्ववृत्तीराह—शम इति । शमो मनोनिग्रहः । दमो बाह्येन्द्रियनिग्रहः । तितिक्षा सहिष्णुत्वम् । ईक्षा विवेकः । तपः स्वधर्मवर्तित्वम् । स्मृतिः पूर्वापरानुसंधानम् । तुष्टिर्यथालाभसंतोषः । त्यागो व्ययशीलता । अस्पृहा विषयेषु वैराग्यम् । श्रद्धा आस्तिक्यं गुर्वादिषु । ह्रीरनुचिते कर्मणि लज्जा तेषामनवलोकनम् । दया दानम्, 'दय दानगतिरक्षणेषु' इति स्मरणात् । आदिशब्देनार्जवविनयादि । स्वनिर्वृतिरात्मरतिः ॥ २ ॥ रजसो वृत्तीराह—कामोऽभिलाषः । ईहा व्यापारः । मदो दर्पः । तृष्णा लाभे सत्यप्यसंतोषः । स्तम्भो गर्वः । आशीर्धनाद्यभिलाषेण देवतादिप्रार्थनम् । भिदा अहमन्य इति भेदबुद्धिः । सुखं विषयभोगः । मदोत्साहो मदेन युद्धाद्यभिनिवेशः । यशःप्रीतिः स्तुतिप्रियता । हास्यमुपहासः । वीर्यं प्रभावाविष्कारः । बलेनोद्यमो न्यायेनोद्यमः सात्त्विक एव ॥ ३ ॥ तमोवृत्तीराह—क्रोध इति । क्रोधोऽसहिष्णुता । लोभो

॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणां पुमान्येन यथा भवेत् ॥ तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥ शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ॥ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥ २ ॥ काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् ॥ मदोत्साहो यशःप्रीतिर्हास्यं वीर्यं बलोद्यमः ॥ ३ ॥ क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः ॥ शोकमोहौ विषादार्ती निद्राशा भीरनुद्यमः ॥ ४ ॥ सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ॥ वृत्तयो वर्णितप्रायाः संनिपातमथो शृणु ॥ ५ ॥ संनिपातस्त्वहमिति ममेत्युद्धव या मतिः ॥ व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभिः ॥ ६ ॥ धर्मे चार्थे च कामे च यदासौ परिनिष्ठितः ॥ गुणानां संनिकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥

व्ययपराङ्मुखता । अनृतमशास्त्रीयं प्रमाणमिति भाषणम् । हिंसा द्रोहः । याच्ञा प्रार्थना । दम्भो धर्मध्वजित्वम् । क्लमः श्रमः । कलिः कलहः । शोकमोहौ अनुशोचनं भ्रमश्च । विषादार्ती दुःखं दैन्यं च । निद्रा तन्द्रा । आशा मे इदं भविष्यतीत्यन्वीक्षा । भीर्भयम् । अनुद्यमो जाड्यम् ॥ ४ ॥ अनुपूर्वशः क्रमेणैताः श्लोकत्रयोक्ता वर्णितप्रायाः । अन्या अप्यूह्या इति भावः ॥ ५ ॥ विभक्तानां गुणानां वृत्तयो वर्णिताः, मिश्राणामाह—संनिपात इति त्रिभिः । अहं ममेति ममतानुषक्तसर्ववृत्तिसामानाधिकरण्यदर्शनात्संनिपातजत्वम् । अहं शान्तः कामी क्रोधीत्यादि । तथा मम शान्तिरस्ति कामः क्रोध इत्यादि द्रष्टव्यम् । तत्पूर्वकः सर्वो व्यवहारश्च संनिपातकार्यमित्याह—व्यवहार इति । अत्र हेतुः—मनश्च मात्राणि चेन्द्रियाणि चासवश्च तैः । मनआदीनां सात्त्विकतामसराजसत्वात्तैर्व्यवहारः संनिपातज इति भावः ॥ ६ ॥ असौ पुरुषो यदा धर्मादिषु परिनिष्ठितो भवति तदायं त्रिषु निष्ठारूपः संनिकर्षः संनिपातकार्यम् । धर्मादीनां सत्त्वतमोरजःकार्यत्वाद्विषयतः[2] संनिपातजत्वमुक्तम् । फलतश्च तथात्वमाह—श्रद्धारतिधनानि सत्त्वरजस्तमोमयान्यावहतीति तथा ॥ ७ ॥

१ प्रतिपत्त्यै प्रतिपादनाय । २ निष्ठाया विषयो धर्मादिस्तस्य सत्वादिकार्यत्वात्तन्निष्ठाया अपि सनिपातजत्वम् ।

धर्मनिष्ठायामेव संनिपातं दर्शयति—प्रवृत्तिलक्षणे काम्यधर्मे यदा पुंसो निष्ठा भवति । तथा पुमान् यदा गृहाश्रम एवासक्तस्तिष्ठेत् । अनु पश्चात्स्वधर्मे च नित्यनैमित्तिके तिष्ठेत्सापि समितिः संनिपातः । हि यस्मात्काम्यधर्मगृहासक्तिस्वधर्मा रजस्तमःसत्त्वमया इत्यर्थः ॥ ८ ॥ तदेवं मिश्रामिश्रगुणवृत्तीः प्रदर्श्येदानीं पुमान्येन यथा भवेदिति यदुक्तं तद्दर्शयति—पुरुषमिति त्रिभिः ॥ ९ ॥ १० ॥ हिंसां शत्रुमरणादिकमाशास्य यो भजेत्तं तामसं विद्यात् । एतैर्गुणैरेवंभूतो भवतीति तात्पर्यार्थः ॥ ११ ॥ ननु तवापि गुणवशेन कर्तृत्वाविशेषात्केन विशेषेण त्वं सेव्यो जीवस्तु सेवक इति नियमो यतो मां भजेतेति वारंवारमुच्यते तत्राह—सत्त्वमिति । जीवस्यैव, न मे । कुतः । यतश्चित्तजाः जीवोपाधौ चित्तेऽभिव्यज्यन्तेऽतो यैः स एव बध्यते । कीदृशः । भूतानां देहरूपाणामन्येषां च मध्ये सज्जमानः । अहं त्वसज्जमानो गुणनियन्तृत्वेन सृष्ट्यादिकर्तापि नित्यमुक्तोऽतो महान्विशेष इति भावः । यद्वा, भूतानामपञ्चीकृतानां यत्कार्यभूतं चित्तम् । 'अन्नमयं हि सौम्य मनः' इति श्रुतेः । तत्प्रभवाः । अतो भूतोपहितस्य जीवस्यैवेति । अन्यत्समानम् ॥ १२ ॥ तदेवं मिश्रामिश्रगुणकार्याणि

प्रवृत्तिलक्षणे निष्ठा पुमान्यर्हि गृहाश्रमे ॥ स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥ पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ॥ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥ ९ ॥ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ॥ तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वा ॥ १० ॥ यदा आशिष आशास्य मां भजेत स्वकर्मभिः ॥ तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥ ११ ॥ सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे ॥ चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥ यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ॥ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥ यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम् ॥ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥ यदा जयेद्रजः सत्त्वं तमो[1] मूढं लयं जडम्[2] ॥ युज्येत शोकमोहाभ्यां निद्रया हिंसयाशया ॥ १५ ॥ यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ॥ देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम् ॥ १६ ॥

प्रदर्श्येदानीमेकैकगुणोद्रेककार्याणि दर्शयति—यदेति सप्तदशभिः । यदेतरौ गुणौ जयेदभिभवेत् । भास्वरं प्रकाशकम् । विशदं स्वच्छम् । शिवं शान्तम् । शिवत्वविशदत्वभास्वरत्वानां यथाक्रमं सुखधर्मज्ञानहेतुत्वात्तदा तैर्युज्येत । आदिशब्दाच्छमदमादिभिश्च ॥ १३ ॥ तमः सत्त्वं च कर्मभूतम् । रजः कर्तृ । सङ्गं सङ्गहेतुः । भिदा भेदहेतुः । चलं प्रवृत्तिस्वभावम् । अतः[3] सङ्गहेतुत्वाद्यशसा श्रिया युज्येत । तत्कामः पुमान्भवतीत्यर्थः । भिदाहेतुत्वाद्दुःखेन युज्येत, 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । चलहेतुत्वात्कर्मणा युज्येत ॥ १४ ॥ यदा रजः सत्त्वं च कर्मभूतं तमः कर्तृ जयेत् । मूढं विवेकभ्रंशकम् । लयमावरणात्मकम् । जडमनुद्यमात्मकम् । अतो मूढत्वाच्छोकमोहहिंसाभिर्लयत्वान्निद्रया जडत्वादुद्यमाभावेन केवलमाशया युज्येतेति द्रष्टव्यम् । 'जन' इति पाठे लयात्मकमेव निद्राशयोर्हेतुः ॥ १५ ॥ किंच, यदा चित्तं प्रसीदेत् स्वच्छं भवेत् । निर्वृतिरुपरतिः । तत्तदा मत्पदं मदुपलब्धिस्थानं सत्त्वमुद्रिक्तं विद्धि ॥ १६ ॥

१ 'तमो मूढो ह्यय जनः' इति पाठः । २ 'जनम्' इति पाठः । ३ अतः विशेषणत्रयविशिष्टत्वात् ।

यदा पुनः क्रियया विकुर्वन्विकारं प्राप्नुवन् आधीर्भवति, आ समन्ताद्विक्षिप्ता धीर्यस्य सः । चेतसां बुद्धीन्द्रियाणामनिर्वृत्तिरनुपरतिः गात्राणि कर्मेन्द्रियाणि तेषामस्वास्थ्यं विकाराधिक्यं मनो भ्रान्तं चञ्चलं तदा रज उत्कटं निशामय जानीहीति ॥ १७ ॥ यदा सीदत्तिरोभवच्चेतसो ग्रहणे चिदाकारपरिणामेऽक्षमं सच्चित्तं विलीयेत । मनोऽपि संकल्पात्मकं नष्टं लीनम् । तमोऽज्ञानं ग्लानिर्विषादश्च भवति । तत्तदा तम उत्कटमुपधारय विद्धि ॥ १८ ॥ किंच, एधमान इति । इन्द्रियाण्येव निवृत्तिप्रवृत्तिमोहस्वभावानि देवासुररक्षांसि । यद्वा, प्रसङ्गादाधिदैविकानां गुणानामुत्कर्षकार्याण्युक्तानीति ज्ञेयम् ॥ १९ ॥ गुणोत्कर्षतोऽवस्थाभेदं दर्शयति—सत्त्वादिति । प्रसङ्गान्निर्गुणावस्थामाह—तुरीयं चतुर्थमवस्थान्तरं नाम त्रिषु जागरणादिषु संततमेकरूपमात्मतत्त्वमेवेत्यर्थः ॥ २० ॥ गुणोत्कर्षद्वारेण तत्तत्कर्मफलनिष्ठां दर्शयति—उपर्युपरीति । ब्राह्मणा वेदानुष्ठानयुक्ताः । 'आब्रह्मण' इति पाठे ब्रह्मलोकमभिव्याप्य । आमुख्यात्[2] स्थावरान्-

विकुर्वन् क्रियया चाधीरनिर्वृत्तिश्च चेतसाम् ॥ गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय ॥ १७ ॥ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ॥ मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥ १८ ॥ एधमाने गुणे सत्त्वे देवानां बलमेधते ॥ असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥१९॥ सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ॥ प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु संततम् ॥ २० ॥ उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ॥ तमसाधोऽध आमुख्याद्रजसान्तरचारिणः ॥ २१ ॥ सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ॥ तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥२२॥ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ॥ राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥ कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् ॥ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥ वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ॥ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥ ॥ ॥

भिव्याप्य । अन्तरचारिणो मनुष्या एव भवन्ति ॥ २१ ॥ देहादुत्क्रान्ति[3]कालीनगुणोत्कर्षफलमाह—सत्त्वे वृद्धे सति प्रलीना मृताः । रजोलयाः रजसि प्रवृद्धे सति लयो येषां ते । एवं तमोलया इत्यपि । निर्गुणा इत्यत्र तु लयशब्दानुपादानाज्जीवन्तोऽपि निर्गुणाश्चेन्मामेव यान्तीत्यर्थः ॥ २२ ॥ इदानीं गुणोत्कर्षकृतमेव तत्तत्फलसाधनकर्मत्रैविध्यमाह—मदर्पणं मत्प्रीत्युद्देशेन कृतं निष्फलं केवलं दासभावेनैव कृतं यन्निजं कर्म नित्यादि तत्सात्त्विकम् । फलं संकल्प्यतेऽस्मिंस्तत् । हिंसाप्रायं हिंसोद्देशेन कृतं हिंसाबहुलं च । आदिशब्दाद्दम्भमात्सर्यादिकृतम् ॥ २३ ॥ इदानी सगुणनिर्गुणभेदेन ज्ञानादीनां चातुर्विध्यमाह—कैवल्यं[4] देहादिव्यतिरिक्तात्मविषयम् । वैकल्पिकं[5] देहाद्यव्यतिरिक्तात्मविषयं यत्तद्रजो राजसम् । प्राकृतं बालमूकादिज्ञानतुल्यम् । मन्निष्ठं परमेश्वरविषयम् ॥ २४ ॥ वनं विविक्तत्वात्सात्त्विको वासः, भगवन्निकेतनं तु साक्षात्तदाविर्भावान्निर्गुणं स्थानम् ॥ २५ ॥ ॥ ॥ ॥

१ स्वर्गादिकर्माधिकृत्य दीव्यता देवादीना च । २ आमुख्यादिति । आमुख्योऽतिविहितो लोकः आ समन्तात्कार्त्स्न्येनाऽमुख्यः तमभिव्याप्य आमुख्यादिति तत्राङः प्रश्लेषादिति वीर० । ३ उत्क्रान्तिर्मरणम् । ४ कैवल्यं केवलजीवात्मविषयम् । ५ वैकल्पिकं द्वैतमिदं सत्यमसत्यं वा । जीवा नित्या अनित्या वेदादिविकल्पभवम् । 'देहादिविषयम्' इति पाठः क्वचित् ।

कारकः कर्ता । असङ्गी अनासक्तः । रागान्धोऽत्यभिनिवेशवान् । स्मृतिविभ्रष्टोऽनुसन्धानशून्यः । मदपाश्रयो मदेकशरणः । स हि निरहंकारत्वान्निर्गुणः ॥ २६ ॥ अधर्मे धर्म इति या श्रद्धा ॥ २७ ॥ पथ्यं हितम् । पूतं शुद्धम् । अनायस्तमनायासतः प्राप्तम् । आहार्यं भक्ष्यभोज्यादि । इन्द्रियाणां प्रेष्ठं भोगकाले सुखदं कट्वम्ललवणादि । आर्तिदाशुचि दैन्यकरमशुद्धं च । चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतम् ॥ २८ ॥ आमोत्थं सुखम् । मदपाश्रयमित्यपि त्वन्तत्पदार्थविषयत्वेन ज्ञानवदेव द्रष्टव्यम् ॥ २९ ॥ उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्याम्—द्रव्यं पथ्यपूतादि । (देशो वनग्रामादिः ।) फलं सात्त्विकं सुखमित्यादि । कालो यदा भजेत मां भक्त्या यदेतरौ जयेदित्यादिना योऽर्थोदुक्तः । ज्ञानं कैवल्यं सात्त्विकं ज्ञानमित्यादि । कर्म मदर्पणमित्यादि । कारकः सात्त्विकः, कारकोऽसङ्गीत्यादिः । श्रद्धा सात्त्विक्याध्यात्मिकीत्यादिः । अवस्था सत्त्वाज्जागरणमित्यादिः । आकृतिरुपर्युपरि गच्छन्ती-

सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ॥ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥ सात्त्विक्याध्यात्मिकी[2] श्रद्धा कर्मश्रद्धा तु राजसी ॥ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ॥ राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ॥ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ॥ श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥ सर्वे गुणमया भावाः[3] पुरुषाव्यक्तधिष्ठिताः ॥ दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥ ३१ ॥ एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ॥ येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ ३२ ॥ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ॥ ३३ ॥ गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥ निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः ॥ ३४ ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ॥ सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ॥ ३५ ॥ ॥ ॥

त्यादिनोक्ता देवत्वादिरूपा । निष्ठा सत्त्वे प्रलीनाः स्वर्यान्तीत्यादिनोक्तः स्वर्गादिः । एवं सर्वोऽप्ययं भावस्त्रैगुण्यस्त्रिगुणात्मकः ॥ ३० ॥ न केवलमेष एव किंतु यावन्तः पुरुषाव्यक्तधिष्ठितास्ते सर्वे भावा गुणमया एव । तत्प्रपञ्चः—दृष्टमिति ॥ ३१ ॥ इदानीमुक्तं त्रैगुण्यस्य संसारहेतुत्वमनुवदंस्तन्निर्जयान्मोक्ष इत्याह—एता इति सार्धेन । येन निर्जिताः स पश्चादविक्षिप्तेन भक्तियोगेन मन्निष्ठः सन् मद्भावाय मोक्षाय प्रपद्यते योग्यो भवति ॥ ३२ ॥ तस्माद्विवेकिनामिदमेव युक्तमित्याह—तस्मादिति । ज्ञानविज्ञानयोः संभवो यस्मिंस्तमिमं नरदेहम् ॥ ३३ ॥ भजनप्रकारमाह—निःसङ्ग इति सार्धेन ॥ ३४ ॥ सत्त्वसंसेवया 'सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये' इति प्रागुक्तया । नैरपेक्ष्येणोपशमात्मकेन सत्त्वेनैव ॥ ३५ ॥ ॥ ॥

१ कारक इत्यत्र तद्विशेषणीभूतक्रियायामेव तात्पर्यं न तदाश्रये द्रव्ये । तच्छरीरस्य गुणत्रयपरिणामत्वात् दीपि० । २ आध्यात्मिकी वेदान्तशास्त्रविषयिणी । ३ भावाः पदार्थाः ।

एवं च सति मां प्राप्नोतीत्याह—संपद्यत इति । जीवं जीवत्वकारणं लिङ्गशरीरम् । मां प्राप्तस्य न पुनः संसार इत्याह—जीव इति । न बहिर्विषयभोगेन नान्तरस्तत्स्मरणेन ॥ ३६ ॥ गुणकृतामनुसंसरणप्रथामजितपुण्यकथाकथनादिभिः ॥ धुनुत भक्तिरसेन विवेकिनो न हि पुनः सुलभं जनुरीदृशम् ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां पञ्चविंशोऽध्यायः ॥२५॥ ॥छ॥ ॥ षड्विंशे योगनिष्ठाया विघातो दुष्टसङ्गतः ॥ साधुसङ्गेन तन्निष्ठापराकाष्ठेति वर्ण्यते ॥ १ ॥ योगिनो योगविभ्रंशः सङ्गतः संभवेदिति ॥ सर्वथा तन्निवृत्त्यर्थमैलगीतं वितन्यते ॥ २ ॥ 'निःसङ्गो मां भजेद्विद्वानप्रमत्तो जितेन्द्रियः' इत्युक्तं, तत्र विपक्षेऽनर्थं कथयिष्यन् जीवन्मुक्तस्यापि तर्हि सङ्गो दुर्वार इत्यनर्थः स्यादित्याशङ्क्योक्तानुवादपूर्वकं परिहरति सार्धाभ्याम्—मल्लक्षणं मत्स्वरूपं लक्ष्यते येन तमिमं नरदेहं लब्ध्वा मद्धर्मे भक्तिलक्षणे आस्थितः सन्नात्मस्थमात्मन्येव नियन्तृत्वेन स्थितं परमानन्दरूपमात्मानं मां समुपैति सम्यक्प्राप्नोति ॥ १ ॥ न चैवंभूतस्य विषयसङ्गो नामास्तीत्याह—गुणमय्येति । गुणमयी या जीवयोनिर्जीवोपाधिस्तया विमुक्तो गुणेषु

संपद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् ॥ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसंभवैः ॥ मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥३६॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे पञ्चविंशोऽध्यायः ॥२५॥

॥ श्रीभगवानुवाच ॥ मल्लक्षणमिमं कायं लब्ध्वा मद्धर्म आस्थितः ॥ आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥१॥ गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ॥ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥ वर्तमानोऽपि न पुमान्युज्यते वस्तुभिर्गुणैः ॥ २ ॥ सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥ तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ॥ ३ ॥ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥ त्यक्त्वात्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः[3] ॥ ५ ॥ ॥ ॥

वर्तमानोऽपि तैर्न युज्यते सङ्गं न प्राप्नोति । अत्र हेतुः—अवस्तुभिः । नन्ववस्तुभिरप्यन्ये युज्यमाना दृश्यन्ते तत्राह—अवस्तुत्वेन दृश्यमानेषु ॥२॥ तथापि सङ्गं वर्जयेदित्याह—सङ्गमिति । असतां लक्षणमाह—शिश्नोदरे तर्पयन्तीति शिश्नोदरतृपस्तेषां क्वचित्कदाचिदपि, आस्तां तावद्बहूनां सङ्गः, किंतु तस्यैकस्याप्यनुगोऽनुवर्ती अन्धमनुगच्छति योऽन्धस्तद्वत् ॥ ३ ॥ अत्रेतिहासमाह—ऐलः पुरूरवाः । सम्राट् चक्रवर्ती । बृहच्छ्रवः कीर्तिर्यस्य सः । उर्वशीविरहात्प्रथमं मुह्यन् पश्चात्कुरुक्षेत्रे तां समागम्य गन्धर्वदत्तेनाग्निना देवानिष्ट्वा पुनरुर्वशीलोकं प्राप्य शोकसंयमे शोकापगमे सति ततो निर्विण्णः सन्निमां गाथामगायतेति नवमस्कन्धानुसारेण द्रष्टव्यम् ॥ ४ ॥ प्राक्तनीं मोहावस्थामाह—त्यक्त्वेति । आत्मानं राजानं त्यक्त्वा । अथवा शय्यायामात्मानं त्यक्त्वा व्रजन्तीम् । घोरे तिष्ठेति 'हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे च नाहन्' इत्येवं मन्त्रैर्विलपन् ॥ ५ ॥

१ विपक्षे सङ्गकरणे । २ आत्मन्येव जीवस्वरूप एव । ३ विक्लवो विह्वलः । ४ तच्छब्दस्य पूर्वप्रक्रान्तानुवादकत्वादेकवचनानुपपत्तिमाशंक्य व्याचष्टे—आस्तामिति । ५ मन्त्रार्थः—हये अये इति कोमलामन्त्रणे । मनसा भावेन घोरे क्रूरचित्ते आवा मिश्रा मिश्रौ भूत्वा वचांसि प्रेमालापान् कृणवावहै करवाव । नु अहो नौ आवयोर्मन्त्रा एते अनुदितासः अनिन्दिता अव्यक्ता न सन्ति । हे मयस्करन् प्रीतिमति, परतरे पूर्वकृताश्च मन्त्रा नाहन् न नष्टा बभूवुः । इति ।

वैक्लव्ये कारणमाह—कामानिति। वर्षाणां यामिनी रात्रीर्यान्तीरपयान्तीः अयान्तीरागामिनीः। उर्वश्या आकृष्टा चेतना यस्य सः ॥ ६ ॥ तस्य गन्धर्वलोके प्राप्तस्य बहुकालमुर्वशीसंभोगानन्तरं निर्विण्णस्य गाथामाह अष्टादशभिः। तत्राष्टभिरनुतापः प्रपञ्च्यते—अहो इति। यतो मया इमे अहोरात्ररूपा आयुःखण्डा न स्मृताः ॥ ७ ॥ तदेवाह—नाहमिति। अभिनिर्मुक्तो मयि रममाणेऽस्तं गतोऽभ्युदितो वा सूर्य इति। अमुया उर्वश्या वञ्चितः। वत खेदे। उतापि। वर्षपूगानामपि गतान्यहानि न वेदेति ॥ ८ ॥ येन संमोहेन। आत्मा देहः क्रीडामृगवदधीनः ॥ ९ ॥ ननु प्रणयकुपिताया अनुनयार्थमधीनता युक्तैव, सत्यम्, न त्वत्र तदस्तीत्याह—सपरिच्छदं राज्यादिसहितमीश्वरं चक्रवर्तिनं तृणमिव त्यक्त्वा यान्तीमप्यन्वगममनुगतोऽस्मि ॥ १० ॥ किंच, मम प्रभावाद्यभिमानो वृथैवेत्याह—कुतस्तस्य मे तेजो बलम्। खरो यथा पादताडितोऽपि खरीमनुगच्छति तद्वत् ॥ ११ ॥ एवंभूतस्य सर्वं साधनं व्यर्थमित्याह—किमिति। त्यागेन संन्यासेन। विविक्तेन एकान्तसेवया। मौनेन वाङ्नियमेन ॥ १२ ॥ अनुतप्तः सन्नात्मानं निन्दति द्वाभ्याम्—स्वार्थस्येति। अकोविदमज्ञातारम्। गोखरवत् गौरिव खर इवेति ॥ १३ ॥ अधरासवं सेवमानस्यात्मभूर्मनसिजः पुनःपुनरुद्भवन् ॥ १४ ॥ एवमष्टभिर्निर्वेदो निरूपितः, इदानीं तस्य विवेकमाह दशभिः—पुंश्चल्येति। अयं भावः—कर्मभिर्देवानिघ्नो दुःखमेव प्राप्तोऽस्मि, अतः परमेश्वरमेव भजेयमिति ॥ १५ ॥ परमेश्वरप्रसादं विना देवैरुपदिष्टादपि वेदवाक्यान्मोहो न निवर्तत इत्याह—बोधितस्यापीति। देव्या उर्वश्या सूक्तवाक्येन यथार्थवचनेन,—'पुरूरवो मा मृथा मा प्रपतो मा त्वा वृकासो अशिवास उक्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता' इत्यनेन ॥ १६ ॥

कामानतृप्तोऽनुजुषन्क्षुल्लकान्वर्षयामिनीः ॥ न वेद यान्तीर्नायान्तीरुर्वश्याकृष्टचेतनः ॥६॥ ॥ ऐल उवाच ॥ अहो मे मोहविस्तारः कामकश्मलचेतसः ॥ देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः ॥ ७ ॥ नाहं वेदाभिनिर्मुक्तः सूर्यो वाभ्युदितोऽमुया ॥ मुषितो वर्षपूगानां वताहानि गतान्युत ॥ ८ ॥ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः ॥ क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ॥ यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥१०॥ कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ॥ योऽन्वगच्छं स्त्रियं यान्तीं खरवत्पादताडितः ॥११॥ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥ किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥ स्वार्थस्याकोविदं धिङ्मां मूर्खं पण्डितमानिनम् ॥ योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥ सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ॥ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥१४॥ पुंश्चल्यापहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ॥ आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ॥ मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥

१ 'न वेद यन्तीर्नायन्तीः' इति मूले टीकायां च पाठः। २ हे पुरूरवः, त्वं मा मृथा मा म्रियस्व मा प्रपतः गद्गिरादेण मा क्रामो भव। अशिवासः अमङ्गला वृकासः इन्द्रियलक्षणा वृकाः त्वा त्वा मा उक्षन् मा भक्षयेयुः। इन्द्रियवशो मा भवेत्यर्थः। स्त्रैणानि स्त्रीसंबन्धीनि सख्यानि विश्रामाः न सन्ति तासु विश्वासो न कार्यः। यत एता एतासां स्त्रीणां हृदयानि सालावृकाणां शुनामिव नवनवाकाङ्क्षीणि इति मन्त्रार्थः।

पूर्वं पुंश्चल्यापहृतं चित्तमित्यादिना तस्या अपकारोऽनुस्मृतः, इदानीं ममैवायमपराध इत्याह—किमेतयेति । नोऽस्माकं कामिनामेतया किमपकृतम्, न किंचिदपि । यथा रज्जुस्वरूपाविदुषो रज्जुद्रष्टुः पुंसस्तस्यां सर्पकल्पनया खिद्यतोऽपि रज्ज्वा किमपि नापकृतं तद्वत् । यद्यस्माद्योऽहमेवंभूतः त एवाजितेन्द्रियत्वादपराधीत्यर्थः ॥ १७ ॥ ननु तथापि सैव सौगन्ध्यप्रेमादिगुणैः संमोहमूलमित्याशङ्क्य, तेऽपि स्वमतिपरिकल्पिता एवेत्याह चतुर्भिः—क्वायमिति । मलीमसोऽतिमलिनः । सुमनसां कुसुमानामिव गन्धसौकुमार्यादिसौमनस्यं शोभनमनोभावो वा ॥ १८ ॥ ममत्वमपि तस्मिन्परिकल्पितमेवेत्याह—पित्रोः किं स्वं कायः जनकत्वात् । नु वितर्के । भार्याया वा भोगप्रदत्वात् । अत्रानुपयुक्तमप्येतन्न्यायतुल्यत्वादुक्तम् । स्वामिनो वाऽधीनत्वात् । अग्नेर्वा अन्त्येष्ट्यां तदाहुतित्वात् । श्वगृध्रयोर्वा भक्ष्यत्वात् । किं वात्मनः । तत्कृतशुभाशुभभागित्वात् । सुहृदां वा उपकारित्वात् । एवं यो न निश्चीयते ॥ १९ ॥ तुच्छा कृमि-

किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः ॥ रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥ क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ॥ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥ पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ॥ किमात्मनः किं सुहृदामिति यो नावसीयते ॥१९॥ तस्मिन्कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ॥ अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥२१॥ अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ॥ विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ २२ ॥ अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥ तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ॥ विदुषां चाप्यविश्रब्धः षड्वर्गः[1] किमु मादृशाम् ॥२४॥ ॥ श्रीभगवानुवाच ॥ एवं प्रगायन्नृपदेवदेवः स उर्वशीलोकमथो विहाय ॥ आत्मानमात्मन्यवगम्य[2] मां वै उपारमज्ज्ञानविधूतमोहः ॥२५॥ ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ॥ सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥ ॥

विड्रूपलक्षणा निष्ठा अन्तो यस्य तस्मिन्[3] काये कलेवरे प्रियत्वेन गृहीते । विपङ्गमेवाह[4]—अहो इति । सुनसं शोभननासिकम् ॥ २० ॥ अतो गुणारोपेण रममाणा मादृशाः कृमितुल्या इत्याह—त्वगादिसंहतौ तत्सङ्घाते देहे । विण्मूत्रादिसंहतौ रमतां कृमीणां वा ॥ २१ ॥ यद्यप्येवं वीभत्सिता एव स्त्रियोऽथापि नोपसज्जेतावलोकनादिनापि सङ्गं न कुर्यात् । अर्थविद्विवेकी । अत्र हेतुः—विषयेति ॥ २२ ॥ ननु क्वचिन्निमीलितनयनादेरपि मनःक्षोभो दृश्यते, सत्यम्; सोऽपि पूर्वदर्शनादिकं विना न भवतीत्याह—अदृष्टादिति । भावात्पदार्थात् । भावो मनःक्षोभः । अतः प्राणानिन्द्रियाण्यसंप्रयुञ्जतोऽनियच्छतः । स्तिमितं निश्चलं सत् ॥ २३ ॥ इन्द्रियैः कृत्वा । अविश्रब्धोऽविश्वसनीयः । मादृशामविवेकिनाम् ॥ २४ ॥ फलितमाह द्वाभ्याम्—एवमिति । नृपेषु देवेषु च दीव्यतीति तथा ॥ २५ ॥ उक्तिभिर्हितोपदेशैरिति तीर्थदेवादिसङ्गादपि सत्सङ्गः श्रेयानिति दर्शयति ॥ २६ ॥ ॥ - ॥

१ षड्वर्गः षडिन्द्रियवर्गः । २ आत्मनि जीवात्मनि आत्मानं नियन्तृत्वेन स्थितं परमात्मानं । ३ तस्मिन्नित्यस्यार्थः—काये इति । कलेवर इत्यस्यार्थः प्रियत्वेन गृहीते इति । ४ विपङ्ग आसक्तिप्रकारः ।

सतां लक्षणमाह—सन्त इति । विशेषणाष्टकस्य यथेष्टं हेतुहेतुमद्भावः ॥ २७ ॥ न च तेषूपदेशापेक्षा, अपि तु केवलं तत्संनिधिरेव तारयतीत्याह—तेष्विति सप्तभिः ॥ २८ ॥ श्रवणादिभिरेव मत्पराः श्रद्धानाश्च सन्तो भक्तिं विन्दन्ति ॥ २९ ॥ ३० ॥ विभावसुमग्निं सेवमानस्य । अप्येति नश्यति । तथा कर्मजाड्यमागामिसंसारभयं तन्मूलमज्ञानं च नश्यतीत्यर्थः ॥ ३१ ॥ निमज्ज्योन्मज्जतामुच्चावचयोनीर्गच्छताम् । परमायनं परमाश्रयः ॥ ३२ ॥ किंच, यथान्नमेव प्राणो जीवनम् । अहमेव यथा शरणम् । धर्म एव यथा प्रेत्य परलोके वित्तम् । तथा सन्त एवार्वाक् संसारपाताद्बिभ्यतः पुंसः अरणं शरणम् ॥ ३३ ॥ किंच, सन्तश्चक्षूंपि सगुणनिर्गुणज्ञानानि । अर्कः पुनः सम्यगुत्थितोऽपि बहिस्तदप्येकमेव चक्षुः ॥ ३४ ॥ अध्यायार्थमुपसंहरति—वैतसेन इति । सुद्युम्न-

सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः ॥ निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ॥ २७ ॥ तेषु नित्यं महाभाग महाभागेषु मत्कथाः ॥ संभवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥ ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ॥ मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ॥ मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् ॥ शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ ३१ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ॥ सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ॥ धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग् बिभ्यतोऽरणम् ॥ ३३ ॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ॥ देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥ ३४ ॥ वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिस्पृहः ॥ मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे ऐलगीतं नाम षड्विंशोऽध्यायः ॥ २६ ॥ ॥ उद्धव उवाच ॥ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ॥ यस्मात्त्वां ये यथार्चन्ति सात्वताः सात्वतर्षभ ॥ १ ॥ ॥

भावेनोमावनं प्रविष्टस्य वीता सेना स्त्रीभावं प्राप्ता यस्य तस्य स्त्रीभावं प्राप्तस्य पुत्रो वैतसेनः पुरूरवाः । एवमुक्तप्रकारेणोर्वश्या लोकात्स्थानादवलोकनाद्वा निस्पृहस्ततोऽपि सत्सङ्गादपि हेतोर्मुक्तसङ्गः सन्नात्मारामो भूत्वा यथेष्टं चचारेति ॥ ३५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां षड्विंशोऽध्यायः ॥ २६ ॥ ॥ सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः ॥ सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तः समासतः ॥ १ ॥ रागाद्याकुलचित्तानां कुतोऽसङ्गादिसंभवः ॥ इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥ २ ॥ क्रियायोगमिति । भवदाराधनरूपम् । यस्मादिति कारणाधिष्ठानादिप्रश्नः, सर्वकारकाणां निमित्तत्वस्याविशिष्टत्वात् । यथेति कस्मिन्नधिष्ठानादौ केन प्रकारेणेति प्रश्नः । ये अधिकारिणः । सात्वता भक्ताः ॥ १ ॥ ॥

१ 'प्राणा' इति पाठः । २ 'सन्तोऽस्मात्' इति शुकपक्षीय० वीर० पाठः, 'सन्तोऽतः' इति विज० पाठः । ३ यस्मात् यं क्रियायोगमाश्रित्येति चक्र० । ४ क्रियायोगोऽर्चनलक्षणो मोक्षोपायः । ५ यस्मादाराधनकारणाधिष्ठानादितः । यथा त्वामर्चन्तीति ज्ञेयम् ।

अस्य पुनर्विशेषतः प्रश्ने कारणमाह चतुर्भिः—एतत्त्वदर्चनं निःश्रेयसकरं वदन्ति । अङ्गिरसः सुतो बृहस्पतिः ॥२॥ निःसृतं त्वयोपदिष्टमित्यर्थः । देव्यै पार्वत्यै ॥३॥ सर्ववर्णानां त्रैवर्णिकानाम् ॥४॥ विश्वेश्वरा ये तेषामीश्वर ॥५॥ कर्मकाण्डस्य पूजाविधानस्य। नास्त्यन्तो ग्रन्थतः पारं वाऽनुष्ठानतो यस्य तस्य ॥ ६ ॥ वैदिक एव मन्त्रो वैदिकान्येवाङ्गानि च यस्मिन् पुरुषसूक्तादौ स वैदिकः । एवं तान्त्रिकोऽपि मिश्रोऽष्टाक्षरादिः । मखः पूजा ॥७॥ यदा त्रैवर्णिको यजेत तदा विशेषमाह—यदा गर्भाष्टमैकादशद्वादशाब्दादिकाले स्वनिगमेन स्वाधिकारप्रवृत्तेन वेदेनोक्तं द्विजत्वमुपनयनम् ॥ ८ ॥ अर्चायां प्रतिमादौ ॥ ९ ॥ स्नाने विशेषमाह—उभयैर्वैदिकैस्तान्त्रिकैश्च मन्त्रैः ॥ १० ॥ किंच, सन्ध्योपासनादीनि कर्माणि आचोदितानि साकल्येन विहितानि यस्य यानि तैः सह मे पूजां कुर्यात् । न तु तानि

एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ॥ नारदो भगवान्व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥ निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः ॥ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥ एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ॥ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥ एतत्कमलपत्राक्ष कर्मबन्धविमोचनम् ॥ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥ ॥श्रीभगवानुवाच॥ न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ॥ संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥ वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ॥ त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥ यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ॥ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥ अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजे ॥ द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ॥ ९ ॥ पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ॥ उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥ १० ॥ सन्ध्योपास्त्यादिकर्माणि वेदेनाचोदितानि मे ॥ पूजां तैः कल्पयेत्सम्यक् संकल्पः कर्मपावनीम् ॥ ११ ॥ शैली दारुमयी लौही लेप्या लेख्या[2] च सैकती ॥ मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ १२ ॥ चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ॥ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥ अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम् ॥ स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥ ॥ ॥ ॥

परित्यजेदित्यर्थः । सम्यक् परमेश्वरविषय एव संकल्पो यस्य तथाभूतः सन् । कर्मपावनीं कर्मनिर्हारिणीम् ॥ ११ ॥ अर्चाभेदानाह सार्धेन—शैली शिलामयी । लौही सुवर्णादिमयी । लेप्या मृच्चन्दनादिमयी । हृदि पूजायां मनोमयी ॥ १२ ॥ प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा प्रतिमैव जीवस्य भगवतो मन्दिरम् । यद्वा, प्रतिष्ठया कलान्यासेन[3] भगवन्मन्दिरं भवतीति। प्रतिमाभेदेन विशेषमाह सार्धेन—उद्वासो विसर्जनम् ॥ १३ ॥ अस्थिरायामर्चने विकल्पः । शालग्रामे न कुर्यात्सैकत्यां कुर्यादन्यत्र कुर्याद्वा न वेति । अविलेप्यायां मृन्मयलेख्यव्यतिरिक्तायाम् । अन्यत्र विलेप्यायां लेख्यायां च परिमार्जनमेव ॥ १४ ॥

१ विश्वेश्वरा महापुरुषादयः । २ लेख्या चित्रपटमयी। ३ कलान्यासेन तत्तन्मन्त्रैस्तत्तत्तत्त्वन्यासेन ।

इदानीं सकामनिष्कामभेदेन विशेषमाह—द्रव्यैरिति । प्रकर्षेण सिद्धैः सुशोभनैः । अमायिनो निष्कामस्य भक्तस्य तु यथालब्धैः । यत्र चन्दनादि सर्वथा न लभ्यते तत्र हृदि भावेन भावनया । यद्वा, हृदि चेन्मद्यागस्तदा भावेन मनोमयैर्द्रव्यैरित्यर्थः ॥ १५ ॥ अधिष्ठानभेदेन प्रधानोपचारमाह सार्धेन—स्नानेति । तत्त्वविन्यासो यथास्थानमङ्गप्रधानदेवतानां तत्तन्मन्त्रैः स्थापनम् ॥ १६ ॥ अभ्यर्हणमुपस्थानार्घादि । सलिलादिभिस्तर्पणादिना यजनम् । सर्वसाधारणमाह—श्रद्धयेति ॥ १७ ॥ १८ ॥ एवमधिकारादिव्यवस्थामुक्त्वा इदानीं पूजाप्रकारमाह—शुचिरिति । संभृताः संभाराः पूजासाधनानि येन सः । प्रागग्रैर्दर्भैः । यद्वा, प्रागेव संभृतसंभारः सन्नासीनः, न त्वासीनः सन् पश्चात्तत्संभारार्थं वारंवारमुत्तिष्ठेदित्यर्थः । प्राङ्मुख उदङ्मुखो वा आसीनः । अर्चायां तु

द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ॥ भक्तस्य च यथालब्धैर्हृदि भावेन चैव हि ॥ १५ ॥ स्नानालंकरणं प्रेष्ठमर्चायामेव तूद्धव ॥ स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥१६॥ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥ श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥ १७ ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १८ ॥ शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ॥ आसीनः प्रागुदग्वाऽर्चेदर्चायामथ संमुखः ॥ १९ ॥ कृतन्यासः कृतन्यासां मदर्चां पाणिनाऽऽमृजेत् ॥ कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥ २० ॥ तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २१ ॥ पाद्यार्घाचमनीयार्थं त्रीणि पात्राणि दैशिकः ॥ हृदा शीर्ष्णाथ शिखया गायत्र्या चाभिमन्त्रयेत् ॥ २२ ॥ पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ॥ अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २३ ॥ ॥

स्थिरायां संमुखोऽर्चाभिमुख उपविष्टः सन् ॥ १९ ॥ अनन्तरं गुर्वादिनमस्कारपूर्वकं यथोपदेशं स्वस्मिन्कृतन्यासः कृतो मूलमन्त्रन्यासो यस्यां तां ममार्चामामृजेन्निर्माल्यापकर्षणादिना शोधयेत् । कलशं पूर्णकुम्भम् । प्रोक्षणीयं प्रोक्षणार्थोदकपात्रमुपसाधयेच्चन्दनपुष्पादिभिः संस्कुर्यात् ॥ २० ॥ तदद्भिः प्रोक्षणीयाद्भिर्देवयजनं देवपूजास्थानम् । पाद्याद्यर्थं त्रीणि पात्राणि कलशोदकैः पूरितानि तैस्तैर्द्रव्यैः साधयेत् । तत्र पाद्यादिद्रव्याणि 'पाद्ये श्यामाकदूर्वाब्जविष्णुक्रान्तादिरिष्यते ॥ गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् ॥ जातीलवङ्गकक्कोलैर्मतमाचमनीयकम् ॥' इति ॥ २१ ॥ तानि च त्रीणि यथाक्रमं हृदयादिमन्त्रैर्गायत्र्या च सर्वाण्यभिमन्त्रयेत् ॥ २२ ॥ तदनन्तरं पिण्डे देहे । वाय्वग्निसंशुद्ध इति कोष्ठगतेन वायुना शोषिते आधार-

१ अङ्गं गुर्वादिन्वधिष्ठातृदेवतानां शक्त्यादीनां नमस्कारेषु 'परास शक्त्यात्मने नमः' इत्यादिप्रणवस्थाने च 'परास ओं नारायणात्मने नमः' इति ज्ञेयम् । २ आदिशब्देन स्थण्डिलादिग्रहः । ३ देशिकः पूजकाचार्यः । ४ अत्र मूलमन्त्रो अष्टाक्षरोऽष्टाक्षरो वा । ५ विष्णुक्रान्ता अपराजिता । ६ भूतशुद्धिमाह—पिण्डे इति । अत्रायं शिष्टपरिग्रहोऽर्थः—वायुरूपे पिण्डे वायुना शोषिते इति, मूलाधारगतेन परमशोषकेण पूर्वं वायव्यनामापुटे चिन्तितेन षोडशवारं जपेन पश्चात् नाभिस्थं नीत्वा पुनश्चतुःषष्टिवारं जपेन कुम्भकं कृत्वोत्थापितो यो वायुस्तेन शोषिते इति पश्चादग्निबीजेन मूलाधारगतपवनेन दक्षिणनासापुटे चिन्तितेन षोडशवारं जपेन पुनर्मूलाधारे नीत्वा चतुःषष्टिवारं जपेन कुम्भकं कृत्वोत्थापितो यो वह्निस्तेन दग्धे इति, पश्चात् 'वं' इति चन्द्रबीजेन वामनासापुटे चिन्तितेन षोडशवारं जपेन पुनः आज्ञाचक्रे नीत्वा चतुःषष्टिवारं जपेन कुम्भकं कृत्वोत्थापितं यच्चन्द्रमण्डलममृतं तत्प्लावनामृतमये जाते तत्पूरोपरि इदं नारायणमूर्तिं भावयेदिति ।

गतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते तस्मिन्हृत्पद्मस्थां परां श्रेष्ठां जीवकलां श्रीनारायणमूर्तिं ध्यायेत् । कथंभूताम् । नादान्ते सिद्धैर्भाविताम् । प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्यांताम् । तथा च श्रुतिः—'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥' इति ॥ २३ ॥ तयात्मभूतया स्वेनैव भावेन चिन्तितया अमृतमये पिण्डे दीपेन प्रभया गृहमिव व्याप्ते सति तस्मिन्नेवादौ मानसैरुपचारैः संपूज्य तन्मयः सन्नर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा ॥ २४ ॥ कथं पूजयेत्तत्राह—पाद्येति द्वाभ्याम् । धर्मादिभिर्ममासनं तत्र पद्मं च कल्पयित्वोभाभ्यां वेदतन्त्राभ्यामुभयसिद्धये मह्यं पाद्यादीनुपचारान्प्रकल्पयेदित्यन्वयः । उपस्पर्श आचमनम्, अर्हणमर्घ्यम् । उभयसिद्धये वेदतन्त्रोक्तभुक्तिमुक्तिप्राप्तये । अयमर्थः—धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यङ्कस्याग्नेयादिचतुष्कोणेषु पादाः । अधर्मादीनि पूर्वादिदिक्षु गात्राणि । त्रयो गुणाः पट्टिकाः । तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानाऽनुग्रहेति नव शक्तयः । एवं यथोपदेशं धर्मादिभिर्नवभिः शक्तिभिश्चासनं

तयात्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः ॥ आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २४ ॥ पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्च नवभिः कल्पयित्वासनं मम ॥ २५ ॥ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २६ ॥ सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ॥ मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २७ ॥ नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ॥ महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥ २८ ॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ॥ स्वे स्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥ २९ ॥ चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ॥ सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ ३० ॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया ॥ पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥ ३१ ॥ वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ॥ अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥ ३२ ॥ ॥ ॥ ॥

कल्पयित्वेति । कर्णिकया केसरैस्तत्रस्थसूर्यादिमण्डलैश्चोज्ज्वलमित्यर्थः ॥ २५ ॥ २६ ॥ आयुधादिपूजामाह—सुदर्शनमिति त्रिभिः । तत्र न्यस्ताङ्गमित्यङ्गावरणपूजा सूचिता । आसनेनैव शक्त्यावरणमित्युक्तम् । ततः सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु । कौस्तुभमालाश्रीवत्सानुरसि ॥ २७ ॥ नन्दादीन्पार्षदानष्टदिक्षु । गरुडं पुरतः ॥ २८ ॥ दुर्गादीनि कोणेषु । गुरून्वामतः । सुरानिन्द्रादिलोकपालान्पूर्वादिदिक्षु । एवमेतान्देवस्याभिमुखान्प्रोक्षणादिभिरर्घादिभिः पूजयेदित्यर्थः ॥ २९ ॥ पाद्यादीनुपचारान्प्रकल्पयेदित्युक्तं तानेव गुणविधिभिः प्रपञ्चयति—चन्दनेति षड्भिः ॥ ३० ॥ मन्त्रानाह—स्वर्णघर्मानुवाकः 'सुवर्णं घर्मं परिवेदवेनम्' इत्यादिः । महापुरुषविद्या 'जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥' इति । पौरुषं सूक्तं 'सहस्रशीर्षा' इत्यादि । राजनादीनि सामानि 'इन्द्रं नरो नेमधिता हवन्ते' इत्यस्यामृचि गीतानि । आदिशब्देन रौहिणादीनि ॥ ३१ ॥ वस्त्राद्युपचारेष्वलंकारलक्षणं गुणं विधत्ते—वस्त्रेति । पत्राणि कपोलवक्षःस्थलादिषु लिखिताः पत्रभङ्गयः । मद्भक्तश्चेत् सप्रेम यथा भवति तथा ॥ ३२ ॥ ॥ ॥

यथोचितमलंकुर्वीतेत्युक्तार्थं सर्वसाधारणं श्रद्धालक्षणं गुणं विधत्ते—पाद्यमिति ॥ ३३ ॥ नैवेद्ये वैभवलक्षणं गुणं विधत्ते—गुडपायसेति । शष्कुल्यस्तैलपक्वविशेषाः । आपूपाः अपूपानां मण्डकादीनां समूहाः । सूपा व्यञ्जनानि । सति विभव इति शेषः ॥ ३४ ॥ कालभेदेन गुणं विधत्ते—अभ्यङ्गेति । अभिषेचनं पञ्चामृतादिस्नपनम् । अन्नाद्येति । अन्नं भोज्यम् । आद्यं भक्ष्यम् । पर्वण्येकादश्यादौ । अन्वहं प्रत्यहं वा विभवे सति ॥ ३५ ॥ फलभूयस्त्वार्थिनोऽग्नावपि पूजाप्रकारमाह—विधिना स्वगृह्योक्तप्रकारेण । मेखलादिभिरुपलक्षिते । विहिते निर्मिते । तदुक्तं—'विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरङ्गुलाः ॥ हस्तमात्रो भवेद्गर्तः सयोनिर्वेदिका तथा ॥' इत्यादि । उदितं प्रज्वलितमग्निं परितः समूहेदेकत्र मेलयेत् ॥ ३६ ॥ दर्भैः परिस्तीर्य परितः प्रोक्षयेत् । अन्वाधायान्वाधानसंज्ञकं व्याहृतिभिः समित्प्रक्षेपादिरूपं कर्म कृत्वा अग्नेरुत्तरतो द्रव्याणि होमोपयोगीन्यासाद्य निधाय प्रोक्षण्या प्रोक्षणीपात्रोदकेन प्रोक्ष्याग्नौ

पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ॥ धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ॥ ३३ ॥ गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ॥ संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥३४॥ अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ॥ अन्नाद्यगीतनृत्यादि पर्वणि स्युरुतान्वहम् ॥ ३५ ॥ विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ॥ अग्निमाधाय परितः समूहेत्पाणिनोदितम् ॥ ३६ ॥ परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ॥ प्रोक्षण्यासाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥३७॥ तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ॥ लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥३८॥ स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३९ ॥ ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च ॥ प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ॥ ४० ॥ जुहुयान्मूलमन्त्रेण षोडशर्चावदानतः ॥ धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४१ ॥ अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ॥ मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥ ४२ ॥ ॥ ॥ ॥ ॥

मां ध्यायेत् ॥ ३७ ॥ शङ्खादिभिर्लसन्तः शोभमानाश्चत्वारो भुजा यस्य तम् ॥ ३८ ॥ स्फुरन्ति किरीटादीनि यस्य तम् ॥ ३९ ॥ हविषा घृतेनाभिघृतानि संसिक्तानि दारूणि शुष्कसमिधः प्रास्य प्रक्षिप्य । आघारौ नामसंज्ञकौ यागौ । एवमाज्यभागौ च दत्त्वा, तदर्थाहुतीर्हुत्वेत्यर्थः । तत्राघारौ 'प्रजापतये स्वाहा, इन्द्राय स्वाहा' इति चोत्तरदक्षिणपरिधिसन्धिमारभ्याग्निमध्यादापरिध्यन्तं घृतधारणरूपौ । आज्यभागौ 'अग्नये स्वाहा, सोमाय स्वाहा' इत्येवं होमरूपौ ॥ ४० ॥ मूलमन्त्रेणाष्टाक्षरेण । तथा षोडश ऋचो यस्मिंस्तेन पुरुषसूक्तेन चावदानतः प्रत्यृचमाहुतिग्रहणेनेत्यर्थः । पुरुषसूक्तेनाराधनपक्षे स एव मूलमन्त्रस्तेनैव प्रत्यृचमवदानतो होम इति । मन्त्रैः स्वाहान्तैर्नाममन्त्रैः । यथान्यायं पूजाक्रमेणैव । 'अग्नये स्विष्टकृते स्वाहा' इत्येवं स्विष्टकृतं च हुत्वा ॥४१॥ ततो गन्धिस्वं भगवन्तमन्तर्यामिणमभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो नन्दादिभ्योऽष्टदिक्षु बलिं हरेत् । ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमन्त्रं जपेत् ॥ ४२ ॥ ॥

१ कालभेदेन एकादश्यादिपर्वविशेषेण । २ पाणिना समूहेत् ।

तत्र उभयत्र भगवतो भोजनसमाप्तिं ध्यात्वा आसनं दत्त्वा उच्छेषं विष्वक्सेनाय कल्पयित्वा तदनुज्ञया पश्चात्स्वयं भुञ्जीत । ततः सुरभिमत्सुगन्धवत्ताम्बूलाद्यं मुखवासं दत्त्वाथ पुनरप्यर्हयेत्पुष्पाञ्जलिना पूजयेत् ॥ ४३ ॥ अभिनयन् स्वस्विन्नाविष्कुर्वन् । क्षणिको वैयग्र्यं परित्यज्य लब्धावसरो भवेत् ॥ ४४ ॥ स्तवस्तोत्राणां भेदं दर्शयति—पौराणैः प्राकृतैरपीति ॥ ४५ ॥ कथं प्रणमेदित्यपेक्षायामाह—शिर इति । बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा । यद्वा, पृष्ठतः परस्परं निबद्धाभ्यां कृतापराध इव प्रपन्नमित्यादिविज्ञप्त्या च प्रणमेत् ॥ ४६ ॥ ततः शेषाग्रहणपूर्वकं वैकल्पिकोद्वासनप्रकारमाह—इतीति । अनयैव प्रार्थनया शेषां निर्माल्यं मया दत्तां ध्यात्वा शिरस्याधाय धृत्वा यद्युद्वासयेच्चर्हि प्रतिमायां यन्न्यस्तं ज्योतिस्तत्पुनरपि हृत्पद्मस्थ-

दत्त्वाचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ॥ मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत् ॥ ४३ ॥ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ॥ मत्कथाः श्रावयन् शृण्वन् मुहूर्तं क्षणिको भवेत् ॥ ४४ ॥ स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ॥ स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४५ ॥ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ ४६ ॥ इति शेषां मया दत्तां शिरस्याधाय सादरम् ॥ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥ ४७ ॥ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ सर्वभूतेष्वात्मनि च सर्वात्माहमवस्थितः ॥ ४८ ॥ एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः ॥ अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४९ ॥ मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् ॥ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥ ५० ॥ पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥ क्षेत्रापणपुरग्रामान् दत्त्वा मत्सार्ष्टितामियात् ॥ ५१ ॥ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ॥ पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५२ ॥ ॥ ॥

ज्योतिष्येवोद्वास्यमुद्वासनीयम् ॥ ४७ ॥ एतेष्वधिष्ठानेषु किं मुख्यमित्यपेक्षायामाह—अर्चादिष्विति । यदा यत्र श्रद्धा तदा तत्र न त्वधिष्ठाने मुख्यामुख्यत्वम् । कुतः । यतः सर्वभूतेष्विति ॥ ४८ ॥ उभयतः इहामुत्र च ॥ ४९ ॥ समर्थं प्रत्याह—मदर्चामिति त्रिभिः । पुष्पोद्यानानि च कारयेत् । पूजायात्रोत्सवाश्रितान्, पूजा प्रत्यहम्, यात्रा विशिष्टे पर्वणि बहुजनसमागमः, उत्सवो वसन्तादिमहोत्सवः, तदाश्रितान् क्षेत्रादीन् दत्त्वा ॥ ५० ॥ पूजायात्रोत्सवाश्रितानित्यस्य विवरणम्—पूजादीनामिति । प्रवाहार्थं संततानुवृत्त्यर्थम् । मत्सार्ष्टितां मत्समानैश्वर्यम् ॥ ५१ ॥ प्रतिष्ठादीनां व्यस्तसमस्तानां फलमाह—प्रतिष्ठयेति । मत्साम्यतां मया साम्यमित्यर्थः ॥ ५२ ॥ ॥ ॥ ॥

---

१ उभयत्र प्रतिमाया वह्नौ च । २ पौराणैः प्राचीनैरार्षैः प्राकृतैरर्वाचीनैः । ३ 'अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ॥ जपहोमनमस्कारान्न कुर्यात्केशवालये' इति निकटे प्रणामनिषेधाद्द्वितीयपक्षमाह—यद्वेति । ४ उद्वासयेद्विसर्जयेत् । ५ आत्मनि च स्वस्वरूपे च । ६ क्रियायोगपथैः मदर्चनोपायप्रकारैः । ७ मन्दिरं कारयित्वा मदर्चां संप्रतिष्ठापयेदिति वाच्ये वैपरीत्योक्तिर्मन्दिरेऽवश्यार्चाप्रतिष्ठापनज्ञापनाय । ८ 'दानेन भुवनत्रयम्' इत्यपि पाठः ।

सकामं प्रत्युक्तं अहैतुकभक्तं प्रत्याह—मामेवेति । अहैतुको भक्तियोग एव कथं भवति तत्राह—भक्तियोगमिति ॥ ५३ ॥ दातुः फलमुक्तम्, अपहर्तारं निन्दति—य इति । विड्भुक् विष्ठाभोजी कृमिः ॥ ५४ ॥ कर्तुर्यत्फलं तदेवान्येषामपीत्याह—कर्तुरिति । सारथेः सहकारिणो हेतोः प्रयोजकस्यानुमोदितुश्च प्रेत्यैतत्फलमित्यन्वयः । कुतः । यतः कर्मणामेते भागिनो भागार्हाः । तत्रापि विशेषमाह—भूयसि कर्मणि सारथ्यादौ च भूयोऽधिकं फलमिति ॥ ५५ ॥ पयःपत्रादिमात्रेण पूजितो यः परं पदम् ॥ प्रागेव दिशति प्रीतः स कृष्णः शरणं मम ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां सप्तविंशोऽध्यायः ॥२७॥ ॥ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ॥ ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥ १ ॥ इदानीमतिविस्तरेणोक्तं ज्ञानयोगं संक्षेपेण वक्तुमाह—परेषां स्वभावान् शान्तघोरादीन् कर्माणि च । तत्र हेतुः—विश्वमिति ॥ १ ॥ विपक्षे दोषमाह—परेति । स्वार्थात् ज्ञाननिष्ठालक्षणात् । असति मिथ्याभूते द्वैतेऽभिनिवेशात् ॥ २ ॥ अंशमेव दृष्टान्ततो दर्शयति—तैजसे राजसाहंकारकार्ये इन्द्रियगणे निद्रया आपन्ने-

मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ॥ भक्तियोगं स लभत एवं यः पूजयेत माम् ॥ ५३ ॥ यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ॥ वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥ ५४ ॥ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ॥ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५५ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे सप्तविंशोऽध्यायः ॥२७॥ ॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥ १ ॥ परस्वभावकर्माणि यः प्रशंसति निन्दति ॥ स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥ २ ॥ तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ॥ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक् पुमान् ॥ ३ ॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ॥ वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥ छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ॥ एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥ ॥

ऽभिभूते सति पिण्डस्थो जीवः केवलं मनोमात्रेण मायां स्वप्नरूपां प्राप्नोति, ततो मनसि लीने सति नष्टचेतनः सन्मृत्युं वा मृत्युतुल्यां सुषुप्तिं वा प्राप्नोति यथा तद्वदेव नानार्थदृक् द्वैताभिनिवेशी विक्षेपं लयं च प्राप्नोति । यथा प्राज्ञसंपर्काद्विश्वस्य भोगक्षयलक्षणो भ्रंश एवमनात्मसंपर्कादात्मनोऽपि स्वरूपभ्रंश इति भावः ॥ ३ ॥ द्वैतासत्यतया स्तुतिनिन्दयोर्निर्विषयत्वं प्रपञ्चयति सार्धैः पड्भिः—किं भद्रमिति । अवस्तुनो द्वैतस्य मध्ये किं भद्रं किं वाऽभद्रं कियद्भद्रं कियद्वाऽभद्रमित्यर्थः । अवस्तुत्वमेवाह—वाचेति वाह्येन्द्रियोपलक्षणम् । वाचा उदितमुक्तं चक्षुरादिभिश्च यद्दृश्यं तदनृतमिति ॥ ४ ॥ नन्वेवं सति देहादिभावानामप्यसत्त्वात्कथं भयहेतुत्वं तत्र सदृष्टान्तमाह—छाया प्रतिबिम्बः । प्रत्याह्वयः प्रतिध्वनिः । आभासः शुक्तिरजतादिः । एते यथाऽसन्तोऽप्यर्थकारिणो भवन्ति । आमृत्युतो मृत्युमभिव्याप्य । यद्वा, मृत्युर्लयः । यावन्नैव लीयन्ते तावत्पर्यन्तमित्यर्थः ॥ ५ ॥ ॥ ॥

१ तत्रापि तुल्यफलत्वेऽपि । २ विपक्षे प्रशंसाग्रहणरूपे । ३ फलाभिसंधिविरहेण । 'निरपेक्षेण' इति क्वचित्पाठः ।

ननु सृष्ट्यादिश्रुतिभिरेव द्वैतं निरूपितं कथमसत्यं स्यात्तत्राह—आत्मैवेति सार्धद्वाभ्याम्। त्रायते पाल्यते। त्राति पालयति ॥ ६ ॥ अन्यस्मात्सृज्यादिव्यतिरिक्तात्। त्रिविधा आध्यात्मिकादिरूपा। भातिः प्रतीतिः। ननु कथं निर्मूलं प्रतीयते तत्राह—इदमिति ॥ ७ ॥ ज्ञानविज्ञानयोर्नैपुणं निष्ठाम्। सूर्यवत्समो भूत्वा ॥ ८ ॥ एतन्निष्ठाप्राप्त्युपायमाह—प्रत्यक्षेणेति। यदाद्यन्तवत् द्वैतं तदसदिति ज्ञात्वा निःसङ्गो विचरेत्। आद्यन्तवत्त्वे प्रमाणानि—प्रत्यक्षेण घटादि। अनुमानेन सावयवत्वेन दृश्यं पृथिव्यादि। निगमेनाप्रत्यक्षमाकाशादि। आत्मसंविदा स्वानुभवेन सर्वं दृश्यमाद्यन्तवदसच्चेति ज्ञात्वा। निःसङ्गस्तदासक्तिशून्यः ॥ ९ ॥ ननु यद्यात्मसंविदा सर्वं दृश्यमसदित्युच्यते तर्ह्यात्मा स्वप्रकाशो देहादिद्वैतं च जडमित्युक्तं स्यात्, तथा च संसारप्रतिभासो न घटेतेति चोदयति—नैवेति। अनात्मस्वदृशोर्जडाजडयोः। अत्र हेतुः—द्रष्टृदृश्ययोः। मा भूद्द्वयोरपि तत्राह—उपलभ्यत इति ॥ १० ॥ एतत्प्रपञ्चयति—

आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ॥ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥ तस्माद्ब्रह्मात्मनोऽन्यस्मा-
दन्यभावो निरूपितः ॥ निरूपितेयं त्रिविधा निर्मूला भातिरात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥
एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥ प्रत्यक्षेणानुमानेन निगमे-
नात्मसंविदा ॥ आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ ९ ॥ ॥ उद्धव उवाच ॥ नैवात्मनो न देहस्य संसृतिर्द्रष्टृ-
दृश्ययोः ॥ अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते ॥ १० ॥ आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ॥ अग्निवद्दारुवद-
चिद्देहः कस्येह संसृतिः ॥ ११ ॥ ॥ श्रीभगवानुवाच ॥ यावद्देहेन्द्रियप्राणैरात्मनः संनिकर्षणम् ॥ संसारः फलवांस्ता-
वदपार्थोऽप्यविवेकिनः ॥ १२ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा
॥ १३ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ १४ ॥ ॥

आत्मेति। अव्ययत्वादिपञ्चविशेषणैर्नाशादिरागादिपुण्यापुण्याज्ञानपरिच्छेदानामसंभवं दर्शयति—हेतुहेतुमत्त्वं तु यथेष्टम्। अचिज्जडः। अयं भावः—यथैवाग्निदारुणोर्भेदेनानुपलम्भेऽपि दारु प्रकाश्यमेवाग्निश्च प्रकाशकः, तथा देहात्मनोरपीति न संसृतिस्तयोरन्यतरस्यापि घटत इति ॥ ११ ॥ सत्यं तथाप्युभयोरेवमविवेक एव संसारालम्बनमित्याह पञ्चभिः—यावदिति। संनिकर्षणं संबन्धः। नन्वसङ्गस्य कुतः संबन्धस्तत्राह—अविवेकिनः, अज्ञानकृत इत्यर्थः। ननु स्वप्रकाशस्य कथमज्ञानकृतः संसारस्तत्राह—अपार्थोऽपि मिथ्याभूतोऽपि केवलं फलवान्। फलं स्फूर्तिर्न तु तत्त्वतोऽस्तीत्यर्थः ॥ १२ ॥ नन्वसतो देहादेः कुतः संसारस्फूर्तिहेतुत्वमपि तत्राह—अर्थे हीति। अस्यात्मनः ॥ १३ ॥ ननु कथंचिज्जानतो विषयस्फूर्तिर्जीवन्मुक्तस्यापि दुर्वारेत्यनिर्मोक्षप्रसङ्गः स्यात्तत्राह—यथा हीति। प्रस्वापः स्वप्नः। बहूननर्थान् बिभर्ति पुष्णातीति तथा ॥ १४ ॥ ॥ ॥ ॥

१ देहेन्द्रियान्तःकरणरूपा। २ सावयवत्वेन पृथिव्यादि दृश्यम्, आद्यन्तवत्, सावयवत्वात्, घटादिवत्, यन्नैवं तन्नैवं, यथात्मेति। ३ निगमेन—'तस्माद्वा एतस्मादात्मन आकाशः सभूतः' इत्यादिना। ४ इदमधिकम्। ५ उपलभ्यते जन्ममरणादि संसृतिरनुभूयते। ६ प्रभुः सर्वभवनसमर्थः। ७ ईश्वरः सर्वकरणसमर्थश्च। ८ त्रिविधा समवाय्यसमवायिनिमित्तरूपकारणभेदविषयेति शुक०। ९ 'अनात्मसदृशोः' इति मूले टीकायां च पाठः। १० आत्मनो जीवस्य।

अहंकारलक्षणो देहादिसंनिकर्ष एव संसारालम्बनमित्यन्वयव्यतिरेकाभ्यां दर्शयति—शोकेति । सुषुप्त्यादौ तेषामदर्शनादहं सुखीतिवच्चैतन्यं सुखीति प्रतीत्यभावाच्च दृश्यत्वाच्च सुखादीनां कृशत्वादिवद्द्रष्टृधर्मत्वानुपपत्तेरिति भावः । उक्तं च—'सुप्तेऽहमि न दृश्यन्ते सुखदोपप्रवृत्तयः ॥ अतस्तस्यैव संसारो न मे संसृतिसाक्षिणः ॥' ॥ १५ ॥ ननु यद्यहंकारस्य संसारस्तर्हि मुक्तिरपि तस्यैवेति मुक्तावहंकारावशेषः प्रसज्जेत तत्राह—देहेति । देहादिष्वभिमानो यस्य सः । आत्मैव तेषामन्तर्हितो जीवः । अत एव गुणकर्ममयी मूर्तिर्यस्य सः । एवं च सूक्ष्मोपाधिभिर्बहुधेव सूत्रादिशब्दैर्गीतः संसारे परमेश्वराधीनः सर्वतो धावति, अतो नायं दोष इति भावः ॥ १६ ॥ तदेवमहंकारकृतं बन्धमुपपाद्येदानीं ज्ञानेन तन्निवृत्तौ मुक्तिरित्याह—अमूलमिति । वस्तुतो मूलशून्यमज्ञातस्तु बहुभी रूपैर्देवादिशरीरै रूपितं प्रकाशितमैन्द्रजालिकतुल्यमिति वा । किं तत्तदाह—मन इति । मनआदीनां द्वन्द्वः । यद्वा, मनआदिषु क्रियत इति कर्म अहंकरणं गुरोरुपासनया निशितेन तीक्ष्णेन ज्ञानखड्गेन छित्त्वा ॥ १७ ॥ तदेव ज्ञानं स्वरूपसाधनफलैर्निरूपयति—ज्ञानमिति । विवेको ज्ञानम् । साधनान्याह—निगमो वेदः । तपः स्वधर्मः । प्रत्यक्षं स्वानुभवः । ऐतिह्यमुपदेशः । अनुमानं तर्कः । फलमाह—आद्यन्तयोर्यदस्य जगतो मध्येऽपि तदेव केवलं न तु जगदिति ।

**शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ १५ ॥ देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ॥ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥ १६ ॥ अमूलमेतद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनया शितेन छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥ यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥ तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ १९ ॥ विज्ञानमेतत्त्रियवस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ॥ समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २० ॥**

किं तत्कालः कलयति प्रकाशयति यस्तथा हेतुः कारणं च यत् तदेव । एतदुक्तं भवति—यदस्य विश्वस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवैतत्, न ततः पृथगिलेवं निश्चयफलो निगमादिसाधनैर्जायते यो विवेकस्तज्ज्ञानमिति ॥ १८ ॥ तत्र नानाभेदव्यवहारालम्बनस्यापि विश्वस्य कारणमात्रात्मकत्वं सदृष्टान्तमाह—यथेति । स्वकृतं सुष्ठु कुण्डलादिरूपेणाविरचितं यद्धिरण्यम् । कीदृशम् । हिरण्मयस्य कुण्डलादेरुत्पत्तेः पुरस्तान्नाशाच्च पश्चान्मध्ये च यदस्ति कटकं कुण्डलमित्यादिनानाव्यपदेशैर्व्यवहारं प्राप्यमाणमपि तदेव यथा तद्वदस्य विश्वस्य कारणभूतोऽहमेव नानाव्यवहारालम्बनं, न तु मत्तः पृथग्विश्वमिति ॥ १९ ॥ तदेवं कार्यस्य कारणमात्रात्मकतामुक्त्वा प्रकाश्यस्य प्रकाशकात्मकतामाह—विज्ञानमिति । त्रियवस्थम् । यकारस्य पृथक्पाठश्छन्दोनुरोधेन । जाग्रदादित्र्यवस्थं यद्विज्ञानं मनस्तदवस्थाकारणरूपं च यद्गुणत्रयम् । यच्च कारणकार्यकर्तृ । कारणमध्यात्मं, कार्यमधिभूतं, कर्तृ अधिदैवम् । एवं गुणत्रयकार्यभूतं त्रिविधं जगत् । एतद्येन तुर्येण सामान्यज्ञानमात्रेण समन्वयेन भवति । येनानुगतं प्रकाशत इत्यर्थः । 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं

१ अहंकारसत्त्वे संसारसत्त्वमन्वयः, तदभावे तदभावो व्यतिरेकः । २ केवलमद्वितीयम् । ३ विवेको ब्रह्मात्मत्वेन तदभेदस्फूर्तिः । ४ कचित्तु 'सुकृतं' इति मूले टीकायां च पाठः । ५ तत्र प्रकाशात्मकत्वकारणमात्रात्मकत्वयोर्मध्ये । ६ छन्दोनुरोधेनेति तत्र मानं तु व्याडिगालवयोर्मतेनैके यणा व्यवधीयन्ते इति शब्दस्मृतिरेव । ७ निरुपाधिप्रकाशमात्रेण कर्त्रा यः समन्वयः सम्यग्व्याप्तिस्तेन,

विभाति' इति । तथा 'चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः' इत्यादिश्रुतेश्च । ननु विशेषविज्ञानव्यतिरेकेण न तुर्यं नामोपलभामहे तत्राह—व्यतिरेकतश्च समाध्यादौ यदस्ति तदेव सत्यमिति ॥ २० ॥ एवं कालत्रयेऽप्यव्यभिचारिणः सत्यत्वमुक्तं, व्यभिचारिणस्त्वसत्यतामाह—न यदिति । मध्ये च तत्पृथक् नास्ति किंतु व्यपदेशमात्रम् । कुतः । यतो यद्यत्परेणान्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत्तदेव कारणप्रकाशकतावन्मात्रं स्यान्न पृथगिति मे मनीषा बुद्धिः । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतेः । कारणप्रकाशकव्यतिरेकेण कार्यस्य प्रकाश्यस्य चानुपलम्भादिति भावः ॥ २१ ॥ एवं सामान्यतः कार्यप्रकाश्ययोः कारणप्रकाशकाभ्यामभेदमुपपाद्य प्रस्तुते तदुभयविवेकपूर्वकं प्रपञ्चस्य ब्रह्माभेदमाह—अविद्यमान इति । योऽयं वैकारिको विकारसमूहः स एव प्रागविद्यमानो राजससर्गः । रजोद्वारेण ब्रह्मकार्यभूत इत्यर्थः । अवभासतेऽपि ब्रह्मप्रकाश्यश्चेत्यर्थः । ब्रह्म तु स्वयं स्वतःसिद्धं, न तु कार्यमित्यर्थः । ज्योतिश्च प्रकाशकमित्यर्थः । अतः कारणादिन्द्रियाणि च अर्थास्तन्मात्राणि चात्मा मनश्च । देवानामप्युपलक्षणम् ।

न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ॥ भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥ २१ ॥ अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ॥ ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥ २२ ॥ एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ॥ छित्त्वात्मसंदेहमुपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥ २३ ॥ नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः ॥ मनोऽन्नमात्रं धिषणा च सत्त्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥ २४ ॥ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २५ ॥ ॥

विकाराः पञ्चभूतानि । एवं चित्रं ब्रह्मैव भातीति ॥२२॥ उपसंहरति—एवं निगमतपःप्रत्यक्षैतिह्यानुमानैः स्फुटं यथा भवति तथा ब्रह्मविवेकहेतुभिस्तथा परस्य देहादेरपवादेनात्मत्वनिरासेन च । कीदृशेन । विशारदेन निपुणेन । गुरुणा निमित्तभूतेनेति वा । आत्मविषयं संदेहं छित्त्वा स्वानन्दतुष्टः सन्नखिलेभ्यः कामुकेभ्य इन्द्रियादिभ्य उपारमेत निःसङ्गो भवेत ॥२३॥ परापवादं प्रपञ्चयति—वपुरात्मा न भवति, पार्थिवत्वाद्धटवत् । तथा इन्द्रियाणि तदधिष्ठातारो वा देवा असुः प्राणो धिषणा बुद्धिः सत्त्वं चित्तमहंकृतिरित्येते आत्मा न भवन्ति । कुतः । अन्नमात्रम् । अन्नोपष्टभ्यत्वाच्छरीरवत् । वायुर्जलं च हुताशस्तेजः खं क्षितिरिति पञ्चभूतान्यर्थाः शब्दादयः साम्यं प्रकृतिर्नात्मा जडत्वाद्धटवदिति । यद्वा, हिशब्देनानुमानान्तराणि सूचितानि; तद्यथा,—इन्द्रियाण्यात्मा न भवन्ति, करणत्वाद्वास्यादिवत्, देवाश्च वैकारिकत्वान्मनोवत्, प्राणश्च वायुत्वाद्बाह्यवायुवदित्यादि ॥ २४ ॥ एवं विवेकज्ञानवतो मुक्तस्य नेन्द्रियादिकृतगुणदोषसंबन्ध इत्याह—समाहितैरिति । मत्सुविविक्तधाम्नः मम सुष्ठु विविक्तं धाम स्वरूपं येन तस्य । प्रकाशकस्य प्रकाश्यगुणदोषा न भवन्तीति रविदृष्टान्तेनोक्तम् ॥ २५ ॥ ॥

१ विकारो घटशरावादिकार्यावस्था वाचा व्यवहारेणारभ्यते रलयोरभेदादालभ्यते स्पृश्यते वाचेति कर्मणि ल्युट् । २ सामान्यतः प्रकृतेऽप्रकृते चेत्यर्थः । ३ पुरस्तादुत्पत्तेः पूर्वम् । ४ पश्चान्नाशानन्तरम् । ५ 'तत्तद्व्यपदेशमात्रम्' इति पाठः । ६ अन्नोपष्टभ्यत्वान् अन्नोपजीव्यत्वात् ।

असङ्गत्रह्मत्वेनावस्थितस्य न केऽपि गुणदोषा इत्याकाशदृष्टान्तेनाह—यथेति । वाय्वादीनां शोषणदहनक्लेदनरजोधूसरत्वादिभिर्गतागतैरागमापायिभिर्ऋतुगुणैः शीतोष्णादिभिर्वा । अहंमतेरहंकारात्परमक्षरं संसृतिहेतुभिर्न युज्यते । यद्वा, अहंकारस्य संसृतिहेतुभिरिति ॥ २६ ॥ मुक्तवदसम्यग्ज्ञानी न यथेष्टमाचरेदित्याह द्वाभ्याम्—तथापीति । गुणेषु विषयेषु । रजो रागः मनसः कषाय इति दुर्निरासतामाह ॥ २७ ॥ तदेव दृष्टान्तेनोपपादयति—यथेति । नृणामामयो रोगः । असाध्वसम्यक् यथा भवति तथा । अपक्वकषायकर्म अदग्धाः कषाया रागादयस्तन्मूलानि कर्माणि यस्मिंस्तत् । अत एव सर्वसङ्गं सर्वेषु पुत्रादिषु सज्जमानं मनः कुयोगिनमसम्यग्ज्ञानिनं विध्यति भ्रंशयति ॥ २८ ॥ ननु कथंचिद्विषयसङ्गे यदि योगभ्रंशः स्यादलं तर्हि सोपायेन योगमार्गेण तत्राह—कुयोगिन इति । मनुष्यभूतैर्बन्धुशिष्यादिरूपैस्त्रिदशैरुपसृष्टैः प्रेरितैः । तथा च श्रुतिः—'यस्मात्तदेषां न प्रियं यदेतन्मनुष्या विद्युः' इति । भूयो जन्मान्तरे, न तु

यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ॥ तथाक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥ २६ ॥ तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ॥ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥ २७ ॥ यथामयोऽसाधुचिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् ॥ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसङ्गम् ॥ २८ ॥ कुयोगिनो ये विहितान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥२९॥ करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ॥ न तत्र विद्वान्प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥ तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ॥ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१ ॥ यदि स्म पश्यत्यसदिन्द्रियार्थं नानाऽनुमानेन विरुद्धमन्यत् ॥ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥ ॥

कर्मतन्त्रं कर्मविस्तारम् ॥ २९ ॥ ननु विदुषामपि सर्वथा कर्म दुष्परिहरमिति पुनः संसारः स्यादत आह—करोतीति । विदुषोऽन्योऽसौ जन्तुर्देह एव भोजनादिकर्म करोति क्रियते विक्रियते च तेन कर्मणा पुष्ट्याद्यपि प्राप्नोतीत्यर्थः । केनापि संस्कारादिना चोदित आनिपातान्मरणपर्यन्तं करोति । विद्वांस्तु प्रकृतौ देहे स्थितोऽपि कर्मणि न विक्रियते, निरहंकारित्वात् । हर्षविषादादिभिः संसारं न प्राप्नोति ॥ ३० ॥ किंच, आस्तां तावद्दैहिककर्मभिर्विकारशङ्का, यतो देहमप्यसौ न पश्यतीत्याह—तिष्ठन्तमिति । उक्षन्तं मूत्रयन्तम् । स्वभावप्राप्तमन्यदपि दर्शनस्पर्शनादि ईहमानं कुर्वन्तमात्मानं देहम् ॥३१॥ नन्विन्द्रियवतः सर्वथा कथमदर्शनं संभवति तत्राह—यदि स्मेति । यद्यप्यसतां बहिर्मुखानामिन्द्रियाणामर्थं पश्यति तथापि नानात्वान्मिथ्यात्वप्रयदित्यनुमानेन विरुद्धं बाधितं सदन्यदात्मव्यतिरिक्तं मनीषी वस्तुतया न मन्यते । स्वप्नादुत्थाय प्रबुध्य संस्कारमात्रेण स्वाप्नं विषयं स्फुरन्तमत एव स्वयमेव तिरोभवन्तं यथा तद्वत् ॥ ३२ ॥

१ सोपायेन विषयदोषदर्शनादिसहितेन । २ मनुष्या एतद्ब्रह्म विद्युरिति यत् तत् ब्रह्मज्ञानं यस्मात् स्वापकर्षहेतोः एषां देवानां न प्रियमिति श्रुत्यर्थः । ३ कर्म आवश्यकाहारादि ।
४ विकारो हर्षविषादादिः । ५ बाधितं मिथ्यात्वेन ज्ञातम् ।

तदेवम् 'आत्मा न विक्रियते' इत्युक्तम् । नन्वेतदनुपपन्नं, बद्धावस्थायां त्यज्यमानत्वात्, मुक्तावस्थायां च गृह्यमाणत्वात्, नहि व्रीहयोऽवघातेन व्रीहिभावत्यागतस्तण्डुलीभावेन गृह्यमाणा न विक्रियन्ते तत्राह—पूर्वमिति । बद्धावस्थायां गुणैः कर्मभिश्च चित्रमज्ञानकार्यं देहेन्द्रियादिलक्षणमात्मन्यध्यासेनाविविक्तं गृहीतमासीत्तदेव पुनर्ज्ञानेन निवर्तते । आत्मा तु न केनापि रूपेण गृह्यते, नापि त्यज्यते । अयं भावः—मुक्तेः क्रियाफलत्वे भवेत्तावदात्मनो विकारः । तस्यास्त्वारोपिताज्ञानमात्रनिवृत्तिरूपत्वान्नात्मसंस्पर्शित्वं बन्धमोक्षयोः, अतो न विकार इति ॥ ३३ ॥ एतदेव दृष्टान्तेन स्पष्टयति—यथेति । न तु पूर्वमेव सत् घटादि पुनर्विधत्ते करोति । मे या समीक्षा आत्मविद्या ॥ ३४ ॥ आत्मनो निर्विकारतां प्रपञ्चयति—एष इत्यनेनापरोक्षतया नित्यप्राप्तस्यात्मनः प्राप्तिं वारयति । स्वयंज्योतिरित्यनेनाज्ञानमलापाकरणलक्षणां विकृतिं वारयति । अज इत्युत्पत्तिं वारयति । अप्रमेय इति ज्ञानलक्षणातिशयाधानेन संस्कारम् । महानुभूतिरिति देशकालपरिच्छेदाभावेनास्तित्ववृद्धिविपरिणामापक्षयनाशान् । स्वयंज्योतिष्ट्वादौ हेतुः—सकलानुभूतिरिति । एकोऽद्वितीय इति विकारहेतोरन्यस्याभावान्न कोऽपि विकार इति दर्शयति । ननु श्रुतिविषयस्य कथं स्वयंज्योतिष्ट्वादि तत्राह—वचसां विरामेऽगोचरत्वेन निवृत्तौ सत्याम् । तथा च श्रुतिः—

पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग ॥ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३३ ॥ यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते ॥ एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ ३४ ॥ एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ॥ एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति ॥ ३५ ॥ एतावानात्मसंमोहो यद्विकल्पस्तु केवले ॥ आत्मन्नृते स्वमात्मानमवलम्बो न यस्य हि ॥ ३६ ॥ यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ॥ व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम् ॥ ३७ ॥ ॥

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । तत्र हेतुः—येनेषिताः प्रेषिताः । तथा च श्रुतिः—'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ॥ केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति । श्रोत्रस्य श्रोत्रं यन्मनसो मनो यद्वाचो ह वाचं प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इति ॥ ३५ ॥ अद्वितीयत्वमुपपादयितुं भेदस्यावास्तवत्वमाह—एतावानिति । केवलेऽभिन्ने आत्मन्नात्मनि विकल्प इति यदेतावान्सर्वोऽप्यात्मनो मनसः संमोहो भ्रमः । यतः स्वमात्मानमृते विना यस्य विकल्पस्यावलम्ब आश्रयो नास्ति । रजतभ्रमस्येव शुक्तिं विना, 'नेह नानास्ति किंचन', 'इन्द्रो मायाभिः पुरुरूप ईयते । युक्ता ह्यस्य हरयः शता दश' इत्यादिश्रुतेरित्यर्थः ॥ ३६ ॥ केचित्पुनः प्रत्यक्षादिप्रतीतस्य प्रपञ्चस्य बाधायोगाद्वेदान्तार्थानां च क्रत्वर्थकर्तृप्रतिपादनपरत्वेनार्थवादत्वाद्द्वैतं सत्यमिति मन्यन्ते, तन्मतमनूद्य दूषयति—यदिति । नामाकृतिभिर्ग्राह्यं नामरूपोपलक्षितं पञ्चवर्णं पञ्चभूतात्मकं द्वयं द्वैतं यत्तदबाधितमिति पण्डितमानिनामत्र वयमेव पण्डिता इत्यभिमानवतां वेदान्तेष्वयमर्थवाद इति प्रतीतिर्न तत्त्वविदाम् । यतो व्यर्थेनापि विनाप्यर्थेन सा प्रतीतिः ।

---

१ तस्या मुक्तेस्तु आरोपितं यदधिष्ठानस्याज्ञानं देहात्मभावनापादकं तस्याऽज्ञानस्याधिष्ठानज्ञानेन निवृत्तिर्निरासस्तद्रूपत्वात् । २ अत्र चतुर्विधक्रियाफलाभावः प्रतिपाद्यते । ३ एतच्छब्दस्यापरोक्षार्थत्वे 'समीपतरवर्ति चैतदो रूपम्' इति मानम् । ४ अतिशयः शक्तिविशेषः । ५ केनेति । मनः कर्तृ केन देवेन प्रेषितं सत् इषितं इष्टं विषयं प्रति पतति गच्छति । मनसः करणत्वादवश्यं तत्प्रेरकेण केनचिज्जीवभिन्नेन कर्त्रा भाव्यं इत्याद्यग्रेऽपि योजनीयम् । ६ यत् यः श्रोत्रस्य श्रोत्रं शब्दावभासकत्वशक्तिप्रदः । एवं मननशक्तिप्रद इत्यादि ज्ञेयम् । ७ पुरुरूपो बहुरूपः ईयते प्रतीयते, वस्तुतस्तु एक एव । अस्य दश इन्द्रियलक्षणा विषयाहरणात् हरयः ...भेदाच्छता शतसंख्याश्च युक्ताः प्रेरिताः । अधीनाः सन्तीत्यर्थः ।

तथा हि—न तावद्विध्येकवाक्यत्वं तेषामस्ति यतोऽर्थवादत्वं स्यात् । न चाकर्तृभोक्तृपरमानन्दरूपात्मप्रतिपादनं कर्मविधिशेषतां भजते । न चाबाधितत्वं द्वैतस्य, नामरूपात्मकत्वात्, आद्यत्वात्, पञ्चवर्णात्मकत्वात्, स्वप्नवदित्याद्यनुमानैर्वाचारम्भणादिश्रुतिभिश्च बाधितत्वादिति ॥ ३७ ॥ तदेवं ज्ञानयोगं सपरिकरं निरूप्येदानीं तन्निष्ठस्य विघ्नप्रतीकारमाह—योगिन इति त्रिभिः । योगं युञ्जतः कायो यद्यन्तरेवोत्पन्नैरुपसर्गैः रोगाद्युपद्रवैरभिभूयेत । विधिः प्रतीकारः ॥ ३८ ॥ योगधारणया सोमसूर्यादिधारणया संतापशैत्यादीन् । आसनैर्वायुधारणान्वितैर्वातादिरोगान् । तपोमन्त्रौषधैः पापग्रहसर्पादिकृतान् ॥ ३९ ॥ ममानुध्यानादिभिः कामादीन् । योगेश्वरानुवृत्त्या दम्भमानादीन्हन्यात् ॥ ४० ॥ अन्ये तु देहसिद्ध्यर्थमेवैतत्सर्वं कुर्वन्ति, तद्दूषयति—केचित्पुनरेतैरन्यैश्चोपायैर्देहमेव सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं च कृत्वा अद्वन्द्वपरकायप्रवेशादिसिद्धये तत्तद्धारणारूपं योगं युञ्जन्ति, न तु ज्ञाननिष्ठारूपम् ॥ ४१ ॥ कुशलैः प्राज्ञैरादरणीयं न भवति । वनस्पतिवदात्मैव स्थायी, शरीरं तु फलवन्नश्वरमित्यर्थः ॥ ४२ ॥ ननु कचित्समाध्यङ्गत्वेनापि प्राणायामादियोगे क्रिय-

योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः ॥ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३८ ॥ योगधारणया कांश्चिदासनैर्धारणान्वितैः ॥ तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥ ३९ ॥ कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ॥ योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शनैः ॥ ४० ॥ केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ॥ विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४१ ॥ न हि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ॥ अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४२ ॥ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४३ ॥ योगचर्यामिमां योगी विचरन्मद्व्यपाश्रयः ॥ नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ उद्धव उवाच ॥ सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः ॥ यथाञ्जसा पुमान्सिध्येत्तन्मे ब्रूह्यञ्जसाच्युत ॥ १ ॥

माणे जरारोगाद्यभावो दृश्यते, सत्यम्, तथापि समाधिमुत्सृज्य न तत्र सज्जेतेत्याह—योगमिति । तत् तां देहसिद्धिं न श्रद्दध्यान्न विश्वसेत् ॥ ४३ ॥ तदेवं विघ्नप्रतीकारैर्योगं कुर्यादित्युक्तं, मच्छरणस्य तु न विघ्नशङ्कापीत्याह—योगचर्यामिति । विचरन्स्वसुखे अनुभूरनुभूतिर्यस्य सः । स्पृहामूला हि विघ्नाः, सा च मदपाश्रयस्य निवर्तते, अतोऽन्तरायैरविहतः स्वानन्दपूर्णो भवतीति ॥ ४४ ॥ समाहृत्य स्वयोगं तु समस्तोपनिषद्रसम् ॥ सख्ये मुख्यतमां भक्तिं मुक्तौ पुनरुपादिशत् ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां अष्टाविंशतितमोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ॥ भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ १ ॥ अतिक्लेशमिवालक्ष्य योगेऽसत्फलसंपदि ॥ सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥ २ ॥ अनात्मनोऽवशीकृतमनसः अञ्जसा अप्रयासतो यथा सिध्येत्तथा अञ्जसा सुबोधं यथा तथा मे ब्रूहि ॥ १ ॥ ॥ ॥

१ 'प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ॥ आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह' इत्युक्तेः । २ तत् देहसिद्धिकरणम् । ३ कल्पता जरारोगादिराहित्यम् । ४ 'सुदुष्करामिमाम्' इति पाठः । ५ समाहृत्य सङ्क्षेपेण निर्दिश्य ।

सुदुष्करतां प्रपञ्चति—प्रायश इति । मनो युञ्जन्तो निगृह्णन्तो विषीदन्ति क्लिश्यन्ति । कुतः । असमाधानादनिग्रहात् । कथंचिन्मनसो निग्रहे च कर्शिताः श्रान्ताः सन्तः ॥२॥ यस्मादेवं केवलं विषीदन्ति अथातः अत एव ये हंसाः सारासारविवेकचतुरास्ते त्वानन्ददुघं समस्तानन्दपरिपूरकं तव पदाम्बुजमेव सुखं यथा भवति तथा नु निश्चितं श्रयेरन् सेवन्ते । अमी तु त्वन्मायया विहताः । के । ये योगकर्मभिर्मानिनः सन्तो न श्रयन्ते । यद्वा, अमी त्वद्भक्तास्त्वन्मायया न विहता अत एव योगकर्मभिः कृत्वा मानिनो न भवन्ति । अन्ये तु त्वन्मायया मोहिताः सन्तो वयं योगज्ञा वयं कर्मकुशला इति केवलं गर्विता भवन्ति, न तु मुच्यन्त इत्यर्थः ॥३॥ त्वद्भक्तास्तु त्वत्प्रसादेन कृतार्था भवन्तीति नातिचित्रमित्याह—किमिति । अनन्यशरणेषु दासेषु तवात्मसात्त्वं तदधीनत्वं यद्यथा नन्दगोपीबलिप्रभृतिष्वेतत्किं चित्रं नाश्चर्यमित्यर्थः । यतो यो भवान् श्रीरामरूपेण मृगैर्वानरैः सह साहित्यं सख्यमिति यावत् । अरोचयत् प्रीत्या कृतवान् । कथंभूतः । ईश्वराणां ब्रह्मादीनां यानि श्रीमन्ति किरीटानि तेषां तटान्यग्राणि तैः पीडितं विलुठितं पादपीठं यस्य । स्वयं तथाभूतोऽपि सन् ॥ ४ ॥ अतस्त्वां परित्यज्य को नामान्यत्संश्रयेदित्याह—तं त्वेति । तमेवंभूतं त्वां को नु विसृजेन्न भजेत् । कथंभूतः । स्वकृतवित् बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् । यद्वा,

प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः ॥ विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥ अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ॥ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥ ३ ॥ किं चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥ तं त्वाखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु ॥ को वा भजेत्किमपि विस्मृतयेऽनु भूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥ ५ ॥ नैवोपयन्त्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ॥ योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥ ६ ॥ ॥

स्वस्मिन्नेवान्तर्यामितया कृतमुपकारं विद्वान् । तदेवाह—अखिलात्मदयितेश्वरम् । अखिलस्य जगत आत्मानं चेतयितारमात्मत्वादेव दयितं प्रेष्ठं सुसेव्यमीश्वरत्वादवश्यं भजनीयम् । किंच, आश्रितानां सर्वार्थदम् । तर्हि किं फलोद्देशेनाहं सेव्यः । नहि नहि । किमप्यनिरुक्तं त्वद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत्सेवेत । कथंभूतं तत् । यत्केवलं भूत्यै इन्द्रियभोगाय । अनु अनन्तरमेव त्वद्विस्मृतये भवति । यद्वा, त्वद्व्यतिरिक्तं किमपि देवतान्तरं धर्मज्ञानादिसाधनं वा भूत्यै ऐश्वर्याय संसारस्य विस्मृतये मोक्षाय को वा भजेन्न कोऽपि । ननु तत्सा धनं विना भोगमोक्षादिफलं कथं स्यात्तत्राह—किं वेति । तदुक्तम्—'या वै साधनसंपत्तिः पुरुषार्थचतुष्टये ॥ तया विना तदाप्नोति नरो नारायणाश्रयः ॥' इति ॥५॥ आस्तामन्यभजनवार्ता त्वत्कृतोपकारस्य त्वय्यात्मनि वेदनेनैव निष्कृतिर्नान्यथेत्याह—नैवेति । अपचितिं प्रत्युपकारमानृण्यमिति यावत् । कवयो ब्रह्मविदोऽपि नैव प्राप्नुवन्ति । यतः तत्कृतमुपकारं स्मरन्तः । ऋद्धमुद उपचितपरमानन्दाः । उपकारमेवाह—यो भवान् बहिराचार्यवपुषा गुरुरूपेणान्तश्च चैत्यवपुषान्तर्यामिरूपेणाशुभं विषयवासनां विधुन्वन्निरस्यन् स्वगतिं निजं रूपं प्रकटयति तस्य तव ॥ ६ ॥ ॥

१ मूले तवेति पदानुक्तिः साक्षात्तद्दर्शनाभिनयव्यञ्जनार्था । २ एकस्यैव नञ आवृत्त्यान्वयः । ३ त्वद्भक्तातिरिक्ताः । ४ रामरूपेणेत्यत्र साक्षाद्रूपेणापि वृन्दावनचारिभिर्वानरैः सख्यं युक्तं स्यात् एवंविहारैरित्यत्र मर्कटोत्प्लवनादिभिरित्युक्तेः ।

ईश्वरेश्वरत्वे हेतुः—जगत्क्रीडनकं क्रीडोपकरणं यस्य सः। ननु जगत्सृष्ट्यादिना ब्रह्मेशादयः क्रीडन्ति तत्राह—स्वशक्तिभिः सत्त्वादिभिर्गृहीतं मूर्तित्रयं येन सः। सप्रेम प्रेमसहितं मनोहरं स्मितं यस्य सः, सप्रेम यथा तथा जगादेति वा ॥७॥ हन्तेति सहर्षं संबोधनम्। सुमङ्गलान् सुखरूपान्। मृत्युं संसारम्। दुर्जयमन्यैरुपायैः ॥८॥ धर्मानेवाह—कुर्यादिति त्रयोदशभिः। मां स्मरन् शनकैरसंरम्भतः कुर्यात्। तदाह—मय्यर्पिते मनश्चित्ते संकल्पविकल्पानुसंधानात्मके येन। अत एव मद्धर्मेष्वेवात्ममनसो रतिर्यस्य सः ॥९॥ पुण्यदेशलक्षणम्—मद्भक्तैरिति। देवादिषु ये मद्भक्तास्तेषामाचरितानि कर्माणि चाश्रयेत ॥१०॥ सत्रेण संभूय वा ॥११॥ अन्तरङ्गां भक्तिमाह—मामिति त्रिभिः। सर्वभूतेष्वात्मनि चात्मानमीश्वरं स्थितं मामेवेक्षेत। ननु कथमेकस्य सर्वेषु वृत्तिस्तत्राह—बहिरन्तःपूर्णमित्यर्थः। तत्कुतः। अपावृतमनावरणम्। तदपि कुतः। यथा खमसङ्गत्वादित्यर्थः ॥१२॥ हे महाद्युते अतिप्राज्ञ। इत्यनेन प्रकारेण केवलं ज्ञानरूपां दृष्टि-

॥ श्रीशुक उवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ॥ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ हन्त ते कथयिष्यामि मम धर्मान्सुमङ्गलान् ॥ यान्श्रद्धया चरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ॥ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥ देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ॥ देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥ पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥ मामेव सर्वभूतेषु बहिरन्तरपावृतम् ॥ ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥ इति सर्वाणि भूतानि मद्भावेन महाद्युते ॥ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥ १३ ॥ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ॥ अक्रूरे क्रूरके चैव समदृक्पण्डितो मतः ॥ १४ ॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥ स्पर्धासूयातिरस्काराः साहंकारा वियन्ति हि ॥ १५ ॥ विसृज्य स्मयमानान्स्वान् दृशं व्रीडां च दैहिकीम् ॥ प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ १६ ॥

माश्रितः सन्सर्वाणि भूतानि मद्भावेन मन्यमानः सभाजयन्पण्डितो मत इत्युत्तरेणान्वयः ॥ १३ ॥ ननु उत्तमाधममध्यमेष्वेकरूपेण सभाजनमपाण्डित्यमेव स्यात् पूज्यपूजादिव्यतिक्रमादित्याशङ्क्य तामेव ज्ञानदृष्टिं प्रपञ्चयति—ब्राह्मण इति। विषमेष्वपि समदृक् समं मामेव पश्यन्। वैषम्यमेव चतुर्धा दर्शयति—ब्राह्मणे पुल्कसे इति। जातितो वैषम्यम्। पुल्कसोऽन्त्यजजातिविशेषः। स्तेने ब्रह्मस्वहारिणि ब्रह्मण्ये ब्राह्मणेभ्यो दातरि इति कर्मतः। अर्के विस्फुलिङ्ग इति गुणतः। अक्रूरे शान्ते क्रूरे चेति स्वभावतः ॥१४॥ नरेष्वीश्वरदृष्टिं कुर्वतः सद्यः फलविशेषमाह—नरेष्विति। समोत्तमहीनेषु स्पर्धादयः। स्वस्मिन्नहंकारश्च। हि निश्चितम्। वियन्ति नश्यन्ति ॥ १५ ॥ अतोऽन्तर्यामीश्वरदृष्ट्या सर्वान्प्रणमेदित्याह—विसृज्येति। स्मयमानान्हसतः स्वान्सखीन्। तथा दैहिकीं दृशमहमुत्तमः, स तु नीच इति दृष्टिम्। तया दृशा या व्रीडा लज्जा तां च विसृज्य श्वचाण्डालादीनभिव्याप्य प्रणमेत् ॥ १६ ॥ ॥ ॥

१ असंरम्भतश्चित्तानुद्वेगतया। २ भक्ता नारदप्रह्लादादयः। ३ 'सश्रयेत' इति पाठः। ४ 'पर्वयात्रा' इति पाठः। ५ स्मयमानान् अहो महानप्ययमतिनीचे प्रणमतीति हसतः।

एवं पञ्चभिः श्लोकैरुक्तायाः समदृष्टेरवधिमाह द्वाभ्याम्—यावदिति ॥ १७ ॥ तस्य एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति । कुतः । आत्ममनीषया सर्वत्रेश्वरदृष्ट्या या विद्या तया । अतः परितो ब्रह्मैव पश्यन्सर्वतः क्रियामात्रादुपरमेत् ॥ १८ ॥ किमयमेवोपायोऽस्ति वान्योऽपीत्यपेक्षायां सन्ति बहवः, समीचीनस्त्वयमेवेत्याह—अयं हीति ॥ १९ ॥ भगवद्धर्मलक्षणोपायस्य समीचीनत्वमेवोपपादयति द्वाभ्याम्—न हीति । अङ्ग हे उद्धव, अनाशिषो निष्कामस्य मद्धर्मस्योपक्रमे सत्यण्वपीषदपि वैगुण्यादिभिर्नाशो नास्त्येव, यतो मयैव निर्गुणत्वादयं धर्मः सम्यग्व्यवसितो निश्चितो न तु मन्वादिमुखेन कथंचित् ॥ २० ॥ किंच, यो य इति । अयमर्थः—किं वक्तव्यं मद्धर्मस्य न ध्वंस इति । यतो लौकिकोऽपि यो यो निरर्थो व्यर्थ आयासः सोऽपि मयि परे निष्फलाय चेत्कल्पते निष्कामतयार्पितश्चेत्तर्हि धर्म एव स्यात् । निरर्थायासे दृष्टान्तः—यथा भयशोकादेर्हेतोः पलायनाक्रन्दनादिक्लेशस्तद्वत् ॥ २१ ॥ अतो

यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ॥ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः[1] ॥ १७॥ सर्वं ब्रह्मात्मकं तस्य विद्य-
यात्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः[2] ॥ १८ ॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ॥ मद्भावः
सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥ न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ॥ मया व्यवसितः सम्यङ्निर्गुण-
त्वादनाशिषः ॥ २० ॥ यो यो मयि परे धर्मः कल्पते निष्फलाय चेत् ॥ तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥ २१ ॥
एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ॥ यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ २२ ॥ एष तेऽभिहितः कृत्स्नो
ब्रह्मवादस्य संग्रहः ॥ समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥ अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ॥
एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ॥ सनातनं ब्रह्म गुह्यं परं
ब्रह्माधिगच्छति ॥ २५ ॥ य एतन्मम भक्तेषु संप्रदद्यात्[3]सुपुष्कलम् ॥ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना[4]
॥ २६ ॥ य एतत्समधीयीत पवित्रं परमं शुचि ॥ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥ ॥

मद्भजनमेव बुद्धेर्विवेकस्य मनीषायाश्चातुर्यस्य च फलमित्याह—एषेति । तामेव दर्शयति—सत्यममृतं च मा मामनृतेनासत्येन मर्त्येन विनाशिना मनुष्यदेहेन इहास्मिन्नेव जन्मनि प्राप्नोतीति यत्सैव बुद्धिर्मनीषा चेति । बुद्धिर्विवेकः । मनीषा चातुर्यम् ॥२२॥ महाप्रकरणार्थमुपसंहरति द्वाभ्याम्—एष इति ॥ २३ ॥ ॥ २४ ॥ आस्तां तावज्ज्ञानमेतदनुसंधानकथनपठनश्रवणपराणामप्येतदेव फलं भवतीत्याह चतुर्भिः—सुविविक्तमिति । मया सुविविक्तं दत्तोत्तरं[5] एतदाख्यानमपि यो धारयेदनुसंदध्यात्स ब्रह्मगुह्यं वेदेऽपि रहस्यम् ॥ २५ ॥ सुपुष्कलं यथा भवति तथा ब्रह्मदायस्य ब्रह्म ददातीति तथा तस्य ज्ञानोपदेष्टुः ॥ २६ ॥ समधीयीत उच्चैः पठेत् । परमं शुचि अन्येषामपि शोधकम् । पूयेत शुध्येत् ॥ २७ ॥ ॥ ॥ ॥

१ वृत्तिर्व्यापारः। वाग्व्यापारः सर्वभूतोद्देशेन 'भगवते नमः' इत्युच्चारणम्। मनोव्यापारः सर्वभूतेष्वीश्वरभावेन चिन्तनम्। कायव्यापारो दण्डवत्प्रणामः इति बाल०। २ 'मुक्तबन्धनः' इति पाठः। ३ संप्रदद्यात् कथयेत्। ४ 'दास्यामि' इति पाठः। ५ तव प्रश्नो यत्र मया दत्तान्युत्तराणि यस्मिंस्तदिति ह्यमाख्यानस्य विशेषणं। प्रश्नं यो धारयेत्, एतदाख्यानमपि धारयेत् इति कोटिद्वयम्।

॥ २८ ॥ सम्यक् ज्ञानानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेन पृच्छति—अपीति । अपि किम् ॥ २९ ॥ उपधारितमाकलय्याह—नैतदिति । शठाय वञ्चकाय ॥ ३० ॥ शूद्राणां योषितां च यदि भक्तिः स्यात्तर्हि ब्रूयात् ॥ ३१ ॥ एतज्ज्ञानेन पुमान्कृतार्थो भवतीत्याह—नैतदिति । अत्र दृष्टान्तमाह—पीत्वेति । पीयूषं स्वादु ॥ ३२ ॥ ननु सन्ति बहूनि ज्ञेयानि तत्तत्फलसाधनानि,—सत्यम्, सन्त्यभक्तानां, भक्तस्य तु सर्वमहमेवातो मदेकशरणो भवेत्याह—ज्ञान इति । ज्ञानादौ यावान्धर्मादिलक्षणश्चतुर्विधोऽर्थस्तावान्सर्वोऽपि तेऽहमेव । तत्र ज्ञाने मोक्षः । कर्मणि विहिते धर्मः । कर्मण्येव स्वाभाविके तु कामः । योगे त्वणिमादिसिद्धयः । वार्तायां कृष्यादावर्थः । दण्डनीतावैश्वर्यमिति । सिद्ध्यैश्वर्ययोरपि कामान्तर्गतत्वाच्चातुर्विध्यम् ॥ ३३ ॥ कुत इत्यत आह—मर्त्य इति । यदा

य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ॥ मयि भक्तिं परां कुर्वन्कर्मभिर्न स बध्यते ॥ २८ ॥ अप्युद्धव त्वया ब्रह्म सखे समवधारितम् ॥ अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥ नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च ॥ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥ ३० ॥ एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ॥ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥ नैतद्विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥ ज्ञाने कर्मणि योगे च वार्तायां दण्डधारणे ॥ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ॥ तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥ ३४ ॥ ॥ श्रीशुक उवाच ॥ स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ॥ बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किंचिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥ विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन् बहुमन्यमानः ॥ कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥ ॥ उद्धव उवाच ॥ विद्रावितो मोहमहान्धकारो य आश्रितो मे तव संनिधानात् ॥ विभावसोः किं नु समीपगस्य शीतं तमोभीः प्रभवन्त्यजाद्य ॥ ३७ ॥ प्रत्यर्पितो मे भवतानुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ॥ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥ ३८ ॥ ॥

त्यक्तसमस्तकर्मा सन् मे निवेदितात्मा भवति तदाऽसौ मे विचिकीर्षितो विशिष्टः कर्तुमिष्टो भवति, ततश्चामृतत्वं मोक्षत्वं प्रतिपद्यमानो मयात्मभूयाय मदैक्याय मत्समानैश्वर्यायेति यावत्, कल्पते योग्यो भवति । वै ध्रुवम् ॥ ३४ ॥ आदर्शितो योगमार्गो यस्मै सः ॥ ३५ ॥ प्रणयेनावघूर्णं क्षुभितं चित्तं धैर्येण विष्टभ्य बहुमन्यमान आत्मानं कृतार्थं मन्यमानः ॥ ३६ ॥ मे मया य आश्रित आसीत्स तव संनिधानेनैव विद्रावितः । प्रभवन्ति किं नु बाधाय समर्था भवन्ति । अजाद्य ब्रह्मणोऽपि जनक ॥ ३७ ॥ किंच, यद्यपि तव संनिधानादेव गतस्तथाप्यनुकम्पिना भवता विज्ञानमयः प्रदीपश्च प्रत्यर्पितः समायया-पहृतः पुनः समर्पितः, अतस्तव कृतज्ञो यस्त्वया कृतमनुग्रहं जानाति स को नाम त्वदीयं पादमूलं हित्वाऽन्यच्छरणं समीयादाश्रयेत् ॥ ३८ ॥ ॥

किंच, दाशार्हादिषु त्वया यः स्वमायया स्नेहपाशः प्रसारितः स त्वयैवात्मतत्त्वज्ञानशस्त्रेण वृक्णश्छिन्नः ॥ ३९ ॥ एवं यद्यपि त्वया बहूपकृतं तथाप्येतावत्प्रार्थये इत्याह—नमोऽस्त्विति । अनुशाध्यनुशिक्षय । अनुशासनीयमाह—यथेति । मुक्तावप्यनपायिनी ॥ ४० ॥ तदुक्तमोमित्यङ्गीकृत्य, तथापि मयादिष्टो लोकसंग्रहार्थमेतावत्कुर्वित्याह—गच्छेति । आदिष्टो नियुक्तः ॥ ४१ ॥ स्नानादेः पूर्वमेव मत्पादतीर्थोदकभूताया अलकनन्दाया गङ्गाया ईक्षया । वसानः परिदधानः ॥ ४२ ॥ द्वन्द्वमात्राणां शीतोष्णादिविषयाणाम् । सुशील आर्जवादिस्वभावः ॥ ४३ ॥ ते त्वया विविक्तं सुविचारितम् । तिस्रस्त्रिगुणात्मिका गतीरतिक्रम्य ॥४४॥ हरिमेधसा संसारं हरति मेधा यस्य तेन श्रीकृष्णेन । अद्वन्द्वपरोऽपि सुखदुःखविनिर्मुक्तोऽपि । अपक्रमे निर्गमनसमये ॥ ४५ ॥

वृक्णश्च मे सुदृढः स्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु ॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥ नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् ॥ यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ४० ॥ ॥ श्रीभगवानुवाच ॥ गच्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रमम् ॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥ ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः ॥ वसानो वल्कलान्यङ्ग वन्यभुक्सुखनिस्पृहः ॥ ४२ ॥ तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः ॥ शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन् ॥ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥ ॥ श्रीशुक उवाच ॥ स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः ॥ शिरो निधायाश्रुकलाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे ॥ ४५ ॥ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः ॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥ ततस्तमन्तर्हृदि संनिवेश्य गतो महाभागवतो विशालाम् ॥ यथोपदिष्टां जगदेकबन्धुना ततः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥ ॥

किंच, सुदुस्त्यजः स्नेहो यस्मिंस्तेन[1] वियोगात्कातरो भीतोऽत एव तं परिहातुमशक्नुवन्नातुरोऽतिविह्वलः सन्कृच्छ्रं कष्टं ययौ प्राप । ततश्च भर्तृपादुके तेनैव कृपया दत्ते मूर्ध्नि बिभ्रदतिनिर्बन्धरूपया तदाज्ञया तं पुनः पुनर्नमस्कृत्य ययौ । अत्र च, 'पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः' इत्यादितृतीयस्कन्धोपक्रमोक्तानुसारेण बदरिकाश्रमं गच्छन्भगवतः प्रभासयात्रामुपश्रुत्य शनैः पृष्ठतो गतः सन्नुपसंहृतनिजकुलं भगवन्तमेकान्ते दृष्ट्वा तत्कालप्राप्तेन मैत्रेयेण सह पुनः कृपया भगवतोपदिष्टं तत्त्वमाकलय्य तदाज्ञातो ययाविति द्रष्टव्यम् ॥ ४६ ॥ विशालां बदरिकाश्रमं गतः सन् हरेर्गतिमगात् । कथंभूताम् । तेनैव[2] जगदेकबन्धुना यथोपदिष्टाम् । 'तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ।', 'अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम्' इत्येवमुक्तप्रकाराम् ॥ ४७ ॥ ॥

१ 'तपः' इति पाठः । २ तेन श्रीकृष्णेन ।

आनन्दसमुद्रो भगवद्भक्तिमार्गस्तस्मिन्संभृतमेकीकृतमेतद्यः सच्छ्रद्धया आसेव्य ईषदपि सेवित्वा वर्तते स विमुच्यते इति किं वक्तव्यम्, तत्सङ्गाज्जगदपि विमुच्यत इत्यर्थः ॥ ४८ ॥ एवं कृतोपदेशं जगद्गुरुं प्रणमति—भवभयमिति । भवः संसारो भयं च जरारोगादिनिमित्तं तदुभयं निवृत्तानां प्रवृत्तानां च भृत्यवर्गाणां यथायोग्यमपहन्तुं योऽमृतद्वयमुपजह्रे उद्धृतवान् । तदेवाह—वेदसारमेकम् । किं तत् । ज्ञानविज्ञानरूपं च तत्सारं श्रेष्ठं च । भृङ्गवत् भृङ्गो यथा पुष्पमकोपयन्नेवामृतमुपहरति तथा स्वयं स्वकृतवेदानुसारेणैवोदधितश्चैकं तच्चोभयं यथायथं भृत्यवर्गानपाययत्तं नतोऽस्मीति ॥ ४९ ॥ येनानुकम्पितं विश्वमुद्धवप्रश्ननिर्णयैः ॥ तं वन्दे परमानन्दं नन्दनन्दनरूपिणम् ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ त्रिंशे तु प्रागुपक्षिप्तंमौसलच्छलतो हरिः ॥ स्वधाम गन्तुमन्विच्छन्संजहार निजं कुलम् ॥ १ ॥ विरागाय

य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ॥ कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद्विमुच्यते ॥४८॥ भवभयमपहन्तुं[2] ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ छ ॥ ॥ राजोवाच ॥ ततो महाभागवत उद्धवे निर्गते वनम् ॥ द्वारवत्यां किमकरोद्भगवान्भूतभावनः ॥ १ ॥ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ॥ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचां जनयति रतिं किं नु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥ ॥ ऋषिरुवाच ॥ दिवि भुव्यन्तरिक्षे च महोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥ ॥ ॥

पुरा घोरमुपक्षिप्तं हि मौसलम् ॥ कथावसाने तत्रैव विशेषं परिपृच्छति ॥ २ ॥ तत इति त्रिभिः ॥ १ ॥ ब्रह्मशापोपसंसृष्टे कुले सति । अयं भावः—भगवति नहि शापः प्रभवति, यादवत्वानुकरणाच्च सोऽपि कथंचिन्मान्यः, अतः किमकरोदिति । तदेतदुक्तम्—कथमत्यजदिति । सर्वनेत्राणामिति सर्वेन्द्रियोपलक्षणम् ॥ २ ॥ तत्प्रपञ्चयति—प्रत्याक्रष्टुमिति । यस्मिन् रूपे लग्नं नयनं प्रत्याक्रष्टुं परावर्तयितुमबला न शेकुः । यच्च कर्णरन्ध्रेण प्रविष्टं सत्सतामात्मनि लग्नं लिखितमिव तिष्ठति, ततो न सरति न निर्गच्छति । यस्य श्रीः शोभा संकीर्त्यमाना कवीनां वाचां रतिमुल्लासविशेषं जनयति । तेषां मानं जगत्पूज्यतां जनयतीति किं नु वक्तव्यम् । यच्च विष्णो रूपं जिष्णोरर्जुनस्य रथे स्थितं दृष्ट्वा युधि मृतास्तत्साम्यं सारूप्यमीयुः प्रापास्तत्केन रूपेणात्यजदित्यन्वयः ॥ ३ ॥ दिवि सूर्यपरिवेषादीन् भुवि भूकम्पादीनन्तरिक्षे दिग्दाहादीन्महोत्पातान् स्वयमेवोत्पादितत्वादन्यैर्दुष्प्रतीकारान् ॥ ४ ॥ ॥ ॥

१ उपक्षिप्तमुपक्रान्तम् । २ 'अपहर्तुम्' इति पाठः । ३ 'निगमकृदुदध्रे भृङ्गवद्वेयसारम्' इति पाठः । ४ 'उदधिकल्पं' इति पाठः ।

यमस्य केतवो ध्वजा इव मृत्युसूचका इत्यर्थः । नोऽस्माभिः ॥ ५ ॥ प्रत्यक् पश्चिमवाहिनी ॥ ६ ॥ अभिषिच्य स्नात्वा ॥ ७ ॥ ब्राह्मणांश्च तैः कृतशान्तिकाः सन्तो गवादिभिः पूजयिष्यामः ॥ ८ ॥ विधिः प्रकारः मङ्गलायनं च । किंच, देवद्विजगवां पूजा । भव उद्भवहेतुः । देवलोके परम उद्भवो भविष्यतीति भावः ॥ ९ ॥ मधुद्विषो वाक्यमाकर्ण्य तथेत्यभिनन्द्य । उत्तीर्य समुद्रम् ॥ १० ॥ सर्वश्रेयोपबृंहितमित्यत्र संधिरार्षः । भगवतानुक्तैरपि सर्वैः श्रेयोभिः सहितं चक्रुः ॥ ११ ॥ पीयत इति पानम् । मैरेयकं मदिराविशेषम् । मधु सुरसम् । दिष्टेन दैवेन विभ्रंशितधियः । नह्यन्यथा तस्मिन्स्थाने तदुचितमिति

॥ श्रीभगवानुवाच ॥ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ॥ मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ॥ ५ ॥ स्त्रियो
बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ॥ वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥ ६ ॥ तत्राभिषिच्य शुचय उपोष्य
सुसमाहिताः ॥ देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥ ७ ॥ ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ॥ गोभू-
हिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥ विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ॥ देवद्विजगवां पूजा भूतेषु परमो[2]
भवः ॥ ९ ॥ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ॥ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥ तस्मिन्
भगवतादिष्टं यदुदेवेन यादवाः ॥ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥ ततस्तस्मिन्महापानं पपु-
र्मैरेयकं मधु ॥ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥ महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ॥ कृष्ण-
मायाविमूढानां संघर्षः सुमहानभूत् ॥ १३ ॥ युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदा-
भिस्तोमरर्ष्टिभिः ॥ १४ ॥ पतत्पताकै रथकुञ्जरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैः सुदुर्मदा
न्यहन् शरैर्दद्भिरिव द्विपा वने ॥ १५ ॥ प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसंग्राम-
जितौ सुदारुणौ गदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानु-
मुख्याः ॥ अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन[3] विमोहिता भृशम् ॥ १७ ॥ ॥ ॥

भावः । यद्द्रवैर्यैस्य द्रवै रसैः ॥ १२ ॥ कृष्णमायाविमूढानामिति मुख्यो हेतुः । संघर्षः कलहः ॥ ॥ १३ ॥ ततो युयुधुश्च ॥ १४ ॥ पतन्त्य इतस्ततश्चलन्त्यः पताका येषु तै रथादिभिर्मिथः समेत्य न्यहन्न्यघ्नन्नित्यर्थः । दद्भिर्दन्तैरिव ॥ १५ ॥ मिथः समेत्येत्यस्य प्रपञ्चः—प्रद्युम्नेत्यादिचतुर्भिः । गदौ श्रीकृष्णस्य भ्राता एकः, पुत्रश्चापरस्तौ । सुमित्रासुरथाविति दैर्घ्यमार्षम् । असुरथनामा वा कश्चित् ॥ १६ ॥ मदान्धेन मदतमसा बलात्कारिताः ॥ १७ ॥ ॥

१ अत्र—'शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः' इत्यर्धमधिकं क्वचित् । २ 'परमोदय.' इति पाठः । ३ मुक्तिसुखं कुत्सितं यस्मात्स मुकुः प्रेमानन्दस्तं ददाति तेन ।

दाशार्हादयो नव तत्तद्वंश्याः । अर्बुदा माथुराः शूरसेनाश्च तत्तद्देशीयाः ॥ १८ ॥ भ्रातृभिश्चेति भ्रात्रादिशब्दानां सप्रतियोगिवाचित्वाद्भ्रातरो मातुला इत्यादि ज्ञेयम् । मित्रैश्च मित्राणि च । अहन् हतवन्तः ॥ १९ ॥ धन्वसु धनुःषु । जह्रुर्जगृहुः ॥ २० ॥ परिघा लोहदण्डाः । भृताः धृताः । तं च श्रीकृष्णमपि ॥ २१ ॥ प्रत्यनीकं प्रतिपक्षम् ॥ २२ ॥ एरकामुष्टिरूपौ परिघावुद्यम्य ॥ २३ ॥ स्पर्धानिमित्तः क्रोधः कुलं क्षयं निन्ये ॥ २४ ॥ २५ ॥ पौरुषं योगं परमपुरुषध्यान-

दाशार्हवृष्ण्यन्धकभोजसात्वता मध्वर्बुदा माथुरशूरसेनाः ॥ विसर्जनाः कुकुराः कुन्तयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥ १८ ॥ पुत्रा अयुध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥ १९ ॥ शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु ॥ शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥ ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः ॥ जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥ प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ॥ हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥ अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ॥ एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥ ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ॥ स्पर्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ॥ अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥ रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ २६ ॥ रामनिर्याणमालोक्य भगवान्देवकीसुतः ॥ निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ॥ दिशो वितिमिराः कुर्वन्विधूम इव पावकः ॥ २८ ॥ श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ॥ कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥ सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ॥ पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ॥ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥ ॥ ॥ ॥

लक्षणम् । तमेवाह—संयोज्येति । मानुष्यं लोकं भूर्लोकं मनुष्यरूपतां वा ॥ २६ ॥ धरोपस्थे भूतले ॥ २७ ॥ भ्राजिष्णु रूपं बिभ्रदिति ॥ २८ ॥ तदेवानुवर्णयति—श्रीवत्साङ्कमिति चतुर्भिः ॥ २९ ॥ सुन्दरस्मितं वक्त्राब्जं यस्मिंस्तत् । पुण्डरीकवदभिरामे सुन्दरे अक्षिणी यस्मिंस्तत् ॥ ३० ॥ ३१ ॥ ॥

१ सौहृदं विसृज्यान्योन्यं जघ्नुरिति पूर्वेणान्वयः । २ हन्तुमापन्नाः प्राप्ताः । 'नानाखैराततायिनः' इति वा० पाठः । ३ व्याख्यान्तर—नष्टेति । नष्टशापोऽप्युपसृष्टो रुग्णो येभ्यस्तेषां किंवा उपसृष्ट उपप्लवं प्रापितो यैस्तेषां । कृष्णस्य मायावियोगदर्शिकेच्छाप्यावृता येन तादृश आत्मा स्वरूपं येषां तेषां स्पर्धेना सहितः क्रोधः क्षयं प्रकाशात्मकं स्थानं प्रति तान्निन्ये । तत्र दृष्टान्तः—यथा वेणुसंघर्षजो वह्निः अवनं तद्वनोत्पन्नातिरिक्तं विद्राव्य तन्निवासमेव प्रापयति तथा प्रपञ्चोत्पन्नातिरिक्तांस्तान्विद्राव्य निजं धाम निन्ये इत्यर्थः ।

वनमालापरीतान्यङ्गानि यस्मिंस्तत् । निजायुधैश्च परीताङ्गम् । पङ्कजारुणं वामं पादं दक्षिण ऊरौ कृत्वा आसीनं रूपं बिभ्रदिति पूर्वेणान्वयः ॥ ३२ ॥ जरा नाम कश्चिल्लुब्धको मृगयुः । मृगास्यमिवाकारो यस्य तं चरणम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ब्रह्मशापकृतमेतत्तत्र नापराध इति चेदत आह— यस्य तवात्मयोगरचितं स्वाधीनमायया रचितं विरिञ्चिः अस्य तनया रुद्रादयश्च ये चान्ये गिरां पतयो वेदद्रष्टारस्तेऽपि न विदुस्तस्य तेऽचिन्त्यमायस्य एत-

वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ ३२ ॥ मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ॥ मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ॥ भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥ अजानता कृतमिदं पापेन मधुसूदन ॥ क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥ यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ॥ वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥ ३६ ॥ तन्मा[1]शु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ॥ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥ यस्यात्मयोगरचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये ॥ त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥ ॥ श्रीभगवानुवाच ॥ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ॥ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥ इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ॥ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥ दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ॥ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ॥ स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य स बाष्पलोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ॥ दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥ इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ॥ खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः[3] ॥ ४४ ॥ तमन्वगच्छन्दिव्यानि विष्णुप्रहरणानि च ॥ तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥ ॥

द्ब्रह्मशापादि अञ्जसा असद्गतयः पापयोनयो वयं किं गृणीमः कथं वर्णयामः । अतस्तदास्ताम् । आशु मां जहीति भावः ॥ ३८ ॥ ३९ ॥ 'इच्छाशरीरिणा' इत्यस्यायं भावः—शुद्धसत्त्वमयीं निजां मूर्तिमन्तर्धाय तत्प्रतिकृत्यैव विडम्बनमात्रमिति । एतदेव स्फुटीकरिष्यति—देवादयो ब्रह्ममुख्या इत्यादिना ॥ ४० ॥ ॥ ४१ ॥ तं पतिं तत्र दृष्ट्वा तस्य पादयोर्निपपा[3]त ॥ ४२ ॥ ४३ ॥ उदीक्षतः उदीक्षमाणस्य सूतस्य सतः ॥ ४४ ॥ ४५ ॥ ॥ ॥

१ तत्तस्मात्कृतापराधत्वान्मा मा आशु जहीति चक्र० । 'तमाशु' इति विज० पाठे तं लुब्धकमित्यर्थः । 'ममाशु' इत्यपि पाठः । २ दृष्ट्वेत्यध्याहृतम् । ३ निपपात आह चेति शेष इति वाल० ।

निर्याणं योगमार्गेण । मद्दशामितीच्छाशरीराभिप्रायेण ॥ ४६ ॥ ४७ ॥ अविता रक्ष्यमाणा इन्द्रप्रस्थं गमिष्यथेति ब्रूहीति पूर्वेणान्वयः ॥ ४८ ॥ मन्मायारचनामेतां विज्ञायेति निजमूर्तेरन्तर्हिततत्वाद्वृथा शोकं मा कुर्विसर्थः ॥ ४९ ॥ कुलस्य विनष्टत्वाद्दुर्मनाः ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे भावार्थदीपिकायां टीकायां त्रिंशोऽध्यायः ॥ ३० ॥ ॥ एकत्रिंशे स्वकं धाम जगाम भगवानितः ॥ तमेवानुययुः प्रीत्या वसुदेवादयस्ततः ॥ १ ॥ देवान्यदूंन्विधायादौ भूयो देवान्विधाय च ॥ श्रीकृष्णः स्वेच्छया धाम स्वतन्वैव समाविशत् ॥ २ ॥ मुनयः सनकादयः । प्रजेश्वरा मरीच्यादयः ॥ १ ॥ द्विजा गरुडलोकनिवासिनः पक्षिणः । मैत्रेयादयो वा ॥ २ ॥ भगवतो निर्याणं द्रष्टुकामाः सन्तः परमोत्सुकास्तत्रागमन् । तेषामौत्सुक्यकृतं महोत्सवमाह

गच्छ द्वारवतीं सूत ज्ञातीनां निधनं[3] मिथः ॥ संकर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥ द्वारकायां च न स्थेयं भवद्भिश्च[4] स्वबन्धुभिः ॥ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥ स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ॥ अर्जुनेनाविताः सर्व इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः[5] ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ॥ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे एकादशस्कन्धे यदुकुलसंक्षयो नाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥ श्रीशुक उवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ॥ महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥ पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥ द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥ गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ॥ कुर्वन्तः संकुलं राजन् भक्त्या परमया युताः ॥ ४ ॥ भगवान्[6] पितामहं वीक्ष्य विभूतीरात्मनो विभुः ॥ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥ लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ॥ योगधारणयाग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥ ॥

सार्धेन—गायन्तश्चेति ॥ ३ ॥ ४ ॥ विभूतीरिन्द्रादींश्च । 'पद्मनेत्रे न्यमीलयत्' इत्यत्रायं भावः—पूर्वं ब्रह्मादिभिः 'सलोकान् लोकपालान्नः पाहि वैकुण्ठ किंकरान्' इति प्रार्थितत्वादिदानीं च स्वं स्वं लोकं प्रति नेतुमागतत्वाद्बहुपु च तेपु दाक्षिण्यात्तान्वञ्चयितुं समाधिमिव कुर्वन्नेत्रे न्यमीलयदिति ॥ ५ ॥ योगिनामिव स्वच्छन्दमृत्युभ्रमं वारयति—लोकाभिरामामिति । अयमर्थः—योगिनो हि स्वच्छन्दमृत्यवः स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकान्तरं प्रविशन्ति । भगवांस्तु न तथा, किंत्वदग्ध्वैव स्वतनुसहित एव स्वकं धाम वैकुण्ठाख्यमविशत् । तत्र हेतुः—लोकाभिरामाम् । लोकानामभिरामोऽभितो रमणं

१ इतः प्रकटप्रकाशात् । २ देवान् यदूंन्निधाय पूर्वं तान् तदंशास्तेपु प्रवेशयेत्यर्थः । ३ वस्तुतस्तु निधनं नितरा धनं अप्रकटधामगमनम् । ४ 'भवद्भिश्चः सवन्धुभिः', 'भवद्भिः स्वस्वबन्धुभिः' इति पाठौ । ५ उपेक्षकः पुत्रवित्तादिपूदासीनः । ६ 'भगवानपि तान्वीक्ष्य' इति पाठः ।

स्थितिर्यस्यां ताम् । जगदाश्रयत्वेन जगतोऽपि दाहप्रसङ्गादित्यर्थः । किंच, धारणाया ध्यानस्य च मङ्गलं शोभनम् । विपयमितरथा तयोर्निर्विपयत्वं स्यात् । दृश्यते चाद्यापि तदुपासकानां तथैव तद्रूपसाक्षात्कारः फलप्राप्तिश्चेति भावः । इच्छाशरीराभिप्रायेण वा यथाश्रुतमेवास्तु, तत्रापि तु लोकाभिरामामित्यादीनां विशेषणानामानर्थक्यप्रसङ्गात्तदप्यदग्ध्वा तिरोधाय निर्गत इत्येव सांप्रतम् ॥ ६ ॥ तदा स्वं स्वमेव लोकमागमिष्यतीति संभ्रमेण देवादिकृतः सर्वतो दुन्दुभिनादपुष्पवृष्ट्यादिमहोत्सवोऽभवदित्याह—दिवीति । भूमेः सकाशात् । श्रीकृष्णमनु ययुः ॥ ७ ॥ तदा श्रीकृष्णेऽन्तर्हिते सति कुतो गत इति वितर्कयन्तोऽपि ब्रह्ममुख्या देवादयः स्वधामनि विशन्तं श्रीकृष्णं न ददृशुः । तत्र हेतुः—अविज्ञातगतिमिति । क्वचित्क्वचिद्ददृशुश्च ततोऽतिविस्मिता बभूवुरित्यर्थः ॥ ८ ॥ अविज्ञातगतित्वं दृष्टान्तेन स्पष्टयति—सौदामन्या गतिर्यथा मर्त्यैर्न लक्ष्यते, देवैस्तु लक्ष्यते तथा भूमण्डलं हित्वा गच्छतः श्रीकृष्णस्य गतिर्देवैरपि न लक्ष्यते किंतु तत्पार्षदैरेवेत्यर्थः ॥ ९ ॥ ॥ १० ॥ अभिप्रायापरिज्ञानात्प्रथमं परिक्लिष्टं ततश्च दृष्टान्तेन स्पष्टमुक्तं हृष्टं दृष्ट्वा पुनस्तमेवार्थं

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ॥ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥ देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥ सौदामन्या यथाकाशे यान्त्या हित्वाऽभ्रमण्डलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ॥ विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥ १० ॥ राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ॥ सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिनोपरतः स आस्ते ॥ ११ ॥ मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ॥ जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥ १२ ॥ ॥ ॥

प्रपञ्चयति—राजन्निति त्रिभिः । परस्य सर्वकारणस्य तनुभृत्सु यादवादिषु जननाप्ययेहाः आविर्भावतिरोभावरूपाश्चेष्टा मायया अनुकरणमात्रमवेहि । नटो यथाऽविकृत एव नानारूपैर्जन्मादीन्विडम्बयति तद्वत् । आस्तां तावद्यादवादिषु जन्मादिशङ्का, यावद्विश्वसर्गनिरोधादिष्वप्यसावविकृत एवास्त इत्याह—सृष्ट्वेति । आत्मना स्वयमेवेदं जगत्सृष्ट्वान्तर्यामित्वेनानुविश्य आत्ममहिना स्वमहिम्ना उपरत आस्ते ॥ ११ ॥ न पुनरन्यथा मन्तव्यं, यतोऽस्मिन्नेवावतारे तत्प्रभावो निरतिशयो दृष्ट इत्याह—मर्त्येनेति । यमेन स्वलोकं प्रति नीतं गुरुसुतं मर्त्येन तेनैव शरीरेण य आनयदानीतवान् । शरणदः शरणागतरक्षकस्त्वां च ब्रह्मास्त्रदग्धं यो रक्षितवान् । यश्चान्तकानामन्तकमपि ईशं श्रीरुद्रं बाणसंग्रामे जितवान् । मृगयुं लुब्धकं सदेहं स्वः स्वर्गमनयन्निन्ये । असौ स्वावने स्वरक्षणे अनीशोऽसमर्थः किम् ॥ १२ ॥ ॥ ॥ ॥ ॥

१ स्वावने स्वस्य स्वानां यदूनां चावने रक्षणे । २ स्वमहिम्ना परमानन्दस्वरूपावस्थानेन । कचित्तु 'आत्ममहिमोपरतः' इति मूलपाठो दृश्यते ।

ननु यदि समर्थस्तर्हि किंचित्कालमत्रैव तेनैव वपुषा किं नातिष्ठत्तत्राह—तथापीति । यद्यप्युक्तप्रकारेणाशेषस्य जगतश्चराचरस्य स्थित्यादिष्वनन्यहेतुर्निरपेक्ष एव कारणं स्वयं यद्यस्मादशेषशक्तिधृक् तथापि यादवान् संहृत्य निजं वपुरत्र शेषितमवशेषितं प्रणेतुं कर्तुं नैच्छत् किंतु स्वमेव लोकमनयत् । तत्र हेतुः—मर्त्येन देहेन किं, न किंचित्कार्यमिति स्वस्थानामात्मनिष्ठानां दिव्यां गतिमेव प्रकृष्टां दर्शयन् । अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगवलेन देहसिद्धिं विधायात्रैव रन्तुं यतेरंस्तन्मा भूदित्येतदर्थमिति भावः ॥ १३ ॥ य एनामुक्तप्रकाराम्[1] । पदवीं गतिम्[2] ॥ १४ ॥ तदैव भगवता स्वलोकं गच्छता वसुदेवा-

तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं[3] प्रदर्शयन् ॥ १३ ॥ य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ॥ प्रयतः कीर्तयेद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ॥ पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ १५ ॥ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥ तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ॥ व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥ १७ ॥ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ॥ कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥ उपगुह्य पतींस्तात[4] चितामारुरुहुः स्त्रियः ॥ १९ ॥ रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः ॥ कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥ अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ॥ आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥ बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ॥ हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥ द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २३ ॥ नित्यं संनिहितस्तत्र भगवान्मधुसूदनः ॥ स्मृत्वाऽशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ २४ ॥ स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ॥ इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥ ॥ ॥

दीनामपि तत्रास्तये उपायश्चिन्तित आसीत्तमाह—दारुक इत्यादिना ॥ १५ ॥ १६ ॥ १७ ॥ कृष्णरामौ सुतावपश्यन्तः ॥ १८ ॥ १९ ॥ २० ॥ सदुक्तिभिः सत्योऽवितथा उक्तयो येषु तैः, 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥' इत्यादिभिः । ॥ २१ ॥ नष्टगोत्राणां नष्टसंततीनाम् । सांपरायिकं पिण्डोदकादि ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ ॥



१ उक्तप्रकारा सशरीरपरिकरसहिताम् । २ गतिमप्रकटप्रकाशे गमनम् । ३ 'स्वच्छगतिं' इति विज० पाठः । ४ 'पतींस्तांश्चिताम्' इति पाठः ।

॥ २६ ॥ आदित आरभ्य श्रीकृष्णचरितकीर्तनस्य फलमाह—य एतदिति द्वाभ्याम् ॥ २७ ॥ शंतमानि परममङ्गलानि । परमहंसगतौ श्रीकृष्णे ॥ २८ ॥
एवमेकादशस्कन्धभावार्थस्य प्रदीपिका ॥ स्वाज्ञानध्वान्तभीतेन श्रीधरेण प्रकाशिता ॥ १ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां वैया-

श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ॥ त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥ य एतद्देव-
देवस्य विष्णोः कर्माणि जन्म च ॥ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥ इत्थं हरेर्भगवतो रुचि-
रावतारवीर्याणि बालचरितानि च शंतमानि ॥ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंस-
गतौ लभेत ॥ २८ ॥ ॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां वैयासिक्यां पारमहंस्यां संहि-
तायां एकादशस्कन्धे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ ॥ ॥

॥ समाप्तोऽयमेकादशः स्कन्धः ॥ ११ ॥

सिक्यां पारमहंस्यां संहितायां एकादशस्कन्धटीकायां श्रीधरस्वामिविरचितायां भावार्थदीपिकायामेकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥

॥ समाप्तोऽयमेकादशः स्कन्धः ॥ ११ ॥

१ एतज्जन्म तत्र कृतानि चेत्यन्वयः ।

॥ श्रीगोपालकृष्णाय नमः ॥ ॥ श्रीगुरुं परमानन्दं वन्द आनन्दविग्रहम् ॥ यस्यं संनतिमात्रेण चिदानन्दायते वंपुः ॥ १ ॥ जयन्ति श्रीपरानन्दकृपाऽपाङ्गलसद्दृशः ॥ या नित्यमनुवर्तन्ते संपदो विंगताद्दशः ॥ २ ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥ ३ ॥ उक्तो लयावधित्वेन प्राकृतात्यन्तिके लये ॥ अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ ४ ॥ तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते ॥ शेषैस्तत्राखिंलान्याह सूतः पृष्टोऽथ सत्रिभिः ॥ ५ ॥ स्वाश्रयश्रवणे कार्यो न विलम्बो मनीषिणा ॥ इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥ ६ ॥ तत्र तु प्रथमे भावि मागधान्वयभूमिपान् ॥ कलिप्रभावतः प्राह संकरादिमलीमसान् ॥७॥ एवंभूते सोमवंशे मुकुन्दस्वैरक्रीडावर्णितार्थो स एव ॥ वंशो भावी वर्ण्यते कृष्णभक्तिं मुक्त्वा मुक्त्यै वर्त्म नास्तीति वक्तुम् ॥ ८ ॥ तदेवं वैवस्वतमनुवंशे सोमवंशप्रस्तावेन श्रीकृष्णावतारचरितानि सप्रपञ्चमनुवर्णितानि, अथेदानीं भावी सोमवंशः कलौ

॥ ॐ नमो भगवते वासुदेवाय ॥ ॥ राजोवाच ॥ स्वधामानुगते कृष्णे यदुवंशविभूषणे ॥ कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे मुने ॥ १ ॥ ॥ श्रीशुक उवाच ॥ योऽन्त्यः पुरञ्जयो नाम भविष्यो बारहद्रथः ॥ तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥ २ ॥ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः ॥ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ ३ ॥ नन्दिवर्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे ॥ अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ॥ ४ ॥ शिशुनागस्ततो भाव्यः काकवर्णस्तु तत्सुतः ॥ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ५ ॥ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ६ ॥ नन्दिवर्धन आजेयो महानन्दिः सुतस्ततः ॥ शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ॥ ७ ॥ समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ॥ महानन्दिसुतो राजन् शूद्रीगर्भोद्भवो बली ॥ ८ ॥ महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत् ॥ ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ॥ ९ ॥

विजातीयसंकरादिमलीमसो वैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते, तत्र तु सोमवंशशाखासु चिरकालानुवर्तितया मागधवंशोऽनुक्रम्यते, तत्र पूरोर्वंशे उपरिचरो वसुस्तस्य बृहद्रथस्तस्य जरासन्धस्तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कन्धे । तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवा इत्यादयो रिपुञ्जयान्ता विंशतिर्भाविनो राजानो निरूपिताः । (तत्र राजा पृच्छति—स्वधामेति ॥ १ ॥ इदानीं) तदुपरितनं वंशं संकरादिदोषैः प्रपञ्चयति—योऽन्त्य इति । रिपुञ्जय एव पुरञ्जयः । स्वामिनं पुरञ्जयं हत्वा स्वपुत्रं प्रद्योतसंज्ञं राजानं करिष्यति । यस्य पालको नाम सुतो भविष्यति ॥ २ ॥ ३ ॥ प्रद्योतनाः प्रद्योतसंज्ञाः ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ नन्दो नाम कश्चिन्महापद्मसंख्याया सेनायाः धनस्य वा पतिर्भविष्यति । अत एव महापद्म इत्यपि तस्य नाम ॥ ९ ॥ ॥

१ अयमधिकः श्लोकः क्वचित् । २ 'यस्य स्मरणमात्रेण' इति पाठः । ३ 'नरः' इति पाठः । ४ दृशो विगताश्चक्षुरगोचरा इत्यर्थः । यद्वा विगता अदृगज्ञानं याभिस्ताः । ५ 'तत्र खिलानि' इति पाठः । ६ 'कर्म' इति पाठः । ७ स्वधामेत्यादिः प्रश्नश्लोको वीरराघवीये एव व्याख्यातः, श्रीधरादिभिरखिलव्याख्यातृभिरुपेक्षित एव । ८ 'भाव्यो बार्हद्रथो नृपः' इति पाठः । ९ प्रद्योतेन सह पञ्चेत्यर्थः । १० आजेय इत्येकारमध्यत्वमार्षमिति चक्रवर्ती । ११ धनुश्चिह्नान्तर्गतो भागः केनचित्पूरित इत्यवसीयते ।

एकमेव छत्रं यस्यां तां पृथिवीं शासिष्यति पालयिष्यति। क्षत्रोत्सादने दृष्टान्तः—भार्गवः परशुराम इव ॥ १० ॥ समाः संवत्सरान् ॥ ११ ॥ नव नन्दान्नन्दं च तत्पुत्रांश्चेत्येवं नव । प्रपन्नान्विश्वस्तान्विख्यातान्वा । द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्य उद्धरिष्यत्युन्मूलयिष्यति । मौर्या मौर्यसंज्ञाः ॥ १२ ॥ कथं भोक्ष्यन्ति तदाह—स एवेति । चन्द्रगुप्तं मौर्यप्रथमम् ॥१३॥ १४॥ तेषां पञ्चमो दशरथः पराशरादिभिरुक्तोऽत्राप्यनुसंधेयः । तेन सह मौर्या दश । सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतं समाः ॥१५॥१६॥१७॥ बृहद्रथस्य सेनापतिः पुष्पमित्रो नाम स्वामिनं बृहद्रथं हत्वा राज्यं करिष्यति। स च शुङ्गानां प्रथमः।

स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ १० ॥ तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः ॥ ११ ॥ नव नन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥१२॥ स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः ॥ १३ ॥ सुयशा भविता तस्य सङ्गतः सुयशःसुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १४ ॥ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ १५ ॥ समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोऽथ भविष्यति ॥ १६ ॥ वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ १७ ॥ ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ॥ शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ १८ ॥ ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप ॥ शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ १९ ॥ स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ २० ॥ काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च ॥ शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥ २१ ॥ हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यन्ध्रजातीयः कंचित्कालमसत्तमः ॥ २२ ॥ ॥

ततोऽग्निमित्रादयो नवेत्येवं शुङ्गा दशवर्षशताधिकं द्वादशाधिकं वर्षशतम् ॥ १८ ॥ कथं कण्वान्यास्यति तदाह—शुङ्गमिति । परस्त्रीकामिनं देवभूतिनामानं शुङ्गं हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं करिष्यति ॥ १९ ॥ काण्वानां चतुर्थः सुशर्मा ज्ञेयः ॥ २० ॥ इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति ॥ २१ ॥ काण्वानामन्तिमं सुशर्माणं हत्वा बलीनामा तद्भृत्यो गां भोक्ष्यति ॥ २२ ॥ ॥ ॥

१ 'महीं भोक्ष्यन्ति य इमाम्' इति पाठः। २ अत्र 'हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ । पुष्यमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति ॥' इति विज० पाठेऽधिकम्। ३ 'भविता ततः' इति पाठः। ४ 'देवभूतिः कुरूद्वह' इति, 'पारायण इति श्रुतः' इति पाठौ। ५ सुत इत्यनन्तरम् 'सुशर्मा त्योऽथ नृपतिः कण्वानां भविता ततः' इति विज० पाठेऽधिकं। क्वचित् 'पारायणस्य भविता सुशर्मा नाम विश्रुतः' इत्यर्धमधिकम्। एतच्च कण्वानां चतुर्थः सुशर्मा ज्ञेय इति व्याख्यानात्र स्वामिसंमतम्। ६ द्वादशाधिकमिति चिन्त्यम्। सिद्धान्तप्रदीपे तु वर्षशताधिकं कतिपयवर्षाधिकं शतं इति व्याख्यातम्। ७ काण्वानामिति बहुत्वं तत्सन्तानस्यापि विवक्षानिबन्धनम्। ८ 'बलिहिकनामा' इत्यपि पाठः। एतन्नामावगतिर्ग्रन्थान्तरतो ज्ञेया। विष्णुपुराणे तु शिप्रकनाम्नोक्तः।

॥ २३ ॥ २४ ॥ २५ ॥ यत्र[4] येषु बहुसंज्ञेष्वष्टसु चरमः शिवस्वातिनामा भविता ॥ २६ ॥ २७ ॥ २८ ॥ आवभृत्याः अवभृतिर्नगरी तद्राजानः ॥ २९ ॥ ॥ ३० ॥ एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति । ततः पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति ॥ ३१ ॥ तैः संस्थिते तेषु मृतेषु किलिकिलायां पुर्यां नृपतयो भविष्यन्तीत्युत्तरेणान्वयः ॥ ३२ ॥ अधिकानि षड्वर्षाणि च ॥ ३३ ॥ तेषां भूतनन्दादीनां यथायथं वाह्लिकनामानस्त्रयोदश सुता भविष्यन्ति । अथ पुष्पमित्रो नामान्यो राजन्यः । अस्य च दुर्मित्रो नाम पुत्रः ॥ ३४ ॥ तथा

कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥ २३ ॥ लम्बोदरस्तु तत्पुत्रस्तस्मा[2]च्चिबिलको नृपः ॥ मेघ[3]स्वातिश्चिबिलकादटमानस्तु तस्य च ॥ २४ ॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः ॥ २५ ॥ चकोरो[1] बहवो यत्र शिवस्वातिररिन्दमः ॥ तस्यापि गोमतीपुत्रः पुरीमान्भविता ततः ॥ २६ ॥ मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः॥२७॥एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च॥षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन॥२८॥ सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः ॥ कङ्काः षोडश भूपाला भविष्यन्त्यतिलोलुपाः ॥ २९ ॥ ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः[5] ॥ भूयो[6] दश गुरुण्डाश्च मौना एकादशैव तु ॥ ३० ॥ एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥ ३१ ॥ भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः ॥ किलिकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः ॥ ३२ ॥ शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ॥ इत्येते[7] वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३३ ॥ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्पमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३४ ॥ एककाला इमे भूपाः सप्तान्ध्राः सप्त कौशलाः ॥ विदूरपतयो भाव्या निषधास्तत एव हि ॥ ३५ ॥ मागधानां तु भविता विश्वस्फूर्जिः पुरञ्जयः ॥ करिष्यत्यपरो वर्णान्पुलिन्दयदुमद्रकान् ॥ ३६ ॥ ॥

आन्ध्राः कोशला विदूरपतयो निषधाश्च एते च तत्तद्देशनामभिः प्रख्यातास्तुल्यकालाः खण्डमण्डलेषु भूपास्तत एव तेभ्यो वाह्लिकेभ्य एव भाव्या भविष्यन्ति ॥ ३५ ॥ ततश्च मागधानां तु राजा विश्वस्फूर्जिर्नाम भविता । स चापूर्वोक्तात्पुरञ्जयादपरः पुरञ्जय इति प्रसिद्धः सन्वर्णान्ब्राह्मणादीन्पुलिन्दयदुमद्रकसंज्ञान्म्लेच्छप्रायान्करिष्यति । अपरानिति पाठे अन्यान्पुलिन्दादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः ॥ ३६ ॥ ॥ ॥

१ एतद्व्याख्यानं वल्यादिलोमधिपर्यन्तानां राज्ञां त्रिंशत्सङ्ख्यापूर्तिप्रदर्शनाय। मूलस्थबहव इत्यस्य बहुसंज्ञा इत्यर्थः। २ 'तस्माद्धि विकलः' इति पाठः। ३ 'मेघस्वातिश्च विकलात्' इति पाठः। ४ 'नवमो यत्र' इति पाठः। ५ 'च पुष्कसाः' इति पाठः। ६ 'त्रयोदश गुरुण्डाश्च' इति पाठः। अत एवोत्तरश्लोकटीकायां पञ्चषष्टिनृपा इत्यत्राष्टषष्टिनृपा इति पाठः। ७ 'युक्ता एते' इति पाठः।

किंचैवं कृत्वाऽब्रह्मभूयिष्ठा अत्रैवर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति । स च पद्मवत्यां पुरि वसन् अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥ ३७ ॥ तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्या उपनयनरहिता भविष्यन्ति ॥ ३८ ॥ अब्रह्मवर्चसो वेदाचारशून्याः ॥ ३९ ॥ इमे च म्लेच्छप्राया भूभृतस्तुल्यकाला भविष्यन्ति । किंच, एते सर्वेऽधर्मानृतपरा अधर्मेऽनृते च परिनिष्ठिताः फल्गुदा अल्पदातारः ॥ ४० ॥ उदितास्तमितप्राया हर्षशोकादिबहुलाः ॥ ४१ ॥ असंस्कृता गर्भाधानादिसंस्काररहिताः । प्रजा भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥ ४२ ॥ किंच, तन्नाथाः ते नाथा येषां ते जनपदा देशवर्तिनो मनुष्यास्तच्छीलाचारवादिनस्तेषामिव शीलमाचारो वादश्च तद्वन्तः ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महा-

प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ॥ वीर्यवान्क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगङ्गमाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥ ३७ ॥ सौराष्ट्रावन्त्याभीराश्च शूरा[1] अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥ ३८ ॥ सिन्धोस्तटं चन्द्रभागां कौन्तीं[2] काश्मीरमण्डलम् ॥ भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥ ३९ ॥ तुल्यकाला इमे राजन्म्लेच्छप्रायाश्च भूभृतः ॥ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥४०॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ॥ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ ४१ ॥ असंस्कृताः क्रियाहीना रजसा तमसा वृताः ॥ प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥ ४२ ॥ तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीशुक उवाच ॥ ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥ १ ॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः[3] ॥ धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥ दाम्पत्येऽभिरुचिर्हेतुर्मायैव[4] व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥३॥ लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ॥ अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥ ॥

पुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः ॥ अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ १ ॥ कलिधर्मान्प्रपञ्चयति—ततश्चेत्यादिना ॥ १ ॥ धर्मन्याययोर्व्यवस्थायां बलमेव ॥ २ ॥ दाम्पत्ये भार्यापतिभावेऽभिरुचिरेव हेतुर्न कुलगोत्रादिः । व्यावहारिके क्रयविक्रयादौ । स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुर्न कुलमाचारो वा ॥ ३ ॥ आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकं हेतुर्न त्वाचारविशेषः । अन्योन्यापत्तिकारणं चाश्रमादाश्रमान्तरप्राप्तौ च कारणम् । यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादि-

१ शूराः शूराख्यदेशजाः । 'शूद्राः' इति पाठः क्वचित् । २ कौन्तीं पुरीमिति बाल० । ३ जन्मादुत्कर्षहेतुः । ४ मायैव कपटमेव । ५ 'चाभिरतिः' इति पाठः ।

व्यवहारे कारणम् । अवृत्त्या मुद्रार्पणादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयः । चापलं वचो बहुभाषणम् ॥ ४ ॥ असाधुत्वे चौर्याद्यभियोगे । प्रसाधनमलंकारः ॥ ५ ॥ दूरे वर्तमानं वार्ययनं जलाशयस्तीर्थं, न तु गुर्वादि । स्वार्थः पुरुषार्थः ॥ ६ ॥ ७ ॥ ८ ॥ आच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः । अष्टिर्बीजम् ॥ ९ ॥ १० ॥ ११ ॥ क्षीयमाणेष्वित्यादीनामित्थं कलौ गतप्राय इति पञ्चमेनान्वयः । क्षीयमाणेष्वल्पप्रायेषु ॥ १२ ॥ दस्युप्रायेषु चौरतुल्येषु । चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु ॥ १३ ॥ छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु ॥ १४ ॥ अणुप्रायासु श्यामाकतुल्यासु । स्थाणुषु वृक्षेषु ।

अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ॥ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥ दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् ॥ उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥ दाक्ष्यं कुटुम्बभरणं यशोर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥७॥ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥ आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ ९ ॥ अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ॥ शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ॥१०॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव संतप्स्यन्ते च चिन्तया ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥११॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ॥ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥ पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥१३॥ शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥१४॥ अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥ इत्थं कलौ गतप्राये जने तु खरधर्मिणि ॥ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥१७॥ शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥

विद्युत्प्रायेषु तडिद्बहुलेषु । शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु ॥ १५ ॥ जने तु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये ॥ १६ ॥ एतत्प्रपञ्चयति चतुर्भिः—चराचरगुरोरीश्वरस्येति च । धर्मत्राणे हेतुः—गुरुत्वेश्वरत्वयोरुपपादनमखिलस्य विश्वस्यात्मनः कारणस्येति । एवंभूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय । धर्मत्राणप्रयोजनमाह—कर्मापनुत्तये मोक्षाय ॥ १७ ॥ शम्भलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य । भवने गृहे ॥ १८ ॥ ॥

१ 'लावण्ये' इति सप्तम्यन्तपाठे सौन्दर्ये हेतुरित्यर्थः । लावण्ये निमित्ते केशधारणमेव करिष्यन्ति इति सप्तम्यन्तानामन्वयः । २ हिमं नीहारः । ३ 'सन्तापेन च' इति पाठे विनङ्क्ष्यन्तीति योज्यम् । ४ अत्र तुगभावः । ५ आश्रमेषु सन्यासादिषु परिग्रहादिना गृहस्थाश्रमतुल्येषु । ६ योनिसंबन्धेन सबन्धिनः श्यालादयस्तद्बहुलेषु । ७ छायाद्यभावेन शमीतुल्येषु । ८ 'शाखिषु' इति पाठः । ९ 'जनेषु खरधर्मिषु' इति पाठः । १० 'परावरगुरोः' इति पाठः । ११ कर्मापनुत्तये निःश्रेयसप्रतिबन्धिकर्मनिवर्तनाय ।

धर्मत्राणप्रकारमाह—अश्वमिति । असाधवो दम्यन्ते येन तमश्वमारुह्यासिना दस्यून्कोटिशो निहनिष्यतीत्युत्तरेणान्वयः । असाधुदमन इति पाठे कल्कि-विशेषणम् । अणिमाद्यष्टैश्वर्याणि गुणाश्च सत्यसंकल्पत्वादयस्तैरन्वितः ॥ १९ ॥ तत्प्रपञ्चः—आशुना शीघ्रगामिना तेन हयेनाश्वेन क्षोण्यां पृथिव्यां विचरन् । नृपलिङ्गच्छदो राजवेषच्छन्नान् ॥ २० ॥ ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह—अथेति सार्धाभ्याम् । तेषां पौरजानपदानां मनांसि विशदानि भविष्यन्ति । तत्र हेतु.—वासुदेवस्याङ्गरागेण चन्दनादिनातिपुण्यगन्धो योऽनिलस्तं स्पृशन्तीति तथा तेषाम् ॥ २१ ॥ स्थविष्ठः स्थूलः ॥ २२ ॥ कृतयुगप्रवृत्तिमाह—यदावतीर्ण इति । प्रजानां सूतिः प्रसूतिः ॥ २३ ॥ तदवतारकालोपलक्षणमाह—यदा चन्द्रश्चेति । तिष्यः पुष्यः । अयमर्थः—चन्द्रसूर्यबृहस्पतीनां यदा पुष्य-नक्षत्रे योगस्तदा तत्कृतयुगं भविष्यति । यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति, तथापि तेषां सह प्रवेशोऽत्र विवक्षितः । तमेष्यन्तीति वचनात् । अतो नातिप्रसङ्गः ॥ २४ ॥ एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयं निगम-

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥ विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ॥ नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २० ॥ अथ तेषां भविष्यन्ति मनांसि विशदानि वै ॥ वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥ तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ॥ वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २२ ॥ यदाऽवतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतं भविष्यति तदा प्रजासूतिश्च सात्विकी ॥ २३ ॥ यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यन्ति तदा भवति तत्कृतम् ॥ २४ ॥ येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः ॥ ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥ २५ ॥ आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥ सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥

यति—येऽतीता इति । उद्देशतः संक्षेपतः ॥ २५ ॥ कलियुगावान्तरविशेषं वक्तुमाह—आरभ्येत्यादिना । वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयावान्तरसंख्येयम् । वस्तुतस्तु परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति । यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्धे—'ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्' इति । ततः परं पञ्च प्रद्योतना अष्टत्रिंशोत्तरं शतम् । शिशुनागाश्च षष्ठ्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥ कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह—सप्तर्षीणां त्विति । अयमर्थः—प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलम् । तत्र किंचिदुन्नतेषाग्रस्थानीयो मरीचिः । ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः । ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः । ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्यामत्रिः । ततो दक्षिणतः पुलस्त्यः । पुलस्त्यात्पश्चिमतः पुलहः । तत उत्तरतः

१ नवमे उपक्रान्तः—'श्रूयतां मानवो वंशः प्राचुर्येण परंतप । न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥' इत्यादिना ।

क्रतुः । एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ दृश्येते पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोः पूर्वयोस्तु मध्ये यत्समं दक्षिणोत्तररेखायां समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते, तेन तथैव युक्ता ऋषयः नृणामब्दशतं तिष्ठन्ति, ते च द्विजास्त्वदीये कालेऽधुना मघा आश्रिता वर्तन्ते॥२७॥२८॥ तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुर्भातीति भानुः शुद्धसत्त्वात्मको देहो दिवं वैकुण्ठं गतस्तदा कलियुगमविशत् । यद्यस्मिन्युगे जनः पापे रमते इति कलियुगस्य लक्षणम् ॥ २९ ॥ ननु श्रीकृष्णे पृथिव्यां वर्तमानेऽपि संध्यारूपेण कलिः प्रविष्ट एवासीत्, सत्यम्, तथापि तावत्तस्य पराक्रमो नाभवदित्याह—यावदिति । पराक्रान्तुमभिभवितुम् ॥ ३० ॥ अतो यथोक्त एव कलिप्रवेशकाल इत्याह—यदा देवर्षय इति । द्वादशाब्दशतात्मक इति । दिव्येन मानेन संध्यासंध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा संध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥ ३१ ॥ कलेः प्रवेशकालमुक्त्वा तस्य वृद्धि-

तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ॥ ते त्वदीये द्विजाः[2] काले अधुना चाश्रिता मघाः ॥२८॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥ यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥ यदा देवर्षयः सप्त मघासु विचरन्ति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥ यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ॥ तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥ यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि[3] ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥ दिव्याब्दानां सहस्रान्ते चतुर्थे[5] तु पुनः कृतम् ॥ भविष्यति यदा[4] नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे[6] ॥ ३५ ॥ एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥

कालमाह—यदेति । तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नन्दात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥ ३२ ॥ ननु यदा कलेर्लिङ्गमुपलब्धं तदैव प्रविष्ट इति युक्तम्, ततः पूर्वमेव प्रवेशस्ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह—यस्मिन्निति । प्रतिपन्नं प्रविष्टमिति ज्ञातम् । पुराविदः पूर्वज्ञातारः ॥ ३३ ॥ कलेरनन्तरं कृतयुगप्रवेशमाह—दिव्याब्दानामिति । चतुर्थे कलौ प्रवेशनाब्दपरिमितेनांशेनापि सहातीते सतीत्यर्थः । कृतयुगप्रवेशचिह्नमाह—यदा नृणां मन आत्मप्रकाशकं भविष्यति तदेति ॥ ३४ ॥ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति—इत्येष इति । यथा याभिरुच्चनीचावस्थाभिः । तास्ता अवस्थाः । वंशौ[6] इति वा पाठः ॥ ३५ ॥ एतत्कीर्तनस्य वैराग्योपयोगितामाह—एतेषामिति । नामैव लिङ्गं ज्ञापकं येषां तेषां कथामात्रेणैवावशिष्टानां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा ॥ ३६ ॥ ॥ ॥ ॥ ॥

१ पूर्वयोर्मघाना च साम्यावस्थित्युपक्रमकालः कलियुगारम्भकाल इति सूचितं तच्चाग्रे स्पष्टमेव वदिष्यति । २ द्विजाः सप्तर्षयः । ३ तस्मिन्नेवाहनि तदा तस्मिन्नेव क्षणे । ४ 'तदा' इति पाठः । ५ कलिसंध्यांशे इति यावत् । ६ 'तास्ताः' इत्यस्य स्थाने इति ज्ञेयम् ।

कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह—देवापिः सोमवंशजः । मरुस्तु सूर्यवंशजः । कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥ ३७ ॥ ३८ ॥ इममेव प्रकारं प्रतिचतुर्युगं दर्शयति—कृतमिति ॥ ३९ ॥ 'एतेषां नामलिङ्गानाम्' इत्यादि यदुक्तं तत्प्रपञ्चयति—राजन्निति पञ्चभिः ॥ ४० ॥ ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निन्दति—कृमीति । राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते कृमयो विष्ठा भस्मेति वा संज्ञा भविष्यति । तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद । किंतु न वेदैव । कुत इत्यपेक्षायां हेतुत्वेन भूतद्रोहं विशिनष्टि—यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥ ममत्वप्रकारं प्रपञ्चयति—कथमिति । सेयमखण्डा भूर्मे पूर्वजैर्धृता सती इदानीं मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ उभौ महीं कायं च ।

देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७॥ ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः॥ ३८॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेनै क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९॥ राजन्नेते मया प्रोक्ता नरदेवास्तथापरे ॥ भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥ कृमिविड्भस्मसंज्ञान्ते राजनाम्नोऽपि यस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥ कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा ॥ ४२ ॥ तेजोबन्नमयं कायं गृहीत्वात्मतयाऽबुधाः ॥ महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥ ४३ ॥ ये ये भूपतयो राजन्भुञ्जते भुवमोजसा॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ दृष्ट्वात्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥ अहो मा विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥ काम एष नरेन्द्राणां मोघः स्याद्विदुषामपि ॥ येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥ २ ॥ ॥ ॥

अदर्शनं मृत्युम् ॥ ४३ ॥ उपसंहरति—ये ये इति । ते सर्वे च कथासु क्रियमाणासु । कथामात्राः कालेन कृताः ॥ ४४ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते ॥ कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नतिः ॥ १ ॥ देहेऽहंतां भूमौ च ममतां कुर्वन्त्यतोऽबुधा इत्युक्तं तदेव भूमिगीतैः प्रपञ्चयति—दृष्ट्वेत्यादि । आत्मनि पृथिव्या जये व्यग्रानुद्युक्तान् । हासप्रकारमेवाह—अहो इति । मा माम् ॥ १ ॥ येन कामेन । फेनोपमे पिण्डे देहेऽतिविश्रम्भिता विश्वासं नीता ये तेषां नरेन्द्राणामेष कामो मोघ एव स्यात् ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

१ 'मरुदिक्ष्वाकुवंशजः' इति मूलटीकयोः पाठः । स एव युक्तः, नवमस्कन्धे मरुदित्येव कथनात् । २ यद्यप्यत्र त्रेताद्वापरयोः प्रकारो नोक्त इत्यनेन क्रमयोगेनेत्यसंगत तथाप्याद्यन्तयुगयो रीतिनिरूपणे मध्ययोरपि निरूपितप्रायैवेत्यभिप्रायेण तथोक्तम् । ३ महीं च ममतया गृहीत्वेत्यन्वयः ।

काममेव दर्शयति द्वाभ्याम्—पूर्वमिति । इन्द्रियार्थलम्पटस्य न राज्यप्राप्तिः स्यादिति प्रथममिन्द्रियषड्वर्गं निर्जित्य राजमन्त्रिणो जेष्यामो वशीकरिष्यामः । सचिवा अमात्याः करीन्द्रा हस्तिपास्तांश्च जेष्यामः । कण्टकान्प्रतिपक्षान् । अंस्य अपास्य । 'अथ कण्टकान्' इति वा पाठः ॥ ३ ॥ ४ ॥ एवं केचिदाशाबद्धा एव केचिन्मां पुनर्जित्वाप्यतितृष्णयाब्धिं विशन्ति । तदेवमिन्द्रियजयेन ये राज्यं साधयितुमिच्छन्ति तेऽतिमन्दा इत्याह—कियदिति ॥ ५ ॥ 'अन्तकं न पश्यन्ति' इत्युक्तं तदेवाह—यामिति । कुरूद्वहेति भूमिगीतं कथयन् शुकः संबोधयति । 'कुलोद्वहाः' इति तु पाठः सुगमः ॥ ६ ॥ 'अबुद्धयः' इत्युक्तं

पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ॥ ततः सचिवपौराप्तकरीन्द्रानस्य कण्टकान् ॥ ३ ॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥ समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥ यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ॥ गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥ मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः ॥ जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥ ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ॥ स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥ पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ॥ मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥ ९ ॥ तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः ॥ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥ १० ॥ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ॥ नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥ अन्ये च बहवो दैत्या राजानो ये महेश्वराः ॥ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥ ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥ १३ ॥ कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम् ॥ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥ ॥

तत्रपञ्चयति—मत्कृत इति ॥ ७ ॥ ८ ॥ रामो नाम कश्चिद्राजा । यद्वा, लोकदृष्ट्या दाशरथिरेव निर्दिष्टः ॥ ९ ॥ १० ॥ लोकं रावयति रोदयतीति लोकरावणः ॥ ११ ॥ १२ ॥ मयि उच्चैर्ममतां कृत्वा येऽवर्तन्त ते कालेन कथावशेषाः कृताः । विभो इति संबोधनं कुरूद्वहेतिवत् ॥ १३ ॥ राजवंशानुकथनस्य तात्पर्यमाह—कथा इमा इति । विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया परेयुषां मृतानां वचोविभूतीर्वाग्विलासमात्ररूपा न तु पारमार्थ्यं परमार्थं युक्तं कथनं न भवतीत्यर्थः ॥ १४ ॥ ॥ ॥ ॥ ॥

१ छान्दसो ल्यप् । २ अब्धिं विशन्ति द्वीपान्तरानभिजयन्ति । ३ धुन्धुमारः । ४ 'कुवलयः' इति क्वचित्पाठः, तत्रापि नामैकदेश इति न्यायेन कुवलयाश्च एव । ५ सर्वजितः स्वयमजिताश्च । सर्वशब्दावृत्तिरतिदर्पेणातिदार्ढ्यविवक्षया च । ६ महीयसा भगवदवतारभागवतेभ्य इतरेषां महाराजानाम् । ७ न तु पारमार्थ्यं न पुरुषार्थभूयस्त्वमित्यर्थः ।

1637

कस्तर्हि पुरुषाणामुपादेयः परमार्थस्तमाह—यस्त्विति । नित्यं प्रत्यहम् । तत्राप्यभीक्ष्णम् ॥ १५ ॥ कलिदोषोपचये सति भक्तेरसंभवं मन्यमानः पृच्छति—केनोपायेनेति । विधमिष्यन्ति नाशयिष्यन्ति । यथा यथावत् ॥ १६ ॥ कलियुगे कः परो धर्म इति बुभुत्सया पृच्छति—युगानीति । ब्रूहीत्यनुषङ्गः । आत्यन्तिकप्रलयजिज्ञासया पुनः पृच्छति—प्रलयकल्पयोः संहारस्थितिकालयोः । न चायं बहिर्मुखः प्रश्न इत्याह—कालस्येति ॥ १७ ॥ तत्र युगधर्मांस्तावदाह—कृत इति । तज्ज्ञैस्तत्कालीनैर्जनैः । दानमरागद्वेषतयाऽभयदानम् । तदेव प्रथमस्कन्धे शौचशब्देनोक्तम् । विभोः संपूर्णस्य धर्मस्य ॥ १८ ॥

यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः ॥ तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥ ॥ राजोवाच ॥ केनोपायेन भगवन्कलेर्दोषान्कलौ जनाः ॥ विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥ युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ॥ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥ ॥ श्रीशुक उवाच ॥ कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥ संतुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥ २० ॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥ तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ॥ आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ॥ एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥ तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदाशोत्तराः प्रजाः ॥ २५ ॥ सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ॥ कालसंचोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥ ॥ ॥

तदानीन्तनजनानाह—संतुष्टा इति । मैत्रा भूतमैत्रीयुक्ताः । श्रमणा आत्माभ्यासवन्तः ॥ १९ ॥ अनृतेन सत्यं, हिंसया दया, असंतोषेण तपः, विग्रहेण दानमिति यथासंख्यं योज्यम् ॥ २० ॥ ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥ हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः । धर्मस्यार्धं ह्रसति क्षीयते । अधर्मस्य लक्षणैश्चिह्नैः, पादैरित्यर्थः ॥ २२ ॥ यशस्विनः कीर्तिप्रियाः । क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौ धर्मपादानां तुर्यांशश्चतुर्थांशोऽवशिष्यते ॥ २४ ॥ शूद्रदाशोत्तराः शूद्रकैवर्तादिप्रधानाः ॥ २५ ॥ युगानामेवंभूतवैषम्ये कारणमाह—सत्त्वमिति पञ्चभिः ॥ २६ ॥ ॥ ॥ ॥

१ उत्तमश्लोकानां भगवदवताराणां भागवतानां च गुणानुवादः । २ त्रेतायामित्यादिकं प्रथमस्कन्धसंदर्भानुसारेण सम्यग्ज्ञेयम् । ३ त्रयीवृद्धा वैदिककर्मवृद्धाः । ४ महाशीलाः महायज्ञानुष्ठानशीलाः । 'महाशाला' इति पाठस्तत्रापि यज्ञकर्तार इत्येवार्थः । ५ धर्महेतूनां सत्यादीनाम् । 'धर्मपादानाम्' इति पाठः । ६ आत्मन्यन्तःकरणे परिवर्तन्ते यातायातं कुर्वन्ति ।

मनश्च बुद्धिश्चेन्द्रियाणि च सत्त्वे यदा प्रभवन्त्यतिशयेन वर्तन्ते ॥ २७ ॥ यदा धर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ काम्यानां कर्मणां विषये यदा प्रीतिस्तत्तदा रजस्तमःप्रधानं द्वापरं जानीहीति पूर्वेणानुषङ्गः ॥२९॥ विषादनं दुःखम् ॥३०॥ कलिदोषान्प्रपञ्चयति—यस्मादित्यादिना । यस्मात्कलेर्हेतोः । क्षुद्रदृशो मन्दमतयः । क्षुद्रभाग्या अल्पभाग्याः । महाशना बह्वाहाराः । वित्तहीना अपि कामिनश्च । स्वैरिण्यः पुंश्चल्यः । असतीरसत्यः ॥३१॥ दस्यव उत्कृष्टाः प्रचुरा येषु ते ॥३२॥ अव्रता विहिताचारशून्याः । अशौचाः शौचशून्याश्च वटवो ब्रह्मचारिणो भविष्यन्ति । कुटुम्बिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यन्ति, न तु भिक्षां दास्यन्ति । तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यन्ति । न्यासिनो यतयोऽतीवार्थलोलुपा भविष्यन्ति ॥३३॥ पुनरपि

प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥ २७ ॥ यदा[2] धर्मार्थकामेषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥ २८ ॥ यदा लोभस्त्वसंतोषो मानो दम्भोऽथ मत्सरः ॥ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥ यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥ दस्यूत्कृष्टा[1] जनपदा वेदाः पाखण्डदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥३२॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥ तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥ पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः ॥ अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम् ॥ ३५ ॥ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं[3] पतयः कौलं गाश्चापयस्विनीः[4] ॥ ३६ ॥ पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननान्दृस्यालसंवादा[5] दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥ ॥

स्त्रीणां स्वभावमाह—ह्रस्वकाया इति । कटुकभाषिण्योऽप्रियवादिन्यः । चौर्यं च माया कपटमुरु च साहसं यासां ताः ॥३४॥ किंच, किराटा वणिजः । पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यन्ति । किंच, सर्वे जना अनापद्यपि जुगुप्सितां निन्दितां वार्तां वृत्तिं साधु मंस्यन्ते ॥ ३५ ॥ सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यन्ति । पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरम्परायातं त्यक्ष्यन्ति । अपयस्विनीर्दुग्धदोहाः ॥ ३६ ॥ सौरतं सुरतनिमित्तं सौहृदं येषां ते । अत एव ननान्दरोऽत्र भार्याभगिन्यः, स्याला भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते । ननन्द इति वा पाठः ॥ ३७ ॥ ॥

१ दस्यूत्कृष्टा दस्यूपद्रुताः इति विज० । २ 'यदा कर्मसु काम्येषु भक्तिर्यशसि देहिनाम्' इति मूलपाठो यदा च कर्मादिषु भक्तिरित्यादिटीकापाठश्च क्वचित् । तत्र काम्येषु सकामधर्मेष्विति पृथक्कोटिः । ३ विपन्नं वृद्धत्वादिना कार्यानर्हम् । ४ दुग्धो दोहो यासां ताः इतःपरं दोह्यं यासु न विद्यते तथाविधाः वृद्धा इत्यर्थः । ५ ननान्दृपर्यायो ननान्दृशब्दोऽप्यस्ति । 'ननन्दुः' इति वा पाठः ।

॥ ३८ ॥ ३९ ॥ पिशाचसंदर्शाः पिशाचसदृशाः ॥ ४० ॥ काकिणिके विंशतिवराटकामात्रेऽप्यर्थे विषयभूते । विगृह्य वैरं कृत्वा ॥ ४१ ॥ ४२ ॥ महान्तमनर्थमाह द्वाभ्याम्—कलाविति । त्रिलोकनाथैरानतं नमस्कृतं पादपङ्कजं यस्य तम् । न यक्ष्यन्ति न पूजयिष्यन्ति । पाखण्डैर्विभिन्नमन्यथा कृतं चेतो येषां ते ॥ ४३ ॥ विवशो गृणन्सन् । विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धा यस्य सः ॥ ४४ ॥ तदेवं कलिदोषान्प्रपञ्च्य प्रस्तुतं तन्निस्तारोपायमाह—पुंसामिति

शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥ नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाचसंदर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ त्यक्ष्यन्ति च प्रियान्प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान्क्षुद्राः शिश्नोदरंभराः ॥ ४२ ॥ कलौ न राजन् जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ॥ प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४३ ॥ यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशो गृणन्पुमान् ॥ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥ पुंसां कलिकृतान्दोषान् द्रव्यदेशात्मसंभवान् ॥ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥ श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ॥ नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥ यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥ तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ ४९ ॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥ ५१ ॥ ॥

पङ्क्तिः । द्रव्यदेशात्मभिः संभवो येषां तान् । चित्तस्थश्चित्ते स्फुरितः ॥ ४५ ॥ ४६ ॥ अयमेवोपायो नान्य इति सदृष्टान्तमाह—यथेति । धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हन्ति हरति, न तु तोयादि । एवं योगिनामपि विष्णुरेव, न तु योगादिकमित्यर्थः ॥ ४७ ॥ एतदेव विवृणोति—विद्येति । विद्या देवतोपासना ॥ ४८ ॥ ४९ ॥ आत्मभावं स्वस्वरूपम् ॥ ५० ॥ इदानीं कलिं स्तौति द्वाभ्याम्—कलेर्दोषनिधे राजन्निति ॥ ५१ ॥

१ पिशाचानामिव सम्यक् दर्शः दर्शनं यासां ताः । २ अन्यायगाद्धेति पाठः । ३ 'पुत्रान्भार्यां च कुलजाम्' इति पाठः । ४ 'विमुक्तकर्मार्गलः' इति पाठे सत्कर्मवासन इत्यर्थः । ५ 'याहि' इति पाठः । ६ म्रियमाणैरवश्यं चिन्तनीयो यत आत्मभावं नयतीत्यन्वयः । ७ द्रव्यमशुद्धि, देशः कीकटादिः, आत्मान इन्द्रियाणि तैः ।

तत्सर्वं हरिकीर्तनादेव कलौ भवति नान्यस्मिन्युगे । उक्तं च—'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥' इति ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ॥ तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ १ ॥ कलिदोषनिवर्तकं हरिनामसंकीर्तनादिकं स एव च कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम्, यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदिदानीं तृतीयस्कन्धोक्तकालमानानुवादपूर्वकं निरूपयति—काल इति । 'स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इत्यादिना कालः कथितः । 'चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ॥ संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥' इति युगमानं कथितम् ॥१॥ तत्र कल्पमानमाह—चतुर्युगेति । यत्र चतुर्दश मनवः क्रमेण भवन्ति ॥२॥ प्रलयस्तु चतुर्विधः—नैमित्तिकः, प्राकृतिकः, आत्यन्तिकः, नित्यश्चेति । तत्र नैमि-

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ॥ द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीशुक उवाच ॥ कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥ २ ॥ तदन्ते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पन्ते प्रलयाय हि ॥ ३ ॥ एष नैमित्तिकः[1] प्रोक्तः प्रलयो यत्र विश्वसृक् ॥ शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः ॥ ४ ॥ द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥५॥ एष प्राकृतिको राजन्प्रलयो यत्र[2] लीयते ॥ आण्डकोशस्तु संघातो विघात[3] उपसादिते[4] ॥ ६ ॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योन्यं भक्षमाणाः क्षुधार्दिताः ॥ ७ ॥ क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः ॥ सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ॥ ८ ॥ रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ततः संवर्तको वह्निः संकर्षणमुखोत्थितः ॥ ९ ॥ ॥

त्तिकं प्रलयं मानसहितमाह—तदन्त इति द्वाभ्याम् । तावान् चतुर्युगसहस्रप्रमाणः । सैव ब्राह्मी रात्रिः ॥ ३ ॥ नैमित्तिकत्वं दर्शयति—यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते । आत्मभूर्ब्रह्मा च तस्मिन् शेते तयोरभेदविवक्षया वा ब्रह्मण एवानन्तासनत्वमुक्तम् । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥ ४ ॥ प्राकृतिकं प्रलयमाह द्वाभ्याम्—द्विपरार्धे तु ब्रह्मण आयुषि । सप्तप्रकृतयो महदहंकारपञ्चतन्मात्राणि ॥ ५ ॥ संघातो महदादिकार्यभूतः, प्रकृतीनां तत्कार्यब्रह्माण्डस्य च प्रलयात्प्राकृतिक इत्यर्थः । विघाते विघातकारणे उपसादिते सति ॥ ६ ॥ तदेवाह—पर्जन्य इत्यादिना बुद्धीन्द्रियार्थरूपेणेत्यतः प्राक्तनेन ग्रन्थेन ॥ ७ ॥ सामुद्रादिकं सर्वं रसं रविः पिबते आकर्षति ॥ ८ ॥ ९ ॥ ॥ ॥

१ एष नैमित्तिक इत्युपलक्षणं मन्वन्तरनिमित्तत्वमपि तदन्तर्भूतं ज्ञेयमिति क्रम० । २ यत्र प्रलये । ३ विघाते शैथिल्ये । ४ उपसादिते कालेन प्रापिते सति ।

अनिलवेगोत्थो वायुवेगोद्भूतः । 'अनिलवेगो वा' इति पाठे अनिलेन वेगो यस्य सः, वाः रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । 'अनिलवेगो वै' इति तु पाठः सुगमः । भूविवरान्पातालादीन् शून्यान् रविणा दैहिकरसाकर्षणात्प्राणिरहितान् । शिखाभिर्ज्वालाभिः ॥ १० ॥ किंचिदधिकं वर्षाणां शतम् । सांवर्तकः प्रलयहेतुः परो वायुर्वाति तदा रजसावृतं खं धूम्रं भवति ॥ ११ ॥ १२ ॥ रभसस्वनैस्तीव्रगर्जितैः । ब्रह्माण्डविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति ॥ १३ ॥ उदप्लवे उदकेनाप्लवे सति । प्रलयत्वायाभावाय ॥ १४ ॥ १५ ॥ १६ ॥ भूतादिस्तामसोऽहंकारः । गुणैर्वृत्तिभिः सह ॥ १७ ॥ अव्या-

दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ ॥ उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥ दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥ ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ॥ ११ ॥ परः सांवर्तको वाति धूम्रं खं रजसावृतम् ॥ ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः ॥ १२ ॥ शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ॥ तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥ तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ॥ ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥ अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥ लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १६ ॥ शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ॥ तैजसश्चेन्द्रियाण्यङ्ग देवान्वैकारिको गुणैः ॥ १७ ॥ महान् ग्रसत्यहंकारं गुणाः सत्त्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन् गुणान्कालेन चोदितम् ॥ १८ ॥ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ॥ न प्राणबुद्धीन्द्रियदेवता वा न संनिवेशः खलु लोककल्पः ॥ २० ॥ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥ ॥

कृतं प्रधानम् ॥ १८ ॥ तस्य तु लयो नास्तीत्याह—न तस्येति । कालावयवैरहोरात्रादिभिः । गुणा भावविकाराः । परिणामो विपरिणामः । अव्यक्तमस्तित्वविकारशून्यम् । नित्यं सर्वदैकरूपं, ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यम् । सर्वत्र हेतुः—कारणमिति ॥ १९ ॥ किंच, वागादिगोचरस्य सविशेषस्य विकारा भवन्ति, इदं तु न तथेत्याह—न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः संनिवेशो रचनाविशेषो नास्ति ॥ २० ॥ स्वप्नजाग्रत्स्वप्नजागराद्यवस्थायुक्तम् । संसुप्तवदिन्द्रियाभावात् । शून्यसादृश्ये हेतुः—अप्रतर्क्यम् । न पुनः शून्यमेवेत्याह—तदिति ॥ २१ ॥ उपसंहरति—लय इति । शक्तयः सत्त्वादयः ॥ २२ ॥ ॥ ७ ॥

१ 'सुषुप्तवत्' इति पाठः ।

आत्यन्तिकं लयमाह—बुद्धीन्द्रियेति द्वादशभिः । आत्यन्तिकलयो मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपञ्चलयात्मकः । न च प्रपञ्चस्यात्मवत्सत्यत्वे लयः संभवतीति ज्ञानरूपाद्ब्रह्मणः पृथग्भूतस्य तस्यासत्त्वमुपपादयति—बुद्धिश्चेन्द्रियाणि चार्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक् । तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यन्तवत्तदवस्तु । अत्रैवं प्रयोगः—विमतं सन्न भवति । दृश्यत्वात् कारणाव्यतिरेकादाद्यन्तवत्त्वाच्च, रज्जुसर्पादिवदिति ॥ २३ ॥ तत्राव्यतिरेकं दृष्टान्तेन प्रपञ्चयति—दीप इति । दीपचक्षुरूपाणां तेजोविशेषाणां तेजसो यथा न व्यतिरेकस्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद्ब्रह्मणः पृथक् न स्युर्ब्रह्मकार्यत्वात् । नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसजेत तत्राह—अन्यतमादिति । कार्यादत्यन्तव्यतिरिक्ताद्ब्रह्मणः । प्रपञ्चाद्ब्रह्मणोऽस्ति व्यतिरेकः, प्रपञ्चस्य तु ततो नास्ति व्यतिरेक इत्यर्थः ॥ २४ ॥ यदा तु बुद्धेरसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह—बुद्धेरिति । ननु विश्वतैजसप्राज्ञानामेता अवस्था न बुद्धेरित्याशङ्क्याह—मायामात्रमिति । इदं विश्वतैजसप्राज्ञरूपम् ॥ २५ ॥ आद्यन्तवत्त्वादित्यस्य हेतोरसिद्धिमाशङ्क्य सावयवत्वेन साधयति—यथेति । अवयवीति । यत्सावयवं तदाद्यन्तवद्घटादिवदित्यर्थः । अत उदया-

**बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥ २५ ॥ यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २६ ॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनार्थेन प्रतीयेरन्पटस्येवाङ्ग तन्तवः ॥ २७ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यन्तवदवस्तु यत् ॥ २८ ॥** ॥ ॥

प्ययादाद्यन्तवत्त्वाद्विश्वं सन्न भवतीत्यर्थः । यद्वा, पृथगेवागमापायित्वाद्विश्वं मिथ्या । ब्रह्म तु तदवधित्वात्सत्यमित्यनेन साध्यते । दृष्टान्तस्तु पूर्वोक्त एव । यथा जलधरा व्योम्नीति दृष्टान्तस्त्वागमापायितदवधित्वमात्रे, न तु मिथ्यात्वे ॥ २६ ॥ 'अन्यतमादृतात्' इति प्रतिज्ञातकारणस्य सत्यत्वमुपपादयति—सत्यमिति । अवयवः कारणं प्रोक्तः—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिभिः । अत्र युक्तिमपि दर्शयति—विनेति । अङ्ग हे राजन्, हि यस्मादर्थेनावयविना पृथगेवावयवाः प्रतीयेरन् । यथा पटस्यावयवास्तन्तवः पटात् पृथक्प्रतीयन्ते तद्वदिति ॥ २७ ॥ ननु कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत, सत्यम्, तदपि नातीव सत्यमित्याह—यदिति । सामान्यं कारणं, विशेषः कार्यं, तद्रूपेणान्योन्यापाश्रयात्परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्परापेक्षत्वादाद्यन्तवत्तत्सर्वमवस्त्वित्यर्थः । यद्वा, तत्रैव हेत्वन्तरमेतत् । यदुपलभ्येत स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् । 'अन्योन्यापाश्रयात्' इतीदमपि हेत्वन्तरं गुणगुणिविशेषणविशेष्यव्याप्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धित्वात् । तथाभूतस्वप्नवदिति निगमनम् । अतो यदाद्यन्तवत्तत्सर्वमवस्त्विति ॥ २८ ॥ ॥ ॥ ॥

१ आश्रयमात्मस्वरूपं ज्ञानमेवेति पाठः । २ रज्जुसर्पवदिति ।

तदेवमनेकैर्हेतुभिः प्रपञ्चस्यासत्त्वं साधितम् । तत्र शङ्का,—ननु प्रपञ्चस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राह—विकार इति । ख्यायमानः प्रकाशमानोऽपि विकारः प्रपञ्चः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति । तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्वाचिद्रूपेणात्मना समः स्वप्रकाशो भवेत् । तथा च सति सोऽप्यात्मवत्स्यात् । एकरूपः स्यादित्यर्थः ॥ २९ ॥ कुत इत्यत आह—नहीति । ननु सत्यस्याप्यात्मनो जीवब्रह्मरूपं नानात्वमस्त्येव तत्राह—यद्येवं नानात्वं मन्यते तर्ह्यविद्वान् । कथं तर्हि तयोर्भेदव्यवहारः, उपाधिकृत इत्याह—नानात्वमिति । तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदापरिच्छेदे दृष्टान्तः । ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे । वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥ ३० ॥ ब्रह्मण एव प्रपञ्चव्यवहारालम्बनत्वं दृष्टान्तेन स्पष्टयति—यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुण्डलादिरूपेण । लौकिकवैदिकैर्वचोभिः । जनैरहंकारोपहितैः ॥ ३१ ॥ नन्वहंकारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम्, तस्य स्वकारणभूतब्रह्मावरकत्वासंभवादावरणे वा

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ २९ ॥
नहि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ ३० ॥ यथा हिरण्यं
बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकै-
र्जनैः ॥ ३१ ॥ यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदी-
क्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥ ३२ ॥ घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते
तदा ॥ यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥ ३३ ॥ यदैवमेतेन विवेकहेतिना
मायामयाहंकरणात्मबन्धनम् ॥ छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग संप्लवम् ॥ ३४ ॥
नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ॥ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥ ३५ ॥ ॥

स्वस्यापि प्रकाशासंभवादित्याशङ्क्य सदृष्टान्तमाह—यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इत्यादिवचनात्तस्मादर्कप्रभवः, अर्केणैव दर्शितः प्रकाशितश्च तमःस्वरूपभूतार्कदर्शनप्रतिबन्धको भवति । अहमहंकारो ब्रह्मगुणो ब्रह्मकार्यभूतस्तदीक्षितस्तेनैव प्रकाशितश्चात्मनो जीवस्यात्मबन्धनो ब्रह्मस्वरूपदर्शनप्रतिबन्धको भवति ॥ ३२ ॥ अत एवाहंकारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टान्तेनाह—घन इति । आत्मन उपाधिः । जिज्ञासया विचारेण । तर्हि तदाऽनुस्मरेत् । ब्रह्माहमिति पश्यतीत्यर्थः ॥ ३३ ॥ सोऽयमात्यन्तिकः प्रलय इत्युपसंहरति—यदैवमिति । विवेकहेतिना ज्ञानशस्त्रेण । अहंकरणमेवात्मबन्धनम् । अच्युतं परिपूर्णमात्मानमनुभवतीति तथा ॥ ३४ ॥ नित्यप्रलयमाह—नित्यदेति ॥ ३५ ॥ ॥ ॥ ॥

१ स्वरूपभूतमाकाशस्थम् । २ 'आत्मबन्धनः' इति पाठः । ३ आत्मावरकमहंकारमित्यर्थः ।

कुत इत्यत आह—कालेति । परिणामिनां नदीप्रवाहप्रदीपज्वालादीपज्वालादीनां या उच्चनीचावस्थास्ताः कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्दृश्यमानास्ता एव नित्यदा जन्मप्रलयहेतवो भवन्ति । देहः प्रतिक्षणं प्रध्वंसी, प्रतिक्षणमवस्थाभेदास्पदत्वात्, प्रदीपादिवदित्यनुमानम् ॥ ३६ ॥ ननु यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न दृश्यन्ते, अतो हेतुरसिद्ध इत्याशङ्क्याह—अनाद्यन्तवता कालेन जायमाना अवस्था नैव लक्ष्यन्ते । आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गमनावस्थाविशेषा यथा नैव लक्ष्यन्ते तद्वत् । अतो यथा तेषां प्रदेशान्तरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन मध्यवर्तिन्योऽवस्थाः कल्प्यन्त इति न हेतुरसिद्ध इत्यर्थः ॥ ३७ ॥ उपसंहरति—नित्य इति ॥ ३८ ॥ पुराणार्थमुपसंहरति—एता इति । लीलाविषयाः कथा अजो ब्रह्मापि कार्त्स्न्येनाभिधातुं नेशः ॥ ३९ ॥ ननु यदि साकल्येनाभिधातुं न शक्यन्ते तर्हि किं तदभिधानेन तत्राह—संसारेति । विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्यात उत्तितीर्षोः पुंसो भगवतो या लीलास्तासां कथास्तासां रसस्तन्निषेवणमन्तरेणान्यः प्लवस्तरणसाधनं

कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३६ ॥ अनाद्यन्तवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥३७॥ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ॥ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥ संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥४०॥ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥ स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥ ४२ ॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे चतुर्थोऽध्यायः ॥४॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १ ॥ ॥

न भवेत् । उपायान्तरासंभवात्तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥४०॥ श्रोतुरादरदार्ढ्याय संप्रदायप्रवृत्तिमाह—पुराणसंहितामिति त्रिभिः ॥ ४१ ॥ स वै बादरायणः प्रीतः सन् मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥ ४२ ॥ असौ सूत इति पुरतः स्थितमङ्गुल्या निर्दिश्याह—नैमिषालये नैमिषारण्यस्थाने ॥ ४३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ पञ्चमे तु समासेन परब्रह्मोपदेशतः ॥ राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति—अत्रेति । अयं भावः—जगतः कर्ता ब्रह्मापि यस्य प्रसादजः । प्रसादोऽत्र रजोवृत्तिर्हर्षः । ततो जातत्वात्परतन्त्रः । सर्वसंहर्ता रुद्रश्च यस्य क्रोधसंभवो न तु स्वतन्त्रः स विश्वस्यात्मा नियन्ता भगवानत्रानुवर्ण्यते । अत एवंभूतं भगवन्तं शृण्वतः कुतोऽन्यस्माद्भयशङ्केति ॥ १ ॥ ॥ ॥

त्वं पुनः कृतार्थ एवेत्यनुसारयति—त्वं त्विति । पशुबुद्धिमविवेकम् । यस्मान्न नङ्क्ष्यसि । कुत इत्यत आह—न जात इति । यथा देहः प्रागभूत एवाद्य जातो नङ्क्ष्यति । नचैवं त्वं पूर्वं नाभूर्न चाद्य जातोऽस्ततो न नङ्क्ष्यसि ॥ २ ॥ ननु बीजादङ्कुरवत्त्वस्मात्पुत्ररूपेणापि स्वयमेव भवति । यथाह श्रुतिः—'अङ्गादङ्गात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥' इति । ततः पुनरङ्कुराद्बीजमिव पौत्रादिरूपेणापि स्वयमेव भवति । 'पिता पुत्रेण पितृमान्योनियोनौ' इति श्रुतेः । अतस्तेषु नश्यत्सु कथं न नङ्क्ष्यामीति चेत्तत्राह—न भविष्यसीति । भूत्वा पुत्रपौत्रादिरूपवान्बीजाङ्कुरवन्न भविष्यसि । यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात् । देहाद्देहो जायते नात्मेति भावः ॥ ३ ॥ जन्मादीनां देहधर्मत्वं दृष्टान्तेन प्रपञ्चयति—स्वप्ने यथात्मनः शिरश्छेदं स्वयं पश्यति, एवं जागरणेऽपि । यस्माद्देहस्य पञ्चत्वादिकं पश्यति ततस्तद्देवात्मन इदं भ्रममात्रम् । वस्तुतश्चात्माऽजोऽमरश्चेत्यर्थः । तदुक्तम्—'आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणः ॥' इत्यादि ॥ ४ ॥ यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ

त्वं तु राजन्मरिष्येति[1] पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि ॥ २ ॥ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजाङ्कुरवद्देहादेर्व्यतिरिक्तो यथाऽनलः ॥ ३ ॥ स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥ ४ ॥ घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म संपद्यते पुनः ॥५॥ मनः सृजति वै देहान्गुणान्कर्माणि चात्मनः ॥ तन्मनः[2] सृजते माया ततो जीवस्य संसृतिः ॥ ६ ॥ स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥ ततो दीपस्य दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥ ७ ॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः ॥ ८ ॥ ॥ ॥ ॥

मुच्यत इति सदृष्टान्तमाह—घट इति । यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदन्तर्वर्त्येवकाश आकाश एव स्याद्यथा । एवं देहे मृते तत्त्वज्ञानेन लीने सति ॥ ५ ॥ ज्ञानेन लयं भावयितुं मायाकृतमात्मनो देहाद्युपाधिसंबन्धप्रकारमाह—मन इति । मन आत्मनो देहादीन्सृजति । तच्च मनो माया सृजति । ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिः, न स्वतः ॥ ६ ॥ यस्मादुपाधिनिबन्धनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं गच्छतीत्येतदेव सदृष्टान्तमाह सार्धेन—स्नेहेति । दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः । तत्र तैलस्थानीयं कर्म, तदधिष्ठानस्थानीयं मनः, वर्तिस्थानीयो देहः, अग्निसंयोगस्थानीयश्चैतन्याध्यासः, दीपस्थानीयः संसार इति योज्यम् । देहकृतो देहनिबन्धनः । यद्वा देहकृतो मनसो न त्वात्मनः ॥ ७ ॥ अतो दीपवत्संसार एव नश्यति, न त्वात्मा ज्योतिर्वदित्याह—नेति । न तु तत्र प्रतीयमान आत्मा । कुत इत्यत आह—य इति । व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः । यतः स्वयंज्योतिः । परत्वं प्रपञ्चयति—आकाश इवेति । आधारो देहादेः प्रपञ्चस्य । ध्रुवो निर्विकारः । नास्त्यन्त उपमा च यस्य सोऽनन्तोपमः । ततो विभुः ॥८॥

१ मरिष्येतीत्यत्र मरिष्ये इति इति छेदः । सन्धिरार्षः । क्वचित्–'मरिष्येऽहम्' इति पाठः, तत्र इतीत्यध्याहार्यम् । २ मनः पूर्वकर्मप्रेरितं सद्गुणान्सत्त्वादीन्सृजति पर्यायेण विभावयति ततो गुणमयानि विविधानि कर्माणि सृजति ततः कर्मानुरूपान्देहान्सृजतीति भावः ।

अतस्त्वमेवं चिन्तयेत्याह—एवमिति । आत्मस्थं देहाद्युपाधिस्थितम् । आमृश विचारय । अनुमानगर्भिण्या द्रष्टृदृश्यान्वयव्यतिरेकयुक्त्या ॥ ९ ॥ एवं च सति त्वां तक्षको न दहेदित्याह—चोदित इति । तत्र हेतवः—मृत्यव इति । मृत्युहेतवः ॥ १० ॥ विमर्शप्रकारं दर्शयंस्तक्षकादर्शनं दर्शयति द्वाभ्याम्—योऽहं स ब्रह्मैव यद्ब्रह्म तदहमेवेति समीक्षन् । तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः । ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः । निष्कले निरुपाधौ । आत्मनि ब्रह्मणि ॥ ११ ॥ विषयुक्तैराननैर्दशन्तं ग्रसन्तं तक्षकम् । लेलिहानं सर्पम् । यद्वा, लेलिहानं जिह्वाभिरोष्ठप्रान्तान्सनिष्पेषमास्वादयन्तम् । आत्मनः पृथक् ॥ १२ ॥ हरेश्चेष्टामात्मा त्वं यत्पृष्टवांस्तदेतत्ते कथितम् । शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति—किमिति

एवमात्मानमात्मस्थमात्मनैवाऽऽमृश प्रभो ॥ बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया[1] ॥ ९ ॥ चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय[2] निष्कले ॥ ११ ॥ दशन्तं तक्षकं पादे लेलिहानं विषाननैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥ एतत्ते कथितं तात यथात्मा[3] पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे ब्रह्मोपदेशो[4] नाम पञ्चमोऽध्यायः ॥ ५ ॥

सूत उवाच ॥ एतन्निशम्य मुनिनाभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादमूलमुपसृत्य[5] नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ॥ १ ॥ ॥ राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥ २ ॥ नात्यद्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥ पुराणसंहितामेतामश्रौष्म भवतो वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितं त्वया ॥ ५ ॥ ॥

॥ १३ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् ॥ वेदशास्त्रविभागोक्तौ त्रिवेदिव्यासवर्णनम् ॥ १ ॥ एतत्पुराणं निशम्य निखिलात्मा हरिस्तं पश्यति निखिलं वात्मनि पश्यतीति तथा तेन । अतः समेन । नतेनावनतेन मूर्ध्ना तत्पादतलमुपसृत्य । तत्पादौ शिरसि निधायेत्यर्थः । सिद्धः कृतार्थोऽस्मि । यतोऽनुगृहीतोऽस्मि । अनुग्रहमेवाह—यद्यस्माच्छ्रावितः । चशब्दात्प्राप्तिसाधनं च श्रावितम् ॥ २ ॥ करुणात्मतामभिनन्दति द्वाभ्याम्—नात्यद्भुतमिति ॥ ३ ॥ अश्रौष्म श्रुतवन्तः । भवतः सकाशात् ॥ ४ ॥ 'सिद्धोऽस्मि' इत्युक्तं तदेवाविष्करोति—भगवन्निति । यतस्त्वया दर्शितं ब्रह्म प्रविष्टः । कथंभूतम् । अभयम् । यतो निर्वाणं कैवल्यरूपम् ॥ ५ ॥ ॥

१ वासुदेवस्यानुचिन्ता यस्यां तया बुद्ध्या । २ 'समीक्ष्य चात्मानम्' इति मूलटीकयोः पाठः क्वचित् । ३ 'यत्त्वं मा पृष्टवान्' इति, 'यथा त्वं पृष्टवान्' इति च पाठः । टीकानुरोधेन यदात्मेति पाठ आवश्यकः । ४ 'प्रमाणलक्षणं नाम' इति क्वचित् । ५ पादतलमिति मूलस्थमूलपदस्यार्थः । क्वचित् 'पादतलं' इति पाठः । क्वचिच्च 'तत्पादपद्मम्' इति पाठः, स च टीकाननुगुणः ।

'किं भूयः श्रोतुमिच्छसि' इति यदुक्तं तत्र सिद्धोऽहं न किंचिच्छ्रोतुमिच्छामि । केवलमनुज्ञां देहीत्याह—अनुजानीहीति । वाचमित्युपलक्षणं सर्वेन्द्रियाणाम् । वाचं नियम्य किं करिष्यसि तदाह—मुक्ताः कामाशयास्तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्यासून्विसृजामि ॥ ६ ॥ ननु किं प्राणत्यागेन किंचित्कालं ज्ञाननिष्ठो भवेति चेत्तत्राह—अज्ञानं चेति । चकारात्तत्संस्कारश्च तच त्वत्कृपयैवेत्याह—भवतेति ॥ ७ ॥ ८ ॥ आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक्प्रकाशे समाधाय परमात्मानं दध्यौ । अस्पन्दासुः लीनप्राणः । यथा तरुः स्थाणुः ॥ ९ ॥ तमेव विशिनष्टि—प्राक्कूले प्रागग्रे । वर्हिषि दर्भे ॥ १० ॥ तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति—तक्षक इति त्रिभिः । हे विप्राः ॥ ११ ॥ तं विषचिकित्सया परीक्षिद्रक्षणेन

अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥ ॥ सूत उवाच ॥ इत्युक्तस्तमनुज्ञाप्य भगवान्वादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥ ८ ॥ परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ॥ समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥ प्राक्कूले वर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ॥ ब्रह्मभूतो[2] महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ॥ हन्तुकामो नृपं गच्छन्ददर्श पथि कश्यपम् ॥ ११ ॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥ ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ॥ वभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन्सर्वे देवासुरनरादयः ॥ १४ ॥ देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ॥ ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥ जन्मेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ यथाजुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥ १६ ॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥ अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान् ॥ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥ ॥

द्रव्यार्जनायागच्छन्तम् । तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत् ॥ १२ ॥ तच पुत्रकृत्यमिव जातमित्याह—ब्रह्मभूतस्येति ॥ १३ ॥ तत्र क्षणं सर्वेषां दुःखं च ततः परमुत्सवं चाह द्वाभ्याम्—हाहाकार इति ॥ १४ ॥ १५ ॥ प्रासङ्गिकमाह—जन्मेजय इत्यादि । सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथावदाजुहाव जुहावेति वा । सर्वसर्पाह्वाने कारणमाह—संक्रुद्ध इति ॥ १६ ॥ १७ ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

१ आत्मानं श्रीकृष्ण आत्मनि मनसि इति चक्र० । २ ब्रह्म भूतं प्राधान्येन प्राप्तं येन सः ।

कस्मात्तक्षको न दह्येतेत्युक्ताः सन्तो द्विजा ऊचुः—तमिति । तेनेन्द्रेण । असौ सर्पः ॥ १९ ॥ ऋत्विजः प्रत्याह—सहेन्द्रः इन्द्रसहितः किमिति न पात्यते ॥ २० ॥ तद्राज्ञो वचः श्रुत्वा आजुहुवुः । साक्षेपमाह्वानं दर्शयति—तक्षकेति इहाशु आपत मरुत्वता मरुद्गणवतेन्द्रेण सह ॥ २१ ॥ ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः ॥ २२ ॥ तं तक्षकम् । अङ्गिरसः पुत्रो बृहस्पतिः प्राह ॥ २३ ॥ २४ ॥ भवतु नामाऽजरामरस्तथापि पितृमारकं घक्ष्यामीति चेत्तत्राह—जीवितमिति । गतिः परलोकः । अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शङ्कनीयमित्यर्थः ॥ २५ ॥ कथमन्यः सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राह—सर्पादिना जन्तुः पञ्चत्वं मृत्युमृच्छति प्राप्नोतीति यत्तदारब्धं कर्मैव भुङ्क्ते, स्वकर्मप्रयुक्ता एव सर्पादयो न

तं गोपायति राजेन्द्र शक्रः शरणमागतम् ॥ तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥ तच्छ्रुत्वाजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥ इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ॥ बभूव संभ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥ तं पतन्तं विमानेन सहतक्षकमम्बरात् ॥ विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥ नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् ॥ अनेन पीतममृतमथवा अजरामरः ॥ २४ ॥ जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा ॥ राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप ॥ पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत् ॥ २६ ॥ तस्मात्सत्रमिदं राजन्संस्थीयेताभिचारिकम् ॥ सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुञ्जते ॥ २७ ॥ ॥ सूत उवाच ॥ इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया ॥ मुह्यन्त्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥ २९ ॥ ॥ ॥

स्वतन्त्रा इति भावः ॥ २६ ॥ संस्थीयेत समाप्यताम् । आभिचारिकं हिंसाफलम् । दिष्टं प्राचीनं कर्म । अतः सर्पादृष्टप्रयुक्तस्य तवाप्ययं नापराध इति भावः ॥ २७ ॥ वाक्पतिं बृहस्पतिम् ॥ २८ ॥ ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणामित्यादि तत्राह—सैषेति । तस्या महत्त्वं दर्शयति—अलक्षणा न लक्ष्यत इत्यलक्षणा, अप्रतर्क्येत्यर्थः । कासावित्यत आह—ययाऽस्य विष्णोरेवात्मभूता आत्मांशभूताः प्राणिनो गुणवृत्तिभिः क्रोधादिभिः सह भूतेषु देहेषु मुह्यन्ति । बाध्यबाधकतां व्रजन्तीत्यर्थः । ननु श्रवणादिना बाधितया तया कुतो मोहः स्यात्तत्राह—अबाध्यया बाधितुमशक्यया ॥ २९ ॥ ॥ ॥ ॥ ॥

१ संभ्रान्ता व्याकुला मतिर्यस्य । २ विमानेन सहाम्बरात्पतन्तं तक्षकमित्यन्वयः । ३ अथ अत एव । वै निश्चितम् । 'जातस्तेनाजरामरः' इति पाठः । ४ 'नास्त्यस्य' इति पाठः ।

कथं तर्हि मायातत्कार्यनिवृत्तिरित्याशङ्क्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात्सर्वानर्थनिवृत्तिरिति शास्त्रार्थमुपसंहरति—न यत्रेति पञ्चभिः। दम्भीति। माया, कपटवानयं पुमानित्येवंभूतायां बुद्धावसकृदुल्लिख्यमाना या मायेत्यर्थः। साऽऽत्मवादे क्रियमाणे आत्मवादिभिर्यत्राभया न विराजिता न प्रकाशिता किंतु भीतेव सकार्यं मोहादिकमकुर्वती कथंचिद्वर्तत इति प्रतिपादितेत्यर्थः। तदुक्तम्—'तस्मै नमो भगवते वासुदेवाय धीमहि। यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुम्॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धियः॥' इति। किंच, यद्यस्मिंस्तदाश्रयो मायाश्रयो त्रिविधो त्रिवादोऽपि नास्ति। विशेषविषयत्वाद्विवादानां तस्य विशेषातीतत्वादिति भावः। संकल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र नास्ति। संकल्पविकल्पानामपि त्रिशेषविषयत्वात्॥ ३०॥ किंच, सृज्यं कर्म सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयः फलमपि। अतस्त्रिभिः सृज्यस्रष्टृफलैरन्वितो जीवश्चाहंकारात्मको यत्र नास्ति। अत एवोत्सादितौ निरस्तौ बाध्यबाधकौ यस्मिंस्तदेतत्स्वयमात्मस्वरूपमित्यर्थः। तत्तस्मिन्नूर्मीनहंकारादीन्नि-

न यत्र दम्भीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः॥ न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्ति यत्॥ ३०॥ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम्॥ तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः॥३१॥ परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः॥ ३२॥ त एतदधिगच्छन्ति विष्णोर्यत्परमं पदम्॥ अहं ममेति दौर्जन्यं न येषां देहगेहजम्॥३३॥ अतिवादांस्तितिक्षेत नावमन्येत कंचन॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित्॥ ३४॥ नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे॥ यत्पादाम्बुरुहध्यानात्संहितामध्यगामिमाम्॥ ३५॥
॥ शौनक उवाच॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः॥३६॥

षिध्य विरमेत्। विशेषेण क्रीडेदित्यर्थः॥ ३१॥ यतस्तद्वैष्णवं पदमामनन्तीत्याह—परमिति। यदेतत्तदेव परं वैष्णवं पदं स्वरूपमामनन्ति। के। अतत् आत्मव्यतिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवः। यतोऽनन्यसौहृदाः नास्त्यन्यस्मिन्सौहृदं येषां ते। कुतः। दौरात्म्यं देहाद्यहंभावं विसृज्य। देहेऽहंकाराभावादन्यत्र सौहृदं नास्त्यतस्त्यक्तुमिच्छव इत्यर्थः। कथम्। नेति नेतीत्येवम्। अत्र विद्वदनुभवमपि प्रमाणयति—हृदोपगुह्य ध्यानादिना। ततः समाहितैरवसितं निश्चितम्। यद्वा, अवसितमवबद्धमात्मतया गृहीतमित्यर्थः॥ ३२॥ एतत्प्राप्तावधिकारिणो दर्शयति—त एतदिति। देहजमहमिति। गेहजं ममेति॥ ३३॥ तत्प्राप्त्युपायमाह—अतिवादानिति॥ ३४॥ शास्त्रसमाप्तौ गुरुं प्रणमति—नम इति। कृष्णाय व्यासाय। अध्यगामधिगतवानस्मि॥ ३५॥ 'इमां संहितामध्यगाम्' इत्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुर्वेदविभागमपि प्रसङ्गात्पृथक् पृच्छति—पैलादिभिरिति। हे सौम्य॥ ३६॥ ॥

१ 'गम्भीरया' इति शुक० संमतः पाठः। 'दुर्भाव्य लया' इति वीर० पाठः। २ 'यद्विकारः' इति वीर० पाठः। ३ 'वचश्च' इति पाठः। ४ 'विरमेन्मुनिः स्वयम्' इति पाठः।

तत्र प्रथमं वेदाविर्भावप्रकारमाह—समाहितात्मन इत्यष्टभिः । ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ॥ ३७ ॥ प्रसङ्गान्नादोपासकानां मोक्षफलमाह—यस्य नादस्योपासनयात्मनो मलं धूत्वाऽपोह्य । कथंभूतं मलं तमाह—द्रव्यमधिभूतम्, क्रिया अध्यात्मम्, कारकमधिदैवम्, एवं त्रिधाभूता आख्या यस्येति तथा तम् ॥ ३८ ॥ त्रिवृत् त्रिमात्रः कण्ठोष्ठादिभिरुच्चार्यमाणस्योङ्कारस्याक्षरसमाम्नायान्तर्भावात्सूक्ष्मतया तं विशिनष्टि—अव्यक्तः प्रभवो यस्य सः । तदेवाह—स्वराट् स्वत एव हृदि प्रकाशमानः । तमेव कार्येण लक्षयति—यत्तदिति । नपुंसकत्वं लिङ्गशब्दविशेषणत्वात् । लिङ्गं गमकम् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह—शृणोतीति । इमं स्फोटमव्यक्तमोङ्कारम् । ननु जीव एव तं शृणोतु, नेत्याह—सुप्तश्रोत्रे कर्णपिधानादिनाऽवृत्तिकेऽपि श्रोत्रे सति । जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता । तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः । ईश्वरस्तु नैवम्, यतः शून्यदृक् । शून्येऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य । तथा हि—सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता, लीनेन्द्रियत्वात् । अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोध-

॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः ॥ हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥
यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३८ ॥ ततोऽभूत्त्रिवृदो-
ङ्कारो योऽव्यक्तप्रभवः स्वराट् ॥ यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे
च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥४०॥ स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥ तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ॥ धार्यन्ते यैस्त्रयो
भावा गुणनामार्थवृत्तयः ॥ ४२ ॥ ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अन्तस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम्
॥ ४३ ॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोङ्कारांश्चातुर्होत्रविवक्षया ॥ ४४ ॥ ॥

यति स यथा परमात्मैव तद्वत् । कोऽसावोङ्कारस्तं विशिनष्टि सार्धेन—येन वाग्बृहती व्यज्यते । यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिरभिव्यक्तिः ॥ ४० ॥ किंच, स्वधाम्नः स्वस्याश्रयः कारणं यद्ब्रह्म तस्य । किंच, परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह—स इति । सर्वमन्त्राणामुपनिषद्रहस्यसूक्ष्मरूपमित्यर्थः । तत्र हेतुः—वेदानां बीजं कारणम् । बीजत्वेऽप्यविकारितामाह—सनातनं सदैकरूपम्, तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ इदानीं ततः सर्वप्रपञ्चोत्पत्तिप्रकारमाह—तस्य हीति । त्रयस्त्रिसंख्यायुक्ता भावा यैरकारोकारमकारैर्धार्यन्ते तत्कारणत्वात् । तानेवाह—गुणाः सत्त्वादयः । नामानि ऋग्यजुःसामानि । अर्था भूर्भुवःस्वर्लोकाः । वृत्तयो जाग्रदाद्याः ॥ ४२ ॥ ततस्तेभ्यो वर्णेभ्यः । अक्षराणां समाम्नायं समाहारम् । तमेवाह—अन्तस्था यरलवाः । ऊष्माणः शषसहाः । स्वरा अकाराद्याः । स्पर्शाः कादयः । ह्रस्वदीर्घाश्च । आदिशब्दाज्जिह्वामूलीयादयः । त एव लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ विभुश्चतुर्मुखस्वरूपो भगवान् । असृजदिति पूर्वस्यैवानुषङ्गः । चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया ॥ ४४ ॥ ॥

१ ज्ञापकम् । २ 'हृदाकाशात्' इति पाठः । तत्र परमेष्ठिन इत्यस्यैकदेशान्वयः । ३ यैरकारादिभिः त्रयो भावाः सृष्ट्यादयः तेन गुणत्रयव्यापारभूताः । ४ तेनाक्षरसमाम्नायेन । ५ व्यक्तोङ्कारसहितान् । ६ कादयो मावसानाश्च वर्णाः ।

पुत्रान्मरीच्यादीन् । तान्वेदान् । ब्रह्मकोविदान्वेदोच्चारणादिनिपुणान् ॥ ४५ ॥ एवं चतुर्युगेषु प्राप्ताः । द्वापरादौ द्वापरमादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन्, द्वापरान्ते वेदविभागप्रसिद्धेः, शन्तनुसमकालं व्यासावतारप्रसिद्धेश्च । व्यस्ता विभक्ताः ॥ ४६ ॥ तत्र हेतुः—क्षीणायुषो जनान् । तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशङ्क्याह—हृदिस्थेति ॥ ४७ ॥ एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वन्तरे विशेषतो निरूपयितुमाह—अस्मिन्नपीति ॥ ४८ ॥ अंशो माया तस्या अंशः सत्त्वं तस्य कलयांऽशेनावतीर्णः सन् ॥ ४९ ॥ चातुर्विध्यमेवाह—ऋगिति । ऋगादिमन्त्राणां राशीन्वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्य यथाऽनेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियन्ते तद्वदुद्धृत्य तैर्मन्त्रैश्चतस्र ऋगादिसंहिताश्चक्रे ॥ ५० ॥ तासां

पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥ ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन्हृदिस्थाच्युतचोदिताः ॥ ४७ ॥ अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ४९ ॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥ ५० ॥ तासां स चतुरः शिष्यानुपाहूय महामतिः ॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥ ५१ ॥ पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ ५२ ॥ साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ॥ अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥ ५३ ॥ पैलः स्वसंहितामूच इन्द्रप्रमितये मुनिः ॥ बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥ ५४ ॥ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ॥ पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ ५५ ॥ अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥ शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ॥ वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥

संहितानां मध्ये एकैकाम् ॥ ५१ ॥ ऋक्समुदायरूपत्वाद्बह्वृचाख्याम् । नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्यम् ॥ ५२ ॥ छन्दःसु गीयमानत्वाच्छन्दोगाख्यां संहिताम् ॥ ५३ ॥ तत्र ऋग्वेदशाखाविभागमाह—पैल इति । स्वसंहितां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय च ऊचे । स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह—हे भार्गव, इन्द्रप्रमितिरपि स्वां संहितां स्वसुतं माण्डूकेयमध्यापयामास । तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५४ ॥ ५५ ॥ ५६ ॥ तत्सुतो माण्डूकेयसुतः शाकल्यो वात्स्यादिषु पञ्चस्वधात् । तानध्यापयामासेत्यर्थः ॥ ५७ ॥ ॥ ॥

तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः । प्रतिशाखाभ्य उक्तसर्वशाखाभ्यः । वालायन्यादयस्तामादधुरधीतवन्तः ॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह—बह्वृचा इति । एतच्छन्दसामेतेषां छन्दसाम् ॥ ६० ॥ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह—वैशंपायनशिष्या इत्यादिना । चरकनामनिरुक्तिमाह—यच्चेरुरिति । यद्यस्माद्ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं तच्चरणाच्चरका इत्यर्थः ॥६१॥ तच्छिष्यो वैशंपायनशिष्यः । अल्पसाराणामेतेषां चरितेन कियत्, सुदुश्चरमहं चरिष्यामीति ॥६२॥ विप्राणामवमन्त्राऽवज्ञाकर्त्री । मत्तोऽधीतमाशु त्यजेति ॥ ६३ ॥ देवरातसुतो याज्ञवल्क्यः ॥ ६४ ॥ छर्दितस्यादानं विप्ररूपेणा-

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ ५८ ॥ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्यः[1] कासारश्चैव तां दधुः ॥५९॥ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥ वैशंपायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहः[2]क्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥ याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥६२॥ इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ॥ विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥६३॥ देवरातसुतः सोऽपि च्छर्दित्वा यजुषां गणम् ॥ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥६४॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥ ६५ ॥ याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधिगवेषयन् ॥ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥६६॥ ॥ याज्ञवल्क्य उवाच ॥ ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥ ॥

नुचितमिति तित्तिराः पक्षिविशेषा भूत्वा आददुः । ततश्च तैत्तिरीया इति प्रसिद्धाः । सुपेशला अतिरम्याः । बहुवचनमवान्तरभेदविवक्षया ॥६५॥ काण्वमाध्यन्दिनादिशाखाप्रसङ्गमाह—याज्ञवल्क्य इत्यादिना । गुरोर्वैशंपायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानान्यधिकानि गवेषयन्मृगयन्सूपतस्थे सम्यक् तुष्टाव । ईश्वरमृगादिवेदानाम् । तथा च श्रुतिः—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः ॥ सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः' इति ॥ ६६ ॥ नमो भगवते तुभ्यमादित्याय । यो भवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति—अखिलजगतामात्मस्वरूपेणान्तर्हृदयेषु काल-

---

१ अत्र 'भज्यः' इति 'गार्ग्यः' इति 'भाग्यः' इति कासार इत्यत्र काशार इति साकार इति च नानाविधाः पाठा दृश्यन्ते । तत्र सदसद्विचारः सुधीभिः कर्तव्यः । २ ब्रह्महत्याहेतुरुक्तो विष्णुपुराणे—'ऋषिर्योऽद्य महामेरौ समाजेनागमिष्यति ॥ तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥ पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विज ॥ वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तदा ॥ स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् ॥ शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् ॥ चरध्वं मत्कृते सर्वैर्न विचार्यमिदं तथा ॥' इति ।

1653

स्वरूपेण च बहिरपि वर्तमान इति । अखिलजगतामित्यस्य प्रपञ्चः—चतुर्विधेति । हृदयान्तर्वर्तित्वेऽपि जीववत्तेनोपाधिनाऽव्यवधीयमानोऽनाच्छाद्यमानः । कालस्वरूपेण चेत्यस्य प्रपञ्चः—क्षणेति । क्षणलवादयो येऽवयवास्तैरुपचिताः संवत्सरास्तेषां गणेन प्रत्यब्दमपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम् । अनेन गायत्रीप्रथमपादोक्तवरेण्यतानुवर्णिता ॥ ६७ ॥ द्वितीयपादार्थानुवर्णनेन स्तौति—यद्‌ु हेति । हे विबुधर्षभ हे सवितः, यदप्यदो भगवतस्तव मण्डलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम । पुनस्तस्यैव संबोधनम् । प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषामवभर्जन विनाशक हे तपनेति ॥ ६८ ॥ तृतीयपादेन स्तौति—य इहेति । भवान् स्थावरजङ्गमसमूहानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणाननात्मनो जडान्स्वयमात्मैवान्तर्यामी सन्प्रचोदयति प्रवर्तयति ॥ ६९ ॥ तृतीयपादमेव मण्डलस्थपरतया

यद्‌ु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमण्डलम् ॥ ६८ ॥ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणाननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥ ६९ ॥ य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥ ७० ॥ परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ७१ ॥ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७२ ॥ ॥ सूत उवाच ॥ एवं स्तुतः स भगवान्वाजिरूपधरो हरिः ॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥ ७३ ॥ यजुर्भिरकरोच्छाखा दश पञ्चशतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ७४ ॥ जैमिनेः सामगस्यासीत्सुमन्तुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥ ॥

व्याचक्षाणः स्तौति—य एवेति । य एक एव भगवानतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मिन्प्रवर्तयति । किंच, यो भवानवनिपतिरिवाटति गच्छति ॥ ७० ॥ आशापालैरिन्द्रादिभिः । कमलकोशयुक्तैस्तत्तुल्यैर्वाऽञ्जलिभिरुपहृतार्हणो दत्तार्घः ॥ ७१ ॥ यत एवंभूतस्त्वमथातः ह स्फुटमयातयामान्यन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२ ॥ एवं स्तुतः प्रसादितश्च ॥ ७३ ॥ पञ्चदश शाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् । स तैरिति पाठे स एष याज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति । जगृहुरधीतवन्तः । रविणाश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्तास्त्यक्ताः शाखा वाजसनीसंज्ञास्ताः शाखा इति वा ॥ ७४ ॥ सामशाखाविभागमाह—जैमिनेरिति । तत्सुतः सुमन्तुसुतः । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥ ७५ ॥ ॥ ॥

१ 'वाजिसन्यः' इति पाठः । २ 'सुतन्वांस्तत्सुत.' इति वीर० समतः पाठः । 'क्षुमन्वान्' इति च पाठः ।



1556

तच्छिष्यो जैमिनेः शिष्यः । महानतिमेधावी । सहस्रसंहितारूपं भेदं चक्रे । साम्नां तं संहिताभेदम् । ततस्तदनन्तरम् । सुकर्मणः शिष्य एकः कौशल्यो हिरण्यनाभः पौष्यञ्जिर्नामैकस्तौ जगृहतुः । आवन्त्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह ॥ ७६ ॥ ७७ ॥ पौष्यञ्ज्यावन्त्ययोरपि चकाराद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन् । ते तावतीः शाखा यथायथं जगृहुः । तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः । यथैवोक्तं वैष्णवे—'उदीच्यसामगाः शिष्यास्तस्य पञ्चशतं स्मृताः ॥ हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः ॥ गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः ॥' इति ॥ ७८ ॥ पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति—लौगाक्षिरिति द्वाभ्याम् ॥ ७९ ॥ कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे । शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊच इति ॥८०॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां

सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः[1] ॥ ७६ ॥ हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः ॥ शिष्यो जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याः सामगाः शिष्या आसन्पञ्चशतानि वै ॥ पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च[2] प्राच्यान्प्रचक्षते ॥ ७८ ॥ लौगाक्षिर्माङ्गलिः[3] कुल्यः कुशीदः[4] कुक्षिरेव च ॥ पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥ ७९ ॥ कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥ ८० ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ अथर्ववित्सुमन्तुश्च शिष्यमध्यापयत्स्वकाम्[5] ॥ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥ शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मञ्जाजलिश्चाप्यथर्ववित् ॥ २ ॥ बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ॥ अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथापरे ॥ ३ ॥ ॥

टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ॥ पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ १ ॥ क्रमप्राप्तमथर्ववेदविभागमाह—अथर्वविदिति । शिष्यं कवन्धनामानम् । स्वकां स्वकीयां संहिताम् । सोऽपि शिष्योऽपि तां द्विधा विभज्य । तदुक्तं वैष्णवे—'अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः ॥ शिष्यमध्यापयामास कवन्धं सोऽपि च द्विधा । कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् ॥' इति ॥ १ ॥ तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास । पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन—शौक्लायनिरिति ॥ २ ॥ अङ्गिरसः शुनकस्य शिष्यो बभ्रुः सैन्धवायनश्च । तदुक्तम्—'शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे ॥ द्वितीयां संहितां प्रादात्सैन्धवायनसंज्ञिने ॥' इति । सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः ॥ ३ ॥

१ 'द्विजाः' इति पाठः । २ 'तांश्चोदीच्यान्' इति पाठः । ३ 'लोकाक्षिर्लोङ्गलिः कल्पः' इति पाठः । ४ 'कुसीदः' इति पाठः । ५ 'स्विकाम्' इति पाठः ।

नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ । तदुक्तम्—'नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः ॥' इति । नक्षत्रकल्पादीनां कर्तारस्तत्तन्नामभिरुच्यन्ते ॥ ४ ॥ ५ ॥ मत्पितुर्मुखादिति । प्रथमं व्यासः षट्संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात् । तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयन्त । एतेषां षण्णां शिष्योऽहं ताः सर्वाः समधीतवान् ॥ ६ ॥ रामशिष्योऽकृतव्रणः । एवं चत्वारो वयम् । मूलसंहिता इत्यनेन ततः संहितानाहुल्यं सूचितम् ॥ ७ ॥ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति—पुराणेति ॥ ८ ॥ अस्य विश्वस्य 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥' इत्यत्रोक्ते स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते । अन्तराणि मन्वन्तराणि वंशो वंश्यानुचरितमितीशानुकथाः । संस्था निरोधः । अनेनैवात्यन्तिकलयरूपा मुक्तिरप्युक्ता । हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥ ९ ॥ दशभिरेतैर्लक्षणैर्युक्तं महापुराणं विदुः ।

नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥ ४ ॥ त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ॥ वैशंपायनहारीतौ षड्वै पौराणिका इमे ॥ ५ ॥ अधीयन्त व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ६ ॥ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः ॥ ७ ॥ पुराणलक्षणं ब्रह्मन्ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च ॥ वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥ ९ ॥ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतमात्रेन्द्रियार्थानां संभवः सर्ग उच्यते ॥ ११ ॥ पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥ १२ ॥

केचित्पञ्चविधम्—'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥' इति । महत्पुराणमल्पं चेति व्यवस्थया यत्र दशापि लक्षणानि पृथक् पृथङ्गिरूप्यन्ते तन्महापुराणम् । यत्र त्वन्येषां पंचस्वेवान्तर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिलक्षणानि व्याचष्टे—अव्याकृतेत्यादिना । अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद्यो महांस्तस्मात्त्रिवृदहंकारस्तस्माद्भूतमात्राणां सूक्ष्माणामिन्द्रियाणां च तदर्थानां च स्थूलानां देवतानां च संभवः सर्गः कारणसृष्टिसर्ग इत्यर्थः । उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषङ्गः ॥ ११ ॥ विसर्गं व्याचष्टे—पुरुषेणेश्वरेणानुगृहीतानामेतेषां महदादीनाम् । पूर्वकर्मवासनाप्रधानोऽयं समाहारः कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥ १२ ॥

१ विष्णुपुराणवाक्यमिदम् । तत्राद्या चैत्यम्—कल्पशब्दस्य प्रत्येकं संबन्धः । वेदकल्पः संहिताकल्प आङ्गिरसकल्प इति । नक्षत्रकल्पो नक्षत्रादिपूजाविधिः । वेदकल्पो वैतानिकब्राह्मत्वादिविधिः । संहिताकल्पः संहिताविधिः । अङ्गिरसकल्पोऽभिचारादिविधिः । शान्तिकल्पोऽश्वगजाद्यष्टादशमहाशान्त्यादिविधिरिति । २ अ॰ वेदशाखाविभाजनेन तत्प्रवर्तका इत्यर्थः । ३ 'शांशपायन', 'शिंशपायन' इति पाठौ । ४ ब्रह्मर्षिभिः शुकप्रवरणैकपात्मे नदुक्तं प्रायेण तदेवोपसंहारेऽप्युच्यते । ५ 'सर्गोऽस्य विसर्गश्च' इति विज० संमतः पाठः । ६ 'भूतसूक्ष्मेन्द्रिय' इति वीर० समतः पाठः । ७ 'यः समाहारः' इति पाठः । ८ 'जीवो जीवस्य चराचरः' इति विज० संमतः पाठः ।

चराणां भूतानां सामान्यतोऽचराणि चकाराच्चराणि च वृत्तिः । तत्र नृणा स्वेन स्वभावेन कामाच्चोदनयापि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः ॥ १३ ॥ तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावतारास्तेषामीहा लीला सा विश्वस्य रक्षोच्यत इत्यर्थः । यैरवतारैरिरिति समासान्निष्कृष्य कथंचित्संबन्धः । त्रयीद्विषो दैत्याः ॥ १४ ॥ षड्विधं मन्वन्तरमुच्यते । षड्विधत्वमेवाह—मनुरिति । मन्वादयः षडेते वर्गाः स्वस्वाधिकारेण यदा प्रवर्तन्ते तन्मन्वन्तरमित्यर्थः ॥ १५ ॥ वंशमाह—राज्ञामिति । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धानामित्यर्थः । तेषामन्वयो वंशः । तेषां वृत्तम् । ये च तद्वंशधरास्तेषां च वृत्तं वंशानुचरितमुच्यते ॥ १६ ॥ अस्य विश्वस्य । स्वभावतो मायातो निष्पन्नस्य । यद्वा, मायातो यश्चतुर्विधो लय इति ॥ १७ ॥ अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः सोऽत्र हेतुरुच्यत इत्यर्थः । तस्य निमित्ततामाह—अविद्यया कर्मकारकः कर्मकर्ता । जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः । नन्वनुशयी निमित्तमिति केचित्, अव्याकृतमित्यपरे, तत्राह—यमिति । चैतन्यप्राधान्येनानुशयिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥ १८ ॥ अपाश्रय-

वृत्तिर्भूतानि भूतानां चराणामचराणि च ॥ कृता[३] स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥१३॥ रक्षाच्युतावतारेहा विश्वस्यानुयुगे युगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥१४॥ मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥१५॥ राज्ञां ब्रह्म[४]प्रसूतानां वंशस्त्रैकालिकोऽन्वयः ॥ वंशानु[५]चरितं तेषां वृत्तं वंशधराश्च ये ॥१६॥ नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥ १७ ॥ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ॥यं[६] चानुशयिनं प्राहुरव्याकृतमुतापरे॥१८॥व्यतिरेका[७]न्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ॥ माया[८]मयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥१९॥ पदार्थेषु यथा द्रव्यं सन्मात्रं[९] रूपनामसु ॥ बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम्॥२०॥विरमेत यदा चित्तं हित्वा वृत्तित्र[१०]यं स्वयम् ॥ योगेन वा तदात्मानं वेदेहा[११]या निवर्तते॥२१॥

माह—व्यतिरेकेति । जाग्रदादिष्ववस्थासु जीवतया वर्तन्त इति जीववृत्तयो विश्व-तैजस-प्राज्ञास्तेषु मायामयेषु साक्षितयान्वयः समाध्यादौ च व्यतिरेको यस्य तद्ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥ १९ ॥ एतदेव सदृष्टान्तं प्रपञ्चयति—पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च वहिरप्यवस्थानात् । रूपनामसु च सन्मात्रं सत्तामात्रं यथा । एवं बीजं गर्भाधानमादिर्यासां पञ्चताऽन्तो यासां तासु देहावस्थासु नवस्वप्यधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥ २० ॥ एवं दशापि लक्षणानि व्याख्याय 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ॥ वर्णयन्ति महात्मानः' इति यदुक्तं तदाह—विरमेतेति । यदा सर्गादीनां मायामयत्वानुसंधानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत । इहैवानुष्ठितेन योगेन वा देवहूत्यादिवत् । तदा विक्षेपाभावादात्मानं वेद । तदा चाविद्यानिवृत्तेरीहायाः संसाररूपाया निवर्तेत इत्यर्थः ॥ २१ ॥ ॥ ॥

१ तेषां शुद्धानां राज्ञाम् । इदं च चकारेण लभ्यम् । २ प्रियव्रतध्रुवपृथ्वादयः । ३ 'कृतेशेन' इति पाठः । ४ 'मनुप्रसूतानां' इति पाठः । ५ 'वंश्यानुचरितं' इति पाठः । ६ 'यं वानुशायिनं' इति पाठः । ७ 'व्यतिरेकान्वयौ' इति पाठः । ८ 'मायामयासु' इति पाठः । ९ 'तन्मात्रं' इति पाठः । १० 'वृत्तित्रयाश्रयम्' इति पाठः । ११ 'वेदात्मा तन्निवर्तते', 'वैदेहाय निवर्तते', 'वेदनात्मा निवर्तते' इति पाठाः ।

पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासङ्गिकमुक्त्वा प्रस्तुतमाह—एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२ ॥ २३ ॥ त्रिषडष्टादश ॥ २४ ॥ उपसंहरति—ब्रह्मन्निति । मुनेर्व्यासस्य शिष्यादीनां च । ब्रह्मतेजो ब्रह्मवर्चसं तद्विवर्धनम् । श्रोतृणामिति शेषः ॥ २५ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ॥ कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥ पुराणविभागप्रसङ्गेन पुराणकर्तुर्मार्कण्डेयस्य चरितप्रश्नमाह—सूतेति । त्वमेव वक्तुं योग्य इत्याह—तमसि संसारे भ्रमतां पारदर्शनस्तन्निवर्तकः ॥ १ ॥ वक्तव्यमाह—आहुरिति । उर्वरितोऽवशिष्टः । येन कल्पान्तेन । एतत्कथं घटत इत्येकः प्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्न घटत इत्याह—स वा इति ।

एवंलक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥२२॥ ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥२३॥ भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥२४॥ ब्रह्मन्निदं[1] समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम्[2] ॥२५॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे सप्तमोऽध्यायः ॥७॥ ॥छ॥

॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतां वर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥१॥ आहुश्चिरायुषमृषिं मृकण्डतनयं जनाः ॥ यः कल्पान्ते उर्वरितो येन ग्रस्तमिदं जगत् ॥२॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्भार्गवर्षभः ॥ नैवाधुनापि भूतानां संप्लवः कोऽपि जायते ॥ ३ ॥ एक एवार्णवे भ्राम्यन्ददर्श पुरुषं[4] किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम्[5] ॥ ४ ॥ एष नः संशयो भूयान्सूत कौतूहलं यतः[6] ॥ तं नश्छिन्धि महायोगिन्पुराणेष्वपि संमतः ॥५॥ ॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः[7] ॥ नारायणकथा यत्र गीता कलिमलापहा ॥६॥ प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् ॥ छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥ ७ ॥

यतो भार्गवर्षभः । कोऽपि प्राकृतिको नैमित्तिको वा ॥ ३ ॥ अन्यदप्यघटितमेवेत्याह—एक एवेति । तोकं बालकम् ॥ ४ ॥ कौतूहलमौत्सुक्यम् । तं संशयम् । न केवलं त्वं महायोगी किंतु पुराणेष्वपि ज्ञातृत्वेन संमतः ॥ ५ ॥ प्रश्नमभिनन्दति—हे महर्षे । अयं प्रश्नः । तत्र हेतुः—नारायणेति । यत्र प्रश्नविषये ॥ ६ ॥ तत्र मार्कण्डेयस्तपसा भगवन्तमाराध्य मायाप्रदर्शनं वव्रे । ततश्च तेनैव भगवन्मायया सप्तकल्पा दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह—प्राप्त इत्यादिना । मार्कण्डेयो मृत्युं जिग्ये इति पञ्चमश्लोकेनान्वयः । मध्यमग्रन्थेन तस्य धर्मः कथ्यते । प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः । पितुः सकाशाद्गर्भाधानादिक्रमात् । छन्दांसि वेदान् ॥ ७ ॥ ॥ ॥

१ 'तपसि संशये' इति पाठः । २ 'ब्रह्मणैतत्' इति पाठः । ३ 'दिदीपनम्' इति पाठः । ४ पुरुषं पुरुषाकारम् । ५ 'अर्भकम्' इति पाठः । ६ 'महत्कौतूहलं यतः', 'जातं कौतूहलं' इति पाठौ । ७ 'लोकमलापहः' इति पाठः ।

बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥ ८ ॥ नियमर्द्धये धर्मवृद्धये अभ्यादिषु पञ्चसु हरिमर्चयन् ॥ ९ ॥ भैक्ष्यं गुर्वर्थमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे नो चेत्सकृत्कदाचिदुपोषितो भवति ॥१०॥११॥ तेन मृत्युजयेन ॥ १२ ॥ ध्वस्ताः क्लेशा रागादयो यस्य तेनान्तरात्मना प्रत्याहृतमनसा ॥१३॥१४॥ तस्य तपोनिष्ठामितिहासेन वर्णयति—एतदित्यादिना । अस्मिन्सप्तमे मन्वन्तरे । तपसा मत्पदं ग्रहीष्यतीति विशङ्कितः ॥ १५ ॥ मुनये मुनिं भ्रंशयितुम् । रजसस्तोकमतिप्रियमपत्यं लोभो मदश्च तौ ॥१६॥१७॥ तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । पुण्यैर्द्रुमैर्लताभिश्चाञ्चितं पूजितम् । पुण्यद्विजानामृषीणां कुलैराकीर्णम् ।

बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः ॥ बिभ्रत्कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥ कृष्णाजिनं साक्षसूत्रं
कुशांश्च नियमर्द्धये ॥ अग्न्यर्कगुरुविप्रात्मस्वर्चयन्संध्ययोर्हरिम् ॥ ९ ॥ सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥
बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥ १० ॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशं
जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः
॥ १२ ॥ इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशान्तरात्मना ॥ १३ ॥ तस्यैवं युञ्ज-
तश्चित्तं महायोगेन योगिनः ॥ व्यतीयाय महान्कालो मन्वन्तरषडात्मकः ॥ १४ ॥ एतत्पुरन्दरो ज्ञात्वा सप्तमेऽस्मि-
न्किलान्तरे ॥ तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥ गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ ॥ मुनये
प्रेषयामास रजस्तोकमदौ तथा ॥ १६ ॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या
च शिला विभो ॥ १७ ॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलताञ्चितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥
मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥ वायुः प्रविष्ट आदाय हिम-
निर्झरशीकरान् ॥ सुमनोभिः परिष्वक्तो ववावुत्तम्भयन्स्मरम् ॥ २० ॥ उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः ॥
गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥ २१ ॥ ॥ ॥ ॥

पुण्या अमला जलाशया यस्मिन् ॥ १८ ॥ मत्तभ्रमराणां सङ्गीतं यस्मिन् । मत्तकोकिलानां कूजितं यस्मिन् । मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन् । मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥ १९ ॥ एवंभूतं तदाश्रमपदं प्रविष्टः सन् वायुर्मलयानिलो ववौ प्रससार । उत्तम्भयन्नुद्दीपयन् । तत्र वृक्षेषु प्रवेशान्मान्द्यं हिमनिर्झरकणानामादानाच्छैत्यं पुष्पपरिष्वङ्गात्सौगन्ध्यं चोक्तम् ॥२०॥ किंच, उद्यंश्चन्द्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्मिन्सः । प्रवालस्तबकानामालयः श्रेणयो येषु तैः । गुप्यन्ति विटपैः संश्लिष्यन्तीति गोपा द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षित आविर्बभूव ॥ २१ ॥ ॥

१ 'नियमैर्युतः' इति पाठः । २ 'योगात्' इति पाठः । ३ 'शान्तयोगेन' इति पाठः । ४ पण्डितस्य पूर्वनिपाताभावो विशेषणविशेष्यभावव्यत्यासात् । ५ 'सोमसदौ' इति पाठः । ६ 'गायन् द्रुमलता' इति पाठः ।

किंच, तदा गीतवादित्रयूथकैर्गायकादिसमुदायिभिर्गन्धर्वैरन्वीयमानः । तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः । आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत ॥ २२ ॥ दुराधर्षमभिभवितुमशक्यम् ॥ २३ ॥ २४ ॥ शोषणदीपनसंमोहनतापनोन्मादनाख्यानि पञ्च मुखानि यस्य तदस्त्रं संदधे । तदैव मधुर्वसन्तः । रजस्तोकश्च । पुंस्त्वमापम् । अन्ये चेन्द्रभृत्यास्तस्य मनो व्यकम्पयन् ॥ २५ ॥ २६ ॥ किंच, वायुर्मलयानिलः पुञ्जिकस्थल्यास्तत्सूक्ष्मं वासो जहार ॥ २७ ॥ सर्वं तेषां कर्म । तत्र तस्मिन् । मोघं व्यर्थम् । अनीशस्य निर्दैवस्य ॥ २८ ॥ मुनेरपकुर्वन्तः प्रतिकूलमाचरन्तः । हे मुने

अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥ २२ ॥ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिङ्कराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥ २३ ॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥ संदधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा ॥ मधुर्मनो रजस्तोक इन्द्रभृत्या व्यकम्पयन् ॥ २५ ॥ क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥ इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम् ॥ वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥ त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥ इतीन्द्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥ दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥ तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥ तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥ पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ॥ तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥ ॥ ॥

॥ २९ ॥ अहमोऽहंकारस्य । भावं विकारम् ॥ ३० ॥ निस्तेजसं म्लानवदनम् । स्वराडिन्द्रः ॥ ३१ ॥ नरनारायणरूपो हरिः ॥ ३२ ॥ तावनुवर्णयति द्वाभ्याम्—ताविति । रौरवं कृष्णाजिनं वल्कलं चाम्बरं ययोस्तौ । पवित्रे पाण्योर्ययोस्तौ । त्रिवृत्त्रिगुणं नवतन्तुकमिति वा त्रिवृद्बहिः पवमानमित्यादौ नवके प्रयोगात् । उपवीतकादीन्दधानौ ॥ ३३ ॥ वेदं दर्भमुष्टिं । किंच, साक्षात्तप एव तौ । तत्र हेतुः—तपत्तडिद्वर्णं देदीप्यमानविद्युत्संकाशं यत्पिशङ्गं रोचिस्तेन रूपिणौ मूर्तिमन्तौ । तादृक्तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ ॥ ३४ ॥ ॥ ॥

१ 'मधुर्मदः' इति पाठः । २ 'ततो बाणं' इति पाठः । ३ सूक्ष्मकीटपिपीलिकादिमार्जनम् । तत्र नानातन्तुग्रन्थनिर्मितश्चामरविशेष इति केचित्, अपरे तु वस्त्रखण्डमिति, अन्ये तु जन्तूना मार्जनं येन तथाविधं वेदं चेति वेदविशेषणतया व्याचख्युः । ४ 'एकरूपिणौ' इति पाठः । ५ प्रांशू प्रगता व्याप्ता अंशवो ययोस्तौ ।

उच्चैर्महतादरेण ॥ ३५ ॥ तयोः संदर्शनेन य आनन्दस्तेन निर्वृता उपशान्ता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः । न सेहे नाशक्नोत् ॥ ३६ ॥ आश्लिषन्नालिङ्गन्निव ॥ ३७ ॥ पादयोरवनिज्य पादौ प्रक्षाल्य । अर्हणेनार्घ्येण ॥ ३८ ॥ पादाभ्यां पादावानम्य । गरिष्ठौ पूज्यतमौ तौ प्रति ॥ ३९ ॥ अन्तर्यामिणस्तस्यैव प्राणादिप्रवर्तकत्वादात्मनः सुतावस्वातन्त्र्यं पश्यन्नाह—किमिति । तव त्वां किमहं वर्णये कथं स्तौमि । यद्येन त्वयैवोदीरितः प्रेरितोऽसुः प्राणः संस्पन्दते प्रवर्तते तमनु च वागादयः स्पन्दन्ति । अत्र हेतुः—वै अन्वयव्यतिरेकाभ्यां 'श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतिभिश्चैतत्प्रसिद्धमित्यर्थः । न केवलं प्राकृतानां तनुभृतां किंत्वजशर्वयोश्चातः स्वस्य ममापि तथैव । एवं यद्यपि न कस्यापि स्वातन्त्र्यमथापि दारुयन्त्रवत्त्वत्प्रवर्तितैरपि वागादिभिर्भजतां पुंसां भाववन्धुरात्मबन्धुरसि, नतु पित्रादिवद्देहमात्रबन्धुः । अहो कृपालुता तवेत्यर्थः ॥ ४० ॥ ननु कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत्त-

ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥ स तत्संदर्शनानन्द-निर्वृतात्मेन्द्रियाशयः ॥ हृष्टरोमाऽश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥ उत्थाय प्राञ्जलिः प्रह्व औत्सुक्या-दाश्लिषन्निव ॥ नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्ह-णेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ॥ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥ ॥ मार्कण्डेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि ॥ स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ ४० ॥ मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुन-र्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥ तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरजः स्पृशन्ति ॥ यद्वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥ ॥

त्राह—मूर्ती इति । हे भगवन्, भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःखनिवृत्त्यै मृत्युजित्यै मोक्षाय, नतु त्वं कस्यापि पुत्र इत्यर्थः । अत्र दृष्टान्तः—यथेदं विश्वमवितुमन्यास्तनूर्मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि तद्वत् । न केवलं पालनमात्रं तव कर्म किंतु सृष्टि-लयावपीत्याह—सृष्ट्वेति । तत्राप्यन्यनिरपेक्षत्वे दृष्टान्तः—ऊर्णनाभिरिवेति ॥ ४१ ॥ यस्मादेवंभूतस्त्वं तस्मात्तवाङ्घ्रिमूलं भजामीत्याह—तस्येति । तस्या-वितुः पालकस्य स्थावरजङ्गमानामीश्वरस्याङ्घ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषङ्गः । कथंभूतमङ्घ्रिमूलम् । यत्स्थं यत्र स्थितम् । कर्मगुणकालानां रजो-मलम् । अन्ये च पूर्वोक्तास्तापादयो न स्पृशन्ति । 'रुजः' इति वा पाठः । यतो वेदो हृदये येषां ते वेदतात्पर्यविदो मुनयो यदेव स्तुवन्ति नितरां नमन्ति तदाप्त्यै तत्प्राप्तये एव स्तवनादि कुर्वन्ति ॥ ४२ ॥ ॥ ॥ ॥

१ भावेन भक्त्या बन्धुः स्निग्धोऽस्ति । २ इदं च बहुवचनोपपत्तये पूरितम् ।

यतोऽन्यः पुरुषार्थो नास्तीत्याह—नान्यमिति । अङ्घ्र्युपनयाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः । परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य । तदेवाह—द्विपरार्धं धिष्ण्यं स्थानं यस्य स ब्रह्मापि ते कालस्य त्वद्भ्रूविजृम्भरूपात्कालादलं बिभेति । अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति ॥४३॥ यस्मादेवं तत्तस्मात्तव पादमूलं भजामि । कथंभूतस्य । ऋतधियः सत्यज्ञानस्वरूपस्य । यद्वा, सत्या धीर्यस्य यस्मिन्वा तस्यात्मगुरोर्जीवनियन्तुरतः कारणात्परस्य । किं कृत्वा । आत्मच्छदि स्वात्मावरकमपार्थं च निष्फलमसच्च तुच्छमन्यं च नश्वरमिदं देहादि हित्वा देहादिभजनं त्यक्त्वा । असच्चेत्कथं प्रतीयेत तत्राह—अभिज्ञमात्रम् । नह्यत्यन्तमसत्, किंत्वात्ममात्रम् । न ततः पृथगस्तीत्यर्थः । नन्वपवर्गाय भवतु मद्भजनम्, फलान्तरार्थं त्वन्यभजनं कार्यमेव तत्राह—तर्हीति । यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विन्देतेति ॥ ४४ ॥ ननु ब्रह्मरुद्रावपि ममैव मूर्ती, अतो मामेव

नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय ईश विद्मः ॥ ब्रह्मा बिभेत्यलमतो द्विपरार्धधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं विन्देत ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥ सत्त्वं रजस्तम इतीश तवात्मबन्धो मायामयाः स्थितिलयोदयहेतवोऽस्य ॥ लीला धृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥ तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ॥ यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥ तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदैवताय ॥ नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ॥ तन्माययावृतमतिः स उ एव साक्षादाद्यस्तवाखिलगुरोरुपसाद्य वेदम् ॥ ४८ ॥ ॥

किमत्यन्तमाद्रियमे तत्राह—सत्त्वमिति । यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशान्त्यै मोक्षाय न केवलमस्य प्रशान्त्यभावमात्रमन्यभजने किंत्वनिष्टं च भवेदित्याह—व्यसनेति ॥ ४५ ॥ तदेव सदाचारेण द्रढयति—तस्मादिति । हे भगवन्, तव शुक्लां तनुं श्रीनारायणाख्याम् । अथ तावकानां च शुक्लां तनुं नराख्याम् । यद्यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशन्ति मन्यन्ते, नत्वन्यद्रजस्तमश्चेति । अत्र हेतुः—यतः सत्त्वाल्लोको वैकुण्ठाख्यो लोकत्वे सत्यप्यभयं च भोगे सत्यप्यात्मसुखं च ॥ ४६ ॥ अतस्तं प्रणमति—तस्मै नम इति । हंसाय शुद्धाय । संयतगिरे नियतवाचे । अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥ ४७ ॥ वेदार्थसंप्रदायप्रवर्तने हेतुत्वं वदन् स्तौति—यमिति । वितथाक्षपथैः कपटेन्द्रियमार्गैर्भ्रमद्धीर्विक्षिप्तबुद्धिः पुमान्स्वेन्द्रियादिषु नियन्तृत्वेन सन्तमपि यं त्वां न वेद । दृक्पथेषु विषयेषु । बुद्धिविक्षेपे हेतुः—तन्मायया तस्य तवैव मायया

१ तद्वै इति तैः । अभिज्ञमात्रमित्यस्य टीकायामात्ममात्रमिति । आत्मन्यधिष्ठाने भ्रमादेव प्रतीतिर्यस्य तदित्यर्थः । २ 'परदेवतायै' इति पाठः । ३ 'स्वखेषु हृदयेऽपि च' इति पाठः । ४ 'त्वन्मायया' इति पाठः । ५ 'उपपद्य' इति पाठः । ६ अत्र 'अनिष्टं चाकिंचिदन्यथात्वे भवेदिति, किं त्वनिष्टं च । किं तदनिष्टं भवेत्तत्राह' इति च पाठः ।

आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविद्वानेवाखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥ ४८ ॥ वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति—यस्य तव दर्शनं निगमे भवति । कथंभूतम् । आत्मनस्तव रहो रहस्यं तस्य प्रकाशकम् । अन्यथा दुर्ज्ञेयतामाह—अजपरा ब्रह्ममुख्याः कवयोऽपि सांख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति । कुत इत्यत आह—सर्वेषां सांख्यादिवादिनां ये वादास्तेषां विषया भेदादयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम् । कुतः । आत्मना देहादिसंघातेन निगूढो बोधो यस्य तम् । एवंभूतं महापुरुषं त्वां वन्दे ॥ ४९ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायामष्टमोऽध्यायः ॥८॥ ॥छ॥ ॥ नवमे भगवन्मायादिदृक्षोर्दर्शनं मुहुः ॥ मायाशिशोर्लयाब्धौ

यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ॥ तं सर्ववादविषयप्रतिरूपशीलं वन्दे महापुरुषमात्मनिगूढबोधम् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥

॥ सूत उवाच ॥ संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ॥ नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना ॥ मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥ वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ॥ वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥ ॥ ऋषिरुवाच ॥ जितं ते देवदेवेश प्रपन्नार्तिहराच्युत ॥ वरेणैतावतालं नो यद्भवान्समदृश्यत ॥ ४ ॥ गृहीत्वाजादयो यस्य श्रीमत्पादाब्जदर्शनम् ॥ मनसा योगपक्वेन स भवान्मेऽक्षगोचरः ॥ ५ ॥ अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे ॥ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥ ६ ॥ ॥ सूत उवाच ॥ इतीडितोऽर्चितः काममृषिणा भगवान्मुने ॥ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः ॥ ७ ॥ तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

च मुनेर्निर्वेशनिर्गमैः ॥ १ ॥ भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह—संस्तुत इत्यादिना ॥ १ ॥ आत्मसमाधिना चित्तैकाग्र्येण ॥ २ ॥ वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनं द्वयोरैक्याभिप्रायेण । प्रतीच्छ गृहाण ॥ ३ ॥ वरेण च्छन्दयता त्वया जितमुत्कर्षो दर्शितः । मम तु वराकाङ्क्षा नास्तीत्याह—वरेणेति ॥ ४ ॥ यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा प्राप्य कृतार्था अजादयो भवन्ति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतः परं वरेणेत्यर्थः ॥ ५ ॥ द्रक्ष्ये द्रष्टुमिच्छामि । लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम् ॥ ६ ॥ तथेति द्रक्ष्यसीति । स ईश्वरः स्मयन्प्रागात् । पाठान्तरे क्रियाविशेषणम् ॥ ७ ॥ तमेवार्थं मायादर्शनरूपम् । अग्न्यादिमूर्तिषु ॥ ८ ॥ ॥

१ आद्यो वेदप्राप्तेः पूर्वावस्थापन्नोऽर्थादविद्वानेवेत्यर्थः । 'आद्यः' इत्यत्र 'आज्ञः' इति मूले टीकायां च पाठः । तत्रातिशयेनाज्ञः आज्ञ इत्यर्थः । स्वार्थिकोऽण् वा बोध्यः । २ 'वन्दामहे' इति पाठः । ३ 'वर्योऽसि' इति पाठः । ४ तपःस्वाध्यायसंयमैर्थं आत्मसमाधिश्चित्तैकाग्र्यं तेन या अनपायिनी भक्तिस्तया विरुद्धोऽसीत्यन्वयः । ५ अजादयोऽपि कृतार्था भवन्तीति शेषः । ६ 'प्राप्य प्राकृता अप्यजादयः' इति पाठः । ७ 'सस्मयम्' इत्येवंरूपे इति भावः ।

१४६३

भावद्रव्यैर्मनोमयैर्द्रव्यैः । क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकं प्राप्तः ॥ ९ ॥ मायादर्शनमाह—तस्यैत्यादिना ॥ १० ॥ तं वायुमनु वलाहका मेघा अभवन्नाविर्बभूवुः । ते च तडिद्भिः सहिता उच्चैः स्वनन्तो गर्जन्तः । अक्षो रथाङ्गं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥ चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगेनोर्मयस्तैर्भूतलं ग्रसन्तः । उग्रा नक्रा येषु, महाभया आवर्ता येषु, गभीरो घोषो येषु, ते च ते च ते च ॥ १२ ॥ आत्मना सह जरायुजादिचतुर्विधं जगदन्तर्बहिश्चोपतापितं वीक्ष्य । क्ष्मां जलाप्लुतां वीक्ष्य । मुनिः समत्रसद्भयं प्राप । केनोपतापितम् । अद्भिः । कथंभूताभिः । अतित्विड्भिरतिक्रान्ता

ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ॥ ९ ॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः ॥ उपासीनस्य सन्ध्यायां ब्रह्मन्वायुरभून्महान् ॥ १० ॥ तं चण्डशब्दं समुदीरयन्तं वलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥ ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥ अन्तर्बहिश्चाद्भिरतित्विड्भिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥ तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणो वरषद्भिरम्बुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥ सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥ क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वताहतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥ क्वचिन्मग्नो महावर्ते तरलैस्ताडितः क्वचित् ॥ यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥ क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ॥ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥ १९ ॥ स कदाचिद्भ्रमंस्तस्मिन्पृथिव्याः ककुदि द्विजः ॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥ ॥

द्यौर्याभिः । खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः । दीर्घत्वमार्षं छन्दोनुसारेण ॥ १३ ॥ प्रभञ्जनेनाघूर्णितं प्रकम्पितं वाः उदकं यस्मिन् सः । अप्यधाच्छादयामास । समं सह ॥ १४ ॥ सक्ष्मान्तरिक्षं भूम्यन्तरिक्षस्थप्राणिसहितम् । सदिवं स्वर्गस्थदेवसहितम् । भागणा ज्योतिर्गणास्तैः सहितम् । जटा विक्षिप्य विकीर्य ॥ १५ ॥ परिश्रमेण इषितो गतः प्राप्त इत्यर्थः । इषु सर्पणे इत्यस्मात् ॥ १६ ॥ अन्योन्यघातिभिर्लङ्घक्षणाय परस्परं युध्यद्भिः ॥ १७ ॥ १८ ॥ विष्णुमायावृतात्मन इति स तथा दृष्टवानित्यर्थः ॥ १९ ॥ ककुद्युन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥ ॥ ॥१८॥

१ वीचियुक्तेन नभस्वता आहतः प्राप्ताघातः परिश्रमेण इषितो व्याप्तः, 'इष गतौ' इत्यस्मात्। २ 'गां द्यां च' इति पाठः। ३ 'मग्नः' इति पाठः। ४ 'तरङ्गैः' इति पाठः। ५ 'उपद्रुतः' इत्यपि पाठः।

तस्येशानदिक्शाखायां शिशुमपि ॥ २१ ॥ श्रीमद्रम्यं वदनपङ्कजं यस्य तम् । कम्बुवत्त्रिरेखावृता ग्रीवा यस्य तम् । महोरस्कं विशालवक्षसम् । सुनासं शोभना नासा यस्य तम् । सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजन्तः कम्पमाना अलकास्तैराभातं शोभितम् । कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् । विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥ २३ ॥ पद्मगर्भवत् आ ईषदरुणावपाङ्गौ नेत्रप्रान्तौ यस्य तत् । हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम् । श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यङ्ग्निम्नरेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिंस्त-द्दलवदश्वत्थपत्रसंकाशमुदरं यस्य तम् ॥ २४ ॥ चारवोऽङ्गुलयो ययोस्ताभ्यामुन्नीयाकृष्य धयन्तं पिबन्तम् ॥ २५ ॥ हृत्पद्मं च विलोचनाम्बुजे च प्रोत्फु-

प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ॥ शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥ महामरकत-
श्यामं श्रीमद्वदनपङ्कजम् ॥ कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥ श्वासैजदलकाभातं कम्बुश्रीकर्ण-
दाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥ पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ॥ श्वासै-
जद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥ चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ॥ मुखे निधाय
विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ॥ प्रहृष्ट-
रोमाद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥ तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं
मशको यथाविशत् ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥ खं रोदसी
भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ॥ वनानि देशान्सरितः पुराकरान् खेटान्व्रजानाश्रम-
वर्णवृत्तयः ॥ २८ ॥ महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहार-
कारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीन-
पश्यत् ॥ विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥ ॥ ॥

ल्लानि तानि यस्य सः । अद्भुतभावोऽत्याश्चर्यरूपं तेन शङ्कितः सन्नपि तं प्रष्टुं पुरः प्रससार समीपं गतः ॥ २६ ॥ अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चातीव विस्मितः सन्नमुह्यत ॥ २७ ॥ कृत्स्नशो दर्शनं प्रपञ्चयति—खमित्यादिना । ककुभो दिशः । पुराण्याकरांश्च । खेटान् कर्पकग्रामान् । व्रजान् गोकुलानि । आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति तथा तं कालं च । सदिव परमार्थं इवावभासितं तेनैव ॥ २९ ॥ ३० ॥ ॥ ॥ ॥ ॥

१ नच्चरणाम्बुजे कीदृश मधु वर्तते, यत एतदास्वादनार्थं वहवो भक्ताः प्रयतन्ते तस्मादिदमहमप्यास्वाद्य परिचेष्य इतीव धयन्तमिति चक्र० । २ स मार्कण्डेयः दिवा दिवस एव अवभासित प्रकाशरूप ददर्श इति 'स दिवावभासितम्' इति पदविश्लिष्टपाठेऽर्थान्तरम् ।

वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् । अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति द्वयोरन्वयः । कथंभूतम् । नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३१ ॥ ३२ ॥ तावत्परिष्वङ्गलाभात्पूर्वमेव ऋषेस्तस्यान्तर्हितो बभूव । तदुद्यमवैफल्ये दृष्टान्तः—अनीशो निर्दैवस्तेन निर्मिता ईहा क्रीडा यथेति ॥ ३३ ॥ अन्तर्हितं भगवन्तमनु वटः सलिलं लोकसंप्लवश्च तिरोधाय्यन्तर्हितः । स च स्वाश्रम एव यथापूर्वं स्थित इति ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां नवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ॥ तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥ १ ॥ १ ॥ ज्ञानकाशया ज्ञानवत्प्रकाशमानया । त्वद्भजनं विना विद्वांसोऽपि

तस्मिन्पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ॥ अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥ तावत्स भगवान्साक्षाद्योगाधीशो गुहाशयः ॥ अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥ तमन्वथ वटो ब्रह्मन् सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे मायादर्शनं नाम नवमोऽध्यायः ॥९॥ ॥७॥ ॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥ ॥ मार्कण्डेय उवाच ॥ प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्मायायापि विबुधा मुह्यन्ति ज्ञानकाशया ॥२॥ ॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥ अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन्विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥ निभृतोदझषव्रातं वातापाये यथार्णवम् ॥ कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥ ॥ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान्पुरुषेऽव्यये ॥ ६ ॥ अथापि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥ ॥ ॥

यस्य तव मायया ज्ञानिनो वयमित्यहंकारेण विमुह्यन्तीत्यर्थः ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रान्तं शिवरूपेण सान्त्वयामास, तदाह—तमेवमित्यादिना । निभृतात्मानं समाहितचित्तम् । रुद्राण्या भवान्या ॥ ३ ॥ निभृता निश्चला आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य तम् ॥ ४ ॥ निभृतं निश्चलमुदकं झषव्रातश्च यस्मिंस्तम् । संसिद्धिं फलं साक्षात्कुरु प्रकटीकुरु । यतो भवान्सिद्धिदः ॥ ५ ॥ आशिषोऽभ्युदयलक्षणाः । उत निश्चितम् । अत्र हेतुः—भक्तिमिति ॥ ६ ॥ संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥ ॥ ॥ ॥

१ असमर्थनिर्मिता ईहा वाञ्छा यथा सद्योऽन्तर्धत्ते तद्वत् । २ 'निभृतोदझषव्रातः' इति पाठः, स चोपमानोपमेययोर्विरुद्धविभक्तिकत्वादयुक्तः ।

सतां गतित्वे हेतुः—ईशान इति ॥ ८ ॥ रुद्धा धियोऽन्तःकरणस्य वृत्तयो येन सः ॥ ९ ॥ १० ॥ न केवलं वहिरेवात्मन्यपि प्राप्तं शिवं विचक्ष्य विस्मितः । कथं प्राप्तम् । सहसाकस्मादेव हृदि भातम् । कथंभूतम् । तडिद्वत्पिशङ्गा जटा धारयतीति तथा तम् । त्रीण्यक्षीणि यस्य तम् । शूलादिभिः सहाक्षमालादीन्बिभ्राणमित्यन्वयः । अक्षमालादीनां द्वन्द्वैक्यम् ॥ ११ ॥ १२ ॥ विस्मयपूर्वकं वहिर्दर्शनमाह—किमिदमिति ॥ १३ ॥ सोमया उमया सहागतं रुद्रं ददृशे । ततो ननाम ॥ १४ ॥ १५ ॥ पूर्णकामत्वं व्यनक्ति—येन त्वया जगन्निर्वृतं भवतीति ॥ १६ ॥ निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति—नमः

॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान्स[2] सतां गतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥ भगवांस्तदभिज्ञाय गिरीशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥१०॥ आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥ [3]व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः ॥ अक्षमालाडमरुककपालासिधनुःसह ॥१२॥ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥१३॥ नेत्रे उन्मील्य ददृशे सगणं सोमयागतम्[1] ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ १४ ॥ तस्मै सपर्यां व्यदधात्सगणाय सहोमया ॥ स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ॥ १५ ॥ आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥ नमः शिवाय शान्ताय सत्त्वाय[5] प्रमृडाय च ॥ [4]रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥ ॥ सूत उवाच ॥ एवं स्तुतः स भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥ ॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम् ॥ १९ ॥ ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः ॥ एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥ सलोका लोकपालास्तान्वन्दन्त्यर्चन्त्युपासते ॥ अहं च भगवान्ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥ ॥

शिवाय निर्गुणाय । सत्त्वाय सत्त्वाधिष्ठात्रे । अत एव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७ ॥ १८ ॥ नोऽस्मत्तः त्रयो ब्रह्मविष्णुमहेश्वराः । यद्येभ्यः । ते वयम् ॥ १९ ॥ वरदानादिना भवत्सेवैवास्माभिः क्रियते, नत्वनुग्रहो जगद्वन्द्यत्वाद्भवतामिति ब्राह्मणान्स्तौति—ब्राह्मणा इत्यादि । ये साधवः सदाचाराः । शान्ता मत्सरादिरहिताः । निःसङ्गा निष्कामाः ॥ २० ॥ न केवलं त एव, किंत्वहं चेत्यादि ॥ २१ ॥ ॥ ॥

१ सः उमयेति छेदः । स मुनिः । सोऽचि लोपे चेदिति सलोपः । २ क्वचित् 'सात्वतां गतिः' इति मूले, 'सात्वतां सतां गतित्वे हेतुः' इति टीकायां च पाठः । क्वचिच्च 'सात्वतां पतिः' इत्यपि पाठः । ३ इह 'व्याघ्रचर्माम्बर शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह' इति पाठः । तत्राक्षमालादीनां द्वन्द्वैक्ये पुंस्त्वानुपपत्तिः । आर्षं वा पुंस्त्वं कल्पनीयम् । ४ 'रजोजुषेऽतिघोराय' इति, 'अथाघोराय' इति च पाठौ । ५ सत्त्वाय ज्ञानवर्धकगुणशालिने ।

पूज्यतमत्वे हेत्वन्तरमाह—नेति । अण्वप्यणुमात्रमपि । न चक्षते न पश्यन्ति । तत्तस्मादेवंभूतान्युष्मान् ईमहि भजेम ॥ २२ ॥ २३ ॥ ब्राह्मणेभ्यो ब्राह्मणान् । आत्मसमाधानं चित्तैकाग्र्यम् । तप आलोचनम् । स्वाध्यायोऽध्ययनम् । संयमो वागादिनियमस्तैः ॥ २४ ॥ किंच, श्रवणादित्यादि ॥ २५ ॥ चन्द्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नातृप्यदलमिति नामन्यत । कर्णयोरमृतायनमिति वान्वयः ॥ २६ ॥ शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य सः ॥ २७ ॥ इयं लीला दुर्विभाव्याऽवितर्क्या । यद्यया ईशितव्यानि स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः । स्वयं नमन्ति स्तुवन्ति चेति ॥ २८ ॥ अथवा लोकसंग्रहमात्रमेतदित्याह—धर्ममिति । प्रवक्तारोऽपि यत्स्वयं देहिनां धर्मं ग्राहयितुमाचरन्ति ॥ २९ ॥ नन्वेतत्स्वप्रभाव-

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ॥ नात्मनश्च जनस्यापि तद्युष्मान्वयमीमहि ॥ २२ ॥ नह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २४ ॥ श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ॥ शुध्येरन्नन्त्यजाश्चापि किमु संभाषणादिभिः ॥२५॥ ॥ सूत उवाच ॥ इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २६ ॥ स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥२७॥ ॥ ऋषिरुवाच ॥ अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥ २८ ॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च ॥ २९ ॥ नैतावता भगवतः स्वमायामयवृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥३०॥ सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥ ३१ ॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥ कं वृणे नु परं भूमन्वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत् ॥ ३३ ॥ ॥

तिरस्कारकं कथं मया क्रियते तत्राह—नैतावतेति । एतावता लोकसंग्रहमात्रेण । तैर्नमनादिभिः कथंभूतैः । स्वमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न दुष्येत । यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि । अतस्तस्य यथा कुहकैरात्मानुभावो न दुष्यति तद्वत् । प्रदुष्येतानुभाव इति पाठे नकारस्य दृष्टान्तेऽप्यनुषङ्गः ॥ ३० ॥ मायाचेष्टितं प्रपञ्चयति—सृष्ट्वेति । स्वप्नदृग्यथेत्यविद्या चेष्टिते दृष्टान्तः ॥ ३१ ॥ त्रिगुणत्वेऽपि न जीववत्तदभिभूताय किंतु गुणानामात्मने नियन्त्रे ॥३२॥ 'वरं वृणीष्व' इति यदुक्तं तत्राह—कमिति । वरं दर्शनं यस्य तस्मात् त्वत्तः परं कं नु वरं वृणे । यस्य तव दर्शनादवलोकनात्पूर्णकामः सर्वानन्दसंदोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानन्दः ॥ ३३ ॥ ॥ ॥ ॥

१ इत्थमेव चतुर्थेऽपि—'अथ भागवता यूयं प्रियाः स्थ भगवान्यथा । न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥' इति । २ 'ईश्वरचर्येयं' इति पाठः । ३ स्वेषु भक्तेषु या माया कृपा तन्मयवृत्तिभिरिति क्रम० । ४ अविद्यया स्वप्नं सृजतो जीवस्यापि वस्तुतस्तत्संबन्धो नास्ति, किमुतेश्वरस्येति तात्पर्यम् ।

॥ ३४ ॥ वरदानाय स्वयमेव प्रवृत्तः शर्वयोमया चाभिनन्दितोऽनुमोदितः सन्नाह ॥ ३५ ॥ कामोऽयं सर्वोऽप्यन्यच्च यत्पुण्यं यश इत्यादिब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः । यतस्त्वमधोक्षजे भक्तिमान् ॥३६॥३७॥ तस्य कर्म तपआदि । अमुना पुरानुभूतं यद्भगवन्मायावैभवं तच्च कथयन् ॥३८॥ अवाप्तो महायोगमहिमा येन सः ॥ ३९ ॥ एतन्मार्कण्डेयस्य चरितं तेनानुभूतं च भगवन्मायावैभवं तेऽनुवर्णितम् ॥ ४० ॥ नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुद्धमेव तत्राह—एतन्मार्कण्डेयेनानुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं, नतु सर्वसाधारणम् । एतत्केचिदनादिबहुकालमावर्तितं दैवयुगसहस्रद्वयमानेन पुनःपुनः परिवर्तितं प्रचक्षते । के ते । नृणां संसृतिं सर्गप्रलयादिलक्षणामात्मनो भगवतो मायेत्येव-

वरमेकं वृणेऽथापि पूर्णात्[1]कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥ ॥ सूत उवाच ॥ इत्यर्चितो[2]ऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवान् शर्वः शर्वया चाभिनन्दितः ॥ ३५ ॥ कामो[3] महर्षे सर्वोऽयं भक्तिमांस्त्वमधोक्षजे ॥ आकल्पान्ताद्यशः पुण्यमजरामरता तथा ॥ ३६ ॥ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विरक्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यतास्तु ते ॥ ३७ ॥ ॥सूत उवाच॥ एवं वरान्स मुनये दत्त्वागात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुरा[4]ऽमुना ॥ ३८ ॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः ॥३९॥ अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः ॥ अनुभूतं भगवतो मायावैभवमद्भुतम् ॥४०॥ एतत्केचिदविद्वांसो मायासंसृति[5]मात्मनः ॥ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥४१॥ य एवमेतद्भृगुवर्य वर्णितं रथाङ्गपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादु तावुभौ[6] तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ शौनक उवाच ॥ अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् ॥ समस्ततन्त्रराद्धान्ते भवान्भागवत[7] तत्त्ववित् ॥ १ ॥ ॥

मविद्वांसः । विद्वांसस्तु मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणेति वदन्ति, अतो न विरोध इत्यर्थः ॥ ४१ ॥ संशृणुयात् । उ इति हर्षे । संश्रावयेद्वा । यौ तावुभौ । तयोः कर्मवासनाकृता संसृतिर्न भवेदिति ॥ ४२ ॥ ॥ इति श्रीमद्भा० द्वादशस्कन्धे भावार्थदीपिकायां टीकायां दशमोऽध्यायः ॥१०॥ ॥छ॥ ॥ एकादशे तु पूजार्थं महापुरुषवर्णनम् ॥ रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥१॥ येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः ॥ तं पृच्छति क्रियायोगं साङ्गोपाङ्गादिकल्पितम् ॥ २ ॥ अथेति । हे भागवत, यतो भवान् सन्समस्ततन्त्रराद्धान्ते तत्त्वविद्रहस्यज्ञः ॥१॥

१ स्वय पूर्णादत एव भक्तेषु कामाभिवर्षणात्त्वत्त इत्यर्थः । २ 'इत्यर्थितः' इति पाठः । ३ 'कामस्तेऽयं महर्षेऽस्तु' इति पाठः । ४ 'पुरा मुनेः' इति मूले टीकायां च कचित् पाठः । ५ 'संसृतिरात्मनः' इति पाठो मूले टीकायां च कचित् । ६ तावुभौ कृतार्थाविति शेष इति वाल० । तावुभौ तुल्याविति शेष इति चक्र० । ७ 'भगवान्भावतत्त्ववित्' इति मूले, टीकायां च 'यतो भगवान् भवान् भावतत्त्वविद्रहस्यज्ञ' इति पाठः ।

प्रष्टव्यमाह—तान्त्रिका इति । परिचर्यायामुपासनायां विषये । केवलस्य चैतन्यघनस्य । अङ्गानि पादादीन्युपाङ्गानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पाः कौस्तुभादयस्तेषां द्वन्द्वैक्यम् । तद्यथा कल्पयन्ति यैश्च तत्त्वैः कल्पयन्ति तन्नो वर्णयेति ॥२॥३॥ गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह—नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः ॥४॥ अङ्गादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यथा कल्पयन्तीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं विराड्विग्रहमाह—मायाद्यैः प्रकृतिसूत्रमहदहंकारपञ्चतन्मात्रैर्नवभिस्तत्त्वैः । विकार एकादशेन्द्रियाणि पञ्च महाभूतानीति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः । यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेनाङ्गादिकल्पनासौलभ्यं दर्शितम् ॥ ५ ॥ एतद्वै पौरुषं रूपम् । पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात्तदभेद-

तान्त्रिकाः परिचर्यायां केवलस्य श्रियःपतेः ॥ अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथा च यैः ॥ २ ॥ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ॥ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम्[1] ॥ ३ ॥ ॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥ मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् ॥ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ॥ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥ प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥ ७ ॥ लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः[2] ॥ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥ ८ ॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १० ॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् ॥ वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ ११ ॥ बिभर्ति सांख्यं योगं च देवो मकरकुण्डले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥ १२ ॥ अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥ ॥

विवक्षया तस्य रूपमुच्यते । अङ्गकल्पनामाह—भूः पादावित्यादित्रिभिः । भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥ प्रजननं मेढ्रम् । अपानः पायुः ॥ ७ ॥ ८ ॥ अनुक्तमन्यदप्येवमूह्यमित्याह—यावानयं व्यष्टिः पुरुषः स्वमानतः सप्तवितस्तिः । संस्थयावयवसंनिवेशेन मितः परिमितः ॥ ९ ॥ भूषणादीन्याह—कौस्तुभेत्यादिना । स्वात्मज्योतिः शुद्धं जीवचैतन्यम् । या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥ १० ॥ त्रिवृत्स्वरं त्रिमात्रं प्रणवम् ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥ १२ ॥ अव्याकृतं प्रधानम् । यदधिष्ठितोऽधिष्ठाय स्थितः । तदासनभूतं पद्मं मत्तं सत्त्वगुणः ॥ १३ ॥ ॥ ॥

1 अमर्त्यतां जरामरणराहित्यं, मुक्तिमित्यर्थः । 2 स्मयो हासः । भ्रमो भ्रमहेतुर्माया ।

मुख्यतत्त्वं प्राणतत्त्वम् । 'प्राणो वै मुख्यः' इति श्रुतेः । दरवरं शङ्खम् ॥ १४ ॥ १५ ॥ आकूतीः क्रियाशक्तियुक्तं मनः । अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तं रूपम् । मुद्रया धृतयार्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्ति । तत्तन्मुद्रया तथा तथा भावयेदित्यर्थः ॥ १६ ॥ मण्डलं देवयजनम् । देवपूजाभूमिं सूर्यमण्डलत्वेन भावयेदित्यर्थः । अन्तर्बहिर्मण्डलं वा । दीक्षासंस्कार आत्मनो गुरुकृतां मन्त्रदीक्षामेवात्मनस्तत्पूजायोग्यतां भावयेदित्यर्थः । परिचर्येति । भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयायैवेवं भावयेदित्यर्थः ॥१७॥ पूर्वमासनपद्मयुक्तमिदानीं करस्थं पद्ममाह—भगवानिति । भगशब्दार्थमैश्वर्यादिषाड्गुण्यम् ॥१८॥ हे द्विजाः । एकवचनान्तो वा पाठः । अकुतोभयं कैवल्यं धाम गृहममजत् । यद्वा, वैकुण्ठस्य विशेषणमकुतोभयं यद्धामेति । त्रिवृत् ऋग्यजुःसामरूपो वेदः, 'सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः' इत्यादिमन्त्रलिङ्गात् । यज्ञं यज्ञरूपं पुरुषम्, 'यज्ञो वै विष्णुः' इति श्रुतेः ॥१९॥ अनपायिनी हरेः शक्तिः ।

ओजः सहो बलयुतं मुख्यतत्त्वं गदां दधत् ॥ अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥ इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥ १६ ॥ मण्डलं देवयजनं दीक्षासंस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥१८॥ आतपत्रं तु वैकुण्ठं द्विजा धामाकुतोभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥१९॥ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः ॥ नन्दादयोऽष्टौ द्वास्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ २० ॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥ २१ ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अर्थेन्द्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥ २२ ॥ अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥ २३ ॥ ॥

तत्र हेतुः—साक्षादात्मनः स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः । मन्त्रमूर्तिः पञ्चरात्राद्यागमरूपः । येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपाला नन्दादयः ॥ २० ॥ तस्यैव चतुर्व्यूहोपासनामाह—वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिभेदैरुपास्य इत्यभिधीयते ॥ २१ ॥ तस्यैवाध्यात्मनि चतुर्धोपासनामाह—स एव भगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः परिभाव्यते । तद्वृत्त्युपाधीनाह—अर्था बाह्याः । इन्द्रियं मनः । आशयस्तदुभयसंस्कारयुक्तमज्ञानम् । ज्ञानं त्रितयसाक्षि तैः ॥ २२ ॥ उक्तचतुर्व्यूहद्वयोपासनेऽपि पूर्वोक्तभङ्ग्याद्युपासनमाह—अङ्गेति । अङ्गादिभिरुपलक्षितो भगवान्हरिर्वासुदेवादिचतुर्मूर्तिः सन्विश्वादिचतुष्टयं बिभर्ति स्म । विश्वादिभावेऽपि तन्नियन्तुत्वस्य न जीवत्वमित्याह—विश्वादिचतुष्टयं बिभ्रदपि भगवानीश्वर एवेति ॥ २३ ॥ ॥

१ नभोवन्निर्मलम् । २ आकूतिरिति लक्षणया क्रियाशक्तियुक्तं मनो यस्य भगवतः स्यन्दनमाहुः । 'आकूतिः स्यन्दनं विभोः' इति वीर० शुक० पाठः । ३ उद्वहन् भवतीति शेषः । तथा च भिन्नवाक्यत्वेन न भगवच्छब्दपौनरुक्त्यम् । एकस्य भगवच्छब्दस्य पूज्य इत्यर्थो वा । ४ तथा चेन्द्रियैरर्थावभासकजाग्रदवस्थायां विश्व इति । ५ मनोमात्रावभासस्वप्नावस्थायां तैजस इति । ६ अज्ञानोपलक्षितसुषुप्तावस्थायां प्राज्ञ इति । ७ तत्र चैतन्यं स एव तुरीय इति ।

तस्यैव ब्रह्मादित्रिमूर्तितामाह—द्विजऋषभेति । स एष एक एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादिहेतुत्रयम् । वस्तुतो भेदाभावेऽप्येतज्जगत्स्वगतमायया सृजति हरति पातीति कृत्वाख्यया ब्रह्मादिरूपयानावृताक्षोऽनाच्छन्नज्ञानोऽपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु न तु भिन्नः । अत्र विद्वदनुभवं प्रमाणयति—यतस्तत्परैरात्मत्वेनैव लभ्यत इति ॥ २४ ॥ यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते—कृष्णसख अर्जुनस्य सखे । वृष्णिश्रेष्ठ । अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहन । अनपवर्गमक्षीणं वीर्यं यस्य । गोपवनितानां व्रजाः समूहा भृत्या नारदादयस्तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य । श्रवणमेव मङ्गलं यस्य ॥ २५ ॥ एतज्जपमात्रस्यापि ब्रह्मज्ञानं फलमित्याह—य इति । कल्ये उषःकाले यस्तच्चित्तः प्रयतः शुचिश्च स जप्त्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥ २६ ॥ मण्डलं देवयजनमित्युक्त्या बुद्धिमागतो मूर्तिव्यूहप्रसङ्गेन रविव्यूहोऽत्र पृच्छ्यते—शुक इति । पञ्चमे यदाह—'तथान्ये च ऋषयो गन्धर्वा अप्सरसो

द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययानावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥ २४ ॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविन्द गोपवनिताव्रजभृत्यगीततीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ २५ ॥ य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥ ॥ शौनक उवाच ॥ शुको यदाह भगवान् विष्णुराताय शृण्वते ॥ सौरो गणो मासि मासि नाना वसति सप्तकः ॥२७॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥ ॥ सूत उवाच ॥ अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥ २९ ॥ एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥३०॥ कालो देशः क्रिया कर्ता करणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजया हरिः ॥३१॥

नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त' इत्यादिना । सौरः सूर्यसंबन्धी । सप्तकः सप्तानां गणः ॥ २७ ॥ तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्यैर्वा व्यूहं विभागम् ॥ २८ ॥ तत्र तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह—अनाद्यविद्यया मायया । अयं सूर्यः । लोकयात्राप्रवर्तकः ॥ २९ ॥ अतस्तस्य क्रियाभेदोपाधिकमेव नानात्वं, न स्वत इत्याह—एक एवेति । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः । जगदात्मा आदिकृत्सृष्टिकर्ता हरिरेव सूर्यः, स च सर्वासां वेदोक्तक्रियाणां मूलं संस्तेनोपाधिना बहुधोक्तः ॥ ३० ॥ कालरूपधारिणो हरेर्द्वादशादित्यरूपं भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह—काल इति । कालः प्रातरादिः । देशः समादिः । क्रिया अनुष्ठानम् । कर्ता ब्राह्मणादिः । करणं स्रुगादिः । कार्यं यागादि । आगमो मन्त्रादिः । द्रव्यं व्रीह्यादि । फलं स्वर्गादि ॥ ३१ ॥ ॥ ॥ ॥ ॥

१ 'वृष्णिवृषावनि' इति पाठः । २ 'गोद्विजसुरार्तिहरावतार' इति पाठः । ३ अधीश्वरैः संयुक्तानामित्यनेन तेषां प्रत्येकं सम्प्रयतिसाहित्येन द्वन्द्वं द्योतम् । अत एव द्वन्द्वशः सप्त पृथक्चतुर्दशेति पञ्चमोक्तिः सगच्छते । सूर्यस्यापि ग्ननियन्तर्यामिसाहित्येन उक्तं द्योतमिति बालबोधिन्याम् । क्वचित्तु 'नियुक्तानाम्' इति पाठः, तत्र नितरां युक्तानामित्यर्थः ।

तत्र च कालस्वरूपधारी भगवान्पृथक् चरति । मध्वादिषु चैत्रादिषु । लोकतन्त्राय लोकयात्रानिर्वाहाय ॥ ३२ ॥ तानेव गणानाह—धातेति द्वादशभिः । धाता सूर्यः । कृतस्थली अप्सराः । हेती राक्षसः । वासुकिर्नागः । रथकृद्यक्षः । पुलस्त्य ऋषिः । तुम्बुरुर्गन्धर्वः । मधुमासं चैत्रम् । नयन्त्यनुवर्तयन्ति ॥ ३३ ॥ अथौजा यक्षः । प्रहेती राक्षसः । नारदो गन्धर्वः । कच्छनीरो नागः । माधवं वैशाखम् ॥ ३४ ॥ मित्रः सूर्यः । पौरुषेयो राक्षसः । रथस्वनो यक्षः । शुक्रमासं ज्येष्ठम् ॥ ३५ ॥ वरुणः सूर्यः । सहजन्यो यक्षः । शुक्रो नागः । चित्रस्वनो राक्षसः । शुचिमासमाषाढम् ॥ ३६ ॥ इन्द्रः सूर्यः । विश्वावसुर्गन्धर्वः । श्रोता यक्षः । एलापत्रो नागः । वर्यो राक्षस इति स्वयमेव व्याख्यातम् । नभोमासं श्रावणम् ॥ ३७ ॥ विवस्वान् सूर्यः । उग्रसेनो गन्धर्वः । व्याघ्रो राक्षसः ।

मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥ लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः[१][२] ॥ ३२ ॥ धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ॥ पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥ ३३ ॥ अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली ॥ नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥ ३४ ॥ मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥ ३६ ॥ इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाङ्गिराः ॥ प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ॥ ३७ ॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥ ३८ ॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ॥ घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥ ३९ ॥ ऋतुर्[३]वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥ ४० ॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेन[४]स्तथोर्वशी ॥ विद्युच्छत्रु[५]र्महाशङ्खः सहोमासं नयन्त्यमी ॥ ४१ ॥ भगः स्फूर्जोऽरिष्टनेमिरूर्णं आयुश्च पञ्चमः ॥ कर्कोटकः पूर्वचित्तिः पुष्य[६]मासं नयन्त्यमी ॥ ४२ ॥ ॥ ॥

आसारणो यक्षः । शङ्खपालो नागः । नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ धनंजयो नागः । वातो राक्षसः । सुषेणो गन्धर्वः । सुरुचिर्यक्षः । तपोमासं माघम् । मासक्रमातिलङ्घनं कौर्मोक्तादित्यानुक्रमानुसारेण । वैष्णवे तु मासक्रमेणोक्तिः । क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥ ऋतुर्यक्षः । वर्चा राक्षसः । पर्जन्यः सूर्यः । सेनजिदप्सराः । विश्वो गन्धर्वः । ऐरावतो नागः । तपस्याख्यं फाल्गुनम् ॥ ४० ॥ अंशुः सूर्यः । अंश इति वा पाठः । तार्क्ष्यो यक्षः । ऋतसेनो गन्धर्वः । विद्युच्छत्रू राक्षसः । महाशङ्खो नागः । सहोमासं मार्गशीर्षम् ॥४१॥ भगः सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गन्धर्वः । ऊर्णो यक्षः । आयुरृषिः । कर्कोटको नागः ॥ ४२ ॥ ॥ ॥ ॥

१ 'सौरो गणो मासि मासि' इति यत्पृष्टं तत्र प्रथमं चैत्रमाससप्तकमाह । २ 'गुणैः' इति विज० समतः पाठः । ३ 'ऋतुः' इति मूले टीकायां च पाठः । ४ 'धृतसेनः' इति पाठः । ५ 'विद्युच्छन्नः' इति मूले टीकायां च पाठः । ६ 'पौषमासम्', 'सहस्याख्यं' इति पाठौ ।

त्वष्टा सूर्यः । ऋचीकतनयो जमदग्निः । कम्वलो नागः । ब्रह्मापेतो राक्षसः । शतजिद्यक्षः । धृतराष्ट्रो गन्धर्वः । इषंभरा आश्विनपालकाः ॥ ४३ ॥ विष्णुरादित्यः । अश्वतरो नागः । सूर्यवर्चा गन्धर्वः । सत्यजिद्यक्षः । मखापेतो राक्षसः । ऊर्जमासं कार्तिकमासम् । एते चादित्यादयः कौर्मे विभज्योक्ताः— 'धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥ भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः । पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः ॥ गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च । जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः ॥ रथकृचोऽरिष्टनेमिर्ग्रामणीश्च रथस्वनः । रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा ॥ तार्क्ष्यश्चारिष्टनेमिश्च ऋतजित्सत्यजित्तथा ॥' एते यक्षाः । 'अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । वर्यो व्याघ्रस्तथाऽयश्च वायुर्विद्युद्दिवाकरः ॥ ब्रह्मापेतश्च विप्रेन्द्रा यज्ञापेतश्च राक्षसः । वासुकिः कच्छनीरश्च तक्षकः सर्पपुङ्गवः ॥ एलापत्रः शङ्खपालस्तथैरावतसंज्ञितः । धनंजयो महापद्मस्तथा कर्कोटको द्विजाः । कम्वलोऽश्वतरश्चैव वहन्त्येनं यथाक्रमम् । तुम्बुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा ॥ उग्रसेनो

त्वष्टा ऋचीकतनयः कम्वलश्च[2] तिलोत्तमा ॥ ब्रह्मापेतोऽथ शतजिद्धृतराष्ट्र इषंभराः ॥ ४३ ॥ विष्णुरश्वतरो रम्भा
सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥ ४४ ॥ एता भगवतो विष्णोरादित्यस्य विभू-
तयः ॥ स्मरतां संध्ययोर्नॄणां हरन्त्यंहो दिने दिने ॥ ४५ ॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ॥ चरन्समन्ता-
त्तनुते परत्रेह च सन्मतिम् ॥ ४६ ॥ सामर्ग्यजुर्भिस्तल्लिङ्गैर्ऋषयः संस्तुवन्त्यमुम् ॥ गन्धर्वास्तं प्रगायन्ति नृत्यन्त्य-
प्सरसोऽग्रतः ॥४७॥ उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः ॥ चोदयन्ति रथं पृष्ठे नैर्ऋता वलशालिनः ॥४८॥
वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥ ४९ ॥ एवं
ह्यनादिनिधनो भगवान्हरिरीश्वरः ॥ कल्पे कल्पे स्वमात्मानं व्यूह्य[3] लोकानवत्यजः ॥ ५० ॥ इति श्रीमद्भागवते
महापुराणे द्वादशस्कन्धे आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ ॥

वसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥ सूर्यवर्चा द्वादशेति गन्धर्वा गायतां वराः । कृतस्थल्यप्सरोवर्या तथान्या पुञ्जिकस्थली ॥ मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः । अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा ॥ अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा । रम्भा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः ॥' इति ॥ ४४ ॥ ४५ ॥ एतेषां पृथक्कर्माणि निरूपयति—द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः षड्भिर्गन्धर्वादिभिरस्य जनस्य समन्ताचरन् शुभां मतिं तनुते । गायत्र्यर्थोऽनेन सूचितः ॥ ४६ ॥ तल्लिङ्गैः सूर्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यन्ति दृढं बध्नन्ति । ग्रामण्यो यक्षाः । नैर्ऋता राक्षसाः ॥ ४८ ॥ किंच, वालखिल्या इति । एवं प्रतिमासं त एव स्तुवन्ति विभुं सूर्यम् ॥ ४९ ॥ व्यूह्य विभज्य ॥ ५० ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायामेकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

१ 'तथापश्च' इति पाठः । २ 'कम्वलाख्यः' इति मूले टीकायां च पाठः । ३ 'लोकानवत्यजः' इति पाठः ।

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ॥ प्रथमस्कन्धमारभ्य प्राधान्येन समासतः ॥ १ ॥ तदेवमस्मिन्पुराणे विस्तरेणोक्तानर्थान्संक्षेपतो वर्णयिष्यन्धर्मादीन्प्रणमति—नम इति । महते हरिभक्तिलक्षणाय । ब्राह्मणेभ्यो ब्राह्मणान् । सनातनाननादीन् । धर्मानित्युपलक्षणं पुराणोक्तार्थानाम् ॥ १ ॥ पुरुषत्वे उचितं श्रवणादियोग्यम् ॥२॥ एतत्प्रपञ्चयति—अत्रेति । भगवानैश्वर्यादिषड्गुणः । साक्षात्संकीर्तित इति देवताकाण्डार्थः ॥३॥ ब्रह्मकाण्डार्थमाह—अत्र ब्रह्मेति । गुह्यं निर्गुणम् । प्रभवाप्ययम्,—प्रभवत्यस्मादिति प्रभवम्, अप्येत्यस्मिन्नित्यप्ययम्, तच्च तच्च । अनेनाश्रयशब्दार्थौ दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यन्तं ज्ञानम् । तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥ कर्मकाण्डार्थमाह—भक्तियोगश्च साध्यसाधनरूपः । तदाश्रयं भक्ति-

॥ सूत उवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥ ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥ १ ॥

एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥ अत्र संकीर्तितः

साक्षात्सर्वपापहरो हरिः ॥ नारायणो हृषीकेशो भगवान्सात्त्वतांपतिः ॥ ३ ॥ अत्र[1] ब्रह्म परं गुह्यं जगतः प्रभ-

वाप्ययम् ॥ ज्ञानं च तदुपाख्यानं[2] प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥ भक्तियोगः समाख्यातो वैराग्यं च तदाश्र-

यम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्य[3] ब्रह्म-

र्षभस्य संवादश्च परीक्षितः ॥ ६ ॥ योगधारणयोत्क्रान्तिः संवादो नारदाजयोः ॥ अवतारानुगीतं च सर्गः

प्राधानिकोऽग्रतः ॥ ७ ॥ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥

ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्माण्डसंभूतिर्वैराजः पुरुषो यतः ॥ ९ ॥ कालस्य स्थूल-

सूक्ष्मस्य गतिः पद्मसमुद्भवः ॥ भुवं[4] उद्धरणेऽम्भोधेर्हिरण्याक्षवधो यथा ॥ १० ॥ ऊर्ध्वतिर्यगवाक्सर्गो[5] रुद्रसर्ग-

स्तथैव च ॥ अर्धनारीनरस्याथ यतः[6] स्वायंभुवो मनुः ॥ ११ ॥ ॥ ॥

योगेन निष्पादितम् । एवं सामान्यतो निरूप्येदानीं द्वादशस्कन्धप्रकरणार्थाननुक्रामति—पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानं च ॥ ५ ॥ ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य । इति प्रथमस्कन्धार्थः ॥ ६ ॥ उत्क्रान्तिरार्चिरादिगतिः । प्राधानिकः प्रधानकार्यविराड्रूपः सर्गः । अग्रत आदितो महदादिक्रमेणेत्यर्थः । इति द्वितीयार्थः ॥ ७ ॥ महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम् ॥ ८ ॥ प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः । वैकृतिका महदादयश्चकाराद्विकाराश्च ये तेषां सर्गः ॥ ९ ॥ गतिः स्वरूपम् । उद्धरणे उद्धारणे ॥ १० ॥ अर्धाभ्यां नारी च नरश्च तस्य सर्गः ॥ ११ ॥ ॥

१ 'यत्तद्ब्रह्म' इति पाठः। २ 'सदुपाख्यानं' इति पाठः। ३ 'शुकस्यैव च ब्रह्मर्षेः' इति मूले 'ब्रह्मर्षेर्ब्राह्मणोत्तमस्य' इति व्याख्यायां च पाठः। ४ भुव उद्धरणे निमित्ते यथा हिरण्याक्षवधः कृतस्तथोक्तमित्यर्थः । भुव उद्धरणमम्भोधेः सकाशात्। मकारलोपश्छान्दस इति चक्र०। अत्र 'भुव उद्धरण चाब्धेः' इति, 'उद्धरणेऽम्भोधौ' इति, 'उद्धरणाम्भोधेः' इति च पाठाः आदर्शान्तरेषु। अन्तिमपाठे उद्धरणा उद्धारः। 'यथा' इत्यत्र 'तथा' इत्यपि पाठः क्वचित्। ५ 'तिर्यगधःसर्गः' इति पाठः। ६ 'सर्गः स्वायंभुवो यतः' इति पाठः । यतो याभ्यां नारीनराभ्याम् । ७ नारीनरयोः समाहारद्वन्द्वे तस्य द्विवचनान्तार्धशब्देन समासः ।

संतानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्यानन्तरं द्रष्टव्यम् ॥१२॥१३॥ इति तृतीयार्थः । चतुर्थस्कन्धार्थमाह—नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः संतानः ॥ १४ ॥ पञ्चमस्कन्धार्थमाह—ततः प्रैयव्रतं प्रियव्रतस्य चरितम् ॥ १५ ॥ द्वीपाद्युपवर्णनं प्रथमं संक्षेपतस्ततो द्वीपादीनां ये गिरयो नद्यश्च तेषामुपवर्णनम् । पातालानां नरकाणां च संस्थितिः । अनेनैव नरकनिवर्तकमजामिलोपाख्यानं गृहीतं ततः पराचीनम् ॥१६॥ षष्ठार्थमाह—दक्षजन्मेति ॥१७॥

शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥ १३ ॥ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥ द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६ ॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः ॥ यतो देवासुरनरास्तिर्यङ्नगखगादयः ॥ १७ ॥ त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ॥ दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥ १८ ॥ मन्वन्तरानुकथनं गजेन्द्रस्य विमोक्षणम् ॥ मन्वन्तरावताराश्च विष्णोर्हयशिरादयः ॥ १९ ॥ कौर्मं धान्वन्तरं मात्स्यं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम् ॥ २० ॥ देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ॥ २१ ॥ इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृगादयः ॥ २२ ॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च ॥२३॥ रामस्य कोशलेन्द्रस्य चरितं किल्बिषापहम् ॥ निमेरङ्गपरित्यागो जनकानां च संभवः ॥ २४ ॥ रामस्य भार्गवेन्द्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥ दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥ यत्रावतीर्णो भगवान्कृष्णाख्यो जगदीश्वरः ॥ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥ ॥

सप्तमार्थमाह—पुत्रयोश्चेति ॥ १८ ॥ अष्टमार्थमाह—मन्वन्तरानुकथनमिति । क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसाकुलत्वेनेति द्रष्टव्यम् ॥ १९ ॥ २० ॥ नवमार्थमाह—राजवंशेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सोमवंशादिभूतस्यैलस्य चरितम् ॥ २५ ॥ तत्सुतस्य भीष्मस्य ॥ २६ ॥ २७ ॥ ॥

१ 'ततो द्वीपसमुद्राद्रिवर्षनद्युपवर्णनम्' इति पाठः । २ क्वचित्तु 'कौर्मं मात्स्यं नारसिंहम्' इति पाठः, स चायुक्तोऽष्टमेऽनुक्तेरात् । भक्तिरसाकुलत्वेन व्युत्क्रमोक्तिर्वा तत्पाठे । ३ चरितमिति शेषः । ४ 'नृपा यतः' इति पाठे यतो यस्मिन्नित्यर्थः । क्वचित्तु 'नृपादयः' इत्यपि पाठः । ५ 'कोसलेन्द्रस्य चरितमद्भुत' इति पाठः । ६ 'निःक्षत्रीकरणम्' इति पाठः । ७ 'नाहुषस्य च' इति पाठः । ८ 'दौष्यन्तेः' इति पाठः । ९ 'तस्य वृद्धिः' इति पाठः ।

दशमार्थमाह—तस्य कर्माणीति । पूतनाया असुसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥ सहभ्रातुः ससखस्य ॥ २९ ॥ ३० ॥ ३१ ॥ यज्ञाभिषेकम् । यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यवम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ द्विषतः शत्रून्प्रमथ्य ॥ ३७ ॥ ३८ ॥ ये च शम्बरादयस्तेषां माहात्म्यं प्रभावो वधश्च

तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनाऽसुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥ २९ ॥ गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाहेर्नन्दमोक्षणम् ॥ ३० ॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः ॥ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥ गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥ शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥ ३३ ॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ॥ गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥ मृतस्यानयनं सूनोः पुनः सांदीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ३५ ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ जरासन्धसमानीतसैन्यस्य बहुशो वधः ॥ घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥ हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम् ॥ प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥ चैद्यपौण्ड्रकशाल्वानां दन्तवक्रस्य दुर्मतेः ॥ शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ॥ ३९ ॥ माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ॥ भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान् ॥४०॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥ ४१ ॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ॥ ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥ ॥ ॥

॥ ३९ ॥ ४० ॥ एकादशार्थमाह—विप्रशापेति ॥ ४१ ॥ धर्मविनिर्णयो वर्णाश्रमधर्मविनिश्चयः । मर्त्यपरित्यागो मनुष्यत्वस्यान्तर्धानम् ॥ ४२ ॥ द्वादशार्थमाह—युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥ ॥ ॥

१ शक्रेण कृता पूजा सुरभ्या कृतो योऽभिषेकः स इत्यर्थः। २ 'कर्माण्युदाराणि' इति पाठः। ३ 'शकटोत्पाटनं' इति पाठः। ४ एतदग्रे 'अघासुरासुसहारः कस्य मायाप्रदर्शनम्' इति, क्वचिच्च 'अघासुरवधो धात्रा वत्सपालावगूहनम्' इत्यर्धमधिकं क्वचित्। ५ 'कालियस्याहो महाहेः' इति पाठः। ६ चैद्यादीनां माहात्म्यमासुरप्रभावो वधश्च ये च शंवरादयस्तेषा चेत्यन्वयः। ७ उपप्लवो बुद्धिव्यामोहः धर्मविप्लवो वा।

ऋषेर्व्यासस्य । सूर्यस्य च विन्यास इत्यर्थः ॥ ४४ ॥ इति चोक्तमिति चकारादन्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति । किमेवं नानार्थकथनेन तत्राह—लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४५ ॥ तत्कीर्तनेनापि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम्—पतितः कूपादिषु । स्खलितः सोपानादिषु । आर्तो दुःखितः । क्षुत्त्वा क्षुतं कृत्वा विवशोऽपि ॥ ४६ ॥ संकीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति । अर्को गिरिगुहादिध्वान्तं न धुनोतीत्यपरितोषादृष्टान्तान्तरमाह—अतिवातोऽभ्रमिवेति ॥ ४७ ॥ हरिसंकीर्तनमेव महाफलं हीति सतामनुभवं प्रमाणयति । मृषागिर इति चतुर्भिः । मृषागिरो मिथ्यावाचः । असतीरसत्यः । असतां कथा यासु ताः । यद्यासु तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति—मृषागिर इति चतुर्भिः ।

देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा ॥ महापुरुषविन्यासः सूर्यस्य जगदात्मनः ॥ ४४ ॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ लीलावतारकर्माणि कीर्तितानीह सर्वशः[1] ॥ ४५ ॥ पतितः[2] स्खलितश्चार्तः क्षुत्त्वा[3] वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥ संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥ मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ॥ तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥४८॥ तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ न तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥ स वाग्विसर्गो जनताघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ५१ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥ ॥

उत्तमश्लोकस्य यशोऽनुगीयत इति यत्तदेव सत्यं तदेव हि मङ्गलम् । उ ह इति हर्षे । भगवद्गुणानामभ्युदयो यस्मात्तत् ॥ ४८ ॥ नवं नवं यथा भवति तथा रुचिरं रुचिप्रदम् । महानुत्सवो यस्मात् ॥ ४९ ॥ चित्राणि पदानि यस्मिन् । तदपि जगत्पवित्रयतीति तथा तद्धरेर्यशो न प्रगृणीत न वर्णयेत्तद्वचो ध्वाङ्क्षतीर्थं काकतुल्यनराणां रतिस्थानं नतु हंसैर्ज्ञानिभिः सेवितम् । तत्र हेतुः—यत्रेति ॥ ५० ॥ स वाग्विसर्गः स एव वाचः प्रयोगो जनताघसंप्लवो जनसमूहाघनाशकः । यद्यस्मात्तान्येवान्यैः कीर्त्यमानानि शृण्वन्ति श्रोतरि सति गायन्ति, नो चेत्स्वयमेव गृणन्ति ॥ ५१ ॥ इदानीं ज्ञानकर्मादरादपि भगवत्कीर्तनादिष्वेवादरः कर्तव्य इत्याह त्रिभिः—नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानं यतो निरञ्जनमुपाधिनिवर्तकं तदप्यच्युतभक्तिवर्जितं चेन्न शोभते, नापरोक्षपर्यन्तं

१ तेषा तेषा लीलादीनामर्थः प्रयोजन तत्कीर्तनद्वारेणेति भावः । २ पतित इत्यादि । कैमुत्यार्थेयमुक्तिः । पतित इत्याद्यापद्ग्रस्तोऽपि मुच्यते, किमुत यथावस्थ इत्यादि स्खलितादिषु योज्यम् । ३ 'क्षुत्वा' इति पाठः, तत्र हरये नम इति क्षुत्वेत्यर्थः ।

भवतीत्यर्थः । ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतः शोभते । यतः शश्वत्साधनकाले फलकाले चाभद्रं दुःखात्मकम् ॥ ५२ ॥ किंच, वर्णाश्रमाचारादिषु यः परो महान्परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्तिः संपत्तिश्च केवलं परः पुरुषार्थ इत्यर्थः । गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिर्भवति ॥ ५३ ॥ ततः किमत आह—अविस्मृतिरिति । क्षिणोति नाशयति ॥ ५४ ॥ अथेदानीं श्रोतॄनात्मानं चाभिनन्दन्नाह—यूयमिति द्वाभ्याम् । हे द्विजाग्र्याः, यद्यस्मादात्मन्यन्तःकरणे श्रीनारायणमाविवेश्य शश्वद्भजत । संभावनायां लोट् । अतो भूरिभागा बहुपुण्याः । कथंभूतम् । अखिला-

यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादि[1]भिर्हरेः ॥ ५३ ॥ अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च ॥ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ५४ ॥ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमजस्रभावा[2] भजताविवेश्य ॥ ५५ ॥ अहं च संसारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥ य[3] एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः[4] ॥ श्रद्धावान् योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥ ५८ ॥ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्[5]भवेत् ॥ पठत्यनश्नन्प्रयतस्ततो भवत्यपातकी[6] ॥ ५९ ॥ पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ॥ उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥ देवता मुनयः सिद्धाः पितरो मनवो नृपाः ॥ यच्छन्ति कामान्गृणतः शृण्वतो यस्य कीर्तनात् ॥ ६१ ॥ ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥ ६२ ॥ पुराणसंहितामेतामधीत्य प्रयतो द्विजः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥ ॥ ॥

त्मभूतं सर्वान्तर्यामिणम् । अत एव देवं सर्वोपास्यम् । अदेवं न देवोऽन्यो यस्य तम् । कुतः । ईशम् । यद्वा, यस्माद्यूयं भूरिभागास्तपआदिसंपन्नास्ततो नारायणं भजतेति विधिः ॥ ५५ ॥ मे मया श्रुतम् ॥ ५६ ॥ एतत्पुराणकीर्तनादिफलं प्रपञ्चयितुमाह—एतदित्यष्टभिः ॥ ५७ ॥ यामक्षणं यामं क्षणं चेत्यर्थः । आत्मानमेव साक्षात्पुनाति नतु स्नानादिवद्देहमात्रम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविन्दते तत्फलमेतां पठित्वानुविन्दत इति ॥ ६२ ॥ किंच, प्रोक्तमिति ॥ ६३ ॥ ॥ ॥ ॥ ॥

१ 'श्रवणादरादिभिः' इति पाठः । २ 'अवश्यभावाः' इति मूले पाठः । टीकाया च 'संभावनाया लोट्' इत्यनन्तरं 'कथंभूताः सन्तः । न वश्यतस्ततो निवर्तयितुमशक्यो वा भाव आत्मा बुद्धिर्येषा ते । अतो भूरिभागाः' इति पाठः । ३ 'य एतत्' इति पाठः । ४ एतदग्रे 'श्लोकमेकं तदर्धं वा पाद पादार्धमेव वा' इत्यर्धमधिकं कचित् । ५ 'आयुष्यभाक्' इति पाठः । ६ 'पुमान्निष्पातको भवेत्' इति पाठः ।

राजन्य उदधिमेखलां पृथ्वीम् । संधिरार्पः ॥ ६४ ॥ अस्य पुराणस्यैवंप्रभावातिरेके कारणमाह—कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा । इतरत्र शास्त्रान्तरे ॥ ६५ ॥ शास्त्रप्रतिपादितं भगवन्तं नमस्करोति—तमिति द्वाभ्याम् । जगदुदयस्थितिसंयमात्मानो रजआदयः शक्तयो यस्य तम् । द्युपतिभिर्देवैरपि दुरवसितोऽज्ञातः स्तवः स्तोत्रं यस्य तम् ॥ ६६ ॥ उपचिताभिरुद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्व आत्मन्येवोपरचितं स्थिरं जङ्गमं चालयो यस्य तस्मै भगवते ॥ ६७ ॥ श्रीगुरुं नमस्करोति—स्वसुखेनैव निभृतं पूर्णं चेतो यस्य । तेनैव व्युदस्तोऽन्यस्मिन् भावो यस्य तथाभूतोऽप्यजितस्य रुचिराभिर्लीलाभिराकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत तं नतोऽस्मीति

विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ॥ ६४ ॥ कलिमल-संहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः ॥ ६५ ॥ तमहमजमनन्तमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुर-वसितस्तवमच्युतं नतोऽस्मि ॥ ६६ ॥ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजङ्गमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥ ६७ ॥ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिर-लीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥ ६८ ॥ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धार्थनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ सूत उवाच ॥

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ॥ ध्यानावस्थित-तद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥ पृष्ठे भ्राम्यदमन्द-मन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ॥ यत्संस्कारकलानुवर्तनवशाद्वेला-निभेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥ ॥ ॥

॥ ६८ ॥ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे भावार्थदीपिकायां टीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् ॥ दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥ सर्वपुराणसंख्यादीनुपवर्णयिष्यंस्तत्प्रतिपाद्यं देवं प्रणमति—यमिति । स्तवैर्वेदैश्च स्तुन्वन्ति स्तुवन्ति उपनिषच्छब्दस्याकारान्तत्वं छन्दोनुरोधेन । ध्यानेनावस्थितं निश्चलं तद्गतं च यन्मनस्तेन यस्यान्तं न विदुः सुरासुरगणाः ॥ १ ॥ क्षीरोदमथनादौ दुर्ज्ञेयत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मारयन्नाशिषः प्रार्थयते—पृष्ठे भ्राम्यन्नमन्दो मन्दरगिरिर्गरिष्ठो मन्दराचलस्तस्य ग्रावाणस्तेषामग्राणि तैः कण्डूयनात्तेन सुखेन निद्रालोर्निद्राशीलस्य । येषां श्वासानिलानां संस्कारास्तेषां कलाश्च लेशास्तदनुवर्तनवशाज्जलनिधेरम्भसां यातायातं न विश्राम्यति । ननु समुद्र-



१ व्यतनुत सविस्तर व्याख्यातवान् । २ अङ्गादीना समाहारद्वन्द्वे 'द्वन्द्वाच्चुदपहान्तात्—' इत्यनेन समासान्ते टचि प्रयोगोपपत्तौ छन्दोनुरोधेनेति व्याख्यान विचारणीयम् ।

क्षोभादेव तत्र संस्कारवशात्तत्राह—वेलाक्षोभस्तस्य निभेन मिषेण ॥ २ ॥ पुराणसंहितानां संख्यास्तासां संभूतिं समाहारम् । अस्य तु श्रीभागवतस्य वाच्यं विषयः प्रयोजनं च दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥ त्रयोविंशत्रयोविंशतिः सहस्राणि । चतुर्विंशति चतुर्विंशतिः । शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नमग्निपुराणम् । दशपञ्चसहस्राणि चत्वारि शतानि च ॥ ५ ॥ ६ ॥ स्कान्दं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणमेकोनविंशदेकोन-

पुराणसंख्यासंभूतिमस्य वाच्यप्रयोजने ॥ दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥३॥ ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥ दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ॥ मार्कण्डं[1] नव वाह्नं च दशपञ्चचतुःशतम् ॥ ५ ॥ चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥ ६ ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८ ॥ एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥ इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ॥ स्थिताय भवभीताय कारुण्यात्संप्रकाशितम् ॥१०॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्रातामृतानन्दितसत्सुरम् ॥ ११ ॥ सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ १२ ॥ प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ददाति यो भागवतं स याति परमां गतिम् ॥ १३ ॥ राजन्ते तावदन्यानि पुराणानि सतां गणे ॥ यावन्न[2] दृश्यते साक्षाच्छ्रीमद्भागवतं परम् ॥ १४ ॥ सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ १५ ॥ निम्नगानां यथा गङ्गा देवानामच्युतो यथा ॥ वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥ १६ ॥ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १७ ॥ ॥ ॥

विंशतिः ॥ ८ ॥ महाभारतं त्वितिहासः । रामायणं च ऋषिप्रोक्तं काव्यम् । अतः पुराणानां संदोहः समूहश्चतुर्लक्षसंख्याक एव । इदानीमस्य वाच्यप्रयोजनादीन् दर्शयितुमाह—तत्रेत्यादिना ॥ ९ ॥ १० ॥ हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः सुराश्च येन तत् ॥ ११ ॥ तन्निष्ठं तद्विषयम् ॥ १२ ॥ प्रौष्ठपद्यां भाद्रपद्याम् । हेमसिंहसमन्वितं सुवर्णसिंहासनारूढम् ॥ १३ ॥ १४ ॥ तद्रस एवामृतं तेन तृप्तस्य निर्वृतस्य ॥ १५ ॥ १६ ॥ १७ ॥ ॥

१ मार्कण्डं मार्कण्डेयम् । पृषोदरादिः । क्वचित्तु 'मार्कण्डेयं' इत्यपि पाठः । २ अयमेव पाठो बहुपुस्तकसमतश्चक्रवर्त्यादिनश्च । 'यावद्भागवतं नैव श्रूयतेऽमृतसागरम्' इति पाठः क्वचित् ।

पारमहंस्यं परमहंसैः प्राप्यम् । नैष्कर्म्यं सर्वकर्मोपरमः । भक्त्या तच्छ्रवणादिपरो विमुच्यते ॥ १८ ॥ श्रीभागवतसंप्रदायप्रवर्तकरूपेण भगवद्ध्यानलक्षणं मङ्गलमाचरति—कस्मै ब्रह्मणे अतुलोऽसमः । अयं श्रीभागवतरूपः । पुरा कल्पादौ । तद्रूपेण ब्रह्मरूपेण नारदाय तद्रूपिणा नारदरूपिणा कृष्णाय व्यासाय । तद्रूपिणा योगीन्द्राय शुकाय तदात्मना शुकरूपेण । तत्परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहि । इति गायत्र्यैव यथोपक्रमसुपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ तमेव देवतारूपेण गुरुरूपेण च प्रणमति—नम इति द्वाभ्याम् । व्याचचक्षे व्याख्यातवान् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ भावार्थ-

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ॥ तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ १८ ॥ कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥ योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥ नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥ योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ॥ संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २१ ॥ भवे भवे यथा भक्तिः पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥ २२ ॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां वैयासिक्यां पारमहंस्यां संहितायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

दीपिकामेतां भगवद्भक्तवत्सलाम् ॥ परमानन्दपादाब्जभृङ्गश्रीः श्रीधरोऽकरोत् ॥ १ ॥ स्वबालचपलालापैः स्वलीलापरिनर्तितैः ॥ प्रीयतां परमानन्दनृहरिः सद्गुरुः स्वयम् ॥ २ ॥ श्रीपरानन्दसंप्रीत्यै गुह्यं भागवतं मया ॥ तन्मतेनेदमाख्यातं ननु मन्मतिवैभवात् ॥ ३ ॥ केदं नानानिगूढार्थं श्रीमद्भागवतं क्व नु ॥ मन्दबुद्धिरहं कृष्णप्रेम किं किं न कारयेत् ॥ ४ ॥ ॥ इति श्रीमद्भागवते महापुराणे श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां टीकायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीकृष्णाय नमोऽस्तु ॥ ॥ ॥ ॥ ॥ ॥

१ 'शृण्वंस्तत्र पठन्' इति पाठः । २ 'व्यासाय' इति पाठः । ३ 'भवे भवे' इत्यादिश्लोकद्वयं क्वचिन्नास्ति । ४ 'भक्तवत्सभाम्' इति पाठः । ५ 'परिवर्तितैः' इति पाठः । ६ आख्यातं व्याख्यातम् । 'विवृतं तन्मतेन' इति पाठः ।

॥ इति श्रीमद्भागवतं समाप्तम् ॥